KĀSHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

125.

( Vyākaraṇa Section No. 16 )



THE

# PRAUDHAMANORAMĀ

OF

**M. M. BHAṬṬOJI DIKṢ'ITA**

( A Commentary Upon his Siddhānta Kaumudi )

WITH ITS GLOSS CALLED LAGHUS'ABDARATNA

BY

**M. M. S'RĪ HARIDĪKS'ITA**

**WITH THREE COMMENTARIES**

*The Bhairavi, Bhāvaprakās'a & Saralā*

BY

M. M. PANDIT S'RĪ BHAIRAVA MIS'RA, VAIDYANĀTHA PAYAGUNDE AND GOPĀL S'ASTRI NENE.

*Edited by*

PANDIT GOPAL S'ĀSTRI NENE, VYĀKARAṆĀCHĀRYA.

Professor. Govt. Sanskrit College, Benares.

---

PUBLISHED BY

JAYA KRISHNA DAS HARIDAS GUPTA.

CHOWKHAMBA SANSKRIT SERIES OFFICE.

BENARES.

1939.

श्रीगुरुः शरणम्—

# प्रास्ताविकम् २

अथेदानीं काशिकराजकीयप्रधानसंस्कृतपाठशालीयपरीक्षायां कलिकाता-बिहार-बडोदाद्यनेकदेशीयपरीक्षासु च पाठ्यत्वेन निर्धारितायाः पाणिनिव्याकरणशास्त्रग्रन्थमूर्धन्यभूतायाः श्रीमत्सुगृहीतनामधेयवैयाकरणप्रवर पदवाक्यप्रमाणपारावारीण-महामहोपाध्याय श्रीमद्भट्टोजीदीक्षितविरचितायाः तदीयमूलसिद्धान्तकौमुदीव्याख्यानरूपायाः प्रौढमनोरमाया ग्रन्थकर्तृभट्टोजीदीक्षितपौत्रश्रीमद्धरिदीक्षितकृतलघुशब्दरत्नव्याख्यासहिताया अपूर्वं विचित्रं सर्वाङ्गसुन्दरं चेदं नवीनं संस्करणं सम्पादयितुमारब्धम्। यद्यप्यस्य ग्रन्थस्यानेकानि संस्करणानि मुद्रितानि, परं तत्र सर्वत्रापि भावप्रकाश-सरला-टीकाद्वयाभावकृतन्यूनता वर्तते। तदुभयमपि लघुशब्दरत्नव्याख्यानं भैरवमिश्रविरचितरत्नप्रकाशिका 'भैरवी' इत्यपरनाम्ना प्रसिद्धं च तृतीयं व्याख्यानमिति टीकात्रयसहितमिदं संस्करणं भवेत्।

विदितमेव श्रीमतां वैयाकरणानां तत्र भवतामध्यापकानां यत् कीदृशी अवस्थेदानीं काश्यादिष्वपि प्रचलिताध्ययनाध्यापनशैलीप्रदर्शकव्याख्यानमन्तरा परीक्षार्थिनां छात्राणां वर्तते। तत्र चास्मद्गुरुवरैः महामहोपाध्याय स्वर्गीय पं० श्रीनित्यानन्दपन्तपर्वतीयैः लघुशब्देन्दुशेखरे दीपकं नाम टिप्पणं विरच्य विद्वज्जनाश्छात्रवर्गाश्चातीवोपकृताः। तदीयरीतिवचनकल्पना अनुसृत्य तत्प्रदर्शितपथेनैव विद्यार्थिजनसौलभ्याय लघुशब्दरत्ने सरलानामकं टिप्पणं विरच्येदानीं द्वितीयो भागोऽजन्तपुंल्लिङ्गप्रकरणमारभ्य स्त्रीप्रत्ययप्रकरणान्तः श्रीमतां करकमलेषु समर्प्यते। अचिरादेव तृतीयो भागः कारकाव्ययीभावप्रकरणद्वयात्मकः श्रीमद्भिः प्राप्स्यते।

नात्रातीव प्रकर्तव्यं दोषदृष्टिपरं मनः।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते॥

इत्यभियुक्तोक्तिमनुसन्दधानाः श्रीमन्तोऽत्रत्यगुणास्वादनेनैतद्ग्रन्थसमादरणेन चानुग्रहीष्यन्ति मामिति वारंवारमभ्यर्थयते।

| रथयात्रा<br>आषाढ शु० २ सं० १९९६<br>गवर्नमेण्ट संस्कृत कालिज<br>बनारस। | विदुषामनुचरो<br>नित्यानन्दोपासको<br>गोपाल शास्त्री नेने। |
|---|---|

# विषयानुक्रमः ।




सर्वविधपुस्तकप्राप्तिस्थानम्

जयकृष्णदास हरिदासगुप्तः-

चौखम्बा संस्कृत सीरिज़ आफिस

विद्याविलास प्रेस, गोपालमन्दिर

पोस्ट बाक्स नं० ८ बनारस सिटी ।

श्रीगणेशाय नमः ।





# प्रौढमनोरमा ।

ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः ।
सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम् ॥ १ ॥

## शब्दरत्नम् ।

शेषविभूषणमीडे शेषाशेषार्थलाभाय ।
दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥ १ ॥

## शब्दरत्नव्याख्या भैरवी ।

ध्यात्वा देवं परं ब्रह्म जानकीपतिमव्ययम् ।
विदुषां प्रीतिदां लध्वीमृज्वीं रत्नप्रकाशिकाम् ॥ १ ॥
नत्वा तातं जगद्वन्द्यं भवदेवाभिधं गुरुम् ।
सीताख्यां जननीं कुर्वे भैरवोऽगस्त्यसम्भवः ॥ २ ॥

ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलं कुर्यादिति शिष्टसमाचारानुमितस्मृत्या प्रारिप्सित-ग्रन्थसमाप्तिप्रतिबन्धकविघ्नविनाशस्यावश्यकतया समुचितेष्टदेवतास्तुतिरूपं मङ्गलमाचरन्

## शब्दरत्नटीका भावप्रकाशः ।

शिवं शिवेशं शिवदं शिवान्यद, शिवाङ्कं शैवशिवोपशोभितम् ।
शिवं शिवेज्यारतभीतिभञ्जकं, शिवोपदेष्टारमनन्तकं नुमः ॥
शेषालङ्कारकं दुर्गारमोमाकान्तया युतम् ।
गुरुं नत्वा श्रये बद्धशब्दरत्नेन्दुशेखरम् ॥
भावप्रकाशिकां व्याख्यां कर्तुं बालदयान्वितः ।
पायगुण्डेत्युपाख्यातो वैद्यनाथो यथामति ॥

तत्र तावद् "ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलं चरेत्" इत्यादिस्मृतिविधितः शिष्टाचारानु-मितात् "मङ्गलादीनि मङ्गलमध्यानि" इत्यादिभाष्योक्तफलकत्वाच्चादौ निर्विघ्नपरिसमाप्त्यर्थं सामान्यतो मङ्गलस्याप्राप्तत्वेऽपीह शास्त्रे मुनित्रयमङ्गलस्य विधारम्भइत्यादिवचनबोधितावश्यकर्त्तव्यताकविघ्नाधिपदेव-तामङ्गलस्य वा समुचितत्वेऽपि, बालानां स्वेष्टदेवतामङ्गलातिरिक्तमङ्गलस्य "यो वै स्वाम्" इत्यादिश्रुत्यादि-सूचिततया निषिद्धतयाऽनुचितत्वमेतच्छास्त्रस्य चरममुनिप्रमाणकत्वमेतद्ग्रन्थस्य तन्मात्रानुयायित्वं देवता-दिवाचकशब्दानां तत्तच्छुभफलकवर्णगणादिदोषनिवृत्तिफलकप्राथम्यबोधकशास्त्रविषयत्वेन तदशुद्धिहेतुक-निषेधशास्त्रप्राप्त्यविषयतां ध्वनयितुं शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च प्रथमतो देवता-

भैरवी।

**शिष्यशिक्षायै निबध्नाति-**शेषविभूषणमिति। **विशिष्टं भूषणं विभूषणं, शेषो विभूषणं यस्य तं शिवमित्यर्थः। यद्वा शेषश्च विश्च शेषवी, भूषयतस्ते भूषणे, यस्य तं विष्णुं, शेषशायिनं गरुड-वाहनमिति फलितोऽर्थः। कस्मै प्रयोजनाय?** शेषाशेषार्थलाभाय। **शेषस्य योऽशेषोऽर्थस्तल्ला-भाय। आद्यपक्षे शेषयुक्तशिवस्तुत्या शिवस्य विशिष्टविभूषणयुक्तस्य हर्षावस्थापन्नस्य स्मरणे-ऽभीप्सितार्थस्य सिद्धिर्भविष्यत्येव। अन्त्ये शेषस्याशेषोऽर्थो महाभाष्यार्थस्तस्य। यद्वा शेषश्चाशेषश्चेति द्वन्द्वगर्भस्तत्पुरुषः। तेन महाभाष्यार्थगरुडपुराणोक्तार्थस्य लाभः। अशेष-शब्दे च विरोधार्थकनञ्तत्पुरुषोऽसुरपदे यथा। गरुडपुराणोक्तोऽर्थः सदसद्विवेकस्तस्य लाभः। प्रथमवाक्ये तमित्यस्याध्याहारः। तं कम्? यत्कृपादृष्टिः सकलमभीष्टं फलं दातुमीष्टे। सर्वना-म्नामुत्सर्गतः प्रधानपरामर्शकत्वाद् यच्छब्दः शिवस्य विष्णोर्वा बोधकः। ईष्टे इति। अनेनेश्वर-त्वस्य लाभः। तथाचेश्वरस्य भूपतेः प्रसादेन तदाज्ञयैव लौकिकसकलार्थलाभो यथा दृश्यते**

भावप्रकाशः।

वाचकशेषशब्दबोध्यपतञ्जलियुक्तस्वेष्टदेवताविषयकं स्तुत्यात्मकं मङ्गलं निबध्नाति—**शेषविभूषणमिति।**

शेष एव विविधं विशिष्टं वा भूषणं यस्य तं शिवमित्यर्थः। शेषश्च विश्च शेषवी, अभ्यर्हितत्वाच्छेषश-ब्दस्य पूर्वनिपातः, तौ; शेषयुक्तः शेषविरुद्धो वा विर्गरुडो वा भूषणं यस्य पर्यङ्कतया वाहकतया च, तं शेषशायिनं गरुडवाहनं विष्णुमित्यर्थः। यद्वा शेषव्योः शेषयुक्तादिवेर्वा भूषणमिति षष्ठीतत्पुरुषः, तयोः स्थित्या शोभाकरत्वादिति केचित्। वस्तुतस्तु हरिहरात्मकं श्रीलक्ष्मीनृसिंहमित्यर्थः। अत एव—

"शेषनागफणास्फीतसहस्रच्छत्रभासुरः"।

इति ध्यानेन नारदपाञ्चरात्रे उक्तम्। तत्रैव तन्मन्त्रेऽपि "शेषभोगात्मपर्यङ्कशायिने नम इत्यथ" इत्युक्तं, "सर्वाधीशफणातपत्रलसितः" इति मन्त्रमहोदधावपि तद्ध्याने उक्तमिति बोध्यम्। तद्गुणसंविज्ञानोऽयं बहु-व्रीहिः, वक्ष्यमाणहेतोः। अतएव विशिष्टविषयकत्वस्य लाभेन मङ्गलस्य प्रतिज्ञातार्थसिद्धिः। यद्यप्यादौ शिवा-दिपदोल्लेखेनापि मध्यवर्त्तिफलचतुष्टयाद्यन्तफललाभः, तथापि तन्मध्यवर्त्तिफलद्वयलाभार्थमेवं मङ्गलं कृतम्, अतएवौचित्यमपि सिद्धम्। एवञ्च कार्त्स्न्येन प्रागुक्तार्थध्वननमीदृशमङ्गलादेव, नान्यतरमात्रविषयका-दिति बोध्यम्। तदेतद् ध्वनयितुं तद्गुणसंविज्ञानस्योभयस्तुतिद्वारा फलं प्रतिपादयितुं चादौ विशेषण-स्तुतेः फलमाह—**शेषाशेषेति।** तत्राद्यन्तपक्षयोः स्पष्ट एवार्थः। केचित्पक्षे तु, शेषश्चाशेषश्च शेषाशेषौ नञो विरोधार्थत्वात्फणिगरुडौ तयोर्योऽर्थाः महाभाष्यगरुडपुराणस्थसिद्धान्तास्तल्लाभायेत्यर्थः। अन्त्ये सद-सद्विवेकादिकथनद्वारा ज्ञानस्योपदिष्टत्वात्तल्लाभोऽप्यत्रोपयुक्तः, दुराग्रहं संत्यज्य सुष्ठु ज्ञात्वा विचार्य सदस-द्विवेकेनैवात्रापि सिद्धान्तानां वक्तव्यत्वादिति भावः। इयं च चतुर्थी तादर्थ्ये इति बोध्यम्। उक्तार्थमेव विशेष्य स्तुतेः फलमाह—**दातुमिति।** यदि तन्मध्यवर्त्तिफलद्वयमात्रमिष्टं तर्हि तावन्मात्रेणैव तल्लाभे विशेष्योक्तिरफला। यद्यप्यत्र गणदोषो नास्ति आद्यगुरुभगणस्यादौ सत्त्वेन तस्य चन्द्रदेवताकस्योज्ज्वलय-शोरूपोत्तमफलजनकत्वात्, वर्णदोषोपि नास्ति, शः सुखमित्युक्तत्वात्, मित्रामित्रदोषोऽपि नास्ति, आदौ द्वयोरपि भगणत्वेन मित्रतमत्वात्। एवञ्चेदमपि फलं विशेषणस्तुतेरेव सम्भवतीति "शेषसुनामकमीडे" इत्येव पाठ्यम्। किञ्च तस्य देवतार्थकत्वेन सर्वान्त्यफलयोरपि लाभः, तथापि शेषशब्दस्यावशेषार्थबोधकतया दुष्टत्वप्रयुक्तनिषेधस्य विभूषणपदसमभिव्याहृतशेषपदस्य देवतार्थकतयैव निरास इति तदर्थं मध्यवर्त्तिफल-चतुष्टयाद्यफलार्थं च तादृशं मङ्गलमावश्यकमिति तच्चतुष्टयध्वननमप्रत्यूहमेवेति भावः। सर्वनाम्नां प्रधान-परामर्शित्वाद्यस्य शिवस्य विष्णोः लक्ष्मीनृसिंहस्य वा कृपायुक्ता दृष्टिः कृपैव दृष्टिर्वेत्यर्थः। नन्वेवमपीत-रस्तदाद्यर्थध्वननालाभः "आरोग्यं भास्करात्" इत्यादिवचनजातैस्तत्तद्देवतानां विशिष्य तत्तत्कामनापूरक-त्वस्योक्तत्वेन तन्तुवायेनाभूषणादिकमिवान्यकार्यमन्यैः कर्त्तुमशक्यमिति तत्तत्कामनासिद्ध्यर्थं तत्तन्मङ्गल-स्यावश्यकत्वेनैकस्वेष्टदेवताया अपि साधारणत्वात्। किञ्च प्रकृतेऽन्यकामनाऽभावेऽपि निर्विघ्नताया आव-श्यकत्वेन तत्करणे च गणपतेरधिकृतत्वेन तन्मङ्गलं विनेष्टार्थसिद्ध्यभावेनैतन्मङ्गलस्याकिञ्चित्करत्वादत आह—**सकलमिति।** तथा चाज्ञामात्रस्वस्वीयान्यतरसुलभवस्तुमात्रात्पृथिवीपतेः स्वाश्रितस्येव सकलका-

शब्दरत्नम् ।

**ध्यायं ध्यायमिति** । ध्यात्वा ध्यात्वेत्यर्थः, णमुलन्तमेतत् । **परं** सर्वजगदुपादानम् । कार्यब्रह्महिरण्यगर्भव्यावृत्तये इदम् । ध्यानं चिन्तापरपर्यायं स्मृत्यनुकूलव्या-

भैरवी ।

लोके, तथा शिवस्य विष्णोश्च कृपापूर्वकदृष्ट्या सकलार्थलाभो भवत्येवेति तदन्तर्गतत्वेन प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्तिरपि भविष्यत्येवेति ध्वनितम् ॥

ननु ध्यायमिति यदि द्वितीयान्तं तदाऽभ्यासानुपपत्तिः, अत आह—ध्यात्वा ध्यात्वेति । ध्यायशब्दो यदि घञन्तस्तदोक्तार्थालाभोऽत आह—णमुलन्तमिति । एवञ्च क्त्वाणमुलोः समानार्थत्वेनोक्तार्थस्य लाभः सुकर एव । एतेन स्मारं स्मारमित्यपि व्याख्यातम् । कार्यब्रह्मणो हिरण्यगर्भस्यापि—

यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्मनामरूपमन्नञ्च जायते ॥

इति श्रुत्या नपुंसकलिङ्गब्रह्मशब्दवाच्यत्वात्तद्व्यावृत्तये—परमिति । एवञ्च हिरण्यगर्भस्यापि जगदन्तःपातित्वेन तदुपादानत्वस्य तत्राभावात्तद्व्यावृत्तिरिति भावः । न च हिरण्यगर्भस्य चेतनरूपत्वात्तस्य च "नित्यं विज्ञानमानन्दम्ब्रह्म" इति श्रुत्या नित्यत्वावगमेन कथङ्कार्यत्वमिति वाच्यम्, अपञ्चीकृतसकलभूतसमष्टिसूक्ष्मशरीरोपहितो हिरण्यगर्भः, तदुपाधिभूततादृशशरीरस्य जन्यत्वाद् हिरण्यगर्भस्य जन्यत्वव्यवहारः । अत एव—

"हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" ।

इति श्रुतिः सङ्गच्छते । इदम् परमिति विशेषणम् । ध्यैस्मृधात्वोस्तुल्यार्थकत्वस्य प्रसि-

भावप्रकाशः ।

मनाया इत एव लाभे निर्विघ्नताया अपि तदन्तर्गतत्वेनैव लाभात्तत्सिद्धिस्तद्ध्वननं च सम्यगेवेति भावः । **ईष्टे** । ईश्वरत्वेन स्वातन्त्र्यात्समर्थो भवतीत्यर्थः । यदीयतादृशदृष्टेरेवेदृशसामर्थ्यमिति तस्य महत्त्वं किं वर्णनीयमिति सर्वोत्कृष्टतमत्वं तत्रेति तात्पर्यम् । तथा च मूर्खाणामभक्तानां भेदवादिनां च तत एव सकलाभीष्टलाभासत्त्वेऽपि तदन्येषां सर्वोत्कृष्टत्वेनैकत्वेन च जानतां स उचित एवेति भावः ॥

ननु ध्यायमित्यादेर्घञाद्यन्तप्रकृतिकद्वितीयान्तत्वे अभ्यासान्वयद्वितीयानामनुपपत्तिरत आह—**ध्यात्वेति, णमुलन्तमिति** च । एतेन स्मारंस्मारमित्यपि व्याख्यातम् ।

ननु ब्रह्मणि किं नाम परत्वम्? न चान्यत्वं, भेदस्यासत्त्वात् । न चोत्कृष्टत्वं, यत्किञ्चित्प्रतियोगिकोत्कर्षस्य येन केनचिद्रूपेण सर्वत्र सत्त्वात्, जगदुपादानत्वस्यापि हिरण्यगर्भादावतिप्रसक्तत्वादत आह—**सर्वेति** । एवं चेदृशोत्कर्षस्य तदन्यत्रासत्त्वान्नातिप्रसक्तिरिति भावः ।

यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः ।तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते ॥

इत्यादिश्रुतिरिह प्रमाणम् । ईदृशं ब्रह्म जीवः ईश्वरो वा शुद्धं वा मतभेदेनेति स्पष्टमुत्तरमीमांसायाम् । सर्वपदव्यावर्त्यं ध्वनयितुमाह—**कार्यब्रह्मेति** । यद्यपि "ब्रह्मा तु तपसि ज्ञाने वेदाध्याये द्विजे विधौ । ऋत्विग्योगविदोश्च" इति विश्वादावुक्तं, तथा—

'वेदस्तत्वं तपो ब्रह्म, ब्रह्मा विप्रः प्रजापतिः ।'

इत्यमरोक्तं, तथापि श्रुतौ क्लीबब्रह्मशब्दस्य कार्यकारणब्रह्मपरतया बहुशः प्रसिद्धत्वान्न दोषः । अधिदैवतं त्रिषु रूपेषु विराट्—हिरण्यगर्भ—ईश्वरेषु । अपञ्चीकृतभूतकार्यसमष्टिः सूक्ष्मशरीरो-

सरला ।

गणेशगुरुपादाब्जसेवनाल्लब्धबुद्धिना । टिप्पणं शब्दरत्नस्य क्रियते बालबुद्धये ॥

**कार्यब्रह्मेति** । ननु कार्यब्रह्मरूपचतुर्मुखवाचिब्रह्मशब्दस्य "ब्रह्मात्मभूः सुरज्येष्ठः" इत्याद्यमरेण पुंस्त्वानुशासनात् नपुंसकब्रह्मशब्दोपादानेनैव तद्व्यावृत्तौ सिद्धायां परं पदोपादानं निष्फलमिति चेत्? न । चतुर्मुखवाचकब्रह्मशब्दस्यापि "तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते" इति श्रुतौ "ब्रह्मणा लोककर्तृणा" 'स ब्रह्म स शिवः' इत्यादिप्रयोगेषु च क्लीबतादर्शनेन तद्व्यावृत्तेः ।

शब्दरत्नम् ।

पाररूपं, स्मरणं तु तज्जन्यमिति विशेषः । गुरोरित्येकवचनेन सर्वविद्यालाभ एकस्मादेव गुरोरिति सूचितम् । प्रौढानां मनो रमयतीत्यर्थिकां मनोरमाम् ।

भैरवी ।

द्धत्वादुभयोरुपादाने पौनरुक्त्यमत आह—ध्यानमित्यादि । व्यापाररूपमिति । स्मृत्यनुकूलभावनाख्यसंस्काररूपमित्यर्थः । तज्जन्यम्—तादृशसंस्कारजन्यस्मरणरूपम् । ननु गुरुशब्दार्थस्य पूज्यत्वेन "गुरवः समागताः"इत्यादौ बहुवचनवदत्रापि बहुवचनेनैवोपादानमुचितमत आह—गुरोरित्येकेति । एतेनैकस्मात्सर्वविद्यालाभस्तस्य सर्वविद्याश्रयतां विना नोपपद्यत इति तस्यैकस्य सर्वविद्याकुशलत्वे लब्धेऽधिकपूज्यत्वस्येश्वर इव सर्वोत्कृष्टत्वस्य लाभ इति ध्वनितम् । प्रौढानाम्मनांसि प्रौढमनांसि रमयति या सा प्रौढमनोरमा इत्यर्थश्चेत्तदा "कर्मण्यण्"इत्यण्प्रत्यये "टिड्ढा"इति ङीप् स्यादत आह-प्रौढानामित्यादिना । एवञ्चैवंविधस्तस्य फलितोऽर्थः, विग्रहस्तु गङ्गाधर इत्यत्रेव रमयतेः पचादित्वस्य मूलविभुजादित्वस्य वा कल्पनेन रमयतीति रमा प्रौढमनसां रमेति कार्यं इति सूचितमिति केचित् । वस्तुतस्तु यदि रमयतेः पचादित्वादि कल्प्यते तदा

भावप्रकाशः ।

पहितो हिरण्यगर्भः, तस्य वस्तुतो ब्रह्मत्वेऽपि तदुपाधेः सूक्ष्मशरीरस्य जन्यत्वात्कार्यत्वं बोध्यम् । एतेन वस्तुतो जन्यत्वस्य कस्याप्यभावादौपाधिकजन्यत्वस्य विराडादावपि सत्त्वेन तस्यैवात्रोल्लेखः कुतो नेति परास्तम् । अशोकवनिकान्यायेन तथोल्लेखात् । किञ्च हिरण्यगर्भस्य भौतिकसृष्टिमध्ये प्रथमसृष्टत्वेन तथोक्तत्वात् । अत एव "हिरण्यगर्भः समवर्त्तताग्रे भूतस्य" इत्यादिश्रुतिः संगच्छत इति दिक् । इदम् सर्वत्वविशिष्टजगत उपादानमाद्यकारणमित्यर्थकं परमिति विशेषणम् ।

ननु ध्यैस्मृधात्वोस्तुल्यार्थकत्वेनान्यतरवैयर्थ्यमत आह—ध्यानमित्यादि । चिन्तेति । ध्यै चिन्तायामित्युक्तेरिति भावः । स्मृत्यनुकूलेति । स्मृतिजनकभावनाख्यसंस्काररूपव्यापाररूपमित्यर्थः । प्राचां मते स्मृतावनुभवस्य करणत्वव्यापारस्य तत्त्वं विना बाधितत्वेन तस्यापि तत्त्वात् व्यापारेण व्यापारिणोऽन्यथासिद्धेश्च । नव्यमते त्वन्यथासिद्ध्या तस्यैव करणत्वात् । एवञ्च मतद्वयसाधारणमिदम् । यद्वा पूर्वमते पञ्चम्यर्थबहुव्रीहिणा स्मृतिजनकानुभवरूपमित्यर्थः । तज्जन्यमिति । उक्तरूपव्यापारजन्यमित्यर्थः । विशेष इति । ध्यानस्मरणयोरिति शेषः । तथा च भेदान्नान्यतरोक्तिरफलेति भावः ।

ननु गुरोरित्यनुचितं पूज्यतया बहुवचनस्य युक्तत्वादत आह—गुरोरितीति । एकस्मादेवेति । कृष्णपण्डिताख्यादेवेत्यर्थः । एवोऽन्यव्यवच्छेदे । सूचितमिति । तथा च तस्य सर्वविद्यानिधित्वसूचनद्वारा सर्वोत्कृष्टत्वसूचनेन सर्वपूज्यत्वप्रतिपादनद्वारा ईश्वरस्येवाद्वितीयत्वप्रतिपादनार्थमेकवचनोक्तिरिति भावः । प्रौढत्वं न मनोमनोरमयोरभेदेन विशेषणमित्याह-प्रौढानामिति । मनो रमयतीत्यर्थिकामिति । इतिशब्दाथकशब्दप्रतिपाद्यामित्यर्थः । नन्वेवं विग्रहे कर्मण्यणि ङीबापत्तिरिति चेत्? अत्राहुः—आवश्यकस्य पचादित्वादेर्मनोरमयतीति णिच्-कर्मोभयविशिष्टरम्धातौ कल्पनया अण एवाप्राप्तिरिति । युक्तं चैतत् । अन्यथा मनसः कर्मत्वस्याविवक्षा सम्बन्धित्वस्य च विवक्षा, रमयतेरपि फलसमानाधिकरणव्यापारवाचकत्वस्य फलव्यधिकरणव्यापारवाचित्वस्य च विवक्षाऽविवक्षा चेति ज्ञानातिगौरवं स्पष्टमेव । अतो विशिष्टपाठस्यैव लघुत्वम् । एवंजातीयकेषु गंगाधरादिष्वप्येवमेव बोध्यम् । अत एव "आकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन" इति कर्मण्यणित्यत्रत्यं वार्त्तिकम्, "अलमाश्रयते अलाश्रयः सचासौ विधिः" इति स्थानिवत्सूत्रस्थभाष्यं, "क्रियमाचक्षाते स्त्र्याख्याविलत्र मूलविभुजादित्वात् क" इति यूस्त्र्याख्याविति,सूत्रस्थं पक्षान्तरबोधकभाष्यं च स्वरसतः संगच्छते । एतेन मनो रमयतीत्यर्थिकामिति कुकल्पना परास्ता ।

नचैवं रमेत्यस्यासिद्धिः, येभ्यो विशिष्टेभ्य इष्यते ते स्वादौ णिज्रहितान्केवलान् तान्पठित्वा ततः कर्मोपपदेभ्यश्चेति पठित्वा ततो णिच्प्रकृतिभूतान् तादृशान् सचकारान् पठित्वा णिचश्चेति पाठ्यमित्येततात्पर्येण लाघवस्य रमेत्यादिसिद्धेश्च निष्प्रत्यूहत्वात् । रामेत्यस्य तु ज्वलादित्वात्सिद्धिः । कृतपूर्वी कटमित्यादौ तु भाष्यप्रामाण्यादगत्या कर्मणो विवक्षाऽविवक्षा च । सहवाक्यद्वयप्रदर्शनं तु-षष्ठीतत्पुरुषोत्तरमनु,

ह य व र ट् ( मा० सू० )। हकारोपदेशः अट्अश्हश्इणग्रहणेषु हका-

शब्दरत्नम् ।

प्रौढत्वं च सकलदर्शनार्थज्ञानपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वम् ।

**इग्ग्रहणेष्विति** । नन्विदं न्यूनम्, अम्ग्रहणेऽपि ग्रहणात् । फलं तु 'बहुपुमन्कुह्' भैरवी ।

प्राप्तस्यापि कर्मण्यणित्यस्य पचादिभ्योऽजित्यादिना बाधे ङीबभावः सुकर एवेति । प्रौढमनांसि रमयतीत्येव विग्रह इति बोध्यम् । प्रकृतोपयोगिप्रौढपदार्थतावच्छेदकमाह–प्रौढत्वमिति । एतेन महाभाष्यगूढार्थज्ञानमितरसकलदर्शनार्थज्ञाने सत्येवेति सूचितम् । भाष्यकर्तां विचारसमये सकलदर्शनार्थस्य तत्र तत्र ध्वननात् । अत एव गूढत्वविशेषणं सङ्गच्छते। एवंविधप्रौढत्वोपपादनेन तादृशज्ञानवतामेव निर्दुष्टत्वज्ञानेनेयं मनोरमा रमयति नान्येषामित्युक्तम्भवति ॥

भावप्रकाशः ।

अजुत्तरं वा सः, अन्त्ये नित्यसाकाङ्क्षत्वात् तस्य मनस्यन्वयः तद्द्वारकसम्बन्धेन रमायां वेति-सूचयितुं; न सहविग्रहाद्यभिप्रायं, यौगपद्यासम्भवेन बाधितत्वात् । अतएवेत्यर्थिकामित्युक्तिर्नत्वितिविग्रहिकामिति । अग्रे च मनोरमामित्येवोक्तमिति भावः ॥ ननु मनोरमणे वयःकृतप्रौढत्वस्यान्वयव्यतिरेकव्यभिचारेणाहेतुत्वात्, अन्यस्य तस्यानिर्वाच्यत्वात्, प्रतिभादेरेव हेतुत्वाच्च प्रौढेति विशेषणं व्यर्थमत आह— **प्रौढत्वमिति** । प्रौढत्वं चेत्यर्थः । क्वचित्तथैव पाठः । दर्शनं शास्त्रम् । एतेनान्यसर्वशास्त्राध्ययनोत्तरमेव महाभाष्यगूढार्थज्ञानं, नान्यथा । तत्र प्रसक्तानुप्रसक्त्या सर्वज्ञेन सहस्रास्येन पतञ्जलिनाऽन्यशास्त्रविषयानपि कांश्चिद् गुरुलघुतया प्रतिपाद्य खण्डितत्वात् । अत एव गूढार्थेत्युक्तमिति । महाभाष्याध्ययनोत्तरं तु नान्यशास्त्रादौ प्रवृत्तिरपि, तत्तच्छास्त्रविषयाणां केषांचिदित एव लाभात्, अस्य सर्वशास्त्रकपाटत्वाच्च । अनेन शब्दब्रह्मनिष्ठस्यान्यत्रासारत्वान्निष्फलत्वाच्च ब्रह्मनिष्ठस्य विषयपुनर्वेदान्तश्रवणाद्योरिव वैराग्योदयादिति च सूचितम् । तदुक्तं विष्णुपुराणे—

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ इति ।

एतन्मूलभूता "द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च" इत्यादिश्रुतिरपि मुण्डके प्रसिद्धा । अन्यभाष्यव्यावृत्त्यर्थं **महेति** । भाष्यमात्रोल्लेखेन मूलस्यापि तन्मात्रानुयायित्वं ध्वनितम् । **गूढार्थेति** । एवं च तादृशानामेव निर्दुष्टत्वादियं मनो रमयत्येवेति खण्डनप्रवृत्त्यनुमितातादृशत्वानां खण्डनकाराणां खण्डनायात्र प्रवृत्तिरज्ञानविलसितत्वेन निष्फलैव । तथा च प्रौढत्वस्य विलक्षणबुद्धिमत्त्वरूपतया निर्वक्तुं शक्यत्वान्नोक्तदोष इति भावः ।

**इण्ग्रहणेष्वितीति** । अत्रेदं बोध्यम्, अशित्यधिकम् । सूत्रमते "भोभगो"इति सूत्रे तत्सत्त्वेपि सिद्धान्ते 'देवाः सन्ति' 'छन्दःसु' इत्यादीनामन्यथावारणेन तस्य खण्डितत्वेन तत्र तद्ग्रहणे फलाभावात् । खरि यत्वासिद्ध्या विसर्गादिप्रवृत्त्या "लोपः शाकल्यस्य" इत्यत्र तदनुवृत्तेर्न फलम् । 'वृक्षस्करोति' इत्यादौ

सरला ।

**सकलदर्शनार्थेति** । अत्र सकलपदं महाभाष्यं विशेषणम् । तेन दर्शनाद्यज्ञानपूर्वकसकलमहाभाष्यगूढार्थज्ञानवत्त्वमित्यर्थः फलति । साकल्येन महाभाष्यगूढार्थज्ञाने सत्येव दर्शनानामीपज्ज्ञानेऽपि इयमानन्ददायिका । साकल्येन महाभाष्यगूढार्थज्ञानं च सिद्धान्तकौमुद्यध्ययनात् सिद्ध्यति । न केवलं सिद्धान्तकौमुदीमात्राध्येतारोऽत्र प्रौढत्वेन विवक्षिताः, किन्तु मुक्तावल्याद्यध्ययनेनेपद्दार्शनिकसिद्धान्तज्ञानवन्तस्तादृशा इति । तथा च सिद्धान्तमुक्तावल्याद्यध्ययनपूर्वकसकलसिद्धान्तकौमुद्यध्येतारोऽस्मिन्ग्रन्थेऽधिकारिण इति तु सांप्रदायिकाः । युक्तं चैतदिदानीन्तनविद्वज्जनेषु तथा दर्शनात् । सिद्धान्तकौमुदीगूढार्थज्ञानं प्रयोजनम्, सिद्धान्तकौमुद्यर्थो विषयः, प्रतिपाद्यप्रतिपादकभावश्च सम्बन्ध इति अनुबन्धचतुष्टयं बोध्यम् ।

## भैरवी ।

हयवरडित्यत्र यः प्रथमो हकारस्तत्प्रयोजनावसरे प्रत्याहारचतुष्टय एव प्रयोजनमुपात्तं, तत्र न्यूनत्वमाशङ्क्य निराचष्टे—नन्वित्यादिना । अम्ग्रहणेऽपीति । अम् गृह्यते यस्मिंस्तस्मिन "पुमः खय्यम्परे" इति सूत्रे । ग्रहणादिति । निमित्तत्वेनग्रहणस्यापेक्षणीयत्वादित्यर्थः । एतत्प्रयोजनमाह—फलं त्विति । क्लृप्तप्रयोजनाभावसूचनाय तुशब्दः । बह्विति । अत्र बहवः पुमांसो यस्येति बहुव्रीहौ "शेषाद्विभाषा" इत्यत्र विभाषाग्रहणात् 'उरः प्रभृतिषु' एकवचनान्तस्य पुम्सूशब्दस्य पाठान्न कप् । सकारस्य.तु संयोगान्तलोपः । कुह् इति प्रत्येकमनुकरण-

## भावप्रकाशः ।

तु "लोपःशाकल्यस्य" इति न । यसाहचर्याद्धलीत्यपवादविषयत्वाच्च । न चैवमपि तत्रैवाप्रवृत्त्यर्थं "हलि सर्वेषाम्" इत्यत्रानुवृत्तये तदावश्यकमिति कथं खण्डितत्वमिति वाच्यम् । तेषामनभिधानस्य तत्रैव कैयटादिभिरेवोक्तत्वात्। अन्यथा 'वृक्षव् हसति' इत्यादावगतेः। अत एव 'न पदान्ताः परेऽणःसन्ति' इति लण्सूत्रे भाष्यं संगच्छते । अनुनासिकप्राप्तियोग्या इति तदर्थः । तेन 'हरयिह' इत्यादिसत्त्वेऽपि न क्षतिः, भोसादिसाहचर्येण रोरित्यनुवृत्त्या च रुस्थानिकयस्यैव तेन लोपाच्च । अतएवाव्यपरइति निर्देशसंगतिः । एवं चाष्टमिकभाष्यमेकदेश्युक्तिः । अत एव मूलोक्तोत्तरहकारफलानां भाष्ये साकल्येनोल्लेखवदस्य हस्य मूलोक्तानां तेषां तथाऽनुल्लेखोऽट्हशोरेव तदुल्लेखश्च संगच्छतइति । नन्वेवमिण्यपि तदुक्तिरसङ्गता, न चेष्टापत्तिः, 'लिलिहिढ्वे' इत्यादीनामसाधुतापत्तेः । यदि तु अट्हशोः फलोक्तिपरभाष्यस्योपलक्षणत्वं ब्रूषे, तर्हि अश्यपि उक्तहेतोः-कैयटेन तथैव कण्ठतस्तत्र फलोक्तेः, पुंयोगादिति सूत्रे 'मञ्चा हसन्ति' इति भाष्यप्रयोगाच्च ग्रहणापत्तावधिकमित्युक्तिरेवायुक्तेति चेत् ? अत्र केचिदाहुः—द्वितीयहकारफलोक्त्यनन्तरं 'यदि किञ्चिदन्यत्राप्युपदेशे प्रयोजनमस्ति तत्राप्युपदेशः कर्त्तव्यः' इति भाष्यादिणि सफलत्वात्तथा न त्वशि तदभावादिति फलसत्त्व एव तद्भाष्यस्योपलक्षणत्वं नान्यथा । एवञ्चाधिक्ये न भाष्यानुक्तत्वमात्रं हेतुः, किन्तु फलाभावसहितं तत् । कैयटोद्द्योतौ तु सूत्रानुसारिणौ । 'मञ्चा हसन्ति' इति प्रयोगस्य त्वन्मतेऽपि मते सिद्धिर्निर्बाधैवेति । वस्तुतस्तु इण् इत्यपि तथैव । अत एव यदि किञ्चिदिति सन्दिग्धार्थकमुक्त्वा अग्रे फलादानं भाष्ये सङ्गच्छते । अत एव वक्ष्यति अमि हकारप्रयोजनमिति च भाष्ये नोक्तमिति। तदुक्तिस्तु स्वरूपप्रतिपत्त्यर्थ एवायमक्षरसमाम्नाय इति भ्रमनिवारणाय सर्वथा शास्त्रीयफलार्थतया हस्य द्वैधोपदेशः कर्त्तव्य इत्यत्र तस्य तात्पर्यम् । एवं चाशंशे फलाभावस्योक्तरीत्या स्पष्टत्ववदत्रोक्तहेतोरेव तदनुमानात् । आधिक्ये तद्वदीदृशभाष्यानुक्तत्वमपि हेतुः । अत एव कैयटेनाप्यत्र फलं नोक्तम् । एवं च 'लिलिहिढ्वे' इत्यादीनामनभिधानमेवेति बोध्यम् ।

खण्डनकर्त्रुद्भावितां न्यूनतां परिहर्तुं शङ्कते—**नन्वित्यादिना** । इदं फलचातुर्विध्यम् । **न्यूनमिति** । तथा च गुरुग्रन्थे न्यूनतयैवमुक्तेऽपि न साऽपगतेति भावः । **अम्ग्रहणेऽपि** अम् गृह्यते यस्मिन् तत्र पुमःखयीत्यादावपि । ग्रहणात् अम्वाच्यत्वेन निमित्ततया तद्ग्रहणस्यापेक्षणीयत्वात् । एतेन मूलमपि व्याख्यातम् । लोकप्रसिद्धफलव्यवच्छेदाय तुशब्दः । **बहुपुम्किति** । ननु 'बहुपुम्कुह्' इति समुदितानुकार्याप्रसिद्ध्या अनुकरणत्रयकल्पनावश्यकत्वेऽपि पुंल्लिङ्गे शसः प्राग्वर्त्तिबहुपुम्सिति सान्तमेवानुक्रियताम्, प्रथमोपस्थितत्वात्, किं भ्यामः प्राग्वर्तिनः कृतसंयोगान्तलोपस्य नपुंसकस्य वा मान्तबहुपुंशब्दस्यानुकरणेन । अत एवोत्तरग्रन्थसङ्गतिः । न चैवं "पुमःखयि" इति न स्यात्तत्र मान्तग्रहणादिति वाच्यम्, तत्रापि सान्तस्यैवानुकरणेन सौत्रत्वात्सलोपेन 'पुंस्कोकिलः' इत्यादावेकदेशविकृतन्यायेन कृतसंयोगान्तलोपेऽत्र तत्प्राप्तेः । लोपस्य सौत्रत्वाङ्गीकारे गौरवफलाभावतथानिर्देशाफलत्वसर्वेष्टासिद्धिभ्यः सूत्रे मान्तानुकरणेऽप्यत्र तथा सति लक्ष्यवत्संयोगान्तलोपेन मान्तत्वाक्षतेश्चेति चेन्मैवम्, तन्न्यायासत्त्वस्य वक्ष्यमाणत्वात् । किं च तथा सति सूत्रे विकृतात्षष्ठ्युच्चारणेन विकृतिग्रहणे प्रकृतेरग्रहणादत्र 'प्रकृतिवदनुकरणम्' इतिन्यायेन भत्वेन संयोगान्तलोपाप्राप्त्या कादेर्जश्त्वादिवारणायाभेदविवक्षाश्रयणाच्च तदप्राप्तेः । अत एव शसः प्राग्वर्त्तिन एव सकारं विहायानुकरणमित्यपि न, अर्थवतोऽनुकार्यत्वे संभवत्यनर्थके तत्त्वानौचित्याच्च । नन्वेवमुभयत्र मान्तानुकरणेप्युक्तरीत्याऽभेदविवक्षया पदत्वाभावेन रुत्वाप्राप्त्या

रग्रहणार्थः । अर्हेण, "अड्व्यवायेऽपि" इति णत्वम् । देवा हसन्ति, "भोभगो" ( पा० सू० ८।३।१७ ) इति रोर्यत्वम् । देवो हसति, "हशि च" ( पा०

---

### शब्दरत्नम् ।

इत्यादौ "पुमः खय्यम्" इति रुत्वम् । गवित्ययमाहेत्यादिवद् , अपदान्तत्वात्ककारादेर्न

### भैरवी ।

द्वयम् । ननु प्रत्येकानुकरणेऽनुकार्येणार्थेन ककारहकारयोरर्थवत्त्वात्प्रातिपदिकत्वेन सुबुत्पत्तौ हल्ङ्यादिलोपे प्रत्येकम्पदत्वाज्जश्त्वढत्वयोः कृतयोर्न रुत्वस्य प्राप्तिरत आह—गवित्ययमाहेत्यादीति। इत्यादाविवेत्यनेन तत्र चाभेदविवक्षा सूचिता, बहुपुमित्यत्र तु सान्तप्रातिपदिकानुकरणं भेदविवक्षा च । अत एव सकारस्य संयोगान्तलोपः । ककारादेरिति । आदिना हकार-

### भावप्रकाशः ।

फलाभावः । न च सूत्रे एव फलाभावात्पदस्येत्यस्यासम्बन्धः, अधिकृतस्य तस्यासम्बन्धे मानाभावात् । व्यभिचाराभावेऽप्यसम्भववारकतया चारिताथ्यात् । "नश्छवि" इत्यादावग्रे सम्बन्धस्यावश्यकत्वेन सम्बन्धतदभावयोः कल्पने गौरवात्तदन्तविध्यर्थं तस्यावश्यकत्वाच्च । अन्यथा बहुपुमित्यनेन पदाक्षेपेऽपि तद्रूपपदस्य रुत्वमित्यर्थे केवले संभवेऽपि तदन्तेऽतत्त्वात्तदनापत्तेरिति चेत्, न, बहुपुमित्यंशेऽगत्या भेदविवक्षाङ्गीकारेण प्रकृतिवदनुकरणमित्यङ्गीकारेण वा पदत्वात्तत्प्राप्तेः फलस्य सुवचत्वात् । एवं त्वत्र सान्तानुकरणेऽप्याद्यपक्षे बाधकाभावः । उक्तरीत्या पदत्वात्संयोगान्तलोपेन लक्ष्ये मान्तत्वस्यैवावस्थितेरिति कश्चित् । वस्तुतस्तु उक्तरीत्या क् ह् इत्यनुकरणद्वयसत्त्वेऽपि कुलान्यपदार्थकबहुवचनान्तबहुव्रीहिर्नानुकरणं बहुपुमिति । तदर्थस्य च ब्रूधात्वर्थे कर्तृत्वेनान्वयः, अध्याह्रियमाणश्रवणे सम्बोध्यत्वेन वा । तत्र च सोर्लुकि प्रत्ययलक्षणेन पदत्वात्संयोगान्तलोपे रुत्वप्राप्तिरविघ्नैव । अत एव स्वरसतो गवित्ययमित्युत्तरग्रन्थसङ्गतिः । अन्यथाऽत्रापि तदनुरोधेन तथाङ्गीकारेऽफलत्वमर्धजरतीयत्वं च स्यात् । एवञ्च पक्षान्तरेऽप्यगतिकगतिन्यायादरपङ्ककलङ्कक्लेशोऽपि न । कप्तु न, उरः प्रभृतिष्वेकवचनान्तपाठेन बह्वादिषु तत्त्वासम्भवेऽपि 'प्रियपुंस्कः' इत्यादौ तत्सम्भवेनात्र तदप्राप्तेः । किञ्च वैपुल्यवाचकत्वेऽपीष्टानुरोधेन बहुवचनान्तानामेवात्र समासकरणात् । अकृशमकृशलक्ष्मीरितिवत् । शेषाद्विभाषेति तु पाक्षिकः । एवंचेदं फलं युक्तमिति गुरुचरणानामाकूतमिति बोध्यम् ।

**रुत्वमिति** । रुशब्द इत्यर्थः । अनुस्वारशास्त्रस्यासिद्धत्वादिति भावः । अत्र यथा त्वप्रत्ययस्तथा मञ्जूषादौ स्पष्टम् । नन्वेवमपि भेदविवक्षायां पदत्वात्कादेर्जश्त्वादौ रुत्वाप्राप्तिस्तदवस्थैवात आह—**गवी**ति । तत्रैवाभेदविवक्षायामित्यर्थः । भेदाभेदपक्षयोः पदत्वापदत्वयोरुपपत्तिस्त्वग्रे व्यक्तीभविष्यति । कका-

### सरला ।

**अपदान्तत्वादिति** । अनुकार्यानुकरणयोरभेदविवक्षायामनुकरणेनानुकार्यस्य तादृश्यज्ञानेनोपस्थितेः शक्तिलक्षणान्यतरज्ञानाधीनोपस्थितिप्रयोज्यबोधतात्पर्योच्चरितत्वरूपार्थवत्त्वस्याभावात्प्रातिपदिकत्वाभावेन सुबनुत्पत्त्याऽपदान्तत्वादित्यर्थः । बहुपुम् क् ह् इत्यनुकरणत्रयमेतत् । अभेदविवक्षापक्षश्च "मतौ छस्सूक्तसाम्नोः" इति सूत्रस्थेन "अस्यवामादिभ्य उपसंख्यानम्" इति वार्तिकेन ज्ञाप्यते। तद्धि अस्यवामशब्दान्मत्वर्थे छप्रत्ययं विधत्ते । अस्यवामशब्दादारभ्यमाणसूक्तघटकास्यवामशब्दानुकरणमेतत् । यदि तु भेदविवक्षापक्षः स्यात् तर्हि तस्मिन्पक्षेऽनुकार्यानुकरणयोर्भेदात् अनुकरणेनानुकार्यस्य बोधदर्शनात्तत्रानुकार्यार्थनिरूपितशक्तेरवश्यं स्वीकार्यतया अनुकार्यार्थनिरूपितशक्तिज्ञानाधीनोपस्थितिप्रयोज्यबोधतात्पर्येणोच्चरितत्वरूपार्थवत्त्वस्य "अस्यवाम" इत्यनुकरणे सत्त्वेन प्रातिपदिकत्वे ततः प्रथमैकवचनस्य सुलभतया "मतौ छः" इति सूत्रेणैव "प्रथमान्तान्मत्वर्थे छः प्रत्ययो भवति सूक्ते सामनि वा वाच्ये"इत्यर्थकेन छप्रत्यये "अस्यवामीयम्" इत्यस्य सिद्धौ तद्व्यर्थम् । ज्ञापिते चाभेदविवक्षापक्षे तत्रोक्तरीत्या अर्थवत्त्वाभावेन प्रातिपदिकत्वाभावे ततः प्रथमाया अप्राप्त्या "मतौ छः" इति सूत्रस्याप्रवृत्तेस्तदर्थं वार्तिकस्य चारितार्थ्यात् । अत एव भू सत्तायामिति निर्देशः सङ्गच्छते । वस्तुतस्तु भेदविवक्षापक्ष एवोचितः । सच प्रकृतवार्तिकप्रत्याख्यानपरभाष्य-

सू० ६।१।११४ ) इत्युत्वम् । लिलिहिढ्वे, लिलिहिध्वे, "विभाषेटः" ( पा०

शब्दरत्नम् ।

जश्त्वमिति चेत् ? न, "छुट्तिथोः" इत्यादाविकाराद्युच्चारणेन शास्त्राबोधिताजव्यवहितहल्स-

भैरवी ।

परिग्रहः । जश्त्वमित्युपलक्षण ढत्वस्यापि । छुट्तिथोरिति । आदिपदद्वयेन झषस्तथोरित्यस्य तत्रत्याकारस्य च परिग्रहः । शास्त्राबोधितेत्यादि । अचाऽव्यवहितोऽजव्यवहितः, अजव्यवहितश्चासौ हल्समुदायश्चाजव्यवहितहल्समुदायः, शास्त्रेणाबोधितो योऽजव्यवहितहल्समुदायस्त-

भावप्रकाशः ।

रादेरिति । आदिना हकारपरिग्रहः । एवं च जश्त्वं ढत्वस्याप्युपलक्षणमिति भावः । एतेन पुमक्ह्वावित्युदाहरन्तो मान्या मान्या एवेति सूचितम् । कस्य जश्त्वापत्तेः । अतएव तावन्मात्रोल्लेखः ।

इकारादीति । अनन्यार्थेत्यादिः । प्रकारार्थकादिभ्यां टकितौ झषस्तथोरित्यादेरकारादेश्च परिग्रहः । तदनुपादाने बीजं तु अशोकवनिकान्याय एव । एतेनाकारस्य प्राथम्यात्तथोक्तिरुचितेत्यपास्तम् । तन्न्यायानाश्रयणस्य वक्ष्यमाणत्वाच्च । तथा च सकलज्ञापकैरेकवाक्यतया सामान्यतोऽजहितताद्दृशहल्समुदायस्यासाधुत्वं ज्ञाप्यते, न तु इकाररूपविशेषाजहितस्य तस्येति फलितम् । एतेन "छुट्तिथोः" इत्यादावाद्युपस्थिताकारत्यागेनेकारकरणेन विजातीयाजहितताद्दृशहल्समुदायस्य तुल्यन्यायत्वादसाधुत्वलाभे जबगडदशमुच्चारयेत्यस्यासाधुतापत्तिरिति मन्दोक्तमपास्तम् । इकारमात्रकरणेन तुल्यन्यायत्वात्तथा लाभ इति त्वदुक्तेर्व्याहतत्वाच्च । शास्त्राबोधितेति । तत्त्वं च विधेयतासम्बन्धेन शास्त्रजधीविषयतात्वावच्छिन्नस्य तदवच्छिन्नाश्रयत्वस्य वा योऽभावस्तद्वत्त्वम् । शब्दानां कार्यत्वे आद्यम्, नित्यत्वे त्वन्त्यम् । अत एव शास्त्राबोधितेत्युक्तं, न तु शास्त्राविहितेति । अन्यथा तत्समूहस्याप्युद्देश्यतया तत्सूत्रबोध्यत्वेन स्वस्मिन् चारितार्थ्याभावात् ज्ञापकत्वासङ्गतिः स्पष्टैव । इदं च समूहविशेषणं विशेषणान्तरसाहचर्यात् । अत्र प्रतियोगिनस्तत्त्वं तु साक्षाद्यावदवयवद्वारा शास्त्रबोध्यतत्तत्प्रकृतिप्रत्ययादिरूपसमुदायघटकयावदवयवद्वारा वा यथाकथंचित् । अत एव 'सुध्युपास्यः' इत्यादौ ध्य्इत्यस्य द्ध्य्इत्यस्यास्तीत्यादौ स्त्इत्यादेरग्निरित्यादौ ग्न्इत्यादेश्चासाधुतावारणायेदं विशेषणं सफलम् । द्वितीयस्य तु उणादिव्युत्पत्तिपक्षे 'वटक्' 'मरुत्' इत्याद्यनुकरणमेव व्यावर्त्यम् । मुख्यमते एवमेव । परन्तु डित्थादौ त्थ् इत्यस्य ग्न्तुल्यत्वेऽपि ड्त्इत्यस्योभयव्यावर्त्यता बोध्या । मल्लग्रामादिवद् भूयसा व्यपदेशेन तस्याज्झलात्मकत्वेऽपि ताद्दृशहल्समूहत्वस्यापि तत्र सत्त्वात् । हल्मात्रसमूहेत्यर्थविवक्षायां तु तात्पर्यग्राहकमिदं बोध्यम् । क्च्ट्त्प् इत्याहेत्याद्यनुकरणमस्य लक्ष्यम् । एवञ्च तुल्यजातीयत्वादशास्त्रीयलौकिकताद्दृशानुकरणमात्रविषयमिदं ज्ञापकम् । अतएव "स्कोः" इत्यादिस्तु सौत्रः प्रयोग इत्येवाग्रे उक्तम् । न त्वग्न्यादिचर्चा कृता । एवञ्च प्रकृते तत्त्वसिद्धिरप्रत्यूहैवेति बोध्यम् । एतेन हयवरेत्याद्यानुपूर्व्याः शास्त्रबोध्यत्वमुत नेति विकल्प्य आद्ये तस्यास्तत्त्वेनाद्यं विनापि स्कोरित्यादिवत्साधुत्वोपपत्तेः ज्ञापितेऽपि स्वस्मिन्नचारितार्थ्येन ज्ञापनासम्भवः । अन्त्येऽसाधुतापत्तिस्तस्याः । न च स्वस्य स्वबोध्यत्वानुपपत्तिः । शाब्दिकमते शब्दस्यापि शाब्दबोधे भानाभ्युपगमेन ,दीपस्येव तत्सम्भवादिति मन्दोक्तमपास्तम् । द्वितीयविशेषणेनान्त्यपक्षे तद्वारणात् । नहि तावन्मात्रेणासाधुत्वमुक्तम् । उद्देश्यतया शास्त्रबोध्यत्वेऽपि विधेयतयाऽतत्त्वेनाद्यदोषस्याप्यभावात् । "स्कोः" इत्यादीनामन्यथोपपत्तेर्दृष्टान्तासङ्गतेर्गुरुचरणैस्तस्थानुल्लेखाच्च । एतेन "लोपोव्योः" इति लोपव्यावृत्त्या चरितार्थत्वाद्यवरेत्यकारयोस्तत्त्वासंभव इत्यपि तदुक्तमपास्तम् । क्वचिच्चारितार्थ्येऽपि सर्वत्राचारितार्थ्याच्च । अक्षरसमाम्नाये कार्यप्रवृत्तेरन्यथा

सरला ।।

सिद्धः । तत्र हि पूर्वोक्तरीत्या अर्थवत्त्वेन प्रातिपदिकत्वात् ततः सूत्रेणैव छप्रत्ययं संसाध्य वार्तिकं प्रत्याख्यातम् । अत एव क्षियो दीर्घादिति निर्देशः सङ्गच्छते । अन्यथा क्षिधातोरनुकरणभूतक्षिशब्दात् षष्ठ्यनुपपत्त्यापत्तिः । यथोत्तरं मुनीनां च प्रामाण्यम् । भू सत्तायामित्यादिनिर्देशास्तु सौत्रत्वादुपपादनीयाः । एवं च गविरयमाहेत्यत्रानुकार्यस्वरूपभङ्गभिया न यलोपः । प्रकृते च न ककारस्य जश्त्वमिति दिक् ।।

सू० ८।३।७९ ) इति वा ढः ॥

---

शब्दरत्नम् ।

मुदायस्यासाधुत्वबोधनात् । अत एव "उच्चैरुदात्तः" ( पा० सू० १।२।२९ ) इति

भैरवी ।

स्यासाधुत्वमित्यर्थः । शास्त्राबोधितत्वञ्च—शास्त्रबोधितभिन्नत्वम् । ननु राज्ञ इत्यादौ शास्त्र-बोधितत्वं लोपस्य, न तु अव्यवहितत्वस्येति प्रतियोग्यप्रसिद्धिरितिचेत् ? न, शास्त्रजन्यज्ञान-प्रयोज्यसाधुत्वप्रतिपत्तिकभिन्नत्वस्य विवक्षितत्वात् । साधुत्वस्य व्याकरणव्यङ्ग्यजातिविशेषरूपत्वात्तत्प्रतिपत्तेः शास्त्रजन्यज्ञानप्रयोज्यत्वमक्षतमेव । बोधनादिति । एवञ्चैताद्दशस्यापभ्रष्ट-वदसाधुत्वेन शास्त्रप्रवृत्तियोग्यता तेषु नास्तीत्याशयेन 'अम्' प्रत्याहारे हकारस्य ग्रहणरूप-म्प्रयोजनं नोपन्यस्तमिति भावः । इदञ्च तस्य समुदायस्य सत्त्वाभिप्रायेण । वस्तुतस्तु सत्त्व-

भावप्रकाशः ।

वारणस्यान्यत्रावश्यकत्वेनात्राऽपि तथा संभवाच्चेति दिक् । असाधुत्वेति । अतएवामादिव्यवहारस्य "झभञ्" इति ञकारेण प्रत्याहाराश्रयणादिनैवोपपत्तौ "ञमङणन" इति सूत्रे मोऽनुबन्धो न कार्यः । झकारभकारपरखयाद्यभावात् "पुमः खयि" इत्यादे नास्त्यतिप्रसङ्ग इति तत्सूत्रभाष्यं सङ्गच्छते । अन्यथा बहुपुम्कुञ्ज्" इत्यादौ रुत्वादिवारणाय तदावश्यकत्वे तदसङ्गतिः स्पष्टैव ।

यत्तु तुल्ययुक्त्या ईदूदेदित्यत्रानन्यार्थतकारोच्चारणेन हलं विनाऽच्समूहस्याप्यसाधुत्वे स्कोरितिवत् 'अइउण्'इत्यादेः साधुत्वेऽपि 'अइउ अपेहि' इत्यादेरसाधुतापत्तिरिति मन्दस्तन्न, सूत्रमते व्यक्तिभेदकपक्षयोर्गुणान्तरसङ्ग्रहाय तस्यावश्यकत्वात् । सिद्धान्ते जात्यभेदकपक्षाभ्यां तत्प्रत्याख्यानात्प्रत्याख्यानस्थलेऽदृष्टार्थकताया एव सिद्धान्तितत्वात्

यदपि ग्लौम्लावित्यादीनां मन्त्रे कूटानां चासाधुतापत्तिरिति मन्दस्तदपि न, तत्रत्यहलां संज्ञाघटकतया स्वरूपबोधकतया च शास्त्रप्रवृत्तेरनिष्टत्वाद् 'अचं विना विगता अञ्जना अभिव्यक्तिर्यस्य तत् व्यञ्जनम्' इति तदन्वर्थताबोधिकायाः—

विना स्वरैस्तु नान्येषां जायते व्यक्तिरञ्जसा ।

इत्यभियुक्तोक्तेर्न पुनरित्यादिभाष्यात् ,

अशक्तोच्चारणे मन्त्रे स्वरं दत्त्वा समुच्चरेत् ।

सन्धिं तत्र न कुर्याद्वै पञ्चदश्याः स्वभावतः ॥

इत्यस्य "तत्र पञ्चदशीमन्त्रे अचं दत्त्वोच्चारणं कुर्यात् सन्धिमेलनं न कुर्यात् अचं विना न पठेदिति यावत्" इत्यर्थकस्य गणेशविमर्शिनीतन्त्रे उक्तत्वाद् यत्र यत्र तादृशहल्समूहोच्चारणमशक्यं तादृशमन्त्रस्थकूटादिषु स्वरं विना तदनभिव्यक्त्या सशक्तिकानां हलां प्रत्येकमुच्चारणं न्याय्यमिति तद्व्याख्यातृक्तेश्च तत्रासाधुत्वे इष्टापत्तेः । किञ्च स्कोरित्यादिवत्सौत्रत्वादिना साधुत्वोपपत्तेः । किञ्च पदात्मकसमुदाये उणादेरव्युत्पत्तौ व्युत्पत्तौ च साधुत्वस्य डित्थादिवदुपपत्तेः । किञ्च ज्ञापकस्यानुकरणमात्रविषयत्वस्य उक्तत्वेनात्र तदप्राप्तेरिति दिक् । बोधनादिति । तथा चापभ्रंशवन्न तस्य शास्त्रविषयत्वमिति भावः । एवं सूत्रसिद्धेऽर्थे भाष्यमपि गमकमित्याह—अतएवेति । तादृशहल्समुदायस्यासाधुत्वबोधनादेवेत्यर्थः ।

सरला ।

असाधुत्वबोधनादिति । अत्र केचित् तुल्यन्यायात् "ईदूदेत्"इत्यादौ तकाराद्युच्चारणेन शास्त्राबोधित हल्व्यवहिताच्समुदायस्यासाधुत्वं बोध्यते । अ, इ, उ, अपेहि इत्यसाधु । "अइउण्" इत्यादिस्तु सौत्रः प्रयोगः" इति वदन्ति । तन्न । तत्रत्यतकारादीनां व्यक्तिभेदपक्षयोः अनुनासिकादि संग्रहाय चारितार्थ्यात् । "निपात एकाजनाङ्"इति सूत्रे एकग्रहणवैयर्थ्यापत्तेश्च । तद्धि अनेकाज्निपातव्यावृत्तये । हल्रहिताच्समुदायस्यासाधुत्वे तु न तद्व्यावर्त्यमिति । अतएव तितउ शब्दस्य नासाधुत्वम् इति "चालनी तितउः पुमानिति" कोशः सङ्गच्छते ॥

शब्दरत्नम् ।

सूत्रे भाष्यम्—"न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति" इति । स्कोरित्यादिस्तु

भैरवी ।

मेव नेत्याह—अतएवेति । तादृशसमुदायस्य सत्त्वसाधुत्वयोरभावादेव । उच्चारणमपीति । एक-स्याप्युच्चारणासम्भवेन तादृशसमुदायस्य सुतरां तदसम्भवेन तयोर्लाभः । यत्त्विदम्भाष्यं किं मणिमन्त्रन्यायेन तादृशोच्चारणे प्रतिबन्धकम्, उत तादृशसमुदायस्यासाधुत्वतात्पर्यकम् ? आद्ये संयोगसंज्ञाविधायकशास्त्रस्य संज्ञ्यप्रसिद्धयाऽनर्थकत्वापत्तिः, "लोपशश्चेति द्विशकारको निर्देशः" इति भाष्यस्य चासङ्गतिः । नान्त्यः, एतद्भाष्यघटकोच्चारणशब्दस्य साधुत्वाबोध-कत्वादिति । तन्न, वाच्यवृत्त्या साधुत्वाबोधकत्वेऽपि लक्षणया तदर्थबोधकत्वसम्भवात् । नन्वे-वं शास्त्राबोधिताजव्यवहितहल्समुदायस्यासाधुत्वे "स्कोः" इत्यादौ सकारककारयोस्तादृश-

भावप्रकाशः ।

**भाष्यमिति** । अनेन प्राग्ध्वनितत्वेनोक्तार्थध्वननम् । एवमग्रेऽपि । **उच्चारणमपीति** । अक्लिष्टस्पष्टो-च्चारणमपीत्यर्थः । तथा चैकस्य हलस्तत्त्वाभावेन तत्समूहस्य सुतरां तत्त्वाभावादसत्त्वेन साधुत्वस्य दूरापास्तत्वम् । यदि तु तत्त्वाभावेन तादृशप्रयोगः स्यात्तर्हि भाष्यासङ्गतिः स्पष्टैवेति भावः ।

यत्त्विदं भाष्यं मणिमन्त्रादिन्यायेनोच्चारणे निरोधकमुतासाधुत्वबोधकम् ? नाद्यः, संयोगसंज्ञादिशास्त्रवैय-र्थ्यापत्तेः, 'लोपश्श्चेति द्विशकारको निर्देशः' इति भाष्योक्तेश्च । नान्त्यः, उच्चारणशब्दस्यातदर्थकत्वादिति मन्दः । तन्न, सार्वजनीनतदुच्चारणाभावानुभवप्रदर्शकतया भाष्यस्य तन्निषेधकत्वाभावेन विकल्पस्यैवान-वतारात् । वेदशास्त्राणां सकलव्यवहारस्य चोच्छेदापत्त्या तस्यानुकरणमात्रविषयकत्वस्योक्तत्वेन साधुत्वा-क्रान्ते दृध्य्-इत्यादौ तच्चारितार्थ्यात् लोपश्चेत्यस्य स्कोरित्यादिवदुपपत्तेश्च ।

यदपि तस्मादचं विना हलां स्रंसनधर्मितया अचामेवोदात्तादिधर्मितया हलामुदात्तादिस्वरवि-शिष्टोच्चारणं न संभवतीत्येव भाष्यार्थो वाच्यः, प्रकरणस्य नियामकत्वात् यथाश्रुतार्थासंभवाच्चेति सः । तदपि न, पूर्वापरसन्दर्भादिना तथा भाष्यादप्रतीतेः । तथाहि, तत्र हि पूर्वसूत्रादच्पदस्या-नुवृत्तिर्न वेति विकल्प्य "यदि हलामप्येते गुणास्तदाऽनुवृत्तेः फलं, यतस्तु तथा न, अतः सा न" इत्यु-क्त्वा "इषेत्वोर्जेत्वा इत्यादावुपलभ्यन्ते ते हलाम्" इत्युक्त्वारक्तस्फटिकधीवत् भ्रान्तैवेयं धीरित्याशयेन "नैते हल्गुणाः, किन्त्वच एव, तत्सामीप्याद्व्यञ्जनमपि तद्गुणकमुपलभ्यते" इत्युपलम्भमुपपाद्य प्रतीतेर्भ्रान्तत्वं स्पष्टयितुं प्रतीतेर्भ्रान्तत्वे बीजं किमित्याशयेन कुतोऽन्वित्यादिना कृतवैपरीत्याशङ्कानि-रासायाजन्वयव्यतिरेकादि तद्भ्रान्तत्वेबीजमिति ध्वनयितुम् "अन्तरेणापि व्यञ्जनमच एवैते गुणा लक्ष्यन्ते न पुनरन्तरेण"इत्याद्युक्तम् । अत्रान्तरेणापीत्यनेन हलंशेऽन्वयव्यतिरेकनिरासः । न पुनरित्यने-नाजंशे तत्त्वसत्त्वप्रदर्शनम् । ततश्च ताभ्यामच एवैते गुणाः । युक्तं चैतत्, अन्यथा भिन्नस्वरोपलम्भा-पत्तिः । यतो ह्यचामेव स्वरमनुविदधाति हलस्ततो न हलां स्वरोऽस्तीति । अत एव "उदात्तादिगुणैः स्वयं राजन्त इति स्वराः, अज्गुणमन्वग्भवत्यनुगच्छतीति विविधमुदात्तत्वादिरूपनानाप्रकारं गच्छत्यजुपरा-गवशादिति वा व्यञ्जनम्"इत्यग्रे भाष्योक्तिः सङ्गच्छते । उपरागश्च स्वाभाव्यात्प्रातिशाख्यादितश्च परेण-वाचेति बोध्यम् । एवञ्च यथा हलं विना अजुच्चारणं भवतीति तस्य ते गुणा वक्तुं शक्यास्तथा अचं विना व्यञ्जनस्य तादृशमुच्चारणमपि न, कथं पुनर्वाच्यमुदात्तादयो व्यञ्जनधर्मा भवन्तीति निराकाङ्क्षतदर्थप्रतिपत्तिः अपि–पुनः–शब्दयोः सार्थक्यं च भवति । त्वन्मते तु निर्हेतुकसाध्यप्रतिपादकस्यास्य हेतुसाकाङ्क्षत्वेनासा-धकत्वेनासम्बद्धत्वापत्तिः, पूर्वापरसन्दर्भविरोधापत्तिश्च, तयोर्वैयर्थ्यापत्तिः, स्रंसनधर्मितयेत्याद्यपप्रयोगश्चेति यत्किञ्चिदेतत् । ननु निरुक्तमसाधुत्वमतिव्याप्तमत आह—**स्कोरिति** । आदिना व्योरित्यादिसङ्ग्रहः ।

सरला ।

**न पुनरिति** । अचं विना केवलहल्रूपपदस्योच्चारणं प्रयोगो न भवतीत्यर्थः । हल्मात्रोच्चारणे बाध-काभावादेवमेवार्थस्यौचित्यात् । अत एव कात्स्न्यमित्यादिप्रयोगाः सङ्गच्छन्ते ।

## शब्दरत्नम्।

सौत्रः प्रयोगः। अत एवाटि हकारप्रयोजनकथनावसरे भाष्ये "शश्छोटि" ( सू० ८।४।६३। ) इत्युपन्यस्य तदुदाहरणं नोपन्यस्तम्। हकारपरशकारासम्भवेन शश्छोटीति प्रसङ्गोच्चारितमिति च कैयटेन व्याख्यातम्। अमि हकारप्रयोजनमिति च भाष्ये नोक्तमिति दिक्॥

## भैरवी।

समुदायस्याऽप्यसाधुत्वापत्तिरत आह—स्कोरिति। आदिना व्योरित्यस्य संग्रहः। सौत्र इति। एवञ्च शास्त्रबोधितत्वमेवात्रेति भावः। अतएव। तादृशहल्समुदायस्यासाधुत्वादेव। हकारप्रयोजनम्—हकारग्रहणप्रयोजनम्। तदुदाहरणम्—शश्छोटीत्यस्योदाहरणम्। हकारपरेत्यत्र बहुव्रीहिः। असम्भवश्चोक्तरीत्या बोध्यः। उक्तार्थे कैयटोक्तिरपि साधिकेत्याह—हकारपरेति। इति चेति। चकारो वाक्यालङ्कारे॥

ननु मूले प्रथमहकारस्याशूग्रहणेन ग्रहणरूपम्प्रयोजनमुक्तं, तन्न सङ्गच्छते, 'भोभगो' इति सूत्रेऽशूग्रहणेन यद्यपि "देवाः सन्ति" "छन्दःसु" 'पयःसु' इत्यादौ यथाश्रुतप्राचीनरीत्या लोपो वार्यते इति सम्भवति, तथापि वक्ष्यमाणसिद्धान्तरीत्याऽत्राशूग्रहणस्य न प्रयोजनम्। न च 'वृक्षव् करोति' इत्यस्य साधुत्वाय 'हलि सर्वेषाम्' इति सूत्रेऽशूग्रहणानुवृत्त्यर्थमशूग्रहणमस्त्विति वाच्यम्, तादृशप्रयोगाणामनभिधानात्। अन्यथाऽशित्यस्य तत्र सम्बन्धेऽपि 'वृक्षव् हसति' इत्यत्र लोपापत्तिर्दुर्वारैव। अतएव "न पदान्ताः परेऽणः सन्ति" इति लण्सूत्रस्थभाष्यसङ्गतिः। अतएव भाष्येऽशूग्रहणेन हकारस्य ग्रहणमिति नोक्तमिति चेत्? न, प्रथमहकारस्याट्हशूग्रहणेन ग्रहणरूपप्रयोजनकथनपरभाष्यस्योपलक्षणत्वात्। अतएवेणूग्रहणेन ग्रहणस्य 'लिलिहिढ्वे' इति प्रयोजनम्भाष्यानुक्तमपि मूले उपात्तम्। अतएव भाष्यकृता द्वितीयहकारस्य प्रयोजनकथनावसरे विशिष्य तस्य प्रयोजनमुक्त्वा "यदि किञ्चिदन्यत्राप्युपदेशे प्रयोजनमस्ति तत्राप्युपदेशः कर्त्तव्य"इत्युक्तमित्याहुः। वस्तुतो मूलोक्तं प्राचामनुरोधेन। यदि किञ्चिदित्यादिना संदिग्धार्थकथनानन्तरमुदाहरणाप्रदर्शनेन प्रयोजनान्तराभाव एवानुमीयते। कैयटेनापि तस्य प्रयोजनन्नोपन्यस्तम्। एवञ्च भाष्याविरुद्धप्रयोजनमेवोचितमित्याशयेनाह—दिगिति॥

## भावप्रकाशः।

सौत्र इति। एवञ्च तत्रैवायं साधुरिति भावः। अतएवेति। तादृशस्य तस्यासाधुत्वबोधनेनेदृशप्रयोगाणामशास्त्रविषयत्वादेवेत्यर्थः। अस्य 'व्याख्यातं' 'नोक्तम्'इत्यनयोरप्यन्वयः। हकारेति। हकारग्रहणेत्यर्थः। एवमग्रेऽपि। तददाहरणम्—शश्छोटीत्युदाहरणम्। नोपन्यस्तम्—भाष्यकृतेति शेषः। एवमग्रेऽपि। हकारपरेति बहुव्रीहिः। असम्भवेनेति। उक्तरीत्येति भावः। चो व्याख्यातपदोत्तरं योज्यः। एवमग्रेपि। यत्तु भाष्ये तदुदाहरणादाने कैयटीयतादृशव्याख्याने च बीजं धातुपदाननुवृत्तिपक्षे भेदविवक्षायां षत्वस्य जशत्वस्य वा प्रवृत्तिरिति मन्दः। तन्न, "एकाच"इत्युत्तरसूत्रेऽनुवृत्त्याऽत्रापि तत्सम्बन्धौचित्यात्। किञ्च व्रश्चादिधातुसाहचर्येण तदवयवयोरेव छशयोः षत्वप्रवृत्तेः षत्वदृष्ट्या जशत्वस्यासिद्धत्वेन तदुक्त्यनुपयोगाच्च। किञ्च भेदविवक्षाङ्गीकारेऽम्ग्रहणेऽपि त्वदिष्टफलसिद्ध्यभावापत्तेः। अनुकार्यानुकरणयोर्भेदाभेदविवक्षायां त्वदिच्छान्यतरमानाभावेन वैषम्यस्य दुरुपपादत्वाच्च। एतेन "ञमङण"इति सूत्रस्थभाष्यमपि सर्वत्र जशत्वेन तत्तत्कार्यप्राप्त्यभावाभिप्रायकं न भवदिष्टार्थसाधकमित्यपि तदुक्तमपास्तमिति दिक्। नोक्तमितीति। एतेनेणशोरपि फलं नास्तीति सूचितम्। तच्च प्रतिपादितं प्राक्। प्रागुक्तलक्षणेनेति सूत्रस्थभाष्यासंगतिरप्यत्र बोध्या। तद् ध्वनयन्नाह—दिगिति।

**हल्** ( मा० सू० )॥ इदं सूत्रं वल्रल्झल्शल्षु हकारग्रहणार्थम्। रु-

---

शब्दरत्नम्।

**इदं सूत्रमिति।** वलादिप्रत्याहाराश्च रेफेणैव सन्तु। हरन्त्यमित्यत्रान्योन्याश्रय-परिहारस्तु "रन्त्यं हर्" इति न्यासेनावृत्त्या हर्प्रत्याहारबोधकसूत्रसमुदायान्त्यमिदित्य-र्थेन वा सुकर इति भावः। **ग्रहणार्थमिति।** शषसहरित्येव तु नोक्तम्। खरि हकार-

भैरवी।

द्वितीयहकाराभावे लकारस्याप्यसत्त्वमित्याशयेनाह—इदं सूत्रमिति। लकारसाध्यप्रयोज-नानामन्यथासिद्धिमाह—वलादीति। आदिना हलादिसङ्ग्रहः। रेफेण-सकारोत्तरवर्त्तिरेफेण। ननु हलिति सूत्रसत्त्वे हलन्त्यमित्यस्यावृत्त्या वक्ष्यमाणरीत्याऽन्योन्याश्रयपरिहारो भवति, अ-धुना कथमत आह—अन्योन्याश्रयेति। रन्त्यं हरिति न्यासेनेति। अत्र वाक्यद्वयम्-रन्त्यमित्येकम्, हरिति द्वितीयम्। द्वितीयेऽप्यन्त्यपदस्य सम्बन्धः। अत एव मध्ये पाठः। र इति पृथक् पदम्। अन्त्यं रइति स्वरूपमित्, अन्त्यो हर्वा इत्। न्यासभेदे गौरवमित्याशयेनाह—आवृत्त्येति। हरन्त्यमित्यस्यावृत्त्येत्यर्थः। तत्र प्रथमस्यार्थमाह—हर्प्रत्याहारबोधकेति। इदं स्वरूपकथनम्, हकाररेफबोधकस्य हर्शब्दस्य स्वघटितत्वसम्बन्धेन हकारादिरेफान्तसूत्रसमुदाये लक्षणा, नातो दुर्ग्रहत्वं दोषः। द्वितीयस्य तु अन्त्यो हर् हर्प्रत्याहारबोध्य इदित्यर्थ एव। नन्विदं सूत्रमित्यादिना यत्प्रयोजनं मूलेऽभिहितं, तद् द्वितीयहकारमात्रस्यैव, तथाच स हकारस्स-

भावप्रकाशः।

हरूपाङ्गयभावेऽङ्गलवैयर्थ्यं सूत्रस्यैव तत्त्वं फलितमित्याशयेन सूत्रमाक्षिपति—**इदं सूत्रमितीति।** एतेन पूर्वतो भेदेन कथने बीजं चिन्त्यमिति खण्डनकाराद्युक्तमपास्तम्। तदनुरोधेन तमुपपादयति—**वलादीति।** आदिना रलादिसङ्ग्रहः। एवो लव्यवच्छेदे। **हरन्त्यमित्यत्रेति।** तदभावे सरेफप्रत्याहारयुक्तसूत्रपाठे प्रसक्ते इत्यर्थः। **न्यासेनेति।** उक्तन्यासं विहायान्त्यरेफस्वरूपं हर्चेद्भवतीति क्रमेणोभयार्थकैकन्यासान्तराङ्गीकारेणेत्यर्थः। मध्यपाठादुभयत्रान्त्यपदसम्बन्ध इति भावः। अत्र गौरवाद-पाणिनीयत्वाच्चाह—**आवृत्त्येति।** हरन्त्यमित्यस्येत्यर्थः। तत्रावृत्तस्यार्थमाह—**हर्प्रत्याहारेति।** हरभिन्न-प्रत्याहार बोधको यो हयेत्यादिशषसरित्यन्तसूत्रसमुदायस्तदन्त्यमित्यर्थः। तस्य तद्बोधकत्वं चादिरन्त्येने-त्येकवाक्यतया तेषां संज्ञासूत्रत्वादणादिसंज्ञार्थानीति कौमुद्युक्तेर्लाघवेनाजादिसंज्ञाद्वारा शास्त्रप्रवृत्तिफलको यः समवायो वर्णानां क्रमेण निवेशस्तदर्थस्तेषां स इत्यर्थकाद् "वृत्तिसमवायार्थो वर्णानामुपदेशः" इति भाष्याच्च स्पष्टमध्यवसीयते। एतेन हर्प्रत्याहारबोध्यसूत्रे इत्याद्युचितमित्यपास्तम्। वर्णानां तत्त्वेपि सूत्रस्य तत्समूहस्य च तत्त्वाभावाच्च। एतेन हर्प्रत्याहारः बोधको यस्येति बहुव्रीहिरित्यपास्तम्। बोधकशब्दस्य पूर्वनिपातापत्तेश्च। सिद्धान्ते आवृत्तसूत्रेऽज्ञातज्ञापनेत्यर्थकोपदेशपदानुवृत्त्या हलितिसूत्रान्त्यमित्यर्थलाभ इवात्रापि तदनुवृ-त्त्या हरात्मकोपदेशाभावादन्वयतात्पर्यानुपपत्त्या तात्पर्यग्राहकोपदेशपदाद्धर्पदस्य लक्षणयैतदर्थलाभः। सम्बन्धस्तु हर्प्रत्याहारादिनोक्तप्राय एव। एतेन हर्पदस्योक्तार्थे एव लक्षणायां गमकाभावात्कथमुक्तार्थला-भ इत्यपास्तम्। **ग्रहणार्थमितीति।** यत्तु सूत्रप्रश्ने एकदेशोत्तरमिदं लफलानुक्त्या न्यूनतापत्त्या नोचित-मिति खण्डनकृदादिः, तन्न, आशयानवबोधात्। तद् ध्वनयन्व्याचष्टे—**शषसेति।** रेफात्प्रागेव हकारो न पठित

सरला।

**रन्त्यं हरिति।** हलिति सूत्रसत्त्वे हलन्त्यमितिसूत्रस्यावृत्त्याऽन्योन्याश्रयपरिहारो भवतीति वक्ष्यते। इदानीं हलिति सूत्राभावेन तस्य परिहारस्य वक्तुमशक्यतया प्रकारान्तरमुच्यते। अन्त्यो रेफ इदित्येकं वाक्यम्, अन्त्यं हर् इदित्यपरं वाक्यम्। एवञ्च सिद्धान्त इवात्रापि पक्षे रेफस्येत्संज्ञायामित्पदार्थप्रसिद्धौ आदिरन्त्येनेति हर्पदार्थबोधे सञ्जाते द्वितीयवाक्यार्थबोधः। अत्र पक्षे रेफस्य प्रश्लेषे गौरवादाह—**आ-वृत्त्या वेति।** हरन्त्यमित्यस्यावृत्त्या हर्पदस्य हयवरडिति हकारमारभ्य शषसरिति रेफपर्यन्तवर्णसमुदाये "लट् स्मे" इतिवल्लक्षणया तन्निरूपितान्त्यस्य रेफस्येत्संज्ञायामित्पदार्थप्रसिद्ध्या पूर्ववदन्योन्याश्रयपरिहारः।

दिहि, स्वपिहि, "रुदादिभ्यः सार्वधातुके" ( पा० सू० ७।२।७६ ) इति वलादिलक्षण इट् । स्निहित्वा, स्नेहित्वा, "रलो व्युपधाद्" ( पा० सू० १।२।२६ ) इति वा कित्त्वम् । अदाग्धाम्, "झलो झलि" (पा० सू० ८।२।२६) इति सकारलोपः । अलिक्षत्, "शल इगुपधात्" (पा०सू० ३।१।४५) इति क्सः ।

**हलन्त्यम्** ( पा० सू० १।३।३ ) ॥ सूत्रेऽन्त्यमिति । हलि अन्त्यमिति विग्रहे "सप्तमी" इति योगविभागात् "सुप्सुपा" (पा०सू० २।१।४) इति वा समास इति

शब्दरत्नम् ।

ग्रहणापत्तौ हरिर्हरतीत्यादौ विसर्गापत्तेः । **सप्तमीति** । अधिकरणकारकस्य कर्त्राद्यन्वयद्वारा क्रियान्वयादस्ति सामर्थ्यमिति भावः । अस्य योगविभागस्य भाष्येऽदर्शनादाह–सुप्सुपे-

भैरवी ।

कारानन्तरं पाठ्यः, तत्सूत्रं तु नारब्धव्यमत आह—शषसेति । विसर्गापत्तेरिति । न च 'प्रेष्यब्रुवोर्हविष' इत्यत्र हे परे विसर्गादर्शनेन हकारे परे विसर्गो नेति वाच्यम्, 'सुगण् हसति' 'प्रत्यङ् हसति' इत्यत्र 'ङ्णोः कुक् टुग्' इत्यस्यापत्तेः । अस्यापि 'एङ् ह्रस्वात्सम्बुद्धेः' इति ज्ञापकाद्धकारे परे कुक् टुक् नेति कल्पनया वारणं भविष्यतीति चेत् ? अनेकस्य ज्ञाप्यस्य वचनस्य कल्पनापेक्षया हस्य परत्र पाठे एव लाघवमिति, ज्ञापकानां सौत्रत्वेनोपपत्तौ ज्ञापकत्वे मानाभावाच्च । ननु सप्तमीति योगविभागात्समास इत्यनुपपन्नमधिकरणकारकस्य क्रियायामेवान्वयेनान्त्यपदार्थेनासामर्थ्यादत आह—अधिकरणेति । आदिना कर्मपरिग्रहः । यद्द्वारा यस्य क्रियाजनकत्वं तद्द्वारा क्रियान्वयस्यौचित्यादिति भावः । अस्य योगविभागस्य सप्त-

भावप्रकाशः ।

इत्यर्थः । एवो लव्यवच्छेदे । **विसर्गापत्तेरिति** । तथा च तथा वक्तुमशक्यतया रेफादग्रेपाठेऽपि लं विना तत्फलस्य वक्तुमशक्यतया वैयर्थ्यापत्तिः; अतः प्रत्याहारान्तर्गतत्वसिद्धये लस्याप्यावश्यकत्वस्यार्थाल्लब्धत्वेन सूत्रैकदेशप्रधानफलकथनेन तदङ्गस्याप्युक्तप्रायत्वेन फलस्य तस्याप्युक्तप्रायत्वम् । अत एव वररुचिराप्युक्तमिति न न्यूनतेति भावः । यद्यपि "प्रेष्यब्रुवोर्हविषः" इति निर्देशेन विसर्गवारणं सुकरं तथापि तत्र सौत्रत्वेन निर्वाहे ज्ञापकत्वे मानाभावः । यद्वा, आदिपदात् "प्रत्यङ्हसति" इत्यादौ "ङ्णोः कुग्"इति कुगाद्यापत्तिसङ्ग्रहः । तथाच विसर्गपदं कुगादेरपि खर्पदं शरोऽप्युपलक्षणम् । कचिद्विसर्गाद्यापत्तेरित्येव पाठः । एतेन 'हरिर्हरिः' इत्यत्र तं दोषं ददत् खण्डनकारादिः परास्तः, आगमशास्त्रमनित्यमिति त्वप्रामाणिकम् । इतोऽपि तस्य तत्त्वमेव निश्चीयत इति दिक् ।

ननु हलीत्यस्य कारकविभक्त्यन्तत्वेन क्रियान्वयौचित्येन अन्त्यपदेन तदभावे सामर्थ्याभावेन कथं समास इत्यत आह—**अधिकरणेति** । आदिना कर्मपरिग्रहः । **सामर्थ्यमिति** । हलन्त्यपदयोरिति शेषः । एतेन सप्तमीसमासे सर्वत्र वृत्त्यन्तर्भूतास्त्यादिक्रियाद्वारा सामर्थ्यमिति कैयटोक्तिः परास्ता । यद्द्वारकं यस्य कारकत्वं तदन्वयद्वारैव तस्य क्रियान्वयौचित्यादिति भावः । **विभागस्येति** । "सप्तमी शौण्डैः" इत्यत्र सप्तमीतियोगविभागस्येत्यर्थः । सुप्सुपेतीतोति । एकयोगेनाप्यत्रेष्टसिद्धेः पुनर्योगविभागादिति नोक्तम् ।

सरला ।

**हरिर्हरतीति** । न च "प्रेष्यब्रुवोर्हविष"इति निर्देशेन हकारपररेफस्य विसर्गो न भवतीति कल्पनया न दोष इति वाच्यम्, प्राङ् हसतीत्यादौ कुगागमापत्तेः । न च तत्रापि "एङ्ह्रस्वादिति" निर्देशेन न दोष इति वाच्यम्, कुगागमस्य वैकल्पिकत्वेन तन्निर्देशस्य तदभावपक्षे सुसाधत्वेन तत्सामर्थ्यस्याश्रयणासम्भवादिति ।

**कर्त्राद्यन्वयद्वारेति** । कौमुद्यामप्याधारोऽधिकरणसूत्रव्याख्याने कर्तृकर्मद्वारा क्रियाधारस्यैवाधिकरणत्वमुक्तम् । नन्वेवं साक्षात्क्रियान्वयित्वं कारकत्वं परम्परया तदन्वयित्वं वा ? नाद्यः, अधिकरणकारकेऽव्याप्तेः । नान्त्यः, कर्मादिकारकेषु साक्षात्क्रियान्वयिष्वव्याप्तेरिति चेत् ? न, साक्षात्क्रियान्वयित्वमेव हि कारकलक्षणम् ।

भाव: । यद्वा षष्ठीतत्पुरुषोऽयम् । स्यादेतत्, हलित्येकदेशस्यैव तन्त्रावृत्त्येकशेषान्यत-

शब्दरत्नम् ।

तीति । अनेनापि साधनस्यागतिकगतित्वादाह-यद्वेति । हलो हलिति सूत्रस्यान्त्यमिति विग्रह इति भावः । "षष्ठी स्थाने" ( पा० सू० १-१-४९ ) इत्यस्य च"ऊदुपधाया गोहः" (पा०सू०६।४।८९) इत्यादाविव "गुणानां च परार्थत्वात्"इति

भैरवी ।

मीति योगविभागस्य । अगतिकगतित्वादिति। अगतिकप्रयोगसाधकत्वादित्यर्थः । विग्रहः हलः अन्त्यमिति विग्रहः । हलिति सूत्रस्येति कथनं तु फलितार्थसूचनाय । ननु 'षष्ठी स्थानेयोगा' इति परिभाषया हलः स्थाने योऽन्त्यः स इत् इत्येव सूत्रार्थः किन्न स्यात्, उदाहरणञ्चैतस्य 'ङे प्रथमयोरम्' इत्यनेन सुस्थाने जातोऽम् भविष्यतीत्यत आह-षष्ठी स्थाने इत्यादि । गोह इत्यादाविवेति । तत्र यथोपधापदसन्निधानेनावयवार्थकत्वं षष्ठ्या निर्णीतमिति 'षष्ठीस्थाने' इति परिभाषाया अप्रवृत्तिस्तथात्रान्त्यपदसन्निधानेन तदप्रवृत्तिरिति भावः । इति न्यायेनेति । "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यात्"इति न्यायेनेत्यर्थः । अत्र गुणानां परार्थत्वादसम्बन्धः इत्यन्वयः। संज्ञासूत्रस्य परिभाषायाश्च विध्युपकारकत्वेन गुणत्वात्तयोः समत्वमस्त्यतः परस्परमनयोरुपकार्योपकारकभावो न भवतीति भावः ।

हलन्त्यमिति संपूर्णसूत्रावृत्त्यपेक्षयैकदेशस्यैवावृत्तिरस्त्विति शङ्कते मूले—स्यादेतदित्या-

भावप्रकाशः ।

"सह सुपा"इति सूत्रमर्थतो निर्दिष्टम्।यद्वा, तथानिर्देशाद्योगविभाग एवाभिमत इति तथा नोक्तमिति भावः। अनेनापि—सुप्सुपेत्यनेनापि। साधनस्य—समासकरणस्य। अगतिकेति । अगतिकप्रयोगोपायत्वादित्यर्थः। बहुव्रीहिपूर्वपदकषष्ठीतत्पुरुषः, स्वार्थे क इति भावः। अपिना पूर्वप्रकारस्य तत्त्वं सूचितम्। विग्रह इति । हलः अन्त्यमिति विग्रहः। हलितिसूत्रस्येति तु तदर्थकथनं, तच्चोक्तरीत्या लब्धम्। अतएव तदभिन्नार्थकतां ध्वनयितुमिदमुक्तमिति भावः। अत्र सर्वपक्षेषु समासप्रवृत्तिस्तु वर्णोपदेशेऽजादिसंज्ञानामनिष्पादादिति कैयटहरदत्तकौस्तुभाद्युक्तरीत्या बोध्या। नन्वेवमपि "षष्ठी स्थाने" इतिप्रवृत्तावुक्तार्थालाभेन कथं भिन्नार्थकतेत्यत आह-षष्ठीति । गोह इति। उपधापदश्रुत्या गोह इति षष्ठ्या यथाऽवयवावयविभावार्थकत्वस्य निर्णयस्तथाऽन्त्यपदश्रुत्या हल इति षष्ठ्या अपीत्यनियमे नियमकारिण्यास्तस्या अप्रवृत्तिरिति भावः। इदं च तत्प्राप्तिमङ्गीकृत्य। वस्तुतोऽत्र सैव नेत्याह—गुणानाञ्चेति। परार्थत्वं गुणत्वे समत्वमसम्बन्धे हेतुः। परार्थत्वात्फलवत्प्रधानार्थत्वात्तादृशविध्युपकारकत्वाद् गुणानामङ्गानामफलानामप्रधानानां मिथोऽसम्बन्धः स्यात्। कुतः? समत्वात्। गुणप्रधानभावेन सर्वत्रान्वयो भवति, नतु गुणयोः प्रधानयोर्वा, गुणत्वस्य प्रधानत्वस्य चोभयत्र तुल्यत्वादाकाङ्क्षाविरहादिति तदर्थः। गुणप्रधानसन्निधौ प्रधानान्वये सम्भवति गुणान्वयो

सरला ।

हरिं भजतीत्यादिस्थलेषु हरेः स्ववृत्तित्वसम्बन्धेन भजधात्वर्थप्रीतावन्वयाल्लक्षणसमन्वयः । हरिवृत्तिप्रीत्यनुकूलैकत्वविशिष्टाश्रयवृत्तिर्व्यापार इति बोधः। कटे आस्ते इत्यादावपि कटस्याऽऽस्धात्वर्थासनक्रियायां स्ववृत्तिवृत्तित्वसम्बन्धेन साक्षादेवान्वयः कर्तव्यो,न तु कटस्य वृत्तित्वसम्बन्धेन देवदत्ते, देवदत्तस्य तत्सम्बन्धेन क्रियायामिति, कारकाणां क्रियान्वयनियमात् । अत्रैवार्थे कर्तृकर्मद्वारेत्यक्षरस्वारस्यम् । अन्यथा क्रियाधारस्य कर्तुः कर्मणो वा य आधार इति वदेत्। नन्वेवं माणवकस्य पितरं पन्थानं पृच्छतीत्यत्रापि षष्ठ्यन्तार्थस्य माणवकस्य स्वजनककर्मत्वसम्बन्धेनेच्छतिक्रियायामन्वये षष्ठ्यर्थस्य कारकत्वापत्तिरिति ? अत्रोच्यते, "षष्ठ्यन्तस्य स्वान्वययोग्यनामसमभिव्याहारे तत्रैवान्वयः" इतिव्युत्पत्तेः माणवकस्य तादृशपरम्पराघटितसम्बन्धेन क्रियायां साक्षादन्वयस्य कर्तुमशक्यत्वात्।

इत्यादाविवेति। तत्र हि उपधापदं समुदायांशे नित्यसाकाङ्क्षम्। तथाहि, समुदायविशिष्टत्वमुप-

शब्दरत्नम् ।

न्यायेन वाऽप्रवृत्तिरिति बोध्यम् । तन्त्रावृत्त्येकशेषान्यतममस्त्विति ।

भैरवी ।

दिना । एकस्य शब्दस्यानेकार्थपरत्वे तन्त्रव्यवहारः, यथा 'अक्षान्पश्य' इत्यत्राक्षशब्दो देव-नाक्षरथाक्षविभीतकाक्षस्य बोधकस्तथाऽत्रापि हल्शब्द उभयपरोऽस्तु । 'सकृदुच्चरितः शब्दः सकृदर्थङ्गमयति' इति न्यायस्य 'गङ्गायाम्मीनघोषौ स्त' इत्यादौ व्यभिचारस्य दर्शनादना-श्रयणमिति भावः । इदमेकशेषस्य प्रत्याख्यानपक्षे । शास्त्रीयप्रयोगनिर्वाहार्थन्तदारम्भे त्वाह-एकशेषेति । यत्र सकृदुच्चारितस्यैकस्य शब्दस्य समानानेकार्थपरता तत्र श्रुतस्यैकस्य शक्त्या

भावप्रकाशः ।

नोचित इति तद्भावः । अत्रास्य लक्ष्याणि तु भाष्यकैयटादिषु स्पष्टानि । एतेन प्रथमत्यागे मानाभाव इत्यस्य कपिञ्जलाधिकरणन्यायस्य चैवात्रास्यानाश्रयणमिति शिवरामेन्द्रसरस्वत्याद्युक्तमयुक्तमिति ध्वनितम् । अयं भावः—निजां त्रयाणामेका संज्ञा रीश्वरादित्यादिलिङ्गादाद्यसूत्रभाष्ये तयोरनाश्रयणस्य ध्वनितत्वाच्च तयोस्तस्य वक्तुं शक्यत्वेऽप्यत्रास्यानाश्रयणं वक्तुमशक्यम्, मानाभावात्फलसत्त्वाच्च । एतेन पूर्वपक्षद्वये नि-र्दिष्टपरिभाषा दुर्वारेत्यतो यद्वेति पक्ष इति वदन्तो मान्या मान्या एवेति ध्वनितम् । उक्तरूपयुक्त्यन्तरं वद-द्भिस्तैरपि तथापूर्वयुक्तेस्तत्त्वमङ्गीकृतमेव । एतेन तत्र सा दुर्वारा इति खण्डकोक्तमपास्तम् । "तद्धितश्चासर्व" इत्यत्र प्रथमत्याग इति न्यायमाश्रयन्कैयटस्तु चिन्त्य एवेति तत्रैवोद्द्योते स्पष्टम् । यद्यप्येवम् "अनभिहिते" इत्यत्र सङ्ख्या विभक्त्यर्थ इति पक्षे स्वौजस् द्व्येकयोः कर्मणीत्यादेरेकवाक्यतयाऽन्वयेन कर्मणीति सप्तम्या "द्व्येकयोः" इतिसूत्रोक्तैकत्वाद्यपेक्षत्वेनानभिहिते कर्मणि यदेकत्वं तत्रामित्यादिभाष्यकाराद्यङ्गीकृतवाक्यार्था-सम्भवस्तथाप्यनित्यत्वात्तत्रास्यानाश्रयणम् । स्पष्टञ्चेदं तत्रैव कैयटादौ । तत्र चानभिहितसूत्रमपि मानमिति। ननु 'गङ्गायां मीनघोषौ' इत्यादौ युगपदेकेनानेकार्थधीवदत्रापि तथैव किं न? सकृदुच्चरित इति वृद्धोक्तन्या-यात् । तस्य चैकवारमेवोच्चारितः शब्दः एकवारमेवार्थधियं जनयतीत्यर्थः । सा चैकार्थविषयाऽनेकार्थवि-षया वेत्यन्यत् । दृष्टान्ते तथैवोपस्थितेः । अतएवार्थमिति जातावेकवचनम् । तत्र मीनघोषाविति वदत्रा-न्त्यपदं तात्पर्यग्राहकं तत्र । यत्तु एकः शब्दः एकमर्थं बोधयतीति तदर्थ इति । तन्न, क्रियाजन्मेत्याद्यर्थक-"क्रियाभ्यावृत्तिगणने" इत्यस्याधिकारेण तत्र वर्त्तमानादेकशब्दात्सुच्, तस्य सकृदादेशश्चेत्यर्थकेन "एक-स्य सकृच्च" इत्यनेन सिद्धस्य तस्यैकवारमित्यर्थकत्वेनोक्तार्थकत्वाभावात्सकृत्पदवैयर्थ्यापत्तेश्च । एवञ्च तन्त्रे-णैव सिद्धे परममूलोक्तसूत्रावृत्तिर्व्यर्था । किञ्च तस्यां दुराग्रहे एकदेशस्यैव सा युक्ता ताविव । अत एव सूत्रावृत्तिं गौरवात्संदूष्यैकदेशस्यैव तन्त्राद्यन्यतमं सिद्धान्तितवान्प्रकाशकृदिति चेत्? तदेतत् खण्डयितु-मेव क्रियमाणत्वेन भासमानमपि गुरुद्वेषं निगूहितुं च शक्नुते मूले—स्यादेतदित्यादिना । तन्त्रा-वृत्तीति । तन्त्रं द्विधा—शब्दतन्त्रमर्थतन्त्रं च । तत्रार्थभेदाच्छब्दभेदः, तद्भेदेऽपि तदभेद इतिमतद्वयेऽपि

सरला ।

घात्वम् । वैशिष्ट्यञ्च स्वघटकत्वं स्वघटकान्त्यालवधिकपूर्वत्वम् । यथा 'राजन् सु' इत्यत्र समुदायो राजन् इति, तद्वैशिष्ट्यं जकाराकारे, स्वं राजन्निति समुदायस्तद्घटकत्वं तस्मिन् अकारे। एवं स्वं राजन्निति समुदा-यस्तद्घटकोऽन्त्योऽल् नकारस्तदवधिकपूर्वत्वमपीति । तथा च नित्यसाकाङ्क्षार्थबोधकपदसमभिव्याहृतषष्ठ्या असति तात्पर्यनिश्चायकप्रमाणान्तरे आकाङ्क्ष्यमाणसम्बन्धार्थबोधकत्वमिति नियमेन "गोह" इति षष्ठ्या आकाङ्क्षयाऽवयवावयविभावसम्बन्धस्य निर्द्धारितत्वेन "षष्ठी स्थाने"इत्यस्य न प्रवृत्तिः। एवमेव हलन्त्यमि-त्यत्रापि हल इति षष्ठ्या अन्त्यपदस्य नित्यसाकाङ्क्षस्य समभिव्याहारेणाकाङ्क्ष्यमाणावयवावयविभावसम्बन्धबो-धकत्वस्याकाङ्क्षयैव निर्द्धारणेन "षष्ठी स्थाने"इत्यस्य न प्रवृत्तिः। अन्त्यपदमपि समुदायांशे नित्यसाकाङ्क्षं, स्व-घटकत्वं स्वघटकवर्णप्रागभावाधिकरणक्षणावृत्त्युत्पत्तिमत्त्वमेतदुभयसम्बन्धेन समुदायविशिष्टत्वस्यान्त्यपदार्थ-त्वादिति । इति न्यायेन वेति। गुणानां च परार्थत्वादसम्बन्धस्समत्वात्स्यादिति हि जैमिनिसूत्रम् । अयञ्च न्यायो लोकसिद्धः। यथा कस्यचिद्राज्ञो द्वौ भृत्यौ नापितो दीपदर्शकश्च राज्ञ एव क्षुरसंस्कारं दीपदर्शनं वा कुरुतः, न तु परस्परस्य तत्तत्कार्यमिति । एवमेव प्रकृतेऽपि विध्यर्थत्वात्संज्ञाशास्त्रस्य परिभाषाशास्त्र-

शब्दरत्नम् ।

यद्यपीदृशे विषये उच्चारयितुस्तन्त्रैकशेषान्यतरेणोच्चारणं, बोद्धुस्त्वावृत्त्या बोध इत्येवानुभवसिद्धं; तथापि व्यवस्थितैवान्यतमलत्ताऽनेन बोध्यत इति न दोषः ।एकशेषश्च प्रत्याख्यातो

भैरवी ।

लक्षणया वाऽनेकार्थबोधकत्वसम्भवः, यत्र तु विरुद्धानेकार्थबोधकता तत्रैकानुसन्धानेनानेकार्थबोधकत्वासम्भवः । यथा 'पुण्यजनाश्रयोऽयं देशः' इत्यादौ । अत्र हि पुण्याश्रयो जन इत्यर्थविवक्षायां तात्पर्यग्राहकसत्त्वे धार्मिकबोधकत्वेन चरितार्थस्यार्थान्तराबोधकत्वम् । यदा तु रूढ्या 'यातुधानस्य बोधो जायताम्' इति तात्पर्यन्तत्र सामग्रीसत्त्वे यातुधानबोधकत्वं, न तदा धार्मिकबोधकत्वमिति तादृशस्थले आवृत्तिं विना नानेकार्थप्रतीतिरिति । प्रकृते हल्शब्दस्य विरुद्धार्थकतया तन्त्रनिर्देशस्यावृत्तेश्च समानफलकत्वाभावेनान्यतमशब्दप्रयोगानुपपत्तिरित्याशयेन शङ्कते-यद्यपीति । ईदृशे विषये विरुद्धानेकार्थविषये । व्यवस्थितैव नियतैव । एवकारेणैच्छिक्या व्यावृत्तिः । सा च व्यवस्था वक्तृश्रोत्रन्यतरपरत्वेन कल्पनीया-वक्तुस्तन्त्रेणैकशेषेण वोच्चारणम्, बोद्धुस्तूभयत्राप्यावृत्तिरेवेति।। एवञ्च तन्त्रावृत्ती वा एकशेषावृत्ती वा इति बोध्यम् । न दोष इति। वक्त्रभिप्रायेण त्रितययोजने योऽनुभवविरोधरूपो दोषः स नेत्यर्थः।

नन्वेकशेषस्य प्रत्याख्यानादन्यतमशब्दानुपपत्तिरित्यत आह—एकशेषश्चेति । प्रत्याख्यात

भावप्रकाशः ।

शब्दस्य पर्यायपरिवृत्त्यसहत्वे शब्दान्वयव्यतिरेकसत्त्वे च आद्यम् । तत्र तस्य तत्सहत्वेऽन्त्यम् । उभयत्रापि सकृदनुसंहितैकशब्देन युगपदनेकार्थबोधः । 'अक्षान्पश्य' इत्यादावाद्यम् । 'घटान्पश्य' इत्यादावन्त्यम् । 'अक्षा भज्यन्तां भक्ष्यन्तां दीव्यन्ताम्'इत्यादौ त्वावृत्तिरिति बोध्यम् । ननु मूलमप्ययुक्तम्, सुखिते दुःखिते चेतसि दवदहनराशिस्तुहिनदीधितिरित्यादाविव हसमीपो ले हल्रूपान्त्यं चेदितिविरुद्धार्थयोरेकानुसन्धानेन युगपद्बोधासम्भवेनात्र वक्तुस्तन्त्रैकशेषयोरन्यतरस्मिन्सत्यपि बोद्धृबोधार्थं तदावश्यकत्वेन त्रयाणामैच्छिकविकल्पपरतयाऽन्यतमोक्तेर्दुर्वचत्वाद्ब्रस्तप्रकाशस्य सामस्त्येनानुवादासङ्गतेः । इयान्परं भेदः—दृष्टान्तेऽन्वयिभेदादुद्देश्यविधेयभेदाद्विरोधः, दार्ष्टान्तिके हल्पदार्थाप्रसिद्ध्या स इतीत्याशयेनाह—यद्यपीति । ईदृश इति । विरुद्धार्थयोर्युगपद्बोधाजनक इत्यर्थः । तन्त्रैकेति । श्रोतुः शब्दद्वयानुसन्धानद्वयं भवत्विति तात्पर्येणैकोच्चारणमित्यर्थः । बोद्धुस्त्विति । तुः पूर्वव्यवच्छेदे । तस्यानुसन्धानद्वयेन क्रमेण बोधादिति भावः । एवो मूलाद्युक्तव्यवच्छेदे । अनुभवेति । एवञ्चानेनानुभवापलापस्य कर्तुमशक्यतया मूलवत्तत्सदृशशास्त्रयाणामैच्छिकविकल्पपरतया प्रवृत्ताः कैयटादिग्रन्था अपि चिन्त्या एवेति सव्यान्यशृङ्गयोरिव युगपदेवोभयबोधाच्चिन्त्यमिदम् । अन्यथा साहित्याभावेन तन्त्रावृत्त्येकशेषेति द्वन्द्वो न स्यादिति मन्दोक्तिश्चिन्त्येति, तत्र द्वन्द्वस्यासाधुत्वमिति च ध्वनितम् । अतएव परममूले सूत्रावृत्तिरेवोक्ता । एवञ्च गङ्गायामित्याद्युक्ताद्यशङ्का समाहिता भवतीति बोध्यम् । व्यवस्थितैव—नियतैव । एवेनैच्छिक्या व्यावृत्तिः । तस्यास्तत्त्वं च वक्तृश्रोत्रन्यतराभिप्रेतात्वमेव। केवलवक्त्राद्यभिप्रेतात्वे ह्यैच्छिकीत्वं स्यात् । तदेव न, तथान्वेदृशे स्थले श्रोतुः श-

सरला ।

स्य च तयोस्तदुपकारकत्वमेव भवितुमर्हति, न तु संज्ञाशास्त्रस्य परिभाषोपकारकत्वम्, परिभाषाशास्त्रस्य च संज्ञाशास्त्रोपकारकत्वमिति । अत्र वाशब्देनारुचिस्सूचिता । 'संयोगे गुरुः' इति संज्ञाशास्त्रे तस्मिन्निति परिभाषाशास्त्रस्य देवदत्तेत्यत्र वकाराकारे गुरुसंज्ञावारणाय प्रवृत्तेरवश्यं वाच्यतयाऽयं न्यायो न सार्वत्रिकः किन्तु क्वचिद् गुणानामपि परस्परं सम्बन्धो भवत्येवेति । अत एव—

गुणः कृतात्मसंस्कारः प्रधानमनुरुध्यते ।

इत्यभियुक्ताः । लोकेऽपि नापितदीपदर्शकयोः परस्परमुपकाराभावेऽपि नापितेनाऽमात्यस्य क्षुरसंस्कारो दृश्यते ।

तन्त्रेति । नानाफलकसमानाकारकानेकव्यापाराणां मध्ये नानाफलोत्पादनायैकव्यापारकरणं तन्त्रम् यथा रात्रिपाकप्रयुक्तपञ्चसूनादोषपरिहारो दिवापाकप्रयुक्ततत्परिहारश्च सकृद्वैश्वदेवानुष्ठानेनैव क्रियते

ममस्तु । ह्रस्य ऌ इति च व्याख्यास्यते । सामीप्यं षष्ठ्यर्थः । यद्वा, मास्तु तन्त्रादि,

### शब्दरत्नम् ।

ऽसहविवक्षायामपि शास्त्रमात्रप्रक्रियोपयोगीत्याशयेन पृथगुक्तः । सामीप्यं षष्ठ्यर्थ इति।

### भैरवी ।

इति । लौकिकशब्दसाधकत्वेन भाष्यकृता निराकृत इत्यर्थः । प्रत्याख्यानञ्च सहविवक्षायां सजातीयानेकशब्दानान्द्वन्द्वादर्शनेन तन्त्रेणैकेनैव शब्देनानेकार्थस्य बोधसम्भवे तदर्थमेकशेषो नारब्धव्य इति रीत्या कृतः । नच शास्त्रीयप्रयोगसाधकत्वेन तस्यावश्यकत्वेन प्रत्याख्यात इत्यसङ्गतमिति वाच्यम् , लौकिकप्रयोगासाधकत्वेनैतदर्थमनावश्यक इति तदर्थात् । नन्वेवं पाणिनेः सूत्रकरणासङ्गतिरत आह—असहविवक्षायामिति । तदेतदुक्तं सर्वादिसूत्रभाष्ये । तत्र हि—संज्ञोपसर्जनव्यावृत्तिसमये "सर्वादीनि" इति सूत्रेण सर्वनामसंज्ञा क्रियते पाठश्च विशेष्यते । कथम्पुनरेकेन यत्नेनोभयं लभ्यम् ? लभ्यमित्याह—"एकशेषनिर्देशात्सिद्धम्" इति । इत्याशयेनेति । भाष्यकृत इतिशेषः । पृथगुक्त इति । मूले दीक्षितैरिति शेषः । असहविवक्षा च प्रकृतसूत्रेऽप्युक्तरीत्या अस्त्येव ।

### भावप्रकाशः ।

ब्दावृत्तिरेव, वक्तुस्तु तन्त्रान्यतरदेवेति । वक्तुस्तद्विना श्रोतुस्तां विनाऽनिर्वाहेणैतदन्योपायाभावेन तयोरावृत्त्यभावस्यान्यत्राबोधनेन च उभयोस्तन्त्रावृत्ती एकशेषावृत्ती वा शुद्धावृत्तिर्वेति तत्तात्पर्यम् । अत एवावृत्तिपदं मध्ये दत्तमिति भावः । तेन तन्त्रावृत्तीत्यादिग्रन्थेन । अनेनेति पाठस्तु युक्त एव । नतु केवलवक्त्राद्यभिप्रायमात्रबोधनं क्रियत इति भावः । न दोष इति । पृथगनुक्तिरूपदोषो नेत्यर्थः। अतएव तत्र द्वन्द्वोऽप्युपपन्नः । वस्तुतोऽक्षरस्वारस्येन तथार्थालभेन यथाकथञ्चिदुक्तार्थकल्पनया मूलोपपत्तिः, नतु सिद्धान्तोक्तिरियमिति बोध्यम् । नन्वेवमप्येकशेषस्य प्रत्याख्यानात्तत्त्वं बाधितमेवात आह—एकशेषश्चेति । चस्त्वर्थे । प्रत्याख्यात इति । यद्यपि, तथापीति शेषः । भाष्यकृता लौकिकादिप्रयोगाङ्गत्वेन निराकृत इत्यर्थः । सहविवक्षायां सजातीयार्थकानेकशब्दप्रयोगाभावेन द्वन्द्वाभावेन जातिव्यक्तिपक्षयोस्तन्त्रेणैव निर्वाहादिति भावः । सम्भवति दृष्टफलकत्वेऽदृष्टकल्पना न न्याय्येत्याशयेन समाधत्ते—असहेति । अत्रापि साऽस्तीति भावः। अपिर्विरोधे। उक्तरीत्या तत्सूत्रकरणाऽन्यथानुपपत्तेस्तत्र च शास्त्रघटकप्रयोगेष्वेव सः । अन्यथाऽतिप्रसङ्गापत्तेरिति भावस्तदाह—शास्त्रमात्रेति । शास्त्रमात्रघटकशब्दसाधनोपयोगीत्यर्थः । मात्रपदेन लौकिकादिव्यवच्छेदः । अत एव "सर्वादीनि"इति सूत्रे—"अनेन संज्ञा तेषां विधीयते—ये सर्वार्थास्ते सर्वादय इति, गणपाठश्च विशिष्यते । कथं पुनरेकेनोभयं लभ्यम् ? लभ्यमित्याह—एकशेषनिर्देशात्"इति प्रकृतसूत्रे "द्विर्वचनेचि"इतिसूत्रे च "एकशेषनिर्देशात्सिद्धम्"इति च भाष्यं सङ्गच्छते । तत्र तत्र कैयटोऽप्येवमेव । एतेन तन्त्रैकशेषयोस्तुल्यफलकत्वादन्यतरोक्तिरयुक्तेत्यपास्तम् । यद्वा, अपिः प्रत्याख्यातपदोत्तरं योज्यः । तथाचैकशेषस्तु प्रत्याख्यातोऽप्यसहविवक्षायामित्याद्येकवाक्यतयैवान्वयेन शेषपूरणमत्र वाक्यालङ्कारे वा चायमिति बोध्यम् । इत्याशयेनेति । मूलस्येति शेषः। नतु भाष्यादेः। तन्मते तत्रापि तन्त्रेणैव निर्वाहात् । एवञ्च सिद्धान्ते तत्र तत्रैकशेषशब्दसत्त्वे यथाश्रुतो गौणस्तदभावे तन्त्रपरः। अतएव कैयटेन तत्तद्भाष्यं तथैव व्याख्यातम् । एवञ्चार्धजरतीयतापि नेति बोध्यम् । अतएव प्रत्याख्यात इत्युक्तिरपि सम्यगेव । एतेन शास्त्रमात्रप्रक्रियोपयोगित्वे प्रत्याख्यात इत्युक्तिरयुक्ता, दृष्टफलाभावे एव तत्स्वाङ्गीकारादिति मन्दोक्तमपास्तम् । पृथगुक्त इति । मूलकृता तन्त्राद्यपेक्षयेति शेषः । एवञ्च तद्रीत्याऽन्यतमोक्तिर्युक्ता न भाष्यरीत्येति भावः । मूले—इति च व्याख्येति। प्रागुक्तरीत्या निर्दुष्टत्वादित्येव व्याख्यात इत्यर्थः, नत्वन्यथा व्याख्यास्यते येन दोषावाप्तिरभीष्टासिद्धिश्च । तच्च पूर्वोक्तरूपं तज्जातीयं वाऽन्यथा वेति भावः । ननु "षष्ठी स्थाने" इत्यस्यात्रापि प्रवृत्तौ सामीप्यं षष्ठ्यर्थो दुर्लभोऽत

### सरला ।

असहविवक्षायामपीति । अपिशब्दो भिन्नक्रमः, प्रत्याख्यातोऽप्येकशेषोऽसहविवक्षायां शास्त्रमात्रप्रक्रियापयोग्यावश्यक इति तस्य पृथगुक्तिः । सहविवक्षाविषयक एवैकशेषः प्रत्याख्यात इति भावः । द्विर्वचनेऽचीत्यत्र द्विर्वचने इत्यस्यैकशेषोऽस्त्येवेति तत्तात्पर्यम् ।

अस्तु समाहारद्वन्द्वो हल् च ऌ् चेति। ऌकारस्य संयोगान्तलोप इति चेत् ?

---

शब्दरत्नम्।

"षष्ठी स्थाने" (पा०सू० १-१-४९) इत्यस्य "गुणानां च परार्थत्वात्" इति न्यायेनाप्रवृत्तिः। न च "इको गुणवृद्धी" (पा०सू०१।१।३) इति सूत्रे तच्छेषशब्देन परिभाषयोरपि गुणगुणिभाव उक्त इति वाच्यम्, "सार्वधातुकार्धधातुकयोरलोन्त्यस्येकोगुणवृद्धी" इति सूत्रत्रयस्य लक्ष्यसंस्कारकमहावाक्ये विशेष्यविशेषणभावमादायैव तच्छेषव्यवहारो न तु गुणगुणिभावेन परस्परापेक्षत्वेन वेति कैयटेन स्पष्टमुक्तेः। एतन्मूलकतयैव तत्पक्षासम्भवस्य तेनोक्तेश्चेति भावः।

भैरवी।

ननु सामीप्यं षष्ठ्यर्थं इत्यनुपपन्नम्, "षष्ठी स्थाने" इति परिभाषायाः सत्त्वादत आह-षष्ठी स्थान इत्यस्येति। ननु हस्थानिकलकाराभावात्परिभाषायाः कथम्प्रवृत्तिः, नचोपानल्लुनातीत्यस्त्येवेति वाच्यम्, उपदेशेऽतथात्वादिति चेत् ? न, लक्ष्याभावेन परिभाषाया अप्रवृत्तिकल्पनापेक्षया न्यायेन तदप्रवृत्तिकल्पनं युक्तमित्याशयात्।

"गुणानाञ्च" इति न्यायस्य व्यभिचारमाशङ्क्य निराचष्टे—नचेत्यादिना। तच्छेषशब्देन तस्य शेषः, स शेषो यस्येति वेत्यर्थकतच्छेषशब्देन। परिभाषयोः-'अलोन्त्यस्य' 'इको गुणवृद्धी' इत्यनयोः परिभाषयोः। लक्ष्यसंस्कारकेति। एतेन तेषां स्वस्वप्रदेशेऽपि वाक्यार्थबोधजनकत्वमस्त्येवेति ध्वनितम्। गुणगुणिभावेन—अङ्गाङ्गिभावेन। परस्परापेक्षत्वेन-परस्परनिमित्तनिमित्तीभावेन। यथा 'चक्षिङः ख्याञ्' इत्यादेः "षष्ठी स्थाने"इति सूत्रपरामर्शं विना वाक्यार्थबोधजनकत्वं नास्तीति तयोःपरस्परनिमित्तनिमित्तीभावस्तथाऽत्र नास्तीति भावः। विशेष्यविशेषणभावमात्रेण तच्छेषत्वकल्पनमपि न युक्तमित्याह—एतन्मूलकतया। उक्तन्यायमूलकतया। तत्पक्षासम्भवस्य। परिभाषयोरेव तच्छेषत्वमितिपक्षासम्भवस्य।

भावप्रकाशः।

आह—षष्ठीति। यद्यप्युपदेशे हस्थानिकलभावाल्लक्ष्ये साक्षात्तदभावादुपानल्लुनातीत्यादौ कथं चित्तत्सत्त्वेऽपि लोपस्याफलत्वेन फलाभावाच्च तदप्रवृत्तिरिति वक्तुं शक्यम्, तथाप्यादौ प्रवृत्तिरनन्तरं त्यागः। ततः 'प्रक्षालनाद्' इति न्यायेन प्रागेव तदप्रवृत्तिरुचिता। किञ्च वक्ष्यमाणरीत्या तत्र लित्स्वरस्य फलत्वं सुवचमित्यभीष्टासिद्धिरेव, एवञ्चात्र नान्यथा निर्वाहः। अत एव प्राग्गुणानामिति पक्षान्तरमुक्तमित्याशयेनाह—गुणानाञ्चेति। न्यायस्य व्यभिचरितत्वेनात्राप्रवृत्तिरिति ध्वनयितुमाशङ्कते-नचेति। तच्छेषशब्देनेति। तन्त्रेण षष्ठीतत्पुरुषबहुव्रीहिभ्यां द्व्यर्थकेनेत्यर्थः। बुद्धेः क्रमिकत्वाद्विशेषणविशेष्यभावे कामचाराच्चेति भावः। परिभाषयोः अलोन्त्यस्येकोगुणेति योगयोः। गुणगुणिभावः शेषशेषिभावः, अङ्गाङ्गिभावइति यावत्। एवञ्च ततोऽपि भाष्यात्तस्यात्रानाश्रयणादनित्यत्वाद्वाऽत्राप्रवृत्तौ तत्प्रवृत्त्या तस्य तत्त्वं दुर्लभमिति भावः। त्रयस्येति। अनेन तयोः समकालं प्रवृत्तिः सूचिता। महत्त्वोल्लेखेन "विशिष्टबुद्धौ"इति रीत्या तेषां स्वस्वदेशेऽवान्तरवाक्यार्थज्ञानं लक्ष्यासाधकतया निष्फलमप्यावश्यकमिति तयोर्विशेषणविशेष्यभावस्य विध्याश्रितत्वम्, न तु साक्षात्स्वत इति च सूचितम्। वाक्ये इति। प्रतिपाद्यत्वं सप्तम्यर्थः। विशेष्येति। परिच्छेद्यपरिच्छेदकभावमादायेत्यर्थः। परिभाषयोरित्यनुषङ्गः। "येन विधिः" इत्यादौ विशेषणविशेष्ययोरिति भाष्यवार्त्तिकप्रयोगदर्शनात्सोऽपि साधुः। एवव्यावर्त्यं स्पष्टार्थमाह—नत्विति। न्यायमूलभूतार्थोऽपि नेत्याह—परस्परापेक्षत्वेनेति। मिथः साकाङ्क्षत्वेनेत्यर्थः। न्यायस्तु तदुभयोर्निरासको न विशेषणविशेष्यभावस्येति तद्विषयक एवेति न प्रागवदत्रेति भावः। न्यायस्यैतद्विषयत्वेप्याह—एतन्मूलेति। उक्तन्यायमूलकतयैवेत्यर्थः। एवेन तन्मते हेत्वन्तरानिवृत्तिः। तत्पक्षेति। तच्छेषपक्षेत्यर्थः। तेन—कैयटेन। मिथोऽनपेक्षयोस्तयाः

सरला।

तच्छेषशब्देनेति। तस्य शेषः तच्छेषः, सः शेषो यस्येति वा विग्रहः।

मैवम्, आद्ये समासस्य क्लिष्टत्वात् । न हि "ब्राह्मणकम्बलः" इत्यादौ ब्राह्मणसमीपवर्त्यन्यदीयः कम्बलः प्रतीयते, न वा चित्रगुशब्दाच्चित्रगवीणां समीपवर्त्ती

---

### शब्दरत्नम् ।

**क्लिष्टत्वादिति** । 'ब्राह्मणस्य कम्बलः' इत्यादावसत्यपि प्रकरणादौ स्वस्वामिभावादिप्रतीतिवदनन्तरसमीपादिशब्दप्रयोगमन्तरा सामीप्याद्यप्रतीतेः तस्य षष्ठ्यर्थत्वाभावात्तत्प्रयोगे त्वसामर्थ्यात् षष्ठीसमासाप्राप्तिरिति, मध्यमपदलोपिसमासे सौत्रे वा तत्र समासस्य क्लिष्टत्वमिति भावः । तदेतदाह—**नहीत्यादिना तत्रानिष्ट इत्यन्तेन** । **चित्रगवीणामिति** । "कुमति च" (पा० सू० ८।४।१३) इति णत्वम् । दन्त्यपाठस्तु लेख-

### भैरवी ।

प्रतीतिवदिति । **यथा तत्र स्वस्वामिभावप्रतीतिर्भवति तथाऽनन्तरादिशब्दप्रयोगं विना सामीप्यं न प्रतीयत इति वैपरीत्ये दृष्टान्तः** । षष्ठ्यर्थत्वाभावादिति । **तथाच सामीप्यस्य षष्ठ्यर्थत्वाभावे तस्मिन्नर्थे समासोऽपि नोपपद्यत इति भावः । ननु वृत्त्या तस्यार्थस्य प्रतीत्यर्थं वाक्ये ते शब्दा उपादेया अत आह**—तत्प्रयोग इति । लेखकप्रमादादिति । **अत्राहुः—प्रमादाभिधा-**

### भावप्रकाशः ।

स्वस्वहेतुतः सन्निहितयोर्विधिषु स्वस्वकार्यबोधकतयैकत्र क्वचित्सन्निपातेऽपि न तावता मिथोऽपेक्षेति हि तेनोक्तम् । विशेष्यविशेषणभावमात्रेण शेषशेषिव्यवहारो न क्वापि दृष्टचर इति तच्छेषशब्दोऽसम्भवदुक्तिकत्वग्रस्तोऽपि । अतएव तच्छेषपक्षोक्तसर्वदूषणोद्धारेऽपि 'नायं तच्छेषः' इति भाष्यं सङ्गच्छत इति तद्भावः ।

**क्लिष्टत्वादितीति** । यत्तु "षष्ठी स्थाने" इत्यस्य बाध एव क्लेश इति मान्याः, तत्प्राचामनुरोधेन । उक्तरीत्या तदप्राप्तेः नहीत्यादिघटितोत्तरग्रन्थास्वारस्यापत्तेश्च । अत एव 'तदेतदाह' इति वक्ष्यति ग्रन्थकारः, तद् ध्वनयन्क्लेशान्तरमाह—**ब्राह्मणस्येति** । **प्रकरणादाविति** । आदिना लिङ्गादिसंग्रहः । तस्यैवोक्तिस्तु प्रसिद्धतरत्वात् । एतेन तात्पर्यसत्त्वे तत्प्रतीताविष्टापत्तिरिति मन्दोक्तमपास्तम् । तस्यापि प्रकरणादिग्राह्यत्वेन मूलस्यैवाभावात् । उभयत्रादिभ्यां 'चैत्रस्य पुत्रः' इत्यादेर्जन्यजनकभावादेश्च संग्रहः । अग्रे आदिना समवायादिपरिग्रहः । वैधर्म्ये चायं दृष्टान्त इति स्पष्टमेव । तथा च तस्य तत्र षष्ठ्यर्थत्वम् । **अन्तरेति** । विनेत्यर्थः । 'त्वामन्तरा तामरसाक्षी' इत्यादावेवं स प्रसिद्ध इति भावः । सामीप्यं साधारणमानन्तर्यमव्यवहितत्वघटितमिति तयोर्भेदोऽत्र । यत्त्वप्रतीतिर्नमानम्, अन्यथा स्वस्वामिभावान्यसंयोगादीनामपि तत्राप्रतीत्या षष्ठ्यर्थत्वं न स्यात् । न चेष्टापत्तिः, "एकशतं षष्ठ्यर्थाः" इति भाष्यविरोधादिति मन्दः; तन्न, अप्रतीतस्यापि तत्स्वीकारे बहुव्याकुलीभावापत्तेः । 'वृक्षस्य भित्तिः' इत्यादौ संयोगादिप्रतीतेश्च । अतएव भाष्यविरोधाभावाच्चेति दिक् । तस्य सामीप्यादेः षष्ठ्यर्थत्वाभावादिति । अस्यासामर्थ्यादित्यस्यैव समासाप्राप्तावन्वयः, तस्य चेदानीमिष्टार्थतदप्राप्तिरित्यर्थः । नन्वेवमपीष्टसिद्ध्यर्थं वाक्येऽत्र तत्प्रयोज्यमत आह—**तत्प्रयोगे त्विति** । समीपादिपदप्रयोगे त्वित्यर्थः । तुर्वैलक्षण्ये, प्रागप्रतीतावपीदानीं तत्प्रतीतिरिति भावः । **असामर्थ्यादिति** । द्वयोरिति शेषः, अन्वयस्यैवाभावादिति भावः । एतेन किं समासविध्यभावप्रयुक्तं क्लिष्टत्वमुत तस्य तत्त्वाभावप्रयुक्तम्? नाद्यः, षष्ठीतिसूत्रसत्त्वात् । नान्त्यः, "अस्तेर्भूः" इत्यत्र सन्दिहानेन भगवतैव तदभ्युपगमात्, समर्थसूत्रे भाष्यकैयटयोस्तदङ्गीकाराच्चेति मन्दखण्डनकृद्व्याख्यामुक्तमपास्तम्, भाष्याशयस्य वक्ष्यमाणत्वाच्च । **इतिहेतौ** । समासं स्वीक्रियमाणे सतीति शेषः तथा च सिद्धसाध्येति न्यायेन तत्स्वीकारस्य क्लेशे निमित्तत्वं फलति । अतएव समासस्येति सफलम् । एवमग्रेऽपि । अस्य कैयटादिरीत्या प्रत्याख्यानात्तया तदनुक्तत्वाद्वाऽऽह—**सौत्र इति** । तत्र—षष्ठीसमासे । **तदेतत्** उक्तमेव क्लिष्टत्वम् । ननु ब्राह्मणस्वामिकस्य तत्समीपत्वे इष्टापत्तिरेवेत्यत आह मूले—**अन्यदीय इति** । **कुमति चेति णत्वमिति** । नन्वस्यासिद्धत्वात् "एकाजु-

### सरला ।

**कुमति चेति णत्वमिति** । वस्तुतस्तु एकाजुत्तरपदे ण इति णत्वं न्याय्यम् । कुमति चेत्यस्यैतत्सूत्रदृष्ट्याऽसिद्धत्वात् । न च "प्रकरणे प्रकरणमसिद्धं न योगे योगः" इति एकप्रकरणस्थपूर्वसूत्रदृष्ट्या

भैरवी ।

नमनवधानेन । तथाहि—चित्रशब्दगोशब्दयोः कर्मधारयसमासे 'गोरतद्धितलुकि' इति टच् । अयमुत्तरपदस्यावयव इति नान्त्रैकाजुत्तरपदकसमासत्वम् समासान्तस्योत्तरपदावयवत्वादेव 'द्विपुरी' इत्यादावदन्तोत्तरपदकद्विगुत्वसत्त्वात्स्त्रीत्वमिति ङीप्सिद्धिः।'उपशरदम्' इत्यत्राव्ययीभावस्यादन्तत्वन्त्ववयवावयवस्य समुदायावयवत्वेनास्तीति "नाव्ययीभावाद्" इतिसूत्रप्रवृत्तिरिति । तन्न, 'समासान्ताः' इत्यत्र यत्समासपदन्तस्य समासार्थवाक्यलक्षणयाऽलौकिके प्रक्रियावाक्ये सुबन्तसमुदायात्समासान्तस्य प्रवृत्तिरित्यस्य सिद्धान्तस्य वक्ष्यमाणतया टचः समुदायावयवत्वे नैकाजुत्तरपदकसमासत्वमस्त्येवेत्याशयात् । 'द्विपुरी' इत्यादौ समुदायस्य स्त्रीत्वन्तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति 'समासान्ताः' इति सूत्रभाष्योक्त्या लिङ्गानुशासनस्य लोकसिद्धलिङ्गानुवादकत्वेन प्रकृते लोकादेव सिद्धम् । अतएव "परवल्लिङ्गम्"

भावप्रकाशः ।

त्तर" इति णत्वं न्याय्यम्, चित्रापदगोपदयोः कर्मधारये "गोरतद्धित" इति टच्यप्येकाजुत्तरपदकसमासत्वस्यात्र सत्त्वात् । न चोत्तरपदावयवीभूय समासान्तस्य प्रवृत्तिरिति कैयटादिमते तत्त्वाभाव इति वाच्यम्, समासपदस्य तदर्थवाक्योत्तरपदलक्षणायां मानाभावात् । तथा सति 'पञ्चराजम्' इत्यादौ स्त्रीत्वापत्तेः । पात्रादित्वाद्वारणेपि 'अकारान्तोत्तरपद' इत्यत्रोत्तरपदग्रहणानर्थक्यापत्तेश्च । समासात्प्रागलौकिकप्रक्रियावाक्यावयवीभूय तस्य प्रवृत्तिरिति "गोस्त्रियोः" इतिसूत्रभाष्यात्तदर्थवाक्यस्य लक्षणया ग्रहणाच्च । "अन्त" इति सूत्रभाष्यविरोधेन तत्पक्षानङ्गीकाराच्च । एतेन 'उपशरदम्' 'द्विपुरी' इत्यादावदन्ताव्ययीभावप्रयुक्तामोऽदन्तद्विगुप्रयुक्तङीपश्चावयवावयवस्येति न्यायेनात्र पक्षेऽपि सिद्धिरित्यपास्तम् । मूलस्यैवाभावात्, तं न्यायं विनापि तत्राप्यत्रेव 'चित्रा अस् गो अस्' इत्यत्र वाच्यार्थानुरोधेन विभक्तेरग्रे टचि तद्धितान्तत्वेन प्राप्तप्रातिपदिकसंज्ञासमकालमेव जायमानायाः समाससंज्ञायाष्टचस्तद्वाक्यावयवत्वेन तद्ग्रहणेन ग्रहणात्तदन्ते प्रवृत्तिरिति भाष्यरीत्येष्टसिद्धेः सत्त्वाच्च । ननु समूहावयवत्वे "स नपुंसकम्" इति 'पञ्चराजम्' इत्यादिसिद्धावपि 'द्विपुरी' इत्यादावकारान्तोत्तरपदकत्वाभावात्कथं स्त्रीत्वमिति चेत् ? न, "लिङ्गमशिष्यम्" इति भाष्येण तत्प्रकरणस्यानियामकत्वबोधनात् । अतएव त्वन्मतेऽपि "परवल्लिङ्गम्" इत्यादिसत्वेऽपि 'अर्धनावम्' इत्यादौ क्लीबत्वसिद्धिः । न च "येन ना" इतिन्यायेनास्य तदपवादत्वमिति वाच्यम्, स्वविषये "प्रातिपदिकान्त" इत्यस्यावश्यप्राप्तावपि तस्य 'चतुरङ्गेण' इत्यादावप्राप्तेरिति चेत् ? न, फलाविशेषेण मान्यानुरोधेन वा तथोक्तेः । मूलाशयो मूलरीत्येव सुवच इति सिद्धान्तानादरेण तथोक्तेः । अन्यार्थमावश्यकस्यास्य निरवकाशत्वाभावेन बाधकत्वाभावेऽपि पूर्वप्रवृत्तिनियामकस्य विशेषविहितत्वेन शीघ्रोपस्थितित्वरूपप्रतिपदविधित्वरूपप्रतिपदोक्तत्वस्यात्र सत्त्वेन तथोक्तेश्च । तयोर्मिथो व्याप्यव्यापकभावाभावेऽपि वर्णसङ्ख्याकृतसामान्यविशेषभावसत्त्वात् । ध्वनिता चेयं रीतिः "प्रत्ययलोप" इतिसूत्रस्य फलबोधकेन "प्रयोजनमपृक्तसिलोपः" इत्यादिभाष्येण । यद्यप्यल्विध्यर्थम् 'अतृणेट्' इत्यादाविदं वार्तिकमते, तथापि विशेषविहितत्वेन प्रत्ययलोपविषये शीघ्रोपस्थितत्वेन नुमादयोप्यस्यैव लक्ष्याणीति कैयटः । 'ता ता पिण्डानाम्' 'अनड्वन्' इत्यादिलक्ष्याणि, परिभाषेन्दुशेखरे स्पष्टतरं चैतत् । अतएव "तद्धितार्थ" इति सूत्रपौर्वशालादिलक्ष्ये 'दक्षिणपूर्वा' इत्याद्यर्थमावश्यकस्य 'सर्वनाम्नो वृत्ति' इत्यस्योक्तिः, अन्यथा पुंवदित्यनेन सिद्धे तदसङ्गतिरेवेति दिक् ।

सरला ।

परसूत्रस्यासिद्धता वक्तुमशक्येति एकाजुत्तरपदे इति सूत्रं प्रति न कुमति चेत्यसिद्धमिति वाच्यम्, हरिविछिन्धि इत्यत्र परत्वान्नश्छवीति रुत्वेऽनुस्वारानुनासिकाऽऽपत्त्या तत्पक्षस्यास्वीकारात् ।प्रतियोगमसिद्धत्वे तु "वन उपसङ्ख्यानम्" इति बुध्या नश्छवीत्यस्यासिद्धत्वेन वन इत्येव रुत्वे अत्रानुनासिकः पूर्वस्य तु वेति अधिकारत्वादुत्तरेणैवैकवाक्यतया पूर्वसूत्रस्थ"वन उपसङ्ख्यानम्" इति वार्तिकेन विहितत्वे तदप्रवृत्तेः ।नच चित्रगवीणामित्यत्रोत्तरपदस्यैकाच्त्वाभावेन एकाजुत्तरपदे ण इत्यस्याप्रवृत्तिरिति वाच्यम्, टचः समासचरमावयवत्वेनोत्तरपदानवयवत्वात् ।

भैरवी ।

इति सूत्रसत्त्वेऽपि 'द्विनावम्' 'अर्द्धखारम्' इत्यत्र नपुंसकत्वस्य सिद्धिः । समासान्तानां समुदायावयवत्वादेव 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इत्यत्रोत्तरपदग्रहणञ्चरितार्थम् । यत्तु टचः समुदायावयवत्वेऽपि 'कुमति च' इति सूत्रे उत्तरपदेन समासस्याक्षेपो विभक्त्या च प्रकृतेरिति प्रत्यासत्त्योभयोरेकत्वाश्रयेणैकाजुत्तरपदकसमासरूपप्रकृतिकविभक्तेर्ग्रहणमिति नात्र णत्वस्य प्राप्तिः । विभक्तिप्रकृतित्वं ङीबन्तस्य, समासत्वन्तु टजन्तस्येति भेदादिति । तन्न, स्त्रीप्रत्ययरहिते दृष्टानाम्प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गबोधकप्रत्ययविशिष्टेऽतिदेशेन 'प्रातिपदिकग्रहणे' इति परिभाषया ङीबन्ते सुप्प्रकृतौ समासत्वस्य प्रातिपदिकत्वव्याप्यत्वेनोभयोर्भेदाभावात् । आक्षिप्तस्यार्थस्य शाब्दबोधे मानाभावाच्च ।

नचैवं सति 'कुमति च' इति सूत्रभाष्ये 'माषकुम्भवापेन' इत्यत्र षष्ठीतत्पुरुषोत्तरपदकसमासे नित्यणत्वेन न भवितव्यम्, षष्ठीतत्पुरुषे तु प्रातिपदिकान्तेति विकल्पेन भवितव्यमिति प्रतिपादितम् । तच्च प्रत्यासत्त्याश्रयण एव सङ्गच्छते । अन्यथा वैकल्पिकणत्वापवादस्य 'कुमति च' इत्यस्योभयथापि प्राप्तिरिति तदसङ्गतिः स्पष्टैवेति वाच्यम् । एतस्य भाष्यस्य यथाकथञ्चिदत्र णत्वस्य प्राप्तिरित्यत्र तात्पर्यात् । णत्वन्तु तत्र 'पदव्यवायेऽपि' इति निषेधान्न भ-

भावप्रकाशः ।

नन्वेवमप्यन्तर्वर्त्तिविभक्त्या पदत्वात् 'पदव्यवायेऽपि' इति निषेधः स्यात् । "उत्तरपदत्वे च" इति निषेधस्तु न, प्रत्यासत्त्योत्तरपदस्य कार्यित्व एव तत्प्रवृत्तेः, अपदादिविधाविति पर्युदासेन पदान्तविधावेव तत्सत्त्वाच्च । न चैवमपि "पदव्यवायेऽपि" इत्यस्य सामान्यत्वादनयोर्विशेषत्वान्नुम्विभक्तिविषयलक्ष्यासम्भवापत्तेश्चानयोर्विषये तदप्रवृत्तेरावश्यकत्वेन नात्र दोष इति वाच्यम्, "अतद्धिते" इति वार्त्तिकस्य 'आर्द्रगोमयेण' इत्यादिभाष्योक्तलक्ष्यस्य चासङ्गत्यापत्तेः । समयडादौ तत एव तदप्राप्त्या "येन ना" इति न्यायाविषयत्वात्तत्र द्वयोरपि प्रवृत्त्या तल्लक्ष्यासम्भवादनुपदवक्ष्यमाणरीत्या तदन्यतल्लक्ष्याणामपि सम्भवाच्च । यत्तु 'क्षीरपेण' इत्यादौ 'गतिकारक'इति प्राक्सुबुत्पत्तेः समासे निषेधाप्रवृत्त्या तल्लक्ष्यसम्भव इति । तन्न, उक्तरीत्या 'माषकुम्भवापेन' इत्यादावपि सिद्धान्ते सप्तमीसमासेन व्याख्याने निषेधसिध्द्यभावापत्तेः, वैषम्ये बीजाभावाच्च । तस्मात्तद्विषये तदनित्यत्वं पदत्वं पदत्वयोग्यत्वमित्यनयोरन्यतरदेव शरणमित्यत्र स दुर्वार इति चेत्? न, उक्तवार्त्तिकस्य प्रसज्यप्रतिषेधेन तद्धिताव्यवहितपरकनिमित्तनिमित्तिमध्यस्थपदव्यवधाने निषेधो नेति व्याख्याने "आर्द्रगोमयेण" "अर्धगोमयिणौ" इत्यादिसिद्धावपि 'रम्यविणा' 'हरिकामेण' 'चतुरङ्गेण' इत्याद्यसिद्ध्यापत्तिरेवेति पर्युदासेनोक्तवार्त्तिकैकवाक्यतया तस्य प्रकृतिभिन्नान्याव्यवहितपरकनिमित्तनिमित्तिमध्यस्थपदव्यवधाने निषेध इत्यर्थस्य तत्सिध्द्यर्थमङ्गीकारात् । व्यवधायकपदस्याव्यवहितप्रकृतिभिन्नान्यपरकत्वे निषेध इति यावत् । तस्य प्रत्ययान्याव्यवहितपरकत्वे स इति निष्कर्षः । उक्तलक्ष्येषु तस्य प्रकृतिभिन्नपरत्वमेव न तदन्यपरत्वमिति न निषेधः । 'चतुरङ्गेण' इत्यत्राप्यङ्गपदस्य व्यवधायकत्वाङ्गीकारे उक्तरीत्यैव तदभावः । बहुत्वस्तु प्रकृतिभिन्नान्याङ्गशब्दपरत्वेऽपि पदत्वाभावात्तदभावः । 'चित्रगवीणाम्' इत्यत्रापि व्यवधायकगोपदस्य तद्भिन्नङीप्परत्वमेव न तदन्यपरत्वमिति तदभावः । न च "अचः परस्मिन्" इति टचो लोपस्य स्थानिवद्भावः, पूर्वस्मात्परस्याव्यवहितस्यैव ग्रहीष्यमाणत्वात्, 'पूर्वत्रासिद्धीये' इति निषेधाच्च । "तस्य दोषः" इत्यस्य तु णत्वे प्रवृत्तिः, नतु तन्निषेधेऽपि, तावतापि क्षतिविरहाच्च । ध्वनितश्चायमर्थस्तत्रैव भाष्यकृता । तत्र ह्येवमुक्तम् "अतद्धित इति वक्तव्यम्, इह मा भूत्—'आर्द्रगोमयेण' इत्यादि । तत्तर्हि वक्तव्यम्? न वक्तव्यम् । नैवं विज्ञायते पदेन व्यवायः पदव्यवाय इति । कथं तर्हि? पदे परतो व्यवायः पदव्यवाय इति" इति । एतच्च प्रत्याख्यानपक्षे प्रागुक्तलक्ष्येषु णत्वासिध्द्या तदनुरोधेन यथा वार्त्तिकमते तद्धितत्वमविवक्षयित्वा तादृशनिष्कर्षा-

सरला ।

स्यादेतत्, द्विधुरी, द्विपुरीत्यत्र समासान्तस्य ङीप्सिद्ध्यर्थमुत्तरपदावयवत्वं वाच्यम् । अन्यथाऽकारान्तोत्तरपदत्वाभावेन "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" इति वार्त्तिकस्याप्रवृत्त्यापत्तेः । ततश्च तादर्थ्यात्ताच्छब्द्यमिति गोस्त्रियोरुपसर्जनस्येति सूत्रस्थभाष्यप्रामाण्यात् समासान्तसूत्रस्थ-

भैरवी।

वत्येव। किञ्च पूर्वोक्तप्रत्यासत्त्याश्रयणे बहुचतुरङ्गेणेत्यत्र "विभाषा सुपो बहुच्पुरस्तात्तु" इति बहुचि विभक्तिप्रकृतित्वम्बहुज्विशिष्टस्यैकाजुत्तरपदकसमासत्वञ्चतुरङ्गशब्दस्येति भेदाण्णत्वञ्च स्यात्। नन्वेवमप्यन्तर्वर्तिविभक्त्या गोशब्दस्य पदत्वात् 'पदव्यवायेऽपि'इति निषेधः स्यात्। उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणप्रतिषेधस्तु वक्तुमशक्यः, "अपदादिविधौ" इति पर्युदासबलेन पदान्तविधावेव तस्य निषेधस्य प्रवृत्त्यङ्गीकारादिति चेत्? न, 'अतद्धित इति वक्तव्यम्' इति वार्तिकैकवाक्यतया णत्वाश्रयातिरिक्तो यस्तद्धितभिन्नस्तत्परकपदव्यवाये निषेधस्य प्रवृत्त्यङ्गीकारात्।

भावप्रकाशः।

ङीकारः, तथा तदनुरोधेन भाष्यमतेऽपि पदे परतो व्यवायः पदात्मक एव, विधिवाक्यैकवाक्यतया भीमसेनादिन्यायेन पदशब्देनात्रोत्तरपदमेव वा गृह्यत इति फलितम्। एवञ्च 'चतुर्वहङ्गेण' इत्यादौ नात्र पक्षेऽपि दोषः। अतएवारम्भप्रत्याख्यानयोस्समफलत्वम्, अन्यथा फलभेदापत्त्या प्रत्याख्यानासङ्गतिः स्पष्टैव।

किञ्चोत्तरपदत्वे चेत्यस्य प्रत्याख्यानाय विशिष्टादप्युत्पन्नेऽजादौ स्वादौ परेऽव्यवहितपूर्वसुबन्तस्य 'दधिसेचौ' इत्यादौ षत्वस्य पञ्चमीसमासेन वारणेऽप्यकुत्वाय भत्वाङ्गीकारादत्रापि 'गो'इत्यस्य तथैव तत्त्वात्तदप्राप्तेः सुवचत्वात्। अत एव "लोपः शाकल्यस्य" इति वलोपो न। अन्यथा "प्रत्ययलोप" इत्यस्य नियमार्थत्वेन विशिष्टस्य भत्ववद्वलोपेऽप्राप्तावपि "अचः पर" इति स्थानिवद्भावात्तस्य भत्ववल्लोपो दुर्वारः। तस्यानवयवत्वात् "न पदान्त" इत्यस्याप्राप्तिः। "पूर्वत्रासिद्धीये" इति सञ्चारे तु ङीपं मत्वा तदापत्तिः। एवञ्चात्र तस्य भत्वमावश्यकम्। तच्च न ङीपं मत्वा तेन स्थानिवत्त्वेन टचा व्यवधानात्किन्तु तथैव टचं मत्वा। स्वविधावित्यस्य तु स्वस्य कार्यित्वे एव प्रवृत्तिः। एकदेशविकृतन्यायेन तु न निर्वाहः, तेन टजन्तसमूहपर्याप्तस्य तस्य वान्तसमूहे प्रापणेऽपि गवित्यस्य तत्त्वालाभात्। एवञ्च भत्वात्तदप्राप्तिर्युक्तैव। यदि तु समफलत्वाय तत्प्रत्याख्यानप्रकारोऽप्युत्तरपदस्य कार्यित्वादावेवेति वलोपस्य तत्त्वानिवृत्तेरत्र सौलभ्येऽप्यत्र णत्वनिषेधे भत्वाप्राप्तिरेवेत्युच्यते, तदा प्रागुक्तनिष्कर्षेणैव तदप्राप्तिरिति केचित्।

वस्तुतस्तु स अयुक्त एव गुरुतरत्वात्। ध्वनितं चेदं प्रत्याख्यानोत्तरं पुनर्नञ्घटितैतद्वचनं पठता भाष्यकृता। एवञ्च वलोपस्य तत्त्वाद्वार्त्तिकेन प्रत्ययलक्षणनिषेधेन निवृत्तावप्यत्र तदप्राप्तया तदप्राप्तौ निष्कर्ष एव शरणमिति तुल्यम्। भाष्यमते तु तच्छङ्कैव नेति णत्वं सम्यगेवेति बोध्यम्।

अत्र मान्याः—प्रत्यासत्त्या विभक्त्याक्षिप्तप्रकृतेः कवर्गवदुत्तरपदाक्षिप्तसमासरूपाया एव ग्रहणादत्र तत्प्रकृतित्वं ङ्यन्तस्य, समासत्वं टजन्तस्येति व्याश्रयत्वाण्णत्वस्यैवाप्राप्तिः। अतएव 'माषकुम्भवापेन' इत्यत्र षष्ठीतत्पुरुषोत्तरपदके तस्मिन् "कुमति च" इति नित्यणत्वेन भाव्यं, तत्पूर्वपदके तत्र तु प्रातिपदिकान्तेति वा णत्वेनेति "कुमति च"इति सूत्रभाष्यं सङ्गच्छते। अन्यथा वाणत्वापवादकेन नित्यणत्वेनैव कल्पद्वयेऽपि भाव्यमिति तदसङ्गतिः स्पष्टैवेति।

सरला।

समासपदस्य क्रियमाणा लक्षणा समासार्थकल्प्यमानालौकिकप्रक्रियावाक्यघटके उत्तरपदे भवति। तथा च समासान्ताः इति सूत्रस्य समासार्थकल्प्यमानालौकिकप्रक्रियावाक्यघटकोत्तरपदावयवः समासान्तो भवतीत्यर्थः। द्विधुरी द्विपुरीत्यत्र च ऋक्पूरिति विहितः समासान्तोऽकारः उत्तरपदावयव इति तत्राकारान्तोत्तरपद इत्यस्य प्रवृत्तिः सिध्यति। अत एव "ऋक् च ऋक् च ऋचौ असारूप्यादेकशेषो न स्यात्"इति सरूपसूत्रस्थभाष्यं सङ्गच्छते। अन्यथा अप्रत्ययस्य समासावयवत्वेऽपि उत्तरपदानवयवत्वेनोभयोः ऋक्शब्दयोरसारूप्यं न स्यात्। यदि तु उपशरदमित्यादौ समासान्तटच उत्तरपदावयवत्वेऽपि समासावयवत्वाभावेनाव्ययीभावेऽकारान्तत्वाभावात् नाव्ययीभावादतोऽम्त्वपञ्चम्या इति सूत्रस्याप्रवृत्तौ तदसिद्ध्यापत्तिरित्युच्यते, तर्हि समासान्तस्योभयावयवत्वं स्वीक्रियताम्। तथा च समासार्थकल्प्यमानालौकिकप्रक्रियावाक्यघटकोत्तरपदावयवीभूय समासचरमावयवो भवतीति समासान्तसूत्रार्थः। उपशरदमित्यत्र च टचः समासावयवत्वेनाव्ययीभावेऽकारान्तत्वं सुलभमिति नोक्तदोष

भैरवी ।

अत एव 'रम्यविणा' 'आर्द्रगोमयेण' 'चतुर्बह्वङ्गेण' इत्यत्र णत्वस्य सिद्धिः । आद्ये आङो नाभावे पूर्वस्य विशब्दस्य पदत्वमस्त्येवेति तद्धितभिन्ने तस्मिन्परे सति निषेधाभावाय णत्वाश्रयातिरिक्तेति । द्वितीये मयटो णत्वाश्रयातिरिक्तत्वात्तस्मिन्परे यत्पदं गोशब्दस्तेन व्यवधानेऽपि णत्वसिद्धये तद्धितभिन्नेति । तृतीये बहुचो णत्वाश्रयातिरिक्तो यस्तद्धितभिन्नोऽङ्गशब्दस्तत्परत्वात्तेन व्यवधानेऽपि णत्वसिद्धये पदेति । एवञ्च 'चित्रगवीणाम्' इत्यत्र गोशब्दस्य णत्वाश्रयातिरिक्ततद्धितभिन्नपरत्वाभावाण्णत्वं भवत्येव । नन्वेवमपि 'कुमति च' इति णत्वमित्यनुपपन्नम्, अस्यासिद्धत्वात् 'एकाजुत्तरपदे णः' इत्यस्य प्राप्तेः । 'कुमति च' इति सूत्रस्य 'एकाजुत्तरपदे णः' इति सूत्रापवादत्वं तु वक्तुमशक्यम्, 'चतुरङ्गेण' 'माषकुम्भाणाम्' इत्यत्रैकाजुत्तरपदकत्वाभावेऽपि कवर्गवदुत्तरपदकत्वस्य सत्त्वात्तस्य प्राप्तेरिति येन नाप्राप्तिन्यायस्य विषयाभावादिति चेत्? न, असिद्धत्वस्य कार्यार्थतया यत्र फले विशेषस्तत्रैव तत्प्रवृत्तेः स्वीकारात् । किञ्च प्रतिपदविधित्वेन 'कुमति च' इति सूत्रस्य प्रवृत्तिर्न्याय्या । प्रतिपदविधित्वन्निरवकाशत्वे एव बाधप्रयोजकमिति तु न भ्रमितव्यम्, 'अपरशाल' इत्यत्र 'दक्षिणपूर्वा' इत्यत्र चरितार्थस्यापि "सर्वनाम्नो वृत्तिमात्रे" इत्यस्य भाष्यकृता प्रत्ययलोपसूत्रे प्रवृत्त्य-

भावप्रकाशः ।

अत्र गुरुचरणाः—लिङ्गविशिष्टपरिभाषया तत्प्रकृतौ समासत्वस्य सत्त्वात्तथाश्रयणेऽपि णत्वं भवत्येवेति । इत्थं हि तदाकूतं—सामान्यतो विशेषतो वा तद्ग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्य तेन ग्रहणं बोध्यम् । अपिना स्वस्य चेति तदर्थः । तया स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टेऽपि पर्याप्तत्वमतिदिश्यत इति यावत् । तथा च "ञ्नित्यादिर्नित्यम्" "नेन्त्सिद्ध" "तृजकाभ्याम्" "यञिञोश्च" "प्रमाणे द्वयसच्"इत्यादौ यथासामान्यत आक्षिप्तादिप्रातिपदिकग्रहणमेवमत्रापीति विभक्त्युत्पत्त्यर्थं "यदागमा" इति न्यायेन टजन्तास्थितसमासत्वसमानाधिकरणप्रातिपदिकत्वस्यात्र ङ्यन्ते यथातिदेशः, तथैव णत्वे कार्ये तत्स्थितसमासत्वेऽतिदिष्टे तत्त्वादेव कवर्गवदुत्तरपदकत्वस्यापि लाभात्तत्प्राप्तिर्निर्बाधैव । एतेन तस्याः कथञ्चिद्विशिष्टोपादानविषयत्वादत्र तदभाव इति चिन्त्यमिदमित्यपास्तम् ।

वस्तुतस्तु तन्न्यायाश्रयणं कर्त्तुमशक्यं "बहुचतुरङ्गेण" इत्यादौ नित्यणत्वानापत्तेः । अतएवापिः प्रयुक्तः। भाष्येऽन्त्ये वा णत्वोक्तिस्तु उत्तरपदशब्दस्य समासचरमावयवे रूढत्वात्तस्य च मध्यमपदत्वानाक्रान्तरूपस्यात्र ग्रहणात्कवर्गवदुत्तरपदकत्वाभावात्तदप्राप्तिबोधिका, न तु तन्न्यायाश्रयणबोधिका । वस्तुतस्तद्भाष्यं तत्तत्प्राप्तियोग्यतामात्रबोधकं, न तु वस्तुतस्तत्प्राप्तिबोधकं "पदव्यवायेऽपि" इत्यस्य जागरूकत्वादिति बोध्यम् । यत्तूक्तभाष्यान्निषेध "उपसर्गादसमासेऽपि" इत्यादेरेव 'प्रावनद्धम्' इत्यादि च लक्ष्यमिति; तन्न, तत्रत्यस्थ 'अतद्धित' इति वार्त्तिकस्य 'आर्द्रगोमयेण' इत्यादिभाष्योक्तोदाहरणासङ्गत्यापत्तेरिति । विभक्ताविति विषयसप्तम्या तत्सम्बन्धि तत्परतो वा यत्कार्यं तत्र कार्यं लिङ्गबोधकप्रत्ययविशिष्टस्याग्रहणमित्यर्थिकायाः स्वस्त्रनिषेधयुवसम्प्रसारणादिलक्ष्यिकाया 'विभक्तौ लिङ्गविशिष्ट' इत्यस्यास्तु तत्रापि नायं विषयः, ङ्याप्सूत्रे भाष्ये तत्परिभाषापरिगणितदोषेषु तस्याः पाठेन तल्लक्ष्येषु "युवोरनाकौ" इति भाष्योक्तेष्वेव तत्प्रवृत्त्यङ्गीकाराद्धटीग्रहणाल्लिङ्गात्तस्या अनित्यत्वेन तन्मूलत्वात्तस्याः स्वातन्त्र्याभावाच्च, तस्या अनित्यत्वेप्यौत्सर्गिकप्रवृत्त्येष्टसिद्धेः । अन्यथेष्टस्थलेऽप्यप्रवृत्त्यापत्तौ निर्विषयतापत्तेः । किञ्च युवोरनेतिसूत्रभाष्यादौ तस्याः परिभाषात्वेन व्यवहारादवश्यमेषा परिभाषाऽनेकफलसिद्ध्यर्थं कार्यत्युक्तेश्च । अतिरिक्तत्वेऽपि यत्र विभक्तेः प्राधान्येनाश्रयणं तत्रैव तत्प्रवृत्त्याऽत्र तस्य प्राधान्यात्तदप्रवृत्तेर्निर्विघ्नत्वात् । तच्च प्रत्ययत्वविभ-

सरला ।

इति । तथा च चित्रगवीणामित्यत्रापि टचः समासचरमावयत्वेऽपि उत्तरपदस्याप्यवयवत्वान्नैकाजुत्तरपदत्वमिति कुमति चेत्येव णत्वमिति ।

अत्रोच्यते, उभयावयवत्वे अन्तःसूत्रस्थभाष्यविरोधः । तत्र हि समासस्यान्तोदात्तत्वमनेन विधीयते उत्तरपदस्य वेति विकल्प्य आद्ये इदंप्रथमका इत्यादौ, कपोऽन्तोदात्तत्वापत्तिः, अन्त्ये

शब्दरत्नम् ।

कप्रमादात् । एवं स्त्रीगवीणामित्येकशेषप्रकरणान्तस्थकैयटप्रयोगेऽपि बोध्यम् । अस्तेरनन्तरे समीपे वेत्यादि भाष्यं त्वनन्तरादिपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका, स्थान-

भैरवी ।

ङीकारात् । यदि निरवकाशत्वे एवेति नियमस्तर्हि 'स्त्रियाः पुंवत्' इत्यस्य सूत्रस्यैव प्रवृत्तिर्वक्तव्या । नतुस्वीयेष्टेरिति शीघ्रोपस्थितिकत्वेन प्रतिपदविधित्वं पूर्वप्रवृत्तौ नियामकं भवत्येव ।

प्रकरणान्तस्थेति । 'त्यदादीनि' इतिसूत्रस्थेत्यर्थः । मूले अनन्तरादिष्विति । आनन्तर्यादिष्वित्यर्थः । ननु यद्यानन्तर्यन्न षष्ठ्यर्थस्तदा 'अस्तेर्भूः' इति सूत्रे षष्ठीमात्रोच्चारणे सन्देहप्रतिपादनपरम् "अस्तेरनन्तरे समीपे वा" इति भाष्यमनुपपन्नमत आह—अस्तेरनन्तर इत्यादि । तन्निरूपितेति । आनन्तर्यनिरूपितो यः सम्बन्धो निरूपकत्वाश्रयत्वान्यतररूपस्तदर्थिका । अध्याहारेणैव भाष्ययोजना कार्येत्यत्र दृष्टान्तमाह—स्थानपदेति । न च स्थानपदं षष्ठ्यर्थ एवेति एतत्प्रतिपत्तयेऽध्याहारो नावश्यक इति वाच्यम् , 'स्थानेन योगो यस्याः' इति व्यधिकरणपदकबहुव्रीहिप्रदर्शनपरभाष्यात् स्थानरूपः सम्बन्धो न षष्ठ्यर्थः । अन्यथा स्थानं योगो यस्या इत्येव वदेदित्याशयात् । निपातनात्साधुत्वमिति तूभयथा वक्तव्यमेव । एवञ्च स्थाननिरूपितो यः

भावप्रकाशः ।

त्कित्वसर्वनामस्थानत्वसुप्त्वसम्बुद्धित्वाद्यन्यतमेनेत्यन्यदेतत् । तेन 'श्वयुव' इत्यादेः 'युवतीः पश्य' इत्यादौ तयावारणपरस्य युवोरनेतिसूत्रभाष्यस्यासंगतिर्न । एतेन "विभक्तौ लिङ्गविशिष्ट" इत्यस्या जागरूकत्वे कथं तत्सञ्चार इत्यपास्तम् । एवञ्च "कुमति च" इति णत्वोक्तिः समञ्जसैवेति मात्सर्यमुत्सार्य विचार्यमार्यैः ।

प्रकरणान्तेति । त्यदादीनीतिसूत्रस्थेत्यर्थः । अन्तसामीप्यात्तस्यापि तत्त्वमिति भावः । एतेन क्षुभ्नादित्वकल्पनया न णत्वम् , तत्र बीजं तु कैयटप्रयोग एव । यद्वा, वाग्रहणमनुवर्त्य व्यवस्थितविभाषया तन्नेति मन्दोक्तमपास्तम् । मूलाशुद्धेस्तत्रैव तदभावस्यानिश्चयात् । अस्य तत्त्वे स बीजमुत तस्य तत्त्वेऽयमिति विनिगमकाभावात् । अतिप्रसङ्गापत्तेः । तदन्यथानुपपत्त्या तस्य तत्त्वलाभेऽपि प्रयोगस्य भेदेन तेनैतस्य तत्त्वालाभात् । आकृतिगणत्वेऽपि समस्तानां युवादिष्वसमस्तानां क्षुभ्नादिष्विति भाष्यसिद्धान्तान्नित्यणत्वेन भाव्यमिति प्रागुक्तभाष्यविरोधापत्तेः । न हि व्यवस्थितविभाषासु नित्यत्वव्यवहारः कस्यापि सम्मतः, तासां भाष्ये परिगणनाच्चेति दिक् । खण्डनकृदाद्युक्तमन्त्यपक्षीयमाद्यदूषणमुद्धरन् भाष्याशयमाह—अस्तेरिति । एतेन "अस्तेर्भूः" "उरण् रपरः" इत्यादिभाष्यविरोधाद् व्यस्तप्रयोगोऽपि तत्रानिष्ट इति चिन्त्यमिति जगन्नाथोक्तमप्यपास्तम् । आदिना स्थाने इत्यस्य सङ्ग्रहः । अत एवाग्रे तथोक्तिः । तन्निरूपितेति । अनन्तरादिपदार्थनिरूपितेत्यर्थः । एवमग्रेपि । स च बौद्धैकदेशाधारकस्थित्याश्रयत्वरूप इति भावः । भाष्यरीत्या चरमेऽध्याहारावश्यकतां ध्वनयितुं दृष्टान्ततया प्रसङ्गतो वा आह—स्थानेति । ननु तस्य तत्त्वाभावात्तथाऽस्तु, स्थानं तु षष्ठ्यर्थ एवेति सिद्धं "षष्ठी स्थाने" इति सूत्रादतः स किमर्थ इति चेत्? न, तृतीयान्तेन सप्तम्यन्तेन वा तेन व्यधिकरणबहुव्रीहिप्रदर्शकभाष्यात्तस्यापि तत्त्वाभावस्य लाभात् । अन्यथा स्थानं योगः सम्बन्धो यस्या वाच्य इत्येव वक्तुं न्याय्यम् । आवश्यकनिपातनात्साधुत्वमिति तद्भावः । एतेन 'धान्येन धनी' इति-

सरला ।

च अनृच इत्यत्रान्तोदात्तत्वासिद्धिरुक्ता । नहि समासान्तस्योभयावयवत्वे कपोऽन्तोदात्तत्वापादनं सङ्गच्छते, अन्त्यपक्षेऽपि कपोऽन्तोदात्तत्वस्य सुलभत्वात् । नाऽपि अन्त्यपक्षे अनृच इत्यत्रान्तोदात्तत्वासिद्धिरापादयितुं शक्यते, अप्रत्ययस्य उत्तरपदावयवत्वेन तत्रान्तोदात्तत्वस्य सुलभत्वात् । एवञ्चैतद्भाष्यप्रामाण्येन गोस्त्रियोरितिसूत्रस्थभाष्याक्षरस्वारस्येन च समासान्तसूत्रस्थसमासपदस्य समासार्थकल्प्यमानप्रक्रियावाक्ये एव लक्षणा न तूत्तरपदपर्यन्तमपि । द्विधुरी द्विपुरीत्यादिलक्ष्याणान्तु "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति समासान्तसूत्रस्थभाष्यात् लिङ्गस्य लौकिकत्वावगतेरकारान्तोत्तरेति शास्त्रप्रवृत्तिं विनाऽपि नासिद्धिः । सरूपसूत्रस्थभाष्यन्तु समासान्तानामुत्तरपदानवयवत्वेऽपि न विरुद्धम् । तद् भाष्यं हि कृतद्वन्द्वानां विभक्तौ परत एकशेष इति पक्षमुपक्रम्य प्रवृत्तम् । ततश्च समासान्तानां समासावयवत्वे तत्प्रागभा-

**शब्दरत्नम् ।**

पदाध्याहारेण तन्निरूपितसम्बन्धार्थिका वा षष्ठीत्यभिप्रायकम् । अत एव मतुप्सूत्रे कैयटेन 'गावोऽस्य सन्त्यनन्तराः' इत्यर्थे मतुप्शङ्कापरभाष्यव्याख्यावसरे आनन्तर्यमस्त्यर्थवत्प्रकृत्यर्थोपाधिरित्युक्तम्, नतु तस्य षष्ठ्यर्थत्वेन प्रत्ययार्थत्वमुक्तम् । भाष्यकृता चासामर्थ्यात्तत्र वृत्त्यभाव उक्तः । षष्ठ्यर्थत्वे तु प्रत्ययार्थत्वात्कासामर्थ्यम् ।

**भैरवी ।**

सम्बन्धो निवर्त्यनिवर्तकभावः स एव षष्ठ्यर्थः । कैयटेनापि स्थाननिमित्तसम्बन्ध इति वदता स्थानरूपः सम्बन्धो न षष्ठ्यर्थ इति ध्वनितमेव । नन्वस्य दृष्टान्तपरतया योजनायां 'वा'शब्दप्रयोगासङ्गतिरिति वाच्यम्, अत्रत्यवाशब्दस्यैवार्थकत्वात् । 'व वा यथा तथा साम्ये' इत्यमरात् । एवञ्च 'षष्ठी स्थाने' इति सूत्रपर्यालोचनात्प्राग्वाक्यार्थपर्यवसानायाध्याहारोऽवश्यं कार्य एवेति ध्वनितम् । इत्यभिप्रायकमिति । नतु सामीप्यादिः सम्बन्ध एव षष्ठ्यर्थ इत्यभिप्रायकमिति शेषः । यद्यपि षष्ठ्यर्थसम्बन्धा बहवस्तथापि निर्णयाय 'षष्ठी स्थाने' इति सूत्रम् ।

उक्तार्थे भाष्यान्तरमपि साधकमित्याह—अत एवेति । सामीप्यस्य षष्ठ्यर्थत्वाभावादेवेत्यर्थः । अस्त्यर्थवदिति । यथा वर्तमानकालावच्छिन्नाऽस्त्यर्थस्य सौत्रास्तिपदप्रतिपाद्यस्य षष्ठ्यर्थत्वाभावेन प्रकृत्यर्थोपाधित्वं, तथेत्यर्थः । अत्रोपाधिशब्दो विशेषणपरः, प्रकृत्यर्थस्य गोपदार्थस्य विशेषणम् । नच वर्तमानकालावच्छिन्नाऽस्त्यर्थस्य प्रकृत्यर्थविशेषणत्वे गोमानासीदित्यादावनन्वय इति वाच्यम्, तादृशव्यवहारविषये गोमानित्यत्र लक्षणाया अङ्गीकारात् । तत्र गावोऽस्य सन्त्यनन्तरा इत्यत्र । षष्ठ्यर्थत्वे त्विति । आनन्तर्यस्येत्यादिः । अनन्तरा इति बहु-

**भावप्रकाशः ।**

वचतृतीयेत्यपास्तम् । गौरवात्तस्यावश्यकत्वात् सप्तमीपक्षेऽनिर्वाहाच्च । स्थाने योगेत्यस्य स्थाननिमित्तसम्बन्धेत्यर्थं वदता कैयटेनापि ध्वनितमिदम् । एत्वघटितसूत्रं पठता पाणिनिनाऽपि सूचितमिदम् । मतुप्सूत्रस्थभाष्यमप्यत्र साधकमिति दिक् ।

सम्बन्धेति । निवर्त्यनिवर्तकभावादिरूपेत्यर्थः । आद्ये वा इवार्थे, अन्त्ये भाष्यीयपक्षविकल्पबोधकः । षष्ठीति । अयम्भावः—सामान्यश्रुताया अपि तस्या उक्तभाष्यादिशिष्य शक्ततया हर्यादिवदनेकार्थत्वेऽपि तद्विषयसन्देहस्यासम्भवेन भाष्यकृदकृतत्वेऽप्येतेषामतदर्थत्वात्तथाकरणासङ्गतिरेवेत्यध्याहारावश्यकत्वेऽपि "षष्ठी स्थाने" इत्यस्य प्रागनालोचनमिति तदुपपत्तिः। अत एव तत्प्रासथा निर्णयोक्तिरग्रे इति । तदाह—त्यभीति । न तु तस्य तत्त्वबोधकमिति भावः । एतेन नानार्थस्थले सर्वत्र शक्तौ सन्देहसम्भवः, नैवमत्र; शक्यार्थस्य प्रागुपस्थित्याऽर्थबोधे निर्बीजाध्याहारेण शङ्कानौचित्यात् । अन्यथा 'घटमानय' इत्युक्तावपि तथा घटः पटो वेति सा स्यादिति मन्दोक्तिरपास्ता, उक्तयुक्तेः प्राक्शक्यार्थनिर्णयात् । अध्याहारबीजस्योक्तेः घटादिवैषम्यस्यात एव स्पष्टत्वाच्चेति दिक् । एतेन "अस्तेर्भूः" "उरण्रपरः" इत्यादिभाष्यविरोधाद्व्यस्तप्रयोगोऽपि तत्रानिष्ट इति चिन्त्यमिति जगन्नाथोक्तमप्यपास्तम् । अनन्तरादिष्विति मूलं समूलयन्नुक्तार्थे भाष्यादिसंमतिमाह—अत एवेति । तस्य तत्त्वाभावादेवेत्यर्थः । अस्याग्रिमोक्तद्वयेऽप्यन्वयः । शङ्कापरेति । पञ्चमीसमासे इत्यर्थे या मतुप्शङ्का ततः परं भाष्यं सिद्धान्तभाष्यं तद्व्याख्येत्यर्थः। इदमेव ध्वनयितुं वक्ष्यति—भाष्यकृतेति । अस्त्यर्थो वर्त्तमानसत्ता, 'गोमानासीत्' इत्यादेस्तु तथा व्यवहारविषय आसीदित्यादिरर्थः । उपाधिरिति । तस्य विशेषणमित्यर्थः । अत एवानन्तरा इत्युक्तिः। अन्यथाऽनन्तरमित्येव वदेत् । षष्ठ्यर्थत्वेनेति । अन्यत्र स्वीक्रियमाणेनेति शेषः। तथा च स्वीकारस्य हेतुत्वं प्रकृतप्रत्ययार्थत्वे फलति । एवमग्रेऽपि । एतेनान्यतरवैयर्थ्यमित्यपास्तम् । चासामर्थ्यात्–'सापेक्षम्' इति न्यायात् । वृत्तिपदेन मतुप् ग्राह्यः। क्वेति । न कापीत्यर्थः। कथमपि

**सरला ।**

गस्य सरूपस्य न विभक्त्यव्यवहितपूर्वत्वम्, यच्च विभक्त्यव्यवहितपूर्वं न तत्सरूपमिति असारूप्यादित्युक्तम् ।

प्रकृत्यर्थोपाधिरिति । तदस्यास्त्यस्मिन्निति सूत्रेऽस्तिपदं प्रकृतिविशेषणम् । विभक्तिप्रतिरूपकं विद्य-

शब्दरत्नम् ।

तस्माद्यत्र षष्ठ्यन्तमात्रप्रयोगे आनन्तर्यादिप्रतीतिस्तत्रानन्तरादिपदाध्याहार एव बोध्यः । तत्रास्तिग्रहणाभावे तस्यान्यफलकत्वे वा सूत्रानुपात्तास्त्यर्थान्तर्भावेण मत्वर्थीयवद्बहुव्रीहिवच्च

भैरवी ।

वचनान्तोपादानेन प्रकृत्यर्थविशेषणत्वं स्पष्टमेव । एवञ्च सापेक्षमसमर्थवदिति न्यायेन तत्रासामर्थ्यम् । उपसंहरति—तस्मादिति । यत्र गुरुपुत्रो देवदत्तस्य किञ्चित् इत्यत्र । आनन्तर्यादिप्रतीतिः—आनन्तर्यनिरूपितसम्बन्धप्रतीतिः ।

उक्तार्थे प्रमाणान्तरमपि दर्शयितुमनन्तरादिष्विति ग्रन्थमवतारयति—तत्रेत्यादि । तत्र–मतुब्विधायकसूत्रे । यथा बहुव्रीहिसमासे वर्त्तमानकालावच्छिन्नाऽस्त्यर्थान्तर्भावस्तथा शब्दशक्तिस्वभावान्मतुबन्तादपि भविष्यतीति नैतत्प्रयोजनमिति भावः । नन्वनर्थकमेवास्त्वित्यत आह—अन्यफलकत्वे वेति । सूत्रकारस्याज्ञानकल्पनापेक्षयाऽन्यफलकत्वकल्पनमेव वरमिति भावः । अन्यत्फलम्-अस्तिमानिति । अत्र हि सत्ताकर्तृधनवाचकोऽस्तिशब्दोऽव्ययं, तस्यास्तिसामानाधिकरण्याभावान्मतुप्प्रत्ययो न प्राप्तस्तदर्थमेतदस्तिग्रहणमिति भावः । सूत्रानुपात्तेति । यथा शब्दशक्तिस्वाभाव्यान्मत्वर्थीयो बहुव्रीहिश्च भवति तथेति वैपरीत्ये दृष्टान्तः ।

भावप्रकाशः ।

तस्यासम्भवादिति भावः । तथा चानन्तरा इति नैव वदेदिति बोध्यम् । एतेनेदं भाष्यं समीपादिपदयुक्तवाक्याभिप्रायं न तस्य तत्त्वाभावपरमिति मन्दोक्तमपास्तम् । एवमपि तत्र पक्षे तस्य दुष्परिहरत्वेन भाष्यासङ्गतेर्दुष्परिहरत्वात् । अन्यपक्षे तु तदुक्तद्वितीयदूषणमुद्धरन् उपसंहरति—तस्मादिति । उक्तहेतोरित्यर्थः । यत्रेति । गुरुपुत्रो देवदत्तस्य किञ्चिदित्यादिसमर्थसूत्रभाष्यादिप्रयोगे इत्यर्थः । मात्रशब्देन प्रकृतसमीपादिपदमात्रव्यावृत्तिः, प्रकरणाद्यभावे इति शेषः । एवेन षष्ठ्यर्थत्वनिवृत्तिः । अतो लृरेत्यत्रान्तशब्द एव तद्वाचीति भावः । एतेन "अतो लरा" इत्यत्र सूत्रकृता "षष्ठी शेषे" इत्यत्र त्वया चाङ्गीकृतमिति मन्दोक्तमपास्तम् , उक्तहेतोः, तदङ्गीकारस्य खपुष्पायमाणत्वाच्च । अनन्तरादिष्वित्यस्य मौलस्य निर्मूलत्वमपाकर्तुं तत्रैव प्रमाणानि भाष्याद्यन्तराण्याह—तत्रेत्यादिना । तत्र मतुप्सूत्रे बहुव्रीहाविव शब्दशक्तिस्वाभाव्याद्वर्त्तमानसत्तान्तर्भावसम्भवेन दृष्टफलाभावात्तदभाव इति भावः । सम्भवति दृष्टेतिन्यायावलम्बनेनाह—तस्यान्येति । अस्तीत्यस्य 'अस्तिमान्' इत्यत्र सत्ताश्रयधनाद्यर्थकास्तिशब्दस्याव्ययत्वेन प्रातिपदिकत्वेऽपि अस्तीत्यत एव सर्वप्रतीतेरव्यभिचारेणास्त्यसामानाधिकरण्यादप्राप्तमतुप्सिद्धिफलकत्वे इत्यर्थः । अनुपात्तेति । तथात्वेन तदनुपात्तेत्यर्थः । मत्वर्थीयवदिति । यथा स ततस्तदन्तर्भावेण भवतीत्यर्थः । एवमग्रेऽपि । ननु नायं दृष्टान्त उचितस्तथात्वेऽपि तस्यैका क्रियेति न्यायेन तत्पदोत्तरमनुक्त्याऽस्येत्यनन्तरमुक्त्या चैतत्फलस्यापि तन्त्रेण वक्तुं शक्यत्वेनानन्तर्यादेरिव सर्वथाऽनुपादानाभावेन वैषम्यान्मतुब्विधावपि बहुव्रीहिदृष्टान्ते नैवास्तीत्यस्य खण्डनेन तद्दृष्टान्तस्यैवौचित्याच्चेत्यत आह—बहुव्रीहिवच्चेति । अत्र तु तदनुपादानं स्पष्टमेव । अतएव पार्थक्येन दृष्टान्तोक्तिः । अतएव च यथासङ्ख्यं नेति भावः । यत्त्वाद्ये तथात्वेन दृष्टान्तवैधर्म्येण तथा व्याख्यानेऽपि नान्त्ये तथा व्याख्यानं युक्तम् , तत्र तदन्तर्भावस्य मतुप्सूत्रभाष्यकैयटयोरुक्तत्वात् । तत्र हि तद्धितार्थद्विग्वपेक्षया 'पञ्चगुः' इत्यादौ बहुव्रीहेरन्तरङ्गत्वमुक्तम् । तत्रास्तिग्रहणेन विशिष्टस्य षष्ठ्यर्थस्य तद्धितार्थत्वादस्त्यर्थापेक्षा द्विगोः, षष्ठ्यर्थमात्रापेक्षस्तु बहुव्रीहिरिति सत्तायुक्तपञ्चगवी-

सरला ।

मानवाचकमव्ययमिदम् । विद्यमानवाचकप्रथमान्तात् षष्ठ्यर्थे सप्तम्यर्थे वा मतुप्प्रत्ययो भवतीत्यर्थ इति तद्भावः ।

अस्तिग्रहणाऽभावे इति । मतुप्सूत्रेऽस्तिग्रहणं न कार्यं, 'न पदार्थः सत्तां व्यभिचरति' इति गोशब्देन सत्ताया अपि प्रतीतेर्न तद्व्यभिचारः ।

अन्यफलकत्वे वेति । तत्सूत्रे हि यथा प्रथमान्तान्मतुप्प्रत्ययो भवति तथा अस्तिपदस्याप्रथमान्तत्वेऽपि अस्तिमानित्यादौ मतुप्प्रत्ययार्थमस्तिग्रहणमिति तद्भावः ।

वृत्त्यादिः प्रतीयते । अत एवानन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकरे । किं बहुना 'ब्राह्मणस्य कम्बलः' 'चित्रा गावोऽस्य' इति व्यस्तप्रयोगोऽपि तत्रानिष्टः ।

### शब्दरत्नम् ।

तथाभूतानन्तर्याद्यर्थान्तर्भावेण 'चित्रा गावोऽस्य सन्त्यनन्तराः' इत्याद्यर्थे बहुव्रीहिमत्वर्थीयौ न भवतोऽनभिधानादिति मतुप्सूत्रे भाष्ये स्पष्टम् । अनन्तरादेरिदमर्थत्वे "तस्येदम्" (पा० सू० ४।३।१२०) इति शैषिकोऽप्यनभिधानान्नेति "तस्येदम्" इत्यत्र भाष्ये । तदुक्तम्—**अनन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकर इति** । तत्र समासग्रहणं तद्धितवृत्तेरप्युपलक्षणम् । अनन्तरादिशब्दैः षष्ठीतत्पुरुषादिस्तु भवत्येव । 'ग्रामकूपः' 'गङ्गातीरम्' इत्यादौ समीप एवावयवत्वारोपेण समासः । स्पष्टा चेयं रीतिः

### भैरवी ।

तथाभूतेति । सूत्रानुपात्तेत्यर्थः । उक्तार्थे प्रमाणान्तरमप्याह—अनन्तरादेरिति । तदुक्तम्—तदेतत्सर्वम्मनसि निधायोक्तम् । नन्वेवमनन्तरशब्देन षष्ठीतत्पुरुषोऽपि न स्यादत आह—अनन्तरादिशब्दैरिति । असामर्थ्यस्य वृत्त्यभावप्रयोजकस्य तत्राभावादिति भावः । नन्वेवं 'ग्रामकूपः' इत्यादिव्यवहारस्य कथमुपपत्तिरत आह—ग्रामकूप इत्यादि । यदा ग्रामशब्दः शालासमुदाये वर्तते तदाप्ययं व्यवहार एवमेवोपपाद्यः । आनन्तर्यस्य षष्ठ्यर्थत्वमभ्युपेत्याप्याह—

### भावप्रकाशः ।

सम्बन्धेऽन्तरङ्गत्वात्स एव, न द्विगुरिति कैयटः। एवं च साधर्म्येऽयं दृष्टान्तः। अत एव पार्थक्येन दृष्टान्तोक्तिरिति, तत्र तद्भाष्यस्यैकदेश्युक्तित्वात् । अत एव "तस्माद्द्विगोस्तद्धितस्य प्रतिषेधो वक्तव्यः" इति तदुत्तरभाष्यप्रतीकमादायोपाध्यनुक्तावपि स्वाभाव्यादुभयोरस्त्यर्थविषयत्वेनान्तरङ्गत्वाभावाद्विशेषविहितेन द्विगुना बहुव्रीहेर्बाधात्ततो मतुबादेर्निषेधो वाच्य इति सिद्धान्तरीत्या कैयटो व्याख्यत् । अत एव मत्वर्थे बहुव्रीहिरिति सङ्गच्छते । वस्तुतः 'पञ्चकपालः' इत्यादौ चरितार्थसमानाश्रयद्विगोरेव बहुव्रीहिणा परत्वाद्बाध इति विशेषेत्यादिमात्रकैयटोक्तिश्चिन्त्या । भाष्यन्तु सर्वमेकदेश्युक्तिरेव । एतेनार्थकृतबहिरङ्गत्वानाश्रयणादिदं चिन्त्यमित्यपास्तम् । तथा दृष्टान्तोक्तेराशयोऽप्युक्त एवेति वैधर्म्ये एवायं दृष्टान्त इति गुरुचरणानामाकूतम् । **तथाभूतेति** । सर्वथा सूत्रानुपात्तेत्यर्थः। **अनभिधानादिति**। तद्वृत्तितस्तत्प्रतीत्यभावात्तौ तदन्तर्भावेण सर्वथा न भवत इत्यर्थः। आशयस्तु प्रागुक्त एव । **तदुक्तमिति** । प्रागुक्तं सर्वं मनसि निधाय स्वकल्पितवाक्येनैवमुक्तमित्यर्थः, नतु निर्मूलं न वा भाष्याद्युक्तमनुक्तमिति भावः। **अनन्तरादिषु**—आनन्तर्यादिषु । आदिना सामीप्यसङ्ग्रहः । एतेनादिपदं भवन्मते व्यर्थमिति मन्दोक्तमपास्तम् । कैयटसङ्ग्रहायाह—**आकर इति** । उक्तभाष्यादिष्वित्यर्थः । न चास्य बहुव्रीहिमात्रविषयकत्वेन न यथाश्रुतत्वं प्रकृतसूत्रस्थैकशेषनिर्देशाद्वा सिद्धमिति भाष्यकैयटविरोधापत्तेश्चेति पूर्वपद्युक्तं युक्तमेवेति वाच्यम्, सङ्कोचे मानाभावादनभिधानरूपसाधकयुक्तेस्तुल्यत्वाद्भाष्यस्यान्याशयकत्वेन कैयटस्य चिन्त्यत्वाच्च। तद् ध्वनयन्नाह—**तत्रेति** । उक्तमौलवाक्ये इत्यर्थः । **वृत्तेरपीति** । तथाचाधिकसङ्ग्राहकमपि तत्, नतु स्वस्यैव सङ्कोचकमुक्तभाष्यादेरिति भावः। **अनन्तरेति** । अनभिधानरूपयुक्तेरसत्त्वात् । अत एव स्नानानन्तरमित्यादिप्रयोगसङ्गतिरिति भावः। नन्वेवमप्युक्तयुक्त्या 'ग्रामकूपः' इत्यादि न स्यादत आह—**ग्रामेति** । 'ग्रामो लब्धः' इत्यादौ तथैव बोधात्ससीमके सारण्यके वृत्त्याऽत्र निर्वाहादाह—**गङ्गेति** । अत्रापि संयोगेनानिर्वाहादाह—**आदाविति** । तेनाक्षधुरन्तस्समासः शिदित्यादिसङ्ग्रहः । आद्ये कैयटोक्तिस्तु चिन्त्यैव । अन्त्ये "ध्वसोरेद्धा" इति सूत्रस्थं भाष्यं गमकम् । एवञ्च 'अक्षधूः'

### सरला ।

**समीपे एवावयवत्वारोपेणेति** । वस्तुतस्तु "ग्रामशब्दोऽयं बह्वर्थः" इति भाष्यात् ससीमकस्य सारण्यकस्य सजनस्य शालासमुदायस्य ग्रामशब्दवाच्यत्वेन ग्रामकूपे तदवयवत्वमक्षतमेवेति नारोपापेक्षा । एवं गङ्गातीरमित्यादावपि गङ्गापदस्य भाद्रकृष्णचतुर्दश्यां संभावितजलाधारदेशवाचकत्वेन तदवयवत्वं तीरेऽक्षतमिति तत्रापि नारोपापेक्षा ।

शब्दरत्नम् ।

"मपर्यन्तस्य" ( पा० सू० ७।२।९१ ) इति सूत्रे कैयटे । किं च हस्य लित्यर्थे "हल विलेखने" इति धातोर्लस्येत्त्वापत्तिः । न च फलाभावः, 'देवदत्त हल्' इत्यादौ ङित्त्वसामर्थ्यादभस्यापि टेर्लोपवल्लित्त्वसामर्थ्यात्प्रत्ययात्पूर्वत्वाभावेऽपि लित्स्वरस्यैव फलत्वं

भैरवी ।

किञ्चेति । आपत्तिरिति । नचेयमापत्तिर्हलन्त्यमिति सूत्रावृत्तावपि समानैवेति वाच्यम्, धात्ववयवलकारस्योपदेशेऽन्त्यत्वाभावादिति भावः । इत्त्वापत्तिरिति । तथाच लोपः स्यादिति भावः । अत एव "लोपश्च बलवत्तरः" इति भाष्ये उक्तम् । अणादिसंज्ञाशब्देषु लोपस्तु न, आदिरन्त्येनेति सूत्रारम्भसामर्थ्यात् अन्त्येनेत्यस्येदन्त्यसदृशेनेत्यर्थस्य वक्ष्यमाणत्वाच्च ।

नचेत्संज्ञाया लोपातिरिक्तमपि फलमनुबन्धा अनेकान्ता इति पक्षे 'अभ्र आँ अटितः' इत्यत्रेट्प्रतिषेधरूपं दृष्टमिति वाच्यम्, अनुबन्धानामेकान्तत्वपक्षस्यैव स्थापयिष्यमाणत्वात् । लोपस्य फलत्वेऽपि तदतिरिक्तं फलं नास्तीति शङ्कां निराकुरुते—नचेत्यादिना । फलाभावः—लोपातिरिक्तफलाभावः । समाधत्ते—देवदत्तेति । हलिति क्विबन्तम्, देवदत्तेति सम्बोधनम्, अस्तीति शेषः । लित्त्वसामर्थ्यादिति । व्यञ्जनस्य या इत्संज्ञा तस्य लोप एव फलमिति तु न, तथात्वे व्यञ्जनानुच्चारणस्यैव सुकरत्वात् । किन्तु फलान्तरमपि । तच्च फलं "लिति" इत्येतत्प्र-

भावप्रकाशः ।

इत्यादावगत्या तथैव भाष्यादिप्रामाण्यादिति मान्योक्तं प्राचामनुरोधेनेति बोध्यम् । एतेन शिशिरर्तुसमीपपौषचैत्रमासावित्याद्यर्थकः "शैशिरौ मासौ परिहाय" इत्यापस्तम्बप्रयोगोऽपि व्याख्यातः । शिष्टसमाचारात् ज्यौतिषसंवादाच्चैवमेव तस्य व्याख्यानं युक्तम् । एवमेव 'उत्तमं च नैदाघम्' इत्यत्र श्रावणो विवक्षितः । अत एवोत्तमपदस्वारस्यम् । एतेन माघफाल्गुनाषाढपरं यथाश्रुतं सुदर्शनादिकृतं व्याख्यानमपास्तम् । एवञ्च तत्र समासपदं तद्धितस्याप्युपलक्षणमिति निर्दुष्टमेव । एतेन 'ग्रामस्य नदी' इत्यादौ तत्प्रतीतिः प्रसिद्धैवेति खण्डनकृदुक्तमपास्तम् । अनेकान्तपक्षे सर्वत्रैवैषा गतिः । यथैवं सति न दोषस्तथान्यत्र स्पष्टम् । इयं रीतिः क्व दृष्टेत्यत आह—स्पष्टेति । तत्र हि परिग्रहणं किमित्याशङ्क्य नद्यन्तं मर्यादान्तं वा चैत्रस्य क्षेत्रमित्यादावन्तशब्दस्य यथाक्रमं मर्यादाभिविध्योर्दृष्टत्वादन्त्यमात्रग्रहणार्थं तदिति उक्त्वा सर्वत्रैवान्तशब्दः सह तेन वर्त्तते, आद्ये तु नद्याः क्षेत्रत्वासम्भवात्प्राङ् नद्या इति गम्यत इति तद्व्यर्थमित्याद्युक्तं भाष्ये । तत्र सर्वत्रैवेति प्रतीकमादायासम्भवापेक्षतया व्याख्यायान्ये त्वाहुः—सर्वत्रैवान्तशब्दोऽवयववाची कस्यचिन्मुख्यं तत्त्वं, कस्यचित्सामीप्यादुपचरितमित्याशयेनेदं भाष्यम् । ततश्च तस्य तत्त्वान्मपर्यन्तस्यादेशलाभान्नार्थः परिणेत्याद्युक्तम् । तेन "अतो ल्रान्त" इत्यत्र मुख्यावयवे सामीप्योपचरितावयवे वेति तद्भाष्यार्थ इति न तद्विरोध इति तद्भावः ।

तदाह—कैयट इति । ननु 'ब्राह्मणकम्बलः' इत्यादितस्तथाबोधाभावमूलकेनोक्तभाष्यादिप्रतिपादितानभिधानेन तदर्थे ते प्रयोगा नेष्टाः सन्तु, ग्रामकूपादौ तु तथा प्रतीतेरस्तु तथा । अत एव शिदित्यादि—नचेदक्षधुरन्त इत्यादि—सूत्रभाष्यप्रयोगा अपि स्वरसतः सङ्गच्छन्ते । अनन्तरादिष्विति तु उक्तभाष्याद्यनुरोधेन क्वाचित्कानिष्टस्थलाशयकमिति न विरोधः । अस्तु वा तत्तथैव । उभयथापि प्रकृते इष्टसिद्धिरेवेति लाघवमेवेत्यत आह—किञ्चेति । हस्येति । हावयवल् इति हसमीपल् इति वार्थ इत्यर्थः । धातोर्लस्येत्त्वेति । न च सिद्धान्ते आवृत्तसूत्रेऽप्ययं दोष इति वाच्यम्, धातोरुपदेशे ऽपि लस्य तत्रान्त्यत्वाभावात् । तथा च नान्तरीयकत्वाल्लोपः स्यात्तयोर्व्याप्यव्यापकभावात् इत्संज्ञाप्रकरणोत्तरमितपरामर्शकतत्पदयुक्त "तस्य लोपः" इति सूत्रेण तयोर्जन्यजनकभावबोधनाच्चेति भावः । नन्वत्र लोपान्यफलाभावेनेत्संज्ञायास्तन्मात्रफलत्वाभावेन लकारोच्चारणसामर्थ्यात्तदभावेन च नेत्त्वापत्तिः—यत्तु लकारपरित्राणार्थाकारोच्चारणसामर्थ्यादपि नेत्संज्ञालोपाविति । तन्न, तस्योच्चारणार्थतया चारितार्थ्यात्;—इत्याशयेनाह—नच फलेति । लोपतदन्यफलयोरभाव इत्यर्थः । उक्तरीत्यैव समाधत्ते—देवदत्तेति । सम्बोधनमिदम् । हलेति । लोण्मध्यमपुरुषैकवचनम् । प्रत्ययादिति । लितः प्रत्ययत्वाभावात् । न चाफलत्वात्सैव नेति न सामर्थ्यम्,

द्वितीयेऽपि संयोगान्तलोपो दुर्लभः, यणः प्रतिषेधारम्भात् । तत्प्रत्याख्यानपक्षेऽपि "झलो झलि" ( पा०सू० ८।२।२६ ) इत्यतो झल्ग्रहणमपकृष्य संयोगान्तस्य झलो लोपविधानाच्च । किं च पदार्थबोधं विना वाक्यार्थबोधासम्भवेन हल्प्रत्याहारसिद्धेः प्रागेतत्सूत्रार्थाबोधे प्रसक्ते तदुद्धारार्थोऽयं यत्नः । अस्यां चावस्थायां हल्शब्दार्थाप्रसिद्धौ द्वन्द्व एव दुर्लभः सहविवक्षाया असम्भवात् । तस्माद्यथोक्तमेव न्याय्यम् ।

---

शब्दरत्नम् ।

वक्तुं शक्यमित्यपि बोध्यम् । यद्यपि "हलसीरात्" ( पा० सू० ४।३।१२४ ) इति निर्देशेन तस्य नेत्त्वमिति कल्पयितुं शक्यम् । तथापि ज्ञापकस्वीकारापेक्षया सूत्रावृत्तिरेव लघीयसीति दिक् ।

झलो लोपेति । सौत्रलोपाश्रयणे तु मूलोक्तमेव लघु । असम्भवादिति ।

भैरवी ।

वृत्तिरूपमेव लकारस्थले स्वीकार्यम् । एवञ्च प्रकृतोदाहरणे प्रत्ययात्पूर्वत्वाभावान्न प्राप्नोतीति तत्सामर्थ्याद्भवतीति भावः । ननु "हलसीरात्" इति निर्देशेन लकारस्य लोपाभावे इत्त्वमपि न भविष्यति, प्रतियोगितासम्बन्धेन लोपस्येत्त्वव्यापकतया व्यापकाभावे व्याप्याभावस्य न्याय्यत्वादित्याशयेन शङ्कते—यद्यपीति । लघीयसीति । कण्ठताल्वादिव्यापारगौरवापेक्षया मनोव्यापारगौरवमधिकमिति भावः ।

मूलोक्तं—सम्पूर्णसूत्रावृत्तिरूपम् । ननु "कर्मवत्कर्मणा" इति सूत्रे "व्यत्ययो बहुलंल्

भावप्रकाशः ।

दृष्टान्तेपि तथात्वापत्तेः। तत्रैकाङ्गवैकल्येऽपि फलमस्तीति चेदत्रापि तुल्यम् । एतदर्थमेव दृष्टान्तोक्तिरिति भावः । लित्स्वरस्यैवेति । तकाराकारस्येति भावः । फलत्वं वक्तुं शक्यत्वादित्यपि बोध्यमिति पाठः । अन्यस्तु लेखकप्रमादात् । सोऽपि योज्य इत्याग्रहे तु देवदत्तेत्यतो यत इत्यादिः । इत्यपीति फलत्वपदोत्तरं योज्यमितित्रापि । यद्वा हल्पदार्थाज्ञानेनार्थद्वयासमर्पकत्वेन तन्त्रैकशेषान्यतरासम्भवोऽपिना समुच्चीयते । यद्वा किञ्चेत्यस्य दोषसमुच्चायकत्वेऽप्यपिः ज्ञानसमुच्चये । एवमग्रेपि सर्वत्र । अतोऽत्र न दोषशङ्कालेशोऽपि । एवञ्च नान्तरीयकत्वाल्लोपेन 'देवदत्त ह्' इत्येव प्रयोगः स्यादिति भावः । धातुनिर्देशस्योक्तरीत्या चारितार्थ्यादाह—हलेति । नेत्त्वमिति । तेन लोपाभावद्वाराभावेन फलाभावाद्व्यापकाभावेन व्याप्याभावस्यावश्यकत्वाच्चेत्त्वमपि नेत्यर्थः । यत्रेत्संज्ञा तत्र तद्व्यापकलोपद्वारैव कार्यमित्यन्यत्र स्पष्टम् । एवञ्च नात्रपक्षे दोष इति भावः । ज्ञापकेति । उक्तनिर्देशरूपज्ञापकेत्यर्थः । लघीयसी—अत्यन्तं लघुभूता । नहि वर्णाभिव्यक्तिजनककण्ठाद्यभिघातगौरवमेवादर्त्तव्यं न ज्ञानजनकमनोव्यापारगौरवमिति राजाज्ञाऽस्ति । तथा च सम्पूर्णसूत्रतो लघुत्वत एकदेशतन्त्राद्यङ्गीकारवदादौ लस्येत्त्वापत्तिस्ततो निर्देशानुपपत्तिस्ततस्तदभावकल्पनमिति महागौरवात्ततो लघुतरत्वात्सूत्रावृत्तिरेवोचितेति भावः । एवेनोपदेशे इदन्त्यम् अच् अनुनासिक इति सूत्रत्रयं "हलन्त्यम्" इत्यत्र योगविभाग इत्यादितत्परिहारकपक्षाणां निवृत्तिः । तद् ध्वनयन्नाह—दिगिति ।

झलो लोपेति । नन्वेवमपि "अमो मश्" इति सूत्रभाष्याद्वाक्यभेदावश्यकत्वेनात्रेष्टसिद्धिरेवेति चेन्न ? न, तथासत्यपि तस्य यण्भिन्नविषयत्वस्य "संयोगान्तस्य" इति सूत्रोक्तभाष्यादावश्यकत्वात् । अन्यथा मिथस्तयोर्विरोधो दुष्परिहर एव । नचैवमप्यन्त्यपक्षेऽनिस्तारः । तदा भाष्यवार्तिकस्वारस्येनेदृशलक्ष्याणामनभिधानात् । अन्यथा फलभेदापत्त्या तदसङ्गतिः स्पष्टैव । विसर्जनीयविधायकसूत्रे कार्यकालपक्षेऽपि तत्परिहारस्य भाष्ये दूषितत्वाच्च । एतेनान्त्यपक्षे तत्सम्भव इति जगन्नाथरत्नाकरोक्तमपास्तम् । तद् ध्वनयन्नाह—सौत्रेति । मूलोक्तमेवेति । सम्पूर्णसूत्रावृत्तिरूपमेवेत्यर्थः । एवः पूर्ववत् । "एकशेषनिर्देशाद्वा सिद्धम्" इतिभाष्य-

सरला ।

झलो लोपेताति । "संयोगान्तस्य लोपः" इति सूत्रे "झलो झलि" इत्यतो झल इति पदमपकृष्य वा-

शब्दरत्नम् ।

नच "आद्यन्तौ टकितौ (पा०सू०१।१।४६ ) इत्यादौ यथासङ्ख्यमन्वयेऽपि प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयमात्रेण सहविवक्षामाश्रित्य यथा द्वन्द्वसाधुत्वं तथेहापि प्रथमतो लकारो हल्पदवाच्यश्चेदिति सामान्यतो बोधं कल्पितमादाय द्वन्द्वसाधुत्वं, ततो

भैरवी ।

लिङ्याशिष्यङ्" इति संहितापाठेन द्विलकारको निर्देशः, एकस्य लकारस्य संयोगान्तलोप इति प्रतिपादितमन्यत्र, तदुपपत्तये "संयोगान्तस्य" इति सूत्रे सम्बध्यमानमपि झल्ग्रहणं वाक्यभेदेन सम्बध्यते, तेन क्वचिदझलोऽपि लोपो भविष्यति । अत एव "अमो मश्" इति सूत्रस्थशकारप्रत्याख्यानपरभाष्यस्याप्युपपत्तिः । तत्र हि—शकाराभावे मकारस्य मकारादेशे प्रयोजनं नास्तीति सर्वादेशो भविष्यतीति दूषणे दत्ते मकारस्य मकारादेशोऽनुस्वारबाधनार्थो भविष्यतीति दूषणे परेण दत्ते एवन्तर्हि द्विमकारको निर्देशः करिष्यते इत्युक्तम् । अत्र द्विमकारक इति प्रतीकमुपादाय "एकस्य मकारस्य संयोगान्तलोपः करिष्यते" इति कैयटेनोक्तम् । एवञ्च न लकारस्य संयोगान्तलोपानुपपत्तिरित्यत आह मूले—किञ्चेति । अयं यत्न इति । हल् च ल् चेति द्वन्द्वकल्पनारूपो यत्न इत्यर्थः । अस्यां चावस्थायाम्—हल्पदार्थाज्ञानावस्थायाम् ।

सहविवक्षाया असम्भवाभिधानमसङ्गतमित्याशयिकामाशङ्कां निरस्यति—नचेत्यादिना । यथासंख्यमन्वयेऽपीति।अस्य लक्ष्यसंस्कारवेलायामित्यादिः । साहित्यावच्छिन्न इति । आद्यन्तसमूहे साहित्यावच्छिन्नस्य टित्कित्समूहस्य अन्वयः । समानविभक्तिकतया अभेदान्वयः । वक्ष्यमाणरीत्या इतरेतरयोगेऽपि समूहस्य विशेष्यत्वमिति भावः । हल्पदवाच्यश्चेति । यथा अज्ञं प्रति 'नागरं भक्षय' इत्युक्ते नागरपदवाच्यः कश्चन पदार्थः स्यादिति सामान्यतो बोधः प्रथमतो जायते, ततो नागरपदवाच्यः क इति विशेषजिज्ञासा भवति तथेति । कल्पितमिति । सूत्रप्रणयनान्यथानुपपत्त्या कल्पितमित्यर्थः । एतेन सहविवक्षासम्भवो दर्शितः । ततः—सामान्य-

भावप्रकाशः ।

स्याप्ययमेवार्थः । कैयटस्तुचिन्त्य एवेति स्पष्टमन्यत्रेति भावः । लघु—लघीयः । ननु मूले द्वन्द्वप्रयोक्तुस्तदसम्भव उक्तः, स चायुक्त इति खण्डनकृदादिराह—नचेति । आदिना "तस्थस्थमिपाम्" इत्यादिसङ्ग्रहः । अन्वयेऽपीति । लक्ष्यसंस्कारकवाक्यार्थबोधवेलायामिति शेषः । तथा च तथान्वयवत्तस्या अप्यभावात्कथं द्वन्द्व इति भावः । प्रथमतः—उक्तबोधात्प्राक्, एवमग्रेऽपि । इतरेतरद्वन्द्वे साहित्यं विशेषणमिति तन्मतेनाह—साहित्यावच्छिन्न इति । मुख्यमते तु साहित्ये साहित्यान्वयेति बोध्यम् । अन्वयेति । नामार्थयोरिति व्युत्पत्त्या कल्पितेनाभेदान्वयमात्रेणेत्यर्थः । मात्रपदेनान्वयस्य लक्ष्यासंस्कारकस्य कल्पनेतरया न वास्तवत्वमिति ध्वनयति पूर्वपक्षी । अस्य सहविवक्षात्वे हेतुत्वेनान्वयः । एवञ्च तदानीं वक्तुः सहितबोधेच्छायाः सत्त्वं श्रोतुरपि तथव ज्ञानद्वयमिति भावः । इहापीति । हलन्त्यमित्यत्रापीत्यर्थः । यद्यपि हल् च ल् चेत्येव द्वन्द्ववाक्यप्रयोगस्तथापि पाठक्रमादर्थक्रमो बलीयानित्याह—लकार इति । अस्य बोधस्य द्वन्द्वसाधुत्वाद्यर्थकत्वात्तत्र चानुपयुक्तत्वान्नान्त्यत्वनिवेशः । एकत्रान्वयसूचनायैतपदोल्लेखः । स च "संज्ञापरिभाषम्" इत्यादिवदिति भावः । सामान्य इति । हल्पदवाच्यत्वेन स कश्चिदित्यर्थः । हलिति सुबन्तश्रवणेन तत्र पदत्वग्रहे पचत इति व्युत्पत्त्या सामान्यतोऽर्थधीहेतुत्वस्य ग्रहे तुल्यवित्तिवेद्यतया तद्वाच्यत्वस्याप्यर्थमात्रे ग्रह इति भावः । ननु शक्तिग्रहस्य व्यवहाराधीनत्वेनैव तदभावात्कथमेतदत आह—कल्पितमिति । सूत्रप्रणयनानुपपत्त्या । सहेत्यादिः, अनेनावास्तवत्वं तस्यांशे ध्वनितम् । एवञ्च हल्पदार्थज्ञानस्य प्रागुभयोरपि सत्त्वात्तादृशसहविवक्षायाः सत्त्वेनात्र द्वन्द्वः सुलभ इति भावः । द्वन्द्वसाधुत्वं तत् । अपिना इत्पदार्थसमुच्चयः । नन्वेवमस्य वैयर्थ्यापत्तिरेवांशे इति दृष्टान्तवैषम्यमत आह—तत इति । उक्तरीत्या द्वन्द्वसाधनोत्तरमित्यर्थः । विशेषेति । "नहि निर्विशेषं सामान्यं

सरला ।

क्यभेदेन संयोगान्तं यत्पदं तदन्तस्य लोपःस्यात् , झलन्तो यः संयोगः तदन्तं यत्पदं तदन्तस्य लोपः स्या-

शब्दरत्नम् ।

विशेषजिज्ञासायाम् "आदिरन्त्येन" इत्यकवाक्यतया विशेषतो वाक्यार्थो लक्ष्यसंस्कारकः । किं च, सहविवक्षा—सह वक्तुं वक्तुरिच्छा, सा च सूत्रप्रणयनानुपपत्त्या पाणिनेस्ततः पूर्वमपि हल्पदार्थज्ञानादक्षतैव, बोद्धृबोधस्तु क्रमेणैवेति वाच्यम् , "आद्यन्तौ" ( पा० सू० १।१।४६ ) इत्यादौ यथासङ्ख्यसूत्रारम्भसामर्थ्येन तथा साधुत्वाङ्गीकारेऽप्यन्यप्रकारेण

भैरवी ।

तो बोधानन्तरम् । विशेषजिज्ञासायामिति । निर्विशेषस्य सामान्यस्याभावेन 'कारणस्य सामान्यज्ञानस्य वृत्तत्वाद्विशेषजिज्ञासा भवत्येवेति भावः । ननु पृथग्वाक्यार्थबोधे किं साधकमत आह—आदिरन्त्येनेति । विशेषतः–हल्त्वादिना विशेषरूपेण । वाक्यार्थः–वाक्यार्थबोधः । एतेन सूत्रस्य सार्थक्यं द्वन्द्वस्य चोपपत्तिः कृता । श्रोतुहल्पदार्थस्य ज्ञानाभावेऽपि वक्तुः पाणिनेस्तज्ज्ञानमस्त्येव । अन्यथा वाक्यप्रयोगमेव न कुर्यात् , यत्नं प्रति इच्छायाः कारणत्त्वात्तादृशी सहविवक्षा सम्भवति । ततः पूर्वम्—आदिरन्त्येनेत्येतत्सूत्रप्रणयनात्प्राक् । हल्पदार्थज्ञानात्–हकारादिलकारान्तस्य हल्पदार्थत्वेन ज्ञानात् । क्रमेण—प्राग्लकारस्येत्त्वेन ज्ञानं ततो हल्पदार्थत्वेन ज्ञानं ततो हल्पदवाच्य इदिति ज्ञानमिति क्रमेण । समाधत्ते—आद्यन्तावित्यादि । सूत्रारम्भसामर्थ्येनेति । यत्र न द्वन्द्वस्तत्र, यथा लोके—

"शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय" ।

भावप्रकाशः ।

भवति" इति न्यायेन सामान्यज्ञानस्य विशेषजिज्ञासाहेतुत्वात् । अन्यथा वयर्थ्यमेवास्य स्यादिति भावः । तत्रेष्टबोधाय गमकमाह—आदिरिति । उक्तबोधेनेतपदार्थज्ञानस्य सत्त्वेनास्यार्थज्ञानस्य सत्त्वादिति भावः । विशेषत इति । हादिहान्तवर्णानां हल्त्वेनेत्यर्थः । वाक्यार्थः–तद्बोध आंशिकः, पुनस्तस्यानुपयोगात्तावन्मात्रस्यैव श्रवणाच्च । संस्कारक इति । एवञ्च द्वन्द्वोपपत्तिर्नास्यांशे वैयर्थ्यं नाप्यन्योन्याश्रय इति भावः । ननु न सहविवक्षा शब्दार्थः, किन्तु वक्तुः सहवक्तुमिच्छा तस्याश्च "आद्यन्तौ" इत्यादौ वक्तुस्तयोः प्रत्येकं ज्ञानेनोभयत्र सत्त्वेनादोषेऽप्यत्र हल्ज्ञानाभावेन तदभावाद् द्वन्द्वाप्राप्तिरिति दृष्टान्तवैषम्यमिष्टासिद्धिश्च, इत्यतः तत्साम्यं द्वयत्रिष्टसिद्धिमन्यथा प्रतिपादयति—किञ्चेति । वक्ता चास्य शास्त्रस्य पाणिनिरेवेत्याह—सा चेति । तादृगिच्छा चेत्यर्थः । सूत्रेति । "आदिरन्त्येन" इति सूत्रप्रणयनेनेत्यर्थः । यत्तु "हलन्त्यम्" इति सूत्रप्रणयनेनेति व्याचख्यौ । तन्न, तस्य यत्किञ्चिदर्थकत्वेनापि सार्थक्यापत्तेः । ततः पूर्वमपि—उक्तसूत्रार्थबोधात्प्रागपि । हल्पदार्थेति । हादिहान्तानां हल्त्वेनेत्यर्थः । नन्वेवमपि सूत्रवैयर्थ्यं श्रोतुस्तथाज्ञानाभावेनेष्टार्थासिद्धेरत आह–बोद्धृबोध इति । तेषामुक्तसहविवक्षाभावे प्राक् लस्येत्संज्ञाबोधस्तत आदिरन्त्येनेत्यस्य ततो हलन्त्यमित्यस्येत्येवं क्रमेणेत्यर्थः । एवः सहबोधव्यवच्छेदे । एवञ्चोभयथापि तस्याः सत्त्वेनासम्भवादिति मूलमयुक्तमेवेति तस्य भावः । नन्वेवमपि दृष्टान्तवैषम्यम् , तथाहि, तत्र पाणिनेस्तयोस्तत्तद्रूपेण समुदितरूपेण च ज्ञानं तत्सूत्रार्थबोधात्प्रागस्त्येव, तज्ज्ञानस्य तच्छास्त्रासाध्यत्वात् । अतोऽन्यान्वयेन तत्सत्त्वाद्वक्तुर्द्वन्द्वप्रयोगः साधुरेव । श्रोतुरपि प्राक् तत एव तत्सत्त्वेन तच्छ्रवणेन तथैव बोधः । न च पाणिनेर्द्वैविध्येन बोधेऽपि श्रोतुस्तथा बोधाभावादस्य च लक्ष्यासंस्कारकत्वात्सूत्रवयर्थ्यमेवेति वाच्यम् , यथासङ्ख्यसूत्रबलात्पार्ष्णिकतथाबोधेनादोषात् , अत्र तु न तथा द्वयोरेतत्सूत्रार्थबोधात्प्राक् तदज्ञानात् तस्यतच्छास्त्रसाध्यत्वात्सामान्यतो ज्ञानकल्पनायां मानाभावाच्च, सूत्रस्य यत्किञ्चिदर्थकतया सिद्धान्तरीत्या वा सार्थक्याच्च । यत्रानुपपत्तिस्तदन्यगमकाभावाच्चेति । अतस्तद्दृष्टान्तेनात्र तत्साधुत्वोपपादनं तस्यायुक्तमेवेति गूढाशयेन समाधत्ते—आद्यन्तावििति । सूत्रारम्भेति । अत्र शास्त्रेऽसम्भवाल्लोकादौ स्थानाख्यलौकिकप्रमाणादेव सिद्धेस्तस्य वैयर्थ्यमिति भावः । तथा–सत्यपीति शेषः । पार्ष्णिकयथासंख्यान्वयेऽपीत्यर्थः । अङ्गीकारेऽपीति । तथान्वयेनेत्यादिः । तत्सामर्थ्यात्तथान्वयेऽपि समूहान्वयरूपेणेत्यर्थः । यद्वा, तथा तेन

सरला ।

दित्यर्थंदयं क्रियते । अन्त्ययोगकरणसामर्थ्याच्च पूर्वस्य काचित्कत्वं ज्ञाप्यते । तेन इष्टस्थले एव पूर्वयोगस्य

शब्दरत्नम् ।

तस्य साधुत्वकल्पने मानाभावात् । किं च, श्रोतॄणां सह बोधो भवत्वितीच्छया सह वक्तुमिच्छाया एव सहविवक्षात्वेन श्रोतॄणामपि सहबोध एवोचितः । तादृशेच्छया तेषां तादृशबोधाजनकशब्दप्रयोगे तु पाणिनेर्भ्रान्तत्वापत्तिः । मुखनयनं पश्येत्यादौ तु न दोषः,

भैरवी ।

इत्यत्र स्थानाख्यलौकिकप्रमाणेनान्वयबोधो भवति, तथा शास्त्रेऽपि भविष्यतीति यथासङ्ख्यसूत्रं न तदर्थं, किन्तु द्वन्द्वार्थमेव । लोके यथा द्वन्द्वनिर्देशे यथासङ्ख्यं न प्रतीयते तथा शास्त्रेऽपि न स्यात् । अत एव "अजाविधनौ देवदत्तयज्ञदत्तावित्युक्ते न ज्ञायते कस्याजाधनं कस्यावयः" इति भाष्ये उक्तम् । अतस्तथाऽन्वयबोधार्थं पूर्वोक्तरीत्या यथासङ्ख्यसूत्रसहायेनास्तु साधुत्वमिति भावः । अन्यप्रकारेण-श्रोतुर्वक्तुश्च प्रथमतः सामान्यतः, ततः श्रोतुः प्रथमतो लत्वेन, ततो हल्पदवाच्यत्वेनेति य उक्तः प्रकारस्ततोऽन्यप्रकारेण । अयम्भावः—प्रकृते यथासंख्यसूत्रविषयताया अभावाच्छ्रोतुर्द्वन्द्वस्य साधुत्वज्ञानं, ततः प्राथमिको बोधश्चान्योन्याश्रयान्न सम्भवतीति पूर्वपक्ष्युक्तसहविवक्षापदार्थोऽसम्भवदुक्तिक इत्याह-किञ्चेत्यादिना । श्रोतृसम्बन्धिसहबोधकर्तृकसत्त्वेच्छा सहविवक्षा, सा कदा सम्भवति यदा श्रोतुः सह बोधः स्यात्, तथाऽत्र तु न सम्भवत्यन्योन्याश्रयादिति सहविवक्षैव नास्तीति कल्पनीयम् । ननु पाणिनेस्तादृशी इच्छा कल्प्यतामत आह—तादृशेच्छयेति । भ्रान्तत्वापत्तिरिति । इच्छाम्प्रतीष्टसाधनताज्ञानस्य कारणतया श्रोतृसमवेतं सहज्ञानं मदिष्टसाधनमिति ज्ञानं पूर्वं पाणिनेः कल्पनीयम् । श्रोतुस्तु सहज्ञानं न भवतीति पाणिनिसमवेतस्य ज्ञानस्य सहबोधविशेष्यकत्वावच्छिन्नश्रोतृसमवेतत्वप्रकारकस्य भ्रमात्मकत्वेन पाणिनेर्भ्रान्तत्वापत्तिरित्यर्थः । तादृशबोधाजनकेति सहबोधाजनकेत्यर्थः । ननु लोके यः पुरुषोऽन्यतरविषयकज्ञानवान् नतूभयविषयकज्ञानवांस्तम्प्रति 'मुखनयनम्पश्य' इति प्रयोगो दृश्यते तथाऽत्रापि भविष्यतीत्यत आह-मुखनयनमिति ।

भावप्रकाशः ।

प्रकारेण । अयम्भावः—यद्यपि समासत उपस्थितिरेकैव तथापि तत्सूत्रारम्भसामर्थ्येनात्र शास्त्रे लाघवेन द्वन्द्वनिर्देशेऽपि प्रत्येकान्वयबोधतात्पर्येण तथान्वयबोधकपृथग्वाक्यकल्पनया बोधो न ततः प्राक् । अन्यथा साहित्ये द्वन्द्वविधानात्क्रमान्वयो न स्यात् । एवं च तत्सूत्रद्वन्द्वनिर्दिष्टयोस्तथान्वयेनापि द्वन्द्वस्य साधुत्वं बोधयति स्वशास्त्रे । एवञ्च प्राक् ततःपदार्थोपस्थितावप्यतात्पर्यविषयत्वान्न समूहान्वयबोधस्तथा तत्पदात् । तेन लोके आद्यन्तौ वर्णानां विप्रशूद्रौ लोचनाधरकृताहतरागेत्यादौ न द्वन्द्वस्य साधुत्वमिति । अन्यप्रकारेणेति । एकस्य तत्पदवाच्यत्वेनान्यस्य लत्वेन ज्ञानमिति रूपेणेत्यर्थः । तस्य-द्वन्द्वस्य । एवमाद्ये दूषणमुक्त्वा त्वदुक्तद्विविधोऽपि सहविवक्षापदार्थो नेति ध्वनयितुम् "आदिरन्त्येन" इति सूत्रमेव तत्र मानमितिशङ्कां दूरीकर्तुं चाद्यसाधारणम् । द्वितीये तदाह—किञ्च श्रोतॄणामिति । श्रोतृसम्बन्धिसहबोधकर्तृकभवनेच्छाहेतुकवक्तृसम्बन्धिसहकथनेच्छाया इत्यर्थः । एवेनोक्तयोर्व्यावृत्तिः । सहविवक्षात्वेन-तच्छब्दार्थत्वेन । श्रोतॄणामपीति । द्वन्द्वप्रयोगेण श्रोतुः सहबोधस्यैव वक्तृतात्पर्यविषयत्वस्य निर्णयात् । अन्यथा तान्प्रति वक्तुं द्वन्द्वप्रयोगो वृथा स्यादिति भावः । अपिर्वक्तृसमुच्चये । सहबोध इति । सहबोध एवेत्यर्थः । एवेन क्रमसामान्यबोधयोर्व्यावृत्तिः । एवञ्च दृष्टान्ते न दोषः । अत्र तु अन्योन्याश्रयग्रस्तत्वाद् बाधितः स इति भावः । नन्वेवमपि श्रोतुर्हल्पदार्थाज्ञानेन तथा सहबोधासम्भवेनात्र क्रमेणैव बोधोऽस्त्वत आह—तादृशेच्छेति । उक्तरूपेच्छयेत्यर्थः । द्वन्द्वप्रयोगान्यथानुपपत्त्या तस्या आवश्यकत्वादिति भावः । तेषाम्—श्रोतणाम् । तादृशबोधेति । हल्पदार्थाज्ञानात्तथा सहबोधाजनकहलन्त्यमिति शब्दप्रयोगे त्वित्यर्थः । तान्प्रतीति शेषः । भ्रान्तत्वेति । श्रोतृनिष्ठहल्पदार्थाज्ञानस्य तस्य ज्ञानेऽज्ञानेपि भ्रान्तत्वापत्तिरित्यर्थः । एतेनादौ विशेषाज्ञानात्पाणिनेः सामान्यज्ञानम् । किञ्च श्रोतुर्द्वन्द्वोपपत्त्यर्थं क्रमेण बोधात्तदावश्यकं वक्तुस्तथात्वेऽपीत्यपास्तम्,

सरला ।

प्रवृत्तिरिति तत्र वार्तिकैकवाक्यतया यणतिरिक्ते एव अञ्झलि तत्प्रवृत्तिरिति । अत एव "ङे प्रथमयोरम्" इत्यत्र

शब्दरत्नम् ।

उभयज्ञत्वेन ज्ञातं प्रत्येव ताहशशब्दप्रयोगात् । तेन रूपेण ज्ञानं भ्रमः प्रमा वेत्यन्यदेतत् । किं च, पाणिनेः पूर्वं हलूपदार्थज्ञानेऽपि तदभिप्रायेण न प्रयोगः । अन्यथा व्याख्यातृपरम्परावगतवक्तृतात्पर्यानुपपत्त्या "लट् स्मे" (पा०सू० ३।२।११८) इति सूत्रस्थकैयटोक्त-

भैरवी ।

पूर्वपक्ष्युक्तसहविवक्षापदार्थमभ्युपगम्यापि दूषणमाह—किञ्च पाणिनेरिति । हलपदार्थज्ञानेऽपि आदिरन्त्येनेति सूत्रप्रणयनान्यथानुपपत्त्या हलूपदार्थज्ञानेऽपि । तदभिप्रायेण—हलूपदार्थज्ञानतात्पर्येण । न प्रयोगः—न हलिति प्रयोगः । अन्यथा—ताहशतात्पर्यकल्पने । व्याख्यात्रिति। पाणिनिप्रभृतयो ये व्याख्यातारस्तेषां परम्परयाऽवगतं यत्तात्पर्यन्तदन्यथानुपपत्त्येति समुदितार्थः । लट् स्म इत्यादिलक्षणाया अनुमानस्य च हेतुसद्भावात् "लट् स्मे" सूत्रे यथा कैयटेन लक्षणोक्ता तथेहापि भविष्यति । "लट् स्मे" इति सूत्रे वार्तिककृता "स्मपुरा भूतमात्रे, न स्मपुराऽनद्यतने" इति वार्तिकं पठितम् । तत्र स्मपुरेत्याकारकसूत्राभावादन्यथानुपपत्त्या प्रथमवार्तिके स्मपुराशब्दाभ्यामाद्यन्ताभ्यां 'लट् स्मे' 'अपरोक्षे च' 'न नौ पृष्टप्रतिवचने' 'नन्वोर्विभाषा' 'पुरि लुङ् चास्मे' इति पञ्चसूत्री लक्ष्यत इत्युक्तम् । तत्र लक्षणायाम्मानन्तु यदि लक्षणा न स्यात्तदा प्रथमवार्तिकेन 'लट् स्मे' 'अपरोक्षे च' 'पुरि लुङ्' इति सूत्रत्रयस्य भूतमात्रे प्रवृत्तिर्बोधिता तस्यैवाद्यतननिषेधप्रतिपादनद्वाराऽनद्यतने विधानप्रतिपादने भूतविशेषे विधानमिति लभ्यते। ततश्च भूतमात्रे इत्यनेन सामान्येन विधानेन विरोधः प्राप्नोति । यदा तु प्रथमवार्तिके लक्षणा तदा पञ्चसूत्र्या भूतमात्रे प्रवृत्तिर्बोधिता। तथा च 'लट् स्मे' 'अपरोक्षे च'

भावप्रकाशः ।

भ्रान्तत्वापत्तेः। श्रोतुस्तदुपपत्तेरनावश्यकत्वाच्च, ततः कस्यापि सामान्यतोऽबोधाच्चेति दिक् । ननु द्वन्द्वप्रयोगेण श्रोतुः सह बोधस्यैव वक्तृतात्पर्यविषयत्वमित्ययुक्तम्, मुखनयनं पश्येत्यादावन्यतराज्ञानवतोऽन्यतरस्यैव बोधेन तादृग्वक्तृतात्पर्यविघातादिति खण्डनकारोक्तं मुख्यदूषणं खण्डयति—मुखेति । दोष इति । द्वन्द्वासाधुत्वरूप इत्यर्थः । उभयज्ञत्वप्रकारकज्ञानविषयश्रोतारं प्रत्येव 'मुखनयनम्' इत्यादिद्वन्द्वप्रयोगादिति हेत्वर्थः। एवेनान्यतरज्ञत्वेन ज्ञातव्यावृत्तिः। एवञ्च दैवादागतस्य तदज्ञानवतः कस्यचित्सहबोधासम्भवेऽपि तादृशस्योद्देश्यस्य श्रोतुः सहबोधस्यैव सत्त्वेन तस्याः सत्त्वात् न तात्पर्यविघातः। भ्रमे तु श्रोतुर्न कस्यापि बोधः। अत्र तु न कश्चिदपि इतः प्रागुभयज्ञ इति विशेषः । अत एव तुः प्रयुक्तः। एतेन पाणिनेर्हलूपदार्थप्रसिद्धेस्तुल्यवदेकक्रियान्वयित्वेन वक्तुमिच्छा सहविवक्षा । वक्ता च स एवेति कुतस्तदसम्भवः। बोद्धॄणां यद्यपि द्वन्द्वघटकहलूपदार्थाज्ञानाद् द्वन्द्वार्थबोधो दुर्लभस्तथापि लेत्संज्ञायां तेन प्रत्याहारे हलूपदार्थसिद्ध्या तदर्थबोधोपपत्तिः। नहि तेषामप्यादौ तज्ज्ञानमावश्यकमिति नियमोऽस्ति, यतस्तदसम्भवेन द्वन्द्वोऽनुपपन्नः स्यादिति रत्नकाराद्युक्तमपास्तम् । तत्प्रमाया हेतुत्वे कथमन्यत्र प्रयोगोऽत आह—तेनेति । उभयज्ञत्वेनेत्यर्थः । तथा च भ्रमप्रमासाधारणज्ञानत्वेन हेतुत्वं लोकसिद्धमिति भावः। एवञ्च तदसम्भवादिति उक्तियुक्तैवेति बोध्यम् । ननु नायं सहविवक्षापदार्थः, धातोरिति सूत्राक्षरतोऽलाभात् । अतस्तदुक्तताहृशताभ्युपेत्याप्यन्त्ये दूषणमाह—किञ्च पाणिनेरिति । अप्यन्तं व्याख्यातम् । तदभिप्रायेति । ज्ञातहलूपदार्थतात्पर्येण न हलिति द्वन्द्वप्रयोग इत्यर्थः। अत्र हेतुमाह—अन्यथेत्याद्यापत्तेरित्यन्तेन । अन्यथा-तत्तात्पर्येण तत्प्रयोगाङ्गीकारे । व्याख्यात्रिति । पाणिन्यादयो ये व्याख्यातारस्तेषां या परम्परा शिष्यप्रशिष्यरूपा

सरला ।

मकारप्रश्लेषपरभाष्यं संगच्छते । एतेन वाक्यभेदात्पूर्वयोगस्याझल्यपि प्रवृत्तिरिति प्रकृतेऽपि लकारलोपस्य सुलभत्वेन चिन्त्यमिदमित्यपास्तम् । वस्तुतस्तु व्यत्ययो बहुलं लिङ्याशिष्यङिति लकारप्रश्लेषपरभाष्यप्रामाण्यात् लकारातिरिक्तो यो यण् तदतिरिक्तेऽझलि प्रवृत्तिरित्यस्यावश्यं वाच्यतया लकारे संयोगान्तलोपस्य सुलभत्वेन चिन्त्यमिदम् ।

मूले सहविवक्षाया असम्भवादिति । एकरूपावच्छिन्नस्यैकरूपावच्छिन्ने एकरूपसंसर्गेणान्वयः

शब्दरत्नम् ।

रीत्या लक्षणया, तन्त्रान्तरीयप्रथमादिव्यवहारेण प्रथमादिपदानामिव शक्त्यनुमानाद्वा ततः श्रोतॄणां बोधसम्भवेनेतरेतराश्रयस्यैवाभावेन तदाशङ्का—लश्चेतिवक्तव्यमित्यादिसमाधानपरभाष्यासङ्गत्यापत्तेः । न चैवमजादिव्यवहारस्यापि लक्षणादिनैवोपपत्तौ "आदिरन्त्येन"

भैरवी ।

'पुरि लुङ्' इति सूत्रत्रयस्याद्यतनभूतेऽपि प्रवृत्तिः प्राप्ता, सा द्वितीयवार्तिकेन प्रतिषिध्यते । 'न नौ पृष्टप्रतिवचने' 'नन्वोर्विभाषा' इत्यनयोस्तु भूतमात्रे प्रवृत्तिरिति सिध्यति । एवञ्च तत्रत्यभाष्यप्रघट्टकबलेन प्रथमवार्तिके लक्षणा यथाऽस्ति तथेहापि हकारादिलकारान्तसूत्रसमुदायघटकतत्तत्सूत्रान्त्ये लक्षणाऽङ्गीकार्या । अन्त्यपदञ्च तादृशे तात्पर्यग्राहकं भविष्यति 'गभीरायां नद्यां घोष' इत्यत्र यथा नद्यामित्यस्य गभीरनदीतीराभिन्नाधिकरणप्रतिपादकत्वे गभीरायामिति तात्पर्यग्राहकं तद्वत् । लक्षणयेति तृतीयान्तस्य बोधसम्भवेनेत्यत्रान्वयः ।

शक्त्या निर्वाहे लक्षणाया अनौचित्यमित्यभिप्रायेणाह—तन्त्रान्तरीयेत्यादि । यथा तन्त्रान्तरे स्वौजस् इति प्रथमा, अमौट्शसिति द्वितीया, इत्यादि उक्तम्, तेनैवात्र शास्त्रे प्रथमाद्वितीयापदार्थग्रहस्तद्वत् । अनुमानादिति । हल्पदं हकारादिषु शक्तं हकारादिबोधतात्पर्येण

भावप्रकाशः ।

तयाऽवगतं ज्ञातं यद्वक्तृतात्पर्यं तदन्यथानुपपत्त्येत्यर्थः । इयञ्च लक्षणायां शक्त्यनुमाने वा हेतुः । ननु तथापि जघन्ये लक्षणेति मीमांसकसिद्धान्तात् तत्रैव विरोधोपस्थितेश्चान्त्यपदे एव तस्या औचित्यमत आह—लट् स्म इति । कैयटोक्तरीत्या तद्वत् । अयं भावः—तत्र हि "स्म पुरा भूतमात्रे" "न स्मपुराऽद्यतने" इति वार्त्तिकद्वयं पठितम् । तत्र कैयटः—तत्राद्ये स्मपुराशब्दाभ्यामाद्यन्ताभ्यां "लट् स्मे, अपरोक्षे च, ननौ पृष्टप्रतिवचने, नन्वोर्विभाषा, पुरि लुङ् चास्मे" इति पञ्चसूत्री लक्ष्यते । अन्यथा आद्ये भूतमात्रे स्मविधानात्तस्यैव चाद्यतननिषेधद्वारा तद्विशेषप्रतिपादने तात्पर्येण निषेधादेकत्र "लट् स्मे, अपरोक्षे च, पुरि लुङ् चास्मे" इति सूत्रत्रयविषये एकस्य भूतमात्रविधि—अद्यतननिषेधयोरत्यन्तविरोधादसम्भवदुक्तिकतोपपत्तिः । तदयमर्थः—उक्तसूत्रत्रयेणानद्यतने भूते प्रत्ययः, "ननौ पृष्ट" "नन्वोर्विभाषा" इतिसूत्रद्वयेन भूतमात्रे प्रत्ययः, अन्त्ये लक्षणौचित्येऽपि लक्ष्यानुरोधादग्रिमभाष्याच्चाद्ये एव सेति । एवमत्राप्याद्यन्ताभ्यां हकारलकाराभ्यामुक्तहेतोर्लक्ष्यानुरोधादन्त्यपदसामानाधिकरण्यानुपपत्त्या च हादयो लक्ष्यन्ते । तदवच्छेदकं च तद्वाच्यवाच्यघटितत्वं तत्सवर्णघटितत्वं तत्तद्व्यक्तित्वं वेत्यन्यदेतत् । तथा च स सिद्धान्तो न स्वीक्रियत इति । लक्षणा च शक्त्यनुमानवद्बोधसम्भवे हेतुः । क्वचिदावश्यकशक्त्यनुमित्या निर्वाहे लक्षणा न युक्तेत्याह—तन्त्रान्तरीयेति । वस्तुतः शक्त्यभावेन समुदायस्य शक्यसम्बन्धरूपलक्षणाऽसम्भवः । उभयोर्लक्षणाङ्गीकारे तु गौरवमत आह—तन्त्रान्तरीयेति । शास्त्रान्तरीयेत्यर्थः । स्वौजसित्यादि प्रतित्रिकमिति भावः । ननु तात्पर्यानुपपत्तेर्लक्षणाबीजत्वस्य सर्वतन्त्रप्रसिद्धत्वादस्तु तया सा, शक्तिबीजत्वस्य तु कस्याप्यनभिमतत्वात्कथं तयातदनुमानमत आह—प्रथमादीति । अयम्भावः—यद्यप्येवं तथापि पूर्वव्याकरणेषु प्रतित्रिकं संज्ञायाः कृतत्वात्तदनुरोधेनोक्तहेतोः प्रातिपदिकार्थेत्यादिषु प्रथमादिपदानां यथा तत्र शक्तिकल्पनमेवमत्रापि तेषु हादिहान्तान्स्वरूपेण पठित्वा हल्संज्ञायाः कृतत्वात्तदनुरोधेनोक्तहेतोस्तेषु तस्य तत्कल्पनमिति । ततः—तत्तात्पर्यकहल्शब्दप्रयोगमात्रात् । तदाशङ्का—इतरेतराश्रयाशङ्का । आदिना एकशेषनिर्देशाद्वा सिद्धमित्यस्य परिग्रहः । परेति । एतदुभयपरेत्यर्थः । एवञ्च तत्परिहारार्थं तवापि प्राक् तादृशं हल्पदार्थज्ञानमाश्रित्य कथञ्चित्सहविवक्षया द्वन्द्वसाधनप्रयासो विफल आपद्येतेति भावः । एतेन सूत्रमते वर्णत्वप्रसिद्ध एव हल्पदार्थ इति मन्दोक्तमपास्तम् । चैवं—तत्र लक्षणाद्यङ्गीकारे । लक्षणादिनेति । उक्तप्रकारलक्षणादिनेत्यर्थः ।

सरला ।

सहविवक्षा । यथा धवखदिरौ छिन्धीति । अत्र साहित्यावच्छिन्नस्य धवखदिर इत्यस्य एकरूपावच्छिन्ने छिदधात्वर्थच्छेदने कर्मत्वसंसर्गेणान्वय इति तत्र सहविवक्षा । प्रकृते तु हल्शब्दस्यार्थज्ञानाभावेन तदर्थस्यैकरूपावच्छिन्नत्वज्ञानं, तस्य चैकरूपसंसर्गेण एकरूपावच्छिन्नेऽन्वयज्ञानञ्च दुःशकमिति । कुठारेण धवं

शब्दरत्नम् ।

(पा०सू०१।१।७१) इति सूत्रवैयर्थ्यम्, क्वचिल्लक्षणादिना बोध इति सर्वत्र लक्षणाद्याश्रयणमेवेति नियमाभावात् । "नासूया कर्त्तव्या यत्रानुगमः क्रियते" इति "पङ्क्तिविंशति" (पा०सू०५।१।५९) इति सूत्रे भाष्योक्तेः । तस्मात्करिष्यमाणशक्तिग्रहोपायकपदस्य तदभिप्रायेणाचार्यस्य पूर्वमप्रयोग इत्येव कल्पना ज्यायसी । ध्वनितश्चायमर्थो "नाऽऽज्झलौ" ( पा० सू० १।१।१० ) इति सूत्रेऽष्टादशानां ग्रहणाभावाय "वर्णानामुपदेशस्तावत्, उप-

भैरवी ।

पाणिन्युच्चरितत्वादित्यनुमानादित्यर्थः । एवम्—अनुपदोक्तरीत्या लक्षणायाः शक्त्यनुमानस्य वाऽङ्गीकारे । नियमाभावादिति । व्याकरणस्य शक्तिग्राहकत्वसिद्धान्तस्यैवमेवोपपत्तिरिति भावः । नासूयेति । प्रकृतिप्रत्यययोरानन्त्येन शब्दानां साधुत्वज्ञानं न सम्भवति। तत्र केषाञ्चिच्छब्दानां साधुत्वमाचार्येण प्रतिपादितम् "पङ्क्तिविंशति" इत्यादिना । शब्दानामानन्त्यात्सर्वेषां तन्न सम्भवतीति तथा न कृतम् । नह्येतावताऽऽचार्यस्य दोष इति । उपसंहरति–तस्मादिति । करिष्यमाणेति । करिष्यमाणः शक्तिग्रहोपायो यस्य तादृशं यत्पदं तस्य । तदभिप्रायेण—प्रागज्ञातार्थाभिप्रायेण । आचार्यस्य—पाणिनेः । पूर्वम्—शक्तिग्रहोपायात्पूर्वम् । अस्मिन्नर्थे साधकान्तरमप्याह—ध्वनित इत्यादिना । अस्य भाष्येणापीत्यत्रान्वयः । ग्रहणाभावायेति । अच्पदेने-

भावप्रकाशः ।

आदिना शक्तिसंग्रहः । एवमग्रेऽपि । एवः स्पष्टार्थः वैयर्थ्यपदोत्तरं वा योज्यः । क्वचित्–हल्पदे । इतिर्हेतौ । सर्वत्र–अजादिपदेष्वपि । तत्र हेतुमाह—नासूयेति । भाष्यकृतो वार्त्तिककृतं प्रत्युक्तिः । तत्र हि "विंशत्यादयः सप्रकृतिप्रत्यया निपात्यन्ते" इत्युक्त्वा तत्र दोषानुक्त्वा "अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु"–इत्युक्तम् । तेन पूर्वकल्पस्य दुष्टत्वाद्वाशब्दस्तदर्थं । तत्र प्रकृतिप्रत्यययोरनुगमाभावेऽप्यर्थाभिधानात्ते यथा व्युत्पन्नाः, एवमेतेऽपि सङ्ख्यायां सङ्ख्येये च स्वभावतः पृथक् प्रयुक्ता हर्यादिवदनेकार्था इति न फलं तस्येति तद्भावः । ततः सूत्रं समर्थयन्भाष्यकृत् 'सहस्रं गवां' 'सहस्रं गावः' इत्यादिप्रयोगदर्शनात्तेषामपि शुक्लादिवद् गुणिनि यौगिकत्वमेव। नहि संख्यानिरपेक्षं संख्येयबोधकत्वं तेषां, येन त्वदभीष्टरूढत्वं स्यादिति न तद्दृष्टान्तेन सूत्रप्रत्याख्यानसम्भवः।तर्हि तत्रापि सूत्रमावश्यकमितिशङ्कानिरासायोक्तवान् नासूयेति । प्रकृतिप्रत्यययोरनुगमं विना मन्दबुद्धीनामननुग्रहात् । अननुगमस्य दोषत्वेऽपि नाचार्यस्य सः, सर्वशब्दानुगमस्यानन्त्येन कर्त्तुमशक्यत्वाद्दिक्प्रदर्शनार्थमत्र कृतानुगमोऽपि न तस्य सः तद्विषयेषु विंशत्यादिष्वर्थविशेषानिश्चयस्य स्वप्रज्ञापराधजन्यत्वेन तस्यानपराधत्वादिति तद्भावः।तदाह—भाष्योक्तेरिति । परिष्कृतमुपसंहरति—तस्मादिति । उक्तभाष्यासङ्गतेरित्यर्थः । करिष्येति । करिष्यमाणः, नतु कृतः क्रियमाणोऽकरिष्यमाणो वा शक्तेर्ग्रहस्योपायो यस्य तस्य पदस्येत्यर्थः। तदभिप्रायेणेति । प्राक्ज्ञातार्थाभिप्रायेणेत्यर्थः । पूर्वम्—तादृशशक्तिग्रहोपायज्ञानात्पूर्वम् । एतेन वस्तुतो बोद्धृणामपि न तदनुपपत्तिः, भाविनीं हल्पदार्थप्रसिद्धिमादाय पदार्थद्वयस्यैकबुद्ध्युपारूढत्वमात्रेण तदुपपत्तेरिति रत्नाकरमन्दाद्युक्तमपास्तम् । उक्तेऽर्थे हेत्वन्तरमप्याह—ध्वनित इत्यादिभाष्येणापीत्यन्तेन । अष्टादशानामिति । तदादीनामित्यर्थः । तेनेकारेण शग्रहणादिसंग्रहः । अत एवान्तेऽष्टादशादीनामिति वक्ष्यति । उपदेश इति ।

सरला ।

छिन्धि इत्यत्र तद्वारणाय एकरूपसंसर्गेणेति । धवं खदिरं च छिन्धि इत्यत्र तद्वारणाय एकरूपावच्छिन्नस्येति । एकरूपावच्छिन्ने इत्यस्य निवेशान्न धवं पश्य खदिरं छिन्धि इत्यादावतिव्याप्तिः ।

करिष्यमाणशक्तिग्रहेति । यस्य पदस्य आचार्येण स्वशास्त्रीयसङ्केतोऽर्थज्ञानाय अग्रे करिष्यते तस्य पदस्य तेनाचार्येण स्वसङ्केतितार्थबोधतात्पर्येण ततः पूर्वं प्रयोगो न क्रियते । अत एव "नाज्झलौ" इति सूत्रे अच्पदेन दीर्घादीनामग्रहणात् "अकः सवर्णे" इति सूत्रे 'अचि' इत्यस्यानुवृत्तेः सार्थक्यं भवतीति भावः ।

**मध्यगानामिति । आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते; तस्य**

शब्दरत्नम् ।

देशोत्तरकालेत्सञ्ज्ञा, इत्सञ्ज्ञोत्तरकालः प्रत्याहारः, प्रत्याहारोत्तरकाला सवर्णसञ्ज्ञा, तदुत्तरम् "अणुदित्" (पा०सू०१।१।६९)इति सवर्णग्राहकमित्येतेन समुदितेनान्यत्र सवर्णानां ग्रहणं भवति न स्वस्मिन्नापि स्वाङ्गे" इत्येवं वाक्यापरिसमाप्तिप्रतिपादकभाष्येणापि । अन्यथा तत्तच्छास्त्रप्रणयनानुपपत्त्या पाणिनेस्तथाज्ञानस्य पूर्वमपि सत्त्वेनाचार्येण तथा प्रयोगे बोद्धृणामपि क्रमेण तथा बोधे उपपन्ने किं तेन कृतं स्यात, कथं वा "नाऽऽज्झलौ" (पा०सू०१।१।१०) इत्यत्राष्टादशादीनां ग्रहणवारणं भाष्योक्तं सङ्गतं स्यादिति विभाव्यताम् । तदाह—तस्मादिति ।

आद्यन्ताभ्यामिति । अवयवत्वेन बोधकाद्यन्तशब्दाभ्यामित्यर्थः । तस्येति ।

भैरवी ।

त्यादिः । न स्वस्मिन्—नाण्पदे । स्वाङ्गे—नाज्झलावित्यत्र । वाक्यापरीति । वाक्यस्य-परिष्कृतवाक्यार्थस्य अपरिसमाप्तिः—अनिश्चयः। अन्यथा—करिष्यमाणशक्तिग्रहोपायकस्य पदस्य स्वस्य ज्ञानसत्त्वात्तदभिप्रायेण प्रयोगाङ्गीकारे । आचार्येण—पाणिनिना । क्रमेण—उपदेशादिक्रमेण । तथा बोधे-आचार्यज्ञानवद्बोधे । सङ्गतं स्यादिति । पाणिनेः पूर्वमपि तावतां ज्ञानस्य सत्त्वेन तत्तत्सवर्णाभिप्रायेण प्रयोगेणाच्पदेन सवर्णग्रहणं दुर्वारमित्यर्थः। विभाव्यतामिति । द्वन्द्ववादिनेति शेषः । तदाह—तदेतत्सर्वम्मनसि निधायाह ।

अवयवत्वेनेति । अवयवस्यावयविनम्प्रति नित्यसाकाङ्क्षत्वादाक्षेपस्य सम्भवः । वृती_

भावप्रकाशः ।

आद्यमुच्चारणमित्यर्थः । तच्च प्रत्यासत्त्यैतच्छास्त्रप्रवर्त्तकानामिति भावः । उत्तरकालेत्संज्ञेति । ज्ञातस्य संज्ञाविधानात्, तदपि तदव्यवधानेन पदार्थोपस्थितिरपि पश्चादिति भावः । प्रत्याहारः—"आदिरन्त्येन" इति सूत्रैकवाक्यतयाऽणादिसंज्ञारूपः । सवर्णसंज्ञा—इष्टविषयैतत्संज्ञित्वग्रहः । तदुत्तरेति । सवर्णपदबोध्यनिश्चयोत्तरकालं तत्सूत्रमकारादिभिः स्वसवर्णत्वेन ज्ञातानां ग्रहणं बोधयतीत्यर्थः । एतेनेति । तत्समूहयुक्तेनाणुदित्सूत्रेणेत्यर्थः । समूहस्याप्युक्तरीत्या परम्परयोपयोगादिति भावः । अन्यत्र—समुदितघटकान्य "अकः सवर्णे" इत्यादौ । विधेयान्यत्रेति शेषः । स्वस्मिन्—अणुदित्सूत्रे । स्वाङ्गे—उपदेशादौ । सवर्णानां ग्रहणं भवतीत्यस्यानुषङ्गः । अङ्गत्वं चोपकारकत्वेन, तदा तद्वाक्यार्थानिष्पत्तेः । तदाह—वाक्यापरीति । स्वस्वाङ्गान्यतरजबोधकाले समुदिततद्वाक्यार्थापरिसमाप्तीत्यर्थः । सवर्णपदार्थनिर्णयं विना तद्ग्रहणबोधनासामर्थ्यमिति यावत् । तथाच साकाङ्क्षतयाऽर्थवद्वाक्यस्याप्यपरिसमाप्तिरिति भावः । स्फुटीभविष्यति चैतत् । हेतुत्वं विशदयति—अन्यथेति । प्रकृते प्राग्ज्ञातार्थाशयेन प्रयोगाङ्गीकारे इत्यर्थः । "तुल्यास्य—नाऽऽज्झलौ-अणुदित्" इत्यादिशास्त्रप्रणयनान्यथानुपपत्त्या हल्पदार्थज्ञानवत्तत्रापि क्रमेण तत्तत्पदार्थज्ञानस्य तत्तत्सूत्रार्थबोधात्प्रागपि सत्त्वावश्यकत्वेन तज्ज्ञानस्य तत्तच्छास्त्रासाध्यत्वेन च पाणिनिना हल्पदप्रयोगवत् "नाऽऽज्झलौ" इत्यादौ सवर्णाशयेनोक्तन्यायस्य श्रोतॄन्प्रति प्रवृत्तत्वात्तत्प्रयोगे कृते तेषामप्युपदेशादिक्रमेण हल्पदार्थज्ञानवत्तदनुपपत्त्या लक्षणादिना बोधे जाते तन्न्यायबोधकभाष्येण किं कृतमित्यखण्डार्थः । अयम्भावः—तत्र हीकारेण शस्यापि ग्रहणादचूत्वाद्धल्त्वाच्च शयोः सवर्णसंज्ञानिषेधे 'परश्शतानि' इत्यत्र "झरो झरि" इति लोपो न स्यादित्याशङ्कां निराकर्त्तुं तन्न्यायाश्रयणम् । पाणिनेस्तथाव्यवहारे तु तयोरुक्तरीत्या निषेधप्राप्तिस्तदवस्थैव, तन्न्यायस्य श्रोतॄन्प्रति प्रवृत्तत्वेऽपि तं प्रत्यप्रवृत्तत्वात् । एवं च तदाश्रयणं व्यर्थमिति । एवमकारादिभिरष्टादशादीनां ग्रहणेऽकाराद्योरपि मिथो निषेधः स्यादित्याह—कथं वेति । वारणमिति । दीर्घप्लुताकाराभ्यां हकारेणासावर्ण्यं तु प्रश्लेषादिति स्पष्टमन्यत्र । भाष्योक्तमिति । उक्तन्यायेनेति भावः । विभाव्यताम्—द्वन्द्ववादिभिरिति शेषः । तदाहेति । तत्सर्वं हृदि निधायाहेत्यर्थः ।

तयोः समीपबोधकत्वे पूर्वापरशब्दवदवधिमच्छब्दत्वे वाऽनिष्टसिद्धेरुक्तं मूले—अवयवाभ्यामिति ।

च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्ववतरन्ती सञ्ज्ञा मध्यगेषु विश्राम्यति, न त्वाद्यन्तयोः, संज्ञास्वरूपान्तर्भावेण तयोः पारार्थ्यनिर्णयादिति भावः । स्वस्य चेति । "स्वं रूपम्" (पा०सू० १।१।६८) इत्यनुवृत्तेः । स्वं रूपं चादेरेव गृह्यते, नान्त्यस्य; अन्त्येनेत्यप्रधानतृतीयानिर्देशात् । सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात् ।

शब्दरत्नम् ।

समुदायस्य । **तयोः पारार्थ्येति** । सञ्ज्ञास्वरूपबोधकतया शक्तिग्रहकाले एव तयोः पारार्थ्यनिर्णयादित्यर्थः । **परामर्शित्वादिति** । वस्तुतो ज्ञापकादिनाऽन्त्यापि न संज्ञाका-

भैरवी ।

यार्थः प्रकारता । तयोः—आद्यन्तयोः । पारार्थ्येति । **संज्ञिबोधकत्वनिर्णयात्** । **संज्ञा** हि संज्ञिनं बोधयति नतु संज्ञास्वरूपमपि । प्राचामनुरोधेन मूलकृतोक्तं व्याख्याय सिद्धान्त-

भावप्रकाशः ।

तद्बोधकपदाभावादाह—अवयवत्वेनेति । प्रकारत्वं तृतीयार्थः । तस्य चैकदेशे बोधेऽन्वयो नित्यसाकाङ्क्षत्वात् लोके अयमादिरन्तो वेत्युक्तेऽवशिष्टमपि किञ्चिदस्तीति नियमेन प्रतीतेः सह प्रयोगे । परस्मिन्सति यस्मात्पूर्वो नास्ति, पूर्वस्मिन्सति यस्मात्परो नास्ति, तदर्थकाभ्यामाद्यन्तत्वावयवत्वेन बोधकाभ्यामाद्यन्त्यशब्दाभ्यामित्यर्थः । **समुदायस्येति** । आदिमध्यान्तसमूहरूपस्येत्यर्थः । अनेनावयवी समुदाय इति मूलमप्युक्तार्थकमिति ध्वनितम् । अत एवोद्देश्यत्वविधेयत्वाभ्यामेकत्र लक्ष्ये तस्याप्रयुक्तत्वादानर्थक्यात्तदङ्गेष्विति न्यायसञ्चारः । एतेनाक्षरसमाम्नाये तथासत्त्वादिदमयुक्तमित्यपास्तम्, उक्तयुक्तेः सिद्धानुशासकत्वाच्छास्त्रस्य कार्यार्थसंज्ञायास्तत्राफलत्वाच्चेति भावः । मौलतृतीयान्तार्थमाह—**संज्ञेति** । **शक्तिग्रहेति** । एतेन तदानीमतत्त्वात्सा स्यादित्यपास्तम् । **इत्यर्थ इति** । एतेनावतरन्तीत्यादेरितरेतरद्वन्द्वेऽपि साहित्यस्य विशेष्यत्वादर्थान्तरं, स्वमित्यनुवृत्तिस्तु नियमशास्त्रवदन्त्यनिवृत्तितात्पर्यिका । भाष्यादेरप्ययमेवाशयः । अत एव तत्र भेदेनोक्तिः । एवञ्च वार्त्तिकान्यरीतिरेव मूलकृदिष्टा । अत एव निर्देशादित्युक्तम् । अन्यथा अप्रधानत्वादित्येव वदेदित्यपास्तम् । अवयवेषु संज्ञाविश्राम्यतीत्येव सिद्धे मध्यमपदयोरजागलस्तनत्वापत्तेः । संज्ञारूपसमूहस्यापि अफलत्वेनैवोक्तरीत्या वारणेन न त्वित्यादिनिर्णयादित्यन्तग्रन्थस्य निष्फलत्वापत्तेश्च । तन्मते तद्विशेष्यत्वस्य तत्रासम्भवाच्चेति दिक् । मूले—**उत्सर्गत इति** ।

दशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः ।

इत्यादौ व्यभिचारादिति भावः । यथाकथंचित्तस्य पृथगुपस्थितौ तस्यापि तेन परामर्श इति तु भाष्यादौ स्पष्टम् । नन्वेवं रीत्या मूले आदिसंग्रहान्त्यवारणेऽयुक्ते, असम्भवाद् वार्त्तिकस्य जागरूकत्वेन तेनैव वारणसम्भवाच्च । स्वमित्यस्य तत्रावश्यकत्वेन तत्सूत्रप्रत्याख्यानासङ्गतेश्च । अन्त्यवारणार्थमेतत्क्लेशाङ्गीकारेऽपि मध्यानुबन्धवारणाय वार्त्तिकस्यावश्यकतया भक्षितेऽपीति न्यायापाताच्चेत्याशयेनाह—**वस्तुत इत्यादि** । **ज्ञापकादिनेति** । तेनैवेत्यर्थः । अत एवोपसंहारे तथोक्तिः । यद्यच्प्रत्याहारेऽन्त्यग्रहणं स्यात्तर्हि 'पचति' इत्यादावाद् गुणाद्यापत्तिः, अतः 'क्ङिति च' इत्यादिज्ञापकाश्रयणमिति भावः । आदिना प्राधान्यलोपयोः सङ्ग्रहः । अस्यापि—अन्त्यस्यापि । अपिर्मध्यानुबन्धसमुच्चायकः । **संज्ञाकार्यमिति** । तद्रूपं कार्यमित्यर्थः ।

सरला ।

अत्र मूले आद्यन्ताभ्यामवयवाभ्यामित्युक्तेः सूत्रे आदि-अन्त्यशब्दयोः सत्त्वेऽपि तदवयवयोरसत्त्वेन असामञ्जस्यं माभूदिति विव्रियते—**अवयवत्वेनेति** । ततश्च अवयवत्वेन बोधकाद्यन्तशब्दयोः सूत्रे सत्त्वेन नासामञ्जस्यमिति भावः । वस्तुतस्तु अवयविनं विना अवयवयोरेव अनुपपत्तिर्नतु तद्बोधकशब्दयोरिति अवयवत्वेन बोधकाद्यन्तशब्दाभ्यामवयविनः समुदायस्य आक्षेपासम्भवात् तदवस्थमेवासामञ्जस्यमिति आद्यन्तपदजन्यबोधविषयाभ्यामिति व्याख्येयम् । ततश्च सूत्रे एव आदिशब्दस्य अन्त्यशब्दस्य च सत्त्वेऽपि तत्रैव अवयवयोरपि तत उपस्थितेस्ताभ्यामवयविनस्समुदायस्य आक्षेप इति नोक्तदोषावकाशः ।

**पारार्थ्यनिर्णयादिति** । बोधजनकत्वनिर्णयादित्यर्थः । यो हि बोधजनकः स बोधविषयो न भवतीति

शब्दरत्नम् ।

यम्, आद्यन्तशब्दाभ्यामाद्यन्तघटितसमुदायस्याक्षेपेणान्येषामिव तयोः प्राप्तायाः संज्ञायाः प्रकारान्तरेणाशक्यवारणत्वात् । स्वशब्दानुवृत्तेश्च न फलम् । भाष्येऽपि एतत्फलितार्थकथनमेव स्वस्य च रूपस्येति । सञ्ज्ञास्वरूपत्वं विशिष्टस्यास्तु प्रत्येकं स्वबोध्यत्वं चास्तु को विरोधः । यथा "अच्च घेः" ( पा० सू० ७।३।११९ ) इत्यादौ गुणदर्शनेन घिशब्दस्यापि घिसञ्ज्ञाबोद्धयत्वं तद्वत् । एवमजादिसञ्ज्ञा स्वसञ्ज्ञिघटकेक राविष्विवाकारचकारयोरपि प्राप्नोत्येव । किं च, स्वशब्देन केवलान्त्यपरामर्शासम्भवेऽपि विशिष्टपरामर्शो न बाधकं, तत्र

भरवी ।

माह—वस्तुत इति । अस्यापि—संज्ञास्वरूपघटकान्त्यस्यापि । अपिना समुदायघटकेत्संज्ञकवर्णपरिग्रहः । प्रकारान्तरेण—ज्ञापकादिभिन्नप्रकारेण । अनुवृत्तिपदोत्तरश्चकारो भिन्नक्रमः फलपदोत्तरं द्रष्टव्यः । तेन तदनुवृत्तेः फलाभावश्चेत्यस्य लाभः । नन्वेवमनुवृत्तिपरभाष्यकारीयव्याख्यानविरोध इत्यत आह—भाष्येऽप्येतदिति । को विरोध इति । यत्रोद्देश्यतावच्छेदकविधेययोरेकरूपेणोपस्थितिस्तत्रोद्देश्यविधेययोर्नान्वयबोधो 'दण्डवान् दण्डवान्' इत्यत्र यथा । नहि तथा प्रकृतेऽस्ति । अकारादिचान्तसमुदायपर्याप्तसमुदायत्वमुद्देश्यतावच्छेदकमजित्यानुपूर्वी तु विधेयतावच्छेदिकेति भावः । प्राप्नोत्येवेति । एतेन भवदुक्तरीत्या आद्यन्तयोर्वारणाभावः, स्वं रूपमित्यनुवृत्तेर्वैयर्थ्यञ्च ध्वनितम् । यन्मूले स्वं

भावप्रकाशः ।

एवव्यावर्त्यं ध्वनयितुं तत्र हेतुमाह—आद्यन्तेति । तथाबोधकेत्यादिः । अन्येषां—मध्यगानाम् । तयोः—आद्यन्तयोः । संज्ञायाः—अजादिसंज्ञायाः । प्रकारान्तरेणेति । वार्त्तिकोक्तज्ञापकाद्यन्यप्रकारेणेत्यर्थः । तेन त्वन्त्यस्यैव वारणं नादेरिति भावः । अत एवाह—स्वशब्देति । चः फलपदोत्तरं योज्यः, तदनुवृत्तेः फलाभावश्चेत्यर्थः । नन्वेवं भाष्याद्यसङ्गतिरत आह—भाष्येऽपीति । अपिना परममूलसमुच्चयः । एतदिति । ज्ञापकादीत्यर्थः । एवेनानुवृत्तिनिरासः । तद्द्वयमुपपादयति—संज्ञेति । विशिष्टस्य—वर्णद्वयात्मकाजित्यादेः । एवमग्रेऽपि । प्रत्येकं तत्तद्रूपेणास्य चस्य चेत्यादेः । स्वेति । अजादिपदेत्यर्थः । चस्त्वर्थे । को विरोध इति । संज्ञा हि संज्ञिनं बोधयति न स्वम्, विरोधात् । उद्देश्यविधेयभावस्य भेदनिबन्धनत्वात्तत्र शक्तिग्रहासिद्धेः । नैवमत्र, उक्तरीत्या तदवच्छेदकयोस्तयोश्च भिन्नत्वादिति भावः । उक्तमेव दार्ढ्याय सदृष्टान्तमाह—यथेति । घिशब्दस्येति । इदञ्च तदन्तसंज्ञापक्षे । वर्णसंज्ञापक्षे तु तद्घटकेकारस्यापीत्यर्थः । आदिना दृष्टान्तान्तरसङ्ग्रहः । तद्यथा गुणशब्दः संज्ञारूपस्याबोधकोऽपि स्वघटकाकारस्यापि तथा । अत एव 'हे नदि' इत्यादौ ह्रस्वे सन्निपातपरिभाषया "एङ्ह्रस्वात्" इति लोपो न स्यादित्याशङ्क्य 'गुणात्सम्बुद्धेरित्येव सिद्धेः तथाकृतसूत्रसामर्थ्यात्तद्विषये तस्या अप्रवृत्तिः' इति 'कृन्मेऽजन्तः' इति सूत्रे कैयटः सङ्गच्छते । अन्यथा 'हे गुण' इत्यत्र लोपासिद्ध्या ह्रस्वपदचारितार्थ्येन तदसङ्गतिः स्पष्टैवेति । निर्णीतमुपसंहरति—एवञ्चेति । अविरोधे चेत्यर्थः । अचकारस्त्वपाठः पौनरुक्त्यापत्त्याऽस्यैवं वैयर्थ्यापत्त्या च ग्रन्थासामञ्जस्यात् । प्राप्नो-

सरला ।

नियमाभिप्रायेणेदम् । वस्तुतस्तु नायं नियमः, किन्तु यो बोधजनकतावच्छेदकः स बोधविषयतावच्छेदको न भवति । येन रूपेण बोधजनकता तेन रूपेण बोधविषयता न भवतीति यावत् । घेर्ङितीत्यादौ घित्वेन बोधकता, इकारान्तत्वेन च बोध्यतेति न विरोधः । तदेव स्पष्टयति—वस्तुत इत्यादिना । ज्ञापकेति । "अनुनासिकः" इत्यादिनिर्देशादिज्ञापकेत्यर्थः ।

अशक्यवारणत्वादिति । आदित्वेन अन्त्यत्वेन च रूपेण तयोर्बोध्यत्वाभावेऽपि आद्यन्तघटितसमुदायघटकत्वेन रूपेण तयोर्बोध्यत्वस्य वारणे मानाभावादिति । एवञ्चादेरपि बोधस्य सुलभत्वेन न तदर्थं स्वशब्दानुवृत्तिरिति । तदाह—स्वशब्दानुवृत्तेश्चेति । को विरोध इति । आदेरेव बोधकत्वमन्त्यस्य तात्पर्यग्राहकत्वमिति शेखरोक्त्यनुसरणे तु चिन्त्यमिदम् ।

आद्योच्चारणमिति । यद्यप्युपदिश्यतेऽनेनेति करणव्युत्पत्त्या शास्त्रमुपदेश इति भाष्यवृत्त्यादिषु व्याख्यातं तथापि तत्प्रौढिवादमात्रम् । करणे घञो दुर्लभ-

**शब्दरत्नम् ।**

समुदाये फलाभावादवयवयोर्विश्रान्तिं प्राप्स्यति । तस्माज् ज्ञापकादिनैवान्त्यस्य तत्कार्यं वारणीयमित्यलम् ।

**भाष्येति ।** तत्र हि "उपदेश इति किम्, अभ्र आँ अपः, प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देश इति नासावुपदेश" इत्युक्त्वोपदेशोद्देशयोर्लोकव्यवहारेण सङ्कीर्णत्वमा-

**भैरवी ।**

रूपमित्यस्यानुवृत्तिं कृत्वा स्वपदेनान्त्यपरामर्शाभाव उक्तस्तद्वैयर्थ्यमप्यस्तीत्याह—किञ्चे-ति । विशिष्टेति । अजित्यादिविशिष्टेत्यर्थः । तस्मात्—उक्तप्रकारद्वयात् ।

तत्र हीति । "उपदेशेऽच्" इतिसूत्रव्याख्यानपरभाष्ये हीत्यर्थः । प्रत्यक्षमिति । अत्र प्रत्यक्षश-ब्दोऽर्शआद्यजन्तस्तेन प्रत्यक्षस्येन्द्रियग्राह्यस्याख्यानमित्यर्थो लभ्यते । प्रत्यक्षमिति त्वा-ख्यानक्रियाविशेषणम् । गुणैः प्रापणम्—साधारणधर्मोपादानेन कथनम् । नासाविति । अनुना-सिकशब्देन 'आङोऽनुनासिकः' इति सूत्रेण विधानमनुनासिकत्वन्तु साधारणमिति भावः । सङ्कीर्णत्वमिति । प्रत्यक्षाख्यानेऽप्युद्देशप्रयोगदर्शनेन सङ्कीर्णत्वम्, यथा शिष्येण "अनुवाकम्भ-वानुद्दिशतु" इत्युक्ते गुरुणा "शन्नो देवीयकमधीष्व" इत्युक्ते शिष्य आह—'उद्दिष्टो मेऽनुवा-

**भावप्रकाशः ।**

त्येवेति । तथा च तयोरवारणं तदनुवृत्तिनैष्फल्यं च सिद्धमिति भावः । प्रत्युतानुवृत्तावप्यनिष्टं तदवस्थ-मेवेत्याह—किञ्चेति । असम्भवेपीऽति । मूलोक्तरीत्येति भावः । बाधकमिति । मूलोक्तमित्यर्थः । एवं च मूलोक्त्या अनिर्वाह एवेति भावः । तत्र—विशिष्टपरामर्शे सति, समुदायविशेषणं वा । एतेन भाष्य-मतेऽपि न तत्सूत्रस्य सर्वथा अभावः, किन्त्वदृष्टार्थत्वमात्रं तस्य, एवं चानुवृत्तिः सुलभैवेत्यपास्तम्, उक्तयुक्तेः अवधारणासङ्गत्यापत्तेश्च । यत्तु तन्मतेऽपि लाघवात् 'आदिरन्त्य इच सह' इति न्यासे कार्ये गुरु-भूततथान्यासेनान्त्येऽप्राधान्यबोधनद्वारा आदेः प्राधान्यबोधनेन परार्थत्वेऽपि संज्ञित्वबोधनम्, आदिपदा-वृत्तिर्वेति । तन्न, गौरवात्, उक्तरीत्या तस्यावश्यकत्वाच्च । तद्ध्वनयन्नाह—तस्मादित्याद्यलमित्यन्ते-न । तस्मात्—आवश्यकत्वाद्धेतोः । तत्कार्यम्—संज्ञारूपं कार्यम् । एतेन तस्मादित्यादिग्रन्थः पुनरुक्तो निःसारश्चेत्यपास्तम् ।

करिष्यमाणासकृद्गुर्वादिमतखण्डनसूचिततद्द्वेषनिरासायाह मूले—यद्यपीति । न केवलं मम तत्रैवाभिनिवेशः, किन्तु यस्य कस्याप्यसदुक्तिनिरास इति सदर्थमात्रग्राहित्वेन न मम स इति भावः ।

ननु वक्ष्यमाणरीत्या भाष्याद्युपपत्तेर्मूलं यथाश्रुतमसङ्गतमिति चेत्तदेव ध्वनयितुमाह—तत्र हीत्यादि । 'उपदेशेऽच्' इतिसूत्रभाष्ये हीत्यर्थः । प्रत्यक्षमिति । आख्याने प्रत्यक्षत्वस्याविशिष्टत्वादिन्द्रियगोचरा-र्थस्य यदाख्यानं तथोच्चारणेन बोधनं स उपदेश इत्यर्थः । यद्यप्यनुनासिकत्वमपि तद्ग्राह्यं तथापि तच्छ-ब्दबोध्यत्ववेलायां न त्तथेति भावः । गुणैरिति । प्रत्येकं प्रसिद्धसाधारणधर्मोपादानेन यद् बोधनं स उद्देश इत्यर्थः । बहुत्वमतन्त्रमिति भावः । नासाविति । "आङोऽनुनासिक" इतिसूत्रविहितानुना-सिक इत्यर्थः । तथोच्चारणेनाबोधनात्तथा चान्त्य एवायमिति भावः । व्यवहारेणेति । तेनापीत्यर्थः ।

**सरला ।**

प्रत्यक्षमाख्यानमिति । तत्त्वञ्च धर्मविशिष्टोच्चारणम् । वै० च स्वावच्छिन्नविधेयताकशाब्दबोधा-नुकूलत्वम्, स्वावच्छिन्नविषयताकश्रावणप्रत्यक्षानुकूलत्वम् एतदुभयसम्बन्धेन । अभ्र आँ इत्यत्रानुना-सिकविधौ अनुनासिकपदवृत्ति 'अनुनासिक' इत्यानुपूर्वीरूपधर्मस्य श्रावणप्रत्यक्षविषयतावच्छेदकत्वेऽपि शाब्दबोधीयविधेयतावच्छेदकत्वं नास्ति, आँत्वस्य विधेयतावच्छेदकत्वात् । तस्य तत्त्वेऽपि न श्रावणप्रत्यक्ष-विषयतावच्छेदकत्वमिति । गुणैः प्रापणम् । व्यावर्त्तकधर्मैः कथनमित्यर्थः । सङ्कीर्णत्वमिति । 'उद्दिष्टो मेऽनुवाकः' 'उपदिष्टो मे पन्थाः' इत्यादौ ।

त्वात्, ल्युटा बाधात्। न च घः, असंज्ञात्वात्। प्रायेण सञ्ज्ञायामिति व्याख्यानस्य

शब्दरत्नम्।

शङ्क्य "उपदेशनेऽजनुनासिक" इति वार्त्तिककृद्दर्शितन्यासस्य खण्डनाय "उपदेश इति करणे घञ्, उपदिश्यतेऽनेन" इत्युक्तम्। तच्च शास्त्रं शासनकरणं प्रत्यासत्त्यतच्छास्त्रीयधात्वागमप्रातिपदिकप्रत्याहारसूत्रप्रत्ययादेशरूपम्।

**प्रौढिवादमात्रमिति**। वार्त्तिककृदुक्तन्यासीयार्थस्य कथंचित्सूत्रतोऽपि लाभसम्भवात् न्यासान्तरप्रवृत्तिस्ते वृथैवेति प्रौढ्या बोधयितुमेवं वाद इति भावः। **घञ इति**। "अकर्त्तरि च" (पा०सू०१।१।१९)इत्यत्र सञ्ज्ञायामित्यस्य प्रायिकत्वात्तत्प्राप्तिरिति भावः। **बाधादिति**। वाऽसरूपविधिस्तु क्तल्युट्तुमुन्खलर्थेषु प्रतिषिद्धः। न च तत्र साहचर्येण भावल्युट

भैरवी।

क' इति। इदञ्च सङ्कीर्णत्वं 'लटः सद्वा' इति सूत्रविहितसंग्रहायावश्यकमिति भावः। वार्तिकेति। "सिद्धन्तूपदेशनेऽजनुनासिक इति वचनात्" इति वार्तिकेत्यर्थः। इदञ्च वार्तिकमुच्चारित इत्यस्याध्याहारेण व्याख्येयम्। प्रत्याहारसम्पादकं सूत्रम् "अइउण्" इत्यादिसूत्रमिति। प्रत्यासत्त्येति। अस्योपस्थितत्वेनेत्यर्थः।

प्रौढिवादमात्रमित्यस्य महत्त्वेनोक्तं वस्तुतोऽसङ्गतमित्यर्थः प्रतीयते, स तु न युक्तः, भाष्यकारोक्तावसङ्गतत्वकथनस्यायुक्तत्वादतस्तद्व्याचष्टे–वार्तिककृदिति। कथञ्चित्—बाहुलकरूपागतिकगत्या। प्रायिकत्वादिति। अत एव 'को भवता दायो लब्धः' इत्यादिप्रयोगा इति भावः। ननु वाऽसरूपविधिना ल्युड्विषये घञपि भविष्यतीत्यत आह—वाऽसरूपेति। प्रतिषिद्ध इति। अत्र ज्ञापकम्–"अर्हे कृत्यतृचश्च"इति सूत्रे कृत्यतृज्ग्रहणम्। तद्धि चकारसमुच्चेयलिङा कृत्यतृचोर्बाधा माभूदिति क्रियते। यदि वाऽसरूपविधिर्नित्यः स्यात्तदा तेन सिद्धेऽस्य ग्रहणं

भावप्रकाशः।

तेन "लटःसद्वा" "निष्ठा" इतिविहितानामवयवेत्संज्ञेष्टत्वसङ्ग्रहः। अत एव "ष्णान्ता" इति सूत्रे वार्त्तिककारोक्तोपदेशपदेन तस्यैव ग्रहणम्। कथं तर्हि तत्सङ्ग्रहस्तद्व्यावृत्तिश्चात आह—**उपदेशन इति**। उच्चारित इति शेषः। **उक्तम्**–भाष्यकृता। तत्र हीत्यस्यात्रान्वयः। **तच्च**–उपदेशकरणं च। अस्य रूपमित्यन्तेनान्वयः। प्रसिद्धशास्त्रपदार्थग्रहणेऽनिष्टसिद्धेराह—**शासनेति**। प्रयोगेत्यादिः। ननु तथाप्यतिप्रसक्तिरेवात आह—**प्रत्यासत्त्येति**। उपस्थितत्वेनेत्यर्थः। **एतच्छास्त्रीयेति**। एतच्छास्त्रोपात्तेत्यर्थः। एतेन तथाकरणेऽपि आङः प्रातिपदिकत्वादादेशत्वाच्च दोषस्तदवस्थ एवेत्यपास्तम्। **धात्वागमेति**। "हलन्त्यम्" इत्यत्र व्यवसितपदार्थत्वेन भाष्योक्तमित्यर्थः। निपातस्य तु प्रातिपदिकत्वादेव सिद्धमिति न पृथगुक्तिः। एवञ्च नाव्याप्त्यतिव्याप्ती इति भावः। उक्तहेतोर्यथाश्रुते प्रौढिवादमात्रमित्यस्यायुक्तत्वेऽपि तन्नेत्याद्यनुक्त्या तथोक्तिमाहात्म्येन च मूलकृतोऽपीत्थमेवाभिमतमिति ध्वनयितुं व्याचष्टे—**वार्त्तिकेति**। **कथञ्चित्**—अगतिकगतिबाहुल्काश्रयणमेव क्लेशः। तमेवोपपादयति—करणइत्याद्यगतिकगतिरित्यन्तेन मूलकृत्। यत्तु "अकर्त्तरि च" इत्यत्र संज्ञायामित्युक्त्या घञोऽप्राप्तौ ल्युटा बाधादित्ययुक्तमिति खण्डनकृत्, तन्नेति ध्वनयन्नाह—**अकर्तरीति। प्रायिकत्वादिति**। अत एव 'को भवता दायो लब्धः' इत्यादि सिद्धम्। स्पष्टं चेदं तत्रैव भाष्ये। एतेन तत्खण्डनायासंज्ञायामिति च्छेदः। अव्याप्तिप्रत्याख्याने चोभयोस्तुल्ये इति भाष्योक्तं प्राचामनुरोधेनेति ध्वनितम्, भाष्यविरोधादिति भावः। **तत्प्राप्तिः**–घञ्प्राप्तिः। यत्तु वाऽसरूपन्यायेन पक्षे घञ् सुलभ इति सः, तन्नेति ध्वनयितुमाह–**वाऽसरूपेति। प्रतिषिद्ध इति**। वचनात्तदनित्यत्वाद्वा। तत्र ज्ञापकं तु "अर्हे कृत्यतृचश्च"इति तयोर्ग्रहणम्। तत्र हि चकारसमुच्चेयलिङा कृत्यतृचोर्बाधा मा भूदिति तयोर्ग्रहणमिति भावः। **तत्र**—वचने अपूर्वे, तन्मूले वा परिभाषारूपे। **साहचर्येणेति**। परेण तुमुनेति-

क्लिष्टत्वात् । न ह्युपाधेरुपाधिर्भवतीत्यादिना भाष्यकृताऽवहेलनाच्च । अत एव घा-

शब्दरत्नम् ।

एव ग्रहणमिति वाच्यम् । ईषत्पानः सोमो भवतेत्यत्र कर्मणि खल् नेति भाष्यादिप्रामाण्येनात्र साहचर्यानाश्रयणादिति भावः । **क्लिष्टत्वादिति** । गुणप्रधानसन्निधौ प्रधानस्य विशेषणे साकाङ्क्षत्व इतरान्वयस्तस्यायुक्त इति क्लेश इति भावस्तदाह—**नहीत्यादिना । भाष्यकृतेति** । अस्यार्थस्येति शेषः । एवं चोभयप्राप्तौ कर्मणीति नियमान्न कर्त्तरि षष्ठीति बोद्ध्यम् । **अवहेलनाच्चेति** । चो हेतौ, यतोऽवहेलनमतः क्लिष्टत्वमित्यर्थः । **घापवाद इति** । ल्युडपवादश्चेत्यपि बोद्ध्यम् । तत्रापि सञ्ज्ञायामित्यनुवृत्तेरिति भावः ।

भैरवी ।

व्यर्थं स्यात् । साहचर्येण—परतुमुन्साहचर्येण । खल् नेति । **किन्तु "आतो युज्" इति युजेवेति** शेषः । यदि साहचर्याश्रयणमत्र स्यात्तदा तुमुन्साहचर्येण भावार्थकखल्विषय एव वासरूपविधिनिषेधेन प्रकृते कर्मार्थकत्वेन निषेधाप्राप्त्या भाष्यासङ्गतिः स्पष्टैवेति भावः । **क्लिष्टत्वमुपपादयति—**गुणेति । विशेषणे इति । **निरूपितत्वं सप्तम्यर्थः, तस्याऽऽकाङ्क्षायामन्वयः । एवञ्च विशेषणनिरूपिताकाङ्क्षावत्त्वे इतरान्वय इत्यर्थो लब्धः ।** इतरान्वयः—**इतरस्मिन् प्रधानातिरिक्ते गुणे । तस्य—गुणस्य ।** अयुक्त इति । **किन्तु प्रधानान्वय एव न्याय्यः । प्रकृते च विधेयतया प्रत्ययः प्रधानं, तद्विशेषणमेव प्रायेणेति, नतु संज्ञायामित्यस्येति । एवञ्चोक्तन्यायत्यागे एव प्रायेण संज्ञायामित्यन्वय इति भावः ।**

भाष्यकृतावहेलनादित्यत्र भाष्यकृच्छब्दात् **"कर्तृकर्मणोः" इति षष्ठी प्राप्नोतीति शङ्कावारणा-याह—**अस्यार्थेति । **मूले—अत एवेति । तथा व्याख्यानस्य क्लिष्टत्वादेवेत्यर्थः । ननु ल्युटो बाधकत्वशङ्कायां घापवादत्वकथनमनुपपन्नमेवेत्यत आह—**ल्युडपवाद इति । तत्रापि—**हलश्चेति सूत्रेऽपि ।**

भावप्रकाशः ।

शेषः । पूर्वेण तु तदाश्रयितुमेवाशक्यमिति भावः । खल् नेतीति । किन्तु "आतो युच्" इति युजेवेति शेषः । "वाऽसरूप" इतिसूत्रशेषे भाष्ये स्पष्टमिदम् । तदाह—**भाष्यादीति** । अन्यथा तत एव भावखलर्थविषय एतन्निषेधेन तत्र कर्मार्थकत्वेनाप्राप्त्या तदसङ्गतिः स्पष्टैवेति भावः । वैषम्ये तु न बीजमित्याह—**अत्रेति** । उक्तरूपे वचन एवेत्यर्थः । **क्लिष्टत्वादितीति** । यत्तु व्यवहितान्वयात्तत्त्वमिति मान्याः, तत्प्राचामनुरोधेन । तस्यापि बहुषु दर्शनात् । यथाश्रुते तत्त्वेऽपि कल्प्यासन्नवाक्ये तत्त्वाभावाच्च । **गुणस्य वि-शेषणसम्बन्धादृष्टेस्तत्त्वमित्यपि न, "गुणः कृतात्म" इतिन्यायेन तस्यापि तद्दर्शनात्** । तदेतद्ध्वनयितुमन्यथरीत्यैव स्थलविशेषाशयेन तत्त्वमाह—**गुणेति** । कृतात्मसंस्कारगुणेन प्रधानमहोपकाराभावे विशेषणान्तरस्योभयसन्निधावित्यर्थः। उक्तन्यायस्त्वेतदन्यविषयक इति भावः । अत्रानुवाद्यत्वं प्रधानत्वं,विधेयत्वं गुणत्वमिति मीमांसकमते न मते, किन्तु शास्त्रसंरम्भगोचरत्वादगोचरत्वे एवेति स्पष्टमन्यत्र । **विशेषणे—**विशेषणान्तरे । निरूपितत्वं सप्तम्यर्थः । तस्य तन्निरूपिताकाङ्क्षावत्त्वे च सतीत्यर्थः । **इतरान्वय इति** । इतरस्मिन्प्रधानान्यगुणेऽन्वय इत्यर्थः । **तस्य—**विशेषणान्तरस्य । **अयुक्त इति** । उपस्थितमिति न्यायेन तदन्वयस्यैव न्याय्यत्वादिति भावः । इतिर्हेतौ । तत्त्वं चात्र प्रयोजकत्वम् । **तदाहेति** । उक्तक्लेशे प्रयोजकमेव स द्वारमाहेत्यर्थः । **इत्यादिनेति** । चान्तेन हेतुनेति भावः । ननु कर्मणोऽप्रयोगान्नियमाप्रवृत्त्या षष्ठीप्राप्त्या पदासङ्गतिरत आह—**अस्येति** । एतेनान्तर्धौ येनेति वन्नियमप्राप्त्या न षष्ठीत्यपास्तम् । प्राप्तिपदेनोभयोः प्रयोग एव तत्प्राप्त्या तत्रापि शेषपूरणस्यावश्यकत्वात् । तद्ध्वनयन्नाह—**एवं चेति** । शेषपूरणे चेत्यर्थः । नन्वेवञ्चासङ्गतिरत आह—**चो हेताविति** । स्वहेतावित्यर्थः । तदाह—**यत इति** । गुणेत्याद्युक्तहेतोरित्यर्थः । नन्वेवमपि ल्युटा बाधे शङ्कानुत्थितिरेवात आह—**ल्युडिति** । एतेन 'न च घः' इत्यत्रापीदं बोध्यमिति सूचितम् । मूलस्थात एवेत्यस्यार्थं सूचयन्नत्रार्थे हेतुमाह—**तत्रापीति** । हलश्चेत्यत्रापी-

पवादो हलश्चेति घञपीह न। बाहुलकं त्वगतिकगतिः। अत एव प्रक्रियन्ते शब्दा याभिरिति करणव्युत्पत्तिरपि परास्ता। तथा च वार्त्तिकम्—

"अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेनेति"। अतो भाव एव प्रत्ययो न्याय्य इति भावः।

---

शब्दरत्नम्।

अगतिकगतिरिति। न च "खनो घ च" (पा०सू०३।३।१२७) इति घविधानमन्यतोऽपीत्यर्थमित्याकरे स्पष्टं, तेनात्र घे सिद्ध्यतीति वाच्यम्, तस्याप्यगतिकगतित्वात्। भगः पदमित्यादौ यत्र घित्त्वफलं तत्रैव तत्प्रवृत्तेश्च। पदस्य घञर्थे केन सिद्धेर्नैतदुदाहरणं, किं तु क्वाचित्कं वाक्यं तत्। किं चोच्चार्य वर्णानाह "उपदिष्टा इमे वर्णा" इत्यादिभाष्यादुपदेशशब्दस्योच्चारणार्थत्वस्य निर्णयेन, सङ्कीर्णलोकव्यवहारस्य लक्षणयाऽप्युपपत्त्या

भैरवी।

अगतिकगतिरित्यस्य न विद्यते गतिर्यस्य तस्य गतिरित्यर्थे अगतिकगतिरित्यनुपपन्नं गत्याश्रयस्यैव सत्त्वादित्याशयेन शङ्कते—न चेति। अन्यतोऽपीति। खनूभिन्नादपीत्यर्थः। खनूधातौ घित्त्वस्य फलाभावादिति भावः। तत्रैवेति। तावतैव घित्त्वस्य चारितार्थ्यादिति भावः। ननु पदमित्यत्र न तथेति कथं तत्प्रदर्शनमित्यत आह—पदस्येति। घञर्थे केन सिद्धेरिति। 'घञर्थे कविधानम्' इति वचनेनेत्यर्थः। ननु 'स्नानीयञ्चूर्णम्' 'राजभोजनाः शालयः' इत्यत्र यथा बाहुलकत्वेनार्थान्तरे प्रत्ययस्य स्वीकारस्तथा बाहुलकादुपदेशपदेऽपि करणे घञ्कल्पने किम्बाधकमत आह—किञ्चोच्चार्येति। उच्चारणार्थत्वेति। आद्योच्चारणार्थत्वेत्यर्थः। अत एव "एकाच उपदेशे" इति सूत्रे 'इत्संज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यते' इति कैयटः सङ्गच्छते।

ननु लोके चैत्रम्प्रति यज्ञदत्तेन 'स्रुघ्नङ्गमिष्यामि पन्थानम्भवानुपदिशतु' इत्युक्ते चैत्रेण 'अमुष्मिन्नवकाशे हस्तदक्षिणो ग्राह्योऽमुष्मिन्हस्तवामः' इत्युक्ते यज्ञदत्तो वदति 'भवतोपदिष्टः पन्थाः' इति, तदनुपपन्नम्पथ उच्चारणासम्भवादत आह—सङ्कीर्णेति। लक्षणयापीति। अपिना शक्तिपरिग्रहः। एतेन पाणिन्यादिवाक्यादिव लौकिकव्यवहारादपि शक्तिसिद्धिर्भवतीति सूचितम्। न च भावघञन्तेनोपदेशशब्दसमभिव्याहृतेनाद्योच्चारणक्रियोपस्थाप्यते, तथाच तदन्तत्वमनुब-

भावप्रकाशः।

त्यर्थः। प्रायेणेत्यनुवृत्त्या प्राग्वदत्रापि बोध्यम्। तथाच तद्द्वयमपि दुर्लभ एवेति भावः। बाहुलकं विनापि रूपसिद्धिरिति खण्डनकृदाशङ्कते—न च खन इति। अन्यतः-खन्भिन्नादपि, घित्करणसामर्थ्यात्। तेन-हेतुना सूत्रेण वा। सिद्ध्यतीति। करणे रूपं सिध्यतीत्यर्थः। तस्येति। तेन घविधानस्यापीत्यर्थः। गतिकेति। खन्ग्रहणसामर्थ्याज्ज्ञापकसिद्धत्वाद्वाऽसार्वत्रिकत्वात्। अत एव भाष्ये बाहुलकोक्तिः। अन्यथा तथासिद्ध्या तदसङ्गतिः स्पष्टैवेति भावः। फलं-"चजोः" इतिकुत्वरूपम्। एवञ्च तत्र साफल्येनात्रप्रवृत्तिः। नन्वेवं पदशब्दासिद्धिः। न चेष्टापत्तिः, तदुक्त्ययुक्तत्वापत्तेः। अत एव कृदन्तकौमुद्यां 'भगः पदमित्यादि' इत्युक्तिरत आह—पदस्येति। तत्पदस्येत्यर्थः। यत्तु तस्य पदमित्यर्थोक्तिः। आदिना स्थानं सङ्गृह्यते, तत्फलन्तु तस्य केवलयौगिकत्वबोधनमिति मान्याः। तदास्पदं प्रतिसूत्रस्थहरदत्तानुरोधेन, कचित्तथासत्त्वेऽपि सर्वत्रोदाहरणविषये मुनीनां तथाशैल्यभावात्, प्रसिद्धसूर्यादित्यागे मानाभावाच्च, तस्य केवलयौगिकत्वाभावाच्च। तद्ध्वनयन्नाह—किन्त्विति। नन्वेवमपि भावघञ्युक्तरीत्येष्टासिद्ध्या 'स्नानीयं चूर्णम्' इत्यादिवदगत्या बाहुलकाश्रयणमत आह—किञ्चेति। आदिना प्रत्यक्षमाख्यानमित्यादिसङ्ग्रहः। उच्चारणेति। आद्योच्चारणेत्यर्थः। लक्षणयापीति। शक्तिग्राहकव्याकरणप्रवर्तकानां व्यवहारात्तत्र शक्तिनिर्णयेऽन्यत्र लक्षणा, अपिना शक्त्या, तद्ग्राहकशिरोमणिवृद्धव्यवहारस्य प्राबल्येनोभयत्र शक्तिसिद्धेः। एवञ्चानेकार्थत्वमिति भावः। यत्तु खण्डनकृत् तथापि तथासति आद्योच्चारण-

शब्दरत्नम् ।

भावघञि बाधकाभावः । किं चोपदेशशब्दस्य प्रत्ययादिपरत्वे तस्यैव हलन्त्यमित्यत्रान्व-
येन यत्किंचित्समुदायान्त्यस्य वारणसम्भवे तदर्थमन्त्यग्रहणसामर्थ्यादिवर्णनक्लेशो भाष्य-
कृतो व्यर्थः स्यादिति बोद्धव्यम् । "उद्देशश्च प्रातिपदिकानां नोपदेश" इति "आदेच उप-

भैरवी ।

न्यत्वाभिप्रेतस्य न सम्भवतीति वाक्यार्थानुपपत्तिरिति वाच्यम्', "उद्देशश्च प्रातिपदिकानां
नोपदेशः" इति भाष्याद्येषां स्वरूपज्ञापनायापूर्वमुच्चारणं तेषामेवोपदेश इति "आदेच उपदेशे"
इति सूत्रस्थकैयटाच्चोपदेशशब्दस्याद्योच्चारणपरत्वव्यवस्थितावन्त्यपदार्थान्वयाय तस्य शब्द-
स्याद्योच्चारणविषये लक्षणाया अङ्गीकारात्। नन्वेवं "लटः सद्वा" इति "निष्ठा" इति सूत्रविहि-
तशत्राद्यवयवस्य "राजसूयसूर्य" इत्यादिनिपातनानुमितक्यबाद्यवयवस्य चेत्संज्ञानुपपत्तिः,
यद्युक्तरीत्या लौकिकव्यवहारेणोपदेशशब्दस्योभयार्थकस्येह ग्रहणमिति ब्रूषे तदाऽऽङोऽनुना-
सिकः इति सूत्रविहितेऽतिव्याप्तिरत आह—किञ्चोपदेशेति । प्रत्ययादिपरत्वे—भाष्योक्तकरणव्यु-
त्पत्त्या प्रत्ययाद्यर्थकत्वे । यत्किञ्चिदिति । धात्वादिभिन्नेत्यर्थः । तदर्थम्—यत्किंचित्समुदाया-
न्त्यवारणार्थम् । सामर्थ्यादीति । अन्त्यपदोपादानेत्यादिः । आदिपदेन तस्य पदस्य व्यवसिता-
न्त्यपरत्ववर्णनस्य "के पुनर्व्यवसिताः ? धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः" इति प्रदर्शन-
स्य च परिग्रहः। न च भावघञन्तस्योपदेशशब्दस्य पूर्वोत्तरसूत्रयोराश्रयणे मनिनाद्यवयवेकारन-
कारयोरित्त्वानापत्तिः, इकारस्याद्योच्चारणविषयान्त्यत्वाभावात् । किंच णिनिप्रत्ययावयवनका-
रस्योत्तरसूत्रेण मनिनवयवनकारवदित्त्वापत्तिरिति वाच्यम् , 'यस्योपदेशे ऋषेस्तात्पर्यन्तस्य
तदुपदेशप्रयुक्तेत्संज्ञा' इत्यर्थ आश्रीयते । णिनिप्रत्यये समुदायोपदेशप्रयुक्तैव, मनिनादौ त्व-
वयवोपदेशप्रयुक्ता सेति व्याख्यातृवचनप्रामाण्यादाश्रीयत इत्याशयात । व्याख्यातृवचनम-
प्रमाणमिति तु न, भाष्योक्तरीत्या व्यवसितान्त्यस्यैव ग्रहणे सिद्धे भावघञन्तत्वपक्षेऽपि दोष-
परिहाराय तथा वर्णनात् । उपदेशशब्दस्य भावघञन्तत्वे भाष्यान्तरमपि साधकमित्याह—
उद्देशश्चेत्यादिना। नच भावघञन्तस्य स्वीकारे "लटः सद्वा" इति सूत्रविहितशत्रवयवस्यासङ्ग्रह

भावप्रकाशः ।

क्रियायामन्त्यत्वासम्भवेनार्थासङ्गतिः । तन्न, शब्दद्वारा तत्त्वसम्भवात् उपदेशशब्दयोर्बहुव्रीहेराश्रयणाच्च ।
तेनाज्ञातज्ञाप्योच्चार्यमाणेऽन्त्य इदिति फलितम्। उपदेश आद्योच्चारणमिति परममूलेऽपि आद्योच्चारणमित्यत्र
बहुव्रीहिर्बोध्यः । तद् ध्वनयन्नाह—बाधकाभाव इति । स्पष्टं चेदम् "आदेच" इति "एकाच उपदेशे"
इति च सूत्रे कैयटे । नन्वेवमपि "लटः सद्वा" इत्यादिविहितावयवानामित्त्वानापत्तिः, लक्षणादिना तथा-
व्यवहारोपपत्तिवदत्र द्वयोर्यथाकथंचिद्बोधनस्य वा ग्रहणे तु 'अभ्र आँ' इत्यादौ दोषतादवस्थ्यमेव । अतो
बाधकस्य तत्र सत्त्वाद्भाष्यरीतिरेव शरणमित्याह—किञ्चोपेति । परत्वे इति । भाष्योक्तकरणव्युत्पत्त्येति
भावः । यत्किञ्चिदिति । धात्वाद्यन्येत्यर्थः । यत्तु तथा तदनुवृत्त्या तस्य वारणसम्भवेऽपि मनिनादाव-
न्त्यस्येत्त्वोत्तरमिकारस्येत्त्वमिव णिन्यादावन्त्येत्त्वोत्तरं नस्येत्त्वापत्तिरेव, अतस्तत्सामर्थ्यवर्णनमावश्यकमिति ।
तन्न, वैषम्यात् । तथाहि, दृष्टान्ते ताभ्यां तयोर्युगपदेवेत्त्वहेतुका निवृत्तिरुपदेशानन्तरमेवोक्तरीत्या, नतु
मिथोऽपेक्षा तयोर्मानाभावात् , असम्भवाच्च । वाचः क्रमवृत्तित्वात् क्रमेण वाक्यार्थ इत्यन्यदेतत् । विनि-
गमनाविरहाच्च। प्रत्युतेकारस्य प्रागभिव्यक्त्याऽन्तरङ्गत्वेनादौ तदित्त्वप्रवृत्तेश्च। दार्ष्टान्तिके तु नैवम्, अनन्त-
रमपि न, समुदायोपदेश एव सर्वत्र ऋषितात्पर्यणावयवानां नान्तरीयकतया तेषामज्ञातस्वस्वरूपज्ञापकत्वा-
भावाच्च । अत एव मकारेत्संज्ञाभावार्थस्थमोत्कारश्चरितार्थ इति दिक् । तद् ध्वनयन्नाह—सामर्थ्यादीति ।
आदिना "हलन्त्ये सर्वप्रसङ्गः सर्वान्त्यत्वात् , सिद्धन्तु व्यवसितान्त्यत्वात्" इति वार्त्तिकसङ्ग्रहः । व्यर्थ
इति । तथा च ततो भावघञङ्गीकारावश्यकत्वेन अतो भावे एवेति मूलोपपत्त्या,'लटः सद्वा' इत्यादिसङ्ग्र-
हाय लक्षणादिनाऽन्त्यार्थस्य ग्रहणेऽपि "आद्योच्चारणम्" इत्यस्याप्यत्रैव तात्पर्येण तदुपपत्त्या,'अभ्र आँ' इत्या-

यत्तु धातुसूत्रेत्यादि पठन्ति । यच्च व्याचक्षते—"करणव्युत्पत्त्या पूर्वार्धोपात्तानामुपदेशत्वं,कर्मव्युत्पत्त्या त्वागमादीनाम् । उणादिलिङ्गानुशासनयोरपि सूत्रत्वात्सिद्धे पृथगुपादानं गोबलीवर्दन्यायेन । एवं गणत्वादेव सिद्धे धातोरपि" इत्यादि ।

अत्रेदं वक्तव्यम्—किमेषामुपदेशसञ्ज्ञा, उत योगमात्रम् ? नाद्यः, संज्ञायाः

शब्दरत्नम् ।

देशे" ( पा० सू० ६।१।४९ ) इति सूत्रे च भाष्ये भावघञन्तस्यैव तस्याङ्गीकाराच्चेति दिक् । **धातुसूत्रेत्यादीति** ।

धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् ।

आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः ॥ इतीत्यर्थः ।

**उपदेशत्वमिति** । उपदेशशब्दव्यवहार इत्यर्थः । **धातोरपीति** । प्रत्ययेभ्य उणादेरपीत्यपिशब्दार्थः । वाक्यशब्देन वार्तिकम् । शीङ्, लण्, चोरट्, उण्, आचारेऽवगल्भ, धुट्, अण्, अनङित्युदाहरणानि । **उपदेशसञ्ज्ञेति** । उपदेशपदं योगरूढमेष्विति

भैरवी ।

इति वाच्यम्, "व्यवसितान्त्यग्रहणम्" इति भाष्यैकवाक्यतयाऽस्मिन्नपि पक्षे सत्पदार्थज्ञानाय तौ सदिति सूत्रोपस्थितेरावश्यकतया तत्र यस्तच्छब्दबोध्यस्तदन्त्यस्य ग्रहणमित्याशयात् । एवमेव "निष्ठा" इत्यत्र निपातनस्थले बोध्यम् । वस्तुतस्तु एवंविधक्लेशपरिहाराय बाहुलकात्करणे वल्लस्वीकार एवोचित इति बोध्यम् । अत एव "भवतष्ठक्छसौ" इति सूत्रविहितान्त्यस्येत्त्वसिद्धिः । अत एवाह–दिगिति । एतेन शेखरोक्तसिद्धान्तार्थः सूचितः ।

उपदेशत्वमित्यस्य शब्दस्य संज्ञिबोधकोपदेशशब्दप्रकृतिकत्वप्रत्ययान्तत्वे वक्ष्यमाणमूलोक्तदूषणानामापत्तिरत आह—उपदेशशब्देति । वाक्यशब्दो न सुप्तिङन्तचय इत्यादिप्रसिद्धार्थः, किन्तु रूढ इत्याशयेनाह—वाक्यशब्देनेति । ननु प्राचा योग एव प्रदर्शित इति विकल्पम्प्रदर्श्य तन्मतखण्डनमयुक्तमत आह—उपदेशपदमिति । तथाच भवत्कृतं योगार्थवर्णनम्पङ्कजा-

भावप्रकाशः ।

दावफलत्वेनानित्यत्वेन च दोषलेशस्याप्यभावेन तदाश्रयणं नोचितमिति भावः । ननु चिन्त्यमेतत्–समुदायद्वाराऽवयवस्याप्युपदेशकरणत्वात्तदन्त्यस्यापि लोपापत्त्या सामर्थ्यवर्णनाद्युपपत्त्या मूलशैथिल्यात् । त्वन्मते तस्यानुवृत्तावपि सिद्धान्तेऽननुवृत्तेश्च । अत एव भाष्ये तस्यास्थितानेकान्तपक्षे 'अभ्र ओं अटितः'इत्येव फलमुक्तं, नतूत्तरार्थमिति । "तस्मिन्" इतिसूत्रस्थभाष्यं तु एकदेश्युक्तिरिति स्पष्टमन्यत्र । किञ्च त्वयाऽप्यनुवृत्तिः कर्तुमशक्या । "भवतष्ठक्छसौ" इत्यादिविहितेषु इत्संज्ञानापत्तेः । परस्य सत्त्वेन कादेरनन्त्यत्वात् । यदि तूपदेशे धातुत्वादियुक्तान्त्य इदित्यर्थस्तर्हि मन्मतसिद्धिर्भक्षितेपीति न्यायापत्त्या गौरवं चान्त्यपदसामर्थ्येनैव तल्लाभे तद्वैयर्थ्यं च । एवञ्चाबाधकेनागत्याऽऽवश्यकतया च बाहुलकाश्रयणम्, उपदेशपदं तु सिद्धान्ते व्यर्थमेवेतिचेत्? सत्यमेव। अत एव 'इति बोध्यम्' इत्यन्तेन दोषाभासगणमुक्त्वा परिष्कृतमूलकृन्मतं दोषमेदनाह—उद्देशश्चेति । उणादीनामव्युत्पन्नत्वस्य कंसग्रहणात्पाणिनिमतत्वेनोणादिपाठस्योणादय इति सूत्रोदाहरणप्रदर्शनमात्रार्थत्वेन च तेषां तत्त्वाभाव इति भावः। "आदेच" इति सूत्रे कैयटे स्पष्टमिदम् । चेनोपदेशेऽत्वतः, एकाच उपदेशे, प्रत्यक्षमाख्यानमित्यस्य सङ्ग्रहः । तस्य—उपदेशशब्दस्य, इष्टसिद्धेरनिष्टाभावाच्च । दिगिति । तदर्थस्तु तत्र विपक्षे बाधकासत्त्वेन तत्र पक्षे स्वारसिकत्वेन बाधकाभावेन च तथाऽङ्गीकारेऽप्यत्र न तथा, प्रागुक्तयुक्तेः एकदेश्युक्तित्वेन तथा बाधकाभावाच्चेति भाष्यकृत्सरणिरेव शरणमिति दिक् ।

ननु वाक्यशब्देन न प्रसिद्धम्, तत्र तत्त्वे फलाभावात् साहचर्यभङ्गापत्तेश्चात आह—**वार्त्तिकमिति** । तथा तान्त्रिकव्यवहारादिति भावः । लिङ्गानुशासनस्यानुपयुक्तत्वादुदाहरणेष्वनुक्तिः । ननु प्राचो रूढेरेवोक्त्या व्याख्यातुर्योगस्यैवोक्त्या तथा विकल्पानवकाशोऽत आह—**उपदेशपदमिति** । उभयोक्त्या

शास्त्रकारैरनुक्तेः, असंज्ञात्वाद् घप्रत्ययो नेति भाष्योक्तेश्च । अस्मदादिकृतसंज्ञायाः शास्त्रव्यवस्थापकत्वेऽतिप्रसङ्गाच्च, आमोऽमित्त्वमदन्तत्वादित्यादिस्वपरग्रन्थविरोधाच्च । न ह्युत्सृष्टानुबन्धस्यामो न प्रत्ययत्वं, येन मित्त्वं न भवेत् । किं चैवं प्रत्ययविधौ पञ्चम्याः षष्ठीप्रकल्पकत्वे सनः सनेवादेशोऽस्त्वित्याशङ्क्योपदेशाभावादित्संज्ञा न स्यादिति भाष्यकैयटोक्तं व्याकुप्येत । किञ्च "न धातुलोपः" (पा० सू० १।१।३) इति सूत्रे "धातुग्रहणं किम् ? लूञ् लविता पूञ् पविता" इति भाष्यम्, उपदेश एवानुबन्धलोपे कृते ततो धातुसञ्ज्ञेत्येवंपरः कैयटग्रन्थश्च विरुध्येत । अपि च, "ध्वसोरेद्धौ" ( पा० सू० ६।४।११९ ) इति सूत्रे लोपशश्चेति द्विशाकारको निर्देशः,

---

शब्दरत्नम् ।

भावः । ननु सञ्ज्ञाशब्देन व्यवहार एवाभिमतोऽत आह—**आम इत्यादि** । न चाकारोच्चारणं व्यर्थम् , तेनास्मत्पक्षज्ञापनस्यैवौचित्यादिति भावः । आदिना यकारादी चुञ्चुप्चणपावित्यादिसंग्रहः । **उपदेशाभावादिति** । आदेशस्योपदेशाभावादित्यर्थः । **ततो धातु-**

भैरवी ।

दिशब्दार्थवर्णनसदृशमुत पाठकादिशब्दार्थवर्णनसदृशमित्यत्र विकल्पप्रदर्शनतात्पर्यमिति भावः । मूले संज्ञाया इति । संज्ञारूपत्वं विनाऽस्य शब्दस्य रूढत्वन्न सम्भवतीति भावः । ननु शास्त्रकृत्कृतसंज्ञारूपत्वाभावेऽप्यस्मत्कृतैव साऽस्त्वित्यत आह मूले—अस्मदादीति । अतिप्रसङ्गादिति । रघुनाथादिशब्दे बालकविशेषसङ्केतिते पूर्वपदादिति णत्वापत्तिरूपातिप्रसङ्गादित्यर्थः । संज्ञात्वाभावेऽपि न तद्ग्रन्थीयसंज्ञापदमनुपपन्नं, तस्य व्यवहारलाक्षणिकत्वादित्याह—संज्ञाशब्देनेति । अभिमत इति । तस्येति शेषः । अस्मत्पक्षेति । भावघञन्तपक्ष इत्यर्थः । किमत्र विनिगमकमिति चेत् ? क्लृप्तार्थकल्पने लाघवमेवेति गृहाण । यकारादी इति । चुञ्चुबादिप्रत्ययादेः "चुटू" इति सूत्रेणेत्त्ववारणाय तेनेत्थमुक्तम् ।

ननूपदेशाभावादित्यसङ्गतम् , स्थानिनस्तस्य सत्त्वादत आह—आदेशस्येति । अभ्युपेत्यवादोऽयम् । वस्तुतस्त्वसङ्गत एव "अथवा नानुत्पन्ने सनि प्रक्लृप्त्या भवितव्यम्" इत्यादिना भाष्य एव दूषितत्वात् । लूशब्द एवेति । यस्य क्रियावाचकत्वं तस्य धातुसंज्ञा, क्रियावाचकतार्थबोधनाय प्रयुज्यमानशब्दघटकस्येति भावः । अनुबन्धस्येत्संज्ञया निवृत्तिस्तूच्चारणाव्यव-

भावप्रकाशः ।

पङ्कजादिवत्तस्यैव व्याख्यानेन पाचकादिवद्वा तव मतमिदमिति मूलकृता प्रतिपाद्यते । एवञ्चोपदेशसंज्ञेत्यस्य साऽपीत्यर्थः । तत् अन्वर्थ नामेत्यर्थो वा बोध्यः । अत एवाग्रे मात्रमित्युक्तिः सफला । मूलाशयेनाद्यः पक्षो व्याख्यानाशयेनान्त्य इति तात्पर्यं तु मात्रपदानर्थक्यं स्पष्टमेवेति भावः । 'असंज्ञात्वाद् घञ्प्रत्ययो न' इति मूले पाठः । घप्रत्यय इति पाठे तु घञेकदेशानुकरणं बोध्यम् । **संज्ञाशब्देनेति** । तत्त्वबोधकशब्देनेत्यर्थः । एवः—संज्ञात्वव्यवच्छेदे । एतेन संज्ञाया इत्यादिदूषणत्रयं मौलं परिहृतम् । **अस्मत्पक्षेति** । भावघञन्तग्रहणपक्ष इत्यर्थः । क्लृप्तार्थबोधनेन लाघवादिति भावः । **यकारादी इति** । एवं वदतो भाष्यकारस्योपदेशपदानुवृत्तिरित्याशय इति वदतां प्राचां मते तत्रापि तदनुवृत्तेः । एवञ्च सिद्धान्तेऽननुवृत्तावपि तद्रीत्याऽयं ग्रन्थः । भाष्यग्रन्थस्तु "हलन्त्यम्" इति सूत्रस्थस्वग्रन्थाशयक इति न दोषः । एतेनादिसङ्ग्राहस्य प्रकृतानुपयुक्तत्वाच्चिन्त्यमिदमित्यपास्तम् । ननु स्थानिनस्तत्सत्त्वेन तथोक्तिरयुक्तेत्यत आह—आदेशेति । वस्तुत इयमेकदेश्युक्तिरिति स्पष्टमन्यत्र । कैयटाऽनुपूर्वीमाह—लूशब्द इति । अनुबन्धो न धात्वेकदेशः, यस्मादुपदेश एवेत्संज्ञा । प्रयोगे त्वित्येतदादिस्तत्रैव । यद्यप्युक्तयुक्तिभ्यामित आद्ययोरुद्धारस्तथाप्यस्योद्धारेण तयोरपि तत्सम्भवात्, गौरवेण तथा नोक्तं तद्ध्वनयन्तथैव खण्डनकृदुक्त-

द्वितीयः शकार इदिति अलोऽन्त्यसूत्रस्थभाष्यकैयटादिकमपि विरुद्ध्येत । न द्वि-

---

शब्दरत्नम् ।

लृङ्क्षेति । लृशब्द एव धातुसञ्ज्ञकः केवलमसौ ञित्कार्यं लभत इति भावः । नन्वत्र सूत्रसाहचर्याद्धात्वागमप्रत्ययादिशब्देन तद्बोधकपाणिन्यादिपठितानुपूर्वीकाणां ग्रहणम् । तेषां धात्वादिव्यवहारस्तु भाविसञ्ज्ञाविषयघटितत्वेन धातुपाठ इत्यादिव्यवहारवदिति चेत् ? न, आद्योच्चारणविषयाणामित्येव सिद्धे एतस्यानुपयोगात् । इत एव वाऽरुचेराह—अपि चेति ।

अलोन्त्यसूत्रेति । उपधासञ्ज्ञासूत्रेत्यर्थः । विरुद्ध्येतेति । तत्र हि लोपश्

भैरवी ।

हितोत्तरकाल एवात आह—केवलमिति । असौ—लृशब्दः । ञित्कार्यमिति । ञकारोच्चारणसामर्थ्यादिति भावः । अत्र—"धातुसूत्रगण" इत्यत्र । साहचर्यात्—सादृश्यात् । एतस्य—उक्तार्थलक्षणाकल्पनस्य । भावघञन्तोपदेशशब्दस्य सप्तम्यन्तस्याद्योच्चारणविषयाणामित्यर्थे लक्षणेति तात्पर्यम् । कर्मकरणव्युत्पत्तिकल्पनं साहचर्यकल्पनं लक्षणाकल्पनञ्चानुचितमिति भावः । इत एवारुचेः-उक्तरीत्योक्तदोषपरिहाररूपारुचेः ।

अलोऽन्त्यसूत्रेति शब्दात्तावन्मात्रं सूत्रमिति प्रतीतावसङ्गतिरप्रसिद्धेरत आह—उपधासंज्ञेति । उपधासंज्ञाविधायकसूत्रेत्यर्थः । विरोधमुपपादयति—तत्र हीति । भिन्नम्पदमिति । एतेन शकारस्य संज्ञाशब्दावयवत्वेन समुदायाद्विभक्त्यनुत्पत्तिः, यथाकथञ्चित्ततो विभक्त्युत्पत्तौ हल्ङ्यादिलोपः स्यादिति द्विशकारको निर्देश इत्यनुपपन्नमिति परास्तम् । श् इति चेति । भिन्नम्पदमित्यनुषज्यते । स्वरूपेणार्थेन प्रातिपदिकत्वादेतस्मात्सुप् , हल्ङ्यादिलोपः । न चास्य शकारस्य लोपशब्दानवयवत्वेन कथन्तस्य शित्त्वमिति वाच्यम् , 'अनेकान्ता अनुबन्धाः' इति पक्षेणास्य पक्षस्य सत्त्वात् । तत्पक्षे हि समीपेऽवयवत्वारोपेण बहुव्रीहेः स्वीकारात् । 'अनुबन्धा एकान्ता' इति पक्षे तु न शकारान्तरस्य प्रश्लेषः, किन्तु लोपग्रहणानुवृत्त्यैव सिद्धे पुनर्लोपग्रहणात्सर्वादेशः । असन्देहायेति । "द्विशकारकोऽयं निर्देशः" इति भाष्याक्षरस्यान्यथानुप-

भावप्रकाशः ।

माह—नन्वत्रेति । अत्र—उक्तपद्ये, ननु सर्वत्र धात्वादीत्येव सिद्धे तथोक्तिर्वैचित्र्याय । तद्बोधकेति । प्रयोगस्थधात्वादिबोधिका तत्पठिता आनुपूर्वी भूत्व-एधत्वादिरूपा येषां सानुबन्धकभूएधेत्यादीनां तेषामित्यर्थः। वार्त्तिकादिसङ्ग्रहायादीति । तथा च तेषामेव तत्पदव्यवहार्यत्वेन सूत्रे तत्पदेन तेषामेव ग्रहणेन तदन्त्यानुनासिकयोर्हल्चोरित्त्वमित्यर्थद्वयेन नोक्तदोषगण इति भावः । ननु तेष्वधातुत्वात्तद्व्यवहाराभावे कथं तेन तद्ग्रहणमत आह—तेषामिति । पाणिन्यादिपठितानामित्यर्थः । भावीति । भाविसंज्ञायोग्यप्रयोगस्थानुबन्धरहितसजातीयघटितत्वेनेत्यर्थः । तथा चौपचारिकः स इति भावः । एतदावश्यकतामाह—धातुपाठ इति । विषयाणामिति । भावघञि यथैतल्लाभस्तथोक्तं प्राक् । बहुवचनं धात्वाद्यपेक्षमिति भावः । एतस्य—परम्परया तेषां तथोपदेशत्वकथनस्योक्तरीत्यैवाव्याप्त्यतिव्याप्त्यभावात् । एवञ्चोक्तदोषगणः सम्यगेवेति तथा खण्डनकृदुक्तिरयुक्तैवेति भावः । नन्वेवमपि दृष्टान्ते तथाव्यवहारावश्यकत्वे तत एवात्रेष्टसिद्ध्या त्वन्मते वृत्तिद्वयकल्पनादिगौरवं, तथा चेदमेव ततो वरम् । किञ्च प्रागुक्तरीत्या भावघञीष्टमात्रासिद्धिरित्याशयेनाह—इत एवेति । इतरभावादनुकरणत्वासम्भवेन तावत्सूत्राभावेन चाह—उपधेति । तं विनाऽपि तत्त्वम् "अनुकरणं च" इति सूत्रादिति भावः । ननु लोपरूपप्रातिपदिकाग्रे शप्रश्लेषेऽपि शान्तस्यासंज्ञात्वेनानर्थक्यात्सुरेव न स्यात् । उत्पत्तौ वा हल्ङ्यादिलोपाद् द्विशकारक इत्यनुपपन्नमेव सौत्रत्वासन्देहादिना तद्वारणे त्वाद्य एव दोष इत्यत आह—तत्र हीति । "ष्वसोः" इति सूत्रे हीत्यर्थः । इति चेति । भिन्नं पदमित्यनुषज्यते । कुण्डिनच् इव स्वरूपेणार्थवत्त्वात्प्रातिपदिकत्वे सुः । अन्यत्रेवात्रापि अन्तरङ्गत्वादित्त्वे विधीयमानो लोपः शित्त्वात्सर्वादेशः । एतेन लोप-

### शब्दरत्नम् ।

इति भिन्नं पदं श् इति च । पूर्वस्य श्चुत्वेन शः । असन्देहाय झल्परसंयोगादित्वेऽपि "स्कोः" ( पा० सू० ८।२।२९ ) इत्यस्य न प्रवृत्तिः "झलां जश्" (पा०सू०८।४।५३) इत्यादौ जश्त्वस्येव । शकारस्य धात्वाद्यन्तत्वाभावः स्पष्ट एवेति भावः । किं च "नमोव-रिवश्चित्रङः" ( पा० सू० ३।१।१९ ) इत्यस्यासङ्ग्रहोऽत्र पक्षे इत्यपि बोध्यम् ।

### भैरवी ।

पत्त्या चेति शेषः । एतद्भाष्याक्षरमूलकव्याख्यानात्सन्देहनिवृत्तिकल्पनापेक्षया संयोगादिलो-पस्य कसाहचर्येण सलोपविषयेऽखण्डपद एव प्रवृत्तिकल्पनमुचितमिति भावः । नचायस्मया-दित्वेन भत्वाद् दृष्टान्ते जश्त्वाप्रवृत्तिर्न्याय्यैवेति वाच्यम्, छन्दोवत्सूत्राणीत्यतिदेशस्य प्रवृ-त्तिं विना भत्वस्यासम्भव इति तस्य प्रवृत्तिरवश्यं वाच्या, तथा च तत एव दृष्टान्तदार्ष्टान्ति-कयोः संस्कारकशास्त्रस्याप्रवृत्तिः स्यादित्याशयात् । ननूक्तपक्षस्यानेकान्तपक्षाभिप्रायकत्वेनै-कदेश्युक्तित्वेन तद्विरोधेऽपि न क्षतिरत आह—किञ्चेति । इत्यस्येति । सूत्रस्थचित्रङ इत्यस्य । अत्र पक्षे-उपदेशपदस्य धातुसूत्रेत्यादिना पठितेषु योगरूढिरिति पक्षे । भाष्यसम्मतकरणव्यु-

### भावप्रकाशः ।

विधानकालेऽशित्त्वात्कथं सर्वादेश इत्यपास्तम् । इदञ्चानेकान्तत्वे । यथाऽत्र पक्षे शित्त्वं तथा प्रागुक्तम् । एकान्तत्वे तु गत्यन्तरं बोध्यम् । नन्वेवमपि सशयोः सत्त्वेन तदयुक्तमेवेत्यत आह—पूर्वेति । नन्वेव-मपि "स्कोः"इति प्रवृत्तेस्तदयुक्तमेव । न च-अस्यासिद्धत्वात्संयोगान्तलोपः, न चास्य तदपवादत्वं, पदान्त-संयोगादिलोपस्यैव तदपवादत्वात्, इति वाच्यम्, पदस्य संयोगान्तत्वाभावात् । अर्थान्तरस्य खण्डितत्वा-च्चेत्यत आह–असन्देहायेति । न च व्याख्यानेन निर्णयस्तथापि द्विशकारको निर्देश इति भाष्यविरो-धापत्तितादवस्थ्यात् । अन्यथा लुप्तनिर्दिष्टइत्येव वदेत् । न चैवम् 'अचामक्षु' इति "हयवरट्" सूत्रशेष-भाष्यप्रयोगेऽपि तन्न स्यादिति वाच्यम्, अचामिति साहचर्येण तत्र सन्देहस्यैवाभावादिति भावः । ननु तत्र सञीति वार्त्तिककृतोक्तत्वादप्राप्तिः । सनः सकारादारभ्य महिङो ङकारेण प्रत्याहारः । तत्प्रत्याख्याने तु निमित्तनिमित्तिनोरेकपद्ये एव तत्प्रवृत्त्यङ्गीकारः । स्पष्टञ्चेदं "परेश्च घाङ्कयोः"इति सूत्रे भाष्ये । एवञ्च राज-मार्गेणैव निर्वाहेऽगतिकगत्यसन्देहाश्रयणमयुक्तमत आह–झलामिति । झश्परझल्त्वेऽपीत्यादिः । "स्वा-ध्यायोऽध्येतव्य" इतिवत्स्वस्मिन्नपि स्वविषयत्वम्, अन्यथाऽर्थवत्सूत्राद्यन्तर्गतानां प्रातिपदिकत्वाद्यनापत्ति-रित्यन्यत्र विस्तरः । यद्यत्र जश्त्वं स्यात्तर्हि विधेयतावच्छेदकसन्देहेन जजिति रूपस्यापि विधेयतापत्त्ये-ष्टार्थासिद्धिरिति तन्निवृत्तये तन्न । एतेनायस्मयादित्वेन भत्वात्तदप्राप्त्या दृष्टान्तासङ्गतिरित्यपास्तम् । "झ-लां जशोऽन्ते" इत्यस्य ततोऽप्राप्तावपि "झलां जश् झशि"इत्यस्य प्राप्तेर्दुर्वारत्वात् । एवं च तत्र तदप्रवृत्तौ हेत्वन्तराभावेनासन्देहस्य तत्फलत्वावश्यकत्वे तेनैव सौत्रप्रयोगोपपत्तौ वार्त्तिकाद्युक्तसरणेर्लौकिकोपायस्या-त्रानाश्रयणम् । अत एव 'अच्त्वम्' 'एकोऽज् निपातः' 'अच्सन्धिः' इत्यादौ न तत्कार्याभावः । 'अल्पाच्तरं' 'सिद्धमनच्त्वात्' 'कथमच्त्वम्' इत्यादिसूत्रवार्त्तिकभाष्यप्रयोगाश्चात्रार्थे गमकाः । एवञ्च शब्दसाधुत्वबोध-नाय प्रवृत्तानामपि मुनीनां सौत्रप्रयोगनिर्वाहायान्योपायाकरणं कृतोपायानाश्रयणञ्च, किन्तु व्याख्यान-स्पष्टप्रतिपत्तिसंदेहनिवृत्त्यन्यतमाश्रयणमिति शैली लक्ष्यते। किं चात्र तदुपायाश्रयणे "परेश्च" इति भाष्यादेते-षामनभिधानमेव लभ्यत इति मूलोच्छेदापत्तिः । सौत्रत्वेन तत्सत्त्वाङ्गीकारेऽपि चरममुनिविरोधेनासाधुत्वं दुर्वारं चेति तदसाङ्गत्यं तदवस्थमेवेति सूत्ररीत्यैव समाधानमुचितमिति तदनाश्रित्यासन्देहाश्रयणमिति दिक् । इत्थं-सति विरोधमुपपादयति—शकारस्येति । द्वितीयस्येति भावः । नन्वनङो ङस्यैव तत्र पक्ष एव तस्य सत्त्वेन शस्याप्यादेशान्त्यत्वेन निर्वाहः । किञ्च एकान्तपक्षस्यैव सिद्धान्तितत्वेन तस्यैकदेश्युक्ति-त्वम् । एवञ्च तद्विरोधो न दोषायात आह–किञ्चेति । इत्यस्येति । इत्यत्रत्यचित्रङित्यस्येत्यर्थः । अपि-रत्र योज्यः, तेन "चोः कुः"इत्यादिसंग्रहः । एतेन किञ्चेत्येव सिद्धेऽपिर्व्यर्थं इत्यपास्तम् । प्रकारान्तरमपि प्रागुक्तं बोध्यम् । तदेतदुपलक्षणं तस्यापीति बोध्यम् । अत्र पक्षे—प्राचोक्तयोगरूढपक्षे । एतेन भाष्या

तीयः । योगस्यैव पुरस्कारे परिगणनस्य व्यर्थत्वात् । धात्वादिषु करणव्युत्पत्तिरागमादिषु नेति वैषम्यस्य दुरुपपादत्वाच्च । उपदेशताप्रयोजकधातुत्वादिरूपोपाध्यव-

---

### शब्दरत्नम् ।

एष्वेतस्य रूढिरित्युक्तेः परिगणनताया एव लाभात् । **योगस्यैवेति** । न तु रूढेरित्यर्थः । **परिगणनस्येति** । धात्वादिगणनस्येत्यर्थः । **वैषम्येति** । भाष्यरीत्या करणव्युत्पत्त्यैव सर्वसङ्ग्रहादिति भावः । **उपदेशताप्रयोजकेति** । योगमात्रस्वीकारे उपदेशता—उपदेशकरणता, न हि तत्प्रयोजकं धातुत्वादि भवतीति तद्विरोधः । सञ्ज्ञात्वे तु उपदेशता—उपदेश-

### भैरवी ।

त्पत्तिरिति पक्षे तु नासङ्ग्रहः, त्वदुक्तरीत्या भाष्यकृताऽपरिगणनात् । व्यवसितान्त्यस्य ग्रहणमिति व्याख्यानेऽपि नासङ्ग्रहः प्रातिपदिकान्त्यत्वादिति च ध्वनितम् । ननु मन्मतेऽपि परिगणनं नेत्यत आह—एष्वेतस्येति । अस्य—धातुसूत्रेत्यादिना पठितस्य । परिगणनस्यैवेत्यत्र पठितैवकारव्यवच्छेद्यमाह—नत्विति ।

नन्वन्यत्र यथा परिगणनङ्कर्तव्यमित्युच्यते तथा अत्र नोक्तमिति परिगणनमिति कथनं नोचितमत आह—धात्वादीति । मूले—दुरुपपादत्वादिति । सकृदुच्चरितस्य शब्दस्यैकव्युत्पत्त्यैवार्थबोधकत्वन्नतु तत्र व्युत्पत्तिद्वयसम्भवः । एकार्थबोधकतया चारितार्थ्यादावृत्तौ मानाभावादिति भावः । करणतेति । प्रकृतिजन्यबोधप्रकारस्यैव भावप्रत्ययार्थतयोपदेशशब्दो यदि करणवचनस्तदा करणताया एव भावप्रत्ययार्थत्वमित्याशयः । न हीत्यादि । प्रयोज्यप्रयोजकभावस्यान्वयव्यतिरेककल्पनया यथा चैत्रे चैत्रत्वधर्मसत्त्व एव पाचकत्वमन्यथा नेति कस्यापि न सम्मतम्, किन्तु विक्लित्त्यनुकूलव्यापारसत्त्वमेव पाचकत्वप्रयोजकं, तथा धातुत्वादिकं न करणताप्रयोजकम् । पूर्वस्मिन्पक्षे तु न तद्ग्रन्थविरोध इत्याह—संज्ञात्वे त्विति । उपदेशशब्दत्वमिति । भावप्रत्ययप्रकृतिभूत उपदेशशब्दः स्वरूपपरः ततस्तल्प्रत्ययस्तद्वृत्तिधर्म्मपर इति

### भावप्रकाशः ।

त्तकरणव्युत्पत्तौ त्वस्यापि संग्रहः, तदुक्तपरिगणनस्य तन्मतेऽभावात् व्यवसितपदार्थेषु प्रातिपदिकस्यापि गणनाच्चेति सूचितम् । ननु मयापि परिगणनं नोक्तमत आह—**एष्विति** । धात्वादिष्वित्यर्थः । **एतस्य** उपदेशशब्दस्य । **अस्य**—तदर्थस्य । एवार्थमाह—**नत्विति** । ननु मया 'इति परिगणनम्'इति कण्ठतो नोक्तमत आह—**धात्वादीति** । ननु न मम तद्गणने तात्पर्यं, किन्तूदाहरणप्रदर्शनमात्रेऽत आह मूले—**धात्वादिष्विति** । अर्थभेदेन कर्मकरणव्युत्पत्तिप्रदर्शनादागमादिषु सा नेत्येवं फलितस्येत्यर्थः । एतेन पूर्वार्धोपात्तानां तथात्वमुक्त्वा आगमादिलक्ष्याण्युक्त्वा गुरूक्तस्यैते च कर्मव्युत्पत्त्योपदेशा इत्यस्यैते इत्यनेन धात्वादिसर्वपरामर्शाच्चास्य भिन्नक्रमत्वाच्च सर्वे ते कर्मव्युत्पत्त्या चेत्यर्थेन सर्वत्र व्युत्पत्तिद्वयं तदभिमतमिति न वैषम्यमिति खण्डनकारोक्तमपास्तम् । आगमादिषु प्राक्करणव्युत्पत्त्यकथनेनाग्रिमग्रन्थस्य तन्मात्रकथनपरत्वेन चाक्षरमर्यादया तथाऽलाभात्, कर्मकरणसाधनयोर्द्वयोरप्युपदेशशब्देन तन्त्रेणोपादानमिति तदीयोत्तरग्रन्थविरोधापत्तेश्च । किञ्च कर्मव्युत्पत्त्यङ्गीकारस्याफलत्वात्तद्ध्वनयन्नाह—**भाष्यरीत्येति** । धात्वादिवदागमादिभिरपि प्रयोग उपदिश्यत इति भावः । एतेनोपदेशशब्दस्य सकृदुच्चरितत्वादन्यतरव्युत्पत्त्या सर्वत्र निर्वाहाच्च दुरुपपादत्वमिति मान्योक्तिः प्राचामनुरोधेनेति ध्वनितम्, भाष्यविरोधापत्तेः । ननु न मम वैषम्ये सर्वत्र व्युत्पत्तिद्वयकथने वा तात्पर्यं किन्तु एतस्य शुद्धयौगिकत्वप्रतिपादने, एवञ्च बाधकाभावादस्तु भाष्यरीतिरेवात आह—**उपदेशतेति** मूले । तद्ध्वनयन् भाष्यरीत्यैव मूलाशयमाह—**योगेति** । भाष्योक्तेत्यादिः । मात्रपदेन रूढिपरिगणनवैषम्यादिव्यवच्छेदः । **तत्प्रयोजकमिति** । तद्व्यवहारप्रयोजकमित्यर्थः । प्राक्कल्पे तु कथञ्चिद्योज्यमित्याह—**संज्ञात्वे त्विति** । योगरूढत्वे त्वित्यर्थः ॥

च्छिन्नसमुदायान्त्यं हल् इत् इत्यर्थ इति स्वग्रन्थविरोधाच्च । पक्षद्वयेऽपि लिङ्गानुशासनस्य प्रकृतानुपयोगात् । लोपशश्चेति शकारस्यासंग्रहाच्च । "आदेच उपदेशे" ( पा० सू० ६।१।४५ ) "उपदेशेऽत्वतः" (पा०सू०७।३।६२) इत्यादावाद्योच्चारणस्यैवोपदेशपदार्थतायाः सर्वसंमतत्वाच्चेति दिक् ।।

---

शब्दरत्नम् ।

शब्दत्वम् , उपदेशशब्दस्य शब्दपरत्वात् । तदवच्छिन्नस्य प्रयोजकं तु रूढ्यर्थतावच्छेदकतया धातुत्वादि वक्तुं शक्यमिति भावः । शकारस्येति । न ह्यनेन किञ्चिदुपदिश्यत इति भावः । ननूपदिश्यते ज्ञाप्यतेऽनेनेति तदर्थः, धात्वादिभिर्हि प्रयोगो ज्ञाप्यते, तद्वदनेनापि शकारेण सर्वादेशत्वं ज्ञाप्यते, इत्यरुचेराह—आदेच इति । सर्वेति । भाष्यकारादीत्य-

भैरवी ।

भावः । तदवच्छिन्नस्येति । उपदेशतायाः प्रयोजकमिति विग्रहे या षष्ठी तस्यास्तदवच्छिन्नसम्बन्धित्वमर्थ इति कल्पनेन तदवच्छिन्नस्येत्यस्य लाभः । प्रयोजकपदन्तु रूढ्यर्थतावच्छेदके लाक्षणिकमित्याशयेनाह—रूढ्यर्थेति । यथा हर्यादिनानार्थपदस्य विष्णुत्वादिरूपा नानाधर्माः शक्यतावच्छेदका भवन्ति तथेहापि धातुत्वादिकं रूढ्यर्थतावच्छेदकं सम्भवतीत्याशयः । न चास्मिन्पक्षे प्रयोजकपदस्य यदि लक्षणा तदा द्वितीयपक्षेऽपि प्रयोजकपदस्यावच्छेदके लक्षणास्तु, तथा चोपदेशकरणतावच्छेदकमित्यर्थो भविष्यतीति तत्पक्षेऽपि न स्वग्रन्थविरोध इति वाच्यम्, अन्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकतया धातुत्वादेर्न्यूनवृत्तितयाऽवच्छेदकत्वासम्भवादिति भावः ।

केचित्तु उपदेशतेत्यत्रोपदेशशब्दस्य संज्ञाशब्दतया संज्ञाशब्दस्थले शब्दस्वरूपस्यैव संज्ञिपरशब्दप्रकृतिकभावप्रत्ययार्थत्वमित्युपदेशतेत्यस्योपदेशशब्द इत्यर्थ एवोचित इत्याहुः, तन्न, योगरूढस्य शब्दस्य शब्दस्वरूपप्रवृत्तिनिमित्तकत्वासम्भवात् । मूले पक्षद्वयसाधारणं दूषणमाह—लोपशश्चेतीति । आद्यपक्षे परिगणनेनासङ्ग्रहः स्पष्टः । द्वितीये तमुपपादयति—न ह्यनेनेति । तदर्थः—उपदेशपदार्थः । सर्वसम्मतत्वेऽपि भाष्यानुसारिणाम्भाष्यसम्मतार्थे एवाग्रह इत्याशयेनाह—भाष्यकारादीति । ननु करणव्युत्पत्तिस्तर्ह्यप्रसिद्धार्थकैव स्यादत आह—

भावप्रकाशः ।

अस्य वक्तुं शक्यमित्यत्रान्वयः । यत्तु तदोपदेशता तच्छब्द इति । तन्न, एतस्या योगरूढतया शब्दाप्रवृत्तिनिमित्तकत्वेन तस्य तदुत्तरत्वाद्यर्थत्वासम्भवात् । यदप्युपदेशता तत्करणत्वावच्छिन्नधातुत्वादीति । तदपि न, तथापि तत्प्रयोजकधातुत्वादीत्यसङ्गतेरत आह — उपदेशशब्दत्वमिति । शब्दपरत्वादिति । अत्रेति शेषः । अनुकरणत्वादिति भावः । कथञ्चित्त्वं स्फुटयति—तदवच्छिन्नस्येति । तत्त्वावच्छिन्नतच्छब्दव्यवहारस्येत्यर्थः । तथा च तत्र तस्य लक्षणेति क्लेश इति भावः । तद्रूढ्येति । योगार्थतावच्छेदकं तु तदेवेति तत्पक्षेऽपि एवमपि योजयितुमशक्यमेवेति भावः । ननूपदेशताप्रयोजकेत्यस्य उपदेशतापर्याप्त्यधिकरणतावच्छेदके इत्यर्थः । उपदेशत्वं यावति पर्याप्तं तत्रोपदेश इत्युत्तरं तथोक्तेरतो न स्वग्रन्थविरोध इति खण्डनकृदतो मूले पक्षद्वयसाधारणदोषानाह—पक्षद्वयेऽपीत्यादिना । दोषान्तरमाह—लोपशश्चेतीति । पक्षद्वयेऽपीत्यस्यानुषङ्गः । पूर्वं तु शब्दतो भाष्यविरोधो दत्त इति न पौनरुक्त्यम् । तत्राद्ये उक्तमुपपादितं चेति, द्वितीये सिद्धान्तरीत्यैव हेतुमाह—नह्येति । तत्र प्रथमपक्षे दोषोद्धारं प्रागुक्तं हृदि निधाय द्वितीयपक्षे तद्रीत्याऽपि दोषोद्धारप्रकारमाह—ननूपेति । तदर्थः—उपदेशशब्दार्थः । ननु "आदेच" इति सूत्रे सिद्धान्ते न तथा, तत्र कर्मव्युत्पत्त्यङ्गीकारादत आह मूले—उपदेशेऽत्वत इति । आदिना "एकाच उपदेशे" इत्यादिपरिग्रहः । ननु सर्वसम्मतत्वेऽपि किं भाष्यानुसारिणामत आह—भाष्येति । उक्तक्लेशेन तं प्रति प्रौढयोक्तत्वेऽपि तत्प्रकारस्यान्यत्रावश्यकत्वेनैतद्भाष्यस्यापि सिद्धान्तत्वेन तदाश्रयणेऽपि

उपदेशेऽजनुनासिक इत् (पा०सू०१।३।२) ॥ यद्यप्यत्रोपजीव्यत्वादनुनासिकसञ्ज्ञा प्रथमं वक्तुमुचिता, तथापि नासिकामनुगत इति योगाश्रयणेनैव गतार्थः। यत्र तु करणव्युत्पत्त्यैवार्थसङ्गतिः, तत्रागत्याऽस्तु "कृत्यल्युटः" (पा०सू०३।३।११३) इति बाहुलकाल्ल्युडभावः। यथा "यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तौ" इत्यादाविति दिक् ॥

शब्दरत्नम्।

**नासिकामनुगत इति**। नासिकामभिहत्य वायुनाऽभिव्यञ्जित इत्यर्थः। प्रातिशाख्यशिक्षादौ लोके च तद्व्यवहारस्य तथैवोपपादनमावश्यकमिति तात्पर्यम्। अत एव

भैरवी।

यत्र त्विति। इत्यादाविति। आदिना भाष्ये "यस्य सन्ध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणम्" इति वाक्यस्य सङ्ग्रहः। मूले—दिगिति। दिगर्थस्तु प्रागुक्तभाष्यवार्तिकस्वारस्येन "लृटः सद्वा" इत्यादिसङ्ग्रहानुरोधेन सकललक्ष्यसाधनानुरोधेन बाहुलकाश्रयणमेवोचितमिति।

नन्वनुनासिकपदादनु पश्चान्नासिकाङ्गत इति, नासिका पश्चाद्व्याप्रियते यस्मिन्निति वार्थः प्रतीयते, तथा चानुनासिकाकारादीनामनुनासिकत्वगुणरहितानां स्वरूपोपलम्भात्तद्विषये मतभेदेन यद्यप्युक्तस्यार्थस्य सम्भव इति तेषां संग्रहो भवति, तथापि ञादीनां तद्गुणरहितानामनुपलम्भात् युगपदेवोभयावच्छेदेनोत्पन्नाभ्यां वायुसंयोगाभ्यामुत्पत्तिरिति विनिगमनाविरहेणोभयोः स्थानत्वमतः कथं योगाश्रयणेन गतार्थता ? किञ्च—

'अनुस्वारयमानाञ्च नासिका स्थानमिष्यते'

इति शिक्षोक्तेस्तेषाञ्चासंग्रहोऽत आह—नासिकामभीति। तथा च नायमुक्तरीत्या यौगिकः। किन्तु नासिकामनुगत इत्यत्र योऽनुशब्दस्तस्याभिहत्येति गत इत्यस्य चाभिव्यञ्जित इत्यर्थ इति सर्वेषां संग्रह इति भावः। उक्तयोगाश्रयणमावश्यकमित्याह—प्रातिशाख्येति।

न केवलं प्रातिशाख्यादावेव तथा, किन्तु प्रकृतशास्त्रेऽपीति सूचयन्नाह—अत एवेति। यो-

भावप्रकाशः।

सिद्धान्तभूततद्भाष्यानुरोधेन तथैवात्र युक्तं नतु प्रौढयोक्तेतद्भाष्यानुरोधेन तथेति भावः। मूलोक्तदिगित्यस्यार्थस्तु लिङ्गानुशासनकर्मव्युत्पत्तिपरिगणनानुपयोगात्सर्वथा प्राचोक्तमयुक्तमेव। तथा च भाष्यद्वयबलादन्यतराश्रयणमस्तु, नतु भावे एवेत्यवधारणमिति। तथा प्रागुक्तमयुक्तमेवेति ध्वनयन्नाह—यत्र त्विति। आदिना तपरोपदेशश्चेति वार्तिकसंग्रहः। एवञ्च तत्र तथासत्त्वेऽप्यत्र प्रागुक्तरीत्या बाहुलकाश्रयणमितिभाष्यं सम्यक् प्राचीनग्रन्थासाङ्गत्येपि मूलभाष्ययोरैक्यं चेति फलितं, तद्ध्वनयन्नाह—इति दिगिति। इत्यलम्।

ननु नासिकामनु पश्चाद्गतः, अनु पश्चान्नासिका व्याप्रियते यस्मिन्वेत्यन्यतरयोगार्थस्य तेषु स्वरेषु सम्भवः, तेन तदभिव्यक्तौ सत्यां नासावच्छिन्नवायुसंयोगेन तद्गुणाभिव्यक्त्यङ्गीकारात्; न ञादिषु, तत्राद्गुणस्वरूपानुपलब्धयोभयावच्छेदेन वायुसंयोगोत्तरमेव तादृशस्वरूपाभिव्यक्त्याऽविनिगमकेनोभयोः स्थानत्वेन युगपदेवोभयसम्बन्धात्। एवं यमानुस्वारेष्विति। "अनुस्वारयमानां च"इति शिक्षोक्त्या तेषां नासिकामात्रस्थानत्वेन तस्या एव सम्बन्धात्। तत्कथं तेन गतार्थतेत्यत आह—**नासिकामिति**। तथा च नोक्तरीत्या तस्य यौगिकत्वं मतम्, किन्तु अनोरभिहत्येति गत इत्यस्याभिव्यञ्जित इत्यर्थ इत्येवम्। यद्वा, नासिकाशब्देन प्रागुक्तस्तद्व्यापारः, तमनु पश्चात् गतो जात इति। इदं च प्रागुक्तेषु सर्वेष्वविशिष्टमिति मूलोक्तानुबोध्यपश्चात्त्वं सम्यगेवेति भावः। मौलमेव ध्वनितमाह—**प्रातिशाख्येति**। **तथैवोपेति**। तत्र वचनाभावादिति भावः। अत्र शास्त्रेऽपि तदावश्यकं तत्रापि मदुक्तमेवेत्यपि तेन ध्वनितमित्याह—अत

त्वाद् 'अनुनासिकसञ्ज्ञासूत्रं मन्दप्रयोजनम्' इति ध्वनयितुं नेहोपन्यस्तम् । उपदेशे

---

शब्दरत्नम् ।

मुखग्रहणप्रत्याख्यानभाष्यध्वनितो यमानुस्वारयोरनुनासिकव्यवहारः सूत्रमते सङ्गच्छते । "यरोऽनुनासिके" (पा०सू०८।४।४५) इत्यादौ स्वरूपग्रहणाभावस्तु 'पशुः' 'अपत्यम्' इत्यादिवदिति ध्येयम् । मन्दप्रयोजनमिति । मन्देषु प्रयोजनमस्येति बहुव्रीहिः ।

भैरवी ।

गाश्रयणादेवेत्यर्थः। प्रत्याख्यानेति । तत्र ह्यादौ मुखग्रहणस्य मुखग्रहणं यमानुस्वाराणामेव मा-भूदित्येवमर्थमिति प्रयोजनमुक्त्वा ये उभयवचनास्तेषां प्रासादवासिन्यायेन संग्रहो मुखग्रहणाभावेऽपि भविष्यति । यमानुस्वाराणान्तु संग्रहेऽपि नैव दोषो न प्रयोजनमित्यनेन क्षत्यभावमुक्त्वा मुखग्रहणप्रत्याख्यानेत्यर्थः । ध्वनित इति । "भवेदुभयवचनानां सिद्धम्" इति कथनेन ध्वनितमित्यर्थः। उभयवचनमुभयावच्छिन्नवायुसंयोगप्रयोज्याभिव्यक्तिविषयत्वेनैवेति तथा कथनेनायमर्थो लभ्यते । नन्विदं सूत्रं यद्यारभ्यते तदाऽशब्दसंज्ञेति निषेधात् "यरोनुनासिक" इत्यादौ स्वरूपग्रहणाभावो भवति, सूत्रानारम्भे तु स्वरूपग्रहणं प्राप्नोतीत्यत आह—यरोऽनुनासिक इत्यादाविति । इत्यादिवदिति । आदिना देवदत्तादिशब्दपरिग्रहः । तथाच-स्वं रूपमित्यंशः पश्वादिविषये व्यभिचरित इति तस्यानित्यत्वानुवादकमेवाशब्दसंज्ञेति नतु स्वातन्त्र्येण निषेधविधायकमिति पश्वादिशब्दोच्चारणस्थलवदत्रापि स्वरूपग्रहणाभाव इति भावः । अनुनासिकाकारादिविषये मतभेदश्च कैयटीये प्रसिद्धः—अनुनासिकस्य पूर्वः परो वा भागो मुखेनोच्चा-

भावप्रकाशः ।

एवेति । मदुक्तयोगाश्रयणादेवेत्यर्थः । प्रत्याख्यानेति । प्रासादवासिभ्राष्ट्रोखान्यायाभ्यामिति भावः । भाष्ये ध्वनित इति । तत्परभाष्ये इत्यर्थः । 'उक्तन्यायाभ्यां भवेदुभयवचनानां सिद्धं यमानुस्वाराणामपि प्राप्नोति नैव दोषो न फलम्'इति ग्रन्थेनेति शेषः । सति तद्व्यवहारे दोषफलाभावोक्तिर्युक्ता, न त्वन्यथेति भावः । सूत्रमते इति । शङ्कोक्तयोगान्यतरस्य तत्रासम्भवेन पाणिन्याद्यनभिमतत्वेऽपि प्रातिपदिकादिसंज्ञावद्रूढिमात्रस्वीकारे तेषां नासामात्रवचनत्वेनोभयघटितसूत्राप्राप्त्या तद्व्यवहारानुपपत्तिस्तन्मते इति मदुक्तयोगोऽपि शरणम्, सङ्ख्यावन्महासंज्ञया योगार्थाबाधस्य पाणिनेरपीष्टत्वादिति भावः । इदमपि पाणिनिशिक्षा–ऋक्प्रातिशाख्याद्यनुरोधेनोक्तम् । "नासिक्या नासिकास्थाना मुखनासिक्या वा" इति तैत्तिरीयप्रातिशाख्यरीत्या तु पक्षान्तरे सूत्रमतेऽपि तद्व्यवहारे न बाधकमिति बोध्यम् । नन्वेवं "स्वं रूपम्"इत्यनेनैतद्घटितसूत्रेषु स्वरूपग्रहणापत्तिरत आह—यरोऽन्विति । आदिना "अनुदात्तोपदेश" इत्यादिसङ्ग्रहः । इत्यादीति । आदिना देवतासभाराजामनुष्येत्यादिसङ्ग्रहः । एवञ्च तस्यात्र व्यभिचरितत्वेनानित्यत्वेनासार्वत्रिकत्वात् प्रत्याख्यातत्वाच्च तेष्विवात्रापि निर्वाहः । एतेन तत्राशब्दसंज्ञेति निषेधद्वारा तत्स्वरूपग्रहणायैतत्सूत्रमिति ध्वनयितुं मन्दपदम् । तथा च मन्दत्वं फलविशेषणमिति समानाधिकरणबहुव्रीहिरिति दण्डयाद्युक्तमपास्तम् । तद् ध्वनयन्नाह—मन्देष्विति । ज्ञापकादिना व्यधिकरणबहुव्रीहेरपि स्वीकारादिति

सरला ।

प्रत्याख्यानभाष्येति । तत्र "ये प्रासादवासिनः,गृह्यन्ते ते प्रासादवासिग्रहणेन,ये भूमिवासिनः,गृह्यन्ते ते भूमिवासिग्रहणेन, ये चोभयवासिनः, गृह्यन्ते ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च" इति दृष्टान्तप्रदर्शनेन ये मुखवचना नासिकावचनाश्च वर्गान्त्या ञमङणनास्ते नासिकावचनपदग्राह्या अपि भवन्तीति मुखग्रहणं प्रत्याख्याय तत्र पक्षे केवलनासिकावचनानां यमानुस्वाराणामनुनासिकसंज्ञामापाद्य "नैव दोषो न प्रयोजनम्"इति भाष्येणेष्टापत्तिर्ध्वनिता। फलैक्याय च आरम्भपक्षेऽपि यमानुस्वाराणामनुनासिकसंज्ञाऽवश्यमाश्रयणीया । सा च योगार्थपुरस्कारेणानुनासिकपदस्य बोधकतापक्षे सङ्गच्छते । सूत्रं तु अवश्युत्यानुवादकम् । नन्वेवमनुनासिकस्य शब्दशास्त्रीयसंज्ञात्वाभावे "स्वं रूपम्" इति स्वरूपग्रहणापत्तिरत आह—यरोऽनुनासिक इति । "हरतेर्दृतिनाथयोः पशौ" इत्यत्र पशुपदेन "तस्यापत्यम्"इत्यत्रापत्य-

किम् ? अभ्र आँ अपः । यद्यपीह "उञः" "ऊँ" (पा० सू० १।१।१७,१८) इत्यत्रेव विधानसामर्थ्यान्नेत्त्वमिति सुवचम्, तथाप्युत्तरार्थमवश्यं कर्त्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम्। अच् किम् ? मनिनो मकारस्य मा भूत् । प्रति-

शब्दरत्नम् ।

एवंविधयोगलोकप्रातिशाख्याद्यनभिज्ञं प्रति सप्रयोजनमित्यर्थः । अभ्र आँ अप इति । अत्रेत्सञ्ज्ञायां लोपः स्यादिति भावः । विधानेति । इदिति वक्तव्येऽनुनासिकविधानसामर्थ्यादित्यर्थः । नेत्त्वमिति । तत्फललोपस्य सामर्थ्यादभावे इत्त्वमपि फलाभावान्ने-

भैरवी ।

र्यते, अपरो भागो नासिकया, नासिकावचनभागानुरागवशान्मुखवचनोऽपि भागो नासिकावचन इव लक्ष्यते। अत्र प्रासादवासिन्यायो नास्ति, भागस्यैव मुखेन नासिकया चोच्चारणात् । यदा तु सर्व एव वर्णो मुखेनोच्चार्यते नासिकया च तदा प्रासादवासिन्यायेन मुखग्रहणं भाष्यकारः प्रत्याचष्ट इति ।

मन्दप्रयोजनशब्दो न क्रियाविशेषणमन्दशब्दघटितः समानाधिकरणपदको बहुव्रीहिः, उक्तरीत्या प्रयोजनालाभात् । किन्तु "सप्तमी विशेषणे" इति ज्ञापकाद्व्यधिकरणपदक इत्याशयेनाह—मन्देष्विति । लोपः स्यादिति । अत्र स्यादित्यनेन सम्भावनामात्रं नतु प्रसक्तिर्वेदे आपाद्यमानरूपाभावात् । यद्यपि "अनेकान्ता अनुबन्धाः" इति पक्षे 'अभ्र आँ अटितः' इत्यत्रेट्प्रतिषेधः फलं सम्भवति तथाऽप्येकान्तपक्षे तदसम्भव एवेति वक्ष्यते । "आङ इदिति वक्तव्यः" इति आङ इच्छन्दसीति वक्तव्य इत्यर्थः । यत्तु "तस्य लोपः" इति सूत्रानन्तरम् 'आङश्छन्दसि' इति लाघवाद्वक्तव्यमिति, तन्न, अचीत्यस्य कर्तव्यत्वापत्तेः । स्वस्थाने तथा पाठे तु "प्लुतप्रगृह्या" इति सूत्रादचीत्येतस्य सम्बन्धेन तदनावश्यकमेव । ननु विधानसामर्थ्यादस्य लोपो माभूदित्संज्ञा तु स्यादेवेत्यत आह—तत्फलेति । तस्येत्त्वस्य फलं लोपः स प्रतियोगितासम्बन्धेनेत्त्वस्य व्यापको विधानसामर्थ्याद्व्यापकस्य तस्याभावे व्याप्यस्येत्त्वस्या-

भावप्रकाशः ।

भावः । ननु तथापि प्रयोजनशब्दस्य प्रयोजकपरत्वेन समानाधिकरणबहुव्रीहिरेव युक्त इति चेत् ? न, तस्य पूर्वनिपातापत्तेः । अत एव वाऽऽह—एवंविधेति । सानुनासिकव्यवहारेत्यर्थः । क्रियाशब्दवत् रूढिशब्देऽपि प्रासादवासिन्यायप्रवृत्तेरादिना सङ्ग्रहः । तथा च तादृशबहुव्रीह्यभावे तात्पर्यं नतु तथा विग्रह इति भावः । लोप इति । यद्यपि वेदे आपाद्यमानरूपाभावस्तथाप्यस्यां नान्तरीयकलोपं विनाऽन्यफलासम्भवेन साफल्यायैवमुक्तिरिति भावः । वस्तुतस्तूक्तहेतोरन्यफलाभावाच्चैतदभावे उपदेशपदं व्यर्थमेव । तद्ध्वनयन्नाह—स्यादिति भाव इति । इदितीति । उञ इदितिवत् "आङ इच्छन्दसि" इति वक्तव्ये इत्यर्थः । एतेनेत्संज्ञाप्रकरणे "तस्य लोपः" इत्युत्तरं वा "आङश्छन्दसि" इत्येव पाठेन सिद्धिरिति मूलाशय इत्यपास्तम् । अचीत्यनुवृत्तेरावश्यकतया तत्र कर्त्तुमशक्यत्वात् । ननु विधानसामर्थ्याल्लोपो माऽस्तु, इत्त्वं तु स्यादेव बाधकाभावादत आह—तत्फलेति । तस्येत्त्वस्य फलं प्रत्याहारसिद्ध्यन्यफलान्तरद्वारभूतं तद्व्यापकं यो लोपस्तस्येत्यर्थः । फलाभावादिति । द्विविधफलाभावादित्यर्थः । एतेन तस्यानुनासिकस्य फलमित्संज्ञा तत्प्रयोज्यलोपस्येत्यर्थः, नतु तस्येत्त्वस्य फलं लोप इत्यर्थः, अकार्यं हि लोप इति "उपदेशेऽज्" इतिसूत्रभाष्यविरोधापत्तेरित्यपास्तम् । तन्मात्राफलकत्वमिति तद्भाष्याशयेन यथाश्रुतार्थसम्भवात् । एवञ्चोपदेशपदं व्यर्थमेवेति भावः । उत्तरार्थं तु न, तत्रैतदनुवृत्तेर्भाष्यानभिमतत्वात् । त्वन्मतेऽपि तदयुक्तत्वस्य प्रागावेदितत्वाच्च । एवञ्च तथापीत्यादि मूलं प्र-

सरला ।

पदेन च यथा व्याख्यानान्न स्वरूपग्रहणं तथाऽत्रापि व्याख्यानान्न तद्ग्रहणमिति तद्भावः । इति पक्षे इति । इत्संज्ञकानां तत्पक्षे अनवयवत्वेन समीपेऽवयवत्वारोपेण षष्ठीबहुव्रीहिस्वीकाराद् आकार इत्संज्ञकः समीपे

शब्दरत्नम्।

त्यर्थः। ननु 'अञ्च आँ अदितः' इत्यत्र "अनेकान्ता अनुबन्धाः" इति पक्षे "आदितश्च" (पा०सू० ७।२।१६) इतीट्प्रतिषेधः फलम्। न च लोपाभावे इदितिमहासञ्ज्ञाकरणात्सञ्ज्ञाऽपि नेति वाच्यम्। महासञ्ज्ञयैव लोपसिद्ध्या "तस्य लोपः" (पा०सू० १।३।९) इत्यस्य वैयर्थ्यापत्तेः। "इक" इत्यादौ ककारादिश्रवणानापत्तेश्च; इति चेत्? न, "अनुबन्धानामेकान्तत्वमेव" इति मुख्यपक्षे दोषाभाव इत्याशयात्। तदा हि मुख्येऽव-

भैरवी।

यवभाव इत्यर्थः। फलान्तरमाशङ्क्य निराचष्टे—नन्वञ्चेति। महासंज्ञेति। इत् इति व्यञ्जनमात्रं संज्ञा कर्त्तव्या, तथा च लाघवम्। इदिति तु एतीति इत् इत्यर्थकमिति लोपो भविष्यतीत्याशयः। इक इत्यादाविति। प्रत्याहारार्थमित्त्वं तस्यावश्यकमेव। तथा च महासंज्ञया तन्निवृत्तिः स्यादिति भावः। ननु न तस्येतस्तत्रोच्चारणं किन्तु तत्सदृशस्यैव। अत एव "आदिरन्त्येन" इति सूत्रव्याख्यानावसरे इता इत्सदृशेनेत्युक्तम्। अत एव 'वैयाकरणः' इत्यत्र चित्स्वरो नेत्यत आह—आदाविति। तेन "अइउण्" इत्यादौ णादिश्रवणानापत्तिः समुच्चीयते। मुख्यत्वं तस्योपपादयति—तदा हीति। एवं "हलन्त्यम्" इत्यादौ लक्षणाया अकल्पनेनापि लाघवं बोध्यम्। ननु

भावप्रकाशः।

चामनुरोधेन। अत एव तत्र व्याख्यातम्। तदेतद् ध्वनयितुमत्रैवैतस्यैकदेश्युक्तं फलान्तरमाशङ्कते—नन्वञ्च इति। पक्षे—अस्थितपक्षे। अत्र पक्षे शिदादौ बहुव्रीह्युपपत्तिस्तु प्रागसकृदावेदिता न विस्मर्त्तव्या। फलमिति। अनिष्टोऽपि स फलमित्यर्थः। एवं चैतत्सार्थकमिति भावः। प्रागुक्तसिद्धान्तं ध्वनयितुं शङ्कते—न च लोपाभावे इति। उक्तरीत्येति भावः। इदिति महेति। एतीति इदित्यन्वर्थेत्यर्थः। एवमग्रेऽपि। यथाश्रुते तु टिघुभादितुल्यत्वेन तदसङ्गतिः स्पष्टैव। इतोऽप्येतस्या लोपफलकत्वावश्यकत्वादिति भावः। ननु तथा सिद्धस्यापि तस्य साधुत्वार्थं तदावश्यकमत आह—इक इति। अन्वर्थसंज्ञया तन्निवृत्तेरिति भावः। नन्विक इत्यादौ कादिश्रवणे न बाधकं, तस्येत्कादितुल्यत्वेऽपि तत्त्वाभावात्। अत एव वैयाकरणे चित्स्वरो न। एवं चेदं चिन्त्यमत आह—आदाविति आदीति च। ताभ्याम् "अइउण्" इत्यादिसंज्ञिबोधकेषु णादिश्रवणानापत्तिसङ्ग्रहः। सिद्धान्ते तु तत्रेत्संज्ञायामपि तस्य लोप इति न, अणादिसंज्ञासिद्धेर्लोपानिरपेक्षत्वेन तत्र तदसम्भवेन तदन्यफलाभावेन लोपमात्रस्याफलत्वेन च निर्देशसामर्थ्यादिष्टार्थबाधाभावापत्तेर्लोपद्वारकफलान्तराभावात् तत्सत्त्वे एव तयोर्व्याप्यव्यापकभावाच्च। अत एव "लोपश्च बलवत्तरः" इति संगच्छते। तत्राक्षिप्तान्तर्गतत्वेन ग्रहणं मा भूदिति तदन्यफलसत्त्वात्। धातुपाठानुबन्धेष्वेवमेव बोध्यम्। एवञ्चैतस्या अन्वर्थत्वं वक्तुमशक्यम्। अत एव तदङ्गीकारे तत्र तत्र भाष्ये महासंज्ञाकरणस्य हेतुत्वेनोल्लेखः। अत्र तथाशयेनोल्लेखेऽपि वस्तुतस्तदभावः स्पष्ट एव। एवञ्च प्रागुक्तरीत्याऽनयोर्व्याप्यव्यापकभावोऽपि नास्माद्धेतोरिति भावः। एवोऽनेकान्तत्वव्यावृत्तये। तदाह—मुख्येति। "तस्य लोपः" इति सूत्रभाष्योक्तेरिति भावः। स्पष्टं चेदमन्यत्र। दोषाभाव इति। अनिष्टफलरूपदोषाभाव इत्यर्थः। अन्यत्रेवात्रापि 'तथापि स्यात्'इत्याशङ्कां निरसितुमारोपाभावेन लाघवमाह—तदा हीति। तेषामवयवत्वे हीत्यर्थः। मुख्ये इति। तत्त्वं च तयोस्तत्त्वस्य स्वारसिकत्वादिति भावः। एवं "हलन्त्यम्" इत्यादौ लक्षणाऽपि नेति बोध्यम्। उक्तोदाहरणे तदभावमुपपादयति—न चेति। नहीत्यर्थः। अयम्—ऑं। अवयवः—मुख्यावयवः। अदोषादिति। एतदभावे दोषसामान्याभावादित्यर्थः। एवञ्चैतद्व्यर्थमेवेति

सरला।

यस्येत्यर्थकेन "आदितश्च" इति सूत्रेण इत्संज्ञकाकारस्य समीपे सत्त्वादञ्चधातोर्विहितस्य क्तस्येडागमनिषेध इति भावः। महासंज्ञेति। एति गच्छति प्रयोगे न तिष्ठतीति इत् इत्यर्थः। महासंज्ञया लोपसिद्धावपि तस्य साधुत्वाय सूत्रस्यावश्यकत्वमिति न वैयर्थ्यमित्यरुचेराह—इक इतीति। मुख्यपक्षे इति। "उभयमिदमनुबन्धेषूक्तमेकान्ता अनेकान्ता इति। किमत्र न्याय्यम्? एकान्ता इत्येव" इति भाष्येण एकान्तपक्षस्यैवानुबन्धविषये मुख्यत्वबोधनादिति भावः। तत्पक्षे हि अनुबन्धानामवयवत्वेन आरोपानपेक्षणेन

ज्ञायते इति प्रतिज्ञा। "आतश्चोपसर्गे" ( पा० सू० ३।३।१०६ ) इति कर्मण्यङ्। प्रतिज्ञा आनुनासिक्यं येषामिति विग्रहः। एवं च 'प्रतिज्ञासमधिगम्ये प्रतिज्ञाशब्दस्य लक्षणा' इति क्लिष्टं व्याख्यानं नाश्रयणीयम्, "पाणिन्युपज्ञं व्याकरणम्" इत्यादिष्विव लक्षणां विनैव निर्वाहात्। यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं

## शब्दरत्नम्।

यविन्यन्यपदार्थे बहुव्रीहिः। न चायमाकारोऽङ्धातोरवयव इत्यदोषात्। **प्रतिज्ञेति।** प्रतिज्ञानविषय इत्यर्थः। **प्रतिज्ञाशब्दस्येति।** भावाऽन्तस्येत्यर्थः। **क्लिष्टेति।** शक्तिग्राहकव्याकरणसत्त्वाच्छक्त्यैव तदर्थबोधसम्भवे लक्षणाश्रयणं क्लेश इति भावः। **लक्षणां विनैवेति।** अत्र लक्षणया व्याख्यानं कुर्वताऽपि तत्र लक्षणां विना मदुक्तरीत्यैव व्याख्यातम्। एवं च पूर्वापरविरोधस्तस्येति भावः। **न चोभयोर्विधानेऽपि** लाघवाद्भावे शक्तिः, कर्मणि लक्षणा, अनुशासनमपि लाक्षणिकार्थानुशासनमेवेति वाच्यम्, "लः कर्मणि" ( पा० सू० ३।४।६९ ) इत्यादीनामपि तथात्वापत्तौ 'तिङां कर्त्रादौ शक्तिः' इति

## भैरवी।

'दोषाभावः' इति प्राग्लिखितमेव, पुनरिह 'इत्यदोषात्' इत्युच्यते इति पौनरुक्त्यमिति चेत्? न, पूर्वस्य दोषपदस्येट्प्रतिषेधप्रसङ्गरूपदोषपरत्वमस्य तु दोषसामान्यपरत्वमिति भेदात्।

'प्रतिज्ञानुनासिक्याः' इत्यत्र प्रतिज्ञाशब्दः कर्मबोधकाऽन्त इत्याशयेनाह—प्रतिज्ञानेति। लक्षणावादिमतमुपपादयति—भावेति। लक्षणेति क्लिष्टमित्यनेन लक्षणास्वीकार एव क्लेश इति प्रतीयते स तु न युक्तः, लक्षणाया उच्छेदापत्तेरतो भावार्थमाह—शक्तीति। मूले—पाणिन्युपज्ञमिति। आद्यर्थकोपशब्दपूर्वकाज्ज्ञाधातोः कर्मण्यङ्। पाणिनेरुपज्ञेति कर्तृषष्ठ्या समासः। पाणिनिकर्तृकाद्यज्ञानविषयभूतमित्यर्थः। तत्र **दृष्टान्ते।** उभयोः **भावकर्मणोः।** तथात्वापत्तौ लाक्ष-

## भावप्रकाशः।

भावः। एतेनादोषादिति पुनरुक्तमित्यपास्तम्। विषय इति पाठस्तस्याजहल्लिङ्गत्वात्। एतेनोदासीनं च नोपेक्षाबुद्धिविषयमिति वदन् रत्नाकरः प्रत्युक्तः। नन्वेवं लक्षणा वृथेत्यत आह—**भावेति।** प्रतिज्ञया समधिगम्यमानुनासिक्यमेषामिति केनचिदुक्तं मध्यमपदलोपित्रिपदव्यधिकरणबहुव्रीहिं लक्षणाभावेन संखण्ड्यैवं गुरुणोक्तमिति बोध्यम्। नन्वेवं लक्षणोच्छेदोऽत आह—**शक्तीति।** एवञ्च शक्त्यभावे सा आवश्यक्येवेति भावः। ननु तत्तद्व्युत्पत्तिवादिनोभयत्रापि तुल्यार्थाङ्गीकारात् दृष्टान्तासङ्गतिः, तदुक्तिरफला च, दोषदानेनैवेष्टार्थसिद्धेरत आह—**अत्रेति।** प्रतिज्ञाशब्दे इत्यर्थः। **तत्र-दृष्टान्ते।** **मदुक्तेति।** उपशब्द आद्यर्थः, कर्मण्यङ्, उपज्ञायत इत्युपज्ञा पाणिनेरुपज्ञेति कर्तृषष्ठ्या समासः। पाणिनिवृत्त्याद्यज्ञानविषयो व्याकरणमिति शाब्दोऽर्थ इत्येवं दीक्षितोक्तरीत्येत्यर्थः। **एवञ्चेति।** उक्तयुक्त्या तत्र तथा व्याख्यानेन दृष्टान्तसङ्गतित्वे चेत्यर्थः। **विरोध इति।** विरोधोऽपीत्यर्थः। एवञ्च तदुक्तिसाफल्यमिति भावः। एतेन भावाऽन्तादर्शआद्यजित्यपास्तम्, क्लिष्टत्वात्, उक्तरीत्यैव निर्वाहे वृत्तिद्वयकल्पनागौरवापत्तेश्च। ननु प्राचोभयथोक्तेऽपि प्रकृत्युपस्थितत्वकृतलाघवेनैतदनुरोधेन स एवान्यथा नीयतामिति न विरोधो न वादृष्टान्तत्वमिति मूलं चिन्त्यमिति खण्डनकृदाह—**न चोभयोरिति।** भावकर्मणोरित्यर्थः। शास्त्रानर्थक्यमपि नेत्याह—**अन्विति।** एवेन शक्यार्थानुशासनव्यवच्छेदः। **तथात्वेति।** लाक्षणिकार्थानुशासनत्वापत्तावित्यर्थः। एतेन न हि विधानमात्रेण तत्र शक्तिः, कृद्योगषष्ठ्याः कर्तृकर्मणोर्विधानेऽपि प्रचुरतरप्रयोगेण सम्बन्धे

## सरला।

मुख्येऽवयविन्येवान्यपदार्थे बहुव्रीहिरिति नैतत्फलं सम्भवति। तदाह—**तदा हि इत्यादिना।** भावाऽन्तस्येत्यर्थ इति। कर्मण्यङाऽर्थसामञ्जस्यादिति भावः। **व्याख्यातमिति।** पाणिनिसमवे-

परिभ्रष्टस्तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः ।

ननु रलयोरिति न्यूनं टकारस्यापि मध्यगतत्वादित्यत आह—**प्रत्याहारेष्विति । व्यवह्रियन्ते इति ।** प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रेति बाहुलकादधिकरणे घञ् । यद्यपि योगमात्रमकारादिसञ्ज्ञास्वतिप्रसक्तं तथापि योगरूढिरिति

---

शब्दरत्नम् ।

सिद्धान्तासङ्गत्यापत्तेः व्याकरणस्याभियुक्तोक्तशक्तिग्राहकत्वस्य भङ्गापत्तेश्च ॥

**टकारस्यापीति** । अत्र यद्वक्तव्यं तदन्यत्रोक्तम् । **बाहुलकादिति** ।

भैरवी ।

ण्णिकार्थबोधकत्वापत्तावित्यर्थः । अभियुक्तोक्तेति ।

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

इति वृद्धोक्तेत्यर्थः । अत्र–रप्रत्याहारविषये । अन्यत्र–लघुशब्देन्दुशेखरे । 'लण्सूत्रस्थाकारो यद्यनुनासिकः स्यात्तदा "अतो ऌान्तस्य" इति सूत्रे पाणिनिर्लकारन्नोच्चारयेत्, रप्रत्याहारेणैव व्यवहरेत् । एवं यण्घटितसूत्रेषु लाघवाय यप्रत्याहारनिर्देशमेव कुर्यात् । तस्मादस्यानुनासिकत्वमप्रामाणिकम्'इत्यादि तत्रोक्तम् । वस्तुतस्तु लॄ त्यत्र रेत्येव सिद्धे लकारोच्चारणं लण्सूत्रस्थाकारनिष्पाद्यप्रत्याहारनिर्देशस्य क्वचिदनाश्रयणमिति ज्ञापनाय । तेन शुल्कमाचष्टे शुल्कयति,शुल्कयतीति शुल् इत्यत्र "रात्सस्य"इति नियमाप्रवृत्त्या संयोगान्तलोपस्य प्रवृत्तिसिद्धिः । अत एव "रदाभ्याम्" इत्यत्र "रोऽसुपि" "वनो र च" इत्यनयोश्च न दोषः । न चानयोरकार उच्चारणार्थो न त्वनुनासिक इति भ्रमितव्यम् ,विधेयविषये इत्संज्ञां विना निवृत्त्यसिद्धेः । "रदाभ्याम्"इति सूत्रे प्रत्याहारस्य ग्रहणे "प्रफुलृतः"इत्यत्र"आदितश्च"इतीट्प्रतिषेधाल्लकारात्परस्य तस्य नत्वापत्तिः । यदपि यण्घटितसूत्रेषु लाघवाय यप्रत्याहारनिर्देशमेव कुर्यादिति, तत्स्थवीयः, "इणो यण्" "इग्यणः सम्प्रसारणम्" इत्यत्र लाघवाभावात् । "इको यण्" इत्यत्र मात्रालाघवसत्त्वेऽपि 'योऽचि'इत्युक्ते प्रक्रियागौरवमस्त्येव ।

किञ्च लण्सूत्रस्थाकारनिष्पन्नयप्रत्याहारनिर्देशस्य क्वाचित्कत्वं यप्रत्याहारेणैव निर्दिशेदितिवादिनाऽपि वाच्यम् । अन्यथा 'महाशूद्री'इत्यत्र'अयोपधात्'इति प्रतिषेधस्य प्राप्त्या"जातेः" इति सूत्रविहितङीषभावस्य "ङेर्यः" इत्यनेन यकारादिचतुष्टयादेशघटितानिष्टरूपाणामिष्टरूपाभावानां चापत्तेः । न चास्यानुनासिकत्वे हल्प्रत्याहारेऽनुनासिकाकारस्य ग्रहणापत्तिः, हल्प्रत्याहारसिद्धेः प्रागच्पदार्थनिष्पत्त्यभावेन"उपदेशेऽच्"इत्यस्यार्थबोधाभावेनास्याकारस्येत्त्वानापत्तेः। इष्टापत्तिस्तु कर्तुमशक्या, 'मामाँस्रायस्व' इत्यत्र अन्नधातोः क्विपि दीर्घे तत्प्रकृतिकसम्बुद्धौ नलोपाभावे "नश्छवि" इति रुत्वे "अत्रानुनासिकः"इत्यनुनासिकपक्षेऽनुस्वाराप-

भावप्रकाशः ।

शक्त्या तत्र लक्षणास्वीकारादिति तच्छेषभूतमपि तदुक्तमपास्तम् । **अभियुक्तेति** ।'शक्तिग्रहं व्याकरणोप'-इत्यादिनेति भावः ।

**अत्र यदिति** । रप्रत्याहारविषये यद्वक्तव्यं खण्डनं तच्छब्देन्दुशेखरे उक्तमित्यर्थः । विस्तरस्तु मत्कृततत्खण्डनमण्डनादवसेयः।यत्तु बाहुलकस्यागतिकगतित्वस्योपदेशपदव्याख्यायां स्वयमेवोक्तत्वेनात्र तदङ्गीका-

सरला ।

तावज्ज्ञानविषयो व्याकरणमिति शक्त्यैव व्याख्यातमित्यर्थः । **अभियुक्तोक्तेति** । अस्य—

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥" इति इति शेषः ।

**अन्यत्रेति** । लघुशब्देन्दुशेखरे । ततस्तट्टिप्पणतश्चावगन्तव्यम् ।

भाव: । प्रत्याहाराश्चैकचत्वारिंशदिति प्राञ्चः । चतुर्दशसूत्रीस्थैर्हल्भिरिद्भिः कृता

शब्दरत्नम् ।

भावघञन्तादर्शआद्यजित्यपि बाहुलकादविशिष्टमिति भावः । एकचत्वारिंशदिति ।

भैरवी ।

त्तेरिति वाच्यम्; लण्सूत्रस्थाकारो नानुनासिकत्वविशिष्टः श्रूयते, किन्तु कार्यार्थन्तथा प्रतिज्ञायत इति वाच्यम्, तच्च कार्यं प्रत्याहारसिद्धिरूपम्, तच्चेत्त्वं विनाऽनुपपन्नमिति हल्प्रत्याहारसिद्धिकाले तस्योक्तरीत्या इत्संज्ञायाः प्राप्त्यभावेऽपि "मोऽनुस्वारः" इति सूत्रजवाक्यार्थनिष्पत्तिकाले लण्सूत्रस्थाकारस्येत्त्वप्रवृत्तौ प्रतिबन्धकाभावात्तत्र 'तस्यलोप' प्रवृत्तेर्दुर्वारत्वात्। तावताऽपि भवदुक्तबलवत्तरलोपप्रतियोगित्वरूपहेतुसत्तायाः सत्त्वात्तस्य प्रत्याहारे ग्रहणाभावस्य सिद्धेः ।

किञ्च यत् प्रत्याहारे जातिनिर्देशमाश्रित्य 'सोऽस्ति'इत्यत्र सुलोपापत्तिरिति,तदतिस्थवीयः, "अदेङ् गुणः"इत्यादौ सुलोपाकरणेन हलन्तात्परत्वादेव सुलोपे सिद्धे"एतत्तदोः"इति सुलोपविधानेन ज्ञापकेन च 'लण्'सूत्राकारस्य रप्रत्याहारातिरिक्तप्रत्याहाराप्रयोजकत्वकल्पनात्। यदपि 'लण्' सूत्रस्थाकारस्यानुबन्धत्वे तृतीयहेतोरव्यापकत्वापत्तिरूपदोषोद्भावनं,तदपि न मनोरमम्,"अइउण्" इत्यादौ सन्धिकार्यं प्राप्नोतीति शङ्काया वर्णोपदेशकाले अजादिसंज्ञाया अनिष्पादात्सन्धिर्नेति परकृतसमाधानस्य खण्डनावसरे'वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां यणादीनां 'सुध्युपास्यः'इत्यादौ तटस्थ इवोद्देश्यतावच्छेदकाक्रान्ते वर्णोपदेशेऽपि प्रवृत्तेर्दुर्वारत्वादिति यथाऽभिहितं, तथा हल्प्रत्याहारनिष्पत्त्युत्तरमच्प्रत्याहारे निष्पन्ने भवत्वादिशब्दोकारे यथा"उपदेशे"इति सूत्रस्य प्रवृत्तिर्भवति,तथोद्देश्यतावच्छेदकरूपाक्रान्ते"लण्" सूत्रस्थाकारेऽपि तस्य प्रवृत्तिर्दुर्वारेति प्रत्याहारग्रहणाभावे साध्ये यत्पक्षतावच्छेदकमनुबन्धत्वं तद्व्यापकम्बलवत्तरलोपप्रतियोगित्वरूपहेतोरस्त्येव । हल्प्रत्याहारसिद्धेः प्राक् पक्षे परं हेतोः पक्षावृत्तित्वेऽपि न क्षतिः, अव्याप्यवृत्तेरपि कपिसंयोगस्य वृक्षे द्रव्यत्वानुमापकताया दर्शनात्। यदपि 'प्रत्याहारेऽनुबन्धानाम्'इत्यादिनाऽच्प्रत्याहारेऽनुबन्धानां ग्रहणशङ्का कृता नतु हल्प्रत्याहारे, यदि"लण्"सूत्रस्थाकारोऽनुनासिकः स्यात्तदा हल्प्रत्याहारेऽकारस्यानुनासिकस्य ग्रहणशङ्काऽपि कर्तुमुचितेति तदकरणान्न्यूनतापत्तिः, अतोऽस्यानुनासिकत्वमप्रामाणिकमिति भाषितम्, तदपेशलम्, तत्रत्याज्ग्रहणस्योपलक्षणत्वात्। यथाश्रुतार्थकत्वे भवन्मतेऽपि उक्प्रत्याहारे णकारस्य ग्रहणशङ्कासमाधानयोरकरणेन न्यूनताया दुर्वारत्वात्। उक्प्रत्याहारे णकारस्य ग्रहणमिष्टमेवेति तु न,'रणितः' 'भणितः' इत्यादौ "क्ङिति च"इतीण्निषेधापत्तेः। नच तस्योपलक्षितार्थकत्वं यद्यभिमतं तदा "अइउण्"इत्यादिसूत्रचतुष्टयोपादानस्वारस्यभङ्ग इति वाच्यम्,हल्प्रत्याहारे एवानुबन्धाग्रहणं तेन भाष्येण साध्यते इति भ्रमो "हयवर"इत्यादिसूत्रव्याख्यानोत्तरं शङ्कासमाधानयोःकरणान्मा भूदित्याशयेन तत्र"अइउण्"इत्यादिसूत्रचतुष्टयस्य लेखनात्। हल्प्रत्याहारसाधकसूत्रव्याख्याने मध्ये तथा शङ्कासमाधानयोः करणेन हल्प्रत्याहारेऽपि तैर्हेतुभिरनुबन्धाग्रहणसाधनस्याभिमतत्वमिति कल्पनसम्भवादिति कैयटानुयायिनः ।

यत्तु बाहुलककल्पनापेक्षया भावघञन्तप्रत्याहारशब्दादर्शआद्यजिति व्याख्यानं, तद्दूषयति— भावेत्यादिना । अविशिष्टमिति। गणविशेषे पाठकल्पने वृत्तिद्वयकल्पने गौरवमित्यस्य स्पष्टत्वात्।

भावप्रकाशः ।

रानौचित्येन भावघञन्तादर्शआद्यच् न्याय्यः। अन्यथा पूर्वापरविरोधापत्तेरिति खण्डनकृद्रत्नाकरादयः, तन्न, तुल्यत्वादित्याह—भावेति । अपिना "अकर्तरि च" इति चादसंज्ञायामपि घञ् इत्यस्योपदेशपदे गुरूक्तस्य समुच्चयः। यत्तु "अकर्तरि च"इति संज्ञात्वसत्त्वात् घञ्सम्भवः, तदभावाभ्युपगमे तु बाहुलकादसंज्ञायामपि, मनोरमाया अप्यत्रैव तात्पर्यमिति सुखबोधिन्यामुक्तम् , तन्न, योगरूढत्वेन संज्ञात्वाभावात् तदंशे

अष्टाध्याय्यां व्यवहृता एकचत्वारिंशदिति तस्यार्थः । तेन सुप्तिङादीनां, रप्रत्याहारस्य, "चयो द्वितीयाः" इति वार्तिकस्थचय्प्रत्याहारस्य चाधिक्येऽप्यदोषः । यत्तु "ञमन्ताड्डः" इति, "यमिर्ञमन्तेष्वनिडेक इष्यते" इति च ञम् वार्तिककृता व्यवहृत इत्याहुः, तद्भ्रमसाऽभिधानम् । आद्यस्योणादिसूत्रत्वात्, द्वितीयस्य व्याघ्रभूतिकारिकास्थत्वात् ; इत्यास्तां तावत् । एष च संख्यानियमो नातीवोपयुज्यत इत्युपेक्षितः ।

---

**शब्दरत्नम् ।**

> एकस्मान् ङञणवटा, द्वाभ्यां ष, स्त्रिभ्य एव कणमाः स्युः ।
> ज्ञेयौ चयौ चतुर्भ्यो, रः पञ्चभ्यः, शलौ षड्भ्यः ॥

इति तदुक्तेरिति भावः ।

**भैरवी ।**

एकस्मान्ङञणवटा इति । ङञणवटा एकस्मात्परे ग्राह्या इत्यर्थः । एवमग्रेऽपि । ङञण ... इत्यत्र णकारः प्रथमसूत्रस्थो ग्राह्यः । अणिति यथा । इण्प्रत्याहारस्तु न तेन, "अचिश्नु" इति सूत्रे संसृष्य ग्रहणात् । "आदिरन्त्येन सह" इतिसूत्रस्यानित्यत्वेनैकस्मादित्यादि लभ्यते, तत्र मानन्तु "इको झल्" "अज्झनगमां सनि" इति सूत्रद्वयारम्भ एव । यदि अन्त्येन इता सह यस्य यस्यादेरुच्चारणसम्भवस्तत्र सर्वत्र प्रत्याहारे इङपि प्रत्याहारः स्यात्, तथा च 'आर्द्धधातुक' इत्यनेन धातोराक्षेपे इङन्तस्य धातोः सनि "इङश्च" इत्यनेन गाऽऽदेशे सूत्रद्वयवैयर्थ्यं स्पष्टमेवेति । तदुक्तेरिति । प्रक्रियाकारोक्तेरित्यर्थः ।

**भावप्रकाशः ।**

बहुलसम्बन्धाभावाच्च । "करणाधिकरणयोश्च" इति तु ल्युटोऽभावाय । पुनर्बाहुलकाश्रयणावश्यकत्वाच्चेति दिक । तदाह—अविशिष्टमिति । अत्रापि तस्याकृतिगणत्वाद् वृत्तिद्वयकल्पनापत्तेश्चागतिकगतित्वम् । एवं भावसमुच्चायकचस्य तत्रासम्बन्धेन ल्युडभावाय तस्यावश्यकत्वेन संज्ञायां चेति वक्तुमौचित्येन च गुरूक्तादेरपि तत्त्वमिति भावः । मूलोक्तस्य तथार्थस्य तद्व्याख्यातृगुरूक्तत्वे बीजं ध्वनयितुं तत्र तदुक्तं हेतुमाह—एकस्मादिति । ङञणवटा अनुबन्धा एकैकस्मादेवादिवर्णादग्रे उच्चारिताः सन्त एकैकमेव प्रत्याहारं जनयन्ति नानियमेनेत्यादिरर्थः । अत्राद्ये आद्यणः । द्वितीये द्वितीय इति बोध्यम् । एङ् । यञ् । अण् । छव् । अट् । भष् झष् २ । अक् इक् उक् ३ । अण् इण् यण् ३ । अम् यम् ङम् ३ । अच् इच् एच् ऐच् ४ । यय् मय् झय् खय् ४ । यर् झर् खर् चर् शर् ५ । अश् हश् वश् जश् झश् बश् ६ । अल् हल् वल् रल् झल् शल् ६ इति तदुदाहरणानि बोध्यानि । "शास इदङ्" इत्यादिज्ञापकात् "आदिरन्त्येन" इत्यस्यानित्यत्वेनेदं लभ्यत इति स्पष्टं बृहच्छब्दरत्ने । तदुक्तेरिति । प्रक्रियाकृदुक्तेरित्यर्थः । मौलचय्प्रत्याहारस्येत्यग्रे ञम्प्रत्याहारस्य चाधिक्येऽप्यदोष इति गुरूक्तिस्तु न दूष्येत्युपसंहरति—मूले आस्तां तावदिति । अत एव आहुरित्युक्तं तन्नेति च नोक्तम् । एवञ्च यत्त्वित्यादिर्मूलग्रन्थस्ततः पूर्वः प्रकाशानुवाद इति बोध्यम् ।

**सरला ।**

एकस्मादिति । ङञणवटा अनुबन्धवर्णा एकस्मादेवादिवर्णात्परे उच्चारिता एकैकं प्रत्याहारं जनयन्ति । षकारोऽनुबन्धो द्वाभ्यामादिवर्णाभ्यां पर उच्चारितः प्रत्याहारद्वयमारभते, एवं कणमा अनुबन्धास्त्रयस्त्रिभ्य आदिवर्णेभ्यः परे उच्चारिताः प्रत्येकं त्रीन् त्रीन् प्रत्याहारानारभन्ते । एवमग्रेऽपि बोध्यम् । क्रमेणोदाहरणानि—एङ् "एङः पदान्तादति" । यञ् "अतो दीर्घो यञि" । अण् "ढ्रलोपे पूर्वस्य दीर्घोऽणः" । अयं णकारो "अइउण्" सूत्रस्थोऽवगन्तव्यः । छव् "नश्छव्यप्रशान्" । अट् "शश्छोऽटि" । झष् भष् "एकाचो बशो भष् झषन्तस्य स्ध्वोः" । उभयोरपि प्रत्याहारयोरेकत्रैव सूत्रे उपादानम् । अक् इक् उक् "अकः सवर्णे दीर्घः" "इको यणचि" "उगितश्च" । अण् इण् यण् "अणुदित्सवर्णस्य चाप्रत्ययः" "इणः षीध्वंलुङ्-

"ऊकालोऽच्" ( पा० सू० १।२।२७ )॥ ह्रस्वदीर्घप्लुत इति समाहारद्वन्द्वः। सौत्रं पुंस्त्वम्। वां काल इवेति। फलितार्थकथनमिदम्। विग्रहस्तु वः कालो यस्येति बोध्यः। ऊशब्देन स्वोच्चारणकालो लक्ष्यते। आद्ये इति। "निपाता आद्युदा-

शब्दरत्नम्।

सौत्रं पुंस्त्वमिति। यद्यपि इतरेतरयोगेऽपि सौत्रमेकवचनं वक्तुं शक्यं, तथापि "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति तत्र तत्र वार्त्तिकोक्तेर्लिङ्गस्य लौकिकत्वात्तद्व्यत्ययकल्पनमेवोचितं, न तु शास्त्रीयवचनव्यत्ययकल्पनमिति भावः। फलितार्थेति। ऊपदेन स्वोच्चारणकालसदृशलक्षणया कालशब्देन समानाधिकरणबहुव्रीहौ तत् फलतीति भावः। वां काल इति तु न विग्रहो व्यधिकरणत्वादत आह—विग्रहस्त्विति। काल इति जात्याख्यायामेकवचनम्। स्वोच्चारणकाल इति। स्वोच्चारणकालसदृश इत्यर्थः। सादृश्यमूलके कालयोरभेदाध्यवसाये तु यथाश्रुतमेव साधु।

भैरवी।

पुंस्त्वैकवचनयोरेकस्य सौत्रत्वाश्रयणे न विशेष इत्याशयेन शङ्कते—यद्यपीति। ऊपदेनेति। अस्य बहुव्रीहावित्यत्रान्वयः। लक्षणयेति। ऊपदस्येत्यादिः। अभेदाध्यवसायः-अभेदारोपः। अत एव 'मृगचपला' इत्यत्र पुंवद्भावः। यथाश्रुतमेव—सदृशे लक्षणां विनैव।

भावप्रकाशः।

यत्तु पुंस्त्वैकवचनयोः सौत्रत्वे न विशेष इति मान्यास्तत्प्राचामनुरोधेनेति ध्वनयन्नाह—यद्यपीति। तत्र तत्र-बहुषु सूत्रेषु। तदिति। पुंस्त्वेत्यर्थः। वचनेति। एकवचनादीत्यर्थः। एवञ्च तयोस्तत्त्वे विशेषः स्पष्ट एवेति भावः। ऊपदेनेति। बहुव्रीहावित्यत्रान्वयः। सदृशलक्षणयेति। तत्र लक्षणयेत्यर्थः। ऊपदस्येति भावः। सामानाधिकरण्ये हेतुरयम्। कालशब्देनेति। तेन चेत्यर्थः। मिथ इति शेषः। तत्-परममूलोक्तवाक्यबोध्यं भिन्नार्थरूपम्। एवञ्चाभेदे शाब्दे भेदः फलतीति परममूलं तत्प्रदर्शकमेव न विग्रहप्रदर्शकमिति भावः। यत्तु तथासति सूत्रे कालपदद्वयश्रवणापत्तेराह मूले फलितेतीति, तन्न, उष्ट्रमुखादिवत् निर्वाहात्। उच्चारणकालतुल्यकालपरकालपदेन वा कालो यस्येति बहुव्रीहिसम्भवात्। तस्यापि परम्परासम्बन्धेन सम्बन्धित्वाच्च। तद्ध्वनयन् तथैवाह—वामिति। यत्तु स्वोच्चारणकाललक्षणायामप्यनिर्वाहान्मूलं चिन्त्यमिति जगन्नाथस्तदेव चिन्त्यमित्याशयेनाह—स्वोच्चारणेति। वस्तुतो यथाश्रुतमपि मूलं सम्यगेवेत्याह—सादृश्येति। अभेदेति। अभेदारोपे इत्यर्थः। एतेन नामार्थत्वाद्भेदेनान्वयो न, अभेदेन तु बाधित एवेत्यपि तदुक्तमपास्तम्।

सरला।

लिटां घोऽङ्गात्" "इको यणचि"। अम् यम् ङम् "पुमः खय्यम्परे" "हलो यमां यमि लोपः" "ङमो ह्रस्वादचि ङमुण् नित्यम्"। अच् इच् एच् ऐच् "अचो रहाभ्यां द्वे" "इजादेश्च गुरुमतोऽनृच्छः" "वृद्धिरेचि" "वृद्धिरादैच्"। यय् मय् झय् खय् "अनुस्वारस्य ययि परसवर्णः" "मय उञो वो वा" "झयो होऽन्यतरस्याम्" "पुमः खय्यम्परे"। यर् झर् खर् चर् शर् "यरोऽनुनासिकेऽनुनासिको वा" "झरो झरि सवर्णे" "खरि च" "अभ्यासे चर्च" "शरोऽचि"। अश् हश् वश् झश् जश् बश् "भोभगोअघोअपूर्वस्य योऽशि" "हशि च" "नेड्वशि कृति" "झलां जश् झशि" "एकाचो बशो"। अल् हल् वल् रल् झल् शल् "अलोऽन्त्यस्य" "हलोऽनन्तराः" "आर्धधातुकस्येड्वलादेः" "रलो व्युपधाद्धलादेः संश्च" "झलां जश्" "शल इगुपधादनिटः क्सः"। इत्युदाहरणानि। अत्र सर्वेषां प्रत्याहाराणामष्टाध्यायीस्थमेकैकं सूत्रं संगृहीतम्। इतोऽन्यान्यपि सूत्राणि यथासम्भवं तत्संग्राहकान्यष्टाध्यायीतोऽवगन्तव्यानि।

व्यत्ययकल्पनमिति। सौत्रत्वात् साक्षाच्छास्त्रबाधकल्पनापेक्षया लौकिकलिङ्गबाधकल्पनस्योचितत्वादिति। सदृश इत्यर्थ इति। मूलकृता ऊपदस्य उकाराद्युच्चारणाधिकरणकाले लक्षणास्वीकारेऽपि तस्य

त्तः" ( फि० सू० १२ पा ४ ) इत्याकार उदात्तः, यच्छब्दस्तु फिट्सूत्रेण । अर्वाङ् इति । अकारोऽनुदात्तः ।

**तस्यादितः** ( पा० सू० १।२।३२ )॥ **अतन्त्रमिति** । "उपेयिवान्" इत्यत्रोपसर्ग इवाविवक्षितमित्यर्थः । ननु तत्र "ईयिवांसमतिस्रिधः" इत्यादिप्रयोगदर्शनाद्विवक्षाऽस्तु, इह त्वविवक्षायां प्रमाणं किम् ? इति चेल्लक्ष्यदर्शनं प्रातिशाख्यादिकं चेति गृहाण । तथा हि–'येऽराः' इत्यत्रैकारः, 'तनूनपात्' 'शचीपतिम्' इत्यत्र पदपाठे ऊदीतौ चार्धोदात्तौ इति सकलबह्वृचप्रसिद्धम् । तनूनपाच्छचीपतिशब्दयोः

शब्दरत्नम् ।

**फिट्सूत्रेणेति** । अन्तोदात्त इत्यर्थः । जसः सुप्त्वादनुदात्तत्वम् , "एकादेश उदात्तेन" (पा०सू०८।२।५) इत्येकार उदात्त इति भावः । **अनुदात्त इति** । फिट्स्वरेणान्तस्योदात्तत्वे शेषनिघातेनेति भावः । अभिमुखवाच्यव्युत्पन्नं प्रातिपदिकम् 'अर्वाङ्' इति ।

**अविवक्षितमित्यर्थ इति** । इदं च—वक्ष्यमाणं प्रातिशाख्यं यच्छाखायां,–तच्छाखास्थवैदिकोदाहरणविषयम् । **तनूनपाच्छचीपतिशब्दयोरिति** । अस्य यद्यपीत्या-

भैरवी ।

आद्युदात्त इत्यस्यानन्तरं फिट्स्वरेणेत्युपादाने आद्युदात्तः फिट्स्वरेणेत्यर्थः प्रतीयेत, तथा चानुपपत्तिः, तस्यान्तोदात्तत्वविधायकत्वादत आह—अन्तोदात्त इति । अर्वाङ्शब्दाद्याकारस्यानुदात्तत्वमुपपादयति—फिडित्यादिना । अव्युत्पन्नमिति । फिट्स्वरप्रवृत्तयेऽभिहितम् । तत्र किम्मानमिति चेत् ? "आङभिमुख" इति वेदभाष्योक्तिरेव ।

ह्रस्वग्रहणमतन्त्रमित्यनेन स्वरितार्द्धमात्रस्याद्यस्योदात्तत्वविधायकमिति प्रतीयते, एवञ्चासङ्गतिः, दीर्घादावप्यर्द्धमात्राया उदात्तत्वस्य लोके दर्शनात् । अस्य शास्त्रस्य सर्वशाखासाधारणत्वेन सर्वोपकारकव्याख्यानस्यौचित्यात् ; "अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढः" इति भाष्यविरोधश्चेत्यत आह—इदञ्चेति । इदम्-अविवक्षितमित्यादिकथनम् । लक्ष्यदर्शनमित्यनेन बोधितलक्ष्यं दर्शितं 'येऽरा'इत्यादि । तत्र तनूनपाच्छचीपतिशब्दयोरित्यादिना शङ्काग्रन्थ इति प्रतीयते, तदसङ्गतिः, शङ्काबोधकशब्दानुपादानादत आह—अस्येति । अस्य ग्रन्थस्येत्यर्थः ।

भावप्रकाशः ।

**अर्थ इति** । उदात्त इति मात्रानुषक्तस्येति भावः । मूले न्यूनतां परिहरति—**जस इति** । अनुदात्तत्वमुपपादयति—**फिडिति** । फिट्स्वरविधायकेन "फिषोऽन्त उदात्तः" इत्यनेनेत्यर्थः । एवमग्रे मूले च बोध्यम् । **अन्तेति** । 'अर्वाङ्' इत्यस्येति भावः । ननु तस्य व्युत्पन्नतया फिट्स्वराप्राप्तिरत आह—**अभिमुखेति** । "अर्वाङभिमुखे" इति वेदभाष्योक्तेरिति भावः । **अव्युत्पन्नमिति** । पाणिनेरव्युत्पत्तिपक्षस्यैवेष्टत्वादिति भावः । एतेन 'अर्वन्तम् अञ्चति' इत्यादिदण्ड्याद्युक्तिः प्रत्युक्ता । यत्तु लोकादौ दीर्घादावप्यर्धमात्राया एवोदात्तत्वदर्शनेन सकललोकवेदसाधारण्येनात्र ऋकशाखास्थलक्ष्याणां तत्प्रातिशाख्यवचनैः सिद्धत्वेन च तदन्यविषयत्वस्य वक्तुमौचित्येन व्यर्थपदत्वकल्पनासङ्गतिः । न च सर्वत्रास्य सर्वप्रातिशाख्यैकवाक्यता सम्भवति । एवञ्च मूलादिकं चिन्त्यम् । अत एवार्धह्रस्वशब्दोऽर्धमात्रायां रूढ इति भाष्योक्तिः । एवञ्च ह्रस्वशब्दस्य मात्रापरत्वं न तु स्वशास्त्रसङ्केतितपरत्वमिति योगोऽपि सम्भवतीति जगन्नाथः, तदाशयानवबोधेनायुक्तमिति ध्वनयितुमाह—**इदञ्चेति** । अविवक्षितमित्यर्थादिकथनं चेत्यर्थः । **वक्ष्यमाणमिति** । मूलकृतेति भावः । **विषयमिति** । विषयकमित्यर्थः । एवञ्चास्यार्थादिकथनस्य विशेषविषयत्वेऽप्यन्यत्र मूलकृतोऽपि तथैवेष्टम् । अत एव परममूलेऽतन्त्रमित्येवोक्तम् । तस्य च तत्पदयुक्तग्रहणं स्वशास्त्रे सङ्केतितरूपेणाबोधकं किन्त्वर्धमात्रामात्रबोधकमित्यर्थः । एवञ्च तदुक्तदोषो नेति भावः । मान्यास्तु–अविवक्षितमिति अवयुत्यानुवाद इत्यर्थः । एवञ्च दीर्घप्लुतयोरप्यर्धोदात्तबोधकमर्धशब्दो न समांशवाची किन्त्ववयववाची । स च क्वचिद्देदे समांशः क्वचिद्देदेऽर्धमात्रा तत्तत्प्रातिशाख्यानुरोधेनेति, लोके सर्वत्र भाष्य-

"उभे वनस्पत्यादिषु युगपत्" (पा०सू० ६।२।१४०) इति पूर्वोत्तरपदयोराद्युदात्तत्वे कृते "अनुदात्तं पदमेकवर्जम्" ( पा० सू० ६।१।१५८ ) इति शेषनिघातः। पूर्वपदभूत-योस्तनूशाची—एतयोरन्त्यस्य पाक्षिकं स्वरितत्वं प्रातिशाख्ये उक्तम्—

शब्दरत्नम्।

दिः। शेषनिघात इति। अस्य तथापीति शेषः। तेनोदीतौ अनुदात्तौ प्राप्नुत इति

भैरवी।

आद्युदात्तत्वे कृत इति वनस्पत्यादिगण एव ऊप्रत्ययान्तस्तनूशब्द आद्युदात्तो निपात्यते, "नभ्राड्" इति सूत्रे निपातितः 'तत्पुरुषे तुल्य' इत्याद्युदात्तो नपाच्छब्दः, एतयोः समासे समासान्तोदात्तत्वे प्राप्ते "उभे वनस्पत्यादिषु युगपत्" इत्यनेन पूर्वोत्तरपदयोः प्रकृतिस्वरे सति द्वयोरप्याद्युदात्तत्वप्राप्तिरिति भावः। एवं शचीशब्दः शार्ङ्गरवादिङीनन्तत्वादाद्युदात्तः, पतिश्च डतिप्रत्ययान्तत्वादाद्युदात्तः। तेन-शेषपूरणेन, अनुदात्तावेव प्राप्नुत इत्यर्थो लभ्यते।

भावप्रकाशः।

प्रामाण्यादर्धमात्रैवेति च व्यवस्था बोध्या। एवञ्च ह्रस्वग्रहणमतन्त्रमिति यथाश्रुतमेवेत्याहुः। उभयथाऽपि समं स्यादश्रुतत्वादित्येव सिद्धेऽर्धग्रहणमपि व्यर्थमित्यपास्तम्। ननु अग्रिम 'तनूनपात्'इत्यादि 'निघात' इत्यन्तमूलग्रन्थस्य पूर्वोत्तराभ्यामनन्वयेनासम्बद्धप्रलपितत्वापत्तिः। यद्यप्येतदुपपादयति क्रमेणेत्यवतरणेन पूर्वसम्बन्धो घटते तथाप्यन्ते किञ्चिच्छेषपूरणं विनाऽनिर्वाहेणावश्यकतया तत्र तस्य तदैकरूप्यायादावपि तथैवेत्याह—अस्येत्यादि। एवञ्च शङ्कोत्थितिरपि सुखतो भवत्येवेति भावः। एतेन यथाश्रुतमूलसामञ्जस्ये-ऽध्याहारे गौरवमित्यपास्तम्। तथ सति मध्यग्रन्थफलितमाह—तेनेति। शेषपूरणेनेत्यर्थः। प्राप्नुत इति। तावेव प्राप्नुत इत्यर्थः। मूलस्थनिघात इत्यस्याप्ययमेवार्थ इत्यनेन सूचितम्। अयम्भावः—यद्यपि शेषनि-घातस्यावग्रहे स्वरीत्याऽर्धमात्राकालव्यवायरूपायाः "परः सन्निकर्षः" इतिसूत्रबोधितसंहिताया अभावेन "नोदात्त" इति निषेधाप्राप्त्या एकपदीयतादृशसंहितामादाय "उदात्तादनुदात्तस्य" इति स्वरितः प्राप्त एवेति न तदावश्यकत्वम्।

"उदात्तपूर्वं नियतं विवृत्या व्यञ्जनेन वा।
स्वर्यतेऽन्तर्हितं न चेदुदात्तस्वरितोदयम्॥"

इत्यस्य तु न प्राप्तिः। प्रातिशाख्यमते संहितायाः पदप्रकृतिकत्वेन पदान्तात्पदादिभिर्यत्सन्दधदेकीकु-र्वन्नेति रचनां प्राप्नोति सा संहितेत्यर्थकेन पदान्तात्पदादिभिः सन्दधदेति यत्सेति संहितालक्षणेन पदपाठे-ऽप्येकपदेऽपि प्रायेण तस्या अभावात्: न च नेदं तदधिकारस्थं, तावताऽपि पूर्वोत्तरप्रातिशाख्यभाष्यसंद-र्भेण विवृतेस्तदधिकारस्थत्वेन तया व्यवहितमित्युक्त्या चास्य पदपाठेऽप्रवृत्तेः। तथा च तत्संहितापाठे एव प्रवर्तते। नन्वेवमस्तु तेन स्वरितः तस्य पुनरनुदात्तत्वं भविष्यति। तथाहि,

उदात्तपूर्वं स्वरितमनुदात्तं पदेऽक्षरम्।

इत्यनेनानुदात्तसंज्ञा 'इन्द्रो होता' इत्यादौ पदे एव क्रियते। तत्र तदा स्वरितपाठेऽपि सा संहितोपयो-गिनी। सर्वत्रैव च पद एकमुदात्तं स्वरितं वा शिष्टमनुदात्तमित्येतच्छास्त्रसिद्धोत्सर्गनिर्वाहाय आद्युदात्तम-ध्योदात्तान्तोदात्तोदात्तादिस्वरितमध्यस्वरितान्त्यस्वरितस्वरितद्व्युदात्तत्र्युदात्तसर्वानुदात्तानां पदेषु एकाद-शस्वराणां चोपपत्तये "उदात्तपूर्वं स्वरितम्" इत्यादीनि "न चेत्पूर्वं तथा गतात्" इत्यन्तानि चत्वारि तत्र सूत्राणि। मुख्योपयोगस्तु मूलसाधनद्वारा संहितास्वरसाधने। एवञ्च संहितावदवग्रहेऽपि निघातस्यैव श्रवणं स्यादिति तदावश्यकत्वमेवेति वाच्यम्। स्वतन्त्रपदपाठतोऽवग्रहे वैलक्षण्येऽपि संहितात्वाभावस्य तुल्य-

सरला।

कालपदेन सामानाधिकरण्यान्वयानुपपत्तिस्तदवस्थैवेति सदृशपर्यन्तं लक्षणाऽङ्गीक्रियते। अकाराद्युच्चा-रणाधिकरणकाले उकाराद्युच्चारणाधिकरणकालसदृशत्वं सम्भवति इति न सामानाधिकरण्येनान्वयानु-पपत्तिरिति।

"जात्यवद्वा तथावाऽन्तौ तनूशचीति पूर्वयोः" इति ।

शब्दरत्नम् ।

भावः । जात्यवद्वेति । पूर्वपदभूतयोस्तनूशचीशब्दयोरन्तौ जात्यवदिति ।

अतोऽन्यत्स्वरितं स्वारं जात्यमाचक्षते पदे ।

भैरवी ।

स्वरितत्वविधायकं प्रातिशाख्यमाह—मूले जात्यवदित्यादि । जात्यवदितिवाक्यस्थपूर्वशब्दः प्रकरणात्पूर्वपदपर इत्याशयेनाह—पूर्वपदेति । जात्यलक्षणघटकं यद् अत इति प्रतियो-

भावप्रकाशः ।

त्वेन तदनुपयुक्तत्वेन केवलव्यवहारार्थं संज्ञाकरणेऽपि तच्छ्रवणस्य दुर्घटत्वात् । संज्ञा हि 'इन्द्रो होता' इत्यादौ कार्यद्वयमूलिका, 'पुरोहितं बृहस्पतिः' इत्यादौ व्यवहारमात्रसाधिकेति प्रकृते कार्यसाधकत्वेऽप्यवग्रहे न तत्साधिका । अन्यथाऽत्र प्रातिशाख्येन निर्वाहेऽप्यन्यत्रावग्रहे तथापाठासङ्गत्यापत्तेः । एवञ्च स्वरितप्राप्त्यादि सम्यगेव । तथाऽपि—

यथा सन्धीयमानानामनेकीभवतां स्वरः ।

उपदिष्टस्तथा विद्यादक्षराणामवग्रहः ॥

इत्यनेनावग्रहे विशिष्य संहितवद्भावविधानेन "नोदात्त" इतिनिषेधापत्तिः । यदि तु तेनैवोदात्तपूर्वं नियतमिति स्वरितोऽस्तु इत्युच्यते तर्हि तत एव "न चेदुदात्तस्वरितोदयम्" इति तच्छेषनिषेधप्राप्तिः सुदृढैवेति—निघात एव श्रूयेतेति सम्यगेवेति । अत एव घट्टकुटीप्रभातन्यायापत्त्या द्वाभ्यामपीदं नोट्टङ्कितमत एव च शेषपूरणं कृतम् । तदेतद् हृदि निधाय मूले पूर्वपदेत्याद्युक्तम् । तदेव ध्वनयन्नाह—जात्यवद्वेतीति । यथा सन्धीयेत्यस्यापवादोऽयम्, पद्यादींस्त्विवतिवत् तदुत्तरमेतयोः पाठात् । पद्यादींस्त्विवत्यतो द्व्युदात्तानामित्यस्य पद्येत्येकदेशस्य चानुवृत्तिः । परिग्रहे त्वित्यत उदात्तस्वरितौ यदि परावित्यर्थकं तौ चेत्स्वरौ पराविति चानुवर्त्तते यमितवै इवेति वारणाय पद्यादीनित्यत्र वृत्तिकृताऽनुवर्त्तितत्वात् । तथा च द्व्युदात्तानां मध्ये तनूशचीत्यनयोः पूर्वपद्ययोः सतोस्तौ अर्थात्तयोरेव तौ जात्यवत् , असंहितवत्संहितवद्वा तयोः परत्वे जानीयादित्यर्थः । द्व्युदात्तानामित्यनुवृत्तिस्तु "तनूनपात् पथऋतस्य", "शचीपते शचीनाम्"इत्यादिव्यावृत्त्यर्था । तत्फलितमाह पूर्वपदेत्यादिना । एतेन तनूशचीतिपूर्वयोः सतोर्द्व्युदात्तानामन्तौ जात्यवदित्यादीत्यर्थः । षष्ठ्यन्तत्वं तु न, नपात्पतिशब्दान्तयोरप्राप्त्याऽव्याप्त्यापत्तेः प्रातिशाख्यभाष्ये तथैव स्वरसाच्चेत्यपास्तम् । तद्भाष्यस्वारस्येन सप्तम्यन्तत्वेऽप्युत्तरपदान्तयोः"उदात्तादनुदात्त" इति स्वरितस्यैव सत्त्वेनोत्सर्गसमानदेशा इति न्यायेनास्याप्राप्तेश्चाऽलक्ष्यत्वेनाव्याप्त्यभावेन तथा व्याख्यानासङ्गतेः । अत एव तत्र जात्यवदेवाध्ययनमिति नियमबोधनेनान्त्ययोस्तथासत्त्वेऽपि तयोरन्यथाध्ययनं तस्य मूलोक्तावतरणं च सङ्गच्छते इति भावः । इतीत्यस्य वेत्यर्थ इत्यर्थेनान्वयः । जात्यवत्पदार्थं वक्तुं तद्घटकजात्यपदार्थमाह—अतोऽन्यदिति ।

उदात्तपूर्वं स्वरितमनुदात्तं पदेऽक्षरम् ।

इति पूर्वोक्त्या । अतः—प्रकृतादुदात्तपूर्वात्स्वरितानुदात्तादन्यत् । पदे इत्यनुवृत्त्यैव सिद्धे पुनः पदेग्रहणादेकस्मिन्नेवाखण्डपदे शास्त्रदृष्टम् । स तु सखण्डेऽपि 'पुरोहितम्' इत्यादौ शास्त्रदृष्टः । अत एव 'अग्निभिः' इत्येकादशमध्ये गणितम् । तत्र स्वारम् । स्वार्थेऽणा स्वरं व्यञ्जनयुताच्सम्बन्धिनं वा, उभयथाऽप्यार्षत्वादैज् न । स्वरितं जात्यं तत्संज्ञकमित्याचक्षते व्याडिप्रभृतयः । स्वः क कन्येत्याद्युदाहरणानि । संज्ञाफलं तूभाभ्यां तु परमित्युत्तरसूत्रवाक्यार्थज्ञानमपि । जात्या स्वरूपेणैवोदात्तानुदात्तसङ्गतिं विना जातः संधिकार्याविषयको जात्यः । तथा च योगरूढोऽयम् । एतेन क्षैप्रादीनां व्यावृत्तिः । उदात्तपूर्वस्य स्वरितानुदात्तस्य तुअतोऽन्यदित्यनेन व्यावृत्तिः । पदे इत्यनेन "अग्निमीळे" इत्यादीनां व्यावृत्तिः । एवञ्चोदात्तस्वरितयोः स्वरितो वा उदात्तादनुदात्तेत्यविहितः स्वरीत्या उदात्तपूर्वः, अनुदात्तोदये पुनःइकारयोश्च प्रश्लेषे इत्याद्यविहितः प्रातिशाख्यरीत्या "तित्स्वरितम्" "न्यङ्स्वरौ स्वरितौ" "तिल्यशिक्य"इत्यादिना स्वरूपेणैव विहितो नानुदात्तस्थानिकोऽपूर्वोऽनुदात्तपूर्वो वा यः स जात्य इति फलितम् । तस्य चैकपदे एव शास्त्रदृष्टत्वेनोदात्तस्वरितपरत्वाभावेनोदात्तश्रुतिः । अयमेव तैत्तिरीयप्रातिशाख्ये नित्यपदेन व्यवहृतः ।

### शब्दरत्नम् ।

इति लक्षितो जात्यः । उदात्तस्वरितपूर्वस्वरितादन्य एकपदे स्थितः स्वरितो जात्य इति तदर्थः । तेन तुल्यं तद्वत् , अस्यान्त उदात्तश्रुतिक इत्यर्थः । **तथा वा**—असंहितवद्वा संहितवद्वेत्यर्थः ।

पद्यादींस्तु द्व्युदात्तानामसंहितवदुत्तरान् ।

### भैरवी ।

गिबोधकं तत्स्वरूपजिज्ञासाशान्तये प्रतियोगिनं दर्शयति—उदात्तेति । उदात्तश्च स्वरितश्चो-दात्तस्वरितौ, उदात्तस्वरिताभ्याम्पूर्वः उदात्तस्वरितपूर्वः, उदात्तस्वरितपूर्वश्चासौ स्वरितश्चेति समासः । तस्मादन्यः स्वरित इत्यर्थः । एवञ्च यः स्वरित उदात्तपरकः स्वरितपरको वा तस्या-न्तानुदात्तश्रुतिकस्य स्वरितस्य अत इत्यनेन बोधनमित्युक्तम्भवति । तद्भिन्नस्योदात्तस्वरि-तपरत्वाभावे सति जात्यपदव्यवहार्यत्वमिति लभ्यते । पदे इत्यस्य तात्पर्यार्थमाह-अस्येति । इत्यर्थ इति । पर्यवसितार्थः । तथा वेत्येतद्व्याचष्टे—असंहितवदिति । जात्यवद्भावासंहितवद्भा-वयोर्विकल्पार्थो वाशब्दः । द्वितीयकोटौ वाशब्दोपादानेन विकल्पेऽर्थात्तत्कोटिविपरीता को-टिर्लभ्यते, तेन संहितवदित्यस्य लाभः । तथाशब्देनासंहितवदित्यस्य प्रतिपादने साधकमाह-पद्यादींस्त्विति ।

### भावप्रकाशः ।

सयकारं सवकारं त्वक्षरं यत्र स्वर्यते ।
स्थिते पदेऽनुदात्तपूर्वेऽपूर्वे वा नित्य इत्येव जानीयात् ॥ इति ।

तत्रैतावान्विशेषः-तैत्तिरीये उदात्तस्वरितपरत्वेऽप्युदात्तश्रुतिरेव, अत्र त्वनुदात्तश्रुतिस्तत्रान्यत्रोदात्तश्रु-तिरिति । तत्फलितमाह-**उदात्तस्वरितेति** । उदात्तस्वरितौ पूर्वौ यस्मात्तस्मात्स्वरितादन्य इत्यर्थः। तत्राद्यः प्रसिद्धस्तथा शास्त्रविहितश्च । अन्त्यस्तु यद्यपि तथाशास्त्राविहितस्तथापि संहितायां पदद्वयमादाय 'यो ह्यः' इत्यादौ प्रसिद्धः । एवञ्चानेनात इत्यस्यार्थोऽन्त्येनैवार्था बोध्यते । अत एव तयोरनुपादानम् । **एकपदे**-अखण्डे। **स्थितः**-शास्त्रदृष्टः । यद्वोदात्तस्वरिताभ्यां पूर्वो यः स्वरितस्तस्मादन्य इत्यर्थः । एवञ्चैकपदे स्थित इत्यस्यै-वेदमर्थकथनमिति अतोऽन्यदित्यस्य प्रकृतादुदात्तपूर्वस्वरितानुदात्तादन्य इत्यर्थः पूरणीयः। यद्वाऽतोन्यदित्य-स्यैवेदमन्यवहितोक्तमर्थकथनम्। उदात्तपूर्वस्वरितानुदात्तादन्य इति पूरणं तु सममेव । यद्वा उदात्तस्य स्वरितः हेतुहेतुमद्भावः षष्ठ्यर्थः । तस्य यः पूर्वः प्रथमस्थानी अनुदात्त इति यावत् । तद्रूपस्तत्संज्ञको यः स्वरित-स्तस्मादन्य इत्यर्थः । यद्वा उदात्तश्च स्वरितश्चोदात्तस्वरितौ तौ पूर्वं पदकाले यस्मिन् तत्पदमुदात्तस्वरितपूर्वं तस्य यः स्वरितस्तस्मादन्य इत्यर्थः। यद्वा उदात्तहेतुकः स्वरितस्तद्विधिः स पूर्वं उत्पादको यस्य स्वरितस्य तस्मादन्य इत्यर्थः । एवं पक्षत्रयेणातोऽन्यद् इत्यस्य तद्भाष्योक्त एवार्थ उक्तः। स्पष्टं तथैव वक्तव्ये एवमुक्तिस्तु सकलप्रागुक्तार्थपरिग्रहाय । स च व्याख्याने एव स्पष्टः । एवं षड्धा निर्वाहेऽन्त्योऽप्रसिद्धोऽप्रकृतश्चोदात्त-पूर्वं स्वरितमित्येव हि प्रकृतमिति चिन्त्यमिदं लेखकप्रमादो वा कल्प्य इत्युक्तिर्नादर्त्तव्येति दिक् । **तदर्थः** तत्फलितार्थः । पदकालिकं जात्यस्वरूपं कथयन्सिंहावलोकनन्यायेन पदे इत्यस्य तात्पर्यार्थमाह-**अस्यान्त इति** । जात्यस्योत्तरार्ध इत्यर्थः । अत एवास्यान्त इत्येकवचनोपन्यासः सङ्गच्छते । **इत्यर्थ इति** । इति परमार्थ इत्यर्थः । असंहितवद्वेत्यस्यापीत्यर्थ इत्यत्रान्वयः । जात्यवदसंहितवद्भावयोर्मिथो विकल्पार्थकोऽयं वाशब्दः । द्वितीयेन तेन तूभयोर्विकल्पेन पक्षे संहितवद्भावः प्राप्यते । तदाह—**वासंहितवदिति** । पत-देव ध्वनयितुं पुनरपि व्याख्याने द्विर्वेत्युक्तम् । ननु कथमुक्तार्थलाभोऽत आह-**पद्यादीनिति** । तस्य च "यथा सन्धीयमाना"इत्युत्तरं पाठ इत्यपि बोध्यम् । अवग्रहविषयद्विखण्डयुक्तपदसमूहार्धं पूर्वमुत्तरं च पद्यम् । तथाच द्व्युदात्तानां पदानामुत्तरान्पद्यादीनसंहितवज्जानीयात्स्वरविधौ तयोः परत्वे इत्यर्थः । यथा सन्धीत्यस्यापवादः । 'अन्वेतवै' इत्यस्य लक्ष्यम् । अत्र वै इत्युदात्तपरत्वेन ए इत्यस्य संहितवद्भावेन प्राप्तप्रचयो न, अनेन निषेधात् । 'अक्षपते' इत्यादिवारणाय द्व्युदात्तानामिति । 'यमितवै इव' इति वारणाय

तथा स्वरितार्द्धस्योदात्तत्वे प्रातिशाख्यमपि—

एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः ।

**शब्दरत्नम् ।**

इत्युत्तरमस्य पाठात् । संहितवदित्यनेन केवलमनुदात्तत्वम् । असंहितवदित्यनेनार्धानुदात्तस्वरितत्वमिति तद्भाष्ये स्पष्टम् । तथेति । लक्ष्यदर्शनवत्प्रातिशाख्यमपि प्रमाणमस्तीत्यर्थः ॥

**भावप्रकाशः ।**

तयोः परत्वे इति । 'अश्वपते' इत्यादौ तु 'गौः' इत्याद्युदात्तपरत्वमस्ति । अस्य—जात्यवदित्यस्य । नन्वेवमप्याभ्यां कयोरतिदेशः, किञ्च जात्यवदित्यनेन तस्यातिदेशः स्यान्न च नेष्टः, तथाध्ययनाभावात् । किञ्च त्रयाणामैच्छिको विकल्प उत व्यवस्थितः, अन्त्येऽपि कस्य सिद्धान्तिमतत्वम्? अतो जात्यवद्भावस्य तथात्वं ध्वनयितुमेतत्सूत्रीयक्रममुल्लङ्घ्य यथासन्धोत्याद्युत्सर्गापवादसूत्रक्रमानुरोधेनाह—संहितवदित्यादि । यथैतत्संहितायामुदात्तस्वरितपरत्वेन "न चेदुदात्तस्वरितोदयम्" इति निषेधेन "उदात्तपूर्वं स्वरितम्" इति जातानुदात्तस्यैव श्रवणम्, तथेहाप्यतिदेशात्तथाप्राप्तमिति भावः; तदाह—केवलमिति । असंहितवदिति । प्रागुक्तरीत्या प्राप्तसंहितवद्भावस्यानेन निषेधे संहिताभावात्तद्विधिनिषेधयोरुदात्तपूर्वमित्यनयोः "नोदात्त" इतितन्निषेधस्य च तत्परत्वाभावादुपयोगाभावेनानुदात्तसंज्ञाया अप्यभावाच्चाप्राप्तावप्युदात्तादनुदात्तस्येत्येकपदीयतादृशसंहितामादाय स्थितस्य तस्य तल्लक्ष्ये यथोदात्तश्रुतिकत्वमेवमत्रापि प्राप्तम् । न चावग्रहेऽपि तत्परत्वमस्त्येवेति वाच्यम्, सांहितिकयोरेव तत्परत्वापरत्वयोः प्रातिशाख्यादितः प्रतीतेः । अन्यथा 'तिष्ठो३ यथाकन्या वारयति' इत्यादावपि पदकाले तथा पाठापत्तेः । तदा 'ईळे' इत्यादौ यथा निघातस्तथाऽन्यत्र स्पष्टमिति भावः । तदाह—उदात्तेति । सर्वांशोदात्तेत्यर्थः । जात्यवदिति । यद्यपि जात्यस्वरूपमन्यथोक्तं तथापि तौ चेदित्याद्यनुवृत्त्या तयोः परत्वे संहितायां यथा तस्यान्तानुदात्तश्रवणम्, एवमतिदेशेनात्रापि भवति । अत एव यथा जात्यस्यान्तो निहन्यते उदात्ते परभूते, एवं तनूशचीपदयोः पूर्वपदयोः सतोरन्तौ निहन्येते इति फलिततद्भाष्योक्तिः सङ्गच्छते । अयम्भावः—अत्र स्वरितस्योदात्तपूर्वत्वेन तदन्यत्वाभावात्तत्त्वाभावेनातिदेशसाफल्यम्, तथा चोभयरीत्या स्वरितत्वविधेयेऽपि सन्धिजात्यस्वरितयोस्तयोः परत्वेऽर्धानुदात्तश्रवणमन्यत्रोदात्तश्रुतिः । अत्र च मानं "तस्यादित" इति सूत्रम् "अनुदात्तः परः शेषः" इति,

> जात्योऽभिनिहतश्चैव क्षिप्रः प्रश्लिष्ट एव च ।
>
> एते स्वाराः प्रकम्पन्ते यत्रोच्चस्वरितोदयाः ॥

इति च प्रातिशाख्यं च । अन्तभागानुदात्तश्रवणमेव कम्प इत्युच्यते बह्वृचैः, उदात्तपूर्वस्य तस्य तु तयोः परत्वे नोदात्तेतिनिषेधेनोदात्तस्वरितेति सन्नतरेण चानुदात्तश्रुतिः । अन्यत्र तूदात्तश्रुतिः पूर्वपूर्वोपमर्दनोत्तरोत्तरोपन्यासवत् । अस्य चरमोपन्यासेनायमेवात्र जायते, पठ्यते च तथेति ध्वन्यते । अत एव "पृथग्वासङ्करणं तुल्ययोगनिवृत्त्यर्थम्, तेनैतत्सिद्धं जात्यवदेवाध्ययनं यथा स्यादितरयोर्मा भूत्" इति तद्भाष्ये उक्तम् । इतरयोरित्यस्य संहितवदसंहितवद्भावलब्धस्वरयोरित्यर्थः । एवं च श्रुतिकत्वमित्यग्रे प्राप्तमपि बाधित्वेति अनुदात्तत्वमित्यग्रे प्राप्तं बाधित्वेति बोध्यमिति शेष इति च, तदाह—अर्धानुदात्तस्वरितत्वमिति तद्भाष्ये स्पष्टमिति । तदेव भवतीति तद्भाष्ये स्पष्टमित्यर्थः । तच्चोक्तमेव । नन्वव्यवहितप्रातिशाख्यापेक्षयाऽपि सादृश्ये गृह्यमाणे सादृश्यं दुर्वचम्, तेन स्वरितविधानेऽपि तदर्धस्य तत्त्वानुक्तेः । 'तनूनपात्' इत्यादिस्थानेऽस्य वक्ष्यमाणरीत्या मध्ये तदुक्त्या प्रतिज्ञाविरोधापत्त्याऽसम्बद्धत्वापत्तेश्च । यथाकथञ्चित्तेनैव सादृश्ये गृह्यमाणेऽपि प्रातिशाख्यान्तरमपीत्युचितम्, प्रतिज्ञातार्थस्य तावतैव सिद्ध्याऽस्यानुपयोगश्च । लक्ष्यापेक्षया तत्त्वे गृह्यमाणे तु 'तनूनपात्' इत्यादिलक्ष्यविशिष्टोक्तप्रातिशाख्यानुपयोगः, तेन व्यवधानेन दूरान्वयापत्तिश्चेत्यत आह—लक्ष्येति । वैचित्र्यार्थमुक्तद्वितीयलक्ष्यसिद्ध्यर्थतया तस्यावश्यकस्योक्तत्वाद् दूरान्वयोऽभीष्ट एवेति भावः । वस्तुतस्तु लक्ष्यदर्शनवदित्यस्य तन्त्रेण लक्ष्यसम्बन्धिदर्शनवदित्यर्थवत् लक्ष्यं दृश्यतेऽनेनेति व्युत्पत्त्या तत्संस्कारकप्रातिशाख्य-

तस्योदात्ततरोदात्तादर्धमात्रा, ऽर्द्धमेव वा ॥
अनुदात्तः परः शेषः, स उदात्तश्रुति,र्न चेत् ।
उदात्तं वोच्यते किञ्चित्स्वरितं वाऽक्षरं परम् ॥ इति ।

अस्यार्थः—पूर्वयोरुदात्तत्वानुदात्तत्वयोरेकत्र समावेशे सति स्वरितो बोद्ध्यः । तस्य स्वरितस्य स्वतन्त्रोदात्तापेक्षयोदात्ततराऽर्द्धमात्रा बोद्ध्येति । 'क्व वोऽश्वाः' इत्यादि ह्रस्वाभिप्रायम् । "अर्द्धं वा" इति दीर्घाभिप्रायम् । अनेनैव ह्रस्वस्यापि सङ्ग्रहाद्व्यापकत्वादिदमेवादर्तव्यमिति सूचयितुमेवकारः । 'अनुदात्तः' इत्यादि परिशेषसिद्धार्थकथनम् । सः-शेषः उदात्तश्रुतिः स्यात् । किमविशेषेण ? नेत्याह—न चेदित्यादि । उदात्तस्वरितपरं विहायेत्यर्थः । शाकल्योऽप्याह—

"अप्राकृतस्तु यः स्वारः स्वरितोदात्तपूर्वगः ।

---

शब्दरत्नम् ।

**स्वतन्त्रोदात्तापेक्षयेति** । श्लोके 'उदात्तात्' इति स्वतन्त्रोदात्तादित्यर्थकमिति भावः । **एवकार इति** । तच्छाखायां दीर्घादिष्वपि समांशोदात्तकस्वरितस्यैव पाठादिति भावः । एतेनैतौ पक्षौ वैकल्पिकावित्यपास्तम् । वाशब्दस्तु पादपूरणायेति बोद्धयम् । **अप्राकृत**

भैरवी ।

स्वतन्त्रोदात्तादित्येतल्लाभायाह—श्लोक इति । ननु लौकिकप्रयोगे इतरशाखायाञ्च समांशोदात्तकत्वन्नास्तीति नियमानुपपत्तिरत आह—तच्छाखायामिति । ऋक्शाखायामित्यर्थः । एतेन—एवकारस्योक्तार्थसूचनफलकत्वेन । एतौ पक्षौ—अर्द्धमात्राऽर्द्धमेव वेति पक्षौ । ननु यदि नैतौ वैकल्पिकौ तदा वाशब्दस्य वैयर्थ्यमत आह—वाशब्द इति । मूले—अप्राकृत इति ।

भावप्रकाशः ।

वदित्यप्यर्थेन विशिष्टतुल्यत्वे लब्धे विशेषणविशेष्योभयसाम्यं लब्धम् । एवञ्च यथा 'येऽराः' इति शुद्धलक्ष्यदर्शनं सन्धिस्वरितस्य तथात्वे मानम्, उदात्तपूर्वकस्वरितस्य तु प्रातिशाख्यपूर्वकलक्ष्यदर्शनं तथात्वे तथा । जात्यस्य तु शुद्धमुक्तं प्रातिशाख्यमेव यथाकथञ्चित्तथात्वे तथा, एवं सन्धिस्वरितस्य तथात्वे शुद्धं प्रातिशाख्यमपीत्यर्थः फलितः । अपिः शाकल्यसङ्ग्राहकः । लक्ष्यदर्शनमित्यादिमूलस्यापि शुद्धलक्ष्यदर्शनं प्रातिशाख्यादिशब्दयोर्बहुव्रीहिणा तन्मूलकं लक्ष्यदर्शनं चेत्यर्थः । चः शुद्धप्रातिशाख्यादिसमुच्चायकः । अत एव तथेत्यादि पुनः प्रतिज्ञासङ्गतिः । अन्यथा 'येऽराः' इति ग्रन्थादग्रे 'तनूनपात्' इत्यादिग्रन्थवदेकाक्षरेत्यादिग्रन्थौचित्येन तदसङ्गतिः स्पष्टैव । तथा च नानुपयोगदूरमात्रान्वयप्रतिज्ञाभङ्गतद्विरोधासम्बद्धत्वानीति न कोऽपि दोष इति बोध्यम् । ननु स्वतन्त्रोदात्तेति कस्यार्थोऽत आह-श्लोके इति । एवञ्च न शेषपूरणेन तस्याशङ्कनीयं वैयर्थ्यमिति भावः । नन्वेवं तस्यानुदात्तत्वं स्यादिति वाच्यम्, नीचैर्ग्रहणसामर्थ्येनात्यन्तनीचभागस्य ग्रहणात् महासंज्ञया शिक्षादिप्रसिद्धस्यैव ग्रहणाच्च । न चैवम् "उच्चैरुदात्तः" इत्यादीनां वैयर्थ्यम्, भाष्यकृता प्रत्याख्यातत्वेनेष्टापत्तेरिति दिक् । ननु लोकादौ समांशोदात्तकत्वाभावेन नियमानुपपत्तिरत आह-तच्छाखायामिति । दीर्घादीति । तद्घटितलक्ष्येष्वित्यर्थः । एतेन न्यूनातिरिक्तांशकव्यवच्छेदः । अत एव व्यापकत्वमिति भावः । अत एवाह-एतेनेति । तदर्थकैवकारपाठेनेत्यर्थः । नन्वेवं वा वैयर्थ्यमित्यत आह—वेति । एतेनार्धमात्राऽर्धमेव वेति पक्षयोः पाणिनिकृतसामान्यलक्षणशाकल्यादिकृतविशेषलक्षणाभिप्रायकतया व्यवस्थितेरिदं न स्वोक्तार्थसाधकम् । एवकारो विशेषलक्षणकृतायाः सामान्यलक्षणव्यावृत्तेरनुवादाय, वाशब्दो व्यवस्थितविकल्पार्थं इति जगन्नाथोक्तमपास्तम् । उक्तप्रातिशाख्यस्य तत्त्वादेव सर्वस्य विशेषपरत्वेन सामान्याभिप्रायकत्वस्य दुर्वचत्वात् । अप्राकृत इतीति । स्वरितो द्विधा—प्राकृतोऽप्राकृतश्च । तत्र प्रकृत्या स्वभावेनोदात्तानुदात्तयोर्यथाकथञ्चित्सङ्गतिं विना जातो यो जात्यनित्यपदव्यवहार्यः स आद्यः, स्पष्टश्चेदं "पदान्तश्च व्यञ्जनपरः प्राकृतः" इतितैत्तिरीयप्रातिशाख्यभाष्ये त्रिभाष्य-

उदात्तायार्द्धमस्याथ शिष्टं निघ्नन्ति कम्पितम् ॥ इति ।

शब्दरत्नम् ।

इति । स्वरितविशेष इत्यर्थः । स्वार इति । स्वर एव स्वारः । स्वार्थेऽण् । स्वरितो-भैरवी ।

स्वरितो द्वेधा-अप्राकृतः, प्राकृतश्च । आद्यः "उदात्तस्वरितयोर्यणः" इति "स्वरितो वाऽनुदात्ते" इति "तित्स्वरितम्" इति सूत्रविहितः । द्वितीयः "उदात्तादनुदात्त" इति विहितः । स्वारशब्दो न स्वरभक्तिपर इत्याशयेनाह—स्वर एवेति । न च 'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इत्यत्र यथा स्वरशब्दस्य द्वारादिगणे पाठेनैजागमो भवति, तथाऽत्रापि स्यादिति वाच्यम्, स्वरशब्दो द्वेधा-अव्युत्पन्नो व्युत्पन्नश्च । व्युत्पत्तिश्चास्यान्यत्र दर्शिता 'स्वयं राजन्ते ते स्वराः'

भावप्रकाशः ।

रत्ने । तद्भिन्नः सर्वोऽप्राकृतः, स च सन्धिस्वरितः उदात्तपूर्वस्वरितश्चेति भावस्तदाह—स्वरितविशेष इति । अत एवोक्तप्रातिशाख्येनैकवाक्यतापीति भावः । स्वरभक्तिभ्रमनिवृत्तये व्याचष्टे—स्वर एवेति । सौवर्य इति वदैज् तु न, आर्षत्वात् । अतोऽन्यदित्यादावेतद्युक्तेरावश्यकत्वेनैवमुक्तम् । एतेनैजागमापत्त्या स्वारपदवैयर्थ्यापत्त्या चेदं चिन्त्यम् । तस्मात्स्वार इति स्वरितनामेति मन्दोक्तमपास्तम्, उक्तयुक्तेः, प्रत्युत शिंशपान्यायेन तद्वैयर्थ्यापत्तेश्च । अत एव तथासत्त्वेऽपि तथा न व्याख्यातम्, वैयर्थ्यं तु न तस्य, अप्राकृतत्वस्याप्यतिप्रसक्तत्वेन स्पष्टार्थं सामान्योक्तेरावश्यकत्वात्, तथा मुनिशैलीसत्त्वाच्चेत्याहुरिति दिक्। वस्तुतस्तु स्वार इति स्वरितसंज्ञैव "इति स्वारनामधेयानि" इति प्रातिशाख्योक्तेः ।

नादानुस्वारयोः पूर्वः स्वारभागुच्चवत्स्थितः ।
स्वर्यतेऽस्मात्स्वरावेव नादानुस्वारकावपि ॥ इति ।

स्वारो नाम स्वरितः,

स्वारः स्वारपरः कम्पो ह्रस्वार्धं विनिहत्य तु ।

इति व्यासशिक्षोक्तेः ।

कम्पौ तु द्विविधावेव स्वारोच्चाविति निश्चितौ ।
संहितायां तयोः स्वारानुच्चस्त्वारण्यके मतः ॥

इति पाणिनिशिक्षोक्तेः ।

स्वारमुच्चमिवोर्ध्वं च ह्यनामिकान्ते त्वन्त्ययोः ।
स्वारकं ये स्वरावेतावनामिकान्तमाद्ययोः ॥

"द्वियम एके द्वियमपरे ता अणुमात्राः" इति शम्भुशिक्षोक्तेश्च । प्रातिशाख्यसूत्रे—"यमो नाम स्वरितः" इति । तद्भाष्यं—द्वौ यमौ यत्र दृश्येते नैरन्तर्येण वर्तेते नीचोच्चस्वारसम्पन्नाम्" इति । प्रातिशाख्यं च—

नित्योभिनिहितःस्वारौ यद्यदीत्यादिषु त्रिषु ।
न कम्पयेत् नोच्चपर उच्चकम्पो विधीयते ॥
शेषस्योदात्तता वा स्यात्स्वारता वा व्यवस्थया ।
पदान्ते च तथा कम्पा अन्ततो निहताणुकाः ॥

शेषस्योदात्तता । अणुर्नाम मात्रायाश्चतुर्थो भागः । सर्वसम्मतशिक्षायामपि—

स्वरिते परभूते च स्वरितस्यार्धमात्रकम् ।
नीचं कुर्यात्सकम्पं च यथा दीर्घं तमुच्चरेत् ॥

व्यासशिक्षायामपि—

इन्द्रियाविषयो योऽसावणुरित्युच्यते बुधैः ।
चतुर्भिरणुभिर्मात्रः परिमाणमिति स्मृताः ॥
अदीर्घं दीर्घवत्कुर्याद्द्विस्वरं यत्प्रयुज्यते ।
पूर्वस्वारस्य कम्पः स्यात्तैत्तिरीयेषु पठ्यते ॥

उदादाय-उदात्तं कृत्वा। 'अर्द्धह्रस्वशब्देनार्द्धमात्रा लक्ष्यते' इति हरदत्तादिग्रन्थास्तु मतान्तरपरतया कथञ्चिन्नेयाः। क्वेति। किमोऽत्, तित् स्वरितम्। व

शब्दरत्नम्।

दात्ताभ्यां पूर्ववर्णग इत्यर्थः। लक्ष्यते इति। तदुक्तं भाष्ये—"अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढः" इति। हरिरप्याह—

"प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयते" इति।

अनुपात्तमपि अर्द्धमात्रारूपं प्रमाणमेवोपलक्ष्यत इत्यर्थं तस्य हेलाराज आह। एवञ्च लोकेऽन्यशाखासु च दीर्घादिष्वप्यर्धमात्रैवोदात्तेति भावः। मतान्तरेति। प्रातिशाख्योक्तमतापेक्षयेतरवेदलोकसाधारणमतान्तरेत्यर्थः। कथञ्चिदिति। लक्ष्यते

भैरवी।

इति। द्वारादिगणे स्वग्रामस्वाध्याययोः पाठो नियमार्थः-स्वशब्दादेश्चेदेतयोरेवेति। अन्यथा स्वशब्दस्य द्वारादिगणे पाठेन सिद्धे तद्वैयर्थ्यं स्पष्टमेव। एवञ्च योऽव्युत्पन्नस्तस्य स्वार इति रूपम्। तेनार्थवत्स्वशब्दघटितनियमेनैचः प्राप्त्यभाव इत्याशयात्। बहुव्रीहिभ्रमवारणायाह—स्वरितोदात्ताभ्यामिति। मूले कम्पितमिति—क्रियाविशेषणम्। कम्पो निघातविशेषः। हरदत्तग्रन्थो भाष्यसम्मतार्थाभिधायकत्वेन युक्त एवेति मूलमसङ्गतमिति ध्वनयितुं तत्रार्थे भाष्यसम्मतिमाह—तदुक्तमिति।

अनुपात्तम्—शब्दशक्तिप्रतिपाद्यम्। तस्य-हरिग्रन्थस्य। तथासति यत्सिद्धन्तदाह-एवञ्चेति। अर्द्धह्रस्वशब्दस्यार्द्धमात्राप्रतिपादकत्वसिद्धौ च। अन्यशाखास्विति। तदुक्तं तैत्तिरीयप्रातिशाख्ये "आदिरस्योदात्तसमः शेषोऽनुदात्तसम इत्याचार्या" इति। तत्र पूर्ववाक्याद्यावदर्द्धं ह्रस्वस्येति सम्बध्यते। एवञ्चास्य स्वरितस्यादिर्यावद्ध्रस्वस्यार्द्धं ह्रस्वार्द्धकालस्स उदात्तसमो भवति शेषस्त्वनुदात्तसम इत्याचार्या इति तदर्थम्भाष्यकार आह। प्रातिशाख्योक्तं पूर्वोक्तं यादृक् प्रातिशाख्यम् 'अर्द्धमेव' इति, तदुक्तमतेत्यर्थः। ननु यदि मात्रापर एवार्द्धह्रस्वशब्दो

भावप्रकाशः।

इति तथोक्तिस्तु अतोऽन्यदित्यनुरोधेन प्राचामनुरोधेन चेति बोध्यम्। बहुव्रीहिभ्रमनिवृत्तये आह—स्वरितोदात्ताभ्यामिति। वर्णग इति। तथा चाग्रेऽस्येत्यस्यैतदवच्छिन्नस्येत्यर्थो बोध्यः। हरदत्तग्रन्थस्य वस्तुतः साधुत्वे मूलमयुक्तमिति ध्वनयितुं तत्र भाष्यसम्मतिमाह—तदुक्तमिति। रूढ इत्यस्य निरूढलक्षणावदित्यर्थो, लक्ष्यत इत्यस्यैव बोध्यत इत्यर्थो वेति भावः। एवञ्च ततः प्रमाणे मात्रचो लुगिति तयोरेकवाक्यतेति बोध्यम्। एतदेव ध्वनयितुं हरिसम्मतिमप्याह—प्रमाणमिति। अनुपात्तमपीति। संज्ञासूत्रेणानुक्तमपीत्यर्थः। शब्दशक्त्यप्रतिपाद्यमपीति यावत्। एवेनात्वावच्छिन्नाकारादिप्रमेयव्यावृत्तिः। उपलक्ष्यतइति। उक्तार्थकम्। तस्य-हरिग्रन्थस्य। हरदत्तभाष्योभयफलितमाह—एवञ्चेति। अर्धमात्रिकग्रहणे चेत्यर्थः। यत्तु "तस्यादित" इति सूत्रं लौकिकस्वरितविभागबोधकमिति। तन्न, सङ्कोचे मानाभावात्। तद्ध्वनयन्नाह—अन्यशाखेति। "आदिरस्योदात्तसमः शेषोनुदात्तसम इति आचार्याः" इति तैत्तिरीयप्रातिशाख्यम्। तत्र पूर्वसूत्राद्यावदर्धं ह्रस्वस्येति वर्त्तते, अस्य स्वरितस्यादिस्तावान्यावद् ह्रस्वस्यार्धं ह्रस्वार्धकालः स उदात्तसमो भवति, शेषस्त्वनुदात्तसम इत्याचार्या ब्रुवते इति तदर्थः। 'सखिभ्योवरिव' इति लक्ष्यम्। समशब्दबलात्किञ्चिन्न्यूनत्वं प्रतीयते, नतु स एवेति त्रिभाष्यरत्ने। यत्तु मतान्तरेत्यस्योक्तप्रातिशाख्ये वाशब्दोल्लेखेन तयोर्विकल्पेनाद्यमतपरतयेत्यर्थः। यद्वा, ह्रस्वाभिप्रायपरतयेत्यर्थः। अत एव कथञ्चिदित्युक्तिः। आद्य एवकारवैयर्थ्यापत्तिः, अन्त्ये उदक्षरत्वक्लेशइति। तन्न, तस्य भाष्यानुरोधित्वेनादुष्टत्वादत आह—प्रातिशाख्योक्तेति। अर्धमेवेति प्रागुक्तऋक्प्रातिशाख्योक्तमतापेक्षया प्रागुक्ततैत्तिरीयप्रातिशाख्यानुरोधेनान्यवेदलोकसाधारणमुख्यमते इत्यर्थः। अन्तरशब्दो मुख्यवाची, अन्यथा इतरेत्यनेन पौनरुक्त्यापत्तेः, मुख्यत्वं च सर्वसाधारण्यादेव। यद्वा, इतरत्वं बुद्धिस्थप्रागुक्तऋग्वेदा-

इति । "अनुदात्तं सर्वमपादादौ" ( पा० सू० ८।१।१८ ) इत्यधिकारादनुदात्तम् ! अश्वा इति । अशेः कनि नित्स्वरेणाद्युदात्तम् । संहितायां तु "एकादेश उदात्तेनोदात्तः" ( पा० सू० ८।२।२५ ) इत्योकार उदात्तः । ये अरा इति । द्वयमपि फिट्सूत्रेणान्तोदात्तम् । एकादेशस्तु पक्षे स्वरितः । "स्वरितो वाऽनुदात्ते पदादौ" ( पा० सू० ८।२।६ ) इत्युक्तेः ।

मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे 'मुखनासिकम्' इति स्यादत आह—मुखसहितेति ॥

तुल्यास्य । ( पा० सू० १।१।९ ) । आस्ये भवमास्यं "शरीरावयवाद्यत्" इत्यभिप्रेत्याह—ताल्वादीति । आभ्यन्तरेति । एतच्च प्रशब्दबलाल्लभ्यते । तु-

---

शब्दरत्नम् ।

इत्यंशपरमिदम् । भाष्यतो रूढिशक्त्यैव प्रतीतेरिति भावः । इत्युक्तेरिति । "नोदात्तस्वरितोदयम्" ( पा० सू० ८।४।६७ ) इति निषेधस्तु "उदात्तादनुदात्तस्य" ( पा०सू० ८।४।६६ ) इत्यस्यैव, "अनन्तरस्य" इति न्यायादिति भावः ॥

आस्यशब्देन कथं तदवयवताल्वादिग्रहणमत आह—आस्ये भवमिति । प्रशब्द-

भैरवी ।

बहुसम्मतस्तदा कथं कथञ्चिदित्यस्योपपत्तिरत आह—लक्ष्यते इत्यंशेति । इति भाव इति । मूलकृतोऽभिप्रायः ।

मुखञ्च नासिकाचेतीति । अत्र नासिकाशब्दसमभिव्याहारान्मुखशब्दो मुखावयवताल्वादिस्थानपरः ।

आस्ये भवमिति । यद्यप्यास्यशब्दस्यास्यन्दतेऽन्नम्प्राप्य द्रवीभवतीत्यर्थं "अन्येष्वपि दृ-

भावप्रकाशः ।

पेक्षं वेदान्वयि, तथा चान्तरशब्दोऽन्यार्थ एवेति भावः । नन्वेवं कथं कथञ्चित्त्वं तस्य सिद्धान्तत्वादत आह—लक्षणेतीति । शुद्धलक्षणेतीत्यर्थः । मूलकृता तथैवार्थो ज्ञातो न प्रागुक्तः । समुदायस्य रूढ्यनङ्गीकारे तु लक्षणैव न स्यादतः सावश्यकीति भावः । तदाह-इति भाव इति । एतेन हरदत्तोक्तस्यैव प्रकृतसूत्राभिप्रायत्वेन मूलं चिन्त्यमिति जगन्नाथोक्तमपास्तम् । एवञ्च मूलकृतोपीत्थमेवेष्टमिति भावः ।

ताल्वादीति । तत्स्थानेत्यर्थः । आस्ये भवमितीति । व्याख्यानात् । तच्च वर्णोपयोगित्वात्स्थानमेव,

सरला ।

आस्ये भवमितीति । आस्यशब्दाद् "अर्शआदिभ्योऽच्" इत्यच् । एवं व्याख्याने प्रमाणं तु सूत्रे आस्यपदोपादानमेव । अन्यथा सर्वेषां वर्णानां जनकस्य मुखस्य तुल्यत्वात्तद्वैयर्थ्यं स्पष्टमेव ।

आस्यं च प्रयत्नश्च आस्यप्रयत्नौ, तुल्यौ आस्यप्रयत्नौ यस्येति विग्रहः । जनकत्वं षष्ठ्यर्थः । यज्जनकावास्यप्रयत्नौ यज्जनकास्यप्रयत्नाभ्यां तुल्यौ तौ मिथः सवर्णसंज्ञौ भवत इत्यर्थः । नन्वेवमिकारसावर्ण्यमेकारे स्याद् इकारजनकतालुस्थानविवृतप्रयत्नजन्यत्वादेकारस्येति चेत् ? न, तुल्यास्यप्रयत्नपदेन यावदास्यभवतुल्यत्वविवक्षणेनादोषात् । तथा हि, यावदास्यभवतुल्यत्वञ्च स्वजनकस्थानप्रयत्नजन्यत्वं स्वाजनकस्थानप्रयत्नाजन्यत्वमिति सम्बन्धद्वयेन वर्णविशिष्टत्वमिति । तथा च इकारजनकस्थानप्रयत्नजन्यत्वस्य एकारे सत्त्वेऽपि इकाराजनकं यत्कण्ठस्थानं तदजन्यत्वस्यासत्त्वेन नेकारसावर्ण्यमेकारे इति । नन्वेवमपि एकारसावर्ण्यमिकारे स्यात् एकारजनकतालुस्थानविवृतप्रयत्नजन्यत्वादिकारस्य, तदजनकमूर्धादिस्थानाजन्यत्वाच्चेति चेत् ? न, प्रथमसम्बन्धे यावत्पदनिवेशेन तद्दोषवारणात् । एकारजनका ये यावन्तः स्थानप्रयत्नाः कण्ठतालुविवृतप्रयत्नास्तज्जन्यत्वस्येकारेऽभावेनाद्यसम्बन्धाभावान्न दोष इति । न चैवं कङयोः सावर्ण्यं न स्यात् ककारस्य नासिकास्थानाजन्यत्वेन ङकारजनकयावत्स्थानाजन्यत्वादिति

स्यास्यं किम् ? तप्तां । अत्र पकारस्य तकारे परे "झरो झरि" (पा० सू० ८।४।६५) इति लोपो मा भूत् । प्रयत्नग्रहणं किम् ? वाक् श्च्योतति । शस्य लोपो न । अमङ-

शब्दरत्नम् ।

वलादिति । प्रकृष्टो यत्नः प्रयत्नः । प्रकर्षश्च वर्णोत्पत्त्यव्यवहितप्राक्कालिकत्वरूप इति

भैरवी ।

स्यते" इति डप्रत्यये कर्तरि सति मुखपरत्वम्, अथवाऽनेन द्रवीक्रियत इत्यन्तर्भावितण्यर्थात्स्यन्दधातोः परिखेत्यत्रेव कर्मणि डप्रत्ययेन मुखपरत्वं तथापि सर्वेषां तत्तुल्यमिति तदुपादानवैयर्थ्यमत आस्यभवताल्वादिस्थानपरत्वमित्याशयेनाह—ताल्वादीतीति मूले । प्राक्कालिकत्वरूप इति । नाभिप्रदेशात्प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्ध्वमाक्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति, ततो वर्णाभिव्यक्तिः । तत्रोत्पत्तेः प्राग् यदा तत्तत्स्थानानि जिह्वाग्रोपाग्रमध्यमूलानि सम्यक् स्पृशन्ति तदा स्पृष्टता । जिह्वाग्रादीनां सम्यक् स्पर्शश्च तत्तत्स्थानेन सह बोध्यः । ईषद्यदा स्पृशन्ति तदा ईषत्स्पृष्टता । समीपावस्थानमात्रेण संवृतता । बाह्यास्तु वर्णोत्पत्तेः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायौ उत्पद्यन्ते । गलविवरसङ्कोचात्संवारः, तस्यैव विकासात् विवार इत्यादिरीत्या भवन्तीत्येषां न वर्णोत्पत्तेः प्राक्कालिकत्वम् । उदात्तत्वादीनामेतेषु गणनं तु सावर्ण्यानुपयुक्तत्वान्तरतम्यपरीक्षोपयुक्तत्वरूपधर्मसादृश्यात् । यद्यपि वर्ग्याणां चादीनामेकमेव स्थानं ताल्विति भेदाभावात् तुल्यत्वन्नोपपद्यते, तथापि कार्यभेदेन स्थानेषु भेदारोपेण भेदघटिततुल्यत्वस्योपपत्तिः ।

यत्तु नासिका न स्थानं, किन्तु करणमिति मतं, तन्न युक्तम् 'अस्यन्त्यनेन वर्णान्' इति भाष्यात् कण्ठादीनामपि करणत्वप्रतीतेः । स्थानत्वव्यवहारस्तु वर्णाभिव्यक्तिजनकवायुसंयोगाधारत्वाद्वर्णाधारत्वारोपेण । एवञ्च ञादीनां नासिक्यव्यवहारस्य प्रातिशाख्यशिक्षादौ दर्शनेन नासिकायाम्भवा इत्यर्थकरणेन 'नासिक्या ञमङणनाः' इति व्याख्यातृवचनेन च नासिका-

भावप्रकाशः ।

प्रयत्नस्य पृथगुपादानादिति भावः । ननु प्रशब्देन कथं तल्लाभोऽत आह—प्रकृष्ट इति । नन्वेवमपि तत्त्वस्य बाह्येऽपि सत्त्वेन मूलातङ्गतिरेवात आह—प्रकर्षश्चेति । तथा च तस्याभ्यन्तरे एव सत्त्वमिति नोक्तदोष इति भावः । जनकत्वमभिव्यञ्जकत्वं वा षष्ठ्यर्थः, तत्तत्कार्यगतभेदं स्थानेष्वारोप्य भेदघटिततुल्यत्वस्य निर्वाहः । परममूले यस्यैतद् द्वयं येन यदीयेनैतद्द्वयेन तुल्यमित्यर्थ इति बोध्यम् । यत्तु

अनुस्वारयमानां च नासिका स्थानमिष्यते ।

इति शिक्षोक्तेरेषां नासिका करणम्, न स्थानम् । किञ्च व्यापारमात्रेण तस्याः स्थानत्वेऽनुनासिकाकारादीनामपि तत्त्वप्रसङ्ग इति तदनुक्त्या न्यूनता । किञ्च तस्याः स्थानत्वे ङञयोः सावर्ण्यानापत्तिः, यावत्स्थानैक्याभावात् । तथा च 'त्वङ्करोषि' इत्यादौ परसवर्णबाधनापत्तिः । यत्किञ्चित्स्थानैक्येन तत्त्वे तु ञमामपि मिथः सावर्ण्यापत्त्या 'त्वन्नयसि' इत्यादौ बाधापत्तिरपीति । कथञ्चेन ताल्वादिग्रहणेन स्थानयोः समुच्चयः कथञ्चात्र तदुल्लेख इति खण्डनकृदाशयः । तन्न, कण्ठादीनापि करणत्वस्यैवास्यन्त्यनेन वर्णानितिभाष्यात्प्रतीतेः । स्थानत्वव्यवहारस्तु वर्णाभिव्यक्तिजनकताल्वादौ वर्णाभिव्यञ्जकवायुसंयोगाधारे वर्णाधारत्वारोपेण, तत्तत्स्थाने जिह्वाग्रादीनां सम्बन्धेन वर्णोत्पत्त्या, जिह्वाग्रादौ तत्सम्बन्धजनकप्रयत्नविशेषे स्पृष्टतादौ च करणत्वव्यवहारः । बाह्यप्रयत्नो गुणशब्देनोच्यते । एवञ्च नासिकाया गुणजनकत्वात्तेषां नासिका स्थानं नोक्तम् । शिक्षायां चेन ञादीनामपि ग्रहणम् । अत एव कण्ठ्योकार इत्याद्युक्त्वा "नासिक्या नासिक्ययमानुस्वारानिति स्थानानि" इत्युक्तमृक्प्रातिशाख्ये । 'नासिक्या ञमङणनाः' इति तद्व्याख्या-

सरला ।

वाच्यम्, नासिकायाः स्थानत्वेऽपि आस्यान्तर्गतत्वाभावेनाऽऽस्यभवपदेनाग्रहणात् । एवञ्चात्र सावर्ण्यविधौ स्थानपदेन ओष्ठप्रभृतिकाकलकपर्यन्तरूपास्यभवताल्वादीन्येव गृह्यन्ते इति । तदाह—ताल्वादी-

णनानामिति । 'नासिका च' इति चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते । "अनुस्वारोत्तमा अनुनासिकाः" इति तैत्तिरीयाणां प्रातिशाख्यम् । "यमानुस्वारनासिक्यानां नासिका, अनुनासिकाश्चोत्तमाः" इति कात्यायनप्रातिशाख्यम् । "वर्गोत्तमा ञमङणना अनुनासिका भवन्ति, चशब्दात्स्वस्थानाद्यपरित्यागेन नासिका स्थानं द्वितीयमेषामित्यर्थः" इति तद्भाष्यं च । "एदैतोः" इत्यादौ तपरत्वमसन्देहार्थं, न तु तत्कालग्रहणार्थम् । तेन प्लुतस्यापि सङ्ग्रहः ॥

"पूर्वत्रासिद्धम्" ( पा० सू०८।२।७ )॥ यद्ययं स्वतन्त्रो विधिः स्यात्, तर्हि

### शब्दरत्नम् ।

भावः । चकारेणेति । अत्र यथा नासिकायाः स्थानत्वं, तथाऽन्यत्र निरूपितम् । न तु तत्कालेति । एषां शिक्षाद्युक्तार्थानुवादत्वेनाऽत्र शास्त्रप्रवृत्त्यभावादिति भावः ।

### भैरवी ।

ऽपि स्थानमित्याशयेनाह—अत्र यथेति । "अनुस्वारोत्तमा अनुनासिकाः" इति तैत्तिरीयप्रातिशाख्यम् । "यमानुस्वारनासिक्यानान्नासिका अनुनासिकाश्चोत्तमाः" इति कात्यायनप्रातिशाख्यम् । वर्गोत्तमा अनुनासिका भवन्ति चशब्दात्स्वस्थानाद्यपरित्यागद्वारेण नासिकास्थानन्द्वितीयमेषामित्यर्थ इति तद्भाष्यञ्च । शिक्षेति ।

एऐ तु कण्ठताल्व्या ओऔ कण्ठोष्ठजौ स्मृतौ ।

इति पाणिनीयशिक्षेत्यर्थः । तत्र तपरत्वाभावेन प्लुतानामपि सङ्ग्रहादत्र तपरसूत्रस्य प्रवृत्तावनुवादभङ्गापत्तिरतस्तदप्रवृत्तिः । शिक्षाद्युक्तार्थानुवादत्वेनेति । अत्रादिपदेन लोकानुभवपरिग्रहः ।

### भावप्रकाशः ।

तारः । कङ्योः सावर्ण्यं तु भवत्येव, तुल्यास्यसूत्रभाष्येणास्यशब्देन नासिकाया अग्रहणबोधनात् , सा आस्यबाह्येति मते तत्त्वाच्च । अत एव "अमोऽनुनासिका नह्रौ"इति शिक्षा "अनुस्वारोत्तमा अनुनासिकाः" इति तैत्तिरीयाणाम् "यमानुस्वारनासिक्यानां नासिका अनुनासिकाश्चोत्तमा" इति कातीयानां च प्रातिशाख्यम् । वर्गोत्तमाङ ञणनमा अनुनासिका भवन्ति चशब्दात्स्वस्वस्थानाद्यपरित्यागद्वारेण नासिका स्थानं द्वितीयमेषामित्यर्थ इति तद्भाष्यं च सङ्गच्छते । नासिके इत्यस्य द्वे रन्ध्रे स्थाने इत्यर्थः । अधिकं गुरुग्रन्थतोऽवसेयमिति दिक् । तद्ध्वनयन्नाह—अत्रेति । एषु कण्ठादिष्वित्यर्थः । अन्यत्र—शब्देन्दुशेखरादौ । शिक्षेति ।

ए ऐ तु कण्ठ्यताल्व्यावोऔ कण्ठोष्ठजौ स्मृतौ ।

इति पाणिनीयशिक्षेत्यर्थः । आदिना लोकानुभवसिद्धार्थानुवादत्वेनेत्यस्य परिग्रहः, तस्यापि तत्र स्थानत्वानुभवेन तथैव तात्पर्योन्नयनात् । अत एव 'घटायोन्मीलितं चक्षुः पटं हि न पश्यति' इतिन्यायेनोभयार्थत्वमस्त्विति न शङ्कनीयमिति भावः ।

मूले—स्वतन्त्र इति । अधिकारत्वासंवलितोऽतिदेशविधिरेवेत्यर्थः । नन्वनसिद्धत्वे को दोषः । न च

### सरला ।

त्वीति मूले । अन्यत्र निरूपितमिति । लघुशब्देन्दुशेखरे । यद्देशावच्छेदेन वायुसंयोगं विना न यद्वर्णोत्पत्तिस्तद्देशस्य तद्वर्णस्थानत्वम् । वर्णत्वव्याप्यधर्मावच्छिन्नजन्यतानिरूपितजनकतावत्त्वमिति यावत् । नासावच्छेदेन वायुसंयोगं विना ङकारादीनामनुत्पत्तेर्नासिकाया ङकारादिनिरूपितं स्थानत्वम् । अनुनासिकाकारादिनिरूपितं तु न नासिकायाः स्थानत्वं तत्र नासावच्छेदेन वायुसंयोगं विनाऽपि अकारस्वरूपोत्पत्तिदर्शनात् । किन्तु तत्र कण्ठावच्छेदेन वायुसंयोगादुत्पन्नाकारे नासावच्छेदेन वायुसंयोगादनुनासिकत्व रूपगुणोत्पत्तिरिति ।

'त्रिपादी पूर्वं प्रत्यसिद्धा' इत्येव लभ्येत, त्रैपादिकं तु पूर्वं प्रति परं नासिद्धं स्यादत

---

शब्दरत्नम् ।

नासिद्धं स्यादिति । ततश्च गोधुङ्मानित्यादौ घत्वजश्त्वानुनासिकेषु भष्भावो न

भैरवी ।

त्रैपादिकस्य परस्य पूर्वदृष्ट्या सिद्धत्वाभावे दोषमाह—ततश्चेति । घत्वेत्यादि । अस्य सूत्रस्य विधित्वपक्षे त्रिपाद्यां पूर्वं पठितं यच्छास्त्रं तद्दृष्ट्या परस्यासिद्धत्वबोधकत्वाभावेन गोदुह्—मानिति स्थिते घत्वजश्त्वयोः प्राप्तयोः पदान्ते घत्वस्य जश्त्वापवादत्वेनादौ घत्वम्, ततो जश्त्वानुनासिकत्वयोर्जश्त्वम् अन्तरङ्गम् । नचानुनासिकत्वञ्जश्त्वापवादः, सुगण्वानित्यादौ पर्जन्यन्यायेन णकारादेर्णकाराद्यादेशविधायकत्वेन चारितार्थ्यसम्भवेन येननाप्राप्तन्यायविषयाभावात् । किन्तु विजातीयादेशाभावेन निरवकाशत्वेन तद्बाध्यमिति तत्रादावपवादविषयेऽप्युत्सर्गस्य प्रवृत्तेर्जश्त्वम्, ततोऽनुनासिकः । नन्वत्र घत्वोत्तरं "झयः" इति वत्वापत्तिः । जश्त्वस्य पदसंज्ञासापेक्षत्वेनाधिकापेक्षत्वेन बहिरङ्गत्वात् । "झयः" इत्यस्य तु तदनपेक्षत्वेनान्तरङ्गत्वम् । नचास्य जश्त्वापवादत्वात्प्राक् प्रवृत्तिरिति 'उदश्वित्वान्' इत्यादौ तान्तात्परत्वेन "तसौ मत्वर्थे" इति भसंज्ञाविषये तत्प्राप्त्याऽपवादत्वासम्भवात् । अत एव परत्वादादौ जश्त्वमिति न । किञ्चाविरोधेनैतादृशस्थले परत्वन्न नियामकम् । एवमेव वत्वस्य भष्भावात्प्राक् प्राप्तिः, ततो जश्त्वभष्भावानुनासिकत्वानाम्प्राप्त्या गोधुङ्वानिति स्यात्; इति चेत्? न, घत्वोत्तरं वत्वभष्भावजश्त्वानाम्प्राप्तौ परत्वादन्तरङ्गत्वाच्च जश्त्वस्यैव प्राप्तेः । न च जश्त्वाद्वत्वमुक्तरीत्याऽन्तरङ्गम् । "झयः" इति सूत्रस्यापि पूर्वपरोभयसापेक्षत्वेनोभयोः समत्वात् । नच स्थानभेदेनाविरोधात्परत्वन्न नियामकमिति वाच्यम्, विषयभेदेऽपि विप्रतिषेधशास्त्रस्य प्रवृत्तिदर्शनात् । भष्भावाज्जश्त्वस्यान्तरङ्गत्वन्तु स्फुटमेव । ततो

भावप्रकाशः ।

'प्रशाम्' 'अनड्वान्' इत्यादौ "मो नो धातोः" इत्यस्य "संयोगान्तस्य लोपः" इत्यस्य च सिद्धत्वेन नलोपापत्तिः, नत्वनुमविध्योः सम्बुद्धौ चरितार्थत्वादिति वाच्यम्, 'नह्येकमुदाहरणम्' इति न्यायेन सामान्यशास्त्रवैयर्थ्यापत्त्या तत्रेष्टसिद्धेरत आह—ततश्चेति । अनसिद्धत्वादित्यर्थः । आदिना 'गुडलिण्मान्' इत्यादिसङ्ग्रहः । सिद्धान्ते जश्त्वस्यासिद्धत्वाद्धत्वे जश्त्वानुनासिकयोरसिद्धत्वाद्भष्भावेऽनुनासिकासिद्धत्वाज्जश्त्वेऽनुनासिक इति प्रक्रिया, हस्य झयनन्तर्भूतत्वाद्घादेरसिद्धत्वाच्च वत्वस्याप्राप्तिरेव । तदेतदभिप्रेत्याह—घत्वेत्यादि । अयम्भावः—स्वतन्त्रविधिपक्षे त्रिपाद्यामप्रवृत्तौ "गोदुह्मत्" इत्यादावादौ घत्वजश्त्वयोरेव प्राप्तावपि घस्य पदान्ते सर्वथा निरवकाशत्वेन जश्त्वबाधकत्वेनादौ घः, ततः परत्वेन भष्भावादन्तरङ्गत्वेनानुनासिकाच्चादौ जश्त्वं सर्वथानवकाशत्वादेव स्वस्य पूर्वं प्रवृत्तिरिति, बाध्यस्थले बाधके कृते सति उत्सर्गप्रवृत्तेरङ्गीकारात् ततः शिष्टेऽनुनासिके कृतेऽझषन्तत्वेन भष्भावो न स्यात् । ननु सिद्धान्ते तथा प्रक्रियायामपि नात्र पक्षे सा वक्तुं शक्या, वैषम्यात् । तथाहि, प्रागुक्तरीत्या जश्त्वात्प्राक् घत्वेऽपि तदुत्तरमनुनासिकतोन्तरङ्गजश्त्वतो येननाप्राप्तिन्यायेन सर्वथा निरवकाशत्वेन च तद्बाधकत्वेन पूर्वं वत्वस्य

सरला ।

घत्वजश्त्वानुनासिकेष्विति । नन्वेतेषु कृतेषु प्राप्तेषु वा? नाद्यः, अनुनासिकानन्तरं सर्वथा भष्भावाप्राप्तौ ग्रन्थासङ्गतेः । नान्त्यः, घत्वप्रवृत्तेः प्राक् झषन्तत्वाभावेन भष्भावाप्राप्तेस्तदवस्थत्वात् । तस्माद् घत्वे कृते जश्त्वानुनासिकभष्भावेषु प्राप्तेषु भष्भावो न स्यादिति व्याख्येयम् । उक्तग्रन्थस्य चात्रैव तात्पर्यमिति । यदि तु जश्त्वानुनासिकभष्भावेषु प्राप्तेषु जश्त्वमपवादत्वात् बाधित्वा भष्भावः स्यात् । न च तं बाधित्वा परत्वादनुनासिकः, तं चान्तरङ्गत्वाद् बाधित्वा जश्त्वं, तच्च अपवादत्वाद् बाधित्वा भष्भाव इति चक्रकापत्तिरिति वाच्यम्, अपवादत्वाद् जश्त्वमन्तरङ्गत्वाच्चानुनासिकं बाधित्वा भष्भावसिद्धेः । कार्यकालपक्षे त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्तेरिदानीं सुवचत्वात् । तत्र तदप्रवृत्तिबीजस्य बहिरङ्गदृष्ट्याऽन्तरङ्गासिद्धत्वरूपस्य

आह—अधिकारोऽयमिति । यद्यत्र कार्यासिद्धत्वमिष्येत, तर्हि पूर्वत्रासिद्धमिति

शब्दरत्नम् ।

स्यात् । न चातिदेशान्तरवदस्यापि त्रिपाद्यां प्रवृत्तौ न दोषः । सपादसप्ताध्याय्यामपि पूर्वं प्रति परासिद्धत्वापत्तेः । मध्ये पाठस्य विप्रतिषेधसूत्रस्य च सामर्थ्याश्रयणे तु विनिगमना-

भैरवी ।

वत्वात्परत्वादनुनासिकः । अनित्यत्वं तूभयोः सममित्याशयात् । पूर्वत्रासिद्धमित्यस्याधिकारत्वे तु घत्वात्प्राग् भष्भाववत्वयोरप्राप्त्या प्रथमतो वत्वं, ततो जश्त्वस्यासिद्धत्वात्ततः प्राग् भष्भावः, वत्वन्तु न प्रवर्तते घत्वादीनामसिद्धत्वेन तद्दृष्ट्या हस्यैव सत्त्वात् ।

इदं विधिसूत्रमेवास्तु तथाप्युक्तप्रयोगस्य सिद्धिर्भविष्यतीति शङ्कां निराचष्टे—नचेत्यादिना । अतिदेशान्तरवत् स्थानिवत्त्वातिदेशान्ताद्विवद्भावातिदेशवत् । नचास्मिन्सूत्रे वतिनिर्देशाभावादस्य सूत्रस्यातिदेशाविधायकत्वेनातिदेशान्तरवदित्यसङ्गतमिति वाच्यम्, 'विनापि वतिं वत्यर्थो गम्यते' इति भाष्यकारोक्त्या वत्यर्थलाभात् । अस्य परिभाषात्वं वाऽस्तु पूर्वत्वावच्छिन्नशास्त्रत्वमस्या लिङ्गम्भविष्यतीति पूर्वपक्षकर्त्रभिप्रायः । उभयथापि दोष इत्याशयेन समाधत्ते—सपादेत्यादिना । ननु मध्ये पाठसामर्थ्यात्स्वापेक्षपूर्वत्वाश्रयशास्त्रेषु प्रवृत्तिरिति चेत्तत्राह—मध्य इति । एवं चेष्टासिद्ध्या नास्यातिदेशशास्त्रत्वं, नापि परिभाषाशास्त्रत्वम् । नापि

भावप्रकाशः ।

भष्भावस्य चैव प्राप्तिः । नचान्त्यस्य तत्त्वेऽपि वत्वस्य तसावितिभविषये 'तडित्वान्' इत्यादौ तदविषये चारितार्थ्येन कथं तत्त्वमिति वाच्यम्, तावन्मात्रफलकत्वे त इत्येवसिद्धे सामान्यसूत्रस्य नद्येकमुदाहरणमितिन्यायेनाचारितार्थ्यात्, तसावित्यत्र दप्रश्लेषे तु अत्रापि तथा बोध्यम् । एवञ्च तयोर्मध्येऽविरोधेन परत्वस्य तुल्यत्वेन नित्यत्वस्य मिथोऽविषये मिथश्चारितार्थ्येनापवादत्वस्याभावेऽप्यल्पापेक्षत्वेनान्तरङ्गत्वादन्त्यादनुनासिकाच्च पूर्वं वत्वापत्तिः । एवञ्चोक्तरीत्या ततो भष्भावजश्त्वानुनासिकानां क्रमेण प्रवृत्त्या 'गाधुङ्वान्' इति स्यादिति स एव दोषो देयः । किञ्च सर्वथा निरवकाशत्वेन बाधोत्तरमुत्सर्गस्य क्वचित्प्रवृत्तावप्यन्यत्र बाध्याप्रवृत्तिरेवेति सिद्धान्तादत्र वत्वेन जश्त्वस्य येननाप्राप्त्या भष्भावानुनासिकयोरन्तरङ्गत्वेन बाधात्, भष्भावादीनामप्राप्त्या वत्वमेव स्यादिति तथैव वाच्यमिति घत्वेत्यादि चिन्त्यम् । अत एवात्र धत्वढत्वयोः कृतयोः "झयः" इति वत्वं स्यादित्युक्तं भाष्ये इति चेत् ? सत्यम्, अधिकारवादिनस्ताद्दृशविधिवादिनं प्रति तत्र सर्वेष्टकार्यचतुष्टयमध्ये एवैकं प्राक् प्राप्तं कार्यं विप्रतिषेधसूत्रसञ्चारेण न स्यादिति दोषस्य शीघ्रोपस्थितत्वेन तथोक्तिः । किञ्चापाद्यमानेऽर्थे न्यायानादरेणापवादत्वमनाश्रित्य प्राचीनानुसारेण तथोक्तिः । एवञ्चोक्तरीत्या घत्वोत्तरं तौ बाधित्वा परत्वाज्जश्त्वानुनासिकयोर्वत्वाप्राप्त्या तदनिष्टाभावेन भष्भावाभावरूपमेवानिष्टमिति घत्वजश्त्वानुनासिकेषु भष्भावो न स्यादिति सम्यगेवेति दिक् । घत्वजश्त्वपरसवर्णष्विति त्वपाठः तत्प्राप्तेरेवाभावादिति । तदेतद् ध्वनयन्प्रकारान्तरेण शङ्कते—न चातिदेशान्तरेति । अयम्भावः—सिद्धान्त इवात्रापि पक्षेऽनेन स्वं विहायान्येषामारोपितमसिद्धत्वं बोध्यते, न तु स्वस्य, एकस्य बोध्यबोधकत्वासम्भवात्, तथात्वेऽन्येषामसिद्धत्वात्सूत्रारम्भानर्थक्यापत्तेश्च । एतेन जगन्मिथ्यात्वप्रतिपादकश्रुतिवाक्ये जगन्मिथ्येतिवाक्यस्यात्मनोऽपि तत्त्वबोधनादिदमयुक्तमित्यपास्तम् । एवञ्च कार्यकालपक्षाश्रयेण स्थानिवत्सूत्रादीनां सिद्धानामन्यतराकाङ्क्षया यथाऽसिद्धत्रिपाद्यामपि प्रवृत्तिः, एवं "पूर्वत्रासिद्धम्" इत्यस्य सिद्धेऽसिद्धत्वस्य ब्रह्मणापि वक्तुमशक्यत्वाद्विनापि वतिं वत्यर्थो लभ्यते । अब्राह्मणे ब्राह्मण इत्युक्ते ब्राह्मणवदिति गम्यते इति भाष्याच्च । अतिदेशविधित्वाङ्गीकारात्परसाकाङ्क्षपूर्वत्वावच्छिन्नशास्त्रबोधकपूर्वशब्दरूपलिङ्गेन परिभाषात्वम् इत्यतिदेशविधित्वाङ्गीकाराद्वा तत्र प्रवृत्तिरिति नोक्तदोषः । एवञ्चोक्तदोषभिया स्वतन्त्रविधित्वाभावेऽप्यधिकारविधित्वमेव किमर्थमिति गूढाक्षेप इति । अस्यापि—पूर्वत्रासिद्धमित्यस्यापि । न

सरला ।

"पूर्वत्रासिद्धम्" इत्यस्याधिकारत्वाभावेऽसत्त्वात् । ततश्चाधिकारत्वाभावे नेदं दूषणमित्युच्यते तर्हि घत्वे कृते "झयः" इति वत्वापत्तिर्दोषो बोद्धव्यः । जश्त्वमनुनासिकत्वं चापेक्ष्य प्रतिपदोक्तत्वाद्वत्वं पूर्वं प्रवर्तते ।

'मनोरथः' इत्यादावुत्वं न स्यात्, परत्वाद् "रो रि" (पा० सू० ८।३।१४) इत्यस्य

शब्दरत्नम् ।

विरहात्त्रिपाद्यामप्यप्रवृत्त्यापत्तिरिति भावः । रो रीत्यस्य प्रसङ्गादिति । सिद्धेऽसिद्धत्वारोपात् सूत्रोदाहरणसंपत्त्यै परत्वाल्लक्ष्ये कार्यप्रवृत्तेरावश्यकतया परत्वात् त्रैपादिके कार्ये जाते तत्राभावप्रतियोगित्वारोपेऽपि देवदत्तहन्तृहतन्यायेन स्थानिभूतरोरभावाद् "हशि-

भैरवी ।

स्वतन्त्रविधित्वं, मूलोक्तदोषात्; किन्त्वधिकारसूत्रत्वमेवेति भावः । "रो रि"इत्यस्य प्रसङ्गादिति मूलमसङ्गतं, रलोपोत्वयोः प्राप्तौ रलोपस्यासिद्धत्वेनोत्वे मनोरथसिद्धेर्निष्प्रत्यूहत्वात्, अतो मूलाशयम्प्रकटयति—सिद्ध इत्यादिना । परत्वादिति । कार्याऽसिद्धत्ववादिमते शास्त्रेऽसिद्धत्वारोपाभावेन तत्र विप्रतिषेधशास्त्रस्य प्रवृत्तिः स्यात् । तथाच तद्विधेयकार्यस्यापि तद्द्वारा प्रवृत्तिर्जायते, कार्यमसिद्धमिति बुद्धिस्त्वधुना न सम्भवति, कार्यस्यासिद्धत्वादिति भावः । तत्र जाते कार्य अस्य जननोत्तरमित्यादिः । शास्त्रयोः प्राप्तौ विप्रतिषेधशास्त्रस्य विरोधे एव प्रवृत्तिः, सच विरोधः कार्य्यद्वारा बोध्यः । देवदत्तहन्तृहतन्यायेनेति । देवदत्तस्य हन्तरि हतेऽपि देवदत्तस्य यथा न दर्शनं तथाऽत्र देवदत्तस्थानीयस्य रोर्हननसदृशलोपसम्पादकं "रोरि" इति शास्त्रं, तस्य प्रवृत्तिरेव हननं तस्मिन्कृते रोरदर्शनमस्तीति"हशि च" इति न स्यात् । आरोपेति कथनं वस्तुतोऽभावो नास्तीति सूचनाय । पूर्वत्वस्य सावधिकतया यदि परस्य सत्त्वैव न स्यात्तदा पूर्वत्वमपि तस्य वक्तुमशक्यमिति पूर्वत्रासिद्धमिति वाक्यस्य प्रवृत्तिर्न स्यात्; अतो वस्तुतः परसत्ताऽपेक्षितैव । तथा च तत्र न तत्कालिकाभावप्रतियोगित्वम्, किन्तु शास्त्रबलादभावप्रतियोगित्वारोप एवेति भावः । स्थानिभूतेति । उत्वलोपयोरित्यादिः । एतेन पूर्वत्रेति सूत्रस्य वैयर्थ्यापत्तिर्ध्वनिता ।

भावप्रकाशः ।

दोष इति । नोक्तदोष इत्यर्थः । अत एवाह—सपादेति । परासिद्धत्वेति । परस्यासिद्धत्वेत्यर्थः । ननु मध्येपाठसामर्थ्यात्र तथेतीष्टसिद्धिरेवात आह—मध्ये इति । नन्वशोकवनिकान्यायेन स चरितार्थोऽत आह—विप्रतिषेधेति । द्वयोः सावकाशयोः समवस्थितयोरेकत्र युगपत्प्रसङ्गो हि तत्प्रवृत्तौ हेतुः, नचेदानीं तथाऽस्तीति भावः । त्रिपाद्यामिति । तत्सूत्रसार्थक्याय सपादसप्ताध्याय्यामेवाप्रवृत्तिस्वीकारे विनिगमनाविरहाद् त्रिपाद्यामेवाप्रवृत्त्या तच्चारितार्थ्येन तत्र प्रवृत्तिरस्त्विति वक्तुं शक्यम्, अथ तत्रापि किं विनिगमकमिति चेत्तर्हि उभयत्राप्रवृत्त्यापत्तिरित्यर्थः । एवञ्चास्य वैयर्थ्यापत्त्योक्तदोषे स्वतन्त्रविधित्वस्यैवातिदेशविधित्वमिश्रपरिभाषात्वस्याप्यङ्गीकर्तुमशक्यत्वादधिकारविधित्वमेव पर्यवसितमिति भावः । यत्तु खण्डनकृदादिरसिद्धं प्रागेव न जातमित्यर्थः । एवञ्च कार्यासिद्धत्वेऽपि 'मनोरथः' इत्यादावुत्वे कर्त्तव्ये रलोपस्य प्रागेवाप्रवृत्तौ रो रुत्वस्याप्रतीघातात्तत्सिद्धिरप्रत्यूहा । किञ्च सत्यपि शास्त्रे जातेऽपि च कार्ये शास्त्रप्रामाण्यात्कार्यमात्रेऽभावारोपेण रो रुत्वे न तथेति, तत्खण्डनं ध्वनयितुमाह—सिद्धेइत्यादि । सिद्धे जाते निरधिष्ठानारोपासम्भवादिति । इदञ्च सिद्धान्तेप्यावश्यकम्, आरोपस्यैवातिदेशपदार्थत्वाल्लोकेऽनाहार्यज्ञानस्यैव प्रवर्त्तकत्वेऽपीह शास्त्रप्रामाण्यादाहार्यारोपोऽपि शास्त्रप्रवृत्तावप्रवृत्तौ च नियामक इति भावः । सूत्रेति । पूर्वत्रेति सूत्रेत्यर्थः । परत्वादिति । नहि तस्यामवस्थायां पूर्वत्रेत्यस्य प्राप्तिः, उक्तयुक्तेः । एवञ्च शास्त्रद्वारा परत्वात् 'मनोरथः' इत्यादौ "रो रि" इत्यादिकार्यप्रवृत्तेरावश्यकतयेत्यर्थः । अन्यथा सूत्रपाठे कार्यापाठाल्लक्ष्यासम्भवेन पूर्वत्रेति सूत्रानर्थक्यापत्तिः एवञ्चाद्यदोषोऽयुक्त इति भावः । एतेन शास्त्रयोः स्वतोऽविरोधेन स कार्यद्वारक एव वाच्यः । अन्यथाऽतिप्रसङ्गः । एवञ्च 'मनोरथः' इत्यादौ विरोधप्रयोजकीभूतकार्यासिद्धौ शास्त्रस्य सिद्धत्वेऽपि नपुंसकतुल्यत्वम् । एतेन 'अमू' इत्याद्यसिद्धिरित्युक्तिः परास्तेति कार्यासिद्धत्वे न कोऽपि दोषः ।

न च न्यायमवष्टभ्य शास्त्रासिद्धत्वमादृतम् ।
तदप्राप्तिमभिप्रेत्य प्राचा निष्कर्ष आदृतः ॥

प्रसङ्गात् । तथा च "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इति सिद्धान्तो व्याकुप्येत । अमू, अमी इत्यादि च न सिध्येदत आह—त्रिपादीति, परं शा-

शब्दरत्नम् ।

च" ( पा०सू० ६।१।११४ ) इत्यस्याप्राप्तिरिति भावः । स्पष्टं चेदं प्रकृतसूत्रे "अचः परस्मिन्" ( पा०सू०१।१।५७ ) इत्यत्र "षत्वतुकोः" ( पा०सू०६।१।८६ ) इत्यत्र च भाष्ये । तथा चेति । शास्त्रस्य तद्बोध्यकार्यस्य च शास्त्रजज्ञानवेलायामसिद्धत्वाभावे "रो रि" ( पा०सू०८।३।१४ ) इत्यादेः प्रसङ्गे चेत्यर्थः । व्याकुप्येतेति । त्वया विप्रतिषेधशास्त्रप्रवृत्तौ निमित्तस्य त्रैपादिकस्य शास्त्रजबोधविषयकार्यस्य, शास्त्रस्य वाऽसिद्धता वक्तुमशक्या, किं तु लक्ष्ये जातस्य तस्य प्रवर्तमानसपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वं वाच्यम् । एवं च विप्रतिषेधाभावोपपादकहेतोरसिद्धिरिति भावः । न च ममापि पूर्वपरपद-

भैरवी ।

सिद्धान्तव्याकोपमुपपादयति—शास्त्रेत्यादिना । शास्त्रस्य—त्रैपादिकशास्त्रस्य । अधुना शास्त्रासिद्धत्वपक्षाभावेऽपि शास्त्रस्येत्यस्य कथनं दृष्टान्तार्थम् । शास्त्रजज्ञानवेलायाम्—त्रैपादिकशास्त्रजन्यवाक्यार्थज्ञानसमय इत्यर्थः । भवन्मते विप्रतिषेधशास्त्रप्रवृत्तौ त्रैपादिकशास्त्रबोध्यकार्यस्य लक्ष्ये प्रवृत्तिविघातो निमित्तमिति वक्तव्यं, तच्च न सम्भवति, तस्याजातत्वादिति सिद्धान्तव्याकोप इति भावः । पूर्वादिपदे लक्षणाऽस्तु, तथाच लक्ष्ये कार्यप्रवृत्तिर्नापेक्षिता, किन्तु तात्कालिकज्ञानविषयपूर्वशास्त्रजन्यज्ञानविषयकार्यज्ञानमात्रमपेक्षितं, तच्चास्त्येवेति मनोरथस्य सिद्धिः स्यादेव । अभावादुत्तरस्येत्यत्राप्युत्तरपदमुत्तरशास्त्रबोध्यकार्यपरमिति न सिद्धान्तव्याकोप इत्याशयकशङ्कां निराचष्टे—नचेति । ममापि-कार्यासिद्धत्ववादिनो ममापीत्यर्थः । पूर्वपरपदयोः—

भावप्रकाशः ।

इति रत्नाकरोक्तिः, अत्र पक्षे परकार्याभावेन विप्रतिषेधसूत्राप्राप्त्या परत्वाल्लक्ष्ये कार्यप्रवृत्तौ न्यायेन दोषापादनानौचित्यमिति मन्दोक्तिश्चापास्ता । तद्ध्वनयन्नाह—परत्वादित्यादि । तत्र—त्रैपादिके रुलोपरूपकार्ये । प्रतियोगित्वारोपेऽपीति । पूर्वत्रेत्यनेनाभावारोपेण तदारोपस्य फलितत्वादिति भावः । अपिना तन्मात्रे शब्दादभावारोपो दुर्लभः, अवध्यवधिमतोः साजात्यनियमात्, पूर्वत्वस्य लाक्षणिकत्वापत्तश्चेति बोधितम् । स्थानिभूतेति । उत्वविधौ स्थानित्वेन निर्दिष्टेत्यर्थः । एतेन स्थानिवद्भावादुत्वं दुर्वारमित्यपास्तम् । न्यायेन स्थानिनोऽसिद्धत्वेनादेशस्य चाभावात् अल्विधित्वाच्च । एतेन यद्यपि रलोपे परत्वाद् "ढ्रलोपे पूर्वस्य" इति दीर्घ उत्वाप्राप्तिस्तथापि "यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्" इति न्यायेनोत्वं नित्यमेवेत्यपास्तम् । उक्तयुक्तेः न्यायस्यासार्वत्रिकत्वाच्च । अप्राप्तिरिति । तथा च मनोरथासिद्धिः, तदसम्भवः पूर्वत्रेतिसूत्रवैयर्थ्यं चेति भावः, तदाह—इतिभाव इति । यदीत्यादि प्रसङ्गादित्यन्तमूलग्रन्थस्येति भावः । ननु न्यायाङ्गीकारे मानाभावोऽत आह—स्पष्टमिति । तेषु हि न्यायाङ्गीकारेणेत्थमुक्तमिति भावः । ननूक्तमूलग्रन्थेन "हशि च" इत्यस्याप्राप्त्योत्वाभावे साधिते मुख्यत्वेन तथाचेत्यनेन तत्परामर्शे कथं तत्र सिद्धान्तव्याकोपोक्तिरत आह—शास्त्रस्येति । त्रैपादिकस्येति भावः । दृष्टान्तार्थमस्योक्तिः, तद्वदेतस्यापीत्यर्थः । असिद्धत्वाभावे इति । तस्मिन्सतीत्यर्थः, उक्तरीत्येति भावः । प्रसङ्गे चेति । एवञ्चाव्यवहितत्वान्मुख्यहेतोः परामर्शो न तु साध्यमुख्योत्वाभावस्येति भावः । मूले-सिद्धान्त इति । सिद्धान्तोऽपीत्यर्थः । व्याकुप्येतेतीति । उक्तरीत्या तदभावोपपादकहेत्वसिद्धेरिति भावः । एतेनोत्तरस्य कार्यस्याभावादिति व्याख्यानेऽप्यविरोधं इति रत्नाकरोक्तिरपास्ता । ननु पूर्वादिपदे लक्षणैवास्त्विति मनोरथसिद्धिरित्याशयेन शङ्कते—न च ममापीति । कार्यासिद्धत्ववादिनोऽपीत्यर्थः । पदयोरिति । उपात्ताक्षिप्तयोरित्यर्थः । लक्षणया फलित-

सरला ।

असिद्धत्वं वाच्यमिति । ननु लोकेऽनाहार्यज्ञानेनैव प्रवृत्तिनिवृत्तिदर्शनेन प्रकृते सिद्धेऽसिद्धत्वारो-

शब्दरत्नम् ।

**योः पूर्वपरशास्त्रजन्यबोधविषयकार्यलक्षणया शास्त्रे एव कार्यासिद्धत्वमिति वाच्यम् । लक्षणायां मानाभावात्, फलाभावात्, गौरवाच्च । ननु मनोरथे दर्शनाभावरूपे लोपेऽभावारोपस्य दर्शनारोपरूपत्वेन न दोषः,** अभावाभावस्य प्रतियोगिरूपत्वादित्यत आह—**अमू इत्यादि** । अद अ औ, अद अ अस् , इत्यवस्थायां जातस्योत्वस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वेऽपि पूर्वरीत्याऽकाराभावेन पररूपाद्यनापत्तिः । मुत्वस्यासिद्धत्वनि-

भैरवी ।

अत्र पूर्वपदमुपात्तं परपदन्त्वाक्षिप्तं बोध्यम् । शास्त्र एव—**विषयतासम्बन्धेन शास्त्रजन्यज्ञानविशिष्टकार्य एव** । एवकारेण लक्ष्ये कार्यप्रवृत्तिव्यावृत्तिः । ननु "पूर्वत्रासिद्धम्" इति शास्त्रारम्भ एव मानमत आह—फलाभावादिति । ननु फलमप्युक्तमेवेत्यत आह—गौरवादिति । कार्यासिद्धत्वपक्षं परित्यज्य शास्त्रासिद्धत्वपक्षः स्वीकार्यः, तथा सत्युक्तार्थे लक्षणां विनापि प्रयोजनानामुक्तसिद्धान्तस्य च निर्वाहो भविष्यति । यद्येवं न क्रियते किन्तु कार्यासिद्धत्वमेवाश्रीयते, उक्तप्रकारोऽप्याश्रीयते, तदा गौरवं स्पष्टमेवेति भावः । कार्यासिद्धत्ववादी शङ्कते—ननु मनोरथ इति । दर्शने निरस्येत्यादिः । रूपत्वेनेति । अभावाभावस्य प्रथमाभावप्रतियोगिरूपत्वादित्यर्थः । जातस्येति । निरधिष्ठानारोपासम्भवेनारोपार्थञ्जातस्येत्यर्थः । पूर्वरीत्या—देवदत्तहन्तृहतन्यायेन । अकाराभावेन—उकाराभावस्याकाररूपत्वाभावादिति भावः । आदिपदेन औकारस्थानिकस्योत्वस्यैकारस्थानिकेत्वस्य परिग्रहः । ननु नाभावे कर्तव्ये मुत्वासिद्धत्वनिषेध एवंसति व्यर्थः स्यात्, आङोऽकारेण व्यवधानान्नाभावाप्राप्तेरिति देवदत्तहन्तृहतन्यायोऽत्र नाश्रयणीयस्तथा

भावप्रकाशः ।

मर्थमाह—**शास्त्रे एवेति**। स्वजन्यबोधविषयतासम्बन्धेन कार्येऽस्यान्वयः। एवेन लक्ष्ये जातकार्यव्यावृत्तिः, एवं चेष्टसिद्धिरिति भावः। लक्षणैव दोष इत्याशयेनाह—**लक्षणायामिति** । ननु प्रकृतसूत्रमेव मानमत आह—**फलाभावादिति**। अन्यफलाभावादित्यर्थः। नन्वेवमप्युक्तरूपं फलमस्त्येवात आह—**गौरवाच्चेति** । एवञ्च लक्षणानाश्रयणेन शास्त्रासिद्धत्वस्यैतो लघुत्वेन नैवं कार्यासिद्धत्वमुपपाद्यम्, किन्तूक्तरीत्यैवेति मनोरथासिद्धिः, सूत्रानर्थक्यं, सिद्धान्तव्याकोपस्तदसम्भवश्च तदवस्थ एवेति शास्त्रासिद्धत्वमेव वरमिति भावः। एतेन शास्त्रासिद्धत्वे फलाभाव इति मन्दोक्तमपास्तम्। ननु देवदत्तेतिन्यायेऽभावप्रतियोगिकाभाव एव विषयः, देवदत्तादिपदस्वारस्यात्। प्रकृते तु न तथा। अत एव सूत्रमप्यत्र सार्थकमित्याशयेन कार्यासिद्धत्ववादी शङ्कते-**ननु मनोरथे इति**। तच्छब्दइत्यर्थः। **न दोष इति** । नाद्यं दोषद्वयमित्यर्थः। अन्त्यं दोषद्वयं त्वस्त्येवेति भावः। तस्य तद्रूपत्वे मानमाह-**अभावेति** । द्वितीयाभावस्य प्रथमाभावप्रतियोगिरूपत्वादित्यर्थः। प्राचां मतेनेदं, सूत्रसामर्थ्यादत्रास्यैवाङ्गीकार इति भावः। यत्तु न्यायानङ्गीकारे दूषणमाह अमू इति । परत्वान्मुत्वे उत्वमात्रस्यासिद्धत्वादकारबुद्ध्या पररूपे वृद्धावपि पूर्वं प्रवृत्तत्वेन लक्ष्ये लक्षणस्येतिन्यायात्स्थितमस्य विकाराभावेन सन्नियोगशिष्टेति न्यायाद्दात्परत्वाभावाच्च पुनरुत्वाप्रवृत्त्याऽनिष्टं स्पष्टमेवेति मान्याः, तत्प्राचामनुरोधेन। "अदसोः" इत्यत्र समाहारद्वन्द्वनिर्देशादिना लक्ष्यलक्षणयोर्भेदस्य स्पष्टत्वेन न्यायाविषयत्वादसिद्धत्वेनोकारापहारे सन्नियोगेतिन्यायादेव मस्यापि निवृत्तौ हेतुद्वयाभावाच्च। स्पष्टं चेदं "क्रमेजन्तः" इति सूत्रे भाष्यप्रदीपोद्द्योते। तदेतद् ध्वनयितुं न्यायाश्रयणेनैवासिद्धिमुपपादयति-**अद अ इत्यादिना**। **जातेति** । उक्तरीत्या परत्वान्मुत्वे कृते इत्यादिः। **पूर्वरीत्येति** । देवदत्तेति न्यायेनेत्यर्थः। **पररूपाद्येति** । आदिना वृद्ध्यादिसङ्ग्रहः। एतेन कार्यासिद्धत्वमेव सिद्धान्तः।

सरला ।

पेण बाधज्ञानसमकालिकेच्छाजन्यज्ञानरूपाहार्येण कथं शास्त्रप्रवृत्तिनिवृत्ती इति चेत्? न, शास्त्रप्रामाण्यादेवात्र शास्त्रे आहार्यारोपस्यापि शास्त्रप्रवृत्तिनिवृत्तिनियामकत्वाङ्गीकारादिति भावः।

**पररूपाद्यनापत्तिरिति** । नच मुत्वस्यासिद्धत्वे देवदत्तहन्तृहतन्यायेन तत्स्थान्यकाराभावेऽपि **अदस-**

शब्दरत्नम् ।

षेधसामर्थ्यादेतद्विषये उक्तन्यायाप्रवृत्तिरिति चेत्? तेन शास्त्रासिद्धत्वमेव ज्ञापयितुं युक्तम् । एवं शीभावात्पूर्वम् "अदसोऽसेः" ( पा०सू०८।२।८० ) इति मुत्वे दात्परैकाराभावेन "एत ईत्" ( पा० सू० ८।२।८१ ) इति सूत्रमपि व्यर्थं सदत्रैव ज्ञापकमस्तु ।

भैरवी ।

सत्यकारबुद्ध्या पररूपम्भविष्यतीत्याशयेन शङ्कते—मुत्वस्येति । युक्तमिति । लाघवादिति शेषः । एतच्चाभ्युपेत्यवादेन । वस्तुतस्तूक्तज्ञापकेनापि न लक्ष्यस्य सिद्धिः । उत्वेऽसिद्धत्वारोपेणाकारबुद्धौ प्रवृत्तेन "अतो गुणे" इति शास्त्रेण पररूपे सत्यकारो भविष्यति, ततो वृद्धावप्युकारस्य लक्ष्ये श्रवणन्न स्यादेव, पररूपेण तस्य निवर्तनात् । नचोकारासिद्धत्ववन्मकारोऽप्यसिद्ध इति दात्परत्वबुद्ध्या पुनर्मुत्वस्य प्रवृत्तिर्भविष्यतीति वाच्यम्, लक्ष्ये लक्षणस्य पुनः प्रवृत्तेः शास्त्रविरुद्धत्वात् । यदि पुनः प्रवृत्तिरपि "नमुटादेशः" इति वार्तिकैकवाक्यतापन्न—"नमुने" इति शास्त्रारम्भसामर्थ्याद्भविष्यतीति कल्प्यते, तर्हि कार्यासिद्धत्ववादिनो महान् क्लेशः ।

एवम्—"नमुने" इति सूत्रवत् । अत्रैव—शास्त्रासिद्धत्व एव । ननु देवदत्तहन्तृहतन्याय-

भावप्रकाशः ।

तदेव हि क्रियते, न शास्त्रम् । अमुष्मा इत्यत्र परत्वान्मुत्वेऽपि तस्यासिद्धत्वादकारबुद्ध्या स्मायादि-सिद्धिः । देवदत्तादिन्यायसञ्चारस्तु वक्ष्यमाणरीत्या न । यद्वा, अस्तु सः, तथापि मुत्वेन स्थानिनोऽसि-द्धत्वेन तस्य च निवर्त्तनादव्यवधानेनाद्याकारादेव स्मैभावसिद्धिः । "ऋलृक्" इत्यत्र विवरणेऽपि कार्यासि-द्धत्वमेव स्थितमिति कृष्णपण्डितोक्तिः परास्ता, उक्तदोषात् । मुत्वस्येति । "न मुने" इति सूत्रसामर्थ्या-दित्यर्थः । 'नमुटादेश' इतिवार्त्तिकसङ्ग्रहाय तथोक्तम् । अयम्भावः, 'अद अ आ'इत्यत्रोपसञ्जनिष्यमाणेति न्यायेनेनादेशाप्रवृत्तेः सिद्धान्ते इवात्रापि सत्वेऽपि पररूपात्परत्वादुक्तरीत्या मुत्वे कृते तस्यासिद्धत्वादका-रबुद्ध्या पररूपे लक्ष्यभेदात् "नमुने" इति सूत्रसामर्थ्याद्वा पुनरपि मुत्वे कृते तस्य नाभावे कर्त्तव्ये प्राप्ता-सिद्धत्वनिषेधार्थं तत्सूत्रमिति वाच्यम् । तत्र तेन न्यायेनाकाराभावेन पररूपाभावे मध्येऽकारसत्त्वेन नाभा-वस्यैवाप्राप्तावसिद्धत्वस्य सुतरामप्राप्तौ तन्निषेधो व्यर्थः सञ्ज्ञापकः । न चोक्तरीत्या पररूपाभावेऽग्रे परादि-त्वेनाङ्गत्वेन नाभावादेः प्राप्तिरेवेति वाच्यम्, पञ्चमीसमासेन चाचः परेति स्थानिवत्त्वेन तत्रापि व्यवधा-नतादवस्थ्यात् । तेन न्यायेन पररूपाप्रवृत्तावप्यसिद्धवल्लब्धस्यापवादविषयतया बाधकेनादेः प्राप्त्या तदप्रवृत्तेश्च इति । एतदिति । मुत्वविषये देवदत्तेति न्यायाप्रवृत्तिरित्यर्थः । तेन—"नमुने" इति सूत्रेण । युक्तमिति । लक्षणानाश्रयणेनापूर्ववचनाकल्पनेन च लाघवादिति भावः । अत एवैवः प्रयुक्तः । अत एव च 'अमी' इत्यत्र "एतईद्बहुवचने" इतिसामर्थ्यादीत्वप्रवृत्त्यु-त्तरमेव मुत्वप्रवृत्तेः सुवचत्वमिति रत्नाकरोक्तिरपि परास्ता । तद्ध्वनयन्नाह—एवमिति । उक्तज्ञापकवदि-त्यर्थः । पूर्वमिति । परत्वादिति भावः । परत्वात्पररूपात्पूर्वमित्यपि बोध्यम् । मुत्वे इति । एकदेशवि-कृतन्यायेन शीभावे आद्गुणे च मुत्वस्यासिद्धत्वेऽपीति शेषः । दात्परैकेति । तत्परैकारयोरभावेनेत्यर्थः, उक्तन्यायेनेति भावः । अत्रैव—शास्त्रासिद्धत्वे एव । अस्तु—उक्तरीत्या लाघवात् । ननु न्यायानित्यत्व-

सरला ।

शब्दाद्याकारेण त्यदाद्यत्वनिष्पन्नाकारस्य पररूपं भवत्येवेति कथं पररूपानापत्तिरिति वाच्यम्, इष्टपररूपा-नापत्तिरिति तदर्थस्वीकारात् । दकाराकारेण त्यदाद्यत्वनिष्पन्नाकारस्येष्टं यत्पररूपं तदनापत्तिरिति भावः । यदि तु स्थानी न निवृत्तः आदेशो न जात इति सम्भावनायां यद् भवति तद् भवति, यन्न भवति तन्न भवतीत्यर्थोऽग्रे यथा "अचः परस्मिन्"इत्यतिदेशसूत्रस्य करिष्यते, तथैव प्रकृतसूत्रस्यापि त्रैपादिकं शास्त्रं न प्रवृत्तं तत्कृता स्थानिनिवृत्तिरपि न जातेति सम्भावनायां यद् भवति तद् भवति, यन्न भवति तन्न भव-तीत्यर्थः स्वीकरिष्यते । तथाच अमू इत्यादौ मुत्वे जातेऽपि मुत्वं न प्रवृत्तं, तत्कृता स्थानिनिवृत्तिरपि न जातेति सम्भावनया "नहि रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयति"इति न्यायेन उकारे एवाकारबुद्ध्या पररूपे जाते सन्नियोगशिष्टन्यायेन मकारस्यापि निवृत्तौ वृद्धौ पुनर्मुत्वे उत्तरत्र गुणे पुनर्मीत्वे 'अमू''अमी'

शब्दरत्नम् ।

न च "तौ सत्" ( पा०सू०३।२।२७ ) इत्यादिनिर्देशैर्देवदत्तहन्तृहतन्यायोऽनित्य इति वाच्यम् , 'हते देवदत्ते तद्धन्तरि हतेऽपि नोन्मज्जनं, हतत्वारोपे तु सुतराम् । हन्तुमुद्यतस्य हनने तूज्जीवनमस्त्येव' इति न्यायशरीरम् । 'तौ' इत्यादौ वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य हननोद्यमसजातीयं प्रसङ्गमात्रं- न तु हननस्थानीया लक्ष्ये प्रवृत्तिरिति न तत्रास्य न्यायस्य विषय इति तेनास्यानित्यत्वबोधनासम्भवात् । स्पष्टं चेदं "स्वादिष्वसर्वं" ( पा०सू० ४।१।१७ ) इति सूत्रे कैयटे । प्रकृते तु निरधिष्ठानारोपासम्भवेन हननसजातीयं प्रयोगे

भैरवी ।

स्यानित्यत्वमन्यत्र दृष्टं तद्रीत्याऽत्रापि निर्वाहे ज्ञापकानुसरणं व्यर्थमित्याशङ्क्य निराचष्टे—नचेत्यादिना । तौ सदित्यादिनिर्देशस्य न्यायानित्यत्वज्ञापकत्वं शिथिलयति—हत इत्यादिना । सुतरामिति । अस्य नोन्मज्जनं देवदत्तस्येति शेषः । तेन—"तौ सत्" इति निर्देशेन । ननु तावितिवदत्रापि न्यायाविषयत्वमस्त्वित्यत आह—प्रकृत इति । ननु कार्यासिद्धत्वपक्षेऽपि न कार्यमसिद्धमनिष्पन्नमिति प्रकृतसूत्रेण प्रतिपाद्यते, जाते कार्ये तन्निष्पत्त्यभावस्य वक्तुमशक्यत्वात्, किन्तु पूर्वत्र कर्तव्ये परं परशास्त्रबोध्यं कार्यमसिद्धं तत्कालिकाभावप्रतियोगिप्रवृत्तिकर्तृत्ववदित्यर्थोऽस्तु । एतेन—कार्यं स्वकर्तृकप्रवृत्त्यभावकत्वबोधनेन त्रैपादिकशास्त्रस्य पूर्वमप्रवृत्तिरेव कल्प्यते, तथाच नामू इत्याद्यसिद्धिरिति चेत्? न, 'राजभ्याम्' इत्यत्र राजन् भ्यामित्यवस्थायाङ्कस्यापि सपादसप्ताध्यायीस्थकार्यस्य प्राप्त्यभावेन त्रैपादिकनलोपस्य प्रवृत्त्यभावबोधनासम्भवेन नलोपे जाते ततो भवदुक्तार्थे पक्षे दीर्घस्य प्रवृत्त्यापत्तेः । एवं 'वृक्ष इह' इत्यादौ यलोपे जाते गुणापत्तेः । नचात्र सूत्रेऽसिद्धमिति न कार्यम्, अविद्यमानवदित्यनुवर्तनीयं, तावतैवेष्टसिद्धिर्भविष्यति, पूर्वत्र कर्तव्ये परं परशास्त्रबोध्यमविद्यमानवदित्यर्थोऽस्त्वित्यर्थादिति वाच्यम्, अप्रवृत्तस्याविद्यमानवद्भावविधानासम्भवेन पूर्वम्प्रवृत्तेरावश्यकतया मूलोक्तदूषणापत्तेः । नच शास्त्रासिद्धत्वस्वीकारेऽपि 'राजभ्याम्' 'वृक्ष इह' इत्यस्यासिद्धिरेव, शास्त्रस्यासिद्धत्वेऽपि कार्यस्य सिद्धतया दीर्घादेः प्रवृत्त्यापत्तेर्दुर्वारत्वादिति वाच्यम् , शास्त्रस्यासिद्धत्वप्रतिपादनद्वारा कार्यासिद्धत्वस्य प्रतिपादनात् । एवञ्च यत्र सपादसप्ताध्यायीस्थशास्त्रस्य त्रैपादिकस्य च युगपत्प्राप्तिस्तत्र परं शास्त्रमसिद्धमप्रवृत्तमित्यनेन बोधने सति परशा-

भावप्रकाशः ।

स्यान्यार्थमावश्यकत्वेनात्र तत एवाप्राप्त्येष्टसिद्धिरित्याशयेन शङ्कते—नचेति । देवदत्ततुल्यवृद्धेर्हन्तृतुल्यबाधकपूर्वसवर्णदीर्घस्य हन्तृतुल्येन "नादिचि" इत्यनेन निषेधेऽपि देवदत्तवद् वृद्धेरुन्मज्जनाभावान्निर्देशोनुपपन्नः सन्ननित्यत्वे ज्ञापक इति भावः । न्यायाविषयत्वेन ज्ञापकत्वं शिथिलयति–हते इत्यादि । नोन्मज्जनं–देवदत्तस्येति शेषः । क्वचित्तु तथापाठ एव । अपिसमुच्चेयमाह—हतत्वारोपे त्विति । देवदत्तहन्तरीति भावः । सुतरामिति । नोन्मज्जनं देवदत्तस्येत्यनुषज्यते, घातकस्य सत्त्वादिति भावः । अत एव तुः प्रयुक्तः । आर्थिकार्थमाह–हन्तुम् । देवदत्तमित्यादिः । उज्जीवनं–देवदत्तस्य । न्यायशरीरं–तत्स्वरूपम्, तदर्थ इति यावत् । न्यायाविषयत्वमाह—तावित्यादि । वृद्धिहन्तुरिति । तत्त्वेनाभिमतस्येत्यर्थः । तत्र–तावित्यादौ । एवं च सुखेन वृद्धिरिति न निर्देशानुपपत्तिरिति भावः । इतिहेतौ, एवं प्रागपि । अत एवाह–तेनेति । तावित्यादिनिर्देशेनेत्यर्थः । प्रकृते वैलक्षण्यमाह—प्रकृते त्विति । 'अमू' इत्यादौ त्वित्यर्थः ।

सरला ।

इति रूपसिद्धिरिति । वृद्धेर्गुणस्य वा तद्घटकमात्रोद्देश्यकविकाराभावेन च तल्लक्ष्यत्वाभावान्न लक्ष्ये लक्षणन्यायप्रवृत्तिरित्युच्यते, तर्हि अमू अमी इत्यादिर्यस्य तादृशस्य अमूदृक् अमीभिः इति न सिद्ध्येदित्यर्थः स्वीक्रियताम् । तथाच अमूदृक् अमीभिः इति न सिद्ध्येत्, तत्र मुत्वप्रवृत्त्यनन्तरं पूर्ववत् उकारेऽकारबुद्ध्या पररूपे मकारनिवृत्तौ अद दृक् इति स्थितौ तल्लक्ष्यत्वेन पुनर्मुत्वाप्रवृत्तेरिति । एवममीभिरित्यत्रापि बोध्यम् ।

त्रमिति च। एतेन त्रिपाद्यां विहितं कार्यमसिद्धमित्यादिः प्राचां ग्रन्थः परास्तः। विवृण्वते कण्ठमिति। विवार एवां प्रयत्न इति भावः। वर्गयमगा इति।

---

शब्दरत्नम्।

कार्यप्रवर्तनमावश्यकमेवेत्यन्यत्र विस्तरः। **परास्त इति।** विहितं कार्यमित्यध्याहारे गौरवाच्च। किं च, त्रिपादी शास्त्रं, तद्धि विधाने करणं न त्वधिकरणम्। त्रिपाद्यां विद्यमानेन शास्त्रेण कार्यमिति व्याख्याने त्वत्यन्तं क्लिष्टतेत्यपि बोध्यम्।

भैरवी।

स्त्रेण लक्ष्ये कार्यसंस्कारबुद्धिर्न भवति। यत्र तु न द्वयोर्युगपत्प्राप्तिस्तत्र त्रैपादिके जातेऽपि शास्त्रेऽभावारोपे तन्निष्पाद्यकार्येऽप्रवृत्तज्ञानेन प्रसक्तं सपादसप्ताध्यायीस्थं कार्यम्भवत्येव, अग्नी इतीत्यत्र प्लुतस्थानिकप्रगृह्यत्ववत्। यत्र तु शास्त्रासिद्धत्वज्ञानद्वारा कार्यानिष्पन्नत्वज्ञानेन सपादसप्ताध्यायीस्थशास्त्रोद्देश्यतावच्छेदकाज्ञानं, तत्र तस्याप्रवृत्तिरेव, राजभ्यामित्यादौ यथा। तथा च मूलोक्तप्रयोजनस्य प्रथमरीत्या सिद्धिरित्याशयेनाह—अन्यत्र विस्तर इति। मूले एतेनेति। उक्तरीत्या कार्यासिद्धत्वस्य प्रतिपादनासम्भवेनेत्यर्थः।

नच पूर्वोक्तप्रकारद्वयेऽपि 'ऊर्णुनविषति' इत्याद्यसिद्धिः, णत्वविधायकशास्त्रस्यानिष्पन्नत्वज्ञानद्वारा नकारबुद्ध्या द्विर्वचनेऽपि वस्तुतो णकारघटितस्यैव द्विर्वचनजातमिति परभागेऽपि णकारः श्रूयेतेति वाच्यम्, "स्थादिष्वभ्यासेन चाभ्यासस्य" इति ज्ञापकेन सपादसप्ताध्यायीस्थकार्ययोग्ये विषये त्रैपादिकशास्त्रस्य पूर्वमप्रवृत्तिकल्पनेनादोषात्।

भावप्रकाशः।

**कार्येति।** सुत्वादीत्यर्थः। **आवश्यकमिति।** तथा चेदं दूषणं प्रागुक्तान्त्यदूषणवद् दुरुद्धरमेवेति भावः। ननु कार्यासिद्धत्वे नातिदेशोऽयम्, किन्तु तस्यासिद्धत्वमनिष्पन्नत्वम्, तच्च जातस्य वचनशतेनापि कर्तुमशक्यमिति प्रागप्रवृत्तत्वरूपं बोध्यत इति नोक्तदोष इति चेन्न, 'राजभ्याम्' इत्यादौ पूर्वशास्त्रकार्यस्य कस्याप्यप्राप्त्या एतदप्राप्तौ नलोपे जाते प्राप्तदीर्घस्यानेन वारणाभावापत्तेः, 'हर इह' इत्यादावुक्तरीत्या यलोपेऽस्याप्राप्त्या गुणापत्तेश्च। तद्ध्वनयन्नाह—**इत्यन्यत्र विस्तर इति।** इत्यादिकं शब्देन्दुशेखरादौ द्रष्टव्यमिति भावः। ननु त्रिपाद्यामित्यादिमूलोक्तप्रक्रियाग्रन्थः शास्त्राद्यसिद्धत्वाशयक एव, यतस्तत्पक्षे यत्र द्वयोः सहप्रसङ्गस्तत्र त्रैपादिकस्यादावप्रवृत्तिरेव, अभावारोपात्। यत्र तु अन्तरङ्गत्वात्त्रैपादिकमादौ प्रवृत्तं तत्रापि तच्छास्त्र एवाभावारोपेण तन्निवृत्तिबुद्धेरभावः, आदेशबुद्ध्यभावो लक्ष्ये जातत्वबुद्ध्यभावश्च। जायमानकार्यमादेशे एव स्थानिबुद्ध्या प्रवर्त्तते; "नहि रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयति" इति न्यायात्। एतेन कार्यासिद्धत्वे नात्र न्यायः प्रवर्त्तते; बुद्धिविपरिणाममात्रपरे ह्यत्र शास्त्रे आदेशबुद्ध्या स्थानिबुद्धिरपनीयते; असिद्धत्वेन चादेशबुद्धावेव तिरस्कृतायां निरपवादा स्थानिबुद्धिरिति कथं न सा स्वकार्यं प्रवर्त्तयेदिति प्रक्रियाप्रकाशोक्तमपास्तम्, उक्तदोषात्। स्थानिबुद्धावादेशबुद्ध्याऽपनीतायां तस्यां चान्यतोऽपनीतायां पुनः स्थानिबुद्धेरसम्भवाच्च। लिट्तिपृणलादिषु तथादर्शनात्। एवञ्च कार्यासिद्धत्वस्यापि फलितत्वेन द्वयोरसिद्धत्वस्य तत्तात्पर्यविषयत्वेनोभयाशयेन तेन तथोक्तम्। कार्यासिद्धत्वमात्रविवक्षायां तु परं कार्यमित्येव वदेत्, न तु त्रिपाद्यां विहितमिति। एतेन भाष्यायैक्याय कार्यशब्देन शास्त्रं लक्ष्यते, विहितमिति च पठितमिति व्याख्येयमिति प्रक्रियाप्रकाशोक्तिर्निरस्ता, उक्तरीत्यैव निर्वाहे तथा व्याख्याने गौरवात्। एवं च सम्यगेव स ग्रन्थ इत्यत आह—**विहितमिति।** **अध्याहार इति।** निराकाङ्क्षाध्याहार इत्यर्थः। ननु पूर्वशब्देन पराक्षेपे तस्यैवेदमर्थकथनमत आह—**किञ्चेति।** शास्त्रत्वादेवाह—**तद्धीति।** **न त्वधीति।** प्रयोगस्यैव सत्त्वादिति भावः। एवं च सप्तम्यनुपपन्नेति बोध्यम्। तन्निर्वाहायाह—**त्रिपाद्यामिति।** **क्लिष्टेति।** तदनुपपत्तिक्लेश इत्यर्थः। अपिनाऽऽकाङ्क्षामुत्थाप्य सम्बन्ध इति क्लेशसमुच्चयः। इष्टार्थस्य त्रिपाद्यसिद्धेतिव्याख्यानेनैव सिद्ध्या मन्मतेऽतिलघुतमत्वादिति भावः। ननु चतुर्दशसूत्र्यां कादित्वविशिष्टमावसा-

वर्गगा यमगाश्चेत्यर्थः । काद्य इति । लोकप्रसिद्धपाठापेक्षमिदम्, चतुर्दशसूत्र्यां मावसानत्वायोगात् । अर्द्धविसर्गेति । सादृश्यमुच्चारणे लेखने च बोध्यम् ।

ऋलृवर्णयोरिति । आ च आ च रलौ, तौ च तौ वर्णौ चेति विग्रहः,

शब्दरत्नम् ।

लोकप्रसिद्धेति । "त्रिभिश्च मध्यमैर्वर्गैः" इति भाष्यपर्यालोचनया क—ख—ग—घ—ङ-इत्यादीनामप्यनादित्वमिति भावः । उच्चारणेति । पादमात्रिकाविमाविति भावः । लेखने चेति । अर्द्धवृत्तद्वयात्मकलिपित्वादिति भावः ।

रलाविति । ऋलृ औ इति स्थिते "ऋत्यकः" ( पा० सू० ६।१।१२८ ) इति प्रकृतिभावेन दीर्घाभावे गुणे यणि च रलावित्यस्य सिद्धिः । उश्च उलृ च ऋलोरिति

भैरवी ।

ननु लोकप्रसिद्धपाठस्याधुनिकत्वेन तदपेक्षा नोचितेत्यत आह—त्रिभिश्चेति । पादमात्रिकाविति । विसर्गस्य व्यञ्जनरूपतयाऽर्द्धमात्रिकत्वेन तदर्द्धस्यास्य पादमात्रिकत्वम् । अत एतस्य तथैवोच्चारणङ्कार्यमिति भावः । यत्तु ऋ लृ औ इति स्थिते "ऋत्यकः" इति प्रकृतिभावप्रवृत्तिपक्षे 'ऋअलौ' इति स्यादिति कस्यचिदुक्तिस्तां दूषयितुमुपक्रमते—ऋलृआवित्यादिना । नच गुणोत्तरमपि यणादेशः "अचः परस्मिन्" इति स्थानिवद्भावेन 'ऋत्यकः' इति प्रकृतिभावप्रवृत्त्या न स्यादिति वाच्यम्, प्रत्यासत्त्या ऋकाररूपाज्निमित्तककार्यस्यैव प्रकृतिभा-

भावप्रकाशः ।

नत्वायोगात् 'कादयो मावसाना' इत्ययुक्तमत आह—लोकप्रसिद्धेतीति । अग्रिममूलस्याप्ययमेवार्थः । ननु लोकपाठस्याधुनिकत्वेन तदपेक्षत्वमयुक्तमत आह—त्रिभिरिति । आदिना चादिसङ्ग्रहः। एवंक्रमेण पठितानामित्यर्थः । पादेति । विसर्गस्य व्यञ्जनत्वेन अर्धमात्रत्वेन तदर्धत्वात् । एवञ्चोच्चारणं तथैव कर्त्तव्यमिति भावः । अर्धवृत्तेति । पूर्णविसर्गस्य वर्तुलद्वयात्मकत्वेन तदर्धत्वमस्य । एवञ्चार्धयोर्वृत्तयोर्द्वयेत्यर्थः, नतु वृत्तद्वयस्यार्धमिति, तदा एकपूर्णवृत्तलाभापत्तेरिति भावः । यत्तु खण्डनकृज्जगन्नाथादयः—"ऋत्यकः" इतिप्रकृतिभावे 'ऋअलौ' इति भाव्यं गुणोत्तरमपि पूर्वविधौ स्थानिवत्त्वेन ऋत्परत्वात् । वैकल्पिकत्वादकृतपरिभाषया वा तदभावपक्षे त्वन्तरङ्गत्वात्सवर्णदीर्घे यणि च 'रौ' इति स्यादिति 'रलौ' इति चिन्त्यमिति । अत्र मान्याः, अकृतव्यूहपरिभाषया सवर्णदीर्घो न, अग्रे यण्प्रवृत्या सवर्णाज्रूपनिमित्तविनाशात् । एवञ्च तदभावेऽग्रे गुणे यणि च सिद्धं रलावितीति। रत्नाकरस्तु वार्णपरिभाषया दीर्घं बाधित्वा गुणे यणि च तत्सिद्धिरित्याह । तत्त्रितयमपि चिन्त्यम् । अकृतव्यूहपरिभाषाया असत्त्वाद्वार्णादाङ्गमित्यस्या धर्मिग्राहकमानात्समानकार्यित्वे इवाङ्गवार्णयोर्युगपत्प्राप्तावेव उवोखेत्यादौ तथा। प्रकृते तु विभक्त्युत्पत्तेः प्रागेव सवर्णदीर्घप्राप्तिरिति स्पष्टमेव । एतेन न च ततः प्रागेवान्तरङ्गत्वाद्दीर्घः शङ्क्यः, अपवादभूतवार्णपरिभाषाविषये तदप्रवृत्तेः । नह्यन्तरङ्गबहिरङ्गयोर्युगपत्प्रवृत्तिः क्वापि सम्भवतीत्यपि रत्नाकरोक्तमपास्तम् । एवञ्च युगपत्प्राप्ताविति कल्पनाया निर्मूलत्वात्तथा खण्डनोक्तिं खण्डयन् मण्डनकारोऽपि चिन्त्यः समाननिमित्तरूपसमानाश्रये सेति वदन् जगन्नाथ इवेति बोध्यम् । अतः प्रकृतिभावाभावे इष्टासिद्धावपि तमवष्टभ्यान्यथा तत्सिद्धिमाह—ऋलृ इति । नन्वेवं स्थितिरेव दुर्लभा, औतः प्राक् दीर्घप्राप्तेः, अत आह—ऋत्यक इति । अस्य दीर्घबाधकत्वादिति भावः । एवञ्च तेन दीर्घाभावे सति तथा स्थिते गुण इत्यादियोजना बोध्या । दीर्घेत्युपलक्षणं यणोऽपि, प्रत्यासत्त्या ऋन्निमित्तकार्यमात्रस्य तेन वारणात् । अत एवाह—गुणे इति । "ऋतोङि" इत्यनेनेति भावः । यत्तु गुणे तस्य स्थानिवत्त्वेन दीर्घो न यणिति जगन्नाथादिः, तन्न, तथासति बाधकस्य जागरूकत्वात् । पूर्वस्यैव विधौ स्थानिवत्त्वाच्च । एतेन गुणोत्तरमपीत्यादिखण्डनकृदाद्युक्तिरपास्ता । 'उत्सर्गसमानदेशाः' इति न्यायेन त-

सरला ।

मूले मावसानत्वेति । अस्य कादित्वविशिष्ट इत्यादिः । अन्यथा चतुर्दशसूत्र्यामपि अकारमारभ्य 'ञम' इत्यादिसूत्रस्थमकारान्तसमुदाये तत्संभवेन तदसङ्गतिः स्यादिति भावः । सिद्धिरिति । वस्तुतस्तु

उश्च उल् च ऋलोः, तयोर्वर्णयोरिति वा; प्रथमान्तेन परिनिष्ठितविभक्त्या वा

शब्दरत्नम् ।

पाठः । रलोरिति पाठे आगन्तुनाऽकारेण निर्देश इति बोद्धव्यम् । तयोर्वर्णयोरिति । "पूरणगुण" (पा०सू० २।२।११) इति निषेधस्तु षष्ठीसमासस्य न तु कर्मधारयस्य, बहुलग्रहणेन तदभावो भाष्योदाहृतविषय एव नान्यत्रेति भावः । प्रथमान्तेनेति ।

भैरवी ।

वेन प्रतिबन्धात् । इति पाठ इति । एतेन तस्यासाम्प्रदायिकत्वं ध्वनितम् । 'आगन्तूनामन्ते सन्निवेशः' इति न्यायविरोधात् । ननु ऋलृवर्णयोरित्यनुपपन्नम्, षष्ठीसमासस्य 'समानाधिकरणेन षष्ठी न समस्यते' इति निषेधात्, कर्मधारय इत्यपि न सम्भवति, तस्यापि प्रकृते षष्ठ्यन्तपदसम्बन्धितया तेन निषेधस्य प्राप्तेरित्याशङ्कां निराचष्टे—पूरणेति । ननु कर्मधारयस्येति । अनन्तरस्येति न्यायादिति शेषः । ननु तस्य निषेधस्य विषये कर्मधारयाभावोऽप्यन्यत्र दृष्ट इत्यत आह—बहुलग्रहणेनेति । भाष्योदेति । 'यजुषः पीयमानस्य' इत्यादौ । नच समानाधिकरणमसमर्थवदित्यतिदेशात्कथं कर्मधारय इति वाच्यम्, समानाधिकरणाधिकारे "पूर्वकालैक" इत्यादिवचनपाठेन तस्याप्रवृत्तेर्ज्ञापनात् । नचासामर्थ्यादेव समासाप्राप्तौ 'समानाधिकरणेन षष्ठी न समस्यते" इति निषेधवैयर्थ्यमिति शङ्क्यम्, 'सर्पिः कालकम्' इत्यादौ "इसुसोः"इति

भावप्रकाशः ।

स्यापि पूर्वपरविधित्वात् । अस्य स्थानिवत्त्वस्य प्रकृतिभावप्रवृत्तिद्वारा पदान्तभूत–ऋकारस्थानिकयणादेशप्रतिबन्धकतया साक्षात्परम्परया वा पदचरमावयवसाधकस्तत्प्रतिबन्धकश्च निषिध्यत इत्यर्थस्य वक्ष्यमाणतया निषेधाच्च । एतेन न च न पदान्तेति निषेधः, प्रकृतिभावस्य विकाराभावमात्रतात्पर्यकत्वेन पदचरमावयवत्वाभावादित्यपि जगन्नाथाद्युक्तमपास्तम् । तद्ध्वनयन्नाह—यणि चेति । पाठइति । मुख्यपाठ इत्यर्थः । प्रकृतिभावपरयणादेशाभ्यां रूपसिद्धेरिति भावः । इतिपाठे इति । अनेन नास्त्येव स इति ध्वनयति । यदि क्वचिदस्ति तत्राह—आगन्तुनेति । सोऽप्यसाम्प्रदायिक एवेति ध्वनयति—इतिबोध्यमिति । आगन्तूनामन्ते निवेशस्य लोके क्लृप्तत्वादिति भावः । एतेन चेयमित्यादावपि च ययमित्याद्यापत्तिरिति मन्दोक्तिः, ओसि ऋतोङीतिगुणानिमित्तत्वाद्रलोरितिचिन्त्यमिति खण्डनकृदुक्तिः, प्रकृतिभावपक्षे ऋलोरिति तदभावे रोरित्युचितमिति रलोरिति लोरिति च चिन्त्यमिति जगन्नाथोक्तिस्तथा साधयितुं मण्डनकृदुक्तिश्चापास्तेति दिक् । वर्णयोरिति । षष्ठीसमासे पूर्वनियमः, कर्मधारये तु व्याप्यव्यापकभावसत्त्वेन व्याप्यस्यैव स इति विरोधेन परत्वात्षष्ठीसमासस्त्वत्र न, पूरणगुणेति निषेधात्, समानाधिकरणमसमर्थवदित्यसामर्थ्याच्च । समानाधिकरणाधिकारे 'समानमध्यममध्यमवीराश्च' इति पाठेन तस्य तदधिकारस्थसमासाविषयत्वेऽप्यन्यत्राप्रवृत्तौ मानाभावात् । न चैवं समानाधिकरणेनेतिनिषेधो व्यर्थः, तत एव तत्र षष्ठीसमासाप्राप्तेरिति वाच्यम्, 'सर्पिः कालकम्' इत्यादाविसुसोरिति षत्वाभावाय तस्यानावश्यकत्वेऽपि 'सर्पिष्पीयते' इत्यादौ षत्वार्थमावश्यकेन धातूत्तरप्रत्ययेन कर्माद्यभिधानेनेत्यर्थकेनाधात्वभिहितमित्यनेन 'सर्पिषः पीयमानस्य' इत्यादौ सामर्थ्यसत्त्वेन निषेधावश्यकत्वात् । न चैवं 'वीरः पचन्' इत्यादौ समानमध्येत्यादेश्चारितार्थ्येनाज्ञापकत्वेऽन्यत्र कर्मधारयेऽपि तत्प्रवृत्त्यापत्तावत्र सोपि न स्यादिति वाच्यम्, तेषामनभिधानात् । अत्र च न वा वचनप्रामाण्यादिति समर्थसूत्रस्थं भाष्यं मानम् । एवञ्चात्र "विशेषणम्"इति कर्मधारयो नोत्सहते, प्रतिषिद्धेति भाष्योक्तेः । 'तौ' इत्यादाविव देवदत्तेति न्यायाविषयत्वाच्चेति दिक् । नन्वेवं तस्येवास्यापि "पूरण" इतिनिषेधः कुतो नात आह—पूरणेति । निषेधस्त्वित्ति । समानाधिकरणहेतुक इत्यर्थः । "षष्ठी" इतिसूत्रविहितसमासस्यैवेत्यर्थः, अनन्तरस्येति न्यायादितिभावः । अत एवाह—न त्विति । एवञ्च स सुलभ इति भावः। ननु 'तक्षकस्य सर्पस्य' इत्यादाविव बहुलग्रहणात्तदभावापत्तिरत आह—बहुलेति । तदभाव इति । कर्मधारयाभाव इत्यर्थः । भाष्योदेति । भाष्यादीत्यर्थः । वृत्त्यादिपरिग्रह आदिना । नान्यत्रेतीति ।

सरला ।

"न पदान्ताः परेऽणः सन्ति" इति भाष्यप्रामाण्येन लकारान्तानामनभिधानेन आ च लवर्णश्च ऋलवर्णौ

विग्रह इति सिद्धान्तात्। "ऋत्यकः" (पा० सू० ६।१।१२८) इति प्रकृतिभावः।

नाज्झलौ (पा० सू० १।१।१०) ॥ आकारसहित इति । अत्र च "कालसमयवेलासु" (पा० सू० ३।३।१६७) इत्यादिनिर्देशाः प्रश्लेषे लिङ्गम्। न चैवमपि यिया३सो, इत्यादौ "गुरोरनृत" (पा० सू० ८।२।८६) इति प्लुतादा-

---

शब्दरत्नम्।

प्रथमोपस्थितत्वादिति भावः। अयं पक्षः "अनेकमन्यपदार्थे (पा०सू० २।२।२४) इति सूत्रे भाष्ये। परिनिष्ठितेति। अत्र च "एकविभक्ति चापूर्वनिपाते" (पा० सू० १।२।४४) इति ज्ञापकम्। अन्यथा मालामतिक्रान्त इति विग्रहेऽतिपदस्यापि नियतविभक्त्यन्तत्वेनैकविभक्तीत्यस्य व्यावर्त्यालाभः। एकस्यानियतविभक्तित्वे हि तद्वारणाय "एकविभक्ति" इति सार्थकम्, परिनिष्ठितविभक्त्या समासे त्वतिक्रान्तमतिक्रान्तेनेत्यादिक्रमेण तस्यानियतविभक्तिकत्वं स्पष्टमेव। अत एव "तत्पुरुषे तुल्यार्थ" (पा० सू० ६।२।२)

भैरवी।

षत्वाभावार्थमावश्यकस्य तस्य वचनस्य 'सर्पिष्पीयते' इत्यत्रापि प्रवृत्तिः स्यादिति तद्वारणायाधात्वभिहितं समानाधिकरणमसमर्थवद्भवतीति कल्प्यते। एवञ्च यजुषः पीयमानस्येत्यत्र षष्ठीसमासवारणाय समानाधिकरणेति निषेधस्यावश्यकत्वात्। नचैवं 'पूर्वः पचन्' इत्यादौ "पूर्वापर" इत्यस्य सूत्रस्य चारितार्थ्येनान्यस्मिन्कर्मधारये समानाधिकरणमसमर्थवदित्यस्य प्रवृत्तौ प्रकृते कर्मधारयो न स्यादिति वाच्यम्, पूर्वः पचन्नित्यादौ "वचनप्रामाण्यात्" इति समर्थसूत्रस्थभाष्यप्रामाण्यादनभिधानेन समासाभावस्य सत्त्वात्। एवञ्च प्रकृते कर्मधारये न किञ्चिद्बाधकम्। अयम्पक्षः-प्रथमान्तेनेति पक्षः। अत एव—"परिनिष्ठितविभक्त्या समासः" इति पक्षस्वीकारादेव। यदुक्तं प्राग्भाष्योदाहृतेति, तत्र मानन्तु अस्य वर्णस्येत्यर्थकः 'सहिवहोः' इति सूत्रेऽवर्णस्येति प्रयोगः "अनेकमन्यपदार्थे" इति सूत्रस्थान्यस्य पदस्येत्यर्थकोऽन्यपदेति प्रयोगश्चेति बोध्यम्। "एकविभक्ति चापूर्वनिपाते" इति समुदायाभिधानमेकविभक्तिग्रहणाभावेऽपूर्वनिपात इत्यस्यानर्थक्यमित्यभिप्रायेण। ज्ञापकन्त्वेकविभक्ति-

भावप्रकाशः।

अत एवान्यस्य पदस्यार्थे इत्यर्थकान्यपदार्थे इति, अस्य वर्णस्येत्यर्थकः अवर्णस्येति च सूत्रप्रयोगः संगच्छते।

यत्तु मण्डनकारः, पदसंस्कारपक्षे आद्यम्, तत्र इतरानन्वितपदस्य व्युत्पादनात्प्रातिपदिकार्थमात्रे प्रथमाया एवौचित्यात्। वाक्यसंस्कारपक्षेऽन्त्यम्, तत्र तदन्वितपदस्य व्युत्पादनात्तत्तद्विभक्तीनामेव युक्तत्वात् इति। तन्न, अन्त्यपक्षेपि पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादायान्तरङ्गाणां प्राक् प्रवृत्तेरन्यत्र स्पष्टत्वात्। अत एव तत्र ज्ञापकं वक्ष्यति। तद्ध्वनयन्नाह—प्रथमोपेति। प्रागुपस्थितनिमित्तकत्वेनान्तरङ्गत्वादित्यर्थः। एतेन प्रथमत्याग इति न्यायस्य खण्डितत्वेनेदं चिन्त्यमित्यपास्तम्। भाष्ये इति। तत्र ह्युपसर्जनसंज्ञार्थमनेकग्रहणं कर्त्तव्यमित्युक्त्वा नवैकविभक्तित्वादित्यादिना प्रथमान्तेनैव 'चित्रगुश्चित्रगुम्' इत्यादौ विग्रहात्तत्संखण्डय 'राजकुमारी राजकुमारीम्' इत्यादावतिप्रसङ्गमाशङ्क्यैकग्रहणसामर्थ्यात्परिनिष्ठितविभक्त्यापि समासइति तदावश्यकमित्युक्तम्। परिनिष्ठितेतीति। यत्त्वत्र पूरणेत्यत्रत्यसमानाधिकरणेनेति ज्ञापकमिति मान्यास्तत्प्राचामनुरोधेन। तत्प्रत्याख्यानस्य तत्रैव भाष्ये ध्वनितत्वादुक्तभाष्यविरोधाच्चात आह-अत्र चेति। परिनिष्ठितविभक्त्या समासपक्षे चेत्यर्थः। इति ज्ञापकमिति। इत्यत्रत्यमेकविभक्तिग्रहणं ज्ञापकमित्यर्थः। एकग्रहणं ज्ञापकमिति यावत्। विभक्तिपदमपि संज्ञिनिर्देशार्थमावश्यकमिति भावः। एवमग्रेऽपि। तद्ध्वनयन्नाह—अन्यथेति। तत्पक्षानङ्गीकारे इत्यर्थः। मालापदसमुच्चायकोऽपिः। एकपदसामर्थ्यलभ्यमर्थमाह—नियतेति। अनिष्टसम्पादकतयापि न चारितार्थ्यमित्याह—एकस्येति। अन्यतरस्येत्यर्थः। तदङ्गीकारे सार्थक्यमाह—परिनिष्ठितेति। तत्त्वञ्च स्फुटीभविष्यतीति। अतिक्रान्तमित्यादि। मालामित्यनुषज्यते। इत्यादिक्रमेण तया समासेत्वित्यन्वयः। तस्य—अतिशब्दस्य। अत एव-ज्ञापकेन तत्पक्षा-

**कारात्परस्य सनः सस्य षत्वं स्यादेवेति वाच्यम् , आश्च आश्चेति द्वन्द्वे सवर्णदीर्घेण दीर्घात्परत्र प्लुताऽपि प्रश्लिष्यत इति व्याख्यानात् । यणादिकमिति ।**

---

### शब्दरत्नम् ।

इति सूत्रे भाष्ये 'परमे कारके, परमेण कारकेण' इत्यादावतिप्रसङ्गमाशङ्क्य प्रतिपदोक्तपरिभाषया समाहितमिति भावः ।

**अत्र चेति** । सूत्रे इत्यर्थः । **प्रश्लेषे**—आकारप्रश्लेषे निर्देशा लिङ्गमित्यन्वयः । निर्देशेन आकारहकारयोः सावर्ण्याभावबोधकानुमानिकवचनकल्पनापेक्षया प्रश्लेषे एव तात्पर्यकल्पनं लघीय इति भावः ।

**व्याख्यानादिति** । एवं व्याख्याने मानं तु प्रयत्नभेदेन "नाज्झलौ" इत्येतत्प्रत्याख्यानपरं भाष्यम् । तद् ध्वनयन्वक्ष्यति—'सूत्रं मास्त्विति भाष्ये स्थितम्'

### भैरवी ।

ग्रहणमेव । **अतिप्रसङ्गम्**—तेन सूत्रेण पूर्वपदस्वरप्राप्तिरूपातिप्रसङ्गम् । प्रतिपदोक्तेति । **तृतीयासप्तमीति** पदोपादानेन यः समासो विधीयते तस्य ग्रहणं परिभाषया भवतीति भावः ।

यत्तु "कालसमयवेलासु" इति निर्देशेनाकारहकारयोर्न सावर्ण्यमित्येव कल्प्यतामिस्मिन्सूत्रे आकारस्य प्रश्लेषेणेति, तन्मतं निरस्यति—अत्र चेत्यादिना । वेलास्विति निर्देशस्य ज्ञापकत्वमर्थविशेषे चेदत्र ज्ञापकाभिधानं तत्र तज्ज्ञाप्यं वचनमानुमानिकार्थाभिधायकमेव भवति । अनुमितिस्तु व्याप्तिज्ञानादिघटितगुरुतरसामग्रीप्रयोज्येति गौरवमिति भावः । अत्र न्यायः—आकारः हकारसावर्ण्याभाववान् षत्वाप्रयोजकत्वादिति कल्पनीयः ।

ननु "नाज्झलौ" इत्यत्र दीर्घस्य सत्त्वेन प्लुतस्य सद्भावे मानन्नास्तीत्यत आह—व्याख्यानादितीति । प्रयत्नभेदेन—ईषद्विवृतविवृतेतिप्रयत्नभेदेन । भाष्यमिति । प्रयत्नभेदे सति सावर्ण्याभावप्रकाशः ।

### भावप्रकाशः ।

ङीकारादेव । **इत्यादाविति** । कर्मधारयइत्यर्थः । **अतिप्रसङ्गम्**—पूर्वपदप्रकृतिस्वरातिप्रसङ्गम् । **प्रतिपदोक्तेति** । तृतीयासप्तमीतिपदोपादानविहितसमासयोरेव तथा तत्र ग्रहणमित्यर्थः । अन्यथा निर्मूलत्वेन तथा समासस्यैवाभावेन शङ्कोत्तरयोरसङ्गतिःस्पष्टैवेतिभावः । नन्वत्र चेत्यस्याव्यवहितत्वादाकारसहिते इत्यर्थे 'प्रश्लेषे' इत्यस्यानन्वयापत्तिरत आह—**सूत्रे इति** । तत्सामर्थ्याद्व्यवहितपरामर्श इति भावः । व्यवहितत्वेनार्थान्तरभ्रमवारणाय योजनामाह—**प्रश्लेषइत्यादि** । तस्यार्थमुपस्थितत्वादाह—**आकारेति** । यत्तु लाघवाद्धकारस्याकारादिना न सावर्ण्यमितिज्ञापनसम्भवात्प्रश्लेषो व्यर्थ इति रत्नाकरः । अन्यत्रापि ज्ञापनस्थले आनुमानिकं वचनमेवोरीक्रियते इति तद्भावः । तत्खण्डयति—**निर्देशेनेति** । 'कालसमय' इत्यादिनिर्देशेनेत्यर्थः । **आप्रश्लेषे** इतिच्छेदः । **कल्पनम्**—उक्तनिर्देशस्येति भावः । **लघीय इति** । अपूर्ववचनतो लघुतोऽपि तत इदं लघुतरं ज्यायः । एवञ्च यत्र लघुतरः प्रश्लेषादिप्रकारो न, तत्रागत्या तथावचनकल्पनेप्यत्र वैषम्यमितिभावः । उक्तनिर्देशस्य दीर्घत्वेनात्र मानत्वासम्भवादाह—**एवं व्याख्यान इति** । **भेदेन** ईषद्विवृतविवृतावित्येवंरूपेण । **भाष्यमिति** । अन्यथा प्रत्याख्याने प्लुतेन ह्रस्यासावर्ण्यम्, तत्सत्त्वे तु सावर्ण्यमिति फलभेदे प्रत्याख्यानासम्भवेन तदसङ्गतिः स्पष्टैवेति भावः ।

### सरला ।

तयोरित्येव विग्रह इति स्पष्टं शेखरे । **समाहितमितीति** । यस्मिन् सूत्रे लक्षणप्रतिपदोक्तपरिभाषा सञ्चारणीया तत्सूत्रघटकपदघटितशास्त्रविधेयत्वं प्रतिपदोक्तत्वमिति लक्षणेन तृतीयासप्तमीपदघटितशास्त्रे "तृतीया तत्कृतार्थ" "सप्तमी शौण्डैः" इति, तद्विधेयसमासयोरेव तत्त्वं न तु "विशेषणं विशेष्येण" इति विहितसमासस्येति तदाशयः ।

**इति भाव इति** । स्यादेतत् । सर्वत्र हि निषेधस्थले निषेधकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन निषेध्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोच इति निषेध्यशास्त्राणामप्रामाण्याप्रसक्तये

शीतलशब्दे सवर्णदीर्घ आदिशब्दार्थः ।

शब्दरत्नम् ।

इति । शीतलशब्दे इति । शस्य ईकारे परे, दधीतीकारस्य शकारे परे चेत्यर्थः । न च शीङः शकारोच्चारणेन तच्छकारस्येकारे न दीर्घ इति वाच्यम्, शीतलशब्दे शीङो- ऽभावात् । किं तु श्याधातोः क्ते "द्रवमूर्तिस्पर्शयोः श्यः" (पा०सू०६।१।२४) इत्यनेन सम्प्रसारणे "श्योऽस्पर्शे" (पा० सू० ८।२।४७) इत्युक्तेर्नत्वाभावे च निष्पन्नाच्छीतशब्दा- त्सिध्मादित्वाल्लचि शीतलशब्द इत्यदोषात् । शीतशब्दो हि सिध्मादिषु गणरत्ने वृत्तौ च पठ्यते । किं च तेनापूर्ववचनकल्पनापेक्षया सूत्रोदाहरणत्वमेव तस्य युक्तमिति भावः ।

भैरवी ।

भावः सूत्रप्राप्त्यभावप्रयोज्य एव भवति, यदा तु न प्रयत्नभेदकल्पना तदा चेत्सावर्ण्यन्तदा फलभेदः स्पष्ट एवेति । शस्य ईकार इति । सूत्राभावे ह्रस्वेकारशकारयोः सावर्ण्याच्छकारस्या- क्त्वात्सवर्णदीर्घप्राप्तिः, ईकारस्य तु तस्याच्त्वादिति विशेषः । सिध्मादिगणे सम्प्रति शीत- शब्दपाठानुपलम्भादाह—शीतशब्दो हीति । नन्वेतादृशक्लेशेन शीतलशब्दसाधनापेक्षया ला- घवेन शीङ एव रूपमित्यस्तु, तथाचोक्तं ज्ञापकं सुस्थमेवेत्यत आह—किञ्चेति । युक्तमिति । लाघवादिति शेषः । अन्यथा शकारोऽच्कार्यानिष्पादक इति वचनान्तरकल्पनाप्रयुक्तं गौरवं स्पष्टमेव । किञ्च शीङः शकारोच्चारणं 'शिश्ये' इत्यादौ चरितार्थम्, तत्रोत्तरखण्डे "एरनेकाचो- ऽसंयोग" इति यण् शकारसत्त्व एव भवति । दीर्घस्तु पूर्वन्न प्रवर्तते, वार्णादाङ्गस्य बलवत्त्वात् ।

भावप्रकाशः ।

यत्तु मान्याः, शस्येकारादौ परे सवर्णदीर्घादि दधीत्यस्यैव, न शीङ्शयादिषु, शकारोच्चारणवैयर्थ्या- पत्त्याऽखण्डेऽच्कार्याप्रवृत्तिबोधनात् । अत एव तितउशब्दे गुणो न, तस्माच्छीतलशब्दे परे दधीत्यस्य सवर्ण- दीर्घ आदिशब्दार्थः । अत एव मूलं परममूलं च स्वरसतः सङ्गच्छते इति; तत्प्राचामनुरोधेन इति तद् ध्व- नयन्नाह—शस्येति । सूत्राभावे ह्रस्वेकारशकारयोः सावर्ण्याच्छस्याक्त्वेन दीर्घप्राप्तिः; सूत्रसत्त्वे तु तयो- स्तन्निषेधेन शस्यानक्त्वात्तदप्राप्तिरिति भावः । तस्याः प्राचामनुरोधितां ध्वनयितुं शङ्कते—नचेति । विशेषापेक्षं ज्ञापकमित्याह—तच्छकारस्येति । शीतलमिति शीङो रूपमौणादिकं तत एवानिट्त्वमिति भावः। तदाशयेनैव सिद्धान्ती समाधत्ते—शीतलेति । सम्प्रसारणमित्युपलक्षणं पूर्वरूपस्यापि। अदोषादिति । शोच्चारणवैयर्थ्यापत्तिरूपदोषाभावादित्यर्थः । शीङादिषु तत्सामर्थ्यात्तद्वारणेप्यत्र शीतलशब्दे श्याधातोरुप- देशस्यान्यत्र साफल्येनासामर्थ्यात्तदभावे स्वदोषापत्तिरुभयत्र युक्तेवेति भावः । सर्वत्र ग्रन्थे गणे पाठानु- पलम्भादाह—शीतेति । तुष्यतु दुर्जनन्यायेनाह—किञ्चेति । धातूनामनेकार्थतया शीङ एवेदं प्रागुक्त- रीत्या रूपमिति भावः । युक्तमिति । लाघवादिति भावः । एतेन शीङादेशोच्चारणस्य सामान्यापेक्ष- ज्ञापकत्वात् श्याधातो रूपेऽपि सिद्धिः, किञ्चानुवृत्त्या "अकःसवर्णे"इत्यत्रत्याज्ग्रहणसामर्थ्येन शे परतो- ऽपि दीर्घवारणं सुशकमित्यपास्तम्, उक्तयुक्तेः, तस्योत्तरार्थत्वाच्च । अत एव शीतलशब्दे सवर्णदीर्घ इत्ये-

सरला ।

नियमः स्वीक्रियते । ततश्च "नाज्झलौ" इत्येतन्निषेधशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नमच्त्वं हल्त्वं च त- दवच्छिन्नातिरिक्तत्वेन तुल्यास्यसूत्रे सङ्कोचे अचामज्भिर्हलां हल्भिरपि सवर्णसंज्ञा न स्यात् । सूत्रं तु दीर्घा- दीनां ग्रहणकशास्त्रस्य नाज्झलौसूत्रेऽप्रवृत्त्या तत्रत्याच्पदेनाग्रहणात्तत्र चरितार्थमिति चेत् ? अत्रोच्यते, अ- च्भिन्नेन तुल्यास्यप्रयत्नमच्भिन्नं सवर्णं, हल्भिन्नेन तुल्यास्यप्रयत्नं हल्भिन्नं सवर्णं भवतीति आवृत्त्या तुल्यास्यसूत्रस्यार्थद्वयकरणेनादोषात् । नाज्झलाविति तात्पर्यग्राहकम् । अत्र प्रथमवाक्यार्थेन हलां द्विती- येन चाचां सवर्णसंज्ञा बोध्यते । अथवा तुल्यास्यसूत्रोक्तवैशिष्ट्ये स्ववृत्तिर्योऽच्त्वाभावो, हल्त्वाभावो वा, तदन्यतरवत्त्वमिति तृतीयसम्बन्धो निवेश्यते । तथा च इकारस्य न शकारेण सावर्ण्यम्, इकारजनकयाव- त्स्थानप्रयत्नजन्यत्वस्य इकाराजनकस्थानप्रयत्नाजन्यत्वस्य च शकारे सत्त्वेऽपि इकारवृत्तिहल्त्वाभावस्य शकारेऽसत्त्वात् । विस्तरस्तु दीपके द्रष्टव्यः ।

अत्रेति । अत्रैवेत्यर्थः । यद्यपीति । ग्रहणकशास्त्रस्याद्याप्यनिष्पत्तेरिति भावः ।

शब्दरत्नम् ।

अत्रैवेति । ग्राहकसूत्र एवेत्यर्थः । अत्र च "उर्ऋत" ( पा० सू० ७।४।७ ) इति सूत्रे तपरत्वं मानम् । तद्धि चुरादिण्यन्तात्कृतधातोर्लुङ्यचीकृतदित्यत्र दीर्घकारस्य स्थाने ह्रस्व एव यथा स्यादित्यर्थम् । पूर्वेणात्राण्ग्रहणे तूद्देश्येन विधेयेन च ऋकारेणाणत्वाऽ-च्छिन्नकालाग्रहणेन न तस्य स्थानित्वं न वा आदेशत्वं प्रसक्तमिति व्यर्थं तत्स्यात् । न च तपरसूत्रेण लृकारग्रहणार्थं तत् । स्थानेऽन्तरतमपरिभाषया ऋकारस्थाने तस्य वारणेन तद्ग्रहणे फलाभावात् । न चैवं ज्ञापितेऽपि भाव्यमानत्वात्सवर्णग्रहणाप्रसक्तेस्तद्वैयर्थ्यम् । तपरत्वाभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थतयाऽपूर्वबोध्यत्वाभावेना-विधेयत्वात् । कृते तु तपरत्वे भाव्यमानताऽपीत्यन्यदेतत् ।

भैरवी ।

मूले सूत्रविशेषस्य प्रतीकमधृत्वा व्याख्याने सन्देहो भविष्यतीत्यतो व्याचष्टे-ग्राहकेति । अत्र च—परेणाण्ग्रहणे च । ननु तपरसूत्रस्यानणि विध्यर्थतया लृकारस्य ग्रहणार्थन्तपरकरण-मस्त्विति शङ्कान्निरस्यति-नच तपरेत्यादिना । विध्यर्थत्वमभ्युपेत्यैव समाधत्ते—स्थानेऽन्तरतमे-ति । एवं ज्ञापितेऽपि-परेणाण्ग्रहणमिति ज्ञापितेपि । वैयर्थ्यमिति । स्वविषये चारितार्थ्याभावा-दिति भावः । स्वरूपाभ्यनुज्ञानार्थेति । यद्यनेनादेशविधानन्न स्यात्तदा 'अचीकृतत्' 'अवीवृधत्' 'अमोमृजत्' इत्यादिष्विरराराम्प्रवृत्तिः स्यादिति दीर्घऋकारस्य स्वरूपोपलम्भो न स्यादिरा-द्यादेशेनापहारात् । सति त्वस्मिन्दीर्घस्वरूपोपलम्भ इति स्वरूपाभ्यनुज्ञेत्यर्थः ।

यत्त्वस्य 'ऋत' इति स्थानषष्ठ्यर्थान्वयायादेशत्वेन "भाव्यमान" इति परिभाषाप्रवृत्तिः

भावप्रकाशः ।

बोक्तं मूले, न तु शीतलशब्दे परे इति । परममूलं तूपलक्षणतया योज्यमिति भावः । मूले सूत्रानुल्लेखजभ्रम-वारणायाह—ग्राहकेति ।

यत्तु रत्नाकरमन्दादयः, "उपसर्गादृति" "ऋतउत्" इति "वृद्धिरादैच्" इत्यैजर्थं च तपरकरणमत्र मानमिति । तन्न, लृग्रहणेन चारितार्थ्यात्, असन्देहार्थत्वेन पूर्वार्थत्वेन चारितार्थ्यस्य भाष्य एव स्प-ष्टत्वाच्च ।

यदपि मन्दः, अतिदेशपक्षे आद्योभयज्ञापकत्वसम्भवइति, तदपि मन्दम्, सावर्ण्यपक्षे तदसम्भवात्, तत्पक्षस्याकरानारूढत्वाच्च, तत्पक्षेऽण्ग्रहणस्यैव सूत्रेऽसत्त्वाच्च ।

तद्ध्वनयन्ज्ञापकान्तरमाह—अत्रचेत्यादि । अत्र च-अत्रैव परेणाण्ग्रहणे । तस्य-भिन्नकालस्य । तत्-तपरत्वम् । एवमग्रेऽपि । तपरेति । अनणि विध्यर्थं तदिति पक्षे इदम्, सिद्धान्ते त्वण्ग्रहणमेव नेति भावः । तत्पक्षानुसारेणैव समाधत्ते—स्थानेन्तरेति । नियमार्थमिति सिद्धान्तपक्षे तु तथा वक्तुमेवाशक्यमिति भावः । तस्य-लृकारस्य । एवं-परेणाण्ग्रहणे । वैयर्थ्यमिति । तथाच ज्ञापनासम्भव इति भावः । आदेशा-न्तरेति । उभयत्र सवर्णोपस्थितावान्तरतम्येन विधानात्सा फलितेति भावः । तदाह-स्वरूपेति । अभ्यनुज्ञानं प्रतिप्रसवः । लाघवेन तस्यैव युक्तत्वादिति भावः । स्पष्टञ्चेदम् "अण् कर्मणि च" इति सूत्रभाष्ये । एतेनेद-मोमः सनः सनेवेत्यादाविवास्याप्यादेशत्वेन विधेयत्वमेव, अन्यथा उरितिस्थानषष्ठ्या अनन्वयापत्तिरित्य-पि मन्दोक्तमपास्तम्, उक्तयुक्तेः, अणुदित्सूत्रे अप्रत्ययपदस्य प्रत्ययभिन्नार्थकतया तद्बोधितपरिभाषायां भाव्यमानपदेनापूर्वबोध्यत्वरूपविधेयत्वस्यैव ग्रहणाच्च, साध्वनुशासनत्वेन इकोयणित्यादाविव स्थानषष्ठ्यु-पपत्तेश्च । तदाह—तयाऽपूर्वेति । एतेन "ऋत उत्" इतितपरकरणाज्ज्ञापकाद्भाव्यमानस्यापि सवर्णग्राहक-

सरला ।

अविधेयत्वादिति । ज्ञापकस्थले सर्वत्र चत्वारोंऽशाः-वैयर्थ्यं, ज्ञापनं, स्वांशे चारितार्थ्यं, फलमन्यत्र चेति । तत्र अणुदित्सूत्रे अण्प्रत्याहारस्य पूर्वणकारेण ग्रहणे ऋकारस्य तेनाग्रहणात्तत्र ग्राहकसूत्राप्रवृत्त्या

शब्दरत्नम्।

**अनिष्पत्तेरिति।** 'वर्णानामुपदेशस्तावत्तदुत्तरकालमित्सञ्ज्ञा तदुत्तरम् "आदिरन्त्येन" (पा० सू० १।१।७१) इति प्रत्याहारस्तदुत्तरकाला सवर्णसञ्ज्ञा तदुत्तरकालम् "अणुदित्" (पा० सू० १।१।६९) इति, एतेन समुदितेनान्यत्र सवर्णानां ग्रहणम्' इति वाक्यापरिसमाप्तिन्यायादित्यर्थः। अयं भावः—"आदिरन्त्येन" इति प्रत्याहारसिद्धौ "नाज्झलौ" (पा० सू० १।१।१०) इत्येतद्वाक्यार्थबोधे सति निर्णीतैतद्विषयपरिहारेण सवर्णपदबोध्यत्वनिश्चये "अणुदित्" इत्यनेन तावतां ग्रहणं बोधनीयम्। अन्यथा बाधकसम्भावनया तुल्यास्यसूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेन तच्छास्त्रजबोधानापत्तिः। न चैतद्वाक्यार्थबोधात् प्राक् तन्निश्चय इति।

भैरवी।

स्यादतोऽयमेव तकारो भाव्यमानोऽपि सवर्णग्राहको भवतीत्यर्थे ज्ञापक इति। तन्न, अपूर्वबोध्यत्वमेव भाव्यमानत्वमित्यर्थस्य प्रसिद्धत्वात्। अपूर्वबोध्यत्वञ्च स्थानिस्वरूपविजातीयनिष्पाद्यत्वम्। भाव्यमानोकारविषय एव सवर्णग्राहकत्वस्य सुप्रसिद्धत्वाच्च। तावतैवादसोऽसेरित्यत्र सम्भवात्।

ननु ग्राहकशास्त्रस्याचार्येण पठितत्वादनिष्पत्तेरित्ययुक्तमतो भावार्थमाह—वर्णानामित्यादिना। तावत्–आदौ। नन्वेतादृशक्रमेण वाक्यार्थनिष्पत्तावन्यत्र "अस्य च्वौ" इत्यादौ सवर्णग्रहणवत् "नाज्झलौ" इत्यत्रापि ग्राहकशास्त्रप्रवृत्तिः कुतो नेत्यत आह–अयम्भाव इति। एतत्—नाज्झलावित्येतत्। परिहारेणेति। अपवादविषयपरिहारेणैवोत्सर्गप्रवृत्तेरङ्गीकारात्। अन्यथा "नाज्झलौ" इत्येतद्वाक्यार्थापर्यालोचने। अनापत्तिरिति। अप्रामाण्यज्ञानानास्कन्दितशक्तिग्रहस्यैव शाब्दबुद्धिहेतुत्वादिति शेषः। नचेति। नहीत्यर्थः। एतद्वाक्यार्थबोधात्–"नाज्झलौ" इतिवाक्यार्थबोधात्। तन्निश्चयः—सवर्णपदार्थनिश्चयः। तथाच तुल्यास्यसूत्रार्थबोधो

भावप्रकाशः।

स्वमवष्टभ्येदं ज्ञापकं सुस्थमित्यपि मन्दोक्तमपास्तम्, उक्तयुक्तेः, उक्तज्ञापकाद् भाव्यमानोकारस्यैव तद्ग्राहकत्वस्य स्वीकाराच्च। "भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति" इति परिभाषाप्यत एव सङ्गच्छते। तेन "अदसोः" इत्यत्र निर्वाहः। तत्रत्यपरममूलोक्तिस्तु चिन्त्यैवेति स्पष्टमन्यत्रेति दिक्। ननु ग्रहणकशास्त्रस्य पाणिनिपठितत्वेनानिष्पत्तिरयुक्तेत्यत आह—वर्णानामिति। इदं च प्राग् व्याख्यातम्। नन्वेतावताऽन्यत्र केवलानां ग्रहणं न भवतीत्येव लभ्यते, किन्च तस्य समुदायमध्ये न निवेश इति कथं "नाज्झलौ" इत्यत्राप्रवृत्तिरत आह—अयं भावइत्यादि। निश्चयेइति। अनेन ततःप्राक् तस्य सामान्यतो बोधोऽस्त्येवेति सूचितम्। अन्यथा—प्राक् निषेधापर्यालोचने। तच्छास्त्रेति। अणुदित्सूत्रेत्यर्थः। अप्रामाण्यसन्देहस्य प्रतिबन्धकत्वादिति भावः। नचैतदिति। नहि नाज्झलावित्येतदित्यर्थः। तन्निश्चय इति। सवर्णपदबो-

सरला।

"उरृत्" सूत्रे उद्देश्येन सवर्णग्रहणे ह्रस्वस्यैव स्थानितया तत्रान्तरतम्यादादेशस्यापि ह्रस्वस्यैव संभवेन दीर्घव्यावृत्त्यर्थं कृतं तपरकरणं व्यर्थं सज्ज्ञापयति परणकारेण ग्रहणमिति। एवं वैयर्थ्यांशस्य ज्ञापनांशस्य च प्रकृते सामञ्जस्येऽपि स्वांशेचारितार्थ्यांशस्य सामञ्जस्यं नायातीति। तथाहि, परणकारेणाऽणुप्रत्याहार इति ज्ञापिते उद्देश्येन सवर्णग्रहणेऽपि विधेयेन 'अप्रत्ययः' इति निषेधात्तदभावे सर्वेषामप्युकाराणां ह्रस्वस्यैव प्रसक्त्या दीर्घादिव्यावृत्त्यर्थतया कृतं तपरत्वं पुनरपि व्यर्थमेवेति चेत्? अत्रोच्यते, परणकारेणाण्प्रत्याहारग्रहणे ऋकारस्याणूत्वात्तत्र सवर्णानां ग्रहणे सति उद्देश्यविधेयाभ्यामुभाभ्यामपि दीर्घादीनां बोधे ह्रस्वस्य ह्रस्वो, दीर्घस्य दीर्घ आदेश आन्तरतम्याद्भवतीति आदेशान्तरनिवृत्त्यर्थत्वमात्रं नत्वपूर्वबोध्यत्वम् "इदमो मः" इति वदिति विधेयत्वाभावेनाप्रत्यय इति निषेधाप्रवृत्तौ प्रसक्तदीर्घादिव्यावृत्त्या तपरकरणस्य चारितार्थ्यमिति। अन्यत्र फलं तु सँय्यन्तेत्यादौ अनुनासिकमकारस्य स्थानेऽनुना-

"हो ढः" ( पा० सू० ८।२।३१ ) इत्युपलक्षणं–रमास्त्वित्यत्र षत्वं, वागाशीरित्यत्र "झयो हः" ( पा० सू० ८।४।६२ ) इत्याकारस्य घकारः, दासीष्टेत्यादौ "दादेः" ( पा० सू० ८।२।३२ ) इति घत्वं च नेति बोध्यम् । यदि तु विवृतमूष्मणामित्यत्र ईषदित्यनुवर्त्य स्वराणां चेत्यत्र निवर्त्य प्रयत्नभेदो व्याख्यायते, तदा "नाज्झलौ" इति सूत्रं माऽस्त्विति भाष्ये स्थितम् ।

---

शब्दरत्नम् ।

यत्तु निषेधवाक्यार्थबोधात्पूर्वं विधेर्वाक्यार्थबोध एव नेति । तन्न, पदार्थोपस्थितौ वाक्यार्थबोधे बाधकाभावात्, निषेधस्य प्रतियोगिज्ञानोपपादकतया विध्यपेक्षत्वेऽपि विधेस्तदपेक्षत्वे मानाभावाच्च । रमास्त्वित्यत्र षत्वमिति । सर्वस्याप्येकया युक्त्या वारणेनापाद्यमानेऽर्थे न्यायानादरादेवमुक्तम् ॥

भाष्ये स्थितमिति । अनेनाऽऽकारप्रश्लेषे मानं दर्शितम् ।

भैरवी ।

यद्यपि प्राग् भवति तथापि निश्चितो न सम्भवतीति तस्याप्रवृत्तिः । बाधकाभावादिति । प्रतिबन्धकबाधबुद्ध्यभावादित्यर्थः । विध्यपेक्षत्वेऽपीति । प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्याभावबुद्धिकारणतायाः प्रसिद्धत्वादिति भावः । षत्वमितीति । अत्र षत्वस्यासिद्धत्वादादौ ढत्वं, ततः "षढोः कः सि" इति कत्वं, ततः षत्वस्य प्राप्तिरिति बोध्यम् । ननु ढत्वादीनामसिद्धत्वात्संयोगान्तलोपः प्राप्नोतीत्येव कुतो नोक्तमत आह–सर्वस्येति । एकया युक्त्या–आकारप्रश्लेषरूपया युक्त्या । न्यायानादरादिति । न्यायस्य पूर्वत्रासिद्धमिति युक्तेः प्रवृत्तिविषयेऽनादरादित्यर्थः ।

भावप्रकाशः ।

ध्यनिश्चय इत्यर्थः । तदानीं तु भवति स विषयभेदेन बाधकासम्भावनया प्रतिबन्धकाप्रामाण्यसन्देहाभावादिति भावः । तथा च तुल्यास्यसूत्रार्थबोधस्य निषेधबोधात्प्रागावश्यकत्वेऽपि तन्निश्चयाभावात्तत्र तदप्रवृत्तिरिति तत्त्वम् । सूचितमर्थं स्पष्टयितुमाह—यत्त्विति । बाधकाभावादिति । सप्रतिबन्धकाभावाकाङ्क्षादिसहकृतपदार्थोपस्थितिरूपकारणसत्त्वात्तदभावरूपतदभावादित्यर्थः । विध्यपेक्षत्वेऽपीति । अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वस्य सर्वलोकतन्त्रप्रसिद्धत्वादिति भावः । षत्वमितीति । अत्र षत्वस्यासिद्धत्वाद् ढत्वे "षढोःकःसि"इति कत्वे च षत्वमिति प्रक्रिया बोध्या । एवं प्रागपि । वस्तुतो ढत्वादीनामसिद्धत्वात्संयोगान्तलोप एव सर्वत्र वक्तुमुचित इति रत्नाकरादयः । तदिष्टमित्याह—सर्वस्येति । षत्वादेरित्यर्थः । अपिर्ढत्वघत्वसमुच्चायकः । एकया युक्त्या—संयोगान्तेति सूत्रापेक्षासिद्धत्वरूपया । आपाद्यमानइति उभयान्वयि । तथा च तस्य तया वारणेन कृत्वा आपादनार्हे संयोगान्तलोपेऽपि आपादनविषयेऽर्थे न्यायस्य "पूर्वत्रासिद्धम्" इत्यस्यानादृतत्वादित्युक्तमित्यर्थः । तत्र बीजं तु दोषमात्रप्रतिपादने तात्पर्यमिति भावः । यद्वा वारणमनादरे हेतुः; सर्वस्यापि ढत्वादेर्लोपस्य चैकयुक्त्या प्रश्लेषेण तन्निषेधरूपया युक्त्या वारणस्याविशिष्टत्वेन हेतुना आपादनीयेऽर्थे यो न्यायानादरस्तस्माड्ढत्वादीत्युक्तमित्यर्थः । एतेन कार्यकालपक्षेऽन्तरङ्गे ढत्वादौ बहिरङ्गसंयोगान्तलोपोऽसिद्ध इति, "संज्ञापूर्वको विधिरनित्य" इति वा लोपः सुकरवारण इत्याशयेनैवमुक्तमित्यपि दण्ड्युक्तिः परास्ता । विसर्जनीयविधिसूत्रभाष्यात्तत्पक्षेऽपि तत्राप्रवृत्तेः,आनुमानिकवचनतः प्रत्यक्षवचनस्य प्राबल्यात्, संज्ञापूर्वक इत्यस्य निर्मूलत्वाच्चेति स्पष्टमन्यत्रेति दिक् ।आकारेति। प्लुताकारेत्यर्थः। दर्शितमिति । तच्चोक्तं प्राक् । अयमेवास्योपयोगः ।

सरला ।

सिको यँकार इति । अन्यदेतदिति । तपरत्वे हि दीर्घादिग्रहणाभावे दीर्घादीनामपि ह्रस्वस्यैव विधानेनापूर्वबोध्यत्वेन भाव्यमानत्वाद् "अप्रत्ययः" इति निषेधोऽपि प्रसज्यते इति तेनाऽपि दीर्घादिव्यावृत्तिर्वक्तुं शक्येति, उपायस्य उपायान्तरादूषकत्वादिति भावः । मानं दर्शितमिति । आरम्भपक्षे दीर्घाकारस्य

**वृद्धिरादैच्** ( पा० सू० १।१।१ ) ॥ ऐजिह द्विमात्र एव, तात्परत्वात् । तेन कृष्णैकत्वमित्यत्र त्रिमात्रो न । एवमुत्तरसूत्रेऽपि । तेन गङ्गोदकमित्यादौ त्रिमात्रो न ॥

**भूवादयो धातवः** ( पा० सू० १।३।१ ) ॥ भूश्च वाश्चेति द्वन्द्वः। आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः। भूवौ आदी येषामिति बहुव्रीहिः। भूप्रभृतयो वासदृशाः। सादृश्यं च क्रियावाचकत्वेनेत्यभिप्रेत्याह—**क्रियावाचिन इति।** क्रियावाचिनः किम्? 'याः पश्यसि' इत्यादौ धातुत्वं मा भूत्। सति हि तस्मिन् "आतो

---

शब्दरत्नम्।

**सादृश्यं चेति।** वाधातौ वासादृश्यं च प्रयोगभेदेन बोध्यम्। **आतो धातोरिति।**

भैरवी।

ननु सादृश्यस्य भेदनिबन्धनत्वाद्वाधातौ धातुसंज्ञा न प्राप्नोतीत्यत आह–**वाधाताविति।**

भावप्रकाशः।

अत एव स्वराणामूष्मणामिति विभिन्नविभक्तिकनिर्देशः कृत इति भावः। **सादृश्यं चेतीति।** प्रकारार्थकत्वेऽपि तदर्थयोर्मध्ये सादृश्यवाचकत्वमन्त्यादिशब्दस्येति भावः। नन्वेवं वा इत्यस्य साधुत्वं न स्यात्सादृश्यस्य धर्मरूपत्वे भेदघटितत्वादतिरिक्तत्वेऽपि तत्रैवाङ्गीकार इत्यभिमानादत आह—**वाधाताविति।**

सरला।

इकारेण सावर्ण्यं प्रसज्यते, प्रत्याख्यानपक्षे च प्रयत्नभेदेन न तयोस्तदिति फलभेदेन प्रत्याख्यानासङ्गत्या तद्भाष्यप्रामाण्येनाऽऽरम्भपक्षे आकारः प्रश्लेषणीय इति। एवं प्लुताकारोऽपि प्रश्लेषणीय एतद्भाष्यप्रामाण्यात्।

अत्रेदमवधेयम्—अण सवर्णस्य ग्राहक इति सूत्रार्थे "इको यण्" इत्यादौ ककारादिचिन्हेन वर्णसमाम्नायस्थत्वप्रत्यभिज्ञानाद् इगादिपदे सवर्णग्रहणेऽपि "अस्य च्वौ" इत्यादौ आकारस्यानण्त्वात्सवर्णग्रहणं न स्यात्। अण्बोधकं पदं सवर्णग्राहकमित्यर्थे तु अपदस्य अण्बोधकत्वादुक्तदोषवारणेऽपि "इको यणचि" इत्यादौ अण्बोधक-इक्पदसवर्णाप्रसिद्ध्या तत्र सवर्णग्रहणं न स्यात्। न चाण्बोधकं पदं स्वबोध्यसवर्णग्राहकमित्यर्थः, तेन इक्पदबोध्येकारादिसवर्णप्रसिद्ध्या नोक्तदोष इति वाच्यम्, अशादिपदेषु स्वबोध्यदादिसवर्णतकारादीनामनशामपि ग्रहणापत्तेः। न चाण्मात्रबोधकमिति मात्रपदनिवेशः, तेन अश्पदस्य हशामपि बोधकतया तन्मात्रबोधकत्वाभावेन न दोष इति वाच्यम्, तत्रैव अकारादिसवर्णदीर्घाकारादीनामप्यग्रहणापत्तेः। न च अण्बोधकं पदं स्वबोध्याण्सवर्णग्राहकमित्यर्थेन नोक्तदोष इति वाच्यम्, अर्थवदिति सूत्रे प्रत्ययपदस्यापि "स्थाम्नोऽकार" इत्यादिविधेयाकारादिबोधकत्वेनाण्बोधकत्वात् तद्बोध्यः "सनाशंसभिक्ष उः" इत्येतद्विहित उकारस्तत्सवर्णदीर्घादीनां तेन ग्रहणे 'हूहू' शब्दस्य प्रातिपदिकत्वानापत्तेः। वस्तुतस्तु व्यासज्यवृत्तिधर्मानवच्छिन्नाण्वृत्तिविषयताप्रयोजकं पदं स्वबोध्याण्सवर्णग्राहकमिति सूत्रार्थः। प्रत्ययपदस्याणत्वावच्छिन्नविषयताप्रयोजकत्वेऽपि व्यासज्यवृत्तिधर्मावच्छिन्नविषयताप्रयोजकतया नोक्तापत्तिरिति। व्यासज्यवृत्तिर्धर्मश्च बहुत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतो धर्म इति। तथा च प्रत्ययत्वस्य भ्यामादावपि सत्वेन तत्त्वमक्षतमेवेति दिक्।

**मूले व्यवस्थेति।** आद्यार्थकसादृश्यार्थकयोरित्यर्थः। तत्र भूशब्दस्य आद्यार्थकादिशब्दे वाशब्दस्य च सादृश्यार्थकादिशब्दे यथासंख्यमन्वयः। भूनिष्ठ-आद्यवयवतानिरूपकाः वाप्रतियोगिकसादृश्यविशिष्टाः धातुसंज्ञका भवन्तीत्यर्थः। तत्र भूशब्दो द्विविधः-भूम्यर्थकः सत्तार्थकश्चेति। एवं वाशब्दोऽपि विकल्पार्थको गत्याद्यर्थकश्च। तत्र द्विविधस्यापि वाशब्दस्य लिङ्गसंख्याऽनन्वय्यर्थकबोधकतया असत्त्ववाचित्वेन तत्साहचर्याद् भूशब्दोऽसत्त्ववाची सत्ताद्यर्थको गृह्यते। स च क्रियावाची। तत्साहचर्याद् वाशब्दोऽपि गत्याद्यर्थक एव गृह्यते। तत्सादृश्यं च क्रियावाचित्वेनैवेति। तदाह मूले—सादृश्यं च क्रियावाचकत्वेने-

## शब्दरत्नम् ।

**न च स्त्र्यर्थनिमित्तकटापो बहिरङ्गासिद्धत्वम्, "नाजानन्तर्ये" (परि०) इति निषेधात्, ततोऽपि बहिर्भूतसंख्यानिमित्तकविभक्तिनिमित्तकभसञ्ज्ञानिमित्तकत्वेन लोपस्य बहि-**

## भैरवी ।

अत एव "याति वाति" इति निर्देशसङ्गतिः । स्त्र्यर्थनिमित्तकेति । बह्वपेक्षस्य बहिरङ्गत्वात् । नन्वत्र नाजानन्तर्य्यपरिभाषाप्रवृत्तिः, यत्राचः पञ्चम्यन्तशब्दबोध्यस्यान्यनिरूपितानन्तर्य्याश्रयणं तत्रैव तत्परिभाषायाः प्रवृत्तेः सम्प्रदायसिद्धत्वात् । यत्रान्तरङ्गे बहिरङ्गे वा अजानन्तर्यमित्यर्थस्तु न युक्तः, पचावेदमित्यादावसिद्धत्वाभावप्रसङ्गादत आह—ततोऽपीति । टापोऽपीत्यर्थः। यद्यप्यर्थापेक्षत्वमुभयत्र, तथापि लोपस्याधिकापेक्षत्वं, प्रकृतिप्रत्ययसमुदायापेक्षत्वात् । किञ्च टापो लिङ्गापेक्षा, तच्च लिङ्गम्प्रथमत उपस्थितम्भवति; सङ्ख्या तु तदुत्तरं प्रतीता भवतीति टाप एवान्तरङ्गत्वमिति भावः । ननु भत्वावच्छिन्नम्प्रति विभक्तित्वेन कारणतेत्येवं

## भावप्रकाशः ।

चस्त्वर्थे, वातीतिनिर्देशश्चात्र मानम् । एतेन क्रियावाचकत्वरूपं सादृश्यमत्रोद्देश्यतावच्छेदकं, तदाक्रान्तत्वं च वाशब्देऽप्यस्तीति प्रयोगभेदाश्रयणं व्यर्थमिति मन्दोक्तमपास्तम्, उक्तयुक्तेः । ननु यत्रान्तरकालप्रवृत्तिकेऽन्तरङ्गे पञ्चम्यन्तत्वेन सप्तम्यन्तत्वेन वाऽच आश्रयणं तत्र सा नेति एतदर्थं इति प्राञ्चः । अचोऽन्याऽनन्तर्यहेतुके तादृशेऽन्तरङ्गे कार्ये सा नेति तदर्थ इति नव्याः । अचोऽजानन्तर्यहेतुकः इत्यादिहरदत्तोक्तिस्त्वयुक्तेति तयोराकूतम् । उभयथापि 'पचावेदम्' इत्यादिवदत्र निषेधाप्राप्तिरेवात आह—ततोऽपीति । टापोऽपीत्यर्थः । लिङ्गबोधोत्तरमेव सङ्ख्योपस्थितेस्तस्यास्तत्त्वमिति भावः । एतेनोक्तरीत्या निषेधाप्राप्त्या हेतुसमुच्चायकत्वासङ्गतिरिति वदन्मन्दः परास्तः । हेतौ हेतुरितिभ्रमनिवारकतया तस्य साफल्यात् । ननु भसंज्ञा न विभक्तावेव, नापि प्रत्ययएव "वृषण्वस्वश्वयोः" इत्यन्यत्रापि विधानात् । न च लो-

## सरला ।

त्यादि । नन्वेवं सादृश्यस्य तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमिति लक्षणेन वाभिन्नत्वं वाधातौ न स्यात् । तथा च वाधातोर्धातुसंज्ञा न स्यादत आह—वाधाताविति । प्रयोगभेदेनेति । 'वाति' 'वातः' इत्यादिषु । वातीत्येतद्घटकवाशब्दस्य यथा क्रियावाचकत्वं तथा वातः इत्येतद्घटकवाशब्दस्यापि, 'प्रत्युच्चारणं शब्दो भिद्यते' इति सिद्धान्तादिति भावः ।

स्यादेतत्, एकरूपावच्छिन्नस्यैकरूपावच्छिन्ने एकरूपसंसर्गेणान्वयः सहविवक्षा, सहविवक्षायामेव च द्वन्द्वो भवतीति । अत एव धवस्य छेदनान्वये खदिरस्य दर्शनान्वये च 'धवखदिरौ छिन्धि पश्य' इति न प्रयोगः, एवं 'कुठारेण धवं छिन्धि' इत्यर्थे 'धवकुठारौ छिन्धि' इति न प्रयोगः । एवं 'धवं खदिरं च पश्य' इत्यर्थबोधतात्पर्येण 'धवखदिरौ पश्य' इति च न प्रयोगः । तथा च प्रकृते भूशब्दस्य आद्यार्थक-आदिशब्दे निष्ठत्वसम्बन्धेन, वाशब्दस्य सादृश्यार्थक-आदिशब्दे प्रतियोगित्वसम्बन्धेन चान्वयेन एकरूपावच्छिन्ने एकरूपसंसर्गेण च अन्वयाभावेन सहविवक्षाया अभावात् द्वन्द्वोऽनुपपन्नः, किञ्च भूशब्दस्यैव आद्यार्थक-आदिशब्देऽन्वयः, वाशब्दस्यैव च सादृश्यार्थक-आदिशब्देऽन्वयः इत्यत्र विनिगमकाभावेन कदाचिद् भूशब्दस्य सादृश्यार्थक—आदिशब्देऽन्वये एधादीनां धातुत्वानापत्तिः । किञ्च एकपदोपस्थापितयोरर्थयोः परस्परमभेदेनान्वयोऽव्युत्पन्नः । अत एव 'हरिं पश्य' इत्यत्र विष्ण्वादीनां परस्परं नाभेदेनान्वयः । तत्कथं प्रकृतेऽपि एकेनैव आदिपदेन आद्यार्थस्य सादृश्यस्य च उपस्थितया तयोः परस्परमभेदान्वयानुपपत्तिः, इति चेत् ? त्रयाणामपि दोषाणां 'भूवादयः' इति पदस्य आवृत्त्या निराकरणमिति । तथा हि—आवृत्तौ तावत् आदिपदद्वयं वर्तते । तत्र आद्यार्थे आदिपदोपस्थापिते भू-वाशब्दार्थयोरुभयोरपि निष्ठत्वसम्बन्धेनान्वय इति नाद्यदोषावसरः । एवमुभयोरपि भूवाशब्दार्थयोः आद्यार्थे सादृश्यार्थे चान्वयेन न द्वितीयदोषावसरः । विभिन्नपदोपस्थापितत्वाच्च आद्यार्थस्य सादृश्यार्थस्य च न तृतीयदोषावसर इति दिक् । इति निषेधादिति । अजूनिष्ठान्यनिरूपितव्यवधानाभावनिमित्तके कार्ये कर्तव्ये बहिरङ्गपरिभाषा न प्रवर्तते इति तदर्थात् ।

शब्दरत्नम् ।

रङ्गत्वाच्च, अर्थनिमित्तकबहिरङ्गत्वस्याभावाच्च । नाप्ययं लाक्षणिकः ।

भैरवी ।

कार्यकारणभावो न सम्भवति 'वृषण्वसुः' 'वृषणश्वः' इत्यत्र व्यभिचारात् । यदि भसंज्ञासामान्यम्प्रति विभक्तेर्निमित्तत्वाभावेऽपि लोपविधायकशास्त्रप्रवृत्तिहेतुभसंज्ञा विभक्तिनिमित्तिकैवेति विभाव्यते, तदा 'याः पश्यसि' इत्यादौ भसंज्ञानिमित्तविभक्तिनिमित्तकररूपनिमित्तकत्वेन टापो लोपाद्बहिरङ्गत्वमपि सम्भाव्यत इत्यत आह—अर्थनिमित्तकेति । अभावादिति । अयम्भावः—शब्दशास्त्रे शब्दस्य प्राधान्याद् "असिद्धं बहिरङ्ग" इति परिभाषाघटकनिमित्तबोधकाङ्गशब्देन शब्दरूपं तद् गृह्यते इति नियमः । अत एव "त्रयादेशे स्रन्तस्य प्रतिषेधः" इति वार्त्तिकं सङ्गच्छते । अन्यथा स्त्रीत्वापेक्षतिस्रादेशापेक्षया तदनपेक्षत्रयादेशस्य पूर्वं प्रवृत्तौ ततस्तस्य स्थानिवद्भावेन त्रिशब्दत्वात्तस्य स्थाने तिस्रादेशे लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः पुनस्त्रयादेशाप्रवृत्तौ वार्तिकासङ्गतिः स्पष्टैव । अत एव 'गौधेरः' 'पचेत्' इत्यस्य सिद्धिः । अन्यथा "अतो येयः" इत्यस्याङ्गसंज्ञासापेक्षत्वेन बहिरङ्गतया वलि लोपो न स्यात् । अर्थापेक्षबहिरङ्गत्वाभावे "नलोपः सुप्" इति सूत्रस्थं कृति तुग्ग्रहणं ज्ञापकमिति । अन्यथा वृत्रहभ्यामित्यादौ पदसंज्ञासापेक्षनलोपस्य बहिरङ्गत्वादेव तुगभावस्य सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । न च भ्याम्निमित्तकत्वमेव नलोपस्य न तु पदसंज्ञासापेक्षत्वमिति शब्दस्वरूपस्याङ्गशब्देन ग्रहणेऽपि दोष एवेति वाच्यम्, भ्यामः पदसंज्ञाम्प्रति निमित्तत्वेऽपि नलोपं प्रत्यनिमित्तत्वात् । परम्परया निमित्तत्वाश्रयणे तु मानाभाव इति ।

लाक्षणिक इति । लक्षणशब्दोऽत्र भामा इतिवदेकदेशशक्त्या लक्षणप्रतिपदोक्तपरिभा-

भावप्रकाशः ।

पसुत्रीयभत्वस्य तत्त्वमेवेति वाच्यम्, तथा सति प्रकृतलक्ष्याभिप्रायेण तादृशविभक्तिहेतुकादन्तत्वेहेतुकत्वं परम्परया टापोऽपीति तुल्यत्वात् । शब्दगौरवमेव गौरवं न ज्ञानगौरवमिति राजाज्ञास्ति । किञ्च परनिमित्तकसंज्ञाद्वारकबहिरङ्गत्वस्य नेह ग्रहणम्, कृतितुक्ग्रहणाज्ज्ञापकात् । अन्यथा 'वृत्रहभ्याम्' इत्यादौ स्वादिष्विति पदसंज्ञाद्वारा विभक्तिसापेक्षत्वेन नलोपस्य बहिरङ्गत्वात् असिद्धत्वात्तुगभावे सिद्धे तदसङ्गतिः स्पष्टैव । भ्यामादेः पदत्वे हेतुत्वं, नहि नलोपे । नलोपे पदसंज्ञा तस्यां च विभक्तिरित्येवं परम्परया निमित्तत्वमादाय बहिरङ्गत्वाश्रयणे तु न मानम् । सन्निपातपरिभाषया तत्प्रत्याख्यातमित्यन्यत् । ध्वनितं चेदं "नलोपः सुप्" इतिसूत्रे भाष्य इति तत्रैवोद्द्योते परिभाषेन्दुशेखरे च निरूपितं गुरुचरणैरत आह—अर्थनिमित्तेति । अनाश्रयणाच्चेत्यर्थः । शब्दशास्त्रे शब्दस्य प्राधान्येन परिभाषायामङ्गशब्देन तद्रूपनिमित्तस्यैव ग्रहणात् । अत एव "न तिसृ" इतिनिषेधस्य सार्थक्यम् । अन्यथा स्त्र्यर्थहेतुकतिस्रपेक्षयाऽन्तरङ्गत्वात् त्रयादेशे तदसङ्गतिः स्पष्टैव । अत एव "त्रयादेशे स्रन्तस्य प्रतिषेध" इति स्थानिवत्सूत्रस्थभाष्यादि सङ्गच्छत इति भावः ।

लाक्षणिक इति । लक्षणं लक्षणप्रतिपदोक्तपरिभाषा । तत्रत्यैकदेशानुकरणात् सत्याभामेत्यादिवद्वा

सरला ।

अभावाच्चेति । अत एव 'त्रयादेशे स्रन्तस्य प्रतिषेधो वक्तव्यः' इति स्थानिवत्सूत्रस्थं वार्तिकं सङ्गच्छते । तद्धि त्रि आम् इति स्थिते त्रयादेशतिस्रादेशयोः प्राप्तयोः परत्वात्तिस्रादेशे स्थानिवद्भावेन त्रिशब्दत्वमादाय त्रयादेशवारणाय । अर्थनिमित्तकबहिरङ्गत्वस्याश्रयणे तु तिस्रादेशस्य स्त्रीत्वनिमित्तकत्वेन बहिरङ्गतया अन्तरङ्गत्वात्पूर्वं त्रयादेशे ततस्तिस्रादेशप्रवृत्तौ लक्ष्ये लक्षणन्यायेन पुनस्त्रयादेशाप्राप्त्या तद्व्यर्थं स्यात् । एवञ्च अन्तरङ्गपरिभाषायामङ्गशब्देन शब्दरूपं निमित्तमेव गृह्यते, शब्दशास्त्रे तस्यैव प्राधान्यात् । तेनार्थनिमित्तकस्य न बहिरङ्गत्वमिति सिद्ध्यति । अत एव "न तिसृचतसृ" इति निषेधश्चरितार्थः । अन्यथा स्त्रीत्वरूपार्थनिमित्तकतिस्रादेशापेक्षयाऽन्तरङ्गत्वात्पूर्वं दीर्घे ततस्तिस्रादेशे लक्ष्ये लक्षणन्यायेन पुनर्दीर्घाप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेव ।

शब्दरत्नम् ।

नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्चे षाट्टवर्गस्तवर्गजः ॥ १ ॥

इत्यभियुक्तोक्तेर्भ्वादिषु लाक्षणिकानामपि दर्शनेन तद्विषये तत्परिभाषाया अप्रवृत्तेः । "आतो धातोः" ( पा० सू० ६।४।१४० ) इत्यत्र प्रतिपदोक्त आकारो गृह्यत इति तु वक्तुमप्यशक्यम्, पशुष इत्यसिद्ध्यापत्तेः । पशुं सनोतीति विट्, "विड्वनोः" ( पा०

भैरवी ।

षापरस्ततोऽर्हतीत्यर्थे ठञ्, लक्षणप्रतिपदोक्तपरिभाषाया अविषय-इत्यर्थः । तदविषयत्वे हेतुमाह—नकारजाविति । तद्विषये—धातुसंज्ञाविषये । दर्शनेनेति । एवं च येषां लक्षणप्रवृत्तिज्ञानोत्तरकालिकज्ञानविषयस्वरूपकत्वं तेषामपि धातुपाठे पाठसामर्थ्येन धातुसंज्ञाविधौ तस्याः परिभाषाया अप्रवृत्तिरिति भावः । नच "भूवादयः" इति सूत्रदृष्ट्या तेषामसिद्धत्वान्न लाक्षणिकानां दर्शनमिति परिभाषाप्रवृत्तिः स्यादेवेति वाच्यम्, यादृशानुपूर्वीकस्य धातुसंज्ञाऽभिप्रेता तादृशानुपूर्व्यवच्छिन्नस्य ज्ञानं धातुसंज्ञाप्रवृत्तिप्राक्कालिकं लक्षणज्ञानपूर्वकालिकं भवति ततोऽसिद्धत्वारोपेऽधिष्ठानङ्कारणमस्ति अधिष्ठानस्य परस्य ज्ञाने सत्त्वे हि परत्वज्ञानसापेक्षपूर्वत्वज्ञानं धातुसंज्ञाविधायकसूत्रविशेष्यकम्भवति ततोऽसिद्धत्वारोप इति "नश्चापदान्तस्य" इत्यादिसूत्रज्ञानसापेक्षत्वमस्त्येवेत्याशयात् । यत्तु वर्णग्रहणे "आदेच उपदेशे" इति सूत्रस्थोपदेशग्रहणाल्लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तत इति । तन्न, ओत्सूत्रस्थभाष्यविरोधात् । तत्र हि-हे 'चित्रगोऽग्रम्' इत्यत्र 'ओत्' इति सूत्राप्रवृत्तिः परिभाषया साधिता । तस्मादादेच इति सूत्रस्थमुपदेशग्रहणम्परिभाषाया अनित्यत्व एव ज्ञापकम् । वर्णग्रहणेऽपि तस्याः क्वचित्प्रवृत्तिस्वीकारादेव 'पशुषः' इत्यस्य 'चिकीर्षति' 'जिहीर्षति' इत्यस्य च सिद्धिः । आद्ये पशुं सनोतीति विग्रहे "जनसन" इति विट्प्रत्यये "विड्वनोः" इत्यात्वे आकारस्य लोपो लाक्षणिकस्यापि भवति । अन्त्ययोः "अज्झनगमां सनि" इति दीर्घेऽपि "इट सनि वा" इतीड्विकल्पो न, ॠकारस्य लाक्षणिकत्वात् । अनित्यत्वस्य फलान्तरन्तु 'वापयति' 'क्नापयति' इत्यादौ पुक्सिद्धिरिति । तदेवाह—आत इति । ननु 'त्कः' 'ध्नः' इत्यादिसिध्यर्थम् "आतोऽनाप" इति वार्तिककृतोक्तं तद्विरोधात्कथं 'याः पश्यसि' इत्यत्राकारलोपस्य प्राप्तिरत

भावप्रकाशः ।

वार्त्तिकादिवत्परिभाषाया अपि लक्षणत्वाद्वा । तत् अर्हतीत्यर्थे "तदर्हति" इति ठञ् तन्न्यायाविषय इत्यर्थः । यथाश्रुतं तु सर्वथा न युक्तम्, ब्रह्मणा वचनशतेनापि याशब्दस्य तत्त्वस्यानिवार्यत्वादिति भावः । ननु धातुसंज्ञासूत्रे तन्न्यायापादनमुत "आतोधातोः" इत्यत्र, तत्र तावन्नाद्य इत्याह—**नकारेति** । धातुषु झल्परानुस्वारपञ्चमौ नकारजौ, यथा स्रंसु, अञ्च इत्यादि । चपरः शकारः सकारजः, यथा व्रश्च इत्यादिः । रेफषकाराभ्यां परष्टवर्गस्तवर्गजः, यथोर्णुञ् ष्ठा इत्यादिः । एतेन तथा भूषणोक्तमप्यपास्तम् । अपिः प्रतिपदोक्तसमुच्चायकः । **तद्विषये** धातुसंज्ञाविषये । न च तेषां तत्र पाठो व्यर्थः, क्वचिद्विशेषकार्यकरणेन साफल्यात्, क्वचिददृष्टार्थत्वात् तेन तत्र तदप्रवृत्तिज्ञापनस्यैवौचित्याच्चेति दिक् । द्वितीयोऽपि नेत्याह—**आतोधातोरिति** । यत्तु "आदेच उपदेशे" इत्यत्रोपदेशपदेन वर्णग्रहणे तदप्रवृत्तेर्ज्ञापयिष्यमाणत्वेन मूलमते तत्र तदप्राप्तिरेवेति 'पशुषः' इत्याद्यसिद्धिपर्यन्तं धावनं व्यर्थमिति मान्यादयस्तत्प्राचामनुरोधेन । ओत्सूत्रभाष्यप्रामाण्येन तत्रापि तत्प्रवृत्त्यङ्गीकारात् । अत एव प्रतिपदोक्तस्यैङो ग्रहणान्नेहेत्यग्रिमं यथाश्रुतमेव मूलं सङ्गच्छते । तत्रोपदेशपदं तु 'गोभ्याम्" इत्यादिव्यावृत्त्यर्थमावश्यकमिति न ज्ञापकमिति तत्रैव भाष्यादौ स्पष्टम् । तदेतद् ध्वनयन्नाह—**पशुष इति** । असिद्धवत्सूत्रे भाष्यप्रयोगोऽयम् । इदमुपलक्षणं 'क्षीरधः पश्य, इत्यादेः । क्षीरं धयन्ति तानित्यर्थः । एतेन छान्दसत्वात्तस्य सिद्धिरित्यपास्तम् । तस्यागतिकगतित्वाच्च । अस्य रूपस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकस्य परिभाषाविषयत्वम्,

धातोः" ( पा० सू० ६।४।१४० ) इति स्यात् । भ्वादयः किम् ? हिरुक्

## शब्दरत्नम् ।

सू० ६।४।४१ ) इत्यात्वम् । "आतोऽनापः" इति वार्त्तिकमते तु विकल्पार्थकनिपातवा-शब्दस्य धातुत्वे प्रातिपदिकत्वाभावात्सुबभावे पदत्वानापत्तिर्दोषः । क्रियात्वं च साध्यत्वेन प्रतीयमानत्वम् । साध्यत्वं चोत्पाद्यमानत्वमेवेत्यन्यत्र विस्तरः । हिरुगित्यादि ।

## भैरवी ।

आह—आतोऽनाप इति । पदत्वानापत्तिरिति । ततश्च देवदत्तः पचति वा गच्छति वेत्यत्र निघातानापत्तिः । एवं 'नृपतिस्तत्र त्वा वा मा वा प्रेषयिष्यति" इत्यत्र "त्वामौ" इति सूत्रस्य प्रवृत्त्यनापत्तिः । ननु सत्ताद्यर्थनिर्देशाद्धातुसंज्ञा न भविष्यतीति चेत् ? न, तस्यापाणिनीयत्वात् । अत एव "सेधतेर्गतौ" इति सङ्गच्छते ।

ननु क्रियावाचिन इत्युक्तावपि वातीत्यत्र विकल्पयतीत्यत्रेव च निपातवाशब्दादपि विकल्परूपा क्रिया प्रतीयत एवेत्यत आह—क्रियात्वञ्चेति । उत्पाद्यमानत्वमिति । एतत्प्रतीतिस्तु नात्र, शब्दशक्तिस्वभावात् । अत एव विकल्पो विकल्पावित्यत्रेव न लिङ्गसंख्यान्वयः । ननु हिरु-

## भावप्रकाशः ।

यथा 'चिकीर्षति इत्यादौ "अज्झन"इतिजातदीर्घस्य, तेन "इट् सनि वा" इतीण् न । अत एवाकारप्रश्लेषपक्षे 'अतिखट्वाय' इत्यत्राकारस्य लाक्षणिकत्वेन याड् न 'निशायै' इत्यादिवत् । 'खट्वायै' इत्यादौ तु तस्यातत्त्वेन याट्सिद्धिः । तत्रैकादेशात्प्रागपि तद्रूपसम्भवात् । आबन्तत्वांशे तु न तत्प्रवृत्तिः । सर्वत्र तथात्वेन "याडापः" इत्यादिवैयर्थ्यापत्तेः । एवं चात्रोभयत्र यद्यपि लाक्षणिकत्वं निर्बाधम्, तद्रूपयोर्लक्षणानुसन्धानपूर्वकत्वेन विलम्बोपस्थिततत्वात् । इदमेव तत्प्रवृत्तौ बीजम्, तथापि 'क्रापयति' इत्यादाविवानित्यत्वात्तदप्रवृत्तिः । अत एव 'अध्याप्य गतः' इति भाष्यप्रयोगसङ्गतिरिति तत्त्वम् । स्पष्टं चेदं 'याडापः' इत्यत्रोद्योते निर्जरशब्दे शब्देन्दुशेखरे च । वार्त्तिकमते मूलोक्तदोषाभावादाह—आत इति । यत्तु धातुत्वे 'वाति' इत्याद्यापत्तिरिति भूषणकृत् । तन्न, भूतादिकालसम्बन्धाभावात् । अत आह—प्रातीति । नापत्तिरिति । तथाचासाधुत्वेनाप्रयोगापत्तिरिति भावः । ननु वार्थविकल्पस्य विभक्तिप्रतिरूपकास्त्याद्यर्थवत्क्रियात्वमस्त्येवेति, तथाप्यवारणमत आह—क्रियात्वं चेति । ननु क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकवैजात्यरूपसाध्यत्वं तत्राप्यस्त्येवेत्यत आह—साध्यत्वमिति । त्वमेवेति । तद्रूपेणैव बोधात् । एवञ्च कालसम्बन्धेन दृष्टान्ते तत्त्वेनोपस्थित्या तत्त्वेऽप्यत्र न तथा, शब्दशक्तिस्वाभाव्याद् गमकस्य तद्वदभावाच्चेति भावः । स्पष्टं चेदम् "उपपदमतिङ्" "सुट्कात्पूर्व"इत्यादौ भाष्ये । स्पष्टीकृतं चैतद् गुरुचरणैर्धात्वर्थवादे उपसर्गवादे च मञ्जूषायाम् । तदाह—अन्यत्रेति । ननूक्तरीत्या हिरुगाद्यर्थस्य क्रियात्वाभावन तस्यात

## सरला ।

वार्तिकमतेति । चिन्त्यमिदम्, क्त्वः श्नः इत्यादिषु आकारलोपार्थं वार्तिककृता आतो धातोः इत्यत्र आतोऽनाप इति कृतो न्यासः प्रत्याख्यातो भाष्यकृता योगविभागेन । ततश्च वार्तिकेऽनाप इति पर्युदासेन याः इत्यत्र नातो लोपस्य प्रवृत्तिः, प्रत्याख्याने तु आतः इति विभक्तसूत्रस्य क्त्वः श्नः इत्यादिष्विव याः इत्यत्रापि प्रवृत्तिरिति फलभेदः । एवं सूत्रकारमतेऽपि फलभेदस्तद्वारणाय सूत्रस्थधातुपदस्य आब्भिन्नोपलक्षणतया, भाष्यमते च धातोरिति विभक्तसूत्रारम्भसामर्थ्येन 'आतः' इति पूर्वसूत्रस्य अनाबन्त एव प्रवृत्तेः स्वीकारेण सूत्रकारभाष्यकारमतेऽपि 'याः' इत्यत्र दोषाभावात् ।

पदत्वानापत्तिरिति । ततश्च 'वा गच्छति' इत्यत्र "तिङ्ङतिङः" इति निघातस्वरानापत्तिरिति भावः । अन्यत्र विस्तर इति । क्रियात्वमुत्पाद्यमानत्वमिति चानर्थान्तरम् । ततश्च साध्यत्वज्ञाने क्रियात्वज्ञानं, तज्ज्ञाने च साध्यत्वज्ञानमिति परस्परशरीरे परस्परस्य पात इत्यन्योन्याश्रयस्तद्वारणाय साध्यत्वं कालान्वयितावच्छेदकरूपवत्त्वं क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वं वेत्यर्थ इति भूषणादौ निरूपितं तत्रैव सरलायां स्पष्टम् ।

पृथगित्याद्यव्ययानां, शिश्ये इति भावार्थतिङन्तस्य च मा भूत् । स्तम्भ्वादीनामु-

## शब्दरत्नम् ।

एषां क्रियासमानाधिकरणत्वाल्लिङ्गाद्यनन्वयित्वाच्च तदर्थस्य क्रियात्वमित्यभिमानः। एषामव्ययेषु पाठस्तु अप्रातिपदिकत्वेऽप्यकजर्थः स्यात् । एतेन तेषु पाठसामर्थ्याद्धातुत्वाभाव इत्यपास्तम् । नन्वेषां क्रियाकाङ्क्षादर्शनेन न क्रियावाचकत्वमत आह—शिश्ये इति । कालोऽपि धात्वर्थ एवेति न क्रियावाचकत्वहानिः । तस्य च धातुत्वे "आदेच उपदेशे" ( पा० सू० ६।१।४५ ) इत्यात्वं स्यात् । तद्धि अनैमित्तिकं धातुत्वनिमित्तकं

## भैरवी ।

गाद्यर्थस्योक्तरीत्या क्रियात्वाभावादेव धातुसंज्ञा न भविष्यतीत्यत आह—एषामिति । नन्वेषां धातुत्वे प्रातिपदिकत्वाभावादेव सुबभावे सिद्धेऽव्ययेषु पाठवैयर्थ्यापत्तिरत आह—एषामव्यय इति । अभिमानपदेन सूचितामरुचिम्प्रकटयति—नन्वेषामिति । ननु "शिश्ये" इति तिङन्तात्कालस्यापि प्रतीतिसत्त्वात्तस्यापि तादृशसमुदायवाच्यत्वं वाच्यं तथा च न क्रियामात्रवाचकत्वमिति कथं धातुसंज्ञाप्रसक्तिरत आह–कालोऽपीति । अपि शब्दः फलसंग्रहार्थः । पञ्चकं धात्व-

## भावप्रकाशः ।

र्थात्कथं तत्त्वमत आह—एषामिति । क्रियेति । तत्रैव विशेषणत्वादित्यर्थः । तदर्थस्य वर्जनादेरेतद्वाच्यस्य । सामर्थ्यादिति । तथा च नेदं प्रत्युदाहरणं युक्तमिति तद्भावः । अपास्तमिति । प्रधानबाधकल्पनापेक्षयाधिकृतविशेषणबाधकल्पनस्यैव न्याय्यत्वादिति भावः । अभिमान इति सूचितामरुचिमाह—नन्वेषामिति । न क्रियेति । प्रागुक्तरीत्येति भावः । एतेन तथाभूषणोक्तमपास्तम् । शिश्ये इतीति । लकारेष्वष्टाध्याय्यां लिट एवादौ विधानात्पूर्वोपस्थिततत्वरूपान्तरङ्गत्वादिति भावः । ननु तिङन्तात्कालस्यापि प्रतीत्या तन्मात्रावाचकत्वेन न दोषः; तत्त्वं च "सर्वं वाक्यं सावधारणम्" इति न्यायेन लब्धमत आह—कालोऽपीति । अपिना फलसंग्रहः । लकाराणां तु द्योतकत्वम् । एवञ्च तन्मात्रवाचकत्वमसम्भवीति यथा कथञ्चित् क्रियावाचकस्य विशिष्टवाचकत्वस्य वा ग्रहणमिति तत्प्रकृतेरिव तिङन्तस्याप्युक्तरूपस्यास्तीति भावः । ननु तस्य तत्वे इष्टापत्तिः, उक्तत्वात्तिङनुत्पत्तेरत आह—तस्य चेति । शिश्ये इत्यस्य चेत्यर्थः । ननु 'अशिति' इति पर्युदासेनात्वस्य सनैमित्तिकत्वात्तत्राप्राप्तिरत आह—तद्धयेति । अनैमित्तिकमिति । परनिमित्ताभाववदित्यर्थः । अशितीति प्रसज्यप्रतिषेध इति भावः । अत एवाह—धातुत्वेति ।

## सरला ।

न क्रियावाचकत्वमिति । एवञ्च साध्यत्वविशिष्टत्वं क्रियावाचकत्वं, तदेव च भ्वादिगणपठितत्वसहितं धातुत्वम् । वैशिष्ट्यञ्च स्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणत्वं, स्वावच्छिन्ननिरूपितशक्तिनिरूपकार्थविषयकबोधतात्पर्येणोच्चरितत्वं, स्वावच्छिन्नेतरनिरूपितशक्तिनिरूपकार्थविषयकबोधतात्पर्येणोच्चरिताघटितत्वमेतत्त्रितयसम्बन्धेन । आद्यसम्बन्धदानेन भावतिङन्तस्य न क्रियावाचकत्वम् । द्वितीयसम्बन्धदानेन विकल्पार्थकवाशब्दस्य न क्रियावाचकत्वम् । तृतीयसम्बन्धदानेन दरिं द्रातीति दरिद्रा इत्यस्य न क्रियावाचकत्वमिति । क्विबन्ते तु क्विपः साध्यत्वावच्छिन्नेतरकर्तृत्वबोधकत्वेऽपि तदनुच्चारणान्निरुक्तबोधतात्पर्योच्चरिताघटितत्वस्याक्षतत्वान्न क्रियावाचकत्वहानिः । अत एव क्विबन्ता विजन्ताश्च शब्दत्वं प्राप्ता अपि धातुत्वं न जहति इत्युद्घोषः । अत्र घटितत्वमनतिदिष्टमेव ग्राह्यम् । तेन श्रुतस्य धातोरेव कर्तृवाचकत्वाङ्गीकारेण तद्घटितत्वस्य व्यपदेशिवद्भावेन तत्र सत्त्वेऽपि न दोष इति दिक् । ननु शिश्ये इत्यत्र भावार्थतिङः परोक्षभूतकालवाचकत्वेन क्रियावाचकत्वमित्यस्य सर्वं वाक्यं सावधारणमिति नियमेन क्रियेतरावाचकत्वे सति क्रियावाचकत्वमित्यर्थात् कथं क्रियावाचकत्वमत आह–कालोऽपीति । स्वार्थद्रव्यलिङ्गसंख्याकारकेति प्रातिपदिकार्थपञ्चकवद् धात्वर्थोऽपि क्रियात्वक्रियाकालसंख्याकारकेति पञ्चकमिति कालस्यापि धात्वर्थत्वेन क्रियात्वव्यवहार इति भावः । अनैमित्तिकमिति । अशितीत्यस्य प्रसज्यप्रतिषेधात् धातुत्वनिमित्तकं चेति । "लिटि धातोः" इति सूत्राद्धातुपदानुवृत्तेरिति भावः ।

शब्दरत्नम् ।

चेति स्पष्टमेव । अत्र न प्रत्ययस्यैव धातुत्वापत्तिर्बोध्या, तिङन्तस्य तूपदेशाभावान्नात्वप्रसक्तिरित्याहुः । ननु षष्ठे प्रकृतसूत्रे धातुग्रहणासम्बन्ध उक्तो भाष्ये इति

भैरवी ।

र्थः, तिङ् तु द्योतकः, अत एव तिङ्द्योत्यकालप्रकारक एव बोधः । फलस्यापि क्रियात्वव्यवहारविषयत्वमिष्टमेव । अत एव कर्मणः फलान्वयित्वेऽपि कारकाणां क्रियान्वयित्वमिति व्यवहारस्य न क्षतिः । ननु क्रियावाचकस्य समुदायस्य धातुत्वेऽपि न क्षतिः, नच तिङापत्तिः, उक्तत्वात्, आत्वापत्तिरपि न, उपदेशाभावादत आह—अत्र चेति । प्रकृतसूत्रे—'आदेच उपदेशे' इति सूत्रे । उक्त इति । अत एव 'गोभ्याम्' इत्यादावुपदेशव्यावृत्तिप्रदर्शनसङ्गतिः ॥

भावप्रकाशः ।

धातुत्वादिनिमित्तकं चेत्यर्थः । प्रकृतत्वात्तावन्मात्रोक्तिः । 'गोभ्याम्' इत्यादिवारणाय लिटिधातोरित्यस्यानुवृत्तिः । उपदेशग्रहणं चेतेत्यादिवारणार्थं लक्षणप्रतिपदोक्तन्यायानित्यत्वज्ञापनार्थं वोपदेशे य एच् तस्येति तदर्थ इति वार्त्तिकाभिमानानुयायिमूलकृत्सरणिरिति बोध्यम् । तदाह—स्पष्टमेवेति । भाववचने धातौ तदर्थप्रत्ययस्याधातोरिति निषेधो वाच्यः—शिश्ये इति । किञ्च स्यात्? अशितीत्यात्वं प्रसज्येत । तद्धि धातोर्विहितमिति । शिश्ये इतीति भावाभिधायित्वात्प्रत्ययस्य धातुसंज्ञाप्रसङ्गादात्वं प्राप्नोतीति । नन्वशितीतिपर्युदासेनाशितः परत्वाभावादात्वाप्राप्तिरिति चेत्? सत्यम्, तद्धि अनैमित्तिकं शिति तु प्रतिषिध्यते, एकारोच्चारणं तु कर्त्रादौ ले सफलं पाठस्तु नेति च प्रकृतसूत्रस्थवार्त्तिकाभिमानिभाष्यकैयटयोः; प्रातिपदिकप्रतिषेधो वाच्यः । गोभ्यामित्यादि । न वाच्यः, यतो धात्वधिकारात्तस्याप्राप्तिः । धातोरिति वर्तते । क्व प्रकृतम्? लिटि धातोरितीति तत्रत्ये तथा भाष्यादौ चेत्यर्थः । तत्र तदन्तस्यानुपदेशाद्धातुत्वेऽप्यात्वाप्राप्त्या प्रत्ययस्येत्युक्तम् । तदाह—अत्रेति । शिश्ये इत्यत्रेत्यर्थः । प्रत्ययेति । तथाच भावार्थकतिङ्रूपस्यान्तस्येति तदर्थकस्तिङ् यत्र समूहे तस्यान्तस्येति वा मूलार्थेन तस्याप्यत्रैव तात्पर्यं वार्त्तिकानुरोधात् । अन्यथा निष्फलत्वाच्च । एतेन तथामूलविरोधादिदं व्याख्यानं चिन्त्यमिति मन्दोक्तमपास्तम्, उक्तयुक्तेः । ततोऽपि वार्त्तिकविरोधस्य गुरुतरत्वाच्चेति भावः । एवव्यावर्त्यमाह—तिङन्तस्येति । भावादिति । आद्योच्चारणविषयत्वाभावादित्यर्थः । नात्वेति । धातुत्वेपीत्यादिः । तथा चाफलत्वात्तदापादनं व्यर्थमित्यस्याप्रत्युदाहरणत्वापत्तिः । उक्तरीत्या योजने तु न कोऽपि दोष इति भावस्तदाह—आहुरिति । भूवादिसूत्रस्थवार्त्तिककारादय इत्यर्थः । आहुरित्यनेन वार्त्तिकमतेऽरुचिः सूचितेति । तदभिमानिमूलकृदुक्तमयुक्तमिति ध्वनयितुं सिद्धान्तभाष्यरीत्या शङ्कते—नन्विति । षष्ठे—तदध्याये । तत्र—सूत्रे इति । "ष्यङः संप्रसारणम्"इत्यादावसम्बन्धेन विच्छिन्नत्वयाऽत्रापि सम्बन्धो नेत्याशयेनाह—अथापि निवृत्तमेवमपि न दोषः । उपदेशे इत्युच्यते "उद्देशश्च प्रातिपदिकानां नोपदेश"इति । आत्वविधौ तदेव धातुग्रहणम् । तिष्ठतु तावत्सांन्यासिकमिति लिटिधातोरित्यत्र च भाष्ये तदसम्बन्ध उक्त इत्यर्थः । अयम्भावः, उपदेशे इति षष्ठ्यर्थे सप्तमी, कर्मव्युत्पन्नोपदेशपदेनाद्योच्चारणविषय उच्यते, तस्यैच इति विशेषणम्, तेनैजन्तस्योपदिश्यमानस्येत्यर्थः । एवञ्च 'गोभ्याम्' इत्यादौ 'गो' इति समूहस्यैजन्तोपदिश्यमानत्वाभावः स्पष्ट एव, उक्तयुक्तेः । सङ्कीर्णव्यवहारेऽपि अनिर्ज्ञातस्वरूपस्य कार्योद्देश्यकस्वरूपज्ञापनायापूर्वोच्चारणरूपोपदेशत्वस्य तत्र ग्रहणेनतस्य तत्राभावात् । उणादीनामव्युत्पन्नत्वादेव गो इत्यादीनां तत्त्वमित्यपि न शङ्क्यम् । एवं 'ढौकते' इत्यादौ समूहस्योपदिश्यमानत्वेनावयवस्य तदुपदेशेऽतात्पर्यात्तेषां नान्तरीयकतयोच्चारणात् । एवं चैतद्व्यावृत्त्यर्थमुपदेशग्रहणमिह कार्यम्, उद्देशश्चेत्यादिभाष्येण तदर्थतायास्तस्य बोधितत्वात्, ज्ञापकाश्रयणे गौरवाच्च । एतेन धातुपदानुवृत्तिपक्षे उपदेशपदाभावेन शिश्ये इति तिङन्तापादकं मूलं सम्यगेव, चेतेत्यादावात्वाभावस्तु मीनाति देयमृणे इत्यादिज्ञापकादिति मन्दोक्तमपास्तम्, उक्तसिद्धान्तभाष्यविरोधात् । 'तत्र करिष्यत' इति भाष्यं त्वेकदेश्युक्तिः । किञ्च धातोरित्यनुवृत्तौ "उदीचां माङ" इत्यादावात्वानापत्तिः । अनुबन्धलोपोत्तरं तद्रहितस्यैव धातुताया "नधातुलोप" इति सूत्रे भाष्ये उक्तत्वेन ङविशिष्टे तत्त्वाभावात् । अयमेवाथापि निवृत्तमिति भाष्याशयः । एवञ्च तस्य लक्षणप्रतिपदोक्तन्यायानित्यत्वज्ञाप-

शब्दरत्नम् ।

न तद् धातुत्वनिमित्तकम् , किं चाशितीति प्रसज्यप्रतिषेधेऽपि शित्परत्वयोग्यस्यैवात्वविधानान्नात्रात्वप्रसक्तिः । अपि च वासादृश्यमन्यानभिहितक्रियावाचकत्वेनेति न दोषोऽत आह—चेति । सूत्रशेषभाष्योक्तेष्वाणवयति, वट्टयतीत्यादिषु च धातुत्वे शास्त्रविषयतया साधुत्वापत्तिरिति तद्व्यावृत्तये तदिति भावः । उदित्करणेनेति ।

भैरवी ।

प्रसज्यप्रतिषेधे इति । पर्युदासे तु प्रत्यये शिद्भिन्ने एवात्वं स्यात्तथा चाकारान्ताद्विधीयमानः प्रत्यय एजन्तान्न स्यादत आह—प्रसज्यप्रतिषेधेऽपीति । शित्परत्वयोग्यस्यात्वमिति स्वीकारान्नात्रात्वप्रसक्तिरिति यदि स्वीक्रियते, तदा तिङन्तघटकतिङ्मात्रस्यापि न प्रसक्तिरित्याह—किञ्चेति । उक्तार्थे प्रमाणन्तु विप्रयोगस्यापि संयोगवत्तादृशार्थोपस्थितिजनकत्वमेव । उक्तार्थानङ्गीकारेऽप्याह—अपि चेति । यद्वा प्रसज्यप्रतिषेधपक्षे योग्यता यदि निमित्तं तदाऽवसाने जायमानविसर्गादेर्द्वित्वन्न स्यादतस्तथा स्वीकारो न युक्त इति यदि स्वीक्रियते, तदाप्याह-अपि चेति । वासदृश्यमिति । भ्वादाविति शेषः । वाचकत्वेनेति । स्वीक्रियत इति शेषः । आणवयतीति आज्ञापयतीत्यर्थः । वट्टयति-वर्त्तयतीत्यर्थः । आदिपदेन वर्द्धयतीत्यस्यार्थं प्रयुज्यमानस्य वड्ढयतीत्यस्य समुच्चयः। अपभ्रंशानामर्थबोधकता सुप्रसिद्धैव। साधुत्वापत्तिरिति । तथा च यागादिष्वपि तादृशप्रयोगापत्तिरिति शेषः । नच साधुत्वनिश्चयस्य तादृशकर्मणि तत्तच्छब्दप्रयोगे कारणताऽस्ति, स च निश्चय एतादृशशब्दविशेष्यकासाधुत्वनिश्चयेन प्रतिबध्यत इति नायं दोष इति वाच्यम् , साधुत्वस्य व्याकरणव्यङ्ग्यजातिविशेषरूपतया यद्येतेषु शास्त्रप्रवृत्तिः स्यात्तदाऽप्रामाण्यज्ञानास्कन्दितासाधुत्वज्ञानन्न स्यात् । तथा च प्रतिबन्धकाभावात्तेषु एतेषाम्प्रयोगः स्यादेवेत्याशयात् ।

ननु स्तम्भ्वादीनामुदित्करणं धातुत्वानुमापकमित्यसङ्गतम् , तेषां धातुत्वाभावे प्रातिप-

भावप्रकाशः ।

कता मूलोक्ता चिन्त्येति । तदाह—न तदिति । एवञ्च 'शिश्ये' इत्यादौ तत्त्वस्य समुदायेऽभावादेकारस्य ससहायत्वेनातिदेशाप्रवृत्त्या तत्त्वस्य दौर्लभ्यान्न दोष इति मूलमयुक्तमिति भावः । नन्वेवमपि रेप्रभृतीनां तत्त्वादात्वाभावाय धातोरित्यावश्यकमिति वार्त्तिकमतप्रवेशेनोक्तरीत्या मूलं युक्तमेवात आह—किञ्चेति । अपिना पर्युदासे शाब्दमेव तथाभानमिति सूचितम् , परन्तु न सोऽत्र युक्तः, बहुप्रतिविधेयत्वापत्तेः । अत एव गुरुतरस्यापि तस्यवोपादानमितिभावः । शित्प्रत्ययपरत्वयोग्यस्यैवेति । एजन्तस्योपदिश्यमानस्येत्यर्थः । क्वचित्तु शित्परत्वयोग्येति पाठः। नात्र शिश्ये इत्यत्र । एवञ्च रेप्रभृतीनामपि तत एव कारणेन न तन्मतप्रवेश इति मूलमयुक्तमेवेति भावः । प्रसक्तिरिति । एवञ्चाफलत्वान्न धातुत्वमेकारस्येति भावः । इदं चैतत्प्राप्तिमूरीकृत्य । वस्तुतो धातुत्वमेव नेत्याह-अपिचेति । वासादृश्यमिति । भ्वादीनामितिशेषः । न दोषइति । 'शिश्ये' इत्यादौ धातुत्वापत्तिरूपदोषो नेत्यर्थः । चसङ्ग्राह्यमाह-सूत्रेति । भूवादिसूत्रेत्यर्थः । एतेनाप्रामाण्यशङ्का निरस्ता । 'आणवयति' 'वट्टयति' इत्यनयोराज्ञापयति वर्त्तयतीत्यर्थः । आदिना "वर्धयति' इत्याद्यर्थकवड्ढयतीत्यादिपरिग्रहः। अपभ्रंशानामपि स्वातन्त्र्येणैव बोधकत्वाङ्गीकारात् क्रियावाचित्वम् । न हि साधुत्वासाधुत्वे नियते किन्त्वन्यादृशे इति स्पष्टं मञ्जूषायाम् । एतेनासाधुत्वनि-

सरला ।

न तदिति । आत्वविधायके "आदेच उपदेशे" इति सूत्रे धातुपदानुवृत्तेरभावात् "ष्यङः सम्प्रसारणम्" इति सूत्रे तत्सम्बन्धाभावेन मध्ये विच्छेदात् । अत एव "उदीचां माङः" इति निर्देशः सङ्गच्छते । अन्यथा ङकारेत्संज्ञालोपाभ्यां प्राक् धातुत्वाभावेनात्वाप्रवृत्तौ तदसङ्गतिः स्पष्टैव । नचैवं गोभ्यां नौभ्याम् इत्यादावेजन्तस्यात्वापत्तिरिति वाच्यम् । तत्र उपदेशग्रहणसत्त्वेन प्रातिपदिकस्य उद्देशश्च प्रातिपदिकानां नोपदेशः" इति भाष्येणोपदेशाभावबोधनेन तदप्रसक्तेरिति । साधुत्वापत्तिरिति । भू एधादीनां साधुत्वविधा-

दित्करणेन सौत्राणां धातुत्वं ज्ञाप्यते । चुलुम्पादीनां तु "बहुलमेतन्निदर्शनम्" इति गणसूत्रेण संग्रहः ॥

शब्दरत्नम् ।

इदमुपलक्षणम् । तत्प्रकृतिकच्ल्यनुवादेनाङ्विधानेन सार्वधातुके परे विकरणविधानेन च धातुत्वम् । "जुचङ्क्रम्य" ( पा० सू० ३।२।१५०) इत्यत्र पठितजोः, "जपजभ" ( पा० सू० ७।४।८६ ) इत्यत्र पठितपसः, ऋतिप्रभृतीनां च केषाञ्चिद्धात्वधिकारविहितकार्योद्देश्यत्वाद् बोध्यम् । एतैश्च स्थितस्य तेषां पाठस्य अंशोऽनुमीयते इति भावः । मैत्रेयादान्यसम्मतं समाधिमाह—बहुलमिति ।

भैरवी ।

इत्संज्ञायां ततः सर्वनामस्थाने उगिदचामित्यनेन नुम्सम्पादकत्वेनोदित्करणस्य चारितार्थ्यादत आह—इदमिति । तत्प्रकृतिकेति । स्तम्भ्वादिप्रकृतिकेत्यर्थः । ननु च्ल्यनुवादेनाङ्विधानात्स्तम्भेर्धातुत्वं भवतु स्तुन्भुप्रभृतिषु कथं तदनुमानमत आह—सार्वधातुक इति । स्तुन्भुस्कुन्भुप्रभृतिधातुभ्यः कर्त्रर्थकसार्वधातुके परे श्नाप्रत्ययस्य श्नुप्रत्ययस्य च विधानं तादृशधातुत्वानुमापकं भविष्यतीत्यर्थः । धातुत्वमिति । बोध्यमित्यस्यापकर्षः । ननु जुप्रभृतीनामुक्तरीत्या धातुसंज्ञानुमानन्न सम्भवतीत्यत आह—जुचङ्क्रम्यइत्यादिना । ऋतिप्रभृतिग्रहणं कास्यनेकाच्ग्रहणञ्चुलुम्पाद्यर्थमिति वार्तिकपठितानां कण्ड्वादिपठितानाञ्च संग्रहाय । स्तम्भुप्रभृतीनां मूलोक्तप्रकारेण धातुत्वानुमानकरणे गौरवमनेकानुमानकल्पनाप्रयुक्तं स्यादतो लाघवायाह—एतैश्चेति । ननु बहुलमेतन्निदर्शनमित्यप्रामाणिकमत एव "पाठेन धातुसंज्ञा क्रियते, सा न प्राप्नोति" इति भाष्यकारोक्तिः सङ्गच्छते । व्याख्या च तस्य भाष्यस्य 'स पाठो नोपलक्षणार्थोऽपि तु इयत्ताप्रतिपादनार्थः' इति कैयटेन कृतेत्याशयेनाह—मैत्रेयाद्यन्येति । एतेन तदुक्तेः स्वीयभाष्यासम्मतत्वं ध्वनितम् ।

भावप्रकाशः ।

अयात्संज्ञाशास्त्रप्रवृत्तिहेतुकसाधुत्वापादानमनुचितमिति मन्दोक्तमपास्तम्, उक्तयुक्तेः भूभ्रतीत्यादितुल्यत्वाच्चेति दिक् । नन्वधातुत्वेन प्रातिपदिकत्वात्सुपि उगित्करणं नुमाद्यर्थमित्यज्ञापकमतआह—इदमुपेति । तत्प्रकृतिकेति । स्तम्भुप्रकृतिकेत्यर्थः । नन्वेवं स्तम्भेरेव तत्त्वं स्यान्न स्तम्भ्वादीनामत आह—सार्वधातुके इति । "स्तम्भुस्तुम्भु' इति सूत्रेणेति भावः । धातुत्वमिति । स्तम्भ्वादीनामिति भावः । बोध्यमित्यस्यात्रापकर्षः । अस्य च तत्रानुषङ्गः । नन्वेवमपि ज्वादीनां तत्त्वं न स्यात्, मानाभावादत आह—ज्वित्यादि । ऋतिप्रभृतीनां तत्सदृशानां तत्त्वं च क्रियावाचकत्वे सति धातुपाठापठितत्वेनेति भावः । अत एवाह—केषाञ्चिदिति । तत्रापठितानां तादृशानां सूत्रवार्त्तिकगणपठितानामित्यर्थः । तत्र सौत्रा उक्ता एव । अनेकाज्ग्रहणं चुलुम्पाद्यर्थमिति चुलुम्पो वार्त्तिकस्थः, आदिशब्दात्तु गणस्थाः, कण्ड्वादयोऽपि गणस्था इति बोध्यम् । कार्येति । प्रत्ययरूपेत्यर्थः । ननु तत्तज्ज्ञापकेन तत्तद्वचनकल्पने गौरवमिति पाठ एव अपूर्वस्तेषामुचितोऽत आह—एतैरिति । ज्ञापकैरित्यर्थः । च एवार्थे अंशपदोत्तरं योज्यः । अंश इति साम्प्रदायिकपठनपाठनाभावात् स्मृतिमूलभूतकल्प्यमानश्रुतिवाक्यवदिति भावः । नन्वेवं चुलुम्पादीनामित्यग्रिममूलासङ्गतिः । किञ्च 'बहुलमेतन्निदर्शनम्' इत्यनार्षमप्रामाणिकम् । अत एव पाठेन धातुसंज्ञा इत्येतदुपपन्नं भवतीति भाष्यम्, तत्रैव स पाठो नोपलक्षणार्थोऽपित्वियत्ताप्रतिपादनार्थ इति कैयटश्च सङ्गच्छते । अत एव भ्वादिसमाप्तौ वृत्करणमिति चेत्र तदेव ध्वनयन्नाह—मैत्रेयेति । तथा च न भाष्यादिसिद्धान्तः स इति भावः ।

सरला ।

यकत्वस्यानेकगणसूत्राणां कल्पनापेक्षया लाघवादस्यैवावृत्त्या संज्ञाविधायकत्वमपरस्य साधुत्वविधायकत्वमिति तदापत्तिरिति यज्ञादौ तेषां प्रयोगापत्तिरित्यर्थः । इति संज्ञाप्रकरणम् ।

चादयः ( पा० सू० १।४।५७ )॥ अद्रव्यार्थाः किम् ? पशुः । लिङ्गसंख्यान्वितं द्रव्यम् । इह तु स्यादेव—लोधं नयन्ति पशु मन्यमानाः । पशु इति सम्यगर्थे ।

उपसर्गाः ( पा० सू० १।४।५८ ) ॥ निस् दुस् इति सान्तौ, "निसस्तपतौ" (पा०सू० ८।३।१०२) इति निर्देशात् अयोगवाहानामविशेषेणेति प्रकरणे निष्कृतं दुष्कृतमित्युदाहृत्य "इदुदुपधस्य सकारस्य यो विसर्जनीयः" इति भाष्यकारोक्तेश्च । "उपसर्गस्यायतौ" ( पा० सू० ८।२।१९ ) इति सूत्रे वामनोऽप्येवम् । "निरः कुषः" ( पा० सू० ७।२।४६ ) "सुदु रोरधिकरणे" इति निर्देशाद्रेफान्तावपीति तत्रैव सूत्रे हरदत्तः ॥

इति संज्ञाप्रकरणम् ।

---

शब्दरत्नम् ।

**सम्यगर्थे इति** । न च "लुब्धमृषिं नयन्ति पशुं मन्यमानाः" इति निरुक्ते पशुमिति सानुस्वारपाठात् तत्र पश्विति लुप्तविभक्तिकं सत्त्ववाचीति वाच्यम्, लोधमित्यनवगतमिति तद्भाष्योक्त्या तन्मात्रनिर्णायके निरुक्ते पशुशब्दांशेऽन्यथापाठे मानाभावात् । स्पष्टं चेदं प्रकृतसूत्रे हरदत्तग्रन्थे दृशधातौ माधवग्रन्थे चेति दिक् ।

**वामनोऽप्येवमिति** । तत्र हि दुस् सान्त इति तेनोक्तम् ॥

इति संज्ञाप्रकरणं समाप्तम् ।

भैरवी ।

सानुस्वारपाठादिति । केषुचित्पुस्तकेष्वित्यादिः । तद्भाष्योक्त्येति । वेदभाष्योक्त्येत्यर्थः । तन्मात्रनिर्णायके—लोधशब्दार्थमात्रनिर्णायके । यदि तस्य भाष्यस्य पशुशब्दार्थनिर्णायकताऽपि स्यात्तदा तथा भाष्यकृतोक्तं स्यादिति भावः । अन्यथा पाठे निरनुस्वारपाठाद्भिन्ने सानुस्वारपाठे । यथा लुब्धमिति विशेषणबोधकमृषिमिति विशेष्यसन्निधाने पठितं तथा तत्सन्निधान एव पशुमित्यस्यापि पाठे कर्तव्ये क्रियावाचकपदसमभिव्याहारेण पाठस्य स्वारस्यानुपपत्तिश्चेत्यपि बोध्यम् । किञ्चाद्युदात्तत्वदर्शनमप्यस्य निपातत्वनिर्णायकम् । लोमवल्लाङ्गूलवचनस्य तु "पशूंस्तांश्चक्रे वायव्यान्" इत्यत्रान्तोदात्तत्वमेव दृश्यते । तदेतद्दर्शयितुमाह—दिगिति ॥

"उपसर्गस्यायतौ" इति सूत्रे वामनेन निसः सान्तत्वमनुक्तमित्येवमिति कथमत आह—तत्र हीति । उपसर्गेति सूत्रे हीत्यर्थः । इति संज्ञेति । अष्टाध्यायीस्थसूत्रविहितानां सन्धिकार्योपयोगिनीनां संज्ञानां प्रकरणं समाप्तमित्यर्थः । तेनाङ्गप्रगृह्यलोपाम्रेडितभलोपादिसंज्ञानामस्मिन्प्रकरणे पाठाभावेऽपि न न्यूनतापत्तिः । एतेन संज्ञानामेवेदं प्रकरणं नतु संज्ञानामिदमेवेत्यत्र तात्पर्यं, पूर्वत्रासिद्धमित्यादिसूत्रार्थकथनं तु प्रसङ्गादिति बोध्यम् ॥

इति संज्ञाप्रकरणविवरणम् ।

भावप्रकाशः ।

पाठादिति । क्वचित्पुस्तके तथा दृश्यमानादित्यर्थः । तत्र वेदे तदर्थनिर्णयायास्य प्रवृत्तेः । तद्भाष्योक्त्येति । वेदभाष्योक्त्येत्यर्थः । तन्मात्रेति । लोधशब्दार्थमात्रेत्यर्थः । उपक्रमादिना तथैव निर्णयादिति भावः । अन्यथा पाठे निरनुस्वारवेदपाठादन्यथा सानुस्वारपाठे । मानाभावादिति । अन्यथा तदपि तद्भाष्योक्तं स्यादिति भावः । किञ्च द्वितीयान्तसन्निधौ पशुशब्दे पठनीये क्रियासन्निधौ पाठस्यादृष्टार्थतापत्तेः । अपि च 'लोधं नयन्ति'इत्यत्र निर्विभक्त्याद्युदात्तपाठेन निपातत्वनिर्णयात् 'निपाता आद्युदात्ताः' इति फिट्सूत्रादव्ययाद्विभक्तिलुकः सत्वात् । चतुष्पाज्जातिविशेषवाची पशुशब्दस्त्वन्तोदात्तः पुल्लिङ्गश्च, पशूंस्तानित्यादौ तथापाठात् । तदेतद्ध्वनयन्नाह—दिगिति । वामनेन तत्र निसोऽनुक्त्या एवमित्यस्यानुपपत्तेः आह—तत्रहीति । तत्सूत्रे हीत्यर्थः । एवञ्चाव्यवहितेन दुष्कृतमित्यंशेन साम्यबोधक एवंशब्द इति भावः । उभयोरावश्यकत्वमन्यतोऽवगन्तव्यम् । इतिसंज्ञेति । प्रथमाध्यायस्थसन्धिकार्योपयोगिसंज्ञानां प्रकरणमिति

# अथ परिभाषाप्रकरणम् ।

"इको गुणवृद्धी" (पा० सू० १।१।३) ॥ गुणवृद्धिशब्दाभ्यामिति । एतच्च पूर्वसूत्राभ्यां गुणवृद्धिपदे अनुवर्त्य गुणो वृद्धिरिति ये गुणवृद्धी इति योजनया लभ्यते । तेनेह न—"दिव औत्" (पा० सू० ७।१।८४) द्यौः, "त्यदादीनामः"

## शब्दरत्नम् ।

योजनयेति । (१)यद्यपि तदनुवृत्त्यैव सिद्धे सामर्थ्याच्छब्दव्यापाराश्रयणेन लभ्यते

## भैरवी ।

इको गुणवृद्धी । नेदमधिकारसूत्रम् 'न धातुलोप' इति सूत्रस्थनकारस्य पृथक् पाठात् । अन्यथाऽधिकारत्वाविशेषान्नञा संयुज्यैव पठेत् । संज्ञासूत्रमपि न, विरुद्धविभक्तिनिर्देशात् । विधिसूत्रमपि न, तत्तद्विधायकसूत्रसामर्थ्यादतः परिभाषासूत्रमेवेत्याशयेन प्रकरणान्तरेऽस्य पाठः। अत्र 'पूर्वसूत्राभ्यां गुणवृद्धिपदे अनुवर्त्य योजनयोक्तार्थलाभः' इति मूलीयव्याख्यानङ्गुणवृद्धिग्रहणसामर्थ्यादिति भाष्याक्षरविरुद्धमित्याशयेनाह—यद्यपीत्यादि । तदनुवृत्त्यैव—गुणवृद्धिपदानुवृत्त्यैव । न च तयोः सूत्रयोर्गुणवृद्धिपदे स्वरूपपरे इह तु तयोः संज्ञिपरत्वं कथमिति वाच्यम्, 'ष्णान्ताषट्' इति संख्यापदवच्छब्दाधिकारेण संज्ञिपरत्वसम्भवात् । सामर्थ्यात् । पुनरस्मिन्सूत्रे तयोः पाठसामर्थ्यात् । लभ्यत इति । लक्षणयेति शेषः । सा च गुणवृ-

## भावप्रकाशः ।

समासमित्यर्थः । तेनाम्रेडितप्रगृह्यभलोपसंज्ञाद्यनुक्तावपि न क्षतिः । तथा च संज्ञानामेवेदं प्रकरणं न तु तासामिदमेवेति बोध्यम् । 'अ अ' इत्याद्युपन्यासस्तु प्रासङ्गिकः । एतेन "अइउण्" इत्याद्युपन्यासो न युक्तः, तेषां क्रमबाधकत्वात् । तत्फलं तु यमां यमीत्यादौ यथासङ्ख्यधीरित्यपास्तम्, उक्तयुक्तेः । "आदिरन्त्येन" इत्येकवाक्यतया तेषां संज्ञासूत्रत्वाच्चेत्यन्यत्र विस्तरः ॥

इति संज्ञाप्रकरणम् ॥

परममूले इकोगुणवृद्धी इति । परिभाषेयं व्याख्यानादिति भावः । गुणवृद्धिग्रहणसामर्थ्यादिति भाष्याक्षरानुगुण्यमत्र पक्षे भवतीत्याशयेनाशङ्कते—यद्यपि तदेति । गुणवृद्धिपदानुवृत्त्यैव सूत्रबोध्यार्थलाभे इत्यर्थः । एवेन सौत्रतत्पदव्यवच्छेदः । संज्ञाकरणेनान्यत्र संज्ञिपरत्वेन "नधातु" इत्यादिसाहचर्येण च तयोरर्थपरत्वादिति भावः । सामर्थ्यात्—पुनरत्र सूत्रे तद्ग्रहणसामर्थ्यात् । शब्दव्यापारेति । इहत्यं

## सरला ।

योजनयेतीति । अनुवृत्तगुणपदस्य वृद्धिपदस्य च तृतीयया विपरिणामः, विधीयेते इत्यध्याहारः, अनुवृत्तसंज्ञापदानां स्वरूपपरकत्वमिति च नियम इति गुणपदेन वृद्धिपदेन च यत्रादेङ आदैचो वा विधीयन्ते तत्रेकः पदं षष्ठ्यन्तमुपतिष्ठते इत्यर्थः सिद्ध्यति । न च "बहुगण" सूत्रादनुवर्तमानस्य संख्यापदस्य "डति च" सूत्रे संज्ञिपरकत्वदर्शनेन व्यभिचार उक्तनियमस्येति वाच्यम्, संज्ञाशास्त्रातिरिक्तशास्त्रेऽनुवृत्तसंज्ञापदानां स्वरूपपरकत्वमिति नियमाश्रयणेन "डति च" सूत्रस्य संज्ञाशास्त्रत्वेन दोषाभावात् । न चैवं स्वादिष्विति संज्ञाशास्त्रे "सुप्तिङन्तं पदम्" सूत्रादनुवर्तमानपदपदस्य स्वरूपपरकत्वानापत्तिरिति वाच्यम् । यस्मात्तदनुवर्तते तदीयविधेयतावच्छेदकधर्मेतरधर्मावच्छिन्नविधेयताप्रयोजकेति संज्ञाशास्त्रस्य विशेषणेन उभयोरपि "सुप्तिङन्तं" "स्वादिषु" सूत्रयोरेकसंज्ञाविधायकत्वेनादोषात् । "डति च" इत्यस्य तु भिन्नसंज्ञाविधायकत्वेन तादृशसंज्ञाशास्त्रत्वमस्त्येवेति न तत्र संख्यासंज्ञापदस्यानुवृत्तस्य स्वरूपपरत्वमिति ।

नवीनास्तु गुणवृद्धिपदानुवृत्त्यैव सिद्धे पुनर्गुणवृद्धिग्रहणसामर्थ्येन शब्दव्यापारमाश्रित्य गुणवृद्धिपदयोरदेङ्निष्ठविधेयताप्रयोजकगुणपदे आदज्निष्ठविधेयताप्रयोजकवृद्धिपदे च लक्षणाम्, अनुवर्तमानमपि संज्ञापदं संज्ञाशास्त्रीयविधेयतावच्छेदकधर्मेतरधर्मावच्छिन्नविधेयताप्रयोजके संज्ञाशास्त्रे तदन्यत्र वा सर्वत्र संज्ञिपरमेवेति च नियममङ्गीकुर्वन्ति । तदाह—यद्यपीति ।

( पा० सू० ७।२।१०२ ) सः, इमम् । षष्ठ्यन्तमिति । सूत्रे षष्ठ्यन्तस्यानुकरणा-

शब्दरत्नम् ।

मूलोक्तार्थस्तथाऽपि मन्दबुद्धिसाधारण्येन स्फुटत्वायैवमेवोक्तम् । स इति ।

भैरवी ।

द्धिशब्दकरणकविधानाधिकरणे कार्या । मन्दबुद्धीति । किञ्च यदीहोक्तार्थे गुणवृद्धिपदयोरननुवर्त्तमानयोर्लक्षणाऽऽश्रीयते तदा 'नञ्रातु' इत्युत्तरसूत्रयोः पुनरर्थान्तरेऽकारादिमात्रे लक्षणाऽऽश्रयणीयेति गौरवं स्यादतो लाघवायास्मिन्सूत्रे तयोरनुवृत्त्या योजनाकल्पनमेव युक्तमिति बोध्यम् । शब्दव्यापारपरतया व्याख्यानस्य फलं द्यौरित्यादावतिव्याप्तिवारणरूपं दर्शितं यथा,

भावप्रकाशः ।

गुणवृद्धिग्रहणं शब्दविहितगुणवृद्धिलाक्षणिकम् । एवञ्चानुवृत्तिर्नेतिनद्भाष्यतात्पर्यमिति भावः । एवमेवेति । योजनया लभ्यते इत्याद्येवेत्यर्थः । इत्येवमित्यध्याहृत्यात्रत्ययोरर्थपरत्वेनानुवृत्तयोरर्थाधिकारात् स्वादिष्वित्यादावनुवृत्तपदशब्दस्य संज्ञापरत्वस्यैव दृष्टत्वाददेङ्गुणोवृद्धिरचेत्यदेङां वृद्धिसंज्ञा प्राप्नोती तभाष्याच्च शब्दपरत्वेन च योजनालाभ इति भावः । अत एव सम्बन्धानुवृत्तिप्रदर्शकैतत्सूत्रभाष्ये "इकोगुणवृद्धोत्युच्चार्य गुणवृद्धिग्रहणमनुवर्त्तते" इत्युक्तम्, नत्विक इत्येतावन्मात्रमुच्चार्य । एवञ्चानुवृत्त्या योजनेत्येतद्भाष्यतात्पर्यम् । परन्त्वस्य भाष्यस्य यथान्यासाभिप्रायकतया सुयोजत्वात्तन्मतमेव भाष्याभिमतम् । अत एव कैयटोऽप्युत्तरपक्षत्वेन तन्मतमभिहितवान् । किञ्चानुवृत्तयोस्तयोरसमस्तयोरेकवचनान्तयोर्द्विवचनान्तसमस्तैकदेशभूतगुणवृद्धिविशेषणत्वासम्भवेन तत्पक्षासम्भवः । नहि भवति चैत्रमैत्रौ दण्डी स्रग्वीति । अत एव मन्दबुद्धीति फलमुक्तम् । अत एव न शब्देन्दुशेखरविरोध इति बोध्यम् । एतेन सम्बन्धानुवृत्तौ मण्डूकप्लुतौ वात्र तयोर्ग्रहणे च गौरवमिति सम्पूर्णसूत्रद्वयानुवृत्त्या तयोस्त्याग एवोचित इति कौस्तुभरत्नाकरमन्दाद्युक्तमपास्तम्, तथानुवृत्तिप्रदर्शकभाष्यविरोधापत्तेः । त्वन्मतेऽपि चतुर्षु पदेषु स्वरितत्वप्रतिज्ञायास्तथा योजनायाश्चावश्यकतया गौरवस्य स्पष्टत्वाच्च, गुणवृद्धिग्रहणसामर्थ्यादिति भाष्यविरोधापत्तेश्चेति दिक् ।

नन्वेवं व्याख्यानस्य "दिव औत्"इत्यादिष्वपि अव्याप्त्यतिव्याप्त्युभयजनकातिव्याप्तेर्निरासस्य फलस्य मूलोक्तत्वेऽपि तल्लक्ष्येषु स इत्यनुचितम्, तत्रैकोऽभावादत आह—अत्रेति। तथा चान्यत्र तथासत्त्वेऽपि "त्यदादीनामः" इत्यत्र व्याप्तेस्तदुभयस्य च जनकातिव्याप्तेर्निरास एव फलमिति भावः । "अचश्च" इत्यत्र ह्रस्वादिपदानुवृत्तिफलन्तु "दिव उत्"इत्यादि । गणनिर्देशस्तु संज्ञोपसर्जनव्यावृत्त्यर्थं उत्तरार्थश्चेति बोध्यम् । यद्यपि "दिव(?)तस्ये"त्यर्थेन 'द्यौः' इत्यस्य सिद्धिः, "लोपो व्योः"इति वलोपः, "दिव उत्" इति तु न अभिव्यक्तेति न्यायात्, अनन्त्यग्रहणप्रत्याख्यानात् "नयासयोः" इत्यादिज्ञापकाच्च सः, 'हेस' 'सा' इत्यादिसिद्धिः । एवम् "इदमो मः" "इदोऽय् पुंसि"इत्यादिज्ञापकात् 'इमम्'इत्यादिसिद्धिः । एवं 'पन्थाः'इत्यस्य मूलकृदादिमते "इतोऽत्" इत्यत्रेद्ग्रहणाज्ज्ञापकात्सिद्धिरिति नोक्तार्थाङ्गीकारफलं, तथापि ज्ञापकानादरेण तदुक्तिः । किञ्चोक्तज्ञापकैरानुमानिकवचनानां कल्पनापेक्षया शब्दव्यापाराश्रयणमेव लाघवादुचितमिति तदुक्तिः । वस्तुतो "लोपो व्योः" इत्यत्र वस्य भगवता प्रत्याख्यानात्सौत्रत्वकल्पने गौरवाच्च 'द्यौः' शब्दसिद्ध्यर्थं तथा व्याख्यानावश्यकतया 'पन्थाः' इत्यादीनामपि तत एव सिद्ध्या ज्ञापकाश्रयणे फलाभावो विपरीतगौरवञ्च । अत एव 'द्यौः' इत्यस्य मूले प्रागुक्तिः, एवञ्च मुख्यं तल्लक्ष्यम् । न च पूर्वोपमर्दनोत्तरोत्तरोक्तेस्सर्वत्र प्रसिद्धत्वेऽपि वैपरीत्यं न क्वचिद् दृष्टमिति वाच्यम्, श्रुतिलिङ्गादौ तस्य पूर्वमीमांसायां स्पष्टत्वात् । तस्मादस्तु मध्यमः पक्ष इतीदूत्सूत्रभाष्योक्त्या तथा नियमाभावाच्च । भाष्यकृतोऽपीदमेवाकूतम् । एतेन 'इतः' इति सामान्यापेक्षज्ञापकेन स्वरूपविधावस्यानुपस्थितया 'द्यौः' इत्यादेरपि सिद्धिः, तथा च गुणवृद्धिपदमात्रानुवृत्त्येहत्यतत्पदत्याग एवोचित इतिरत्नाकराद्युक्तमपास्तम्, उक्तयुक्तेः ज्ञापकस्य सामान्यापेक्षत्वे मानाभावाद् गौरवाच्च । किञ्च 'ऋभुक्षिन्' शब्दे ऋकारोकारयोरनतिप्रसङ्गाय तस्य चारितार्थ्यात् । नच 'इकः' इत्यस्य सर्वनामस्थानविशेष्यत्वात् "येन नाव्यवधानम्" इतिन्यायेन नातिप्रसङ्ग इति

च्छब्दस्वरूपपरतया नपुंसकात्सोर्लुगिति भावः। पदमिति। तच्च सम्भवति सामा-

शब्दरत्नम्।

अत्र नैव स्यादिति भावः। इममिति। अत्रेकारस्यैव स्यान्न त्वन्त्यस्येति भावः। सोर्लुगिति। अत एव दीर्घो नेति भावः। तच्चेति। इक इति पदं चेत्यर्थः। अनेनात्र सूत्रे पदोपस्थितिपक्ष इति सूचयति "अचो ञ्णिति" (पा०सू०७।२।११५) "ओर्गुणः" (पा०

भैरवी।

तथा स इत्यत्र न सम्भवतीति तदुपादानन्निष्फलमित्याशङ्कानिरासायाह—अत्र नैवेति। तथा चातिव्याप्तिवदव्याप्तिनिरासोऽप्येवं व्याख्यानस्य तस्य फलमिति ध्वनितम्। नन्विममित्यत्र पुनरतिव्याप्तिप्रदर्शनं सन्दर्भविरुद्धम्। 'द्यौः' इत्यस्यातिव्याप्त्यधिकरणस्याग्रे एतदुपन्न्यासस्योचितत्वात्, अतो भावमाह—अत्रेकारेति। तथाचान्त्यादेशस्य विषये दोषमुद्भाव्यानन्त्यादेशप्रसक्त्यातिव्याप्तिप्रदर्शनाय पुनरेवं लेखः। अत एव। लुकः प्रवृत्तेरेव। दीर्घ इति। "अत्वसन्तस्य" इति सूत्रविहित इत्यादिः। ननु तच्चेत्यनेन सम्पूर्णसूत्रपरामर्शेऽर्थासङ्गतिरत आह—इक इति पदञ्चेति। अनेन—पदपदोपादानेन। ननु विधेयसमर्पकगुणवृद्धिपदोपादानं यत्र तत्रास्योपस्थानञ्चेत् "अचो ञ्णिति" इति सूत्रे "ओर्गुणः"इत्यत्र च तथा सत्त्वादत्रापीक इत्यस्योपस्थानं स्यात्, तथाच सूत्रोपात्तयोर्वैयर्थ्यमत आह—अच इति। न च निर्दिष्टस्थानिकत्वमिक इत्यस्यानुपस्थाने नियामकम्भविष्यतीति वाच्यम्, अच इत्यस्य स्थानिबो-

भावप्रकाशः।

वाच्यम्, अङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षत्वेन तथाऽन्वयस्यैवाभावात्। एतेनाद्विधिसामर्थ्यात्तथेत्यपास्तम्। एवञ्च पन्थाः इत्यपि 'द्यौः' इतिवन्मुख्यमेवोदाहरणमिति तथा व्याख्यानं तदुक्तिश्च युक्तैवेति दिक्। यद्यपि "त्यदादीनामः" इत्यत्रेक्पदोपस्थितौ 'सम्भवति' इति न्यायेन सामानाधिकरण्येनान्वय उचितस्तथाऽपि विभिन्नवचनत्वादधिकलद्वयानुरोधाच्च वैयधिकरण्येनैवान्वयः। अत एव भाष्ये इममित्युक्तिसाफल्यम्। तदेतद् हृदि निधायाह—अ कारेति। एवव्यावर्त्यमाह—नत्विति। दीर्घ इति। "अत्वसन्तस्य" इत्यनेनेति भावः। ननु तच्चेत्यनेन सूत्रपरामर्शे तस्य विधिषु तथाऽनन्वयात्सम्भवतीत्याद्युत्तरग्रन्थासङ्गतिः। सूत्रानुपात्तत्वात् पदशब्दपरामर्शोऽपि न युक्त इत्यत आह—इक इति पदञ्चेति। एवञ्च 'इकः' इत्यस्यैव परममूले षष्ठ्यन्तं पदमिति स्वरूपकथनं, नत्वनुवृत्त्यादिलभ्यम्, अत एव मूले भेदविवक्षाङ्गीकारः। अन्यथा 'उपतिष्ठते' इत्यत्र तस्य कर्तृत्वेनान्वयो न स्यात्। अत एव पदशब्देन सामानाधिकरण्यमिति भावः। तत्फलितमाह—अनेनेति। इक इति षष्ठ्यन्तमित्यादिव्याख्यानेनेत्यर्थः। पक्ष इति। स एव युक्त इति स्फुटीभविष्यति। नन्वेवमपि 'ओर्गुणः, इत्यादावप्युपस्थितिः स्यात्, गुणादिपदश्रवणात्। न च निर्दिष्टस्था निकत्वान्न तथा 'ओः' इत्यादेः स्थानित्वनिर्णयस्य वाक्यार्थबोधोत्तरकालिकतया पूर्वमभावादत आह—अच इति। आदिना 'अत उपधायाः' इत्यादिसङ्ग्रहः।

"इमामगृभ्णन्" इतिमन्त्रे रशनामात्रप्रकाशनसामर्थ्यरूपलिङ्गसत्त्वेऽपि "इत्यश्वाभिधानीमादत्ते"

सरला।

दीर्घो नेतीत्ति। षष्ठ्यन्तस्य "इको यणचि" इत्यादिसूत्रस्थस्यानुकरणतया तस्यानुकार्यार्थवाचकत्वेन शब्दस्वरूपार्थकत्वमाश्रित्य नपुंसकलिङ्गबोधकतया तत उत्पन्नाया विभक्तेः प्रथमैकवचनस्य लुकि असन्तत्वेऽपि "अत्वसन्तस्य चाधातोः" इत्यनेन न दीर्घः, सुपरकत्वाभावात्, "नलुमता" इति निषेधादिति भावः। अत्र नैव स्यादिति। इकोऽसत्त्वादित्यर्थः। पदोपस्थितिपक्ष इति। तच्छेष–तदपवाद–पदोपस्थितिपक्षाणां मध्ये इति शेषः।

शब्दरत्नम् ।

सू० ६।४।१४६) इत्यादौ तु नास्याः प्रवृत्तिः । लिङ्गस्य श्रुत्यपेक्षया दुर्बलत्वेन प्रथमतः श्रौताच्पदार्थादिघटितवाक्यार्थबोधे वृत्ते निर्दिष्टस्थानिकत्वेनोपस्थितस्यापीक्पदस्य वाक्यार्थेऽनन्वयात् । "सार्वधातुक" ( पा० सू० ७।३।८४ ) इत्यादौ तु तदुपस्थितिं

भैरवी ।

धकत्वनिर्णयस्य वाक्यार्थबोधोत्तरकालिकत्वात् । लिङ्गस्य—वृद्ध्यादिपदनिष्ठस्य लिङ्गस्य इक्पदोपस्थितिद्वारा तदर्थप्रकाशनसामर्थ्यरूपस्य । श्रुत्यपेक्षया—अच इत्यादिश्रुत्यपेक्षया । निरपेक्षो रवः श्रुतिः । दुर्बलत्वेनेति । "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" ( जै० सू० ) इति सूत्रे मीमांसायां हि तथोक्तम् । दुर्बलत्वमुपपादयति प्रथमत इति । श्रौत इति । श्रुतेरयं श्रौतः । श्रुतिश्चाच्पदादिरूपा, अत एवाह—अच्पदार्थादीति । आदिना वृद्ध्यादिपदार्थपरिग्रहः । वृत्ते—निष्पन्ने । वाक्यार्थबोधस्य या पदार्थोपस्थित्यादिसामग्री तस्या वृत्तत्वादिति शेषः । एतेन पदोपस्थितिप्रतिबन्धकसद्भावो ध्वनितः । उपस्थितस्यापीति । अपिना ऽनुपस्थितौ सम्यक्त्वं सूचितम् । लिङ्गस्य तु पदोपस्थापकत्वं, ततस्तस्य पदस्य शक्तिस्मरणं, ततस्तदर्थोपस्थितिस्ततस्तस्यार्थस्य वाक्यार्थघटकत्वसम्भावनेति विलम्बः स्पष्ट इति भावः । यथा "इमामगृभ्णन् रशनामृतस्य" इति मन्त्रे रशनामात्रप्रकाशनसामर्थ्यरूपलिङ्गसत्त्वेन गर्दभरशनाग्रहणेऽपि प्रसक्तस्य तस्य मन्त्रस्य तदीयब्राह्मणे "अश्वाभिधानीमादत्ते" इति विधिबोधकलेडन्तशब्दोच्चारणेनाश्वरशनाग्रहणे श्रुत्या तस्य मन्त्रस्य विनियोगो बोध्यते इति । निर्दिष्टस्थानिकत्वेनेति । अनेन स्थान्यन्तराकाङ्क्षाभाव उक्तः। अनन्वयेति । अर्थद्वारेति शेषः । जनितान्वयबोधादिति च भावः ॥

प्रकृतसूत्रोपयोगस्थलमाह—सार्वधातुक इत्यादिना । तदुपस्थितिम्—एतत्सूत्रस्थेक्पदोपस्थि-

भावप्रकाशः ।

इति तदीयब्राह्मणे "आदत्ते" इति लेट् विधायकः, इतिर्मन्त्रस्य करणत्वबोधकः, अश्वाभिधानीमिति द्वितीयाश्रुतिर्निरपेक्षरवाख्या साध्यत्वबोधिकेति तस्याः प्राबल्यादश्वरशनादाने तस्य विनियोगो नोक्तलिङ्गेन तन्मात्रादाने इति पूर्वमीमांसायां श्रुतिलिङ्गेतिसूत्रे स्पष्टम् । तदभिप्रेत्याह—लिङ्गस्येति । इक्पदोपस्थितिद्वारा तदर्थप्रकाशनसामर्थ्यरूपगुणादिपदनिष्ठलिङ्गस्येत्यर्थः । श्रुतीति । "अचः" इत्यादिश्रुतीत्यर्थः । वृत्ते निष्पन्ने उक्तकारणबाधकाभावयोः सत्त्वादिति भावः । निर्दिष्टेति । तथा च स्थान्याकाङ्क्षाऽनियमप्रसक्त्योरभाव इति भावः । उपस्थितस्येति । शङ्कोक्तरीत्येति भावः । वस्तुत उक्तरीत्या अनुपस्थितिरेव । तद् ध्वनयन्नाह-अपीति । काकूक्तिरियम् । अनेन कैमुतिकन्यायसूचनद्वाराऽनुपस्थितानन्वयसूचनद्वाराऽनुपस्थितिरेव युक्तेति सूचितम् । अनन्वयेति । अर्थद्वारेतिशेषः, जातेष्टान्वयबोधेन नैराकाङ्क्ष्यात् । तथाच फलाभावादपि न तथेति भावः । नन्वेवं "सार्वधातुक" इत्यादावपि तदापत्तिः, उक्तरीत्या तत्रापि ततः प्राक् बोधनिष्पत्तेः । तथा चास्य निर्विषयतापत्तिरत आह—सार्वधातुके इति । तदुपेति । अत्रत्य

सरला ।

दुर्बलत्वेनेति । यथा "ऐन्द्रया गार्हपत्यमुपतिष्ठते" इति श्रुत्या ऐन्द्रया ऋचः गार्हपत्योपस्थाने विनियुक्ताया इन्द्रदेवतास्वरूपप्रकाशकत्वेऽपि लिङ्गान्नेन्द्रोपस्थाने विनियोगः श्रुत्यपेक्षया लिङ्गस्य श्रुतिमनुमाय विनियोजकतया विलम्बोपस्थापकत्वेन दुर्बलत्वात् । लिङ्गं हि श्रुतिमनुमाय यावदिन्द्रोपस्थाने ऐन्द्रीमृचं विनियोजयति, तावत्प्रत्यक्षश्रुतिः गार्हपत्योपस्थाने लिङ्गाच्छ्रुत्यनुमानकाल एव विनियोजयतीति । तदुक्तं जैमिनिना—"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्" इति । एवं प्रकृतेऽपि "अचो ञ्णिति" इति सूत्रस्य आदैज्विधायकानुवृत्तवृद्धिपदघटितत्वलिङ्गेन यावद् इकोगुणवृद्धीतिशास्त्रेण इक्पदोपस्थानं तावदेव श्रौताच्पदार्थेन स्थान्याकाङ्क्षाया निवृत्ततया उपस्थितस्यापीक्पदस्याकाङ्क्षाया अभावाच्छाब्दबोधेऽनन्वय इति । सार्वधातुक इत्यत्र तु श्रौताङ्गपदार्थद्वारा अङ्गस्य गुणो भवतीति वाक्यार्थे वृत्तेऽपि स्थान्याकाङ्क्षाशान्त्यभावेन तत्रोक्तलिङ्गादुपस्थितस्येक्पदस्य शाब्दबोधेऽन्वय इति भावः ।

नाधिकरण्ये इगन्तस्याङ्गस्येत्यादिक्रमेण संबध्यते । "मिदेर्गुणः" (पा० सू०७।३।८२)

शब्दरत्नम् ।

विना स्थान्याकाङ्क्षाशान्त्यभावेन बोध एव नेति विशेषः । एवं च पदश्रुतिनिमित्तैषा पदैकवाक्यतया ऽन्वयवत्यन्तरङ्गा । स्थानषष्ठीत्वनिर्णये उपस्थिताऽलोन्त्यपरिभाषाया अनन्त्यस्य गुणव्यावृत्तये वाक्यैकवाक्यतया ऽन्वय इति बहिरङ्गा सा,

भैरवी ।

तिम् । शान्त्यभावेनेति । गुणादीनामनेकाल्त्वाभावेन "अनेकाल्शित्सर्वस्य" इत्यस्यानुपस्थितेरङ्गस्येति षष्ठ्या अर्थस्य समीपादिपदाध्याहारेण "अस्तेर्भूः" इत्यत्रेवानेकस्य सम्भवेन स्थानषष्ठीत्वनिर्णयाभावाद् "अलोऽन्त्यस्य" इत्यस्याऽप्यनुपस्थितिरन्यस्य तु निर्णायकस्य स्वरूपत एवाभावादिति । अङ्गसम्बन्धिगुण इत्यर्थबोधस्तु सामान्यतो जातोऽपि न लक्ष्यसंस्कारक इति भावः । बोध एव नेति । सम्बन्धविशेषविषयकः षष्ठीजन्यबोध एव नेत्यर्थः । न चैवमस्याः परिभाषाया अप्युपस्थितिर्न स्याद्विधेयसमर्पकत्वनिर्णयाभावेन लिङ्गानिश्चयादिति वाच्यम्, असति बाधके विधिवाक्यस्थप्रथमविधेयबोधकपदावयवेति सामान्यतः सिद्धवाक्यतो गुण इति पदस्य प्रथमान्तस्य लिङ्गत्वसम्भवात् । मौलन्तच्चेत्यादिग्रन्थमवतारयति—एवञ्चेत्यादिना । एवञ्च—सामान्यतो बोधे च । पदश्रुतिनिमित्ता—विधेयबोधकत्वज्ञानविषयगुणादिपदश्रवणनिमित्ता । एषा "इको गुण" इति परिभाषा । अन्तरङ्गत्वादस्याः प्रथमतः प्रवृत्तिमाह—पदैकेति । "अलोऽन्त्यस्य" "आदेः परस्य" "अनेकाल्" इत्यस्य च यथा ऽन्यत्र व्यवस्थापकत्वं, तदाह—स्थानषष्ठीत्वेति । "पादस्य लोपः" इत्यादौ यथा । प्रकृते सार्वधातुकेत्यादिसूत्रे स्थानषष्ठीत्वस्य "क्ङिति च" इत्यस्य निर्दिष्टपरिभाषोपस्थितावव्यवहितस्य गुणनिषेधकत्वेन तत्प्रतिवध्यसूत्रस्थपदघटितवाक्यघटकषष्ठ्या निर्णय इत्यर्थः । एवञ्चालोन्त्यस्येत्यस्य बहिरङ्गत्वं स्पष्टमेव । अनन्त्यस्येति । कृष्णतीत्यादावृकारादेरित्यर्थः । वाक्यैकवाक्यतेति । तस्याः परिभाषाया यत्र स्थानषष्ठी तत्रालोऽन्त्यस्येत्युपतिष्ठत इत्यर्थेन

भावप्रकाशः ।

"इकः" इतिपदोपस्थितिमित्यर्थः । अभावेनेति । गुणादेर्नानेकाल्त्वेनासर्वादेशत्वात् स्थानषष्ठीत्वानिर्णये नानन्त्यादेशत्वाच्चेति भावः । बोध एव नेति । लक्ष्यसंस्कारको नेत्यर्थः । अङ्गसम्बन्धिगुणभवनमिति सामान्यधीस्त्वस्त्येव, हेतोः सत्त्वात् । अत एव विधेयसमर्पकत्वेन गृहीतगुणादिपदश्रुतिरिक्पदोपस्थितौ लिङ्गम् । तत्त्वेन ग्रहश्चासति बाधके विधिवाक्ये प्रथमाया विधेयविभक्तित्वेन तदन्तत्वात्तयोस्तद्बोधो जात एव । अत एव गुणादिपदानामिक्पदोपस्थापनेन सफलानामपि वाक्यार्थान्वयिता, तदर्थस्य तदनन्वयित्वेऽविधेयत्वेनोपस्थापकत्वस्यैव भङ्गापत्तेः । असतीत्याद्युक्त्या "वृद्धिर्यस्य" इत्यादौ यच्छब्दादेस्तद्बाधकत्वेनातत्त्वान्नेति भावः । तस्मिन्सामान्यबोधे लक्ष्यासंस्कारकत्वात्स्थानपदाध्याहारेण तन्निरूपितसम्बन्धाभावेन सम्बन्धत्वेन भानात्तदनिर्णयात्स्थानषष्ठीरूपलिङ्गाभावात् "अलोन्त्यस्य" इत्यस्याप्रवृत्तिः, किन्त्वस्योक्तलिङ्गसत्त्वात् । तद्धृदि निधायेगन्ताङ्गस्येत्यादिग्रन्थमवतारयति—एवञ्चेति । लक्ष्यासंस्कारकवाक्यार्थबोधे चेत्यर्थः । तत्र स्थान्याकाङ्क्षाया एव सत्त्वेन स्थानषष्ठीत्वनिर्णयस्य दूरापास्तत्वम् । इक्पदोपस्थितौ तु तच्छान्त्या स्थानपदाध्याहारेणेगादिपदघटितवाक्यार्थबोधे सति तन्निर्णयः । एतेनेगुपस्थितौ पदार्थोपस्थितिमात्रं निमित्तमिति पदैकवाक्यतयाऽन्वयादन्तरङ्गत्वमस्याः । विधीयेत इति त्वनुवादे प्राप्त्यभावात्फलितार्थकथनम् । "अलोन्त्यस्य" इति तु विधिवाक्येष्ववान्तरवाक्यार्थबोधोत्तरं तदेकवाक्यतया सम्बध्यते इति बहिरङ्गत्वं तस्याः, तं विना स्थानषष्ठ्या निर्णेतुमशक्यत्वादिति मान्योक्तिः प्राचामनुरोधेनेति ध्वनितम् । सामान्यबोधे बाधकाभावात्, तस्योक्तरीत्या आवश्यकत्वाच्च । अनुवाद इत्यस्यातिरिक्ताया असत्त्वाच्चेति दिक् । अन्तरङ्गत्वे हेतुमाह—वाक्यैकवाक्येति । यत्र स्थानषष्ठी, तत्र "अलोन्त्यस्य" इत्युपतिष्ठते

सरला ।

पदश्रुतिनिमित्तेति । विधेयताप्रयोजकस्य वृद्धिपदस्य गुणपदस्य वा अस्या लिङ्गत्वात् तादृशप-

मृजेर्वृद्धिः" ( पा० सू० ७।२।११४ ) इत्यादौ तु सामानाधिकरण्यासंभवान्मिदि-मृज्योरवयवस्येक इति संबध्यते। यत्तु इक एव स्थाने स्त इति प्राचा व्याख्यातम्, यच्च तट्टीकाकृतोक्तमनियमप्रसङ्गे नियमार्थमिदमित्यादि, तत्सर्वं भाष्यविरोधादुपे-

शब्दरत्नम्।

तदाह--इगन्ताङ्गस्येत्यादि। मृज्योरवयवस्येति। एवं च स्थानषष्ठीत्वाभावनिर्णयेन "अलोन्त्यस्य"(पा०सू०१।१।५२) इत्यस्य प्रवृत्तिरेव नेति भावः। नियमार्थमिदमिति। तत्तद्विधायकैर्विहितयोर्गुणवृद्ध्योः "अलोऽन्त्यस्य" ( पा० सू० १।१।५२ ) इतिवदिदमपि स्थानिनियमार्थमिति तदाशयः। तत्सर्वं भाष्येति। द्वयोर्नियमयोः "सार्वधातुक-"(पा०

भैरवी।

वाक्यैकवाक्यतेत्यर्थः। तदाहेति। तदेतन्मनसि निधायाहेत्यर्थः। एवञ्च—"मिदेः" इत्यादिषष्ठ्या अवयवषष्ठीत्वनिर्णये च। स्थानषष्ठीत्वेति। इक इत्यस्य तथात्वेऽपि परिभाषाया अनियमे नियमकारकत्वस्वभावादिक इत्यस्य पदस्यैकवर्णोपस्थापकतयाऽल्समुदायबोधकत्वाभावेनालोन्त्यस्येत्यस्य तत्रानुपस्थितिरिति भावः।

नन्विको गुणेत्यस्य सूत्रस्य परिभाषात्वकथनेन विधिसूत्रत्वमेव नास्ति नियमसूत्रत्वन्तु कुत इत्याकाङ्क्षानुत्थानायाह—तत्तदिति। अलोन्त्यस्येतिवदिति। यथाऽन्त्यस्यानन्त्यस्य च प्राप्तावन्त्यस्येति तेन नियमः क्रियते, तथाऽनेनापीकोऽनिकश्च गुणवृद्धिप्रसङ्गे इक एवेति नियमकल्पनया परिभाषात्वमस्याः सिद्धमिति भावः। इदमपि—इको गुणेति सूत्रमपि। नियमार्थमिति। अन्यथा गुणादिविधायकवाक्यस्य निर्णयाजनकतया वैयर्थ्यापत्तिः स्यादिति तद्भावः। भाष्यविरोधमुपपादयति—द्वयोरित्यादिना। द्वयोः—इकोगुणालोन्त्यस्येत्यनयोः।

भावप्रकाशः।

इत्यर्थादिति भावः। तदाहेति। तदेतद्धृदि निधायोक्तक्रमेणान्वयमाहेत्यर्थः। एवञ्चेति। तथान्वयेनावयवषष्ठीत्वनिर्णये चेत्यर्थः। निर्णयेनेति। आर्थिकेनेति भावः। नन्वस्य परिभाषात्वोक्तेरविधित्वान्नियमत्वं विधित्वं दूरापास्तमत आह—तत्तदिति। "सार्वधातुकार्धधातुकयोः" इत्यादिभिरित्यर्थः। अन्यथा तेषां केषाञ्चिद्वैकल्यम्। अत एवादौ परिभाषेयमित्युक्तम्। स्थानिनियमेति। अन्त्यानन्त्ययोः प्राप्तावन्त्यस्यैवेतिवदिगनिकोः प्राप्ताविक एवेति तन्नियम इत्यर्थः। तथा च नायं प्रसिद्धनियमविधिः, किन्तु परिभाषाणामनियमे नियमकारिणीत्वादस्य स्थानिनियामकतया नियमार्थत्वव्यवहारः। एवमग्रेऽपीति भावः। तदाशय इति। प्रक्रियाप्रसादकृतोराशय इत्यर्थः। तत्सर्वमिति। मूलटीकोक्तमित्यर्थः। ननु ताभ्यामुक्तं नियमपक्षमनूद्य तत्र भाष्यविरोधादुपेक्ष्यत्वं प्रतिज्ञाय हेत्वसिद्धिवारिका तच्छेषपक्षभित्यादिहेतूक्तिर्न युक्ता कृष्णपण्डितानाम्, नियमपक्षतच्छेषयोस्तिलतन्दुलयोरिव महाभेदस्य स्पष्टत्वेनान्त्यस्य तत्र दूषितत्वेऽपि आचोट्टङ्कनस्यैवाभावेन तद्दूषितत्वस्य दूरोत्सारितत्वेनास्य ग्रन्थस्यासम्बद्धत्वादत आह—द्वयोरित्यादि। विधेरवान्तरवाक्यार्थबोधोत्तरं स्वस्वहेतुवशाद्युगपत्प्रवृत्ताविति शेषः। विशेष्यविशेषण-

सरला।

दश्रवणमात्रे एवानया इक्पदस्योपस्थितेः पदैकवाक्यतया तदन्वय इति। अलोन्त्यपरिभाषायास्तु अल्समुदायवाचकपदोत्तरस्थानषष्ठी लिङ्गमिति। स्थानषष्ठीत्वस्य च वाक्यार्थबोधानन्तरं ज्ञायमानतया विधिसूत्रे उपस्थितस्यापि अलोऽन्त्यस्य इति पदद्वयस्य वाक्यैकवाक्यतयैवान्वयः। पूर्ववाक्यार्थबोधमुपजीव्यैव तदुपस्थितेः। उपजीव्योपजीवकभावापन्नविषयताप्रयोजकपदघटितत्वमेव वाक्यैकवाक्यत्वम्। निरूप्यनिरूपकभावापन्नविषयताप्रयोजकपदघटितत्वं हि पदैकवाक्यत्वम्। तच्च "इको गुणवृद्धी"इत्यस्यैव नत्वलोन्त्यस्येति। मिदेर्गुण इत्यादौ तु यावत् मिदेरित्यस्य स्थानषष्ठीत्वप्रसक्तिस्तावदेव गुणपदश्रुत्या उपस्थितेकः पदेन मिदेरित्यस्यावयवषष्ठीत्वनिर्धारणात् नालोन्त्यसूत्रप्रवृत्तिरिति समुदायार्थः। नच स्थानषष्ठीत्वस्येव विधेयताप्रयोजकत्वस्यापि वाक्यार्थबोधानन्तरमेव ज्ञायमानतया तत एव इक इत्यस्याप्युपस्थितेः कथं पदैक-

द्यम् । तच्छेषपक्षं दूषयित्वा पदोपस्थितिपक्षस्यैव भाष्ये समर्थितत्वादित्याहुः । त-

शब्दरत्नम् ।

सू०७।३।८४) इत्यादावविरोधेनेग्रूपस्यान्त्यस्येत्यर्थो वाच्यः । अन्त्यस्येक इति वा । उभयथाऽपि द्वयोर्विशेष्यविशेषणभावसत्त्वात्तच्छेषपक्षे पर्यवसानम् । सः "अलोऽन्त्यस्य" (पा०सू०१।१।५२) इति नियमः शेषो विशेषणमस्येति तदर्थः । तस्य "अलोऽन्त्यस्य" (पा०सू०१।१।५२) इत्यस्य विशेषणमिति वा । एवं च "मिदेर्गुणः"(पा०सू०७।३।८२) इत्यादौ परस्परविरोधादनयोस्त्यागे सर्वादेशगुणापत्त्या तद्विरोध इति भावस्तदाह—तच्छे-

भैरवी ।

इत्यर्थ इति । फलितार्थः । विशेषणमिति । विशेषणार्थप्रतिपादकमित्यर्थः । सर्वादेश इति । सूत्र-सामर्थ्यात्सर्वादेश इत्यर्थः । तद्विरोधः—भाष्यविरोधः । प्राचामिति शेषः ।

भावप्रकाशः ।

भावे कामचारादाह—इग्रूपस्येति । सार्वधातुकादिपराङ्गस्येति शेषः । एवमग्रेऽपि । इदञ्च फलितार्थक-थनम् । शाब्दतस्त्वित्थम्, यदि क्रमिकत्वाद्विशेषणविशेष्यभावे कामचाराच्चाङ्गस्येति प्रागेवान्त्यमल् नीयते तत्पराङ्गान्त्यस्य गुण इति, तत इगनिकाः प्राप्ताविक एवेति नियमायेकाऽन्त्यो विशेष्यते—इकस्तत्पराङ्गान्त्य-स्य गुण इति, तदेयं शेषभूता, विधिमन्तराकृत्य तस्याः पश्चादुपस्थितत्वात् भेदकत्वाद्वा। यदि प्रागिकाऽङ्गस्य विशेषणात्तदन्तविधाविगन्तस्य तत्पराङ्गस्य गुण इति । ततोऽन्त्यानन्त्यप्राप्तौ तन्नियमायालोऽन्त्यस्येति सम्ब-ध्यते—तस्य योऽन्त्योऽल् तस्य गुण इति, तदाऽस्याः साऽर्थतः शेषभूतेति । न च नियमपक्षेऽपि मान्योक्त-त्यान्तरङ्गत्वबहिरङ्गत्वशङ्कया कथं युगपत्प्राप्तिरिति वाच्यम्, सिद्धान्तरीत्या शङ्काया अभावात् विहित-गुणवृध्योः स्थानिनियममात्रार्थत्वेनास्यार्थस्यावान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्तेश्च । इको गुणेत्यस्य प्रा-चोक्तार्थबोधकाले विधेरप्यवान्तरवाक्यार्थबोधे बाधकेन द्वयोरपि सत्त्वाच्च । विधिष्वेव तथा सम्बन्धस्येष्ट-त्वादेव "सार्वधातुक" इत्यादावित्युक्तम् । अग्रे तु विशेष्यविशेषणभावमात्रप्रतिपादने तात्पर्यम्, न तु वास्तववाच्यार्थकथने इति तदनुल्लेखः । एतेन तावन्मात्रोक्त्या परिभाषयोरेकवाक्यत्वात्तच्छेषशब्दार्थ इति नव्याभिमतम् । अत एवैतन्मूलकतयेति प्रागुक्तग्रन्थसङ्गतिरित्यपास्तम्, उक्तहेतोः । 'राजकीयम्' इत्यादौ "अलोऽन्त्यस्य" इत्यस्याप्रवृत्त्यापत्तेश्च । भिन्नदेशस्थयोर्मिथो निराकाङ्क्षयोर्विध्युपकारयोरेकवा-क्यत्वस्योपपादयितुमशक्यत्वाच्च । उक्तग्रन्थस्तु ममाप्यनुकूल एवेति दिक् । तद्ध्वनयन्नाह—उभयथेति । पर्यवसानमिति । तत्पक्षे यादृशो विशेष्यविशेषणभावस्तयोस्तत्र तादृशः प्राचोक्तनियमपक्षेऽपीत्यतो भा-ष्याद्यनुक्तोऽपि नातिरिक्तः सः । किन्तु तस्य तच्छेषपक्ष एव पर्यवसानम्, अन्तर्भाव इति, न तयोर्भेद इत्यर्थः । अत एव भाष्यादौ न न्यूनतेति भावः । तच्छेषशब्दार्थमाह—स इत्यादि । इतिवेति । तदर्थ इत्यनुषज्यते । एतेन यद्यपि नियमपक्षो न तच्छेषपक्ष इति स्फुटमेव, तथापि तच्छेषपक्षदूषणदूषितत्व-मस्त्येवेति मान्योक्तिर्यथाश्रुतार्थाभिप्रायेति ध्वनितम् । तद्ध्वनयन्नाह—एवञ्चेति । तयोरैक्ये चेत्यर्थः । विरोधादिति । तत्त्वयोस्तत्रैकत्रासम्भवादिति भावः । अनयोः परिभाषयोः । सर्वादेशेति । "मिदेः" इति सूत्रबलादिति शेषः । तथा च मेद्यतीत्यसिद्धिः । इदमेव तच्छेषपक्षे दूषणमिति भावः । तद्विरोधः भाष्यविरोधः । इतिभाव इति । कृष्णपण्डितानामिति शेषः । अत एव नियमपक्षं दूषयित्वेति नोक्तं

सरला ।

वाक्यत्वमिति वाच्यम् । प्रथमान्तपदस्य विधायकत्वेन सर्वत्र दृष्टतया विधेयताप्रयोजकत्वज्ञानस्य वाक्या-र्थबोधानपेक्षणादिति दिक् ।

स्थानिनियमार्थमिति । अनियमे नियमकारिणी परिभाषा इति हि तन्मते परिभाषालक्षणम् । इकः अनिकश्च गुणवृद्धिप्रसङ्गे इक एवेति नियमेनास्याः परिभाषात्वमिति तद्भावः । अविरोधेनेति । सार्वधातुकार्धधातुकयोरित्यत्र अङ्गस्येति स्थानषष्ठ्या गुणपदश्रुत्या चोपस्थितस्थान्त्यस्येक इति पदस्य च "आग्नेयं चतुर्धा करोति" "पुरोडाशं चतुर्धा करोति" इत्यत्र यथा उपक्रमोपसंहारन्यायेन विशेष्यवि-शेषणभावः, एवमत्रापि तेनैव न्यायेन विशेष्यविशेषणभाव इति तच्छेषपक्षे पर्यवसानमिति भावः । पर-

न्छेषपक्षे ऽपि दूषणोद्धारस्तु शब्दकौस्तुभे स्पष्टीकृतोऽस्माभिः ।

शब्दरत्नम् ।

षपक्षमिति । दूषणोद्धारस्त्विवति । "मिदेः-"इत्यत्र मिद इर्मिदिस्तस्येति व्याख्यानान्न दोषः । "पुगन्त' (पा०सू०७।३।८६)-इत्यत्र पुक्यन्तो लघ्वी उपधेति व्याख्येयमित्यादिभाष्योक्तदूषणोद्धारस्त्विवत्यर्थः । न च यापयति, क्ष्मापयतीत्यादौ दोषः । गुणे

भैरवी ।

दूषणोद्धारप्रकारं दर्शयति—मिदेरित्यादिना । इत्यादीति । आदिना मृजेर्वृद्धिरित्यस्य परिग्रहः । तत्र हि अच इत्यपकृष्यत इत्यादिद्रष्टव्यः । भाष्योक्तेति । नन्वेवम्भाष्यानुक्तार्थस्य स्वयङ्कथनेन स्वस्य प्रौढत्वप्रदर्शनमनुचितमिति चेत्? न, सम्भवमात्रेण तदुक्तेः । दोष इति । पुक्यन्त्यस्याऽऽकारस्य गुणापत्तिरूपो दोष इत्यर्थः । ननु सन्निपातपरिभाषया पुक्यि कृते गुणो न भविष्यति । यत्तु गुणे कृते "अत उपधायाः" इति वृद्धिरिति । तन्न, अङ्गवृत्तपरिभाषया तदप्राप्तेरिति चेत्? न, पुग्निमित्तके कार्ये कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तिरिति सिद्धान्तात् । अत एव 'अदिद्रपत्' इत्यत्र ह्रस्वस्य सिद्धिः, क्ष्मापयतीत्यत्र सन्निपातपरिभाषायास्तत्र प्रवृत्तिस्वीकारेऽपि यस्य गुणापत्तेर्दुर्वारत्वाच्च । यदि "चेलेः क्नोपेः" इपि निर्देशेन पुकि कृते क्वचिद् गुणो भवतीत्युच्यते, तदा प्रतिपत्तिगौरवमिति प्रदर्शयन्नाह—गुणे कृत इति । न चाङ्गवृत्तपरिभाषया वृद्धिर्न भविष्यतीति वाच्यम्, तस्या द्वयोरिति निर्देशेनानित्यत्वात्,

भावप्रकाशः ।

तैः । तदाह—तच्छेषपक्षमितीति । स्वरूपभेदे तथोक्तिर्युक्ता, नत्वत्र तथा । अत एव मान्योक्तिस्तथेत्युक्तमिति भावः । आहुरित्यनेन गुरुमते सूचितामरुचिं मूलकृदाह—तच्छेषपक्षेऽपीति । तत्प्रकारं सङ्क्षेपेणाह—मिदेरिति । उपधेतीति । द्विविधतत्पुरुषगर्भः समाहारद्वन्द्व इति भावः । आदिना "मृजेर्वृद्धिः" इत्यत्राच इत्यपकृष्यते इत्यादिसंग्रहः । भाष्योक्तेति । न स्वकल्पितेति भावः । यत्त्वेवं सति नियमपक्षमनूद्य तच्छेषपक्षमित्याद्याहुरिति न्यूनपञ्चम्यन्तघटितं तच्छेषपक्षेपीत्याद्यस्माभिरित्यन्तं परैरुक्तं रिक्तं वच इति खण्डनकृत् । तन्न, मध्यग्रन्थस्य शेषीयत्वेनैक्यासङ्गतेः । अत एव तदबोधकाहुरित्यस्य सत्त्वेन तदननुवादेनान्धत्वापत्तेश्च स्वीयग्रन्थाज्ञानेन मूर्खत्वापत्तेश्च वक्ष्यमाणरीत्या मूलसौष्ठवे त्वद्वचस एव रिक्तत्वाच्च । तदेव ध्वनयितुं तं ग्रन्थमवतारयितुं मूलोक्तेरप्रौढत्वं सूचयितुं च शङ्कते—नचेत्यादि । आदिशब्दः साद्दश्ये । दोष इति । आकारस्य पुगन्तेति गुणापत्तिरिति भावः । अन्त्ये यस्य तु लोपं बाधित्वा न सः, लघूपधसाहचर्येण पुक्यन्तस्याच एव ग्रहणात् । यत्तु कौस्तुभे सन्निपातपरिभाषया नायं दोष इति समाहितम्, तन्न, पुग्निमित्तकार्ये कर्तव्ये तस्या अप्रवृत्तिरिति भाष्यादौ सिद्धान्तितत्वात् । अत एव 'अदीदपत्' इत्यादिसिद्धिः । 'क्ष्मापयति' इत्यत्र तया अनिर्वाहाच्च । पुकि इत्यस्य विवक्षितसप्त-

सरला ।

स्परविरोधादिति । अन्त्यस्यानिक्त्वेन इकश्चानन्त्यत्वेनेत्यर्थः । अनयोस्त्यागे इति । एकशकटसम्बद्धवृषभद्वयन्यायेनोभयोरप्रवृत्ताविल्यर्थः ।

दूषणोद्धारस्त्विवतीति । तच्छेषपक्षे "मिदेर्गुण" इत्यादौ परस्परविरोधस्थले सर्वादेशगुणाद्यापत्तिनिराकरणार्थं "मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विक्ग्रहणं कर्तव्यम्" इति वार्तिककृतोक्तम् । "मिदेर्गुणः इक इति वक्तव्यम्" "मृजेर्वृद्धिरिक इति वक्तव्यम्" इत्यादिस्तदर्थः । एवञ्च मिदादिस्थलेषु दोषनिवारणाय इक्परावृत्तिकरणरूपदूषणस्य निराकरणमित्यर्थः । न दोष इति । मृजेर्वृद्धिरित्यत्र "मृजेर्वृद्धिः" "अचो ञ्णिति" इति योगद्वयस्थाने "मृजेर्वृद्धिरचः" "ञ्णिति" इति योगद्वयकरणेन मृजधातोरवयवस्याचो वृद्धिर्भवतीति तदर्थान्न दोष इति बोध्यम् । व्याख्येयमिति । पुकि अन्तः पुगन्तः लघ्वी उपधा लघूपधा पुगन्तश्च लघूपधा च पुगन्तलघूपधं तस्येति विग्रहेणाङ्गावयवस्य पुग्व्यवहितपूर्वान्त्यस्य उपधाभूतलघुवर्णस्य च गुणो भवतीत्यर्थकरणाद्भिनत्तीत्यादौ न दोष इति तद्भावः ।

शब्दरत्नम् ।

कृते वृद्ध्या रूपसिद्धेः । अत एव "समयाच्च यापनायाम्" (पा०सू०५।४।६०) इति निर्देशः सङ्गच्छते, तदाह-कौस्तुभे स्पष्टीकृत इति । नन्वेवं तर्हि किमर्थं प्राचां पक्ष उपेक्षित इति चेच्छृणु । लघूपधांशे इक्परिभाषानुपस्थितावनिग्लक्षणत्वाद्भिन्नमित्यादौ गुणनिषेधानापत्तिभिया स उपेक्षित इति । क्नोः किन्त्वस्यानिग्लक्षणत्वेऽपि गुणनिषेधप्रवृत्तिज्ञापकत्वाश्रयणे तु तस्य पदोपस्थितिपक्षज्ञापकत्वमेवोचितमिति दिक् ॥

भैरवी ।

असत्त्वाच्च । अत एव पिबतेर्गुणप्रतिषेध उक्तः, स न वक्तव्य इत्येव तस्याः प्रयोजनम्भाष्ये उक्तम् । अत एव—गुणोत्तरं वृद्धिप्रवृत्तिस्वीकारादेव । पकारस्य गुणापत्तिरपि यापनेति निर्देशेन नेति यदि कल्प्यते तदाऽधिकङ्गौरवम्, पुक्यन्त इति व्याख्यानमेव युक्तमिति तात्पर्यम् । एवम्—पुक्यन्त इत्यादिरीत्या दोषाभावे सति । क्नोः । "त्रसिगृधि" इति सूत्रविहितक्नोः । उचितमिति । ज्ञापकमूलकवाक्यान्तरकल्पनापेक्षयाऽस्मिन्पक्षे प्रतिपत्तिलाघवा-

भावप्रकाशः ।

मीत्वे तु न मानम् । अत एव 'क्ष्मापयति' इत्यस्योल्लेखस्तद् ध्वनयन्नाह-गुणेति । वृद्धरेति । "अत उपधायाः" इत्यनेनेति भावः । अङ्गवृत्तपरिभाषा तु द्वयोरित्यादिनिर्देशादनित्या अत आह—अत एवेति । तदनित्यत्वेन वृद्धेः प्राप्तत्वादेवेत्यर्थः । तदाहेति । तदेतन्मनसि निधायाहेत्यर्थः । एवमग्रेऽपि । स्पष्टीकृत इतीति । 'यापयति' इत्यादौ चोद्यपरिहारयोर्भाष्यकृतत्वेन तद्दूषणोद्धारस्य तत्रास्पष्टत्वात् । कौस्तुभे च तथाप्रतिपादनात् च्चिवघटितस्पष्टीकृत इत्युक्तिः सुष्ठ्वेवेति भावः । एवं तच्छेषपक्षस्य निर्दुष्टत्वे । पक्षःनियमपक्षः, तयोरैक्यस्योक्तत्वेन तस्यापि निर्दुष्टत्वात् । लघूपधेति । तत्रैव दोषसत्त्वात्तन्मात्रोक्तिः । एतेनैतदुक्त्या पुगन्तांशे तदुपस्थितिरस्तीति सूचितमित्यपास्तम्, युक्तितौल्यात् । एवञ्च तच्छेषपक्षोऽपि दुष्ट एव । तत्समर्थनपरभाष्यं त्वेकदेश्युक्तिः । अत एवारुचिबोधकस्तुः प्रयुक्तो मूले, एवञ्चाहुरिति नारुचिबोधकम्, किन्त्वभियुक्तोक्तत्वबोधकमिति बोध्यम् । तदेतद् द्रढयितुं कैयटनारायणाद्युक्तिं खण्डयति–क्नोरिति । उचितमिति । ज्ञापकमूलकवाक्यान्तराकल्पनहेतुकलाघवमौचित्यहेतुः । अत्र केचित्–एवस्तु 'अमार्ट्' इत्यस्य सिद्धये तदावश्यकतां सूचयितुम् । न चानन्त्यविकार इत्यत्रत्यभाष्योक्तयुक्त्या निर्वाहः, अन्यार्थं कृतेनैकोगुणेति पृथग्योगेनापि व्यावृत्तिसिद्धौ सा नैतदर्थेति "ष्यङः सम्प्रसारणम्" इति सूत्रस्थभाष्यविरोधापत्तेः । एवञ्च सपदोपस्थितिपक्षकम् "इकोगुण" इति पृथग्योगकरणकल्पनमेवोचितम् । अत एव एधिता इत्यादौ व्यञ्जनस्य गुणो न । नन्वत एवारुचेरडागमात्पूर्वं परत्वाद् वृद्धौ पश्चादटि "लक्ष्ये लक्षणम्" इति-न्यायेन पुनर्वृद्ध्यभावे 'अमार्ट्' इति सिध्यति । भाष्यन्तु विप्रतिषेधानपेक्षयैवेति कैयटोक्तमेवास्त्विति वाच्यम्, विकारान्यानुपूर्व्या अभेदेऽप्यागमान्यानुपूर्व्या भेदेन लक्ष्यभेदादटो वृद्ध्यापत्तेर्वृद्ध्यटोर्यौगपद्यसम्भवेन वि तिषेधाभावाच्च कैयटोक्तप्रकारस्यैव चिन्त्यत्वात् । न चात एव "मृजेर्वृद्धिः" इत्यत्राङ्गाक्षिप्तेन

सरला ।

रूपसिद्धेरिति । आदन्ताङ्गं निमित्तीकृत्य जायमानः पुक् आदन्ताङ्गविघातकगुणप्रवृत्तिं प्रति निमित्तं न भवतीत्यर्थकसन्निपातपरिभाषया गुणस्याप्रवृत्तेश्च ।

कौस्तुभ इति । तत्र हि मिदिमृजिपुगन्तलघूपधांशे पूर्वोक्तदूषणोद्धारप्रकारमुक्त्वा ऋच्छिदृशिक्षिप्रक्षुद्रेषु दूषणोद्धारप्रकारस्त्वेवमुक्तः—"ऋच्छत्यृताम्" इत्यत्र ऋकारात्पूर्वमृकारप्रश्लेषे ऋच्छधातोरृकारस्य गुण इत्यर्थकरणात् "ऋदृशोऽङि गुण" इत्यत्र "उरङि गुणः" "दृशेश्च" इति योगं विभज्य द्वितीययोगे उरितिपदमनुवर्त्य दृशधातोरृकारस्य गुणो भवतीत्यर्थकरणात्, स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः" इत्यत्र यणादीनिपदस्य तन्त्रं स्वीकृत्य लुप्तविभक्तयन्तत्वमाश्रित्य स्थूलादीनां परं यणादि लुप्यते, यणः आदिर्यो वर्णस्तस्मात्पूर्वस्य केवलं पूर्वस्य वा यथासम्भवं गुणो भवतीत्यर्थकरणान्न दोष इति । उचितमिति । "मिदेर्गुण" इत्यादौ अनेकक्ङिद्धटकल्पनाकरणाभावरूपलाघवादिति तत्त्वम् ।

अचां मध्य इति । यत्तु प्राचोक्तमन्त्यादचः पर इति । तन्न, "शे मुचादीनाम्" ( पा० सू० ७।१।५९ ) इत्यादावन्त्यस्याचोऽसंभवात् । तस्यैवान्तावयव इति ।

शब्दरत्नम् ।

इत्यादाविति । आदिना झलन्तलक्षणो नुम् , इदितो नुमित्यादि च । अचोऽ-

भैरवी ।

दौचित्यम् । किञ्च "मृजेर्वृद्धिः" इत्यत्राच इत्यस्यापकर्षे ऽमार्ट् इत्यत्राटो गुणापत्तिवारणा-यानन्त्यविकारेऽन्त्यसदेशस्येति परिभाषायाः प्रवृत्तिः स्वीकार्या । "ऋच्छत्यृताम्" इति सूत्रे ऋकारान्तरस्य प्रश्लेषः कार्यः, "ऋदृशोऽङि" इत्यत्रयोगविभागश्च कर्तव्यः, इत्यधिकं तच्छेषपक्षे गौरवम् । किञ्च परिभाषयोर्गुणगुणिभावो "गुणानाञ्च परार्थत्वात्" इति न्याय-विरोधान्न युक्तः । किञ्च व्यञ्जनस्य गुणवारणे जनेर्डविधानस्य ज्ञापकत्वमाश्रयणीयं, तदपेक्षया ऽस्य सूत्रस्य पदोपस्थापकत्वमेव युक्तमित्याशयेनाह—दिगिति । अत एवेग्लक्षणा वृद्धिरेषित-व्येति भाष्यीयोपसंहारः साधु सङ्गच्छते ॥

भावप्रकाशः ।

प्रत्ययेनाज्विशिष्यते । एवञ्च येननाव्यवधानन्यायेन 'अमार्ट्' सिध्यतीति कौस्तुभोक्तमेवास्त्विति वाच्यम्, अङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षत्वेनाक्षिप्तस्याक्षेपकान्वयस्यैवौचित्येन च तद्रीतेरेवायुक्तत्वात् । अत एव तच्छेषपक्षदूषणोद्धारप्रसङ्गे—"नैवं विज्ञायते—बहुव्रीहिगर्भः समाहारद्वन्द्वः । किं तर्हि ? तत्पुरुषगर्भः । अव-श्यं चैतदेवं विज्ञेयम् अङ्गविशेषणे हि सतीह प्रसज्येत—'भिनत्ति' "छिनत्ति" इत्यवश्यपदयुक्तभाष्योक्तिः सङ्गच्छते । अन्यथा बहुव्रीहिगर्भद्वन्द्वेऽपि प्रत्ययेनेको विशेष्यीकरणेन 'भिनत्ति' इत्यादावदोषेण तथोक्तेर-युक्तत्वं स्पष्टमेव । तस्मात् 'दधिज्ञा' इत्यादौ व्यञ्जनागुणायास्य स्थानिनिर्देशार्थत्वेन पदोपस्थितिपक्षे-ऽप्यावश्यकत्वमिवाटोऽत्र व्यावृत्तये यङ्लुगस्य मरीमृजकः इत्यादेरनभिधानम् । अन्यथेग्लक्षणेऽपि तत्र रीगादेः "क्तिच्यजादौ" इतिवार्त्तिकोक्तगुणाभावायोक्तप्रकारान्यतमावश्यकत्वेनात्रत्यभाष्यासङ्गतिः स्पष्टै-वेति बोध्यमित्याहुः । वस्तुतः स्थानिनिर्देशार्थमप्यावश्यकमिदम् । एवञ्च 'मृष्टः' 'मृष्टवान्' 'भिन्नं' 'न्य-नुवीत्' इत्यादौ योगविभागादिप्रयुक्तगुणनिषेधसिद्धिरपीति तत्त्वम् । अत एवकारस्तच्छेषपक्षे "ऋदृशो-ऽङि" इत्यादौ योगविभागादिप्रयुक्तगौरवनिरासाय । ननु तदर्थं तस्य भाष्योक्तया परिभाषयैव सिद्धिः । तस्याश्च 'अदमुयङ्'इत्यादिसिद्ध्यर्थमावश्यकत्वस्य भाष्यारूढस्यान्यत्र सिद्धान्तितत्वात् । यद्यपि "ष्यङः सम्प्रसारणम्" इत्यत्र 'अमार्ट्' इत्यस्य सिद्धिः सपदोपस्थितिपक्षकेनेको गुणेति सूत्रेणेति, साऽत्र न तदर्थे-त्युक्तं तथाप्यन्यार्थं साऽऽवश्यकीति तत्रैव तदग्रे प्रतिपादितम् । इदमेवाभिप्रेत्य प्रकृतसूत्रे एतया 'अ-मार्ट्' इत्यस्यसिद्धिरिति तच्छेषपक्षेऽजपकर्षे न दोष इति सूचिकेको गुणेत्यत्र वृद्धिग्रहणखण्डकभाष्यकृत उक्तिः । मृज इत्यादौ न धात्विति प्रत्याख्याने मिमार्जिषति इत्यादौ ष्यङ इति सूत्रभाष्यप्रयोगे च दोष-तादवस्थ्यम् । नत्वेषामनभिधानं वक्तुं शक्यम् । तस्मादुक्तहेतोर्न तच्छेषपक्षः, किन्तु पदोपस्थितिपक्ष इति बोध्यम् । इग्लक्षणवृद्धिरेषितव्येत्यादिभाष्यीयं वाक्यमपि निराबाधमेवेति भावः । तदाह—इति दिगिति ।

प्रसिद्धत्वात्तदग्रे दोषाभावाच्चाह—झलन्तेति । झल् अन्तश्चरमावयवो यस्य निमित्तसमूहस्य तन्नि-मित्तक इत्यर्थः । झलन्तावधिक इति यावत् । तेन "मस्जि" इत्यादिसङ्ग्रह इति भावः । न आदिः प्रभृ-त्यर्थको मूले, अपि तु प्रकारार्थः अन्यत्रापि दोषसत्त्वात् । तदाह—इदित इति । तथा च "अनिदि-ताम्" इत्यत्रानिदिद्ग्रहणवैयर्थ्यापत्तिः । तत एव ज्ञापकात्तत्रादोषकल्पनापेक्षया तथा व्याख्यानमेवोचि-तमिति भावः । एतेनोक्तज्ञापकात्तत्रादोषेण तदुल्लेखो व्यर्थः । अत एव मूलकृता प्रथममपि तत् त्यक्तमिति मान्यानुसार्युक्तमपास्तम् । अत्राप्यादिः प्रकारे । तेन 'पतः पुम्' 'वच उम्' 'रुधादिभ्यः' इत्यादि सङ्ग्र-हः । एवञ्च "तृणह" इत्यादिनिर्देशसङ्गतिः । तथाच मूलेऽप्युक्तार्थकादिशब्देन हलन्तसम्बन्धिमिद्विधाय-कत्वसादृश्यात्तेषां सर्वेषां ग्रहणमिति भावः । ननु मित्करणसामर्थ्येनान्त्याङ्गविकलप्रवृत्त्यागमत्वमेवेति न दोषोऽत आह—नुम इति । नन्वेवमपि "पतः पुम्"इत्यादावुक्तरीत्या न दोष इति चेत्? तथा प्रवृत्त्यङ्गी-

तेन त्रपूणीत्यादौ अङ्गस्य नान्तत्वेन दीर्घः सिद्धः । परादित्वे स न सिध्येत् । अभक्तत्वे तु वहंलिह इत्यत्र "वहाभ्रेलिहः" ( पा० सू० ३।२।३२ ) इति खशि "अरुर्द्विषद्-" (पा० सू० ६।३।३२) इति मुमोऽनुस्वारो न स्यात् । अपदान्तत्वात् । यत्तु अभक्तत्वे दीर्घो न स्यादिति, तत् "तदादिग्रहणं स्यादिनुमर्थम्" इत्यङ्गसंज्ञासूत्रस्थ-

शब्दरत्नम् ।

सम्भवादिति । नुमो मित्त्वं तु ज्ञानानीत्यादौ चरितार्थमिति मुचादावन्त्यस्यैव स्यादिति भावः । दीर्घः सिद्ध इति । तच्छब्देन यस्य विहितः स समुदायः परामृश्यते इति भावः । यद्यपि तस्यान्त्याच इति व्याख्यानेऽपि भवितेत्यादौ तासवयवेटो लघूपधाङ्गावयवत्वेन प्राप्तस्य गुणस्य "दीधीवेवीटाम्" (पा०सू०१।१।६) इति निषेधारम्भेण लोकव्यवहारेण चावयवावयवस्य समुदायावयवत्वाङ्गीकारादत्र न दोषः, तथाऽपि तथा न व्याख्यातं, पञ्चारत्नीनीत्यादौ पदस्य विभज्यान्वाख्याने उत्तरपदस्यापि नान्तत्वापत्तौ

भैरवी ।

अन्त्यस्यैवेति । न च "अनिदिताम्" इति सूत्रे ऽनिदिद्ग्रहणस्यैवं सति वैयर्थ्यापत्तिरतो ऽने न ज्ञापकेनान्त्यस्य न भविष्यतीति वाच्यम्, अनिदिद्ग्रहणस्यार्थान्तरे ज्ञापकत्वकल्पनापेक्षयोक्तार्थे ज्ञापकताया उचितत्वात् । ननु तच्छब्देनोपस्थितत्वादन्तावयवपरामर्शः स्यात्, एवञ्चाङ्गस्य नान्तत्वं दुरुपपादमेवेत्यत आह—यस्येति । यद्यपीति । अस्य न दोष इत्यत्रान्वयः ।

भावप्रकाशः ।

कारापेक्षया तत्सामर्थ्येन तथाव्याख्यानस्यैवौचित्यात् । तदाह—मुचादाविति । आदिः प्राग्वत् । अन्त्यस्यैवेति । "अलोन्त्यस्य" इत्यनेनेति भावः । यत्तु सूत्र इव प्रोचोक्तवृत्तावपि "अचः" इति निर्धारणे षष्ठी न पञ्चमी, जातौ चैकवचनमिति : वैयधिकरण्येनान्वयात्सामानाधिकरण्याशयकमनोरमाग्रन्थश्चिन्त्य इति खण्डनकृत् । तन्न, योजनया सूत्रस्यासन्दिग्धार्थप्रतिपादकवाक्यस्यैव वृत्तित्वेन तथोक्तेरयुक्तत्वात् । ननु तच्छब्देनाच्परामर्शे तस्यान्तावयवत्वेप्यङ्गस्यानान्तत्वेन कथं दीर्घसिद्धिरत आह—तच्छब्देनेति । यस्येति । तत्तद्विधिसूत्रोद्देश्यरूपस्येत्यर्थः । तल्लाभस्तु मिद्ग्रहणाल्लिङ्गाद्विध्येकवाक्यतयेत्यवेहि । अत एवाह—समुदाय इति । अत एव "समुदायभक्तोऽसौ नोत्सहतेऽवयवस्येगन्ततां विहन्तुम्" इति भाष्यं सङ्गच्छते इति भावः । व्याख्यानेऽत्र 'त्रपूणि' इत्यादौ न दोष इत्यन्वयः । तत्र हेतुमाह—भवितेत्यादि । आरम्भेणेति । अन्यथेटस्तदनवयवत्वेन गुणाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेति भावः । ननु नायं ज्ञापकः, तस्य प्रत्याख्यानात् । किञ्च यस्मात्प्रत्ययेत्यनेन तदादिग्रहणाद् डानिरूपिताङ्गत्वस्य भविदिति तान्ते विधानात्समुदायघटकत्वेनान्यवर्णानामिवेटोप्यङ्गावयवत्वम्, न तु तथेति गुणप्राप्त्या तस्य चारितार्थ्यादत आह—लोकेति । हस्ताद्यवयवस्य तद्द्वारा शरीरावयवत्वव्यवहारस्य लोके क्लृप्तत्वादिति भावः । तथा तस्यान्त्याच इतीत्यर्थः । पञ्चारत्नीति । प्रमाणे मात्रचो लुक् । विभज्यान्वाख्याने इति । अनेन पूर्व

सरला ।

न दोष इति । त्रपूणीत्यत्र नुमागमस्यान्त्याजवयवत्वेऽपि अवयवावयवः समुदायावयवो भवतीति न्यायेन समुदायावयव उकारः तदवयवस्य नुमागमस्य समुदायावयवत्वेन अङ्गस्य नान्ततया "सर्वनामस्थाने" इति दीर्घसिद्धेः । अत्र च प्रमाणम् "दीधीवेवीटाम्" इति सूत्रे इट् ग्रहणम् । तद्धि भवितेत्यत्र डादेशस्य सार्वधातुकत्वेन तन्निमित्ताङ्गसंज्ञावदवयवतास्प्रत्ययावयवस्य इटोऽङ्गावयवत्वेनाङ्गस्य लघूपधत्वात्प्राप्तस्य गुणस्य निषेधार्थम् । न्यायानाश्रयणे चाङ्गस्य लघूपधत्वाभावादेव गुणाभावसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । यदि तु तदादिग्रहणेनेड्विशिष्टस्य ग्रहणात् "यस्मिन्विधिः" इति सूत्रेणाङ्गसंज्ञया प्राप्तगुणनिषेधायेड्ग्रहणस्य चारितार्थ्यं तर्हि "स्यसिच्सीयुट्" सूत्रस्थं भाष्यमेव प्रमाणम् । रामाणामित्यादिफलानि चेति परिभाषेन्दुटिप्पणे द्रष्टव्यम् ।

वार्तिकेनैव दूषितप्रायम् ।

**स्थानेयोगेति** । स्थानेन योगोऽस्या इति विग्रहः । निपातनादेत्वम् ।

---

शब्दरत्नम् ।

"इगन्त–" (पा०सू०६।२।२९) इति स्वरानापत्तेरिति स्पष्टं भाष्यादौ । त्रपूणीत्युपलक्षणं 'ता ता पिण्डानाम्' इति नलोपसिद्धेः । तानि तानि इत्यर्थे "शेश्छन्दसि–" (पा०सू० ६।१।७०) इति शेर्लोपे तदुदाहरणम् ॥

**स्थानेनेति** । स्थानशब्दार्थेनेत्यर्थः । तन्निरूपितसम्बन्धः षष्ठ्यर्थो न तु तद्रूपः सम्बन्धस्तदर्थ इति अनेन ध्वनयति । **एत्वमिति** । व्यधिकरणबहुव्रीहिरप्यत एवेति बोध्यम् ॥

भैरवी ।

अत्र—'त्रपूणि' इत्यादौ । इगन्तेतीति । द्विगुसमासे इगन्तोत्तरपदे परे संख्यावाचि पूर्वपदम्प्रकृत्येत्यर्थकेनेगन्तेति सूत्रेण स्वरानापत्तिरित्यर्थः । नलोपसिद्धेरिति । प्रातिपदिकान्त्यावयवस्य हि लोपविधानात् ॥

ननु "स्थानं योगो यस्याः" इति समानाधिकरणपदकबहुव्रीहिणैव सामञ्जस्ये व्यधिकरणपदकबहुव्रीहिप्रदर्शनमनुचितमत आह—तन्निरूपित इति । स्थाननिरूपित इत्यर्थः । सम्बन्धः—निवर्त्यनिवर्तकभावः । अनेन—व्यधिकरणपदकबहुव्रीहिप्रदर्शनेन । अत एव—निपा

भावप्रकाशः ।

नित्यत्वान्नुमिति सूचितम् । अपिना समाससङ्ग्रहः । इगन्तेतीति । द्विगावेतेषु परेषु संख्यावाचिपूर्वपदं प्रकृत्येत्यर्थक "इगन्तकाल" इतिसूत्रविहितद्विगुस्वरेत्यर्थः । किञ्च वर्णस्य वर्णान्तरायवत्वासम्भवात् । एतेनान्तरङ्गत्वात्प्राक् स्वरप्रवृत्त्या तत्पक्षेऽपि न दोष इति मान्योक्तिः प्राचामनुरोधेनेति ध्वनितम् । भाष्यमपि तत्पक्षे एवानुकूलमिति प्रागुक्तम् । 'मुञ्चति' इत्यादिविषये तु फलाभावादयोग्यत्वाच्चान्तावयव इत्यंशाप्रवृत्तिः । 'आनेमुक्' इत्यादौ तु वचनसामर्थ्येन भाष्यादिप्रामाण्येन च वर्णस्य वर्णावयवत्वं गौणं बोध्यमिति दिक् । ननु तदादिग्रहणेनाभक्तत्वे इव परादित्वेऽपि 'त्रपूणि' इत्यादौ न दोषः । नह्यागमसत्त्वे विशिष्टे एवार्थवत्प्रत्ययत्वादि इति नियमः । "यदागमाः" इत्यस्य तु फलाभावादप्रवृत्तिः । शास्त्राबोधितत्वेऽपि दण्डीत्यादिवदङ्गस्य नान्तत्वमविरुद्धम् । एतेन परादित्वे 'वहंलिहः' इत्यादावनुस्वारादिर्न स्यादत एवाभक्तत्वपक्षोऽभ्युपेयः । 'त्रपुणि' इत्यादावनान्तत्वादङ्गस्य दीर्घाप्रसङ्गश्चेति गुरुग्रन्थे 'त्रपूणि' इत्यादेः परादित्वदूषकत्वेनोपपत्तेर्मूलं चिन्त्यमिति खण्डनकुदुक्तिः परास्ता, उक्तयुक्तेः । किञ्चाप्रसङ्गाच्चेति पञ्चम्यन्तपाठस्य तत्रोपलम्भाच्च । अत एव यत्त्वित्याद्यग्रिमगुरुग्रन्थानुवादकमूलसङ्गतिरत आह—त्रपूणीत्युपेति । 'ता ता' इत्यादौ नलोपसिद्धेस्तदुपलक्षणमित्यर्थः । अप्रसिद्धत्वात्सार्थतत्सिद्धिमाह—तानीति । अर्थे इति । इत्यर्थकसद्वित्वताद्दृशशब्दप्रयोगे इत्यर्थः । तदुदाहरणमिति । नलोपोदाहरणमित्यर्थः ।

ननु स्थानशब्दस्य योगत्वाभावेन षष्ठ्यास्तदर्थयोगेऽपि तच्छब्देन सहयोगाभावेन स्थानार्थविशिष्टसम्बन्धस्य षष्ठ्यर्थत्वाभावेन च मूलमयुक्तमत आह—स्थानशब्देति । ननु स्थानार्थस्य षष्ठ्यर्थत्वे समानाधिकरणबहुव्रीहेर्न्याय्यत्वेन व्यधिकरणोक्तिरयुक्तेत्यत आह—तन्निरूपित इति । निरूपितत्वं तृतीयार्थः । तन्निरूपितसम्बन्धः षष्ठीवाच्य इति भावः । सम्बन्धः—निवर्त्यनिवर्त्तकभावादिः । अनेन तथाविग्रहप्रदर्शनेन । मूलकृता तथा क्वाप्यनुक्तेराह—ध्वनयतीति । अत एव तथाविग्रहं प्रदर्श्य निपातनात्साधुत्वमुक्तं भाष्ये । एवञ्च 'स्थानं षष्ठ्यर्थः' इति वदन्तः प्राञ्चश्चिन्त्या एवेति भावः । एतच्चोपपादितमधस्तात् । अत एवेतीति । निपातनादेवेत्यर्थः । एवञ्च मूले मध्यपठितनिपातनादित्यस्य देहलीदीपकन्या

सरला ।

**अनेनेति** । व्यधिकरणबहुव्रीहिणेत्यर्थः । समानाधिकरणबहुव्रीहौ तु स्थानं योगो यस्या इति विग्रहेण स्थानस्यैव सम्बन्धत्वं स्यात्तच्च नेष्यते । एवञ्चानिर्धारितसम्बन्धविशेषषष्ठ्यन्तपदघटिते सूत्रे

अनेकविधमिति । स्थानार्थगुणप्रमाणकृतमित्यर्थः । बलीय इति । तेन चेता स्तोतेत्यत्र प्रमागत आन्तर्यवानकारो नेति भावः ॥

शब्दरत्नम् ।

गुणप्रमाणेति । प्रमाणस्य ह्रस्वत्वादेर्गुणत्वेऽपि ब्राह्मणवसिष्ठन्यायेन पृथगुक्तिः । गु-

भैरवी ।

तनादेव । न चेयं स्वकल्पनेति भ्रमितव्यं, भाष्यकृतैवोक्तत्वात् ।

ह्रस्वत्वादेरिति । एतेन "प्रमाणे द्वयसज्" इति सूत्रप्रसिद्धस्य नैयायिकमते प्रसिद्धानां

भावप्रकाशः ।

येन उभयत्रान्वय इति भावः ।

परममूले यत्रानेकविधमिति । अस्याक्षरार्थौ मत्कृतपरिभाषेन्दुशेखरव्याख्याने द्रष्टव्यः । अनेकविधस्य द्व्यादिपरार्धपर्यन्तेषु सत्त्वात्सुयोजत्वेन प्राचीनमतेन तद्विशेषस्वरूपमाह–मूले **अनेकविधमिति** । स्थानेति । परिभाषाफलमाह–**प्रमाणेति** । ननु नात्रायामस्य वैशेषिकादिप्रसिद्धप्रमाकरणस्य च ग्रहणम्, अनुपयोगात् । प्रत्युतेष्टासिद्धेश्चात आह–**ह्रस्वत्वादेरिति** । **गुणत्वेऽपीति** । तथा च तेनैव सिद्धे पुनस्तद्ग्रहणं व्यर्थमिति भावः । यत्तु गोबलीवर्दन्यायेन पृथगुक्तिरिति । तन्न, तस्यैवासत्त्वात् । तथाहि, गोशब्दस्य स्त्रीत्वसमानाधिकरणं पुंस्त्वसमानाधिकरणञ्च गोत्वं प्रवृत्तिनिमित्तमिति नानार्थत्वम् । तत्राद्यं प्रसिद्धम्, अन्त्यं तु तात्पर्यग्राहकसापेक्षं काचित्कम् । यथा 'गौर्वाहीकः' इत्यत्र 'स्वे गावः, स्वा गावः' इति "स्वमज्ञाति" इत्यत्र भाष्ये । अन्येन हि "वस्नेनैकं गां क्रीणन्ति, अन्येन द्वौ, अन्येन त्रीन्" इति "तद्धितश्चासर्व" इत्यत्र भाष्ये । "यदा गौः सामान्येन विवक्षितः" "यदा गौर्विशेषत्वेन विवक्षितः" इति "तस्मिन्" इत्यत्र भाष्ये "एतान् गाश्चतुरः पश्य" इति "प्रथमयोः" इति सूत्रे भाष्ये च । अत एव 'गौ' इत्येतन्मात्रात्स्वरसतः स्त्रीव्यक्तिबोध एव । अत एव च तत्र सामान्यविशेषभावाभावाद् द्वन्द्वसिद्धिः । एतदेवाभिप्रेत्य "त्यदादीनि सर्वैः" इति सूत्रेऽयमपि योगः शक्यो वक्तुमित्युक्त्वेदमेकं प्रयोजनं सन्दूष्येदं तर्हि प्रयोजनं सामान्यविशेषवाचिनोस्तच्छब्दे देवदत्तशब्दयोर्द्वन्द्वो माभूदित्युक्तम् । एतदपि नास्ति प्रयोजनं 'ब्राह्मणं गार्ग्यमानय' इत्यादौ द्वन्द्ववारणाय तयोर्द्वन्द्वो नेत्यस्यावश्यं वक्तव्यत्वादिति उक्त्वा यदि

सरला ।

स्थानेपदमुपतिष्ठत इति "षष्ठीस्थाने" इत्यस्यार्थः फलति । एवञ्च "इको यणचि" इत्यादौ इक इति षष्ठीश्रुत्या स्थानेपदमुपस्थायेकः स्थाने यण् स्यादित्यादिरर्थः सिध्यति ।

अयमभिसन्धिः–उक्तार्थस्वीकारे इकः शब्दरूपत्वेनाकाशस्य तत्स्थानतया तत्र यण् भवतीत्युक्तेर्न सामञ्जस्यम्, यणोप्याकाशस्थानत्वसिद्धेस्तदर्थं सूत्रस्य निष्प्रयोजनत्वात् । यदि तु इगुच्चारणस्थाने यणुच्चारणं कर्तव्यमिति व्याख्यायते तर्हि अर्थस्य सामञ्जस्येऽपि मात्रिकादि–इकाद्युच्चारणाधिकरणकाले अर्धमात्रिक–यकाराद्युच्चारणासम्भवः । एवं दीर्घादिविधौ एकमात्रिकाधिकरणे सुतरां द्विमात्रोच्चारणासम्भव इति न देशः कालो वा स्थानपदार्थौ भवितुमर्हति । मीमांसकानुमतः दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति प्रादेशमात्रप्रमाणितदर्भस्थाने अरत्निमात्रप्रमाणितशरप्रस्तरणासम्भवेन दर्भसम्पाद्यवेदिस्तरणफलजनकत्वस्य शराणां सम्भवेन स्वसम्पाद्यफलजनकत्वरूपस्थानपदार्थोऽपि न भवितुमर्हति । तस्यापि फलस्य यण्सम्पाद्यत्वाभावादिति ।

अत्रोच्यते—"प्रसक्तिरनुमितिरापत्तिर्वा" इति गदाधरोक्तेः प्रसङ्गपदार्थस्य ज्ञानरूपत्वात्स एवात्र स्थानपदार्थः । स्थानं प्रसङ्ग इति चानर्थान्तरम् । अकाराकाङ्क्षायाञ्च प्रत्यासन्नत्वाद्विधेयभूतं तद्विशेषणभूतं वा साधुत्वमन्वेति । ज्ञानञ्च सामान्यशास्त्रकरणकमेव । तथाचेक्विशेष्यकसाधुप्रकारके सामान्यशास्त्रकरणके ज्ञाने यण् साधुर्भवतीति वाक्यार्थः । यणः साधुत्वे बोधिते च पूर्वज्ञानस्य भ्रमत्वं कल्प्यते । पूर्वाबाधेनोत्पत्तिरुत्तरस्य हि सेत्स्यतीतिन्यायात् । ततश्च इग्विशेष्यकसाधुत्वज्ञानस्य भ्रमत्वे तद्घटितस्य साधुशब्दः प्रयोक्तव्य इति विध्यविषयत्वान्न प्रयोगः । यणश्च साधुत्वप्रमाज्ञानविषयत्वात्प्रयोगो निर्बाधः । एवञ्च ज्ञानं स्थानपदार्थ इति । विस्तरस्तु गुरुकृतलघुशब्देन्दुशेखरटिप्पणतो द्रष्टव्यः ।

## शब्दरत्नम् ।

णशब्देनोक्तत्रितयातिरिक्तधर्ममात्रम् । तेन "अनान्तर्यमेवैतयोरान्तर्यम्" इत्यादिस्थाने-न्तरतमसूत्रस्थभाष्येण न विरोधः । अन्तरतमाभाव एव गुणविधौ ऋकाराकारयोः

## भैरवी ।

चानुपयोगान्न ग्रहणमिति ध्वनितम् । स्वशास्त्रप्रसिद्धगुणपदार्थं दर्शयति-गुणशब्देनोक्त इति । गोशब्दाज्झटिति स्त्रीव्यक्तेः प्रतीतिरतो गोबलीवर्दन्यायम्परित्यज्य ब्राह्मणवसिष्ठन्याय उक्तः। तेन—तादृशधर्ममात्रस्य गुणशब्दाद्बोधनेन । इत्यादीति। आदिना 'सोष्मणः सोष्माणः' इत्यस्य "ऐचोश्चोत्तरभूयस्त्वात्" इत्यस्य 'पादादीनां पदादयो वर्णसाम्यात्' इत्यस्य च परिग्रहः।स्थाने-ऽन्तरतम इति । तत्तत्सूत्रोपलक्षणम् । आन्तर्यपदं सादृश्यपरं, तस्य प्रयोजकाः समानस्थानिक-त्वादयो वर्णधर्मास्ते च यत्र न सन्ति तत्रापि भाष्यप्रामाण्यादनान्तर्यस्यानुरूपप्रतिसम्बन्धि-राहित्यस्यापि सादृश्यप्रयोजकत्वङ्कल्पनीयम् । ननु "झयो होऽन्यतरस्याम्" इत्येतदुदाहरण-विवेचनसमये बाह्यप्रयत्नस्य गुणपदव्यवहार्यस्य सादृश्यप्रयोजकत्वं सर्वैः स्वीकृतं, तच्च नोप-पद्यते बाह्यप्रयत्नस्य वर्णावृत्तित्वात् । ते हि काकलकाधस्तात्कण्ठविवरनिष्ठविकासादिका-

## भावप्रकाशः ।

तयोः स नेत्युच्यते तर्हि 'शूद्राभीरम्' 'तृणोलपम्' 'गोबलीवर्दम्' इत्यादौ स न स्यादित्युक्त्वा आभीरा जात्यन्तराणि, उलपमित्यपां नामधेयं, गाव-उत्कालितपुंस्काः वाहाय च,-विक्रयाय च, स्त्रिय एवावशिष्यन्ते इत्यादिसामान्यविशेषभावाभावः प्रतिपादितो भाष्ये । वाहाद्यर्थं निष्कासितपुंव्यक्तयः स्त्रिय एव गावः ता-दृशगोशब्दव्यवहार्यत्वेनावशिष्यन्ते इति तदर्थः । गोत्वमात्रप्रवृत्तिनिमित्तकत्वे तु सामान्यविशेषभावस्य सत्त्वेन भेदघटितसाहित्यरूपचार्थाभावेन च द्वन्द्वाप्राप्तौ भाष्यस्य निर्दलत्वापत्तिः । एवञ्च बलीवर्दसमभि-व्याहारे गोशब्दस्तदन्यपर इति कथा चिन्त्येति स न्यायो भाष्यविरुद्ध एवेति दिक् । तद् ध्वनयन्नाह— ब्राह्मणेति । 'ब्राह्मणसहितवसिष्ठस्य न्यायः' इति मध्यमपदलोपिसमासगर्भः समासः, द्वन्द्वस्तूक्तरीत्या न । अत एव साहित्यमेकमहावाक्यार्थघटकत्वेन । एवंजातीयकेषु सर्वत्रैवमेव । ध्वनितश्चायं न्यायस्तत्रैव सूत्रशेषे भाष्य इत्यलम् । ननु स्थानेत्यादिपरिगणनमयुक्तम् । तदन्यानान्तर्यरूपान्तर्यस्य "स्थानेन्तर" इति सूत्रे भाष्योक्तत्वात् । यद्यपि प्रसङ्गावस्थायामेव रपरत्वविधानान्न तस्योपयोगस्तथापि पक्षान्तरे उपयोग एवेत्यत आह—गुणेति । नोक्तेति । अन्यथा तद्ग्रहणानर्थक्यमिति भावः । धर्ममात्रमिति । न तु विजातीययत्न एवेति भावः । आदिना तत्रत्यस्य 'सोष्मणः सोष्माणः' इत्यादेः सङ्ग्रहः । एतेनानान्तर्यमे-वेति प्रतीकं धृत्वा नहि चतुर्विधमेवान्तर्यं परिभाषितम्, रूपान्तरेणापि सादृश्यसम्भवात्पाददन्तेत्यादौ स्थान्यादेशभावमते वर्णसाम्यकृतसादृश्यस्य परिग्रहाच्चेति कैयटोक्तिरुपायान्तरपरेति ध्वनितम् । अत एव तद्भाष्यं कैयटश्च चिन्त्य एव । प्रसङ्गावस्थायामेव रपरत्वविधानात्सोष्मण इत्यनेन गुणकृतान्तर्यस्य ऐचोश्चो-त्तरभूयस्त्वादित्यनेन स्थानकृतान्तर्यस्य च विवक्षितत्वाच्चेति मान्योक्तिः प्राचामनुरोधेनेति बोध्यम् । पक्षान्तरे तस्यावश्यकत्वात् पाददन्तेत्यादावनिर्वाहाच्चेति दिक् । नन्वभावप्रतियोगिनोर्विरोधादनान्तर्य-स्यान्तर्यत्वोक्तिरयुक्तेत्यत आह—अन्तरेति । स्थानकृतातिशयितान्तर्यवदभाव इत्यर्थः । गुणेत्युपलक्षणं वृद्धेरपि । तथाचान्तर्यपदस्य सादृश्यपरत्वादनान्तर्यपदस्य च स्वार्थव्यञ्जना लक्षणया च उक्ताभावपरत्वात्तस्य च 'कर्त्ता' इत्यादौ उभयसाधारणधर्मरूपत्वेन—एकः तथासवर्णेनानतिप्रसङ्गेन, तत्त्वाङ्गीकारे न तयोरिव विरोध इति ।स्वत च(?) दर्शादावप्यमस्यान्तरतमत्वात्तद्रूपसादृश्येन च निर्वाह इति भावः । तदर्थः उक्तभा-ष्यार्थः । ननु विवारादिगुणकः खकार इत्यादिव्यवहारानुपपत्तिः, तेषां गलविवरविकासादिकार्यकरयत्न-विशेषरूपत्वेनात्मगुणत्वेन वर्णगुणत्वाभावात्, आभ्यन्तरवत्परम्परयापि वर्णाजनकत्वाच्च । अत एवाभ्य-न्तरेषु नाशङ्का, तत्कथनस्यात्यन्तमनुपयोगाच्च । तथाच तत्कृतान्तर्यस्यासम्भवेन 'वाग्घरिः' इत्यादौ दोषो-

तस्मिन्निति सप्तम्यन्तानामनुकरणम् । निःशब्दो नैरन्तर्यपरः । दिशिरुच्चा-

शब्दरत्नम् ।

सादृश्यमिति तदर्थः । बाह्यानां विवारादीनां साक्षाद्वर्णावृत्तित्वेऽप्यौपचारिकं गुणत्वं बोध्यम् ॥

अनुकरणमिति । अचीत्यादिसप्तम्यन्तार्थकस्य स्वतन्त्रतच्छब्दस्य निर्देशो न स्व-रूपपरं, व्याख्यानाद्, बहुलक्ष्यसंस्कारानुरोधाच्च । सप्तमी तु सप्तम्यन्तानामेव त-

भैरवी ।

र्यंजनकाः, अत एव तेषां बाह्यत्वमत आह—बाह्यानामिति । अत्र साक्षादिति कथनेन परम्परा-सम्बन्धेन वर्णसम्बद्धत्वं ध्वनितम् । साक्षात् समवायसम्बन्धेन पररीत्या, स्वमते तु तादात्म्ये-न । परमते आत्मधर्मत्वं स्वमते मनोधर्मत्वमिति त्वन्यत् । परम्परासम्बन्धश्च स्वप्रयो-ज्यचिकासाश्रयसमीपताल्वादिनिष्ठवायुसंयोगाभिव्यङ्ग्यत्वात्मकः । गुणत्वम्—वर्णगुणत्वम् ।

नन्वनुकरणमनुकार्यगतवर्णसमानानुपूर्वीकमेव प्रायोऽत्र शास्त्रे दृश्यते "तस्थस्थमिपाम्" इत्यादौ यथा, तथाऽत्रापि चेदनुमतं तदा तस्मिन्निति सूत्रस्य "तस्मिन्नणि च युष्माकास्माकौ" इत्यत्रैव प्रवृत्तिः स्यान्न तु "इको यणचि" इत्यादाविति न तेष्वभिप्रेतार्थलाभः स्यादस्य सूत्रस्य वैयर्थ्यञ्च "तस्मिन्नणि" इति सूत्र एव निर्दिष्टपदोपादानेन तत्रेष्टार्थलाभसम्भवादत आह—अचीत्यादीति । सप्तम्यन्तार्थकस्य । सप्तम्यन्तानि पदान्यर्था यस्येत्यर्थः । स्वतन्त्रेति । अनेनानुकरणत्वाभाव उक्तः । तस्मिन्नणि चेति सूत्रस्यैवोदाहरणत्वे फलन्तु "यौष्माकीण अस्मभ्यं देहि" इत्यादावादेशाभाव इति । व्याख्यानादिति । तस्मिन्नणीति सूत्रबोध्ययोः खञ्

भावप्रकाशः ।

ऽत आह—बाह्यानामिति । ओष्ठप्रभृतिकाकलकपर्यन्तरूपास्यबहिर्भूतदेशे कार्यकरयत्नानामित्यर्थः । ननु कार्याणामत आह—विवारादीनामिति । साक्षात्—संयोगसमवायादिना । औपचारिकमिति । वर्णा-भिव्यक्त्यनन्तरभावित्वात्परम्परया वर्णजनकात्मप्रवृत्तित्वाच्च वर्णवृत्तित्वारोपादिति भावः । गुणत्वमिति । वर्णगुणत्वमित्यर्थः । यथाश्रुते तत्रात्मगुणत्वसत्त्वेनोपचारानुपयोगादसङ्गतिः स्पष्टैव । एतेन गुणे गुणानङ्गी-कारात्कथं वर्णगुणत्वमित्यपास्तम्, स्वाभाविकासत्त्वेऽपि तथाङ्गीकारे बाधकाभावात् । तन्त्रान्तरे तथानिय-मेऽप्यत्र तदनाश्रयणाच्च । भाष्यमते शब्दस्य द्रव्यत्वाच्चेति दिक् ।

ननु वर्णात्मकशब्दानुकरणस्यानुकार्यसमानानुपूर्वीकत्वस्य 'गो' इत्यादौ दृष्टत्वेन "तस्मिन्नणि" इत्य-त्रैवोपस्थितिः स्यात्, नत्वचीत्यादाविति महदनिष्टम्, सप्तम्यन्तानामिति बहुवचनासङ्गतिश्च, नह्येकमिति न्यायेनास्य वैयर्थ्यापत्तिश्चेत्यत आह—अचीत्यादीति । अचीत्यादीनि सप्तम्यन्तानि पदान्यर्थौ वाच्यो यस्येत्यर्थः । स्वतन्त्रेत्यनेनानुकरणत्वनिरासः । अचीत्यादिसप्तम्यन्तपदबोधकोऽयं तच्छब्द इति यावत् । नन्वनुकरणत्वाभावेऽप्यस्य सर्वतद्बोधकत्वासम्भवः, सर्वनाम्नां प्रक्रान्तार्थकबोधकत्वनियमात् । किञ्च "स्वंरूपम्" इति बाधे मानाभावात् । एवञ्च "द्विर्वचनेऽचि" इत्यत्र "तस्मिन्नणि" इत्यत्रैव वोपस्थितिः स्यात् । अन्त्ये फलं तु 'हे यौष्माकीण अस्मभ्यं देहि' इत्यादौ खञः परस्यादेशनिवृत्तिरित्याशयेनाश-ङ्कते—न स्वरूपेत । व्याख्यानादिति । अयं भावः, "एङ्ह्रस्वात्" इत्यादाविव अङ्गाक्षेपे तत्र चाक्षे-पकलक्षणोः सम्बन्धेन तत्रादोषेण फलाभावात् तत्रानुपस्थित्याऽत्र स्वरूपग्रहणे फलाभावेन नह्येकमिति

सरला ।

औपचारिकमिति । वर्णाभिव्यक्तिजनकस्थानवृत्तित्वेन वायुवृत्तित्वेन वा बाह्यानां वर्णवृत्तित्वोप-चारः । गुणत्वमिति । वर्णनिष्ठधर्मत्वमिति तदर्थः । मूले बलीय इतीति । अनेकधर्मप्रतियोगिताकं सादृश्यं यत्रादेशतानियामकं तत्र स्थानघटितधर्मप्रतियोगिताकं सादृश्यं बलीय इत्यर्थः । अकारो नेति । तालुस्थानजन्यत्वधर्मप्रतियोगिकसादृश्यस्य एकमात्राकालिकत्वरूपधर्मप्रतियोगिकसादृश्यापेक्षया बल-वत्त्वादित्यर्थः ।

व्याख्यानादिति । "तस्मिन्निति निर्दिष्टे पूर्वस्य" इति सामान्यसूत्रकरणमूलकव्याख्यानादित्यर्थः ।

शब्दरत्नम्।

त्सप्तम्यर्थत्वमिति बोधनाय, तद्बोध्यार्थस्य निर्दिष्टे इत्यनेन सामानाधिकरण्याय चेति

भैरवी।

णोःप्रत्ययत्वात्ताभ्यां यस्माद्विहितौ तदादेरित्यस्योपस्थित्या तत्र सूत्रे निर्दिष्टे पूर्वयोरित्येवेष्टे सिद्धे ऽस्य सामान्यसूत्रस्य निष्प्रयोजनत्वापत्तिरित्येतन्मूलकादित्यर्थः। नन्वेवमनुकर-

भावप्रकाशः।

न्यायेन तत्रैव पूर्वस्येत्यस्य सुकरत्वेन चास्य वैयर्थ्यापत्तिः। किञ्चोक्तनियमो नादरणार्हः, "तस्यापत्यम्" इत्यादौ व्यभिचारात्। प्रागुपस्थितबोधकत्वमित्येव हि सार्वत्रिको नियमः, स चाक्षतोऽत्र। किञ्च तथात्वे "द्विर्वचनेऽचि" इत्यग्रे एव पाठौचित्यम्। एवञ्च "स्वंरूपम्" इत्यस्योक्तनियमस्य चात्र बाधेन पाणिनिबुद्धिस्थसर्वशास्त्रीयसप्तम्यन्तपदबोधकत्वं सिद्धम्। न चैवमितिर्व्यर्थ इति वाच्यम्, तदभावे सप्तम्यन्ते पदेऽव्यवहितोच्चारित इत्यर्थापत्त्या सर्वेषामसिध्द्यापत्तेः। तेन तु तस्य तदर्थपरत्वबोधनेनाजादिपदबोध्याकारादौ सिध्यतीति सर्वेष्टसिद्धिः। एतेनेतेः पदार्थविपर्यासकृत्त्वेन तेनैवात्र शास्त्र. "स्वंरूपम्" इतिवचनात्सर्वत्र स्वरूपग्रहणे प्राप्ते "नवेति विभाषा" इतिवदर्थपरत्वलाभेन व्याख्यानादिपर्यन्तधावनं निर्बीजमगतिकगतिकं चेत्यपास्तमिति। ननु नेदं युक्तिजातमुत्तरसूत्रे सम्भवति "तस्मान्नुडचि", "तस्मान्नुड्द्विहलः" "तस्माच्छसः" इतित्रिषु 'अर्थमनर्थम्' 'गौरनश्वः'। 'चैत्र आनृजे' 'उच्चरत आनुपलभतः' इत्यादौ पूर्वनिवृत्तिरूपफलसत्त्वेन नह्यकमितिन्यायाविषयत्वादाक्षेपकाभावेनाक्षेपासम्भवात् क्वचित्तत्सम्भवेऽपि तेनानिर्वाहाच्च। अत एव सार्वत्रिकनियमाङ्गीकारेणापि न तत्रेष्टसिद्धिरादृता। पूर्वम् "अदसो मात्" इत्येकत्रैव फलसत्त्वेन तदग्रे पाठौचित्याभावश्च। इतिस्तु तदर्थपरत्वबोधकतया सफल इत्युक्तमेवात आह—बहुलक्ष्येति। तत्तद्विधिद्वारेति शेषः। तथाच तथानियमे प्रोक्तरीत्या वैयर्थ्यापत्त्या तद्बाधवत्तत्र .व्याप्तिन्यायाश्रयेण तद्बाधो यथा, तथाऽत्र व्याप्तिन्यायाश्रयणमिति भावः। नन्वेवं सप्तमी व्यर्था, साधुत्वार्थं तु सुरैवोचित इत्यत आह—सप्तमी त्विति। तेषामेव पाणिनिबुद्धिस्थत्वमित्यत्र तात्पर्यग्राहकत्वेनानुशादिकैयमिति भावः। यत्र सप्तम्यर्थबोधस्तत्रैव तदुपस्थितिरिति बोधनायापि सा। तदुत्तरमपि इतेः सत्त्वात्। अत एव "नेड् वशि" "तस्मान्नुडचि" "ङः सि" इत्यादौ नोपस्थितिः। वशीत्यादिसप्तम्याः षष्ठ्यर्थत्वात्। एतेन सप्तमीनिर्दिष्टे पूर्वस्येति सूत्रयितुं युक्तमित्यपास्तम्, सप्तमीशब्देन यो निर्दिष्ट इति प्रतीत्यापत्तेश्च। तदाह—तद्बोध्येति। अत्रत्यतत्पदबोध्याचीत्यादेरर्थस्येत्यर्थः। अन्यथा भिन्नविभक्तित्वात्तन्न स्यात्। एवञ्च निर्दिष्टे इति विशेषणे इवात्रापि विशेष्येऽधिकरणत्वबोधार्थं साऽऽवश्यकीति भावः। ननु मूले स्पष्टार्थ

सरला।

अन्यथा तत्रैव सूत्रे निर्दिष्टे पूर्वस्येत्येवेष्टसिद्धेः सामान्यसूत्रस्य वैयर्थ्यापत्तिः स्यादिति भावः। सप्तम्यन्तानामिति। औपश्लेषिकाधिकरणबोधकसप्तम्यन्तानामित्यर्थः। प्रकृतसूत्रे औपश्लेषिकसप्तम्यन्तानामेव तत्पदेन ग्रहणात्। अन्यथान्यसप्तमीस्थलेऽपि एतत्परिभाषाप्रवृत्तौ "उभयप्राप्तौ कर्मणि" इति सूत्रं व्यर्थं स्यात् "कर्तृकर्मणोः कृति" इत्यत्र प्रकृतपरिभाषाप्रवृत्तौ युगपत्कर्तृवाचकस्य कर्मवाचकस्य च तत्कृदन्ताव्यवहितपूर्वत्वासम्भवेन उभयप्राप्तेरेवासम्भवात्। तथाचौपश्लेषिकाधिकरणबोधकसप्तम्यन्तपदघटिते शास्त्रे निर्दिष्टे पूर्वस्येत्युपतिष्ठत इत्यर्थः फलति। सामानाधिकरण्याय चेति। तथाच सप्तम्यन्तार्थे अव्यवहितोच्चारिते उपश्लिष्टस्य पूर्वस्य कार्यमिति वाच्योऽर्थः। तत्र चाव्यवहितोच्चारितसप्तम्यन्तार्थोपश्लिष्टमुद्दिश्य पूर्वत्वविधाने अव्यवहितोच्चारितसप्तम्यन्तार्थोपश्लिष्टस्य केनाप्यविधानादुद्देश्यासिद्धिः। यदि तु सप्तम्यन्तार्थे उपश्लिष्टस्य यत्कार्यं तदव्यवहितोच्चारिते पूर्वस्य बोध्यमितीत्येवमुद्देश्यविधेयभावकल्पनं, तदापि गौरवं स्पष्टमेवेति चिन्त्यमेतत्। वस्तुतस्त्वनया परिभाषया अंशत्रयोपस्थितिः विधेयान्वयी षष्ठ्यर्थः पूर्वत्वमव्यवहितत्वं चेति। तत्र "शि तुक्" इत्यत्रांशत्रयोपस्थितिः। यत्र यावानंशः सिद्धो बाधितो वा तत्र तावदंशविकलैवोपस्थितिः। यथा "इको यणचि" इत्यादौ षष्ठ्यंशस्य सिद्धत्वादंशद्वयोपस्थितिः। विस्तरस्तु

रणक्रियः। अचि यणित्युक्ते व्यवहिते ऽव्यवहिते च सति प्राप्तमव्यवहिते एवेति,

शब्दरत्नम्।

भावः। शब्दार्थकत्वेन त्वनुकरणत्वव्यवहार इति बोध्यम्। **दिशिरुच्चारणेति**। अत एव "जनपदे लुप् (पा०सू०४।२।८१) इत्यादौ न दोषः। नह्यर्थ उच्चारितो नापि शब्दस्य निरन्तर इति भावः। **अचि यणित्युक्ते इति**। अचि उपश्लिष्टस्य यणित्युक्ते इत्य-

भैरवी।

णमिति व्यर्थमत आह—शब्दार्थकत्वेनेति। तस्मिन्निति प्रकृतसूत्रस्थस्तच्छब्दो बुद्धिस्थपरामर्शकः। सर्वनाम्ना प्रक्रान्तार्थपरामर्शकत्वमेवेति न नियमः। तथाच यत्र सप्तम्यर्थबोधस्तत्रैवास्योपस्थितिः। यत्र सूत्रे सप्तम्यन्तपदोपादानन्तत्रास्य सूत्रस्य प्रवृत्तिरिति तु न, "नेड् वशि कृति" "ङः सि धुट्" "तस्मान्नुडचि" इत्यादावस्य प्रवृत्त्यदर्शनात्। एतेन यत्रास्य प्रवृत्तिरभिप्रेता तेषां संग्रहाय सप्तमी निर्दिष्टा इत्येवास्त्विति निरस्तम्। एवञ्च सप्तम्यन्तार्थे ऽव्यवहितोच्चारिते पूर्वस्य कार्यमिति वाच्योऽर्थः। तथा च सप्तम्यन्तपञ्चम्यन्तपदयोरर्थोऽपस्थितिर्यत्र तत्र तद्रूपलिङ्गसद्भावात्तस्मिन्नित्यादिपरिभाषाद्वयस्य यथायथमुपस्थितिरिति सिद्धम्। निर्दिष्टपदस्य प्रयोजनमाह—अत एवेति। सप्तम्यर्थतात्पर्यकपदघटितेऽस्योपस्थितेरेवेत्यर्थः। आदिना "कारनाम्नि" "यस्कादिभ्यो गोत्रे" इत्यादेः संग्रहः। न दोष इति। तत्र चेदुपस्थितिः स्यात्तदा जनपदरूपेऽर्थे देशे इति लक्षणया तादृशार्थबोधकशब्द इति वा तेषां सूत्राणामर्थेऽनिष्टापत्तिरूपो दोषो नेत्यर्थः। एतदेव दर्शयति-न हीति। अर्थः—देशरूपः। अचि उपश्लिष्टेति।

भावप्रकाशः।

तथैव कुतो नाभिहितमत आह—शब्देति। शब्दमात्रबोधतात्पर्यकोच्चारणकस्यैवानुकरणत्वेन तस्य तत्त्ववदिहापि सर्वथा तत्त्वेन तथा व्यवहारो मूलकृतो मुख्य एवेति विनिगमकाभावात्तथैवोक्तम्। एतेन इतिशब्दबलात्तस्य तदर्थबोधकत्वेन शब्दाबोधकत्वाद् गौणस्यापि तथा व्यवहारस्यासम्भव इत्यपास्तमिति भावः। **दिशिरिति**। एवञ्च सप्तम्यन्तार्थेऽव्यवहितोच्चारिते पूर्वस्य कार्यमिति वाच्योऽर्थः। तथाच परिभाषाद्वयोपस्थितौ सप्तम्यन्तपञ्चम्यन्तपदयोरर्थोपस्थितिर्लिङ्गमिति भावः। उक्तार्थकनिर्दिष्टपदव्यावर्त्यमाह—**अत एवेति**। आदिना "यस्कादिभ्यो गोत्रे" इत्यादिसङ्ग्रहः। **न दोष इति**। अस्योपस्थित्या जनपदे देशेऽर्थे लक्षणया तद्वाचिनि वा पूर्वस्येत्यर्थेऽनयाऽनिष्टमव्याप्त्यतिव्याप्तिरूपं, तन्नेत्यर्थः। अत एवेत्यस्यार्थमाह—**नहीति**। अर्थः देशरूपः। **उच्चारित इति**। असम्भवादिति भावः। शब्दस्य प्रकृतेः। **निरन्तर इति**। तत्त्वं चाव्यवहितपूर्वपरान्यतरस्थत्वम्। तच्च नार्थस्य, अवध्यवधिमतोः साजात्यस्यैवौचित्याद्, असम्भवाच्च। लक्षणायां तु न मानम्, आरोपिततत्त्वकस्यापि ग्रहणे निर्दिष्टपदानर्थक्यमनिष्टापत्तिश्च। लुबादिसंज्ञायाः प्रत्ययादर्शनस्यैव सत्त्वेन जनपदे यः प्रत्यय इत्यन्वयेन चानियमाभावान्नियमफलपरिभाषानुपस्थितिरिति कश्चित्। एवञ्च शब्दमात्रबोधतात्पर्यकनिर्देशे एवास्योपस्थितिः, न तु तदतात्पर्यकार्थबोधतात्पर्यकनिर्देशे। एतेन लाघवादव्यवहितस्यैव ग्रहणं स्यादिति किं निर्दिष्टग्रहणेनेत्यपास्तम्। व्यवहिताव्यवहितसाधारणपूर्वत्वस्य लोके "अचःपरस्मिन्" इत्यादौ च दृष्टत्वाच्च। एतेन "तस्मिन्नितिशब्दे पूर्वस्य" इति न्यासेनेष्टसिद्धिरित्यपास्तम्। परममूले संहिताधिकारस्थपरिभाषाविषयेषु यणिवधेः प्रागुक्त्या मूलेऽपि तथैवाह—**अचि यणिति**। यत्तु "इको यणचि" इत्यादौ "यस्य च भावेन" इति सप्तम्यन्तरङ्गत्वात्। अश्रूयमाणक्रियत्वाच्चास्यार्थलाभः। तेनाचि सति यण् स्यादित्यर्थ इति कश्चित्। तन्न, प्रधानक्रियान्वये सत्यध्याहारे मानाभावात्। किञ्च तदध्याहारसामर्थ्येन तत्रास्या अप्रवृत्त्यापत्तेः। स्पष्टा चेयं रीतिः "इनान्नलोपः" इत्यत्र भाष्ये। अत एव "कर्तृकर्मणोः" इत्यादौ नास्याः प्रवृत्तिः, कृति सति प्रत्यासत्त्या तत्प्रकृत्यर्थनिरूपितकर्तृकर्मणोः षष्ठीति तदर्थात्। अन्यथा 'कृष्णस्य कृतिः' इत्यादावेव स्यान्नतु विपरीते। किञ्चोपपदविभक्तेरिति न्यायेनाधिकरणसप्तम्या एवौचित्यात्। तदाह—**अच्युपेति**।

सरला।

अन्यत्र द्रष्टव्यः। **शब्दार्थकत्वेनेति**। अनुकार्यमात्रबोधकत्वेनेत्यर्थः। अनुकार्यवृत्त्यानुपूर्वीसमानानुपू-

पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति च नियम्यते। अव्यवहितस्येति तु फलितार्थकथनम्।

बालमनोरमा ।

६१ । इदं "संहितायाम्" (पा०सू०६।१।७२) इति सूत्रे भाष्ये स्पष्टम् । फलितेति । सप्तम्यन्तार्थे ऽव्यवहिते षष्ठ्यन्तार्थोऽप्यव्यवहित एवेति भावः ।

भैरवी ।

एतेन यत्रौपश्लेषिकाधारे सप्तमी, तत्रास्योपस्थितिरिति सूचितम् । अव्यवधानस्य पूर्वोच्चारितत्वपरोच्चारितत्वान्यतररूपस्य यत्रौपश्लेषिकाधारत्वं तत्रैव सम्भवात्, अवध्यवधिमतोः साजात्यात् । पूर्वत्वादिव्यवहारस्य व्यवहितेऽपि दर्शनादस्मिन्सूत्रे निर्दिष्टपदम् । यथा 'काश्याः प्रयागः पूर्वः, पाटलिपुत्रः परः' इत्यादि लोके "अचः परस्मिन्पूर्वस्य" इति शास्त्रे । अस्य सूत्रस्योपस्थितौ यादृशार्थोपस्थितिर्भवति तदुदाहरणम्मूले प्रदर्शितमचि यणीत्यादिना । केचित्तु "इको यणचि" इत्यादिसूत्रे क्रियावाचकपदाश्रवणात् "अस्तिर्भवन्तीपरः" इति न्यायेन सतीत्यस्याध्याहारेणाचि सति यण् भवतीत्यादिरीत्या तत्र तत्रार्थं इति । तन्न युक्तम् । भवनक्रियायाम्प्रधानार्थप्रतिपादिकायामन्वये सम्भवति सति गुणभूतायामन्वयस्यानौचित्यात् । औपश्लेषिकाधारे एवास्योपस्थितेः स्वीकारादेव "कर्तृकर्मणोः कृति" इत्यत्र नास्योपस्थितिः । कृति सति तत्प्रकृत्यर्थक्रियानिरूपितकर्तृत्वकर्मत्वविशिष्टार्थवाचकात्षष्ठीति तदर्थात् । यदि तु "यस्य च भावेन" इति सूत्रविहितसप्तम्यन्तपदस्य सतीत्यस्याध्याहारेऽपि, कर्तृकर्मणोरित्यत्रास्योपस्थितिः स्यात्, तदा कृदन्ते निरन्तरोच्चारित इत्यर्थापत्तौ "कृष्णस्य कृतिः" इत्यत्रैव षष्ठी स्यान्न तु कृतिः कृष्णस्येत्यत्रेत्यनिष्टापत्तिः । अतः "इको यणचि" इत्यादौ "उपपदविभक्तेः" इति न्यायेनौपश्लेषिकाधारे एव सप्तमीत्याशयेनोपश्लिष्टस्येति व्याख्यातम् । उपश्लिष्ट इति पदमेतेष्वध्याहर्तव्यम् । उप समीपे श्लेषः सम्बन्धस्तत्कृताधिकरणमौपश्लेषिकाधिकरणम् । अत एव "तत्र च दीयते" इति सूत्रभाष्ये-"मासेऽतिक्रान्ते यद् दीयते तस्य मास औपश्लेषिकमधिकरणम्"इत्युक्तम् । वर्णयोः समीपवृत्तित्वन्तु बौद्धं बोध्यम् । इदम्। इको यणचीत्यत्रौपश्लेषिकमधिकरणमित्येतत् । तत्र हि तस्मिन्नित्यादिसूत्रद्वयस्य प्रयोजननिरूपणावसरे "पूर्वोत्तरयोर्योगाविशेषान्नियमार्थं वचनं दध्युदकं, पचत्योदनम्" इति वार्तिककृतोक्तम् । तदर्थनिरूपणावसरे भाष्यकृता "इको यणचि-दध्युदकं, पचत्योदनम् । उभाविकौ, उभावचौ । अचि पूर्वस्याचि परस्येति सन्देहः । इष्यते चात्राचि पूर्वस्य स्यात्, तच्चान्तरेण यत्नन्न सिध्यतीति नियमार्थम् । एवमर्थमिदमुच्यते" इत्युक्तम् । अत्र तथा सन्देहप्रदर्शनेनौपश्लेषिकाधारे सप्तमीति स्पष्टम्प्रतीयते । उक्तञ्च कैयटेन—"उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति न्यायादधिकरणसप्तमी कृतेति ।

भावप्रकाशः ।

उपश्लिष्टपदाध्याहारेणौपश्लेषिकेऽधिकरणे सप्तमी । इदमेव बोधयितुं सप्तम्युपादानम्, अन्यथाऽनुपश्लिष्टस्येत्येव वदेदिति भावः । प्रकृतसूत्रेऽप्येवमेवेति स्पष्टं "तत्र च दीयते" इति सूत्रे कैयटे । उपश्लेषः समीपवृत्तित्वम् । अत एव "यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणम्" इत्युक्तं तत्रैव भाष्ये । तच्च वर्णयोर्बौद्धं द्रष्टव्यम् । अत एव वर्णानां भाष्यादिमते द्रव्यत्वात्संयोगवत् पूर्वपरयोर्बौद्धाधारत्वस्याप्युपश्लेषनिरूपितस्य स्वीकारेण "इको यणचि" इत्यादावियं सप्तमीति "संहितायाम्" इति सूत्रभाष्यं सङ्गच्छते । तदाह—इदमिति । एतेनार्धमात्राधिककालेन वर्णान्तरेण वा व्यवधाने उपश्लेष एव नेति चेत्तर्हि निर्दिष्टपदं संहिताधिकारश्च विफल इत्यपि तत्रत्यं ध्वनितम्, दीक्षितादीनां तु प्रमाद एवेत्यन्यत्र विस्तरः । नन्वव्यवहितार्थकनिर्दिष्टपदसत्त्वेन कथं फलितत्वमत आह—सप्तम्यन्तेति । तथा चाव्यवहिते इत्युक्त्याऽजादेरिगाद्यव्यवहितत्वग्रहेण तुल्यवित्तिवेद्यतया तेषामपि स तथैवेति ग्रहेण षष्ठ्यन्तार्थः फलित इति भावः ।

सरला ।

र्वामत्त्वाभावेऽपि भागत्यागलक्षणयाऽनुकरणत्वव्यवहार इत्यर्थः ।

परस्य यदिति। "तस्मादित्युत्तरस्यादेः" इति तु न सूत्रितम्। आदेरित्यं-

## शब्दरत्नम्।

न सूत्रितमिति। "स्वं रूपम्" (पा०सू०१।१।६८) इत्यतः प्रागिति शेषः। तत्र 'आदेः' (पा०सू०१।१।५४) इति पृथग्वाक्यम्। तत्र 'उत्तरस्य' इत्यनुवर्तते। स्थान-षष्ठी चेयम्। पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरसम्बन्धि, उत्तरस्य स्थाने विधीयमानं चादे-र्बोध्यमिति वाक्यार्थद्वयम्। वाक्यभेदसामर्थ्याच्च "आदेः" इत्यंशं विनाऽपि क्वचिदंशा-न्तरप्रवृत्तिः। "आदेः" इत्यंशस्त्वनुवृत्तोत्तरस्येत्यस्यावृत्त्या परत्वबोधकशब्देन यत्र वि-

## भैरवी।

न सूत्रितमितीति। अत्र केचित् "अनेकाल्" इति सूत्रात्प्रागिति शेष इति वदन्ति। तन्न युक्तम्, एवं सति "अनेकाल्" इति सूत्रस्यादेरित्येतदपेक्षया परत्वन्निर्बाधमिति वक्ष्यमाणस्या-देरिति ग्रन्थस्यासङ्गत्यापत्तेरत उत्तरग्रन्थसङ्गमनायाह—स्वं रूपमिति। नन्वेतादृशसूत्रकरणे यत्रादेरित्यस्यानुपस्थितिस्तत्र तस्मादित्यस्याप्यप्रवृत्तिः स्यात्तथा च "गाङ्कुटादिभ्यः" इ-त्यादौ दोष इत्यत आह—तत्रादेरिति। तत्र—एकस्मिन्सूत्रे। पृथगिति—उत्तरस्येति व्यस्तपा-ठात्। अस्यैकपदत्वेऽपि वाक्येतिकथनमुत्तरस्येत्यस्य तत्र सम्बन्धाभिप्रायेण। तत्र आदेरि-त्यंशे। एकसूत्रस्यांशभेदेन व्याख्यानेंऽशान्तरे पूर्वांशानुवृत्तेः "णेरणौ" इति सूत्रे क्लृप्तत्वात्, तथांशभेदेन व्याख्यानेऽनुवृत्तस्यार्थान्तराभिधायकत्वमपि दृष्टमित्याशयेनाह—इयमिति। इयम्—पृथग्भूते आदेरित्यंशेऽनुवर्तमानं यदुत्तरस्येति, तत्र स्थिता। क्वचित् "गाङ्कुटादिभ्यः" इत्यादौ। चः—त्वर्थे। ननु यथा आदेरित्यंशाप्रवृत्तावपि तस्मादित्यस्य क्वचित्प्रवृत्तिस्तथा तस्मादित्यंशं विनाऽप्यादेरित्यस्यापि प्रवृत्त्यापत्तिरिति "नित्यं ङितः" इत्यादौ दोष एवे-त्यत आह—आदेरित्यंशस्त्विति। आवृत्त्येति। अत्र प्रमाणन्तु "पचावेदम्" इत्यादिप्रयोगद-

## भावप्रकाशः।

न सूत्रितमितीति। यत्त्वस्यानेकाल्सूत्रात्पूर्वमिति शेष इति। तन्न, आदेरित्यंशस्येत्युत्तरमूलग्रन्थ-विरोधापत्तेः। तद् ध्वनयन्नाह—स्वं रूपमिति। नन्वेकार्थकैकयोगे नोदःस्थेत्यादौ निर्वाहेऽपि "गाङ्कुटा" इत्यादौ दोषोऽत आह—तत्रेति। एकयोगे इत्यर्थः। पृथगिति। अत एवोत्तरस्येति व्यस्तोक्तिः। नन्वे-वमप्यादेरित्यस्यैकपदत्वेनावाक्यत्वादपार्थक्येन "गाङ्कुटा" इत्यादौ दोषस्तदवस्थ एवात आह—तत्रोत्त-रेति। आदेरित्यंशे इत्यर्थः। एकयोगेऽप्यनुवृत्तेः "णेरणौ" सूत्रे क्लृप्तत्वादिति भावः। ननु पूर्ववाक्ये सा न स्थानषष्ठी आगमादिविधावप्रवृत्त्यापत्तेः। तत्तद्विधिभिरेव सम्बन्धविशेषनिर्णये षष्ठी स्थाने इत्यस्या-प्राप्तेश्च। एवञ्च तथैवानुवृत्त्या "आज्जसेरसुक्" इत्यादौ दोषोऽत आह—स्थानषष्ठी चेयमिति। इष्टा-नुरोधेन शब्दाधिकाराश्रयेण "षष्ठी स्थाने" इत्यतः स्थानपदस्यैकदेशस्य स्वरितत्वबलात् मण्डूकप्लुत्या अनुवर्त्तनेन गुणानामित्यस्यानित्यत्वेन परिभाषोपस्थित्या वा स्थानषष्ठीत्यर्थः। इदमेव ध्वनयितुमनयोः क्रमेण वाक्यार्थं स्पष्टमाह—पञ्चमीत्यादि। यत्कार्यं विधीयमानमित्यादिः। सम्बन्धीति। स च स्था-न्यादेशभावोऽव्यवहितपूर्वापरस्थत्वं चेति भावः। अत्र प्रकरणे चस्त्वर्थे। द्वयमिति। सिद्धान्ते इवेत्यर्थः। अत एवाह—वाक्यभेदेति। तद्बोधकासमस्तन्यासकरणसामर्थ्यादित्यर्थः। क्वचिदंशांतरेति। "गाङ्कुटा" इत्यादौ षष्ठ्यर्थांशविकलतस्मादित्यंशेत्यर्थः। नन्वेवमादेरित्यंशस्यापि तथैव "नित्यं ङितः" इत्यादौ प्रवृत्त्यापत्तिरत आह—आदेरिति। नच—अत्रायमेव दोषः, किञ्चादेरिति वाक्यार्थबोधकाले तस्यो-त्पन्नत्वेन तत्त्यागायोगात्प्रत्यासत्त्या पूर्ववाक्यप्रापितादेशस्यैव ग्रहणसम्भवाच्च तथोक्तिर्व्यर्थेति वाच्यम्, यथान्यासे आवृत्तेरावश्यकतां सूचयितुं तथोक्तेः, भिन्नप्रकरणे गुणयोरनयोः पाठेन तत्त्वाभावेन तथोक्तेर्व-क्तुमशक्यत्वात्। अन्यथा 'पचाव' इत्यादौ शबादिव्यवधाने प्रवृत्तये धातोरित्यस्य विहितविशेषणत्वेऽपि

## सरला।

अंशान्तरप्रवृत्तिरिति। "अष्टाभ्य औश्" इत्यादावित्यर्थः। अतिदेशविधायकेषु आगमविधाय-

शस्य सर्वादेशबाधकत्वापत्तेः । सिद्धान्ते तु परत्वात्सर्वादेशत्वं बाधकमित्यनुपद-
मेव वक्ष्यति ॥

---

## शब्दरत्नम् ।

धानं तत्रैवेति "नित्यं ङितः" (पा०सू०३।४।९९) इत्यादौ न प्रवर्त्तत इति भावः । व-
क्ष्यतीति । न च "अनेकाल्" (पा०सू०१।१।५५) इत्यतः पूर्वमेव "तस्मिन्निति निर्दिष्टे
पूर्वस्य" (पा०सू०१।१।६६) "तस्मादित्युत्तरस्यादेः" इति सूत्रे कुतो न पठिते इति
वाच्यम् । "आदेः" इत्यंशे "षष्ठी स्थाने–" इत्यस्यासम्बन्धे "आज्जसेरसुक्" (पा०सू०

## भैरवी ।

र्शनम् । ननु—"आदेः परस्य" इति न क्रियते, तस्मादित्यनेन सहादेरिति पठ्यते लाघवा-
भिप्रायेण, तच्च लाघवमधुना नोपपद्यते, वाक्यभेदस्यावृत्तेश्च करणात्, उत्तरस्येत्यत्र शब्दाधि-
काराश्रयणाच्च, परस्येत्यस्यानुपादानेऽपि मनोव्यापारगौरवस्याधुना सत्त्वाच्च—इति चेत् ?
न, सिद्धान्तेऽप्यादेरित्यस्य "नित्यं ङितः" इत्यत्र दोषवारणायावृत्तेः सत्त्वात् । एतदेव
ध्वनयितुमधुनोत्तरस्येत्यस्यावृत्तिम्प्रदर्श्योत्तरत्वबोधकशब्देनेत्यनुपादाय परत्वबोधकेत्युक्तम् ।
तत्रैवेति । प्रवर्त्तते इति शेषः । ननु मूलोक्तदोषोऽपि स्थानभेदेन सूत्रपाठाद्वारयितुं शक्य इत्या-
शयेन शङ्कां प्रदर्शयन्निराचष्टे—नचेत्यादिना । नचैवं न्यासेऽप्युक्तरीत्या वाक्यभेदाद्यावश्यक-
मेवेति 'सूत्रे' इति द्विवचनोपादानमसङ्गतमिति वाच्यम्, द्वितीयस्य सूत्रस्यादौ पाठे एकत्व-
मेवेत्याशयेन द्विवचनोपादानात् । 'षष्ठी स्थाने' इत्यस्य सम्बन्धासम्बन्धेन समाधत्ते—आदे-

## भावप्रकाशः।

वस्तुतः परस्य विधानसत्त्वेन वादेर्लोपापत्तिः । धातुसम्बन्धावश्यकत्वं तु स्फुटीभविष्यतीति भावस्तदाह—
परस्येति । अन्यथोत्तरस्येत्युक्तं स्यादिति भावः । विधानं परस्य स्थाने इत्यादिः । तत्रेति । अग्रे
प्रवर्त्तते इत्यनुषङ्गः, एतेन प्रागुक्तपूर्वत्वव्यवच्छेदः । निर्दिष्टपदानुवृत्त्यर्थमाह—तस्मिन्निति । उक्त-
रीत्या वाक्यभेदेऽपि सूत्रस्यैकत्वात्सूत्रे इति द्विवचननिर्देशः । कुतो नेति । मूलोक्तविपरीतबाध्यबाधक-
भावाभावात् । "स्वंरूपम्" "अणुदित्" "तपर" इत्येतेषु तदसम्बन्ध एवेष्ट इति भावः ।

यत्तु दण्ड्यादयः, एवं पाठे "तस्मात्" इत्यस्यापि "अनेकाल्" इत्यनेन बाधापत्तौ वाक्यसंस्कारपक्षे
'ब्राह्मण अस् अष्टन् अस्' इत्यत्र "अष्टाभ्यः" इति दिग्योगपञ्चम्या व्यासिन्यायेनोभयोरध्याहारेऽष्ट-
नोऽव्यवहितपूर्वयोरपि जश्शसोरौशापत्तिः । ततश्च तद्बाधार्थं निर्दिष्टपदानुवृत्त्यर्थं च "स्वं रूपम्" इत्यतः प्राक्
तथा पाठे मनोरमोक्तविपरीतबाध्यबाधकभावापत्तिरिति न सूत्रितमिति मनोरमातात्पर्यम् । यद्वा "स्वं रूपम्"
इत्यतः प्राक् यथाश्रुतसूत्रपाठनिराकरणपरोत्तरग्रन्थानुरोधेनैवं पाठे दोष एव न, उक्तरीत्या निर्दिष्टपदानु-
वृत्तेः सौलभ्यात् । वाक्यभेदसामर्थ्यादादेरित्यंशस्यैव "अनन्तरस्य" इति न्यायेन बाधेन तद्बाधाच्च ।
किञ्च जस्शस्भ्यामाक्षिप्तप्रकृतेरष्टनस्य च सन्निधानादष्टन्रूपस्यैव ग्रहणेन क्षत्यभावात् । एवञ्च पञ्चमी-
निर्दिष्टात्प्रत्ययसम्बन्धिकार्ये तस्मादित्यस्याप्रवृत्तिरित्याहुः, तन्नेति ध्वनयितुं "षष्ठीस्थाने" इत्यधिकारं
विकल्प्य खण्डयति–आदेरित्यादिना । षष्ठीस्थाने इत्येति । तत्रत्यस्य स्थाने इत्यस्येत्यर्थः, तत्र
स्वरितत्वप्रतिज्ञायाः फलसत्वात् । "स्थानेन्तर" इति सूत्रस्थतत्पदाम्नमाय षष्ठीत्युक्तम् । अत एव षष्ठ्य-
धिकारे वचनादिति भाष्यं सङ्गच्छते । तस्याः परिभाषात्वेऽपि "प्रत्ययः" इत्यादिवत्समुदायैकदेशभेदेन
वा तत्रस्यापि सुवचत्वात् । एतेनानन्तरस्थानेन्तरेतिसूत्रत्यागे न मानमित्यपास्तमिति भावः । असम्बन्धे-
ति । त्वया स्वीक्रियमाणे इति शेषः । तथाचोत्तरस्येति न स्थानषष्ठीति भावः । आज्जसेरिति । अवर्णा-

## सरला॥

केषु चेत्यर्थ इति केचित् । प्रवर्तत इति । तत्र धातोरिति विहितपञ्चम्याश्रयणादिति भावः । अनेका-
ल्त्वाक्षतेरिति । वस्तुतस्तु नानुबन्धकृतमसारूप्यमित्यत्र कप्रत्ययाण्प्रत्यययोरसारूप्यप्रयुक्तविकल्पवार-

## शब्दरत्नम् ।

७।१।५०) इत्यादावपि तस्य प्रवृत्त्यापत्तेः । सम्बन्धे मध्ये "तस्मिन्निति-" "तस्मादिति"-अनयोरपि तत्सम्बन्धे तयोरन्यागमविषयेऽप्रवृत्त्यापत्तेरिति दिक् ॥

## भैरवी ।

रित्यंश इति। तस्य—आदेरित्यंशस्य । प्रवृत्त्यापत्तेरिति । तथा चादेर्जसवयवाकारस्यासुगागम आगमे ऽकारोच्चारणसामर्थ्याद् "अतो गुणे" इति पररूपाभावे सकारोच्चारणसामर्थ्यात्संयोगान्तलोपाभावे ऽनिष्टरूपापत्तिः स्पष्टैव । सम्बन्धे इति । 'षष्ठी स्थाने' इत्यस्य सम्बन्धे इत्यर्थः । अत्र निर्दिष्टस्येत्यस्याध्याहारेण स्थानषष्ठीनिर्दिष्टस्य यत्कार्यं तत्तस्यादेरित्यर्थेन "आज्जसेरसुक्" इत्यत्र नोक्तदोषः, तत्रासुकः कित्त्वेन जसेरिति षष्ठ्या अवयवार्थकत्वनिर्णयात् । मध्य इति । पठितयोरिति शेषः । तयोर्मध्ये पठितयोः । आगमविषय इति । "आने मुक्" "छे च" इत्येतद्विहितागमविषय इत्यर्थः । एवं सति विपरीतरूपापत्तिर्दुर्वारैवेति स्पष्टमेव । एतादृशन्यासपक्षे आदेरित्यस्य यत्र स्थानषष्ठीनिर्दिष्टादेशस्य तस्मादित्यनेन नियमस्तत्रैव प्रवृत्तिः स्यात् । एवञ्च "ज्यादादीयसः" इत्यत्र ज्यादिति पञ्चम्याः परस्येत्यस्याध्याहारेणोपपत्त्या तत्रनियमाप्रवृत्तेस्तस्मादित्यस्य तत्राप्रवृत्तावादेरित्यस्याप्यप्रवृत्त्यापत्तावलोन्त्यस्य प्रवृत्तावनिष्टापत्तिरित्यपि बोध्यम् । सिद्धान्ते तु परस्येत्यस्याध्याहारेऽपि परत्वविशिष्टबोधकशब्देन परस्यादेशविधानमस्त्येवेत्यादेरित्यस्य प्रवृत्त्या न दोषो ऽत एवाह—दिगिति ॥

## भावप्रकाशः ।

न्तादङ्गात्परस्य जसेरसुगित्यर्थकेऽपि तत्रादेरित्यंशप्रवृत्त्याऽन्त्यसकारात्पूर्वमसुगागमापत्तेरित्यर्थः । नन्वेवं सूत्रं व्यर्थम्, पररूपे पूर्वसवर्णदीर्घे संयोगादिलोपे च 'ब्राह्मणासः' इत्यसिद्धेः । न च तत एव अकारः श्रूयत एवेति वाच्यम्,। "गुणे त्वन्याय्यकल्पना" इति न्यायेन पररूपबाधापेक्षया आदेरिति वाचस्यैवौचित्यादत आह—आदाविति । तेन "क्त्वो यक्" इत्यादिपरिग्रहः । तत्राङ्गेन क्त्वाप्रत्ययेन च धातोराक्षेपः । अङ्गाद्धातोः परस्य क्त्वो यगित्यर्थः । 'पीत्वाय' इत्युदाहरणम् । अत्रोक्तरीत्या तावदग्रे यकि 'पीत्यवा' इति स्यादिति भावः । सम्बन्धे इति । परिभाषानुपस्थित्या गुणानामित्यस्याविषयः। तथाच "अनेकाल्" इत्यन्ते तत्सम्बन्धेनात्रापि सम्बन्धे मध्यपठितद्वयत्यागे न मानमितिभावस्तदाह—मध्ये इति । पठितयोरिति शेषः । आगमेति । "छे च" "आने मुक्" "ङः सि" इत्यादावप्रवृत्त्या पूर्वपरयोरापत्तेरित्यर्थः । किञ्च सर्वपक्षे प्रागुक्तरीत्या तादृशादेशस्यैवादेरित्यत्र ग्रहणेन "ज्यादादीयसः" "ईदासः" इत्यादावङ्गाधिकारात्तस्य च प्रत्यासत्त्या ज्यादिरूपस्येयसुन्निमित्तकस्यैव च ग्रहणात्तस्मादितिशास्त्रप्रवृत्तिं विनापि परशब्दाध्याहारे एव नियमेन प्राप्तेऽनियमाभावेन तत्कारिण्यास्तस्मादित्यस्या अप्रवृत्त्या आदेरित्यस्याप्यप्राप्त्या "अलोऽन्त्यस्य" इत्यनेनान्त्यस्याकाराद्यापत्तौ ज्यायानित्याद्यसिद्ध्यापत्तेः । एतेनोक्तरीत्यैव "आज्जसेरसुक्" इत्यत्रेष्टसिद्धिरिति नाद्यपक्षे दोष इत्यपास्तम् । "क्त्वो यक्" इत्यादौ दोषाच्च । यथान्यासे निर्वाहस्तूक्त एव; तदाह—दिगिति ।

## सरला ।

णाद्यानुबन्धपदस्येत्संज्ञायोग्यार्थकत्वस्वीकारेण नानुबन्धकृतमनेकाल्त्वमित्यत्रापि अनुबन्धपदस्य "अन्याय्यश्चानेकार्थत्वम्" इतिन्यायेन तदर्थकत्वस्वीकारावश्यकतया तया परिभाषयाऽनेकाल्त्वनिषेधात् वृत्तिकृतोक्तं "जश्शसोः शिः" इत्युदाहरणमपि सम्यगेव । सूत्रे शित्पदमपि इत्सञ्ज्ञायोग्यशकारवत्परमेव । डाणलोरिवानुपूर्व्यात् इति तु डाआ ण अ इति आकार--अकारोत्तरमाकार—अकारयोः प्रश्लेषेणानुपूर्व्यादित्यर्थपरमिति न तद्विरोध इति दिक् ।

"अनेकाल्" (पा०सू०१।१।२५)॥ शित उदाहरणम् "इदम इश्" इतः । यत्तु वृत्तिकृता "जश्शसोः शिः" (पा०सू०७।१।२०) इत्युदाहृतम् । तन्न, सर्वादेशतायाः प्राक् शित्त्वस्यैवालाभात् । तत्र हि डाणलोरिवानुपूर्व्यादनेकाल्त्वेनैव सर्वादेशत्वमिति सिद्धान्तः । इत्यादाविति । आदिशब्देन "अतो भिस ऐस्" (पा०सू०७।१।९) इति गृह्यते । परत्वादिनि । अत एव "आदेः परस्य" (पा०सू०१।१।५४) इति

---

शब्दरत्नम् ।

डाणलोरिवेति । आदेशानां प्रत्ययाधिकारे पाठेऽपि वाक्यार्थबोधोत्तरमेव प्रत्ययत्वज्ञानेनोपदेशे णकारे इत्त्वाप्रवृत्तेस्तदुत्तरं लक्ष्ये प्रवृत्तिकाले इत्त्वेऽप्यनेकाल्त्वाक्षतेरिति

भैरवी ।

ननु डाणलोरिवेति दृष्टान्तोपादानं प्रकृते विरुद्धं, तयोः प्रत्ययाधिकारे पाठेन प्रत्ययतया आनुपूर्व्यनुपयोगादत आह—आदेशानामिति । आदेशानामिति बहुवचनं चल्यादेशसंग्रहाय । वाक्यार्थबोधोत्तरम्—"षष्ठी स्थाने" इति शास्त्रैकवाक्यतया वाक्यार्थबोधोत्तरम् । एतेन तत्र वाक्ये प्रत्यय इत्यस्य सम्बन्धाभावेऽपि क्षत्यभावो ध्वनितः । उपदेशे—पाणिनिकर्तृकोच्चारणे । प्रवृत्तिकाले इति । 'बभूव' इत्यादिलक्ष्यसंस्कारकाले यो वाक्यार्थबोधस्तस्योत्पत्तिकाले इत्यर्थः । एतच्च दीक्षिताभिप्रायवर्णनमेव । वस्तुतस्तु प्राचोक्तं "जश्शसोः शिः" इत्युदाहरणमपि युक्तमेव, शकारस्यानुबन्धत्वयोग्यतया "नानुबन्धकृतमनेकाल्त्वम्" इति परिभाषाविषयत्वसत्त्वात् । शित्त्वञ्चेत्संज्ञायोग्यशकारवत्त्वमेव । इत्सञ्ज्ञायाः प्रवृत्तिर्यद्यप्यादेशोत्तरम्भवति, तथापि योग्यताऽस्त्येव । अनुबन्धत्वमपीत्संज्ञायोग्यत्वमेव । अत एव काणोर्नांसारूप्यप्रयुक्तो विकल्पः । अन्यथा तत्रापि वाक्यार्थबोधोत्तरं प्रत्ययत्वज्ञानेनेत्सं-

भावप्रकाशः ।

ननु णलः प्रत्ययाधिकारपाठेन तत्र मूलकृदिष्टानुपूर्व्यनुपयोगेन दृष्टान्तासङ्गतिरत आह—आदेशेति । प्रत्ययादेशानां सिजादीनामित्यर्थः । आगमविकारप्रकृत्यादेशानां तु तत्त्वेपि यथा सा न, तथान्यत्र स्पष्टम् । अतः किमु वक्तव्यं तद्वाह्यडादीनां तथेत्यपिशब्दार्थः ।

मान्यास्तु तत्त्वेऽपि षष्ठीबलाद् देशांशे नैराकाङ्क्ष्यात् "परश्च" इत्यस्यानुपस्थितया तत्सहचरितस्य "प्रत्ययः" इत्यस्याप्यनुपस्थितेस्तदुपयोग इत्याहुस्तत्प्राचामनुरोधेन; श्नमादौ दोषापत्तेः । इत्संज्ञार्थं तस्यावश्यकत्वात् ज्ञापकाश्रयणे गौरवाच्च । तद् ध्वनयन्नाह—वाक्यार्थेति । भिन्नस्य विशिष्टस्य वा वाक्यार्थस्येत्यर्थः । एवेन तत्पूर्वत्वव्यवच्छेदः । ज्ञानेन अविवेयकज्ञानेनेत्यर्थः । शाब्देनार्थिकेन वेति भावः । उपदेश इति । अज्ञातानुबन्धरहितणलादिस्वरूपज्ञापकपाणिन्याद्युच्चारणाभिव्यक्त्यव्यवहितकाले तादृशवाक्यार्थबोधसमये इत्यर्थः । यथा चैतत्तथा स्पष्टमन्यत्र । अनेकाल्त्वाक्षतौ हेतुरयम् । तदुत्तरम् प्रत्ययत्वज्ञानोत्तरम् । अस्येत्वेपीत्यत्रान्वयः । अपिना लोपसङ्ग्रहः । "चुटू" इत्यादीनां तदानीं प्राप्त्येति भावः । एवञ्च तत एकाल्त्वेऽपि न दोषः, उपजीव्यविरोधापत्तेरिति तात्पर्यम् । लक्ष्ये प्रवृत्तिकाले इति । 'बभूव' इत्यादौ तादृशवाक्यार्थबोधाधाररूपतत्प्रवृत्तिप्राक्काल इत्यर्थः । अस्यानेकाल्त्वाक्षतेरित्यत्रान्वयः ।

सरला ।

परान्नित्यमिति । पूर्वापेक्षया परशास्त्रं विप्रतिषेधसूत्राद्बलवत् । नित्यस्य परापेक्षया बलवत्त्वे च अक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनं युक्तमिति बीजम् । समानकालिकप्राप्तबहिरङ्गापेक्षया अन्तरङ्गस्य बलवत्त्वे च लोकन्यायो बीजम् । तथाहि प्रत्यङ्गवर्ती लोको दृश्यते मनुष्योऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति ततः सुहृदां, ततः सम्बन्धिनामिति । तथैव शास्त्रेऽपि अन्तर्भूतनिमित्तकशास्त्रस्य प्रत्यासन्नतरत्वेन प्रथमं प्रवृत्तिस्ततो बहिर्भूतनिमित्तकशास्त्रस्य प्रवृत्तिरिति । तत्र बहिरङ्गं परं नित्यं वा उभयमपि विवक्षितम् । परादबहिरङ्गादन्तरङ्गस्योदाहरणं 'उभये देवमनुष्याः' इति । नित्यादन्तरङ्गस्योदाहरणन्तु 'ग्रामणिनी' इति । अत्र नित्यमपि नुमं बाधित्वा अन्तरङ्गत्वाद्ध्रस्वः । प्रत्याहाराश्रयणेनेति ।

पृथक् क्रियते इत्युक्तम्। "उत्तरस्य" इत्यंशस्तु औशैसोरपि प्रवर्तत एव। यत्तु प्राचा "आदेः" इति सूत्रं विवृण्वता पञ्चमीनिर्देशेनेत्याद्युक्तं, तदसम्बद्धमिति स्पष्टमेव।

परनित्येति। परान्नित्यं यथा—तुदति, रुणद्धि। परमपि लघूपधगुणं बाधित्वा शश्नमौ। तथा रन्धेर्णिच् रन्धयति। परामप्युपधावृद्धिं बाधित्वा "रधिजभोः-" (पा० सू० ७।१।६१) इति नुम्। न च सोऽपि शब्दान्तरप्राप्त्याऽनित्य इति वाच्यम्, कृताकृतप्रसङ्गमात्रेणापि क्वचिन्नित्यताभ्युपगमात्। अन्तरङ्ग

## शब्दरत्नम्।

भावः। प्रवर्तत एवेति। उपपादितमेतत्।

शब्दान्तरप्राप्त्येति। यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव पुनःप्रवृत्तौ कृताकृतप्रसङ्गित्वं प्रसिद्धमिति भावः। कृताकृतेति। व्यक्तिविशेषानाश्रयणेनेत्यर्थः। "वृद्ध्यौत्ववतृज्वद्भाव" इत्यस्य त्वत्र न प्राप्तिः, साहचर्येण विभक्तिनिमित्तानामेव

## भैरवी।

ज्ञाप्रवृत्तावप्युपदेशेऽसारूप्यमस्त्येवेति। उपपादितमिति। न सूत्रितमित्येतद्व्याख्यानावसर इति शेषः॥

मूले शब्दान्तरप्राप्त्येति कथनं सर्वस्य शब्दान्तरस्य शब्दान्तराच्छब्दान्तरे वा प्राप्त्येत्यर्थकम्, सम्बन्धसामान्यार्थकषष्ठ्या समासः, अत एवाह—यद्व्यक्तीति। अनाश्रयणेनेति। अक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्याभावकल्पनायां लाघवमिति लाघवमेव नित्यस्यानित्याद्बलवत्त्वे साधकम्। तच्च लक्ष्यानुरोधेन क्वचिद्व्यक्तिविशेषचिन्तयाऽऽश्रीयते, क्वचित्सामान्यतः प्राप्तिमात्रेणेति भावः। ननु व्यक्तिविशेषचिन्तायामप्यत्र न बाधकं, वार्तिकेन निर्वाहादित्याशङ्कां निराकरोति—"वृद्ध्यौत्व" इत्यादिना। अत्र—रन्धयतीति

## भावप्रकाशः।

इदमपि मूलाशयवर्णनमात्रम्। तदाह—इति भाव इति। सिद्धान्तस्त्वन्यत्र द्रष्टव्य इति भावः। उपपादितमिति। न सूत्रितमितिप्रतीके तत्रादेरित्यादिग्रन्थेनेति भावः।

भाष्योक्तवचनत्रयसङ्ग्रहाय सम्बन्धसामान्यषष्ठ्या समासेनाह मूले—शब्दान्तरेति। एवं चसोपीत्यपिना 'तुदति' इतिसमुच्चयः। यद्व्यक्तीति। प्रवृत्तिः शास्त्रस्य कार्यस्य वेति शेषः। सा च तस्यास्ततः परस्यास्तत्र परतो वेति भावः। कृतं "यदागमा" इत्यादिवदैक्यबोधकस्यासत्त्वात्। एवञ्च यद्व्यक्तीत्यादौ तदन्यैव व्यक्तिर्गृह्यते। अत एव तत्समुच्चायकोऽपिर्मूले। अत एव 'तुदति' इत्यादौ निर्वाहः "शदेः शित" इत्यत्रत्यभाष्यसङ्गतिश्च। एवञ्च यथाश्रुते विरोधं मात्रपदानर्थक्यं च परिहरति—व्यक्तिविशेषेति। प्रसिद्धमितीति। सन्ध्यावन्दनादौ व्यवन्ते इत्यादौ गुणान्नित्यैकादेशके चेति शेषः, विकारानुपूर्व्या भिन्नेइति भावः। कृते द्वितीये नित्यत्वेनाभिमतस्य प्रसङ्गमात्रं तद्व्यवहारे प्रयोजकं, न तु तथेति पर्यवसितमनुगतं परिभाषारूपमिति भावः। इदमपि न सर्वत्रेत्याह मूले—क्वचिदिति। 'तुदति' इत्यादावित्यर्थः। अक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनमुचितमिति नित्यस्य बलवत्त्वे बीजमिति भावः। ननु मास्त्वत्रैवं नित्यत्वम्, पूर्वविप्रतिषेधेनेष्टसिद्धेः। तथा च कथं 'रन्धयति' इति नित्योदाहरणमत आह—वृद्ध्यौत्वेति। अत्र 'रन्धयति' इत्यादौ। साहचर्येण औत्वादिभिर्मिथः साहच-

## सरला।

"प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति मात्रशब्दादारभ्य "द्वित्रिभ्यां तयस्यायज्वा" इति सूत्रस्थायचश्चकारपर्यन्तमित्यर्थः। "किमः संख्यापरिमाणे डति च" इति डतिप्रत्ययस्य तदन्तर्भूतत्वेऽपि तदन्तात्कति-

यथा—उभये देवमनुष्याः । इह "प्रथमचरम" (पा० सू० १।१।३३) इति परमपि विकल्पं बाधित्वा "सर्वादीनि" (पा० सू० १।१।२७) इति सर्वनामसञ्ज्ञा विभ-

शब्दरत्नम् ।

वृद्ध्यादीनां तत्र ग्रहणात् । नित्यत्वेनैव सिद्धे वाचनिकपूर्वविप्रतिषेधाश्रयणे फलाभावाच्चेति दिक् ।

भैरवी ।

लक्ष्यसाधनावसरे । तृज्वद्भावपदं तत्र वार्तिके "स्त्रियाञ्च" इत्येतद्व्यतिरिक्तपरम्, तेन न तदंशे साहचर्यभङ्गः । ननु साहचर्यस्यानित्यत्वेन वार्तिकेन रन्धयतीत्यस्य सिद्धावत्र नित्यत्वाश्रयणवैयर्थ्यमत आह—नित्यत्वेनैवेति । दिगिति । दिगर्थस्तु विप्रतिषेधसूत्रस्थपरशब्दस्ये-

भावप्रकाशः ।

र्थेण । तेन नादिशब्दवैयर्थ्यम् । निमित्तत्वं च स्थानितया परतया वा बोध्यम् । तत्र वार्तिके अस्त्रीत्वहेतुक एव तृज्वद्भावो गृह्यते, तत्र नुमोऽप्राप्तेः । तेन न साहचर्यभङ्ग इति बोध्यम् । ननु साहचर्यानित्यत्वादत्र तेनैव निर्वाहः, किञ्च वृद्धेः क्रोष्ट्रौत्वादिवत् तन्निमित्तकत्वाभावेनैतद्विषयाभावापत्त्या तदाश्रयणस्याशक्यत्वादत आह—नित्यत्वेनेति । उक्तरीत्येति भावः । वार्त्तिककृदुक्तत्वाद्वाचनिकत्वम् । आश्रयणे रन्धयतीत्यादौ ।

दिगिति । क्वचिदिष्टानुरोधेन पूर्वशास्त्रे स्वरितत्वप्रतिज्ञया स्वरितेनाधिकं कार्यमित्यर्थाङ्गीकारेण परशब्दस्येष्टवाचितया वा सकलनिर्वाहेण पूर्वेण तेनैव प्रकृतेऽनित्यत्वेऽपीष्टसिद्धिरिति न तदस्योदाहरणम्, किन्तु 'तुदति' इत्याद्येवेति, तदपीत्याद्यग्रिममूलकृदुक्तिस्वारस्यात् । अत एव च वक्ष्यति तत्रैव टीकाकृत्—पूर्वा त्विति । युक्तं चैतत्, अन्यथा तस्य 'नाजानन्तर्ये' इति निषिद्धतया अयजे इन्द्रमित्याद्यसिद्ध्यापत्तेः । न चेयं विप्रतिषेधसूत्रभाष्ये प्रत्याख्यातेति वाच्यम्, लोकन्यायसिद्धायाः प्रत्याख्यातुमशक्यत्वात्, 'नाजानन्तर्ये' इति न्यायबोधकभाष्यविरोधेन तद्भाष्यस्यैकदेश्युक्तित्वाच्च । अत्र ज्ञापकमपि 'ओमाङोश्च' इत्याङ्ग्रहणम् । तद्धि 'खट्वा आ ऊढः' इत्यादौ परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वाद् गुणे कृते वृद्धिप्राप्तौ पररूपं यथा स्यादिति क्रियते इति स्पष्टं "सम्प्रसारणाच्च" इति सूत्रभाष्ये । इयं सिच्चि परतो नेति स्पष्टम् "इको गुण" इत्यत्र भाष्ये । शीघ्रोपस्थितिश्चात्र बलवत्त्वे बीजम् । अत एव भाष्ये तत्र तत्रोल्लेखः । एवञ्च तयोर्युगपत्प्राप्तावेवास्याः प्रवृत्तिरिति मूलकृत्सरणिः । नन्वेवमपि प्रकृते युगपत्प्राप्त्यभावात्कथमेतत्प्राप्तिः । तथाहि, किं कार्यकाले इदमुच्यते यथोद्देशे वा ? नाद्यः, "सर्वादीनि" इत्यस्यापि "जसःशी" इत्येकवाक्यतया विभक्तिसापेक्षत्वेनातत्त्वात् । नान्त्यः, तदा हि विभक्त्युत्पत्तेः प्रागेव भविष्यति । किञ्चिदनया कार्यमित्यभिसन्धिमात्रेण तत्प्रवृत्तौ ततो विभक्त्युत्पत्तौ विकल्पप्राप्तेः । न च तत्र "जसःशी" इति विषयसप्तमीति वाच्यम्, आकडारीयान्यसंज्ञानामबाध्यबाधकभावेन नित्यसर्वनामप्रातिपदिकसंज्ञयोर्युगपत्प्रवृत्त्युत्तरमेव जस्विषयत्वेन तावताऽप्यनिर्वाहात्, परिभाषाबाधे मानाभावाच्चेति चेत् ?

अत्र केचित्तदनुयायिनः, पूर्वप्रवृत्तमप्यन्तरङ्गं पश्चात्प्रवर्तमानबहिरङ्गाद्बलीयः, तस्य निवर्तकमित्यपि परिभाषार्थः । एवञ्चान्तरङ्गशास्त्रप्रवृत्त्युत्तरं बहिरङ्गशास्त्रप्राप्तावपीयं प्रवर्त्तत इति यथोद्देशाभिप्रायकोऽयं ग्रन्थ इति तदाकूतमाहुः ।

अन्ये तु पदावधिकेऽन्वाख्याने 'उभय जस्' इत्यत्र तयोस्तस्याः पक्षद्वयेऽपि सत्त्वेन परिभाषाप्रवृत्त्या तथाऽर्थकल्पने मानाभावः, मूलशैथिल्यात् । तथाहि, कार्यकाले "जसःशी" इत्यादौ द्वयोरुपस्थितावपि पदार्थज्ञानार्थं प्राक्संज्ञाशास्त्रबोधस्ततो विधिशास्त्रस्येति वाक्यैकवाक्यतयाऽन्वयेऽपि नित्ये तस्मिन्तदभावादन्तरङ्गत्वं, विकल्पे तु 'जसि' इति साक्षाच्छ्रुतत्वाद्बहिरङ्गत्वमिति न तत्पक्षोक्तदोषावकाशः । द्वितीयेऽपि तयोस्तस्याः स्पष्टत्वेन न तत्पक्षोक्तः स इत्याहुः ।

तदेतदपरे न क्षमन्ते, तथाहि, तत्र केचिन्मते दोष उक्त एव, वक्ष्यतेऽपि पदावधिकेऽन्वाख्याने निर्वाहेऽपि पक्षान्तरेऽनिर्वाह इति दोषः । द्वितीये स्थानिवदतिदेशप्रापितायाः निरवकाशत्वम् । अपि च प्रत्यक्ष स्थानिवद्भावस्यानुमानिक्याऽनया बाधायोगः । एवञ्चास्यातिरिक्तत्वेपि नायं विषयः ।

क्तिनिरपेक्षत्वेनान्तरङ्गत्वात् । अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण

शब्दरत्नम् ।

अन्तरङ्गत्वादिति । भाष्ये त्वयच् प्रत्ययान्तरं न तु तयबादेशः, 'उभयी' इत्यत्र ङीप्तु मात्रजिति प्रत्याहाराश्रयणेन साधितः । एवं चोभयशब्दे विकल्पस्य प्राप्तिरेव नेति उक्तम् । अन्तरङ्गस्य बलवत्त्वे ज्ञापकमन्यत्र प्रपञ्चितम् ।

भैरवी ।

इवाचकत्वमाश्रित्य सर्वेषां पूर्वविप्रतिषेधसाधकवचनानां संग्रह इति यदि, तदा "स्वरितेनाधिकारः" इत्यस्य स्वरित्वयुक्तेनाधिकक्कार्यमित्यर्थाश्रयणेन नुमागमस्य व्यक्तिविशेषचिन्तयाऽनित्यत्वेऽपि स्वरितत्वेनैव प्रवृत्तिर्भविष्यतीति न नित्यस्य बलवत्त्वोदाहरणं तत्, किन्तु तुदतीत्येवेति । मौलम्—'अन्तरङ्गत्वात्' इति तु "तयपः स्थाने ऽयजादेश" इति मतेनान्तरङ्गबहिरङ्गयोरन्तरङ्गम्बलीय इति परिभाषान्तरमिति पक्षे च बोध्यम् । वस्तुतस्तु भाष्यकारीयसिद्धान्तरीत्या न तस्य प्राप्तिरित्याशयेनाह—भाष्ये त्वयजिति । ज्ञापकमिति । युगपत्प्राप्तिविषयकस्यान्तरङ्गबहिरङ्गयोरन्तरङ्गम्बलीय इति वचनस्य बोधकमित्यर्थः । प्रपञ्चितमिति ।

भावप्रकाशः ।

वस्तुतस्तु नातिरिक्तोऽयं गौरवात् । यद्यपि तस्या न्यायमूलकत्वम् "अचः परस्मिन्" इत्यत्र भाष्ये उक्तं, तथापि तेन न्यायेन युगपत्प्राप्तिविषयतैव स्यात् । ज्ञापकेन तु सर्वविषयता बोध्यत इति "वाह ऊठ्" सूत्रे कैयटोक्त्या तस्या अन्तरङ्गे कर्तव्ये जातं तत्कालप्राप्तिकं च बहिरङ्गमसिद्धमित्यर्थाङ्गीकारेणेष्टसिद्धेश्च । तामाश्रित्य विप्रतिषेधसूत्रे भाष्येऽस्याःप्रत्याख्यानाच्च । "नाजानन्तर्य" इत्यस्य धर्मिग्राहकमानेन "ओमाङोश्च" इत्याङ्ग्रहणेन बहिरङ्गकार्यप्रवृत्तेः प्राग्यत्रान्तरङ्गकार्यप्रवृत्त्ययोग्यता तत्रैव प्रवृत्तिरिति 'अद्यजे इन्द्रम्' इत्यादावदोषाच्च । अतएव तन्न्यायबोधकभाष्यविरोधोऽपि न तेन भाष्येण । तत्रैव प्रवृत्त्युक्तेस्तस्या-नित्यत्वस्यैव वा ज्ञापनादिति बोध्यम् । नचैवमसिद्धपरिभाषाप्रवृत्तिरेव देहलीदीपकन्यायेन मूलाभिमता, निषेधसत्त्वेन प्रागुक्तदोषापत्तेः । किञ्चोठ्ग्रहणाज्ज्ञापकादन्तरङ्गे कर्तव्ये जातबहिरङ्गस्यासिद्धत्वेऽपि तत्प्रवृत्त्युत्तरं बहिरङ्गप्रवृत्तेस्तया वारयितुमशक्यत्वाद् नित्योत्तरमपि विकल्पप्रवृत्त्या पूर्वादिष्विव पक्षे तदभावविशिष्टे साधुत्वबोधनस्य शक्यत्वात् । जसीति विषयसप्तमीपक्षेऽप्यनिर्वाहः प्रागुक्त एवेति । परिभाषार्थस्तु इत्थं तत्राङ्गपदेन शब्दरूपनिमित्तस्यैव ग्रहणेनाक्षरमर्यादया परस्परापेक्षया व्याप्यनिमित्तकमन्तरङ्गम्, व्यापकनिमित्तकं बहिरङ्गम्, अल्पनिमित्तकं बहुनिमित्तकं चेति यावदित्युत्सर्गः । तत्राद्यस्य बलवत्त्वे बीजं तत्र तस्यासिद्धत्वम् । तद्बोधिका परिभाषा । अन्तरङ्गशास्त्रत्वमस्या लिङ्गम् । क्वचित्पूर्वोपस्थितनिमित्तकत्वरूपान्तःकार्यत्वरूपमन्तरङ्गम्, तद्विरुद्धं बहिरङ्गमित्यादि स्पष्टं परिभाषेन्दुशेखरे । एवञ्च युगपत्प्राप्तौ तस्याः प्रवृत्तावप्यत्र प्रागुक्तरीत्या तदविषय एव । अत एव "तयादेशे उभयप्रतिषेधः । तयपो ग्रहणात् जसिविभाषा प्राप्नोति" इति स्थानिवत्सूत्रस्थं वार्त्तिकमयच्प्रत्ययान्तरमितिसूत्राशयप्रदर्शनेन भगवता प्रत्याख्यातम्, नत्वन्तरङ्गन्यायबलेन; तदेतद् ध्वनयन्नाह—भाष्ये त्विति । उक्तमित्यत्रान्वयः । तेन वारणे भाष्यादीनां निर्दलत्वापत्तिर्भवन्मते । "प्रमाणे" इति सूत्रस्थमात्रशब्दस्याय चश्चकारेणेति शेषः । अत इत्यनुवृत्त्या च 'कति' इत्यादौ नातिप्रसङ्गः । यत्तु यत्तदेतत्किमादिभ्यो ङीबापत्तिरिति । तन्न, साहचर्येण प्रत्ययानामेव तत्र ग्रहणात् । तयब्ग्रहणं तु सूत्रेऽवयुत्यानुवादः । द्वित्रिशब्दप्रकृतिकायजन्तस्य जसः शीविषये पुंस्येव वाऽनभिधानम् । नचैवं महिङो ङस्येव चस्य समुदायानुबन्धत्वेनावयवाननुबन्धत्वात्कथञ्चित्कार्यमिति वाच्यम्, "तस्थस्थमिपान्तान्तम्" इत्यादितज्ज्ञापकस्य विशेषापेक्षत्वेऽपि तत्र तथाङ्गीकारे मानाभावादिति भावः । फलितमाह—एवञ्चोभेति । अन्यथेष्टसिद्ध्या प्रत्ययान्तरत्वे चेत्यर्थः । एवञ्चैकैव परिभाषेत्याह—अन्तरङ्गस्येति । द्विविधस्येति भावः । ज्ञापकम् । ऊठग्रहणम्, लोकन्यायाङ्ग्रहणे चेत्यर्थः । अन्यत्र परिभाषेन्दुशेखरादौ । प्रपञ्चितम् । तथा च तत्र स्पष्टतरत्वादत्राकथ-

सरला ।

शन्द्रात् ढिड्ढेति सूत्रे अत इत्यनुवृत्तेर्न ङीप् । ज्ञापकमिति । "ओमाङोश्च" इत्याङ्ग्रहणमित्यर्थः ।

बाध्यत एव । तद्यथा—अयजे इन्द्रं,ग्रामे इह, सर्वे इत्थम् । अत्रान्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यते। स च यद्यपि यण्गुणयोरपवादस्तथाऽपि समानाश्रये चरितार्थः। तथा च वार्तिकम्—"इण्ङ्शीनामाद्गुणः सवर्णदीर्घत्वात्" इति ॥

असिद्धमिति । तेन पचावेदमित्यादावेत ऐत्वं न ।

अकृतव्यूहा इति । यद्यपि "कृतमपि कार्यं निवर्त्तयन्ति" इति परिभाषान्तरं पठ्यते, फलं च तुल्यम्, तथाऽपि "अकृत—" इत्येव लघु ।

"प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" ।

---

शब्दरत्नम् ।

बाध्यत एवेति । निरवकाशत्वरूपस्य बलवत्त्वबीजस्याभावात् ।

तेनेति । पूर्वा तु अन्तरङ्गबहिरङ्गयोर्युगपत्प्राप्तावेवेति भावः ।

भैरवी ।

लौकिकोऽयं दृष्टान्तः—"मनुष्योऽयं प्रातरुत्थाय शरीरकार्याणि करोति, ततः सुहृदां, ततः सम्बन्धिनाम्" इति प्रत्यासन्नवर्तित्वस्य लोके दृष्टत्वात्तन्मूलकमेवेदं वचनमिति । एतस्य वचनान्तरत्वं मूलकृतोऽप्यभिमतम् । अत एवासिद्धमिति प्रतीकमुपादाय पचावेदमित्यस्य साधनं सङ्गच्छते । सापवादत्वनिरपवादत्वाभ्यां द्वयोः परिभाषयोर्भेदः । अन्यथाऽन्तरङ्गत्वे-नायजे इन्द्रमित्यस्य साधनन्न स्यात, नाजानन्तर्यपरिभाषाविषयत्वादिति बोध्यम् ॥

तेनेतीति। अन्तरङ्गे कर्त्तव्ये जातमपि बहिरङ्गमसिद्धमित्यर्थकपरिभाषान्तराश्रयणेन । अत एवाह—पूर्वा त्विति। अन्तरङ्गशास्त्रत्वमस्या लिङ्गम् । अत एव कार्यकालपक्षे त्रिपाद्यामप्येषा प्रवर्तते इति वृद्धाः। पक्षद्वये तत्र न प्रवर्तते इति तु भाष्यतत्त्वविदः । "वाह ऊठ्" इति सूत्र-स्थमूठ् इति ज्ञापकमिति स्फुटीभविष्यति। नच सा विप्रतिषेधसूत्रे भाष्ये प्रत्याख्यातेति वाच्यम्, तस्य भाष्यस्य प्रौढिवादत्वात्। नाजानन्तर्यपरिभाषायां "षत्वतुकोरसिद्धः" इति सूत्रस्थं तुग्ग्रहणं ज्ञापकम् । तद्धि 'अधीत्य' 'प्रेत्य' इत्यादौ।समासोत्तरं ल्यपः प्रवृत्त्या पूर्वं समासे जाते तत्र संहितायां नित्यत्वादेकादेशे ल्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापेक्षै-कादेशस्य बहिरङ्गत्वेनासिद्धतया तुकः सिद्धौ तत्सूत्रस्थं तुग्ग्रहणं व्यर्थम् । नाजानन्तर्यपरि-भाषासत्त्वे तु तुकि अजानन्तर्यस्य निमित्तत्वेनाश्रयणाद् बहिरङ्गपरिभाषाया निषेधे तुकः प्र-वृत्त्यर्थं तत्र सूत्रे तुग्ग्रहणमावश्यकमेव । परिभाषार्थस्तु अचोरानन्तर्यमिति द्विवचनान्तेन स-मासमाश्रित्य बाध्यासिद्धपरिभाषायासुभयोपादानादधिकरणाकाङ्क्षायास्ताभ्यान्निरासेना-

भावप्रकाशः।

नमिति भावः। नन्वपवादस्य वचनप्रामाण्यात्प्राबल्येन कथंवैपरीत्यमत आह—निरवकाशेति । द्विती-यान्तरङ्गत्वस्यायं विषयः। इदं चाद्यान्तरङ्गत्वापेक्षया दुर्बलमिति स्पष्टमन्यत्र ।

मूलानुरोधेनाह–पूर्वा त्विति । उभये इत्यत्र मूलोक्तेत्यर्थः। युगपदिति । अत्र बीजं त्वाविष्कृतम-धस्तात्। वस्तुतो नास्त्येव साऽतिरिक्तेत्याह—इति भाव इति ।

सरला ।

युगपत्प्राप्तावेवेति। इयन्तु जातस्य बहिरङ्गस्यान्तरङ्गदृष्ट्य असिद्धत्वबोधिका इतिशेषः। तेन जातबहिरङ्गस्यासिद्धत्वेन । मूले एत्वं नेति । पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन गुणस्यासिद्धत्वादिति भावः। अस्यां च "वाह ऊठ्" सूत्रस्थमूठ्ग्रहणं ज्ञापकम्। एतेन युगपत्प्राप्तिविषयकं 'बहिरङ्गादन्तरङ्गं बलीयः' इति, जातबहिरङ्गासिद्धत्वबोधकम् 'असिद्धं बहिरङ्गमन्तरङ्गे' इति च परिभाषाद्वयमिति प्राञ्चः। अतएव "अ-सिद्धं बहिरङ्गमन्तरङ्गे इत्युक्त्वा नाजानन्तर्ये इति वक्ष्यामि" इत्युक्तिः सङ्गच्छते । जातबहिरङ्गासिद्धत्वमात्र-निषेधकत्वात् तस्याः परिभाषाया इति ।

इति न्यायादिति भावः। न कुर्वन्तीति। यथा "निषेदुषीम्" इत्यादौ क्सो-रिटमन्तरङ्गत्वात्प्राप्तमपि भाविना संप्रसारणेन वलादित्वं नङ्क्ष्यतीत्यालोच्य न कुर्वन्तीत्यर्थः॥

इति परिभाषाप्रकरणम्।

शब्दरत्नम्।

न कुर्वन्तीत्यर्थ इति। यदि तु 'सेदुषः' इत्यादौ पदावधिकेऽन्वाख्याने सेद् वस्

भैरवी।

न्तरङ्गे बहिरङ्गे वा यत्कार्यं ऽजानन्तर्यमाश्रीयते तत्र बहिरङ्गपरिभाषा न प्रवर्तत इति हरदत्तेन प्रतिपादितः, स तु न युक्तः, पचावेदमित्यत्रासिद्धपरिभाषया "एत ऐ" इति सूत्रप्रवृत्ति-वारणपराऽऽकरविरोधात्। किन्त्वचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्य बहिष्ट्वप्रक्लृप्तिर्नेति। अत्र जातस्येति निवेशादेव "ओमाङोश्च" इत्यत्राङ्ग्रहणञ्चरितार्थम्। तद्धि खट्वा आ ऊढा इति स्थिते परमपि सवर्णदीर्घम्बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्ग-त्वाद् गुणे वृद्धिप्राप्तौ तद्बाधनार्थं क्रियते। युगपत्प्राप्तस्याप्यन्तरङ्गस्य बलवत्त्वाभावश्चेत्प-रिभाषाबोध्यः स्यात्तदा ऽनया बाधादन्तरङ्गपरिभाषाया अप्रवृत्तौ परत्वात्सवर्णदीर्घे ततो गुणे रूपसिद्धावाङ्ग्रहणवैयर्थ्यं स्पष्टमेवेति दीक्षिताशयः। वस्तुतस्तु न परिभाषाद्वयम्, कि-न्त्वन्तरङ्गे कर्त्तव्ये जातं तत्कालप्राप्तिकञ्च बहिरङ्गमसिद्धमित्येतदर्थिका परिभाषा एकैव। य-त्राजानन्तर्यपरिभाषायां षत्वतुकोरसिद्ध इति सूत्रस्थं तुग्ग्रहणं ज्ञापकं तदसिद्धमिति परिभा-षाया अनित्यत्व एव ज्ञापकमिति सर्वेष्टसिद्धिः।

असिद्धपरिभाषाया अपवादभूतामन्यामपि परिभाषां पठन्ति प्राञ्चः—अकृतव्यूहा इत्यादि। विशिष्ट ऊहो येषु तानि व्यूहानि शास्त्राणि। ऊहस्तर्कः, स च बहिरङ्गेणान्तरङ्गनिमित्तविना-शरूपः। तद्वन्ति शास्त्राणि अकृतानि यैरित्यर्थः। भाविनिमित्तविनाशे इत्यध्याहारः। एवञ्चान्तरङ्गशास्त्रनिमित्तस्य बहिरङ्गशास्त्रेण विनाशसम्भावनायामन्तरङ्गशास्त्राणां प्रवृत्ति लक्ष्ये न कुर्वन्ति पाणिनिप्रोक्तशास्त्राध्येतार इति फलितम्। अस्याञ्च "समर्थानाम्" इति सूत्रस्थं समर्थग्रहणं ज्ञापकम्। तद्धि कृतसवर्णदीर्घात्सूत्थितशब्दादिञ् यथा स्यादित्येवमर्थं क्रियते। तच्चैतत्परिभाषाभावेऽन्तरङ्गे सवर्णदीर्घे कृत एव भविष्यतीति व्यर्थं सदस्यां ज्ञाप-कम्। अकृतव्यूहपरिभाषासत्त्वे तु भाविन्या आदिवृद्ध्या दीर्घनिमित्तस्य सवर्णाच्त्वस्य विनाशः संभावित इत्यकृतदीर्घात्सुउत्थितशब्दादिण् प्रत्ययः स्यात्, तथा च सावुत्थिति-रितिरूपं स्यादिति तन्निवृत्त्यर्थमिति तेषामाशयः।

ननु प्राचीनसम्मताया अकृतेतिपरिभाषाया लक्ष्यसाधकत्वेनावश्यकतया भाष्यकृतैषा कुतो नोक्तेत्याशङ्कायां तदभिप्रायमाह—यदि त्विति। क्रमेणान्वाख्यानेऽकृतेतिपरिभाषां विना

भावप्रकाशः।

नन्वकृतेत्यस्य सत्त्वे किमर्थं भाष्ये क्वापि नोल्लेखः। न च "असिद्धवदत्राभात्" इत्यत्र कैयटोक्तप्र-कारद्वयेन निर्वाहः, तस्य तत्रैवोद्द्योते खण्डितत्वादत आह—यदि त्विति। क्रमेणान्वाख्याने तां विना अनि-र्वाहादाह—पदेति। यद्यपि तदनवकाशत्वे एव बाधकताबीजमिति प्रकृते असम्भवि, तथापि शीघ्रोपस्थि-

सरला

पदावधिकेऽन्वाख्याने इति। अन्वाख्यानं नाम शब्दसंस्कारः। तच्च क्रमिकान्वाख्यानं पदावधिका-न्वाख्यानं वाक्यावधिकान्वाख्यानञ्चेति त्रिविधम्। प्रयोगस्थोच्चारणक्रमानुरोधेन संस्काररूपं क्रमिकान्वाख्या-नम्। पदपर्यन्तं प्रकृतिं प्रत्ययांश्च संस्थाप्य ततः संस्काररूपं द्वितीयम्। वाक्यपर्यन्तं प्रकृतीः प्रत्ययांश्च संस्थाप्य ततः संस्काररूपं तृतीयम्। तत्रान्त्ययोरपि प्रकृतिप्रत्ययसंस्थापनानन्तरं श्रुतवर्णक्रमेणैव संस्कारः स्वाभाविकत्वात्। वाक्यान्वाख्यानस्य 'कानि सन्ति' 'कौ स्तः' इत्यादीन्युदाहरणानि। तत्र सेदुष इत्यादौ

शब्दरत्नम् ।

अस् इति स्थिते इट्संप्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं संप्र- सारणे वलादित्वाभावादिटः प्राप्तिरेव न, लक्ष्यानुरोधाच्चात्र पदावधिकमेवान्वाख्यानमिति तत्सिद्धिरित्युच्यते, तदेषा परिभाषा निष्फलेति बोद्ध्यम् । अत एव एषा भाष्ये न

भैरवी ।

न निर्वाह इति । पदेति । एवञ्च नि सेद् वस् ई अम् इति स्थितिङ्कल्पयित्वा वस इट्सम्प्र- सारणयोः प्राप्तौ प्रतिपदविधित्वात्सम्प्रसारणे कृते वलादित्वाभावादिटः प्राप्तिरेव नेति निषेदुषीमित्यादिसिद्धिरित्येषा निष्फलेति नवीनाः । "समर्थानाम्" इति सूत्रस्थसमर्थग्रहणं तु 'विपुणः' इत्यत्राकृतसन्धेरपि प्रत्ययदर्शनेनेह सुत्थितादावपि तथाऽकृतसन्धेः 'वार्णादाङ्गम्" इति परिभाषया प्रत्ययो माभूदित्येवमर्थं क्रियते । अस्याः परिभाषाया असत्त्वादेव "चौ प्रत्यङ्गस्य प्रतिषेधः" इति वचनं वार्तिककृताऽऽरब्धं भाष्यकृता च न प्रत्याख्यातम् । प्रत्य- ङ्गम्—अन्तरङ्गम् । अस्यां परिभाषायां सत्यां तु 'प्रतीचः' इत्यादिरूपाणामनयैव सिद्धेस्तद्वैय- र्थ्यं स्पष्टमेव । अत एव "च्छ्वोः" इति सूत्रे "अवश्यमत्र तुगभावार्थो यत्नः कर्तव्योऽन्तरङ्ग- त्वाद्धि तुक् प्राप्नोति" इति भाष्ये उक्तम् । परिभाषायाः सत्त्वे तु 'विश्नः' 'प्रश्नः' इत्यादौ तुगभावस्य परिभाषयैव सिद्धेरावश्यकत्वकथनवैयर्थ्यं स्पष्टमेव । अत एव–अस्याः परिभाषा- या असत्त्वादेव । ननु प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे प्रयोजकम् । तच्चात्र नास्ति, लुलुवुषश्चिच्युष इत्यादावस्य चारितार्थ्यात् । अत्र हि—"वस्वेकाजात्" इति निय- मादिडभावस्य सिद्धेरिति कथमेतदिति चेत् ? न, तथात्वाभावेऽपि शीघ्रोपस्थितिकत्वप्रयोज्यं प्रतिपदविधित्वं पूर्वप्रवृत्तौ प्रयोजकं भवत्येवेत्याशयात् । अत एव "प्रत्ययोत्तरपदयोश्च" इति सूत्रव्याख्यानावसरे 'परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषाम्मिथः प्रसङ्गे परब-

भावप्रकाशः ।

तिरपि पूर्वप्रवृत्तौ नियामिकेत्यत्र बाधकाभावस्तदाह—पूर्वमिति । इदमपि परनित्यादिसमवधाने एव । परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति "प्रत्ययोत्तरपदयोश्च" इति सूत्रे कैयटे पाठात् । अत एव 'रमे' इत्यादौ प्रतिपदोक्तत्वात्पूर्वमेत्वे आकारप्रश्लेषाद्धल्ङ्यादिलोपो न प्राप्नोतीत्याशङ्क्य "एङ्ह्रस्वात्" इतिलोपेन समाहितम् । एतेन निरवकाशत्वरूपप्रतिपदोक्तत्वस्यैव प्रा- बल्ये प्रयोजकत्वाच्चिन्त्यमिदम् । अत एव परत्वादीनामेव तत्त्वे प्रयोजकता परिगणिता वृद्धैः । भवद्रीत्या तस्यातिरिक्तत्वे तदसङ्गतिः स्पष्टैव । किञ्चैवं 'स्वाम्पि' इत्यस्यापि साधुत्वापत्तिः । नहि व्याख्याभेदेन साधुत्वासाधुत्वे उचिते इत्यपास्तम्, बाधप्रयोजकानां परिगणनेऽपि तस्य तथाङ्गीकारे बाधकाभावात् । 'स्वाम्पि' इत्यस्यैव साधुत्वाङ्गीकारेण व्याख्याभेदस्यैवासत्त्वाच्चेत्यन्यत्र विस्तरः । अत्र यथा 'इयाय' इत्यादौ न दोषस्तथा स्पष्टं मत्कृतपरिभाषेन्दुशेखरव्याख्याने । नन्वेवमपि पक्षान्तरे दोष एवात आह— लक्ष्येति । अत्र सेदुष इत्यादौ । नन्वेतत्फलान्यथासिद्धावपि फलान्तरसत्त्वादनेकज्ञापकसत्त्वाच्च कथं तत्त्वमत आह—अत एवेति । एवं रीत्या फलान्तराणामप्यन्यथासिद्ध्या निष्फलत्वादेवेत्यर्थः । ज्ञापकानां

सरला ।

लक्ष्यानुरोधात् पदावधिकमेवान्वाख्यानं स्वीक्रियते । ततश्च सद् वस् अस् इति प्रकृतिप्रत्ययसंस्थापना- नन्तरं श्रुतवर्णक्रमेण संस्कारे क्रियमाणे वसुप्रत्ययस्य लिट्स्थानिकत्वेन धातोर्द्वित्वे अभ्यासकार्यं च सेद् वस् अस् इति स्थिते आर्धधातुकस्येड्वलादेरिति इडागमे वसोः सम्प्रसारणम् इति सम्प्रसारणे च प्राप्ते वसु- शब्दमुच्चार्यविहितत्वेन प्रतिपदोक्ततया शीघ्रोपस्थितिकत्वात् पूर्वं सम्प्रसारणे वलादित्वाभावेन इटोऽप्राप्त्या सेदुषइत्यस्य सिद्धौ परिभाषेयं निष्फलेति । न च वसोः सम्प्रसारणवत् इटोऽपि "वस्वेकाजाद्घसाम्" इत्य- नेनैव विधानेन प्रतिपदोक्तत्वं वसुशब्दमुच्चार्यविहितत्वात् नियमशास्त्राणाञ्च विधिमुखेन प्रवृत्तिर्लाघवात् । एवञ्च परत्वात् पूर्वमिट एव प्रवृत्तिस्स्यादिति परिभाषा तन्निवारणाय सफलेति वाच्यम्, सद् वस् अस् इति स्थिते द्वित्वप्रवृत्तिसमकालमेव सम्प्रसारणस्य प्राप्तौ तदानीं कृतद्विर्वचनैकाच्त्वाभावेन वस्वेकाजाद्घसाम्

इको यणचि(पा०सू०६।१।७७) ॥ प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा ल-

शब्दरत्नम् ।

क्वापि व्यवहृतेत्यन्यत्र विस्तरेण निरूपितम् ॥

इति परिभाषाप्रकरणम् ॥

ननु व्यक्तिपक्षे इक्पदोपस्थाप्योकारादिभिर्दीर्घादिग्रहणं न स्यात् "उच्चारित एव

भैरवी ।

लीयस्त्वम्' इति कैयट आह । अत एव 'रमे' इत्यादौ प्रतिपदोक्तत्वेन पूर्वं "सम्बुद्धौ च" इत्येत्वे आकारप्रश्लेषाद्धल्ङ्यादिलोपो न प्राप्नोतीत्याशङ्क्यैङ्ह्रस्वादिति लोपेन समाहितम् । अन्यत्र—परिभाषेन्दुशेखरादौ ॥

इति परिभाषाप्रकरणविवरणम् ॥

इको यणचि । पदानां वाच्या व्यक्तिरित्येकः पक्षः, आनयनादिकार्यान्वयस्य व्यक्तिष्वेव दर्शनात् । ननु व्यक्तेरानन्त्यात्सर्वासु व्यक्तिषु शक्तिग्रहासम्भवः, यत्किञ्चिद्व्यक्तौ शक्तिग्रहश्चेद्व्यक्त्यन्तरस्य शक्तिग्रहाविषयतया शाब्दबोधविषयत्वं न स्यादिति चेत् ? न, जात्यादि-

भावप्रकाशः ।

त्वन्तरङ्गपरिभाषानित्यत्वज्ञापकतैवेति निर्मूलत्वमेवेति भावस्तदाह—अन्यत्रेति । परिभाषेन्दुशेखर इत्यर्थः ।

इति परिभाषाप्रकरणम् ॥

व्यक्तिपक्षेऽणुदित्सूत्रं, न जातिपक्षे इति प्राचामुद्घोषः । तस्यायम्भावः, यदा सर्वत्र जातावेव शक्तिग्रहेण शब्दार्थत्वं, व्यक्तिलाभस्त्वाक्षेपादिनेति न तत्रापि तत्कल्पनाऽन्यलभ्यत्वात् , तदापि यदि "अइउण्" इत्यादौ व्यापकजातिपरनिर्देशः, तत्र कार्यबाधात् तदाश्रययावद्व्यक्तिषु तत्सिद्धिः, जातेः साक्षादुच्चारणासम्भवेन यत्किञ्चिद्व्यक्त्युच्चारणमिति तस्या विनिगमकत्वाभावात् । तदा तत्सूत्रेऽणुग्रहणं न । अप्रत्यय इति निषेधसत्त्वस्य तु वक्ष्यमाणत्वेन "त्यदादीनाम" इत्यादौ न दोषः । एतत्कथने एव मुख्यतात्पर्यं

सरला ।

इति प्रतिपदोक्तस्येटश्चाप्राप्तौ द्वित्वापेक्षया प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात् पूर्वं सम्प्रसारणे ततो द्वित्वे वलादित्वाभावादिटोऽप्राप्त्या परिभाषाया निष्फलत्वात् ।

वस्तुतस्तु पदावधिकान्वाख्यानेऽपि घटसेदुषोः इत्येतत्सिद्ध्यर्थं परिभाषाऽवश्यमाश्रयणीया । तथा हि घट सु सद् वस् सु ओस् इति पदपर्यन्तं प्रकृतिप्रत्ययसंस्थापने ओस्निमित्तकभत्वस्य समाससंज्ञाप्रवृत्तिकाले सुविशिष्टे सत्त्वेन वस्वन्तेऽभावात् सम्प्रसारणाप्राप्तौ पूर्वमिटि ततः समासे सुब्लुकि ततः सम्प्रसारणेऽपि इटोऽनिवृत्तिप्रसङ्गः । परिभाषासत्त्वे तु अन्तरङ्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्या यत्र बहिरङ्गेण अन्तरङ्गनिमित्तविनाशसम्भावना तत्र पूर्वमन्तरङ्गशास्त्रं न प्रवर्त्तते इत्यर्थेन घटसेदुषोरित्यत्र यदि पूर्वमन्तरङ्गमिट्शास्त्रं न प्रवर्त्तेत तर्हि समासप्रवृत्त्यनन्तरं बहिरङ्गसम्प्रसारणेनान्तरङ्गेट्शास्त्रनिमित्तवलादित्वन्नश्येत इति सम्भावनायास्सत्त्वेन पूर्वमिडागमस्याप्रवृत्तिरिति घटसेदुषोः इति सिध्यतीति दिक् ।

इति परिभाषाप्रकरणम् ॥

---

पदवाच्या जातिरिति, व्यक्तिरेव वा पदवाच्येति मतद्वयम् । तत्र आद्य व्यक्तीनामानन्त्येन तत्र शक्तिकल्पने गौरवाल्लाघवादेकस्यां जातावेव तत्कल्पनम् । गामानयेत्यादौ व्यक्तिबोधस्तु लक्षणया । न चैवं व्यक्तीनामपि प्रत्येकमेकतया एकस्यां व्यक्तौ शक्तिर्व्यक्त्यन्तरबोधो लक्षणयेति नानन्त्यप्रयुक्तं गौरवमिति वाच्यम् । व्यक्तौ शक्तिस्वीकारे व्यक्त्यन्तरलक्षणायां सम्बन्धकल्पने गौरवात् । तथाहि, व्यक्तौ शक्तौ

भैरवी ।

रूपानुगमकधर्माणां शक्यतावच्छेदकत्वस्वीकारेण समानप्रकारकत्वेन शक्तिज्ञानपदार्थोपस्थित्योः कार्यकारणभावाऽभ्युपगमाद्यनुपपत्तिरिति तेषामाशयात् । नचाशक्यत्वेन कथं शक्यतावच्छेदकत्वमिति वाच्यम्, अलक्ष्यत्वेऽपि लक्ष्यतावच्छेदकत्ववदशक्यत्वेऽपि शक्यतावच्छेदकत्वसम्भवात् । जातावेव पदानां शक्तिरिति पक्षान्तरम् । व्यक्तिलाभस्त्वाक्षेपात् । आनयनादिकार्यान्वय आक्षिप्तव्यक्तिद्वारैव । जातेरेकत्वाल्लाघवमत्र पक्षे । अत एव "सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्" इति भाष्ये उक्तम् । तत्राद्यपक्षाभिप्रायेणाशङ्कते–नन्विति । उकारादिभिरिति । इकारविषये तु शङ्का न कृता तस्योच्चारितत्वेन तत्राणुदित्सूत्रप्रवृत्तिसम्भ-

भावप्रकाशः ।

तेषाम् । अत एव अन्यपक्षचतुष्टये तदावश्यकता बोध्या । अत एव व्यक्तिपक्षे इति दिक्प्रदर्शनं तत्र । ते च पक्षा एवं–व्यक्तावेव शक्तिः, जातिविशिष्टव्यक्तौ वा, व्यक्तिविशिष्टजातौ वा, तत्पक्षेऽपि तत्र व्याप्यजातिपरनिर्देशो वेति । एषां यथासम्भवमुपपत्तिरेषु तदावश्यकत्वं चान्यत्र स्पष्टमिति । एवं सत्याद्यपक्षे भाष्याभिमते तद्ग्रहणस्यानावश्यिका, तदन्यपक्षचतुष्टये तु तत्सत्त्वेऽपि तदाश्रयणमावश्यकमिति बोध्यम् । तदेतद् ध्वनयितुं तद्रीत्यैवाशङ्कते—ननु व्यक्तिपक्षे इति । अर्थः प्राग्वत् । प्रसिद्धत्वाद्धि तथोक्तिः । परन्त्वारणेन तत्र सूत्रचारितार्थ्यमिष्टसिद्धिश्चात आह—प्योकारेति । दीर्घादीति । आदिना प्लुतानामुदात्तादीनां च सङ्ग्रहः । अत एव "किमर्थमिदमुच्यते उदात्तादीनामपि ग्रहणं यथा स्यात्" इति भाष्यं सङ्गच्छते । 'दीर्घादि' इत्युक्तिस्तु तद्ग्रहणवाच्य' इत्यग्रिममूलानुरोधेन, तत्र व्याप्यजातिपरनिर्देशे तेषां सङ्ग-

सरला ।

व्यक्त्यन्तरेण स्वसमवेतसमवायित्वं सम्बन्धः, स्वं वाच्या व्यक्तिः, तत्समवेता तद्वृत्तिर्जातिस्तत्समवायित्वं व्यक्त्यन्तरे, जातौ शक्तिस्वीकारे तु स्वाश्रयत्वमेव सम्बन्धः, स्वं वाच्या जातिस्तदाश्रयत्वं व्यक्ताविति । एवञ्च लक्षणायां सम्बन्धे लाघवगौरवयोः सत्त्वेन जातावेव शक्तिकल्पनस्य लाघवेनौचित्यम् । किञ्च व्यक्तौ शक्तिस्वीकारेऽपि जातेर्वाच्यत्वमावश्यकमेव, व्यक्तीनामानन्त्याद् व्यभिचाराच्च तत्र शक्तिग्रहानुपपत्तेः । एवञ्चावश्यकत्वात्प्रथमोपस्थितत्वान्नागृहीतविशेषणबुद्धिर्विशेष्यमवगाहते इति न्यायाच्च जातावेव शक्तिर्व्यक्तिबोधो लक्षणयेति पर्यवस्यति । तदुक्तं भट्टैः—

> अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः ।
> आकृतेः प्रथमज्ञानात्तस्या एवाभिधेयता ॥ इति ।

द्वितीये तु 'गामानय' इत्यादिवाक्यश्रवणसमनन्तरं व्यक्त्यानयनव्यवहारस्यानादिसिद्धतया व्यवहारेण शक्तिग्राहकशिरोमणिना व्यक्तावेव पदस्य शक्तिर्ग्राह्यते । न च लाक्षणिकः स इति, अनुपपत्तिज्ञानमन्तरेव व्यवहारप्रवृत्तदर्शनेनानुपपत्तिं विना लक्षणाया वक्तुमशक्यत्वात् । नचानन्त्यं व्यभिचारो वा, शक्यतावच्छेदकजातेरैक्यात् । तदुक्तम्—

> आनन्त्येऽपि हि भावनामेकं कृत्वोपलक्षणम् ।
> शब्दः सुकरसम्बन्धो नच व्यभिचरिष्यति ॥ इति ।

नन्वेवं नागृहीतन्यायेन जातौ वाच्यत्वमावश्यकमिति वाच्यम्, अकारणे दण्डत्वादौ कारणतावच्छेदकत्वस्य, अलक्ष्ये तीरत्वादौ लक्ष्यतावच्छेदकत्वस्य स्वीकारेण जातेरवाच्यत्वेपि शक्यतावच्छेदकत्वस्वीकारे बाधकाभावात् । अतएवाणुदित्सूत्रस्थमणग्रहणमेकशेषारम्भश्च सङ्गच्छेते । जातेर्वाच्यत्वे तद्वैयर्थ्यं स्पष्टमेवेति । तस्माद् व्यक्तिपक्षो जातिपक्षश्चोभावपि शास्त्रसिद्धाविति । तत्र व्यक्तिपक्षे आशङ्कते—नन्वित्यादिना ।

उकारादिभिरिति । नन्विक्प्रत्याहारे इकारस्य प्राथम्येन तेनापि दीर्घादीनामग्रहणे इकारादिभिरिति वक्तव्ये उकारादिभिरिति कथमुक्तं शब्दरत्नकृता ? नच "उच्चारित एव शब्दः प्रत्यायको नानुच्चारितः" इति अणुदित्सूत्रभाष्योक्त्या विषयतासम्बन्धेन शाब्दबोधे उच्चार्यमाणपदनिष्ठवृत्तिज्ञानाधीनोपस्थितेः कारणतया इक्पदे इकारस्याप्युच्चार्यमाणत्वेन अणुदित्सूत्रगृहीततन्निष्ठवृत्तिज्ञानाधीनोपस्थितेर्दीर्घेकारा-

शब्दरत्नम् ।

शब्दः प्रत्यायको नानुच्चारितः" इति अणुदित्सूत्रे भाष्योक्तेः । न चोच्चारितस्यैव प्रत्यायकत्वे रहसि पुस्तकमीक्षमाणस्य बोधानापत्तिरिति वाच्यम्, तत्रापि पुस्तकद्रष्टुः स्वीयसू-

भैरवी ।

वात् । दीर्घादीत्यादिना प्लुतानुदात्तादीनां सङ्ग्रहः । उच्चारितः—उच्चारितत्वेन गृहीतः। प्रत्यायकः—स्वार्थबोधनसमर्थः । तत्रापि—पुस्तकेक्षणस्थलेऽपि सूक्ष्मेति । जपमन्त्राणां त्रैस्वर्येण ज्ञानस्यावश्यकतया त्रैस्वर्यस्य ताल्वाद्यूर्ध्वदेशाद्यधिकरणकोच्चरितत्वरूपतया तत्र सूक्ष्मोच्चारणमावश्यकं, तद्वद्रहसि पुस्तकेक्षणस्थलेऽपि बोध्यम् । एतेन 'उच्चारित एव प्रत्या-

भावप्रकाशः ।

ह्सत्वेन वा । अत एव व्यक्तिपक्षे इत्युपलक्षणमिति स्वयमेव ध्वनितम् । एतदर्थमेव तथोक्तिरिति तत्त्वम् । यत्तु वर्णसमाम्नाये एकश्रुत्या पाठादभेदकत्वाद्वा गुणानां तद्ग्रहणसिद्ध्या मुख्यत्वाद्दीर्घादीत्युक्तमिति । तन्न, आद्ये उदात्तादिसङ्ग्रहेऽप्यनुनासिकासङ्ग्रहतादवस्थ्यात् । अत्र पक्षेऽण्ग्रहणाद्भेदकत्वस्यैव सत्त्वाच्चेति दिक् । उच्चारितः तत्त्वेन गृहीतः । अन्यथा पाणिन्युच्चारणस्येदानीमसत्त्वेन तदसङ्गतिः स्पष्टैव । एवमग्रेऽपि । एवोऽत्रान्वेति—भाष्योक्तेरिति । "प्रत्याहारे सवर्णाग्रहणमनुपदेशात्" इत्यादिनेति शेषः । अत एव 'ऋक्'इत्युक्ते तात्पर्यवशाद्विशिष्टसन्निवेशाया "अग्निमीळ" इत्यादिकायास्ततो बोधेऽपि ततो नार्थप्रत्ययः । अत एव च 'गामानयइत्याह' इत्यादावनुकरणेनानुकार्यप्रतीतावपि न ततोऽर्थबोध इत्यनुभव इत्याद्यन्यत्र विस्तरः । जगन्नाथोक्तिं खण्डयति—न चेति । बोधानापत्तिरिति । अनुच्चारणेन तत्त्वेनाग्रहात् । एवञ्च वाचकज्ञानसामान्यस्यैव बोधे तन्त्रत्वेन भाष्याद्ययुक्तमिति भावः । सूक्ष्मोच्चेति । सूक्ष्म-

सरला ।

दीनां सत्त्वेन तेषां ग्रहणे बाधकाभावेन दीर्घौकारादीनामेवाग्रहणप्रसक्त्या तथोक्तिरिति वाच्यम् । अवयवात्समुदायाच्च यत्र पृथक्पृथगर्थोपस्थितिस्तत्राऽवयवार्थस्यैव बोधे समुदायोच्चारणस्य वैयर्थ्यमूलकेन अवयवनिष्ठशक्तिनिरूपकार्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति समुदायनिष्ठशक्तिनिरूपकार्थविषयकतात्पर्यज्ञानं प्रतिबन्धकमिति प्रतिबन्ध्यप्रतिबन्धकभावेन प्रकृते इक् इति समुदायनिष्ठशक्तिनिरूपक इकार उकार ऋकार लृकारचतुष्टयरूपार्थविषयकतात्पर्यज्ञानेनावयवभूत-इकारनिष्ठशक्तिनिरूपकाष्टादशेकाररूपार्थविषयकशाब्दबोधस्य प्रतिबन्धेन दीर्घेकारादीनामप्यग्रहणप्रसक्तेः । अत्र इकारोत्तरं ककारोच्चारणेनैव समुदायादेवार्थबोधो भवतु इति पाणिनेस्तात्पर्यावधारणात् । नच "आदिरन्त्येन सहेता" इति सूत्रेणाक्षरमर्यादया आदिवर्णस्यैव संज्ञात्वबोधनेन शक्ततावच्छेदकत्वे लाघवेन च इकार एव चतुष्टयबोधकः ककारादयस्तु 'इकारादयः प्रत्याहारसूत्रस्था एव' इति प्रत्यभिज्ञामात्रोपयोगिनो नतु बोधकस्वरूपान्तर्गता इति । अत एवाणुदित्सूत्रस्थः प्रत्याहाराणामाद्यवर्णेषु चारितार्थ्यप्रदर्शनपरः शब्दरत्नग्रन्थः सङ्गच्छते । एवञ्च इक्पदघटकेकारे एव चतुष्टयार्थनिरूपितशक्तेः अष्टादशार्थनिरूपितशक्तेश्च सत्त्वेन अवयवसमुदायशक्तिविषयकोक्तप्रतिबन्ध्यप्रतिबन्धकभावस्याविषयतयाऽष्टादशार्थनिरूपितेकारनिष्ठशक्त्या इकाराणामुपस्थित्या तेषां शाब्दबोधविषयत्वे बाधकाभाव इति तथोक्तिरिति वाच्यम्, "सकृदुच्चरितः शब्दः सकृदर्थं गमयति" इत्येतन्मूलकेन एकशक्तिनिरूपकार्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रत्यपरशक्तिनिरूपकार्थविषयकतात्पर्यज्ञानं प्रतिबन्धकमिति प्रतिबन्ध्यप्रतिबन्धकभावेन चतुष्टयार्थविषयकतात्पर्यज्ञानेन अष्टादशविषयकशाब्दबोधस्य प्रतिबन्धात् । यथा भोजनप्रसङ्गे "सैन्धवमानय" इत्युक्तौ लवणविषयकतात्पर्यज्ञानेनाश्वविषयकशाब्दबोधप्रतिबन्धेन लवणस्यैव बोधः, प्रकरणं च तत्र तात्पर्यावधारकं, तथाऽत्रापि ककारोच्चारणेन चतुष्टये तात्पर्यावधारणेन तद्विषयकतात्पर्येणाऽष्टादशविषयकशाब्दबोधाभाव इतिः—इति चेत् ? न, तन्त्रेण आवृत्त्या वा दीर्घेकारादीनां कथञ्चिद्ग्रहणसम्भवेऽपि. दीर्घौकारादीनां कथमपि बोधासम्भवेन तथोक्तेरिति । एकशक्त्यपरशक्तिप्रतिबन्ध्यप्रतिबन्धकभावस्य तु अत्र विषयतैव नास्ति उभयविधतात्पर्यावधारणसम्भवात् । ककारेण चतुष्टयतात्पर्यस्यैव अणुदित्सूत्रस्थाऽण्ग्रहणेन अष्टादशविषयकबोधजनकत्वप्रकारकतात्पर्यस्याप्यवधारणात् । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

शब्दरत्नम्।

क्ष्मोच्चारणसत्त्वादित्यत आह—प्रत्याहारग्रहणेष्विति। एतेन दीर्घकारादेर्ग्राहकशास्त्रब-
लेन इकारादिभिर्बोधे ऽपि तेषामिक्पदवृत्त्याऽनुपस्थितत्वेन तदुत्तरप्रत्ययार्थानन्वयापत्ति-

भैरवी।

यक्' इत्यसङ्गतं, लिपिस्मृतशब्दादर्थबोधानापत्तेरिति परास्तम्, तत्रापि सूक्ष्मोच्चारणस-
त्त्वात्। यत्र नोच्चारणं तत्र नार्थप्रत्ययः। यथा ऋगित्युक्ते विशिष्टसन्निवेशा ऋक् प्रतीयते,
नतु तस्या उच्चारणमिति यदा, तदा नार्थप्रत्ययः, अनुकरणवत्।

मूले—तद्वाच्यवाच्येति। प्रत्याहारवाच्याक्षरसमाम्नायपठ्यमानवाच्या इत्यर्थः। अक्षरस-
माम्नायवाच्यत्वग्राहकञ्चाणुदित्सूत्रमेव। रत्नाकरोक्तिं खण्डयति—एतेनेति। इक्पदवृत्त्या—
इक्पदशक्त्या। अनन्वयापत्तिरिति। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति सिद्धा-
न्तात्। अत एव "सार्वधातुके यक्" इति सूत्रे पच्यमान इत्यादौ कर्तरि शानच्, कर्मणि य-
गिति पक्षे प्रकृतिप्रत्ययाविति नियमेन कर्मार्थविशेष्यकबोधानापत्तिः, कर्तुरेव प्रथमतो जात-
प्रत्ययार्थत्वादित्युक्तम्। अपास्तम्। लक्षणायां दीर्घादिविकपदस्य लक्षणारूपा या वृत्तिस्तदा-

भावप्रकाशः।

तरेत्यर्थः। अत एव तत्र स्वीयत्वम्। तच्च स्वमात्रश्राव्यत्वम्। अयम्भावः, जपे मन्त्राणां त्रैस्वर्यनियमेन
तत्तत्स्थानेषूच्चादिदेशोपलभ्यमानस्वरूपोदात्तत्वादेर्मात्राकालिकत्वादिरूपह्रस्वत्वादेश्च विनोच्चारणमनभि-
व्यक्त्या मानसजपस्थले इवात्रापि सूक्ष्मतरताल्वादिव्यापारेण तादृशं तदस्त्येव। एतेन लिपिस्मृतशब्दा-
दर्थबोधानापत्तिः, अनुच्चारणादित्यपास्तमिति। एतेन नन्वित्यादि सिद्धमिति भाव इत्यन्तमनूद्य लिप्या
प्रतीतशब्दस्य तत्त्वे बाधकाभावदोषमुक्त्वा उक्तभाष्यं वृत्त्या प्रतीतशब्दस्य तत्त्वाभावबोधकम्। अन्यथा
स्फोटस्य तदप्रत्यायकत्वं स्यादितिमन्दोक्तमपास्तम्, उक्तयुक्तेः शब्दमर्यादया भाष्यात्तथार्थाप्रतीतेश्च,
स्फोटे आरोपितसकलसत्त्वेन बाधकाभावाच्च, तत्रापि व्यङ्ग्यत्वसत्त्वेन त्वन्मतेऽप्यगतेश्चेति दिक्। "अज्झ-
लोःप्रतिषेधे" इत्यादिशकारसावर्ण्यनिषेधशङ्कासमाधानपरभाष्यकैयटादिकं तु वार्तिकरीत्येति न तद्विरोध
इत्यन्यत्र विस्तरः। रत्नाकराद्युक्तमाशयं खण्डयति—एतेनेति। उक्तरीत्या तैस्तद्ग्रहणेनेत्यर्थः। प्रत्य-
यार्थानन्वयेति। सप्तमीसमासः, तेषामितिस्वारस्यात्। तत्रेत्यध्याहारे तु षष्ठीसमासः। अयम्भावः, प्र-
त्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिः ताभ्यां मिथः सम्बद्धार्थस्यैव बोधो न केवलस्येति
बोधयति। तस्याश्च प्रकृतेरत्रार्थे प्रत्ययो भवतीत्युक्त्वा प्रत्यासत्त्या मिथः सम्बद्धार्थबोध एव तत्तच्छास्त्रेण
तयोः साधुत्वबोधनमेव मूलम्। अत एव "सार्वधातुके यक्" इत्यत्र भाष्ये 'पच्यमानः' इत्यत्र कर्तरि शानच्,
कर्मणि यगस्त्वित्याशङ्क्य प्रकृतिप्रत्ययौ सहार्थं ब्रूत इत्युक्तम्। तस्यापि शास्त्रवासनया तत्तच्छक्यत्वेन
प्रतीयमानमर्थं तौ सह ब्रूतो न तु भेदेनेत्युक्त एवार्थः। तथा च प्रकृतिवृत्त्यर्थबोधे तदुत्तरप्रत्ययवृत्त्यर्थोपस्थितिः
कारणमिति व्युत्पत्तिशरीरम्। सा च विशेष्यतया विशेषणतया वा, प्रतीत्यनुरोधात्। विशिष्यकार्यकारण-
भावास्तूह्याः। अत एव 'गुडं पश्य' इत्यतो माधुर्यबोधेऽपि प्रत्ययार्थानन्वयः। एवञ्चात्रापि तत्र तस्य
शक्त्यभावाल्लक्षणानङ्गीराच्च तथोपस्थितानामपि तेषां स्थानिता न स्यादित्यभ्युपेत्याप्याह—वृत्तिप्रयो
ज्येति। प्रकृतिवृत्तिप्रयोज्येत्यर्थः। इदञ्च प्रकृताभिप्रायं न तु व्युत्पत्तौ तथा निवेशः, 'घटमानय' इत्या-
द्यसङ्ग्रहापत्तेः। किन्तु जन्यत्वं तत्र साक्षात्परम्परासाधारणं निविष्टम्। एवं च सूत्रेण निर्वाहे नियमाभ-
ङ्गेन त्वन्मतेऽपि लक्षणा न स्यादिति तथाशयवर्णनमयुक्तमेवेति भावः।

शुद्धा रूढिमतीति या व्यवह्रियते सर्वैस्तस्या एवायं भेदः, मुख्यार्थबाधतत्सम्बन्धरूढिरूपकारणत्रय-

सरला।

प्रत्याहारग्रहणेष्वितीति। प्रत्याहारबोधकपदेष्वित्यर्थः। इक्पदवृत्त्येति। उच्चार्यमाणेक्पदनि-
ष्ठवृत्त्येत्यर्थः। यद्यप्यणुदित्सूत्रेणाकारादौ दीर्घादिनिरूपितवृत्तिरुद्ग्राह्यते इति दीर्घादीनामपि वृत्त्यै-
वोपस्थितिस्तथाऽप्यत्र दीर्घादीनामुच्चार्यमाणपदनिष्ठवृत्त्या नोपस्थितिरिति भावः। वृत्तिप्रयोज्येति।

शब्दरत्नम् ।

रित्यपास्तम् , वृत्तिप्रयोज्योपस्थितिसत्त्वेनादोषाच्च । ननु अणुदित्सूत्रं व्यर्थम्-;[न च प्रत्यहाराणामाद्यवर्णेषु चरितार्थम् , अन्यसवर्णानामिव तत्सवर्णानामपि लक्षणयैव ग्रहण-सिद्धेः । न च "अस्य च्वौ" (पा०सू०७।४।३२) इत्यादौ चारितार्थ्यम् , व्यक्तिपक्षेऽस्य

भैरवी ।

अयत्वान्निरस्तमित्यर्थः । वृत्तिप्रयोज्येति । प्रकृतिवृत्तिप्रयोज्येत्यर्थः । प्रयोज्यत्वं तु जन्यजन्यत्वम् । नचैवं सति घटमानयेत्यत्र घटोपस्थितिविषयघटे विभक्त्यर्थानन्वयापत्तिर्घटस्य योपस्थितिः सा घटपदजन्यैव, न तु घटपदजन्यजन्येति वाच्यम् , अस्य ग्रन्थस्य प्रकृताभिप्रायकत्वात्, सामान्यतः क्लृप्तस्तु नियमः प्रकृतिजन्यत्वघटित एव, जन्यत्वजन्यजन्यत्वान्यतरवत्त्वमेव प्रयोज्यत्वमित्यस्य सामान्यतो नियमे प्रवेश इत्यभिप्रायाद्वा ।

प्रत्याहारग्रहणे यदि लक्षणा तर्ह्यणुदित्सूत्रस्थाण्ग्रहणं विनापि निर्वाहात्तद्वैयर्थ्यम् । न च यत्र न प्रत्याहारग्रहणङ्किन्त्वेकवर्णमात्रबोधकशब्दोपादानन्तदर्थं तदस्त्विति वाच्यम् , तत्रापि वक्ष्यमाणरीत्या लक्षणाया आवश्यकत्वादित्याशयेन शङ्कते—नन्विति । अणुदित्सूत्रमिति । उदितः सूत्रमुदित्सूत्रमण्विशिष्टमुदित्सूत्रमणुदित्सूत्रमित्यर्थः । एवञ्चोदिद्ग्रहणस्यावश्यकत्वेऽपि "सविशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधे" इति न्यायेन "स्वर्गी ध्वस्तः' 'शिखी विनष्टः' इत्यादिस्थल इव विशेषणे पर्यवसानं बोध्यम् । आद्यवर्णेष्विति । तत्रानुबन्धसमभिव्याहारेणाक्षरसमाम्नायिक एवायमिति प्रत्यभिज्ञायाः सम्भवेनाण्पदबोध्यत्वस्य सम्भवादिति भावः । अन्यसवर्णानामिव द्वितीयादिसवर्णानामिव । तत्सवर्णानाम्—आदिसवर्णानाम् । प्रत्याहारवाच्यत्वस्यादिवर्णेऽपि सत्त्वादिति भावः । "अस्य च्वौ" इत्यादाविति । आदिपदेन "एरच्" इत्यादिसङ्ग्रहः । एतेषु प्रत्याहारग्रहणाभावादित्याशयः । अत एव शुक्लीभवतीतिवन्मालीभवतीत्यस्य सिद्धिः । शङ्कानुरोधेनाह—व्यक्तिपक्ष इति । अस्य—"अस्य

भावप्रकाशः ।

तौल्यात् । यथा त्वगादिशब्दानां 'त्वचा ज्ञातम्' इत्यादौ त्वगिन्द्रिये । स्वशक्यसम्बन्धस्य "अइउण्" इत्यादौ सन्ध्यभावेन मुख्यार्थबाधस्यानादितात्पर्यस्य च तद्वदत्राविशिष्टत्वात् । अत एव 'असति प्रयोजने शक्यार्थबाधप्रतिसन्धानपूर्वकं तत्सम्बन्ध्यपरार्थबोधे निरूढलक्षणा' इति व्यवहारः, अन्यथा रूढिशक्तिरेवेति सिद्धान्तोलङ्कारिकवैयाकरणयोः । इयमेव द्विरेफादौ मीमांसकजरत्तार्किकैर्लक्षितलक्षणाशब्देन व्यवह्रियते । शक्यसम्बन्ध इत्यत्र साक्षात्परम्परासाधारणसम्बन्धनिवेशात् । नव्यनैयायिकमते तस्या अतिरिक्तत्वे तु अत्रापि तथैवास्ताम् । अत्रमते तत्र साक्षात्सम्बन्धस्यैव निवेशः । लक्षितेन बोधितेन लक्षणं यस्यामिति व्युत्पत्त्या क्रमेणैवोपस्थितेः । तन्नियमे तथाजन्यत्वनिवेश आवश्यक इति केचित् । वस्तुतस्तु द्विरेफादौ रूढिशक्तिरेव, न लक्षणा; बाधप्रतिसन्धानं विनैव बोधात् । अत एव प्रस्तराद्यर्थाबोधः कोशेषु भ्रमरपर्यायेषु पाठश्च सङ्गच्छते इति स्पष्टमन्यत्र । प्रकृते तूक्तरीत्या निरूढलक्षणैव । एतेन शाब्दिकमते निरूढलक्षणा नैवास्ति । यद्यस्ति, तर्हि तस्याःप्रसिद्धत्वेन लक्ष्यतावच्छेदकज्ञानसत्त्वात्तज्ज्ञानार्थमेव "अणुदित्" सूत्रमिति मिथो विरुद्धम् । किञ्च निरूढपदं व्यर्थम्, लक्षणेत्येव वदेत् इति मन्दोक्तमपास्तम्, उक्तयुक्तेः तत्प्रसिद्धिमात्रेण प्रकृते तज्ज्ञानस्य मूर्खेणापि वक्तुमशक्यत्वाच्च निरूढपदस्योक्तरीत्या सफलत्वाच्चेति दिक् ।

नन्वेवं जातिपक्ष इव व्यक्तिपक्षेऽपि तद्व्यर्थमित्युद्घोषभाष्यासङ्गतिरित्याशयेनाशङ्कते—नन्वणुदिदिति । अण्पदविशिष्टं सूत्रमित्यर्थः । आद्येति । तेषामुच्चारितत्वेन प्रत्यायकत्वसम्भवादिति भावः । अस्य च्वाविति । अप्रत्याहारग्रहणेन लक्षणानङ्गीकारादुच्चारितत्वेन तत्त्वसम्भवाच्च । अत एव 'मालीभवति' इत्यादिसिद्धिरिति भावः । शङ्कानुरोधेनाह—व्यक्तीति । अस्य, "अस्य च्वौ" इत्यादिसूत्रस्था-

सरला ।

कार्यकारणभावस्वरूपे विषयतासम्बन्धेन शाब्दबोधं प्रति उच्चार्यमाणपदनिष्ठवृत्तिप्रयोज्योपस्थितेः कारण-

शब्दरत्नम्।

प्रत्याहारसूत्रस्थतो भेदेनाण्त्वाभावादिति स्पष्टम् "अणुदित्"-( पा०सू०१।१।६९ ) सूत्रे भाष्ये-इति चेत् ? न, लक्ष्यतावच्छेदकज्ञानार्थमेव तच्चारितार्थ्यात्। प्रत्याहारेत्युपलक्षणं

भैरवी।

च्वौ"इत्यादिसूत्रस्थाकारादिवर्णस्य। भेदेनेति। यत्र प्रत्याहारनिर्देशस्तत्र यथा आद्यवर्णस्यानुबन्धसमभिव्याहारेण स एवायमिति प्रत्यभिज्ञाविषयत्वं तथाऽत्राभावेनैतेषु तादृशप्रत्यभिज्ञाया असम्भवेन भेदस्य निश्चितत्वेनेत्यर्थः। अत एवाह—अण्त्वाभावादिति। ननु "ष्वादीनां ह्रस्वः" इति निर्देशेन ज्ञापकेनाप्रत्यय इति निषेधारम्भेण च तत्सदृशेऽपि प्रत्याहारनिर्देशबोध्यत्वङ्कार्यम्भवतीति निश्चयो भविष्यति। अन्यथा "सनाशंसभिक्ष उः" इत्यत्रोपात्तोकारस्यापि "अस्य च्वौ" इत्यकारवद्भेदेन ग्रहणकशास्त्राप्राप्तेस्तद्वैयर्थ्यं स्पष्टमेव। अत एव "अवात्ताम्" इत्यत्र तकारद्वयस्य झल्प्रत्याहारबोध्याक्षरसमाम्नायिकतकारसादृश्येन "झलो झलि" इत्यस्य प्रवृत्तेरिति चेत् ? न, "इणो यण्" इत्यत्र णकारचिन्हेन यकारांशे तत्त्वप्रत्यभिज्ञासत्त्वेन तत्राप्रत्यय इत्यस्य चारितार्थ्यात्। "ष्वादीनाम्" इति निर्देशस्यापूर्वार्थज्ञापकत्वकल्पनापेक्षया मूलोक्तार्थ एवोपष्टम्भकत्वस्य सम्भवात्।

लक्ष्यतावच्छेदकज्ञानार्थमिति। तद्वाच्यवाच्यत्वरूपस्य लक्ष्यतावच्छेदकधर्मस्य लक्ष्येषु ज्ञानार्थमित्यर्थः। प्रत्याहारवाच्यत्वस्याक्षरसमाम्नायपठितेषु "आदिरन्त्येन सहेता" इतिसूत्राज्ज्ञानसम्भवेऽपि तद्वाच्यत्वस्य दीर्घादिषु ग्रहोऽणुदित्सूत्रादेवेति भावः। प्रत्याहारग्रहणेष्वि-

भावप्रकाशः।

कारादिवर्णस्य। प्रत्याहारेति। प्रत्याहारप्रतिपादक "अइउण्" इत्यादिसूत्रस्थाकारादित इत्यर्थः। प्रत्याहाराद्यवर्णेषु अन्त्येत्संज्ञकणादिसजातीयचिह्नरूपतात्पर्यग्राहकबलात्तत्त्वप्रत्यभिज्ञायामप्यत्र तथाग्रहकाभावादिति भावः। भाष्ये इति। तत्र "अनुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात्" इत्यादिनेति भावः। यत्त्वप्रत्यय इतिज्ञापकेन तत्सदृशेऽपि कार्यम्, अन्यथा "त्यदादीनाम:" इत्यादावप्यनण्त्वात्तदप्रसक्तौ किं तेन, तेन 'अवात्ताम्' इत्यादावपि न दोषः। प्रत्याहारस्थतकारसदृशान्यतकारे परे लोपप्रवृत्तेरिति मन्दः। तन्न, यणित्यादावुक्तरीत्याऽप्रत्यय इत्यस्य चारितार्थ्यात्, 'अवात्ताम्' इत्यादावन्यथा दोषाच्च तत्राण्त्वाभावात्, एवं ज्ञापनेऽण्ग्रहणवैयर्थ्यापत्तेश्च, तदभावे ज्ञापनासम्भवाच्चेति दिक्। ननु "ऊकालः" इत्यत्र ह्रस्वसंज्ञाविधायकप्रथमवाक्ये उकारोऽण् सवर्णान् गृह्णातीति द्विमात्रादेरपि ह्रस्वसंज्ञापत्तिरिति भाष्यासङ्गतिः, उक्तयुक्तेः। तथा "अणुदित्" इत्यत्राप्रत्यय इति किमर्थम्? "सनाशंसभिक्ष उः" "अ साम्प्रतिके" अत्यल्पमिदमुच्यते "अप्रत्ययादेशटित्किन्मित" इति वक्तव्यम् "इदमस्य इतः" इत्यादिभाष्यासङ्गतिस्तत एवेति चेत्? न, व्यक्तिपक्षे लक्षणापरत्वेन जातिपक्षपरत्वेन वाऽदोषात्। लक्ष्यतेति। तच्च न स्ववाच्यसवर्णत्वं "पुमः खय्यम्परे" इत्यादौ दोषापत्तेः किन्तु स्ववाच्यवाच्यत्वमेव मूलोक्तम्। तस्य च ग्रहो न लोकतः। तत्र तथा व्यवहाराभावात्। नाप्यत्र शास्त्रेऽन्यव्याकरणे इव सूत्रं विना ग्रह इति तदर्थमिदमावश्यकम्। तथा तत्रत्यह्रस्वेकारादीनाम् "आदिरन्त्येन" इतीकृपदवाच्यत्वग्रहे आद्यवर्णेष्वणुदित्सूत्रग्रहसत्त्वेन तत्सूत्रप्रवृत्त्या तद्वाच्यत्वस्य तद्दीर्घादिष्वपि ग्रहणेन समुदितज्ञानसम्भव इति भावः। एवेनाद्यवर्णार्थमपि नोपयोग इति सूचितम्। यत्तु ह्रस्वेकारादीनान्तद्वाच्यत्वेन युगपद्वृत्तिद्वयविरोध इति। तन्न, सति तात्पर्यग्राहके "गङ्गायां मीनघोषौ" इत्यादावित्र तदङ्गीकारात्। तत्र समभिव्याहारस्यैवात्र स्वादिभ्यो मत्वर्थ इत्यादिनिर्देशस्यैव तत्त्वात् ह्रस्वानामपि तद्वाच्यवाच्यत्वेन लक्ष्यतावच्छेदकाक्रान्तत्वाच्च। अत एव 'घटीभवति' इत्यादावीत्वम्। शक्यार्थोपस्थितिं विना लक्षणाया अप्रसरेण तत्रान्यत्र च शक्तिग्रहोपयोग इति न तदानर्थक्यमिति दिक्। नन्वेवमपि व्यक्तिपक्षे "अस्यच्वौ" इत्यादौ दोष एव, तत्रोक्तरीत्या सूत्राप्रवृत्तः, अत आह—उपलक्षणमिति। मध्यमणिन्यायेनास्याग्रेऽप्यन्वयः। एतेन

सरला।

त्वमिति प्रयोज्यत्वं निवेश्यते। तत्त्वं च साक्षाज्जन्यत्वजन्यजन्यत्वान्यतरत्वम्। तथाच प्रकृते दीर्घा-

क्षणा, "दीर्घाज्जसि च" (पा०सू०६।१।१०५)इति ज्ञापकात् "त्वादिभ्यः" (पा०

शब्दरत्नम्।

तद्वाच्यवाच्येति च, "अस्य च्वौ" (पा०सू०७।४।३२) इत्यादावपि स्वसदृशवाच्येषु लक्षणावश्यकत्वात्। अणुदित्सूत्रगृहीतलक्ष्यतावच्छेदकिका लक्षणा विधीयमानातिरिक्तविषये एव, "अप्रत्यय" इत्युक्तेः। अत एव "त्यदादीनामः" (पा०सू०७।२।१०२) इत्यादौ न स्वसदृशवाच्येषु लक्षणा। "नाज्झलौ"(पा०सू०१।१।१०) "अणुदित्" (पा०सू०१।१।६९) इत्यत्र तु न लक्षणा, तद्बोधकाले लक्ष्यतावच्छेदकाग्रहादिति भावः।तत्रप्रमाणमाह-दीर्घादिति।

भैरवी।

ति सामान्यत उपादानेनावर्णविषयेऽपि लक्षणयैव निर्वाहे तत्र शक्त्या बोधनस्यानावश्यकत्वं ध्वनितम्। यत्तु युगपद्वृत्तिद्वयकल्पनाया विरोधेन सर्वेषां लक्षणयैव बोधनमनुचितम्, किन्तु "दीर्घाज्जसि च" इति ज्ञापकादिकपदस्य दीर्घकारेऽस्तु लक्षणा, ह्रस्वोकारादीनान्तु शक्त्यैव बोधनम्भविष्यतीति तत्र यणादेशासिद्धिः। "त्वादिभ्यः" इत्यादिनिर्देशस्य दीर्घोकारादिष्वपि लक्षणया बोध्यत्वसाधकत्वे त्वनेकज्ञापककल्पनापेक्षया जातिपक्ष एव ज्ञापकमस्त्विति। तन्न, सति तात्पर्ये युगपद्वृत्तिद्वयस्य "गङ्गायां मीनघोषौ स्तः" इत्यादिषु दर्शनेन तयोर्विरोधस्याभावात्। इति चेति। उपलक्षणमिति शेषः। आवश्यकत्वादिति। अन्यथोक्तरीत्याऽनुपपत्तिपरिहाराभावादिति शेषः। ननूक्तार्थयोर्लक्षणास्वीकारे "अस्य च्वौ" इत्यत्रेवोकारादिप्रत्ययविषयेऽपि लक्षणायाः सम्भवाद्दोष एवेत्यत आह—अणुदित्सूत्रेति। अत एव—विधीयमानातिरिक्तविषयैवेति स्वीकारादेव। नन्वेवं "नाज्झलौ" इत्यादावनुवादस्थले दोष एवेत्यत आह—नाज्झलाविति। अग्रहादिति। वाक्यापरिसमाप्तिन्यायेन "नाज्झलौ" इत्यादिघटकप्रत्याहारस्य स्वशक्यतावच्छेदकधर्मावच्छिन्नबोधकत्वस्यैव सम्भवादिति भावः। तत्र—लक्षणायाम्।

ननु "प्रथमयोः" इति सूत्रेऽनुवृत्तं यदगिति पदं तत्राकारस्योच्चारणेन तस्याण्त्वात्तत्राणुदित्सूत्रस्य प्रवृत्त्या 'विश्वपाः' इत्यादौ प्राप्तस्य पूर्वसवर्णदीर्घस्य व्यावृत्त्यर्थं "दीर्घाज्जसि

भावप्रकाशः।

मूले न्यूनता परिहृता, प्रकृताभिप्रायेण तथोक्तेश्च। क्रमेणोभयोरुपलक्ष्यद्वयमाह-अस्येति। अत्रापि स्वसादृश्यस्य प्रत्यक्षग्राह्यत्वेन तत्रोक्तरीत्या तद्वाच्यत्वग्रहेण तादृशलक्ष्यतावच्छेदकज्ञानसम्भव इति भावः। "त्यदादीनामः" इत्यादौ दोषमुद्धरति–अणुदिदिति। इत्युक्तेरिति। तथा च तदन्यस्यैव स्वादिपदार्थत्वेन बाधकवशादुक्तसूत्राप्रवृत्त्याच न लक्ष्यतावच्छेदकग्रहस्तत्रेति भावः। लक्षणेति। तथा च ह्रस्व एव तत्र विधेय इति भावः। इदमुपलक्षणम् "इको यणचि" इत्यादौ यणादीनामपि। अनुवाद्यत्वेनोक्तबाधकाभावादुक्तरीत्या वारणाभावेन तद्वैलक्षण्यसूचकस्तुशब्दः। अग्रहादिति। तीरत्वलक्षणामूलशक्यसम्बन्धयोर्ज्ञानं विना यथा तीरे न लक्षणा, तथाऽत्रापि वाक्यापरिसमाप्तिन्यायेन वाच्यवाचकभावस्य तादात्म्यस्य वा स्वशक्यसम्बन्धस्याज्ञानवत्तस्याप्यग्रहेण सा दुर्वचैव। अत एव "आदिरन्त्येन" इतिसूत्रमत्रापि सफलमिति भावः। इदञ्च प्राक् प्रतिपादितम्। तत्र लक्षणायाम्। यत्तु वृत्त्या प्रतीतस्येत्युक्तावपीकपदेन प्रतीतोकारादेर्दीर्घादिप्रत्यायकत्वं न स्यात्, अनुच्चारितत्वात् इत्याशङ्कां कृत्वा व्यक्तिपक्षेऽणुदित्सूत्रेण दीर्घकारादीनामपीक्पदवाच्यत्वग्रहादिति समाधाय, तदप्युक्तरीत्या आद्यवर्णे एव शक्तिग्राहकमित्याशङ्क्य, दीर्घादित्यादिज्ञापकात्प्रत्याहारान्तर्गतानुच्चारितोकारादिसवर्णेऽपीगादिपदशक्तिबोधकमणुदि-

सरला।

दीनामुपस्थितिरिक्पदनिष्ठशक्तिजन्योपस्थिता इकारादयस्तन्निष्ठशक्तिजन्यैवेति न दोष इति। स्वसवर्णग्रहणेऽपि तन्त्रादिना कथञ्चित्प्रत्याहाराद्यवर्णेन स्वसवर्णदीर्घाकारादीनां ग्रहणेन 'विश्वपौ' इत्यत्र कश्चिपा औ इत्यवस्थायां "प्रथमयोः पूर्वसवर्णः" इत्यनेन पूर्वसवर्णदीर्घापत्तिरूपदोषसम्भवेऽपीत्यर्थः।

सू०८।२।४४) इति निर्देशाच्च । तेनेक्शब्देन षट्षष्टिर्गृह्यन्ते, यण्शब्देन सप्त । भाव्यमानत्वेन सवर्णाग्राहकत्वेऽपि गुणानामभेदकत्वेनानुनासिकानामपि यवलानां

शब्दरत्नम् ।

अक्पदीयाकारेण स्वसवर्णग्रहणेऽपि तत्र "नादिचि" इत्येव सिद्धमिति भावः । तेन—लक्षणाङ्गीकारेण । भाव्यमानत्वेनेति । विधीयमानविषये लक्षणाऽभावस्यानुपदमुक्तत्वादिति भावः । अभेदकत्वेनेति । शास्त्रे उच्चारितगुणानां भेदकत्वाभावेऽपि स्वरूपकृत-

भैरवी ।

च" इति सूत्रमस्त्विति कथन्तस्य ज्ञापकत्वेनोपन्यास इत्यत आह—अक्पदीयेति । ननु दीर्घाकारविषये नादिचीत्येव सिद्धमिति कथनं नोपपद्यते "अस्य च्वौ" इत्यकार इवास्याप्यकारस्यानाक्षरसमाम्नायिकत्वेन तत्राणुदित्सूत्राप्रवृत्तेरिति चेत् ? न, "अमि पूर्वः" इति सूत्रेऽनुवृत्ताक्पदस्य "नादिचि" इत्यत्रापि सम्बन्धस्तस्य च विशेष्यत्वमिति प्रत्याहाराद्यवर्णे नादिचीत्यस्य प्रवृत्तिरित्याशयात् । यदि निराकाङ्क्षत्वात्तत्र तस्यासम्बन्ध इति ब्रूषे तदा "त्वादिभ्यः" इति निर्देशस्यैव ज्ञापकत्वमस्त्वित्याशयेन मूले तदुक्तिः सङ्गच्छते ।

ननु यथासङ्ख्याभावोपपादनाय गुणाभेदकत्वप्रदर्शनमनुचितं, यण्विषयेऽप्युक्तरीत्या लक्षणया निर्वाहादत आह—विधीयमानेति । ननु यद्यभेदस्तदा भेदनिबन्धनसप्तत्वसङ्ख्याविरोध इत्यत आह—शास्त्र इति । एतेन लोके भेद एव, यदभेदकत्वेन ज्ञापकम् "अस्थिदधि" इतिसूत्रे उदात्त इति कथनं, तच्छास्त्र एव तथा कल्पनेत्यत्र ज्ञापकमिति ध्वनितम् । भेदकत्वाभावेऽपीति । एतेन गुणकृतो भेदः शास्त्रप्रवृत्तिप्रतिबन्धको नेति ध्वनितम् । स्वरूपकृतेति । तत्तद्धर्मवैशिष्ट्यस्य भेदसाधकतया सप्तत्वसंख्याया उपपत्तिरिति भावः । अणुदिदित्यत्राणुदिदित्येव सामञ्जस्येनाण्ग्रहणं भिन्नानां यणां सङ्ग्रहार्थमेवेति यण्विषये भेदकत्वपक्ष एवोचित इत्याशये-

भावप्रकाशः ।

त्सूत्रमित्यर्थाङ्गीकारादिति समाहितम् । तथाच ह्रस्वेषु "आदिरन्त्येन" इत्यानुशासनिकी शक्तिस्तत्सवर्णे तु "अणुदित्" सूत्रमिति विवेकः । अतएव निरूढं प्रसिद्धं लक्षणमणुदित्सूत्रं यस्या इत्यर्थेन मूलमपि सङ्गतमिति मन्दः । तन्न, इक्पदस्यानण्त्वात् । अनुच्चारितोकारादीनां प्रत्याहारान्तर्गतत्वाभावाच्च, अपूर्ववचनकल्पनापेक्षया क्लृप्तलक्षणाङ्गीकारे लाघवाच्च, वैयर्थ्योक्तौ बीजाभावाच्चेति दिक् । ननु "प्रथमयोः" इत्यत्रानुवृत्ताकोऽकारे उक्तरीत्या सूत्रप्रवृत्त्या सवर्णग्रहणे 'विश्वपौ' इत्यादिवारणार्थत्वेन साफल्ये दीर्घादित्यस्य कथं ज्ञापकत्वमत आह—अक्पदीयेति । तत्र तद्विषये । विश्वपावित्यादावित्यर्थः । नादिचीति । यत्तु "अस्य च्वौ" इत्यादाविवात्र सूत्राप्राप्त्या लक्षणातः पूर्वं सिद्ध्यभावेन तस्य प्रमाणत्वासम्भव इति चिन्त्यमेतदिति । तन्न, "अमि पूर्वः" इत्यत्रावश्यकानुवृत्तिकाक्पदस्यात्रापि सम्बन्धेन तस्याकारविशेषणत्वेऽपि प्रत्याहाराद्यवर्णेषु तत्प्रवृत्तेर्निष्प्रत्यूहत्वमिति मूलाशयात् । यदि तु निराकाङ्क्षतया तत्र सम्बन्धो नेष्यते, तर्हि तत एव "त्वादिभ्यः" इति द्वितीयं तदुक्तं मूले । तत्रेकारांशेऽनुक्तिः प्रागुक्तरीत्याणुदित्सूत्रेण सिद्धेरिति बोध्यम् । तद्ध्वनयन्नाह—इति भाव इति । यत्तु तेनेत्यनेन न लक्षणापरामर्शः, भिन्नलिङ्गत्वात् । अव्यवहितनिर्देशस्य न ग्रहे हेतुत्वम्, मानाभावात् असम्भवाच्च । यथासङ्ख्याभावे हेतुरत इत्युक्तमिति न तत्राप्यस्योपयोगोऽतस्तेनेति व्यर्थमेवेति तन्न, इति ध्वनयन् व्याचष्टे—लक्षणाङ्गीकारेणेति । सूत्राभिप्रायमपि मूलं प्रागुक्तसिद्धान्ताविरोधाय लक्षणापरतया योजयति—विधीयेति । उक्तरीत्या तत्र लक्ष्यतावच्छेदकाग्रहस्योक्तत्वादिति भावः । नन्वभेदकत्वे सप्तेत्ययुक्तम्, तत्त्वस्य भेदनिबन्धनत्वात्, अत आह—शास्त्र इति । ननु लोके, "अनुदात्तः" इति ज्ञापकेन तत्रैव तत्सिद्धेः । स्पष्टं चेदं वृद्धिसंज्ञासूत्रे भाष्ये । उच्चारितेति । ननूदात्तादिसंशब्दनविहितानामिति भावः । अभावेऽपीति । तेन कार्यप्रवृत्त्यादौ न तस्य विघ्नत्वमिति भावः । स्वरूपेति । वास्तवतत्तद्धर्मवैशिष्ट्यादिना तत्तद्व्यक्तिभेदस्य प्रत्यक्षसिद्धस्य ब्रह्मणाऽपि दुर्निवारत्वादिति भावः । सानुनासिकरेफाभावस्तु प्रत्याहाराह्निके भाष्ये स्पष्टः ।

ग्रहणात् । अतो नास्ति यथासङ्ख्यम् । न च लक्ष्यार्थबाधात्पूर्वभाविनं शक्यार्थबोधमादाय यथासंख्यमस्त्विति वाच्यम् । एवमपि तृतीयचतुर्थाभ्याम् ऋकारलृकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ लृवर्णानां रेफादेशस्य ऋवर्णानां लादेशस्य च प्रसङ्गा-

---

शब्दरत्नम् ।

भेदमादाय सप्तत्वसंख्या न विरुध्यते । यदि तु अणुदित्सूत्रेऽण्ग्रहणाद्यण्विषये गुणानां भेदकत्वैवोचितेति विभाव्यते, तदाऽपि चत्वारो यण इति यथासंख्यमसङ्गतमेव । तद् ध्वनयन्नाह—अतो नास्तीति । तत्खण्डने एवाग्रहो न तु सप्तत्वसंख्यायामिति भावः । शक्यार्थबोधमादायेति । "ल्वादिभ्यः" (पा०सू०८।२।४४) इत्यादिनिर्देशोन्नीततात्पर्यानुपपत्तिग्रहस्य तत्सत्त्व एव सम्भवेन स बाध आवश्यकः । तत्र च यथासंख्यसहायेन वाक्यार्थे निष्पन्ने "ल्वादिभ्य" इत्यादिनिर्देशाल्लक्षणया जायमाने पुनर्वाक्यार्थबोधे लक्षि-

भैरवी ।

नाह—यदि त्विति । चत्वार इति । निरनुनासिकानामेव यादीनां यण्शब्दबोध्यत्वात् । तत्खण्डन इति । यथासङ्ख्यखण्डन इत्यर्थः नतु शक्यार्थबोधमादायेत्यसङ्गतमुक्तरीत्या सर्वत्र लक्षणया बोधकत्वस्येष्टत्वादत आह—ल्वादिभ्य इत्यादीति । "ल्वादिभ्यः" इति निर्देशेनोन्नीतः कल्पितो यस्तात्पर्यानुपपत्तिग्रहस्तस्य शक्यार्थबोधसत्त्वे एव सम्भव इति शक्यार्थबोध आवश्यकः, लक्षणायाः शक्यार्थोपस्थितिमूलकत्वादिति भावः । उक्तरीत्या "दीर्घाज्जसि" इत्यस्य चारितार्थ्यादत्र "ल्वादिभ्यः" इत्येवोक्तम् । तत्र चेति । शक्यार्थबोधानन्तरञ्जायमाने वाक्यार्थबोधे इत्यर्थः । शक्यार्थोपस्थितिमूलकवाक्यार्थबोधेऽपि "ल्वादिभ्यः" इत्यादिनिर्देशानुपप-

भावप्रकाशः ।

अण्ग्रहणादिति । तद्धि शुद्धयादिग्रहणेनान्येषामपि ग्रहणं यथास्यादित्येवमर्थम् । यदि च तत्रापि तत्प्रत्यक्षे तदाश्रयणं तर्हीष्टसिद्धिरेवेत्यज्ग्रहणमेव कुर्यादिति भावः । यद्यप्युक्तज्ञापकेनाण्विषये तदनाश्रयणसिद्धिस्तथापि प्रकृताशयेनाह—यणिति । उचितेति । सूत्रमते इतिशेषः । भाष्यमते जातिपक्षे तस्यैवासत्त्वात् । एवञ्च सप्तत्वोक्तिरभेदकत्वेनेत्याद्युक्तिश्चासङ्गतैवेति भावः । विभाव्यत इति । अनेन स्वानभिमतत्वं ध्वनितम् । योगविभागेनाप्रत्यय इति भाव्यमानेनेति वा गुणाभेदकत्वप्राप्तस्य निषेधेन तज्ज्ञापने सूत्रमतेऽपि फलाभावादिति बोध्यम् । तथापि मूलेष्टार्थाहानिरित्याह—तदापीति । भेदकत्वेऽपीत्यर्थः । चत्वार इति । शुद्धानामेव तेषामुच्चारितत्वात् । अतएव न कौस्तुभविरोधो मूलस्येति भावः । यथासङ्ख्यमिति । प्रक्रियाकृता तत्सूत्रं संलिख्योक्तमिति भावः । तद् ध्वनयन्—तदेव ध्वनयन्नित्यर्थः । ननु फलान्तरमस्ति, येन तस्य सार्थक्यं भवेदिति भावः । अतः उक्तरीत्या पक्षद्वयेऽपि वैषम्यात् । तदाह—तत्खण्डने इति । प्राचाङ्गीकृतयथासङ्ख्यखण्डने इत्यर्थः । अन्यथा अतोनास्तीत्यादि वाक्यं निष्फलमेव स्यात् । एतेन गुणानामभेदकत्वे कथं सप्तत्वेऽनुनासिकयवलग्रहणं हेतुरिति खण्डनकृदुक्तमपास्तमिति भावः । प्रकाशकृदुक्तं तदाशयं खण्डयति मूले—न च लक्ष्यार्थेति । ननु लक्षणयैव सर्वेषां बोधस्योक्तत्वेन शक्यार्थबोधस्यैवाभावः, अतस्तदाशयमाह—ल्वादिभ्य इत्यादि । "दीर्घाज्जसि" इत्यस्योक्तरीत्या चारितार्थ्यात् त्यागः लक्षणानङ्गीकारेऽनुपपन्नल्वादीत्यादिनिर्देशकल्पितदीर्घाद्यधिकरणकयण्सिद्धिग्रहस्य, तत्पूर्वकमेव लक्षणाप्रसरात्तद्बीजस्य शक्यार्थबोधसत्त्व एव सम्भवेनेत्यर्थः । अयम्भावः, शक्यार्थोपस्थितौ तद्विषयकान्वयबोधे जाते तस्मिन्वक्तृतात्पर्याविषयत्वेनाप्रामाण्यग्रहे तदन्यत्र वक्तृतात्पर्यग्रहे च सति लक्षणाग्रहात् लक्ष्यार्थबोधः, तदन्वयबोधं विना तत्र तात्पर्याविषयत्वग्रहासम्भवात् संसर्गविषयकज्ञानस्यैवान्वयबोधत्वादिति । तत्र चेति । आवश्यकशक्यार्थस्मृतावित्यर्थः । निष्पत्तौ हेतुरयम् । वाक्यार्थे इति । वाक्यार्थचतुष्टये 'इत्युत्तरस्य' इत्यादिनिर्देशैर्लक्ष्यसंस्कारके निष्पन्ने इत्यर्थः । निष्पन्नत्वमन्वये हेतुः । पुनरिति । इग्वाच्यदीर्घादीनां यादय इत्यादिरूप इत्यर्थः । बोधे इति । विषयत्वं सप्तम्यर्थः । दीर्घा-

त् । तस्मादिह "स्थानेऽन्तरतम" (पा०सू०१।१।५०) सूत्रेणैवेष्टसिद्धिरित्यभिप्रेत्या-
ह—स्थानेन आन्तर्यादिति ।

---

शब्दरत्नम् ।

तद्दीर्घादीनां स्ववाचकान्वयिन्येवान्वय इति भावः । **स्थानेऽन्तरतमसूत्रेणैवेति** । व्य-
क्तिपक्षे व्यक्तीनामानन्त्येन संख्याज्ञानाभावाद्यथासंख्यासम्भवाल्लक्ष्यासिद्धेश्चेति भावः ।

परे तु व्यक्तिपक्षे झलादिप्रत्याहारसूत्रेषु सर्वझकारादीनां ग्रहणं दुरुपपादम् । न हि

भैरवी ।

त्तिरस्त्येवेत्यत आह—स्वादिष्वित्यादीति । स्ववाचकेति । दीर्घवाचकह्रस्वान्वयिनीत्यर्थः ।
स्थानेन्तरतमसूत्रेणैवेति मूलस्थैवकारेण यथासंख्यसूत्रं व्यवच्छिन्नमित्याह—व्यक्तिपक्ष इति ।
एवं व्यक्तिपक्षे दोषमुद्भाव्य तस्मिन्पक्ष एव "स्थानेऽन्तरतमः" इति सूत्रस्य प्रवृत्तिरिति न,
किन्तु जातिपक्षेऽपीत्याह—लक्ष्यासिद्धेश्चेति । निरनुनासिकवकारघटितानां स्वादीनामित्यादि-
लक्ष्याणामसिद्धेरित्यर्थः । यदि यथासङ्ख्यपरिभाषाप्रवृत्तिस्तदाऽनुनासिकोऽपि वकारः कदा-
चित्स्यात् भाव्यमानेन सवर्णानाङ्ग्रहणन्नेत्यतिरिक्ता तु परिभाषा गुणाभेदकत्वात्प्राप्तस्य
सवर्णग्रहणस्य न बाधिका, किन्त्वणुदित्सूत्रप्राप्तसवर्णग्रहणस्यैवास्तीत्याशयेनाह—भाव इति ।
मूलकाराशय इत्यर्थः । नन्वेवं सति यथासङ्ख्यसूत्रे भाष्ये—"किमुदाहरणम्" "इको यणचि"
'दध्यत्र' 'मध्वत्र' इत्युक्तं, तद्विरोध इति चेत् ? न, तस्य भाष्यस्य प्राथमिकोपस्थितिकवर्णा-
भिप्रायकत्वात् ।

अथ मूलकाराशयमुपवर्ण्य भाष्यकारीयसिद्धान्तानुसारेणाह—परे त्विति । प्रत्याहारसूत्रेषु

भावप्रकाशः ।

दावन्वयः, सतिसप्तमी वा । स्वेति । स्वस्य दीर्घादेर्वाचको यस्तत्रत्य इकारादिर्ह्रस्वस्तस्योक्तरीत्या
लक्षणान्वयवति यकारादावित्यर्थः। विभक्त्यर्थद्वारेति शेषः। उपस्थितं परित्यज्येति न्यायादिति भावः। एवञ्च
मूले एवमपीति । अस्य भक्षितेऽपीति न्यायसूचकापिना एकदेशे निर्वाहेऽपीत्यर्थं इति सूचितमिति बोध्यम् ।
उभयत्र मान्योक्तिस्तु प्राचामनुरोधेनेति स्पष्टं सिद्धान्तविदाम् । एवकारसूचितहेत्वन्तरमाह—व्यक्तीति ।
आनन्त्येनेति । देशकालोच्चारयितृभेदात् सङ्ख्याशून्यत्वेनेत्यर्थः । अष्टत्यष्टादशानामित्यादेस्तु तज्जा-
तीयानामित्याद्यर्थः । एवं षट्षष्टिरित्यादेरपि । यमां यमीति यथासङ्ख्यमित्यादिग्रन्थास्तु जातिपक्षाभि-
प्राया एवेति भावः। ननु जात्या सकलव्यक्त्यनुगमेन नानन्त्यं दुष्टम्, अत आह—लक्ष्येति। अनुनासि-
कवकारघटितस्वौजसित्यादिलक्ष्यासिद्धेरित्यर्थः। एवञ्चानुनासिकाननुनासिकव्यवस्थार्थमावश्यकया स्थाने-
न्तरेतिपरिभाषयैव निर्वाहे तत्प्रवृत्तिर्निष्फला । अत एव यथासङ्ख्यसूत्रस्थभाष्यसङ्गतिः । तत्सूत्रस्थोऽपि
स्थानेन्तरेतिसूत्रभाष्यं च द्वयोः सिद्धान्तपक्षे समफलत्वबोधकमिति न तद्विरोधः । एतेनैवकारो ह्युक्तभाष्यवि-
रुद्ध इति मन्दोक्तम् । यथासङ्ख्यानङ्गीकारे उक्तभाष्यविरोधः, किञ्च अनुनासिकांशे तद्व्यापारेणान्तरत-
मपरिभाषाप्रवृत्तावप्युक्तरीत्याऽन्यांशे प्राप्तामपि तां परत्वाद्बाधित्वा प्राप्तां तां को निवारयेदिति जगन्नाथो-
क्तमविरोधात्प्राथमिकबोधे एव परिभाषाद्वयस्याप्युपस्थितिरिति रत्नाकरोक्तं चापास्तम् । यत्तु "तस्यस्य"
इत्यादावप्यानन्त्येन तदसम्भवात्सूत्रं निर्विषयं स्यात् । किञ्च स्थानेन्तरेत्यस्य प्रवृत्तौ तमब्ग्रहणाच्चतु-
र्मुखादावनुनासिकस्येव स्थानप्रमाणोभयान्तरतमे ह्रस्वे चरितार्थस्य यणो दीर्घेऽप्रवृत्तिः स्यात्, स्वादो-
स्यादिनिर्देशाश्रयणे तु गौरवमिति मन्दः । तन्न, उक्तोत्तरत्वात् । जातिपक्षे सूत्रचारितार्थ्याच्च सप्तम्यन्त
पाठस्य भाष्ये खण्डितत्वाच्चेति दिक् ।

नन्वेवमप्यणुदित्सूत्रभाष्यविरोधोऽत्र पक्षे झलादिष्वनिर्वाहश्च । अत एव जातिसङ्ख्यासाम्यमादाय स-
ङ्ख्यातानुदेशो भाष्यकृतामभिप्रेतः । निरूढलक्षणाऽप्येवंसति नाङ्गीकर्त्तव्येति जगन्नाथोक्तिरपि सङ्गच्छते ।
अत आह—परेत्वित्याद्याहुरित्यन्तेन । परे भाष्यानुयायिनः । तुः उक्तवैलक्षण्याय । झलादिप्रत्या-
हारेति बहुव्रीहिः। "झलोझलि" इत्यादिसूत्रेष्वित्यर्थः । यद्वा झलादिप्रत्याहारफलकझभञ् इत्यादिसूत्रेष्वि-
त्यर्थः । सर्वझकारेति पाठः । यावद्दिष्टझकारादीनामित्यर्थः । एतेन प्रपञ्चवर्तिकालत्रयसम्बन्धिनां तेषामेकत्र
ग्रहणासम्भव इत्यपास्तम् । दुरुपपादमिति। एकव्यक्तेस्तत्र पाठात्। ततश्च 'अवात्ताम्' इत्यादौ वसेर्लुङ्यटि

## शब्दरत्नम् ।

तत्र लक्षणा वक्तुं शक्या, लक्ष्यतावच्छेदकाग्रहात्। एवं च तत्र प्रत्याहारसूत्रेषु जातिनिर्देशेनैव निर्वाहो नान्यथा । एवं च "अइउण्" (मा०सू०१) इत्यादावपि जातिनिर्देश एवोचितः, अर्द्धजरतीयस्यानौचित्यात्। अत एव "अणुदित्—"(पा०सू०१।१।६९)सूत्रे भाष्ये प्रत्याहारेषु "अस्य च्वौ" (पा०सू०७।४।३२) इत्यादौ च उक्तामनुपपत्तिमाशङ्क्य जात्याश्रयणमेव कृतम् । यथासंख्यसूत्रं च व्यक्तिसाम्य इव धर्मसाम्येऽपि प्रवर्तते । "स्य-

## भैरवी ।

प्रत्याहारघटितेषु "झलो झलि" इत्यादिषु सूत्रेषु । अग्रहादिति । झलामण्भिन्नत्वादिति शेषः। तत्र—तेषु । प्रत्याहारसूत्रेषु—प्रत्याहारघटितेषु सूत्रेषु । इदमुपलक्षणम् "अस्य च्वौ" इत्यादेः। जातिनिर्देशेन एव तत्तज्जातेरेवोद्देश्यत्वनिमित्तत्वतात्पर्यकत्वादेव । यद्यपि साक्षाज्जातौ तदसम्भवस्तथापि व्यक्तिद्वारा बोध्य इत्युक्तमेव । निर्वाहः—अवात्तामित्यादिलक्ष्याणान्निर्वाहः । एवञ्च—जातिपक्षावश्यकत्वे च । उचित इति । प्रत्याहारनिर्देशस्थले तत्तत्प्रत्याहारेणोद्देश्यबोधनायेत्यादिः । अत एव—जातिपक्षाश्रयणतात्पर्यकत्वादेव । उक्तामिति । व्यक्तिपक्ष इत्यादिः । तत्र हि—"प्रत्याहारनिर्देशे सवर्णाग्रहणमनण्त्वात् । तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात्" इत्यनेनोक्तामित्यर्थः । एव कृतमिति । एवकारेण लक्षणाव्यवच्छेदः । लक्षणावादिमतेऽण्विषये व्यक्तिपक्षाश्रयणमण्भिन्नप्रत्याहारग्रहणस्थले जातिपक्षाश्रयणमिति यद्वैरूप्यं, तदस्मन्मते नास्ति । एवञ्च यथोत्तरम्मुनीनाम्प्रामाण्यमिति लक्षणाश्रयणमप्रामाणिकमिति भावः । जातिपक्षाश्रयणस्याभिप्रेतत्वादेव "स्थानेऽन्तरतमः" इति सूत्रभाष्ये—"किमुदाहरणम् ? इको यणचि 'दध्यत्र' 'मध्वत्र' । यथासङ्ख्येनाप्येतत्सिद्धम्" इत्युक्तम् । यत्तु यथासङ्ख्यसूत्रे दध्यत्र मध्वत्रेत्यस्य स्थानेऽन्तरतमसूत्रोदाहरणत्वप्रदर्शनपरम्भाष्यं, तत् "इको यणचि" इत्यादौ सूत्रे तदुदाहरणे चोभयपक्षे फलांशे वैलक्षण्याभावतात्पर्यकमित्याशयेनाह—यथासङ्ख्यसूत्रञ्चेति । यथेति । यदि व्यक्तिसाम्यस्य विवक्षा स्यात्तदा ऌशब्देन ऌङ्ऌटोर्बोधनेन

## भावप्रकाशः ।

तसस्तामि सिचि "सःसि" इति तत्वे "झलो झलि"इति सलोपो न स्यात् । तस्य त्वभित्था इत्यादिरवकाश इति भावः । अग्रहादिति । अणुदित्सूत्राप्रवृत्तेरिति भावः। एवञ्चेति । लक्षणाया दुर्वचत्वे चेत्यर्थः । तत्र झमन्नित्यादिषु । जातीति । जातितात्पर्यकनिर्देशेनेत्यर्थः। अन्वयमुक्त्वा व्यतिरेकं सूचयितुमेवव्यावर्त्यमाह—नान्यथेति । जातिपक्षानाश्रयणे इत्यर्थः। एवञ्चेति । तत्पक्षाश्रयणावश्यकत्वे चेत्यर्थः। जातीति । व्यापकजातीत्यर्थः। एवमग्रेऽपि । व्यक्तिपक्षे इव तादृशजातिपक्षेणापि तत्रानिर्वाहादिति भावः । उचित इति । लक्षणाभावजलाघवादिति भावः। हेत्वन्तरमाह-अर्धेति। अणंशे लक्षणा, हलंशे जातिपक्ष इत्येवंरूपस्येत्यर्थः। सम्भवत्यैकरूप्ये वैरूप्यस्यान्याय्यत्वादिति भावः। नन्वण्ग्रहणाप्रामाणिकतदङ्गीकारे न दोषः, अतआह—अत एवेति। अर्धजरतीयानौचित्यादेवेत्यर्थः। उक्तामिति। "प्रत्याहारे सवर्णाग्रहणमनुपदेशात्" "तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात्"इत्यादिना प्रागुक्तरूपामित्यर्थः। एवेन लक्षणाव्यवच्छेदः। तथाच यथोत्तरं मुनीनां प्रामाण्यात्तदप्रमाणमिति भावः । कृतमिति । "आकृतिग्रहणात्सिद्धं तद्वच्च तपरकरणं हल्ग्रहणेषु च" इत्यादिनेति भावः । ननु ममापि न तत्पक्षे तत्प्रतिपादने आग्रहः, किंतु यथासङ्ख्यखण्डन इत्यत्र पक्षेपि तत्सिद्धिरेव, व्यक्तिसाम्ये एव तत्प्रवृत्तेः । अत आह—यथासंख्येति । समूलाकृतेत्यादावित्रा-

## सरला ।

लक्ष्यतावच्छेदकाग्रहादिति । यथा अकारादीनामष्टादशविधाऽत्वादिषु लक्ष्यतावच्छेदकत्वस्य ग्राहकमणुदित्सूत्रं वर्तते तथा झलादौ तत्त्वग्राहकस्य कस्यचिदभावेन लक्ष्यतावच्छेदकत्वस्य ज्ञातुमशक्यतया झलादीनां सर्वझकारव्यक्तिषु लक्षणा नैव वक्तुं शक्येति भावः ।

धर्मसाम्येऽपीति । ऌत्वं ऌट्त्वं चादाय स्यतास्योर्यथासंख्येन प्रवृत्तिर्भवति । अन्यथा ऌशब्देन

अनचि च (पा०सू०८।४।४७)। द्वेवेति। "यरोऽनुनासिके" (पा०सू०८।४।४५) इति सूत्राद् वाग्रहणमनुवर्तते इति "नाज्झलौ" (पा०सू०१।१।१०) इति सूत्रे कैय-

---

शब्दरत्नम् ।

तासी लृलुटोः" (पा०सू०३।१।३३) इत्यादौ यथा । नाप्यत्र पक्षे ऋकारादौ लकाराद्याप-त्तिः । लृत्वादिजातेर्ऋकारादावभावात् । न च जातिपक्षे अणुदित्सूत्रेऽण्ग्रहणप्रत्याख्याने "उपसर्गादृति-" (पा०सू०६।१।९१) इत्यादौ ऋकारेण लृकारग्रहणाय सावर्ण्यवचनस्थाने लृवर्णस्य ऋवदतिदेशाद् लृकारे रेफापत्तिरितिवाच्यम्, क्लृप्तशिखार्थे तस्यातिदेशस्या-

भैरवी ।

तत्र यथासङ्ख्यसम्बन्धो न स्यात् । न चेको यणचीत्यत्र स्थानसाम्यमपि नियामकमिति यदि फलाभेदाय कल्पयसि तदा लृकारस्य वकारोऽपि स्यादिति वाच्यम्, "स्थानेऽन्तरतमः" इत्यत्र तमग्रहणेनान्यूनानतिरिक्तस्थानकादेशस्य ग्रहणात् । यथासङ्ख्यसूत्रस्येको यणची-त्यत्र प्रवृत्तिस्वीकारपक्षे मूलोक्तदोषापत्तिं परिहरति—नाप्यत्रेति । अतिदेशादिति । समानजा-

भावप्रकाशः ।

पीति भावः । तत्र प्रामाण्याय दृष्टान्तमाह—स्यतेति । अन्यथा तत्र सामान्यग्रहणेऽपि भाव्यर्थकटिल्लुट्-साहचर्याद् लृडेव गृह्येतेति भावः। एतेन मूलोक्तप्रथमदोषटीकोक्तव्यक्त्यानन्त्यप्रयुक्तदोषश्च उद्धृतः । एवञ्च प्राचीनग्रन्थसौष्ठवे मूलमेवायुक्तमिति भावः । एतदेव ध्वनयितुं तदुक्तदोषान्तरमप्युद्धरति—नापीति । एतेनैवमपीति मूलोक्तदोषो व्यक्तिपक्ष इति ध्वनितम् । तच्चोपपादितं प्राक् । लकाराद्येतिपाठः । अभा-वादिति । नचोभयोरुभयवाच्यत्वे जातिद्वयविशिष्टैव सर्वव्यक्तिधर्मत्वादिति वाच्यम्, सावर्ण्यवशात्त-त्स्वारोपेण तथाव्यवहारोपपत्तेः । अत एव पृथक्लृकारोपदेशः सार्थक इति भावः । एवं मूलाभिमतसर्वदोषो-द्धारेऽपि प्रकारान्तरेणाऽऽशङ्कते—नचेति । प्रत्याख्याने इति । "सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणा-त्" इत्यादिनेति भावः । यत्त्वेवं वार्तिकस्याप्यमूलत्वादसत्त्वेन त्रिंशदनुपस्थित्यैव न दोषः । नचैवं 'होतॢल-कारः' इत्यादौ "अकः सवर्णे" "ऋत्यकः" इत्यनयोरप्राप्त्यापत्तिः इति "इकोऽसवर्णे" इत्यस्यापत्तिश्च, "उपसर्गादृति" इत्यादौ दोषश्चेति वाच्यम्, "ऋलृक्" सूत्रे भाष्ये तद्दोषाणामन्यथोद्धृतत्वात् । नच तर्हि नचेत्यादिग्रन्थासङ्गतिरेवेति वाच्यम्, गम्लृ सृप्लृ इत्यादिलृकारानुकरणे दोषान्यथासिद्धेरभावादिति । तन्न, तत्सूत्रस्थभाष्यसिद्धान्ताज्ञानात् । तथाहि, तत्र हि लृकारोपदेशस्य स्वोक्तफलत्रयस्य वार्तिककृता खण्डितत्वेऽपि भाष्यकृताऽशक्तिजानुकरणार्थत्वं व्यवस्थापितम्। तथाच 'कुमार्लृतक इत्याह' इत्यादौ यणा-दिसिद्धिः । नचैवमपि 'होतृ लृतकः' 'प्लृतकीयति' इत्यादौ दोष इति वाच्यम्, व्यक्तिपक्षे सावर्ण्याण्ग्रह-णलक्षणाभिर्जातिपक्षे सावर्ण्यऋग्रहणाभ्यां सावर्ण्येन समानजातित्वातिदेशेनैव वा निर्वाहात्। नचैवं तदुप-देशो व्यर्थः, कैयटमते वार्तिकोक्तसावर्ण्यमनाश्रित्योपदेशकरणात् । मूलमते वार्तिकं दृष्ट्वा तदप्रवृत्तेः । तद-नित्यत्वज्ञापनेन चारितार्थ्याच्च । अत एव प्लुतसिद्धिः। साङ्कर्याभावो लृदित्सु ऋदित्कार्याभावश्च । वस्तु-तस्तत्रानुपदेशेऽप्रामाण्यशङ्कया सवर्णसंज्ञापि तयोर्वक्तुमशक्यैवेति वार्तिकासङ्गतिरेव स्यादिति तदुपदेशः सा-वर्ण्यद्वारा फलमपि तस्य स्थलत्रय एवेति तत्रैव वार्तिककृतस्तदुक्तिः । एवञ्च ऋवदतिदेश एव फलितोऽतः स एवोचितः, लाघवात् । अन्यथा "लृति लृ वा" "पुषादि" इत्यादावदोषाय वचनद्वयपृथगनुबन्धकरणादिसाम-र्थ्याश्रयणे गौरवं स्पष्टमेव । अतएव साङ्कर्यमपि नेति। तद्ध्वनयन्नाह—उपसर्गादिति। आदिना "ऋत्यकः" "उरण् रपरः" इत्यादिसङ्ग्रहः। एतेन स्वरसन्धिप्रकरणे एवातिदेशः पाठ्य इति कौस्तुभोक्तं निरस्तम्। तावता प्लुतसिद्धावपि पक्षद्वये उरणित्यादावनिर्वाहात्। तद्ध्वनयन्नाह—वचनस्थाने इति। तुल्यास्यसूत्रे तत्प्रति निधित्वेनेत्यर्थः। शब्देन्दुशेखरविरोधस्तु न, लाघवानादरेण तत्प्रवृत्तेरिति भावः। लृकारे इति। वैप-

सरला ।

लङ्लुटोर्द्वयोर्व्यक्त्योर्ग्रहणेन लुट्शब्देन चैकस्य लुट्लकारस्य ग्रहणेन स्यतास्योर्यथासंख्यं प्रवृत्तिर्न स्या-दिति यथासंख्यसूत्रस्य व्यक्तिपक्षेऽपि धर्मसाम्यमादाय प्रवृत्तिरवश्यमभ्युपगन्तव्येति तदाशयः । अति-देशादिति । "ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्" इति वचने सावर्ण्यपदेन साजात्यस्य विवक्षितत्वात् ।

शब्दरत्नम् ।

नित्यत्वावश्यकत्वात् । तत्पक्षेऽण्ग्रहणप्रत्याख्यानेऽपि "अप्रत्ययः" (पा०सू०१।१।६९) इत्यंशो वाक्यभेदेन विधीयमाने जातिग्रहणप्राप्तसवर्णग्रहणनिषेधकस्तपरसूत्रवदिति "त्यदा-

भैरवी ।

तित्वातिदेशादित्यर्थः । वस्तुतो ऋत्वजातिर्लृकारे नास्ति पृथक्पाठस्याक्षरसमाम्नाये कृतत्वात् । अनित्यत्वेति । ऋलृक्सूत्रे पृथक्पाठस्य धातुपाठे ऋकारलृकारयोः पृथक्करणस्य चात्र ज्ञापकत्वसम्भवादिति शेषः ।

ननूद्देश्यांश इव विधेयांशेऽपि जातिनिर्देश एव वाच्यस्तथा च "त्यदादीनामः" इत्यादौ दीर्घापत्तिरत आह—तत्पक्ष इति । जातिपक्ष इत्यर्थः । प्रत्याख्यान इति । "सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्" इत्यनेन भाष्यकृता प्रत्याख्यान इत्यर्थः । वाक्यभेदेन—योगविभागेन । "चोः कुः" इत्यादौ विधेयविषये उदित्करणसामर्थ्यात्सवर्णग्रहणस्यावश्यकतया तदेकवाक्यत्वस्यानावश्यकत्वेन योगविभाग आवश्यक इति भावः । नचोच्चारणार्थ एवोकार इति शङ्क्यम् ? उदूद्देश्येऽपि तथात्वापत्तेः । उदिद्ग्रहणसामर्थ्यादिति चेत् ? विनिगमनाविरहेणोभाभ्यां सवर्णग्राहणं दुर्वारमेव । निषेधक इति । एतेनाधुना प्रसज्यप्रतिषेधार्थको नञिति बोधि-

भावप्रकाशः ।

रीत्यं तु नैवात्र पक्षे इति भावः । ननु तत्र तदतिदेशाङ्गीकारे तत्र रेफापत्तिवत् प्लुतनिषेधापत्तिः, "ऋति ऋवा"इत्यत्र लृग्रहणापत्तिश्च, लृदित्सु ऋदित्कार्यापत्तिश्च, वचनद्वयं तु ऋकारे "लृति लृवा"इत्यस्या प्रवृत्त्या चरितार्थम् । एवं पृथगनुबन्धकरणमपि ऋदित्सु लृदित्कार्याप्रवृत्त्येति चेत् ? न, अतिदेशानित्यत्वेन क्वापि दोषाभावात् । तथाहि व्यक्तिपक्षे समानजातित्वातिदेशपक्षे च प्राप्तसाङ्कर्यादेः सावर्ण्यऋग्रहणाङ्गीकारपक्षे साङ्कर्याभावेऽपि प्लुतह्रस्वनिषेधयोरापत्तेश्च । मूलमते लृकारोपदेशेन सावर्ण्यानित्यत्वज्ञापनेन वारणवत् । तत्रैव नव्यमते पृथगनुबन्धकरणेन क्वचिन्मिथोऽग्राहकत्वस्य ऋदिल्लृदित्कार्यासाङ्कर्यस्य च ज्ञापनेन वारणवच्चात्र पक्षे वक्ष्यमाणाचसिद्धिदोषस्य ग्रहणाग्रहणभेदेन प्रकारान्तरेण वारणेऽपि क्लृप्तशिखादौ पूर्वत्वेन लृत्वस्यानसिद्धत्वेऽपि एकदेशेतिन्यायेन वार्तिककृता खण्डितस्यापि प्लुत्यादिफलस्य सैषेत्यादिभाष्येण बह्वायाससाध्यमल्पफलं यथा न युक्तमेवमरवतोह्रस्वस्येति गुरुन्यासरूपसूत्रभेदेन लृकारप्रत्याख्यानमपीत्याशयकेन व्यवस्थापनेन तदर्थं तदुपदेशेऽच्त्वसिध्या द्वित्वस्वरितसिद्धावपि प्रागुक्तरीत्या तावन्मात्रेणानिर्वाहात्सावर्ण्याद्यन्यतमस्य पक्षद्वयेऽप्यावश्यकत्वेन 'अनृत' इतिनिषेधापत्त्या कृतेऽपि तदुपदेशे प्लुतासिद्धिरेवेति तत्फलं सावर्ण्यादेरनित्यत्वं विना दुर्घटमिति । तेन तदपि ज्ञाप्यत इत्यतिदेशस्यानित्यत्वस्यावश्यकत्वम् एकदेशेतिन्यायस्यैव । अतएव तदप्रवृत्तिः । अन्यथा तदनित्यत्वेऽपि प्लुतनिषेधापत्तिस्तदवस्थैवेति दिक् । तत्सर्वं हृदि निधायाह—क्लृप्तेति । अत्र प्लुतसिध्यर्थमित्यर्थः । इदमुपलक्षणम्—लृतकादौ तत्सिद्धेः यत्त्वत्र पक्षेऽप्रत्यय इत्यपि न कार्यम् 'अहं संमार्ष्टि' 'पशुना यजेत' इत्यादाविवाविवक्षाविवक्षाभ्याम् "अस्य च्वौ" "त्यदादीनामः" इत्यादाविष्टसिद्धेरिति कौस्तुभकृत् । तन्न, बहुशो वैपरीत्यदर्शनेन तयोरत्राश्रयणस्य दुष्करत्वात् तच्छास्त्रे धर्मशास्त्रे च तयोर्व्यभिचरितत्वाच्च तपरसूत्रसार्थक्यपरस्वपूर्वग्रन्थविरोधाच्च । तद् ध्वनयन्नाह—तत्पक्षे इति । अंशत्वं च यथाश्रुतसूत्ररीत्या समुदायस्वरूपवाक्यत्वमात्रेण निषेधस्य निषेध्याकाङ्क्षया तद्विशेषणत्वेन वा बोध्यम् । वाक्यभेदेनेति । अन्यथा "चोः कुः" इत्यादौ विधेये उगित्त्वानर्थक्यापत्तिः । एवञ्च योगविभाग एवात्र पक्षे उचित इति तात्पर्यम् । एतेनानन्तरेतिन्यायेन तस्यैव निषेधो ननु टीकोक्तस्य । तत्र तदानर्थक्यं तु न, तस्योच्चारणार्थत्वादितिमन्दोक्तमपास्तम्, उक्तयुक्तेः, ऐच्छिकोच्चारणार्थत्वेऽतिप्रसङ्गापत्तेश्च, उद्देश्येऽपि तत्त्वापत्त्या बहूपप्लवापत्तेश्च । विधीयमाने इति । अणीत्यर्थः । निषेधक इति । एतेन प्रसज्यप्रतिषेधो ध्वनितः । स च युक्तः, पर्यु

सरला ।

अन्यथा तपरपक्षे सवर्णग्राहकसूत्राभावेन वार्तिकस्य वैयर्थ्यमेव स्यादिति बोध्यम् । आवश्यकत्वादिति । धातुपाठे ऋकारलृकारयोः पृथगनुबन्धयोः करणेन तयोः सावर्ण्यस्य साजात्यस्य वाऽनित्यत्वज्ञापनात् । प्रत्याख्यानेऽपीति । "सवर्णेऽणग्रहणमपरिभाष्यमाकृतिग्रहणात्" इति भाष्येणेति शेषः । जातिग्रह-

टः। एवं च "सर्वत्र शाकल्यस्य" (पा०सू०८।४।५१) इति सूत्रं तत्प्रपञ्चभूतं पूर्वो-

शब्दरत्नम्।

दीनामः" [पा०सू०७।२।१०२] इत्यादौ न दोषः। एवञ्चात्र यण्पदेन जात्याश्रयणेनापि न सवर्णबोधनमिति "स्वौजस्-" (पा०सू०४।१।२) इत्यादौ अनुनासिकस्थानेऽपि निरनुनासिक एव। अत एव स्थानेऽन्तरतमसूत्रे भाष्येऽस्य तदुदाहरणत्वमाशङ्क्य "यथासंख्यम्" (पा०सू०१।३।१०) इत्यनेनापि सिद्धमित्युक्तम्। तेनात्र तयोः फलाविशेष उक्तः।

भैरवी।

तम्। अन्येनैकवाक्यतायां हि पर्युदासस्य प्रसक्तिः। सर्वनिषेधकत्वे दृष्टान्तमाह—तपरसूत्रवदिति। यथाऽत्र पक्षे तपरसूत्रस्य तद्वच्च तपरकरणमित्यइउण्सूत्रभाष्योक्त्या सूत्रस्य सार्थक्याय च सर्वनिषेधकत्वं, तथा ऽप्रत्यय इत्यत्रापि कल्पनेति भावः। नच जातिपक्षे ऽप्रत्यय इत्यंशोऽपि प्रत्याख्येय इति भ्रमितव्यम्, "सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्" इत्यनेनाण्ग्रहणप्रत्याख्यानस्यैव भाष्यकृदभिमततत्वनिर्णयात्। तपरसूत्रस्य सवर्णपदानुवृत्त्या नियमार्थत्वपक्षेऽपि फलितनिषेधमादाय दृष्टान्ततयोपन्यास इति बोध्यम्। यत्तु "त्यदादीनामः" इत्यादौ "पथिमथि" इत्यत्रेव प्रश्लेषेण निर्वाह इति; तन्न, पथिमथोत्यत्राप्यप्रत्यय इत्यनेन निषेधात्प्रश्लेषानुपयोगात्। प्रश्लेषे ऽनेकाल्त्वेन सर्वादेशत्वापत्तेश्च। एवञ्च—अप्रत्यय इत्यनेन निषेधे च। अपिना गुणाभेदकत्वस्य परिग्रहः। निरनुनासिक एवेति। यत्र यत्र विधेयता तत्र सर्वत्रानेन निषेधादेव मतोर्मस्य निरनुनासिक एव वकारः। अत एव तद्वानासामुपधानसूत्रनिर्देशसङ्गतिः। अन्यथा प्रत्यये भाषायामित्यनेन दस्य स्थाने ऽनुनासिकापत्तिरित्येवकारेण ध्वनितम्। एवं "यवलपरे यवला वा" इत्यनेनापि निरनुनासिक एव।

अत एव—जातिपक्षस्याभिप्रेतत्वादेव। उक्तमिति। भवन्मते प्रागुक्तरीत्या यथासङ्ख्यासम्भवेन तदुक्त्यसङ्गतिः स्पष्टैव। तेन—उक्तभाष्येण। अत्र—इको यणित्यत्र। तयोः—द्वयोः

भावप्रकाशः।

दासस्यासम्भवादिति भावः। ननु अशास्त्रीयस्य शास्त्रेण कथं निषेधः। अत आह—तपरेति। तद्वच्च तपरकरणमिति "अइउण्"सूत्रभाष्योक्तथा यथा तस्य तन्निषेधकत्वं तद्वदित्यर्थः। तुल्यन्यायादिदमपि तेनैव बोधितम्। ध्वनितं चेदं "ज्यादादीयसः"इतिसूत्रभाष्ये इति स्पष्टं तत्रैवोद्द्योते। अत एव सवर्णेऽण्ग्रहणमित्येवाक्तं भाष्ये। एतेन कौस्तुभयोरन्योन्यविरोधो ध्वनितः। अत्र पक्षे गुणाभेदकत्वपक्षे च भाष्यसंमते सवर्णपदानुवृत्त्या नियमार्थत्वमेव तपरसूत्रस्येत्यन्यत्र विस्तरः। त्यदादीनामिति। यत्त्वत्र प्रश्लेषेण निर्वाहः "पथिमथि" इत्यत्रेवेति मन्दस्तन्न, ततोऽत्र भेदस्य स्पष्टत्वात्, तद्ग्रन्थस्य प्राचामनुरोधित्वेन मन्मते तत्रापि तदभावाच्च, अतिप्रसङ्गापत्तेश्च, सूत्रमतेऽपि त्वद्रीत्या वैयर्थ्यापत्तेश्च। लक्ष्यासिद्धिदोषमपीष्टापत्त्या निराचष्टे-एवञ्चेति। अप्रत्यय इत्यङ्गीकारे चेत्यर्थः। अत्र "इको यण्" इतिसूत्रे। अपिर्गुणाभेदकत्वपक्षादिसमुच्चायकः। अत एव घटवदित्यादौ मतोर्मस्य नानुनासिको वकारः। तथा सति "तद्वानासा" इत्यादौ नित्यानुनासिकापत्त्या तन्निर्देशासङ्गत्यापत्तिः। विसंवादिसौत्रत्वकल्पने च न मानम्। एवं "यवलपरे" इत्यत्रापि बोध्यम्। एतेन तत्र सानुनासिका न स्युरिति मन्दोक्तमपास्तम्, आदिनाऽनुकरणसङ्ग्रहः। तन्मते भाष्यविरोधं सूचयन् स्वमते तत्सम्मतिमाह—अत एवेति। सानुनासिकस्थानेऽपि तदन्याङ्गीकारेणोक्तरीत्या यथासङ्ख्यसम्भवादेवेत्यर्थः। अस्य इकोयणित्यस्य। तदुदाहरणत्वम्, "स्थानेन्तर" इति सूत्रविषयत्वम्। अपिस्तस्यैव समुच्चायकः। भवन्मते तु टीकोक्तदोषद्वयेन तदसङ्गत्या तद्विरोधापत्तिः स्पष्टैवेति भावः। एतेन लक्ष्यसिद्ध्यर्थमावश्यकेन स्थानेन्तरेत्यनेनैव निर्वाहे "अनियमे नियमका-

सरला

णप्राप्तेति। इदमुपलक्षणं गुणाभेदकत्वप्राप्तस्य, 'अप्रत्ययः' इत्यनेन विधीयमानः सवर्णस्य ग्राहको नेति सामान्यरूपेण निषेधस्य करणेन येन येन प्राप्तं सवर्णग्रहणं तस्य सर्वस्यापि निषेधलाभात्। जात्या-

त्तरसूत्रद्वयं च नारम्भणीयमिति भावः। यत्तु "दीर्घादाचार्याणाम्" (पा०सू०८।४।५२)

शब्दरत्नम् ।

"उञः" (पा०सू०१।१।१७) इति सूत्रे नव्यानां प्रमाद एव । न च झलादिषु झकारादिभी रूपसादृश्येन सर्वझकारादिप्रतीतिरिति वाच्यम्, अगादिष्वपि किञ्चित्सादृश्यमाश्रित्य दीर्घादीनामपि ग्रहणोपपत्तौ "अणुदित्-" (पा०सू०१।१।६९) सूत्रस्य, तद्वाच्येत्यस्य च वैयर्थ्यापत्तेः । "ल्वादिभ्यः" (पा०सू०८।२।४४) इति निर्देशानामीषत्सादृश्येनापि ग्रहणमित्यर्थज्ञापकताया युक्तत्वात् । तदप्युक्तम् अइउण्सूत्रे भाष्ये "रूपसामान्याद्वा सिद्धम्"

भैरवी ।

परिभाषयोः । उक्त इति । जातिपक्षबोधनद्वारेति शेषः । ननु "उञ्" इति सूत्रोदाहरणसमये 'किम्विति' इति प्रयोगेऽनुनासिकवकारस्य प्रदर्शनपरदीक्षितादिग्रन्थस्य कथमुपपत्तिरत आह—उञ इति सूत्र इति । नव्यानाम्—दीक्षितप्रभृतीनाम् । जातिपक्षानाश्रयणेऽपि झलादिप्रत्याहारग्रहणस्थले निर्वाहमाशङ्क्य निराचष्टे—नचेति । रूपसादृश्येन—स्वरूपस्य सदृशत्वेन । यथाऽल्पत्वमहत्त्वकृतभेदापरामर्शेनाल्पत्वमहत्त्वस्थूलत्वकृशत्वविशिष्टास्वपि व्यक्तिषु 'घटः' 'गौः' इति प्रत्ययो भवति तथा 'अवात्ताम्' इत्यत्र द्वयोरपि तकारयोर्झल्पदबोध्यत्वं भविष्यतीति भावः । किञ्चित्सादृश्यमिति । तुल्यध्वनिव्यङ्ग्यत्वकृतमधुना सादृश्यम्, दृष्टान्ते तु समानावयवसंस्थानकृतम्, नतु जातिकृतम्, जातिपक्षपरित्यागस्य कृतत्वात् । ग्रहणेति । ह्रस्वादिभिरिति शेषः । उक्तार्थे मुनिसम्मतिमपि दर्शयति—ल्वादिभ्य इति । ईषदिति । एतेन दीर्घाभिव्यञ्जकध्वनेराधिक्येऽपि न क्षतिरिति सूचितम् । युक्तत्वादिति । लक्षणाज्ञापकतापेक्षयोक्तार्थज्ञापकतायां लाघवादिति शेषः । स्वोक्तार्थे भाष्यकारस्यापि सम्मतिमाह—तदप्युक्तमिति । तदपि—रूपसादृश्येन सिद्धमित्यपि । अपिना जातिपक्षसमुच्चयः । नचात्र पक्षे ऋकारेण

भावप्रकाशः ।

रिणी" इति भाष्यादावुक्तत्वात्, आकाङ्क्षितविधानस्य ज्यायस्त्वाच्च यथासङ्ख्यसूत्रप्रवृत्तिबोधकभाष्यादिग्रन्था अयुक्ता एवेति मान्योक्तिः प्राचामनुरोधेनेति ध्वनितम् । तेन उक्तभाष्येण । अत्र इकोयणित्यत्र । एवञ्च जातिपक्षस्तत्स्थाने निरनुनासिकश्च तत्सम्मत इति भावः । नन्वेवमपि 'उञः' इत्यत्र सानुनासिकलक्ष्यस्य मूले कण्ठत उक्तत्वेन तद्विरोधः । अतआह—उञ इतीति । नव्यानाम् मूलकृत्प्रभृतीनाम् । तत्र हि 'किंविति'इतिसानुनासिकवकारं रूपं तैरुक्तम् । तच्चोक्तसकलभाष्यादिग्रन्थानवधानप्रयुक्तं, स्फुटीभविष्यति चैतत्तत्रैव । एतेन तत्रत्यमनोरमादिसकलग्रन्थविरोध इति मन्दोक्तमपास्तम्, बाधे दृढ इति न्यायादिति भावः । अत्र पक्षे हेतुतयोक्तप्रथमयुक्तिं खण्डयति–न चेत्यादि । रूपसादृश्येन व्यक्तिनिर्देशेऽपि भेदापरामर्शेनाल्पमहत्स्थूलकृशह्रस्वदीर्घगोघटादिषु गौर्घटइत्यादिव्यवहारवत् रूपसादृश्यनिबन्धनप्रत्यभिज्ञाकृताभेदव्यवहारेणेत्यर्थः । एवमपि मूलकौस्तुभाद्ययुक्तमेवेत्याशयेन समाधत्ते—अगादिष्विति । सादृश्यं चात्र समानध्वनिकत्वम् । एवञ्च व्यक्त्यन्यजातिस्वीकारोऽपि व्यर्थ एव । अनुगतप्रतीतिप्रत्यभिज्ञाव्यवहाराणां सादृश्येनैव लोकवच्छास्त्रेऽपि सिद्धत्वादिति बोध्यम् । लोकसिद्धेऽर्थे लक्षणाज्ञापकानां साफल्यबोधनाय शास्त्रमपि प्रमाणयति—ल्वादीति । युक्तत्वादिति । लक्षणाज्ञापकतापेक्षया लाघवादिति भावः । अत्र मते भाष्यानुक्तत्वशङ्कां निराचष्ट—तदपीति । अपिर्जातिपक्षसमुच्चायकः । रूपसामान्यादिति । रूपं स्वरूपमवयवसंस्थानमिति यावत् । तत्सादृश्यनिबन्धनप्रत्यभिज्ञादिकृताभेदव्यवहारादित्यर्थः । वाशब्दस्तूक्तपक्षापेक्षया विकल्पार्थः। नचात्र पक्षे ऋकारेण कथं लकारग्रहणम् अवयवसंस्थानस्य भिन्नत्वादिति वाच्यम्, किञ्चित्साम्यमादाय तदुपपत्तेरुक्तत्वात् । सावर्ण्यादिकमप्यत्र गमकमिति न कोऽपि दोषः । नन्वण्ग्रहणं कुर्वतः सूत्रकृतो नेदं पक्षद्वयमिष्टमुद्धोपासङ्गतिश्चान्त्ये । अत आह—

सरला ।

श्रयणेनापीति । अपिना गुणाभेदकत्वस्य ग्रहः । फलाविशेष इति । स्थानेन्तरतमसूत्रसाध्यलक्ष्याणां

इति सूत्रे आचार्यग्रहणं पूजार्थमित्यभिप्रेत्य वाक् वाक्क् इति भाष्योदाहृते विकल्पे उपपत्तिचिन्तार्थं क्लिश्यन्ते, तन्मुधैव; पूजार्थतायाः प्रामाणिकैरनुक्तेः । "त्रिप्रभृति-

---

**शब्दरत्नम् ।**

इति । अणुदित्सूत्रेऽण्ग्रहणं तु प्रत्याहाराद्यवर्णेषु णकारादिभिश्चिन्हैः प्रत्याहारसूत्रस्थोऽयमिति प्रत्यभिज्ञासत्त्वादुपायान्तरपरम् ; "आचार्याः कृत्वा न निवर्तन्ते" इति न्यायात् । इदमेवाभिप्रेत्य तत्रत्यमण्ग्रहणं प्रत्याख्यातं भाष्ये इत्याहुरिति दिक् ।

क्लिश्यन्त इति । "अनचि" इत्यनुवर्त्य पर्युदासपरतया हलि पर एव नित्यनिषेध

**भैरवी ।**

लृकारग्राहणानापत्तिरिति वाच्यम्, तत्रापीषत्सदृशध्वनिव्यङ्ग्यत्वस्य सत्तायाः सत्त्वात् । अण्ग्रहणप्रत्याख्यानपरभाष्यमत्र मानम् । अन्यथा फलभेदेन प्रत्याख्यानासङ्गतिः स्पष्टैव ।

ननु पक्षद्वयमपि सूत्रकारस्याण्ग्रहणकरणेन नाभिप्रेतमत आह—अणुदित्सूत्र इति । अयम्—अणादिप्रत्याहारघटको ऽकारादिः । उपायान्तरपरमिति । तदैवोपायान्तरमित्यर्थः । एतेनास्य च्वावित्यत्र तादृशचिह्नाभावेन तस्य सूत्रस्य दीर्घेऽपि प्रवृत्त्यर्थमुपायान्तरस्यावश्यकत्वेन सूत्रकृतो न्यूनतेति ध्वनितम् । इदमेव—न्यूनतारूपं दोषमेवेत्यर्थः । भाष्य इति । यथोत्तरम्मुनीनाम्प्रामाण्याज्जातिपक्षाश्रयणमेव वरं ननु लक्षणाश्रयणमित्येतेन ध्वनितम् । यत्तु "ह्रस्वस्य" इति सूत्राद्ध्रस्वग्राहणस्य दीर्घादितिसूत्राद्दीर्घग्राहणस्य चानुवृत्त्या दीर्घादिति पञ्चम्याः "सेनासुराच्छाया" इति ज्ञापकात्षष्ठ्यर्थकत्वस्य क्लृप्ततया ह्रस्वदीर्घयोर्यणादेशेनेष्टसिद्धाविको यणचीतिसूत्रे इग्ग्रहणं त्याज्यम्, रामेश्वरो, रमेशः, दैत्यारिः, श्रीश, इत्यादौ गुणेन सवर्णदीर्घेण बाधादेवेष्टसिद्धेः । तयोर्बाधकत्वे मानन्तु निरवकाशत्वादपवादत्वमेवेति । तन्न, 'यवा३ इत्याह' 'करभोरु३ इत्याह' इत्यादौ "अप्लुतवदुपस्थिते" इति सूत्रेणाप्लुतवद्भावे कृते यणादेशानापत्तेः । न च प्लुतस्य स्थाने ऽप्लुतादेश एवास्त्विति वाच्यम्, अग्नी३ इतीत्यत्र प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणानापत्तेः । न च यणादेशदृष्ट्या प्लुतस्यासिद्धतया न दोष इति वाच्यम्, "सिद्धः प्लुतः स्वरसन्धिषु" इति सिद्धान्तात् ।

अनुवर्त्येति । "दीर्घादाचार्याणाम्" इत्यत्रेत्यादिः । पर्युदासेति । शब्दाधिकारेण प्रकृतसूत्रे पर्युदास इत्यर्थः । तेन पूर्वसूत्रे प्रसज्यप्रतिषेध एव । अन्यथा "दीर्घादाचार्याणाम्" इति निषेधस्य प्राप्त्यभावो यद्यपि पर्युदासेनोपपादितस्तथापि द्वित्वस्याप्राप्त्या भाष्योदाहरणस्या-

**भावप्रकाशः ।**

अणुदिदिति । सूत्रस्थोऽयमिति पाठः । तत्स्थ एवायमिति तदर्थः । तदाह—प्रत्यभिज्ञेति । नन्वेवं कुतो न त्यक्तं पाणिनिना । अतआह—आचार्या इति । वृद्धिसूत्रभाष्योक्तरीत्या वर्णस्याप्यानर्थक्यं न, किमु वक्तव्यं तत्समूहस्य, अन्यथा तदीयवाक्यानामप्रामाण्यापत्त्याऽश्रद्धेयतापत्तिरिति न्यायशरीरम् । नन्वेवं कथं तत्प्रत्याख्यानम् । अतआह—इदमेवेति । फलान्तराभावादिति भावः । भाष्ये इति । तावन्मात्रेण सर्वत्रानिर्वाहात् । गत्यन्तराश्रयणावश्यकत्वात् । तथा च यथोत्तरं मुनीनां प्रामाण्यात्तदनुरोधेन पाणिनेरप्ययमेवाशयो न मूलोक्त इति, तथासूत्रं कुर्वतो नेदमिष्टमिति दुर्वचम् । उद्घोषोऽपि तद्रीत्या न भाष्यरीत्येति तदसङ्गतिरपि न दोषायेति बोध्यम् । तदाह—दिगिति ।

क्लिश्यन्त इतीति । प्रकाशकृत इत्यर्थः । तत्र हेतुमाह—अनचीत्यनुवर्त्येति । दीर्घादित्यत्र मण्डूकप्लुत्येति भावः । पर्युदासेति । तद्भाष्योदाहरणात्केवलप्रतिषेधार्थकत्वेऽग्रेऽननुवर्तने च लाघवाय

**सरला ।**

यथासंख्यसूत्रेणापि सिद्धिरित्यर्थः । एवञ्च मूले स्थानेऽन्तरतमसूत्रेणेवेष्टसिद्धिरित्यत्रत्य 'एव' शब्दोऽप्यर्थो बोध्य इति दिक् ॥

षु-"(पा०सू०८।४।५०) इति सूत्रे शाकटायनग्रहणस्यापि तथात्वापत्तेः। न चेष्टापत्तिः, संस्कर्तेति त्रिसकारपरकैयटहरदत्तादिग्रन्थविरोधात् स्वग्रन्थविरोधाच्च। अत एव प्रातिशाख्यभाष्येऽपि "आ त्त्वा रथम्" इति मन्त्रे तकारस्य द्वित्वविकल्प उदाहृतः। माधवेन चास्ते इत्यत्र सकारस्य द्वित्वविकल्प उक्तः। एवं च धात्त्रंश इत्यत्र तकारस्य द्वित्वमसदित्युक्तिरेवासतीति दिक्॥

## शब्दरत्नम्।

इति व्याख्यानेनेति भावः। विकल्प उक्त इति। एवं च "सर्वत्र शाकल्यस्य" (पा० सू०८।४।५१) इतिवदिदमपि प्रपञ्चार्थमिति भावः। असतीति। यत्तु "नादिनी-" (पा०सू०८।४।४८) इत्यादौ वृत्तौ "अनचि-" इति प्राप्तिमुद्भाव्य "त्रिप्रभृतिषु—" (पा०

## भैरवी।

सङ्गतिरेवेति शङ्काया नावकाशः। पर एवेति। अत्रैवकारेणावसानव्यावृत्तिः। नित्येति। तन्मते आचार्यग्रहणस्य पूजार्थतया निषेधस्य नित्यत्वमिति भावः। व्याख्यानेनेति। तन्मते व्याख्यानेन। एतेन हलीति वक्तव्येऽनचीत्युक्तिः प्रसज्यप्रतिषेधार्थैवेति ध्वनितम्। ननु "सर्वत्र" इतिसूत्रे शाकल्यपदस्य विकल्पार्थकत्वेन "आ त्वा" इत्यादिप्रयोगस्य निर्वाहेऽत एवेत्यादि उक्त इत्यन्तग्रन्थस्य प्रकृतेऽनुपयोग इत्यत आह—एवञ्चेति। माधवाद्युक्तविकल्पाङ्गीकारे चेत्यर्थः। इतिवदिति। "अनचि" इति सूत्रे विकल्पानुवृत्तेः सर्वसम्मतत्वेन तेनैव सर्वेष्टसिद्धौ "सर्वत्र" इतिसूत्रस्य वैयर्थ्यं यथा भवन्मते, तथा "दीर्घादाचार्याः" इतिसूत्रस्याप्याचार्यपदघटितत्वे विकल्पार्थकतयाऽस्यापि प्रपञ्चरूपत्वमेवेति वैयर्थ्यं दुर्वारमिति भावः। इदम्-"दीर्घात्" इति सूत्रम्। अपिना "सर्वत्र" इत्यस्य सङ्ग्रहः। प्रक्रियाव्याख्यानपरतत्पौत्रोक्तिमनुवदति-यत्त्विति। वृत्ताविति। उक्तामिति शेषः। उद्भाव्य- उपपत्तिपूर्वकं व्याख्याय। तेन समानकर्तृत्वस्योपपत्तिः। एवङ्कथनङ्काशिकापदमञ्जर्योर्नादिन्ये तिसूत्रे प्राप्तिविचारस्य क्वचित्पुस्तके उपलम्भाभिप्रायेण। पदमञ्जर्यामेव प्राप्त्युल्लेखे तु वृत्तावित्यस्य व्याख्यानभूते पदमञ्जरीग्रन्थे इत्यर्थः। एवं पौत्रोक्तेरयमाशयः–पूजार्थतायाः प्रामाणिकैरनुक्तेरित्ययुक्तम्, मुनित्रयस्यौदासीन्येनाचार्यग्रहणस्य पूजार्थत्वलाभात् माधवोक्तिस्त्वयुक्ता उक्तस्य 'वाक्क्' इत्यादिप्रयोगस्योक्तरीत्योपपत्तेः। एवञ्च यथा "नादिनी" इति नित्यो निषेध इति तत्र "अनचि" इत्यस्य प्राप्त्युद्भावनं तथा "दीर्घात्" इत्यपि नित्यमित्यत्रापि प्राप्त्युद्भावनमावश्य-

## भावप्रकाशः।

नाचीत्येव वाच्ये गुरुभूततथोक्तयङ्गीकर्तृपाणिन्यभिमतत्वाच्च। शब्दाधिकाराश्रयणाच्चेति भावः। पर एवेति। तेनावसाने तत्र नेति भावः। नित्येति। आचार्यग्रहणस्य पूजार्थत्वात्। तथाच मद्रीत्यैव भाष्याद्युपपत्त्या मूलाशुद्धेर्वक्ष्यमाणतया च तथाव्याख्यानस्य शब्दमर्यादया लाभेऽपि क्लेशजनकत्वमिति तात्पर्यं मूलस्येति भावः। मूले अतएवेति। आचार्यग्रहणस्य पूजार्थत्वाभावादेवेत्यर्थः। अन्यथा सर्वत्रेति प्राप्तविकल्पस्य परत्वान्नित्यनिषेधेन तदनङ्गतिः स्पष्टैव। तत्फलितमाह–एवं चेति। माधवाद्युक्तविकल्पस्येष्टत्वे चेत्यर्थः। 'अनचि' इत्यादौ वा अनुवृत्त्या सर्वेष्टसिद्ध्या "सर्वत्र" इति सूत्रस्य वैयर्थ्येन तत्प्रपञ्चार्थत्वम्। एवं दीर्घादित्यस्यापि तत्प्रपञ्चार्थत्वम्। अतएव मूले तत्प्रपञ्चभूतेत्युक्तमिति भावः। तदाह—सर्वत्रेति। अपिना कैयटादोक्तवार्थकत्रिप्रेतिसूत्रसमुच्चयः। प्रपञ्चार्थमिति। स्वस्वमतप्रच्युतिदोषाभावार्थमित्यर्थः। खण्डनकारोक्तिं खण्डयति—यत्त्वित्यादिना। तस्यायमाशयः, पूजार्थतायाः प्रामाणिकैरनुक्तेरित्ययुक्तम्। मुनित्रयस्यात्रौदासीन्येऽपि "त्रिप्र" इतिसूत्रकैयटाद्युक्त्या विकल्पस्यैव सर्वाङ्गीकृतप्रामाण्यकपूर्वतनवृत्तिहरदत्ताद्युक्त्या आचार्यग्रहणस्य पूजार्थत्वस्यैव लाभात्। माधवस्त्वयुक्त एव। प्रातिशाख्यभाष्ये "आत्वारथम्" इत्यत्र द्वित्वविकल्पोक्तिश्छान्दसत्वेन निर्वाह्या। 'वाक्क्' इत्यादिसिद्धिस्तूक्तरीत्योक्तैवेति। नादिनीति। अनुवादत्वेनात्र न दोषः। आदिना "शरोऽचि" इत्यत्राचेरिति प्राप्तिसङ्ग्रहः। वृत्तौ

## शब्दरत्नम् ।

सू०८।४।५०) "सर्वत्र-" इत्यनयोः प्राप्तिमनुद्भाव्य पुनः "दीर्घात्" (पा०सू०८।४।५२) इत्यत्र "अनचि-" इति प्राप्तिरुद्भाविता हरदत्तेन। तस्यायमाशयः-निषेधविकल्पे प्राप्त्युद्भावनं नावश्यकम्, तद्विकल्पे विधिविकल्पस्य फलितत्वेन विधेरेव अप्राप्तविषयविकल्पसम्भवाद्; नित्यनिषेधे तु तदुद्भावनमावश्यकमिति। तन्न, विकल्पेऽपि निषेधप्रकरणान्नञुल्लेखस्यावश्यकत्वेन प्राप्त्युद्भावनस्यावश्यकत्वात् मध्ये नञोऽसम्बन्धो मण्डूकानुवृत्तिरग्रे इत्यत्र

## भैरवी ।

कमेव । "त्रिप्रभृतिषु" इति "सर्वत्र" इति च वैकल्पिकम् शाकटायनग्रहणशाकल्यग्रहणयोर्विकल्पार्थत्वादिति । फलितत्वेनेति । अभावाभावस्य प्रतियोगिरूपत्वान्निषेधस्य प्रवृत्तिपक्षे विधेरप्राप्त्या फलितत्वेनेत्यर्थः । तथाऽत्र प्राप्त्युद्भावनन्नावश्यकमिति भावः। नित्यनिषेधे त्विति । 'नादिनी' 'शरोऽचि' 'दीर्घात्' इतिसूत्रत्रये इत्यर्थः । अभावस्य प्राप्तिपूर्वकत्वादिति शेषः । एवञ्च राष्ट्रादिसिद्धये "त्रिप्र" इति सूत्रमावश्यकमेव । "सर्वत्र" इत्यस्य तु तत्र वापदस्य सम्बन्धेन विकल्पस्य सिद्धत्वादनावश्यकत्वमेवेति सूचितम् । विकल्पेऽपीति । सूत्रद्वयेऽप्राप्तविषयविधिविकल्पाङ्गीकारेऽपीत्यर्थः। अपिना निषेधविकल्पपक्षसमुच्चयः। प्रकरणादिति । "नादिनी" इति सूत्रानन्तरमस्य पाठेन निषेधार्थकनञः सर्वत्र सम्बन्धादिति भावः । आवश्यकत्वादिति । एतेन तत्र प्राप्त्यकथनेन तस्य ग्रन्थस्य न्यूनतेति बोधितम् । ननु तयोः सूत्रयोर्नञोऽसम्बन्धेन न प्रकरणलाभ इत्यत आह-मध्य इति । द्वित्वमात्रेति । अत्र मात्रपदङ्कात्स्न्र्ये, तेन "अचो रहा-

## भावप्रकाशः ।

काशिकायाम् । उक्तामिति शेषः । उद्भाव्य अनूद्य । अत एव ल्यपः पुनःपदस्य च नासङ्गतिः । उद्भाविता स्वयमेवोक्ता । तावतापि कथमिष्टलाभोऽत आह—तस्येति । निषेधेति । निषेधविकल्पविधायक "त्रिप्र" "सर्वत्र" इति सूत्रद्वये इत्यर्थः। निषेधप्रकरणात् वार्थकपदोपादानाच्चोभयलाभ इति भावः। लाघवादाह—विधेरेवेति । एवेन नञो निवृत्तिः सूचिता । तथा च ताभ्यां पक्षे द्वित्वमेव विधीयते । 'राष्ट्रम्' इत्यादौ दीर्घादिति नित्यनिषेध प्राप्त्या "अनचि" इत्यस्याप्राप्तेः तथासम्भावनायां बाधकाभावाच्च । तदाह—अप्राप्तेति । नित्येति । "नादिनी" "शरोऽचि" "दीर्घात्" इति सूत्रत्रय इत्यर्थः। अभावज्ञानस्य प्रतियोगिज्ञानपूर्वकत्वात् । एवञ्च "त्रिप्र" इति सूत्रं राष्ट्रादिसिद्धये आवश्यकम् । अन्यथा दीर्घादिति निषेधः स्यात् । सर्वत्रेति सूत्रं वापदाननुवृत्तिपक्षे विकल्पार्थमावश्यकम् । अतएवाचार्यैस्तु "सर्वत्र शाकल्यस्य" इति पाक्षिकनिषेधेनापि फलसिद्धेर्वेति नानुवर्तितमिति प्रकाशोक्तिः सङ्गच्छते । तदनुवृत्तौ तु नेति । "त्रिप्र" "दीर्घात्" इति सूत्रद्वयं सफलमेवेति भावः । विकल्पेऽपीति । सूत्रद्वये लाघवेनाप्राप्तविषयविधिविकल्पाङ्गीकारेऽपीत्यर्थः । अपिना निषेधविकल्पपक्षसमुच्चयः । प्रकरणादिति । अत एवैषां नादिनीत्यग्रे पाठः । अन्यथा "अनचि" इत्यग्रे एव पठितानि स्युरिति भावः । उल्लेखस्येति। एवञ्च भवदुक्तफलितसम्भावितबोधे तदभावेऽपि प्राथमिकशाब्दत्यागे मानाभावेन तत्र नञर्थसत्वेन निषेध्याकाङ्क्षायाः सत्वेन तदावश्यकत्वं शाब्दी ह्याकाङ्क्षेति न्यायात्।तदाह-प्राप्त्यवाक्यार्थघटकानामिति। न च प्रकरणात् श्रुतेः प्राबल्येन श्रौतविकल्पादिघटितवाक्यार्थबोधे जाते निराकाङ्क्षत्वेन तथा प्राप्तस्यापि नञोऽनन्वय इति वाच्यम्, अचो यरो द्वे इति पदार्थानां वाक्यार्थघटकानां प्रकरणैकलभ्यत्वेन तं विना तदाकाङ्क्षाशान्त्यभावेन नञ्सम्बन्धसम्भवादिति भावः। ननु यदंशेन विना वाक्यार्थापूर्तिस्तस्य प्रकरणेन पूरणेऽपि न नञ्सम्बन्धः । अन्यत्र क्लृप्तमण्डूकप्लुत्याश्रयणादतो न कोपि दोषः। अत आह—मध्ये इति । उक्तसूत्रद्वय इत्यर्थः । अग्रे दीर्घादितिसूत्रे । ननु मण्डूकानुवृत्तौ लौकिकमण्डूकगतिरेव मानमिति न मानान्त-

## सरला ।

फलितत्वेनेति । अभावाभावस्य प्रतियोगिरूपत्वादित्यादिः ।

शब्दरत्नम् ।

मानाभावाच्च, "सर्वत्र" इति सूत्रेऽस्य द्वित्वमात्रनिषेधकतेति बोधयितुं तदनुल्लेखाच्च, "त्रिप्रभृतिषु-" इत्येतद्विषये "नकारषकारयोर्द्विर्वचनाभावः" इति मिश्रग्रन्थेन प्राप्त्युल्लेखस्य कृतप्रायत्वाच्च, वृत्तिहरदत्तयोः "नादिन्या-" "शरोऽचि" ( पा०सू०८।४।४९ ) इत्यनयोरपि प्राप्त्युल्लेखस्य बहुषु पुस्तकेष्वनुपलम्भाच्चेति दिक् ।

भैरवी ।

भ्याम्" इत्यस्यापि सङ्ग्रहः । नकारषकारयोः—इन्द्रः राष्ट्रमित्युदाहरणघटकयोरिति शेषः । ल्लेखस्येति । द्विर्वचनशब्देन प्रथमोच्चारितेन प्राप्तेर्लाभादिति भावः । अनुपलम्भादिति । एतेन भवदीया कल्पना असङ्गतैवेति ध्वनितम् । दिगिति । दिगर्थस्तु आचार्यग्रहणस्य पूजार्थत्वे राष्ट्रमित्यादौ विकल्पार्थं "त्रिप्रभृति" इत्यस्य प्रवृत्तिरवश्यमेव वक्तव्येत्याशयेन "त्रिप्रभृति" इत्यस्य सूत्रस्य राष्ट्रमित्युदाहरणप्रदर्शनपरवृत्तिग्रन्थव्याख्यानावसरे "दीर्घात्" इत्यस्यासिद्धत्वात् "त्रिप्रभृति' इत्ययमेव प्रतिषेधो भविष्यतीति मन्यत इति मिश्रोक्तिविरोधः, वाक् वाक्क् इति भाष्योदाहरणविरोधश्च । नच "अनचि" इत्यस्यानुवृत्त्या तस्य पर्युदासपरतया व्याख्यानान्न तदुदाहरणासङ्गतिरिति वाच्यम्, मण्डूकानुवृत्तिकल्पनायां मानाभावात् । तथा कल्पनायामपि शब्दाधिकारकल्पनायां साधकाभावेनोक्तार्थालाभाच्च ॥

भावप्रकाशः ।

रापेक्षा, तस्याश्रेष्ठानुरोधेनाङ्गीकारः अन्यथाऽत्र तदुच्छेद एव स्यात् । अत आह—सर्वत्रेतीति । अस्यानुल्लेखेऽन्वयः । अस्य सर्वत्रेतिसूत्रस्य । द्वित्वमात्रेति । अनन्तरानन्तरसूत्रवार्तिकक्रुदुक्तद्वित्वेत्यर्थः । अनन्तरस्येतिन्यायप्रवृत्त्यङ्गीकारादिति भावः । तदनुल्लेखादिति । विशिष्यविधिप्राप्त्यनुल्लेखादित्यर्थः । एवं चेतो न भवदुक्ताशयकल्पनावसर इति भावः । एवं "सर्वत्र" इति सूत्रे तदनुल्लेखस्य तदाशयकत्वं निरस्य 'त्रिप्र' इति सूत्रे मूलशैथिल्यं करोति—त्रिप्रेति । इतिसूत्र इत्यर्थः । एतद्विषये "त्रिप्र" इतिलक्ष्ये इन्द्रइत्यादौ । मिश्रेति । हरदत्तेत्यर्थः । तथाच मूलाशुध्या न तथाशयकल्पनेति भावः । ननु तत्रोल्लेखस्य फलितत्वेऽपि "नादिनी" इत्यादाविव "अनचि" इत्यादिप्राप्तिः प्रतिषिध्यते । इतिशब्दानुवृत्त्या इष्टार्थसिद्धिरेव । किञ्च "सर्वत्र" इत्यत्र तदनुल्लेखस्योक्तफलत्वे दीर्घादित्यत्रापि तथोचितम्, अथ तत्र वार्तिकोक्तद्वित्वनिषेध इति सूचयितुं तथा। तत्रापि तथेति न वैलक्षण्यमत आह—वृत्तीति । "नादिन्या" इति निर्विसर्गपाठः। अपिः "सर्वत्र" इत्यादिसमुच्चायकः। बहुष्विति । तेन क्वचिदुपलम्भेऽपि "बहूनामनुरोधो न्याय्य" इति न्यायेन तत्राप्रामाण्यग्रहः । तथा च मूलाशुध्या न भवदिष्टार्थसाधनमिति भावः ।

नन्वयुक्तमेतत्, वृत्तावाचार्ययोर्द्वयोरेव मिश्रग्रन्थे दीर्घादित्यत्रैव तदुल्लेखस्य बहुषु तेषूपलम्भेन खण्डनकृता तथैवानूदितत्वेन त्वदुक्तानुवादस्य चरमदोषस्य चासम्बद्धत्वात् । एवञ्च तथाशयकल्पना युक्तैवात आह—दिगिति । तदर्थस्तूक्ताशयेनाचार्यग्रहणस्य पूजार्थत्वे 'आष्ट्रम्' इत्यादौ वार्थं "त्रिप्र" इत्यस्यावश्यकतया तस्य तल्लक्ष्यत्वपरवृत्तिग्रन्थस्य यथाश्रुतत्वेनैवोपपत्तौ "दीर्घात्" इत्यस्यासिद्धत्वात् "त्रिप्रभृतिषु" अयमेव प्रतिषेधो भवतीति मन्यत इति भङ्क्त्वा व्याख्यानं मिश्रोक्तं विरुध्येत । किञ्च माधवादिविरोधेन वृत्त्यादीनामसङ्ग्राह्यत्वम् । किञ्च 'आत्वारथम्' इत्यत्र छान्दसत्वेन निर्वाहेऽपि तादृशलक्ष्यस्य प्रामाण्यस्य निर्विवादतया तदनुरोधेन तस्य विकल्पार्थकत्वस्यैवाङ्गीकारः । अन्यथा भाष्योदाहरणस्वाभ्यर्थत्वाग्निर्वाहे त्वदिष्टक्लेशानर्थक्यापत्तिः । किञ्च 'वाक्' 'वाक्' इति भाष्योदाहरणविरोधः । नचोक्तरीत्या निर्वाहः, मण्डूकानुवृत्त्यादेरप्रामाणिकत्वात् । अनुवृत्तावपि तथार्थासम्भवाच्च । शब्दाधिकारस्य विनागमकमनाश्रयणाच्च । यत्तु "अनचि" इति गुरुनिर्देशं कुर्वन् पाणिनिरत्र मानम् । अग्रेऽननुवृत्तौ प्रसज्यप्रतिषेधमात्रार्थकत्वे च 'नाचि' इत्येव वदेत् । एवं ह्यसमर्थसमासो न अग्रे नश्च न कार्य इति महल्लाघवमिति प्रकाशकृत् । तन्न, मात्रालाघवस्य भाष्योक्तान्यस्थलेऽनाश्रयणेन पदालाघवेन समत्वात् । प्रत्युत नकारे स्वरितत्वप्रतिज्ञाकल्पनप्रयुक्तज्ञानगौरवापत्तेश्च । तदभावे पदगौरवापत्तेश्चानर्थक्यापत्तेश्च । तस्मा-

स्थानिवदादेशः (पा० सू० १।१।५६)। धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशा इति प्राचोक्तम्। तत् परिगणनमुदाहरणमात्रं वा ? नाद्यः। सिच्क्सचङङादीनां श्ना-

शब्दरत्नम् ।

चङङादीनामिति । आदिना चिण् । न केवलं च्ल्यादेशानामेवासङ्ग्रह इत्याह—श्नादेशस्येति । तदभावे ह्यवादिषातामित्यत्रेड् न स्यात् । क्सादेः कादीनामित्त्वं न स्यात् । शानचः शस्य च तन्न स्यात् । मा हि दर्शदित्यादौ अङि गुणो न

भैरवी ।

नन्वादिशब्दोपादानमसङ्गतं च्ल्यादेशानां सर्वेषामुपादानादत आह—आदिनेति । तदभावे स्थानिवद्भावाभाव इत्यर्थः । यदि विकरणादेशस्य स्थानिवद्व्यवहाराविषयत्वं तदा तेषामादेशानामार्द्धधातुकत्वेन प्रत्ययत्वे नाङ्गसंज्ञानिमित्तत्वेन च ग्रहणं न स्यात्, इष्टापत्तौ क्रमेण दूषणान्याह—अवादिषातामिति । अत्रा बाधिषातामिति युक्तः पाठः । इड् न स्यादिति । आर्द्धधातुकत्वाभावादिति शेषः केचित्त्ववादिषातामित्यत्रात्मनेपदसमर्थनाय कर्मव्यतिहारे तिङिति वदन्ति । प्रत्ययत्वस्य फलमाह—क्सादेरिति । आदिना चङादेशस्य परिग्रहः । बहुवचनं प्रयोगबाहुल्याभिप्रायेण । तन्न स्यादिति । प्रत्ययत्वस्याभावेन लशक्वतीत्संज्ञा शस्य न स्यात् । तृतीयस्य फलमाह— मा हीति । "ऋदृशोऽङि" इत्यस्याङ्गाधिकारे पाठादिति भावः । प्रत्यया-

भावप्रकाशः ।

द्वलीत्येव वाऽचोऽनचीत्युक्तिः प्रसज्यप्रतिषेधार्थैव । अत एवावसाने द्वित्वसिद्धिः । एतेनात्र पक्षे विशेषनिषेधाद्विधिरनुमेयः स्यात्, इति प्रतिपत्तिगौरवेण मूलाश्रितः पर्युदास एवोचित इति हरदत्तोक्तमपास्तम् । विध्यर्थकत्वोपादानेन विधेरत्र शाब्दत्वस्यैव सत्त्वात् । ध्वनितं चेदं "हयवरट्" "एओङ्" सूत्रे भाष्ये । एतेनायं निषेधोऽनन्तरस्येत्यनेनात्रैवानुमितद्वित्वस्य, न तु "अनचि" इत्यस्येति रत्नाकरोक्तमपास्तम् । त्रिसूत्री तु विकल्पस्यैव मतभेदप्राप्तव्यवस्थाबोधनार्थेत्यलमिति ।

नन्वादिपदं व्यर्थम्, च्ल्यादेशानां कण्ठत एवोक्तेः । नचान्यसङ्ग्रहार्थम्, तस्यापि दैराश्येनोक्तेः । न च 'अग्रहीत्' इतीटः सङ्ग्रहार्थं च स्य वैयर्थ्यापत्तेः । एतेनादिना स्वीटो ग्रहणमिति मान्योक्तिः प्राचामनुरोधेनेति सूचितम् । अत आह—आदिनेति । साक्षात् चिणुक्तौ तु साहचर्यात् कर्तृलुङ्परचिण एव ग्रहणमिति भ्रमः स्यादत आदिपदम् । एतेन चतुर्णां कण्ठत उक्तिः, चिणस्त्वादिनेति वैषम्ये न बीजमिति मन्दोक्तमपास्तम् । अत एवादिचशब्दयोर्विपरीतसङ्ग्राहकत्वशङ्काऽपि निरस्तेति भावः । यत्त्वादिना चिण इव शानजादीनामपि लाभ इति दैराश्येन तदुक्तिर्व्यर्था । किञ्च श्नादेशस्येति व्यर्थम् । नच लङाद्यादेशनिवृत्त्यर्थम्, तस्यापि तत्त्वस्येष्टत्वात् इतिखण्डनकृद्रत्नाकरादयस्तन्नेति ध्वनयन्नाह—न केवलमिति । तेषामेवासंग्रहः केवलं नेत्यन्वयः । किन्तु अन्यविकरणादेशस्यापीति केवलपदतात्पर्यार्थः । एतेनैवकेवलशब्दयोरन्यतरवैयर्थ्यमित्यपास्तम् । इत्याहेति । इति ध्वनयन्नाहेत्यर्थः । अत एव चतुर्णामुपादानम् । एतेन सिजादीनामित्येव वक्तव्यमिति मन्दोक्तमपास्तम् । एवञ्चैतदर्थं तथोक्तिर्नतु बीजान्तरेण । एवं विकरणस्थले सिजादावेव दोष इति भ्रमनिवृत्तये श्नादेशस्येत्युक्तमिति भावः । इष्टापत्तिं खण्डयति—तदभावे हीति । स्थानिवत्त्वाभावे हीत्यर्थः । प्रत्ययत्वादिकं तथा सति न स्यादिति भावः । तत्रानिष्टमाह—आवादीति । प्रत्ययत्वाभावेनानार्धधातुकत्वादिति भावः । केवलप्रत्ययत्वफलमाह—क्सादेरिति । आदिभ्यां चङादिचयोः संग्रहः । बहुवचनं प्रयोगाभिप्रायम् । अन्ये तत्फलासम्भवेन तत्प्रसङ्गादाह—शानच इति । तन्नेति । इत्वं नेत्यर्थः । अप्रत्ययत्वादिति भावः । अङ्गत्वद्वारा तत्फलमाह—मा हीति । "ऋदृशोऽङि" इत्यस्याङ्गाधिकारस्थत्वात् वक्ष्यमाणरीत्या चारितार्थ्येन सामर्थ्याऽकल्पनेति भावः ।

सरला ।

इड् न स्यादिति । सिचः स्थानिवत्त्वाप्राप्तावार्धधातुकत्वाभावादिति शेषः । नन्वत्र वदधातोः परस्मैपदितया आत्मनेपदाप्राप्तावुक्तरूपस्यैवासम्भवः । न च कर्मव्यतिहारे "कर्तरि कर्मव्यतिहारे" इत्या

शब्दरत्नम् ।

स्यादिति भावः । ननु सिजादीनां प्रत्ययाधिकारे पाठात् श्नम्वत् प्रत्ययत्वमस्तीति न स्थानिवत्त्वोपयोगः । न च तेषां प्रत्ययत्वे च्लिविधानं व्यर्थम् । "मन्त्रे घस–"(पा॰सू॰

भैरवी ।

धिकारे पाठात्प्रत्ययत्वे फलमाह–श्नम्वदिति । यद्यप्यस्य मित्त्वसामर्थ्यादागमत्वं तथापि प्रत्ययत्वं प्रत्ययाधिकारे पाठात् । अत एव शस्येत्त्वसिद्धिः । स्थानिवत्त्वोपयोग इति । औपदेशिकार्द्धधातुकत्वे प्रत्ययत्वमादायेष्टसिद्धेरिति भावः । एतन्मते आदेशत्वेपि प्रत्ययत्वं द्रढयितुं शङ्कते–नचेति । व्यर्थमिति । च्लेः क्वाप्युच्चारणाभावेन सिज्लुङीति वाच्यम्, चङादयस्त्वपवादा इति भावः । शङ्कापरिहरति–मन्त्र इति । "मन्त्रे" इति सूत्रे भवन्मते च्लिविधानस्याभावेन

भावप्रकाशः ।

एतेन सिजादिषु तत्फलकथनमध्ये शानचि तदुक्तिरयुक्तेत्यपास्तम् । पाठादिति । एतेन न चाधिकारासिद्धिरुक्तोत्तरत्वादिति मान्योक्तिः प्राचामनुरोधेनेति ध्वनितम् । अत एव दृष्टान्तमाह—श्नम्वदिति । यथा तस्य मित्त्वबलादागमत्वेऽपि कार्यार्थं ,ततः प्रत्ययत्वमेवं स्थानिनिर्देशसामर्थ्याल्लाघवाच्चादेशत्वेऽपि तत्त्वमिति भावः । एतेनादेशत्वप्रत्ययत्वयोर्विरोधात्कथं तत्त्वम् ? किञ्च दृष्टान्ते मित्त्वस्य तद्गमकस्य सत्त्वेऽप्यत्रादेशत्वगमकाभाव इति मन्दोक्तमपास्तम् । न स्थानिवत्त्वेति । डाणलोरिवेत्यत्रोक्तानुपूर्वीत्वपेक्षितैवेति भावः । उक्तार्थं द्रढयितुं शङ्कते—नचेति । व्यर्थमिति । अश्रवणेनोच्चारणार्थत्वस्याप्यभावात् । तथा च सिजुत्सर्गस्तदपवादः क्सादिरिति भावः । एतेन च्लिरुत्सर्गः सिजादयस्तदपवादा इति मन्दोक्तमपास्तम्, उक्तयुक्तेः । सूत्राक्षराननुगुण्याच्च । भाष्ये तस्य खण्डितत्वाच्चेति दिक् । "मन्त्रे" इति सूत्रे त्रयाणामपि चङ्क्सिचां च्लिग्रहणेन लुग्यथा स्यादिति फलं च्लिकरणस्येत्याशयेन समाधत्ते—मन्त्रे इति । अयम्भावः, च्लेरभावे सिच इत्यनुवृत्त्या चङादौ दोष इति चङ्क्सोश्चेति पाठ्यं चेन सिचोऽनुवृत्तिः । यद्वा स्पष्टार्थं लाघवार्थं च सिच् वक्तव्यः, न तु चः सर्वथा प्रत्ययत्रयग्रहणमावश्यकम् । अन्यथान्तरङ्गानपीति न्यायस्यानित्यतयाऽप्रवृत्त्या तेषां स्थानिवत्त्वेन लित्वेन ग्रहणान्मन्त्रे 'अघान्' अधुः' इ॰

सरला ।

त्मनेपदं भविष्यतीति वाच्यम्, तावताऽपि .तत्र सिचः परस्मैपदपरकत्वाभावेन "वदव्रज" इत्यस्याप्रवृत्त्या रूपासिद्धितादवस्थ्यात्, इति चेत् ? न, वदनं वादः, भावे घञ् । तत आचारक्विबन्तात्कर्मणि लुङि तसि आतामादेशे सिचि इडागमेऽल्लोपे च तद्रूपसिद्धेः । न च "स्यसिच्सीयुट्" इति सूत्रे आर्धधातुकपदानुवृत्तेरभावेन सिचः स्थानिवत्त्वाभावेऽपि चिण्वदिटा सिद्धिरिति वाच्यम्, तस्य वैकल्पिकत्वेन तदभावपक्षे तादृशरूपासिद्धेस्तादवस्थ्यात् । एतेन वादधातोराचारक्विबन्तस्योपदेशाभावाच्चिण्वदिट् न प्रवर्तते इति समाधानस्य खण्डनाय "वस्तुतस्तु स्यसिजित्यस्य उपदेशेऽजन्तानामित्यर्थेण्यन्तेऽव्याप्तिः, उपदेशेयोऽच् तदन्तानामित्यर्थं 'आरिता' इत्यादौ नित्यत्वाद् गुणे रपरत्वे च चिण्वद्भावासिद्धिः, किञ्च 'अवादिषाताम्' इत्यत्रापि औपदेशिकं घञोऽचमादाय चिण्वद्भावेनैव सिद्धिः । तस्मात् स्यादिप्रत्ययोपदेशकालेऽजन्तानां चिण्वद्भाव इति सिद्धान्तः । तथात्वेऽप्यत्र चिण्वद्भावो दुर्वार एवेत्युक्तमपास्तम् । केचित्तु वदधातोर्णिचि उपधावृद्धौ ततः कर्मणि लुङि द्विवचने 'अवादिषाताम्' इति रूपमाहुः । अन्ये तु 'अवदिषाताम्' इत्येव पाठः 'अवदिष्टाम्' इत्येव वेति । अङि गुण इति । नन्वत्र गुणस्य अङ्निमित्तकतया अङ्त्वस्य चात्र स्वतः सिद्धत्वेन कथं स्थानिवद्भावापेक्षा, इति चेत् ? न, अङ्गाधिकारीयकार्याणामङ्गसंज्ञानिमित्तप्रत्ययनिमित्तकत्वनियमेन "ऋदृशोऽङि गुणः" इत्यस्य ऋदन्तस्य दृशेश्च धातोरिको गुणोऽङि प्रत्यये इत्यर्थेन प्रत्ययत्वातिदेशस्य स्थानिवद्भावैकलभ्यत्वात् । अत एव "ह्रस्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन" इति वार्तिकं संगच्छते । अन्यथा "ऋत इद्धातोः" "उदोष्ठ्यपूर्वस्य" इत्यनयोरनैमित्तिकतयाऽन्तरङ्गत्वे विप्रतिषेधकथनासङ्गतिः स्पष्टैव । उक्तनियमस्वीकारे तु ह्रस्वोत्वविधायकयोरपि परनिमित्तकत्वेन तत्रान्तरङ्गत्वाभावाद्विप्रतिषेधसंगतिः । विस्तरस्त्वन्यतोऽवगन्तव्यः । चङ्क्सिचामिति । अत्र चिणो ग्रहणं न्यूनम्, जनधातोः "दीपजन" इति चिणः

### शब्दरत्नम् ।

२।४।८०) इति सूत्रे चङ्क्सिचामिति त्रयाणां ग्रहणे गौरवापत्तेः । सिचो लुकि तद्विषये "आदिः सिच-" (पा०सू०६।१।१८७) इति स्वरापत्तेश्चेति भाष्यकैयटयोः स्पष्टमित्यन्त-

### भैरवी ।

च्लेरित्यस्य वक्तुमशक्यत्वादिति भावः । त्रयाणामिति । ग्रहणमिति शेषः । धयतेराकारान्तात्व-त्वयोश्चङ्सिचोर्लुगर्थमेतयोर्ग्रहणं, घसर्थमङो ऽन्यार्थं सिच इति विवेकः । सिचो लुकि दोषान्त-रमाह—सिचो लुकीति । इदञ्च यत्र सिजपवादप्रत्ययस्याप्राप्तिस्तद्विषये बोध्यम् । तेन घस्लृणश्-गम्लृधातोः सिचोऽसत्त्वेऽपि न ग्रन्थासङ्गतिः । स्वरापत्तेरिति । प्रत्ययलक्षणेन "आदिः सिचः" इति सूत्रेण सिजन्तस्याद्युदात्त इत्यर्थकेनाद्युदात्तत्वापत्तिरित्यर्थः । नच "न लुमता" इत्यस्य प्राप्त्या न दोष इति वाच्यम्, लुमता लुप्ते प्रत्यये यदङ्गं तदुद्देश्यककार्ये एव निषेध इति सि-द्धान्तात् । अत एव 'पञ्चभिः क्रोष्टीभिः क्रीतं कुलं पञ्चक्रोष्टृ' इत्यत्र तृज्वत्त्वमभवति । अङ्गस्य क्रोष्टुस्तृज्वद्भवमित्यर्थेन "तद्धितार्थ" इति समासे ठकः "अध्यर्द्ध" इति लुकि "लुक् तद्धित" इति स्त्रीप्रत्ययस्यापि लुकि "स्वमोर्नपुंसकात्" इति सोर्लुकि कृतेऽपि प्रत्ययलक्षणेनाङ्गत्वस्य सत्त्वात् । नचैवं सति "वृषण्वस्वश्वयोः" इत्यनेन वृषण्वसुरित्यत्र भसंज्ञायामल्लोपोऽन इति सूत्रेणान्नन्तस्य भसंज्ञकाङ्गस्यानोकारस्येत्यर्थकेनाल्लोपापत्तिरिति वाच्यम्, प्रत्यासत्त्याऽङ्ग-संज्ञाभसंज्ञयोर्यत्रैकनिमित्तकत्वं तत्रैव प्रवृत्तेरङ्गीकारात् । नचैवमपि 'ममृष्टः' इत्यत्र मृजेर्वृद्धि-र्दुर्वारा, भवद्रीत्या मृजेरङ्गत्वात् । "न लुमता" इतिनिषेधस्याङ्गसंज्ञायामप्रवृत्तेर्भवतैवोपपा-दनादिति वाच्यम्, "क्ङिति च" इति सूत्रेण ङिन्निमित्तप्रतिषेधस्य प्राप्तेस्तत्राङ्गसंज्ञाया अनपेक्षणेन "न लुमता" इतिनिषेधेन न "क्ङिति" इत्यस्य प्राप्तिरित्यस्य वक्तुमशक्यत्वात् । 'धातोः कार्यमुच्यमानन्तत्प्रत्यये' इति निषेधाच्च ।

ननु "आदिः सिचः" इत्यस्य वैकल्पिकतया छन्दस्यापाद्यमानरूपस्य वक्तुमशक्यत्वेन न

### भावप्रकाशः ।

स्युभयसिद्धिरिष्टाऽत्र पक्षे न स्यात् । एतेन चङ्ग्रहणं व्यर्थम्, धयतावेव हि तदुपयोगः । तत्र सिचो लुकैव सिद्धमित्यपास्तम्, 'अधात्' इत्यसिद्ध्यापत्तेः । धयतेरादन्तत्वात्तदर्थं चङ्सिचोर्ग्रहणम्, अन्त्यस्य धात्वन्तरार्थ-मपि घसनशगम्यर्थमङ्ग्रहणमिति । तदाह—त्रयाणामिति । यथाकथञ्चित् ग्रहणे इति शेषः । यदि तु "दीपजन" इति चिणो मन्त्रे लुक् दृश्यते, तदा तुर्यस्यापि ग्रहणमिति बोध्यम् । अत एवावरतस्त्र-याणां ग्रहणं कर्तव्यं स्यादिति भाष्ये अवरत इत्युक्तिः सङ्गच्छते । एवञ्च गौरवं स्पष्टमेव । अत एव त्रयाणामित्येव साकाङ्क्षमुक्तमिति भावः । ननु किं मात्रागौरवं पदगौरवं ज्ञानगौरवं वा आपाद्यते ? नाद्यः, तस्याकिञ्चित्करत्वात् । तस्य नियतवृत्तित्वाच्च । तस्य त्वन्मते एव सत्त्वाच्च । न मध्यः, पक्ष-द्वयेऽपि पदत्रयकरणेन समत्वात् । अत एव कृतेऽपि च्लौ तान्येव त्रीणि ग्रहणानीति भाष्यं सङ्गच्छते । किञ्च त्वन्मते एव तत्सत्त्वात् । मन्मते तु पदद्वयमेकं वा । नान्त्यः, स्थान्यादेशभावाकल्पनप्रयुक्तलाघवात् । एवञ्च "मन्त्रे" इति सूत्रे गौरवभिया च्लिर्न कार्यः, उत्सर्गापवादभावेन निर्वाहात् । किञ्च सिच एव क्साद्यादेशाः । च्लेरित्यस्य स्थाने सिच इति कार्यम्, "मन्त्रे" इति सूत्रे किमपि न कार्यम्, सिच इत्य-नुवृत्त्यैवेष्टसिद्धेरिति न कोऽपि दोषो लाघवं च ; इत्यत आह—सिचो लुकीति । एकदेशस्य चानुकृष्टस्य वोत्सर्गस्यान्तरङ्गानपीति न्यायस्याश्रयणेनानादिष्टस्याश्रयणेनादिष्टस्य वा तदविषये स्वतन्त्रस्यैवेत्यर्थः । तद्विषये इति । घस्लृशगम्भिन्ने सर्वत्र वेत्यर्थः । अत एव सामान्येन पार्थक्येन चोक्तिः । अन्यथोभयो-क्तिरेवमुक्तिश्चायुक्तेति स्पष्टमेवेति भावः । केचित्तु व्यर्थमिति, किं तत्त्वं सिच्क्सादीनामुत्सर्गापवाद-भावेन स्थान्यादेशभावेन वा ? नाद्य इत्याह—मन्त्रे इति, नान्त्य इत्याह—सिचो लुकीति—व्या-

### सरला

सत्त्वेन तत्संग्रहस्यावश्यकत्वात् । त्रयाणामिति । चतुर्णामित्युपलक्षणम् । सिचो लुकीति । लुङि-परे सिचमेव विधाय तत्स्थाने क्साद्यादेशविधानमिति, "मन्त्रे घस" इत्यादिना च च्लिलुग्वत् सिचो लुक्

देशस्य शानचश्चासंग्रहापत्तेः । नान्त्यः । अव्ययस्याङ्गपदाभ्यां पृथग्ग्रहणवैयर्थ्यात् ।

---

शब्दरत्नम् ।

चेराह-चेति । तेनाग्रहीदित्यादाविडादेशस्य ईटोऽसङ्ग्रह इत्यर्थः । इदमुपलक्षणम् अ-व्ययस्य पदात्पृथग्ग्राहणवैयर्थ्यमपि दोष इति बोध्यम् । अव्ययस्येति । अत्र त्वस्यैव

भैरवी ।

स्वरापत्तिरूपदोष इत्यत आह-चेतीति । तेन सिच एव स्थाने क्साद्यादेशविधानमिति पक्षेऽपु-पन्नित्यत्र जुसापत्तेर्लौकिके तादृशप्रयोगे स्वरापत्तेश्च परिग्रहः । यदि तु च्लिरुत्सर्गः क्सादयो-ऽपवादा इत्याश्रीयते तदा न दोष इत्यवधेयम् । परिगणने तु दोष एवेत्याह—तेनेति । परिग-णनेनेत्यर्थः । नचात्र स्थानीत्संज्ञकटकारोपलक्षितो नत्वादेश इतीट इत्यसङ्गतमिति वाच्यम् , स्थानिनिष्ठस्येत्संज्ञकटकारोपलक्षितत्वस्यारोपाभिप्रायेणैवमभिधानात् । इदम्-अग्रहीदित्या-द्यसिद्धिरूपदूषणम् । अव्ययस्येति । अस्य पृथग्ग्रहणेत्यत्रान्वयः ।

अत्र-अन्त्यपक्षे। दोषत्वमिति। ब्राह्मणवसिष्ठन्यायानाश्रयण इत्यादिः। अत एवाह—इति भा

भावप्रकाशः ।

चक्षुः। स्वरापत्तेरिति । सिजन्तस्यादिरुदात्त इत्यर्थकेन तेनाद्युदात्तत्वापत्तिरित्यर्थः । सूत्रमते ङ्क्स्य लुमता लुप्तप्रत्ययहेतुककार्याभावाद्वार्तिकमते तस्मिन्निति न्यासात् "न लुमता" इत्यस्याप्राप्तिः । लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानमिति तु सर्वामन्त्रितसिज्लुक्स्वरवर्जमिति प्रतिषिद्धमिति प्रत्ययलक्षणं युक्त-मेवेति भावः । ननु नायं दोषः आदिः सिच इत्यस्य वैकल्पिकतया छन्दसि सर्वविकल्पानां व्यवस्थित-त्वेनापाद्यमानरूपाभावात् । एवञ्च च्लिव्यर्थ एवेत्यत आह—चेति । तेन स्थान्यादेशभावपक्षे लोके तादृशे तत्स्वरापत्तेः 'अपुषन्' इत्यादौजुसापत्तेश्च सङ्ग्रहः । नन्वेवमस्तु स्थान्यादेशभावपक्षस्य दुष्ट-त्वम् । उत्सर्गापवादभावपक्षस्तु युक्त एवेति च्लिव्यर्थ एव । अत एव भाष्यकृता यत्तावदुच्यते इत्यादिना तत्सूत्रमग्रे प्रत्याख्यातं कैयटेन चानूदितमिति चेत् ! सत्यम्, तथापि प्रकृतार्थसिद्धिरेवेति ध्वनयन्नाह— इत्यरुचेरिति । स्वतः प्रत्ययत्वेन तदनुपयोगरूपास्वरसादित्यर्थः । अत्रैव तात्पर्यं न तु च्लिसमर्थने । अत एव भाष्यकैयटयोः स्पष्टमित्युक्तिः, तयोश्च पूर्वत्र यथासंख्येनान्वयः । तथा च तत्रत्यपूर्वपक्षकथनेन तत्रत्यसिद्धान्तः प्रागुक्तो ध्वनित एवेति भावः । ननु चस्य समुच्चायकत्वेऽपि न तेनान्त्यपक्षोक्तदोषसमु-च्चयः, तस्यागतिकगतिप्रायत्वात् । ब्राह्मणवसिष्ठन्यायेन तस्यादोषत्वाच्च। प्रयोगासिद्धिफलकासङ्ग्रहसम्ब-न्ध्युत्तरत्वेन तादृशसमुच्चयस्यैवौचित्याच्च । एतेन चेन तद्दोषस्यैव संग्रहोऽस्तु । अयमेवोपलक्ष्यः, अनुप-स्थितत्वादित्यपास्तम् । अत आह—तेनेति । चेनेत्यर्थः । अस्य च इति तात्पर्यार्थ इत्यर्थकेत्यर्थ इत्यग्रे सङ्गृह्यत इत्यध्याहृतक्रियायामन्वयः । यद्वा तेन च पठनेन इत्यर्थ इत्यस्य चेतितात्पर्यार्थ इत्यर्थः । स्थानि-निष्ठमित्संज्ञकटोपलक्षितत्वमादेशे आरोप्य ईट इति निर्देशः । एतेन स्थानिनि तत्त्वेऽपि आदेशस्य दीर्घत्वेन ईट्त्वं दुर्वचमितीट इत्ययुक्तमित्यपास्तम् । असङ्ग्रह इति । तथाच "इट ईटि" इति न स्यादिति भावः । अत्र पक्षेऽन्त्यपक्षोक्तदोषो नेति भ्रमवारणायाह—इदमुपेति । 'अग्रहीत्' इत्यसिद्धिरूपमित्यर्थः । दोषा-न्तरस्येति शेषः; तदाह—अव्ययस्येति । अव्ययस्यानङ्गत्वस्यानुपदमेव वक्ष्यमाणत्वादाह—पदादीत । अपिस्तस्यैव समुच्चायक इति स एव मुख्यदोष इति भावः । ननूक्तरीत्याऽस्य दोषस्यायुक्तत्वेन दोषान्त-रोक्तिरुचितेत्यत आह—अत्र त्वेति । अन्त्यपक्षे त्वित्यर्थः । दोषत्वं तन्न्यायानाश्रयणे इति भावः । तदाश्रयणे तु दोषान्तराभावादयं पक्षो निर्दुष्ट एव । अत एव प्रक्रियाप्रकाशेऽपि तथैव व्याख्यातम् । अत एव मूलस्य न कौस्तुभविरोधः । एतेन गोबलीवर्दन्यायेन कौस्तुभे समाहितत्वान्मूलं चिन्त्यमिति खण्डन-

सरला ।

कर्तव्य इति तद्भावः । अस्यैवेति । एवकारेणोदाहरणपक्षे सिजाद्यादेशानामसंग्रहापत्तिर्व्यावर्त्यते । एतेन

प्रस्तुत्येति वृत्तिकारोक्तं तदुदाहरणमपि मन्दम् । क्त्वामात्रस्यानव्ययत्वात् , कृत्त्वेन

शब्दरत्नम् ।

दोषत्वमिति भावः । नन्वव्ययस्याङ्गत्वे फलाभावेन प्रत्ययस्य लुका लुप्तत्वेन च तदप्रा-

भैरवी ।

न इति । एतेनायम्पक्षो निर्दुष्ट इति ध्वनितम् । "अव्ययादाप्सुपः" इति यस्मिन्काले प्रवर्तते तस्मिन्काले आकडारीयसंज्ञाविषये यथोद्देशपक्षाश्रयणेनाङ्गसंज्ञाप्रवृत्तौ प्रत्ययलोपेऽपि प्रत्ययलक्षणेन तत्प्रवृत्तौ बाधकाभाव इत्याशयेनाह—अङ्गत्व इति । उक्तरीत्या पञ्चेत्यत्र पदसंज्ञा यथा प्रवर्तते भाविफलसत्त्वात्तथाऽत्र फलं नास्तीति भावः । ननु फलाभावेऽपि पर्जन्यन्यायेनाङ्गसंज्ञा भविष्यति, लुक्प्रवृत्तिसमकालमेव संज्ञायाः प्राप्तेः सत्त्वात् । यद्येकस्मिन्काले स्थानित्वनिमित्तत्वयोर्विरोधेन लुग्विधेः सर्वतो बलवत्त्वेन च तस्यैवादौ प्रवृत्तिर्भविष्यतीति त्रूपे तर्ह्यस्त्वादौ लुक्, तथापि प्रत्ययलक्षणेन लुगुत्तरमपि सा भविष्यतीत्यत आह—लुका लुप्तेति । अयम्भावः—"न लुमताऽङ्गस्य" इति सूत्रे 'न लुमता तस्मिन्' इति न्यासो वार्तिककृता 'लुमति प्रतिषेधे तन्निमित्तग्रहणम्' इत्यनेन बोधितः, लुमता लुप्ते यः प्रत्ययस्तस्मिन्परे यत्पूर्वन्तदुद्देश्यकं यत्कार्यन्तत्र कर्तव्ये प्रत्ययलक्षणं नेति तदर्थः । एवञ्च तद्वार्तिकैकवाक्यतया सूत्रकारमतेऽपि फलभेदाभावाय लुमता लुप्ते प्रत्यये परे यदङ्गं यत्पूर्वन्तस्य यत्कार्यमाङ्गमनाङ्गं वा तस्मिन्कर्तव्ये निषेध इत्येवार्थो, नतु लब्धाङ्गसंज्ञकत्वस्यापि निवेश इति निषेध-

भावप्रकाशः ।

कुदुक्तिः परास्ता, तन्न्यायस्यासत्त्वाच्च । तदाह—इति भाव इति । नन्वव्ययस्याङ्गत्वमस्त्येव । आकडारसंज्ञासु यथोद्देशत्वस्यैव भाष्ये सिद्धान्तितत्वेन प्रत्ययसंज्ञासमकालं विध्येकवाक्यतया तदानीं कार्याभावेपि तत्प्रवृत्तेः, 'पञ्च' इत्यादौ पदसंज्ञावत् । अत आह—फलाभावेनेति । दृष्टान्ते भाविफलसत्त्वेन तत्वेऽप्यत्र तदभावेनेत्यर्थः । अस्य तदप्राप्त्येत्यत्रान्वयः ।

यत्तु मान्याः, न च "न लुमता" इति निषेधेनाङ्गसंज्ञा तस्य दुर्लभेति वाच्यम्, तस्या अङ्गनिमित्तकार्यत्वाभावेन निषेधाप्राप्तेः । अत एव 'पञ्चभिः' 'क्रोष्टुभिः' 'क्रीतं कुलम्' इति तद्धितार्थे समासे ठको 'अध्यर्ध' इति लुकि "लुक्तद्धित" इति ङीपो लुकि सोर्लुकि च तृज्वत्त्वयुक्त 'पञ्चक्रोष्टु' इति प्रयोगसिद्धिः । अन्यथाङ्गेन प्रत्ययाक्षेपे "उरत्" इत्यत्रेवावृत्त्या क्रोष्टुशब्दः प्रत्ययेऽङ्गसंज्ञो भवति, तस्य च स्वार्थकप्रत्यये तृज्वद्भाव इत्यर्थेनाङ्गसंज्ञादि न स्यात् । स्त्रीप्रत्ययस्तु गौरादित्वादत एव विधानाद्वा । स्पष्टञ्चेदं "युवोरनाकौ" "तृज्वत्क्रोष्टुः" इत्यादिसूत्रेषु भाष्यकैयटपदमञ्जर्यादावित्याहुः । तत् कैयटहरदत्ताद्यनुरोधेनेति स्पष्टमेव । "न लुमता तस्मिन्" इति न्यासान्तरानुरोधेनाङ्गसंज्ञाया अपि निषेधौचित्यात् । लुमता लुप्तप्रत्ययनिमित्ते तत्प्रकृतिसम्बन्धि यत्कार्यमित्यर्थो हि तदा । एवञ्च सूत्रमतेऽपि लुप्तप्रत्यये परतस्तत्प्रकृत्युद्देश्यकमाङ्गमनाङ्गं वा यत्कार्यमित्यर्थः, नतु तत्र लब्धाङ्गसंज्ञकत्वनिवेशः । अतएव पक्षयोःसमफलता तत्प्रत्याख्यानसङ्गतिश्च । स्पष्टञ्चेदं तत्सूत्रेष्वेवोद्द्योते । "न लुमता" इति सूत्रस्थोद्द्योतशब्देन्दुशेखरादिग्रन्थास्तु मान्यानुयायिन इति न तद्विरोधः । वस्तुतः शेखरतात्पर्यमन्यत्र प्रतिपादितमिति तदविरोध एवेति बोध्यम् । अङ्गसंज्ञाया यथोद्देशत्वादुक्तप्रयोगोपपत्तिः । कार्यकालपक्षेऽपि क्रोष्टुशब्दः प्रत्ययेऽङ्गसंज्ञो भवति, अङ्गसंज्ञकस्य च तृज्वद्भाव इत्यर्थात्तृज्वत्त्वमनैमित्तिकमेव । "उरत्" इत्यादौ तु अङ्गसंज्ञाद्वारा परनिमित्तकत्वमादाय स्थानिवत्त्वप्रवृत्तिः । "न लुमता" इत्यस्य चानित्यत्वादङ्गसंज्ञायामप्राप्तिः । तेन 'प्रियतिसृ' इतिवदुपपत्तिरिति तद्भाष्याशयः । तत्रत्यकैयटादिग्रन्थास्तु चिन्त्या एव । एतेनावर्णस्यासावित्यत्रत्यदण्डधुक्तिः परास्तेति दिक् । तत् ध्वनयन् 'तुष्यतु दुर्जन' न्यायेन कार्यकालपक्षाश्रयणेप्याह—लुकेति । एतेन—सूत्रमते तथा निवेशेन निषेधाप्राप्तेराह—फलेति , 'वार्तिकमते तदनिवेशेन निषेधप्राप्तिःइत्याह—लुकेतीति व्याख्यानं-परास्तम् , मतभेदस्यैवाभावादिति भावः । तदप्राप्त्या-अङ्गत्वाप्राप्त्या । ननु पदसं-

सरला ।

परिगणनपक्षेऽप्यस्याऽव्ययादङ्गपदपृथग्ग्रहणवैयर्थ्यरूपस्य दोषत्वं ध्वनितमिति बोध्यम् । फलाभावे-

सिद्धत्त्वाच्चेत्याशयेनाह—आदेश इति । अनल्विधाविति किम् ? तेन, तस्मात्,

शब्दरत्नम् ।

त्त्या कथं तेनाव्ययसङ्ग्रहोऽत आह—पदेति । तत्त्वं च ततः परस्य निघातार्थमावश्यकं, प्रत्ययलक्षणेन सुबन्तत्वाच्च तत्त्वमिति भावः । सिद्धत्वाच्चेति । अत एवात्र तुक् । न च "सर्वे सर्वपदादेशा" इति न्यायेन प्रस्तुत्वा इत्यस्य स्थाने प्रस्तुत्य इत्यादेशे तस्याव्ययत्वसिद्धिरिति वृत्त्याशय इति वाच्यम् । अर्थवत्येव स्थानिवत्त्वमिति तात्पर्येण क्त्वो-

भैरवी ।

स्याङ्गसंज्ञायामपि प्रवृत्तिर्भविष्यतीति । नच 'पञ्चभिः क्रोष्टीभिः क्रीतङ्कुलं पञ्चक्रोष्टृ' इत्यस्य सिद्धये लब्धाङ्गसंज्ञकत्वनिवेश आवश्यकोऽङ्गस्य क्रोष्टुस्तृज्वत्त्वमिति सूत्रार्थात् । तत्र हि-तद्धितार्थेति समासे ठकोलुकि "लुक्तद्धित" इति ङ्प्रोप्रत्ययस्य ङीपो लुकि सोर्लुकि कृतेऽपि तृज्वद्भावस्य सिद्धिः । स्पष्टञ्चेदं "युवोरनाकौ" इत्यत्र भाष्यकैयटयोरिति वाच्यम् , तस्य ग्रन्थस्य "न लुमता" इत्यस्यानित्यत्वाभिप्रायकत्वात् । अत एव प्रियतिस्र कुलमिति प्रयोगोपपत्तिः । तदप्राप्त्या—अङ्गसंज्ञाया अप्राप्त्या । तेन—अङ्गशब्देन । ननु सुपो लुकि पदसंज्ञाऽपि कथमत आह—तत्त्वञ्चेति । पदत्वञ्चेत्यर्थः । निघातार्थमिति । प्रातर्भवति, प्रस्तुत्य भरती त्यादौ "तिङ्ङतिङः" इति निघातार्थमित्यर्थः । एतेन फलसत्त्वमुक्तम् । सुबन्तत्वाच्चेति ॥ एतेन "न लुमता" इतिनिषेधाप्रवृत्तिं सूचयति, पदसंज्ञाया लुप्तप्रत्यये यः पूर्वस्तन्मात्रोद्देश्यकत्वाभावात् । चस्त्वर्थे । तत्त्वम्—पदत्वम् ।

क्त्वस्यावश्यकतां ध्वनयति—अत एवेति । कृत्त्वस्यावश्यकत्वादेवेत्यर्थः । अत्र—प्रस्तुत्येत्यत्र । ननु क्त्वामात्रस्यानव्ययत्वेऽपि तदन्तस्याव्ययत्वेन तदादेशस्य समुदायस्याव्ययत्वेनाव्ययोदाहरणम्मूलोक्तं सम्यगेवेत्यर्थं सोपपत्तिकमनूद्य दूषयति—नचेति । अर्थवत्त्वेन—मा-

भावप्रकाशः ।

ज्ञाया अप्युक्तरीत्याऽभावे कथं तेन तत्सङ्ग्रहः । अत आह—तत्त्वञ्चेति । पदत्वं चेत्यर्थः । एवमग्रेऽपि । ततः, अव्ययात् , प्रातरस्तीत्यादौ "तिङ्ङतिङः" इति निघातफलसत्वात्तदभावो नेति भावः । न लुमतेत्यपि न, पदत्वस्य विशिष्टकार्यत्वात् । तदाह—सुबन्तत्वादिति । चद्वयं त्वर्थे । कृत्त्वस्यावश्यकतामाह—अत एवेति । एवञ्च श्रौतस्थान्यादेशभाव आवश्यक इति भावः । यत्तु क्त्वः कृत्त्वेन तदादेशस्य तत्त्वेऽपि तन्मात्रस्यानव्ययत्वेऽपि समुदायस्य तत्त्वेन तदादेशस्य तत्त्वसिद्धिरुक्तरीत्यैवेति तद्धद्यं मौलं सुष्ठ्वेवेति हरदत्तादयस्तत्खण्डयितुं सोपपत्तिकमनुवदति—नचेति । न्यायेनेति ।

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥

इति भाष्योक्तन्यायेनेत्यर्थः । जहत्स्वार्थायां वृत्तौ क्त्वोऽनर्थकत्वादिति भावः । प्रस्तुत्येतिपाठः । वृत्त्याशय इति । एवञ्च तद्ग्रन्थसौष्ठवे मूलमेवायुक्तमिति भावः । पद्यते गम्यते अर्थोऽनेनेत्यर्थवदिह पदम् , नतु सुप्तिङन्तमित्याशयेनाह—अर्थवत्येवेति । एवेन निरर्थकव्यवच्छेदः । तात्पर्येण, क्त्वभा-

सरला ।

नेति । ततः परस्या विभक्तेः "अव्ययादाप्सुपः" इति लुप्तत्वेन तत्राङ्गसंज्ञानिमित्तस्य कस्यचित्कार्यस्याप्रवृत्तेरित्यर्थः । मूले तदुदाहरणम् अव्ययमात्रोदाहरणम् । इति न्यायेनेति । सर्वे सर्वपदादेशा दाक्षिपुत्रस्य पाणिनेः । एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥ इति न्यायशरीरम् । ततश्च शब्दनित्यत्वोपपत्तये 'प्रस्तुत्वा' इत्यस्य 'प्रस्तुत्य' इत्यादेशः, 'प्रस्तुत्वा' इति प्रयोक्तव्ये 'प्रस्तुत्य' इति प्रयोक्तव्यमिति यावत् । तेन शब्दान्तरतया प्रयोगसाधुतामात्रविधानेन न शब्दनित्यत्वहानिः । अर्थवत्येव स्थानित्वमिति । सर्वे सर्वपदादेशा इत्यत्रत्यसर्वशब्दयोरर्थवत्परत्वाभ्युपगमात् । अन्यथा नारायणं नमस्कृत्येत्यादौ "अमि पूर्वः" इति पूर्वरूपघटित आदेशः सम्पूर्णमहाभारतरूपो महाभारतस्य स्थाने स्यादिति महद-

तस्य, तस्मिंश्च विधौ मा भूत् । तत्र अला विधौ यथा—व्यूढोरस्केन । अत्र सकारस्य स्थानिवत्त्वेन विसर्गवदट्त्वमाश्रित्य "अड्व्यवाये" ( पा०सू०८।४।२ ) इति णत्वं

शब्दरत्नम् ।

ऽप्यर्थवत्त्वेन तादृशस्थान्यादेशभावकल्पने मानाभावादिति दिक् । अनल्विधाविति किमिति । विधिग्रहणविशिष्टं किमर्थमिति प्रश्नः । णत्वं प्राप्तमिति । न च सकारे

भैरवी ।

वार्थाभिधायकत्वेनास्य तत्त्वम् । 'सव सर्वपदादेशाः' इत्यत्र पदशब्दो ह्यर्थवत्पर इत्याशयः । क्त्वादीनां कचिदनर्थकत्वेन व्यवहारस्तु प्रकृत्यर्थातिरिक्तार्थाभावेन बोध्यः । तादृशेति । समुदायेत्यर्थः । मानाभावादिति । श्रौतस्य स्थान्यादेशभावस्य यत्र स्थानिन आनर्थक्यन्तत्र समुदायस्य स्थानित्वमिति आनर्थक्यमेव तादृक्कल्पनायां मानं, तच्चाऽत्र नास्तीति भावः । ननु जहत्स्वार्थावृत्तिरिति पक्षे समुदायादेशत्वकल्पनमेव युक्तमत आह—दिगिति । रूढेरभावेन जहत्स्वार्थायास्तस्या अङ्गीकाराभावः, प्रक्रियादशायान्तदनङ्गीकारश्चावश्यकः । अत एव 'सुपन्थाः' इत्यादावात्वस्य प्रकृतप्रयोगे तुकश्च सिद्धिरिति ।

नन्वनल्विधाविति 'द्युकामः' इत्यादिप्रयोगसिद्ध्यर्थमावश्यकमेवेति प्रश्नानुपपत्तिरत आह-विधिग्रहणविशिष्टमिति । द्युकाम इत्यादिसिद्ध्यर्थमनलीत्येव वाच्यमित्याशयः । उत्तराशयस्तु षष्ठीसमासेनालाश्रये विधौ नेत्यर्थेन सकलमूलोक्तप्रयोजनसिद्ध्यर्थं तस्यावश्यकत्वमिति । ननु तृतीयान्तार्थाभावेऽपि 'व्यूढोरस्केन' इत्यस्य नासिद्धिः ? "रषाभ्याम्" इति पञ्चमीनिर्देशेन "तस्मात्" इतिपरिभाषायाः प्रवृत्तिसम्भवात् । अत एव 'आदर्शेन' इत्यत्र न णत्वम् । नच सौत्रव्यवायपदविरोध इति वाच्यम्, अडादिभिन्नव्यवधाने नेत्यर्थात् । अत एव

भावप्रकाशः ।

ष्योक्तन्यायतात्पर्यणेत्यर्थः । इदञ्चान्यत्र स्पष्टम् । अपिना समुदायसमुच्चयः । अजहत्स्वार्थायां वृत्ताविति शेषः । मानाभावादिति । श्रौतस्यानर्थक्यं च तद्गमकं तच्चात्र नेति भावः । नन्वेवमपि जहत्स्वार्थायां वृत्तौ सुयोज एव वृत्तिग्रन्थः । अत आह—दिगिति । तदर्थस्तु रूढेर्यत्रविरोधित्वं तत्रैव तदङ्गीकारः, प्रक्रियादशायां तदनङ्गीकारश्च । अत एव 'सुपन्थाः' इत्यादिसिद्धिः, प्रकृते तुक्सिद्धिश्चेति ।

ननु 'अनल्' इत्यस्यालि वारणायावश्यकत्वेन तथोत्तरे वाच्ये तेनेत्याद्युत्तरासङ्गतिः, अत आह—विधीति । तथा च 'शिखी ध्वस्तः' इतिवद्विशेषणे प्रश्नोपसङ्क्रमाद्विधिग्रहणप्रश्ने तथोत्तरं युक्तमेवेति भावः । किमर्थमिति । तदर्थमनल्(लि) इत्येवास्तु । विधावित्यध्याहारलभ्यमित्यादीति भावः । मूले तेनेत्यादि । अयम्भावः, भाष्ये एतत्फलस्य खण्डितत्वेप्युत्तरपदलोपिसमासद्वारा सकलाल्विधिपरिग्रहार्थविधिशब्देन प्रधानन्यायबाधाङ्गीकारेण यथाकथञ्चिदाश्रयणस्यैवास्यापि लाभ इति । इदमेव ध्वनयितुं वक्ष्यति-आश्रयणं चेत्यादि । अत एव न कौस्तुभविरोधः । एतेनैतत्फलं संख्यण्ड्योत्तरार्थं विधिग्रहणमिति भाष्योक्तिविरोधापत्तिरिति मन्दोक्तमपास्तम्, उत्तरार्थत्वस्य तत्रानुक्तत्वाच्च । उत्तरत्र विधिग्रहणसत्त्वेन फलाभावाच्चेति दिक् । ननु वार्तिकमते यथाश्रुत "अट्कुपु" इतिविधिसूत्रस्य 'आदर्शेन' इत्यादावतिप्रसङ्गभङ्गाय "रषाभ्याम्" इति पञ्चम्योपस्थापितनिर्दिष्टपदस्य व्यवाय इत्यनेनाविरोधायाडाद्यन्याव्यवहितपरतायाः अङ्गीकाराद्भाष्यमते लाघवाद् ऋवर्णान्नस्येत्यस्य प्रत्याख्यानाय व्यवायेपीति विधेरट्कुप्वितिनियमस्य च योगविभागेनाङ्गीकाराद् णत्वप्राप्तिरेव दुर्वचेत्याशयेन शङ्कते—नचेति । स्वतःसत्त्वेन रूपेण सत्याद्वि

सरला ।

निष्ठापत्तिरतस्तदर्थत्वमभ्युपगन्तव्यं सर्वपदस्येति तात्पर्यम् । एवञ्च श्रौतस्थानिघटितार्थवच्छब्दस्य स्थाने श्रौतस्थान्यघटितः श्रौतादेशघटितः श्रौतस्थानिसमभिव्याहृतयावद्वर्णघटितः श्रौतस्थानिसमभिव्याहृतयावद्वर्णेतरवर्णाघटितश्चार्थवानादेशो भवतीति फलितम् । अयमेवानुमानिकस्थान्यादेशभाव उच्यते ।

इति प्रश्न इति । 'अनलि' इत्येव वक्तव्ये अनल्विधाविति ग्रहणं किमर्थमिति तदर्थः । चतुर्विधविभक्त्यर्थस्य लाभाय विधिग्रहणविशिष्टमनल्विधाविति तदुत्तरम् । विधिग्रहणे अला विधिरल्विधिरिति

प्राप्तम् । अलः परस्य—द्यौः, पन्थाः । हल्ङ्याब्दिलोपो न । अलो विधौ

शब्दरत्नम् ।

स्वतोऽड्भिन्नत्वसत्त्वादड्भिन्नव्यवाये नेति निषेधात्कथं णत्वप्राप्तिरिति वाच्यम् । अति-

भैरवी ।

क्षुभ्नादिषु क्षुभ्नशब्दपाठस्य चारितार्थ्यम् । भाष्यकारमतेऽपि योगविभागेनोक्तार्थलाभाच्च । तच्चाड्भिन्नत्वं स्वतोऽस्त्येवेत्याशयिकामाशङ्कान्निराकरोति—नचेति । निषेधादिति । नियमशा- स्त्राणान्निषेधमुखेन प्रवृत्तिरिति पक्षे निषेधः स्पष्ट एव । विधिरूपेण प्रवृत्तिः, सामान्यशास्त्रता-

भावप्रकाशः ।

पाठादतिदिष्टस्योपदिष्टाद् दुर्बलत्वादिति भावः । एवञ्च "निषेधाश्च बलीयांसः" इति न्यायापत्तिरित्याह—अड्भिन्नेति । इदञ्चोक्तमतद्वयेऽपि समानम् । तत्रापि द्वितीये नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे । विधिमुखेनैव प्रवृत्तिरिति सिद्धान्तमतेऽपि प्राप्तस्य पुनर्विधिसामर्थ्येन सामान्यशास्त्रस्य तदन्यपर- त्वरूपसङ्कोचाङ्गीकारेण, अन्यत्र तदभावस्यार्थतः सिद्ध्या आर्थिकं निषेधमादाय तेषु निषेधकत्वव्यवहा- रात् । अन्यनिवृत्तिफलकसिद्धविषयकविधित्वमेव हि नियमविधित्वमित्यन्यत्र विस्तरः । एतेन विधिमुखे- नैव प्रवृत्तिरिति सिद्धान्तविरोध इति नियमपरिसङ्ख्ययोरैक्येन निषेधस्य शाब्दत्वेन विधेरेवासत्त्वात् कस्या-

सरला ।

तृतीयासमासस्य, अलो विधिरिति पञ्चमीषष्ठीसमासयोः, अलि विधिरिति सप्तमीसमासस्य च सम्भवेन विनिगमनाविरहाच्चतुर्णामप्यर्थलाभ इति भावः । मूले विसर्गवदिति । विसर्गवृत्त्यट्त्वमित्यर्थः । षष्ठ्यर्थे मतुप्प्रत्ययः । निषेधादिति । "अट्कुप्वाङ्" इत्यस्य नियामकत्वेन नियमशास्त्राणां निषेधमुखेन प्रवृ- त्तिवादे स्वतो निषेधाद् विधिमुखेन प्रवृत्तिवादे च सङ्कोचमूलकफलितनिषेधादित्यर्थः । तथाहि "अट्कु- प्वाङ्" इति सूत्रे योगविभागः कर्तव्यः "व्यवायेऽपि" इति विध्यर्थः । "अट्कुप्वाङ्नुम्" इति नियमार्थं इति । छान्दसो भिसो लुक् ।

तत्र व्यवाये इत्यस्य रेफषकारोत्तरत्वविशिष्टस्य यत्किञ्चिद्व्यवहितस्य नस्य णत्वं भवतीत्यर्थेन अडा- दिव्यवायेऽपि णत्वस्य सिद्ध्या "अट्कुप्वाङ्" इति नियामकम् । नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे नियामकशास्त्रीयोद्देश्यताप्रयोजकपदस्य स्वभिन्ने लक्षणा, नञश्चाध्याहार इति सिद्धान्ताद् "अट्कु- प्वाङ्" इति नियामकशास्त्रस्य अडादिभिन्नव्यवधाने णत्वं नेत्यर्थेन 'व्यूढोरस्केन' इत्यत्र सकारस्य स्वतो- ऽड्भिन्नत्वेन तेन निषेधः सिद्ध्यति । विधिमुखेन प्रवृत्तिरिति पक्षेऽपि नियम्यशास्त्रीयोद्देश्यतावच्छेदक- व्याप्यं नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयो- द्देश्यतावच्छेदकावच्छिन्ने सङ्कोचः, न तु नियामकशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नातिरिक्तत्वेन नियामकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यरूपावच्छिन्नातिरिक्तत्वेन वा स्नुषाश्वश्रून्यायप्रसङ्गात् , नापि निय- म्यशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नातिरिक्तत्वेन, नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्यापकरूपाव- च्छिन्नातिरिक्तत्वेन वा नियम्यशास्त्रवैयर्थ्यापत्तेरिति सिद्धान्तः । ततश्च "व्यवायेऽपि" इत्येतन्नियम्यशास्त्री- योद्देश्यतावच्छेदकं रेफषकारान्यतरोत्तरत्वविशिष्टयत्किञ्चिद्व्यवहितनत्वं तदवच्छिन्ने—नियामकम् "अट्- कुप्वाङ्", तदीयोद्देश्यतावच्छेदकं रेफषकारान्यतरोत्तराडादिव्यवहितनत्वं, तद्व्यापकं पूर्वरूपव्याप्यं च रूपं रेफषकारान्यतराक्षरसमाम्नायिकवर्णव्यवहितनत्वं, तदवच्छिन्नातिरिक्तत्वेन सङ्कोचाद् "व्यवायेऽपि" इत्यस्य रेफषकारान्यतराक्षरसमाम्नायिकवर्णेतरयत्किञ्चिद्व्यवधानविशिष्टनत्वावच्छिन्नस्य णत्वं भवतीत्यर्थेन 'व्यूढोर- स्केन इत्यत्र तदप्राप्तेः,"अट्कुप्वाङ्"इत्यस्यापि तत्पक्षे "तस्मादित्युत्तरस्य"इति परिभाषया 'रषाभ्याम्'इति पञ्चमीश्रुत्या अव्यवहितपरत्वस्य 'अट्कुप्वाङ्' इति श्रुत्या अडादिव्यवहितत्वस्य चोपस्थितौ तयोर्मिथो विरो- धेन लक्षणया अडादिपदस्याडादिव्यतिरिक्तव्यवधानशून्यपरत्वस्य शेखरकृद्भिः स्वीकृततया रेफषकारो- त्तरत्वविशिष्टाडादिव्यतिरिक्तव्यवधानशून्यस्य नस्य णत्वं भवतीत्यर्थेन 'व्यूढोरस्केन' इत्यत्र सकारस्या- डादिव्यतिरिक्ततया तद्व्यवधानशून्यत्वाभावादप्राप्तेरर्थतो निषेधः सिद्ध्यति । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

द्युकामः। वलि लोपो न। अलि विधौ—यजेः क्तः, क इष्टः। "हशि च"

शब्दरत्नम्।

दिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात्। इदं चासिद्धवत्सूत्रे कैयटे स्पष्टम्। द्युकाम इति। यद्यपि वत्वं हल्त्वाद्यपेक्षया विशेषधर्मस्तथाप्ये-

भैरवी।

त्यर्थसङ्कोच इति पक्षेऽपि फलितनिषेधमादायेत्यमभिधानम्। अतिदिश्यमानो यो धर्मस्तद्विरुद्धोयः स्वाश्रयधर्मस्तत्प्रयुक्तकार्याभाव इत्यर्थः। स्वाश्रयः—आदेशनिष्ठः। कार्येति कार्यातिदेशस्य प्राधान्याभिप्रायेण। शास्त्रातिदेशोऽपि कार्यातिदेशादभिन्न एव फलत इत्यभिप्रायेण—स्वभावेति। यथा सिद्धत्वासिद्धत्वयोर्विरोधेन जहीत्यत्र "असिद्धवदत्र" इत्यनेनासिद्धत्वातितिदेशेऽपि स्वाश्रयो हेर्लुक्न भवति। असिद्धवत्सूत्रं तु शाधीत्यत्र स्थानिप्रयुक्तस्य धिभावस्य झलन्तत्वस्य बुद्ध्या प्रवृत्तिसम्पादनेन चरितार्थम्। इदम्—स्वभावसिद्धपूर्वोक्तम्। न च 'ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यम्' इत्यत्रातिदिश्यमानो धर्मो ब्राह्मण्यं तत्प्रयुक्तकार्यविरुद्धस्याध्यापनप्रतिग्रहनिवृत्तिरूपस्य क्षत्रिये दर्शनेन भवदुक्तः स्वभावो व्यभिचरित इति वाच्यम्, तत्रापि न ब्राह्मण्यातिदेशः, किन्तु अभ्युत्थानसत्कारादिरूपस्य, तद्विरुद्धन्यूनत्वबुद्धिप्रयोज्याभ्युत्थानाभावाप्रवृत्तिसम्पादनेनातिदेशस्य चारितार्थ्यात्।

'सामान्यातिदेशे विशेषानतिदेशः' इति हि परिभाषा लोकप्रसिद्धा। यथा 'ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यम्' इत्यनेनाग्रासनाद्यतिदेशो दृश्यते, नतु माठरकौण्डिन्यसम्बन्धिपरिवेषणादिधर्मस्य। एवञ्च वत्वस्य वल्त्वस्य वा हल्त्वापेक्षया विशेषधर्मत्वेन तदतिदेशो न भविष्यति, किन्तु हल्त्वस्यैव। तथा च कथमतिदेशेन 'द्यु कामः' इत्यत्र वलि ककारे लोपस्य प्राप्तिरित्याशयेन शङ्कते—यद्यपीति। हल्त्वादीत्यादिना वल्त्वपरिग्रहः।

भावप्रकाशः।

तिदेश इति मूलं चिन्त्यमिति, तयोर्भेदेन नियमाभिप्राया मूलोक्तिरिति च मन्दोक्तमपास्तम्, उक्तरीत्या सिद्धान्तविरोधाभावाद्वाक्यद्वयसत्त्वाच्च। अत एव "स्थानिवदादेशो नाल्विधौ" इति नासूत्रि, निषेधवैयर्थ्यापत्तेश्च। विरुद्धेति। इदं च धर्मे कार्ये चान्वेति। स्वाश्रयेति। आदेशनिष्ठेत्यर्थः। कार्येत्यनेन प्राधान्यात्कार्यातिदेशोऽयमिति ध्वनितमित्यन्यत्र विस्तरः। स्वभावेति। अत एव 'जहि' इत्यादौ जादेशस्यासिद्धवत्त्वे स्वाश्रयो हि लुक् न, सिद्धवत्त्वासिद्धवत्त्वयोर्विरोधात्। असिद्धवत्सूत्रं तु 'शाधि' इत्यादौ स्थानिप्रयुक्तधिभावकरणेन सफलमिति भावः। तदाह—इदञ्चेति। तादृशकार्याभावेऽतिदेशस्वभावसिद्धत्वं चेत्यर्थः। अत एव 'ब्राह्मणवत्' इत्यादौ ब्राह्मण्यविरुद्धाऽब्राह्मण्यप्रयुक्तब्राह्मण्यविरुद्धमद्यपानादेर्निवृत्तिर्न तु युद्धादेः। एतेन तत्र ब्राह्मण्यप्रयुक्तयाजनादिविरुद्धक्षत्रियत्वादिप्रयुक्ततदभावरूपकार्यदर्शनेन तादृशनियमे न मानमिति मन्दोक्तमपास्तम्, उक्तयुक्तेः, तयोरविरोधाच्च, विश्वामित्रे समावेशदर्शनात्, उक्तरीत्या तस्यापि निवृत्तेश्चेति दिक्। स्पष्टमिति। स्पष्टतरमित्यर्थः। अत एव कैयटोल्लेखः। "क्षियो दीर्घात्" इत्यत्र भाष्येऽपि स्पष्टत्वात्। ननु यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशप्रवृत्तिस्तस्य कार्यवच्छास्त्रीयस्यैव प्रत्यासत्त्या ग्रहणेन वत्वस्य "स्वं रूपम्" इत्यनेन तत्त्वेऽपि हल्त्वाद्यपेक्षया विशेषधर्मत्वेन "सामान्यातिदेशे" इति न्यायेनानतिदेशात्तस्य लोपाप्राप्तिरिति मूलमयुक्तम्। अत एव ब्राह्मणवदित्यनेन ब्राह्मण्यप्रयुक्ताग्रासनादीन्यतिदिश्यन्ते, न माठरत्वादिविशेषकार्याणीत्याशयेनाशङ्कते—यद्यपीति। आदिना वल्त्वादिसङ्ग्रहः।

सरला।

अतिदिश्यमानधर्मविरुद्धेति। अत्र विरुद्धत्वञ्च तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयमुद्रया ग्राह्यं नतु तदभावव्याप्यवत्तानिश्चयमुद्रया। प्रकृते च विरोधोऽङ्भेदवत्ताबुद्धिं प्रत्यतिदेशशास्त्रकृताङ्भेदाभावरूपात्वप्रकारकनिश्चयस्य प्रतिबन्धकत्वाद्, भेदाभावस्य भेदप्रतियोगितावच्छेदकस्वरूपत्वनियमात्। तदभावव्याप्यवत्तानिश्चयमुद्रया विरोधग्रहे तु 'अधुः' इत्यादौ "विभाषा घ्राधेट्" इति लुगर्थमतिदिश्यमानधे-

शब्दरत्नम् ।

तद्वाक्योपप्लुते वकारवदुकार इति वाक्ये उपात्तधर्मापेक्षया न तस्य तत्त्वम् । सूत्रक्लृप्तस्थान्यादेशभावमादायैवैतत्कृतवाक्योपप्लवादिति भावः ।

भैरवी ।

न च वत्वस्य विशेषधर्मत्वेऽपि न तद्वत्त्वेन निमित्तत्वं, किन्तु(?) वल्त्वेनैवेति वत्वातिदेशापेक्षाया एवाभाव इति तस्य विशेषधर्मत्वोपपादनपूर्विका कथमियमाशङ्केति वाच्यम्, "दिव उत्" इत्यत्र दिव इति षष्ठीनिर्देशादलोन्त्यपरिभाषाया उपस्थित्या दिवोऽन्त्यस्य वस्येत्यर्थस्य प्राप्तौ वत्वस्य स्थानितावच्छेदकत्वेन तस्योपस्थितौ तद्व्यापकं वल्त्वमप्युपस्थितं भविष्यतीत्याशयात् ; परिभाषाघटकसामान्यविशेषशब्देन यस्यकस्यचिद्ग्रहणे प्रमेयत्वादिकेवलान्वयिधर्मापेक्षया विशेषधर्मत्वं सर्वस्यापि धर्मस्यास्तीति कस्याप्यतिदेशो न स्यात्, अतः सङ्ग्राहकवाक्यादुपप्लुतलक्ष्यसंस्कारकवाक्यघटकशब्दोपात्तधर्मापेक्षया विशेषधर्म एव विशेषशब्देन ग्राह्यः । "आशंसायां भूतवच्च" इत्यत्र भूतत्वापेक्षयाऽनद्यतनत्वविशिष्टभूतत्वं यथा । एवञ्च प्रकृते स्थानिवदादेश इति यदतिदेशसूचकं वाक्यं तत्र यत्स्थानिपदन्तदुपात्तधर्मस्यैवातिदेशो न तु तद्व्यापकस्येत्यर्थो वाच्यः; स त्वनुपयुक्तः स्थानित्वादेशस्य निष्फलत्वात् । किन्तु तस्मादुपप्लुतं यद्वकारवदुकार इत्याकारकं वाक्यन्तद्घटकशब्दोपात्तत्वापेक्षया विशेषधर्मत्वमेव वक्तव्यन्तच्च वल्त्वे नास्तीत्याशयेन समाधत्ते—तथापीति । एतादृशवाक्योपप्लवे मानमाह—सूत्रेति । अलोन्त्यपरिभाषैकवाक्यतया सूत्रक्लृप्तेत्यर्थः ।

भावप्रकाशः ।

अत्र मान्यादयः, उक्तन्यायस्योपस्थितसामान्यधर्मैस्तदाक्षिप्तव्यापकधर्मैश्च विध्याकाङ्क्षापूरणे सति तदन्यग्रहणे मानाभाव इति तर्कमूलकतया दृष्टान्ते तथासम्भवेऽप्यत्र स्थानित्वधर्मोपस्थित्या तन्निमित्तकार्याभावेनातिदेशसामर्थ्यादन्येषां ग्रहणावश्यकत्वे विनिगमकाभावात्सर्वेषां ग्रहणमिति तयोर्महद्वैषम्यमिति प्रमादधुः, तत्प्राचामनुरोधेन । स्थानिवदादेश इत्यस्य सङ्ग्राहकवाक्यत्वेन लक्ष्यासंस्कारकत्वात्तद्धर्मस्योपस्थितस्यापि निष्फलत्वेन सूत्रवैयर्थ्यापत्त्या तत्संस्कारकवाक्यान्तरकल्पनावश्यकत्वात् । अत एव तदग्रे एव तथोक्तं तैः, तद् ध्वनयन् तथैव समाधत्ते—तथाप्येतदिति । उपप्लुते, कल्पिते आविर्भूते वा । वाक्ये इति । जन्यत्वं सप्तम्यर्थः । उपादानं ज्ञानम् । वाक्यजन्यधीविषयत्वापेक्षया वत्वस्य न विशेषधर्मत्वमिति समुदायार्थः । एवञ्च वाक्ये इत्यस्योपादाने इत्यत्रान्वयो न तु तत्त्वमित्यत्र । तथासति अन्यत्रोपात्तधर्मापेक्षया वत्वस्य तत्त्वेन तदभावस्य वक्तुमशक्यत्वात् । अत एव समस्तोद्योतपाठसङ्गतिः । नन्वेवमपि तथा वाक्योपप्लवे एव मानाभावः । धातुवद्धिरित्यादिवद्वल्वदुकार इत्यादीनां कल्पयितुं शक्यत्वात् । तथा च विशेषधर्मत्वेन हन्त्वादीनामिव वत्वस्यातिदेशो न स्यादत आह—सूत्रेति । आदेशविधिसूत्रेषु येन रूपेण क्लृप्तस्थान्यादेशभावस्तमादायेत्यर्थः । तथा च हन्त्वेन हन इव "अलोन्त्यस्य" इति सहकृत"दिवउत्" सूत्रे वत्वेनैव वस्य स्थानित्वमिति तथैव वाक्योपप्लव इति भावः । अधिकमन्यत्र द्रष्टव्यम् । वक्ष्यते चानुपदं किञ्चित् । इदञ्च सम्भवाभिप्रायम् । वस्तुतो विधिग्रहणसामर्थ्यात् "न ल्यपि" इति लिङ्गाच्चात्र सूत्रे विशेषातिदेशोऽपीति तत्त्वम् । ननु स्थानिवद्भावेऽपि 'क इष्टः' इत्यस्य

सरला ।

त्वाभावव्याप्यत्वादादन्तत्वस्य तत्प्रयुक्तः "आतः" इति जुस् न स्यादिति । सिद्धत्वादिति । अत एव 'जहि' इत्यादौ जादेशस्यासिद्धत्वे स्वाश्रयो, हेर्लुग्न, सिद्धत्वासिद्धत्वयोर्विरोधात् । असिद्धवत्सूत्रं तु 'शाधि' इत्यादौ स्थानिप्रयुक्तधिभावसम्पादनेन चरितार्थम् । विशेषधर्म इति । "सम्भवति सामान्यातिदेशे विशेषानतिदेशः" इति न्यायेन विशेषधर्मातिदेशस्य निषिद्धतया हल्व-वल्त्वाद्यपेक्षया वत्वस्य विशेषधर्मत्वेन तदतिदेशासिद्धिरिति भावः । सूत्रक्लृप्तेति । अयं भावः—स्थानिवदादेशः इत्यस्य संग्रहवाक्यतया अन्यादेशेऽन्यस्थानिवृत्तिधर्मातिदेशवारणस्य 'यूष्ण' इत्यादौ जरसादेशादर्शनेनावश्यकर्तव्यतया तदादेशः तत्स्थानिवद्भवतीत्यतिदेशवाक्यकल्पनाया आवश्यकत्वेन 'उपस्थितधर्मैस्तद्व्यापकधर्मैश्च विध्याकाङ्क्षा-

(पा० सू० ६।१।११४) इत्युक्तं न । अल् चेह स्थान्यवयव एव गृह्यते।

शब्दरत्नम् ।

क इष्ट इति । यद्यपी रूपमुक्ते गुणेऽवादेशे च पाक्षिकलोपेन सिध्यति, तथाऽपि पक्षे कविष्ट इति स्यात् कयिष्ट इति चेष्यते इति भावः । स्थान्यवयव एवेति । उप-

भैरवी ।

स्थानिवद्भावाङ्गीकारेऽपि लक्ष्यस्य सिद्धिरित्याशयेन शङ्कते—यद्यपीति । पक्षे—लोपाभावपक्षे । यत्तु "हलि सर्वेषाम्" इति नित्यलोपस्य वैकल्पिकलोपापवादतया क इत्येव स्यादिति, तन्न, "हलि" इति सूत्रे वकारस्याप्यनुवृत्तिरिति स्वीकारेऽपि 'वृक्षव् करोति' इत्यत्र नित्यलोपस्य चरितार्थतयाऽपवादत्वासम्भवात्। नित्यलोपविधायकेऽश्ग्रहणानुवृत्त्याऽश्रूपहल्येव प्रवृत्तिरिति स्वीकारेऽपि 'वृक्षव्' इत्यत्र विज्निमित्तकवलोपस्य प्राप्त्या वृक्षवादेरनभिधानाच्च । न च "लोपोव्योः" इति वलोपे "अचः परस्मिन्" इति टिलोपस्य स्थानिवद्भाव इति वाच्यम्, "न पदान्ताः परेऽणः सन्ति, ननु चायमस्ति कर्तृ हर्तृ" इति भाष्याद्वृक्षवादेरनभिधानेन नित्यलोपविधायके वग्रहणानुवृत्तेर्निष्फलत्वात् । अत एव "भोभगो" इति सूत्रस्थम् "अश्ग्रहणमनर्थकमन्यत्राभावात्" इति भाष्यं सङ्गच्छते । मूले—स्थान्यवयव एवेति । अत्र एवकारो भिन्नक्रमः स्थानिपदोत्तरन्द्रष्टव्यः । अत एवादेशावयवाश्रयणेऽपि न निषेध इत्येतद्दर्शयति—तेनेति ।

भावप्रकाशः ।

सिद्धिरिति नैतत्तल्लक्ष्यमित्याशयेन शङ्कते—यद्यपीति । उक्ते स्थानिवद्भावेनेत्यादिः । यत्तु "हलिसर्वेषाम्" इति नित्यलोपे तत्सिद्धावपि रूपान्तरसिद्धिरिति रत्नाकरदण्डिप्रभृतयः । तन्न, नित्यलोपासिद्धतया पाक्षिकलोपस्यैव न्याय्यत्वात् । 'वृक्षव् करोति' इत्यादौ विकल्पप्राप्त्या नित्यलोपस्य प्राप्त्याऽनपवादत्वाच्च अश्रूपे हलीति व्याख्यानेऽपवादत्वसम्भावनायामपि वक्ष्यमाणरीत्या वृक्षवादेरनभिधानेन तत्र वस्यानुवृत्तेर्निष्फलत्वस्य सिद्धान्तितत्वेनात्र तत्प्राप्तेरेवाभावाच्च । स्वयमपि तत्राननुवृत्तेरेवोक्तत्वेन तद्विरोधापत्तेश्च । अत एव "भोभगो" इत्यत्राश्ग्रहणखण्डनपरभाष्यसङ्गतिरित्यन्यत्र विस्तरः । तद् ध्वनयन्नाह—पाक्षिकेति । "लोपः शाकल्यस्य" इत्यनेनेत्यर्थः । चस्त्वर्थे । स्थान्यवयव एवेतीति । एवो भिन्नक्रमः, स्थानिन एवावयव इत्यर्थः । अत एव तद्व्यावर्त्यं यत्त्वादेशावयव इत्येवोक्तम् । अन्यथा तेन "भोभगो" इत्यत्राश्ग्रहणं सफलं भवति, विसर्गस्थानिरेफवृत्तित्वं, स च स्थानिरूप इत्युक्तं स्यात् । अथ समुदायोत्तरमेवोक्त्या तद्व्यावृत्तिरपीष्टेति । तदुक्तमिति चेत्तहदमपि वक्तुमुचितमिति । तथा च न

सरला ।

पूरणे तदतिरिक्तविशेषग्रहणे मानाभावः' इति न्यायमूलकस्य 'सामान्यातिदेशे' इति न्यायस्य सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्यैवातिदेशो नतु तदव्यापकधर्मस्य इत्यर्थेन प्रकृते हल्त्वस्य वल्त्वस्य वा सादृश्यप्रतियोगितावच्छेदकत्वाभावाद् वत्वस्यैव तत्त्वेन तदव्यापकतया वत्वातिदेशस्य सुसम्पादत्वमिति। स्थान्यवयव एवेतीति । तथा च स्थानिसम्बन्ध्यल्वृत्तिधर्मनिमित्तके कार्ये स्थानिवत्त्वं न भवतीति तदर्थः । तेन यन्त्वस्य आदेशावयवयकाररूपाल्वृत्तित्वं नतु स्थानिसम्बन्ध्यल् एकारस्तद्वृत्तित्वमिति 'रामाय' इत्यत्र न निषेधप्रवृत्तिरिति । नचैवमपि 'रामाय' इत्यत्र दोषस्तदवस्थ एव, स्थानी एकारस्तत्सम्बन्धी योऽल् व्यपदेशिवद्भावेन स एव, तद्वृत्तियों धर्मः सुप्त्वं तन्निमित्तकत्वाद् दीर्घे कर्तव्ये स्थानिवत्त्वनिषेधप्रवृत्तेरिति वाच्यम्, अल्वृत्तिधर्मेऽल्त्वव्याप्यत्वस्य विशेषणेनादोषात् । सुप्त्वस्याऽल्वृत्तित्वेऽपि भ्यामादावपि सत्त्वेनाल्त्वव्याप्यत्वाभावात् । नचैवमपि 'प्रपठय' इत्यादौ वलादित्वस्यातिदेशापत्तिः, वल्त्वे स्थानिसम्बन्ध्यल्वृत्तित्वस्य अल्त्वव्याप्यत्वस्य च सत्त्वेऽपि इटो वलादित्वनिमित्तकत्वेन वल्त्वनिमित्तकत्वाभावेन निषेधाप्राप्तेः, इति वाच्यम्, स्थानिसम्बन्धी योऽल् तद्वृत्तिर्योऽल्त्वव्याप्यो धर्मस्तद्घटितधर्मनिमित्तके कार्ये कर्तव्ये स्थानिवन्नेति तदर्थस्वीकारेणादोषात् । नचैवमपि 'बभूविव' इत्यादाविडनापत्तिः, स्थानी वस्

शब्दरत्नम्।

लक्षणमेतत्स्थानिरूपोऽपीति बोद्धयम्। अत एव "आदेशिन्यल्याश्रीयमाणे प्रतिषेध" इति भैरवी।

ननु स्थान्यवयवाली ग्रहणे स्थान्यवयवाल्वृत्तिधर्मावच्छिन्नस्याश्रयणे निषेध इत्यर्थलाभेन प्रपठ्येत्यस्य व्यावर्त्यस्य सिद्धावपि विधिग्रहणविशिष्टस्यानल्विधावित्यस्य यद्यद्व्यावर्त्यं मूले दर्शितं तदनुपपत्तिः, प्रकृतसूत्र"भोभगो"इतिसूत्रस्थभाष्यविरोधापत्तिश्चः-इत्यत आह-उपलक्षणेति। अत एव—स्थानिरूपस्याप्याश्रयणादेव। आदेशिन्यलि-स्थानिन्यलि। आदेशिन्यलीत्यत्र समानाधिकरणे सप्तम्यौ, आदेशिनीत्यत्र सम्बन्धिन आधारत्वविवक्षया सप्तमी। सम्बन्धश्चेतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावोऽवयवावयविभावश्च। तेनोभयोर्लाभः। अत्र प्रपठ्येत्याद्युदाहरणप्रदर्शनपराऽऽकर एव मानम्। अतः-स्थानिस्थान्यवयवान्यतराली ग्रह-

भावप्रकाशः।

तथेष्टं मूलकृतः। एतदनुक्त्या स्थानिरूपालस्तदवयवत्वं तु व्यपदेशिवद्भावेन बोध्यमिति न तदसंग्रह इति केचित्। तदन्ये न क्षमन्ते। तथा हि, तथा व्याख्यानेऽपि सर्वं वाक्यमिति न्यायेन स्थानिनि एवावयव एव गृह्यत इत्यर्थापत्तिः। अन्यथा स्थानिनि एवेत्येव वदेत्। सम्बन्धसामान्यषष्ठ्या भेदाभेदोभयपरिग्रहादभेदेऽपि षष्ठीदर्शनादिष्टार्थसिद्धिस्तत्रापि। एवञ्च 'प्रपठ्य' इत्यादिसिद्धावपि स्थानिरूपेत्याद्यर्थाभावेन प्रक्रान्तलक्ष्यासिद्ध्या विधिपदानर्थक्यापत्तिः। स्वपूर्वग्रन्थविरोधापत्तिश्च, अनेनैहेत्यादिकौमुदीविरोधापत्तिश्च, प्रकृतसूत्र "भोभगो" इति सूत्रभाष्यविरोधापत्तिश्च अत आह—उपलक्षणमिति। अर्थान्तरस्येति शेषः। तदाह—स्थानीति। यथाश्रुतेऽनन्वयापत्तिः स्पष्टैव। एवञ्च मूले एवो व्यर्थ इति भावः। अत एव "तन्वन्ति" इत्यादाविण् नेति प्रपञ्चयिष्यतेऽनुपदमेव। तत्र मानमाह—अत एवेति। तादृशार्थस्याप्यङ्गीकारा देवेत्यर्थः। अन्यथा स्पष्टार्थमेव षष्ठ्यन्ताभ्यां निर्दिशेदितिभावः। ननु भाष्यात् स्थानिरूपेत्याद्यर्थलाभेऽपि द्वितीयार्थालाभात्। 'प्रपठ्य'इत्याद्यसिद्धिरिति चेन्न, तस्यापि तत एव लाभात्। तथा हि, आदेशोऽस्यास्तीति आदेशी स्थानी, इदं चालीत्यनेन व्यधिकरणम्। सम्बन्धिन एवाधिकरणत्वविवक्षया सप्तमी। अलः स्थानित्वे तु व्यपदेशिवद्भावेन तत्त्वम्। अत एव भाष्ये पूर्वापरविरोधो न, प्रत्यासत्तिन्यायस्य कष्टायेति ज्ञापकस्य चाश्रयणे भाष्यतात्पर्यम्। न चैवं किमपराद्धं केचिन्मतेनेति वाच्यम्, यथाश्रुते एवेन तद्व्यावृत्तिप्रतीत्या समस्तत्वेन च तथाव्याख्यानासम्भवेनोक्तदोषगणापत्तेः। अन्यथा यत्रादेशावयव इत्यनतिप्रयोजनकं स्यात्। एवञ्चेदमुपेत्यादिग्रन्थस्यैवकारखण्डने

सरला।

तत्सम्बन्धी अल् वकारस्तद्वृत्तिधर्मो वत्वं तद्घटितो धर्मो वलादित्वं तन्निमित्तक इडिति स्थानिवत्त्वनिषेधेनाऽऽर्धधातुकत्वस्यातिदेष्टुमशक्यत्वात्; इति वाच्यम्, अल्त्वव्याप्यधर्मघटितधर्मे 'अतिदिदिक्षित' इति विशेषणदानेन अतिदेष्टव्यार्धधातुकत्वे अल्त्वव्याप्यधर्मघटितत्वाभावेन वलादित्वे चातिदेष्टव्यत्वाभावेन स्थानिवन्निषेधाप्रवृत्तेरदोषात्। अतिदिदिक्षितनिवेशे आदेशावयववृत्तिधर्मस्यानतिदेष्टव्यत्वेन 'रामाय' इत्यादौ यञ्त्वमादाय दोषाप्रसक्तेरलि 'स्थानिसम्बन्धी' इति विशेषणदानं विफलमिति न तन्निवेशोऽत्र पक्षे इत्यवधेयम्। केचित्तु 'बभूविव' इत्यादौ दोषवारणाय 'आदेशावयवाद्यल्वृत्तिः' इति धर्मे विशेषणम्। तत्र चादिग्रहणेन 'बभूवतुः' इत्यत्र वल्त्वस्य आदेशः अतुस् तदवयवतकारवृत्तित्वेऽपि तदादिवर्णवृत्तित्वाभावेन वलादित्वस्य स्थानिवत्त्वनिषेधादतिदेशस्य कर्तुमशक्यत्वान्न दोष इत्याहुः। तन्न, 'कः' इत्यादौ स्थानिवत्त्वेन हलन्तत्वाद् "हल्ङ्याब्भ्यः" इति सुलोपापत्तेः। हल्त्वस्य चादेशादिभूतककारवृत्तित्वेन निषेधाप्रवृत्तेः।

नन्वेवमर्थस्वीकारेऽपि 'धिन्वन्ति' इत्यत्रेडागमापत्तिः, अतिदेष्टव्यस्य आर्धधातुकत्वस्य अल्मात्रवृत्तित्वाभावेन तत्र निषेधाप्रवृत्त्या आर्धधातुकत्वप्रत्ययस्थानिकयणो वकारस्य स्थानिवद्भावेन आर्धधातुकत्वाद् व्यपदेशिवद्भावेन वलादित्वाच्चेत्यत आह—उपलक्षणमेतदिति। स्थानिरूपो योऽल् तद्वृत्तिधर्मनिमित्तके कार्ये कर्तव्ये स्थानिवन्नेत्यर्थः। तथाच 'धिन्वन्ति' इत्यत्र वकारादेशस्य स्थानी उकारः सोऽल्रूप इति

तेन रामायेत्यादौ "सुपि च" ( पा०सू०७।३।१०२ ) इति दीर्घः सिद्धः । तद्विधौ हि यञादित्वमाश्रितं, यञ्चादेशावयवो न तु स्थान्यवयव इति । त-

---

**शब्दरत्नम् ।**

भाष्ये उक्तम् । न तु स्थान्यवयव इति । अतः प्रत्ययत्वं स्थानिवत्त्वेन भवत्येवेति

**भैरवी ।**

णात् । प्रत्ययत्वमिति । प्रत्ययत्वस्य सुप्त्वव्यापकतया व्यापकासत्तायां व्याप्यासत्त्वमप्यवश्यं

**भावप्रकाशः ।**

तात्पर्यञ्च सुपलक्षणत्व एवेति दिक् । न तु स्थान्यवयव इतीति । यत्तु तथा च निषेधाप्राप्त्या स्थानिवत्त्वेन सुप्त्वम् । यद्यपीह तद् 'ए'इत्यलि वर्त्तते, तथापि न तदलोऽसाधारणं भ्यामादौ समुदाये विश्रान्तेः तथा च यन्निमित्ताभावकृतशास्त्राप्राप्तावतिदेशप्रवृत्तिस्तस्य स्थान्यलसाधारणधर्मत्वे निषेधोऽन्यत्र स्थानिवद्भाव इति कौस्तुभकृदादयः । तन्न, तथा सति तन्वन्तीत्यादावनुवृत्त्यार्धधातुकत्वस्यापि तव्यादिसमुदायविश्रान्त्या तत्त्वाभावेन निषेधाप्राप्त्या तत्त्वेनेडापत्तेः । न चापरविधावितिन्यासे स्वविधावपि स्थानिवत्त्वादत्रेड् नेति वाच्यम्, तस्यैकदेश्युक्तित्वात् । असिद्धवत्सूत्रेण सिद्धस्यायन्नासन्नित्यादेस्तत्फलत्वेनोक्तः । अस्यापि पञ्चमीसमासेन सिद्धेः कैयटेनोक्तत्वाच्च । न च तर्हि तेनैव निर्वाहः । अत एव तथा कौस्तुभ उक्तमेवेति वाच्यम्, तदनङ्गीकर्तृमूलमते दोषध्रौव्यात् एतदङ्गीकारे 'यूष्णः' इत्यत्रत्यमूलविरोधापत्तेः, कथन्तर्हि 'तन्वन्ति' इति पञ्चमीसमासस्य लक्ष्यं प्राक् दत्तमिति चेत् ? हरदत्तमतेनेत्यवेहीति कौस्तुभसिद्धान्तविरोधापत्तेश्च । तदङ्गीकर्तृमतेऽपि अनित्यतया 'अपीपचन्' इत्यादिलक्ष्यविशेषमात्रपरत्वाद्वाऽत्राऽनिर्वाहाच्च । न चात एव बहिरङ्गस्य यणोऽसिद्धत्वान्निर्वाहः कौस्तुभादावुक्त एवेति वाच्यम् । अङ्गात्परस्य वलाद्यार्धधातुकस्येडित्यर्थेनास्यापि तत्त्वात् । पूर्वपूर्वमित्यस्यासार्वत्रिकत्वाच्च । तस्मात्कौस्तुभाद्युक्ताल्साधारणत्वनिवेशोऽयुक्तः । अथायं पर्युदासः प्रसज्यप्रतिषेधो वा ? आद्ये स्थान्यल्भिन्नालाश्रयविधावित्यर्थे 'व्यूढोरस्केन' 'तन्वन्ति' इत्याद्यसिद्धिः । स्थान्यलाश्रितविध्यन्यविधावित्यर्थे तु 'बभूविव' इत्याद्यसिद्धिः । अन्त्ये दोषः प्रसिद्ध एवेति चेत् ? न, इष्टानुरोधेनान्त्यदोषस्यान्यत्रेवात्रेष्टत्वेनादोषात् । न चैवमपि स्थान्यलाश्रयविधौ नेत्यर्थेन बभूविवेत्याद्यसिद्धिरेव, द्विविधनिमित्तत्वस्य तत्र सत्त्वादिति वाच्यम्, यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्राप्तावतिदेशप्राप्तिस्तन्निमित्तस्य स्थान्यल्धर्मत्वे एव निषेधप्रवृत्तेः । उपदेशाप्रवर्त्तकाभावप्रतियोगितावच्छेदकावच्छिन्नसूत्रोपात्तस्थानितावच्छेदकावच्छिन्नस्थान्यल् रूपनिमित्ताश्रयविधौ नेति यावत् । एवञ्च 'तन्वन्ति' 'व्यूढोरस्केन' 'प्रदीव्य' इत्यादौ निषेधस्य 'बभूविव' इत्यादौ विधेश्च सिद्धिः । सूत्रेत्यादिना 'रामाय' इत्यादिसिद्धिः, 'ङेर्यः' इत्यादिना ङकारोपलक्षिते स्थानिताबोधनेन तन्निष्ठसुप्त्वप्रत्ययत्वादेरल् धर्मत्वाभावेन निषेधाप्रवृत्तेः । एवं सति पर्युदास एवोचितः, लाघवात् । यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते सौत्रस्थान्यल्निष्ठतनिमित्तकविधिभिन्नविधावित्यर्थेनोक्तदोषाभावाच्च । एतेन प्रसज्यप्रतिषेध एवायमिति रत्नाकरोक्तिः प्रत्युक्ता । भाष्यादिग्रन्थास्त्वत्रोदासीनाः, पर्युदासेऽप्यार्थिकनिषेधमादाय प्रतिषेधव्यवहाराङ्गीकारात् । शब्देन्दुशेखरादिग्रन्थास्तु कौस्तुभानुयायिन इति न तद्विरोधो न वा तत्र पूर्वापरविरोध इति दिक् । तत्सर्वं हृदि निधायाह—अत इति । 'रामाय' इत्यादावुक्तरीत्यैव निषेधाप्रवृत्तिरिति बुद्धिस्थाद्धेतोरित्यर्थः । ध्वनिता चेयं रीतिः "विशिष्टं ह्येषोऽनल्माश्रयते" इति भाष्येणेति स्पष्टमुद्द्योते । अत एव "भोभगो" इति सूत्रे भाष्ये रेफस्थानिकविसर्गस्य स्थान्यल्वृत्तिधर्मरुत्वाश्रयं कार्यं न अल्विधित्वादित्युक्तम् । यत्तु अत इत्यग्रे स्थानिवत्त्वेन सुप्त्वात् "सुपि च" इति दीर्घ इत्युचितमिति । तन्न, कार्यिनिष्ठाङ्गत्वस्य ततः प्रागुपस्थित्या तद्धेतुतावच्छेदकप्रत्ययत्वावश्यकत्वेन तदुल्लेखौचित्यात् । अङ्गेन प्रत्ययाक्षेपे तस्यापि सुब्वत् निमित्तत्वाच्च । विना प्रत्ययत्वं स्थानिवत्त्वेनाङ्गत्वातिदेशो दुर्लभः, तस्य स्थानिधर्मत्वाभावात् । एतेन अतो यञः स्थान्यनवयवत्वात् । तथा च प्रत्ययत्वं सुप्त्वादेरुपलक्षणमिति तात्पर्यम् । अन्यथा दीर्घविधौ प्रत्ययस्य तत्त्वेनानाश्रयणादेवमुक्तिर्निर्बीजा । अत्र सूत्रे प्राधान्यात्कार्यातिदेशेन सुब्वदङ्गत्वस्य सुलभत्वं चेति व्याख्यानम्, उपस्थितसुप्त्वेनैव तदुपल-

शब्दरत्नम् ।

भावः । अग्रहीदित्यादौ "ग्रहोऽलिटि" ( पा० सू० ७।२।३७ ) इत्यनेनेट एव दीर्घविधा-

भैरवी ।

स्यास्यतीति तदभावसूचनायेत्थमभिहितम् । तेन 'रामाय' इत्यस्य सिद्धिः । अन्यथाऽप्रत्ययान्ततया समुदायस्य प्रातिपदिकत्वापत्तौ सुप्त्वादिदेशाल्लोपापत्तिरपि वारिता । भाष्ये आश्रीयमाणपदोपादानेन स्थानिबोधकशब्दजन्यप्राथमिकोपस्थितिविषयता यत्राल्त्वावच्छिन्ना तत्र निषेध इति ध्वनितमित्याशयेनाह-अग्रहीदित्यादाविति । नचैवं सति "क इष्टः" इत्यत्र "वचिस्वपि" इतिसम्प्रसारणम्, तत्र वाक्यार्थः संज्ञीति पक्षे वच्यादीनां यण इक् संप्रसारणाभिन्न इत्यर्थो भविष्यति । एवञ्च स्थानिबोधकः शब्दो यण् इति, तज्जन्योपस्थितिविषयता यण्त्वावच्छिन्ना न तु अल्त्वावच्छिन्नेति कथमलि विधावित्यस्य तदुदाहरणमिति वाच्यम्; अल्त्वावच्छिन्नेत्यस्याल्पर्याप्तधर्मावच्छिन्नेत्यर्थात् । तथाच यण्शब्दजन्योपस्थितिविषयता यद्रूपावच्छिन्नस्य यण्संज्ञा तत्तद्रूपावच्छिन्नेति यत्वरूपस्ताहशो धर्मः स चाल्पर्याप्त एवेति तदुदाहरणं युक्तमेव । एवमेव प्रत्याहारनिर्देशे सर्वत्र बोध्यम् । "दिव औत्" इत्यादौ चालोन्त्यपरिभाषैकवाक्यतयाऽल्पर्याप्ताल्त्वावच्छिन्नैव सेति तत्रापि निषेधस्य प्रवृत्तिः ।

यत्तु यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते तस्य निमित्तस्य स्थान्यल्साधारणधर्मत्वे निषेध इत्यर्थ आश्रयणीयस्तथा च सुप्त्वस्य भ्यामादौ समुदायेऽपि सत्त्वान्नाल्साधारण्यमिति न तत्र निषेध इति, तन्न,'तन्वन्ति' इत्यत्रोकारवृत्त्यार्द्धधातुकत्वस्य तव्यादिसमुदायेऽपि सत्त्वेन नाल्साधारण्यमिति तस्यातिदेशे नेट् स्यात् । न च "अपरविधौ" इति करणेन "अचः परस्मिन्" इतिसूत्रेण स्थानिवद्भावेनेट् तत्र भाष्यकृतैव वारित इति वाच्यम्,

भावप्रकाशः ।

द्यमस्तु, किमेवमुक्त्येति तत्खण्डनं चापास्तम्, प्राधान्यात्कार्यातिदेश इत्युक्तेः सुप्त्वाङ्गत्वयोः सुलभत्वमित्यनेन विरुद्धत्वाच्च । तदा दीर्घस्यैवातिदेशात् । कार्यशब्देन निमित्तस्यैव ग्रहेऽप्युकारीयाङ्गत्वस्य दुर्लभत्वाच्चेति दिक् । तदाह—प्रत्ययत्वमिति । अत्रेति शेषः । इदञ्च सुप्त्वादेरप्युपलक्षणम् । न चैवं विनिगमकाभावे वैपरीत्यापत्त्या यत्तुमतप्रवेश इति वाच्यम्, सुप्त्वास्यादिरन्त्येनेत्यनेन विशिष्टनिष्ठत्वाद्यभेऽपि प्रत्ययत्वमेकारवृत्ती त्तिभ्रमनिवृत्तये सादेशरेफादेशविसर्गवृत्तिप्रत्ययत्वस्य स्थान्यल्वृत्तित्वेनानतिदेशात् "इदुपधा" इतिसूत्रे मूले वक्ष्यमाणम् 'अग्निः करोति' इति अप्रत्ययस्येत्यस्य प्रत्युदाहरणमयुक्तमिति गूढाशयेन ध्वनयितुं च तथोक्तेः । अत एव ततो वैलक्षण्यसूचकैवोक्तिः "भोभगो" इत्यत्र "इदुदुपधस्य" इत्यत्र चैतत् प्रपञ्चयिष्यते । प्रत्ययत्वादेरत्र विशिष्टवृत्तित्वं दृष्टान्तेन साधयन् "भोभगो" इत्यत्र मूलग्रन्थासङ्गतिं ध्वनयंश्च सूत्रोपात्तेति विशेषणावश्यकतामाह—अग्रहीदिति । एतेनेकारव्यावृत्तिः

सरला ।

तद्वृत्तिधर्म आर्धधातुकत्वं तन्निमित्तके इडागमे कर्तव्ये स्थानिवत्त्वनिषेधेन वकारे आर्धधातुकत्वस्यातिदेष्टुमशक्यत्वान्न दोषः। नचैवं 'रामाय' इत्यादौ स्थानिभूतो योऽल् एकारः तद्वृत्ति यत् सुप्त्वं तन्निमित्तकत्वेन दीर्घे कर्तव्येऽनल्विधाविति निषेधः स्यादिति वाच्यम्, स्थानिशब्दस्य सम्बन्धिशब्दत्वेनाक्षेपादादेशलाभे सिद्धे आदेशपदोपादानं स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वलाभार्थमित्यदोषात् । तथा च अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्तके कार्ये कर्तव्ये न स्थानिवदित्यर्थः पर्यवस्यति । 'ङेर्यः' इत्यादौ स्थानितावच्छेदकं ङेत्वं तच्च नाल्त्वव्याप्यमिति रामायेत्यादौ न दोषः । एतदेवाभिप्रेत्यानुपदमेव वक्ष्यति ग्रन्थकृत्-'अग्रहीदित्यादौग्रहोऽलिटि" इत्यादिना । तत्र स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वविशेषणदाने तात्पर्यम् । नन्वेवमपि वाक्यसंस्कारपक्षे 'राम ए अत्र' इत्यत्र अल्त्वव्याप्यो धर्म एत्वं तदवच्छिन्नस्थानितासमानाधिकरणो धर्मः सुप्त्वं तन्निमित्तको विधिर्यादेश इति पुनरप्यनल्विधाविति निषेध इति चेत्? न, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मनिमित्तके स्था

शब्दरत्नम् ।

नाचाल्त्वेन तस्य स्थानितेति तद्वृत्तीत्वाश्रयस्य सिचो लोपस्य सिद्धिरिति बोध्यम् ।

भैरवी ।

तस्य भाष्यस्यैकदेश्युक्तित्वात् । तस्यैकदेश्युक्तित्वसाधकञ्चायन्नासन्निति तदुदाहरणप्रदर्शन-मेव, तस्योदाहरणस्यासिद्धवत्सूत्रेण सिद्धेः । नच "कृन्मेजन्त"सूत्रभाष्ये 'आधये' 'चिकीर्षवे' इत्यत्रैकारौकारवृत्तिकृत्त्वस्याल्पर्याप्ततया निषेधयोग्यतायाः सत्त्वेन कथमव्ययसंज्ञाप्राप्तिरुक्ते-ति वाच्यम्, तत्र स्थानिबोधकस्य विशब्दस्य प्रथमतः समुदायोपस्थापकतया स्थानिबोधक-शब्दजन्यप्राथमिकोपस्थितिविषयता नाल्पर्याप्तधर्मावच्छिन्नेत्यदोषात् । नच तथापि "कुम्भ-कारेभ्यः" इत्यत्र "बहुवचने झल्येत्" इत्येत्त्वे कृते स्थानिवद्भावेन कृतमाश्रित्याव्ययत्व-प्राप्तिशङ्का कृता, सा कथं संगच्छताम् ? स्थानिबोधकादत इति शब्दादल एव प्रथममुपस्थि-तिसत्त्वादिति वाच्यम् ; तत्रापि प्रथमतोऽत्त्वेनोपस्थितिर्न त्वल्त्वेन, अत्त्वन्तु समुदायपर्या-प्तमिति न निषेधविषयतेत्यदोषात् । इत्थमेवान्यत्रापि बोध्यम् । अस्याङ्कल्पनायां "विशिष्टं

भावप्रकाशः ।

फलाभावात् "अचश्च"इत्यस्यानुपस्थितेः । अन्यथा सिचो लोपो न स्यात् । एवञ्च इङ्वद्दीर्घ इति वाक्य-कल्पनेव ङेवच इति वाक्यकल्पना । स्थानितावच्छेदकं च शास्त्रोपात्तरूपमेवेति न दोष इति भावः । तदा-

सरला ।

निवन्नेत्यर्थेन एत्वावच्छिन्नस्थानितानिरूपितादेशताश्रयत्वस्य यादेशेऽभावेनादोषात् । नन्वेवं हल्ङ्-याबितिसूत्रविरोधः, "ङ्याब्ग्रहणेऽदीर्घः" इति वार्तिकविरोधः, हल्ङ्यादिसूत्रीयदीर्घग्रहणप्रत्याख्यानपर-भाष्यविरोधश्च । तथाहि—अतिखट्वो निष्कौशाम्बिरित्यादौ "गोस्त्रियोः" इति सूत्रे "अचः" इति परिभा-षोपस्थित्या अल्त्वव्याप्याच्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिको य आरोपः ह्रस्वः आप्त्ववान् ङीत्ववानित्याकारकस्तत्प्रकारीभूताप्त्वङीत्वनिमित्तकत्वाद्धल्ङ्यादिलोपस्य तत्र कर्तव्ये स्थानिवत्त्व-निषेधस्य सिद्धत्वाद्दीर्घग्रहणस्य "ङ्याब्ग्रहणेऽदीर्घः" इति वार्तिकस्य ङी ई आ आबिति प्रश्लेषस्य चोपयोगाभावादिति चेत् ? मैवम्, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रका-रीभूतधर्मेण साक्षादवच्छिन्ना योद्देश्यता तादृशोद्देश्यताके कार्ये कर्तव्ये स्थानिवन्नेत्यर्थेन हल्ङ्यादिलोपे आ-प्त्वङीत्वयोरुद्देश्यतायाः साक्षादवच्छेदकत्वाभावेनादोषात् । अत्र सूत्रे द्वितीयार्थस्वीकारे प्रमाणं तु "भोभ-गो" सूत्रस्थं भाष्यमेव । तत्र हि "अशि किम् ? 'छन्दःसु''पयःसु' । किंपुनः कारणं सुप्परएवोदाह्रियते न पुनरयं 'वृक्षस्तत्र' 'प्लक्षस्तत्र' इति । अस्त्यत्र विशेषः । विसर्जनीये कृते न भविष्यति । इहापि तर्हि विसर्जनीये कृते न भविष्यति छन्दःसु पयःस्विति । स्थानिवद्भावात्प्राप्नोति । ननु चेहापि स्थानिवद्भावा-त्प्राप्नोति वृक्षस्तत्र प्लक्षस्तत्रेति । अनल्विधौ स्थानिवद्भावो भविष्यति"इत्युक्तम् । द्वितीयार्थास्वीकारे 'छ-न्दः सु' इत्यादौ यथा यत्वस्यासिद्धतया पूर्वं विसर्गप्रवृत्तौ तस्य स्थानिवत्त्वेन रुत्वबुद्ध्या यत्वप्रवृत्त्याप-त्तिस्तथा 'वृक्षस्तत्र' इत्यादावपि विसर्गप्रवृत्तौ तस्य स्थानिवत्त्वेन रुत्वबुद्ध्या यत्वापत्तेः सत्त्वेन भाष्योक्त विशेषकथनासङ्गत्यापत्तिः । द्वितीयार्थस्वीकारे तु 'वृक्षस्तत्र' इत्यादौ विसर्गे कृते विसर्गस्य "खरवसान-योः" इति सूत्रविहितस्य रेफत्वावच्छिन्नोद्देश्यताकत्वेनाल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणत-या रुत्वस्य तन्निमित्तताके विधौ यत्वे कर्तव्ये 'अनल्विधौ' इत्यस्य प्रवृत्तिः, 'छन्दः सु' इत्यादौ तु "रोः सुपि" इत्यनेन विसर्गस्य विहिततया तस्य च रुत्वावच्छिन्नस्थानिताकत्वेनाऽल्त्वव्याप्यधर्मावच्छिन्नत्वा-भावात् न "अनल्विधौ" इत्यस्य प्रवृत्तिरिति विशेषकथनसङ्गतिः । विस्तरस्तु शब्देन्दुशेखरदीपकेऽस्मद्-गुरुकृते द्रष्टव्यः । आदेशिन्यलीति । अत्र आदेशिनि इति विशेषणविभक्तेरभेदार्थो घटकत्वं सप्तम्यर्थो वेति बोध्यम् । तथाच प्रथमपक्षे स्थानिरूपेऽलि, द्वितीये स्थानिघटके तदवयवेऽलि इत्यर्थौ लभ्येते । तन्त्रे-ण निर्देशः । एवञ्चास्माद्भाष्यादर्थद्वयं लभ्यते । प्रत्ययत्वमिति । उपलक्षणमेतत्, सुप्त्वमपि स्थानि-वत्त्वेन भवत्येवेति "सुपि च" इति 'रामाय' इत्यत्र दीर्घः सिध्यतीति भावः । सिचोलोपस्य सिद्धिरिति ।

देतत्सकलमभिप्रेत्याह–न तु स्थान्यलाश्रय इति । आश्रयणं चेह यथाकथंचिन्न तु प्राधान्येनैवेत्याग्रहः । तेन प्रपठ्येत्यत्र वलादिलक्षण इण् न । तन्निषेधादिति । स्थानिवत्त्वनिषेधादित्यर्थः ॥

अचः ( पा०सू०१।१।५७ ) । अल्विध्यर्थमिति । तेन वव्रश्चेत्यत्र वस्य संप्रसारणं न । उरदत्त्वस्य स्थानिवत्त्वेन संप्रसारणतया "न संप्रसारण–" ( पा० सू० ६।१।३७ ) इति निषेधात् । न चोरदत्वं परनिमित्तं नेति वाच्यम् । अङ्गाक्षिप्ते प्र-

---

शब्दरत्नम् ।

यथा कथं चिदिति । व्याख्यानादिति भावः ।

भैरवी ।

ष्टोषोऽनलमाश्रयते इटन्नाम" इति भाष्यमेव मानम्, "कृन्मेजन्त" सूत्रस्थं भाष्यञ्च साधकमिति दिक् ।

अत्रानल्विधावित्यत्र प्रसज्यप्रतिषेध एव । न चासमर्थसमासापत्तिः, बहुषु स्थलेषु तस्य दर्शनात् । पर्युदासे हि स्थान्यल्भिन्नाश्रयके विधौ स इत्यर्थे 'व्यूढोरस्केन' इत्यत्र णत्वापत्तेर्दुर्वारत्वात् । स्थानिपदस्य स्थानिस्थान्यवयवान्यतरपरतया स्थानिस्थान्यवयवालाश्रितविधिभिन्नविधाविति व्याख्यानेन 'व्यूढोरस्केन'इत्यस्य निर्वाहेऽपि 'बभूविव' इत्यस्यानिर्वाह इत्यसमर्थसमासाश्रयणेन प्रसज्यप्रतिषेध एवाश्रितः । न चान्यतरालवृत्तिधर्मस्य वत्त्वस्याश्रयणादेवमपि बभूविवेत्यस्यासिद्धिरिति वाच्यम्, यद्धर्मवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तस्य धर्मस्यान्यतराल्निष्ठस्यातिदेशे कर्त्तव्ये निषेधस्य प्रवृत्त्यङ्गीकारात् । यदि तु "ङेर्यः" इत्यादौ ङकारोच्चारणेन ङकारोपलक्षिते स्थानित्वस्य बोधनेनाग्रहीदित्यत्रेट इव सर्वत्र सूत्रोपात्तसमुदाये स्थानित्वमिति ङेशब्दनिष्ठं सुप्त्वे प्रत्ययत्वन्नाल्धर्म इति यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते सौत्रस्थान्यल्निष्ठधर्मावच्छिन्ननिमित्तकविधिभिन्नविधौ स्थानिवदित्यर्थं आश्रीयते तदाऽस्तु पर्युदासः । एवं सति लाघवमपि भवति । पर्युदासेऽप्यार्थिकनिषेधमादाय निषेधपरत्वेन व्याख्यातृग्रन्था नेयाः । पर्युदासपरतया व्याख्यानञ्च "विशिष्टं ह्येषोऽनलमाश्रयते इटन्नाम" इति वदता भाष्यकृता ध्वनितम् । सङ्ग्राहकवाक्याल्लक्ष्यसाधकं वाक्यम् 'इड्वद्दीर्घः' इति 'ङेवत् यः' इति रीत्या कल्पनीयं स्थानितावच्छेदकशास्त्रोपात्तमेव रूपम् ।

व्याख्यानादिति । अनलिति शब्दसंस्कारार्थं प्रथमोपादेयात्तत्तल्लक्ष्योपपत्त्यर्थञ्च विधिशब्दाध्याहारेण समासचतुष्टयफलानामुपपत्तिश्च कर्त्तव्येतिरीत्येष्टसिद्धौ विधिशब्दोपादानरूपादधिकायत्नादित्यर्थः । परममूले–"निषेधो न शक्यो ऽनल्विधाविति तन्निषेधात् " इति ग्रन्थस्य तच्छब्देन निषेधपरामर्शोऽसङ्गतिरत आह मूले–स्थानिवत्त्वेति ॥

( मूले– ) तेन–अल्विध्यर्थमस्य सूत्रस्यारम्भेण । "उरत्" इति सूत्रे उरित्यनेनाल एव स्थानित्वबोधनादिति तात्पर्यम्, "अचः परस्मिन्" इति सूत्राप्रवृत्तिशङ्कां वारयति–न

भावप्रकाशः ।

ह—नाल्त्वेनेति । व्याख्यानादिति । अनलिति स्वतोऽक्त्या विधिपदाध्याहारेणान्वयायोग्यत्वाद्विधेयत्वाविवक्षया तत्तद्विषयकलक्षणभेदात्तत्तद्विभक्त्यध्याहारेण समासचतुष्टयलाभफलानां सिद्ध्या विधिग्रहणसामर्थ्यादित्यर्थः ।

सरला ।

उपपादितमेतत् 'अनल्विधौ' इत्यस्य द्वितीयार्थनिरूपणावसरे । व्याख्यानादिति । "प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति, यां यां विभक्तिमाश्रयितुं शक्यते सा सा विभक्तिराश्रयणीया" इत्यादिभाष्यपर्यालोचनया "अनल्" इत्येवसिद्धे विधिशब्दोपादानरूपादधिकयत्नादित्यर्थः ।

त्यये परे तद्विधानात् 'प्रागभ्यासविकारेभ्योऽङ्गाधिकारः' इति पक्षं दूषयित्वा 'आ-सप्तमसमाप्तेः' इति पक्षस्यैव आकरे सिद्धान्तितत्वात् । किं च पूर्वसूत्रेण स्थानिप्र-युक्तमतिदिश्यते नत्वादेशप्रयुक्तं वार्यते, 'नायकः' 'पावकः' इत्यादौ "एचोऽयवा-यावः" ( पा० सू० ६।१।७८ ) इत्यादीनामप्रवृत्तिप्रसङ्गात् । अनेन तु वार्यते, श-ब्दाधिकारमाश्रित्य भावाभावयोरुभयोरप्यतिदेशोऽयमिति स्वीकारात् । "न पदान्त"

शब्दरत्नम् ।

दूषयित्वेति । "अङ्गस्य" (पा०सू० ६।४।१) इति सूत्रे भाष्ये इति शेषः । एत-दसिद्धेनैव दूषयित्वेत्यर्थः । विस्तरस्त्वन्यत्र द्रष्टव्यः । अनेन तु वार्यत इति । स्था-निनि सति यद्भवति तदादेशेऽपि भवति, तत्र सति यन्न भवति तदादेशेऽपि न भवतीत्य-र्थात् । अजादेशोऽच्कार्यं लभते, न लभते चेति वाच्योऽर्थः । तत्रोपपत्तिमाह—शब्देति ।

भैरवी ।

चोरदत्वमिति । दूषयित्वति । सामान्यत उपादानेन प्रकृतसूत्र इति भ्रमोऽपि स्यादिति तन्निवारणाय—अङ्गस्येतीति । अत्र दूषणे हेतोरनुक्तेः प्रसिद्धस्य हेतोरनुपलम्भाचाह–एतदि-ति । 'वव्रश्च' इत्याद्यसिद्धयेत्यर्थः । यदा "न सम्प्रसारणे" इति निषेधारम्भादन्त्यस्य यणः प्रथमतः सम्प्रसारणं, पूर्वस्य तु तन्निमित्तः प्रतिषेध इति स्वीक्रियते, तदा वव्रश्चेत्याद्यसिद्धि-रूपो दोषः । "प्रागभ्यासविकारेभ्योऽङ्गाधिकारः" इति पक्षे यदा तु "न सम्प्रसारणे" इति सूत्रस्थसम्प्रसारणशब्दस्य सम्प्रसारणभाविनि लक्षणाऽऽश्रीयते सम्प्रसारणप्रवृत्तिप्राक्काल एव प्रतिषेधो निषेधसामर्थ्याच्च कृते परस्य सम्प्रसारणे पूर्वस्य सम्प्रसारणाप्रवृत्तिरित्याश्रीयते तदा नेदं प्रयोजनमचः परस्मिन्निति सूत्रारम्भस्य इत्याशयेनाह–मूले क्विब्वेति । न केवलम-ल्विध्यर्थमिदं सूत्रमित्येव, किन्त्वपरोऽपि विशेष इति भावः । अत एवाह—विस्तरस्त्विति । कैयटादिग्रन्थ इत्यर्थः ।

ननु मूले तु वार्यते इत्यत्रोक्तं हेतुस्तु नोक्त इति न्यूनतेति तल्लाभायाह—स्थानिनीत्यादि । उक्तार्थस्य वक्ष्यमाणज्ञापकेन लाभे सति यथा लक्ष्यसिद्धिसम्पादकवचननिष्पत्तिस्तथाह—अजादेश इति । प्रयोगीयाच एवादेश इत्यर्थः । न त्वत्रापि सूत्रे पूर्वसूत्रवत्सौत्रस्थान्यादेशभा-वस्य ग्रहणं, तेन णिलोपस्यानेन स्थानिवद्भावसिद्धिः । अवधारणफलन्तु मरुतमाचष्टे मारय-

भावप्रकाशः ।

प्रकृतसूत्राभ्रमायाह—अङ्गस्येतीति । ननु दोषे हेत्वनुक्तेः, प्रसिद्धहेत्वनुपलम्भाच्च न निराका-ङ्क्षत्वमत आह—एतदिति । "सन्वल्लघुनि" इत्यत्रोक्तस्य "अङ्गान्यत्वाद्वा सिद्धम्" इति परिहारस्यासङ्ग-तिरूपदोष 'एव' व्यावर्त्यः । तस्य तत्रैव दूषितत्वात् । इदमपि यदा निषेधसामर्थ्यादादौ परस्य सम्प्रसारणे पूर्वस्य प्राप्तिः प्रतिषिध्यते तदा, यदा तु सम्प्रसारणभाविनि पूर्वस्य सम्प्रसारणं नेत्यर्थः । निषेधसामर्थ्या-दकृते तस्मिन्पूर्वस्य सम्प्रसारणं नेत्याश्रीयते तदा नेदं फलमस्य । अतःएव क्विब्वेत्यादिना फलान्तरं वदयति मूलकृता । स्पष्टं चेदं भाष्यकैयटादौ । तत्तु पूर्वमतैकवाक्यतयाऽत्राप्यावश्यकम् ; तदाह—विस्तरस्त्वि-ति । ननु यथेष्टं वाक्यशेषाध्याहारेण स्थानिसम्बन्धिभावाभावोभयातिदेशाङ्गीकारेऽपि तस्यादेशप्रयुक्त-वारणे हेतुत्वासम्भवान्मूलमयुक्तम् । अतः शेषपूरणेन ग्रन्थसङ्गतिमाह—स्थानिनीति । ननूक्तार्थस्य सङ्ग्राहकवाक्यीयत्वेन लक्ष्यासंस्कारकत्वाच्छब्दमर्यादया तथाप्रतीत्यभावेनावाच्यत्वाच्च कथं तेन वारण-मत आह—अजादेश इति । प्रयोगीयाच एवादेश इत्यर्थः । पूर्वसूत्रवत् सौत्रस्थान्यादेशभावस्यात्र-ग्रहणे मानाभावात् । तेन णिलोपादिरनेन स्थानिवत्त्वम् 'अचीकमत' 'याज्यते' 'वाप्यते' इत्यादौ 'मरुतमा-

सरला

इत्यर्थादिति । स्यादेतत् । देवयतेः क्विपि 'दयूः' इत्यादौ स्थानिनि वकारे सति अभवतोऽयादे-

( पा० सू० १।१।५८ ) इति सूत्रे यलोपदीर्घादिग्रहणं चेह लिङ्गम् । अत एव 'गण-

शब्दरत्नम् ।

पूर्वसूत्रे स्थानिवत्पदस्य तद्वत्कार्यं लभत इत्येतन्मात्रार्थकस्येहोभयार्थकत्वात्तदाश्रयणमिति भावः । यलोपदीर्घादीति । यलोपदीर्घावादी येषामित्यर्थः । यलोपादयो दीर्घादयश्चेति यावत् । तेन स्वरादीनामपि सङ्ग्रहः । यलोपादीत्येव सिद्धे एवमुक्तिर्वैचित्र्याय । न हि

भैरवी ।

तीत्यादिसिद्धिः । ननु सर्वत्र शब्दस्यैवाधिकारो दृष्ट इति शब्दाधिकार इत्यनर्थकम्, क्लृप्तार्थस्यत्यागेन शब्दमात्रस्यात्र सूत्रे सम्बन्धे च किम्मानमत आह—पूर्वसूत्रेति । इत्येतन्मात्रेति । तेन नायकादिसिद्धिः । उभयार्थकत्वेति । भावाभावोभयार्थकत्वेत्यर्थः । क्लृप्तार्थपरित्यागेन शब्दमात्रस्य सम्बन्धो यत्र तत्र शब्दाधिकार इति व्यवहारः, यत्र तु क्लृप्तार्थसम्बद्धशब्दस्यान्यत्र सम्बन्धस्तत्रार्थाधिकार इति । यद्यपि दीर्घशब्दस्याल्पाच्त्वं तथापि सूत्रे प्रागुपादानादिह यलोपदीर्घावादी इत्युक्तम् । द्वन्द्वान्ते श्रूयमाणमिति न्यायेनाह—यलोपादय इति । वैचित्र्यायेति । अल्पशब्दोपादानेन लभ्योऽप्यर्थः क्वचित्स्पष्टप्रतिपत्तयेऽधिकशब्दोपादानेन बोध्यते, तथापि नाधिकोपादानप्रयुक्तं दुष्टत्वमित्येतद्वैचित्र्यध्वननायेत्यर्थः । लिङ्गत्वमुपपादयति—नहीत्यादिना । ननु यलोपादीत्युक्तौ न्यूनता, यथा यलोपादिग्रहणस्य ज्ञापकता तथा द्विर्वचनग्रहणस्यापि ज्ञापकत्वसम्भवादिति चेद् ? न, 'वाक्—वाक्क्' इति भाष्यीयोदाहरणस्योपपत्त्यर्थम् "अनचि" इतिसूत्रेऽनचीत्यत्र प्रसज्यप्रतिषेधस्य सर्वरङ्गीकृततया स्थानिनि सति भवतो निषेधस्यादेशेऽतिदेशप्रसक्त्याऽभावातिदेशमन्तरेणापि तस्य चारितार्थ्यसम्भवात् । अभावातिदेशस्य फलमाह मूले—अत एवेति । अभावातिदेशादेवेत्यर्थः । ननु गणयतीत्यादौ "अचो ञ्णिति" इति शास्त्राद् "अतो लोपः" इत्यल्लोपवि-

भावप्रकाशः ।

चष्टे मारयति' इत्यादौ च टिलोपादेस्तदभावश्च सिध्यति । स यत्कार्यं लभते न लभते च तदवत् तत्सदृशं नतु तद्विरुद्धमित्यर्थः । अच्कार्यं लभते स्वकार्यं नेति तु फलितोऽर्थः । नन्वधिकारः शब्दस्यैवास्तीति तथोक्तिरयुक्ता । किञ्च क्लृप्तार्थत्यागेन शब्दमात्रानुवृत्तौ किं बीजम् । एवं चाक्तार्थानुपपत्तिरत आह—पूर्वेति । एतन्मात्रेति । अन्यथा हि नायकाद्यसिद्धिप्रसङ्ग इति भावः । उभयेति । अन्यथा हि यलोपादिग्रहणानर्थक्यापत्तिरिति भावः । तदाश्रयणमिति । निरर्थकशब्दाधिकाराश्रयणमित्यर्थः । सार्थकानुवृत्तौ स्वर्थाधिकारव्यवहारः । एतदर्थं तथोक्तिः । तथाचोभयातिदेशाङ्गीकारादुक्तार्थसिद्धिरिति भावः । यलोपेति । सूत्रे प्रागुक्त्या प्रागुपस्थित्याऽभ्यर्हितत्वेन सौत्रक्रमेण वा पूर्वनिपात इति भावः । कृतैकशेषस्य द्वन्द्वान्तेश्रूयमाणस्य प्रत्येकं सम्बन्धादाह—यलोपादय इति । द्वन्द्वत्यागेन तथा व्याख्यानस्याद्यादिशब्दद्वारा फलमाह—तेनेति । नन्वेवं दीर्घादीति व्यर्थमेवेत्यत आह—यलोपादीति । वैचित्र्यायेति । सूत्रभाष्यमतभेदसूचनायेत्यर्थः । यद्वा, भाष्यमते वर्ज्यकोटौ दीर्घोऽप्युपलक्ष्यत्वेन ग्राह्य इति सूचनायेत्यर्थः । लिङ्गत्वमुपपादयति—नहीति । ननु वृद्धेर्लोपो बलीयानिति सिद्धान्तादादौ "अचो ञ्णि-

सरला ।

शस्य लोपेऽप्यभावापत्तिः । नच आदेशे स्थानिवृत्तिधर्मसंभावनायां यद् भवति तद् भवति, यन्न भवति तन्नेत्यर्थेन न दोषः । अत एव प्रकृतसूत्रस्थं "परस्मिन्निति किं युवजानिः । नैतदस्ति प्रयोजनं न्यादेशवत्कं नकारमादाय लोपो भविष्यति" इति भाष्यं संगच्छते इति वाच्यम्, 'एषो गमयति' इत्यादौ वाक्यसंस्कारपक्षे "एतत्तदोः" इति सुलोपापत्तेः गमादेशे इणुत्वधर्मसम्भावनायामपि आदिभूतस्य गकारस्य हल्त्वेन ग्रहणसम्भवात्; इति चेत् ? मैवम्, स्थानी न निवृत्तः, आदेशो न जातः इति सम्भावनायां यद् भवति तद् भवति, यन्न भवति तन्नेत्यर्थेनादोषात् ।

यति' इत्यादौ न वृद्धिः। स्थानिनि सत्यभवन्त्यास्तस्या आदेशोऽप्यभावातिदेशात्। उक्तञ्च "काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति" इति। स्यादेतत्। पूर्वत्वस्य सावधित्वेन सन्निहितस्यैव अवधित्वमुचितम्। सन्निहितं चेह त्रयम् स्थानी, आदेशो, निमित्तं च। तत्र न तावत् स्थानी अवधिस्तस्यादेशेनापहारात्। नाप्यादेशनिमित्ते, 'वैयाकरणः' इत्यत्र ऐकारस्यायादेशापत्तेरित्याशङ्क्याह—अचः पूर्वत्वेन

## शब्दरत्नम्।

यलोपादिविषये भावातिदेशप्रसक्तिरिति भावः। न वृद्धिरिति। "अत उपधायाः" (पा० सू० ७।२।११६) इति वृद्धिर्नेत्यर्थः। "क्विलुगुपधात्व—" (वा०) इति निषेधस्तूपधात्वनिमित्तकप्रत्ययविधावेव नान्यत्रेति भाष्ये स्पष्टम्। आयादेशापत्तेरिति। यणः स्थानिवत्त्वेनाच्त्वादिति भावः। पूर्वत्वं चात्र व्यवहिताव्यवहितसाधारणम्, स्वरे निषे-

## भैरवी।

धायकशास्त्रस्य बलवत्त्वादकारस्य लोप एव भविष्यतीति न वृद्धिरित्यसङ्गतमत आह—अत उपेति।

ननु तस्य प्रवृत्तिरभावातिदेशेऽपि दुर्वारा, "क्विलुक्" इति वार्तिकेन स्थानिवत्त्वनिषेधादत आह—क्विलुगिति। प्रत्ययेति। यथा 'पारिखीयः' इत्यत्र परिखाशब्दाच्चातुरर्थिकेऽणि तदन्तादृवृद्धाच्छस्य बाधको "जनपदतदवध्योः" इति वुञ् प्राप्तस्तम्बाधित्वा "वृद्धादकेकान्तखोपधात्" इति छो भवति। एवकारस्य क्विलुगिति वार्तिके चङ्परनिर्ह्रासग्रहणाज्ज्ञापकाल्लब्धस्य व्यावर्त्यमाह—नान्यत्रेति। तेन कथयतीत्यादेः सिद्धिः। ननु 'वैयाकरणः' इत्यत्र निमित्तापेक्षया पूर्वत्वाश्रयणपक्षेऽप्यायादेशापत्तिरुक्ता, सा न सङ्गच्छते, निमित्तादैकारस्याव्यवहितपूर्वत्वाभावादत आह—पूर्वत्वञ्चात्रेति। स्वरे निषेधादिति। तस्य हि 'चिकीर्षकः'

## भावप्रकाशः।

ति" इत्यस्यादावप्राप्तिः। स्वविधावस्थानिवत्त्वादनन्तरमपि नेत्यत आह—अत इति। लघूपधत्वसिद्धिद्वारा लोपहेतुकत्वं तस्या बोध्यम्। नन्वेमपि "क्विलुगुपधात्व" इति निषेधात्तत्त्वं दुर्लभमेवात आह—क्विलुगिति। "वृद्धादकेकान्तखोपधात्" इत्यस्य 'पारिखीयः' इति लक्ष्ये इत्यर्थः। एवञ्व्यावर्त्यमाह—नान्यत्रेति। उपधासंज्ञायां तद्धेतुककार्यान्तरे चेत्यर्थः। अतएव चङ्परनिर्ह्रासग्रहणं तत्र चरितार्थमिति भावः। नाच्त्वादितिपाठः 'नाच्त्वादिति भावः' इत्यपपाठः। नन्वादेशापेक्षयाऽव्यवहितपूर्वत्वसत्त्वेऽपि तन्निमित्तापेक्षयाऽतत्त्वात्कथं तत्पक्षेऽप्येतद्दोषोक्तिरत आह—पूर्वत्वं चेति। अत्र पूर्वविधावित्यत्र। स्वरे

## सरला।

परेतु आदेशे स्थानिवृत्तिधर्मसम्भावनायां यद् भवति तद् भवति, यन्न भवति तन्न भवतीत्येवार्थः। अत एव "परस्मिन्निति किं युवजानिः" इत्येतत्फलखण्डनपरं भाष्यं सङ्गच्छते। नच 'एषो गमयति' इत्यादौ सुलोपापत्तिरिति वाच्यम्, इष्टत्वात्। अत एव 'एष यूनः पश्य' इत्यादौ "न सम्प्रसारणे" इति सूत्रसत्त्वे "सम्प्रसारणादसम्प्रसारणे" इति कल्पे च न फलभेद इत्याहुः। न वृद्धिरितीति। अकारे सति गकाराकारस्योपधात्वाभावेनाभवन्त्या वृद्धेरकारलोपेऽपि अभावातिदेशेन "अत उपधायाः" इति वृद्धिर्न भवति। एवञ्च 'गणयति' इति फलमभावातिदेशस्य। भावातिदेशफलं तु 'निगाल्यते' इति। तत्र णिचि सति लत्वं भवति तल्लत्वं णिलोपेऽपीति। भाष्ये स्पष्टमिति। "क्वि-लुग्-उपधात्व-चङ्परणिर्ह्रास-कुत्वेषूपसंख्यानम्" इति नपदान्तसूत्रे स्थानिवद्भावनिषेधकं वार्तिकं पठितम्। तत्र उपधात्वपदेन उपधात्वनिमित्तकसर्वकार्याणां ग्रहणे चङ्परे णौ उपधाह्रस्वस्यापि उपधात्वनिमित्तकत्वेन तत्र स्थानिवद्भावस्य तेनैव निषेधसिद्धेश्चङ्परणिर्ह्रासग्रहणस्य वैयर्थ्येन उपधात्वपदेन उपधात्वनिमित्तक प्रत्ययविधेरेव ग्रहणेन वृद्धेः प्रत्ययविधित्वाभावेन न निषेधप्रवृत्तिरिति स्पष्टमित्यर्थः। तदुक्तं भाष्ये—"विशेषत एव तद्वक्तव्यं, क्व? प्रत्ययविधौ। इह मा भूत्—पटयति लघयति" इति।

दुष्टस्येति । पूर्वत्वमुपलक्षणं न तु विशेषणमिति भावः । एतेन "अचः पूर्वत्ववि-ज्ञानदैचोः सिद्धम्" इति वार्तिकं व्याख्यातम् ॥

"न पदान्त" ( पा० सू० १।१।५८ ) । पदस्य चरमावयव इति । वृक्षं वे-तीति वृक्षवीः, वातीति वृक्षवाः, तमाचष्टे वृक्षाव्, विच् । इह "लोपो व्योः—"

---

शब्दरत्नम् ।

धात् । अतो यन्निमित्ताकारापेक्षयाऽप्यैकारस्य पूर्वत्वमस्तीति तत्पक्षे ऽप्ययं दोष इति भावः । आदेशेनापहारात् कथं स्थानिनोऽवधित्वमित्यत आह—उपलक्षणमिति ।

अन्तशब्दस्य चरमावयववाचित्वं विधिशब्दो भावसाधनः कर्मषष्ठ्यासमासेन पदचर-मावयवे कर्त्तव्ये इत्येवं व्याख्याने फलमाह—वृक्षमिति । विजिति । क्विपि तूठ् स्या-

भैरवी ।

इत्याद्युदाहरणम् । तत्र रेफषकाराभ्यां व्यवधानेन स्थानिवद्भावाप्राप्तेः स निषेधोऽव्यवहि-तपूर्वत्वाश्रयणे व्यर्थः स्यात् । अतः—व्यवहितस्यापि पूर्वशब्देन ग्रहणात् । अपिशब्दा-भ्यामादेशापेक्षया पूर्वत्वस्य ग्रहणपक्षे दोषः सूचितः । नचान्तरङ्गपरिभाषया एजागमस्यासि-द्धत्वान्नोभयपक्षे 'वैयाकरणः' इत्यत्रायादेशापत्तिः, "किरतौ लवने" इति ज्ञापकादतिदेशवि-षयेऽपि तस्याः प्रवृत्तिस्वीकारादिति वाच्यम्, ज्ञापकमूलकवचनकल्पनापेक्षया स्थान्यपेक्षया पूर्वत्वाश्रयणे लाघवात् ॥

मूले—"ऐचोः सिद्धम्" इत्यत्रैचोः इत्यस्य श्रवणमिति शेषः । परममूले-"न पदान्त" इति सूत्रस्थविधिशब्दस्य भावसाधनत्वाभिप्रायेण व्याख्यानं कृतं, नतु तस्य कर्मसाधन-त्वम्; तस्य फलं मूले आह—वृक्षं वेतीत्यादिना । एतदेवोपपादयति—अन्तशब्दस्येति । यत्तु

भावप्रकाशः ।

इति । अन्यथा तत्र रेफषकाराभ्यां व्यवायेन तदप्राप्त्या तदुक्तिर्निषेधे व्यर्था स्यादिति भावः । अतः, तादृशपूर्वत्वग्रहणात् । अपिभ्यामादेशतत्पक्षयोः समुच्चयः । यत्तु अन्तरङ्गपरिभाषया ऐचोरसिद्धत्वान्मूल-टीके चिन्त्ये "नाजानन्तर्ये" इति त्वनित्या नास्त्येव वा । एवं च त्रयाणामपि पक्षाणामदुष्टत्वम्, निमि-त्तापेक्षया पूर्वत्वपक्षे लवनमित्यादाववाद्यभावापत्तिस्तु "किरतौ लवने" इत्यादिज्ञापकान्नेति न्यासकृदनुया-यिमन्दः, तन्न, आतिदेशिके कार्येऽन्तरङ्गत्वस्य दुरुपपादत्वात् तद्वैयर्थ्यापत्तेश्च, ज्ञापकाश्रयणे गौरवाच्च, प्रकृ-तसूत्रभाष्यवार्तिकविरोधाच्च । अत एव तथान्यासकारोक्तिखण्डनपरकौस्तुभसंगतिरिति दिक् । एवञ्च सूत्रे श्रुतत्वात्तस्यैवावधित्वमित्याह—स्थानिन इति ।

प्रतीकं धृत्वा तथोक्तौ सङ्गतिमाह—अन्तेति । यत्तु विधिशब्दः कर्मसाधनः, पूर्वेण शेषषष्ठ्या समासे द्विर्वचनाद्यसङ्ग्रहेऽपि कर्मधारये न दोष इति रत्नाकरः । तन्न, तस्य पूर्वनिपातापत्तेः । कर्मसाधनस्य बहिरङ्गत्वाच्च । एतेन विधिशब्दः कर्मसाधनः स्थानषष्ठ्या च समास इत्यपास्तम्, द्विर्वचनादिषु विधिश-ब्दानन्वयापत्तेश्च, तत्र कर्मधारये वैरूप्यापत्तेश्च, एकेन विधिशब्देन युगपत्समासद्वयानुपपत्तेश्च, 'षो यन्ह-सति' इत्याद्यसिध्यापत्तेश्च । इयमेवारुचिर्मूले तुनैतद्व्याख्याने बोधिता । एतेन तथाव्याख्यानं स्वीकुर्वन् मन्दः "अन्धस्येवान्धलग्नस्य" इति न्यायेन प्रत्युक्तः । तदाह—विधीति । इत्येवमिति । इत्येवं फलि-

सरला ।

तत्पक्षेऽपीति । निमित्तग्रहणपक्षेऽपीत्यर्थः । उपलक्षणमितीति । अविद्यमानं सद् व्यावर्तकमुपल-क्षणम् । यथा 'काकवन्तो देवदत्तस्य गृहाः' इत्यत्र देवदत्तगृहे सर्वदा काकस्यासत्त्वेऽपि कदाचित्काकस्य सत्त्वादर्शनेन काक उपलक्षणम् । विशेषणं तु विद्यमानं सद् व्यावर्तकम् । यथा 'रूपवान् घटः' इत्यत्र रूपम् । मूले व्याख्यातमिति । पूर्वत्वस्योपलक्षणतया स्थानिभूताज्निरूपितस्यैव पूर्वत्वस्य ग्रहणेन 'वैया-करणः' 'सौवश्विः' इत्यत्र स्थानिभूताज्निरूपितपूर्वत्वाभावेन ऐकारौकारयोः श्रवणं सिद्धमित्यर्थकं वार्तिकं सङ्गतमित्यर्थः ।

भावसाधन इति । विपूर्वक 'धा' धातोः "उपसर्गे घोः किः" इति सूत्रेण किः प्रत्ययः । स च भावे

(पा० सू० ६।१।६६) इति वलोपो न, स्थानिवत्त्वात्। न च "न पदान्त-" (पा० सू० १।१।५८) इति निषेधः, इह विधेयस्य लोपस्य पदानवयवत्वात्। पदान्तस्य स्थाने विधौ नेति व्याख्याने तु नेदं सिध्येत्। "सुबन्ताण्णिच्" इति हरदत्तादिमतेऽन्तर्वर्तिसुपा पदत्वात्। न च "इष्ठवत्" इत्यतिदिष्टेन णिचि भत्वेन पदत्वबाधः;

---

**शब्दरत्नम्।**

दिति भावः। स्थानिवत्त्वादिति णिलोपस्य टिलोपस्य वा स्थानिवत्त्वादित्यर्थः नन्वस्य पदत्वाभावात्कुतोऽसिद्धिरत आह—सुबन्त दिति। अन्तर्वर्तिसुब्निमित्तकपदत्वस्यैकदे

**भैरवी।**

कैयटेन "वृक्षं वृश्चति" इति क्विपि तत आख्याने णिचि विजुक्तस्तथाव्याख्यानफलनिरूपणावसरे, स तु प्रकारो न युक्तः, उपधावृद्धेर्दुर्वारत्वात्। अतोऽयमेव साधनप्रकार आहतः। ऊठ् स्यादिति। तस्य वलोपापवादत्वादिति भावः। अस्य—वृक्षव्शब्दस्य। पदत्वाभावादिति। प्रातिपदिकाण्णिजुत्पत्तेः स्वीकारादिति भावः। मूले—हरदत्तादिमत इति। "तत्करोति तदाचष्टे" इति वचनस्य "द्वितीयान्तात्" इति तेन व्याख्यातत्वादिति भावः। नच "प्रातिपदिकाद्धात्वर्थे" इत्यत्र प्रातिपदिकादित्यस्य दर्शनेन सुबन्तादित्यसङ्गतमिति वाच्यम्, "तेनातिक्रामति" इत्यत्र तेनेत्यस्य तृतीयान्तादिति व्याख्यानदर्शनेन तत्साहचर्यात्प्रातिपदिकादित्यस्य प्रातिपदिकप्रकृतिकात् सुबन्तादित्यर्थ इति तद्भावात्। अन्तर्वर्तिसुपा पदत्वमाकाराद्यन्ते न तु वान्त इत्याशङ्कायामाह—अन्तर्वर्तीति। एकदेशेति। तस्य न्यायस्य लौकिकत्वादिति भावः। मूले—न चेष्ठवदिति। इदमपि परत्वात्सुसिङन्तमित्यस्य

**भावप्रकाशः।**

तव्याख्यान इत्यर्थः। शाब्दं तु पदचरमावयवकर्मकविधाविति बोध्यम्। यत्त कैयटेन 'वृक्षवन्तमाचष्टे' इति णिचि टिलोपे विचि रूपमिति मतं मतुब्लुकष्टिलोपापवादत्वात्सन्दूष्य 'वृक्षं वृश्चति' इति क्विपि तमाचष्ट इति णिचि टिलोपे विजित्युक्तम्। प्रकाशेऽप्येवम्। तन्न, "अत उपधायाः" इति वृद्धेर्दुर्वारत्वात्। अतो मूले वेतीत्यादि। तूठिति। वलोपापवादत्वादिति भावः। हेतोः साकाङ्क्षत्वादाह—णिलोपस्येति। तथाच वलपरत्वाभाव इति भावः। वृद्धिवारणायाह—टिलोपस्येवेति। अस्य—वृक्षव्शब्दस्य। पदत्वाभावादिति। प्रातिपदिकात् णिजुत्पत्तेः। नचैवं मूलेऽपदत्वादित्येव सिद्धेऽवयवोक्तिर्व्यर्थेति वाच्यम्, अन्तशब्दस्य समीपवाचकत्वमिति सुबन्ताण्णिजिति मतेऽपि सिद्धिरिति च ध्वनयितुं तथोक्तेः। एतेन णिचि वक्ष्यमाणरीत्यापदत्वस्यैवाभावेन तदनवयवत्वादिति मूलोक्तिश्चिन्त्येति रत्नाकरोक्तमपास्तम्, तद्रीतेः खण्डयिष्यमाणत्वाच्चेति भावः। कुतोऽसिद्धिरिति। तथाच वृक्षवयतेरप्रत्ययः 'वृक्षव् करोति' इत्यादिमिकभाष्यविरोध इति भावः। विज्वद्भिर्भूतसुब्हेतुकपदसंज्ञाहेतुकनिषेधेन विजुत्पत्त्यव्यवहितवेलायां वलोपप्रतिबन्धकप्राप्तातिदेशबाधो वक्तुमशक्य इति ध्वनयन्नाह—अन्तर्वर्तीति। एकदेशेति। तथाच लौकिकन्यायविषयोऽयं नतु शास्त्रीयस्थानिवद्भावादेः। एतेनान्तर्वर्तिसुब्निमित्तपदसंज्ञायां बाह्यणिच्हेतुकटि-

**सरला।**

कर्मणि च तेन विधानाद् द्वयोरप्यर्थयोः सम्भवति। तथा च भावे यदा स विधीयते तदा कर्मणोऽनुक्ततया पदान्तस्येति कर्मणि षष्ठ्या विधिशब्देन समासः, ततश्च पदचरमावयवकर्मके विधाने इत्यर्थे यस्य विधानं तस्य तत्र पदचरमावयवत्वमावश्यकमिति लोपस्याभावरूपतया तस्यावयवत्वासम्भवेन लोपविधाने नास्य प्रवृत्तिः। कर्मणि यदा किः प्रत्ययस्तदा कर्मण उक्ततया सम्बन्धमात्रे शेषषष्ठ्या पदान्तशब्दस्य विधिशब्देन समास इति पदचरमावयवसम्बन्धिविधाने इत्यर्थे षष्ठ्या अनिर्धारितसम्बन्धविशेषतया "षष्ठी स्थानेयोगा" इत्यस्य प्रवृत्तौ पदचरमावयवस्थानिके विधाने इत्यर्थे यस्य विधानं तस्य तत्र पदचरमावयवस्थानिकत्वमात्रस्यापेक्षितत्वेन पदचरमावयवत्वस्य तदनवयवत्वस्य वा सत्त्वेऽपि तत्प्रवृत्त्या लोपेऽपि कर्तव्ये 'पदान्तविधौ' इत्यस्य निषेधस्य प्रवृत्तिरिति 'वृक्षव्' इत्यत्र दोषापत्तेरत्र सूत्रे भावसाधन एव एष्टव्य इति

गोर्लुप्तत्वात्; न च प्रत्ययलक्षणम्, वर्णाश्रयत्वादिति भावः। द्विर्वचनादौ चेति। यलोपादय आदिशब्दग्राह्याः। 'वरे' इति तु वरे योऽजादेशः स न स्थानिवदिति व्याख्येयम्। सहविवक्षाऽभावेऽपि निपातनाद् द्वन्द्वः सप्तम्यलुक् च।

---

शब्दरत्नम्।

शविकृतन्यायेन वान्तेऽपि तत्त्वमिति भावः। **प्रत्ययलक्षणमिति**। स्थानिवत्त्वेन प्रत्ययनिमित्तं कार्यमित्यर्थः। **वर्णाश्रयत्वादिति**। "णाविष्ठवद्–" इत्यनेन "यचि भम्" इति शास्त्रस्यैवातिदेशस्तच्च वर्णाश्रयम्, एवञ्च स्थानिवत्त्वस्याप्रसक्तिः। कार्यातिदेशेऽपि यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमति-

भैरवी।

बाधकमिति भावः। ननु प्रत्ययलक्षणमित्या शङ्का कृता सा न सङ्गच्छते, तस्य सूत्रस्य नियमार्थत्वसिद्धान्तादत आह—स्थानिवत्त्वेनेति। एवञ्च स्थानिवत्सूत्रस्यैव प्रसक्तिशङ्क्येयमिति भावः।

अल्विधित्वात्तस्याप्राप्तिमुपपादयति––णाविष्ठदित्यादिना। वर्णाश्रयमिति। यजादीत्यस्य स्वादीत्येतद्विशेषणत्वेऽपि प्रपठ्येत्यत्रेवाप्राधान्येनालाश्रयणेऽपि निषेधस्य प्रवृत्तेः स्वीकारादिति भावः। ननु स्थानिवत्सूत्रेण प्राधान्यात्कार्यातिदेश एव क्रियते इति कथमतिदेशाप्रवृत्तिरत आह––कार्यातिदेशेऽपीति। अङ्गीकारादिति। अत एव 'सर्वस्मिन्' इत्यत्र दीर्घो न, अतिदिष्टकार्यस्यापि यत्रादित्वनिमित्तकत्वात्। ननु वर्णाश्रयेऽपि प्रत्ययनिमित्तककार्यार्थम्प्र-

भावप्रकाशः।

लोपस्यासिद्धत्वात् "अचः पर" इति स्थानिवद्भावाद्धरदत्तमताङ्गीकारेऽपि प्राचोक्तव्याख्याने न दोष इति मन्दोक्तमपास्तम्, असिद्धमित्यत्र प्रत्यासत्त्याऽन्तरङ्गादिपदेन शास्त्रस्यैव ग्रहणेनात्राप्राप्तेः। तन्न्यायस्य लौकिकत्वात्। अतएव तद्भ्यपदत्वस्याशास्त्रीयत्वेनान्त्यपक्षोऽप्ययुक्तः। वक्ष्यमाणरीत्या "न पदान्त" इति निषेधाच्च। तदाह—वान्तेपीति। अपिना ईकारान्तादिसमुच्चयः। यत्तु पदान्तस्य स्थाने इत्यादि वर्णाश्रयत्वादित्यन्तमनूद्य 'अतृणेट्' इत्यादिसिद्धये निषेधस्य वर्णप्राधान्ये एव प्रवृत्तेराकरोक्तत्वात् कौस्तुभे "अचः पर" इति सूत्रे 'पटयति' इत्यत्र जश्त्ववारणाय तादृशभत्वेन पदत्वबाधस्याभ्युपगमाच्चेति दूषितवान् रत्नाकरस्तदसदिति ध्वनयितुमाह—स्थानीति। शेषपूरणमेतत्। उपस्थितत्वात् प्रत्ययेत्यावक्षरार्थः। उभयत्र बहुव्रीहिरिति भावः। नन्वेवं व्याख्याने उत्तरासङ्गतिः "अन्त्यप्रत्ययग्रहणात् तल्लक्षणं यथा स्यात् वर्णलक्षणं माभूत्—'गोहितम्' इत्यादिभाष्येण वर्णाश्रये तस्याभावोक्तेर्न स्थानिवत्त्वस्येत्यत आह—णाविति। अयञ्च टेरित्यत्रोक्त "णाविष्ठवत्प्रातिपदिकस्य" इति वार्तिकैकदेशानुवादः। एतेन "प्रातिपदिकात्" इत्यादिगणसूत्राणामप्रामाण्यम्, "हेतुमति च" इत्यत्र 'तत्करोति' इति वार्तिकोक्तेः; एवञ्च प्रातिपदिकादेव णिजुत्पत्तिलाभ इति सिद्धान्तो ध्वनितः। यद्यपि भसंज्ञा भाष्ये न दृश्यते तथापि "उदाहरणमेतन्न परिगणनम्" इति भाष्यात्तस्या अपि ग्रहणम्, तेन 'स्रजयति' इत्यादौ कुत्वाभावः, 'स्रक्' इत्यादौ तत्त्वं च सिध्यति, तदाह—यचि भमिति। वर्णाश्रयमिति। वर्णः अल् आश्रयो हेतुर्यत्र तदित्यर्थः। वर्णाश्रयत्वादिति मूलस्याप्ययमेवार्थः। एवञ्चाल्विधित्वादिति फलितम्, तदाह—एवञ्चेति। अल्विधित्वे चेत्यर्थः। एवञ्च नेदं तन्निषेधपरम्, किन्तु स्थानिवत्सूत्राप्रवृत्तिबोधकं 'सुध्युपास्यः' इत्यत्रानेनेहेत्यादि कौमुदीग्रन्थवदिति। प्रागुक्तरत्नाकरोक्तिरयुक्ता 'पटयति' इत्यत्र णिच्सत्त्वेन प्रत्ययलक्षणप्राप्त्या द्वितीयहेतोरसम्बद्धत्वाच्चेति भावः। नन्वेवमपि प्राधान्यात्कार्यातिदेशपक्षेऽतिदेशसूत्रस्यातत्त्वेनेदं दुर्वचमत आह—कार्यातिदेशेऽपीति। भत्वरूपस्य तन्निमित्तरूपस्य वा कार्यस्यातिदेशेऽपीत्यर्थः। अति-

सरला।

तदाशयः। यन्निमित्तेति। यस्य निमित्तस्याभावप्रयोज्या उपदेशस्य प्रधानशास्त्रस्याप्रवृत्तिस्तन्निमि-

शब्दरत्नम् ।

देशस्यापीत्यङ्गीकाराद्वर्णाश्रयत्वाक्षतिः । प्रत्ययलक्षणसूत्रं तु भाष्यकृता प्रत्ययस्य यत्रा-साधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणमिति नियमार्थत्वेन स्थापितं न त्वप्राधान्येना-

भैरवी ।

त्ययलक्षणसूत्रमस्त्वित्यत आह—प्रत्ययेति । स्थापितमिति । नच 'अतृणेट्' इत्यत्र कथ-मिमागमस्तस्य हलादौ पिति सार्वधातुके प्रवृत्तिस्वीकारादिति वाच्यम्, हलीत्यस्य तत्र

भावप्रकाशः ।

देशस्यापीत्यपिरुपदेशसमुच्चायकः । यथाश्रुतमूलस्य भङ्क्त्वा व्याख्याने बीजमाह—प्रत्ययेति । प्रत्यय-हेतुकार्यबोधकसूत्रमित्यर्थः । साधारणमिति । तन्मात्रवृत्तीत्यर्थः । एवञ्च 'सुदृषत्प्रासादः' इत्यादौ दीर्घ-त्वमिवात्र भत्वमतिदेष्टुमशक्यम्, "वृषण्वस्वश्वयोः" इत्यनेनान्यत्रापि विधानात् । एतेन वार्तिकमते यद्य-प्युत्तराविषयतया तत्प्राप्तिरेव, तथापि भाष्याभिप्रायेणेत्थमुक्तमिति मान्योक्तिः प्राचामनुरोधेनेति ध्वनि-तम् । नियमशास्त्राणां विधिमुखेनैव प्रवृत्त्या यथा श्रुतमूलसौष्ठवे भङ्क्त्वा व्याख्यानमयुक्तमित्यपास्तं च, तत्पक्षे उक्तरीत्या तदप्राप्त्या वर्णाश्रयत्वादिरयुत्तरासङ्गतेः । अज्ञानेन शङ्कायामपि नियमार्थत्वादि त्युत्तरौचित्याच्च, यथाश्रुतमूलासङ्गतेरुक्तत्वाच्चेति दिक् । लक्षणमिति नियमेति । एतेन नियमशास्त्राणां विधिरूपेणैव प्रवृत्तिः सूचिता । अन्यथा यत्र तदभावस्तत्रतदभाव इति नियमेति ब्रूयात् । नत्विति । सुदृषदित्यादौ दीर्घापत्तेः । तथाच वार्त्तिकमतमेवायुक्तम् । अतृणेट् इत्यादिसिद्धिस्तु "नाभ्यस्तस्य" इत्यतोऽचि नेत्यनुवर्त्य वाक्यभेदेन व्याख्यानेनेति स्पष्टं भाष्यादौ । तथाच मूलकृतोऽपि स्थानिवत्सूत्र-

सरला ।

तिरिक्तानि यानि यानि तत्र निमित्तानि तन्निमित्तकत्वमतिदेशशास्त्रस्यापीत्यर्थः । वर्णाश्रयत्वाक्षति-रिति । ननु 'वृक्षव्' इत्यत्र णिलोपे स्वादित्वाजादित्वोभयाभावप्रयुक्ता "यचि भम्" इति शास्त्रस्याप्र-वृत्तिरिति तदतिरिक्तनिमित्तकत्वेनाजादित्वनिमित्तकत्वाभावेन कथं वर्णाश्रयत्वमतिदेशस्येति चेत्? न, यन्निमित्तवैकल्येत्यत्र निमित्तपदेन सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्य ग्रहणेनादोषात् ।

तथाहि, णिः इष्ठवद्भवति इत्यतिदेशीयसादृश्यप्रतियोगितावच्छेदकीभूतो य इष्ठत्वरूपो धर्मस्तद्व्या-पकीभूतो धर्मः स्वादित्वरूपः न त्वजादित्वरूपो 'भूयिष्ठः' इत्यादौ व्यभिचारादिति यन्निमित्तपदेन स्वादित्वस्यैव ग्रहणेनाजादित्वस्य तदतिरिक्ततयाऽतिदेशस्य तदपेक्षणेन वर्णाश्रयत्वमक्षतमिति न दोषः । न चैवमपि "यचि भम्" इत्यत्र यचीति द्वन्द्वनिर्देशेन भसंज्ञायां यकारादित्वाजादित्वान्यतरत्वेन निमि-त्तत्वादन्यतरत्वे सादृश्यप्रतियोगितावच्छेदकेष्ठत्वव्यापकत्वमस्त्येवेति पुनरपि तद्दोषतादवस्थ्यमेवेति वाच्यम्, यचीत्यत्र 'य्' इति लुप्तसप्तम्यन्तं पृथक् पदमिति स्वीकारेणादोषात् ।

अत एव "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति टच् समासान्तो न प्रसज्यते । अथवा यन्निमित्तवैकल्ये-त्यत्र निमित्तपदेन सादृश्यानुयोगितावच्छेदकधर्मव्यापकीभूताभावप्रतियोगिधर्मस्यैव ग्रहणमिति न कोऽपि दोषः । णिः इष्ठवद्भवतीत्यत्र सादृश्यानुयोगितावच्छेदकं णित्वं तद्व्यापकीभूताभावप्रतियोगि स्वादि-त्वमेव न त्वजादित्वयादित्वैतदन्यतरद्, णौ अजादित्वस्य सत्त्वादिति दिक् । स्थापितमिति । स्थानि-वत्सूत्रेणैव सिद्धे "प्रत्ययलोपे प्रत्ययलक्षणम्" इति सूत्रं नियमार्थमिति भाष्यकृतः । तथाच प्रत्ययलोपे प्रत्ययलक्षणमेव नतु स्थानिवद्भावः । तेन स्थानिवत्सूत्रस्थादेशपदार्थे प्रत्ययलोपातिरिक्तत्वेन संकोच इति 'सुदृषत् प्रासादः' इत्यादौ स्थानिवद्भावेनासन्तत्वमादाय न "अत्वसन्तस्य" इति दीर्घः । नच 'मित्रशीः' 'अतृणेट्' इत्यादौ "शास इदङ्हलोः" "तृणह इम्" इत्यादि न स्यात् । प्रत्ययलोपसूत्रस्य स्थानिवत्सू-त्रनियामकत्वसिद्ध्यर्थं नियम्यस्थानिवत्सूत्रमात्रविषयकत्वावश्यकतयाऽत्र सूत्रे अनल्विधौ इत्यस्यानुवृत्तेः सत्त्वेन हलादित्वस्य अल्त्वव्याप्यधर्मघटितत्वात्प्रत्ययलक्षणाप्रवृत्तेरिति वाच्यम्, "शास इदङ्हलोः" इति सूत्रे हलिति न क्रियते, "शास इत्" "अङि" इति च योगो विभज्यते अजादौ चेदङ्येवेति नियमेन, "तृणह इम्" इत्यत्र हलीतिपदमननुवर्त्य "नाभ्यस्तस्य" इति सूत्रात् 'न' इति 'अचि' इति चानुवर्त्य

शब्दरत्नम् ।

लाश्रयणे विध्यर्थमिति भावः । न च "अचः परस्मिन्" ( पा० सू० १।१।५७ ) इति णिलोपस्य स्थानिवत्त्वेन भत्वं सुलभमिति वाच्यम्, णिलोपस्येव टिलोपस्यापि स्थानिवत्त्वापत्तौ वान्ते भत्वस्य दुर्लभत्वेन तत्र पदत्वानिवृत्तेः, "प्रकल्प्य वापवादविषयम्" इतिन्यायेन निषेधविषये तत्प्रतिबन्धाय स्थानिवत्त्वाप्रवृत्तेश्च ।

हरदत्तादिमते इत्यनेनारुचिर्बोधिता । तद्बीजं त्वयं पक्षो न सूत्रवार्तिकभाष्यसम्मत इति प्रातिपदिकात्तदुत्पत्तौ पदत्वाभाव इति । चरमावयवे कार्य इति व्याख्याने फलं तु

भैरवी ।

सम्बन्धमकृत्वाऽचि नेत्यस्य सम्बन्धात् । अनिवृत्तेरिति । अभ्युपेत्य वादोऽयम्, वस्तुतः "अचः परस्मिन्" इत्यस्य प्रवृत्तिरेव न सम्भवतीत्याह—प्रकल्प्येति । अयम्पक्षः—सुबन्ताण्णिजिति पक्षः । सम्मत इति प्रातिपदिकादिति । "तत्करोति" इत्यादि च "टेः" इति सूत्रस्थस्य "णाविष्ठवत्प्रातिपदिकस्य" इत्यस्यानुवादः । तत्र वार्तिके प्रातिपदिकादित्यस्य प्रातिपादिकप्रकृतिकसुबन्तादित्यर्थकरणे प्रातिपदिकपदोपादानस्य व्यर्थत्वापत्तिरिति भावः ।

मूलोक्तस्य भावसाधनविधिशब्दस्याश्रयणे तर्हि प्रयोजनं किम् ? अत आह-चरमावयव

भावप्रकाशः ।

व्यापारोऽभीष्टो न प्रत्ययलक्षणसूत्रस्य । तदाह—इति भाव इति । भत्वमिति । तथाच समानावधिकत्वाल्लौकिकन्यायप्राप्तपदत्वस्य तेन बाधेन निषेधाप्राप्त्या टिलोपस्य स्थानिवत्त्वेनाबलपरत्वात् प्राचोक्तमतेऽपि लोपः सुवार इति भावः, अपिः सम्भावनायाम् । त्वापत्ताविति । तत्समकालमिति शेषः । लक्ष्यभेदात् । तथाच जायमाना भसंज्ञा ईकारान्तादौ स्यादिति भिन्नावधिकतया तद्बाधो वक्तुमशक्य इति भावः । तदाह—वान्त इति । पदत्वेति । उक्तन्यायप्राप्तेति भावः । नच टिलोपस्थानिवत्त्वस्य वान्ते पदत्वस्थापकत्वेन निषेधप्राप्तिद्वारा पदान्तस्थानिकवलोपप्रापकत्वेन निषेध इति वाच्यम्, णिलोपस्थानिवत्त्वस्यापि निषेधप्रतिबन्धद्वारा तादृशवलोपप्रतिबन्धकत्वेन निषेधात् । विनिगमकाभावेन साक्षात्परम्परया वा सिद्धान्तेऽपि पदचरमावयवादिसाधकस्येव तत्प्रतिबन्धकस्यापि निषेधाङ्गीकारात् । अतएव भसंज्ञापि पदकार्यमित्यत्र सूत्रे भाष्ये उक्तमिति दिक् । उक्तार्थमेव द्रढयितुं वाचः क्रमवृत्तितयोभयोः समकालत्वाभावेऽपि निर्वाह इति सूचयितुं च दोषान्तरमाह-प्रकल्प्य वेति । परित्यज्य वेत्यर्थः । "पूर्वं ह्यपवादा" इत्यपेक्षया विकल्पः । अपवादशब्दो बाधकपरः । तत्प्रतीति । भत्वेन तदुपजीव्यपदत्वबाधेन "नपदान्त" इति निषेधप्रतिबन्धायेत्यर्थः । त्वाप्रवृत्तेश्चेति । अन्यथा न्यायासङ्गतिरपवादशास्त्रनिर्विषयता चेति भावः ।

न सूत्रेति । सुप इत्यस्याप्रकृतत्वात् । सुप इत्येव सिद्धे गणसूत्रस्थप्रातिपदिकपदासङ्गतेश्च, "णाविष्ठवत्प्रातिपदिकस्य" इति वार्तिकोक्तेश्चेति भावः । पदत्वाभाव इति । अतएव 'पटयति' 'अत्यरराजत्' इत्यादौ जश्त्वकुत्वे न । बहिरङ्गपरिभाषया तु न निर्वाहः, कार्यकालपक्षेऽपि त्रिपाद्यां तदप्रवृत्तेर्वक्ष्यमाणत्वात् । एतेन तयाऽत्र निर्वाहः, अन्यथा सिद्धान्तव्याख्यानेऽपि 'पटितः' इत्यादौ त्वदुक्तरीत्या टान्ते भत्वदौर्लभ्येन पदत्वाज्जश्त्वापत्तेः । 'अत्यरराजत्' इत्यादावज्झलादेशत्वेन तदप्राप्त्या कुत्वाभावायोक्तसमाधेरावश्यकत्वाच । नच तत एव तदप्राप्तौ तुल्यावधिकभत्वेन तद्बाधः । तातङ्न्यायेन वैपरीत्यापत्तेरिति मन्दोक्तमपास्तम् । तस्माद् वृक्षविटस्य द्विविधव्याख्याने सिद्धिरेवेति । तत्र, नैवं व्याख्यानस्येदं फलम् ।

सरला ।

अजादौ न भवतीति निषेधेन च इदादेशेमागमयोरनैमित्तिकतया तत्र प्रत्ययलक्षणानावश्यकत्वेन दोषाभावात् । अधिकमस्मद्गुरुकृतशब्देन्दुशेखरटिप्पणतोऽवगन्तव्यम् । विध्यर्थमिति । वार्तिककारमत इवेति शेषः । स हि अल्विधावपि प्रत्ययलक्षणार्थमिदं सूत्रं स्वीकरोति । अत एव 'मन्त्रशीः' 'अतृणेट्' इत्यादौ न दोषः इति फलं च वदति ।

तत्प्रतिबन्धायेति । निषेधाप्रवृत्तये इत्यर्थः । अयंभावः—अचः परस्मिन्निति बाध्यशास्त्रीयोद्देश्य-

अथोदाहरणानि, पदान्ते—कानि सन्ति, कौ स्तः । द्विर्वचने-सुद्द्ध्युपास्यः । वरे-यायावरः । "यश्च यङः" इति वरच् , अतो लोपः । स च "आतो लोप इटि च"

---

शब्दरत्नम् ।

'एषो यन् हसति' इत्यादौ यणः स्थानिवत्त्वाद् "एतत्तदोः" ( पा० सू० ६।१।१३२ ) इति सुलोपाभावः । इणः शतरि यन्निति रूपम् । उत्वे च न स्थानिवद् , अनेन निषेधादिति तत्त्वम् । कानि सन्तीति । वाक्यसंस्कारपक्ष एतत् । तत्र पक्षे पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादायान्तरङ्गाणां पूर्वं प्रवृत्तेरिकारादेः स्थानिभूतादचः पूर्वत्वं द्रष्टव्यम् । एतन्मूलकमेव वाक्यसंस्कारपक्षे श्रुतवर्णक्रमेणैव लक्ष्यसंस्कार इति वदन्ति । न

भैरवी ।

इति । ननु । 'एषो यन्' इत्यत्र तर्ह्युत्वमपि न स्यादत आह—उत्वे चेति । तस्य भावरूपत्वेन पदचरमावयवत्वसम्भवात् । 'कानि सन्ति' इत्यादौ स्थानिवद्भावप्रवृत्तिनिमित्तभूतमनादिष्टादचः पूर्वत्वमुपपादयति—वाक्येति । तत्र पक्षे । वाक्यसंस्कारपक्षे । एतन्मूलकमेव—तादृशान्तरङ्गत्वमूलकमेव । एतेन तस्यापूर्ववचनत्वं निराकृतम् । श्रुतवर्णक्रमेण । यस्य प्रथमतः श्रवणं तन्निमित्तककार्यस्यान्तरङ्गत्वात्तस्यपूर्वम्प्रवृत्तिरिति क्रमेण । ननु जातिपक्षमुपादायाण्ग्रहणस्य प्रत्याख्यानवत्पदसंस्कारपक्षाश्रयणं कृत्वा पदान्तग्रहणम्प्रत्याख्यायतामिति चेत् ? न, 'अदद्रीचः' इत्याद्यर्थन्तस्यावश्यकत्वात् । पदान्तग्रहणाभावे तत्र "अचः" इत्यल्लोपस्य स्थानिवत्त्वाद्यण् स्यात् । न चाद्र्यादेशस्योभयाश्रितत्वम् "अचः" इत्यस्य तु न तदाश्रितत्वमिति "अचः" इत्यन्तरङ्गमिति तस्यादौ प्रवृत्तिस्ततोऽद्र्यादेशस्येति नेकारस्यानादिष्टादचः पूर्वत्वमिति वाच्यम् , भसंज्ञानिमित्तविभक्त्युत्पत्तिपर्यन्तं तस्याद्र्यादेशस्य

भावप्रकाशः ।

किन्तर्हि तदितिचेत् ? अत्र रत्नाकरः 'वृक्षव्स्याम्' इति प्रत्युदाहार्यम् स्वादिष्विति पदत्वस्य तत्र सत्त्वादिति । तन्न, "नैवं विज्ञायते पदस्यातः पदान्तः, किं तर्हि ? पदे अन्तः पदान्तः".इति भाष्येण प्रत्यासत्त्या पदचरमावयवे कर्तव्ये परपदस्थाजादेश एव न स्थानिवदित्याशयकेन "न पदान्ताः परेऽणः सन्ति" इति लण्सूत्रस्थभाष्येण च वृक्षवादेरनभिधानात् । तद्ध्वनयन्नाह—चरमेति । आदिना 'एषो वशः' 'राजानो यन्ती' इत्यादिपरिग्रहः । पदचरमावयवप्रतिबन्धकस्थानिवद्भावनिषेधोदाहरणमाह—उत्वे चेति । यत्तु अन्तरङ्गे सुलोपे कर्तव्ये बाह्यइत्वपेक्षयणोऽसिद्धत्वम् । उत्वे तु नास्याः प्रवृत्तिः, "नाजानन्तर्ये" इति निषेधादिति । तन्न, सुलोपस्यैव वस्तुतः पदद्वयाश्रितत्वेन बहिरङ्गत्वात् , सिद्धान्तरीत्या चतुर्विधान्तरङ्गत्वस्याभावाच्च । तत्साधकतन्निषेधोदाहरणमाह—कानीति । नचादिष्टादचः पूर्वत्वाभावादेव न स्थानिवदिति वाच्यम् , वाक्यादपोद्धृत्य पदानि संस्क्रियन्ते" इतिपक्षे तत्त्वसत्त्वात् । नहि पदान्तरनिरपेक्षमेव पदमिह शास्त्रे संस्क्रियते इति नियमः, "युष्मद्युपपदे" इत्याद्यसङ्गत्यापत्तेस्तदाह—वाक्येति । नन्वेवमपि इयल्लोपविध्योर्युगपत् प्रवृत्त्या तदौर्लभ्यमेव । नच परत्वान्निर्वाहः, विप्रतिषेधाभावात् । नित्यत्वं तूभयोः समम् । नच वाचः क्रमवृत्तितया यौगपद्यमपि नेति वाच्यम् , तथापि वैपरीत्यापत्तेरत आह—तत्र पक्षे इति । पूर्वोपेति । उपपादितमेतत् । एतन्मूलकमेवेति । तादृशान्तरङ्गत्वमूलकमेवेत्यर्थः । एवेनापूर्ववचनत्वनिरासः । वदनक्रियाविशेषणमेतत् । श्रुतेति । उक्तरीत्या परत्वाद्यसम्भवेन येन क्रमेण वर्णानामुच्चारणम् , तत्क्रमत्यागे बीजाभावेन च तादृशान्तरङ्गत्वमादाय तत्क्रमेण संस्कारौचित्यादितिभावः । यत्तु व्यक्तिपक्षे कृताण्पदस्य जातिपक्षे खण्डनवद्वाक्यसंस्कारपक्षे कृतपदान्तग्रहणस्य पदसंस्कारपक्षे तदुचितमिति मन्दः; तन्न, 'अदद्रीचः' इत्यादौ पदसंस्कारपक्षेऽपि "अचः" इत्यल्लोपस्य स्थानिवत्त्वाय तदावश्यकत्वात् । यदपि पदद्वयाश्रितत्वेन बहिरङ्गोऽद्र्यादेशः अल्लोपोत्तरं प्रवर्तत इति तत्त्वमेवेति सः । तदपि न,

सरला ।

तावच्छेदकावच्छिन्ने नपदान्तशास्त्रस्य 'निषेधाश्च बलीयांसः' इति बलवत्त्वेन बाधकशास्त्रीयोद्देश्यतावच्छे-

( पा० सू० ६।४।६४ ) इत्यालोपे कर्तव्ये न स्थानिवत् । यलोपे—यातिः । यातेर्य-ङन्तात् क्विप् , अतो लोपः, यलोपः, अल्लोपस्य स्थानिवत्त्वादातो लोपः, यलो-

शब्दरत्नम् ।

स्थानिवदिति । तेन आतो लोपो नेति भावः । न च पूर्वमलोपस्ततो वलि लोप इति क्रमसत्त्वादकारेणार्द्धधातुकत्वाद्यलाभात्कथमतिदेशेन तल्लाभः ? सम्भावनामात्रेणापि त-ल्लाभस्य वरेग्रहणेन ज्ञापनात् । अस्ति चात्रापि यदि पूर्वं यलोपः स्यात्तदाऽकारेण प्रत्य-यत्वं लब्धं स्यादिति सम्भावना । फलं तु 'यातिः' इत्यादिसिद्धिरिति दिक् । क्विजिति ।

भैरवी ।

प्रवृत्तिप्रतिबन्धे मानाभावेनाल्लोपात्प्राक् प्रवृत्तेः । "द्युप्रागपागुदक्प्रतीचो यत्" इति सूत्रे 'प्रतीचः' इत्यत्र यणादेशस्याकरणेन "अचः" इत्यल्लोपस्य पूर्वस्य कार्ये कर्तव्ये न स्थानिवत्त्व-मित्यर्थकल्पनायां तु ज्ञानगौरवस्याप्यनुचितत्वमित्यर्थसाधकमेव पदान्तग्रहणमस्त्वित्याश-येन भाष्यकृता तस्य प्रत्याख्यानन्न कृतमिति । तेन—'यायावरः' इत्यत्र यङवयवाकारलोपस्य स्थानिवद्भावाभावेन । तल्लाभः—आर्द्धधातुकत्वलाभः । यद्यकारस्यार्द्धधातुकत्वं स्यात्तदातदा-देशस्य लोपस्यातिदेशेनार्धधातुकत्वं स्यात्तदेव तु न सम्भवतीति भावः । ननु सम्भाव-नामादाय वरेग्रहणस्य चारितार्थ्येऽपि नापूर्वफलाकाङ्क्षेति निष्पन्नमत आह—फलन्त्विति । ननु मूले यलोपविधिं प्रति न स्थानिवदित्यस्य 'यायावरः' इत्युदाहरणमेव कुतो नोक्त-मिति चेत् ? न, 'याति' इत्याद्यर्थं यलोपग्रहणस्यावश्यकतया तेनैवात्रापि स सिद्ध इति न तदंशे उदाहरणत्वमित्याशयात् । इत्यादिसिद्धिरिति । यदि सम्भावितमार्द्धधातुकत्वमाकारलोप-निमित्तं न स्यात्तदा 'यातिः' इत्यत्र यङन्तात् क्विपि कृतेऽकारयकारयोः क्रमेण लोपेऽकारस्या-र्द्धधातुकत्वाभावेनाकारस्य लोपो न स्यादतः सम्भावितमप्यार्द्धधातुकत्वमाकारलोपस्य नि-मित्तमित्याश्रयणीयम् । अत्रादिना 'लोलुवः' 'पोपुवः' इत्यस्य सङ्ग्रहः । अत्राच्प्रत्ययवि-षये यङवयवाकारस्य "न धातु" इति सूत्रस्य प्रत्याख्यानपक्षे "यस्य" इति योगविभागे-नादौ लोपे "यङोऽचि च" इति यलोपेऽलोपस्य स्थानिवत्त्वेनाच्प्रत्ययनिमित्तको गुणो यथा न भवति तथोवङादेशोऽपि न तत्र तन्निमित्तकः, किन्तु यङवयवाकारनिमित्तक एव वाच्यः, स यदि सम्भावितम्प्रत्ययत्वन्नाश्रीयेत कार्यप्रयोजकत्वेन, तदा न स्यात् ।

ननु मूले 'यातिः' इत्यस्य साधनावसरे न च पुनराल्लोपः शङ्क्यः, चिणो लुङ्न्यायेना-

भावप्रकाशः ।

उभयाश्रितत्वेऽपि पदद्वयानाश्रितत्वात् । भत्वाल्लोपविभक्त्युत्पत्तिप्रतीक्षायां मानाभावाच्च, पूर्वस्थित निमित्त-कत्वेन तस्यैवान्तरङ्गतया प्राक् प्रवृत्तेश्च । 'चौ' 'प्राचां' 'प्रतीचोयत्' इत्यादिज्ञापकेन पदान्तग्रहणखण्डनं तु वैतण्डिकस्य तवैव सुसदमिति दिक् । लोपो नेतीति । आभीयासिद्धत्वं तु न व्याश्रयत्वादिति भावः । एवमग्रेऽपि । त्वादेरलाभादिति पाठः, समासदौर्लभ्यात् । तल्लाभ इति । आर्धधातुकत्वादिलाभ इत्यर्थः । लोपस्येति भावः । उभयोरप्रयोगान्नियमाप्राप्त्या "कर्तृकर्मणोः" इति षष्ठ्या न समासानुपपत्तिः । एवम-ग्रेऽपि । ज्ञापनादिति । स्थानिवत्त्वप्रवृत्तिद्वारेति भावः । अस्तिचेति । सम्भावनायामन्वयः । ननु चारितार्थ्येऽपि फलाभावात् ज्ञापकत्वासङ्गतिः, अत आह—फलन्त्विति । अत एव वरेऽजादेशो न स्था-निवदित्युक्त्यैव तत्र यलोपाल्लोपयोः प्रवृत्त्योः सिद्ध्या यलोपग्रहणवैयर्थ्ये प्राप्ते तदभावाय मूले दत्तोदा-हरणसङ्गतिस्तदाह—यातिरिति । आदिना "नधातु" इति प्रत्याख्याने 'लोलुवः' इत्यादिसङ्ग्रहः । आर्धधातुके इति विषयसप्तमीत्वेन परनिमित्तकत्वं कथमिति तु न शङ्क्यम्, वरेग्रहणेनैवात्र परसप्त-

सरला

म्यवच्छिन्नातिरिक्तत्वेन संकोचात् पदचरमावयवविधिविषयत्वावच्छिन्नातिरिक्तोयः परनिमित्ताजादेशः स

पः । न च पुनराल्लोपः शङ्क्यः, चिणोलुङ्न्यायेनाऽऽतोलोपस्यासिद्धत्वात्स्थानिवद्भावाच्च । स्वरे–चिकीर्षकः । सनोऽतो लोपो "लिति" ( पा० सू० ६।१।१९३ ) इति

शब्दरत्नम् ।

"क्तिच्क्तौ च संज्ञायाम्" ( पा० सू० ३।३।१७४ ) इत्यनेन । क्तिन् तु न, "अप्रत्य-

भैरवी ।

तो लोपस्यासिद्धत्वात्स्थानिवद्भावाच्च' इत्युक्तम् । तत्र लक्ष्यभेदेन लक्षणभेदकल्पनयाऽसिद्धत्वमाकारलोपविधायकशास्त्रस्येत्यस्तु, स्थानिवद्भावादिति तु न युक्तम्, "अभ्यासस्यासवर्णे" इत्यनेनाभ्यासकार्ये तदुत्तरखण्डादेशस्याभ्यासकार्यप्रतिबन्धकीभूतस्थानिवत्त्वन्नेति ज्ञापनेन यथा 'आरति' इत्यस्य सिद्धिर्भवति तथा प्रकृतेऽपि स्थानिवद्भावस्य निषेधः स्यादिति चेन्न, अभ्यासत्वपर्याप्त्यधिकरणस्य स्थाने कार्ये कर्तव्ये तदुत्तरखण्डादेशस्य तत्प्रतिबन्धकीभूतमित्यर्थस्य तेन ज्ञापनात् । नचैवं सति परिभाषेन्दुशेखरविरोधः, तत्र हि 'अरिप्रियात्' इत्यत्र स्थानिवत्त्वेनेयङ् भवत्येव, तस्य स्थानिवत्त्वस्याभ्यासकार्यप्रतिबन्धकत्वाभावादित्युक्तम् । अभ्यासत्वपर्याप्त्यधिकरणत्वस्य प्रवेशे तु तस्येयङोऽभ्यासत्वपर्याप्त्यधिकरणस्थानित्वं तत्र नेति निषेधाप्राप्तेः प्रतिबन्धकीभूतेत्यस्य तत्र प्रयोजनकथनासङ्गतेरिति वाच्यम्, तस्य ग्रन्थस्य वस्तुतोऽभ्याससम्बन्धिकार्ये इत्यर्थाभिप्रायकत्वात् । अभ्यासावयवादेशस्याप्यभ्याससम्बन्धित्वमित्याशयात् । वस्तुतस्तत्र प्रतिबन्धकत्वनिवेशो न कार्योऽभ्यासत्वपर्याप्त्यधिकरणत्वनिवेश एव कार्यो लाघवायेति दिक् ।

भावप्रकाशः ।

मीपक्षस्य ज्ञापनात् । यद्वा, तत्त्वेऽपि विषयतामात्रेणापि तन्निमित्तकत्वव्यवहारस्य तेन ज्ञापनात् । अतएव 'गणयति' इत्यादौ न वृद्धिः । न चैवमपि 'आरति' इत्यत्र शब्देन्दुशेखरे उक्ताभ्यासकार्ये तद-

सरला

'वृक्षव्' इत्यत्र णिलोपस्य तत्र कृते एव वलोपस्य प्राप्तेः पदचरमावयवविधिविषयत्वात् तत्र न स्थानिवत्त्वप्रवृत्तिरिति । यणः स्थानिवत्त्वादिति । अत्र इणो यणादेशस्य स्थानिवत्त्वं साक्षात्पदचरमावयवोत्वप्रतिबन्धकम् । वाक्यसंस्कारपक्षे एतत्फलम्, पदसंस्कारपक्षे तु तत्र स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावान्न स्थानिवत्त्वप्राप्तिरिति । तत्पक्षे फलं तु शब्देन्दुशेखरटिप्पणे गुरुकृते स्पष्टं तत एवावगन्तव्यम् । पयःशब्दोपपदकण्यन्तेणधातोः कर्मण्यणि इणो गमादेशे जायमानपयोगमशब्दसिद्धिः फलं तु न सम्यक्, तत्र गमादेशस्य स्थानिवत्त्वेऽपि गकारस्य आदेशत्वाभावेन तन्मात्रवृत्ति हल्त्वमादायोत्वसिद्ध्या तन्निषेधानावश्यकत्वात् । पदचरमावयवे कार्ये इति व्याख्यानं तु कर्मसाधनविधिशब्दस्वीकारेऽपि तस्य पदान्तशब्देन कर्मधारयसमासे पदचरमावयवरूपे विधेये कर्तव्ये इत्यर्थेन भवतीति गुरुचरणाः । युक्तं चैतत् द्विर्वचनादिशब्दैः कर्मधारयेन पदान्तशब्देनापि कर्मधारयसमासस्यैव युक्तत्वात् ।

अत्रेदं तत्त्वम्—साक्षात्पदचरमावयवसाधकः परम्परया पदचरमावयवसाधकः साक्षात्पदचरमावयवप्रतिबन्धकः परम्परया पदचरमावयवप्रतिबन्धकश्चेति चतुर्विधः स्थानिवद्भावः । तत्र द्वितीयं वर्जयित्वा त्रिविधस्यापि निषेधोऽनेन क्रियते, द्वितीयस्य तु न, वेतस्वानित्यत्र रुत्वशङ्कापरभाष्यप्रामाण्यादिति प्रपञ्चितं शब्देन्दुशेखरटिप्पणे । एतदुदाहरणान्यपि तत्रैव स्पष्टमुक्तानि तत एवावगन्तव्यानि विस्तरभयान्नात्रोल्लिख्यन्ते ।

वाक्यसंस्कारपक्षे इति । पदसंस्कारपक्षे 'प्रतीचः' इत्युदाहरणम् । तत्र हि "अचः" इत्यल्लोपस्य स्थानिवद्भावेन प्राप्त "इको यणचि" इति यणादेशः पदचरमावयवतया तत्र विधौ स्थानिवद्भावनिषेधान्न भवति । ज्ञापनादिति । सम्भावितधर्मस्यापि स्थानिवद्भावेनातिदेशो भवतीति ज्ञापनादित्यर्थः । फलं त्विति । पूर्वोक्तज्ञापनस्य फलं त्वित्यर्थः । सिद्धिरिति । यातेर्यङन्तात् क्तिचि अतो लोपे यलोपे उक्तरीत्या सम्भावितधर्मस्याल्लोपस्य स्थानिवद्भावेन लाभादातोलोपे यलोपे 'यातिः' इत्यस्य सिद्धिरिति भावः ।

क्कारेकारस्य उदात्तत्वे कर्तव्ये न स्थानिवत्। सवर्णानुस्वारयोः-शिण्ढि। दीर्घे-प्रति-दीव्ना। जशि-सग्धिश्च मे। अदनं ग्धिः। अदेः क्तिनि "बहुलं छन्दसि"(पा०सू०२।४।३९) इति घस्लादेशः, "घसिभसोर्हलि-" (पा०सू०६।४।१००) इत्युपधालोपः, "झलो झलि" (पा०सू०८।२।२६) इति सलोपः, घत्वम्, घस्य जशत्वम्। "सह-

## शब्दरत्नम्।

यात्" (पा० सू० ३।३।१०२) इत्यनेन बाधात्। न स्थानिवदिति। स्थानिवत्त्वे हि स्वराप्रवृत्तिरेव स्यात्। अकारस्य तु न, स्वविधौ स्थानिवत्त्वनिषेधात्। लित्वं तु 'कारकः' इत्यादौ सावकाशमिति भावः। शिण्ढीति। नन्वत्रानुस्वारस्यादिष्टादचः पूर्वत्वेन स्थानिवत्त्वाप्रवृत्तिः। न चास्मादेव ज्ञापकात्तस्याशास्त्रीयत्वेऽपि स्थानिवत्त्वेन तत्त्व-

## भैरवी।

अप्रवृत्तिरेवेति। 'चिकीर्षकः' इतीकारस्येति शेषः। मूले सवर्णानुस्वारग्रहणस्य 'शिण्ढि' इत्युदाहरणम्, तत्र शिषेर्लोटि तस्य हेर्धिः, श्नम्, अल्लोपे अनुस्वारे ष्टुत्वजश्त्वपरसवर्णेषु, "झरो झरि" इति वा डकारलोपः, इति प्रक्रिया। तत्र डकारलोपे पञ्चमीसमासेन स्थानिवत्त्वन्न, आदिष्टादचः पूर्वत्वात्पूर्वत्रासिद्धीयत्वाच्च। तत्र 'शिण्ढि' इत्युदाहरणं खण्डयितुमाशङ्कते—नन्वित्यादिना। अप्रवृत्तिरिति। अल्लोपस्य परसवर्णे कर्तव्ये स्थानि त्वाप्रवृत्तिरित्यर्थः। नकार-निष्ठमनादिष्टादचः पूर्वत्वं "स्थानिवदादेशः" इत्यनेनानुस्वारेऽतिदिष्टमस्तु, यद्यप्यनादिष्टा-दचः पूर्वत्वमशास्त्रीयं तथापि सवर्णग्रहणाज्ज्ञापकात्तदतिदेशो भविष्यति। एवञ्चातिदिष्टन्त-देवादाय परसवर्णे कर्तव्ये "अचः परस्मिन्" इति स्थानिवद्भावः स्यादित्याशङ्कां निराच-ष्टे—नचेति।

## भावप्रकाशः।

नवयवधात्ववयवादेशस्य तत्प्रतिबन्धकस्थानिवत्त्वं नेत्यर्थस्य "अभ्यासस्यासवर्णे" इत्यनेन ज्ञापि-तत्वमितिरीत्या 'यातिः' इत्यत्राप्याल्लोपरूपाभ्यासकार्ये तत्प्रतिबन्धकताद‍ृशद्वितीयाकारलोपस्थानिवत्त्वस्य निषेधापत्त्या आल्लोपयलोपयोरियानित्यादिवत्तिरिति प्रत्ययमात्रश्रवणापत्तिरिति वाच्यम्, वस्तुतोऽभ्यास-सम्बन्धिकार्यमात्रे कर्तव्येऽभ्यासस्यानवयवधातुसम्बन्धिताद‍ृशावयवस्याचोऽभ्यासानवयवकधातोर्योऽयमवयव-स्तत्तरखण्डसम्बन्ध्यभ्यासादव्यवहितपराङ्गरूपस्तस्य वा य आदेशस्तस्याभ्यासकार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति तदर्थेनादोषात्, धात्ववयवत्वस्य सामानाधिकरण्येनादेशविशेषणत्वेनादोषाच्च। धातुत्वमुत्तरखण्ड-स्यैवेति ध्वनयितुं तदनवयवेति विशेषणम्। अत एवाभ्यासकार्ये तदुत्तरखण्डादेशस्येत्यादेव परिभाषेन्दु-शेखरे उक्तम्। तस्याप्यन्य एवार्थः। यथाचास्यावश्यकत्वं तथा स्पष्टमन्यत्र। वस्तुतो 'यातिः' इत्येव फ-लम्, नतु लोलुवादीतिस्पष्टं भाष्यप्रदीपोद्द्योतव्याख्याने मत्कृते इति बोध्यं, तदाह—दिगिति। बा-धादिति। एतेन कण्डूयतेः क्तिनि 'कण्डूतिः' इति वृत्तिकारोक्तमुदाहरणमयुक्तमिति ध्वनितम्। प्रवृ-त्तिरेवेति। चिकीतीकारस्येति शेषः। तेन प्रतिबन्धादिति भावः। एवव्यावर्त्यमाह—अकारस्येति। सवर्णानुस्वारयोः—'शिण्ढि' 'शिषन्ति' इति मूले पाठः। शिषेर्लोटो हेर्धिः ततोऽल्लोपानुस्वारष्टुत्वजश्त्व-परसवर्णाः क्रमेण ततो "झरो झरि" इति वा डलोप इति प्रक्रिया। नचाल्लोपस्य पञ्चमीसमासपक्षे स्था-निवत्त्वेन हलः परत्वाभावाड्डलोपो न स्यादिति वाच्यम्, आदिष्टादचः पूर्वत्वेन तदप्रवृत्तेः 'पूर्वत्रासि-द्धीये न' इति निषेधाच्च, डलोपस्यासिद्धत्वाच्चेति भावः। अन्यथा सूत्राशयं वक्तुं 'शिण्ढि' इत्युदाहरणं खण्डयते—नन्वित्यादि। त्वाप्रवृत्तिरिति। अल्लोपस्येति शेषः। तथाच सवर्णग्रहणं व्यर्थमिति भावः। कौस्तुभादिसिद्धान्तेनाशङ्कते—नचास्मादेवेति। सवर्णपदादेवेत्यर्थः। अन्यथोक्तरीत्या तस्य वैयर्थ्यं स्प-

## सरला।

स्वराप्रवृत्तिरेवेति। प्रत्ययात्पूर्वत्वाभावादित्यर्थः। स्थानिवत्त्वनिषेधादिति। "स्वविधौ न स्थानि-वत्" इति वार्तिकादिति बोध्यम्। आदिष्टादचः पूर्वत्वेनेति। स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावेने-

स्य सः-" ( पा०सू०६।३।७८ ) इति सूत्रात् स इत्यनुवर्तमाने "समानस्य च्छन्द-

---

शब्दरत्नम् ।

म् , फलाभावात् , तद्घटितसन्निवेशापेक्षस्य ततः पूर्वत्वस्यातिदेशसहस्रेणाप्यतिदेष्टुमश-

भैरवी ।

फलाभावादिति । पूर्वसूत्रेण स्थानिवत्त्वस्य फलाभावादित्यर्थः । उत्तरसूत्रस्य प्रवृत्त्यर्थ-म्पूर्वसूत्रस्य प्रवृत्तिकल्पनं कृत्वा सवर्णपरग्रहणकरणापेक्षया "प्रक्षालनाद्धि" इति न्यायेन पूर्व-

भावप्रकाशः ।

क्यमेव । नच सवर्णदीर्घादिसङ्ग्रहाय तत् , फलाभावात् "अनुस्वारादिसाहचर्येण त्रैपादिकस्यैव ग्रहणाच्च । तदनाश्रये दीर्घग्रहणेनैव सिद्धेरेतद्वैयर्थ्यापाताच्च । यलोपादिसाहचर्येण सवर्णे कर्तव्ये इत्यर्थस्यैवौचित्याच्चेति भावः । तस्य—अनादिष्टादचः पूर्वत्वस्य । स्थानिवत्त्वेन । पूर्वसूत्रेण । तत्त्वमिति । अनादिष्टादचः पूर्वत्वमित्यर्थः । अनुस्वारस्यैति शेषः । एवञ्च प्राप्तद्वितीयस्थानिवद्भावाभावायैतत्सफलमिति भावः । नन्वेवं 'कण्डूतिः' इति न स्यात् । कण्डूयतेर्यगन्तात् क्यजन्ताद्वा क्तिच्यल्लोपयलोपयोराद्यस्य स्थानिवत्त्वेनोवङि यणिवोक्तरीत्या "अचः पर" इतिस्थानिवत्त्वादकारेण व्यवायादूठ्वलोपयोरप्राप्त्या "हलि च" इति दीर्घे 'कण्डूवूतिः' 'कण्डुवतिः' इति वाऽनिष्टरूपापत्तेरितिचेत् ? न, अत्र सूत्रे 'कण्डूतिः' इति भाष्योदाहरणाज्ज्ञापकात्तस्य स्थानिद्वारकत्वानित्यत्वकल्पनात् । एवञ्च वलोपापवादोठोभयथापि रूपसिद्धिः । अतएव 'तितउमाचष्टे तितापयति' इति हरदत्ताद्युक्तिः सङ्गच्छते । अन्यथा तत्राप्युक्तरीत्या स्थानिवत्त्वेन पुक् न स्यात् । वस्तुतस्तदनित्यत्वेऽपि तत्र नेष्यते इत्यत्र मानाभावात् तदुक्तिरयुक्तैवेति 'तितापयति' इत्येवरूपमिति बोध्यम् । यद्यपि सवर्णग्रहणेनैवानुस्वाराक्षेपः सुलभः, अन्यथैतद्वैयर्थ्यापत्तेस्तथापि तन्मात्रविषयकत्वशङ्कावारणाय तद्ग्रहणम् । अत एव सवर्णविषये सफलतां ध्वनयितुं 'शिषन्ति' इत्युक्तं मूले । बहिरङ्गासिद्धत्वं तु न, उक्तोत्तरत्वात् । एतेन सवर्णस्थान्यनुस्वारे एव कर्तव्ये स्थानिवत्त्वाभावो न केवलानुस्वारे इति नियमार्थं सवर्णग्रहणमित्यपास्तमिति मूलकौस्तुभनिष्कर्षः । अत्र मान्योक्त्या तावत्समाधत्ते—फलाभावादिति । यस्मिन् ज्ञापिते यस्य स्वस्मिन् चारितार्थ्यमन्यत्र फलं तत्तेन ज्ञाप्यमिति सिद्धान्तेनात्रान्यत्र फलाभावादित्यर्थः । नच'समाद्य'इत्यादिसिद्धिः फलम् । तत्र हि 'अद् इ य' इति स्थिते "ण्यल्लोपौ" इति पूर्वविप्रतिषेधेनोपधावृद्धेः पूर्वं णिलोपे वृद्धौ एकदेशविकृतन्यायेन प्राप्तजग्ध्यादेशाभावाय णिलोपस्य स्थानिवत्त्वमुपेयम् । तच्चोक्तार्थाङ्गीकारं विना न सम्भवति कृतवृद्धेरादित्यस्यानादिष्टादचः पूर्वत्वाभावादिति वाच्यम् । "ण्यल्लोपौ" इत्यस्य णिस्थानिकवृद्ध्यादेर्बाधकत्वेनात्राप्राप्त्या वृद्धेः परत्वेनादौ सुवचत्वात् । पूर्वोपस्थितनिमित्तकत्वादिरूपान्तरङ्गत्वेन वृद्धेरादौ दुर्वारत्वाच्च । स्थानिभूतादचःपूर्वत्वेन दृष्टो यस्तद्वृत्तिधर्मावच्छिन्नोद्देश्यकविधावित्यर्थस्य "कृदतिङ्" सूत्रे भाष्ये ध्वनितत्वेनाक्षतेश्च । एतेन नच फलाभावः, समाद्यत्यादिसिद्धेः फलत्वादितिमन्दोक्तिरपास्ता । नच लालुवादिसिद्धिः फलम्—नच "अवृत्तेपुनः" इति "संज्ञापूर्वे" इति च निर्वाहः कौस्तुभे उक्त एवेति वाच्यम्, आद्यायाः लक्ष्यासाधकतया निष्फलत्वेनानङ्गीकारात्; अन्त्याया असत्त्वाच्च इतिवाच्यम्, नधातुलोपसूत्रसत्त्वात् । वार्तिकोक्तप्रत्याख्यानं तु न भाष्याभिमतम् । एवञ्च सवर्णग्रहणं व्यर्थमेव । अतएव पूर्वत्रासिद्धे इत्यवष्टभ्य वरेयलोपस्वरदीर्घवर्जद्विर्वचनादीनि न कार्याणीति भाष्यसङ्गतिः । अन्यथा तस्याप्यावश्यकतया तदसङ्गतिः स्पष्टैव । अतएव च 'कण्डूतिः' इति यथाश्रुतभाष्योदाहरणसङ्गतिः । एतेनातएव सवर्णग्रहणं सूत्रे कृतम् । अन्यथानर्थक्यं स्पष्टमेव कौस्तुभादावुक्तमिति मन्दोक्तिर्हरितमाचष्टे इति णिचि विचि हरिल्लुनाति इत्यादौ "तोर्लि" इति कर्तव्ये प्राप्तस्थानिवद्भावाभावाय सवर्णग्रहणं, पूर्वत्रासिद्धीये इति तु न तस्य दोष इति निषेधादिति खण्डनकारोक्तिश्चापास्ता; उक्तहेतोः, परनिपातयोग्यस्य ,पूर्वनिपातकरणेन तत्सामर्थ्येन तत्साहचर्येण प्रतिपदोक्तलत्वस्यैव तत्र ग्रहणादिति भाष्याशयाच्चेति मान्यमतनिष्कर्षः । अभ्युपेत्येदम् ।

अत्र गुरुचरणाः—लोलुवादिसिद्धिः फलमस्त्येव । "नधातु" इतिप्रत्याख्यानस्य भाष्यकृतः सिद्धान्तत्वेनाभिमतत्वात् । अन्यथा प्रत्याख्याने 'मरीमृजः' इत्यादौ मृजेरजादौ सङ्क्रम इति विकल्पप्राप्तेस्तन्निषेधस्य चानुक्त्या तस्येष्टत्वानुमानेन भाष्योक्तान्यव्यवस्थितविभाषाणामप्रामाण्येन च विकल्पः

भैरवी ।

सूत्राप्रवृत्तिरेवोचितेति भावः । किञ्च यत्र ज्ञाप्यार्थस्यान्यत्र फलन्तदेव ज्ञापकम्भवति, तथात्र वक्तुमशक्यम् । नच 'समाद्य' इत्यस्य सिद्धिरेव फलम्, अत्र 'सम्-अद्-इय' इति स्थिते पूर्वविप्रतिषेधेनोपधावृद्धेः पूर्वं णिलोपे ततस्तस्य स्थानिवत्त्वेन णित्त्वबुद्ध्या वृद्धौ कृतायामेकदेशविकृतन्यायेनाद्ग्रहणेन ग्रहणाज्जग्ध्यादेशस्य प्राप्तौ "अचः परस्मिन्" इति स्थानिवत्त्वमिष्यते स चानादिष्टादचः पूर्वत्वस्यातिदेश एव घटत इति वाच्यम्, णिलोपादन्तरङ्गत्वेनोपधावृद्धेः प्रवृत्तेरनादिष्टादचः पूर्वत्वस्य सुलभत्वात् । "सन्वल्लघुनि" इतिसूत्रे प्रत्याहारग्रहणेन "वृद्धेर्लोपो बलीयान्" इति तु यत्रैकस्थानिकत्वं वृद्धिलोपयोस्तद्विषयम् । नच 'लोलुवः' इत्यत्रोवङि "पुगन्त" इति प्राप्तस्याज्निमित्तकगुणस्य "न धातुलोप" सूत्रप्रत्याख्यानपक्षे प्रतिबन्ध एव फलमस्त्विवति वाच्यम्; "न धातुलोप" इति सूत्रप्रत्याख्यानपक्षे फलसत्त्वेऽपि

भावप्रकाशः ।

स्यात् । आदाविति तु परिभाषालब्धोऽर्थः । अतएव "अचि क्ङिति" इति भाष्योक्तिः । एतेनादिग्रहणसामर्थ्यात् मुख्याजादावेव प्रवृत्तिरिति हरदत्तोक्तमपास्तम् । एवञ्च सूत्रमतेऽपि तत्कल्पनावश्यकत्वमितिगौरवम् । अन्यथा फलभेदः स्पष्टएव । नच-उवङि अनादिष्टादचः पूर्वत्वाभावेऽपि ततः पूर्वत्वेन दृष्टलोल्शब्दात् परस्य गुणे कर्तव्ये तत्प्रतिबन्धायाल्लोपस्य पञ्चमीसमासेन प्राप्तस्थानिवद्भावसौकर्येण नोपधागुणः; निमित्तत्वेनाश्रितात्पूर्वस्मादिति कैयटाद्युक्तार्थे तु न मानम्, 'हेगौरि' इत्याद्यतिप्रसङ्गस्य पञ्चमीसमासानित्यत्वेनैव वारणात् । भाष्यानुक्त्या तदनित्यत्वाभावेऽपि पूर्वस्मात्परस्याव्यवहितस्यैव ग्रहणात् । अचः पूर्वत्वांशे स्वरग्रहणाद्भाष्यप्रामाण्याच्चाव्यवधानांशबाधेऽप्यत्र तद्बाधे मानाभावात् । उक्तार्थस्य शब्दमर्यादया लाभाच्चेत्युद्द्योतोक्तरीत्या निर्वाह इति वाच्यम्, पक्षे दोषध्रौव्यात् तस्य लक्ष्यविशेषपरत्वाच्च । यत्तु ईदृशरीत्या पञ्चमीसमासेन तत्त्वस्य भाष्ये क्वाप्यनाश्रयणादुद्द्योतश्चिन्त्य इति । तन्न, अत्राप्यकारलोपे कृते तस्य स्थानिवद्भावाद् गुणवृद्धी न भविष्यत इति "नधातुलोप" इति सूत्रभाष्ये एवाश्रयणात् । नचैवमप्युद्द्योतविरोधः तस्य पञ्चमीसमासस्य लक्ष्यसामान्यपरत्वाभिप्रायकत्वात् । नचैवं तत्पक्षे 'वैयाकरणः' इत्यादौ अनादिष्टादच इकारात्पूर्वत्वेन दृष्टवकारादेरव्यवहितपरस्यैकारादेरुक्तरीत्या आयादेशाद्यापत्तिः । यत्तु 'भूयास्ताम्' इत्यादावार्धधातुकत्वस्येवात्रैज्विशिष्टे एवादेशत्वं "यदागमा" इति न्यायेन; तथाच न तेन तदापत्तिरिति । तन्न, तन्न्याये तद्ग्रहणशब्देन संज्ञाभूतशब्दस्य शास्त्रोपात्तस्यैव ग्रहणात् । अन्यथा अतिप्रसङ्गापत्तेः । किञ्च ऐजागमत्वेऽपि अवयवत्वे मानाभावात् "अनुनासिकात्पर" इति विहितानुस्वारवत् । न च परादिशब्देन विधानादेव तत्त्वम्, तस्य तत्त्वेन बोधकत्वाप्रसिद्धेः प्रत्ययादीनामपि तत्त्वापत्तेश्च । अत एवादेशनिमित्तापेक्षया पूर्वत्वपक्षे 'वैयाकरणः' इत्यादौ दोषमाशङ्क्य "अचः पूर्वत्वविज्ञानादैचोः सिद्धम्" इति समाहितम् "अचः परस्मिन्" "नय्वाभ्याम्" इति सूत्रभाष्ययोः । अन्यथा शङ्काया एवानुदयापत्तेरज्ञानतस्तदुदयेऽपि त्वद्रीत्या तयोरपि पक्षयोरदुष्टतया तदनुक्त्वा पक्षान्तराश्रयणेनैव सिद्धान्तकथनस्यासङ्गत्यापत्तेः । एतेन पूर्वौ पूर्वावयवौ, अभक्तत्वे हि इञ्चाजश्च यजन्तस्मादणन्ताच्छो न स्यात्, प्रातिपदिकस्यावृद्धत्वादिति हरदत्तोक्तमपास्तम्, उक्तभाष्यविरोधापत्तेः । इमामेवारुचिं ध्वनयितुं शब्देन्दुशेखरे तत्र हरदत्त इति लिखितम् । अत एव तथा प्रयोगानुच्चारणं तत्रेति तदभाव एवेति दृष्टान्तदार्ष्टान्तिकयोर्महद्वैषम्यमिति दिगिति वाच्यम्, ऐज्विधिसामर्थ्येन तदभावकल्पनात् अवध्यवधिमतोः साजात्येन पञ्चमीसमासस्य 'वेभिदिता' इत्याद्युदाहरणपरभाष्यप्रामाण्येन च ततः पूर्वत्वेन दृष्टस्य साच्कस्यैव ग्रहणाच्च । अत्र च लावयतेर्लौरित्यादेः कौलुसमिति लक्ष्यत्वस्याकृत्वा वृद्ध्यावादेशौ णिलोपः कार्यः । ततः प्रत्ययलक्षणेन वृद्धिरिति खण्डनपरभाष्यमपि मानम् । "षत्वतुकोः" इति ज्ञापकादतरङ्गत्वमनित्यम् । एवञ्च नित्यत्वाण्णिलोपः । वृद्धिस्तु अकृते णिलोपे उपदेशेन कृतत्वातिदेशेनेत्यनित्या । वार्तिकप्राप्तिस्तूक्तरीत्या नेति तस्याशयः । कैयटस्य तु प्रमाद एवेति स्पष्टमुद्द्योते । अन्यथोक्तरीत्या ततः पूर्वस्माल्लशब्दादव्यवहितपरौकारस्यावादेशरूपकार्यसत्त्वेन तदावश्यकत्वे तदसङ्गतिः स्पष्टैव । 'प्रलौः' इत्यादौ तु पूर्वं धातुः साधनेनेति सिद्धान्तादनादिष्टादचः पूर्वत्वाभावः । एवं वैयाकरणः

शब्दरत्नम् ।

क्यत्वाच्च, "भोभगो" ( पा० सू० ८।३।१७ ) इति सूत्रस्थभाष्यरीत्या तस्य स्थानिभूताल्वृत्तिधर्मत्वेन "अनल्विधौ" इति निषेधाच्च, विशेषणतयाऽलाश्रयणाच्च ।

भैरवी ।

सूत्रकारमते फलाभावात् । अत एव "पूर्वत्रासिद्धे न स्थानिवत्" इत्यवष्टभ्य सवर्णग्रहणप्रत्याख्यानपरभाष्यस्य सङ्गतिः । अन्यथोक्तार्थज्ञापकतयैव सवर्णग्रहणस्यावश्यकतया "वरे यलोपस्वरवर्जं द्विर्वचनादीनि न वक्तव्यानि" इति भाष्यं न सङ्गच्छेत ।

तद्घटितेति । अकारयुक्तो नकार इत्येवमानुपूर्वीघटितेत्यर्थः । अशक्यत्वादिति । नचाविद्यमानस्यैव धर्मस्यातिदेशो भवतीति तस्यातिदेशो भविष्यतीति वाच्यम्, तस्यानुपूर्वीरूपतया कार्यातिदेशस्याद्यसूत्रेण करणेऽपि रूपानतिदेशात् । स्थानिभूताल्वृत्तीति । नकारवृत्तीत्यर्थः । नन्वसाधारण्यनिवेशवादिमूलकृन्मते नायमल्वृत्तिधर्मोऽत आह—विशेषणतयेति । अज्रू-

भावप्रकाशः ।

'सुद्यौः' इत्यादावपि, अन्त्ये ततोऽव्यवहितपरत्वाभावश्चेति बोध्यम् । एतेनैज्विधेरुत्तरत्रसाफल्येन तत्सामर्थ्याच्चसिद्धिरित्युक्तेत्यपास्तम् । किञ्च "द्वारादीनां च" "श्वादेरिञि" इत्युभयविषये साफल्येऽपि "नय्वाभ्याम्" इत्यादि सूत्रचतुष्टयविषयेऽश्रवणेन वैयर्थ्यमेवेत्याशयात् । "भूयसा व्यपदेशः" इति न्यायात् । अतएवोद्द्योतादौ आद्यहेतुरेवोक्तः । 'द्यूः' इत्यत्रोक्तरीत्या दस्य साच्कत्वाभावेन ततो व्यवहितस्य कार्याभावेन च स्थानिवद्भावस्यैवाप्रवृत्त्या न दोषः । कण्डूतिरित्यत्रापि न दोषः । ततः पूर्वत्वेन दृष्टत्वस्य डान्ते सत्त्वेऽपि वकारस्योकारेण व्यवहितत्वात्तदप्राप्तेः । पूर्वस्यैव परस्यापि अनुपदोक्तरीत्या साच्कस्यैव ग्रहणेन यणादेशपक्षेऽपि न दोषः । एतेन पक्षद्वयेऽपि तत्प्रयोगासिद्धिः । तत्त्वेन दृष्टादुकारान्ताद्धलन्ताद्वा पराव्यवहितवस्योठि तदापत्तेरित्यपास्तम्, उक्तहेतोः । अतिदेशदृष्ट्या दीर्घस्यासिद्धत्वेन ह्रस्वोकारान्तत्वेऽपि तस्य ततः पूर्वत्वाभावाच्च । तस्मादुद्द्योतोक्तपक्षोऽपि सम्यगेवेति न तद्विरोधः किञ्च प्राचामनुरोधेन तथोक्तत्वात् । एवञ्च प्रत्याख्यानस्य युक्तत्वे लोलुवादिसिद्धिः फलमिति युक्तमित्याहुः । तन्मते पूर्वहेतोरयुक्तत्वादाह—तद्घटितेति । अकारयुत न इत्येवमानुपूर्वीसापेक्षस्येत्यर्थः । अतिदेशेति । ईदृशातिदेशेत्यर्थः अस्य कार्यातिदेशत्वेन रूपानतिदेशात् । तस्यानुपूर्वीरूपत्वात्, तस्याः स्वरूपरूपत्वात् समुदायस्यास्थानित्वाच्च । एतेन वचनात् किं किं न भवतीत्यतिदेशसद्भावेनेत्ययुक्तमित्यपास्तम् । अपिः कैमुतिकन्यायसूचकः । ननु मास्तु तदतिदेशः, उक्तयुक्तेः; किन्तु तदुपजीव्यकाचः परेति स्थानिवद्भावे कार्ये पूर्वसूत्रप्रवृत्तिः "अचः परः" इति स्थानिवद्भावस्तेनातिदिश्यते इति फलितोऽर्थः । एवञ्चाशास्त्रीयत्वशङ्कापि न, यथा तासौ नित्यानिट्त्वादीनामप्यतिदेशापत्तिः स्यात् । स्पष्टं चेदं कौस्तुभादौ;—इति चेत् ? न, ईदृशकार्यातिदेशस्य भाष्यासम्मतत्वात् । निमित्तरूपकार्यस्यैव तत्र ग्रहणात् । अत एव "स्थान्यल्विधिप्रतिषेधे कुरुवधपिबां प्रतिषेधो वक्तव्यः" इत्येतदुपपादनावसरे "स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वादि, तत्र लघूपधगुणादिः प्राप्नोति" इति भाष्यं सङ्गच्छते । किञ्चानया रीत्या तासौ नित्यानिट्त्वापेक्षेऽण्निषेधेऽप्यतिदेशप्रवृत्त्या घट्टकुटीप्रभातन्यायापत्तेः । एतेन यत्तु 'शिणूढि' इति 'इत्यादिविस्तरः' इत्यन्तमनूद्योक्तरूपाः कौस्तुभोक्तफक्किका एवं संलिख्य एतेन तद्घटितेत्याद्यशक्यत्वादित्यन्तमप्यपास्तम्, स्थानिवदिति कार्यातिदेशात्, अन्यथा तदानर्थक्यमेवेति मन्दोक्तिरपास्ता । नन्वचः पूर्वत्वं नामाजवधिकत्वविशिष्टं पूर्वत्वम्, तत्वज्विशिष्टं तत्त्वम् । अत एव तन्नानुपूर्वीरूपं किन्तु अतिरिक्तो धर्मस्तस्य चातिदेशः सुलभ एवेत्यत आह—भोभगो इति । रीत्येति । सा च प्रागुक्ता, वक्ष्यते च । तस्य—तादृशपूर्वत्वस्य । अल्वृत्तीति । नकारवृत्तीत्यर्थः । एतेनान्धपरम्परया कौस्तुभोक्तरीत्या साधारणत्वनिवेशेन दूषयन्मन्दः प्रत्युक्तः, भाष्यरीतेरज्ञानात् । ननु मूलकृन्मते नायमल्विधिरत आह—विशेषणेति । अज्रूपस्यालो विशे-

सरला ।

त्यर्थः । भाष्यरीत्येति । तत्सूत्रस्थभाष्यरीत्या अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्तताके कार्ये कर्तव्ये स्थानिवद्भावो न भवतीत्यनल्विधावित्यस्यार्थेन लोपस्याल्त्वव्याप्यास्त्वावच्छिन्नस्थानिताकत्वेन तन्निषेधादित्यर्थः । यथा चैतत्तत्स्थानिवत्सूत्रे निरूपितम् । विशेषणतयेति । स्थानिसम्ब-

शब्दरत्नम् ।

भाष्ये "पूर्वत्रासिद्धे" इत्यवष्टभ्य बरे-यलोप-स्वर-भिन्नानां द्विर्वचनादीनां ग्रहणस्यात्र प्रत्याख्यानेन तस्य च णत्वे प्रतिप्रसवेनात्र स्थानिवत्त्वेन परसवर्णाभावस्यैव लाभादिदमुदाहरणं चिन्त्यम् । णत्वग्रहणे च प्रतिप्रसववार्तिके लक्षणप्रतिपदोक्तपरिभाषा नेत्युपपादयिष्यते । किं च "दीर्घादाचार्याणाम्" (पा०सू०८।४।५२) इत्युत्तरम् "अनुस्वारस्य यचि" (पा०सू० ८।४।५८) "वा पदान्तस्य" (पा०सू०८।४।५९) "तोर्लि" (पा० सू० ८।४।६०) "उदस्था" (पा० सू० ८।४।६१) "झयो हो-"(पा० सू० ८।४।६२) "शश्छोऽटि" (पा० सू० ८।४।६३) इति षट्सूत्रीपाठोत्तरं "झलां जश्

भैरवी ।

पस्यालो विशेषणत्वादिति भावः। पूर्वोक्तं सर्वमत्र सवर्णादेशपक्षे। वस्तुतोऽत्र तस्याभावेन णकारोऽयुक्त इत्याशयेनाह—भाष्य इति। प्रतिप्रसवेनेति। "तस्य दोषः" इति वचनेनेति शेषः। स्थानिवत्त्वेनेति। स्थानिद्वारकमनादिष्टादचः पूर्वत्वमाश्रित्य भवत्सम्मतस्थानिवत्त्वेनेत्यर्थः। ननु प्रतिपदोक्तणत्वस्य प्रतिप्रसवसूचकवार्तिके ग्रहणमत आह—णत्वग्रहण इति। उपपादयिष्यत इति। अष्टन्शब्द इति शेषः। णग्रहणस्य "अपदान्तस्य मूर्द्धन्यः" इति सूत्रान्मूर्द्धन्यपदानुवृत्तिं कृत्वा प्रत्याख्यानेन प्रतिपदोक्तस्य णत्वस्याभावेन लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिरेव। एवञ्च 'शिण्ढि' इति न सवर्णानुस्वारयोरुदाहरणम्, किन्तु अनुस्वारग्रहणस्यैव। आद्यसूत्रेणाभ्युपेत्यानादिष्टादचः पूर्वत्वं शिण्ढीत्येतत्परसवर्णग्रहणोदाहरणं न, एतत्साधयति-किञ्चेति। इदम्पाठव्यत्यासप्रदर्शनं जश्त्वस्यासिद्धत्वप्रदर्शनाय, नतु लोपस्यासिद्धत्वप्रदर्शनाय, व्यत्यासाभावेऽपि लोपस्यासिद्धत्वसम्भवात्। पाठव्यत्यासपक्षे शिण्ढीत्यत्र प्रक्रिया त्वि-

भावप्रकाशः ।

षणत्वेनाश्रयणाच्चेत्यर्थः तथाच पूर्वसूत्राप्राप्त्या तत्त्वाभावेन "अचः पर" इत्यस्याप्राप्त्या सवर्णग्रहणं व्यर्थमिति युक्तमेवेति भावः। इदञ्चात्र सवर्णादेशमभिप्रेत्य। वस्तुतोऽत्र तस्यैवाभावेन णस्य पाठोऽयुक्तः, किन्त्वनुस्वारस्यैवेति नैतद्धृदयाभिप्राया सूत्रकृतः सवर्णपदोक्तिरित्याह—भाष्य इति। प्रत्याख्यानेनेति। अवष्टम्भोऽत्र स्वीकारः। स्वरेति। मूलरीत्येदम्। सिद्धान्ते तु दीर्घोऽप्युपलक्ष्यत्वेनात्र बोध्यः। अत्र—सूत्रे। तेनैव सिद्धिरिति शङ्कामपाकरोति—तस्य चेति। चस्त्वर्थे। प्रतिप्रसव इति। "तस्य दोषःसंयोगादि" इति वचनेनेत्यर्थः। नात्र—'शिण्ढि' इत्यत्र। स्थानिवत्त्वेनेति। कौस्तुभाद्युक्तरीत्या ततः पूर्वस्माच्छिइत्यस्माद्व्यवहितपरस्य व्यपदेशिवद्भावेन साच्कत्वमित्युद्द्योतोक्तरीत्या वा तस्य परसवर्णे स्थानिवत्त्वेन व्यवधानादित्यर्थः। एतेन सवर्णग्रहणसामर्थ्यादल्विधावपि स्थानिवद्भाव इत्यपास्तम्। ननु वार्तिके प्रतिपदोक्तणत्वग्रहणेनात्र निषेध एव, अत आह—णत्वेति। तदंश इत्यर्थः। लत्वांशे तु साऽस्त्येवेत्युक्तम्। अत एवैतदुक्तिः सफलेति भावः। उपपादेति। अष्टन्शब्द इति शेषः। "अपदान्तस्य मूर्धन्यः" इत्यनुवृत्त्या णादेः खण्डनेन सर्वस्य लाक्षणिकत्वमेव। णत्वग्रहणं मास्त्विति कौस्तुभमतेऽन्तरङ्गपरिभाषया तदभाव इति भावः। एतेन तत्र णत्वग्रहणप्रत्याख्यानेन परसवर्णप्रवृत्त्या 'शिण्ढि' इति रूपसिद्धिरिति मन्दोक्तमपास्तम्। ननु कौस्तुभाद्युक्तरीत्योः खण्डितत्वेन सवर्णस्यैव लाभोऽत आह—किञ्चेति। दीर्घादिति। इदञ्च जश्त्वासिद्धत्वाय, नतु लोपस्य; तस्य सर्वथा तत्त्वात्। 'शिनष् हि' इत्यत्र श्नल्लोपानुस्वारष्टुत्वानि प्रागुक्तानि। ततो लोपपरसवर्णयोर-

सरला ।

ल्पवृत्तिः- अल्पमात्रवृत्तिर्धर्मः अच्त्वं, तद्घटितत्वेन स्थानिभूतादचः पूर्वत्वधर्मस्य, तन्निमित्तके विधौ नेत्यर्थेऽपि तेन निषेधादिति भावः। उपपादयिष्यते इति। अष्टन्शब्दे इति शेषः। तत्र हि "रषाभ्यां नो णः" इति सूत्रे "अपदान्तस्य मूर्धन्यः" इत्यतोऽपदान्तस्येत्यनुवर्त्य णग्रहणं "पदान्तस्य" इति सूत्रं च प्रत्याख्यातम्। तदेकवाक्यतयाऽऽरम्भपक्षेऽपि तदनित्यतया णत्वांशे प्रतिपदोक्तपरिभाषाया अप्रवृत्तिरित्यु-

## शब्दरत्नम् ।

झशि" ( पा०सू०८।४।५३ ) "अभ्यासे चर्च" ( पा० सू० ।८।४।५४ ) "खरि च" ( पा० सू० ८।४।५५ ) "वा ऽवसाने" ( पा० सू० ८।४।५६ ) "अणोऽप्रगृह्यस्य" ( पा० सू०८।४।५७ ) इति पञ्चसूत्र्याः पाठ इति भाष्यसम्मताष्टाध्यायीपाठपक्षे परसवर्णदृष्ट्या "झलां जश् झशि" । (पा० सू० ८।४।५३ ) इत्यस्य "झरो झरि" (पा० सू० ८।४।६५) इत्यस्य चासिद्धत्वेन यय्परत्वाभावात्तदप्राप्तेरिति चेत्? सत्यम्, पादयतेः क्विपि 'पाद्धसति' इत्यादौ "झयो हः—" इति पूर्वसवर्णे पञ्चमीसमासेन प्राप्तस्थानिवद्भाववारणार्थत्वात् । हरितशब्दादाचक्षाणण्यन्तात् क्विपि हरिद्धसतीत्यादौ उक्तरीत्या प्राप्तस्य तस्य वारणार्थत्वाच्च । अत्राल्लोपस्यापि तत्प्राप्त्या क्वौ लुप्तमित्यस्य विषय एव न । हरिन्नमतीत्यादौ अनुनासिके तद्व्यावृत्त्यर्थत्वाच्च । "हयवरट्" सूत्र-

## भैरवी ।

त्यम्बाख्या—शिनष् धि इत्यत्राल्लोपानुस्वारष्टुत्वानि, अस्यामवस्थायामनुस्वारस्य यय्परत्वाभावादप्राप्तिः परसवर्णस्यस्य, एवं लोपस्यापि सवर्णपरत्वाभावादप्राप्तिः, किन्तु जश्त्वम् तस्य जश्त्वस्यासिद्धत्वात्परसवर्णाप्राप्तिरिति भावः ।

सवर्णे इति । कर्तव्ये इति शेषः । प्राप्तस्थानिवद्भावेति । "क्वौ लुप्तञ्च स्थानिवत्" इति तु काचित्कमित्याशयः । ननु "क्वौ लुप्तम्" इत्यस्यासार्वत्रिकत्वेऽपि तेन निषेधेनास्यरूपस्य सिद्धेनैतदसाधारणं सवर्णग्रहणोदाहरणमत आह-हरितेति । 'हरिद्धसति' इत्यत्र । ननु 'हरिद्धसति' इत्यपि पञ्चमीसमासस्यानाश्रयणपक्षे सुवचमत आह—हरिन्नमतीति । भाष्य-

## भावप्रकाशः ।

प्राप्त्या जश्त्वम् । ततस्तस्यासिद्धत्वात् परसवर्णाप्राप्तिरिति भावः । ननु डलोपे सिद्धश्रूयमाणढं मत्वा तत्प्राप्तिरेवात आह—झर इति । न चैवं डं मत्वा स्यादिति वाच्यम्, उक्तोत्तरत्वादिति भावः । यत्तु "प्रत्ययः" "परश्च" इति ज्ञापकात् "न मुने" इति योगविभागाद्वा परसवर्णग्रहणाद्वा "पूर्वत्रासिद्धम्" इत्यस्यानित्यत्वेन यय्परत्वमिति मन्दः । तन्न, ज्ञापकस्य विशेषापेक्षत्वात्, योगविभागस्याप्रामाणिकत्वात्, परसवर्णग्रहणाभावात्, सूत्रमते सवर्णपदस्य वक्ष्यमाणरीत्या चारितार्थ्याच्चेति दिक् । क्विपीति । "क्वौ लुप्तम्" इति तु क्वाचित्कमिति भावः । सवर्ण इति । कर्तव्ये इति शेषः एवमग्रेऽपि । ननु तस्य काचित्कत्वेऽपि "येन विधिः" इति सूत्रभाष्ये पादयतेः पाद् पद इति लक्ष्यस्योक्त्या तद्विषयत्वस्य वाच्यत्वेन तेनात्र सिद्धिरत आह—हरितेति । आद्ये ऽरुचिं सूचयन्नाह—अत्रेति । अपिर्णिलोपसमुच्चायकः । ननु पञ्चमीसमासस्य प्रत्याख्याने नियतविषयत्वे वा नैतत्फलं तस्य । किञ्च सवर्णस्यैव सूत्रे तेन ग्रहणञ्च पूर्वसवर्णादेरत आह—हरिन्नमतीति । प्रक्रिया तु सैव । तद्व्यावृत्त्यर्थत्वादिति । षष्ठीसमासेन प्राप्त-

## सरला ।

कमिति बोध्यम् । पञ्चमीसमासेनेति । अल्लोपस्य स्थानिभूतादचो लुप्ताकारात्पूर्वत्वेन दृष्टस्याकारात्परस्य हकारस्य पूर्वसवर्णे धकारादेशे कर्तव्ये प्राप्तस्य स्थानिवद्भावस्य निषेधार्थं सवर्णग्रहणस्यावश्यकत्वमित्यर्थः । "क्वौ लुप्तं न स्थानिवत्" इति वार्तिकेनैव तत्सिद्धिरित्यरुचेराह—हरितशब्दादिति । विषयएव नेति । ननु "क्वौ लुप्तम्" इत्यस्य विषयत्वाभावेऽपि 'हरित्–हसति' इति स्थिते पूर्वसवर्णस्याऽसिद्धत्वात्पूर्वं "झलां जशोऽन्ते" इत्यनेन जश्त्वेन दकारे तस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात्स्थानिवत्त्वाप्राप्त्या नेदं सवर्णग्रहणस्य फलं भवितुमर्हतीति चेत्? आचक्षाणण्यन्तात्क्विपि निष्पन्नस्य हरिद्शब्दस्य अशब्देन समासे हरिदशब्दात्पुनर्णिचि ततः क्विपि णिलोपाल्लोपयोः 'हरिद्–हसति' इत्यस्योपलक्षणीयत्वात् । वस्तुतस्तु तदपि नोदाहरणं पञ्चमीसमासस्यानित्यत्वेनैव स्थानिवद्भाववारणसम्भवात् । अत एवारुचेराह—हरिन्नमतीत्यादाविति । नन्विदमपि उदाहरणं सवर्णग्रहस्य भाष्यकृन्मते एव सम्भवति नतु सूत्र-

स्यमूर्द्धप्रभृत्युदर्केषु" इति सूत्रेण सः। चरि—जक्षतुः॥

संयोगान्तस्य (पा०सू०८।२।२३)। तदन्तस्येति। अलोऽन्त्यपरिभाषयेति

शब्दरत्नम्।

भाष्यरीत्या तत्र सवर्णग्रहणापकर्षेण तस्यापि सवर्णविधित्वादित्यन्यत्र विस्तरः। सूत्रेण स इति। "सग्धिः स्त्रीसहभोजनम्" इत्यमरात्सहस्य सादेश इति प्रतीयते। "झलो झलि" (पा०सू०८।२।२६) इति सिच एव लोप इति पक्षे छान्दसो वर्णलोपो बोध्यः। स्पष्टञ्चेदं "घि च" (पा०सू०८।२।२५) इति सूत्रे भाष्ये। लोके तु सग्धिरित्यसाध्वे-वेति बोध्यम्।

भैरवी।

रीत्येति। तत्र हि—'स्वर्नयति' 'प्रातर्नयति' इत्यादौ "यरोऽनुनासिके" इति। रेफस्य स्थानेऽनुनासिकादेशवारणाय वार्तिककृता "रेफस्यानुनासिकपरसवर्णद्विर्वचनप्रतिषेधो वक्तव्यः" इति कथितं तत्प्रत्याख्यानाय "यरोऽनुनासिके" इति सूत्रे "अनुस्वारस्य ययि" इति सूत्रात्सवर्ण-ग्रहणस्यापकर्षो दर्शितः। नच 'हरिन्नमति' इत्येतदपि पदान्तविधिम्प्रति न स्थानिवदित्य-नेनसिद्धमिति वाच्यम्, पदचरमावयवे कर्तव्ये परपदस्थाजादेशो न स्थानिवदिति सिद्धान्ते तस्याप्रवृत्तेः। अन्यत्र—'चतुर्मुखः' इत्यस्य साधनावसरे। स्त्रीति। इदं—पूर्वान्वयि। नचैवं सति मूलासङ्गतिरिति वाच्यम्; वृत्त्यनुरोधेनैवं कथनात्। वस्तुतस्तु समाना जग्धिः सग्धि-रित्यत्र सहशब्दस्यैव सादेशः। समानशब्दस्य विग्रहवाक्ये प्रयोगस्तु सहार्थस्य सम्प्रत्यय-प्रदर्शनाय। रूढश्चायं शब्द इति "सहस्य सः संज्ञायाम्" इति सादेशः। छान्दस इति। नचैवं सत्यमरग्रन्थे कथमस्य प्रयोग इति वाच्यम्, अस्य छान्दसानुकरणत्वात्॥

भावप्रकाशः।

स्थानिवद्भावव्यावृत्यर्थत्वादित्यर्थः पदसंज्ञायां स्थानिवद्भावस्तु न, अपूर्वविधित्वात्। सावपि पदमिति पक्षे "नपदान्त" इतिनिषेधात्। अनुनासिके पदान्तविधौ नेति निषेधो न, सिद्धान्ते तदप्रवृत्तेः। एतेन—पूर्वत्रासिद्धीयेनेत्यनेन 'वेतस्वान्' इत्याद्यसिद्धयापत्तेर्वारणाय स्वीकृतसप्तमीसमासपरभाष्यप्रामाण्येन तत्र पदान्तविध्यन्यविधेर्ग्रहणवत् पदान्तान्यजशो जश्पदेन ग्रहणवच्च पदान्तान्यसवर्णस्यैव सवर्णपदे ग्रहणमिति 'पाद्धसति' इत्येवलक्ष्यं सत्यभिधाने। तदभावे तु चिन्त्यफलं सवर्णग्रहणमित्युक्तिः, त्रिपाद्या असिद्धत्वेन स्थानिवत्त्वाप्रवृत्या निषेधायोगेन पाद्धसतीत्यादि लक्ष्यासङ्गतिरन्यथासिद्धेति मन्दोक्तिश्चापास्ता, उक्तयुक्तेः, तदा निषेधसत्त्वाच्च, 'शिण्ढि' इत्यस्याप्यसङ्गत्यापत्तेश्च। सवर्णग्रहणेन पूर्वत्रासिद्धीयेनेत्यस्यानित्यत्वेन निर्वाहस्तु ममापि सम इति दिक्। ननु अनुनासिकविधेः कथं सवर्णवि-धित्वमत आह—हयेति। इयं रीतिरनुपदमेव स्फुटीभविष्यति। तत्र—"यरोऽनु" इति सूत्रे। सवर्णेति। "अनुस्वारस्य ययि" इत्युत्तरसूत्रादेकदेशेत्यादिः। तत्फलं चतुर्मुखादिव्यावृत्तिः। सप्तम्यन्तपाठस्तु भाष्ये दूषित एव; तदाह—अन्यत्रेति। उद्योतादावित्यर्थः। स्त्रीति पूर्वान्वयि। प्रतीयते इति। वेदभाष्यतोऽप्येवम्। एवञ्च "सहस्य सः" इति सः। संज्ञा चेयं सम्मिल्य भोजनस्य। मूलं तु वृत्यनुसारेणेति भावः। इदञ्चानुकरणम्। अतोऽत्र कथमस्य प्रयोग इति न शङ्क्यम्। छान्दस इति। अत एव "बहुलं

सरला।

कारमते तन्मते "यरोऽनुनासिके" इति सूत्रे सवर्णग्रहणाभावात् सवर्णग्रहणापकर्षस्य च भाष्यकृतैवोक्तत्वा-दिति चेत्? सूत्रकारमते तादृशहरित्शब्दात् लुनातिशब्दे परे हरित् लुनाति इत्यत्र "तोर्लि" इति प्राप्तसव-र्णस्य निषेधाय सवर्णग्रहणस्य फलसम्भवादिति।

असाध्वेवेतीति। अमरप्रयोगस्तु छान्दसप्रयोगानुकरणमिति न तद्विरोधः। वस्तुतस्तु 'सघ हिंसा-याम्' इत्यस्मात् क्तिनि 'सग्धिः' इति लोकेऽपि प्रयोगसिद्धिरिति "घि च" इति सूत्रे भाष्ये स्पष्टम्। धातू-नामनेकार्थत्वाच्चार्थासङ्गतिरिति बोध्यम्।

भाव: । यद्यपि विशेषणेन तदन्तविधिलाभात् संयोगस्येत्येव सूत्रयितुमुचितं तथा-
ऽपि प्रत्येकं संयोगसञ्ज्ञेति पक्षे दृषत्करोतीत्यादौ लोपं वारयितुं संयोगावन्तौ यस्ये-
ति द्विवचनान्तेन समासलाभार्थमन्तग्रहणम्। वृत्तौ हि उपसर्जनानामेकत्वसंख्यौत्स-

शब्दरत्नम् ।

विशेषणेन । पदस्येत्यधिकारप्राप्तविशेषणेन संयोगस्येत्यनेन । एकत्वसंख्येति । अभेदै-

भैरवी ।

प्राप्तविशेषणेनेति। प्राप्तस्य विशेषणेनेत्यर्थः। नन्वेकत्वसङ्ख्येत्यस्य द्विवचनान्तेनापि समासे
एकत्वमेव भासत इत्यर्थः, उत एकवचनान्तेनैव समासः, सङ्ख्या तु सैव भासत इति; अथवा
दृम्फडादिभ्य इवात्सर्गिकैकवचनान्तेन साधुत्वार्थमुत्पन्नैकवचनान्तेनव समास इत्यर्थ इति ?
नाद्यः, "द्व्येकयोर्द्विवचनैकवचने" इति सूत्रेण द्वित्वविवक्षायामेव द्विवचनस्य विधानेन तस्य-
विवक्षाऽपि; तस्य तु न भानमिति न सम्भवति, वदतो व्याघातात्, गौणी मुख्या वोत्तरा
सङ्ख्या पूर्वसंख्यामबाधत इति सिद्धान्तविरोधापत्तेश्च । अत एवैक एवाकार इति पक्षे घटि-
क इत्यत्र द्व्यज्लक्षणष्ठन्न स्यादिति शङ्कायामावृत्तिः कृता द्व्यज्व्यपदेशादिति भाष्यकृतोक्तम् ।
न द्वितीयः, "ईदूदेद्" इति सूत्रभाष्ये कुमार्योरगारमिति विगृह्य कुमार्यगारमिति समासप्र-
दर्शनविरोधापत्तेः । अत एव न तृतीयः, उदक्षरत्वापत्तेश्च, इत्यत आह—अभेदैकत्वेति । अभेद-
लक्षणा एकत्वसंख्येति तदर्थः । अभेदो-भेदाभावः । उपसर्जनपदार्थतावच्छेदकधर्मावच्छिन्नप्र-
तियोगिताकाभावः । एतेन यत्र भेदभानन्तत्रापेक्षाबुद्धिसत्त्वेन तत्समानाधिकरणद्वित्वादि-
भानम्, वृत्तौ तु तस्याभानेन द्वित्वादेर्न भानम्, एकत्वमपि प्रसिद्धं न भासते, समुदायस्यै-
कार्थीभावविवक्षया साधुत्वस्य समासविधायकशास्त्रैर्बोधनेन तत्रोपसर्जनपदार्थतावच्छेदकरूपे-

भावप्रकाशः ।

छन्दसि" इति मूले उक्तम् । अन्यथा स्वतन्त्रधातुना सिद्ध्या तत्कथनासङ्गतिः । उपधादिलोपार्थं तस्या-
वश्यकत्वमिति तत्त्वम्। वर्णपदेनान्यार्थं तस्यावश्यकत्वमिति ध्वनितम् । नन्वमरप्रामाण्यात्स्वतन्त्रधातोरेव
बाहुलकात् क्तिनि पृषोदरादित्वात्सलोपे लोकेऽपि साधुरिति चेन्न, तत्पक्षे 'सन्धिः' इत्यस्यासिद्धिमाशङ्क्य
नैतत् नसे रूपं किन्तु सधेरिति समाधाय छान्दसो वर्णलोपो वेत्यन्यसमाध्युक्तिपरभाष्यप्रामाण्येन लोकेऽ-
नभिधानप्रतीतेः । तदाह—स्पष्टमिति । अत एवाह—लोकेत्विति ।

प्राप्तेति । प्राप्तस्य विशेषणेनेत्यर्थः । नन्वेकत्वसङ्ख्येत्यादेर्द्विवचनाद्यन्तेनापि समासे प्राय एकत्व-
सङ्ख्यैव भासत इत्यर्थः उत एकवचनान्तेनैव समासात् सैव प्रायो भासते इत्यर्थः उताव्ययादिवदौत्स-
र्गिकैकवचनान्तेनैव समासेन सङ्ख्यानवगम इत्यर्थः ? नान्त्यः, उदक्षरत्वात् द्वित्वादिकमिति वाक्यशेष-
विरोधापत्तेश्च । न मध्यमः, 'कुमार्योरगारम्'इत्यादि ईदूदेत्सूत्रस्थभाष्यविरोधापत्तेः । तथा सति क्वचिदे-
कत्वसङ्ख्या न भासते इत्यस्यैव फलिततयाऽग्रे वक्तव्यत्वेनोत्तरग्रन्थासङ्गतेश्च । नाद्यः, द्वित्वादौ
द्विवचनादि तत्र चैकत्वस्य भानमित्यत्यन्तविरुद्धत्वात् , गौणीमुख्या वेति सिद्धान्तविरोधापत्तेश्च । अत
एवैकां गामिति भाष्यं सङ्गच्छते । अत आह—अभेदैकत्वसङ्ख्येति ।

यत्तु कैयटादयः-वृत्तावभेदैकत्वसङ्ख्योपसर्जनेषु भासते विशेषभाने तात्पर्यग्राहकासत्त्वे इति प्राहुः ।
तस्यायमर्थः—अभेदेनाविभागेन सङ्ख्यात्वसामान्येनेति यावत् एकत्वसङ्ख्या तदादिसङ्ख्या एकत्वपदं सर्व-
सङ्ख्योपलक्षकं वा सर्वसङ्ख्याविशेषाणां संसर्गरूपेण सामान्यसङ्ख्यारूपेण भानमिति यावत् । सत्त्वभूतत्वात् स-
ङ्ख्यायोगावश्यकत्वेनैकार्थीभावबलात् कारणीभूतपृथगुपस्थापकपदज्ञानाभावाद्विशेषसङ्ख्याभानाभावेन च

सरला ।

अभेदैकत्वसंख्येति । संख्याविशेषाणामविभागेन सत्त्वमित्यर्थः । तदुक्तं वाक्यपदीये—

यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।

अविभागेन वर्तन्ते तां संख्यां तादृशीं विदुः ॥ इति ॥

गिकी द्वित्वादिकं तु प्रयत्नलभ्यमिति भाष्ये स्थितम् ॥

"यण-"इति वाचनिकम् । यद्वा वाच्यो व्याख्येयः । व्याख्या च द्वेधा—"भ-

---

शब्दरत्नम् ।

कत्वसंख्येति तदर्थः । संख्यासामान्याभाव इति यावत् । विग्रहे एकवचनं तु औत्सर्गिकं सुबन्तत्वसम्पत्तिमात्रफलकमिति समर्थसूत्रे भाष्ये स्पष्टम् । भाष्ये स्थितमिति । संयोगसञ्ज्ञासूत्रस्थे इत्यर्थः । एवं च प्रत्येकं संयोगसञ्ज्ञापक्षस्यानन्तरा इति

भैरवी ।

णोपसर्जनपदार्थस्य भानम् । राजपुरुषादिशब्देभ्यो राजसम्बन्धी पुरुष इत्याद्याकारक एव बोधो भवति । तत्र तात्पर्यग्राहकसत्त्वे तेन रूपेणैकानेकव्यक्तिभानम् । 'तावकीनः' 'यौष्माकीणः' इत्यादौ यथा । यत्र न तत्सत्ता तत्र तादृशधर्मावच्छिन्नप्रकारताक एव बोधः । अत एवोक्तं संख्यासामान्याभाव इति । अयञ्चोपसर्जनपदार्थे यत्र संख्याविशेषबोधकशब्दाभावस्तत्रैव, यत्र तत्सत्ता तत्र भवत्येव, 'द्विपुत्रः' इत्यादिषु यथा । समर्थसूत्र इत्यस्य प्राक्कथनाद्भाष्ये स्थितमित्यत्रापि भाष्यं समर्थसूत्रस्थमेव विवक्षितमिति भ्रमः स्यादत आह—संयोगेति । यद्वृत्तौ हि इत्यादिना भाष्ये स्थितमित्यन्तेनाभिहितं, तत्तु सम्यगेव । यत्तु यद्यपिहत्यादिना लाभाथमन्तग्रहणमित्यन्तेन ग्रन्थेन संयोगसंज्ञासूत्रस्थभाष्यसंवादेन बोधितमन्तग्रहणस्य प्रयोजनं, तत्तु तस्य भाष्यस्यैकदेश्युक्तितया समञ्जसन्नेत्याह—एवञ्चेति । अन्तपदस्योक्तफलकत्वस्योक्तभाष्या-

भावप्रकाशः ।

तथैव भानम् , मधुनिसर्वरसानां रसत्वेन भानवत् । यद्वा परित्यक्तविशेषसङ्ख्यासामान्यमभेदैकत्वसङ्ख्या । अत्र पक्षे सङ्ख्यात्वेन सामान्यं भासते, नतु विशेषा इति पूर्वतो विशेषः । सङ्ख्यावद्राजसम्बन्धीति पक्षद्वये बोधः । अत एव तत्र राज्ञो राज्ञां वेति जिज्ञासा, विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वनियमादित्याहुः । तन्न, तथा बोधाननुभवात् , द्रव्यस्य सङ्ख्याव्यभिचारेण तद्ज्ञानसम्भवात् , विशेषजिज्ञासायाः स्वारसिकत्वाभावेन स्ववासनाकल्पितत्वाच्च । अत एव भाष्येऽभेदैकत्वसङ्ख्येति व्यवहारो भासत इति च नास्ति । तेन रूपेण सङ्ख्याभानस्यान्यत्रादृष्टत्वाच्च । अत आह—सङ्ख्येति । सामान्यरूपेण सामान्यस्य विशेषाणां चाभानमित्यर्थः । एतेन वृत्तौ सङ्ख्याविशेषो न भवतीत्यस्यैव समर्थसूत्रभाष्ये उद्योतमञ्जूषयोश्चोक्त्या तद्विरोध इत्यपास्तम् । तथाच विशेषाद्यनवगतिरभेदैकत्वसङ्ख्यापदेनोच्यते । भेदसहचरितद्वित्वादेरेकत्वस्य सामान्यस्य चाभानमिति तदर्थः । राजसम्बन्धी पुरुष इत्येव बोधः, राजत्वेन च राजा एकोऽनेको वा । इदं चोपसर्जनार्थे सङ्ख्याबोधकशब्दाभावे । तत्सत्त्वे तु भवत्येव । तेन द्विपुत्रादौ न दोषः । एवं 'मासजातः' 'युष्मत्पुत्रः' इत्यादौ शब्दशक्तिस्वाभाव्येन मासत्वादिना वस्तुत एकत्वादिविशिष्टव्यक्तिबोधः । अत एव द्वित्वादिकमिति मूलसङ्गतिरित्यन्यत्र विस्तरः । तदाह—विग्रह इत्यादि । समर्थसूत्रभाष्ये यथाश्रुतमूलोक्तानुपूर्व्यर्थयोरभावेऽप्युक्ततदर्थस्य तत्र सत्त्वात्तत्रैवान्वयभ्रमवारणायाह—संयोगेति । इदमेव ध्वनयितुं समर्थसूत्रे भाष्ये स्पष्टमिति प्रागुक्तिः । अन्यथैष्टार्थसिद्ध्यभावः । तथाच हि यतः वृत्तावित्यादि लभ्यमित्यन्तमतः प्रत्येकमित्यादि ग्रहणमित्यन्तमिति भाष्ये स्थितमिति योजनया तदंशे संवादोऽयं न तु वृत्तौ हीत्याद्यंशे इति बोध्यम् । परं तस्य भाष्यस्यैकदेश्युक्तित्वेनासाधकत्वादिदमयुक्तम् । तद् ध्वनयन् तत्फलितं मूलकृद्दिष्टमाह—एवं चेति । अन्तपदस्योक्तफलकत्वस्य तादृशभाष्यारूढत्वे चेत्यर्थः । यत्त्वन्वर्थसंज्ञाविरोधाद् दुष्टोऽयं पक्ष इति कैयटादयः । तन्न, तथा सति 'घटपटौ संयुज्येते यत्र' इत्यादौ संयोगानुयोगिनः प्रतियोग्यन्यस्यैव प्रतीतेर्व्युत्पन्नतया पदवाक्यरूपसमूहस्य संज्ञापत्तेः । तस्मान्महासंज्ञाकरणं प्राचामनुरोधेन । अत एव गर्गदण्डनन्यायेन सहग्रहणं प्रत्याख्यातं भाष्ये । न तु तथा तदेतद् ध्वनयन्नाह—स्यानन्तरा इतीति । बहुव्रीहिणा तस्य बहुवचनान्तस्यानेक-

सरला ।

संख्यासामान्याभाव इति । सामान्यरूपेण सामान्यस्य विशेषाणां चाभानमिति तदर्थः । वि-

शब्दरत्नम् ।

सूत्राक्षरस्वारस्यविरोधेन फलाभावेन चासङ्गतत्वमिति तत्रैव भाष्ये ध्वनिततयाऽन्त्यमन्तग्रहणं व्यर्थमेव, न तु फलान्तरेऽभिनिवेशः कार्य इति भावः। यत्तु संयोगेति लुप्तषष्ठीकम् , तच्च पदस्येति चान्तविशेषणम्, संयोगान्तस्य सतः पदान्तस्येत्यर्थमन्तग्रहणमिति, तन्न, तादृ-

भैरवी ।

रूढत्वे च । सूत्राक्षरेति । न विद्यतेऽन्तरं येषान्तेऽनन्तराः इत्यर्थेन समुदायस्य प्रतीतिः । ध्वनितयेति । समुदायसंयोगसंज्ञासिद्धये सहग्रणं कर्तव्यमिति प्रथममभिधाय गर्गदण्डन्यायेन समुदायस्य तत्सिद्धौ सहग्रहणन्न कार्यमित्येत्रोक्तन्तत्वेकस्य संयोगसंज्ञायाः किञ्चिदसाधारणम्प्रयोजनमभिहितं, तेन ध्वनितमित्यर्थः । फलान्तरे इति । अन्तग्रहणस्येत्यादिः । अभीति । "अस्तिसिचः" इति सूत्रे सिच्छब्दात्प्राक्सकारस्य प्रश्लेषेऽपि तस्य सकारस्य संयोगान्तलोपेन निवृत्तिरित्येतत्फलस्याभिनिवेशः । अत्रान्तपदोपादानेनैकम्प्रागुक्तं द्विवचनान्तेन समासलाभरूपं यद्यपि सम्भाव्यते तथापि प्रत्येकसंयोगसंज्ञापक्षस्यैवासत्त्वेन तन्नास्ति । "अस्तिसिचोऽपृक्ते" इत्यत्र 'विद्यमानास्तिसिच' इत्यर्थस्य लाभस्तु 'सिच्च अस् च' इति द्वन्द्वघटितास्तिपदाद्यवयवककर्मधारयेन सिद्धः । तथाच तदपि फलं नास्तीति भावः ।

प्रक्रियाप्रकाशोक्तिं खण्डयितुं तामनुवदति—यत्त्विति । अस्यार्थस्य फलन्तु सरूपसंज्ञासूत्रभाष्ये पृथग्विभक्तिपराणामेकशेष इति पक्षे 'वृक्षस्स्' इति प्राप्नोतीत्यभिधाय संयोगान्तलोपात्सिद्धमिति भाष्यकारोक्तिसङ्गमनम् । तादृशलक्ष्येति । पूर्वोक्तार्थाकरणे यादृशलक्ष्यन्न

भावप्रकाशः ।

हल्विशेषणत्वं प्रतीयते । प्रत्येकसंज्ञावादिना तूपलक्षणत्वं तस्य वाच्यम् । तच्च न, तत्त्वे सम्भवति तत्त्वस्यान्याय्यत्वादिति भावः । एतेन सिद्धान्ते इवात्राप्यनन्तरा इत्यस्य हेतुत्वेन तदविरोध इति मन्दोक्तमपास्तम् । नन्वेवं गर्गदण्डनन्यायाश्रयणस्य भाष्ये निर्बीजत्वापत्तिः, अत उपलक्षणत्वमेवेष्टम् । किञ्च विशेषणत्वमेवास्तु अनेकेषां तत्त्वस्य प्रत्येकतत्त्वे तत्त्वाङ्गीकाराद्विशेषणफलन्तु व्यवहितहल्व्यावृत्तिः । अत आह—फलाभावेन चेति । तत्रैव—संयोगसंज्ञासूत्र एव । ध्वनिततयेति । सहग्रहणाभावे प्रत्येकापत्तौ निर्यायादित्यादिदोषमात्राधायकग्रन्थेनेत्यर्थः । यदि तत्पक्षस्य फलं स्यात्तदा तदयुक्तं स्यात् , तस्मात्तदभाव एवेति भावः । यद्यन्तपदस्य फलान्तरं स्यात्तर्हि तत्सामर्थ्येनोक्तार्थोक्तिरयुक्ता स्यात्तस्य, तदाह—अन्तेति । एवव्यावर्त्यमाह—नत्विति । फलान्तर इति । अन्तग्रहणस्येति शेषः । तस्य यत् फलान्तरं तद्विषयकोऽभिनिवेश आग्रह इत्यर्थः । एतेनोक्तभाष्यं संयोगपदं लुप्तषष्ठीद्विवचनान्तमित्यर्थमात्रपरम् , तत्कुर्वतः सूत्रकृतोऽपि इदमेवेष्टम् । फलन्तु , "अस्तिसिचः" इत्यत्र सकारनिवृत्तिः । मूलोक्तं तु न युक्तम् । मुख्यान्तत्वस्योभयत्राभावादिति मान्यशङ्कानुयायिमन्दोक्तिरपास्ता । नैवमित्यादिशब्दानां विग्रहस्य परिनिष्ठितरूपप्रदर्शनस्य चासङ्गत्यापत्तेः । यथोत्तरं मुनीनां प्रामाण्येनाफलान्तरतयाऽगत्या एकस्यान्तपदस्य गौणत्वाङ्गीकाराच्च । "अस्तिसिचः" इति द्विसकारको निर्देश इति भाष्यविरोधापत्तेश्च । अतएव तद्भाष्यस्यान्याय्यकत्वाच्च लोपश्चेत्यत्रातिप्रसक्त्या तद्भाष्यविरोधापत्तश्चेति दिक् । प्रक्रियाप्रकाशोभयोक्तिं खण्डयितुं फलान्तरसम्भावनां च बोधयन्ननुवदति—यत्त्विति । संयोगसंज्ञासूत्रस्थभाष्यं त्वेकदेश्युक्तिः सरूपसूत्रभाष्यविरोधादिति तद्भावः । तदिति । अन्यथा वैयर्थ्यं स्पष्टमेव । तादृशेति । सिद्धान्तासिद्धैतदर्थाक्रान्तलक्ष्याभावादित्यर्थः । यद्यपि सरूपसूत्रे 'पृथक् सर्वेभ्यो विभक्ता-

सरला

स्तरस्तु भूषणसारसरलायां द्रष्टव्यः । विरोधेनेति ।। स्वावधिकोत्तरत्वसामानाधिकरण्यं—स्वावधिकपूर्वत्वसामानाधिकरण्यमेतदुभयसम्बन्धेन यत्किञ्चित्पदार्थविशिष्टद्वित्वाश्रयत्वरूपव्यवहितत्वस्य द्विनिष्ठत्वेन 'संयोगवद्विप्रयोगोऽपि विशेषावगतिहेतुः' इति न्यायेन 'अवत्सा आनीयताम्' इत्यत्रेव व्यवहितभिन्नौ द्वावेव गृह्येते इति द्वयोरेव संयोगसंज्ञा, न प्रत्येकमिति विरोधेनेत्यर्थः ।

लो झलि" ( पा०सू०८।२।२६ ) इत्यतो झल्ग्रहणमपकृष्य झल एव लोपो विधीयते इति, अन्तरङ्गे लोपे कर्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वमिति वा । न च षाष्ठी अ-

---

शब्दरत्नम् ।

शलद्वयाभावात् । अत एव "ध्वसोः" ( पा० सू० ६।४।११९ ) इति सूत्रे "द्विशकारको निर्देशः" इति भाष्ये उक्तम् । त्वद्रीत्या संयोगान्तलोपस्य दुर्वारत्वेन शकारद्वयाभावात्तदसङ्गतिः स्पष्टैव ॥

अपकृष्येति । तच्च षष्ठ्या विपरिणम्य वाक्यभेदेन सम्बध्यते । तेन पूर्ववाक्यस्य क्वचिदझल्यपि प्रवृत्तिः । उत्तरवाक्येन च तस्य क्वाचित्कत्वं ज्ञाप्यते । तेन च नातिप्र-

भैरवी ।

सिध्यति तादृशलक्ष्यस्य सम्प्रतिपन्नस्याभावादित्यर्थः । सरूपसूत्रस्थं तद्भाष्यन्तु तादृशार्थकरणेनैकसकारस्य निवृत्तावपि 'वृक्षस्' इत्यस्य प्राप्त्यैकदेश्युक्तिरेवेति तादृशार्थकरणं व्यर्थमेव । अत एव कैयटेन तादृशार्थस्य लक्ष्यासाधकतया वस्तुतः संयोगान्तस्य लोपात् हल्ङ्यादिलोपादिति व्याख्या कृता । अत एव—तादृशार्थाभावादेव । भाष्ये उक्तमिति । यदि तादृशोऽर्थोऽभिप्रेतः स्यात्तदा लुप्तनिर्दिष्टः शकार इति वदेदिति भावः ॥

अपकृष्येति । मुनिसम्मत एवायमपकर्षः । यथा—पूर्वसूत्रकरणकाले स्मृतप्रयोजनकपदोपादानेऽपि लक्ष्यानुरोधेनोत्तरत्र सम्बन्धो भवति तथा पूर्वसूत्रकरणकाले विषयान्तरसंसक्तमनसा प्रयोजनास्मरणेनाकृतस्य शब्दस्योत्तरसूत्रकरणकाले स्मृतप्रयोजनकस्य पूर्वत्र सम्बन्धोऽपि । स च क्वचिद्योगविभागेन भाष्यकृता प्रदर्श्यते क्वचित्त्वन्यथा । यथा—"रायो हलि" इत्यत्र "हलीत्युभयोः शेषः" इत्युक्तम् । अत्र तु "संयोगान्तस्य लोपे यणः प्रतिषेधः, न वा, झलो लोपात्, बहिरङ्गलक्षणत्वाद्वा" इति वार्तिककृतोक्तम् । षष्ठ्येति । उत्तरत्र पञ्चम्यन्तस्य तस्य सत्त्वात् । वाक्यभेदेनेति । 'संयोगान्तस्य लोपः' इत्येकं वाक्यम् । एतदर्थः प्रसिद्ध एव । 'झलः' इति द्वितीयम् । तत्र संयोगान्तस्य लोप इत्यनुवर्तते संयोगान्तस्य झलो लोप इत्यर्थः । एवञ्च पूर्ववाक्येनैव सिद्धावस्य वैयर्थ्यमतः पूर्ववाक्यस्य क्वाचित्कत्वज्ञापनमेव फलम् । पूर्ववाक्यस्य झलि प्रवृत्तिस्वीकारादेव "ङे प्रथमयोरम्" इति सूत्रे मकारान्तरप्रश्लेषेऽपि तस्य निवृत्तिसिद्धिः । नातिप्रसङ्ग इति । 'सुध्युपास्यः' इत्यादौ यकारादिनिवृत्त्यापत्तिरूपोऽतिप्रसङ्गो

भावप्रकाशः ।

वेकशेषः' इति पक्षेऽन्त्ययोर्निवृत्तौ 'वृक्षस् स् स्' इति प्रसज्येतेत्याशङ्क्य संयोगान्तलोपेन सिद्धमिति भाष्ये स्पष्टं लक्ष्यमुक्तम् । कैयटस्तु चिन्त्य एव । स्पष्टं चेदं प्रकाशे, तथाप्येकदेश्युक्तित्वेन तेषामलक्ष्यत्वमिति तत्रैव स्पष्टमिति भावः । अत एवेति । अन्तशब्दस्योक्तानर्थकत्वादेवेत्यर्थः । उक्तमिति । अन्यथा लुप्तनिर्दिष्टः शकार इति वदेदिति भावः ।

अपकृष्येतीति । अयं च सूत्रसम्मतोऽपि, "संयोगान्त"इतिसूत्रोक्तिकालेऽस्मृत्या पूर्वत्र पठितेनोत्तरत्रोपकारवदुत्तरत्र पठितेन पूर्वत्राप्युपकार इति सूचनाय वाक्यभेदबोधनाय च पूर्वत्राकरणेन तत्रैव करणेनादोषात् । अत एव गौरवस्यादोषत्वात् । अत एव 'झलि झलः' इति नासूत्रि । तथा सति सप्तम्यन्तेन व्यवाये पूर्वत्रानन्वयापत्तेरिति भावः, तदाह—त च्चेति । षष्ठ्येति । उत्तरत्र पञ्चम्यन्तत्वादिति भावः । अपिरुत्तरवाक्यस्य झलीत्यस्य समुच्चायकः । क्वाचित्कत्वे मानमाह—उत्तरेति । नातीति । यणीति

सरला ।

अझल्यपि प्रवृत्तिरिति । संयोगान्तस्य लोपः संयोगान्तं यत्पदं तदन्तस्य लोपो भवतीत्यर्थकमेकं वाक्यम्, ततो "झलो झलि" इति सूत्राज्झल्ग्रहणमपकृष्य षष्ठ्यन्ततया विपरिणम्य च झलन्तो यः संयोगस्तदन्तं यत्पदं तदन्तस्य लोपो भवतीत्यर्थकमपरं वाक्यम् । तत्र प्रथमवाक्येनैव सर्वत्र लोपसिद्धौ द्वितीयवाक्यसामर्थ्येन पूर्वस्यानित्यत्वम् । तथा चेष्टस्थले झलतिरिक्तहलन्तसंयोगेऽपि लोपप्रवृत्तिरित्यर्थः । तत्रे-

सिद्धपरिभाषा त्रिपादीस्थत्वेनासिद्धमन्तरङ्गं लोपं न पश्यतीति वाच्यम् । कार्यकालपक्षाभ्युपगमात् । न च "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः" इति निषेधः । तस्यानित्यत्वात्, उत्तरकालप्रवृत्ते लोपे अजानन्तर्याभावाच्च । तथा च वार्तिकम्—"संयोगान्तस्य लोपे यणः प्रतिषेधः", "न वा झलो लोपाद्", "बहिरङ्गलक्षणत्वाद्वा" इति ।

---

शब्दरत्नम् ।

सङ्गः । ध्वनितं चेदम् "अमो मश्" (पा०सू०७।१।४०) इत्यत्र भाष्ये । तत्र हि मद्वयात्मकमादेशं विधाय शित्त्वं प्रत्याख्यातम् । एकस्य मस्य संयोगान्तलोप इति च कैयटेन व्याख्यातम् । अनित्यत्वादिति । तत्र च ज्ञापकं "केऽणः" (पा०सू०७।४।१३) इति निर्देशः । क इ अण इति स्थिते लक्ष्यगतपरत्वमाश्रित्य प्राप्त ईकारस्य यण् असिद्धपरिभाषया तत्र व्यावर्त्यते । "अन्तरङ्गं बलीयः"इति परिभाषान्तरं नास्त्येवेति भावः ।

भैरवी ।

नेत्यर्थः । ध्वनितञ्चेदमिति । अपकर्षकरणादिकमित्यर्थः । पूर्ववाक्यस्य क्वचिद्झलि प्रवृत्तेः फलान्तरमाह—तत्र हीत्यादिना । हरदत्तसम्मतार्थाभिप्रायेण ।

नाजानन्तर्यपरिभाषायाः प्राप्तिं वारयति मूले—नचेति । तत्र च—अनित्यत्वे च । ननु पदसंस्कारपक्षमादाय "केऽणः" इति निर्देशस्योपपत्तिर्भविष्यतीति कथं तस्योक्तपरिभाषाया

भावप्रकाशः ।

भावः । कैयटेनेति । एतेन "हलन्त्यम्"इति लोपाशयकं भाष्यमिति न तद्ध्वनितत्वमिति मन्दोक्तमपास्तम्, कैयटविरोधात् । उपदेशे इत्संज्ञाङ्गीकारेऽनेकाल्त्वाभावे नेष्टासिद्ध्या तद्वैयर्थ्यापत्त्याऽऽदौ तदभावेन सर्वादेशत्वेऽपि स्थानिवत्त्वेन "न विभक्तौ" इति निषेधाच्च । अनित्यत्वेऽपीष्टस्थलेऽप्रवृत्तौ सूत्रानर्थक्यापत्तेश्च "नानुबन्धकृतमनेकाल्त्वम्" इति निषेधापत्तेश्चेतिदिक् । कौस्तुभाद्युक्तरीत्या साङ्गत्यं ध्वनयितुं तद्रीत्याऽऽदौ मूलाशयमाह—तत्र चेति । अनित्यत्वे इत्यर्थः । तदुपपादयति—क इति । वाक्यसंस्कारपक्षे इति भावः । ननु पाठकृतपरत्वेन यणं बाधित्वा गुणेनेष्टसिद्धिरेवात आह—लक्ष्येति । एवञ्चोभयोस्तुल्यत्वेन मिथः प्रतिबन्धाद्युगपदभावे पाक्षिको यण् स्यादिति भावः । यद्वेष्टानुरोधेन लक्ष्यगतपरत्वमेवाश्रीयते न तदिति सर्वथा स स्यादिति भावः, तदाह—प्राप्त इति । असिद्धेति । अन्तरङ्गपरिभाषयेत्यर्थः । व्यावर्त्यत इति । तथाचान्तरङ्गत्वाद् गुणः यदि सा नित्या, तर्हि तया गुणप्रवृत्त्या प्रागुक्तरीत्योक्तनिर्देशासङ्गतिरिति भावः । नन्वत्र परिभाषान्तरविषयत्वं निषेधस्तु षाष्ठ्या इति कथं तेन तदनित्यत्वसिद्धिः अतआह—अन्तरमिति । अतएवासिद्धपरिभाषयेति प्रागुक्तिः । उपपादितमेतत् । नन्वेवमपि लक्ष्यग-

सरला ।

इस्थलनिर्णयो भाष्यादितो ज्ञेय इति "यणः प्रतिषेधो वाच्यः" इति वार्तिकानुरोधेन झलतिरिक्तो यणतिरिक्तश्च यो हल्वर्णः तदन्तेत्याद्यथ न गिरिवेट् इत्यत्रारम्भप्रत्याख्यानयोः फलभेदः । अन्यथा आरम्भपक्षे गिरिवेदमयतेः क्विपि प्रथमैकवचने संयोगान्तलोपे 'गिरिवेट्' इति, प्रत्याख्यानपक्षे संयोगस्य मकारान्तत्वेन झलन्तत्वाभावाल्लोपाप्राप्त्या 'गिरिवेदम्' इति, इति फलभेदः स्यात् । नन्वेवमपि "व्यत्ययो बहुलं लिङ्याशिष्यङ्" इति संहितापाठे संयोगान्तलोपेन लकारं प्रश्लिष्य तत्रोत्तरत्राऽनुवर्त्य "कर्मवत्कर्मणा" इति सूत्रं लकारवाच्य एव कर्ता कर्मवद्भवतीति भाष्यकृता व्याख्यातं विरुध्यतेति चेत्? तादृशभाष्यप्रामाण्याद् यणि लकारातिरिक्तत्वेन संकोचस्य स्वीकारात् । आरम्भपक्षेऽप्ययं सङ्कोच आवश्यक एव तत्रापि तद्विरोधसम्भवात् । एवञ्च लकारातिरिक्तो यो यण् तदतिरिक्तो यो झलतिरिक्तो हल् तदन्तो यः संयोगस्तदन्तं यत्पदं तदन्तस्य लोपो भवतीत्यर्थो भवति प्रथमवाक्यस्येति न कश्चिद्दोषो नापि फलभेद इति साम्प्रदायिकाः ।

मूले अजानन्तर्याभावादिति । अनुनिष्ठान्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये जातं बहिरङ्गमसिद्धं नेति तदर्थात् अन्तरङ्गे संयोगान्तलोपेऽजानन्तर्यनिमित्तकत्वं नास्तीत्यस्य न प्रसक्तिरिति तात्पर्यम् । नास्त्ये-

इह यथोद्देशपक्षे आद्यं वार्तिकद्वयम्, तृतीयं तु कार्यकालपक्षे इति विवेकः। यत्त्वाहुः—वार्तिककृतो वचनं, प्रत्याख्यानप्रकारद्वयं तु भाष्यकृत इति। तन्निर्मूलम्, मतभेदे प्रमाणाभावात्। यदप्याहुः—काव्यं, कलत्रं, शास्त्रं चाच त्राणः काव्, कलत्, शा-

---

शब्दरत्नम्।

वस्तुत "ओमाङोश्च" (पा०सू०६।१।९५) इत्याङ्ग्रहणादनित्यमिदम्। तद्धि शिव आ इहीति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वादाद्गुणे वृद्धिबाधनार्थम्। अस्या उदाहरणं तु अक्षद्यूरिति। अन्यथा अन्तरङ्गे यण्यूठसिद्धः स्यात्। मतभेद इति। न वेति वाशब्दस्वारस्येन वचनारम्भवादिन एव प्रत्याख्यानप्रकारो भाष्यकृत्तु "तर्हि वक्तव्यं न वक्तव्यम्" इत्यादिशब्दैरेव प्रत्याचष्ट इति सर्वं वार्तिककृत एवेति भावः। काविस्यादि। संयोगान्तलोपादिति भावः। ननु पूर्वपूर्वस्थानिकमन्त-

भैरवी।

अनित्यत्वे ज्ञापकतेत्याशयेनाह—वस्तुत इति। परमपि—सवर्णेत्यनेन लक्ष्यगतपरत्वानाश्रयणेनाधुना सौकर्यमपीति ध्वनितम्। वृद्धिबाधनार्थमिति। अत्र नाजानन्तर्यपरिभाषाया यत्रान्तरङ्गे शास्त्रेऽजानन्तर्याश्रयणन्तत्र बहिरङ्गस्य प्रक्लृप्तिर्नेति पक्षेऽपि प्रवृत्तिः प्राप्ता। वस्तुतोऽयमेवार्थः—"असिद्धम्बहिरङ्गमन्तरङ्गे" इत्युक्त्वा "नाजानन्तर्य-इति वक्ष्यामि" इत्युक्त्या पूर्वपरिभाषास्थस्यान्तरङ्ग इत्यस्य तत्रानुवृत्तिसूचनात्। यदि नाजानन्तर्यपरिभाषा नित्या स्यात्तदाऽनयाऽन्तरङ्गस्य गुणस्य प्रवृत्तिसम्पादने कृते परत्वात्सवर्णदीर्घे गुणेन लक्ष्यस्य सिद्धावाङ्ग्रहणवैयर्थ्यं स्पष्टमेवेति। अस्याः—नाजानन्तर्यपरिभाषायाः। एवञ्चोक्तज्ञापकेन सर्वथा नाजानन्तर्यपरिभाषा नास्तीति न शङ्कनीयमिति ध्वनितम्। परोपपादितो मतभेदोऽक्षरस्वारस्यविरुद्ध इत्येतदुपपादयति—नवेतीत्यादिना। सर्वमिति। आरम्भप्रत्याख्यानरूपम्।

भावप्रकाशः।

तपरत्वस्य विप्रतिषेधसूत्रेऽग्रहणमित्यस्य "अचः पर" इति सूत्रे भाष्ये ध्वनिततया तस्यानियामकत्वेन शास्त्रीयाशास्त्रीययोराद्यस्य प्राबल्येन च पाठकृतपरत्वेन गुणे निर्देशोपपत्तिरत आह—वस्तुत इति। परिभाषान्तरं तु नास्त्येव। एवञ्च तथा कौस्तुभादिग्रन्थाश्चिन्त्या एवेति भावः। इदम्। नाजानन्तर्य-इतिवचनम्। तद्धीति। आङ्ग्रहणं हीत्यर्थः। अन्तरङ्गत्वादिति। क्रियायाः साध्यतया प्रतीत्या सर्वतः प्राक् साधनाकाङ्क्षानैयत्येन तद्बोधकप्रत्ययोत्पत्त्यनन्तरं प्राक् स्वार्थद्योतकत्वेन साकाङ्क्षतया धातोरुपसर्गयोगे ततः शिवशब्दस्य समुदायेन योगात् गुणस्यान्तरङ्गत्वमिति "सम्प्रसारणाच्च" इति सूत्रभाष्योक्त्या धातूपसर्गकार्यस्यापि पूर्वोपस्थितनिमित्तकत्वेनैवान्तरङ्गत्वादित्यर्थः। एतेन पञ्चमान्तरङ्गत्वस्याभावेनेदं चिन्त्यमित्यपास्तम्। "नह्यनेकम्" इतिन्यायेनास्य लोकन्यायसिद्धार्थज्ञापकताऽप्यविरुद्धा। अन्यथैतदानर्थक्यमेव। एवञ्च जातबहिरङ्गविषयत्वं तस्याः फलितमिति युगपत् प्राप्तौ निषेधाविषयत्वम्, तद् ध्वनयन्नाह—अस्या इति। "नाजानन्तर्ये" इत्यस्या इत्यर्थः। एवञ्चोक्तज्ञापकेन सर्वथा तदभावशङ्का न कार्येति भावः। यदि उक्तज्ञापकेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यते तदैषा निष्फलेति स्पष्टमन्यत्र। वाशब्देति। एकीयत्वे एव विकल्पाङ्गीकारादिति भावः। प्रकार इति। अन्यथा मुनेरज्ञानकल्पनापत्तिरपीति भावः। उक्तार्थमेव द्रढयति—भाष्येति। आदिना यत्तावदुच्यत इत्यादिसङ्ग्रहः।

सरला।

वेति। "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषाया एव अन्तरङ्गे कर्तव्ये जातं समानकालप्राप्तं च बहिरङ्गमसिद्धमित्यर्थस्वीकारेण सकलेष्टसिद्धौ एतत्परिभाषातिरिक्ता समानकालप्राप्तान्तरङ्गबलवत्त्वबोधिका परिभाषा नैव स्वीकर्तव्या। इयं च "नाजानन्तर्ये" इति निषिद्धेति तदनित्यत्वेनैव "क्रेऽणः" इति निर्देशः सम्भवतीति तात्पर्यम्। पदसंस्कारपक्षे तु न निर्देशासङ्गतिरित्यरुचेराह—वस्तुत इति। अन्तरङ्गे यणीति। सचाजा-

ल्; अदभ्रयतेरधव् इति, तदपि न, पक्षत्रयेऽपि संयोगान्तलोपस्य दुर्लभत्वात् । आ-श्रयपक्षत्रयैकरूप्यार्थं पूर्वं पूर्वमन्तरङ्गं परं परं बहिरङ्गमित्यल्लोपणिलोपयोरसिद्धत्वस्य सुवचत्वात् । अत एव कातन्त्रपरिशिष्टे शुक्लयतेः क्विपि शुक्ल् इत्युदाहृतम् । वान्तयोः क्विपि ऊठो दुर्वारत्वात् । न च स्थानिवत्त्वम्, क्वौ विधिं प्रति तन्निषे-

---

शब्दरत्नम् ।

रङ्गमित्यर्थो न भाष्यसम्मतः, किं तु पूर्वपूर्वनिमित्तकमित्येव । किं च प्रातिपदिकाद् णिजुत्पत्तेरेव भाष्यसंमततया बहिर्भूतण्ङ्निमित्तकसंयोगान्तलोपोऽपि बहिरङ्ग इत्यरुचेरा-ह—वान्तयोरिति । काव्ये यलोपे स्थानिवत्त्वनिषेधात् "लोपो व्योः" (पा०सू०६।१।

भैरवी ।

वक्ष्यमाणदूषणसङ्गमनायाह—संयोगान्तेति । न भाष्यसम्मत इति । अत एव "प्रकृत्यैकाच्" इति सूत्रस्य प्रयोजनखण्डनावसरे 'स्रजिष्ठः' इत्यत्र स्रग्विन्शब्दादिष्ठनि कृते "विन्मतोर्लुक्" इति विनो लुकि प्राप्तस्य टिलोपस्य बाधनार्थं "प्रकृत्यैकाच्" इत्यस्यारम्भ इति वाच्यम्, जातिपक्षाश्रयणेन टिलोपत्वावच्छिन्नस्य लोपो विन्मतोर्लुग्विषयेऽवश्यं प्राप्त इति विन्मतो-र्लुगपवाद इति तद्विषये टिलोपस्याप्रवृत्तिरिति भाष्यकृता प्रतिपादितम् । यदि पूर्वस्थानिक-स्यान्तरङ्गत्वमपि भाष्यकारसम्मतं स्यात्तदोत्तरकालप्राप्तटिलोपापेक्षया विनोलुको बहिरङ्ग-त्वेनासिद्धतया 'स्रजिष्ठ' इत्यस्य सिद्धौ जातिपक्षाश्रयणप्रयासस्य नैष्फल्यापत्तिरिति । परो-क्तमभ्युपेत्याह—किञ्चेति । बहिरङ्ग इति । एवञ्च यदुक्तं मूलेऽल्लोपणिलोपयोरसिद्धत्वस्य इति, तदयुक्तमिति भावः । वान्तयोरिति द्विवचनस्य सङ्गमनायाह—काव्ये इति । इति कृत इति ।

भावप्रकाशः ।

इतिर्हेतौ । सर्वम् । आरम्भप्रत्याख्यानरूपम् । वक्ष्यमाणदूषणसङ्गत्यै प्राचामाशयमाह—संयोगान्ते-ति । तस्यैव सर्वत्रसम्भवादिति भावः । न भाष्येति । 'स्रजिष्ठः' इत्यादौ विन्लुकष्टिलोपापवादत्वेन प्रवृत्त्या ततः प्राप्तटिलोपस्य जातिपक्षाश्रयणेन वारणप्रयासस्य "प्रकृत्यैकाच्" इति सूत्रप्रयोजनखण्डनावसरे भाष्यकृतोरीकृतस्य वैफल्यापत्तेः । अन्यथा विन्लुको बहिरङ्गासिद्धतयाऽनायासतस्तद्वारणसम्भवात् । ईदृ-शरीत्या तत्त्वस्य भाष्ये क्वाप्यनाश्रयणाच्च । तत्राङ्गशब्दस्य निमित्तपरत्वाच्चेति दिक् । अभ्युपेत्याप्याह—किञ्चेति । एवः प्रातिपदिकादित्यग्रे योज्यः । तेन सुबन्तव्यावृत्तिः । सम्मततयेति । प्रतिपादितं चैतत् "न पदान्त" सूत्रे । अपिरल्लोपादिसमुच्चायकः । बहिरङ्ग इति । तथा च तद्दृष्ट्या तयोरनसिद्धत्वेना-न्त्यपक्षे स दुर्वार इति पक्षत्रयेऽपीत्यादिरुदाहृतमित्यन्ता मूलोक्तिरयुक्तेति भावः। एतेनैवं सति व्याख्येयमूल-ग्रन्थविरोध इति मन्दोक्तमपास्तम्, तद्धेतुं खण्डयितुमेव प्रवृत्तत्वात् । पक्षत्रयेऽपीत्याद्युदाहृतमित्यन्तग्रन्थ-स्यैतद्व्याख्येयत्वाभावाच्च । वान्तयोरित्यादि दोषान्तरदातुर्मूलकृतोऽपि तथेष्टत्वाच्च। अत एवेत्यरुचेरित्युक्तम् । ननु लोपे वान्तत्वस्य शाब्दे बाधः, तदभावे तु काव्ये इति वान्तयोरित्ययुक्तमत आह—काव्य इत्यादि ।

सरला

न्तर्यनिमित्त इति तत्रकर्तव्येऽसिद्धत्वनिषेधेनाक्ष्यूरित्यस्य सिद्धिरिति तत्त्वम् । संयोगान्तलोपादिती-ति । 'काव' 'कलव्' 'शाल्' 'अधव्' इत्यत्र संयोगान्तलोपेन तत्तद्रूपसिद्धेरेषां संयोगान्तलोपोदाहरणत्व-माहुरित्यक्षरार्थः । न भाष्यसम्मत इति । "प्रकृत्यैकाच्" इतिसूत्रस्थभाष्यविरुद्ध इत्यर्थः । तत्र सूत्रे भाष्ये तत्सूत्रप्रयोजनखण्डनाय 'स्रजीयान्' इत्यत्र स्रग्विन्शब्दादीयसुनि टिलोपविन्लुकोः प्राप्तावपवाद-त्वाद्विनो लुकि ततः पुनष्टिलोपस्य प्राप्तस्य पटीयानित्यादौ सावकाशतया निरवकाशेन लुका जातिपक्ष-माश्रित्य तक्रन्यायेन बाध इत्युक्तम् । साम्प्रतिकी भाविनी च टिलोपप्राप्तिरिति जातिपक्षाश्रयणेनानपेक्षित-विषयभेदमाश्रित्य बाध्यत्वम् । तथाच पूर्वपूर्वस्थानिकस्यान्तरङ्गत्वे विनो लुकः परस्थानिकत्वेन बहिरङ्ग-तयाऽसिद्धत्वात्पुनष्टिलोपस्य प्राप्त्यभावेनैव तत्सिद्धौ जातिपक्षाश्रयणं वृथा स्यादिति तद्भाष्य-प्रामाण्येन पूर्वपूर्वनिमित्तकत्वमन्तरङ्गत्वं परपरनिमित्तकत्वं बहिरङ्गत्वमिति स्वीकरणीयमिति भावः ।

धात् ; क्विचि "लोपो व्योः—"( पा०सू०६।१।६६ ) इति लोपस्य प्रसङ्गाच्च । गिरि-वेश्मयतेस्तु क्विपि यणः प्रतिषेधार्थं वचनारम्भपक्षे गिरिवेडित्युचितम् । प्रत्याख्यानपक्षे तु मान्तमेवेति दिक् ।

शब्दरत्नम् ।

६६) इति कृते वान्तत्वमिति ऊठ् दुर्वारोऽन्त्ये च स्वत एवेति तत्र वलोपं बाधित्वोठ् दुर्वार इत्यर्थः । क्विचीति । काव्यशब्दे इति शेषः । यलोपे स्थानिवत्त्वनिषेधात् । एवं च प्राचीनोक्तं संयोगान्तलोपादाहरणत्वमयुक्तमिति भावः । शाल्वे तु अल्लोपादेः स्थानिवत्त्वान्न तत्प्रसक्तिरिति बोध्यम् । मान्तमेवेति । अस्य प्राप्नोतीति शेषः । तस्मात्तत्पक्षेऽपि वाक्यभेदेन व्याख्याय गिरिवेडित्येव । अन्यथा ऽऽरम्भप्रत्याख्यानयोः फलभेदः स्यादिति भावः । दिगिति । दिगर्थस्तु संयोगान्तलोपसंयोगादिलोपविषयकतया ऽऽरुध्य

भैरवी ।

संयोगान्तलोपस्यासिद्धत्वादित्यादिः । अन्त्ये—शाल्वे । दुर्वार इति । एवञ्च त्वदुक्तरूपासिद्धिरिति शेषः। ननु शाल्वेऽल्लोपस्य क्विप्पक्षे स्थानिवत्त्वेन न वलोपस्य प्राप्तिरत आह—काव्यशब्द इति। नन्वेवं मदुक्तं 'काव्' इतिरूपं दुर्वारमेवेत्यत आह—एवञ्चेति । ननु मूलोक्तं 'गिरिवेट्' इत्युचितम्, प्रत्याख्यानपक्षे तु मान्तमेवेति, तदनुचितम्; आरम्भप्रत्याख्यानयोः फलभेदस्य क्वाप्यदर्शनादत आह—अस्येति। तत्पक्ष इति। झल्ग्रहणापकर्षपक्ष इत्यर्थः। अन्यथा—शेषपूरणेन व्याख्यानाभावे । दिगर्थः—दिक्शब्दोच्चारणेन सूचितार्थः । संयोगादिलोपविषयकतयेति ।

भावप्रकाशः ।

कृते इति । संयोगान्तलोपस्यासिद्धत्वादिति भावः । अन्त्य इति । शाल्वे इत्यर्थः । वान्तत्वमित्यस्यानुषङ्गः । वलोपमिति । संयोगान्तलोपस्यासिद्धत्वात्प्राप्तवल्निमित्तकलोपमित्यर्थः । दुर्वार इति । तथाच तेन त्वदुक्तरूपासङ्गतिरिति भावः। ननुशाल्वेऽल्लोपादेः स्थानिवत्त्वेन क्विप्पक्षे दोषाभावेन वान्तयोरित्यस्यानुषङ्गोऽसम्भवीत्यत आह—काव्येति । एतेन काव्यशब्देऽसम्भवेपि शाल्वशब्दे सम्भव इति खण्डनकारोक्तमपास्तम् । नन्वेवमपि मदुक्तरूपसिद्धिरेवात आह—एवञ्चेति । वलोपप्रसङ्गे चेत्यर्थः। उदाहरणत्वमिति । काव इति शेषः। अन्यत्र त्वर्थाद्यथाकथञ्चित्तृतीयपक्षे तल्लक्ष्यत्वमस्त्विति भावः। एतेन काव्यशब्दे संयोगान्तलोपं वदतां प्राचां मते ऊडापत्तिरयुक्ता । तस्यासिद्धत्वेनोठोऽप्राप्तेरिति रत्नाकरोक्तमपास्तम् । मूलोक्तचोऽनभिधानसमुच्चायकः । तेन "पूर्वत्रासिद्धम्" इत्यस्य जागरूकत्वेन "क्वौ विधिम्" इत्यस्यावश्यकत्वेन चान्तरङ्गत्वात्संयोगान्तलोपं चासङ्गतिं "क्वौलुप्तम्" इत्यनयोरूडनापत्तिं च वदन्मन्दस्तु सुमन्द एवेति भावः । तत्—"लोपो व्योः" इत्येतत् । यत्तु मान्याः—झलपकर्षण प्रत्याख्यानानुरोधेन वार्तिके यण्पदमझल्परम् । एवञ्च पक्षत्रये संयोगान्तलोपो न । एवेन सूचितोऽयमर्थः । "गिरिवेट्" इत्युचितमिति तु परसन्तोषमात्रम् । उत्तरग्रन्थस्य तदुपमर्दनार्थमेव प्रवृत्तत्वात् । एवञ्चापकर्षो मुख्यपक्षस्तदनुरोधेनाद्यान्त्ययोर्व्यवस्था नत्वन्त्यानुरोधेन पूर्वयोर्व्यवस्था । अन्तरङ्गत्वादीनामनेकत्वात् । एतेन चरमोक्तत्वाच्चरमपक्षस्यैव प्राबल्यमित्यपास्तम् । मानान्तरसिद्धप्राबल्यकस्यैव प्रायश्चरमोपन्यासः । लाघवेन त्रिमुनिसम्मत्या च अत्र मध्यपक्षस्य प्राबल्यसिद्धिः । यथा सूत्रेष्टत्वं तथोक्तं प्राक् । एवञ्चानेकपक्षानुरोधान्मान्तमेव । एतेनोक्तयुक्त्या डान्तमेवोचितं बव्हपेक्षं बहिरङ्गमिति रीत्या मलोपसौलभ्यादित्यपास्तम्, युक्तितौल्यात् । मध्यपक्षस्योक्तरीत्या प्राबल्येन तदैक्याय पूर्वम्पूर्वमित्याश्रयणाच्च । अत एव "न वा झलः" इत्यत्र पूर्ववचनाभावबोधकनञुल्लेखो नोत्तरत्रेत्याहुः । तत्प्राचामनुरोधेन, उचितपदास्वारस्यापत्तेः "अमो मश्" इत्यत्रत्यभाष्यकैयटविरोधापत्तेश्च । तद् ध्वनयन्नाह—अस्येति । अन्त्यपक्षे तूक्तरीत्या स सुलभ एवेति नोल्लेखस्तस्य । तदाह—इत्येवेति । अन्यथेति । शेषपूरणेनाव्याख्याने इत्यर्थः । एतेन मूलरीत्या फलभेदमाशङ्क्योत्तरमुनिप्रमाणकफलभेदस्यावश्याङ्गीकार्यत्वान्न दोष इति रत्नाकरोक्तं, तदत्र किं

सरला ।

अन्त्ये चेति ।शाल्व् इत्यत्र च । इति भाव इति । अत्रत्यं तत्त्वं पूर्वमेवोक्तम् ।

इति पक्ष इति। पक्षद्वयस्यापि भाष्ये स्थितत्वादिति भावः। चत्वारि रूपा-

शब्दरत्नम्।

स्य "यणः प्रतिषेधः" इति वचनस्य संयोगान्तलोपविषयकस्य "झलो लोपात्" इति प्रत्याख्यानम्। अत एव तत्र "संयोगान्तलोपो झलो लोप" इति भाष्ये व्याख्या कृता। "बहिरङ्गलक्षणत्वाद्वा" इत्यस्य तु बहिरङ्गो यणादेशोऽन्तरङ्गो लोप इति व्याख्यानेन वार्तिकस्वारस्येन चेदृशानां लक्ष्याणामनभिधानमेव। वस्तुतस्तृतीयं वार्तिकं विसर्जनीय-

भैरवी।

"स्कोः" इतिसूत्रे यण्ग्रहणसम्बन्धेन यणन्तसंयोगाद्योः सकारककारयोर्लोपो नेति तदर्थः। तेन 'वाक्यर्थं' 'वास्यर्थम्' इत्यत्र कसयोर्लोपो न। यद्यप्यनयोः कसयोर्लोपे कर्तव्ये "अचः परस्मिन्" इति स्थानिवद्भावोऽपि वक्तुं शक्यः, "पूर्वत्रासिद्धे न स्थानिवत्" इति तु "तस्य दोषः" इत्यनेन निषिद्धः, तथापि स्थानिवद्भावानाश्रयणेनोपायान्तरमेतदिति बोध्यम्। एवञ्च प्रकृते एवञ्चकथनं "यणः प्रतिषेधः" इति संयोगान्तलोपस्यैव निषेध इति या कस्यचिदुक्तिस्तत्खण्डनतात्पर्यकमिति ध्येयम्। अत एव—तस्यैव प्रत्याख्यानादेव। तत्र—तत्र तत्र। अतएवात्र मूले संयोगान्तलोपे यणः प्रतिषेध इति व्याख्या कृता। प्रकृतमाह—बहिरङ्गेति। स्वारस्येनेति। अन्यथाऽन्तरङ्गो लोपः, अन्तरङ्गलक्षणत्वाद्वेत्येव वदेत्। ईदृशानाम्—अकृत्रिमयण्घटितानाम्। अनभिधानमेवेति। अन्त्यपक्षरीत्या लोपप्राप्त्या आद्यपक्षे तत्प्राप्त्या फलभेदापत्तेस्तादृशानामनभिधानमेवेत्यर्थः। तृतीयसमाधानं त्रिपाद्यामप्यसिद्धत्वस्य प्रवृत्तिरिति मतेन। वस्तुतस्तु त्रिपाद्यांबहिरङ्गपरिभाषाया वक्ष्यमाणरीत्या अप्रवृत्तिरेवेति बहिरङ्गपरिभाषया प्रकृते लक्ष्यस्य साधनं न युक्तं, तत्समर्थनाय पूर्वपूर्वस्थानिकमन्तरङ्गमित्यस्य स्वीकारक्लेश-

भावप्रकाशः।

त्त्वमिति चिन्त्यमेतदिति प्रकाशोक्तं गिरिवेडित्यत्र स्वयं फलभेदाङ्गीकारेण पक्षाणां नैकरूप्यमिति पूर्वम्पूर्वमिति क्लेशाश्रयणं निर्मूलमिति खण्डनकारोक्तं चापास्तमिति भावः। दिगर्थ इति। रीत्यर्थकदिक्शब्दसूचितार्थ इत्यर्थः। आदिलोपेति। लोपद्वयविषयकतयेत्यर्थः। यद्यपि तस्य दोष इत्युक्तेः स्थानिवद्भावेन संयोगादिलोपः सुपरिहर इति न तत्रास्योपयोगस्तथापि तदनाश्रयणेऽस्योपयोग एव। यणन्तसंयोगादिभूतयोः स्कोःलोपो नेति तदर्थः। एवंच संयोगान्तलोपस्यैवायं निषेध इत्यभियुक्तोद्घोषो भाष्यविरुद्ध इति बोध्यम्। विषयकस्येति। सर्वं वाक्यमिति न्यायेन तस्यैवेत्यर्थः। अतएवेति। तस्यैव प्रत्याख्यानादेवेत्यर्थः। तत्र—सूत्रे। इदमेवाभिप्रेत्य मूले संयोगान्तलोपे यणः प्रतिषेध इत्युक्तम्। एतेन तथारब्धस्य तस्य प्रत्येकं यथोद्देशकार्यकालपक्षभेदेन प्रत्याख्यानप्रकारद्वयं वार्तिकाभिमतमिति कैयटाद्युक्तमपास्तम्। एवमादिलोपविषयकस्याप्रत्याख्यानमुभयविषयकतयाऽस्यारब्धत्वम् अस्यार्थस्य मूलध्वनितत्वं च ध्वनयितुं तदुक्तिं प्रमाणयितुं च कृतेत्यन्तेनानूद्य प्रकृतमाह—बहिरङ्गेति। पूर्वतोऽत्र वैलक्षण्याय तत्। एवञ्चेदं प्रत्याख्यानमुभयविषयकमिति भावः। स्वारस्येन चेति। अन्यथा "अन्तरङ्गो लोपः" "अन्तरङ्गलक्षणत्वाद्वा" इत्येव ताभ्यामुक्तं स्यादिति भावः। ईदृशानामिति। लोपद्वयविषयाकृत्रिमयण्युतानामित्यर्थः। एवञ्च तथाऽऽरब्धस्य तस्य यथासङ्ख्येन प्रत्याख्यानप्रतीत्या आद्यपक्षद्वये तदप्राप्तावपि तृतीयपक्षदुराशया तत्प्राप्त्या तल्लक्ष्यत्वसम्भावना न कार्या। तेषामुक्तरीत्या प्रमितत्वेनानभिधानस्यैवौचित्यात्।

सरला।

ईदृशानां लक्ष्याणामिति। बहिरङ्गत्वानाश्रयसंयोगान्तलोपविषययण्घटितानामित्यर्थः। दूषितमिति। तत्र सूत्र भाष्ये "प्रतिद्वन्द्विभाविनावेतौ पक्षौ सत्यन्तरङ्गे बहिरङ्गं सति च बहिरङ्गेऽन्तरङ्गम्" इत्युक्तम्। तेन च बहिरङ्गत्वप्रकारकबहिरङ्गविशेष्यकज्ञानवदन्तरङ्गदृष्ट्याऽन्तरङ्गत्वप्रकारकाऽन्तरङ्गविशेष्यकज्ञानवद्बहिरङ्गमसिद्धमिति असिद्धपरिभाषार्थः। तथाच कार्यकालपक्षे असिद्धपरिभाषायास्त्रिपाद्यां प्रवृत्तावपि बहिरङ्गशास्त्रस्य त्रिपादीस्थं शास्त्रं मदपेक्षयाऽन्तरङ्गमिति ज्ञानासंभवेन तया परिभाषया त्रिपादीस्थान्तरङ्गशास्त्र-

णीति । यत्तु वदन्ति—धकारयकारोभयद्वित्वे उभयोः पुनर्द्वित्वे लोपविकल्पेऽन्यतरद्वित्वे च नव रूपाणि । तथा हि—एकधं त्रिधा—एकयं द्वियं त्रियं च । एवं द्विधं त्रिधं च त्रिधेति । न चान्तरङ्गे द्वित्वे बहिरङ्गस्य यणोऽसिद्धत्वम्, त्रैपादिकेऽन्तरङ्गे

---

शब्दरत्नम् ।

सूत्रे भाष्ये कार्यकालपक्षमुपक्रम्य "अयुक्तोऽयं परिहारो नवा बहिरङ्गलक्षणत्वाद्वा" इत्यनेन दूपितमित्यलम् ।

उभयद्वित्वेति । द्विधं द्वियमेकम् [१] । पुनर्द्वित्वे त्रिधं त्रियम् [२] । अन्यतरेति । एकं द्वियं त्रियं च [३, ४] । एकयं द्विधं त्रिधं च [५, ६] । द्वयोरपि द्वित्वे अन्यतरस्य पुनर्द्वित्वे द्विधं त्रियम् [७], त्रिधं द्वियं च [८] । अनुभयद्वित्वे एकधमेकयम् [९] । लोपविकल्पान्यतरद्वित्वयोः समफलता, सम्भवमात्रेण तु तदुक्तिः ।

भैरवी ।

अयुक्त इत्याह—वस्तुत इति । विसजनीयसूत्रे—"विसजनीयस्य सः" इति सूत्रे । दूषितमिति । एतदग्रे स्फुटीभविष्यति ॥

ननु यदि लोपस्य वैकल्पिकत्वेन तत्कृतो न विशेषस्तर्हि तस्योपन्यासो व्यर्थ एवेत्यत आह—सम्भवमात्रेणेति । तदुक्तिः—लोपविकल्पोक्तिः । यत्तु "एकः पूर्वपरयोः" इति सूत्रे यथा आधानादिसंस्काराणां सकृदेवानुष्ठानं, तथा गुणादीनामपि सकृदेव स्यात्, तथाच प्रतिपुरुषमेक एव गुणघटितः साधुः स्यादन्येऽपशब्दा स्युरित्याशङ्क्य ज्योतिष्टोमादिशास्त्रदृष्टान्तेन प्र-

भावप्रकाशः ।

एतेनाकृत्रिमयणो लोपाभावार्थमाद्यम्, मध्यानुरोधात् । तृतीयं तु 'दध्यत्र' इत्यादिविषयमिति प्रकाशोक्तिश्चिन्त्येति भावः । वस्तुतस्तु तृतीयपक्षे तत्प्राप्तिरिति कथैवायुक्ता । अभ्युपेत्य तु प्राक् वारणं दर्शितमिति ध्वनयन्नाह—वस्तुत इति । विसर्जनीयेति । खरवसानयोरिति सूत्रेत्यर्थः । दूषितमिति । दूषितप्रायमित्यर्थः । युक्तितौल्येन तद्दूषणस्यात्रापि सम्भवादिति भावः । स्फुटीभविष्यति चैतदग्रे । एवं च तदर्थं प्राचां मूलकृतश्च क्लेशो विफल एवेति द्वयोरेवोल्लेख उचितः, तदाह—अलमिति ।

वैयर्थ्यं परिहरति—सम्भवेति । तदुक्तिरिति । लोपविकल्पोक्तिरित्यर्थः । यत्तु उभयद्वित्वे इत्यादि तदुक्तिरित्यन्तमनूद्य तन्न, आशयानवबोधात् । तथाहि, उभयद्वित्वे एकदं द्वियम् एकसं द्विसं च २ पुनर्द्वित्वे द्विदं द्वियमेकसं द्विसं च ४ अन्यतरद्वित्वे एकधं द्वियमेकसं द्विसं च ६ द्विदमेकयमेकसं द्विसं च ८ अनुभयद्वित्वे एकधमेकयं द्विसमिति नवममिति द्वित्वप्रक्रियामादाय नवरूपाणि तैरुक्तानि । एवञ्चैकधमेकयमेकसमित्यस्याधिक्येऽप्यदोषः । एकस्याप्यक्षरस्य द्वित्वाभावात् । एवञ्च मूलोक्ता द्वित्वानामानन्त्यापत्तिरयुक्तेति मन्देनोक्तम् । तन्न, अन्धस्येवान्धलग्नस्येति न्यायायितत्वापत्तेः । पुनर्द्वित्वे द्विदमितिवत्त्रियमित्यौचित्याच्च । अन्यथोभयोः पुनर्द्वित्व इति व्याख्येयग्रन्थविरोधापत्तेश्च । तेषां तथाशयाभावाच्च । तथाहि, एवमुक्तप्रक्रियया सिद्धं दधमध्यदलोपयुतमुदाहरति—सुध्युपेति । अत्र लोपाभावपक्षे धयुतद्विदकारकमपि । यदा तु "सर्वत्र" इति सर्वत्र द्वित्वनिषेधस्तदैकधकारकमिति संहितायां त्रीणि रूपाणीत्युक्त्वा यदा "यणो मय" इति यस्य "हलो यमाम्" इति लोपश्च वा भवतस्तदा धकारोभयेत्यादि रूपाणीत्यन्तां मूलोक्तानुपूर्वीं संलिख्य तद्यथा एकधमेकयं १ एकधं द्वियं २ एकधं त्रियं ३ द्विधमेकयं ४ द्विधंद्वियं ५ द्विधंत्रियं ६ । त्रिधमेकयं ७ त्रिधंद्वियं ८ त्रिधं त्रियमिति प्रकाशकृतोक्तम् । एवं च कथं त्वयान्यथा तदाशयो वर्णितस्त्वदुक्त्युपपत्तिरपि त्वादृशेनैव कार्या । किञ्च सद्वित्वाभावाभ्यां नवत्वोपपादने विसर्गद्वित्वाभावाभ्यामष्टादशत्वापत्तिरित्यास्तां तावत् ।

यत्तु "एकः पूर्वपरयोः" इत्यत्राधानादीनां यथा सकृदनुष्ठानं तथा गुणादीनामेकस्मिन् प्रयोगेऽनुष्ठानं स्यात् । तथाच प्रतिपुरुषमेक एव सुशब्दः स्यात्, अन्येऽपशब्दाःस्युरित्याशङ्क्य ज्योतिष्टोमादिशास्त्रदृष्टान्तेन प्रतिप्रयोगं प्रवृत्तिरिति सिद्धान्तोक्त्या "लक्ष्ये लक्षणस्य" इतिन्यायगन्धस्याभावेन मूलोक्ति-

बहिरङ्गपरिभाषा न प्रवर्त्तत इति विसर्जनीयसूत्रे भाष्यकैयटयोर्व्यवस्थापितत्वादिति। अत्रेदं वक्तव्यम्—पुनर्द्वित्वमशुद्धम्, एकस्यां व्यक्तौ एकं लक्षणं सकृदेव प्रवर्त्तते इति "एकः पूर्वपरयोः" ( पा०सू०६।१।८४ ) इति सूत्रे भाष्ये सिद्धान्तित-

शब्दरत्नम् ।

एकः पूर्वपरयोरिति । तत्र हि यथा 'अनयोः पूलयोः कटं कुरु' इत्यादौ एकवाक्यतयैव बोधादेकत्वविवक्षणेनोभयसम्बन्ध्येककटकरणप्रतीतिस्तथा 'आदचि पूर्वपरयोर्गुणः' इत्यादावपि द्वन्द्वनिर्देशाद्विधेयगतसंख्याविवक्षणाच्चोभयोः स्थाने एक एवादेशो भविष्यतीत्येकग्रहणं प्रत्याख्याय शङ्कितम्—शास्त्राधिकारिणः पुरुषान्प्रति प्रवृत्तं संस्कारकं तत्तच्छास्त्रं प्रतिपुरुषमेकवाक्यतया सकृदेवार्थबोधकं, यथाऽऽधानेनाग्नीन्संस्कुर्यादित्यर्थकं "वसन्ते ब्राह्मणोऽग्नीनादधीत" इति वाक्यं प्रतिब्राह्मणं सकृदेवार्थबोधकं सकृदेव स्वविषये प्रवर्तकं च । अत एव पुनः पुनर्नाधानादिसंस्कारः, तथा व्याकरणशास्त्रस्य "अवर्णादचि पूर्वपरयोर्गुणो भवति, गुणवान् शब्दश्च साधुर्भवति, स च प्रयोक्तव्यः" इत्येतावत्पर्यन्तं व्यापारात्तत्संस्कृतस्यैकस्य खट्वेन्द्रस्य प्रयोगेण शास्त्रार्थस्य करणान्मालेन्द्रादिप्र-

भैरवी ।

तिप्रयोगङ्गुणादिविधायकशास्त्राणाम्प्रवृत्तिर्भविष्यतीत्याद्युक्त्या "लक्ष्ये लक्षणस्य" इति न्यायस्याविषयोऽयमितिप्राचीनोक्तिखण्डनपरः 'पुनर्द्वित्वम्' इत्यादि ग्रन्थो न युक्तः इति केचित्, तन्न, भाष्याशयानवबोधादिति ध्वनयितुम्भाष्याशयम्प्रकटयति—तत्र हीत्यादिना । तत्र—"एकः पूर्वपरयोः" इति सूत्रभाष्ये । बोधादिति । पूलयोरिति द्विवचनस्वारस्येनैकवाक्यतया उचिततयेत्यादि । एतेन ग्रहं सम्मार्ष्टि इत्यत्रोद्देश्यबोधकपदोत्तरैकवचनस्य यथाऽविवक्षया ऽनेकग्रहाणां सम्मार्गस्तथाऽनयोः पूलयोरित्यत्रापि सम्भाव्यते, तथापि सम्भवत्येकवाक्यत्वे वाक्यभेदो न न्याय्य इति न्यायस्य सञ्चारो ध्वनितः । एकत्वविवक्षणेन कटमित्यस्य विधेयबोधकतया तत्रैकत्वस्य विवक्षणेन । द्वन्द्वनिर्देशात् इतरेतरयोगे तस्य द्वन्द्वस्य विधानेनोद्भूतावयवसमुदायस्यान्यत्रान्वयात् । शङ्कितमिति । अस्यावश्यकमित्यत्रान्वयः । दृष्टान्तप्रदर्शनेन शङ्कां योजयति–यथेति । स्वविषये–आधानाख्यसंस्कारे । व्यापारादिति । प्रतिपुरुष-

भावप्रकाशः ।

श्चिन्त्येतिखण्डनकृद्दण्डिप्रभृतयः, तद्भाष्याज्ञाननिबन्धनमिति ध्वनयन्नाह—तत्र हीति । एकःपूर्वेति सूत्रभाष्ये यतइत्यर्थः । एकेति । एकशेषनिर्देशादेवेति भावः । बोधादिति । सम्भवति तथात्वे वाक्यभेदस्यान्याय्यत्वात् । 'कटम्' इत्यस्य तु वाक्यभेदेऽपि प्रत्येकान्वयाभिप्रायेणोपपत्तिः । एवञ्च विधेयविशेषणत्वादविवक्षाबीजासत्त्वाच्चैकत्वं विवक्षितम् । एवमग्रेपीति भावः ।तदाह—एकत्वेति । अपिः सम्भावनायाम् । द्वन्द्वेति । इतरेतरद्वन्द्वे सहितयोर्द्वयोरुद्भूतावयवभेदकसमूहस्य वा बोधेन विशिष्टस्यानितेति भावः । समुदाये हेतुद्वयं, तेन न समुच्चायकत्वासङ्गतिः । तथाचैकवाक्यतयैवान्वय इत्याह—उभयोरिति । एक एवेति । ननु "रदाभ्याम्" "उभौसाभ्यासस्य" इतिवदनैकः । तत्र गमकस्य स्थानिभेदसूचकस्य सत्त्वेऽप्यत्र तदभावात् । "अग्नीषोमाभ्याम्" इत्यादौ द्वन्द्वोत्तरचतुर्थ्या विशिष्टे एकप्रदेयनिरूपितैकदैवतात्वबोधनवदत्र द्वन्द्वोत्तरषष्ठ्या एकविधेयनिरूपितविशिष्टनिष्ठैकस्थानित्वबोधनेनात्रादेशद्वयाप्राप्तेरिति भावः । शङ्कितमिति । अस्यावश्यकमितीत्यनेनान्वयः-सामान्येनोक्तमर्थं विशिष्य सदृष्टान्तं योजयति—यथेति । स्वविषये–आधानसंस्कारे । अत एव–तत्र सकृत्प्रवर्तकत्वादेव । व्यापारादिति । तस्य च

सरला ।

दृष्ट्या बहिरङ्गस्य सापादिकस्यासिद्धता बोधयितुं न शक्येति रीत्या दूषितमित्यर्थः । एकत्वविवक्षणेनेति ।

त्वात्। अन्यथा द्वित्वानामानन्त्यापत्तेः। न च "झरो झरि" (पा०सू०८।४।६५)

शब्दरत्नम्।

योगो न स्यात्। अतस्तत्तल्लक्ष्यविषयवाक्योपप्लवेन वाक्यभेदोऽवश्यं वाच्यः। तद्वत्पूर्वपरविषयेऽपि स्यादिति तत्रैकग्रहणमावश्यकमिति। तत्र गुणो भवतीत्यादंशो लक्ष्यसंस्कारफलक एव यथाऽऽधानमग्निसंस्कारकं, शास्त्रतात्पर्यविषयप्रयोगविधिश्च पुरुषसंस्कारक एवेति तदाशयः। ततः सिद्धान्तितम्--यथा नित्यनैमित्तिककाम्यविधीनां तदकरणज-

भैरवी।

मेकवाक्यतया बोधकत्वादिति शेषः। वाक्यभेदोऽवश्यमिति। पुरुषैक्येऽपीति शेषः। तत्र-पूर्वोपवर्णितवाक्यार्थत्रयमध्ये। पुरुषसंस्कारकः पुरुषस्य धर्मजनकक्रियाप्रवृत्तिसम्पादकः, "एकः शब्दः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति" इति भाष्यात्।

नित्यत्वम्-यस्याकरणे प्रत्यवायस्तत्त्वम्; "अहरहः सन्ध्यामुपासीत" इति यथा। निषेधविधिरपि नित्यः "न ब्राह्मणं हन्यात्" इति। नैमित्तिकम्, निमित्तसद्भावे स्वबोध्यार्थे आवश्यकप्रवृत्तिसम्पादकम्-यथा "पूर्ववयाः ब्राह्मणः प्रत्युत्थेयः" इति। काम्यं—तत्फलेच्छाधीनतद्विषयप्रवृत्तिसम्पादकशाब्दबोधजनकम्, यथा ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादि। तत्र नित्यविधिस्थले शुचितत्कालजीवित्वस्याधिकारसम्पादकतया यावज्जीवं तद्रूपसद्भावे स्वबोध्यक्रियाप्रवृत्तिसम्पादकत्वेन तस्याकरणे प्रत्यवायः कथ्यते। नैमित्तिकस्थलेऽपि निमित्तप्राप्तेः क्रियाप्रवृत्तिसम्पादकतया यदा यदा तस्य प्राप्तिस्तदा तदा प्रवृत्तिः अन्यथा त्वनिष्टं स्यात्। यथा

> वृद्धे समागते तस्योर्ध्वम्प्राणा व्युत्क्रामन्ति।
> प्रत्युत्थानाभिवादाभ्याम्पुनस्तान्प्रतिपद्यते॥

इति दोषप्रतिपादकवाक्यात्तथा कल्पनात्। एवं "राहूपरागे स्नायात्" इत्यादावपि बोध्यम्। एवं काम्येषु कामानामानन्त्यात्तत्सद्भावे ज्योतिष्टोमादौ त्रैवर्णिकानामप्यधिकारात्प्रवृत्तिः। सा च यदा यदा तदेति न सकृदेवानुष्ठानम्। तत्राऽपरो विशेषः-नित्यस्यानुष्ठाने प्रत्यवायानुत्पत्तिरेव फलम्, क्षमिकमस्याफलत्वम्। नैमित्तिके दोषपरिहारः, काम्यं फलञ्च

भावप्रकाशः।

प्रतिपुरुषमेकवाक्यतया सकृदेव बोधकत्वात्प्रवर्तकत्वाच्चेति शेषः। तदाह—तत्संस्कृतेति। वाच्य इति। पुरुषैक्येऽपीति भावः। स्यादिति सम्भावनायां, लक्ष्यैक्येऽपि सम्भावितो वाक्यभेद इति भावः। तत्र—वाक्यार्थत्रयमध्ये। आदिना द्वितीयपरिग्रहः। चस्त्वर्थे। सिद्धान्तितमिति। अस्य प्रयोग इतीत्यनेनान्वयः। स्वाभावे पापजनकं नित्यम्। यथा ब्राह्मणाहिंसादिः, तद्बोधकं "न ब्राह्मणं हन्यात्" इत्यादि ब्राह्मणादिमात्रविषयम्। नैमित्तिकं वृद्धागमने प्रत्युत्थानम्। तद्बोधकं "पूर्ववया ब्राह्मणः प्रत्युत्थेयः" इति वाक्यम्। काम्यं ज्योतिष्टोमादि प्रसिद्धम्। तत्र नित्यानां यावज्जीवं तद्विषयाधिकारसत्त्वादकरणे प्रत्यवायाचावृत्तिः। नैमित्तिकानामपि निमित्तावगमानन्त्याद्

सरला।

"पशुना यजेत" इत्यादाविव विधेयगतत्वेनेत्यादिः। नित्यनैमित्तिककाम्यविधीनामिति। तत्र कर्म तावत् त्रिविधम्-नित्यनैमित्तिककाम्यभेदात्। नित्यकर्मविधायकत्वं नित्यविधित्वं, नैमित्तिककर्मविधायकत्वं नैमित्तिकविधित्वं, काम्यकर्मविधायकत्वं च काम्यविधित्वम्। नित्यकर्मत्वञ्चाकरणे प्रत्यवायजनकत्वे सति करणे दुरितनिवृत्तिमात्रफलकत्वम्। यथा-"यावज्जीवमग्निहोत्रं जुहोति" "सायं जुहोति" "प्रातर्जुहोति" इति जीवता पुरुषेण सायंप्रातःकालयोर्नियमेन कर्तव्यतयाऽवगतमग्निहोत्रादिकं नित्यम्। नैमित्तिककर्मत्वञ्चाकरणे प्रत्यवायजनकत्वे सति करणे फलविशेषजनकत्वम्। यथा "अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्" इति दर्शपूर्णमासातिपत्तिनिमित्तकपथिकृदिष्ट्यादिकं नैमित्तिकम्। काम्यकर्मत्वञ्चा-

शब्दरत्नम् ।

न्वप्रत्यवायपरिहाराय फलाय च वाक्यभेदेन तत्तद्विषयकशास्त्रोपप्लवात् पुनः प्रवर्तकत्वम् । तथा ममाप्यसाधुप्रयोगे प्रत्यवायश्रवणान्नित्यसमत्वं प्रयोगविधेः । "एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग्भवति" इत्यनेन काम्यत्वं चेति तत्तद्विषयानन्तवाक्योपप्लवेन भवत्येव मालेन्द्रादिप्रयोग इति । एवं प्रयोगविध्यंशस्य नित्यकाम्यत्वव्यवस्थापनेन गुणविध्यंशस्य शुद्धसंस्कारार्थत्वमेवोक्तम् । एवं च तस्याधानादिवदेवाग्निस्थानीयलक्ष्येषु सर्वेषु प्रवृत्तावपि एकाग्नाविवैकलक्ष्ये नावृत्तिरिति पूर्वपरयोर्ना-

भैरवी ।

भवति । काम्यस्थले कामनाविषयसिद्धिरेवेति । तत्तद्विषयकेति—तत्तत्क्रियाविषयकेत्यर्थः ।

प्रत्यवायश्रवणादिति । "तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः, तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै" इति श्रुत्या दोषश्रवणादित्यर्थः । नित्यसमत्वमिति । शास्त्रसंस्कार-विरुद्धोच्चारणे प्रत्यवायश्रवणेन नित्यत्वमर्थबोधनार्थप्रवृत्तेरर्थस्य बोधो भवतीति फलसम्ब-न्धेन काम्यत्वमपि । अतः समशब्दस्य प्रयोगः । यथा काम्ये दर्शादियागे पुनःपुनःप्रवृत्तिस्त-थाऽत्रापि तत्तत्सुखरूपस्वर्गकामनया खट्वेन्द्रमालेन्द्ररमेशादिसाधनाय तेषां सुप्रयुक्तत्वशा-स्त्रान्वितत्वसम्पत्तये पुनःपुनः प्रवृत्तिः । एवम्—उक्तप्रकारेण । एवञ्च—शुद्धसंस्कारार्थत्वे च ।

भावप्रकाशः ।

ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥

इति दोषापलम्भाच्चावृत्तिः । काम्येष्वपि कामानामानन्त्यात्तद्वतां त्रैवर्णिकानामग्निविद्यायुक्तानामावृ-त्त्या पुनः पुनः प्रवृत्तिः । तदेतद् हृदि निधायाह—यथा नित्येत्यादि । नित्ये प्रत्यवायपरिहारः, काम्ये फलं, नैमित्तिके तूभयमिति भावः । तत्तद्विषयकेति । यावद् ब्राह्मण–पूर्ववयस्क–वसन्तविषयकेत्यर्थः । प्रत्यवायेति । अर्थबोधाय प्राप्ते शब्दप्रयोगे "नापभाषितवै" इतिश्रुत्या स्वाभावे तदर्थकासाधुशब्दप्रयो-गे पापबोधनादिति भावः । नित्यसमत्वमिति । ननु तत्त्वं तद्बोधकाभावादिति भावः । नैमित्तिकत्वं स्वार्थबाधनार्थतया स्पष्टमेवेति तदुपेक्ष्य काम्यत्वमाह—एक इति । अनेन प्रयुक्तिलाववादर्थबोधाय सर्वश-ब्दस्य प्राप्ते एव प्रयोगे शास्त्रेण नियमिते फलसम्बन्धबोधनं दर्शपूर्णमासयोरिव । एतेनैकस्यैव पुनः प्रयो-गेणानेककामनाफलसिद्धिरित्युक्तभाष्यतात्पर्यमित्यपास्तम् । सम्यक् ज्ञात एकोऽप्यर्थबोधाय शिक्षायुक्तमार्गेण प्रयुक्तश्चेत् कामधुग् भवति, किं वक्तव्यं सर्वेऽपीति फलसम्बन्धबोधने तात्पर्येण सर्वेषां तथाप्रयोगः कार्य इति बोधनात् । एवञ्च व्यवहारे प्रयुक्तानां सुशब्दानां सर्वेषां शास्त्रविषयता सूचिता । शास्त्रान्वित इत्य-नेन तत्स्मरणपूर्वकप्रयोगे धर्मः सूचितः । एवं च नित्यादिस्थले तथा दृष्टत्वेन प्रयोगविधेस्त्रितयरूपत्वेनेष्ट-सिद्धिः । तदाह—तत्तदिति । एवमिति । उक्तप्रकारेणेत्यर्थः । एवं चेति पाठे उक्तसिद्धान्तेनेत्यर्थः । नैमित्तिकत्वं त्वार्थसमानग्रस्तमिति पृथक् नोक्तम् । गुणविध्यंशेति । तत्तच्छब्दविषयोपप्लुतवाक्ये इत्या-दिः । एवं प्रागपि । संस्कारार्थत्वमिति । आधानादिवत् फलाश्रवणात् । एवञ्चावृत्तौ मानाभाव इति भावः । तत्फलितमाह—एवञ्चेति । गुणविध्यंशस्य शुद्धलक्ष्यसंस्कारकत्वे चेत्यर्थः । नावृत्तिरिति ।

सरला ।

करणे प्रत्यवायाजनकत्वे सति करणे फलविशेषजनकत्वम् । यथा "कारीर्या वृष्टिकामो यजेत" इति वृष्टि-कामनयाऽनुष्ठीयमानं कारीरीष्ट्यादिकं काम्यम् । तत्र नित्यनैमित्तिकयोरकरणे प्रत्यवाय एव, करणे दुरितनिवृत्तिः फलम् ।

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।

इत्यादिवाक्यात् । तत्रापि नित्ये दुरितानुत्पत्तिर्नैमित्तिके दुरितनिवृत्तिरिति विवेकः ।

प्रत्यवायश्रवणादिति । "तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः तस्माद् ब्राह्मणेन न

शब्दरत्नम् ।

देशद्वयप्रसक्तिरिति तत्तात्पर्यम् । एवं च स्पष्टमेव पूर्वपक्षसिद्धान्तयोरयं न्यायः संस्कारकविधिविषये सिद्धान्तित इति भावः । "सम्प्रसारणाच्च" ( पा० सू० ६।१।१०८ ) इति

भैरवी ।

उक्तार्थे भाष्यान्तरमपि साधकमित्याह—सम्प्रसारणाच्चेतीति । तत्र हि-शकृद्वर्थमित्यत्र सम्प्रसारणपूर्वत्वमाशङ्क्य वाक्यस्य सम्प्रसारणसंज्ञापक्षमादाय पूर्वरूपनिष्पन्नस्य न सम्प्रसारणत्वमिति समाधानोत्तरं समाधानान्तरं कृतम् "कार्यंकृतत्वाद्वा" इति । शास्त्रस्यास्मिन्विषये प्रवृत्तिर्न भविष्यतीति तदर्थः । तत्र दृष्टान्ततयेत्थम्भाष्यकृताऽभिहितम्-तद्यथा-"वसन्ते ब्राह्मणोऽग्नीनादधीत" इति सकृदाधाय कृतः शास्त्रार्थं इति कृत्वा पुनः प्रवृत्तिर्न भवति, विषम

भावप्रकाशः ।

पूर्वपरभेदजेति भावः । अतएवैकलक्ष्ये शास्त्रस्य पुनः पुनर्न प्रवृत्तिः । एतन्मूलकमेव पठ्यते—"लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः" इति "सङ्ग्राहकवाक्याल्लक्ष्यसंस्कारकवाक्योपप्लवः" इति च, तदाह-एवञ्चेति । पूर्वपक्षसिद्धान्तयोरुक्ततत्तत्तात्पर्यकत्वे चेत्यर्थः । स्पष्टमेवेति । एकपदविषयकपूर्वपक्षसिद्धान्तावसरेऽयं न्यायः संस्कारकविधिविषये सिद्धान्तितो न तु त्रितयविध्यंशे इति स्पष्टमेवेत्यर्थः । एवञ्च खण्डनकृदाद्युक्तिरयुक्तैवेति भावः । तदयुक्तत्वे बीजान्तरमप्याह—सम्प्रसारणाच्चेति । तावतापि पाक्षिकेष्टसि-

सरला ।

म्लेच्छितवै नापभाषितवै" इति महाभाष्यगतश्रुत्येति अस्य आदिः । अनया श्रुत्याऽपभाषणस्य निषेधेन ।

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥

इति स्मृत्याऽसाधुशब्दानां भाषणे प्रत्यवायबोधनादित्यर्थः । अयं न्यायः "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" इति न्यायः । ननु "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" इत्येव न्यायस्वरूपं चेत् क्वचिल्लक्ष्ये लक्षणस्य कस्यचित्प्रवृत्तौ तस्य लक्ष्यान्तरे पुनः प्रवृत्तिर्न स्यात्; एवं तस्मिन् लक्ष्ये लक्षणान्तरस्य पुनः प्रवृत्तिर्न स्यादिति चेत् ? न, "तल्लक्ष्ये तल्लक्षणं सकृदेव प्रवर्तते" इति न्यायशरीराङ्गीकारात् । तथा च तल्लक्ष्ये तल्लक्षणस्य सकृत्प्रवृत्तावपि न लक्ष्यान्तरे तल्लक्षणस्य तल्लक्ष्ये लक्षणान्तरस्य च प्रवृत्तिव्याघातः । नन्वेवमपि "सुध्युपास्यः" इत्यस्य लक्ष्यैकत्वेन तल्लक्ष्यत्वात्तत्र धकारद्वित्वार्थं प्रवृत्तस्य "अनचि च" इति शास्त्रस्य सकारे प्रवृत्तिर्न्न स्यात् इति चेत् ? न, प्रथमप्रवृत्तावुद्देश्यत्वेनाश्रीयमाणो यः शब्दसमुदायस्तदघटको यस्तदघटितत्वं तल्लक्ष्यत्वमिति स्वीकारेण "अनचि च" इति शास्त्रीयप्रथमप्रवृत्तावुद्देश्यत्वेनाश्रीयमाणो यः शब्दसमुदायो व्यपदेशिवद्भावेन धकारस्तदघटको यः सकारस्तद्घटितत्वाद् 'पास्य' इत्यस्य तदघटितत्वाभावेन तल्लक्ष्यत्वाभावात्सकारे प्रवृत्तिनिर्बाधेनादोषात् । नन्वेवमपि 'पथः' इत्यत्र पूर्वमिन्शब्दस्य लोपार्थं प्रवृत्तस्यापि "भस्य टेर्लोपः" इति शास्त्रस्य पुनः प्रवृत्त्यापत्तिः तच्छास्त्रीयप्रथमप्रवृत्तावुद्देश्यत्वेनाऽऽश्रीयमाणो यः शब्दसमुदायः 'इन्' इति, तस्यैव टित्वात् टेरेवोद्देश्यत्वाच्च; तदघटको यः अथ् इति तद्घटितत्वेनैव 'पथ्' इत्यस्य तदघटितत्वाभावेन तल्लक्ष्यत्वाभावात् इति चेत् ? न, प्रथमप्रवृत्तावुद्देश्यत्वेन उद्देश्यतावच्छेदकत्वेन वाऽऽश्रीयमाणो यः शब्दसमुदायस्तदघटको यस्तदघटितत्वं तल्लक्ष्यत्वमिति स्वीकारेण 'अथ्' इत्यस्योद्देश्यत्वेन आश्रयणाभावेऽपि उद्देश्यतावच्छेदकत्वेनाश्रयणात् 'पथ्' इत्यस्य तदघटकाघटितत्वेन तल्लक्ष्यत्वस्यैव सत्त्वेनादोषात् । अत्रोद्देश्यत्व-उद्देश्यतावच्छेदकत्वोभयसंग्रहाय लाघवेन तल्लक्ष्यत्वस्वरूपे उपयोगित्वनिवेशो बोध्यः । तथाच प्रथमप्रवृत्तावुपयोगित्वेनाश्रीयमाणसमुदायाघटकाघटितत्वं तल्लक्ष्यत्वमिति फलितम् । "भस्य टेर्लोपः" इत्यस्य पथ्यादेर्भस्य टेर्लोपः स्यादित्यर्थेन तदीयप्रथमप्रवृत्तौ 'पथिन् अस्' इति सर्वस्यैवोपयोगित्वेन तदघटकत्वमुदासीनस्येति तदघटितत्वमेव 'पथ्' इत्यस्येति

इति "हलो यमाम्—"( पा०सू०८।४।६४ ) इति च लोपेन निर्वाहः, लोपस्य वैकल्पिकत्वात् । कथमन्यथा त्रियं त्रियं चेति भवदुक्तिः सङ्गच्छेत । किं चैवं सति

---

शब्दरत्नम् ।

सूत्रे भाष्ये ऽपि स्फुटोऽयम् । वैकल्पिकत्वादिति । एवं च पक्षे द्वित्वानामानन्त्यापत्त्या परिनिष्ठितत्वाभावापत्तिः । न च त्वदुक्तरीत्याऽऽनन्त्यापत्तिप्रयुक्तमपरिनिष्ठितत्वमसकृत्प्रवृत्तौ बाधकमिति लभ्यते, तच्च नात्र, द्वित्वस्य वैकल्पिकत्वेन यावच्छक्तिद्वित्वसहितप्रयोगस्य परनिष्ठितत्वसम्भवात्, अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वं हि

भैरवी ।

उपन्यासः, उक्तं यत्तस्यैव पुनः प्रवृत्तिर्न भवति" । तत्र कैयटः–'पराङ्मगन्याधानम् यज्ञमुखप्रतिपत्त्यर्थमिति पुनःक्रियमाणम्फलभेदाभावान्नानुष्ठीयते' इति । ततः 'यत्तु तदाश्रयम्प्राप्नोति न तच्छक्यम्बाधितुं तद्यथा 'वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेत' इति अग्न्याधाननिमित्तं वसन्ते इज्यते' इत्यभिहितम् । यत्तु तदाश्रयमिति यस्मात्फलावाप्तिस्तत्फलभेदात्क्रियमानमसकृदनुष्ठीयत इति कैयटः एवञ्च कार्यकृतत्वादित्यपरिहार इति तेनोपसंहृतम्। अस्ति चात्र फलं शास्त्रीयप्रक्रियापूर्वकप्रयोगाद्धर्मोत्पत्तेः, शास्त्रान्वित इत्यनेन बोधनात् शकद्ध्यर्थमित्यादौ "सम्प्रसारणाच्च" इति सूत्रस्य पुनः समुदायोच्चारणात्प्राक् स्मरणेऽधिकस्य धर्मस्य लाभ एवेति भावः । एवम्प्रतिपादनेन लक्ष्यभेदेन पुनः प्रवृत्तिर्भवति । यत्र तु न तथा लक्ष्यभेदस्तत्राप्रवृत्तिरेवेति न्यायो ध्वनितः । लोपस्य वैकल्पिकत्वेन जातेऽपि द्वित्वे भावकार्यानुष्ठानात्पुनः प्रवृत्तावपीष्टापत्तिरिति मा शङ्किष्टा इत्याह—एवञ्चेति । लोपस्य वैकल्पिकत्वे चेत्यर्थः । परोक्तदूषयितुंतदुक्तिमनुवदति–त्वदु क्तेत्यादिना । नचेति। अस्य वाच्यमिति परेणान्वन्वयः । त्वदुक्तरीत्या—लोपस्य वैकल्पिकत्वरूपोक्तरीत्या । सम्भवादिति । एतावतैव शास्त्रस्य कृतार्थत्वादिति शेषः । परिनिष्ठितत्वस्य स्वरूपंप्रतियोगिज्ञानसम्पादनायाह—अप्रवृत्तेत्यादि ।

भावप्रकाशः ।

व्या इष्टापत्तिं खण्डयति—एवञ्चेति । लोपस्य वैकल्पिकत्वे चेत्यर्थः । शास्त्राप्राप्तिविषयत्वं च परिनिष्ठितत्वमिति भावः । खण्डनकृदाद्युक्तदोषं खण्डयितुमनुवदति—न च त्वदुक्तेति । लोपस्य वैकल्पिकत्वरूपोक्तरीत्येत्यर्थः । लभ्यत इत्यत्रास्यान्वयः । अनन्तकार्ययुतप्रयोगस्याशक्यत्वात्तच्छास्त्रसाध्यपरिनिष्ठितप्रयोगाभावात्तस्याननुष्ठापकत्वापत्त्या स दोषः । न च स प्रकृते इत्याह—तच्चेति । च एवार्थः । 'सुध्द्युपास्यः' इत्यत्रापरिनिष्ठितत्वमेव नेत्यर्थः । सम्भवादिति । एतावतैव शास्त्रस्य कृतार्थत्वादिति भावः । ननूक्तरूपत्र परिनिष्ठितत्वमत आह—अप्रवृत्तेति । हिर्हेतौ । नित्यत्वादिविषये 'दधि' इत्यादौ तत्त्वाद्यप्रवृत्तति । प्रवृत्तत्वं च जातत्वमिति भावः । वैकल्पिकेडादिविषये सेद्धेत्यादौ तदर्थं नित्येति । 'हरी एतौ' 'प्रहिकृष्ण ३ अत्र' 'चक्री अत्र' इत्यादौ तत्त्वाय बाधकाबाधितेत्यपि विशेषणं बोध्यम् । प्रकृते प्रतिलक्ष्यं

सरला

तल्लक्ष्यत्वान्न तत्र तत्सूत्रस्य पुनः प्रवृत्तिः । 'सुध्द्युपास्यः' इत्यत्र तु "अनचि च" इति शास्त्रस्य 'अचः परस्य यरो द्वित्वं न त्वचि' इत्यर्थेन तत्प्रथमप्रवृत्तौ 'ध्' इति समुदायस्योपयोगितया 'आस्' इत्यस्य तदघटकसकारादिघटितत्वमेव न तु तदघटकाघटितत्वमिति तल्लक्ष्यत्वाभावेन तत्र "अनचि च" इति शास्त्रस्य पुनः प्रवृत्तिर्भवति । एतादृशतल्लक्ष्यत्वस्वीकारे "पथो विभाषा" इत्यादिनिर्देशाः प्रमाणम् । अधिकमग्रे ।

अप्रवृत्तेति । अप्रवृत्तो यो नित्यविधिस्तदीयोद्देश्यतावच्छेदकानाक्रान्तत्वमित्यर्थः । वैकल्पिकेडा-

परिनिष्ठितत्वमिति वाच्यम्, आनन्त्यापत्तेरित्यस्य चतुष्पञ्चादिधकारयकाराणामापत्त्या त्रिधमित्यादित्वदुक्तमर्यादाभङ्गापत्तेरित्यर्थात् । तद् ध्वनयन्नक्ष्यति—नवत्वोक्तिरस- ङ्गतैवेति ।

आनन्त्यापत्तिरेव तन्न्यायबीजमिति तु न युक्तम्, उदवोढामित्यादौ उद् अवह् स्- तामित्यवस्थायां सिज्लोपादेरसिद्धत्वात्सिचि वृद्धावोकारे "लक्ष्ये लक्षणस्य" इति न्या- येन पुनर्वृद्धिर्नेति "सिचि वृद्धिः—" (पा०सू० ७।२।१) इति सूत्रस्थभाष्यविरोधात् । आनन्त्यापत्तेस्तत्राभावात् । एतद्भाष्यप्रामाण्येन विकारकृतभेदेन न लक्ष्यभेदाश्रयणम् ।

भैरवी ।

हिहतौ । अस्ति चेद्दशम्परिनिष्ठितत्वं यणादेशप्रवृत्त्युत्तरं 'सुध्युपास्यः' इत्यादौ, अत्र यणा- देशविधायकशास्त्रस्य प्रवृत्तत्वेनाप्रवृत्तो नित्यविधिः"एचोऽयवायावः" इति, तदुद्देश्यतावच्छे- दकानाक्रान्तत्वंतस्येति रीत्या सर्वत्रोहनीयम् । न च 'अग्नी इति' इत्यादावप्रवृत्तो नित्य- विधिः सवर्णदीर्घस्तदुद्देश्यतावच्छेदकाक्रान्तत्वसत्त्वेनापरिनिष्ठितत्वापत्तिरिति वाच्यम्, एषु प्रगृह्यत्वप्रयुक्तप्रकृतिभावस्य प्रवृत्त्या प्लुतप्रगृह्यभिन्नत्वविशिष्टसवर्णाच्परत्वविशिष्टाक्त्व- स्योद्देश्यतावच्छेदकतया तदनाक्रान्तत्वस्य सत्त्वात् । प्रवृत्तत्वं-प्राप्तत्वं जातत्वं वा । वैक- ल्पिकेडादिविषये सेद्धादौ परिनिष्ठितत्वसिद्धये-नित्येति ।

तद्रीत्यासमाधत्ते—आनन्त्यापत्तेरिति । पञ्चादीति । आदिना यावच्छक्तिद्वित्वपरिग्रहः । त्रिधमित्यादीति । अत्रादिना त्रियमित्यस्य परिग्रहः । असङ्गतैवेतीति। यद्यप्युक्तरीत्या परिनिष्ठित- त्वस्योपपत्तिर्भवति तथापि नवत्वोक्तेरसङ्गतिरेव दूषणमिति भावः । खण्डनकृदादिमतं दूषय- यति—आनन्त्यापत्तिरेवेति । इति न्यायेनेति । "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" इति न्यायेनेत्यर्थः । सा च वृद्धिराकाररूपा जाता । ओकारे—"सहिवहोरोदवर्णस्य" इत्योकारे जाते इति शेषः । पुनर्वृद्धिर्न—ओकारस्य पुनर्वृद्धिर्न । विकारकृतभेदेनेति । विकारकृतो यो व्यक्तिभेदस्तेनेत्यर्थः ।

भावप्रकाशः ।

लक्षणभेदेनाप्रवृत्तत्वे सत्त्वेऽपि नित्यत्वं नेति भावः । त्वद्रीत्यैव समाधत्ते—आनन्त्येति । आदिना याव- च्छक्तिप्रयोगविषयद्वित्वपरिग्रहः । अग्रे आदिना त्रियमित्यस्य सङ्ग्रहः । असङ्गतैवेतीति । उक्तरीत्या परिनिष्ठितत्वोपपत्तावपि इदमेव दूषणं सारमिति भावः । यत्तु खण्डनकृदादिः—आनन्त्यापत्तिरेव तन्न्या- यप्रवृत्तौ बीजम् । न च सा उक्तरीत्याऽत्रास्तीति तदप्राप्त्या मूलं चिन्त्यमिति, तत्खण्डयति—आन- न्त्येति । एवेन प्रकृतलक्ष्ये तन्निरासः । बीजमिति । तन्न्यायप्रवृत्तौ बीजमित्यर्थः । यथाश्रुतं त्वयुक्तमिति स्पष्टमेवेति बोध्यम् । आदिना दत्वादिसङ्ग्रहः । सिचिवृद्धाविति । सिचि परे "वदव्रज" इति वृद्धावोत्वात्परत्वाज्जातायामित्यर्थः । ओकार इति । वर्णपदसामर्थ्येन जाते इत्यर्थः । अनुवृत्ततत्पुरुषढलोप इति विषयसप्तमीति भाष्यसिद्धान्तादिति भावः । भाष्येति । कैयटस्याप्युपलक्षणमिदम् । एवमग्रेऽपि । प्रामा- ण्येनेति । अनाश्रयणे हेतुः । कृतभेदेनेति । विकारेण कृतो यो व्यक्तिभेदस्तज्जन्यो यो लक्ष्यभेद इत्यर्थः । एतेन भाष्ये तदभावादानन्त्यापत्तिरित्याद्याश्रयणमित्यन्नं चिन्त्यमिति मन्दोक्तमपास्तम् । वर्णपदसाम- र्थ्यादिना वृद्ध्युत्तरमोत्वेनेष्टसिद्धिं सम्पादयता पुनर्वृद्धिमनापादयता भाष्यकृता ध्वनितार्थस्य कैयटेन स्पष्ट-

सरला ।

दिविषये 'सेद्धा' इत्यादौ परिनिष्ठितत्वसिद्धये नित्यग्रहणम् । 'सुध्द्युपास्यः' इत्यादौ सकृत्प्रवृत्तस्यापि नित्यस्य जश्त्वविधेरुद्देश्यतावच्छेदकाक्रान्ततया तत्र परिनिष्ठितत्वसिद्धयेऽप्रवृत्तेति ।

विकारकृतभेदेनेति । एवञ्चैतद्भाष्यप्रामाण्यात्तल्लक्ष्यशरीरे तदघटक इत्यत्र विकारातिरिक्त इति

सरला ।

विशेषणं निवेशनीयम् । तथा च प्रथमप्रवृत्तावुपयोगित्वेनाश्रीयमाणो यः शब्दसमुदायस्तद्घटको यो विकारातिरिक्तस्तदघटितत्वं तल्लक्ष्यत्वमिति फलितम् । तेन 'अगौप्सीत्' इत्यत्र 'अगुप् स् ईत्' इति स्थितौ जायमानाया "वदव्रज" इति वृद्धेः प्रथमप्रवृत्तावुपयोगित्वेनाश्रीयमाणो यावान् शब्दसमुदायः 'अगुप् स् ईत्' इति, तदघटको य औकारः स विकार एव नतु तदतिरिक्त इति तदघटको विकारातिरिक्त उदासीनस्तदघटितत्वेन तल्लक्ष्यत्वान्न पुनर्वृद्धिप्रसङ्गः । नन्वेवं 'काण्डे' इत्यत्र "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति शास्त्रीयप्राथमिकप्रवृत्तावुपयोगित्वेनाश्रीयमाणो यावान् शब्दसमुदायः 'काण्ड' इति तदघटकत्वस्य एकारे सत्त्वेऽपि विकारातिरिक्तत्वाभावेन 'काण्डे' इत्यस्य तदघटकविकारातिरिक्ताघटितत्वेन तल्लक्ष्यत्वादनेनैव न्यायेन ह्रस्ववारणसम्भवे गुरुभूतोपायान्तराश्रयणस्य भाष्यकृतोऽसङ्गतिरिति चेत् ? न, विकारस्य स्वघटकमात्रोद्देश्यकत्वविशेषणेनादोषात् । तथाहि, ह्रस्वप्रवृत्तावुपयोगित्वेनाऽऽश्रीयमाणो यः समुदायः 'काण्ड' इति, तदघटकत्वमेकारे, तद्घटकमात्रोद्देश्यकविकारातिरिक्तत्वमपि तद्घटकेतरविभक्ति 'इ' कारोद्देश्यकत्वेन तद्घटकमात्रोद्देश्यकत्वाभावादिति तद्घटितत्वं 'काण्डे' इत्यत्र न तु तदघटितत्वमिति तल्लक्ष्यत्वाभावादनेन न्यायेन पुनर्ह्रस्ववारणाभावेन तदर्थमुपायान्तराश्रयणस्यावश्यकतया दोषाभावात् । नचैतन्निवेशे 'या' 'सा' इत्यादौ "त्यदादीनामः" इत्यस्य पुनः प्रवृत्त्यापत्तिः, तदीयप्रथमप्रवृत्तावुपयोगित्वेनाश्रीयमाणः समुदायः 'यद् सु' 'तद् सु' इति तदघटकत्वं टापा सहैकादेशभूत आकारे स्वघटकमात्रोद्देश्यकविकारातिरिक्तत्वमपि स्वघटकेतरटापूस्थानिकत्वात्, तथाच तद्घटितत्वमेव 'या' 'सा' इत्यादेर्नतु तदघटितत्वमिति तल्लक्ष्यत्वाभावेनैतन्न्यायाप्रवृत्तेरिति वाच्यम्, "न लुमताऽङ्गस्य" इति प्रत्ययलक्षणनिषेधेन 'या' 'सा' इति स्थिते तस्य विभक्तिपरकत्वाभावेन "त्यदादीनामः" इत्यस्याप्राप्तेः । लुकः पूर्वं तु न तदापत्तिः "अन्तरङ्गानपि विधीन्" इति लुको बलवत्त्वात् । स्वघटकमात्रोद्देश्यकत्वनिवेशे मानं तु "ह्रस्वो नपुंसके" इति सूत्रस्थं 'काण्डे' इत्यत्र ह्रस्ववारणपरं भाष्यमेव ।

नन्वेवमपि 'सर्वेषाम्' 'रामाणाम्' इत्यादौ "आमि सर्वनाम्नः सुट्" "ह्रस्वनद्यापो नुट्" इति शास्त्रीयप्राथमिकप्रवृत्तावुपयोगित्वेनाश्रीयमाणो यः शब्दसमुदायः 'सर्व आम्' 'राम आम्' इति, तदघटको यः सुट्सकारो नुट्नकारश्च सच स्वघटकमात्रोद्देश्यकविकारातिरिक्तोऽपि, तद्घटितत्वेन तल्लक्ष्यत्वाभावाद् 'यदागमा' इति सामो नामश्चाऽऽम्त्वेन पुनः सुट्नुटोरापत्तिरिति चेत् ? न, तदघटके आगमातिरिक्तत्वेन विशेषणदानेनादोषात् । तथाहि, सुट्नुटोः प्राथमिकप्रवृत्तावुपयोगित्वेनाश्रीयमाणो यः समुदायः 'सर्व आम्' 'राम आम्' इति तदघटकत्वस्य स्वघटकमात्रोद्देश्यकविकारातिरिक्तत्वस्य च सुट्सकारनुट्नकारयोः सत्त्वेऽपि आगमातिरिक्तत्वाभावेन तादृशोऽन्य एवेति तदघटितत्वेन तल्लक्ष्यत्वादनेन न्यायेन न पुनः प्रवृत्तिर्भवतीति । अत एव "हलि सर्वेषाम्" "यथासंख्यमनुदेशः समानाम्" इत्यादिनिर्देशसङ्गतिः । नन्वेवमपि 'राजपुरुषः' इत्यादौ 'राजन् ङस् पुरुष सु' इति स्थिते समासे जाते प्रातिपदिकसंज्ञायां "सुपो धातु" इति शास्त्रेण ङसो लुकि पुरुषपदोत्तरसुलोपो न स्यात्, तत्र शास्त्रे प्रातिपदिकस्योद्देश्यतावच्छेदकत्वेनाश्रितत्वात्प्रथमप्रवृत्तावुपयोगित्वेनाश्रीयमाणत्वं 'राजन् ङस् पुरुष सु' इति समुदायस्य तदघटकाघटितत्वस्य तत्र सत्त्वेन तल्लक्ष्यत्वादिति चेत्? न, शास्त्रविशिष्टत्वं तल्लक्ष्यत्वमिति स्वीकारेणादोषात् । वैशिष्ट्यं च स्वीयप्राथमिकप्रवृत्तावुपयोगित्वेनाश्रीयमाणशब्दसमुदायविशिष्टाघटितत्वम्, स्वीयप्राथमिकप्रवृत्तिसमानकालिकप्राप्तिविषयाघटितत्वम्, एतदुभयसम्बन्धेन । समुदायवैशिष्ट्यञ्च स्वाघटकत्वम्, स्वघटकमात्रोद्देश्यकविकारागमातिरिक्तत्वम्, एतदुभयसम्बन्धेन । तथाच 'राजपुरुषः' इत्यत्र शास्त्रवैशिष्ट्यघटकप्रथमसम्बन्धस्य सत्त्वेऽपि ङस्लुकः प्रवृत्तिसमये एव सुलुकोऽपि प्राप्तिसत्त्वेन "सुपो धातु" इति शास्त्रीयप्राथमिकप्रवृत्तिसमानकालिकप्राप्तिविषयत्वमेव पुरुषपदोत्तरसुप्रत्यये न तु तदविषयत्वमिति द्वितीयसम्बन्धस्यासत्त्वेन तल्लक्ष्यत्वाभावेन सुप्रत्ययलुक्सिद्धिः । एवमेव 'एधिषीष्ट' 'भवेत्' 'भूयात्' इत्यादौ द्वितीयसम्बन्धस्यासत्त्वेन तल्लक्ष्यत्वाभावात् एतत्सलोपयोः पुनः प्रवृत्तिर्भवति । द्वितीयसम्बन्धनिवेशे प्रमाणन्तु "न सम्प्रसारणे सम्प्रसारणम्" इति सूत्रमेव । एतत्सम्बन्धानि-

शब्दरत्नम्।

"समः सुटि" (पा० सू० ८।३।५) इति सूत्रं चास्यां मानम्। अन्यथा "समो वा लोपम्–" इत्यनेनान्त्यलोपे पुनर्द्वित्वेन त्रिसकाररूपापि सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। "इरयो रे" (पा० सू० ६।४।७६) इति सूत्रे इरयोरिति द्विवचनं तु स्वविधेयस्य स्वस्मि-

भैरवी।

तस्य न्यायस्य समूलतामाह—समः सुटीत्यादिना। अस्याम्—उक्तन्यायरूपपरिभाषायाम्। अन्यथा—तन्न्यायानङ्गीकारे। सिद्धाविति। लोपस्य रुप्रकरणस्थत्वेनेष्टसिद्धावित्यर्थः। तद्वैयर्थ्यमिति। "समः सुटि" इतिसूत्रं त्रिसकारकरूपसिद्ध्यर्थं, तच्चाधुनाऽपि सिद्धमिति भावः। लोपः पाणिनिसम्मतो नेति तु न शङ्कनीयम्, "अप्रतिषिद्धमनुमतम्भवति" इति न्यायेन तस्य पाणिनिसम्मतत्वात्। शास्त्रान्तरप्रसिद्धानामिहाश्रयणस्य भाष्यकारसम्मतत्वमपि। अत एव 'मृजन्ति' 'मार्जन्ति' 'ममृजतुः' 'ममार्जतुः' इत्यादिरूपाणाम् "इहान्ये वैयाकरणा मृजेरजादौ सङ्क्रमे विभाषा वृद्धिमारभन्त" इति भाष्यकृतोक्तम्। अन्योक्तं तन्न्यायबीजं खण्डयति—इरयोरितीति। तद्धि सूत्रं "प्रथमं दध्र आपः" इत्यस्य साधनायारब्धम्। तत्र धाञो लिटि तस्य

भावप्रकाशः।

मुक्तत्वात्। अन्यथा भाष्यासङ्गतिः स्पष्टैवेति भावः। न्यायस्य निर्मूलतां निराकरोति—सम इति। चास्याम्—तन्न्यायरूपपरिभाषायाम्। अन्यथा—न्यायानङ्गीकारे। समो वेति। एतेनानुनासिकयुतरूपार्थं सूत्रमित्यपास्तम्। लोपस्य रुप्रकरणस्थत्वेनैव सिद्धेः। एकसकारकरूपार्थं तस्यावश्यकत्वात्। नच तत्पाणिन्यसम्मतमिति वाच्यम्। अप्रतिषिद्धमनुमतमिति न्यायविरोधात् वार्तिकादीष्टार्थानां सूत्राक्षरैस्तत्र तत्र ध्वनितत्वस्योक्तत्वाच्च, अन्यवचनानामत्राश्रयणस्य "ओमाङोश्च" इत्यादिसूत्रभाष्यादौ स्पष्टमभिधानाच्च। एतेनान्यवचनमादाय पाणिनेरन्यार्थं तात्पर्यं न क्वापि दृष्टमित्यपास्तमिति भावः। अपिना सकृद्द्वित्वेन द्विसकारस्य सङ्ग्रहः। एतेन तद्व्यर्थमेवेत्यपास्तम्। सति फले तदग्रानौचित्यात् विभाषाद्वितीयेति न वक्तव्यं भवतीतिवत् समः सुटीति न वक्तव्यं भवतीति भाष्यकृताऽनुक्तत्वाच्चेति दिक्।

'प्रथमं दध्रे' इति लक्ष्यके छन्दसि इरे इत्यस्य बहुलं रे भवतीत्यर्थके "इरयो रे" इति सूत्रे सेटां धातूनामिरेचि रे आदेशे कृते तस्येटि पुना रेभावार्थं कृतं द्विवचनम्। तन्न्यायाभावे पुनःपुनः प्रवृत्त्येष्टसिद्धा व्यर्थं सत्तत्र ज्ञापकमिति खण्डनकृत्। तत्खण्डयति—इरेति। अप्राप्येत्यग्रे पुनःप्रवृत्त्यनापत्तिरत इति शेषः।

अत्र केचित्। "कारके" इत्यत्र संज्ञाधिकारपक्षे व्यत्ययेन प्रथमार्थे सप्तम्यां संज्ञिनां ध्रुवादीनां सामा-

सरला।

वेशे 'युवन् अस्' इत्यत्र वकारस्य सम्प्रसारणाय 'युवन् अस्' इति समुदायस्योपयोगित्वेनाश्रयणात् तद्विशिष्टावटितत्वस्य तत्र सत्त्वेनानेनैव न्यायेन पुनः सम्प्रसारणवारणे तद्वैयर्थ्यं स्पष्टमेव। नचैवमपि लिट्सु इत्यत्र लिड् ध् सु इति स्थितौ धकारस्य चर्त्वप्रवृत्तिसमये डकारस्य चर्त्वाप्राप्त्या द्वितीयसम्बन्धसत्त्वेन "खरि च" इत्यत्र "पदस्य" इत्यधिकारेण सामानाधिकरण्येनान्वयासम्भवाद्वैयधिकरण्येनाऽन्वये पदावयवे खरि झलां चर्त्वमित्यर्थेन प्रथमप्रवृत्तौ 'लिड् ध् सु' इत्यस्याश्रयणेन तद्विशिष्टाघटितत्वरूपप्रथमसम्बन्धस्यापि सत्त्वेन तल्लक्ष्यतयाऽनेन न्यायेन पुनश्चर्त्वं डकारस्य न स्यादिति वाच्यम्, द्वितीयसम्बन्धस्थाने स्वीयप्राथमिकप्रवृत्त्यनुत्तरकालिकप्राप्तिविषयाघटितत्वमिति विवक्षणेनादोषात्। अनुत्तरकालिकप्राप्तिश्च समानकालिकप्राप्तिः पूर्वकालिकप्राप्तिश्चेति 'लिटत्सु' इत्यत्र धुटः प्रवृत्तेः पूर्वं डकारस्य चर्त्वप्राप्त्या स्वीयप्राथमिकप्रवृत्त्यनुत्तरकालिकप्राप्तिविषयडकारघटितत्वनेवेति तल्लक्ष्यत्वाभावेन डकारस्य चर्त्वसिद्धिरिति। 'षट् त्सन्तः' इत्यत्रैतन्निवेशेन चर्त्वसाधनमकारस्तु चिन्त्यः, तत्र प्रथमसम्बन्धस्यैवासत्त्वेन तत्र चर्त्वस्य सुसाधत्वात्। "खरि च" इत्येतच्छास्त्रीयप्राथमिकप्रवृत्तौ 'ध् सन्तः' इत्यस्यैवोपयोगेन डकारे तद्विशिष्टत्वस्यैव सत्त्वेन तदघटितत्वाभावेन तल्लक्ष्यत्वाभावादिति दिक्।

## शब्दरत्नम् ।

स्नुदूदेश्यत्वाप्राप्त्या तत्प्राप्तये इति न तदस्यां मानम् । न च तत्र "सहिवहोरोद्-" (पा० सू० ६।३।११२) इति तपरत्वसामर्थ्याद् न वृद्धिरिति वाच्यम् , अशाब्दत्वात् ,

## भैरवी ।

ञादेशे "लिटस्तझयोः" इतिसूत्रेणेरेजादेशे तस्यानेन रे आदेशे कृते तस्येडागमे पुनरनेन रेभावो भवति । रेभावविधानसामर्थ्येन तस्येडागमो नेति तु न वाच्यम्, 'चक्रे' इत्यादाविट्प्रतिषेधविषये तस्य चरितार्थत्वात् । स्वविधेयस्य रेभावस्येडागमेऽपि "यदागमाः" इति न्यायेन रेशब्दत्वात्पुनस्तस्योद्देश्यत्वाप्राप्त्या रेभावो न स्यादिति द्विवचनं सफलमिति भावः । 'उद्वोढाम्' इत्यत्र "सहिवहोरोत्" इतिसूत्रे तकारोच्चारणेन पुनर्वृद्ध्यप्राप्तिरिति कस्यचिदुक्तिं खण्डयति—नच तत्रेति । अशाब्दत्वादिति। आदित्यत्र तपरकरणेन वृद्ध्यप्राप्तेः शब्दमर्यादयाऽ-

## भावप्रकाशः ।

न्यतः सत्त्वेऽपि विशिष्टसंज्ञी निर्देष्टव्य इत्याशङ्क्य करोतीति कारकमित्यन्वर्थसंज्ञाबलात्संज्ञिविशेषलाभ इत्युक्तं भगवता । महासंज्ञाकरणादनुमीयते—नूनं विशिष्टा ध्रुवादयः संज्ञित्वेन निर्दिष्टाः । तथाच यत् क्रियायाः साधकं ध्रुवादि तत्कारकसंज्ञं भवतीति व्याख्यातं चोपाध्यायैः । नन्वन्वर्थत्वं नाम योगरूढत्वम् । एवञ्च कथं यौगिकार्थमुद्दिश्य संज्ञाविधानम् ? अत आह—महेतीत्यवतार्य महासंज्ञोपस्थितक्रियानिर्वर्तकत्वविशिष्टानां ध्रुवादीनां संज्ञेति परिष्कृतं चाभियुक्तैः । तद्रीत्या यत्रोद्देश्यविधेयतावच्छेदकयोर्भेदस्तत्र तस्यापि तत्त्वमस्त्येवेति प्रतीयते । तथा चात्रापि रेत्वेरेत्वयोर्विधेयोद्देश्यतावच्छेदकयोर्भेदस्य स्पष्टत्वात्स्वविधेयस्योद्देश्यत्वप्राप्तिरक्षतैवेति प्राचोक्तं सम्यगेव । नचैवमपि रयादेशे इटि च तस्य लाक्षणिकत्वाञ्चेति वाच्यम्, तदनित्यत्वस्यापि ज्ञापनात् । यावता विना ऽनुपपत्तिस्तत्सर्वं ज्ञाप्यमिति सिद्धान्तात् । एवञ्च स्वविधेयस्येत्यादिचिन्त्यमित्याहुः । तन्न, दृष्टान्तवैषम्यात् । तथाहि, नह्युक्तभाष्यादितस्तदवच्छेदकभेदेऽपि स्वविधेयस्य स्वोद्देश्यत्वं लभ्यते, नवा संज्ञासंज्ञिभावस्थले लोके तस्य तत्त्वप्रतीतिः कस्यापि सम्मता यतो दृष्टान्तसङ्गतिः स्यात् । किञ्चाभेदे उद्देश्यत्वविधेयत्वयोर्बाधस्य जगत्प्रसिद्धत्वेन भेद एव तयोः सम्भवेन तदवच्छेदकयोर्भेदस्यार्थादेव सिद्धत्वेन संज्ञासंज्ञिभावस्थले तथासत्त्वेन च "कारके" इति सूत्रोक्तरीत्या किमपूर्वमुक्तम् ? नहि गुरुचरणैस्तदवच्छेदकयोरभेदे उद्देश्यत्वविधेयत्वे उक्ते, किन्तु उद्देश्यत्वं विधेयत्वं च मिथो विरुद्धं, भेदे तत्सम्भवादित्युक्तम् । एवञ्च सामान्यविशेषधर्मभेदेन वस्तुतो भिन्ने तत्सम्भवेन विरोधाभावेऽपि तक्रकौण्डिन्यन्यायेन सामान्यैरेत्वरूपेणोद्देश्यतावच्छेदकेन प्राप्तस्योद्देश्यत्वस्य विशेषरेत्वरूपेण विधेयतावच्छेदकेन प्राप्तविधेयत्वेन बाधः । सागमे इरयित्यत्र 'यदागमाः' इति न्यायेन रेत्वसत्त्वेऽपीरेचि तदसत्त्वेन रेत्वस्य विशेषत्वस्य द्वयोरिरयोः स्वतो रयादेशे स्थानिवद्भावेन सत्त्वादिरेत्वस्य सामान्यत्वस्य निर्बाधत्वात् । तदेतत्सर्वमभिप्रेत्य स्वविधेयस्य स्वोद्देश्यत्वाप्राप्त्येत्येवोक्तमिति दिक् । लाक्षणिकत्वात्सागमेन स्यादतो द्विवचनमुपक्षीणमित्यज्ञापकमिति मान्याः ।

कैयटीयन्यायसञ्चारं विनापि भाष्यं सुयोजमिति नोक्तार्थसिद्धिरित्याशयेनाशङ्कते—नचेति । सामर्थ्यादिति । वर्णग्रहणेनाग्रेऽप्यनुपयोगादिति भावः । न वृद्धिरिति । न पुनर्वृद्धिरित्यर्थः । अशाब्दत्वादिति । वर्णाधिक्यमात्रेणार्थकल्पने वृद्धिसत्ताया एव ज्ञापयितुं युक्तत्वात् । तपरसूत्रस्य सिद्धान्ते निय-

## सरला ।

मानमिति । "इरयो रे" इत्यत्र द्विवचननिर्देशाभावे "प्रथमं दध्र आपः" इति छन्दोघटके 'दध्रे' इत्यत्र धाञो लिटि झादेशे तस्य इरेजादेशे च तस्यानेन रेआदेशे आर्धधातुकत्वेनेडागमे तस्य इरेत्वेन पुनारेआदेशप्रवृत्त्या द्वित्वादौ 'दध्रे' इत्यस्य सिद्ध्या व्यर्थं द्विवचनं 'लक्ष्ये लक्षणम्' इत्यत्र मानं, तथाच रेआदेशस्येडागमेन इरेत्वेऽपि तस्य स्वीयप्राथमिकप्रवृत्तापवुयोगित्वेनाश्रीयमाणो यः समुदायः इरे इति तदघटकत्वस्येडागमेकारे सत्त्वेऽपि तत्राऽऽगमत्वस्यैव सत्त्वेन तदघटको यः स्वव्यक्तिमात्रोद्देश्यकविकाराग-

शब्दरत्नम् ।

अतत्कालव्यावृत्तेरेव तेन शब्दमर्यादया लाभात् । एतेन सुद्ध्युपास्ये पूर्वं धस्य द्वित्वे जश्त्वे लक्ष्यभेदात्पुनर्द्वित्वमित्यपास्तम् । पूर्वमकारस्येदानीमोकारस्येति लक्ष्यभेदस्योदपोढामित्यादावपि सत्त्वेनोक्तभाष्यविरोधात् । विकारान्यानुपूर्व्यैक्येन लक्ष्यैक्यं तु ममाप्यस्त्येवेति

भैरवी ।

लाभादित्यर्थः । तदुपपादयति—एतेन—वक्ष्यमाणदूषणेन । ननु 'सुध्युपास्यः' इत्यत्र जश्त्वरूपविकारातिरिक्तवर्णकृतानुपूर्वीकृतलक्ष्यैक्यसत्त्वात्पुनर्द्वित्वं न भविष्यतीत्याशङ्कां वारयति—विकारेति । ममापि—'उदवोढाम्' इत्यत्र लक्ष्यैक्यवादिनो ममापि । एवञ्च तपरत्वसामर्थ्यादिति त्वदुक्तिर्व्यर्थेति भावः ।

भावप्रकाशः ।

मार्थत्वेन तेन सवर्णातरकालव्यावृत्तावपि तत्कालासवर्णव्यावृत्तौ मानाभावाच्च । तदाह—अतत्कालेति । लाभादिति । तपरसूत्रप्रवृत्तिद्वारेति भावः । एतेनातत्कालव्यावृत्तेरिवासवर्णव्यावृत्तेरपि शाब्दत्वमेव, एवञ्च न वृद्धिः, अन्यथा अस्येतिवदेत् वर्णपदं च न कार्यमिति लाघवमिति मन्दोक्तमपास्तम्, उक्तयुक्तेः, असवर्णग्रहणप्राप्तेरेव खपुष्पायमाणत्वाच्च, तपरसूत्रे पञ्चमीसमासज्ञापनार्थं वृध्युत्तरमोत्वाथ च तदावश्यकत्वस्य भाष्यादौ स्पष्टत्वाच्चेति दिक् । यत्तु धस्य द्वित्वे जशि "पूर्वत्रासिद्धीयम्" इत्यनसिद्धत्वेन व्यक्त्यन्तरत्वादस्य द्वित्वमिति न्यायासञ्चार एवेति खण्डनकृद्रत्नाकरदण्डिमन्दाः, तत्खण्डयति—एतेनेति । पूर्वमिति । तदानीं जश्त्वाप्राप्तेरिति भावः । पुनर्द्वित्वमिति । उक्तरीत्या जश्त्वानसिद्धत्वेन दस्य पश्चाद् द्वित्वमित्यर्थः । एतेनेत्यस्यार्थमाह—पूर्वमिति । "भाष्यानुपलम्भ" इति मन्दोक्तिस्तु चिन्त्यैवेत्युक्तं प्राक् । एतेन रूपचतुष्टयोक्त्या "पूर्वत्रासिद्धीयम्" इति मास्त्विति दीक्षिताशय इति रत्नाकरोक्तिरुक्तरीत्या एकधकारकद्विदकारकरूपसम्भवेन चतुःपञ्चादिधयापत्तिरयुक्तेति मन्दोक्तिश्चापास्ता । विकारेति । विकारशब्दः कर्मघञन्तः । विकारान्ययोर्विकृताविकृतयोरानुपूर्व्यामिथ ऐक्येनेत्यर्थः । अचः परस्य

सरला ।

मारिक्तोऽन्य एव तदघटितत्वस्य सत्त्वेन इडागमविशिष्टस्य पुना रेश्आदेशो न स्यादिति पुनः प्रवृत्यर्थं सूत्रे द्विवचनस्य स्वांशे चारितार्थ्यमिति । तदेव न, स्वविधेयस्य स्वोद्देश्यत्वाभावनियमात् । तथाच रेश्आदेशस्य इडागमानन्तरमपि "यदागमा" इति न्यायेन रेत्वस्य विधेयत्वस्य सत्त्वेन तदुद्देशेन पुनरुक्तनियमे रेवादेशाप्राप्त्या तत्रादेशसिद्ध्यर्थं द्विवचनस्य चारितार्थ्यात् । नचैवम् 'अ' शब्दादाचारक्विबन्तात् णिचि अतो लोपे 'इ'धातोः पुनः प्रेषणविवक्षायां पुनर्णिच् न स्यादुक्तनियमेन "हेतुमति च" इतिशास्त्रविधेयस्य तदुद्देश्यत्वासम्भवादिति वाच्यम्, स्वविधेयतावच्छेदकं स्वीयोद्देश्यतावच्छेदकं न भवतीति नियमाकारस्वीकारेणात्र 'इ' धातोर्णिचि धातुत्वेनैवोद्देश्यतया स्वविधेयतावच्छेदकणिच्त्वेनोद्देश्यत्वाभावे—नोक्तनियमाप्रवृत्तेरदोषात् । अत एव 'घटो घटः' इति न प्रयोगः । नन्वेवं प्रकृतेऽपि रेत्वस्य विधेयतावच्छेदकत्वेन इरेत्वस्योद्देश्यतावच्छेदकत्वेन चोक्तनियमाप्रवृत्तेर्द्विवचनस्य वैयर्थ्यमिति चेत् ? अत्रोच्यते—स्वविधेयतावच्छेदकघटितं स्वोद्देश्यतावच्छेदकं न भवतीति नियमाकारस्वीकारात् । अस्ति चात्रोद्देश्यतावच्छेदकस्य इरेत्वस्य विधेयतावच्छेदक-रेत्व-घटितत्वमिति नियमप्रवृत्त्या द्विवचनस्य चारितार्थ्यमिति । अत्र बीजन्तु उद्देश्यं सिद्धं विधेयन्त्वपूर्वमिति । अपूर्वबोध्यत्वरूपविधेयत्वस्य सिद्धत्व—प्रथमावगतत्व—रूपोद्देश्यत्वासम्भव इति । किञ्च नियमाकारे घटितत्वनिवेशेन विधेयांशेऽधिकावगाहिज्ञानस्य प्रामाणिकत्वेऽपि उद्देश्यांशेऽधिकावगाहिज्ञानस्य न प्रामाणिकत्वमिति सूचितम् । तेन नीलघटो घट इति न प्रयोगः । प्राचीनास्तु उद्देश्यस्य प्रथमावगतत्वेन तस्यापूर्वबोध्यत्वरूपविधेयत्वासम्भवेन विधेयतयोद्देश्यावगाहिशाब्दबोधो न सम्भवतीति विधेयांशेऽधिकावगाहिज्ञानस्याऽपि अप्रामाणिकत्वमेवेति घटो नीलघट इति न प्रयोगः । विस्तरस्तु व्युत्पत्तिवादटिप्पणे द्रष्टव्यः । अपास्तमिति । तल्लक्ष्यत्व-

त्। "सर्वस्य द्वे" (पा०सू०८।१।१) इति द्वित्वमपि पुनः पुनः प्रवर्तेत। अत एव

---

शब्दरत्नम्।

दिक्। इति द्वित्वमपीति। एतेनाष्टमिकवर्णद्वित्वं स्थाने द्वित्वमिति लक्ष्यभेदोऽ-

भैरवी।

दिगिति–दिगर्थस्तु स्वविधेयस्य स्वस्मिन्नुद्देश्यत्वासम्भवे बीजमुद्देश्यत्वं सिद्धस्य, स्ववि-धेयस्य त्वसिद्धतया तस्योद्देश्यत्वासम्भव इति। तथा "इरयो रे" इतिसूत्रभाष्ये 'दध्रे' इति प्रयोगे नास्ति। रेभावे कृते तस्येडागमे कृते कालविलम्बेनोद्देश्यस्य सिद्धतया द्विवचननिर्दे-शाभावेऽपि रेभावस्य पुनर्विधानञ्चरितार्थमिति द्विवचननिर्देशस्य लक्ष्ये लक्षणस्येति न्यायबी-जत्वमेव, यत्रोद्देश्यतावच्छेदकविधेयतावच्छेदकधर्मैक्यं तत्र विधेयस्योद्देश्यत्वासम्भवो, यथा घटो घट इत्यादौ। अवच्छेदकभेदेन तत्सम्भवस्तु घटो नील इत्यादौ प्रसिद्ध इति केचिदूचुः, तन्न, यत्रोद्देश्यविधेययोः सामान्यविशेषभावस्तत्रोद्देश्यविधेयभाव इति नियमः। 'घटो घटः' इत्यादौ च तथात्वाभावेन तस्याभावः। 'घटो नील' इत्यादौ तु घटः सामान्यं नीलो विशेष इति विवक्षाऽस्तीति सम्भवत्युद्देश्यविधेयभावः। एवञ्च प्रकृते रेभावे कृते इडागमे तस्यैरेत्वप्रकारकज्ञानविशेष्यत्वेऽपि सामान्यविशेषभावाभावेन तस्यासम्भव इत्याशयात्। यदि चेडागमविशिष्टस्य रेशब्देन ग्रहणम्, यमुद्दिश्यागमो विहितस्तद्बोधकेन शब्देनाग-मविशिष्टस्य ग्रहणमिति तदर्थात्। तथाच रेत्वेरेत्वयोः सामान्यविशेषभावसत्त्वेन ताभ्यां धर्माभ्यामाश्रययोरुद्देश्यविधेयभावसम्भव इति ब्रूषे तर्हि कृतेऽपीडागमे तस्यादेशो न प्रा-प्नोतीति इरेत्वस्यैव स्थानितावच्छेदकत्वेन शास्त्रघटकशब्देनोपस्थितत्वात्। एवञ्चेडागमे कृते यो धर्मः स्थानितावच्छेदकत्वेनाश्रितस्तत्प्रकारिका प्रतीतिरस्त्येवेति भवति शास्त्रस्य प्रवृत्तिरिति वक्तव्यं, तथा चेरेत्वेन विधेयस्यैवोद्देश्यत्वं वक्तव्यं, तच्च न सम्भवतीत्याशयः। यदपि रेभावोत्तरमिडागमेऽपि तस्यैरेशब्दस्य लाक्षणिकत्वादादेशो न स्यादतो द्विवचननिर्देश इति; तदपि न, कृतेऽपि द्विवचननिर्देशे प्रकृते लाक्षणिकत्वन्नापगतमिति लक्षणप्रतिपदोक्तपरि-भाषाया अनित्यत्वज्ञापनेनैव तस्य चारितार्थ्यस्य वक्तव्यत्वादिति॥

ननु द्विधमित्यादिना धकारस्य द्वित्वमादाय यन्मूले चतुष्टमुक्तं, तन्न युक्तं, दकारस्य द्वि-त्वमादाय रूपाधिक्यस्य सम्भवादिति चेत्? न, द्वित्वे कर्तव्ये जश्त्वस्यासिद्धत्वात्। न च 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यसिद्धत्वस्य प्रतिषेधो भविष्यतीति वाच्यम्, तस्याः परिभाषा-त्वेन सिद्धत्वयोः फले विशेषो यत्र तत्रैव प्रवृत्तेः।

लक्ष्यभेदसम्पादनाय खण्डनकारोक्तामन्यां युक्तिं खण्डयति—एतेनेति। वक्ष्यमाणप्रकारे-

भावप्रकाशः।

वरो लक्ष्यत्वेनानुपूर्वीनिवेशः। तत्र विकृतत्वादि चावयवद्वारकम्। यद्वा विकारेणादेशेनान्या याऽऽनुपूर्वी तस्याः पूर्वतनानुपूर्व्या सहैक्येनेत्यर्थः। नचैवं विकारान्यानुपूर्व्याभेद इति "इकोगुण" इति सूत्रस्थो-द्द्योतविरोध इति वाच्यम्, विकारशब्दस्यार्शआद्यजन्तत्वेन तद्वदानुपूर्वीतोऽन्याऽऽगमादिकृता याऽऽनु-पूर्वी तस्यास्तद्रहितानुपूर्वीतो भेद इति तदर्थात्। "सिचि वृद्धिः" इति सूत्रस्थभाष्येण विकारस्थले एवाभे-दलाभादितिदिक्। दिगिति। तदर्थस्तु "पूर्वत्रासिद्धीयम्" इत्यस्यात्रासञ्चारः। यत्रासिद्धत्वे तन्निषेधयोः फले विशेषस्तत्रैव परिभाषात्वेन तत्प्रवृत्तेः। एवञ्च तस्यासिद्धतया लक्ष्यैक्यमेवेति सर्वथा तदुक्तिरयुक्तै-वेति। एतेन धद्वित्वमादाय मूले चतुष्टमुक्तम्, दद्वित्वे तु अधिकान्यपीति रत्नाकरोक्तिरपास्ता।

लक्ष्यभेदाय खण्डनकाराद्युक्तं युक्त्यन्तरं खण्डयति—एतेनेति। एतद्विवृणोति—पदेति। एतन्न्या-

"लिटि धातोः—"( पा०सू०६।१।८ ) इति सूत्रेऽनभ्यासग्रहणं भाष्ये प्रत्याख्या-

शब्दरत्नम् ।

स्तीति परास्तम् । पदद्वित्वस्याप्यावृत्त्यापत्तेः । वस्तुतस्तत्षाष्ठद्वित्ववन्न स्थाने द्विर्वचनमि-त्यन्यत्र निरूपितम् । प्रत्याख्यातमिति । "अनभ्यासप्रतिषेधोऽनर्थकश्छन्दसि वावचनात्

भैरवी ।

ण । तमेव दर्शयति—पदेति । तथाच क्रियासमभिहारे 'लुनीह लुनीहीत्येवायं लुनाति' इत्या-दौ पुनर्द्वित्वापत्तिः । क्रियासमभिहारे द्वित्ववद्वीप्सायामपि पुनर्द्वित्वापत्तेश्च । क्रियासम-भिव्याहारवत्तस्या अप्यनेकव्यङ्ग्यत्वसम्भवादिति भावः । परोक्तमभ्युपेत्य प्रतिबन्द्युत्तरमि-दम् । वस्तुतः पुनर्द्वित्वस्य प्रवृत्तौ मानाभाव इत्याशयेनाह—वस्तुत इति । तत्—आष्टमिकव-र्णद्वित्वम् । अयं भावः—षाष्ठद्वित्वस्थले 'एकाचः' इतिषष्ठी स्थानपदार्थनिरूपितसम्बन्धा-र्थिका, 'द्वे' इति शब्दस्वरूपात्मकसङ्ख्येयपरमिति स्थाने द्विर्वचनस्य लाभः । यदा तूच्चारणे इत्यस्याध्याहारे उच्चारणक्रियायाः कर्मसाकाङ्क्षत्वादुपस्थितस्य 'द्वे' इत्यस्यैव कर्मसमर्पकत्वं तदा 'द्विः प्रयोगो द्विर्वचनम्' इति पक्षस्य लाभः । तत्र कारकविभक्तेर्न्याय्यत्वाद् द्वितीयपक्ष एव युक्तः । अधिकमन्यत्रोक्तम् ।

यत्तु षाष्ठाष्टमिकपदद्वित्वयोर्नित्यतया क्वचित्तस्य विश्रामोऽवश्यं वाच्यः, एवञ्च लाघवेन प्रथमप्रवृत्तावेव विश्रामः कल्प्यते, अन्यथा रूपानन्त्यापत्तिरिति; तन्न, उक्तरीत्या आनन्त्या-पत्तेरभावात्, सकृत्प्रवृत्त्यैव वीप्सादिद्योतनसम्भवाच्च । अन्यथा "परेर्वर्जने" इति द्वित्वस्य वैकल्पिकतया तस्य पुनः प्रवृत्त्यापत्तेः । केचित्तु "लिटि धातोः" इतिसूत्रेऽनभ्यासग्रहणाल्ल-क्ष्ये लक्षणस्येतिन्यायोऽनित्य इति पुनर्द्वित्वस्य प्रवृत्तिसम्भव इति वदन्ति । तन्न, भाष्यवि-रोधात् । तमेवाह—अनभ्यासेति । अनर्थक इत्यस्य लक्षणस्य सकृत्प्रवृत्तेरिति शेषः । तथाच

भावप्रकाशः ।

यानङ्गीकारे लुनीहि लुनीहीत्यादौ क्रियासमभिहारस्येव पचति पचतीत्यादौ वीप्सादेरप्यनेकद्योत्यत्वं स्यादिति भावः । इदञ्च तस्य तत्त्वमभ्युपेत्य प्रतिबन्द्या पुनःपुनरप्रवृत्तिरित्याशयेनोक्तम् । वस्तुतस्तदेव न, मानाभावादित्याह—वस्तुत इति । तत् वर्णद्वित्वम् । साधर्म्ये दृष्टान्तः । अयम्भावः, "एकाचो द्वे प्र" इत्यादौ द्वे इत्यस्य सङ्ख्येयविशेषापेक्षायां शब्दानुशासनप्रस्तावाच्छब्दरूपे प्रत्यासत्त्या "स्थानेन्तर" इति परिभाषया स्थानिसमानाकारे यदा गृह्येते तदा एकाच इति स्थानषष्ठीति स्थाने द्विर्वचनपक्षः । यदा तु शब्दद्वयस्योच्चारणसाध्यत्वेन तद्बुध्यारोऽवश्यकत्वेन तदध्याहारेण द्वे उच्चारणे इत्यर्थस्तदा तत्क्रिया याः कर्मापेक्षायां सा कर्मणि षष्ठीति द्विःप्रयोगपक्षः । तत्र कारकविभक्तेर्न्याय्यत्वेनादोषेण चान्त्य एव सिद्धान्तः । एवं वर्णद्वित्वेऽपि । पदद्वित्वे तूक्तयुक्त्या तस्यैव वाक्यादेरद्वित्वाय पदस्येत्यस्यावश्यकापकर्षेण सिद्धे सर्वस्येति सामर्थ्यात्स्थानेद्विर्वचनपक्षस्यापि प्राप्त्या दोषाभावेन चैच्छिको विकल्पः । युक्तन्तु स्थाने द्विर्वचनत्वम् । तत्र पुनः प्रवृत्तिस्तु न, द्वितीयपक्षानुरोधात् । तेनैवाभीक्ष्ण्यादिबोधनाच्चेति; तदाह—अन्यत्रेति । शब्देन्दुशेखरादावित्यर्थः । यत्तु "लिटि धातोः" "सर्वस्य द्वे" इत्यादिद्वित्वानां नित्यतया-

सरला ।

शरीरे विकारातिरिक्तस्वनिवेशादिति भावः । अन्यत्र निरूपितमिति । द्विरुक्तप्रक्रियायां "सर्वस्य द्वे" इति सूत्रव्याख्याने इत्यर्थः । तत्र हि द्वे इत्यस्य संख्यापेक्षायां शब्दरूपे गृह्येते शब्दानुशासनप्रस्तावात्, सर्वस्येति स्थानषष्ठी सोऽयं स्थाने द्विर्वचनपक्षः । यदितु उच्चारणमेव संख्येयं तदा स्थान्यादेशभावो नास्ति

तम् । सन्नन्ताद्यङन्ताद्वा णिचि चङि द्वित्वाभावार्थं तदिति तु कैयटादिभिरुक्तम् । तस्मादिह त्यज वा पञ्चमादीनि रूपाणि स्वीकुरु वा रूपानन्त्यमिति नवत्वोक्तिरसंगतैव । सकारद्वित्वेनाष्टौ, विसर्गद्वित्वेन षोडशेति त्वन्यदेतत् ।

---

### शब्दरत्नम् ।

नोनूयतेर्नोनावेत्यादौ न दोष" इति भाष्यम् । 'एकस्यैकाचो द्वित्वे कृते एकाज्व्यपदेशे हेतोरचो द्विरुक्तत्वाद्, अनेन न्यायेनाचः पुनः पुनर्द्वित्वाप्राप्तौ अवयवान्तरस्यैकाच्त्वाभावेन तदप्रवृत्तौ तद् व्यर्थम्' इति च तदाशयः कैयटेनोक्तः । कैयटादिभिरिति । अत्रारुचिबीजं तु भाष्यप्रामाण्येन तेषामनभिधानम्, "स्तौतिण्योः—" (पा०सू०८।३।६१) इति सूत्रस्थः 'सोषुप्यतेः सन्,–सोषुपिषते' इति भाष्यप्रयोगोऽपि छान्दस इत्याहुः । रूपानन्त्यमिति । रूपाधिक्यमित्यर्थः । तदाह—नवत्वोक्तिरसङ्गतैवेति । सकार-

### भैरवी ।

तन्न्यायमाश्रित्याभ्यासप्रतिषेधो बभूवेत्यादौ पुनर्द्वित्ववारको न कार्य इति कल्पनेन लाघवस्य सम्भवे तन्न्यायानित्यत्वेऽभ्यासप्रतिषेधस्य ज्ञापकत्वकल्पनम्भाष्यविरुद्धमिति भावः । ननु नोनावेत्यत्र "सन्यङोः" इति द्वित्वोत्तरं "लिटि" इतिद्वित्वापत्तिरतोऽनभ्यासप्रतिषेध आवश्यकोऽत आह—छन्दसीति । न दोषः—न पुनर्द्वित्वापत्तिः । पुनर्द्वित्वाप्रवृत्तौ कैयटोक्तिम्प्रमाणयति—एकस्यैकाच इति । एतेन 'जुगुप्सिषते' इत्यादौ पुनर्द्वित्ववारणायोत्तरार्थमनभ्यासस्येति कथितमिति परास्तम्, उक्तरीतेः। अरुचिबीजम्—कैयटादिभिरित्युक्त्या सूचितन्तद्बीजमित्यर्थः । भाष्यप्रामाण्येन—"अभ्यासप्रतिषेधोऽनर्थकः" इति भाष्यप्रामाण्येन । तेषाम्—सन्नन्तादित्यादिना मूले प्रदर्शितानाम् । अनभिधानमिति । लोक इति शेषः । अत एवाह–स्तौतीत्यादि । इत्याहुरिति । भाष्यानुसारिण इति शेषः । रूपानन्त्यस्य खण्डितत्वादाह–रूपाधिक्यमिति । ननु सुध्युपास्य इत्यस्य लक्ष्यस्यैकत्वात्सकारस्यापि तेन शास्त्रेण द्वित्वं न स्यादत

### भावप्रकाशः ।

ऽऽनन्त्यापत्तेः क्वचिद्विश्रान्तौ कल्प्यायां लाघवात्प्रथमप्रवृत्तावेव विश्रान्त्या पुनःपुनरप्रवृत्तिः । अतएवानभ्यासपदं प्रत्याख्यातमिति खण्डनकारादिः; तन्न, उक्तरीत्याऽऽनन्त्यापत्तेरभावात् । भाष्योक्तप्रत्याख्यानहेतुत्वसङ्गत्यापत्तेश्च । सकृत्प्रवृत्तेन द्विर्वेनैवाभीक्ष्ण्यादिबोधनाच्च । अतएव "परेर्वर्जने" इति वैकल्पिकद्वित्वस्यापि न पुनः पुनः प्रवृत्तिः । एवञ्चानभ्यासग्रहणं कुर्वतः सूत्रकृतो नायं न्याय इष्ट इति मन्दप्रतारणमात्रं वेदितव्यम् । तदेतद्ध्वनयन्वक्ष्यमाणकैयटासङ्गतिं च प्रतिपादयन्नाह—अनभ्यासेति । न दोष इति । न पुनर्द्वित्वापत्तिरित्यर्थः । देशहेतोरिति पाठः । क्वचिद् व्यस्तपाठोऽपि । नाचः—तस्यैव । अवयवान्तरेति । हल इत्यर्थः । यद्यपि न्यायेनास्यापि वारणं सम्भवति तथापि प्राप्तिरेव नेत्याह—स्यैकाच्त्वेति । अच्त्वाभावेन सुतरां तदभाव इत्यर्थः । अतएव तद्व्यपदेशहेतुत्वमस्यानियतम् । चोऽवसाने योज्यः । नोक्तइति । 'जुगुप्सिषते' इत्यादावुक्तन्यायेन पुनरप्रवृत्तावुत्तरार्थोऽपि निषेधो मास्त्विति ग्रन्थेनेति भावः । बीजन्त्विति । कैयटादिभिरित्युक्त्या सूचितमिति भावः । एवमग्रेऽपि । भाष्येति । उक्तभाष्येत्यर्थः । तेषाम्—सन्नन्तादिप्रकृतिकणिजन्तादिप्रकृतिकलुङाद्यन्तानाम् । अनभिधानमिति । लोके इति शेषः । अत एवाह—स्तौतीति । अपिरन्यसमुच्चायकः । आहुरिति । भाष्यानुसारिण इत्यर्थः । आनन्त्यस्य खण्डितत्वादाह—रूपाधिक्यमिति । चतुःपञ्चादिधययुतमित्यर्थः । ननु 'सुध्युपा-

यदप्युक्तं त्रैपादिकेऽन्तरङ्गे इत्यादि, तदपि न, 'नाकुट:' 'नार्पत्य:' इत्यत्र विसर्गवारणाय वृद्धेरसिद्धत्वस्य तत्रैव भाष्ये स्पष्टत्वात्। "संयोगान्तलोपे यण: प्रतिषेध:" इत्यस्य बहिरङ्गत्वेन प्रत्याख्यातत्वात्। स्वयमपि तथैवानूदितत्वाच्च। तस्मादि-

---

शब्दरत्नम्।

द्वित्वे इति। अच्परयत्वावच्छिन्नं ह्यस्य लक्ष्यम्, तत्रैकस्मिन् धकारे प्रवृत्तावपि तादृशे सकारे लक्ष्यभेदात्पुन: प्रवृत्तिर्भवत्येवेति भाव:। एवं संप्रसारणादिविधौ यण्त्वावच्छिन्नमुद्देश्यमिति लक्ष्यभेदाद्यावदुद्देश्यं पुन: प्रवृत्तिर्भवत्येवेति न "न सम्प्रसारणे" ( पा० सू० ६।१।३७ ) इत्यादेर्वैयर्थ्यमिति बोध्यम्। तदपि नेति। यथोद्देशपक्षे इत्यनुक्त्वा सामान्येन यदुक्तं तदपि नेत्यर्थ:। तस्मादिहेति। "यणो मय" इत्यत्रेत्यर्थ:। विसर्जनीयसूत्रभाष्यात्तु कार्यकालपक्षेऽपि त्रिपाद्यां तदप्रवृत्तिरिति लभ्यते, मूलं तु कैयटानुसारेणेति परे।

भैरवी।

आह—अच्परेति। ननूक्तन्यायाङ्गीकारे "न सम्प्रसारणे सम्प्रसारणम्" इतिसूत्रस्य वैयर्थ्यापत्तिरत आह—एवमिति। अत्र 'सुध्युपास्य:' इत्यादौ "बहिरङ्गलक्षणत्वाद्वा" इत्यनेन संयोगान्तलोपाप्रवृत्तिसम्पादनमसङ्गतम्, त्रैपादिकेऽन्तरङ्गे त्रिपाद्या असिद्धेस्तत्राप्रवृत्तेर्न्याय्यत्वादिति 'तदपि न' इत्यादिनोक्तमसङ्गतमतो मूलाशयमाह-यथोद्देश इत्यादिना। मूले तस्मादित्यत्र यदिहेति, तदर्थमाह—यणो मय इति। भाष्यकारोक्तसिद्धान्तमाह—विसर्जनीयेति। तत्र हि-'नाकुट:' 'नार्पत्य:' इत्यादौ रेफस्य विसर्गवारणाय "विसर्जनीयोऽनुत्तरपदे" इति वार्तिककृतोक्तं, तत्प्रत्याख्यानपरान्तरङ्गपरिभाषाप्रवृत्तिस्तु न युक्ता; "पूर्वत्रासिद्धमिति प्रत्यक्षसिद्धम्" इत्येतद्विरोधात्। अत एवोक्तं तत्र "नवा बहिरङ्गलक्षणत्वात्" इति। तेनोभयपक्षेऽपि त्रिपाद्यां बहिरङ्गपरिभाषाया अप्रवृत्तिरेव। नन्वेवं सति मूलविरोधोऽत आह—मूलं त्विति। परे—भाष्यतत्त्वविद:।

भावप्रकाश:।

स्य:' इति लक्ष्यैक्यात् सकारद्वित्वे नेत्यादिमूलासङ्गतिरत आह—अच्परेति। ननु पदं नापि तद्विशेषरूपमिति भाव:। हि—यत:। अत इति शेष:। तत्र—अच्परयत्वावच्छिन्ने। एवमग्रेऽपि। प्रसङ्गादाह—एवमिति। वैयर्थ्यमिति। स्फुटीभविष्यति चैतदनुपदमेव। यत्तु त्रैपादिके इत्यादिप्रकाशग्रन्थस्य "पूर्वत्रासिद्धमसिद्धमित्यनयोर्मिथ: प्रतिबन्धादप्राप्त्याऽनुत्तरपदे इति वचनेन विसर्गवारणपक्षाशयकतया काचित्कपरतया च नाकुटादिसिद्धिवार्तिकप्रत्याख्यानयो: सुवचत्वेन मूलं चिन्त्यमिति खण्डनकृदादयस्तत्खण्डयति—यथोद्देश इति। क्त्वाप्रत्ययेन तस्य पूर्वकालेऽवश्यवक्तव्यत्वं सूचितम्। तदाह मूले—तस्मादिहेति। संयोगान्तलोपे प्रवृत्तेरिष्टत्वादाह—यणो मय इति। सिद्धान्तमतमाह—विसर्जनीयेति। तद्विधिसूत्रस्थात् "असिद्धं बहिरङ्गम्" "पूर्वत्रासिद्धम्" इत्यनयोर्मिथ उपमर्द्योपमर्दकत्वप्रतिपादकात् "कुतो न खलु" इत्यादि "अतोऽयुक्त: परिहारो नवा बहिरङ्गलक्षणत्वादिति" इत्यन्तभाष्यात्प्रत्यक्षेणानुमानिकस्य बाध इति सिद्धान्ताशयकादित्यर्थ:। स्पष्टं चेदमुद्द्योते। अपिर्यथोद्देशपक्षसमुच्चायक:। मूलासङ्गतिं परिहरति—मूलन्त्विति। एतेन तदनुयायिरत्नाकरादिग्रन्थाश्चिन्त्या एवेति ध्वनितम्। यथा चैवं 'महिष्मान्' इत्यादिसिद्धिस्तथा स्पष्टमन्यत्र। स्फुटीभविष्यति चोपरिष्टात्।

सरला।

निवृत्तिधर्मा हि स्थानिन:, सर्वं चेन्निवृत्तं किमुच्चार्येत अत: सर्वस्येति अध्याहृतोच्चारणशब्दापेक्षया "कर्तृकर्मणो: कृति" इति कर्मणि षष्ठी सर्वं द्विरुच्चारयेदिति फलितोऽर्थ:। सोऽयं द्वि: प्रयोगो द्विर्वचनमिति पक्ष: इत्युक्तम्।

ह यथोद्देशपक्षो ग्राह्यो बहिरङ्गपरिभाषाया अप्रवृत्तये । तथा च भाष्ये मयः परस्य यणो द्वित्वे 'दध्य्यत्र' इत्युदाहृतम् । न चैवमपि "इकोऽसवर्णे—" ( पा०सू०६।१।१२७ ) इति शाकलेन रूपान्तरमस्त्विति वाच्यम् । समासे तन्निषेधात् । न च नित्यसमास एव तन्निषेध इति वाच्यम् । भाष्ये नित्यग्रहणस्य प्रत्याख्यातत्वात् । यथोत्तरं मुनीनां प्रामाण्यात् ।

नन्विह यणेव दुर्लभः, सुधीशब्दस्य ध्यायतेः सम्प्रसारणेन निष्पन्नत्वेन "सम्प्रसारणाच्च" ( पा० सू० ६।१।१०८ ) इति पूर्वरूपापत्तेः; इति चेत् ? न, "सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणम्" इति वार्तिकोक्तेः, सम्प्रसारणस्थानिकस्यातथात्वा-

---

## शब्दरत्नम् ।

सम्प्रसारणस्थानिकस्येति । स्थाने जातस्येति शेषः । साक्षात्सम्प्रसारणस्था-

## भैरवी ।

मूले—समानाङ्गग्रहणमितीति । अत्र समानपदमेकपरम् । एवञ्च यत्र सम्प्रसारणस्याचश्चै-काङ्गावयवत्वन्तत्र पूर्वरूपमित्यर्थाश्रयणे 'सुध्युपास्यः' इत्यत्र पूर्वरूपापत्तिर्दुर्वारैव, समासोत्तरोत्पन्नसुनिमित्ताङ्गसंज्ञायाः समुदायनिष्ठतया सम्प्रसारणाचोरेकाङ्गावयवत्वस्य सत्त्वात् । यदि तु सम्प्रसारणनिमित्तप्रत्ययनिमित्तैकाङ्गसंज्ञाविशिष्टावयवत्वमित्यर्थस्तदा कारीषगन्धीपुत्र इत्याद्यसिद्धिः । तत्र सम्प्रसारणस्य प्रत्ययनिमित्तकत्वाभावात्, अतोऽङ्गशब्दस्य सम्प्रसारणनिमित्ताव्यवहितपूर्ववर्तिसमुदायपरत्वमेव वक्तव्यम् । नन्वेवमपि 'हूतः' 'जीनः' इत्यादौ पूर्वोत्तरं दीर्घो न भविष्यति, सम्प्रसारणत्वस्य स्थान्यलधर्मतया तदादेशे पूर्वरूपनिष्पन्नेऽतिदेशेन वक्तुमशक्यत्वादिति वाच्यम्, "हलः" इति सूत्रारम्भसामर्थ्यात्तत्रानल्विधाविति निषेधाप्रवृत्तेः । न चैवमपि 'शकह्वर्थम्' इत्यादौ पुनः पूर्वरूपापत्तिवारणाय समानाङ्गग्रहणमिति वार्तिकवैयर्थ्यमेव । पूर्वरूपनिष्पन्ननिष्ठस्यातिदेशलभ्यसम्प्रसारणत्वस्यालधर्मतया तदादेशे दीर्घे अतिदेशेन तस्य वक्तुमशक्यत्वादिति वाच्यम्, अनयैव रीत्या वार्तिकानारम्भस्य भाष्यकाराभिप्रेतत्वादत आह—सम्प्रसारणस्थानिकस्येति । सम्प्रसारणस्थानिकस्य तत्त्वं "हलः" इति सूत्रेण ज्ञापितमेवेत्यत आह—स्थाने जातस्येति । ननु "हलः" इति सू-

## भावप्रकाशः ।

ननु समानाङ्गग्रहणं प्रत्याख्यातमत आह मूले—सम्प्रसारणेति । प्रत्याख्यानरीतिरेवेयमिति भावः । एतेनात्र पूर्वरूपाप्रवृत्तिरुक्तवार्तिकायत्तैवेति मन्दोक्तमपास्तम् । ननु चिन्त्यमिदम् । तादृशस्य पूर्वरूपस्य "हलः" इति सूत्रसामर्थ्यादल्विधित्वेऽपि तत्त्वाङ्गीकारात् । न चोपदेशातिदेशाभ्यां सम्प्रसारणद्वैविध्यलाभेन पूर्वरूपनिष्पन्नातिदेशिकसम्प्रसारणत्ववत एवात्र सम्प्रसारणपदेन ग्रहणेन तत्स्थानिकदीर्घस्यातथात्वमिति मान्योक्तरीत्या यथाश्रुतमूलसामञ्जस्यमिति वाच्यम् । तात्पर्यग्राहकमातिदेशिकेत्यादिपदं च विना स्वरसतो झटिति तथार्थप्रतीत्यभावेन यथाश्रुतमूलासङ्गतेरत आह—स्थान इति । तत्स्थानिकपूर्वरूपस्थाने जातस्य "हलः" इति दीर्घस्येत्यर्थः । ननु 'हल' इतिसामान्यापेक्षज्ञापकेन तत्त्वेऽपि पूर्वरूपस्येव दीर्घस्यापि तत्त्वस-

## सरला ।

उपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायानुरोधेन द्वितीयपक्षस्यैवौचित्यमिति तदाशयः। अत एव 'वृक्षान् वृक्षान्' इत्यत्र प्रत्येकं पदत्वेन पदान्तस्येति णत्वनिषेधः सिध्यति । 'अश्नीताश्नीत' इत्यत्र अतो गुणे पररूपाभावश्च सिध्यति । अधिकं तत एवावगन्तव्यम् । इति परे इति । अत्रत्यं तत्त्वं पूर्वमेवोक्तम् । मूले—समानाङ्गग्रहणमिति । अत्र समानपदस्य एकवाचित्वे सम्प्रसारणस्य अचश्च यत्र एकस्मिन्नेव अङ्गे विद्यमानत्वं तत्रैव पूर्वरूपमिति तदर्थः । स्वघटित-अङ्गघटकत्वसम्बन्धेन सम्प्रसारणविशिष्टेऽचि पूर्वरूपमिति फलि-

च्च । न चैवमपि "न भूसुधियोः" ( पा० सू० ६।४।८५ ) इति यण्निषेधः शङ्क्यः, आङ्गत्वेन प्रत्यये परत एव तस्य प्रवृत्तेः, अनन्तरस्येति न्यायेन "एरनेकाचः—"

शब्दरत्नम् ।

निकपूर्वरूपादेः "हलः" ( पा०सू०६।४।२ ) इत्यारम्भसामर्थ्यादल्विधा स्थानिवत्त्वाङ्गी·

भैरवी ।

त्रस्य सम्प्रसारणत्वस्याल्धर्मत्वेऽपि तदतिदेशे कर्तव्ये ऽनल्विधाविति निषेधो न प्रवर्तेत इत्यर्थज्ञापकत्वमेवास्त्वित्यत आह—साक्षादिति । अल्विधाविति । दीर्घे इत्यर्थः । कर्तव्य इति शेषः । एतावतैव "हलः" इति सूत्रस्य चारितार्थ्यमिति भावः । नन्वेवं सति "सुध्युपास्यः" इत्यादौ सुधि आ इतिस्थितेऽपवादत्वात् "हलः" इति दीर्घे पूर्वरूपं न स्यात्, "हलः" इति सूत्रस्य कृतार्थतयाऽल्विधावपि स्थानिवद्भावेन सम्प्रसारणादेशस्य सम्प्रसारणत्वमित्यर्थज्ञापकत्वासम्भवात्, "सम्प्रसारणाच्च" इत्यस्य 'विध्याध' इत्यत्र चारितार्थ्यादितिचेन्न, 'नि·

भावप्रकाशः ।

म्भवोऽत आह—साक्षादित्यादि । रूपादेरिति । तद्रूपस्य प्रथमतो जातस्येत्यर्थः । एतेनादिव्यर्थ इत्यपास्तम् । आरम्भेति । अन्यथा सम्प्रसारणं तदाश्रयं चेति पूर्वरूपे तस्यातत्त्वाद्वैयर्थ्यं स्पष्टमेवेति भावः । अल्विधौ । दीर्घे तावतैव तस्य चरितार्थ्यात् । एवञ्च ज्ञापकत्वस्यैवाफलत्वादभावेन सामान्यापेक्षत्वं सुतरां नेति भावः । एतेन 'यूनः' इत्यादिसिद्धये हल इति सामान्यापेक्षं ज्ञापकं सम्प्रसारणाश्रिते कार्ये· ऽनल्विधाविति निषेधो नेत्यत्रार्थे इति मन्दोक्तमपास्तम्, उक्तयुक्तेः, तस्यान्यथासिद्धेर्वक्ष्यमाणत्वाच्च, त्वद्रीत्या 'वव्रश्च' इत्यादिसिद्धया तदर्थमासप्तमसमाप्तेरङ्गाधिकार इति भाष्यविरोधापत्तेश्चेति दिक् । ननु 'सुधि आ' इत्यादौ परत्वान्नित्यत्वादाङ्गत्वादपवादत्वाच्चादौ दीर्घेणोक्तरीत्या पूर्वरूपाप्राप्त्याऽनिष्टरूपापत्तिः । "सम्प्रसारणाच्च"इति तु 'यूनः' इत्यादौ चरितार्थम् । नच तत्र विशेषविधित्वादल्लोपादादौ सम्प्रसारणे सवर्णदीर्घतः परपूर्वरूपात् परमल्लोपमन्तःकार्यत्वरूपान्तरङ्गत्वाद्बाधित्वाऽऽदौ जातसवर्णदीर्घेणोक्तरीत्या

सरला ।

तोऽर्थः । एवमुक्तावपि सुध्युपास्य इत्यत्र समासोत्तरसुप्रत्ययनिमित्तकाङ्गसंज्ञायाः सुधी उपास्य इति विशिष्टे सत्त्वेन सम्प्रसारणाचोरेकाङ्गघटकत्वस्य सत्त्वेन पुनरपि दोषस्तदवस्थ एव । यदि तु सम्प्रसारणविशिष्टेऽचि पूर्वरूपं वैशिष्ट्यञ्च स्वनिमित्तप्रत्ययनिमित्ताङ्गसंज्ञावद्घटकत्वमिति । तथा चाङ्गसंज्ञानिमित्तस्य सुप्रत्ययस्य सम्प्रसारणनिमित्तत्वाभावेन प्रकृते न दोष इति इत्युच्यते । तर्हि कारीषगन्धीपुत्र इत्यत्र पूर्वरूपानापत्तेः । तत्र सम्प्रसारणस्य पुत्रनिमित्तकत्वेन प्रत्ययनिमित्तकत्वाभावादिति । न च स्वघटिताङ्गघटकत्वस्वाघटिताङ्गाघटकत्व-एतदुभयसम्बन्धेन सम्प्रसारणवैशिष्ट्यमिति प्रकृते न दोष इति वाच्यम् । सुधियोः पुत्र इत्यादावलुक् समासे ओस् प्रत्ययावयवओकारे अलुक्समासोत्तरजायमानसुप्रत्ययनिमित्तकाङ्गसंज्ञामादाय, स्वघटिताङ्गघटकत्वस्य स्वाघटित पुत्रइत्येतदङ्गाघटकत्वस्य च सत्त्वेन सम्प्रसारणवैशिष्ट्यात्पूर्वरूपापत्तिरिति वाच्यम् । स्वाव्यवहितोत्तरत्व स्वस्थानित्वेनाभिमताव्यवहितोत्तरत्वेन वृद्धत्व एतदुभयसम्बन्धेन सम्प्रसारणवैशिष्ट्यस्य विवक्षणीयत्वात् । ओकारे च द्वितीयसम्बन्धाभावान्न दोषः। सुधियावित्यादावपि एवमेव पूर्वरूपं वारणीयमिति दिक् । सम्प्रसारणस्थानिकस्येतीति । इदं तद्वार्तिकप्रत्याख्यानपक्षाभिप्रायेण । तथाच भाष्यम्—"शकन्ध्वर्थमित्यादौ पूर्वरूपाभावाय समानाङ्गग्रहणं कार्यम्, न कार्यम्, असम्प्रसारणत्वात् । अन्योऽयं सम्प्रसारणासम्प्रसारणयोः स्थाने एक आदिश्यते । यदि नेदं सम्प्रसारणं "हलः" इति दीर्घत्वं न प्राप्नोति, वचनप्रामाण्याद् भविष्यतीति"। तथाच "हलः" इत्येतत्सूत्रारम्भसामर्थ्यात् साक्षात्सम्प्रसारणस्थानिकपूर्वरूपे कर्तव्ये सम्प्रसारणत्वस्य अनल्विधाविति निषेधप्रवृत्त्यभावज्ञापनेन स्थानिवद्भावेनातिदेश इति, नतु तत्स्थानिकस्य, परम्परया तदाश्रयणे मानाभावादिति तदाशयः । तदाह—साक्षात्सम्प्रसारणेति ।

( पा० सू० ६।४।८२ ) इति "ओस्सुपि" ( पा० सू० ६।४।८३ ) इति च सूत्रद्वयेन प्राप्तस्यैव निषेधाच्च ।

धात्रंश इति । अत्र रेफस्य द्वित्वं न । द्वित्वप्रकरणे रहाभ्यामिति

---

शब्दरत्नम् ।

कारेऽपि पूर्वरूपोत्तरं प्रवृत्तस्य "हलः" ( पा०सू०६।४।२ ) इति दीर्घस्य स्थानिवद्भावेन सम्प्रसारणत्वे मानाभाव इति भावः ।

द्वित्वं नेति । "यणो मय" इति प्राप्तं नेत्यर्थः । द्वित्वप्रकरणे इति । तथा च

भैरवी ।

क्तं' 'दुरुतम्' इत्यस्य 'सुतम्' इत्यादेश्च सिद्धयेऽङ्गस्येत्यस्यावृत्त्या—'अङ्गावयवाद्धलः परं यत्सम्प्रसारणन्तदन्तस्याङ्गस्य दीर्घः' इत्यर्थस्याश्रयेण दीर्घस्य पूर्वरूपात्प्राक्प्रवृत्त्यसम्भवात् ।

ननु 'धात्रंशः' इत्यत्र रेफस्य "अनचि" इति सूत्रेण द्वित्वाप्राप्त्या द्वित्वन्नेत्यसङ्गतमत आह—यणो मय इतीति । 'मय इति पञ्चमीति पक्षे' इति शेषः । नन्वेवमपि यत्र रेफस्य द्वित्वनिमित्तत्वप्रसक्तिः 'हर्य्यनुभवः' इत्यादौ यथा, तत्रास्तु स्थानित्वबाधः, 'धात्रंशः' इत्यादौ च न तथेति कथम्बाध इत्यत आह—तथाचेति । अस्मिन्प्रकरणे स्थानित्वबाधे च । भाष्यमिति—

भावप्रकाशः ।

पूर्वरूपाप्राप्त्याऽल्लोपेन च रूपसिद्धावपि तदचारितार्थ्यम् । "नाजानन्तर्ये" इति निषेधात्तदनित्यत्वाच्च पूर्वरूपविधिसामर्थ्याच्च सम्प्रसारणस्य सवर्णदीर्घादावसिद्धत्वं न । तथा सति तयोरप्राप्त्याऽल्लोपे 'यु वनः' इति रूपापत्त्येष्टरूपासिद्धिरचारितार्थ्यं च । न च "वार्णादाङ्गम्" इत्यनेन ते बाधित्वाऽल्लोपे सवर्णदीर्घेणैवेष्टसिद्धिरिति वाच्यम्, एवमपि 'शुनः' इत्यादावाद्युदात्तत्वानापत्तेः, उदात्तनिवृत्तिस्वरापत्तेः, लोपस्य द्वितीयस्थानिवत्त्वेन यणापत्तेश्च, बहुश्वेत्यादावनउपधेति वा ङीबापत्तेश्च । तस्माद्वार्णादाङ्गमित्यस्यानित्यतया पूर्वरूपविषयेऽप्रवृत्तिः । अत एव 'शुनयति' 'शुशुवतुः' इत्यादिसिद्धिः । अन्यथा द्वयोरौपदेशिकसम्प्रसारणे तेन न्यायेनाद्ये टिलोपेऽन्त्ये "एरनेकाचः" इति यण्यसिद्धिः स्पष्टैवोभयेषां ग्रहणवैयर्थ्यापत्त्या सम्प्रसारणं तदाश्रयं चेति वचनन्तु भाष्ये प्रत्याख्यातमिति वाच्यम्, एवमपि 'उवाच' इत्यादौ तच्चारितार्थ्यात् । किञ्च 'अक्षद्यूः' इत्यादौ "नाजानन्तर्ये" इति यणि अनित्यत्वेन वलोपे ऊठो न सिद्धत्वमितिविप्रतिषेधसूत्रभाष्योक्तरीत्या दीर्घाल्लोपौ परत्वान्तरङ्गत्वाभ्यां बाधित्वा पूर्वरूपे तच्चारितार्थ्यात् । न चैवं 'यूनः' इत्यत्र सवर्णदीर्घोत्तरमुक्तरीत्या निषेधाप्राप्त्या परादिवत्त्वेनानन्तरत्वाद्यस्य सम्प्रसारणापत्तिरिति वाच्यम्, "अचः पर" इति स्थानिवत्त्वेन तत्परतया निषेधप्राप्तेः । निषेधस्य व्यथ्यादौ चारितार्थ्येन तेनैवोकारव्यवायेऽपि "व्यथो लिटि" इत्यत्र यग्रहणेनैव सिद्धयाऽनुवृत्त्यैव निषेध्यसमर्पके लब्धे दूरस्थतन्निषेधमात्रफलकसम्प्रसारणग्रहणयुतनिषेधसामर्थ्याद्व्यवहितेऽपि प्रवृत्तेः, यूनस्तिरिति निर्द्देशाच्च । एतेन प्रतीकादि भाव इत्यन्तं ग्रन्थमनूद्य तत्र 'यूनः' इत्यादौ सवर्णदीर्घोत्तरमुक्तरीत्या निषेधाप्राप्त्या यस्य सम्प्रसारणापत्तेरिति मन्दोक्तमपास्तमिति चेन्न, निरुक्तमित्यादि वारणायाङ्गस्येत्यावर्त्याङ्गावयवाद्धलः परं यत्सम्प्रसारणं तदन्तस्याङ्गस्येत्यर्थेन पूर्वरूपात्प्राक् 'हलः' इति दीर्घप्राप्तेः । अङ्गस्य सम्प्रसारणविशेष्यतयैव तद्वारणे आवृत्तिर्व्यर्थेत्यन्यदेतत् । तदेतद् हृदि निधायाह—पूर्वरूपोत्तरमिति । आदिपदमप्येतद्बोधकमेव । द्विर्बद्धं सुबद्धं भवतीति न्यायात् । मानाभाव इति । एवं च न तदापत्तिरिति भावः ।

ननु रेफे "अनचि" इत्यादेरप्राप्त्याऽत्र रेफस्य द्वित्वं नेत्यादिमूलासङ्गतिरत आह—यणोमय इति । मय इति पञ्चमी यण इति षष्ठीति पक्षे इति भावः । नन्वेवमपि यत्र निमित्तत्वं श्रुतं तेन तत्प्राप्तकार्यित्वबाधोऽस्तु 'मह्द' इत्यादि यथा, प्रकरणे तद्बाधे तु मानाभावः । अतएव 'हर्य्यनुभवः' इत्यादौ "अनचि" इत्यद्वित्वायार्थाधिकार आश्रितः कौस्तुभे प्रकाशे चेति मूलासङ्गतिरेवात आह—तथा चेति ।

साक्षाच्छ्रुतेन निमित्तभावेन रेफस्य कार्यित्वबाधात्। सुध्युपास्य इत्यादौ तु स्था नित्वेन निमित्तत्वमिकः "तस्मादित्युत्तरस्य" (पा० सू० १।१।६७) इत्यादिनि-

### शब्दरत्नम्।

भाष्यम्—"रेफस्यानुनासिकपरसवर्णद्विर्वचनप्रतिषेधो वक्तव्यः। स्वर्नयति। कुण्डं रथेन। मद्रह्रदः, भद्रह्रदः। न वक्तव्यः। रेफोष्मणां सवर्णा न सन्ति। नेमौ रहौ कार्यिणौ, किं तर्हि, निमित्तं द्विर्वचनस्येति"। अन्यथा वचनारम्भे द्विर्वचनमात्रस्य निषेधेन फलभेदे प्रत्याख्यानानापत्तेः। साक्षाच्छ्रुतेन—विशेषशब्दबोधितेन। यत्र यत्र द्वित्वनिमित्तत्वं तत्र सर्वत्र

### भैरवी।

हयवरट्सूत्रस्थमित्यादिः। आद्यदोषवारणायाह—रेफोष्मणामिति। एतेन "यरोऽनुनासिके" इति सूत्रे "अनुस्वारस्य ययि" इति सूत्रात्सवर्णपदापकर्षो ध्वनितः। तथाच सवर्णोऽनुनासिको नास्तीत्यर्थः। यथाश्रुते रेफस्य रेफ एव सवर्ण इति रेफस्य सवर्णो नास्तीत्यसङ्गतमेव स्यात्। अत एव 'महिष्मान्' इत्यत्र षस्य नानुनासिकः। एतेन "अनुस्वारस्य ययि" इति सूत्रे "यरोऽनुनासिक" इति सूत्रात् 'अनुनासिकः' इत्यस्य सम्बन्धश्च ध्वनितः। अत एव द्वितीयातिप्रसङ्गवारणप्रकारो विशिष्यात्र नोपपादितः। तृतीयातिप्रसङ्गवारणायाह—नेमाविति। रहावित्यत्र हकारोपादानं दृष्टान्तत्वप्रदर्शनाय; यथा हस्य कार्यित्वन्न तथा रेफस्यापि कार्यित्वन्नेति तात्पर्यम्। अन्यथा—एतत्प्रकरणस्थवचनसामान्यप्राप्तद्विर्वचनस्य बाधानङ्गी-

### भावप्रकाशः।

प्रकरणे तद्बाधाङ्गीकारे चेत्यर्थः। भाष्यं "हयवरट्" सूत्रस्थं सङ्गच्छते इति शेषः, तदाह—रेफस्येति। हयवरट् इति यथान्यासे इत्यादिः। इयञ्च सम्बन्धसामान्ये षष्ठी। स च स्थानित्वं निमित्तत्वं चेति नान्वयानुपपत्तिः। वक्तव्य इति। अन्यथा आद्ये णः स्यात्। मध्यमे रेफः स्यात्। अनुनासिकेनैव तेन भाव्यमित्यत्र गमकाभावात्। अन्त्ये दहाभ्यां परयोस्तयोर्यणोमयोऽचोरेति द्वित्वापत्तिरिति भावः। तत्राद्यावुद्धरति—रेफोष्मेति। अयम्भावः—"यरोऽनुना" इत्यत्रानुस्वारस्येत्यतः सवर्णपदस्य मण्डूकप्लुत्याऽपकर्षेण सवर्णोऽनुनासिको भवतीति सूत्रार्थः। सवर्णा नेत्यस्य विजातीया नेत्यर्थः। अनुनासिकोऽनुस्वारान्तरतमश्च सवर्णो नास्तीति यावत्। एवञ्च न तयोरापत्तिः। अप्रकृतोष्मणां तदभावोक्तिस्तु अपकर्षावश्यकतां ध्वनयितुम्। अतएव 'महिष्मान्' इत्यादौ सूत्ररीत्योभयान्तरतमङकारसम्भवेऽपि नानुनासिकः सः "नाज्झलौ" इति निषेधादिनाऽसवर्णत्वादिति। एतेन सप्तम्यन्तपाठाशयकमिदं भाष्यमिति कैयटाद्युक्तिनिरस्ता, उक्तरीत्योपपत्तेः। तत्पाठस्य भाष्ये दूषितत्वाच्चेति स्पष्टमुद्द्योते। तृतीयमुद्धरति—नेमाविति। हस्यायत्वाद्यथा कार्यित्वं न, तथा रस्य तत्त्वेऽपि तेन बाधात्तत्वं नेत्यर्थः। एवञ्च होक्तिर्दृष्टान्तार्था। एतेन तदुक्तिर्व्यर्थेत्यपास्तम्। अन्यथा—प्रकरणे तद्बाधानङ्गीकारे। वचनेति। रेफस्येत्यादिवचनेत्यर्थः। मात्रशब्दः कार्त्स्न्ये, हदोयरेफे अचोरेति मद्रादीये तु यण इति प्राप्तस्येत्यर्थः। उदासीन "हयवरट्" सूत्रेऽस्य पाठात्। अतएव मद्राद्युक्तिः सफला। हस्याचः परत्वं तु नभुल्लेखेनैव सिद्धम्। "हलो यमाम्" इत्यस्य वैकल्पिकत्वेऽपि "शोरि" इति कोपेन शङ्कैवायुक्तेति तु न, तद्दृष्ट्या द्वित्वस्यासिद्धत्वादिति भावः। नापत्तेरिति। तथाचैतद्भाष्यबलात्तथाङ्गीक्रियेत इति भावः। ननु साक्षाच्छ्रुतत्वमविशिष्टमत आह—विशेषेति। फलितमाह—यत्रेत्यादि। "अनचि" इत्यस्य निषेधकत्वेनाचोरेत्येकवाक्यतया न विधा-

### सरला

सवर्णा न सन्तीति। न च स्वर्नयतीत्यत्र अनुनासिकापत्तेरनिस्तारः। "यरोऽनुनासिकेऽनुनासिको वा" इत्यत्र "अनुस्वारस्य ययि परसवर्णः" इति सूत्रात्सवर्णग्रहणमपकृष्य सवर्णोऽनुनासिको भवतीत्यर्थबोधनेन

देशाज्ज्ञापकान्न बाध्यत इति कैयटः । तकारस्य तु भवत्येवेत्युक्तम्, तच्च वा;

शब्दरत्नम् ।

वाक्यान्तरेण "अनचि" ( पा०सू०८।४।४७ ) इत्यनेन कार्यित्वप्रसक्तेरनवकाशेन तेन भाष्यप्रामाण्यात्सामान्यत एव द्वित्वकार्यित्वं बाध्यते इति भावः । न बाध्यत इति । इदं च व्यक्तिपक्षेऽप्यावश्यकम् । अन्यथा "अकः सवर्णे—" ( पा०सू०६।१।१०१ )

भैरवी ।

कारे । ननु कार्यित्वमपि यण्यर्शब्दाभ्यां साक्षात् श्रुतमेवेत्यत आह—विशेषेति । अनचीत्यनेन— "अनचि च" इति सूत्रेण । एतेन "अनचि" इत्यस्य निषेधबोधकतया 'अनचि'इत्यसङ्गतमिति परास्तम् । अनवकाशेनेति । अनेन निमित्तत्वस्यापवादत्वात्कार्यित्वबाधकता बोधिता । नच "अनचि" इत्यस्य "अचो रहा" इत्येतद् दृष्ट्याऽसिद्धत्वात्कथम्बाधकतेति वाच्यम्, तावतापि तदप्राप्तियोग्ये विषयेऽचारितार्थ्यस्यापवादत्वबीजस्यानपायात् "अनचि" इत्यस्य वैकल्पिकतया द्वित्वाभावपक्षे चारितार्थ्यात्कथं कार्यित्वस्य निमित्तत्वेन बाध इति शङ्काया नावकाशः । इदम्—ज्ञापकाश्रयणम् । व्यक्तिपक्षेऽप्यावश्यकमिति । अपिना जातिपक्षसमुच्चयः । अय-

भावप्रकाशः ।

यकत्वमिति भ्रमं व्युदस्यन्नाह—वाक्यान्तेति । पृथगुक्तेश्चकाराच्च तत्त्वम् । ध्वनितं चेदं "हयवरट्" सूत्रे भाष्ये "अनचि च" इत्यत्र "द्विर्वचने यणो मयः" इतिवदता वार्तिककृता । तद्व्याख्यात्रा भगवतापीदं ध्वनितम् । यणोमय इत्यादेरप्राप्तेराह—अनचीति । नचाचोरेति दृष्ट्याऽनचीत्यस्यासिद्धत्वाद्येननाप्राप्यभावः । "वावसाने" इत्यादौ तु वैपरीत्यमिति तदक्षतिरिति वाच्यम् । तथापि स्वाभावे तदवश्यं प्राप्त्यापवादत्वस्य निराबाधत्वात्, द्वन्द्वापवादकत्वमेकशेषस्येव । "प्रकरणे प्रकरणमसिद्धम्" इति पक्षस्त्वाकरे दूषित एवेति केचित् । वस्तुतस्तु "पूर्वत्रासिद्धीयम्" इत्यनेन तस्यानसिद्धत्वमेवेति बोध्यम् । प्रसक्तेरिति । एतेन "अनचि" इत्यस्य वैकल्पिकतया पक्षे निमित्तत्वं चरितार्थमिति मन्दोक्तमपास्तम्, द्वयोस्तत्त्वेऽपि भावपक्षे तत्रापि तदङ्गीकारात् तत्कालेनाप्राप्तत्वमात्रेणापवादत्वाक्षतेः, उक्तभाष्यविरोधापत्तेश्च । एतेन 'र्नाकृतिः' इत्यादौ "यणोमयः" इति द्वित्वे तस्य तत्त्वं चरितार्थमित्यपि तदुक्तमपास्तम्, उक्तभाष्यविरोधेन तदनभिधानात् । रत्वेनानिमित्तत्वाच्चेति दिक् । भाष्येति । उक्तरीत्या प्रत्याख्यानपरोक्तभाष्येत्यर्थः । अन्यथाऽचोरेत्यत्र वाक्यभेदाद् द्युतवाक्येनात्र द्वित्वप्राप्तावपि तत्र राश्रुतेर्निमित्तत्वाप्राप्त्योक्तन्यायाप्रवृत्त्या तस्यासङ्गतिरेव स्यादिति भावः । सामान्यत एव—लक्ष्यत्वावच्छिन्ने प्रकरणप्राप्तमेव । एवेन स्वविषये सूत्रविशेषप्राप्तव्यवच्छेदः । तथा च बाध्यसामान्यचिन्तापक्षस्थल इवात्र सर्वबाधः । तत्र स्वविषये सर्वप्रसङ्गः, अत्र तु तत्राप्रसक्तस्यापि बाध इति भेदः । यद्यपि तत्र व्यक्तिभेदेनोभयसम्भवस्तथापि तक्रकौण्डिन्यन्यायेन बाधः । एवञ्च तथाकौस्तुभोक्तिः प्रकाशानुरोधिन्येव, स तु चिन्त्य एव । एतेन न्याययोर्भेदेन समाधिद्वयं कुर्वन् प्रकाशकृत्परास्त इति भावः ।

यत्तु मान्याः—व्यक्तिपक्षाङ्गीकाराशयकोऽयं कैयटः । तत्र हि प्रतिलक्ष्यमसकृल्लक्षणप्रवृत्तिः । यद्वा प्रतिलक्ष्यं भिन्नानां सर्वेषां लक्षणानां तन्त्रेणोच्चारणम् "इकोयणचि" इति । ततश्चैकामपि तात्पर्यतो निमित्तत्वबोधनाददोषः । 'श्रीशः' इत्यादौ यण् तु न, तत्र पक्षे विरोधे परमेवेति नियमबलेन तद्विषयकपूर्वशास्त्राभावकल्पनात् । एवमपवादविषयेऽपि परिहृत्य वेति न्यायात् । जातिव्यक्तिपक्षौ च लक्ष्यानुरोधेन व्यवस्थिताविति; तत्प्राचामनुरोधेन, व्यक्तिपक्षे सर्वलक्ष्ये शास्त्रं व्याप्नोति न जातिपक्षे इत्यत्र मानाभावात् । प्रत्युत "न ब्राह्मणम्" इत्यादौ तदर्थमेव जातिपक्षाश्रयणस्य भाष्ये दर्शनात् । किञ्च व्यक्तिपक्षेऽप्यविरुद्धलक्ष्ये चारितार्थ्येनेदं लक्ष्यं विरोधात्स्वविषयकत्वं न कल्पयतीति सुवचत्वात् । तदेतद् ध्वनयन्नाह—इदञ्चेति । ज्ञापकं चेत्यर्थः । अपिर्जातिपक्षसमुच्चायकः । अन्यथा—उभयत्र ज्ञापकान-

सरला ।

रेफस्य सवर्णाभावेन आदेशाप्रसक्तेः स्पष्टञ्चेदम् "हयवरट्" सूत्रे भाष्ये । व्यक्तिपक्षेऽपीति । अपिना जाति-

शब्दरत्नम् ।

इत्येतत्पर्यालोचनया 'श्रीशः' इत्यादिविषयकयण्शास्त्राभावकल्पनवत्संग्राहकवाक्ये इकः स्थानित्वश्रवणात्तद्विषयकलक्षणाभावस्यैव कल्पनं स्यादिति स्पष्टम् "इको यणचि" ( पा० सू०६।१।७७ ) इत्यत्र कैयटे । कैयट इति । अत्रारुचिबीजं तु अत्र स्थानित्वस्य ना-

भैरवी ।

स्भावः—व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणानां भेदेन यणादिकार्यविधायकशास्त्रस्थले सर्वलक्ष्यसङ्ग्रहाय तन्त्रेणोच्चारणमित्यावश्यकम् । एवञ्च 'श्रीशः' इत्यादिविषयकमपि यण्विधायकशास्त्रं स्यादित्यनिष्टापत्तिः, अतो यत्रापवादशास्त्रविषयता तद्विषयकबाध्यशास्त्रस्याकल्पनमेवेति यथा, तथा यणादेशस्थानित्वमिको विशेषतः श्रुतमिति तस्य निमित्तत्वाकल्पनमपि स्यात्, तथाच 'सुध्युपास्यः' इत्यादिलक्ष्याणामसिद्ध्यापत्तिः, अत इकामपि निमित्तत्वं यणादेशेऽस्तीत्यत्र "तस्मादित्युत्तरस्य" इत्यादीनां ज्ञापकतैव, तथा जातिपक्षेऽपि लक्षणस्य सर्वविषयकत्वम् । अत एव भाष्यकृता "न ब्राह्मणं हन्यात्" इत्यत्र सर्वब्राह्मणविषयकत्वसिद्धये जातिपक्षाश्रयणमेव दर्शितम् । एवञ्च श्रीशविषयकत्वं यणादेशविधायकशास्त्रे नास्तीति कल्पनीयम् । अन्यथा तत्र विकल्पापत्तिः । एवमिकां निमित्तत्वाकल्पनमपि स्यादतो ज्ञापकत्वमावश्यकमिति । एतदेव दर्शयति—अन्यथेति । अन्यथा—ज्ञापकानाश्रयणे । तद्विषयकेति । इको निमित्तत्वविषय-

भावप्रकाशः ।

ङ्गीकारे । यत इत्यादि । तद्विषयकेति । इग्निमित्तकत्वविषयकेत्यर्थः । कुत्रेयं रीतिर्दृष्टेत्यत आह—इति स्पष्टमिति । एतादृशं तत्र स्पष्टमित्यर्थः । इक्पदस्यायादीनामनवकाशत्वेऽपि व्यक्तिपक्षे प्रतिव्यक्ति लक्षणप्रवृत्त्या पर्यायेण यणयाद्योः प्रवृत्तिरिति चयनमित्यादि निवृत्तिः फलमित्युक्त्वा, अयादयो बाधका इति समाध्युक्तिपरभाष्ये द्रव्येऽपि पदार्थे उत्सर्गापवादभावः । सन्दिग्धासन्दिग्धत्वाश्रयोऽस्त्येवेति कैयटेनोक्तं, तस्यायं भावः—अपवादः स्वविषये निःसन्देहं तात्पर्यवान् । उत्सर्गस्तु तदन्यविषयस्तद्विषयोऽपि वेति सन्दिग्ध इत्यसन्दिग्धेन तेन स्वविषयान्यविषयः कल्प्यते । तथाच सर्वत्रापवादविषयव्यक्त्य-

सरला

पक्षसङ्करः। व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणोपप्लवेन तत्तल्लक्ष्यसंस्कारायोपप्लुतशास्त्रस्य बाधकेन बाधने अप्रामाण्यापत्त्या आरम्भसामर्थ्यात् बाधकविषयेऽपि तत्प्रवृत्तौ विकल्पापत्तिभिया बाधकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन बाध्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचं स्वीकृत्य बाधकविषयपरिहारेणैव उत्सर्गशास्त्रस्य उपप्लव इति सिद्धान्तात् श्रीश इत्यत्र यथा "इकोयणचि" इत्यस्य नोपप्लवः । एवमेव "इकोयणचि" इत्यत्र इकः स्थानित्वेन श्रवणात् तन्निष्ठाया निमित्ततायाः बाधे इक्त्वावच्छिन्नातिरिक्तत्वेन अच्त्वावच्छिन्ने सङ्कोचे इगतिरिक्तेऽचि इकः यण् भवतीत्यर्थेन सुध्युपास्य इत्यत्र यण्शास्त्रस्य उपप्लव एव न स्यात् । अतः ज्ञापकमाश्रित्य अत्र बाध्यबाधकभावो नेति तदाशयः । अरुचिबीजमिति । रेफनिष्ठकार्यितायाः साक्षाच्छ्रुतद्वित्वनिमित्ततया बाधः तक्रन्यायेनेति "नेमौ रहौ" इति भाष्यतात्पर्यम् । तक्रन्यायश्च अनवकाशविषये विधेयविषये च प्रवर्तते इति। मध्वत्र इत्यत्र इकः स्थानित्वस्य चारितार्थ्येन तत्रैतन्न्यायाप्रवृत्त्या सुध्युपास्य इत्यादिलक्ष्याणामेवमेव सामञ्जस्ये तदर्थं न ज्ञापकस्योपयोग इति भावः । वस्तुतस्तु चिन्त्यमिदम् । 'नेमौ रहौ' इति भाष्यस्य तक्रन्यायेन बाधे तात्पर्यवर्णनाऽसम्भवात् । तथाहि—तक्रन्यायेन तत्रैव बाधो भवितुमर्हति यत्र बाध्यत्वेनाभिमतशास्त्रीयविषयतायाः व्यापकत्वं बाधकत्वेनाभिमतशास्त्रीयविषयतायाश्च व्याप्यत्वं स्यात् । एवं तक्रन्यायेन यत्र बाधः तत्र व्याप्यविषयताश्रयातिरिक्तत्वेन बाध्यशास्त्रीयव्यापकविषयताश्रये सङ्कोचो भवति, नतु उद्देश्यदलप्रविष्टविषयतावच्छेदकधर्मयोर्यत्र व्याप्यव्यापकभावः तत्र बाधः, नापि व्याप्यविषयतावच्छेदकधर्मावच्छिन्नातिरिक्तत्वेन व्यापकविषयतावच्छेदकधर्मावच्छिन्ने सङ्कोचः । अन्यथा विषयतावच्छेदकधर्मयोर्व्याप्यव्यापकभावमादाय एतन्न्यायप्रवृत्तिस्वीकारे "तद्धितेष्वचामादेः" इति सूत्रस्थं आदिवृद्धेरन्त्योपधावृद्धिबाधकत्वे अनुशतिकादिगणे पुष्करसच्छब्दपाठसामर्थ्यानुसरणं

शब्दरत्नम् ।

नवकाशत्वं, मज्जन्त्रेत्यत्र निमित्तत्वाप्राप्त्या तत्र स्थानित्वस्य चारितार्थ्यात् । तक्रकौण्डि-न्यन्यायोऽप्यनवकाशविषय एव इति स्पष्टं "तद्धितेष्वचाम्—" (पा०सू०७।२।११७) इति

भैरवी ।

केत्यर्थः । अत्र—यण्विषये । तत्र—इकि । चारितार्थ्यादिति । एतेनेग्विषये येननाप्राप्तिन्यायवि-षयताया अभावेनेकां निमित्तत्वबाधाप्रसक्त्या पक्षद्वयेऽपि ज्ञापकानुपयोग एवेति ध्वनितम् । नन्वत्र येन नाप्राप्तिन्यायस्य सञ्चारो मया न क्रियते किन्तु तक्रकौण्डिन्यन्यायविषयतायाः सत्त्वेन तेन न्यायेन बाध उच्यत इत्यत आह-तक्रेति । स्पष्टमिति । तत्र हि—'क्रौष्टः' 'नामतः' इत्यादावन्त्योपधावृद्ध्योर्निषेधमुत्क्रोक्तन्यायेन तयोर्बाधमाशङ्क्य 'सौश्रुतः' इत्यत्रादिवृद्धेश्चा-रितार्थ्येन न्यायेन तयोरादिवृद्ध्या बाधस्याप्राप्तिमुपन्यस्यानुशतिकादिगणे पुष्करसच्छब्दपा-

भावप्रकाशः ।

न्यव्यक्तिविषयलक्षणोपप्लव इति । अत्र, यण्विषये । तत्र, इकि । चारितार्थ्यादिति । ततश्च तदप्रा-प्तियोग्येऽचरितार्थविषयस्य "येन न" इति न्यायस्याप्राप्त्या इकस्तत्त्वयोः सिद्धो ज्ञापकोपन्यासः पक्षद्वयेऽ-प्यनावश्यकः । एवञ्चापवादस्थले तद्विषयविषयकोत्सर्गवाक्याकल्पनेन "इकोयण्" इत्यत्रत्यकैयटस्य युक्त-त्वेऽप्यत्र तदभावेन 'हयवरट्' सूत्रस्थकैयटोक्तिरयुक्ता । एतेनैतल्लक्ष्यविषयोपप्लुतवाक्यस्याचारिता-र्थ्यादेव सिद्धिरिति मन्दोक्तमपास्तम् । उक्तयुक्तेः सिद्धान्ते तथैवेष्टसिद्धेश्चेति भावः । ननु तन्न्यायाप्राप्ता-वपि तक्रकौण्डिन्यन्यायो मयोक्त इत्यत आह—तक्रेति । अपिः, तन्न्यायसमुच्चये । एवञ्च द्वयोस्तुल्या-र्थफलकत्वेनैक्यमेवेति स्पष्टमन्यत्र । यत्तु अत्रेत्यादि विषय इत्यन्तमनूद्य तत्र, त्वद्रीत्या कौण्डिन्याख्ये शूद्रे तक्रदानस्य चारितार्थ्येन न्यायोच्छेदापत्तेरिति दोषमाह—मन्दः । तन्न, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । तत्र ब्राह्मणस्यैव कौण्डिन्यस्याभिमतत्वात् । अन्यथा तवापि न्यायोच्छेदापत्तेः, "मिदचोऽन्त्यात्" इति सूत्र-स्थभाष्यविरोधापत्तेश्च, ब्राह्मणवसिष्ठन्यायाद्युच्छेदापत्तेश्च, वस्तुतस्त्वित्यादि त्वदुत्तरग्रन्थविरोधापत्तेश्चेति दिक् । स्पष्टमिति । तत्र हि "क्रौष्टः" 'जागतः" इत्यादावन्त्योपधावृद्ध्योर्निषेधवचनमुक्त्वोक्तन्यायेन त-

सरला ।

त्प्यक्तो व्यर्थं स्यात् । आदिवृद्धिशास्त्रीयविषयतावच्छेदकधर्मस्य ञित्णित्तद्धितत्वस्य अन्त्योपधावृद्धि-शास्त्रीयविषयतावच्छेदकञित्णित्प्रत्ययत्वव्याप्यत्वेन तक्रन्यायेनैव बाधसिद्धेः । विषयतयोर्व्याप्यव्याप-कभावमादाय तत्प्रवृत्तौ तु आदित्वावच्छिन्नविषयतायाः अन्त्यत्वउपधात्वावच्छिन्नविषयतायाश्च सामाना-धिकरण्यस्यैवाभावेन व्याप्यव्यापकभावासम्भवात् तक्रन्यायाप्रवृत्तौ पुष्करसच्छब्दपाठसामर्थ्यानुसरण-मावश्यकमेवेति । एवं पूर्वोक्तसङ्कोचस्वीकारे 'आट' इति सिध्यति । अन्यथा व्याप्यविषयतावच्छेदकधर्माव-च्छिन्नातिरिक्तत्वेन व्यापकविषयतावच्छेदकधर्मावच्छिन्ने सङ्कोचस्वीकारे "लिटि धातोरनभ्यासस्य" इत्येतच्छास्त्रीय-उद्देश्यदलप्रविष्टव्यापकविषयतावच्छेदकधातुत्वधर्मावच्छिन्ने "अजादेर्द्वितीयस्य" इत्येतच्छास्त्रीय-उद्देश्यदलप्रविष्टव्याप्यविषयतावच्छेदकअजादिधातुत्वधर्मावच्छिन्नातिरिक्तत्वेन सङ्को-चापत्तौ अट् धातोः अजादित्वेन लिटिधातोरित्यस्याप्रवृत्त्या द्वितीयस्यैकाचोऽभावेन "अजादेर्द्वि-तीयस्य" इत्यस्य चाप्रवृत्त्या आट इति रूपस्यासिद्धिः । व्याप्यविषयताश्रयातिरिक्तत्वेन व्यापकविषयता-श्रये सङ्कोचस्वीकारे तु यत्र अजादिधात्ववयवद्वितीयैकाच् सम्भवति तत्रैव उभयशास्त्रीयविषयतासत्त्वेन व्याप्यव्यापकभावस्संभवति, नत्वेकाज्धाताविति स्वाश्रयाव्यवहितपूर्ववृत्तित्व सम्बन्धेन अजादिधा-त्ववयवद्वितीयैकाच्त्वावच्छिन्नविषयताश्रयातिरिक्तस्य धात्ववयवप्रथमैकाच्भागस्य द्वित्वमिति "लि-टिधातोरनभ्यासस्य" इतिसूत्रस्यार्थेन अट्धातोः प्रथमैकाच्भागस्य स्वाश्रयाव्यवहितपूर्वत्वसम्ब-न्धेन द्वितीयैकाच्त्वावच्छिन्नविषयताश्रयातिरिक्ततया तत्र द्वित्वस्य निर्बाधात् । तथाच प्रकृते रत्व-यरत्वधर्मयोः व्याप्यव्यापकभावसत्त्वेऽपि तक्रन्यायेन बाधस्वीकारे व्याप्यविषयताश्रयातिरिक्तत्वेनैव व्याप-कविषयताश्रये सङ्कोचस्य पूर्वोक्तरीत्या सिद्धान्तितत्वेन "अचोरहाभ्यां द्वे" इत्येतच्छास्त्रीय यरव्यवहितपू-र्वत्वविशिष्टाज्व्यवहितोत्तररत्वविशिष्टरेफत्वावच्छिन्नविषयताश्रयातिरिक्तत्वेन "अनचि च" इत्येतच्छा-

शब्दरत्नम् ।

सूत्रे भाष्ये । तदप्राप्तियोग्यविषयाभावरूपं चानवकाशत्वमेतद्विषये । न च तक्रकौण्डिन्य-न्यायो विधेयविषय एव, 'विशेषविहितेन सामान्यविहितं बाध्यते' इति अभियुक्तव्यवहारा-

भैरवी ।

ठस्यादिवृद्धिविषये तयोरप्रवृत्तौ ज्ञापकतोक्ता । एतेन तत्र यथोक्तन्यायेन नास्ति बाधस्तथे-हाच्त्वेकरत्वयोः सामान्यविशेषभावसत्त्वेऽपि निमित्तत्वस्थानित्वयोरुक्तन्यायेन बाध्यबाधक-भावाभाव इति भावः । एतद्विषये—तक्रकौण्डिन्यन्यायविषये । तथाच तक्रकौण्डिन्यन्यायमूलक एव येननाप्राप्तिन्याय इति सूचितम् । सर्वथा निरवकाशत्वप्रयुक्तन्तु बाधकत्वमन्यत् ।

परोक्तमुपन्यस्य खण्डयति—नचेति । विधेयविषय एवेति । तथा चोभयोरविधेयत्वान्न तक्रकौ-ण्डिन्यन्यायसञ्चारः । व्यवहारादिति । "तद्धितेष्वचामादेः" इति भाष्यमूलकादित्यादिः ।

भावप्रकाशः ।

थोरादिवृद्ध्या बाधमाशङ्क्य दृष्टान्तेनाप्राप्तिसत्त्वेऽपीह 'सौश्रुतः' इत्यादौ तयोरप्राप्त्या तदभाव इति भा-ष्योक्तौ सामान्यविशेषभावो बाधहेतुः । स चेह नास्तीति कैयटोक्तिः । निमित्तांशे तत्सत्त्वेऽपि कार्य्यांशे तदभाव इति तदाकूतम् । एवञ्च यथा तत्र न न्यायसञ्चारस्तथेहाच्त्वेकत्वयोस्तत्सत्त्वेऽपि निमित्तत्वस्थानि-त्वयोरुक्तरीत्या तदभावेन तदप्राप्तिः । एतेन स्पष्टमिति ग्रन्थमनूद्य हेतुमनुल्लिखद्योक्तभाष्यकैयटौ संलि-खन् दूषयन्मन्दः प्रत्युक्तः । ननु प्रागनन्तरं वा तद्दानस्य चारितार्थ्यमत आह—तदप्राप्तीति । तस्य प्रा-प्तियोग्यत्वावच्छिन्नप्रतियोगिताकभेदवान् यो विषयस्तदभावरूपमित्यर्थः । तेन व्यक्तिभेदमादाय न दोषो देयः । तत्प्राप्तियोग्यत्वं च तदुद्देश्यतावच्छेदकाक्रान्तत्वं, न तद्वत्त्वम् । अतएव मतुपं विहाय योग्यत्व-निवेशः । अन्यथा कालभेदेन तदप्राप्तियोग्यविषयत्वस्यैव सत्त्वेनासङ्गतिः स्पष्टैवेति भावः । एतदिति । उक्तन्यायेत्यर्थः । अन्यथा "येन नाप्राप्ते" इत्युक्तेस्तन्न्यायोक्तेश्च वैयर्थ्यापत्तिः । एवञ्चैतद्भिन्ने सर्वथाऽन-वकाशत्वमेवापेक्षितमिति । तत एव बाधेनानयोः प्रवृत्तिरिति भावः । व्यवहारादिति । "तद्धितेष्वचा-

सरला ।

त्रोय अज्व्यवहितोत्तरत्वविशिष्टयत्वावच्छिन्नविषयताश्रये सङ्कोचसम्भवेऽपि हर्य्यनुभवः इत्यादौ रेफस्य द्वित्ववारणसम्भवेऽपि अर्ह्णेत्यादौ रेफस्य यरव्यवहितपूर्वत्वाभावेन द्वित्वापत्तेः । एवं 'यणो मय' इत्यत्रा-पि मय्व्यवहितोत्तरत्वविशिष्टयणत्वावच्छिन्नविषयताश्रये तादृशरेफत्वावच्छिन्नविषयताश्रयातिरिक्तत्वेनैव सङ्कोचस्य करणीयतया 'मद्रह्रदः' इत्यत्र पूर्वरेफस्य यरव्यवहितपूर्वत्वाभावेन 'यणो मय' इति द्वित्वापत्तेः तादवस्थ्येन "नेमौ रहौ" इति भाष्यमसङ्गतं स्यात् । तस्मादत्र तक्रकौण्डिन्यन्यायातिरिक्तेन माठरपरिवेष-णन्यायेनैव बाध इति तद्भाष्याशयः । सर्वे ब्राह्मणाः भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टामितिच माठ-रकौण्डिन्यन्यायस्वरूपम् । अनेन न्यायेन च एकविधेयतानिरूपितउद्देश्यदलप्रविष्टधर्मयोर्यत्रव्याप्यव्या-पकभावस्तत्र बाधः क्रियते । एवं अनेन यत्र बाधः तत्र एकविनियोगोद्देश्येन प्रयुक्तवाक्यकदम्बघटक-व्यापकधर्मावच्छिन्नबोधकपदार्थतावच्छेदकावच्छिन्ने तद्वाक्यकदम्बघटक व्याप्यधर्मावच्छिन्नबोधकपदार्थ-तावच्छेदकावच्छिन्नातिरिक्तत्वेन संकोचः । तथाच द्वित्वविनियोगोद्देश्येन प्रयुक्तो यः "अनचि च" 'यणो मयो द्वे वाच्ये' "अचो रहाभ्यां द्वे" इतिवाक्यकदम्बः तद्घटकव्यापकधर्मावच्छिन्नबोधकं यरपदं यरपदं यणपदञ्च तदर्थतावच्छेदकावच्छिन्ने व्याप्यधर्मावच्छिन्नबोधकं यत् रपदं तदर्थतावच्छेदकावच्छि-न्नातिरिक्तत्वेन संकोचकरणेन 'अर्हेण मद्रह्रदः' इत्यादौ रेफस्य द्वित्ववारणेन "नेमौ रहौ" इति भाष्यसंग-तिः । 'हर्य्यनुभवः' इत्यत्रापि रेफस्य न द्वित्वम् । तक्रन्यायस्य अनवकाशविषयत्वेऽपि अस्य न्यायस्य तद्वि-षयत्वे मानाभावेन "इकोयणचि" इत्यादावपि इकत्व अच्त्वधर्मयोर्व्याप्यव्यापकभावापन्नतया तन्न्यायेन इकत्वावच्छिन्नातिरिक्तत्वेन अच्त्वावच्छिन्ने संकोचे सुध्युपास्य इत्यादिलक्ष्यासिद्धिप्रसङ्गवारणाय "तस्मा-दित्युत्तरस्य" इति निर्देशो ज्ञापकत्वेन अवश्यमाश्रयणीय इति पूर्वोक्तकैयटोऽपि समीचीन एव । विस्तरस्तु येननाप्राप्तपरिभाषाव्याख्याने परिभाषेन्दुटिप्पणे द्रष्टव्यः ।

व्यवहारादिति । तथाच "अचोरहाभ्यां द्वे" इत्यनेन द्वित्वस्यैव विधेयतया रेफस्य निमित्तत्वेनावि-

शब्दरत्नम् ।

दिति वाच्यम्, अपूर्वबोध्यत्वेन निमित्तत्वादेरपि विधेयत्वात्। नहि निमित्तवत्तत्त्व-

भैरवी ।

अपूर्वबोध्यत्वेन-अज्ञातज्ञाप्यत्वेन । अपिना कार्यित्वस्य सङ्ग्रहः । तत्त्वम्—निमित्तत्वङ्कार्यि-त्वञ्च ।

भावप्रकाशः ।

मादेः" इत्यादिसूत्रस्थभाष्यमूलकादिति भावः। एवञ्च सुतरां स्थानित्वेन निमित्तत्वाबाधेनेष्टसिद्धावपि निमित्तत्वेन कार्यित्वाबाधे रस्य द्वित्वापत्तिरिति भावः। अपूर्वेति। अज्ञातज्ञाप्यत्वेनेत्यर्थः।

अत्र केचित्, "मतिबुद्धि" इति सूत्रे मूलटीकयोः 'राजपूजितः' इत्यादौ भूतक्तान्तेन तृतीयासमास इत्यत्र तयोर्भेदं हृदि निधाय लोकन्यायेन मत्यादिक्तवर्तमानकालस्य भूतकालबाधकतामाशङ्क्य क्तेनेत्य-धिकारे 'उपज्ञाते' इति निर्देशेन मूलोक्तन्यायसङ्कोचकृद् विधेयविषय एव स न्यायइति सामान्यतो ज्ञाप्यत इत्येवं व्याख्याय सङ्कोचस्य निर्मूलत्वाफले हृदि निधाय परे त्वाहुः—तेन न्यायेन बाध इति वक्तुमप्यश-क्यम्, यतस्तयोस्तुल्यविषयता। एवञ्च दृष्टान्ते तथा सत्त्वेऽपि यथा 'सौश्रुतः' इत्यादावन्त्योपधावृद्ध्योरप्रा-प्त्या तद्विषये नाप्राप्त्यभावः, तथा कालयोर्युगपद्विवक्षाया असम्भवात्तदभावः। यदीदन्न स्याद्वर्तमाने लट् स्यादिति तस्यैवापवादो न्याय्य इतीत्युक्तम्। तदनेन विरुद्धम्, तत्रापि मत्यादिसम्बन्धित्वेन काल-स्यापूर्वबोध्यत्वेन तथा ज्ञापितेऽपि दोषतादवस्थ्यात्। तथाहि, यावद्धातुसम्बन्धित्वेन भूते क्ते नाप्राप्ते वि-शेषविहितमत्यादिसम्बन्धिवर्तमानक्तो बाधकः। तत्त्वं च प्राप्ताप्राप्तविवेकन्यायेन विशेषणे विधेये वर्तमान-काले फलतीति न्यायप्राप्तिरेव। एतदभावे सर्वधातुसम्बन्धित्वेन भूतक्तान्तस्यैव साधुत्वं स्यात्। एवञ्च यदीत्यादि चिन्त्यमित्याहुः। तन्न, आशयानवबोधात्। तथाहि, यतस्तयोस्तुल्यविषयत्वमतो विधेयानव-काशविषयत्वमावश्यकं वर्तते च तत्त्वं तक्रदाने रेफगतनिमित्तत्वे च टीकोक्तरीत्या। तत्र तु नैवम्, काला-नां प्रत्ययद्योत्यतयाऽनुवाद्यत्वेन तस्यैव विधेयत्वात्। नच क्तो "निष्ठा" इति सिद्धः, भूते सिद्धावपि तत्रासिद्धेः। एतेन विशिष्टविधिरित्यपास्तम्। नच तत्र क्तवत्कालस्यापूर्वबोध्यत्वेन तत्त्वम्। तस्य सामा-न्यतो विशेषतश्च लोकसिद्धत्वस्य "कालोपसर्जने च" इत्यनेन प्रतिपादितत्वात्। तन्त्रान्तरेऽत्र चान्यत्र प्रतिपादितत्वाच्च। नच तत्र क्तसम्बन्धित्वमसिद्धमनेन विधीयते, तस्य "ञीतः क्तः" इत्यनेन सिद्धत्वात्। नच मत्यादिवाच्ये तत्र तत्त्वमसिद्धम्, तावताप्यक्षतेः। प्रत्युत मत्यादिभ्यो लडाद्यनापत्तेश्च। नच म-त्यादिसम्बन्धित्वमेवासिद्धम्, व्यापकीभूतकालसिद्ध्यैव तत्सिद्धेः। नच विशिष्टमसिद्धम्, तस्यार्थसमाज-ग्रस्तत्वात्। तावताप्यक्षतेश्चेति मूलाशयः। नाप्राप्त्यभावादेव न्यायाप्राप्त्या विधेयत्वपर्यन्तगमनं निष्फ-लम्। तयोर्युगपदविवक्षया सामान्यविशेषभावाभावात्। एतेन यावद्धात्वित्याद्युक्तिरेतदभावे इत्याद्युक्ति-श्चापास्ता, नाप्राप्त्यभावात्, एतदभावेऽपि वर्तमाने लट्प्राप्त्या तदप्राप्तेश्च। अत एव द्वन्द्वैकशेषयोरिवापि तन्न। किञ्चैवमपि दुराग्रहेण तथाङ्गीकारे क्तवतुप्रत्ययस्यापि बाधापत्तौ 'ज्ञातवान्' इत्याद्युच्छेदापत्तेरिति टीकाशयः। अत एव यदीदमिति तदुक्तिः सुष्ठ्वेव। किञ्च तदविवक्षायां चारितार्थ्येनानवकाशत्वाभा-वात्। अत एव "नित्यं कौटिल्ये" "आबाधे च" इति सूत्रस्थकैयटमूलादिकं चिन्त्यमिति स्पष्टमन्यत्रेति दिक्। आदिना स्थानित्वसङ्ग्रहः। एवञ्च तस्य तत्त्वेऽपि प्रागुक्तरीत्यैव न्यायाप्रवृत्तिरत्र। तत्र तु वैषम्यं स्पष्टमेव। अपिर्द्वित्वादिसमुच्चये। तत्त्वमिति। यथा निमित्तं रादि लोकशास्त्रबोधितं तथा तस्य निमि-त्तत्वं नेत्यर्थः। यत्तु न हि कार्यीतिन्यायसञ्चारः कैयटेष्ट इति ज्ञापकमावश्यकमिति रत्नाकरः। तन्न, म-त्वर्थिनिना तदनुभववत एव तत्त्वेनानाश्रयणमिति तदर्थेन तदप्राप्तेः। अत एव पठ्यते "कार्यमनुभवन्हि

सरला ।

धेयत्वात्तद्विषये कथमस्य न्यायस्य प्रवृत्तिरिति शेषः। निमित्तवत्तत्त्वमपीति। निमित्तभूतानां रेफादीनां हर्यनुभव इत्यादौ श्रोत्रेन्द्रियरूपप्रमाणेन ज्ञानं, न तथा रेफादिनिष्ठाया द्वित्वनिमित्तताया "अचोरहाभ्याम्" इत्येतच्छास्त्रातिरिक्तप्रमाणेन ज्ञानं भवितुमर्हति। किन्तु "अचोरहाभ्याम्" इत्यनेनैवेति रेफस्य अविधेय-त्वेऽपि तन्निष्ठनिमित्तताया अनेनैवापूर्वबोधनेन विधेयविषयत्वात् तन्न्यायप्रवृत्तिर्निर्बाधेति तदाशयः।

इत्यतोऽत्र रूपद्वयम् । लाकृतिरिति त्वेकमेव ।

शब्दरत्नम् ।

अपि मानान्तरसिद्धमिति दिक् । एकमेवेति । यण्तत्प्राग्वर्तियरोर्द्वित्वप्रयुक्तरूपभेदाभावादिति भावः । वकारस्तु नात्र । अन्यूनानतिरिक्तस्थानकादेशलाभेनाधिकस्थानकस्याप्रवृत्तेः । लण्सूत्रस्थभाष्यविरोधेनेदृशानामनभिधानमिति तत्त्वम् ।

भैरवी ।

अत्र केचित्—एवं "मतिबुद्धि" इति सूत्रे 'राजपूजितः—इत्यत्र भूते क्तान्तेन तृतीयान्तस्य समासः' इत्युक्तम्, सा चोक्तिर्भूतवर्तमानकालयोर्भेदं हृदि निधाय, तत्र मत्यादिबोधकधातुविहितक्तद्योत्यवर्तमानकालस्य विशेषत उक्तत्वेन सामान्यत उक्तस्य भूतकालस्य बाधं सम्भाव्य क्तेनेत्यधिकारे 'उपज्ञात' इति निर्देशेन कालयोर्बाध्यबाधकभावाभाव इत्युक्तं, तस्य तेन निर्देशेन विधेयविषय एव विशेषत उक्तस्य सामान्यतोबोधितबाधकतेति लौकिकन्यायस्य सञ्चार इति सामान्यतो ज्ञाप्यत इति तात्पर्यम् ।

तत्र परेत्वाहुः—लौकिकेन तेन न्यायेन बाध इति वक्तुमप्यशक्यम्, युगपद्विषयतायां लौकिकन्यायसञ्चारः । सा चेह विरुद्धत्वान्नास्ति । यथा 'द्वन्द्वापवाद एकशेष इति व्यवहारो'—यदीदं न स्यात्तदा "चार्थे" इति सूत्रमप्रवर्तेतेति रीत्या साध्यते; तथा कालयोर्वक्तुमशक्यमित्युक्तं, तदेतेन बोध्यते । तत्रापि मत्यादिसम्बन्धित्वेन वर्तमानकालस्यापूर्वबोध्यत्वेन तत्त्वस्य सत्त्वेन तस्य बाधकत्वसम्भवादिति, तन्न, कालानाम्प्रत्ययद्योत्यतयाऽविधेयत्वात् । नच तत्र क्तप्रत्ययवत्कालस्याप्यपूर्वबोध्यत्वेन तत्त्वम् । तस्य सामान्यतो विशेषतश्च लोकसिद्धत्वस्य "कालोपसर्जने च तुल्यम्" इत्यनेन प्रतिपादितत्वात् कालयोर्युगपद्विवक्षायाः कर्तुमशक्यत्वेन बाध्यबाधकभावाप्राप्तेश्चेत्याह—दिगिति ।

ननु विसर्गस्य द्वित्वेनाधिक्यात् 'लाकृतिः' इति त्वेकमेवेति मूलासङ्गतिरत आह—यणित्यादि । तथा च—यथा 'सुध्युपास्यः' इत्यादौ यण्—तत्प्राग्वर्तियरोर्द्वित्वकृताधिक्यं तथाऽत्र नास्तीति प्रतिपादने तात्पर्यमिति बोध्यम् । वकारस्य दन्त्योष्ठ्यत्वात्स्थानकृतसादृश्यमादाय तत्प्राप्तिशङ्कां वारयति—वकारस्त्विति । तमप उपादानेनातिशयितमान्तर्यं यत्र तस्य प्रवृत्तिर्भवतीति तात्पर्यम् । एवं "स्थानेऽन्तरतमः" इति सूत्रभाष्ये "किमुदाहरणम्? "इको यणचि", 'दध्यत्र' 'मध्वत्र', यथासंख्येनाप्येतत्सिद्धम्" इति उक्तम् । तेनाप्यत्र वकाराभावो बोध्यः । ईदृशानाम्—लृस्थानिकलादेशयुतानामनार्षप्रयोगाणाम् । तत्र भाष्ये "न पदान्ताः परेऽणः स-

भावप्रकाशः ।

कार्यं" इत्यादि । स्पष्टं चेदमन्यत्र । तदाह—इति दिगिति । ननु विसर्गद्वित्वेन भेदादैक्यानुपपत्तिरत आह—यणिति । समाहारद्वन्द्वः । तत्प्रागिति पञ्चमीसमासः । तस्यैव प्रागुपक्रान्तत्वात् । एवञ्च तथाधिक्येऽपि न क्षतिरिति भावः । नात्र—लाकृतिरित्यत्र । स्याप्रवृत्तेरिति । यथासङ्ख्येन तदप्रवृत्तेश्चेत्यपि बोध्यम् । नन्वयमेव सिद्धान्तः कुतो नोक्तोऽत आह—लणिति । तत्र हि "उरण्" इत्यत्र पूर्वेण परेण वेति सन्दिह्य पराभावात् पूर्वेणैवेत्युक्त्वा कर्त्रर्थमित्यादौ यणो रपरत्वापत्तौ रेफद्वयश्रुतिं "रोरि" इतिलोपेन निरस्यैवं तर्हि सामर्थ्यात् पूर्वेण न परेण । यदि तथा स्यादजित्येव वदेदिति भाष्यकृतोक्तम् । 'लाकृतिः' इति सत्त्वेत्वत्र लद्वयश्रवणापत्त्या सामर्थ्यवर्णनासङ्गतिः । भाष्यस्य प्रौढिवादत्वमिति मान्योक्तिस्तु प्राचामनुसारेणेति भावः । नेदृशानाम् । लृस्थानिकलादेशयुतानार्षप्रयोगाणाम् । तत्त्वम्, वास्तवं समा-

सरला ।

अन्यूनानतिरिक्तेति । स्ववृत्तित्व-स्वदलभिन्नदलीयवृत्तित्व-स्वदलभिन्नदलीयादेशत्वाभिमतेतरयावदवृत्तित्व-एतत्त्रितयसम्बन्धेन स्थानिविशिष्टधर्मवत एव 'स्थानेऽन्तरतम"सूत्रे तमप्ग्रहणसामर्थ्येन आदेशतानियमनात् । वकारे लकाररूपस्थानिवृत्तिदन्तस्थानजन्यत्वधर्मस्य सत्त्वेऽपि तस्य धर्मस्य स्थानिदलभिन्नदलीयादेशत्वेनाभिमतो यो वकारः तदितरो लकारः तद्वृत्तित्वतया स्थानिवैशिष्ट्याभावेन उक्तत्रितयसम्बन्धेन लकारविशिष्टदन्तमात्रस्थानजन्यत्वरूपधर्मवतः लकारस्यैव आदेशतालाभादित्यर्थः । अनभिधा-

हलो यमाम् ( पा०सू०८।४।६४ ) । लोपः स्याद्वेति । "झयो हः-" ( पा०सू०८।४।६२ ) इत्यतोऽन्यतरस्यामित्यनुवृत्तेः । एतच्च लण्सूत्रे भाष्ये स्पष्टम् । माहात्म्यमिति । अत्र मलोपो नेत्यर्थः । "हलो यरां यरि सवर्णे लोपः" इति तु न सूत्रितम् । आर्द्र्योत्, मूर्ध्न्नः, शार्ङ्गम्, आर्त्नी, इत्यादौ रेफात्परस्य लोपापत्तेः ॥

वान्तो यि (पा०सू०६।१।६९) यकारादाविति । विशेषणमात्मान्तस्य सञ्ज्ञा स्यादित्येतदर्थकस्य "येन विधिः-" ( पा०सू०१।१।७२ ) इति सूत्रस्यापवादभूतेन "यस्मिन्विधिस्तदादावल्ग्रहणे" इति वार्तिकेनायमर्थो लभ्यते । ओदौतोरिति । पूर्वसूत्रे तयोरेव वान्तौ प्रति स्थानित्वेन निर्णीतत्वादित्यर्थः । ननु गव्यूतिरित्यत्र

---

शब्दरत्नम् ।

आर्त्नी इति । आङ्पूर्वादर्तेर्बाहुलकान्निप्रत्ययः । धनुषः कोटी उच्येते । आर्तिः पीडाधनुष्कोट्योः" इत्यमरे नकाररहितः पाठो दृश्यते । अर्तिरिति पाठान्तरम् ।

वार्तिकेत्यनेन तस्य वाचनिकत्वं सूचितम् । पूर्वसूत्रे इति । वान्तज्ञानाय तत्पर्या-

भैरवी ।

न्ति" इत्युक्तम् । आर्षप्रयोगमादाय "इको यणचि" इति सूत्रे यथासंख्यनिर्वाहः ॥

आर्त्नी इति । प्रयोगे 'आर्त्नी इमे दीर्घं' इति वैदिकप्रयोगानुकरणम् । तत्र निप्रत्ययो बाहुलकात्तदन्तात् "कृदिकारात्" इति ङीष्, द्विवचनम्, छान्दसत्वात्पूर्वसवर्णदीर्घत्वम् । उच्येते इति—तद्भाष्ये तथा व्याख्यानात् । लौकिकप्रयोगे त्वाह—आर्तिरिति ।

वाचनिकत्वम्—वार्तिककृता वचनरूपेण पठितम् । यत्तु "येन विधिः" इतिसूत्रे "आदिर-

भावप्रकाशः

धानम् । मूलादि तु प्रक्रियानुसारेण । तथा च न प्रागुक्ते निर्भरः, "यक्षानुरूपो बलिः" इति न्यायात् । आर्षप्रयोगे तु तत एव सिद्धिरिति भावः ।

आर्त्नीति छान्दसं द्विवचनान्तं प्रगृह्यम् । आङ्पूर्वादिति । अवग्रहस्त्वाज्यमित्यादाविवासम्प्रदायान्नेति भावः । वेदभाष्ये तु "आर्त्नी इमे" इति मन्त्रे धनुष्कोट्योः स्तुतिरित्युक्त्वा ते धनुष्कोट्यौ समनेव समनस्केव योषा पतिसमीपं न त्यजति तद्वदाचरन्ती अभितश्चरन्त्यौ उपस्थे उपस्थाने मातेव पुत्रं यथा मातापुत्रन्धारयति तद्वद्बिभृतां राजानं धारयेताम् । किञ्च इमे धनुष्कोट्यौ संविदाने सञ्जानाने विसंवादरहिते । आर्त्नी गच्छन्त्यौ । ऋगताविस्यतो धातोः "चुर्यंगिभ्यां निः" इति बाहुलकान्निप्रत्ययो धातोरार्तभावश्च, "कृदिकारात्" इति ङीषि द्विवचनस्य पूर्वसवर्णः । अस्य राज्ञः अमित्रान् विस्फुरन्ती विद्धिसन्त्यौ शत्रूंश्चापविध्याताम् । तथाच यास्कः "ते आचरन्ती समनसाविव योषे मातेव पुत्रं बिभृतामुपस्थे उपस्थाने अपविध्यतां शत्रून्संविदाने आर्त्न्याविमे विघ्नन्त्यावमित्रानिति-आर्त्नी आर्तन्यौ वारण्यौ वारिषण्यौ वा तयोरेषा भवतीति" इत्युक्तम् । निरुक्ते-आर्त्नी इत्यत्र आर्त्नी धनुः प्रान्ते ते कुतः? अर्तेः ऋतेर्धातोर्गत्यर्थस्य गमयतस्ते इषूनूरण्यौ वारणार्हौ रिषण्यौ वा हन्त्र्यौ वा तयोरेषा भवतीति तद्भाष्यकृत् ।

वाचनिकत्वमिति । एतेन "येनविधिः" इत्यत्र "आदिरन्त्येन" इत्यत इदादिपदयोस्तस्मिन्निती-त्यस्य चानुवृत्त्या विभक्तिविपरिणामेनेत्पदेनालो लक्ष्यत्वेनैतल्लाभः । यद्वा यान्तप्रत्ययासम्भवेन प्रथमातिक्रमे कारणाभावादुक्त एवार्थः । एवञ्च परिभाषाया इदमेव ज्ञापकमित्यपास्तम्, उक्तक्लेशापेक्षया वच-

सरला ।

नमिति । वस्तुतस्तु "न पदान्ताः परेऽणः सन्ति" इतिभाष्यस्य पदान्तत्वप्रयुक्तकार्यभाजः परे हकारादयोऽणः नसन्तीत्यर्थस्वीकारेण लाकृतिरित्यस्य लकारे कस्यापि पदान्तत्वप्रयुक्तकार्यस्य प्राप्त्यभावेन अनभिधाने न मानम् ।

अर्तेरिति । ऋतेरिति पाठः । "ऋतेर्धातोर्गत्यर्थस्य" इति निरुक्तभाष्यात् । अर्तेरितिपाठे ऋधातोर्णिप्रत्यये धातोरर्त आदेश इति बोध्यम् ।

"हलि सर्वेषाम्" ( पा०सू०८।३।२२ ) इति, "लोपः शाकल्यस्य" ( पा०सू०८।३।१९ ) इति वा लोपः स्यादित्याशङ्क्याह-वान्त इति । लव्यमिति । लुनातेरचो यत् । "सार्वधातुकार्धधातुकयोः" ( पा०सू०७।३।८४ ) इति गुणः । अवश्यलाव्यमिति । "ओरावश्यके" ( पा०सू०३।१।१२५ ) इति ण्यत् ॥

क्षय्यमिति । "शकि लिङ् च" ( पा०सू०३।३।१७२ ) इति चात्कृत्याः । चेयमिति । "अर्हे कृत्यतृचश्च" ( पा०सू०३।३।१६९ ) इति यत् । हर एहीति । इह "ओमाङोश्च" ( पा०सू०६।१।९५ ) इति पररूपं प्राप्तम् ॥

उरण् रपरः ( पा०सू०१।१।५७ ) ॥ आन्तरतम्यादिति । रेफशिरस्कस्यार् इत्यस्य रेफद्वारा ऋकारेण स्थानसाम्यादित्यर्थः । पक्षे द्वित्वमिति । ऋधेर्धस्येति भावः ॥

---

शब्दरत्नम् ।

लोचनस्यावश्यकत्वादिति भावः । ऋधेर्धस्येति । न च द्वित्वभिन्ने पूर्वत्र कर्तव्ये परम-

भैरवी ।

न्तरेण" इति सूत्रात् 'आदिः' इत्यस्य 'इता' इत्यस्य चानुवृत्तिः । इत्पदञ्चालि लाक्षणिकं, सप्तम्यन्तत्वेन तस्य विपरिणामः, एवं 'येन' इत्यस्यापि सप्तम्या विपरिणामः, वाक्यभेदश्चाश्रयणीयः 'विधिः' इत्यस्यावृत्तिश्चेति 'यस्मिन्नलि विधिस्तदादिविधिर्बोध्यः' इत्यस्य लाभ इति, तन्न, भाष्यानुक्तत्वात् । किञ्च क्लेशेन तादृशार्थकल्पनापेक्षया वाचनिकत्वकल्पने लाघवमिति भावः । इति भाव इति । प्राचीनानुसारिणो मूलकारस्येत्यादिः । एतेन 'पूर्वसूत्रपर्यालोचनस्यावश्यकत्वेऽपि तज्जन्यवाक्यार्थबोधस्य तेनोपप्लुतस्य लक्ष्यसंस्कारकवाक्यान्तरस्य पर्यालोचनं नावश्यकमिति "ओदौतोरिति वक्तव्यम्" इति वार्तिकमूलकाद्व्याख्यानादेतादृशार्थलाभ इति ग्रन्थेनास्य विरोध' इति परास्तम् ॥

भावप्रकाशः ।

नस्यैव युक्तत्वाद् लक्षणायां मानाभावाच्च । असम्भवे एव तत्प्रवृत्तौ "तस्मान्नुडचि" इत्यादावप्रवृत्त्यापत्तेश्च । प्रथमातिक्रम इत्यस्यात्रानाश्रयणाच्च । ज्ञापितेऽप्यनिष्ठाभावेन तथाऽचारितार्थ्याच्चेति दिक् । तथा-च वार्तिककृदुक्तेयमपूर्वा परिभाषेति भावः । तदिति । पूर्वसूत्रवाक्यार्थेत्यर्थः । पूर्वसूत्रे स्थानत आन्तर्यात् तथा निर्णयेनात्रापि तथेति भावः । एतेन सप्तम्यन्तपाठाशयकमिदमित्यपास्तम्, उक्तरीत्यैवोपपत्तेः । इति भाव इति । प्रकाशानुयायिमूलस्येतिशेषः । तथाच तदनुरोधेनेदम् । वस्तुतश्चिन्त्यमिदमिति स्पष्टमन्यत्रेति भावः ।

यत्तु वर्णद्वित्वे न पूर्वत्रासिद्धीयमित्यस्य प्रवृत्तिः । द्वित्वे परसवर्णत्वं सिद्धं वाच्यम् । 'संय्यता' इत्यादौ त्रियकारत्वार्थमिति वार्तिकोक्तेः । अतएव णत्वं द्वित्वमिति कौमुदीसङ्गतिरिति । तन्न, वाक्क् वागिति भाष्योक्तलक्ष्यासिद्ध्यापत्तेः । तथाहि, तथासति कुत्वे जश्त्वे चर्त्वासिद्ध्या गस्य द्वित्वेऽन्त्यस्य चर्त्वे तत एवा खर्परत्वेन चर्त्वाभावे पूर्वत्र गश्रुत्यापत्तिः । न चापवादावसानचर्त्वविषयत्वाज्जश्त्वमेव न । तथा चोक्तरीत्या कुत्वजकस्यैव द्वित्वेनेष्टसिद्धिरिति वाच्यम्, अपवादप्रवृत्तिप्रतिबन्धकद्वित्वविषयत्वेन तदविषयत्वात् । 'रामौ' इत्यादौ वृद्धः परपूर्वसवर्णदीर्घप्रवृत्तिप्रतिबन्धकनिषेधविषयत्वेन दीर्घाविषयत्ववत् । अतएव तादृक्शब्दस्थकौमुदीसङ्गतिः । अन्यथोक्तरीत्या 'जश्त्वेन ड'इत्यसङ्गतं स्यात् । नच तत्र तत्प्रवृत्तावपि गकारस्य तद्वचनात् सिद्धेन चर्त्वेन द्वित्वात्परत्वात् ककारे तस्य द्वित्वेऽपि "झलां जश्" इति दृष्ट्या चर्त्वस्यासिद्धतया गकाररूपे झशि पूर्वस्य तस्य जश्त्वे उक्तरीत्यैवाचर्त्वे गकारश्रुतिर्दुर्वारा । किञ्च "पूर्वत्रासिद्धमद्वित्वे" इत्यस्या द्वित्वे कार्ये पूर्वं प्रति परमसिद्धं नेत्यर्थेन कुत्वजश्त्वाभ्यां परद्वित्वात्परत्वाच्चर्त्वे चस्य द्वित्वे जश्त्वापवादचर्त्वस्यैव द्वित्वस्याप्यसिद्धतया आद्यस्य कुत्वे तत एव तस्य जश्त्वेऽन्त्यस्य चर्त्वेऽपि 'वाग् च्' इति स्यात् । एवञ्च जश्त्वापवादकतापि तच्चर्त्वस्य भज्येतेति वाच्यम्, तस्यास्तथा पाठेन तथा पाठाभा-

शब्दरत्नम् ।

सिद्धमित्यर्थकेन "पूर्वत्रासिद्धमद्वित्वे" इत्यनेन धातुधकारस्य जश्त्वे दस्येति वक्तुमुचितमिति वाच्यम्, फले विशेषाभावेन तदनादरणात्। न ह्यत्र जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषोऽस्ति, तदनन्तरं जश्त्वप्रवृत्तेः सत्त्वात्। यत्र पूर्वत्रासिद्धप्रवृत्तौ तन्निषेधे वा फले विशेषस्तत्रैवास्याः परिभाषात्वेन प्रवृत्तेरित्यन्यत्र विस्तरः। यद्वा धस्य तत्स्थानिकस्येत्यर्थ इति दिक् ॥

भैरवी ।

अस्याः—'पूर्वत्रासिद्धोयमद्वित्वे' इत्यस्याः। यत्तु "द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यम्,

भावप्रकाशः ।

वेन वक्ष्यमाणार्थाङ्गीकारेण विधिसामान्ये "न मु ने" इतिवत् द्वित्वान्यत्र द्वित्वे कृतेऽपि प्रत्यासत्त्या द्वित्वाश्रयकार्यान्यकार्ये च पूर्वत्रेदमसिद्धमित्यर्थस्योक्तभाष्यीयलक्ष्यबलेनाङ्गीकारात्। एवञ्चोक्तप्रयोगसिद्धये नत्रोक्तार्थतात्पर्यकतत्प्रवृत्तिरावश्यिका। अवश्यंशब्दश्चावे वुञ् मनोज्ञादेराकृतिगणत्वादावश्यक इति निपातनाद्वा। ततोऽर्शादेराकृतिगणत्वादच् टाप् इत्वम्। स्पष्टं चेदं मतुप्सूत्रे कैयटे। एवञ्चाविशेषात्सर्वद्वित्वं तत्र गृह्यते। तथा तत्रार्थाङ्गीकारादेवौड्ढिदित्यस्य सिद्धिः। अन्यथाऽभ्यासे चुत्वापत्तिः, वार्तिकं तु तदव्युत्यानुवादः। अत्रापि णत्वं द्वित्वमिति ग्रन्थऽङ्गतिरेवेति दिक्। तदेतद् ध्वनयन्नाशङ्कते—नचेति। इत्यर्थकेनेति। इति विध्यर्थतात्पर्यकेनेत्यर्थः। द्वित्वे पूर्वत्र परमसिद्धं नेत्यर्थस्तु न, असमर्थसमासापत्तेः, निषेधविधौ गौरवाच्च। स्पष्टंचेदं परिभाषेन्दुशेखरे। शब्देन्दुशेखरस्त्वार्थिकार्थपरतया नेयः। एतेन वाक्यसंस्कारपक्षे 'कृष्ण ऋध्नितः' इत्यत्र धत्वासिद्ध्या गुणेन भावि ऋनाशेन द्वित्वाप्राप्त्या च गुणे द्वित्वे कार्येऽसिद्धत्वं नेत्यर्थतात्पर्यकपूर्वत्रासिद्धमित्यनेन परत्वाद्वक्ष्यमाणरीत्या "आगन्तूनामन्ते निवेशः" इतिन्यायेन द्वित्वशास्त्रविधेयस्याग्रे एवोत्पत्त्या झषानन्तर्यविघातेनाकृतेत्यनेन धत्वाप्राप्त्या जश्त्वाप्रवृत्तेश्च द्वित्वे सति धस्येत्युक्तिरुचितैवेति मान्योक्तिः प्राचामनुरोधेनेति ध्वनितम्, भाष्यविरोधापत्तेः। अकृतेत्यस्यासत्त्वाच्चेति भावः। पूर्वत्रासिद्धोयमिति। गद्यादित्वाच्छः। तदधिकारभवशास्त्रत्वमस्या लिङ्गम्। यत्र तत्त्वं तत्राद्वित्वे इत्युपतिष्ठते इत्यर्थः। तत्र "पूर्वत्रासिद्धम्" इत्यधिकारप्राप्तम्। "सम्भवति सामानाधिकरण्ये" इतिन्यायेनाद्वित्वे इति पूर्वत्रेत्यत्रान्वेति। तेन परस्य द्वित्वस्याप्यसिद्धत्वं भवतीतिभावः। इत्यनेन—वार्त्तिकेन। यत्तु जश्त्वोत्तरं द्वित्वे तस्य सकृत्प्रवृत्तिः, अन्यथा त्वावृत्तिरिति लाघवगौरवविशेषात्परिभाषासङ्कोचे मानाभावात्तन्न्यायेन द्वितीयधे जश्त्वाप्रवृत्तेश्च चिन्त्यमिदमिति मन्दः। तन्न, "नह्येकस्यानेकस्य वा" इति भाष्यविरोधापत्तेः, प्रागुक्तरीत्या द्वित्वोत्तरं जश्त्वेऽपि द्वित्वाप्राप्त्याऽनावृत्तेश्च, परिभाषात्वस्यैव सङ्कोचे मानत्वाच्च, तथा लक्ष्यभेदस्य सत्त्वाच्च। तदेतद्ध्वनयितुमनादरे हेतुमाह—यत्रेति। पर्जन्यवल्लक्षणप्रवृत्तिरित्यस्यासम्भारायाह—परीति। यद्यपि वार्तिककृदुक्तमिदं, तथापि परिभाषावृत्तिकृद्भिरस्य तत्त्वमुक्तमिति तदुक्तपरिभाषेति न दोषः। नियामकत्वमेव हि तत्त्वम्। नियमश्च फलविशेषायैवेति तदभावस्थले न प्रवृत्तिः। अत एव "व्रीहीनवहन्ति" इत्यादौ दृष्टफलविशेषान्नियमजन्यादृष्टं कल्पयन्ति वाक्यविदः। तदाह—अन्यत्रेति। एतेन "झलांजश्" इति जशोऽप्रतिहतप्रसरत्वादुक्तन्यायेन जशः सिद्धत्वाच्च मूलं चिन्त्यमिति खण्डनकारोक्तिः, यत्तु ऋधेर्धस्येति भाव इति दीक्षिताः। तन्न, जश्त्वे कृते दस्येत्यौचित्यात्। असिद्धत्वं तूक्तपरिभाषया नेति रत्नाकरोक्तिश्चापास्ता, उक्तयुक्तेः।

सरला ।

पूर्वत्रासिद्धमद्वित्वे इति। द्वित्वभिन्ने पूर्वत्रकर्तव्ये परमसिद्धमिति तदर्थः। एवं च द्वित्वविधायक "अनचि च" शास्त्रदृष्ट्या "झलां जश् झशि" इत्यस्य असिद्धत्वाभावेन परत्वात् "झलां जश्" इत्यस्य प्रवृत्तिरिति भावः। यत्तु द्वित्वे कर्तव्ये त्रैपादिकं शास्त्रं नासिद्धमिति व्याख्यानं, तन्न, धुभ्यामित्यस्यासिद्धत्वापत्तेः। दिव् भ्यामित्यत्र द्वित्वे कर्तव्ये "दिव औत्" इति शास्त्रदृष्ट्या "अनचि च" इतिशास्त्रस्यासिद्धत्वनिषेधेन परत्वाद्वकारस्य द्वित्वे पश्चादन्त्यस्य उत्वेऽपि वकारानिवृत्तेः। विस्तर इति। अ-

लोपो वेति। "झयो होऽन्यतरस्याम्" (पा०सू०८।४।६२) इति सूत्राद्विकल्पानुवृत्तेः। एतच्च "नाज्झलौ" (पा०सू०१।१।१०) इति सूत्रे भाष्यकैयटयोः स्पष्टम्। प्राचस्तु विकल्पानुवृत्तेरनुक्तेर्न्यूनता। यदपि व्याख्यातृभिः "शरोऽचि" (पा०सू०८।४।४९) इति ज्ञापकमभिप्रेत्य तत्संवादार्थं भाष्यमुपन्यस्तम्—"अनुवर्त्तते विभाषा शरोऽचि यद्वारयत्ययं द्वित्वम्" इति, तन्न, तदुत्तरभाष्ये एव उक्तज्ञापकस्य दूषितत्वात्। लोपस्य हि नित्यत्वे "अचो रहाभ्याम्–" (पा०सू०८।४।४६) इति द्वित्वं लोपापवादः स्यात्। तथा च "शरोऽचि" इत्यस्य सार्थक्यं स्पष्टमेव। तस्माद्विकल्पानुवृत्तौ ज्ञापकान्तरमनुसर्तव्यम्, भाष्यकारादिव्याख्यानमेव

---

शब्दरत्नम्।

नाज्झलाविति सूत्रे इति। "हयवरट्" सूत्रशेषे चेत्यपि बोध्यम्। अनुक्तेरिति। "हलो यमाम्" (पा०सू०८।४।६४) इत्यत्र "झरो झरि" (पा०सू०८।४।६९) इत्यत्र चेति भावः। ज्ञापकमिति। उभयत्रापि विकल्पानुवृत्ताविति भावः। लोपस्य हीति। लोपमात्रस्येत्यर्थः। लोपापवाद इति। आरम्भसामर्थ्यादिति भावः। ज्ञापकान्तर-

भैरवी।

संय्यन्तेत्यादौ त्रियकारकत्वार्थम्" इति भाष्यवार्तिकप्रामाण्येन वर्णद्वित्वेऽस्याः प्रवृत्तिर्न। अतएव 'णत्वं द्वित्वं चतुर्णाम्' इति परममूलसङ्गतिरिति, तन्न, 'वाक्' 'वाक्क्' इति भाष्यीयप्रयोगासङ्गतेः। अत्र चस्य कुत्वे जश्त्वे द्वित्वचर्त्वयोः प्राप्तौ चर्त्वस्यासिद्धत्वेन द्वित्वे परस्य गस्य चर्त्वं तस्यासिद्धत्वेन खर्परत्वाभावेन पूर्वगकारस्य चर्त्वाप्राप्तौ गस्यैव श्रवणापत्तेः। नचावसाने चर्त्वस्य जश्त्वापवादतया कस्यैव द्वित्वमिति वाच्यम्, अपवादप्रवृत्तिबाधकद्वित्वविषयतासत्त्वेन चर्त्वाप्रवृत्तेः। रामावित्यादौ वृद्ध्यपवादपूर्वसवर्णदीर्घविषयतायाः सत्त्वेन निषेधात्प्राग्वृद्धेरप्रवृत्तिवत्। 'पूर्वत्रासिद्धीयमद्वित्वे' इति परिभाषाया उपस्थितौ लिङ्गन्तु तदधिकारभवशास्त्रत्वम्। यत्र तदधिकारभवशास्त्रत्वन्तत्र 'अद्वित्वे' इत्युपतिष्ठत इति तस्या अर्थः। एवं तदधिकारीयशास्त्रे 'अद्वित्वे' इत्यस्योपस्थितौ 'सम्भवति सामानाधिकरण्ये' इति न्यायेन द्वित्वभिन्ने पूर्वत्र कर्तव्ये इदमसिद्धमित्यर्थो भवति। एतेनैनाम्परिभाषामाश्रित्य "झलाञ्जश्" इति जश्त्वस्य प्राक् प्राप्त्या द्विधमिति परममूलमृषेर्धस्येति मूलग्रासङ्गतमिति खण्डनकारोक्तिः परास्ता॥

हयवरट्सूत्रस्थभाष्यस्योभयविषयकतया प्रवृत्तेरुभयत्र विकल्पानुवृत्तिः सप्रमाणेति प्रदर्शनायाह—हयवरडिति। मूले—ज्ञापकमभिप्रेत्येति। ज्ञापकमुपन्यस्येत्यर्थः। तत्र ज्ञापकतायाम्—संवादार्थं सम्मत्यर्थम्। लोपमात्रस्येति। अत्र मात्रपदं कार्त्स्न्ये। लोपापवाद इतीति। अत्रापवादशब्दो बाधकपरः। अपवाद इवापवाद इत्यर्थः। अपवादो यथोत्सर्गस्य प्राप्तिम्प्रतिबध्नाति तथेदमपि लोपयोः प्राप्तिं वारयेत्। नत्वपवादत्वमेव सम्भवति, यत्रोत्सर्गे प्रवृत्तेऽप्यपवादत्वेनाभिमतस्य प्राप्तिस्तत्रापवादत्वव्यवहारस्य मुख्यत्वात्। द्वित्वस्य लोपमात्रबाधकत्वे साध-

भावप्रकाशः।

व्याख्यातृग्रन्थसङ्गत्यर्थं 'तन्न तदुत्तर' इत्यादि दोषसङ्गत्यर्थं चाह—हयवरडिति। तथाच तद्भाष्यस्योभयविषयकतया मूलेऽत्राप्युभयत्र विकल्पः प्रतिपाद्यते। यद्यपि तत्रोक्त एव तथापि दृढीकरणाय स्मार्यते। अत एवाग्रेऽपि यथाश्रुतमूलं तत्तत्प्रतीकं धृत्वोभयपरतया व्याख्यातम्। यथाश्रुते एव योजने तदनु-

सरला।

नियमे नियमकारिणी परिभाषा। अत्र पूर्वत्रासिद्धेत्यस्य प्रवृत्तावप्रवृत्तौ वा अनियमोनास्तीति तत्र तस्याऽ

वा शरणम् । द्वित्वलोपयोरिति । यत्तु द्वित्वविधानसामर्थ्याद् द्वावेव शिष्येते इति, तन्न, लोपस्य वैकल्पिकत्वेन द्वित्वस्य पक्षे चरितार्थत्वात् । त्रियमिति । "यणो मय" लक्षणान्तरेण पुनर्द्वित्वे तु चतुर्यमपि बोध्यम ॥

---

शब्दरत्नम् ।

मिति । "अणुदित्" ( पा०सू०१।१।६९ ) सूत्रस्थमणग्रहणं हलः परस्य यरो लोपो वैकल्पिक इति सामान्यापेक्षमाश्रयणीयमिति भावः । तस्य "हलो यमाम्—" ( पा०सू० ८।४।६४ ) इति विशेषापेक्षत्वे आह—व्याख्यानमेव वेति । यदि तु "हलो यमाम्–" इत्यत्र विकल्पं सिद्धं कृत्वा द्वित्वस्य तद्विषये चारितार्थ्येन "झरो झरि" इत्यत्र तदनुवृत्तौ "शरोऽचि" ( पा०सू०८।४।४९ ) इति ज्ञापकमुपन्यस्यते तदा सम्यगेव, परन्तु प्राचां भाष्यसंमतिलेखः प्रामादिकः । तद्भाष्यस्योभयविषयकतया प्रवृत्तेः ।

भैरवी ।

कमाह—आरम्भेति । अण्ग्रहणमिति । एतद्धि 'संय्यन्ता' इत्यादावनुनासिकयकारादेर्द्वित्वार्थं,यदि लोपो नित्यः स्यात्तदा कृतेऽपि द्वित्वे तस्य लोपेन निवृत्तौ यकारादिद्वयस्यैव श्रवणमिति तत्राज्ग्रहणेन सिद्धावक्लृप्तस्य परणकारसाध्यप्रत्याहारान्तराश्रयणस्य व्यर्थत्वमिति भावः । तस्य—उक्तसूत्रस्थाण्ग्रहणस्य । सिद्धमिति । अण्ग्रहणादित्यादिः । तद्विषये—"हलोयमाम्" इति लोपविषये 'हर्य्यनुभवः' इत्यादौ । "शरोऽचि" इति ज्ञापकमिति । एतद्धि 'चतुर्ष्षु' इत्यादौ द्वित्वस्य निषेधाय । यदि तु "झरो झरि" इतिलोपो नित्यस्तदा जातेऽपि तस्य द्वित्वे लोपेन निवृत्ताविष्टस्य सिद्ध्या निषेधो व्यर्थः स्यादिति भावः । प्राचाम्–प्रकाशकृताम् । तद्भाष्यस्य–"अनुवर्तते" इति भाष्यस्य । उभयविषयकतयेति । तेन ज्ञापकेन "झरो झरि" इत्यत्रानुवृत्तौ मध्यस्थत्वेन "हलो यमाम्" इत्यत्रापि तत्सम्बन्ध इत्युभयविषयकता तस्येति भावः ॥

भावप्रकाशः ।

पपत्तिः स्पष्टैवेति भावः । मात्रशब्दः कार्त्स्न्ये । ग्रहणमिति । तद्धि 'संय्यन्ता' इत्यादावनुनासिकपरसवर्णस्य यत्वेन ग्रहणात् "अनचि" इति द्वित्वे त्रियकारश्रुत्यर्थम् । "हलो यमाम्" इत्यस्य नित्यत्वे तु व्यर्थमेव तत् । "नह्येकेनैकम्" इति न्यायेन भेदकपक्षस्यापीदमेव ज्ञापकमुक्तरीत्या । विशेषापेक्षत्वे "हलः" इत्यस्यैव तत्त्वं स्यादत आह—सामान्येति । इदञ्च सूत्ररीत्या । अतस्तद्रीत्यैवारुचिमाह—तस्येति । ज्ञापकस्येत्यर्थः । तावतैव चारितार्थ्येन सामान्यापेक्षत्वे मानाभावादिति भावः । एवोक्त्या भाष्यमते तत्प्रत्याख्यानेनास्यावश्यकतां ध्वनयति मूलकृत् । एतेनैवो व्यर्थ इति मन्दोक्तमपास्तम् ।

यत्तु खण्डनकृत् । 'देवदत्त'इत्यादावेद्योत्यादिपूर्तेस्त्वद्ग्रन्थे दर्शनादत्र व्याख्यात्रा तथाकृतत्वात्सा न दोषः । किञ्च ज्ञापकमुपन्यस्येत्यनुक्तोपालम्भः । "झयोहः" इत्यतस्तदनुवृत्त्या विकल्पेनायं लोप इति काशिकादौ स्थितम् । तथाच भाष्यम् "अनुवर्तते" इत्यादि । "नाज्झलौ" इत्यत्र कैयटोऽपि लोपो वेत्याहेति तद्ग्रन्थात् । एवञ्च वैकल्पिकत्वे एव भाष्यकैयटसंवादो, न ज्ञापकत्वे, तद्वाक्यं परं तद्विशिष्टमित्यन्यदेतदिति । तन्न, इति काशिकादौ स्थितमित्युक्त्या तस्य स्वानिष्टत्वध्वननेन न्यूनताताद्वस्थ्यात् । अभिप्रेत्येति मूले पाठसत्त्वेनोपन्यस्येत्यनुक्तोपालम्भ इत्यस्यैव तथात्वाच्च । तद्भाष्यस्योभयविषयतया प्रवृत्तेश्च । तदेतद् ध्वनयन्नन्यथा तं संयोज्य खण्डयति—यदि त्वित्यादि । सिद्धमिति । अण्ग्रहणादिति भावः । ज्ञापकमिति । इत्यभिप्रेत्य तत्र तदर्थं तत्परमाभ्यमुपन्यस्तं तैरित्युच्यत इत्यर्थः । सम्यगेवेति । मूलोक्तदोषाभावात् । एवञ्च मूलमयुक्तमेवेति भावः । यथाकथञ्चिन्मूलाशयप्रदर्शनेन तदपि योजयन्नाह—परन्त्विति । प्राचाम् । प्रकाशकृताम् । तद्भाष्येति । अनुवर्तत इत्यादिभाष्यस्येत्यर्थः । "झरोझरि"

सरला

प्रवृत्तेरित्यादि विस्तर इत्यर्थः । अण्ग्रहणमिति । तद्धि संय्यन्तेत्यत्र "वा पदान्तस्य" इति परसवर्णपक्षेऽनुनासिकयकारस्य "अनचि च" इति द्वित्वार्थं यर्ग्रहणेन ग्रहणाय । लोपस्य नित्यत्वे हि तत्र द्वित्वेऽ-

एत्येधत्यूठ्सु ( पा०सू०६।१।८९ )॥ अत्र एचीत्यनुवर्त्तते। तच्च एतेरेव वि-शेषणं नत्वेधतेः, अव्यभिचारात्। नाप्यूठः, असम्भवादिति प्राञ्चः। अत्र कैयटः-

शब्दरत्नम्।

असम्भवादिति। न च 'आ अवतीति औजंनस्य और्जनौः' इत्यादाववेः क्वाबूठ्या-दूगुणे परादिवत्त्वेनोठ्त्वात्सम्भवोऽस्ति। न च "वृद्धिरेचि" ( पा०सू०६।१।८८ ) इति सिद्धिः "ओमाङोश्च" ( पा०सू०६।१।९५ )। इत्यनेन बाधाद्, अनेन तु सामर्थ्यात्तद्बाध्यत इति वाच्यम्, तस्यानभिधानादित्याशयात्। किं च "ओमाङोः—" (पा०सू० ६।१।९५ ) इत्येतद्बाधकल्पनापेक्षया सामर्थ्येन लक्ष्यानुरोधेन च 'एचि' इत्यस्यासम्बन्ध-

भैरवी।

रत्नाकरोक्तिं खण्डयितुं तन्मतमनुवदन्नाह—नचेति। औरिति। "गोतो णित्" इति सि-द्धस्य रूपस्यायं लेखः। प्रातिपदिकस्वरूपन्तु 'ओ' इति। गुणे इति। तत्र एच्परत्वाभा-वेन वृद्धेरप्राप्तेः। तद्बाध्यते—"ओमाङोश्च" इति पररूपम्बाध्यत इति भावः। अनभिधानादिति। "क्षियि वृद्धिः" इतिसूत्रस्थकैयटोक्तिरत्र मानम्। अनभिधाने भाष्यसम्मत्यभावादाह—किं-ञ्चेति। सामर्थ्येन-एचीत्यस्य ऊडंशेऽपि सम्बन्धेनैजादावूठि वृद्धिरिति वाक्यार्थसामर्थ्येन। लक्ष्यानुरोधेनेति। ऊडंशेऽप्येचीत्यस्य सम्बन्धेनैजादावेवोठि वृद्धिस्वीकारे येन नाप्राप्तिन्यायेन "ओमाङोश्च" इत्येतद्बाधेनात्रैव स्यान्न तु 'विश्वौहः' इत्यादाविति तादृशलक्ष्यसिद्ध्यनुरोधे-

भावप्रकाशः।

इत्यत्रानुवृत्तौ मध्यस्थतया "हलो यमाम्" इत्यत्रापि तत्त्वसिद्धिः। अत एव खण्डनप्राग्रिमभाष्यसङ्गति-स्तथा च न ज्ञापकखण्डने मूलतात्पर्यं किन्तु भाष्यसम्मतिलेखखण्डने। अत एव तदभिप्रायं ल्यबन्तेनो-ल्लिख्य मुख्यं खण्डथं तत्रेत्यादिनोपन्यस्तं मूलकृता। एवञ्च पक्षत्रयेऽपि व्याख्यातग्रन्थासङ्गतिरेवेति भावः।

रत्नाकरोक्तिं खण्डयितुमनुवदति। नचेति। औरिति। पूर्वपक्षे "गोतो णित्" इति सिद्धरूपोल्लेखः। शब्दस्तु ओ इति; तदाह—अवेरिति। गुणे इति। एचीति विशेषणाद् वृद्धेरप्राप्तेरिति भावः। परादि-त्वेनोठ्त्वादिति। व्यपदेशिवद्भावेनेत्यतिदिष्टेनेत्यर्थः। इदृत्ववदूठ्त्वं समुदायवृत्तीति भावः। बाधा-दिति। पूर्ववत्पूर्वान्तवत्त्वेनाठ्त्वादिति भावः। सामर्थ्यादिति। एचीति विशेषणेनान्यत्र अचारितार्थ्या-दिति भावः। अनभिधानादिति। इदं दुर्वचमिति शेषः। वृद्धिसूत्रस्थकैयटोक्तेरिति भावः। नन्वत्र मानाभावः। न च वृद्धिसूत्रस्थभाष्यं मानमिति वाच्यम्, तस्यान्याशयकत्वात्। अत एव तत्रस्थः कैय-टश्चिन्त्य एव। स्पष्टं चेदमुद्द्योते। एवं चासम्भवोऽसम्भवी। अत एवाशयादित्युक्तमत आह—किञ्चेमे-ति। एतेनागतिकगत्यनभिधानाश्रयणानौचित्यम्। उद्द्योतोऽपि चिन्त्यः, भाष्यादिकं तूत्तरपदत्वे चेति निषेधाभिप्रायम्। किञ्चेत्यादिग्रन्थस्तु असम्भवादिति व्याख्येयग्रन्थविरुद्धः। तस्मादूठित्यत्रोकारप्रश्लेषे-ण निर्वाह इति मन्दोक्तमपास्तम्। उक्तरीत्या तदनाश्रयेणोद्द्योतस्यापि युक्तत्वाद्, उत्तरपदत्वे चेत्यस्यार्था-ज्ञानाच्च, व्याख्येयग्रन्थोपमर्दार्थमेव किञ्चेत्यादि प्रवृत्तेश्च। अत एव प्रश्लेषवैयर्थ्याच्चेति दिक्। उक्तरी-त्या सामर्थ्याभावादाह—लक्ष्येति। यद्येचोठ् विशेष्येत तदा येन नेति न्यायेनात्रैवोमाङोरिति बाधित्वा

सरला

पि लोपेन निवृत्तौ यकारद्वयस्यैव श्रवणमिति तदर्थमज्ग्रहणेनैव सिद्धेः।

अनभिधानादिति। अत्रसूत्रे एत्येधत्योरिति योगं विभज्य एचीत्यस्य तत्रैव विशेषणपरभाष्यमत्र मानम्। वस्तुतस्तु विश्वौह इत्यादौ वृद्ध्यर्थम् भगवता एचीति एत्येधत्योरेव विशेषणमित्युक्ततया चैत-स्यानभिधाने न तन्मानमिति बोध्यम्।

एधतेरपि विशेषणम् । मा भवान्प्रेदिधदित्यत्र व्यभिचारात् । यद्यपीदं कैयटपुस्तकेषु प्रायेण न दृश्यते, तथाऽपि क्वचिद् दृश्यत एव । न च "णौ चङि–" ( पा०सू०७।४।११ ) इति ह्रस्वे कृते नायमेधतिरिति वाच्यम् । एकदेशविकृतस्यानन्यत्वात् । न चैवमपि "अजादेर्द्वितीयस्य" ( पा०सू०६।१।२ ) इति धिशब्दस्थाने धिधिशब्दादेशे सति वस्नसोरिव प्रकृतिप्रत्ययविभागसम्मोह इति वाच्यम् । द्विःप्रयोगो द्विर्वचनं षाष्ठमिति षाष्ठभाष्ये सिद्धान्तितत्वात् । अन्यथेहैव णिलोपो न स्यात् । जिघांसतीत्यादौ

---

शब्दरत्नम् ।

कल्पनैवोचिता । ह्रस्वे कृते इति । वृद्धेः पूर्वमित्यादिः । वार्णपरिभाषयेति भावः । अनन्यत्वादिति । न च "अचः परस्मिन्" ( पा०सू०१।१।५७ ) इति स्थानिवत्त्वेनैजादित्वं सुलभम्, पूर्वपरविधित्वात् । पूर्वस्यैव विधौ हि सः । मध्ये ऽपवादन्यायेनाऽऽद्गुणं बाधित्वा इहैव स्यात्, 'उपैधते' इत्यादौ तु परत्वात्पररूपमेव स्यादिति भावः । संमोह इति । एधतेरादेशाभावेन न स्थानिवत्त्वेन तत्त्वम् । न स्यादिति । न च "णेरनिटि" ( पा०सू०६।४।५१ ) इत्यस्य ण्यन्तस्याङ्गस्य लोप इत्यर्थः, स चालोन्त्यपरिभा-

भैरवी ।

नेत्यर्थः । असम्बन्धेति । 'ऊडंशे' इत्यादिः । वार्णेति । वाक्यसंस्कारपक्षे इदम् । मूले—एकदेशविकृतस्येति । एकदेशेन विकृतस्येत्यर्थः । अनन्यत्वादिति । स्थानिवद्भावेनेत्यादिः । नत्वत्र "एकदेशविकृतमनन्यवत्" इति परिभाषायाः सञ्चारः, अर्द्धाधिकविकारसत्त्वात् । एजादित्वन्तु न स्थानिवद्भावेन, अल्विधित्वादिति भावः।एचीत्यस्यैधत्यंशे सम्बन्धेऽपि स्थानिवद्भावेन 'मा भवान्प्रेदिधत्' इत्यत्र वृद्धिवारणासम्भव इत्याशङ्कां वारयति–नचेत्यादिना । पररूपमेवेति । तथा चेष्टानिष्टव्यवस्थाया असिद्धिरिति भावः । ननु दृष्टान्ते प्रकृतिप्रत्ययसमुदायस्यादेशो दार्ष्टान्तिके तु न तथेति वैषम्यम् । किञ्च स्थानिवद्भावेनैधतित्वमपि वक्तुं शक्यमत आह—एधतेरिति । तत्त्वम्-एधतित्वम् । दृष्टान्ते प्रकृतिप्रत्ययसमुदायस्यादेशः, इह तु प्रकृत्यवयवधकारप्रत्य-

भावप्रकाशः ।

स्यादिति 'विश्वौहः' इत्यादि न स्यादिति "वाह ऊठ्" सूत्रभाष्याभिमतेष्टानिष्टलक्ष्यानुरोधेनेत्यर्थः । असम्बन्धेति । ऊडंश इति भावः । अत एवेणीकारादाविति प्रकृतसूत्रस्थवार्तिकादिसङ्गतिस्तदाह— वोचितेति । वार्णेति । वाक्यसंस्कारपक्ष इति भावः । एचीति विशेषणेऽप्यवारणमित्याह— नचेति । अत्र मते तदभावे फलितमाह—मध्ये इति । बाध्यविशेषचिन्ताङ्गीकार इति भावः । पररूपमेवेति । तथाचेष्टानिष्टव्यवस्था न स्याद्वार्तिकादिविरोधश्च स्यादिति भावः । ननु दृष्टान्ते प्रकृतिप्रत्ययसमूहादेशेऽप्यत्र न तथेति तद्वैषम्यम् । किञ्च एकदेशेति लौकिकन्यायस्यार्धन्यूनाविकारेणाप्राप्तावपि स्थानिवत्त्वेनेष्टसिद्धिरत आह—एधतेरिति ।। तत्त्वम्, एधतित्वम् । तथाच सम्मोहमात्रेऽयं दृष्टान्त इति भावः । स्याङ्गस्येति । तदधिकारस्थत्वादिति भावः । ननु प्रत्ययग्रहणपरिभाषया धातिस्थानिन एवाण्यन्ततयानङ्गतया च कथमदोषत्वम् । एकाच इत्युक्तेः केवलणिचोऽजादेर्द्वितीयस्येत्युक्तेः प्रकृतिप्रत्ययसमूहस्यादेशदौर्लभ्या-

सरला ।

पूर्वस्यैव विधाविति । तेन आरतुरित्यादौ "ऋच्छत्यृताम्" इति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वमिति शेखरे निरूपितम् । मूले—एजाद्योरितीति । एधत्यंशे एचीति विशेषणस्य फलं प्रेदिधत् इति कैयटोक्तम् । इणीकारादौ प्रतिषेध इतिवार्तिकस्य भाष्यकृता एचीत्यनुवर्त्य उपेत इत्यादौ वृद्धिवारणेन प्रत्याख्याततया वार्तिकसत्त्वे प्रेदिधत् इत्यत्र वृद्धेः प्राप्त्या एचीत्यस्य सम्बन्धेन तत्प्रत्याख्याने वृद्धेरप्राप्त्या फलभेदेनानभिधानादेचीति एधत्यंशे सम्भवमात्रेणोपरञ्जकतया विशेषणमिति । वस्तुतस्तु यथोत्तरं मुनीनां प्रामाण्यमितिपरिभाषया इणीकारादौ इतिवार्तिके इणीति एधते रप्युपलक्षणम् । वार्तिकानुसारेण

सनः सकारेण विशिष्टस्य द्वित्वे कृते कुत्वं च न स्यात् । न चान्तरङ्गत्वात् प्रथमं "चङि" (पा०सू०६।१।११) इति द्वित्वे कृते ह्रस्वो न भवत्येवेति वाच्यम् । ओणे-ॠदित्करणेन बहिरङ्गस्यापि "णौ चङि" ( पा०सू०७।४।१ ) इति ह्रस्वस्य प्रथमं प्रवृत्तिरिति ज्ञापितत्वात् ।

---

शब्दरत्नम् ।

षयाऽन्त्यस्य, एवं च प्रकृते न दोषः । "सर्वे सर्वपदादेशा" इति न्यायेनेधीत्यस्येधिधिह-त्यादेशसत्त्वेन स्थानिनो ण्यन्ततया आदेशेऽपि स्थानिवद्भावेन ण्यन्तत्वस्य सुलभत्वादि-ति वाच्यम् । अलोऽन्त्यपरिभाषया निर्दिश्यमानपरिभाषया च "णेरनिटि" ( पा०सू० ६।४।५१) इत्यस्य ण्यन्तस्याङ्गस्यान्त्यो यो निर्दिश्यमानो णिस्तस्य लोप इत्यर्थेन दोषा-त् । अन्ते णेरसत्त्वात् । सूत्रं तु आद्यादित्यादौ चरितार्थमिति भावः । कुत्वं च न स्या-दिति । हन्त्यवयवहकाराभावात् । सन्सम्बन्धिसकारवैशिष्ट्याभावे तु स्थानिवत्त्वेन कुत्वं स्यादपीति भावः । अन्तरङ्गत्वादिति । चङ्परणिनिमित्तह्रस्वापेक्षया चङ्मात्रनिमि-त्तत्वेनाल्पपदार्थापेक्षत्वादित्यर्थः । भाष्ये तु नित्यत्वमात्रमेव द्वित्वस्योक्तम् । ज्ञापितत्वा-

भैरवी ।

यघटितसमुदायस्यादेश इति वैषम्यं यद्यप्यस्ति तथापि सम्मोहे दृष्टान्तोऽयम् । सर्वे सर्वपदादे-शा इतीति । एधीत्यस्य समुदायस्यार्थवत्त्वेनास्ति 'सर्वे' इति न्यायसञ्चारः । श्रौतस्तु धीत्य-स्यैव, "अजादेर्द्वितीयस्य" इत्युक्तेः । परिभाषया चेति । द्वयोः परिभाषयोर्बाध्यबाधकभावाभा-वादेकवाक्यतयेत्थं व्याख्यातम् । "पादस्य लोपः" इत्यादौ यथा । दोषादिति । णिलोपस्य प्रा-प्त्यभावरूपदोषात् । असत्त्वादिति । सम्मोहेन णिबुद्धेरसत्त्वादित्यर्थः । सूत्रन्तु आद्यादिति । अ-त्र णिति प्रत्यये परतो वृद्धेर्विधानेन णिबुद्धेरविघाताद्भवति णिबुद्धिरिति भावः । मूले—सनः सकारेणेति । "सन्यङोः" इत्यस्य षष्ठ्यन्ततया सकारविशिष्टस्य 'नटभार्यावद्व्यञ्जनानि भवन्ति' इति न्यायेनैकाच्पदेन ग्रहणादिति भावः । स्यादपीति । अपिर्मूलोक्ताभावस्य समुच्चायकः । तथा च मूलोक्तम्मुख्यन्दूषणमिति ध्वनितम् । शङ्काभिप्रेतमन्तरङ्गत्वमुपपादयति—चङ्परेति । भाष्ये त्विति । एतेन नित्यत्वेनैव निर्वाहेऽन्तरङ्गपर्यन्तानुसरणं व्यर्थमिति भावः । मूलोक्तस्वो-

भावप्रकाशः ।

च्चात आह—सर्वे इति । एवं चार्थवत्येवेति सिद्धान्तोऽप्यबाधितो भवतीति भावः । ण्यन्तत्वेति । अङ्गत्वस्येत्यपि बोध्यम् । "पूर्वोऽभ्यासः" इत्यादिवैयर्थ्यापत्त्या प्रक्रियादशायामुक्तन्यायानाश्रयणमिति तु न, अत्र पक्षे तेषामप्यर्थान्तरकल्पनात् । श्रौते एव स्थान्यादेशभावे तत्प्रवृत्तिर्नानुमानिके इत्यपि न, तत्रा-देशपदानर्थक्यापत्तेः तद्ध्वनयन्नाह—अलोन्त्येति । तत्राविरोधेन द्वयोर्बाध्यबाधकभावाभावादुपस्थितेः । तासस्त्योरित्यादौ तु न दोषः,सस्येत्यतः सीतिवत्स इत्यनुवृत्तेः।एवञ्च निर्दिश्यमानस्येति विषयेऽलोन्त्यस्येति प्रवृत्तावपि तद्विषये "समः सुटि" इत्यादौ न तत्प्रवृत्तिः, तस्य वैयर्थ्यापत्तः । एवञ्च तदन्तविधिर्यदागमा इत्युभयविषयस्तद्विषय स्पष्टं चेदं परिभाषेन्दुशेखर इति भावः । 'सनः' इत्यादि कृते इत्यन्तोक्तिस्वारस्य-माह—सनिति । निजौ चत्वार एकाच इति भाष्योक्तेरिति भावः । स्यादपीति । अपिर्मूलोक्ताभावसमु-च्चायकः । तथाच पाक्षिकोऽयं दोष इति प्रागुक्तमेव मुख्यं दूषणम् नत्विदमिति मूले निश्चः पाठः सूचितोऽ-नेन । अत एव प्रतीकं तथा धृतमिति भावः । नाल्पेति । अल्पपदार्थनिमित्तकत्वादित्यर्थः । भाष्ये-त्विति । तुना एवेन च सूचितम्—तावतैव निर्वाहे तदनुरोधमुत्सृज्यान्तरङ्गत्वपर्यन्तधावनं प्रकाशानु

सरला ।

एधत्यंशे एधीत्युपरञ्जकमिति कल्पनापेक्षया भाष्यानुसारेण वार्तिके उपलक्षणतया व्याख्यानस्यैव ज्याय-स्त्वात् । तथाच इदिधत् इत्यस्यानभिधाने न मानमिति दिक् ।

अत्र माधवः—मा भवान् प्रेदिधदित्यत्र नातिप्रसङ्गः। ण्यन्तस्य शब्दान्तरत्वा-देधतिग्रहणेनाग्रहणात्। अत एव हि "न भाभूपूकमिगमि—" (पा०सू०८।४।३४) इत्यत्र "ण्यन्तानां च भादीनामुपसंख्यानम्" इत्युक्तम्। तत्रैव शब्दान्तरत्वादप्रा-प्तावुपसंख्यानमिति कैयटन्यासकारहरदत्तादिभिः सर्वैरेवोक्तम्। किं च ण्यधिकस्या-पि ग्रहणे "उपसर्गात्सुनोति—" (पा०सू० ६।१।९१) इत्यत्राभिषावयतीत्युदाहृत्य ण्यन्तेनाभेर्योगात्सुनोतिं प्रत्यनुपसर्गत्वात्कथं षत्वमित्याशङ्कयाभेः प्रकृत्यर्थविशेषक-त्वेन समाधानं भाष्यकाराद्युक्तमसङ्गतं स्यात्। न च "हेरचङि" (पा०सू०७।३। ५६) इति लिङ्गात् "प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्" इति भ्रमितव्यम्। ज्ञाप-कस्य कुत्वमात्रविषयकत्वात्। तथा च वार्तिकम्—"हेरचङि प्रतिषेधानर्थक्यमङ्गान्य-त्वात्। ज्ञापकं तु चङोऽन्यत्र ण्यन्ते ऽपि कुत्वभावस्य" इति। तस्माद्युक्तिविरोधा-द्भाष्यवार्तिकवृत्तिन्यासादिग्रन्थैः पूर्वापरस्वग्रन्थेन च विरोधादुपेक्ष्योऽयं कैयट इति।

अत्रेदं वक्तव्यम्। अस्तु विशिष्टस्य शब्दान्तरत्वं तावता ऽपि प्रकृतिभागस्यै-धरूपत्वं केनापगतमित्यवधार्यताम्। न ह्युपैधत इत्यादौ तिङन्तस्यैधरूपता नास्तीति प्रकृ-त्यंशे सा हीयते। तथा च "उपसर्गात्सुनोति—" इति सूत्रे वार्तिकं "सिद्धं त्ववय-वानन्यत्वात्" इति। यत्त्वभिषावयतीत्यत्रत्यभाष्यविरोधोद्भावनं, तद्विपरीतम्। यतः प्रकृतेः सुनोतिरूपानपायात् कैयटमते सिद्धा यथोक्तव्यवस्था। त्वन्मते तु रूपा-न्तरत्वेन ण्यधिकस्याग्रहणादसङ्गतैव प्रागुक्तव्यवस्था स्यात्। को ह्येधयतिसावयत्यो-

---

शब्दरत्नम्।

दिति। इदं च "णौ चङि—" (पा० सू० ७।४।१) इति सूत्रे भाष्ये स्पष्टम्।

**असङ्गतं स्यादिति।** सुनोतिग्रहणेन सावयतेरपि ग्रहणेन शङ्काया एवाभावादिति भावः। **अवयवानन्यत्वादिति।** ण्यन्तावयवस्य सुनोतेः सुनोतिभिन्नत्वाभावादिति तदर्थः। **सुनोतिरूपानपायादिति।** सुनोतित्वानपायादित्यर्थः। **असङ्गतैवेति।** ण्यन्तेनाभेर्योगादिति शङ्का प्रकृत्यर्थविशेषकत्वेन समाधानरूपा च व्यवस्थाऽसङ्गतैव स्यात्। त्वदुक्तरीत्या ण्यधिके षत्वाप्राप्तेरित्यर्थः। तदेवाह—**को हीति।**

भैरवी।

कयोः सप्रमाणत्वसूचनायाह—इदमिति। इदम्—बहिरङ्गस्यापि पूर्वम्प्रवृत्तिरित्येतत्।

शङ्काया एवेति। शङ्काया अभावे समाधानमप्यसङ्गतमित्येवकारेण ध्वनितम्। सुनोति-रूपेत्यत्र "रूपशब्दोऽर्थे ।र" इति "स्वं रूपम्" इत्यत्र यद्यपि प्रतिपादितं तथापि षष्ठ्यर्था-न्वयायाह—सुनोतित्वेति। त्वदुक्तरीत्या—ण्यन्तस्य शब्दान्तरत्वमित्युक्तरीत्या। मूले—असङ्गत एवेति। अत्र एवकारेण प्रकृतिभागस्य शब्दान्तरत्वे 'उपैधयते' 'प्रैदधिषते' इत्यादौ वृद्ध्य-

भावप्रकाशः

रोधेन मूलकृतो व्यर्थं तत्र तदुक्तिबीजं तु प्रथमोपस्थितत्वमिति। मूलोक्तेः स्वोक्तेश्च समूलत्वं ध्वनयति—इदमिति।

**शङ्काया एवेति।** तथाचोभयमसङ्गतमिति भावः। अवयवान्यत्वाभावादित्यर्थनिरासायाह—ण्यन्ते-ति। षष्ठ्यर्थान्वयमाह—सुनोतीति। रूपशब्दो धर्मपर इति भावः। शङ्केति। तद्रूपेत्यर्थः। त्वदुक्तेति। ण्यन्तस्य शब्दान्तरत्वरूपोक्तरीत्येत्यर्थः। एवञ्च तत्र कथमप्यप्रवृत्त्योभयासङ्गतिरिति भावः। मूले असङ्गत एवेति। अतएव 'उपैधयते' 'प्रैदिधिषते' इत्यादौ वृद्धिः, प्रकृतिभागस्यैधरूपत्वात्। किञ्चैधस्यवयवेऽचीत्यर्थ-

विशेषः-यदेधतेर्ण्यधिकस्याग्रहणं सुनोतेस्तु ग्रहणमिति । यदपि ण्यन्तभादीनामुपसंख्यानमुपन्यस्तं तदपि नास्माकं प्रतिकूलम्, विशिष्टस्य शब्दान्तरत्वेन प्रकृत्यंशस्य तु णिचा व्यवधानेनोपसंख्यानस्यावश्यकत्वात् । अत एव न तत्रत्यन्यासादिभिः स्वोक्त्या वा विरोधः । प्रत्युत तवैव विरोधः, षाष्ठे भाष्यवार्तिकयोः "एत्येधत्योः-" (पा० सू० ६।१।८९) इति योगं विभज्य "एचि" इति विशेषितत्वात् । तस्मादिह वृत्तिग्रन्थो माधवग्रन्थश्चासङ्गत एवेत्यभिप्रेत्य व्याचष्टे-एजाद्योरिति ॥

अक्षौहिणीति । ऊहोऽस्त्यस्य ऊहिनी अक्षाणामूहिनीति विग्रहः । परिमाणविशेषविशिष्टा सेना अक्षौहिणी । "पूर्वपदात्सञ्ज्ञायाम्" (पा० सू० ८।४।३) इति णत्वम् । यत्तु प्राचा विगृहीतमक्षाणामूहः समूहः सोऽस्त्यस्या इति । तदपि उहिनीशब्देन षष्ठीतत्पुरुष इत्येवंपरतयैव कथंचिन्नेयम् । ऊहशब्देन समासे तत इनौ-

---

शब्दरत्नम् ।

विग्रह इति । समस्यमानपदस्वरूपबोधक इत्यर्थः । तत इनाविति । "अतो भैरवो ।

भावः स्यादिति ध्वनितम् । वस्तुतस्तु "इणोकारादौ प्रतिषेधः" इति वार्तिकविरोधात्प्रेदिधदित्यस्यानभिधानमावश्यकमिति तदुपादानेन सर्वोऽपि विचारोऽत्र निष्फल एव । एत्येधत्योरवयवे एचीति भाष्यकारीयव्याख्यानन्तूपरञ्जकतया एधत्यंशेऽप्येचीत्यस्य सम्बन्ध इत्यभिप्रायेणेत्याहुः । अपरे तु वार्तिकस्थमिण्ग्रहणमुपलक्षणम् । अत एव भाष्यकृताऽत्रैत्येधत्योरिति योगं विभज्य तयोरेवैचीति विशेषणं कृतमिति वदन्ति ॥

नन्वन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते इति न्यायविरोधादिति विग्रह इत्यसङ्गतमत आह—समस्यमानेति । 'वाप्यामश्वो वाप्यश्वः' इत्यादौ यथा । स्पष्टार्थमाह अत इनीति । नन्वसिद्धपरिभाषया जातस्य तत्कालप्रासिकस्य चासिद्धत्वप्रतिपादनेनान्तरङ्गेणेत्ययुक्तमत आह—

भावप्रकाशः ।

स्यावश्यकस्य प्रत्ययलक्षणसूत्रभाष्यसम्मतत्वेनादोषात् एतेन वृत्तिमाधवग्रन्थखण्डकैः'उपैधयते' इत्यत्र दोषनोद्भावितः, अस्फूर्तिवशादिति जगन्नाथोक्तं,—प्रकृतिभागस्यैधरूपत्वेऽप्यनर्थकत्वेनानतिप्रसङ्गान्मूलं चिन्त्यम् भाष्याद्याशयस्तु तन्मध्यपतितन्यायेन धातावधिकस्यार्थवत्तया 'प्रधति'ग्रहणेन ग्रहणादतिप्रसङ्ग इति रत्नाकरोक्तं चापास्तम्, उक्तयुक्तेः तस्या अनित्यत्वाच्च, एत्यादीनामुपलक्षणत्वाच्च, विशेषणतया ग्रहणाच्च, भाष्यादियोजकत्वद्रीत्याऽपि मूलस्य योजयितुं शक्यत्वाच्च । वर्णस्य विशेष्यत्वेन ग्रहणे तदप्रवृत्तेश्च । वस्तुतस्तु इणीकारादावितिवार्तिके एधत्यनुपादानाद्भगवता तदुपादानाकरणाच्च 'प्रेदिधत्'इत्यादेरनभिधानम् । एत्येधत्योरेचीति विशेषणमिति भाष्य तु एधत्यंशे सम्भवमात्रेणोपरञ्जकतया विशेषणबोधकत्वेनोपपन्नम् । परममूलमपि तथैव । लिखितकैयटस्तु बहुपुस्तकेष्वनुपलम्भादप्रामाणिकः । एवञ्चोक्तरीत्या माधवग्रन्थासङ्गतावपि वृत्तिग्रन्थः सम्यगेव । एतदरुचिबोधकमेव मूले इत्यभिप्रेत्येति टीकायामुचितेत्युक्तमितिबोध्यम् ।

यत्तु 'अक्षाणामूहिनी' इति विग्रह उक्तो नव्यैः । तन्न, 'संज्ञायामिति णत्वम्'इति स्वोक्तिविरोधादिति रत्नाकरस्तत्खण्डयति—समस्यमानपदेति । ननु वृत्त्यर्थाबोधकत्वेन तत्त्वं ततस्तदप्रतीतेः । व्युत्पादनं त्वसताऽप्यवयवार्थेन रथन्तरादिवत् । अतएव 'वाप्यामश्वो वाप्यश्वः' "संज्ञायाम्" इति समास इत्यादि "ईदूतौच"इतिसूत्रस्थभाष्यकैयटादिग्रन्थसङ्गतिरिति भावः । प्रकाशकृता दूषितं प्रसादग्रन्थं योजयन्नुभयमनुवदति मूले—यत्तु प्राचेत्यादि । नन्वन्तरङ्गपरिभाषया जातस्य तत्कालप्राप्तस्य चासिद्धत्वेऽप्यत्रातथात्वादन्तरङ्गेणेत्ययुक्तोऽनुवादः । नच तत्कालप्राप्तेनेति तदर्थो ननु परिभाषाया विषयः । अत एवाकृतेत्यस्यासञ्चार इति वाच्यम् । तथा व्यवहारस्यात्र सर्वत्र परिभाषामूलकत्वस्यैव "अचः परं"इति सूत्रभाष्ये

तु वृद्धिर्न स्यात्, अन्तरङ्गेण गुणेन बाधात्। अपवादभूताया अपि वृद्धेरूहिनी-शब्देन विग्रहे चरितार्थत्वात्। यथोक्तं प्राक्—"इण्-ङि-शीनामाद्गुणः सवर्णदीर्घत्वात्" इति॥

**स्वादीरेरिणोः।** ईरेरिण्योरिति क्वचित्कोऽपपाठः। स्वैरीति णिन्यन्तस्याख्नि-

---

शब्दरत्नम्।

इनिठनौ" (पा०सू०५।२।११५) इति विहित इत्यर्थः। अन्तरङ्गेणेति। प्रथमप्रवृत्ति-केनेत्यर्थः। समर्थग्रहणेन कृतसन्धिकार्यादेव तद्धितोत्पत्त्या तद्विषयेऽकृतव्यूहपरिभाषाया अप्रवृत्तेस्तस्या असत्त्वाच्चेति भावः। चरितार्थत्वादिति। तद्घटकोहिनीशब्दस्य कल्पिता नाप्यर्थवत्त्वाभावेन तत्रैतत्सूत्राप्रवृत्तेश्चेत्यपि बोध्यम्॥

भरवी।

प्रथमेति। समासे संहिताया नित्यत्वेन इन्प्रत्ययोत्पत्तिपर्यन्तं विलम्बासम्भवादिति भावः। नन्वकृतव्यूहपरिभाषया प्रथमतो गुणो न भविष्यतीत्यत आह—समर्थग्रहणेनेति। इदमकृत-व्यूहपरिभाषायाः सत्त्ववादिमतेन। वस्तुतः सा नास्तीत्याशयेनाह—तस्या इति। तद्घटकेति। प्राचोपपादितो यः समुदायस्तद्घटकेत्यर्थः। कल्पितार्थेनापीति। समासे समुदायस्यैवार्थव-त्त्वम्, अवयवस्य कल्पितं तत्त्वम्, तच्चात्र नास्तीत्यर्थः। इन्प्रत्ययस्य समासादुत्पत्ते-रिति भावः। एतत्सूत्रेति। नच "अक्षादूहिन्याम्" इति वार्तिकं न तु सूत्रमित्येतत्सूत्रमित्य-सङ्गतमिति वाच्यम्, तद्धितप्रकरणारम्भे शब्दरत्ने एवोपपादयिष्यमाणत्वात्॥

भावप्रकाशः।

ध्वनितत्वात्, बाधादित्यादिग्रन्थासङ्गतेश्चात आह—प्रथमेति। पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वेन लोकन्यायसिद्धेनेत्यर्थः। इदञ्च युगपत्प्राप्तौ पूर्वप्रवृत्तिमात्रनियामकमेव। बहिरङ्गासिद्धत्वमपि पूर्वं तदप्र-वृत्तिरूपं यथा 'पट्व्या' इत्यादौ पदस्य विभज्यान्वाख्याने। क्रमेणान्वाख्याने तु पूर्वप्रवृत्तिकत्वमेवातर-ङ्गत्वं बहिरङ्गासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपम्। एवमत्रापि। बाधादित्यस्याप्ययमेवार्थः। तत्रान्तर-ङ्गत्वं तु भाविबौद्धबहिरङ्गनिरूपितमक्षतम्। "नाजानन्तर्ये"इति तु न, उक्तोत्तरत्वादिति भावः। नन्वेव-मपि "अकृत"इति दुर्वारा, निमित्तविनाशसम्भावनाऽपि हि तत्प्रवृत्तिनिमित्तम्। अत एव 'क्ङेनः' इति निर्देशेन तस्या अनित्यत्वं सतुक्कनिर्देशवैयर्थ्यं च ब्रुवन् "अचःपर"इति सूत्रस्थकौस्तुभो गोमत्प्रिया-दिश्चोपपद्यते। अन्तरङ्गानपीत्याद्यस्या एव प्रपञ्चः। तज्ज्ञापकं चास्या एवेत्यत आह—समर्थेति। इदं च मूलरीत्या। तद्विषये, तद्धितविषये। सिद्धान्तरीत्या आह—तस्या इति। ननु "उपसञ्जनिष्य" इति न्यायेन वृद्धिरेव स्यादत आह—मूले-अपवादेति। चरितार्थत्वादितीति। तथाचापवादो यदन्य-त्रेति न्यायस्य विषयो, न तस्य। अत एव यथोक्तमित्यादिना दृष्टान्तोक्तिः। एवञ्च विधानसामर्थ्याद् गुणबाधकत्वं नेति भावः। ननु युगपदन्वाख्याने विनिगमनाविरहेण वैपरीत्यं कुतो नेत्यत आह—त-दिति। यद्वा सामर्थ्यात्तत्र प्रवृत्तिमभ्युपेत्य मूलोक्तं दूषणम्। वस्तुतः सैव नेत्याह—तदिति। सम-स्तप्रकृतिकेन्नन्तघटकेत्यर्थः। इनो विशिष्टप्रकृतिकत्वेन तन्मात्राप्रकृतिकत्वात्। अपिर्वास्तवार्थाभावसमु-च्चायकः। तत्रैतदिति। प्राचोक्तप्रक्रियाके तत्र लक्ष्ये"अक्षादूहि"इति वार्तिकाप्रवृत्तेरित्यर्थः। तथाच तत्र प्रक्रियायां तत्र वृद्धिर्नैव स्यादिति भावः। 'उपजनिष्यमाण इतिन्यायसञ्चारे आह—तद्घटकेति' इति

सरला।

मूले—उक्तं प्रागिति। अयज इन्द्रम्, ग्रामे इह, सर्वं इत्थम्, अत्रान्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यत इति। एतत्सूत्रेति। क्रतूक्थादिसूत्रस्थे विद्यालक्षणकल्पसूत्रान्तादकल्पादेरिकक् स्मृतः इति वार्तिके 'वार्तिकसूत्रिकः' इतिभाष्योदाहरणात् "सूत्राच्चकोपधात्" इतिसूत्रभाष्ये "संख्याप्रकृतेरितिव-क्तव्यम्" इत्यस्य 'माहावार्तिकः' इति प्रत्युदाहरणात् "स्वरितो वाऽनुदात्तेऽपदादौ" इतिसूत्रभाष्ये

यां वृद्ध्यभावप्रसङ्गात् । स्वैरिणीत्यत्र तु ङीपः प्राग्भागमादाय वृद्धिर्बोध्या । यत्तु व्याचख्युः—लिङ्गविशिष्टपरिभाषयेति, तन्निष्फलम् ॥

प्रादूहोढोढ्येषैष्येषु । अत्रोहशब्दः कैश्चित्प्रक्षिप्तो भाष्यादौ तु न दृश्यत इति प्राञ्चः । इदानीन्तनपुस्तकेषु तु भाष्यवार्तिकयोरूहशब्दो दृश्यत एव । नानर्थकस्येति । उपस्थितस्यार्थस्य शब्दं प्रति विशेषणत्वसंभवे त्यागायोगादिति भावः । सीरदेवस्त्वाह–"व्रश्च–" ( पा० सू० ८।२।३६ ) इतिसूत्रे राजेः पृथग् भ्राजिग्रहणमिह ज्ञापकमिति । नन्वेतदयुक्तम् , फणादिना राजिना साहचर्यात् तथाभूतस्यैव षत्वार्थतया भ्राजिग्रहणस्योपक्षीणत्वादिति चेत् ? 'विभ्राट्' 'विभ्राक्' इति रूपद्वयं हि साध्यं, तच्च व्रश्चादिसूत्रे 'राज्' इति पठित्वाऽपि सुसाधम् । एकस्य भ्राजतेर्ऋकारस्य प्रागपि दातुं शक्यत्वात्–ऋभ्राज इति, "भ्राजभास–" ( पा० सू० ७।४।३ ) इति विकल्पस्य वाचनिकतया ऋकारस्य आत्मनेपदमात्रफलकताया

---

शब्दरत्नम् ।

ज्ञापकमितीति । भ्राजौ राजेरपि सत्त्वेन राजिग्रहणेनैव सिद्धेस्तद् व्यर्थं सज्ज्ञापकमिति भावः । तथाभूतस्यैवेति । फणादेरेवेत्यर्थः । राजृ इति पठित्वेति । न चैवमनुबन्धनिर्देशाद्राराष्टीत्यादौ यङ्लुकि षत्वं न स्यादिति वाच्यम् , यङ्लुकश्छान्द-

भैरवी ।

भ्राजौ राजेरपीति । अत्र अपिशब्दो भ्राजावित्यस्यानन्तरं द्रष्टव्यः ॥ परोक्तं दूषणमुद्धर्तुमाह—नचैवमिति । छान्दसत्वादिति । एतेन "श्तिपाशपा" इति परिभाषासत्त्वे छन्दसि सर्ववि-

भावप्रकाशः ।

व्याख्यानमयुक्तम् । अपवादवैयर्थ्ये एव तत्प्रवृत्तः । यथा दधतीत्यादौ । ऊशादिनिरेव नेति तत्प्रवृत्तिरेवेत्यपि न, तत्रैव मानाभावात् ।

मूले–निष्फलमिति । हे स्वैरोस्ति स्वैरप्रियः स्वैरज्ञानं स्वैरघटावित्यादौ वृद्धिरिष्टैव । अतएव 'दन्त्योष्ठ्यः' कम्बलवसनार्ण'इत्यादि च सङ्गच्छते । एतेनोक्तप्रयोगेष्ववृद्धये उत्तरपदयोरीरेरिणोरित्यर्थस्समासग्रहणाभावेऽपि वस्तुतस्समासे एव वृद्धेरिष्टत्वात्स्वीकार्यः, समर्थपरिभाषोपस्थानेनानन्वितार्थकत्वादुद्धारेऽपि 'स्वैरघटौ'इत्यादिदोषानुद्धारादिति प्रकाशाशयेन मूलं चिन्त्यमिति जगन्नाथरत्नाकरोक्तमपास्तम्, तत्र तस्या इष्टत्वात् । सिद्धान्तरीत्या तथा तस्याप्युद्धाराच्च । साक्षात्पदत्वेन सुबन्तत्वेन वोद्देश्यत्वाभावात्तदप्रवृत्तेश्च । तत्राप्रवृत्तौ मानाभावाच्चेति दिक् । एतेन समर्थपरिभाषोत्तरपदाक्षेपाभ्यामेव निर्वाहेऽर्थवत्परिभाषा निष्फलेति मूलादि चिन्त्यम् । अन्यथा 'प्रोढघटौ'इत्यादावनिर्वाहः । जहत्स्वार्थायामगतिश्चेति "प्रादूहोढः" इत्यत्र तदुक्तमप्यपास्तम्, उक्तयुक्तेः, प्रकाशानुयायित्वाच्च मूलादेः, प्रक्रियादशायां जहत्स्वार्थानङ्गीकारस्योक्तत्वाच्च । गौणमुख्यन्यायेनार्थवत्परिभाषामूलकेन संज्ञाभूतेरादिशब्दे तु वृद्धिर्नेति भावः ।

मूले–प्राञ्चः–प्रकाशकृतः । भ्राजौ राजेरपीति । अपिः पूर्वान्वयी । यद्वा, यथाश्रुत एव भ्राजिसमुच्चायकः । व्यपदेशिवद्भावस्तूभयत्रापि तुल्यः । राजेरपीत्याद्यपाठः, धातुनिर्देशे इको विधानादन्तर्गतस्य चाधातुत्वात् । रत्नाकराद्यनूदितं खण्डनकृदुक्तदोषमुद्धर्तुमाह—नचैवमिति । तथापाठे इत्यर्थः । सि-

सरला ।

नचेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ते" इति भाष्याच्च वार्तिकेऽपि सूत्रव्यवहारदर्शनेन "अक्षादूहिन्याम्" इति वार्तिकस्य सूत्रपदेन ग्रहेऽपि नासङ्गतिः । स्पष्टं चेदं शब्दरत्ने तद्धितप्रकरणे ।

वक्ष्यमाणत्वेन तत्स्थाने ऽकारस्य सुपठत्वाच्च । तस्मात् सीरदेवोक्तं ज्ञापकमपि सम्यगेव । प्रैष्य इति । एषसाहचर्यादेष्योऽपि अनव्ययं गृह्यते । तेन ण्यन्तादिषेः त्को ल्यपि पररूपमेव, न तु वृद्धिः । प्रेष्य गतः ॥

---

शब्दरत्नम् ।

सत्वात् "श्तिपा शपा" इत्यस्यानित्यत्वाच्च, भाष्ये तस्यानुक्तत्वाच्च । एतेन फणादित्वेन ग्रहणे गणेन ग्रहणाद्यङ्लुकि न स्यादित्यपास्तम्, गणेन निर्देशाभावाच्च । राट्, विभ्राट्, इत्यादौ राजृत्वं तु भूतपूर्वगत्या । राशब्दपूर्वकजॄधातोः क्विपि निष्पन्नराजॄशब्दे नपुंसके न षत्वं, सूत्रे राजृ इत्यननुनासिकस्य पाठात् । सुपठत्वाच्चेति । एवञ्च "भ्राजभास" इतिसूत्रे भ्राजिग्रहणं न कार्यमिति बोध्यम् । सीरदेवोक्तमिति । अत्रारुचिबीजं तु व्रश्चादिसाहचर्येण धातुसञ्ज्ञकराजेर्ग्रहणं स्यादिति भ्राजिग्रहणस्यावश्य-

भैरवी ।

धीनां।वैकल्पिकत्वेन तदप्रवृत्तिरिति ध्वनितम् । अनित्यत्वात्—"गुणो यङ्लुकोः" इति सूत्रेण यङ्लुकि गुणविधानेनानित्यत्वात् । सिद्धान्तरीत्याह—भाष्येति । एतेन—तस्या असत्त्वेन । यङ्लुकि—राराष्टीत्यादौ । निर्देशाभावादिति । यत्र गणबोधकशब्दस्य साक्षादुच्चारणं तत्रैव गणेन निर्दिष्टमिति व्यवहारादित्याशयः । अत्र हि—फणादित्वङ् ग्राह्यतावच्छेदकन्नतु ग्राहकतावच्छेदकम् । तच्च राजत्वमेव । भूतपूर्वगत्येति । अनुबन्धसहितस्य निर्देशे सर्वत्र भूतपूर्वस्य गतिरेव सुप्रसिद्धेति भावः । साम्प्रतिकस्य सत्त्वे भूतपूर्वगत्याश्रयणमशक्यमित्याशयेन शङ्कामन्यकृतां वारयति—राशब्दपूर्वकेति । रातीति राः, तज्जृणातीत्यर्थः । क्विपीति । अत्र क्विप्शब्दः क्विबिवाचरतीत्यर्थपरत्वेन विच्परः, तेनेत्वतुकौ न । तुकि बहिरङ्गस्य ह्रस्वस्यासिद्धत्वमपि बोध्यम् । पाठादिति । लाक्षणिकत्वाच्चेत्यपि बोध्यम् । आवश्यकश्चानुनासिकपाठः । अन्यथा राजृइतिसूत्रे पाठसामर्थ्यादिहैव लाक्षणिकत्वेऽपि स्यात् नतु राडित्यादौ, राजृइतिस्वरूपानुपलम्भात् । अत्र—सीरदेवोक्तमिति विशेषोपादानस्थले । आवश्यकत्वमिति ।

भावप्रकाशः ।

द्धान्तमतेनाह—यङ्लुक इति । मूलमतेनाह—श्तिपेति । अन्यथा मूलयोर्मिथो विरोधः स्पष्ट एवेति भावः । सिद्धान्तमतेन तत्राप्याह—भाष्ये इति । तस्य—श्तिपाशपेत्यस्य । एतेनेति । उक्तदोषत्रयेणेत्यर्थः । फणादित्वेनेति । इदं च ग्राह्यतावच्छेदकम् । ग्राहकतावच्छेदकं तु राजृत्वं सामान्यरूपमेवेति भावः । "एकदेश"इति न्यायेन स्वरूपालाभादाह—भूतपूर्वगत्येति । "तदनुबन्धक"इत्यस्य तु प्राप्तिरेव नेति भावः । ननु साम्प्रतिकसत्त्वे भूतपूर्वगत्याश्रयणमयुक्तमत आह—राशब्देति । रातीतिराःतं जृणातीत्यर्थः । क्विपीति । इत्वतुकौ तु न, बहिरङ्गत्वात् । लाक्षणिकत्वाच्च । "वार्णादाङ्गम्"इति त्वनित्यमिति भावः । अनुनासिकस्येत्यर्थश्चाय नन्तम् । पाठादिति । अन्यथोक्तरीत्या लाक्षणिकत्वेऽप्यत्रैव स्यान्नतु राडादाविति भावः । तदुक्तदोषद्वयमुद्धरति—अत्रेति । साहचर्येणेति । एवञ्च 'निड्भ्याम्'

सरला ।

भ्राजिग्रहणं न कार्यमिति । ऋकारानुबन्धस्य नाग्लोपीति निषेधोऽकारानुबन्धस्य च निषेधाप्राप्त्योपधाह्रस्वसिद्धिरिति तद्विकल्पस्य फलितत्वादिति शेषः । ननु 'विभ्राट्' 'विभ्राक्' इति रूपद्वयसिद्धये सूत्रे 'राजृ' इति पाठन्यासे ऋकाररहितेनैव दीप्त्यर्थप्रतीतेः ऋकारविशिष्टस्य क्रियावाचकत्वाभावेन तत्र साहचर्यपरिभाषा न नियामिका भवितुमर्हति । एवं च भ्राजिग्रहणं पुनरपि व्यर्थमिति चेदित एवाऽरुचेराह—किञ्चेति । अन्ये तु अकारानुबन्धस्य भ्राजधातोर्धातुपाठे फणादेर्बहिः कल्पितस्य मूलोक्तन्यासस्य स्थाने 'भ्राश्' इति विन्यस्य तस्य शान्तत्वेन षत्वे विभ्राट् इति 'भ्राज्' धातोश्च कुत्वेन विभ्राग् इति रूपद्वयं संसाध्य ज्ञापकं समर्थयन्ति दूषयन्ति च विभ्राजृशब्दादाचक्षाणण्यन्तात्कर्तरि क्विपि सौ एकदेशविकृतन्या-

प्रवत्सतरेति । अत्र कालापानुसारिणो वत्सरशब्दमपि पठित्वा वत्सरे देयमृणं वत्सरार्णमित्युदाहरन्ति, अपरे तु वत्सशब्दमपि पठन्ति, तत्सर्वं भाष्यादिविरुद्धम् ॥

अन्तादिवच्च ( पा० सू० ६।१।६ ) इहैकः पूर्वपरयोरित्यनुवर्तते यथासंख्यं चेत्यभिप्रेत्याह–पूर्वस्यान्तवदिति । स्थानिवत्सूत्रेणैव गतार्थमिदं सूत्रम् । न चा-

---

शब्दरत्नम् ।

कत्वम् । किञ्च आजन्तर्गतराजेर्न ऋकारानुबन्धत्वं तस्य समुदायानुबन्धत्वादिति । भाष्यादिविरुद्धमिति । तदनुक्तत्वादिति भावः ॥

गतार्थमिदमिति । पूर्वपरयोरिति द्विवचननिर्देशेनोभयोरपि प्रत्येकं स्थानित्वादिति भावः । एवं च 'प्राच्छेति' इत्यादौ विसर्गवारणाय ज्ञापकाश्रयणमपि न कार्यं, यतस्तत्र स्थानिवत्त्वेन रेफान्ते पदत्वं दुर्लभं, तस्य तत्स्थानिधर्मत्वाभावात् । आनुमा-

भैरवी ।

आजन्तर्गतराजेरधातुत्वात्तस्य ग्रहणासम्भवादिति भावः । न ऋकारानुबन्धत्वमिति । तेन राजृग्रहणेन तद्ग्रहणासम्भव इति शेषः । यत्र भाष्यकारपठितवचनविरुद्धार्थस्य प्रसक्तिस्तत्रैव भाष्यविरुद्धमिति व्यवहारस्तथा त्वत्र नास्तीत्याशयेनाह—तदनुक्तेति ॥

ननु "आद्गुणः" इत्यादौ स्थानषष्ठ्यनिर्देशात्कथङ्गतार्थतेत्यत आह—पूर्वपरयोरिति । अपिशब्दः प्रत्येकपदोत्तरं योजनीयः । समुदायस्यैव स्थानित्वाभिमतत्वे समाहारद्वन्द्वेनैव निर्दिशेदिति भावः । अत एव 'कृष्णर्द्धिः' इत्यादौ रपरत्वसिद्धिः । उभयोः—पूर्वपरयोः । इति भाव इति । मूलकारस्येति शेषः । एवञ्च—स्थानिवद्भावाश्रयणे च । ज्ञापकाश्रयणमिति । "उभयथर्क्षु" इति निर्देशस्य ज्ञापकत्वाश्रयणम्प्रकाशकारादिकृतन्न कार्यमित्यर्थः । तत्स्थानिधर्मत्वाभावात्—एकादेशस्थानिधर्मत्वाभात् । समुदायस्य प्रत्येकञ्च स्थानित्वं, नहि तत्र पदत्वमस्तीति भावः । नन्वानुमानिकवचनकल्पनया भविष्यतीत्यत आह—आनुमानिकेति ।

भावप्रकाशः ।

इत्याद्यसाधुरेव । तेषां प्रमितत्वे तन्मात्रांशे सदनित्यत्वं वेति भावः । राजेर्न ऋकारेति । बहुव्रीहिरयम् । अग्रे तत्पुरुषः । तस्य, ऋकारस्य । भाष्यादीति । आदिना प्रकाशादीनां ग्रहणम् ।

ननु "आद्गुण"इत्यादौ स्थानषष्ठ्यनिर्देशात्कथं गतार्थत्वम् । किञ्च कथञ्चित्समुदायनिष्ठधर्मस्य तेन लाभेऽप्यवयवधर्मलाभार्थमावश्यकमिदम् । अत आह—पूर्वेति । अपि प्रत्येकपदोत्तरं योज्यः । स च समुदायसमुच्चायकः । प्रत्येकमिति । अन्यथा समाहारद्वन्द्वेनैव वदेत् । अतएव 'कृष्णर्द्धिः'इत्यादौ रपरत्वादिसिद्धिरिति भावः । इति भाव इति । मूलस्येति भावः । एतत्सूचितारुचिं दिगर्थतयाऽपि सूचयितुमादौ तदुपपादयति—एवञ्चेत्यादिबोध्यमित्यन्तेन । एवञ्च, तेन गतार्थत्वे च । आश्रयणमपीति । प्रकाशादिकृतमित्यर्थः । अपिः सूत्रसमुच्चये । एवञ्चापरं लाघवमिति भावः । तत्स्थानिधर्मत्वा-

सरला ।

येन स्थानिवत्त्वेन वा आजत्वारोपेण 'विभ्राट्' इत्यत्र षत्वार्थतया आजिग्रहणस्य सार्थक्यात् । समुदायानुबन्धत्वादिति । यदुपदेशप्रयुक्ता यस्येत्संज्ञा तदुपकारकत्वं तस्येत्यन्यत्रोक्तेः ।

तत्स्थानिधर्मत्वाभावादिति । पदत्वस्य प्र इत्येतद्घटकह्रस्वाकारमात्रवृत्तित्वाभावादित्यर्थः । आनुमानिकेति । श्रौतस्थानिघटितार्थवत्समुदायस्य स्थाने श्रौतादेशघटितार्थवत्समुदाय आदेशो भवतीति आनुमानिकस्थान्यादेशभावस्य शब्दानित्यत्ववारणाय कृतया कल्पनयेति तदर्थः । दुर्लभत्वादिति । चिन्त्यमिदम् , श्रौतस्थानिघटितार्थवत्समुदायस्य स्थाने श्रौतादेशघटितयत्किञ्चिदर्थवत्समुदायादेशाप त्तिवारणाय अर्थवत्समुदाये श्रौतादेशघटितविशेषणवत् श्रौतस्थान्यघटितेति श्रौतस्थानिसमभिव्याहृतयावद्-

ल्विध्यर्थमिदमिति भ्रमितव्यम् , अस्याप्यल्विधावनिष्टत्वात् । अन्यथा अयजे इन्द्र-मित्यत्र सवर्णदीर्घापत्तेः तथा च वार्तिकम्—"न वा अताद्रूप्यातिदेशात्"

---

शब्दरत्नम् ।

निकवचनकल्पनया प्र ऋच्छ इत्यस्य प्राच्छं आदेशे तु समुदाये प्रशब्दधर्माणां स्थानि-वत्त्वेन लाभेऽपि प्रारित्यत्र तदलाभेन रेफे पदान्तत्वस्य दुर्लभत्वादिति बोध्यम् । न वेति ।

भावप्रकाशः ।

भावादिति । समुदायनिष्ठत्वेऽपीत्यादिः । तदन्तत्वं तु तेन न वर्णवृत्तित्वादिति भावः । ऋच्छिति । अर्थवत्त्वस्य तत्कल्पनामूलत्वेन तावन्मात्रेऽपि तत्सत्त्वेन न तिङन्तोक्तिः । यथा तेस्तुरित्यादौ । अत एवैका निर्देश इति भावः । अपिरनास्थायां सम्भावनायां वा । एवञ्च तत्र नाग्रह इति बोध्यम् । पूर्वन्तु नैवम् । अत एवैतद्वैलक्षण्यसूचकस्तुः । अन्यतुल्यमेवेत्याह—प्रारिति । तस्यानादेशत्वादिति भावः ।

सरला ।

र्णघटितेति श्रौतस्थानिसमभिव्याहृतयावद्वर्णेतरवर्णाघटितेति विशेषणत्रयस्य स्थानेन्तरतमपरिभाषाबलेना-वश्यं वक्तव्यतया प्रकृते श्रौतस्थानिघटितार्थवत्समुदायस्य प्र इत्यस्य तादृशविशेषणविशिष्टोऽर्थवान् समुदायः प्रार् इति आदेशो भवतीति आनुमानिकस्थान्यादेशभावबोधकवचनकल्पनावश्यकत्वेन 'प्र'वृत्तिपदत्वस्य प्रार् इत्यत्र लाभेन तुल्यवित्तिवेद्यन्यायेन रेफे पदान्तत्वस्य सुलभत्वात् । एवञ्च स्थानिवत्सूत्रेणास्य सूत्रस्य गतार्थत्वाङ्गीकारेऽपि 'प्रार्च्छति' इत्यत्र रेफस्य विसर्गवारणाय ज्ञापकमाश्रयणीयमेवेति । यद्यप्यत्र पूर्वपरयो-रिति, स्थानिताश्रवणेन तद्घटितत्वस्य 'प्रऋच्छ्' इति समुदाये एव तथापि द्विवचनबलेन प्रत्येकमपि स्थानि-तापर्याप्तेः सत्त्वेन 'प्र-ऋच्छ्' इत्यस्यैव प्र इत्यस्य 'ऋच्छ्' इत्यस्य च श्रौतस्थानिघटितत्वमस्त्येवेति तदनु-रोधेन 'प्रार्' इत्यस्य 'आर्च्छ्' इत्यस्य च 'प्रार्च्छ्' इत्यस्यैव श्रौतादेशघटितत्वमस्त्येवेति बोध्यम् । प्रत्येकं स्थानितापर्याप्तेः स्वीकारेण 'कृष्णर्द्धिः' इत्यत्र रपरत्वं, समुदाये च तत्स्वीकारेण 'सुब्रह्मण्योम्' इत्य-त्रोभयगुणकस्वरितादेशश्च सिद्ध्यति । एतादृशानुमानिकस्थान्यादेशभावकल्पनेन 'पचतु' इत्यत्र श्रौतस्था-निघटितार्थवत्समुदायस्य 'ति' इत्यस्य "एरुः" इति सूत्रेण 'तु' इत्येवादेशो ननु 'तिउ' इति, नवा 'उ' इति नापि अधिक 'तुम्' इत्यादिरिति । नचान्तादिवत्सूत्राभावे 'क्षीरपेण' इत्यादौ प वृत्ति एकाजुत्तरपदत्वस्य पे इत्यत्रातिदेशो न स्यादनल्विधाविति निषेधात्तस्य अल्मात्रवृत्ति 'अच्त्व' धर्मघटितत्वादिति वाच्यम्, तत्रै-काच्त्वस्य स्वतः सिद्धत्वेनोत्तरपदत्वमात्रस्यैवातिदिदिक्षितत्वेन तस्य चानल्विधित्वेनानल्विधाविति निषे-धाप्रवृत्तेः । नचैवमपि भिय इत्यादावियङ् न स्याद् धातुत्वस्य 'भीई' इति समुदायैकदेश 'भी' इत्येतद्वृ-त्तित्वेन तस्य स्थानिधर्मत्वाभावेन स्थानिवत्सूत्रेणातिदेष्टुमशक्यत्वाद्; इति वाच्यम्, 'प्रार्च्छति' इत्या-दाविवात्रापि समुदाये प्रत्येकं चार्थवत्तया स्थानितापर्याप्तेः सत्त्वेन भी इत्यस्य भी इत्यादेशः, ई इत्य-स्य ई इत्यादेशः, भीई इत्यस्य च भी इत्यादेश इति त्रयाणामानुमानिकस्थान्यादेशानां कल्पनेन भीवृत्ति-धातुत्वस्य भी इत्यादेशेऽतिदेष्टुं शक्यत्वात् । स्वाश्वशब्दे तु नैवं स्वशब्दत्वमतिदिश्य तस्मादीरिन्शब्दे परे "स्वादीरेरिणोः" इति वृद्धिः शङ्क्या, 'स्व' इत्येतन्निष्ठस्थानितानिरूपितादेशतायाः स्वाशब्दे सत्त्वेऽपि स्वाश्वशब्देऽभावेन तत्र स्वशब्दत्वस्यातिदेष्टुमशक्यत्वात् ।

नचैवम् 'अमी' इत्यादावीत्वं न स्याद्बहुवचनत्वस्य स्थान्येकदेशवृत्तित्वेन तस्य स्थानिवत्सूत्रेणा-तिदेष्टुमशक्यत्वादिति वाच्यम्, तत्रापि पूर्वोक्तरीत्या अद ई इत्यस्य अदे आदेशः अद इत्यस्य अदे इत्यादेशः, ई इत्यस्य ए इत्यादेश इति स्थान्यादेशभावत्रयकल्पनेन ईकारवृत्तिबहुवचनत्वस्य एकारे सुल-भत्वात् । नच अनल्विधाविति अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्तताके कार्ये न स्थानिवदित्यर्थकनिषेधः शङ्क्यः, तस्य अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्र-कारीभूतधर्मेण साक्षादवच्छिन्ना या उद्देश्यता तादृशोद्देश्यताके कार्ये कर्तव्ये स्थानिवन्नेत्यर्थस्य स्थानिव-त्सूत्रव्याख्याने स्पष्टमुक्ततयाऽत्रापि आरोपप्रकारीभूत बहुवचनत्वधर्मेण साक्षादवच्छिन्नत्वस्य "एत ईद्ब-हुवचने" इति सूत्रीयोद्देश्यतायामसत्त्वेन तदप्रवृत्तेः ।

नन्वन्तादिवत्सूत्राभावे "उभयत आश्रयणे नान्तादिवत्" इत्यस्यासङ्गतिः । न च स्थानिवत्त्वस्यैव

इति। न विसर्ग इति। एतच्च सुखार्त इत्यादावपि तुल्यम्। अत्र च कार्यकालप-

शब्दरत्नम्।

"वर्णाश्रये विधावन्तादिवद्भावप्रतिषेधो वाच्यः" इत्यस्य प्रत्याख्यानमेतत्। न वा वक्तव्यं, तादूप्यस्य वर्णमात्रवृत्तिधर्मस्यानेनातिदेशाभावादिति तदर्थः। पूर्वस्य परस्य च समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रातिपदिकत्व-सुबन्तत्व-प्रत्ययत्वादयस्ते कृतैकादेशस्यापि भवन्तीत्यर्थात्। अत एव तुक्यसिद्धवचनं चरितार्थम्। अन्यथा 'अधीत्य' इत्यादौ ह्रस्वत्वप्रयुक्ततुक्सिद्धेरसिद्धवचनवैयर्थ्यं स्पष्टमेव। अत एव 'खट्वाभिः' इत्यत्रैस् नेति दिक्। अत्र चेति। 'सुखार्तः' इत्यत्र 'प्राच्छेति'

भैरवी।

मूले "अन्तादिवच्च" इत्यनेन वर्णमात्रवृत्तिधर्मस्यातिदेशो नास्तीत्यर्थे वार्तिकं "नवा अताद्रूप्यातिदेशात्" इत्युक्तं, तद्विवृणोति—वर्णाश्रय इत्यादिना। वर्णमात्रवृत्तिधर्मानतिदेशे साधकमाह—अत एवेति। वर्णमात्रवृत्तिधर्मानतिदेशादेव। अत एवेति। उक्तोऽर्थः। एतत्फलम् तुक्यसिद्धवचनेन ज्ञापकेनान्तादिशब्दौ सौत्रावुपस्थितैकादेशस्थानिपरौ, पूर्वपरयोरित्यस्य चानुवृत्तिः, तौ च तद्घटितसमुदायपरौ यथासंख्यञ्च तेनोक्तार्थलाभः। दिगिति। दिगर्थस्तु

भावप्रकाशः।

विकल्पोपपत्त्यर्थं प्रकृतसङ्गत्यर्थं चाह—वर्णेति। इत्यस्येति। वचनस्येत्यर्थः। अत एव "न वा वक्तव्यम्" इत्यग्रिमोक्तिः सङ्गच्छते। सूत्रादेव तथाऽर्थलाभ इति नेदमप्यपूर्वं वचनमिति ध्वनयितुम्, अनया युक्त्या मूलासङ्गतिं ध्वनयितुं च तदर्थमाह—नवेति। वर्णमात्रेति। अन्तादीत्यादिः। मात्रपदेन तद्घटितसमुदायवृत्तिधर्मव्यावृत्तिः। तद्धेतुककार्ये एतदतिदेशेष्टत्वस्य वक्ष्यमाणत्वादिति भावः। देशाभावादिति। अनेनाताद्रूप्येति वार्तिके छेदः प्रदर्शितः। ननु सूत्रात्कथमिदं लब्धमत आह—पूर्वस्येति। तत्तदवयवत्वेन बोधकसमुदायाक्षेपकान्तादिशब्दावुपस्थितैकादेशस्थानिपरौ "एकः पूर्वपरयोः" इत्यनुवर्तते, तौ च तद्घटितसमुदायपरौ यथासङ्ख्यं चेति भावस्तदाह—समुदायेति। तृतीयान्ताद्वतिरित्याह-अन्तादिभ्यामिति। पार्थक्याभावे स्वस्यैवाभावात्सादृश्यानुपपत्तिरत आह—पृथगिति। असंहितायामिति भावः। एक इत्येकादेशविशिष्टपरमित्याशयेनाह—कृतैकेति। पूर्वस्य परस्य च समुदायस्येत्यर्थः। अपिरतस्यैव समुच्चये। एवञ्च विशिष्टे तन्निष्ठधर्मस्यैवातिदेशो न वर्णमात्रवृत्त्यत्वह्रस्वत्वातिदेशः, एकादेशमात्रविशिष्टं च वर्णयुक्तमयुक्तं वेति। अन्तादियुक्तपूर्वपरावयवितुल्यः कृतैकादेश इति पर्यवसितम्। अत्रार्थे मानमाह—अत एवेति। उक्तार्थाङ्गीकारादेवेत्यर्थः। तुक्यसिद्धेति। तत्र कार्ये तस्यासिद्धत्वबोधकं वचनं, तुग्ग्रहणमित्यर्थः। एवमग्रेऽपि। अन्यथेति। अन्तादिवदितिपदस्वारस्येन पूर्वपरान्तादितुल्य एकादेश इत्यर्थाङ्गीकारे इत्यर्थः। ह्रस्वेति। आदिवत्त्वेनेत्यादिः। एवं तथार्थं दृढीकृत्य फलमाह-अतएवेति। उक्तोऽर्थः। ऐस्नेतीति। पूर्वान्तवत्वेनाऽत्वनिबन्धन इति भावः। 'अयजे इन्द्रम्' इत्यादौ सवर्णदीर्घाभावस्याप्युपलक्षणमिदम्। दिगिति। तदर्थस्तु तेन गतार्थत्वं न। 'क्षी-

सरला

स निषेधः "अचः परस्मिन्" इत्यस्यापि निषेधापत्त्या 'ग्लायते' इत्यादौ लत्वानापत्तेः; इति चेत्? न, "अङ्वत आश्रयणे न स्थानिवत्" इति स्थानिवत्सूत्रस्यैव निषेध इति स्वीकारेणादोषात्।

तदर्थ इति। अन्तादिवर्णवृत्तिवर्णमात्रवृत्तिधर्मघटितधर्मस्य "अन्तादिवच्च" इति सूत्रेणातिदेशो न भवतीति तदर्थ इति बोध्यम्। यथाश्रुतं तु न सम्यक् "षत्वतुकोरसिद्धः" इत्यत्र तुग्ग्रहणस्य वैयर्थ्यापत्तेस्तादवस्थ्यात् 'अधीत्य' इत्यत्रैकादेशे ईकारे ह्रस्वत्वस्य वर्णमात्रवृत्तिधर्मस्यातिदेशाभावेऽपि ह्रस्वान्ततदादित्वस्य वर्णमात्रवृत्तित्वाभावेनातिदेशेनैव तुक्सिद्धेः। तस्मात्तुग्ग्रहणेन वर्णमात्रवृत्तिधर्मघटितधर्मस्यापि अतिदेशो न भवतीति ज्ञाप्यते। एवञ्च प्राधान्येनालाश्रयणेऽप्राधान्येनालाश्रयणे वैतत्सूत्राप्रवृत्तेः स्थानिवत्सूत्रेणैवेदं गतार्थमिति तत्त्वम्। विस्तरस्तु शब्देन्दुशेखरटिप्पणेऽस्मद्गुरुविरचिते द्रष्टव्यः।

इत्यर्थादिति। अयं भावः—अत्र सूत्रेऽनुवृत्तस्य पूर्वशब्दस्य एकादेश पूर्वस्थानिनिष्ठ चरमावयवक-

त्वे बहिरङ्गत्वादसिद्धत्वमपि बोध्यम् । न च "नाजानन्तर्ये" इति निषेधः यत्रान्त-

भैरवी ।

यन्मूलेऽभिहितं स्थानिवद्भावेन गतार्थमिति तदभिप्रायवर्णनमेवैतत् । तथाहि—स्थानिव-त्सूत्रमप्राधान्येनालाश्रयणेऽपि न प्रवर्त्तते प्रपठ्येत्यादौ यथा । इदञ्च सूत्रम्प्राधान्येनालाश्र-यणे "षत्वतुकोरसिद्धः" इति सूत्रे तुग्ग्रहणाज्ज्ञापकात् यद्यपि न प्रवर्तते तथापि यत्राप्राधा-न्येनालाश्रयणन्तत्र प्रवर्तत एव । अत एव "क्षीरपेण" इत्यादौ 'पे' इत्यस्यैकाच्त्वविशिष्टोत्तर-पदत्वातिदेशाण्णत्वस्य प्रवृत्तिः । स्थानिवत्सूत्रेण तु तस्य नातिदेशोऽप्राधान्येनालाश्रय-णात् । किञ्च तेन स्थानिनिष्ठधर्मस्यैवातिदेशो भवतीति 'भीई, भियः' इत्यादौ वर्णयोरेव स्थानिवत्त्वेन 'भी' इतिसमुदाये धातुत्वानापत्तिरितीयङ् न स्यात् । आनुमानिकस्थान्या-देशभावे 'भीई' इति समुदायस्य 'भी' इत्यादेशे स्थानिनि समुदाये धातुत्वस्यासत्त्वेन 'भी' इत्यस्य धातुत्वमलभ्यम् । आनुमानिकस्थान्यादेशभावकल्पनेऽपि 'भीई' इत्येतत् घटकयोः प्रत्येकं स्थानित्वमित्यत्र मानाभावः । प्रत्येकमपि स्थानित्वकल्पने तु स्वशब्दाऽश्वशब्दयो-रेकादेशे स्वाश्वशब्दे स्वत्वस्यातिदेशोऽपि स्यादिति तत ईरिन् शब्दे 'स्वाश्वेरी' इत्यत्र वृद्ध्यापत्तिः । अस्य सूत्रस्याप्रधान्येनालाश्रयणेऽपि प्रवृत्त्यर्थमावश्यकत्वादेव भाष्यकृतास-प्रत्याख्यानमिति ।

भावप्रकाशः ।

रपेण"इत्यादावेकारविशिष्टे एकाजुत्तरपदत्वस्याप्राधान्येनालाश्रयणेन स्थानिवत्त्वेनालभ्यत्वात् । किञ्चै-कादेशे वर्णयोरेव श्रौतस्थानित्वेन 'भी ई भियः' इत्यादावेकादेशविशिष्टे धातुत्वाद्यनापत्तेः, तस्य तत्त-त्स्थान्यधर्मत्वात् । आनुमानिकादेशग्रहणे विशिष्टस्यार्थवतः स्थानित्वेऽपि प्रत्येकं तयोः समुदाययोः स्थानित्वे मानाभावाच्च । तथात्वे च 'स्वाश्व'शब्दस्य स्थानिवत्त्वेन स्वशब्दतया तत ईरिनशब्दे वृद्ध्या-पत्तेः । अत एव 'प्राछ्'इत्यादौ षत्वजश्त्वादि न । किञ्चेदम् 'उभयत आश्रयणे" इत्यस्य लोकन्याय-सिद्धस्यासङ्गत्यापत्तावभीयादित्याद्यसिद्धेः । स्थानिवत्त्वस्य तूभयत आश्रयणविषये उक्तरीत्याऽप्राप्तिः । तस्मात्प्राधान्येन तन्मात्रवृत्तिधर्माश्रये "अन्तादिवच्च" इत्यस्याप्रवृत्तिरिति ततो वैलक्षण्येनास्यावश्यक-त्वम् । अतएव भाष्ये न प्रत्याख्यातम् । एवञ्च परममूलस्य प्रकाशानुयायिनो युक्तत्वेऽपि मूलमयुक्त-मेवेति ।

सरला ।

समुदाये लक्षणा, परशब्दस्य च एकादेशपरस्थानिनिष्ठाद्यावयवकसमुदाये लक्षणा । तथाच एकादेशः एकादेशपूर्वस्थानिचरमावयवकसमुदायस्यान्तवत्, एवमेकादेशः एकादेशपरस्थान्याद्यावयवकसमुदायस्या-दिवदिति सूत्रार्थः । एवञ्च एकादेशनिष्ठचरमावयवतानिरूपकसमुदाये एकादेशपूर्वस्थानिनिष्ठचरमावयवता-निरूपकसमुदायवृत्त्यर्थवत्पर्याप्ताः प्रातिपदिकत्वसुबन्तत्वप्रत्ययत्वादयो धर्म्मा अतिदिश्यन्ते, एवमेकादेशनि-ष्ठाद्यावयवतानिरूपकसमुदाये एकादेशपरस्थानिनिष्ठाद्यावयवतानिरूपकसमुदायवृत्त्यर्थवत्पर्याप्ताः प्रातिप-दिकत्वादयो धर्मा अतिदिश्यन्ते इतियावत् । "तद्वच्च" इति न्यासेनैव 'पूर्वपरयोः' इत्यस्यानुवृत्त्या पूर्व स्थानिवृत्तिधर्मातिदेशसिद्धौ "अन्तादिवच्च" इति समुदायांशे नित्यसाकाङ्क्षान्तादिशब्दघटितसूत्रकरणं पूर्वपरशब्दयोरुक्तार्थं लक्षणायां तात्पर्यग्राहकम् । तथाच तादृशसमुदायवृत्तिधर्माणामर्थवत्पर्याप्तानामेवा-तिदेश इति लभ्यते । तथा च वर्णमात्रवृत्तिधर्माणामत्वहस्वत्वादीनां तद्घटितधर्माणामदन्तत्वादीनां चार्थ-वत्पर्याप्तत्वाभावेन नातिदेशप्रसङ्ग इति सूत्रेणैवाक्षरमर्यादया तदर्थसिद्धौ "वर्णाश्रये विधावन्तादिवद्भाव-प्रतिषेधो वाच्यः" इति वार्तिकं न करणीयम् । अन्यथा "न वा अताद्रूप्यातिदेशात्" अन्तादिवर्णवृत्ति-वर्णमात्रवृत्तिधर्मघटितधर्मानतिदेशादित्यर्थकस्य वार्तिकस्य स्वतन्त्रवचनत्वे तेन "वर्णाश्रये" इति वार्तिक-प्रत्याख्यानमसङ्गतं स्यात्; वचनस्य वचनान्तरेण प्रत्याख्यानायोगादिति ।

रङ्गे बहिरङ्गे वा अचोरानन्तर्यं तत्रेति हरदत्तपक्षे तत्प्राप्तावपि यत्र पश्चात्प्रवर्तमाने‌ऽजानन्तर्यमिति कैयटमते निषेधाप्राप्तेः। बह्वपेक्षत्वेन बहिरङ्गायां वृद्धावजानन्तर्यसत्त्वेऽपि पश्चात्प्रवर्तमाने तदभावात् ॥

शब्दरत्नम्।

इत्यत्र चेत्यर्थः। आद्ये विशिष्य ऋतशब्दस्य तृतीयासमाससापेक्षत्वेनान्त्ये उपसर्गत्वधातुत्वादिसापेक्षत्वेन वृद्धेर्बहिरङ्गत्वादिति भावः। **अचोरानन्तर्यमिति।** अचोऽजानन्तर्यनिमित्तमित्यर्थः। **पश्चात्प्रवर्तमाने इति।** अन्तरङ्गे इत्यर्थः। अत्र च "षत्वतुकोः"—(पा०सू०६।१।८६) इति सूत्रस्थं तुग्ग्रहणं ज्ञापकम् अन्यथाऽधीत्येत्यादौ ल्यप्प्रवृत्तये पूर्वं समासे जाते तत्र संहिताया नित्यत्वात् ल्यबुत्पत्तिपर्यन्तमप्यसंहितयाऽवस्थाना-

भैरवी।

सन्निहितसुखातशब्दमात्रविषयकत्वं तस्य नेत्याशयेनाह—सुखेति। धातुत्वादीति। आदिना अवर्णान्तत्वस्य परिग्रहः। हरदत्तसम्मतपरिभाषार्थपक्षेऽज्द्वयस्यान्यानन्तर्यमिति, उत 'अन्तरङ्गे बहिरङ्गे वा' इत्यत्र वाशब्दस्य चार्थकत्वेनान्तरङ्गे बहिरङ्गे चाचोराश्रयणमित्यर्थो वाभिमतः? नाद्यः, 'अक्षद्यूः' इत्यत्र यणादेशे कर्तव्ये बहिरङ्गस्य ऊठोऽसिद्धत्वनिषेधानापत्त्या इष्टप्रयोजनासिद्धेः। नान्त्यः, वाशब्दोपादानस्वारस्यविरोधात् अक्षद्यूरित्यस्यासिद्धेश्च, इत्यत आह—अचो ऽजानन्तर्यमिति। मूले हरदत्तपक्ष इत्यनेनारुचिः सूचिता। तद्बीजन्तु पचावेदमित्यत्राप्यसिद्धमिति परिभाषाया निषेधापत्त्येष्टार्थासिद्धिः। तुक्यसिद्धत्वविधायकवचनस्यावश्यकतया ज्ञापकत्वस्योपपत्तावपि भाष्ये—'असिद्धम्बहिरङ्गमन्तरङ्गे' इत्युक्त्वा, नाजानन्तर्यमिति वक्ष्यामीत्युक्त्या 'अन्तरङ्गे इत्यस्यानुवृत्तिसूचकाक्षरास्वारस्यमिति। एतच्च 'पश्चात्प्रवर्तमाने' इत्युक्त्या मूलकारेणापि ध्वनितम्, अत्र च—परिभाषायाञ्च। तद्वैयर्थ्यम्—तुग्ग्रहणवैयर्थ्यम्। षत्वग्रहणन्तु न ज्ञापकम्, कोसिचदित्यत्रेण

भावप्रकाशः।

सन्निहितत्वात्सुखार्तमात्रविषयत्वभ्रमं व्युदस्यन्नाह—सुखेति। एवञ्च सिंहावलोकनन्यायाश्रयणसूचनाय मूलकृता तत्र नोक्तमिति भावः। एतेन पूर्वत्रानुपन्यासे पक्षान्तरोपन्यासव्याजेन बीजमाह—अत्र चेतीतिमान्योक्तव्याख्यानं प्राचामनुरोधेनेति ध्वनितम्, तस्यापि तुल्यत्वात्। तदेव ध्वनयन्नाह—आद्ये इति। उपसर्गधात्वादीति। आदिनाऽवर्णान्तत्वादिसङ्ग्रहः। इति भाव इति सूचितारुचिस्तूक्तैव। ननु हरदत्तमतेऽन्तरङ्गे बहिरङ्गे वाऽनद्वयस्थान्यानन्तर्यमित्यर्थः, उत स्वगतनिमित्तत्वेतरनिमित्तत्वाभावे इत्यर्थः, उतास्थान्यन्यपरनिमित्तकत्वे इत्यर्थः, उत चार्थे वा स्वीकृत्योभयत्राचोराश्रयणमित्यर्थः? नाद्यः, लक्ष्य 'अक्षद्यूः'इत्यादीष्टासिध्या निर्विषयतापत्तेः, धर्मिग्राहकमानविरोधाच्च। न द्वितीयतृतीयौ, पचावेदम्'इत्यादावैत्वापत्तेः। नान्त्यः, स्वायत्ते शब्दप्रयोगे चास्यौचित्यादतस्तन्मतनिष्कर्षमाह—अचोऽजानन्तर्यमिति। तत्र तत्र वा यत्राचोऽजानन्तर्यं निमित्तत्वेनाश्रितमित्यर्थः। द्वित्वं विवक्षितमिति भावः। अचोरानन्तर्यमिति पाठे तु तयोरेव मिथ आनन्तर्यं तत्त्वेनाश्रितमित्यर्थः। मूले हरदत्तेत्यनेनारुचिः सूचिता। तद्बीजं तु "न धातुलोप"इत्यादिसूत्रस्थभाष्यादिविरोधः 'पचावेदम्'इत्याद्यसिद्धिश्च। ननु धर्मिग्राहकमानविरोधात्कैयटमतमप्ययुक्तमत आह—अत्र चेति। उक्तार्थकपरिभाषायां चेत्यर्थः।

यत्तु कैयटादयः, षत्वग्रहणं ज्ञापकं, कोऽसिचत्कोऽस्येत्यादौ पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गकादेशस्यासिद्धत्वेन षत्वाप्रवृत्त्या तस्य वैयर्थ्यात्। यद्यपि तत्रेण्ग्रहणं तत्तु परेणैव, तथापि तेष्वचामध्यन्तर्भावोऽस्त्येव। नचैवमप्येकादेशे सिचदित्यस्यैकदेशविकृतन्यायेन पदत्वे सस्य तदादित्वात् "सात्पदाद्योः" इति निषेधेनैव सिद्धे तद्वैयर्थ्यमेवेति वाच्यम्, लोकन्यायाच्छास्त्रस्य प्राबल्येन तं बाधित्वा परादिवत्त्वेन 'असिचत्" इत्यस्य तत्त्वेन तदभावादित्याहुः तन्न, इणः पूर्वपदीयत्वेन षत्वस्याऽपि तादृशत्वेनोभयोस्तुल्यत्वाद् नैपादिकेन्तरङ्ग तदप्रवृत्तेः प्रागुक्तत्वाच्चात आह—तुग्ग्रहणमिति। अन्यथा—परिभाषानङ्गीकारे। आदिना प्रेत्येत्यादि। ल्यबिति। ततः पूर्वं तुकोऽप्राप्तेरिति भावः। तत्र—समासे। अपिः कैमुतिके।

## शब्दरत्नम् ।

सम्भवेन एकादेशे स्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतयाऽसिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव । तत्र पश्चात्प्रवर्तमाने तुक्यचोऽन्यानन्तर्यनिमित्तककार्यत्वान्न दोषः । अजानन्तर्यमिति । अचोऽन्यानन्तर्यमित्यर्थः ॥

## भैरवी ।

पूर्वपदसम्बन्धित्वेन षत्वस्याप्युभयापेक्षत्वेनोभयोः समत्वादित्यन्यत्र स्पष्टम् । अजानन्तर्यमित्यत्र न द्विवचनान्तेनाच्छब्देन समासः, किन्त्वेकवचनान्तेनैवेत्याशयेनाह—अचोऽन्यानन्तर्यमिति ॥

## भावप्रकाशः ।

तुगपेक्षेति । स्पष्टं चेदृशरीत्या बहिरङ्गत्वं "न धातु" इति सूत्रभाष्यादौ । तदपिनातिरिक्तं किन्तूक्तान्तर्भूतमिति भावः । सार्थक्यं प्रतिपादयंस्तदविरोधमेवाह—तत्रेति । अधीत्येत्यादावित्यर्थः । द्वित्वमविवक्षितम्, गौरवात् फलाभावाद्धर्मिग्राहकमानविरोधाच्च । अतएव विकल्पोऽपि नेति भावः । तद्ध्वनयन्नाह—अजानन्तर्यमितीति । एकवचनान्तेन समासः, तथैव प्रतिपादितत्वात् । क्वचित्तु अचआनन्तर्यमित्येव पाठः ।

मान्यास्तु 'पचावेदम्' इत्यादावैत्वस्याच्स्थानिकत्वेऽप्यच आनन्तर्यस्य तत्र निमित्तत्वं नेति तत्सिद्धिः एतेन तुग्ग्रहणं मानमित्यप्यपास्तमित्याहुस्तत्कैयटाद्यनुरोधेन, उक्तयुक्तेः । अतस्तत्सिद्धये धर्मिकग्राहकमानलब्धमर्थान्तरमाह—अचोऽन्यानन्तर्यमिति । ऐत्वस्यान्यानन्तर्यानिमित्तकत्वात्तत्सिद्धिः । एवं चाचोऽन्यानन्तर्यनिमित्तकेन्तरङ्गे कार्ये कृते च तस्मिन्यदन्तरङ्गप्राप्तिस्तत्र च कार्ये बहिरङ्गस्य जातस्य नासिद्धत्वमिति एतदर्थो बोध्यः । अत एव 'अक्षद्यूः' इत्यत्र वलि लोपो न । अन्योऽत्राज् तदन्यो वा । यदित्वन्त्य एव गृह्येत धर्मिग्राहकमानात्तर्हि 'अक्षद्यूः' इत्याद्यसिद्धिः । वस्तुतोऽक्षरमर्यादयोक्तार्थालाभेन 'नमुने' इति तदर्थाङ्गीकारे मानाभावेन वलिलोपाभावायान्यार्थं चावश्यकेन तदनित्यत्वेन तत्सिद्धिरितीयं व्यर्थैव । किञ्च सत्त्वेऽपि द्वितीयार्थानुपयोगः । आवश्यकपञ्चमीसमासेन "अचः पर" इति स्थानिवत्त्वेन तद्वारणादित्यादिस्पष्टमन्यत्रेति बोध्यम् ।

यत्तु खण्डनकृज्जगन्नाथरत्नाकरादयः । उपसर्गेणेतीतिप्रतीकं धृत्वा यत्क्रियेत्यादिहेतूक्तिरयुक्ता उपसर्गाः क्रियायोग इति यथाश्रुतसूत्रार्थादेव तदाक्षेपसम्भवेन उपसर्गसंज्ञायाः क्रियायोगनिमित्तत्वादिति वाच्ये विशेषोक्तरफलत्वादित्याहुः तन्न, आशयानवबोधात् । तथाहि, ननु 'प्रगत ऋषभः प्रर्षभः' इत्यादौ ऋकारादिधात्वयोगेऽप्यन्तर्भूतक्रियायोगेनोपसर्गत्वसत्त्वेन तत्रानतिप्रसङ्गाय उक्तरीत्या सामान्यतस्तदाक्षेपेऽपि 'प्रगत ऋच्छकः प्रच्छकः' इत्यादि वारणफलकेष्टधातुविशेषलाभाय च तस्यावश्यकत्वमिति कथं

## सरला ।

अत एवेति । वर्णाश्रये विधावन्तादिवद्भावाप्रवृत्तेरेवेत्यर्थः । वैयर्थ्यं स्पष्टमेवेति । नच अधिपूर्वकाद् "इट कट कटी गतौ" इत्यत्र प्रश्लिष्टाद ई धातोर्ल्यपि सवर्णदीर्घे 'अधीय' इत्यत्र पूर्वान्तवद्भावेनाधीकारवृत्तिह्रस्वत्वमादाय प्राप्ततुग्वारणाय तच्चारितार्थ्यमिति वाच्यम्, अन्तरङ्गे तुकि कर्तव्ये पदद्वयसम्बन्धिवर्णद्वयाश्रितत्वेन बहिरङ्गस्य सवर्णदीर्घस्यान्तरङ्गपरिभाषयाऽसिद्धत्वेनादोषात् ।

अचोऽजानन्तर्यनिमित्तमित्यर्थ इति । अजिनष्ठाजूनिरूपितव्यवधानाभावनिमित्तके कार्ये कर्तव्ये कृते वा बहिरङ्गशास्त्रं नासिद्धमित्यर्थः । हरदत्तेति मूलेऽरुचिः सूचिता । साच 'पचावेदम्' इत्यस्यासिद्धापत्तिः, तत्र गुणस्य अचोऽजानन्तर्यनिमित्तत्वेनासिद्धत्वाभावे "एत ऐ" इत्यस्य प्रवृत्त्यापत्तेः । तद्वैयर्थ्यं स्पष्टमेवेति । नच वेञ्धातोः क्विपि "ग्रहिज्यावयि" इति सम्प्रसारणे पूर्वरूपे च कृते 'उभ्याम्' इत्यत्र तुग्वारणाय तुग्ग्रहणं चरितार्थम्, पूर्वरूपस्य पदद्वयसम्बन्धिवर्णद्वयानपेक्षत्वेन बहिरङ्गत्वाभावात्; इति वाच्यम्, ज्ञापकपरभाष्यप्रामाण्येन पूर्वपदान्तोत्तरपदाद्येकादेशस्यैव तेनासिद्धत्वबोधनस्वीकारेण पूर्वरूपस्य तादृशैकादेशाभावेन तदप्रवृत्तेस्तत्र तुक इष्टत्वाच्च । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

**उपसर्गेणेति** । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसञ्ज्ञा इत्युक्त्वा दिति भावः । **प्रार्षभीयतीति** । "शरोऽचि" ( पा० सू० ८।४।४९ ) इति द्वित्वनिषेधः । **प्रेजत इति** । एजृ दीप्तौ । कम्पनार्थस्तु परस्मैपदी । एजते कम्पते इति तु प्राचां व्याख्यानं प्रामादिकमेव । एङ्येङित्येव सिद्धेः पररग्रहणमुत्तरार्थम् । रूप-

---

शब्दरत्नम् ।

**यत्क्रियेति** । यदर्थक्रियायुक्ता इत्यर्थः । **इत्युक्तत्वादिति** । **भाष्यकारादिभिरिति** शेषः । **उत्तरार्थमिति** । तेन 'अद्यर्श्यात्', 'भिन्द्युः', 'पचन्ति', इत्यादिसिद्धिः ।

भैरवी ।

"यत्क्रियायुक्ता" इति वचने 'यस्य क्रिया' इतिसमास इत्याशयेन व्याचष्टे—यदर्थेति । अस्यार्थस्य सप्रमाणत्वमाह—भाष्यकारादिभिरिति । क्रियायोगे एवोपसर्गसंज्ञाया गतिसंज्ञायाश्च विधानेन प्रत्यासत्त्याऽस्यार्थस्य लाभः । तेन-'प्रभूत ऋद्धः-प्रर्द्धः' इत्यत्र वृद्धिर्न । तेन-उत्तरार्थस्य पररग्रहणस्य करणेन । अद्यर्श्यादिति । अद्य आ ऋश्यादिति छेदः । आङो योगात्पञ्चमी । वैकल्पिकत्वात् "आङ् मर्यादाभिविध्योः" इत्यसमासः । ऋश्यो-मृगः । "ओमाङोश्च" इति पररूपम् , ततो गुणः । 'भिन्द्युः' इत्यत्र "उस्यपदान्तात्" इति, 'पच-

भावप्रकाशः

योगविभागोत आह मूले—यत्क्रियेति । अयम्भावः, तत्र क्रियायामिति वाच्ये योगग्रहणसामर्थ्यात् यदर्थक्रियायां प्रादीनामन्वयस्तं प्रत्येव तत्त्वम् । अत्र च ऋकारादिनिरूपितमेव तत्, प्रत्यासत्तेः। अत एव 'प्रभूत ऋद्धः प्रर्द्धः' इत्यादौ न । एतच्च तत्र वारणेन तदर्थं सदुक्तार्थसाधकमिति तत्र हेतूक्तिर्नतु तत्त्वे इति । ननु कर्मधारये तमित्यनुपपन्नं शब्दं प्रत्यतत्त्वेन वृद्धेरप्रसङ्गश्चात आह—यदर्थेति । अत्र यथा "गतिकारकोप" इति सूत्रस्थशब्देन्दुशेखरविरोधो न तथा तत्रैव परेत्वित्यादिना स्पष्टम् । नन्वस्य वक्ष्यमाणत्वेन भूतोक्तिरयुक्तात आह—भाष्येति । नन्वग्रेऽप्येङनुवृत्त्यैव 'शिवेहि' इत्यादिसिद्धिरत आह—तेनाद्येति । आङ्योगे पञ्चमी, वैकल्पिकत्वादसमासः ।

गोकर्णपृशतैणऋश्यरोहिताश्चमरोमृगः ।

इत्यमरः ।

एणः कुरङ्गमो रिश्यः सादृश्यश्चारुलोचनः ।

इति पुरुषोत्तमकोशश्च । अस्याङन्तत्वं तु "ओमाङोश्च" इत्यत्र भाष्ये ध्वनितम् । वस्तुतो धातुपाठे तदभावेन सम्भावनैव न, यद्यपि वोपदेवेन कविकल्पद्रुमे उणादिसूत्रधातुषु ऋशगणितः, काव्यकामधेनौ "ऋशगतिस्तुत्योऋश्यः" इति व्याख्यातं च तथापि शाकटायनादिरीत्या तत् । अत एव 'ऋच्छतेरियर्तेर्वा ऋश्यः' इति व्याख्यातं स्वाम्यादिभिः, सूत्रभाष्यरीत्या त्वव्युत्पन्नत्वमेव तेषामिति स्पष्ट-

सरला ।

**इत्युक्तत्वादितीति** । यज्जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वं प्रादीनां तद्धातुनिरूपितोपसर्गत्वं तेषामिति प्रगत ऋद्धः प्रर्द्धः इत्यादौ गमधातुजन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वेन प्रशब्दस्य गमधातुनिरूपितमेवोपसर्गत्वं नतु ऋधधातुनिरूपितोपसर्गत्वमिति वृद्धिर्नेति भावः ।

**उत्तरार्थमितीति** । "ओमाङोश्च" "उस्यपदान्तात्" "अतोगुणे" इति सूत्रत्रयार्थमित्यर्थः । क्रमेण तदुदाहरणान्याह—तेनेत्यादिना । **अद्यर्श्यादिति** । अद्य आ ऋश्यादिति स्थितिः । ऋश्यो मृगस्तस्मात् । पञ्चमीविभक्त्यन्तमेतत् । "ओमाङोश्च" इति पररूपेणाकारादेशे 'अद्या' इति जाते तत ऋकारेण

ग्रहणं तु चिन्त्यप्रयोजनम् "एङि पर:" इत्येव सिद्धेः। यथा "अमि पूर्वः" (पा० सू० ६।१।१०७) इति। नियमोऽवधारणमिति। यदाहुः—

नावक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः।

एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत्॥ इति॥

एतेन नियोजनं नियोगो व्यापार इति व्याख्यानं परास्तम्। "यदैव पूर्वं ज्वलने शरीरम्" "ममैव जन्मान्तरपातकानाम्" इत्यादिप्रयोगविरोधात्, उदाहृतवृ-

---

शब्दरत्नम्।

"अतो गुण इत्युत्तरार्थम्" इति क्वाचित्कोऽपपाठः। चिन्त्यप्रयोजनमिति। न च 'शिवाय' इत्यत्र "अणोऽप्रगृह्यस्य" (पा०सू०८।४।५७) इत्यनुनासिकत्वे तदनुकरणे ततः परम्'ओम्' इत्यस्य "ओमाङोश्च" (पा०सू०६।१।९५) इति पररूपेऽनुनासिकाभावार्थं परस्य यादृशं रूपं तादृशं यथा स्यादिति रूपग्रहणम्, स्पष्टं चेदम् "ऐऔच्" इत्यत्र भाष्ये कैयटे चेति वाच्यम्, "तृज्वत्क्रोष्टुः" (पा०सू०७।१।९५) इति सूत्रभाष्योक्तरीत्या गुणस्य शब्दत्वादिवद्रूपत्वाभावेन रूपग्रहणेनाव्यावृत्तेः। रूपशब्देन च श्रावणज्ञानविषयोऽवयवसंस्थानवान्। अत एव तृज्वत्सूत्रे 'न हि स्वरो रूपवान्' इत्युक्तम्। वर्णरूपावयवसंस्थानमेव शब्दस्य रूपं, तद्वत्तयैव शब्दस्य रूपमिति व्यवहारः, स्वरस्तु न तद्वा-

भैरवी।

न्ति' इत्यत्र "अतो गुणे" इति पररूपम्। अपपाठ इति। उक्तप्रयोगाणामसिद्धेरिति शेषः। परोक्तदूषणमुपन्यस्य दूषयति—नचेति। पररूप इति। प्राप्त इति शेषः। अनुनासिकाभावार्थमिति। पूर्वसादृश्यात्प्राप्तस्यानुनासिकस्याभावार्थमित्यर्थः। कैयटे—"इको गुण" इति सूत्रस्थे इति शेषः। भाष्योक्तरीत्येति। तत्र यथा स्वरस्य रूपत्वन्नेत्युक्तं, तथाऽनुनासिकत्वस्यापीति भावः। गुणस्य—आनुनासिक्यह्रस्वत्वादेः। ननु पृथिव्यादिद्रव्यनिष्ठगुणानां शब्देऽसम्भव एव, यदि तु जातिसंज्ञाक्रियाभिन्नधर्ममात्रमिह रूपपदार्थस्तदेदमपि स्यादेवेत्यत आह—रूपशब्देनेति। अवयवेति। वर्णरूपेत्यादिः। न चावयवसंस्थानवान्समुदायो नत्ववयवा इति कथमवयवानां रूपत्वमिति वाच्यम्, धर्मधर्मिणोरभेदात्। एतदेव प्रकटयति—वर्णरूपेत्यादिना।

भावप्रकाशः।

मन्यत्र। एवञ्च "उपसर्गादृति" इत्यस्याप्राप्त्या पररूपविषयतेति भावः। क्वाचित्क इति। प्रकाशानुयायीति शेषः। प्रथमोपस्थितत्यागे बीजाभावादिति भावः। खण्डनकाराद्युक्तं दोषमुद्धरति—नचेति। अनुकरणे इति। कृते इति शेषः। उभयत्रान्वयेऽत एव समुच्चयः। अतएव 'अकृत' इत्यस्यासञ्चारोऽसिद्धत्वाभावश्च। "प्रकृतिवदनुकरणम्" इति त्वनित्यमिति भावः। ततः परमिति। तदनन्तरमग्रे इत्यर्थः। इत्यत्रेति। प्रयोगे इति शेषः। पररूपे, प्राप्ते इति शेषः। कैयटेचेति। इकोगुणेत्यत्रेत्यादि। चेन तत्रस्य कौस्तुभसमुच्चयः। एतावनुपदं मूले एव वक्ष्येते। गुणस्येति। आनुनासिक्यह्रस्वत्वादेः शब्दत्वादिवत् शब्दरूपत्वाभावेनेत्यर्थः। नाव्यावृत्तेः, गुणिन इति शेषः। एवञ्चानुनासिकः स्यादेवेति तद्धर्मेवेति भावः। ननु रूपशब्देन पृथिव्यादिनिष्ठगुणग्रहणे शब्देऽसम्भवः। अन्यादृशं तु गुणेऽपि सम्भवतीत्यतस्तदुपपादयन्नाह—रूपेति। "एङिपररूपम्" इत्यत्रेति भावः। अवयवेति। वर्णरूपेत्यादिः। धर्मधर्मिणोरभेदात्। एवञ्चावयवसत्त्वेऽप्यन्त्याभावात्तेनाव्यावृत्तिरिति भावः। अत्र मानं कथयन् तद्रीतिमेवाह—अत एवेति। तेन तस्य ग्रहणादेवेत्यर्थः। कैयटोक्तव्याख्यानायुक्तत्वं ध्वनयन्नाह—वर्णरूपेति। व्यव-

सरला

सह गुणैकादेशे 'अचर्यात्' इति सिध्यति। एङित्युक्तौ तु आकारादेशासम्भवः स्पष्ट एव। अपपाठ

त्तिरथश्लोकविरोधात्, "लङः शाकटायनस्यैव" (पा०सू०३।४।१११) "तपस्तपः-कर्मकस्यैव" (पा०सू०३।१।८८) इत्यादिसौत्रप्रयोगविरोधाच्च । यत्तु श्लोकवार्तिक-

शब्दरत्नम् ।

निति शब्दत्वादिवच्च स शब्दस्य रूपमिति तदर्थः । तत्र सूत्रे रूपातिदेशे स्वरातिदेशो न स्यादित्युपक्रम्येदमुक्तम् । परः किंगुणको भवतीत्याकाङ्क्षायां स्थानिगुणक इति लभ्यते । तत्रोभयगुणकस्यासम्भवादेकस्थान्यन्तरतमत्वात्तद्गुणकस्यैवोपस्थितत्वया च तस्यैव सिद्धेश्च परशब्देन प्रयोगस्थस्योपस्थितस्य ग्रहणम् । प्रयोगे च गुणो भेदक एव । शास्त्रेपरमुच्चारितो गुणोऽभेदको न तु प्रयोगे इति परशब्देनोपस्थितानुनासिकस्यैवैकस्थान्यन्तरतमत्वाद्विधिः । यत्र तु स्थानिद्वयगुणकसम्भवस्तत्र स एव । अत एव स्वरितान्त 'सुब्रह्मण्या'शब्दस्य निपातत्वा-दुदात्तेन ओंशब्देन "ओमाङोः" (पा०सू०६।१।९५) इत्येकादेशः 'सुब्रह्मण्योम्' इति स्वरित इति "तस्यादित" (पा०सू०१।२।३२) इति सूत्रे भाष्यकैयटयोरुक्तम् । "ऐऔच्" इति

भैरवी ।

तद्वान्-अवयवसंस्थानवान् । शब्दत्वादीति । यथा शब्दत्वन्न शब्दस्य रूपन्तथा स्वरोऽपी-त्यर्थः । तत्र सङ्गतिं दर्शयति-तत्र सूत्र इति । एतेन रूपशब्देनानुनासिक्यस्य व्यावृत्तिर्न सम्भ-वतीति दर्शितम् । एवं तर्ह्युक्तप्रयोगेऽनुनासिकः स्यादेवेत्यत आह—परः किंगुणक इति । लभ्य-त इति । अन्तरतमपरिभाषयेति शेषः । तत्र-पूर्वोक्तलक्ष्ये । तद्गुणकस्य-शुद्धस्येति शेषः । परशब्देन तस्योपस्थितौ मानमाह—परशब्देनेति । भेदकः-विभिन्नव्यवहारसम्पादकः । अभेदकः-अस्थिदधीतिसूत्रे उदात्तग्रहणाज्ज्ञापकादभेदकः । असम्भवादित्युक्तेः फलमाह—यत्र त्विति । अत एव-सति सम्भवे उभयगुणकस्य स्वीकारादेव । स्वरितान्तेति । "तत्र साधुः" इति यदन्तत्वात्स्वरितः सुब्रह्मण्यशब्दान्तः, ततष्टाप्, स्वरितानुदात्तयोरेकादेशोऽपि आन्त-रतम्यात्स्वरित एव । स्वरित इति । स्वरितस्य समाहाररूपतयोभयगुणकत्वात्सम्भवोऽस्तीति भावः । इति सूत्रे भाष्य इति । एतेनैतद्भाष्यप्रामाण्यात् "एकादेश उदात्तेनोदात्तः" इति सूत्रेऽ-नुदात्तस्येत्यनुवर्तत इति ध्वनितम् । भाष्यान्तरविरोधपरिहारायाह—ऐऔजितीति ।

भावप्रकाशः ।

हार इति । तद्वदेव च शब्दस्य रूपमित्युच्यत इति भावः । तद्वान्, वर्णरूपावयवसंस्थानवान् । शब्द-त्वादीति । यथा तन्न शब्दस्य रूपमेवं स्वर इति भावः । तत्र तथोक्तौ सङ्गतिं प्रदर्शयति—तत्र सूत्र इति । उभयथा चेति शेषः । एवं तेनाव्यावृत्तिरूपदोषं सप्रपञ्चमुक्त्वा तं विनैवेष्टसिद्धिरिति तत्रैव दोषा-न्तरमाह—पर इति । स्थाने जायमान इत्यादि । स्थानीति । अन्तरतमपरिभाषयोभयस्थानिगुणक इत्यथः । तत्र, पूर्वोक्ते लक्ष्ये । एकस्थानीति । परनिरनुनासिकेत्यर्थः । एवमग्रेपि । तद्गुणकेति । शुद्धगुणकेत्यर्थः । परशब्देनेति भावः । तस्यैव, शुद्धस्यैव । एवेनानुनासिकव्यावृत्तिः । ननु तदुपस्थि-तावेव न मानमत आह—परेति । परमित्येवार्थे । असम्भवादित्युक्तेः फलमाह—यत्रत्विति । स्वरि-तान्तेति । सुब्रह्मणि साधुरिति यत् "तित्स्वरितम्" । टापासहैकादेशः स्वरितानुदात्तयोरान्तर्यात्स्वरित इति भावः । स्वरित इतीति । तस्य "न सुब्रह्मण्यायाम्" इत्यनेनोदात्त इति भावः । अत एव भाष्यात् "एकादेशउदात्तेन" इत्यत्रानुदात्तस्येत्यनुवर्तत इति स्पष्टमन्यत्र । स्फुटीभविष्यति चाग्रे । तद्भाष्यविरोधं

सरला ।

इति । न्यूनत्वात् । तद्गुणकस्यैवेति । परस्थानिगुणवत इत्यर्थः । उपस्थितत्वया चेति । परशब्देन परस्थानिनस्तद्गुणवतो यत उपस्थितिरत इत्यर्थः । अत एव । उभयस्थानिगुणकसम्भवे उभयगुणकादे-शस्वीकारादेव ।

मिदमित्याहुस्तद्भसात् ।

शकन्ध्वादिष्विति । शकन्ध्वादिविषये तत्सिद्ध्यनुगुणं पररूपं वाच्यमि-

---

शब्दरत्नम् ।

सूत्रे एकादेशे "आद् गुणः" (पा०सू०६।१।८७) इत्यादौ दीर्घग्रहणं कर्तव्यं त्रिमात्रचतुर्मात्रा आदेशा माभूवन्निति वार्त्तिककृतोक्ते "अकः सवर्णे" (पा०सू०६।१।१०१) इत्यत्र योगविभागेन "एकः पूर्वपरयोः" (पा०सू०६।१।८४) इति यो निर्दिष्टः स दीर्घ इति व्याख्याने 'पचन्ति' इत्यत्र दोषमाशङ्क्यैकदेशिनोक्तं–रूपग्रहणात् परस्य यादृशं रूपमित्यादि भाष्ये, तत्तु ह्रस्वत्वस्य रूपत्वाभिमानेन । सिद्धान्ते तु स्पष्टार्थमेव रूपग्रहणमिति तत्रैव भाष्ये सूचितम् । "इको गुण" (पा०सू०१।१।३) इति सूत्रस्थकैयटस्तु चिन्त्य एव । तत्रहि—इक्परिभाषाऽभावे जनेर्गुणोऽनुनासिकः स्यादिति शङ्किते पररूपेण शुद्धो भविष्यतीति भाष्ये उक्तम् । तस्य मदुक्तरीत्या उपपत्तेः । "ऐऔच्" इतिसूत्रस्थकैयटस्तु पूर्वपक्षोपपादकत्वान्न स्वार्थे साधक इति दिक् । नावक्लृप्तौ यदेति पाठे न च्छन्दोभङ्गः । तद्भसादिति । वृत्तौ भवमिति व्याख्याने वार्त्तिकशब्दस्य पूर्वनिपातापत्तिरित्याहुः ।

विषय इति ॥ 'शकन्ध्वादिषु' इति विषयसप्तमीति भावः । अतएवाहेति ।

भैरवी ।

एकदेशिनेति।"आद्गुण" इत्यादौ तात्पर्यत्वात् द्विमात्रस्य संज्ञा, न तु त्रिमात्रचतुर्मात्राणामिति शङ्काया एवाभावेन तादृशशङ्कायां योगविभागादिप्रदर्शनमेकदेश्युक्तिरिति भावः । अत एवाह—अभिमानेनेति । सिद्धान्त इति । संज्ञासूत्रस्थे 'तपरे गुणवृद्धी' इति सिद्धान्ते इत्यर्थः । तत्रैव-"ऐऔच्" इति सूत्र एव । एवन्तर्हि कैयटविरोध इत्यत आह—इको गुणेतीति । चिन्त्य एवेति । रूपशब्देनोक्तरीत्या तस्याव्यावृत्तेरिति शेषः । स्वमते तत्रत्यभाष्यविरोधपरिहारायाह–तत्र हीति ।

खण्डनकारोक्तिं खण्डयति–वृत्ताविति । आहुरित्यस्वरसबीजन्तु पूर्वनिपातप्रकरणस्यानित्यत्वेन तथा व्याख्यानमपि युक्तमेवेति ॥

भावप्रकाशः ।

परिहरति—ऐऔजितीति । एकादेशे इति । तद्विधावित्यर्थः । इति य इति । इत्यधिकारे य इत्यर्थः । एकदेशिनेति । तपरत्वात्तेषां संज्ञाया एवाभावात्पूर्वपक्षस्यैवासङ्गतेरत एवाह—अभिमानेनेति । तत्वमेव विशदयति—सिद्धान्ते त्विति । संज्ञासूत्रस्थसिद्धान्ते त्वित्यर्थः । तत्रैवेति । "ऐऔच्" इत्यत्रैवेत्यर्थः । पक्षानुरूप इति न्यायेन तथोक्त्येति भावः । "बाधे दृढे" इति न्यायेन कैयटविरोधं परिहरति—इक इति । कौस्तुभस्याप्युपलक्षणम् । नन्वेवं तद्भाष्यासङ्गतिरेवात आह—तत्रहीति । उपपत्तेरितीति । परशब्देनैव तत्सिद्धेरिति भावः । दिगिति । तदर्थस्तु प्रकृते इति विनानुकरणत्वानभिव्यक्त्या तदप्रयोगाच्च । अन्यथा त्वदुक्तरीत्या एहीत्यनुकरणे प्रकृतिवदनुकरणमित्यतिदिष्टाङ्गत्वात् 'शिवएहि' इत्यादौ चारितार्थ्येनान्तरङ्गबहिरङ्गयोरित्यर्थस्योमाङोरित्याङ्ग्रहणज्ञापकपरभाष्यासङ्गतेश्च । न च तद्योगविभागेन परपदानुवृत्त्या वार्तिकार्थसङ्ग्राहकमिति वाच्यम् , कतन्तेभ्य इत्यादिनिर्देशैस्तत्सङ्ग्रहादिति । खण्डनकृदुक्तिं खण्डयति—वृत्ताविति । आहुरिति । मूलानुयायिनो मान्या इत्यर्थः । तस्य यौगिकत्वादिति भावः । तत्प्रकरणस्यानित्यत्वप्रत्याख्यानाभ्यां सुसाधमेवेदमित्यत्रारुचिरेतत्सूचिता बोध्या ।

विषयेति । अन्यथा तेषां पररूपमित्यर्थे वाच्ये तदनुपपत्तेरिति भावः । ननु तदेवाहेत्युचितम् ,

त्यर्थः। अत एवाह–तस्य टेरिति। यदि तु "आत्"इत्यधिकारादकारस्यैवेष्यते तर्हि मनीषा, इति न सिद्ध्येत्। केचित्तु मनःपतच्छब्दयोः पृषोदरादित्वादन्त्यलोपे ऽकारस्यैव पररूपमाहुः। शकानां देशविशेषाणामन्धुः कूपः-शकन्धुः। कर्कोणां राज्ञामन्धुः। बदरीवाची तु कर्कन्धूशब्दो दीर्घान्तः "अन्धूदृम्भू–"इत्यादिना उणादिषु वक्ष्यते। अटतीत्यटा पचाद्यच्। कुलस्य अटा कुलटा। ईष उञ्छे, ईष गत्यादिषु। आभ्यां "गुरोश्च हलः" (पा०सू० ३।३।१०३) इत्यप्रत्यये ईषा, मनस ईषा मनीषा। हलस्य ईषा हलीषा लाङ्गलदण्डः। मूर्द्धन्योपधः। यस्तु

प्रभुशङ्करयोरीशः स्त्रियां लाङ्गलदण्डके॥

इति रभसकोशात् तालव्योपधस्तस्मिन् परे "आद् गुणः" (पा०सू० ६।१।८७) इत्येव भवति। हलेशा। पतन्नञ्जलिर्यस्मिन् नमस्कार्यत्वादिति पतञ्जलिः। मार्तण्ड इति। केचिदत्र सवर्णदीर्घमाहुः। परा मार्ताण्डमास्थत्, पुनर्मार्ताण्ड-

---

### शब्दरत्नम्।

ईदृशव्याख्यानतो लब्धमाहेत्यर्थः॥ आहुरिति। अत्रारुचिबीजं तु वचनद्वयव्यापारो ऽव्यर्थः। पृषोदरादित्वाट्टिलोपेनैव सिद्धेरिति। देशविशेषाणामिति। देशविशेषशब्दस्य यौगिकत्वेन जातिवाचकत्वाभावात् "विशेषणानां चाजातेः" (पा०सू०१।२।५२) इति न निषेध इति बोध्यम्। कुलस्याटेति। कर्मणः शेषत्वविवक्षायां षष्ठी। अन्यथा कर्मण्यणि कुलाटीति स्यादिति भावः।

### भैरवी।

ननु शकदेशस्यैकत्वाद्देशविशेषाणामित्यत्र बहुवचनासंगतिरत आह–देशविशेषेति।

### भावप्रकाशः।

नन्वत आहेति, प्रागुक्तस्यासिद्धान्तत्वेन तथोक्तेर्ग्रन्थकारशैलीसिद्धत्वादत आह—ईदृशेति। तस्मिन्ननुगुणमिति व्याख्यानत इत्यर्थः। आहेत्यस्य कर्माकाङ्क्षायां लब्धमर्थमिति शेषः। एवञ्चात इत्यस्य लाभे हेतुत्वेनान्वयो न वचने। एवञ्च सामर्थ्यलभ्यं तच्चटेरितीति भावः।

आहुरितीति। प्रकाशकृत इत्यर्थः। सिद्धेरितीति। यत्तु मन्दस्तथासत्यजुझकादेशत्वेनास्थानिवत्त्वात्पदान्तत्वेन 'मनीषा' 'पतञ्जलिः' इत्यादौ नतयोर्लोपजश्त्वापत्तिः, प्रकाशमते तु नेति, तन्न, एवस्य भिन्नक्रमतया पृषोदरादित्वादेव टेर्लोपो यस्मिन् तेन निपातनेनेत्यर्थेन एकेन वचनेन विशिष्टस्वरूपनिपातने तात्पर्यात्। एतेन "अचोन्त्यादि टि" इत्यस्यात्रोपन्यासो निष्फल इति खण्डनकृदुक्तिः परास्ता। ननु शकानां राज्ञां निवास इत्यर्थे चातुरर्थिकाणो लुपि युक्तवद्भावेपि तद्विशेषणेऽजातेरिति निषेधेन देशविशेषस्येत्युचितमत आह—देशेति। समस्तत्वेन तत्र सम्बन्धस्य प्रवृत्तिनिमित्तत्वेन जातेरतत्त्वादिति भावः। इति भाव इतिसूचितारुचिस्तु प्रौढमनोरमेत्यत्रोक्तैव।

ननु सूत्रे षष्ठीसमासः, कर्मधारयो वा? नाद्यः, तदा तदनुकरणस्य ध्वनिरूपस्यैव सम्भवेन तत्राच्छब्दासम्भवात्। नान्त्यः, अनुकरणशब्दानर्थक्यापत्तेरिति चेन्न, तत्सामर्थ्यात्प्रथमपक्षस्यैव ग्रहणात्। न चोक्तदोषः, तत्सामर्थ्यादेव तदनुकरणस्य वर्णसमूहरूपस्यैव ग्रहणात्। न च तस्यानुकरणत्वासम्भवः सजातीयस्यैव तत्त्वादिति वाच्यम्, सजातीये प्रत्यभिज्ञया तत्त्वस्यैव सत्त्वेनानुकरणत्वस्य दुर्वचत्वेन भेदे एव तस्य वाच्यत्वेन सर्वसाम्ये भेदाभावेन शब्दत्वादिसाम्येन तस्य तत्त्वसम्भवात्। तदभिप्रेत्याह, मूले-

माभरत्, विश्वो मार्ताण्डोऽव्रजदित्यादिवैदिकप्रयोगास्तेषामनुकूलाः ॥

ओत्वोष्ठयोरिति । अकारस्य ओत्वोष्ठयोश्चैकत्र समासे स्थितौ सत्यामिदं प्रवर्तते । तेनेह न, वृषलसुतौष्ठव्रणस्ते इति ॥

अव्यक्तशब्दं व्याचष्टे—ध्वनेरिति । अनुकरणस्येति । परिस्फुटाकारादिवर्णस्येति भावः । तस्य चानुकरणत्वं किञ्चित्साम्येन बोध्यम् । यत्तु प्राचोक्तम्—अतः किम् ? दकारान्ते मा भूदिति, यच्च व्याख्यातं दकारान्त इति रूपान्तरोपलक्षणं वटक्, मरुत्, इत्यादेरपीति । तन्निःसारम् । प्रश्नस्य दान्त इत्युत्तरस्य च निरालम्बनत्वात् । यत्तु व्याचख्युः—"अतो गुणे" (पा०सू०६।१।९७) इत्यतोऽत

---

शब्दरत्नम् ।

किं चित्साम्येनेति । तदभावे हि मन्नदन्ताद्युच्चारिताव्यक्तशब्दे एव स्यादव्यक्तत्वं चार्थबोधाजनकत्वेनापि वक्तुं शक्यमित्याहुः । निरालम्बनत्वादिति । अद्ग्रहणं

भैरवी ।

मूले—एकत्र समास इति । समास इत्येकत्वस्य विवक्षयाऽस्यार्थस्य लाभः ।

किञ्चित्साम्येनेति । ध्वन्यन्तरव्यवच्छेदकत्वेन । तदभावे-अनुकरणस्येत्यस्याभावे । अव्यक्तशब्दे—अव्यक्तशब्दानुकरणे । तत्राव्यक्तत्वङ्कथमत आह—अव्यक्तत्वञ्चेति । चस्त्वर्थे । एतेनानुकार्यस्याच्छब्दाभावेनानुकरणस्य लाभे ऽनुकरणस्येति चिन्त्यप्रयोजनमिति कस्यचिदुक्तिः प्रत्युक्ता ।

निरालम्बनत्वमुपपादयति—अद्ग्रहणमिति । एतेन अदितिप्रश्नस्य "अतो भिस ऐस्" इत्यत्रेव ह्रस्वाकारबोधकता वाच्या तथाचैतदुपादानं व्यर्थम् "अतो गुणे" इत्यतस्तदनुवृत्त्यैव सिद्धेरित्यभिप्रायः । दान्ते माभूदित्युत्तरस्य त्वदिति न ह्रस्वाकारबोधकम्, नाम्रेडितेति सूत्रे ऽन्त्यस्य तु वेत्युपादानसामर्थ्यात्; किन्तु समुदायानुकरणमेव वाच्यम्, तथा च

भावप्रकाशः ।

अव्यक्तेत्यादि । तथाचाव्यक्तशब्देनाविद्यमानकत्वादिवंशादिध्वनिग्रहणं तस्य चाच्छब्दस्यानुकरणे तादृशे सम्भवेनानुकरणस्येत्युक्तं सूत्रे । ननु तस्यात्यन्तसाम्याभावात्तत्त्वमेवानुचितमत आह—किञ्चिदिति । शब्दत्वादीत्यर्थः, तावताप्यनुकरणत्वाविघातात् । वर्णप्रतीतावपि ध्वनिसादृश्यस्योत्कर्षेण सत्वादिति भावः । अनुकरणशब्दसामर्थ्यलभ्य एवायमर्थ इति व्यतिरेकमुखेन प्रतिपादयति—तदभाव इति । अनुकरणस्येत्यस्याभावे इत्यर्थः । हि, यतः ध्वनिरूपाव्यक्तेऽच्छशब्दासम्भवात् । शब्दे एवेति । एवेन ध्वन्यनुकरणव्यावृत्तिः । तत्र सम्भवति तद्ग्रहणे मानाभावादिति भावः । ननु कथमुक्तरूपमव्यक्तत्वं तस्येत्यत आह—अव्यक्तत्वमिति । अपिरुक्तरूपसमुच्चायकः । एतेनानुकार्यस्याच्छब्दासम्भवेनार्थादेव लाभेऽनुकरणस्येति चिन्त्यप्रयोजनमिति प्रकाशोक्तमपास्तम् । आहुरित्यरुचिबीजं तु यदि सोऽनुकार्यरूपस्तदा तस्येतिपरत्वासम्भवोऽसाधुत्वं च । यदि च सोऽनुकरणरूपस्तदा तत्परत्वसम्भवेऽप्यसाधुत्वं तदवस्थमेवार्थाबोधकत्वात्तेनैव तत्त्वस्य ग्राह्यत्वादेवं च प्रागुक्तरीत्या स्पष्टार्थमेव तदिति । नन्वत इति न ह्रस्वनिर्देशः, अनुवृत्त्यैव लाभात् अन्त्यस्य तु वेतिज्ञापकाच्च । एवञ्च समुदायानुकरणेन सौत्रनिर्देशस्य दान्ताद्यनुकरणव्यावृत्त्यर्थतया प्रश्नोत्तरयोः सालम्बनत्वं प्रकाशादावुक्तमत आह—अदिति । अन्त्यव्यावृत्त्यर्थत्वं न उक्तज्ञापकादत आह—तद्भिन्नेति । एतेन प्रश्ने तत्त्वं सिद्धान्तदोषान्यदोषवत्त्वमुत्तरे तत्त्वं

सरला ।

मूले इदं प्रवर्तते इति । अवर्णादोत्वोष्ठयोरचि तद्धटितसमासे पूर्वपरयोः पररूपमेकादेशो भवतीत्यर्थात् । अत एव 'दन्त्योष्ठयो वः स्मृतो बुधैः' इति प्रयोगसिद्धिरिति स्पष्टं लघुशब्देन्दुशेखरे ।

ध्वनेरितीति मूले । अविद्यमानाकारादिवर्णस्येत्यर्थः ।

इत्यनुवर्त्य शब्दाधिकाराश्रयणात्सिद्धमिति प्रश्नः। यदा जश्त्ववशाद्दान्तत्वं तदाऽपि स्यात्पुनरद्ग्रहणे तु श्रौततान्तत्वस्य विवक्षणान्नेत्युत्तरमिति। तच्चिन्त्यम्। जश्त्वशास्त्रस्यासिद्धत्वेन पररूपस्यैव प्रवृत्तेः, "नाम्रेडितस्य–" (पा०सू०६।१।९९) इति निषेधे पटत्पटदितीत्युदाहरणस्यासंबद्धत्वापत्तेश्च। तत्र हि भवदुक्तरीत्या प्राप्ति-

---

शब्दरत्नम्।

तद्भिन्नव्यावृत्त्यर्थमित्यर्थस्य बालैरपि सुज्ञेयत्वेनातः किमिति प्रश्नस्य दान्ते मा भूत्, वटक्, मरुत्, इत्यत्र च मा भूदिति उत्तरस्य च निरालम्बनत्वमित्यर्थः। शब्दाधिकारेति। तदाश्रयणाच्चाच्छब्दस्येत्यर्थो भविष्यतीति भावः। तदाऽपि स्यादिति। एकदेशविकृतन्यायेनाच्छब्दत्वादिति भावः। जश्त्वशास्त्रस्येति। अनुकार्यानुकरणयोर्भेदे पदान्ततया जश्त्वेऽपीत्यादिः। तदसिद्धत्वेनात एव सत्त्वादिति भावः। ननु पुनरद्ग्रहणाज्जश्त्वासिद्धत्वमपि बाध्यतामत आह–नाम्रेडितेति। उदाहरणस्य–वृत्त्यादिस्थस्य। अनुकार्यानुकरणयोरिति। सर्वत्र जश्त्वप्राप्त्योदाहरणासम्भवाशङ्कायां ह्येतदुक्तं

भैरवी।

तान्तानुकरणमेव, न तु दान्तानुकरणमित्यभिप्राय इति मौलन्निःसारमित्येव निःसारमिति प्रागनुयाय्युक्तिः प्रत्युक्ता। बालानामपि भवदुक्तान्त्यस्य तु वेति ज्ञापकवशाददूग्रहणमदूभिन्नव्यावृत्त्यर्थमिति ज्ञानम्भविष्यतीत्याशयेनाह–तद्भिन्नेति। "अतो गुणे" इति सूत्रेऽत इत्यस्य ह्रस्वाकारबोधकतयाऽनुवर्तमानस्याच्छब्दस्य तन्मात्रबोधकता स्यादत आह–शब्दाधिकारेति। ननु जश्त्वविधायकशास्त्रस्यानुकार्यानुकरणयोरभेदेऽपदान्तत्वान्न प्राप्तिरत आह–अनुकार्येति। ननु प्रक्रियायाम्पटत्पटेति पररूपोदाहरणम्पटत्पटदिति तदभावस्योदाहरणमुक्तं, नत्वव्यक्तेतिसूत्रप्राप्तियोग्यस्य तत्र कथनमिति न भवदुक्तदूषणावसर इत्यत आह–वृत्त्यादीति। प्रकृतेऽनुकार्येत्यादि तदुक्त्याशयं प्रकटयति–सर्वत्रेति। मूले पटत् इतीति पाठः। एतद्धि पूर्वसूत्रस्य प्राप्तियोग्यम्प्रक्रियावाक्यम्।

भावप्रकाशः।

सूत्रान्तरसहितत्वं तच्चान्त्ये प्रवृत्त्या स्पष्टमेवेति मान्योक्तिः प्राचामनुरोधेनेति ध्वनितम्। तदुपादाने तु "नानर्थके" इति निषेधात्तत्सामर्थ्याद्वाऽन्त्यस्य न। बालैरपीति। तथाच प्रश्नोत्तरकर्त्रोरज्ञानकल्पनापत्तिः। एतेन व्याख्यानग्रन्थे दोषानुक्तेर्न्यूनतेति खण्डनकृदुक्तिः परास्ता। निषेधविकल्पयोर्विषयविभागाय प्रकाशकृत्स्वमतमाह–शब्देति। चस्त्वर्थ। मूलोक्तपूर्वदोषखण्डनार्थं प्रकाशोक्तमप्यसिद्धत्वोपायमपहायाह–एकेति। शास्त्रीयस्य सर्वथाऽप्राप्तावपि लौकिकेत्यर्थः। तेन च तद्रूपस्याप्रापणेऽप्यानुपूर्वीरूपस्योपाधेरानयनं भवतीति भावः। इति भाव इति सूचिताशयस्तु अर्द्धविकारेण तस्याप्यप्राप्तिरिति। नन्वभेदे जश्त्वमेवानिष्पन्नमत आह–अनुकार्येति। तएवेति। अच्छब्दस्यैवेत्यर्थः। एवञ्च पररूपप्राप्तिकाले दान्तत्वं नैव सम्भावितं तदुत्तरं तु अच्छब्दस्यैवाभावेन जश्त्वाप्रवृत्तिरेवेति सर्वत्र प्राप्त्या व्यावर्त्याभावेनाद्ग्रहणं व्यर्थमेवेति भावः। अपिर्बाध्यतामित्यत्रान्विततान्तत्वविवक्षासमुच्चायकः। "इको गुण" इति सूत्रोक्तरीतिरत्रानुसन्धेया। ननु प्रक्रियायां "नाम्रेडित" इत्यत्र 'पटत्पटेति' 'पटत्पटदिति' इत्युक्त्या निषेधविकल्पभावयोः पूर्वोदाहरणम्, अन्त्यं तु तदभावस्य सौत्रक्रमानुरोधादिति "नाम्रेडित" इति दोषोऽयुक्त इति खण्डनकृदुक्तिनिरासायाह–वृत्त्यादीति। तत्र तु तैर्विपरीतमुक्तम्। भाष्यादिकं तु सूत्रत्रये नास्त्येवेति भावः। ननु तद्ग्रन्थस्यान्याशयकत्वे को विरोधोऽत आह–सर्वत्रेति। भेदविवक्षायामित्यादिः। एतेन तत्र भेदविवक्षाऽत्राभेदविवक्षेत्यपास्तम्, सर्वत्रेत्युक्तेः। उदाहरणेति। अव्यक्तेति सूत्रोदाहरणेत्यर्थः। हि, यतः। तैः, प्रकाशकृद्भिः। यत्तु उत्तरग्रन्थशब्देन 'नाम्रेडित' इति सूत्रम्।

रेव नास्ति, दान्तत्वात् । एतेनानुकार्यानुकरणयोरभेदविवक्षया विभक्त्यभावेन गवित्ययमाहेतिवदपदत्वात् पटत् इतीत्यत्र जश्त्वं नेति ग्रन्थोऽपि प्रत्युक्तः । उत्तरग्रन्थविरोधात्, जश्त्वस्यासिद्धतया पररूपेणैव बाधाच्च । ननु तदपि नित्यं तथा च कथं पररूपविरहेण प्रयोग इतिचेन्न । अलौकिकं प्रक्रियावाक्यमिदमिति स्वयमेव व्याख्यातत्वात् संहिताया अविवक्षायां तत्सम्भवाच्चेति दिक् ॥

### शब्दरत्नम् ।

तैरिति बोध्यम् । उत्तरग्रन्थेति । नाम्रेडितस्येत्यस्य पटत्पटदितीत्युदाहरणपरग्रन्थेत्यर्थः । ननु स ग्रन्थो जश्त्वासिद्धत्वेन योज्य इति चेत्तत्राह—जश्त्वेति । तस्यासिद्धतया पररूपेणैव भवितव्यमिति जश्त्वस्याप्रवृत्तिलक्षणो बाधः । एवं च यदा जश्त्ववशाद्दान्तत्वमिति ग्रन्थासंगतिरिति सेयमुभयतः स्पाशा रज्जुरिति भावः । दिगिति । दिगर्थस्तु—अपदान्तादित्यनुवृत्त्यैव जश्त्वविषये व्यावृत्तिसिद्धेः पुनरद्ग्रहणं व्यर्थमेव । एतेन पुनरद्ग्रहणं श्रौततान्तत्वविवक्षाद्वारा जश्त्वाविषये ऽभेदविवक्षायामेव यथा स्यान्न तु भेदविवक्षायां जश्त्वविषय इत्यर्थकमित्यपास्तम् । ममाद्ग्रहणं तु शब्दाधिकारानित्यत्वज्ञापनार्थमितिदिक् ॥

### भैरवी ।

ननु समकक्षयोर्बाध्यबाधकभावो भवति प्रकृते तु जश्त्वशास्त्रस्यासिद्धतया बाधादित्यनुपपन्नमत आह—तस्यासिद्धतयेति । स्पाशेति । स्पश्धातोर्बाधनार्थादङि स्त्रियामेतद्रूपम् । खण्डनकारोक्तिनिरासायाह—दिगर्थस्त्विति । नन्वद्ग्रहणं तद्भिन्नेत्यादि पूर्वोक्तरीत्या व्यर्थमेवेति भवता कथन्तदुपपत्तिः क्रियते ऽत आह—ममाद्ग्रहणमिति । दिगर्थमध्ये दिगर्थस्तु तथा यथा शब्दाधिकारानित्यत्वज्ञापनार्थमित्युक्तन्तथा भवतापि वक्तुं शक्यं यद्यपि, तथापि प्रकाशकारादिकृता कल्पना व्यर्थैवेति ॥

### भावप्रकाशः ।

पदद्विर्वचने एव तत्संज्ञया तत्र भेदपक्षाश्रयणावश्यकत्वात् । एतेनापदान्तादित्याद्यनुवृत्त्या ऽभेदपक्षे एव प्रवृत्तिरिति खण्डनकृदुक्तमपास्तम् । एवञ्च पक्षद्वयेऽपि प्रवृत्तिसङ्कोचे मानाभावादिति ध्येयम् । तदेव ध्वनयन्नाह—जश्त्वेतीति मान्या व्याचख्युः, तत्प्राचामनुरोधेन उत्तरग्रन्थेति शब्दस्वारस्यात् । सूत्रस्यैव वदेत् । बाहुलकद्वित्वे वीप्साया इव पदत्वस्याप्यनपेक्षणाच्च । तद्ध्वनयन्नाह—नाम्रेडितेति । एवञ्च प्रागुक्त एवायं दोषो न तु ततोऽन्यः । योज्य इतीति । तदसिद्धत्वेन तान्तत्वविवक्षायामप्यत एव सत्त्वेन विधिप्राप्त्या निषेधसङ्गतिरिति भावः । तत्राहेति । तथा योजनायां पूर्वग्रन्थविरोधमाहेत्यर्थः । अत एवात आहेति नोक्तम् । पररूपेणैवेति । एवञ्चापदत्वादितिहेतूक्तिस्तदोषायुक्तेति भावः । एतेन पौनरुक्त्यं मूले इत्यपास्तम् । इष्टापत्तिं निराचष्टे—एवञ्चेति । जश्त्वाप्रवृत्तौ चेत्यर्थः । स्पाशेति । स्पशबाधनस्पर्शनयोरित्यस्य रूपे स्त्रियामङि । तद्वदियं युक्तिरुभयता धर्तुमशक्येत्यर्थः । खण्डनकृदुक्तदोषमुद्धरति—दिगितीत्यादि । अनुवृत्त्यैवेति । "उत्यपदान्तात्" इत्यतः । व्यर्थमेवेति । त्वन्मते इति शेषः । एतेन समुदायनिर्देशेऽपि प्रतिपत्तिलाघवाद इत्येवास्तु लक्ष्ये जश्त्वं स्त्वन्यायेनानसिद्धत्वेन सिद्धमिति प्रश्नाशयः । दान्तानुकरणसम्भवेन तत्र स्वतोऽनसिद्धत्वेन चारितार्थ्ये तत्र न स्यादित्युत्तराशय इति प्रकाशकृदुक्तिः परास्ता, तपरसूत्रे दप्रश्लेषेण तत्रापि ह्रस्वाकारत्वसम्भवेन तन्निवृत्तये उक्तयुक्तेरावश्यकत्वेन प्रतिपत्तिलाघवाभावात् । अत एव दान्ततान्तयोरविशेषाच्च तान्तानुकरणे अप्राप्त्यापत्तेश्चेति दिक् । जश्त्वाविषये इति । अयम्भावः, तद्ग्रन्थे दान्तत्वमित्यस्य सम्भाव्यत इति शेषः । तान्तत्वस्य विवक्षणादित्यस्य जश्त्वाविषयत्वस्य विवक्षणादित्यर्थः । अन्यथा दान्तत्वे जश्त्वासिद्धत्वोक्तेः पुनरत्ग्रहणाभावेऽपि तान्तत्वविवक्षासम्भवात्पुनरित्यादेश्चासम्बद्धत्वापत्तिः । एवञ्च नोत्तरग्रन्थविरोध इति । नन्वयं दोषस्तुल्यस्तवाप्यत आह—ममेति । तथा धावतस्तवमते तत्सत्त्वेऽपि ममेदं फलं हार्दमिति न दोषः । स्पष्टत्वात्तु नोक्त इति । इति दिगिति । तदर्थस्तु तवाप्येवमुक्तौ वस्तुग्रन्थस्य प्रकाशप्रश्नाशयस्य च सामञ्जस्येऽपि प्रकाशोत्तरासङ्गतिर्दुष्परिहरैवेति ।

**अकः सवर्णे** (पा०सू०६।१।१०१) ॥ अचि पर इति । यदा तूष्मणामीषद्विवृतत्वमाश्रित्य "नाज्झलौ" (पा०सू०१।१।१०) इति सूत्रं प्रत्याख्यायते तदा इहाचीति नानुवर्तनीयम् । अकोऽकि दीर्घ इति सुवचम् । वर्णद्वयं द्विमात्रमिति । यत्तु प्राचा व्याख्यातं दीर्घे प्राप्ते ह्रस्व ऋकार ऌकारश्च विधीयत इति तद्भाष्यकैयटादिविरोधादुपेक्ष्यम् ॥

**एङः पदान्तात्** (पा०सू०६।१।१०९)॥ "ङसिङसोश्च"(पा०सू०६।१।११०) इत्यस्यारम्भादस्य पदान्तविषयत्वे लब्धे उत्तरार्थं पदान्तादिति स्पष्टार्थमिहैव कृतम् ॥

---

शब्दरत्नम् ।

**सुवचमिति** । जातिपक्षाश्रयणे यथासंख्येनेष्टसिद्धेरिति भावः । एवं रीत्या यथासंख्यम् "इको यणचि" (पा०सू०६।१।७७) इत्यत्रापि बोध्यमिति सूचितम् । **तद्भाष्येति**। "तुल्यास्य" (पा०सू०१।१।९) सूत्रस्थभाष्येत्यर्थः । तत्रहि "अकः सवर्णे–" (पा०सू०६।१।१०१) । इति सूत्रेणैवतद्वार्तिकान्यथासिद्धिरुद्भाविता । **आरम्भादिति** ।अपदान्ताच्चेत् ङसिङसोरेवेति नियमादिति भावः । **उत्तरार्थमिति** ।"इकोऽसवर्णे" (पा०सू०६।१।१२७) इत्याद्यर्थम् । **स्पष्टार्थमिति** । विभक्तौ चेन्ङसिङसोरेवेति नियमशङ्काभावी ।

व्यक्तिपक्षे यावद्व्यक्तीनान्तत्तद्व्यक्तित्वेन ज्ञानासम्भवात्संख्याज्ञानमपि न सम्भवतीत्याशयेनाह—जातिपक्षेति । सूचितमिति । एतेन यदि सुवचमिति मूलकारोक्तिर्जातिपक्षाभिप्राया तदा परममूले स्थानत आन्तर्यादितीको यणचीतिसूत्रे या कृतोक्तिः सा व्यर्था यथासङ्ख्येनैवेष्टसिद्धेरिति परास्तम् । तस्य ग्रन्थस्य व्यक्तिपक्षाभिप्रायकत्वात् । वस्तुतस्तु जातिपक्ष एवेति । तद्भाष्येत्यस्य "ऋति ऋवा" इत्येतद्भाष्येत्यर्थं प्रतीयते स तु न युक्तः तस्य विशिष्याव्याख्यानादत आह—तुल्यास्येति । अन्यथासिद्धिरिति । तद्वार्तिकसाध्यफलान्यथासिद्धिरित्यर्थः । उद्भावितेति । यदि विजातीयादेशार्थं वार्तिकारम्भस्तदाऽनयोर्विधानमात्रं स्यान्नत्वचकार्यमित्यनयोरच्त्वमवश्यं वाच्यं, तथासति दीर्घसंज्ञाऽनयोर्भविष्यतीति "अकः सवर्णे" इत्यनेनैवेष्टसिद्धेर्वार्तिकवैयर्थ्यमिति रीत्योद्भावितेत्यर्थः । "एङः पदान्तात्" इतिसूत्रे पदान्तादित्यस्याभावेऽपि पदान्तविषयकत्वङ्कथमत आह—अपदान्ताच्चेदिति । विभक्तौ चेदिति ।

भावप्रकाशः ।

**जातिपक्षेति** । व्यक्तिपक्षे तदानन्त्येन तद्ज्ञानात्तदसम्भवादिति भावः । **सूचितमिति** । अकोऽकीतिग्रन्थेनेति भावः । एतेन तद्ग्रन्थविरुद्धमिदमित्यपास्तम् , पक्षभेदेन ग्रन्थयोः सामञ्जस्यात्तस्य दूषितत्वाच्च । यत्तु खण्डनकृत् "ऋति" इत्यादि वार्तिके स्वोक्ते 'दधि ऋकारः' इत्यादावनतिप्रसङ्गाय तस्यावश्यकत्वादकीत्यधिककरणे गौरवाच्च चिन्त्यं मूलमिति । तन्न, तत्प्रत्याख्यानात् । स्पष्टीकृतमेतद्प्रत्याहारखण्डने । तद्ध्वनयन्नाह—तद्भाष्येत्यादीति । प्रसादखण्डकप्रकाशानुवादोऽयं मूले । वार्तिकान्यथेति । तत्साध्यफलान्यथेत्यर्थः । उद्भावितेति । उत्कृष्टं भाविता प्रोक्तेत्यर्थः । ननु "ङसिङसोश्च" इत्यादिषु बहुषु सूत्रेष्वसम्भवादव्यभिचाराच्च नोपयोगोऽत आह—इक इति । "गौर्यौ" इत्यादि निवृत्तये इति भावः । अत्रादिशब्दः प्रकारे । तेन सर्वत्र अवङिति सूत्रयोरपि सङ्ग्रहः । "इकोसवर्णे" इत्युक्त्यैव सूचितमन्यथा सर्वत्रेत्येव वदेत् । तथाचासन्ततानुवृत्तौ तात्पर्यम् । यद्वा, स प्रभृतावेव तथोक्त्या मध्येऽपीहस्थले सम्बन्ध उक्तप्राय इति सूचितम् । यद्वा, पूर्वोत्तरसूत्रसाहचर्यात्पदान्ते एव तयोः प्रवृत्त्या नासाधारणं फ मिति सूचयितुं तथोक्तिः । वस्तुतस्तु "उत्सर्गसमानदेशा" इति न्यायेन तयोः फलाभाव इति बोध्यम् । **नियमशङ्केति** । तथासति 'हरये' इत्यादिवारणेऽपि भवतीत्यादिवारणं न स्यादिति भावः ।

सरला

**उद्भावितेति** । तुल्यास्यसूत्रे भाष्ये एतद्वार्तिकद्वयविधेयऋकारऌकारयोरइउण् सूत्रानन्तरं पाठेना-

सर्वत्र विभाषा गोः (पा०सू०६।१।१२२)॥यद्यपि छन्दसीति न प्रकृतं तथाऽपि "यजुष्युरः" (पा०सू०६।१।११७) इत्यादिप्रक्रमाच्छन्दस्येवेदमिति सम्भाव्येत, अतः सर्वत्रेत्युक्तम् । तद्व्याचष्टे-लोके वेदे चेति । इह "एङ" इत्यनुवर्त्यैङन्तस्य गोरिति व्याख्येयम् । तेनेह न—चित्रग्वग्रमिति । प्रतिपदोक्तस्य एङो ग्रहणान्नेह—

---

शब्दरत्नम् ।

वारणार्थमिति भावः ।

इत्यनुवर्त्येति । षष्ठ्या विपरिणमय्येत्यपि बोध्यम् । प्रतिपदोक्तस्येति । एङ्ग्र-

भैरवी ।

हरय इत्यादि विभक्ताविति नियमव्यावर्त्यम्भविष्यतीति भावः ।

ननु तत्र 'एङ' इति पञ्चम्यन्तमत आह-षष्ठ्येति । गोरिति।षष्ठ्यन्तमिति तेन सामानाधिकरण्यार्थमित्यादिः । वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिवादिमताभिप्राये-

भावप्रकाशः ।

षष्ठ्येति । सामानाधिकरण्येनान्वयार्थमिति भावः ।

यत्तु खण्डनकृत् , 'चित्रगो अग्रम्' इत्यादाववङ्प्रकृतिभावाभावायावश्यकस्थानिवत्त्वनिषेधेनैव 'चित्रग्वग्रम्' इत्यादिव्यावृत्तावेङ् इत्यनुवृत्तिर्निष्फला । नच तदनुवृत्त्या लाक्षणिकत्वात्तद्व्यावृत्तौ तन्निषेधो नावश्यक इति वाच्यम् , उपदेशपदेन वर्णग्रहणे तदप्रवृत्तेर्ज्ञापनात् । अन्यथा 'वक्रेऽहम्' इत्यादावेव "एङः पदान्तात्" इत्यादि प्रवर्तेत न तु हरेऽवेत्यादौ । तव पूर्वापरग्रन्थविरोधश्चेति । तन्न, उक्तरीत्यैव निर्वाहे वचनं न कार्यमित्याशयात् । प्रतिपदोक्तत्वस्यान्यथालाभेन दोषलेशाभावाच्च ।

तद्ध्वनयन्नाह—एङ्ग्रहणावृत्त्येतीति । लक्ष्यानुरोधादिति भावः । एतेन "नान्तः" इति पाठेऽनन्तरत्वात्पूर्वरूपस्यैव निषेधेन चित्रग्वग्रमित्यादौ यणो निर्विघ्नत्वेनैङनुवृत्तिसामर्थ्यात्तल्लाभः । यद्वा, प्रकृत्येति पाठे गोरिति षष्ठ्यन्वयायान्तपदमनुवर्त्यं सामर्थ्यलभ्यं वा, तच्चौपदेशिकान्तपरम् । एतेनोत्तरार्थं षष्ठीनिर्देशसत्त्वेनात्र प्रथमया विपरिणाम इत्यपास्तम् , प्रथमान्तस्योत्तरत्र षष्ठ्या विपरिणामस्य युक्तत्वात् । एवञ्चैङ्ग्रहणानुवृत्तिसामर्थ्यादन्तपदानुवृत्तिसामर्थ्यादौपदेशिकान्तलाभद्वारा वा तल्लाभ इति मान्योक्तिः प्राचामनुरोधेनेति ध्वनितम् ।

आद्यपक्षे 'चित्रगो अग्रम्' इत्यादौ पक्षेऽवादेशापत्तेः । अत एव "वाच्छन्दसि" इत्यनेन "दीर्घाज्जसि" इति निषेधे पक्षे निषिद्धे "मारुतीश्चतस्रः" 'वाराही उपानहौ' इत्यादौ पूर्वसवर्णदीर्घप्रवृत्तिः । अथ बाध्यसामान्यचिन्ताङ्गीकारस्तर्हि तत्रैव निषेधाप्रवृत्तये तदनुवृत्तिः सफलेति सामर्थ्याभावः ।

द्वितीये समस्तत्वेन विभिन्नविभक्तिकत्वेन मध्यवाचकत्वेन चाननुवृत्तेः तद्वारणेन साफल्ये औपदेशिकान्तपरत्वे मानाभावाच्च । अत एवात्रान्त्यपक्षोऽप्ययुक्तः । किञ्चोक्तलक्ष्ये यणो वारणायावश्यानुवृत्तैङ इत्यस्य प्रथमया विपरिणामेऽन्वयसाम्राज्यात् तवापि तस्यावश्यकत्वादिति दिक् ।

प्रकाशानुयायिमूलव्याख्यान 'इतिभाव' इति सूचितामरुचिं स्पष्टयन् भाष्यसिद्धान्तरीत्याऽऽह—

सरला ।

त्वमादाय दीर्घसंज्ञासिद्ध्या "अकः सवर्णे" इति सूत्रेणैव ऋकारद्वयस्य स्थाने रेफद्वयवत्तारूपगुणकृतान्तर्येण कदाचिद्रेफद्वयघटितवार्तिकविधेयस्य, विवृतत्वान्तर्येण कदाचिद्विवृतस्य, विनिगमनाविरहेण मूर्धस्थानजन्यत्वविशिष्टरेफद्वयवत्त्वस्य मूर्धस्थानजन्यत्वविशिष्टविवृतत्वस्य चादेशतानियामकत्वेन सिद्धः, लृकारे च लकारवत्तान्तर्येण कदाचिद्द्विलकारस्य विवृतत्वान्तर्येण रेफवत्तासाम्येन च कदाचिद्विवृतस्य ऋकारस्य विनिगमनाविरहेण दन्तस्थानजन्यत्वविशिष्टलकारवत्त्वस्य विवृतत्वस्य वा आदेशतानियामकत्वेन सिद्ध्या वार्तिकद्वयान्यथासिद्धिः प्रदर्शितेत्यर्थः ।

विपरिणमय्येति । पूर्वसूत्रे 'एङः' इत्यस्य पञ्चम्यन्तत्वादिति भावः ।

शब्दरत्नम्।

हणावृत्त्येति भावः, प्रतिपदोक्तपरिभाषया वा । वर्णग्रहणे तदप्रवृत्तिज्ञापकस्य तदनित्यतामात्रज्ञापकत्वम्। ध्वनितं चेदम् "ओत्" ( पा० सू० १।१।१९ ) सूत्रे भाष्ये। "एङः पदान्तात्" ( पा०सू०६।१।१९ ) इत्यत्र तु "हलो ऽनन्तराः"(पा०सू०१।१।७) इत्यादिनिर्देशान्न प्रतिपदोक्तग्रहणम्। अत्र च स्थानिवत्सूत्रस्थं भाष्यं मानमित्यन्यत्र

भैरवी।

णाह—आवृत्त्येति। "ओत्"इतिसूत्रस्य "अदोभवत्"इत्यत्र प्रवृत्तिवारणपरभाष्याद्वर्णग्रहणेऽपि सा प्रवर्तत इत्याशयेनाह–प्रतिपदोक्तेति। अनित्यतेति। तेन वर्णग्रहणेऽपि चेत्प्रतिपदोक्तपरिभाषाप्रवृत्तिस्तदा चक्रे ऽत्रेत्यादावेव "एङः" इति सूत्रं प्रवर्तेत, नतु हरेऽव इत्यादाविति शङ्काया नावकाशः। वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषायाः प्रवृत्तिः सप्रमाणेत्याह—ध्वनितञ्चेदमिति। इदम्–तत्र तत्प्रवर्तनम्। तत्र हि–अनदः अदः समभवददोभवदित्यत्र प्रकृतिभाववारणायारब्धस्य "ओतश्च्विप्रतिषेधः" इति वार्तिकस्यान्यथासिद्धिरनया परिभाषया कृता, तेनेदं ध्वनितमित्यर्थः। नन्वेवमर्थाधिकारानुरोधात् "एङः" इति सूत्रेऽपि प्रतिपदोक्तस्यैवैङो ग्रहणं स्यादिति 'शाब्दोऽर्थः' इत्यादौ तस्य प्रवृत्तिर्न स्यादत आह–एङ इति। अत्र च–प्रकृतसूत्रे प्रतिपदोक्तपरिभाषाप्रवृत्तौ च। स्थानिवदित्यादि। तत्र हि–गोः पूर्वणित्वात्वस्वरेष्वित्यारब्धस्य प्रतिषेधस्यैनामश्रित्य प्रत्याख्यानपरभाष्येत्यर्थः। ननु विभक्तौ चेदिति विपरीतनियमो न भविष्यति "भवतेर" इत्यत्र शपि पूर्वरूपादर्शनादिति तेन सामान्यापेक्षेन

भावप्रकाश

प्रतिपदोक्तेति। एवञ्च तद्भाष्यविरोधस्यान्यथा दुष्परिहरणीयतया तदविरोधेनैव सर्वं योज्यमिति न कोऽपि दोषस्तदाह—वर्णेति। ज्ञापकस्य। कवाधकाण्विधायक"ह्वावामश्च" इत्यादेरित्यर्थः। मात्रपदेन वर्णग्रहणे एव सर्वत्र तदप्रवृत्तिनिरासः। एतेन वर्णप्राधान्ये तदप्रवृत्तेरुपदेशग्रहणेन ज्ञापयिष्यमाणत्वेन दोष इति रत्नाकरोक्तमपास्तम्, धर्मिग्राहकमानविरोधात्। वर्णग्रहणांशे विशेषात्तस्य साफल्यस्य वक्ष्यमाणत्वाच्च। तद्ध्वनयन्नाह—ध्वनितमिति। ओतश्च्विप्रतिषेधो वाच्यः। अनदः अदः समभवददोऽभवत्। न वाच्यः। लक्षणप्रतिपदोक्तयोरित्येवं न भविष्यति इति ग्रन्थेनेति भावः। एवञ्चात्रत्यमूलस्य युक्ततयैतद्विरुद्धान्यमूलग्रन्थाऽयुक्ततया च खण्डनकृतस्तद्विरोधोद्भावनं मण्डनकृतस्तदेकवाक्यतासम्पादनं चायुक्तमेवेति भावः। एवं सति प्राप्तं भाष्यमते दोषं परिहरति—एङ इति। न प्रतिपदोक्तेति। एतेन "भवतेरः" इत्यादिनिर्देशात्सामान्यापेक्षज्ञापकाद्विपरीतनियमाभावेन "कसिकसोश्च" इतीष्टनियमेन सिद्धे पदान्तग्रहणसामर्थ्यात्तत्र प्रतिपदोक्तग्रहणम् उत्तरार्थत्वेऽपीह करणस्य सफलत्वौचित्यात्। एवं चार्थाधिकार इति मूलाशय इत्यपास्तम्, उक्तयुक्तेः। तदाह— इत्यन्यत्रेति। उद्योतादावित्यर्थः। प्रागुक्तदोषा-

सरला।

तदप्रवृत्तिज्ञापकस्येति। "आदेच उपदेशेऽशिति" इति सूत्रस्योपदेशग्रहणस्येत्यर्थः। तत्र सूत्रे "लिटि धातोः" इति सूत्राद् धातोरित्यनुवर्त्य 'गोभ्यां, नौभ्याम्" इत्यादेः एजन्तस्य धातोरित्यर्थेन व्यावृत्त्या 'अचैषीत्, अस्तौषीत्' इत्यादावात्ववारणार्थमुपदेशग्रहणं, तत्र लक्षणप्रतिपदोक्तपरिभाषयाऽऽत्ववारणेन व्यर्थं सदुक्तार्थे ज्ञापकमिति भावः। तस्य सर्वथा वर्णग्रहणे तत्परिभाषाया अप्रवृत्तिज्ञापकत्वे तु "ओत्" सूत्रस्थभाष्यासङ्गतिः। तत्र हि 'अदोऽभवत्' इत्यत्र "ओत्" इत्येतत्प्राप्तप्रगृह्यत्ववारणायारब्धवार्तिकस्य "ओतश्च्विप्रतिषेधः" इत्यस्य तत्र सूत्रे लक्षणप्रतिपदोक्तपरिभाषासञ्चारेण प्रत्याख्यातत्वात् तदसङ्गतिः स्पष्टैव। अनित्यत्वज्ञापने तु तत्परिभाषासञ्चारेऽपि न विरोधः। वस्तुतस्तु उपदेशग्रहणं तदनित्यत्वे न ज्ञापकम् अनुबन्धविनिर्मुक्तस्यैव धातुसंज्ञकत्वेन "उदीचां माङ" इत्यादौ ङकारसत्त्वे धातुत्वाभावेन 'मेङ्' इत्यवस्थायामात्वानापत्तेः 'दैधे' 'दैधिरे' इत्यादावेजिरेचोरस्तु धातुग्रहणासम्बन्धेऽपि 'अशिति'

११५ ] इति सूत्रात्प्रकृत्येत्यनुवृत्तेः । यद्यपि भाष्ये "इको गुणवृद्धी" [ पा० सू० १।१।३ ] इति सूत्रे "नान्तःपादम्" इति पाठः स्थितः । षाष्ठभाष्येऽप्येवम् । तथापि शाकलसूत्रे "ह्रस्वश्च इति चकारेण प्रकृत्या इत्यनुकृष्यते" इति भाष्यदर्शनात् "प्रकृत्यान्तः पादम्" इति पाठोऽपि साधुरेव । "न" इति पाठे तु "सर्वत्र" इति सूत्रेण पूर्वरूपमेव विकल्प्येतेत्यवधेयम् ।

अवङ् स्फोटायनस्य (पा०सू०६।१।१२३) ॥ अत्राप्येङन्तस्य गोरिति व्या-

### शब्दरत्नम् ।

विस्तरः । पूर्वरूपमेवेति । पूर्वरूपमपीत्यर्थः । गोशब्दस्य यद्यत्प्राप्तं तन्नेति व्याख्यानेन नान्तः पादमित्यनेनैव पूर्वत्वादिकं विकल्पेन निषिध्येतेत्यर्थः । तेनावादेशोऽपि न ।

एङन्तस्य गोरिति । प्रतिपदोक्तस्यैङ इत्यपि बोध्यम् । ननु "गोरग्रवर्नं स्वर-

### भैरवी ।

ज्ञापकेनापदान्ताच्चेदित्युक्तनियमस्यैव लाभादेङ इति सूत्रे पदान्तादिति व्यर्थमिति तत्सामर्थ्यात्तत्र प्रतिपदोक्तस्यैव ग्रहणमित्यस्तु, इति चेन्न । स्थानिवत्सूत्रस्थभाष्ये 'हे चित्रगोऽग्र'मित्यत्र पूर्वरूपप्रदर्शनपरभाष्यविरोधादित्याशयेनाह—अन्यत्रेति । उद्द्योतादौ । यद्येङ इति सूत्रे प्रतिपदोक्तस्यैव ग्रहणन्तदा "हलोऽनन्तराः संयोगः" "मुखनासिकावचनोऽनुनासिकः" इत्यादिप्रयोगासङ्गतिरिति प्रतिपदोक्तपरिभाषाया इहाप्रवृत्तिः, तथाच साधारण्येन प्रवृत्तौ 'ङसिङसोश्च' इत्यस्यापदान्ताच्चेदिति प्रथमोक्तनियमबोधकतया सार्थक्यमेव वाच्यम्, अत एव "भवतेरः" इति निर्देशस्योपपत्तिरिति पदान्तादित्युत्तरार्थमेव । पूर्वसूत्रे करणन्तु विपरीतनियमशङ्कावारणायैवेति तत्त्वम् । गोशब्दस्य नान्तः इति पाठपक्षे पूर्वरूपस्यैव विकल्पेन निषेधपक्षे ऽवादेशापत्तिरत आह—पूर्वरूपमपीति । अप्यर्थकोऽत्रैवकारः । अपिनाऽवादेशस्य सङ्ग्रहः । तल्लाभोपायमाह—गोशब्दस्येत्यादिना । एवञ्च "निषेधविकल्पे विधिविकल्पः फलति" इति न्यायेन पक्षेऽवादेशबाधकस्य पूर्वरूपस्य प्रवृत्तिः, तदभावे स्वरूपेणावस्थानमिति गोअग्रमित्यस्यावङादेशे गवाग्रमित्यस्य सिद्धिः ।

अवङिति सूत्रेऽपि प्रतिपदोक्तस्यैवैङो ग्रहणमित्येतद्द्व्याशङ्कते—नन्विति । स्वरसिद्ध्यर्थमिति । गवादयः पशव आगता इति वाक्ये गवादय इति शब्दे गवाग्रमिति शब्दे च बहुव्री-

### भावप्रकाशः ।

दाह—पूर्वेति । पक्षोऽप्यथ इति भावः । तल्लाभोपायमाह—गोशब्देति । तादृशस्येत्यर्थः । तेन तत्र यणो निवृत्तिरिति भावः । नान्त इति । पाठान्तरैकवाक्यत्वाय "अनन्तरस्य" इतिन्यायानङ्गीकारेण "सुजाते अश्वसूनृते" इत्यादौ बाध्यसामान्यचिन्ताङ्गीकारात्तेन तयोर्नित्यनिषेधवदिति भावः । इत्यथ इति । इति शब्दोऽर्थ इत्यर्थः । तथा च निषेधविकल्पे विधिविकल्पः फलित इत्याशयेन तदेव विकल्प्यत इति मूले उक्तमिति भावः ।

अपिः, पूर्वरूपसमुच्चये । नन्वत्र सूत्रे उपलक्षणत्वे मानाभावेन यथाश्रुतमूलस्यैव सामञ्जस्यमित्याशयेन शङ्कते—नन्वित्यादि । स्वरेति । 'गवाग्रम्' इति बहुव्रीहौ इष्टस्वरेत्यर्थः ।

### सरला ।

इति प्रसज्यप्रतिषेधेन शित्परत्वयोग्यस्यैवात्वविधानेन शित्परत्वयोग्यत्वाभावेनैव नात्वप्रसक्तिरिति धातुग्रहणसम्बन्धस्य प्रयोजनाभावाच्च "आदेच उपदेशे" इति सूत्रे धातुग्रहणानुवृत्तेः कर्तुमशक्यत्वात् । किन्तु लक्षणप्रतिपदोक्तपरिभाषाया वर्णग्रहणेऽनित्यताज्ञापकं 'ह्वावामश्च' इति सूत्रं बोध्यम् । विस्तरस्तु परिभाषेन्दुटिप्पणे द्रष्टव्यः ।

मूले—प्रकृत्येत्यनुवृत्तेरिति । 'दुःस्वयजा प्रकृतिः' इत्यादाविव स्वभाववाचकानुवृत्तेरित्यर्थः । प्रकृत्या स्वभावेनावस्थितिरिति तदर्थः । तेन न पूर्वरूपं, नाप्ययादय इति भावः ।

शब्दरत्नम् ।

सिद्ध्यर्थमन्यथाऽवङ् कदाचिदन्तोदात्तोऽपि स्याद्" इत्येतत्सूत्रस्थभाष्यप्रामाण्याच्चित्रग्वग्रमित्यत्रावङभावोऽस्तु तत्रागवङो रूपे विशेषस्य स्पष्टत्वात् । चित्रगोऽग्रमित्यत्रावङभावकल्पने किं मानमिति चेन्न । उपदेश आद्युदात्तत्वनिपातनेनावङ्न्यासस्थापनपरभाष्यस्य मानत्वात् । चित्रगोशब्द आमन्त्रिताद्युदात्तत्वेनान्तानुदात्तस्तत्राकिं तस्यागमानुदात्तत्वे उभयोरनुदात्तयोरेव श्रवणं स्यात्, आद्युदात्तत्वनिपातने तु गकाराकारस्योदात्तस्येति विशेषः स्पष्टः । न च गवाक्ष इत्यादाववङ आद्युदात्तस्य श्रवणं मा भूदिति तस्योपदे

भैरवी ।

द्विसंज्ञके स्वरसिद्ध्यर्थमित्यर्थः । अत्र हि पूर्वपदप्रकृतिस्वरेण गोशब्दस्य यो व्यपदेशस्तस्यैवावस्थानम्बोध्यते । गोशब्दश्चोणादीनां व्युत्पत्तिपक्षे आद्युदात्तः प्रत्ययस्वरेण, अव्युत्पत्तिपक्षे तु फिट्स्वरेणान्तोदात्तो व्यपदिश्यते । यद्यवङादेशस्तदा आद्युदात्त इति व्यपदेशपक्षे आन्तरतम्यादवङादेशोऽप्याद्युदात्तो व्यपदिश्येतेति गवादय इत्यादावाद्युदात्तत्वव्यवहारस्योपपत्तावपि उणादयो ऽव्युत्पन्नानीति सिद्धान्तपक्षे ऽवङादेशो ऽन्तोदात्तः स्यादिति वाशब्दाकारस्य "एकादेश उदात्तेन" इत्युदात्तस्य श्रवणापत्तिः । अगागमे त्वागमा अनुदात्ता इत्यनुदात्तस्यैवैकादेश इत्यनुदात्तस्यैव श्रवणसिद्धिरिति भावः । गवाग्रमित्यस्य तत्पुरुषत्वे तु समासस्वरेणान्तोदात्तत्वमेव स्यादिति स्वरे न विशेषः । एतत्सूत्रस्थेति । स्वरभेदप्रतिपादकैतत्सूत्रस्थभाष्येत्यर्थः । अस्त्विति । अत्रावङादेशे चित्रगवाग्रमिति रूपम्, अगागमे तु चित्रग्वाग्रमितिरूपभेदापत्तिरिति रूपाभेदसिद्धये एङ्ग्रहणानुवृत्तिरस्त्विति भावः । किम्मानमिति । अस्य गवाग्रतुल्यतया रूपे विशेषाभाव इति भावः । निपातनेनेति । एकश्रुत्या पाठे कर्तव्ये आद्युदात्तस्यावङ्शब्दस्योच्चारणेनेत्यर्थः । पूर्ववार्तिके स्वरसिद्ध्यर्थमित्युपादानात्स्वराभेदसिद्धावेव वार्तिकतात्पर्यन्तच्चाद्युदात्तनिपातनेनापि निर्वहति । यदि हि चित्रगो ऽग्रमित्यत्र पक्षे ऽवङादेशोऽपि स्यात्तदा निपातनपक्षे स्वरे भेदः स्यात्तदेवोपपादयति—चित्रगोशब्द इत्यादिना । स्पष्ट इति । अतः प्रतिपदोक्तस्येत्यावश्यकमिति शेषः । अव्यक्तां स्वराभेदशङ्कामनूद्य दूषयति—नचेति । इत्यादाविति।आदिना गवाग्रमित्यस्य तत्पुरुषस्य सङ्ग्रहः । तस्य—निपातनेन साधितस्याद्युदात्तत्वस्य । माभूदिति कथनेन सतिशिष्टत्वात्तस्य

भावप्रकाशः ।

कदाचिदिति ।पर्यायेणेत्यर्थः। व्युत्पत्त्यव्युत्पत्तिपक्षभेदेनेति भावः । अन्तोदात्तोऽपीति । अपिराद्युदात्तसमुच्चायकः । वस्तुत आदित्वाद्यभावेऽपि व्यपदेशिवदिति कार्यातिदेशेन कार्यस्य करणेनौकारस्यादित्वादिव्यपदेशाभावेन नियताद्युदात्तादिव्यपदेशस्य सुतरामभावेन तदादेशे सुतरां तदभावः । गौणव्यवहारस्य चाभ्युपगमे तस्योभयविधस्यापि सत्त्वादादेशेपि पर्यायप्रसङ्ग इति भावः । एतत्सूत्रेति । "अवङ्स्फोट" इति सूत्रस्थस्वरभेदप्रतिपादकभाष्येत्यर्थः । किं मानमिति । तस्य गवाग्रतुल्यत्वादिति भावः । निपातनेनेति । एकश्रुत्या सूत्रपाठे न्याय्ये प्रकृतितः प्राप्ते स्वरे उच्चारणीये वा यत्नेनाद्युदात्तोच्चारणमन्तोदात्तत्वबाधकमिति भावः । तदुपपादयति—चित्रेत्यादिना । अन्तेति । परिशेषादित्यादि । तत्रेति । तदुक्ते 'चित्रगोग्रम्' इत्यत्राकि सतीत्यर्थः । अवादेशे च सतीत्यपि बोध्यम् । उभयो गवाकारयोः । निपातने त्विति । बहुव्रीहिः, तदुक्तेऽवङितित्यर्थः । वङ्भाव इति । उक्तरीत्येति भावः । कल्पने इति । उक्तरीत्येतिभावः । उदात्तस्येतीति । श्रवणमित्यनुषज्यते । स्पष्ट इति । तथा च कथं वार्तिकप्रत्याख्यानमतस्तथार्थकल्पनमावश्यकमिति भावः । उपदेशे इत्युक्तेर्बहुव्रीहौ फलाभावेऽपि तत्पुरुषे फलं वक्तुं शङ्कते—नचेति । तस्येति । निपातिताद्युदात्तत्वस्येत्यर्थः । इवान्तेन दृष्टान्तमुपपाद्य प्रकृतमाह—

सरला ।

अन्तोदात्तोऽपीति । अपिना आद्युदात्तस्य संग्रहः । अव्युत्पत्तिपक्षे गोशब्दस्य "फिषोऽन्त उदा-

स्थेयम् । अगिति सूत्रयितुमुचितम् । विभाषानुवृत्तेः स्फाटायनग्रहणं पूजार्थम् । गवीति । यत्तु प्राचा गवे इति प्रत्युदाहृतम् । तन्न । सत्यप्यवङि-'अतो गुणे" (पा०सू०६।१।९७) इति पररूपेण रूपसिद्धेः । न च सत्यवङि ङेर्यादेशः स्यात्,

---

शब्दरत्नम् ।

शिवद्भावो वाच्य इति समासान्तोदात्तादिवामन्त्रिताद्युदात्तादपि प्रागवङ्स्वरप्रवृत्तौ पश्चादामन्त्रितस्वरे स्वरभेदाभाव इति वाच्यम् । गवाक्ष इत्यादौ समानकालप्रवृत्तिकस्य परत्वेन प्रथमं प्राप्तस्य समासस्वरस्य प्रागप्रवृत्तौ उपदेशिवद्भाववचनचारितार्थ्येनाङ्गसञ्ज्ञासापेक्षबहिरङ्गगुणापेक्षया ऽन्तरङ्गत्वात्पूर्वमेवामन्त्रितस्वरप्राप्त्या तदप्रवृत्तिसंपादनेऽस्य सामर्थ्याभावात् । तद् ध्वनयन्नाह-अगितीत्यादि । यथान्यासे त्वाद्युदात्तनिपातनोपदेशिवद्भावयोः करणे गौरवादस्यौचित्यमिति भावः । स्थानिवत्सूत्रे भाष्येऽप्युक्तं "गोः पूर्वत्वे स्थानिवत्त्वप्रतिषेधो वक्तव्यः । चित्रग्वग्रं "सर्वत्र विभाषा गोः" [पा०सू०६।१।१२२] इति पूर्वत्वं प्राप्नोति । नैष दोषः, "एङ" इति वर्त्तते, तत्र "अनल्विधौ" इति प्रतिषेधो भविष्यति । एवन्तर्हि चित्रगोऽग्रमित्यत्र प्राप्नोति इति । अत्र पूर्वत्वशब्देन तदपवादप्रकृतिभावावङौ विनिगमनाविरहात् । "सर्वत्र-" [पा०सू०६।१।१२२] इति "अवङ्-"

भैरवी ।

श्रवणापत्तिरुद्भाविता । इवेति । स एवादौ प्रवर्तते इति कल्पनयेति शेषः । परत्वेनेति । कथमत्र विरोध इति चेत्? इत्थम् गो आम् अक्षि सु इति स्थिते ऽलौकिके प्रक्रियावाक्ये समासान्ते "अक्ष्णोऽदर्शनात्" इत्यचि तद्धितान्तत्वात्प्रातिपदिकसंज्ञायाः पूर्वभागस्य समाससंज्ञायाश्च युगपत्प्रवृत्तौ सुब्लुकि आद्युदात्तत्वयुक्तावङः समासान्तोदात्तत्वस्य युगपदसम्भव इति । अङ्गसंज्ञासापेक्षेति । अङ्गेति संज्ञा यस्मिन्प्रत्यये तत्सापेक्षेत्यर्थः । एतेन संज्ञाकृतस्य बहिरङ्गत्वस्य सिद्धान्तविरुद्धत्वशङ्काया नावकाशः । अन्तरङ्गत्वादिति । प्रकृतिमात्रापेक्षत्वेनेत्यादिः । अस्य-उपदेशिवद्भावस्य । औचित्यमुपपादयति-यथान्यास इति । अस्य-अगागमस्य । उक्तार्थे भाष्यकारोक्तिरपि साधिकेत्याह-स्थानिवत्सूत्र इति । पूर्वत्व इति । कर्तव्य इति शेषः। वार्तिकैकदेशोऽयम् । अत्र पूर्वत्व इत्युपादानेन सर्वत्रेत्यस्यावङादेशस्य च कथं लाभ इत्यत आह-अ-

भावप्रकाशः ।

आमन्त्रितेति । परत्वेनेति । 'गो आम् अक्षि सु' इत्यत्राचि तद्धितान्तत्वात्प्रातिपदिकत्वस्य तत्पूर्वभागे समाससंज्ञायाश्च युगपत्प्रवृत्तौ सुब्लुकि आद्युदात्तत्वयुक्तावङ्समासान्तोदात्तत्वयोर्युगपत्प्राप्तौ युगपदवस्थित्यसम्भवरूपविरोधेन तं परत्वेन बाधित्वा प्रथमं प्राप्तस्येत्यर्थः । संज्ञापेक्षेति । अङ्गसंज्ञा यस्मिन् तत्प्रत्ययापेक्षेत्यर्थः । अन्तरङ्गत्वादिति । प्रकृतिमात्रापेक्षत्वेनेति भावः । आमन्त्रितेति । एङन्तत्वाभावेनावङस्तदानीमप्राप्तेः । एतच्च भिन्नकालप्राप्तिकत्वमिति भावस्तदाह—तदप्रवृत्तीति । आमन्त्रितस्वराप्रवृत्तीत्यर्थः । अस्य—उपदेशिवद्वचनस्य । औचित्यमिति । तत्स्थापनपरभाष्यं तु लाघवानादरेण सूत्राभिप्रायेण प्रवृत्तमिति भावः । ननु अवङ्विधौ तथाव्याख्यानस्य समूलत्वेऽपि न पूर्वसूत्रीयस्य तस्येत्यत उभयसाधारणं मानमाह—स्थानिवदित्यादि । पूर्वत्वे इति । पूर्वरूपे कर्तव्ये इत्यर्थः । वार्तिकैकदेशोऽयम् । नन्वत्र पूर्वरूपोल्लेखेन कथं तत्र मानता कथं च सर्वत्रेत्युक्तिरत आह—अत्रेति । वार्तिके भाष्ये वेत्यर्थः । वावङाविति । तावेव न तु स्वार्थः सर्वत्रेत्युक्त्यनौचित्यात् । तत्राप्यापत्त्युद्धारयोरावश्यकत्वेन तदकरणे न्यूनतापत्तेश्च तत्रैङ्पदोच्चारणेन शङ्कानुत्थितेश्च । इदानीं त्वनुवृत्तिमजानतः शङ्केति बोध्यम् । नन्वेवमपि प्रकृतिभावस्यैव ग्रहणमस्तु तावतैव ग्रन्थसङ्गतेरत आह—विनिगमनेति ।

सरला ।

तः" इति सूत्रेणान्तोदात्ततया आन्तरतम्यादोकारस्थानिकावङादेशस्यान्तोदात्तत्वेऽपि व्युत्पत्तिपक्षे "गमे-

स्त्रियां तु टाप् स्यादिति वाच्यम्। सन्निपातपरिभाषया यादेशटापोः सुसमाधानत्वात्। नच साऽनित्येति वाच्यम्। तावताप्यौत्सर्गिकतत्प्रवृत्त्येष्टसिद्धेः। गवाक्ष इति। गवामक्षीवेति विग्रहः। "अक्ष्णोऽदर्शनात्" इत्यच् समासान्तः। वातायने रूढोऽयम्। पुंस्त्वं लोकात्॥

---

शब्दरत्नम्।

[पा०सू०६।१।१२३] इत्यस्याप्युपलक्षणम्। अत एव प्रकृतिभावे इति त्यक्त्वा पूर्वत्वे इत्युक्तं वार्तिके भाष्ये च। चित्रगोशब्दस्य लाक्षणिकत्वे ऽपि स्थानिवत्त्वात्प्राप्तौ तत्प्रतिषेधः कृतः। एङः प्रतिपदोक्तत्वाश्रयणे तु तन्न कार्यमिति लाघवमिति दिक्। टाप्स्यादिति। ङीष उपलक्षणमिदम्। इष्टसिद्धेरिति। गवीत्यस्य स्थाने गवे इति स्यादिति तद्ग्रन्थव्याख्यानमपि न समञ्जसम्।

भैरवी।

त्रेति। अत एव-उभयबोधनस्येष्टत्वादेव। स्थानिवत्त्वात्प्राप्ताविति। अतिदेशविषये सामर्थ्याल्लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिरिति भावः। तन्न कार्यम्-गोः पूर्वेति वचनन्न कार्यम्। दिगर्थस्तु यथा सूत्रत्रयस्य भाष्यस्य चैकवाक्यता भवति तथैव कल्पनमुचितमित्येङ्ग्रहणानुवृत्तिः, प्रतिपदोक्तस्य च तस्य ग्रहणमित्युचितमिति।

ननु जातिलक्षणङीषः प्रकृते प्राप्तिसत्त्वेन टाप्स्यादित्यनुचितमत आह-ङीष इति। खण्डनकारोक्तिङ्खण्डयति—गवीत्यस्येति। न समञ्जसमिति। उदक्षरत्वादिति शेषः।

भावप्रकाशः।

ननु सर्वत्रेत्युक्तिरेव तथेत्यत आह—सर्वत्रेतीति। ननु तत्रैव किं मानमत आह—अत एवेति। तद्ग्रहणस्यापीष्टत्वादेवेत्यर्थः। वार्तिकस्य साधारणत्वादाह—भाष्ये चेति। एतेन सर्वत्रेत्युक्तया तस्य प्रकृतिभावपरत्वं नावङ्परत्वमिति खण्डनकृदुक्तिः परास्ता। एवं तद्दीत्यादिभाष्याशयं सूचयितुमाह—चित्रगवितिं। लाक्षणिकत्वेऽपीति। तेन स्वतः प्रकृतिभावाप्राप्तावपीत्यर्थः। प्राप्ताविति। अतिदेशस्य निर्विषयत्वापत्त्या, इयं तु तया दुर्निवारेति भावः। चोद्यान्तभाष्यस्य तत्समर्थकप्रतीतावपि "ओत्" सूत्रभाष्यैकवाक्यतया आशयमाह—एङ इति। तन्नेति। गोः पूर्वेति वचनमित्यर्थः। सम्बुद्धिगुणनिष्पन्नत्वेनास्य लाक्षणिकत्वात् तदंशे स्थानिवत्त्वानपेक्षणेनातिदेशविषये सा नेति भावः। लाघवमिति। मूलोक्तमतापेक्षयापीति भावः। दिगिति। तदर्थस्तु मन्मते सूत्रत्रयभाष्यैकवाक्यता भवति न भवन्मते विरोधश्च मिथः। तस्मादेङनुवृत्त्योक्तरीत्या प्रतिपदोक्तत्वलाभः। एवञ्च प्रागुक्तखण्डनकृदुक्तिः 'चित्रग्वग्रम्' इत्यादौ स्थानिवत्त्वनिषेधेनैव तयोरप्रवृत्तिरिति माधवोक्तिश्चायुक्तेति। टाप्स्यादितीति। प्रकाशकृत्स्वीयसिद्धान्तोक्त्यनुवादः। ननु तदपवादो जातेरिति ङीषुचितः, न च सन्निपातपरिभाषया स नेति वाच्यम्, "नयासयोः" इति सामान्यापेक्षज्ञापकेन तस्यास्तत्राप्रवृत्तेः। इदं चावश्यकमित्यन्यत्र स्पष्टमत आह—ङीष इति। खण्डनकारोक्तिं खण्डयति—गवीतीति। तद्ग्रन्थेति। प्रक्रियाग्रन्थेत्यर्थः। नाञ्जसमिति। नाक्षरमर्यादया प्रतीयमानमित्यर्थः। एवं रीतेः क्वाप्यदृष्टत्वात्। प्रकाशोऽप्येवम्।

सरला।

ङोस्" इति गोशब्दस्य व्युत्पादनेन "प्रत्ययः, आद्युदात्तश्च" इति ओकारस्याऽऽद्युदात्ततया तत्स्थानेऽवङादेशस्याप्यान्तरतम्यादाद्युदात्ततेति भावः। न समञ्जसमिति। ग्रन्थकारा हि साधुशब्देष्वेवष्टकार्यानापत्तिमनिष्टकार्यापत्तिं चोद्भावयन्ति न तु असाधुशब्दोल्लेखमिति भावः। परममूले 'व्यवस्थितविभाषया गवाक्षः' इति।

देवत्रातो गलो ग्राह इतियोगे च सद्विधिः।
मिथस्तेन विभाष्यन्ते गवाक्षः संशितव्रतः॥

"इन्द्रे च" ( पा०सू०६।१।१२४ )। आरम्भसामर्थ्यान्नित्यमिदम् । "इन्द्रे च नित्यम्" इति पाठस्तु भाष्यासंमतत्वादुपेक्षितः ॥

**एहि कृष्णेति**। "दूराद्धूते च" (पा०सू०८।२।८४) इति प्लुतः। यत्तु कृष्णा ३ एहीति प्राचोक्तं, तन्न । "दूराद्धूते च" ( पा०सू०८।२।८४ ) इत्यादौ "वाक्यस्य टेः-" ( पा०सू०८।२।८२ ) इत्यधिकारात्। **चक्रयत्रेति**। इह "स्कोः-" ( पा०सू०८।२।२९ ) इति कलोपो न। यणः कार्यकालपक्षे बहिरङ्गपरिभाषयाऽसिद्धत्वात्, स्थानिवद्भावाच्च। "पूर्वत्रासिद्धीये न-" इति तु नास्ति, "तस्य दोषः संयोगादिलोप-" इत्याद्युक्तः ॥

**दूराद्धूते च** ( पा०सू०८।२।८४ )। हूतमाह्वानं तच्च सम्बोधनमात्रोपलक्षणमित्यभिप्रेत्याह-दूरात्सम्बोधन इति। उपलक्षणतया व्याख्यानस्य फलमुदाहरति-सक्तून् पिबेत्यादि ॥

**गुरोरनृतः** ( पा०सू०८।२।८६ )॥ अपिशब्दो गुरोरगुरोश्च टेः प्लुतार्थः।

---

शब्दरत्नम्।

**भाष्यासंमतत्वादिति**। "इन्द्रे इति सामर्थ्यान्नित्यम्" इति तदुक्तेरिति भावः। **प्लुत इति**। प्रकृतिभाववचनसामर्थ्यादेव प्लुतस्य तत्र नासिद्धत्वमिति भावः। **उपलक्षणेति**। एवं चासत्यप्याह्वाने भवतीति भावः।

भैरवी।

ननु प्रकृतिभावविधायकवचनदृष्ट्या प्लुतस्यासिद्धत्वात्कथंप्लुतस्य प्रकृतिभावविधानमत आह—प्रकृतिभावेति।

उपलक्षणस्य फलमाह—एवञ्चेति। अपिना तत्सत्ता समुच्चीयते।

पदसमूहो वाक्यमिति परमतम्, स्वमते तु एकतिङ् वाक्यमिति शास्त्रीयप्रक्रियायामाश्रा-

भावप्रकाशः।

इन्द्रे इतीति। एतेन मूलोक्तः स च पाठोऽप्युपेक्ष्य इति सूचितम्। 'भाष्ये तथापाठः सूत्रैकदेशानुवादी' इति मान्योक्तिस्तु प्रक्रियाप्रकाशानुयायिनी, यतः तैश्चानुक्तसमुच्चयार्थाद् गवाक्ष इत्युक्तम्। सर्वथाऽनुपपन्नफलत्वे तथोक्तिरुचिता, तत्फलस्य तु पूर्वसूत्रेणैव साधितत्वात्। अत एव व्यवस्थितविभाषासु 'गवाक्षः' इत्युक्तिर्भाष्ये इति भावः। तदुक्तेरिति। भाष्योक्तेरित्यर्थः।

ननु प्लुते क्वापि प्रकृतिभावो न असिद्धत्वादत आह—प्रकृतीति। तत्रेति। प्रकृतिभावे कर्तव्ये इत्यर्थः।

उपलक्षणफलमाह—एवञ्चेति। उपलक्षणत्वे चेत्यर्थः। अपिस्तत्सत्तासमुच्चायकः। बोधनमावश्यकम्। अनयोस्तु नाग्रह इति 'सक्तून् पिब' इत्यादावपि भवतीति भावः।

ननु 'देवदत्त' इत्यस्यापि पदसमूहत्वेन वाक्यत्वाच्छेषोऽयुक्तः। किञ्च तिङन्तस्यैव कुतः शेषोऽत

सरला।

इति "शाच्छोः" इति सूत्रे भाष्योक्तेः। व्यवस्थितविभाषात्वञ्च विभाषाशास्त्रोद्देश्यतावच्छेदकव्यापकभावाभावान्यतरविधायकत्वम्।

**नासिद्धत्वमिति**। प्रकृतिभावोद्देश्यत्वेन प्लुतस्याश्रयणादित्यर्थः। **इति भाव इति**। अत्रेदं बोध्यम्—"इन्द्रे च" इति सूत्रे प्राचीनपठितनित्यग्रहणस्य प्रामादिकत्वं बोधयितुं तदव्यवहितोत्तरमेवैतत्सूत्रोपन्यासः। तेनैतत्सूत्रीयप्लुतपदार्थप्रगृह्यपदार्थज्ञानाय ततः पूर्वं तत्तत्संज्ञासूत्रानुपन्यासेऽपि न न्यूनतेति।

देवदत्तेति । अस्यैहीत्यादिः । एवमग्रेऽपि । सर्वः प्लुत इति । तथा च "अग्नीत्प्रेषणे परस्य च" इति सूत्रे भाष्यम् "सर्वः प्लुतः साहसमनिच्छता ऽपि विभाषा कर्तव्यः" इति । साहसं शास्त्रत्यागः, तदनिच्छताऽपि-शास्त्रमनुरुन्धानेनापीत्यर्थ इति हरदत्तः । वैकल्पिकेष्वनुष्ठानक्लेशं धर्माधिक्यफलकमप्यशक्तत्वादनिच्छतेत्यर्थ इत्यन्ये । एतेन "द्वैपायनो विरहकातर आजुहाव पुत्रेति" भागवतं व्याख्यातम् । प्लुतस्य वैकल्पिकत्वात् । किं चेह पुत्रशब्दस्य वाक्यान्तत्वं नास्तीत्यपि सुवचम्, आख्यातप्राग्वर्तिनो ऽप्यनुकरणसम्भवात् । अपि च अस्तु प्लुतः, प्रकृतिभावस्तु

---

## शब्दरत्नम् ।

**एहीत्यादिरिति ।** "वाक्यस्य टेः" [पा०सू०८।२।८२] इत्युक्तेरिति भावः । **हरदत्त इति ।** कैयटोऽप्येवम् । अत्र पक्षे "विभाषा पृष्ट–" इत्यत्र विभाषाग्रहणमवयुत्यानुवादः । "अविद्वांसः प्रत्यभिवादे–" इत्यादि परपशास्थं भाष्यमपि वैकल्पिकेषु भावानुष्ठानौचित्येन शास्त्राज्ञाननिन्दापरं बोध्यम् । **आख्यातप्रागिति ।** पुत्र एहीति

## भैरवी ।

यत इत्याशयेनाह—वाक्यस्येति । कैयटोऽपीति । एतेनायमेवार्थो युक्त इति ध्वनितम् । परममूले 'सर्वः प्लुतः' इति कथनेन प्राचामित्यस्य सर्वप्रकरणाङ्गत्वं ध्वनितम्, भाष्यकृता तु 'विभाषा' इति योगविभागेन सर्वस्य प्लुतस्य वैकल्पिकत्वमुक्तम् । तत्र पक्षे प्राचामिति पूजार्थम् । यदा तु प्राचामित्यनेनैव सर्वस्य प्लुतस्य वैकल्पिकत्वं साध्यते, तदा "विभाषा पृष्ट" इत्यत्र विभाषाग्रहणं किमर्थमित्याशङ्कायामाह—अत्र पक्ष इति । प्राचामिति योगविभागेन सर्वस्य प्लुतस्य वैकल्पिकत्वसाधनपक्षे इत्यर्थः । "विभाषा पृष्ट" इत्यत्र विभाषाग्रहणमुपलक्षणम् । वार्तिकपठितवाशब्दोऽप्येवम् । अवयुत्यानुवाद इत्यत्रावयुत्येति ल्यबन्तम् । पृथक्कृत्येत्यर्थः । अवयुत्येति तृतीयान्तं वा, तदा ऽवयुत्येत्यस्य पृथक्करणेनेत्यर्थः । नन्वेवमविद्वांस इत्यनेन भाष्यकृता प्लुतयुक्तस्य प्रत्यभिवादवाक्यस्य कर्तव्यता सूचिता, सा प्लुतस्य नित्यत्व एवोपपद्यते, यदि सर्वस्य प्लुतस्य वैकल्पिकत्वं तदा प्लुताकरणेऽपि दोषाभावेन सानोपपद्यत इत्याशयेनाह-अविद्वांस इति । शास्त्राज्ञानेन या निन्दा तत्परमित्यर्थः ।

## भावप्रकाशः ।

आह—वाक्यस्येति । शास्त्रप्रक्रियायाम् "एकतिङ् वाक्यम्" इत्युक्तेरिति भावः । सिद्धान्ततां तस्य ध्वनयितुमाह—कैयटोऽप्येवमिति । अत्र मान्यादयः—प्राचामिति विभक्तं, प्रत्यभिवाद इत्यारभ्य "दूराद्धूते" इत्यारभ्य वा "गुरोरनृतः" इत्यन्तेनाग्नीदित्यन्तेन वा सम्बध्यते, उपस्थितत्वात्, अत्र करणाच्च, 'भोराजन्य' इत्यत्र वापदानर्थक्यापत्तेश्च, "विभाषा पृष्ट" इत्यत्र तदुक्तेश्च । ध्वनितश्चायमर्थोऽपरम्पाहेत्युक्त्याऽरुचिबोधनेन भाष्यकारेणेति, तत्प्राचामनुरोधेन । परममूले भाष्ये च सर्वपदोक्त्यस्वारस्यापत्तेः, "विभाषा पृष्ट" इत्यत्र भाष्यकृत्कृतविभाषेतियोगविभागेन सर्वप्लुतस्य वैकल्पिकत्वसाधनाच्च; तद्ध्वनयन्नाह—अत्र पक्ष इति । अनेन भाष्योक्तोऽप्यपरपक्षोऽस्तीति सूचितम् । तत्र पक्षे प्राचामिति तु पूजार्थं स्वस्वमतप्रच्युतिदोषपरिहारार्थं वा तथाच द्वयोरेकवाक्यत्वौचित्येन तदनुरोधेनात्रापि पक्षे सर्वप्रकरणसम्बन्ध एवोचित इति भावः । तदुक्तिविरोधं परिहरति—**विभाषेति** । वार्तिकेषु वाग्रहणान्यप्येवमेव । भिन्नकर्तृकत्वाद्वैयर्थ्याशङ्का नेति भावः । नन्वेवमप्यविद्वांस इति भाष्यविरोधः, त्वन्मते "प्रत्यभिवादे" इत्यस्य वैकल्पिकत्वात् । भाष्येण तु प्लुतयुक्तस्यैव प्रत्यभिवादस्य कर्तव्यत्वोक्तेरत आह–अविद्वांस इति । "नाम्नो येन प्लुतिं विदुः । कामन्तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत्" इति आदिसङ्ग्राह्यम् । **आख्यातं प्रागिति ।** बहुव्रीहावनिष्टमेवात आह—पुत्र एहीति । तथाच तत्र तत्पुरुष

वैकल्पिकत्वान्मास्तु । तथा च "ई चाक्रवर्मणस्य" इति सूत्रे भाष्यम्—"ईग्रहणेन नार्थः वशा इयं वशेयमिति" । प्लुतप्रकृतिभावः सर्वोपि चाक्रवर्मणमते नास्तीति भावः । अपि च इह प्रकृतिभावोऽपि दुर्लभ एव, "अप्लुतवदुपस्थिते" इति सूत्रात् । उपस्थितं नामावैदिक इतिशब्दस्तस्मिन्परे प्लुतोऽप्लुतवत्स्यादिति हि तस्यार्थः । एवं चतुर्धापि निर्वाहे स्पष्टे आर्षः प्रयोग इति श्रीधरोक्तिर्नादर्तव्या ॥

---

### शब्दरत्नम् ।

वाक्यस्थस्येत्यर्थः । अनुकरणे दूरात्संबोधकत्वाभावाच्चेत्यपि बोध्यम् । वैकल्पिकत्वादिति । अस्य अप्लुतवद्भावस्येत्यादिः । अस्य अप्लुतवद्भावस्य वैकल्पिकत्वेन तत्पक्षेऽस्याभावेन तत्त्वमित्यर्थः । प्लुतप्रकृतिभाव इति । तस्य मते अप्लुतवद्भावोक्तेरिति भावः । एतेन चाक्रवर्मणस्याचार्यस्याप्लुतवदित्येव भाष्योक्तेरिदं सर्वं चिन्त्यमित्यपास्तम् । प्रकारान्तरेणाप्यप्लुतवद्भावोऽत्रेत्याह—अपि चेति । अवैदिक इति । अस्य पुराणस्थत्वेनावैदिकत्वं स्पष्टमेव ॥

### भैरवी ।

दूराद्बोधकेति । एतेन "दूराद्धूते च" इति सूत्रे दूराद्धूतपदं दूराद्बोधनोपलक्षणमिति सप्रमाणमिति सूचितम् । अत एवाकडारसूत्रे गुरुनदीसंज्ञयोः समावेशे 'गार्गी बन्धुः' 'वात्सी बन्धुः' इत्यत्र "गुरोः" इति प्लुतः, "नदीबन्धुनि" इति पूर्वपदान्तोदात्तत्वञ्च फलमित्युक्तन्तत्सङ्गच्छते । ननु मूलोक्तम्प्रकृतिभावस्य वैकल्पिकत्वमयुक्तं, किन्तु तस्य नित्यत्वमेवेष्टमत आह—अस्येति । तत्पक्षे—अप्लुतवद्भावपक्षे । अस्याभावेन—प्रकृतिभावस्याभावेन । तत्त्वम्—वैकल्पिकत्वम् । खण्डनकारोक्तिम्परिहर्तुमाह—तस्य मते इति । तस्य चाक्रवर्मणस्य, तथाच मूलोक्तं फलितार्थपरमेवेति भावः । एतेन फलितार्थकथनपरत्वकथनेन । अवैदिकत्वमिति । उपस्थितशब्दस्य प्रकृतसूत्रे

### भावप्रकाशः ।

इति भावः । इदं समाधिद्वयमभ्युपेत्योक्तम् , वस्तुतस्तदेव नेत्याह—अनुकरणे इति । बोधकत्वेति । अयम्भावः, दूरादाह्वानं दूराद्बोधनस्योपलक्षणं न तु सम्बोधनविभक्तिनियामकस्याभिमुखीकृत्यबोधनस्यैव, 'आगच्छतु भवान् देवदत्तः' इत्येवमाह्वानस्यापि सम्भवात् । अतएवाकडारसूत्रे गुरुनदीसंज्ञयोः समावेशे 'वात्सीबन्धुः' इत्यत्र "गुरोः" इति प्लुतो "नदी बन्धुनि" इति पूर्वपदान्तोदात्तत्वं च फलमुक्तं भाष्ये । अन्यथा तत्र तादृशसम्बोधनाभावेन "गुरोः" इत्यस्याप्राप्त्या तदसङ्गतिः स्पष्टैवेति । एतेन तच्च सम्बोधनं "सम्बोधने च" इति शास्त्रव्युत्पादितमेवेति मान्योक्तिः प्राचामनुरोधिनी, सम्बोधनोपलक्षणमित्येवं प्रकाशादिरत्नाकरान्तोक्तिस्त्वयुक्तैवेति सूचितम् । ननु प्रकृतिभावस्य नित्यत्वेन तथोक्तिरयुक्ता । अप्लुतवद्भावस्येति शेष इति मान्योक्तव्याख्यया तु हेतुसाध्ययोर्वैयधिकरण्यापत्त्याऽसम्बद्धाऽत आह—अस्येति । "ईचाक्र" इति विधेयस्येत्यर्थः । पक्षेऽस्येति । प्रकृतिभावस्येत्यर्थः । तत्त्वमिति । फलितं वैकल्पिकत्वमित्यर्थः । खण्डनकरोक्तिं खण्डयितुमाह—तस्येति । चाक्रवर्मणस्येत्यर्थः । तथाच फलितोऽर्थो मूले उक्त इति भावः । एतेनेति । फलितार्थकथनेनेत्यर्थः । इदं सर्वं चिन्त्यमिति । वैकल्पिकत्वादित्यादि नाऽस्तीत्यन्तमित्यर्थः । प्रकृतिभावावैकल्पिकत्वात् , अप्लुतवद्भावस्यैव प्रकृतिभावाभावप्रयोजकत्वेन तद्वैकल्पिकत्वोक्तेरनुपयोगाच्चेति तद्भावः । मूले सर्वोऽपीति । इतिशब्दपरोऽनितिशब्दपरश्चेत्यर्थः । नन्वेवं व्याख्यानेऽग्रिमदोषासङ्गतिः । तेनाप्यप्लुतवद्भावस्यैव प्रतिपादनेन पौनरुक्त्यादत आह—प्रका-

### सरला ।

दूरात्सम्बोधकत्वाभावादिति । अनुकरणस्य अनुकार्यशब्दरूपार्थबोधकत्वादिति भावः । मूले नादर्तव्येति । केचित्तु आदरार्थे बहुवचनान्तं 'पुत्राः' इति स्वीकृत्य इतिशब्देन सह सन्धेरार्षत्वं समर्थयन्ते ।

द्विवचनमिति । "सुप्तिङन्तम्" ( पा०सू०१।४।१४ ) इति अन्तग्रहणेन "सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति" इति ज्ञापितत्वादिति भावः । तेनेह न । कुमार्योर्वध्वोश्चागारं कुमार्यगारं वध्वगारमिति । स्पष्टं चेदं भाष्यादौ । द्विवचनान्तं प्रगृह्यं स्यादिति तु प्राचः प्रमाद एव । हरी एताविति । इह शाकलं न । प्लुतप्रगृह्या–" ( पा०सू०६।१।१२५ ) इत्यत्र नित्यग्रहणादित्युक्तम् । अत्र वृत्तिकारः—"मणीवादिनां प्रतिषेधो वक्तव्यः" इति पठित्वा मणीव, रोदसीव, दम्पतीव, जम्पतीवेत्युदाजहार । तच्च मुनित्रयानुक्तत्वादप्रमाणमिति कैयटहरदत्तादयः । एवं स्थिते—

"मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम" ॥

इति भारतप्रयोगं समर्थयते—इवार्थ इति । वशब्द इति ।

"वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्" इति मेदिनी ॥

"व वा यथा तथैवैवं साम्ये" इत्यमरग्रन्थव्याख्यावसरे "शात्रवं व पपुर्यशः"

---

शब्दरत्नम् ।

कुमार्योरिति । अत्र हि प्रत्ययलक्षणेन द्विवचनान्तत्वं श्रुत्वा चेदन्तत्वमस्तीति भावः । इदं च द्विवचनान्तमीदन्तमित्यर्थो । ईदन्तं यद् द्विवचनं तदन्तमित्यर्थे तदन्तविध्यसम्भव एव दोषो बोध्यः । इत्युक्तमिति । मूले इति शेषः । शात्रवं वेति । शात्र·

भैरवी ।

ऽवैदिकेतिशब्दपरत्वमित्यत्र किम्मानमिति चेत् ? "उपस्थित इत्युच्यते, किमुपस्थितन्नाम ? अनार्ष इतिकरण" इति भाष्यमिति गृहाण ।

इदञ्चेति । कुमार्यगारमित्यत्रातिप्रसङ्गकथनं चेत्यर्थः । असम्भव एव । संज्ञाविधाविति निषेधादिति शेषः । एवकारेण प्रगृह्यसंज्ञाप्राप्तिनिरासः । इत्युक्तमिति कथनमात्रेण मूलोक्तस्यैव टीकायाम्पुनः कथने पौनरुक्त्यमिति या शङ्का तस्या निरासो न जातोऽत आह—मूल इति शेषः । तथाच पुनः स एवार्थो नोच्यते, किन्तु मूलोक्तार्थस्य दार्ढ्याय स्मरणं क्रियते

भावप्रकाशः ।

रान्तरेणेति । तथाचोपायांशेभेदो नतूपेयांशे, अत एव 'चतुर्द्धा' इत्युक्तिसङ्गतिरिति भावः ।

प्राचोक्तस्य तथा व्याख्याने दोषं स्पष्टयति—अत्रहीति । चेदन्तत्वमिति । ईदन्तत्वादिकं चेत्यर्थः । एवमग्रेपि । प्राचोक्तस्येदाद्यन्तं यत् द्विवचनं तदन्तमितिव्याख्याने उक्तदोषस्योद्धारेण प्राचोक्तं सम्यगेवेति तदुक्तिनिरासायाह—इदञ्चेति । शब्दरूपविशेष्ये खले कपोतन्यायेनोभयोरन्वय इति भावः । इत्यर्थे इति । प्राचोक्तस्येति भावः । सम्भवएवेति । उक्तनिषेधात् । एतेनोक्तदोषनिरासः । एवञ्चात्रायमेव दोषः, पूर्वत्रायमतिव्याप्तिश्च । एतेन द्विवचनान्तं यदीदूदेत्तदन्तमित्यपि पक्षो निरस्त इति भावः । द्विवचनं च तदन्तं च स्वरूपं चेति प्रकाशखण्डनकृदादिव्याख्यानं तु न युक्तिसहमिति दिक् । इत्युक्तमित्याधिक्याद्व्याख्यानेऽनुक्तत्वाच्चाह—मूले इति । तथाच तत्रोक्तमेव दार्ढ्याय स्मारितमित्यपौनरुक्त्यमिति भावः । 'वंप्रचेतसि' इति मेदिनीव्याख्यावसरे 'सत्या भामा' इत्यादिवदिवार्थे वशब्दप्रयोग

सरला ।

इत्यर्थे इति । तत्रार्थे हि प्रगृह्यसंज्ञायामीदन्तस्य साक्षादुद्देश्यत्वेन संज्ञानिष्ठविधेयतया साक्षान्निरूपिता या उद्देश्यता तादृशोद्देश्यताप्रयोजकप्रत्ययबोधकं पदं तदन्तबोधकं नेत्यर्थक "संज्ञाविधौ" इति निषेधस्याप्रवृत्तेस्तदन्तविधिना तादृशार्थसिद्धिः । असम्भव एवेति । तत्रार्थे तु द्विवचनपदस्यैव साक्षादुद्देश्यताप्रयोजकत्वेन तन्निषेधप्रवृत्त्या तदन्तविध्यसम्भव एवेति तादृशार्थस्यैवासम्भव इति भावः ।

इति कालिदासप्रयोगस्याभियुक्तैरुदाहृतत्वात् । "कादम्बखण्डितदलानि व पङ्कजानि" इत्यादिदर्शनाच्चेति भावः । यत्तु पाठान्तरं "वद्वा यथा तथा" इत्यादि; तदयुक्तम् , नामलिङ्गानुशासनप्रक्रमे तद्धितवतेरननुगुणत्वात् अपत्यसमूहादिपर्यायमध्ये ऽण्-फिञ्वुञादीनामनुक्तेश्च ॥

अदसो मात् ( पा०सू०१।१।१२ ) ॥ इह एकारो नानुवर्तते असम्भवात् । इत्यभिप्रेत्याह–ईदूताविति । ननु उकारानुवृत्तिर्व्यर्था । स्त्रियौ फले वा अमू आसाते इत्यत्र पूर्वेणैव सिद्धेः, मुत्वस्यासिद्धत्वे ऽप्येकारान्तत्वादत आह–रामकृष्णाविति । पुंसि पूर्वेण न सिध्यति, औकारान्तत्वादिति भावः । "अदसो मात्" ( पा० सू०१।१।१२ ) इति सूत्रं प्रति तु मुत्वमीत्वे नासिद्धे, आरम्भसामर्थ्यात् । एकारोऽपीति । तथा च एकाराननुवृत्तितात्पर्यग्रहणफलकं माद्ग्रहणमिति भावः । अत्रेदं चिन्त्यम् । ईदूत्सप्तम्यर्थे प्रगृह्यम् , अदसः, एच्च द्विवचनमित्येव कुतो न

---

शब्दरत्नम् ।

वं यथा इवेत्यर्थः । ववेत्यादिकोशप्रदर्शनेन वशब्द इव पर्यायः स्वतन्त्र एव न तु सत्या भामादिवत् एकदेश इति सूचयति । "विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्यः " इति वचनेन तादृशस्थले तथाकल्पने ऽप्यखण्डे पदे तथात्वे मानाभावात् ।

आरम्भसामर्थ्यादिति । ननु कार्यकालपक्षे ऽनुनासिकप्रतिषेधेन चारितार्थ्यं, तत्पक्षे हि संज्ञाशास्त्रस्य न पृथग् बोधकत्वं, "पूर्वत्रासिद्धम्" (पा०सू०८।२।१) इति

भैरवी ।

ऽतो न पौनरुक्त्यम् । "वम्प्रचेतसि" इति मेदिनीकोशव्याख्यानावसरे 'सत्या' 'भामा' इतिवदिवार्थे वशब्दप्रयोग इति तद्व्याख्यात्रोक्तं तन्न युक्तमित्याशयेनाह—ववेत्यादीति । कोशान्तरमात्रेण निर्णयाभावादाह—विनापीति । तादृशस्थले—सखण्डस्थले । तथाकल्पने—लोपस्य कल्पने ।

मूलोक्तमारम्भसामर्थ्यादित्यनुपपन्नमित्याशयेनाशङ्कते—नन्विति । न पृथग्बोधकत्वमिति । लक्ष्यसंस्कारकपृथग्बोधजनकत्वन्नास्तीत्यर्थः । अत्र मानन्तु "अयादिभ्यः परत्र प्रगृह्यसंज्ञा" इति भाष्यमेवेति । अत्र "अदसो मात्" इति सूत्रस्थभाष्ये संज्ञापदोपादानेन संज्ञाविषये

भावप्रकाशः ।

इति व्याख्यातमिति मान्योक्तिस्तदनुरोधेनैवेति ध्वनयन्नाह—ववेत्यादीति । कोशस्यानिर्णायकत्वादाह—विनापीति । तादृशेति । सखण्डेत्यर्थः । तथात्वे लोपे ।

कार्यकालपक्षेऽपि प्रकृतिभावसम्पादनेनाचारितार्थ्यादाह—अनुनासिकेति । तदुपपादयति—तदित्यादि । हि–यतः । सञ्ज्ञेति । अनेन परिभाषाणां तथाऽस्तीति सूचितमन्यत्र स्पष्टं च । बोधकत्व-

सरला ।

उच्छृङ्खलास्तु "संज्ञाविधौ" इति परिभाषा फलाभावान्न स्वीक्रियते इति प्रकृते तादृशार्थस्य सम्भव एव । तथाच 'कुमार्यगारम्' इत्यादौ ईकारान्तद्विवचनाभावेन न दोषः । न च "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति व्युत्पत्तिविरोधेन द्विवचनान्तैकदेशे द्विवचनमात्रेऽर्थे ईदाद्यन्तं नान्वेतुमर्हतीति वाच्यम्, 'गम्भीरायां नद्यां घोषः' इत्यत्रेव द्विवचनपदस्यैव ईदाद्यन्तं यद् द्विवचनं तदन्ततदादिपरकत्वेन 'ईदूदेत्' इत्यस्य च तात्पर्यग्राहकत्वस्वीकारेणादोषादिति वदन्ति ।

मूले इति । "प्लुतप्रगृह्या अचि नित्यम्" इति सूत्रे इति शेषः ।

सूत्रितम् । एवं हि पूर्वसूत्रस्थमीदूद्ग्रहणं प्रकृतसूत्रे मादग्रहणं च मास्तु । एकदेशानुवृत्तिक्लेशोऽपि नेति ॥

---

शब्दरत्नम् ।

चातिदेशः कार्यार्थः, कार्यज्ञानं च वाक्यार्थबोधोत्तरमिति यद्देशे वाक्यार्थबोधस्तद्देशस्थत्वमेव तस्य । किं च अधिकारः सः । एवं च मुत्वदृष्ट्या अनुनासिकविधेरसिद्धत्वेन तदेकवाक्यतापन्नसंज्ञाया अपि तद्दृष्ट्या ऽसिद्धतया मुत्वशास्त्रे ऽनुवृत्तपूर्वत्रासिद्धमित्यत्रत्यपूर्वशब्देन तदेकवाक्यतापन्नस्य "अदसो मात्" (पा०सू०१।१।१२) इत्यस्य ग्रहीतुमशक्यत्वम् । एतेन कार्यकालपक्षेऽपि पाठकृतपूर्वत्वस्यानपगमेनन संज्ञां प्रत्यसिद्धत्वं दुर्वारमित्यपास्तमिति चेत् ? न, अप्रगृह्यादस इति न्यासेनैव सिद्धौ सामान्यसंज्ञासूत्रकरणसामर्थ्येन "प्लुतप्रगृह्या" (पा०सू०६।१।१२५) इत्यत्राप्युपस्थित्या तत्सामर्थ्येनासिद्धत्वबाधात् । हेऽमुकाऽमुक इत्यादौ व्यवस्थितविभाषाश्रयणात्तयोरनभिधानाद्वा सूत्रमतेऽपि नानुनासिक इत्याशयात् । स्पष्टं चेदं भाष्ये ॥

भैरवी ।

प्रदेशीयपरत्वेनैव व्यवस्थेति दर्शितम् । तस्य—प्रगृह्यसंज्ञाविधायकशास्त्रस्य । नन्विदमभवदुक्तं कार्यासिद्धत्वपक्षे, तत्तु न युक्तम् शास्त्रासिद्धत्वस्यैव प्राग्व्यवस्थापनादतस्तत्पक्षेऽप्याह—किञ्चाधीति । संज्ञाया अपीति । कार्यकालत्वादिति शेषः । अशक्यत्वमिति । किन्तु सिद्धस्यैव पूर्वशब्देन बोधनं युक्तमिति शेषः । एतेन—अष्टाध्यायीपाठकृतपूर्वत्वस्य पूर्वत्रासिद्धमिति शास्त्रप्रवृत्तावनियामकत्वेन । एतावता ग्रन्थेन सामर्थ्यादित्यनुपपन्नमित्युपपाद्य समाधत्ते—अप्रगृह्येति । नन्विदमप्रगृह्यादस इति कथनं यथान्यासपक्षे यथाफलसिद्धिस्तथैव चेत् युक्तं, तथा ऽधुना न सिध्यति 'हेऽमुका ३ अमुक इत्येतयोरपि प्रतिषेधः प्राप्नोतीत्यत आह—हेऽमुकेति । अस्मिन्पक्षे वाक्यभेदेनाप्रगृह्यस्यादसो ऽनुनासिको नेति सूत्रार्थादत्राप्राप्तिरिति भावः । ननु व्यवस्थितविभाषा परिगणितस्थल एवेत्यत आह—अनभिधानेति । भाष्ये इति—प्रकृतसूत्रस्थे ।

भावप्रकाशः ।

मिति । लक्ष्यसंस्कारकमित्यर्थः । किन्तु प्रदेशवाक्येन सहैवेति भावः । एतेनानिष्पत्तेरित्यत्रत्य स्वग्रन्थविरुद्धमित्यपास्तम् । अत एवायादिभ्यः कार्यकालपक्षे परैव प्रगृह्यसंज्ञेत्येवघटितम् "अदसोमात्" इतिसूत्रभाष्यं सङ्गच्छते । ननु किन्तावतेत्यत आह—पूर्वत्रेति । चो, हेतौ । कार्यार्थ इति । एवञ्च तज्ज्ञानोत्तरमेव तत्प्रवृत्तिरुचितेति भावः । तदाह—कार्येति । यद्देशे प्रदेशदेशे । तस्य संज्ञाशास्त्रस्य । एवञ्च तस्यैवासिद्धत्वेन पूर्वपदेनाग्रहणात् पूर्वत्रेत्यप्रवृत्तौ मुत्वादीनां सत्वेन प्रगृह्यत्वादनुनासिकनिषेधेन साफल्यमिति भावः । ननु शास्त्रासिद्धत्वस्य सिद्धान्तितत्वान्नैवं वक्तुं शक्यम् । अत एव मुत्वशास्त्रे इत्यादि वक्ष्यति व्याख्यायामत आह—किञ्चेति । स इति । पूर्वत्रेत्यतिदेश इत्यर्थः । तत्त्वं च प्रागुक्तम् । एवञ्चेति । अधिकारत्वे चेत्यर्थः । अशक्यत्वमिति । सिद्धशास्त्रस्यैव तेन ग्रहणात् । एवञ्च साफल्येन सामर्थ्यमयुक्तमेवेति भावः । एतेनेति । उक्तभाष्याभिमतप्रागुक्तव्याख्याने संज्ञास्थले क्वचित् । विद्यमानस्यापि पाठकृतपूर्वत्वस्य पूर्वत्रेत्यादिप्रवृत्तावनियामकत्वसूचनेनेत्यर्थः । अपिर्यथोद्देशसमुच्चायकः । तत्र यथास्ति एवमत्रापीति भावः । नह्येकमिति न्यायावष्टम्भेन समाधत्ते—अप्रगृह्येति । "अणोऽप्रगृह्यादसोनुनासिकः" इति न्यासेनेत्यर्थः । एवः संज्ञासूत्रनिरासाय । तत्सामर्थ्येन—उपस्थितिसामर्थ्येन । असिद्धत्वेति । मुत्वादेरिति भावः । ननु यथान्यासे समुत्वलक्ष्य एवानुनासिकाभावो नान्यत्र । तथान्यासे तु 'हेऽमुक' इत्यादावपि तदापत्तिः । प्रगृह्यादसोऽणं वर्जयित्वेत्यर्थात् । एवं च फलभेदे कथं तन्न्यासेन सिद्धिरत आह—हेऽमुकेति । यत्तु अदस इत्यावर्त्य नविद्यते दस्य स्थाने सो यस्य तादृशादस इत्यर्थेनानुनासिको भवत्येवेति । तन्न, आवृत्तौ मानाभावात् । अत आह—व्यवस्थितेति । तदप्रामाणिकत्वे आह—तयोरिति । सम्बोधनाभावस्यान्यत्र क्लृप्तत्वादेतद्भाष्यस्यापि तथैवोपपत्तावाशयान्तरकल्पने न मानमिति भावः । भाष्ये इति । अत्र सूत्रे इत्यर्थः ।

शे ( पा०सू०१।१।१३ ) ॥ छान्दसमपीदं संदर्भशुद्ध्यर्थमुक्तम् । वस्तुतस्त्व-नुकरणार्थतया लोकार्थमपि सम्भवत्येव ?त्वे रायो मे राय इत्यादौ त्वे इति, मे इति, इत्यनुकरणे प्रयोजनलाभात् । अस्मे इति—अस्मभ्यमित्यर्थः । भ्यसः "सुपां सुलु-क्" ( पा०सू०७।१।३९ ) इति शे आदेशः । "शेषे लोपः ( पा०सू०७।२।९० ) ॥

"निपात" (पा०सू०१।१।१४) अनाङिति पर्युदासादेवाङ्रूपनिपाते लब्धे नि-पातग्रहणमुत्तरार्थं स्पष्टार्थमिहैव कृतम् । आ एवमिति । पूर्वं प्रक्रान्तस्य वाक्या-र्थस्यान्यथात्वद्यो तकोऽयमाकारः । पूर्वमित्थं नामंस्था इदानीं त्वेवं मन्यसे इत्यर्थः । आ एवं किलेति । स्मरणद्योतकोऽयमाकारः । वाक्येत्यादि । तथा च भाष्यम्—

ईषदर्थे क्रियायोगे मर्यादाविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ १ ॥ इति ।

---

शब्दरत्नम् ।

छान्दसमिति । शे आदेशस्य च्छान्दसत्वादिति भावः । मे इतीत्यनुकरण इति । प्रकृतिवदनुकरणमित्यतिदेशेन पदत्वात्पदान्तत्वप्रयुक्तः प्रकृतिभावस्तत्र । तेनाति-देशेन प्रगृह्यत्वं तु न, त्वे राय इत्यादावनुकार्ये फलाभावेन प्रगृह्यत्वाप्रवृत्त्या तदनुकरणे ऽतिदेशेनासिद्धयोपदेशप्रवृत्तिरेव वाच्येति भावः ॥

अन्यथात्वेति । अनभिमतत्वेत्यर्थः । तदाह—नामंस्था इति । स्मरणेति ।

भैरवी ।

तत्र हि—"तत्रैवायमब्रूयादणोऽप्रगृह्यस्यानुनासिकः अदसो न" इत्युक्तम् ।

यत्तु तद्भाष्यस्य "अदस" इत्यावर्त्य न दस्य सो यस्येत्यर्थेनोक्तप्रयोगयोन निषेधस्य प्राप्तिरिति, तन्न । आवृत्तिकल्पने, तत्र व्यधिकरणबहुव्रीहिकल्पने, च, गौरवात् ।

"शे" इति सूत्रे 'छन्दसि' इत्युपादानाभावाच्छान्दसमपीदमित्यनुपपन्नमत आह—शे आदेशस्येति । नन्वपदत्वादनुकरणे कथम्फलमत आह—प्रकृतीति । नन्वतिदेशेन प्रगृह्यत्वस्यापि सिद्धौ सूत्रस्य तर्हि वैयर्थ्यमत आह—तेनातिदेशेनेति । फलाभावेनेति । अच्परत्वस्याभावेन प्रकृतिभावो न फलम् । एवमवसानाभावेनानुनासिकाप्राप्त्या तन्निषेधोऽपि न फलम् ॥

ननु वाक्यार्थस्य भेदाभावेनान्यथात्वेत्यसङ्गतमत आह—अनभीति । ननु "एवङ्किल

भावप्रकाशः ।

ननु छन्दसीत्यस्याप्रकृतत्वात् कथं तत्त्वमत आह—शे इति । अनुकरणत्वभङ्गभिया सन्धिकार्या-करणम् । ननु अपवादत्वात्कथमनुकरणे फलमिति तद्वैयर्थ्यमेवात आह—प्रकृतीति । कार्यातिदेशेने-त्यर्थः । अभेदविवक्षायामर्थवत्त्वाभावादिव भेदविवक्षायां तेनातिदेशेन पदत्ववत् प्रत्ययान्तत्वस्यापि लाभे-नाप्रातिपदिकत्वेन सुबनुत्पत्तेरिति भावः । तेनेति । एवञ्च लोकार्थं नेदं सूत्रमिति भावः । तुनेति । दुर्वचत्वादिति शेषः । तदेवोपपादयति—त्वे राय इति । फलाभावेनेति । सर्वथा फलाभावेनेत्यर्थः । एतेनात्र परममूले वैदिकमात्रोदाहरणदानमनवधानादिति खण्डनकृदुक्तिः परास्ता, व्याख्याने तस्यापि उक्तेः । एवेनातिदेशप्रवृत्तिनिरासः ।

ननु वाक्यार्थस्य तस्यैव सत्त्वेन नान्यथात्वमत आह—अनभीति । एवं किल नदिति स्मृतार्थनिर्दे-

सरला ।

पदान्तत्वप्रयुक्तः प्रकृतिभाव इति । इदमनुपदमेव मूले वक्ष्यते इति तत एवावगन्तव्यम् ।

मूले स्पष्टार्थमिति । "निपात एकाजनाङ्" इति सूत्रे निपातग्रहणाभावे "आङ्भिन्न आङ्सदृशो य एकाच्"इत्यर्थे आङ्सादृश्यस्य कदाचिदर्थवत्त्वेनापि ग्रहणे 'चकारात्र' इत्यत्र णल्प्रत्ययस्यार्थवत्त्वादेकाज्रू-पत्वाच प्रगृह्यसंज्ञापत्त्या प्रकृतिभावापत्तिः स्यात् । कृते तु तद्ग्रहणे 'निपातत्वेनैवात्र सादृश्यं गृह्यते' इति स्पष्टप्रतिपत्तिर्भवतीति भावः ।

अत्र अङिल्लक्षण एव तात्पर्यं लाघवात् । अन्यस्य ङित्त्वं त्वर्थसिद्धम् । ईषद-र्थेत्यादिस्तु अवयुत्यानुवादः । एवं च अभ्र आँ अप इत्यत्र सप्तम्यर्थवृत्तेरप्याकार-स्य ङित्त्वात् "आङोऽनुनासिकश्छन्दसि" ( पा०सू०६।१।१२६ ) इति प्रवर्तत इति भावः ॥

"ओत्" ( पा०सू०१।१।१५ ) ॥ निपातः किम् ? देवोऽसि । वायवायाहि ।

संबुद्धौ ( पा०सू०१।१।१६ ) ॥ ऋषिर्वेदः "तदुक्तमृषिणा" इत्यादौ तथा दर्शनादित्यभिप्रेत्याह—अवैदिक इति । सम्बुद्धौ किम् ? अहो इति । अत्र परत्वा-

शब्दरत्नम् ।

विस्मृतस्य स्मरणविषयताद्योतक इत्यर्थः । मर्यादाभिविधावित्यत्र मध्यमपदलोपी समासः । तत्सहिते ऽभिविधावित्यर्थः । सप्तम्यर्थेति । तद्वृत्तित्वं च तस्य निरुक्ते स्पष्टम् । अव्ययीभावाभावश्च श्रुतौ छान्दसत्वाद् बोध्यः ।

अत्र परत्वादिति । न चैतदभावे नित्यविधिर्दुर्वारः । इतिशब्दातिरिक्ते "ओत्" (पा०सू०१।१।१५) इत्यस्य, निपातातिरिक्ते "सम्बुद्धौ–" (पा०सू०१।१।१६) इत्यस्य चारितार्थ्येन सामर्थ्याभावात्, एवं च फले ऽविशेष इति वाच्यम् । परत्वेन विकल्पप्रवृ-त्तावभावपर्यन्तमप्यस्य व्यापारेण सकृद्गतिन्यायेन "ओत्" (पा०सू०१।१।१५) इत्यस्य तदभावे ऽप्रवृत्तेः । अत एव "न यदि" (पा०सू०३।२।११३) "विभाषा साकाङ्क्षे"

भैरवी ।

तत्" इत्यनेन स्मृतोऽर्थो निर्दिश्यते, न तु स्मरणं द्योत्यते ऽत आह—विस्मृतस्येति । "मर्या-दाभिविधौ" इत्येकवचनस्योपपत्तये आह—मध्यमेति । तद्वृत्तित्वं सप्तम्यर्थवृत्तित्वम् । निरुक्ते इति । तत्र हि—"अभ्रे आँ अपः, अपोऽभ्रेऽधि" इत्युक्तम् । विभक्त्यर्थे विहिताव्ययीभावस्य नित्यस्य प्राप्तिशङ्कायामाह—अव्ययीति ॥

मूले परत्वादित्यस्य "ओत्" इति सूत्रापेक्षयेत्यादिः । परत्वस्य शास्त्रद्वयचरितार्थ एव प्रवृत्तिनियामकत्वमित्याशयेन तद्दर्शयति—इतिशब्दातिरिक्त इति । एवञ्च विकल्पेन संज्ञाविधा-यकशास्त्रसामर्थ्यन्नास्तीति "सम्बुद्धौ" इत्यस्य वैयर्थ्यमित्याशयः । अत एव—विकल्पाभावे

भावप्रकाशः ।

शादाह—विस्मृतेति । इदमर्थलब्धम् । मध्यमपदेति । अन्यथेतरेतरद्वन्द्वे द्विवचनापत्तिः, समाहारे नुमापत्तिः । गतिसम्भवे लिङ्गव्यत्ययकल्पनादिकं नोचितमिति भावः । एतेनान्त्ये आगमशास्त्रस्यानित्य-त्वान्नुमभाव इति हरदत्तप्रकाशाद्युक्तमपास्तम् । तस्यासत्त्वादिति बोध्यम् । निरुक्ते इति । "अभ्रे आ अपः अपोभ्रऽधि" इति तत्रोक्तम् । अव्ययीभावेति । विभक्तीति विहितेत्यादिः ।

परत्वादितीति । अन्यथोभयत्र विभाषात्वापत्तिः, इष्टन्त्वप्राप्तविभाषात्वमिति भावः । "साक्षात्प्रभृ-ति" इति सूत्रभाष्यरीत्या शङ्कते—नचैतदभावे इति । शाकल्यस्येति सूत्राप्रवृत्तावित्यर्थः । पक्षे इति यावत् । ननु पाक्षिकसंज्ञाविधायकविकल्पशास्त्रवैयर्थ्यापत्त्या स नेत्यत आह—इतीति । ओदित्यस्येत्य-न्ता दृष्टान्तोक्तिः । सम्बुद्धाविति सिद्धान्तरीत्योक्तिः । एवं चेति । तस्य तत्र दुर्वारत्वे चेत्यर्थः । तत्सत्त्वा-सत्त्वयोस्तु युक्तरूपस्यैव फलितत्वेनाप्राप्तविभाषात्वमेव फलितमिति न तदापत्तिरनिष्टेति सम्बुद्धिग्रहणं व्यर्थमेवेति भावः । पुनःप्रसङ्गविज्ञानाश्रयेण चोद्यं विधेयैक्यात्सकृद्गतिन्यायाप्राप्तिरित्याशयः । उभयत्र-विभाषात्वं समर्थयन्फले विशेषं प्रतिपादयति—परत्वेनेति । तदंशभूतप्राप्तविभाषाप्रवृत्तावित्यर्थः । अपि-रंशान्तरे संज्ञासमुच्चायकः । अस्य विकल्पस्य । व्यापारेण तत्सम्भावनया । ननु पक्षे संज्ञा भवति तदभावश्चेति वाक्यार्थसम्पत्त्या तत्पक्षे तदभावसिद्धावपि तदभावपक्षे स्यादेवात आह—सकृदिति । अत एव सम्बुद्धिग्रहणं सफलम् । तावतैव च विधेयभेद इति भावः । अत एवेति । अप्रवृत्तेरेवेत्यर्थः ।

द्विकल्पो मा भूत्। यत्तु "ओत्" इत्यत्र निपातानुवृत्तेरिह च संबुद्धिग्रहणस्य प्रत्यु-दाहरणं वृत्त्यादावुक्तं गवित्ययमाहेति। तन्न, तत्र प्रगृह्यसञ्ज्ञासत्त्वेऽपि प्रकृतिभा-

शब्दरत्नम्।

(पा॰सू॰३।२।११४) इति सूत्रे निषेधीयोभयत्रविभाषेति सङ्गच्छते। अन्यथा परत्वादे-तत्प्रवृत्तावप्यनेन निषेधाभावे पूर्वसूत्रस्य दुर्वारत्वेन सा दुर्लभा स्यात्। न च "आक-डार" (पा॰सू॰१।४।१) सूत्रेणान्यत्र संज्ञानां बाध्यबाधकभावाभावस्य ज्ञापितत्वात्पर-त्वाद्विकल्प इत्यसंगतमिति वाच्यम्। संज्ञाया एकत्वात्, ज्ञापकस्य च विशेषापेक्षत्वेन संज्ञाभेदविषयत्वादिति भाव इति केचित्। परे तु "ओत्" (पा॰सू॰१।१।१५) इत्य-

भैरवी।

नित्यस्याप्रवृत्तेरेव। अन्यथा—वैकल्पिकशास्त्राभावे नित्यस्य प्रवृत्तिस्वीकारे। निषेधीयेत्य-नेन निषेधस्य प्राप्तिपूर्वकत्वेनैतदभावे "न यदि" इति पूर्वस्य प्राप्तिसत्त्वेनोभयत्रविभा-षात्वमस्य दुर्लभं स्यादित्युक्तम्। प्रगृह्यसंज्ञाया आकडारीयत्वाभावेन परत्वादित्यसङ्गतमि-त्याशयेन शङ्कान्निरस्यति—नचेत्यादिना। अन्यत्र—तदधिकाराभावस्थले। केचिदिति। मूलका-रानुयायिनः। अनेनारुचिर्बोधिता। तथाहि-तज्ज्ञापकं संज्ञाया भेदविषयकत्वएवेति यदि ब्रूषे तदा "साक्षात्प्रभृति" इतिसूत्रस्थभाष्यविरोधः। तत्र हि-"च्व्यन्तस्य प्रतिषेधो वाच्यः, लवणीकृत्य, नवा पूर्वेण कृतत्वादस्त्वनेन विभाषा पूर्वेण नित्यो भविष्यति" इत्युक्तम्भाष्य-कृता। तत्र कैयटः—'अत्र परत्वादनेन विभाषा प्राप्नोति नित्या च गतिसंज्ञा इष्यत' इति। सा च पुनःप्रसङ्गविज्ञानात्कल्पनीया। एकसंज्ञाविषये ऽभावपर्यन्तं व्यापारेण विकल्पाभावे

भावप्रकाशः।

निषेधीयत्वसम्पत्तये आह—न यदीति। तदग्रे पठ्यमानमित्यर्थः। निषेधीयेति। निषेधसम्बन्धिनी तत्प्राप्त्यप्राप्तिपूर्विकेत्यर्थः। "नवा" इतिसूत्रे भाष्यकैयटादिभिस्तत्त्वेन द्वितीयकल्पत्वेनोक्तेति भावः। प्रागुक्तहक्रोरिति त्यागस्तु प्रतिपत्तिगौरवेणेति बोध्यम्। निषेधेति। विभाषेत्यनेन पाक्षिकनिषेधविधान-मिति भावः। पूर्वसूत्रेति। नयदीत्यस्येत्यर्थः। दुर्लभेति। अप्राप्तविभाषात्वस्यैव बलादिति भावः। नान्यत्र—तदधिकारबहिर्भूते। चस्त्वर्थे। केचिदिति। मूलानुयायिनो मान्या इत्यर्थः। अत्रारुचिबीजं तु "साक्षात्प्रभृति" इति सूत्रस्थभाष्यविरोधः। तथाहि, "च्व्यन्तस्य प्रतिषेधो वाच्यः। लवणीकृत्य। न वा पूर्वेण कृतत्वादस्त्वनेन विभाषा, पूर्वेण नित्यो भविष्यति" इति भाष्यम्। "लवणीकृत्येति। अत्र हि पर-त्वादनेन विभाषा प्राप्नोति नित्या च गतिसंज्ञेष्यते। पूर्वेणेति। पुनःप्रसङ्गविज्ञानादिति भावः" इति कैयटश्च। "पुनःप्रसङ्गेति परत्वाद्विकल्पेऽपि तदभावे नित्यविधिप्राप्त्या न दोष इति भावः। नच प्राप्तविभा-षाविषये वैकल्पिकाभावे नित्याङ्गीकारे विकल्पशास्त्रवैयर्थ्यापत्तिः, अच्व्यन्ते चारितार्थ्यात्" इत्युद्द्योतश्च। नचाद्ययेतिसूत्रभाष्यकैयटविरोधः, तत्र हि यत्र पूर्वविधेः परप्रवृत्तिविफलत्वं न तत्र पुनःप्रसङ्गेतिप्रवृत्ति-रित्युक्तमिति वाच्यम्। भाष्यस्यान्यथापि सुयोजत्वात्, एतद्भाष्यकैयटविरोधाद् "ई च द्विवचने" इत्यत्रत्य-भाष्यादिविरोधाच्च तत्रत्यकैयटस्य चिन्त्यत्वाच्च। स्पष्टञ्चेदं मत्कृतपरिभाषेन्दुशेखरव्याख्याने। एवञ्च यथा तत्र वार्तिकं प्रत्याख्यायते तथेह सम्बुद्धिपदमपि त्याज्यम्। अस्यानुरोधे तदपि कार्यम् अप्राप्तविभा-षायां तस्यैवाभावेऽपि प्राप्तविभाषायां विकल्पानर्थक्यापत्त्या यथा स न, एवमुभयत्रविभाषात्वोच्छेदापत्त्या तत्र पाक्षिकभावाभावतात्पर्यके स नेति दृष्टान्ते भाष्योक्तानङ्गीकारैतदङ्गीकारयोरपि सिद्धान्तेऽनयोरप्राप्तवि-भाषात्वेन तुल्यत्वात्। "सिद्धस्य गतिश्चिन्तनीया" इति न्यायेन वैषम्यं तु न, परेत्वित्यादिना गत्वेवंदय-

सरला।

अभावपर्यन्तमपीति। "संबुद्धौ शाकल्यस्येतावनार्षे" इत्यस्य प्राप्तविभाषात्वेनात्र प्रगृह्यसंज्ञाया "ओत्" इत्यनेनैव सिद्धतया तस्या अपूर्वबोध्यत्वाभावेन तत्सामानाधिकरण्येन तदभावस्यैव विधेयताप-र्यवसानात्। एवमेव सर्वत्र प्राप्तविभाषासु भावसमानाधिकरणोऽभावो विधीयते इति बोध्यम्।

वाप्रसक्तेः । "इकोऽसवर्ण" (पा०सू०६।१।१२७) इत्यत्र हि पदान्तग्रहणमनुवर्त्तत इत्याकरे स्पष्टम् । एवं च "प्लुतप्रगृह्या" (पा०सू०६।१।१२५) इति सूत्रे तत्सम्बन्ध

---

### शब्दरत्नम् ।

स्येतिशब्दनिरपेक्षत्वेनान्तरङ्गत्वमिति परत्वं न युक्तं "सम्बुद्धौ" (पा०सू०१।१।१६) इति तु निपातपदानुवृत्तये । अन्यथौदन्तनिपातस्यैवैतौ विकल्पापत्तिः । नित्यविकल्पविध्यो र्युगपत्प्रवृत्तावपि विरोधाभावेन परत्वादित्यस्यासङ्गतेः।एवं च परत्वादित्यस्योत्कृष्टत्वादप· वादत्वादित्यर्थः । ओद्ग्रहणानुवृत्त्यैव सिद्धे पुनरोद्ग्रहणेनापि तन्निवृत्तिसिद्धौ वैचित्र्यार्थमेव

### भैरवी ।

नित्यस्याप्राप्तिरिति यदि स्वीकारस्तदा तत्रत्यवार्तिकस्यावश्यकतया तत्प्रत्याख्यानविरोधः स्पष्ट एव ।

ननु तर्हि कथम्मूलस्य सङ्गमनमत आह—परेत्विति । ननु सम्बुद्धाविति तर्हि व्यर्थं स्या- दत आह—सम्बुद्धाविति त्विति । अन्यथा—निपातपदानुवृत्तिस्वीकारे । तथा च निरवकाशत्वा- त्प्राप्तविभाषैव स्यादित्यत्र तात्पर्यम् । अभावपर्यन्तमपि व्यापार इति कल्पनायाम्मानाभाव इति भावः । उत्कृष्टत्वादिति । निरवकाशत्वेनेति भावः । ननु यदि निपातपदानुवृत्तितात्पर्यकं सम्बुद्धिग्रहणं, तदा तन्न कार्य्यम् सम्बुद्धिपदन्त्यक्त्वा प्रकृतसूत्रेऽप्योद्ग्रहणङ्कार्यं, तत्साम- र्थ्यादेव निपातपदानुवृत्तिः सिध्यतीत्यत आह—ओद्ग्रहेति । वैचित्र्यार्थमिति । वैचित्र्यायेत्यर्थः । स्वार्थस्य विवक्षया सम्बुद्धिनिमित्तकस्यौकारस्य ग्रहणेन तादृशस्थले प्रसक्ताव्याप्तिनिरा- सार्थम् , अन्यथा निपातपदसम्बन्धः स्यात्तथा चाव्याप्तिः स्यात् । निपातपदासम्बन्धे तु स्वरादिपठिते मिथोशब्दे ऽव्यये ऽतिप्रसङ्गस्यापि निरासो भवतीत्येतद्वैचित्र्यार्थमित्यर्थः ।

### भावप्रकाशः ।

मागत्वात् । चारितार्थ्यमुभयोरुभयत्र तुल्यम् । अत एव "ओदित्यस्य" इत्यन्तोक्तिसाफल्यमिति पूर्वपक्षो ऽयुक्त एवेति । तदेतद् ध्वनयन् प्रकारान्तरेण मूलं योजयितुमाह—परे त्विति । संज्ञाकृतं तु तन्नोरीक्रियत इति भावः । ननु सम्बुद्धिग्रहणसामर्थ्यादन्तरङ्गन्यायाप्रवृत्तिरत आह—सम्बुद्धाविति । अन्यथा— सम्बुद्धावित्यस्याभावे । तथा च निरवकाशत्वात्प्राप्तविभाषैव स्यादिति भावः । नन्वेवमपि विनिगमनाविर हात्तथैवास्तु । तदननुवृत्तिस्तु व्याख्यानात् । एवञ्च परत्वं युक्तमेवात आह—नित्येति । धाभावेनेति । उक्तभाष्यरीत्या पक्षे संज्ञाविधानमात्रं, तेन अभावपर्यन्तव्यापारे मानाभावादिति भावः । एवञ्चेति । सर्वथा परत्वासङ्गतौ चेत्यर्थः । उत्कृष्टत्वादिति । निरवकाशत्वेनेति भावः । एवञ्च सैव स्यादिति तात्प र्यम् । ननु स्वार्थाविवक्षया तदननुवृत्तिमात्रफलकमेव सम्बुद्धिग्रहणम् , अन्यथा तत्रैव विकल्पापत्तिः । एवञ्च ओन्मात्रानुवृत्त्याऽस्य सामान्यत्वेन परत्वस्य केचिद्रीत्या सत्त्वेऽपि तत्रोक्तरीत्याऽन्तरङ्गत्वादिष्टसिद्धि रिति चेत्तर्हि व्यर्थमेव तद्ग्रहणम् । अन्यथापि तत्फलसिद्धेः । किञ्च तदभावे तदनुवृत्तावव्याप्तिसम्भवेन तां त्यक्त्वाऽतिव्याप्तिदानं निर्बीजमत आह—ओद्ग्रहणेति । पुनरोदिति । ओत् शाकल्यस्येति न्यास्येनेत्यर्थः । अत्र प्रतिपत्तिलाघवेनेति भावः । अपिः सम्बुद्धिग्रहणसमुच्चायकः । तन्निवृत्तीति । निपातप दानुवृत्तीत्यर्थः । एवञ्च नाव्याप्तिरिति न तद्वारणं नापि तन्निवृत्तिस्तस्य मुख्यं फलमिति भावः । वैचित्र्यार्थमेवेति । अनार्षे इति निषेधानुरोधेन स्वार्थविवक्षया आनुषङ्गिकाव्याप्तिनिरासद्वारार्थिकतद तिव्याप्तितदनुवृत्तिनिरासद्वारा मिथो इतीत्यादौ मुख्यातिव्याप्तिनिरासार्थमेवेत्यर्थः । (१,मिथो इत्यस्य

### सरला ।

अप्राप्तविभाषासु तु विपरीतम्—अभावसमानाधिकरणो भावो विधीयते, न त्वभावांशेऽपि विधेय- त्वम् । अत एव "नॄन्पे" इत्यस्याभावपक्षे 'नॄन्पाहि' इत्यत्राभावस्याविधेयत्वेन "अत्रानुनासिकः" इत्य- नुनासिकः "अनुनासिकात्परोऽनुस्वारः" इत्यनुस्वारश्च न । अन्यथा 'संस्कर्ता' इत्यत्र लोपस्येव 'नॄन्पा-

---

(१) एतदादितत्वमित्यन्तः पाठो न हस्तलिखितपुस्तके ।

आवश्यकः । गविति च न पदम् । अनुकार्यानुकरणयोरभेदविवक्षया अर्थवत्त्वाभावेन विभक्तेरनुत्पादात् ॥

---

शब्दरत्नम् ।

सम्बुद्धिग्रहणमित्याहुः । आवश्यक इति । अन्यथा "इकोऽसवर्णे" ( पा० सू० ६।१।१२७ ) इत्यत्र मण्डूकानुवृत्त्यापत्तिः । सा च सम्बन्धतदभावोभयकल्पनापत्त्या ऽन्याय्येति भावः । अनुत्पादादिति । अत एव तस्याः श्रवणं न । अभेदविवक्षापदार्थश्चार्थवत्सूत्रे निरूपयिष्यते । न च लिङ्गसर्वनामनपुंसकताभ्युपगमेनोत्पन्नाया विभक्तेर्लुक् । ह्रस्वापत्तेः । न च सुप्छपेति समासेन निर्वाहः, इतिशब्दस्य शब्दस्वरूपपरतातात्पर्यग्राहकत्वेन तेनैकार्थीभावरूपसामर्थ्यस्य दुरुपपादत्वात् । न च गोभ्यां गोक्षीरमित्याद्येकदेशगोशब्दानुकरणे "ऋलृक्" सूत्रभाष्योक्तेन "प्रकृतिवदनुकरणम्" इत्यतिदेशेन पदत्वं सुलभमिति

भैरवी ।

मूले-अनुवर्तत इति । "एङः पदान्तात्" इति सूत्रादित्यादिः । अन्यथा—"प्लुतप्रगृह्या" इति सूत्रे तदसम्बन्धे । अत एव "अदसो मात्" इति सूत्रभाष्ये "पदान्तप्रकरणे प्रकृतिभाव" इति भाष्यं सङ्गच्छते । अत एव—विभक्त्यनुत्पत्तेरेव । लिङ्गसर्वनामेति । सर्वनाम इव सर्वनाम लिङ्गानां सर्वनाम लिङ्गसर्वनाम, तस्य नपुंसकतापदेन कर्मधारयः । सर्वनामसादृश्यञ्च-सर्वत्र स्थितिः सत्त्वादिगुणानामस्तीति तन्मात्रविवक्षया सर्वत्र प्रवृत्तिसत्त्वेन । अत एव सन्दिग्धे ऽप्यर्थे नपुंसकलिङ्गस्य शब्दस्य प्रयोगः । स्वरूपपरता-गोशब्दस्य स्वरूपपरता । तेन—इति शब्देन । यत्र हि लौकिकविग्रहे व्यपेक्षालक्षणं सामर्थ्यमस्ति तत्र कल्पिते ऽलौकिकविग्रहे एकार्थीभावारोपात्समासो भवति । प्रकृते च इतिशब्दस्य स्वातन्त्र्येणार्थबोधनाय प्रयोगा-

भावप्रकाशः ।

चादिष्वेव पाठो न स्वरादिषु इति, अहोइत्येतत्तुल्यतैव तत्रेति तु न, आद्युदात्तत्वापत्तेः, ओत्सूत्रभाष्यविरोधापत्तेश्च । स्वरादिष्वेव गणपाठारूढपाठेऽपि मिथो इतीत्यत्र तत्त्वे इष्टापत्तिरेवेत्यपि न, पाणिन्यसम्मतत्वेन फलभेदे भाष्यानुक्तप्रत्याख्यानासङ्गतेः । पूर्वसूत्रे अहो इत्यादेरेकनिपातत्वपक्षे लक्षणेति सन्वारेण प्रतिपदोक्तस्य ग्रहणेनात्रापि निपातपदसम्बद्धौद्ग्रहणानुवृत्त्यैव प्रतिपदोक्तलाभे पुनरोद्ग्रहणसामर्थ्येन निपातीयान्यलाक्षणिकौकारमात्रग्रहणात् सर्वेष्टसिद्धौ तद्व्यर्थमेवेत्यर्थं इत्यहो इत्यादेरेकनिपातत्वाशयकोऽयं ग्रन्थः । वेधो इतीत्यादीनामनभिधानमर्थासङ्गतेरित्यपि न, ओत्सूत्रभाष्यविरोधापत्तेरिति भावः । यद्वा तदनुवृत्त्यैव भवदिष्टार्थलाभे पुनस्तथान्यासेनौद्ग्रहणेनाप्यनार्षे इति निषेधानुरोधेन विभक्तिनिमित्तकौकारमात्रस्यैव ग्रहणेनाव्याप्त्युभयातिव्याप्तिनिरासवत् तन्निवृत्तेरप्यर्थात् सिद्धौ परलाघवस्यैव सार्वत्रिकत्वं न मात्रालाघवस्येति स्पष्टतया बोधनार्थमेव सम्बुद्धिग्रहणमित्यर्थः । अत एव वैचित्र्यार्थमित्युक्तमिति न कोऽपि दोष इति तत्त्वम् । जगन्नाथोक्तिं खण्डयन्नावश्यकत्वमुपपादयति—अन्यथेत्यादि । तस्य तत्रासम्बन्धे इत्यर्थः । अन्याय्येवेति । अत एव पदान्तप्रकरणे प्रकृतिभाव इत्यदसो मादिति सूत्रभाष्यं सङ्गच्छते । समासेनेति । नैकधेत्यादाविवेति भावः । खण्डनकृदलाकरायुक्तिं खण्डयति—नच गो

सरला ।

हि' इत्यत्र त्वाभावस्य रूपकरणीयविधेयत्वमाश्रित्य तत्प्रवृत्त्यापत्तिः । अत एव च "मुचोऽकर्मकस्य गुणो वा" इत्यस्याभावपक्षे 'मुमुक्षते वत्सः स्वयमेव' इत्यत्र "अत्र लोपोऽभ्यासस्य" इत्यभ्यासलोपस्य न प्रवृत्तिरिति । आहुरिति । अत्रारुचिस्तु 'मिथो' इत्यस्य स्वरादिगणपठितस्य चादिगणपठितत्वाभावेन निपातत्वाभावात्तस्य इति शब्दे परे प्रगृह्यसंज्ञाविकल्पवारणाय संबुद्धिपदावश्यकत्वम् । एवं स्वरादेराकृतिगणत्वेन तत्संगृहीतस्य 'अहो' इत्यस्य इति शब्दे परे प्रगृह्यसंज्ञाविकल्पवारणाय संबुद्धिग्रहणावश्यकत्व-

"उञः" (पा०सू०१।१।१७) ॥ "निपात एकाज्-" (पा०सू०१।१।१४) इति प्राप्ते विभाषेयम् ॥

"ऊँ (पा०सू०१।१।१८)॥ अनुनासिक इति । तेनास्मिन्परे "यरोऽनुनासिक—" (पा०सू०८।४।४५) इति विकल्पः । यदेतन्ँ इति पठसि, यदेतदूँ इति वा तद्दीर्घमित्यादि। एतदर्थमेव तत्रानुनासिकग्रहणम् । अन्यथा यरो ञमि ञम्रेत्येवावक्ष्यत् ॥

मय उञो वो वा (पा०सू०८।३।३३)॥ मयः परस्येति । परादिति तु प्राचः प्रमादः । "षष्ठीनिर्दिष्टस्य हि आदेशा उच्यन्ते" इति भाष्यात् आदेशविधौ स्था-

शब्दरत्नम्।

वाच्यम् । "क्षियो दीर्घात्" ( पा० सू०८।२।४६ ) इति सूत्रभाष्योक्तेन तदतिदेशानित्यत्वेन तदप्रवृत्तिमाश्रित्यापि इसाधत्वेनासाधारणप्रयोजनत्वाभावादिति भावः ॥

एतदर्थमेवेति । एतदर्थमपीत्यर्थः। अनितेः क्विपि सम्बुद्धावान् चिनोषीत्यत्र "नश्छवि" ( पा० सू०८।३।७ ) इति रुत्वे "अत्रानुनासिकः" ( पा०सू०८।३।२ ) इति पूर्वस्यानुनासिके यदेतनांश्चिनोषि कमलँ आँश्चिनोषीत्यत्रापि फलसत्त्वात् । अवक्ष्यदिति । न चैवं न्यासे यथासंख्यापत्तिः । तस्यासार्वत्रिकत्वात् । "आन्महतः-" (पा०सू०६।३।४६)

भैरवी ।

भावेन नैकार्थीभाव इति भावः। खण्डनकारोक्तिं खण्डयति-नचेति। अनित्यत्वेनेति। अन्यथा धातुपर्युदासात्प्रातिपदिकत्वानापत्तौ "क्षियः" इति निर्देशानुपपत्तिः। सुसाधत्वेनेति। गविति प्रयोगस्य सुसाधत्वेन।

नन्वेतदर्थमेवेत्यत्रैवकारस्य वैयर्थ्यम् , अन्यत्रापि प्रयोजनसत्त्वादत आह—एतदर्थमपीति। एवञ्च निपातानामनेकार्थतया एवकारो ऽप्यर्थक इति भावः। अन्यत्र फलमाह—अनितेरित्यादिना। आपत्तिरिति। "हलो यमाम्" इत्यत्रेव यथासङ्ख्यापत्तिः। तस्य-यथासङ्ख्यस्य। ननु तस्यासार्वत्रिकत्वे न मानमत आह-आन्महत इति। ननु मूलोक्तस्थले सूत्रस्य प्रवृत्त्यर्थं "यरो

भावप्रकाशः।

क्ष्यामिति। क्षिय इति। इत्युच्चारणेन तत्सत्त्वस्यैव विभक्त्युत्पत्त्या तदनित्यत्वस्यापि तेन बोधनादिति भावः।

अन्यत्रापि फलसत्त्वेन 'एवोयुक्तः' इति खण्डनकृदुक्तिं खण्डयितुमाह—एतदर्थमपीति। निपातानामनेकार्थतयैवोऽप्यर्थ इति भावः। तदेवाह—अनितेरिति। चिनोषीति। अग्रे सर्वत्रैवमेव पाठः, चिनोतीति पाठस्तु लेखकप्रमादात्। अपिरुक्तसमुच्चायकः। खण्डनकृद्रत्नाकरदण्ड्याद्युक्तं खण्डयति—नचैवं न्यास इति। तत्र मानाभावादाह— आन्महत इति। आदिना सन्महदित्यादि। खण्डनकृदा-

सरला।

मिति। तदतिदेशानित्यत्वेनेति। यथा "क्षियो दीर्घात्" इति निर्देशेनेयङन्यथाऽनुपपत्त्या "प्रकृतिवदनुकरणम्" इति ज्ञाप्यते, तथैव तत्रैव विभक्त्युत्पत्त्यन्यथाऽनुपपत्त्या तदनित्यत्वमपि ज्ञाप्यते। अन्यथाऽनुकार्यवृत्तिधातुत्वातिदेशे तत्र 'अधातुः' इति पर्युदासेन "अर्थवदधातुः" इत्यस्याप्रवृत्त्या प्रातिपदिकत्वाभावेन विभक्तेर्दुर्लभत्वात्। अनित्यत्वमपि इष्टसिद्ध्यर्थमिति नेयङ्प्रतिबन्धः। तथाच प्रकृते तदनित्यत्वाश्रयणे न तत्प्रयोजनमसाधारणमिति भावः।

असार्वत्रिकत्वादिति। स्वरितत्वविशिष्टे एव तत्सूत्रप्रवृत्तिस्वीकारादिति भावः।

निनः षष्ठ्या एव न्याय्यत्वाच्च । असिद्धत्वादिति । अत एवेदं वत्वं त्रिपाद्यां विधीयते । प्रकृतिभावमात्रबाधनार्थत्वे हि "इको यण्–" (पा०सू०६।१।७७) इत्यनन्तरं मय उञो वेत्येवावक्ष्यत् । यणं चान्ववर्त्तयिष्यत् । इह मय उञ इतौ परे अष्टाविंशतिरूपाणि । तथा हि "उञः" इति प्रगृह्यत्वे–'किमु इति' । वत्वपक्षे–'किम्विति' । ऊँआदेशे–'किमूँ इति । आदेशस्य स्थानिवत्त्वेन "मय उञ–" (पा०सू०८।३।३३) इति प्रकृतिभावापवादभूते आन्तरतम्यादनुनासिके वकारे–'किम्वँिति' । अनुनासिकाननुनासिकयोर्वकारयोः "मयो यण" इति द्वित्वस्य मकारस्य "अनचि च" (पा०सू०८।४।८७) इति द्वित्वस्य च विकल्पेन वत्वपक्षे रूपाष्टकम् । तदभावे द्वय-

शब्दरत्नम् ।

इत्यादिनिर्देशाच्चेति भावः । पूर्वोक्ते कमलाँश्चिनोषीत्यत्र लस्य नकारापत्तिवारणाय विधेयकोटावनुनासिक इति । विधेयकोटौ यकारमारभ्य प्रत्याहारे तु विधेयविषये सवर्णग्रहणाभावेन पूर्वोक्ते निरनुनासिकलस्यैवापत्तिरिति यथान्यासमेव साधु ।

इत्येवावक्ष्यदिति । न चात्रापि न्यासे सन्निपातपरिभाषयाऽनुस्वाराप्राप्तिरिति वाच्यम् । त्रिपाद्यान्तथा पाठेन सन्निपातपरिभाषाऽनित्यत्वस्यापि ज्ञापनादिति भावः ।

अनुनासिके वकारे इति । इदं कैयटानुरोधेन । "मय उञः–" ( पा०सू०८।३।३३ ) इत्यत्र विधीयमानस्य सवर्णग्राहकत्वाभावेनानेन सानुनासिकविधानाभावेन कथमत्र सः ।

भैरवी ।

ऽनुनासिके" इति सूत्रे निमित्तस्याऽनुनासिकशब्देनोपादानमस्तु विधेयसमर्पकस्यानुनासिकपदस्य तूपादानङ्किमर्थमत आह–पूर्वोक्ते इति । नकारापत्तीति । "यरो ऽनुनासिके ञम्" इत्युपादाने स्थानत आन्तर्यान्नकारापत्तिरित्यर्थः । प्रत्याहारे त्विति । तदा यम्पदेन लकारस्याप्युपस्थितौ स एव भविष्यतीति भावः । लस्यैवेति । आन्तरतम्यादिति भावः । इदम्मूलकाररीत्या । वस्तुतस्तु कमलादेरनभिधानमेव । अनुनासिकेति संज्ञाया वर्णमात्रे तात्पर्येण लाघवाभाव इत्येव दूषणमत्र बोध्यम् । अत एवाह—यथान्यासमेवेति ।

मूले—अत एवेति 'किम्विति' इत्यत्रानुस्वाराभावस्येष्टत्वादेवेत्यर्थः । सन्निपातपरिभाषयेति । अयः परत्वमुपजीव्य तस्य करणादित्यादिः । तथापाठेन–"मय उञो वो वा" इति पाठेन । स

भावप्रकाशः ।

द्वावितन्यूनतामपाकर्तुं वस्तुतस्तु यरोनुनासिके ञम्वेत्येव सूत्रं युक्तमिति दण्डयुक्तं खण्डयति—पूर्वोक्ते इति । तथार्थकैवेनैतत्फलस्याप्युक्तप्रायत्वादिति भावः । तदुक्तिं खण्डयति—विधेयेति । पूर्वोक्ते—कमलाँश्चिनोषीत्यादौ । ननु कमलादेरनभिधानेन विधेयकोटौ तन्निवेशोऽफल एवेति चेन्मूलरीत्येदमुक्तम् । वस्तुतस्तु पदलाघवाभावात्प्रतिपत्तिगौरवाच्चाशङ्कैवायुक्तेति बोध्यम् । तद्ध्वनयन्नाह—यथान्यासमेव साध्विति । अन्यथैतदुक्तिरधिकेति स्पष्टमेव ।

अप्राप्तिरिति । एवं च व्यर्थ एव तथापाठ इति भावः । त्रिपाद्यामपि तत्प्रवृत्तेरनुस्वारस्यासिद्धत्वेन सन्निपातविघाताभावादिति समाधेरयुक्ततां ध्वनयितुमाह—त्रिपाद्यामिति । तथापाठेनेति । वयुक्तपाठेनेत्यर्थः । चारितार्थ्यमन्यत्र फलं च स्पष्टमेवेति भावः ।

मूलं दूषयति—इदं कैयटेति । प्रकाशानुरोधेनेत्यपि बोध्यम् । मय इति । यत इत्यादिः । अत्र—

सरला ।

यकारमारभ्येति । तथा च 'दध्याँश्चिनोषि' 'मध्वाँश्चिनोषि' इत्यादौ यकारवकारयोरनुनासिकत्वसिद्धिः फलम् । एतेन 'कमलाँश्चिनोषि' इत्यस्य लकारमारभ्यैव प्रत्याहाराश्रयणेन सिद्धौ यकारादिप्रत्याहाराश्रयणं व्यर्थमित्यपास्तम् ।

मूले–अष्टाविंशतिरूपाणीति । न चात्र "दिक्संख्ये संज्ञायाम्" इति नियमेन समासाप्रवृत्त्यो क-

मिति दशकम् । प्रगृह्यसञ्ज्ञाविरहपक्षे "मय उञ-" (पा०सू०८।३।३३) इति वत्वस्यासिद्धत्वात् "इको यण्-" (पा०सू०६।१।७७) इति यणेव, तस्य सिद्धत्वान्मोऽनुस्वारे "वा पदान्तस्य" (पा०सू०८।४।५९) इति परसवर्णपक्षे अनुनासिकाननुनासिकवकारद्वयोपेतमेकादशं रूपम् । अनुनासिकस्य द्वित्वे "हलो यमाम्" (पा०सू०८।४।६४) इति लोपस्य वैकल्पिकत्वादकरणे त्रिवकारं द्वादशं रूपम् । परसवर्णाभावपक्षे अनुस्वारस्य यत्वोत्पाक्षिके द्वित्वे द्वे । संकलनया चतुर्दश । इतिशब्देकारस्य "अणोऽप्रगृह्यस्य-" (पा०सू०८।४।५७) इत्यनुनासिकविकल्पादष्टाविंशतिरिति ।

॥ इत्यच्सन्धिः ॥

---

शब्दरत्नम् ।

अन्यथेदमो मस्यानुनासिकोऽकारः स्यात् । अत एवेदृशे विषये गुणानामभेदकत्वपक्षानाश्रयणमिति चिन्त्यम् ।

इति स्वरसन्धिः ।

भैरवी ।

इति । अनुनासिको वकार इत्यर्थः । अन्यथा—विधेयेऽपि सवर्णग्राहकत्वाङ्गीकारे । अत एव—अनुनासिकाकारापत्तेरेव ।

अच्सन्धिरित्यत्र "अचोऽक्षु" इत्यत्रेव कुत्वापत्तिवारणायाह—इति स्वरसन्धिरिति । सन्धिद्वयमित्यर्थः । द्वित्वञ्च प्रकृतिभावमादाय । अत एव "सिद्धः प्लुतः स्वरसन्धिषु" इति भाष्येऽभिहितम् । तत एव पञ्चसन्धिरित्यस्योपपत्तिरिति ॥

श्रीमच्छब्दरत्नप्रकाशिकायामचां सन्धिद्वयं समाप्तम् ।

भावप्रकाशः ।

लक्ष्ये । अन्यथा— विधेये सवर्णग्राहकत्वाङ्गीकारे । स्यादिति । द्विवचनादाविति भावः । अतएवेदृश इति । तत्र तादृशाकारापत्तेरेव विधेयविषये इत्यर्थः । प्रतिपादितं चैतत् "इको यणचि" इत्यत्र । अचोऽक्षित्यादाविव कुत्वादेर्न्याय्यत्वेनाच्सन्धिरित्ययुक्तमिति ध्वनयन्नाह—इति स्वरेति ।

इत्यचां सन्धिद्वयं समाप्तम् ।

सरला ।

रूपासिद्धिरिति वाच्यम्, तत्र संख्यापदेन संख्यात्वव्याप्यधर्मप्रकारकसंख्याविशेष्यकबोधाजनका एकादिदशान्तसंख्येयवाचका एव गृह्यन्ते इति कल्पनेनादोषात् । अत्राभियुक्तप्रयोग एव मानमिति वदन्ति ।

इत्यच्सन्धिः ।

# अथ हल्सन्धिप्रकरणम् ।

"स्तोः श्चुना" (पा०सू०८।४।४०) ॥ स्तोरिति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । श्चुनेति । "सह युक्त–" इति सूत्रे विनापि तद्योगं तृतीयेति वक्ष्यते । योगइत्येतदध्याहारलभ्यम् । अत्र स्थान्यादेशयोर्यथासंख्यम् । निमित्तकार्यिणोस्तु न, "शात्"

शब्दरत्नम् ।

**विनापि तद्योगमिति** । साहित्यं च योगक्रियायाम् । एतदिति । संयोग इति तदर्थः । सत्या भामेतिवन्निर्देशः। संयोगश्चाव्यवहितयोरेवेति 'चितं, 'कट्ठ' तैलम्' इत्यादौ न दोषः । यथासंख्यमिति । तथदधनेत्यादेरप्यनादितया समादाय "परस्मैपदानां णल्" ( पा०सू०३।४।८४ ) इत्यादौ सूत्रान्तरस्थक्रमेणेव यथासंख्यमिति भावः । क्वादिश-

भैरवी ।

तद्योगमितीति । श्चुना योगमित्यर्थः । क्रियादावन्वये सति साहित्यस्य दर्शनादाह—साहित्यमिति । चितमित्यादावतिप्रसङ्गवारणायाह—संयोग इति । यथासङ्ख्योपपत्तये आह—तथेति । अनादितयेति । किमत्र प्रमाणमिति चेत् ?

अनन्त्यश्च भवेत्पूर्वो ह्यन्त्यश्च परतो यदि ।

भावप्रकाशः ।

मूले—सौत्रमिति । तृतीयादिष्विति सूत्रकृतमित्यर्थः । लुप्तविभक्तिकं पदं सर्वत्र भिन्नमित्यपरे । साहित्यं तुल्ययोगः । स च यदि श्चुकर्तृकभवनक्रियायां तर्हि तयोः पुत्रस्येवार्थसम्बन्धापत्तावार्थस्थानित्वापत्त्या निवृत्यापत्तिरत आह—साहित्यमिति । "तस्माच्छसो नः" इत्यादिनिर्देशात् 'पुत्रेण सह स्थूलो दृश्यते' इत्यादाविवार्थप्रधानक्रियान्वयित्वं त्यज्यत इति भावः । योगक्रियायामिति । तद्वाच्ययोजनरूपक्रियायामित्यर्थः। नचैवं तत्र करणत्वेन हेतुत्वेन वाऽन्वयोऽस्त्विति वाच्यम्, धनेन च स्त्रीपुरुषयोर्योग इत्यादाविव निरूपकत्वादिनाऽन्यस्यान्वयापत्तेः । यदि तु स्त्रिया सह पुरुषस्य योग इत्यादाविव तस्यैवार्थतरत्वं तर्हि "सहयुक्ते" इत्यस्यैव विषय इति भावः । योगस्य व्यवहितेऽपि सत्त्वादाह—संयोगे इति । अत्र बीजमाह—सत्याभाम इतिवन्निर्देश इति । सखण्डत्वेन "विनाऽपि प्रत्ययम्" इत्यस्य प्राप्तेरिति भावः । श्चाव्यवहितेति । समित्यस्योक्तेरिति भावः । उत्तरसूत्रलक्ष्यमाह—कट्विति । अनादितयेति ।

अनन्त्यश्च भवेत्पूर्वो ह्यन्त्यश्च परतो यदि ।<br>
तत्र मध्ये यमस्तिष्ठेत्सवर्णः पूर्ववर्णयोः ॥

इति नारदीयशिक्षादिपर्यालोचनयेति भावः । दृष्टान्तमाह—परेति । तद्वदित्यर्थः । क्रमेणैवोपेतीति ।

सरला ।

मूले—सौत्रं पुंस्त्वमिति । नचेतरेतरद्वन्द्वस्वीकारेण सौत्रत्वादेकवचनमेव स्वीकार्यमिति वाच्यम्, वचनबाधापेक्षया लिङ्गबाधकल्पने लाघवात् । "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इत्युक्त्या लिङ्गस्य लौकिकत्वबोधनेन वचनबाधे सूत्रबाधापत्तौ गौरवात् । वस्तुतस्तु स् इति लुप्तविभक्त्यन्तं पृथक् पदम् । पुस्त्वस्य कथंचित्साधनेऽपि सहविवक्षाया अभावेन द्वन्द्वानुपपत्तेः । "आद्यन्तौ टकितौ" इत्यत्रैव यथासंख्यसूत्रबलेन प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयेन सहविवक्षोपपादनं त्वगतिकगतिकमिति बोध्यम् ।

संयोग इति तदर्थ इति । अत्र सूत्रे योगः शाब्दिकोऽव्यवहितस्वरूपो गृह्यते, न तु "नमः स्वस्ति" इत्यत्रेवार्थिक इति तदाशयः । उपपत्त्यन्तरमाह—सत्या भामेतीति । 'चितं, कट्ठ तैलम्' इति क्वाचित्कं वाक्यमेतत् ।

(पा०सू०८।४।४४) इति ज्ञापकात् । "अल्पाच्तरम्" (पा०सू०२।२।३४) इत्यादौ तु सौत्रत्वात् श्चुत्वं न । तज्ज्ञानमित्यादौ तु भवत्येव । "स्तोः श्चौ श्चुः" इति सुवचम् । न च "तस्मिन्निति निर्दिष्टे–" (पा०सू०१।१।६६) इति परिभाषोपस्थानेन 'यज्ञः' 'याच्ञा' इत्यादि न सिध्येत् । "शात्" (पा०सू०८।४।४४) इति लिङ्गेन तस्या इहानुपस्थानात् ॥

ष्टुना (पा०सू०८।४।४१) ॥ इहापि कार्यिनिमित्तयोर्यथासंख्यं न । "तोष्षि" (पा०सू०८।४।४३) इति ज्ञापकात् । ष्टौ ष्टुरिति सुवचम् । ईट्टे, ईष्टे, इत्यादौ "न पदान्तात्–" (पा०सू०८।४।४२) इति ज्ञापकान्न दोषः ।

---

शब्दरत्नम् ।

ऽदेश्चानादिसिद्धलोकप्रसिद्धक्रमेणैवोपस्थितिरिति तात्पर्यम् । ननु तज्ज्ञानमित्यादौ श्चु-योगाभावान्न स्यादत आह—तज्ज्ञानमिति । जञयोगे तथोच्चारणमात्रं, न त्विदं वर्णा-न्तरमिति भावः । अनुपस्थानेति । पूर्वत्वांशानुपस्थानेत्यर्थः । तेन चितमित्यादौ न दोषः ॥

भैरवी ।

तत्र मध्ये यमस्तिष्ठेत्सवर्णः पूर्ववर्णयोः ॥

इति नारदीयशिक्षैव । नन्विति । ज्ञेत्यस्य वर्णान्तरत्वाभिप्रायेणेयमाशङ्का । यद्वा 'वर्गस्य पञ्चमे परे पूर्वस्य स्थाने यमसंज्ञकादेशः' इति पक्षे 'तज्ज्ञान' मित्यत्र दकारस्य चुत्वन्न स्यात्, यमयोगस्यात्र सत्त्वान्नतु चुयोगस्येत्याशङ्का बोध्या । उत्तराशयस्तु यमो नादेशः, किन्तु पञ्चमे परे ऽनन्त्यात्परत्र यमो नाम पूर्वसदृशो वर्णान्तरो भवति, नत्वनन्त्यस्य यमो नामादेशः, तत्प-क्षस्यान्यत्र निराकृतत्वादिति । ननु "शात्" इति लिङ्गेन "तस्मिन्" इति परिभाषाया इहा-नुपस्थाने 'चितम्' इत्यादौ चुत्वापत्तिरत आह-पूर्वत्वांशेति । एतेनाऽव्यवधानांशस्य बोधिका परिभाषा इहोपतिष्ठत एव, तत्र "शात्" इत्यस्य ज्ञापकत्वासम्भवादित्याशयः ॥

भावप्रकाशः ।

उपस्थितक्रमत्यागे मानाभावादिति भावः । योगाभावादिति । वर्णान्तरस्योभयोः स्थाने 'जञोर्ज्ञः' इत्यनेन विधानात् । स्थानिवत्त्वं तु न, अल्विधित्वादिति भावः । नत्विदमिति । शिक्षोक्तपरिगणना-सङ्गत्यापत्तेरत एव 'जज्ञौ' इत्यादिसिद्धिरिति भावः । ननु तस्या इत्यनेन पूर्वोक्तपरिभाषापरामर्शेन तदनु-पस्थितौ चितमित्यादौ दोषः, पूर्वत्वश्रुतेरित्यर्थस्तु न युक्तिसहोऽत आह—पूर्वत्वांशेति । तथाचोक्तार्थ-कस्य तस्या इत्यस्यावयवषष्ठ्यन्तत्वेनावयवाकाङ्क्षायामस्य लक्षणयैतदर्थलाभः । स च शकारटवर्गांश एवेति नाग्रहः, ज्ञापकस्यायोगापेक्षत्वात् । अव्यवधानांशोपस्थितिस्त्वस्त्येव तद्बाधककल्पने मानाभावात् । तत्फलमाह—तेनेति । यथाश्रुते तु मूले अनुपपत्तिः स्पष्टैव । एतेन पूर्वसूत्राप्रवृत्तौ 'चितम्' इत्यादौ

सरला ।

मूले-ज्ञापकादिति । न च विश्नशब्दात् णिजन्तादाचारक्विबन्ताद्वा कर्तरि क्विपि अल्लोपे ततो 'हुड्'शब्दे इति धातोर्लिटि एकवचने जुहुवे इति पदे परे प्राप्तस्य श्चुत्वस्य निषेधेन "शात्" इति सूत्रस्य चारितार्थ्येन ज्ञापकत्वासंगतिरिति वाच्यम्, ज्ञापकपरभाष्यप्रामाण्येन 'विश्न्' इत्यादीनामन-भिधानात्, संयोगान्तलोपेन तादृशरूपाभावाद्वा । श्चुयोगोऽभावादिति । 'ज्ञ' वर्णस्य वर्णान्तरत्वाभि-मानेनेदम् । पूर्वत्वांशानुपस्थानेत्यर्थ इति । "तस्मिन्निति निर्दिष्टे पूर्वस्य" इति परिभाषयांऽशद्वय-मुपस्थाप्यते पूर्वत्वमव्यवहितत्वं विधेयान्वयिषष्ठ्यर्थश्चेति । तत्र "शात्" इति सूत्रेण पूर्वत्वमात्रं बाध्यते-ऽशान्तरद्वयं तूपस्थाप्यते एव । तत्र षष्ठ्याः सूत्रे उपादानेन षष्ठ्यर्थांशस्य सिद्धतयाऽव्यवहितत्वांश-एवात्रोपस्थाप्यते । तेन 'चितं कटु तैलम्' इत्यत्रेकारेण व्यवधानान्न तकारस्य श्चुत्वम् । एवञ्च परिभाषया यावानंशः सिद्धो बाधितो वा, तावन्तमंशं वर्जयित्वा शेषांश उपस्थाप्यते इति भावः ।

सर्पिष्टममिति । "ह्रस्वात्तादौ-" (पा०सू०८।३।१०१) इति षत्वम् ।

प्रत्यये भाषायामिति । यत्तु प्राचा मयटि नित्यमिति पठितम् , यच्च हलन्त-प्रकरणे षण्णां, षड्णामित्युदाहृतम्, यच्च "यरोऽनुनासिक-" (पा०सू०८।४।४५) इति वाऽनुनासिक इति तत्र व्याख्यातं, तत्सर्वं भाष्यविरोधादुपेक्ष्यम् । यवादिगण इति । "यचि भं तसौ मत्वर्थे" इति संहितया पाठे तसाविति तात्पूर्वं दकारं प्रश्लिष्य भत्वेनाप्येतत्समाधातुं शक्यम् ॥

---

शब्दरत्नम् ।

षत्वमिति । न च षस्य पदान्ते जश्त्वं भविष्यतीति तद्व्यर्थमिति वाच्यम् । षत्व-स्यासिद्धत्वेनास्य जश्त्वाभावात् ।

भाष्येति । प्रत्यय इत्येव तत्र पाठादिति भावः । दकारमिति । चर्त्वेनेति भावः। मृच्छब्दस्य यवादिगणे पाठे न प्रमाणमिति तत्र "झयः" ( पा०सू०८।२।१० ) इति वत्वे मृद्वानित्येवेति तात्पर्यम् । इति के चित्तन्न मृन्मानित्यस्यासिध्द्यापत्तेरिति काचित्कोऽसां-प्रदायिकः पाठः ।

भैरवी ।

तद्व्यर्थमिति । षकाररूपस्य व्यावर्त्यस्याभावेन 'टो' रिति व्यर्थमित्यर्थः । अस्य-षस्य । नचैवमपि स्थानी यः सकारस्तद्बुद्ध्या स्यादेव जश्त्वमिति वाच्यम्, देवदत्तहन्तृहतन्यायेन तद्-बुद्धेरिहासम्भवादित्याशयात् ।

दकारस्य प्रश्लेषे तस्य श्रवणापत्तिं वारयति-चर्त्वेनेतीति । लोपस्तु वैकल्पिकत्वान्न कृतः । तत्र-तत्प्रकृतिकमतुपि । तात्पर्यमिति । दकारस्य चर्त्वेन प्रश्लेषं कृत्वा समाधानकर्तुरिति शेषः । अत्र मौलं यच्छक्यमिति, तदग्रे-इति केचित्तन्न मृन्मानित्यादावतिप्रसङ्गादिति पाठा-भिप्रायेण-तमनूद्य, तत्र "झयः" इति वत्वेन तद्रूपस्यैवासम्भवादिति खण्डनकारेणोक्तम्, तत् खण्डयति—इतीत्यादिना ॥

भावप्रकाशः ।

दोषः । तावदंशबाधे शकारवर्गांश एव बाधापत्तौ 'यज्ञः' 'ईष्टे' इत्यादौ श्चुत्वाघनापत्तिरितिजगन्नाथोक्तं, 'याचते' इत्यादावतिप्रसङ्गापत्त्या मूलं चिन्त्यमिति रत्नाकरोक्तं, विशेष्यभूतपूर्वस्येत्यंशाभावेन विशेषण-तदंशस्याप्यनुपस्थितिरिति मन्दोक्तं चापास्तम्, उक्तहेतोः, विभिन्नविभक्तिकत्वेन विशेषणविशेष्यभा-वाभावाच्च ।

षत्वमितीति । जश्त्वापवादरुत्वापवादत्वादिति भावः । तद्व्यर्थमिति । षरूपव्यावर्त्याभावेन टोरिति व्यर्थमित्यर्थः । एतेन टोः किमिति प्रश्नस्य परममूलस्थस्याशयो वर्णितः । उत्तराशयमाह-षत्वेति। नास्य-षस्य । नचैवमपि स्थानिबुद्ध्या स्यादिति वाच्यम्, देवदत्तहन्तृहतन्यायेन तदभावादिति भावः ।

पाठादिति । प्रकाशोऽप्येवम् । तच्छ्रवणाननुभवादाह—चर्त्वेनेति । लोपस्तु वैकल्पिकत्वान्नेति भावः । तत्र—तत्प्रकृतिकमतुपि । तात्पर्यम्, दप्रश्लेषेण समाधातुः । अत एव शक्यमित्यग्रे इति केचित्, तन्न, 'मृन्मान्' इत्यादावतिप्रसङ्गादिति पाठमभिप्रेत्यानूद्य तत्र "झयः" इतिवत्वेन तद्रूपस्यैवासिद्धेरिति खण्डनकृदुक्तिं खण्डयति—इतीति ।

सरला ।

मूले-न दोष इति । "न पदान्ताट्टोरनाम्" इति सूत्रेण "तस्मिन्निति निर्दिष्टे पूर्वस्य" इति परि-भाषायाः पूर्वस्यांशस्यानुपस्थितिज्ञापनादिति । एतत्तत्त्वं पूर्वमुक्तं तत एवावगन्तव्यम् । जश्त्वाभावादिति। 'सर्पिस् तमम्' इति स्थिते जश्त्वं बाधित्वाऽपवादत्वाद्रुत्वे विसर्गे सत्वे षत्वे च विसर्गसत्वषत्वानामसिद्ध-त्वेन जश्त्वाभावादित्यर्थः । रुत्वात्प्राक् षत्वं तु न, रुत्वदृष्ट्या तस्यासिद्धत्वात् ।

उदः स्था (पा०सू०८।४।६१) ॥ "अनुस्वारस्य ययि-" (पा०सू०८।४।५८) इत्यत्र समस्तमपि सवर्णग्रहणमिह निष्कृष्य सम्बध्यते । एकदेशे स्वरितत्वप्रतिज्ञानादित्याशयेनाह—**पूर्वसवर्णः स्यादिति** । अघोषस्येत्यादि । एतेन सस्य तकार इति प्राचां ग्रन्थाः प्रत्युक्ताः । यदपीह "चयो द्वितीयाः शरि" इत्यस्योपन्यसनं, तदतिरभसात् ॥

तच्छिव इति । यत्तु प्राचा तत् शिव इत्यत्र जश्त्वे कृते "खरि च" (पा०सू०८।४।५५) इत्युक्तम् । तन्न, तदो दान्तत्वेन जश्त्वोपन्यासवैयर्थ्यात् । यत्तु तत्पौत्रे-

## शब्दरत्नम् ।

ननु सवर्णपदमधिकं 'परसवर्णः' इत्यत्रैकार्थीभावापन्नस्यान्यत्र सम्बन्धो वक्तुमशक्यः । न च पूर्वस्येत्यस्य सम्बन्ध्याकाङ्क्षायां यत्किञ्चित्सम्बन्धिकल्पनापेक्षया पूर्वत्रोपस्थितार्थैवाचकपदाध्याहारौचित्यात्तल्लाभः । "चुटू" ( पा०सू०१।३।७ ) इत्यादावादेरप्येवमेव सम्बन्धोपपत्तौ तत्र तत्र स्वरितत्वप्रतिज्ञाया वैयर्थ्यापत्तेः । न च स्वरितत्वप्रतिज्ञासामर्थ्यादेकदेशानुवृत्तिः । "तोर्लि" (पा०सू०८।४।६० ) इत्यत्र समुदायानुवृत्त्या तस्याश्चारिताथ्र्या-दित्यत आह—**अनुस्वारस्येत्यादि** । एकदेशे इति च । पकारमात्रे स्वरितत्वप्रतिज्ञयैव "तोर्लि" ( पा०सू०८।४।६० ) इत्यादावनुवृत्तिसिद्धौ पुनः सकारांशे तत्प्रतिज्ञया तावतोऽप्यंशस्य उत्तरत्रानुवृत्तिरिति भावः । **तदतिरभसादिति** । चयो ऽभावात् "दी

## भैरवी ।

अधिकमिति । सूत्रे तदभावादिति शेषः । ननु "अनुस्वारस्य" इति सूत्रस्थस्य सवर्णपदस्य सम्बन्धो भविष्यतीत्यत आह—परसवर्णेति । प्रकारान्तरेण तस्य लाभोऽन्येनोक्तस्तन्मतमनूद्य दूषयति-नचेत्यादिना । एवमेव-भवदुक्तप्रकारेणैव । स्वरितत्वेति । सवर्णपद इत्यादिः । "तोर्लि" इत्यत्र समुदायस्य सम्बन्धसूचकतया स्वरितत्वस्य चारिताथ्र्यमुक्तं यद्यपि, तथाप्येकदेशे स्वरितत्वप्रतिज्ञासामर्थ्यादेव सम्बन्ध इत्येतदुपपादयति-पकारमात्र इत्यादिना । अतिरभसमुपपादयति—चयोऽभावादिति । ननु "उदः स्था" इति सूत्रनिष्पन्नस्य थस्य स्थाने चर्त्वेन तकारे

## भावप्रकाशः ।

परेति । यत इत्यादिः । तल्लाभ इति । तथा च तज्जातीयपदकल्पना न तु तदनुवृत्तिरिति भावः । एवमेवेति । उक्तरीत्या "उपस्थितं परित्यज्य" इति न्यायेनेति भावः । अंशस्योत्तरेति । पूर्वक्लसार्थरहितस्येति शेषः । अत एव पूर्वस्येत्यस्यान्वयः । अन्यथा तत्र सा व्यर्थैवेति भावः । परेति तत्र लुप्तषष्ठ्यन्तं पृथक् पदमेवमपि तद्द्वयसार्थक्यमिति तत्त्वं बोध्यम् । ननु सस्य पूर्वसवर्णस्तः, तस्य "झरो झरि" इतिलोपे एकतं, तदभावे द्वितम्, "अनचि" इति द्वित्वे त्रितम् । "उत्कन्दो रोग" इति भाष्योदाहरणाऽपूर्वसवर्णनियामकत्वस्य महाप्राणत्ववद्विहितान्तर्यस्यानङ्गीकारात् । अन्येतु ज्ञापकं विशेषापेक्षमिति मूलोक्तरीत्या सस्य थः तस्यासिद्धत्वाच्चर्त्वं नेति द्वित्थं रूपमाहुः । नचैतदप्रामाणिकम्, चयोद्वितीया इति पक्षेथश्रुतेरवर्ज्यत्वादिति माधवहरदत्तप्रकाशकृदाद्युक्तत्वेन कथमतिरामस्यम् । अतएव्स्य सामान्यपरत्वाश्रयेन त्रितयसाधारणं तत्र हेतुमाह—चयोभावादिति । आद्यपक्षे मद्रीत्या तस्यैवाभावादसिद्धत्वाच्च तदभावादित्यर्थः । अन्येत्विति पक्षे थस्यैव सत्त्वादसिद्धत्वेऽपि सस्य सत्त्वाच्च तदभावादित्यर्थः । पक्षद्वयेप्युदश्चर्त्वस्यासिद्धत्वेन तदभावादित्यर्थः । अत एव चयोद्वितीया इत्यस्य भाष्ये "नादिनो" इत्यत्र पाठेन तत्वस्यासिद्धत्वादिति तत्र मान्यानां हेतूक्तिः सङ्गच्छते । थपक्षे तु तदभावः स्पष्ट एवेति, न तत्र हेत्वपेक्षेति तेषामाकूतम् । भाष्यमते थस्य चर्त्वेन चयः सत्त्वात् तदाशयकोऽयं ग्रन्थ इति भ्रमं निराकर्तुं भाष्यरीत्या थस्यानसिद्धत्वेन चर्त्वं भवत्येवात एवोक्तभाष्यप्रयोगसङ्गतिः । मूलादि तु प्राचामनुरोधेनेति सिद्धान्तम्

णोक्तं तदो "वाऽवसाने" (पा०सू०८।४।५६) इति चर्त्वे कृते पश्चाच्छिव इत्यनेन सम्बन्धे "झलां जशोऽन्ते" (पा०सू०८।२।३९) इति जश्त्वे "खरि च" (पा०सू०८।४।५४) इति चर्त्वमिति, तदुतिस्थवीयः । जश्त्वं प्रति अवसाने चर्त्वस्यापवादत्वात् । जश्त्वे शिवशब्दानपेक्षणाच्च । भाविन्यवसानभङ्गे "वाऽवसाने" (पा०सू०८।४।५६) इत्यस्य पूर्वमप्रवृत्तेश्च । प्रवृत्तस्य वा निवृत्तिसम्भवात् । उक्तं च "अक्र-

---

शब्दरत्नम् ।

र्वीदाचार्याणाम्" (पा०सू०८।४।५२) इत्युत्तरम् "अनुस्वारस्य ययि" (पा०सू०८।४।५८) "वा पदान्तस्य" (पा०सू०८।४।५९) "तोर्लि" (पा०सू०८।४.६०) "उदः स्था" (पा०सू०८।४।६१) "झयो हो" (पा०सू०८।४।६२) "शश्छोऽटि" (पा०सू०८।४।६३) इति षट्सूत्रीपाठोत्तरं "झलां जश् झशि" (पा०सू०८।४।५३) "अभ्यासे चर्च" (पा०सू०८।४।५४) "खरि च" (पा०सू०८।४।५५) "वाऽवसाने" (पा०सू० ८।४।५६) "अणोऽप्रगृह्यस्य" (पा०सू०८।४।५७) इति पञ्चसूत्र्याः पाठे भाष्यसम्मते थस्य चर्त्वेऽपि तस्यासिद्धत्वाच्छर्परत्वाभावाच्चेति भावः ॥

चर्त्वमिति । ततः श्चुत्वे "शश्छोऽटि" (पा०सू० ८।४।६३) इति प्रक्रियेति भावः । चर्त्वस्यापवादत्वादिति । एवं च तत्र कृते जश्त्वाप्रवृत्तिरिति भावः ।

भैरवी ।

तस्य द्वितीयादेश इति तेषामभिप्राय इत्याशङ्कायामाह—दीर्घादिति। सम्प्रति श्रूयमाणाष्टाध्यायीपाठपक्षे "खरि च" इत्येतद्दृष्ट्या "उदःस्थास्तम्भोः पूर्वस्य" इत्यस्यासिद्धत्वात्कथं थस्य स्थाने चर्त्वेन तकार इत्याशङ्कानुत्थानायाह—इत्युत्तरमिति । एवञ्च "खरि च" इत्यस्य परत्वान्न तद्दृष्ट्या पूर्वसवर्णनिष्पन्नथकारस्यासिद्धत्वशङ्केति भावः । भाष्यसंमत इति । "उत्कन्दो रोगः" इति भाष्योदाहरणाद्भाष्यसम्मत इत्यर्थः । नचैतद्भाष्योदाहरणबलेन महाप्राणत्वघटितान्तरतम्यम्पूर्वसवर्णस्य प्रवृत्तौ न नियामकमित्येव कल्प्यतान्तावतापि तकारस्य लाभेन चयो लाभ एवेति वाच्यम्,महाप्राणत्वन्न नियामकमिति यदि ब्रूषे तदा भाष्यकाराज्ञानकल्पनन्तदपेक्षयाऽष्टाध्याय्याम्पाठव्यत्यासस्य कल्पनमेवोचितमित्यभिप्रायात् । तस्य—चर्त्वनिष्पन्नतकारस्य । एतत्सर्वञ्चयो द्वितीया इत्यस्य चयः सत्तायाम्प्रवृत्तिस्तदभावे तु नेत्यभिप्रायेण । वस्तुतो निमित्ताभावादिह तस्य प्राप्तिरेव नेत्याशयेनाह—शर्परत्वाभावेति ॥

अथ तनोतीत्यादिना वक्ष्यमाणपक्षे मूलोक्तदोषोपपत्त्यर्थमिह प्रक्रियाम्पूरयति—तत इति । एवञ्च—अवसाने चर्त्वस्य जश्त्वापवादत्वे च । तत्र कृते—चर्त्वे कृते । अपवादे प्रवृत्ते पुनरुत्सर्गाप्रवृत्तेः सिद्धान्तिसम्मतत्वात् निरवकाशो विधिरपवादो भवति, नचेह निरवकाशत्व-

भावप्रकाशः ।

आद्यतृतीययोश्चयोऽभावे हेतुं च सूचयितुं चाह—दीर्घादिति । एतेन तत्र पूर्वसवर्णतकारस्यासिद्धत्वं शर्परत्वाभावो वा हेतुः । स चायुक्तः, उदस्तकारस्य थः, पूर्वसवर्णतकारस्य "झरो झरि" इति लोप इति द्विथं रूपमिति तदाशयात् इतिखण्डनकृदुक्तिः परास्ता, उक्तयुक्तेः । योगविभागस्याप्रमाणत्वात्तेनासिद्धत्वमित्यादितदुक्तिस्तु चिन्त्यैव । भाष्यसम्मते इति । एतेन तत्र तथा पाठो लेखकप्रमादादिति मन्दः प्रत्युक्तः । अत एवाद्यद्वितीयपक्षयोस्तदतिशये हेतुमाह—शरिति । तयोस्थपरत्वादिति भावः ।

अथेति पक्षे मूलोक्तदोषोपपत्तये तदुक्तप्रक्रिया पूरयति—तत इति । जश्त्वाप्रवृत्तिरिति । एवं च तदुपन्यासः प्रसादस्य निष्फल इति भावः । एतेन जश्त्वं प्रति चर्त्वासिद्ध्या दस्यैव तु जश्त्वेऽविशेषा-

तव्यूहाः पाणिनीयाः” इति, “कृतमपि शास्त्रं निवर्तयन्ति” इति च । अन्यथा हरिरयमित्यत्रापि त्वदुक्तरीत्या प्रवृत्तो विसर्गः केन वार्यताम् । अथ तनोतीति तदि-

---

शब्दरत्नम् ।

न च जश्त्वे कृते चर्त्वस्य चारितार्थ्येन तस्यासिद्धत्वादपवादत्वे न मानमिति वाच्यम् । तत्कालेऽवश्यं प्राप्तत्वेन येन नाप्राप्तिन्यायेनापवादत्वस्य सुलभतयोक्तरीतेरसम्भवात् । एत-देवाभिप्रेत्य “मिदचोऽन्त्यात्” (पा०सू०१।१।४७) सूत्रभाष्ये उक्तम्—सत्यपि सम्भवे बाधनं भवतीति । अन्यथा कौण्डिन्याय तक्रमित्यनेन ब्राह्मणेभ्यो दधीति प्राप्तदधिदान-स्यापि बाधो न स्यात् । तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यात् । अत एव “अजा-देर्द्वितीयस्य” (पा०सू०६।१।२) इति सूत्रे प्रथमद्विर्वचनोत्तरमस्य चारितार्थ्येन प्रथमद्विर्व-चनस्यानेन बाधो न स्यादित्याशङ्क्य सत्यपि सम्भवे इति न्यायेन बाधकत्वमुक्तं भाष्ये । एवं च “दयतेर्दिगि—” (पा०सू०७।४।९) इति सूत्रस्थकैयटादिग्रन्था असम्भवे एव बाध-कतेति वार्तिकानुसारेण प्रवृत्ता अयुक्ता एवेति बोध्यमिति भावः । केन वार्यतामिति । एवं चेदृशे विषये वाक्यसंस्कारपक्षेणैव साधुत्वान्वाख्यानमिति स्वीकृत्याकृतव्यूहपरिभाषा त्याज्येति चेदिष्टापत्तिरिति बोध्यम् । अन्ये तु पदसंस्कारे हरिः अस्तीति सविसर्गमपि

भैरवी ।

मित्याशयिकामुक्तिन्निरस्यति—नचेति । उक्तरीतेः—अवसाने चर्त्वे कृते जश्त्वमिति रीतेः । तदप्राप्तियोग्ये विषयेऽचारितार्थ्यमपवादत्वबीजन्तदिहास्त्येवेति भावः । एतदेव—उक्तबीज-मेव । अत एव—तदप्राप्तियोग्ये विषयेऽचारितार्थ्यस्यापवादत्वप्रयोजकत्वादेव । कैयटादिग्रन्थाः—द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्येनाबाध इत्येवंरूपा इत्यर्थः । वार्तिकेति । एवञ्च भाष्यकृता तन्मतस्य खण्डितत्वान्न लक्ष्यसंस्कारकतेत्यत्र तात्पर्यम् । एवञ्चेति । विसर्गापत्तौ चेत्यर्थः । ईदृशे विषये—पदान्तरसम्बन्धासम्बन्धाभ्यां विलक्षणरूपप्राप्तिविषये । इष्टापत्तिरिति । यदकृत-व्यूहपरिभाषया साध्यं तद्वाक्यसंस्कारेणैव साधनीयम्, पदसंस्कारस्तत्र त्याज्यः । तथाच प्रा-चीनोक्तं वावसान इति चर्त्वे कृते इत्यादिना यत्तदसङ्गतमेवेति भावः । पदसंस्कारपक्षमवल-म्ब्यादौ विसर्गं कृत्वा पश्चात्तिङन्तसम्बन्धः कार्यः, इत्यभिप्रायेण सविसर्गरूपमपि साधु इति-केनाप्युक्तन्तन्मतमाह—अन्येत्वित्यादिना । नन्वकृतव्यूहपरिभाषया तथा न भविष्यतीत्यत

भावप्रकाशः ।

दिति प्रकाशोक्तं तद्दूषणमपास्तम्, उक्तयुक्तः । तद्ध्वनयन् शङ्कते—नचेति । न मानमिति । निरवका-शत्वरूपबीजाभावात् । एवञ्चासिद्धत्वादिति प्रकाशवत् वाच्येऽपवादत्वादित्ययुक्तम् । अत एव मान्दः वस्तुतस्तु चर्त्वासिद्ध्या जश्त्वोपन्यास एव प्रागयुक्तः चर्त्ववैयर्थ्यंतूक्तरीत्या नेति व्याख्यातं, मन्देनापि तदेवानुसृतमिति भावः । येननेति । तदप्राप्तियोग्येऽचारितार्थ्यस्यतन्न्यायबीजत्वस्योक्तत्वादिति भावः । रीतेरित्येकवचनेन प्रकाशोक्तेरत्रैतावान् विशेषोऽन्यत्सर्वन्तदनुवाद एवेति सूचितम् । तयोरेकविषयकत्व-स्योक्तत्वादेवाह—एतदेवेति । तत्कालावश्यंप्राप्तिपूर्वकमुक्तबीजमेवेत्यर्थः । अपिर्द्वित्वसमुच्चायकः । वचनोत्तरमिति । तस्य पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वादिति भावः । ग्रन्था इति । “द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्येन तेन तस्याबाध” इत्येवंरूपा इत्यर्थः । असम्भव एवेति । विरोधस्य तद्बीज-त्वादिति भावः । वार्तिकेति । भाष्यकृता दूषितत्वान्न तन्मतस्य लक्ष्यसिद्ध्युपयोगित्वमिति भावः । प्रागुक्तसिद्धान्ताविरोधाय फलितपरिभाषाङ्गीकारं व्युदस्य फलितान्तरमाह—एवञ्चेदृशइति । अन्यथा विसर्गापत्तौ च पदान्तरसम्बन्धासम्बन्धाभ्यां विलक्षणरूपविषये इत्यर्थः । एवेन पदसंस्कारपक्षव्यावृत्तिः । इष्टापत्तिरिति । तावतापि प्राचीनोक्त्यसङ्गतेरिति भावः । सविसर्गमपीति । आदौ विसर्गस्ततस्तिङन्त-सम्बन्ध इति भावः । अपिस्तत्पक्षोक्तसरेफरूपसमुच्चायकः । अन्ये तु आहुरितिसूचितारुचिबीजं तु तथा

ति क्विबन्तं त्रषे एवमपि जश्त्वेन दकारोऽस्तु। चर्त्वे कृते श्चुत्वमिति तु न न्याय्यम् । श्चुत्वं प्रति चर्त्वस्यासिद्धत्वात् । यत्तु "न मु ने" (पा० सू०८।३।३) इत्यत्र 'न' इति योगं विभज्यासिद्धत्वमिह नेत्याहुः । तदपि न, असिद्धत्वेऽपि रूपसिद्धौ निर्बाधायां योगविभागस्यागतिकगतिभूतस्येहाश्रयणे प्रमाणाभावात् ॥

आक्रंस्यत इति । "आङ उद्गमने" (पा०सू०१।३।४०) इति तङ् । "स्नुक्रमोः–" (पा०सू०७।२।३६) इति नेट् ॥

समसम्बन्धीविधिरिति । समकर्मकं विधानमिति तु नोक्तम् । अनुवाद्ययोरपि यथासंख्यस्येष्टत्वात् । "समूलाकृतजीवेषु हन्कृञ्ग्रहः" ( पा०सू०३।४।३६ ) इत्यत्र यथा ॥

ङ्णोः—(पा०सू०८।३।२८) ॥ कुक्टुकोः पूर्वान्तत्वात्प्राङ्क्साये इत्यत्र "सात्पदाद्योः" इति षत्वं न ।सुगण्ट्साये–इत्यत्र "न पदान्तात्" (पा०सू०८।४।४२) इति ष्टुत्वं न ।

---

शब्दरत्नम् ।

साध्वेव सत्यभिधाने, परिभाषाया भाष्येऽदर्शनादित्याहुः । प्रमाणाभावादिति । योगविभागस्य भाष्येऽदर्शनेनाप्रामाणिकत्वाच्चेत्यपि बोध्यम् ॥

यथासंख्यस्येति । ख्यान्तैकदेशेन सूत्रस्य ग्रहणं बोध्यम् ॥

भैरवी ।

आह—परिभाषाया इति । आहुरित्यस्वरसबीजन्त्वेतादृशरूपानभिधानमेवेति ॥

"यथासङ्ख्यम्" इति सूत्रे यत्प्रथमान्तं यथासङ्ख्यमिति पदं तदनुकरणम्मान्तमेव भविष्यतीति यथासङ्ख्यस्येत्यसङ्गतमत आह—ख्यान्तैकेति । एवञ्च यथासङ्ख्येत्येकदेशयुक्तसूत्रप्रवृत्तेरिष्टत्वादिति मूलार्थः ॥

भावप्रकाशः ।

प्रयोगानभिधाने तत्र तदनाश्रयणौचित्यमिति ।

नन्वर्थपरत्वे यथासङ्ख्यमित्युचितम्, शब्दपरत्वे विवक्षासिद्धिरत आह—ख्यान्तैकदेशेनेति । तयोर्भेदविवक्षायां तदनुकरणेनेत्यर्थः । तथा च तद्युक्तसूत्रप्रवृत्तेरिति मूलार्थः ।

सरला ।

ननु 'संख्यामनतिक्रम्य यथासंख्यम्' इति यथासंख्यशब्दस्याव्ययीभावतयाऽव्ययत्वात्ततः परमागतायाः षष्ठ्या लुक औचित्येन यथासंख्यस्य इति प्रयोगानुपपत्तिरत आह—ख्यान्तैकदेशेनेति । "यथासंख्यमनुदेशः समानाम्" इति सूत्रैकदेशानुकरणम्, ततोऽनुकरणानुकार्ययोर्भेदविवक्षापक्षे सिद्धान्तभूते षष्ठीति तदाशय इति न पूर्वोक्तदोषावकाशः । बोध्यमिति । अयं भावः—सूत्रे अनुदेशशब्दः कर्मसाधनः, समानाम् इति च शेषषष्ठी । तथाच समसम्बन्धी विधिरित्यर्थो भवति । भावसाधनानुदेशशब्दश्चेत्समानामित्यस्य कर्मषष्ठ्यन्तत्वे समकर्मको विधिरित्यर्थः स्यात् । तथाच "समूलाकृत" इति सूत्रे विधेयस्य णमुलः समसंख्याकत्वाभावेनैव तदप्रवृत्तिः स्यात् । लक्ष्यानुरोधाच्चात्राऽऽद्य एव पक्षः स्वीक्रियते इति भावः ।

अत्रेदं तत्त्वम्, इदं सूत्रं धर्मसाम्ये एव प्रवर्तते नतु व्यक्तिसाम्ये ; व्यक्तीनामानन्त्येन तत्साम्यस्य दुरुपपादत्वात् । अत एव "संख्यातानुदेशेनाप्येतत् सिद्धम्" इति स्थानेन्तरतमः" इति सूत्रस्थं भाष्यं संगच्छते । अन्यथा यणां सप्तसंख्याकत्वेन इकां च षट्षष्टेः सत्त्वेन साम्याभावात्तदसंगतिः स्पष्टैव । धर्मसाम्ये एतत्सूत्रप्रवृत्तिस्वीकारे तु न दोषः, व्यक्तीनां संख्यासाम्याभावेऽपि इत्त्वयत्वादीनां धर्माणां साम्यस्य सत्त्वादित्यन्यत्र विस्तरः ।

पुष्करे तीर्थविशेषे सीदतीति पुष्करसत्, तस्यापत्यं पौष्करसादिराचार्यः। बाह्वा-
दित्वादिञ्। अनुशतिकादित्वादुभयपदवृद्धिः॥

डः सि धुट् (पा०सू०८।३।२९)॥ "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्"
परत्वात्, इत्यभिप्रेत्याह-सस्येति। सीति सप्तमीनिर्देशस्तु लाघवार्थः। षट्त्स-
न्त इति। धुटश्चर्त्वेन तकारः। यत्त्वाहुः-"चयो द्वितीया" इति पक्षे तस्य थ इति।

---

शब्दरत्नम्।

परत्वादिति। "तस्मिन् (पा० सू० १।१।६६) इति सूत्रापेक्षया "तस्मात्-"
(पा० सू० १।१।६७) इत्यस्य परत्वादित्यर्थः। डकारात्सकारे धुडित्यर्थे "तस्मिन्"-
(पा० सू० १।१।६६) इत्यस्य प्रवृत्तावुपस्थितडकारस्यागमित्वं "तस्मात्-" इत्यस्य
प्रवृत्तावुपस्थितसस्य तत्त्वमित्यसम्भवरूपविरोधे परत्वेन व्यवस्थेति सस्यागमित्वनिर्णय
इति भावः। स्पष्टं चेदं "तस्मिन्" (पा०सू० १।१।६६) इति सूत्रे भाष्ये। लाघवार्थ-

भैरवी।

ननु न "डः सि" इतिसूत्रे पञ्चमीनिर्देशस्य परत्वं, किन्तु सप्तमीनिर्देशस्यैवेति 'पञ्चमी-
निर्देशो बलीयान्' इत्यसङ्गतं परत्वस्य तत्र हेतुत्वेन प्रतिपादनात्तच्च परत्वमत्र नास्तीत्यत आ-
ह—तस्मिन्नितीति। परिभाषाविषये कार्यकालपक्षेऽपि पाठकृतमेव परत्वन्नियामकन्नतु संज्ञाशास्त्र-
वत्प्रदेशीयं, साधकाभावात्। किञ्च भाष्यकृता—"अधिकारो नामत्रिप्रकारः कश्चिदेकदेशस्थः
सर्वं शास्त्रमभिज्वलयति" इत्यभिहितम्। 'कश्चित्परिभाषारूपः' इति व्याख्या च कैयटेन कृता।
तेनाष्टाध्यायीपाठ एव तद्विषये नियामक इत्यभिहितम्। ननु विरोधे सति परत्वेन व्यवस्था,
स एव तु कथमत आह—डकारादिति। तत्त्वम्—आगमित्वम्। असम्भवः—कार्यित्वनिमित्तत्व-
योर्युगपदसम्भवः। निर्णय इति। परत्वात्तस्मादित्यस्य प्रवृत्तौ निर्णयः फलित इत्यर्थः। ननु

भावप्रकाशः।

ननु न पञ्चमीनिर्देशस्य परत्वम्, वैपरीत्यात्। प्रधानीभूतागमित्वाश्रयबोधकशब्दयोर्मध्ये ड इत्यतः
सीत्यस्य परत्वं त्वकिञ्चित्करं वैपरीत्यापादकं च आगमसन्निहितत्वादित्यर्थे तु न तदुक्तिस्वारस्यमत आह—
तस्मिन्नितीति। परिभाषाणां कार्यकालपक्षेऽपि पाठकृतं परत्वमस्तीति विप्रतिषेधसूत्रप्रवृत्तिर्निर्बाधैवेति
भावः। तथा च परत्वादिति न परिभाषान्तर्गतं किं तु प्रकृताभिप्रायमिति बोध्यम्। स्पष्टञ्चेदमन्यत्र।
अन्यत्र चारितार्थ्यं स्पष्टमुपेत्य विरोधं तद्बीजमुपपादयति—डकारादिति। अर्थे इति। सतीति शेषः,
श्रुतत्वात् सामग्रीसत्त्वाच्च। एतेन डात् परः से परे पूर्वपदस्येति वाक्यार्थे उभयानुग्रहाय स परादिरेव,
सस्येत्यादि तु फलितार्थं इत्यपास्तम्, विधेयस्याविद्यमानत्वेन तद्विशेषणत्वायोगात्। परस्येत्यादेः षष्ठ्यन्त-
स्यैव क्रमेण परिभाषाभ्यामुपस्थाने तथान्वयासम्भवाच्च। असम्भवेति। कार्यित्वनिमित्तत्वयोर्युगपद-
सम्भवेत्यर्थः। पर्यायस्तु न, आवृत्त्यापत्तेः। एतेन डात्परस्य से पूर्वस्येत्यर्थे 'षट्त्सरुः' इति लक्ष्यसम्भ-
वात् विरोधाभावेन कथं तेन व्यवस्थेत्यपास्तम्, उक्तरीत्या तस्यालक्ष्यत्वात्। व्यवस्थेतीति। पर-
प्रवृत्त्या पूर्वाप्रवृत्तिरिति भावः। अत एव तस्यागमसन्निहितत्वम्। अन्यथा धुड् डः सीति वदेत्। सन्देह-
स्तूभयत्रापि तस्य इति बोध्यम्। निर्णय इति। तत्प्रवृत्त्या फलित इति भावः। एतेन षष्ठीप्रक्लृप्तिपक्षस्य
दूषितत्वात् कथमिदमित्यपास्तम्। अत एवोपस्थितेरयुक्तमुभयत्र। एवं च तत्कार्यस्थित्या तन्निर्देशस्य
प्राबल्यं सिद्धमिति बोध्यम्। तथा परत्वाश्रयणे बीजं ध्वनयितुमाह—स्पष्टञ्चेदमिति। मूलाद्युक्तमि-

सरला।

मूले—तस्यापत्यमिति। पुष्करसच्छब्दाद् अपत्यमित्यर्थे बाह्वादित्वादिञित्यर्थः। पौष्करसादि-
रिति। "अनुशतिकादीनाञ्च" इत्युभयपदवृद्धिः।

मूले—तकार इति। अत्र जश्त्वं तु न प्रवर्तते, धुटोऽसिद्धत्वात्।

तन्न, चर्त्वस्यासिद्धत्वात् । अत एव धुडभावे 'षट् सन्त' इत्यत्र टस्य ठो न । टकारनकारविसर्गाणां द्वित्वविकल्पात् षोडश । "खयः शर" इति सकारद्वित्वे द्वात्रिंशत् । न च तत्र चर्त्वस्यासिद्धत्वं शङ्क्यम्, "पूर्वत्रासिद्धीयमद्वित्वे" इत्युक्तेः । न च "शरोऽचि" (पा०सू०८।४।४९) इति द्वित्वनिषेधः शङ्क्यः, तस्य सौत्रद्वित्वमात्रविषयत्वात् । अत एव "शरः खयः" इति वार्तिकस्य वत्सः, अप्सराः, इत्युदाहरणं भाष्ये स्थितम् । धुटः परादित्वं "न पदान्तात्-" (पा०सू०८।४।४२) इति ष्टुत्वनिषेधार्थम् । अत एव वक्ष्यमाणस्तुगिहैव न कृतः । यत्त्वाहुः—एवमपि प्रक्रियालाघवाथ तुडेव

---

शब्दरत्नम् ।

इति । षष्ठ्याः प्रयोग एव कर्त्तव्ये इत्यर्थः । चर्त्वस्यासिद्धत्वादिति । अत एव तुडिति नोक्तम् । अत एव—चर्त्वस्यासिद्धत्वादेव । ननु "धुक् ङः सि" इत्यस्तु, सप्तमीच यथाश्रुतैव, ङ इति च षष्ठ्यन्तं, परमार्थतो वाक्यशक्त्यङ्गीकारेण पूर्वान्तत्वे परादित्वे वा न शक्ततावच्छेदकभेदोऽत आह—धुटः परादित्वमिति ।

भैरवी ।

यदि न षष्ठीनिर्देशस्तर्हि प्रकृतिमात्रस्य प्रयोग एव न स्यादत आह—षष्ठ्या इति । अत एव—चर्त्वस्यासिद्ध्या तकारस्य थकाराभावादेव ।

धातोः कर्त्रर्थकसार्वधातुके शप् भवतीत्यर्थेनोभयोर्मध्येऽनवयवः शप् भवति यथा, तथा ङः सि धुड् भवतीत्यर्थे ऽनवयवो धुट् स्यादिति तु शङ्का न भवति । आगमलिङ्गटकारोच्चारणवैयर्थ्यापत्तेः । अतस्तस्यागमत्वमेव । एवञ्चागमित्वं ङकारस्य सकारस्य वेति सन्देहे "उभयनिर्देशे" इत्यादिना सस्यागमित्वनिर्णयः कृतः । तत्र 'ङः' इत्यस्य पञ्चम्यन्तत्वे पूर्वोक्तः सन्देहो भवति, यदि 'ङः' इति षष्ठ्यन्तस्तदा न सन्देहः, परन्तु धुडागम एव चेत क्रियते तदा ङकारात्पूर्वः स स्यादितीष्टरूपासिद्धिरित्याशयेन 'धुगिति' कृत्वा ङकारस्यागमित्वनिर्णयाय सूत्रानुपूर्वीव्यत्यासङ्कृत्वा शङ्कते—नन्विति । 'धुक् ङः सि' इति न्यासे सकारात्पूर्वं ङकारस्योपादानेन विधेयानन्तरोपादानेन च ङकारस्यागमित्वनिर्णयो भविष्यतीत्याशयेनानुपूर्वीव्यत्यासो दर्शितः । नन्वेवमपि शक्ततावच्छेदकानुपूर्वीभेदात्सङ्ख्याया बोधानापत्तिरत आह—परमार्थत इति । एतेन पदानुपूर्वीभेदादिष्टार्थाप्रतीतिः स्यादिति शङ्का न कार्येति दर्शितम् । न शक्ततावच्छेदकभेद इति । वाक्यानुपूर्वीभेदाभावादिति शेषः । मूले—ष्टुत्वेति ।

भावप्रकाशः ।

त्यर्थः । अत एव सूत्रपाठापेक्षया परत्वस्य व्यवस्थापकत्वमिति तत्र कैयटः । ननु सप्तमीनिर्देशाभावेऽप्रयोगापत्तिरत आह—षष्ठ्या इति । न्यायेन तथार्थाङ्गीकारे स्पष्टार्थमित्यादिः । इत्यर्थ इति । इति तात्पर्यार्थ इत्यर्थः । न तु स विवक्षितार्थत्वेन षष्ठीबाधनार्थं इति भावः । अत एवेति । तदसिद्ध्या तस्य थाभावादेवेत्यर्थः । साध्यपरामर्शेऽन्वयासम्भवादाह—चर्त्वेति । एतेन योगविभागादनसिद्धत्वेन पक्षे द्वितीयोऽपि । एतेन धुडभावपक्षे टस्य ठानापत्तिः प्रकाशकृत्सिद्धान्तिते तुड्पक्षे थापत्तिश्च मनोरमोक्तापास्तेति हरदत्तप्रकाशाशयवर्णकखण्डनकृदुक्तिः परास्ता:, उदः स्थेत्यत्र दोषोक्तेः । धुक् ङ इति । एवञ्च विधेयस्य प्रागुक्त्या सान्निध्याच्च ङस्यैवागमित्वम् । एतेन "ङः सि धुक्" इति दण्ड्युक्तमपास्तमिति भावः । तदाह—सप्तमीति । ननु तावतापि न्यायप्राप्तिः कुतो नेत्यत आह—ङ इतीति । उक्तहेतोः प्रथमोपात्तत्वेऽपि तस्यागम इति भावः । नन्वेवमपि शक्ततावच्छेदकानुपूर्वीभेदात्सङ्ख्याबोधानापत्तिरत आह—परमेति । एतेन पुरुषभेदाद्व्युत्पत्तिवैचित्र्यं तवाप्यावश्यकमिति न दोषोऽत्रेति समाधिरयुक्तस्तस्य

सरला ।

षष्ठ्यन्तमिति । सकारे परे ङस्य धुगागमो भवतीत्यर्थः । नन्वेवं धुगागमे 'सन्तः' इत्यानुपूर्व्याः शक्ततावच्छेदकत्वं, धुडागमपक्षे तु 'त्सन्तः' इत्यस्या इति भेदः स्यादित्यत आह—परमार्थत इति ।

भैरवी ।

धुट इत्यादिः । अत एव—ष्टुत्वप्रतिषेधस्येष्टत्वादेव । ननु तुगागमे "चयो द्वितीया" इति थकारस्यापत्तिरपि दोषः । नचास्य पदान्तत्वान्न द्वितीयादेशापत्तिरिति वाच्यम्, हलन्ते वक्ष्यमाणरीत्या पदान्तेऽपि क्वचित्प्रवृत्तेरिति चेन्न, तुकि कृते द्वितीयष्टुत्वयोः प्रसक्तौ ष्टुत्वदृष्ट्या द्वितीयादेशस्यासिद्धतया ष्टुत्वस्यापत्तिरेवेत्याशयेनात एवेत्यवधारणस्य करणात् । तुडागमे द्वितीयापत्तिरिति त्वन्यत् । केचित्तु—"चयो द्वितीया" इत्यस्य—

भावप्रकाशः ।

कल्पितत्वेनानुपयोगादिति सूचितम् । अपदेऽपि दर्शनात्संहिताभावेन तत्र धुडाद्यभावाच्च नावग्रहे दोष इति भावः । मूले ष्टुत्वेति । धुट इत्यादिः । अत एवेति । ष्टुत्वप्रतिषेधस्येष्टत्वादेवेत्यर्थः ।

अत्र मान्याः—चयो द्वितीया" इत्यस्य प्रातिशाख्यानुरोधेन वेदेऽपदान्ते एव प्रवृत्तिरिति हलन्ते स्फुटम् । एवञ्च लोकवेदयोरैक्यार्थं लोकेऽपि व्यवस्थितविभाषया पदान्ते द्वितीयादेशो नेति वादिनां मते नेदम् । प्रथमातिक्रमे कारणाभावात्तदपेक्षयैव द्वितीयत्वस्य सत्त्वाच्च द्वितीयपदेनैवाक्षेपात् प्रथमस्य स्थानित्वे लब्धे प्रथमपदमन्यस्थानिकप्रथमव्यावृत्त्यर्थमिति तद्व्याख्यातारः । एतेन तुडितिन्यासे धापादकपरग्रन्थविरोध इत्यपास्तमिति । एवञ्च प्रातिशाख्यैकवाक्यता । अत एव द्वितीयस्यापि प्रसङ्गाच्चेह स न कृत इति दण्डयुक्तिः, तस्यापि पक्षे प्रसङ्गाच्चिन्त्यं मूलमिति रत्नाकरोक्तिश्च चिन्त्येति बोध्यम् । अत्राखिलभाष्योक्तान्यतासामप्रामाण्यमेकवाक्यतानौचित्यं चेति मूलमयुक्तमेवेति वादिनां मतेनेत्यनेन सूचिता अन्ये तु तुकः पूर्वान्तत्वेन तत्स्थानिकष्टुत्वनिषेधाप्राप्त्या ष्टुत्वे पूर्वस्य चर्त्वे टद्वयं श्रूयेत । तस्य थस्तु न, ष्टुत्वदृष्ट्या असिद्धत्वात् । न च ष्टुत्वोत्तरं ठापत्तिः । अत एव परग्रन्थसङ्गतिरिति वाच्यम्, ऊष्मोदयमिति प्रातिशाख्यैकवाक्यतयाऽपदान्ते एव तत्प्रवृत्त्या परोत्प्रेक्षितयोः पदान्तत्वापदान्तत्वकृताप्रवृत्तिप्रवृत्तिभ्यां तदापत्तितदसङ्गत्योरभावात् । तस्य भाष्ये वृत्तौ च "शशः क्षुरं प्रत्यङ्ख्स्वमसुं यन् शतक्रतुः थ्सरत् विरप्शी गोमतीति, ऋक्सामभ्यां विराट् सम्राट् तत्सवितुर्वृणीमहे अप्स्वग्ने" इति चोदाहरणप्रत्युदाहरणान्युक्तानि । न च "प्रत्यङ्ख् स्वमसुं यन्" इति तद्भाष्योदाहरणासङ्गतिः, प्राङ्ख् षष्ठ इत्याद्यसिद्धिस्तत्र तदुल्लेखासङ्गतिश्चेति वाच्यम्, तत्रापदान्तभाजमित्यस्याचर्त्वभाजमित्यर्थोपलक्षकत्वेनादोषात् । "चयो द्वितीया" इति दृष्ट्या चर्त्वासिद्धत्वलब्धार्थानुवाद इति यावत् । पदान्ते प्रायो जश्त्वप्रवृत्त्या विना चर्त्वं चयोऽलाभात् । अत्र तु कृते न जश्त्वमस्यासिद्धत्वात्, चर्त्वं त्वेतत्सामर्थ्यादेव न । एवञ्च 'प्राङ्ख्षष्ठः' इत्यादौ द्वितीयो युक्त एव । कुगादीनां जश्त्वं प्रत्यसिद्धत्वेन तदप्राप्तिवत् चर्त्वस्य वार्तिकदृष्ट्याऽसिद्धत्वेनाभावात् । न चैवमपि "वथ्सा अफ्सरा" इति भाष्योक्तवार्तिकलक्ष्यासङ्गतिर्मतद्वयेऽपि । "अप्पूर्वात्सर्तेरसिर्वदेः स" इत्युणादावुक्तत्वेन एतयोश्चर्त्वनिष्पन्नत्वादिति वाच्यम् । भाष्यप्रामाण्यादप्पूर्वात् प्साधातोरसिरङ् नलोपश्च एतेः स आदेर्वं इति व्युत्पत्तेरिष्टत्वात् । तत्राद्यं स्पष्टं निरुक्ते तद्भाष्ये च । उणादेर्भाष्यविरुद्धस्य बहुश उपलम्भेऽप्यप्रामाणिकत्वाच्च । वस्तुतः पाणिनिसम्मतव्युत्पत्तिपक्षस्यैव भाष्याभिमतत्वेनादोषाच्च । एवञ्च प्रातिशाख्यैकवाक्यतायां न दोषलेशः । अत एवेत्यादि मूलं तु अपदान्तभाजमित्यस्य मूलोक्तयथाश्रुतार्थैकवाक्यताशयेनेत्याहुः । मम तु प्रतिभाति नास्य तदेकवाक्यता युक्ता, समाख्याबलेन तस्य तच्छन्दोमात्रविषयत्वात्, अस्य साधारणत्वात् । लिट्स्वित्यादौ तु चर्त्वासिद्ध्या प्राप्तिरेव न । अत एव तथाव्युत्पत्तावपि "अफ्सरा' इति भाष्योक्तलक्ष्यसङ्गतिः । एवञ्च सकललोकवेदसाधारणस्यास्य पदान्तेऽपदान्ते च प्रवृत्तिरुचिता । अत एव तैत्तिरीयप्रातिशाख्यम् "प्रथम ऊष्मपरो द्वितीयम्" इति । प्रथमः स्पर्शः तत्परः स्ववर्गीयं द्वितीयमापद्यत इति तदर्थः । "विरप्शिन्नुदादाय, तथ् षोडश्यभवत्, प्रत्यङ्ख्सोमो अतिद्रुतः, तथ्सवितुः" इत्यादि तथा सर्वसम्मतशिक्षा व्यासशिक्षा च ।

पदान्तस्यापदान्तस्य सपयोः परभूतयोः ।
प्रथमस्य द्वितीयत्वमपदान्तस्य शोत्तरे" इति ॥

भैरवी।

ऊष्मोदयम्प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजम्।

इति प्रातिशाख्यादपदान्त एव वेदे प्रवृत्त्या तदेकवाक्यतया लोकेऽपि व्यवस्थितविभाषाया आश्रयणेनापदान्त एव प्रवृत्तिरित्यभिप्रायेणात एवेत्यवधारणमित्याहुः। अपरे तूष्मोदयं स्पर्शन्द्वितीयमाहुरित्येव द्वितीयेत्यस्य प्रथमसापेक्षतया द्वितीयस्योपादानेन प्रथमलाभे

भावप्रकाश

"ऊष्मोत्तरे द्वितीयः स्यादादेशः प्रथमस्य तु"।

इति च। शे परतोऽपदान्तस्यैव तस्य द्वितीयो भवतीत्यर्थः। अत एवावार्येनन्तच्छंयोरित्यादौ।

"हकारः प्रथमादूर्ध्वं तत्स्थानं च चतुर्थकम्।
स्पर्शपूर्वः शकारश्छं लन्तश्चाप्नोति लोत्तरः"॥

इति हशयोर्घच्छयोर्विधानात्तदन्य ऊष्मा ऊष्मोत्तरे इत्यत्र गृह्यते इति तद्भाष्ये व्याख्यातम्। शिष्टं स्पष्टम्। तत्र तत्स्थानम्, प्रथमसमानस्थानकम्। स्पर्शपूर्व इति बहुव्रीहिः। एवं लोत्तर इत्यपि, लन्तश्चेत्यस्य लपरकस्तकारो लकारमेति चेत्यर्थः। यच्छोहितं तद्रजतम्। तत्र तस्य शपरस्योदाहरणमुक्तमेव, सपरस्य पदान्तस्यापि तस्य। अपदान्तस्य तु इदमराथ्समेति। अपः क्षुधं नुदतामित्यादि बोध्यम्। एकवाक्यत्वे तु विरफ्शिन्नपः क्षुधमित्याद्यन्येषां प्रागुक्तानां वार्तिकेनासिध्यापत्तिः। पदान्तत्वादिना लक्ष्यतावच्छेदकानाक्रान्तत्वात्। इष्टापत्तिस्तु उक्तरीत्या कर्तुमशक्या। एवञ्च मतद्वयमप्युक्तम्। तथ् सवितुरित्यादौ तु दस्य ते तस्य तेन थे च कृते "द्वितीयचतुर्थयोस्तु व्यञ्जनोत्तरयोः पूर्वः" इति प्रातिशाख्येन द्वित्वापवादेन व्यञ्जनपरयोर्द्वितीयचतुर्थयोः स्पर्शयोः परतः स्पर्शसमानवर्गीयः पूर्वः प्रथमस्तृतीयो वा यथाक्रममागमो भवति इत्यर्थकेन थात् पूर्वं तो बोध्यः। अत एव।

"स्वरपूर्व इयात् द्वित्वं व्यञ्जनं व्यञ्जनोत्तरे"।

इत्यादि द्वित्वप्रकरणं संक्षिप्य—

"व्यञ्जनं यन्निमित्तेन द्विवर्णमिति वर्णितम्।
द्वितीयतुर्ययोस्तेन भवेत् पूर्वागमस्त्विह"॥

इति व्यासशिक्षा सङ्गच्छते। द्वितीयेति सप्तम्यन्तम्। इदं रूपं वेदे इव लोकेऽपि वर्णद्वित्वस्य द्विप्रयोगकत्वेन लक्ष्यैक्येन दस्य द्वित्वेऽन्त्यस्य चर्त्वेऽप्याद्यस्याचर्त्वमिति दुर्घटितरूपम्। आदौ चर्त्वे तु द्वितं रूपमिति फलविशेषेण पूर्वत्रासिद्धीयमिति प्राप्त्या दस्य चर्त्वं तस्य द्वित्वेन द्वितसिद्धौ द्वितीयस्य चयोद्वितीया इति दुर्वारत्वात्। न च तत्र तस्यासिद्धत्वम्, प्रागुक्तरीत्या द्वित्वाश्रयकार्यान्यकार्ये पूर्वत्रेत्यपि तदर्थाङ्गीकारेण तत्प्रवृत्तेः। अत एव "सर्वथा वैलक्षण्यस्थले तैत्तिरीयके नस्य ञो भवेत् काठकेन चेत्" इति व्यासशिक्षा शिक्षासमुच्चयोक्तिः,

"शपूर्वस्य नकारस्य ञकारस्तैत्तिरीयके"

इति सर्वसम्मतशिक्षोक्तिश्च सङ्गच्छते। अन्यथा तैत्तिरीयक इत्यस्य वैयर्थ्यं स्पष्टमेव। एवञ्चोदरेण शिश्ञा प्राश्ञीयाद्धोता हुतं प्राश्ञामीत्याह खगाक्ष्रयै प्राश्ञन्ति इत्यादौ शनयोगे "शात्" इति सूत्रबाधेन चुपक्षम एव साधुः। 'विश्नः' 'प्रश्नः' इत्यादौ लोके "ब्रह्मचारिणे प्रश्नान्प्रोच्य किं प्रथमाꣳरात्रिमश्नाति सकलं भद्रमश्नुते" इत्यादौ काठके च न तद्वदिह न। एवञ्च सांहितिकवर्णक्रमबोधनं तेन क्रियत इत्यत्रापि तत्सिद्धिर्निष्प्रत्यूहोचिता। चर्त्वासिध्या न द्वितीय इत्यादि ग्रन्थास्त्वद्वित्वप्रयोगाशयकाः स्पष्टा एवेति न तद्विरोधः॥ एवञ्चैतत्प्रकरणस्था हलन्तस्था चाद्वित्वप्रयोगाशयिका तदेकवाक्यत्वाशयिका च जीर्णोक्तिर्युक्तैवेति मूलं सम्यगेवात्रत्यम्। अग्रिममपि मूलं युक्तं द्वित्वक्रमेण प्रथमार्थाशयेन परिभाषाप्रवृत्तेः सूपपादत्वात्। यदि तु प्रकाशग्रन्थोऽपि द्विष्ठः स द्वित्वप्रयोगाशयेन योज्य इत्युच्यते तर्ह्यस्तु तथा, मूले तु सर्वथा सर्वं द्विष्ठमयुक्तमेव। एतेन परसवर्णासिध्या शरः खय

यत्तु वदन्ति—इदं प्रयोजनं बहिरङ्गपरिभाषया गतार्थत्वात् प्रत्युक्तमिति । तत्पाश्चिकम् , त्रिपादीस्थे ऽन्तरङ्गे बहिरङ्गपरिभाषेयं न प्रवर्तते इति सुद्ध्युपास्य इत्युदाहरणे स्वोक्त्या सह विरुद्धं चेत्यास्तां तावत् । सञ्च्छम्भुरिति । इह श्चुत्व-तुकोरसिद्धतामाश्रित्य "नश्छवि" (पा० सू०८।३।७) इति रुत्वं न शङ्क्यम् । छत्व-स्यासिद्धत्वात् ।

ङमो ह्रस्वात् (पा०सू०८।३।३२) ॥ ङम् प्रत्याहारः । सञ्ज्ञायां च कृतं टित्वं सामर्थ्यात् संज्ञिभिःसम्बद्ध्यते । तेन यथासंख्यं ङुट्-णुट्-नुटः प्रवर्तन्ते । नित्यग्र-हणं विस्पष्टार्थम् । "हे मपरे-" (पा०सू०८।३।२६) इति "मय उञो वो वा" (पा०सू०८।३।३३) इति च विकल्पद्वयस्य मद्ध्ये पाठादेव नित्यत्वलाभात् । तुग-

---

शब्दरत्नम् ।

**सञ्ज्ञायाम्**—ङमिति प्रत्याहाररूपायाम् । **विकल्पद्वयस्य मद्ध्ये इति** । "विभा-षामध्ये च ये विधयस्ते नित्याः" इति "पूङः क्त्वा च" ( पा० सू० १।२।२२ ) इति सूत्रे भाष्योक्तेरिति भावः । न च तन्मध्ये पाठेन नित्यत्वकल्पने तन्मध्यपतितानां "नपरे

भैरवी ।

तुगादिविकल्पमात्राभिप्रायकत्वाद्वा ।

ननु मूले ङम्प्रत्याहारइत्यस्यानन्तरं संज्ञायामिति कथनम्भ्रामकन्तत्र चेत्येतावन्मात्रेण प्रस्तुतार्थनिर्वाहादत आह—ङमिति प्रत्याहाररूपायामिति । ननु 'ङमुट्'इत्यत्र टित्वन्दृश्यते तत्रो-कारान्तस्य टित्वन्नतु संज्ञाया इति संज्ञायामिति मूलमसङ्गतमिति चेन्न, उकारस्योच्चारणार्थत्वा त् । एतेनोकारान्तस्य टित्वं सा च न संज्ञेति संज्ञायामित्यसङ्गतमिति कस्यचिदुक्तिः प्रत्युक्ता । रत्नाकराद्युक्तिं खण्डयति—नचेति । अस्य नित्यत्वापत्तिरित्यत्रान्वयः । 'विभाषामध्य'इत्यपूर्वं वचनमिति शङ्काभिप्रायः । भाष्यकारोक्तन्नापूर्ववचनङ्किन्तु न्यायसिद्धमित्याशयेन समाधत्ते—

भावप्रकाशः ।

ग्रन्थो युक्त एवेति मूलमेवायुक्तमिति भावः । तदेतद्ध्वनयन्नाह—आस्तामिति मूले । परममूले अच्छा-विति पद्यं गुरुकृतपदचन्द्रिकास्थम् । एतेन चयो द्वितीया इति छविकल्पेन रूपद्वयाधिक्याच्चिन्त्यमिदमिति खण्डनकृदुक्तिः परास्ता । तदनुवादकत्वात् पद्योक्तविकल्पाशयकत्वाच्च ।

ननु तत्र चेति वाच्ये संज्ञायामिति भ्रामकमनन्वितार्थकं चात आह—ङमितीति । उकार उच्चारणार्थ इति भावः । यत्तु जगन्नाथः—"इदं चिन्त्यम् , तस्याटित्वाप्रसक्तेः । नहि तेन संज्ञाग्रहण प्रसङ्गोऽशब्दसंज्ञेति निषेधात् । ङमुडिति पञ्चम्यन्त ङम् शब्दस्योट्शब्देन तत्पुरुषो बहुव्रीहिर्वा । आद्ये शाब्दबोधे तात्पर्याभावादन्त्ये समुदायग्रहणादिष्टसिद्धेः । एवञ्च ङुडादेर्विधेयस्यैव टित्वं न तु तस्याः । किञ्च संज्ञात्वं ङमि न तु ङमुटि, सूत्राप्राप्तेः, तस्य तत्त्वेनाप्रसिद्धत्वाच्च । टित्वं तूक्तसमूहस्य, एवञ्च तस्य विधेयत्वं स्यान्न तस्याः, नापि तेषामतो लक्षणैवाश्रयणीया'—इति । तन्न, व्यधिकरणबहुव्रीह्यापत्तेः, सामर्थ्याभावाच्च, तेषामनुच्चारणेनोपदेशानन्त्यत्वादित्संज्ञानापत्तेश्चेति दिक् । मध्ये इति । तयो-र्मध्ये इत्यर्थः । पूङः क्त्वाचेतीति । अग्रे वाग्रहणाद्विकल्पानुवृत्त्या इडाद्योस्तयोर्नित्याकित्त्वसिद्ध्या क्त्वाग्रहणस्योत्तरार्थत्वं लाघवमनादृत्य "पूङश्च" इति च कृतमेव सूत्रकृतेति भारद्वाजमतप्रसंगे इत्यर्थः । एतेन भाष्यस्यान्यपरत्वमिति मन्दोक्तिरपास्ता । न क्त्वासेडित्यपाठः । एतेन तत्र भाष्येऽनुक्ते-रिदं चिन्त्यमिति मन्दोक्तमपास्तम् । खण्डनकृद्रत्नाकराद्युक्तिं खण्डयति—नचेति । अपूर्वं वचनमिति

सरला ।

अयं भावः—वाहऊठ्सूत्रस्थोठ्ग्रहणज्ञापितान्तरङ्गपरिभाषायाः सापादिकतया तद्दृष्ट्या "पदान्तस्य" इत्यस्यासिद्धत्वेऽपि त्रैपादिकान्तरङ्गदृष्ट्या परिभाषायाः सिद्धत्वेनादृष्टपिशाचन्यायेनान्तरङ्गशास्त्रप्रदेशे परि-

णनीश इति । ण्यल्लोपौ न स्थानिवत्, पूर्वत्रासिद्धे तन्निषेधात् । ङमुटः परादित्वं

शब्दरत्नम् ।

नः" ( पा० सू० ८।३।२७ ) इत्यादीनामपि नित्यत्वापत्तिः । स्वरितत्वबलादनुवृत्तस्य पुनर्वाग्रहणान्निवृत्तौ कल्प्यमानायां स्वानन्तर एव तत्कल्पनेनोपपत्तावन्यत्र तत्कल्पने मानाभावात् । तस्मादुत्तरत्र वाग्रहणसामर्थ्यात्पूर्वसूत्रे एव वाग्रहणस्य निवृत्तिरिति भावः । तन्निषेधादिति । "तस्य दोष" इत्यस्य तु न प्राप्तिः । लत्वसाहचर्येणादेशणत्वस्यैव ग्रहणात् । पञ्चमीसमासस्यानित्यत्वाच्चेत्यपि बोध्यम् । परादित्वमिति । ततः परस्याच इति व्याख्यानेनेत्यर्थः । ङम इत्यस्य षष्ठ्यन्तत्वमाश्रित्य ङमन्तपदावयवस्य ह्रस्वा-

भैरवी ।

स्वरितत्वेत्यादिना । उक्तार्थमेव स्पष्टयति—तस्मादिति । पूर्वेति । अव्यवहितेत्यादिः । यत्तु 'सुगण्णीशः' इत्यत्र ङमुटः परविधित्वेन स्थानिवद्भावशङ्कैवासङ्गतेति, तन्न "प्रत्यैषिषन्" इत्यर्थम्पञ्चमीसमासस्यावश्यकत्वात् । अनित्यत्वादिति । प्रविगणय्येति भाष्योदाहरणादस्यानित्वादित्यर्थः । यत्तु प्राचेत्यादिना ऽजादेः पदस्येति व्याख्यानस्य स्वयन्दूषयिष्यमाणत्वान्ङमुटः परादित्वमिति कथनं विरुध्यत इत्यत आह—तत इति । ङम इति पञ्चमी, पदस्येत्यनुवृत्तं सामानाधिकरण्येन सम्बन्धाय पञ्चम्या विपरिणम्यते, सा चानवकाशा, अचीति सप्तमी तूत्तरत्र चरितार्थेति साऽत्र षष्ठ्यर्थे इति कल्प्यते । एवञ्च ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याच इत्यर्थ इत्याशयात् । मूले—णत्वप्रतिषेधार्थमिति । "पदान्तस्य" इति णत्वप्रतिषेधस्य सिद्ध्यर्थमित्यर्थः । ङम इत्यस्येति । अस्यान्यथेत्यादिः । षष्ठ्यन्तत्वमिति । अस्मिन्पक्षे पदस्येत्यत्र विभक्तिविपरिणामो न कार्य इति लाघवम् । एवमचीति सप्तम्यपि चरितार्था । ह्रस्वात्परस्य ङमः पदावयवस्याचि पर इति तु नोक्तं, 'दण्डिना' इत्यादौ दोषापत्तेः । अस्मिन्पक्षे पदे इत्यनुवृत्तं तद्विशेषणमचीति, तेन तदादिविधिः । यदि तु पदावयवस्य ह्रस्वात्परस्य ङमो-

भावप्रकाशः ।

शङ्काशयः । न्यायसिद्धत्वान्न तथेति समाधत्ते—स्वरितेति । स्वानन्तर इति । यत्रानुवृत्त्याऽग्रिमवापदं व्यर्थं ततः प्रागव्यवहितसूत्रे एवेत्यर्थः । उक्तार्थमेव स्पष्टयति—तस्मादिति । "विभाषोपयमने" इति विभाषापदस्यात एवास्वरितत्वादननुवृत्तिः । एतेन "मृषस्तितिक्षायाम्" इत्यस्य नित्यत्वेऽपि "स्थाघ्वोः" इत्यादीनां तन्न स्यादिति मन्दोक्तमपास्तम् । पूर्वेति । अव्यवहितेत्यादिः । यत्तु जगन्नाथः"ङमुटः परविधित्वेन तदप्राप्त्या शङ्काया एव नोत्थितिः, पञ्चमीसमासस्य तु त्वयैव पाक्षिकत्वाङ्गीकारेण बाहुलकादीनामिवानिष्टार्थमप्रवृत्तेः । अन्यथा काचित्कत्वं निष्फलमेव स्यात्, हल्ङ्यादिलोपार्थं तवाप्यत्र तत्त्वमेव शरणं तस्यात्रिपादीस्थत्वात् । संयोगान्तलोपेन निर्वाहे तु विगणय्येत्यत्रायादेशानापत्तिरुक्तरीत्येति" । तन्मूलकृतोपीष्टमेव । तत् ध्वनयन् मूले हेत्वन्तरं पूरयति—पञ्चमीति । नन्वजादेः पदस्येति प्राचोक्तव्याख्यानस्य दूषयिष्यमाणत्वेन कथं तस्य तत्त्वमत आह—तत इति । सूत्रे ङम इति पञ्चमी पदस्येत्यनुवृत्तं सामानाधिकरण्यान्वयाय पञ्चम्यन्ततया विपरिणम्यते । तस्या अनवकाशत्वादेवोत्तरत्र चरितार्थाचीति षष्ठ्यर्थे सप्तमी । तथाच ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याच इत्यर्थो निष्प्रत्यूहः । अतो मूलग्रन्थादन्यथा पूर्वान्त एव कर्तव्यो ध्रुवदिति प्रतीयते, तन्न । तत्साध्यरूपस्यार्थभेदेन सूत्रादेव लाभेन तद्वैलक्षण्यात् । तत्ध्वयन् तथैव विपक्षमूलाशयमाह—ङम इत्यादिभाव इत्यन्तेन । अन्यथेत्यादिः । ह्रस्वात्परस्य ङमः पदावयवस्य ङमुडचीति तु नोक्तं, दण्डिनेत्यादौ दोषापत्तेरिति बोध्यम् । अत एव परममूलेऽपि ह्रस्वात्परस्मात्पदावयवङमः परस्याचो ङमुडिति नोक्तम् । ह्रस्वेति । स च प्रत्यासत्त्या

सरला ।

भाषाया आकर्षणेन संस्कारकदृष्ट्या संस्कार्यस्यासिद्धत्वाभावात्परिभाषादृष्ट्या "पदान्तस्य" इत्यन्तरङ्गस्यासिद्धत्वाभावेन परिभाषया तच्छास्त्रं प्रति तुको बहिरङ्गत्वबोधने न बाधकमिति ।

कुर्वन्नास्ते इत्यत्र णत्वप्रतिषेधार्थम् । अत एव 'ङमो ह्रस्वादचि द्वे' इति नासूत्रि । परं णत्वं प्रति पूर्वस्य सिद्धतया णत्वापत्तेरिति प्राञ्चः । यत्त्वाहुः-बहिरङ्गपरिभाषया गतार्थत्वादुभयमप्यसङ्गतमिति । तदपि पाक्षिकम् । राज्ञ इत्यत्रेव यथोद्देशे त्रैपादिके ऽन्तरङ्गपरिभाषाविरहस्योक्तत्वेन प्राचां ग्रन्थस्य सौष्ठवात् । कथमन्यथा द्वियं त्रियं च स्वयमेवोक्तमिति दिक् ।

---

शब्दरत्नम् ।

त्परस्य ङमो ङमुडजादौ पदे इत्यर्थेन पूर्वादित्वमेव कुतो न कृतम् । "पदस्य" ( पा० सू० ८।१।१६ ) इति च "मादुपधायाः" ( पा० सू० ८।२।९ ) इत्यादाविवावयवषष्ठी । अजादौ पदे इत्युक्तेर्न्ना अभ्यासे इत्यतः शतरि मननित्यादावनन्त्यस्य नेति भावः । बहिरङ्गपरिभाषयेति । ङुटो बहिरङ्गतया ऽसिद्धत्वादित्यर्थः । उभयम्—ङमुटः परादित्वं, द्वे इति सूत्राकरणं च । पाक्षिकम्—कार्यकालसम्बन्धि । दिगिति । दिगर्थस्तु तत्परिभाषायाश्चिपायामभाव एव । किं च यदि यदागमा इति न्यायेनाग-

भैरवी ।

ऽजादौ पद इत्यर्थ आश्रीयते तदा दण्डिनेत्यत्र दोषः परिहर्तुं शक्य एव । ननु नन्दनानन्नित्यत्र सर्वथा दोष एव, नन्दनशब्दो ल्युडन्तः, अनन्शब्दस्त्वन्प्रकृतिकशत्रन्तः, तेन नन्दनशब्दस्य कर्मधारयः, ङमन्तम्पदन्नन्दन्निति तदवयवस्यान्त्यनकारस्य परादिवद्भावेनाजादिपदमानन्निति तस्मिन्परे ङमुट् स्यादिति चेत् ? न । परममूलोक्तव्याख्यानेऽप्यस्य दोषस्य सत्त्वात् । यदि तूक्तदोषवारणाय पदस्येत्येतत्पदपदार्थे ङमन्ते पदे इत्येतत्पदपदार्थनिमित्तकपदत्ववत्त्वेदोऽपि विवक्षित इत्युच्यते, तदा तु न कोऽपि दोष इत्यवधेयम् । मूले—अत एवेति । णत्वाभावार्थमेवेत्यर्थः । कार्यकालेति । परशीत्यैवेदम् । एतस्य पाक्षिकमित्यस्य वैकल्पिकमित्यर्थ इति भ्रमस्तु न कार्यो, विकल्पस्याप्रक्रान्तत्वात् । अभाव एवेति । स्पष्टश्चेदमन्यत्र । यमुद्दिश्य य आगमो विहितः स आगमीयधर्मवैशिष्ट्येन गृह्यते—तद्धर्मवैशिष्ट्येन गृह्यते—स आगमीयेन शब्देन गृह्यते, तेन शब्देनागमविशिष्टस्य ग्रहणमिति चार्थः । आगमीयधर्मवैशिष्ट्येन गृह्यते आगमोऽपि तेन धर्मेण गृह्यते इत्यर्थे किम्मानमिति चेत् ? प्रकृतसूत्रस्थभाष्यग्रन्थ एवेति गृहाण ।

भावप्रकाशः ।

तदवयव एवेति भावः । द्वित्वेनाक्षिप्तं प्रत्यासत्त्या लब्धं फलितं स्पष्टार्थमावृत्त्या आह—ङम इति । अजादौ पदे इति । अचीति यथाश्रुतमेव, पदे इत्यनुवृत्त्या तदादिविधिः । अन्यथा पदस्येत्यस्यावृत्त्या सम्बन्धेऽपि स न स्यादिति भावः । पूर्वादित्वमेवेति । एवेन परादित्वव्यावृत्तिः । एवं च परांशमात्रं ऽप्यावर्त्यमिति भावः । ननु नन्दनानन् वनोदङ् इत्यादौ ङमन्तं पदं समुदितं तदवयवो ह्रस्वात्परो ङम् पूर्वपदान्तनकारस्तस्य परादिवत्त्वेनाजादिपदपरत्वात्तदापत्तिः । आद्ये ल्युडन्तस्य अन्प्रकृतिकशत्रन्तेन कर्मधारयः, अन्त्ये सुप्सुपेति पंचम्यन्तेन समास इति चेन्न । सिद्धान्तेऽपि दोषापत्तिसत्त्वेन सर्वसमाधेयत्वात् । प्रत्यासत्तिन्यायाश्रयणेनेष्टसिद्धेश्चेति भावः । अनन्त्यस्येति । तदनाश्रयणेनेदम् । ङुट इति । द्वित्वस्याप्युपलक्षणं, बहुनिमित्तकत्वस्य तत्र स्पष्टत्वादिति भावः । परादित्वमिति । उक्तरीत्या पूर्वादित्वमेव वाच्यमिति भावः । इदं च गौरवाङ्गीकारे । तदनंगीकार आह—द्वेइतीति । अयं च प्रकाशकृत्सिद्धान्तः । पाक्षिकमित्यस्य वैकल्पिकमित्यर्थभ्रमवारणायाह—कार्येति । अभाव एवेति । न तु कदापि प्रवृत्तिरित्य-

सरला ।

यदीति । अनेनारुचिः सूचिता । तथाच" "यदागमाः" इति परिभाषया आगममात्रे आगमिवृत्तिधर्मस्यारोपो भवतीति प्रतिपादकं "पदान्तभक्तः पदान्तग्रहणेन ग्राहिष्यते" इति प्रकृतसूत्रस्थं भाष्यमेकदेशिनः, 'सर्वेषाम्' इत्यत्र आम् प्रत्ययवृत्तिपदान्तत्वस्य सुडागमे आरोपे 'अपदान्तस्य' इति पर्युदासेन

नतु परमदण्डिनावित्यादौ अन्तर्वर्तिविभक्त्या पदत्वान्नुट् स्यादिति चेन्न ।

## शब्दरत्नम् ।

मानामागमिधर्मवैशिष्ट्यमपि बोद्ध्यते इति तेन नकाराद्यवयवनस्यापि पदान्तत्वाण्णत्व-निषेधसिद्धिरित्युच्यते तर्हि ह्रस्वात्परस्य ङमन्तपदस्याचि परे ङमुडित्येवार्थस्तथा सति स्यान्न प्रागुक्तः, स्याच्चातिमहदनिष्टमिति । स्पष्टं चेदं सर्वं भाष्ये ।

## भैरवी ।

तत्र हि –'दण्डिना' 'शकटिना' इत्यत्र ङमुड्वारणाय "पदादिग्रहणं कर्तव्यम्" इति वार्त्तिकस्य पदादित्यस्यानुवृत्तिम्प्रदर्श्य,"एवमपि परमदण्डिना परमच्छत्रिणेत्यत्र प्राप्नोति" इत्याशङ्कायाम् "उत्तरपदत्वे चापदादिविधौ प्रतिषेधः" इति वचनेन दोषम्परिहृत्य "एवमपि पदादित्यपूर्वङ्कर्त्तव्यं, यद्धि तत्प्रकृतं प्राक्सुपि कुत्सनादित्येवन्तत्" इति कथनानन्तरम् "एवन्तर्हि ङम एवायं ङमुट् क्रियते, कथम् ? पदस्येति वर्त्तते, ङम इति च; नैषा पञ्चमी, का तर्हि ? सम्बन्धषष्ठी, पदान्तस्य ङमो ङमुट् भवतीति ह्रस्वादुत्तरस्य अचीति, यदि ङम एव ङमुट् क्रियते कुर्वन्नास्ते "रषाभ्यान्नो णः समानपदे" इति णत्वम्प्राप्नोति, पदान्तस्येति प्रतिषेधो भविष्यति, पदान्तस्येत्युच्यते, नैष पदान्तः, पदान्तभक्तः पदान्तग्रहणेन ग्राहिष्यते" इत्युक्तम् । णत्वम्प्राप्नोतीति। आगमस्येत्यादिः । अत्र पदान्तभक्त इत्यादिना उक्तः परिभाषार्थो ध्वनितः । अनुवृत्तस्य पदस्येत्यस्य विशेष्यत्वाभिप्रायेण मूले व्याख्या कृता । तथा सति ह्रस्वादिति प्राधान्यात्पदस्य विशेषणं स्यादेव, ङम इति षष्ठ्यन्तमपि तस्य विशेषणं स्यात् । एवं सति यादृशः सूत्रार्थः सम्पन्नस्तमाह—तर्हि ह्रस्वात्परस्य पदस्येति । ङमन्तस्येति शेषः । तथा सति—पदस्य विशेष्यत्वाङ्गीकारे सति। न प्रागुक्तः । शङ्काकृतः। महदनिष्टमिति ।'अस्ति परमात्मा, देवदत्त ! रामानिति वद' इत्यादावतिव्याप्तिः, कुर्वन्नास्ते सन्नच्युत इत्यादावव्याप्तिः, स्यादित्यर्थः। तथा च लक्ष्यानुरोधान्मूलोक्त एवार्थः कार्यः। सर्वमिति। शङ्कासमाधानावसरोक्तम् ।

## भावप्रकाशः ।

थः । एतेनार्धमात्रालाघवेन ज्ञानगौरवसहनानौचित्यमतो "द्वेऽचिह्रस्वान्ङमः" इति न्यासे मात्रालाघवके तात्पर्यं प्रकाशकृत इति खण्डनकृत्प्रयासो निष्फल इति सूचितम्। यदीत्यस्योच्यतइत्यत्रान्वयो नतु बोध्यत इत्यत्र । एवं च नात्रार्थे सिद्धान्तत्वभ्रमः कार्य इति बोध्यम् । अपिः प्रसिद्धार्थसमुच्चायकः। अयंभावः—आगमी येन येन धर्मेण गृह्यते तद्गुणीभूतागमानामपि तेन ग्रहणं, स येन गृह्यते तेन तद्विशिष्टस्य ग्रहणमिति च तदर्थः। प्रकृतसूत्रभाष्यमेवात्रार्थे मानमिति । इतिहेतौ क्वचिदेतत्स्थाने तेनेति पाठः। नकाराद्येति । तस्याद्यवयवेत्यर्थः। नस्यापीति । आगमनस्यापीत्यर्थः ।साहृश्यपर्यवसितेन वाचनिकावयवत्वेन वर्णस्यान्यवर्णः कथमवयव इति न शङ्क्यम् । इयं च मुम्विधिसामर्थ्यादनित्या । तेन जक्षारेत्यादौ न दोषः । ततो वर्णग्रहणे एवाप्रवृत्तिरिति तु न, प्रकृतसूत्रे आनेमुक् सूत्रे च भाष्ये तत्र संचारितत्वादित्यन्यत्र स्पष्टम् । एतेनानेन न्यायेन समुदायस्य पदान्तत्वेऽपि केवलागमनस्य तत्त्वाभावः, नत्वं तु तस्याप्यस्त्येवेत्यपास्तम् । अनुवृत्तस्य पदस्येत्यस्य मूलाभिमतविशेष्यत्वाभिप्रायेणाह—तर्हीति। उक्तरीत्या पूर्वादित्वस्वीकारे मूलोक्तदोषाभावे सतीत्यर्थः। ह्रस्वादिति पदस्य विशेषणं प्राधान्यात्, एवं ङम इति षष्ठ्यन्तमपि। आवृत्तौ पदे इत्यनुवृत्तौ च मानाभाव इति भावः। तथासतीति । तस्य विशेष्यत्वाङ्गीकारे सतीत्यर्थः। एतेन सान्निध्यात् ह्रस्वादिति ङम एव विशेषणमिति ' 'तर्हि'इत्यादि चिन्त्यमित्यपास्तम् । प्रागुक्त इति । मूलाशयवर्णने शङ्कोक्त इत्यर्थः। महदनिष्टमिति। अस्ति प्रत्यङ्ङात्मा, सुगण्णीश इत्यादावेवानिष्टं स्यादिष्टस्थले नैव स्यादित्यव्याप्त्यतिव्याप्तिरूपमित्यर्थः। एवं च मूलकृदुक्तमवश्यमङ्गीकार्यमिति भावः। सर्वमिति । शङ्कासमाधानावसरोक्तमित्यर्थः।

## सरला

"आदेशप्रत्यययोः" इति षत्वाप्रवृत्त्यापत्तेः। अन्तत्वस्य चरमवर्ण सत्त्वेऽपि "अलोऽन्त्यस्य" इति सूत्रेऽन्त्यपदोपादानसामर्थ्यादलसमुदायेऽपि तत्त्वस्य संभवेन आम्प्रत्यये पदान्तत्वस्य सुलभत्वात् ।

"उत्तरपदत्वे चापदादिविधौ" इतिप्रत्ययलक्षणप्रतिषेधात्। अत एव परमवाचौ, परमगोदुहौ, परमलिहावित्यादौ कुत्वघत्वढत्वादीनि न। यत्तु प्राचा "ञ्चि च पदे" (पा०सू०८।३।२१) इत्यतः 'पदे' इत्यनुवर्त्याजादेः पदस्येति व्याख्यानाद् ङमुड् नेत्युक्तं, तदनेन प्रत्युक्तम्। इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाप्यनुसर्तव्यत्वात्॥

---

शब्दरत्नम्।

प्रत्ययलक्षणप्रतिषेधादिति। इदं च प्रकृतसूत्रे भाष्ये स्पष्टम्। अनुसर्त्तव्यत्वादिति। यदि तु स निषेधो "अपदादिविधौ" इति पर्युदासेन पदान्तत्वनिमित्तके विधावेवेति "न लुमता–" (वा०सू० १।१।६३) इति सूत्रे भाष्ये स्पष्टम्। किं चोत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तिरत एव माषकुम्भवापेनेत्यादौ "पदव्यवायेऽपि" (पा० सू०

भैरवी।

मूले–अत एव—"उत्तरपदत्वे" इति वचनस्वीकारादेव। तत्—तादृशं व्याख्यानम्। अनेन—उत्तरपदत्व इति वचनस्यात्र सञ्चारणेन। इहैव—परमदण्डिनावित्यादावेव। अनुसर्तव्यत्वादिति। एतेन वास्तविकम्परिभाषाश्रयणस्येदन्नलोपात्मकदूषणापत्तिवारणमेव फलन्न तु नुट्प्राप्तिर्नलोपम्प्रति नुटो ऽसिद्धत्वादिति ध्वनितम्। नचैवं सति यदि प्रतिपदोक्तो निपात ञ्चति गृह्यते तर्हि उत्तरार्थम्पदग्रहणमिति "ञ्चि"इति सूत्रस्थपरममूलविरोधः,पदे इत्यस्य सम्बन्धं विनापि निर्वाहस्य मूले कृतत्वादिति वाच्यम्,तदन्तं यत्पदमित्यर्थसम्पादनार्थन्तथोक्तमित्याशयात्। वस्तुतस्तु पदस्येत्यधिकाराण्ङम इति पञ्चम्यन्तेन सामानाधिकरण्याद्विभक्तिविपरिणामेनोक्तार्थस्य लाभान्नेदम्प्रयोजनं, किन्तु विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव यस्मिन्विधिरिति परिभाषाप्रवृत्त्याऽजादेः पदस्येति व्याख्यानलाभार्थमेव पदे इत्युत्तरार्थमित्युक्तम्। नचोत्तरपदत्व इति परिभाषया निर्वाहे ऽजादेः पदस्येति व्याख्यानन्निष्प्रयोजनमिति वाच्यम्, 'माषकुम्भवापेन' इत्यत्र 'पदव्यवायेऽपि'इति निषेधस्य सिद्ध्यर्थमुत्तरपदस्य कार्यित्व एव तस्याः परिभाषायाः प्रवृत्तिरित्यस्य स्वीकारात्। एवमन्योऽपि तत्र विशेष इत्याह—यदि त्विति। कार्यित्व एवेति। नच पदान्तत्वनिमित्तक इति पूर्वोक्तार्थेन माष-

भावप्रकाशः।

अनुसर्तव्यत्वादितीति। एतेन नलोपं प्रति नुटोऽसिद्धत्वान्नुट् स्यादिति मूलोक्तं चिन्त्यमिति खण्डनकारोक्तमपास्तम्। प्रकाशोक्त्यनुवादेनादोषात्। तदेतत् ध्वनयन् इतोग्रे इति भाव इत्याद्यनुक्त्या इतरसाकाङ्क्षत्वेन प्रतीयमानत्वादन्यथा फलितं विहाय सिद्धान्तरीत्या पूरयति—यदित्वित्यादि।

सरला।

पदान्तत्वनिमित्तके इति। तेन 'परमबुधौ' इत्यादौ भष्भावस्य पदान्तत्वनिमित्तकत्वेन न प्रवृत्तिः। ङमुड्विधेस्तु पदान्तत्वनिमित्तकत्वाभावःस्पष्ट एवेति न तत्र प्रत्ययलक्षणनिषेधप्रवृत्तिरिति तात्पर्यम्। कार्यित्वे एवेति। न च 'पूर्वदण्डिप्रियः' इत्यादौ दण्डिनो नलोपकरणाय "उत्तरपदत्वे" इत्यस्याप्रवृत्त्यर्थं मध्यमपदत्वानाक्रान्तमेवोत्तरपदं गृह्यते, तथाच 'माषकुम्भवापेन' इत्यत्र कुम्भेत्यस्य मध्यमत्वाक्रान्तत्वाद् "उत्तरपदत्वे" इति निषेधाप्रवृत्त्या णत्वनिषेधस्य सूपपादत्वेन कार्यित्वनिवेशो विफल इति वाच्यम्। यद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वं मध्यमपदत्वमिति परिष्कारेणादोषात्। वैशिष्ट्यं च स्वघटकार्थवदव्यवहितपूर्वत्वं स्वघटकार्थवदव्यहितोत्तरत्वं स्वघटकत्वमेतत्त्रितयसम्बन्धेन। तथाहि, 'पूर्वदण्डिप्रियः' इत्यादौ पूर्व सु दण्डिन् सु प्रिय सु एतद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा दण्डिन् इत्यस्य चिकीर्षिता तद्वृत्तिघटकप्रियाव्यवहितपूर्वत्वस्य तद्वृत्तिघटकपूर्वाव्यवहितोत्तरत्वस्य तद्घटकत्वस्य च सत्त्वाद् दण्डिन् इति निरुक्तमध्यमत्वाक्रान्तमेवेति न तत्र निषेधः। माषकुम्भवापेन इत्यादौ तु वृत्तिद्वयम्। तत्र कुम्भपदे माष आम् कुम्भ सु इत्येतद्वृत्तिघटकाव्यवहितपूर्वत्वस्याभावान्न पूर्वोक्तवृत्तिवैशिष्ट्यम्।

समः सुटि [ पा० सू० ८।३।५ ] ॥ यद्यपि मोऽनुस्वारेण सिद्धं तथाप्यनुनासिकत्वत्रिसकारकत्वसिध्यर्थमिदम् ॥

शब्दरत्नम् ।

८।४।३८ ) इति निषेधसिद्धिरित्युच्यते, तदा प्राचीनोक्तमजादेः पदस्येति व्याख्यानमेव शरणम् । स्पष्टं चैवं व्याख्यानं प्रकृतसूत्रे "ङमि च पदे" ( पा०सू०८।३।२१ ) इत्यत्र च भाष्ये । तेन निषेधेन सिद्धमिति प्रकृतसूत्रभाष्योक्तिस्त्वेकदेशिन इत्यास्तां तावत् ।

त्रिसकारकत्वेति । न च पुनर्द्वित्वेन तदपि सिद्धम् । लक्ष्ये लक्षणस्येति न्यायात् ।

भैरवी ।

कुम्भवापेनेत्यस्य निर्वाहे कार्यित्व एवेत्यस्य वयर्थ्यमिति वाच्यम्, किञ्चेत्यादिना भेदेनोपादानेन पक्षभेदसूचनात् । नचैवमपि 'पूर्वदण्डिप्रियः' इति त्रिपदबहुव्रीहाववान्तरतत्पुरुषे दण्डिन्नित्यत्र नलोपार्थम्पदत्वमावश्यकं तच्चोभयथोक्तनिषेधान्न सिध्यतीति वाच्यम्, मध्यमपदत्वानाक्रान्तस्य ग्रहणमित्यस्य निवेशेनादोषात् । नचैवम्पूर्वोक्तकार्यित्वनिवेशवैयर्थ्यमिति शङ्क्यम्, प्रत्यासत्त्या तत्समासीयमध्यमपदत्वानाक्रान्तत्वनिवेशेन माषकुम्भस्य वाप इति समासे कुम्भशब्दस्य पदत्वसिद्ध्यर्थं कार्यित्वनिवेशस्यावश्यकत्वात् । प्रत्यासत्तिफलन्तु "दधिसेचिशय" इत्यादावलुक्समासे सेक्शब्दे कुत्वाभावः । नचैवम्पूर्वदण्डिप्रिय इत्यत्रावान्तरतत्पुरुषीयमध्यमपदत्वानाक्रान्तत्वात्पुनरनुपपत्तिः, तत्समासप्रयोजकैकार्थीभावप्रयोज्यसमासीयमध्यमपदत्वनिवेशात् । नचैवंसति परमवाचेत्यादौ विशिष्टाभावादव्याप्तिरिति

भावप्रकाशः ।

निर्मित्तके इति । तत्स्थानिके इत्युक्तौ तु परमबुधावित्यत्र भष्भावापत्तिरतस्तथा सादृश्यमविवक्षितम् । एवेन नुटि प्रवृत्तिव्यावृत्तिः । न हि भष्भावविधाविव ङमुड्विधौ तत्त्वेन निमित्तताऽस्तीति भावः । मतेतीति । निरनुस्वारानुकरणम् । नन्वेवमपि ङमन्तं पदमित्युक्त्या निमित्तकोटौ पदान्तत्वस्य प्रवेशेनेष्टसिद्धिः । किञ्च प्रसज्यप्रतिषेधेनेष्टसिद्धिः । तदा हि प्रतिपदोक्तत्वात्तत्पदाद्योरित्येव तेन गृह्यतेऽतएव तत्र नातिप्रसङ्गः । अत एव नञ्द्वयाघटितवार्तिकैकवाक्यता, अतआह—किं चेति । अस्यार्थस्य यथालाभस्तथान्यत्र स्पष्टम् । एवेन प्रकृतलक्ष्यवत्तस्यापि व्यावृत्तिरिति भावः । सिद्धिरिति । अन्यथा तस्य तत्र निमित्तत्वेन तत्प्रवृत्त्याऽनिष्टं स्पष्टमेवेति भावः । अजादेरिति । ह्रस्वात्परपदावयवङमः परस्येत्यादिः । एवेन कौमुद्युक्तव्याख्यानव्यावृत्तिः । किं चानुवृत्तस्य वैयधिकरण्येनान्वयोपपत्तौ विभक्तिविपरिणामे मानाभावात् गौरवाच्च । अत एव षष्ठ्याः पञ्चम्यर्थे लक्षणेत्यपि न, कर्मणिद्वितीयेत्यादिनियमवैयर्थ्यापत्तेश्च । एवं च पदे इति अन्तपदवत् पदाधिकारस्य विशेषणत्वे ज्ञापकम् । अत एव न वा पदाधिकारस्य विशेषणत्वादिति प्रकृतसूत्रभाष्यं सङ्गच्छते; तदाह—स्पष्टमिति । तेनेति । उत्तरपदत्वे चेति वार्तिकोक्तेनेत्यर्थः । आस्तामित्यङ्गीकारे । एतेनैवजातीयका रत्नाकरदण्ड्यादयश्चिन्त्या एवेति सूचितम् ।

समः सुटीत्यस्यां मानमिति प्रागुक्तदार्ढ्याय शङ्कते—नचेति । न च मः सुटीत्येव सुवचम् । समोऽ-

सरला ।

माषकुम्भ अस् वाप इत्याकारकवृत्तिवैशिष्ट्यस्य कुम्भपदे निरुक्तोभयसम्बन्धेन सत्त्वेऽपि न तद्वृत्त्यारम्भकसुबनिमित्तकपदसंज्ञा चिकीर्षितेति कुम्भेत्यत्र प्रत्ययलक्षणत्वार्थम् उत्तरपदत्वे इति निषेधाप्रवृत्तये कार्यित्वनिवेश आवश्यकः । नचैवमपि "अतद्धिते" इतिवार्तिकप्रत्याख्यानाय पदे यो व्यवाय इति सप्तमीसमास आश्रितो भाष्ये । तथाच 'माषकुम्भवापेन' 'क्षीरपकुम्भेन' इत्यादौ फलभेदवारणाय पदपदं पदत्वयोग्योपलक्षणमित्यवश्यं वक्तव्यम् । अन्यथा "गतिकारकोपपदानाम्" इति सुबुत्पत्तेः प्रागेव समासेन आद्योदाहरणे पदे परतो यो व्यवायस्तस्याभावेन, अन्त्ये पदेन व्यवायस्याभावेनाऽऽरम्भप्रत्याख्यानयोः फलभेदो दुर्वारः स्यात् । तथाच 'माषकुम्भवापेन' इत्यादौ कुम्भेत्यत्र पदत्वयोग्यत्वस्य सत्त्वाण्णत्वनिषेध-

अत्रानुनासिकः [ पा० सू० ८।३।२। ]॥ अयमधिकारो विधिर्वेति द्वैतम्। आद्ये ऽत्रग्रहणमनर्थकम्, अधिकारादेव रुप्रकरणलाभात्। तुशब्दस्त्वधिकारपक्षे परस्मात्कार्यिणो विशेषद्योतनार्थः—परस्य नित्यं रुत्वं, पूर्वस्य तु वाऽनुनासिक इति; विधिपक्षे व्यर्थः। वाग्रहणं स्पष्टार्थम्। "अनुनासिकात्पर-" ( पा० सू० ८।३।४ )

---

शब्दरत्नम्।

अत्र चेदमेव ज्ञापकं बोद्ध्यम्॥

**अनर्थकमिति।** इदमुपलक्षणं प्रतिसूत्रमावृत्तौ गौरवं चेत्यपि बोद्धयम्।

**स्पष्टार्थमिति।** अनेन तुग्रहणमधिकारपक्षेऽपि परस्य रुत्वतः पूर्वस्यानुनासिक इत्यर्थस्य स्पष्टं बोधनार्थं वाशब्दवदिति सूचितम्। विधिपक्षेऽत्रग्रहणं तु एतद्रुप्रकरणे इत्यर्थलाभार्थम्। वस्तुतोऽत्राधिकारत्वमेवोचितम्। "मतुवसो रुः" ( पा०सू०८।३।१ ) इति सूत्रे

भैरवी।

वाच्यम्, मध्यमपदशब्देन तत्समासीयचरमपदपूर्व(त्वानाक्रान्त)स्य ग्रहणात् "अतद्धित" इत्यस्य प्रत्याख्यानाय पदव्यवाय इत्यस्य पदे व्यवाय इत्यर्थस्य करणेन माषकुम्भवापेनेत्यत्र वापशब्दस्य पदत्वसिद्ध्यर्थं कार्यित्वनिवेशस्यावश्यकत्वाच्च। नच पदपदस्य पदत्वयोग्यपरत्वं शङ्क्यम्, स्वशास्त्रसङ्केतितपदपदलक्षणापेक्षया शास्त्रान्तरसङ्केतितोत्तरपदलक्षणाया उचितत्वमित्याशयात्॥

ननु सूत्रे ऽत्रग्रहणसत्त्वे रुप्रकरण एव सम्बन्धो नतु "ढो ढे लोप" इत्यत्रेति लभ्यते इत्यनर्थकमित्यसङ्गतमत आह—इदमिति। उपलक्षणम् दोषान्तरस्यापीति शेषः। तदाह—प्रतीति। इत्यर्थस्येति। सूत्रोपात्तविधेयसम्बन्धे सति निराकाङ्क्षप्रतिपत्तिर्भविष्यतीति भावः। विधिपक्षे मूलानुक्तमत्रग्रहणस्य प्रयोजनं स्वयमाह—विधिपक्ष इति। अत्र केचित् "यद्यप्युभयत्र पाणिनितात्पर्यमिति लभ्यते, तथापि विधित्वमेवोचितम्, सकृद्विधेयबोधकशास्त्रस्य व्यापारेणाकाङ्क्षाशान्त्या लाघवादिति" तन्नेत्याह—वस्तुत इति। परममूले रोरित्यस्यैतत्प्रकरणविधे-

भावप्रकाशः।

न्यत्र सुट्परस्य मस्याभावादिति वाच्यम्। पदलाघवाभावात्, मात्रालाघवस्यासार्वत्रिकत्वाच्च। मान्तस्य पदस्य शब्दरूपस्य वा मस्यैव वा सुटि प्रत्याहारे रुः स्यादित्यर्थापत्तौ सुपुम् प्रतामौ प्रताम इत्यादौ रुत्वापत्तेश्चेति दिक्।

ननु रुप्रकरणादग्र "ढो ढे लोप" इत्यादावननुवृत्तिं स्पष्टतया बोधयितुं तत्र पक्षे सत्स्यादत आह—इदमिति। दोषान्तरस्यापीति शेषः। तदाह—प्रतीति। अपिना विधिपक्षसमुच्चयः। इत्यर्थस्येति। स्वसूत्रोपात्तविधेयसम्बन्धेन नैराकाङ्क्ष्येणान्यत्रानन्वयादिति भावः। वाशब्दवदिति। नोभयथापीति मूले तत्र शेषः सूचितः। सूचितमिति। एतेन पूर्वविरुद्धमिदमित्यपास्तम्। तत्रार्थेऽतात्पर्यात् तस्याप्यत्रैव तात्पर्याच्च। मूले न्यूनतां परिहरति—विधीति। एवमुभयत्र गमकसत्त्वात्पाणिनेरुभयमभिमतमिति मूलतो लब्धम्। तत्र प्रक्रियाप्रकाशमतानुयायिरत्नाकरः—"विधित्वमेव युक्तं सकृद्विधिव्यापारमात्रेणा-

सरला।

सिद्ध्या कार्यित्वनिवेशो विफल इति वाच्यम्, अटतीत्यट्, परमश्चासावट् च परमाट् तस्मादाचारक्विबन्तात् क्विपि "तितुत्र" इतीण्निषेधे 'परमाट्तिः' इत्यादौ ष्टुत्वनिषेधाय कार्यित्वनिवेशस्यावश्यकत्वात्। विस्तरस्त्वन्यत्र द्रष्टव्यः।

मूले—द्वैतमिति। द्वाभ्यामितं द्वीतं तदेव द्वैतं स्वार्थिकःप्रज्ञादेराकृतिगणत्वादण्। द्वाभ्यां प्रकाराभ्यामित्यर्थः। ततश्च विरुद्धधर्मद्वयप्रकारकज्ञानविषयः सन्देह इत्यर्थः। पूर्वस्येति। इदमुपलक्षणं रुप्रकरणीयविधेयाव्यवहितपूर्वस्य। तेन "समो वा लोप" इति लोपपक्षेऽपि अनुनासिकानुस्वारसिद्धिः। उदाहरणे—

इति ज्ञापकादेव सिद्धेः । न हि विकल्पं विना ऽनुनासिकाभावपक्ष इति सम्भवति । इदमेव ध्वनयितुं वृत्तौ तु वेति शब्दौ नोक्तौ ॥

अनुनासिकात् ( पा०सू० ८।३।४ ) ॥ ल्यब्लोपे पञ्चमीत्याह—अनुनासिकं विहायेति । एवं च संसर्गवद् विप्रयोगस्यापि विशेषावगतिहेतुत्वादवत्साऽऽनीय-

शब्दरत्नम् ।

कृतयोः "वन उपसंख्यानं" "विभाषा भवद्–" इत्यनयोरुदाहरणे भाष्ये ऽनुनासिकाद्यनुच्चारणात् । विधित्वे तु तत्र प्रवृत्तिर्दुर्वारैव । अधिकारत्वे तूत्तरत्रैव प्रवृत्तिः । स्पष्टं चेदं वृत्ताविति तत्त्वम् ॥

ल्यब्लोपे इति । दिग्योगलक्षणा तु न, अत्रानुस्वारपरानुनासिकः पूर्वस्य तु वेति न्या-

भैरवी ।

यस्थानिन इत्यर्थः । तेन लोपस्यापि सङ्ग्रहः । इति सूत्रेकृतयोरिति । एतेन यदुक्तमत्रग्रहणस्य विधित्वपक्षे प्रयोजनन्तथाकल्पनेऽपि दोष एव । यद्यपि "वन उपसंख्यानम्" इति छान्दसन्तथापि विभाषेति लौकिकमपाति तत्र दोष एवेत्याशयः । उत्तरत्रैवेति । अत एवास्य सूत्रस्य 'मतुवसोः" इत्यनन्तरम्पाठः कृतः ॥

परशब्दस्य श्रवणेन दिग्योगलक्षणा पञ्चमीति भ्रान्तिवारणायाह—दिग्योगेति । इति न्यासेनेति । नचैवन्न्यासे "आतोऽटि नित्यम्" इत्यत्राप्युभयसम्बन्धापत्तिः । नचेष्टापत्तिः, महाँ

भावप्रकाशः ।

काङ्क्षाशान्त्या लाघवात् । अन्यथोक्तरीत्यातिगौरवम्" इति, तन्नेति ध्वनयन्नाह—वस्तुत इति । एवेनोभयव्यावृत्तिः । रोरित्यस्यैतत्प्रकरणविधेयस्थानिन इत्यर्थः । एतेनैवं व्याख्याने लोपादिपक्षेऽनुनासिकादिकरणं तव चिन्त्यमिति खण्डनकुदुक्तिः परास्ता । सूत्रस्योदाहरणदानादाह—कृतयोरिति । छान्दसप्रयोगसिद्ध्यर्थमपि सूत्रादिप्रवृत्तेरिति भावः । ननु तत्सूत्रे पाठात् वनश्छान्दसत्वाच्चाद्यवार्तिकस्य छन्दस्येव प्रवृत्तिरतस्तत्र छान्दसत्वेनापि निर्वाहः सुकर इति न सर्वथा तद्विरोधः, अत आह—विभाषेति । अस्य तत्र पाठेऽपि न छान्दसत्वं तत्प्रयोगस्योभयत्रेष्टत्वादिति भावः । दुर्वारैवेति । एतद्प्रकरणइत्यर्थकात्रग्रहणादिति भावः । उत्तरत्रैवेति । तत्वस्यैव तत्पदार्थत्वात् । अन्यथा पूर्वमेव पठेत् । न च विधिपक्षेऽपि पूर्वत्रैव पाठ्येऽग्रेपाठसामर्थ्यात्तत्राप्रवृत्तिरिति वाच्यम्, ततो लाघवेन तत्पक्षस्यैव युक्तत्वात् । इदमेव ध्वनयितुमुचितमिति प्रागुक्तम्, एवं चागत्योक्तगौरवाङ्गीकार इति भावः । सूत्रद्वये भाष्याभावादाह—वृत्ताविति ।

इति न्यासेनेति । न चैवम् "आतोटि" इत्यत्रापि तथैवानुवृत्त्याऽनिष्टापत्तिः । इष्टापत्तिस्तु कर्तुं-

सरला ।

'हरिवो मेदिनं त्वा' 'भो भगो अघो' इत्यादौ ।

मूले विशेषावगतिहेतुत्वादिति ।

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥

इत्यत्र विशेषार्थनिर्णायकेषु विप्रयोगस्यापि गणनेन तस्यापि तत्त्वात् । अनवच्छेदे सन्देहे इति तदर्थः । 'सवत्सा आनीयताम्' इत्यत्र वत्ससम्बन्धस्य धेनावेव सत्त्वेन यथा वत्ससंयोगेन धेनुरित्यर्थोऽवगम्यते तथैव 'अवत्सा' पदस्य विप्रयोगेन धेनुरर्थोऽवगम्यते इति । प्रकृतेऽपि तथैव बोध्यम् ।

नामित्यत्रैव सम्भावितानुनासिक्यगुणक एव उपस्थितत्वादाकाङ्क्षितत्वाच्चावधित्वेन सम्बध्यत इत्यभिप्रेत्याह—रोः पूर्वस्मादिति। अनुस्वारागम इति। आगमत्वं च परशब्देनैव लभ्यते "पूर्वौ तु ताभ्यामैच्-" ( पा० सू० ७।३।३ ) इत्यत्र पूर्वशब्देनैचोरिवेति भावः ॥

विसर्जनीयस्य ( पा० सू० ८।३।३४ ) ॥ खरीति। एतच्च मण्डूकप्लुत्या "खरवसानयोः" ( पा० सू० ८।३।१५ ) इति सूत्रादनुवर्तते। नन्वनुस्वारस्यानच्त्वात्ततः परस्य द्वित्वं न स्यादेवेत्यत आह—अनुस्वारविसर्गेत्यादि। अकारोपरीति। यदि विकारोपरि पठ्येरन् तर्हि पयःसु, यशःसु, इत्यादौ इणः पर-

---

### शब्दरत्नम्।

सेन सिद्धौ "अनुनासिकात्पर-" ( पा०सू०८।३।४ ) इत्यस्य वैयर्थ्यापत्तेरिति भावः। परशब्देनैवेति। प्रसिद्धावेवकारः।

मण्डूकेति। एकदेशे स्वरितत्वप्रतिज्ञयेत्यपि बोध्यम्। अत एवावसाने न सः।

### भैरवी।

इन्द्रः' इत्यस्मिन् तदुदाहरणेऽनुस्वारानुपलम्भादिति वाच्यम्, एकदेशे स्वरितत्वप्रतिज्ञयेष्टसिद्धेः। अवधारणपरत्वे आगमलिङ्गस्य टित्त्वकित्त्वादेरभावे परशब्द एवागमलिङ्गमिति लभ्यते, तच्चासम्भवि, पूर्वशब्दस्याप्यागमलिङ्गस्य दर्शनादत आह—प्रसिद्धावेवेति।

नन्वेकयोगनिर्दिष्टानामिति न्यायेनावसानपदसम्बन्धोऽपि स्यादत आह—एकदेश इति।

### भावप्रकाशः।

मनर्हा, तद्वैयर्थ्यापत्तेः। महाँ इन्द्र इत्यादौ दीर्घादटीतिरुत्वेऽनेनैव तयोः सिद्धत्वात् छन्दस्यापाद्यमानरूपाभावात्पाक्षिकदोषाभावादिति वाच्यम्। छन्दस्यापाद्यमानरूपाभावेन प्रयोगनैयत्येन चैवमापादयितुमशक्यत्वात्। अत्रानुस्वारपरोनुनासिक इति न्यासोक्तेश्च, समस्तोक्तावपि लक्ष्यानुरोधेनैकदेशे स्वरितत्वप्रतिज्ञयेष्टसिद्धेश्च। क्वचिच्छाखायामनुस्वारपाठस्तु च्छान्दसत्वाद्व्यत्ययेन बोध्यः केचित्तु वेदेऽपि विकल्पस्यैवावस्थितत्या तत्सूत्रमेव त्याज्यम्। एवं च न व्यत्ययकल्पनेति लाघवमिति न शङ्क्येत्याहुः। एतेन वाग्रहणमावश्यकम्, अन्यथाऽनुनासिकात्परोऽनुस्वारः स्यात्। ल्यब्लोपपञ्चम्यां मानाभावात्। नच परपदं व्यर्थं पूर्वं इत्येतन्निवृत्त्यर्थत्वेन चारितार्थ्यात्। "तस्मादित्युत्तरस्य" इत्यस्य तु न प्राप्तिरादेशविधावेव तत्प्रवृत्तेरत एव परश्चेति सार्थकम्। किं च षष्ठ्यन्तस्योपस्थित्याऽनिष्टापत्तेः। षष्ठ्यंशविकल्पस्थितौ तु न गमकम्। एवं च वाग्रहणं स्पष्टार्थमिति मूलं चिन्त्यमिति रत्नाकरोक्तमपास्तम्। अवधारणार्थत्वे उत्तरग्रन्थासङ्गतिर्व्यावर्त्याभावश्चात आह—प्रसिद्धाविति।

ननु मण्डूकानुवृत्तौ तस्यावसानेऽपि स्यात्। आक्षेपानुवृत्त्योस्तुल्यत्वादत आह—एकदेश इति। तत्फलमाह—अत एवेति। ननु तत्र संहिताधिकारादेव न तत्र सः, अवसानसंज्ञया संहितासंज्ञाया बाधात् म-

### सरला।

परशब्देनैवेतीति। परावयवोऽनुस्वारो भवतीति तदर्थेन अवयवत्वावच्छिन्नविधेयताश्रयत्वेन तस्यागमत्वं लभ्यते इति भावः। एवञ्च "अयमागमोऽनवयव एव अवयवत्वे मानाभावात्" इति शेखरग्रन्थश्चिन्त्यः। अत एव 'महाँ इन्द्रः' इत्यादौ "भोभगो" इत्यनेन यत्वं सिध्यति। अन्यथाऽनुस्वारविशिष्टस्यापदत्वेन यदागमन्यायेन ग्रहणाभावेन यत्वं दुरुपपादं स्यादिति।

एकदेशे स्वरितत्वेति। "खरवसानयोः सः" इति न्यासेनैव सिद्धे "विसर्जनीयस्य सः" इत्यस्यारम्भसामर्थ्यादत्रावसानपदसम्बन्धाभावाय एकदेशे खर्पदमात्रे स्वरितत्वज्ञापनादित्यर्थः।

स्येति षत्वं स्यादिति भावः। अच्त्वादिति। न चैवं हरिः कर्त्ता, हरिं स्मरेदित्यादौ यणादिप्रसङ्गः। त्रिपादीस्थत्वेन विसर्गादीनामसिद्धत्वात्। अनुस्वारस्यापि द्वित्व इति। अपिशब्दात्ककारस्य। वचनान्तरेणेति। "अचो रहाभ्याम्" (पा०

शब्दरत्नम्।

पूर्वेण सन्निकर्षरूपा संहिता त्ववसानेऽप्यस्त्येव। अत एव संहिताधिकारेऽवसानकार्यपाठः सङ्गच्छते। षत्वं स्यादिति। अत एव पुंस्वित्यादावुकारं निमित्तीकृत्यानुस्वारव्यवधाने षत्वमाशङ्क्य नुम्स्थानिकानुस्वारस्यैव "नुम्विसर्जनीय" (पा०सू०८।३।५८) इति सूत्रे ग्रहणान्नेतिभाष्यं सङ्गच्छते। इकाराद्युत्तरं पाठे हि अनुस्वारमिणं गृहीत्वा षत्वं दुर्वारं स्यादिति भावः। यणादीति। पूर्वसवर्णदीर्घ आदिशब्दार्थः। अयं पाठोऽनित्यः। "अट्कुपु" (पा०सू०८।४।२) इति सूत्रे ऽनुस्वारोपलक्षणनुम्ग्रहणात। अत एव हरिं जयतीत्यादौ "झलां जश् झशि" (पा०सू०८।४।५३) इति नेति

भैरवी।

ननु संहिताधिकारादेव तत्र न भविष्यतीत्यत आह—पूर्वेणेति। नत्वाकडारीयत्वाद्वाध्यबाधकभावः। संज्ञिभेदात्। एतेन पूर्वमादाय सन्निकर्षसत्त्वन्ध्वनितम्। अत एव—उक्तरीत्या तयोः समावेशस्येष्टत्वादेव। सङ्गच्छत इति। अन्यथा "तोर्लि" इत्यादौ पुनस्तस्य सम्बन्धे मण्डूकप्लुत्यापत्तिरिति भावः। अत एव—अयोगवाहानामकारोपरि पाठादेव। दुर्वारमिति। नचैवं सति नुम्ग्रहणवैयर्थ्यमिति वाच्यम्, 'सुहिन्सु' इत्यत्रानिष्टसम्पादकतया तस्य चारितार्थ्यसम्भवात्। आदिशब्दार्थ इति। एतेनानिष्टापत्तौ तात्पर्यमिति भावः। अत्र पूर्वसवर्णदीर्घस्य प्राप्तिः, द्वितीयेत्वच्त्वेऽपि द्वितीयान्तत्वविरहेण न दीर्घस्य प्राप्तिः। वस्तुतस्तु प्रथमेऽपि यणादेशस्यैव प्राप्तिर्नतु दीर्घस्य, अल्विधित्वेन स्थानिवद्भावाभावात। अत एव—अनित्यत्वादेव। झलां जश् झशीति। "झलाञ्जशोऽन्ते" इत्येतद्दृष्ट्याऽनुस्वारस्यासिद्धत्वात्तत्यागः। यदि जश्त्वं स्यात्तदा—

अयोगवाहा विज्ञेया आश्रयस्थानभागिनः।

भावप्रकाशः।

झासंज्ञया पूर्वपरयोः सन्निकर्ष एव तत्सत्त्वाच्चात आह-पूर्वेणेति। तमादाय तयोः सन्निकर्षस्य सत्त्वात् संज्ञिभेदेन बाध्यबाधकभावायोगाच्चेति भावः। अत एवेति। उक्तरीत्या तत्र तयोः समावेशस्येष्टत्वादेवेत्यर्थः। पाठ इति। अन्यथाऽसम्भवदुक्तिकतापत्तिः स्पष्टैव। न च तेषु न तदधिकारः, तोर्लीत्यादौ मण्डूकप्लुत्यापत्तेः, स्पष्टं चेदमत्र भाष्ये। षत्वाभावे मानमाह-अत एवेति। इण उत्तरमपाठादेवेत्यर्थः। ग्रहणादिति। नुम्पदेनेति भावः। नेतीत्यस्य समाधानपरेति शेषः। दुर्वारमिति। नुम्ग्रहणं तु 'सुहिन्सु' इत्यादावनिष्टसम्पादनेन सफलं व्यर्थमेव वा स्यात्। तत्सामर्थ्यादभिमतार्थान्तरकल्पनापेक्षया त्विदमेवोचितमिति भावः। आदिशब्दार्थ इति। तथाचाद्ये यणं बाधित्वाऽयं स्यात्। अन्त्ये तु न, अगन्तात्प्रातिपदिकादजाद्योः प्रथमाद्वितीययोरित्यर्थाङ्गीकारेणोभयत आश्रयणात्। किं चाच्त्वेन व्यपदेशिवद्भावेन तदादित्वेऽपि द्वितीयात्वाभावात् अल्विधित्वाच्च। एवं च तत्र यणिति केचित्। अन्ये तु विसर्गानुस्वारयोरच्त्वेऽपि न व्यपदेशिवद्भावेन तदादित्वेऽल्विधित्वादिना प्रथमात्वाद्यभावः परममूलोक्तसिद्धान्तव्याख्यानेप्यशास्त्रीयत्वात्तत्सम्बन्धित्वालाभः। हेज्ञानेत्यादौ वैषम्यमिति न दोषः। एवं चोभयत्रापि यणेव। पूर्वसवर्णत्यादि ग्रन्थोपि कश्चिदित्यन्तैकदेशिग्रन्थान्तर्गत इत्याहुः। अतएवेति। अस्यानित्यत्वादेवेत्यर्थः। स्थानप्रयत्नाभ्यामित्यादिमान्यरत्नाकराद्युक्तिस्तु न युक्तेति भावः। "झलाञ्जशोऽन्ते" इत्येतद्दृष्ट्या तस्यासिद्धत्वादाह—झलाञ्जश् झशीतीति। अन्यथा "अयोगवाहा विज्ञेया आश्रयस्थानभागिनः"।

सू० ८।४।४६) इति कृतेऽपि "यणो मयः" इति भवत्येवेति भावः ॥

पुमः खयि (पा० सू० ८।३।६)॥ पुंसः संयोगान्तलोपे कृते ऽवशिष्टभागस्येदमनुकरणम्। पर्युदासादिति। "इदुदुपधस्य-" (पा० सू० ८।३।४१) इति षत्वविधायके सूत्रे इति भावः। अप्रत्ययस्य यो विसर्ग इति वैयधिकरण्येन व्याचक्षाणानां प्राचां मतेनेदम्। वक्ष्यमाणरीत्या सामानाधिकरण्येनान्वये तु षत्वप्राप्ताविति बोध्यम् ॥

ख्याञादेश इति। आदेशो हि उपदेशे खशादिः। असिद्धप्रकरणे णत्वानन्तरं खशाञः शस्य यत्वं विकल्प्यते। तेन सुप्रख्येन निर्वृत्तं सौप्रख्यं तत्र भवः सौप्रख्यीयः। यत्वस्यासिद्धत्वात् "धन्वयोपधात्-(पा० सू० ८।२।१२१) इति वुञ्नेत्यादि

---

शब्दरत्नम्।

बोद्धव्यम्" इति कश्चित्। भवत्येवेति। एकस्य द्वितीयोच्चारणस्यैकेन साधुत्वबोधनं तयोर्मध्येऽपरस्य द्वितीयोच्चारणस्यान्येन साधुत्वबोधनमितिभावः।

वक्ष्यमाणरीत्येति। प्रत्ययरूपो यो विसर्ग इति व्याख्यादर्शरीत्येत्यर्थः। वस्तुतस्तदसङ्गतम्। कविभिः कृतमित्यादौ दोषापत्तेः। एतच्च "अन्वये तु" इति तुना ऽरुचिबोधकेन सूचितम्। यदा तु सूतेः सस्य पकारोऽन्त्यस्य ह्रस्वो ण्डः प्रत्यय इति "स्त्रिया-

भैरवी।

इति शिक्षोक्तरीत्या तालव्यत्वेन जकारः स्यात्। कश्चिदिति। अनेनारुचिः सूचिता। तथाहि—अट्कुप्वाङितिसूत्रस्थनुम्ग्रहणस्य प्रत्याख्यानेन ज्ञापकान्तराभावेन चानित्यत्वे न मानम्, भाष्यानुक्तं चानित्यत्वम् 'झलाञश्' इति जश्त्वापत्तिस्तु "अभ्यासे चर्च" इतिसूत्रसान्निध्येनानन्त्यझल एव ग्रहणेन वारयितुं शक्येति। एकस्मिन् लक्ष्ये एकस्य शास्त्रस्य पुनः प्रवृत्तौ लक्ष्ये लक्षणमिति न्यायविरोध इत्याह—एकस्येति। एकेन—"अचो रहा" इत्यनेन। अन्येन "यणो मयः" इत्यनेन ॥

तत्—व्याख्यादर्शोक्तसामानाधिकरण्यम्। एतच्च—असाङ्गत्यञ्च। सिद्धान्तरीत्या ऽऽह—यदेति। "सूतेः सप्प्रसवे पुमान्" इति तत्रोक्तम्। सूतेः सस्य प् इति तदर्थः। मूलकारोक्तं

भावप्रकाशः।

इति शिक्षोक्त्या तालव्यत्वेन जकारापत्तिरिति भावः। कश्चिदिति। कौस्तुभकृदित्यर्थः। तत्र नुम्ग्रहणस्य नुम्विसर्जनीयेति सूत्रे विसर्जनीयग्रहणस्येव प्रत्याख्यानात् ज्ञापकान्तरस्याभावाच्च भाष्यानुक्तत्वाच्चास्यानित्यत्वमप्रमाणम्। अभ्यासेचर्चेत्यादि साहचर्यादपदान्ते एव तत्प्रवृत्तिस्वीकाराज्जश्त्वं न। एवमादिशब्दो व्यर्थ एवेत्यरुचिरनेन सूचिता। अत्र एकस्य शास्त्रस्य पुनः प्रवृत्तौ स न्याय इति ध्वनयन् वचनयोर्युगपत् क्रमेण वा प्रवृत्तौ एकस्यैव विधानापत्तिर्द्वे इत्यस्य संख्येयपरत्वेन शब्दद्वयस्योच्चारणसाध्यत्वेन तस्य बुद्ध्यारोहावश्यकत्वेन पर इत्यादिषष्ठ्याः कारकविभक्तित्वस्य न्याय्यत्वेन चोच्चारणे इत्यध्याहारेणोच्चारणद्वयस्यैव विधेयत्वादिति शङ्कानिरासायाह—एकस्येति। पूर्वत्रासिद्धीयत्वेन शास्त्रयोः क्रमेणैव प्रवृत्तेरिति भावः। उच्चारणपदेन तत्र द्विःप्रयोगपक्षः सूचितः। एकेन—'अचो रहाभ्याम्' इत्यनेन। पूर्वत्रासिद्धीयमिति तु न, फलाविशेषात्। अपरस्य—परभिन्नस्य पूर्वस्येति यावत्। अन्येन—"यणोमय" इत्यनेन।

ध्वनितसिद्धान्तभूतवक्ष्यमाणरीत्यापि परममूलसङ्गतेराह—प्रत्ययेति। तत्—व्याख्यादर्शोक्तं सामानाधिकरण्यम्। एतच्चेति। तस्यासाङ्गत्यं चेत्यर्थः। एवं मूलयोजनेप्यसङ्गतिरेवेति ध्वनयन्नाह—यदास्त्विति। सिद्धान्तमतावलम्बे त्वित्यर्थः। सूतेरिति। "सूतेः सप्प्रसवे पुमान्" इति तत्र भाष्योक्त

प्रयोजनान्याकरे स्थितानि । एवं च यत्वस्यासिद्धतयाऽम्परत्वाभावात् "पुमः खयि" ( पा० सू० ८।३।६ ) इति रुत्वं नेत्यर्थः। पुंख्यानमिति । चक्षिङो ल्युट् । ख्याञादेशः। नन्वादेश इह दुर्लभः। "वर्जने प्रतिषेधः" "असनयोश्च" इति वार्तिकादिति चेत् ? सत्यम् । "बहुलं तण्यन्नवधकगात्रविचक्षणाजिराद्यर्थम्" इति वार्तिके बहुलग्रहणात्समाधेयम । तथा च ख्शादित्वप्रयोजनगणनवार्तिकम् रुविधिः-पुंख्यानमिति, णत्वं-पर्याख्यानमिति, निष्ठानत्वमाख्यातम् इति च । शकारेण व्यवधानात् "कृत्यचः" ( पा० सू० ८।४।२९ ) इति णत्वं न, तथा आख्यातमित्यत्र "संयोगादेरात-" ( पा० सू० ८।२।४३ ) इति नत्वं न, यत्वस्यासिद्ध्या यण्वत्ताविरहात् । एवं च "न ध्याख्या"—( पा० सू० ८।२।५७ ) इति सूत्रे ख्याग्रहणं न कर्तव्यमिति भावः। न च ख्या प्रकथने, इत्येतदर्थं तदिति वाच्यम् । तस्य सार्वधातुकमात्रविषयत्वात् । अत्र च "सस्थानत्वं नमः ख्यात्रे" इत्युत्तरवार्तिकं प्रमाणम् । सस्थान इति जिह्वामूलीयस्य प्राचां सञ्ज्ञा । स इह न ।

---

शब्दरत्नम् ।

म्" ( पा०सू०४।१।३) इति सूत्रभाष्यकैयटोक्तव्युत्पत्तिस्तदा सस्य लोपे मस्यैव प्रत्ययत्वमिति व्याख्यादर्शोक्तसामानाधिकरण्येऽपि षत्वाप्राप्तिरेव । पातेर्डुम्सुन्निति व्युत्पत्तिमादाय तु मूलमिति दिक् ॥

**शकारेणेति** । यत्वासिद्धत्वादिति भावः । न कर्तव्यमिति । यत्वासिद्ध्या यण्वत्ताविरहेण नत्वाप्राप्तेरिति भावः । अत्र चेति । ख्यातेः सार्वधातुकमात्रविषयत्वे इत्यर्थः । सञ्ज्ञेति । एवं च तदुत्तरभावप्रत्ययेन सस्थानशब्द उच्यते । तेन स्ववाच्यो जिह्वाम-

भैरवी ।

योजयति—पातेरिति ।

ख्याञादेशो नेति नापूर्वं वचनं किन्त्वर्थसिद्धमिति प्रतिपादयति–मूले–आदेशो हीत्यादिना । बहुलन्तण्यन्नेत्यादि । तणिति संज्ञाछन्दसोः संज्ञा। बहुलग्रहणस्य प्रयोजनमाह—अन्नेत्यादि । अन्नादेः क्ते जग्ध्यादेशाभावः । वधकेत्यत्र "हन्तेण्वुल्" अनेन वधादेशः । गात्रेत्यत्रेणो गादेशः । विचक्षणे ख्याञादेशाभावः । अजिरे व्यादेशाभावो बोध्यः । यत्वस्यासिद्ध्येति । तद्विधायकशास्त्रस्यासिद्ध्येत्यर्थः । एवञ्च—सस्थानशब्दस्य संज्ञारूपत्वे च । उच्यते इति ।

भावप्रकाशः ।

रिति भावः। तथापि मूलं योजयति—पातेरिति । दिगिति । तदर्थस्तूक्तभाष्यविरोधात्तदनार्षमप्रमाणम् । अत एव तुः प्रयुक्तः । एवं च मूलमयुक्तमेवेति ।

यत्वासिद्धेति । तद्विधायकशास्त्रासिद्धेत्यर्थः। एवमग्रेऽपि । मुख्यत्वात्साध्यपरामर्शसङ्गतेराह–ख्यातेरिति । ननु तस्य तत्संज्ञात्वेऽपि भावप्रत्ययोल्लेखेनतदलाभः, अत आह—एवंचेति । संज्ञात्वेचेत्यर्थः । उच्यतइति । संज्ञाशब्दस्थले शब्दस्यैव प्रवृत्तिनिमित्तत्वादिति भावः । तेन—त्वान्तेन तद्वाचकेन। स्ववाच्य इति । लक्षणामूलसम्बन्धप्रदर्शनमिदम् । एवञ्च स्वं सस्थानशब्दः, तथा च त्वान्तवाच्यसस्थानशब्दवाच्य इत्यर्थः । अन्वयाद्यनुपपत्तेरिति भावः । एवं दृष्टान्तेपि बोध्यम् । ननु ख्शादीति वाच्ये

सरला ।

सस्थानशब्द इति । संकेतसम्बन्धेन सस्थानशब्दवत्त्वं सस्थानपदशक्यतावच्छेदकम् । तेन रूपेण

"शर्परे विसर्जनीयः" ( पा० सू० ८।३।३५ ) इत्यस्य प्रवृत्तेरिति भावः । यदि स्वतन्त्रोऽपि धातुरार्द्धधातुके इष्येत तदा जिह्वामूलीयस्य दुर्वारतयेदं वार्तिकमसङ्गतं स्यात् । यत्तु हरदत्तमाधवादिभिरुक्तं ख्याधातुरपि ख्शादिर्यत्वविधिरप्युभयसाधारण इति । तच्चिन्त्यम् । भाष्ये चक्षिङ एवोपक्रमात्सार्वधातुकेऽपि ख्शादिप्रयोगापत्तेश्च । न चेष्टापत्तिः । माधवेनार्द्धधातुकेष्वेवायं ख्शादिरित्युक्तत्वात्, सार्वधातुकेऽनभिधानस्यैव शरणीकर्तव्यत्वापत्त्या गौरवग्रस्तत्वाच्चेत्यास्तां तावत् ।

स्यादेतत् । बहवः पुमांसोऽस्मिन् कुले बहुपुम् ख्यातीत्यत्र रुत्वं स्यात् । उरःप्रभृतिषु पुमशब्दस्यैकवचनान्तस्यैव पाठान्नेहकप् । सार्वधातुके च ख्यातेः प्रयोगो निर्बाध एवेति चेत् । इष्टापत्तेः । संहिताया अविवक्षायां तु रुत्वं नेति स्पष्टमेव । यत्तु प्राचा "ख्याधातौ नेति केचित्" इत्युक्तं, तत्र यदि ख्याञादेशे इत्यर्थस्तर्हि केचिदित्यनुचितम् । स्वतन्त्रे धातौ चेत्तर्हि सार्वधातुकविषयेऽपि निषेधः स्यात् । न चेष्टापत्तिः । निर्मूलत्वात् ।

---

शब्दरत्नम् ।

लीयो वार्तिके लक्ष्यते, कुत्वं कस्मान्न भवतीत्यत्रेवेति भावः । क्शादीति । प्रयोगे चर्त्वप्रवृत्तिरिति भावः । इत्युक्तत्वादिति । एवं च माधवो नेष्टापत्तिं कर्तुमर्ह इत्यर्थः । अनभिधानस्यैवेति । ख्शादेरनभिधानस्यैवेत्यर्थः । गौरवेति । ख्शादित्वं स्वीकृत्याऽनभिधानस्वीकारापेक्षया तदस्वीकृत्यैव ख्यातेरार्धधातुकेऽनभिधानस्यैव स्वीकारे लाघवमिति भावः । रुत्वं स्यात्—रुत्वमित्युपलक्षणं जिह्वामूलीयस्य षत्वस्य च । नमः ख्याति, निःख्यातीत्यादौ ।

भैरवी ।

संज्ञाशब्दस्थले शब्दस्वरूपस्यैव प्रवृत्तिनिमित्तत्वादिति भावः । एवञ्च—तथा माधवोक्तौ च ख्यातेः स्वतन्त्रस्येति शेषः ।

भावप्रकाशः ।

क्शादीत्ययुक्तमत आह—प्रयोगे इति । 'क्शादीति पाठे प्रयोगे' इत्यपाठः । चर्त्वेति । एतेन क्शादिरयमादेश इष्यत इतिवृत्तिः परास्ता । अत एवापर आह ख्शादिरेवायमादेश इति हरदत्तेन सिद्धान्तितम् । न च नादिन्या इत्यग्रे यत्वविधिरस्तु आदेशो वृत्त्युक्त एवास्तु चयो द्वितीया इत्यनेन द्वितीयो भविष्यतीति किं खादित्वेनेति वाच्यम् । प्रक्रियालाघवाय तथोक्तेरिति भावः । एवं चेति । तथा माधवोक्तौ चेत्यर्थः । एवं च हरदत्तस्येष्टापत्तावप्याद्यदोषो दुरुद्धर एवेति भावः । माधवमतेनैवाह—अनभीति । प्रयोगाभ्रमायाह—ख्शादेरिति । पूर्वोत्तरविरोधपरिहारायेति भावः । ख्यातेः स्वतन्त्रस्य देहलीदीपकन्यायेनास्यान्वयः । रुत्वमितीति । बहुपुम् ख्यातीत्यत्र रुत्वमितीत्यर्थः । अत एवाग्रे प्रयोगोल्लेखसङ्गतिस्तत्र च यथासंख्यमन्वयः । तत्रादिना सजातीयप्रयोगसंग्रहः । दोषान्तरं नास्तीति भ्रमविच्छेदायाह—उपलक्षणमिति ।

सरला ।

च जिह्वामूलीयस्य बोधः । सस्थानशब्दाद्विहितत्वप्रत्ययो भावे । भावश्च प्रकृतिजन्यबोधे प्रकार इति तथाच सस्थानत्वपदेन सस्थानशब्द उच्यते । तस्य च विधानाभावेन तदर्थे लक्षणेति तदाशयो बोध्यः ।

चक्रिँस्त्रायस्वेति । यत्तु प्राचा त्राहीत्युक्तं, तत्र परस्मैपदमयुक्तम् । त्रायतेर्ङि-त्त्वात् । त्रायत इति त्राः स इवाचरेत्यर्थे कर्तरि क्विबन्तादाचारक्विपि वा बोद्धव्यम् । प्रशानिति । प्रपूर्वाच्छाम्यतेः क्विप् । "अनुनासिकस्य क्वि"-( पा० सू०६।४।१५ ) इति दीर्घः । "मो नो धातोः" ( पा० सू० ८।२।६४ ) इति नः । तस्यासिद्धत्वा-न्नलोपो न ।

नॄन्पे ( पा० सू० ८।३।१० ) ॥ पकारोपर्यकार उच्चारणार्थः । तेन नॄः पुनाती-त्यादि सिद्धम् । "उभयथर्क्षु—" इत्यत "उभयथा" इत्यनुवृत्तेर्विकल्पः फलित इत्याशयेनाह—रुःस्याद्वेति ॥

कुप्वोः ( पा० सू० ८।३।३७ ) ॥ सूत्रे खर्परत्वाद्विसर्गः जिह्वामूलीयस्य ख-त्त्वात् । "खर्परे शरि" इति विसर्गस्य लोपः, जिह्वामूलीयस्य शत्वात् । "वा शरि"

---

शब्दरत्नम् ।

त्रायतेर्ङित्त्वादिति । अत्र त्रायतेरित्युक्त्या सत्यपि परस्मैपदे त्रायेत्यस्य प्राप्तेः त्राहीत्यस्यासिद्धिः सूचिता । आचारक्विपि वेति । नामधातौ मूलधात्वादेर्ङित्त्वाद्या-श्रित्य "अनुदात्तङित" ( पा०सू०१।३।१ ) इत्यादेः प्रवृत्तिर्नेत्यभिमानः । अत एव "त्राहि मां पुण्डरीकाक्ष" इति सङ्गच्छते इति भावः । आर्षं तत्र तदित्यन्ये । शाम्यते-रिति । न तु शान तेजने इत्यतः, तस्य पदान्ते नलोपेन नान्तत्वासम्भवादिति भावः । न च "अप्रशान्" इति पर्युदासेन नान्तग्रहणेन सिद्धे "नः" इति व्यर्थमिति वाच्यम् । अस्य लक्षणवशसंपन्ननान्तत्वेन पर्युदासेनापि लक्षणवशसम्पन्ननकारान्तानामेवापत्तेः ॥

ननु "कुप्वोः" ( पा०सू०८।३।३७ ) इत्यत्र जिह्वामूलीयस्य खत्वाद्विसर्गे तस्य सत्त्वे सश्रवणापत्तिरत आह-सूत्रे इत्यादिशत्वादित्यन्तेन । विसर्गलोपश्च सत्वापवादः। एवं च सूत्रे निर्विसर्गपाठ इति भावः । सविसर्गपाठेऽप्याह—"वा शरि"( पा०सू०९।३।

भैरवी ।

त्रायेत्यस्य प्राप्तेरिति । एवञ्च मूले परस्मैपदग्रहणमात्वस्याप्युपलक्षणम् । अभिमान इति । उपदेशे यो ङित्तदन्तत्वानपायेनात्मनेपदस्य दुर्वारत्वात् । अत एव—उक्ताशयादेव । कथन्तर्हि त्राहि मामित्यस्य सिद्धिरत आह—आर्षमिति । नकारान्तानामेवेति । भूतपूर्वेत्यादिः ।

लोपश्चेति । चो ह्यर्थे । एवञ्च-विसर्गस्य लोपे च । अयोगवाहानां वर्णसमाम्नाये पाठेऽयमेव निर्देशो ज्ञापक इति बोध्यम् । नच जिह्वामूलीयस्यैव पाठो ज्ञापक इति वाच्यम्, एकदेशा-

भावप्रकाशः ।

त्रायेत्यस्येति । एवं च मूले परस्मैपदग्रहणमात्वादेरप्युपलक्षणमिति भावः । अभिमान इति । उपदेशे यो ङित्तदन्तत्वानपायेन तत्प्रवृत्तेर्दुर्वारत्वादिति भावः । अत एवास्वरसादाह—आर्षमिति । एवं च प्राचोक्तमयुक्तमेवेति तत्साधनप्रयासो निष्फल एवेति भावः । दैवादिकनिर्देशेनोभयव्यावर्त्य-माह—नत्विति । नकारान्तानामिति । भूतपूर्वेत्यादिः । वापत्तेरिति । प्राप्तेरित्यर्थः । एवं चान्यत्र न स्यादिति भावः ।

लोपश्चेत्यादि । चौहितौ । अग्रे चस्त्वर्थे । अयोगवाहानां वर्णसमाम्नाये पाठेऽयमेव निदश एक-देशानुमतिद्वारा ज्ञापक इति बोध्यम् । पाठेऽपीति । एतेन विसर्गाभावे सत्वमिति रत्नाकरोक्तमपास्तम्,

सरला

नान्तत्वासम्भवादिति । सूत्रे नान्तनिर्देशासम्भवादित्यर्थः, शान् धातोः प्रपूर्वकात्क्विपि निष्पन्न-प्रशान्शब्दात्सौ नलोपस्य दुर्वारत्वात् । एतेन प्रतिपदोक्तत्वात्सूत्रे शानधातुनिष्पन्नस्यैव ग्रहणं कुतो

[पा० सू० ८।३।३६]। इति विसर्ग एव वा। आदेशयोः कपावुच्चारणार्थौ। चाद्विसर्ग इति। यत्तु प्राचा चाद्विकल्प इत्युक्तम्। तन्न, कपाभ्यां मुक्ते विसर्गस्य सत्वप्रसङ्गात् ॥

कानाम्रेडिते [पा० सू० ८।३।१२]॥ कान् कानिति वाच्ये आम्रेडितग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यादिह मा भूत्। कान् कान् पश्यसि। अत्रैकः किंशब्दः प्रश्ने, द्वितीयः क्षेपे। कान् कुत्सितान् पश्यसीत्यर्थः।

कस्कादिषु च [पा० सू० ८।३।४८]॥ अत्र प्राचा विसर्जनीयस्य ≍क≍पौ नेत्युक्तम्। नासौ सूत्रार्थः, ≍क≍पयोरस्वरितत्वात्, नञश्चाप्रकृतत्वात्। किं त्वार्थिकार्थकथनं तदिति ध्वनयन्नाह-≍क≍पयोरिति। कौतस्कुत इति। कुतः

शब्दरत्नम्।

३६)इति। स च सत्वापवादः। "खर्परे" इति च वैकल्पिकमिति भावः। उच्चारणार्थाविति। तयोरुच्चारणस्य तौ विना असम्भवेन नान्तरीयकतया तयोरुच्चारणं न तु तयोर्विधेयत्वम्। किन्तु तन्मात्रे तयोर्लक्षणा व्याख्यानादिति भावः। चाद्विकल्प इति। निपातानामनेकार्थत्वाच्चशब्दो विकल्पार्थ इति तदाशयः। सत्वप्रसङ्गादिति। चानुकृष्टविसर्गस्तु सत्वापवाद इति नास्माकं दोष इति भावः।

भैरवी।

नुमत्या सर्वेषान्तथात्वे ज्ञापकत्वसम्भवात्। तयोः—जिह्वामूलीयोपध्मानीययोः। तौ विना—कवर्गपवर्गौ विना। असंभवेन नान्तरीयकतयेति। अन्तरा भवमन्तरीयम् अन्तरीयमेवान्तरीयम्, नित्यसमस्तम् अन्तरा तदभाववति भवं वर्तमानन्नञा तदभिन्नो बोध्यत इति, तदभाववदवृत्तिभिन्नत्वरूपव्याप्तिलाभ इति भावः। तयोः—कुप्वोः। तन्मात्रे—जिह्वामूलीयोपध्मानीयमात्रे। तयोः—समुदितयोः। ननु समुदायाद्विधेयसमर्पकविभक्तिसत्त्वेन समुदायस्यैव विधेयत्वं कुतो नेत्यत आह—व्याख्यानादिति। लक्ष्यदर्शनमूलकादिति शेषः। प्राचां व्याख्याने बीजमाह—निपातानामिति। स्वमते दोषम्परिहरति—चानुकृष्टेति।

मूले—कान् कानिति। आद्यं किम्शब्दप्रकृतिकद्वितीयोन्तम्, द्वितीयन्तु कुत्सितार्थककशब्दप्रकृतिकद्वितीयान्तम् ॥

भावप्रकाशः।

पाठद्वयस्यैव सत्त्वात्। तयोर्जिह्वामूलीयोपध्मानीययोः। तौ कपौ। भवेनेति। असम्भवादिति भावः। ननु समुदितयोर्विधेयत्वमेवास्तामितिनोक्तकल्पनावसरोऽत आह—नन्विति। तुहतौ, लक्ष्यविसंवादादिति तदर्थः। ह्रस्संज्ञा तु दुर्लभेति भावः। नन्वेवं मूलमते निर्वाहेऽपि सिद्धान्ते तच्छ्रवणापत्तिरत आह—किन्त्विति। तन्मात्रे—तन्मात्रयोः, सामान्ये एकवचनम्। तयोः समुदितयोः। ननु "न विधौ परः शब्दार्थ" इतिन्यायविरोधोऽत आह—व्याख्यानादिति। लक्ष्यदर्शनमूलकादित्यर्थः। ननु चस्य वानुवर्तकत्वे स व्यर्थः स्वरितत्वादेवानुवृत्तिसिद्धेरत आह—निपातानामिति। तदाशयः—प्रक्रियाशयः। स तु विसर्गसम्बद्ध इति नानुवर्तते तन्मते, अन्यथा तस्यापि अनुवृत्त्यापत्त्योभयविकल्पे पक्षे सत्वापत्तिरिति भावः। मन्मते तु स समुच्चायक एवेत्याह—चानुकृष्टेति। अस्वरितत्वादेव वाऽननुवृत्तिरिति भावः। तथाचागत्याऽत्र तस्य सङ्कोचः कल्प्यते। एतेन शेखरविरुद्धमिदमित्यपास्तमिति। नास्माकमिति। एतेनैवरीत्या फलितविकल्पाशयेन तद्ग्रन्थयोजने सोऽपि निर्दुष्ट एवेति सूचितम्। एतेन सोऽयमनुक्तोपालम्भ इति खण्डनकृदुक्तिः परास्ता। प्रकाशकृतैवैवंरीत्या तस्य योजितत्वादिति बोध्यम्।

सरला।

नेति शङ्का समाहिता। सम्बोधने नलोपनिषेधेन नान्तत्वसम्भव इत्यपि परास्तं सूत्रे सम्बोधनस्याग्रहणात्।

कुतः आगत इत्यर्थेऽव्ययात्त्यपि प्राप्ते गणपाठसामर्थ्यादण् । सर्पिष्कुण्डिकेति । "नित्यं समासे" ( पा० सू० ८।३।४५ ) इत्येव सिद्धे इह पाठस्य प्रयोजनं तु तत्रैव वक्ष्यते । "सेनासुरा-" इति । यदि हि च्छस्य तुक् स्यात् तर्हि च्छस्य चर्त्वे सति चद्वयं स्यात्। सन्निपातपरिभाषया चर्त्वाप्रवृत्तौ तु छकारोपरि चकारः श्रूयेतेति भावः ॥

इति हल्सन्धिः ॥

---

शब्दरत्नम् ।

गणपाठसामर्थ्यादिति । एतेन पञ्चम्यन्तात्स्वार्थे तसिल्विधानेनाव्ययादुत्सर्गतः प्रथमैकवचनोत्पादेन पञ्चम्यन्तत्वाभावात् "तत आगतः" ( पा०सू०४।३।७४ ) इत्यर्थे कथमणित्यपास्तम् । "अव्ययानाम्"इति टिलोपः । सन्निपातेति । असिद्धविषयेऽपि सा प्रवर्तते । यद्वा पूर्वत्र कर्तव्ये ऽसिद्धत्वेऽपि तत्र कृते उत्तरस्यासिद्धत्वे मानाभाव इति नासिद्धत्वेन सन्निपातपरिभाषाप्रवृत्तिप्रतिबन्धः शङ्क्य इति भावः । वैकल्पिकेष्वपि भावानुष्ठानस्यैवौचित्यं फलाधिक्यायेति तात्पर्यम् ।

इति हल्सन्धिः ॥

भैरवी ।

मूले—गणपाठेति । अत एव निपातानामव्ययत्वेऽपि त्यब् न । एतेन—समुदायस्य गणे पाठेन । ननु चर्त्वशास्त्रस्यासिद्धतया कथमत्र सन्निपातपरिभाषाप्रवृत्तिरत आह—असिद्धविषयेऽपीति । प्रवर्तत इति । उपजीव्यविरोधस्यान्याय्यत्वमिति लोकन्यायसिद्धत्वन्तस्या इत्यसिद्धत्वविषये प्रवृत्तौ बाधकाभाव इति भावः । इदञ्च चर्त्वस्यासिद्धत्वात्कथं सन्निपातपरिभाषाप्रवृत्तिरिति शङ्कामात्रेण । वस्तुतस्त्वस्यात्र न प्राप्तिरित्याह-यद्वेति । ननु "पदान्ताद्वा" इति विकल्पविषयतासत्त्वेन तुगभावेन सौत्रनिर्देशस्योपपत्तौ कथं ज्ञापकतेत्यत आह—वैकल्पिकेष्वपीति।

इति श्रीमद्रत्नप्रकाशिकायां हल्सन्धिविवरणम् ।

भावप्रकाशः ।

गणपाठेति । अत एव निपातनात् त्यब् नेति बोध्यम् । नन्वेवमपि तेभ्यः सर्वाःविभक्तयः सर्वविभक्तीनामेकवचनमित्यन्यतरपक्षेणेष्टसिद्धिरेवात आह—अव्ययादिति । अस्यैव सिद्धान्तितत्वादिति भावः । तत आगत इत्यर्थे इति। सूत्रस्य पञ्चम्यन्तादागत इत्यर्थे सतीत्यर्थः । ननु पञ्चम्यन्तार्थवृत्तेरित्यर्थः । "तत्र भवः" इत्यादिना कुत्र क्वेत्यादितोप्यणापत्तेः।त्यपो बाधकत्वं तूभयत्राप्यविशिष्टमिति भावः । यद्वा ततः—कुतः कुतः शब्दात् । प्रवर्तत इति । तस्या उपजीव्यविरोधस्यायुक्तत्वमिति लोकन्यायमूलकत्वादिति भावः। इदं च सन्निपातलक्षणश्चुत्वदृष्ट्या तद्विघातचर्त्वस्यासिद्धत्वमूरीकृत्य । वस्तुतस्तदेव नेत्याह—यद्वेति। चुत्वे कर्तव्ये चर्त्वस्यासिद्धत्वेऽपि तत्र कृते नासिद्धत्वं मानाभावात् । परिभाषाप्रवृत्तिस्तु अनन्तरमेव, एवं च पूर्वत्रासिद्धीयेऽपि कार्ये तत्प्रवृत्तिरविघ्नेति भावः। असिद्धत्वेन । भूतपूर्वेण । ननु वैकल्पिकत्वात्तदभावे न कोपि दोषोऽत आह—वैकल्पिकेष्विति ॥

इति हल्सन्धिः ॥

सरला ।

नच सूत्रे सम्बोधनान्तस्यानुकरणं सम्भवति नञ्समासानुरोधेन सुबन्तत्वस्यावश्यकत्वेन तद्ग्रहणात् ।

इति हल्सन्धिप्रकरणम् ।

# अथ विसर्गसन्धिः ।

**शर्परे** ( पा० सू० ८।३।३५ )॥ सत्वादेरयमपवादः। यदि तु शर्परे नेत्येवोच्येत तर्हि प्रकृते सत्वे निषिद्धेऽपि कुप्वोः ≍क≍पौ स्याताम। वासः क्षौमम्, अद्भिः प्सातमिति। विसर्जनीयवचनात्तु विकारमात्रं बाध्यते इत्याशयेनाह—न

शब्दरत्नम् ।

## अथ विसर्गसन्धिः॥

**नेत्येवोच्येतेति** । "कुप्वोः" (पा०सू०८।३।३७) इत्यत्रापि चेन सत्वं नेत्येवानुकृष्यतिति भावः । **स्यातामिति** । सत्वनिषेधे "खरवसानयोः" ( पा०सू०८।३।१५ ) इतिविहितविसर्गस्य सत्वादिति भावः । **विकारमात्रमिति** । तत्सामर्थ्याच्चानेन तस्यैव प्रत्यापत्तावपि न ताविति भावः । एतेनैतद्विहितस्य स्थानेऽपि तौ स्याताम् । किंचास्यैव तौ स्यातां "खरवसानयोः" इति विहितस्य त्वेतयोरसिद्धत्वात् "विसर्जनीयस्य"

भैरवी ।

## अथ विसर्गसन्धिः ।

ननु "शर्परे" इति सूत्रे विसर्जनीयपदाभावे "कुप्वोः" इति सूत्रे चाद्विसर्जनीय इत्यस्य कथं लाभः ? इत्यत आह—कुप्वोरिति। चकारेण नेत्यस्यानुकर्षः। तत्राभावस्य प्रतियोगिसाकाङ्क्षत्वात्पूर्वसूत्रे यो निषेधप्रतियोगित्वेन क्लृप्तस्तस्यैवात्रापि प्रतियोगित्वम्। एवञ्च स्थानिनो विसर्गस्यैवावस्थानमिति भावः। ननु नेत्यनेन विसर्जनीयस्य स्थाने प्राप्तं विकारमात्रम्बाध्यतामत आह—सत्वनिषेध इति। येन नाप्राप्तिन्यायेनास्य सत्वमात्रनिषेधकता स्यादिति भावः। विहितेति। एतेन "विसर्जनीयस्य सः" इति सूत्रप्राप्तियोग्यता सूचिता। तत्सामर्थ्यात्–विसर्गस्य विसर्गविधानसामर्थ्यात्। चो ह्यर्थे। अनेन–"शर्परे" इति सूत्रेण। तस्यैव—खरवसानयोरिति सूत्रविहितविसर्जनीयस्यैव। प्रत्यापत्तावपीति। प्राप्तस्य विकारस्य निरसनपूर्वकस्वस्वरूपावस्थानेपीत्यर्थः। खण्डनकृदुक्तं दोषं परिहरति–एतेनेति। उक्तव्याख्यानेनेत्यर्थः। एतद्विहितस्य। शर्परे इति सूत्रविहितस्य। तौ—जिह्वामूलीयोपध्मानीयौ। एतयोः–उक्तयोः।

भावप्रकाशः ।

सत्वन्नेत्येवेति। तत्सामर्थ्यात् पक्षे सत्वनिषेधेऽर्थाद्विसर्गसिद्धिः। यद्वा कुप्वोरिति योगो विभज्यते नेति विसर्जनीयस्य स इति शर्परे इति चानुवर्तते। शर्परयोः कुप्वोस्तस्य सो नेत्यर्थः। अग्रे स्पष्टम्। योगविभागसामर्थ्याच्चकारकरणाच्च निषेधेन सह समुच्चयेन तयोर्विसर्गेण सह विकल्पः फलति। नित्यत्वे हि तयोरपवादत्वादेवोत्सर्गनिवृत्तौ सिद्धायां सत्वनिषेधस्य वैयर्थ्यापत्तेः। एतेनैवं न्यासेसत्वनिवृत्तेरादेशपक्षेप्यपवादसिद्धत्वेनानुवाद्यतया ताभ्यां सह समुच्चेयता न स्यात्। निषेधविधिसामर्थ्यादादेशाभावपक्षे स्वातन्त्र्यमिति चेत्तत एव पक्षे सत्वमपि भवतीत्यर्थोऽप्यवगन्तुं शक्य इति जगन्नाथोक्तिः, निषेधे विषये कुप्वोरित्यस्य चारितार्थ्येन येननाप्राप्तिन्यायाभावेन नॄन्पाहीत्यादौ सत्वं स्यादिति खण्डनकृदुक्तिश्च प्रत्युक्ता। अन्यथे तद्विषयेपि प्रवृत्तियोग्यतायाः सत्वेनोद्देश्यतावच्छेदकाक्रान्तत्वात्तन्न्यायस्य दुर्वारत्वाच्च फलोपहितोत्सर्गप्रवृत्तौ न्यायाङ्गीकारेत्वसम्भव एवेति दिक्। ननु तेनाप्यनन्तरत्वात्प्रकृतसत्वस्यैव बाधः स्यादत आह—तत्सामर्थ्याच्चेति। विसर्जनीयग्रहणसामर्थ्यादित्यर्थः। चो हेतौ, यतो विसर्जनीयग्रहणमतः सामर्थ्यमित्यर्थः। प्रत्यापत्तावपीति। बाधनिराकरणपूर्वकस्वस्वरूपावस्थानेपीत्यर्थः। अपिर्भेदपक्षसमुच्चायकः। खण्डनकाराद्युक्तदोषमुद्धरति—एतेनैतदिति। उक्तरीत्या भेदाभावेऽपि सामर्थ्येन तदभावे नेत्यर्थः। अपिः खरवसानयोरिति विहितसमुच्चायकः। एतदग्रे समागतेन विसर्जनीयस्येत्यनेन तस्यैव परामर्शे विनिगमकाभावादिति भावः। विनिगमकान्तरस्येति न्यायमङ्गीकारेत्वाह—किं चेति। अस्यैव शब्दाधिकारेण परामर्श इति भावः। विहितस्येत्यस्य सत्वमेवेत्यत्रान्वयः। असिद्धत्वादिति।

त्वन्यदिति । तदेव स्फुटयति–इहेति ।

---

शब्दरत्नम् ।

( पा० सू० ८।३।३४ ) इति सत्वमेव स्यादित्यपास्तम् । अर्थाधिकारेण "खरवसानयोः ( पा० सू० ८।३।१५ ) इति विहितविसर्गस्यैवादेशाच्च । "विसर्जनीयस्य सोऽशर्परे" इति तु न सूत्रं कृतम् "वा शरि" ( पा० सू० ८।३।३६ ) इत्यनेन सत्वविकल्पेन सिद्धावपि "कुप्वोः" ( पा० सू० ८।३।३७ ) इत्यत्राशर्परे इत्यनुवृत्त्या तयोः शर्परे ऽप्रवृत्तावपि "कुप्वोः–' ( पा० सू० ८।३।३७ ) इति सूत्रे चाद्विसर्गलाभानापत्तेः ॥

भैरवी ।

स्यादिति । "शर्परे" इति सूत्रविहितस्य तु न सत्वप्राप्तिरस्यासिद्धत्वादिति भावः । अपास्तमिति । अनेन नापूर्व आदेशः क्रियते, किन्तु "खरवसानयोः" इति विहितस्यैवावस्थानम्बोध्यते एवञ्च "कुप्वोः" इत्यस्य "विसर्जनीयस्य सः" इत्यस्य च "खरवसानयोः" इति विहितविसर्गादेशत्वमेवेति तदुक्तम्परास्तमित्यर्थः । अर्थाधिकारेणेति । प्रकृते शब्दाधिकारे मानाभाव इति भावः । आदेशाच्चेति । "कुप्वोः" इति सूत्रेणेति शेषः । एवञ्च "कुप्वोः" इति सूत्रं सत्वापवाद इति यद्यपि, तथापि "शर्परे" इत्यस्य सूत्रस्य कुप्वोरित्यत्रानुवृत्तिं कृत्वा वाक्यभेदेन शर्परयोः कुप्वोर्विसर्जनीयस्य विसर्जनीय इति व्याख्येयमिति न कोऽपि दोषः । लाघवानुरोधिनामन्यकृतां शङ्कान्निरस्यति—विसर्जनीयस्येति । सत्वविकल्पेनेति । स इत्यस्यैव विधेयसमर्पकस्य पूर्वत्र सत्त्वादिति भावः । सिद्धावपि । 'हरिः शेते' 'हरिश्शेते' इत्यादेरित्यादिः । अनुवृत्त्येति । अशर्परयोः कुप्वोरिति व्याख्यानेनेति शेषः । अनापत्तेरिति । विधेयबोधकविसर्जनीयपदाभावादिति शेषः । नच "कुप्वोः" इति सूत्रे चकारो न पाठ्यः, 'विसर्जनीयः' इत्येव पठनीयन्तावतापि लाघवमेवेति वाच्यम्, अशर्परे इत्यत्र प्रसज्यप्रतिषेधे वाक्यभेदस्यापत्तिः, पर्युदासे तु हल्परयोः कुप्वोरित्यर्थस्यापत्तिरित्यनिष्टापत्तेः । एवं मध्यपठितस्य वा शरीत्यस्यापि हल्परशर्य्येव प्रवृत्त्यापत्तावनिष्टापत्तिरिति यथाश्रुतस्यैवोचितत्वात् ।

भावप्रकाशः ।

सत्वदृष्ट्येति भावः । तदाह—सत्वमेवेति । भेदे दोषान्तरमाह—अर्थेति । अस्य मुख्यत्वात् । शब्दाधिकारस्य तु मानाधीनत्वेन प्रकृते च मानाभावात्तदभाव इति भावः । आदेशाच्चेति । "कुप्वोः" इति सूत्रेण । एवं च तस्य "विसर्जनीयस्य सः" इत्यपवादत्वेपि तत्सामर्थ्यात् "शर्परे" इति सूत्रं "कुप्वोः" इत्यत्रानुवर्त्य शर्परयोः कुप्वोस्तयोरपवादो विसर्गस्य विसर्ग इति वाक्यभेदेन व्याख्येयमिति न कोपि दोषः । यद्वाऽनन्तरत्वेन "येनना" इति न्यायेन "कुप्वोः" इत्यस्यासिद्धत्वेन च तस्य सत्वापवादत्वेपीष्टापत्तिः । अर्थाधिकारेण तन्मात्रविहितस्यैव तेन विधानात् अत्रापि तदेव गमकम् । अस्य तु कःत्सरुरित्यादिरवकाश इति बोध्यम् । जगन्नाथाद्युक्तं न्यासं खण्डयति—विसर्जनीयस्येति । पदलाघवाभावेपि मात्रालाघवस्य ज्ञानलाघवस्य च सत्वादिति भावः । अनुवृत्त्येति । न चैवं वाशरीत्यत्रापि तदापत्तिः, इष्टापत्तेः मण्डूकप्लुत्यङ्गीकाराच्चेति भावः । शर्परे । शर्परयोः कुप्वोः । अनापत्तेरिति । यदि तूक्तन्यासे "कुप्वोः" इत्यत्र "कुप्वोः कःपौ विसर्जनीय" इति न्यासेप्युक्तलाघवमेवेत्युच्यते तदा प्रसज्यप्रतिषेधे प्रसिद्धदोषो मूलोक्तदोषश्च । पर्युदासे तु हल्परयोरेव प्रवृत्त्यापत्तिः । किं च वासः क्षौममित्यादौ झलन्तसंयोगादिशब्देषु परतो रुत्वविसर्गयोरसिद्धत्वात्सस्य स्कोरिति लोपापत्तिः । न च शर्परे इत्यनेन निरवकाशत्वाद्बाधः शुद्धरेफप्रकृतिकविसर्गे तस्य चारितार्थ्यात् । न च झलीत्युक्त्या न दोष इति वाच्यं, भाष्यकृता तस्य प्रत्याख्यानात् । यदि तु प्रत्याख्यानमेकदेशयुक्तिः, झलीति वक्तव्यमेव । किं च झल इत्यस्य तत्रासम्बन्ध एव, झलीति तु झलादिप्रत्ययपरमिति न तत्प्राप्तिरित्युच्यते, तदा आद्यदोष एवेति दिक् ।

सोऽपदादौ [ पा० सू० ८।३।३८ ] ॥ अपदाद्योरिति । सूत्रे तु व्यत्यये-
नैकवचनम् । यदि तु खर् विशेष्यतेऽपदादौ खरोति, तदा यथाश्रुतं साधु । किं तु
'खरि' इति मण्डूकप्लुत्या ऽनुवर्त्यमिति क्लेशः । न चानुवृत्तेरुत्तरत्राप्यावश्यकता,
खरं विना विसर्गस्य दुर्लभत्वेन तदनुवृत्तेर्निष्फलत्वात् । पाशकल्पककाम्येष्विति
वृत्तिः । सम्भवप्रदर्शनमेतन्न तु परिगणनम्, अन्यस्यासम्भवात् । प्रातःकल्पमिति ।

शब्दरत्नम् ।

व्यत्ययेनेति । सौत्रत्वादिति भावः । इति क्लश इति । किं च पुस्तरेत्यादौ
षत्वादिवारणाय "कुप्वोः" ( पा०सू०८।३।३७ ) इत्यनुवर्त्य तदन्तर्गते खरीति व्याख्याने
सुतरां क्लेश इत्यपि बोध्यम् । अन्यस्यासम्भवादिति । अयं भावः—अपदे इत्येव
"कुप्वोः" ( पा० सू० ८।३।३७ ) इत्यनुवर्त्य "यस्मिन्विधिः" इति परिभाषया कप-
वर्गादौ अपदे इत्यर्थेन सिद्धे आदिग्रहणमपदस्यैवादिरित्यर्थलाभार्थम् । तेनोरः कायतीति

भैरवी ।

ननु खरीत्यस्यानुवृत्तिपक्षे क्लेशमात्राभिधानम्मूलकारकृतमसङ्गतम् पुस्तरेत्यत्र दोषस्य
स्फुटत्वादत आह—किञ्चेति । आदिना यशः पठतीत्यादेः संग्रहः । सुतरामिति । मण्डूकप्लुति-
प्रयुक्तं तूक्त एव, कुप्वोरिति सूत्रे श्रूयमाणा सप्तमी औपश्लेषिकाधिकारेऽस्ति, "सो ऽपदादौ"
इति सूत्रे तु सा निर्धारणे इति कल्पनात्कुप्वोरित्यस्यानुवृत्त्या च सुतरामित्यर्थः । मूले—
अन्यस्येति । प्रत्ययान्यस्येत्यर्थः । ननु सुबुत्पत्तेः प्राक्समासे 'उरःकेण' इत्यत्रान्यस्यापि सम्भ-
वोऽस्तीतीदमसङ्गतमत आह—अयम्भाव इति । नन्वादिग्रहणमपदाद्योः कुप्वोरित्यर्थस्य स्पष्टप्र-
तिपत्त्यर्थमस्त्वित्यत आह—तल्लब्धेति । सामर्थ्यलब्धेत्यर्थः । "उरःकेण" इत्येतदवयवककारस्य

भावप्रकाशः ।

सौत्रत्वादितीति । एतेन "तदस्मिन्वृद्ध्याय" "कर्मणो रोमन्थ" इत्यनयोः प्रत्येकान्वयाशयेनैकव-
चनमिति मूलटीकयोर्वक्ष्यमाणत्वेन व्यत्ययकल्पनं मुधैवेति रत्नाकरोक्तमपास्तम् । तेषामपि सौत्रत्वमूल-
व्यत्ययाशयकत्वात् । अन्यथा सहविवक्षायां द्वन्द्वेन साहित्यस्यैवान्वयितावच्छेदकत्वेनैकार्थीभावेन
च प्रत्येकं सम्बन्धस्य दुर्घटत्वमिति तदसङ्गतिः स्पष्टैव । अत एव गच्छति चैत्रमैत्रावित्यसाध्विति दिक् ।
नन्वेवं पुस्तरेत्यादौ षत्वापत्तेर्दोषस्योद्भटत्वेन क्लेशमात्रोक्तिरयुक्ताऽत आह—किं चेति । आदिना
पयः स्वः पिबेत्यादौ शादिपरिग्रहः । बाधात्सामानाधिकरण्यासम्भवादाह—तदन्तरिति । अनुवृत्तं
तद्व्यत्ययकल्पनया षष्ठ्यन्तं, अयं हि षष्ठ्यर्थ इति भावः । अपदादाविति शेषः । सुतरामिति । तथानु-
वृत्तिरेवैकः क्लेशः समस्तैकदेशानुवृत्तिः सन्निहितत्यागश्च क्लेशान्तरे, एवं व्याख्यानमधिकः क्लेश इत्यर्थः ।
एवं च क्लेशस्यैव दोषस्यावशिष्टत्वेन स एव उक्तो मूलकृतेति भावः । एतेन "शपरे" इत्यादौ तथानुवृ-
त्तेस्त्वयैवाश्रितत्वाच्चिन्त्यमिदमिति रत्नाकरोक्तमुक्तरीत्यान्वयसम्भवेन पुस्तरेत्यादावदोषेण क्षत्यभावात्
सा न दुष्टा । अत एव प्रक्रियादौ तत् षष्ठ्यन्तमेवोक्तं कुप्वोरित्यत्र अन्यथाग्रे व्यत्ययाश्रयणापत्तिरिति
खण्डनकृदुक्तं सकृत्तथानुवृत्तावपि पुनस्तथानुवृत्तिः क्लेश इति मूलाशयं संलिख्य "वा शरि" इत्यत्र शर् कु-
प्वे खरीति कुप्वोरित्यत्र च तथा व्याख्याने क्षत्यभावेन पुनस्तथाऽननुवृत्त्या न क्लेश इत्यन्ये इति दण्ड्युक्त-
ञ्चापास्तम् । अन्यस्येति । प्रत्ययस्येत्यर्थः । अत्र रत्नाकरः—गतिकारकोपेति सुबुत्पत्तेः प्राक्समासेन पय-
स्पा इत्यादौ तदन्यस्यापि सम्भवाच्चिन्त्यमिदमत उदाहरणं दिङ्मात्रमिदमिति, तन्नेति ध्वनयन्नाह—
अयं भाव इति । इत्येवेति । इत्युक्तयैवेत्यर्थः । सिद्धे इत्यत्रान्वयः । यस्मिन्निति । न च
कुप्वोरित्यस्य सप्तम्यन्तत्वेऽपि सप्तम्याः पीतिवदल्प्रकृतिकत्वाभावात्कथं तत्प्राप्तिरिति वाच्यम्, अल्मात्र-
बाधके इति तदर्थो नत्वल्प्रकृतिकसप्तम्यन्ते इत्यदोषात् । अस्ति चात्र कुप्वोरल्मात्रबोधकता । अत
एवाचिरिन्वत्यादावजादावित्यर्थलाभ इति भावः । अच्त्वस्याल्धर्मत्वेऽप्यत्र समुदायात्सप्तमी, स च नाले-

अधिकरणशक्तिप्रधानस्यापि प्रातः शब्दस्येह वृत्तिविषये शक्तिमत्परत्वम् । दोषाभूतमहः, दिवाभूता रात्रिरितिवत् । गीः काम्यतीति । इह "इणः षः" ( पा० सू० ८।३।३९ ) इति षत्वं न, तत्रापि "काम्ये रोरेव" इत्यस्यानुवृत्तेः । यदि तु तत्रैवेदं पठ्येत तर्हि षत्वमात्रप्रतिषेधेऽपि पूर्वेण सत्वं स्यात् ॥

"इणः षः" ( पा० सू० ८।३।३९ ) ॥ पूर्वस्यापवादः । इदं सूत्रं 'सः' इति च द्वयमपि उत्तरत्रानुवर्तते । यथा सम्भवमिणः परस्य षोऽन्यस्य स इति विवेकः ।

---

**शब्दरत्नम् ।**

विग्रहे सुबुत्पत्तेः पूर्वं समासे ऽप्युरःकेणेत्यादौ न सत्वम् । आदिग्रहणसामर्थ्येन तल्लब्धावधारणेन च पदत्वयोग्यप्रातिपदिकानवयवस्यैव ग्रहणादिति । शक्तिमत्परत्वमिति । अव्ययत्वं तु भूतपूर्वगत्या बोद्धयमिति भावः । षत्वं नेति । सत्वं नेत्यपि बोद्ध्यम् । तत्रापि-षत्वविधावपि । एवं चात्र पाठात्तत्रानुवृत्तेश्चोभयमपि नेति बोध्यम् ॥

**भैरवी ।**

तु यदि सुबुत्पत्त्यनन्तरं समासः स्यात्तदा पदावयवत्वं स्यादिति सम्भावनया न तत्त्वमिति भावः । नच पाशबादीनामपि तद्धितान्तप्रातिपदिकावयवत्वमस्त्येवेति तेषामसङ्ग्रहापत्तिरिति वाच्यम्, एवं सति वैयर्थ्यमिति तदारम्भसामर्थ्येन तद्धितान्तप्रातिपदिकभिन्नं यत्पदत्वयोग्यम्प्रातिपदिकं तदनवयवस्य ग्रहणमित्याशयात । नन्वीषदसमाप्त्याद्यन्वयाय यदि शक्तिमत्परत्वङ्कल्प्यते तदा कथमव्ययत्वमत आह—अव्ययत्वमिति । ननु रोरेवेति नियमेन षत्ववत्सत्वव्यावृत्तिरपीष्टेति तन्मात्रोपादाने न्यूनतेत्यत आह—सत्वमिति ।

**भावप्रकाशः ।**

धर्म इति वैषम्यमिति वदन्मन्दस्तु सुमन्द एवेति बोध्यम् । उरः केणेत्यादाविति । भाष्यप्रयोगे इति भावः । उक्तार्थं स्पष्टयति—आदीति । ननु न ततोऽक्षरमर्यादयोक्तार्थलाभः, किं चानुवृत्तस्य तस्य विशेष्यताबोधनेन तत् सफलमत आह—तल्लब्धेति । तत्सामर्थ्यलब्धेत्यर्थः । अन्यथा ऽपदे विद्यमानयोः कुप्वोरित्येव सिद्धमप्यचीतिवदिति भावः । एतेन चासङ्गति वदन्मन्दः प्रत्युक्तः । पदत्वयोग्येति । अन्यथा तद्वैफल्यं स्पष्टमेव । तस्यानित्यत्वात्सुबन्तेन समासे तत्सम्भवादुरःकेणेत्यादौ पक्षान्तरे तत्वं यथा एवं पयस्पाशादौ सर्वथा न । किं च तद्योग्यत्वं तन्निमित्तीभूतप्रातिपदिकत्वाद्याक्रान्तत्वम् । तस्य तयोः सत्वासत्वे निर्बाधे एवेति भावः । ग्रहणादिति । कुप्वोरित्यनेन तादृशसर्पिष्केणेत्याद्यभिधाने तूत्तरत्र शब्दाधिकार इति भावः । एतेनेदं वृत्त्याशयबोधकहरदत्तानुवादमात्रम्, न स्वाभिमतम् । प्रागुक्तरीत्या अन्यस्यापि सम्भवात् । अत एव वृत्तिरित्यस्वरसोद्भावनं परममूले । उरःकेणेत्यादौ तु धनक्रीतेतिवत्समासेन निर्वाह इति मान्योक्तिः प्राचामनुरोधेनेति सूचितम् । शक्तिमदिति । ईषदसमाप्त्याद्यन्वयायेति भावः । नन्वेवं सत्ववाचित्वादनव्ययत्वेन कथं निषेधः, अत आह—अव्ययत्वं त्विति । निषेधसामर्थ्यात्तन्न्यायादिति भावः । ननु षत्वं नेत्यादि ग्रन्थस्य यद्यत्र षत्वाभावेऽपि वाःकाम्यतीत्यादौ सत्वाभावायात्र पाठ इति तात्पर्यं तर्हि उपस्थितत्वात्तदेवोदाहार्यं परममूले, अथात्रैव सत्वाभावाय पाठ इति तात्पर्यं तर्हि सत्वमपि नेति व्याख्यातुमुचित मत आह—सत्वं नेत्यपीति । प्रधानपरामर्शेऽनन्वयादाह—षत्वेति । तथा चोपलक्षणतयोभयनिषेधपरं मूलमितिभावस्तदाह—एवं चेति । तया तत्परत्वेचेत्यर्थः । गीःकाम्यतीति सविसर्गभाष्योदाहरणमत्र प्रमाणमिति भावः । अनुवृत्तेरिति । अत्र केचित् आशायिनिचेत्यग्रे आमनश्चेत्यंशो न वार्तिकान्तर्गतः किं तु पृथक् सूत्रम् । अन्यथाग्रे तदलाभापत्तिः "परस्य च" इति सूत्रवैयर्थ्यापत्तिश्चेति तत्रत्यग्रन्थविरोधः । वार्त्तिकस्योत्तरत्रासम्बन्धस्य ततो लाभादिति । अत्राहुः । उक्तभाष्योदाहरणान्यथानुपपत्त्यानुवृत्त्यङ्गीकारात्स ग्रन्थो युक्त एवेति । वस्तुतो यथा न विरोधो ऽनेन भाष्येण च तस्य तथा तत्रैव स्फुटीभविष्यति ।

पुरः प्रवेष्टव्या इति । प पालनपूरणयाः "भ्राजभास-" ( पा० सू० ३।२।१७७ ) इत्यादिना क्विप् । तदन्ताज्जस् । जसन्ततां स्फुटीकर्तु पूः पुरावित्युपन्यस्तम् ॥

"इदुदुपधस्य" ( पा० सू० ८।३।४१ )॥ इदुतौ उपधे यस्य समुदायस्य तस्यावयवो यो विसर्जनीय इति वैयधिकरण्येन सम्बन्धः । 'अप्रत्ययस्य' इति तु अप्रत्ययो यो विसर्ग इति सम्बद्धयते । सम्भवति सामानाधिकरण्ये वैय्यधिकरण्यस्यान्याय्यत्वात् । न च विसर्गस्य प्रत्ययत्वमप्रसिद्धमिति वाच्यम्, अग्निः करोतीत्यादौ स्थानिवद्भावेन तत्प्रसिद्धेः । न चातिदेशं प्रति त्रिपाद्या असिद्धत्वं शङ्क्यम्, "अप्रत्ययस्य" इति निषेधेनैव सिद्धत्वज्ञापनात् । अत एवाग्निरित्यादौ रोर्विसर्गः सिद्धयति । अन्यथा ऽपदान्तत्वान्न स्यात् । विसर्गविधिस्तु पुनरित्यादौ

शब्दरत्नम् ।

समुदायस्येति । "अलोऽन्त्यात्-" (पा०सू० १।१।६५) इति सूत्रे अवयववाचकान्त्यशब्देन समुदायस्याक्षेपेण उपधात्वस्य समुदायनिरूपितत्वादिति भावः । इदुदुपधस्य विसर्गान्तस्य पदस्येति सामानाधिकरण्येनान्वयः । षत्वं तु "अलोऽन्त्यस्य" ( पा० सू० १।१।५२ ) इत्यनेन विसर्गस्येत्यन्ये । व्याख्यादर्शोक्तरीत्याऽऽह—अप्रत्ययो य इति । तत्प्रसिद्धेरिति । विसर्गस्य प्रत्ययत्वप्रसिद्धेरित्यर्थः । न स्यादिति ।

भैरवी ।

ननु "इदुदुपध" इति बहुव्रीहिसमासे ऽन्यपदार्थत्वेन विसर्गस्योपस्थितत्वात्कथं समुदायस्य लाभोऽत आह—अलो ऽन्त्यादितीति । एवञ्च विसर्गापेक्षया समुदायस्य शीघ्रोपस्थितिकत्वेन पदार्थोपस्थितिकाले तस्यैवान्यपदार्थत्वं कल्पनीयमिति भावः । लाघवादाह—इदुदुपधस्येति । अन्य इत्यरुचिस्तु पदाधिकारस्य विशेषणत्वमित्यर्थप्रतिपादकभाष्यविरोध इति । लक्षणामकृत्वा सामानाधिकरण्येन सम्बन्धे वक्ष्यमाणदोषापत्तिरत आह—व्याख्यादर्शोक्तेति ।

भावप्रकाशः ।

ननु बहुव्रीहावपि पूर्वपरस्थत्वसम्बन्धेन विसर्गस्यैवान्यपदार्थतया लाभेन कथं समुदायलाभोऽत आह—अलोन्त्यादितीति । उपधात्वस्य-तत्संज्ञायाः । निरूपितत्वादिति । एवं च विसर्गतोऽपि समुदायस्य प्रागुपस्थितिः पदार्थबोधकाले इति तथैवोचितमिति भावः । एतेन सम्भवतीति न्यायेन सामानाधिकरण्येनैवान्वयो न्याय्यः, उपस्थितविसर्गस्यान्यपदार्थत्वे सम्भवत्यनुपस्थितसमुदायस्य तत्त्वासम्भवादिति रत्नाकरोक्तमपास्तम् । तथापि मूलासङ्गतिं ध्वनयितुं विना लक्षणां सामानाधिकरण्यमाह—इदुदुपधेति । अन्ये इति सूचितारुचिबीजं तु पदाधिकारस्य विशेषणत्वमित्युक्तभाष्यविरोधः । लक्षणया सामानाधिकरण्ये त्विष्टापत्तिः । वैयधिकरण्यान्वयापेक्षया लक्षणाया युक्तत्वात् । ध्वनितं चेदं "शदेःशितः" इत्यत्र भाष्य इति । वक्ष्यमाणदोषादाह—व्याख्यादर्शोक्तेति । ननु तच्छब्देनान्यतरपरामर्शेऽन्यतरार्थालाभोऽत आह—विसर्गस्येति । विशिष्टपरामर्शकः स इतिभावः । मूले खण्डनकाराद्युक्तिञ्च खण्डयितुमेतदन्ते-

सरला ।

आक्षेपेति । स्वघटकत्वं—स्वघटकवर्णप्रागभावानधिकरणक्षणवृत्त्युत्पत्तिकत्वम्—एतदुभयसम्बन्धेन समुदायविशिष्टत्वस्यान्त्यपदार्थतया तस्य समुदायांशे नित्यसाकाङ्क्षत्वेन समुदायस्याक्षेपः । तथाच समुदायविशिष्टत्वम् उपधात्वम् । वै० च स्वघटकत्वं, स्वघटकान्त्यालवधिकपूर्वत्वमेतदुभयसम्बन्धेनेति फलितोऽर्थः । एवञ्चोपधात्वमपि समुदायांशे नित्यसाकाङ्क्षमिति अत्राऽन्यपदार्थः समुदाय एव ननु विसर्ग इति तदाशयः । नन्वेवं वैयधिकरण्यान्वयस्वीकारे इकारोकारोपधसमुदायावयवस्य प्रत्ययभिन्नस्य विसर्गस्य षत्वमित्यर्थे 'पयःकुण्डलसोमसुत्' इत्यत्रापि समुदायस्योकारोपधत्वात्तदवयवस्य विसर्गस्य षत्वापत्तिरित्यरुचेराह—इदुदुपधस्येति । विसर्गपदस्य तदन्तविधिना इकारोकारोपधसमुदाये सामानाधि-

चरितार्थः। ज्ञापकं च विशेषापेक्षम्। तेन "अचः परस्मिन्-" (पा० सू० १।१।

### शब्दरत्नम्।

रोरसुप्त्वेन पदत्वाप्रवृत्तेरिति भावः। चरितार्थं इति। ननु तत्रापि पुनर् स् इत्यवस्थायां जातपदत्वस्यातिदेशेनैव सुलोपे कृते आनयनमिति को विशेषः। न चैकदेशविकृतन्यायेन सिद्धिः। अग्निरित्यत्रापि समत्वात्। न चाग्निरित्यत्रादेशस्यातिदेशलभ्यकार्यस्य चासिद्धत्वमत्र तल्लभ्यकार्यस्यैवेति विशेष इति वाच्यम्। सर्वथा अतिदेशापेक्षणेन तस्याकिञ्चित्करत्वात्। किं च रुत्वासिद्धत्वेनाग्निरित्यत्र पदत्वं सुलभम्।

### भैरवी।

रोरसुप्त्वेनेति। अतिदेशाप्रवृत्ताविल्यादिः। खण्डनकाराद्युक्तिं खण्डयितुं शङ्कते—नन्विति। अतिदेशेन—प्रत्ययलक्षणेन। एवञ्चैतद्दृष्ट्या खरवसानयोरित्यस्यासिद्धतया ऽतिदेशस्य प्रवृत्तिर्न स्यादिति भावः। लौकिकेन न्यायेन सिद्ध्या शङ्कां निराचष्टे—नचेति। समत्वादिति। रुत्वस्य सिद्ध्यर्थम्प्रवृत्तं यत्पदत्वन्तस्य तेन न्यायेन रेफान्तेऽपि लाभस्य तुल्यत्वादित्यर्थः। एवञ्च ज्ञापकानुपयोग इति तात्पर्यम्। "अणुरपि विशेषोऽध्यवसायकरः" इत्याशयिकामाशङ्कां निराचष्टे—नचाग्निरिति। आदेशस्य-रुत्वस्य। अतिदेशलभ्येति। परम्परयेत्यादिः। कार्यस्य—विसर्गस्य। अकिञ्चित्करत्वादिति। यद्यतिदेशस्यापेक्षा न भवेत्तदा ज्ञापकानुसरणाभावो न्याय्यः स्यात्तथा तु नास्तीति भावः। रुत्वासिद्धत्वेनेति। पदसंज्ञाप्रयोजकशास्त्रदृष्ट्येत्यादिः।

### भावप्रकाशः।

ग्रन्थस्यासङ्गतिमैक्येनैव प्रतिपादयितुमेतत्प्रतीकं धृत्वा 'सूचीप्रवेशे'इतिन्यायेन मूलच्छेदं कर्तुं च शङ्कते—नन्वित्यादिना। जातपदत्वेति। यथोद्देशपक्षे भविष्यति किंचिदित्यभिसन्धिमात्रेण प्रवृत्तेरिति भावः। अतिदेशेनैवेति। प्रत्ययलक्षणेनैवेत्यर्थः। अन्यथा सकारे सति विसर्गाप्राप्त्या तल्लुकि तत्र कर्त्तव्ये सान्तनिष्ठतरत्वस्य तद्दृष्ट्या तस्य सिद्धत्वेन रान्ते दौर्लभ्यमिति भावः। सुलोपे इति। तल्लुकीत्यर्थः। एकदेशेति। लौकिकेनेत्यर्थः। तत्रानसिद्धत्वादिति भावः। समत्वादिति। अग्निरित्यत्र प्रवृत्तस्य तेन न्यायेन तत्त्वस्य तत्र सौलभ्यात्। तथा च ज्ञापकानुपयोग इति भावः। लभ्येति। परम्परयेति भावः। तत्र स्थान्यादेशयोः रुविसर्गयोरसिद्धत्वमत्र त्वन्त्यस्यैव तथा चाणुरपीति न्यायेन सिद्धस्थानिके कार्ये तेन तत्त्वात्तचारितार्थ्येनासिद्धस्थानिके तत्त्वाभावादप्रवृत्तिः। एवं च सामर्थ्यात्प्रवृत्तिरयुक्तेति भावः। तस्येति। उक्तविशेषस्येत्यर्थः। तथा चोभयत्रापि ज्ञापकोपयोगः सामर्थ्याद्वा प्रवृत्तिरिति वैषम्यमयुक्तमिति भावः। ननु पुनरित्यादौ तेनैव तत्त्वेऽप्यग्निरित्यादौ तं विनाऽन्यथापि तत्त्वमिति वैषम्यमिति चेत्तर्हि वैपरीत्यमेव वक्तुं युक्तमित्याह—किं च रुत्वासिद्धत्वेनेति। पूर्वत्रासिद्धमित्यस्यातिदेशत्वेपि यथा तद्दृष्ट्या नासिद्धत्वमग्निनाणां तथान्यत्र स्पष्टम्। तथा च न हि रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयतीति न्यायेन जायमानपदत्वस्य रान्ते एव पर्यवसितत्वेन रुत्वस्य विसर्गशास्त्रदृष्ट्या सिद्धत्वेन तत्सौलभ्यं तत्र तु लुकः सिद्धत्वमिति भावः। नन्विदं कार्यकाले यथोद्देशे वा? नाद्यः। तत्र संज्ञाया विसर्गदेशस्थत्वेन रुत्वदृष्ट्यैव प्रत्युतासिद्धत्वेन तत्रागत"पूर्वत्र"इतिसूत्रस्थपूर्वग्रहणेनाग्रहणेन रुत्वानसिद्धत्वात्, तत्र तदनङ्गीकाराच्च। नान्त्यः। तत्रासिद्धत्वेऽपि सङ्क्रप्रवृत्त्यैव कार्यसिद्धिरिति सिद्धा-

### सरला।

करण्येनान्वयः, सम्भवति सामानाधिकरण्येनान्वये वैयधिकरण्येनान्वयस्यान्याय्यत्वादिति भावः।

अकिञ्चित्करत्वादिति। 'अग्निः' इत्यत्र 'पुनः' इत्यत्र चोभयत्रापि स्थानिवद्भावापेक्षायास्तुल्यत्वेऽपि पूर्वोदाहरणे स्थानिवत्सूत्रोद्देश्यस्य रुत्वरूपादेशस्यैवासिद्धतया उद्देश्यतावच्छेदकाक्रान्तिरेव नास्ति इति तत्सूत्रस्य प्रवृत्तिरेव न सम्भवति 'पुनः' इत्यत्र तु सुपोऽव्ययादिविहितत्वेन "अव्ययादाप्सुपः" इत्यनेन लुकि लुप्रूपादेशस्य सिद्धतयोद्देश्यतावच्छेदकाक्रान्तिरस्तीति तत्सूत्रस्य प्रवृत्तिसम्भव इति नातिदेशापेक्षणमात्रेणाऽकिञ्चित्करत्वं वक्तुं शक्यते इत्यरुचेराह—किञ्च रुत्वासिद्धेति। सुलभमिति। अग्निः

शब्दरत्नम् ।

किं च विसर्गस्थान्यल्रूपरेफवृत्तिप्रत्ययत्वस्य स्थान्यल्धर्मत्वेन तदतिदेशाप्रवृत्तिरिति प्रत्ययरूपो विसर्गो दुर्लभः । स्पष्टा चेयं रीतिः 'भोभगो--''( पा०सू० ८।३।१७ ) इति सूत्रे भाष्ये । किं चैवं सामानाधिकरण्ये ''असोः'' इति वक्तव्ये ऽप्रत्ययग्रहणं व्यर्थं

भैरवी ।

एवञ्च ज्ञापकवर्णनपरग्रन्थासङ्गतिरिति मूलकारोक्तिमपि खण्डयति—किञ्चेति। सूत्रे भाष्य इति ।स्फुटीभविष्यति तत्रैवैतत् । एवं सामानाधिकरण्ये—व्याख्यादर्शोक्तसामानाधिकरण्ये । नचासोरिति न्यासेऽपि पदलाघवाभाव इति वाच्यम् , सूत्रोपात्तस्य प्रत्ययपदस्य प्रत्ययपदावच्छिन्ने शक्तस्य सुमात्रपरत्वे लक्षणायां ज्ञानगौरवम्, असोरिति न्यासे तु न लक्षणेति लाघवस्य सत्त्वात्। ननु न मया लक्षणाऽऽश्रीयते किन्तु शिवमात्रस्य पूजनकाले चैत्रो देव-

भावप्रकाशः ।

न्तात् तदतिदेशं विना तदलाभात् । प्रत्युत विसर्गदृष्ट्या रुत्वस्यैवासिद्धत्वेनेष्टसिद्ध्यभावे तत्रातिदेशेन पदत्वे कार्यकालपक्षाङ्गीकारेणासिद्धत्वाभावेन तत्सौलभ्याच्च। एवं च विशेषवैपरीत्याभावयोः सत्त्वेन युक्तमेव मूलमत आह—किं च विसर्गेति। एतेन मूलरीत्या शमायेत्यादौ सुप्त्वस्यैवात्र प्रत्ययत्वस्य सौलभ्यमुक्त्वा टीकारीत्या वैषम्यमाशङ्क्य तस्य ''इट ईटि''इत्यत्रैवानाश्रयणेनाकिञ्चित्करत्वादन्यथा ऽत्रैवापदत्वेन विसर्गानापत्तिरिति मन्दोक्तमपास्तम् , पदत्वस्यान्यथोक्तेश्चेति भावः। स्पष्टेति। स्फुटीभविष्यति चैतत्तत्रैव। एतेन तद्भाष्यात्तथालाभेनेदं चिन्त्यमिति मन्दोक्तमपास्तम्। ननु मूलमतेऽसाधारणत्वनिवेशेन नायं दोषोऽत आह—किं चैवं सामानाधिकरण्ये इति। व्याख्यादर्शोक्तरीत्या सामानाधिकरण्ये इत्यर्थः। वक्ष्यमाणरीत्या सामानाधिकरण्ये तु न दोष इति भावः। सोरितीति। मात्रालाघवस्यासार्वत्रिकत्वेऽपि पदलाघवाभावेपि सामान्यस्य विशेषपरत्वे गौरवेण ततोऽत्र ज्ञानलाघवात् पिपठीः कृतमित्यादावस्यासिद्धत्वाद् वौरिति दीर्घ एवेति भावः। ननु व्रीहिं सुनाति व्रीहिसुत् तमाचष्टे व्रीहिस्तेन

सरला ।

इत्यवस्थायां रुत्वे जातेऽपि ''सुप्तिङन्तं पदम्'' इति पदसंज्ञादृष्ट्या रुत्वस्यासिद्धत्वेन सुबुद्धेरेव सत्त्वात्तत्प्रवृत्तेः सुलभतया पदत्वं सुलभमिति भावः । वस्तुतस्तु संज्ञायाः कार्यकालपक्षे विधिदेशस्थत्वेनात्र विधिशास्त्रस्य ''खरवसानयोर्विसर्जनीयः'' इत्यस्य रुत्वशास्त्रापेक्षया परत्वेन तत्स्थस्य पदसंज्ञाशास्त्रस्य दृष्ट्या रुत्वस्यासिद्धत्वं न सम्भवति, यथोद्देशपक्षे तु भविष्यति किञ्चिदनेन प्रयोजनमित्यभिसन्धिमात्रेण पदसंज्ञायाः 'अग्निसु' इति दशायामेव प्रवृत्त्या रुत्वे कृतेऽतिदेशापेक्षायाः सर्वथाऽपेक्षणेनोक्तयुक्तेरसम्भव इत्यरुचेराह—किञ्च विसर्गेति। ''भोभगो'' इति सूत्रस्थभाष्योक्तरीत्या अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्तके कार्ये न स्थानिवदिति 'अनल्विधौ' इत्यस्यार्थस्वीकारेण प्रकृते विसर्गस्य रेफरूपाल्मात्रस्थानिकादेशतया अल्त्वव्याप्यो धर्मः रत्वं तदवच्छिन्ना स्थानिता रेफे तत्समानाधिकरणो धर्मः प्रत्ययत्वं तन्निमित्तके षत्वपर्युदासे कर्तव्ये तन्निषेधेन स्थानिवत्त्वाप्रवृत्तिरिति तदाशयः। वस्तुतस्तु 'अनल्विधौ' इत्यस्य अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मेण साक्षादवच्छिन्ना या उद्देश्यता तादृशोद्देश्यताके कार्ये कर्तव्ये स्थानिवन्नेत्यर्थस्य हल्ङ्यादिसूत्रवार्तिकभाष्यप्रामाण्येनावश्यमङ्गीकार्यत्वस्य स्थानिवत्सूत्रव्याख्यानावसरे उक्तत्वेन प्रकृते षत्वस्य साक्षात्प्रत्ययत्वधर्मावच्छिन्नोद्देश्यताकत्वाभावेन निषेधाप्रवृत्तिरिति स्थानिवत्त्वेन रेफवृत्तिप्रत्ययत्वस्य विसर्गे सुलभतया प्रत्ययरूपविसर्गः सुलभ इत्यरुचेराह—किञ्चैवं सामानाधिकरण्ये इति। प्रत्ययभिन्नो यो विसर्गस्तस्य षत्वमिति व्याख्यादर्शोक्तरीत्याऽन्वये इत्यर्थः। व्यर्थमिति। प्रत्ययरूपस्य विसर्गस्य सुस्थानिकस्यैव सम्भवेन तस्य 'असोः' इत्युक्तेरेव वारणेन सामान्यस्य प्रत्ययग्रहणस्य वैयर्थ्यापत्तिरिति भावः। वस्तुतस्तु अग्निसात्—शब्दाण्णिचि टिलोपे तदन्तात् क्विपि सौ हल्ङ्यादिलोपे 'अग्निस्' इत्यवस्थायां रुत्वे विसर्गे ततः करोतिशब्दे परे 'अग्निः करोति' इत्यत्र सातिप्रत्ययावयवसकारस्थानिकविसर्गस्य सुभिन्नत्वेऽपि प्रत्यय-

शब्दरत्नम् ।

स्यात् । किं चैवं "नित्यं समासे-" ( पा०सू०८।३।४९ ) इति सूत्रे "अनुत्तरपदस्थस्य इत्यस्य वैयर्थ्यम् । परमसर्पिःकुण्डिकेत्यादावनेन षत्वस्य दुर्वारत्वात् । किं चैवं "नित्यं समासे-" (पा०सू०८।३।४९) इति सूत्रस्थभाष्यासङ्गतिः । तथा हि, अथाव्युत्पन्नं प्रातिपदिकं सर्पिरादि ततो नित्ये प्राप्ते "इसुसोःसामर्थ्ये" ( पा०सू०८।३।४४ ) इति विभाषा आरभ्यत इति हि तत्रोक्तम् । प्रत्ययत्वपर्याप्त्यधिकरणभिन्नस्येत्यर्थे तु व्युत्पत्तिपक्षे ऽपि नित्यषत्वप्राप्तेरथाव्युत्पन्नमित्यादेरसङ्गतिः स्पष्टैव । अत्र भाष्येऽथेति यद्यर्थे । तेन सर्पिषा यजुषेत्यादौ षत्वसिद्धये व्युत्पत्तिपक्ष एव न त्वसाविति सूचितम् ।

भैरवी ।

स्पूजयतीति वाक्यप्रयोगे कृते प्रकरणेन देवत्वेन देवविशेषबोधकता यथा देवशब्दस्य तथात्रत्यप्रत्ययपदस्यापि भविष्यतीत्यत आह—किञ्चैवं नित्यमिति । एवम्–उक्तरीत्या सामानाधिकरण्याङ्गीकारे । अनेन षत्वस्येति । व्युत्पत्तिपक्षेऽपि विसर्गस्य प्रत्ययभिन्नत्वसत्त्वात् । ।

एवम्—उक्तो ऽर्थः । एतेन नित्यं समास इति सूत्रस्थमनुत्तरपदस्थस्येत्युत्तरार्थमिति कल्पनायामपि भाष्यविरोधः स्फुट एवेति दर्शितम् । तेन—यद्यर्थकस्याथशब्दस्योपादानेन ; अस्य सूचितमित्यत्रान्वयः । षत्वसिद्धये–"आदेशप्रत्यययोः" इति सूत्रविहितस्य षत्वस्य सिद्धये । नत्वसाविति । अव्युत्पत्तिपक्ष इत्यर्थः । एवञ्चेसुसन्ते नित्यषत्वाप्राप्तिरेव फलिता, सा त्वद्रीत्याऽयुक्ता स्यादिति भावः । इदम्परीत्या । अव्युत्पत्तिपक्ष एवेति पक्षे तु बाहुलकत्वेन षत्वस्य

भावप्रकाशः ।

कृतं व्रीहिषुकृतमित्यादौ षत्वसिद्धये तदावश्यकम् । न च 'प्रत्ययाप्रत्यय'इतिपरिभाषया तत्रापि निर्वाहः वर्णग्रहणे तदप्रवृत्तेरङ्गस्येत्यत्र कैयटे स्पष्टत्वात्तस्या लक्ष्यासाधकत्वाच्च । अत आह—किं चैवमिति । उक्तसामानाधिकरण्याङ्गीकारे इत्यर्थः । एवमग्रेऽपि । षत्वस्येति । व्युत्पत्तिपक्षेऽपि त्वद्रीत्या विसर्गस्याप्रत्ययत्वात् नित्यग्रहणं कुर्वतः सूत्रकारस्य तन्निषेधार्थकतया सार्थक्यस्यानभिमतत्वादिति भावः । ननु न तन्मात्रस्य वैयर्थ्यम् , उत्तरार्थत्वात । अत एव सूत्रवैयर्थ्यमित्याशयोऽपि न । नचैवमपि योगविभागो व्यर्थ इत्याशयः, तर्हि त्वद्रीत्या पक्षद्वयेऽपि षत्वस्यानेनैव सिद्ध्या नित्यग्रहणस्य स्पष्टार्थतयोत्तरपदे तस्यैव निषेधार्थकतयाऽनेन तस्या दुर्वारत्वात्तस्य साफल्यादत आह—किं चैवमिति । नित्ये इति । अनेनेति भावः । हिर्निश्चये । कैयटासङ्गतिं सूचयितुं तद्रीत्या व्याचष्टे—अत्रेति । तेन—तदर्थकेन तेन । सूचितमित्यत्रान्वयोऽस्य । षत्वेति । "आदेशप्रत्यययोः"इत्यनेनेति भावः । इसाद्यंश इत्यादिना उक्तसंग्रहः । त्वसावीति । अव्युत्पत्तिपक्ष इत्यर्थः । एवं चेसुसन्ते नित्यषत्वाप्राप्तिरेव तद्ग्रन्थात् फलिता सा त्वद्रीत्या ऽयुक्ता स्यादिति भावः । अत्रत्यं तत्त्वं तु अन्यतोऽनुसन्धेयम् । सिद्धान्तं ब्रुवन् उपसंहरति—

सरला ।

भिन्नत्वाभावेन तत्र षत्ववारणार्थतया प्रत्ययग्रहणस्य न वैयर्थ्यप्रसङ्ग इत्यरुचिरत आह—किञ्चैवं नित्यमिति । दुर्वारत्वादिति । सर्पिरादिशब्देषु विसर्गस्य प्रत्ययरूपत्वाभावादिति भावः । वस्तुतस्तु परमपूर्वकअदस्शब्दस्य षष्ठ्यन्तस्य क्विबन्ताट्शब्देन समासे "षष्ठ्या आक्रोशे" इत्यनेन षष्ठ्या अलुकि 'परमामुष्याट्' इति जाते ततो णिचि टिलोपे क्विपि च सौ सुलोपे ततः कुण्डिकाशब्देन समासे परमामुःकुण्डिका' इत्यत्र षत्वस्यासिद्धत्वादुत्वे विसर्गे च विसर्गस्य प्रत्ययरूपत्वेन तत्रास्याप्राप्त्या षत्ववारणार्थमनुत्तरपदग्रहणस्य सार्थक्यादित्यरुचेराह-किञ्चैवं नित्यंसमासे इति सूत्रस्थभाष्यासङ्गतिरिति । यदि तु "इसुसोः सामर्थ्ये" "नित्यं समासे" इत्यत्र प्रतिपदोक्तयोरेव इसुसोः "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" इति परिभाषाबलेन ग्रहणमिति न 'परमामुः कुण्डिका' इत्यत्र षत्ववारणायानुत्तर-

शब्दरत्नम् ।

तस्मादत्र प्रत्ययपदं तत्सम्बन्धिपरं प्रत्ययसम्बन्धिभिन्नस्य विसर्गस्येत्यर्थ उचितः । अत एव कविभिः कृतमित्यादौ न दोषः । "नित्यं समासे–" ( पा० सू० ८।३।४५ ) इति सूत्रस्थानुत्तरपदस्थस्येत्यस्य, कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठस्य चैतदर्थज्ञापकतैवोचितेति चेत्? सत्यम् । व्याख्यादर्शानुसारेणैतद्ग्रन्थसत्त्वात्; तद् ध्वनयन्वक्ष्यति–नातीवादर्त्तव्यमिति

भैरवी ।

सिद्धिरित्यन्यतोऽनुसन्धेयम् । तस्मात्—उक्तभाष्याक्षरस्वारस्यात् । प्रत्ययसम्बन्धीति । प्रत्ययावयवभिन्नस्येत्यर्थः । एतेन "अग्निः करोति" इत्यत्र प्रत्ययसम्बन्धिप्रकृतिप्रत्ययसमुदायभेदस्य विसर्गे सत्त्वाद्दोषो ऽस्त्येवेति परास्तम् ।

अत एव—प्रत्ययावयवभिन्नस्येत्यर्थाङ्गीकारादेव । न दोष इति । न षत्वापत्तिरूपो दोष इत्यर्थः । अन्यथा प्रत्ययत्वपर्याप्त्यधिकरणसमुदायभेदस्य विसर्गे सत्त्वाद्दोषः स्यादेवेति भावः । आदिना "पेचुः काष्ठैः" इत्यस्य सङ्ग्रहः । उक्तमेवार्थन्दार्ढ्याय पुनराह—नित्यं समास इतीति । अनुत्तरपदस्थस्येत्यस्योत्तरार्थत्वमुक्तमेवात आह—कस्कादिष्विति । ननु कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठस्यापि व्यपेक्षायान्नित्यार्थतया चारितार्थ्यमस्त्येवेत्यत आह—चेति । एतेनोक्तभाष्यपरिग्रहः । एतद्ग्रन्थेति । मौलग्रन्थेत्यर्थः । तथाच प्रत्ययपदस्य प्रत्ययावयवलक्षणया सामानाधिकरण्येनान्वय एवोचित इति सिद्धम् । वस्तुतस्तु प्रत्ययावयवस्य नेति प्रसज्यप्रतिषेध एवोचितः । अत एव 'अग्निः करोति' इत्यत्र प्रतिषेधात्मककार्ये

भावप्रकाशः ।

तस्मादिति । उक्तभाष्यासङ्गतिरूपहेतोरित्यर्थः । परमित्यग्रे एवं चेति शेषः । प्रत्ययसम्बन्धीति । तदवयवमात्रेत्यर्थः । अन्यथाग्निरित्यत्र दोषावारणात् । तत्सम्बन्धिसमुदायादिभेदस्य विसर्गे सत्त्वात्तादात्म्यस्यासम्बन्धत्वादिति भावः । अनेन लाघवात्पर्युदासः सूचितः । एतेन प्रत्ययभिन्नस्यावयव इति पर्युदासेऽर्थ इति । वस्तुतः प्रसज्यप्रतिषेध एव । अत एव तन्निषेधरूपशास्त्रीये कार्ये स्थानिवत्त्वमपि सुलभम् । पर्युदासे त्वतत्त्वान्नैव प्राप्नोतीति च हरदत्तरत्नाकरोक्तमपास्तम् । आद्येऽग्निः करोतीत्यादावपि तद्भिन्नसमुदायसम्बन्धित्वेन षत्वापत्तेः । अन्त्ये निमित्तरूपकार्यस्यैव तत्र ग्रहणेनात्र प्रत्ययत्वस्य तथाभूतस्य शास्त्रीयत्वेन तदतिदेशे ऽतिदिश्यमानेत्युक्त्या वारणसम्भवे गौरवापत्तेः । मुख्यं दोषं तत्र सूचयन्नेतत्फलमाह—अत एवेति । आदिना पेचुः काष्ठैरित्यादिसंग्रहः । उक्तमेवार्थं दार्ढ्यायाह—नित्यमिति । तस्योक्तरीत्या सार्थक्यादाह—कस्कादिष्विति । व्यपेक्षायां नित्यार्थतया साफल्यादाह—चेतदिति । तेनोक्तभाष्याप्रत्ययग्रहणयोः संग्रहः । अनुबन्धविशिष्टस्यासोरित्यस्य पाठेन व्रीहिष्कृतमित्यादावदोषात् तेषामनभिधानस्य वक्ष्यमाणत्वाच्च । एतेन तादृशे द्विष्करोतीत्यादौ षत्वाय तत्सफलमिति मन्दोक्तमपास्तम् । चितेति । कविभिः कृतमित्यादिप्रयोगाणामनन्यथासिद्धेः । अत एव सामर्थ्य किं तिष्ठतु सर्पिः पिब त्वमिति प्रत्युदाहरणसङ्गतिः । किं च तत्सामर्थ्यादुत्तरपदे एतदप्रवृत्तिकल्पनातो लक्षणापूर्वकं तथान्वयबोधकतैवोचिता । बाधकल्पनातो लघुत्वात् । सर्पिष्कुण्डिकाशब्दस्यापीयमेव गतिर्युक्ता । तस्यापि बाधकल्पनेन लाघवात् । अन्यथाऽव्यपेक्षायामनेन व्यपेक्षायामिसुसोरिति सिद्धे शास्त्रबाधकत्वं वाच्यमितिगौरवं स्पष्टमेव । एवं च व्यपेक्षायां नित्यार्थश्चेति परममूलमयुक्तमेव । तद्ध्वनयन्वक्ष्यति-"अत्रत्यं तत्त्वम्" इत्यादि । एतेनेदुदुपधौ मिथः साहचर्यात् तृतीया-पञ्चमी-षष्ठी-तद्धित तिङन्तावयवभिन्नौ गृह्येते । यद्वान्यतरस्यांग्रहणापकर्षेण व्यवस्थितविभाषया नातिप्रसङ्ग इति मान्योक्तिस्तदनुरोधिनीति ध्वनितम् । ततो मदुक्तपक्षस्यैव लघुत्वान्न्याय्यत्वाच्चेति भावः । एवेन मूलोक्तसामानाधिकरण्यव्यावृत्तिः । सत्यमिति । अर्धाङ्गीकारे । त्वदुक्तसामानाधिकरण्याङ्गीकारेऽपि रीतिः सा नेति भावः । एतद्ग्रन्थेति । "अप्रत्ययस्येति तु" इत्यारभ्य "चरितार्थः" इत्यन्तेत्यर्थः । अत एव तत्र तथावतारितः । मूलकृतापीदमेवेष्टमिति ध्वनयन्नाह—तद् ध्वनयन्निति । मदुक्तार्थे ऽत्र मूलोक्तार्थाङ्गीकारवद्धरदत्तोक्तार्थाङ्गीकार इत्यतीवेत्युक्तिः सफला, मूलोक्तार्थे तु तदुक्तिर्निष्फलेति भावः । एतेन सप्रसज्यप्रतिषेधं वैयधिक-

५७ ) इति त्रिपाद्यां न प्रवर्तते । एवं च "पूर्वत्रासिद्धे न स्थानिवत्" इति सिद्धान्त

---

शब्दरत्नम् ।

**न प्रवर्तत इति । अत एव तिरश्चेत्यादौ सस्य श्चुत्वसिद्धिः । एतच्चेष्टानुरोधेन संयो-**

भैरवी ।

कर्तव्ये स्थानिवद्भावस्य प्रवृत्तिरपि सूपपादा । अत एव-"अचः परस्मिन्" इत्यस्य त्रिपाद्या-मप्रवृत्तेरेव । श्चुत्वसिद्धिरिति । अन्यथा ऽल्लोपस्य स्थानिवत्त्वात्तन्न स्यात् ।

ननु "न पदान्त" इति निषेधेन सिद्धिः ? निषेधविधायकसूत्रदृष्ट्या त्रिपाद्या असिद्धत्व-न्तु वक्तुमशक्यम् , द्विर्वचनादिग्रहणात् । अत एव "न पदान्त" सूत्रभाष्ये वेतस्वानित्यत्र रुत्वप्राप्तिमाशङ्क्य 'पदेऽन्तः' इति सप्तमीसमासेन समाहितम् । नच सुबुत्पत्तेः प्राक्समासे पर-स्य पदत्वाभावेन कथमत्र निषेधस्य प्राप्तिः । घनक्रीतेत्याद्यर्थङ्कारकांशे गतिकारकानामिति वचनस्य क्वचिदप्रवृत्तिस्वीकारात् । अत एव 'गोचा' इत्यादाववङादेशो न । गोचेत्यादिसि-द्ध्यर्थं पद इत्यस्य पदत्वयोग्यपरताया आवश्यकत्वाच्चेत्यत आह—आदाविति । तेन "राज्ञ" इत्यादिसङ्ग्रहः । एतच्चेति । "अचः परस्मिन्" इत्यस्य त्रिपाद्यामप्रवृत्तिरित्येतच्चेत्यर्थः ।

भावप्रकाशः ।

रण्यमेव हरदत्तोक्तं युक्तम्, न मूलोक्तं सामानाधिकरण्यम्, सर्पिष्करोतीत्यत्र वैकल्पिकषत्वेऽपि ति-ष्ठतित्याद्युक्तप्रत्युदाहरणेऽनेन नित्यषत्वापत्तेः । अव्युत्पत्ताविष्टापत्तिस्तु न, पक्षान्तरे दोषात् । किं च इसुसोरित्यस्य सर्पिष्करोतीत्युदाहरणेन तस्यैवात्रेष्टत्वानुमानात् । अन्यथा पक्षभेदेन विकल्पसिद्ध्या तदसङ्गतिः स्पष्टैव । किं च तत्रानेन षत्वस्येष्टत्वे कस्कादिषु सर्पिष्कुण्डिकेत्यादि त्वदुक्तिविरोधः । किं चेणः ष इत्यस्य सर्पिष्पाशमित्युदाहरणासङ्गतिरनेनैव तत्सिद्धेरिति खण्डनकृद्दण्डयाद्युक्तम् , इदुद्भ्या-मप्रत्ययस्येत्येव सिद्धे उपधाग्रहणं नित्यं य इदुदुपधस्तल्लाभाय तेन कविभिरित्यादौ न दोषः, रामैरि-त्यादौ तदभावादिति मूलोक्तं सिद्धत्वज्ञापकं वैयधिकरण्येनान्वयेऽसङ्गतं स्यादित्याशङ्क्य न मुने इति योगविभागात्तत्सिद्धिरिति च दण्ड्युक्तं च,-'सामानाधिकरण्यं वाचनिकं न्यायसिद्धं वा? नाद्यः, तथावच-नस्य भाष्यादावभावात् । नान्त्यः । उक्तलद्यविरोधेन[illegible]ावमूलकस्यापि तस्य बाध्यत्वात् । अन्यथा प्रसज्यप्रतिषेधोच्छेदापत्तेः । न च पुंसा नेति भाष्यविरोधः । अव्युत्पत्तिपक्षे दोषात् । पक्षान्तरे स्वार्थिक निषेधानुवादः । कस्कादिषु भ्रातुष्पुत्रग्रहणं च विध्यर्थं तज्ज्ञापकतापरभाष्यं तु काका योज्यम् । यद्वा तद्वैयधिकरण्यमेव ज्ञापयति न तन्निषेधम् । अत एव परमसर्पिःकुण्डिकेत्यादि सङ्गच्छत इति वैय्यधिकरण्य-मेव रमणीयम्'-इति रत्नाकरोक्तं च, मूलोक्तं सामानाधिकरण्यमेव युक्तमिति साधयितुं "मुखमस्ति" इति न्यायेन यत्किञ्चिन्मन्दोक्तं चापास्तम् । आद्ये टीकोक्तरीत्या दोषाभावात् । द्वितीयेऽग्निरित्यादौ षत्वाप्राप्तेः राम इत्यादावकारोपधत्वात् प्रियचत्वा इत्यादौ तत्त्वेन चतुष्कपाल इत्यादौ तदनापत्तेश्च । ह्यवरट्सूत्रे उपधाग्रहणस्य खण्डितत्वाच्च । योगविभागस्याप्रामाणिकत्वाच्च । तथान्वयेपि "सर्वे सर्वपदा"इतिन्या-येन ज्ञापकसङ्गतेश्च । तृतीयेप्युक्तोत्तरत्वात् । तुर्येऽनुवादस्यैव मिथोविरुद्धत्वेन कर्तुमशक्यत्वादिदमेव ध्वनयितुं वक्ष्यति 'अलमिति'इति बोध्यम् । तिरश्चेति । ननु नपदान्तेति निषेधेनैव सिद्धिः । न च विधिदृष्ट्या सिद्धत्वेप्येतद्दृष्ट्याऽसिद्धत्वमेवेति वाच्यम्, द्विर्वचनादिसाहचर्येण तथैवाङ्गीकारात् । अत एव वेतस्वानित्यत्र रुत्वप्राप्तिमाशङ्क्य सप्तमीसमासेन समाहितं भाष्ये । नचैवं तदप्राप्तिरेव परपदस्थाजादेश-त्वाभावात्, सोपपदादञ्चेः क्विपि गतिकारकेत्यादिना प्राक् सुबुत्पत्तेः समासादिति वाच्यम्, तस्यानित्य-त्वेन सुबन्ते समासे तत्प्राप्तेः । अत एव गोचेत्यादिसिद्धिः । अन्यथा अवङापत्तिः स्पष्टैव । उत्तरपदत्वे चेत्यस्य तु प्रागुक्तरीत्या प्राप्तिः । अथ तदनित्यत्वे मानाभावः, किं तु बहुलग्रहणात्कारकांशे क्वचित् सुबन्तेनापि समासः यथा साहितस्य घनक्रीतेत्यादाविति ब्रूषे तथापि गोचेत्याद्यर्थं 'पदे'इत्यस्य पदत्वयोग्य-परताया आवश्यकत्वेनात्र तत्प्राप्तिर्निष्प्रत्यूहैव । न पदान्त सूत्रभाष्यमप्यत्र मानमत आह-आदाविति । तेन राज्ञ इत्यादिसंग्रहः । ननु ज्ञापकस्य कुप्वोः परत इति सिद्धत्वापेक्षत्वेपि तस्य वाचनिकत्वे तस्य दोष इति कस्य निषेधाऽत आह—एतच्चेष्टेति । अयं च मूलीयप्रपञ्चितपदसूचितोऽर्थः । वस्तुतः स उक्तयुक्त्य

उक्तयुक्तिमूलको न तु वाचनिक इति प्रपञ्चितं शब्दकौस्तुभेऽस्माभिः। नन्वेवं मातुः कार्यमित्यादौ षत्वं स्यादिति चेत्? न, कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठेन

शब्दरत्नम्।

गादिलोपलत्वणत्वातिरिक्तविषयं, तेन तत्र स्थानिवत्त्वं भवत्येवेति "तस्य दोष-" इत्याद्यपि न वाचनिकमिति भावः। मातुः कार्यमिति। सिद्धान्तव्याख्यानेऽप्यत्र दोषः। तथा हि, सकारसन्निधावकारो नैव प्रत्ययः समुदायनिवेशितत्वात्प्रत्ययत्वस्येति तदादेशस्योरः प्रत्ययत्वाभावेन विसर्गस्य तत्सम्बन्धित्वाभावात्। यस्तूत्वे कृतेऽवशिष्टः सकारः प्रत्ययसञ्ज्ञकः, स लुप्त एव। न च "अन्तादिवच्च" (पा० सू० ६।१।८५) इत्यस्य पूर्वस्य परस्य समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रत्ययत्वादयस्ते एकादेशविशिष्टस्यापीत्यर्थादुरसित्यत्र प्रत्ययत्वस्य सुलभतया एकदेशविकृतन्यायेनो-

।भैरवी।

अयञ्च प्रपञ्चितपदानुवादः। वस्तुतो"न पदान्त" सूत्रे द्विर्वचनादिग्रहणेन वतिघटितान्योतिदेशानान्त्रिपाद्यामप्रवृत्तिर्भवत्येव। अत एव'अमो क्षीरेपण' इत्यादिसिद्धिरिति स्फुटीभविष्यति। द्विर्वचनादिग्रहणन्तु न्यायसिद्धानुवादः। "तस्य दोषः" इति तु वाचनिकमिति बोध्यम्।

मूले—नन्वेवमिति। एवम्-प्रत्ययभिन्नस्येति रीत्या सामानाधिकरण्येन व्याख्याने। षत्वं स्यादिति। विसर्गस्य प्रत्ययभिन्नत्वादिति भावः। अत्रैवमित्युपादानेन प्रत्ययपदस्य प्रत्ययसम्बन्धिनि लक्षणापक्षे नायन्दोष इति भ्रान्तिः स्यात्तन्निवारणायाह—सिद्धान्तेति। अकारः—असोऽवयवाकारः। समुदायनिवेशितत्वात्—असिति समुदायपर्याप्तत्वात्। तदादेशस्य-अकारादेशस्य। अस्याकारादेशत्वेऽपि "द्वयोः षष्ठीनिर्दिष्टयोः" इति न्यायेन ऋवर्णादेशत्वमपीति रपरत्वस्य सिद्धिः।

"सर्वे सर्वपदादेशाः" इति न्यायानुसरणमाशङ्क्य निराचष्टे-नचान्तादीति। प्रत्ययतयेति।

भावप्रकाशः।

न्यायसिद्धानुवादोऽतिदेशान्तराणां वतियुक्तानां त्रिपाद्यां प्रवृत्तिबोधनाय नपदान्तेत्यत्र द्विर्वचनादिग्रहणवत्। तत्फलं त्वमी क्षीरपेणेत्यादिनानुपदमेव स्फुटीभविष्यति। इदं तु वाचनिकमेव। योगविभागस्तु भाष्ये न दृश्यते। अत एव सिद्धकाण्डं वार्तिककृतारब्धं "नलोपः" इति सूत्रं च सूत्रकृता। मान्योक्तिस्तु कौस्तुभानुसारिणी। स तु चिन्त्य एवेति बोध्यम्। तद्ध्वनयन्नाह—इतिभाव इति। अन्यथेति बोध्यमित्युचितमिति दिक्।

यत्तु कस्कादिषु भ्रातुष्पुत्रशब्दग्रहणं ज्ञापकमेकादेशनिमित्तात्षत्वप्रतिषेधस्येति भाष्योक्तं ज्ञापकं मूलोक्तपक्षसाधकम्। अन्यथा एकादेशस्य परादिवत्त्वेन ग्रहणात्प्रत्ययसम्बन्धतया तत्सम्बन्धित्वेन विसर्गस्य षत्वाप्राप्त्या तदसंगतिः स्पष्टैव। लुप्यतेऽत्र प्रत्यय इति भाष्यमुपादाय ससंनिधावनेन प्रत्ययत्वं न लब्धं समुदायनिष्ठत्व त्तस्येति कुतस्तदादेशे तत् उत्वे कृतेऽवशिष्टस्सस्तु प्रत्ययसंज्ञोऽपि लुप्त इति भाव इति कैयटोक्तं तु चिन्त्यम्। तत्सन्निधौ तथात्वेऽपि तस्मिन् लुप्तेऽवशिष्टस्य सम्भावनया प्रत्ययत्वानपायात्। अन्यथा यातिरिलपि न स्यात्, वरेग्रहणं चानर्थकमापद्येत। तस्मादेकांशस्य परादिवत्त्वेन ग्रहणादुर इत्यस्य प्रत्ययत्वं दुर्वारमिति रत्नाकरः। यद्यपि मूलोक्तपक्ष एवोक्तभाष्यसंमतस्तथापि प्रत्येकं संयोगसंज्ञेति पक्षवदफलः। वैयधिकरण्यपक्षस्तूक्तरीत्या आवश्यक एवेति दण्डी च। तदुभयमप्ययुक्तं, फलसत्त्वे सम्भावनया तदाश्रयणेऽप्यत्र तत्त्वे तदभावात, एवमप्यन्तवत्त्वस्य त्रिपाद्यामप्रवृत्तेश्च, वक्ष्यमाणरीत्याऽस्य सफलत्वाच्च, तथा वैयधिकरण्यानाश्रयणाच्च। तदेतद् ध्वनयन्नाह—सिद्धान्तेति। लक्षणया सामानाधिकरण्येपीत्यर्थः। दोषः। षत्वापत्तिः। यस्तूत्वे इति। उत्वइत्यर्थः। यदागमा इति न्यायेनेति भावः। कैयटोपरि नारायणरत्नाकरोक्तं दोषमुद्धरति-नचान्तेति। सुलभतेति। रासस्येति रुत्वस्यासिद्धत्वात्

ङसिङसोरत उकारात्परस्य षत्वं नेति ज्ञापनात् । एवं च 'अप्रत्ययस्य' इत्येतदपि

शब्दरत्नम् ।

रित्यस्य प्रत्ययतया न दोष इति वाच्यम् । त्रिपाद्या असिद्धत्वेन तत्राऽन्तवत्त्वाप्रवृत्तेः । स्थानिवत्त्वेन तु न निर्वाहः । उपात्तस्य स्थानिनो ऽकारस्य प्रत्ययत्वाभावात् । प्रत्ययसम्बन्धित्वं तु न स्थानिवत्त्वलभ्यमशास्त्रीयत्वात् । "सर्वे सर्वपदादेशा" इति न्यायेन मातृ असित्यस्य स्थानित्वेऽप्यसित्यस्य स्थानित्वालाभेनोर्सित्यस्य प्रत्ययत्वमलभ्यमिति । एतदेवाभिप्रेत्य प्रकृतसूत्रे "उरण् रपरः" ( पा० सू० १।१।५१ ) इति सूत्रे च भाष्ये उक्तम् "इह कस्मान्न भवति पितुः करोति, "अप्रत्ययस्य" इति षत्वं प्राप्नोति, अप्रत्ययविसर्जनीयस्येत्युच्यते, प्रत्ययविसर्जनीयश्चायं, लुप्यतेऽत्र प्रत्ययविसर्जनीयो "रात्सस्य" ( पा० सू० ८।२।२४ ) इति" । लुप्यतेऽत्रेत्यादेरयमर्थः—प्रत्ययविसर्जनीयत्वेन यस्तवाभिमतः स लुप्यते न दृश्यते स्थानिनः प्रत्ययस्यैव लोपादिति बोद्धयम् । ज्ञापनादिति । त्रिपाद्यामप्यन्तवत्त्वप्रवृत्तिज्ञापनद्वारेति भावः । अत एव 'अमी,

भैरवो ।

तदवयवसस्य प्रत्ययावयवतया तदादेशस्य विसर्गस्य तत्त्वसत्त्वेनेति शेषः । ननु स्थानिवत्सूत्रस्य प्रवृत्तिरुपपादितेति तेनोर्सित्यस्य प्रत्ययत्वम्भविष्यतीत्यत आह-स्थानिवत्त्वेनेति । ननूपात्तस्य स्थानिनो ऽकारस्याप्रत्ययत्वेऽपि सकारनिष्ठम्प्रत्ययसम्बन्धित्वमतिदेशेन विसर्गोऽस्त्वित्यत आह-प्रत्ययसम्बन्धित्वमिति । मातृ असित्यस्येति । अस्मिन्पक्षे ऋसिति समुदायो नार्थबोधक इति स परित्यक्तः । एतदेव—उपपादितपदार्थसत्वमेव । अत्रैवकारेण कैयटेन "लुप्यते ऽत्र प्रत्ययः" इति प्रतीकमुपादाय ससन्निधावकारेण प्रत्ययत्वन्न लब्धं समुदायनिष्ठत्वात्तस्येति कुतस्तदादेशे तत्, उत्वे कृते ऽवशिष्टस्सस्तु प्रत्ययसंज्ञोऽपि लुप्त इति भाव' इति यदुक्तन्तन्न युक्तमिति ध्वनितम् । सकारसन्निधावकारे यद्यपि न प्रत्ययत्वं तथापि तस्मिन् लुप्तेऽवशिष्टेऽकारे प्रत्ययत्वस्यानपायात् ।

ननु "रात्सस्य" इत्यनेन सकारस्य लोपो विधीयते, ननु विसर्जनीयस्येति "लुप्यतेऽत्र प्रत्ययविसर्जनीयो रात्सस्य" इति भाष्यस्य कथं योजनेत्यत आह—लुप्यतेऽत्रेत्यादेरिति । यः-विसर्जनीयः । प्रत्ययस्यैव-सस्यैव । ज्ञापनद्वारेति । एवञ्च मुख्यं ज्ञाप्यमिदमेव, षत्वन्नेति तु फलितार्थकथनमिति ध्वनितम् । अत एव-त्रिपाद्यामन्तादिवद्भावस्य प्रवृत्तिस्वीकारादेव ।

भावप्रकाशः ।

सलोपे सतीति शेषः । न दोष इति । विसर्गस्य प्रत्ययावयवत्वान्न षत्वापत्तिरित्यर्थः । तत्रान्तेति । कर्त्तव्ये इति शेषः । सूत्राप्रवृत्तेरित्यर्थः । त्रान्तादित्वाप्रवृत्तेरितिपाठस्तु सुगम एव । तदुक्तमेव खण्डयति—स्थानीति । अस्य तत्रापि प्रवृत्तेरिति भावः । उपात्तस्येत्युक्तिफलमाह—सर्वेसर्वेति । इत्यस्येत्येकवचनेन समुदायस्य स्थानिता सूचिता । तदाह—असित्यस्येति । इतिदोषप्रतिपादकग्रन्थसमाप्तौ । एतदेवेति । अन्यथोक्तरीत्या तदसङ्गतिः स्पष्टैव । स्येतीति । अर्थे तात्पर्यं न त्वानुपूर्व्यामिति भावः । नन्वेतद्भाष्यस्योक्ततात्पर्यकत्वेपि 'प्रत्ययविसर्जनीयो रात्सस्येति' इत्यत्र तदवयवस्तद्रूपो वेत्यर्थद्वयस्य सम्भवेपि श्रूयमाणविसर्जनीयस्योक्तरीत्या तदनवयवत्वाल्लोपाप्रासेश्च लुप्तस्याविसर्जनीयत्वाच्च भाष्यमसंगतमेवात आह—लुप्यते इति । प्रत्ययविसर्जनीयत्वेनेति । तत्स्थानिकविसर्जनीयत्वेनेत्यर्थः । तत्स्थानिकत्वेनेति यावत् । यः—विसर्जनीयः । प्रत्ययस्यैव—सस्यैव । अतएव लुप्यतेत्र प्रत्ययो रात्सस्येतीति पाठैकवाक्यता भवतीति भावः । इतीति बाध्यमितिपाठः । ज्ञापनेति । एतेन मुख्यं ज्ञाप्यमिदमेव, षत्वाभावस्त्वार्थिक इति मूलोक्तज्ञापनादित्यस्यार्थिकबोधनादित्यर्थः सूचितः । एवं चोसित्यस्य प्रत्ययतया तत्सम्बन्धित्वसत्त्वेन तद्भेदाभावेनान्यत्र षत्वाभावः स्वस्मिन् चारितार्थ्यं च युक्तमेवेति भावः । यथाश्रुतार्थ-

व्यधिकरणमेवेति हरदत्तेनोक्तं नातीवादर्तव्यम् ।

मातुरिति । अत्र हि "ऋत उत्" ( पा० सू० ८।१।१११ ) इत्येकादेशशास्त्रं

शब्दरत्नम् ।

क्षीरपेण' इत्यादौ मीत्वणत्वे सिद्ध्यतः । अत्रैकारस्यादन्तसम्बन्धित्वं पे इत्यस्यैकाजुत्तरपदत्वं चान्तवद्भावाधीनमिति बोध्यम् । व्यधिकरणमेवेति । प्रत्ययस्य सम्बन्धी यो विसर्गस्तस्य नेत्यर्थ इति तद्भावः । अगत्या च वाक्यभेदाऽसमर्थसमासवैयधिकरण्यान्वयरूपदोषत्रयसहनमिति तदभिमानः । नातीवेति । वैयधिककरण्यान्वयफलस्य कविभिः कृतमित्यादेः प्रत्ययसम्बन्धिभिन्नस्य विसर्गस्येत्येवं लक्षणया सामानाधिकरण्येनापि संग्रहसम्भवादिति भावः । व्याख्यादर्शोक्तसामानाधिकरण्ये तु लेशतोऽपि तदादराभावादतो-

भैरवी ।

एवञ्चोर्सित्यस्य परादिवद्भावेन प्रत्ययतया सकारे गतेऽप्युरित्यस्य स्थानिवद्भावेन प्रत्ययतया तदादेशस्य विसर्गान्तस्योरित्यस्यापि प्रत्ययत्वमिति विसर्गे प्रत्ययावयवत्वमर्थादेव लब्धमिति तदानयनार्थन्नातिदेशापेक्षेति भावः । एकाजुत्तरपदत्वमिति कर्मधारयः । अधीनमिति । ननु स्थानिवद्भावेन, अशास्त्रीयत्वात् । एतेनान्तादिवत्सूत्रं स्थानिवद्भावेन गतार्थमिति प्राचोक्तमपास्तमिति सूचितम् । 'पे' इत्यस्यकाच्त्वं यद्यपि स्वतः सिद्धन्तथाप्युत्तरपदत्वस्याशास्त्रीयत्वेन तदलाभादित्थमुक्तम् । हरदत्ताभिमतं वैयधिकरण्यमुपपादयति—प्रत्ययस्येत्यादिना । अगत्या-'कविभिः कृतम्' इत्यादौ गत्यन्तराभावेन । अभिमान इति । प्रत्ययपदस्य लक्षणया प्रत्ययसम्बन्धिबोधकत्वं तद्धर्मावच्छिन्नप्रतियोगिताकभेदवतोऽभेदेन विसर्गविशेषणत्वम् । एतेन सर्वेष्टसिद्धौ क्लेशानुसरणं व्यर्थमिति भावः । लेशतोऽपीति । स्वस्य तस्य च मते प्रत्ययपदम्प्रत्ययसम्बन्धिपरम् । एतावानेव विशेषः, स्वमते सामानाधिकरण्येन सम्बन्धः, तन्मते वयधिकरण्येन । फलञ्च तुल्यम् । व्याख्यादर्शोक्तमते तु प्रत्ययपदस्य न लक्षणा, कवि-

भावप्रकाशः ।

त्यागफलमाह—अतएवेति । उक्तार्थाङ्गीकारादेवेत्यर्थः । अत्रेति । उभयत्रेत्यर्थः । सम्बन्धित्वमिति । सान्तनिष्ठादन्तत्वस्यैकेति न्यायेनाकारान्तेशास्त्रीयनिष्ठस्यान्तवत्त्वेनैकारान्ते आनयनेन तत्र तत्सम्बन्धित्वमर्थात् सिद्धमत एव पूर्वापरविरोधी नेति भावः । पे इत्यस्येति । तद्विशिष्टस्येत्यर्थः। अत एवाह—एकाजिति। सौत्रानुवादः । चेन समासत्वम् । अन्यथाधिक्यन्यूनते स्पष्टे एव । यद्यप्येकाच्त्वमशास्त्रीयं तथापि तस्य स्वतःसत्त्वेनोत्तरपदत्वस्यैव साध्यत्वेन तस्यान्यशास्त्रीयत्वेपि विशिष्टसमासस्वरूपस्य तथाशास्त्रबाध्यत्वेन तन्निष्ठविशेष्यधर्मवद्विशेषणधर्मस्यापि शास्त्रीयत्वेन विशिष्टानयनं निर्बाधमिति भावः । अधीनमिति । स्थानिवत्त्वं तु न आद्यस्यादः सम्बन्धित्वस्याशास्त्रीयत्वात् शास्त्रीयादन्तत्वस्योभयथाप्यस्थानिधर्मत्वाच्च । शास्त्रीयत्वं च विधेयतया शास्त्रबोध्यत्वमत एवैकाच्त्वादेर्न तत्त्वम् । अन्त्ये विशेषणतयाऽलाश्रयणात्, पक्षभेदेन वर्णयोः समुदायस्य वा स्थानित्वेन द्वयोरपि तदधर्मत्वाच्चेति भावः । प्रसज्यप्रतिषेधोपि तस्येष्टस्तद्वदित्याह—प्रत्ययस्येति । वैयधिकरण्यं स्पष्टयितुं तथोक्तम् अन्यथान्यतरवैयर्थ्यं स्पष्टमेव । इत्यर्थइति । इतिसूत्रैकदेशार्थः । एवं चैवकारेण मूलस्थेन तदनुवादान्तर्गतेन तत्रेदुदुपधस्येति वैयधिकरण्यानन्तरं तथाश्रया मूलोक्तसामानाधिकरण्यव्यावृत्तिरत एव तत्रस्यापि सङ्गतिरिति बोध्यम् । अगत्येति । कविभिः कृतमित्याद्यनन्यथासिद्धयेत्यर्थः । अभिमान इति । लक्षणारूपपदैकदोषस्यो कवाक्यत्रयदोषतो लघुभूतस्य सहनेन तथान्वयेनेष्टसिद्ध्या गतेरभावेन तत्त्रयसहनं सुधैवेत्यरुचिरनेन सूचिता । अपिः पर्युदाससमुच्चायकः । तेन वाक्यभेदादिकं न । एवं चेषत्तदादर इत्यतीवेत्युक्तिः सफलेति भावः । लेशतोपीति । तदन्वयफलस्य कथमप्यसंग्रहात् अत्यन्तादरनिषेधोऽनुचितः । मन्मते

विसर्गं प्रति परम्परया प्रयोजकम् । आकरे तु "एकादेशशास्त्रनिमित्तात्" इति प्रचुरः पाठः । तत्र एकादेशशास्त्रं निमित्तं यस्य उकारस्य तस्मादित्यर्थः ॥

---

शब्दरत्न

वेत्यसङ्गतमेव स्यादिति । अनेनोक्तव्याख्याया एव स्वाभिमतत्वं सूचितवानित्यलम् ।

परम्परयेति । एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्गस्यैकादेशशास्त्रनिमित्तकत्वमिति भावः । प्रचुरः पाठ इति । ओषधीस्कृधीत्यादौ शसैकादेशे "कःकरत्करतिकृधि-" ( पा० सू० ८।३।५० ) इति षत्वनिवृत्तिश्च तत्फलमुक्तम् । मूले तु तस्य फलस्य च्छान्दसत्वात् "छन्दसि वा प्र-" ( पा० सू० ८।३।४९ ) इत्यतः "इणः षः" ( पा० सू० ८।३।३९ ) इत्यस्य निवृत्त्या ऽदोषाच्च षष्ठ्यन्तमेव पठितमिति दिक् ॥

भैरवी ।

भिरित्यत्र दोषावारणञ्चेति तदादराभाव इति भावः । अनेन–अतीवेति कथनेन । अलमिति । उक्तदोषगणापत्त्या स्वीयव्याख्यैवोचितेति सूचितम् ।

एकादेशशास्त्रमुकारादेशे निमित्तं न तु विसर्गे इत्येकादेशशास्त्रनिमित्तकस्येत्यनुपपन्नमत आह—एकादेशेति । प्रचुर इति । "इदुदुपध" इतिसूत्र–"उरण् रपर "सूत्रयोरेवन्दर्शनम्भाष्ये ऽस्तीत्यस्य प्रचुरत्वम् । तादृशपाठसाध्यफलन्त्वन्यथासिद्धमित्याह–ओषधीस्कृधीत्यादाविति । ओषधिशब्दाच्छसि पूर्वसवर्णदीर्घे शसः सकारस्य रुत्वविसर्गयोः "कः करत्" इत्यस्य प्राप्तिः । इति षत्वेति । इति सूत्रप्राप्तषत्वेत्यर्थः । तत्र "इणः षः" 'सः' इति च सम्बध्यते । कःप्रभृतिषु परेषु अदितिशब्दसम्बन्धिभिन्नस्य विसर्गस्येणः परस्य षो ऽन्यस्य तु स इति "कस्कादिषु च" इति सूत्रस्येव तदर्थात्प्राप्तिः षत्वस्य । अन्यथा परममुले तस्य सूत्रस्य सकारविधायकत्वेन व्याख्यातत्वादसङ्गतिः स्यात् । तत्फलम्–पञ्चम्यन्तपाठफलम् । चो ऽप्यर्थे । मूले—परममूले । तस्य फलस्य छान्दसत्वादिति । सकारघटितस्य षकाराभावदर्शनविषयप्रयोगस्य छान्दसत्वादित्यर्थः । छन्दसीति । एवञ्चेण इत्यस्य "कस्कादिषु च" इत्येतत्पर्यन्तमेव सम्बन्धो भवतीति तेन सूत्रेण सकार एव विधीयत इति भावः । दिगिति । दिगर्थस्तु

भावप्रकाश

तूक्तरीत्या वाक्यभेदाद्यापत्त्या तथादरो निषेद्धुं युज्यत इति भावः । असङ्गतमेव स्यादिति । तथाचोक्त एव तस्याशय इति भावः । अग्रे इति भाव इति पाठः । इष्टापत्तिं खण्डयति—अनेनोक्तेति । अतीवेति कथनेन लक्षणया सामानाधिकरण्यस्यैवेत्यर्थः । सूचितवानिति । यद्यपि ध्वनितापेक्षयोक्तं प्रबलं तथापि स्वरूपव्याक्रियैव पराक्रियेति न्यायेनान्यदीयं लिखित्वा शङ्कान्तरेण विच्छिद्य तथोक्त्या स्वीयं मतं ध्वनितवानित्यर्थः । अन्यथोक्तदोषगणापत्तिस्तदाह—अलमिति । अस्यार्थस्तूक्त एव ।

प्रचुर इति । उक्तसूत्रद्वयादिभाष्यादावसकृत्तथोल्लेखात्तत्त्वमिति भावः । इति षत्वेति । इतिप्राप्तषत्वेत्यर्थः । कःप्रभृतिषु पञ्चसु परतोऽदितिशब्दसम्बन्धिभिन्नस्य विसर्गस्येण उत्तरस्य षोऽन्यस्य तु स इति तदर्थः । कस्कादिषुचेत्यस्यैवेति भावः । तत्फलमुक्तमिति । पञ्चम्यन्तपाठफलमप्युक्तमित्यर्थः । चोऽप्यर्थोऽत्र सम्बध्यते षत्वतुकोरिति सूत्रभाष्ये इति शेष इति भावः । मूले त्विति । कौमुद्यां त्वित्यर्थः । तस्य फलस्येति । तत्र षत्वाभावरूपफलस्येत्यर्थः । छान्दसत्वादिति । लक्ष्यस्य सघटितस्य छान्दसत्वादित्यर्थः । सिद्धत्वादिति शेषः । इदं चेणः ष इत्यस्यानुवृत्तिमभिप्रेत्य । वस्तुतस्तस्यैव न "कस्कादिषु च"इत्यन्तं तदनुवृत्तावप्यग्रेऽनुवृत्तौ मानाभावादित्याह—छन्दसीति । अदोषाच्चेति । तन्निवृत्त्या तेन सत्वमात्रविधानेनेष्टसिद्धः षत्वापत्त्यभावाच्चेत्यर्थः । तथा च न ज्ञापकोपयोग इति भावः । दिगिति । तदर्थस्तु

सरला ।

पदग्रहणस्य सार्थक्यमित्युच्यते तथाऽपि सर्पिरादिशब्दस्थसकारस्थानिकविसर्गस्य व्युत्पत्तिपक्षेऽव्युत्पत्ति-

मुहुःकामेति । इह "कुप्वोः≍क≍पौ" (पा० सू० ८।३।३७) इति प्रवर्तते । वृत्तौ मुहुस्कामेति सकारः क्वचित् पठ्यते, तत्प्रामादिकमिति हरदत्तः ।

द्विस्त्रिश्चतुरिति (पा० सू० ८।३।४३)। इह द्वित्रिभ्यां सुजन्ताभ्यां साहचर्यात् चतुःशब्दोऽपि सुजन्त एव ग्रहीष्यते । कृत्वोऽर्थग्रहणं ज्ञापकम्—साहचर्यं न सर्वत्र व्यवस्थापकमिति । तेन "दीधीवेवीटाम्" (पा० सू० १।१।६) इत्यत्र धातुसाहचर्येऽपि आगमस्येटो ग्रहणम् । उभयत्र विभाषा चेयम् । चतुरित्यस्य "इदुदुपधस्य-" (पा० सू० ८।३।४१) इति प्राप्ते, इतरयोस्त्वप्राप्ते । न च तयोरपि "इसुसोः सामर्थ्ये" (पा० सू० ८।३।४४) इत्यनेन सिद्धिः शङ्क्या ।

शब्दरत्नम्

प्रामादिकमिति । पदादित्वेन "सोऽपदादौ" (पा० सू० ८।३।३८) इत्यस्याप्राप्तेरिति भावः ॥

साहचर्यमिति । न च रामलक्ष्मणावित्यादौ दृष्टसाहचर्यसम्बन्धस्याभिधानियाम-

भैरवी ।

पञ्चम्यन्तपाठो भाष्यसम्मत एवोचितः । अत एव "अपदान्तस्य मूर्द्धन्यः" इति सूत्रे-प्रकृतं षग्रहणमनुवर्तते तेनैव सिद्धे मूर्द्धन्यपदाङ्क्तिमर्थमिति विचारे "क्व प्रकृतमिणः ष" इति भाष्यं सङ्गच्छत इति षग्रहणस्य कःकरदिति सूत्रे सम्बन्धो भवत्येवेति । परममूले तु "कः करत्" इति सूत्रस्य सकारादेशमात्रविधायकत्वेन व्याख्यानं वृत्त्यनुसारेण । अत एव वृत्तौ अदितिः करदित्यत्र सकारादेश इत्युक्तम् । हरदत्तेन तु पूर्वोक्त-"अपदान्तस्य" इति सूत्रस्थभाष्यदर्शनेन "सकारादेश" इति प्रतीकमुपादाय षत्वस्याप्युपलक्षणमेतदिति व्याख्यातम् ।

दृष्टसाहचर्येति । लोकादावित्यादिः । साहचर्यसम्बन्धस्य—एकस्मिन्कार्ये परस्परसापेक्षत्वरूपसम्बन्धस्य । नियामकत्वमिति । युगपदेवोभयोः प्रसिद्धार्थबोधकत्वमित्यर्थः । 'योगो विप्रयोगश्च' इत्यादिना हरिणा ऽयमर्थः सङ्गृहीतः । तदर्थस्तदुदाहरणानि चान्यत्र स्पष्टानि ।

भावप्रकाशः ।

पञ्चम्यन्तमेवोचितम् । अत एवापदान्तस्येत्यत्र "क्व प्रकृतम् ? इणः षः" इति भाष्यं संगच्छते । "कः करोत्"इति सूत्रे सकारादेश इति प्रतीकमुपादाय षत्वस्याप्युपलक्षणमेतत् तथाचादितिप्रतिषेध इति हरदत्तोऽपि । किं च भवन्मतेऽप्यस्यासिद्धतयेणः ष इति प्राप्तवारणाय तस्यावश्यकत्वम् । अत्र सस्य स्वतः सत्वेनैकादेशशास्त्रनिमित्तकत्वाभावात् षष्ठ्यन्तपक्षे वारणं दुष्करमिति ।

अस्याप्राप्तेरिति । हरदत्तोक्तेरनुवादोऽयम् ।

दृष्टेति । लोकादाविति भावः । साहचर्यसम्बन्धस्येति । एकस्मिन्कार्ये प्रसिद्धपरस्परसापेक्षत्वरूपसम्बन्धस्येत्यर्थः । नियामकत्वमिति । युगपदेवोभयोस्तत् । तेन नान्योन्याश्रय इति भावः । तदुक्तं हरिणा—संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।

अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ॥
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः" इति ।

एते संयोगादयो नानार्थशब्देषु शब्दार्थस्यानवच्छेदे संदेहे तदपाकरणद्वारा विशेषस्मृतहेतवो निर्णयहेतव इत्यर्थः । उपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनिर्णयद्वारा तन्मात्रार्थविषयकान्वयबोधजनका

सरला

पक्षे वा प्रत्ययभिन्नत्वेन तस्यानेन सर्वत्र षत्वप्राप्त्या "नित्यं समासे" इत्यनेन उत्तरपदस्थविसर्गस्य षत्विर्नोद्ध्येति दिक् ।

इसः प्रत्ययस्य अर्थवतश्च तत्र ग्रहणात् । चतुष्कपाल इति । 'इदुदुपधस्य"

शब्दरत्नम् ।

त्वं दृष्टम्, न चैषां क्वापि साहचर्यसम्बन्धो गृहीत इति कथमेतदिति वाच्यम् । "पञ्चम्यपाङ्परिभिः" ( पा०सू० २।३।१० ) इत्यनेन लक्षणादिद्योतकपरियोगे पञ्चमीशङ्कायां "यद्यप्ययं परिर्दृष्टापचारो व ने चावर्जने च, अयं खल्वपशब्दोऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयस्तस्य कः सहायो भवितुमर्हति अन्यो वर्जनार्थात् । यथा ऽस्य गोः सहायेनार्थ इति गौरेवानीयते नाश्वो न गर्दभः" इति "कर्मप्रवचनीययुक्ते" ( पा० सू० २।३।८ ) इति सूत्रस्थभाष्येण सदृशानामेव प्रयोगे सहायत्वमित्यर्थस्य प्रतिपादनेनाक्षतेः । परिभाषायां, सहचरितशब्देन सदृशस्यैव ग्रहणम् । सहचरस्य भावः साहचर्यम्, सहचरणं च सदृशयोरेवेति साहचर्यशब्देन सादृश्यमुच्यते । सदृशयोरेव सहविवक्षा तयोरेव च सहप्रयोगः । रामलक्ष्मणावित्यादावपि सादृश्यमेव नियामकमिति दिक् । अर्श-

भैरवी ।

नचेति—नहीत्यर्थः । एषाम्—सुजन्तद्विरादीनाम् । अयम्परिः—अनियतार्थकः कर्मप्रवचनीयः परिः । दृष्टापचारः—दृष्टव्यभिचारः । व्यभिचारमेवाह—वर्जने चावर्जने इति । अवर्जने—लक्षणादौ । अपशब्द इति । अपेति शब्द इत्यर्थः । सहायेनार्थ इति । सहायेन प्रयोजनमित्यर्थः । अक्षतेरिति । प्रकृतसूत्रे द्वयोः सुजन्तयोः प्रयोगेण चतुःशब्दस्य सुजन्तस्य तयोः सदृशत्वेन तस्यैव ग्रहणम्भविष्यतीति मूलासङ्गतिरूपा क्षतिर्नास्तीत्यर्थः । ननु हरितात्पर्यमन्यदेवास्ति भवता त्वन्यथैव व्याख्यायत इत्यत आह—परिभाषायामिति । सहचरितासहचरितयोरिति परिभाषायामित्यर्थः । सदृशयोरेवेति । अत एव 'समानशीलव्यसनेषु सख्यम्' इति लोके प्रसिद्धिरस्तीति भावः।सदृशयोरेव–सदृशार्थकशब्दयोरेव । सहविवक्षेति। धवखदिरावित्यादौ छेदनयोग्यत्वेन सादृश्यस्य सत्त्वात्सा । एवमन्यत्र यथायथमूहनीयम् । तयोरेव—सदृशयोरेव । चो—हेतौ । दिगिति । दिगर्थस्तु हरिकारिकाव्याख्यानावसरे "पञ्चम्यपाङ्परिभिः" इति सूत्रं साहचर्यं उदाहृतं हेलाराजादिभिः, वर्जनार्थापशब्दसाहचर्यात्तदर्थकस्यैव परेः कर्मप्रवचनीयस्य ग्रहणमिति चोक्तमिति तद्ग्रन्थानुसारि मूलमिति ।

भावप्रकाशः ।

एत इति भावः । एतेषामर्था लक्ष्याणि चान्यत्र स्पष्टानि । नचैषामिति । न तु सुजन्तद्विरादीनामित्यर्थः । दृष्टापचार इति । अनियतार्थकः कर्मप्रवचनीय इत्यर्थः । तदाह—वर्जने इति । चावर्जनेचेति । लक्षणादावित्यर्थः । अनर्थकस्यापि तस्य सत्त्वाद् द्वितीयकोटिप्रदर्शनायैवमुक्तम् । अस्य च कर्मप्रवचनीय इत्यत्रान्वयः । अपशब्द इति । अपेति शब्द इत्यर्थः । नार्थः—प्रयोजनम् । दृष्टान्तेन सजातीयानां सहायत्वलाभेऽप्येकशेषेणात्र बाधादाह–सदृशानामेवेति । दृष्टान्तोऽपि सङ्गत एवैवं सतीति भावः । नन्वेवमप्यन्यद्भुक्तमन्यद्वान्तमिति न्यायापत्तिरत आह–परिभाषायामिति । ग्रहणमिति । सदृशयोरेव प्रायेण सहचरणदर्शनादिति भावः । नन्वेवमपिमूले साहचर्यपदोल्लेखेन तदसङ्गतिरेव तस्योक्तसम्बन्धार्थकत्वादत आह—सहेति । नन्वेवं रामलक्ष्मणावित्यादौ साहचर्यसत्त्वेपि सादृश्याभावादभिधानियमनं न स्यादत आह—सदृशयोरेवेति । तयोरेवेति । सदृशार्थयोः शब्दयोरेवेत्यर्थः । चो हेतौ । यतस्तयोस्तथेति द्वन्द्वेन सहप्रयोग इत्युत्सर्गोऽतोऽत्रापि तदेव तन्नियामकमित्यर्थः । दिगिति । तदर्थस्तु अत एवोक्तकारिकाव्याख्यावसरे पञ्चम्यपाङ्परिभिरिति साहचर्यं उदाहृतं हेलाराजादिभिः । वर्जनार्थापसाहचर्यात्तदर्थस्यैव परेः कर्मप्रवचनीयस्य ग्र-

सरला ।

षत्वं निषिध्यते इति तात्पर्यावधारणेन 'परमसर्पिःकुण्डिका' इत्यत्रैव षत्वनिषेधार्थं तस्यावश्यकत्वमित्य-

( पा० सू० ८।३।४१ ) इति नित्यं षः।

व्यपेक्षाविरहेऽपीति। तिष्ठतु सर्पिष्कुण्डिकामानयेत्यादावित्यर्थः। व्यपेक्षायामिति। इदं सर्पिष्कुण्डिकाया इत्यत्रेत्यर्थः। यत्तु पारायणिका आहुः— 'कस्कादिषु सर्पिष्कुण्डिकादीनां पाठ उत्तरपदस्थत्वेऽपि षत्वार्थः' इति। तद्भाष्यविरोधादुपेक्ष्यम्।

शब्दरत्नम्।

वतश्चेति। प्रतिपदोक्तस्य चेत्यपि बोद्धव्यम्। नित्यं ष इति। भाष्यप्रामाण्येनात्राव्युत्पत्तिपक्षस्यैवाङ्गीकारेण व्युत्पत्तिपक्षे प्रत्ययसम्बन्धित्वात्कथं षत्वमिति न शङ्क्यम्। अत एव "चतुष्पाद्भ्यो ढञ्" ( पा० सू० ४।१।१३५ ) इत्यादिनिर्देशसङ्गतिः।

इत्यर्थ इति। अत्रत्यन्तत्त्वं पूर्वं सूचितम्। तद्भाष्येति। "अनुत्तरपदस्थस्य" इति किम्, परमसर्पिःकुण्डिका" इति "नित्यं समासे-" ( पा० सू० ८।३।४५ ) इति सूत्रस्थभाष्येत्यर्थः।

भैरवी।

ननु "इसुसोः" इति सूत्रे इसेः प्रत्ययस्यार्थवतश्च ग्रहणमित्येतदुणादयो व्युत्पन्नानीति पक्षे सम्भवदुक्तिकमव्युत्पत्तिपक्षे ऽत आह—प्रतिपदोक्तस्येति। द्विसूत्रिसूशब्दस्यावयवश उत्पन्नत्वेनैतयोरिसूशब्दो लाक्षणिक इति भावः। भाष्यप्रामाण्येनेति। प्रकृतसूत्र "आयनेयी" इतिसूत्रभाष्यप्रामाण्येनेत्यर्थः। अत्र—चतुःशब्दे। वस्तुतस्तु 'शास्त्रे' इत्यर्थः। अत्र मानन्तु "अतः कृकमि" इति सूत्रे कंसग्रहणम्। अत एव—अव्युत्पत्तिपक्षाश्रयणादेव। आदिना—चतुष्पञ्चाशदित्यस्य प्रयोगस्य सङ्ग्रहः।

तत्त्वमिति। "इदुदुपधस्य" इति सूत्रे ऽप्रत्ययपदस्य प्रत्ययभिन्नार्थकत्वेन व्याख्यातृव्याख्यादर्शोक्तरीत्या ऽव्यपेक्षायान्नित्यं षत्वन्तेनैव सिद्धम्। प्रत्ययपदस्य लक्षणया प्रत्ययसम्बन्धिपरत्वमिति सिद्धान्तिमते तु तत्र नित्यषत्वाप्राप्त्या विकल्पएव। असमासे व्यपेक्षाविरहेऽपीति तूभयमतेऽपीति तत्त्वमित्यर्थः। परमसर्पिःकुण्डिकेतीति। अत्र षत्वादर्शनेन तदुक्तिर्भाष्यविरुद्धेति स्पष्टमेवेति भावः। मूले-ऽयःसहितेति प्रतीकन्धृत्वा नत्वयसो विकार इत्युक्तन्तद्ग्रन्थादयस्कुशेत्यत्र न तथा विग्रहः, किन्त्वयः सहितेत्येवेति प्रतीयते, सा च न युक्ता, कुशापदस्य टाबन्तस्यैवोभयथाऽसमस्तत्वेन "जानपद" इति ङीष्प्रसङ्गादिति हेत्वसङ्ग-

भावप्रकाशः।

ङ्गणमिति चोक्तम्। संज्ञोपसर्जनानुकरणव्यावृत्तिस्तु "गौणमुख्य" इति न्यायेन तन्मूलक "अभिव्यक्ता" इति न्यायेन च बोध्येति। ननु व्युत्पत्तिपक्षे मूलोक्तहेत्वोः सम्भवेऽपि सिद्धान्ताव्युत्पत्तिमात्रे इसुसोरित्यस्य प्राप्तिः सुवचाऽत आह—प्रतिपदोक्तेति। अत्र सः पृथगुत्पन्नत्वेनास्येसो लाक्षणिकत्वादिति भावः। भाष्येति। प्रकृतसूत्र "आयनेयी" इतिसूत्रभाष्येत्यर्थः। नात्राव्युत्पत्तीति। चतुःशब्दे शास्त्रेवेत्यर्थः। अत एव कंसग्रहणं सफलमिति भावः। कारेणेति। न शङ्क्यमित्यत्र हेतुरयम्। सामान्येनोक्तेऽप्यर्थे विशिष्य साधकमाह—अत एवेति। आदिना "चतुष्पादो गर्भिण्या" इत्यादिसंग्रहः। अत एव चतुष्पञ्चाशदित्यस्य सिद्धिः। एतेन मूलोक्तं नित्यं ष इति चिन्त्यम्। चितमिति—चतुःपञ्चाषदित्यत्रापि परममूलोक्तप्रयोगे षत्वापत्तेः। तदर्थं वैयधिकरण्याङ्गीकारावश्यकत्वेनात्र कस्कादेराकृतिगणत्वात्षत्वमिति दण्डयुक्तमपास्तम्। इत्यर्थ इतीति। द्वितीयप्रतीकमिदम्। व्यपेक्षायां नित्यार्थश्चेति परममूलं व्याख्यादर्शानुसारेण। तन्मते व्यपेक्षायां तेन सिद्धः। सिद्धान्तव्याख्याने तु तदप्राप्तिरेवेति तत्र विकल्प एव। इदञ्च पक्षद्वयेऽपि बोध्यम्। तदाह—अत्रत्यमिति। अयं पाठस्तादृशान्वयबोधतात्पर्यग्राहक इत्येवंरूपमित्यर्थः। इदुदुपधेतिसूत्रे स्पष्टीकृतमेतत्। नन्वयः सहितेतीति प्रतीकं धृत्वा नत्वयसो विकार इत्युक्त्या तथा विग्रहो नत्वेवमिति प्रतीयते, तदयुक्तं हेत्वसङ्गतेः। एतेन तत्प्रतीकं धृत्वाऽयसो विकार इति तु नोक्तं तेन ङीष्-

अयःसहितेति। न त्वयसो विकारः, "जानपद-" ( पा० सू० ४।१।४२ ) इति ङीष्प्रसङ्गात्। अयस्कर्णीति। अय इव कर्णौ यस्याः। "नासिकोदरौष्ठ-" ( पा० सू० ४।१।५५ ) इत्यादिना ङीष्।

अधःशिरसी ( पा० सू० ८।३।४७ )। एतयोरिति। सूत्रे तु षष्ठ्याः स्थाने प्रथमा बोद्धव्या। अधस्पदमिति। मयूरव्यंसकादित्वात्समासः। शिरस्पदमिति। षष्ठीसमासः॥

इति विसर्गसन्धिः।

## ॥ अथ स्वादिसन्धिः ॥

ससजुषो रुः ( पा०सू०८।२।६६ )॥ पदस्येत्यनुवृत्तं ससजूर्भ्यां विशेष्यते, विशेषणेन तदन्तविधिः। न च सजूःशब्दांशे "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" इति निषेधः शङ्क्यः। तस्य प्रत्ययविधिविषयत्वात्। सान्तं सजुष्शब्दान्तं च यत्पदं तस्य रुः स्यात्, स चालोऽन्त्यस्य। एवं स्थिते फलितमाह—पदान्तस्येति। सजुष्शब्दस्येति। तदन्तस्य पदस्येत्यर्थः, तेन सजुष इत्यादौ नातिप्र-

---

शब्दरत्नम्।

आबन्तप्रयोगसूचितमर्थं स्फुटप्रतिपत्तये आह—नत्वयस इत्यादि।

इति विसर्गसन्धिः।

तस्य प्रत्ययविधीति। अत एव "येन विधिः-" (पा०सू०१।१।७२ )इति सूत्रे भाष्ये प्रत्ययविधिभिन्ने "अच्तृन्" ( पा० सू० ३।४।११ ) इत्यादौ गृह्यमाणप्रा-

भैरवी।

तिरत आह—आबन्तेति। आबन्तं यत्सूत्रे 'अतः कृकमि" इत्यत्र कुशेति तदनुवादः परमूले कुशेति कृतो विशेष्यबोधनाय न त्वयसो विकार इत्यर्थः। कुशशब्दार्थस्य च विशेष्यत्वम् "जानपद" इति ङीष्प्रसङ्गादित्यत्र तात्पर्यम्। एवञ्च विशेषणप्रतीकधारणं विशेष्य विशेषणबोधनतात्पर्यकमेवेति भावः।

इति श्रीमद्रत्नप्रकाशिकायां विसर्गसन्धिप्रकरणम्॥

अत एव—ग्रहणवतेति वचनस्य प्रत्ययविधिविषयत्वादेव। सङ्गच्छते इति। यदि सर्वत्र तस्य

भावप्रकाशः।

प्रसङ्गादिति रत्नाकरोक्तमपास्तमत आह—आबन्तेति। परममूले कुशेति विशेष्यबोधकसौत्रानुदितावन्तप्रयोगेत्यर्थः। कुशशब्दात्तथाविवक्षायां तेन ङीष्विधेरिति भावः। एवं च विशेषणप्रतीकं धृत्वा विशेष्यप्रतिपादनं कृतमिति फलितम्। कुशेतीति धृत्वा तथा वक्तव्ये एवमुक्तिरत एवोक्तविग्रहसङ्गतिरिति ध्वनयितुमिति बोध्यम्। स्फुटेति। एतेन व्यर्थोयं ग्रन्थ इत्यपास्तम्।

इति विसर्गसन्धिः।

अपिस्तदन्यसमुच्चायकः। सङ्गच्छत इति। अन्यथा तत्रापि निषेधापत्त्या तदसङ्गतिः स्पष्टैवेति

सरला।

न प्रवर्तते इतीति। अप्रत्ययग्रहणेन स्थानिवदादेशसूत्रदृष्ट्या त्रिपाद्या नासिद्धत्वमिति विशेषापेक्षज्ञापनेन "अचः परस्मिन्" इत्येतद्दृष्ट्या त्रिपाद्या असिद्धत्वसत्त्वादिति भावः।

इति विसर्गसन्धिप्रकरणम्।

सङ्गः । न च सजूरित्यत्राऽव्याप्तिः "व्यपदेशिवद्भावोऽप्रातिपदिकेन" इति निषेधादिति वाच्यम् । "येन विधिः" इति सूत्रे शब्दकौस्तुभेऽस्य प्रत्याख्यातत्वात् ।

---

शब्दरत्नम् ।

तिपदिकेनापि तदन्तविधिप्रतिपादनं स्वसा परमस्वसेत्युदाहृतं च सङ्गच्छते । अस्य "समासप्रत्ययविधौ–" इति निषेधानुवादकताया एव युक्तत्वाच्च । यत्त्वस्य ज्ञापकं "सपूर्वाच्च" (पा०सू०४।२।८७) इति सूत्रम् । अन्यथा "पूर्वादिनिः" ( पा०सू०४।२।८६ ) इत्यत्र तदन्तविधिनैव सिद्धे किं तेनतत्? "प्रत्ययविधौ प्रतिषेधः" इत्यस्यैव ज्ञापकमिति वक्तुं शक्यम् । अत एव तदन्तविधिसूत्रभाष्ये "समास–" इत्यादिनिषेधवदस्य न कथनमिति बोद्धयम्। प्रत्याख्यातत्वादिति । अस्याः फलाभावात्। "सूत्रान्ताट्ठक्" "दशान्ताड्डः" ( पा०सू०६।२।४९ ) इत्यादावन्तग्रहणसामर्थ्येन व्यपदेशिवद्भावाप्रवृत्तेरिति भावः । ननु "एकगोपूर्वात्–" (पा०सू०६।२।११) इत्यस्य केवलैकशब्दगोशब्दयोरप्रवृत्त्यर्थं साऽऽवश्यकी "सूत्रान्तात्–" (पा०सू०६।२।४४) "दशान्तात्" (पा०सू०६।२।४९) इत्यर्थं च। तत्रान्तग्रहणं तु प्रत्ययविधौ तदन्तग्रहणनिषेधात्तदन्ते प्रवृत्त्यर्थमावश्यकमिति न तत्सामर्थ्याद्व्यपदेशिवद्भावाप्रवृत्तिर्वक्तुं शक्या।न च भयाढ्यादाविव "सूत्रान्तात्–" इत्यादौ विशे·

भैरवी ।

वचनस्य प्रवृत्तिः स्यात्तदा " परमस्वसा" इत्युदाहरणविरोधः स्पष्ट एव । अस्य–ग्रहणवतेति वचनस्य । अनुवादकता—तद्वार्तिकस्थनिषेधानुवादकतेत्यर्थः । युक्तत्वादिति । क्लृप्तार्थबोधकत्वकल्पने लाघवस्य सम्भवेन युक्तत्वादित्यर्थः । नन्वस्मिन्वचने ज्ञापकवर्णनं वृत्तौ कृतमित्यस्यातिरिक्तत्वमेव युक्तमत आह—यत्त्वस्येति । ज्ञापकमिति । उपक्रमे उक्तमिति शेषः । वस्तुतस्तु तस्य वार्तिकस्य जागरूकत्वाज्ज्ञापकमेव तत्सूत्रन्नेति बोध्यम् । इत्यस्यैवेति । एतेन ज्ञापकत्वासम्भव एव ध्वनितः । स्वकल्पनायान्मानमाह—अत एवेति । अनतिरिक्तत्वादेवेत्यर्थः । अस्याः—व्यपदेशिवद्भावो ऽप्रातिपदिकेनेति परिभाषायाः । प्रत्याख्यानन्तत्रत्यं स्पष्टयति—फलाभावादिति। ननु केवलसूत्रादिशब्दाट्ठगादिवारणमेव फलमस्त्वित्यत आह–सूत्रान्तादिति । इति भाव इति ।कौस्तुभ इत्युक्त्यनन्तरम्प्रत्याख्याततत्वादिति कथनस्य भावः । एतेनारुचिर्ध्वनिता । तामेवाह—नन्वेकेत्यादिना । पूर्वोक्तमन्तग्रहणसाथ्यं खण्डयति—तत्रान्तेति । आवश्यकमिति । एतेन चारितार्थ्यन्दर्शितम् । भयाढ्यादाविवेति । "येन विधिस्तदन्तस्य" इति सूत्रे एवं वा-

भावप्रकाशः ।

भावः । तस्या अतिरिक्तत्वमभ्युपेत्य मूले स हेतुरुक्तः । वस्तुतस्तदेव न लाघवात् मानाभावात्फलाभावाच्चेत्याशयेन हेत्वन्तरं तत्रैवाह—अस्येति । ग्रहणवतेति निषेधस्येत्यर्थः। एवमग्रेऽपि । इति निषेधेति । इतिवार्तिकस्थप्रत्ययांशे तन्निषेधेत्यर्थः । युक्तत्वाच्चेति अक्लृप्तकल्पनातः क्लृप्तकल्पनायां लाघवात् । एवं च शङ्कोत्थितिरेव नेति भावः । ननु फलाभावदावपि मानसत्त्वादतिरिक्तत्वं स्यादत आह—यत्त्विति । ज्ञापकमिति । तद्वृत्तिकारादिभिरुक्तमिति शेषः । तदुपपादयति—अन्यथेत्यादि किन्तेनेत्यन्तेन । अन्यथा—तत्परिभाषानङ्गीकारे । इत्यस्यैवेति । अन्यथा तेनैव निषेधात्तस्यावश्यकत्वेन तज्ज्ञापकत्वासङ्गतिरेव स्यादिति भावः। अत्र कल्पनायां मूलमप्याह—अत एवेति । तस्य तदनतिरिक्तत्वादेवेत्यर्थः । अप्रत्याख्याने ग्रहणवतेत्यस्य निर्मूलत्वापत्तेः । नच तत्सूत्रं मूलं त्वदुक्तपरिभाषया पूर्वशब्देऽनापत्तेरिति । प्रत्याख्यातत्वे हेतुस्तु न युक्तः उक्तरीतेस्तद्ध्वनयन्नाह–फलाभावादिति । ननु केवलसूत्रशब्दादेष्ठणदिवारणं तत्फलमत आह—सूत्रान्तादिति । इति भाव इति । सूचितामरुचिमाह—नन्वित्यादिना । केवलस्वंद्वन्द्वविशेषणम् । इत्यर्थञ्चेति । सावश्यिकेत्यस्यानुषङ्गः । तत्रान्तेति । तयोरित्यर्थः। आवश्यकमिति । तथा च चरितार्थं तदिति भावः । भयाढ्यादा-

"व्यपदेशिवद्भावोऽप्रातिपदिकेन" इति, "ग्रहणवता-" इति च परिभाषाद्वयमपि

शब्दरत्नम्।

षणविशेष्यभावव्यत्यासेन सिद्धे ऽन्तग्रहणसामर्थ्यं सूपपादमिति कौस्तुभोक्तरीत्या निर्वाहः "समासप्रत्ययविधौ-" इत्यादीनां सूत्रशब्दादेर्विशेष्यत्वे तात्पर्यग्राहकत्वस्य सत्त्वेन विपरीतस्य तस्य वक्तुमशक्यत्वात्। न चास्यां मानाभावः। "पूर्वात्सपूर्वादिनिः" (पा०सू० ५।२।८६) इत्येकयोगेन सिद्धे पृथग्योगकरणस्य मानत्वात्। न च "इष्टादिभ्यः" (पा० सू० ५।२।८८) इत्यत्रानुवृत्त्यर्थं तथा पाठः, अत एवानिष्टीत्यादिसिद्धिरिति वाच्यम्। ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगाणामनिष्टत्वात्। एकयोगेऽपि

भैरवी।

तिकम्भाष्ये तस्य सूत्रस्य प्रयोजनप्रदर्शनपरमस्ति तत्र भयञ्चाढ्यादयश्चेति समासः। एतेन क्षेमादिषु नेति सिद्धम्। तेषु तथा कथनेन विशेष्यत्वमेव स्वीक्रियते इति यथा, तथेह कल्पनया ऽन्तग्रहणसामर्थ्यं सूपपादम्। तद्यथा—"कर्मण्यण्" सूत्रात्कर्मणीत्यनुवर्तते, तच्च 'मेघर्ति" इति सूत्रे सम्बध्यमानमेघादिघटितवाक्ये विशेषणबोधकमेव, भयशब्दघटिते तु विशेष्यबोधकं तेन 'भयङ्करः' 'अभयङ्करः' इति भवति, एवमाढ्यङ्करणं स्वाढ्यङ्करणमिति भवति। एवं सुभगादिषु बोध्यम्। तेनानुवृत्तस्य विशेषणत्वमुपात्तस्य विशेष्यत्वमित्युत्सर्गः। प्रत्ययविधाविति। निषेधस्त्वेतन्मात्रतात्पर्यग्राहको नतु स्वार्थतात्पर्यग्राहक इति कल्प्यते। एवञ्च सूत्रान्तादिति सूत्रे ऽन्तशब्दाभावेऽप्यनुवृत्तस्य प्रादिपदिकादित्यस्य तत्र विशेष्यबोधकत्वस्वीकारेण सूत्रान्तात्प्रत्यये सिद्धे ऽन्त ग्रहणन्तत्र व्यपदेशिवद्भावाप्रवृत्तौ ज्ञापकम्भविष्यतीति भावः। समाधानमाह—समासेत्यादिना। आदिपदेन'ग्रहणवता" इत्यस्य सङ्ग्रहः। विशेष्यत्व इति। एवञ्च तत्रान्तग्रहणाभावे सूत्रशब्दान्तान्न स्यादित्यन्तशब्दोपादानमावश्यकमेवेति भावः। विपरीतस्य—उपात्तस्य तत्र विशेषणत्वमित्येवंरूपस्य। तस्य—विशेषणविशेष्यभावस्य। नचेति। अस्य मानाभाव इत्यत्रान्वयः। अस्याम्—व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषायाम्। परोक्तन्दोषमुद्धरति—नचेष्टादिभ्य इत्यादिना। अत एव—सपूर्वादित्यस्यानुवृत्तेरेव। ज्ञापकपरेति। अस्य "येन विधिः" इति सूत्रस्थेत्यादिः। एकयोगनिर्दि-

भावप्रकाशः।

विति। कृत्वादिपदबहुव्रीहिणा तेन भयशब्दस्य समाहारद्वन्द्वः। "तृतीयादिषु" इति पाक्षिकं पुंवत्त्वं तेन "भयेषु कृञ" "आढ्यसुभग" इति सूत्रोक्तस्य भयशब्दस्याढ्यादेश्चोपपदस्य ग्रहणम्। तत्रोपात्तयोर्विशेषणत्वमनुवृत्तकर्मणोर्विशेष्यत्वमिति भयङ्करः, अभयङ्करः, आढ्यङ्करणम् स्वाढ्यङ्करणमित्यादिसिद्धिः। "क्षेमप्रियमद्रेऽण् च" इत्यत्र तु वैपरीत्यमिति भावः। विशेषणेति। अनुवृत्तस्य विशेषणत्वमुपात्तस्य विशेष्यत्वमित्युत्सर्गः। अत्र दृष्टान्तदार्ष्टान्तिकयोर्व्यत्यासः प्रत्ययविधाविति निषेधायैतन्मात्रतात्पर्यकत्वं न स्वार्थे इति भावः। सूपपादमिति। तथा च सा नैतदर्थेति भावः। विधावित्यादेरिति पाठः। तात्पर्यग्राहकस्येत्यत्राभेदेनान्वेति इति केचित्। वस्तुतस्तु इत्यादीनामिति पाठेऽपि वेदाः प्रमाणमितिवदभेदान्वयसम्भवान्न क्षतिरिति बोध्यम्। तात्पर्यग्राहकत्वस्येति पाठे तु नोक्तशङ्कापीति बोध्यम्। आद्यपाठ एव युक्तः। अत एव बहुवचनासङ्गतिरपि नेति तत्त्वम्। आदिना मूलोक्तग्रहणवतेत्यस्य संग्रहः। विशेष्यत्वे इति। तस्यैच्छिकत्वेन व्यत्यासस्यापि सिद्धत्वादितिभावः। एतेन विशेष्यविशेषणभावयोर्यथेष्टत्वादेव सिद्धौ ज्ञापकानपेक्षत्वेन त्वदुक्तिर्व्यर्थ्यं "सपूर्वाच्च" इति सूत्रं मा स्त्विति लाघवं चेति मन्दोक्तमपास्तम्। तस्य तात्पर्यग्राहकत्वात् सूत्राशयवर्णने मास्त्वित्युक्तेरयुक्तत्वाच्च। तस्य-विशेष्यविशेषणभावस्य। एतावता सफलत्वमुपपाद्य समूलत्वमुपपादयति—नचास्यामित्यादिना। 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्यत्रेत्यर्थः। मान्योक्तं दोषमुद्धरति—नचेति। तथा पाठः—पृथक्पाठः। ज्ञापकपरेति। "येन विधि"

प्रत्ययविधिविषयकमिति दिवउत्सूत्रे कैयटहरदत्ताभ्यामुक्तत्वाच्च । एवं च परम-

शब्दरत्नम् ।

तत्रैव स्वरितत्वबलेन तावत एवोत्तरत्रानुवृत्तौ बाधकाभावाच्च । व्यपदेशिवद्भावस्य प्राति-पदिके निषेधस्वीकारादेव "नान्तादसंख्यादेः-" ( पा०सू०५।२।४९ ) इति चरितार्थम् । अन्यथा पञ्चम इत्यादावपि व्यपदेशिवद्भावेन संख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेवेत्यरुचेराह—व्यपदेशिद्भाव इत्यादि । दिवउत्सूत्रं यत्रेति बहुव्रीहिणा तत्सूत्रघटिते पादे इत्यर्थः । एवं च "दिव उत्" ( पा०सू०६।१।१३१ ) इति सूत्रे हरदत्तेन "इन्द्रे च" ( पा०सू०६।-१।१३४ ) इति सूत्रे कैयटेनोक्तमिति भावः । "येन विधिः-" ( पा०सू०१।१।७२ ) इति सूत्रे कैयटेन सूत्रोपात्तान्तादिशब्दविषयताऽस्येति वदता स्पष्टमेव प्रत्ययविधिविषयतोक्ता । "असमासे निष्कादिभ्यः" ( पा०सू०५।१।२० ) इति सूत्रे भाष्ये कैयटे च

भैरवी ।

ष्टानां क्वचिदेकदेशोऽप्यनुवर्तते इति परिभाषामाश्रित्याह—एकयोगेऽपीति । तस्य परिभाषायां ज्ञापकान्तरमपि सुवचमित्याशयेनाह—व्यपदेशीति । तद्वैयर्थ्यम्—सूत्रवैयर्थ्यम् । एवञ्च सूत्र-सार्थक्यन्तत्फलमिति भावः । खण्डनकारोक्तन्दोषमुद्धरति—दिवउत्सूत्रमिति । अन्तादिशब्देति । यत्रैषामुपादानन्तत्रैव व्यपदेशिवद्भावाप्रवृत्तिरित्यर्थः कैयटस्यापि सम्मत इति मूलोक्तं सप्रमा-

भावप्रकाशः ।

इति सूत्रस्थोक्तसमानाकारभाष्येत्यर्थः । एवं चाफलत्वात्तत्रानुवृत्तिर्नेति भावः । इदं च "एकयोगनिर्दिऽ-ष्टानाम्" इति न्यायावलम्बेनोक्तम् । 'एकयोगनिर्दिष्टानामेकदेशोपि' इति न्यायाश्रयणेन तेषामिष्टत्वे-प्याह-एकेति । तत्रैव-सपूर्वादित्यंशे एव । एकदेशेन्वयोऽस्य प्राचामनुरोधेनैव । ज्ञापकान्तरं सूचयन्नु-क्तार्थं द्रढयति—व्यपदेशिवदिति । निषेधस्वीकारादिति । तदर्थकपरिभाषास्वीकारादेवेत्यर्थः । अपिः समुदितसमुच्चायकः । तद्वैयर्थ्यमिति । सूत्रवैयर्थ्यमित्यर्थः । एतेनासंख्यादेरिति विशेषणसामर्थ्यात्तत्र तत्प्रवृत्त्येष्टसिद्धावफलत्वेन सा नेत्यपास्तम् । सूत्रवैयर्थ्यस्यैव सत्त्वात् । उक्तरीत्या मूलफलयोः सत्त्वेना-वश्यकत्वाच्च । एवं च कौस्तुभादिश्चिन्त्य एवेति भावः । खण्डनकृदाद्युक्तं दोषं खण्डयति-दिवउदिति । चस्त्वर्थे । इतिभावइति सूचितामरुचिं ध्वनयितुं मूलं पोषयति—येनेति । तादीति । "सूत्रान्ताट्ठक्" "दशान्ताड्डः" इत्यादिसूत्रस्थेत्यर्थः । आदिना पूर्वादिशब्दपरिग्रहः, ज्ञापकस्य सजातीयापेक्षत्वात् । अन्यत्र सर्वत्र तस्य चेत्यादिनव सिद्धेरिति भावः । ताऽस्येतीति । व्यपदेशिवदिति निषेधस्येत्यर्थः । स्पष्टमेवेति । प्रत्ययविध्यन्यत्र तेषामभावादिति भावः । नन्वेवं 'पञ्चमः'इत्यादावपि प्रागुक्तरीत्या निषे-धापत्त्या तद्वैयर्थ्यापत्तिरतस्तद्विषयताप्यस्य वाच्या । अतएवान्तादीत्यत्रान्तशब्दवदादिशब्दोपि तेन प्रयु-क्तः । एवं च स न प्रभृत्यर्थकः । पूर्वादिशब्दस्य तूपलक्षणत्वेन ग्रहणं बोध्यम् । एवं च तत्कैयटात्तथा न लभ्यते इतीदमयुक्तमत एवायं कैयटः, परिभाषेन्दुशेखरे सम्मतित्वेन न लिखितोऽतआह-असमास इति अनयोः-मूलोक्तपरिभाषयोः । असमासग्रहणप्रयोजनकथनावसरे "आर्हादगोपुच्छ" इत्यत्र तदन्तविधौ पारमगोपुच्छिकमित्यत्र ठक्प्रतिषेधाट्ठञ् फलमित्युक्त्वा तत्खण्डके विधौ प्रतिषेधः प्रतिषेधश्चायमिति भा-ष्ये उक्ता ध्वनिता च । तत्कैयटे स्पष्टमुक्ता चेत्यर्थः । एतेन तयोः सामान्यविषयत्वस्य सीरदेवेनान्यम-तत्वेनोक्तत्वेन तदभिप्राया प्रकाशोक्तिरिति मूलं चिन्त्यमिति खण्डनकृदाद्युक्तमपास्तम् । एवं च मूले कै-यटहरदत्तेति नारुचिबोधकम् । एतेनात्रारुचिबीजं तु पारमगोपुच्छिकं गौपुच्छिकमित्यादाविष्टप्रत्ययाना-पत्तिः । आर्हादगोपुच्छेत्यस्यपर्युदासतया प्रत्ययविधिविषयत्वात्प्रसज्यप्रतिषेधमाश्रित्य निषेधकत्वकल्पने तु स्फुटमेव गौरवमितिवदन्तो मान्याः प्राचामनुरोधेनेति ध्वनितम् । उक्तभाष्यादिविरोधापत्तेः । इयञ्च 'ग्रह-णवता' इत्यनुवृत्त्या यथा कथञ्चित् ग्रहणवता प्रातिपदिकेन स नेत्यर्थाङ्गीकारात्प्रातिपदिकग्रहणे एव, न तु प्रातिपदिकाप्रातिपदिकग्रहणे, तेनोगितश्चेत्यत्र न दोष इति "उगितश्च" इति सूत्रे एव भाष्ये स्पष्टम् ।

सजूर्भ्यामित्याद्यपि निर्बाधम् । एवं स्थिते इह सजुष्शब्देन तदन्तविधिर्नेति प्राचामुक्तिरापातत इत्यवधेयम् ।

भोभगो ( पा०सू०८।३।१७ )॥ असन्धिः सौत्र इति । भगोअघोशब्दयोरोकारस्याकारस्य च पूर्वरूपं सौत्रत्वान्नेत्यर्थः । यदि तु भोस्, भगोस् , अघोस्, इति सान्तं रान्तं वाऽनुकृत्य भो इत्यादीनां त्रयाणामलोऽन्त्यस्य यः स्यादपूर्वस्य रोश्चेति व्याख्यायते, तर्हि असन्धिर्न्याय्य एव । युक्तं चैतत् । अन्यथा विभोरिदं, सुप्रभा गौर्यस्य स सुप्रभगुस्तस्य सुप्रभगोरिदं, रघोरिदमित्यत्रापि यत्वापत्तेः । भवति ह्ययं भोशब्दादिपूर्वो रुः । न चात्र भोशब्दादेर्लाक्षणिकत्वादग्रहणम् । "विभाषा भवद्भगवदघवतामोच्चावस्य" इति वार्तिकेन निष्पन्नानां भवदादिप्रकृतिकानां भोशब्दादी-

---

शब्दरत्नम् ।

स्पष्टमनयोः प्रत्ययविधिविषयतोक्तेति दिक् । इतत्याद्यपीर्ति । आदिना सजूर्भ्यामिति ।

ननु सान्तानुकरणे "विभाषा भवद्–" इति वार्त्तिकनिष्पन्नानां ग्रहणं न स्यादत आह–रान्तं वेति । कृतरुत्वानुकरणमित्यर्थः । अलोऽन्त्यस्येति । न च भो राजसे इत्यादौ

भैरवी ।

णमेवेति भावः । अनयोः–मूलोक्तपरिभाषयोः । तत्र भाष्ये ऽसमासग्रहणप्रयोजननिरूपणावसरे "आर्हादगोपुच्छ" इत्यत्र तदन्तविधौ पारमगोपुच्छिकमित्यत्र ठक्प्रतिषेधाट्ठञ् सिद्धो भवति, ततस्तदन्तविधिप्रतिषेधसम्भावनायां विधौ प्रतिषेधः प्रतिषेधश्चायमित्युक्तम् ; तेनोक्ता प्रत्ययविधिविषयता ध्वनिता कैयटेन च स्पष्टीकृता । दिगिति । दिगर्थस्तु यदगोपुच्छेत्यस्य पर्युदासपरतया व्याख्यानेन प्रत्ययविधित्वसम्पादनं, तन्न युक्तम् उक्तभाष्यविरोधापत्तेरिति । नन्वपिशब्देनैव निर्वाहे आदिपदोपादानमनर्थकमत आह—आदिनेति । तथाचापि शब्दः परमसजूरित्यस्य समुच्चायकः ।

न स्यादिति । उत्तरग्रन्थानुरोधेनोभयोरपि तयोर्ग्रहणमिति भावः । कृतरुत्वेति । तन्त्रेण

भावप्रकाशः ।

उगित्त्वस्य प्रत्ययादिसाधारणत्वात्प्रातिपदिकादित्यस्यानुवृत्तावपि सूत्रे तस्य स्वरूपेणानुच्चारणाच्चेति तद्भावः । यत्तुप्रत्ययविधीत्यस्य प्रत्ययकर्मकविधीत्यर्थवत्प्रत्ययसम्बन्धिभावरूपविधीत्यर्थः । अत एव विधौ प्रतिषेधः, प्रतिषेधश्चायम्' इत्येवोक्तं भाष्ये, नतु प्रत्ययेत्यपि । अत एव च "येन विधिः" इत्यत्र तथा कैयटेनोक्तमिति । तन्न, एवमप्युगित इत्यतो नान्तादित्यत्रावैलक्षण्येनोक्तसिद्धान्ते तद्वत्तत्र तत्प्रवृत्तेर्दुर्वचत्वात् । अत एव पूर्वमनयोरप्रवृत्त्या तयोर्गौरवमिति वदन्तो मान्याः प्राचामनुरोधिन इत्यर्थेनावतरणमप्युक्तं तत्। एवं च"नान्तादसंख्यादेः" इत्यादौ 'असंख्यादेः' इति विशेषणवैयर्थ्यात् सूत्रवैयर्थ्याद्वा व्यपदेशिवद्भावाप्रवृत्तिरिति ध्वनितम्, उक्तभाष्यादिविरोधापत्तेरिति बोध्यम्;तदाह—दिगिति । नन्वपेः सत्त्वेनादिर्व्यर्थोऽत आह—आदिनेति । गृह्यत इति शेषः । एवं च अनयोरप्रवृत्त्या तयोर्द्वयोः फलद्वयमुक्तम् । अपिस्तु परमसजूरित्यादिसमुच्चायक इति भावः ।

न स्यादिति । इष्टापत्तिस्तु न । उत्तरग्रन्थविरोधापत्तेरिति भावः । ननु रान्तानुकरणपक्षे रान्तत्वस्य प्रतिपदोक्तत्वेन शीघ्रोपस्थितत्वाद्वार्तिकोक्तानामेव ग्रहणं स्यान्नान्येषाम् । इष्टापत्तिस्तु प्राग्वन्न, किञ्चानुकार्याप्रसिद्धिरत आह—कृतरुत्वेति । तन्त्रेण कृतरुत्वानां तेषां द्विविधानामनुकरणमित्यर्थः । एवं च कृतरुत्वावस्थान्वेषणे लाक्षणिकत्वाविशेषात् द्वयोर्ग्रहणं शास्त्राभ्यां सामान्यविशेषोल्लेखेन विधानेपि तत्करणोत्तरं तावन्मात्रान्वेषणेन शास्त्रान्वेषणाभावेन परिभाषानवतारात् ; वाशब्द एवार्थे इति भावः ।

नामपि लाक्षणिकत्वाविशेषात् । अनर्थकत्वमप्युभयत्र तुल्यम् । रुविशिष्टानामेवार्थवत्त्वात् ।

ननु रोरुकारस्यानुबन्धत्वाद्रेफमात्रं विसर्गस्य स्थानि, तथाच "अनल्विधौ" इति स्थानिवद्भावो न स्यादित्याशङ्कयाह-न ह्ययमिति । यथाऽग्रहीदित्यत्र "ग्रहोऽलिटि" (पा०सू०७।२।३७) इति दीर्घस्य स्थानिवद्भावेनेट्त्वात् "इट ईटि" (पा०सू०७।२।२८) इति प्रवर्त्तते, एवमिहापि विसर्गस्य रुत्वाद्यत्वं प्रवर्त्तेतेति भावः । तथा च स्थानिवत्सूत्रे भाष्यम् "विशिष्टं ह्येषोऽनल्माश्रयते इटं नाम"

---

शब्दरत्नम् ।

"रो रि" इति लोपे कृते एकदेशविकृतन्यायेन भोःशब्दत्वादन्त्यस्यौकारस्य यत्वापत्तिरिति वाच्यम् । तेषामभिधाने एषां रोरपूर्वस्य च रोरिति व्याख्यानेनादोषो बोध्यः । अत्र पक्षेऽघोशब्दान्तद्वन्द्वे षष्ठ्याः सौत्रो लुक् बोद्धयः ।

भैरवी ।

वार्तिकेन कृतरुत्वस्याप्यनुकरणमित्यर्थः, तथाचोभयोरपि संग्रहः । लोपे इति । यत्वासिध्येति शेषः । अभिधान इति । स्वीक्रियमाण इति शेषः । एतेनानभिधानकल्पनयाऽत्र समाधानेऽपि "भो राजन्" इत्यस्य दर्शनेनानभिधानकल्पनायाम्मानाभाव इति दर्शितम् । अपूर्वस्येति । अः पूर्वो यस्येत्यर्थः । एवञ्च "रोः सुपि" इति सूत्रस्थं रोरित्युभयत्र सम्बध्यत इति सिद्धम् । अत्र पक्षे—कृतरुत्वानुकरणपक्षे । अन्यथाऽपूर्वान्तद्वन्द्वात्षष्ठीकल्पने क्वचिद्वैयधिकरण्येन क्वचित्सामानाधिकरण्येनान्वयो दुर्घटः स्यादितिभावः । अत्र पक्ष इति कथनेनायम्पक्षो न युक्त इति ध्वनितम् । एवं सति वाक्यभेदस्य षष्ठ्याः सौत्रलुकश्च कल्पनायाङ्गौरवस्य स्फुटत्वात् । परममूलोक्तपक्षे तु अशब्दान्तद्वन्द्वस्य पूर्वशब्देन बहुव्रीहिरिति न दोषद्वयमिति भावः ।

भावप्रकाशः ।

लक्षणवशसंपन्नरान्तानुकरणमिति परमार्थः। एतेनाद्ये टीकाकृदवतरणोक्तदोषोऽन्त्ये तदवतरणकृतद्व्याख्यानावतरणोक्तदोष इति युक्तं चैवदित्यादिना पक्षद्वयसमर्थन चिन्त्यमिति खण्डनकृद्रत्नाकरोक्तं, तुल्यार्थास्तु विकल्पैरङ्गिति सूत्रविरोध इतिमन्दोक्तं चापास्तम् । लोपे इति । यत्वासिध्येति भावः । एकेति । लौकिकेनेत्यर्थः । भोःशब्दत्वादिति। सूत्रे तस्य निमित्तत्वेनोल्लेखादिति भावः । एतेन तस्य तत्त्वेपि सान्तानुकृतभोःशब्दाभावेन तदनापत्त्या यथाश्रुतमूलसंगत्या भङ्क्त्वा व्याख्यानानौचित्यमिति मन्दोक्तमपास्तम्, उक्तयुक्तेः । सान्तत्वस्य लक्ष्ये क्वाप्यभावाच्च । सान्तत्वस्य सूत्रेऽनिमित्तत्वाच्च । तेषामिति । यत इत्यादिः । अभिधाने इति । आवश्यकत्वात्स्वीक्रियमाणे इति शेषः । तस्यानभिधानेऽपि भोराजन् इत्यादीनामुपलभ्यमानत्वाद्दोषतादवस्थ्येन तदनभिधाने मानाभावादिति भावः । अपूर्वस्य च रोरिति । अशब्दपूर्वशब्दयोर्बहुव्रीहिः समानाधिकरणं तद्‌विशेषणं तत्पूर्वस्य रोश्चेत्यर्थः । एवं च मूले रोरित्यस्य प्रागपि संबन्धः सूचितः । एतेनालोन्त्यपरिभाषयान्त्यस्येति वदन्तो रत्नाकरदण्डिप्रभृतयश्चिन्त्या एवेति सूचितम् । मूले तु अन्त्यस्याल इति तत्स्वरूपकथनं न तु परिभाषासंचार इति भावः । अत्र पक्षे मूलोक्तवाक्यभेदगौरवाद् गौरवातरमाह—अत्र पक्षे इति । कृतरुत्वानुकरणपक्षे इत्यर्थः । षष्ठ्या इति । ततः परस्या इत्यादिः । अन्यथा अपूर्वान्तद्वन्द्वे एकषष्ठ्या क्वचित्सामानाधिकरण्येन क्वचिद्वैयधिकरण्येनान्वयो न लभ्येतेति भावः । तथा च पदचतुष्टयं फलितम् । सौत्रइति । एवंच सौत्रत्वस्य तुल्यत्वेपि वाक्यभेदोऽतिरिच्यतइति भावः । परममूलोक्तपक्षे तु अशब्दान्तेन द्वंद्वे पूर्वशब्देन बहुव्रीहिरिति नेदं दोषद्वयमिति बोध्यम् । यथा-

इति । इतोऽपि हेतोर्घात्वङ्गेत्यादिपरिगणनमशुद्धमित्यवधेयम् । निपाता इति । "भोभगो-" (पा०सू०८।३।१७) इति सूत्रे निर्दिष्टाश्चादेराकृतिगणत्वात्तत्र बोध्याः । तथा च "विभाषा भवद्भगवत्-" इति वार्तिकं नाश्रयणीयम् । अन्यथा

शब्दरत्नम् ।

अवधेयमिति । यदि "अहोऽलिटि" (पा०सू०८।२।१८) इति सूत्रे इटः स्थानित्वेन निर्देश इति तत्रानलाश्रयणं प्रकृते तु विसर्गे रेफस्यैव स्थानित्वाद्वैषम्यम् , "अनल्विधौ" इत्यस्य स्थान्यलवृत्तिधर्माश्रये स्थानिसम्बन्ध्यल्वृत्तिधर्माश्रये च नेत्यर्थस्तत्र स्थान्यलूरेफवृत्तिरुत्वं स्थानिवत्त्वेन दुर्लभमल्विधित्वात ; स्पष्टं चेदं प्रकृतसूत्रे भाष्ये इ-

भैरवी ।

अवधेयमिति कथनेन ध्वनितमर्थं स्पष्टयति—यदीत्यादिना । तत्र—"इट ईटि" इति सूत्रे । प्रकृते—"भोभगो" इत्यत्र । वैषम्यम्—अलाश्रयणम् । यथा प्रकृते ऽलाश्रयणन्तथोपपादयति—अनल्विधेति । तत्र—"देवाः सन्ति" इत्यत्र । दुर्लभमिति । एवञ्च सिज्लोपविधायकं यद् "इट ईटि" इति ततो ऽस्य वैषम्यं स्पष्टम् ।

नचैवं हे रामेत्यादावपि स्थानिसकारवृत्तिसुत्वस्यादेशे लोपे आगमनन्दुर्लभमिति कथम्पदत्वमिति वाच्यम् , सान्तनिष्ठपदत्वस्यैकदेशविकृतन्यायेन 'सान्तस्य समुदायस्याकारान्तादेशः' इति "सर्वे सर्वपदादेशा" इति रीत्या समुदायादेशत्वकल्पनेन स्थानिवद्भावेन पदत्वस्य सुलभत्वात । आवश्यकञ्च समुदायादेशत्वकल्पनम् । अन्यथा आदेशस्य लोपस्याभावरूपतया ऽर्थबोधकत्वासम्भवेन स्थान्यर्थाभिधानसमर्थस्यादेशत्वमिति प्रवादव्याकोपः स्यात् । नचैवमपि 'दीर्घाहो निदाघ' इत्यत्रादेशे सुप्त्वाभावेनासुपीति निषेधाप्रवृत्तौ रेफापत्तिरिति वाच्यम् , सावपि पदम्भवतीति पक्षाश्रयणेन हल्ङ्यादिलोपात्प्राक् तेन निषेधेन रत्वाभावे रुः, ततो रुशब्दान्तस्याकारान्तादेश इति कल्पनया साधुत्वस्य सम्भवात् । यत्र ह्यभावरूपादेशस्तत्र ह्येवं कल्पना, यत्र तु भावरूपादेशस्तत्र तु श्रौतस्थान्यादेशभावमादायाल्विधित्वम् । अत एवानल्विधाविति चरितार्थम् । अन्यथा 'व्यूढोरस्केन' 'द्यौः' 'पन्थाः' इत्यादावपि समुदायादेशत्वकल्पनेनाल्विधित्वञ्च स्यात, 'द्यौः' 'पन्थाः' इत्यादौ हलन्तत्वस्याशास्त्रीयत्वात्तस्यातिदेशासम्भवाच्च विशेषणतया ऽलाश्रयणस्य तावतापि सम्भवाच्च । नचैव-

भावप्रकाशः ।

श्रुतमूलग्रन्थसंगतिं ध्वनयितुमवधेयपदसूचितमर्थं पूरयति-यदीत्यादि । तत्र इट ईटीत्यत्र। प्रकृते-त्विति । भोभगोइत्यत्र स्विरयर्थः । वैषम्यम् । अलाश्रयणम् । नन्वनल्विधाविति सामान्योक्त्या कथमिदं वैषम्यमत आह-अनलिति । अलंशे स्थानिसंबन्धस्योक्तार्थद्वयस्य च यथावश्यकत्वं तथा तत्रैव प्रतिपादितम् । ननु सिज्लोपे विशिष्टाश्रयणवत्त्वेऽपि तथैवैतदंशे दृष्टान्तेन वैषम्याभावोऽत आह-तत्रेति । देवाः सन्तीत्यत्रेत्यर्थः । एवंचेत्यादि । दुर्लभमिति । तथा च तत्साहृश्यमकिंचित्करमिति भावः । अहन् हेरामेत्यादौ पदत्वं तु 'एकदेश'इतिन्यायेन 'सर्वेसर्वपदा'इतिन्यानेन वा । स्थानिन इवादेशस्याप्यर्थवत्त्वमिति तन्न्याय तात्पर्यम् । अत एव स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति दधिमध्विस्यादितस्तदर्थबोध इत्यनागमकानां सागमका आदेशा इति सिद्धान्तस्तेस्तुरित्यादौ तु कल्पनं च संगच्छते। अन्यथा हरित्येव सिद्धन्। एवं च तत्र स्थानिनोऽर्थवत्त्वेपि लोपस्याभावरूपत्वादनर्थकत्वेन तत्कल्पनं युक्तमेव । अत एव दीर्घाहो निदाघेत्यादौ हल्ङ्यादिलोपेन रेफः । न च तयोस्तिङ्तत्वसुबन्तत्वयोस्तत्प्रयुक्तपदत्वस्य वा तत्र पक्षे तेनाश्रयणे व्यूढोरस्कैन द्यौः पन्था इत्यादि मूर्द्धाभिषिक्तलक्ष्येष्वप्येवं विसर्गान्तनिष्ठाऽन्तत्वादेस्तत्प्रयुक्तणत्वादेर्वाऽतिदेशसंभवेनाल्विधित्वोच्छेद इति वाच्यम् । अत्र भावरूपादेशेन ततो वैलक्षण्यात् । आद्येऽन्तत्वस्य तत्र सत्त्वेऽपि तत्त्वेनानिमित्तत्वेनोपजीव्यत्वाच्छ्रौतस्थान्यादेशभावात्यागेनातुत्वातिदेशेन णत्वप्राप्तया तत्प्रसिद्धेः, अन्यत्र तु स्थानिनामर्थवतामुल्लेखेनैव निर्वाहे तथा स्थान्यादेशभावकल्पने मानाभावेन राज्ञः कवेत्यादा-

पुंल्लिङ्गैकवचनमात्रे भो हरे इत्यादिसिद्धावपि भो हरिहरौ, भो विद्वद्वृन्द, भो गङ्गे, इत्यादि न सिध्येदिति भावः। एतच्च वृत्तिहरदत्तादिमतेनोक्तम्। भाष्यस्वरसरीत्या तु "विभाषा-" इत्यादि वार्तिकमारब्धव्यमेव। किं तु निपातोऽपि भोः

---

भैरवी।

मपि 'अतिखट्वः' 'निष्कौशाम्बिः' इत्यत्र ह्रस्वे आप्त्वादेरतिदेशोऽल्विधित्वान्न सम्भवतीति "हल्ङ्यादि" सूत्रे दीर्घग्रहणवैयर्थ्यमिति वाच्यम्, सानुबन्धकनिष्ठस्य स्त्रीप्रत्ययत्वस्य परादिवद्भावेन सवर्णदीर्घनिष्ठस्य ह्रस्वे ऽतिदेशसम्भवात्। स्त्रीशब्दाद्येन रूपेण "गोस्त्रियोः" इति सूत्रजन्यबोधे भानन्तस्य समुदायनिष्ठत्वात्तत्रानल्विधाविति निषेधासम्भवाच्च। अत एव तत्र सूत्रे गोटां ग्रहणङ्कर्तव्यमिति वार्तिककारोक्तिः, स्त्रियामित्यधिकृत्य ये विहितास्तेषाङ्ग्रहणमिति भाष्यञ्च सङ्गच्छते। नचैवमप्यतिखट्वायेत्यत्र स्थानिवद्भावेनाप्त्वस्य सुपि चेति दीर्घे ऽतिदेशो ऽल्विधित्वान्न सम्भवतीति वाच्यम्, "अचः परस्मिन्" इत्यनेन सम्भवात्।

स्पष्टञ्चेदमिति। तत्र हि—"अड्ग्रहणमनर्थकमन्यत्राभावात्। ननु चायमस्ति छन्दःसु पयःसु। किम्पुनः कारणं सुपर एवोदाह्रियते, न पुनरयं-वृक्षस्तत्र, प्लक्षस्तत्रेति? अस्त्यत्र विशेषः—विसर्जनीये कृते न भविष्यति। इहापि विसर्जनीये कृते न भविष्यति छन्दःसु पयस्स्वित्यादौ। ननु चेहापि स्थानिवद्भावात्प्राप्नोति वृक्षस्तत्रेति। अनल्विधौ स्थानिवद्भावः। अथायमल्विधिः स्यात् शक्यमड्ग्रहणमवक्तुम्। बाढं शक्यम्। अल्विधिस्तर्हि भविष्यति। कथम्? इद-

भावप्रकाशः।

विव तत्प्रसिद्धेः। कार्यशब्देन निमित्तरूपकार्यस्यैव ग्रहणाच्च, अशास्त्रविधेयत्वेन हलन्तत्वादेरनतिदेशाच्च, सर्वत्र तावतापि विशेषणतयाऽलाश्रयणत्वस्य निर्बाधत्वाच्च, लिहे दुहे इत्यादावपि लोकन्यायेन निर्वाहे सौत्रस्य टित्वस्य स्थानितावच्छेदकत्वाच्च। यत्तु मन्दः पचन्तीत्यादौ स्थान्यल्लकारवृत्तिप्रत्ययत्वस्य तद्वद्भिर्लभ्यापत्त्या झोऽन्त इति न स्यात्। मण्डयन्त इत्यादौ झच्प्रत्यये तच्चारितार्थ्यात्। स्थानिवत्त्वेन रुत्वाद्यत्वापत्तेरिति व्याख्येयमनोरमादिसकलग्रन्थविरोधश्चेति। तन्न, तदधिकारपाठेनैव प्रत्ययत्वसिद्ध्या तदनुपयोगात्, तथा मूलग्रन्थानुपलम्भाच्च तत्खण्डनायैवास्योपयोगाच्चेति दिक्। शास्त्रीयन्यायादेवापीपचन्नलुवन्नित्यादावुपदेशिवद्वचनेनान्तरङ्गत्वादन्तादेशे स्थानिवत्त्वेन परस्मैपदत्वादितोलोपे एकदेशेविन्यायेन उक्तरीत्या वा झित्वादनाङ्गत्वेन व्याप्यनिमित्तकत्वेनान्तरङ्गत्वादतोलोपात्प्राक् प्राप्तो जुस् पञ्चमीसमासाश्रयणाद्धात्वधिकाराच्च नेति भाष्यादिसंगतिः। तत्रत्यकैयटस्तु चिन्त्य एवेति स्पष्टमुद्योते। सौत्रस्यैव स्थानितावच्छेदकत्वमित्यत्रत्यैवेन श्रौतस्थले तन्न्यूनव्यावृत्तिर्न तु ततोऽधिकस्येति न तद्विरोधः। अत एव माथितिक इत्यादावपि ठत्वाद्यादेशे सुलभमिति न तद्भाष्यविरोधः। न चैवमपि हल्ङ्यादिसूत्रे दीर्घादित्यस्य ङ्याब्ग्रहणेऽदीर्घ इति वार्त्तिकस्य च वैयर्थ्यं गङ्गीरित्याद्यनभिधानपरोद्योतासंगतिस्तद्भाष्यविरोधश्चेति वाच्यम्। स्त्रीप्रत्ययत्वस्य सानुबन्धकनिष्ठत्वेन परादिवत्त्वेन सवर्णदीर्घनिष्ठस्याप्त्वस्य ह्रस्वे सौलभ्यात्। अत एव गोटाङ्ग्रहणमितिवार्त्तिकोक्तिः स्त्रियामिति प्रकृत्यविहितानां ग्रहणमिति भाष्योक्तिश्च संगच्छते। नचैवमप्यतिखट्वायेत्यत्र स्वाश्रयमाकारत्वं स्थानिवद्भावेनाप्त्वं चेत्यादिभाष्यादिविरोध इति वाच्यम्। 'अचः पर' इतिस्थानिवद्भावाशयकत्वेनादोषादिति सर्वमनवद्यम्। स्पष्टं चेदमिति। तत्रहि" अट्पदं व्यर्थमन्यत्राभावात्। ननु चायमस्ति छन्दःसु पयःसु। किं पुनः कारणं सुप्पर एवोदाह्रियते, न पुनरयं वृक्षस्तत्र प्लक्षस्तत्रेति? अस्त्यत्र विशेषः-विसर्जनीये कृते न भविष्यति। इहापि तर्हि विसर्जनीये कृते न भविष्यति छन्दःस्वित्यादौ। स्थानिवद्भावात्प्राप्नोति। ननु चेहापि स्थानिवद्भावात्प्राप्नोति वृक्षस्तत्रेति। अनल्विधौ स्थानिवद्भावः। अथायमल्विधिः स्यात् शक्यमड्ग्रहणमवक्तुम्। बाढं शक्यम्। अल्विधिस्तर्हि भविष्यति। कथम्? इदमस्ति "शेरि" इति ततः "खरवसानयोर्विसर्जनीयः" र इत्येव, ततो "रोः सुपि" विसर्जनीयः र इत्येव। उत्तरार्थं तर्हि तत्कर्त्तव्यं हलिसर्वेषाम् अशि हलि यथा स्यात्, इह माभूत्-वृक्षवयतेरप्रत्ययः वृक्षव् करोति" इत्युक्तम्। यदि तु तथार्थो

शब्दोऽस्ति, तेन द्विवचनादौ स्त्रीनपुंसकयोश्च न दोषः । युक्ततरं चैतत् । हे भव-

शब्दरत्नम् ।

त्युच्यते तदा पयःस्वित्यत्र यत्ववारणायाशीति । तत्र हि "रोः सुपि" (पा०सू० ८।३।१६) इति विसर्गः । नियमशास्त्राणां च विधिमुखेनैव प्रवृत्तिरिति तत्र रुविशिष्टः स्थानीति तद्रू-

भैरवी

मस्ति रोरि" इति । ततः 'खरवसानयोर्विसर्जनीयः' र इत्येव, रोः सुपि—विसर्जनीयः रोः रः" इति प्रतिपादितम् । एतेन भाष्यप्रघट्टकेन स्थानितावच्छेदकत्वेनाभिप्रेतस्यातिदेशेन प्राप्तस्य यत्रालसमर्पकस्थानिबोधकशब्दबोध्यवृत्तित्वन्तत्रानल्विधाविति निषेधः प्रवर्त्तते नान्यत्रेति स्पष्टमेव लभ्यते । उक्तभाष्यरीत्या समाधत्ते—तदा पयःस्वित्यत्रेति । देवाः सन्तीत्यतोऽस्य वैलक्षण्यमस्तीत्याह—तत्र हीति । नन्वस्य सूत्रस्य नियामकत्वेनेति विसर्ग इत्यसङ्गतमत आह—नियमशास्त्राणामिति । विधिमुखेनैवेति । इदमन्यत्र स्पष्टम् । उत्तरार्थमिति । अत एवोक्तभाष्यानन्तरम् "उत्तरार्थन्तर्हि तत्कर्तव्यम् "हलि सर्वेषाम्" अशि हलि यथा स्यादिह

भावप्रकाशः ।

नेष्टस्तर्हि यत्वविधौ विशिष्टरूपाश्रयणेनाविशेषाच्छन्दःस्वित्यतोवृक्षस्तत्रेत्यत्र सविस्तरं विशेषप्रतिपादनं भाष्योक्तमसंगतं स्यात् । न चोत्तरार्थं तर्हीत्यादिभाष्यस्यैकदेश्युक्तित्वात्सर्वं तथैवास्तामिति वाच्यम् । तत्र विरुद्धभाष्यान्तरोपलम्भेन तावताप्यनिर्वाहेण च तावदंशे तथात्वकल्पनेऽपि सर्वत्र तत्त्वकल्पने मानाभावात् । एतेन "उक्तार्थे मानाभावः । न चोक्तभाष्यं मानं, तस्यान्याशयकत्वादित्युक्तवोक्तभाष्यं संलिख्यास्मादनल्विधावित्यस्य स्थान्यलाश्रितादेशे न स्थानिवदित्यर्थोऽभिमतः । एवं च विशेषोपपत्तिः । यदि तु तत्रापि र इत्यनुवर्त्तते तदा साम्यं, परंत्वत्रार्थं पचन्तीत्यादौ दोषसद्भावात्तर्हीत्यनेनारुचिः सूचिता । एवं चानल्विधाविति मूलोक्तं सामान्यमेव साधु । एवंचाऽपदमिहार्थमपि, किं चान्तरङ्गपरिभाषया यत्वं स्यात्, इदानीमस्यापरनिमित्तकत्वात् । अनन्तराः संयोग इत्यादिनिर्देशाद्वारणे तु उत्तरार्थमेव तत् । एवं चार्थद्वयकथनमफलम्" इति मन्दोक्तमपास्तम् । मिथोविरुद्धत्वाच्च, विशेषस्य मदुक्तरीत्यैवोक्तेश्च, स्थान्यल्पदाभ्यामादेशपदासम्बन्धेन त्वदुक्तार्थस्यालाभाच्च, त्वदुक्तदोषाभावस्योक्तत्वेनारुच्यभावाच्च, सामान्योक्तेर्मनोरमायामेव खण्डितत्वाच्च, त्रैपादिके तदप्रवृत्तेश्च, अर्थद्वयसाफल्यस्य प्रागुक्तत्वाच्चेति दिक् । भाष्यरीत्यैव समाधत्ते–तदेति । देवाः सन्तीत्यतो वैलक्षण्यमाह–तत्र हीति । ननु तस्य नियामकत्वेन निवृत्तिमात्रतात्पर्यकत्वमत आह–नियमेति । चस्त्वर्थे । एवेन पक्षान्तरव्यावृत्तिः । खण्डनकृदाद्युक्तं

सरला ।

पयःस्वित्यत्रेति । वस्तुतस्तु स्थान्यल्वृत्तिधर्माश्रये नेत्याद्यर्थस्य 'अनल्विधौ' इत्यत्र स्वीकारो व्यर्थ एव । न च 'धिन्वन्ति' इत्यर्थं स आवश्यक इति वाच्यम्, पञ्चमीसमासेन स्थानिवत्त्वाद्वकारस्याच्त्ववत्त्वेन यणः परनिमित्तकत्वेन बहिरङ्गतया वेडागमस्याप्राप्तेः । नचैवं प्रकृतसूत्रस्थभाष्यविरोध इति वाच्यम्, हल्ङ्याप्सूत्रस्थवार्तिकभाष्यविरोधेन कृन्मेजन्तसूत्रस्थवार्तिकविरोधेन चैतस्यैकदेश्युक्तित्वेनादोषात् । न च स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वस्य उद्देश्यतायां प्रकारीभूतधर्मेण साक्षादवच्छिन्नत्वस्य च निवेशान्नोक्तवार्तिकभाष्यविरोध इति वाच्यम्, आद्यमर्थं स्वीकृत्य तदुभयनिवेशापेक्षया प्रकृतसूत्रस्थभाष्यस्यैकदेश्युक्तित्वकल्पनस्यैवोचितत्वात् । निरूपितं चैतत्स्थानिवत्सूत्रे लघुशब्देन्दुशेखरटिप्पणे इति ततोऽवगन्तव्यम् ।

विधिमुखेनैव प्रवृत्तिरिति । नियमशास्त्राणां निषेधमुखेन विधिमुखेन वा प्रवृत्तिर्भवति । तत्र क्व निषेधमुखेन प्रवृत्तिः, कुत्र च विधिमुखनेति विचारे स्वार्थहानिः, परार्थकल्पना, प्राप्तबाधश्चेतिदोषत्रयदूषितत्वेन निषेधमुखन प्रवृत्तिस्तत्रैव स्वीक्रियते, यत्र विधिमुखेन प्रवृत्तिर्न सम्भवति । यथा "हन्तेरत्पूर्वस्य" इत्यत्र "अत्पूर्वस्य" इति नियमस्य । तत्र हि नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदका-

शब्दरत्नम् ।

त्तिरुत्वस्य स्थानिवत्त्वेन लाभः सुकरः । यदि तु "रोः सुपि" (पा०सू० ८।३।१६) इत्यत्रापि 'रुः' इत्यनुवर्त्य रोः रेफस्यैव तेन विसर्गस्तदा ऽत्र ग्रहणमुत्तरार्थं सत्स्पष्टार्थमिहैव कृतमित्यवधेयम् । तत्रेति । चादिष्वित्यर्थः । वार्त्तिकं नाश्रयणीयमिति । भो इत्यादिप्रयोगाणां निपातैरेव सिद्धेः । निपातानामपि सम्बोधनान्तभवदादिसमानार्थकत्वात्सम्बोधनविभक्त्यन्तत्वेनामन्त्रितत्वमस्ति । "भवदादि" इत्यत्र भोःशब्दस्याप्यादिना ग्रहणात्तत्र भो इत्यादिसिद्धिरिति भावः । अन्यथा—साधारणानामभावे । मा विद्वद्वृन्देति । नपुंसके सोर्लुका लुप्तत्वेन वार्त्तिकाप्रवृत्तेरिति भावः ।

भैरवी ।

माभूत् वृक्षवयतेरप्रत्ययः वृक्षव् करोति" इत्युक्तम् । परोक्तन्दोषमुद्धरति—यदि त्विति । उत्तरार्थम्—हलि सर्वेषामिति सूत्रार्थम् । अवधेयमिति । मूलोक्तार्थावधेयपदार्थ एतावानित्यवधेयमित्यर्थः ।

मूले—अन्यथेति । वार्तिकस्यैव स्वीकारे । इत्यादिसिद्धावपीति । "मतुवसोः" इति सूत्रे पठितस्य तस्य वार्तिकस्यैषान्त्रयाणामन्त्यस्य रुः स्यात्सम्बुद्धौ अवस्य चौदित्यर्थः । तत्र नानर्थक इति परिभाषाया अस्वीकारपक्षे । अलोन्त्यपरिभाषा तु न प्रवर्तते वस्येतिवाच्ये ऽवस्येत्युपादानसामर्थ्यात् । एवञ्च पुंल्लिङ्गे हल्ङ्यादिलोपेन प्रत्ययलक्षणस्य प्रवृत्तिरिति सिद्धावपीत्यर्थः । भो हरिहरावित्यादि । आद्ये सम्बुद्धिपरत्वाभावात् अन्त्ये सम्बुद्धेर्लुकाऽपहारात् रूपन्न सिध्येदित्यर्थः ।

वार्तिकाभावेऽपि लक्ष्याणां सिद्धिमाह—भोइत्यादीत्यादिना । ननु निपातमात्रस्वीकारे आमन्त्रितकार्यसिद्धिः कथमत आह—निपातानामपीति । सम्बोधनविभक्त्यन्तत्वेन—सम्बोधनविभक्त्येकवचनान्तत्वेन । अलादिसिद्धिमप्याह—भवदादीति । भवदादीत्यत्र—भवदादियोग एवेष्यत इत्यत्र । तत्र भोइत्यादीति । आदिना ततो भोः इत्यादिसङ्ग्रहः । साधारणानाम्—सर्व-

भावप्रकाशः ।

दोषमुद्धरन्नग्रिमभाष्यरीतिमाह-यदि त्विति । उत्तरार्थमिति । हलिसर्वेषामित्येतदर्थमित्यर्थः । अवधेयमिति । मूलोक्तावधेयपदसूचितमेतावदवधेयमित्यर्थः । अनेन सूचितसिद्धान्तरूपवक्तव्यांशस्त्वनुपदमेव स्फुटीभविष्यति । सूत्रभ्रमव्युदासायाह-चादीति । ननु मतुवसोरित्यत्रत्यस्य 'एषां त्रयाणामन्तस्य रुः सम्बुद्धौ नानर्थक इति निषेधाद्वस्येति वाच्ये ऽवस्येति वचनाच्च निर्दिश्यमान' इति न्यायेनावस्यौत्, इत्यर्थकस्य वार्त्तिकस्याभावे कथन्तत्कार्यंतच्छब्दसिद्धिरस्तत्र उच्च वस्येति तु नोक्तं तदसिद्ध्या गुणाप्राप्त्या रूपासिद्धेरत आह-भोइत्यादीति । ननु तथाप्यामन्त्रितकार्यासिद्धिरत आह-निपातानामपीति । सम्बोधनेति । सम्बोधनविभक्त्येकवचनान्तत्वेनेत्यर्थः । एवं च नासंख्यत्वोक्तिविरोध इति भावः । ननु तथापि लाघवसिद्धिरत आह-भवदादीति । भवदादियोगे इत्यत्रेत्यर्थः । तेषामपरिगणनादिति भावः । आदिना ततो भो इत्यादिसंग्रहः । साधारणानामिति । सर्वलिङ्गसर्ववचनविषयनिपातानामित्यर्थः । वार्त्तिकोक्तानामेवाङ्गीकारे इति भावः । हरिहरावित्यस्य द्विवचनान्ततया भवच्छब्देनातथात्वादन्वयास-

सरला ।

वच्छिन्ने सङ्कोच इति नियमस्थलीयनियमानुसारेण "हन्तेः" इतिशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं नियामकं "अत्पूर्वस्य" इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकव्यापकं च रूपं हन्धात्ववयवनत्वं हन्धात्ववयवाकारपूर्वकनत्वं वा । तत्राद्यधर्मावच्छिन्नातिरिक्तत्वेन संकोचे "हन्तेः" इति शास्त्रस्य लक्ष्यमेव किमपि न स्यादिति तद्वैयर्थ्यापत्तिः । द्वितीयधर्मावच्छिन्नातिरिक्तत्वेन संकोचे तु 'प्रहण्यात्' इत्यादौ "हन्तेः" इत्यस्य प्राप्तिं वारयित्वा "अत्पूर्वस्य" इत्यनेन णत्वं, ननु 'प्रघ्नन्ति' इत्यत्रेति "हन्तेः" इति

न्नतिवत् हे भो इति प्रयोगस्यापीष्टत्वात्, तस्य च वार्तिकारम्भ एव सिद्धेः । "स्युः प्याट्पाडङ्गहैहेभोः" इत्यमरोक्तानां सम्बोधनार्थानां निपातानां सहप्रयोगायोगात् । किं चात्र भवान् हरिस्तत्रभवान् इतिवत् तत्र भो इत्याद्यपि वार्तिके सत्येव सि-

शब्दरत्नम् ।

भो गङ्ग इति । विभक्तौ लिङ्गविशिष्टाग्रहणात् ङीपा व्यवधानाद्भवतः सम्बुद्धिपरत्वाभावेनेति भावः । स्युः प्याडिति । अस्य निपातमात्राङ्गीकारे इत्यादिः । ननु निपातोऽव्ययं भवच्छब्दसमानार्थं एवेति हे भो इत्यस्य नासङ्गतिः । अत एव भाष्यकैयटयोर्वार्त्तिकसिद्धविभक्त्यन्तप्रतिरूपकमव्ययमित्युक्तं, विभक्त्यन्तप्रतिरूपकत्वं च शब्दतोऽर्थतश्च इत्यन्यत्र स्पष्टम् । किं च व्यतिलुनीते इत्यादिवदेतयोरपि सहप्रयोगसम्भव इत्यरुचे-

भरवी ।

लिङ्गसर्ववचनविषयनिपातानामित्यर्थः । विभक्ताविति । गङ्गाशब्दसामानाधिकरण्येन तस्य स्त्रीलिङ्गत्वात्तत्र ङीप्स्यादिति भावः । हे भो इति प्रयोगानुपपत्तिर्निपातमात्राङ्गीकारे सूचिता तां स्पष्टयति--स्युः प्याडित्यस्येति । अयम्—भोः शब्दः । अत एव—तस्य निपातस्य भवच्छब्दसमानार्थकत्वादेव । ननु शब्दत एव विभक्तिप्रतिरूपकत्वमस्तु तावतापि भाष्योपपत्तिर्भविष्यतीत्यत आह--विभक्त्यन्तेति । अर्थतश्चेति । विनिगमनाविरहादुभयं विवक्षितमिति भावः । अन्यत्रस्पष्टमिति । मतुप्सूत्रस्थभाष्यकैयटयोः स्पष्टमित्यर्थः । तत्र हि--अस्तिमानित्यादौ सत्ताकर्तृत्वेन धनबोधादस्ति कथञ्चिदर्थतः साम्यमित्यस्तीत्यस्याव्ययेष्वप्रामाणिकः

भावप्रकाशः ।

भवादसिद्धिः स्पष्टैवेति तदुपेदयाह-भो विद्वदिति । विभक्ताविति । तथा च वार्त्तिके ङ्यन्ताग्रहणाद्गङ्गासामानाधिकरण्यात् ङ्यन्ते तत्र तदप्रवृत्तिरिति भावः । ननु तथापि स्वैरिणीत्यादिवन्ङीपः प्रागभागमादाय सिद्धिरत आह-ङीपेति । ननु सम्बुद्धावित्यस्यावविशेषणत्वेन यथैकवर्णव्यवधाने जायते तथा वर्णद्वयव्यवधानेऽपि स्यादत आह-भवत इति । प्रत्ययस्य प्रकृत्यंश उत्थिताकाङ्क्षत्वेन तद्विशेषणत्वस्यैवौचित्यात् । अत एव येननेतिसबाधिरत्र नादृत इति भावः । भावेन चेति पाठः । तदभावेनेष्टत्वात्तदग्रहणेपि तकारश्रवणापत्तेश्चेत्यपि बोध्यम् । एवव्यवच्छेद्यं मूले आह-स्युः प्याडिति । इतोपि इदुदुपधेत्यत्रत्यं मूलमसङ्गतमिति बोध्यम् । अस्यान्यथेत्यादिरित्युचितम् । अन्यथोभयाङ्गीकारे वार्त्तिकोक्तमात्राङ्गीकारे च ग्रन्थासङ्गतेरित्याशयेनाह—निपातेति । अयम्-भोःशब्दः । तत्र प्रमाणमाह-अत एवेति । अस्य तत्तुल्यार्थकत्वादेवेत्यर्थः । ननु शब्दत एव विभक्त्यन्तप्रतिरूपकत्वेन भाष्याद्युपपत्त्या कथमितः समानार्थत्वलाभोऽत आह-विभक्त्यन्तेति । अर्थतश्चेति । विनिगमनाविरहादिति भावः । अत एवास्तिमानित्यादौ सत्ताकर्तृत्वेनैव धनबोधादस्ति कथञ्चिदर्थतः साम्यमित्यस्तीत्यस्य स्वरादिष्वप्रामाणिकः पाठः इति मतुप्सूत्रभाष्यकैयटादिकं सङ्गच्छते । तदाह-अन्यत्रेति । ननु तथापि वार्तिकसिद्धेति तदुक्त्या तदभावे तदसङ्गतिरेवात आह—किंच व्यतीति । समुच्चित्यद्योतकतापक्षे इति भावः । अरुचेरिति । त्रलादि-

सरला ।

प्राप्तणत्ववारणान्नान्यत्किमपीति स्नुषाश्वश्रून्यायविरोधः । तथाचोभयथाऽपि संकोचासम्भवेन विधिमुखेन प्रवृत्तिसम्भवो नास्ति, अतस्तत्रागत्या निषेधमुखेन प्रवृत्तिः । तत्र च "अत्पूर्वस्य" इत्यस्य अत्पूर्वभिन्नहन्धात्ववयवनस्य णत्वं नेत्यर्थ इति 'प्रघ्नन्ति' इति सिद्धं, 'प्रहण्यात्' इत्यत्र तु "हन्तेः" इत्यनेन णत्वमिति उभयोर्योगयोः सार्थक्यम् । यत्र तु विधिमुखेन प्रवृत्तिः संभवति तत्र न निषेधमुखेन प्रवृत्तिः स्वीकार्या दोषत्रयापत्तेः, किन्तु विधिमुखेनैवेति । एवञ्च प्रकृते "रोः सुपि", इत्यत्र सप्तमीबहुवचनाव्यवहितपूर्वत्वविशिष्टरेफातिरिक्तत्वेन "खरवसानयोः" इत्यत्र संकोचेन विधिमुखेन प्रवृत्तिः संभवतीति "रोः सुपि" इत्यस्य विधिमुखेनैव प्रवृत्तिः स्वीकार्येति तदाशयः ।

अर्थत इति । "उपसर्गविभक्तिस्वरप्रतिरूपकाश्च" इत्यत्र स्वरांशेऽर्थतः प्रतिरूपकत्वं न संभवतीति

ह्युच्यते । "इतराभ्योऽपि दृश्यन्ते" (पा०सू०५।३।१४) इति सर्वविभक्त्यन्तात्त्रतसो-र्भवदादियोग एवेष्टत्वात्। किं चामन्त्रितत्वे पदात्परस्याष्टमिकनिघातः, "आमन्त्रितं पूर्वम्-" ( पा०सू०८।१।७२ ) इत्यविद्यमानवद्भावः "आमएकान्तरम्—" ( पा०सू०८।१।५५ ) इति विधिः, "वाक्यादेरामन्त्रितस्य-" ( पा०सू०८।१।८ )

शब्दरत्नम् ।

राह—किं चेति । पदात्परस्येति । इदं च न भोः शब्दे फलमुभयोरपि भोःशब्दयोः सम्बोधनप्रथमान्तत्वेनामन्त्रितत्वात् । किं तु 'तिष्ठसि भगोः, तिष्ठसि अघोः' इत्यादौ भगवन्, अघवन् तिष्ठसीत्यर्थके "आमन्त्रितस्य-" इति निघातसिद्धिः । निपात-योस्तु तयोः सम्बोधने शक्तौ मानाभावेन सम्बोधनप्रथमान्तत्वाभावेनामन्त्रितत्वाभावात्। भगो तिष्ठसीत्यादौ अविद्यमानत्वम्, आं भगो देवदत्तेत्यादौ एकान्तरता, भगो आगच्छ भैरवी ।

पाठ इत्युक्तम् ।

सहप्रयोगस्याप्युपपत्तिमाह-किञ्च व्यतीति। समुच्चित्यद्योतकत्वस्य सम्भवादिति भावः। इत्यरुचेरिति। यद्वार्तिकारम्भस्य फलमुक्तन्तदन्यथासिद्धिरुक्तैव, त्रलादिसिद्धिरपि भवदादी-त्यत्रादिशब्दोपादानेन साधितैवेत्यरुचेरित्यर्थः। किञ्चेतीति । किञ्चामन्त्रितत्व इत्यादीत्य-र्थः । मूले—'पदात्परस्य' इत्यादिना वार्तिकारम्भस्य 'तत्र भो' इति 'तिष्ठति भो' इत्यत्र वा आमन्त्रितस्य चेत्याष्टमिकसूत्रेण निघातसिद्धिः फलमित्युक्तम्, तदपि निपातस्य सम्बोधन-विभक्त्यन्तत्वस्वीकारप्रदर्शनेन साधितमेवेति मूलोक्तन्निघातसिद्धिरूपम्प्रयोजनम्भगो-अघोः-शब्दांश इत्याह—इदञ्चेत्यादिना भावादित्यन्तेन। सम्बोधनप्रथमान्तत्वेनेति । सा च प्रातिपदिका-र्थेति सूत्रेण सम्बोधने चेत्यनेन वेति सामन्त्रितमिति सूत्रे व्यक्ती भविष्यतीति भावः। सिद्धि-रिति । फलमित्यस्यानुषङ्गः । मानाभावेनेति । 'भगो हरिहरौ' इत्यतो भगवत्त्वप्रकारेण 'अ-घो देवदत्त" इत्यतोऽघवत्त्वप्रकारेण बोधस्यानुभवसिद्धतया सम्बोधनविभक्त्यन्तत्वे माना-भावेनेत्यर्थः। निपातयोर्भगोअघोःशब्दयोर्न पूर्वोक्तमेव फलं किन्त्वन्यदपीत्याशयेनाह—भ-गोस्तिष्ठसीत्यादाविति। आम् भगो देवदत्तेत्यादाविति। आमित्यङ्गीकारे । अत्राम् देवदत्त भगो इति पाठः। अत्र भगोःशब्दस्यामन्त्रितस्य चेत्यनेन प्राप्तस्य निघातस्य "आम एकान्तर-मामन्त्रितमनन्तिके" इत्यनेन प्रतिषेधसिद्धिः फलम् । नच देवदत्तेत्यस्याविद्यमानवद्भावेन नैकान्तरता प्राप्नोतीति वाच्यम्, "नामन्त्रिते समानाधिकरणे" इति सूत्रेणाविद्यमानवद्भा-वस्य प्रतिषेधात्। नैकान्तरत्वसिद्धिमात्रम्फलङ्किन्त्वन्यदपीत्याह—भगो आगच्छेति । इदं

भावप्रकाशः ।

सिद्धिस्तूक्तैवेति भावः। वार्त्तिकस्य फलत्रयमेवेति मत्वा तदन्यथासिद्धया तत्खण्डनं तैः कृतमिति तावदेव तत्र लिखितम्। मूलकृता तु मिश्रतया दोषा उक्ता इत्यपूर्वदोषोद्धारमात्रेण तृतीयदोषप्रतीकधारणेन स दोषो विना प्रयासं मध्ये एव गलित इति तात्पर्यम्। नन्वयमपि दोषः प्रागुद्धृतोऽत आह-इदं चेति । सम्बो-धनप्रथमेति । प्रातिपदिकार्थेति सूत्रेण सम्बोधने चेत्यनेन वेति भावः । सामन्त्रितमिति सूत्रे स्पष्टतरमेत-त् । सिद्धिरिति । फलमित्यस्यानुषङ्गो नत्विदं चेत्यस्येति भावः। निपातयोरिति। भगोहरिहरावित्याद्यर्थ-मावश्यकत्वं तयोरिति भावः। तुना सूचितं यतौ नस्त एवेतीत्यनुपदमेव स्फुटीभविष्यति । मानाभावेनेति। भगवत्त्वादिप्रकारेणैव ततो बोधादिति भावः। तयोर्न तावन्मात्रं फलं किंत्वन्यदप्यग्रिमं मूलोक्तं सर्वं तयो-रेवेत्युदाहरणव्याजेनाह-भगो इत्यादि। आमित्यङ्गीकारे। यद्यप्यत्राप्यविद्यमानवत्त्वं भगो इत्यस्य प्राप्तं पूर्ववदिति आममाश्रित्य प्राप्तामन्त्रितनिघातस्य "आम एकान्तरम्" इत्यनेन निषेधो न प्राप्नोति तथापि "नामन्त्रिते समानाधिकरणे" इति निषेधान्नाविद्यमानवत्त्वं, निपातस्तु नास्त्येव, तदाह-एकान्तरतेति ।

इति द्विर्भावः, "सुबामन्त्रित–" ( पा०सू०२।१।२ ) इति पराङ्गवद्भावश्चेत्यादि सर्वं सिद्ध्यति, न त्वन्यथेति दिक्। भगो, अघो इति निपातावपि यदि प्रामाणिकौ तर्हि स्तां नाम। आमन्त्रितकार्यसिद्धिस्तु वार्तिकायत्तैवेति सुधीभिराकलनीयम्। यत्तु वदन्ति–सकारान्तानेवैतान् निपातानास्थाय रुत्वोत्वे भाष्ये प्रत्याख्याते इति, तद्‌-तिरभसात्। स्यादेतत्। निपातानामभ्युपगमे यत्वविधौ त एव गृह्येरन् प्रतिपदोक्त-त्वात्, न तु सम्बुद्ध्यन्ताः लाक्षणिकत्वात्, इति चेत्? मैवम्, "स्वरितेनाधिकारः" (पा०सू०१।३।११) इत्यत्राधिकः कारोऽधिकार इति व्याख्यानमाश्रित्य लक्ष्यानुरो-धेन स्वरितत्वमाश्रित्योभयग्रहणात्, "भुवश्च महाव्याहृतेः" (पा०सू०८।२।७१) इति सूत्रे महाव्याहृतिग्रहणं लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनार्थमिति हरद-

---

### शब्दरत्नम्।

इत्यादौ द्विर्भावः, धनेन भगो इत्यादौ पराङ्गत्वमिति भावः। यदि प्रामाणिकावि-ति। यदीत्यनेनेदं सूचितं–तौ न प्रामाणिकौ। अत एव भाष्ये "विभाषा भवत्–"इति व्याख्याय भोः ब्राह्मणीत्यस्यैवासिद्धिमाशङ्क्याव्ययमेव भोः शब्दो विभक्तिप्रतिरूपकत्वा-दित्येवोक्तम्। एवं च भगो हरिहरावित्याद्यसाध्वेव। तदतिरभसादिति। "भोभगो–" (पा० ०८।३।१७) "मतुवसोः" (पा०सू०८।३।१) इति सूत्रयोरस्यार्थस्य भाष्येऽ-स्पृष्टत्वादिति भावः। उभयग्रहणादिति। वार्तिकबोधितसाधुत्वानामपि "कुलटाया वा" इत्यादौ कार्यान्तरबोधनाय सूत्रकृताऽनुवादस्य करणादिति भावः। हरदत्तेति।

### भैरवी।

द्विर्भावप्रवृत्तियोग्यमुदाहरणम्, भगो भगो आगच्छेति तदा भविष्यति। धनेन भगो इति। धनेन भगवन् ऐश्वर्यवन्नित्यर्थः। अत्र मत्वर्थसत्तायां धनस्य करणत्वेनान्वयादामन्त्रितं प्रति कारकत्वमस्तीति पराङ्गवद्भावस्य प्राप्तिः।

न प्रामाणिकाविति। भोःशब्दस्येव तयोः कोशे ऽनुपादानादिति शेषः। अत एव—'भगोस्' 'अघोस्' इति निपातयोरप्रामाणिकत्वादेव। असिद्धिमिति। एषा प्रागुपपादिता। इत्येवोक्त-मिति। 'नत्वव्ययान्येते' इति तत्रोक्तमिति तयोरप्रामाणिकत्वस्य सिद्धिः। इत्यादीति। आ-दिना 'भगो गङ्गे' इत्यस्य सङ्ग्रहः। तदिति। प्रकाशकृदुक्तमित्यर्थः। मूले—उभयग्रहणादिति। निपातवार्तिकनिष्पन्नयोर्ग्रहणादित्यर्थः। ननु सूत्रकारस्य सूत्रकरणसमये वार्तिकासत्त्वेनैतद्बो-धितसाधुत्वकानामनुकरणासम्भवेनोभयग्रहणादित्यसङ्गतमत आह—वार्तिकेति। अत्र वार्तिकं

### भावप्रकाशः।

तथा च निपातनिषेध इति भावः। धनेन भगो इति। तत्करणकैश्वर्यवानित्यर्थः। मत्वर्थसत्तायां धनस्य कर-णत्वेनान्वय इति भावः। सूचितमिति। अस्य साध्वेवेतीत्यत्रान्वयः। तौ–निपातौ। न प्रामाणिकाविति। भोशब्दस्येव तयोः कोशेऽनुक्तत्वादिति भावः। एतेन तथा प्रकाशकृत्सिद्धान्तोक्तिरयुक्तेति सूचितम्। अत्र मुख्यं मानमाह—अत एवेति। तस्वादेवेत्यर्थः। अस्यवेति। भोःशब्दघटितानेकप्रागुक्तप्रयोग-स्येत्यर्थः। एवेन तद्घटितव्यावृत्तिः। इत्येवोक्तमिति। नत्वव्ययान्येते शब्दा इत्युक्तमिति भावः। आदिना भगो गङ्गे इत्यादिसंग्रहः। तदिति। प्रकाशोक्तमित्यर्थः। स्पृष्टत्वादिति। एवं च कथंचि-द्भाष्यात्तथा लभ्यते इति प्रकाशो युक्त एवेति खण्डनकृदाद्युक्तमयुक्तमिति भावः। ननु सूत्रकरणसमये वार्त्तिककृदाद्यसत्त्वेनोभयानुवादस्यैवासम्भावितत्वेनाशङ्का समाधिश्चायुक्तो अत आह—वार्तिकेति। शक-

त्ताद्युक्तेश्च । न चैवमपि प्रभोरित्यादावतिव्याप्तिः । परस्परसाहचर्येण निपातानां वार्तिकोक्तानां च ग्रहणेऽप्यन्येषामग्रहणात् ।

---

**शब्दरत्नम्**

एवं चानित्यत्वात्तदप्रवृत्तौ उभयोर्ग्रहणसिद्धिरिति भावः । "विभाषा भवद्-" इति वार्त्तिके भो ब्राह्मणा भो ब्राह्मणौ इत्यसिद्ध्याशङ्कायामव्ययमेष भोःशब्द इति सिद्धान्तेनोभयोरत्र ग्रहणलाभादिति बोद्ध्यम् । परस्परसाहचर्येणेति । तेन चार्थवतामेव ग्रहणमिति भावः । अर्थवत्परिभाषयेत्यपि बोद्ध्यम् । अन्येषाम्-अनर्थकानाम् । सान्तरान्तान्यतरानुकरणमिति पक्षे प्रसिद्ध्या भोइत्यादिपूर्वकरेफान्तानामेवार्थवतां ग्रहणस्य न्याय्यतया भो

**भैरवी**

"शकन्ध्वादिषु पररूपं वाच्यम्" इति बोध्यम् । एवञ्चैकदेशानुमत्या तद्वार्तिकस्यापूर्वत्वाभावबोधनद्वारा तत्साध्यरूपाणां साधुत्वं सूत्रकृतैव ध्वनितमिति भावः । मूले-महाव्याहृतिग्रहणमिति । "भुवः" इति सूत्रे भुव इत्यनेनान्तरिक्षवाचकस्य भुवरिति रान्तस्य महाव्याहृतेर्ग्रहणम् उत क्विबन्तपृथ्वीवाचकभूप्रकृतिकषष्ठ्यन्तस्य ग्रहणमिति सन्देहस्य लक्षणप्रतिपदोक्तपरिभाषया निवृत्तौ महाव्याहृतिग्रहणम्परिभाषाया अनित्यत्वे ज्ञापकमिति भावः ।

प्रकृतसूत्रे उभयोर्ग्रहणे भाष्यमपि साधकमित्याह—विभाषाभवदितीति । मूले-नचैवमिति । एवम्-लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिस्वीकारे । तेन—साहचर्येण । न केवलं साहचर्यमात्रं साधकङ्किन्तु परिभाषापीत्याह-अर्थवदिति । ननु मूलकृता साहचर्यपरिभाषा सञ्चारिता नत्वर्थवत्परिभाषा इत्यत्र किम्बीजमत आह—सान्तेति । भोशब्दादीनामेवेति । एवकारेण प्रभोरित्याद्येकदेशव्यावृत्तिः । तथाचौकारान्तानुकरणमिति पक्षाभिप्रायको ऽयं ग्रन्थ इति

**भावप्रकाशः ।**

न्ध्वादित्वात्कुलटाशब्दस्य सिद्धेः । तथा चैकदेशानुमत्या वार्तिकानामपूर्वत्वाभावबोधनद्वारा तत्साध्यप्रयोगाणां साधुत्वं सूत्रकृतैव ज्ञापितमिति भावः । यद्यपि महाव्याहृतिग्रहणाभावे प्राप्तस्य क्विबन्तपृथ्वीवाचकभूप्रकृतिकषष्ठ्यन्तस्य ग्रहणमुत "भुवरित्यन्तरिक्षम्" इति श्रुत्युक्तरान्तमहाव्याहृतेरिति सन्देहस्य तया निवृत्तौ तद्वयर्थं सत्तदनित्यत्वं गमयति तथापि तावता प्रकृते किमत आह—एवंचानित्यत्वादिति । तथा हरदत्तोक्तौ चेत्यर्थः । ननु तस्य समूलत्वे प्रकारद्वयाश्रयणं, तदेव नेत्यत आह—विभाषेति । वार्त्तिके इति । तद्व्याख्यानावसरे इत्यर्थः । असिद्ध्येति । इत्याद्यसिद्ध्येत्यर्थः । शङ्कायामिति । भगवदुक्तेनेति शेषः । यत्तु खण्डनकृत्-"अर्थवद्ग्रहणपरिभाषयातिव्याप्तेः स्वयं समाहितत्वेन नचैवमिति शङ्काया एवानुत्थानम् , अत एव साहचर्याश्रयणमपि निष्फलं, साहचर्येणैवेष्टसाधने स्वनतिप्रसङ्गात्प्राक् तदापादनासङ्गतिरिति" तन्नेति ध्वनयितुं व्याचष्टे—तेन चेति । साहचर्येणापीत्यर्थः । अर्थवत्त्वं च द्वयोरेवेत्याशयेन तयोरुक्तिर्मूले इति भावः । नन्वेवं तयैवेष्टसिद्धाविदं निष्फलमित्यत आह—अर्थवदिति । अत एव व्याचष्टे-अनर्थकानामिति । नन्वेवं मूलकृता सैव कुतो नोक्तेयं किमित्युक्ता ऽत आह—सान्तेति । प्राचामनुरोधेनेदम् । प्रसिद्ध्येति । गौणमुख्यन्यायेनेति भावः । भोशब्दादीनामेवेति । एवेन प्रभोरित्याद्येकदेशव्यावृत्तिः । तथा चौकारान्तानुकरणपक्षाशयकोऽयं ग्रन्थ इति तत्पक्षे साहचर्योक्तिरुचितैवेति भा-

**सरला ।**

शब्दतः प्रतिरूपकत्वं गृह्यते तत्साहचर्यादन्यत्रांशेऽपि शब्दत एव प्रतिरूपकत्वमिति तु न वाच्यम्, समकालवाचकयुगपच्छब्दस्य युगं पततीति युगपद् इति व्युत्पत्त्या सिद्धशब्दतो विभक्त्यन्तप्रतिरूपकत्वेन वार्त्तिकेनैव सिद्धेस्तस्य गणे पाठवैयर्थ्येन शब्दतोऽर्थतश्च प्रतिरूपकत्वग्रहणज्ञापनादिति ।

व्योर्लघु (पा०सू०८।३।१८)॥ लघुप्रयत्नतरः, लघूच्चारणतरः। स चान्तरतम्या-द्वस्य वो यस्य य इत्याह—वयाविति ।

ओतो गार्ग्यस्य (पा०सू०८।३।२०) ॥ ओकारादिति। यत्त्वोकारान्तादङ्गादिति प्राचा व्याख्यातं तन्न। अङ्गस्याप्रकृतत्वात्, असम्भवाच्च। न ह्युदाहरणेष्वोकारान्तमङ्गमस्ति ।

हलि सर्वेषाम् (पा०सू०८।३।२२) ॥ यकारस्येति । वकारस्तु नानुवर्तते, भोभगोअघोपूर्वस्यासम्भवात् । अपूर्वस्तु यद्यपि सम्भवति वृक्षव् करोतीति, तथापि तत्र लोपाप्रसङ्गः, अशीत्यनुवर्त्याशा हलो विशेषणात् । वृक्षवृहसतीत्यादि तु अनभिधानादसाध्वित्याहुः । गव्यमित्यत्र तु पदान्तत्वं नास्ति, गव्यूतिरित्यत्र

---

शब्दरत्नम् ।

इत्याद्योकारान्तानुकरणपक्षेऽपि वार्त्तिकनिष्पन्नानां निपातानां चैकदेशभूतभोशब्दादीनामेव ग्रहणमिति भावः । अत्रेदन्तत्वं–रान्तानामेवानुकरणं सूत्रे सन्ध्यभावो न्याय्य एवेति भाष्यस्वरसः ।

लघूच्चारणतरः–लघुतरोच्चारणः ।

हलो विशेषणादिति । स्पष्टं चेदं भाष्ये । इत्याहुरिति । हरदत्तादयः।

भैरवी ।

भावः । मूलात्सिद्धान्तानिर्णयात् स्वयं सिद्धान्तमाह—अत्रेदन्तत्वमिति। रान्तानामेवेति । लक्षणवशसम्पन्नरान्तानामेवेत्यर्थः । एवञ्च लाक्षणिकत्वाविशेषान्निपातवार्त्तिकनिष्पन्नयोर्ग्रहण सिद्धिः । प्रभोरित्याद्येकदेशव्यावृत्तिस्त्वनर्थकत्वेन साधितैव । एवकारेण सान्तौकारान्तपक्षयोर्व्यावृत्तिः । न्याय्य एवेति । एतेनैतत्पक्षे सौत्रसन्ध्यभावकल्पनेन लाघवमिति सूचितम् ।

ननु लघूच्चारणतर इति मौलव्याख्यानादुच्चारणक्रियागतस्य प्रकर्षस्य लाभो भवति न तु क्रियाप्रयोजकप्रयत्नगतस्येति कथन्तदित्यत आह—लघुतरोच्चारण इति । एवञ्च लघूच्चारणतर इत्यत्रान्यपदार्थसम्बन्धोत्तरं वत्तिपदार्थस्य लाघवस्य प्रकर्षविवक्षेति भावः । शुक्लतरः पट इत्यादावपि विशेषणप्रकर्षविवक्षया साधुत्वस्य सर्वत्र दर्शनात् । एवञ्च 'शिखी ध्वस्तः' इतिवत्साधुत्वमस्येति बोध्यम् ।

भाष्ये इति । एतच्च प्रागुपपादितम्। हरदत्तादय इत्यनेन सूचितामरुचिम्प्रकटयति—वकार-

भावप्रकाशः ।

वः । नन्वेमपि सिद्धान्तानिर्णयोऽत आह—अत्रेदमिति । रान्तानामेवेति । लक्षणवशसम्पन्नरान्तावस्थानामित्यर्थः । एवं च लाक्षणिकत्वाविशेषादुभयेषां ग्रहणं प्रभोरित्याद्येकदेशानां त्वनर्थकत्वान्न । एवेन सान्तौकारान्तपक्षयोर्व्यावृत्तिः । न्याय्य एवेतीति । ननु सौत्रः । अनेनौकारान्तानुकरणे शास्त्रबाधे मानाभावाल्लाघवाच्च सन्धिरेव न्याय्य इति सूचितम् । भाष्यस्वरस इतीति । एवं चागत्या वाक्यभेदसौत्रषष्ठीलुक्स्वीकारः । एतेनोक्तदोषद्वयभियौकारान्तानुकरणपक्ष एव समीचीन इति रत्नाकरोक्तमपास्तमिति भावः ।

अन्यपदार्थसम्बन्धोत्तरं वत्तिपदार्थप्रकर्षविवक्षया तयोः साधुत्वं ध्वनयितुमाह—लघुतरेति । शिखो ध्वस्त इतिवदुपपत्तिर्बोध्या ।

भाष्ये इति । तच्चोक्तं प्राक् । हरदत्तादय इति । आदिना प्रसादकृदादिसंग्रहः । यत्तु प्रकाशकृन्मान्यरत्नाकरादयः अनभिधाने मानाभावात्तत्र लोपे इष्टापत्तिः, अशि हलीति व्याख्याय वृक्षवृकरोतीत्यादौ न दोष इति भाष्यकृदुक्तिविरोधाच्च न पदान्तइति भाष्यस्यान्यतात्पर्यकत्वाच्च । तस्माद्वकारानुवृत्त्या तल्लोपो भवत्येव । मूलकृताप्याहुरित्यनेनैयमेवारुचिः सूचितेति । तन्न, हरदत्ताद्याशयानवबोधात् ।

तु वकारप्रश्लेषान्न वलोप इत्युक्तम्। ननु देवा नम्या इत्यादौ "लोपो व्योः—" (पा०सू०६।१।६६) इत्येव सिद्धम्। मैवम्, तं प्रति यत्वस्यासिद्धत्वात्; देवा यान्तीत्यत्र वलपरत्वाभावाच्च। अहोरात्र इति। "रात्राह्नाहाः-"(पा०सू०२।४।२९) इति पुंस्त्वम्। अहरादीनामिति। उभयत्राप्यादिशब्दः प्रकारे। तेन "स्वर्चक्षो रथिनः सत्यशुष्मः"। विप्रः कविः काव्येन स्वर्चना'इत्यादि ग्राह्यम्।

तृढो वृढ इति। उदित्त्वेन वेट्कत्वात् "यस्य विभाषा" (पा०सू०७।२।१५) इति निष्ठायां नेट्। ढत्वधत्वष्टुत्वढलोपाः। यत्तु प्राचा प्रत्युदाहृतं दृढ इति तन्न। तत्र ढलोपस्यैवाभावात्। तथा हि, "दृढः स्थूलबलयोः" (पा०सू०७।२।२०) इति सूत्रेण दृंहेर्नकारहकारयोर्लोपः, तकारस्य ढत्वं च निपात्यते न त्वसिद्धकाण्डस्थढत्वस्येह प्रवृत्तिः "दादेर्धातोः—" (पा०सू०८।२।३२) इति घत्वेन बाधात्। न च इडभावो ढत्वं च निपात्यतां धत्वष्टुत्वढलोपास्तु भविष्यन्त्येवेति वाच्यम्। तथा सति परिवृढय्येत्यत्र "ल्यपि लघुपूर्वात्" (पा०सू०६।४।५६) इति णेरयादेशो न स्यात्, परिवृढी कन्येत्यत्र "अणिञोः-"(पा०सू ४।१।७८) इति ष्यङ् च स्यात्, ढलोपस्यासिद्धत्वेन गुरूपोत्तमत्वादिति भाष्ये स्थितम्। यत्तु प्राचा व्याख्यातं

---

शब्दरत्नम्।

वकारलोपे ततस्तदर्थानवगतेरित्यर्थः। एवं च करोत्यादिपरेऽपि तत एव लोपो न भविष्यतीत्यशा हलो विशेषणं व्यर्थमिति सूचितम्। भाष्यमपि तदेकदेश्युक्तिरेव। "न पदान्ताः परेणः सन्ति" इति लण्सूत्रस्थभाष्यविरोधाच्च।

इडभावो ढत्वं चेति। चेन नलोपसङ्ग्रहः। ढलोपा इति। "ढो ढे लोपः" (पा० सू०८।३।१३) इत्येतद्दृष्ट्या ष्टुत्वं तु नासिद्धं सामर्थ्यादिति भावः। भाष्ये स्थितमिति।

भैरवी।

लोप इत्यादिना। अनवगतेरिति। पदानुपूर्वीज्ञानस्यार्थोपस्थितिकारणत्वस्य क्लृप्तत्वादिति भावः। न च शास्त्रस्य प्राप्तिः कथं वारणीयेति वाच्यम्, शास्त्रस्यानिष्टार्थम्प्रवृत्तेरदर्शनात्। एवंच-उक्तरीत्या लोपाभावस्य सिद्धौ च। तत एव-अर्थानवगतेरेव। उक्तभाष्यविरोधम्परिहरति—भाष्यमपीति। वृक्षव् करोतीत्यत्र प्राप्तिप्रदर्शकभाष्यमपीत्यर्थः। एकदेश्युक्तिरिति। तदर्थानवगतेरित्युक्तरीत्यैकदेश्युक्तिरित्यर्थः। भाष्यान्तरसम्वादादपि तस्यैकदेश्युक्तित्वमित्याह—न पदान्ताः परेण इति। अत्रेदम्बोध्यम्, अनेन सूत्रेण लघुलघूच्चारणयोर्लोपः क्रियते यदि हलीति प्रकृतसूत्रे नोच्येत तदा 'देवा इह' इत्यत्रालघूच्चारणस्य यस्य लोपः स्यादित्याशयेन परममूले-'हलि किम्-देवायिह' इत्युक्तम्। लोपः शाकल्यस्येति सूत्रन्तु 'देवा इह' इत्यत्र लघूच्चारणस्य यस्य लोपविधायकत्वेन चरितार्थम्। एतद्विषये यकारस्य यत्र वैकल्पिको लोपस्तत्रैतद्विषयकशास्त्रारम्भान्नित्यो लोपो हल्ग्रहणाभावेऽपि न प्रवर्तत इति। एतेन वैकल्पिकलोपविषये नित्यलोपस्वीकारे विकल्पस्य वैयर्थ्यापत्तिरिति परास्तम्॥

भावप्रकाशः।

तद् अनयन्ननभिधानादिति तदुक्तेरर्थमाह—वकारेति। अनवगतेरिति। आनुपूर्वीज्ञानस्यासत्तिविधया शाब्दबोधहेतुत्वेन तथोच्चारणेन तदर्थबोधस्य लोके ऽदृष्टत्वादित्यर्थः। शास्त्रस्यानिष्टाजनकत्वादितिभावः। पूर्वग्रन्थविरोधं परिहरति—एवं चेति। अत्रैवं रीत्या लोपाभावे चेत्यर्थः। तत एव—अनवगतेरेव। भाष्यविरोधं निराचष्टे—भाष्यमपीति। इदं च तत् प्रयोगसत्त्वमभ्युपेत्य। वस्तुतस्तदेव न, मानसत्त्वादित्याह—नपदान्ता इति। प्रतिपादितमेतदधस्तात्। एवं च हरदत्तोक्तमपि चिन्त्यमेवेति।

दंहेरेवेदं निपातनं, दृह वृद्धाविति तु प्रकृत्यन्तरम्, तस्य निष्ठायामागमशास्त्रस्यानित्यत्वादिडभावे "वा द्रुह—" (पा०सू०८।२।३३) इत्यत्र "वा" इति योगविभागात् पक्षे घत्वाभावे ढलोपे च प्रत्युदाहरणमिदं द्रष्टव्यमिति । तन्न । उभयोरपि निपातनाभ्युपगमात् । तदाह वामनः—अथ दृहिः प्रकृत्यन्तरमस्ति तस्याप्येतन्निपातनं नलोपवर्जमिति । युक्तं चैतत् । अन्यथा हि अस्माद् णेरय् न स्यात्, ष्यङ् च स्यात् ।

उत्वमेवेति । सिद्धासिद्धयोरतुल्यबलत्वेन "विप्रतिषेधे परम्—" (पा०सू० १।४।२) इत्यस्याप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः । तदुक्तम्—"पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इति । एतेन 'विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे' इत्यादि व्याख्यातम् ।

---

### शब्दरत्नम् ।

"दृढः स्थूल—" (पा०सू०७।२।२०) इति सूत्रशेषे । द्रष्टव्यमितीति । ष्यङि णेरयाभावे चेष्टापत्तिरिति भावः । उभयोरपीति । त्वदवलम्बभूतेन वृत्तिकृतेति शेषः । तदाह वामन इति । अत्रारुचिबीजं तु 'दंहेर्नकारहकारलोपार्थम्' इति भाष्यविरोधः, 'अनिदितो दहेस्तु दृहितमित्येवेष्यते' इति कैयटविरोधश्चेति । किं च प्रसादोक्तरीत्या दृहेरपि इडभावढत्वयोः सिद्धाविण्निषेधप्रकरणे दृढ इति निपातनस्य व्यर्थत्वमित्यलम् ।

अभावादुत्तरस्येति । आहार्याभावारोपादित्यर्थः ।

### भैरवी ।

भाष्ये स्थितमित्यत्र भाष्यं "ढ्रलोपे" इति सूत्रस्थङ्ग्राह्यमिति भ्रमानुत्पत्तये आह—दृढः स्थूलेतीति । द्रष्टव्यमिति योक्तिः सा दृढ इति प्रक्रियोक्तप्रत्युदाहरणस्योपपादनाय प्रसादस्य, तस्माद्दृढशब्दाण्णौ ततो ल्यपि "ल्यपि लघुपूर्वा इति सूत्रेणैव प्रवर्तते इति तदभिप्रेतमित्याह—तस्येति । मते इति शेषः । एतेनेयमुक्तिरपसिद्धान्त इति ध्वनितम् । अत एवाह—त्वदवलम्बेति । अत्रारुचीति । वामनोक्तावरुचिबीजमित्यर्थः । भाष्यविरोध इति । नकारहकारलोपार्थमित्युपादाने ऽनिदितो न निपातनमिति स्पष्टमेवेति भाष्यविरोध इत्यर्थः । वामनेन उभयोरपीति यद्यप्युक्तं, तथापि प्रक्रियाकृता तथा नोक्तम्, अतः स्वस्योभयोरपीति नेष्टमिति प्रसादानुयायिशङ्कां वारयति—किञ्चेति । अलमिति । योगविभागस्यागमशास्त्रानित्यत्वस्य चाप्रमाणत्वम्, सर्वावलम्बभूत 'दृढः स्थूल' इति भाष्यविरोधश्चेत्यस्यार्थः ।

ननूत्तरस्याभावादित्यसङ्गतमष्टाध्याय्यान्तत्सत्त्वोपलम्भादत आह—आहार्येति । "पूर्वत्रा-

### भावप्रकाशः ।

भावः । अनन्तरसूत्रद्वयभ्रमनिवृत्तये आह—दृढ इति । द्रष्टव्यमितीतीति । प्रक्रियोक्तं दृढ इति साधयितुं प्रसादोक्तिरियम् । उभयोरपीत्यादिप्रकाशोक्त्यनुवादस्यासिद्धान्ततां ध्वनयितुमाह—त्वदवलम्बेति । एवं च भाष्यविरोधे इष्टापत्तावप्युपजीव्यविरोधस्तव दुष्परिहर इति भावः । ननु वामनेन तथोक्तावपि प्रक्रियाकृदनुक्तत्वेन मम नेष्टमतः प्रसादोपरि दोषान्तरमाह—किं चेति । अलमिति । तदर्थस्तु सर्वावलम्बभूतेन 'दृढः स्थूल' इति सूत्रभाष्येण विरोधः, योगविभागस्यागमशास्त्रानित्यत्वस्य चाप्रामाण्यं चेति ।

ननूत्तरशास्त्रस्य सत्त्वेन कथमभावोऽत आह—आहार्याभावेति । शास्त्रप्रामाण्यादितिभावः । बाधकालिकेच्छाजन्यत्वात्तस्याहार्यत्वम् लोकवैलक्षण्येप्युक्तहेतोरेवात्रेष्टसिद्ध्यङ्गीकारान्मनोरथसिद्धिः

सूत्रे सु इति पृथक्पदं लुप्तषष्ठीकमित्याह-एतत्तदोर्यः सुरिति। एतत्तद्-गतसंख्याभिधायी यः सुस्तस्येत्यर्थः। एतत्तदोर्विहित इति व्याख्याने तु परमस ददाति, परमैष ददातीत्यादौ न स्यात्। अर्थद्वारकसम्बन्धाश्रयणे लिङ्गं तु 'अनञ्समासे' इति बोध्यम्। अकोःकिमिति। साकच्कयोः शब्दान्तरत्वाद्-प्रसङ्ग इति प्रश्नः। एषक इति। 'अकोः' इति प्रतिषेध एव "तन्मध्यपति-तस्तद्ग्रहणेन गृह्यते" इति परिभाषां ज्ञापयतीति भावः।

बहुलग्रहणेति। अत एव लोपं विना पादपूरणेऽपि क्वचिद्भवति—सास्मा

---

शब्दरत्नम्।

लिङ्गमिति। विहितविशेषणे तद्वैयर्थ्यं स्पष्टमेवेति भावः।

सास्मा अरमिति। सोस्मा अरमिति सन्धावपि पादपूर्तेः। न च "प्रकृत्यान्तः पादम्-" (पा०सू०६।१।११९) इति पूर्वरूपस्याभावेन न पादपूर्त्तिः। "सोऽयमा-

भैरवी।

सिद्धम्" इति शास्त्रप्रामाण्यादिति शेषः। वस्तुतो विद्यमानेऽपि,शास्त्रे इच्छया प्रतियो-गितासम्बन्धेनाभाव आरोप्यत इति तस्याभावज्ञानस्याहार्यत्वम्।

तद्वैयर्थ्यम्-अनञ्समासग्रहणवैयर्थ्यम्। तद्धि 'असः शिवः' इत्यादौ लोपाभावार्थंकृ-तम्। यद्यत्र विहितविशेषणं स्यात्तदा सोस्तच्छब्दाद्विधानाभावेन लोपाप्राप्त्या तद्वैयर्थ्य-स्पष्टमेव। वस्तुतस्तु विहितपदाध्याहारेण तद्योगे पञ्चमीकल्पनायामक्लृप्तकल्पनापेक्षया ऽन-न्तरपदाध्याहारेण तन्निरूपितसम्बन्धे षष्ठीत्येवोचितम्। अत एवात्र 'इति भाव' इत्युक्तम्। इदमेवानञ्समासग्रहणम् 'नञ्समास उत्तरपदार्थप्रधान' इत्यत्र ज्ञापकम्। अन्यथा नञर्थाभा-वस्य विशेष्यत्वेन उत्तरपदस्योपसर्जनत्वेन त्यदाद्यत्वाप्राप्त्या हल्ङ्याब्भ्यादिलोपस्य दुर्वारतया तद्वैयर्थ्यमेव स्यात्। पूर्वरूपस्येति। अवादेशस्य चेत्यपि बोध्यम्। इत्यादाविवेति। अत्र यथा

भावप्रकाशः।

इतिभाव इति। वस्तुतो विहितशब्दयोगे पञ्चम्या युक्तत्वेन दुष्टत्वेन च शङ्कैवायुक्ता। एवं चानन्तर इत्यध्याहृत्य तयोरनन्तर इति व्याख्यानमेवोचितम्। यथा चात्र नातिप्रसङ्गस्तथा स्पष्टमस्थिमालायाम्। गौणे तु इष्टापत्तिः। तत्र त्यदाद्यत्वाभावेन हल्ङ्यादिलोपस्य दुर्वारत्वात्। अत एवारुचिबोधकं तुद्वयमुक्तं मूले। अत एव च इति भावः इत्युक्तं टीकायामिति बोध्यम्। पादमितीति। प्रवृत्त्येति शेषः। पूर्वरूपस्येति। अवादेशस्यचेत्यपि बोध्यम्। न पादेति। तथा चात एवेत्यादिमूलासंगतिरिति भावः सोऽयमिति। अन्यथा शतधारोऽयमितिवत् "अव्यादवद्यात्" इत्यनेन प्रकृतिभावापत्तिरिति भावः।

सरला।

तद्वैयर्थ्यमिति। असः इत्यत्र प्रथमकवचनसोस्तच्छब्दाद्विहितत्वाभावात्। अर्थद्वारकसम्बन्धाश्रयणे तु सुप्रत्ययार्थैकत्वस्य तच्छब्दार्थगतत्वेन तत्र प्राप्तसुलोपवारणाय 'अनञ्समासे' इति सार्थकम्। एवञ्च एत-त्तच्छब्दार्थगतसंख्याभिधायिनः सोर्लोप इति सूत्रार्थः। एतत्तदोरिति षष्ठी अर्थद्वारकसम्बन्धबोधिकेति बोध्यम्,। नच अनन्तरपदाध्यारेण तन्निरूपितसम्बन्धबोधिका षष्ठीति वाच्यम्, तथा सति एतत्तदोरन-न्तरस्य सोर्लोप इति सूत्रार्थेन 'परमः स ददाति' इति लक्ष्ये परमपदोत्तरसुप्रत्ययस्य लोपापत्तेस्तस्य तच्छब्दानन्तरत्वात्। नन्वर्थद्वारकसम्बन्धार्थकत्वस्वीकारेऽपि परमपदोत्तरसुप्रत्ययस्य तत्पदार्थसं-ख्याभिधायित्वेन लोपापत्तेस्तदवस्थत्वमिति ; नचैतच्छब्दसाहचर्यात्तच्छब्दानन्तरस्यापि परस्यैव ग्रहणेन न दोष इति वाच्यम्, तथा सति परशब्दस्यैवाध्याहारस्य फलिततया 'एतत्तदोः' इति षष्ठयाः पञ्चम्यर्थं लक्षणापत्तेः, अनन्तरशब्दाध्याहारे उत्तरत्वस्य कथमप्यलाभाच्च। एतच्छब्दसाहचर्यस्य तत्राविनिगम-कत्वात्, परम एष ददाति इति प्रयोगे पूर्वस्यापि दर्शनात् ;—इति चेत्? न, एतत्तच्छार्थतावच्छेदका-

अरम् । सः अस्मै इति च्छेदः ।

इति स्वादिसन्धिः ॥

## इति पञ्चसन्धिप्रकरणम् ॥

---

### शब्दरत्नम् ।

गाव"इत्यादाविवात्रापि प्रातिशाख्येन सिद्धेः । एवञ्चावधारणपरतया न व्याख्येयम् , "सोऽहमाजन्म–" इत्यादौ बहुलग्रहणेन क्वचिदप्रवृत्त्या ऽपि सिद्धेरिति तात्पर्यम् ॥

इति भट्टोजिदीक्षितपौत्रहरिदीक्षितकृते मनोरमाव्याख्याने लघुशब्दरत्ने

## पञ्चसन्धिप्रकरणम् ॥

### भैरवी ।

"अव्यादवद्यादवक्रमुरव्रतायमवस्युषु च" इति सूत्रप्राप्तस्य प्रकृतिभावस्याभाववदित्यर्थः । केचित्तु "सोऽहमाजन्म" इत्यादिसिद्ध्यर्थमवधारणपरतया व्याख्याने "सास्माअर" मित्यत्र सुलोपानापत्तिः । यदि बहुलग्रहणानुवृत्त्यैव तत्साध्यते, तदा तेनैव 'सोहमाजन्म' इत्यादेरपि सिद्धाववधारणपरतया व्याख्यानस्य वैयर्थ्यमित्याहुः । तन्न । छन्दस्यभावदर्शनेन लौकिके प्रयोगे शास्त्राप्रवृत्तिकल्पनमन्याय्यमित्याशयात् । किञ्च लोके लोपे सत्येव पादपूरणे लोपो भवति नान्यत्रेत्यर्थस्य स्पष्टप्रतिपत्त्यर्थमत्रावधारणपरतया व्याख्यानं प्राचामनुरोधेन कृतम् । वस्तुतो बहुलग्रहणेनैव सर्वेष्टसिद्धाववधारणपरतया व्याख्यानन्न कार्यमित्याह–एवञ्चेति । बहुलग्रहणेनोक्तप्रयोगसाधने चेत्यर्थः । अस्य तात्पर्यमित्यत्रान्वयः । सिद्धेरिति । लोपाभावस्य सो ऽहमाजन्मेत्यादौ सिद्धेरित्यर्थः । तात्पर्यमिति । अत एवेति वदतो मूलकृत इति शेषः ।

### भावप्रकाशः ।

प्रातिशाख्येनेति । न च सोऽयमागादित्यस्य तत्र पाठेऽप्यस्यापाठात्सूत्राभावाच्च कथमेतदिति वाच्यम् । तथाभीष्टत्वे प्रातिशाख्योक्तेतिशब्देनास्य संग्रहात् पठनीयत्वाद्वा न दोष इत्याशयात् । अत एव प्रातिशाख्यानुरोधेनास्यात्राप्रवृत्तिरिति मूले उत्तरत्र स्पष्टत्वादिति मान्योक्तिः संगच्छते । यत्तु यत्तु खण्डनकृद्दण्ड्यादयः सोऽहमाजन्मेत्यादिसिद्ध्यर्थमवधारणपरतया व्याख्याने सास्माअरमित्यादौ सुलोपानापत्तिः बहुलग्रहणानुवृत्त्या तदुपपादने तु सोऽहमाजन्मेत्याद्येव तयोपपाद्यतां किमवधारणेनेति । तन्न, छन्दस्यभावदर्शनेन लक्षणानां क्वचित्कत्वकल्पनायाः क्वाप्यदृष्टत्वात् । लोके लोपे सत्येव पादपूरणे लोपो नान्यत्रेत्येवंनियतशास्त्रार्थनियमस्यावश्यकत्वाच्चेति मान्यास्तत्प्राचामनुरोधेन । चतुर्विधं बाहुलकमित्यभियुक्तोक्त्या बाहुलकस्थले तथार्थाङ्गीकारात् पादस्य द्विविधस्याप्यत्र ग्रहणेनाविशेषाच्च, नियतशास्त्रार्थत्वस्यापि मन्मते सिद्धेश्च । तद्ध्वनयन्नाह–एवञ्चेति । बहुलग्रहणेनोक्तप्रयोगसाधने चेत्यर्थः । तात्पर्यमित्यत्रान्वयः । अपिरवधारणसमुच्चायकः । यद्वा सजन्मेत्यादावित्यस्याग्रयोज्यः । सिद्धेरिति । लोपाभावसिद्धेरित्यर्थः । तात्पर्य-

### सरला ।

वच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकसोर्लोप इत्यर्थस्य विवक्षणेन परमपदोत्तरसुप्रत्ययार्थैकत्वनिष्ठप्रकारतानिरूपितधर्मिताया तच्छन्दार्थतावच्छेदक–बुद्धिविशेषविषयत्वावच्छिन्नत्वाभावेनादोषात् । नन्वेवमपि 'तत्कल्पम्' इत्यत्र कल्पबन्तोत्तरसुप्रत्ययस्य तच्छब्दार्थताच्छेदकबुद्धिविशेषविषयत्वावच्छिन्नधर्मितानिरूपितैकत्वसंख्याप्रयोजकत्वेन सुलोपापत्तिरिति वाच्यम् , स्वार्थतावच्छेदकाच्छिन्नधर्मितानि-

भैरवी ।

एवञ्च परममूलम्प्राचामनुरोधेनैतदेव ध्वनयितुं तत्र सत्येवेत्यवधारणन्त्विति 'तु' शब्दोऽरु-चिकबोधकउपात्त इति बोध्यम् ।

इति श्रीमदगस्त्यकुलवंशावतंससर्वपण्डितसार्वभौमभवदेव-
मिश्रात्मजभैरवमिश्रकल्पितायां रत्नप्रकाशिकायां
पञ्चसन्धिविवरणं समाप्तम् ॥

---

भावप्रकाश

मिति । अत एवेत्यादिवदतो मूलकृत इतिभावः । एवं च तथा परममूलं प्राचामनुसारेण । अत एवारु-चिसूचकस्तुः प्रयुक्तो ऽवधारणं त्विवीति तात्पर्यम् ।

इति स्वादिसन्धिः ।

इति श्रीमत्पायगुंडोपाख्यमहादेवसुतवैणीगर्भजवैद्यनाथकृते भावप्रकाशे लघुशब्द-
रत्नव्याख्याने पञ्चसन्धिप्रकरणं परिपूर्णम् ।

---

सरला

रूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वं, स्वाच्यवहितत्वमेतदुभयसम्बन्धेन एतत्तद्विशिष्टसोर्लोप इत्यर्थस्य विवक्षणेन 'तत्कल्पम्' इत्यत्र प्रथमसम्बन्धसत्त्वेऽपि द्वितीयसम्बन्धस्याभावेनोक्तदोषाभावादिति दिक् ।

इति स्वादिसन्धिप्रकरणम् ।

---

सर्वविधपुस्तकप्राप्तिस्थानम्-
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलास प्रेस, बनारस सिटी ।

# अथाजन्तपुँल्लिङ्गप्रकरणम् ।

**अर्थवदधातुः ॥** प्रत्ययं प्रत्ययान्तं चेति । सूत्रे तन्त्रादिना उभयं विवक्षितमिति भावः । तथा हि, प्रत्ययस्यैव पर्युदासे "कृत्तद्धित" इति सूत्रेण तद्धितान्तस्य संज्ञाविधानं व्यर्थं स्यात् । न च तत्रापि तदन्तं न ग्राह्यमिति वाच्यम् ।

शब्दरत्नम् ।

## अथाजन्तपुँल्लिङ्गप्रकरणम् ॥

**व्यर्थं स्यादिति ।** न च 'अस्यापत्यम्–इः' इत्यादौ प्रत्ययत्वप्रयुक्तनिषेधबाधनेन

भैरवी ।

## अथाजन्तपुँल्लिङ्गप्रकरणम् ।

सूत्रे तन्त्रादिनेति । सकृदुच्चरितः शब्दो ऽनेकार्थपरो यत्र तत्र तन्त्रेति व्यवहारः । उभयम्—प्रत्ययपदम्प्रत्ययपरं प्रत्ययान्तपरमित्येतदुभयम् । तद्धितान्तस्येति । कृद्ग्रहणन्तु लिडित्यादौ धातुपर्युदासात्प्रातिपदिकसंज्ञासिद्धये आवश्यकमिति भावः । नचात्रापि लिह क्विबित्यवस्थायां जातायाः संज्ञाया एकदेशविकृतन्यायेन लिह इत्यत्र सौलभ्यमिति वाच्यम्, फलाभावेन तदानीमप्रवृत्तेः । परत्वान्नित्यत्वादन्तरङ्गत्वाच्चापृक्तलोपस्य प्राक् प्राप्तेश्च । वस्तुत इदन्तद्धितग्रहणमत्र नियमार्थं, कृद्ग्रहणन्तु प्रतिषिद्धार्थम्भिद् छिदित्यत्र निषेधस्य प्रसङ्गादिति कैयटेनोक्तं 'कृत्तद्धितग्रहणं नियमार्थम्' इति भाष्यव्याख्यावसर इति तदनुरोधेन यथोद्देशपक्षाश्रयणे तु कृद्ग्रहणमपि तदन्तप्रतिषेधे ज्ञापकमेव । इत्यादाविति । आदिना अधुनेत्यस्य सङ्ग्रहः । अस-

भावप्रकाश ।

श्रीगणेशाय नमः । मूले तद्धितान्तस्येति । कृद्ग्रहणं तु लिडादावधातुरिति निषेधबाधार्थम् । न च लिह् क्विबित्यत्र प्रवृत्तसंज्ञाया एकदेशेति न्यायेन तत्र सौलभ्यमिति वाच्यम् । फलाभावेन तत्रैवाप्रवृत्तेः, परत्वादन्तरङ्गत्वान्नित्यत्वाच्चापृक्तलोपस्य प्राक् प्रवृत्तेश्च । अत एव "कृत्तद्धितग्रहणं नियमार्थम्" इति भाष्ये "तद्धितग्रहणमत्र नियमार्थं कृद्ग्रहणं तु प्रतिषिद्धार्थं भिद्छिदिति अत्र ह्यधातुरिति निषेधप्रसङ्गः" इत्यत्रैव कैयट इति मान्याः । परे तु मूलमुपलक्षणं, यथोद्देशे त्वदुक्तरीत्येष्टसिद्ध्या तस्यापि व्यर्थत्वात् । इः, इयानित्यादेः पक्षद्वये सिद्धान्ते सिद्धावप्यत्र मते तल्लक्ष्यानुरोधेन तत्रेवात्रापि यथोद्देशस्यैवाश्रयणात् । एतेन कार्यकाले दोष इत्यपास्तम्; तद्धितांशेऽपि तथात्वापत्तेश्च । आरोपितप्रशस्तार्थकत्वं तु क्विब्लोपे च समम् । परत्वादिकमपि दुर्वचम् । अधातुग्रहणप्रत्याख्यानेन यौगपद्यासम्भवाभावात्, त्रिष्वपि तदसम्भवस्यैव बीजत्वात्, संज्ञातुल्यनिमित्तकत्वेन तस्यानन्तरङ्गत्वाच्च, संज्ञाया अपि यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमिति न्यायेनाधातुग्रहणप्रत्याख्यानेन वा नित्यत्वाच्च, आकडाराधिकारीयत्वाभावेन चेत्त्वादिसमप्रवृत्तौ तदप्रवृत्तेश्च । अत एव "अप्रत्यय इति शुत्यजम् । इह कस्मान्न भवति काण्डे कुड्ये इति? कृत्तद्धितग्रहणं नियमार्थं भविष्यति" इति भाष्यं सङ्गच्छते । धातोः प्रत्ययान्तस्य चेत् कृत्तद्धितान्तस्यैवेति नियमेनाप्रत्ययपदं प्रत्याचक्षाणेनाधातुग्रहणप्रत्याख्यानमपि ध्वनितम् । तद्धितस्य बाधाद्धात्वंशेऽसम्बन्धः, कृदंशस्य तूभयत्रेति न कोऽपि दोष इति तदाकूतम् । एवं च प्रागुक्तात्रत्यकैयटश्चिन्त्य एव । किं च कृद्ग्रहणस्य विध्यर्थत्वे मध्येऽपवादन्यायेनाधातोरित्यस्यैव प्रतिप्रसवः स्यात्, न 'प्रत्ययान्तस्य चेत्तद्धितान्तस्यैव' इति नियमस्य, तथा च पाचककारकादौ तत्त्वानापत्तिः । अथ 'अनन्तर' इति 'येनना' इति च न्याययोः प्रसरस्तर्हि वैपरीत्यापत्त्या त्वदुक्तार्थक्षतिरेव । न च परत्वात्तस्यापि बाधः । निषेधाश्च बलीयांस इति न्यायविरोधापत्तेः । अथ बाध्यसामान्यचिन्ताश्रयणं तर्हि समासनियमस्यापि बाधापत्त्या मूलकेनोपदंशमित्यादावनिष्टापत्तिः स्पष्टैव । सिद्धान्ते त्वधात्वप्रत्ययपदाभावेन कृत्तद्धितेति सम्पूर्णसूत्रस्य नियमार्थत्वेऽपि परत्वात्समासनियमेन तत्र वारणमितिमूले एव स्पष्टमित्याहुः । तद् ध्वनयितुं कृदंशमुपेक्ष्य मूलं द्रढयति—**नचास्येति ।**

सरला ।

मूले—न ग्राह्यमिति । एवञ्च केवलतद्धितप्रत्ययस्य 'अप्रत्ययः' इति पर्युदासेन पूर्वसूत्रस्याप्रवृत्त्या-

'अथवत्' इत्यनुवृत्तिसामर्थ्यात्तदन्तग्रहणात्। प्रशंसायां हि मतुप्। एकार्थी-

**शब्दरत्नम्।**

तच्चरितार्थम्। अ अस् इ इत्यवस्थायां प्रवृत्तसंज्ञाया एकदेशविकृतन्यायेन सुलभत्वात्। एकार्थीभावेनेति। न चैतत्प्रत्ययमात्रस्य, तन्मात्रे एकार्थीभावाभावादिति भावः।

**भैरवी।**

हायतया व्यपदेशिवद्भावेनास्य तद्धितान्तत्वम्, कृत्तद्धितेति तु साजात्याल्लब्धम्। इत्यवस्थायामिति। तदा तादृशसमुदायस्य प्रत्ययभिन्नतया तद्धितग्रहणं विनापीष्टसिद्धेः। वस्तुतोऽत्र सूत्रेऽधातुग्रहणमप्रत्ययग्रहणञ्च न कार्यम्, कृत्तद्धितग्रहणन्तु धातोः प्रत्ययान्तस्य चेत्कृत्तद्धितान्तस्यैवेति नियमार्थन्तेनेष्टसिद्धेरिति। एकदेशविकृतन्यायेनेति। शास्त्रीयेन स्थानिवद्भावेनेत्यर्थः।

नचेति। नहीत्यर्थः। एतत्—प्रशस्तार्थवत्त्वम्। प्रत्ययमात्रस्य—केवलकृत्तद्धितमात्रस्य। एतच्च तत्र तदन्तविधिलाभार्थमुपात्तम्। नियमार्थन्तयोरुपादानमिति कल्पनायान्तु न प्रशस्तार्थवद्विषयको नियमः, किन्तु वृत्त्याऽर्थबोधकत्वमर्थवत्त्वमेव पूर्वसूत्रे धातुप्रत्ययपर्युदासाद्विवक्षितं तादृशार्थवद्विषयक एव। अत एव भाष्ये—"अप्रत्यय इति किम्? काण्डे कुड्ये, अप्रत्यय इति शक्यमवक्तुम्, कस्मान्न भवति काण्डे कुड्ये इति? कृत्तद्धितग्रहणं नियमार्थम्भविष्यति कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा भवति नान्यस्य" इति नियमप्रदर्शनेनाप्रत्ययग्रहणप्रत्याख्यानं सङ्गच्छते। तन्मात्रे—प्रत्ययमात्रे। भावाभावादिति। अर्थवद्द्वितीयाभावादिति शेषः। यत्तु 'वागृषदप्रियः' इत्यादौ तद्धितान्तस्य प्रातिपदिकत्वापत्तिमुद्भाव्य सुप्प्राग्वर्तितद्धितान्तमात्रस्याप्रयोगेण प्रशस्तार्थवत्त्वाभावान्न दोष इति समाधानं, तत् तु न युक्तम्। सुप्प्रकृतिमात्र-

**भावप्रकाशः।**

आदिना अधुनेत्यादिसंग्रहः। चरितार्थमिति। असहायतया व्यपदेशिवद्भावेन तद्धितान्तत्वात्, तदन्तापर्युदासेऽफलत्वेनातदन्तविधावपि केवलस्यारोपितार्थवत्त्वाद्वेति भावः। कार्यकाले चेदम्। पक्षान्तरैरपीति न्यायेन यथोद्देशे समाधत्ते—अअसीति। प्रवृत्तेति। सुबलुगर्थमिति भावः। एकदेशेति। स्थानिवद्भावोपलक्षणमेतत्, अर्धन्यूनाविकारेण तत्प्रवृत्तेः। नचैतदिति। नहिप्रशस्तार्थवत्त्वमित्यर्थः। प्रत्ययमात्रस्य। केवलप्रत्ययस्य। एवमग्रेऽपि। यद्यप्येकार्थीभावेनेत्याद्युक्तमर्थवत्त्वं मूलकृत उत्तरसूत्रेऽभिमतं पूर्वोत्तरग्रन्थसन्दर्भानुरोधात्, कौस्तुभेन तथा स्पष्टमुक्तेश्च। अत्र तु पर्युदासबललभ्यं तत्सर्वमिष्टम्। धातुप्रत्यययोरहन् व्यतिसेऽधीते यावक इत्यादौ द्विविधार्थवत्त्वस्य दर्शनात्। अत एवार्थवत्सूत्रेऽर्थवत्त्वं सर्वं गृह्यते इति कौस्तुभे पितामहचरणा इति मान्योक्तिः सङ्गच्छते। एवं च प्रत्ययपर्युदासोपपत्तावपि नचैतत्कृत्तद्धितमात्रस्य इत्याद्युक्तिरयुक्ता तथापि कुरादिदृष्टान्तेनान्यप्रत्ययेष्वपि तथास्तीति वैषम्येण प्रवृत्तमूलस्य साम्येन प्रवृत्तिरुचितेति प्रत्ययपर्युदासाङ्गीकारस्ते वृथैवेति ध्वनयितुं तथोक्तिः। स्फुटीभविष्यति चैतद्वस्तुतस्त्वित्यादिना। भावाभावादिति। अर्थवद्द्वितीयाभावादिति भावः। अत्र मान्याः—'सुप्प्राग्वर्त्तितद्धितान्तमात्रस्याप्रयोगेण प्रशस्तार्थवत्त्वाभावाद्वाकृषदप्रिय इत्यादौ तद्धितान्तत्वात्प्रातिपदिकत्वं न' इति। तत्प्रा-

**सरला।**

ऽप्राप्ततत्संज्ञाविधानमावश्यकमिति तदाशयः। अनुवृत्तिसामर्थ्यादिति। केवलप्रत्ययस्य 'प्रत्ययः' इति महासंज्ञया सर्वत्र शास्त्रीयार्थवत्त्वस्यैव सत्त्वेन कृत्तद्धितसूत्रेऽर्थवत्पदानुवृत्तिर्व्यर्थेति तत्सामर्थ्यात् तदन्तविधिरिति। एवञ्चात्रानुवृत्तमर्थवत्पदं विशेष्यं कृत्तद्धितपदं च विशेषणं, तथाच तदन्तविधिः। "संज्ञाविधौ प्रत्ययग्रहणे न तदन्तग्रहणम्" इति परिभाषायास्तु न प्रवृत्तिः संज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यताप्रयोजक—प्रत्ययमात्रवृत्तिविषयताप्रयोजक—पदं तदादिविशेष्यकतदन्तविधिप्रयोजकं नेत्यर्थकतयाऽत्र कृत्तद्धितपदस्य साक्षादुद्देश्यताप्रयोजकत्वाभावेन तदप्राप्तेरिति भावः। प्रवृत्तसंज्ञाया इति। तत्र प्रत्ययभिन्नत्वसत्त्वेन "अर्थवद्" इति सूत्रेणेति शेषः। एकदेशविकृतन्यायेनेति। आनुमानिकस्था-

भावेन लौकिके प्रयोगे प्रसिद्धत्वं च प्रशंसामूलम्। न च 'अर्थवत्' इत्यस्य

### शब्दरत्नम् ।

एकार्थीभावश्च–यस्य प्रातिपदिकसंज्ञा चिकीर्षिता तन्मात्रवृत्तिरेव ग्राह्यः। तेन 'पञ्चनावप्रियः' इति समासघटकपञ्चनावेत्यस्य तद्धितान्तत्वसमासत्वयोरपि न प्रातिपदिकत्वम्।

### भैरवी ।

स्य कृत्तद्धितान्तस्य क्वापि प्रयोगस्यादर्शनेनासम्भवापत्तेः। यदि त्वर्थबोधकवृत्तिप्रकृतिकसुबन्तसमुदायघटकत्वमित्यर्थस्तदा 'वाग्दृषदप्रियः' इत्यादावप्यस्त्येव तदित्यतिप्रसङ्गवारणासम्भवः 'कृत्तद्धितमात्रेऽपि भवदुक्तस्यार्थबोधकवृत्तिप्रकृतिकसुबन्तसमुदायघटकत्वस्य सत्त्वेनैतादृशार्थकरणेऽपि तदन्तग्रहणालाभश्च स्यात्। वाग्दृषदमिति समाहारे टजन्तस्य प्रयोगदर्शनाच्च। काल्पनिकस्य तस्याविशिष्टत्वाच्चेति। तन्मात्रवृत्तिरेवेति। प्राशस्त्यार्थकमतुप्प्रत्ययबलादेतल्लभ्यते। तद्धितान्तत्वेति। समासान्तानामलौकिकविग्रहवाक्यावयवत्वसिद्धान्तेन टजन्तस्य तद्धितान्तत्वस्य समाससंज्ञाप्युत्तरपदनिमित्तिकाऽस्तीति समासत्वस्य च सत्त्वमिति भावः। एतेन समासग्रहणकृतनियमेनाव्यावृत्तिः सूचिता।

नचैकार्थीभावोऽर्थवद्‌द्वितीयसत्त्व एव, प्रकृते तु टचो निरर्थकतया कथन्तदन्ते एकार्थीभावस्य सत्त्वमिति वाच्यम्, तस्यानर्थकत्वेऽपि तत्प्रकृतेरर्थवत्त्वेन तत्रैकार्थीभावस्य सत्त्वेन टचस्तादृशसमुदायावयवत्वात्तत्राप्येकार्थीभावस्य सत्त्वमित्याशयात्। अत एव बहुगोमत्केत्यादावपि कबन्ते एकार्थीभावव्यवहारः। नचार्थवद्‌द्वितीयसत्त्व एव चेदेकार्थीभावव्यवहारस्तदाऽत्यन्तस्वार्थिककान्ते कथमेकार्थीभावव्यवहार इति वाच्यम्, तस्यार्थवत्तद्धितान्ततुल्यतया आरोपेण तन्मात्रेऽप्येकार्थीभावस्य व्यवहारात्। न प्रातिपदिकत्वमिति। अतस्तादृशटजन्तान्न टाप्। यदि तु यस्य समुदायस्य टिदन्तत्वन्तदर्थम्प्रत्युपसर्जनत्व एव ङीपो ऽप्रवृत्तिरित्याश्रीयते तदा ङीबापत्तिरपि दोषः। एतेन 'अधातुरतिप्प्रातिपदिकम्' तिबिति सुपः पकारेण

### भावप्रकाश।

चामनुरोधेन, ईदृशार्थवत्त्वस्य सुप्प्रकृतौ तद्धितान्ते क्वाप्यसम्भवेनानिष्टापत्तेः, कृदादीनामर्थवत्त्वाव्यभिचारात्तद्विशेषणसामर्थ्यादन्यस्यासम्भवेन कृदादिप्रत्ययार्थापेक्षया तदन्तबोध्यस्य प्रशस्तपारमार्थिकवाक्यार्थप्रत्यासन्नत्वेन प्राशस्त्येन ग्रहणेऽप्यत्र तत्तुल्यत्वसम्भवाच्च वाग्दृषदमिति समाहारे प्रयोगसत्त्वेन तस्यौपगवादितुल्यत्वाच्च, काल्पनिकस्य तस्याविशिष्टत्वाच्च। तदेतद्ध्वनयितुमन्यथा व्याचष्टे–**एकार्थीभावश्चेति**। **तन्मात्रवृत्तिरेवेति**। प्राशस्त्यार्थकमतुब्बलादिति भावः। **तद्धितान्तत्वेति**। समासान्तानामलौकिकप्रक्रियावाक्यावयवत्वमिति सिद्धान्तेन विशिष्टस्य तद्धितान्तत्वं तद्वाक्यस्य समाससंज्ञया तद्ग्रहणेन तदवयवटजन्तस्य ग्रहणात्समासत्वं च। अत एव पञ्चेत्यस्य नावित्यस्य वा पूर्वभागत्वेप्यग्रे तादृशप्रत्ययाभावेऽपि न समासनियमव्यावर्त्यता पञ्चनावित्यस्य तत्त्वे त्वग्रे तत्सत्त्वाद्व्यावर्त्यकुक्षिप्रवेश एव न। न च टचो निरर्थकतया कथमर्थवदुभयहेतुकतत्संज्ञापत्तिरिति वाच्यम्। तस्यानर्थक्येऽपि तत्प्रकृतेस्तत्त्वेन समासत्वात्तस्य तादृशार्थवदवयवत्वेन तदन्तस्यापि तत्त्वेन ग्रहणात्, लोके तद्धितं विनाऽप्रयोगेण तन्मात्रात्तदर्थाप्रतीत्या वाक्यनिष्ठस्य तस्य तत्रारोपावश्यकत्वाच्च। अत एव बहुगोमत्केत्यादावत्यन्तस्वार्थिककान्ते च प्रातिपदिकत्वम्। अत्यन्तस्वार्थिकानां समासान्तानां चारोपितप्रकृत्यर्थेनार्थवत्त्वं भाष्येप्युक्तम्। अत एव च तत्र एकार्थीभावव्यवहारः, नतु समर्थपरिभाषालभ्यस्तेषां वस्तुतोऽनर्थकतया तद्विधौ 'सुबन्तात्तद्धितः' इति न्यायोनेति सिद्धान्तेनापदविधित्वात्। एवं यावक इत्यादावपि तत्तद्भाष्यप्रामाण्यात् प्रकृतिप्रत्ययार्थयोरन्योन्यमात्रान्वयित्वेन तद्व्यवहारो न तु तयेति दिक्। **न प्रातीति**। नन्विष्टापत्तिः टजन्तस्योपसर्जनतया ङि-

### सरला।

न्यादेशभावमादाय 'अ अस् इ' इत्यत्र प्रवृत्तायाः प्रातिपदिकसंज्ञायाः स्थानिवद्भावेन 'इ' प्रत्ययमात्रेऽतिदेशादिति। लौकिकन्यायस्य तु नात्र प्रवृत्तिरर्थाधिकविकारादिरयर्थः। **न प्रातिपदिकत्वमिति**।

पूर्वसूत्रे चरितार्थता। धातुप्रत्ययपर्युदासेनैव तल्लाभात्। तस्मात्प्रत्ययान्तं च वर्जयित्वेत्युचितमेव।

भैरवी।

प्रत्याहारः, तन्त्रेण तिपन्तिबन्तञ्च वर्जयित्वेत्यर्थः। समासश्चेति द्वितीयं सूत्रम्, यद्वा 'अविभक्ति प्रातिपदिकम्, समासश्च' इत्येवास्त्विति परास्तम्। उक्तदोषापत्तेः। किञ्च तिप्प्रत्याहार आद्यन्यासे प्रत्यासत्त्या सिपः पकारेण गृह्येतेति थसाद्यन्तेऽतिव्याप्तिः। व्याप्तिन्यायश्चेद्विवक्षितस्तदा कपः पकारेण तदापत्तिः। एवञ्च टाबादिकबन्तानामप्रातिपदिकत्वाय तद्धितस्त्रीप्रत्ययग्रहणञ्चार्थम्। टापष्टाशब्दमारभ्य कपः पकारेण प्रत्याहारेण टाब्ग्रहणं वा कार्यमिति गौरवम्। वक्ष्यमाणरीत्या दश दाडिमानीत्यादिसमुदायस्य व्यावृत्तये ऽर्थवद्ग्रहणस्यावश्यकत्वाच्च। किञ्चाहन्नित्यस्य वक्ष्यमाणरीत्याऽतिबन्तत्वेन तत्र नलोपापत्तिवारणायाधातुग्रहणमप्यावश्यकम्।

केचित्तु "वृत्तिमदर्थवत् प्रातिपदिकम्" इत्येव लक्षणं कार्यम्। एवञ्च सूत्रद्वयाकरणेन लाघवम्। अर्थवदित्यत्र भवदुक्तम्प्रशस्तार्थवत्त्वं विवक्षितमतो न 'पञ्चनावप्रियः' इत्यादौ दोषः। नचाव्युत्पन्नानां प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्, सर्वत्र प्रकृत्यादिकल्पनेन व्युत्पन्नत्वस्यैव कल्पनात्। यद्यपि पचतकीत्यादिभ्य एवं सति सुबुत्पत्तिः प्राप्नोति तथाप्येतादृशानां नपुंसकत्वाभ्युपगमेन सुपां लुका सिद्धम्। नचैवमेधतके इत्यादौ नपुंसकह्रस्वापत्तिरिति वाच्यम्, 'सप्तम्यधिकरणे च' इति ज्ञापकेन विभक्त्यन्तप्रातिपदिकस्य ह्रस्वत्वाभावज्ञापनात्। "सुपो धातु" इति सूत्रे प्रातिपदिकपदोपादानमात्रेण सिद्धे धातुग्रहणेन धात्वर्थविशेष्यकवृत्तौ प्रातिपदिकत्वाभावस्य ज्ञापनाद्वा। न चैवम्पचतिकल्पमित्यादौ प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्, धात्वधिकारीयप्रत्ययान्तवृत्तौ प्रातिपदिकत्वाभावस्य ज्ञापनात्। 'भोक्तुं पाकः' इत्यादौ धात्वधिकारीयप्रत्ययसत्त्वेऽपि धात्वर्थविशेष्यकबोधाजनकतया न

भावप्रकाश।

गौरित्यप्राप्तेः वृत्तावसंख्याभानेन सुबप्राप्तेश्च चित्त्वादन्तोदात्तत्वसिद्ध्या फिट्स्वराप्रवृत्तेश्च। प्रकृतिप्रत्ययविभागशून्येऽपि तत्प्रवृत्तेश्चेति चेत्? न, अजाद्यत इति टाप्प्रसङ्गात्। ह्रस्वस्तु यथा न तथा मूले एव स्पष्टम्। एतेन "अधातुरतिप् प्रातिपदिकं कृत्समासश्च" इत्येव कार्यं तिपस्तिशब्दादारभ्य सुपः पकारेण प्रत्याहारः, तन्त्रादिना तिपं तिबन्तं च विहायेत्यर्थः, यद्वा 'अतिप्प्रातिपदिकं समासश्च' इत्येव कार्यम्, यद्वा 'अविभक्तिरधातुः प्रातिपदिकं कृत्समासश्च' इत्येवास्तु, यद्वा 'अविभक्ति प्रातिपदिकं समासश्च' इत्येवास्त्वित्यपास्तम्। किञ्चाद्ययोः प्रत्यासत्तिन्यायेन सिपःपकारेण तदापत्तेश्च। एवं च टाबादिकबन्तान्तानां तदप्राप्त्या तद्धितस्त्रीप्रत्यययोर्ग्रहणं कार्यम्, टापष्टाशब्दादारभ्य कपः पकारेण प्रत्याहारेण टाप्ग्रहणं वा कार्यमिति गौरवम्। न च लिङ्गविशिष्टपरिभाषया सिद्धे न स्त्रीप्रत्ययोपयोग इति वाच्यम्। राजखट्वा राजकुमारीत्याद्यर्थं तस्यावश्यकत्वात्। स्पष्टं चेदमग्रे टीकायाम्। यदि तु टीकोक्तरीत्या समुदायस्यातिबन्तत्वात् प्रातिपदिकत्वसिद्धिरित्युच्यते तर्हि तद्धितग्रहणमेव कार्यं न स्त्रीप्रत्ययग्रहणमिति बोध्यम्। एतेन 'अर्थवदतिप्प्रातिपदिकं समासश्च' इत्येवास्त्वित्यपास्तम्। तदन्ययोः सर्वत इत्यादौ प्राग्दिशीयविभक्त्यन्तेऽव्याप्त्यापत्तेश्च, सर्वपक्षेऽन्यार्थमर्थवद्ग्रहणावश्यकतया तदनुक्त्या न्यूनतापाताच्च। यद्यपि अर्थवद्ग्रहणेन न्यूनतादोषाभावेन तद्धितग्रहणेन सर्वत इत्यादावदोषेण चान्त्यपक्षो निर्दुष्टो लघुभूतश्च तथाप्यपाणिनीयत्वमिति दिक्। यत्तु "कृदादिपारिभाषिकपञ्चवृत्तिमत्त्वमर्थवत्त्वम्। अर्थवत्प्रातिपदिकमित्येव कार्यम्, अन्यत्सर्वं सुत्यजमिति महल्लाघवम्। नच पञ्चनावप्रिय इत्यादौ पञ्चनावेत्यत्र वृत्तिसत्त्वात्संज्ञापत्तिः। प्राशस्त्यार्थकमतुपा एकार्थीभावानन्तर्गतवृत्तेरेव तत्र ग्रहणात्। अन्यथा यथान्य।सेऽपि तस्या दुर्वारत्वात्, तत्र तदंशस्य वृत्तिसत्त्वेनार्थवत्त्वात्। पचतकीत्यादौ तद्धितवृत्तिमत्त्वात्संज्ञया सुबुत्पत्तावपि

सरला।

तथाहि सति पञ्चनावशब्दाट्टाबापत्तिः। पुंवद्भावस्तु न 'अप्रियादिषु' इति निषेधात्। नच टिदन्तत्वात् ङीबापत्तिरितिवाच्यम्, पदार्थान्तरनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वमुपसर्जनत्वमिति बहुव्रीह्य-

भैरवी ।

**क्षतिः । सर्वत्र व्युत्पत्तिपक्षस्यवाङ्गीकारेण "निपातस्यानर्थकस्य" इति वार्तिकमपि न स्वीकार्य-मित्याहुः । तन्न, वृत्तिपदस्य कृदन्तादिबोधकतया तद्वत्त्वस्य तत्र वक्तुमशक्यत्वात् । किञ्चैको द्वौ बहव इत्यादाविवानन्वितार्थकविभक्तिकल्पनापेक्षया ऽनुवादकविभक्तेर्न्याय्यतया पचतकः पचन्तकीत्यादिभ्यो द्विवचनबहुवचनयोरेवोत्पत्त्या लुका तयोरपहारासम्भवेन श्रवणापत्तेः । किञ्च विभक्त्यर्थप्रधानस्य लिङ्गसंख्याभ्यां योगो नास्तीत्यस्य भाष्यसम्मतत्वेन पचतकीत्या-दिभ्यः परस्य सोर्लुकापहारस्य वक्तुमशक्यत्वाच्च । किञ्च सप्तम्यधिकरणे चेति निर्देशेन सामा-**

भावप्रकाश ।

स्वमोरिति लुका न क्षतिः । नन्वेवमेवतके इत्यादौ "ह्रस्वो नपुंसके" इति ह्रस्वापत्तिः । "सप्तम्यधिकरणे च" इत्यनेन तदभावस्य ज्ञापनात् । यद्वा सुपोधात्वित्यत्रान्त्यग्रहणेनैव सिद्धे धातुग्रहणेन धात्वर्थविशेष्यकवृत्तौ तदभावज्ञापनात् । नच पचतिकल्पमित्यादौ संज्ञानापत्तिः । ज्ञापकस्य सजातीयतया धात्वधिकारी-यप्रत्ययान्ते धात्वर्थविशेष्यकवृत्तावेव तदभावस्य विवक्षितत्वात् । कल्पवादिस्तु न धात्वधिकारीय इति न तत्राव्याप्तिः । ननु भोक्तुं पाक इत्यत्र धात्वधिकारीयप्रत्ययोऽस्तीति चेत्—किं ततः, प्रत्ययार्थविशेष्यत्वेन धात्वर्थविशेष्यत्वाभावात्, अव्ययत्वाद्वा । नन्वेवं वृत्तिरहितनिपातादीनां संज्ञा न स्यादिति चेन्न । व्युत्पत्तिपक्षे तत्रापि प्रकृत्यादिकल्पनया वृत्तिसत्त्वात् । एवंचाव्युत्पत्तिपक्षो न स्वीकार्यः । जातिव्यक्तिपक्ष-वल्लक्ष्यानुरोधाद्व्यवस्था वाऽश्रयणीया । नन्वेवं गवित्ययमाहेत्यादावपि वृत्तिसत्त्वात्संज्ञापत्तिरिति चेन्न । इति पदसमभिव्याहारे वृत्तिप्रयुक्तकार्याभावबोधनात् । भाष्याद्यनुक्तत्वेनात्राप्रामाण्यं तु न, 'उपेयप्रतिपत्त्य-र्थमुपायाः' इति न्यायेन लाघवमूलकस्यैव प्रमाणत्वात् इति मन्दोक्तम्, तन्न । तत्र वृत्तिशब्दस्य कृद-न्तादिशब्दबोधकत्वेन तद्वत्त्वमर्थवत्त्वमित्यस्य दुर्वचत्वात् । अत एव कृदादिरूपाः पञ्च वृत्तय इत्यभियुक्तानां वचनोक्तिः । कार्यकाले राजपुरुषो राजीयतीत्यादौ समासक्यजन्तैकार्थीभावान्तर्गतराजन्रूपकवृत्तिसत्त्वात्प्रा-तिपदिकत्वानापत्तौ नलोपानापत्तेश्च, वाच्यतीत्यादावकृत्वार्थकापदत्वार्थकतया नः क्ये इत्यस्य चारितार्थ्यात् । यथोद्देशेऽपि 'अकृत' परिभाषया 'उपजनिष्य' इति न्यायेन चादावेव तदभावेनोक्तदोषाच्च । सिद्धान्ते गतिस्तु मूले एव स्पष्टा । पचेरकज्ञित्यादावुक्तवैपरीत्यापत्तेश्च, अकजहिते तस्य चारितार्थ्यात् । ऐधतक ऐधिष्टकेत्यादौ लुगपवादतयाऽमो दुर्वारत्वाच्च । एकत्वादीनामुक्ततया स्वाद्यनुत्पत्त्या पचतकीत्यादावदोषाच्च । औत्सर्गिकै-कवचनस्यापि गमके सत्येव जायमानत्वाच्च । अत एव ङ्याप्सूत्रभाष्यसङ्गतिरिति टीकायामेव स्पष्टम् । 'न केवला' इति निषेधस्य गमकतया साधुत्वार्थमौत्सर्गिकैकवचनस्य एकत्वादीनामुक्तत्वेप्येक इत्यादिवत् सर्वविभक्तीनां चोत्पत्तेस्तन्निषेधस्य लिडादौ गवित्याद्यनुकरणे च व्यभिचरितत्वात्साधुत्वस्य स्वत एव सत्त्वाच्च दुर्वचत्वाच्च । किञ्च तदर्थमपि जायमानस्य विरुद्धार्थकविभक्त्यपेक्षया न्याय्यस्यानुवादकस्य पचेतके पचन्तके इत्यादौ द्वौ बहव इत्यादिवद् द्विवचनादेरेव सत्त्वेन स्वद्रीत्या लुकोऽप्राप्त्याऽनिष्टापत्तेः । किञ्च सत्त्वप्रधानस्यैव ह्रस्वार्थे प्रातिपदिकग्रहणं तेन रमते ब्राह्मणकुलमित्यादौ ह्रस्वो नेति भाष्याद्ध्रस्वा-नापत्तेः । किञ्च विभक्त्यर्थप्रधानक्रियाप्रधानयोर्न लिङ्गसंख्याभ्यां योगोऽस्तीति भाष्येण पचतिकल्पं शयि-तव्यं हतशायिकाः शय्यन्ते इत्यादौ सत्त्वेऽपि विचित्रत्वात्पदार्थशक्तीनामन्यत्र नास्तीत्याशयकेनेदृशार्थानां नपुंसकत्वस्य दौर्लभ्यलाभात् । अपि च सप्तम्यधिकरणेचेत्यनेनातिदिष्टे प्रातिपदिकत्वे ह्रस्वाभावो ज्ञाप्यते उतोपदिष्टे ? नाद्यः, एधतके इत्यादौ ह्रस्वापत्तेः । नान्त्यः काण्डे इत्यादौ ह्रस्वापत्तेः । एवं सति निर्देशोपपत्त्यभावेन ज्ञापकत्वासम्भवाच्च । ज्ञापकस्य सामान्यापेक्षत्वे तु तथा सामान्यापेक्षत्वस्यापि सुव-चत्वेन सुबुत्पत्तेरपि तत एव वारणसम्भवेन सप्तम्येत्यादि तदभावस्य ज्ञापनादिति च पूर्वोत्तरग्रन्थविरोधा-पत्तेश्च, तच्छब्देन प्रक्रान्तह्रस्वपरामर्शात् । किञ्च सुबुत्पत्तौ निर्देशासङ्गत्यभावेन तत्सामर्थ्यान्निमित्तांशे एव सामान्यापेक्षत्वं न ज्ञाप्यांशे इत्यस्य प्रतीत्यादौ ह्रस्वानापत्त्या सूत्रवैयर्थ्यापत्त्या च दुर्वचत्वात् । अपि च तेन तुल्यमिति लक्ष्ये 'ब्राह्मणवत्' इत्यादौ "घञः सास्याम्" इति लक्ष्ये च 'तैलंपाता' इत्यादौ "रोगाख्यायाम्" इत्यत्रत्य "धात्वर्थनिर्देशे ण्वुल्" इति वार्तिकलक्ष्ये चासिका शायिकेत्यादौ क्त्वा-तुमुन्-

सरला ।

र्थान्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वेन पञ्चनावेत्यस्योपसर्जनतया 'अनुपसर्जनात्' इति निषेधात् । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

शब्दरत्नम् ।

**प्रियशब्दान्त एव तत्रैकार्थीभावो नतु तन्मात्र इत्यदोषात् । न च क्विबन्ते**

भैरवी ।

**न्यतो विभक्त्यन्तप्रातिपदिकस्य ह्रस्वत्वन्नेति कल्पने ऽन्तरङ्गानपीति न्यायेन प्ररि कुलमित्यादौ पूर्वं सुपो लुकि ह्रस्वत्वानापत्तिः । किञ्च 'पुत्रीयति' इत्यादौ क्यजन्तस्य धातुसञ्ज्ञया सुपो लुग्भवति तस्य धात्वधिकारीयप्रत्ययान्तत्वन्तु नास्तीति धातुग्रहणस्य चारितार्थ्येन ज्ञापकत्वासम्भवः । यदि च वृत्तिमदित्यत्र व्यपदेशिवद्भावेन वृत्तेर्वृत्तिमत्त्वम्मतुपस्त्यागेन वृत्तिरित्येवाश्रीयते तदा प्राथमिकदोषोद्धारेऽपि डिवुभादिशब्दस्याव्युत्पन्नत्वेनैषाम्प्रातिपदिकसञ्ज्ञानापत्तिरिति दिक् ॥**

**तेनेत्यनेनोक्तमर्थं स्पष्टप्रतिपत्तये आह**—प्रियशब्दान्त एवेति । तत्र **पञ्चनावप्रिय इत्यादौ । अयम्प्रियशब्दान्तनिष्ठैकार्थीभाव एवोत्तरपदनिमित्तकद्विगुप्रयोजको, नतु नौशब्दान्ते अन्यस्यकार्थीभावस्य स्वीकारः । वृत्तिधर्माणामेकार्थीभावफलानाम्प्रियशब्दान्तनिष्ठेन तेनैवोपपत्तेरिति भावः । प्रियशब्दान्ते इत्यस्य प्रियशब्दप्रकृतिकसुबन्ते इत्यर्थः ।** अदोषादिति ।

भावप्रकाश ।

णमुलाद्यन्ते च धात्वर्थविशेष्यकवृत्तित्वेन प्रातिपदिकत्वानापत्त्या धातुग्रहणेन तत्र तदभावस्य ज्ञापनादित्यस्य दुर्वचत्वात्, पचतिकल्पमित्यादौ संज्ञानापत्तेश्च। किञ्च क्यजादौ सुबन्तप्रकृतिकत्वेनाधात्वधिकारीयप्रत्ययत्वाद्ज्ञापकात्तथार्थालाभात्साजात्येनेत्यादिना क्रियमाणकल्पबाद्यन्तसिद्धेरसम्बद्धत्वात् धातुग्रहणस्याचारितार्थ्येन ज्ञापकत्वासम्भवाच्च तदानर्थक्यापत्तेश्च। किञ्च तयोः सामानाधिकरण्यमिष्टमुत वैयधिकरण्यम्। अन्त्येऽपि धात्वधिकारीयेत्यस्य प्रागुल्लेखः पश्चाद्वा ? नाद्यः, समनन्तरापिचेत्याद्युक्तासिकेत्यादिदोषगणापत्तेः । न मध्यः, पुत्रीयति पचतकीत्यादौ पचतिकल्पमित्यादौ चेष्टसिद्धावनिष्टाभावेऽपि चासिकेत्यादौ व्यपदेशिवद्भावेन दोषतादवस्थ्यात् । नान्त्यः, पचतिकल्पमित्यादौ दोषतादवस्थ्यात् पुत्रीयतीत्यादौ तिङमादाय तदन्तत्वस्य क्यजादिमादाय तादृशवृत्तित्वस्योपपादनवदत्रापि तिङमादाय तदन्तत्वस्य कल्पबादिमादाय तत्त्वस्य सुवचत्वात् । वस्तुतः पुत्रीयतीत्यादौ क्यजन्तावस्थायां धातुसंज्ञाप्रवृत्त्या तत्र धात्वधिकारीयप्रत्ययान्तत्वस्य कथमपि कस्मिन्नपि मते दुर्वचत्वादिति दिक् ।

अथ धात्वधिकारीयेत्यस्यायमर्थो न किन्तु अधिकारोऽधिकं कार्यं धातुसंज्ञारूपं छप्रत्ययार्थो निमित्तनिमित्तिभावसम्बन्धः तथाच ज्ञापकेन साजात्याद्धातुसंज्ञानिमित्तभूतप्रत्ययान्ते इत्यर्थलाभेन कल्पबादेरतथात्वेन तत्र नाव्याप्तिरिति ब्रूषे । तर्हि तथैव स्पष्टं वाच्ये एवमुक्तिर्निर्बीजा धातुसंज्ञायामाधिक्यं दुर्निरूपं च , नच भोक्तुंपाक इत्युत्तरग्रन्थविरोधश्च धातुसंज्ञानिमित्तप्रत्ययान्तत्वाभावात् । अत एव पचतकि एधतके इत्यादिसिद्ध्यभावेनैतत्प्रयासवैयर्थ्यं च। तदर्थमन्योपायाश्रयणेऽस्यानुपयोगश्च धातुसंज्ञानिमित्तकप्रत्ययान्ते इत्यर्थस्तु धात्वधिकारीयप्रत्ययान्ते इत्येतत्तुल्यतया तद्दोषगणदूषित एवेति यत्किञ्चिदेतत्। अपिच "अव्यय कृतो भावे" इत्युक्तया पाक इत्यादाविव तुमुनाद्यर्थे वैलक्षण्याननुभवेन च धात्वर्थानुवादकतया तेषामसत्त्वभूतो भाव एवार्थ इति प्रकृत्यर्थान्यप्रत्ययार्थाभावेन त्वदूहितविवक्षयोः सत्त्वेन प्रातिपदिकत्वाप्राप्तौ तत्साधनाय प्रत्ययार्थविशेष्यत्वेन धात्वर्थाविशेष्यत्वादित्युक्तेरसङ्गतत्वात् । उद्देश्यतारूपतादर्थ्यं समानकर्तृकत्वादिकं च संसर्गलभ्यमिति स्पष्टमन्यत्र ।अपिच, अव्ययत्वेनाव्ययादाप्सुप इति ज्ञापकात्सुबुत्पत्तावपि प्रातिपदिकत्वालाभेन तल्लाभायाव्ययत्वाद्वेत्युक्तेरयुक्तत्वात् । किञ्च तत्त्वाभावे भोक्तुमित्यादौ ञ्नित्यादिरिति स्वरानापत्तेः, चादिषु व्युत्पत्तिपक्षेऽसतावयवार्थेन व्युत्पादनात्कृदन्तत्वेऽपि परार्थाभिधानत्वासम्भवाच्च। समर्थपरिभाषालभ्यत्वं तस्येति सिद्धान्तात्। पाचकादौ तु यथा तत्त्वं तथा प्रागुक्तम्। अचोन्त्यादिटि यच्चिभमादिरन्त्येन तपरस्तदित्यादिसूत्रबोध्यसंज्ञानां तादृशवृत्तेरभावात्तत्त्वानापत्तेश्च निर्मूलतया पटदितीत्यादावितिसमभिव्याहारे तत्त्वस्य दृष्टतया च सर्वेष्टत्वेन चेतिशब्दसमभीत्याद्युक्तेरसाङ्गत्याच्च । त्वदन्यबोधकाभावेन बोधनादित्यस्यायुक्तत्वाच्चेत्यलं भ्रान्तप्रलपितखण्डनाभिनिवेशेन । तेनेत्यनेन सूचितमर्थं स्पष्टार्थमाह-**प्रियेति । तत्र**-तस्मिन्सुबन्ते । स्पष्टार्थमेव व्यावर्त्यमाह-**नत्विति । अदोषादिति ।** प्रशस्तार्थवत्त्वा-

### शब्दरत्नम् ।

**दोषः। तत्र धातोरेव विशिष्टार्थबोधकत्वेन अर्थवद्द्वितीयाभावेन पृथगर्थानामेकोपस्थितिजनकत्वरूपैकार्थीभावाभावादिति वाच्यम् । अलौकिके वाक्ये कल्पितैकार्थीभावस्य तत्राप्यारोपेणादोषात् ।**

### भैरवी ।

प्रशस्तार्थवत्त्वापत्तिरूपदोषाभावादित्यर्थः । दोष इति । **प्रातिपदिकसञ्ज्ञाया अप्राप्तिरूपदोष इत्यर्थः । दोषमुपपादयति—**तत्रेत्यादिना । धातोरेवेति । **"यः शिष्यते" इतिन्यायेनावशिष्टः श्रूयमाणो लिह् इत्यादिशब्द एव लेहनकर्त्रादिबोधक इति भावः ।** अलौकिके वाक्ये–लिह् क्विबित्यत्र । **अस्य वाक्यत्वञ्च शक्तशब्दसमुदायत्वरूपम् । तस्यार्थबोधनाय प्रयोगाभावेन नैकोपस्थितिजनकत्वस्य सद्भावोऽत आह—**कल्पित इति । तत्र–**लुप्तक्विबन्ते ।** अदोषादिति । **वास्तविकस्य विशिष्टार्थबोधकत्वस्य तत्राभावेन प्रातिपदिकत्वाभावापत्तिरूपदोषाभावादित्यर्थः ।**

**एतेन यदेकार्थीभावेनेत्यादिमूलोक्तमनूद्य तन्न, औपगवो वृक्षः इत्यादौ सुब्विशिष्टस्यैव तथात्वेनाव्याप्त्यापत्तेः । किञ्च समासग्रहणं व्यर्थम्, वाक्ये एकार्थीभावविरहेण तस्य नियमार्थत्वायोगात् । किञ्च 'भोक्तुं' 'भुक्त्वा' 'शुक्लतरः' 'पाचकतमः' इत्यादावव्याप्तिः, तुमुन्नन्तादेः प्रत्ययान्ततया ऽस्य सूत्रस्याप्रशस्तार्थवत्त्वेनाग्रिमसूत्रस्य चाप्राप्तेः । एकार्थीभावः स्वार्थिकेषु नेति हरदत्तग्रन्थे स्पष्टम् । तस्मात्सूत्रद्वयसाधारणं यदन्वयव्यतिरेकाभ्यां प्रत्ययभिन्नत्वे सति अर्थप्रत्यायनयोग्यत्वमप्रशस्तार्थवत्त्वमिति रत्नाकरोक्तन्तदपास्तम् ।**

**प्रशस्तसमीपत्वेनारोपितप्रशस्तार्थवत्त्वस्य औपगवादौ सुब्रहिते सत्त्वात्, समासग्रहणस्य नियमार्थत्वमप्येवमेवोपपादनीयम् । अनेन–व्यर्थं स्यादित्यन्तग्रन्थेन । सातेरुपादानेनापूर्ववचनकल्पनापेक्षया क्त्वाप्रत्ययपदस्यावृत्तावेव तस्य तात्पर्यग्राहकत्वं युक्तमिति भावः ।**

### भावप्रकाश ।

पत्तिरूपदोषाभावादित्यर्थः । **दोष इति** । तदभावेन संज्ञानापत्तिरित्यर्थः । तदभावे हेतुमाह–**तत्रेति** शिष्यमाणं लुप्यमानेति न्यायादितिभावः । **तत्रापि**–लुप्तक्विप्यपि । एतेनैकार्थीभावेत्यादि मूलमित्यन्तं मूलमनूद्य तन्न, औपगवो वृक्ष इत्यादौ सुब्विशिष्टस्यैव तथात्वेनाव्याप्त्यापत्तेः। किञ्चैवं समासग्रहणं व्यर्थं वाक्ये एकार्थीभावविरहेण तस्य नियमार्थत्वायोगात् । किञ्च भोक्तुं भुक्त्वा शुक्लतरः पाचकतम इत्यादौ संज्ञानापत्तेः अप्रत्यय इत्युक्त्याऽस्याप्राप्तेः अप्रशस्तार्थवत्त्वेनाग्रिमस्याप्राप्तेश्च । एकार्थीभावः स्वार्थिकेषु नेति हरदत्तग्रन्थे स्पष्टमिति, केवलतद्धितस्य तादृगर्थवत्त्वं न सम्भवतीत्यनूद्य तत्रास्यापत्यम् इः इयान् अधुना इत्यादीनां तथाविधानां सत्त्वात् । अथ अ अस् इ इति प्रक्रियावाक्ये तादृगर्थवत्त्वं नास्तीति ब्रूम इति चेन्न । भवन्निरुक्तप्राशस्त्यस्य क्वाप्यसम्भवेनासम्बद्धत्वापत्तेरिति च रत्नाकरोक्तमपास्तम् । प्रशस्तसमीपत्वेनारोपितप्रशस्तार्थवत्त्वस्यौपगवादौ सुब्रहिते सत्त्वात् । अस्यार्थवत्त्वस्योत्तरसूत्रीयत्वेनात्र सामान्यतस्तत्त्वस्य ग्रहणेन वृक्ष इत्यादावदोषाच्च । अत एव समासग्रहणस्य नियमार्थत्वोपपत्तेश्च इरित्यादीनामुक्तरीत्या सिद्धेश्च । एवं रीत्या तत्त्वस्य सर्वत्र सम्भवेनासम्बद्धत्वाभावाच्चेति दिक् ।

### सरला ।

**एकार्थीभावाभावादितीति** । "संसृष्टार्थं समर्थम्" इति भाष्योक्तस्य विशेष्यविशेषणभावावगाहृद्युपस्थितिजनकत्वरूपस्य एकार्थीभावस्य केवलप्रत्ययेऽभावादित्यर्थः । विशेष्यविशेषणभावावगाह्युपस्थितिजनकत्वं च पदसमुदायस्यैवेति पृथगर्थानां पदानां समुदायनिष्ठैकशक्त्यैकोपस्थितिजनकत्वमेकार्थीभाव इति फलितोऽर्थः । **अलौकिके वाक्ये**–'लिह् क्विप्' इत्यादौ । **कल्पितेति** । एकार्थीभावश्चालौकिकविग्रहवाक्य एव कल्प्यते यथा शत्रादौ 'पचन्तं चैत्रं पश्य' इत्यादिस्थले द्वितीयासामानाधिकरण्यं दृष्ट्वा लकारेऽपि तत्कल्पनेनाप्रथमासामानाधिकरण्याच्छत्रादेशस्तथा 'अन्यपदार्थे' 'समर्थः' 'चार्थे' इत्यनुवादबलादेकार्थीभावस्याऽलौकिकविग्रहवाक्ये कल्पनेति समाससंज्ञादिप्रवृत्तिरिति । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

यदि तु प्रत्ययो न पर्युदस्येत तर्हि "सात्पदाद्योः" इति सूत्रे सातिग्रहणं व्यर्थं स्यात्। 'अर्थवत्' इति किम्? धनं, वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत्। तस्यां च सत्यां स्वादयः स्युः। ननु संख्याकर्मादेरभावात् न भविष्यन्तीति चेत्? न, एकवचनमुत्सर्गतः करिष्यते इति सिद्धान्तात्। हुंफडादिभ्य इव सोर्दुर्वारत्वात्। न च अर्थवद्ग्रहणपरिभाषायाऽनर्थके न स्यादिति वाच्यम्। तस्या-

## शब्दरत्नम्।

**व्यर्थं स्यादिति**। अनेन प्रत्ययपर्युदासे मानमुक्तम्। सातेः प्रातिपदिकत्वे हि तत औत्सर्गिकैकवचने तस्यापि सुबन्तत्वेन पदत्वे पदादित्वादेव निषेधसिद्धेस्तद् व्यर्थमिति भावः। **सोर्दुर्वारत्वादिति**। तस्य च समुदायप्रातिपदिकत्वेन तदवयवत्वाल्लुक्। समुदायसंज्ञा चान्तरङ्गत्वादवयवेभ्यः प्रातिपदिकत्वात्सुपि सति प्रवर्तते इति तस्य तदवय-

## भरवी।

औत्सर्गिकेति। सङ्ख्याकर्मादेरभावादित्थमुक्तम्। तस्यापीति—सातेरपीत्यर्थः। अपिः प्रकृतिसमुच्चायकः। नचैवम्प्रकृतिप्रत्यययोः समासापत्तिः बहुचश्चित्त्वसामर्थ्येन प्रकृतिप्रत्यययोः समासाभावस्य कल्पनात्। इति भाव इति। मूलकारस्येति शेषः। एवमभिधानेनारुचिर्ध्वनिता, सा वस्तुतस्त्वित्यादिनाऽग्र स्फुटा। तस्य च—सोश्च। "न केवला" इति निषेधविषयतायाः सत्त्वेन सोरुत्पत्तिरुचितैवेति भावः। प्रातिपदिकावयवत्वन्तस्योपपादयति—समुदायेत्यादिना। एतेन प्रत्येकं सोरुत्पत्तौ तच्छ्रवणापत्तिरिति दूषणम्परिहृतम्। नन्वेवन्तत्र लुक्प्रवृत्तावपि धात्व-

## भावप्रकाशः।

अनेन—ग्रन्थेन। तत्सामर्थ्येनानुमानिकवचनकल्पनापेक्षया ऽत्रैव तत्कल्पनं युक्तमित्याह—**प्रत्ययेति**। एतेन तदङ्गीकारे मानाभाव इत्युक्तम्। एतेन प्रत्ययपर्युदासे सातिग्रहणं लिङ्गमित्यपि परास्तम्। अतएवाप्रत्ययः किं हरिषु करोषीत्यत्र सुप्सिपोर्माभूदिति प्रत्युदाहरणमपि प्रत्युक्तम् प्रत्ययमात्रे उक्तरीत्यानतिप्रसङ्गादिति रत्नाकरोक्तं चापास्तम्। सौत्रसातिग्रहणस्यैव मानत्वात् अत्र सूत्रे तादृशार्थवत्त्वग्रहणेन प्रत्ययस्य तत्त्वस्योक्तत्वाच्च। एतेन भाष्यादिमानाभावो ध्वनितः। स चानुपदमेव स्फुटीभविष्यति। तत्त्वमुपपादयति—**सातेरिति**। संख्याकर्माद्यभावादाह—**औत्सर्गिकेति**। अपिः प्रकृत्यादिसमुच्चायकः। नचैवं प्रकृतिप्रत्यययोः समासापत्तिः। बहुचश्चित्त्ववैयर्थ्यापत्तेः। तद्ध्वनयन्नाह—**निषेधेति**। षत्वेत्यादि। अत्र इति भाव इति सूचितारुचिस्तु वस्तुतस्त्वित्यादिना स्फुटीभविष्यति। **सोर्दुर्वारत्वादितीति**। न केवलेति निषेधात्तत्संज्ञासामर्थ्याच्चेति भावः। तच्छ्रवणापत्तिदोषो न मूलाभिप्रेत इत्याह—**तस्य चेति**। **लुगिति**। एतेन हल्ङ्यादिलोपेन श्रवणं न, धातुपाठे धनवनेत्युच्चारणसामर्थ्येन वलोपधजश्त्वे च नेति यद्यपि न क्षतिस्तथाप्यकारात्सोरुत्पत्तौ रुत्वापत्तिरिति दण्ड्युक्तमपास्तम्। अन्तरङ्गानपीति न्यायेन लोपाप्राप्तेः, धनादिभ्यो ल्यपि तुगतोलोपाभावार्थतया नकारोच्चारणसाफल्याच्च। ननु समुदायावयवयोः समकालं संज्ञायां तस्य तदवयवत्वं दुर्घटमत आह—**अन्तरङ्गत्वादिति**। प्रथमोपस्थितत्वा-

## सरला।

**व्यर्थमितीति**। प्रत्ययपर्युदासाभावे सातेः प्रत्ययस्य पदादित्वादेव षत्वनिषेधसिध्या सूत्रे सातिग्रहणं व्यर्थं सत् 'अर्थवत्' सूत्रेऽप्रत्ययपदस्यावृत्तिं बोधयत्प्रत्ययपर्युदासज्ञापकमिति भावः। वस्तुतस्तु "अर्थवदिति वर्तते" इति भाष्ये कृत्तद्धितसूत्रेऽर्थवत्पदस्यानुवृत्तिबोधनाद् "अन्यायश्चानेकार्थत्वम्" इति न्यायेनोभयोरपि सूत्रयोरेकविधस्यैवार्थवत्त्वस्य ग्रहणावश्यकतयोत्तरसूत्रे शास्त्रीयार्थवत्त्वग्रहणस्यार्थवत्पदानुवृत्तिवैयर्थ्येनाशक्यतया लौकिकार्थवत्त्वस्यैव ग्रहणेनार्थवत्सूत्रेऽपि तादृस्यैवार्थवत्त्वस्य ग्रहेण लौकिकार्थवत्त्वस्य च प्रत्ययमात्रेऽसम्भवान्न प्रत्ययपर्युदासस्वीकारावश्यकता, नापि सातिग्रहणवैयर्थ्यं चेति शेखरे निरूपितम्। लौकिकार्थवत्त्वं चाग्रे निरूपयिष्यते।

### शब्दरत्नम् ।

वत्वमक्षतम् । पचति, ध्वनतीत्यादौ नावयवानां सा । धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र तन्निषेधात् । तस्मादव्युत्पन्नप्रातिपदिकावयवेभ्यस्तदुत्पत्तिरापाद्या । धनशब्दस्य

### भैरवी ।

वयवादुत्पन्नस्य श्रवणापत्तिरत आह—पचतीति । तन्निषेधादिति । प्रातिपदिकसञ्ज्ञाप्राप्तिनिषेधादित्यर्थः । अत्र धात्ववयवादुत्पन्नस्यापि लुकाऽपहारस्तु नोक्तः, अधातुरितिपर्युदासात् । प्रत्ययावयवस्याप्येवं श्रवणापत्तिः । समुदायस्य प्रातिपदिकावयवत्वन्तु न, अप्रत्यय इति पर्युदासात् । न च यदि धातुप्रत्ययपदयोस्तदवयवे लक्षणा तदा तयोरेव निषेधो न स्यादिति वाच्यम्, प्रागुक्तकृत्तद्धितग्रहणकृतनियमेन तयोर्वारणात् । तस्मात्—व्युत्पन्ने उक्तरीत्या दोषवारणात् । आपाद्या—आपादनार्हा । एतेन भाष्योक्तं धनं वनमिति प्रत्युदाहरणमेतयोरव्युत्प-

### भावप्रकाश ।

दित्यर्थः । अत एव "यावद् गकारे वाक् न तावदोकारे" इति भाष्यं सङ्गच्छते । एतेन समकालं संज्ञेति हयवरट्सूत्रस्थकैयटश्चिन्त्य इति ध्वनितम् । एकाज्द्विर्वचनन्यायस्य तु नात्र प्रवृत्तिः । समुदायकार्येणावयवानामननुग्रहात् । यत्तु युगपत् समुदायोपस्थित्यभावान्न्यायाविषयता, बौद्धसमुदायसत्त्वेऽपि उच्चारणे वाचिकक्रमाभिव्यक्तस्यैव शब्दस्यात्र शास्त्रे बलवत्त्वमिति; तन्न तथा क्वाप्यभावेन न्यायोच्छेदापत्तेः । द्वित्वस्थले एव तथाऽसम्भवेन मूलोच्छेदापत्तेश्च । **सुपि सतीति** । न केवलेतिनिषेधात् । तत्संज्ञासामर्थ्याच्चाविशेषेण स्वादिविधिना संज्ञाया एकवाक्यताङ्गीकाराच्च उत्पन्नस्यापि लुगादिनेव निवृत्तिरित्युत्पन्नेष्वर्थनियमस्य सन्निहितप्रकृतार्थापेक्षया प्रत्ययनियमस्य वाऽव्ययानुरोधेनाङ्गीकारादितिभावः । अत एव सुपीत्युक्तं नतु मूलकृद्धत्ताविति । **अक्षतमिति** । एतेनाजुत्तरन्तच्छ्रवणापत्तिरित्यपास्तम् । तथाच धनादावदोषादर्थवद्ग्रहणं व्यर्थमितिभावः । यत्तु चिकीर्षति विद्म इत्यादौ रदयोः पदान्तत्वात् "खरव" "यरोनुना" इति विसर्गानुनासिकापत्तिरिति दण्डी; तन्न, तत्र सुप्श्रवणापत्तिसम्भवेन विसर्गादिपर्यन्तधावने बीजाभावात् । वक्ष्यमाणयुक्तेश्च । तद्ध्वनयितुं तत्रैव दोषं द्रढयितुं च मध्ये प्रासङ्गिकमाह—**पचतीति** । **सा**—प्रातिपदिकसंज्ञा । तथा सति क्वचिज्जश्त्वाद्यापत्तिः क्वचित्तच्छ्रवणापत्तिः तत्र समुदायस्य तत्त्वेन पर्युदासेनासंज्ञया लुगप्राप्तेरिति भावः । **तदवयवेति** । नचैवं समुदाययोरापत्तिः, प्रागुक्तकृत्तद्धितग्रहणकृतनियमेन वारणात् व्यपदेशिवद्भावेन तयोरपि तत्त्वाच्च । नचैवमप्युक्तनियमेन तत्प्रत्याख्यानपरभाष्यविरोधः तस्यार्थवत्पदसत्त्वाशयकत्वात् । तदभावे च तयोरेव सार्थक्ये सत्येतदर्थाकल्पनयोक्तरीत्या प्रत्याख्यानमनुचितम् । व्युत्पन्नशब्दं विहायाव्युत्पन्ने धनादौ नलोपापादनपरभाष्यासङ्गत्यापत्तेः सातिग्रहणात्केवलप्रत्ययस्यापि।सा नेति भावः । **तस्मादिति** । व्युत्पन्ने प्रोक्तरीत्या दोषाभावादित्यर्थः । **आपाद्या** । आपादनार्हा । सा च भाष्ये मूले चोक्तैव धनादिकमव्युत्पन्नमिति भावः । **व्युत्पत्तीति** । यास्कोक्तेति भावः । **वनादीति** । स त्वव्युत्पन्नः, तत्र तेन तदनुक्तेरिति भावः । अत एव मुख्यतया वनमित्याद्युक्त्वा नलोपापत्तिमात्रदोषो भाष्येऽभिहितः । तत्र सूत्रे मूले चेत एवारुच्या वनमित्यग्रे उक्तम् । यद्वाऽनेन भाष्ये धनं वनमित्येव पाठ इति सूचितम् । अत एव हयवरट्सूत्रभाष्यैकवाक्यता । तत्र नलोपादीनीत्युक्तिस्त्वत्रैव लोपोव्योरिति लोपाभिप्राया । धकारे जश्त्वमादिपदार्थ इतितत्रोद्द्योतोक्तिस्तु सिद्धान्ताभिप्रायेति न विरोध इति भावः । ननु तत्पक्षे तत्रापि सदवयवार्थव्युत्पत्तिसम्भवः वनषण सम्भक्तावित्यनुसारादत आह—

### सरला ।

**अक्षतमिति** । तथा च न तत्र सुप्श्रवणापत्तिरिति भावः । तदेव वक्ष्यते—तस्मान्नलोपेति । **तदवयवपरत्वेनेति** । अर्थवद्ग्रहणाभावे कृदन्तस्य तद्धितान्तस्य चानेनैव संज्ञासिद्धौ तान्नयमार्थं भविष्यति प्रत्ययान्तस्य प्रत्ययस्य वा प्रतिपदिकसंज्ञा चेत् कृदन्ततद्धितान्तयोः कृत्तद्धितयोरेव वेति । तथाच समुदायस्य तत्र तेनैव व्यावृत्तिसिद्धौ धातुप्रत्ययपदे तदवयवपरे इति तात्पर्यम् ।

शब्दरत्नम् ।

धिनोतेर्धनमिति व्युत्पत्तिपक्षे तु वनादृयुदाहरणं बोध्यम् । ध्वनितं चेदं भाष्यकैयटयोः । तस्मान्नलोपाद्यापत्तिर्दोषः । इदमव्ययेभ्य इव तेभ्योऽपि सुप एकवचनाभ्युपगमेन । वस्तुतस्तु तदुत्पत्तिः सत्येव गमके यथाऽव्ययेभ्य उत्पत्तौ "अव्ययादाप्सुपः" इति गमकम् । नान्यत्र 'एकवचनम्' इति महासंज्ञाकरणात् । प्रकृते तु न तथा गमकम् । अत एव "ङ्याप्—" इति सूत्रे प्रातिपदिकाधिकाराभावे तिङन्तेभ्यस्तदुत्पत्तिमाशङ्क्यैकत्वादीनामुक्तत्वान्नेति समाहितं भाष्ये । त्वद्रीत्यौत्सर्गिकमेकवचनं

भैरवी ।

ज्ञत्वाभिप्रायेणेति ध्वनितम् । व्युत्पत्तिपक्ष इति । अत्र ह्येवं व्युत्पत्तिर्यास्केनोक्ता वनशब्दे तु नोक्ता । अत एव वनशब्द एव दोषस्य मुख्यतया भाष्ये प्रथमतस्तल्लेखः। ध्वनितमिति । एतस्यैवोदाहरणत्वप्रदर्शनेन ध्वनितमित्यर्थः । इदम् अव्युत्पन्ने एव दूषणमित्येतत् । नलोपाद्यापत्तिरिति । अत्रादिपदेन वनशब्दे वकारस्य "लोपो व्योः" इति लोपापत्तिर्धनशब्दावयवधकारस्य जश्त्वापत्तिश्च दोषः । इदम्—प्रतिवर्णं प्रातिपदिकसंज्ञापत्तौ सुबुत्पत्त्यापत्तिरूपं दूषणम् । अभ्युपगमेनेत्युक्तिसूचितमर्थं स्पष्टप्रतिपत्तये आह—वस्तुतस्त्विति। अत्र यदीति क्वचित्पाठः । तदुत्पत्तिः—सुबेकवचनोत्पत्तिः । अत्र सुबिति कथनेन सप्तानामपि विभक्तीनामेकवचनानीति पक्षः सूचितः । इदमुपलक्षणम् औत्सर्गिकैकवचनस्यापि । अन्यत्रानुत्पत्तौ हेतुमाह—एकवचनमिति महासंज्ञाकरणमन्वर्थत्वाय । यदि गमकाभावेऽपि तदुत्पत्तिः स्यात्तदा महासंज्ञाकरणमनर्थकं स्यादिति भावः । एवमर्थनियमादिप्रकारत्रयं वक्ष्यमाणमपि सत्येव गमके इति च बोध्यम् । प्रकृते–धनं वनमित्यादौ । ।अतएव–गमकं विना,तदनुत्पत्तेरेव। त्वद्रीत्या–साधकाभावेऽप्यौत्सर्गिकैकवचनोत्पत्तिरिति प्रकारेण। अत एव प्रकृतसूत्रे भाष्ये-"निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या, खञ्जति निखञ्जति, लम्बते प्रलम्बते। किम्पुनरत्र प्रातिपदिकसंज्ञया प्राथ्यते ? प्रातिपदिकादिति स्वाद्युत्पत्तिः, सुबन्तमिति पदसञ्ज्ञा,

भावप्रकाश ।

द्युदेति । तेन डित्थादिसङ्ग्रहः तत्र च तादृशव्युत्पत्त्यसम्भवः । तत्र दृश्यमानतुल्यस्य तत्रापाठात् । तथा च मूलं भाष्यं चोपलक्षणमिति भावः । तुनाऽरुचिर्बोधिता । यास्केन तथोक्तावपि तन्मतानुसारिशाकटायनस्यैव व्युत्पत्तिपक्षसम्मतिर्न पाणिनेरिति यथाश्रुतं मूलं भाष्यं च सुष्ठ्वेवेति । स्वोक्तोभयत्र सम्मत्यर्थमाह—**ध्वनितमिति** । धनादावेव सुप्श्रवणमनापादयता नलोपापत्तिमापादयता भाष्यकृता तथैवानुवदता कैयटेन च तत्र लुक्प्रवृत्त्या सुबश्रवणं व्युत्पन्ने तद्दोषाभावश्चेति द्वयं ध्वनितमित्यर्थः, हयवरट्सूत्रे अत्र सूत्रे चेति भावः । अतएवाह—**तस्मादिति** । उक्तदोषाभावादित्यर्थः । सूत्रपाठे नलोपस्य प्राथम्यादाह—**नलोपादीति** । आदिना जश्त्वादिसङ्ग्रहः । एतेन मूले धनं वनमिति पाठेन धस्य प्राथम्याज्जश्त्वं प्राग् वक्तुमुचितमित्यपास्तम् । तथा च नलोपः प्रसज्येतेति भाष्यमुपलक्षणं तत्र तस्यैवोक्तिस्तु वनं धनमिति पाठाशया उक्ताशया वेति बोध्यम् । एतेन वलोपः प्राक् वक्तुमुचित इत्यपास्तम् । तथा पाठस्यैवाभावात् जश्त्वे धोपदेशवैयर्थ्यं तु न शङ्क्यमव्युत्पन्नत्वादितिभावः । मूलं दूषयितुमुपक्रमते—**इदमिति** । नलोपाद्यापादनमित्यर्थः । **तेभ्योऽपि**—अव्युत्पन्नप्रातिपदिकावयवेभ्योऽपि । **सुपएकवचनेति** । सर्वसुप्सवैकवचनाङ्गीकारेणेत्यर्थः । तथाच प्रौढिवादोऽयमितिभावः । तत्त्वमेवाह—**वस्तुत इत्यादिदिगित्यन्तेन** । **तदुत्पत्तिः** सर्वसुप्सवैकवचनयोरुत्पत्तिरित्यर्थः । इदमुपलक्षणमौत्सर्गिकैकवचनस्यापि । अस्य च नान्यत्रेत्यत्राप्यन्वयः । अन्यत्रानुत्पत्तौ हेतुमाह—**एकेति** । **महासंज्ञेति** । अन्वर्थत्वबोधनं हि तस्याः फलम् । यदि गमकासत्त्वे एकत्वाद्यर्थाभावेऽपि तदुत्पत्तिः स्यात्तर्हि महासंज्ञाकरणमनर्थकं स्यात् । अत एवार्थनियमादिप्रकारत्रयमपि तत्रैव; न सर्वत्र, व्यवच्छेद्यत्वाभावादिति भावः । तुः स्पष्टार्थः। पाठक्रमादार्थक्रम इति न्यायेनात्र ग्रन्थयोजना बोध्या । **अत एव**–गमकं विना तदनुत्पत्तेरेव । **औत्सर्गिकेति** ।

शब्दरत्नम् ।

दुर्वारमेव । अत एवाग्रे भाष्येऽर्थवत्पदस्य दश दाडिमानीत्यादिपदसमुदायो निरर्थको व्यावर्त्यत्वेन प्रदर्शितः । तत्र हि "सुपो धातु–"इत्यस्य प्राप्तिरिति तदेवास्य-मुख्यं व्यावर्त्यम् । पचतःकल्पमित्यादौ तत्प्रवृत्तौ रूपप्सूत्रस्थं भाष्यं गमकम् । समा-

भैरवी ।

"पदस्य पदात्" इति निघातो यथा स्यात्। नैतदस्ति प्रयोजनम् । सत्यामपि प्रातिपदिकसञ्ज्ञा-यां स्वाद्युत्पत्तिर्न प्राप्नोति। किङ्कारणम् ? नहि प्रातिपदिकसञ्ज्ञायामेव स्वाद्युत्पत्तिः प्रतिबद्धा किन्तर्ह्येकत्वादिष्वप्यर्थेषु स्वादयो विधीयन्ते नचैषामेकत्वादयः सन्ति" इत्यादिकमुक्तम्। अत एव च प्रकृतसूत्रशेषे भाष्ये–'काण्डे' 'कुड्ये' इत्यत्र पूर्वान्तवत्त्वेन प्रातिपदिकत्वाद्ध्रस्वत्वमाश-ङ्क्य "ह्रस्वो नपुंसके यत्तस्य" इति न्यासान्तरेण तद्वारणम्प्रदर्शितन्नतु तत्र सुबुत्पत्तिर्दर्शिता । उक्तार्थसाधकान्तरमाह–अत एवेति। प्रातिपदिकावयवानामव्यावर्त्यत्वादेव । एतेनार्थवदिति-व्यपदेशाय वर्णानाम्माभूदित्युपक्रमभाष्यमेकदेश्युक्तिरिति सूचितम् । निरर्थकः—परस्परान्वि-तार्थबोधाभावेन निरर्थकः। मुख्यमिति । इदमपि यथाश्रुतरीत्या। वस्तुतस्तु वक्ष्यमाणसिद्धान्त-रीत्या प्रत्ययस्य "पञ्चगवधनः"इत्याद्येकदेशस्य पञ्चगवेत्यादेश्च व्यावर्त्यत्वमस्त्येव ।

ननु 'पचतःकल्पम्' इत्यादौ गमकाभावेऽपि स्वाद्युत्पत्तिवद्धनाद्यवयवादपि स्यादेवेति कस्यचिच्छङ्कां वारयति–पचत इति । भाष्यङ्गमकमिति । तत्र हि—'पचतःकल्पम्' इत्यादौ लि-ङ्गसङ्ख्यायोगाभावादमो ऽभावमाशङ्क्य क्रियाप्रधानमाख्यातं क्रिया चैका न द्वित्वादिमती

भावप्रकाश ।

इदमुपलक्षणं सर्वसुपः सर्वैकवचनानाञ्च, तेषामप्युक्तरीत्या दुर्वारत्वात् । तथा च तदवयवेषु तस्यां सत्याम-प्यक्षत्या तद्व्यावृत्त्यर्थत्वं तस्य न। अतएवैतत्सूत्रशेषे भाष्ये काण्डे इत्यादौ पूर्वान्तवत्त्वेन तत्वाद्ध्रस्वस्यैवापत्तिं मनसि निधाय ह्रस्वोनपुंसकेयत्तस्येति तद्वारणमात्रप्रयासः सङ्गच्छते। तद्भिनापि तत्प्रवृत्तिज्ञापकत्वं तु न युक्तं फलाभावादितिभावः । मानान्तरमाह–अत एवेति । तदवयवानामव्यावर्त्यत्वादेवेत्यर्थः । एवं च पूर्वभा-ष्यमेकदेश्युक्तिः । अत एव तत्र वर्णानां चेति पाठं निश्चित्य चशब्देनानर्थकपदसमूहो दश दाडिमानी-त्यादिः समुच्चीयत इति कैयटोक्तिः सङ्गच्छते । एवं च चेन पूर्वदोषे ऽरुचिर्बोधितेति न तद्विरोधोपीति भावः। आदिना षडपूपाः कुण्डमजाजिनं पललपिण्ड अधोरुकमेतत्कुमार्याः स्फैयकृतस्य पिता प्रतिशीन इति ग्राह्यम् । निरर्थक इति । पदार्थानां समन्वयस्यैव वाक्यशक्यत्वेनात्र तदभावादिति भावः। हि-यतः, तत्संज्ञात इत्यर्थः। एतेनान्यव्यावर्त्यनिरासः। नचैवं मुख्यपदं व्यर्थं वर्णेष्वपि तत्र सत्यां फिट्स्वरा-पत्त्या तेषामपि तत्त्वसम्भवात् । नचैवमपि सतिशिष्टत्वात्समुदायस्वरस्यैव श्रवणमिति न दोष इति वाच्यम् । अलक्ष्यतया संज्ञातिप्रसङ्गमात्रनिरासफलकतया तद्व्यावर्तकत्वसम्भवादित्याशयात् । तदाह–मुख्य-मिति । इदमपि यथाश्रुतसूत्ररीत्या । सिद्धान्ते तु तत्सामर्थ्यात् सूत्रद्वये प्रशस्तार्थवत्त्वलाभद्वारा प्रत्ययस्य पञ्चनावेत्यंशस्य च निवृत्तिरेवासाधारणं फलम्। यद्वा मुखेऽग्रे भवं मुख्यं प्राथमिकं साधारणमिति यावत्। पार्यन्तिकं पारमार्थिकं तु मदुक्तमेवेति न विरोध इति बोध्यम् । ननु पचतःकल्पमित्यादाविव धनादा-वप्यवयवात्तदापत्तिः गमकाभावस्तूभयत्र तुल्यः एवं च ङ्याप्सूत्रभाष्यमयुक्तमेवेत्यतः सिंहावलोकनन्या-येनाह–पचत इति । एतेनास्य ग्रन्थस्य सुप इति गमकमित्यग्रे औचित्येप्यस्मृतत्वात्तत्रालेखेऽपि समास-ग्रहणेत्यादितो ऽग्रे ऽस्यौचित्यमित्यपास्तम् । उक्तन्यायेन तस्यैवादावुपस्थितेः । भाष्यमिति । पचतिक-ल्पमित्यादौ संख्यालिङ्गाभावादमोऽभावमाशङ्क्य क्रियाप्रधानमाख्यातं क्रिया चैका न द्वित्वादिमती तिङन्ता-द्भेदानवगतेः क्लीबत्वं च स्वभावादिति समाधाय पचत इत्यादौ द्विवचनाद्यभावमाशङ्क्य साधनापेक्षत्वेन समाधाय कल्पाद्यन्तेऽपि तत एव तदापत्तिमाशङ्क्य तिङोक्तत्वान्नेति समाधाय तत एव तत्रैकवचनाभाव-माशङ्क्य न केवलेति समयात्तदिति समाधाय द्विवचनादीन्यपि तत्र तत एवाशङ्क्यैवं तर्हि एकवचनमु-त्सर्गतः करिष्यते तस्य द्विबह्वोरर्थयोर्द्विवचनबहुवचने ऽपवादौ भविष्यत इति तत्रोक्तम् । अयं

शब्दरत्नम् ।

समासग्रहणकृतनियमस्तु अर्थवत्समुदायविषयक इति भाष्ये स्पष्टमिति न तेनास्य व्यावृत्तिरिति दिक्।

भैरवी ।

तिङन्ताद्भेदानवगतेः, क्लीबत्वञ्च स्वभावादिति समाधाय पचत इत्यादौ द्विवचनानुपपत्तिमाशङ्क्य साधनापेक्षत्वेन समाधाय कल्पबाद्यन्तात्सुबुत्पत्त्यभावमाशङ्क्य "एकवचनमुत्सर्गतः करिष्यते तस्य द्विबह्वोरर्थयोर्द्विवचनबहुवचने अपवादौ भविष्यत" इति तत्रोक्तम् । अयम्भावः । तिङन्ताद् भेदानवगमेऽपि शब्दशक्तिस्वभावात्स्वगतैकत्वमादाय कल्पबाद्यन्तादौत्सर्गिकमेकवचनम्भवति, तेषामभावे तु साधनापेक्षन्द्विवचनादि भवति द्व्यादिभ्यस्तु नौत्सर्गिकैकवचनम्, किन्तु न केवलेति समयपरिपालनायानुवादकविभक्तिर्भवति । अत एव बहुषु द्वयोरेकस्य निजां त्रयाणामित्यादिनिर्देशाः सङ्गच्छन्ते । अन्यत्र त्वौत्सर्गिकैकवचनमेवेति । ननु 'दश दाडिमानि षडपूपाः' इत्यादिसमुदायस्य समासग्रहणकृतनियमेन वारणम्भविष्यतीत्यत आह—समासेति । अर्थवत्समुदायेत्यादि । ननु पूर्वसूत्रे पर्युदासबलादर्थवत्त्वलाभादर्थवत्पदाभावे ऽपिमसूत्रे तद्सम्बन्धादनर्थको यो ऽसूर्यादिसमासस्तस्य प्रातिपदिकसंज्ञार्थञ्च समासग्रहणमिति कथमर्थवत्समुदायविषयकत्वन्तस्येति चेत् ? न, असूर्यमित्यादेः समाससंज्ञासिद्धये ज्ञापकाश्रयणमावश्यकम्, तत एव प्रातिपदिकसंज्ञाया अप्यनुमानम्भविष्यतीति तत्र समासग्रहणमर्थवत्समुदायविषयकमित्याशयात् । तल्लाभश्च नियमस्य सजातीयापेक्षत्वेन भवति । दिगिति । दिगर्थस्तु वस्तुतस्त्वित्यादिनोक्त एव ।

नन्वधातुरितिपर्युदासादर्थवत्त्वेन सादृश्यलाभ इति कुतः ? असत्त्वार्थकत्वेनापि सादृश्यस-

भावप्रकाश ।

भावः । यथाकाशे स्वतो भेदाभावेन द्वित्वाद्यभावेऽपि स्वगतैकत्वसत्तामादायाकाश इति प्रयोगस्तथा भवद्भिरास्यते इत्यादौ भावप्रत्यये द्विवचनाद्यदर्शनादेकवचनदर्शनाच्च शब्दशक्तिस्वाभाव्यात्तिङन्तात्स्वतो भेदानवभासेन तदभावेपि क्रियागतैकत्वसत्तामादायैकवचनान्तस्यैव कल्पाद्यन्तस्य प्रयोगः । साधनापेक्षत्वेनेत्यस्य साधनगतसंख्यारोपापेक्षत्वेनेत्यर्थ इति । न चैवमपि द्व्यादिभ्योप्यौत्सर्गिकैकवचनेनैव समयपालनाद् द्विवचनाद्यनापत्तिः अनुवादकविभक्तेर्न्याय्यत्वं त्वत्रापि तुल्यमिति पचतःकल्पमित्याद्ययुक्तमिति वाच्यम् । द्वयोरेकस्यबहुषुनिजां त्रयाणामित्यादिनिर्देशैः प्रातिपदिकार्थसूत्रे प्रवृत्तिनिमित्तभूतसंख्याबोधकवचनशब्देन च संख्याप्रवृत्तिनिमित्तकेषु न केवलेति समयस्यानुवादकविभक्त्यैव पालनेऽपि लक्ष्यानुसारादुक्तभाष्यप्रामाण्यादन्यत्रौत्सर्गिकैकवचनेनैव तत्पालनाङ्गीकारेणादोषात्। अत एव पचतिकल्पमिति विहाय पचतःकल्पमित्युक्तम् । एवं च भावे स्वगतैकत्वेनैवैकवचनं पचत इत्यादौ तु न तथा गौणीमुख्या वेत्यइउण्सूत्रभाष्योक्तेः । पचतो भवत इत्यादि तु न । आरोपितस्यान्यत्रारोपादर्शनात् तस्यारोपे मानाभावाच्च । एवं च तत्र गमकवशात्तथाङ्गीकारेप्यत्र तदभावान्न तदापत्तिः । अत एव तद्भाष्यं सङ्गतमेवेति बोध्यम् । ननु समासनियमेन व्यावृत्त्या न तदर्थं तदत आह—**समासेति** । नचार्थवत्पदाभावेऽग्रेऽननुवृत्त्या समासत्वस्य निरर्थकासमर्थसमासेपि सत्त्वेनानेन द्वयोः समासयोरिव वाक्ययोरपि तत्प्राप्तिरिति तेन व्यावृत्तिसम्भवात्कथं तस्य तद्विषयकत्वमिति वाच्यम् । असमर्थसमासे समासार्थज्ञापकस्यावश्यकत्वे तेनैव तस्या अपि सिद्ध्या न कृत्तद्धितसूत्रव्यापार इति पारिशेष्यात्तत्रार्थवत्समासस्यैव ग्रहणात्सजातीयापेक्षनियमस्यौचित्येन तद्विषयकत्वलाभादिति भावः । **दिगिति**। तदर्थस्तु सिद्धान्ते त्वित्यादिना प्रागुक्त एव ।

सरला ।

**अर्थवत्समुदायेति** । "अर्थवत्समुदायानां समासग्रहणं नियमार्थम्" इति भाष्यम् । तत्र अर्थवान् यः समुदायः अर्थवतामर्थवतोश्च यः समुदायः तयोरुभयोरपि तन्त्रेण ग्रहणमिति अर्थवदभिन्ना येऽर्थवतां समुदायास्तेषां चेत् समासस्यैवेति नियमाकार इति वक्ष्यते ।

विशिष्टरूपोपादानविषयत्वात् । 'अधातुः' इत्यादिपर्युदासबलेन यद्यप्यर्थवत्त्वं लभ्यते, तथाऽपि उत्तरार्थं तदित्युक्तम् । एतच्च "सुप्तिङन्तम्" इतिसूत्रे भाष्ये ध्वनितम् । यत्त्वाहुः–पर्युदासो नार्थवत्त्वं गमयति । अनर्थकयोरपि धातुप्रत्ययोर्दर्शनात्—अधीते, यावक इति । अधिपूर्वस्यैवेङः प्रयोगात् विशिष्ट एव अर्थवान्, न तु केवलः । 'इङ् अध्ययने' इत्याद्यर्थनिर्देशस्तु अवयवे

शब्दरत्नम् ।

**यद्यप्यर्थवत्त्वमिति** । व्याख्यानादर्थवत्त्वेनैव सादृश्यं गृह्यत इति भावः । **उक्तमिति** । एतेनेदमुक्तमेव पुनर्दार्ढ्यायोच्यत इति सूचितम् । **भाष्ये इति** । एवं हि तत्र भाष्यम्– "अर्थवदिति वर्त्तते कृत्तद्धितान्तं चैवार्थवत्, न केवलाः कृतस्तद्धिता वेति कृत्तद्धित—इति सूत्रेऽन्तग्रहणं न कार्यम्" इति । "अर्थवद्ग्रहणानुवृत्तिसामर्थ्यादेव चेदृशार्थलाभ" इति

भैरवी ।

स्भवादत आह–व्याख्यानादिति । बहुलक्ष्यसंस्कारमूलकाद्व्याख्यानादित्यर्थः । यतो ऽत्रार्थवत्त्वेन सादृश्यं विवक्षितमतः "सुप्तिङन्तं पदम्" इति सूत्रस्थभाष्यमपि सङ्गच्छते । तस्मिन् सूत्रे ऽन्तग्रहणेन संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणन्नेति ज्ञापनोत्तरं–"कृत्तद्धितसमासाश्च" इत्यन्तग्रहणङ्कर्तव्यम्, न कर्तव्यम्, अर्थवदिति वर्तते, न केवलाः कृतस्तद्धिता वा" इति भाष्ये उक्तम् । तत्रान्वयव्यतिरेकगम्यार्थवत्ता केवलानामपि कृत्तद्धितानामस्तीति 'न केवला' इत्यसङ्गतमित्याशङ्कायाम् 'अर्थवद्ग्रहणानुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नोऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयते' इति कैयटेनोक्तम् । तत्र सामर्थ्यवर्णनमनुवृत्त्यभावेऽपि तस्य लाभश्चेद्भवति तदा धातुपर्युदासात्तस्य लाभो भविष्यतीति तदभिप्रायकमेवेति । इत्युक्तमित्येतावन्मात्रकथनेऽपि पौनरुक्त्यभावो न लभ्यत इत्यत आह–एतेनेति ।

भावप्रकाश ।

**व्याख्यानादिति** । बहुलक्ष्यसंस्कारानुरोधमूलकात् । यद्वा, अनेकार्थसम्भवेऽभियुक्तव्याख्यानस्यैव प्रामाण्यमिति लण्सूत्रभाष्योक्त्या सुप्तिङन्तमिति सूत्रस्थार्थवत्पदानुवृत्तिसामर्थ्यवर्णनपरभाष्यमूलकादिति भावः । एतेनासत्त्वार्थकत्वादिनिरासः । एतेन तेनापि सादृश्यसंभवाद्घटादौ संज्ञा न स्यादिति तद्ग्रहण मिति, अर्थवत्त्वेनैव सादृश्यम् नान्यधर्मेणेत्यत्र मानाभाव इति च, यत्तु यत्त्वाहुरित्यादिना हरदत्तानुयायिप्रकाशग्रन्थमंशेनानूद्यात्रेदं वक्तव्यमित्यादि दूषणं तदेतदस्वरसप्रवृत्तेन न च ज्ञायते केन धर्मेण सादृश्यमिति हरदत्तादिग्रन्थेनासत्त्वार्थकत्वरूपेण सादृश्यं स्यादितितात्पर्यकेण तैरेव निराकृतमित्यनादेयमिति, एवंचोत्तरार्थत्वमित्युक्तिः कस्य चिदुक्तेति च खण्डनकृदुक्तमपास्तम् । सर्वानुवादसत्त्वेनांशेनानुवादाभावाच्च हरदत्तेन तथोक्तावपिप्रकाशकृता ऽग्रेतथानुक्तत्वाच्चेति दिक् । **एतेन**—उक्तमित्यनेन । अन्यथा तदाधिक्यं स्पष्टमेव । **दार्ढ्यायेति** । द्विर्बद्धं सुबद्धम्भवतीति न्यायात् । तेन पौनरुक्त्यं नेति भावः । **वर्त्तते**–अनुवर्त्तते । **अर्थवत्**–अर्थवत्पदगृहीतार्थवत् । ग्रहणानुवृत्तीति पाठः कैयटपुस्तके तथोपलम्भात् । **ईदृशेति** । एकार्थीभावेनेत्यादिमूलोक्तेत्यर्थः । तथानभिमतत्वे तु सामर्थ्यवर्णनं भाष्याद्युक्तमसङ्गतं स्यादिति भावः । वस्तुतो ऽस्मादेव भाष्यकैयटग्रन्थात्सूत्रद्वये तुल्यार्थवत्त्वलाभ इत्यन्यत्र स्फुटमिति नायं भव-

सरला ।

**व्याख्यानादिति** । "निपातस्यानर्थकस्य" इति अनर्थकनिपातानां पृथक् प्रातिपदिकसंज्ञाविधायकस्य वार्तिकस्य करणेन तन्मूलादित्यर्थः ।

**गृह्यते इति** । तथाच सूत्रे 'अर्थवत्'पदं पुनरपि विफलमेवेति शङ्काशयः ।

समुदायार्थारोपात्।।एवं कन्नप्यनर्थकः। यावशब्दादपि तदर्थप्रतीतेः। "ओषधेश्च विभक्तावप्रथमायाम्" "अकर्तरि च कारके–" इति विभक्तिकारकग्रहणाभ्यां नञिवयुक्तन्यायस्यानित्यत्वकल्पनाच्चेति।

अत्रेदं वक्तव्यम्। धातुरनर्थक इति तावद्व्याहतम्। क्रियावाचकत्वं विना धातुत्वायोगात्। आरोपितं तदिति चेत्? सत्यम्, तावतैवेष्टसिद्धेः। प्रकृतिप्रत्ययविभागस्तत्तदर्थ-

## शब्दरत्नम्।

कैयटः। **समुदायार्थारोपादिति**। तेन तन्मात्रस्य क्रियावाचित्वनिबन्धनधातुत्वसिद्धिरिति भावः। **तत्** क्रियावाचकत्वम्। **तत्तदर्थविभागश्चेति**। तस्य तस्येति कृतद्विर्वचनेन षष्ठीसमासे, स सोऽर्थविभाग इति कर्मधारये वा विभक्तिलुकि इदं साधु। **एतेनान्यान्यप्रादुर्भावादिति** "अपादाने पञ्चमी" इति सूत्रस्थभाष्यप्रयोगोऽपि व्याख्यातः। सुबन्त

## भैरवी।

तेन–आरोपेण। तन्मात्रस्य–इङ्मात्रस्य। ननु तदर्थेत्येव वाच्यं तावतैव प्रक्रान्तयोः प्रकृतिप्रत्यययोर्बोधसम्भवेन तत्तदर्थेति न वाच्यम्, न च स्पष्टम्प्रकृतिप्रत्यययोर्बोधनाय द्वन्द्वनिर्देशोऽयमिति वाच्यम्, एकशेषप्रसङ्गादत आह–तस्येति। कृतद्विर्वचनेन वीप्सायामित्यादिः। षष्ठीसमासे–अर्थविभागशब्दस्यार्थशब्दस्य वेति शेषः। एकदेशान्वयापत्तिभिया आह–स स इति। अत्रापि स स इति वीप्सायामेव द्विर्वचनम्। इदम्–तत्तदर्थविभाग इति पदम्। उक्तरीत्या साधुत्वे उपष्टम्भकं सूचयन्नाह–एतेनेति। उक्तप्रकारेणेत्यर्थः।

ननु प्रत्ययग्रहणपरिभाषया कृतद्विर्वचनस्य षष्ठ्यन्तत्वसुबन्तत्वयोरभावात्कथं षष्ठीसमासस्य कर्मधारयस्य वा प्रसक्तिरत आह–सुबन्तत्वमपीति। अपिना षष्ठ्यन्तत्वपदत्वयोः परिग्रहः।

## भावप्रकाश।

दिष्टार्थसाधक इति गूढाशयः। **सिद्धिरिति**। तथाच नाद्द्वित्वाव्यवस्था तन्मतेऽपीति भावः। धातुत्वाभ्रभावाह–**क्रियेति**। ननु तदर्थेत्येव वाच्ये तदा प्रकृतिप्रत्ययोभयपरामर्शसम्भवेनान्यतत्पदानर्थक्यम्। न च स्पष्टं द्वयोर्बोधनाय द्विरुपादाने द्वन्द्वेन रूपसिद्धिरिति वाच्यम्। एकशेषस्य जागरूकत्वात्। नचैवमप्याष्टमिकवीप्साद्वित्वेन तत्साधु। विभक्त्यन्तस्यैव द्वित्वापत्त्या पूर्वपदे तच्छ्रवणापत्तेः, अकर्मव्यतिहारेण समासवद्भावाप्राप्तेरत आह—**तस्येति**। वीप्सायामितिशेषः। **षष्ठीति**। अर्थविभागशब्दस्यार्थशब्दस्येति वा शेषः। अत्र पक्षे एकदेशान्वयापत्तेर्गौरवाच्चाह—**स स इति**। वीप्साद्वित्वं तुल्यम्। तथा च समासत्वात्तत्वेन विभक्तिलुका रूपसिद्धिरिति भावः। **इदम्**–तत्तदर्थविभाग इति पदम्। एवं साधुत्वे उपष्टम्भकमाह–**एतेनेति**। उक्तप्रकारेणेत्यर्थः। एतेनैतद्भाष्योक्तिप्रामाण्यादकर्मव्यतिहारेऽपि बहुलग्रहणात् कचित्समासवद्भावाङ्गीकारादन्यान्येति साध्विति कैयटश्चिन्त्य इति सूचितम्। ननु प्रत्ययग्रहणे इति समुदायस्यासुबन्तत्वात्सुप्सुपेत्येकत्वस्य विवक्षितत्वाच्च समासस्यैवाप्राप्तिरत आह–**सुबन्तत्वमिति**। अपिना

## सरला।

**षष्ठीसमासे इति**। तद् अस् इत्यस्य "नित्यवीप्सयोः" इत्यनेन द्वित्वे तद् अस् तद् अस् इति जाते पश्चाद् अर्थशब्देन समासविवक्षायां समुदायस्य स्थानिवद्भावेन सुबन्तत्वमादाय अर्थ–स् इत्यनेन षष्ठीसमासे अनस्तमितावयवभेदस्यैवादेशत्वमिति सिद्धान्तात् समुदायघटकस्य अस्द्वयस्य सुप्त्वानपायात् तल्लुकि विभागशब्देन समासे 'तत्तदर्थविभागः' इति सिद्ध्यति। **कर्मधारये वेति**। तद् सु इत्यस्य पूर्ववद्द्वित्वे पूर्ववदेव समुदायस्य सुबन्ततदादित्वमादाय 'अर्थविभाग स्' इत्यनेन सह "विशेषणं विशे-

### शब्दरत्नम् ।

त्वमपि द्विःप्रयोगपक्ष इव स्थानेद्विर्वचनपक्षेऽप्याद्यान्यशब्दे प्रकृतित्वबुध्द्याऽन्त्यस्यशब्दे प्रत्ययत्वबुध्द्या सूपपादम् ।

### भैरवी ।

द्विःप्रयोगपक्ष इवेति । यद्यपि समासग्रहणकृतनियमेन समुदायस्याप्रातिपदिकत्वन्तथापि कस्कादिगणे कौतस्कुत इत्यस्य पाठेन तद्धितोत्पत्तिर्भवतीति ज्ञापनवदाद्योच्चारणविषये यस्माद्विहितस्तत्त्वबुद्धिरन्त्यस्यशब्दादौ सुप्त्वषष्ठीत्वबुद्धिरित्यपि कल्पनीयम् उक्तापादाने पञ्चमी इतिसूत्रस्थभाष्यप्रयोगादिति यथेत्यर्थः । वस्तुत उक्तप्रयोगाभ्यां स्थानेद्विर्वचनपक्ष एव ज्ञाप्यतामित्याशयेनाह–स्थाने द्विर्वचनपक्षे ऽपीति । अस्योपमानत्वेन निर्देशो युक्तत्वस्य सूचनाय । यद्यप्यस्मिन् पक्षे स्थानिवद्भावेन सुबन्तत्वं सूपपादं तथापि त्वदुक्तरीत्यैव निर्वाह इत्याशयेनाह–आद्येति । अत्राद्यशब्दः सुलभत्वध्वननाय। नन्वस्मिन्पक्षे समुदाये स्थानिवद्भावेनोक्तरीत्या वा सुबन्तत्वबुद्धिर्भवतु तथापि तदवयवे सुप्त्वबुद्धिर्न स्यात् , वस्नसादिषु प्रकृतिप्रत्ययविभागसम्मोहो यथा । अत एव 'आटिटत्' इत्यत्र स्थानेद्विर्वचनपक्षे णिलोपानापत्तिरूपन्दूषणमभिहितम् । तथाच–"सुपो धातु" इत्यस्य कथं प्रवृत्तिरिति चेन्न, उक्तभाष्यप्रयोगेणानस्तमितादेशत्वस्य समुदाये कल्पनेनादोषात् । एवञ्चाक्ते द्विर्वचने स्थानिनि समुदायावयवे वा या या बुद्धिः सा सा ऽधुनापीति सुब्लुकः सिद्धिः । अत एव 'अग्रे ऽग्रे' 'वृक्षान् वृक्षान्' 'अपचन्नपचन्' इत्यादौ पूर्वरूपणत्वप्रतिषेधङ्मुडागमादीनां सिद्धिः । अत एवास्मिन्पक्षे तावेव सुप्तिङौ, यौ ततः परौ, सैव प्रकृतिराद्या समुदायपदत्वमेतेनेति षाष्ठे "एकाच" इति सूत्रे भाष्यकृतोक्तम् ।

### भावप्रकाश ।

पदत्वम् । **द्विष्प्रयोगेति** । कस्कादिषु कौतस्कुतशब्दपाठेन कृताष्टमिकद्वित्वात्समासनियमेनोभयमते ऽप्रातिपदिकत्वेपि तद्धितोत्पत्तिज्ञापनेन पौनःपुन्यं पौनःपुनिक इत्यादावदोषेणाष्टमिके पदद्वित्वे तत्पक्षस्याप्यदुष्टत्वादिति भावः । षाष्ठद्वित्वपरतया दृष्टान्तयोजनं तु तत्रासुबन्तत्वेनाक्षरस्वारस्यानानुगुणमिति बोध्यम् । वस्तुतस्तेन स्थानेद्विर्वचनमेव ज्ञापयितुमुचितमित्याह–**स्थानेति** । अत एव तस्योपमानत्वेन निर्देशः, स च तस्यान्यदीयत्वमस्य स्वीयत्वं ध्वनयति । यद्यपि स्थानिवत्त्वेनात्र पक्षे तत्त्वं सुलभम् । तथापि त्वदङ्गीकृतयुक्त्यैव निर्वाह इति सूचयितुं तदनुल्लेखः । एतदतिसौलभ्यद्योतनायैवापिः, यद्वा बुद्ध्येत्यग्रे स योज्यः, तेन स्थानिवत्त्वसमुच्चयः । नन्वेवमपि तत्पक्षे एवेदं सम्भवति नात्र पक्षे । स्थानिवत्त्वेन समुदितस्य सुबन्तत्वादिना समासेऽपि वसादाविव सम्मोहात् । एवं च लुगपि न स्यात् । अत एव षाष्ठे तदनङ्गीकारः । आटिटदित्यादौ णिलोपाद्यनापत्तेरिति चेन्न । तत्र उक्तज्ञापकेन सर्वस्येत्यनेन च स्थाने द्विर्वचने एव निर्णीते द्विरावृत्तस्थानिसदृशशब्दरूपमादेश इत्यर्थके द्विरिति वाच्ये द्वे इति द्विवचनबलेनानस्तमितावयवभेदोपस्थितपदसमूहात्मकादेशस्य विधानेन प्रत्येकमपि सुबन्तत्वादेरङ्गीकारेणादोषात् । अतएवाग्रेऽग्रे वृक्षान्वृक्षान् अपचन्नपचन्नित्यादौ पूर्वरूपणत्वनिषेधङ्मुडादिसिद्धिरश्नीताश्नीतेत्यादावपररूपत्वं च सिद्धम् । एतेनैकैकमित्यादौ बहुव्रीहिवद्भावेपि तदवयवयोः सुप्त्वे मानाभावात्सुब्लुगनापत्तिरित्यपास्तम् । एवं प्रकारेण षाष्ठे निर्वाहेऽपि यथा द्विष्प्रयोगत्वं तथा प्राक् प्रतिपादितम् । तथा च प्रत्येकमपि सुबन्तत्वादि । समूहस्यापि तद् ध्वनयन्नाह–**आद्यान्येति** ; यत्र च तावेव सुप्तिङौ यौ ततः परौ सैव च प्रकृतिराद्या आदिग्रहणं च कृतं समुदायपदत्वमेतेन' इति "एकाचः" इति सूत्रस्थभाष्यं मानम् । ततश्चार्थभेदेन यः परस्मात्स पूर्वस्मादपि भवतीति समूहस्य तत्त्वं सुलभम् । लक्ष्यभेदाद्द्वित्वात् प्राक् प्रवृत्तत्वेऽपि लक्ष्येलक्षणेति न्यायाविषय इति भावः । **स्यशब्दे प्रत्ययत्वेति** । तथाच विशेषजिज्ञासायां तद्विधिना विशेषसुप्त्वज्ञानस्यापि सम्भव इति भावः । स्पष्टा चेयं रीतिरुभयविधद्वित्वप्रकरणे आकरे ।

विभागश्च सर्वः कल्पित एव। परमार्थतस्तु स्फोट एवार्थवानिति सिद्धान्तात्।

शब्दरत्नम्।

**सर्व इति।** धातूपसर्गविभागो वृत्तिष्वेकार्थीभावश्चैवमेवेति भावः। **स्फोट एवेति।** पदरूपो वाक्यरूपो वेत्यर्थः। लोकानां तत्रैव शक्तिग्रहेण बोधादिति भावः। अत एव तस्य परमार्थत्वं लोके बोधजनकत्वात्। शास्त्रेण प्रकृतिप्रत्ययविभागव्युत्पादनेन विशिष्टपदस्यैव तत्तदर्थबोधनद्वारा विशिष्टे पदे विशिष्टार्थबोधकत्वमेव बोध्यते। उपलालना इत्यस्य

भैरवी।

सर्वपदार्थमाह—धातूपसर्गेति। एवमेव—कल्पित एव। स्फोटः स्फुटत्यर्थो ऽस्मादिति स्फोटः वाचकः शब्दःस च हृदयप्रदेशे ऽभिव्यक्तः कर्णपिधाने सूक्ष्मतरवाय्वभिघातेन स्वमात्रश्रव्यः प्रणवापरपर्यायनादशब्दबोध्यः आन्तरो व्यञ्जकतत्तद्वर्णप्रतिबिम्बयुक्तोऽभिधीयते। अधिकमन्यत्र स्फुटम्। यद्यप्यष्टौ स्फोटा अन्यत्रोक्तास्तथापि निष्कर्षे वाक्यस्फोटस्यैवावस्थानमित्यत्रान्ते लेखः। तस्य परमार्थत्वे साधकमाह—लोकानामिति। व्युत्पित्सूनामित्यर्थः। प्रयोज्यप्रयोजकवृद्धव्यवहारेणावग्रहस्य तत्रैवोत्पत्तेः। नन्वेवं शास्त्रेण तस्याप्रतिपादनेन शास्त्रानर्थक्यम्प्राप्नोतीत्यत आह—शास्त्रेणेति। पाणिनीयेनेति शेषः। पदस्येवेति तद्द्वारा वाक्यस्य चेत्यपि बोध्यम्। प्रतिवाक्यं सङ्केतग्रहासम्भवाल्लघुभूत उपायः शास्त्रेण बोध्यते शाखाचन्द्रन्यायेन। एवञ्च तत्तदवयवस्य तत्तदर्थानाञ्च प्रदर्शनं वाचकस्य समुदायस्य विशिष्टार्थस्य च बोधनतात्पर्यकमेवेति भावः। स च समुदायो बौद्ध एव परम्परया बोध्यते, अर्थोऽपि बौद्ध एव। अत एव वन्ध्यासुत इत्यादेरुपपत्तिः। क्रियापदरहितस्य बोधकत्वाभावादाह—भवन्तीति। उपलालनाः। वञ्चनस्थानापन्ना मिथ्याभूता इत्यर्थः।

भावप्रकाश।

सर्वपदार्थमाह—**धातूपेति**। अन्यथा तदानर्थक्यं स्पष्टमेव। **एवमेवेति**। कल्पित एवेत्यर्थः। तत्त्वं चात्मबोधकपञ्चकोशादिकल्पितत्ववत्। एतेन प्रकृतिप्रत्ययविभागादौ कल्पितत्वे शशविषाणकल्पनया नित्यस्फोटात्मकज्ञानासम्भव इत्यपास्तं, रेखागवयन्यायेन ज्ञापकत्वसम्भवाच्च। **स्फोट एवेतीति**। स्फुटत्यर्थो ऽस्मादिति स्फोटो वाचकः आकाशवृत्तिर्हृदयदेशे ऽभिव्यक्तः कर्णपिधाने सूक्ष्मतरवाय्वभिघातेनोपांशुशब्दप्रयोगे च स्वमात्रश्राव्यः प्रणवापरपर्यायनादांश आन्तरो व्यञ्जकतत्तद्वर्णप्रतिबिम्बयुतो मध्यमवागवस्थः शब्द इति यावत्। यद्यपि वर्णस्फोटादयोऽष्टौ पक्षा आकरे उक्तास्तथाप्यन्येषामवास्तवत्वध्वननायाह—**पदेति**। अस्यापि तत्त्वादाह—**वाक्येति**। अत एव वाक्यादपोद्धृत्य पदान्यन्वाख्यायन्ते। नन्वन्येषां कुतो ऽवास्तवत्वमत आह—**लोकानामिति**। व्युत्पित्सूनां बालानामित्यर्थः। एवमग्रेऽपि। **तत्रैव**—वाक्यस्फोटे एव। शक्तिग्राहकशिरोमणिवृद्धव्यवहारस्य पूर्वं तेनैव जायमानत्वादिति भावः। तदाह—**शक्तीति**। अत एवेत्यस्यार्थं स्पष्टार्थमाह—**लोके इति**। न त्वात्मन इव तत्त्वमिति भावः। नन्वेवं शास्त्रानर्थक्यं तेन तदप्रतिपादनादत आह—**शास्त्रेणेति**। पाणिनीयेनेत्यर्थः। **पदस्येति**। तद्द्वारा वाक्यस्य चेत्यपि बोध्यम्। एवमग्रेऽपि। **तत्तदर्थबोधेति**। प्राग्वत्। अयं भावः, प्रतिवाक्यं संकेतग्रहस्यानन्त्यादसम्भवात्तदन्वाख्यानस्य लघूपायेनाशक्यत्वाच्च वाक्ये पदानि कल्पनया प्रविभज्य तत्र प्रकृत्यादिभागान् तथैव प्रविभज्य शास्त्रकल्पितान्वयव्यतिरेककल्पिततत्तदर्थविभागः शास्त्रमात्रव्यवहारोपयोगीति तत्तदवयवतत्तदर्थबोधनेन समूहस्य तदर्थस्य च बोधने तात्पर्यम्। एवं च शास्त्रेण बौद्ध एव स रेखागवयन्यायेनान्वाख्यायते तज्ज्ञानमेव च धर्मजनकमिति च बोध्यते तच्छक्योऽर्थोऽपि बौद्ध एव बोद्धव्य इति शशशृङ्गादौ न दोष इति। अन्वयार्थं पूर्वोत्तरार्द्धयोः संगत्यर्थं चाह—**भवन्तीति**। तथा च ताद्रू-

सरला।

प्येण बहुलम्" इत्यनेन समासे तत्सिद्धिरिति भावः। **पदरूप इति**। वाक्ये वाक्यैकदेशप्रयोगे पदमात्रेणैव लोकानां बोधदर्शनात्। यथा 'द्वारम्' इत्यत्र। **वाक्यरूप इति**। स्पष्टोऽर्थः। **परमार्थत्वमिति**।

उक्तं च हरिणा—

उपायाः शिक्षमाणानां बालानामुपलालनाः ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥ इति ।

कथमन्यथा इको द्विर्वचनमडादयश्च स्युः । तथा च प्रत्याहाराह्निके अर्थवन्तो वर्णा इति प्रघट्टके अध्येति अधीत इत्यत्रेकारोऽर्थवानिति भाष्ये स्पष्टमेवोक्तम् । एवं कन्प्रत्ययोऽप्यर्थवानेव, स्वार्थिकानां प्रकृत्यर्थनैवार्थवत्त्वात् । कल्पनामात्रमिदमिति चेत्, न । उक्तोत्तरत्वात् । नैषा कल्पना शास्त्रकृत्संमतेति चेत्, न । "द्वितीयतृतीयचतुर्थतुर्याणि—" इति सूत्रे पूरणात्स्वार्थेऽन्प्रत्ययस्य पूरणार्थताया भाष्यकारैरेवोक्तत्वात् । प्रत्यय इति महासंज्ञां कुर्वतः सूत्रकृतोऽपि संमतमेवेदम् । यदपि "ओषधेश्च—" इत्यादि । तदपि न । अनित्यत्वेऽप्यौत्सर्गिकप्रवृत्त्या इष्टसिद्धेः,

## शब्दरत्नम् ।

भवन्तीति शेषः, न तु वास्तवा इति भावस्तदाह—**असत्ये इति** । आरोपिते इत्यर्थः । लोकानान्तत्तच्छब्दजन्यबोधानुपयोगित्वात्तत्त्वम् । **सत्यं**—विशिष्टशक्त्या बोधकं पदादीत्यर्थः । **स्युरिति** । अधिजगे, ऽध्यगीष्टेत्यादौ । **अर्थवत्त्वादिति** । आरोपितार्थवत्त्वादित्यर्थः । **शास्त्रकृत्**—भाष्यकृदादिः । **सम्मतेति** । तद्धितविषये इति शेषः ।

## भैरवी ।

**पर्यवसितार्थमाह**—नत्विति । **तस्यारोपितत्वमुपपादयति**—लोकानामिति । **मुख्यार्थवत्त्वाभावादाह**—आरोपितेति । **गौतमादिभ्रमापगमायाह**—भाष्यकृदादिः । **त्रिषु प्राधान्याद्भाष्यकृत एवात्रादावुल्लेखः । अत्र निर्विसर्गपाठो युक्तः, शास्त्रकृच्छब्दस्य मूले समस्तत्वात् । ननु प्रत्याहाराह्निक इत्यादिना स्पष्टमित्यन्तेन भाष्यकारमतस्य दर्शितत्वान्नैषेति शङ्काया अनुत्थितिरत आह**—तद्धितविषय इति । **तथाच तद्धितविषये प्रत्याहाराह्निके नोक्तमिति शङ्काया उत्थिति-**

## भावप्रकाश ।

शानां तेषामुपाया उपलालना वञ्चनस्थानापन्ना मिथ्याभूता इति यावदित्यर्थः । तत्फलितमाह—**नत्विति । आरोपिते**—कल्पिते तत्तदवयवे तत्तदवयवार्थे चेति यावत् । **तत्त्वम्**—असत्यत्वम् । पदस्यापि तत्त्वादाह—**आदीति** । तेन वाक्यतदर्थसंग्रहः । ननु मूले इको द्वित्वे इवाडादयश्चेत्यत्रान्वयोऽस्ति उत न ? नाद्यः, तस्याजादितया तदप्राप्तेः । नान्त्यः, पूर्वसन्दर्भविरोधापत्तेः, उदक्षरत्वाच्च । एतेनाध्यगीष्ट प्रातिष्ठतेत्यादाविति मान्योक्तं प्राचामनुरोधेनेति ध्वनितम् । नचात एवाडादयश्चेति पाठः तत्पाठस्याप्युपपत्तौ तथा पाठकल्पने मानाभावात् । एतेन वार्त्तिकमते आटोऽभावात्तथोक्तमित्यपास्तम् । तस्याप्युपपत्त्या वार्त्तिकमतपर्यन्तधावने बीजाभावादिति चेन्न वक्ष्यमाणरीत्योपपत्तेराद्यपक्षाङ्गीकारात् । तद् ध्वनयन्नाह—**अधीति** । विशेषविहितत्वादादौ गाङादेशः । द्वित्वेऽप्यादेशद्वारैव सम्बन्धस्य वाच्यत्वेनात्रापि तथा सम्भव इति भावः । अत्रादिना तस्य लङ्रूपसंग्रहः । तत्र च मूलोक्तादिनाऽऽट्प्राप्तिरिति साक्षात्सम्बन्धोऽपि सुवच इति भावः । मुख्यार्थवत्त्वाभावादाह—**आरोपितेति** । गौतमाद्यभ्रमायाह—**भाष्येति** । आदिना सूत्रकृत्संग्रहः । अत एव वक्ष्यति मूलकृत्—प्रत्यय इतीत्यादि । तथाचोत्तरमूलानुरोधाद्यथोत्तरं मुनीनां प्रामाण्याच्चैवमेवोक्तम् । एतेन सूत्रकृदादिरिति वक्तुमुचितमित्यपास्तम् । ननु प्रत्याहाराह्निके भाष्ये । तथा स्पष्टमित्युक्त्या नैषेत्यादिशङ्कानुत्थितिरेवातआह—**तद्धितेति** । तथा च तत्रानुक्त्या शङ्कोत्थितिर्युक्तैवेति भावः ।

## सरला ।

वास्तविकवाचकत्वं ध्वनिव्यङ्ग्यस्फोटस्यैव तथाऽपि तस्य पदादिरूपेणैव प्रत्यक्षविषयतया पदादीनामपि वाचकत्वव्यवहार इति बोध्यम् ।

इष्टस्थले ऽप्यप्रवृत्तौ न्यायस्य निर्विषयत्वापाताच्च, अनित्यत्वज्ञापनस्य कथञ्चिदावश्यकत्वे ऽर्थवद्ग्रहणस्यैव ज्ञापकत्वसंभवाच्च, उत्तरार्थस्यापि इह किञ्चित्त्रपो इति न्यायेन इह करणस्य सफलत्वौचित्यात्। "ओषधेश्च-" इत्यादौ विभक्तिकारकग्रहणयोरेवेत्थं सति प्रत्याख्यानसम्भवाच्चेति दिक्।

---

शब्दरत्नम्।

औत्सर्गिकप्रवृत्तौ हेतुमाह—**इष्टस्थलेऽपीति**। चः पञ्चम्यर्थहेतुत्वानुवादकः। **कथंचिदिति**। अनेन तदनावश्यकत्वमेवेति ध्वनयति। ननूत्तरत्र चरितार्थस्य कथं ज्ञापकत्वमत आह—**उत्तरार्थस्यापीति**। "इकोचि—"इति सूत्रेऽज्ग्रहणस्योत्तरार्थतामुक्त्वा भाष्ये उक्तमिह किंचित्त्रपो इति। "न लुमता"—इति निषेधानित्यत्वज्ञापनद्वारा त्रपो इत्यत्र गुणः फलमिति तदर्थः। **इत्थं सतीति**। लघुना ऽनेनैवानित्यत्वज्ञापनमाश्रित्य न्यायानुसरणेन तयोः प्रत्याख्यानसम्भव इति भावः।

भैरवी।

रिति भावः। वचनस्यौत्सर्गिकी प्रवृत्तिर्गमकसापेक्षेति प्रकृते गमकाभावात्कथम्प्रवृत्तिरत आह—**औत्सर्गिकेति**। अत्र गमकान्तरानुक्तेश्चकारस्य प्रयोगोऽनुपपन्न इत्यत आह—**चः पञ्चम्यर्थेति**। **पातादिति** पञ्चम्यर्थेत्यर्थः। एवञ्च चकारो व्यर्थ एवेति तात्पर्यम्। अनेन—**कथञ्चिदिति**-पदेन। एतेन तज्ज्ञापनस्य भाष्यसम्मतन्दृढतरम्फलन्नास्तीति ध्वनितम्। "इह किञ्चित् त्रपो" इति न्यायसत्ताम्प्रदर्शयति—इकोचीत्यादिना। यद्यप्युत्तरार्थन्तथाऽप्युत्तरार्थस्योत्तरत्रैव करणमुचितमिह करणङ्किञ्चित्फलसाधकम्, तत्किम्? त्रपो इतीति तदर्थः। अनित्यत्वेति। एतेन तस्य निषेधस्य पाक्षिकी प्रवृत्तिरिति प्रदर्शितम्। तत्फलन्तु "एङ् ह्रस्वात्"इतिसूत्रस्थभाष्ये 'त्रपु' इति प्रयोग एव।

इत्थं सतीति। अर्थवद्ग्रहणस्यैव ज्ञापकत्वसम्भवे सतीत्यर्थः। लघुनेति। एकस्यास्य फलद्वयसाधकत्वसम्भवे ऽनित्यत्वज्ञापनमात्रफलकं यत्तद् द्वयं तद्व्यर्थमिति तात्पर्यम्।

ननु धातोः प्रातिपदिकसंज्ञायान्ततः सुबुत्पत्त्यापत्तिर्वक्तव्या, द्वयोः संज्ञयोराकडारीयान्यत्वेन समावेशेऽपि परत्वात्सुब्विधायकशास्त्रस्य तत्प्रवृत्तेर्न्याय्यत्वात्। लडादयः पुत्रीयतीत्यादौ सावकाशाः "भूवादयः" इतिधातुसंज्ञापि 'श्रियौ' इत्यादावियङादिसम्पादकत्वेन

भावप्रकाश।

औत्सर्गिकप्रवृत्तेर्गमकाधीनतयाऽत्र गमकान्तराभावादाह—**औत्सर्गिकेति**। **पञ्चम्यर्थेति**। पातादिति पञ्चम्यर्थेत्यर्थः। तथा च व्यर्थ एव स न हेतुसमुच्चायक इति भावः। **अनेन**—कथंचिदिति पदेन। तज्ज्ञापने भाष्यसम्मतदृढतरफलाभावादिति भावः। न्यायसत्त्वे मानमाह—**इकोऽचीति**। **उत्तरार्थतां**—पुंवद्भावार्थताम्। **उत्तरार्थत्वे** तत्रैव कार्यमिह करणं व्यर्थमतस्तस्यापि किं चित्फलं वाच्यं, तत्किम्? त्रपो इतीत्यक्षरार्थः। तावताऽपि तदसिद्धेराह—**नलुमतेति**। अनित्यत्वेऽपि वैकल्पिकत्वेत्यर्थः। तथा च पाक्षिकी प्रवृत्तिरस्त्येव। अत एवैङ्ह्रस्वादित्यत्र त्रपु इति भाष्यप्रयोगः। **तदर्थः**—तत्फलितार्थः। **इत्थं सति**—तस्य तज्ज्ञापकत्वसम्भवे सति। **लघुनेति**। एकेनोभयोपकारात्तत्त्वं, तत्र त्वेक एवोपकार इति भावः।

ननु धात्वनिषेधेऽहनित्यादावाकडारीयान्यत्वेन संज्ञाद्वयसमावेशे परत्वात् सुप्स्यात्। लडादयस्तु श्येनायत इत्यादौ सफलाः। भूवादय इति धातुसंज्ञाऽपि श्रियावित्यादावियङाद्युत्पत्त्या सफला इत्याह—

"अधातुः" इति किम् ? अहन् । नलोपो मा भूत् । न च कार्यकालपक्षे प्रत्यया-न्तत्वेन पर्युदासोऽस्त्वति वाच्यम् । प्रत्ययलक्षणेनाक्तपर्युदासाप्रवृत्तेः "न ङिसं-

शब्दरत्नम् ।

**नलोप इति** । सुबुत्पत्तिस्तु नोक्ता । "भूवादयो"—इत्यस्य लविधौ तिबादिविधौ चोपस्थितेनिरवकाशतया अपवादैस्तिबादिभिर्बाधात् । **कार्यकालपक्षे इति** । न च य-

भैरवी ।

चरितार्थेति, नलोपमात्रस्य फलत्वेन प्रदर्शनमफलमत आह—सुबुत्पत्तिरिति । निरवकाशतयेति । अस्य 'सर्वथा' इत्यादिः । एतेन पूर्वं लडादीनामुत्पत्तिरिति ध्वनितम् । एतेनापवादविषये बा-ध्यप्रातिपदिकसंज्ञायाः कथम्प्रवृत्तिरिति शङ्काया नावकाश इति ध्वनितम् । अपवादशब्दोऽत्र बाधकपरः । तिबादिभिरिति । आदिशब्देन तत्स्थानिलडादेरपि सङ्ग्रहः । येननाप्राप्तिन्यायस्य नात्र विषयता, सम्प्रति प्रातिपदिकसंज्ञाया अप्राप्तिविषये चारितार्थ्याभावात् । गमकाभा-वादौत्सर्गिकैकवचनोत्पत्तिरपि नोक्ता । ननु नलोपवारणस्य यथोद्देशपक्षेऽपि सम्भवेन विशि-ष्यात्र कार्यकालपक्षस्यवोपादानमफलमित्याशङ्कां वारयितुमुपक्रमते—नचेत्यादिना । अत एव भाष्येऽप्रत्यय इत्यत्र पर्युदासप्रसज्यप्रतिषेधयोराशङ्काङ्कृत्वा अन्त्ये राजा तक्षेत्यादौ प्रत्य-

भावप्रकाश ।

**सुबुत्पत्तिरिति । निरवकाशतयेति** । सर्वथेत्यादिः । तथा च तया पूर्वं तेषां प्रवृत्तिरिति भावः । तदाह—**अपवादरिति** । बाधकैरित्यर्थः । **तिबादिभिरिति** । तिप आदिः स्थानी लट् स आदिर्येषां तैरित्यर्थः । लडादिभिरितियावत् । **बाधात्**—प्राक्जातत्वात् । ननु येननेति न्यायविषयः तदप्राप्तियोग्ये चारितार्थ्यादिति भावः । औत्सर्गिकैकवचनाद्यभावस्तु प्राग्वत् । प्रत्ययान्तपर्युदासेन नलोपवारणस्य यथोद्देशेऽपि सम्भवेन कार्यकालपक्षे इति व्यर्थं मूले व्यावर्त्याभावात् । अत एवाप्रत्यय इत्यत्र पर्युदासप्रतिषेधावाशङ्क्यान्त्ये सुब्लोपे च प्रत्ययलक्षणेन निषेधः प्राप्नोति राजा तक्षेति, नङीतिज्ञापकान्न दोष इति च साधारणभाष्योक्तिः सङ्गच्छते इत्याशयकजगन्नाथोक्तिं खण्डयति—**नच यथोद्देशेऽपीति** । नचैवं तस्य निरवकाशतापत्तिः । श्रूयमाणप्र-

सरला ।

**नलोप इतीति** । अत्र केचित्—"नलोपोऽतिङः" इति न्यासेन 'अहन्' इत्यस्य तिङन्ततया नलोपाप्राप्तेः प्रातिपदिकत्वेऽपि न दोषः । न च तन्न्यासे ऐधेरन् पचेरन् इति यस्मिन् व्यापारे स एधेरन्पचेरा व्यापार इत्यत्र समुदायस्य "एहीडादयोऽन्यपदार्थे" इति समासत्वेन प्रातिपदिकत्वेऽपि तिङन्तावयवत्वादतिङ इति पर्युदासे नलोपानापत्तिरिति वाच्यम्, तिङन्ततदादिभिन्नावयवनकारस्य लोप इत्यर्थस्वीकारेण समुदायस्य तिङन्ततदादिभिन्नतया नलोपसिद्धेः । अ अहन् इति यस्मिन् स 'आहा' व्यापार इत्यत्र परादिवद्भावेन तिङन्ततदादित्वस्य सत्त्वेन तत्र नलोपानापत्तिस्तु नापादनीया, समासग्रहणनियमपरभाष्येण तस्यानभिधानात् । अन्यथा परादिवद्भावेन प्रत्ययान्ततदादित्वस्यापि सत्त्वेन "अर्थवत्" सूत्रस्य 'अप्रत्ययः' इत्युक्त्याऽप्राप्तौ तत्र प्रातिपदिकसंज्ञाविधानाय समास-ग्रहणस्यावश्यकत्वेन नियमार्थत्वायोगात् । नचैवं 'सर्वस्मिन्' इत्यत्र नलोपापत्तिस्तस्यातिङन्तत्वादिति वाच्यम् । उच्चारणसामर्थ्येन तत्र नलोपाप्रवृत्तेः । न च नकारोच्चारणस्य 'हेसर्वस्मिशय' इत्यत्र नलो-पेऽपि तस्यासिद्धत्वेन संयोगसंज्ञाप्रवृत्त्या "गुरोरनृत" इति प्लुतसंपादनेन चारितार्थ्यमिति वाच्यम्, "न-लोपः सुप्स्वर" इति सूत्रे भाष्ये संज्ञायाः 'दण्डिदत्तौ' 'दत्तदण्डिनौ' इति कष्टसाध्यफलदानेन तत्र सूत्रे संज्ञापदेन घिसंज्ञाया एव ग्रहणेन संयोगसंज्ञायां नलोपासिद्धत्वाप्रवृत्तेः । "नलोपः सुब् यतः" इति न्यासेन 'सर्वस्मिन्' इत्यत्र दोषाभावाच्च । तथाच 'अधातुः' इत्यस्य सूत्रेऽभावेऽपि न क्षतिरित्या-हुः । **निरवकाशतयेति** । अयम्भावः 'भुवो' इत्यादावुवङ्प्रवृत्तये "भूवादयो धातवः" इत्यस्य चारिता-र्थ्येऽपि कार्यकालपक्षे प्रतिसूत्रं संज्ञाशास्त्रस्योपस्थित्या तदेकवाक्यतेति सिद्धान्तात् "अचिश्नु" सूत्रे तदु-पस्थितेश्चारितार्थ्येऽपि "वर्तमाने लट्" इत्यादिसूत्रेषु तदुपस्थितेर्निरवकाशत्वमेवेति तिबादीनां सुब्-बाधकत्वमिति । **तिबादिभिरिति** । वस्तुतस्तु प्रथमोपस्थितत्वात् लडादिभिरित्युचितम् । यद्वा, तिपः

शब्दरत्नम् ।

थोद्देशेऽपि प्रत्ययान्तत्वस्य भावित्वेनाकृतव्यूहपरिभाषया फलाभावेन च संज्ञाया अप्रवृत्तिरितिवाच्यम् । अकृतव्यूहपरिभाषाया अनित्यत्वादसत्त्वाच्च । भविष्यति किं चित्फलमित्यभिसन्धिमात्रेणतत्र पक्षे संज्ञायाः प्रवृत्तेः प्रगृह्यसंज्ञाप्रकरणे कैयटेनोक्तत्वाच्च । यथोद्देशपक्षेण पर्युदासे लक्ष्यसिद्धेः शङ्कासमाधाने अत्र निर्दले । न हि व्यवस्थितयोः पक्षयोरन्यतरेण लक्ष्ये सिद्धे पक्षान्तरेण शङ्काऽप्युचितेत्यर्थस्य प्रगृह्यसंज्ञाप्रकरणे भाष्ये ध्वनितत्वादिति

भैरवी ।

यलक्षणेन प्रतिषेधः प्राप्नोतीति शङ्कायां "न ङि" इति ज्ञापकान्न दोष इति साधारण्येनोक्तिः सङ्गच्छत इति भावः । फलाभावेनेति । तस्मिन्काल इत्यादिः । अप्रवृत्तिरिति । तदानीमिति शेषः । मूलस्योक्तभाष्यस्य च तात्पर्यन्दर्शयितुमादौ कैयटादिरीत्याऽऽह—अकृतेति । अनित्यत्वादिति । प्रकृतिप्रत्ययापत्तिवचनेनानित्यत्वादित्यर्थः । स्वसिद्धान्तरीत्याह—असत्त्वेति । पूर्वोक्तन्द्वितीयहेतुन्निराचष्टे—भविष्यतीति । तत्र पक्षे—यथोद्देशपक्षे । यथाश्रुतभाष्यस्य प्रकारान्तरेण सङ्गमने मूलकारोक्तरीत्या तद्योजनमुचितमित्याशयेनाह—यथोद्देशेति । पर्युदासे—लाघवादधातुरिति पर्युदासे । लक्ष्यसिद्धेः—अहन्नित्यस्य राजेत्यस्य च लक्ष्यस्य सिद्धेः । शङ्कासमाधाने—नच कार्यकालपक्षे इत्यादिना शङ्कासमाधाने । निर्दले—निःसारे । शङ्केति—दोषस्येत्यादिः । अत एव भाष्यकृता पर्युदासपक्षे राजा तक्षेत्यत्र दोषशङ्का न कृतेति बोध्यम् । तत्र—अहन्नित्यत्र तिङुत्पत्तेः प्राक् प्रातिपदिकसंज्ञाया व्यावर्तकतया धातुपर्युदासस्य सार्थक्यम् । राजेत्यस्य तु प्राक्प्रवृत्तप्रातिपदिकसंज्ञया सुबुत्पत्त्या नलोपस्य प्रवृत्त्या च सिद्धिः । पर्युदासत्युपादानन्तु यदि प्रसज्यप्रतिषेधः स्यात्तदा "निषेधाश्च बलीयांसः" इति न्यायेन प्रत्ययोत्पत्तेः प्रागपि निषेधविषये बाध्यप्रातिपदिकसंज्ञायाः प्रवृत्तिर्न स्यादित्याशयेन । एतेन कैयटोक्तिरपि पर्युदासपक्षे नङीत्यस्य ज्ञापकत्वोपपादनपरा निस्सारेति दर्शितम् । नहीति । अत्र हिशब्दो यत इत्यर्थे वर्तते । पक्षयोः—कार्यकालयथोद्देशपक्षयोः ।

भाष्ये ध्वनितत्वादिति । तत्र हि—'अग्नी इत्याह' इत्यत्र प्राक् प्रगृह्यसंज्ञायान्तस्य

भावप्रकाशः ।

त्ययस्थले सावकाशत्वादितिभावः । भावेन चेति । तत्प्रवृत्तिकाले इतिभावः । अप्रवृत्तिरिति । तदानीमितिभावः । ततश्चानन्तरं कार्या, सा च मूलरीत्या नेति शेषः । मूलसौष्ठवं यथाश्रुतभाष्यासौष्ठवं च ध्वनयितुमादौ कैयटादिरीत्याऽऽह—अकृतेति । सिद्धान्तरीत्याऽऽह—असत्त्वाच्चेति । द्वितीयहेतुं निराचष्टे—भविष्यतीति । मात्रपदेन तदानीं तत्सत्त्वादिनिरासः । इदमेव तत्पक्षस्वरूपम् । तथाच तत्पक्षे तदा ऽफलत्वेऽपि संज्ञा जाता नापगता चेति नलोपाभावायाधातुरित्यस्य साफल्येऽपि पक्षान्तरेण शङ्कासमाध्योरवसर एवेति तत्पक्षनिरासाय तद्विशेषणमिति मूलं युक्तम् । अत एव राजेति प्रतीके ऽन्त्राप्यन्तरङ्गत्वात्प्रागेव प्रवृत्ता संज्ञा बहिरङ्गेण निषेधेन न शक्यते दूरीकर्त्तुमिति परिहारोऽस्तीति कैयटः सङ्गच्छते। एवं च मूलरीत्या भाष्यं योजनीयम्। एतेन 'एतेन कार्यकाले इति नङीति ज्ञापनविषयम् ।तत्रैव तस्य वैयर्थ्यात् । यथोद्देशे तु प्राक्प्रवृत्तसंज्ञयैव निषेधसाफल्येन ज्ञापकत्वानुपपत्तेरिति प्रत्युक्तम् , तत्रापि संज्ञाया अप्रवृत्तेरुक्तत्वेन पक्षद्वयेऽपि ज्ञापकत्वस्याक्षतेः'—इति जगन्नाथोक्तमपास्तमिति भावः। वस्तुतो यथाश्रुतभाष्यसौष्ठवं कैयटासौष्ठवं च ध्वनयितुं मूलं खण्डयति—यथोद्देशेत्यादि । पर्युदासे इति । लाघवादधातुरित्यादि पर्युदासे इत्यर्थः । एतेन मूलस्थपर्युदासपदं निषेधपरमभिप्रेत्य तदापि "उपजनिष्यमाण"इति न्यायेन तत्पक्षेऽपि प्रागप्रवृत्त्या तद्विशेषणवैयर्थ्यमिति मूलमयुक्तमेवेति जगन्नाथोक्तमपास्तम् । मूलशैथिल्यात् । भाष्यं तु प्रसज्यप्रतिषेधे प्रवृत्तमिति न तद्विरोध इति भावः । लक्ष्येति । अहन् राजेत्यादीत्यर्थः । शङ्कासमाधाने—नचकार्यकाले इति प्रत्ययलक्षणेनेति चेत्यर्थः । अत्र—विषये । निर्दले—निस्सारे । अनेन कैयटोपि तथेति सूचितम् । लक्ष्यसिद्धेर्हेतुत्वोपपत्तये आह—नहीति । हि यतः लक्ष्यानुसाराद्व्यवस्थितयोर्यथोद्देशकार्यकालपक्षयोरित्यर्थः । शङ्कापीति । दोषेत्यादिः । अपिः काकाम् । तच्छङ्काप्यनुचिता किमुत

बुद्धयो:" इति निषेधेन ज्ञापितत्वात् । कथमन्यथा राजेत्यादौ नलोपः स्यात् ।अप्र-

शब्दरत्नम् ।

कश्चित् । कथमन्यथेति । न च राजेत्यादौ कृदन्तत्वात्प्रवृत्तिः । तत्रापि 'अप्रत्ययः—'

भैरवी ।

स्थाने "गुरोरनृत" इति प्लुते "ईदूदेत्" इति तपरकरणात्पुनः प्रगृह्यसंज्ञा प्रकृतिभावफलिका न प्राप्नोति प्लुतसंज्ञाकृतस्य प्रकृतिभावस्य त्वप्रवृत्तिः "अप्लुतवदुपस्थिते" इत्यप्लुतवद्भावस्य विधानात् प्रगृह्यसंज्ञाविधायकसूत्रदृष्ट्या प्लुतस्यासिद्धत्वन्तु न भवति, कार्यकालपक्षे प्रगृह्यसंज्ञायाः "प्लुतप्रगृह्या"इत्येतदेकवाक्यतया स्वरसन्धिस्थत्वसम्पत्त्या "सिद्धः प्लुतः स्वरसन्धिषु" इत्यनेन सिद्धत्वस्य बोधनादित्याशङ्क्य यथोद्देशपक्षाश्रयणेन समाहितं, तेनास्य ध्वनितत्वादित्यर्थः । कश्चिदिति । अत्रारुचिबीजन्तु यथोद्देशपक्षे यद्यप्युक्तरीत्या निर्वाहस्तथापि पक्षान्तरे सम्बुद्धिपदस्योक्तार्थज्ञापनपरत्वम्भाष्यकृदुक्तमनुपपन्नमेवेति ।

वस्तुतस्तु पर्युदासाश्रयणेपि कार्यकालपक्षे ज्ञापनमावश्यकमेव । नच स्वाश्रयाप्रत्ययान्तत्वेन तत्सिद्धिः ? अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात् अत एव रामानित्यादौ न स्वाश्रयाप्रत्ययान्तत्वनिमित्तकप्रातिपदिकत्वेन नलोपः । एवञ्च शङ्कासमाधाने निर्दल इत्युक्तिरसङ्गतैवेति ॥

मूले—कथमन्यथेति । अन्यथा—प्रत्ययलक्षणेन पर्युदासस्य प्रवृत्तौ कथं स्यादिति योजना । राजेत्यादेरुत्तरसूत्रेण सिद्धेः कथमन्यथेत्यनुपपन्नमित्याशङ्कान्निराचष्टे—नचेत्यादिना ।

भावप्रकाश ।

तदापादनमनुचितमिति वाच्यम्, तत्तु सुतरामनुचितमित्यर्थः । अत एव पर्युदासपक्षे न स दोषः शङ्कितो भाष्ये । एवं च यथाश्रुतभाष्यसौष्ठवमधातुरित्यस्य साफल्यं चेति मूलकैयटौ चिन्त्यावेवेति भावः । ननु कथं भाष्यसौष्ठवमिति चेच्छृणु । पक्षद्वये नलोपो न स्यादिति शङ्का । न च यथोद्देशे कैयटरीत्या तत्सिद्धिः । लुगादिनेव निषेधेनापि जातनिवृत्तिरिति तदाशयात् । भुक्तवन्तमित्यस्य तु लुगादाविवात्रापि त्यागः । किञ्चात्र शास्त्रे तदनाश्रयणमेव । अन्यथा नियमादिशास्त्रानर्थक्यापत्तेः । ततः सिद्धान्ती ज्ञापकमाह—नङीति । प्रागुपजनिष्यमाणेति न्यायेन तदभावाद्विभक्तिसम्पत्त्या जाताया नष्टत्वाच्च सत्त्वेवा तद्बुद्धेर्निषेधाच्चेति न्यायेन निरस्तत्वाच्च तत एव निषेधेन पुनरप्राप्तेश्च पक्षद्वये तत्र लोपाप्राप्त्या सम्बुद्धिग्रहणं ज्ञापकमिति तदाशयः । एवं च नान्यतरपक्षेणात्र तत्सिद्धिरिति न तद्भाष्यविरोधः । एतेन तद्भाष्यरीत्या मूलकैयटयोरसाङ्गत्येपि पक्षान्तरे सम्बुद्धिपदसार्थक्येन तद्ज्ञापकपरभाष्यासङ्गतिरनुद्धृतैवेत्यरुचिसूचनाय कश्चिदित्यपास्तम् । नन्वेवं मूलमपि भाष्यरीत्या सुयोजं समाधेः साधारण्येन शङ्कायां कार्यकाले इत्युपलक्षणं यथोद्देशस्यापि, प्राधान्यात्तु तदुल्लेखस्तथा च वामेनादणेतिवन्निर्देशः । पर्युदासशब्दो निषेधपरः । अत एव तद्भाष्यविरोधोपि न, स कैयटस्तु चिन्त्य एवात आह—कश्चिदिति । तथा चारुचिरेवेयं तत्खण्डन इति भावः । केचित्तु ज्ञापकेन यदि जातानिवृत्तिरेवान्वाख्यायते लुगादिना ऽनुत्पत्तिरिव । अवयवलोपशास्त्रैरपि तत्तदवयवशून्यस्यैव तद्विषये प्रत्ययत्वादि बोध्यते इत्युच्यते । तदा मूलभाष्यकैयटा युक्ता एव । प्रागुक्तरीत्या विना ज्ञापकं लक्ष्यासिद्धेः । अतस्तद्भाष्यविरोधोऽपि नेत्यरुचिसूचकः कश्चिदित्याहुः । वस्तुतस्तु पर्युदासशब्दो यथाश्रुतः । तत्र पक्षेऽपि कार्यकाले विना ज्ञापकं नेष्टसिद्धिरिति तदावश्यकम् । नच स्वाश्रयाऽप्रत्ययान्तत्वात्सिद्धिः । अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावस्यातिदेशस्वभावसिद्धत्वात् । अत एव तण्डुलानित्यादेर्न प्रातिपदिकत्वमिति न नलोपस्तत्रेति स्पष्टमसिद्धवत्सूत्रभाष्यकैयटयोः । एतेनाधातुरित्यादि स्यादित्यन्तं मूलमनर्थतच्च प्रसज्यप्रतिषेधेनोक्तं पर्युदासे ज्ञापकत्वायोगादिति रत्नाकरोक्तमपास्तमिति शङ्काशयः, ज्ञापकेन यथोद्देश एवाङ्गीक्रियते इति सिद्धान्ताशयः । एवं च मूलकृताऽत्र शङ्कासमाधिभ्यां पर्युदासे यथोद्देशेन लक्ष्यसिद्धिरेव दृढीक्रियत इति न ततः प्रागन्यतरेण लक्ष्यसिद्धिनिर्णयः । अत एव न तद्भाष्यविरोध इत्येवमरुचिसूचकः खण्डने कश्चिच्छब्द इति बोध्यम् ।

तत्रापि—कृत्तद्धितांशेऽपीत्यर्थः । सिद्धान्ते समासांशे न फलमिति स्पष्टमत्रैवोद्द्योते । स च निषेधः

शब्दरत्नम् ।

**इत्यस्य सम्बन्धात् । अत एव दाक्षी, दिदृक्षू इत्यादौ परादिवद्भावेन न सुपो लुक् । न च सुब्लोपविषयमेव ज्ञापकम् । असति बाधके प्रमाणानां सामान्ये पक्षपात इत्यर्थस्यापि ज्ञाप·**

भैरवी ।

**अत एव–उत्तरसूत्रेऽप्यप्रत्यय इत्यस्य सम्बन्धादेव । न सुपो लुगिति । एतयोस्तद्धितान्तकृदन्तत्वे पूर्वान्तवद्भावेनैकदेशविकृतन्यायेन च बोध्ये । ज्ञापकम्––"न ङिसम्बुद्ध्योः" इति ज्ञापकम् । ज्ञापनादिति । अधातुग्रहणेनेति शेषः । अन्यथा—"न ङि" इतिसूत्रस्य विशेषापेक्षज्ञापकत्वे । यत्तु'दाक्षी' 'दिदृक्षू' इत्यत्र "उभयत आश्रयणे नान्तादिवत्"इति निषेधाद्दोषाभावेन नोत्तरसूत्रे ऽप्रत्यय इत्यस्य सम्बन्ध इति। तत् तुच्छम्, पूर्वान्तवद्भावेन प्रातिपदिकत्वस्य परादिवद्भावेन सुप्त्वस्य बुध्या लोपस्य प्रवृत्तिरित्येकत्रोभयोर्नाश्रयणमिति भवदुक्तन्यायविषयताया**

भावप्रकाश ।

पर्युदासो वा तथा च कृत्तद्धितेत्यस्य प्रतिप्रसवत्वेन तदुपस्थितकृत्तद्धितरूपप्रत्ययहेतुकतदन्तत्वप्रयुक्तैतत्सूत्रप्राप्तनिषेधबाधकत्वेऽप्यन्यप्रत्ययान्तत्वप्रयुक्तनिषेधेनास्यापि बाधः तत्सम्बन्धसामर्थ्यात् । अन्यथा तदानर्थक्यं स्पष्टमेवेति भावः। यत्तु यद्यपि व्युत्पत्तिपक्षे कृदन्तत्वादत्र तत्त्वेन प्राप्तनलोपाभावाय नङीत्यस्य सार्थक्येनाज्ञापकतयाऽधातुग्रहणं कार्यकाले व्यर्थं तथाप्यव्युत्पत्तिपक्षे ज्ञापक एवेति कार्यकालेऽपि तत्स्वीकार्यमिति दण्ड्युक्तम् । तन्न , अव्युत्पत्तिपक्षस्यैव भाष्यसिद्धान्तत्वात् । अप्रत्यय इति सम्बन्धं विना दाक्षी इत्यादीनामसिद्ध्या तस्यावश्यकत्वाच्च । तदेतत्सिद्धान्ते समासांशेऽफलत्वं च ध्वनयितुं कृदंशे एव सम्बन्धो न तद्धितांशे इति भ्रमं व्युदस्तुं चाह–**अत एवेति** । तत्सम्बन्धादेवेत्यर्थः । परादिवद्भावः सुप्त्वेहेतुः । अयंभावः, तदसम्बन्धे पूर्वान्तवत्त्वेनैकदेशेति न्यायेन वा लब्धकृदन्तादित्वलब्धप्रातिपदिकत्वलब्धतदवयवत्वस्य परादिवत्त्वेन सुप्त्वस्य चोकारादौ सत्त्वेन "सुपो धातु"इति लुगापत्तिः । एतेनोभयत आश्रये तन्निषेधादिदं चिन्त्यमित्यपास्तम् । एकत्र तदभावात् । तत्सम्बन्धे तु निषेधात्तदन्तत्वहेतुकसंज्ञैव नेति तदनवयवत्वात्तेन सुप्त्वेऽपि न लुक् । न चैवमपि किमत्र कृदादिप्रत्ययहेतुक एव निषेध उत तदन्यप्रत्ययहेतुकः? नाद्यः, कृत्तद्धितग्रहणानर्थक्यापत्तेः । नान्त्यः, उभयत आश्रये तन्निषेधेन परादिवत्त्वेन तदन्यप्रत्ययान्तत्वस्य दुर्वचत्वात् । किं चादिवत्त्वेन ई इत्यादेः प्रत्ययत्वेऽपि यतो विहितस्तदादित्वाभावेन निषेधाप्रवृत्तेः । पूर्वान्तवत्त्वेन तदादित्वं तु दुर्लभं तन्निषेधादिति वाच्यम् । क्षान्तादौ समुदाये दृष्टा इति न्यायेनैकदेशेति न्यायेन च सुप्प्रकृतित्वारोपात्कृदन्तत्वेन चाक्षतेः । एतेन न चाधिकरणे चेत्यादिनिर्देशेन सुबेकादेशस्यान्तवत्त्वनिषेधादपूर्वान्तत्वेनाकृदन्ततया ऽप्रातिपदिकत्वान्नोक्तदोष इति वाच्यं, समासांशेऽप्रत्यय इत्यस्यावश्यकत्वेन कृत्तद्धितांशेऽपि तस्य न्याय्यत्वे तेनापि वारणसम्भवात् । नह्येकेनैवैकं वारणीयमिति नियमोऽस्ति, हेसुराजन्नित्यादौ समासप्रातिपदिकत्वप्राप्तनलोपनिषेधेन नङीत्यस्यसाफल्ये तज्ज्ञापकपरभाष्येण सुराजेत्यादौ कार्यकाले नलोपार्थं विध्यर्थत्वे सम्भवति समासग्रहणं नियमार्थमिति भाष्येण च समासांशे तदावश्यकत्वं ध्वनितं कैयटे च स्पष्टमित्यपास्तम् । तथाप्येकदेशन्यायेन तत्त्वानपायात् । निर्देशानसङ्गतेर्वक्ष्यमाणत्वाच्च । नचैवं तदन्तपर्युदासो न कार्य इत्युत्तरग्रन्थविरोध इति वाच्यम् । अस्य ग्रन्थस्य कैयटाद्यनुरोधित्वात्तद्ग्रन्थस्य तत्प्रत्याख्यानपरभाष्यसिद्धान्तानुरोधित्वेनादोषात् । तदा हि वक्ष्यमाणरीत्या दाक्षी इत्यादौ न लुक् । नङीति ज्ञापकपरभाष्यप्रामाण्येन प्रागुक्तरीत्या यथोद्देशस्यैवाश्रयणेन सिद्धान्ते न समासग्रहणनियमार्थतानुपपत्तिः । एवं च समासेऽप्यप्रत्यय इति वर्त्तत इति कैयटस्तदनुयायिरत्नाकरश्चासङ्गत एवेति स्पष्टमुद्द्योते इति । यत्तु प्रत्ययान्तपर्युदासे कार्ये सुब्लोपनिमित्तप्रत्ययलक्षणं नेत्यत्रेदं मानं विशेषापेक्षत्वात् । एवंचाहनित्यत्र तिङ्लोपनिमित्तप्रत्ययलक्षणस्य तत्र कार्ये दुर्वारत्वेनाधातुरिति न कार्यमिति खण्डनकृत्, तत्खण्डयति–**नचेति । ज्ञापकमिति ।** तथा चाधातुपदं व्यर्थमिति भावः । **असतीति।** अत एव "ओः पुयण्जि"इत्यादिज्ञापकस्य न सामान्यापेक्षत्वमिति भावः । **प्रमाणानाम्**–ज्ञापकानाम् । **सामान्ये**–व्यापकधर्मे । व्याप्यधर्मोपस्थितौ व्यापकधर्मोपस्थिते·

शब्दरत्नम् ।

नात् । अन्यथा सूत्रोपस्थितङिसम्बुद्धिमात्रविषयता स्यादिति राजपुरुषासिद्धिः ।

भैरवी ।

अभावात् । अप्रत्यय इत्यस्य सम्बन्धे तु तत्र प्रत्ययपदङ्कृत्तद्धितातिरिक्तप्रत्ययपरम् । एवञ्च कृत्तद्धितातिरिक्तप्रत्ययान्तभिन्नस्य प्रातिपदिकसंज्ञेत्यस्य फलिततया ऽस्य तत्त्वबुध्या सा नेति भावः । नचात्र ई इत्यादेः परादिवद्भावेन कृत्तद्धितातिरिक्तप्रत्ययत्वबुद्धावपि स यस्माद्विहितस्तदादित्वम्पूर्वान्तवद्भावेन वाच्यमित्युभयत आश्रयणमेकदैवेति निषेधः स्यादिति वाच्यम् । रामावित्यादाविवैकदेशविकृतन्यायेन क्षान्ते यस्माद्विहितस्तत्त्वस्य बुध्या परादिवद्भावेन ईकारादौ तदन्यप्रत्ययत्वबुध्या निषेधस्य प्रवृत्तेः ।

नन्वत एवेत्याद्युक्तमसङ्गतम् 'सप्तम्यधिकरणे च' इति निर्देशेन विभक्त्यंकादेशस्यान्तवत्त्वाभावस्य ज्ञापनादित्यस्य वक्ष्यमाणतया पूर्वान्तवद्भावेन कृत्तद्धितान्तत्वस्य वक्तुमशक्यत्वादिति चेत् ? न, उपायस्योपायान्तराद्रूपकत्वमिति न्यायेन वक्ष्यमाणज्ञापकम्परित्यज्यात्राप्रत्यय इत्यस्य झटितिस्मृतत्वेन तेनैव वारणस्य सुकरत्वप्रदर्शनायेत्थमभिधानात् । पूर्वोक्तरीत्या क्षान्ते यस्माद्विहितस्तत्त्वम्परादिवद्भावेन द्विवचनत्वम् । अत एव "ईदूदेत्" इति प्रगृह्यसंज्ञेत्यवश्यं वाच्यमिति यथा, तथैव तदतिरिक्तप्रत्ययबुद्धिरपि भविष्यतीत्यस्य स्पष्टप्रतिपत्त्यर्थमेवमभिधानाच्च । आवश्यकश्चोत्तरसूत्रे ऽप्रत्यय इत्यस्य सम्बन्धः । अन्यथा प्रकृतसूत्रभाष्ये राजा तक्षेत्यत्र प्रत्ययलक्षणेन प्रत्ययान्तत्वात्प्रातिपदिकसंज्ञायाः कार्यकालपक्षे प्रतिषेधमाशङ्क्य "न ङिसम्बुद्ध्योः" इत्यस्य प्रत्ययलक्षणेनाप्रत्यय इति पर्युदासाप्रवृत्तौ ज्ञापकत्वप्रदर्शनङ्कृतन्तद्विरोधः स्यात् । सम्बुद्धौ प्रतिषेधस्य "हे सुराजन्" इत्यत्र समासत्वात्प्राप्तप्रातिपदिकसंज्ञायाः कार्यकालपक्षेऽपि सत्त्वेन नलोपनिषेधायावश्यकत्वात् । अतस्तद्भाष्यसङ्गमनायोत्तरसूत्रे समासांशे ऽप्रत्यय इत्यस्य सम्बन्धेन समासानवयवप्रत्ययान्तभिन्नसमासस्य ग्रहणमित्यर्थो यथा तथा कृदाद्यंशेपीत्याशयः कल्प्यः । अत एव समासग्रहणस्य नियमार्थत्ववर्णनपरभाष्यग्रन्थोऽपि सङ्गच्छते । अन्यथा 'सुराजा' 'सुतक्षा' इत्यत्र कार्यकालपक्षे नलोपाय समासत्वात्प्रातिपदिकसंज्ञाविधायकत्वेन समासग्रहणस्य चरितार्थतया तदसङ्गतिः स्पष्टैवेति । सामान्ये पक्षपात इति । अस्य यथाऽन्यत्रोपस्थितसामान्यधर्माक्रान्ते कार्यसिद्धिः, स्वविषये इष्टस्य च सिद्धिस्तादृशार्थज्ञापकत्वमित्यर्थः । अन्यथा—स्वविषये यथा चारितार्थ्यन्तन्मात्रज्ञापकतापि स्यादिति राजपुरुषादिपदे पूर्वपदस्य प्रत्ययान्ततया प्रातिपदिकत्वा-

भावप्रकाश ।

वश्यकत्वादिति भावः । ज्ञापनादिति । अधातुपदेनेति शेषः । अपिर्नलोपवारणसमुच्चायके ज्ञापनादित्यग्रे योज्यः । तथा ज्ञापनं विना तन्निवारकत्वासम्भवात् । यावता विनानुपपत्तिस्तेन तत्सर्वं ज्ञापनीयमिति सिद्धान्तात् । अत एव तत्र तत्र ज्ञापकस्थले स्वातिरिक्ते फलसिद्धिरिति सैवास्य फलं स्वस्मिन्साफल्यं तु स्पष्टमेव । यद्वा, विशेषे पक्षपात इति स्वाभाविकार्थसमुच्चायको यथाश्रुत एव । अत एव "अव्ययादाप्सुपः" इत्यादेर्विशेषापेक्षत्वम् । यद्वाऽपिरेवार्थे सामान्ये इत्यग्रे योज्यो यथाश्रुतो वा । "अव्ययादाप्सुपः" इत्यादौ तु बाधकतिङाद्युत्पत्त्यादिवशात्तथेति भावः । **अन्यथा**—तन्मताङ्गीकारे । **उपस्थितेति** । नङीति सूत्रोपस्थितेत्यर्थः । तथाचोपस्थितमितिन्यायेन ततोऽपि विशेषापेक्षत्वापत्त्या सुब्लोपविषयतापि न स्यात् । नचैवमन्यत्राफलत्वात्तत्त्वासङ्गतिः तथाऽर्थस्याधातुपदेनोक्तार्थज्ञापनं विनाऽसिद्धेः । राजपुरुषेत्युपलक्षणं राजेत्यादेरपीति केचित् । वस्तुतस्तु क्वचिदन्यत्राफलत्वात्तथाविशेषापेक्षत्वाङ्गीकारेऽप्यत्र तन्मते फलसत्त्वात्तथैवाङ्गीक्रियते इति उपस्थितेत्याद्युक्तं, राजेति विहाय राजपुरुषपर्यन्तं गमनं च निर्बीजमिति चेत्तस्यायं भावः, सूत्रोपस्थितेति संबुद्धिसंज्ञानङीत्युभयसूत्रेत्यर्थः । अन्यथा तदाधिक्यं स्पष्टमेव । ङिसुरूपविशेषमादाय ज्ञापकता स्यादितिभावः, तदाह—**ङिसंबुद्धीति** । संबुद्धित्वमुपलक्षणं न तु विशेषणम् । तथा च ङिसुमात्रविषयकता स्यादित्यर्थः फलितः । अत एव राजेत्यादिसिद्धिः फलमस्तीत्यन्यत्र फलसत्ताऽपि स्वाभाविक्येवेति बो-

त्यय: किम् ? हरिषु, करोषि । अत्र सुप्सिपोर्मा भूत् । अप्रत्ययान्तः किम् ?

शब्दरत्नम् ।

स्पष्टा चेयं रीतिः "सार्वधातुकमपित्" इत्यत्र भाष्ये। प्रकृतसूत्रभाष्ये चेदं स्पष्टम् । **अत्र सुप्सिपोरिति** । तयोः प्रातिपदिकत्वे तत्सामर्थ्यादौत्सर्गिकैकवचने तच्छ्रवणापत्तिः। विभक्त्यर्थस्य लिङ्गं प्रति स्वरूपायोग्यत्वेन न नपुंसकत्वाश्रयो विभक्तिलुक् ।

भैरवी ।

नापत्तौ नलोपानापत्तिरित्यर्थः। नच तादृशविशेषापेक्षत्वे राजा तक्षेत्यस्याप्यसिद्धेर्जागरूकत्वाद्राजपुरुषपर्यन्तानुधावनमफलमिति वाच्यम्, सूत्रोपस्थितेति विशेषणस्य विशेषत उपादानेन सम्बुद्धिसंज्ञाविधायकं यत् "एकवचनं संबुद्धिः" इति सूत्रन्तस्यापि क्रोडीकारेणैकवचनविषयतायान्तात्पर्यन्नतु सम्बुद्धिसंज्ञकमात्रविषयकतायामित्यभिप्रायात्। एवञ्च ङिसुविषयकता स्यादित्यस्य फलितत्वेन राजा तक्षेत्यस्य सिद्धिर्भविष्यतीति षष्ठ्यन्ते दोषोपपादनं युक्तमेव । तथाच ज्ञापकसामान्यस्य यः स्वभावः स्वातिरिक्ते फलनिष्पादकत्वरूपः सोऽपि यथा "न ङि" इत्यस्य निर्वहति तथैव ज्ञापनं युक्तमिति भावः ।

एवम्प्रकारस्य ज्ञापकविषये ऽन्यत्र प्रक्लृप्तत्वप्रदर्शनायाह–स्पष्टा चेयमिति । इयं रीतिः— ज्ञापकानां सजातीयापेक्षत्वमङ्गीकृत्य स्वविषये चारितार्थ्यमिति रीतिः । इत्यत्र भाष्य इति । तत्र हि–सार्वधातुकपदस्य प्रयोजननिरूपणावसरे तदभावे 'कर्ता, हर्ता' इत्यादा तृजादेरपि ङित्त्वप्राप्तिशङ्काया आर्द्धधातुकेषु चङ्ङादिषु ङित्करणरूपज्ञापकेन निरासङ्कृत्वा सजातीयापेक्षत्वेन धातुभ्यो विहिता ये प्रत्ययास्तद्विषयकत्वशङ्कां सार्वधातुके अव्याप्त्यापत्त्याऽऽर्द्धधातुकत्वेन साजात्यमादाय नियमकरणेन निरस्य यद्येवङ्कल्प्यते तदा चङ्ङौ लुग्विकरणानां ज्ञापकौ, नजिङ् वर्तमानकालानामथङ्औणादिकानां नङ्शब्दो घञर्थानां ज्ञापको भविष्यति । तथाच तृजादेर्ङित्त्वापत्तिरिति सार्वधातुकग्रहणङ्कर्तव्यमित्यभिहितम् । एवञ्च यथा बाधकसत्त्वात्तत्र न सामान्यापेक्षत्वं किन्तु विशेषापेक्षत्वेन चारितार्थ्यमित्युक्तं, तथा अत्रापि बाधकसत्त्वे विशेषापेक्षत्वं तदभावे तु सामान्यापेक्षत्वम्भविष्यतीति तात्पर्यम् । भाष्ये चेदमिति । अत्र चस्त्वर्थे । इदम्–प्रत्ययलक्षणेन प्रतिषेधाभावे नङीतिसूत्रस्य ज्ञापकत्वम् । स्पष्टम्–कण्ठरवेणोक्तम् ।

ननु सुप्सिपोः प्रातिपदिकत्वे पदत्वापत्तौ षत्वानापत्तिरूपो दोषः सुबुत्पत्तावेव वाच्यः स तु न सम्भवति गमकाभावेन सुबुत्पत्तिरेव न सम्भवतीत्यत आह–तयोरिति । तत्सामर्थ्यादिति । प्रातिपदिकसंज्ञासामर्थ्यादित्यर्थः । तथाचेदमेव गमकमिति भावः । अन्येन तूक्तन्तयोर्लुकापहारङ्खण्डयति–विभक्त्यर्थस्येति । अत एव "ह्रस्वो नपुंसके" इतिसूत्रभाष्ये 'काण्डे' 'रमते'

भावप्रकाश ।

घ्यम् । तद् ध्वनयन्नाह–**राजपुरुषेति** । तत्र ङिस्वोरभावादिति भावः । स्वाभाविकत्वमेव ध्वनयितुम् एवं प्रकारसत्त्वे दृष्टान्तमाह–**स्पष्टा चेति** । सार्वधातुकपदाभावे आर्द्धधातुकेऽतिव्याप्तिं चङ्ङादिङित्त्वज्ञापकेन निरस्य धातुप्रत्ययसामान्यविषये ज्ञापके सार्वधातुके ऽव्याप्तिं तुल्यजातीयत्वेन निरस्य यद्येवं चङ्ङौ लुग्विकरणानां ज्ञापकौ नजिङ् वर्त्तमानकालानामथङ्शब्द औणादिकानां नङ्शब्दो घञर्थानां तथा च तृजादावतिव्याप्तिरिति तत्कार्यमिति तत्रोक्तम् । एवं च सामान्यापेक्षत्वं तद्वत्स्वाभाविकमिति न तदर्थमधातुग्रहणम् । तथा च प्रागुक्तं सूत्ररीत्या, न तु भाष्यरीत्या । अत एव वस्तुतस्त्विति तत्त्वमुक्तम् । एतेन तस्यैवं सार्थक्ये तत्प्रत्याख्यानपरभाष्यविरोध इत्यपास्तम् । **चेदमिति** । चस्त्वर्थे । ज्ञापकेन तत्र नलोपसाधनमित्यर्थः। **तत्सामर्थ्यादिति**। तथा च तदेवात्र गमकमिति भावः। **लिङ्गं प्रतीति**। अत एव काण्डे

सरला।

आदिः लङादिरिति विग्रहेण तत्संग्रह इति । **स्वरूपायोग्यत्वेनेति** । लिङ्गनिष्ठप्रकारतानिरूपितविशेष्य-

तत्रैव विभक्तिविशिष्टयोर्मा भूत्। न चान्तवद्भावेन काण्डे, कुड्ये, इत्यादौ प्रातिपदिकत्वं स्यादेव। तथा च "ह्रस्वो नपुंसके–" इति ह्रस्वत्वं सोरुत्पत्तिश्च स्यादिति वाच्यम्। कार्यकालपक्षेणेष्टसिद्धेः। यथोद्देशेऽपि विभक्त्येकादेशो नान्त-

शब्दरत्नम्।

तत्सत्त्वे तु पदादित्वेन षत्वनिषेधापत्तिर्दोष इतिभावः। तत्रैवेति। अत्राप्यौत्सर्गिकैकवचनापत्तिः "सुपो धातु–" इति लुगापत्तिश्च, पचेरन्नित्यादौ नलोपापत्तिश्चेति भावः। स्यादेवेति। पूर्वं विभक्त्युत्पत्तये जातस्यातिदेशेन विभक्त्यन्ते बुद्धिरिति भावः। यथोद्देशेऽपीति।

भैरवी।

इत्यनयोरर्थयोः सुबर्थक्रियारूपयोर्लिङ्गसंख्याभ्यां योगो नास्ति विचित्रत्वात्पदार्थशक्तीनामित्यभिहितम्। तत्सत्त्वे त्विति। नपुंसकत्वसत्त्वे त्वित्यर्थः। अत्र तुना प्रागुक्तभाष्यविरोधापत्तिरूपाऽरुचिर्ध्वनिता। मूले—तत्रैवेति। हरिषु करोषीत्यत्रैवेत्यर्थः। नन्वत्र नात्सर्गिकैकवचनापत्तिर्गमकाभावात्। नच पूर्ववत् प्रातिपदिकसंज्ञासामर्थ्यमिति शङ्क्यम्, फिट्स्वरप्रवृत्त्या साफल्यात् सुबिति पकारस्य प्रत्याहारनिष्पादकतया सिबादेः पित्त्वस्याङित्त्वसम्पादकतया चारितार्थ्यसम्भवात्। नच समासस्येत्यन्तोदात्तविधानसामर्थ्यात्सखण्डेषु फिट्स्वराप्रवृत्तिरिति वाच्यम् पदसंज्ञकपूर्वोत्तरभागकसमुदायविषये ऽप्रवृत्तिज्ञापनेन तस्य साफल्यादत आह—सुप इति। तिङन्ते दोषमाह—पचेरन्निति। आदिना सर्वस्मिन्नित्यस्य सङ्ग्रहः।

मूले—इष्टसिद्धेरिति। प्रत्ययान्तपर्युदासेनेष्टसिद्धेरित्यर्थः। अतिदेशेन—अन्तवत्त्वातिदेशेन। एतेन लक्ष्ये लक्षणं सकृदेव प्रवर्तत इति न्यायाविषयत्वं ध्वनितम्। अत्रातिदेशेनेतिकथनेनौ-

भावप्रकाश।

रमते इत्याद्यर्थयोः सुबर्थक्रियारूपयोर्लिङ्गसंख्याभ्यां योगो न प्रायेणास्ति विचित्रत्वात्पदार्थशक्तीनामिति "ह्रस्वो नपुंसके" इत्यत्र भाष्यकैयटादिकं सङ्गच्छते। एतेनाप्रत्ययः किम्? व्यतिसे। नपुंसकह्रस्वो माभूदिति रत्नाकरोक्तमपास्तं, मूलद्वयशैथिल्यात्। तत्सत्त्वे त्विति। नपुंसकत्वसत्त्वे त्वित्यर्थः। तुनाऽरुचिर्बोधिता प्रागुक्तभाष्यादिविरोधरूपा। एतदुक्तिफलं यथाकथञ्चिन्मूलाशयप्रदर्शनद्वारा भाष्याद्यनिष्टत्वसूचनम्। तदाह–इति भाव इति। ननु न औत्सर्गिकमेकवचनं, गमकाभावात्। नच प्राग्वत्तत्सामर्थ्यं गमकं, फिट्स्वरप्रवृत्त्या साफल्यात्। सिपादेः पित्त्वं त्वङित्वाय स्यात्। नच समासस्येत्यन्तोदात्तविधानात्सखण्डेषु तदप्रवृत्तिः, सुप्तिङन्तमितिपदसंज्ञकपूर्वभागकसमुदायेऽप्रवृत्तिज्ञापनेनापि तस्य साफल्यात्। नचैवमपि "अनुदात्तौ सुप्पितौ" इत्याद्यानर्थक्यापत्त्या तत्र तदप्रवृत्त्या तत्सामर्थ्यं गमकमेवेति वाच्यम्। लुक्नलोपाद्यनिष्टप्रापणेनापि साफल्यात्। एतेन प्रागप्येवं वक्तुं शक्यमिति तत्र तत्सामर्थ्यात्तदापत्तिरयुक्तेत्यपास्तम्, तत्र लुगाद्यप्राप्तेरत आह—सुप इति। तिङन्ते आह—पचेरन्निति। आदिना 'सर्वस्मिन्' इत्यादिसंग्रहः। अत्राप्यौत्सर्गिकैकवचनापत्तिरिति। भाव इत्याभ्यां सूचितारुचिस्तु स्फुटीभविष्यति। उत्पत्तये इति। अनेन पक्षद्वये पूर्वं तस्यावश्यकत्वं सूचितम्। अतिदेशेन–अन्तवत्त्वेन। एतेन "लक्ष्ये-लक्षणस्य" इति न्यायेन पुनरप्रवृत्तिरित्यपास्तम्, लक्षणभेदात् लक्ष्यभेदाच्च। अन्यथाऽतिदेशशास्त्राणां वैयर्थ्यापत्तिरिति भावः। नन्वेवं कार्यकालपक्षेणेत्युत्तरासङ्गतिः उपदेशप्रवृत्तेरनुक्तत्वात्। तथा हि सति परादिवत्त्वेनैकादेशस्य प्रत्ययत्वात्तदन्तत्वमार्थसमाजग्रस्तमस्तीति तथा वक्तुं युज्येत। अत एवातिदिश्यमानेति न्यायाविरोधः। एतेन काण्डे इत्यादावन्तवत्त्वेन तत्त्वं दुर्वारमित्यत्राप्रत्यय इत्यस्य लाघवात्पर्युदासत्वेनास्थानिवत्त्वादप्रत्ययान्तत्वानपायादितिरत्नाकरकृद्धेतूक्तिरपास्ता। अन्तवत्त्वघटितसाध्येऽप्रत्य-

सरला।

तया शाब्दबोधे प्रातिपदिकजन्योपस्थितेरेव कारणत्वेन विभक्त्यर्थस्य लिङ्गं प्रति कारणत्वाभावेन लिङ्गबोधकत्वाभावादित्यर्थः। तत्सत्त्वे त्विति। लिङ्गबोधकत्वसत्त्वे त्वित्यर्थः।

वत्, "सप्तम्यधिकरणे च" इत्यादिनिर्देशात्। "ह्रस्वो नपुंसके–" इति सूत्रे प्रातिपदिकग्रहणं वा उक्तार्थे सामान्यापेक्षं ज्ञापकमस्तु।

शब्दरत्नम्।

अपिना कार्यकालपक्षेऽपि। न हि तत्र पक्षे उपदेशेनैवैकवाक्यता न अतिदेशेनेत्यत्र मानमस्ति, अतिदेशैकवाक्यतयैव ह्रस्वप्राप्तेः सुवचत्वात्। **प्रातिपदिकग्रहणं वेति।** नपुंसकवृत्तित्वस्य प्रातिपदिकधर्मत्वान्नपुंसके वर्तमानस्येत्यर्थेनैव प्रातिपदिकलाभे सिद्धे तस्य व्यर्थत्वादिति भावः। **उक्तार्थे**–विभक्त्येकादेशस्यान्तवत्त्वाभावे। **सामान्यापेक्षमिति।** अन्यथा ह्रस्व एव न स्यात्त्वाद्युत्पत्तिस्तु स्यादेवेति भावः। यद्यपीदं प्रातिपदिकग्रहणं सत्त्वप्रधा-

भरवी।

पदेशिकप्रातिपदिकत्वस्याप्रवृत्तिः सूचिता। परादिवत्त्वेनैकारे प्रत्ययत्वस्यैकदेशविकृतन्यायेन ङान्ते तत्त्वस्य,सत्त्वेन प्रत्ययान्तत्वस्यार्थसमाजग्रस्तत्वेन तन्निषेधात्। ननु "ह्रस्वो नपुंसके" इति सूत्रस्थपूर्वोक्तभाष्यादलिङ्गत्वेन निर्देशस्योपपत्त्या न तस्य ज्ञापकत्वमिति चेत्? न, अभ्युपेत्यवादेन मूलकृता तथाभिधानात्। प्रातिपदिकग्रहणस्य ज्ञापकत्वमुपपादयति—नपुंसकेति। नपुंसकवृत्तित्वं वाच्यवाचकभावसम्बन्धेन। लाभे सिद्धे—लाभे जाते। अन्यथा—सामान्यापेक्षज्ञापकत्वानङ्गीकारे। अप्रत्ययः किमित्यारभ्यास्त्वित्यन्तो मौलग्रन्थो ऽयुक्त एवेति ध्वनयितुमाह—यद्यपीत्यादि। सत्त्वप्रधानेति। कल्पितसत्त्वप्रधानकेत्यर्थः। एवञ्च यदर्थे शास्त्रे नपुं-

भावप्रकाश।

यान्तत्वस्यानपेक्षणेन मिथोविरुद्धत्वाच्च तन्निमित्तवैकल्ये एवातिदेशप्रवृत्तेरङ्गीकाराच्च। अन्यथाऽतिदेशानर्थक्यापत्तेः। एतेन तस्य पर्युदासत्वात्तत्पक्षेणेष्टसिद्धिरिति नव्योक्तमयुक्तमिति तदुक्तमपास्तम्। तत्पर्युदासत्वस्योक्तरीत्येष्टसिद्धावबाधकत्वात्तत्पक्षे जातस्य नष्टत्वादित्याशयाच्च। मन्मते तु तत्र दृष्टव्यवहारातिदेशेन दोषतादवस्थ्यमत आह—**अपिनेत्यादि।** एतेनापिर्व्यर्थ इति भ्रान्तोक्तमपास्तम्। अत्रापिना यथोद्देशसमुच्चयः। कार्यकालपक्षेणेत्यस्योपलक्षणत्वसूचनायापिः आवृत्त्या तत्रापि योजनाय वा। उक्तमेवार्थमाह—**नहीति। तत्र पक्षे**–कार्यकालपक्षे। **अतिदेशेन**–अन्तवत्त्वेन। एवेनोपदेशैकवाक्यतानिरासः, तस्याप्राप्तेः। स्वतोऽप्रत्ययान्तत्वेऽपि परादिवत्त्वेनैकादेशस्य प्रत्ययत्वेन तदन्तत्वस्यार्थसमाजग्रस्तत्वेनातिदिश्यमानेति न्यायविरोधादिति भावः। **सुवचत्वादिति।** तथा चोभयत्र ज्ञापकाश्रयणमावश्यकं, तच्चापिना कार्यकालपक्षेऽपीत्यर्थेन यथोद्देशेपीत्यादिना तदुपपादनेन च मूलकृता सूचितमिति भावः। ननूक्तभाष्यादलिङ्गत्वेन निर्देशसङ्गत्या कथं तस्य ज्ञापकत्वमत आह मूले—**ह्रस्वो।नपुमिति। वृत्तित्वस्येति।** वाच्यवाचकतासम्बन्धेनेति भावः। **लाभे सिद्धे इति।** लाभे तत्कार्ये च सिद्धे इत्यर्थः। एतेन सिद्धे इत्यधिकमित्यपास्तम्। स च लाभोऽर्थवत्सूत्रस्थतत्पदानुवृत्त्या आक्षेपाद्वेत्यन्यदेतत्। साधारण्यं सूचयितुं ज्ञाप्यांशे यथोद्देशसम्बन्धनिवारणायाह—**विभक्तीति।** "सूचीप्रवेश" इति न्यायेन मूलच्छेदात्। अप्रत्ययान्तः किमित्यादि अस्तु इत्यन्तग्रन्थोऽयुक्त एवेति ध्वनयितुमाह—**यद्यपीत्यादि। सत्त्वप्रधानेति।** कल्पित-

सरला।

**कार्यकालपक्षेऽपीति।** तत्र पक्षेऽपि 'काण्डे' इत्यत्र "अन्तादिवच्च" इत्यतिदेशसूत्रेण पूर्वान्तवद्भावेन काण्डवृत्तिप्रातिपदिकत्वधर्मस्यातिदेशेन प्राप्तह्रस्वस्य वारणार्थं "विभक्त्येकादेशो नान्तवत्" इति निषेधस्यावश्यकत्वादिति भावः। परादिवद्भावेन प्रत्ययान्तत्वमादाय 'अप्रत्ययः' इति निषेधस्तु वक्तुमशक्यः, उभयत आश्रयणे तन्निषेधादिति भावः।

**व्यर्थत्वादितीति।** वस्तुतस्तु वैयाकरणमते सुबन्तपदे शक्तिपर्याप्त्यधिकरणत्वस्य सत्त्वेन नपुंसकवृत्तित्वस्य प्रातिपदिकधर्मत्वाभावात् नैवं प्रातिपदिकग्रहणस्य वैयर्थ्योपपादनं युक्तं किन्तु अर्थवत्सूत्रात्प्रातिपदिकग्रहणमनुवर्त्य षष्ठ्या विपरिणामेन प्रातिपदिकस्येतिलाभेन तद्वैयर्थ्यमुपपादनीयम्।

**सत्त्वप्रधानेति।** सत्त्वप्रधानत्वं च यत्किञ्चित्प्रधानतानिरूपिताप्रधानत्वासमानाधिकरणलिङ्गान्वयितावच्छेदकरूपावच्छिन्नप्रधानताप्रयोजकत्वम्। सत्त्वपदेन लिङ्गान्वयितावच्छेदकरूपपुरस्कारेण बुध्य-

यत्तु वदन्ति—प्रत्ययपर्युदासो न कर्तव्यः, प्रत्ययान्तपर्युदासेनैव गतार्थत्वात्, व्यपदेशिवद्भावेन तस्यापि प्रत्ययान्तत्वादिति । तन्न । प्रत्ययग्रहणे यस्मा-

शब्दरत्नम् ।

नप्रातिपदिकग्रहणार्थं तेनात्र न ह्रस्वः । मूलोक्तार्थं ज्ञापिते चारितार्थ्यं दुर्निरूपं च । संख्याकर्माद्ययोगात्स्वाद्युत्पत्तिरपि न । औत्सर्गिकमेकवचनमपि न, गमकं विना तदुत्पत्तेः । "सुपो धातु–" इति लुगपि न, धातुसाहचर्येण सुप्तिङ्भिन्नसमभिव्याहृतस्यैव तेन लुग्विधा-

भैरवी ।

सकृद्गुणः प्रसिद्धस्तादृशस्य प्रातिपदिकस्य तादृशेऽर्थे वर्तमानस्य ह्रस्व इति सूत्रार्थः । 'ननु मूलोक्तमुपायान्तरमस्त्वित्यत आह–मूलोक्तार्थं इति । दुर्निरूपञ्चेति । तथाच ज्ञापकतैवायुक्तेति भावः । प्रागुक्तदोषान् क्रमेणोद्धरति—सङ्ख्येति । गमकं विना—साधकं विना । यथा ऽव्ययेभ्यः स्वाद्युत्पत्तौ "अव्ययादाप्सुप" इति गमकन्तथाऽत्र नास्तीति भावः । प्रत्ययान्तपर्युदासस्य 'हरिषु' 'करोषि' इत्यादौ समुदायप्रातिपदिकत्वापत्तौ लुगापत्तिरिति प्रयोजनन्निरस्यति—धातुसाहचर्येणेति । धात्ववयवस्य यादृशस्य सुपो लुग्भवति तादृशस्यैव प्रातिपदिकावयवस्य तस्य लुग्भविष्यति, साहचर्यात् । ननु साहचर्यं सादृश्यं, तच्च साधारणधर्मप्रयोज्यमेवान्यत्र स्पष्टं प्रकृते तु तादृशो धर्मः कः ? इत्याकाङ्क्षायामाह—सुबित्यादि । समभिव्याहृतस्येत्यनन्तरं 'सुपः' इति शेषः । व्यधिकरणे षष्ठ्यौ प्रथमषष्ठ्यन्तार्थः सुप इत्यत्र या षष्ठी तत्प्रकृत्यर्थस्य विशेषणम् । स चार्थस्तत्प्रकृतिकत्वमेव । एवञ्च सुप्तिङ्भिन्नसमभिव्याहृतप्रातिपदिकप्रकृतिको यः सुप् तस्य लुगिति फलितम् । अस्ति चायन्धर्मः पुत्रीयतीत्यादौ तिङ्भिन्नः क्यच् तत्समभिव्याहृतम्प्रातिपदिकं पुत्रशब्दस्तत्प्रकृतिकत्वन्धात्ववयवस्येति लुकः प्रवृत्तिः । तथा राजपुरुषइत्यादावप्यस्ति सुप्तिङ्भिन्नेत्यत्र सुपस्तत्तव्यक्तित्वेन निवेशात् । सुप्तिङ्पदञ्च तदन्तपरम् । चालनीन्यायो ऽत्र बोध्यः । एवञ्च राजन्शब्दप्रकृतिकसुबन्तभिन्नः पुरुषशब्दस्तत्समभिव्याहृतम्प्रातिपदिकं राजन्निति तत्प्रकृतिकत्वं ङसो यथा तथा स्वन्तभिन्नराजन्शब्दसमभिव्याहृ-

भावप्रकाश ।

सत्त्वप्रधानताकेत्यर्थः । अन्यथोक्तरीत्या वैयर्थ्यं स्पष्टमेव । तथाच यदर्थस्य शास्त्रे नपुंसकं गुणः प्रसिद्धस्तस्य नपुंसकलिङ्गवदर्थे विशेष्यतया वर्त्तमानस्य ह्रस्व इति सूत्रार्थं इति भावः । स्पष्टं चेदमत्र सूत्रे "ह्रस्वो नपुंसके" इत्यत्र च भाष्ये । ननूपायस्योपायान्तरादूषकत्वान्मौलोप्युपायः साधुरेवात आह—मूलोक्तेति । तथा च ज्ञापकतैवायुक्तेति भावः । प्रागुक्तदोषान् क्रमेणोद्धरति—संख्येति । ननु नायं प्रागुक्तोऽत आह—औत्सर्गिकमिति । अयमपि प्रागुद्धृतप्रायोऽत आह—सुपो धात्विति । सुप्तिङ्भिन्नेति । सुबन्ततिङन्तप्रतियोगिकभेदवद्यत्किञ्चित्समभिव्याहृतस्य सुप इत्यर्थः । घटकीभूतयत्किञ्चित्प्रकृतिभिन्नत्वे सति तादृशसुप्तिङ्भिन्नं यत्तद्घटकं तत्समभिव्याहृतस्य धातुप्रातिपदिकान्यतरावयवस्य

सरला ।

मानस्य, प्रधानपदेन च संसर्गविशेष्योभयवृत्तिः निरवच्छिन्नविशेषणताश्रयावृत्तिर्विशेष्यतासंसर्गताव्यापकीभूतः प्रकारतानिरूपितत्वाख्यो यः स्वरूपसम्बन्धविशेषः तदाश्रयस्य विवक्षितत्वात् । 'काण्डे' इत्यादौ सप्तम्यर्थसंसर्गनिष्ठप्रधानतानिरूपिताप्रधानत्वसामानाधिकरण्यमेव लिङ्गान्वयितावच्छेदककाण्डत्वरूपावच्छिन्नप्रधानतायामिति तेनात्र न ह्रस्व इति भावः ।

सुप्तिङ्भिन्नसमभिव्याहृतस्येति । सुप्तिङौ च इतरश्चेति द्वन्द्वो न तु पञ्चमीतत्पुरुषः सुप्तिङ्भ्यामितराविति । तथा सति 'हरिषु' इत्यत्रैव सुप्तिङ्भिन्नप्रकृतिसमभिव्याहृततया लुगापत्तेः । द्वन्द्वस्याश्रयणे तु अन्यश्च सुप्तिङ्साहचर्यात्प्रत्यय एव । तथाच सुप्तिङन्यतरतद्भिन्नप्रत्ययसमभिव्याहृतस्य सुपो लुगिति तत्सूत्रार्थः । तेन पुत्रीयति राजपुरुषः इत्यादौ सुब्लुक्, हरिषु इत्यत्र च न स इति । काण्डे इत्यत्रापि एकस्यैव सुपः सत्त्वेन तत्र सुप्तद्भिन्नप्रत्ययस्यासत्त्वान्न दोष इति भावः ।

शब्दरत्नम् ।

नात । एवं च प्रत्ययान्तपर्युदासो न कर्तव्य इति सूत्रशेषे भाष्ये ध्वनितम् । पचेरन्, सर्वस्मिन्नित्यादौ नकारोच्चारणसामर्थ्येन न नलोपः; तथाप्येतावत्क्लिष्टकल्पनापेक्षया लाघ-

भैरवी ।

तम्प्रातिपदिकम्पुरुषेति तत्प्रकृतिकत्वं सोरित्युभयोर्लुकः सिद्धिः । अत्र सुप्सिङ्भिन्नसमभिव्याहृतत्वञ्च तेन पूर्वोत्तरभावरूपम् पुरुषाभ्यामित्यादौ सुब्भिन्नो भकारस्तत्समभिव्याहारस्य पूर्ववृत्तित्वरूपस्य पुरुषशब्दे सत्त्वेन तत्प्रकृतिकस्य भ्याम एव लुगापत्तेः । नापि तदर्थान्वितस्वार्थबोधकत्वं समभिव्याहारः, अत्यन्तस्वार्थिकतद्धितान्तावयवस्य सुपो लुगनापत्तेः । 'राजपुरुषः सुन्दरः' इति वाक्यावयवस्य राजपुरुषशब्दप्रकृतिकसुपो लुगापत्तेश्च ; किन्तु सुप्सिङ्भिन्नसमभिव्याहृतत्वन्तद्घटितप्रकृतवृत्तिघटितत्वरूपं विवक्षितम् । एवञ्च सुप्सिङ्भिन्नघटितवृत्तिघटकप्रातिपदिकप्रकृतिकसुपो लुगति सूत्रार्थः । नचवमपि 'राजपुरुषः' इत्यत्र समुदायप्रकृतिकसुबन्तभिन्नो राजन्शब्दः पुरुषशब्दो वा तद्घटिता वृत्तिः समुदायरूपा राजपुरुष इति तद्घटकत्वस्य तद्विषयकप्रतीत्यविषयत्वस्य तत्रैव सत्त्वेन तत्प्रकृतिकसुपो लुगापत्तिरिति वाच्यम्, वृत्तिघटकत्वञ्च स्वाविषयकप्रतीत्यविषयत्वमात्रम्, किन्तु स्वाविषयकप्रतीत्यविषयवृत्तिकत्वे सति वृत्त्यविषयकप्रतीतिविषयत्वरूपमिति न कश्चिद्दोषः । अत्र तिङोऽभिधानं तिङन्तावयवक्यच्समभिव्याहृतस्य सुपः पुत्रीयतीत्यादौ लुकः प्रसिद्धत्वसूचनाय । वस्तुतः सुबितरेत्येवास्तु, एवञ्च हरिषु करोषीत्यादौ लुगप्राप्तिः स्फुटैवेति भावः ।

सूत्रशेषे—प्रकृतसूत्रशेषे । ध्वनितमिति । तत्र हि—अप्रत्यय इत्यत्र "किम्पुनरयम्पर्युदासः-यदन्यत्प्रत्ययादिति, आहोस्वित्प्रसज्याऽयम्प्रतिषेधः-प्रत्ययो नेति, कश्चात्र विशेषः ? अप्रत्यय इति चेत्तिवेकादेशे प्रतिषेधो ऽन्तवत्त्वात्काण्डे कुड्ये । अस्तु तर्हि प्रसज्यप्रतिषेधः-प्रत्ययो नेति । न प्रत्यय इति चेद्‌ङेकादेशे प्रतिषेध आदिवत्त्वात्" इत्युक्तम् । परस्य कार्ये प्रतिषेधे कर्त्तव्ये परादिवद्भावः स्यात्तथाच प्रतिषेधापत्तिरिति भावः। एवञ्च ब्रह्मबन्धूरिति न सिध्यति। इत्थम्पक्षद्वये दोषमभिधाय द्वितीयपक्षे "आचार्यप्रवृत्तिर्ज्ञापयति-उत्पद्यन्ते ऊङन्तात्स्वादय इति,यदयं "नोङ्धात्वोः" इति विभक्तिस्वरस्य प्रतिषेधं शास्ति"इत्यनेन दोषोद्धारं कृत्वा "अथवा पुनरस्तु पर्युदासः। ननु चोक्तमप्रत्यय इति चेत्तिवेकादेशे प्रतिषेधोऽन्तवत्त्वादिति? प्रसज्यप्रतिषेधेऽप्येष दोषः। द्वे ह्यत्र प्रातिपदिकसंज्ञे अवयवस्यापि समुदायस्यापि। गृह्यते च प्रातिपदिकाप्रातिपदिकयोरेकादेशः प्रातिपदिकग्रहणेन तस्मादुभाभ्यामपि वक्तव्यं स्याद्ध्रस्वो नपुंसके यत्तस्येति । किञ्च नपुंसके । नपुंसकं नाम गुणः प्रातिपदिकस्य"इत्युक्तन्तेन ध्वनितमित्यर्थः । तत्र कैयटः-यत्तस्येति विभक्त्यन्तञ्च शक्तिसङ्ख्याप्रधानम् । नच तयोर्लिङ्गयोगः, नवाऽन्तवद्भावेनार्थः शक्योऽतिदेष्टुमिति न भवति ह्रस्व इति ।

नन्वेवमपि पचेरन्नित्यादौ दोष एवेत्यत आह—पचेरन्निति । लाघवात्—ज्ञानलाघवात् । 'केवलस्यातथात्वादिति मूलमसङ्गतम्' यस्माद्विहित इत्येतद्घटितपरिभाषाया अधिकग्रहणा-

भावप्रकाश ।

सुप इति यावत्। अस्ति च पुत्रीयतीत्यादौ पुत्र अमित्युभयभिन्नक्यच्समभिव्याहृतत्वं सुपि । एवं राजपुरुष इत्यादावपि चालनीन्यायेन तद्भिन्नतत्तत्समभिव्याहृतत्वं सुपि। हरिषु करोषीत्यादौ तु सुबन्ते उभयभेदेऽपि तदभावान्नातिव्याप्तिः । समभिव्याहारश्च व्यवहिताव्यवहितसाधारणः । यद्वा, समभिव्याहृतघटितं यत्प्रातिपदिकं तदवयवस्य सुप इत्यर्थः। शेषं प्राग्वत् । विभक्त्यन्यानेकघटितप्रातिपदिकावयवस्येति तु निष्कर्षः । सुबन्यानेकघटितेत्यादिस्तु परमनिष्कर्षः । सुपः परघटितप्रातिपदिकेत्यादि तु तत्त्वम् । एवञ्चेति । उक्तरीत्या दोषसामान्याभावे चेत्यर्थः। सूत्रेति । प्रकृतसूत्रेत्यर्थः । "तस्मादुभाभ्यामपि वाच्यम्-यत्तस्येति । किं च नपुंसके । नपुंसकं यस्य गुणः । कस्य च नपुंसकं गुणः? प्रातिपदिकस्य"इति ग्रन्थेनेति भावः। स्पष्टं चेदमुद्द्योते । एवमपि पचेरन्नित्यादौ दोष एवात आह-पचेरन्निति। लाघवात्—ज्ञानलाघवात् ।

त्स विहितस्तदादेर्ग्रहणात् । केवलस्य च अतथात्वात् । अन्यथा त्वदुक्तरीत्या सुप्तिङोरपि तदन्तत्वात् पदत्वं स्यात् । तथा च हरिषु, करोषि, इत्यादौ षत्वं न स्यात् "सात्पदाद्योः" इति निषेधात् । अधातुप्रत्ययाविति सिद्धे नञ्द्वयोपादानं स्पष्टार्थम् । महासंज्ञाकरणं श्रुत्यनुरोधात् । तथा चाथर्वणे पठ्यते—"को धातुः ?

---

शब्दरत्नम् ।

वात्प्रत्ययान्तपर्युदास एवोचित इति भावः । अतथात्वादिति । यस्माद्विहितस्तदादित्वस्याशास्त्रीयत्वेन व्यपदेशिवद्भावालभ्यत्वादिति भावः । निषेधादिति । यद्यपि व्यपदेशिवद्भावेनैकाच्त्वादेरिवास्याप्यशास्त्रीयस्यातिदेशेन लाभसम्भवोऽत एव भवतीत्यादौ भवतेः शब्निरूपिताङ्गत्वसिद्धिः, व्यतिसे इत्यादौ से इत्यस्य पदत्वसिद्धिश्च, इरित्यादौ कार्यकालपक्षे तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वसिद्धिश्च, युवापत्ये तत इञन्तत्वनिबन्धनफक्सिद्धिश्च ; तथाप्यसहाय एव व्यपदेशिवद्भावो न तु ससहाये, तेनेतरावयवे तद्प्रवृत्तिः । स्पष्टा चेयं रीतिः "आदेच उपदेशे" इत्यत्र कैयटे । अत एव सभासंनयने व्यपदेशिवद्भावेनाकारस्य नादित्वं, दरिद्राधाताविकारस्य नान्तत्वं, तथा सति वृद्धत्वप्रयुक्तश्छः,

भैरवी ।

भाव एव प्रयोजनन्नतु व्यपदेशिवद्भावस्य तया बाधः' इति केनचिदुक्तन्तदसङ्गतमिति सूचयन्नाह—यस्माद्विहित इति । किञ्चैतादृशे विषये मन्त्रेषु सर्वेषामित्यादौ षत्वनिषेधाकरणेन व्यपदेशिवद्भावो नेत्यपि बोध्यम् । उक्तज्ञापकाननुसन्धानेन शङ्कते—यद्यपीति । अत एव—अशास्त्रीयस्याप्यतिदेशादेव । व्यतिसे इत्यादाविति । आदिना 'व्यतिध्वे' इत्यस्य संग्रहः । फगिति "यञिञोश्च" इत्यनेनेति शेषः । सामान्येनोक्तस्यापि स्पष्टप्रतिपत्त्यर्थम्प्रकृते आह—तेनेति । इयं रीतिरिति । तत्रहि—ढौकितेत्यादौ नान्तरीयकत्वादुपदेशसत्त्वेऽपि न व्यपदेशिवद्भावेनैजन्तत्वमिति तेनोक्तम् । अत एव—असहाय एव व्यपदेशिवद्भावस्य प्रवृत्तिस्वीकारादेव । तथासति-

भावप्रकाश ।

अशास्त्रीयत्वेनेति । एतेनोक्तन्यायस्याधिकग्रहणाभावे एव तात्पर्यमस्तु न तु व्यपदेशिवद्भावबाधे, मानाभावादयुक्तत्वाच्चेति भ्रान्तोक्तमपास्तम् । अत्र शास्त्रीयत्वं च शास्त्रबोध्यत्वम् । अस्ति चैतत्तदन्तत्वे, येन विधिरित्यनेन बोधनात् ; नैव यस्माद्विहितस्तदादित्वे इति भावः । निषेधादितीति । सातिग्रहणेनापूर्ववचनकल्पनापेक्षया निषेध एवोचितः । एनेन तथाङ्गीकारेण मूलं दूषयन् खण्डनकारः प्रत्युक्तः । व्यपदेशिवदित्येव परिभाषेत्याशङ्कते—यद्यपीति । एकाच्त्वादेरिति । अन्यथा इयायेत्यादौ तन्निबन्धनद्वित्वासिद्धिरिति भावः । अत एवेति । अशास्त्रेऽपि तत्प्रवृत्त्यङ्गीकारादेवेत्यर्थः । इदं सिद्धिचतुष्टयेऽन्वेति । शब्निरूपितेति । अनेनासहायता सूचिता । अत्रादिभिः क्रमेण कवति व्यतिध्वे इयानित्यादिसंग्रहः । व्यतिसे इत्यादि च्छान्दसम् । कार्यकालेति । यथोद्देशे सिद्धिस्तु प्रागेवोक्ता व्याख्याता च । ततः—एः । फगिति । "यञिञोश्च" इत्यनेन । अन्यथा यस्माद्विहितस्तदादित्वाभावात् सर्वं न स्यादिति भावः। असहाये इत्यर्थकमेकस्मिन्नित्यपि परिभाषाङ्गमित्याशयेन समाधत्ते—तथापीत्यादि । सामान्येनोक्तमपि दृष्टान्तवैलक्षण्याय प्रकृताभिप्रायेणाह—तेनेति । अत्रेति शेषः । रीतिरिति । ढौकितेत्यादौ नान्तरीयकत्वेनौकारोपदेशसत्त्वेऽपि न व्यपदेशिवद्भावेनैजन्तत्वमिति तत्र तेनोक्तम् । वृद्धत्वेति । यस्या-

सरला ।

असहाये एवेति । असहायत्वं च मुख्यधर्मवदघटितत्वे सति मुख्यधर्मवदघटकत्वे सति मुख्यधर्मवदसमभिव्याहृतत्वम् । अत्र प्रथमसत्यन्तदानेन सभासंनयनशब्दे वृद्धत्वस्य, दरिद्राधाताविवर्णान्तत्वस्य च नातिदेशः । द्वितीयसत्यन्तदानेन भासंनयने प्रातिपदिकत्वस्य दरीत्यत्र धातुत्वस्य च नातिदेशः । तृतीयदलेन च आकारे सभासंनयननिरूपितादित्वस्य इकारे दरिद्रानिरूपितान्तत्वस्य च नातिदेश इति बोध्यम् ।

किं प्रातिपदिकं ? कः प्रत्ययः" ? इति । डित्थादीन्यव्युत्पन्नानीहोदाहरणम् । अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकमिति प्राञ्चः । यत्तु व्युत्पत्तिपक्षेऽपि निपातार्थ-

शब्दरत्नम् ।

इवर्णान्तत्वप्रयुक्तोऽच्प्रत्ययश्च स्यात् । ततोऽत्र न किंचिद्वैषम्यम् । लोकेऽपि बहुपुत्रसत्त्वे नैकस्मिन् ज्येष्ठकनिष्ठादिव्यवहारो विजातीयकन्यादिसत्त्वे त्वेकस्मिन्नपि तथा व्यवहारो भवत्येवेति बोध्यम् । अत एव हरिष्वित्यादौ सोः पदत्वं न । "निजौ चत्वार एकाच" इति भाष्यं त्वेकस्मिन्नित्यस्यापर्यालोचनयैकदेश्युक्तिरिति तात्पर्यम् । वस्तुतस्तु पर्युदासेनैवार्थवत्त्वे लब्धे अर्थवद्ग्रहणादत्र सूत्रेऽपि विभक्तीतरानपेक्षया ऽर्थबोधकत्वमर्थवत्त्वं

भैरवी।

ससहायेऽप्यनयोर्व्यपदेशिवद्भावस्य प्रवृत्तिस्वीकारे ।। सा च परिभाषा लोकन्यायसिद्धेति लोके यादृशी व्यवस्था तादृश्येवात्र शास्त्रे तत्परिभाषाविषये इत्याह—लोकइति । अत एव ससहाये तदप्रवृत्तेरेव । नन्वेवं सति निज्धात्ववयवेकारमात्रे व्यपदेशिवद्भावः ससहायत्वान्न स्यादिति "निजौ चत्वार एकाच" इति भाष्यमनुपपन्नमत आह— निजौ चत्वार इतीति । तात्पर्यमिति । प्रत्ययपर्युदासाङ्गीकर्तुर्मूलकृत इति शेषः । एतेनारुचिर्ध्वनिता, तामुद्घाटयति—वस्तुतस्त्वित्यादिना । अत्र सूत्रेऽपीति । अपिनोत्तरसूत्रसंग्रहः । तेनैकरूपता द्वयोर्भवति, मूलरीत्या तु वैरूप्यं स्फुटमेव । ननु भवदुक्तार्थवत्त्वमलौकिकविग्रहवाक्यस्य नास्तीति तस्यैषा न

भावप्रकाश ।

चां मध्ये वर्त्तमानो वृद्धिरादिश्च स वृद्धसंज्ञ इति सूत्रार्थ इति भावः । ननु नायं दोषः आदिग्रहणसामर्थ्येन मुख्यादेरेव तत्र ग्रहणात् ; अत आह—इवर्णान्तेति । तत इति । हरिष्वित्यादितः । यत इत्यादि । अत्र—दरिद्रादौ । तस्या लोकन्यायसिद्धत्वं ध्वनयितुं लौकिकदृष्टान्तमाह—लोकेऽपीति । अपिराद्यन्तवदिति शास्त्रसमुच्चायकः । इदं चोभयत्रान्वेति—बह्विति । अनेकपुत्रसत्त्वे इत्यर्थः । ज्येष्ठादीत्येव-सिद्धे कनिष्ठादीत्युक्तिर्वैचित्र्यार्था । आदिना मध्यमसंग्रहः, किंत्वेकपुत्रसत्त्वे एवेति शेषः । असहायत्वं च सजातीयराहित्यं, न तु यथाकथञ्चिदित्यपि लोकन्यायसिद्धमित्याह—विजातीयेति । आदिना क्लीबसंग्रहः । अपिः कन्यादिसमुच्चायकः । तथाच केवले व्यवहारवत्कन्यादिमादायापि स व्यवहार इति भावः । नन्वेवं "निजौ चत्वार एकाचः" इति भाष्यासङ्गतिः, एः ससहायत्वेन तदप्रवृत्त्या एकाच्त्वानुपपत्तेरत आह—निजाविति । तात्पर्यमिति । प्रत्ययपर्युदासाङ्गीकर्त्तुर्मूलकृत इति भावः । अनेन तत्रारुचिः सूचिता । तामेवाह—वस्तुतस्त्विति । पर्युदासेनेति । यथैतत्तथोक्तं प्राक् । अपिरुत्तरसूत्रसमुच्चायकः । तथाचोभयत्र तुल्यार्थकत्वं मूलमते तु वैरूप्यं शब्दाधिकारश्च यस्य प्रातिपदिकेत्यादिविवक्षा च प्रत्ययपर्युदासस्वीकारश्चेह वैयर्थ्यञ्चेति गौरवं भाष्यस्वारस्यं च हृदि निधायाह— विभक्तीति । एतत्संज्ञासा-

सरला ।

विभक्तीतरानपेक्षयेति । ननु विभक्त्यपेक्षयेति वाच्ये विभक्तीतरानपेक्षयेति व्यर्थमिति चेत् ? न, 'दधि' 'मधु' इत्यादेर्विभक्तिमनपेक्ष्याप्यर्थबोधकत्वस्य दृष्टतया तत्र प्रातिपदिकत्वानापत्तेः, नच 'खट्वा' 'पक्त्रिमम्' 'सांकूटिनम्' इत्यादौ खट्व पक्त्रि सांकूटिन् इत्यादीनां विभक्तीतरटाप्मप्ञण्प्रत्ययसमभिव्याहारेणैवार्थबोधकत्वात्प्रातिपदिकसंज्ञा न स्यादिति वाच्यम् , विभक्तिपदस्य प्रत्ययमात्रोपलक्षणत्वस्वीकारेणादोषात् । ननु 'एधाञ्चक्रे' इत्यादावेधामित्यस्य प्रत्ययेतर 'चक्रे' इत्येतत्समभिव्याहारेणैवार्थबोधकत्वादर्थवत्त्वं न स्यात् ; नच पदेतरस्यापि लक्षणघटकत्वेन न दोष इति वाच्यम् 'पञ्चनावप्रियः इतिसमासघटकपञ्चनावेत्यस्य न प्रातिपदिकत्वम्' इत्युक्तग्रन्थविरोधात् । नन्वेधामित्यस्यार्थवत्त्वाभावेऽपि न क्षतिः, न चार्थवत्त्वाभावेन पदत्वाभावादेधाञ्चक्रे इत्यादावनुस्वारो न स्यादिति वाच्यम् । "नश्चापदान्तस्य" इत्यनेनानुस्वारसिद्धेः, इति चेत्? न, एधाञ्चक्रे इत्यादौ "तिङ्ङतिङः" इति निघातानापत्तेः, वैकल्पिकपरसवर्णानापत्तेश्च । न च प्रत्यय-स्ववृत्त्येकार्थाभावाभाववत्पदैतदन्यतरसमभिव्याहारा-

मनुकरणार्थं चेदमिति हरदत्तेनोक्तम् । तच्चिन्त्यम् । तत्रापि प्रकृत्यादिकल्पन-सम्भवात् । वस्तुतस्तु व्युत्पत्तिपक्षेऽपि बहुपटव इत्याद्यर्थं सूत्रम् । न चैवं

### शब्दरत्नम् ।

गृह्यते । एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वमिवेदमप्यलौकिके आरोपितमस्तीति दक्ष अस् इ इत्यवस्थायां प्रातिपदिकत्वाक्षतिः । तदा प्रत्ययस्य प्राप्तिरेव नेति केवलप्रत्ययपर्युदासो व्यर्थः । ध्वनितं चेदं प्रत्ययपर्युदासानुक्त्या भाष्ये ।

### भैरवी ।

स्यादत आह—एकेति । उक्तपर्युदासलभ्यार्थे विभक्तिपदमेतत्साध्यप्रत्ययोपलक्षणन्तेन टाबादि-प्रकृतिसंग्रहः । स्वोक्तार्थस्य भाष्यकाराभिमतत्वसूचनायाह—ध्वनितमिति । सुप्तिङन्तमिति सूत्रभाष्ये "कृतद्धित" इति सूत्रेऽन्त इत्यस्यार्थवद्ग्रहणानुवृत्त्या लाभप्रतिपादनपरभाष्यस्यो-त्तरसूत्रे एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वतात्पर्यकत्वं यन्मूलकारसम्मतन्तदपि नेत्याह

### भावप्रकाश ।

ध्यविभक्तीत्यर्थः । अन्यथा धातुप्रत्ययान्तपर्युदासानर्थक्यापत्तिः । स्त्रीप्रत्ययप्रकृतौ तत्त्वं तु टाबादेरपि विभक्तिसाधकत्वेनैतत्संज्ञासाध्यविभक्तिकुक्षिप्रविष्टत्वेन तदनितरत्वात्सुलभम् । स्त्रीप्रत्ययान्तानां त्वातिदे-शिकं तत्त्वम् । एतेन विभक्तिस्त्रीप्रत्ययेतरानपेक्षेति रत्नाकरोक्तमपास्तमिति भावः । लोके दृष्टमिति शेषः नन्विदमलौकिके बाधितमितीष्टासिद्धिरुत्तरसूत्रेणात आह—**एकार्थीति** । **केवलेति** । तद-न्यत्सर्वं कर्त्तव्यमिति भावः । इदमपि सूत्रमते । भाष्यमते तु नियमात्तावपि त्याज्याविल्युक्तं प्राक् । स्वमते भाष्यादिस्वारस्यमाह—**ध्वनितं चेति** । कौम्भकारेय इत्यत्र कारशब्दात्प्रातिपदिकत्वेन ङीपि कुम्भकारेयोऽपि स्यादिति "अनुपसर्जनात्" इति सूत्रमिति चतुर्थस्थभाष्यकैयटादिकं

### सरला ।

नपेक्षयाऽर्थबोधजनकत्वमर्थवत्त्वमिति स्वीकारेण एधामित्यस्यार्थवत्त्वं पञ्चनावेत्यस्य तदभावश्च सिद्ध्यतीति वाच्यम्, 'मूलकेनोपदंशम्' इत्यादौ स्ववृत्त्येकार्थीभावाभाववत्पदेतरमूलकेनेत्येतत्समभिव्याहारेणैवोपदंश-मित्यस्य लोकेऽर्थबोधजनकत्वेनार्थवत्त्वानापत्तेः । नच प्रत्यय–स्ववृत्तिप्रातिपदिकत्वाभाववत्पदैतदन्यतरे-त्यादिलक्षणस्वीकारेण न काऽपि क्षतिरिति वाच्यम्, अर्थवत्परिष्कारे प्रातिपदिकत्वप्रवेशेऽन्योन्याश्रया-पत्तेः इति चेत् ? मैवम्, प्रत्यय–स्ववृत्तिसमासत्वाभाववत्पदैतदन्यतरेतरसमभिव्याहारानपेक्षया लोकेऽर्थ-बोधजनकत्वमिति परिष्कारस्वीकारेणादोषात् । तथाहि, 'एधाञ्चक्रे' इत्यादौ 'चक्रे' इति स्ववृत्तिसमास-त्वाभाववत्पदं, तदितरसमभिव्याहारानपेक्षया एधामित्यस्यार्थबोधकत्वादर्थवत्त्वम् । पञ्चनावप्रियः इत्यादौ प्रियपदे स्ववृत्तिसमासत्वस्यैव सत्त्वेन तादृशसमासत्वाभाववदुदासीनपदेतरप्रियपदसमभिव्याहारेणैव पञ्चनावेत्यस्यार्थबोधकत्वेन न निरुक्तार्थवत्त्वम् । 'मूलकेनोपदंशम्' इत्यादौ मूलकेनेत्यत्रोपदंशवृत्त्येका-र्थीभावसत्त्वेऽपि तद्वृत्तिसमासत्वाभावस्य सत्त्वात्तदितरसमभिव्याहारानपेक्षयाऽर्थबोधकत्वान्नार्थवत्त्वक्षतिः ।

अथ 'तन्निभः' 'कुम्भकारः' इत्यादौ निभकारादीनां पञ्चनावेत्यस्येवोक्तरीत्याऽर्थवत्त्वं न स्यात्, न च पूर्वपदेतरत्वस्यापि लक्षणे निवेशेन नोक्तदोषः । अत एव 'एधामासतुः कल्पम्' इत्यादौ आसतुः कल्पमि-त्यादेरर्थवत्त्वं सिद्ध्यतीति वाच्यम्, 'हरिषु' इत्यादौ सोरपि निरुक्तार्थवत्त्वापत्त्या प्रत्ययपर्युदासकर्तव्यता-पत्तेः । न च पूर्वपदशब्देन समासावयवस्यैव ग्रहणान्न दोष इति वाच्यम्, पञ्चनावप्रियपुत्रः इत्यादौ प्रियेत्यत्र समासघटकपूर्वपदेतरत्वस्याभावेन पञ्चनावेत्यस्यार्थवत्त्वापत्तेः । न च नियतपूर्वत्ववत्सुबन्तमेव लक्षणघटकपूर्वपदशब्देन विवक्षितमिति नोक्तदोष इति वाच्यम्, कनुलुबन्ताच्च ञ्चाशब्दात्सुपि 'चञ्चासु' इत्यादौ सोरर्थवत्त्वापत्त्या प्रत्ययपर्युदासकर्तव्यतापत्तेरिति चेत् ? न, प्रत्यय–स्ववृत्तिसमासत्वाभावव-त्पद, स्वादिष्वितिपदत्वानाश्रयनियतपूर्वत्ववत्सुबन्तैतदन्यतमेतरसमभिव्याहारानपेक्षया लोकेऽर्थबोधक-त्वमर्थवत्त्वमिति परिष्कारेणादोषात् । स्वादिष्वितिपदत्वानाश्रयेत्युक्त्या 'चञ्चासु' इत्यादौ न दोषः । निय-तेत्युक्त्या 'पञ्चनावप्रियपुत्रः' इत्यादौ न दोष इत्यन्यत्र विस्तरः ।

बहुच्पूर्वं इत्येव सूत्र्यतामिति वाच्यम्। 'मूलकेनोपदंशम्' इत्यादौ कृदन्तत्वेनातिप्रसङ्गात्। न च समासग्रहणं नियमार्थमिति निस्तारः। अर्थवत्सूत्रारम्भं विना समासग्रहणस्य नियमार्थत्वायोगादिति दिक्।

**कृत्तद्धितसमासाश्च**। 'अर्थवत्' इत्यनुवर्तते, तत्सामर्थ्यात्तदन्तविधिः। न हि जहत्स्वार्थायां वृत्तौ कृतां तद्धितानां चार्थोऽस्ति। भूतपूर्वगतिलभ्यस्तु न प्रशस्तः। अजहत्स्वार्थायामपि न प्रत्ययमात्रेणार्थपर्यवसानमित्यभिप्रेत्याह— कृत्तद्धितान्ताविति। लिट्, धुक्, इत्यादौ "अधातुः" इति, कर्तेत्यादौ अप्र-

---

### शब्दरत्नम्।

"सुप्तिङन्तम्" इति सूत्रस्थभाष्यकैयटयोरप्यत्रैव तात्पर्यमिति बोध्यम्। इत्याद्यर्थमिति। अन्यथा विभक्त्यन्तस्योदात्तता स्यात्। प्रातिपदिकत्वे तु पूर्वं विभक्तिलुकि टकारोकारस्योदात्तत्वे पुनर्जसि टकाराकारोदात्तत्वसिद्धिरिति भावः। **कृदन्तत्वेनेति**। न च समासविकल्पविधानस्य वैयर्थ्यम्। समासे एकस्वरश्रवणं समासाभावे प्रातिपदिकत्वे तु पूर्वोत्तरपदयोर्भिन्नस्वरश्रवणमिति विशेषात्। 'दधिउपदंशम्' इत्यादौ पक्षे प्रकृतिभावप्रवृत्तेरपि फलस्य वक्तुं शक्यत्वाच्च।

**तत्सामर्थ्यादिति**। अन्यथा संज्ञाविधित्वान्न स्यात्। **न प्रत्ययमात्रेणेति**। प्रकृतेरपेक्षणादिति भावः। **अधातुरिति**। कर्तृरूपार्थस्याधिकस्य भानेऽपि क्रियावाचकत्वाक्षत्या

### भैरवी।

सुप्तिङन्तमिति। अत्रैव—उभयोरप्यर्थवत्त्वमेकरूपमेवेत्यत्रैव। अधिकमन्यत्र स्पष्टम्। अन्यथा—बहुपटव इति समुदायस्य प्रातिपदिकसंज्ञाया अस्वीकारे। स्यादिति। "चितः" इति सूत्रे 'सप्रकृतेः' इति वार्तिकादिति शेषः। समासेति। "तृतीयाप्रभृति" इत्यनेनेत्यादिः। एकस्वरश्रवणमिति। "समासस्य" इत्यनेनैकस्यान्तोदात्तत्वस्य श्रवणमित्यर्थः "फिषः" इत्यस्य तु सखण्डेऽप्रवृत्तिरिति भावः। लौकिकप्रयोगे स्वरस्य दुर्लक्ष्यत्वादाह—दधीति। पक्षे—समासाभावपक्षे। प्रकृतिभावेति। "न समासे" इति निषेधस्य तदाऽप्राप्तेरिति भावः। नच 'दधिउपदंशम्' इत्यत्र दधिशब्दात्तृतीयासत्त्वेन तदन्तस्य भुजिक्रियायां सम्बन्धात्कथमत्र णमुलिति वाच्यम्, त्वरायां "द्वितीयायाञ्च" इति णमुलोऽत्र सत्त्वात्। अत एव कृद्ग्रहणे इतिपरिभाषायां कृत्प्रकृत्यर्थनिरूपितकारकस्य ग्रहणेऽपि विशिष्टस्य कृदन्तत्वनिर्वाहः।

प्रकृतेरपेक्षणेति। एतेन विभक्तीतरानपेक्षत्वाभावः सूचितः। ननु लिट् धुगित्याभ्यां जायमानशाब्दबोधे कर्तुः प्राधान्येन भानान्न प्रधानीभूतक्रियावाचकत्वमिति कथमत्र धातुत्वमत आह—कत

### भावप्रकाश।

तु यथात्र पक्षे सङ्गतं तथा स्त्रीप्रत्यये व्यक्तीभविष्यति। **अत्रैवेति**। सूत्रद्वयसाधारणमदुक्तार्थे एवेत्यर्थः। स्पष्टं चैतत् शब्देन्दुशेखरे। **समासेति**। "तृतीयाप्रभृति" इत्यनेनेति भावः। **विशेषादिति**। फिट्स्वरस्य तत एव सखण्डेऽप्रवृत्तेरिति भावः। लौकिकलक्ष्ये तद्विशेषस्य दुर्लक्ष्यत्वादाह—**दधीति**। ननु कृद्ग्रहणे इत्यत्र प्रत्यासत्त्या कृत्प्रकृत्यर्थनिरूपितकारकस्य ग्रहणेन भुजिक्रियानिरूपितकर्मणो दध्नोऽग्रहणेन कथमत्र विशिष्टस्य तत्त्वम्? किञ्चातृतीयान्तोपपदत्वाण्णमुल् दुर्लभः; इति चेत्? अत्राहुः—दशनक्रियाद्वारैव भुजिक्रियायामन्वयः। दशनैरित्यध्याहारः। उप समीपे उच्चारितं पदमुपपदं, सामीप्यं च सप्तम्यन्तपदघटितसूत्रविधेयप्रत्ययप्रकृत्यर्थेऽन्वयित्वमेव नत्वानुपूर्व्यव्यवधानमित्यन्यत्र स्पष्टम्। वस्तुतस्तु द्वितीयान्ते उपपदे त्वरायां णमुलित्यर्थकेन "द्वितीयायां च" इत्यनेन स इति भावः। **पक्षे इति**। समासाभावपक्षे उक्तवाक्ये इत्यर्थः, असमासत्वात् "न समासे" इत्यप्रवृत्तेरिति भावः।

**प्रकृतेरिति**। तथा च तादृशविभक्तीतरसापेक्षत्वेन न तादृशमर्थवत्त्वमिति भावः। **अक्षत्येति**। तन्मा-

त्ययान्तमिति पर्युदासे प्राप्ते कृदन्ते विधिरयम् । नियमार्थमिति । न च प्रत्ययान्तत्वेन पर्युदासे प्राप्ते विध्यर्थमस्त्विति शङ्कयम् । वाक्यस्याप्रत्ययान्तत्वात्, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात् । ननु स्त्रीप्रत्यये तदादिनियमो निषिद्धः, एवं च राजकुमारीत्यादौ विध्यर्थमस्त्विति चेत्? मैवम्, अन्तरङ्गस्यापि हल्ङ्यादिलोपस्य लुग्विषयेऽप्रवृत्त्या श्रूयमाण एव सुपि समासप्रवृत्तेः। तत्र चाप्रत्ययान्तत्वेन प्रवृत्तायाः संज्ञाया एकदेशविकृतन्यायेन विभक्तिलुक्यपि सुलभत्वात् । अत एव गोमत्प्रिय इत्यादौ नुमादयो न । लुकः प्रागन्तरङ्गप्रवृत्तौ तु स्यु-

## शब्दरत्नम् ।

धातुत्वाक्षतेरिति भावः । स्त्रीप्रत्यये इति । अनुपसर्जनस्त्रीप्रत्यय इत्यर्थः । तस्य येन केनापि रूपेण ग्रहणे तन्निषेध इत्यभिमानः शङ्कितुः । राजकुमारीति । नन्वत्र प्रातिपदिकत्वस्य न फलं लिङ्गविशिष्टपरिभाषयैव तत्कार्यसिद्धेरिति चेत्? न, प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गप्रत्ययरहिते दृष्टानां तद्विशिष्टेऽनयाऽतिदेशेन तस्या अत्राप्रवृत्तेः । न हि ङीब्रहिते राजकुमारेत्यादौ तदस्ति, ङ्याब्ग्रहणं त्वन्यार्थमिति वक्ष्यते । शङ्कित्रभिमानानुसारेणैवोत्तरयति—अन्तरङ्गस्यापीति । सुलभत्वादिति । यथोद्देशे इदम् । यदि त्वस्य निषेधस्य प्रत्ययग्रहणपरिभाषाशेषत्वम्, एवं च यथा सा प्रत्ययग्रहणे एव न तु प्रत्ययाप्रत्ययग्रहणे इति "उगितश्च" इति सूत्रे भाष्ये स्पष्टं, तथाऽयं

## भैरवी ।

रूपेति । अक्षतेरिति । क्रियामात्रेत्यस्य प्राधान्येनेत्यस्य वा धातुसंज्ञाविधावनिवेशाद्धातुत्वाक्षतेः । अत एव "अत्वसन्त" इति सूत्रे धातुपर्युदासस्य सार्थक्यम् । 'स्त्रीप्रत्यये' इति परिभाषाया न तावन्मात्रत्वमिति न्यूनताभङ्गायाह—अनुपसर्जनेति । तस्य—स्त्रीप्रत्ययस्य । तन्निषेधः—तदादिनियमनिषेधः । अभिमान इति । परिभाषायाः स्त्रीप्रत्ययमात्रग्रहणे प्रवृत्तिरिति कल्पनायान्न प्रमाणमिति तद्भावः । तत्कार्येति । प्रातिपदिकत्वकार्येत्यर्थः । तद्विशिष्टे—स्त्रीप्रत्ययविशिष्टे । स्त्रीप्रत्ययमात्रस्य ग्रहणमत्र नास्तीत्येव वक्तव्येऽन्तरङ्गस्यापीत्याद्युक्तिर्विफलेत्यत आह—शङ्कित्रेति । शेषत्वमिति । एतेनास्यामपि परिभाषायां ग्रहणपदसम्बन्ध इति सूचितम् । फलितार्थमाह—एवञ्चेति । सा—प्रत्ययग्रहणपरिभाषा । प्रत्ययग्रहण एव—प्रत्ययमात्रग्रहण एव । अत एव गोमतो निष्क्रान्ता 'निर्गोमती' इत्यत्र 'उगितश्च' इति ङीप्सिद्धिः ।

## भावप्रकाश ।

त्रवाचकत्वं विशेष्यतया तद्वाचकत्वं वा न निविष्टम् "अत्वसन्त" इत्यत्राधातुपर्युदासानर्थक्यापत्तेरिति भावः । उपर्जनस्त्रीप्रत्यये तन्नियमेन यथाश्रुतासंगतेराह—अनुपेति । तस्य—स्त्रीप्रत्ययस्य । तन्निषेधः । तदादिनियमनिषेधः । शङ्कितुरिति । न च तत्सामान्यस्य तद्विशेषस्य वा ग्रहणे तत्प्रवृत्तिर्न चात्र तथेति वाच्यम् । वचनसंकोचकल्पने मानाभावात् कृद्ग्रहणे इत्यत्रेव ग्रहणपदाभावाच्चेतिभावः । तद्विशिष्टे तयेति । तत्समभिव्याहारे पूर्वोक्तया तद्विशिष्टेऽपीत्यर्थः "बहुव्रीहेरूधसः" इत्यत्रत्यभाष्यानुरोधेनास्यार्थस्यावश्यकत्वमिति भावः । अनयेतिपाठे प्रक्रान्तया परिभाषयेत्यर्थः । कुमारेत्यादाविति पाठः । कुमारीत्यादाविति पाठे तत्र ङीब्रहिते राजकुमारेत्यादावित्यर्थ इति न दोषः । नन्वेमपि तत्फलस्य ङ्याब्ग्रहणेन सिद्धिरत आह—ङ्याबिति । अन्यार्थम्—परममूलोक्तफलार्थम् । उभयत्राभिमानपदसूचितामरुचिमाह—यदि त्विति । शेषत्वमिति । तथाचात्रापि ग्रहणपदसम्बन्ध इति भावः । तथा सति फलितमाह—एवंचेति । प्रत्ययेति । सामान्यविशेषान्यतररूपेण ग्रहणे एवेत्यर्थः । तेन गोमतो निष्क्रान्तेत्यर्थके निर्गोमतीत्यादौ ङीप्सिद्धिः । अन्यथोगित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वेऽपि तत्र तत्प्रवृत्त्या गोमच्छ-

रेव । नन्वेवमपि असमर्थसमासे दशदाडिमादिवदनर्थके विध्यर्थमस्त्विति चेत् ? न, 'अर्थवत्' इत्यस्यानुवृत्तेरुक्तत्वात् । कथं तर्हि असमर्थसमासे संज्ञेति चेद्धर्मिग्राहकमानादेवेति गृहाण । "असूर्यललाटयोः—"इत्यनेन हि असूर्यशब्दे उपपदे खश् विधीयते । उपोच्चारितं पदं चोपपदम्, पदं च सुप्तिङन्तमिति । निय-

शब्दरत्नम् ।

निषेधोऽपि स्त्रीप्रत्ययमात्रग्रहणे न तु स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणे इत्युच्यते; तदा न दोषः, समुदायस्य प्रत्ययान्तत्वाभावादिति दिक् । **असमर्थसमासे इति** । 'असूर्यम्पश्याः' इत्यादावित्यर्थः । **धर्मिग्राहकेति** । प्रातिपदिकसंज्ञा धर्मः, तद्धर्मी असमर्थसमासः, ग्राहकं मानं खश्विधायकम् । अन्यथा परस्परमसम्बन्धेनैकार्थीभावाभावात्समासो दुर्लभः स्यात् । **असूर्यशब्द इति** । तत्प्रकृतिके सुबन्त इत्यर्थः, सुपीत्यधिकारात् उपपदमिति महासंज्ञाकरणाच्च । तदेतदाह—**पदं चेत्यादि** । शशशृङ्गादिपदानां च बौद्धे तस्मिन्

भैरवी ।

इत्युच्यते इति । अत एव 'पुरुषोऽस्ति ते युवते' इति समुदायस्य तिप्रत्ययरूपतद्धितान्तत्वात् प्रातिपदिकसंज्ञा न । यदि समासग्रहणकृतनियमेनैतद्व्यावृत्तिरित्युच्यते तदा 'भक्त्या परमगतिः' इत्यत्र "कर्तकरणे कृता बहुलम्" इति समासाभावरूपम्फलम्बोध्यम् । न दोष इति । न प्रातिपदिकत्वासिद्धिरूपो राजकुमारीत्यत्र दोष इत्यर्थः । ध्वनितञ्चेदमर्थवत्समुदायानां समासग्रहणन्नियमार्थमित्युक्त्या भाष्यकृता । अत एवाह—दिगिति ।

इत्यादाविति । अत्र नञो दृश्यर्थे सम्बन्धादसामर्थ्यन्द्रष्टव्यम् । खश्विधायकसूत्रस्य मानत्वमुपपादयति—अन्यथेति । समास इति । असूर्येत्यादावित्यादिः । ननूपपदं विभक्त्यन्तन्नत्वसूर्यशब्द एवेत्यत आह—तत्प्रकृतिक इति । सुप् चात्र द्वितीयव, प्रकृत्यर्थस्य कर्मसाकाङ्क्षत्वाल्ललाटसाहचर्याच्च । तस्मिन्निति । शशादिशृङ्गे । एतरत्यन्तासतो बुद्धिसत्ताविशिष्टस्यार्थस्य बोधनात् । स्वप्नाद्यनुरोधेन बौद्धस्यार्थस्य स्वीकारात् । अधिकमन्य स्पष्टम् । येषां रथन्तरादिशब्दानामवयवा अत्यन्तानिरर्थकास्तेषामप्यन्यत्र दृष्टार्थारोपेण प्रातिपदिकत्वात्सुबुत्पत्त्या साधुत्वान्वाख्यानम्बोध्यम् । ननु यदि समासग्रहणेन मौलो नियमो बोध्यते तदा पूर्वसूत्रस्थस्यार्थवत्पदस्य दशदाडिमानीत्यादिसमुदायव्यावृत्तिप्रदर्शनपरभाष्यविरोध इत्यत आह—

भावप्रकाश ।

ब्दस्यैवोगिदन्तत्वेन विशिष्टान्ङीब् न स्यादिति भावः । **निषेध इति** । तस्या इति भावः । स्त्रीप्रत्यये सामान्यतो विशेषतो वेति भावः । ध्वनितं चेदमत्र भाष्ये इति गूढाकूतम् । **न तु स्त्रीति** । अत एव भिक्षाभिक्षाभिक्षाश्राम् अणित्यादावेकशेषानापत्तिपरसरूपसूत्रभाष्यं संगच्छते । अन्यथा अनुपसर्जने "स्त्रीप्रत्यये चानुपसर्जनेन" इत्यनेन समुदायस्यावन्तत्वेन प्रत्ययान्तत्वनिषेधेनामोऽप्राप्तेः । **न दोष इति** । न प्रातिपदिकत्वासिद्धिरित्यर्थः । एवंच शङ्कासमाधानं चायुक्तमेव । किंच तथा तत्प्रवृत्त्यङ्गीकारे फलाभावः । एतेन मूलानुयायिरत्नाकरदण्डिप्रभृतयश्चिन्त्यास्तदाह—**दिगिति** । **ग्राहकेति** । तदुद्देश्यकं मानं प्रत्ययपरिच्छेदकमित्यर्थः । तत्फलितमाह—**खशिति** । तद्ग्राहकत्वमुपपादयति—**अन्यथेति** । **समास इति** । असूर्येत्यादावित्यर्थः । **सुबन्ते इति** । स च द्वितीयैव ललाटसाहचर्यादिति भावः । एतद्विषये मान्योक्तिस्तु प्राचामनुरोधेनेति स्पष्टं तद्विदाम् । **तस्मिन्निति** । शशशृङ्गाद्यर्थे । बुद्धिमात्रविषयीकृतस्यात्यन्तासतो बुद्धिसत्ताविशिष्टस्यार्थस्य शब्देन बोधनात् । स्वप्नाद्यनुरोधेन च बौद्धपदार्थस्यावश्यकत्वात् घटादावप्येवमेवेति मंजूषायां विस्तरः । अक्षौहिणीरथन्तरादिपदघटकावयवानामत्यन्तनिरर्थकानामप्यन्यत्र दृष्टार्थारोपेण प्रातिपदिकत्वसुबुत्पत्त्यादिना यथाकथञ्चित्साधुत्वान्वाख्यानं बोध्यम् ।

मशरीरमाह—यत्र संघाते इत्यादि । पूर्वो भाग इत्युपलक्षणम्—उत्तरस्तु प्रत्ययो नेत्यपि बोध्यम्। अन्यथा जन्मवानित्यादौ संज्ञा न स्यात्तद्धितग्रहणस्य औपगवादौ कृतार्थत्वात् । पूर्वो भागः पदमिति किम् ? बहुज्विशिष्टस्य प्रातिपदिकसंज्ञा यथा

---

शब्दरत्नम् ।

शक्तिरिति न तदर्थमपि समासग्रहणमिति बोध्यम् । **यत्र संघाते इतीति** । अर्थवतीति शेषः, सजातीयापेक्षनियमस्यौचित्यादिति बोध्यम् । प्रत्ययो नेत्यस्य पूर्वभागप्रकृतिकप्रत्ययो नेत्यर्थः । तेन 'राजा इयान्' इत्यादौ न दोषः । **जन्मवानित्यादाविति** । तत्र पूर्वभागस्य पदत्वादिति भावः । ननु तद्धितग्रहणसामर्थ्य, तत्राह—**तद्धितेति** । तत्र पूर्वभागस्य भत्वात्पूर्वो भागः पदमित्यत्र च पदशब्देन पदसंज्ञकग्रहणमिति भावः । नन्वत्र पक्षे गवित्ययमाहेत्यादौ दोषः, गो इत्यादीनां सुबन्तत्वाभावेन पदत्वाभावात्; वृष-

भैरवी ।

अर्थवतीति । **तत्र साधकमाह**—सजातीयेति । **उत्तरसूत्रेऽप्यर्थवत्पदानुवृत्तेः । 'पञ्चनावप्रियः' इत्यादौ पञ्चनावेत्यादेस्तदभावस्य प्रयोजनत्वमन्यत्राभिहितमेव । खण्डनकारीयन्दोषमुद्धरति**—प्रत्ययो नेत्यस्येति । **इदं साजात्यप्रदर्शनाय** । न दोषः—**न समुदायस्य प्रातिपदिकत्वापत्तिरूपो दोषः** । तत्र—**जन्मवानित्यादिसमुदाये** । तत्र—**औपगवादौ । कृत्रिमाकृत्रिमन्यायेन हि** पदमित्यत्रेति । **एतेन शक्तस्यान्यमते पदत्वस्य सुप्रसिद्धत्वेऽपि न क्षतिः** । अत्र पक्षे—**परममूलोक्तनियमाकारपक्षे** । दोषः—**समुदायस्य प्रातिपदिकत्वापत्तिरूपो** दोषः । **वस्तुतः साजात्यप्रदर्शनमुक्तरूपेण न सम्भवतीत्याह**—वृषण्वस्वित्यादिना । **ननु यद्वेति मूलोक्तद्वितीयनियमस्वीकारे डित्थाद्यव्युत्पन्नानां सञ्ज्ञानापत्तिः, अर्थवत्सूत्रन्तु 'बहुपटवः' इत्यादौ चारितार्थम्। नच प्रकृतिप्रत्ययभावानापन्नपदसङ्घातविषयको नियमोऽस्त्विति वाच्यम् । 'गवित्ययमाह' इत्यत्र**

भावप्रकाश ।

**सजातीयेति** ।"कृत्तद्धित"इत्यत्रार्थवत्पदानुवृत्तेः । अत एव 'पञ्चनावप्रियः'इत्यादौ पञ्चनावेत्यादेर्नेति भावः ।अनेनान्यथैवं दुर्वचमिति ध्वनितम् । खण्डनकारोक्तं दोषमुद्धरति—**पूर्वेति** । एतेन तथा रत्नाकरोक्तिरपास्ता। एतेन यत्तच्छब्दार्थयोरननुगतत्वाच्छब्दानुगमस्याकिञ्चित्करत्वेन व्यवच्छेद्याननुगमेऽपि क्षत्य--भावाच्च यत्र संघाते इत्यादि व्यर्थमिति खण्डनकृदुक्तमपास्तं, साजात्यदर्शनाय तथोक्तेरिति भावः । **तत्र**—तच्छङ्कायाम् । **तत्र—औपगवादौ** । ननु पदशब्देन शक्तग्रहणे वैयर्थ्यं तदवस्थमेवात आह—**पदमितीति** । कृत्रिमाकृत्रिमेति न्यायादिति भावः । **इति भाव इति** । मूलकृत इति शेषः । एतेन पदशब्देन तादृशग्रहणे भाष्यपरममूलयोरैक्यं ध्वनितम् । **दोष इति** । समूहस्य संज्ञापत्तिरित्यर्थः । **गो इत्यादीति** । अत्र स्वरूपबोधनायाव् न कृतः संहिताऽविवक्षया वा । वस्तुतो मूले एव कुठार इत्याह—**वृषणिति** । अत्र पदशब्देनोत्तरभागोद्देश्यकभिन्नोत्तरखण्डार्थान्वयी गृह्यते । तेनानुकरणे समुदायस्यासुबन्तत्वेऽपि न संज्ञा । नास्तिक इत्यत्र निपातसमूहात्प्रत्यय इति पक्षे नञ्मात्रस्य पूर्वखण्डेऽप्युत्तरखण्डार्थान्वयित्वाभावेन न दोषः । अत एवेदृशार्थलाभासम्भव इत्यपि निरस्तमिति मान्योक्तिः प्राचामनुरोधेन । द्वितीयनियमात्तथा विवक्षायां गौरवेण तन्नियमस्यैवौचित्यात्, यद्वेत्यादिग्रहणस्यासङ्गत्यापत्तेश्चेति भावः । ननु द्वितीयनियमे डित्थादौ संज्ञा न स्यात् तत्र तदनापन्नवर्णसंघातत्वस्य सत्त्वात् । अर्थवत्सूत्रं तु 'बहुपटव' इत्यादौ चरितार्थम् । समुदायादेकविभक्ताविति पक्षस्यासम्भवदुक्तिकतापत्तिश्च "इदमोऽन्वादेशे" इत्यत्र शभावे प्रश्लेषे समुदायाद्विभक्तिरर्थवत्त्वादिति भाष्याद्यसङ्गतिश्च । अथ तदनापन्नपदसंघातो विवक्षितस्तर्हि गौरवं भाष्यविरोधष्टीकोक्तदोषद्वयं च । एतेन वस्तुतस्तु अर्थवत्पदसंघातस्य चेत्समासस्यैवेत्येव सुवचं, लाघवात्; कुम्भकारः कटप्रूजस्त्रमित्यादौ कृदन्तेन धातुना च समासे सत्यर्थवत्सूत्रेणेष्टसिद्धेरिति प्रकाशानुयायिरत्नाकरोक्तमपास्तम् । यत्तु पदशब्देन पदत्वयोग्यं ग्राह्यं पदत्वस्य सर्वत्राभावेऽपि तद्योग्यतायाः सत्त्वेन

स्यात्। तेन बहुपटव इत्यत्र प्रथमजसो लुकि बहुपटुशब्दस्य चित्स्वरे पुनर्जसि

## शब्दरत्नम्।

ण्वसुरित्यादिसमासे पूर्वभागस्य भत्वेन तत्साजात्येन पूर्वो भागः पदमित्यर्थलाभासम्भ-

## भैरवी।

'वृषण्वसुः' इत्यत्र च यो दोष उक्तस्तस्य तदवस्थत्वात्। किञ्च लाघवादर्थवत्समुदायस्य चेत्समासस्यैवेत्येवास्तु गवित्ययमाहेत्यादावनुकरणस्यानुकार्येणार्थेनार्थवत्त्वाद्व्यावृत्तिः, तथा 'राजा' इयान्' इत्यादेश्च नियमेन सा न। नियमस्यार्थवत्समुदायविषयकत्वस्वीकारादेव 'जन्मवान्' 'बहुपटवः' इत्यादीनां सङ्ग्रहः।

नचैवं सरूपसूत्रस्थभाष्ये 'समुदायादेकविभक्तावेकशेषः' इति पक्षे भिक्षा भिक्षा भिक्षा आम् इति स्थितिरुक्ता तद्विरोध इति वाच्यम्, तस्य भाष्यस्यैकदेश्युक्तित्वात्। किञ्च परममूलोक्त-धर्मेण न सर्वसमाससाजात्यम् अलुक्समासे पूर्वभागस्याप्रकृतित्वात्। विभक्तिपूर्वभागे तत्र प्रकृ-

## भावप्रकाश।

तत्साजात्येन तथैवौचित्यात्। नन्वस्यानुकरणे पूर्वभागस्य वृषण्वसुरित्यादौ भत्वेऽपि सत्त्वाद्बहुपटव इत्यादौ च बहुचोऽसत्त्वान्न दोषः। एवं सर्वत्र प्रश्लेषे घटाद्यवयवघकारादिवर्णवत्तेषामनर्थकत्वेन तदयोग्यत्वेन नियमाव्यावृत्त्या न दोषः। सरूपसूत्रभाष्यं त्वेकदेश्युक्तिः। एवं जन्मवानौपगव इत्यादौ नियमेन व्यावृत्तावपि निरवकाशत्वेन तद्धितान्तत्वात्संज्ञेति। उत्तरस्तु प्रत्ययो नेति न कल्प्यमिति लाघवम्। अत एव 'राजा इयान्' इत्यादेरपि यत्नान्तरं नास्थेयमित्यपरं लाघवम्। न च भविषये तद्योग्यता नेति वाच्यम्। गोचेत्यादौ तथा स्वीकृतत्वात्। "उत्तरपदत्वे च" इत्यस्य प्रत्याख्याने गतिकारकेत्यस्यानित्यत्वेन सुबन्तेन समासे भत्वस्य निर्बाधत्वात्। अन्यथा भाष्योक्तनियमाङ्गीकारे जन्मवान्बहुपटव इत्यादेरिव कुम्भकारादेरपि नियमाव्यावर्त्यतया अर्थवत्सूत्रेण संज्ञायां सत्यां समासत्वात्प्रातिपदिकत्वमिति सिद्धान्तविरोधः। किं च अ अस् इ इत्यादावुत्तरभागे तादृशार्थवत्त्वस्य सत्त्वात्तद्धितनिबन्धना सा न स्यात्। यथाऽनुकरणे इतिसमभिव्याहारे तदसत्त्वेपि तदसमभिव्याहारे तत्सत्त्वम्। किं चानुकरणे दोषतादवस्थ्यम्, यत्किञ्चित्समभिव्याहारेणेत्यर्थावगमेन तं विना प्रयोगेपि किञ्चित्समभिव्याहारं विना ऽप्रयोगेण नियमेनाव्यावृत्तेः। किं चानुकरणे ऽपरिनिष्ठितत्वात्कल्पितार्थवत्त्वेनार्थवत्ताया अनिश्चयाच्चासाधुत्वशङ्कापि स्यात्। अत एव सरूपसूत्रीय तत्पक्षोक्तिसम्भवस्तन्मते विभक्तिमात्रापेक्षत्वेनैतत्पूर्वभागस्यापरिनिष्ठितत्वेन स्वातन्त्र्येण प्रयोगानर्हत्वात् वैषम्ये मानाभावादिति। एवं च परममूलमेव रमणीयम्। मूलं व्याख्यानं च पदं सुप्तिङन्तमितियथाश्रुतव्याख्यातृप्राचामनुसारेणेति; तन्न, तथा नियमपरभाष्यविरोधापत्तेः। नियमसाजात्येन तद्धर्मप्रदर्शनद्वारा व्यावर्त्यस्वरूपप्रदर्शनपरतया परममूलस्थपदशब्दस्यैवाभावेन तथा विवक्षाया दुर्वचत्वाच्च। न च तदभावेऽपि वृषण्वसुर्वृषणश्व इत्यादौ पूर्वभागे तत्त्वस्य दृष्टत्वात्तेनैव साजात्यप्रदर्शनपरत्वे तस्य ग्रन्थस्य न दोष इति वाच्यम्। सामान्यसमासशब्दस्य सङ्कोचेन विशेषपरत्वे मानाभावात्। सभत्वपूर्वभागकसमूहस्य तेन वारणेऽपि राज्ञः पुरुषः शुक्लो घट इत्यादिवाक्यस्य तत्त्वापत्तेश्च। न च समासे पूर्वभागस्य सर्वत्र तद्योग्यत्वमेव न तत्त्वं तद्धि विभक्त्यन्तस्य तत्र परतो वा न हि तत्र विभक्तिरिति। एवं च पदत्वसम्पादकप्रकृतित्वाक्रान्तत्वं फलितं यथा नपदान्तसूत्रादौ तत्परत्वमधिकसंग्रहार्थम्, तेन सकललक्ष्यसंग्रह इति सङ्कोचो वाक्यसामान्यवारणं च सिद्धमिति वाच्यम्। तत्र विभक्त्यश्रवणेऽपि प्रत्ययलक्षणसूत्रेण तत्त्वसत्त्वेन तद्योग्यत्वव्यवहारस्य बाधितत्वात्। किं च प्रकृतौ तत्त्वाङ्गीकारेऽपि भत्वविषये पदत्वयोग्यतानङ्गीकारात्। उत्तरपदत्वेचेत्यस्य प्रत्याख्यानप्रकारस्यायुक्तत्वात्। अरण्यस्थदण्डस्य स्वरूपयोग्यत्वेऽपि कीटाद्युपभुक्तदण्डस्य तदभाववत्। अत एव वेतस्वानिति सिद्ध्यर्थं सप्तमीसमास आदृतो भाष्ये। अन्यथा षष्ठीसमासेऽपि तथा निर्वाहेण तदसङ्गतिः स्पष्टैव। किं च सर्वत्र समासे पूर्वभागस्य प्रकृतित्वाभावात्, अलुक्समासे व्यभिचारात्। एवं च श्रूयमाणविभक्तिकवाक्यस्य प्रातिपदिकसंज्ञापत्तिस्तदवस्थैव। अथ तत्रापि विभक्तेः पूर्वभागे प्रकृतित्वमस्त्येवेति चेत्? तथापि पदत्वसम्पादकत्वाभावः। किं

उपोत्तमोदात्तत्वं सिद्ध्यति । यद्वा प्रकृतिप्रत्ययभावानापन्नसंघातविषयको निय-

शब्दरत्नम् ।

वश्चेत्यत आह—यद्वेति । प्रकृतसूत्रे भाष्ये तु अर्थवत्समुदायानां समासग्रहणं नियमार्थ-मित्युक्तम् । अत्र तन्त्रेण षष्ठीतत्पुरुषः कर्मधारयश्च, तत्र षष्ठीसमासे अर्थवदित्यस्य

भैरवी ।

तित्वमस्तीति चेत्; उत्तरस्तु प्रत्ययो नेत्यतद्विरोधादिति चेत्तत्रथं वाह—प्रकृतसूत्र इति । अत्र भाष्यकारीयवाक्ये तन्त्रेण सकृदुच्चरितस्यार्थवत्समुदायपदस्यार्थवतां यः समुदायः, स्वयमर्थवांश्च, तत्परत्वविवक्षया षष्ठीतत्पुरुषस्य फलमव्युत्पन्नडित्थादिसङ्ग्रहः, एवमर्थवतः प्रकृतिप्रत्ययसमुदायस्य च सः । कर्मधारयफलन्तु समासग्रहणस्य नियमार्थत्वोपपत्तिः । अन्यथाऽर्थवतामनर्थको यः समुदायोऽनर्थकसमासो ऽश्राद्धभोजी ब्राह्मणो ऽलवणभोजी चेत्यादिस्तेषाम्प्रातिपदिकसंज्ञानिष्पादकत्वेन समासग्रहणचारितार्थ्येन नियमत्वानुपपत्तिरेव । किञ्च कर्मधारयासत्त्वे पञ्चगवधनाद्येकदेशस्यार्थवत्समुदायरूपसमासत्वात्तत्रापि स्यादिति तद्व्यावृत्तिरपि । एतस्य कर्मधारयस्य लाभस्तु नियमस्य सजातीयापेक्षत्वमित्यनेन । नन्वेवम्बहुपट-

भावप्रकाश ।

च जन्मवानित्यादौ सा न स्यात् । तद्धितग्रहणस्यौपगवादौ कृतार्थत्वात् । उत्तरस्तु तादृशः प्रत्ययो नेति विवक्षणे तु गौरवं मूलोक्तादविशेषश्च । अथ शुद्धं प्रकृतित्वं विवक्षितमित्युच्येत । तावतापि पदशब्दघटितपरममूलासङ्गतिस्तदवस्थैव । ततो वरं भाष्योक्तपक्षादर इत्याशयेनाह—प्रकृतेति । अत्रेति । उक्तवाक्ये इत्यर्थः । षष्ठीति । तेन डित्थादौ न दोषो न वा टीकोक्तान्यदोषापत्तिः, तत्पक्षासम्भवदुक्तिकत्वापत्त्युद्धारस्तु टीकायामेव स्फुटीभविष्यति । तद्भाष्यासंगतिरपि न । समुदायस्यैव तत्रार्थवत्त्वात् डित्थादिवदिति भावः । सजातीयापेक्षनियमौचित्यादाह—कर्मधारयश्चेति । अर्थवत्पदस्य तत्रानुवृत्तेः । अन्यथा ऽनर्थकसमासे ऽर्थवतां समूहत्वस्य सत्त्वेऽपि समूहस्यानर्थक्यात्तत्रैव विध्यर्थत्वं स्यादिति नियमानुपपत्त्या वाक्ये तदापत्तिरेव । किं च पञ्चनावप्रिय इत्यादावेकदेशे स्यादिति भावः । नन्वेवमपि बहुपटव इत्यादौ दोषतादवस्थ्य-

सरला ।

यद्वेतीति । प्रकृतिप्रत्ययभावानापन्नसंघातस्य चेत्प्रातिपदिकसंज्ञा तर्हि समासस्यैवेति नियमाकारोऽवगन्तव्यः । 'वृषण्वसुः' इत्यादीनामपि तादृशसंघातत्वमस्त्येवेति तस्य न समासत्वव्यापकत्वहानिरिति । 'बहुपटवः' इत्यस्य तादृशसंघातत्वासत्त्वान्न नियमेन व्यावृत्तिरिति तत्र पूर्वसूत्रेण प्रातिपदिकसंज्ञा सिद्ध्यति । प्रत्ययविशिष्टत्वं प्रकृतिप्रत्ययभावापन्नत्वम् । तद्भिन्नत्वं प्रकृतिप्रत्ययभावानापन्नत्वमिति यावत् । वैशिष्ट्यं च स्वघटितत्वम् स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्वम्, स्वविशिष्टाघटितत्वम्, एतत्त्रितयसम्बन्धेन । स्ववैशिष्ट्यञ्च स्वेतरत्वम्, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरत्वम्, एतदुभयसम्बन्धेनेति । 'जन्मवान्' इत्यत्र मतुप्प्रत्ययघटितत्वं तन्निष्ठविधेयतानिरूपितोद्देश्यताश्रयजन्मघटितत्वं चेति लक्षणसमन्वयः । एवं 'बहुपटवः' इत्यत्रापि बोध्यम् । 'गामानय' 'राजपुरुष' इत्यादिसमुदायानां तदितरघटितत्वेन तद्भिन्नत्वमिति समासेतरस्य 'गामानय' इत्यादेर्व्यावृत्तिः । नन्वेवं निष्कृष्यैकार्थीभावेन तद्धितोत्पत्तेर्भाष्यकृत्सिद्धान्तिततया परमगार्ग्यघटकगार्ग्यशब्दादेव फक्प्रत्ययो न तु विशिष्टादिति 'परमगार्ग्यायणः' इत्यत्र फक्प्रत्ययघटितस्य फक्प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयगार्ग्यघटितस्य तदितरपरमघटितत्वेन तद्भिन्नत्वात्समासग्रहणकृतनियमेन व्यावृत्तौ प्रातिपदिकसंज्ञा न स्यादिति चेत्? न, स्ववैशिष्ट्ये स्वनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकीभूतैकार्थीभावाश्रयेतरत्वम् एतत्सम्बन्धस्याधिकस्य निवेशेन परमस्य एकार्थीभावाश्रयत्वेन तदितराघटितत्वस्यैव सत्त्वेनादोषात् । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

कर्मधारयश्चेति । तथाच अर्थवतां ये समुदायास्तेऽर्थवन्तोऽप्यपेक्षिताः । तेषामेव नियमेन व्यावृत्तिः, न तु दश दाडिमानि इत्यादीनामनर्थकसमुदायानाम् । बहुवचनं त्वत्र प्रयोगभेदाभिप्रायेण ।

शब्दरत्नम् ।

स्वातन्त्र्येणापि प्रयोगार्हार्थवदित्यर्थः । गवित्ययमित्यादावनुकरणस्यानितिपरस्यापि प्रयोगसत्त्वेन तत्त्वमस्त्येव । प्रकृतिप्रत्ययसमुदायस्य तु न व्यावृत्तिः, प्रत्ययस्य स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभावात् । सरूपसूत्रे भाष्ये सुबन्तानामित्यनेनेदमेवोपलक्ष्यते इति

भैरवी ।

वादौ दोष एवेत्यत आह—**तत्रेति** । **अर्थद्वयविवक्षायाम्** । स्वातन्त्र्येणापीति । **अत्रापिः पारतन्त्र्यसमुच्चायकः । स्वातन्त्र्यञ्च तावन्मात्रस्याप्यर्थबोधनाय पृथक्प्रयोगयोग्यत्वम् । प्रयोगार्हार्थवदित्यस्य प्रयोगार्हमर्थवदित्यर्थः । ननु गवित्ययमित्यादेरधुना व्यावृत्तिर्न स्याद् गो इत्यादेरितिशब्दसमभिव्याहारेणैव प्रयोगादत आह**—गवित्ययमिति। तत्त्वमिति । **तावन्मात्रस्य पृथक्प्रयोगार्हत्वम् । खाट्कृत्य इत्यादौ यथा । 'बहुपटवः' 'पुत्रकाम्या' इत्यादेः संग्रहमाह**—प्रकृतीति । अभावादिति । **निरुक्तस्वातन्त्र्याभावस्य सत्त्वेन विशेषणाभावप्रयोज्यविशिष्टाभावस्य तत्र**

भावप्रकाश ।

मत आह—**तत्रेति** । तयोर्मध्ये इत्यर्थः । अपिः पारतन्त्र्यसमुच्चायकः । **प्रयोगार्हार्थेति** । प्रयोगार्हप्रतिपादनार्हो योऽर्थस्तद्वदित्यर्थः । एवं विवक्षायाः फले वक्तुं योग्येऽपि सर्वलक्ष्यसिद्धिप्रतिपादनायादावाह—**गवीति । तत्त्वं**—तावन्मात्रस्य पृथक्प्रयोगार्हत्वम् । एतेन किञ्चित्समभिव्याहारावश्यकत्वेनानुकरणे दोषतादवस्थ्यमित्यपास्तम् । केवलस्यापि प्रयोगस्य लोके शास्त्रे च बहुशो दृष्टत्वात् । एतेनासाधुत्वशङ्काऽपि निरस्ता । ततस्तत्फलमाह—**प्रकृतीति** । बहुपटवः पुत्रकाम्येत्यादेः । एवंच कुम्भकारादा-

सरला ।

**अर्थवदित्यर्थ इति** । स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वावयवकः स्वातन्त्र्येण प्रयोगार्हार्थवदुत्तरावयवकश्च योऽर्थवान् समुदायस्तस्य चेत्तर्हि समासस्यैवेति नियमाकारः। अत एव पूर्वसूत्रेऽर्थवदित्यस्य 'दश दाडिमानि' इत्याद्यनर्थकपदसमुदायव्यावृत्तिस्तत्फलमुक्तं भाष्ये । अन्यथा समासग्रहणकृतनियमेनैव तद्व्यावृत्तौ तदसङ्गतिः स्पष्टैव । उत्तरावयवस्यापि स्वातन्त्र्येण प्रयोगार्हार्थवतो ग्रहणेन 'पुत्रकाम्या' इत्यस्य न व्यावृत्तिः, उत्तरभागस्य 'काम्य' इत्यस्य पुत्रसमभिव्याहारेणैव प्रयोगेण स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभावात् । स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वं च पूर्वसूत्रीयपरिष्कृतार्थवत्त्वमेव । तच्च एतत्संज्ञाफलीभूतप्रत्ययेतरसमभिव्याहारानपेक्षयाऽर्थविषयकबोधजनकत्वम् । नन्वेवं 'पञ्चनावप्रियः' इत्यादौ पञ्चनावेत्यस्य तादृशार्थवत्त्वस्याभावेन निरुक्तरूपे 'स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वावयवक' इत्याद्युक्ते नियामकशास्त्रीयोद्देश्यतावच्छेदकसमासत्वव्यापकत्वं न स्यात्, तत्र समासत्वस्य सत्त्वेऽपि स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वावयवकत्वस्याभावात् । किञ्च 'राज्ञः पुरुषौ' इत्यादौ पुरुषेत्यस्य चिकीर्षितप्रातिपदिकसंज्ञाफलभूतप्रत्ययेतर 'औ' समभिव्याहारेणैव लोकेऽर्थविषयकबोधजनकत्वेन राज्ञः पुरुष इति समुदाये स्वातन्त्र्येण प्रयोगार्हार्थवदुत्तरावयवकत्वाभावेन समासग्रहणकृतनियमेन तद्व्यावृत्तिर्न स्यात्; इति चेत्? मैवम्, प्रातिपदिकसंज्ञाफलभूतप्रत्यय–पद–एतदन्यतरेतरसमभिव्याहारानपेक्षयाऽर्थविषयकबोधजनकत्वं स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वमिति परिष्कारेणादोषात् । 'राज्ञः पुरुषौ' इत्यादौ औविभक्तेरपि प्रातिपदिकसंज्ञाफलभूतत्वेन तदितरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वेन तत्र समासग्रहणकृतनियमेन व्यावृत्तिः सिद्ध्यति । 'पञ्चनावप्रियः' 'तन्निभः' 'कुम्भकारः' 'एधाञ्चक्रे' 'एधामासतुः कल्पम्' 'मूलकेनोपदंशम्' इत्यादौ प्रिय तत् कुम्भ एधाम् मूलकेन इत्यादिषु प्रातिपदिकसंज्ञाफलभूतप्रत्ययेतरत्वस्य सत्त्वेऽपि पदेतरत्वस्याभावात् प्रातिपदिकसंज्ञाफलभूतप्रत्यय–पद–एतदन्यतरेतरसमभिव्याहारानपेक्षया पञ्चनाव निभ कार एधाम् आसतुःकल्पम् उपदंशम् इत्यादीनां बोधकत्वेन स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वं निर्बाधम् । न च 'चञ्चासु' 'हरिषु' इत्यादौ सोः निरुक्तस्वातन्त्र्यप्रयोगार्हार्थवत्त्वापत्तिरिति वाच्यम्, इष्टापत्तेः, सोः निरुक्तार्थवत्त्वसत्त्वेऽपि पूर्वभागप्रकृतेस्तदभावाच्च । एवमेवोत्तरभागस्यापि स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वं परिष्करणीयमिति दिक् ।

मोऽस्तु । न चाद्यपक्षे राजपुरुषावित्यादौ पुरुषावित्यादेः संज्ञा स्यादिति वाच्यम् , अर्थवत्त्वेनैव वारणात् । प्रत्ययार्थो हि विशिष्ट एवान्वेति, न तूत्तरपदार्थमात्रे येन पुरुषावित्यस्यार्थवत्त्वं स्यात् । नियमफलमाह—तेनेत्यादि । नन्वेवमपि

शब्दरत्नम् ।

स्पष्टमेव कैयटेनोक्तमिति बोद्धयम् । **पुरुषावित्यादेरिति** । तत्पूर्वभागस्य "उत्तरपदत्वे च–" इति निषेधेनापदत्वात् , परस्य तत्प्रकृतिकप्रत्ययत्वाभावादिति भावः । अर्थव-

भैरवी ।

त्त्वमिति भावः । नचैवं कुम्भकाराद्युपपदसमासासंग्रहः, उपपदासन्निधानेनोत्तरपदस्याप्रयोगादिति वाच्यम्; वेदव्यासाद्यवयवस्य व्यास इत्यस्य प्रयोगदर्शनेनारण्यकदण्डवत्स्वरूपयोग्यत्वरूपयोग्यताया अनपायात् । एषाम्प्रातिपदिकसञ्ज्ञा तु पूर्वसूत्रेण कृदन्तत्वेन वा । स्वोक्तार्थस्य सप्रमाणत्वध्वननायाह—भाष्य इति । सरूपसूत्रे इति पाठः क्वाचित्कः । अर्थवत्सूत्रभाष्ये एव सुबन्तानामिति प्रतीकमुपादायैतच्चोपलक्षणमित्यादिना भेदसंसर्गद्वारकेतिशब्देन तेन कथनात् । इदमेव—स्वातन्त्र्येणापि प्रयोगार्हार्थवतामित्यत्र । पदार्थयोर्विभागेनापि प्रयोगे कृते सतीतरसंसर्गाकाङ्क्षा भेदसंसर्गः स द्वारभूतो यस्य विशिष्टार्थवत्त्वस्य तद्युक्तानामिति तद्वाक्यार्थः ।

ननु मूले पुरुषावित्यादेः संज्ञाप्राप्तिरुद्भाविता, सा न सङ्गच्छते; समुदायस्य प्रत्ययान्तपर्युदासेन व्यावृत्तिः स्यादत आह—परस्येति । औ इत्यस्येत्यर्थः । प्रत्ययान्तपर्युदासबोधकशब्देऽपि प्रत्ययपदेन यस्माद्विहितस्तदादेरित्यस्योपस्थितिरस्त्येवेति भावः । अत एव भाष्ये दशदाडिमानीत्यादिवाक्यस्यानर्थकस्यार्थवत्पदव्यावर्त्यत्वोक्तिः सङ्गच्छते । यत्तु परस्येत्यनेन नियमस्याद्यस्याप्रवृत्तिर्ध्वन्यते तस्मिन्नुत्तरस्तु प्रत्ययो नेत्यस्य निवेशेऽपि परस्य तत्प्रकृतिकप्रत्ययान्तत्वाभावादिति व्याख्यानं, तत्तु स्वीयसिद्धान्तविरुद्धम् । यत्र संघाते पूर्वो भागः पदमित्यनेनैव नियमाप्रवृत्तिलाभात् । नच "उत्तरपदत्वे च" इति निषेधेन पुरुषेत्यस्य पदत्वन्नास्तीति वाच्यम् , उत्तरपदस्य कार्यित्वे एव तस्य निषेधस्य प्रवृत्त्यङ्गीकारात् । कृदन्तत्वं वाक्यस्य परिभाषयोपपादितं, तच्च न सङ्गच्छते; यत्क्रियायुक्ता इति न्यायस्थल इव प्रत्यास-

भावप्रकाश ।

त्र्थवत्सूत्रेण कृदन्तत्वाद्वा प्रातिपदिकत्वे समासत्वात्तत्त्वमिति सिद्धान्तस्य खपुष्पायमाणत्वात् । **भाष्ये-इति** । एतत्सूत्रभाष्ये इत्यर्थः । सरूपसूत्रे इत्यपाठः । **इदमेवेति** । स्वातन्त्र्येणापि प्रयोगार्हार्थवतामित्येवेत्यर्थः, सुबन्तानामिति प्रतीके—एतच्चोपलक्षणं, 'भेदसंसर्गद्वारकार्थवत्त्वयुक्तानाम्' इति तेनोक्तेः । वाक्ये पदार्थयोर्विभागेनापि प्रयोगे सतीतरसंसर्गाकाङ्क्षा भेदसंसर्गः स द्वारभूतो यस्य विशिष्टार्थवत्त्वस्य तद्युक्तानामिति तदर्थः । समासेऽपि वाक्यीयेनैव तेन विशिष्टार्थवत्त्वम् । न हि प्रकृतिप्रत्यययोर्विभागः परश्चेति वचनादिति तद्भावः । एतेन 'अ अस् इ' इत्यत्र तद्धितनिबन्धनापि सा न स्यादित्यपास्तम् । एवं सरूपसूत्रभाष्यकैयटादेरप्यत्रैव तात्पर्यम् । अत एवाङ्गसंज्ञासूत्रे भाष्ये प्रत्ययग्रहण इति परिभाषायाः फलकथनावसरे 'देवदत्तो गार्ग्य' इति समुदायस्य यञन्तत्वेनप्राप्तप्रातिपदिकत्वाभावः फलत्वेनोक्तः । मूलमते तु नियमेनैव तत्र तदप्राप्तया भाष्यासङ्गतिः स्पष्टैवेत्यलम् । **पुरुषावितीति** । अत्र मान्याः—उत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधाद्भाष्ये 'अ सर्वनामस्थाने यचि' इति पदत्वमात्रस्य निषेधाच्च जहत्स्वार्थायां वृत्तावानर्थक्याच्च दोषशंकेति प्राहुः । तत्प्राचामनुरोधेन, उत्तरपदस्य कार्यित्वाभावेन तदप्राप्तेः, प्रत्याख्यानप्रकारस्यायुक्तत्वाच्च, प्रक्रियादशायां जहत्स्वार्थवृत्तेरनङ्गीकाराच्च, समर्थसूत्रभाष्योक्तरीत्या पूर्वपदे एव जहत्स्वार्था नोत्तरपदे इत्यङ्गीकाराच्च । एवं च मूलम् 'उत्तरस्तु प्रत्ययो न' इति यथाश्रुतनिवेशाभिप्रायमगत्या गुरुभूतप्रत्याख्यानरीत्या भत्वाभिप्रायं वा । इतोऽपि हेतोः पदत्वयोग्यत्वनिवेशः प्रकृतित्वमात्रनिवेशो वा दुष्कर इति बोध्यम् । तद् ध्वनयन्नाह—**परस्येति** । तथा चार्थवत्सूत्रसंज्ञाहेतुभूतात्प्रत्ययान्तत्वमस्तीति भावः । कृद-

मूलकेनोपदंशमित्यादौ वाक्यस्य संज्ञा दुर्वारा, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्, इति चेत्? मैवम्, समासग्रहणाकृतनियमेन परत्वाद् बाधात्। एवं

शब्दरत्नम्।

त्वेनैवेति। उत्तरपदस्य कार्यित्वाभावेन तन्निषेधाप्रवृत्तेश्चेत्यपि बोद्ध्यम्। **वाक्यस्येति**। कृदन्तत्वादिति भावः, तदाह—**कृदिति**। न चास्य भुजौ करणत्वेनोपदंशं प्रति न कारकत्वम्। मूलकस्योपदंशे कर्मत्वेनाप्यन्वयो विभक्तिस्तु प्रधानानुरोधिकरणत्वकृता तृतीयैवेति तं प्रत्यपि कारकत्वमित्याशयात्। **परत्वाद् बाधादिति**। नियमस्यार्थतो निषेधेऽपि तात्पर्येणार्थवत्सूत्रापवादस्यास्य परत्वेन कृदन्तत्वप्रयुक्तस्यापि निषेधे तात्पर्या-

भैरवी।

त्या कारकस्यापि तद्धात्वर्थक्रियासम्बन्धिन एव ग्रहणेनास्य भुजिम्प्रत्येव कारकत्वादित्याशङ्कान्निवारयति—नन्वित्यादिना। **समाधानं सूचयति**—मूलकेति। **अपिर्भुजिनापि सम्बन्धं व्यनक्ति**। अन्वयः। **शाब्द इति शेषः**। प्रधानेति। **तिङन्तार्थक्रियायाः समुदायजन्यशाब्दबोधे विशेष्यतया भानादस्याः प्राधान्यम्**। प्रधानानुरोधाति।

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥

इति न्यायात्। तम्प्रत्यपीति—**उपदंशम्प्रतीत्यर्थः**।

**ननु नियमशास्त्रस्य निषेधमुखेन प्रवृत्तिरिति पक्षे निर्वाहेऽपि विधिमुखेन प्रवृत्तिरिति सिद्धान्तिते पक्षे कथन्निर्वाहोऽत आह**—नियमस्येति। अर्थतः—**प्रयोजनतः**। **निषेधेऽपि तात्पर्ये "उभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधेऽकादिप्रयोगेऽप्रतिषेधः" इति वार्तिकं सङ्गच्छते**।

भावप्रकाश।

न्तत्वादिति। तथा च "सुपो धातु" इति लुगापत्तिः। विकल्पेन समासविधिः स्वरार्थ इत्युक्तमेव। वाक्यैकदेशप्रयोगेऽनुकूलसमासे चाङ्गाधिकारस्थप्रत्ययहेतुककार्याणां सुबादेशानां च साफल्यमिति भावः। **अस्य—मूलकस्य**। **न कारकत्वमिति**। तथाच तत्परिभाषायां प्रत्यासत्त्या कृत्प्रकृत्यर्थनिरूपितकारकस्यैव ग्रहणेनात्र तदप्राप्तिः। तृतीयान्तेन शाब्दान्वये एव यदि प्रत्ययस्तर्हि करणे इत्येव वाच्ये तृतीयायामिति व्यर्थं तस्माद्वचनसामर्थ्याच्चार्थिकान्वयमादाय प्रत्ययसमासाद्युपपत्तावप्युक्तरीत्या समूहस्यार्थवत्त्वाभावश्चेति मूलमयुक्तम्। एतेन दशनैरुपदंशं भुङ्क्ते इत्यादौ वचनं सफलमित्यपास्तमिति भावः। समाधत्ते—**मूलकस्येति**। अपिरुक्तसमुच्चायकः। **अन्वय इति**। शाब्दान्वय इत्यर्थः। यत्तु अर्थान्वय इति मूलकृदादिमतम्। तन्न, गर्भग्रामः कर्म इत्येतूभयमिति सन्सूत्रस्थभाष्यविरोधादिति भावः। नन्वेवं परत्वात्कर्मसंज्ञैव स्यात्। न च संज्ञयोर्मिथोऽविरोधः। तथापि कार्यद्वारा तत्सत्त्वात्। ध्वनितश्चायमर्थः कृङिति चेति सूत्रे भाष्यकैयटयोरत आह—**विभक्तिस्त्विति**। तिङन्तार्थक्रियायाः प्राधान्येन प्रधानाप्रधानसन्निधौ प्रधानानुरोधो न्याय्य इति न्यायेनेति भावः। कार्यद्वारा परत्वाश्रयणावश्यकत्वे तत एव तृतीयायायुक्तत्वाच्चेत्यपि बोध्यम्। एवं चोपपदहेतुकतया समर्थपरिभाषोपस्थानेन सामर्थ्ये णमुलादय इति भाष्यसिद्धान्तविरोधोऽपि न। एतेन तृतीयायामिति सामर्थ्यात् णमुलादिवत्परिभाषाप्रवृत्तिः। आदिना दन्तैनोपदंशं भुङ्क्ते इत्यादेः परिग्रहः। अत्र शाब्दं तत्र करणत्वम्। वस्तुत "उपदंशस्तृतीयायाम्" इत्यादि प्रामाण्यात्कर्मणि तृतीयेयमिति मान्योक्तिः प्राचामनुसारेणेति सूचितम्। तद् ध्वनयन्नाह—**इत्याशयादिति**। ननु तदुक्ताशय इति भावः। ननु नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे निर्वाहेऽपि मुख्यपक्षे विधिमुखेन प्रवृत्तावविरोधेनेदमयुक्तमत आह—**नियमस्येति**। तस्यार्थतस्तत्रापि तात्पर्येणार्थवत्सूत्रापवादस्यास्य नियमस्य परत्वेन तस्यापि निषेधे तात्पर्यादिति योजना। तात्पर्यमुभयत्र हेतुः। अत एव "उभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधेऽकादिप्रयोगेऽप्रतिषेधः" इति वार्तिकाक्षरस्वारस्यं सङ्गच्छते। नन्वेवमपि परत्वमयुक्तम्, द्वयोर्लब्धावकाशयोर्युगपत्समवस्थितयोरसम्भवे तत्प्रवृत्त्याऽत्राप्रवृत्तेः यथा रामेभ्य

च "कृत्तद्धित-"इति सूत्रे कृद्ग्रहणपरिभाषा नोपतिष्ठत एव निष्फलत्वादिति

शब्दरत्नम् ।

दि।त भावः । निषेधानां बलवत्त्वाच्चेत्यपि बोध्यम् । **निष्फलत्वादिति** । स्पष्टं चेदं

भैरवी ।

इति भाव इति । परत्वादिति वदतो भाव इत्यर्थः । वस्तुतो निषेधे तात्पर्यं 'निषेधाश्च बलीयांसः' इति "कर्मणिङ्" इति सूत्रपठितवार्तिकरीत्या बलवत्त्वसम्भवे परत्वादित्येतन्न युक्तमित्याशयेनाह-निषेधानामिति । इत्यपीति । अपिना विधिमुखेन प्रवृत्तिरिति पक्षे नियमस्य यत्र प्रवृत्तिस्तत्र सामान्यशास्त्रस्य तात्पर्यसङ्कोचः क्रियत इत्यपि पक्षोऽस्तीति प्रकृते बाध्यसामान्यचिन्तयाऽर्थवत्पदस्यार्थवत्पदसमूहान्यपरत्ववत्कृदंशस्यार्थवत्पदसमूहान्यकृदन्तपरत्वमित्यपि सम्भवतीति निषेधस्य यत्फलन्तस्यार्थतो लाभस्तथाच न प्रकृतेऽतिप्रसङ्ग इति बोध्यम् । स्वोक्तार्थः सिद्धान्तसम्मत एवेति ध्वनयितुमाह--स्पष्टञ्चेदमिति । तत्र हि--"गतिकारकोपपदानाङ् कृद्भिः सह समासवचनम्प्राक् सुबुत्पत्तेः" इति परिभाषायाः प्रयोजनम्प्रथमतः 'सांकूटिनम्' 'व्यावक्रोशी' इत्येतदभिहितम् । अत्राद्ये "अभिविधौ भाव इनुण्" इतीनुण्प्रत्यये "अणिनुणः" इत्यण्प्रत्ययस्य सुपश्च प्रसङ्गे अण्प्रत्ययस्य स्वार्थिकत्वेन सुबुत्पत्तेः प्रागन्तरङ्गत्वादुत्पत्तिर्भवति-यदि तदा कूटिन्नित्यस्यैवादिवृद्धिः स्यात् । सुबुत्पत्तेः प्राक् समासे तु अन्तरङ्गत्वात्पूर्वं समासः । अण्प्रत्ययस्त्विनुणन्तत्वसापेक्षत्वाद्बहिरङ्ग इति विशिष्टादेवाण्प्रत्ययः । यदि समासे सुबुत्पत्तेरपेक्षा तदा सुबुत्पत्तेः प्राक् समासाप्राप्त्या सुपश्च प्राक् पूर्वोक्तरीत्याऽण्प्रत्यये रूपासिद्धिः स्फुटैव । द्वितीये तु "कर्मव्यतिहारे णच् स्त्रियाम्" इति णचि समासो-

भावप्रकाश ।

इत्यादावेतद्दीर्घयोः प्राप्तयोः परत्वादेतन्मत आह-**निषेधानामिति** । अयं च "निषेधाश्च बलीयांसः" इति "कर्मणिङ्" इति सूत्रभाष्यपठितपरिभाषार्थानुवाद इति केचित् । परे तु सा परिभाषा शाब्दनिषेधविषयिण्येव । अत एव परमवागित्यत्र "असर्वनामस्थान—इति निषेधः प्राप्नोति । अस्तु स्वादौ पदमित्यस्य । सुबन्तं पदमिति तु भविष्यति । सति प्रत्यये एवम् । नह्यत्र सोऽस्ति । अस्ति तत्र प्रत्ययलक्षणेन तत्परतेति निषेधाश्च बलीयांस इति निषेधः प्राप्नोति । नाप्रतिषेधात् । किं तर्हि पर्युदासोऽयं सर्वनामस्थानेऽव्यापारः । यदि केनचित्प्राप्नोति तेन भविष्यति" इति नलुमतेति सूत्रभाष्यं सङ्गच्छते । अन्यथा पर्युदासेऽप्यर्थतो निषेधसत्त्वेन तदसङ्गतिः स्पष्टैव । ध्वनितश्चायमर्थः "सुडनपुंसक" इति सूत्रे भाष्यकैयटयोरित्याहुः । वस्तुतस्तु सिद्धे कार्ये पुनर्विधिसामर्थ्येन सामान्यशास्त्रस्य सङ्कोचः । यथाऽत्पूर्वस्येत्यनेन सन्निहितासन्निहितशास्त्रसङ्कोचोऽत्पूर्वान्यपरत्वरूपः । एवमत्र समासग्रहणकृतनियमेन बाध्यसामान्यचिन्तयाऽर्थवत्सूत्रस्यार्थवत्पदसमूहान्यपरत्वं कृदंशस्य कृदन्ततादृशसमूहान्यपरत्वम् । एवं सङ्कोचे चान्यत्र तदभावस्याप्यर्थतः सिध्द्याऽर्थसिद्धं तमादाय नियमशास्त्रेषु प्रतिषेधत्वव्यवहार इत्याशयेनाह—**निषेधानामिति** । येन वाक्यस्य मूलकेनोपदंशमित्यादेश्चोद्देश्यत्वानाक्रान्तत्वादुभयोरप्राप्तिरिति तत्त्वम् । तस्य सिद्धान्ततां ध्वनयितुमाह-**स्पष्टमिति** । प्रकाशग्रन्थानुवादन्यूनतां निराचष्टे—

सरला ।

**निषेधानामिति** । ननु नियमशास्त्राणां निषेधमुखेन प्रवृत्तिः विधिमुखेन वेति मतद्वयम् । तत्राऽऽद्यमते उक्तरीत्या निर्वाहेऽपि विधिमुखेन प्रवृत्तिरिति पक्षे कथं निर्वाह इति चेत् ? उच्यते, तत्र पक्षे नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यद्रूपं तदवच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचः इति सिद्धान्तात् स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वावयवकस्वातन्त्र्येणप्रयोगार्हार्थवदुत्तरावयवकार्थवत्समुदायातिरिक्तमर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञकमिति पूर्वसूत्रस्यार्थः । तादृशसंकुचितार्थबोधकमेवार्थवत्पदं कृत्तद्धितसूत्रेऽनुवर्तते । तथाच स्वातन्त्र्येणेत्यादि-अर्थवत्समुदायातिरिक्तं यदर्थवत्कृदन्तं तद्धितान्तं वा तत्प्रातिपदिकसंज्ञकमिति कृत्तद्धितसूत्रस्यार्थेन 'मूलकेनोपदंशम्' इत्यस्य तादृशसमुदायरूपतया न दोष इति ।

तत्त्वम् । यत्तु वदन्ति—समासग्रहणं न नियमार्थं किन्तु विध्यर्थमेव । अर्थवत्त्वं हि वृत्तिमत्त्वम् । वृत्तिश्च द्विधा–शक्तिर्लक्षणा च । न च सा समासेऽस्तीति । अत्रेदं वक्तव्यम् । सिद्धान्ते तावदेकार्थीभावाभ्युपगमाद् वृत्तिर्नास्तीति बाधितमेव । मीमांसकमतेऽपि लक्षणाऽस्त्येव । यदाहुः—

सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थितम् ॥ इति ।

अथ नैयायिकरीत्योच्येत ? तदपि न, बहुपटव इत्याद्यसिद्धेः । तद्धितग्रहणं तद्विशिष्टपरमिति चेत् ? न, पचतकीत्यादावतिव्याप्तेः। किं चैवं कृद्ग्रहणपरिभाषया

शब्दरत्नम् ।

"पुंयोगात्–" इति सूत्रे भाष्यकैयटयोः । **न च सा समासे इति** । नापि वाक्ये इति बोध्यम् । **एकार्थीभावेति** । एकोपस्थितिनियामिका समुदायशक्तिरेवात्रैकार्थीभाव इति भावः । एवं समासे वृत्तिः सिद्धा । वाक्येऽपि शक्तिरस्ति, विशेषणविशेष्यभावांशे तच्छक्तेरर्थवत्सूत्रभाष्यादावुक्तत्वात । **लक्षणेति** । वृत्तौ वाक्ये चेति भावः । **असिद्धेरिति** । । समासे इव तद्धितेऽपि शक्तिलक्षणयोरभावादिति भावः । **पचतकीत्यादाविति** । न च पूर्ववर्तित्वोत्तरवर्तित्वाभ्यामेव वैशिष्ट्यं निवेशनीयम् ; विनिगम-

भैरवी ।

त्तरं "णचः स्त्रियामञ्" इति विशिष्टादञि रूपसिद्धिः । अन्यथाऽस्यापि पूर्ववदसिद्धिः स्यात् । ततः सत्यामप्येतस्यामपरिभाषायां प्रत्ययग्रहणपरिभाषया ऽवयवादुत्पत्तिः प्राप्नोतीत्याशङ्कायाः 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषया निराकरणे कृते गतिकारकोपपदानामिति परिभाषायाः 'सांकूटिनम्' इत्यादिप्रयोजनन्तर्हि न स्यादकृत एव समासे कृद्ग्रहणे परिभाषया सङ्घातात्तद्धितोत्पत्तिरित्याशयेन–"नैतदस्याः परिभाषायाः प्रयोजनम्भवति, एतयैव सिद्धम्" इति भाष्यकृतोक्तम् । अस्याः–गतिकारकोपपदानामिति परिभाषायाः । एतया–कृद्ग्रहणपरिभाषया । ततो "न सिध्यति, किङ्कारणमप्रातिपदिकत्वात्" इत्याशङ्क्य कृदन्तत्वात्प्रातिपदिकसंज्ञा भविष्यतीति समाधाने परेण कृते सति, कृद्ग्रहणपरिभाषा प्रातिपदिकसंज्ञायां नोपतिष्ठते, "मूलकेनोपदंशम्भुङ्क्ते" इति वाक्येऽपि लुक् प्रसज्येतेत्युक्तम् । तत्राप्रातिपदिकत्वादिति प्रतीकमुपादाय 'प्रत्ययग्रहणे यस्मादिति परिभाषासत्त्वान्न कृदन्तत्वात्सा, अर्थवत्सूत्रेणापि न समासग्रहणकृतनियमेन संघातस्य प्रातिपदिकसंज्ञानिषेधात्' इति कैयटेनोक्तम् । लुगिति । समासग्रहणकृतनियमेन कृदन्तत्वप्रयुक्तसंज्ञाया अपि बाधोऽवश्यं वाच्यः, एवञ्च फलाभावान्नैतत्परिभाषोपस्थितिस्तत्रेति भावः। अत्र समासग्रहणकृतनियमेन बाधस्य प्रकारस्तूपपादित एव । एतेन प्रघट्टकेन स्वोक्तार्थः सिद्धान्तसम्मत इति स्पष्टमेव ।

अत्र मूले—यत्त्वित्यादिना नैयायिकमतानुवादे न्यूनतापरिहारायाह—नापि वाक्य इति । वृत्तिः सिद्धा—शक्तिरूपा वृत्तिः सिद्धा । न्यूनतान्निराचष्टे—वाक्येऽपीति । अत एवाह—वृत्तौ वाक्ये चेतीति । समास इवेति । तद्रीत्येत्यादिः । तद्धितेऽपि—तद्धितविशिष्टेऽपि । मूलेऽतिव्याप्तेरिति । तस्यापि तद्धितविशिष्टत्वात्प्रातिपदिकसंज्ञाया आपत्तेरित्यर्थः । इष्टापत्तिस्तु कर्तुमशक्या पचतकि भवतीत्यादौ "तिङ्ङतिङः" इति निघातापत्तेरित्यभिमानः । प्रातिपदिकसंज्ञायाम्फिट्स्वरापत्तिरिति तु न चितः सप्रकृतेर्ग्रहणेनान्तोदात्तत्वस्येष्टत्वात् । तद्धितवैशि-

भावप्रकाश ।

**नापीति** । अत एवाह—**वृत्तौ वाक्ये चेति** । कारिकायां वाक्यशब्दः समस्तासमस्तपदसमूहपर इति भावः । **समास इवेति** । तद्रीत्येत्यादिः । **तद्धितेऽपि**–तद्धितविशिष्टेऽपि । अत एव तद्धितान्तेऽपीति नोक्तम् । विपक्षे बाधकं तूक्तमेव **पचतकीतीति** । इष्टापत्तिस्तु न, पचतकि भवतीत्यादौ "तिङ्ङतिङः" इति निघा-

मूलकेनोपदंशमित्यादावतिव्याप्तिर्दुर्वारैवेत्यास्तां तावत् । चकाराऽनुक्तसमुच्चयार्थः । तेन "निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या" इति गतार्थम् । येषां द्योत्योऽप्यर्थो नास्ति तदर्थमिदम् । अवद्यति । अनुकरणेषु तु अनुकार्येण सहाभेदविवक्षायामर्थवत्त्वाभावादेव न प्रातिपदिकत्वम् ।

शब्दरत्नम् ।

नाविरहेण मध्यवर्तित्वस्यापि ग्रहणापत्तेरित्याशयात् । किं च बहुपटवस्तिष्ठन्तीति वाक्यस्यापि संज्ञापत्तिः । एवं-समासग्रहणस्य नियमार्थत्वाभावे । न चार्थवत्त्वाभावाद्वारणं, न्यायनये उत्तरसूत्रे तदसम्बन्धात् । "तृतीयाप्रभृतीनि—" इति तु स्वरे विशेषार्थम् । अभेदविव-

भैरवी ।

क्षयम्-अन्यतरसम्बन्धेन तद्धितविशिष्टप्रकृतिघटितसमुदायत्वम् । मध्यवर्तित्वम्—स्वनिष्ठावयवत्वनिरूपितावयवित्वम् । एवञ्चोक्तातिव्याप्तिर्दृढैव । नन्वत्र लक्ष्यानुरोध एव विनिगमकोऽस्त्वित्यत आह—किञ्चेति । संज्ञापत्तिरिति । तथाच सुब्लुक् स्यात् ।

ननु प्रत्ययग्रहणपरिभाषया यथा भवन्मते प्रकृत्यादिप्रत्ययान्तस्य ग्रहणं भवति तथा मया प्रत्ययादिप्रकृत्यन्तस्यापि ग्रहणमिति कल्प्यत इति न भवदुक्तो दोष इत्यत आह मूले—किञ्चैवमिति । अत्र यदेवमिति, तद्विशिष्टपरमिति चेदित्यर्थकमिति भ्रमवारणायाह—समासग्रहणस्येति । अर्थवत्त्वाभावादिति । तन्नये विशिष्टे शक्तिलक्षणयोरभावादिति भावः । उत्तरसूत्रे—"कृत्तद्धित" इति सूत्रे; कृदन्तादिष्वपि तन्नये वृत्त्यसत्त्वादिति भावः । ननु यदि मूलकेनोपदंशमिति वाक्येऽपि प्रातिपदिकसंज्ञायां सुब्लुक् तर्हि "तृतीयाप्रभृतीनि" इति समाससंज्ञाविधानञ्चिमर्थमत आह—तृतीयेति । स्वरे विशेषार्थमिति । उदात्तादिस्वरकृतो यो विशेषस्तदर्थम् । एवं स्वरेऽचि यो विशेषः दध्नि उपदंशमित्यादौ "न समासे" इत्येतत्प्रवृत्तिकृतो यो विशेषस्तदर्थमित्यप्यर्थः । यदि तु "ज्ञापकसिद्धन्न सर्वत्र" इति परिभाषामाश्रित्य कृद्ग्रहणपरिभाषाया अनित्यत्वादिष्टसिद्धिरित्युच्यते, तदा क्लेश इति बोध्यम् । ननु विरुद्धधर्मवत्त्वादनुकार्यानुकरणयोर्भेदः कथमत आह—सादृश्यमूलकेति । वृत्त्याऽनुपस्थितस्य तर्हि

भावप्रकाश ।

ताव्याप्तेरिति भावः । ग्रहणापत्तेरिति । तथा च तेनापि वैशिष्ट्यग्रहणेनातिव्याप्तिर्दृढैवेति भावः । ननु लक्ष्यानुरोध एव विनिगमकमत आह—किंचेति । तस्य तत्पूर्वत्वात् । न हि प्रत्ययान्तत्वातिप्रसङ्गवारणाय "प्रत्ययग्रहणे" इतिवदत्र किञ्चित्तादृशं वचनमस्तीति भावः । एतेन बहुच्पूर्वं इत्येव सूत्र्यतामित्यपास्तम्, डित्थाद्यसंग्रहापत्तेश्च गौरवाच्च । ननु प्रत्ययग्रहण इत्यस्य प्रकृत्यादिप्रत्ययान्तस्य ग्रहणमित्यर्थवत्प्रत्ययादिप्रकृत्यन्तस्य ग्रहणमित्यर्थस्याप्यङ्गीकारेण न वाक्ये संज्ञापत्तिः, उक्तरीत्या न पचतकीत्यादावतिव्याप्तिर्न वा बहुपटव इत्याद्यसिद्धिरत आह मूले—किं चैवमिति । एवमित्यस्य तद्धितग्रहणस्य तद्विशिष्टपरत्वे इत्यर्थभ्रमवारणायाह—समासेति । अभावादिति । वृत्तेरभावादिति भावः । उत्तरेति । अर्थवत्सूत्रापेक्षयोत्तरसूत्रे इत्यर्थः । तन्मते पाचक इत्यादावपि वृत्तेरनङ्गीकारेण तथात्वाभावात् । तत्रातिव्याप्तिनिरासाय तत्सम्बन्धे त्वव्याप्तिः पाचकादौ । लिङ्गादौ चारितार्थ्येन सामर्थ्यं नेति भावः । स्वरे विशेषार्थमिति । उदात्तादिस्वरनिमित्तको यो विशेषस्तदर्थं स्वरेऽचि परतो यो विशेषः प्रकृतिभावस्तदर्थं चेत्यर्थः । अभेदेति । यत्तु अनुकरणं श्रोत्रगृहीतं सत्स्वाभेदेनैवानुकार्यं व्युत्पत्तिवशादन्वयप्रतियोगित्वेन बोधयतीत्यर्थ इति । तन्न, वास्तवाभेदस्य ब्रह्मातिरिक्ते क्वाप्यसत्त्वेन ब्रह्मणापि दुर्वचत्वात् । अत एव सामग्रीभेदाद् भेदस्यैव युक्तत्वेनाभेदपक्षो वाचनिक एवेत्यपरे इति मान्योक्तिः संगच्छतेऽ-

सरला ।

संज्ञापत्तिरिति । वस्तुतस्तु स्वादित्वं—स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयान्तत्वम् एतदुभयवत्त्वम्, स्वान्तत्वं—स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयादित्वम् एतदुभयवत्त्वम्, एतदन्यतरसम्बन्धेन तद्धितवि-

'भू' सत्तायाम् इति यथा। भेदविवक्षायां तु संज्ञा स्यादेव। "भुवो वुक्–"इति यथा।

शब्दरत्नम्।

**क्षायामिति**। सादृश्यमूलाभेदविवक्षायामित्यर्थः। अनुकरणं च स्वसादृश्येनानुकार्यमुपस्थापयति, तथोपस्थितस्य शाब्देऽन्वयप्रतियोगित्वं व्युत्पत्तिवैचित्र्यात्। एवं च वृत्त्याऽर्थबोधकत्वरूपार्थवत्त्वाभाव इति भावः। अत एव "भू सत्तायाम्" इत्यादिनिर्देशाः सङ्गच्छन्ते। तदाह—**भू इति**। अपदं न प्रयुञ्जीतेत्यस्यापरिनिष्ठितमित्यर्थः। अस्य चास्मादेव लिङ्गात्परिनिष्ठितत्वम्। **भेदविवक्षायामिति**। अर्थवच्छब्दोऽपि वृत्तिविषय एवैतत्पक्षे इति भावः। अयं पक्षो "मतौ छः सूक्त–"इति सूत्रे भाष्ये। अनयोश्च लक्ष्यानुरोधाद् व्यवस्थेति दिक्।

भैरवी।

शाब्दबोधविषयत्वङ्कथमत आह–तथोपेति। शाब्देऽन्वयप्रतियोगित्वम्—**शाब्दविषयसंसर्गप्रतियोगित्वम्**। व्युत्पत्तिवैचित्र्यात्—**कार्यकारणभावे वैचित्र्यात्**। **अनुकार्यविषयकशाब्दबुद्धित्वावच्छिन्नम्प्रत्यनुकरणजन्यार्थोपस्थितित्वेन कारणतायाः स्वीकारात्**। एवञ्च—**उक्तरीत्या निर्वाहे च**। अत एव—**उक्तरीत्याऽनुकरणस्य प्रातिपदिकत्वाभावादेव**। **एवञ्च भू सत्तायामित्यादिनिर्देश एवाभेदविवक्षाज्ञापक इति भावः**। **ननु "अनुकरणञ्चानितिपरम्" इति गतिसंज्ञायान्निपातत्वादव्ययसंज्ञायां लुका रूपसिद्धिरिति चेन्न, कृञो योग एव तत्प्रवृत्तेरङ्गीकारात्**। **नन्वपदस्य कथम्प्रयोगोऽत आह**—अपदमिति। एतत्पक्षे इति। **भेदविवक्षापक्ष इत्यर्थः**। **यथाऽर्थो वृत्तिविषयस्तथा शब्दोऽपीत्यर्थः**। **अनुकरणन्द्विविधम्—व्यक्तशब्दसमानानुपूर्वीकम्, अव्यक्तशब्दसदृशं च**। **एतदुभयसाधारणन्तत्त्वं स्वसदृशशब्दमात्रतात्पर्यकोच्चारणविषयत्वम्**। **व्यक्तशब्दानुकरणस्थलेऽनुकार्यस्योपस्थितस्यार्थोपस्थापकतास्ति**। **अव्यक्तानुकरणात्तूपस्थितस्य सा नास्तीति विशेषः**। **एवञ्चार्थविशिष्टशब्दमात्रतात्पर्यकत्व ध्वनितात्पर्यकत्वे अनुकरणयोरनुकार्ये तूभयधर्माभाव इति विरुद्धधर्माभ्यामनुकरणमनुकार्याद्भिन्नमिति भेदविवक्षाबीजम्**। **एवञ्चोभाभ्यां शाब्दबोधो वृत्त्या भवतीति वृत्त्याऽर्थवत्त्वमस्त्येवेति भवत्येव प्रातिपदिकसंज्ञा**। **"भुवो वुग्" इति निर्देशस्त्वत्र ज्ञापकः**।

भावप्रकाश।

त आह–**सादृश्येति**। चस्त्वर्थे। **तथोपस्थितस्येति**। स्वसादृश्यसम्बन्धेनोपस्थितानुकार्यशब्दस्य शाब्दबोधविषयत्वमित्यर्थः। ननु समवायादिनोपस्थिताकाशादेस्तत्त्ववारणाय वृत्त्युपस्थितस्यैव तत्त्वमत आह—**व्युत्पत्तीति**। अनुकरणादन्यत्र तथा नियमोऽत्र तु भिन्न एव कार्यकारणभाव इति भावः। **एवं चेति**। उक्तरीत्या निर्वाहे चेत्यर्थः। संज्ञासूत्रे तादृशमर्थवत्त्वं निविष्टमिति भावः। **भूसत्तायामिति**। ननु भेदपक्षेऽप्यनुकरणमिति गतित्वे निपातत्वे चाव्ययत्वे रूपसिद्धिरेवेति चेत्? न, "भुवो वुक्" इत्यादावपि तथात्वापत्तेः, इतिसमभिव्याहारे दोषश्चौव्यात्कृञ्योगे एव तत्प्रवृत्तेरिष्टत्वाच्चेति भावः तदाह—**आदीति**। तेन नवेतीत्यादिसंग्रहः। तथा च मूलमुपलक्षणमिति भावः। **परिनिष्ठितत्वमिति**। तादृशार्थवत्त्वाभावेनाप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वादिति भावः। **अर्थवदिति**। यथाऽर्थो वृत्तिविषय एवं शब्दोपीत्यर्थः। **दिगिति**। तदर्थस्तु स्वसदृशशब्दमात्रतात्पर्यकोच्चारणविषयत्वमनुकरणत्वम्। तच्च सादृश्येन वृत्त्या वा। तत्र शब्दोऽपि ध्वनिवर्णान्यतररूपः। अत एव पटदित्याहेत्यत्र पटच्छब्दानुकरणं ध्वनेर्वेति द्वैतम्। ध्वनिमात्रानुकरणे वर्णोच्चारणं त्वानुषङ्गिकम्। अत एवाव्यक्तानुकरणस्येत्यादि सङ्गच्छत इति।

सरला।

शिष्टं प्रातिपदिकसंज्ञकं भवतीति सूत्रार्थस्वीकारेण 'बहुपटवः'इत्यस्य पूर्वसम्बन्धसत्त्वात्प्रातिपदिकसंज्ञासिद्धिरिति 'बहुपटवस्तिष्ठन्ति' इति वाक्यस्य अन्यतरसम्बन्धेन तद्वैशिष्ट्याभावान्न तदापत्तिरिति न कोऽपि दोष इत्यवधेयम्।

**लिङ्गविशिष्टस्येति** । लिङ्गबोधकप्रत्ययविशिष्टस्यापीत्यर्थः । परिभाषायाः प्रयोजनन्तु–अयस्कुम्भी "अतः कृकमि–" इति सत्वम् । तद्धि कंसादिषूत्तरपदेषु विधीयते । किं च , कुमारीमाचष्टे कुमारयति । "णाविष्ठवत्" इति टिलोपः ।

शब्दरत्नम् ।

**विशिष्टस्यापीत्यर्थ इति** । प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गप्रत्ययविशिष्टे अतिदेशादिति भावः । स्पष्टं चेदं "बहुव्रीहेरूधस"–इत्यत्र भाष्ये । इयं च प्रातिपदिकसामान्यग्रहणे तद्विशेषग्रहणे च; तद् ध्वनयन्नाह—**अयस्कुम्भीति । किंचेत्यादि च । उत्तरपदेष्विति** । अत्र च ङ्यन्तमुत्तरपदमिति भावः । **टिलोप इति** । इदमुपलक्षणं पुंवत्त्वस्य णिचश्च । सामान्यग्रहणेऽपि प्रवृत्तेरेवानया परिभाषया ङ्याब्ग्रहणवैयर्थ्यं भाष्ये

भैरवी ।

'प्रातिपदिकग्रहणे' इति परिभाषायां लिङ्गविशिष्टस्यापीत्यस्य-लिङ्गबोधकप्रत्ययविशिष्टस्यापीत्यर्थः,तत्र तद्विशिष्टस्य ग्रहणे मानमाह–प्रातिपदिकत्वेत्यादिना । स्पष्टमिति । तत्र हि–'कुण्डोध्नी' इत्यत्र नद्यन्ताद्बहुव्रीहेरित्यर्थो "नद्यृतश्च" इति सूत्रस्येत्यर्थाभिप्रायेण कबापादितः । यदि नद्यन्ते बहुव्रीहित्वस्य प्रातिपदिकत्वव्याप्यस्यातिदेशः परिभाषया क्रियते, तदा तदापादनसङ्गतिरिति नद्यन्तप्रकृतिकसुबन्तोत्तरपदकाद्बहुव्रीहेरित्यर्थेन परिहार इति त्वन्यत् । ननु 'अयस्कुम्भी' इत्यत्र प्रकृतिभागमादाय "अतः कृकमि" इत्यस्य प्रवृत्तिर्भविष्यतीति न परिभाषोपयोगोऽत आह मूले—तद्धीति । उत्तरपदस्येत्यस्य लाभस्तु "नित्यं समासे" इति सूत्रात्समास इत्यस्यानुत्तरपदस्थस्येत्यस्य वाऽनुवृत्त्या विसर्गान्तस्य पूर्वपदत्वलाभे उत्तरपदस्याक्षेपेण प्रत्यासत्त्या कंसादिरूपन्तद् गृह्यत इति परिभाषाया उक्तार्थकत्वमावश्यकमिति भावः । एतादृशार्थस्वीकारं विना न'अयस्कुम्भी' इत्यत्र"अतः"इति सूत्रस्य प्रवृत्तिरित्येतदुपपादयति–अत्र चेति । पुंवद्भावस्य टिलोपबाधकत्वाभिप्रायेणाह–इदमिति। ननु प्रकृते कुमारीशब्द औषधिजातिवाची इति भाषितपुंस्कत्वाभावान्न पुंवद्भावस्य प्राप्तिरत आह––णिचश्चेति । एवञ्चोपलक्षणत्वावश्यकत्वेन वयोविशेषविशिष्टवाचकत्वेऽपि तस्य प्रकृते

भावप्रकाश ।

ननु लिङ्गविशिष्टस्य ग्रहणेऽपि प्रत्ययान्तत्वेनाप्रातिपदिकत्वमेवात आह–मूले **प्रत्ययेति** । तद्व्याचष्टे-**प्रातीति । स्पष्टमिति ।** तत्र हि 'कुण्डोध्नी'इत्यत्र "नद्यृतश्च"इति कबापादितो नद्यन्तबहुव्रीहेरित्यर्थात् ङ्यन्तस्याबहुव्रीहित्वात्तदसङ्गतिः नद्यन्तानां यः समास इत्यर्थेन परिहृतः । नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः समास इति तदर्थः । **आहेति ।** व्युत्क्रमेणाहेत्यर्थः । ननु ङीषः प्राग्भागमादायैवेष्टसिद्धिरत आह–**उत्तरपदेष्विताति ।** समास इत्यस्यानुत्तरपदस्थस्येत्यस्य वाऽनुवृत्त्या विसर्गान्तस्य पूर्वपदत्वबोधनेनोत्तरपदस्याक्षेपेण प्रत्यासत्त्या कंसादिरूपस्यैवोत्तरपदस्य ग्रहणादिति भावः । तत्फलितमाह–**अत्रचेति ।** पुंवत्त्वस्य बाधकत्वादाह–**इदमिति ।** ननु नायं कुमारीशब्दो वयोयुक्तस्त्रीवाची किन्तु औषधिजातिवाची नित्यस्त्रीलिङ्ग इति न पुंवत्त्वमत आह–**णिचश्चेति ।** तथा चोपलक्षणत्वावश्यकत्वे वयोवाचकत्वेऽपि न बाधकम् । एतेन 'पुंवत्त्वमुक्तरीत्या न, णिच् तु तत्करोतीत्यनेन । तदितिहि द्वितीयान्तोपलक्षणम्'इति मान्योक्तिर्हरदत्तानुरोधेनेति ध्वनितम् । तदित्यनेन कर्मसमर्पकं प्रातिपदिकमुच्यते पूर्वस्यैवायं प्रपञ्च इति सिद्धान्तात् । चेन ततः सोऽपि

सरला ।

**प्रत्ययविशिष्टे इति ।** वैशिष्ट्यं च स्वघटितत्वं, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्वम्, स्वविशिष्टाघटितत्वम्, एतत्त्रितयसम्बन्धेन । स्ववैशिष्ट्यञ्च स्वेतरत्वं, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरत्वम् एतदुभयसम्बन्धेन । द्वितीयसम्बन्धनिवेशेन दृषद् ई। दृषदी इत्यत्राऽनया परिभाषया न दृषद्वृत्तिप्रातिपदिकत्वमारोप्य ढक् प्रत्ययः । तृतीयसम्बन्धेनाधिकव्यावृत्तिरिति बोध्यम् ।

एवं याभिनयन्त्यहानि इत्यत्र आचारे क्विबपि फलम्। ङ्याब्भ्यां प्रागिति । तेन

शब्दरत्नम् ।

शङ्कितम् । न च 'दृष्टा माला' 'दृष्टा गौरी'इति समुदायस्यानुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावात् ङ्याबन्तत्वेन ततः सुबुत्पत्त्यर्थं तदस्तु। लिङ्गविशिष्टपरिभाषया तु नात्र सिद्धिः ङ्याब्रहितस्य दृष्टा माल इत्यादेः समुदायस्य प्रातिपदिकत्वाभावेन तदतिदेशाप्रवृत्तेः । एवं चाम् दृष्टा माला देवदत्तेत्यादावेकपदान्तरितत्वेनैकान्तरतापत्तिरिति वाच्यम् । एतद्भाष्यप्रामाण्येन प्रातिपदिकसाहचर्येण च पृथगर्थोपस्थापकविभक्त्यन्तानवयवकङ्याबन्तस्यैव ग्रहणेनादोषात् । प्रत्येकमपि पदत्वसत्त्वेनैकान्तरत्वाभावाच्च । उत्तरसङ्ख्याया: पूर्वसंख्याबाधकत्वात् । नियमार्थे तु न, त्यूङन्ते दोषापत्तेः । कुत्साद्यर्थकस्वार्थिकानां

भैरवी।

नानुपपत्तिः । परिभाषायां ज्ञापकस्य "कुमारः श्रमणादिभिः" इति निर्देशस्य विशेषविषयत्वाद्विशेषग्रहण एवेति भ्रमवारणायाऽऽह—सामान्येति। मूले 'इत्येवसिद्धे' इति यत्तदसङ्गतमित्यभिप्रायिकामाशङ्कां निराचष्टे—नचेत्यादिना। तदस्तु—ङ्याब्ग्रहणमस्तु।

नन्वस्तु,दृष्टा मालेति समुदायात्सुस्तथापि हल्ङ्यादिलोपेन सिद्धमत आह—एवञ्चेति। समुदायात्सुबुत्पत्त्या एकपदत्वे चेत्यर्थः। एकान्तरतापत्तिः—"आम एकान्तरम्" इति सूत्रेणैकपदान्तरितत्वप्रयुक्तस्य निघातनिषेधस्यापत्तिः। एतद्भाष्येति। ङ्याब्ग्रहणस्योक्तनियमार्थत्वप्रतिपादनपरभाष्येत्यर्थः। पृथगिति। पृथगर्थोपस्थापको विभक्त्यन्तोऽनवयवो यस्य समुदायस्य तस्य ग्रहणमित्यर्थः। समासघटकस्य चित्रगवीत्यादिसमुदायस्थस्य व्यावृत्तये आह—पृथगिति। अजेत्यादिसंग्रहाय—विभक्त्यन्तेति। पूर्वोक्तं यद् "आम"इत्यस्य प्रवृत्तिरूपम्फलन्तद्विघटयति—प्रत्येकमपीति। बाधकत्वादिति। गौणी मुख्या वा उत्तरसंख्या पूर्वसंख्याया बाधिकेति "अइउण्" सूत्रीयभाष्यसिद्धान्तादिति भावः। नचैवम् 'आमतिसुन्दरपुरुष' इत्यत्र तस्य सूत्रस्य प्रवृत्तिर्न स्यादिति वाच्यम्, एकान्तरमिति पदे स्वरितत्वकल्पनेनाधिकं कार्यमिति "स्वरितेनाधिकारः" इति सूत्रार्थात्प्रकृतैकपदेन समासात्मकैकपदस्यापि ग्रहणमित्यर्थेनादोषात्। ननु प्रकृतसूत्रस्थं ङ्याब्ग्रहणं स्त्रीप्रत्ययान्ताच्चेन् ङ्याबन्तादेवेति नियमार्थमस्त्वित्याशङ्कां निराचष्टे

भावप्रकाश।

बोध्यः। ज्ञापकस्य विशेषापेक्षत्वाद्विशेषग्रहणे एव प्रवृत्तिरिति प्रकाशरत्नाकरादिग्रन्थासङ्गतिं सूचयन्नाह—सामान्येति। एतदर्थमेव पूर्वं सामान्यग्रहणे इत्युक्तम्। शङ्कितमिति। एतस्यां च सत्यां नार्थो ङ्याब्ग्रहणेनेत्यनेनेति भावः। परममूलोपरि शङ्कते-नचेति। ततः—समुदायात्। सुबुत्पत्त्यर्थमिति। नच वाक्यात् सुबुत्पत्तौ समासग्रहणव्यावर्त्यालाभः, अस्त्रीप्रत्ययान्तवाक्यस्य तत्त्वसम्भवात्। किंच तेन संज्ञाव्यावृत्तावपि सुबुत्पत्त्यावक्षतेः। नचैवमपि संख्याकर्मादिरुक्तत्वात्प्रत्येकं न विशिष्टात् सुबापत्तिरिति वाच्यम्। बौद्धसत्तायां कर्तृत्वेन प्रत्येकमुक्तत्वेऽपि विशिष्टनिष्ठस्यानुक्तत्वात्तदापत्तेः। किञ्च ङ्याब्ग्रहणसामर्थ्यात्तदापत्तेः सुवचत्वादिति भावः। तत्-ङ्याब्ग्रहणम्। आदिना दृष्टागौर इत्यस्य परिग्रहः। फलाभावं निराचष्टे—एवंचेति। सुबुत्पत्त्या एकपदत्वे चेत्यर्थः, "आम एकान्तरम्" इत्यनेनेति भावः। एतद्भाष्येति। प्रकृतसूत्रस्थतद्वैयर्थ्यशङ्कापरोक्तभाष्येत्यर्थः। सूत्रत एव तथा न लभ्यते इति भाष्यप्रामाण्याश्रयणमफलमित्याशयेनाह—प्रातीति। पृथगर्थोपस्थापकाः विभक्त्यन्ता न अवयवा यस्य समूहस्य तस्य ङ्याबन्तस्येत्यर्थः। चित्रगवीत्यादिसंग्रहाय पृथगर्थोपस्थापकेति। अजेत्यादिसंग्रहाय विभक्त्यन्तेति। तथा च स्त्रीप्रत्यये चेति परिभाषाऽत्र न प्रवर्त्तते फलाभावादिति भावः। फलं विघटयति—प्रत्येकमिति। बाधकत्वादिति।

सरला।

प्रापदितिकत्वाभावेनेति। लिङ्गबोधकप्रत्ययविशिष्टत्वाभावेनेत्यपि बोध्यम्, समुदायस्य स्वविशिष्टाघटितत्वाभावात्।

लोहिनिका आर्यिका च सिद्ध्यति । तथा हि, स्वार्थिकत्वेनान्तरङ्गः परश्च "लोहितान्मणौ" इति कन् ङीपं बाधेत । ततो लोहितिकेत्येव स्यात् ; इष्यते तूभयम् । ङीब्ग्रहणसामर्थ्यात्तु ङ्यन्तात्कनि रूपद्वयं सिद्धम्, "वर्णादनुदात्तात्–" इत्यस्य वैकल्पिकत्वात् । आर्यशब्दात्तु "न सामिवचने" इत्यत्र ज्ञापयिष्यमाणोऽत्यन्तस्वार्थिकोऽपि कन् आब्ग्रहणसामर्थ्यात् पूर्वं न प्रवर्त्तते । तेन "उदीचामातः स्थाने यकपूर्वायाः" इति इत्वविकल्पः सिद्ध्यति ।

शब्दरत्नम् ।

"कुत्सिते" इति सूत्रस्थभाष्योक्तरीत्या ङ्याबन्तादुत्पत्तः सिद्धत्वादत्यन्तस्वार्थिके फलमाह—**तथा हीत्यादिना** । **स्वार्थिकत्वेन**—अत्यन्तस्वार्थिकत्वेन । **परश्चेति** अभ्युच्चयः । एवं च "लोहितालिङ्गबाधनं वा" इति न वक्तव्यमिति भावः । **विकल्पः सिद्ध्यतीति** । अन्यथाऽऽर्यशब्दात्कनि समुदायोत्तरटापैव लिङ्गसम्बन्धबोध-

भैरवी ।

नियमार्थन्त्विति । त्यूङन्त इति । तिप्रत्ययान्ते ऊङन्ते चेत्यर्थः । युवतिः श्वश्रूः इत्यादिसङ्ग्रहाय नियमार्थता तस्य नोक्ता । नन्वेतयोः सुबुत्पत्तौ किम्मानमिति चेन्न, युवतीः पश्य' 'युवतिका' 'युवतितरा' इति भाष्यप्रयोगस्य 'श्वशुरः श्वश्र्वा' इति सौत्रनिर्देशस्य च मानत्वात् । एवमूङन्ताद्विभक्त्युत्पत्तौ "नोङ्धात्वोः" इति सूत्रमपि ज्ञापकम् । नच ङ्याबन्तात्तद्धितोत्पत्तिस्वीकारे 'यूनीतिः' इतिस्यादिति वाच्यम् , तद्धितपदस्य तिप्रत्ययान्यतद्धितपरत्वात् ।

भाष्योक्तरीत्येति । इयं रीतिरग्रे स्फुटा । फलमिति । येषाङ्कुत्साद्यर्थद्योतकत्वेन स्वार्थिकता तेषु "कुत्सिते" इति भाष्योक्तरीत्या फलाभावेऽपि एतद्भाष्योक्तन्यायाविषयास्तेषु फलमित्यर्थः । "कुत्सिते" इति सूत्रभाष्योक्तन्यायाविषयतासूचनायाह–अत्यन्तेति । अन्तरङ्गस्य बलवत्त्वाद्बहिरङ्गशास्त्रमतुल्यबलमिति "परश्च" इत्यनुपपन्नमत आह–अभ्युच्चय इति । विप्रतिषेधाभावं स्वीकृत्य वाद इत्यर्थः । एवञ्च–ङ्याब्ग्रहणस्य परममूलोक्तार्थसाधकत्वेनावश्यकतया चेत्यर्थः । नन्वस्तूक्तरीत्या कनः पूर्वमुत्पत्तिस्तथापि कन्प्रकृत्यार्यशब्दान्मध्ये टाबुत्पत्त्येष्टसिद्धिर्भविष्यतीत्याह---अन्यथेति । उक्तनियमाभाव इत्यर्थः । नचात्रैकाजुद्विर्वचनन्यायोपन्यसनन्निष्फलङ्कु-

भावप्रकाश ।

गौणी मुख्या चोत्तरा संख्या पूर्वां संख्यां बाधत इत्यइउण्सूत्रभाष्योक्तरीति भावः । नचैवमामतिसुन्दर देवदत्तेत्यादावपि तन्न स्यादिति वाच्यम् । इष्टापत्तेः । आम अन्तरितमित्येवैकव्यवधाने चारितार्थ्येनान्यत्राप्रवृत्त्या पुनरेकग्रहणादामन्तरिते पदत्वयोग्यताशून्यस्यैव ग्रहणात् । यद्वा सत्यभिधाने एकपदे स्वरितत्वप्रतिज्ञया तावन्मात्रस्यापि ग्रहणादित्यन्यत्र विस्तरः । **नियमार्थमिति** । स्त्रीप्रत्ययान्ताच्चेत् ङ्याबन्तादेवेति तदाकारः । **त्यूङन्त इति** । युवतिः श्वश्रूरित्यादावित्यर्थः । तथाच "श्वशुरः श्वश्र्वा" इत्यादि सौत्रनिर्देशस्य युवतीः पश्य युवतिका युवतितरः ब्रह्मबन्धूतरेति भाष्याद्युदाहृतत्यूङन्तप्रकृतिकसुप्तद्धितयोश्चासंगत्यापत्तिरिति भावः । सिद्धान्ते एकादेशस्य पूर्वान्तत्वेन क्वचिन्निर्देशाच्च तद्धितान्तत्वाच्च लिङ्गविशिष्टपरिभाषया च सुबुत्पत्तिनिर्वाहेऽपि ङ्याब्ग्रहणस्य स्त्रीप्रत्ययमात्रोपलक्षणत्वेन ततस्तत्सिद्धिरिति बोध्यम् । नन्वेवं यूनीतिरिति स्यात् । तेस्तद्धितत्वादिति चेन्न । तद्धितपदस्य तिप्रत्ययान्यपरत्वादिति स्पष्टमन्यत्र । **रीत्येति** । स्फुटीभविष्यति समनन्तरमेव । **फलमिति** । "कुत्सिते" इत्यादिसूत्रस्य चेत्यार्थेन येषां स्वार्थिकत्वं तद्विषयत्वेऽपि तदभावेन सर्वथा निरर्थकानां येषां न तद्विषयता तादृशे तत्र फलमिति भावः । एतत्तत्त्वं स्फुटीभविष्यति परस्तादिति प्रतीके । उक्तहेतोरेवाह–**अत्यन्तेति** । **एवंचेति** । अन्यार्थं ङ्याब्ग्रहणस्यावश्यकत्वे चेत्यर्थः । तत्फलस्य तेनैव सिद्धेरिति भावः । ननु पूर्वं कन्यपि पूर्वभागे टाबुत्पत्त्येष्टसिद्धिरेवात आह–**अन्यथेति** । तदभावे इत्यर्थः । कनि ।

स्यादेतत् । एवं सति बहुगोमत्केति न सिद्ध्येत् कपः प्रागुगिल्लक्षणङीप्प्रसङ्गात् ; इति चेत् ? मैवम् ; अकृत एव समासेऽलौकिकप्रक्रियावाक्ये एव उत्तरपदस्यावयवीभूय समासान्तः प्रवर्तते इति वक्ष्यमाणत्वात् । स च विभक्तेः

शब्दरत्नम् ।

नसम्भवादेकाज्द्विर्वचनन्यायेन समुदायादेव टापि कनः पूर्वं टाबभावे आतःस्थानिकत्वाभावाद्विकल्पासिद्धिरिति भावः ।

ङीप्प्रसङ्गादिति । अन्यपदार्थस्य स्त्रीत्वादिति भावः । अकृत एवेति । इदं 'गोस्त्रियोः—' इति सूत्रे भाष्ये स्पष्टम् । समासान्ता इत्यत्र "तादर्थ्यात्ताच्छब्द्यम्" इति हि तत्र भाष्यम् । 'अलौकिके प्रक्रियावाक्ये एव' इत्यस्य 'प्रवर्त्तते' इत्यनेनान्वयः । क्व प्रवर्त्तते ? तत्राह—उत्तरपदस्येति । अनन्तरमिति शेषः । अवयवीभूयेत्यस्य प्रक्रियावाक्यस्येत्यादिः । एतत्स्वरूपकथनम् । अवयवत्वे प्रमाणमाह—समासान्त इति । तच्छब्दवा-

भैरवी ।

च्यसाद्यर्थेनैकार्थीभावापन्नस्याऽऽर्यशब्दस्य निष्कृष्य तस्य स्त्रीत्वेन योगासम्भवेनैव ततष्टाबभावस्योपपादयितुं शक्यत्वादिति वाच्यम् , अस्य कनोऽत्यन्तस्वार्थिकतया तादृशयुक्तेरभावात् ।

इदम्—अकृते एवेत्यादिना यदुक्तं तत् । एवञ्च यस्य स्त्रीत्वेन योगोऽन्यपदार्थबोधकन्तत्स्योगिदन्तत्वाभावान्न ङीपः प्राप्तिरिति भावः । आवश्यकश्चायमर्थोऽन्यथा 'बहुकुमारीकः' इत्यादौ कबुत्पत्तेः प्रागुपसर्जनह्रस्वत्वस्य प्रवृत्तिः स्यात् । अलौकिकप्रक्रियावाक्ये समासान्तप्रवृत्तौ तु अन्यपदार्थविशेषणतापन्नार्थप्रातिपदिकान्तस्य स्त्रीप्रत्ययान्तत्वाभावान्न ह्रस्वस्य प्राप्तिः । उत्तरपदस्येत्यादिकथनस्य प्रकृतानुपयुक्तत्वशङ्कां वारयति—एतत्स्वरूपेति । तच्छब्देति । चरमावयववाच्यत्वादित्यर्थः । यद्यस्य चरमावयवत्वं विवक्षितन्नाभविष्यत्तदा समा-

भावप्रकाश ।

अन्तरङ्गत्वादिति भावः । यत्तु कुत्साद्येकार्थीभावापन्नस्यार्यशब्दस्य निष्कृष्य स्त्रीत्वेन सम्बन्धस्य दुर्वचत्वान्मध्ये टाबभाव इति । तन्न , अत्यन्तस्वार्थिकत्वेन तथा युक्तेर्दुर्वचत्वात् । तद्ध्वनयन्नाह—समुदायविति । एतेनोक्तरीत्या लोहितिका लोहिनिकेत्यनयोरपि सिद्धिरित्यपास्तम् । यत्तु अकृत एवेत्यादि सिद्धान्त इत्यन्तग्रन्थमनूद्य तत्र पक्षान्तरे दोषानुद्धारात् सरूपसूत्रस्थभाष्यादुत्तरपदस्यान्ताः कृते समासे एवेत्यस्य लाभेन तद्विरोधापत्तेश्च, बहुचर्मिकेत्यत्र प्रत्ययस्थादिति इत्वानापत्तेश्च पुरस्तादिति पद्धोऽसुप इति निषेधापत्तेः । न चेष्टापत्तिः, तत्रैव भाष्यकृतैव तस्योदाहृतत्वात् । किञ्च समासान्ता इत्यत्र समासतत्पुरुषादिपदानां लक्षणायां मानाभावः । एवं च कृते एव समासे सुब्लुकि च समासस्योत्तरपदस्य वाऽवयवाः समासान्ता इति सिद्धान्तः । एवं च ङीब्विशिष्टस्यासमासत्वात्ततः प्रागेव कप् । ङ्यापोः सतोरसतोर्वा यस्तद्धितः प्राप्तस्तद्विषयक एवासौ नियमो नत्वतादृक्समासान्तविषयक इति तत्स्वारस्यात् । नच लिङ्गविशिष्टेत्यनया सोऽपि प्राप्नोत्येवेति वाच्यम् । प्रकृतिग्रहणे इत्येव सिद्धे प्रातिपदिकग्रहणेन संज्ञान्तरेण तदुपस्थितौ सा नोपतिष्ठत इति ज्ञापनात् । अन्यथा बहुगोमतीकेत्यपि पद्धो स्यात् । तदनित्यत्वेन समाधानं त्वगतिकगतिकम् । "अन्तः" इति सूत्रे "द्वित्रिभ्यां पाद्दन्मूर्द्धसु" इति सूत्रे च समासस्यैवावयव इति भाष्यादिपर्यालोचनया लभ्यते । गोस्त्रियोरिति सूत्रभाष्यं त्वेकदेश्युक्तिः, उक्तविरोधात् । प्रियपथः प्रियगव इत्यादावात्ववृद्ध्योः प्रसङ्गाच्चेति रत्नाकरकृदुक्तं तन्नेति ध्वनयन्नत्र प्रकरणे व्याचष्टे—इदमित्यादि । हि—यतः । बहुकुमारीक इत्यादौ कपः प्रागन्तरङ्गोपसर्जनह्रस्वप्राप्तिनिरासार्थं कनोऽन्तरङ्गत्वं समानेतुमेवमुक्तम्, तन्न । एतेन लक्षणायां मानाभाव इत्यपास्तम् । एवं च तस्यैकदेश्युक्तित्वे मानाभाव इति भावः । ङ्याब्ग्रहणे कृतेऽकृते चास्यावश्यकत्वं ध्वनयितुमेवकारद्वयोपादानं मूले । अत एव व्यवहितान्वयशेषपूरणाभ्यां व्याचष्टे—अलौकिके इति । एतदुक्तिवैयर्थ्यं निराचष्टे—एतदिति । तच्छब्देति ।

पुरस्तादित्येके । परस्तादिति पक्षे तु तद्धितान्तत्वात् सुब्लुकि पुनः सुपि चाकृते

---

शब्दरत्नम् ।

च्यत्वादिति भावः । समासस्यैवायमन्तावयव इति "अन्तः" इति सूत्रे भाष्ये स्पष्टम् । **इत्येके इति।** अत्रारुचिबीजं तु समासार्थवाक्यस्यान्त इति "गोस्त्रियोः–" इति सूत्रस्थ-भाष्यस्य च वाच्यार्थविरोधः । न हि सुब्रहितं समासार्थं किन्तु तद्विशिष्टमेव। किं च ततः पूर्वं कपि ततः समाससंज्ञायां सुब्लुकि टापि बहुचर्मिकेत्यादावापः सुपःपरत्वादित्वानापत्तिः । तत्र विभक्त्यन्ते ऽन्यपदार्थबोधकत्वारोपेण स्त्रीत्वस्य तदन्तेऽसत्त्वात्सुब्लुकः पूर्वं कबन्ताट्टाबिति वक्तुमशक्यमिति । **परस्तादिति पक्षे त्विति ।** न च विशिष्टस्य सुबन्तत्वाभावेन सुबन्तात्तद्धित इति सिद्धान्तविरोधः । तेषामतिरिक्तार्थाभावेन परिपूर्णम्पदमिति न्यायाविषयतया तस्य सिद्धान्तस्य समासान्तविषये ऽभावात् । एवं समा

भैरवी ।

सादित्येवावक्ष्यत् । समासस्यैव—समासार्थवाक्यस्यैव । एवकारेणोत्तरपदावयवत्वमतनिरासो ध्वनितः । नचास्योत्तरपदानवयवत्वे 'द्विपुरी'इत्यत्र समुदायस्य कथं स्त्रीत्वमिति वाच्यम्, लिङ्गस्य लोकाश्रयत्वेन खट्वादिशब्दवत्समुदायस्य स्त्रीवाचकत्वस्वीकारात् । इति सूत्र इति । स्वरविधायक इति शेषः । अत्र–पुरस्तादिति पक्षे । सूत्रस्थभाष्येति । "तादर्थ्यात्ताच्छब्द्यम्"इत्युक्तभाष्येत्यर्थः । नहि सुपः पुरस्तादिति पक्षस्वीकारे भाष्यकारीयवाक्यवाच्यार्थविरोधमात्रमेव दोषः, किन्तु लक्ष्यासिद्धिरपीत्याह—किञ्चेति । ततः पूर्वम्—सुपः पूर्वम् । ननु सुब्लुकः पूर्वमेव कबन्ताट्टापि कृते लुकः प्रवृत्त्या न टापः सुपः परत्वमत आह—तत्रेति । तदन्ते—कबन्ते । असत्त्वादिति । तन्मते कबन्ते स्त्रीबोधकत्वस्य वक्तुमशक्यत्वादित्यर्थः । आरोपितस्यान्यत्रारोपे मानाभावादिति भावः । परस्तादिति पक्षे त्विति । तुना न पूर्वोक्तभाष्यवाच्यार्थोपपत्तिरेव फलं, किन्तु विशेषान्तरमपीत्याह—पुनः सुपि चाकृत इति । तथाच 'बहुचर्मिका' इत्यस्य सिद्धिः स्पष्टैव । विशिष्टस्य—वाक्यस्य । समाधत्ते—तेषामिति । समासान्तानां यद्यपि प्रत्ययेतिमहासंज्ञाकरणेन प्रकृत्यर्थेनार्थवत्त्वमस्ति, तथापि तदतिरिक्तोऽर्थो नास्ति । अत एवात्यन्तस्वार्थिकत्वव्यवहारस्तेषाम् । एवञ्च—उक्तन्यायस्य समासान्तविषये अभावे च । तद्धि-

भावप्रकाश ।

चरमावयववाच्यन्तशब्देत्यर्थः । अन्यथा समासादित्येव सिद्धे तदुपादानं व्यर्थमिति भावः । **समासस्यैवेति ।** उक्तभाष्यैकवाक्यतया तदर्थकवाक्यस्यैवेत्यर्थः । एतेन मूलकैयटाद्यभिमतोत्तरपदावयवत्वनिरासः; द्विपुरीत्यादितत्फलानामन्यथासिद्धेः । एतेन पक्षान्तरे दोषानुद्धारादित्यपास्तम् । **अन्त इति सूत्रे इति ।** स्वरविधायके इत्यर्थः । एतेन तत्पर्यालोचनया तथाऽलाभ इत्यपास्तम् । तदुक्तं बहुचर्मिकेति दोषमुद्धरति—**अत्रेत्यादि ।** एतेन पुरस्तादिति पक्षः कैश्चिदुपन्यस्तः स उक्तदोषापत्त्या उपेक्ष्य इति खण्डनकृदुक्तमपास्तम् । **संज्ञायां**–प्रातिपदिकत्वेनेति शेषः । ननु तत्र कप्यपि समाससंज्ञासमकालं तद्धितान्तत्वात्प्रातिपदिकत्वे समासप्रातिपदिकसंज्ञासमकालं टापि ततः सुब्लुक्यप्यसुप इति निषेधाभावेनेष्टसिद्धिरत आह—**तत्रेति ।** बहुचर्मिकेत्यादावित्यर्थः । तत्र तेन यत्तद्बोधकत्वं तस्य तदन्ते कबन्ते असत्त्वात् । आरोपितस्यान्यत्रारोपे मानाभावाददर्शनाच्चेत्यन्वयार्थः, एवं चास्त्रीत्वादेव प्राक् न टाबिति भावः । सत्त्वादितिच्छेदेन व्याख्यानं त्वध्याहारप्रसङ्गान्नोचितम् । **विशिष्टस्य**–वाक्यस्य । **तेषां**–समासान्तानाम् । न चार्थाभावेनेत्येव सिद्धे ऽतिरिक्तेत्यधिकमिति वाच्यम् । प्रत्यय इति महासंज्ञानुपपत्तेः । प्रकृत्यर्थापेक्षया ऽतिरिक्तः परं वाच्यो द्योत्यो वा नास्तीत्यन्यदेतत् । द्वावित्यादिवच्च नान्यतरवैयर्थ्यम् । इयमेवात्यन्तस्वार्थिकेष्वपि गतिः । अत एव च स्वार्थिक इति तत्र व्यवहारः । अत्यन्तत्वं तु कुत्साद्यप्रवेशेनेति भावः । **न्यायेति ।** तन्मूलभूतेत्यादिः । **एवमिति ।** यथोक्तरीत्या तत्सिद्धान्ताभावस्तत्र तथेत्यर्थः । एवंचेत्यपाठः । इत्यस्या-

समास इति सिद्धान्तः। तस्मादन्तरङ्गादपि तद्धितात्प्राङ् ङ्यापोः प्रवृत्त्यर्थं ङ्या-ब्ग्रहणमिति स्थितम्।

शब्दरत्नम्।

सान्तेषु "ङ्याप्प्रातिपदिकात्" इत्यस्यासम्बन्ध एव। तस्यामवस्थायां वाक्यस्य प्रातिप-दिकत्वाभावादिति भावः। **तद्धितान्तत्वादिति**। प्रातिपदिकत्वेनेति शेषः। **पुनः सुपि चाकृते इति**। प्रत्ययलक्षणेन सुबन्तत्वात्समाससंज्ञा। कपस्तद्वाक्यावयवत्वेन तद्ग्रह-णेन तदन्तस्य ग्रहणम्। सुपि च कृते इति क्वाचित्कः पाठः प्रामादिकः। यद्यपि तत्र पाठे अलौकिकविग्रहवाक्येऽपि अन्यपदार्थान्तर्भावेण एकार्थीभावारोपात् स्त्रीत्वसत्त्वेन पूर्वं टापि ततः सुपि आपः सुपः परत्वाभावाद् बहुचर्मिकेत्यत्रेत्वसिद्धिरस्ति, तथापि तदुत्पत्तिपर्यन्तं समाससंज्ञाया अप्रवृत्तौ मानाभावात्। न च सुबन्तत्वाभावः। अनेन सुपा समुदायस्य सुबन्तत्वेऽपि उत्तरपदमात्रस्य तत्त्वाभावात्। पूर्वपदस्य सुबन्ततायाः प्रत्ययलक्षणेनैवोपपा-द्यत्वात्। एवं च पूर्वं तत्करणे फलाभावः। बहिर्भूतसंख्याकारकलापेक्षसुपस्तस्यामवस्थायां तदनभिव्यक्त्याऽप्रवृत्तेश्च। वस्तुतस्तु तद्धितान्तत्वनिमित्तप्रातिपदिकसंज्ञासमकालमेव वि-राधाभावेन तत्पूर्वभागस्य समाससंज्ञेति बोध्यम्। यौगपद्यासम्भवे एव शास्त्राणां क्रमप्र-

भैरवी।

तान्तत्वस्य सुब्लुगप्रयोजकत्वादाह—प्रातिपदिकत्व इति।

ननु यदि पुनर्न सुप्तदा समाससंज्ञैव कथमत आह—प्रत्ययेति। ननु यदि प्रत्ययलक्षणेन समाससंज्ञां स्वीकरोषि तदा समासान्तम्परित्यज्य सा स्यादिति कथं समासान्तस्य समा-सग्रहणेन ग्रहणमत आह—सा चेति। समुदायस्य—सुबन्तसमुदायस्य। तद्ग्रहणेन—समास-ग्रहणेन। तदन्तेति। समासान्तप्रत्ययान्तेत्यर्थः। अत्र क्वचित्कपस्तद्वाक्येत्यादिपाठः। उक्ता-र्थमेव शङ्कासमाधानाभ्यान्द्रढयति—नचेत्यादिना। उत्तरपदत्वेचेति प्रत्ययलक्षणस्य प्रतिषे-धादुत्तरपदस्य सुबन्तत्वसिद्धये सुबुत्पत्तिरवश्याभ्युपेयेति तद्भावः। अनेन—समुदायोत्तर-जायमानेन। तत्त्वाभावादिति। सुबन्तत्वाभावादित्यर्थः। नच 'उत्तरपदत्वे' इति निषेधोऽ-स्त्येवेति वाच्यम्, उत्तरपदस्य यत्र कार्यित्वन्तत्रैव तत्प्रवृत्तेरङ्गीकारात्। एवञ्च—प्रत्ययल-क्षणेनोपपत्तौ च। पूर्वमिति। समाससंज्ञातः पूर्वमित्यर्थः। तस्यामवस्थायाम्—समाससंज्ञाप्रवृ-त्तिप्राक्कालिकावस्थायाम्। तदनभिव्यक्तथा—संख्याकारकानभिव्यक्तया। पूर्वोक्तः शास्त्रप्रवृ-त्तिक्रमोऽभ्युपगमवादेनेत्याशयेनाह—वस्तुतस्त्विति।

भावप्रकाश।

ष्यसम्बधएवेति पाठः। तद्धितान्तत्वस्य सुब्लुकि अहेतुत्वादाह—**प्रातीति**। **संज्ञेति**। कपः पूर्वभागस्येति भावः। कथं तर्हि तदन्तस्य तत्त्वमत आह—**कप इति**। **प्रामादिकेति**। एतेन कौस्तुभेऽपि तथा दृश्यमानस्तथेति सूचितम्। उक्तमपि द्रढयितुं शङ्कते—**नचेति**। उत्तरपदस्येति शेषः। तत्रोत्तरपदत्वे चेतिप्रत्ययलक्षणप्रतिषेधात्। अतस्ततः प्राक् तदुत्पत्तिरावश्यकीति भावः। **अनेन**—समुदायोत्तरं जायमा-नेन। **तत्त्वाभावात्**—कार्यित्वाभावात्। तथाच "उत्तरपदत्वेच" इत्यस्याप्राप्तिरिति भावः। प्रत्ययलक्षणेनै-वेति पाठः, तत्फलितमाह—**एवंचेति**। प्रत्ययलक्षणेनोपपत्तौ चेत्यर्थः। **पूर्वं**—समाससंज्ञातः। **तस्यामिति**। समाससंज्ञाप्रागवस्थायामित्यर्थः। **तदनभीति**। तादृशसंख्याकारकानभीत्यर्थः। सर्वथा तथा पाठासाङ्गत्यं

सरला।

**कपस्तद्वाक्यावयवत्वेनेति**। अत्र 'सा च समुदायस्य तद्ग्रहणेन' इति भैरवमिश्रानुसारी क्वचित्पाठः।

यत्त्वाहुः—आब्ग्रहणं स्पष्टार्थमिति, तदनेन प्रत्युक्तम् ।

शब्दरत्नम् ।

वृत्त्यङ्गीकारादिति दिक् ।

**यत्त्वाहुरिति** । ङीग्रहणन्तु लोहिनिकेत्यर्थमिति तद्भावः । **अनेनेति** । आर्यके- त्यस्यासाधनेनेत्यर्थः ।

भैरवी ।

दिगिति । दिगर्थस्तु–यत्तु सरूपसूत्रस्थभाष्यात्समासान्तानामुत्तरपदावयवत्वमिति लभ्यते । तत्र हि–"कृतद्वन्द्वानामेकशेषः" इति पक्षे ऋक्च ऋक्च ऋचावित्यत्र "ऋक्पूः" इति समासान्ते कृतेऽसारूप्यादेकशेषो न स्यादिति दूषणमुक्तं तस्यावसरः समासान्तानामुत्तरपदावयवत्वपक्षे इति मूलोक्तः समुदायावयवत्वपक्षोऽयुक्त एवेतिः तन्न, समासान्तानामलौकिके प्रक्रियावाक्ये प्रवृत्तिस्वीकारेऽपि कृतद्वन्द्वानाञ्चेदेकशेषः, तदा 'ऋग्भ्याम्' इत्यत्राप्यकारप्रत्ययस्य पूर्वम्प्रवृत्तिः स्यादिति रूपासिद्धेः स्फुटत्वात् । नचैवमपि "ऋक्च ऋक्च ऋचौ समासान्ते कृते असारूप्यादेकशेषो न प्राप्नोति" इति भाष्याक्षरास्वारस्यमिति वाच्यम्, कृतद्वन्द्वानामेकशेषपक्षे तस्य भाष्यस्य प्रवृत्तत्वादिति तस्य द्वन्द्वे कृते लुकि च समासान्तप्राग्भागस्य विभक्तिपरत्वाभावस्तद्विशिष्टस्य न सारूप्यमित्याशयात् । किञ्च यदि प्राग्भागस्य सारूप्यमादायैकशेषस्य प्रवृत्तिस्तदा 'ऋचे' इति स्याट्टापः प्रसङ्गादिति ऋचावित्यस्यासिद्धिप्रतिपादने तात्पर्यात् । यदि समासपदस्य "तादर्थ्यात्ताच्छब्द्यम्" इति न्यायेन समासालौकिकवाक्ये लक्षणाकल्पनायाङ्गौरवमितिः तदपि न, उत्तरपदावयवत्ववादिमतेऽपि समासतत्पुरुषादिपदस्य समासतत्पुरुषादिसम्बन्ध्युत्तरपदे लक्षणाकल्पनाया अविशेषादिति । यदप्यकृतेति सिद्धान्तग्रन्थमनूद्य बहुचर्मिकेत्यत्र सुपः प्राक् समासान्तप्रवृत्तावसुप इति प्रतिषेधादित्वानापत्तिरिति दूषणाभिधानम्; तत्स्थवीयः, सुपः प्रागिति पक्षस्य गर्भस्रावेणैव गतत्वात् । यच्च 'प्रियपथः' प्रियगवः' इत्यत्रालौकिके प्रक्रियावाक्ये समासान्तानाम्प्रवृत्तावात्ववृद्ध्योः प्रवृत्त्यापत्तिरिति, तदपि न, "सुपो धातु" इति लुग्विषये विभक्तिनिमित्तककार्याप्रवृत्तेः सुप्रसिद्धेरिति ।

यन्मूले आब्ग्रहणस्यैव स्पष्टार्थत्वमुक्तन्तत्र बीजमाह—ङीग्रहणं त्विति ।

ङ्यापोर्विषये व्यवस्थायाः समत्वादाह मूलकारो वस्तुत इत्यादि । क्रमेण बोधे बीजमाह-

भावप्रकाश ।

ध्वनयितुमाह—**वस्तुतस्त्विति** । **दिगिति** । तदर्थस्तु 'प्रियपथः' इत्यादावकृतेत्यनेन दोषाभावः समासान्तविधौ तदप्रवृत्त्या बहुगोमतीकेत्याद्यनापत्तिश्च । अत एव संज्ञान्तरेणेत्यादिकल्पनानैष्फल्यं च । तत्र कल्पनायां "बहुव्रीहेः"इत्यत्रत्यभाष्यविरोधश्च। सरूपसूत्रभाष्यमपि मम सुयोजमिति न तद्विरोधः। "द्वित्रिभ्याम्" इति सूत्रभाष्यं त्वेकदेश्युक्तिरिति ।

**यत्त्वाहुरितीति**। हरदत्तानुवादं प्रकाशकृतः कुर्युरित्यर्थः। अयं भावः, "ङ्यग्रहणे कथं लोहिनिकेति? लोहिताल्लिङ्गबाधनं वेतिवक्ष्यति"इति भाष्ये उक्तम्। एवंच 'एतिका, एनिका' इति सिध्यर्थं वचनान्तरारम्भे सुतरां गौरवं, ततो वरं ङीग्रहणमेवोक्तार्थकम्। एवं च भाष्यमुपलक्षणम्। एवमापो ऽग्रहणे शङ्कासमाध्योरेवासत्वाद्व्यर्थमेव तदिति। तदाह—**ङीग्रहणमिति। लोहिनिकेति**। उपलक्षणमेनिकेत्यादेरपि। **असाधनेनेति** । भाष्यस्य यथाश्रुतत्वे ङीग्रहणमपि व्यर्थम्। उपलक्षणत्वेऽस्यापि तत्त्वे अर्द्धजरतीयानौचित्यादिति भावः। वस्तुतस्तु कुत्सितसूत्रभाष्यपर्यालोचनयोपलक्षणत्वमर्धजरतीयत्वं च नायाति। एवं च वक्ष्यमाणन्यायसिद्धार्थानुवादकत्वात् ङ्याब्ग्रहणस्यात्यन्तस्वार्थिकेऽसम्बन्धेन लोहिनिकेति रूपस्य भगवता वचनेनैव साधितत्वेनैनिकेत्यादिप्रयोगा असाधव एव। इदमेव ध्वनयितुं ङीग्रहणं तु लोहिनिकेत्यर्थमित्येवोक्तं न त्वादिघटितमिति। तद् ध्वनयन् मूलकृदाह–वस्तुतस्त्विति। अत्र मान्याः–निष्कर्षस्य न्यायमूलकत्वेऽर्थवति

वस्तुतस्तु ङ्याप्रोर्ग्रहणं मास्तु। सुबन्तात्तद्धितोत्पत्तिरिति निष्कर्षः। सुपः प्रागेव च ङ्याप्रौ प्रवर्त्तेते, स्वार्थादिप्रयुक्तकार्याणां क्रमिकत्वस्वीकारादित्यवधेयम्।

शब्दरत्नम्।

सुबन्तात्तद्धितोत्पत्तौ, प्रागेव ङ्यापोः प्रवृत्तौ च बीजमाह—**स्वार्थादीति**। स्वार्थंद्रव्यलिङ्गसंख्याकारकेत्यर्थः। स्वार्थः प्रवृत्तिनिमित्तम्। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्पूर्वं जात्यादिज्ञानं, ततो धर्मित्वेन प्रधानत्वाल्लिङ्गादिभिरप्याकाङ्क्षितत्वात्तदाश्रयज्ञानं, ततः स्वमात्रापेक्षत्वाल्लिङ्गस्य ज्ञानं, ततो विजातीयक्रियाकारकापेक्षया सजातीयपदार्थापेक्षसंख्यायाः प्रथममुपस्थित्या तज्ज्ञानं, ततः कारकरूपविभक्त्यर्थाकाङ्क्षा, तन्निवृत्तौ हि बहिर्भूतकुत्सादियोग इति "कुत्सिते" इति सूत्रे भाष्ये स्पष्टम्। एवं च ज्ञानक्रमानुरोधेनैव तत्तत्प्रयुक्तकार्यप्रवृत्तेरौचित्येन क्रमिकत्वं स्पष्टमेव। यद्यपि लोकानां बोधो न क्रमेण तथाऽपि शास्त्रप्रक्रियायां शास्त्रकृत्कल्पितोऽयं क्रमः। अर्थवदुद्देशेन प्रातिपदिकत्वविधानात्। प्रातिपदिकोद्देशेन लिङ्गादौ ङीबादिविधानादिति बोध्यम्। अत एव "घकालतनेषु–" इति चरितार्थम्। स्पष्टं चेदम्—"अचः परस्मिन्–" इत्यत्र भाष्यकैयटयोः। एवं चैतन्न्यायसिद्धार्थानुवाद एव ङ्याब्ग्रहणम्। अत्यन्तस्वार्थिकानारभ्य तस्य

भैरवी।

स्वार्थ इत्यादिना। जात्यादीति। आदिना गुणक्रिययोः परिग्रहः। स्वमात्रेति। सङ्ख्याकारकयोस्तु भिन्नपदार्थापेक्षत्वमिति तयोरुपस्थितेरादौ न सम्भव इति भावः। तज्ज्ञानमिति। पूर्वमाकाङ्क्षितत्वेनेत्यादिः। आकाङ्क्षेति इतरान्वयार्थमिति शेषः। लिङ्गादौ ङीबादीति उभयत्रादिना ङ्याबन्तात्स्वादेः परिग्रहः। अत एव–परिपूर्णस्यैवान्यत्रान्वयादेव। फलितार्थमाह—एवञ्चेति। उक्तन्यायेनेष्टसिद्धौ चेत्यर्थः। अनुवाद एवेति। एतेन सूत्रभाष्ययोरविरोध इत्येतदभिहितम्। यत्तु ङ्याब्ग्रहणसामर्थ्यलब्धनियमाकारे यत्तद्धितपदन्तस्य तद्धितसामान्यपरत्वमिति बुध्वा मौलग्रन्थोपरि यद्येवन्तर्हि बहुगोमतीका इति स्यादिति दूषणाभिधानं, तन्न युक्तं, तत्रत्यतद्धितपदस्य सार्थकतद्धितपरत्वादित्येतद् ध्वनयन्नाह—अत्यन्तेति। तस्य–

भावप्रकाश।

तद्धिते तथा सुबचत्वेऽपि अत्यन्तस्वार्थिकतद्धितानामन्तरङ्गत्वात्प्रातिपदिकादुत्पत्तावबाधकेन ङ्याब्ग्रहणावश्यकत्वमित्याशङ्क्य निष्कर्षे "घकालतन" इत्यनेन सुबन्तात्तद्धितोत्पत्तेर्ज्ञापनादिति हेतुर्बोध्यः, प्राक् तयोः प्रवृत्तौ स्वार्थादि ति हेतुरिति व्याचख्युः; तदफलं, न्यायेनैव निर्वाहात् ऐकरूप्ये सम्भवति वैरूप्यस्यान्याय्यत्वात्; तद् ध्वनयन्नाह–**सुबन्तादित्यादि**। एतेन मान्यरीत्या वदन् दण्डी परास्तः। अत एव मूले एकहेतुकसाध्यद्वयसमुच्चायकश्चः प्रयुक्तः। तद्गुणसंविज्ञानबहुव्रीह्यर्थमाह—**स्वार्थेत्यादि**। आदिना गुणादिपरिग्रहः। **स्वमात्रेति**। संख्याकारकयोस्तु भिन्नपदार्थापेक्षत्वमिति भावः। **ज्ञानं**–पूर्वमाकाङ्क्षितत्वेनेत्यादिः। **अर्थाकाङ्क्षेति**। इतरान्वयार्थमिति भावः। **तन्निवृत्ताविति**। विभक्त्यर्थाकाङ्क्षानिवृत्तावित्यर्थः। **हि**–यतः। परिपूर्णत्वात् न तु ततः प्रागिति भावः। आदिना ङ्यन्ताद्युद्देशेन स्वादिविधानादिति ग्राह्यम्। ऐकरूप्यार्थमेवाह—**अत एवेति**। परिपूर्णस्यैवान्यत्रान्वयादेवेत्यर्थः। तत्त्वं च निवृत्तलिङ्गसंख्यादिविषयकाकाङ्क्षत्वमिति भावः। फलितमाह—**एवंचेति**। स्वोक्तमूलन्यायेनेष्टसिद्धौ चेत्यर्थः। **अनुवाद एवेति**। तेन सूत्रभाष्ययोर्न विरोध इति भावः। यत्तु वस्तुतस्त्वित्याद्यवधेयमित्यन्तमनूद्य तन्न, तत्प्रत्याख्यानस्य पातञ्जलत्वात्समासान्तानामपि ङ्यन्तादुत्पत्तिप्रसङ्गात् बहुगोमतीकेत्येवापत्तौ बहुगोमत्केत्याद्यनापत्तेश्च। नच तत्राक्त एवेत्याद्युक्तौ वतिरिति वाच्यं, त्वत्कृतङ्याब्ग्रहणखण्डनस्य सर्वलक्ष्यासंग्राहकत्वादिति रत्नाकरोक्तं, तत् खण्डयति–**अत्यन्तेति**। **तस्य**–ङ्याब्ग्रहणस्य। एवंच तद्धितशब्दः।

**सुङस्योरित्ति** । सोरुकारः "अवर्णस्त्रसौ–"इत्यत्र विशेषणार्थः । असीत्युक्ते ह्यसकारादावित्यर्थः स्यात् । तथा च 'वाजमर्वत्सु पय उस्त्रियासु' इति न सिद्धयेत् । ङसेरिकारो "युष्मदस्मद्भ्यां ङसोऽश्" इत्यत्र अस्य ग्रहणं माभूदिति । यदि तु "एकवचनस्य च" इत्यत्र 'पञ्चम्या'इत्यनुवृत्तेः परिशेषादन्यस्य ङसोऽत्र ग्रहणं भविष्यतीत्युच्यते तर्हि "टाङसिङसाम् " इत्येतदर्थः । जश्शसोर्जकारश-

---

शब्दरत्नम् ।

निवृत्तेरुक्तन्यायविषयाभावाच्च समासान्तेषु न दोषः । अत्यन्तस्वार्थिके कन्यार्यिकेत्येव ह्यभिधानमस्ति । लोहिनिकेत्येतत्सिद्ध्यर्थं च "लोहितात्लिङ्गबाधनं वा" इति कार्यमेवेति भावः । स्पष्टं चेदं सूत्रशेषे भाष्ये इत्यन्यत्र विस्तरः ।

**पञ्चम्या इत्यनुवृत्तेरिति** । तृतीयाव्यावृत्तये इति भावः । **टाङसीति** । तत्रे-

भैरवी ।

ङ्याब्ग्रहणस्य । निवृत्तौ हेतुमाह–उक्तन्यायेति । तेषामर्थाभावेनोक्तन्यायविषयताया अभावादित्यर्थः । इत्येवेति । एतेन'आर्यका'इत्यस्य सिद्ध्यर्थन्तत्रापि ङ्याब्ग्रहणसम्बन्ध इति निरस्तम् । कार्यमेवेति । अत एव भाष्ये सामान्यतो नियमाभिप्रायेण समासान्तेषु दोषः । बहुगोमतीकेति स्यादिति परेण दोषोद्भावने कृते "न दोषः, तेऽपि स्वार्थिकाः" ततः "परत्वात्समासान्ताः" इत्युक्तम् । ततः "कथं हरिणिकेति ? प्रकृत्यन्तरं सः । कथं लोहिनिकेति ? वक्ष्यत्येतत् लोहिताल्लिङ्गबाधनं वा" इति प्रतिपादितम् । एवञ्च 'एनिका' आर्यका' इत्यनयोरभाव एवेत्याशयवानाह––स्पष्टञ्चेदमिति । अत्यन्तस्वार्थिकतरबादेरपि ङ्याबन्तादनभिधानमेव ।

तृतीयेति । एतेन तदनुवृत्तिरवश्यङ्कर्त्तव्येति सूचितम् । तत्र–टाङसीतिसूत्रे । इष्टस्येति ।

भावप्रकाश ।

समासान्तातिरिक्तपर इति भावः । निवृत्तौ हेतुमाह–**उक्तेति** । अर्थाभावादिति भावः । **अस्तीति** । एतेन तत्रार्यकेत्यस्यापि सिध्यर्थमेतदित्यपास्तम् । **कार्यमेवेति** । तथाच'एतिका'इत्येव सूत्रमतेऽपि, तत्र ह्यभिधानमस्ति । अत एव भाष्ये ङ्याब्ग्रहणस्य तदर्थत्वे "समासान्तेषु दोषः–बहुगोमतीकेति स्यात् । न दोषः । तेऽपि स्वार्थिकाः, तत्र परत्वात्समासान्ताः" इति प्रत्याख्यानेनेदमुत्तरम् अत्यन्तस्वार्थिकानारभ्य सूत्रमतेपि तन्निवृत्तिरित्याशयेन वा ' कथं कालिकेति? कालाच्चेति स्वार्थे कन् ,प्रत्ययस्थादितीत्वम् । कथं हरिणिकेति? प्रकृत्यन्तरं सः । कथं लोहिनिकेति? वक्ष्यत्येतत् लोहिताल्लिङ्गबाधनं वा" इत्युक्तम् । एवं च'एनिका,आर्यका'इत्यादेस्तत्र क्वनि अभावः स्पष्ट एव, वचनाभावात् , एतस्य प्रकृत्यन्तरस्यासत्त्वाच्च, ङ्याब्ग्रहणस्य तत्रासम्बन्धाच्च । अन्यथा कथं कालिकेत्यादिग्रन्थानुत्थानापत्तिः । तादृशप्रयोगसाधकं भाष्यान्तरं तु नोपलभ्यते । लोहितादिति वचनमेव तत्र तदसम्बन्धे ज्ञापकम् । अत्यन्तस्वार्थिकतरबादेरपि ङ्याबाद्यन्तादनभिधानमेव । एवं च ङ्याब्ग्रहणं व्यर्थमेव । तदाह––**स्पष्टमिति, इत्यन्यत्रेति च** । **सूत्रेति** । प्रकृतसूत्रेत्यर्थः । एतेन सुबन्तात्तद्धित इति सिद्धान्तः सुपश्च प्रागन्तरङ्गत्वात्स्त्रीप्रत्यय इति प्रायसिद्धैव ङ्याब्पोः प्रवृत्तिरित्यनूद्य तन्न सुबन्तात्तद्धित इति सिद्धान्तो हि न्यायमूलकः । तथा हि, सुबर्थसंख्यादिसम्बन्धस्तद्धितार्थसम्बन्धापेक्षयाऽन्तरङ्गो, लिङ्गसम्बन्ध इव सुबर्थसम्बन्धापेक्षया, तथा च सुबपेक्षया स्त्रीप्रत्ययस्येव तद्धितापेक्षया सुपोऽप्युत्पत्तिः प्रागेवेति न्यायः । स च नात्यन्तस्वार्थिकेषु इति ङ्याब्ग्रहणमावश्यकम् । प्रातिपदिकादेव सुबपेक्षया परत्वादन्तरङ्गत्वाच्च तदुत्पत्तौ बाधकाभावात् । ततो भाष्यं संलिख्यात एव तरबादेः स्त्रीप्रत्ययापेक्षया बहिरङ्गत्वमुक्त्वा कथं कालिकेत्यादिभाष्यस्यात्यन्तस्वार्थिकात्कनः स्त्रीप्रत्ययस्यान्तरङ्गत्वं नास्तीत्याशयः कैयटेन वर्णितः । हरदत्तोऽप्येवं बहुगोमत्केत्यादावकृत एवेत्यादिमूलोक्तैव गतिरितिखण्डनकृदुक्तमपास्तम् ।

**व्यावृत्तये इति** । अनेनावश्यकत्वं तस्या ध्वनितम् । **इष्टस्येति** । एकशेषे सौत्रत्वात्तदभावे चेति

कारौ "जसः शी" "तस्माच्छसो नः" इत्यनयोर्विषयविभागार्थौ। अन्यतरस्य निरनुबन्धकत्वमेवास्तु इति चेन्न। जसो जकाराभावे औ इत्यस्याऽऽव् स्यात्। ततश्च प्रत्ययस्य वकारान्ततापि सम्भाव्येत। एवं शसः शकाराभावे औटो ङित्त्वं सम्भाव्येत। अतोऽसन्देहार्थं तत्करणौचित्यात्। औटष्टकारः सुडिति प्रत्याहारार्थः। टाटकारस्तु "टाङसि" इति विशेषणार्थः। ङेप्रभृतीनां ङकारो "घेर्ङिति"

---

शब्दरत्नम्।

कारानुच्चारणे इष्टस्य यथासंख्यस्यानापत्तिरिति भावः। **ङित्त्वमिति**। ततश्च टिलोपः स्यादिति भावः। **विशेषणार्थं इति**। तत्फलन्तु "सुपां सुलुक्" इति सूत्रेणाऽऽकारादेशे इनादेशाभावः। **घेर्ङितीति**। न च "घेः सुपि गुणः" इत्येवास्तु "जसि च" इति नियमात्तु नाऽङिति प्रवृत्तिरिति वाच्यम्। 'पतये' इत्यर्थं "जसि च" इत्यस्यावश्यकत्वात्।

भैरवी।

सौत्रत्वादेकशेषस्याभावेऽपीत्यादि। यदि त्वत्र विधिसूत्रस्थक्रममादाय प्रवृत्तिरित्युच्यते तदा "ङसिङ्योः स्मात्स्मिनौ" इति सूत्रे ङसित्युच्चारणे षष्ठ्येकवचनस्य ग्रहणापत्तिर्दोषो बोध्यः। मूले–विभागार्थाविति। उभयोरनुच्चारणे इष्टस्य विषयविभागस्यालाभः स्यात्। नन्वेकस्योच्चारणमस्तु तावतापि तादृशविषयविभागो भविष्यतीत्याशयेनाह—अन्यतरस्येति। सम्भाव्येतेति। यदि तु "नाज्झलौ" इति सूत्रनिर्देशान्न वकारान्तत्वन्तदा प्रतिपत्तिगौरवमिति भावः। ततः–ङित्त्वसम्भावनायाम्। टिलोप इति। ङित्त्वसामर्थ्याद्भत्वेऽपि टिलोपो लिहाविल्यादौ स्यादित्यर्थः। आकारादेश इति। "या सुरथा रथीतमा" इत्यादिमन्त्रे यौ सुरथाविति प्राप्ते "सुपाम्" इति सूत्रेण प्रश्लेषेणाकारादेशोऽपि विधीयत इति भावः। इत्येवास्त्विति। घेरित्येवास्त्वित्यत्र तात्पर्यम्। इतरांशस्यानुवृत्त्या लाभात्। नियमादिति सुपि चेज्जस्येवेति नियमादित्यर्थः। इत्यर्थमिति। अत्र हि "पतिः समास एव" इति नियमाद् घित्वाभावेन घेरित्यस्याप्राप्तेरिति भावः। नच "ह्रस्वस्य गुणः" इति सूत्रस्य नियमार्थत्वकल्पनेनान्यत्र गुणो

भावप्रकाश।

शेषः। यदि त्वन्यपक्षे विधिसूत्रस्थक्रममादायेष्टसिद्धिरित्युच्येत तर्हि ङसिङ्योरित्येतदर्थो बोध्यः। **टिलोप इति**। दुहावित्यादौ डादेशे इवाभत्वेऽपि तत्सामर्थ्यादिति भावः। **आकारादेश इति**। 'या सुरथा रथीतमा" इत्यादिमन्त्रे यौ सुरथौ रथीतमाविति प्राप्ते तेन सूत्रेण प्रश्लेषेणाकारस्यापि विधानादिति भावः। घेरित्येव सूत्रम्, अन्यदनुवृत्त्या लब्धम्। एवेन ङितीत्यस्य व्यावृत्तिस्तथा सति वाक्यार्थमाह—**घेरिति**। **आवश्यकत्वादिति**। तथा च तस्यानियामकत्वेनाङित्यतिव्याप्तिः। यत्तु "ह्रस्वस्य गुणः" इति नियमान्नातिव्याप्तिरिति, तन्न, सखे इत्यर्थं तस्यावश्यकत्वात्। एतेन तत्स्थाने "जसि च" इत्यतः प्राक् घेर्गुण इति सूत्रं कार्यं सुपीत्येवानुवर्त्यमिति शङ्काशय इत्यपास्तम्। "आण् नद्याः" इत्यादौ ङितीत्यनुवृत्ते-

सरला।

**नियमात्त्विति**। अनुनासिकाघटितगुणाद्येकवचनेतरस्मिन् सुपि गुणश्चेज्जस्येवेति नियमादित्यर्थः। अनुनासिकाघटितगुणाद्येकवचनसुब्विभक्तयश्च ङेङसिङस इति तिस्र एव तत्र ङकारकरणाभावे। अमो व्यावृत्तये अनुनासिकाघटितेति। शस्व्यावृत्तये एकवचनेति। तथाच जस्भिन्नानुनासिकाघटितगुणाद्येकवचनेतरसुब्विभक्तौ गुणो न भवतीति फलितम्। यद्यपि सप्तम्येकवचन ङिविभक्तिरपि तादृशीति तत्रापि गुणो न प्रवर्तेत तर्हि तत्रेष्टैव तदप्रवृत्तिः, सिद्धान्तेऽपि "अच्च घेः" इत्यनेन बाधात्तदप्रवृत्तेरिति। अङिति चेज्जस्येवेति नियमस्तु न सम्भवति, ङे प्रभृतीनामपि ङकारकरणाभावेऽङित्त्वेन तद्व्यावृत्त्यापत्तेरिति।

इति विशेषणार्थः । पकारस्तु प्रत्याहारार्थः । एवं च सर्वेषां सफलत्वेऽपि संज्ञार्था इति प्राचो ग्रन्थोऽसङ्गत एव । सम्यग् ज्ञानं संज्ञा, तदर्थाः विशेषणार्था इति यावत् इति भङ्क्त्वा व्याख्यानेऽपि क्लिष्टत्वमेवेत्युपेक्षितम् ।

'सुपः' ॥ "तिङस्त्रीणित्रीणि" इति सूत्रात् त्रीणित्रीणि इति पदं "तान्येकवचन–"इत्यादि सूत्रं च सम्पूर्णमनुवर्तत इति व्याचष्टे–सुपस्त्रीण त्रीणीत्यादिना । एकश इति । एकैकमित्यर्थः । "सङ्ख्यैकवचनाच्च" इति वीप्सायां प्रथमान्तात् शस् । यत्तु प्राचा एकैकश इत्युक्तम् । तदयुक्तम्, शसैव वीप्साया उक्तत्वेन द्विर्वचनायोगात् । येननाप्राप्तिन्यायेन द्विर्वचनापवादः शस् इति सिद्धान्तात् ।

यत्त्वाहुः "सर्वस्य द्वे" इत्यत्र एकैकशो ददातीति भाष्यप्रयोगात् "तान्येक–" इति सूत्रे एकश इति सूत्रकारनिर्देशाच्चोभयं साध्विति । तन्न, उदाहृतभाष्यस्यान्यविषयत्वात् । "यत्र तद्धितेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम्" इत्युपक्रम्य हि "तद्यथा एकैकशो ददाति" इति भाष्ये उदाहृतम् । व्याख्यातं च कैयटेन–अल्पार्थोऽप्येकशब्दो ऽस्ति तस्य वीप्सायां द्विर्वचने "बह्वल्पार्थात्–" इति शस्प्रत्यय इति । न चैषोऽर्थः प्रकृते सम्भवतीत्यास्तां तावत् । राम इति । सञ्ज्ञाशब्दोऽयमव्युत्पन्न इति पक्षे ऽर्थवत्सूत्रेण प्रातिपदिकसञ्ज्ञा, "करणाधिकरणयोश्च" इत्य-

---

शब्दरत्नम् ।

**तान्येकेति ।** तत्रानुवृत्ततानीत्यस्य लब्धव्याकरणान्तरोक्तप्रथमादिसञ्ज्ञानीत्यर्थः ।

**वीप्सायां द्विर्वचने इति ।** शसः कारकाद्विधानेन मङ्गलामङ्गलरूपार्थापेक्षणेन च

भैरवी ।

न भविष्यतीति वाच्यम्, हे सखे इत्यर्थन्तस्यावश्यकत्वात् । "आण् नद्याः" इति सूत्रे ङितीत्यस्य सम्बन्धार्थं ङितीत्यावश्यकमिति ङकार आवश्यक इति भावः । मूले–प्राच इति । प्रक्रियाकृत इत्यर्थः । व्याख्यानेऽपीति । तट्टीकाकारकृत इति शेषः ।

तत्र–"सुप" इति सूत्रे । एवञ्च व्याकरणान्तरोक्तार्थस्य क्रोडीकार एव तानीत्युपादानस्य फलमिति ध्वनितम् । एतेन 'तानि' पदघटितसम्पूर्णसूत्रानुवृत्तिप्रदर्शनमत्रासङ्गतं, तानीत्यस्य प्रकृतेऽनुपयोगादिति यत्तदेवासदिति सूचितम् । नच तासां संज्ञानामप्रकान्तत्वात्कथन्तच्छब्देन तासां लाभ इति वाच्यम्, तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात् । प्रथमादीति । आदिना द्वितीयादिसंग्रहः । ताश्च संज्ञाः स्त्रीलिङ्गाः । "प्रथमायाश्च द्विवचने" इत्यादिनिर्देशात् । मूले–उभयमिति । शसि परे वा द्विर्वचनमिति वचनस्य ज्ञापनादिति शेषः ।

अर्थापेक्षणेनेति । एतत्प्राचामनुरोधेनोक्तम्, अधिकापेक्षं बहिरङ्गमित्यस्य स्वमतेऽभावात् ।

भावप्रकाश ।

रावश्यकत्वाच्चेति भावः । मूले–प्राच इति । प्रक्रियाकृत इत्यर्थः । व्याख्यानेऽपीति । प्रकाशकृते इत्यर्थः ।

यत्तु 'तानीत्यादि कृत्स्नं सूत्रमनुवर्त्तते' इति मूलमनूद्य तन्न तानीत्यनुवृत्तौ प्रयोजनं चिन्त्यमिति खण्डनकृतोक्तं तानीत्यस्यानुवृत्त्या कृत्स्नं सूत्रमित्यसंगतेरिति रत्नाकरकृतोक्तं च, तदसदिति ध्वनयन्नाह–**तत्रेति ।** सुप इत्यत्रेत्यर्थः । तत्फलं तु व्याकरणान्तरोक्तार्थक्रोडीकारसूचनमेव । एतेन तद्विहाया-नुवर्त्तत इति दण्डी परास्तः । तच्छब्दस्य बुद्धिस्थपरामर्शकत्वादाह–**लब्धेति ।** आदिना द्वितीयादिसप्तम्यन्तानां संग्रहः । ताः स्त्रीलिंगा बोध्याः । अत्र मान्योक्तिस्तु न मूलपरममूलाक्षरस्वारस्यावहेत्युपेक्षिता । मूले प्राचा प्रक्रियाकृता । यत्त्वाहुरिति प्रकाशकृत इत्यर्थः । निर्देशाच्चेति । "शसि वा द्विर्वचनम्" इति ज्ञाप

शब्दरत्नम् ।

बहिरङ्गतया द्विर्वचने कृते शस् इति भावः । यद्यपि क्वचिदुक्तार्थानामपि प्रयोगो भवति तथाऽपि "यत्र तद्धितेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम्, यथैकैकशो ददाति" इत्यादिभाष्योक्त्या "अल्पार्थैकैकशब्दाद्वीप्सायां द्विर्वचने "बह्वल्पार्थात्—" इति शस्" इति कैयटोक्त्या च प्रकृते तद्वक्तुमशक्यम् । न चैवम् 'ऋषिसहस्रमेकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा तया ते सर्वे सहस्रदक्षिणाः सम्पन्नाः" इति "अइउण्" सूत्रस्थभाष्ये एकैकश इति प्रयोगासङ्गतिरिति वाच्यम् । 'एक' इति प्रधानार्थकसम्बोधनसत्त्वेनैकश इत्यस्य प्रत्येकमित्यर्थकत्वेनादोषात् । एतद्भाष्यप्रामाण्येन स्वार्थिकद्विर्वचनकल्पनापेक्षया मदुक्तस्यैव

भैरवी ।

यदुक्तम्मूले 'शसैव वीप्साया उक्तत्वेन'इत्यादि तदेवायुक्तमुक्तार्थानामपि 'द्वौ व्यतिलुनीते' इति प्रयोगदर्शनादिति खण्डनकारोक्तिङ्खण्डयति–यद्यपीत्यादिना । वक्तुमशक्यमिति । तद्धितेनैव वीप्सोक्तिसम्भवादिति भावः । एवम्–उक्तरीत्या एकैकश इति प्रयोगस्यासाधने । ऋषिसहस्रमिति । अत्र कर्मधारयसमासः, सहस्रमृषय इत्यर्थः । एतद्वाक्यं वित्तेन क्रीत्वा पुनर्दत्त्वेति रीत्याऽन्यत्र व्याख्यातम् । सहस्रदक्षिणा इति । अस्य सहस्रन्दक्षिणा गोरूपा येषान्दातॄणामित्यर्थः । एतेन सहस्रगोदानफललाभस्तेषामिति सूचितम् । असङ्गतिरिति । कैयटोक्तरीत्या असङ्गतिरित्यर्थः । अत एव तद्भाष्यप्रयोगाद्त्यन्तस्वार्थिकोऽपि शसस्तीत्यनुमीयते । अत एव 'प्रायशः' इत्यस्यापि सिद्धिरिति स्वार्थिकशसन्तस्य द्विर्वचनमिति तद्भावः । उक्तस्य भाष्यप्रयोगस्यान्यथोपपत्तिमाह––एकेतीति । नच त्यदादीनां सम्बोधनाभावात्कथमेतदिति वाच्यम्, 'हे स' इति भाष्यीयप्रयोगदर्शनेन तस्य निषेधवचनस्यौत्सर्गिकत्वात् । ननु स्वार्थिकमत्र द्वित्वमित्येव कल्पनाऽत्रास्त्वित्यत आह––एतद्भाष्येति । परोक्त

भावप्रकाश ।

नादिति शेषः । शस इति । शसोऽपीत्यर्थः । तथाचोभयोर्बहिरङ्गयोः परत्वाद् द्वित्वं, तदाह–कृते इति । खण्डनकारोक्तं समाधिं निराचष्टे- यद्यपीति । क्वचिदिति । 'द्वौ व्यतिलुनीते' इत्यादावित्यर्थः । तथाचात्र द्वयोर्वीप्साबोधकत्वे न क्षतिरिति भावः । अशक्यमिति । तद्धितेनैव तदुक्तिसंभवादिति भावः । एतेनोक्तभाष्यप्रयोगादत्यन्तस्वार्थिकोऽपि शसस्तीति ज्ञाप्यते। तेन प्रायश इत्यादिसिद्धिः । एवं चात्रापि स्वार्थिकं शसं कृत्वा वीप्सायां द्वित्वमित्यदोष इति प्रकाशकृतः पक्षान्तरत्वेनोक्तसमाधिरपि निरस्तः । खण्डनकाररत्नाकरोक्तसमाधिं निराचष्टे–नचैवमिति । सर्वस्येत्यत्रत्यप्रयोगस्य कैयटार्थाङ्गीकारे इत्यर्थः । ऋषिसहस्रमिति कर्मधारयः, सहस्रम् ऋषय इत्यर्थः । ननु स्वस्याप्रतिग्रहीतृत्वेनैकन्यूनता, न च पुनर्दानं दत्ताया अन्यस्वत्वाक्रान्ततया तदसंभवादिति चेन्न। वित्तेन क्रीत्वा क्रीत्वा प्रत्येकं दत्त्वा दत्त्वा पुनर्दत्त्वा सहस्रदक्षिणा ऋषयः संपन्ना इति तदर्थात् । सहस्रं दक्षिणा गोरूपा येषां दातॄणां ते इत्यर्थः । तथा च गोसहस्रदानफला एव ते न त्वेकगोदानमात्रफला इति भावः । असंगतिरिति । कैयटोक्तरीत्या तत्र द्वित्वशसोर्विषयभेदस्यार्थासंगत्या दुर्वचत्वात् । अत एव तत्र शसन्तस्य प्रत्येकमिति कैयटेनार्थो वर्णितः । तथा च तत एव शसि वा द्वित्वं स्वार्थिकशस् चानुमीयते । तथाच प्रकाशो व्याख्यातः । अन्यविषयत्वादिति मूललेखो निरस्तश्च । तत्र 'केचिदाहुरल्पार्थोऽपि'इत्यादिकैयटोक्त्या तस्याप्यत्रैव तात्पर्यात् । अन्यत्रावश्यकतया व्याख्यानेन निर्वाहे क्लिष्टव्याख्यानस्यात्रान्याय्यत्वान्माधवादीनामप्यत्रैवानुकूलत्वाच्चेति भावः । ननु त्यदादीनां सम्बोधनाभावेन तथोक्तिरयुक्ता किंतु स्वार्थे द्वित्वमेव कल्प्यते शस्विषये, तच्चैकश इति सूत्रनिर्देशाद्वैकल्पिकमिति न दोषो ऽत आह–एतदिति । तदुक्त स्वार्थिकशस्कल्पनं तु सर्वथा नोचितम् । स्वार्थद्वित्वविभक्तिलोपकल्पनेनापि भाष्योपपत्तौ तत्कल्पने मानाभावात् । किंच तस्यान्तरङ्गत्वेन द्वित्वात्प्राक् प्रवृत्त्या शसन्तस्य द्वित्वापत्तौ प्रयोगासिद्धितादवस्थ्यात् तत ध्वनयन्नाह–स्वार्थिकद्विर्वचनेति

धिकारे घापवादेन "हलश्च" इति घञा रमन्ते ऽस्मिन्निति व्युत्पादने तु "कृत्तद्धित–" इति सूत्रेणेति विवेकः ।

**"सरूपाणामेकशेष एकविभक्तौ"** ॥ **एकविभक्तौ यानीति । विभक्तिः** सारूप्ये उपलक्षणं न त्वेकशेषे निमित्तम् । एवं चानैमित्तिकत्वेनान्तरङ्गोऽयमेकशेषः सुबुत्पत्तेः प्रागेव प्रवर्तते । यद्येतन्नारभ्येत तर्हि प्रत्येकं विभक्तिः स्यात्, द्वन्द्वश्च प्रवर्तेत । आरब्धे त्वेकशेषे ऽनेकसुबन्तविरहाद् द्वन्द्वस्याप्राप्तिरेव फलिता भवतीति भावः । **सरूपाण्येवेति ।** एतच्चोत्तरसूत्रस्थैवकारस्येहानुकर्षणाल्लभ्यते ।

शब्दरत्नम् ।

न्याय्यत्वात् । किं च नायं भाष्यप्रयोगः, किं तु गौण्यप्युत्तरा संख्या पूर्वां संख्यां बाधते इत्यत्र श्रौतो वा स्मार्त्तो वा ऽयं व्यवहारो दृष्टान्तत्वेनोक्तो भगवतेति तत्र च्छान्दसत्वान्न दोषः । "एकैकशः पितृसंयुक्तान्" इत्यादिवदिति दिक् । **रमन्ते ऽस्मिन्निति । योगिन इति शेषः ।**

**इति भाव इति ।** एतावतैव द्वन्द्वापवाद एकशेष इति व्यवहार इति भावः ।

भैरवी ।

यत्स्वार्थिकः शसिति, तत्तु सर्वथा नोचितम्, तथा कल्पने तस्य शसोऽन्तरङ्गत्वेनादौ प्रवृत्त्या ततो द्विर्वचनेऽनिष्टरूपापत्तेः । वस्तुतस्तु यदुपष्टम्भाद्भवतामेतादृशी कल्पना तदेव शिथिलमित्याह––किञ्चेति । गौण्यपीति । उत्तरा–मुख्या यथा पूर्वसङ्ख्याया बाधिका तथा गौण्यपीत्यर्थः । तत्र–एकैकश इति प्रयोगे । दिगिति । दिगर्थस्तु लोके यत्र तद्धितमात्रेण वीप्साया अनभिधानन्तत्रोभयोस्तत्त्वं, नतु केवलशसो यथैकैकश इत्यत्र । माषश इत्यादौ तु तावन्मात्रेणापि वीप्साऽभिधानान्न द्वित्वमिति भाष्याशय इति । योगिन इति । एतेनागस्तिसंहितोक्ता–

"रमन्ते योगिनो यस्मिन्नित्यानन्दे चिदात्मनि ।
इति रामपदेनासौ परम्ब्रह्माभिधीयते" ॥

इति व्युत्पत्तिर्दर्शिता ।

एतावता–पूर्वोक्तरीत्या द्वन्द्वाप्राप्त्युपपादनेन । अनुकर्षणशब्दस्यानुवृत्तिपरत्वमन्यत्र दृष्ट-

भावप्रकाश ।

**न्याय्यत्वादिति ।** हे स इति भाष्यप्रयोगात् त्यदादेरिति सिद्धान्तस्य प्रायिकत्वात् । तथाचापूर्वकल्पनातः क्लृप्तकल्पनैवोचितेति भावः । वस्तुतो मूलमेव शिथिलमित्याह–**किंचेति ।** अपिर्मुख्यार्थसंग्राहकः । अत एव तत्र कैयटोक्तरीत्यैवोभयसिद्धिः । किंच कैयटरीत्याप्ययमपि भाष्यप्रयोगः सुयोजः । अल्पायाल्पायेत्यर्थः । ब्राह्मणेष्वल्पत्वं तु गोविक्रयणाद्गोपालनाशक्तेश्च बोध्यम् । वस्तुतस्तु द्वयोरपि द्योतकत्वेन तत्समुच्चयस्य बहुशो दृष्टत्वेन तयोर्यौगपद्यम् । 'यथाजातीयकः' 'गार्ग्यायणी' इत्यादौ । द्वित्वसूत्रस्थभाष्यस्यात्वयमाशयः– यत्र तद्धितमात्रेण लोके वीप्सानभिधानं तत्र द्वित्वमपि । यथैकैकश इति । माषश इत्यादौ तु सर्वत्र तावतैव वीप्साभिधानं तत्र न कदापि तयोः समुच्चय इति बोध्यम्, तदाह–**दिगिति ।** संयुक्तानि इति पाठः, गृह्यसूत्रे पात्रविशेषणत्वेनोक्तत्वात् । अन्येषामसंभवादाह––**योगिन इति ।** एतेन––

सरला ।

मूले—उपलक्षणमिति । अविद्यमानं सदपि व्यावर्तकमुपलक्षणं, विशेषणं तु विद्यमानमेव व्यावर्तकमिति तयोर्भेदः । यथा 'काकवन्तो देवदत्तस्य गृहाः' इत्यत्र इदानीं गृहे काकाभावेऽपि कदाचित्तस्य दृष्टत्वेन देवदत्तेतरगृहव्यावृत्तिस्तेन भवतीति भावः । **द्वन्द्वापवाद** इति । अपवाद इवापवाद इत्यर्थः । यथा अपवादविषये सामान्यशास्त्रस्य न प्रवृत्तिस्तथैवात्राप्येकशेषविषये द्वन्द्वस्य न प्रवृत्तिरिति तात्प-

तेन मातृशब्दयोर्जननीवाचिपरिच्छेत्तृवाचिनोर्नैकशेषः। मातृभ्यामित्यादौ सारूप्ये

शब्दरत्नम्।

एतेनैकशेषारम्भफलमपि निरूपितं द्वन्द्वनिवृत्तिरूपम्। उत्तरसूत्रस्थस्येति। "वृद्धो यूना—" इतीत्यर्थः। अनुकर्षणादिति। अनु पश्चात्कर्षणादाकर्षणादित्यर्थः। क्वचिदपकर्षणादित्यपि पाठः। नैकशेष इति। भ्यामादावपीत्यर्थः। भ्यामि स्त्रीपुंसयोस्ताभ्यामित्यनुप्रयोगस्य समत्वात्। एतेनानुप्रयोगविरोधादत्र नैकशेष इत्यपास्तम्। "पुमान्स्त्रिया" इत्येकशेषोऽपि न। तत्राप्येकविभक्तौ सरूपाण्येवेत्यनुवृत्तेः। अत एव "प्रातिपदिकै-

भैरवी।

मित्याशयेनाह—अन्विति। एतेन यौगिकोऽयं शब्द इति सूचितम्। यत्तु यत्र द्विवचनादौ वैलक्षण्यन्तत्र माभूदेकशेषः, भ्यामादौ तु भवत्येवेति मतं, तन्न युक्तमित्याशयेनाह—भ्यामादावपीति। अपिना औजसादिसमुच्चयः। परोक्तङ्खण्डयति—भ्यामीति। अनुप्रयोगविरोधादिति। औजसादिष्वनुप्रयोगविरोधादित्यर्थः। तावित्युक्ते पुमर्थस्यैवाभिव्यक्तिः, ते इत्यनेन तु स्त्रिया एवेति शिष्यमाणपदप्रतिपाद्ययोरर्थयोः समभिव्याहृतपदप्रतिपाद्यार्थाभेदान्वयाभावेन नैकशेष इति परोक्तङ्खण्डितम्। ननु 'मातृमातारौ' इत्यादावेकशेषवारणायवकारापकर्षो व्यर्थः? प्रकृतसूत्रप्रवृत्तेस्तेन वारणे ऽप्युत्तरसूत्रप्रवृत्तेर्दुर्वारत्वादत आह—पुमानिति। अनुवृत्तेरिति। अपकृष्टैवकारसहितस्य "एकविभक्तौ सरूपाणि" इत्यस्यानुवृत्तेरित्यर्थः। अत एव सरूपाण्येवेत्यनुवृत्तेरित्युक्तम्। तादृशस्यानुवृत्तौ मानमाह—अत एवेति। एवसहितस्य/तस्यानुवृत्तेरव। वार्ति-

भावप्रकाश।

रमन्ते योगिनो यस्मिन्नित्यानन्दे चिदात्मनि। इति रामपदेनासौ परं ब्रह्माभिधीयते॥
इति तदर्थो ध्वनितः। तथा च न पूर्वोक्तरीत्या गन्धर्वः शरभो रामः सृमरो गवयः शशः॥।
इत्यादयो मृगेन्द्राद्याः पशुजातय इत्यमरोक्त्या पशुविशेषग्रहणं बोध्यम्।

एवेन येननेति न्यायव्यवच्छेदः। एतेन—यदीत्यादिग्रन्थेन। अनुकर्षणशब्दस्यानुवृत्तौ रूढेरत्रासांगत्यादाह—अन्विति। यौगिकोऽयं न रूढ इति भावः। यत्तु रत्नाकरकृत् एवापकृष्टया मातृमातारावित्यत्र न सः, भ्यामादौ तु भवत्येव वक्ष्यमाणयुक्तेरिति, तन्न, युक्तेः खण्डयिष्यमाणत्वात्। तद् ध्वनयन्नाह—भ्यामादावपीति। आदिना ओस् नतु भिसादयः। अपिना औजसादिसमुच्चयः। यद्यपि तैरित्युक्तेस्त्र्यर्थस्य ताभिरित्युक्ते पुमर्थस्यानवगमाच्चिन्त्यमिदमितिकैयटप्रसादप्रकाशकृदाद्युक्तमयुक्तं प्रकरणादिना प्रतीतिसंभवात्तथापि निष्कृष्टस्थले दोषमाह—भ्यामीति। एवमोस्यपि बोध्यम्। तथा च नानुप्रयोगविरोध इति भावः। अत्र—भ्यामि। तथाचौजसादौ त्वद्रीत्या तथा सत्त्वेप्यत्र तदभावेन साधारणेन खण्डनायेयं त्वदुक्तिरयुक्तेति भावः। यत्त्वेवापकर्षो निष्फलः उत्तरसूत्रेण तस्य दुर्वारत्वात्। नच तदपकर्षसामर्थ्यात्तेनापि नेति वाच्यम्, अनियमाव्यावृत्त्या तस्य चारितार्थ्यात् इति; तन्नेति ध्वनयन्नाह—पुमानिति। अनुवृत्तेरिति। अपकृष्टतत्सहिततदनुवृत्तेरित्यर्थः। अपकर्षानुवृत्त्योः प्रमाणं सूचयन्नाह—अत एवेति।

सरला।

र्थम्। भ्यामादावपीति। तत्र सारूप्यसत्त्वेऽपि इति शेषः। अपिना सर्वविभक्तीनां समुच्चयः। सर्वासु विभक्तिषु एकशेषो न भवतीत्यर्थः। समत्वादिति। एकशेषत्वेन चिकीर्षितानां पदानां मध्ये यस्य कस्याप्येकशेषे तदर्थे तत्परामर्शकाऽनुप्रयुज्यमानसर्वनामपदार्थस्याऽभेदेनान्वयस्तेषामेवैकशेषो नान्येषामिति, यथा तौ वृक्षौ इत्यादौ। तत्र हि वृक्षवृक्ष इत्येकशेषे कस्यापि वृक्षशब्दार्थस्य पुंस्त्वविशिष्टस्य तच्छब्दार्थेनाभेदान्वय इति तत्रैकशेषः। वृक्षवाचिपीलुशब्दफलवाचिपीलुशब्दयोस्तु नैकशेषः तत्र फलवाचकस्यैकशेषे नपुंसकत्वविशिष्टार्थबोधकतया तदर्थेन पुंस्त्वविशिष्टार्थबोधक 'तौ' इत्यर्थेनाभेदान्वयासम्भवात्, इति मतेऽप्यत्र स्त्रीलिङ्गपुंलिङ्गयोरुभयोरपि 'ताभ्याम्' इत्यस्यैवानुप्रयोगेणानुपूर्व्यैक्यादित्यर्थः। सरूपाण्येवेत्यनुवृत्तेरिति। स्त्रीप्रत्ययमात्रकृतवैरूप्यस्यैव तत्र ग्रहणादिति भावः। अत एवेति।

शब्दरत्नम् ।

कशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः" इति वार्तिककृतोक्तम् । ननु वार्तिके प्रातिपदिकैक-शेष इत्ययुक्तम् । विभक्त्यन्तानामेकशेषे ऽपि जननीमातृधान्यमात्रर्थके मातृभ्यां देहि मातृभ्यां चेत्यत्र प्रतिषेध आवश्यकः । न च तत्पक्षे इष्टापत्तिः "किमुच्यते प्रातिपदिका-नामेकशेष इति न पुनर्यस्यापि विभक्त्यन्तानामेकशेषस्तेनापि प्रतिषेधो वक्तव्यस्तस्यापि ह्येतानि क्वचिद्विभक्त्यन्तानि सरूपाणि मातृभ्यां चेति । अथ मतमेतद्विभक्त्यन्तानां सारू-प्ये भवितव्यमेकशेषेण" इति भाष्योक्तेरिति वाच्यम् । सूत्रव्याख्यानपक्षभेदेनैकलक्ष्यस्य साधुत्वासाधुत्वयोरनौचित्यात । अत एवाथ मतमेतदिति प्रतीकमुपादाय 'अभ्युपगमवादेन त्वेतदुच्यते' इति कैयटादिभिर्व्याख्यातमिति चेत् ? न, ईदृशविरुद्धमभ्युपेत्यैव वार्तिके तदु-

भैरवी ।

कक्तोक्तमिति । तथाच स्वोक्तार्थे वार्तिककृदुक्तिस्तात्पर्यग्राहिका । स्वोक्तार्थन्द्रढयितुं शङ्कते—नन्विति । मात्रर्थक इति । वाक्ये इति शेषः । अत्रेत्यस्य सम्बन्धो वा । चेन देहीत्यस्य सम्बन्धः । तेन समानविभक्तिकत्वमेवेति ध्वनितम् । नचेति । वाच्यमिति परेणान्वयः । तत्पक्षे-वि-भक्त्यन्तानामेकशेष इति पक्षे । इष्टापत्तिरिति । प्रातिपदिकैकशेष इत्यस्य विशिष्योपादानेन त-त्पक्षे सूत्रस्य प्रवृत्तिरिष्टैवेति भावः । इष्टापत्तौ भाष्यकारोक्तिम्प्रमाणयति-किमुच्यत इत्यादिना । न पुनरिति वाक्यालङ्कारे, न निषेधे । तस्यापि-एवं रीत्या सूत्रव्याख्यातृमतेऽपि । लक्ष्यस्य-प्र-कृते तु लक्ष्यं वाक्यमेव ।

एतदर्थे भाष्यं साधकमाह-अत एवेति । लक्ष्यभेदानौचित्यादेव । एतेन प्रातिपदिकेति वि-शेषणोपादानमयुक्तमिति सिद्धम् । ईदृशविरुद्धमिति । एकलक्ष्यस्य व्याख्याभेदेन साधुत्वासा-धुत्वरूपविरुद्धमित्यर्थः, तथाचाभ्युपगमवादोऽयमिति भावः । वस्तुतस्तथा व्याख्यात्रापि

भावप्रकाश ।

अपकर्षानुवृत्तियुतसूत्राभ्यां भ्याम्यपि तदभावादेवेत्यर्थः । तथा च तयोस्तात्पर्यग्राहकमिदम् । अन्यथा तदसंगतिरानर्थक्यं च स्पष्टमेवेति भावः । पूर्वोक्तं द्रढयितुं खण्डनकृत्तदनुयायिरत्नाकरायुक्तिं च खण्ड-यितुं शङ्कते—नन्वित्यादिना । मात्रर्थके इति।अस्य वाक्ये इत्यर्थकात्रेत्यत्रान्वयः । चेन देहीति सम्बन्ध-बोधनद्वारा समानविभक्त्यन्तत्वं सूचितम् । आवश्यक इति । सूत्रप्राप्तेरिति भावः । इष्टापत्तिरिति । निषेधसाधकभाष्यवार्तिकाद्यनुपलब्धेः । अनुप्रयोगविरोधस्तु नेत्युक्तमेव, प्रत्युत साधकभाष्यमुपलभ्यते । तदाह-किमुच्यते इत्यादिना । नञ् वाक्यालंकारे, न निषेधे । ईदृशसूत्रव्याख्याकृतो मतेऽपीत्यर्थः । भाष्यविरोधं परिहरन्नुक्तार्थे साधकमाह-अत एवेति । लक्ष्यभेदानौचित्यादेवेत्यर्थः । आदिना जीर्ण-विवरणसंग्रहः । एतेन किमुच्यते इत्यादि भ्यां चेतीत्यन्तं सिद्धान्तभाष्यमिति सूचितम् । अस्यापि तत्त्वे विरूपाणामनेकशेष इत्यादीतः प्राक्तनभाष्यविरोधः स्पष्ट एव । तथा च प्रातिपदिकैकशेषे इति विशेषणम-युक्तमिति भावः । विरुद्धमिति । एकलक्ष्यस्य व्याख्याभेदेन साधुत्वासाधुत्वरूपविरुद्धमङ्गीकृत्येत्यर्थः । तथा चाथ मतमिति भाष्यवदिदमप्यभ्युपगमवाद एवेतिभावः । तदुक्तेरिति । प्रातिपदिकैकशेषे इत्युक्ते-रित्यर्थः । वस्तुतो विभक्त्यन्तानामेकशेषेऽपि प्रतिषेधो वक्तव्य इति भाष्यस्य गूढतात्पर्यं, तद् ध्वनयन्नाह—

सरला ।

स्त्रीप्रत्ययमात्रकृतवरूप्यवत्त्वे एव "पुमान् स्त्रिया" इत्यस्य प्रवृत्तेरेवेत्यर्थः । वार्तिककृतोक्तमिति । तत्र मातरौ मातारौ इति स्त्रीप्रत्ययेतरकृतवैरूप्यसत्त्वेन "पुमान् स्त्रिया" इत्यस्य न प्रवृत्तिः । अन्यथा सरू-पाणामित्यस्य वार्तिकेन निषेधेऽपि "पुमान् स्त्रिया" इत्येकशेषप्रवृत्तौ वार्तिकं व्यर्थमेव स्यादिति तदा-

शब्दरत्नम् ।

क्तेः। अत एव तदुत्तरम् 'एवं च कृत्वा चोद्यते' इत्युक्तं भाष्ये । अस्य प्रातिपदिकानामेकशेष इत्यादीति शेषः । अनेन चास्य पूर्वपक्षवार्तिकत्वं स्फुटमेवोक्तम् । तत्र मातृग्रहणं विभक्तौ विरूपाणामुपलक्षणम् । अयं च पूर्वपक्षः प्रातिपदिकैकशेषस्य "एकविभक्तौ" इति पदाभावे एवोपपत्तिं मत्वा कृतः । तदभावे हि यानि सरूपाणि तेषामेकशेष एवेत्यर्थ एव प्राप्नोति। प्रयोगमात्रावच्छेदेन सारूप्यस्य हरिणहरितप्रकृतिकहरिणीशब्दादौ तद्धिते। वैरूप्येणासम्भ-

भैरवी ।

प्रतिषेधो वक्तव्य एवेत्यत्र तात्पर्यम् । तद् ध्वनयन्नाह–अत एवेति । वार्तिककारस्याभ्युपगमवादत्वादेवेत्यर्थः। तदुत्तरम्–भवतीत्युत्तरम् । चोद्यते इत्यस्य किं कर्मेत्याकाङ्क्षायामाह–अस्येति । एतेन 'किमुच्यते' इत्यादि चोद्यान्तरं नेति ध्वनितम् । अनेन–एवञ्च कृत्वेत्यनेन भाष्येण । अस्य–प्रातिपदिकेतिशब्दघटितवार्तिकस्य । ननु तस्मिन्वार्तिके मातृशब्दस्यैवोपादानं न्यूनम् ? यातृशब्दघटिते यातृभ्यां यातृभ्याञ्च देहीति वाक्ये ऽप्युक्तरीत्या दोषस्य सत्त्वादत आह—तत्र मातृग्रहणमिति । उक्तरीत्योपलक्षणत्वावश्यकत्वे प्रातिपदिकैकशेष इत्यपि विभक्त्यन्तानामेकशेषपक्षस्याप्युपलक्षणमिति निगूढाशयः। अयञ्च पूर्वपक्षः—प्रातिपदिकैकशेष इत्यारभ्य कृतः पूर्वपक्षः ।

ननु विभक्ताविति पदाभावे प्रयोगमात्रावच्छेदेन सारूप्यस्य विवक्षा कुतो नेत्याशङ्काया-

भावप्रकाश ।

अत एवेति । वार्तिकस्याभ्युपगमवादत्वादेवेत्यर्थः । तदुत्तरम्–भवतीत्युत्तरम् । उक्तमिति । अन्यथैकशेषेणेति प्रातिपदिकानामेवैकशेषे दोषो भवतीत्येव सिद्धे तदावाक्यं स्पष्टमेवेति भावः । चोद्यत इत्यस्य कर्माकाङ्क्षायामाह–अस्येति । आदिना "मातृमात्रोः प्रतिषेधो वाच्यः"इत्यस्य ग्रहणम्। तथा चैवं विरुद्धमङ्गीकृत्यप्रातिपदिकानामेकशेषे एव प्रतिषेधश्चोद्यत इत्यर्थः । एतेन किमुच्यते इत्यादिचोद्यान्तरव्यावृत्तिः । अनेन–एवं च कृत्वेत्यादिभाष्येण । अस्य–प्रातिपदिकानामिति घटितवार्त्तिकस्य पूर्वपक्षवार्त्तिकत्वं युक्त्यन्तरेणापि गूढाशयेन ध्वनयितुमाह–तत्रेति ।वार्त्तिके इत्यर्थः। मातृग्रहणं विभक्तौ–कस्यांचिद्विभक्तौ । तथा च यात्रादीनामपि संग्रहः । एवमुपलक्षणत्वावश्यकत्वे प्रातिपदिकैकशेषे इत्यपि विभक्त्यन्तानामेकशेषस्याप्युलक्षणमस्त्विति गूढाशयः । एतेन मूलरीत्या व्याख्याने तृतीयादौ सारूप्येऽपि न तत्रातिप्रसङ्ग इति किमावृत्त्यैकशेषविशेषणत्वेनेत्याशङ्क्य वार्त्तिके किमुच्यत इत्याद्याशङ्क्य विभक्त्यन्तानां सारूप्ये भाव्यमेकशेषेणेति प्रातिपदिकानामेवैकशेषे दोषो भवतीत्युत्तरयित्रा भगवता श्यामादौ स्वीकृतस्य तयोस्तस्य तद्व्याख्याने ऽसिद्धिः, आवादौ वैरूप्येणैवार्थाभावात् इति खण्डनकृद्युक्तिः परास्ता । अयं च पूर्वपक्ष इति । प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वाच्य इत्ययमर्थः । एकशेषस्य–तत्पक्षस्य । पदाभावे एवेति । अन्यथा प्रथमोक्तपक्षद्वयेनैव क्रोडीकारादस्य पृथक्त्वानुपपत्त्या भाष्यासंगतिः स्पष्टैव तदाह-उपपत्तिमिति। बाधकनिराकरणपूर्वकं युक्तिभिर्व्याख्यानमित्यर्थः । तदेवाह–तदभावे हीति । यतः एकविभक्ताविति पदाभावे इत्यर्थः । यत्तु कैयटः-"ह्रस्वो नपुंसके" इत्यतः प्रातिपदिकानुवृत्त्येष्टलाभ इति । तन्न, ।अनुवृत्तौ फलाभावात् । तद् ध्वनयन्नाह–यानीति । विभक्त्युत्पत्तेः प्रागिति शेषः । अर्थ एवेति । अनेन कैयटोक्तार्थस्य मूलोक्तार्थस्य च निरासः । अत एव तिङन्तसंग्रहोऽपीतिभावः । रामौ रामा इत्यादीनां सिद्धत्वेऽपि हरिण्यावित्याद्यसिद्धिरित्याह–हरिणेति । आदिना श्येन्यादिग्रहणम् । असम्भवे

सरला ।

शयः। विभक्तौ विरूपाणामिति । यानकर्तृकयातृशब्ददेवरपत्नीबोधकयातृशब्दादीनामित्यर्थः ।

शब्दरत्नम् ।

**वात्प्रयोगसामानाधिकरण्येनैव सारूप्यस्य ग्राह्यतया तस्यात्रापि सत्त्वात्प्राप्तस्य स निषेधः। अत एवाग्रे विभक्तेः सारूप्ये उलक्षणत्वमाश्रित्य तत्पक्षस्थापनेन तत्खण्डनं कृतमित्येव-**

भैरवी ।

**माह**—प्रयोगेति । **प्रयोगसामानाधिकरण्येन क्वचित्प्रयोग इत्यर्थकमेतत्** । ग्राह्यतयेति । **तेन 'हरिण्यौ' 'हरिण्यः' इत्यस्य सिद्धिः । पुंवद्भावकृतन्तद्धिते वैरूप्यन्द्रष्टव्यम् ।** तस्य—**सामानाधिकण्येन सारूप्यस्य** । अत्रापि—**मातृमात्रादावपि** । प्राप्तस्य **एकशेषस्येति शेषः** । अत एव—**तदभावे एव तदुपपत्तिम्मत्वा** पूर्वपक्षस्य **सत्त्वादेव** । अग्रे—**अथानेन पक्षेणार्थः स्यादित्यादि-स्थले** । विभक्तेरिति । **अत्रैकपदानुपादानेनैकपदोपादानं स्पष्टार्थमिति ध्वनितम् एकस्यामपि विभक्तौ यानि विरूपाणि न तेषामेकशेष इत्यस्य स्पष्टतया लाभार्थम् । वस्तुतस्तु विभक्तौ यानि सरूपाण्येवेत्युक्तौ 'स्वसारौ' 'स्वसारः' इत्यत्रैकशेषो न स्यात्, स्वसरि च स्वस्रोश्चे-त्यत्र वैरूप्यदर्शनात्; 'कमलौ' 'कमलः' इत्यादावेव स्यात्, कृते त्वेकपदे एकसंख्यावाचकवि-भक्तावित्यर्थलाभाद्भिन्नार्थकविभक्तौ वैरूप्येऽपि भवत्येव सः ।** तत्पक्षस्थापनेन—**प्रातिपदिकाना-मेकशेष इति पक्षस्थापनेन** । तत्खण्डनम्—**"मातृमात्रोः प्रतिषेधो वक्तव्यः" इत्येतद्वार्तिकख-**

भावप्रकाश ।

ऽस्यान्वयः । तत्र हेतुः—**तद्धिते वैरूप्येणेति** । 'हारितिः' 'हारिणिः' इत्यादौ तद्धितान्तादिप्रयोगे पुंव-द्भावेन वैरूप्येणेत्यर्थः । एतेनैवकारापकर्षे एकविभक्ताविति व्यर्थमिति तत्सामर्थ्याद्विभक्तित्वावच्छेदेन सारूप्यविवक्षणान्न दोष इति चापास्तम् । **अत्रापि**—मातृमात्रादावपि । **प्राप्तस्येति** । एकशेषस्येत्यर्थः । नन्वेवं वार्त्तिके तद्भाष्यप्रामाण्याद्विभक्त्यन्तैकशेषे भ्यामादौ तत्सत्त्वानुरोधेनात्र पक्षेऽपि तदनपकर्ष एव । नैकशेष इत्यस्यौजसादावित्येवार्थो न तु भ्यामादावपीति । न च विनिगमनाविरहाद्विपरीतमेव कुतो नेति वाच्यम् । तत्रोक्तप्रमाणापलम्भादत्र तदनुपलम्भात् । एवं च विरुद्धाभ्युपगमो न । किंच प्रातिपदिकैकशेषे इति विशेषणं बाधकमुपलभ्यते इति चेन्न । द्विवचनाद्यनुपपत्त्या तत्पक्षस्यैवायुक्तत्वस्य भाष्ये स्पष्टत्वात् । तद् ध्वनयन्नाह—**अत एवेति** । तदभावे एव तदुपपत्त्या तत्र पूर्वपक्षत्वादेवेत्यर्थः । **अग्र इति** । अथानेन पक्षेणार्थः स्यादित्यादावित्यर्थः । **विभक्तेरिति** । एकपदं संत्यज्यैवं वदता भगवता एकपदं स्पष्टार्थम् एकस्यामपि विभक्तौ यानि विरूपाणि नेत्यर्थं बोधयितुमिति ध्वनितम्। अत एव पृथक् सर्वेषां विभक्त्यन्तानामिति पक्षेऽपि "नवाऽर्थविप्रतिषेधात्" इति तत्प्रत्याख्यानमेव । एतेन निमित्तत्वपक्षे समुदायादेवैकविभक्तौ सः, न प्रत्येकं विभक्तावित्यर्थं तदिति प्रकाशकृत् । वस्तुतस्तुल्यार्थः सः तथा-चैकसंख्याकविभक्तौ वैरूप्ये गौश्च धेनुः गावौ च पृथिव्याविति विवक्षायामेकशेषो भवत्येवान्यथा तन्न स्यादिति रत्नाकरोक्तम्, एकग्रहणाभावे स्वसा च स्वसारौ च, स्वसरि च स्वस्रोश्चेत्यादौ पूर्वभाग-योर्वैरूप्यदर्शनात्स्वसार इत्यादौ स न स्यात् किंतु कमलौ कमल इत्यादावेव स्यात् । तत्र कृते तु नायं दोषः, एकविभक्तौ परतः पूर्वत्र तदभावात् । यदैकत्वं विवक्ष्यते तर्हि स्पष्टार्थमेवेति केचित्, एकैकविभक्तावित्यर्थलाभार्थं तत् । तथा च सकलविभक्तावित्यर्थलाभादेवानपकर्षेणैवेष्टसिद्धिरित्यन्ये इति दण्डयुक्तं चापास्तम् । **तत्पक्षेति** । प्रातिपदिकैकशेषपक्षेत्यर्थः । **तत्खण्डनं**—प्रतिषेधवार्त्तिकखण्डनम् ।

सरला ।

**पूर्वपक्षः**—प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः इति निषेधः । **भाष्ये ध्वनित इति** । तथाच विभक्तौ परतः सारूप्यमेव येषां तेषामेकः शिष्यते इति सूत्रार्थः । एकः प्रथमः, ननु एकत्वसंख्याविशिष्टः । तथा सति सरूपाणामिति निर्धारणषष्ठीति तत्प्रकृत्यर्थस्य स्वघटकत्वं—स्वघटकनिर्धार्यमाणत्वाभिमतेतरावृ-त्तिविधेयवत्त्वम्—एतदुभयसम्बन्धेन निर्धार्यमाणेऽन्वयस्य 'नृणां द्विजः श्रेष्ठः' इत्यादौ दृष्टतया प्रकृते निर्धारणप्रकृत्यर्थ—सारूप्यवत्समुदायघटकनिर्धार्यमाणत्वाभिमतैकत्वसंख्याविशिष्टेतरस्याप्रसिद्धेरन्वयानुपप-त्त्या शाब्दबोधाप्रसङ्गः, एकत्वस्य केवलान्वयित्वात् । प्रथमवाचकस्य एकशब्दस्य ग्रहणे तु तदित-रद्वितीयादीनां प्रसिध्द्याऽन्वयसम्भवेन न दोष इति । स्पष्टश्चेदं "यतश्च निर्धारणे" इति सूत्रस्थशेखर-

शब्दरत्नम् ।

कारापकर्षो भाष्ये ध्वनितः । तं विना तावन्मात्रेण तत्खण्डनायोगात् । एतेन "एकविभक्तौ" इत्यावर्त्यैकविभक्तौ सरूपाणामेकविभक्तौ विवक्षितायामेकशेष इत्यर्थे यस्यां विभ-

भैरवी ।

ण्डनम् । तं विना—एवकारापकर्षं विना । तावन्मात्रेण-विभक्तेः सारूप्योपलक्षणत्वमात्रेण । तत्खण्डनेति । मातृशब्दयोर्भ्यामादौ सारूप्यसद्भावादिति भावः । एतेनेति । प्रत्याख्यानपरभाष्यप्रामाण्यादपकर्षस्यावश्यकत्वेनावृत्तेरफलत्वेनेत्यर्थः । ननु 'वृक्षौ, वृक्षाः'इत्यादावेकशेषाना-

भावप्रकाश ।

तंविनेति । एतेनैवापकर्षो व्यर्थः विभक्तितावच्छेदेनेति व्याख्यानेन मात्रादिव्यावृत्तिसिद्धेरिति मन्दोक्तमपास्तम् । तदभावे एकशब्दस्वारस्येन विभक्तिसामानाधिकरण्येनेत्यर्थस्यैवापत्तेः । एतेन भाष्यानुयायिप्रसादोयुक्त एवेति प्रकाशादिग्रन्थाश्चिन्त्या एवेति भावः । एतेनेति । प्रत्याख्यानपरभाष्यप्रामाण्येनापकर्षावश्यकतयाऽऽवृत्तेरफलत्वेन तदङ्गीकारे भाष्यविरोधेनेत्यर्थः । आवर्त्येति । अत्र च मातृमा-

सरला ।

व्याख्याने दीपके इति ।

विभक्तौ परतः सारूप्यमेव येषां तेषां तत्त्वं किम् ? न तावत् स्ववृत्तिविभक्त्यव्यवहितपूर्वत्वसमानाधिकरणयावद्रूपवत्त्वसम्बन्धेन स्वविशिष्टत्वम्, नित्यबहुवचनान्ताक्षतशब्दस्य क्षतशून्यार्थकसर्वविभक्त्यन्ताक्षतशब्दस्य चैकशेषानापत्तेः । विभक्त्यव्यवहितपूर्वत्वविशिष्टसर्वविभक्त्यन्ताक्षतशब्दवृत्त्येकविंशतिरूपवत्त्वस्य नित्यबहुवचनान्ताक्षतशब्देऽभावात् । नापि स्वाव्यवहितोत्तरत्वप्रकारकयावद्विभक्तिविशेष्यकसम्भावनाप्रयोज्यतावद्विभक्त्यव्यवहितपूर्वत्वप्रकारकयावद्रूपविशेष्यकसम्भावनाप्रयोज्यतावद्रूपवत्त्वप्रकारकसम्भावनाविशेष्यत्वसम्बन्धेन स्वविशिष्टत्वं तत्त्वम्, यदि अस्मान्नित्यबहुवचनान्ताक्षतशब्दाद् यावत्यो विभक्तयो भवेयुस्तावद्विभक्त्यव्यवहितपूर्वत्ववन्ति यावन्ति रूपाणि भवेयुस्तावद्रूपवानयं भवेदित्याकारकसम्भावनाविशेष्यत्वसम्बन्धेन निरुक्ताक्षतशब्दयोः परस्परवैशिष्ट्यसत्त्वेन दोषाभावेऽपि संज्ञाभूतसर्वशब्दस्य सर्वनामसंज्ञकसर्वशब्दस्य च स्वाव्यवहितोत्तरत्वप्रकारकयावद्विभक्तिविशेष्यिका या सम्भावना अस्मात्संज्ञाभूतसर्वशब्दाद् यावत्यो विभक्तयो भवेयुरित्याकारिका तादृशसम्भावनाप्रयोज्या या तावद्विभक्त्यव्यवहितपूर्वत्वप्रकारकयावद्रूपविशेष्यिका सम्भावना तावद्विभक्त्यव्यवहितपूर्वत्ववन्ति यावन्ति रूपाणि भवेयुरित्याकारिका तादृशसम्भावनाप्रयोज्या या तावद्रूपवत्त्वप्रकारिका सम्भावना 'तावद्रूपवानयं भवेत्' इत्याकारिका तादृशसम्भावनाविशेष्यत्वसम्बन्धेन परस्परं वैशिष्ट्यसत्त्वेनैकशेषापत्तेः । नचेष्टापत्तिः, यथा 'समाननगरे समानैव वृत्तिर्येषां तेषामेको गुरुर्भवति अन्ये तस्य शिष्या भवन्ति' इति वाक्यस्य काश्यां प्रयागे गयायां च व्यत्ययेन याजनाध्यापनप्रतिग्रहान् कुर्वन्तो ब्राह्मणा न विषयाः, तथा विभक्तौ परतः सारूप्यमेव येषां तेषामेकः शिष्यते अन्ये लुप्यन्ते इति वाक्यस्यापि संज्ञाभूतसर्वशब्दसर्वनामसंज्ञकसर्वशब्दविषयकत्वस्य वक्तुमशक्यत्वात्, इति चेत् ? अत्रोच्यते, शब्दप्रकृतिकविभक्तिविशिष्टत्वं तत्त्वम् । वै० स्वविशिष्टरूपवद्भिन्नत्व स्वविशिष्टरूपवत्त्वोभयसम्बन्धेन । प्रथमवै० स्वाव्यवहितपूर्वत्वविशिष्टरूपत्वावच्छिन्नप्रतियोगिताकभेदवत्त्व—स्ववृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्योभयसम्बन्धेन । द्वितीयवै० स्ववृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यसम्बन्धेन । तत्र स्वविशिष्टरूपवत्त्वसम्बन्धोपादानम् एकव्यादिशब्दानामेकशेषवारणाय । स्वविशिष्टरूपवद्भिन्नत्वसम्बन्धोपादानं घटपटादिशब्दानां जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोश्चैकशेषवारणाय । स्वाव्यवहितपूर्वत्वविशिष्टरूपभिन्नत्वं विहाय विशिष्टरूपत्वावच्छिन्नेत्युपादानं मत्यादिशब्दानामेकशेषसिद्धये । शब्दवृत्तिरूपसामान्यभेदं विहाय विभक्त्यव्यवहितपूर्वत्वविशिष्टरूपसामान्यभेदोपादानं वर्णविशिष्टवाचकहरिणीशब्दमृगीवाचकहरिणीशब्दयोरेकशेषसिद्ध्यर्थम् । प्रथमवैशिष्ट्ये स्ववृत्तिविभक्तिविभाजकेत्यादिद्वितीयसम्बन्धोपादानं नित्यबहुवचनान्तसर्वविभक्त्यन्ताक्षतशब्दयोरेकशेषसिद्धये । संज्ञाभूतसर्वनामसंज्ञकसर्वशब्दयोस्तु नैकशेषः 'सर्वाय' इति ङेविभक्तिवैशिष्ट्यस्य 'सर्वस्मै' इति रूपे सत्त्वेन विभक्तिविशिष्टरूपवद्भिन्नत्वाभावादिति । विस्तरस्तु शब्देन्दुशेखरदीपके द्रष्टव्यः ।

ऽपि औजसादिषु वैरूप्यात् । एक एवेति । एतच्च सहविवक्षायामेव प्रवर्तते ।

शब्दरत्नम् ।

**क्तावेकशेषस्तस्यां विभक्तौ सरूपाणामित्यर्थस्य प्रत्यासत्त्या लाभेन भ्यामादावेकशेषो नौजसादाविति वार्तिकं व्यर्थमिति तदाशय इत्यपास्तम्। वार्तिकमते भ्यामादावपि तदभावस्य प्राप्तत्वाच्चेति दिक् । एतच्चेति । एकशेषविधायकं चेत्यर्थः । ध्वनितं चेदं पृथक् सर्वेषां विभक्तिपराणामेकशेष इति पक्षे विभक्त्यन्तानामेकशेष इति पक्षे च "द्वन्द्वप्रतिषेधो**

भैरवी ।

पत्तिः ? वृक्षौ च वृक्षाश्चेत्यत्र प्रथमायामेव वैरूप्यदर्शनादत आह—विवक्षितायामिति । **विभक्ताविति पदं विशेषणत्वमात्रतात्पर्यकन्नतूपलक्षणत्वतात्पर्यकमित्याशयेनाह**—यस्यामित्यादि । प्रत्यासत्त्येति । **अस्मिन्नर्थे तात्पर्यग्राहकमेकपदमिति तद्भावः।** तदाशय इति । **राम राम औ इति स्थितिप्रदर्शनकृदाशय इत्यर्थः । यदुक्तं भ्यामादावेकशेष इति तत्खण्डयति**—वार्तिकमत इति । प्राप्तत्वादिति । **विभक्तिविशेषबोधकशब्दमनुपादाय मातृमात्रोरित्येव यतो वार्तिककृतोक्तन्ततः प्राप्तत्वादित्यर्थः ।**

**एकशेषशब्दस्य पुंस्त्वादेकशेषपरामर्षाय यदेतच्चेति नपुंसकोपादानन्तदसङ्गतमित्याशयेनाह**—एकशेषेति । इदम्—**सहविवक्षायामेव प्रवर्तत इत्येतत् । सहविवक्षापदार्थस्तु विशेष्य-**

भावप्रकाश ।

त्रोरितिवार्तिकमेव मानम् । एवं च मानाभावादिति नव्योक्तिरयुक्तेति रत्नाकरकृत् । **विवक्षितायामिति** । अन्यथा परत्वान्नित्यत्वाच्चैकादेशे एकविभक्तावसारूप्यादेकशेषो न स्यात् इति प्रकाशकृत् । विशेषणत्वमिष्टमित्याह—**यस्यामिति । प्रत्यासत्त्येति** । अनन्यार्थकैकग्रहणेन चेत्यपि बोध्यमिति खण्डनकृत् । तथा चैकशेषहेतुसारूप्यविशेषणविभक्त्योरैकत्वं लब्धमिति भावः । **तदाशय इति** । राम रामऔ इति स्थिते इति प्रक्रियाशयप्रदर्शकप्रकाशाशयः, "किमुच्यते" इत्याद्युक्तभाष्याशयश्चेत्यर्थः । अत एव तदोल्लेख इति भावः । **प्राप्तत्वाच्चेति** । तथाचारम्भप्रत्याख्यानयोः फलभेदापत्तिरिति भावः । किंचावृत्तेर्भाष्यानारूढत्वात् गौरवाच्च वार्त्तिकस्य खण्डितत्वेन मूलशैथिल्याच्च एकग्रहणस्य खण्डितत्वाच्च विभक्तेः सारूप्ये उपलक्षणत्वमिति भाष्यविरोधापत्तेश्च आवृत्तिं विना एकशेषहेतुत्वाश्रयणेनैव त्वदिष्टसिद्धेश्चेति

सरला ।

**दिगिति** । दिगर्थस्तु एवकारापकर्षे न मानम् । अत एव 'प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः, माता जनयित्री, माता च परिच्छेत्ता, तयोरपि क्वचित्सारूप्यं दृश्यते' इति प्रातिपदिकैकशेषे एव शङ्का कृता नतु विभक्त्यन्तैकशेषादिकल्पे भाष्ये । अन्यथाऽस्मिन्कल्पे इव तेष्वपि कल्पेषु "मातृमात्रोः प्रतिषेधो वक्तव्यः" इति वचनमारब्धव्यं स्यात् । अत एव "किमुच्यते प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधो वक्तव्य इति, न पुनर्यस्यापि विभक्त्यन्तामेकशेषः, तेनापि मातृमात्रोः प्रतिषेधो वक्तव्यः स्यात् । तस्यापि हि एतानि क्वचिद् विभक्त्यन्तानि सरूपाणि मातृभ्यां च मातृभ्यां चेति । अथ मतमेतद्विभक्त्यन्तानां सारूप्ये भवितव्यमेवैकशेषेणेति प्रातिपदिकानामेकशेषे दोषो भवति" इति भाष्यं सङ्गच्छते । अन्यथा एकस्य सूत्रस्य व्याख्याभेदेन एकस्यैव लक्ष्यस्य साधुत्वमसाधुत्वं च स्यात् । एतद्भाष्यैकवाक्यतया "मातृमात्रोः प्रतिषेधो वक्तव्यः" इति सामान्यत आरब्धमपि वार्तिकं सर्वनामस्थानविभक्तिपरत्वविषयं बोध्यम् । अन्यथा विभक्त्यन्तैकशेषवादिमते 'मातृभ्याम्' इत्यादावेकशेषो भवति, प्रातिपदिकैकशेषवादिमते न स्यादिति फलभेदः स्यात् । तथाच जननीपरिच्छेत्तृवाचकयोर्भ्यामि सारूप्यसत्त्वात्प्रातिपदिकैकशेषवादिमतेऽप्येकशेषो भवत्येव । केवलं सर्वनामस्थाने एव न भवति, तत्र वैरूप्यात् । नच "मातृमात्रोः प्रतिषेधः" इति वार्तिके एकशेषाकरणेनैवकारापकर्षोऽस्तीति गम्यते, अन्यथा ओसि जननीपरिच्छेत्तृवाचिनोः सारूप्यसत्त्वेन "मात्रोः प्रतिषेधो वक्तव्यः" इत्येव वक्तव्यं स्यादिति वाच्यम्, अनुकरणस्वरूपभङ्गभियैकशेषाकरणेनादोषादिति ।

इतरेतरयोगद्वन्द्वस्य विषये इति यावत्। यत्र ह्यनेकस्यार्थस्य मिलितस्येतरान्वयः

शब्दरत्नम्।

वक्तव्य" इत्याशङ्क्य "अनवकाश एकशेषो द्वन्द्वं बाधिष्यते" इति ग्रन्थेन भाष्ये। इतरेतरेति। "एकवच्चास्यान्यतरस्याम्" इत्यनेनैकशेषविषयपदानां समाहारेऽवृत्तिबोधनादिति भावः। इतरान्वय इति। एकरूपेणैकरूपावच्छिन्ने इतरत्रान्वय इत्यर्थः।

भैरवी।

विशेषणभावानापन्नानेकस्य युगपदेकपदार्थसम्बन्धबोधनेच्छा। यद्यसहविवक्षायामप्येकशेषः स्यात्तदा तत्र द्वन्द्वाप्रसक्त्याऽनवकाशत्वप्रदर्शनमसङ्गतं स्यादिति भावः। इतरेतरेति यन्मूलेऽभिहितन्तत्समाहारस्य व्यावृत्तये तत्र साधकमाह—एकवदित्यादिना। समाहारे अवृत्तिबोधनादिति। यदि समाहारेऽप्येकशेषः स्यात्तदा तदिदं 'वस्त्रमित्यस्य समाहारविवक्षायान्तानीमानि वस्त्राणीत्यस्येतरेतरयोगविवक्षायां सिद्धौ विकल्पेनैकवद्भावस्य विधानं व्यर्थं स्यादिति भावः। एतेन समाहारद्वन्द्वविषयेऽप्येकशेषो भवति। अन्यथा घटघटमित्यादिसमाहारविवक्षायां स्यात्। अनभिधानेन तद्वारणन्तु न चमत्कृतिकारि। अन्यथा घटघटावित्यस्याप्यनभिधानेनोपपत्तावेकशेषारम्भोऽनर्थकः स्यात्। नच घटघटमित्यतो यथा समाहारस्य प्रतीतिस्तथा घटमित्यस्मान्नेति कथन्तत्रैकशेष इति वाच्यम्? प्रकरणादिना तत्प्रतीतिसम्भवात्। अत एव व्यक्तिपक्षेऽपि "न ब्राह्मणं हन्यात्" इत्यस्य वाक्यस्य सर्वब्राह्मणविषयकत्वसिद्धिरिति परास्तम्। व्यक्तिपक्षे यङ्कंचिद्ब्राह्मणमहत्वाऽन्यत्र कृती स्यादित्यनेन दोषमभिधाय जातिपक्षमवलम्ब्य समाधानपरभाष्यविरोधापत्तेश्च। घटघटमित्यस्य वारणं त्वनभिधानेनैव "दिक्षु समाहारो नास्त्यनभिधानात्" इति यथा। मूले अनेकार्थस्य मिलितस्येतरान्वयो यत्र स द्वन्द्वस्य विषय इत्युक्तं, तद्यथाश्रुतन्न युक्तम् राजपुरुषमित्यत्रातिप्रसङ्गादतो मिलितस्येत्यस्य परस्परविशेषणविशेष्यभावानापन्नत्वे सति किञ्चिन्निष्ठविषयतानिरूपितविषयताश्रयानेकस्येत्यर्थः। अत एवाह—एकरूपेणेति। यथा 'धवखदिरौ छिन्धि' इत्यादौ धवखदिरयोः

भावप्रकाश।

दिक्। तदाह—दिगिति। एकशेषशब्दस्य पुंस्त्वादाह—एकशेषेति। ग्रन्थेनेति। अन्यथा विशेष्यविशेषणभावानापन्नस्यानेकस्य युगपदेकपदार्थसम्बन्धबोधनेच्छारूपसहविवक्षाविषयद्वन्द्वान्यविषये तस्य सावकाशत्वात्तदसङ्गतं स्यादिति भावः। यत्तु समाहारविषयेऽपि प्रवृत्त्यौचित्यं संकोचे मानाभावात्, अन्यथा घटघटमित्यस्य साधुतापत्तेः। अनभिधाने च न मानं, सूत्रानर्थक्यापत्तिश्च, घटघटावित्यस्यापि तत एव वारणात्। नच घट इत्यतः समूहाप्रतीत्या कथमेकशेषः? प्रकरणादिगमकवशात्तत्प्रतीतौ बाधकाभावात्। अत एव न ब्राह्मणं हन्यादित्यादौ व्यक्तिपक्षे ऽनेकब्राह्मणहननादावपि प्रत्यवायः शास्त्रकृतामिष्टः समूहस्य प्राधान्यादेकवचनं हननान्वयस्तु व्यक्तिष्वेव तत्र बाधात् इति रत्नाकरकृत्तन्नेति ध्वनयितुमाह—एकवच्चेति। "नपुंसकमनपुंसकेन"इत्येव समाहारेतरेतराभ्यां तदिदं वस्त्रं तानीमानि वस्त्राणीत्यादिसिध्या तद्वैयर्थ्यादिति भावः। किञ्च व्यक्तिपक्षे यं कंचित् ब्राह्मणमहत्वा कृती स्यादिति दोषं दत्त्वा जातिपक्षेणैवात्र निर्वाह इत्युक्तिपरभाष्यविरोधापत्तेः। अवृत्तीति। एतेनोक्तज्ञापकादितरेतरविषये तद्विधानेऽपि समाहारविषये ऽपवादाभावात् घटघटमिति द्वन्द्वापत्तिः। नच दिक्षु समाहारस्येवात्राप्यनभिधानात्तदभाव इति वाच्यम्। तत्र समाहारस्य बाधवदत्र तदभावादित्याशङ्क्यैवकारापकर्षेण सरूपाणामेकशेष एव वृत्तिर्नान्येति व्याख्यानेन तद्व्यावृत्तिसिद्धिरिति मन्दोक्तमपास्तम्, एवापकर्षो व्यर्थ इति स्वपूर्वग्रन्थविरोधापत्तेश्च, तदपकर्षसाफल्यस्य प्रागुक्तत्वाच्च 'पौनःपुन्यं' 'पौनःपुनिकः'इत्यादौ तद्धितवृत्तेः 'मातृमातृभ्यां' 'मातृमात्रोः' इत्यादौ द्वन्द्वस्य चानापत्तेश्चेति दिक्। समासे उद्देश्यविधेयभावाप्रतीतेराह—एकरूपे-

सरला।

अवृत्तिबोधनादिति। नच अन्यतरस्यांग्रहणसामर्थ्येन इतरेतरयोगविषये एव वृत्तिर्नेति कस्मान्न कल्प्यते, तावतापि अन्यतरस्यामित्यस्य सार्थक्यसम्भवादिति वाच्यम्, 'सरूपाणाम्' इत्यादिनिर्देशान्य-

स तथाभूतोऽस्य विषयः । इदं च "इदितो नुम् धातोः" इति लिङ्गाल्लभ्यते, न्यायाच्च । तथा हि–यः शिष्यते स लुप्यमानार्थाभिधायीति स्थिते श्रूयमाणैकशब्दोपस्थितं सर्वमविशेषादैकरूप्येणैवान्वेतुमर्हति । यद्वा, पूर्वसूत्राद् "द्वन्द्वे" इत्यनुवर्त्य द्वन्द्वे प्रसक्ते सतीति व्याख्येयम् ।

शब्दरत्नम् ।

**इदित इति** । अत्र ह्यभेदेन परस्परान्वयाद् भेदघटितसाहित्यनिमित्तकशेषाप्रवृत्तिरिति भावः । **ऐकरूप्येणैवेति** । पुष्पवन्तपद इवेति भावः । **द्वन्द्वे प्रसक्ते इति** ।

भैरवी ।

समूहान्वितयोः कर्मत्वेन छेदनान्वयः । 'चैत्रमैत्रयज्ञदत्तगृहैर्मण्डितमिदन्नगरम्' इत्यत्र द्वन्द्वार्थस्य गृहपदार्थेऽन्वयोऽस्ति तत्र न तेषामेकङ्गृहमित्यनुपपत्तिरत—एकरूपावच्छिन्नेति । यदुक्तम्प्राग्विशेषणविशेष्यभावानापन्नेति तत्र मानमाह मूले–इदन्चेति । भेदघटितेति । यत्रानेकपदार्थस्यान्वयितावच्छेदकविभिन्नरूपेण धवत्वखदिरत्वाभ्यामेवेतरान्वयस्तत्रैव समूहान्वितस्येतरान्वयोस्ति तत्रैव द्वन्द्वस्य साधुत्वमिष्यते । पदार्थतावच्छेदकभेद एव द्वन्द्वस्य साधुतानियामकः । 'ब्राह्मणवसिष्ठन्यायेन'इत्यत्र ब्राह्मणत्ववसिष्ठत्वयोर्यथा ॥ पुष्पवन्तपद इवेतीति ।

एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ।

इत्यमरे द्वन्द्वेन पर्यायप्रदर्शनात्तत्र द्विवचननिर्देशादेकयोक्त्येत्युक्तेश्च समूहस्य शक्यतालाभेन 'पुष्पवन्तौ नमस्कुर्मः' इत्यत्र यथा समूहान्वितयोश्चन्द्रसूर्ययोः कर्मत्वेन नमस्कारान्वयित्वन्तथा सर्वत्र द्वन्द्वस्थले एकार्थीभावापन्नसमुदायोपस्थाप्यानेकस्यैकधर्मावच्छिन्नेऽन्वयो द्रष्टव्यः । एकशेषोऽपि तादृशस्थल एवेष्यते । तत्राप्येकपदोपस्थाप्यानेकस्य समूहान्वितस्येतरान्वयो भवति । यत्र त्वेतादृशसहविवक्षाऽभावे द्विर्वचनेऽचीत्यादौ भाष्ये एकशेषनिर्देशादित्युक्तिस्तत्रैकशेषशब्दस्तन्त्रपरो लक्षणयेति बोध्यम् । समाहारद्वन्द्वादितरेतरयोगस्थले विशेषस्तु द्वन्द्ववाच्यस्य समूहस्योद्भूतावयवभेदकस्य भानम् । अत एव द्विवचनबहुवचनयोर्यथायोगमुपपत्तिः । लिङ्गन्यायाभ्यामुक्तार्थस्य झटिति प्रतिपत्तिर्न सम्भवतीत्याशयेन—मूले यद्वेति । तत्रैकशेषस्य द्वन्द्वापवादत्वप्रदर्शकवाक्यस्य नैकस्यामवस्थायामुभयोः प्राप्तिसत्त्वेन, किन्तु द्वन्द्वस्यैकशेषप्रवृत्त्युत्तरकालिकतल्लक्ष्याधिकरणकाभावप्रतियोगिप्राप्तिकत्वेनैव वाच्यम्, तस्य त्वेकशेषस्य यस्यामवस्थायाम्प्राप्तिस्तदा सुपोऽभावान्न द्वन्द्वस्य

भावप्रकाश ।

**णेति** । धवखदिरावित्यादावानयास्तीत्यादावन्यतरस्य कर्मत्वकर्तृत्वान्यतरेणान्वये साधुत्ववारणार्थमिदम् । तत्रैवोभयोरनेकस्मिन्पश्य छिन्धीत्यादौ कर्मत्वेनैवान्वये तद्वारणायैकरूपावच्छिन्न इति । अत एव तुल्यवदेकक्रियान्वयित्वं साहित्यमिति प्राञ्चः । सहविवक्षाऽभानविषये द्विर्वचनेचि अक्षा,भज्यन्तामित्यादौ च भाष्ये एकशेषशब्दस्तु समानफलकत्वात्तन्त्रलक्षक इति भावः । **अन्वयादिति** । तथा चासहविवक्षा ऽत्रेत्युक्तभाष्यध्वनितरीत्या तत्र तदप्रवृत्तौ तन्निर्देशसंगतिरिति ज्ञापकत्वं तस्येति गूढाकूतम् । एतेनेष्टार्थासिद्ध्या इन्द्रो मरुत्वानित्यादाविव तदप्रवृत्तिरिति ज्ञापकत्वमयुक्तमित्यपास्तम् । "इतोनुम्" इत्येवं सूत्रेपि धातोरित्त्वासम्भवेन सामर्थ्यादभिमतो गृह्यते इदयादीनामेरित्त्वस्य फलाकाङ्क्षायाः सत्त्वात् । तथा चासहविवक्षायामपि तदापत्तौ निर्देशासाधुत्वापत्तिरिति ज्ञापकं युक्तमेवेति तु मान्याः ।

**पुष्पवन्तपदे इति** ।

एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ।

इत्यमरे द्वन्द्वेन पर्यायप्रदर्शनात्पुष्पवन्तावित्यत्र द्विवचनोच्चारणाच्च एकयोक्त्योत्युक्तेश्च समूहस्य शक्यत्वलाभेन द्वित्वान्वयात् एकपदोपस्थाप्ययोश्चन्द्रसूर्ययोर्युगपदैकरूप्येणैकत्र यथा ऽन्वयस्तथा घटादावपि ति भावः । लिङ्गन्याययोर्दुर्निरूपत्वात्सहविवक्षालाभाय स्पष्टोपायमाह—मूले यद्वेति । नन्वे-

स्यादेतत् । द्वन्द्वे कृते सतीत्यर्थोऽस्तु । मैवम्, 'पन्थानौ' 'पन्थानः' इत्यादौ समासान्तापत्तेः। 'करौ' 'कराः'इत्यादौ एकवद्भावापत्तेः। 'सर्वे' 'सर्वेषाम्'इत्यादौ "द्वन्द्वे च" "विभाषा जसि" इत्यनयोरापत्तेश्चेति दिक्। यत्तु प्राचा-'राम-राम-

शब्दरत्नम् ।

विभक्त्युत्पत्तौ सत्यां तत्प्रसक्तिर्बोद्ध्या ।

**एकवद्भावापत्तेरिति ।** एवं चेतरेतरयोगविषयाभावेनैकशेषानापत्तिरिति भावः । **इत्यनयोरिति ।** "जसः शी" इत्यत्र 'वा' इति वक्तव्ये "विभाषा जसि"इति तूद्भूतावयवभेदविवक्षया बहुवचने एकशेषद्वन्द्वयोरभावात्तत्र विकल्पवारणायोत्तरार्थं चेति

भैरवी ।

प्रसङ्ग इत्यत आह—विभक्त्युत्पत्ताविति ।

एवञ्च—**समाहारस्य विषयतायाः** सत्त्वेनैकशेषप्रतिबन्धकसत्त्वे च । नन्वस्मिन्पक्षे "जसः शी" इतिसूत्रे एव वाग्रहणं कार्यन्तेन सर्वत्र विकल्पो भविष्यति तावतव सिद्धौ "विभाषा जसि"इति पृथक्सूत्रकरणमेकशेषे कृते समासनिमित्तककार्यन्नेत्यर्थं ज्ञापकमस्तु । तथाच-'सर्वे' इत्यादौ न मूलोक्तदोषापत्तिः "हलिसर्वेषाम्" इत्यत्र सुट् चोक्तार्थस्य ज्ञापको भविष्यतीत्यत आह—जसः शीत्यत्रेति । उद्भूतावयवभेदविवक्षया—**उद्भूतः प्रकटोऽवयवानाम्भेदो यस्य समूहस्य तादृशसमूहस्य सर्वादिशब्दवाच्यत्वविवक्षया** । तत्रेति । **तादृशसमूहवाचकसर्वादिशब्दघटिते जस्परकलक्ष्ये इत्यर्थः ।** विकल्पवारणायेति । **भवत्सम्मतवाशब्दघटितन्यासेन विकल्पवारणायेत्यर्थः ।** उत्तरार्थम्—"**प्रथमचरम**" इत्यादिसूत्रेषु "**विभाषा जसि**"इत्यस्यानुवृत्तय इ-

भावप्रकाश ।

बमप्येकविभक्तावित्यस्योपलक्षणत्वेनेदानीं तदनुपपत्त्या तदप्रसङ्गेन सूत्रार्थबाधापत्तिरत आह—**विभक्तीति** । तथा च द्वन्द्वप्रसङ्गस्याप्युपलक्षणत्वेनेदानीं तदभावेप्यनैमित्तिकत्वेन साहित्यादिरूपकारणवशात्प्रवृत्तिः सुलभेति भावः । यत्तु "जसः शी" इत्यत्रैव वेतिवाच्ये "विभाषा जसि" इति पृथक्सूत्रेणैकशेषे समासकार्याभावः सामान्येन ज्ञाप्यत इति सर्वेष्टसिद्धिः । अत एव सर्वेषामित्यत्र द्वन्द्वे चेति निषेधापादनमप्ययुक्तम्, हलि सर्वेषामिति निर्देशाल्लिङ्गादेकशेषविषये निषेधाप्रवृत्तेर्ज्ञापनाच्चेति जगन्नाथोक्तं, तत्खण्डयति—**जसः शीति** । पूर्वादिभ्य इत्यतो वेत्यनुवर्त्तनीये इत्युचितं तस्य वक्तुम् । अत्र त्वनुवादत्वान्न दोषः । **एकशेषद्वन्द्वयोरिति** । अत्राभ्यर्हितत्वात्तस्य पूर्वनिपातः । **तत्र**—तादृशे लक्ष्ये । तथा च वाग्रहणं तदनुवृत्तिर्वा दुष्करेति'इह किञ्चित्रपो' इति न्यायाप्राप्तिः सूचिता । अत एवाह—**उत्तरार्थमिति** । "प्रथमचरम"इत्याद्यर्थं चेत्यर्थः । सर्वेषामित्यस्य सौत्रत्वादुपपत्तेर्न ज्ञापकता। किञ्च तद-

सरला ।

थाऽनुपपत्त्या एकशेषविषयपदानां समाहारे वृत्तिर्नेति कल्पनाया एवोचितत्वात् । **एवञ्चेति** । एकवद्भावे सति समाहारद्वन्द्वविषयत्वे चेत्यर्थः ।

**अभेदेनेति** । चक्षिङ्धातौ नुम्वारणाय 'इत् चासौ इत् च' इति कर्मधारयसमासस्वीकारेणेत्संज्ञकेदन्तधातोर्नुम् भवतीत्यर्थस्य तत्रावश्यकतयाऽभेदान्वय इति भावः ।

**उद्भूतावयवभेदविवक्षयेति** । आरोपितावयवगतसंख्याविवक्षयेत्यर्थः । मूले एकाद्विर्वचनन्यायेनेति । वृक्षप्रचलनन्यायेनेत्यर्थः । यथा अवयवे प्रचलिते सर्वस्य वृक्षस्य न प्रचलनं, वृक्षे प्रचलिते तु सर्वेषामवयवानां प्रचलनमिति वृक्षस्यैव प्रचालनं क्रियते नावयवस्येति, सर्वसंग्राहकोऽयं न्याय इति भावः । **प्रयोगानर्हत्वादिति** । वस्तुतस्तु चिन्त्यमिदम्, प्रातिपदिकसंज्ञाफलीभूतप्रत्यय-पद-एतदन्यतरेतरसमभिव्याहारानपेक्षयाऽर्थविषयकबोधजनकत्वं स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वमिति परिष्कारस्य पूर्वमुक्ततया पूर्वभागस्य उत्तरभागस्य च तादृशार्थबोधजनकत्वेन स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वेन नियमेन व्यावृत्तेः सिद्धत्वात् । तत्पक्षत्यागेऽयमपि हेतुर्द्रष्टव्योऽग्रे इति ।

औ' इति स्थिते इत्युक्तम् , एकविभक्तौ परत इति च। तत्रेत्थमुक्ति संभवः–राम-राम इत्यत्र अवयवयोरिव समुदायस्यापि प्रातिपदिकसंज्ञाऽस्ति मिलितेनार्थवत्त्वात् । नचार्थवत्त्वेऽपि समासग्रहणस्य नियमार्थत्वान्नैवमिति वाच्यम् । यत्र समुदाये पूर्वो भागः पदं तद्विषयको नियम इत्युक्तत्वात्, बहुपटव इत्याद्यनुरोधेन नियमस्य सजातीयविषयताया औचित्याच्च । तथा चैकाज्द्विर्वचनन्यायेन समुदायप्रातिपदिकादेव द्विवचनाद्युत्पत्तिः । तावताप्यवयवार्थानां संख्यान्वयेनानुग्रहसंभवात् । नन्वेवं रामकृष्णावित्यादिष्वपि द्वन्द्वं विनैव समुदायाद्विभक्तिः स्यादिति चेत्? मैवम् । द्वन्द्वविधावनेकं सुबन्तमित्यस्यानुवृत्त्या एकाज्द्विर्वचनन्यायस्य बाधादितिदिक् । इत्थमुक्तिसंभवे सत्यपि समुदायादेकविभक्तौ परत इति पक्षः किमर्थमुपेक्षित इति चेत् ? शृणु , अस्मिन्पक्षे मातृमातारौ इत्यादावप्येकशेषःस्यात् । नन्वेकविभक्तावित्यावर्त्य एवकारं चानुकृष्य एकविभक्तौ

शब्दरत्नम् ।

भावः । **सजातीयेति** । स्वातन्त्र्येण प्रयोगार्हत्वेन साजात्येऽपि न दोषः । एतत्पूर्वभागस्य विभक्त्युत्पत्तिमनपेक्ष्य स्वातन्त्र्येण प्रयोगानर्हत्वात् । **अनुग्रहसम्भवादिति** । अत एव न प्रत्येकं तदुत्पत्तिः । **बाधादिति** । अन्यथा द्वन्द्वोच्छेदो नलोपाद्यसिद्धिश्चेति

भैरवी ।

त्यर्थः । यच्चोक्तं–सुट् चोक्तार्थज्ञापक इति, तदपि न, तेन निर्देशेन द्वन्द्वे प्रसक्ते सतीति व्याख्यानमेव ज्ञाप्यतामपूर्वस्य ज्ञापकसिद्धस्य वचनस्य कल्पनापेक्षया ज्ञाप्यार्थस्यास्मत्सम्मतव्याख्यानेन सिद्धौ लाघवात् उद्भूतावयवभेदसमूहवाचकसर्वशब्दादामि सुटः प्रवृत्त्या तस्य निर्देशस्योपपन्नत्वाच्च ।।मूले–प्राचेति। प्रक्रियाकृतेत्यर्थः। सम्भव इति। अस्य प्रसादकृतोक्त इति शेषः। अवयवयोरिवेति । नचावयवयोः प्रातिपदिकत्वस्वीकारेऽन्तरङ्गत्वात्प्रत्येकं सुबुत्पत्तिरपि भविष्यति, तथाच नियमविषयतायाः सत्त्वात्समुदायस्य प्रातिपदिकसंज्ञा न भविष्यतीति वाच्यम्, समुदायोत्तरोत्पन्नसुपा स्वार्थसङ्ख्यान्वयसमर्पणे प्रत्येकं सुबुत्पत्तेरप्रवृत्तिरित्याशयात् । अर्थवत्त्वादिति। अर्थस्य प्रकाशनादित्यर्थः। सजातीयेति। पदसंज्ञकपूर्वभागघटितत्वेन साजात्यस्य विवक्षणादिति भावः । सिद्धान्तभूतार्थेपि प्रक्रियोक्तस्योपपत्तिमाह––स्वातन्त्र्येणेति । अनुग्रहेति। प्रत्येकार्थस्यापि समुदायघटकतया सङ्ख्यान्वयित्वस्य सम्भवरूपानुग्रहेत्यर्थः । अत एव–तादृशानुग्रहादेव। अन्यथा–एकाज्द्विर्वचनन्यायबाधाकल्पने । द्वन्द्वोच्छेद इति। तथाच द्वन्द्वविधानसामर्थ्यात्तत्र तस्य बाधस्य कल्पनेति भावः । ननु द्वन्द्वविधानसामर्थ्येन "चार्थे" इति सूत्रे सुबिति निवृत्तमित्येव कल्प्यतान्तावतापि तस्य सार्थक्यम्भविष्यतीत्यत ।आह–– नलोपाद्यसिद्धिरिति । राजसैनिकावित्यादावित्यादिः । आदिना वाक्त्वचमित्यादौ ।कुत्वादेः स-

भावप्रकाशः ।

पेक्षया तथा व्याख्यानज्ञाप्यत्वमेवोचितम् । वाक्यान्तराकल्पनेन लाघवात् उद्भूतावयवभेदविवक्षया बहुवचनेन निर्देशोपपत्तेश्च । एतेन पूर्वपरेत्यादित्रिसूत्र्यारम्भादन्येषां जस्यविकल्पः सुटो निर्विषयत्वापत्त्या तेन निर्देशेन निषेधसंकोचस्य सुवचत्वं चेति मूलमयुक्तमिति रत्नाकरोक्तमपास्तम् । मूले प्राचा–प्रक्रियाकृता । सम्भव इति । प्रसादकृतोक्त इति भावः । **न प्रत्येकमिति** । एतेनावयवानामपि पृथक् प्रातिपदिकत्वेनान्तरङ्गत्वात्ततः प्रवृत्तविभक्तया पदत्वसत्त्वेन तथा नियमेनापि व्यावृत्तिः स्यात् । एकाचद्विर्वचनन्यायस्य तु नायं विषयः लभेदादिति प्रसादो युक्त इति प्रकाशोक्तमपास्तम् । द्वन्द्वस्थलेपि सामर्थ्यात्सु बित्यस्य निवृत्त्या नोच्छेदोऽत आह––**नलोपादीति** । "राजपुरुषौ" इत्यादाविति भावः । आदिना 'वाक्त्वचम्'इत्यादौ कुत्वादि । आवृत्तिमुक्त्वा तावन्मात्रोक्तौ न्यूनताऽनुवादांशेऽत आह––

यानि सरूपाण्यवेति व्याख्येयमिति चेन्न। आवृत्तौ मानाभावात्। विभक्तेरेकशेषस्य विशेषणत्वे फलाभावाच्च। न च पयः पयो जरयतीत्यादिव्यावृत्तिः फलम् सहविवक्षायामित्यस्यावश्यकत्वात्, अन्यथा पयः पयो नयतीत्यत्र गौणमुख्य-

शब्दरत्नम्।

भावः। **यानि सरूपाण्येवेति**। तेषामेकविभक्तौ परत एकशेष इति शेषः। **मानाभावादिति**। भाष्ये ऽनुक्तत्वादिति भावः। किं चावृत्तौ प्रत्यासत्तिन्यायेन यस्यां विभक्तावेकशेषस्तस्यां विभक्तौ यानि सरूपाण्येव तेषामित्यर्थापत्त्या भ्यामादावेकशेषापत्तिः। "प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः" इति वार्तिकेन भ्यामादावपि तदभावस्यैवेष्टत्वानुमानात्। **फलमिति**। समुदायादेकविभक्तेरभावाद्विभक्तेर्लुका लुप्तत्वाच्चेति भावः। **सहविवक्षायामिति**। सा च समुदायस्यैकार्थनिरूपितैककारकावेश एव भवतीति भावः। **गौणमुख्यकर्मणोरिति**। उभयोरपि कर्मत्वेन तत्र समुदायादेकविभक्तेः कर्तुं शक्यत्वेन विभक्तिपदेन व्यावर्त्यासम्भवेन सहविवक्षायामित्यावश्यकमिति

भैरवी।

क्ग्रहः। आवृत्त्योक्तव्याख्यानेपि वाक्यापरिसमाप्त्या न्यूनतापत्तिरत आह—तेषामिति।

ननु यद्यपि कण्ठरवेण भाष्यकृता आवृत्तिर्नोक्ता तथापि मातृमात्रोः प्रतिषेध इत्यनेन ध्वनितेति कल्पयाम इत्यत आह—किञ्चावृत्ताविति। इत्यर्थापत्त्येति। न चास्मिन्पक्षे एवकारापकर्षवैयर्थ्यम्, मातृमातारावित्यस्यैवकारापकर्षव्यावर्त्यस्य सम्भवात्। भ्याम्येकशेषस्य प्रवृत्ताविष्टापत्तिं निरस्यति—प्रातीति। तदभावस्य-एकशेषाभावस्य। आवृत्तौ एकविभक्तौ यानि सरूपाण्येव तेषामेकविभक्तावेकशेष इत्यर्थो भविष्यति। तत्राद्यवाक्यार्थस्य"पयः पयो जरयति"इत्यत्रासत्त्वमुपपादयति-समुदायादिति। द्वितीयासत्त्वमाह–विभक्तेरिति। सहविवक्षाया अभावम्प्रकटयति—साचेत्यादिना। एकार्थेति। छेदनाद,त्यर्थः। एककारकावेशे–एककारकशक्तिवैशिष्ट्ये। शक्तिश्च कर्तृत्वादिरूपा विवक्षिता। एतेन प्रकृतेऽसम्भवो ध्वनितः। एव भवतीति। क्रियान्वयित्वं यत्र तत्रैवम्विधैव सहविवक्षा वाच्येति भावः। मूले–अन्यथेति। अंशद्वयसद्भाव एवैकशेषस्य प्रसङ्ग इति नियमस्वीकार इत्यर्थः। कर्तुं शक्यत्वेनेति। मूलोक्तरीत्या समुदायस्य प्रातिपदिकत्वादिति भावः।

भावप्रकाश।

**तेषामिति**। यत्तु भाष्यानुक्तत्वेऽपि मातृमात्रोरिति वार्त्तिकस्यैव मानत्वात्तदभावादिति मूलमयुक्तमत एवापत्तिदार्ढ्ये 'कर्त्तव्योऽत्र यत्नः प्रतिविधेयं दोषेषु'इति तत्र तत्र भाष्योक्तिः। एवं चान्यथानुपपत्त्याऽऽवृत्तिरेव कल्प्यते। एवं च भाष्यानुक्तत्वहेतुकमानाभावो न, द्विवचनादौ दोषश्च न इति रत्नाकरकृत्; तन्नेति ध्वनयितुं दूषणान्तरमाह—**किंचेति**। **प्रत्यासत्तीति**। अनन्यार्थकैकग्रहणेन चेत्यपि बोध्यम्। **एकशेषापत्तिरिति**। प्रत्यासत्त्याद्यनङ्गीकारे तु प्रागुक्तखण्डनकृदुक्तिविरोधापत्तिरिति बोध्यम्। इष्टापत्तिं परिहरति–**प्रातीति**। तथा चैकं सन्दिधत्सोरपरंव्यवधत्ते इति न्यायेन कृतायामप्यावृत्तावन्यत्रापत्तेर्दुर्द्धरत्वमिति मूलविरोधापत्त्या सा नेष्टसाधिका। एतेन प्रत्यासत्तिन्यायेनोक्तार्थलाभ एव फलमिति विभक्तेरेकशेषविशेषणत्वे फलाभावाच्चेति मूलमयुक्तमित्यपास्तमिति भावः। **अभावादिति**। विरुद्धकारकबोधकविभक्तेःसमुदायात् कर्त्तुमशक्यत्वादिति भावः। ननु समुदायादविधानेऽपि ततःपरत्वमस्त्येवात आह्–**विभक्तेरिति**। एकरूपावच्छिन्ने इत्यस्यार्थमाह–**एकार्थेति**। छिन्धीत्यादिरित्यर्थः। एकरूपेणेत्यस्यार्थमाह–**एककारकेति**। एककर्तृत्वादिशक्तिवैशिष्ट्यमित्यर्थः। प्रकृते तु एकत्र कर्तृत्वादपरत्र कर्मत्वात्तदभावः। प्रत्यासत्त्या सरूपसमुदायार्थान्वयिन्या एकविभक्तेरेव ग्रहणमिति गूढाकूतम्। **शक्यत्वेनेति**। मूलोक्त-

सरला।

**नलोपाद्यसिद्धिरिति**। 'राजमन्त्रिणौ' इत्यादाविति शेषः। **एककारकावेश एवेति**। उपलक्ष-

कर्मणोरेकशेषापत्तेः । देवदेव इत्यादावतिप्रसङ्गाच्च । प्रत्युत आवृत्त्या उभयविशेषणत्वे भिक्षाणां समूहो भैक्षमिति न सिद्ध्येत् । तथा हि, भिक्षा भिक्षा भिक्षा आम् अ इति स्थिते "अन्तरङ्गानपि विधीन् बहिरङ्गः" इति लुकि कृते विभ-

शब्दरत्नम् ।

भावः । नन्वत्रापि लुकि विभक्तिपरत्वाभाव इत्यरुचेराह– देवदेव इति । असहविवक्षायामप्येकशेषे तत्पुरुषादिविषयेऽपि तदापत्तिरिति भावः । तत्रापि समुदायादेकविभक्तेः सत्त्वात् । नन्वनेकबोधकैकभिक्षाशब्दादपि भैक्षसिद्धिरस्तीत्यत आह—तथा हीति ।

भैरवी ।

नचात्र यद्येकशेषस्तदा द्वयोर्गौणमुख्यकर्मणोरेकद्वितीयया कथमभिधानमिति वाच्यम्, तन्त्रेण तस्योपपत्तेः । आवश्यकमिति । तस्य लाभस्तु "तिष्य" इतिसूत्राद्द्वन्द्वइत्यस्यानुवृत्त्या भविष्यति । एवञ्चावृत्तिर्व्यर्थैवेति निष्कर्षः । अत्र–पयःपयो नयतीत्यत्र । लुकीति । उभयोर्नपुंसकत्वादित्यादिः । नलुमतेत्यस्यानित्यत्वेनाप्रवृत्तिस्तु प्रामाणिकप्रयोगस्थल एवेति तात्पर्यम् । नन्वत्रापीत्यादि वदता द्वन्द्वे इति नानुवर्तनीयमिति ध्वनितमिति तद्रीत्यैवातिप्रसङ्गो देवदेव इत्यत्रेत्याह–असहेति । तत्पुरुषादीति । देवस्य देवो देवदेव इत्यर्थकतत्पुरुषादीत्यर्थः । आदिना इदितो नुमिति बहुव्रीहेः सङ्ग्रहः । तत्रापि–तत्पुरुषादिघटितवाक्येऽपि । खण्डनकृदुक्तिं खण्डयितुं तदुक्तिमनुवदति–नन्वनेकेत्यादि । नचानयैव रीत्या सर्वत्र निर्वाहे एकशेषारम्भस्य तन्मते वैयर्थ्यमिति वाच्यम्, सर्वत्रैकशब्देनैवानेकार्थो बोधनीय इति नियमाभावात् ।। घटघटावि-

भावप्रकाश ।

रीत्या समूहस्य प्रातिपदिकत्वादिति भावः । नन्वत्रैकशेषे विरुद्धयोर्गौणमुख्यकर्मणोः समुदायादुत्पन्नद्वितीयया कथं प्रतीतिरिति चेन्न । तन्त्रेणोपपत्तेः । आवश्यकमिति । यथा तल्लाभस्तथोक्तम् । एतेनात्र पक्षे एकविभक्तावित्येवास्य सहविवक्षायां प्रवृत्तिरित्यर्थतात्पर्यग्राहकमिति भ्रान्तोक्तं पयः पयो नयतीत्यादौ विरुद्धत्वाद्विभक्तिभेदावश्यंभावेनैकविभक्तिपरत्वाभावेनैवातिप्रसंगनिरासे सहविवक्षायाः फलाभावेन पयः पयो जरयतीत्यादावतिप्रसंगभंगाय तस्य तद्विशेषणत्वावश्यकत्वम् । अत एवैकग्रहणमपि सार्थकम् । अन्यथा विभक्ताविल्येव ब्रूयात् । एकग्रहणादेव च सहविवक्षायामित्यप्यर्थो लभ्यते । अन्यथा ज्ञापकान्तरमनुसर्त्तव्यं स्यादिति रत्नाकरोक्तमपास्तम् । तथा चोक्तफलद्वयस्य तयैव सिद्धे तदर्थमेव । अत एव सारूप्ये उपलक्षकत्वमेव भगवता समाश्रितम् । एकग्रहणं तु व्यर्थमेवेत्युक्तं प्राक् । तथा चैतत्पक्षस्योक्तिसंभवाभाव इति परमनिष्कर्षः । लुकीति । "न लुमता" इत्यस्यानित्यत्वं तु क्वाचित्कं प्रामाणिकम्, न तु सर्वत्रेति भावः । अभाव इति । एवं चावृत्त्यैव निर्वाहे साऽनावश्यकीति भावः । तदाह—असहेति । आदिना "इदितो नुम्" इत्यत्र बहुव्रीहिपरिग्रहः । सत्त्वादिति । अग्रे 'इति भावः' इति पाठः । तदापत्तिरित्यग्रे तु लेखकप्रमादात् । खण्डनकृदुक्तयुक्तिं खण्डयितुमनुवदति—नन्वनेकेति । इत्थं हि तदाकूतम् । एवमङ्गीकारे एकशेषशास्त्रानर्थक्यं तु न, एकेनैवानेके बोधनीया इत्यनियमात्पाक्षिकघटघटावित्याद्यापत्तिनिवृत्त्यर्थत्वात् । नचैवं रीत्या अपि अनिष्टमस्त्येवेति वाच्यम् । अनभिधानादव्यविकन्यायेनैतद्विषयेऽणाद्यनुत्पत्तेः स्वीकारात् । अनभिधाने चोक्तानन्यगतेरेव बीजत्वादिति । पदस्य विभज्यान्वाख्याने इदम् । आबन्तसमूहस्य चाप्रत्ययान्तत्वात्प्रातिपदिकत्वम् । "स्त्रीप्रत्यये चानुप" इति तु तत्त्वेन तद्व्याप्यधर्मेण वा स्त्रीप्रत्ययग्रहणे इति बोध्यम् । नन्वेवमपि अन्त्यटापि प्रत्ययत्वबुध्याऽऽद्यभिक्षाशब्दे प्रकृतित्वबुध्या "स्त्रीप्रत्यये च" इति निषेधेन वा समूहस्य तदादितदन्तत्वादाबन्तत्वादेव स्वाद्युत्पत्तिरस्तु किं प्रातिपदिकत्वेन ? नच लिङ्गविशिष्टपरिभाषया निर्वाहः, अन्त्यटाप्प्राग्वर्त्तिक्षान्तसमूहे तत्त्वस्यादृष्टत्वात् इति चेन्न । एवं टाप्ग्रहणावश्यकत्वे तत्परिभाषयासिद्धे ङ्याप्ग्रहणान्यार्थत्वपरभाष्यविरोधापत्तेरिति दिक् ।

सरला ।

णमेतत् एकरूपावच्छिन्नस्य एकरूपावच्छिन्ने एकरूपसंसर्गेणान्वय इत्यस्यैति बोध्यम् । असहविवक्षा-

क्तिपरत्वाभावादेकशेषो न स्यात्। लुप्ते प्रत्ययलक्षणाभावात्। किं च रामावि-त्यादौ परत्वान्नित्यत्वाच्च "वृद्धिरेचि" इत्येकादेशे कृते विभक्तिपरत्वाभावादेक-

शब्दरत्नम्।

त्यादि। एकशेषारम्भे एकशेषं विना तादृशस्य ज्ञानासम्भव इति भावः। विभक्तिप-रत्वाभावादिति। परत्वान्नित्यत्वाच्चादिवृद्धौ सारूप्याभावाच्चेत्यपि बोध्यम्। अवि-रविकन्यायेन समाधानं तु लक्षणैकचक्षुष्कैर्दुर्ज्ञेयम्। न च समर्थग्रहणेन परिनिष्ठितप्रातिपदि-कात्तद्धितोत्पत्तेः पूर्वमेकशेषे पश्चात्तद्धित इति वाच्यम्। "प्रातिपदिकाधिकारात्किं तत्स-मर्थं कृतवर्णानुपूर्वीकम्" इति भाष्यात्प्रातिपदिकसम्बन्धिवर्णमात्राश्रयतत्सम्बन्धिवर्णनिमि-

भैरवी।

त्यादिपाक्षिकप्राप्तिविषयानिष्टवारणाय तदारम्भात्। तदुक्तिं खण्डयति—एकशेषारम्भ इति। नचानेकभिक्षाशब्दस्य "स्त्रीप्रत्यये चानुपसर्जनेन" इति परिभाषया प्रत्ययान्तत्वेन कथं समु-दायादामिति वाच्यम्, स्त्रीप्रत्ययमात्रग्रहणे तस्याः परिभाषायाः प्रवृत्तेरुक्तत्वात्। तादृशस्य—अनेकबोधकस्यैकस्य। परोक्तं खण्डयति—नचेति। समर्थग्रहणं हि परिनिष्ठितपरम्। तच्चाप्र-वृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वरूपम्। इदञ्च यथा सन्धिकार्यात्प्राङ्नास्ति तथैकशेषविधायकशास्त्रस्य प्रवृत्तेः प्रागपि नास्तीति तद्भावः।

कृतसन्धिकार्यत्वमेवात्र परिनिष्ठितत्वम्भाष्यकारसम्मतमित्याशयेनाह—प्रातिपदिकाधि-कारेत्यादिना। प्रातिपदिकेत्यादि कर्मधारयः कार्यस्य विशेषणम्, एतादृशात्परिनिष्ठितात् तद्धितोत्पत्तिश्च सुत्थितिर्वैक्षमाणिरित्यादौ प्रसिद्धैव। वर्णमात्राश्रयेत्यनेन निमित्तकार्यिणो-रुभयोरपि प्रातिपदिकसम्बन्धित्वम्बोधितम्। "विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः" इति वा-

भावप्रकाश।

तादृशस्य—अनेकबोधकैकभिक्षाशब्दस्य। अन्यथैकशेषप्रकरणवैयर्थ्यापत्तिः अव्यविकन्यायेन समाधानं तु लक्षणैकचक्षुष्कैर्दुर्ज्ञेयम्। किंचानभिधानाङ्गीकारे सूत्रानर्थक्यापत्तिरिति भावः। रत्नाकरोक्तं दूषणं खण्ड-यति—नचेति। अयं भावः, तद्धितविधौ समर्थानामित्याद्यधिकारेण समर्थप्रातिपदिकप्रकृतिकसुबन्ता-त्तद्धित इत्यर्थः। तत्र सामर्थ्यं च न कृतसन्धिकार्यत्वमात्रं किंतु लौकिकप्रयोगप्रयोजकीभूतकार्यत्वम्। तथा च वैक्षमाणिरित्यादौ कृतसन्धेस्तद्धितवदेवैकशेषं विना तदप्राप्त्या कथमत्र पक्षे भैक्षासिद्धिः। अकृतेत्यस्यैव तद्व्याप्यभूतान्तरङ्गानपीत्यस्यापि समर्थपदेन बाध्यतौचित्यात्। नचैवमौपगवाद्यसिद्धिः। सामर्थ्यं प्राति-पदिकस्य विशेषणं न तु सुबन्तस्येत्यभ्युपगमात्। नचाश्विमानिति निर्देशेन लुक्प्राग्विभक्तिनिमित्तकका-र्यमात्राभावज्ञापनात्कथमेकशेषः अन्यथा 'किमीयं' 'युष्मदीयम्' इत्यादौ कद्युवाद्यादेशापत्तिरिति वाच्यम्। प्रत्ययोत्तरेत्यत्र प्रत्ययपदेन तादृग्विभक्तिप्रयुक्तभावरूपादेशाभावज्ञापनात्। अथ त्वदति मदतीत्यत्राचार-क्विप्यन्तवर्त्तिविभक्त्यभावेन त्वमादेशार्थं, प्रातिपदिकादेव णिजिति पक्षे त्वादयतीत्याद्यर्थं च तदिति चेत्त-र्ह्यश्विमानिति निर्देश एव तादृगर्थे लिङ्गमिति गृहाणेति। अधिकारात् भाष्याच्चेति पाठः। तत्–प्रातिप-

सरला।

यामप्येकशेषे इति। 'द्वन्द्वे' इत्यस्याननुवृत्तौ इत्यादि। अविरविकन्यायेनेति। अविअविकशब्द-योर्यो न्यायस्तेनेत्यर्थः। स चेत्थम्–"अवेर्मांसमिति विगृह्य अविकशब्दादुत्पत्तिर्भवति आविकमिति" इति "द्विगोर्लुगनपत्ये" इति भाष्ये उक्तः। अविशब्दः स्वार्थनिरूपितसमूहार्थेऽपि "अवेः कः" इति स्वार्थि-ककप्रत्ययान्तात् अविकशब्दादेवाण्प्रत्ययमुत्पादयति न तु स्वस्मात्। ततश्च 'आविकम्' इत्येव भवति न तु 'आवम्' इति, अनभिधानादिति। तेनैव न्यायेन प्रकृतेऽपि अनेकार्थभिक्षाशब्दादेवाण् प्रत्ययो भवति न तु एकशेषनिष्पन्नभिक्षाशब्दाद् अनभिधानादिति समाधानं लक्ष्यैकचक्षुषामेव दृष्ट्या सम्भवति, न तु लक्षणैकचक्षुषां, दुर्ज्ञेयत्वादिति भावः। 'अविर्' इति प्रथमैकवचनान्तस्यानुकरणम्, ततोऽनुकार्येणार्थेना-र्थवत्त्वाद् या सुविभक्तिरुत्पद्यते तस्या द्वन्द्वसमासनिमित्तो लुक् न तु पूर्वस्या अनुकरणत्वेन सुप्त्वाभा-

शेषो न स्यात् । उभयत आश्रयणे ऽन्तादिवद्भावाभावादिति दिक् ।

यत्तु प्राचा व्याख्यात्रा पक्षान्तरमुपन्यस्तं—सविभक्तिकानामेकशेष इति । तन्न । निवर्तमानानां विभक्त्या सहैव निवृत्तावपि शिष्यमाणे एकवचनश्रवणप्रसङ्गात् ।

शब्दरत्नम् ।

त्तकायण परिनिष्ठितत्वस्यैवाश्रयणात् । अत एव "अश्विमानण्"इति सङ्गच्छते । अन्यथा प्रकृत्यंशे दीर्घश्रवणं स्यात् । उभयत इति । विभक्तौ परतो यतः प्रत्ययविधिल्तस्यैक

भैरवी ।

तिकेऽकृतसन्धेरित्यत एव चरितार्थम् । अत एव—निमित्तकार्यिणोरुभयोरपि प्रातिपदिकसम्बन्धित्वाश्रयणादेव । दीर्घश्रवणमिति । नान्तलक्षणदीर्घश्रवणमित्यर्थः।। प्रकृतो दीर्घस्तु न प्रातिपदिकसम्बन्धिवर्णनिमित्तकः, किन्तु सर्वनामस्थाननिमित्तकः । एतेन विभक्तिनिमित्तकैकशेषस्य भवत्सम्मतस्याप्रवृत्तावपि न परिनिष्ठितत्वहानिरिति ध्वनितम् । अत एव 'विश्वौह आगतं विश्ववाड्रूप्यम्' इति भाष्यप्रयोगस्याप्युपपत्तिः । मूले न स्यादिति । एकादेशे कृते परादिवद्भावमात्राश्रयणेऽसारूप्यादेकशेषाप्रवृत्तिरित्यपि बोध्यम् । उभयत आश्रयणं प्रकटयति–विभक्ताविति । ननु न वयम् "अन्तादिवच्च"इति सूत्रस्य प्रवृत्तिं स्वीकुर्मः, किन्तु "अचः

भावप्रकाश ।

दिकम्। कृतबहुव्रीहिणाऽऽश्रयान्तेन निमित्तान्तेन च कार्यशब्दस्य कर्मधारयः । मात्रपदेन निमित्तकार्यिणोरत्र प्रातिपदिकसंबन्धित्वसूचनद्वारा तदन्यव्यावृत्तिः । अस्ति च सुस्थितवीक्षमाणादौ तत्संबन्धिवर्णाश्रयकत्वं तत्सम्बन्धिवर्णनिमित्तकत्वं च सवर्णदीर्घादौ । "विष्वग्"इति वार्त्तिके ऽकृतसन्धेरित्यप्यत्र गमकं बोध्यम् । एवेनाताद्दृशैकशेषव्यावृत्तिः । अतएवेति । कार्यिनिमित्तयोः प्रातिपदिकसम्बन्धित्वविवक्षणादेव । अश्विमच्छब्दादुपधानो मन्त्र आसामिष्टकानामित्यर्थे ऽण् स्यान्मतोर्लुक् च । यस्मिन्मन्त्रे अश्विन्शब्दोऽस्ति तेनोपधेयास्विष्टकास्विति यावत्। "इनण्य"इति प्रकृतिभावे आदिवृद्धौ ङीपि आश्विनीरुपदधातीति लक्ष्यम् । तत्र नान्तलक्षणदीर्घस्य प्रातिपदिकसम्बन्ध्युपधारूपवर्णाश्रयत्वेऽपि तत्सम्बन्धिवर्णानिमित्तकत्वात्तं विनाऽसामर्थ्याभावेऽपि मतुपि निर्देशसंगतिरन्यथा त्वद्रीत्या तं विनाऽसमर्थादश्विन्शब्दान्मतोरनुत्पत्त्या तदसङ्गतिस्तदाह–अन्यथेति । मद्रीत्यनङ्गीकारे । तस्मात्समर्थग्रहणेन विभक्तिनिमित्तककार्यस्य पूर्वं प्रवृत्तिरित्ययुक्तम् । अत एव विश्वौह आगतं विश्ववाड्रूप्यमित्यादिः "विभाषा पूर्वाह्ण"इतिसूत्रस्थभाष्यप्रयोगः संगच्छते । एवं च भैक्षसिद्ध्यर्थं तथात्वं कृत्वाऽन्यत्र दोषनिरासाय तन्निर्देशस्य विशेषापेक्षज्ञापकताऽयुक्तोक्तभाष्यादेवेति भावः । मूले परत्वाभावादिति । परत्वान्नित्यत्वाच्चादिवृद्धौ सारूप्याभावाच्चेत्यपि बोध्यम् । प्रकाशकृदुक्तं परिष्कृतं दूषणमाह—किंचेति । मूले परत्वाभावादिति । असारूप्याच्चेत्यपि बोध्यम् । ननु विभक्तेराश्रयणेऽपि प्रकृतेरनाश्रयणात्कथमुभयत आश्रयणमत आह—विभक्ताविति ।

सरला ।

वात् 'अस्यवामीयम्' इत्यत्र षष्ठीलुगभाववत् । अव्यविकन्यायेनेति पाठस्तु सुवचः । दीर्घश्रवणं स्यादिति । "समर्थानां प्रथमाद्वा" इति सूत्रे समर्थग्रहणेन परिनिष्ठितमुच्यते । तच्च प्रातिपदिकसम्बन्धिवर्णमात्रस्थानिकं प्रातिपदिकसम्बन्धिवर्णमात्रनिमित्तकं च यत्कार्यं तादृशकार्येणैव कृतकार्यकत्वम् । 'अश्विमान्' इत्यत्र अश्विन्शब्दान्मतुप्प्रत्ययचिकीर्षायां प्रथमैकवचनसुप्रत्ययनिमित्तकस्य 'सर्वनामस्थाने चासम्बुद्धौ" इति दीर्घस्य पूर्वमप्रवृत्तिस्तस्य तत्सम्बन्धिवर्णमात्रनिमित्तकत्वाभावात् । तदनुक्तौ तु दीर्घस्यापि प्रातिपदिकसम्बन्धिवर्णमात्रस्थानिकत्वेन पूर्वं प्रवृत्तौ तस्य प्रयोगे श्रवणापत्तिः । नच "अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधते" इति परिभाषया अन्तरङ्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्या यत्र बहिरङ्गेण लुकाऽन्तरङ्गनिमित्तविनाशसम्भावना तत्र पूर्वमन्तरङ्गशास्त्रं न प्रवर्तते इत्यर्थिकया सर्वनामस्थानस्य लुका विनाशसम्भावनया पूर्वं दीर्घाप्रवृत्तिरिति वाच्यम् , समर्थग्रहणेन 'सौस्थितिः' इत्या-

शब्दरत्नम् ।

**शेष इत्यर्थात्तदाश्रयणमिति भावः। "अचः परस्मिन्" इति स्थानिवत्त्वं तु न। लोकसिद्धतन्त्रानुवादकत्वादस्य शास्त्रस्यानुवादसामर्थ्यादेव द्वन्द्वनिवर्तकस्य शास्त्रीयविधित्वाभावात्। अनया अपि रीत्याऽन्तवद्भावाप्रवृत्तिरित्यन्यत्। यदि त्वेकदेशविकृतन्याये "प्राग्दीव्यतोऽण्" इतिसूत्रस्थभाष्यप्रामाण्यात्स्थानषष्ठ्यबोधितविकारस्यापि ग्रहणम-**

भैरवी ।

**परस्मिन्"इति सूत्रस्य प्रवृत्तिं वदामः इत्यत आह**–अचः परस्मिन्नितीति। अस्य शास्त्रस्य–**एकशेषशास्त्रस्य**। विधित्वाभावादिति। **अपूर्वविधित्वाभावादित्यर्थः**। अनयापि रीत्या–**शास्त्रीयविधित्वाभावात्मकयुक्त्याऽपि। अपिना मूलोक्तरीतिसङ्ग्रहः। मूलोक्तदिक्पदसूचितमर्थम्प्रकटयति**—यदि त्वित्यादिना। सूत्रस्थभाष्येति। **तत्र हि दीव्यत इति दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमित्युक्त्वा "किमर्थं विकृतनिर्देशः क्रियते ? एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा एकदेशविकृतमनन्यवत्"इत्युक्तम्।** भाष्यप्रामाण्यात्–**भाष्यसंवादात्।** अशास्त्रीयस्य चेति

भावप्रकाश ।

प्रत्ययेन प्रकृतेराक्षेपेण प्रत्ययग्रहणपरिभाषया चैतदर्थलाभ इति भावः। एतेन किंचेत्यादि मूलमनूद्य तत्र, अकृतव्यूहेत्यनेन संध्यप्रवृत्तेः, एकादेशस्य परादिवत्त्वेन ग्रहणाद्विभक्तिपरत्वानपायाच्च। नह्येकशेषप्रवृत्तिवेलायामपि सारूप्यं तन्त्रम्, फलाभावात्। मातृमातारावित्यत्रातिप्रसङ्गस्य वाक्यान्तरेणैव वारणात्। नच विभक्तौ परतः प्रातिपदिकत्वसम्पत्तये पूर्वान्तिवत्त्वमप्यावश्यकमित्युभयत आश्रयोऽस्त्येवेति वाच्यम्। प्रातिपदिकस्येहाप्रकृतत्वात्। न च "ह्रस्वो नपुंसके" इत्यतस्तत्प्रकृतमिति वाच्यम्। बहुभिः सूत्रैर्विच्छिन्नत्वात्। किं च हरितशब्दस्य "वर्णादनुदात्ता"इति ङीब्नकारयोर्हरिणी, हरिणशब्दात् ङीष्यपि हरिणीत्येव भवति, तयोः सहोक्तौ हरिण्याविति न स्यात्, अप्रातिपदिकत्वात् ङ्यन्तयोः सारूप्येऽपि प्रातिपदिकत्वावस्थायामसारूप्याच्च। नच लिङ्गविशिष्टपरिभाषया निस्तारः। विभक्तौ लिङ्गविशिष्टाग्रहणात्। अतः प्रातिपदिकानुवृत्तिर्दुष्टा दुर्लभा चेति रत्नाकरोक्तमपास्तम्। मातृमातारावित्यर्थं वचनान्तराङ्गीकारे गौरवाच्च। अकृतेत्युल्लेखस्य भ्रान्तिमूलकत्वाच्चेति दिक्। यत्तु खण्डनकृत् एकादेशस्य "अचः पर"इति स्थानिवत्त्वेन विभक्तिपरत्वात्प्रातिपदिकानां किञ्चेत्यादिदोषस्याप्यसम्भवः एकशेषो हीतरनिवृत्तिपूर्वकमवस्थानम्। तत्रावस्थानस्य सिद्धत्वादितरनिवृत्तेर्विधेयत्वादेकशेषविधेः पूर्वविधित्वान्न कश्चित् क्षुद्रोपद्रव इति। तत् खण्डयति—**अचः परस्मिन्नितीति। अस्य शास्त्रस्य**—सरूपसूत्रस्य। **विधित्वाभावादिति।** अपूर्वविधेयकत्वाभावादित्यर्थः। **अनयाऽपि रीत्येति।** शास्त्रीयविधित्वाभावयुक्त्यापीत्यर्थः। अपिर्मूलोक्तयुक्तिसमुच्चायकः। अन्तवत्त्वस्थानिवत्त्वाभ्यां शास्त्रीयकार्यातिदेश इति भावः। दिक्पदसूचितमाह—**यदित्वित्यादि**। तोरग्रे यदेति शेषः। **न्याये**–आदेशपदबोधिते। **भाष्येति**। तत्र हि दीव्यति शब्दैकदेशदीव्यच्छब्दानुकरणमिदमित्युक्त्वा "किमर्थं विकृतनिर्देशः। एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा एकदेशविकृतमनन्यवदिति" इत्युक्तम्। **स्यापीति**। अशास्त्रीयविकारस्यापीत्यर्थः।

सरला ।

दावकृतव्यूहपरिभाषाबाधवदत्र 'अन्तरङ्गानपि' इति परिभाषाया अपि बाधात्। **अन्तवद्भावाप्रवृत्तिरिति**। यथा "अचः परस्मिन्" इत्यतिदेशस्य शास्त्रीयकार्ये कर्तव्ये प्रवृत्तिस्तथैव "अन्तादिवच्च" इत्यस्याप्यतिदेशशास्त्रत्वाच्छास्त्रीयविधौ कर्तव्ये एव प्रवृत्तिस्वीकारादत्र शास्त्रीयविधित्वाभावात्तदप्रवृत्तिरिति भावः।

**स्थानषष्ठ्यबोधितविकारस्यापीति**। यद्यपि ऋत्लकसूत्रे भाष्ये "एकदेशविकृतमनन्यवत् षष्ठीनिर्दिष्टस्य" इति वार्तिके 'षष्ठीनिर्दिष्टस्य' इत्युक्तया "राज्ञः क च" "राजकीयम्" इत्यादौ राज्ञ इतिपञ्चमीनिर्देशेन तत्र न्यायस्य न प्रवृत्तिरित्युक्तम्, तथापि तत्रैव "अथवा पुनरस्त्वविशेषेण" इत्युक्त्या पूर्वभाष्यस्यैकदेश्युक्तित्वावगमात् "प्राग्दीव्यतोऽण्" इति सूत्रस्थदीव्यतिशब्दैकदेशदीव्यच्छब्दरूपवि-

शब्दरत्नम् ।

शास्त्रीयस्य च तेनातिदेशस्तदा मान्तस्य तेन न्यायेन तत्प्रकृतितया औ इत्यस्य च प्रत्ययत्वेनादोषः । अत एव तस्य पदत्वसिद्धिः । अत एव आयसावित्यत्रैकादेशे कृते नुममाशङ्क्य "अचः परस्मिन्" इति स्थानिवत्त्वेन परिहृतं भाष्ये इत्युच्यते तर्हि वैरूप्यादेकशेषो न स्यात् । "विरूपाणाम्" इत्यनेन तत्साधने तु न दोष इत्यलम् ।

भरवी ।

चाच्छास्त्रीयपरिग्रहः । अदोष इति । मूलोक्तकिञ्चेत्याद्युक्तदोषाभावः । अत एव—उक्तन्यायस्याशास्त्रीयविकारेऽपि प्रवृत्तिस्वीकारादेव । तस्य—रामावित्यादेः । पदत्वेति । कार्यकालपक्षेऽपीत्यादिः । अन्यथा "सुप्तिङन्तम्पदम्" इति सूत्रेऽपि यस्मात्प्रत्ययविधिस्तदादीत्यस्यानुवृत्त्योभयत आश्रयणस्य सत्त्वेन पदत्वन्न स्यादिति भावः । अत एवेति । उक्तोऽर्थः । आयसाविति । श्रेयस्शब्दादपत्येऽणि "देविकाशिंशपा" इति सूत्रेणादेराकारेऽण्णन्तात् द्विवचने परादिवद्भावात्सर्वनामस्थानपरत्वम् । आशङ्क्येति । यद्यशास्त्रीयविकारे तस्य न्यायस्य प्रवृत्तिर्न स्यात्तदाऽत्राऽऽत्वस्य शास्त्रबोध्यत्वेऽपि स्थानिन एकारस्य या निवृत्तिस्तस्याः शास्त्रबोध्यत्वाभावात्सर्वनामस्थानस्य यतो विधानन्तत्त्वस्याभावेन नुमः प्राप्तेरेवाभावेन शङ्काया एवासम्भवः स्यादिति भावः । न स्यादिति । रामावित्यादावित्यादिः, परस्य हलन्तत्वादिति शेषः । न दोष इति । किञ्चेत्युक्तदोषो नेत्यर्थः । नच "विरूपाणामपि" इति वचनस्य समानार्थविषयकत्वम्प्रकृते तु तदभाव इति

भावप्रकाश ।

अपिना शास्त्रीयविकारस्य चात् शास्त्रीयकार्यस्य । एतेनायं न्यायः शास्त्रीयकार्ये एव शास्त्रीयविकार एवेत्यपास्तम् । अदोष इति । किंचेत्याद्युक्तदोषाभाव इत्यर्थः । अत एवेति । न्यायस्य तथाऽर्थकत्वादेवेत्यर्थः । एवमग्रेऽपि । तस्य—रामावित्यादेः । पदत्वेति । कार्यकालपक्षेऽपीतिशेषः । अन्यथा "सुप्तिङन्तम्" इत्यत्र वाक्यसंज्ञावारणाय यस्मात्प्रत्ययविधिरित्यनुवृत्तेरुक्तत्वेन परादिवत्त्वेन सुप्त्ववत् पूर्वान्तवत्त्वेन तत्प्रकृतित्वानयने उभयत आश्रयणात्पदत्वं न स्यादिति भावः । विकारविशिष्टे प्रत्ययान्तत्वस्यैव प्रत्यभिज्ञानेन तत्पूर्वभागे प्रकृतित्वप्रत्यभिज्ञासम्भवादिति तात्पर्यम् । भाष्ये इति । अन्यथोक्तरीत्या सुप्त्वतत्प्रकृतित्वयोरेवाभावेन नुम एवाप्राप्त्या तच्छङ्कासमाधानयोर्निर्दलत्वापत्तिरिति भावः । न स्यादिति । रामावित्यत्रैवेति शेषः । एकस्य हलन्तत्वादिति भावः । तत्साधने त्विति । तत्रैकशेषसाधने त्वित्यर्थः । ननु समानार्थत्वाभावात्कथं तेन सिद्धिरिति चेदयं भावः, विरूपाणामिति योगो विभज्यते, सरूपाणामिति सर्वमनुवर्त्तते; सर्वसारूप्ये सति किञ्चिद्वैरूप्यवतामेकविभक्तौ एकशेष इत्यर्थः । अपिः सर्वोपाधिव्यभिचारार्थः । भाष्ये "एकार्थानामपि विरूपाणाम्" इति पाठात् । यद्वा समानार्थानां समानप्रवृत्तिनिमित्तकानाम् । स्पष्टं चेदमत्रैव कैयटादाविति केचित् । वस्तुतस्तु तुना ऽत्रारुचिर्ध्वनिता, तदभावात्तदप्राप्तिरूपा । नञ्काकाम् । तथा च तदा न दोषइति न अपि तु स दोष एवेति बोध्यम् । तेन नाव्याप्त्यतिव्याप्ती इति । न दोष इति । किंचेत्यादिदोषो नेत्यर्थः । भैक्षासिद्धिर्दैवदेव इत्याद्यर्थं सहविवक्षाया आवश्यकत्वेन पयः पय इत्यादिव्यावृत्त्या मातृमातारावित्याद्यर्थं वचनारम्भे आवृत्तौ वा गौरवं चेति तु दोषद्वयमस्त्येव । आवृत्तिपक्षे दोषान्तरमपि प्रागुक्तम् । किञ्चावयवेभ्यः सुपो दुर्वारत्वेनैतत्पक्षासम्भवः समुदायाद्विभक्त्याऽवयवानां समुदायघटकतया संख्यान्वयरूपानुग्रहसम्भवेऽपि विभक्तिसहितप्रयोगरूपानुग्रहस्यावयवानां पदत्वादिरूपोपकारस्य चासम्पादनेनैकाज्द्विर्वचनन्यायाप्रवृत्तेः । किंच विशेष्यविभक्त्या विशेषणीयसंख्यादीनामुक्तावपि विशेषणाद्यथा साधुत्वाय विभक्तिस्तथाऽत्रापि सुवचत्वात् । तदाह—अलमिति ।

सरला ।

कृतनिर्देशज्ञापिततया एकदेशविकृतन्यायस्य ज्ञापकसाजात्याच्च स्थानषष्ठ्यबोधितविकारेऽपि तस्य न्यायस्य प्रवृत्तिर्भवत्येवेति भावः । अशास्त्रीयस्येति । तस्य न्यायस्य च्छिन्नपुच्छे शुनि श्वत्वव्यवहारेण लोकसिद्धत्वादिति शेषः । तत्साधने त्विति । तुनाऽरुचिः सूचिता "विरूपाणामपि" इति सूत्रे समानार्थानामित्युक्तेस्तस्यात्राप्रवृत्तेः ।

अथोच्येत युगपदधिकरणवचनतायां द्विवचनबहुवचनान्तानामेकशेषः। द्वन्द्वोऽप्येवम्। तथाहि, अजहत्स्वार्थायां वृत्तौ एकैकमनेकार्थाभिधायि परस्परसमभिव्याहारात्। तथा च अलौकिके द्वन्द्वैकशेषयोः प्रक्रियावाक्ये द्विव-

शब्दरत्नम्।

**युगपदधिकरणेति**। युगपदधिकरणानां द्रव्याणां वचनं यैः पदैस्तद्भाव इत्यर्थः स्तदाह—**एकैकमित्यादि**। **अलौकिके इति**। तत्रैव द्वन्द्वादिप्रवृत्तिसत्त्वात् तत्रापि तत्कल्पनादिति भावः। **रामकृष्णावित्यादौ** "विरूपाणामपि" इत्येकशेषस्तु न। द्वन्द्वविधानसामर्थ्येन तत्प्राक्कालिकस्यैव समानार्थत्वस्य तत्र निमित्तत्वात्। एवं चैकस्य

भैरवी।

कथन्तस्य प्रवृत्तिरिति वाच्यम्, तस्मिन्वचनेऽपिः सर्वोपाधिव्यभिचारार्थस्तथा चानुपूर्वीभेदेऽप्येकार्थत्वे यथाप्रवृत्तिस्तथाऽसारूप्ये विशेष्यार्थभेदेऽपि प्रवृत्तिनिमित्तस्यैकत्वेऽपि प्रवृत्तिः, अस्ति चात्र योगिकर्तृकध्यानकर्मत्वम्प्रवृत्तिनिमित्तमेकमित्याशयात्। वस्तुतस्तु तुनाऽरुचिर्ध्वनिता, साच सर्वथा यत्र समानार्थत्वन्तत्रैव तस्य वचनस्य प्रवृत्तिरिति प्रकृते तदप्राप्तिरेवेति। नच घटश्च कम्बुग्रीवावांश्चेति सहविवक्षायामेकशेषो न स्यात्, प्रवृत्तिनिमित्तभेदात्कम्बुग्रीवाया अवयवसंस्थानविशेषरूपत्वादितिवाच्यम्। कृतैकशेषाद्यत्र लुप्यमानार्थाभिधानन्तत्रैव प्रवृत्तेरङ्गीकारेण प्रकृते तदप्रवृत्तेरिष्टत्वात्, उक्तसहविवक्षाया असम्भवेन द्वन्द्वस्याप्रसक्तेश्च। अलमिति। अनेनावयवेभ्यः सुबुत्पत्तेर्दुर्वारत्वेन समुदायस्य प्रातिपदिकसंज्ञाया अप्राप्त्या ततः सुपोऽसम्भवे तस्य पक्षस्य सम्भव एव नोपपद्यते। नच समुदायोत्पन्नविभक्त्या ऽवयवानां समुदायघटकतया सङ्ख्यान्वयसम्भवरूपानुग्रहेणावयवेभ्यः सुबुत्पत्तिर्न भविष्यतीति वाच्यम्। अवयवानाम्पदसंज्ञारूपस्य तत्तदुपादानकोत्पत्तिकविभक्तिप्रयोज्यस्योपकारस्य समुदायोत्तरोत्पन्नसुपाऽसम्भवेन प्रत्येकं सुबुत्पत्तेः सम्भवात्। अपिच नीलं घटम्पश्येति वाक्ये घटशब्दादुत्पन्नसुपा नीलपदार्थगतसङ्ख्याकर्मत्वम्प्रतिपाद्यते यद्यपि, तथापि साधुत्वार्थन्नीलेतिप्रातिपदिकादपि सुप् भवति तथात्रापि स्यादिति ध्वनितम्। मूले प्राचाव्याख्यात्रेति। प्रसादकृतेत्यर्थः। द्रव्याणामिति। वर्त्तिपदार्थरूपाणामित्यर्थः। मूले अजहत्स्वार्थायामिति। यत एकैकस्य स्वार्थप्रतिपादकता समभिव्याहृतप्रातिपदिकान्तरार्थप्रतिपादकता चास्तीत्यतः अजहत्स्वार्थत्वव्यवहारः। एवञ्च द्वित्वादिविशिष्टार्थाभिधायकद्विवचनाद्युत्पत्तिर्निर्बाधैवेति भावः। तत्कल्पनादिति। प्रत्येकमनेकार्थाभिधायकत्वस्य कल्पनादित्यर्थः। एतत्पक्षे प्रसक्तातिप्रसङ्गं वारयति—रामकृष्णावित्यादाविति। द्वन्द्वविधानसामर्थ्येनेति। इदमुपलक्षणं समानार्थानामिति विशेषणसामर्थ्यादित्यपि बोध्यम्। तत्प्राक्कालिकस्य—युगपदधिकरणत्ववचनत्वात्प्राक्कालिकस्य। तत्र—वार्तिकप्रवृत्तौ। निमित्तत्वादिति। निमित्तत्वेनाश्रयणादित्यर्थः। मूले जहत्स्वार्थायामिति।

भावप्रकाशः।

मूले प्राचा व्याख्यात्रा—प्रसादकृता। अग्रेप्ययमेव कर्त्ता।

**द्रव्याणां**—वर्त्तिपदार्थानां तैर्युगपत्प्रत्येकं तदभिधाने इति यावत्। **तत्कल्पनादिति**। प्रत्येकमनेकार्थाभिधायित्वकल्पनादित्यर्थः। यथा शत्रादौ द्वितीयादिसामानाधिकरण्यं दृष्ट्वा लकारे तत्कल्पना तद्वदिति भावः। तथा सति रामकृष्णावित्यादौ यथा द्वन्द्वस्तथैकशेषोऽपि स्यादत आह—**रामेति**। **सामर्थ्येनेति**। समानार्थानामिति विशेषणसामर्थ्येन चेत्यपि बोध्यम्। **तत्प्रागिति**। युगपदधिकरणवचनतातः प्रागित्यर्थः। **तत्र**—वार्त्तिके। **निमित्तत्वात्**—तत्त्वेनाश्रयणात्। ननूक्तयुक्त्या द्विवचनादीनामेव प्रवेशेन

सरला।

**तद्भाव इति**। तेषां भावो युगपदधिकरणवचनता, तस्यामित्यर्थः। सर्वाणि वृत्तिविषयपदानि परस्परसमभिव्याहारात्सर्वार्थबोधकानि। तथाच द्वित्वसंख्याविशिष्टार्थबोधकत्वे द्विवचनं बहुत्वसंख्याविशिष्टार्थकत्वे बहुवचनमेव तेभ्यो न त्वेकवचनमिति भावः। **एकशेषस्त्विति**। परस्परसभिव्याहारे

चनबहुवचनयोरेव प्रवेशाद् विभक्त्यन्तानामेकशेष इति पक्षो निर्बाध एवेति । तदपि न, जहत्स्वार्थायां वृत्तौ तदयोगात् । पक्षान्तरेऽपि प्रथमप्रवृत्तस्यैकवचनस्य त्यागायोगात् । अन्यथा षष्ठीतत्पुरुषाद्युच्छेदापत्तेः । तत्रापि पूर्वपदस्य उत्तरपदार्थे उपसंक्रमेण षष्ठ्याद्ययोगात् । तथाच भाष्यम् "सेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा च" इति ।

शब्दरत्नम् ।

विभक्त्यन्तस्य निवृत्तावपरस्य तद्विशिष्टस्य श्रवणमिति भावः । **पक्षान्तरेऽपीति** । अयं भावः–अलौकिके तत्कल्पनेऽपि प्रत्येकं सुबुत्पत्त्यनन्तरमेव तत्कल्पना, तदनन्तरमेव तत्कल्पकद्वन्द्वैकशेषयोः प्रवृत्तेः । एवं चान्तरङ्गत्वादुत्पन्नैकवचनत्यागेन द्विवचनाद्युत्पत्तौ मानाभाव इति । **उत्तरपदार्थे उपसंक्रमेणेति** । उपसंक्रमश्च तदालिङ्गितस्यैव स्वार्थस्योपस्थितिः । सा च विभक्त्यर्थसम्बन्धाद्यन्तर्भावेणैवेति तस्योक्ततया तदनापत्तौ तदुच्छेद इति भावः । **दुःखा चेति** । वृद्धव्यवहारस्य शब्दार्थनिश्चयहेतुत्वम् । न च प्लक्षशब्दस्य न्यग्रोधाभिधायित्वं वृद्धव्यवहारे दृश्यते । न्यग्रोधशब्देन तल्लाभाच्च न लक्षणाऽपि । प्लक्षन्यग्रोधावित्यादौ बोधावृत्त्यननुभवाच्च । **दुरुपपादा चेति** । न च द्विवचनाद्यनुपपत्तिस्तदुपपादिका । समासस्योद्भूतावयवभेदसमुदायाभिधानशक्तिमत्त्वाद् द्विवचनादि-

भैरवी ।

अस्मिन्पक्षेऽवयवानामनर्थकतया प्रत्येकन्द्विवचनाद्युत्पत्त्यसम्भवः । पक्षान्तरेऽपीति । अजहत्स्वार्थावृत्तिपक्षेऽपीत्यर्थः । प्रथममेकवचनस्य प्रवृत्तौ साधकमाह–अयम्भाव इत्यादिना । तत्कल्पनेऽपि–अनेकार्थाभिधायित्वकल्पनेऽपीत्यर्थः । अनन्तरम्––सुबुत्पत्त्यनन्तरम् । तत्कल्पकेति । युगपदधिकरणताकल्पकेत्यर्थः । एवञ्च–सुबुत्पत्तिकाले तयोरप्रवृत्त्या कल्पकाभावेन तदभावे च । अन्तरङ्गत्वम्–स्वार्थमात्रसापेक्षत्वादन्तरङ्गत्वम् । तदिति । उत्तरपदार्थः । स्वार्थस्य––पूर्वदार्थस्य । तस्य–सम्बन्धस्य । तदनेति । षष्ठ्याद्यनेत्यर्थः । तदुच्छेदः–षष्ठीतत्पुरुषोच्छेदः । दुःखा–दुःखप्रदा झटिति प्रतीतावनुपारोहादोषाक्रान्तत्वाच्च । एतदेवाह–वृद्धव्यवहारेति । अस्य व्याकरणादिभ्योऽपि प्रथमप्रवृत्त्या प्राधान्यम् । नच–नहि । ननु शक्त्यभावेऽपि लक्षणाऽस्तु? इत्यत आह–न्यग्रोधशब्देनेति । यदि भवत्सम्मतयुगपदधिकरणवचनता स्यात्तदा बोधावृत्तिः स्यात्सापि नास्तीत्याह––प्लक्षन्यग्रोधाविति । दुरुपपादेति । अस्य–दुष्टः निःसारः उपपाद उपपादनं यस्याः सेत्यर्थः । तस्याम्प्रमाणाशङ्कां निरस्यति––नचेति । द्विवचनेति । द्वन्द्वोत्तरद्विवचनेत्यर्थः । अभिधानशक्तिमत्त्वात्–

भावप्रकाश ।

पक्षान्तरेऽपीत्ययुक्तमत आह–अयं भाव इति । तत्कल्पनेति । अनेकार्थाभिधायित्वकल्पनेत्यर्थः । तत्र हेतुमाह–तदनन्तरमिति । सुबुत्पत्त्यनन्तरमित्यर्थः । तत्कल्पकेति । युगपदधिकरणवचनताकल्पकेत्यर्थः । एवंचेति । सुबुत्पत्तिकाले तयोरप्रवृत्त्या कल्पकाभावेन तदभावे नेत्यर्थः । स्वार्थमात्रसापेक्षत्वेन प्रथमोपस्थितत्वादन्तरङ्गत्वम् । सः उत्तरपदार्थः । स्वार्थः–पूर्वपदार्थः । एतेन लक्षणयोच्छेदं साधयन् रत्नाकरः परास्तः, सिद्धान्ते तदभावात् । तस्य–सम्बन्धस्य । तदनेति । षष्ठ्याद्यप्राप्तावित्यर्थः । दुःखत्वं च प्रतीतावनुपारोहादोषाक्रान्तत्वाच्च । तदाह–वृद्धेति । तस्य व्याकरणादितः प्राधान्यादिति भावः । नचेति । न हीत्यर्थः । 'लाभान्न लक्षणापि' इतिपाठः । चपाठे त्वर्थे सः । प्लक्षशब्दस्येति भावः । अपिः शक्तिसमुच्चायकः । दुरुपपादेति । दुष्टं निःसारमुपपादनं यस्याः सा निष्प्रमाणेत्यर्थः । तत्र प्रमाणान्याशङ्क्य खण्डयति–नचेत्यादिना । उद्भूतेति । उद्भूतावयवभेदकसमूहस्याभिधाने प्रतिपादने साम-

सरला ।

उभयोरप्युभयार्थबोधकत्वेन समानार्थकतया तत्प्राप्तिरिति भावः । उक्ततयेति । राज्ञः पुरुषो राजपुरुष

यदपि व्याचख्युः—व्यक्तिपक्षे यावद्व्यक्ति तत्तच्छब्दप्रयोगे प्राप्ते एकस्यैव प्रयोगो यथा स्यादिति सूत्रम्। आकृतिपक्षे तु एकेनैवाकृत्यविनाभूतानेकव्यक्तिलाभादनर्थकमिति। तन्न, व्यक्तिपक्षेऽपि "न ब्राह्मणं हन्यात्" इत्यत्र ब्राह्मणशब्दे-

शब्दरत्नम्।

सिद्ध्या तदनुपपत्तेस्तदुपपादकत्वाभावात्। समुच्चयान्वाचययोः समासस्यासामर्थ्येनैव वारयिष्यमाणतया न तदापत्तिरेतदुपपादिका। न चान्यत्रोपपादयितुमशक्यत्वेऽपि एकशेषे कस्य शेष इत्यत्र विनिगमकाभावात्सर्वेषां सर्वार्थत्वमावश्यकम्। तथा सत्येकशेषस्यैव वैयर्थ्यापत्तेः। तस्मादेकशेषज्ञानोत्तरं शास्त्रवासनावतां तच्छक्तिज्ञानं न तु ततः प्रागपीति न दोषः।

**आकृत्यविनाभूतेति**। नियमेनाकृतिसम्बद्धेत्यर्थः। ब्राह्मणशब्देनैवेतिभावः। नहि

भैरवी।

अभिधानसामर्थ्यवत्त्वादित्यर्थः। ननु समुच्चयान्वाचययोर्द्वन्द्वापत्तिरेवोपपादिका भविष्यतीत्यत आह—समुच्चयेति। नचेति। आवश्यकमित्यत्रास्यान्वयः। अन्यत्र—द्वन्द्वे, "यः शिष्यते" इति न्यायेन कस्यचित्सर्वार्थप्रतिपादनसामर्थ्यवत्त्वं वक्तव्यन्तत्र विनिगमनाविरहात् सर्वेषामेव तथात्वं वक्तव्यमिति भावः। तथासतीति। यद्येकशेषविषये तत्स्वीकारस्तदा एकेनानेकार्थबोधस्यैकशेषं विनापि सिद्धतया तद्वैयर्थ्यमिति भावः। तस्मादिति। एकशेषवैयर्थ्यापत्तेरित्यर्थः। तच्छक्तीति। अनेकार्थाभिधानशक्तीत्यर्थः। ततः—एकशेषात्। न दोषः। नैकशेषवैयर्थ्यापत्तिरूपदोषः। एतेन प्रागेकवचनस्योत्पत्तिर्दुर्वारेति प्रतिपादितम्।

मूले यदपि व्याचख्युरिति। प्रसादकृत इति शेषः। एवकारासङ्गतिमुपपादयन्नाह—ब्राह्मणे-

भावप्रकाश।

र्थ्यवत्त्वादित्यर्थः। तदनुपपत्तेस्तदुपेति पाठः। विशेषणाभावप्रयुक्तोऽत्र विशिष्टाभावः। एवमग्रेऽपि। **एतदिति**। पूर्वोक्तयुगपदधिकरणवचनतेत्यर्थः। **अन्यत्र—द्वन्द्वस्थले**। **विनिगमकाभावादिति**। तथाचेष्टार्थाबोधेन तदनुपपत्तिः सूत्रानर्थक्यं चेति भावः। **तथासतीति**। एकशेषविषये तत्स्वीकारे एकेनैवानेकार्थबोधे सम्पन्नेऽनेकसरूपाणां सहप्रयोगाभावात्तद्वैयर्थ्यमिति भावः। नन्वेवमेकशेषोत्तरमसर्वबोधे इष्टरूपासिद्धिरत आह—**तस्मादिति**। तद्वैयर्थ्यापत्तेरित्यर्थः। **तच्छक्तीति**। अनेकार्थशक्तीत्यर्थः। **ततः**—एकशेषात्। **न दोषः**। न तद्वैयर्थ्यापत्तिः। एवं च ततः प्रागेकवचनोत्पत्तिर्दुर्वारेति स्पष्टं "चार्थे" इत्यत्र भाष्यकैयटयोरिति स पक्षोऽयुक्त एव। किंच भैक्षासिद्धेस्तदवस्थत्वात्। यद्यपि भिक्षा आम् भिक्षा आम् भिक्षा आमिति समुदायस्य प्रातिपदिकत्वपर्याप्त्यधिकरणप्रकृतिकसुबन्तत्वपर्याप्त्यधिकरणत्वाभावान्न ततो ऽण्प्राप्तिरिति कैयटस्तथापि तदवयवादेकस्मात्तस्य दुर्वारत्वेन तत्र कृते परत्वादादिवृद्धौ वैरूप्यादेकशेषाप्रसक्तेः। विरूपाणामपीत्यनेन तत्सिद्धावपि विनिगमनाविरहात्प्रत्येकमुत्पत्तावण्त्रये कदाचित्पूर्वयोर्निवृत्तावभैक्षमित्यादेरप्यापत्त्या नियतभैक्षासिद्धेस्तदवस्थत्वात्। एतत्प्रयोगस्योक्तरीत्योक्तिसम्भवस्यैवाभावेन मूलटीकाकृद्भिरिदं पुनर्नोक्तम्। एतेन मद्रीत्या एकवचनान्तानामेकशेष इति पक्षे विभक्तिविशिष्टे वृत्तिसत्त्वात्प्रातिपदिकत्वे सुपोधाताविति लोपे दोषाभावः। एवं चैकशेषस्य वृत्तित्वमपि सार्थकम्। एवं च विभक्त्यन्तानामिति पक्षोऽपि प्राचां निर्बाध एव। एवं च द्वन्द्वापवादकतापि संगच्छते इति मन्दोक्तमपास्तम्। मूलशैथिल्यस्यार्थवत्सूत्रे उक्तत्वाच्च। भाष्ये दूषितत्वेन तद्विरोधापत्तेश्चेति दिक्।

मूले यदपि व्याचख्युरिति। प्रकाशकृत इत्यर्थः। एवपाठासङ्गतिमुपपादयति—**नहीति**। सूत्रसत्त्वे

सरला।

इत्यादौ पुरुषपदसमभिव्याहारे राजन्पदस्य राजसम्बन्धिपुरुषार्थबोधकत्वेन राजन्शब्दतत्त्वष्ठया अप्राप्तेः 'उक्तार्थानामप्रयोगः' इति न्यायात्, ततस्तदुच्छेद इत्यर्थः।

नवैकेनापि अनेकस्य तन्त्रेण सुवचत्वात्। अन्यथा जातिपक्षे ऽपि "वासेन सम्य-

शब्दरत्नम् ।

तत्रैकशेषः, तावद्ब्राह्मणशब्दज्ञानासम्भवात्। तस्मात्तत्र जातिपक्षेण तन्त्रेण वा यथा निर्वाहस्तथाऽन्यत्रापीति भावः। न ब्राह्मणमित्येकवचनं त्वार्षम्। तन्त्रेण सुवचत्वादिति। अयं भावः—भाष्ये ऽर्थावर्थौ प्रति यदर्थानर्थान्प्रति च यत्तदपि प्रत्यर्थमेवेति उक्तम्। एवं च एकेनानेकार्थबोधनमपि प्रत्यर्थमेवेति एकेनैव ब्राह्मणपदेनानेकार्थबोधनं तत्र। अन्यथाऽविद्यमानायाः शक्तेरेकशेषशास्त्रसहस्रेणापि उपपादयितुमशक्यतया बोधानुपपत्तिरेव स्यात। तन्त्रं चात्रार्थतन्त्रम्। एकत्रैव शब्देऽनेकार्थानां सत्त्वात्। शब्दस्य पर्यायपरिवृत्तिसहतया ऽर्थतन्त्रमेवैतत्। अक्षा इत्यादौ तु तदसहतया शब्दतन्त्रमेव। अन्यथा—

भैरवी ।

ति। अन्यत्रापि—रामावित्यादावपि। नन्वेवंसति बह्वर्थस्य तन्त्रेण तत्र प्रतिपत्तिसत्त्वाद्बहुवचनापत्तिरत आह—न ब्राह्मणमिति। नन्वेकशेषं विना कथमनेकार्थाभिधायकत्वम्, अन्यथा प्रत्यर्थं शब्दनिवेशान्नैकेनानेकार्थाभिधानमिति भाष्यविरोध इत्यत आह—अयम्भाव इति। तत्र—"न ब्राह्मणं हन्यात्" इति दृष्टान्तस्थले। अन्यथा—अर्थावर्थावित्याद्यनङ्गीकारे। बोधेति। अनेकार्थबोधेत्यर्थः। सूत्रारम्भात्सूत्रेणैकशेषेऽपीष्टार्थानां बोधानुपपत्तिरिति भावः। तन्त्रस्य द्वौ भेदौ शास्त्रप्रसिद्धौ अर्थतन्त्रं शब्दतन्त्रञ्चेति। तत्राद्यमाह—अत्रार्थतन्त्रमिति। अत्र—ब्राह्मणं हन्यादित्यादिघटकब्राह्मणादिशब्दे। सकृदुच्चरितस्यानेकार्थपरत्वं यत्र तत्र तन्त्रव्यवहारः। यत्रार्थानाम्भेदेऽपि शब्दैक्यन्तत्र ताल्वोष्ठपुटादिव्यापारप्रकाशितैकशब्देनैकवृन्तगतानेकपुष्पफलन्यायेनानेकार्थसम्बन्धेनैकशब्देनानेकार्थबोधादर्थतन्त्रमिति व्यवहारः। एतदेवाह—एकत्रैवेति। अस्य लक्षणमाह—शब्दस्येति। पर्यायपरिवृत्तीति। पर्यायेण पयार्यवाचकेन परिवृत्तिरनेकार्थस्य प्रकाशनन्तत्सहत्वमित्यर्थः। स्वप्रयोगाभावेपि स्वबोध्ययावदर्थबोधकस्वपर्यायकत्वमर्थतन्त्रत्वम्। अस्ति चेदम्ब्राह्मणादिशब्दे, ब्राह्मणशब्दस्य प्रयोगाभावेऽपि तद्बोध्यानाम्बोधनाय विप्रशब्दस्य प्रयोगदर्शनात्। द्वितीयमाह—अक्षा इत्यादाविति। अत्राक्षशब्दो देवनाक्षरथाक्षविभीतका-

भावप्रकाश ।

इति भावः। तावदिति। यावत्यो व्यक्तयस्तावदित्यर्थः। अन्यत्रापि—रामावित्यादावपि। नन्वत्रार्थतन्त्रत्वादर्थानां चानेकत्वाद्बहुवचनं न्याय्यमत आह—आर्षमिति। तुनाचात्रारुचिः सूचिता भाष्यविरोधरूपा। तत्र व्यक्तिपक्षे यं कञ्चिद् ब्राह्मणमहत्वा कृती स्यादिति दोषं दत्वा अत्र जातिपक्षेणैव निर्वाह इत्युक्तम्। नन्वेकशेषं विना कथमनेकार्थत्वम् अन्यथा प्रत्यर्थं शब्दाभिनिवेश इति भाष्यविरोधोऽत आह—अयं भाव इति। अपिनैकेनैकार्थबोधनसमुच्चयः। तत्र—न ब्राह्मणं हन्यादिति दृष्टान्तस्थले। अन्यत्राप्येवमिति भावः। अन्यथा—एकशेषं विनोक्तार्थानङ्गीकारे। शास्त्रसहस्रेणापीतिपाठः। बोधेति। इष्टबोधेत्यर्थः। सूत्रेणैकशेषेऽपीति भावः। एवेन सूत्रानर्थक्यव्यवच्छेदः। स्यादितीति पाठः। अत्र—ब्राह्मणादौ। एकत्रैवेति। अर्थभेदेऽपि शब्दैक्यमिति नये ताल्वोष्ठपुटव्यापारप्रकाशितैकशब्देनैकवृन्तगतानेकफलन्यायेनानेकार्थसम्बद्धेनानेकार्थबोधादिति भावः। नन्वक्षादिस्थले उपपत्त्या शब्दभेदेऽपि न लोकानां भेदप्रतीतिः पटादिषूपपत्त्यापि न भेदः अर्थभेदाभावात् बोद्धृभिरनेकशब्दताननुभवाच्चेति तथा तदुपपत्तिर्न युक्तेत्यत आह—वस्तुत इति। एतद्रहितो ऽपाठः। पर्यायपरिवृत्तीति। पर्यायेण परिवृत्तिरस्यार्थस्य प्रतिपादनं तत्सहत्वे इत्यर्थः। तन्त्रमेवेति। एवं च तन्त्रं द्विधेति सूचितम्। तयोरवान्तरभेदा अपि

सरला ।

तन्त्रेणेति। अर्थतन्त्रेणेत्यर्थः। तथाच तन्त्रं द्विविधं शब्दतन्त्रमर्थतन्त्रञ्चेति तत्र प्रकृतेऽन्त्यमिति भावः। पर्यायपरिवृत्तिसहतयेति। पर्यायस्य या परिवृत्तिः स्वप्रयोगाभावेऽपि स्वबोध्ययावत्सु प्रवृत्तिस्तत्सहतयेत्यर्थः। यस्य शब्दस्य तन्त्रेण निर्देशः करणीयस्तत्पर्यायशब्दान्तरसम्भवेऽर्थतन्त्रम्। तदसहतयेति। यस्य शब्दस्य तन्त्रेण निर्देशः करणीयस्तत्पर्यायशब्दान्तरासम्भवे शब्दतन्त्रमित्यर्थः।

क्षमयोश्च तस्मिन्" इत्यादिनानार्थानुरोधेन सूत्रं विनाऽनिर्वाहात् । तस्माज्जाति-व्यक्तिपक्षयोरुभयोरपि तन्त्रेण प्रयोगान्निर्वाहेऽपि सर्वत्र तन्त्रेणैव बोधनीयमिति नियामकाभावात्पाक्षिको द्वन्द्वः सूत्रं विना दुर्वारः । घटोऽयं घटोऽयमितिनानाश-ब्दप्रयोगदर्शनात् , तद्वद् घटघटाविति द्वन्द्वस्य न्यायप्राप्तत्वात् । न चैवमपि घट-कलशाविति द्वन्द्वापत्तिः । "विरूपाणामपि समानार्थानाम्" इति वार्तिकात् । रू-

## शब्दरत्नम् ।

तन्त्रानङ्गीकारे । क्षमाशब्दः क्षान्तिभूम्योर्वाचकः । **नानार्थानुरोधेनेति** । सूत्रमावश्यकं तत्रेति शेषः । **न्यायप्राप्तत्वादिति** । अनभिधानमाश्रित्य तु भाष्ये पक्षद्वयेऽपि सूत्रं प्रत्याख्यातमित्यन्यत् । अनेकघटादिपदानां चार्थे वृत्तिरेव नानभिधानादिति द्वन्द्वाप्राप्ति-

## भैरवी ।

क्षानाम्प्रतिपादकस्तावतामन्येनाप्रतिपादनादिति भावः । प्रातिपदिकतन्त्रादयोऽन्ये तन्त्रा अनयोरेवान्यत्र प्रतिपादिताः । तत्र क्षमयोरित्यत्र उभयवृत्त्येकजातेरत्राभावेन तन्त्रानङ्गी-कारे जातिप्रकारकानेकार्थविशेष्यकप्रतीतिरत्र न सम्भवतीति बोध्यम् । उक्तरीत्या सूत्रका-राशयमुपवर्ण्य भाष्यविरोधम्परिहरति–अनभिधानमिति । पक्षद्वयेऽपीति । जातिपक्षे व्यक्तिपक्षेचे-त्यर्थः । व्यक्तेर्वाच्यत्वमतेऽप्यर्थावर्थावित्याश्रयणेनैकस्यानेकार्थत्वमप्यभिधानस्वाभाव्यादिति तद्भावः । नच प्रत्येकव्यक्तेः शब्दप्रतिपाद्यत्वविवक्षायान्द्वन्द्वापत्तिवारणाय सूत्रमस्त्विति वाच्य-म्, "चार्थे" इत्यस्य सूत्रस्य येषाञ्चार्थे वृत्तिस्तेषां संज्ञाविधायकत्वञ्चार्थः समूहः, सच भिन्नाना-मेव भेदश्च क्वचित्पदार्थानां स्वतः सिद्ध एव, क्वचित्तु पदार्थतावच्छेदककृत इति घटशब्देनैकेनैव प्रतिपादनन्नतु पदार्थानाम्भेदात्साहित्यस्य प्रतीतिरित्याशयात् । एतदेवाह–अनेकेति । ननूक्त-

## भावप्रकाश ।

प्रातिपदिकतन्त्रादयोऽन्यत्रोक्ता इति बोध्यम् । अनुरोधेनेति तृतीयाया अनन्वयादनिर्वाहस्याधिकर-णाकाङ्क्षासत्त्वाच्चाह–**सूत्रमिति** । आवश्यकत्वे हेतुमाह–**तत्रेतीति** । नानार्थस्थले सूत्रं विनाऽनिर्वाहा-दित्यर्थः । भिन्नजातिसत्त्वात्तत्पक्षोऽप्यकिञ्चित्कर इति भावः । भाष्यविरोधं परिहरति–**अनभीति** । अर्था-वर्थावित्याद्याश्रयेणैकस्यैवानेकार्थत्वमभिधानस्वाभाव्यादिति भावः । अत एव द्वन्द्वापत्तिं निराचष्टे–**अने-केति** । **चार्थ इति** । चार्थः साहित्यं समूह इत्यनर्थान्तरं, तत्परं, भिन्नानां भेदश्च क्वचित्पदार्थकृतः

## सरला ।

वस्तुतस्तु नेदं सम्यक् "घनसारश्चन्द्रसंज्ञः" इत्यमरकोशबलात् चन्द्रपदस्थाने इन्दुपदप्रयोगेऽपि कर्पूर-चन्द्रयोरुभयोरर्थयोरतन्त्रेण बोधदर्शनेन तत्र सर्वसम्मतशब्दतन्त्रत्वस्यानापत्तेः, किन्तु प्रवृत्तिनिमित्तनि-ष्ठैकप्रकारतानिरूपितनानाविशेष्यताको बोधो यत्र सम्भवति तत्रार्थतन्त्रम् । यथा 'घटाः' इत्यादौ । अत्र हि घटत्वनिष्ठैकप्रकारतानिरूपितनानाघटनिष्ठविशेष्यताकबोधसम्भवादर्थतन्त्रम् । प्रवृत्तिनिमित्तनिष्ठना-नाप्रकारतानिरूपितनानाविशेष्यताको बोधो यत्र तत्र शब्दतन्त्रम् । यथा 'अक्षाः' इत्यादौ । अत्र शकटाक्षत्व–देवनाक्षत्व–विभीतकाक्षत्व–रूपप्रवृत्तिनिमित्तानां त्रयाणां सत्त्वेन प्रवृत्तिनिमित्तनिष्ठनाना-प्रकारतानिरूपितनानाविशेष्यताकबोधस्य सम्भवात् । चन्द्रपदस्थलेऽपि कर्पूरत्वचन्द्रत्वयोः प्रवृत्तिनिमित्त-तया तत्रापि प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधसत्त्वात् शब्दतन्त्रत्वमक्षतम् । तन्त्रं च लोकशास्त्रसाधारणं नानाफलकसमानाकारकानेकव्यापाराणां मध्येऽनेकफलोद्देशेनैकव्यापार-करणम् । शास्त्रीयं तु अनेकार्थबोधनाय सकृदुच्चारणमिति । अत्रैकव्यापारपदेन—

गुणभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥

इत्यभियुक्तोक्तक्रियाया एव विवक्षणेन यज्ञोपवीतसंस्कारेषु एककालावच्छेदेन कृतेषु न तन्त्रत्वव्यव-हारानुपपत्तिरिति बोध्यम् । **प्रत्याख्यातमिति** । अत्र प्रातिपदिकतन्त्रमाश्रित्यैव प्रत्याख्यानं बोध्यम् । अनेन प्रत्याख्यानमेकदेशयुक्तिः, विभक्त्यन्ततन्त्रे 'ब्राह्मणाभ्याम्' इत्यत्र करणत्वविशिष्टब्राह्मणद्वयस्य

ध्यते बोध्यते इति व्युत्पत्त्या रूपशब्दस्य अर्थपरत्वमाश्रित्य वार्तिकार्थस्यापि सूत्रेणैव क्रोडीकाराच्च। तस्माद् घटघटौ घटकलशावित्यादिपाक्षिकानिष्टवारणाय पक्षद्वये ऽपि सूत्रमावश्यकमित्यवधेयम् ।

एवं स्थिते सूत्रवैयर्थ्यमेव हृदि निधाय यदिह व्याचख्युः—नानेनैकशेषो विधीयते इत्यादि । यच्च समुदायादेकस्यां विभक्ताविति पक्षं प्रत्याख्याय पुनराहुः—राम राम औ इति स्थिते इति । अलौकिकमेतत्प्रक्रियावाक्यमूह्यते न तु लौकिकम् । अलौकिके च विभक्त्येकादेशादिकार्यं न प्रवर्तते । प्रयुक्तानामेवान्वाख्यानादित्यादि । तत्सर्वं सन्दर्भविरुद्धं न्यायविरुद्धं च । प्रयुक्तानेव ह्यन्वा-

---

शब्दरत्नम् ।

रेवेति तदाशयः । आवश्यकमिति । अनभिधानाज्ञाने इति शेषः ।

नानेनैकशेषो विधीयते इति । 'किं तु न्यायसिद्ध एवानूद्यते' इति एतच्छेषस्तद्ग्रन्थे । प्रयुक्तानामिति । अयं भावः—वृद्ध्यादिप्रवृत्तावेकशेषशास्त्राप्रवृत्त्या नित्यविद्ध्युद्देश्यतावच्छेदकानाक्रान्तत्वेन तावदेव परिनिष्ठितं स्यात्तच्च न लोके प्रयुज्यते प्रयुक्तानां चेदमन्वाख्यानमिति न तत्प्रक्रियावाक्ये वृद्ध्यादिप्राप्तिरिति । सन्दर्भविरुद्ध·

भैरवी ।

रीत्या चार्थवृत्तित्वाभावेनैव पाक्षिकानिष्टवारणे सिद्धे आवश्यकमित्यनुपपन्नमत आह—अनभिधानाज्ञान इति । मूले सूत्रवैयर्थ्यमेव हृदि निधायेति । अयम्भावः, यद्येकार्थाभिनिवेशित्वमेव शब्दानान्तर्हि कृतेऽप्येकशेषे नानेकाभिधानं, शिष्यमाणेनैकेन वचनेनासत्याः शक्तेर्वक्तुमशक्यत्वात् ।यदि स्वभावादनेकार्थाभिधायकत्वं सिद्धमेव तदा सूत्रम्मास्तु एकेनानेकव्यक्तिप्रतिपादनसम्भवादिति। इत्यादीति एतावन्मात्रमधिकसाकाङ्क्षमत आह—किन्त्विति । एतच्चार्थत उपनिबद्धम्, तदीयग्रन्थानुपूर्वी तु 'किन्तु वृत्तिविषये एकस्याप्यनेकार्थाभिधानशक्तिरस्तीति ज्ञाप्यते' इति । आहुरिति मूले । प्रसादकृत इति शेषः।। नतु लौकिकमिति । एकशेषस्य नित्यतया तादृशप्रयोगासम्भवादिति भावः । शास्त्राप्रवृत्त्येति । वैरूप्यादित्यादिः। तावदेव—रामरामावित्येता-

भावप्रकाश ।

क्वचित्पदार्थतावच्छेदककृत इत्यन्यत्र विस्तरः। तदाशयः—भाष्याशयः। एतदेवाह—अनभीति । एतेन शेषं भाष्यादितोऽवगन्तव्यमित्युत्तरप्रकाशग्रन्थे नैतदुक्तप्रायमिति यदपीत्यादिमूलं चिन्त्यमिति खण्डनकृदुक्तिः परास्ता । वैरूप्योक्तेर्निर्बीजत्वस्यैवमप्यनुद्धारात् ।

मूले निधायेति । अयं भावः-यद्येकैकार्थनिवेशिनः शब्दास्तत्कथमितरनिवृत्तौ शिष्यमाणादेकस्मात्तद्द्व्यादिप्रतीतिः ? किं चैकस्यानेकार्थत्वं सूत्रतः स्वभावतो वा ? नाद्यः, न हिस्वतोऽसती शक्तिर्वचनशतेनाप्युत्पादयितुं शक्या । अन्त्ये त्वेकस्यैवानेकार्थोपस्थानसमर्थत्वान्नानेकप्रयोगप्रसङ्ग इति किमेकशेषारम्भेणेति । आदिपदग्राह्यमाह—किन्त्विति । यद्यपि किं तु वृत्तिविषये एकस्याप्यनेकार्थाभिधानशक्तिरस्तीति ज्ञाप्यते इति शेषस्तद्ग्रन्थे दृश्यते, तथापि तुल्यार्थत्वेन लाघवादेवमेवोक्तम् । मूले पक्षमिति । प्रसादकृतोक्तमित्यर्थः । न तु लौकिकमिति । एकशेषवृत्तेर्नित्यत्वादितिभावः। ननु सर्वत्र कार्यस्यालौकिके एव प्रवृत्त्यङ्गीकारादिदमयुक्तमत आह—अयं भाव इति । प्रकाशकृत इति भावः । अप्रवृत्त्येति । तदपरत्वाद्वैरूप्याच्चेति भावः । तावदेव—रामरामावित्येव । तच्च नेति । उचितस्तु तस्य प्रयोग इति भावः । तत्प्रक्रियेति । एकशेषप्रक्रियेत्यर्थः ।। व्युत्क्रमेण प्रकाशानुवादोऽयं मूले । तत्क्रमेण सन्दर्भविरोधमाह—

सरला ।

सम्प्रदानत्वविशिष्टब्राह्मणद्वयस्य च प्रतीतिरिति ब्राह्मणचतुष्टयप्रतीतिवत् 'मातृभ्याम्' इति तृतीयाद्विवचनेनापि मातृचतुष्टयस्य प्रतीत्यापत्त्या फलभेदात् । एकशेषे तु मातृद्वयस्यैव प्रतीतिरित्यपास्तम् ।

ख्यातुमलौकिकमुत्प्रेक्ष्यते। शास्त्रीयकार्य च सर्वमलौकिकेष्वेव प्रवर्तते न तु परिनिष्ठिते। "प्रथमयोः पूर्वसवर्णः" इत्यादीनां प्रवृत्तिं विना परिनिष्ठितरूपालाभात्। परिनिष्ठिते तत्प्रवृत्तेर्दुरुपपादत्वाच्चेत्यास्तान्तावत्।

शब्दरत्नम्।

मिति। एकस्यैव प्रयोगो यथा स्यादिति सूत्रमिति, समुदायादेकविभक्ताविति पक्षः प्रत्याख्यात इति च सन्दर्भ इत्यर्थः। न्यायविरोधमाह—**प्रयुक्तानेवेति**। न च यद्यादृशशास्त्रीयकार्यप्रवृत्त्या परिनिष्ठितं सल्लोके प्रयोगार्हं कल्पिते तदीयालौकिके तच्छास्त्रप्रवृत्तावपि अत्र वृद्ध्यादिप्रवृत्तिर्नोचिता वैषम्यादिति वाच्यम्। कृतद्वन्द्वानामेकशेष इति पक्षे नावौ अनड्वाहावित्यादौ परत्वादिना आवादौ कृते एकशेषानापत्तेरिति दूषणदानपरभाष्यवार्तिकासङ्गत्यापत्तेरित्यलम्।

भैरवी।

वदेव। तत्प्रक्रियावाक्ये—एकशेषस्य प्रक्रियावाक्ये। सन्दर्भविरोधमुपपादयति—एकस्यैवेति। एतेन समुदायादेकविभक्तिम्प्रदर्श्य सूत्रस्य स्थापनम्प्रदर्शितन्ततः प्रत्याख्यानप्रकारः समुदायादित्यादिर्दर्शितः, इदं स्वभावतो विरुद्धम्, यदि प्रत्याख्यानप्रकारस्यैव स्वाभिमतत्वन्तदा समुदायादेकविभक्तिप्रदर्शनासङ्गतिस्तस्या एव युक्तत्वे प्रत्याख्यात इत्ययुक्तमिति भावः। अत्र प्रयुक्तानेवेत्यादिना यन्न्यायविरुद्धत्वस्य मूले प्रदर्शनन्तदेव विरुद्धम्। परिनिष्ठितं हि द्विविधम्–प्रक्रियावाक्यरूपम् लौकिकञ्चेति। तत्र प्रक्रियावाक्ये सन्धिकार्यन्न प्रवर्तते। तावन्मात्रस्यैव प्रयोगार्हता स्यादिति रत्नाकरोक्तिङ्खण्डयति–नचेत्यादिना। वैषम्यादिति। अत्र वृद्धिप्रवृत्त्या तावदुक्तरीत्या परिनिष्ठितं चेत्स्यात्तच्च न लोके प्रयुज्यत इति भावः। भाष्यवार्तिकेति। यद्यपि भाष्ये 'नावौ अनड्वाहौ इति कण्ठरवेण नोक्तं किन्तु "ऋक्च ऋक्च ऋचौ समासान्ते कृते असारूप्यादेकशेषो न प्राप्नोति" इत्येवाभिहितम्, तथापि तदुत्तरग्रन्थे "अङ्गाश्रये चैकशेषवचनम्" इति वार्तिकव्याख्यानावसरे कैयटेनेत्थमभिहितम्। अङ्गाश्रयकार्यञ्च भाष्ये दर्शितं–स्वसा च स्वसारौ च स्वसार इत्यनेन। तत्र कैयटः–'अङ्गाश्रयेचेति। चशब्दादनङ्गाश्रयेऽपि। यथा नौश्च नावौचेति' प्राह। परत्वादिनेत्यादिना अन्तरङ्गत्वेन ऋचावित्यत्र समासान्तस्य प्रवृत्तिर्दर्शिता। असङ्गत्यापत्तेरिति। अलौकिके प्रक्रियावाक्ये शास्त्रीयम्परिनिष्ठितत्वप्रयोजकं शास्त्रन्न प्रवर्तत इति भवन्मतन्तच्चोक्तभाष्यवार्तिकाभ्याङ्कैयटीयव्याख्यानेन च विरुद्धमिति भावः। अलमिति। एतेन यथाऽनेकव्यक्तिप्रतिपादनायानेकप्रातिपदिकस्य प्रयोगे प्राप्ते एकस्यैव यथा

भावप्रकाश।

एकेति। तद्ग्रन्थशेषे यदपीत्याद्यनूदितैकदेशोऽयं ग्रन्थः। **इति चेति**। यद्यप्येवं वाक्यं तत्र नास्ति तथापि प्रत्याख्यानप्रकारोऽस्तीति तदुत्तरं तथास्थितिप्रदर्शनमयुक्तम्। एवं चाद्ये ग्रन्थान्तरविरोधोऽन्त्ये मिथ एव विरोध इति भावः। यत्तु रत्नाकरकृत् मूलं चिन्त्यं तत्तात्पर्यानवबोधात्। तथा हि, परिनिष्ठितं तद्विभाजकं प्रक्रियावाक्यं च लौकिकालौकिकभेदेन द्विविधम्। अथवा परिनिष्ठितमेव द्विविधम्। प्रक्रियावाक्ये संधिर्न प्रवर्तते कुत एतत् उत्तरहेतुविरोधादिति तात्पर्यमिति। तत्खण्डयति—**नचेति**। **कल्पिते इति**। एतेनालौकिकशब्दस्य कथंचिदेकशेषार्थबोधकासाधुशब्दार्थकस्य तात्पर्यानालोचनेनेदं दूषणम्। अत एव हस्तचेष्टादिस्थानीये इत्यलौकिकवाक्यविशेषणं तत्रोक्तमिति मूलं चिन्त्यमिति खण्डनकृदुक्तिः परास्ता। अत्र–एकशेषप्रक्रियावाक्ये। **वैषम्यादिति**। उक्तरीत्या परिनिष्ठितत्वेऽपि लोकेऽप्रयुक्तत्वादित्यर्थः। तथाच प्रयुक्तानेवेत्यादिमूलमयुक्तमिति भावः। आदिभ्याम् ऋचावन्तरङ्गत्वादित्यादिपरिग्रहः। द्वन्द्वे कृते एकविभक्तौ परतः सरूपाणामेवैकशेष इत्यर्थेन तस्य विभक्तिसापेक्षकत्वेन समासान्तस्य ततोऽन्तरङ्गत्वादिति भावः। **भाष्यवार्त्तिकेति**। यद्यपि ताभ्यां स्पष्टं तथा नोक्तं तथाप्यङ्गाश्रये चैकशेषवचनमिति वार्त्तिकेन तद्भाष्ये चशब्देनानङ्गाश्रयेऽपि यथा नौश्च नावौ चेति कैयटोक्त्या तस्य तदुभयेष्टत्वाङ्गीकारादिति भावः।

"अमि पूर्वः" । अम्यचीति । अमि योऽच् तस्मिन् । अमोऽवयवेऽचीति यावत् । तेन मकारसहितस्य न पूर्वरूपम् । एवम् अक्षाद्ूहिन्यामित्यादावपि ऊहिन्यां योऽच् तस्मिन्नित्यादि बोध्यम् । "इको यणचि" इत्यज्ग्रहणस्यानुवृत्तेर्निर्विवादत्वात् । "पदास्वैरिबाह्या–"इत्यादिनिर्देशाश्चेह लिङ्गम् ।

शब्दरत्नम् ।

**अमि योऽजिति** । अवयविन आधारत्वविवक्षायां वृक्षे शाखेतिवत्सप्तमी; तदाह—**अमो ऽवयवे ऽचीति** । 'पूर्वपरयोः' इत्यधिकृतपरशब्देन विशेष्यत्वादजेव गृह्यते इति बोध्यम् । **निर्विवादत्वादिति** । उत्तरत्रानुवृत्तेः सत्त्वादिति भावः । **लिङ्गमिति** ।

भैरवी ।

स्यादित्येवमर्थमस्य सूत्रस्यारम्भ इति प्रातिपदिकेषु सूत्रस्य प्रवृत्तिर्भवति, तथा धातुषु न भवति एकनिष्ठानामनेकव्यापारागामिवानेकनिष्ठानामपि व्यापाराणामेकधातुत एव निवृत्तभेदानाम्प्रतीत्याऽनेकधातुप्रयोगस्याप्रसक्तेः । तदुक्तम्भाष्ये–"न तिङन्तान्येकशेषारम्भम्प्रयोजयन्ति । यथाजातीयकानान्द्वितीयस्य पदस्य प्रयोगे सामर्थ्यमस्ति, तथाजातीयकानामेकशेषः । नच तिङन्तानान्द्वितीयस्य पदस्य प्रयोगे सामर्थ्यमस्ति । किङ्कारणम् ? एका हि क्रिया एकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यमुक्तार्थानामप्रयोग इति" । अत्र कैयटः–'यथाजातीयकानाम्–सत्त्ववाचिनाम् । एका हीति। आख्यातवाच्या क्रिया सर्वैव निवृत्तभेदा प्रतीयते' इति । एकश्च एकश्च द्वौ च द्वौ चेत्यत्रानभिधानान्नैकशेषः । विंशतिश्च विंशतिश्चेत्येवं सहविवक्षायां विंशती इति त्विष्टमेव । तदुक्तम्भाष्ये "इह कस्मान्न भवति एकश्च एकश्च द्वौ च द्वौ चेति ।" एवमाशङ्क्य "सङ्ख्याया अर्थासम्प्रत्ययादन्यपदार्थत्वाच्च नैकशेषः, न ह्येकावित्यनेनार्थो गम्यते । अन्यपदार्थत्वाच्च संख्याया एकशेषो न भविष्यति । एकश्च एकश्चेत्यस्य द्वावित्यर्थः । द्वौ च द्वौ चेत्यस्य चत्वार इत्यर्थः" । वाचकशब्दान्तरसत्ताविशिष्टार्थासम्प्रत्ययेनैकादि आदशानामेकशेषो न, विंशत्यादीनान्तु भवत्येवेति तात्पर्यार्थः । अर्थासम्प्रत्ययादित्यस्य यत्रैकः शब्दोऽनेकमर्थमभिधातुं शक्नोति तत्रैकशेषो नान्यत्र, प्रयुक्तानामन्वाख्यानारम्भात् , एकावित्युक्ते असहायादिरर्थो गम्यते नतु द्वावित्यत्र तात्पर्यम् । ततोऽर्थासंप्रत्ययेऽपि गार्ग्यश्च गार्ग्यायणश्च गार्ग्याविति, अक्षश्च अक्षश्च अक्षौ इत्यत्रैकशेषो दृश्यत इत्यभिप्रायेण पूर्वोक्तौ पृथक् परिहारौ नोपपद्येते इत्याशयेन शङ्काङ्कृत्वा "एवन्तर्हि नेमौ परिहारौ, एकपरिहारोऽयं संख्याया अर्थासम्प्रत्ययादन्यपदार्थत्वाच्चेति" । यत्र ह्यर्थासम्प्रत्यय एव वा अन्यपदार्थतैव वा भवति तत्रैकशेषः । गार्ग्यौ विंशती इति यथेति भाष्यीयप्रघट्टकार्थो ध्वनितः ।

नन्वचोऽमवयवत्वादमि योऽजित्यनुपपन्नमत आह—अवयविन इति । उत्तरत्र–"सम्प्रसार

भावप्रकाश ।

**आधारत्वेति** । तत्त्वेन विवक्षायामित्यर्थः । तत्त्वं चाज्निष्ठमत्रारोप्यते, विद्यमाने इति क्रियाध्याहारेण वा । **तदाहेति** । तत्फलितमाहेत्यर्थः । शाब्दस्तु तदाधारकेऽचीति बोध्यः । **विशेष्यत्वादिति** । सर्वनाम्नां प्रधानपरामर्शित्वादिति भावः । **उत्तरत्रेति** । "सम्प्रसारणाच्च" "अवङ्स्फोटायनस्य" इत्यनयो-

सरला ।

**वृक्षे शाखेतिवत्सप्तमीति** । घटकत्वं सप्तम्यर्थ इति तदाशयः । नन्वेवमपि वासुदेववाचक 'अ' शब्दस्य द्वितीयैकवचने परे 'हेराम–अम्' इत्यादौ पूर्वरूपापत्तिरिति चेत् ? न, सूत्रे अम्ग्रहणेन "वा सुप्यापिशलेः" इत्यतः सुपीत्यनुवृत्तेः सुप्प्रत्ययस्यैव ग्रहणेन तदादेरित्युपस्थित्या अम्प्रत्ययो यस्माद्विहितस्तदादेरकोऽम्घटकेऽचि परे पूर्वपरयोः पूर्वरूपमेकादेश इत्यर्थेन राम इत्यस्य तदादित्वाभावेनादोषात् । मूले अहिन्यां योऽजिति । अक्षशब्दादूहिनीघटकेऽचि परे पूर्वपरयोर्वृद्धिरेकादेश इत्यर्थः । तत्र पूर्वश-

"तस्माच्छसः" । तच्छब्देन सन्निहितः पूर्वसवर्णदीर्घः परामृश्यते । शस

शब्दरत्नम् ।

अनुवृत्तावनुवृत्तस्य विशेष्यत्वे चेत्यर्थः । स्पष्टं चेदम् "औतोऽम्शसोः" इत्युपक्रम्य प्रत्ययलक्षणसूत्रे भाष्ये ।

भैरवी ।

णाच्च" "अवङ्स्फोटायनस्य" इत्यनयोः। अनुवृत्तौ–अत्र प्रकरणेऽनुवृत्तौ। नन्वग्रेऽनुवृत्तिरस्तीति चेन्मध्येऽपि सम्बन्धो भविष्यत्येव, पुनस्तत्र ज्ञापकोपन्यासवैयर्थ्यमत आह—अनुवृत्तस्येति । भाष्ये इति । तत्र गामिच्छति गव्यतीत्यत्र प्रत्ययलक्षणेन "औतोऽम्शसोः" इत्यात्वमाशङ्क्यानल्विधाविति वचनान्न भवतीत्युक्तम् । अज्ग्रहणानुवृत्त्यभावे "अनल्विधौ" इति निषेधाप्राप्त्या तदसङ्गतिः स्पष्टैव । प्रथमयोरित्यतः पूर्वसवर्णग्रहणानुवृत्त्यैव सिद्धे पूर्वग्रहणं राममित्यादौ द्विमात्रादेशव्यावृत्तये। यत्तु पूर्वग्रहणानुवृत्त्यैव सिद्धे पूर्वग्रहणमेकादेशे कृते राममित्यत्र सुपि चेति दीर्घो माभूदिति । तन्न । पूर्वान्तवद्भावेनाकारान्ते सुप् यस्माद्विधीयतेइत्यस्य सद्भावेऽपि मकारमात्रे सुप्त्वाभावात् । एकदेशविकृतन्यायस्यार्द्धाधिकविकारेऽप्रवृत्तेः । नापि स्थानिवद्भावेनानुमानिकादेशकल्पनया तत्त्वम् । अमः स्थानित्वाभावात् । अ अमित्यस्य स्थानित्वकल्पने तु सुप्त्वस्य स्थान्यवृत्तित्वं स्पष्टमेव ।

भा प्रकाश ।

रित्यर्थः । अत एव दुद्यूषतीत्यादावप्रवृत्तिरिति भावः । अनुवृत्ताविति । अत्र प्रकरणे अनुवृत्तावित्यर्थः । नन्वग्रे ऽनुवृत्त्या मध्येपि सम्बन्धसिध्या न तत्र ज्ञापकापेक्षाऽत आह–अनुवृत्तस्येति । अन्यथा परशब्देन विशेष्यत्वादीरस्यैव ग्रहणेन निर्देशापत्तिरिति भावः। एतेनान्यत्रानुवृत्तस्य विशेषणत्वमेवासति तात्पर्यग्राहके इति ध्वनितम् । ननु "आदेः परस्य" इत्यस्य प्रवृत्त्येष्टसिद्धयाऽचीति नानुवर्त्यम् । अत एव काशिकायां नानुवर्तितं, दण्डिना मन्देन चानूदितं च । नच परबोधकशब्देन परविधाने एव प्रवृत्तिरत् पर एव परः केवलः पूर्वनिरूपितसाहित्यनिरपेक्ष इत्यर्थाद्यत्र परस्यैव विधानं तत्रैव तत्प्रवृत्तेरिति वाच्यम् । पदास्वैरीत्यादिज्ञापकात्तथार्थानङ्गीकारेणेष्टसिद्धेरिति चेदत्र मान्याः । यदैवं तदोत्तरार्थमनुवृत्तस्य तस्योपरञ्जकतयाप्यन्वयसम्भवे सर्वथा त्यागे मानाभावेन मण्डूकप्लुतौ गौरवाच्चाजादावमीति व्याख्यानेऽपि तथा सिद्धे दोषाभाव इति । तत्प्राचामनुरोधेन । गव्यतीत्यत्र प्रत्ययलक्षणेनात्वापत्तेः । तद् ध्वनयन्नाह–स्पष्टमिति । तत्र हि गव्यतीत्यादौ "औतोऽम्" इत्यात्वं प्रत्ययलक्षणेन न, वर्णप्राधान्ये तदभावादित्युक्तम् । एवं च तत्रेदृशार्थस्यौचित्येनैकरूप्याय सर्वत्र तथैवोचितमिति ज्ञापकात्तथार्थाङ्गीकारो नोचितः, किन्तु मदुक्त एवेति तदनुवृत्तिरावश्यक्युभयथेति सर्वथा काशिकादिग्रन्थाश्रितया एवेति भावः । पूर्वसवर्ण इत्यनुवृत्त्यैव सिद्धे पूर्वग्रह [illegible] तु राममित्यादौ द्विमात्रादिवारणायेति वृत्तिकारादयः । यत्तु रत्नाकरकृत । एकदेशस्यैव स्वरितत्वेनानुवृत्त्येष्टसिद्धौ पूर्वग्रहणं राममित्यादावेकादेशे तस्य पूर्वान्तवत्त्वेन ग्रहणान्मकारे परतः "सुपि च" इति दीर्घत्वनिवृत्तये। सूत्रं तु हरिमित्याद्यर्थं स्यात् । एतेनोक्तरीत्या सिद्धे पूर्वग्रहणं शक्यमकर्तुमिति प्रकाशोक्तमपास्तम् । वस्तुत "एङि पररूपम्" इत्यतो रूपग्रहणस्याप्यनुवृत्तावुक्तदोषाभावात्तन्मास्त्विति । तन्न, मस्य सुप्त्वाभावात् अर्धविकारेणकदेशेति न्यायाप्रवृत्तेःस्थानषष्ठीनिर्देशेन मरूपविकारस्याविधानान्मस्यादेशत्वाभावात्तथा·

सरला ।

ब्देन अक्षशब्दस्य परामर्शे सम्पूर्णस्य तस्य स्थाने वृद्ध्यापत्तिस्तु न शङ्क्या "आद्गुणः" इति सूत्राद् आत्पदानुवृत्त्या अक्षात् इतिषष्ठ्यर्थे पञ्चम्याः स्वीकारेण अक्षस्य अः अक्षः तस्मात् अक्षात् इति शकन्ध्वादित्वात्पररूपेणाऽकारप्रश्लेषेण वा अक्षशब्दावयवाकारादूहिनीघटकेऽचि परे इत्यर्थेन पूर्वशब्देनाऽकारस्यैव परामर्शात् ।

मूले परत्वेन विशेष्यते इति । तथाच पूर्वसवर्णदीर्घात्परीभूतो यः शसस्सकारस्तस्येत्यर्थः । पूर्वसवर्णादित्यस्य शसवयवेऽन्वयो नतु शसि, कृते पूर्वसवर्णदीर्घे ततः परस्य शसोऽसम्भवात् । अवयवस्य पूर्वसवर्णदीर्घात्परीभूतत्वेन विशेषिततया 'गाः पश्य' इत्यत्र न नकारादेशः ।

इत्यवयवषष्ठी । स चावयवः परत्वेन विशेष्यते-पूर्वसवर्णदीर्घात् परस्य शसोऽवयवस्येति । तदेतदाह-परो यः शसः सकार इति । परो यः शस् इति तु नोक्तम्, असंभवात् । न हि कृते पूर्वसवर्णदीर्घे परः शस् संभवति ।

"अट्कुप्वाङ्" ॥ रषाभ्यामिति पञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनमिदम् । अत्र सर्वैर्व्यवायोऽसंभवी, एकैकमात्रव्यवाय इत्यपि नार्थः । क्षुभ्नादिषु क्षुभ्नशब्दपाठसामर्थ्यात्, "सरूपाणाम्" इत्यादिनिर्देशाच्चेत्यभिप्रेत्याह-व्यस्तैर्यथासम्भवं मिलितैश्चेति । नन्वेवम् 'आदर्शेन' इत्यादौ अतिप्रसङ्गः । न च अडादिभिरेव व्यवधाने इति नियमः । अप्राप्ते विधिरयमित्युक्तत्वात् । सत्यम्, योगविभागोऽत्र बोध्यः—"व्यवाये ऽपि"इत्येको योगो विध्यर्थः । "अट्कुप्वाङ्नुम्" इत्यन्यो नियमार्थः । छान्दसो भिसो लुक् । निषेधं बाधितुमिति ।

---

शब्दरत्नम् ।

**अवयवषष्ठीति** । अवयवावयविभावसम्बन्धबोधिका षष्ठीत्यर्थः ।

**निर्देशाच्चेति** । नुम्ग्रहणाच्चेत्यपि बोध्यम् । **नियमार्थ इति** । स च साजात्यादाभैरवी ।

अवयवषष्ठीत्यस्यावयवत्वरूपसम्बन्धार्थिका षष्ठीत्यर्थो वाच्यः । स च न सम्भवति । सम्बन्धस्योभयनिष्ठत्वस्वभावतयाऽवयवत्वस्यैकमात्रसम्बन्धित्वेन सम्बन्धत्वस्य वक्तुमशक्यत्वात् । यद्यप्यवयविन्यपि निरूपकत्वात्मकस्तदीयः सम्बन्धोऽस्ति, तथापि स वृत्त्यनियामक इत्याशयेनाह—अवयवाऽवयविभावेति । अवयवत्वावयवित्वसमूहः सम्बन्ध इत्यर्थः । एवमेव स्वस्वामिभावादिस्थलेऽपि बोध्यम् ।

प्रकृतसूत्रे नुम्ग्रहणं तद्व्यवधानेऽपि णत्वार्थं कृतं यद्येकव्यवधान इत्यर्थः स्यात्तदा यत्र

भावप्रकाश ।

निवङ्घावस्याप्रवृत्तेश्च , रूपग्रहणस्य खण्डितत्वाच्च । एतेन समस्तस्यैकदेशस्य वानुवृत्तिः, द्विमात्रस्तु न पूर्वसवर्णदीर्घेण सिद्धावमीत्यस्य व्यर्थतापत्तेः । न च कुमारीमित्यादौ त्रिमात्रप्लुतसम्पादनसाफल्येनासामर्थ्ये पूर्वग्रहणं प्लुतव्यावृत्त्यर्थं सार्थकं यद्वाऽमीत्येकादेशोत्तरं सुपित्येत्यनेन प्राप्तदीर्घव्यावृत्त्यर्थमिति वाच्यम् । प्रगृह्यमित्यादिनिर्देशेनोभयोरप्यभावबोधनात् । अजनुवृत्तिरपि मास्तु । फलाभावात् । विशिष्टस्य पूर्वत्वं तु न । अचि नित्यमिति निर्देशेनैव सिद्धेरिति मन्दोक्तमपास्तम् उक्तयुक्तेः, दीर्घादिव्यावृत्त्यर्थं सार्थकमिति वक्तुमनुचितत्वाच्च, निर्देशेन प्रत्याख्याने ऽतिप्रसङ्गापत्तेश्च, अचीत्यनुवृत्तेरावश्यकत्वस्योक्तत्वाच्चेति दिक् ।

ननु सम्बन्धस्य द्विनिष्ठत्वात्स्वस्वामिभावः सम्बन्ध इत्यादिव्यवहाराच्चायुक्तमिदम् । न चावयवत्वादिकमप्येकत्राश्रयतयाऽपरत्र निरूपकतयाऽस्त्येवेति वाच्यम् । निरूपकत्वस्य वृत्त्यनियामकत्वेन उभयत्र सम्बन्धपरत्वप्रतीत्यनापत्तेः । स्पष्टं चेदं हरिग्रन्थे इत्यन्यत्र विस्तरोऽत आह-**अवयवावयवीति** । वाक्यैकदेशन्यायेन मूले तथोक्तिरिति क्लिष्टं प्रकारान्तरमनुचितम् । एतेन भावप्रधानो निर्देशः अवयवत्वे षष्ठ्यर्थः । अत एव पटस्य तन्तुरित्यादाववयवत्वं तन्तोः पट इत्यादौ त्ववयवित्वं षष्ठ्यर्थः । इदमेवाभिसन्धायावयवावयविभावसम्बन्धः षष्ठ्यर्थ इत्युद्घोषः । विभक्त्यर्थस्याधारतासम्बन्धेन सकारादावन्वयः । यद्वा, अवयवात् षष्ठीति पञ्चमीसमासः शस्शब्दस्य तदवयवे लक्षणा । षष्ठ्यर्थस्तु स्थानसम्बन्ध एवावयवश्चात्र सकार एव । यद्वाऽवयवनिष्ठसम्बन्धबोधिका षष्ठीत्यर्थ इति मान्योक्तिः प्राचामनुरोधेनेति तथा रत्नाकराद्युक्तिश्चिन्त्येति च सूचितम् ।

सरला ।

**नियमार्थ इतीति** । एतैरेवाक्षरसमाम्नायिकैर्व्यवाये नान्यैरिति नियमार्थ इत्यर्थः । तेन 'आदर्शेन'

तेन पर्याणद्धमित्यत्र "उपसर्गादसमासे ऽपि" इति णत्वं सिध्यतीति भावः।

शब्दरत्नम्।

क्षरसमाम्नायिकविषयकः। अतो 'नृणाम्' इत्यादावुत्तराङ्भागेन व्यवधानेऽपि णत्वसिद्ध्या

भैरवी।

नुमा व्यवधानं तत्रैकमात्रव्यवायाभावेन तस्य वैयर्थ्यापत्तिरतस्तस्यैव ज्ञापकत्वसम्भवे निर्देशपर्यन्तानुधावनमफलमत आह—नुमिति। एवञ्च मूले प्राचामनुरोधेन तथोक्तमिति भावः। नच नुम्ग्रहणस्यानावश्यकतया तस्य ज्ञापकत्वन्न सम्भवतीति वाच्यम्। सूत्रार्थनिर्णयावसरे तत्प्रत्याख्यानानवसरात्। सच—नियमश्चेत्यर्थः। उत्तराङ्भागेनेति। एतच्चाङ्भागमात्रोपलक्षणम्, सर्वतोऽङ्भागस्य सत्त्वादत एव प्रातर्ऋतमित्यत्र रोरीति लोपो न। णत्वसिद्ध्या—ऋकारावयव-

भावप्रकाश।

मूलकृता प्रकाशानुरोधेन तथोक्तावपि समीपत्यागेन तत्पर्यन्तगमने निर्बीजत्वादाह—नुमिति। एकैकमात्रव्यवाये इत्यर्थे तु तस्योक्तिसम्भव एव न। एतेन तस्य प्रत्याख्यातत्वात् ज्ञापकासङ्गतिरित्यपास्तम्। सूत्रार्थनिर्णयावसरे तत्प्रत्याख्यानाभावादिति भावः। उत्तरेति। सर्वतः सत्त्वेन तत्रापि सत्त्वात्। अत एव 'प्रातर्ऋतम्' इत्यादौ "रोरि" इत्यादि न। एवं चोत्तरत्वमचसम्बन्धिभागेऽन्वेति नत्वङ्रूपे भागे इति भावः। णत्वेति। "रषाभ्याम्" इत्यत्र पृथग्रेफस्यैव ऋकारैकदेशस्यापि ग्रहणेन ग्रहणादिति भावः। तदा-

सरला

इत्यत्राड्व्यतिरिक्तशकारव्यवधानान्न णत्वमिति। वस्तुतस्तु चिन्त्यमिदम्, नियमस्थले हि नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रे सङ्कोचं कृत्वा नियमशास्त्राणां विधिमुखेन प्रवृत्तिरित्येकः कल्पः। निरुक्तरूपावच्छिन्ने नियामकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन संकोचं कृत्वा नञमध्याहृत्य नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरित्यपरः। तथाच प्रकृते आद्यकल्पे व्यवायेऽपि इत्यत्र नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्य—अट्कुप्वाङिति नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकाऽऽक्षरसमाम्नायिकत्वावच्छिन्नातिरिक्तत्वेन सङ्कोचं कृत्वा "अट्कुप्वाङ्" इत्यस्य विधायकत्वे 'आदर्शेन' इत्यादौ अडादिव्यवधानसत्त्वात् "अट्कुप्वाङ्" इत्यनेन, "अट्कुप्वाङ्" इत्यत्र वाऽडादिकर्तृकव्यवधानवद्भिन्नो य आक्षरसमाम्नायिककर्तृकव्यवधानवान् तस्य नस्य णत्वं नेति निषेधमुखेन प्रवृत्तौ व्यवायेऽपि इत्यनेन वा 'आदर्शेन' इत्यादौ णत्वस्य दुर्वारत्वात्। अत एव "रषाभ्याम्" इतिसूत्रभाष्ये 'मातृणाम्' इत्याद्यर्थं "णत्वे ऋकारग्रहणं कर्तव्यम्" इति वार्तिकमुक्त्वा "अट्कुप्वाङ्" इतियोगविभागेन नियमं च स्वीकृत्य तद् वार्तिकं प्रत्याख्याय "अट्कुप्वाङ्" इति सूत्रे 'आदर्शेन' इत्यादौ णत्ववारणाय "अटा व्यवाये णत्वे अन्यव्यवाये प्रतिषेधो वक्तव्यः" इति वार्तिकमुक्तम्। अन्यथा पूर्वसूत्रे एव 'आदर्शेन' इत्यादौ नियमेनैव णत्ववारणादेतद्वार्तिकानुत्थानं स्यात्। भाष्यकारेण चोक्तम्—"व्यवायेऽपीति योगो विभज्यते अट्कुप्वाङ् इति नियमार्थम्' इत्यादि। अग्रे च "अटैव व्यवधाने भवति। किं वक्तव्यमेतत्? नहि। कथमनुच्यमानं गंस्यते? अड्ग्रहणसामर्थ्यात्। यदि हि अटा चान्येन च व्यवाये स्यात् अड्ग्रहणमनर्थकं स्यात्। व्यवाये नो णो भवतीत्येव ब्रूयात्। अस्ति चान्यदट्ग्रहणस्य प्रयोजनम्। किम्? योऽनिर्दिष्टैरेव व्यवायस्तत्र मा भूत्—मृत्स्नम्, मृत्स्ना इति। यद्येवं प्रयोजनं स्यात् शर्व्यवाये नेत्येव ब्रूयात्" इति समाहितम्। तस्मात् 'शर्व्यवाये न' इत्येव सिद्धे "अट्कुप्वाङ्" इति गुरुन्यासकरणाद् अट्कुप्वाङ्नुम्भिरेव व्यवाये णत्वं भवतीति सूत्रार्थ इति 'आदर्शेन' इत्यादौ णत्वं न भवतीति। न च 'शर्व्यवाये न' इति न्यासकल्पे 'आर्ध्नोत्' इत्यादौ णत्वं स्यात्, यथाश्रुतन्यासे चाडादिव्यवधानाभावाण्णत्वं न स्यादिति फलभेद इति वाच्यम्, 'तुशर्व्यवाये न' इत्येव सिद्धे 'अट्कुप्वाङ्' इति गुरुन्यासकरणेन निरुक्तार्थस्य लाभात्। भाष्ये 'शर्व्यवाये न' इति 'तुशर्व्यवाये न' इत्यस्योपलक्षणमिति दिक्।

नुम्ग्रहणमिति । तत्स्थानिकस्य स्वाभाविकस्य चानुस्वारमात्रस्योपलक्षणमित्यर्थः । तेन 'बृहि वृद्धौ' इदित्त्वान्नुम् । तस्यानुस्वारः । 'तृंहू हिंसायां' स्वाभाविकोऽत्रानुस्वारः । बृंहणम्, तृंहणम् । उभयत्रापि णत्वं सिद्धम् । 'इवि प्रीण-

## शब्दरत्नम् ।

"ऋवर्णान्नस्य" इति वचनं न कार्यमिति भावः । इदं प्रत्याहाराह्निके प्रकृतसूत्रे च भाष्ये स्पष्टम् । यद्यपि "रषाभ्याम्" इति पञ्चम्योपस्थितनिर्दिष्टपदस्य "व्यवाये" इत्यनेनाविरोधायाडाद्यतिरिक्ताव्यवहितपरतया 'आदर्शेन' इत्यादौ णत्वं सुशकवारणम् । ध्वनितं चेदं प्रकृतसूत्रे वार्त्तिककृता, तथाऽपि तत्र नृणामित्यर्थं वचनारम्भे गौरवमितीदमेवादृतं मूलकृता । स्वाभाविकस्येति । तद्भिन्नस्थानिकस्य पाणिन्युच्चारितस्येत्यर्थः । तृंहू इत्यादेरपि "नकारजावनुस्वार" इति वृद्धोक्तेर्नस्थानिकत्वात् । अत एव तृंहू इत्यस्य नलोपे 'तृढः' इत्यस्य सिद्धिः । इवि प्रीणने इति । हिविदिवीतिदण्डकपठितस्येदं निष्कृष्य

## भैरवी ।

रेफात्परत्वेन णत्वस्य सिद्ध्या । अत एवाह—इदमिति । आदर्शेनेत्यादौ णत्वाप्रवृत्तियोगविभागाभावेऽपि भविष्यतीत्याशयेनाशङ्कते—यद्यपीत्यादिना । ध्वनितमिति । णत्वेऽन्यव्यवाये प्रतिषेधो वक्तव्यः नवाऽन्येन व्यवेतत्वादिति ग्रन्थेन ध्वनितमित्यर्थः । तत्र–रषाभ्यामिति सूत्रे । इदमेव—योगविभागेन नियमत्वमेव यथोत्तरम्मुनीनां प्रामाण्यात्तत्खण्डनाय प्रवृत्तेश्च उक्तनियमं विनोक्तसादृश्यस्यालाभः स्यात् । ननु स्वाभाविकोऽनुस्वारो दुर्लभः, "नकारजावनुस्वारपञ्चमौ" इति वृद्धोक्तेरत—आह तद्भिन्नस्थानिकेति । नन्वेवमपि स्वाभाविकत्वमनुपपन्नमेव नुम्भिन्नस्थानिकस्यापि लक्षणवशसम्पन्नत्वादत आह—पाणिनीति । एतेन स्वस्य पाणिनेराभावः उच्चारणं स यत्रास्तीति व्युत्पत्तिर्ध्वनिता । एतादृशव्याख्याने बीजमाह—तृंहूइत्यादेरिति । वृद्धोक्तेरावश्यकत्वमाह–अत एवेति । नकारस्थानिकत्वादेव । इवि प्रीणने इत्येवम्पाठाभावादाह–हिवीति । पठितस्येति । माधवादिभिरिति शेषः । एतेन स्वमते इवि व्याप्ताविति

## भावप्रकाश ।

ह–इदमिति । एओङैऔच्सूत्रे इत्यर्थः । ध्वनितमिति । "णत्वेऽन्यव्यवाये प्रतिषेधो वक्तव्यो न वाऽन्येन व्यवेतत्वात्" इति ग्रन्थेनेति भावः । तत्र–रषाभ्यामिति सूत्रे । इदमेवेति । योगविभागेन नियमत्वमेवेत्यर्थः, लाघवात्, यथोत्तरं मुनीनां प्रामाण्याच्च, तत्खण्डनाय तत्प्रवृत्तेश्च। एतेनोक्तरीत्या योगविभागं विनापि निर्वाहः सुकर इति दण्डयुक्तमपास्तम् । ननु स्वाभाविकोऽनुस्वारो दुर्लभः नकारजावितिवृद्धोक्तेरिति चेदत्र मान्याः—अनुम्नकारस्थानिकस्येत्यर्थ इति। तत्प्राचामनुरोधेन, माषकुम्भवापेनेत्यत्र समासभेदेन णत्वद्वयशङ्कापरभाष्यविरोधापत्तेः, तत्र तस्य मस्थानिकत्वात् तद्ध्वनयन्नाह–तद्भिन्नस्थानिकस्येति। अत एव पुत्रकंयुणेति समूर्धन्यः साधुः । नन्वेवमपि स्वाभाविकत्वं लेशतोऽपि नानुसृतमत आह–पाणिनीति। अनेन स्वस्य पाणिनेराभाव उच्चारणं स यस्यास्तीति व्युत्पत्तिः सूचिता। तथा व्याख्याने बीजमाह–तृंहू इतीति । वृद्धोक्त्यङ्गीकारावश्यकत्वमाह–अत एवेति । नस्थानिकत्वादेवेत्यर्थः । एतेन स्वाभाविकस्येति वदन्तो रत्नाकरादयः परास्ताः । एवं पाठाभावादाह–हिवीति । पठितस्येति । माधवादिभि-

## सरला

सुशकवारणमिति । चिन्त्यमिदम्, "अट्कुप्वाङ्" इति सूत्रे अव्यवहितत्वांशस्य बाधात् तद्विकलांशस्योपस्थित्या अडादीतरत्वेनाव्यवहितपदार्थे सङ्कोचस्य कर्तुमशक्यत्वात् । "तस्मिन्निति" "तस्मादिति" इति परिभाषे हि–योंऽशो बाधितः सिद्धो वा तमंशं परित्यज्य अन्यांशविशिष्टे उपतिष्ठेते इति सिद्धान्तात् । यथा प्रत्ययविधौ परश्चेत्यधिकारेण उत्तरांशस्य सिद्धत्वात् तदंशरहिता "तस्मादिति" परिभाषोपतिष्ठते । यथा च "प्रत्ययस्थात्" इति सूत्रे पूर्वस्येत्युक्त्योत्तरांशस्य बाधितत्वात्तदंशरहितोपतिष्ठते । एवं व्यवायेऽपि इत्युक्त्या ऽव्यवहितत्वांशस्य बाधितत्वात्तदनुपस्थितौ तत्र कथमडादीतरत्वेन सङ्कोच इति विभाव्यताम् । तथाच 'आदर्शेन' इत्यादौ णत्वं दुर्वारमेवेति बोध्यम् ।

ने' प्रेन्वनम् । इह "कृत्यच:" "इजादे: सनुम:" इति णत्वं न । यथा "नक्षत्रं दृष्ट्वा वाचं विसृजेत्" इति विधौ नक्षत्रदर्शनस्य कालविशेषोपलक्षणत्वात्सत्यपि दिवा नक्षत्रदर्शने वाङ् न विसृज्यते, उपलक्षितस्य कालविशेषस्याभावात् । रात्रौ असत्यपि नक्षत्रदर्शने विसृज्यते, तस्य सत्त्वात्; तथेहापि बोध्यम् । नन्वेवं नुम्ग्रहणं, व्यर्थम्, अनुस्वारस्याट्त्वेनैव संग्रहात् । उर:केणेत्यादौ विसर्गजिह्वामूलीयादिव्यवधाने ह्येषैव गतिरिति चेत्सत्यमित्याह—तच्चेति । स्यादेतत् । उक्तरीत्या "नुम्विसर्जनीय" इति सूत्रेऽपि नुम्ग्रहणं त्याज्यं स्यात् । तत्राप्यनुस्वारस्य लक्षणीयत्वात् । अन्यथा ऽसंभवात् । न हि षत्वप्रवृत्तिवेलायां 'सर्पींषि' इत्यादौ नुम् लभ्यते । षत्वस्यासिद्धत्वेन तत: प्रागेवानुस्वारप्रवृत्ते: । यद्यपि 'सुहिन्सु' इत्यत्र संभवत्येव, तथाऽपि तत्रैवातिव्याप्ति वारयितुं लक्ष्यानुरोधान्नुमस्थानिकेऽनुस्वारे लक्षणा ऽऽश्रयणीयैव, व्याख्यानात् । तस्य च शर्त्वेन तद्व्यवाये षत्वस्य सिद्धत्वादिति चेत् ? मैवम् , उक्तरीत्या तत्रत्यविसर्गग्रहणस्य प्रत्याख्यानसंभवेऽपि नियमार्थं नुम्ग्रहणम् । तथा हि, अनुस्वारेण व्यवधाने चेत् षत्वं तर्हि नुम्स्थानिकेनैवेति नियम्यते । तेन पुंस्वित्यादौ षत्वं नेति दिक् ।

"यस्मात्प्रत्ययविधि:" । अत्र प्राचोक्तम्—यस्माद्धातो: प्रातिपदिकाद्वेति । तन्न, तिङन्तादीनामपि तरबादिकं प्रत्यङ्गत्वात् । सङ्कोचस्य निर्मूलत्वात् । आमुष्यायण इत्यादौ वृद्ध्यभावापत्तेश्च । न हि प्रातिपदिकादयं तद्धित: किन्तु सुबन्तादिति दिक् ।

"अतो भिस ऐस्" ॥ नन्वेस् इत्येवास्तु । न च "अतो गुणे" इति पररू·

---

शब्दरत्नम् ।

ग्रहणम् । प्रेन्वनमित्यादौ नुमो नस्य क्षुभ्नादित्वाण्णत्वाभाव: । इति दिगिति । तद्वदत्र तु न वक्तुं शक्यं, तृंहू इत्यस्य तृंहणमित्यसिद्धे: । स्पष्टं चेदं भाष्ये ।

अङ्गत्वादिति । तदनङ्गीकारे ह्यपाचितरामित्यादौ चिणो लुगापादनादिपरभाष्यविरोध: । चिण: परस्याङ्गसंज्ञानिमित्तस्य प्रत्ययस्य लुगित्यर्थात् । दिगिति । दिगर्थस्तु

भैरवी ।

पाठेऽपि न क्षति: । दिगर्थमाह—तद्वदिति । "नुम्विसर्जनीय" इतिसूत्रस्थनुम्ग्रहणवदेतत्सूत्रस्थनुमित्यर्थ: । असिद्धेरिति । यदि नुम्स्थानिके लक्षणा स्यात्तदा तृंहणमित्यत्र नुम्स्थानिकानुस्वाराभावाण्णत्वन्न स्यादत: 'काकेभ्यो दधि रक्ष्यताम्' इति वाक्यस्थकाकपदस्य दध्युपघातकसामान्ये यथा लक्षणा तथेहापि नुम्शब्दस्यानुस्वारमात्रे लक्षणा स्वीकार्येति भाव: ।

तिङन्तस्य तरब्निरूपिताङ्गसंज्ञाया: फलमाह—तदनङ्गीकार इत्यादिना । आपादनादीति । अत्रा-

भावप्रकाश ।

रिति शेष: । तथा च तद्रीत्याऽयं ग्रन्थ:, सिद्धान्ते तु श्विभ्यासाविति बोध्यम् । उभयथापि णत्वनिवारणसम्भवान्मूलटीकयो: सिद्धान्तानादर: । दिगर्थमाह—तद्वदिति । तत्सूत्रस्थनुम्वदेतत्सूत्रस्थनुमीत्यर्थ: । असिद्धेरिति । एवं च यथा काकेभ्यो दधीत्यादौ दध्युपघातके लक्षणा तथात्राप्यनुस्वारमात्रे लक्षणा नतु तदुपस्थाप्यनस्थानिकानुस्वारे इति भाव: । भाष्ये इति । रषाभ्यामिति सूत्रे इति भाव: ।

मूले प्राचोक्तमिति । प्रसादकृता व्याख्यातमित्यर्थ: । चिणोलुगिति । तरपस्तशब्दस्येति भाव: । आदिना समाधानं सङ्गृह्यते । अदुहितरामित्यादौ हल इति दीर्घ: सम्प्रसारणसंज्ञायां यथासङ्ख्यविज्ञाना·

पापत्तिः । एकारोच्चारणवैयर्थ्यापत्तेः । अन्यथा इसमेव विदध्यादिति चेत् ? सत्यम्, एदैतोर्द्विमात्रत्वाविशेषेण गौरवाभावादैस् कृतः । एवं च पररूपशङ्कैव नास्तीति महल्लाघवम् । यत्त्वाहुः—ऐस्करणं निर्जरसैरित्यैकारश्रवणार्थमिति । तद्भाष्यविरुद्धम् । सन्निपातपरिभाषया जरसादेशाप्रवृत्तेर्निर्जरैरित्येव भाष्ये सिद्धान्तितत्वात् ।

"नामि" ॥ परिभाषाविरोधादिति । एतच्च "रुधादिभ्यः श्नम्" इति सूत्रे

---

शब्दरत्नम् ।

याथाकथाचमित्यादौ "यथाकथाचहस्ताभ्यां णयतौ" इत्यनेन वचनसामर्थ्येन निपातसमुदायात्प्रत्ययेऽङ्गत्वानापत्तौ वृद्ध्यनापत्तेरित्यलम् ।

ऐस्कृत इति । नद्यैरित्यादिसिद्धये उत्तरार्थं तदित्यन्ये ।

भैरवी ।

दिना तत्समाधानपरभाष्यसङ्ग्रहः । एवमदुहितरमित्यत्रेटः सम्प्रसारणसंज्ञायां "हलः" इति दीर्घः प्राप्तः स यथासंख्यविज्ञानान्नेति ग्रन्थस्य च न तस्य मते विरोधः । निपातसमुदायादिति । एतेन प्रातिपदिकत्वाभावो ध्वनितः । अलमिति । अलमर्थस्तु यदि णप्रत्ययस्य णित्त्वसामर्थ्याण्णित्त्वनिमित्तिका वृद्धिर्भविष्यतीत्याश्रीयते तदा नेदमप्रयोजनम् । किन्तु औपगवादौ वृद्धिर्न स्यात् । सुबन्तात्प्रत्ययस्य विधानेनाण्प्रत्ययनिरूपिताङ्गत्वस्य भवन्मतेऽप्राप्तेरिति बोध्यम् । यदि त्वत्रापि प्रातिपदिकाधिकारात्प्रातिपदिकादेव विधानमणादेः "कुत्सित" इति सूत्रस्थभाष्यरीत्या तु सुबन्ताद्भवतीत्युच्यते तदाऽपाचितरामित्यत्र लुगापादनपरभाष्यविरोध एव मुख्यन्दूषणमिति ।

उत्तरार्थमिति । "बहुलञ्छन्दसि" इत्युत्तरसूत्रार्थमित्यर्थः ।

मूले षष्ठी विषयभेदाद्भिद्यत इति । एतेन तन्त्रेण षष्ठीद्वयोच्चारणन्तत्रास्तीति दर्शितम् । एतदे-

भावप्रकाशः ।

ग्नेत्याकरविरोधोऽप्यनुसन्धेयः । अर्थादिति । तथा च तेनैव वारणे तत्र पूर्वपक्षसमाधानयोर्द्वयोरपि निर्दलत्वापत्तिरिति भावः । नन्वामुष्यायण इत्यादावलुगिव वृद्धिरपि वार्त्तिकेनैव सिध्यतीत्यत आह—दिगर्थस्त्विति । सामर्थ्येनेति । अन्यथा प्रातिपदिकाधिकारात्तत्त्वस्य प्रत्येकपर्याप्तत्वेन तस्मान्न स्यादिति भावः । इतीत्यलमिति पाठः । नन्वत्रापि णित्करणसामर्थ्येन सा भविष्यतीत्यत आह—अलमिति । तदर्थस्तु औपगवादिसिद्धिः । न च षष्ठ्यर्थसमर्पकप्रातिपदिकादेव तद्धित इति वाच्यम् । सर्वत्रैव तथात्वापत्तौ लुगनुशासनवैयर्थ्यापत्तेः पदविधित्वाभावे समर्थपरिभाषाया अप्राप्त्यापत्तेश्चेति मान्याः । वस्तुतो लुगापादनादिपरभाष्यविरोध एव मुख्यदोष इति तत्त्वम् । उपायस्योपायान्तरादूषकत्वात् ।

काशिकाकारेण बहुलं छन्दसीत्यत्रोक्तमर्थमाह—नद्यैरिति । उत्तरार्थमिति । बहुलं छन्दसीत्यत्रानुवृत्त्यर्थमित्यर्थः । एतेन निर्जरसैरित्यैकारश्रवणमैसः फलमिति प्रकाशोक्तिस्तु वृत्तिकृदुक्तमतान्तरानुसारिणीति खण्डनकृदुक्तिः परास्ता बहुलं छन्दसीत्यत्रत्यतद्ग्रन्थस्य युक्तत्वेऽपि बाधे दृढे इति न्यायेन सन्निपातपरिभाषाऽनित्यत्वेनातोभिस इत्यत्र तथा काशिकाहरदत्ताद्युक्तेरपि तदुक्तेरिव खण्डयत्वादिति भावः ।

सरला ।

दिगर्थस्त्विति । 'आमुष्यायणः' इत्यादौ षष्ठ्या अलुग् यथा निपातनात्तथा निपातनादेव वृद्धेरपि साधयितुं शक्यत्वात्तत्र दोषाभाव इत्यरुचिरत्र बोद्धव्या । वृद्ध्यनापत्तेरिति । वस्तुतस्तत्रापि णित्करणसामर्थ्येन अङ्गत्वाभावेऽपि वृद्धिर्भविष्यति । अलमिति । तदर्थस्तु औपगव इत्यत्र वृद्धिर्न स्यात् सुबन्तादण्प्रत्ययस्य विहितत्वात् ।

उत्तरार्थमिति । "बहुलं छन्दसि" इति सूत्रेऽनुवृत्त्यर्थमित्यर्थः ।

"श्नान्नलोपः" इति सूत्रे च भाष्यकैयटयोः स्पष्टम्। आरम्भसामर्थ्यादिति। "सुपि च" इत्यस्य तु न सामर्थ्यम्। रामाभ्यामित्यादौ सावकाशत्वादिति भावः। एवं च रामशब्दे "नामि" इत्यस्योपन्यासो लेखकप्रमादादिति यदूचुस्तच्चिन्त्यम्।

"आदेशप्रत्यययोः"॥ एकाऽपि षष्ठी विषयभेदाद्भिद्यते इत्याशयेन व्या-

## शब्दरत्नम्।

स्पष्टमिति। "सुपि च" इत्यपेक्षया "नामि" इति नित्यमित्यपि तत्र ध्वनितम्।

विषयभेदादिति। तन्त्रेण षष्ठीद्वयोच्चारणाद् आदेशरूपसस्य स्थाने प्रत्ययावयवसस्य स्थाने च षो भवतीत्येवंरूपः षष्ठीभेद इत्यर्थः। ओस्सम्बन्धद्वयार्थक इत्यभिमानः।

## भैरवी।

वाह आदेशेत्यादिना। षष्ठीभेद इति। अत्र प्रातपाद्यार्थस्य भेदान्ङस्द्वयोच्चारणङ्कार्यन्तच्च समुदायान्न सम्भवतीति सूत्रे तन्त्रेणौस्रूपस्य सकृदुच्चारणेन निर्देशः कृतः। तत्तद्विषयस्य संस्कारकाले तु प्रत्येकं ङसन्तस्योच्चारणेन वाक्यस्य कल्पना कार्येति। इत्येवंरूप इति। इत्येवंव्याख्येयवाक्यार्थ इत्यर्थः। षष्ठीभेदः—वाचिकायाः षष्ठ्या भेदः। न च ङसैकस्य सम्बन्धस्य बोधनवदोसा सम्बन्धयोर्बोधनम्भविष्यति, किन्तन्त्रस्वीकारेणेति वाच्यम्? प्रतियोगिन एकत्वे ङसः प्रयोगस्तयोर्द्वित्वादावोसादेरिति कल्पना तन्त्रेणैवेत्याशयात्। ननु यत्र शब्दस्य सारूप्यन्तत्र तन्त्रेणोच्चारणमिति भवति प्रकृते तु तन्नास्तीति कथन्तन्त्रेणोच्चारणम्? किञ्च प्रत्ययमात्रे तन्त्रेणोच्चारणं लोके न दृष्टमत आह—ओस्सम्बन्धेति। तथाचैकस्यौसो यतः सम्बन्धद्वयार्थत्वमत एवात्र तन्त्रव्यवहार इत्याशयः। अभिमान इति। प्रकाशग्रन्थानुवादकैरिति शेषः। ननु यदि

## भावप्रकाश।

तन्त्रेण षष्ठीद्वयोच्चारणादिति। ओसा तन्त्रेण षष्ठीद्वयस्य तदेकवचनद्वयस्य उच्चारणाद् बोधनादित्यर्थः। अस्य च षष्ठीभेदेऽन्वयः। अयं भावः—विषयभेदादर्थभेदात् ङस्द्वयोच्चारणे प्राप्ते समुदायात्तदसम्भवेन सूत्रे तन्त्रेणौस्रूपसकृदुच्चारणेन निर्देशः ततस्तत्तल्लक्ष्यविषयकवाक्यार्थजिज्ञासायां प्रत्येकं ङसन्तोच्चारणमिति; तदाह—आदेशेति। इत्येवंरूप इति। इत्येवमवश्यव्याख्येयवाक्यार्थरूप इत्यर्थः। षष्ठीभेद इति। वाचकशब्दभेद इत्यर्थः। वाच्यवाचकयोरभेदान्नानुपपत्तिः। यथा द्विर्वचनेचीत्यत्र तन्त्रेणोच्चारितात्पदात् पदद्वयोपस्थितिस्तथेति भावः। न च ङस एकसम्बन्धस्येवौसः सम्बन्धद्वयस्य भानोपपत्तेः किं तन्त्रेणेति वाच्यम्। प्रतियोग्येकत्वे ङसः प्रयोगस्तद्द्वित्वादावोसादेरिति तत्र तन्त्रं विनाऽनिर्वाहात्। नन्वेवमपि शब्दसारूप्यस्य तत्र बीजत्वात्प्रकृते तदभावात्कथं तन्त्रं, किं च तन्त्रे स्वघटितेतरस्य प्रतीतिर्नात्र तथा। एतेन वक्रदण्डावित्यादाविवार्थसारूप्यमादाय तदुपपत्तिरित्यपास्तम्। किं च प्रत्यये तन्त्रं लोके न क्वचिद्दृष्टं बाधितं चात आह—ओसिति। तथा च न तन्त्रं किंत्विष्टानुरोधेनात्रागत्या तादृशप्रकृतिसमभिव्याहारात्सम्बन्धत्वेनैव सम्बन्धद्वयभानकल्पनमिति भावः। अभिमान इति। प्रकाशग्रन्थानुवादकमूल-

## सरला।

स्पष्टमितीति। तत्र भाष्ये "श्नमः शित्करणाभावे 'यज्ञानां, यत्नानाम्' इत्यत्र परत्वान्नलोपः स्यादतः शित्करणम्" इत्युक्तम्। कैयटे च "यत्तु "सुपि च" इति दीर्घत्वं तत्सन्निपातपरिभाषाबलान्न भवति" इत्युक्तम्। "कष्टाय क्रमणे" इति निर्देशेन तस्याश्चतुर्थ्येकवचनेऽनित्यत्वाश्रयणेऽपि सर्वत्रानित्यत्वाश्रयणे मानाभाव इति तदाशयः। नित्यमित्यपीति। कृताकृतप्रसङ्गित्वादिति शेषः। नच विशेषाभावेन फलाभावान्न कृते तत्प्राप्तिरिति वाच्यम्, विशेषाभावेऽपि पर्जन्यन्यायेन तत्प्राप्तेः सत्त्वात्। स्पष्टं चेदम् "इको झल्" इति सूत्रे भाष्ये।

षष्ठीभेद इति। आदेशस्य सकारेऽभेदेन प्रत्ययस्य च तत्रावयवत्वेनान्वयविवक्षाया दृष्टत्वेनैकस्याः षष्ठ्या उभयार्थकत्वाभावात्तस्याः सम्बन्धसामान्यार्थकत्वमाश्रित्य आदेशसम्बन्धिनः प्रत्ययसम्बन्धिनश्च सस्येति सामान्यतो वाक्यार्थे पश्चाद्विशेषजिज्ञासायाम् आदेशाभिन्नस्य प्रत्ययावयवस्य चेति विशेषतो

चष्टे—आदेशः प्रत्ययावयवश्चेति । यदि तु आदेशावयवो गृह्येत तर्हि तिसृणा-मित्यादौ दोषः । यदि च प्रत्ययो यः सकार इति तर्हि रामेष्वित्यादौ न स्यात् । यद्यप्येवं वैरूप्येण व्याख्याने सहविवक्षाविरहाद् द्वन्द्वो न युज्यते, तथाऽपि सौत्रत्वाद् बोद्धव्यः । विवृताघोषस्येति । यत्तु वदन्ति—सकारस्य सोष्मणो

शब्दरत्नम् ।

तिसृणामिति। तिस्रादेशे सकारोच्चारणन्तु तिस्र इत्यत्र "नरपर"इति षत्वनिषेधे चरितार्थं

भैरवी ।

तिसृणामित्यत्र षकारस्यापत्तिस्तदा सकारोच्चारणवैयर्थ्यमत आह-तिस्रादेश इति । चरितार्थमिति। एतेन तिस्र इत्यत्रैव षत्वापादने कार्ये तिसृणामित्येतत्पर्यन्तानुधावनमफलमिति यत्कैश्चि-दुक्तन्तदपास्तम् । निषेधाविषयस्य प्रदर्शनाय तावत्पर्यन्तानुधावनात् । ननु सकारस्य सो-ष्मणोऽघोषस्य तादृश एव षकार इति परोक्तानुवादङ्कृत्वा ठकारेऽतिप्रसङ्गादिति यन्मू-

भावप्रकाश ।

कृत इत्यर्थः । स च 'इत्याशयेन' 'व्याख्याने' इत्याभ्यां मूलकृतैव ध्वनितः। न च द्वन्द्वसाधुत्वायादेशप्रत्य-यसम्बन्धिसस्य स्थाने ष इति प्राथमिकबोधे सम्बन्धत्वेनैव षष्ठ्या जनिते पश्चात्तत्तल्लक्ष्यविषयकलक्षणकल्प-नायां तत्तदुत्तरं भिन्ना भिन्ना षष्ठी तेन तेन रूपेण सम्बन्धं टीकोक्तरूपं बोधयिष्यतीति किं सौत्रत्वेनेति सौत्रत्वादित्युक्त्यापि स ध्वनित इति वाच्यम् । एवं रीत्या द्वन्द्वस्य साधुत्वे मानाभावात् । अत्रैवार्थे सात्प-दाद्योरिति तात्पर्यग्राहकम् । लक्षणा तु ततो न, तस्या जघन्यवृत्तित्वादिति तदाकूतम् । यदि तूक्तज्ञापकेन लक्षणैव प्रत्ययपदस्य तदवयवे तदा सौत्रत्वमोस उभयार्थकत्वं च नेति बोध्यम् । एतेन लक्षणायां द्वन्द्व-साम्राज्ये मूलं चिन्त्यमिति रत्नाकरकृद्दण्डिमन्दाद्युक्तमपास्तम् । ओस्सम्बन्धद्वयार्थक इति तद्व्याख्यातृग्रन्थ-श्चिन्त्य इति मन्दोक्तिस्तु 'इति अभिमानः' इत्यपर्यालोचनमूलिका अन्धत्वसूचिकेति ध्येयम् । यत्तु रत्नाकर-कृद्दण्डिभ्यां तिस्र इत्यादौ षत्वापादनं कृतम् । यच्च जगन्नाथरत्नाकरकृद्दण्डिभिः तिस्रः तिसृणामित्यादौ प्रक्रियालाघवाय षत्वस्यादेशे कर्त्तव्ये सकारोच्चारणसामर्थ्यात् न षत्वमेवं च षष्ठीवैरूप्यकल्पनमपि निष्फलमे-वेत्युक्तम् । यदपि जगन्नाथरत्नाकरकृद्भ्याम्—तिस्र आचक्षाणस्तोरित्येतण्ण्यन्तप्रकृतिकक्विबन्तरूपसिध्यर्थं सकारोच्चारणमित्युक्तं, दण्डिनाऽपि तथाऽपि विसं बिषमित्यादौ षत्वं दुर्वारमित्युक्तं तत्सर्वमयुक्तमिति ध्वनय-न्नाह—तिस्रादेशे इति । निषेधेनाद्योक्तेश्चारितार्थ्येन द्वितीयोक्तेस्तत्रैव चारितार्थ्येन तावत्पर्यन्तगमना-नौचित्येन तृतीयोक्तेरयुक्तत्वम् । एतेन प्रागुपस्थिततिस्र इत्यस्य त्यागो निर्बीज इति भ्रान्तोक्तमपास्तम् । न च रादेशो बहिरङ्गतयाऽसिद्धः । यथोद्देशेऽपि तदप्राप्तेः विधिविषयेणः परत्वस्याक्षेपेण नाजानन्तर्यं इति निषेधाच्चेति भावः । यत्तु कश्चित्—ठकारे सोष्मत्वस्यात्रानुक्तेर्मूलं चिन्त्यं, किं च प्रातिशाख्यमिति समाख्या-बलात्तस्य तच्छाखाविषयत्वे सति सर्वशाखासाधारणव्याकरणे आश्रयणमयुक्तमिति तत्सम्वादस्यात्यन्तानु-चितत्वात् इत्याह । यच्च खण्डनकृत्—सोष्मण इति प्रकाशोक्तस्योष्मत्वाश्रयोष्मण इत्यर्थः, ननु वग वर्गं चेति प्रातिशाख्योक्तस्य सोष्मणः । अनेन विवृतमूष्मणामिति वचनोक्तं विवृतत्वं सूच्यते; तथा तन्मात्रमृ-कारेऽतिप्रसक्तमिति तद्व्यावृत्तयेऽघोषस्येति प्रकाशे उक्तम् । एतेन ठकारेऽतिप्रसङ्गादिदं न्यूनमिति मूलोक्ति-

सरला ।

लक्ष्यसंस्कारकवाक्ये षष्ठीभेद इति भावः । वस्तुतस्तु उभयोरपि अभेदेनैवान्वयः, प्रत्ययपदं च प्रत्यया-वयवपरमिति नात्र षष्ठीभेदाश्रयणम् । "लोपे प्रत्ययलक्षणम्" इत्येव सिद्धे प्रत्ययग्रहणेन प्रत्ययपदस्य प्रत्ययावयवपरत्वबोधनात् । अत एव 'कविभिः कृतम्' इत्यादौ प्रत्ययरूपो यो विसर्गस्तस्य षत्वं न भवतीति सामानाधिकरण्येनान्वयेऽपि "इदुदुपधस्य" इति षत्व न भवति । नच प्रत्ययपदस्य प्रत्ययावयव-परत्वे "अचिश्नु" सूत्रे ऽज्रूपे प्रत्यये इयङुवङौ भवत इत्यर्थे 'श्रियौ, भ्रुवौ' इत्यत्रैवेयङुवङौ स्यातां, नतु 'श्रियः, भ्रुवः' इत्यादौ इति भाष्यविरोधः जसवयवाकारस्यापि भवन्मते प्रत्ययपदेन ग्रहणादिति वाच्यम्, धर्मिग्राहकमानेन षष्ठ्यन्तप्रत्ययपदस्यैव प्रत्ययावयवपरत्वबोधनात् ।

ऽघोषस्यान्तरतमः ष एव मूर्धन्य इति । तन्न्यूनम्, ठकारेऽतिप्रसङ्गात्।

शब्दरत्नम् ।

मिति भावः । ठकारेऽतिप्रसङ्गादिति । "सोष्मणः सोष्माण इति द्वितीया" इति "स्थाने ऽन्तरतम-" त्रस्थभाष्येण तस्यापि सोष्मत्वबोधनात्। सोष्मण इत्य-

भैरवी ।

लक्षताऽभिहितन्तद्युक्तं ठकारस्य सोष्मत्वानुक्तेरत आह—सोष्मण इति । तस्यापि—द्वितीय-स्यापि।। ननूष्मशब्दस्य शषसहा ऊष्माण इत्यत्र धर्मिवचनत्वस्य दृष्टतया सोष्मण इत्यनुप पन्नमत आह—सोष्मण इत्येति। भावप्रधानोष्मशब्देन सोष्माणावित्यत्र समास इति भावः। नचैवंसति विवृतमूष्मणामित्यत्र द्वितीयस्यापि ग्रहणापत्तिरिति वाच्यम्? शषसहानामेव तत्र ग्रहणात्। अन्यथा नाज्झलाविति सौत्रनिर्देशस्यानुपपत्तिः स्यात्पूर्वस्य सोष्मत्वाभावात्। हकारस्य तु सोष्मत्वेन विवृतत्वेन प्रयत्नभेदस्य जागरूकत्वात्। एतदेव ध्वनयति-अत्रार्थ इति। ऋष्यन्तरेति। आश्वलायनप्रातिशाख्यकृत इत्यर्थः।

ननु गतिकारकेतिवचनस्य कथं दधिसेचावित्यत्र प्रसक्तिर्यावता कैयटेन सोपपदाद्विज्ना-

भावप्रकाश।

रपास्तेति। यच्च रत्नाकरकृत्—वर्गे वर्गे चेत्यतः प्राक्तनेन "तत उत्तरेऽष्टावूष्माणः" इत्यनेन सूत्रेणान्तस्थाभ्य उत्तरेषां शलामनुस्वारविसर्गजिह्वामूलीयोपध्मानीयानां चैतेषामष्टानामूष्मसंज्ञा विहिता। ऊष्मा वायुस्तत्प्रधाना वर्णा ऊष्माण इत्यर्थः। पश्चाद्युग्मौ सोष्माणावित्यनेन वर्गे वर्गे च द्वितीयचतुर्थयोः सोष्मसंज्ञा तत्रैव प्रदेशेषु तत्तत्संज्ञिनामेव नियमेन तत्तत्संज्ञयोपस्थितिः। संज्ञाद्वयस्य फलं यथा—तमेवोष्माणमूष्मणीस्याघस्य, सोष्मा तु पूर्वेण सहोच्यते सकृत्स्वेनेत्यन्तस्थेति व्याख्यातं तद्भाष्ये वृत्तौ च। यथात्र गुणवृद्धिशब्दाभ्यामेवं स्थिते(?)संज्ञयोर्भेदमङ्गीकृत्य ठकारेऽतिप्रसङ्ग उद्भाव्यते उताभेदम्? नाद्यः, ऊष्मसंज्ञकस्य सकारस्य सोष्मसंज्ञकत्वाभावेन सोष्मणः सकारस्येत्यस्यैवायुक्ततया ठकारेऽतिप्रसङ्गापादनस्य दूरतो निरस्तत्वात्। नान्त्यः, प्रातिशाख्यव्याकोपात् स्वमतेप्युक्तातिप्रसङ्गस्य दुर्वारत्वाच्च। विवृतमूष्मणामित्यस्याविशेषात् इति नव्योक्तमयुक्तमेवेति। तत्सर्वमापाततः भाष्याद्यनवबोधमूलकत्वात्। अनेन विवृतत्वसूचने तदनुल्लेखे बीजाभावाच्च तथापि प्रकाशग्रन्थासङ्गतेस्तदवस्थत्वाच्च। तद्ध्वनयन्नाह–सोष्मण इति। इतिहेतौ। यतो द्वितीयाः सोष्माणः अतस्तस्य ते स्युरित्यर्थः। वाग्घरिरित्यत्र "झयो हः" इत्यनेन तमग्रहणाभावे इति भावः। तस्यापि—ठस्यापि। सोष्मत्वेत्यस्यार्थं ध्वनयन् स्थान्यर्थमाह—सोष्मण इतीति। सह-शब्दप्रयोगोपपत्तये ऊष्मशब्दो धर्मपर इति भावः। एवं च सोष्मण इत्यस्यापि स एवार्थः। अत एव तदापादनं भाष्ये सङ्गतम्। तथा च न संज्ञाद्वयं, किं तु तस्य क्वचिद्धर्मपरत्वं क्वचिद्धर्मिपरत्वमित्येकैव संज्ञा भगवतोऽभिमता। अत एव प्रातिशाख्यभाष्ये सोष्माण इत्यस्य पूर्वोक्तार्थं संलिख्यात्रान्वर्थसंज्ञेयम्—ऊष्मा वायुस्तेन सह वर्त्तन्त इति सोष्माण इति व्याख्यातम्। भेदे तु एवमुक्तिरसङ्गता स्यात्। अत एव च शादय ऊष्माणः सस्थानेन द्वितीया हकारेण चतुर्था ति शिक्षैकवाक्यता भवति। इह त्रीणि वाक्यानि। शषसा ऊष्माण इति प्रथमवाक्यार्थः; सस्थानेनेति अप्रधानो निर्देशः, हेतौ तृतीया, यतः शादिसस्थानत्वं द्वितीयानामतो द्वितीया अपि ऊष्माण इति द्वितीयवाक्यार्थः; हकारेण सह तत्स्थानो द्वितीयश्चोष्मा वर्ग-चतुर्थाश्चेति तृतीयवाक्यार्थं इति तद्व्याख्यातार इति गुरुचरणाः। दीक्षितमान्यास्तु शषसहा ऊष्माण इति पूर्ववाक्यार्थः, ऊष्मशब्दो धर्मिपरः, सस्थानेनेति इत्थंभूतलक्षणे तृतीया सहयुक्ते इति वा। हशषसाः क्रमेण द्वितीयानां सस्थानाः यथा हादय ऊष्माणस्तथा खादयोऽपीत्यर्थः फकारस्य तु यद्यपि सस्थान ऊष्मा नास्ति तथापि विशिष्यैवोष्मत्वं बोध्यम्। हकारेणेति। यथा हकार ऊष्मा तथा तेऽपीत्यर्थः, इति तद्व्याख्यातार इत्याहुः। नन्वेवं विवृतमूष्मणामित्यत्र द्वितीयानामपि ग्रहणापत्तिरिति चेन्न। शषसहानामेव तत्र ग्रहणात्, अन्येषां स्पृष्टं प्रयतनं स्पर्शानामित्यत्र ग्रहणात्। अन्यथा कण्ठ्यादीनां सावर्ण्यानापत्तौ नाज्झलावित्यादिनिर्देशासङ्गतिः। अत एव प्रातिशाख्यादौ विवृतशब्देन द्वितीयादयो न व्यवह्रियन्ते। ऊष्मपदेन शादय एव, सोष्मपदेन च द्वितीया एव गृह्यन्ते। अत एव तत्र सूत्रद्वयं सफलम्। अन्यथा

तथा च प्रातिशाख्यम्–"वर्गे वर्गे च प्रथमावघोषौ युग्मौ सोष्माणावनुनासिकोऽन्त्यः" इति । ननु दधिसेच इत्यादौ प्राक् सुबुत्पत्तेः समासे षत्वं वारयितुं पदादादिः पदादिरिति पञ्चमीसमासो भाष्ये उक्तः । ततश्चेहापि "सात्पदाद्योः" इति निषेधः स्यादिति

---

## शब्दरत्नम् ।

स्योष्मत्वसहितस्येत्यर्थः । अत्रार्थे ऋष्यन्तरसम्वादमप्याह–तथा चेति । प्राक् सुबुत्पत्तेरिति।सोपपदात्सिचेर्विजिति भावः । केवलात्सिचेर्विचि दध्नः सेचाविति समासे तु "उत्तरपदत्वे च" इत्यस्य "अपदादिविधौ" इति निषेधेन प्रत्ययलक्षणेन पदत्वसत्त्वात्पदस्यादिरिति पक्षेऽपि सिद्धिरिति भावः । यद्यपि कैयटेन सोपपदात्सिचेर्विजेव नानभिधानादित्युक्तं, तथाऽपि "यचि भम्" इत्यत्र "सुप्तिङन्तम्" इत्यतः 'सुप्' इत्यनुवर्त्य-

## भैरवी ।

स्तीत्यभिहितमत आह–सोपपदादिति । सुपीत्यनुवर्तमानेऽ"अन्येभ्योऽपि दृश्यन्ते" इत्यनेनात्र विज् इति भावः । विचीति । सतिसप्तमीयम् । 'दृश्यन्ते' इति दृशिग्रहणादुपपदस्यापि व्यभिचारोऽत्र द्रष्टव्यः । अत एव वनिपा शर्वरीत्युदाहरणस्य सिद्धिरिति भावः । प्रत्ययलक्षणप्रतिषेधवचनस्याप्राप्तिमुद्घाटयति–उत्तरपदत्व इति । "उत्तरपदत्वे चापदादिविधौ" इति वचनेनेह निषेधः प्रत्ययलक्षणस्य न भवति पदादिविधित्वादित्याह–उत्तरेति । लुप्तविभक्तिकम् । उत्तरशब्दःसमासचरमावयवे रूढः वाक्ये प्रयुज्यमाने वाक्यैकदेशस्य प्रयोग इति न्यायेन पदत्वशब्दः पदत्वव्यपदेशपरः । कर्तव्य इत्यस्याध्याहारः । नन्वत्र कैयटाद्यरीत्या केवलादेव विजिति पूर्वोक्तमसङ्गतमत आह–यद्यपीति । तथापीति । अस्यानभिधाने न मानमिति परेणान्वयः । उत्तरपदत्वेति वार्त्तिकप्रत्याख्यानप्रकारमाह–यचिभमित्यादिना। तेन–मध्यवर्तिसुपो भसंज्ञाविधानेन । नन्वेवं "यचि भम्" इति सूत्रस्य व्याख्याने वाचेत्यत्र भसंज्ञा न स्यान्मध्यवर्तिसुबन्त-

## भावप्रकाश ।

एकत्रैव सर्वपाठेन निर्वाहे तदसङ्गतिः स्पष्टैव । तद् ध्वनयन्नाह—अत्रार्थे इति । आश्वलायनप्रातिशाख्यकृदुक्तमिति भावः । वक्ष्यमाणं मनसि निधायाह—सोपपदादिति । सुपीत्यनुवर्त्तमाने "अन्येभ्योऽपि दृश्यन्ते" इत्यनेन । छन्दसीति तु तत्र निवृत्तं, तथा चोपपदसमास इति भावः । विचीति शेष इति पाठः । दृशिग्रहणादुपपदस्यापि व्यभिचारः । अत एव वनिपः शर्वरीत्युदाहृतम् । तदाशयेनाह–केवलादिति । यद्यप्येवमपि दध्नः फलाश्रयत्वेन फलसिद्धिप्रकृष्टोपकारकत्वेन वा तत्तद्विभक्तिरुचिता धातोरप्युभयाकाङ्क्षासत्त्वात् , तथाच गतिकारकेत्यस्य प्रवृत्तिर्दुर्निवारैव, तथापि तयोः सम्बन्धित्वविवक्षायां षष्ठी तस्याश्चाकारकत्वाद्गतिकारकेत्यस्याप्रवृत्त्या तया सुबन्तेन समास इति भावस्तदाह—दध्नः सेचाविति । उत्तरेति लुप्तषष्ठीकमुत्तरपदपरं, तच्च समासचरमावयवे रूढम् । तेन लोहितं चर्मेति वाक्ये नलोपसिद्धिः । अत एव बहुच्पूर्वस्येति वचनमर्थवदिति भावः । अपिः पञ्चमीसमाससंग्राहकः । स च मूलोक्तपक्षे कर्मषष्ठ्यन्तेन करणतृतीयान्तेन वा समासे वा आवश्यक इति भावः । अनभिधेति । तस्य छान्दसत्वात् । अन्यथा तत्र पक्षे षत्वं दुर्वारम् । न चेष्टापत्तिः, पदादादिरिति पक्षे दौर्लभ्यादिति तदाशयः । उत्तरपदत्वे चेत्यस्य प्रत्याख्यानरीतिमाह—यचि भमित्यादि । अनुवर्त्येति । यस्मात्प्रत्ययविधिस्तदादीत्यनुवर्त्यैत्यपि

## सरला ।

अनभिधानादिति । "न लुमताऽङ्गस्य" इति सूत्रे "अपदादिविधाविति किमर्थम् ? दधिसेचौ, दधिसेचः । सात्पदाद्योरिति प्रतिषेधो यथा स्यात्" इतिभाष्यस्थदधिसेचाविति प्रतीके 'दध्नः सेचाविति षष्ठीसमासः । उपपदसमासे तु प्राक्सुबुत्पत्तेः समासविधानात्सेच्शब्दस्य पदसंज्ञाया अभावात्पदादित्वं सकारस्य न स्यात् । अनभिधानाच्च सोपपदाद्विजभावाद् दधिसेचौ इत्यादिप्रयोगाभावात्' इति ग्रन्थेन कैयटेनोक्तादित्यर्थः ।

शब्दरत्नम् ।

यजादौ असर्वनामस्थाने तत्प्रकृतिर्भसंज्ञा भवति, यजाद्यसर्वनामस्थानपरं सुबन्तं यद्यस्ति तदपि भसंज्ञं, तेन सुवाचेत्यादौ न कुत्वम् । अत्र तत्प्रकृतेः संज्ञा प्रधानशिष्टा अवयवसुबन्तस्य त्वन्वाचयशिष्टा । एवं "स्वादिषु" इति योगं विभज्य स्वादिषु पूर्वस्य पदत्वं विधाय "असर्वनामस्थाने" इत्यत्र सुबन्तमित्यनुवर्त्य 'यचि' इत्यपकृष्य प्रसज्यप्रतिषेधमाश्रित्य यजादौ सर्वनामस्थाने परतः पूर्वं पदं न, तत्परं यदि सुबन्तमस्ति तदपि पदं नेत्यर्थः । सुबन्तं च यजादिप्रत्ययाव्यवहितमेवातो राजपुरुषादौ पूर्वपदे नलोपादिसिद्धिः । तत्र समुदायस्य "स्वादिषु" इति प्राप्ता, अवयवस्य सुबन्तमिति प्राप्ता, श्रूयमाणे सौ पूर्वपदस्य संज्ञैव, तेन सुवाचावित्यादिसिद्धिरित्येवम् "उत्तरपदत्वे च" इत्यस्य प्रत्याख्याने दृषः सेचाविति षष्ठीतत्पुरुषेऽपि षत्वनिषेधाय पञ्चमीसमास आवश्यक इत्यनभिधाने न मानमिति तात्पर्यम् । प्रत्याख्याने पञ्चमीसमासे बहुसेचावित्याद्यर्थं

भैरवी ।

विरहादत आह—अत्रेति । नन्वेवमसर्वनामस्थानपरत्वं यत्र तत्र भसंज्ञयेष्टसिद्धावपि यत्र सर्वनामस्थानपरत्वं सुवाचावित्यादौ तत्र प्रत्ययलक्षणेन पदत्वं दुर्वारमेवेत्यत आह—एवमिति । विभज्येत्यादि । ल्यबन्तानां नेत्यर्थ इत्यस्य शेषभूतं यत्कार्यं इति पदन्तद्घटकधात्वर्थकार्याक्रियायामन्वयः। तत्र प्रथमल्यबन्तस्य विधायेत्यत्रैवान्वयः। प्रसज्यप्रतिषेधमाश्रित्येति । असमर्थसमासोऽसर्वनामस्थान इति पद इत्याश्रित्येत्यपि बोध्यम् । तत्परम्—यजादिसर्वनामस्थानपरमित्यर्थः।

राजपुरुषादिशब्दघटकराजादिपदे निषेधातिप्रसङ्गशङ्कां वारयति—सुबन्तश्चेति । तत्र—सुवाचावित्यादिशब्दे । अत्र योगविभागसामर्थ्यात् "अनन्तरस्य" इति न्यायस्य बाधो बोध्यः । यचीत्यस्यापकर्षेणायम्प्रतिषेध उक्तस्तस्य फलमाह—श्रूयमाण इति । तेन—पदसंज्ञानिषेधेन । इत्येवमिति । यचिभमित्यारभ्योक्तप्रकारद्वयरूपे इत्यर्थः । आवश्यक इति । अन्यथा पूर्वोक्तरीत्या सेच्छब्दस्य पदत्वनिषेधात् "सात्पदाद्योः" इत्यस्य प्रवृत्तिर्न स्यादिति भावः । एवञ्चानभिधाने साधकालाभः यथोत्तरम्मुनीनाम्प्रामाण्याद्भाष्यकारोक्तस्यैव व्यवस्था । तात्पर्यमिति । तथा वदतो मूलकृत इति शेषः । उत्तरपद इति वार्त्तिकारम्भप्रत्याख्यानपक्षयोस्तुल्यत्वमाह—प्रत्याख्यान इति । पञ्चमीसमासे-पदादादिरिति पञ्चमीसमासे । सतीति शेषः । बहुसेचाविति । अत्र

भावप्रकाश ।

बाध्यम् । भसंज्ञेति । भसंज्ञिकेत्यर्थः । तेन—भसंज्ञाविधानेनेत्यर्थः । पदत्वाभावादिति भावः । तत्प्रकृतेरिति । समुदायस्येत्यर्थः । प्रधानेति । व्यापकोद्देश्यकत्वादिति भावः । अन्वाचय इति । आनुषङ्गिकतयेत्यर्थः । व्याप्योद्देश्यकत्वादिति भावः । सन्नियोगशिष्टत्वे तु केवलेऽसिद्धिः स्यादिति भावः । एवमग्रेऽपि । नन्वेवमपि सुवाचावित्याद्यसिद्धिरत आह—एवमिति । अनुवृत्त्योक्तार्थवदित्यर्थः । अस्य नेत्यर्थ इत्यत्रान्वयः । इत्यर्थ इति । योगविभागसामर्थ्यादनन्तरस्येति न्यायं बाधित्वा तदनुवृत्त्या पदत्वद्वयस्य निषेध इति भावः । उभयसाधारणमर्थमाह—सुबन्तं चेति । आदिभ्यां वाक्कृतमित्यादौ कुत्वादिपरिग्रहः । पदत्वद्वयमेव विशदयति—तत्रेति । सुवाचावित्यादौ । तयोर्मध्ये वा । स्वादिष्विति । योगविभागेनेति भावः । सुबन्तमिति । "सुप्तिङन्तम्" इत्यनेनेति भावः । यचीत्यस्य पुरस्तादपकर्षे फलमाह—श्रूयमाणे इति । तेन—पदसंज्ञानिषेधेन । इत्येवमिति । यचिभमित्यारभ्योक्तप्रकारद्वयरूपे इत्यर्थः । तत्पुरुषेऽपीति । केवलास्मिन्नेवेविचि शेषषष्ठीतत्पुरुषेऽपीत्यर्थः । अपिरुक्तपक्षत्रयसमुच्चायकः । आवश्यक इति । तथा च षष्ठीसमासपक्षस्यैवाभावेनानभिधानकल्पनाभावः । यथोत्तरं मुनीनां प्रामाण्यानुरोधेनैव च लक्ष्यसाधुत्वौचित्यमिति भावः । तदाह—अनभिधाने । कैयटोक्ते । तात्पर्यमिति । तथा च वदतो मूलकृत इति भावः । इदानीं प्रत्याख्यानप्रकारस्य गौरवदुर्ज्ञेयत्वाभ्यामयुक्तत्वेन तन्मते तात्पर्यपदसूचितामरुचिं ध्वनयितुमाह—प्रत्याख्याने इति । वार्त्तिकेत्यादिः । समासे सत्य-

शब्दरत्नम् ।

बहुच्पूर्वस्य षत्वं नेति वचनं कार्यं, वार्त्तिकारम्भे तत्रैव कुत्ववारणाय 'बहुच्पूर्वस्य चापदादिविधौ न'' इतिवत् । इदमपि योगविभागस्येष्टसिद्ध्यर्थतया यत्रोत्तरपदस्य कार्यित्वं त-

भैरवी ।

बहुचः प्रत्ययतया पदत्वाभावेन "आदेश" इत्यनेन प्राप्तस्य षत्वस्याप्रवृत्तये "सात्पदाद्योः" इति सूत्रानन्तरं "बहुच्पूर्वस्य च"इति पठनीयमिति तात्पर्यम् । अस्मिन् पक्षे समासचरमावयवस्य क्वचिद्योगविभागलब्धनिषेधेन वा पदत्वाभावः । श्रूयमाणे सौ पदसंज्ञा त्विष्टैव । तत्रैव—बहुसेचावित्यत्रैव । समासाभावेन "उत्तरपदत्वे" इति क्लृप्तस्य वचनस्य तत्राप्राप्तिरिति । पदस्यादिरिति षष्ठीसमासेनैव षत्वस्य वारणादाह—कुत्वेति । बहुच्पूर्वस्य चेति । पदादिविधिभिन्ने पदान्तस्य बहुच्पूर्वस्य कार्यं कर्तव्ये प्रत्ययलक्षणन्नेति तदर्थः । दधिसेचावित्यादिसमासे तु क्लृप्तवचनेनैव षत्वकुत्वयोरप्रवृत्तिः । अस्मिन्पक्षे समासचरमावयवस्य पदत्वं कार्यविशेष एव, नतु सर्वत्रेति विकल्पः । श्रूयमाणे सौ पदत्वं नेति निष्कर्षः । एवमारम्भप्रत्याख्यानयोः साम्यन्दर्शितम् । इदमपीति । उक्तप्रकारेण भसंज्ञादिकमपीत्यर्थः । एतेन दधिसेचावित्यत्र कुत्वाभावाय पदत्वनिषेधस्यावश्यकतया पदस्यादिरिति षष्ठीसमासे षत्वनिषेधानापत्तिः । वार्तिकसत्त्वे त्वपदादिविधावित्युक्तेर्दोषाभाव इति निरस्तम् ।

केचित्तु वार्तिकारम्भपक्षे लाघवमस्ति । तथाहि, प्रत्याख्यानपक्षे स्वादिष्विति योगविभागः कार्यः, असर्वनामस्थाने इति सूत्रे यचीत्यस्यापकर्षोऽसमर्थसमासश्च स्वीकार्यः, 'भद्रङ्करोषि गौः' इत्यत्र 'एचो प्रगृह्यस्य' इत्यस्याप्रवृत्तिसिद्धये वाक्यान्तः सन् यः पदान्तस्तस्येति व्याख्यानञ्च कार्यम्, बहुच्पूर्वस्य चेति सात्पदाद्योरिति सूत्रानन्तरं पठनीयम् । वार्तिकारम्भे तु तस्यारम्भ एकः । "सात्पदाद्योः" इतिसूत्रे सातेः पदादिति योगविभागेन पठनीयम् । अत्र पदशब्दः शक्तस्य पदसंज्ञकस्य च बोधकः । नच शक्तम्पदमिति नात्र शास्त्रे प्रसिद्धमिति भ्रमितव्यम् "नेर्विशः" इति सूत्रे "निरपि पदं विशिरपि पदम्"इति" भाष्ये "सर्वे सर्वपदादेशा" इत्यत्र च तस्य प्रसिद्धत्वात् । एवञ्च बहुचः प्रत्ययस्य कुत्साद्यर्थे शक्तिः स्वीकार्येति बहुसेचावित्यादेः सिद्धौ बहुच्पूर्वस्य चेति वचनं न कार्यम् । नचाग्निसादित्यादौ पदादित्येव सिद्ध सातिग्रहणस्यापि एवं सति वैयर्थ्यमिति वाच्यम्, "स्वादिषु" इति यस्य पदसंज्ञेति वक्ष्यमाणार्थज्ञापनाय तस्यावश्यकत्वात् । वस्तुतस्तु सातिग्रहणं विध्यर्थङ् कार्यम् । "हलि सर्वेषाम्" इति निर्देशेन प्रकृत्युत्तरप्रत्ययावयवस्य षत्वमिति ज्ञापनात् । अत एव 'बुभूषति' 'राजपुरुषेषु' इत्यादेः सिद्धिः । ध्वनितश्चेदन्तात्पर्यमित्यरुचिसूचकशब्दोपादानेन । एवञ्च मूलोक्तज्ञापकं विनैव रामेषु इत्यादिसिद्धौ लाघवमिति । नचैवं सति बहुसेचावित्यत्रापि षत्वापत्तिरिति वाच्यम् ? सादिति लुप्तषष्ठ्यन्तं भिन्नम्पदम् पदाद्योरित्यत्र तु पदञ्च आदिश्चेति द्वन्द्वात्पञ्चमी(?)आदिशब्दश्चादित्वविशिष्टबोधकशब्दपर इति बहुचो लाभ इत्याहुः ।

भावप्रकाश ।

पीति शेषः । षत्वं नेत्यीति । तत्र पूर्वस्यापदत्वादादेशं प्रति प्राप्तषत्वाभावाय नञ्रहितं "बहुपूर्वस्य च" इत्येतावन्मात्रं सात्पदाद्योरित्यत्र कर्त्तव्यमिति भावः । अत्र पक्षे समासचरमभागस्य यजादौ पदसंज्ञा क्वापि नास्ति क्वचिद्योगविभागेन निषेधात् क्वचिद् भत्वेन बाधात् । श्रूयमाणे साविष्टैवेति निष्कर्षः । तत्रैवेति । बहुसेचावित्यत्रैवेत्यर्थः । असमासेनोत्तरपदत्वाभावेन निषेधाप्राप्त्या प्रत्ययलक्षणेन पदत्वसत्त्वेन षष्ठीतत्पुरुषेणैव षत्वनिषेधसाम्राज्येऽपि कुत्वावारणादाह—कुत्वेति । चो वार्त्तिकोक्तसमुच्चायकः । बहुच्पूर्वस्य च पदादिविधिभिन्ने पदान्तविधौ प्रत्ययलक्षणं नेत्यर्थः । दधिसेचावित्यादिसमासे तूत्तरपदत्वे चेत्यनेनाभयं सिद्धम् । अत्र पक्षे समासचरमभागस्य यजादावपि कार्यविशेषपुरस्कारेण पदसंज्ञाऽस्ति न वेति विकल्पः, श्रूयमाणेऽसौ नैवेति निष्कर्षः । इदमपीति । प्रत्याख्यानप्रकारोक्तभसंज्ञादिकमपीत्यर्थः । इष्टेति । तथा च तस्य काचित्कत्वमिति भावः । तदाह—यत्रेति । तेन ङमुडादिविधौ णत्वादिविधौ चाप्रवृत्तिः ।

चेत् ? मैवम् , स्वादिष्विति या पदसंज्ञा तामाश्रित्योक्तनिषेधो न प्रवर्तते इति

शब्दरत्नम् ।

द्विषय एव पदान्तत्वप्रयुक्तकार्ये एव च बोध्यमित्यन्यत्र विस्तरः । या पदसंज्ञेति । न च राजपुरुषेष्वित्यत्र दोषः, अन्तर्वर्त्तिविभक्त्या सुबन्तमिति पदत्वमाश्रित्य निषेधापत्ते-रिति वाच्यम् । सातिग्रहणेन "स्वादिषु" इति यस्य पदसंज्ञा तदुत्तरस्य षत्वनिषेधो नेति ज्ञाप्यते इति तात्पर्यात् । प्रत्याख्यानरीत्या तस्यापि "स्वादिषु" इति पदत्वाच्च । सर्वं चेदं "न लुमता—" इति सूत्रे भाष्ये स्पष्टम् । व्यतिसे इति । यद्यपि व्यतिहारस्याने-

भैरवी ।

पदत्वमाश्रित्येति । नचोत्तरपदत्व इति वार्तिकेन निषेधः स्यादिति वाच्यम् ? उत्तरपदस्य कार्यित्वाभावेन तस्याप्राप्तेः । ननु सोः समुदायाद्विधानेन राजपुरुषेष्वित्यत्र कथमेतावता निर्वाह इत्यत आह—प्रत्याख्यानरीत्येति । अत्र प्रत्याख्यानरीत्येतिकथनेन वार्तिकारम्भपक्षस्य युक्तत्वं सूचितम् । अत एव भाष्ये उक्तरीत्या प्रत्याख्यानम्प्रदर्श्य पुनर्नञ्वदित्तस्य तस्य वचनस्य पाठेन तस्य सत्त्वन्ध्वनितम् । तस्यापि—उत्तरपदस्यापि । अयम्भावः—प्रत्याख्यानं स्वादिष्विति योगविभागेन क्रियते । एवञ्चासर्वनामस्थाने यचीत्यत्र सुबित्यस्य चेत् अनुवृत्तिस्तदा स्वादि-ष्वित्यत्रापि तस्य सम्बन्धः कार्यः । अन्यथा मण्डूकप्लुत्यापत्तिरिति मध्यवर्तिसुबन्तस्यापि तेन पदत्वम्भवतीति । एवञ्चदं समाधानमपि प्रत्याख्यानानुरोधीति स्पष्टं लभ्यते । स्वादिपर-त्वेन यस्य पदसंज्ञेति ज्ञाप्यतामित्येतच्च 'सात्प्रतिषेधो ज्ञापकः, स्वादिपरत्वेन येषाम्पदसंज्ञा न तेषाम्प्रतिषेधः" इति कथनेन भाष्यकृता सूचितमेव । केचित्तु सातिग्रहणेन नोक्तार्थो ज्ञाप्य-ते किन्तु पदादेरिति प्रतिषेधः प्रत्ययस्य षत्वे कर्त्तव्ये न प्रवर्तत इत्येव ज्ञाप्यते इतिवदन्ति । तन्मतन्दूषयति—मूले यत्त्वाहुरित्यादिना । आहुरित्यस्य प्रकाशकृत इति शेषः । अनेक-कर्तृकेति । अयं भावः—कर्तरिकर्मेतिसूत्रे कर्मशब्दः क्रियापरः, व्यतीहारश्च परिवर्तनरूपः । अत एव "उदीचाम्माङो व्यतीहारे" इति सूत्रस्य 'अपमित्य याचते' इत्युदाहरणव्याख्याना-वसरे याचित्वा वस्त्राणि परिवर्तयतीति कैयटेनोक्तम् । एवं स्वीयं वस्तु दत्त्वा परकीयस्य वस्तुनो ग्रहणमपि व्यतीहारः, प्रणिदानं व्यतीहार इत्यनर्थान्तरमिति घसंज्ञासूत्रस्थकैयटात् । एवञ्च 'सम्प्रहरन्ते राजानः' इत्यत्रेवानेकसाधनसाध्यक्रियास्थल एव व्यतीहारसम्भव इति यत्र

भावप्रकाश ।

क्मुट्सूत्रभाष्यं त्वेकदेश्युक्तिः । वस्तुतोऽयं प्रकारो गुरुभूतो दुर्ज्ञेयश्चेति न युक्तः । भसंज्ञायाः विषयविवे-कासिद्धेः । ध्वनितं चेद प्रत्याख्यानोत्तरं पुनर्नञ्वदित्तैतद्वचनपाठेन नियामकेन भाष्ये इत्युक्तमादौ । तदाह—अन्यत्र विस्तर इति । एवं च तदा ऽनभिधानावश्यकत्वेन तत्र शेषषष्ठ्या समासाङ्गीकारेण षष्ठीसमासस्यैव सूत्रे सत्त्वेन मूलमयुक्तमिति भावः । इत्यत्रेति । इत्यादावित्यर्थः । आपत्तेरिति । स्वादिष्वित्यनेन तु यस्मात्प्रत्ययविधिरित्यनुवृत्त्या विशिष्टस्यैव सा नोत्तरपदस्येति भावः । तदुत्तरस्ये-ति । तत्पदसंज्ञकात् केवलात्समुदायाद्वोत्तरस्येत्यर्थः । षत्वेति । 'तत्पदत्वं सुबन्तमिति पदत्वं चाश्रित्य प्राप्त' इत्यादि । अत एव सात्प्रतिषेधो ज्ञापकः स्वादिपरत्वेन येषां पदसंज्ञा न तेभ्यः प्रतिषेध इतीति भाष्यं सङ्गच्छते । ननु कथमिदं तथोक्तेस्तात्पर्यम् । अक्षरमर्यादयाऽलाभात इति चेत् ? शृणु, तेन सूत्रेण या व्यक्तिः पदसंज्ञिका तां व्यक्तिं पूर्वत्वेनाश्रित्येत्यर्थन तथोक्त्या तथा लाभ इति । नन्वेवं तात्पर्यं तथैव वदेत् अत आह—प्रत्याख्यानेति । तस्यापि—उत्तरपदस्यापीत्यर्थः । अयं भावः, यथा ऽग्रे सुबन्तमित्यस्या-नुवृत्तिस्तथा स्वादिष्विति योगविभागेऽप्यनुवृत्त्या स्वाद्यनन्तरसमुदायावयवसुबन्तं यदस्ति तदपि पदसंज्ञं भवतीत्यर्थान्तरम् । अन्यथा मण्डूकप्लुत्यापत्तिः । इदमेवाभिप्रेत्य भाष्ये तत्रानुवृत्तिः कृतेति स्पष्टमुद्द्योत इति । एव च समाधानस्यापि प्रत्याख्यानानुरोधित्वेन पूर्वपदयुक्तत्वमेव । तद्ध्वनयन्नाह—सर्वं चेद-मिति । पूर्वोक्तपूर्वपक्षसमाधानाशयतत्खण्डनादिरूपमित्यर्थः । एतेन तथा रत्नाकरदण्डयादिग्रन्थः "मम

सातिग्रहणेन ज्ञापितत्वात् । यत्त्वाहुः—प्रत्ययविषये नायं निषेध इति ज्ञाप्यत इति । तन्न, व्यतिसे इत्यादौ षत्वापत्तेः । ननु पदस्यादिरिति पक्षे 'व्यतिसे'

---

शब्दरत्नम् ।

ककर्तृकक्रियाविषयत्वादेकवचनस्य तत्रासम्भवस्तथाऽपि विश्वामित्राश्रमे मारीचं प्रति कि-

भरवी ।

कर्तृभेदस्तत्रैव कर्तरिकर्मेति सूत्रस्य प्रवृत्तिर्युक्तेति भावः । अत एवैतादृशस्थले बहुवचनान्त-प्रयोग एव प्रायेण दृश्यते । क्वचिद् व्यतिलुनीत इति यत्, तदयुक्तम् । एवम्भट्टिप्रयोगोऽप्ययुक्त एव "बाधे दृढ" इति न्यायात् । नचैवं सति "तासस्त्योः" इति सूत्रस्य यद्व्यतिसे इति वृत्तिकारोक्तमुदाहरणन्तत्कथं सङ्गच्छतामिति वाच्यम् ? तस्य छान्दसत्वात् । एवञ्चै-कवचनान्तप्रयोगा लोकेऽसाधुरेवेति, तथापि "स्वरूपव्याक्रियैव पराक्रिया" इति न्यायेन समाधत्ते-तथापीत्यादिना फलतीत्यन्तेन । प्रणिहन्मि येनेत्यस्याग्रे "राजन्यबन्धुधृतकार्मुकेषुः"

भावप्रकाश ।

तु प्रतिभाति । सातेः पदादिति सूत्रद्वयं कार्यम् । अत्र शक्तं सुबन्तं च पदं गृह्यते । बहुसेचावित्यादावाद्यं, दधिसेचावित्यादावन्त्यम् । "नेर्विशः" इत्यत्र निरपि पदं विशिरपि पदं सर्वं सर्वपदैत्यादावन्त्यस्य भाष्यसम्मतत्वम् । एवं चोत्तरपदत्वे चेत्यत्रापदादिविधाविति बहुच्पूर्वस्येति च सातिग्रहणं च न कार्यमिति लाघवम् । नचैवं बुभूषतीत्यादौ निषेधापत्तिः 'मन्त्रेषु' सर्वेषाम्' इत्यादिनिर्देशेन प्रकृत्युत्तरप्रत्ययस्यानिषेधबोधनात् । एवं च राजपुरुषेष्वित्यादावपि न दोषः । अन्यथा टीकोक्तरीत्या स्यात् । नच ज्ञापकाश्रयणे गौरवम् । स्वद्रीत्याऽपि रामेष्वित्यादिसिद्ध्यर्थं तदावश्यकत्वात् । भाष्ये तु वार्त्तिकं प्रत्याख्यातम्" इति मन्दग्रन्थश्चापास्तः आद्येमूलवत् शङ्कासमाधानयोरयुक्तत्वात् । अन्त्ये सूत्रद्वयं कार्यमित्युक्त्वा सातिग्रहणं न कार्यमित्युक्तेर्विरुद्धत्वात् । प्रकृत्युत्तरप्रत्ययस्यानिषेधबोधने सातिग्रहणावश्यकत्वाच्च । किं च ज्ञापकं विनैव रामेष्वित्यादिसिद्ध्या ज्ञापकानाश्रयणेन स्वन्मते तदाश्रयणेन गौरवात् । वार्त्तिकस्य सिद्धान्ते सत्त्वाच्च । अपदादिविधावित्यस्याभावे पदान्तत्वप्रयुक्तकार्ये इत्यर्थालाभापत्तेश्च । बहुच्पूर्वस्येत्यस्य भाष्ये कण्ठत उक्तत्वाच्च । मन्त्रेष्वित्यादौ स्वादिष्विति पदत्वेन शक्तपदत्वस्याहेतुतया तन्निर्देशेन बुभूषतीत्याद्यसिद्धेश्च । शक्तपदस्य निमित्तत्वेन भाष्यादौ काप्यनाश्रयणाच्च । सर्वं सर्वपदैत्यादौ पदशब्दस्य सार्थकपरत्वाच्च । यदि लाघवमेवाद्रियते तर्हीत्थं व्याख्येयम्—सातेः पदादिति सूत्रद्वयेन सिद्ध आदिग्रहणात् सात्पदाद्योरित्यत्र समाहारद्वन्द्वगर्भो द्वन्द्वः सम्बन्धसामान्ये च षष्ठी । आदिपदेन तदर्थकपुरस्ताच्छब्दविहितबहुच् गृह्यते । बहुच्पूर्वस्येति तु तत्फलितार्थकथनमिति न कोऽपि दोष इत्याहुः । मूले यत्त्वाहुरिति । प्रकाशकृतः । एवं यत्र बहुवचनान्तेनाग्रेऽनुवादस्तत्र प्रकाशोक्तिर्बहुधेति ध्येयम् । असम्भव इति । अयं भावः "कर्त्तरि कर्म" इत्यत्र कर्म क्रिया । अन्तरङ्गत्वात्परिवर्त्तनरूपो व्यतीहारो यद्यपि साध्यस्वभावक्रियाणामसम्भवी । स्ववस्तुदानपूर्वकं परवस्त्वङ्गीकारो हि परिवर्त्तनम् । प्रणिदानं व्यतीहार इत्येकोऽर्थ इति घुसंज्ञासूत्रे कैयटोक्तेः, उदीचां माङ इति लक्ष्यस्यापमित्य याचते इत्यस्य य,चित्वा वस्त्राणि परिवर्त्तयतीत्यर्थ इति कैयटाच्च । अत एव "कर्मव्यतिहारे द्वे" इति वार्त्तिके कर्मव्यतिहारः क्रियाविनिमय इत्यभियुक्तैर्व्याख्यातम् । अत एव जयमङ्गला युक्ता । एतेनान्यक्रियाया अन्येन करणं स इत्यपास्तम् । तथापि तत्तत्साध्यत्वेन ज्ञातक्रियाणां साध्यसाधनभावव्यत्यासो मिथःकरणं च सः यथा संप्रहरन्ते राजानस्तत्र वर्त्तमानाद्धातोः कर्त्तर्यात्मनेपदमित्यर्थे विनिगमनाविरहात्तत्कर्तृमात्रे प्रत्ययौचित्येन द्विवचनाद्यन्तान्येव तस्योदाहरणानि । अत एव भाष्ये काप्येकवचनान्तानि नोदाहृतानि । एवं च व्यतिलुनत इत्यस्यान्योऽन्यव्यत्यासेन लुनन्तीत्यर्थः । एतेन देवदत्तेन सह चैत्रो व्यतिलुनीत इत्येकवचनान्तप्रयोगसम्भव इत्यपास्तम् । अत एव भट्टिकाव्यस्थप्रयोगोऽप्ययुक्तः, बाधे दृढे इति न्यायात् । किं च यतो धातोरात्मनेपदं प्रत्यासत्त्या तदर्थक्रियायां तत्कर्त्रोर्व्यत्यासे एवात्मनेपदौचित्यात् तासस्त्योरित्यादिसूत्रवृत्त्युदाहृतं व्यतिसे इत्यादि तु छान्दसमिति नापादनार्हम् । तत्र च व्यत्ययेन निर्वाहः, रिचेति सूत्रे लिङ्युदाहृतव्यतिरे इतिवत् । एवं च लोके एकवचनान्तमसाध्वेवेति स्वरूपव्याक्रियैव पराक्रियेति न्यायेन समाधत्ते—तथापीत्यादि फलतीत्यन्तेन । राजन्यबन्धुधृतकार्मुकेषुरिति चतुर्थः

इत्यत्र षत्वं दुर्वारम्। न च व्यपदेशिवद्भावेन से इत्यस्यापि तिङन्तत्वात्पदत्वं शङ्क्यम्। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात्। अन्यथा 'रामेषु' इत्या-

शब्दरत्नम्।

मर्थं ब्रह्मवधं करोषीति पृष्टे ममायं धर्म इति तेनोत्तरिते

"धर्मोऽस्ति सत्यं तव राक्षसाय-

मन्यो व्यतिस्ते तु ममापि धर्मः।

ब्रह्मद्विषस्ते प्रणिहन्मि येन"—

इति भट्टिकाव्यस्थरामवाक्ये तव धर्मेण ममान्यो धर्मस्तपोरूपो व्यत्यासेन भवति येन धर्मेण त्वत्सम्बन्धिनो निहन्मीत्यर्थके एकवचनदर्शनान्न दोषः। अद्यारभ्य त्वद्धर्मः क्रौर्यं मयि भवति, मद्धर्मोऽक्रौर्यं च त्वयि। वर्तमानसामीप्ये लट्। रामबाणपातेन समुद्रसमीपे पतितो मारीचस्तपश्चचारेति रामायणे प्रसिद्धम्। अन्यसम्बन्धिक्रियामितरः करोति, इतरसम्बन्धिनीमन्य इति कर्मव्यतिहारसम्भवादिति जयमङ्गला। व्यतिसे इत्यस्य हे चैत्र मैत्रेण सह व्यत्यस्तो भवसीत्यर्थः। यद्देशे मैत्रसत्ता तद्देशे चैत्रस्य सा, यद्देशे चैत्रस्य सा तद्देशे मैत्रस्य सेति फलति। यद्यपि व्यपदेशिवद्भावेनैकाच्त्वादेरिवास्याप्यशास्त्रीयस्यातिदेशो वक्तुं शक्यः। रामेष्वित्यादौ त्वसहायत्वाभावान्न तत्प्रवृत्तिस्तथाऽपि

भैरवी।

इति चतुर्थःपादः। तव धर्मेण—देवब्राह्मणद्वेषरूपेण। येन धर्मेणेति। युक्तानिति शेषः। त्वत्सम्बन्धिन इति। ब्रह्मद्विषस्त्वत्सम्बन्धिनो निहन्मीति योजना। तात्पर्यार्थमाह—अद्यारभ्येति। ननु क्रौर्याक्रौर्ययोर्भावित्वात्कथमत्र लडित्यत आह—वर्तमानसामीप्य इति। इति कर्मव्यतीहारेति। इत्येवंरूपो यः कर्मव्यतीहारः तस्य सम्भवादित्यर्थः। फलतीति। तथा चात्र यन्मूले अभिहितं तद्भट्ट्यनुरोधेनेति बोध्यम्। अस्याप्यशास्त्रीयस्य—यस्माद्विहितस्तदादित्वस्याशास्त्रीयस्यापि। रामेष्वित्यादौ। प्रत्ययमात्रे तु भवदुक्तः प्रकारो नेत्याह-राम इत्यादीना-असहायत्वेति—सूत्रे एकस्मिन्नित्यस्योपादानेन लोके सजातीयसहायसद्भावे व्यपदेशिवद्भा,

भावप्रकाश।

पादः। धर्मेणेति। देवब्राह्मणद्वेषरूपेणेत्यर्थः। येनधर्मण—युक्तानितिशेषः। त्वत्सम्बन्धिनः-ब्रह्मद्विष इत्यर्थः। तात्पर्यार्थमाह-अद्येति। दिनपर्यायोऽव्ययम्। क्रौर्याक्रौर्ययोर्भावित्वाल्लड्युक्तोऽत आह-वर्त्तमानेति। बाणवातेनेति। बाण एव वातः, अन्यत्र नयनहेतुत्वात्। बाणपातेनेति पाठे बाणसंयोगेनेत्यर्थः। फलितार्थमाह—अन्येति। इति कर्मेति। इत्येवं यः कर्मव्यतिहारपदार्थस्तस्य सम्भावनामात्रसत्त्वादित्यर्थः। प्रकृते तं योजयति—व्यतिसे इति। इत्यर्थ इति। शाब्दोऽर्थ इत्यर्थः। तद्देशे मैत्रस्येति पाठः। फलतीति। तथा च भट्ट्यनुरोधेन मूले तथोक्तत्वान्न मूलकृतो दोष इति प्रकाशाक्त्युक्तैवेति भावः। अस्याप्यशास्त्रीयस्यातीति पाठः। यस्माद्विहितस्तदादित्वस्यापीत्यर्थः, असहायत्वादिति भावः। तत्प्रवृत्तिरिति। न व्यपदेशिवद्भावप्रवृत्तिरित्यर्थः। तथा च न यस्माद्विहितस्तदादित्वं तत्रेति

सरला।

येनेति भट्टीति। अत्र चतुर्थश्चरणस्तु 'राजन्यबन्धुर्धृतकार्मुकेषुः' इति वर्तते।

फलतीति। वस्तुतस्तु तत्तत्साध्यत्वेन ज्ञातक्रियाणां साध्यसाधनभावव्यत्यासः कर्मव्यतिहारशब्दार्थः परस्परकरणं वा, यथा 'संप्रहरन्ते राजानः' इति। तत्र वर्तमानाद्धातोरात्मनेपदं कर्तरीत्यर्थे विनिगमनाविरहात्तत्कर्तृमात्रे प्रत्ययौचित्येन क्रियाव्यतीहारे द्विवचनबहुवचनान्तानामेव प्रयोग इति 'व्यतिस्ते' इत्येकवचनान्तमसाध्वेव। अत एव भाष्ये नैकवचनान्तादाहरणं दृश्यते। निरूपितं चैतद्विस्तरेण शब्देन्दुशेखरे इति तत एवावगन्तव्यम्।

दावपि षत्वनिषेधापत्तिरिति चेत्?सत्यम् । न वयं प्रत्ययमात्रस्य तदन्ततां ब्रूमः, किं तु प्रकृतिप्रत्ययसमुदाये प्रवृत्तां पदसंज्ञामेकदेशविकृतन्यायेन लुप्तप्रकृतिके प्रत्यये ऽप्यानयामः । 'रामौ' 'रामाः' इत्यादावपि हि एकदेशविकृतन्यायेनैव पदत्वम् । एकादेशात्प्रागेव पदसंज्ञाप्रवृत्तेः । न त्वेकादेशे कृते "सुप्तिङन्तम्" इत्यस्य प्राप्तिरस्ति । उभयत आश्रयणे नान्तादिवदिति सिद्धान्तात् ।

यत्तु वदन्ति—प्रकृतिसन्निधाने प्रत्ययस्य पदत्वं नास्ति 'मन्त्रेषु' 'सर्वेषाम्' इत्यादिनिर्देशादिति, तन्मन्दम्, उक्तरीत्या पदत्वाभावे न्यायसिद्धे ज्ञापनस्यासम्भवादनुपयोगाच्च ।

शब्दरत्नम् ।

पूर्वपक्ष्युक्तमभ्युपेत्यापि समाधातुमुपक्रमते—न वयमित्यादिना।सिद्धान्तादिति। "सुप्तिङन्तम्" इत्यत्र "यस्मात्प्रत्ययविधिः" इत्यनुवृत्तेरिति भावः । अत्र कृते ऽप्येकादेशे एकदेशविकृतन्यायेनोक्तरीत्या मान्तस्य प्रकृतित्वात् औइत्यस्य परादिवद्भावेन सुप्त्वात्तदन्तत्वेन पदत्वसिद्धिरिति सिद्धान्तान्तरमपि सूचितम् । इदं च अन्तादिवत्सूत्रे भाष्ये स्पष्टम् । तत्र हि वृक्षे इत्यादौ परादिवद्भावेन एकस्य सुप्त्वमाश्रित्य पदत्वं साधितम् ।

अनुपयोगाच्चेति । चेन ससहाये व्यपदेशिवद्भावाप्रवृत्त्या तत्संनिधाने तेषां पद-

भैरवी।

वादर्शनेनासहाय एव तत्प्रवृत्तिरिति भावः।पूर्वपक्ष्युक्तमिति । व्यतिसे इतिप्रयोगस्यैव लोके ऽसत्त्वमिति भावः। अभ्युपेत्येति।अनेन अस्मदुक्तरीत्या समाधानस्यौचित्यं ध्वनितम्।सिद्धान्तपदोपादानेन सिद्धान्तान्तरस्य स्मरणसम्भवादाह—अत्रेति । रामावित्यादिलक्ष्य इत्यर्थः । एतेन यथोद्देशपक्षे निर्वाहेऽपि कार्यकालपक्षे कथन्निर्वाहः "उभयत आश्रयणे नान्तादिवत्" इति निषेधेनान्तादिवच्चेति सूत्रेण निर्वाहो वक्तुमशक्यः इति शङ्काया नावकाश इति ध्वनितम् । उक्तरीत्या–पदत्वानयनकालोक्तरीत्या । एवं सिद्धान्तान्तरकथनेन भाष्यैकवाक्यतापि सिध्यतीति दर्शयति–इदञ्चेति । मूले नास्तीति । नास्त्येवेत्यर्थः । तत्सन्निधाने–प्रकृतिसन्निधाने । तेषाम्–प्रत्ययानाम् । चकारो दोषान्तरसमुच्चायक इत्याशयेनाह–चेनेति । एवञ्च मन्त्रे-

भावप्रकाश ।

दृष्टान्तवैषम्येण शङ्काऽयुक्तेति भावः । पूर्वपक्ष्युक्तमिति । व्यतिसे इतिप्रयोगस्यैव लोके असत्त्वादिति भावः । एतेन व्यपदेशिवद्भावेन रामेभ्विस्यादौ षत्वनिषेधः कुतो नेत्याशङ्क्य प्रत्ययग्रहणपरिभाषया समाधाय पञ्चमीसमासपक्षेणाशङ्क्य मूलोक्तरीत्या समाधाय ज्ञापकस्य विशेषापेक्षत्वाद्व्यतिसे इत्यत्र "सुप्तिङन्तम्"इति पदत्वात्षत्वनिषेधो भवत्येव । न च प्रत्ययविषये व्यपदेशिवद्भावाप्रवृत्तौ कथमत्र पदत्वं भ्यस् से इत्यवस्थायां प्रवृत्तसंज्ञाया "एकदेश"इति न्यायेन तत्र सौकर्यादिति रत्नाकरोक्तमपास्तम्, मूले कुठारात् रामेभ्विस्यादौ तदभासेश्चेति दिक् । उपक्रमते इति । ननु समाधत्ते इत्यर्थः । यक्षानुरूपो बलिरिति न्यायादिति भावः । ननु पदसंज्ञायां नाभयत आश्रयणमत आह—सुप्तिङिति । यथोद्देशे मूलोक्तरीत्या निर्वाहेऽपि अन्यमते कार्यकाले ऽनिर्वाहः, अन्तादिवत्सूत्रभाष्यविरोधश्च मूलस्यात आह—अत्रेति । रामावित्यादावित्यर्थः । उक्तरीत्येति । पदत्वानयनवदित्यर्थः । तदन्तत्वेन–आर्थसमाजग्रस्तेन । सिद्धान्तान्तरमपीति । पूर्वपक्षदार्ढ्यजनकमूलोक्तसिद्धान्तादन्यदित्यर्थः । सिद्धान्तादित्युक्त्या यथा पूर्वपक्षो दृढीक्रियत एवमिदमपि सूच्यत इत्यपेरर्थः । नान्तादिवदित्युक्तेरित्युक्त्यैव सिद्धे सिद्धान्तादित्युक्तिरन्यथाऽधिकेति स्पष्टमेवेति भावः । तस्य फलं भाष्यैकवाक्यतामाह—इदं चेति । तदाह–तत्र हीति । तत्सूत्रभाष्ये हीत्यर्थः । क्षान्ते प्रकृतित्वं तुकन्यायेनेति भावः ।

ननु व्यपदेशिवद्भावेनैकाच्त्वादेरिव यस्माद्विहितस्तदादित्वस्याप्यतिदेशेन तत्सन्निधावपि प्रत्ययमात्रस्य पदत्वे सिद्धे उक्तरीत्येत्यादिदोषाशङ्कातिरत आह—चेनेति । दोषान्तरसमुच्चायकः स इति भावः ।

"सर्वादीनि सर्वनामानि" ॥ सर्वादीनि इति तद्गुणसंविज्ञानो बहुव्रीहिः। "हलि सर्वेषाम्" इति निर्देशात्। द्वन्द्वे चेतीति। स हि समुदायस्य निषेधो, न

शब्दरत्नम्।

त्वं नास्तीति सूचितम्। "आद्यन्तवत्–"सूत्रस्थभाष्योक्तैकपुत्रादिदृष्टान्तबलेन तथैव लाभादिति दिक्।

**तद्गुणसंविज्ञान इति।** तस्य अन्यपदार्थस्य गुणा विशेषणानि संविज्ञायन्ते

भैरवी।

त्वित्यादिहेतूक्तिमात्रोपादानन्तेषामयुक्तमिति भावः। दिगिति। दिगर्थस्तु व्यतिसे इति प्रयोगस्य लौकिकस्याभावे मूलोक्तं सर्वमापातरमणीयम्। एकस्मिन्नस्य सूत्रे उपादानेनासहाय एव न्यायप्रवृत्तेरिष्टत्वमिति।

विशेषणानि—वर्तिपदार्थरूपाणीति शेषः। संविज्ञायन्त इति। एतेन संविपूर्वकाज्ज्ञाधातोः कर्मणि ल्युडिति ध्वनितम्। तेन तद्गुणाः संविज्ञानं यत्रेति समानाधिकरणपदकोऽपि बहुव्रीहिः सम्भवतीति बोध्यम्। नचातद्गुणसंविज्ञानबहुव्रीहौ सर्वशब्दाद्यवयवकसमुदाय उद्भूतावयवभेदो अन्यपदार्थ इति लभ्यते। तथाच तस्य लक्ष्ये प्रयोगाभावात्संज्ञाविधानवैयर्थ्यमिति वाच्यम्, अजादिसंज्ञावत्प्रत्येकन्तद्विश्रान्तेः स्वीकारादत्रैव मानं दर्शयितुं मूले "हलि सर्वेषाम्"इति निर्देशादित्युक्तम्। एवंविधेयान्वयिस्वघटकावयवार्थको बहुव्रीहिस्तद्गुणसंविज्ञानः, यस्त्वेवन्न सोऽतद्गुणसंविज्ञानः। तस्य लोके प्रवृत्त्युदाहरणमाह-प्राय इत्यादिना। 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति''लम्बकर्णमानय'इत्युदाहरणे। लम्बकर्णम्भोज-

भावप्रकाश।

नास्तीति। नास्त्येवेत्यर्थः। एवं च तत्र तदप्रवृत्त्या तत्सन्निधौ तेषां तत्त्वस्याभावाच्चेति हेतुरुन्नेयः। एवं च प्रकाशकृतां मन्त्रेति हेतूक्तिमात्रमयुक्तमिति भावः। तत्राभावे हेतुमाह–आद्यन्तेति। प्रपञ्चितमेतदधस्तात्। दिगर्थस्तु व्यतिसे इत्याद्यनुपयोगाच्चेत्यन्तग्रन्थोऽयुक्त इत्युक्तमेव तत्प्रयोगसत्त्वात्, असहाये एव न्यायप्रवृत्तेश्चेति बोध्यः।

विशेषणानीति। वर्त्तिपदार्थरूपाणीत्यर्थः। संविज्ञायन्ते इति। कर्मणि ल्युट्। तेन तद्गुणाः संविज्ञाना यत्रेति लौकिकविग्रहवाक्यसूचनेन कौस्तुभदण्डयुक्तव्यधिकरणविग्रहश्चिन्त्यः फलितार्थकथनपरतया वा नेय इति सूचितम्। आदिशब्दस्यावयववाचित्वेन सर्वशब्दघटितोद्भूतावयवभेदसमूहस्यान्यपदार्थत्वेऽपि न तत्र, युगपत्प्रयोगाभावात् पृथक्प्रयोगसत्त्वाच्च वैयर्थ्याद्बहुवचननिर्देशाच्च सर्वार्थवाचकत्वाभावाच्च। तस्याः कार्यार्थत्वाच्चावयवेषु प्रवर्त्तमानाऽविशेषात्सर्वशब्देऽपि प्रवर्त्तते। अत एव"अदः सर्वेषाम्" इतिनिर्देशसङ्गतिः। एतदभिप्रेत्यैव मूले लिङ्गमुक्तमिति भावः। अत्र कैयटकौस्तुभदण्डयादयः कार्यित्वं कार्यान्वयित्वमात्रमाहुः। तथा च विधेयान्वयिस्वघटकावयवार्थकत्वं तद्गुणसंविज्ञानत्वं, तदनन्वयितदर्थकत्वं तद्भिन्नत्वं फलितम्। एवं च लम्बकर्णमानयेत्यादौ तत्त्वेऽपि तं भोजयेत्यादौ तत्त्वानापत्तिः। नचेष्टापत्तिः हरिग्रन्थवि-

सरला।

विशेषणानीति। वृत्तिघटकपदार्था इत्यर्थः। इत्यर्थ इति। एकक्रियान्वयित्वेन वृत्तिघटकपदार्थविशिष्टान्यपदार्थवाचकत्वं तद्गुणसंविज्ञानबहुव्रीहित्वम्। यथा 'लम्बकर्णमानय' इत्यत्रान्यपदार्थस्य आनयनक्रियायामन्वये वृत्तिघटकपदार्थस्य श्रोत्रस्यापि तस्यामन्वयोऽनुभवसिद्ध इति 'लम्बकर्ण' इति तद्गुणसंविज्ञानो बहुव्रीहिः। प्रकृते च समुदायरूपान्यपदार्थान्वयिसर्वनामसंज्ञासत्तारूपक्रियायां सर्वशब्दस्यान्वय इति तद्गुणसंविज्ञानत्वम्। तत्र च समुदायस्यैकत्र प्रयोगासम्भवेन तद्घटकानामेव तत्रान्वय इत्यन्यदेतत्।

नन्वेवं नागो यज्ञोपवीतं यस्य तत्कर्मकभोजनतात्पर्येण 'नागयज्ञोपवीतं भोजय' इति प्रयुक्तवृत्तिघटकयज्ञोपवीतपदार्थस्यान्यपदार्थान्वयिभोजनक्रियायामन्वयासम्भवात्तस्य बहुव्रीहेस्तत्त्वानापत्तिरित्यत आह—

त्ववयवानामिति वक्ष्यते । न च तदन्तविधिं विना समुदाये संज्ञाप्रसक्तिरस्तीति भावः । ननु तदन्तसञ्ज्ञायाः किं फलम् । नच परमसर्वस्मायित्यादौ स्मायादयः

शब्दरत्नम् ।

कार्यित्वादिना यत्रेत्यर्थः । प्रायः संयोगसमवायान्यतरसम्बन्धेन सम्बन्धी यत्रान्यपदार्थ-स्तत्र तद्गुणत्वम् । तदतिरिक्तस्वस्वामिभावादिसम्बन्धेन सम्बन्धिनस्तत्त्वेऽतद्गुणत्वम् । नागयज्ञोपवीती भोज्यतामित्यादौ यज्ञोपवीतस्य कार्यित्वाभावेऽपि तत्संनिहितत्वमस्त्ये-

भैरवी ।

येत्यत्र तथान्वयादर्शनादाह–प्राय इति। एतेनोक्तनियम औत्सर्गिक इति सूचितम् । इदम्भेदद्वय-मनेकेतिसूत्रविहितबहुव्रीहेः। नन्वेवन्नागयज्ञोपवीती भोज्यताम्, शुक्लवाससम्भोज्यता(?)न्ना-गचर्मोत्तरच्छदमित्यादौ विधेयान्वयस्य विशेषणेऽदर्शनादतद्गुणत्वमेव स्यात्; न चेष्टापत्तिः, विशेषोपादानस्य व्यर्थत्वापत्तेरत आह–नागेति । तथा चैतेषु विशेषधर्मविशिष्टबोधकशब्देनोपा-

भावप्रकाश ।

रोधापत्तेरत आह—आदिनेति । तेन कार्यसन्निहितत्वसंग्रहः । तथा च न प्रागुक्तं तल्लक्षणं, किं तु विधेयक्रियान्वयितत्कालसन्निहितान्यतरत्वघटकावयवार्थकत्वमात्रत्वं तद्भिन्नत्वमन्यत्वमिति । तथा च का-यित्व–तत्सन्निहितत्वान्यतरधर्मेणेति फलितमिति भावः । एवं योगार्थमुक्त्वा कैयटप्रकाशकौस्तुभरत्नाकरद-र्पणाद्युक्तं पारिभाषिकं तल्लक्षणमाह—संयोगेति । दण्डी विषाणी चानीयतामिति लक्ष्ये बोध्ये अस्या-पि दण्डी विषाणी च भोज्यतामित्यादौ व्यभिचरितत्वादयुक्तत्वं ध्वनयितुं पूरयति—प्राय इति । तथा चौत्सर्गिकोऽयं नियम इति भावः । इदं च भेदद्वयम् "अनेक"इति विहितबहुव्रीहेः । तेषां अशाङ्कत्यमेव ध्वनयितुमादिपदस्य फलमाह—नागेति । 'एकदेशिना'इति सूत्रप्रयोगवद् 'असुन्वतः' इति भाष्यप्र-योगवच्चायं साधुः । अत एव दानधर्मे—

शुक्लध्वजमनाधृष्यं शुक्लयज्ञोपवीतिनम् । इति,

तत्रैव शिवस्तुतौ—

भूधरो नाम मौञ्जी च नागकुण्डलकुण्डलो। नागयज्ञोपवीती च नागचर्मोत्तरच्छदः । इति,

हरिवंशे बाणयुद्धे—

व्यालयज्ञोपवीताश्च केचित्तत्र महालयाः । इति च,

'नागयज्ञोपवीतं च'इति बौधायनव्यासोक्तं च सङ्गच्छते । एतेन स्पष्टमित्यन्तमनूद्य किं यावद्बहुव्रीहौ भेदद्वयमुत षष्ठ्यर्थबहुव्रीहावेव? नाद्यः, प्राप्तोदकः, ऊढरथः, उपहृतपशुः, उपदशाः, आसन्नविंशाः इत्यादा-वतद्गुणत्वेऽपि स्वस्वामिभावसम्बन्धेन सम्बन्धिनस्तत्त्वाभावात् । नान्त्यः, तद्गुणषष्ठ्यर्थे बहुव्रीहौ संयोग-समवायातिरिक्तसम्बन्धस्याप्रसिद्धत्वेन प्रायःपदस्य व्यर्थत्वात् । भवन्मते संयोगस्यासम्बन्धत्वेन पूर्वापरविरो-धाच्च, "न कर्मधारयान्मत्वर्थीय" इति निषेधेन नागयज्ञोपवीतीत्यस्यासाधुत्वाच्च । यदि तु कृष्णसर्पवानि-

सरला ।

प्रायः संयोगेति । संयोगसमवायान्यतरसम्बन्धेन वृत्तिघटकपदार्थविशिष्टान्यपदार्थवाचकत्वं तद्गुणसं-विज्ञानबहुव्रीहित्वम् । 'नागयज्ञोपवीतम्' इत्यत्र च यज्ञोपवीतस्य संयोगसम्बन्धेनान्यपदार्थे पुरुषेऽन्वयेन तत्त्वमक्षतम् । 'लम्बकर्णमानय' इत्यत्रापि कर्णपदार्थस्य खरपदार्थे समवायसम्बन्धेनान्वयोऽस्त्येव । 'दृष्टसागरमानय' इत्यादौ प्रयोगकालेऽन्यपदार्थस्य सागरस्य च कदाचित् संयोगसम्बन्धतत्त्वेऽपि तत्र तद्-गुणत्ववारणाय वाचकत्वनिवेशः । तथा च संयोगसम्बन्धेन सागरविशिष्टान्यपदार्थस्य बहुव्रीहिसमासा-वाच्यत्वान्न दोषः । प्रकृतेऽपि सर्वशब्दस्य समुदायेऽवयवावयविनोः समवायात् समवायसम्बन्धेनान्वय इति । अतद्गुणत्वमिति । यथा 'दृष्टसागरमानय' इत्यादौ । तत्र हि वृत्तिघटकपदार्थस्य सागरस्या-न्यपदार्थान्वयिन्यामानयनक्रियायां नान्वयः सम्भवति, नापि अन्यपदार्थे पुरुषे संयोगसमवायान्य-तरसम्बन्धेनान्वय इत्युभयथापि अतद्गुणसंविज्ञानबहुव्रीहित्वमित्यर्थः । नागयज्ञोपवीतीति । उपलक्ष-णमेतत् 'नागयज्ञोपवीतं भोजय' इत्यस्य। यद्वा, "अनेकमन्यपदार्थे" इति सूत्रभाष्ये "मत्वर्थे यो बहुव्रीहि-रिति वक्तव्यम्" इति वचनेन मत्वर्थीयप्रत्ययस्य बहुव्रीहिसंज्ञाबोधनेन तत्रापि बहुव्रीहित्वस्याक्षतत्वम् ।

फलम् , अङ्गाधिकारे तदन्तविधिनैव तत्सिद्धेरित्यत आह–तेनेति । न चेहापि

शब्दरत्नम् ।

वेति तद्गुणत्वमेवेति हरिग्रन्थे स्पष्टम् । तत्सिद्ध्येरिति । न च सर्वनाम्नो विहितत्वाभावः । तदन्तसंज्ञाऽभावे "द्वन्द्वे च" इत्यादीनामवयवसंज्ञानिषेधकत्वेन विहितविशेषणे

भैरवी ।

दानसामर्थ्याद्विशेषस्य क्रियायामन्यपदार्थान्वयवेलायां सन्निधिमात्रे तद्गुणत्वव्यवहारः । एवंरीत्या तद्गुणत्वे मानन्तु हरिवंशीयो–'व्यालयज्ञोपवीताश्च केचित्तत्र महासुराः' इति बाणयुद्धप्रसङ्गसमयकालिकवर्णनपरप्रयोग एवेति । अत्र न कर्मधारयादिति निषेधस्तु असुब्वत भाष्यप्रयोग इवात्र न । अयं भावः-पूर्वोक्ततद्गुणसंविज्ञानशब्दार्थनिरूपणावसरे कार्यित्वादिनेत्यत्रादिपदमुपात्तन्तेन विधेयसमानकालिकत्वस्यापि ग्रहणमिति ध्वनितम् । तथाच विधेयक्रियान्वयित्वतत्कालवृत्तित्वान्यतरवत्स्वघटकावयवार्थकत्वन्तद्गुणसंविज्ञानत्वमिति लक्षणनिष्पत्तिः कार्येति । एवम्मत्वर्थे बहुव्रीहिरिति वार्तिकान्मत्वर्थकल्पनाप्येवमेव कार्या । तेन दण्डी विषाणी चानीयतामित्यस्य साधुत्वस्य बोधनात् । न च दण्डिनं भोजयेत्यादेर्दण्डस्वामिनमित्यर्थोऽपि सम्भवतीति कथमनेन तद्गुणत्वलाभ इति वाच्यम् ? तदस्यास्त्यस्मिन्निति सूत्रेऽस्मिन्नित्युपादानेनाधारतावच्छेदको यो वृत्तिनियामकः सम्बन्धः सोऽपि विवक्षितः । सच न स्वस्वामिभावः किन्तु विलक्षणो दण्डवानिति प्रतीतिनियामक इति दण्डसंयुक्तस्यैव कार्यान्वयित्वमिति तद्गुणत्वलाभात् । भोजनकालिकत्वस्य संयुक्तत्वेऽत्रान्वयः । प्रायःपदस्य तु तद्गुणत्वमित्यत्रान्वयः । एवमतद्गुणसंविज्ञानो बहुव्रीहिर्मत्वर्थीयश्चित्रगुमानय गोमिनमानयेत्यादौ । अत्रापि प्रायःपदम्बोध्यम् । तेनाहिताग्निङ्गृहिणञ्च भोजयेत्यस्य तद्गुणत्वेऽपि न क्षतिः । तत्सिद्धेरिति मूलस्य स्मायादेशस्य समुदायस्य संज्ञां विनापि तदन्तविधिनासिद्धेरित्यर्थः कार्यः । स च न सम्भवति, ङिद्वचनस्य समुदायाद्विधानेनाधुना भवन्मते सर्वनाम्नो विधानाभावात्तस्य सिद्धेरप्रसङ्ग इत्याशयिकामाशङ्कान्निराचष्टे–नचेति । अवयवसंज्ञानिषेधकत्वेनेति । सामर्थ्यादित्यादिः । अवयवात्परत्वमादायातिप्रसङ्गनिवारणरूपफलाभावादित्य-

भावप्रकाश ।

तिवत् षष्ठीसमासेन वा साधुत्वं तथापि बहुव्रीहिप्रकरणे तदुक्तिर्व्यर्था । शुक्लवाससं भोजयेति तूदाहार्यम् । यदि तु मत्वर्थेऽपि भेदद्वयं स्वीक्रियते तर्हि दण्डिनं भोजयेत्यादौ त्वद्रीत्या संयोगस्यासम्बन्धत्वेनाषष्ठ्यर्थत्वात् स्वस्वामिभावसम्बन्धे एव प्रत्ययः स्यात्, तथा च दण्डस्वामिके एव भोजनं नतु दण्डसंयुक्ते । मद्रीत्या तु दण्डसंयुक्ते इति तद्गुणत्वम् । तत्र भोजनकाले तदसंयोगेऽपि दण्डिनं पश्येत्यादौ दण्डस्य कार्यान्वयित्वेन तद्गुणत्वसम्भवात् । न हि सर्वत्र कार्यित्वे एव तद्गुणत्वमिति नियमः क्वचिद्दर्शनेनापि तत्सम्भवादिति मन्दोक्तमपास्तम् , आद्ययोस्तद्गुणत्वात् तृतीये तेन सम्बन्धेन तत्त्वेनातद्गुणत्वाच्च, अन्त्ययोरुल्लेखस्य प्रमादमूलत्वाच्च, प्रायःपदस्य तद्गुणत्वादावन्वयेन संयोगादावन्वयेन सार्थक्याच्च, कैयटादिरीत्यैतद्ग्रन्थसत्त्वेन पूर्वापरविरोधाभावाच्च, तन्मतेऽपि मञ्जूषोक्तरीत्या निर्वाहाच्च संयोगस्येव समवायस्यापि तन्मते ऽसम्बन्धत्वेन विशिष्य तथोक्तेर्निर्बीजत्वाच्च, नागयज्ञोपवीतीत्यस्य साधुत्वस्योक्तत्वाच्च, बहुव्रीहिप्रकरणे दण्डी विषाणीति कैयटेनोदाहृतत्वाच्च, मत्वर्थेऽपि भेदद्वयं प्रदर्शयितुं हर्यादिभिस्तथोक्तेश्च, दण्डिनमित्यादौ सप्तम्यर्थे तद्धितादेर्भाष्ये स्पष्टप्रायत्वाच्च, गोमन्तं विक्रेतारं पश्येत्यादौ तद्दर्शनेन चित्रगुमित्यादावपि तद्गुणत्वापत्तेश्चेति दिक् । **निषेधकत्वेनेति** । सामर्थ्यादिति भावः ।

सरला ।

**स्पष्टमेवेति** । केचित्तु विशेषणोपलक्षणाभ्यां तद्गुणातद्गुणत्वे बहुव्रीहिस्थले वदन्ति । यथा 'चित्रगुः' इति । अन्यपदार्थस्य यदा कार्यान्वयित्वविवक्षायां गोस्वामित्वसद्भावस्तदा स तद्गुणसंविज्ञानो बहुव्रीहिः । यदा च तदानीं गोस्वामित्वाभावेऽपि कदाचिद् गवां दर्शनेन तस्मिन् चित्रगुशब्दप्रयोगस्तदा सोऽतद्गुणसंविज्ञानो बहुव्रीहिरिति । लम्बकर्णनागयज्ञोपवीतयोस्तु विशिष्टस्य क्रियाऽन्वयकाले कर्णयज्ञोपवीतयोरुक्तसम्बन्धाभ्यां सत्ताविवक्षणेन तत्र तद्गुणसंविज्ञान एव बहुव्रीहिरिति बोध्यम् ।

'प्रातिपदिकात्' इत्यनुवृत्तेः सर्वनाम्नां तद्विशेषणे तदन्तविधिर्भवतीति वाच्यम्, "समासप्रत्ययविधौ प्रतिषेध" इत्युक्तेरिति भावः । अकच्चेति । चकारात्परम-सर्वत इत्यत्र तसिल् ।

"जसः शी" ॥ अनेकाल्त्वादिति । न तु शित्त्वादिति भावः ।

अवर्णान्तादिति । अवर्णान्तादङ्गात्परस्येत्यर्थः । अतो येषां केषां तेषामि-

शब्दरत्नम् ।

फलाभावादिति भावः । तसिलिति । अवयवसर्वनामत्वेन तु न निर्वाहः, सर्वनामप्रकृति-कसप्तम्याद्यन्तत्वाभावादिति भावः ।

भैरवी ।

र्थः। ननु तदन्तविधिफलमवयवात्परत्वमाश्रित्य सिद्धमित्येतन्नास्तीत्याह–अवयवेति । "प्रयो-जनं सर्वनामाऽव्ययसंज्ञायाम्"इति तदन्तविधिसूत्रस्थभाष्यवार्तिकप्रामाण्येनाङ्गाधिकारीय-कार्ये तदन्तविधिः । "किंसर्वनामबहुभ्यः" इत्यस्य तु नाङ्गाधिकारीयत्वमिति, सर्वनामप्रकृ-तिकसप्तम्यन्तात्पञ्चम्यन्ताद्वा त्रतसिलाविति स्वीकारात् । एवम् "अव्ययसर्वनाम्नाम्"इति सूत्रस्याव्ययसर्वनामप्रकृतिकसुबन्तात्कुत्साद्यर्थविवक्षायां सर्वनामाव्ययावयवटेः प्रागकजि-त्यर्थः । एतेन परमसर्वत्रेति त्रल् परमभवकानित्यत्राकच्च तयोरङ्गाधिकारीयत्वाभावेऽपि प्रा-तिपदिकाधिकारीयत्वेन तदन्तविधिना भविष्यतीति कस्यचिदुक्तिः परास्ता, समासप्रत्यय-विधौ प्रतिषेध इति तदन्तविधेः प्रतिषेधाच्च ।

भावप्रकाश ।

फलाभावादिति । अवयवात्परत्वमादायातिप्रसङ्गनिवारणरूपफलाभावादित्यर्थः । यत्तु जगन्नाथखण्डन-कृद्भ्यामुक्तम्–अर्थद्वारकविभक्तिविशेषणत्वस्य संज्ञोपसर्जनेति वार्त्तिकप्रत्याख्यानायावश्यकत्वस्य भाष्ये स्पष्टत्वेनाङ्गेष्विव त्रलादिविधावपि तथाङ्गीकारेणेष्टसिद्ध्या तदन्तविधिर्निष्फल इति कौमुदीमनोरमाकौ-स्तुभाश्चिन्त्या इति । तन्न, प्रयोजनं सर्वनामाव्ययसंज्ञायामिति तदन्तविधिसूत्रस्थवार्त्तिकभाष्यविरोधाप-त्तेः, "किंसर्वनामबहुभ्यः"इत्यादेः पञ्चम्यन्तत्वेनाङ्गवैषम्येण तथार्थासम्भवाच्च, तद्भाष्यस्यैकदेश्युक्तित्वाच्च । अत एव पक्षान्तरोक्तिस्तत्र । तद् ध्वनयन्नाह–अवयवेति । प्रकृतीति । सप्तम्या इत्यादिना प्रकृत्याक्षे-पात् प्रत्यासत्तिन्यायेनोक्तार्थलाभः । आदिना सर्वनामप्रकृतिकसुबन्तात्तदर्थगतकुत्साविवक्षायां सर्वनामा-वयवटेः प्रागकजित्यर्थस्य तादृशपञ्चम्यन्तत्वस्य चाभावः संगृह्यते । एतेन परमसर्वस्मै इत्यादौ स्मायाद्य-भावरूपफलमेव वक्तुं शक्यमिति फलाभावादित्ययुक्तम् तस्मात्तदन्तसंज्ञायाः परमसर्वस्मै इति न फलम् । एवमकचावपि न फलं, सर्वनाम्ना प्रातिपदिकविशेषणे सर्वान्तप्रातिपदिकात्ततो यत्सप्तम्यादि तदन्तादित्यर्थसम्भवात् । समासप्रत्ययेति निषेधोऽनित्यत्वान्न । एवं च सर्वनामसंज्ञायां तदन्तविधेः फलं चिन्त्यमिति मन्दोक्तमपास्तम् । उक्तवार्त्तिकभाष्यविरोधापत्तेः । किं च तत्र स्मायादीनामिष्टत्वेन तदभा-वस्यानापाद्यत्वात्, एवं फलकल्पने अतिप्रसङ्गापत्तेश्च, तस्य संज्ञाफलत्वाभावस्य मूलमते सत्त्वेन तस्मा-दिति ग्रन्थासङ्गतेश्च, तस्यानित्यत्वेनाप्रवृत्तौ मानाभावाच्चेति दिक् ।

मूले ऽवर्णान्तादङ्गादिति । एतेन यथाश्रुतपरममूले तेषामित्यादावव्याप्तिः । न च दक्षिणोत्तरपूर्वाणा-मित्यादावतिप्रसङ्गाय सर्वनाम्नो विहितस्यावर्णान्तात्परस्येति व्याख्यानान्न दोष इति वाच्यम् । तथा सत्यादित्यनुवृत्तस्य सर्वनामाविशेषणत्वेनावर्णान्तादिति व्याख्यानासङ्गतेः, अङ्गविशेषणत्वे फलाभावा-

सरला ।

सर्वनामप्रकृतिकेति । "कुत्सिते" इति सूत्रस्थभाष्योक्तरीत्या संख्याकारकाभ्यां पूर्णस्यार्थस्ये-तरान्वय इति सिद्धान्तात्सुबन्तादेव तद्धितोत्पत्त्या प्रत्यासत्त्या सर्वनामप्रकृतिकसप्तम्याद्यन्तात्तदर्थगतकु-त्साविवक्षायां त्रल् भवति इति "सप्तम्यास्त्रल्" इत्यादिसूत्राणामर्थात् अवयवस्य सर्वनामत्वेऽपि समुदा-यस्य सर्वनामसंज्ञाया अभावे सप्तमीपञ्चम्योः समुदायप्रकृतिकतया सर्वनामप्रकृतिकत्वाभावादित्यर्थः ।

त्यादौ नाव्याप्तिः । सर्वनाम्ना विहितस्याम इति । सर्वनाम्नः परस्येति तु नोक्तम्, दक्षिणोत्तरपूर्वाणामित्यत्र सुट्प्रसङ्गात् । "द्वन्द्वे च" इति निषेधो हि समुदायस्य न त्ववयवस्य । न च तस्मादयमाम् विहितः, किं तु समुदायादेवेति न सुट् । विहितविशेषणत्वस्याश्रयणे प्रमाणं तु "दक्षिणोत्तरपूर्वाणाम्" इति भाष्यप्रयोग एव ।

पञ्चत्रिंशदिति । पञ्च च त्रिंशच्चेति द्वन्द्वः । पञ्चाधिका त्रिंशदिति तत्पुरुषो वा । यत्तु प्रत्याहारा एकचत्वारिंशदिति प्राचो ग्रन्थं व्याचक्षाणैरुक्तम्—नायं मध्यमपदलोपी तत्पुरुषः । तथा सति "राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु"

---

शब्दरत्नम् ।

**भाष्यप्रयोग इति** । "दिङ्नामान्यन्तराले" "दक्षिणोत्तराभ्याम्" इति सूत्रस्थ इति शेषः ।

भैरवी ।

भाष्यप्रयोगस्याप्रसिद्धत्वशङ्कां वारयति–दिङ्नामेति । नच विहितविशेषणत्वं विहितस्येत्यस्याध्याहारेण कार्यन्तथाच कथं सर्वनाम्नो विहितस्येत्यत्र पञ्चमीति वाच्यम्, यो यतो विहितस्स ततो निःसृत इत्येवं प्रतीत्या बौद्धापादानत्वस्य तत्र सत्त्वात् । नचैवम् "उपपदविभक्तेः" इति न्यायेन दिग्योगे विहिता पञ्चम्यनुपपन्नेति वाच्यम्, "तस्मादित्युत्तरस्य" इत्यनेन तस्यापि शास्त्रे स्वीकारस्य बोधनात् । एवं "जसः शी" "सर्वनाम्नः स्मै" "ङसिङ्योः" इत्यत्रापि विहितविशेषणमेव । अशोकवनिकान्यायेन त्वेकत्रोक्तिः । पाठवैयर्थ्यशङ्को-

भावप्रकाशः ।

च्चेति खण्डनकृदुक्तमपास्तम् । उक्तयुक्तेः उत्तरार्थत्वावश्यकत्वेनात्र त्यागानौचित्याच्च । सर्वनाम्न इत्यस्य तु नाङ्गं विशेष्यमावृत्तौ मानाभावात् । न च विहितयोगे पञ्चम्यविधानात्परस्येत्येव युक्तमिति वाच्यम् । यो यस्माद्विहितः स तस्माद्विनिःसृत इति बौद्धापादानत्वस्य तत्र सत्त्वात् । न चैवमुपपदेति न्यायेन दिग्योगलक्षणपञ्चम्युच्छेदः शास्त्रे स्यादिति वाच्यम् । "तस्मादित्युत्तरस्य" इत्यनेन तस्या अपि शास्त्रे बोधनात् । लक्ष्यानुरोधाद्व्यवस्थेति भावः । एवं "जसः शी" "सर्वनाम्नः स्मै" "ङसिङ्योः" इत्यादावपि व्याख्यानं बोध्यम् । तत्रानुक्तिस्तु चरमे तथोक्त्या सर्वत्र तथा सूचनेन लाघवात् । एतेन सूत्रत्रयमुल्लङ्घ्यात्र तथोक्ताविदं बीजम्—तत्र विहितविशेषणस्य न फलम्, इतरेतरद्वन्द्वे एकवचनाभावात् समाहारद्वन्द्वे साहित्यस्य विशेष्यत्वेन प्रसर्जनत्वादेवाप्राप्तेः । एतेन पूर्वापरायाधरोत्तरायेत्यत्रातिप्रसङ्ग इति निरस्तमिति जगन्नाथोक्तमपास्तं, मासपूर्वायेत्यादौ तद्व्यावृत्त्यर्थं तत्त्वावश्यकत्वात् । अनाङ्त्वलादिव्यावृत्त्या सूत्रचारितार्थ्यात् । अत एव "सर्वनाम्नः स्मै" इत्यादिवृत्तौ परस्येति नोक्तं परममूले । स्पष्टं चेदं कौस्तुभे । तदेतद् हृदि निधायाह–**दिङ्नामेति** । इदमुपलक्षणं "विभाषा दिक्समासे" इति सूत्रस्यापि ।

एवमित्यस्य द्वयोर्द्विवचनस्यैव न्याय्यत्वे इत्यर्थः प्रतीयते सोऽयुक्तः । तावता तयोरन्यवचनव्यावृ-

सरला ।

**भाष्यप्रयोग इतीति** । वस्तुतस्तु 'आमि' इति सप्तम्याः "त्रेस्त्रयः" इति सूत्रे चारितार्थ्येन 'आत्' इति पञ्चम्याश्च "आज्जसेरसुक्" इत्यादौ चारितार्थ्येन तुल्यबलविरोधे पञ्चमीनिर्देशस्य परत्वात्प्रबलत्वेन "तस्मादित्युत्तरस्य" इति परिभाषा षष्ठ्यंशसहितोपष्ठिते, "तस्मिन्निति निर्दिष्टे पूर्वस्य" इतिपरिभाषा च बाधितत्वात् षष्ठ्यंशविकलेति 'आमव्यवहितपूर्वत्वविशिष्टं यत् सर्वनामाभिन्नमदन्तमङ्गं तदादि वा तदव्यवहितोत्तरत्वविशिष्टस्य सुडिति सूत्रार्थेन 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्रामोऽप्राप्तेर्दोषाभावेन विहितविशेषाश्रयणमयुक्तम्, "तस्मादिति" इति परिभाषायां जागरूकायां विहितपदाध्याहारस्य कर्तुमशक्यत्वाच्चेति बोध्यम् ।

"संख्या" इति विधीयमानः पूर्वपदप्रकृतिस्वरो न स्यात् । तस्मात्समाहारद्वन्द्व एवायम् । एकविंशतिरित्यादौ नपुंसकत्वं तु न भवति लोकाश्रयत्वाल्लिङ्गस्येति । तच्चिन्त्यम्, समासभेदेन स्वरभेदे इष्टापत्तेः । तथा च "बहुव्रीहौ संख्येये" इति सूत्रे "संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशाद्यर्थमन्यत्राधिकलोपात्" इति वार्तिकं व्याचक्षाणो भाष्यकार आह—एकाधिका विंशतिरेकविंशतिः, द्वाविंशतिरिति ।

अत एवेति । द्वयोर्द्विवचनस्यैव न्याय्यत्वादिति भावः । नन्वेवं सर्वादिषु पाठो व्यर्थः, सर्वनामकार्याणां स्मायादीनां द्विवचने ऽभावात् । न च उभाभ्यां हेतुभ्यामुभयोर्हेत्वोरित्यत्र "सर्वनाम्नस्तृतीया च" इति पाक्षिकतृतीया तत्फलमिति युक्तम् "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति वार्तिकेन गतार्थत्वात् । न च वृत्तिकृता "सर्वनाम्नस्तृतीया च" इति सूत्रे पठितत्वादिदं वार्तिकं सर्वनामसंज्ञासापेक्षमिति वाच्यम् भाष्ये "हेतौ" इति सूत्रे तस्य पठितत्वात् । अत एवान्नेन कारणेन वसति, अन्नस्य कारणस्येत्युदाहृतं हरदत्तेनेत्याशङ्क्याह—तस्येह पाठस्त्विति । अयच्प्रसङ्गादिति । अयं भावः—"उभादुदात्तो नित्यम्" इत्यत्र "उभादुदात्तः" इति योगो विभज्यते । अवयववृत्तेः संख्यावाचिन उभशब्दादवयविन्यर्थेऽयच् स्यात् । उभयो: मणिः । ततो "नित्य-

---

शब्दरत्नम् ।

**एवं**—नित्यद्विवचनान्तत्वे । "स्वाङ्गशिटाम्" इत्याद्युदात्तत्वं च न फलम्, उभे भद्रे इत्यादावन्तोदात्तपाठेन गणेऽन्तोदात्तनिपातनात् वृषादित्वेन तत्सिद्धेश्चेति भावः ।

**प्रायदर्शनमिति** । प्रायग्रहणादुभातिरिक्तासर्वनाम्नः प्रथमा द्वितीये न स्त इत्यर्थकल्पनसम्भवान्नासर्वनामत्वे स दोषः । अयच् स्यादिति । अत्रापि स्थानिवत्सूत्रस्थभा-

भैरवी ।

दयार्थैवमिति व्याचष्टे—नित्यद्विवचनेति । स्वरस्य सिद्धेः संज्ञाफलत्वन्निराचष्टे—स्वाङ्गेति । तत्सिद्धेरिति । आद्युदात्तत्वस्य सिद्धेरित्यर्थः ।

ननु कथं "निमित्त" इतिवार्तिकेन सिद्धिर्यावता तत्र प्रायपदस्य विभक्तिष्वेव सम्बन्ध इत्यत आह—प्रायदर्शनमिति प्रायग्रहणादिति । नन्वयच् स्यादित्येव कथनं विरुद्धम्प्रतिभाति यावता "द्वित्रिभ्याम्" इति सूत्रात्तयस्येत्यस्य प्रकान्तत्वादत आह—अत्रापीति । विभक्त्याद्यसूत्रेऽपीत्यर्थः । अपिनैकसूत्रसत्त्वसमुच्चयः । द्वितीयसूत्रस्यादेशविधायकत्वन्तु नैव सम्भवति तस्य स्वार्थे का-

भावप्रकाश ।

त्तावपि पाठवैयर्थ्यशङ्कानुदयादत आह—नित्येति । स चावधारणार्थकः द्विवचनान्तत्वे एवेत्यर्थः । तेन सजातीयव्यवच्छेदाट्टाबादिकं भवत्येवेति भावः । आदिना 'उभा उ नूनम्' 'उभाभ्यां देव' 'उभयोर्नृमणयोः' इत्यादिसंग्रहः । ननु निपातनस्य बाधकत्वेन क्वाप्याद्युदात्तत्वं न स्यादत आह—वृषेति । तत्रादिशब्दस्य प्रकारार्थत्वादाद्युदात्तत्वसिद्धिरिति भावः ।

ननु प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्त इति कैयटाद्युक्तर्थे तस्यातत्त्वे दोष एवेति चेत्? । न, तेनान्यार्थस्यापि कल्पयितुं शक्यत्वेनेदृशार्थे मानाभावात् । लक्ष्यानुरोधेनेदृशार्थकल्पने तु उभान्यत्वमपि तत्र सुनिवेशमित्याशयेनाह—प्रायेति । एतेन सर्वनाम्नस्तृतीयाचेत्यर्थमत्र पाठ इति प्रक्रिया प्रत्युक्ता । तयपोऽयजङ्गीकारे भाष्यविरोधादाह—अत्रापीति । विभक्त्याद्यसूत्रेऽपीत्यर्थः । अपिरेकसूत्रसमुच्चायकः । द्वितीयसूत्रेत्वादेश-

म्" । उभशब्दाद् वृत्तिविषये नित्यमयच्स्यात् स्वार्थे । तेनोभयपक्षविनीतनिद्रा इत्यादौ अयज् यथा नित्य एवं कप्रत्ययेऽपि स्यादिति । नन्वेवमकचि कृतेऽपि अयज् दुर्वार इति चेन्मैवम् । योगविभागस्येष्टसिद्ध्यर्थतया "उभौ साभ्यासस्य" इति निर्देशेन च यत्र द्विवचनं न श्रूयते तत्रैवायमिति व्याख्यानात् । तथा च वार्तिकम्—"अन्याभावो द्विवचनटाब्विषयत्वात्" इति । अकचि हि सति "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" इति न्यायेनोभशब्दस्य द्विवचनविषयत्वं

शब्दरत्नम् ।

व्यरीत्या प्रत्ययान्तरत्वमिति भावः । निर्देशेन चेति । वृत्तिविषये इत्यनुक्त्वा इदमेव वक्तव्यमिति भावः । अन्याभाव इति । अन्येषां सर्वनामकार्याणामभाव इत्यर्थः ।

भैरवी ।

र्यविधायकतया तयपः स्वार्थेऽप्रवृत्तेः । सोऽप्युदात्त एव । स्थानिवत्सूत्र इति । तत्र हि "तयादेशे उभयप्रतिषेधः। स्थानिवद्भावेन तयपो ग्रहणेन ग्रहणाद्विभाषा प्राप्नोति"इत्यभिधायायच्प्रत्ययान्तरमिति प्रतिपादितम् । प्रत्ययान्तरत्वमिति । अयम्भावः–"उभादुदात्तः"इति सूत्रस्य विभाषाधिकारीयत्वेन तत्सम्बन्धस्यावश्यकतया नित्यग्रहणं योगविभागार्थमेव । एवञ्च "उभादुदात्त" इत्यत्रास्वरितत्वात् अयज्वेत्यतो वाग्रहणसम्बन्धाभावेऽपि महाविभाषासम्बन्धो भवत्येवेति । तेनावयववृत्तेः संख्यावाचिन उभयशब्दादवयविन्यर्थेऽयच् स्यात् इत्यर्थकेन, पक्षेऽयच् पक्षे वाक्यं भवति । "नित्यम्"इति सूत्रे तु वाच्यार्थविरोधान्न विभाषापदसम्बन्धः । तस्य नित्यमयच्स्यादित्येवार्थ इति तत्रार्थविशेषानुपादानात्तस्य स्वार्थिकत्वमिति । तत्र कैयटेन वृत्तिविषय इत्युक्तम्, तद्व्यर्थमुभाभ्यामित्यनेनैव व्यावृत्तिसिद्धेरित्याशयेनाह–वृत्तिविषय इति । इदमेव–उभशब्दाद्यत्र द्विवचनन्न श्रूयते इदमेव । तेनोभयोर्वास इत्यत्र वृत्तिसत्त्वेऽपि "शयवास"इत्यलुग्विधानेन द्विवचनस्य श्रवणादयजभावस्य सिद्धिः । श्रूयते इत्युपादानात् 'उभयपक्षविनीतनिद्रा' इत्यादौ प्रत्ययलक्षणेन द्विवचनपरत्वेऽप्ययच्सिद्धिः । "न लुमता" इति निषेधस्तु नात्र लुप्तप्रत्ययनिमित्तककार्य एव कर्त्तव्ये तेन निषेधात् । अन्येषामिति । भाष्ये ऽयचः प्रक्रमात्प्रकृते ऽन्यत्वप्रतियोग्याकाङ्क्षायास्तेनैव शान्त्या ऽयचो ऽन्येषामित्यर्थः । अभाव इति ।

भावप्रकाश ।

त्वमसम्भावितमेव स्वार्थे तयपोऽप्राप्तेः । सोऽप्याद्युदात्त एव उदात्तग्रहणानुवृत्तेरिति भावः । **प्रत्ययान्तरत्वमिति** । अत एव महाविभाषासम्बन्धस्यावश्यकत्वेन नित्यग्रहणं योगविभागार्थम् । एवं चास्वरितत्वादयज्वेत्यतो वेत्यस्याननुवृत्तावपि महाविभाषानुवृत्त्या पूर्वसूत्रेण वाक्यसिद्धिः । नित्यमित्यत्र तु वाच्यार्थविरोधान्न तदनुवृत्तिरिति भावः । वृत्तिविषये इति कैयटोक्तवदिदमपि वाच्यमिति मूलार्थभ्रमनिरासायाह–**वृत्तीति** । तथा च कैयटोक्तमयुक्तम् । उभाभ्यामित्यादावनेनैव व्यावृत्त्या तस्याफलत्वादिति भावः । **इदमेवेति** । यत्र द्विवचनं न श्रूयते इत्येवेत्यर्थः । अत एवोभयोर्वास इत्यादौ "शयवास" इत्यलुकि नेति भावः । एतेनोक्तज्ञापकादिना द्विवचनपरत्वयोग्यस्वार्थिकप्रत्ययान्यवृत्तावयजिति ज्ञाप्यते । योग्यान्तेन त्रलादिनिरासः । वृत्तावित्यनेनोभाभ्यामित्यादिनिरासः । उभपाठप्रत्याख्यातुर्भाष्यकृतोऽयमेवाशयः । एवञ्च मूलटीकाग्रन्थः सर्वोऽपि चिन्त्य एवेति मन्दोक्तमपास्तम् । योग्यत्वस्य प्रत्ययविशेषणत्वेऽकच्यतिव्याप्तेः, वृत्तिविशेषणत्वेऽलुक्समासेप्यापत्तेः उभोभावित्यत्रातिप्रसङ्गाच्च । एतेन द्विवचनपरत्वेऽयज् नेति ज्ञाप्यते इति रत्नाकरोक्तमपास्तम्, उभोभावित्यादावतिप्रसङ्गतादवस्थ्यात् । प्रत्ययलक्षणेन द्विवचनपरत्वं तु न "न लुमता"इति निषेधात्, उभयपक्षेत्यादिलक्ष्यासम्भवापत्तेश्च । यत्तु द्विवचनान्तो यत्रोभशब्दस्ततोऽन्यत्रायजिति ज्ञाप्यते इति । तन्न, उभाभ्यामित्यादौ दोषापत्तेः लुकि अयजनापत्तेश्च द्विवचनान्तत्वं सत्सप्तमीपकत्वमित्युक्तावपि उभोभावित्यादौ पूर्वपदे दोष एवेति दिक् । **अन्येषामिति** । भाष्येऽकचः प्रक्रमात्ततोऽन्येषामित्यर्थः । तेषामेकवद्भावोविधानादिति भावः ।

न विहन्यते, कप्रत्यये तु विहन्येतैव । तदुक्तमिति । वार्तिककृतेति शेषः । यद्यपि पूर्ववार्त्तिके टाबप्युक्तस्तथाऽपि नासौ विवक्षितः, टाब्विषयत्वमपि द्विवचनपरत्व एव बोद्धव्यमिति कैयटादिभिर्व्याख्यातत्वादित्याशयेन व्याचष्टे-द्विवचनपरत्वाभावे इति । टाबेकादेशस्यापि पूर्वान्तत्वेन ग्रहणाद् द्विवचनपरत्वमस्तीति भावः । यद्यप्युभावित्यादौ द्विवचनपरत्वं दुरुपपादमुभयत आश्रयणेऽन्तादिवद्भावविरहात् तथाप्युभशब्दादुत्पन्नं द्विवचनं लुका

शब्दरत्नम् ।

पूर्वपक्षिणान्तवद्भावविरहादिति वदतैकदेशविकृतन्यायो ऽशास्त्रीयविकारविषयोऽपीति नाभ्युपेतमिति तदनुसारेणैव समाधिं वक्तुमुपक्रमते—तथापीत्यादि । उभशब्दादिति । अत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेवान्तरङ्गत्वादुत्पत्तेरुभघटिताच्छब्दादुभयशब्दादित्यर्थः।

भैरवी ।

तेषामेकवचनबहुवचनयोर्विधानादिति भावः । भाष्यसिद्धान्तरीत्या शङ्कासमाधानयोरत्रानवसर इत्याशयेनाह—पूर्वपक्षिणेति । अत्र अनभ्युपेतमिति कथनेनाभ्युपगमवादेनैतदुक्तमिति सूचितम् । एकदेशविकृतन्यायेन भान्तस्योभशब्दत्वन्ततः परादिवद्भावेन द्विवचनत्वन्तस्य च श्रवणमिति तस्य सिद्धिरिति भावः । ननु "उभौ साभ्यासस्य" इति निर्देशेन उभयत आश्रयणेऽप्यतिदेशो भवत्येवात्रेति कल्पनया सामञ्जस्ये नन्द्वयघटना व्यर्थेति; चेन्न, 'उभयपक्षविनीतनिद्रा' इत्यत्र लुप्तेऽपि अङ्गकार्यत्वाभावेन निषेधाप्रवृत्त्या द्विवचनपरत्वं सुस्थमित्ययजनापत्तिरित्याशयेन नञर्थद्वयाभिधानात् । उत्पत्तेरिति । एवञ्चोभशब्दादुत्पन्नमित्ययुक्तमिति भावः । उभघटितादिति । उभशब्दादित्यस्योभः शब्दो यत्रेति बहुव्रीहिणा प्रकरणादुभयशब्दस्यान्यपदार्थत्वेन उभघटितादित्यर्थकत्वम् । एवञ्च तत्रोभयशब्दादुत्पन्नद्विवचनस्य लुकापहारविषयतायाः सत्त्वाल्लुक्कृतापहारसम्भावनाभाववदन्यत्वन्तत्रास्तीति पूर्वमयच्

भावप्रकाश ।

भाष्यसिद्धान्तरीत्या शङ्कासमाध्योरयुक्तत्वादाह—पूर्वेति । अन्तादिवद्भावेति । तत्र तदङ्गीकारे तु इमां परिभाषां न पठेदिति भावः । नाभ्युपेतमिति । तथा चाभ्युपगमवादेनैतदुक्तमिति शङ्कासमाध्योः सिद्धान्तेऽयुक्तत्वमेकदेशेति न्यायादिना सिद्धेरिति भावः । उत्पत्तेरिति । तथाचोभशब्दादुत्पन्नं द्विवचनमित्ययुक्तमिति भावः । उभघटितादिति । एतेन मूले उभशब्दादित्यत्र बहुव्रीहिः सूचितः । तत्र चान्यपदार्थः प्रकरणादुभयशब्द एव । तदाह—उभयेति । एवं चायज्विशिष्टस्योभयशब्दस्य सर्व-

सरला ।

**इत्यर्थ इति ।** अयच्प्रवृत्तिसम्भावनाप्रयोज्या यत्रोभयशब्दस्य द्विवचनपरत्वसम्भावना ततोऽन्यत्रायजित्यर्थः । यद्युभशब्दादयच् स्यात्तर्ह्युभयशब्दस्य द्विवचनपरत्वं स्यादिति यत्र सम्भाव्यते ततोऽन्यत्रायच् साधुरिति यावत् । नचैवमपि 'उभे भद्रे' इति न स्यात्, यद्युभशब्दादयच् स्यात् तर्हि तदन्तात् "टिड्ढा" इति ङीपि तेन व्यवधानादुभयशब्दस्य द्विवचनपरकत्वं नास्तीति ततोऽन्यत्रेति जातमिति अयजापत्तेरिति वाच्यम्, ङीप्यपि तदन्ते लिङ्गविशिष्टपरिभाषया उभयशब्दत्वस्य सत्त्वेन उभयशब्दस्य द्विवचनपरकत्वस्यैव सत्त्वात् । न च "विभक्तौ लिङ्गविशिष्टाग्रहणम्" इति ङ्यन्ते लिङ्गविशिष्टपरिभाषया उभयशब्दत्वं नायास्यतीति वाच्यम्, विभक्तिनिमित्तककार्ये कर्तव्ये एव तत्परिभाषायाः प्रवृत्त्याऽयचो द्विवचनपरकत्वाभावनिमित्तकत्वेन विभक्तिनिमित्तकत्वाभावात्तदप्रवृत्तेः । यत्तु अयच्प्रवृत्त्यभावसम्भावनाप्रयोज्या यत्रोभशब्दस्य द्विवचनपरत्वसम्भावना ततोऽन्यत्रायच्, यद्युभशब्दादयच् न स्यात्तर्ह्युभशब्दस्य द्विवचनपरत्वं स्यात्ततोऽन्यत्रायजित्यर्थः इत्यर्थस्यापि विवक्षणेन 'उभे भद्रे' इत्यत्र पूर्वोक्तरीत्याऽस्याः सम्भावनायाः सत्त्वेन पूर्वोक्तसम्भावनाया असत्त्वेऽपि ततोऽन्यत्र न जातमित्यदोष इति केचित्, तन्न, 'उभयत्र' इत्यत्रापि अयच्प्रवृत्त्यभावसम्भावनाप्रयोज्या उभशब्दस्य गणे पाठाभावेन त्रलाद्यनुत्पत्त्या द्विवचनपरत्वसम्भावना वर्तते इति ततोऽन्यत्र जातत्वाभावेन तदसिद्ध्यापत्तेरिति ।

नापहृतं यत्र ततोऽन्यत्रायच् इतीह विवक्षितोऽर्थः । यद्यपि भाष्ये कप्रत्ययस्यापि

शब्दरत्नम् ।

यत्र लुकाऽपहृतं तत्रायजिति तु नोक्तं, प्रातिपदिकप्रकृतिकाचारक्विबन्ते यद्ययजिष्यते तदा तस्यानापत्तेस्तत्रोत्पत्तेरभावेन विशिष्टाभावाक्षतेः । **लुका नापहृतमिति ।** लुक्कृतापहारसम्भावनाभाववदित्यर्थः । एतेनोभशब्दस्य पाठाभावे ऽसर्वनामत्वेन ततस्तसिलादिविवक्षायाः कर्त्तुमशक्यत्वेन द्विवचनस्य लुका ऽनपहारस्यैव सत्त्वेन ततोऽयजनापत्तावुभयत्रेत्यसिद्धिरित्यपास्तम् । यद्ययच् स्यात्तदा त्रलादिः स्यात्तस्मिंश्च लुगपि स्यादिति लुकाऽपहारसम्भावनासत्त्वेन लुक्कृतापहारसम्भावनाभाववतोऽन्यत्वात् । **यद्यपि भाष्ये इति ।**

भैरवी ।

**प्रवर्त्तते । तस्मिन् कृते उभयशब्दस्य सर्वादिगणे पाठस्य सत्त्वेन तत उत्पन्नपञ्चमीसप्तम्योः सर्वनामप्रकृतिकत्वेनोभयतः उभयत्रेत्यस्य सिद्धिः । नञर्थद्वयघटनायाः प्रयोजनमाह—** यत्र लुकापहृतमिति । प्रातिपदिकेति । **उभाविवाचरत्युभयतीत्यर्थे उभशब्दादाचारक्विपि उभयतीति भवति, भवन्मते तत्र द्विवचनस्योभशब्दादुत्पत्तेरेवाभावेनोभशब्दादुत्पन्नं द्विवचनं लुकाऽपहृतमिति नास्तीत्ययचो ऽसाधुत्वापत्तिरिति । यदीष्यतेत्यनेन अनभिधानान्नेष्यत इति ध्वनितम् । नञ्द्वयघटितवाक्यार्थस्य तत्र सत्त्वमस्तीत्याह—**तत्रोत्पत्तेरिति । विशिष्टाभावेति । **लुक्कृतापहारसम्भावनाविषयत्वाभाववदुभयशब्दोपादानकोत्पत्तिकर्तृत्वविशिष्टद्विवचनाभावस्याक्षतेरित्यर्थः । एतेनोभाभ्यामित्युभयतः उभयोरित्युभयत्र इति रीत्या विग्रहकाले उभशब्दस्य सर्वादौ पाठः—किमर्थ इति शङ्कमते—नास्तीति सर्वनामप्रकृतिकपञ्चम्याद्यन्तत्वस्य प्रकृते विरहात्तसिलाद्यनुत्पत्त्या 'उभयत उभयत्र इत्यादाविव' इति दृष्टान्तासङ्गतिरिति शङ्कापि निरस्ता । तन्मतेऽपि यथा न दृष्टान्तासिद्धिस्तस्य प्रकारस्य निश्चयाय लुका नापहृतमिति मूलं व्याचष्टे—**लुक्कृतेत्यादिना । अयजनापत्तौ—**अयचो ऽप्राप्तौ** । इत्यसिद्धिरिति । **इत्याद्यसिद्धिरित्यर्थः । सम्भावनाघटितार्थसद्भावं प्रकटयति—**यद्ययजित्यादिना । **एतेन "उभौ साभ्यासस्य" इति निर्देशेन "उभयो ऽन्यत्र" इति वार्तिकस्वारस्येन च यत्र द्विवचनविषयत्वसम्भावना तत्रोभशब्दस्य प्रयोगः । यत्र तु न तथा, तत्रोभयशब्दस्य सः, यत्र तूभयपक्षेत्यादौ लुग्भवति तत्र लुका तद्विषयत्वस्यापहार इति नासाधुता । उभावित्यत्रैकादेशात्प्रागपि तद्विषयत्वान्नायच् । एवमेव 'उभयतः' 'उभयत्र' इत्यस्य सिद्धिरित्येतद् ध्वनयितुं विषयपदमुपात्तमिति भाष्यकृतः सिद्धा-**

भावप्रकाश ।

नामत्वात्सर्वनामप्रकृतिकसप्तम्याद्यन्तत्वेन त्रलाद्युत्पत्तिर्निर्व्यूढेति भावः । **लुकाऽपहृतमिति ।** लुक्कृतापहारसम्भावनावदित्यर्थः । **प्रातीति ।** उभाविवाचरतीत्यर्थे उभशब्दादाचारक्विपि धातुत्वे उभयतीत्यस्यानापत्तेरित्यर्थः । यदीष्यते इत्यनेन वस्तुतोऽनभिधानान्नेष्यत एवेति तथैव वक्तुं युक्तमिति सूचितम् । अत्र मान्याः, द्विवचनस्य लुगभावोऽनापत्तौ हेतुरिति तत्प्राचामनुरोधेन, लुक्शब्दस्यादर्शनसाधनमात्रपरत्वेनाप्युपपत्तेः । मूले कुठारेण तावत्पर्यन्तगमने बीजाभावाच्च । तद् ध्वनयन्नाह—**तत्रोत्पत्तेरिति ।** अत्र मान्याः—अन्तरङ्गत्वादयचि कृते यत्रायजुत्तरद्विवचनस्य लुकानपहारस्ततोऽन्यत्रोभशब्दादयजिति तत्प्राचामनुरोधेन । तावताऽप्यनिर्वाहात् । अन्तरङ्गत्वादयचि ततो द्विवचनेऽपि तदानीं तावन्मात्रेणापहाराभावेनानपहारसत्त्वेन ततोऽन्यत्वाभावेनायजनापत्तेरयच्साधनायैतदुपायाश्रयणेनादावयच एवाभावाच्च । अत आह—**लुक्कृतेति ।** खण्डनकृदुक्तिं खण्डयति—**एतेनेति ।** सम्भावनानिवेशोऽयचः पूर्वमुत्पत्तिरित्युभयाङ्गीकारेणेत्यर्थः । एवेन ततोऽन्यत्वव्यावृत्तिः । **अयजनापत्ताविति ।** तदप्राप्तावित्यर्थः । **इत्यसिद्धिरिति ।** इत्याद्यसिद्धिरित्यर्थः । सम्भावनास्वरूपप्रदर्शनपूर्वकं विषये तदुक्तिं योजयितुमेतेनेत्युक्तं हेतुमाह—**यदीति । त्रलादिरिति ।** तस्य पाठेन तस्मात्तत्प्रकृतिकसप्तम्याद्यन्तत्वादिति भावः । **इतीति ।** इत्येवं या लुक्कृतापहारसम्भावनेत्यर्थः । एतेनोक्तज्ञापकादिना द्विवचनविषयत्वसम्भाव-

स्वार्थिकत्वेनोभशब्दात् परस्य द्विवचनत्वमस्तीत्याश्रित्योभशब्दपाठःप्रत्याख्यातः, तथाऽपि प्रौढिवादमात्रं तत् । कृत्रिमस्यैव द्विवचनस्येह ग्रहीतुमुचितत्वात् । अन्यथा त्रतसिलादावतिप्रसक्तत्वात् । ननु कारकविभक्त्यन्ताद्विहितौ त्रतसिलौ स्वार्थिकत्वे ऽपि द्वित्वमात्रं नाभिधत्त इति चेद् न, कप्रत्ययस्याप्यज्ञाताद्यर्थबोधकत्वात् पञ्चकपक्षेऽधिकबोधकत्वध्रौव्याच्चेति दिक् ।

शब्दरत्नम् ।

स्वार्थिकत्वेनोभशब्दात्परस्य कप्रत्ययस्यापि द्विवचनत्वमस्तीत्यन्वयः । अधिकेति । संख्यापेक्षयाऽधिकलिङ्गकारकेत्यर्थः । दिगिति । दिगर्थस्तु भाष्यस्याप्रौढिवादत्वमपि समर्थ-

भैरवी ।

न्तो ध्वनितः । स्वार्थिकत्वेनेति । एतेन द्विवचनशब्दोऽत्र द्वित्वविशिष्टार्थबोधकपरो योगेन, नतु द्विवचनशब्दपर इति सूचितम् । तेनोभयोरुभावुभोभावित्यस्यापि सिद्धिः । कप्रत्ययस्यापीति पाठः । अपिनोभशब्दद्विवचनयोः सङ्ग्रहः । द्वयोर्वचनन्द्विवचनमिति योगेन द्वित्वसंख्याप्रकारकसङ्ख्येयविशेष्यकबोधविषयार्थानुबोधकत्वरूपन्द्विवचनशब्देनोच्यते । त्रलादेस्तु विभक्त्यन्तस्य स्वार्थे विधानात्तत्तत्कारकशक्तिप्रधानत्वमिति नोक्तन्द्विवचनत्वम् । अत उभयत उभयत्रेत्येतयोः सिद्धिरिति भावः ।

केचित्तु यद्युभकावित्यत्राकच्सिद्धिरेवायजभावाय सर्वादावुभशब्दपाठस्य फलं तदाऽकज्विधावेव "उभाव्ययसर्वनाम्नाम्" इति पठनीयन्तावतेष्टस्य सिद्धेरुभशब्दस्य सर्वादौ पाठो न कार्यः । सर्वनामसाहचर्यात्संज्ञादिव्यावृत्तिरपि भविष्यतीत्याहुः । तन्न, एवं सति पाठस्य क्वचित्सिद्धिरेव जातेति सूत्रे गणे वा पाठ इत्यत्र फलतो विशेषाभावेन लाघवाभावात् । प्रत्युत साहचर्याश्रयणे गौरवमिति स्फुटमेव । नच यदि "अन्याभावो द्विवचनटाब्विषयत्वात्" इति वार्तिके द्विवचनशब्दो यौगिकस्तर्हि तरबादिष्वप्ययज् न स्यादिति वाच्यम्, तरबादीनाम्प्रवृत्तिनिमित्तगते तत्समानाधिकरणगुणगते वा प्रकर्षादौ विधानेन प्रकारद्वयस्याप्यत्राभावेनोभशब्दात्तरबादीनामुत्पत्तेरेवाभावात् । यद्यप्येका यूपातिवदेकस्य पुरुषस्योभयसमबलत्वप्रतिपादनायास्मात्तरप्प्राप्नोति । तथाप्यनभिधानात्तत्र तरबादिकन्न । तत्सत्त्वे ऽप्ययज्नेति वार्तिकाशयः । ननु मूलेऽज्ञाताद्यर्थबोधकत्वेनाधिकबोधकतया इत्येव कथनं युक्तमिति पञ्चकेति कथनमफलमत आह—सङ्ख्येति ।

भावप्रकाश ।

नायामुभशब्दप्रयोगस्तदभावसम्भावनायां तस्य प्रयोगः उभयपक्षेत्यादौ लुग्विषये लुका विषयत्वस्यैवापहारान्न दोषः । उभावित्यादावेकादेशेऽपि ततः प्राक् तादृशविषयत्वसत्त्वान्न दोषः । सम्भावनादिनोभयत इत्यादिसिद्धिः । सा चोक्तैव । इदमेव ध्वनयितुं विषयपदमुपात्तं वार्तिके इति भाष्यसिद्धान्तो ध्वनितः । एवं च मूलमनेकधाऽत्र युक्तमिति गूढाकूतम् । अनासन्नत्वेन स्वार्थिकत्वद्विवचनत्वयोर्वैयधिकरण्यभ्रमवारणायाह—स्वार्थिकेति । अपिनोभशब्दद्विवचनयोः संग्रहः । अत एवोभावित्यत्र न । इत्थं हि भाष्याकूतं—कप्रत्ययस्याज्ञाताद्यर्थविशिष्टोभार्थे विधानेन द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधविषयार्थानुवादकत्वरूपद्विवचनत्वेन वार्तिके द्विवचनशब्देन तस्यापि ग्रहणं त्रलादेस्तु विभक्त्यन्तस्य स्वार्थे विधानात्तत्तत्कारकशक्तिप्रधानत्वमेवेति न तस्योक्तद्विवचनत्वम् । एतेनोभकाविति भाष्यप्रयोगात्कस्यापि वार्तिके ग्रहणमिति तदन्यतरत्वं निवेश्यमिति जगन्नाथखण्डनकृदुक्तमपास्तम् । कल्पाद्यन्ते तु नायच् । तत्रोभयो मणिरित्यादावप्रवृत्तयेऽस्य "लिट्यभ्यासस्योभयेषाम्" इति निर्देशेन तस्येष्टसिद्ध्यर्थत्वेन चानित्यत्वावश्यकत्वेन च ममाप्यदोषात् कल्पादेस्ततोऽनभिधानमेव वा । किं चाकज्मात्रार्थत्वे उभाव्ययेति पाठेन सिद्धे गणे पाठो व्यर्थः साहचर्याच्च संज्ञादिव्यावृत्तिरिति । ननु पूर्वदोषेणापि प्रकृत्यर्थापेक्षयाऽधिकबोधकत्वस्यैवो-

नास्तीति। अनभिधानादिति भावः। तथा चोभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तिकत्वेनाव्ययत्वे प्राप्ते "तद्धितश्चासर्वविभक्तिः" इति सूत्रे "कृत्तद्धितानां ग्रहणं च पाठे" इति भाष्यं कैयटेनावतारितम्। अस्तीति। पचतिकल्पं

शब्दरत्नम्।

यितुं शक्यमिति। तथा हि, कप्रत्ययस्य स्वार्थिकत्वेन व्द्यर्थाभिधानसमर्थत्वे वार्तिके द्विवचनशब्देन तस्यापि ग्रहणम्। द्विवचनत्वं द्वित्वसंख्याप्रकारकसङ्ख्येयविशेष्यकबोधविषयार्थानुवादकत्वम्। त्रतसिलौ तु विभक्त्यन्तस्य स्वार्थे विहितौ इति तत्तत्कारकशक्तिप्रधानावेवातो न तयोरुक्तं द्विवचनत्वम्। कस्य तु अज्ञाताद्यर्थविशिष्टोभार्थे विधानेन तत्त्वमक्षतमेवेति भाष्याशयः। कल्पाद्यन्ते ऽयज्नैव भवति। तत्रोभयो मणिरित्यादौ अप्रवृत्तये अस्य "लिट्यभ्यासस्योभयेषाम्" इति निर्देशेनानित्यत्वावश्यकत्वात्। कल्पबादेस्तस्मादनभिधानमेवेत्यलम्।

कैयटेनावतारितमिति। "उभयोऽन्यत्र" इति वार्तिके 'उभयो मणिः' 'उभये देवमनुष्याः' इति भाष्यकृतोदाहरणात् स्वार्थिकोपक्रमेण तत्प्रवृत्तेश्चोभयोरपि ग्रहणमिति

भैरवी।

वार्तिकेइति। अस्योभयोरपि ग्रहणमित्यत्रान्वयः। उभयोः—अवयव्यर्थकायजन्तस्वार्थिकायजन्तत्वेन पञ्चकेत्याद्यफलमत आह—संख्येति। वार्तिके इति। अस्योभयोरपि ग्रहणमित्यत्रान्वयः।

भावप्रकाश।

उदाहरणात्—तदुदाहरणदानादित्यर्थः। उभयोरपीति। अवयव्यर्थकायजन्तस्य स्वार्थिकायजन्तस्य

सरला

बोधविषयार्थानुवादकत्वमिति। बोधजनकत्वं तदर्थः। तेन "उभयोरुभौ उभोभौ" इत्यादौ नायच्" इति शेखरसङ्गतिः। अन्यथा उभशब्दस्यानुवादकत्वाभावात्तत्रोभशब्दस्य द्विवचनत्वाभावेन तत्परकपूर्वशब्दादयजापत्तिः स्पष्टैव। तादृशबोधजनकत्वं कप्रत्ययस्याप्यस्ति उभशब्दवत्। तदुक्तं भाष्ये-"केऽप्यन्तरेण वचनं द्विवचनपरो भविष्यति। कथम्? स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्तीति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति" इति। यतः स्वार्थिकाः प्रकृतितोऽविशिष्टा अन्यार्थविशेष्यकबोधाजनका इति हेतोः प्रकृतिर्गृह्यतेऽनेनेति प्रकृतिग्रहणं तेन प्रकृतिभूतोभशब्दग्राहकेण द्विवचनशब्देन तत्प्रकृतिकानां स्वार्थिकानां कादीनामपि ग्रहणमिति तदर्थ इति। स्यादेतत्, यदि द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वं द्विवचनत्वं तर्हि घटपदादपि द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधजननात्तस्यापि द्विवचनत्वापत्तौ उभयोर्घटौ 'उभयघटौ' इत्यादावयच् न स्यात्, उभशब्दस्य उभयशब्दस्य वा द्विवचनपरकत्वस्यैव सत्त्वात्। नच द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकोपस्थितिजनकत्वं द्विवचनत्वमिति नोक्तदोष इति वाच्यम्, त्रतसिलादेरपि द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकोपस्थितिजनकत्वेन तस्यापि निरुक्तद्विवचनत्वापत्तौ त्रतसिलादेर्द्विवचनत्वं नास्तीत्यर्थकाग्रिमग्रन्थविरोधात्, 'उभौ' इत्यादौ औविभक्तेर्द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकोपस्थितिजनकत्वस्याभावेन निरुक्तद्विवचनत्वस्यानापत्तेश्चेति चेत्? मैवम्, यस्य द्विवचनत्वं वक्तव्यं तत्प्रयोज्यप्रधानतानिरूपिताप्रधानत्वाऽसमानाधिकरणा या द्वित्वसंख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठा प्रधानता तादृशप्रधानताप्रयोजकत्वं द्विवचनत्वमिति परिष्कारेणादोषात्। तथाहि, प्रधानता नाम संसर्गताविशेष्यतासाधारणो विषयताविशेषः। तथाच 'उभयत्र' इत्यादौ सप्तम्याद्यन्तात्त्रलाद्युत्पत्त्य। त्रलपदप्रयोज्याधाराधेयभावसंसर्गनिष्ठप्रधानतानिरूपिताप्रधानत्वसमानाधिकरणैव द्वित्वसंख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठा प्रधानता जातेति त्रतसिलादेर्नोक्तद्विवचनत्वम्। कप्रत्ययस्य प्रातिपदिकादेवोत्पत्त्या संसर्गनिष्ठप्रधानताख्या विषयता न कपदप्रयोज्येति कप्रत्ययस्य नोक्तद्विवचनत्वभङ्ग इति। तदेतत्सर्वं ध्वनयन्नाह-तत्तत्कारकशक्तिप्रधानावेवेति।

पचतिरूपमित्यादिवारणेन पाठस्योपक्षीणत्वादनभिधाने प्रमाणं नास्तीति भावः । तयप्प्रत्ययान्ततयेति । उभयशब्दस्येति भावः । नित्यैवेति । 'परेऽवर उभया

---

शब्दरत्नम् ।

तस्य द्विवचनाभावोऽनभिधानादावश्यक इति तद्भावः । इति भाव इति । इत्यभिमान इत्यर्थः । तद्बीजन्तूक्तम् ।

भैरवी ।

जन्तयोः । तस्य–उभशब्दस्य । तद्भावः–कैयटाशयः । मूले इति भाव इति कथनमरुचिबोधनायेत्याशयेनाह–इत्यभीति । तद्बीजन्तूक्तमिति । कैयटेनेति प्रतीकमुपादायोक्तभाष्यविरोधरूपमुक्तमित्यर्थः ।

भावप्रकाश ।

चेत्यर्थः । अपिर्मिथः समुच्चायकः इतिर्हेतुत्वमनभिधाने बोधयति । तस्य—आद्यस्य । सम्बन्धसामान्ये षष्ठी । एवं चावयवद्वयारब्धमणिद्वयविवक्षयोद्भूतावयवभेदविवक्षया वा द्विवचनमस्यासाध्वेवेति भावः । तद्भावः—कैयटाशयः । इति भाव इति प्रतीकमुभयसाधारणम् । तत्रोभयत्रारुचिसूचनायाह—इत्यभीति । तद्बीजन्तूक्तमिति । क्रमेण कैयटेनेत्यादिप्रतीकोक्तभाष्यविरोधरूपं

सरला ।

परेतु "स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ति" इत्यस्य यदागमपरिभाषावदेव स्वार्थिकप्रत्ययप्रकृतिपर्याप्तधर्माः स्वार्थिकप्रत्ययान्ते तदादावतिदिश्यन्ते इत्यर्थः । प्रकृतिग्रहणेन स्वार्थिकप्रत्ययविशिष्टस्य ग्रहणमिति यावत् । वैशिष्ट्यं च स्वघटितत्वं, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्वं, स्वविशिष्टाघटितत्वमेतत्त्रितयसम्बन्धेन । सम्बन्धघटकस्ववैशिष्ट्यं च स्वेतरत्व, स्वीयविधेयतानिरूपितोद्देश्यताश्रयेतरत्वोभयसम्बन्धेन । तथाच उभशब्दग्रहणेनोभकशब्दस्यापि ग्रहणात् केऽप्युभशब्दस्य द्विवचनपरत्वमेवेति सर्वादिगणे उभशब्दपाठो व्यर्थः । अत एव 'प्रकृतितोऽभिन्नाः' इत्यर्थकं 'प्रकृतितोऽविशिष्टाः' इति भाष्यं सङ्गच्छते । जराशब्दात्कप्रत्यये जरसादेशस्तु निर्दिश्यमानत्वाभावान्न । श्वशुरकशब्दात् "राजश्वशुराद् यत्" इति यदादेरतिप्रसङ्गस्त्वनभिधानाद्वारणीय इत्याहुः ।

स्वार्थिकप्रत्ययानां प्रकृत्यर्थे विधानेन "उभयोऽन्यत्र' इति वार्तिके पूर्वोक्तार्थकद्विवचनस्य ग्रहणेन 'उभकौ' इत्यत्र द्विवचनपरतयाऽयचोऽप्राप्त्या न्यायसिद्धार्थैव "स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ति" इति भाष्योक्तिः । प्रत्ययान्ततदादौ प्रकृतिपर्याप्तधर्मारोपबोधकत्वे तु अपूर्ववचनत्वमेवास्य स्यादिति "केऽप्यन्तरेण वचनं द्विवचनपरो भविष्यति" इति भाष्योक्तिरसङ्गतैव स्यात् । किञ्च प्रकृतिपर्याप्तधर्मस्य तत्रारोपे 'उभकौ' इत्यत्रायज्वारणातिरिक्तफलाभावेन सामान्यतः "प्रकृतितोऽविशिष्टा भवन्ति" इति भाष्याक्षरस्वारस्यभङ्गापत्तिः । किञ्च गर्गक इत्यादिशतशः प्रातिपदिकाद् स्वार्थिकप्रत्ययान्तात्प्राप्ततद्धितप्रत्ययानामनभिधानकल्पनेऽतिगौरवमिति धर्मारोपकल्पनं चिन्त्यमित्यन्ये ।

वस्तुतस्तु "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" इति "सुपिस्थः" इति सूत्रस्थभाष्योक्तपरिभाषावचनेनैव स्वार्थिकानां प्रकृत्यर्थे विधानस्य साधनीयतया 'केऽप्यन्तरेण वचनम्" इति भाष्यासङ्गतिस्तत्राप्यस्त्येव । सा चाऽसङ्गतिः कप्रत्ययेऽपि कप्रत्ययव्यवहितत्वेऽपि द्विवचनपरोभयशब्दः साधुरित्यर्थक "द्विवचनपरता वक्तव्या" इति वचनं विनाऽन्यरीत्या तत्र अयच्वारणं भवितुमर्हतीत्यर्थस्यैव स्वीकारेण परिहरणीयेति । तच्चोभयोरपि सममिति । किञ्च स्वार्थिकानां प्रकृत्यर्थे विधानेऽपि 'श्वशुरक' 'गर्गक' इत्यादीनां "प्रकृतितोऽविशिष्टा" इति भाष्याक्षरस्वारस्यं कथं न भज्यते इति विचारणीयम् । परेतुमते तु पूर्वोक्तव्याख्यानानुरोधेनोभकमात्रविषयत्वमिष्टमेव । स्पष्टञ्चेदं तत्रैव विवरणे इति । एवञ्च तस्य वचनस्य सङ्गत्यर्थं तस्यावश्यमपूर्वार्थविधायकत्वे 'गर्गक' 'श्वशुरक' इत्यादिभ्यस्तत्तत्तद्धितप्रत्ययानामनभिधानेनैव वारणस्यागतिकगतिकतया तृतीयेष्टापत्तिरेवेति दिक् ।

तद्बीजं तूक्तमिति । अभिमानबीजं तु 'उभयोऽन्यत्र' इति वार्तिके ऽत्यन्तस्वार्थिकस्य अवयवार्थ-

अमित्राः' इति तु च्छान्दसत्वाद् बोद्धयम्। अव्युत्पन्नाविति। एतच्च पस्पशायां कैयटे स्पष्टम्।

एके—कारिकाकाराः। 'एतन्त्वं मन्ये' इत्युदात्तस्य 'उत त्वः पश्यन्' इत्यनुदात्तस्य च दर्शनादिति भावः। एकः—प्रथमः। संहितया पाठे तान्तत्वस्यास्फुटत्वेऽपि तान्तश्छेत्तव्योऽन्यथा एकश्रुत्या सकृदेव पठेत्। न च तान्ते विप्रतिपत्तव्यम् "त्वत्त्वसमसिमेत्यनुच्चानि" इति फिट्सूत्रात्। तथा च ऋङ्मन्त्रः- "स्तरीरु त्वद्भवति सूत उ त्वत्" इति। वेदभाष्यकाराश्चेत्थं व्याचख्युः—त्वदिति सर्वनामसु पठितोऽनुदात्तोऽयमन्यपर्याय इति। जयदेवोऽपि प्रायुङ्क्त—"त्वदधरमधुरमधूनि पिबन्तम्" इति। त्वत्तोऽन्यस्या अधर इति विग्रहः, न तु तवाधर इति। "पश्यति दिशि दिशि रहसि भवन्तम्" इति पूर्ववाक्येन सहानन्वयापत्तेः। नेम इति। श्रूयते च—"प्र नेमस्मिन् ददृशे सोम" इति। सम इति। तथा च श्रूयते "नभन्तामन्यके समे"। 'मानो वृकाय वृक्ये समस्मै"। "उरु-

शब्दरत्नम्।

अनन्वयापत्तेरिति। तेन हि वाक्यशेषेण कृष्णस्य संबोद्ध्यत्वावगत्या संबोद्ध्यस्य च युष्मदर्थत्वेनानन्वयः। पिबन्तं भवन्तमिति चानन्वितमिति बोध्यम्। अत्र पक्षे त्व

भैरवी।

कृष्णस्येति कृष्णम्प्रति सखीवाक्यमेतत्। अतो भवन्तमित्यनेन कृष्ण एव प्रतिपाद्यत्वेन विवक्षितः। अत एव तद्वाक्यात्पूर्वपठितेन

"अथ ताङ्गन्तुमशक्ताञ्चिरमनुरक्तां लतागृहे दृष्ट्वा।
तच्चरितं गोविन्दे मनसिजमन्दे सखी प्राह ॥

इति वाक्येनैकवाक्यं भवति। युष्मदर्थत्व इति। तवाधर इत्यत्रेति शेषः। अनन्वितमिति। यदि युष्मदर्थ एवात्र विवक्षितः स्यात्तदा भवन्तमित्यत्र यो भवच्छब्दस्तत्प्रतिपाद्योऽपि कृष्ण एवेति स्वीयाधरपानं स्वकर्तृकं बाधितम् इत्यनन्वय इति भावः। अत्र पक्ष इति। एकस्य ता-

भावप्रकाश।

परिभाषाप्रकरणोक्तभाष्यविरोधरूपं चेत्यर्थः। एतेन तथा रत्नाकरदण्डथादिग्रन्थाः परास्ताः। अत्रारुचिसूचिका त्रिषु मान्योक्तिस्तु प्राचामनुरोधेनेति बोध्यम्।

सम्बोध्यत्वेति।

अथ तां गन्तुमशक्तां चिरमनुरक्तां लतागृहे दृष्ट्वा। तच्चरितं गोविन्दे मनसिजमन्दे सखी प्राह ॥

इति पूर्वोक्तया तत्र भवन्तमित्यनेन कृष्णस्यैव ग्रहणेन कृष्णं प्रति सखीवाक्यत्वादिति भावः। युष्मदर्थेति। तवाधर इत्यत्रेति भावः। तथा च स्वीयाधरपानं कुर्वन्तमात्मानमिति बाधितमिति तत्रैव वाक्येऽनन्वय इत्यर्थः। एवमपि पूर्ववाक्येन सहेति मूलविरोधोऽत आह—पिबन्तमिति। सम्बोधनकाले पानकर्तृत्वाभावादिति भावः। एतेन त्वदिति विद्यमानं पाठं निरस्य तदिति कल्पयन्तः परास्ताः। तट्टीकाकृतस्तु तदिति पाठं धृत्वा तस्या राधाया इति तत्तस्मात्कारणादिति वा स चासावधरश्चेति वा व्याचख्युरिति, तदपि तथैव बोध्यम्। अत्र मान्याः एवं च तान्तस्य "उतो त्वस्मै तन्वम्"इत्यादिप्रयोगादनुदात्तस्य च गणे पाठ आवश्यक इति ध्येयमिति तत्प्राचामनुरोधेन "एतं त्वं मन्ये" इत्युदात्तसंग्रहानापत्तेः। तद्ध्वनयन्नाह—अत्र पक्षे इति। तान्तच्छेदपक्ष इत्यर्थः। उदात्तस्य संज्ञाफलं तु

सरला।

कतयप्स्थानिकस्य चोभयविधस्याप्ययच्प्रत्ययस्य ग्रहणेन द्विविधस्यापि द्विवचनपरत्वाभावे एव प्रवृत्त्योभयशब्दाद् द्विवचनस्यासम्भव इत्युक्तमित्यर्थः।

ष्याणो अधायतः समस्मात्" । "उतो समस्मिन्ना" इत्यादि ।

"सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः" ।

श्रूयते च- "आद्रात्रो वासस्तनुते सिमस्मै" । "उच्छुक्रमत्कमजते सिमस्मात्" । उभयत्रापि सिमशब्दः सर्वपर्याय इति वेदभाष्यम् ।

**गणसूत्र इति** । यद्यपि भाष्ये अष्टाध्यायीस्थे सूत्रे "अपुरि इति वक्तव्यम्" इति वार्त्तिकं पठितं तथापि तद्गणसूत्रस्य शेषः, नतु जसि विभाषाविधायकस्य । 'अत' इत्यधिकृत्य जसः शीविधानात् टाबन्तात्प्राप्त्यभावात् । **अन्तरायामिति** । प्राकाराद्बाह्यायां तदन्तर्वर्तिन्यां वेत्यर्थः । लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा प्राप्तिर्बोध्या । त्यद्, तद्, एतौ उक्तपरामर्शकौ । तत्राद्यश्छान्दस इति गणरत्नकारः । तन्न "स्यश्छन्दसि बहुलम्" इति सूत्रे छन्दोग्रहणवैयर्थ्यापत्तेः ।

एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।

साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते ॥

---

शब्दरत्नम् ।

इत्येकश्रुत्योदात्तानुदात्तयोर्निर्देश इति बोध्यम् ।

**प्राप्त्यभावादिति** । पूःशब्देन स्त्रीत्वविशिष्टस्यैव बोधनेन तादृशार्थस्य विशेष्यत्वे एव तत्प्रवृत्तेः । अत एव भाष्ये 'अन्तरायाम्' इति स्त्रियां सप्तम्यामेवोदाहृतमिति

भैरवी ।

न्तत्वमिति पक्षमित्यर्थः । निर्देश इति । तेन एतन्त्वमिति मूलोक्तयोर्वेदवाक्ययोरुपपत्तिरिति भावः ।

पूःशब्दार्थस्य विशेष्यत्वे संज्ञा नेति वार्तिकार्थ इत्याशयेनाह--पूःशब्देनेति । एतेन गणसूत्रशेषत्वे प्रमाणत्वमुक्तम् । अत एव-स्त्रीरूपस्य पुरोरूपार्थस्य विशेष्यत्वादेव । उदाहृतमिति । यद्यष्टाध्यायीस्थसूत्रस्य शेषः स्यात्तदा जस्परकप्रयोगमेव कुर्यात् । सप्तम्यामेवेति अष्टाध्यायीस्थसूत्रशेषत्वेऽप्यपुर इति वक्तव्येऽपुरीतिसमुदायोपादानेन सप्तम्युपादानेन चान्तरस्याः

भावप्रकाश ।

वेदे विचार्यम् । अत एवावश्यक इति मान्यैरुक्तम् । अत्र पक्षे इत्यनेनारुचिः सूचिता । तान्तस्यान्यार्थस्य प्रयोगेऽपि तस्य सर्वनामत्वे मानाभावो बहुसंमतत्वं च । अकच् तु प्रागुरीत्या नेष्ट एवेति ।

**प्राप्त्यभावादितीति** । प्रकरणापेक्षया लिङ्गस्य बलवत्त्वादिति भावः । पूःशब्दार्थस्य विशेष्यत्वे संज्ञा नेति वार्त्तिकार्थः स च स्त्रियामेव । तेन तद्विशिष्टस्यैव बोधनेन तत्त्यागे मानाभावात् । तदाह--**स्त्रीत्वेति** । गणसूत्रशेषत्वे प्रमाणं ध्वनयितुं स्वोक्तार्थे मानमाह--**अत एवेति** । तादृशार्थस्य विशेष्यत्वाङ्गीकारादेवेत्यर्थः । यदि तु तदर्थमात्रविशेष्यतेष्टा स्यात्तर्हि तथा नोदाहृतं स्यादिति भावः । **सप्तम्यामेवेति** । एतेन सत्यभिधानेऽन्तरस्याः पुर आगत इत्यादि भवत्येवेति ध्वनितम् । एवं च यदि

सरला ।

**तादृशार्थस्य विशेष्यत्वे एवेति** । पूःपदप्रयोज्या या स्त्रीत्वावच्छिन्ना धर्मिता तादृशधर्मितानिरूपितप्रकारताप्रयोजकान्तराशब्दे एव निषेधप्रवृत्तेरित्यर्थः । स्त्रीत्वलिङ्गावच्छिन्नपूःपदप्रयोज्यधर्मितानिरूपितप्रकारताप्रयोजकेतरस्यैव अन्तरशब्दस्य "अन्तरं बहिर्योगोपसंव्यानयोः" इति गणसूत्रे ग्रहणमिति भावः । वस्तुतस्तु 'अपुरि' इत्यस्य पूःशब्दार्थस्य विशेष्यत्वे नेति व्याख्यानमिति स्त्रीत्वविशिष्टपूःशब्दार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकेतर 'अन्तर' शब्दस्य गणसूत्रे ग्रहणमिति 'अन्तरायां नगर्याम्' इत्यस्य सिद्धिरिति बोध्यम् ।

**स्वाभिधेयेति** । स्वस्य पूर्वादिशब्दस्याभिधेयेनापेक्ष्यमाणस्यावधेर्नियम इत्यर्थः । 'दिशः सपत्नी भव दक्षिणस्याः' इत्यादावपि व्यवस्थाऽस्त्येव;

शब्दरत्नम् ।

भावः । **केवल इति** । असहाय इत्यर्थः ।

स्वाभिधेयापेक्षावधीति समस्तपाठं व्याचष्टे-**स्वस्येत्यादि** । अपेक्षेति कर्मणि घञ् । **व्यवस्था ऽस्त्येवेति** । पूर्वादिशब्दैरेकस्या एव दिश उपाधिकृतभेदस्य प्रतिपादनम् ।

भैरवी ।

पुर आगत इति भवत्येवेति तात्पर्यम् । असहाय इति । एतदर्थक एकशब्द "एकाकिभिः क्षुद्रकैर्जितम्" इत्यत्र प्रसिद्धः ।

समस्तपाठमिति । क्वचित्तु स्वाभिधेयापेक्षोऽवधिनियम इत्यसमस्तपाठः । तत्रापेक्षशब्दः कर्मघञन्तो ऽवधिशब्दार्थविशेषणं यदि विवक्षितं, तदा सापेक्षत्वेन समासानुपपत्तिः । नियमशब्दार्थस्य विशेष्यत्वे त्वनन्वय इति दूषणम्परिहृतम् । अपेक्षशब्दावधिशब्दयोः कर्मधारयोत्तरन्नियमपदेन षष्ठीतत्पुरुष इति भावः । कर्मणीति । "अकर्त्तरि च कारके" इति सूत्रेणेत्यादिः । ननु व्यवस्थायामित्यसङ्गतम् । व्यवस्थाप्रवृत्तिनिमित्तकत्वं हि दिक्शब्दत्वमित्यर्थः स्यात्; स त्वयुक्तः, तस्याः प्रवृत्तिनिमित्तत्वाभावात् । दिग्वाचकशब्दत्वस्यैव दिक्शब्दत्वेन सुप्रसिद्धत्वात् । अत एव "दिङ्नामान्यन्तराले" इति सूत्रं सङ्गच्छत इत्यत आह—पूर्वादिशब्दैरिति । एकस्या एवेति । सा च आकाशवदेकवेति तर्कशास्त्रे प्रसिद्धम् । भेदस्येति । कल्पि-

भावप्रकाश ।

गणसूत्रशेषत्वमिष्टं न स्यात्तर्ह्यग्रुर इत्युक्त्यैव तल्लाभेन शीभावादिव्यावृत्तिसिद्धावपुरीत्युक्तिस्तथोदाहरणं च युक्तं स्यादिति गूढाकूतम् । **असहाये इति** । एकाकिभिः क्षुद्रकैर्जितमित्यादौ तथा प्रयोगादिति भावः । एतेन केवलशब्दस्यानेकार्थत्वादन्यार्थत्वमपि स्यादित्यपास्तम् । स्पष्टं चेदं "ण्यान्ता षट" इत्यत्र भाष्ये ।

**समस्तेति** । एतेन तमपेक्षते तेन वाऽपेक्ष्यते स स्वाभिधेयापेक्षः नियमे चैतद्विशेषणमवधिद्वारा अवधिशब्दस्य नित्यसापेक्षत्वान्न समासानुपपत्तिरिति व्यस्तः पाठ इति, यद्वा स चासाववधिनियमश्चेति समस्तः पाठ उपपत्तिरुक्तरीत्यैवेति प्रकाशोक्तिश्चापेक्ष्यमाणोऽवधेर्नियम इति रत्नाकरोक्तिश्चापास्ता । अवधिविशेषणत्वेन समस्तत्वे दोषलेशाभावात् । अत एवावधीत्यन्तमुपात्तम् । नियमेनावधिसापेक्षेऽर्थे वर्त्तमानानां पूर्वादीनामित्यर्थो व्यवस्थायामित्यस्येति भावः । **कर्मणीति** । "अकर्त्तरि" इत्यनेनेति भावः । ननु व्यवस्थाप्रवृत्तिनिमित्तकत्वं व्यवस्थाशब्दत्वम् । नैवं दिशि वर्त्तमानेषु । तथासति "दिक्शब्देभ्यः सप्तमी पञ्चमी" इत्यादौ दिक्शब्दत्वेन व्यवहारानुपपत्तेः । दिग्वाचकशब्दप्रवृत्तिनिमित्तकत्वं हि दिक्शब्दत्वम् । न च विशेष्यतया दिग्बोधकत्वमेव तत्त्वम् । रमणीया दिगित्यादावप्यस्तात्यापत्तेः । दिग्भ्य इत्येव सिद्धे शब्दग्रहणानर्थक्यापत्तेश्चेत्यस्तातिप्रकरणे कैयटहरदत्ताद्युक्तेः । दिङ्नामानीत्यत्र "दक्षिणपूर्वेत्यत्र पुंवद्भावो न प्राप्नोति समानायामाकृतावभाषितपुंस्कत्वात् । आकृत्यन्तरे चैतौ तथा । दक्षिणा पूर्वेति दिक्शब्दौ, दक्षिणः पूर्व इति व्यवस्थाशब्दौ । एवं तर्हि सर्वनाम्न इति पुंवद्भावः" इति भाष्यसन्दर्भेण व्यवस्थानिमित्तो यो न भवति स्वभावत एव यो दिशि वर्तते स्वरूपव्यतिरिक्तप्रवृत्तिनिमित्तनिरपेक्षो यो दिशो वाचकः पूर्वादिशब्दः स दिक्शब्दः इत्याश्रयणाच्च । एवं च दिशि वर्त्तमानाः पूर्वादयो निमित्तान्तरनिरपेक्षाः, देशकालयोस्तु व्यवस्थापेक्षप्रवृत्तिनिमित्ता इति मूलमयुक्तमत आह—**पूर्वादीति** । प्रत्येकमिति शेषः । अत एव भेदस्येत्येकवचनम् । **एकस्या एवेति** । आकाशवदिति भावः ।

सरला ।

**कर्मणि घञिति** । तथा च नियमेनावधिसापेक्षेऽर्थे वर्तमानपूर्वादीनामिति सूत्रार्थः । अवध्यंशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नवाचकत्वमेव व्यवस्थावाचकत्वमिति तदाशयः । यद्धर्मावच्छिन्न-

शब्दरत्नम् ।

**उपाधिश्च पृथ्वीमध्यं, तत्प्रान्तवर्त्तिनश्चत्वारः पर्वताश्च। रामायणे किष्किन्धायां सुग्रीवेण मध्यदे-
भैरवी ।**

**तस्येति शेषः । ननु पृथिवीमध्यस्यावधित्वमप्रसिद्धम् हरिवंशादौ पर्वतानामेव चतुर्णामव-
धित्वस्य प्रसिद्धत्वादत आह—**रामायण इति । मध्यदेशावधिकस्यैवेति । **विन्ध्यहिमाचलयोर्मध्य-
भावप्रकाश ।**

**पर्वताश्चेति** । तथा च हरिवंशे वाराहे—

मध्ये पृथिव्याः सौवर्णमकरोन्मेरुपर्वतम् । शतयोजनविस्तारं सहस्रं च समुच्छ्रयात् ॥
प्राचीं दिशमथो गत्वा चकारोदयपर्वते । शतयोजनविस्तारं तावत्त्रिगुणमायतम् ॥
कृत्वा प्राचीविभागं तु दक्षिणायामथो दिशि । चकार पर्वतं दिव्यं सर्वकाञ्चनराजतम् ॥
एकतः सूर्यसंकाशमेकतः शशिसन्निभम् । स बिभ्रच्छुशुभेऽतीव द्वौ वर्णौ पर्वतोत्तमः ॥
तेजसा युगपद्व्याप्तं सूर्याचन्द्रमसोरिव । दिशं याम्यां प्रतिष्ठाप्य प्रतीचीं दिशमागमत् ॥
अकरोत्तत्र शैलेन्द्रं शतयोजनमुच्छ्रितम् । प्रतीच्यां स विधिः कृत्वा पर्वतान् ज्वलनाज्ज्वलान् ॥
गुणोत्तरानुत्तरस्यां स न्यवेशयदग्रतः । ततः सौम्यगिरिं सौम्यमन्तरिक्षप्रमाणतः ॥
रुक्मधातुप्रतिच्छन्नमकरोद्भास्वरोपमम् । इति ।

ननूदयाचलादिसंनिहितदिशां पूर्वादित्वमित्येवान्यत्र प्रसिद्धमिति मध्यग्रहणे न मानमत आह—
**रामायणे इति** । अयं भावः—माल्यवति पर्वते स्थित्वा सुग्रीवेण श्रीरामचन्द्रादिसंनिधौ सीतान्वेषणाय
प्रेष्यमाणान् स्वसैनिकान्वितनीलसुषेणशतवल्ल्यादीन्वानरयूथपान्प्रति पूर्वादिदिक्चतुष्टयस्वरूपसूचन-
पूर्वकं तत्र तत्रान्वेषणं कार्यमित्युक्तम् । तथाहि—

अधिगच्छ दिशं पूर्वां सशैलवनकाननाम् । तत्र सीतां च वैदेहीं निलयं रावणस्य च ॥
मार्गध्वं गिरिदुर्गेषु वनेषु च नदीषु च । नदीं भागीरथीं रम्यां सरयूं कौशिकीं तथा ॥
कालिन्दीं यमुनां रम्यां यामुनं च महागिरिम् । सरस्वतीं च सिन्धुं च शोणं मणिनिभोदकम् ॥
महीं कालनदीं चापि शैलकाननशोभिताम् । ब्रह्ममालान्विदेहांश्च मालवान्काशिकोसलान् ॥
मागधांश्च महाग्रामान् पुण्ड्रांस्त्वङ्गांस्तथैव च । भूमिं च कोशकाराणां भूमिं च रजताकरम् ॥ इति ।

तथा—

दक्षिणां प्रेषयामास वानरानभिलक्षितान् । सहस्रशिरसं विन्ध्यं नानाद्रुमलतायुतम् ॥
नर्मदां च नदीं रम्यां महोरगनिषेविताम् । ततो गोदावरीं रम्यां कृष्णवेणीं महानदीम् ॥
मेखलानुत्कलांश्चैव दशार्णनगराण्यपि । आववन्तीमवन्तीं च सर्वमेवानुपश्यत ॥
विदर्भानृष्टिकांश्चैव रम्यान्महिषकानपि । तथा मत्स्यकलिङ्गांश्च कौशिकांश्च समन्ततः ॥
अन्वीक्ष्य दण्डकारण्यं सपर्वतनदीगुहम् । नदीं गोदावरीं चैव सर्वमेवानुपश्यत ॥ इति ।

तथा—

ऋषिपुत्रांश्च तान्सर्वान्प्रतीचीमादिशद्दिशम् । सौराष्ट्रान्सहवाल्हीकांश्चन्द्रचित्रांस्तथैव च ॥
स्फीताञ्जनपदान् रम्यान्विपुलानि पुराणि च । पुन्नागगहनं कुक्षिबकुलोद्दालकाकुलम् ॥
तथा केतकखण्डांश्च मार्गध्वं हरिपुङ्गवाः ॥ इति ।

तथा—

दिशं ह्युदीचीं विक्रान्तहिमशैलावतंसिकाम् । सर्वतः परिमार्गध्वं रामपत्नीं यशस्विनीम् ॥
तत्र म्लेच्छान्पुलिन्दांश्च शूरसेनांस्तथैव च । प्रस्थलान् भरतांश्चैव कुरूंश्च सह मद्रकैः ॥
काम्बोजयवनांश्चैव शकानां पत्तनानि च ॥ इति ।

अत्र तीर्थादयः । ननु मेरोः पूर्वदिगवस्थितोदयाचलपर्यन्तमन्वेष्टुं प्रेषितान् वानरान्प्रति मेरोर्दक्षि-
णदिगवस्थितभागीरथ्यादिनदीपर्वतान्वेषणविधानं कथमुपपद्यते इति चेत् ? विन्ध्यहिमाचलमध्य-
देशवर्त्यार्यावर्त्तापेक्षया प्राच्यादिविभागोऽत्र विवक्षितो न तु मेर्वपेक्षया स्वावस्थितमाल्यवदपेक्षया वेति न

प्रसिद्धत्वात्तु नावधिवाची शब्दः प्रयुज्यते। न च संज्ञात्वान्निषेधः आधुनिक

**शब्दरत्नम्।**

शावधिकस्यैव दिग्विभागस्योक्तेः। पृथ्वीमध्यं च मध्याह्नसूर्यसंयोगिदेशः। एवं च तन्मध्यभागावधिकोदयाचलादिपर्यन्तदेशरूपोपाधिविशिष्टदिशि पूर्वादिशब्दानां तत्तच्छब्दं प्रवृत्तिनिमित्तीकृत्य प्रवृत्तिरित्युपाध्यन्तर्गततया व्यवस्थाऽस्त्येव। उदयाचलपर्यन्तरूपोपाधेस्तदभिधेयस्य तदाकाङ्क्षत्वं चास्त्येव। मध्याह्नसूर्यसंयोगिदेशात्तत्सम्मुखदेश उदक्। तत्पृष्ठस्थदेशश्च दक्षिणा। मध्याह्ने सूर्यस्योदङ्मुखत्वात्। स्पष्टं चेदं हेलाराजीये। व्यवस्थायामिति च विषयसप्तमीति भावः, तदाह—प्रसिद्धत्वादिति। देशवृत्तीनां तत्तदवधिकोदयाचलसंनिहितत्वादि प्रवृत्तिनिमित्तमित्यादि बोध्यम्। आधुनिकसंकेतो हीति। असंज्ञापदसामर्थ्यात्ः अन्यथा सर्वादीनां केवलरूढत्वेनेन्द्रादिपदानामिव रूढत्वरूपसं-

**भरवी।**

देश आर्यावर्तेति, तदपेक्षया स्वावस्थित्यधिकरणमालयवदपेक्षया वेत्यर्थः। यत्र यस्यावस्थितिस्तदपेक्षया मध्यत्वव्यवहारो हि लौकिकव्यवहार एव अत आह—पृथिवीमध्यञ्चेति। एवञ्च—सुग्रीवकृतभेदप्रतिपादने च। तन्मध्यभागेति। स्वावस्थितौ मध्यान्हसूर्यसंयोगिदेशभिन्नो मध्यदेशरूपो भाग इत्यर्थः। उदयाचलादीति। आदिना अस्ताचलपरिग्रहः। पूर्वादिशब्दानामिति। दिग्वाचकानामिति शेषः। व्यवस्थालक्षणघटनायाह—उदयाचलेति। तदाकाङ्क्षत्वञ्चेति। चो हेतौ यतस्तदाकाङ्क्षत्वमतो व्यवस्थाऽस्त्येवेत्यन्वयः। तत्सम्मुखेति। तत्कालिकसूर्यसम्मुखेत्यर्थः। देशवृत्तीनामिति। पूर्वादिशब्दानामिति शेषः। ननु रूढ्या यैः शब्दैरर्थाः प्रतिपाद्यन्ते ते संज्ञाशब्दा यथेन्द्रादिशब्दाः। एतेषाञ्च शब्दापेक्षया प्रवृत्तिनिमित्तमन्यदेव वाच्यम्, अन्यथा शब्दरूपप्रवृत्तिनिमित्तभेदादिन्द्रशक्रादिशब्दानामपर्यायवाचकतानुपपत्तिः। एकस्य धर्मस्य प्रवृत्तिनिमित्तत्वे हि तदिति पूर्वादिशब्दभिन्नं किम्प्रवृत्तिनिमित्तं तेषाम् इत्याकाङ्क्षायामाह—देशवृत्तीनामिति। केवलरूढत्वेनेति। अत्र केवलेत्यनेन योगरूढत्वादिव्यवच्छेदः। इन्द्रादिपदाना-

**भावप्रकाश।**

दोष इति। तत्रैव मध्यान्हे सूर्यसंयोग इत्याह—पृथ्वीति। एवं चेति। तैस्तत्कृतभेदप्रतिपादने चेत्यर्थः। तदिति। मध्यान्हसूर्यसंयोगिरूप इत्यर्थः। आदिना अस्ताचलतद्देशानां परिग्रहः। शब्दानामिति। दिग्वाचकानामित्यर्थः। नन्वेवमपि तल्लक्षणासम्भव इति कथं सा। न हि तदवधितत्पर्यन्तदेशस्य पुनरवध्यन्तराकाङ्क्षास्तीत्यत आह—उदयेति। तावन्मात्रस्येत्यर्थः। आकाङ्क्षत्वं चेति। चो हेतौ यतस्तदाकाङ्क्षत्वमतः सेति तल्लक्षणानुपपत्तिरपि नेति भावः। यद्वा, गततया व्यवस्थेति। तया मर्यादाया अपि भानेन व्यवस्थाविषयत्वात्साऽस्त्येवेत्यर्थः। नन्वेवमपि मूलोक्तलक्षणानुपपत्तिरत आह—उदयेति। तथाच न तदनुपपत्तिरिति भावः। तत्संमुखेति। तात्कालिकसूर्यसंमुखेत्यर्थः। नन्वेतावता व्यवस्थोपपादनेऽपि दिक्शब्दप्रवृत्तिनिमित्तत्वेन व्यवस्थाप्रवृत्तिनिमित्तत्वाभावस्तदवस्थ एवात आह—व्यवस्थेति। वृत्तीनामिति। पूर्वादीनां त्वित्यर्थः। संनिहितत्वादीति। एतेन "दिङ्नामानि" इति भाष्यविरोधो निरस्तः। ननु रूढ्या बोधकशब्दत्वं संज्ञाशब्दत्वम्, अत एवाकडारसूत्रे इन्द्रादीनां संज्ञात्वमुक्तम्। नह्येतेषु शब्दप्रवृत्तिनिमित्तकत्वं तत्, इन्द्रशक्रादीनां पर्यायतानापत्तेः, भिन्नप्रवृत्तिनिमित्तकत्वात्। तथा च मूलमयुक्तमत आह—असंज्ञेति। तथा चान्यत्र तथात्वेऽप्यगत्या तत्सामर्थ्यादत्र तथाश्रयणमिति भावः। तदाह—अन्यथेति। अत्र तथानङ्गीकारे। केवलपदेन योगव्यवच्छेदः, शब्दान्तरोल्लेखनात्। भ्रमनिवृत्तये

**सरला**

ज्ञानोत्तरमवधिविशेषविषयिणी जिज्ञासा नियमेनोदेति तद्धर्मावच्छिन्नवाचकत्वमिति यावत्। प्रवृत्तिनिमित्तमित्यादीति। अत्र केचित्—एवं सति दाक्षिणात्यानाम् "उदङ्मुखः प्राङ्मुखो वा त्रिवारमुपस्पृशेत्" इत्यादिविधीनां कर्तुमशक्यत्वं स्यात्। तद्दृष्ट्या सर्वस्यैव दक्षिणदिक्त्वात्। एवमेव

संकेतो हि संज्ञा । नच दिक्षु सा ऽस्ति इति अस्तातिप्रकरणे कैयटहरदत्तादयः । अत्र दिक्षु चिरं तनः, कुरुषु तु आधुनिकः सङ्केत इत्यत्र व्याख्यातृवचनमेव प्रमाणम् । एतेन 'विश्वेषां देवानाम्' इति व्याख्यातम् । वेदप्रसिद्धत्वात् । देवगणविशेषे विश्वशब्दस्याधुनिकसङ्केताभावात् । दक्षिणा गाथका इति । इहामुकस्मात् कुशला इति अवध्यन्वयसम्भवेऽपि तन्नियमो नास्तीति भावः । अधरे ताम्बूलरागः, उत्तरे प्रत्युत्तरे च शक्त इत्यपि प्रत्युदाहर्तव्यम् । कथं तर्हि "तथा परेषां युधि च" इति कालिदासः, "अपरे प्रत्यवतिष्ठन्ते" इत्यादि च ? अत्राहुः–देशवाचितया व्यवस्थाविषययारेव पराप्रशब्दयोरुपचाराच्छत्रौ प्रतिवादिनि च प्रयोगः । न चैवमुपसर्जनता । न हि लाक्षणिकत्वमुपसर्जनत्वम् , किं तु स्वार्थविशिष्टार्थान्तरसंक्रमः । स च समासादिवृत्तावेव । अत

---

## शब्दरत्नम् ।

ज्ञात्वस्य सर्वत्र सत्त्वात्तदसङ्गतिः स्पष्टैवेति भावः । व्याख्यात्रिति । कैयटादीत्यर्थः । आधुनिकसंकेताभावादिति । किं त्वैश्वर एवेति भावः । यदि तत्रोत्कर्षस्यावधिसापेक्षत्वाद् व्यवस्थाऽस्तीत्याग्रहस्तदा प्रत्युदाहरणान्तरमाह—अधरे इत्यादि । अत्रापि संज्ञात्वं मत्वाऽऽह—उत्तरे इत्यादि । उपचारादिति । तत्त्वारोपादिति भावः । अर्थान्तरसंक्रम इति । स्वार्थविशिष्टार्थान्तरबोधकत्वमित्यर्थः । इदं च "जितश्च

## भैरवी ।

मिवेति । अनेन शब्दस्वरूपातिरिक्तम्प्रवृत्तिनिमित्तमिति ध्वनितम् । आधुनिकसङ्केतस्थले तु शब्दस्वरूपमेव प्रवृत्तिनिमित्तमिति भावः । नन्वाधुनिकसंकेताभावेऽपि चिरन्तनसङ्केताभावात्कथमेतदत आह–किन्त्वैश्वरेति । तत्र–दक्षिणा गाथका इत्यत्र । आग्रह इति । अनेन नियमाभावो दर्शितः । ननूपचारो हि लक्षणा, सा च शक्यतावच्छेदकारोपरूपेति कथम्प्रकृते सा इत्यत आह––तत्त्वेति । देशनिष्ठपूर्वोक्तशक्यतावच्छेदकारोपादित्यर्थः । मूले––स्वार्थविशिष्टार्थान्तरेत्यादि । स्वार्थविशिष्टं यदर्थान्तरन्तद्विशेष्यकप्रतीतिजनकत्वमेवोपसर्जनत्वन्नतु लाक्षणिकत्व-

## भावप्रकाश ।

आह–कैयटादीति । आदिना हरदत्तसंग्रहः । ननु आधुनिकसंकेताभावेऽपि चिरन्तनसंकेताभावान्न स्यात् , सूत्रे ऽसंज्ञायामिति पर्युदासादत आह–किन्त्विति । तत्रेति । दक्षिणा गाथका इत्यत्रेत्यर्थः । 'यदि' 'आग्रहः' इत्याभ्यामिदं सूचितं–तन्नियमाभावेन तस्य प्रत्युदाहरणत्वं युक्तमेवेति । मत्वेति । अनेन द्वितीयमपि तथैवेति सूचितम् । तत्त्वारोपादिति । देशनिष्ठपूर्वोक्तशक्यतावच्छेदकारोपादित्यर्थः । इयमेव च

## सरला ।

पाश्चात्यानां "दक्षिणाभिमुखः सन् श्राद्धादिविधिं कुर्यात्" 'इत्यादिविधीनां कर्तुमशक्यत्वमेव स्यादिति दिग्वाचकपूर्वादिपदानां यत् प्रवृत्तिनिमित्तमुक्तं मूले तद् देशवाचिनां बोध्यम्, देशवाचकपूर्वादिशब्दानां च यदुक्तं तद् दिग्वाचिनां बोद्धव्यमिति । मध्याह्नसूर्यसंयोगिदेशावधिकोदयाचलसन्निहितादिदेशोपाध्यवच्छिन्नत्वस्य दिग्धर्मत्वेन तत्तदवधिकोदयाचलसन्निहितत्वादेर्देशधर्मत्वेन यथाश्रुतमेव दिग्देशवाचिनां पूर्वादिशब्दानां प्रवृत्तिनिमित्तमुचितम् । 'प्रयागात् काशी पूर्वा' इत्यादौ पूर्वादिशब्दा देशवाचका एव । तत्तदवधिकोदयाचलसन्निहितत्वादिधर्मविशिष्टदेशस्यैव बोध्यमानत्वात् । मध्याह्नस्य देशभेदेन भेदाद् तात्कालिकसूर्यसंयोगिदेशभेदस्य आवश्यकत्वेन तदवधिकोदयाचलसन्निहितादिदेशरूपोपाधेर्भेदाद् तदवच्छिन्नप्राच्यादिदिशां भेदेन न दाक्षिणात्यादीनां पूर्वोक्तविध्यनुष्ठानाशक्यत्वमिति । विस्तरस्तु शेखरदीपके द्रष्टव्यः ।

एव भूवादिसूत्रे "एतान्यपीति–एतत्प्रतिपाद्यानि वस्तूनीत्यर्थ" इति कैयटोक्तिः सङ्गच्छते। वस्तुतस्तु परापरशब्दयोर्देशान्तरनिष्ठत्वादिकमेवार्थः, शत्रुत्वादिकं तु आर्थिकोऽर्थः। असंज्ञायां किम्? उत्तराः कुरवः। सुमेरुमवधिमपेक्ष्य कुरु-

शब्दरत्नम्।

तत्प्रत्ययात्' इति सूत्रे भाष्ये ध्वनितम्। मेवार्थ इति। देशवदयमपि तच्छक्य इ-त्यर्थः। तुल्यन्यायादेतच्छब्दस्यापि कैयटोक्तार्थः शक्य इति ध्वनितम्। सुमेरुमिति।

भैरवी।

मिति। अत्र भाष्यीयप्रयोग एव प्रमाणमित्याह—एतान्यपीतीति। अत्रैतच्छब्दस्यैतत्प्रतिपाद्यवस्तुनि लक्षणायामपि त्यदाद्यत्वस्य दर्शनेन लाक्षणिकत्वमुपसर्जनत्वव्यवहारनियामकन्नेति भावः। स्वार्थविशिष्टेत्यस्योपसर्जनपदार्थत्वमपि भाष्यकारसम्मतमिति सूचयन्नाह—इदञ्चेति। तत्र हि ञितो विकारावयवार्थकः प्रत्ययस्तस्माद्विकारावयवार्थको ञिदेव यथा स्यादित्यर्थं सूत्रम् इति प्रयोजनं तस्य सूत्रस्य उक्त्वा "समुदाये दृष्टाः शब्दा अवयवेऽपि वर्तन्ते" इति न्यायेन विकारविकारेऽपि प्राथमिकप्रत्ययान्तस्य प्रवृत्तिर्भविष्यति इति सूत्रन्निष्प्रयोजनमित्यभिधाय प्रकृतिवाचकस्य शब्दस्य यद्यपि प्रथमविकारे प्रवृत्तिरस्ति, तथापि प्रकृतिप्रकृतिकप्रत्ययान्तस्यापि प्रवृत्तिरस्तीति ततो विकारे प्रत्ययः प्राप्नोति इत्याशङ्क्यानभिधानात्ततो न भविष्यतीति। अभिधाने हि सत्यन्यतोऽपि मयट् न प्राप्नोति–बैल्वस्य विकार इति। यद्यनभिधानन्नाश्रीयते, तदा "ञितश्च तत्प्रत्ययात्" इति सूत्रमपनीय बैल्वमयादिनिवृत्त्यर्थन्तत्प्रत्ययान्ताल्लुग्भवतीत्युक्त्वा यदि लुक् क्रियते पालाशी समिदिति न सिध्यति। अत्र पलाशशब्दात् "पलाशादिभ्यो वा" इत्यञ्, तदन्ताद्विकारे मयटि तस्य लुकि अनुपसर्जनलक्षण ईकारो न प्राप्नोतीति दूषणमभिधाय माभूदेवमञ् योऽनुपसर्जनमित्येवं गृह्यमाणविशेषणमनुपसर्जनादित्येतदिति पूर्वपक्षिणोक्तम्। इह तर्हि दोषः स्यात्काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, तामधीते काशकृत्स्ना ब्राह्मणी। अत्राणन्तादितीकारः स्यात्तस्मादस्तु अनभिधानादित्येवेति भाष्ये उक्तम्। अनेन भाष्यग्रन्थेन स्वार्थविशिष्टार्थान्तरबोधकत्वमुपसर्जनत्वमिति ध्वनितमित्यर्थः। अयमपीति। पूर्वादिशब्दानान्दिशि दिगवच्छिन्ने च स्वभावतो वृत्त्या देशो यथा शक्यस्तथा देशान्तरनिष्ठत्वविशिष्टत्वविशिष्टस्यापि दिगवच्छिन्नतया सोऽपि शक्य एवेत्यर्थः। तुल्यन्यायादिति। यथा परदिगवच्छिन्नदेशे वर्तमानानां शत्रूणां दिगवच्छिन्नत्वेन परशब्दस्य मुख्या वृत्तिः शक्तिरेव, तथा सर्वनाम्न एतच्छब्दस्य बुद्धिस्थशक्ततया तत्र कैयटोक्तार्थे शक्तिरेवास्तु न लक्षणाया अवसर इति भावः।

भावप्रकाशः।

लक्षणेत्यन्यत्र स्पष्टम्। बोधकत्वमिति। एतच्चोपपादितं प्राक्। एतेन लाक्षणिके सर्वनामकार्यासिद्धिप्रसङ्गात् स्वार्थेत्यादिमूलं चिन्त्यमिति रत्नाकरोक्तमपास्तम्। अयमपीति। तथा च मूलोक्तैवेनशत्रुत्वादिव्यावृत्त्या उपचारव्यावृत्तिर्न तु देशव्यावृत्तिरिति भावः। ध्वनितमिति। एतेन दृष्टान्तासिद्धिः, एतच्छब्देनैतत्प्रतिपाद्यरूपार्थस्य शक्त्यैव बोधयितुं शक्यत्वात्, बुद्धिस्थत्वं शक्यतावच्छेदकतावच्छेदकं, बोधश्च प्रातिस्विकरूपेणैव। बुद्धिस्थत्वस्यापि शक्यतावच्छेदकतावच्छेदकाक्रान्तत्वादप्रकरणज्ञस्य क्वचिद्बुद्धिस्थत्वेन

सरला।

स्वार्थविशिष्टार्थान्तरबोधकत्वमिति। पदान्तरार्थनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वमुपसर्जनत्वमित्यर्थः। अत एव "द्वीयतेरप्रत्यये द्व इति प्राप्नोति स्व इति चेष्यते" इति भाष्यं संगच्छते। अन्यथा पदार्थान्तरनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वमुपसर्जनत्वमिति स्वीकारे तस्यापि क्विबर्थकर्तृरूपार्थनिष्ठविशेष्यतानिरूपितप्रकारताकोपस्थापकत्वेनोपसर्जनतया सत्वाप्राप्त्या तदसङ्गत्यापत्तिरिति।

षूत्तरशब्दो वर्त्तते इत्यस्तीह व्यवस्था। किं तु आधुनिकसङ्केतोऽयमित्याहुः।

"स्वमज्ञातिधनाख्यायाम्"। आत्मात्मीयज्ञातिधनवाची स्वशब्दः, तत्र ज्ञातिधनयोः पर्युदासात् आत्मा आत्मीयौ परिशिष्टावित्याशयेन व्याचष्टे–आत्मीया इत्यर्थः, आत्मान इति वेति। यत्त्वाहुः–आत्मनि स्वशब्दो नपुंसकः, तेन स्वे स्वा इत्युदाहरणं तत्र न सम्भवतीति। तच्चिन्त्यम्। आत्मन्यपि स्वशब्दस्य पुंस्त्वात्। "विभाषा जसि" इति प्रकरणे "स्वमात्मीये" इत्येव वक्तव्ये गुरुनिर्देशं कुर्वतः सूत्रकारस्यैवात्र प्रमाणत्वात्। यदपि स्वोक्तेऽर्थे उपष्टम्भार्थं—

स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने।

इति अमरसिंहोक्तिमाहुः। तदपि चिन्त्यम्। कोशे हि आत्मनीति पूर्वान्वयि। स्वमिति तु उत्तरान्वयि। तथा च हेमचन्द्रः—

---

शब्दरत्नम्।

हिमवानवधिरिति तु "ये केचन परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्रा" इति ऐतरेयब्राह्मणे श्रूयते। उत्तरा इत्यस्य तन्नामान इत्यर्थस्तदाह—आधुनिकेति। "उत्तराः कुरवो दक्षिणान् कुरूनपेक्ष्योत्तरा उच्यन्ते" इति तु कपिञ्जलाधिकरणे शाबरभाष्ये उक्तम्।

हेमचन्द्र इति। कोशयोरविरोधे सम्भवति विरोधो न न्याय्य इति भावः। यदि

भैरवी।

हिमवानवधिरिति। अस्य श्रूयत इत्यत्रान्वयः। क्व श्रूयत इत्याकाङ्क्षायामाह—येकेचनेति। ऐतरेयब्राह्मणमाश्वलायनानाम्। तत्र परेणेति एनबन्तम्, उदीच्यान्दिशि हिमवन्तम्परेण हिमवत्परभागे जनपदा ग्रामविशेषा उत्तरकुरुनामकाः उत्तरमद्रनामका इत्यर्थः। आधुनिकसंकेतत्वं व्यवस्थाविषयत्वञ्च स्पष्टयति–उत्तरा इत्यादिना।

सम्भवतीति। शत्रन्तात्सप्तमी, अमर इति शेषः। एतेन तत्र भिन्नार्थत्वकल्पनमन्याय्यमिति

भावप्रकाशः।

बोधनेऽपि न क्षतिरित्यपास्तम्। तत्पक्षे तथैवात्र पक्षे एवमेवेति साम्येन दृष्टान्तसङ्गतेरिति भावः। अवधिरिति। अस्य श्रूयते इत्यत्रान्वयः। क्वेत्याशङ्कायामाह–येकेचन परेणहिमवन्तमिति। ऐतरेयेति। आश्वलायनब्राह्मणे ऽष्टमपञ्चिकायामथैनं प्राच्यां दिशि वसवो देवा इति चतुर्दशे खण्डे इत्यर्थः। उदीच्यां दिशि हिमवन्तं परेण हिमवत्पर्वतपरभागे जनपदा ग्रामविशेषा उत्तरकुरुनामकाः उत्तरमद्रनामकाः सन्ति तत्रत्या राजानो विराड्शब्देन व्यवह्रियन्ते इति विद्यारण्यस्वामिनः। तुशब्द एतावद्वैलक्षण्यसूचनद्वाराऽवशिष्टसाम्यसूचकः। तथा हि तत्रैवार्थे नमस्यां ध्रुवायां प्रतिष्ठायां दिशि साध्याश्चेत्याद्युक्त्वा तस्मादस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के चेत्युक्तम्। मध्यमादिस मध्यदेशः स प्राच्यादिभिः सर्वाभिरपेक्षत्वेन ध्रुवो भवति तदपेक्षयैव पूर्वा पश्चिमेत्यादिव्यवहारः, स च देशः सर्वेषां वैदिकानामाश्रय इति स्वामिनः। अत एव खण्डमिन्द्रस्य प्रजापतिकृताभिषेकादूर्ध्वं दिग्भेदेन देवविशेषैरभिषेकः कृतस्तत्र प्राच्यां दिश्यभिषेकं दर्शयतीत्यवतारितमिति भावः। इति त्विति। एकादशे प्रथमपादे "बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात्"इति सूत्रे बहुवचनस्यैकस्य त्र्यादिसंख्यावाचकत्वे अनेकार्थतापत्तिमुक्त्वा बहुत्वेन तत्र उच्यन्ते न तत्तद्रूपेणेत्येवं निरस्य "नन्वापेक्षिकमेतद् बह्वधिकमिति। यदेव हि बहु तदेवान्यदपेक्ष्याऽबहु भवति। सत्यमेवं, यत्तु यदपेक्ष्य बहु न तदेवान्यदपेक्ष्याबहु। तद्यथा उत्तराः कुरवो दक्षिणान् कुरूनपेक्ष्योत्तरा इत्युच्यन्ते। न च ततोऽन्ये उत्तरा देशा न सन्ति। अथ च नियतापेक्षत्वादुत्तरत्वं न जहति। एवं त्रिप्रभृतयो द्वित्वमपेक्ष्य बहुत्वं लभन्ते। न च ते कदाचिदबहवः"– इत्युक्तं तत्रेति भावः।

सम्भवतीति। अमरे इति शेषः। तथा च भिन्नार्थकल्पनं तत्रान्याय्यमिति भावः। तत्रेष्टापत्तेराह–

द्यौः स्वर्गनभसोः स्वो ज्ञात्यात्मनोः स्वं निजे धने ॥ इति ।

मेदिनीकारोऽपि—

स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने ॥ इति ।

तस्मात् स्वे स्वा इत्यस्यात्मान इति विवरणं सम्यगेवेति स्थितम् ॥

ज्ञातिधनवाचिनस्त्विति । ताच्छील्ये णिनिना ज्ञातिधनयोरपि आत्मीयत्वं पुरस्कृत्य प्रवृत्तौ सर्वनामता ऽस्त्येवेति ध्वनयति । एतदर्थमेव हि सूत्रे आख्या-

## शब्दरत्नम् ।

तु एवमन्वये—

स्वो ज्ञातावात्मनि धने त्वस्त्री आत्मीयके त्रिषु ।

इति पाठेनैव सिद्धे त्रिः स्वग्रहणवैयर्थ्यापत्तेः ।

बन्धूकबन्धूभवदेतदस्या मुखेन्दुनाऽनेन सहोज्जिहाना ॥

रागश्रिया शैशवयौवनीयां स्वमाह सन्ध्यामधरोष्ठलेखा ॥ १ ॥

इति श्रीहर्षश्लोके आत्मानमित्यर्थकस्वमित्यस्य बन्धूकबन्धूभवदिति विशेषणेन च नपुंसकत्वमस्तीत्युच्यते तर्हि अस्तु, मेदिन्यादिप्रामाण्यात्पुंल्लिङ्गोऽप्यस्त्येवेति स्वे स्वा इत्युदाहरणं न सम्भवतीति प्राचीनोक्तिरसङ्गतैवेति ध्वनयन्नाह—विवरणं सम्यगेवेति । एतदर्थमेवेति । एतदर्थमपीत्यर्थः । धनत्वेनात्मीयस्य बोधो माभूदित्यर्थं चेत्यपि

## भैरवी ।

ध्वनितम् । आपत्तेरिति । अस्य अत आत्मनि स्वमित्यन्वयो नेति शेषः । अस्याः—दमयन्त्याः, मुखेन्दुना—मुखचन्द्रेण सहैव, उज्जिहाना—उदयम्प्राप्ता, अधरोष्ठलेखा—लेखाकारोऽधरोष्ठः, रागश्रिया—स्वनिष्ठरक्तिमशोभया, बन्धूकं मध्याह्नविकसितम्पुष्पं, तस्य बन्धुः समभवत् । अतिशयेन तत्सदृशमारक्तमिति यावत् । स्वमात्मानं शैशवयौवनस्य सम्बन्धिनीं सन्ध्याम् अहमेव सन्ध्येति बोधयति । बाल्यस्यान्ते तारुण्यादौ अधरोष्ठेऽधिका रक्तिमा भवतीति प्रसिद्धम् । आख्याग्रहणस्य प्रयोजनान्तरसम्भवादेतदर्थमेवेत्येवकारोऽनुपपन्न इत्याशयादाह—एतदर्थमपीति । पर्युदाससमर्पकवाक्योपादानेन तदर्थबोधनापेक्षया साक्षाद्बोध्यार्थवाचकशब्दोपादा-

## भावप्रकाश ।

बन्धूकेति । अस्या दमयन्त्या अनेन प्रत्यक्षदृश्येनोदयता मुखचन्द्रेण सहैवोज्जिहीते सा उज्जिहाना आविर्भूता अधरोष्ठलेखा लेखाकारोष्ठः एतत्प्रत्यक्षदृश्यं रागश्रिया स्वनिष्ठरक्तिमशोभया कृत्वा बन्धूकं मध्याह्नविकसितं तस्याबन्धुर्बन्धुःसमभवत् तत्सदृशमतिशयेनारक्तमिति यावत्, स्वमात्मानं शैशवयौवनसम्बन्धिनीं सन्ध्याम् अहमेव सन्ध्येति ब्रूते । बाल्यतारुण्ययोः सन्धौ भवनात्सन्ध्यात्वम् । बाल्यान्ते तारुण्यादौ चाधरोष्ठे भूयान् रक्तिमा भवतीति भावः । अथ च रात्रिदिनसन्धौ सन्ध्या भवति सापि चन्द्रेण सहैवोदेति रक्ता च भवतीति सप्तमेऽधरोष्ठवर्णनमिदम् । आदिना हेमचन्द्रो गुरुनिर्देशं कुर्वन् सूत्रकृच्च संगृह्यते । एतेन सूत्रविरोधे कोशस्याप्रामाण्यान्मेदिनीविरोधाच्च चिन्त्योऽयममर इति तथा न्यासकृत्सूत्रविरोधात् प्राचामुक्तिश्चिन्त्येति च रत्नाकरदण्ड्याद्युक्तिर्निरस्ता । नन्वेवं मूलस्याप्यसङ्गतिरतस्तत्तात्पर्यमाह-स्वे स्वा इतीति । प्राचीनोक्तिः-प्रकाशोक्तिः । फलान्तरसम्भवादेवासङ्गतेराह-एतदिति । अपिसंग्राह्यमाह—धनत्वेनेति । इदमुपलक्षणं ज्ञातित्वेनेत्यस्यापि । अतएवाह-आत्मात्मीयाख्याया-

## सरला ।

श्रीहर्षश्लोके इति । श्रीहर्षकविकृते नैषधमहाकाव्ये सप्तमसर्गे सप्तत्रिंशत्तमे दमयन्त्यधरोष्ठवर्णनपरे श्लोक इत्यर्थः । अस्य व्याख्यानं भैरव्यां स्पष्टंतत एवावगन्तव्यम् ।

ग्रहणं कृतम्।

"अन्तरं बहिर्योगोपसंव्यानयोः"। बहिरित्यनावृतो देशो बाह्यं चोच्यते। तत्राद्यमर्थं गृहीत्वाऽऽह—बाह्या इत्यर्थ इति। द्वितीये तु आभ्यन्तरा इत्यर्थो बोद्धव्यः। बाह्येन हि आभ्यन्तरस्य योगोऽस्ति। अथद्वयमप्याकरे स्थितम्। उपसंव्यानशब्दोऽपि करणव्युत्पत्त्योत्तरीयपरः, कर्मव्युत्पत्त्या त्वन्तरीयपरः।

"पूर्वादिभ्यो नवभ्यो वा"। अत्रेदमवधेयम्। एतत्सूत्रं "जसः शी" इत्यत्रानुवर्त्य वाक्यभेदेन व्याख्येयम् "वा च्छन्दसि" इत्येतत् "अमि पूर्वः" इत्यत्र यथा। एवं चाष्टाध्याय्यां "पूर्वपर—" इत्यादित्रिसूत्री गतार्थेति महल्लाघवम्।

शब्दरत्नम्।

बोध्यम्। आत्मात्मीयाख्यायामिति तु नोक्तं लाघवाभावात्।

बाह्यं चेति। उक्तबहिर्देशस्थमित्यर्थः। उपसंव्यानशब्दोऽपीति। एवं च तद्ग्रहणं बहिर्योगस्य गृहेष्वेव प्रसिद्धिमाश्रित्य सूत्रे कृतमिति भावः।

महल्लाघवमिति। त्रिसूत्र्या जसाधारे शीभावे एव विकल्पविधानात्। 'व्यवस्थायाम्' इत्यादि गणे एव पाठविशेषणमिति भावः।

भैरवी।

ननुचितमिति कस्यचिदुक्तिं खण्डयति—आत्मेति। लाघवाभावादिति। यथास्थितसूत्रापेक्षया आत्मेत्याद्युक्तौ मात्राधिक्येन लाघवाभावादित्यर्थः। पदलाघवं यद्यपि सम्भवति तथापि ज्ञातित्वेन धनत्वेनाख्यायाम्माभूदित्येवमर्थमधुनाप्याख्याग्रहणस्यावश्यकतया लाघवन्नास्तीति भावः।

उक्तबहिर्देशस्थमिति। प्राकारपरिखाद्यावृतदेशाद्बहिर्देशस्थमित्यर्थः। ननूपसंव्यानशब्दो यदि व्युत्पत्तिभ्यामुभयपरस्तर्हि तदुपादानमेव व्यर्थम्बाह्ययोगेन गतार्थत्वादत आह—एवञ्चेति। तस्योभयपरत्वे चेत्यर्थः। प्रसिद्धिमाश्रित्येति। पाणिनेः सर्वज्ञत्वस्यानुपपत्तिः स्यादिति भावः। आश्रित्येत्यनेन गतार्थत्वम्भाष्योक्तन्ध्वनितम्।

ननु त्रिसूत्रीसत्त्वेऽकच्स्वरयोरपि विकल्पयोः सिद्धिर्भवति, भवत्संमतव्याख्याने तु कथमत आह—त्रिसूत्र्येति। जसाधार एव इत्यनेनाकजादि नित्यमेवेति सूचितम्। अव्यवस्थायां रूपद्वयापत्तिं वारयति—व्यवस्थेति। पाठविशेषणमिति। त्रिष्वपि सूत्रेषु योगविभागं कृत्वा पाठ-

भावप्रकाशः।

मिति। एतेनात्र पक्षे आख्याग्रहणं नापेक्षितमिति लाघवमित्यपास्तम्। अत एवाह—लाघवाभावादिति। एकमात्राधिक्येन पदलाघवाभावाच्चेत्यर्थः। यद्यपि ज्ञानलाघवं सम्भवति तथाप्युक्तकारणाय तस्यात्रानादर इति भावः।

अर्थान्तरभ्रमनिरासायाह—उक्तबहिरिति। प्राकारपरिखाद्यावृतग्रामाद्बहिर्देशस्थं वस्त्वित्यर्थः। ननु उपसंव्यानशब्दस्योभयपरत्वे तदुपादानवैयर्थ्यं बहिर्योगेनैव गतार्थत्वादत आह—एवं चेति। तस्योभयपरत्वे चेत्यर्थः। आश्रित्य सूत्र इति। अन्यथा पाणिनेः प्रमादापत्तिः। एतेन भाष्ये तत एव गतार्थत्वात्प्रत्याख्यातमिति सूचितम्।

ननु त्रिसूत्रीसत्त्वे शीवदकच्स्वरावपि वैकल्पिकाविष्टावत्र मते न स्यातामत आह—त्रिसूत्र्येति। अर्थाधिकारानुरोधात्। तेनाकजद्युदात्तत्वादिकं नित्यमिति भावः। नन्वेवमव्यवस्थादावपि रूपद्वयोपपत्तिः। न च गणे विशेषणान्नैवमिति वाच्यम्। तेन तेषां संज्ञावारणेऽप्यत्र ग्रहणावारणादत आह—व्यवस्थेति। अयं भावः। त्रिषु योगविभागं कृत्वा शास्त्रे ये एते ते तत्रैव बोध्याः। तिङ्गोत्रादीनीत्यत्रेवेति। इदमुपलक्षणं—जसः शीत्यत्रैव पूर्वादिभ्य इत्यत्रापि सर्वनाम्न इति सम्बन्धे गणेऽर्थनिर्देशस्य संज्ञानिमित्तत्वेऽपि न दोष इति बोध्यम्।

एकशब्दस्याष्टावर्था उक्तास्तत्र विशेषमाह— संख्यायामिति। अन्येषु सप्तसु तु वचनान्तरमपि स्यादेव, एके, एकेषामिति यथेति भावः।

"न बहुव्रीहौ"। कृते बहुव्रीहौ निषेधो व्यर्थः 'उपसर्जनीभूता न सर्वादय' इति वक्ष्यमाणत्वादत आह–चिकीर्षिते इति। समासात्प्रागेवेति च। प्रक्रियेति। अलौकिके विग्रहवाक्ये इत्यर्थः। नन्वस्तु तत्राकज् अत आह—स चेति। न च निमित्तस्यानुपसर्जनत्वस्य विनाशोन्मुखत्वात्प्रागेव संज्ञा न भवि-

शब्दरत्नम्।

**वक्ष्यमाणत्वादिति**। एकद्वा इति बहुव्रीहेरभिधानेऽपि तत्रैकद्व्यन्यतरा इत्यर्थादुपसर्जनत्वमेव, समासान्ते कृते त्रिशिष्टस्य सर्वाद्यन्तत्वाभावाच्च। समासान्तानामुत्तरपदावयवत्वन्तु नेत्युक्तम्। **चिकीर्षित इतीति**। अध्याहारलभ्यमेतत्। एतदर्थमेव न बहुव्रीहिरिति वक्तव्ये 'बहुव्रीहौ' इति गुरुनिर्देश इति भावः। **विनाशोन्मुखत्वादिति**।

भैरवी।

विशेषणत्वं सम्पादनीयं तिङो गोत्रादीनीत्यत्रेवेति भावः। यदि "जसः शी" इत्यत्रेव "पूर्वादिभ्य" इति सूत्रेऽपि 'सर्वनाम्न' इत्यस्य सम्बन्ध इति स्वीक्रियते तदा गणे योगविभागो मास्तु, अर्थनिर्देशस्य संज्ञाप्रवृत्तावेव निमित्तत्वमस्तु, तथाच ततोऽपि लाघवमित्यपि बोध्यम्।

ननु "संख्ययाव्यया" इति सूत्रविहितबहुव्रीहौ निरुक्तोपसर्जनत्वाभावेन तत्र निषेधार्थं सूत्रमस्त्वित्यत आह–एकद्वेति। अत एव तस्य सूत्रस्य विषये प्रथमसूत्रेणैव बहुव्रीहिसंज्ञामाश्रित्य तत्प्रत्याख्यानं भाष्यकृत्सम्मतं सङ्गच्छते। सूत्रकारमतेऽप्याह–समासान्त इति। "बहुव्रीहौ संख्येये डज्" इति समासान्ते कृत इत्यर्थः। तेषां समासार्थालौकिकविग्रहवाक्यावयवत्वेन समुदायावयवत्वस्य सत्त्वादिति भावः। उक्तमिति। "अर्थवदधातुः" इति सूत्रे एवेति शेषः। एतदर्थमेव–अध्याहारार्थमेव। एवञ्च बहुव्रीहिपदं वाच्यार्थपरमेवेति भावः। अकृतव्यूहपरिभाषयैवेष्टसिद्धौ "न बहुव्रीहौ" इति सूत्रे 'चिकीर्षित' इति व्याख्यानं व्यर्थमित्याशङ्कां निराचष्टे मूले नचेति। अलौकिके प्रक्रियावाक्ये समासप्रयोजकैकार्थीभावारोपस्य सर्व-

भावप्रकाश।

ननु "संख्ययाव्यय" इति बहुव्रीहावुभयपदार्थप्राधान्ये उपसर्जनत्वाभावेन तत्र तन्निषेधार्थमावश्यकमत आह—**एकद्वा इति**। अत एव 'वार्थप्रामाण्यात्पूर्वसूत्रेणैव सिद्धम्' इति भाष्यं सङ्गच्छते। तन्मतेऽप्याह—**समासान्तेति**। **अभावाच्चेति**। समासान्तानां समासार्थवाक्यावयवस्यैवोक्तत्वादिति भावः। अत एवाह—**समासान्तेति**। ङ्याप्प्रातिपदिकादित्यत्रेति भावः। यत्तु रत्नाकरदण्ड्यादयः–विषयसप्तम्या चिकीर्षित इति लभ्यत इति। तन्न। तथा सति तद्विषयत्वस्य समुदाये एव सत्त्वेन तत्रैव निषेधापत्तौ प्रियविश्वायेत्यादिलक्ष्यसंभवेऽपि त्वत्कपितृक इत्यादिपरममूलोक्तलक्ष्यस्योच्छेदापत्तेः। तत् ध्वनयन्नाह—**अध्याहारेति**। अत एव बहुव्रीहाविति शेष इति वक्ष्यति मूलकृत्। सति सप्तमी सूत्रे इति भावः। **एतदर्थमेवेति**। बहुव्रीहौ कर्त्तुमिष्टे सति सर्वादेः सर्वनामसंज्ञा नेत्यर्थलाभार्थमेवेत्यर्थः। एवं च बहुव्रीहिपदं यथाश्रुतमेवेति भाष्योक्तलक्षणा नेति भावः। **वक्तव्ये इति**। समुदायस्येष्टत्वे इति भावः। **इति भाव इति**। मूलकृतस्तथा वदतः। एतेनारुचिर्ध्वनिता। सूत्रे सप्तमीनिर्देशः प्रथमार्थे एव। एवं च

सरला।

**एकद्व्यन्यतरा इत्यर्थादिति**। 'घटे पटे वा चैत्रस्य स्वत्वम्' इत्यर्थो घटपटयोरन्यतरस्मिन्नस्य चैत्रस्य स्वत्वमिति प्रयोगेण यथा गम्यते तथैव एको वा द्वौ वा इति विग्रहेण एकद्व्यन्यतररूपत्वार्थस्य प्रतीतेस्तादृशार्थस्वीकारात्। अत एव "वाऽर्थप्राधान्यात्पूर्वसूत्रेणैव सिद्धम्" इति भाष्यं सङ्गच्छते।

ष्यतीति वाच्यम् । अकृतव्यूहपरिभाषाया अनित्यत्वात् । तत्र चैतत्सूत्रस्यैव ज्ञापकत्वात् । अतिभवकानिति । एतदेव ज्ञापनफलमिति भावः । इष्टापत्ति कृ·

शब्दरत्नम् ।

यद्यप्यलौकिके एवैकार्थीभावस्यारोपोऽस्ति, तथाऽपि तत्र स्वार्थविशिष्टार्थान्तरबोधकत्वरूपो· पसर्जनत्वाभावादेवमुक्तम्। अनित्यत्वादिति । अत एवातिभवकानित्यादिसिद्धिः। वस्तुतः सा

भैरवी ।

जनप्रसिद्धत्वादेव निषेधस्य सिद्धौ सूत्रस्य वैयर्थ्यमेव, एवञ्च तत्रैवानुपसर्जनत्वस्य नष्टत्वाद्वि- नाशोन्मुखत्वादित्यसङ्गतम् इत्याशङ्क्य समाधत्ते—यद्यपीत्यादिना । आरोपः–आहार्यारोपः । स्वार्थविशिष्टेति । स्वम्प्रधानीभूतोऽर्थः समासात्प्राक् स्थितः स एवाधुना अर्थान्तरम्प्रति विशे- षणम्भवति । अत एव भाष्ये "संज्ञोपसर्जने च विशेषेऽवतिष्ठेते" इत्युक्तम् । उपसर्जनत्वा- भावादिति । यद्यप्यारोपोऽस्ति, तथाऽपि तस्यार्थबोधनाय न कस्यापि प्रयोग इति वस्तुगत्या तन्नास्तीति भावः । अत एव—अनित्यत्वादेव । सा—अकृतव्यूहपरिभाषा । "न बहु- व्रीहौ" इति सूत्रसत्त्वे तदकृतेति परिभाषाया अनित्यत्वे ज्ञापकं, तस्य सूत्रस्येष्टापत्त्या प्रत्याख्याने तु किन्तस्या अनित्यत्वे ज्ञापकमित्याकाङ्क्षायां सतुक्निर्देशस्य ज्ञापकता मूले

भावप्रकाश ।

वार्तिकोक्तोपसर्जननिषेधवद् भाष्यकृदुहितान्वर्थत्ववदिदं सूत्रकृता आरब्धम् । अत एव वृत्तिकृदुक्तः प्रक्रि- यावाक्ये समूहे निषेध इत्यर्थो भाष्यकृता बहुव्रीहिपदस्य तदर्थवाक्यस्थपदलक्षणया साधितः । अन्यथा मूलोक्तरीत्या सिद्धे तादृशलक्षणाप्रयासो व्यर्थः स्यादिति । नन्वलौकिके विग्रहवाक्ये समासादिप्रवृत्त्यैका- र्थीभावस्यापि तत्रैव कल्पनादुपसर्जनत्वादेव निषेधसिद्धिरिति सूत्रवैयर्थ्यम् । अत एव तत्रैव नष्टत्वाद्वि· नाशोन्मुखत्वादित्यसंगतया शङ्कासमाध्ययुक्तत्वमित्याशयेनाह—यद्यपीति । आरोप इति । आहार्यारोप इत्यर्थः । एतेन न ह्यकृते बहुव्रीहौ सर्वादिरुपसर्जनत्वमस्ति येन निषेधवैयर्थ्यं स्यादिति रत्नाकरोक्तिर्मूलानु· वादिदण्ड्युक्तिश्चापास्ता । स्वार्थेति । स्वं विशेष्यं सर्वनाम्नां प्रधानपरामर्शित्वात् , तथा च प्रधानार्थ- विशिष्टं पदार्थान्तरं विशेषणार्थस्तद्बोधकत्वमित्यर्थः, पदान्तरार्थविशेषणत्वेनार्थोपस्थापकत्वमिति यावत् । अत एव "संज्ञोपसर्जने च विशेषेऽवतिष्ठेते" इति भाष्यं संगच्छते । अयं भावः–एकोपस्थितिनियामकसमु- दायशक्तिरूपैकार्थीभावस्य तत्रारोपेऽपि ततो बोधस्य कस्याप्यभावेन तादृशोपसर्जनत्वस्यात्र विवक्षित· स्याभावः । अत एवाहार्यारोप इत्युक्तमिति । इदमेवाभिप्रेत्य स्वार्थविशिष्टार्थान्तरबोधकत्वमिति प्राग् व्याख्यातम् । एवमुक्तमिति । विनाशोन्मुखत्वादित्युक्तम् । एवं च न सूत्रवैयर्थ्यं न वा शङ्काद्वयुक्त- मिति भावः । मान्यास्तु अलौकिकविग्रहवाक्ये एवैकार्थीभावादिकल्पनात्पूर्वं निषेध इत्यत्र तात्पर्यान्न- दोष इत्याहुः । एवं तु रत्नाकरादिग्रन्थोऽपि युक्त एव । एतदेव ज्ञापनफलमिति मूले । इदमेव ज्ञापनफलं नान्यदिति भ्रमं निरसितुमाह—अत एवेति । आदिना तदीयलौकिकवाक्यसंग्रहः । अनेन प्रागुक्तस्य लौकिकवाक्यस्य समासस्य च दृष्टान्तद्वयमुच्यते । अत्र मते भाष्यविरोधादाह—वस्तुत इति । एवं च न चेत्यादिमूलम् अतिभवकानिति सिद्धये तदनित्यत्वाय सूत्रमावश्यकमिति रत्नाकरदण्ड्यादयश्च चिन्त्याः

सरला ।

स्वार्थविशिष्टार्थान्तरबोधकत्वरूपोपसर्जनत्वाभावादिति । पदान्तरार्थनिष्ठविशेष्यतानिरूपितोपस्थि- तीयप्रकारताप्रयोजकत्वरूपोपसर्जनत्वस्य पूर्वोक्तस्य अलौकिकविग्रहवाक्ये 'युष्मद् सु' इत्यत्राभावादित्य- र्थः । अतिदिश्यमानधर्मसमनियतधर्मनिमित्तककार्याभावस्यातिदेशस्वभावसिद्धत्वेन समाससंज्ञाऽर्थमलौ- किकविग्रहवाक्ये एकार्थीभावस्यारोपेऽपि तत्समनियतोपसर्जनत्वनिमित्तकसर्वनामसंज्ञानिषेधस्य वक्तुम- शक्यत्वात् । इत्यादिसिद्धिरिति । 'अति भवत् अम्' इत्यलौकिकविग्रहवाक्येऽकच्सिद्धिरित्यर्थः । नास्त्येवेति । वस्तुतस्तु अस्या भाष्ये कुत्राप्यनुक्तत्वेऽपि 'षट्सेदुषोः' इत्यस्य सिध्यर्थमियमवश्यमाश्र-

स्वेति । "च्छ्वोः शूड्" इति सतुक्कग्रहणं, प्रकृतिप्रत्यापत्तिवचनं वा अनित्यत्वे

शब्दरत्नम् ।

भाष्यानुक्तत्वान्नास्त्येवेति बोध्यम् । सतुक्कग्रहणमिति । "च्छ्वोः शूड्" इति सूत्रे प्रष्ठेत्यादावन्तरङ्गत्वाज्जातस्य तुको निवृत्तये तत्क्रियते । सतुक्कनिर्देश-सामर्थ्याच्च नान्त्यस्य शः । वाञ्छादिप्रकृतिकक्विबन्तादेस्तु अप्रयुक्तत्वेन लक्षणविषयतैव नेत्यादि भाष्ये स्पष्टम् । तत्परिभाषासत्त्वे हि शादेशे निमित्तविनाशेन पूर्वं तदप्रवृत्तिरेवेति स व्यर्थ एव स्यादिति भावः । प्रकृतिप्रत्यापत्तीति । कंसं घातयतीत्यादौ क्विलुकि

भैरवी ।

उक्ता । तामुपपादयति—"छ्वोः शूड्" इत्यादिना । सतुक्केति रूपे विद्यमानार्थकसहशब्देन बहुव्रीहिसमासे कप् । तुकोऽन्तरङ्गत्वम्प्रकृतिसम्बन्धिवर्णमात्रापेक्षत्वेन बोध्यम् । तत्—सतुक्कग्रहणम् । अलोऽन्त्यपरिभाषाप्रवृत्तिशङ्कां वारयति—वाञ्छादीति । न च सतुक्कनिर्देशे "राल्लोपः" इति सूत्रेऽपि सतुक्कस्यैवानुवृत्तिः स्यात्तथा च हूः हुरावित्यादि न सिध्यतीति वाच्यम् ! "मूर्तौ घनः" "द्रवमूर्तिस्पर्शयोः" इति निर्देशेन "नध्या" इति निषेधारम्भेण च "राल्लोपः" इति सूत्रे तुग्रहितस्यानुवृत्तिसम्भवात् । भाष्ये स्पष्टमिति—तत्र हि "उत्पुच्छयतेरप्रत्ययः, उत्पुडिति प्राप्नोति, उत्पुदिति चेष्यते, तथा वाञ्छतेरप्रत्ययः, वान् वांशौ वांश इति न सिध्यति, वान् वाञ्छौ वाञ्छ इति प्राप्नोति, यथालक्षणमप्रयुक्ते" इत्युक्तम् । "उत्पुच्छयतेरप्रत्ययः" इत्य-

भावप्रकाश ।

इति भावः । सतुक्केति । विद्यमानार्थकसहशब्देन तुको बहुव्रीहौ कपि रूपम् । जातस्येति । "छे च" इत्यनेनेति भावः । नन्वेवमप्यन्त्यस्य स्यात् । न च "नानर्थके" इति निषेधः, तस्याः प्रत्याख्यानात् । अत आह—सतुक्केति । चस्त्वर्थे । एतेन तया निर्वाह इति मान्योक्तिः प्राचामनुरोधेनेति ध्वनितम् । एतेन प्रतीकादि भाव इत्यन्तमनूद्य तन्न । तयैवान्त्यव्यावृत्तिसिद्धौ सतुङ्निर्देशेन वाञ्छादिव्यावृत्तिसिद्धावनभिधानाश्रयणस्य व्यर्थत्वादिति मन्दोक्तमपास्तम्, तस्याः प्रत्याख्यानात् । अनभिधानस्य भाष्यादौ स्पष्टत्वाच्च । नन्वेवं "राल्लोपः" इत्यनेन हूः हुरावित्यादौ लोपो न स्यात् । न चानुवृत्तिसामर्थ्यं, वकारानुवृत्तिमात्रेणापि सार्थक्यादिति चेत्? न, "न ध्याख्या" इति नत्वनिषेधालिङ्गात् "मूर्तौ घनः" इत्यादिनिर्देशाच्च केवलस्यैवान्वयात् । न हि मूर्त्त इत्यत्र छलोपं विना नत्वप्राप्तिरिति भावः । ननु वाञ्छतेः क्विपि तुग्रहिते शीभावाय सतुक्कनिर्देशश्चरितार्थोऽत आह—वाञ्छादीति । तादेस्त्विति । आदिना उत्पुडित्यस्य संग्रहः । अप्रयुक्तत्वेनेति । प्रयुक्तानामेवान्वाख्यानमिति भावः । आदिना सतुक्कनिर्देशसामर्थ्यादित्यस्य संग्रहः । भाष्ये इति । "यद्येवमुत्पुच्छयतेरप्रत्ययः उत्पुडिति प्राप्नोति उत्पुदिति चेष्यते; तथा वाञ्छतेरप्रत्ययः, वान् वांशौ वांश इति न सिध्यति, वान् वाञ्छौ वाञ्छ इति प्राप्नोति यथालक्षणमप्रयुक्ते" इति तत्रोक्तम् । पुतं च्छादयतीति पृषोदरादिनिष्पन्ने प्रकृतितकारे शत्वमन्त्ये शुद्धे च्छ इति कैयटः । एतेन छान्तरं प्रश्लिष्य समाहारद्वन्द्वगर्भे द्वन्द्वं चाश्रित्यादेशेऽपि शद्वयं प्रश्लिष्य यथासंख्यमाश्रित्य वाञ्छतेः क्विपि शादेशो भवत्येवेति हरदत्तोक्तमपास्तं, भाष्यकैयटविरोधात् । मान्योक्तिरपि तदनुसारिण्येव । अत एव तैः पक्षान्तरमुक्तरूपमुपन्यस्तम् । सत्त्वे हीति । अनेन वस्तुत एतैर्ज्ञापकैः परिभाषाऽभाव एव बोध्यते इति गूढाकूतं

सरला

यणीयेति परिभाषाप्रकरणे निरूपितं तत एवावगन्तव्यम् । विस्तरस्तु परिभाषेन्दुटिप्पणे द्रष्टव्यः । भाष्ये स्पष्टमिति । "च्छ्वोः शूडनुनासिके च" इति सूत्रे भाष्ये—"अवश्यमत्र तुगभावार्थो यत्नः कर्तव्यः, अन्तरङ्गत्वाद्धि तुक् प्राप्नोति च्छ्वोरिति तुका सह सन्निपातग्रहणं विज्ञायते । ननु चैवमप्यन्त्यस्य प्राप्नोति सन्निपातग्रहणसामर्थ्यात्सर्वस्य भविष्यति । एवमङ्गस्य प्राप्नोति । निर्दिश्यमानस्यादेशा भवन्तीति अङ्गस्य न भविष्यति । यद्येवम् उत्पुच्छयतेरप्रत्यय उत्पुडिति प्राप्नोति उत्पुदिति चेष्यते, तथा वाञ्छतेरप्रत्ययः—वान् वांशौ वांश इति न सिध्यति । वान् वाञ्छौ वाञ्छ इति प्राप्नोति । यथालक्षणमप्रयुक्ते"

शब्दरत्नम् ।

तन्निमित्तकादेशनिवृत्तये क्रियमाणम् "आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिश्च" इति वचनमित्यर्थः ।

अत्रेदं चिन्त्यम् । लुक्यपि प्रत्ययलक्षणसत्त्वाद्राजा, ऐनेय इत्यादाविवाकृतपरिभाषया अत्राप्राप्तिः । "न लुमता" इति निषेधस्तु प्रत्यये परतो जायमानपूर्वकार्य एवेति स्पष्टमेव । तस्मात्पुष्ययोगं जानाति पुष्येण योजयतीत्येतत्साधके "पुष्ययोगे ज्ञि" इति वचने भाष्य-

भैरवी ।

नेन पुतञ्छादयतीति विग्रहे पृषोदरादित्वात्पुतशब्दान्तलोपे छदधातोर्डप्रत्यये निष्पन्नो यः पुच्छशब्दस्तस्मादाख्याने णिजिति दर्शितम् । तन्निमित्तकादेशेति । "हनश्च वधः" इत्यनेनाप्स-न्नियोगेन वधादेशस्य विधानात्सन्नियोगशिष्टत्वमात्रेण वधादेशस्य कृन्निमित्तत्वम् ।

इदं चिन्त्यमिति । वक्ष्यमाणं चिन्तनीयम्–दृष्टान्ते हल्ङ्यादिलोपे यस्येति लोपे जातेऽपि प्रत्ययलक्षणेन यथा निमित्ताविनाशबुद्धिस्तथा कृल्लुक्यपि सन्नियोगाविनाशबुद्ध्या "अकृत" इति परिभाषायाः प्रवृत्तिर्न भविष्यतीत्यभिहितम् । पूर्वकार्य एवेति । लुप्तप्रत्ययपरतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसंज्ञकस्तदुद्देश्यकं कार्यमाङ्गमनाङ्गं वा तस्मिन्कर्तव्ये तेन प्रत्यय-लक्षणस्य प्रतिषेधादिति भावः । यद्यप्यत्र जायमानङ् कार्यम्पूर्वस्यैव,तथाऽपि प्रत्ययसन्नियो-गेन तद्विधानन्न तु तस्मिन्परतः पूर्वस्येति तत्रोक्तमिति तस्य निषेधस्यायमविषयः । तस्मात्–मूलोक्तज्ञापकासम्भवात् । पुष्ययोगे ज्ञीति । अत्र ज्ञीति सम्पदादिक्विबन्ताद्भावाभिधायकात् ङौ रूपम् । यद्यपि "नक्षत्रयोगे ज्ञि" इति वार्तिके पाठः, तथाऽपि तत्सङ्ग्राहकवाक्यमिति तस्माल्लक्ष्यसंस्कारकवाक्यमेतादृशङ्कल्पनीयमित्याशयेनैवमुक्तम् । नक्षत्रवाचिशब्दपूर्वपदक-

भावप्रकाशः ।

ध्वनितम् । आदेशेति । "हनश्च वधः" इत्यप्संनियोगेन वधादेशेत्यर्थः । चो लुक्समुच्चायकोऽन्त्योऽत्र योजितः । अन्यथा तयैवादेशनिवृत्तौ किं तयेति भावः ।

अपिर्विरोधाभासे । दृष्टान्ते हल्ङ्यादिलोपे "यस्येति च" इति लोपेऽपि दीर्घादेर्नस्य च श्रवणं यथा त-थाऽत्रापि निमित्तस्यैव सत्त्वेन निमित्तविनाशाभावात्तदप्राप्तिरित्यर्थः । परत इति । लुप्तप्रत्यये परतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसंज्ञकस्तदुद्देश्यकं यत्कार्यमाङ्गमनाङ्गं वेति तदर्थः । तस्मिन्निति परिभाषाबाधे मानाभावः । यद्यप्यत्र जायमानकार्यं प्रत्यये परतः पूर्वस्यैव, तथाऽपि संनियोगशिष्टत्वात्सूत्रे परत्वेनानुल्लेख इति भावः । एतेन प्रतीकादि तीत्यन्तमनूद्य तत्र । वधादेशस्य कृन्निमित्तकत्वेन न लुमतेत्यस्य प्रवृत्त्या निमि-त्तस्य विनाशोन्मुखत्वात्तया वधादेशाप्राप्तौ प्रत्यापत्तेर्व्यर्थत्वेन तदनित्यत्वज्ञापनसंभवात् । किं च प्रत्ययल-क्षणप्रवृत्तेः स्वीकार उत न ? नाद्यः । कृदनिमित्तत्वे प्रत्ययानिमित्तत्वं, तन्निमित्तत्वे न लुमतेति प्रवृत्तिरित्यु-भयथाऽपि प्रत्यलक्षणाप्रवृत्तेः । नान्त्यः, प्रत्ययलक्षणसत्त्वादिति भवदुक्तिव्याघातादिति मन्दोक्तमपास्तम् । तत्र लक्षणशब्दस्य निमित्तार्थकत्वे तत्प्राप्तावप्युक्तरीत्या तदप्राप्तेः । एवं प्रत्यापत्तेर्ज्ञापकत्वेन मूलासांगत्येऽपि यथाकथंचित्मूलं योजनीयमिति ध्वनयितुमाह–तस्मादिति । पुष्ययोगे ज्ञीति । यद्यपि नक्षत्रयोगे ज्ञीति वार्त्तिकपाठस्तथाऽपि संग्रहवाक्याल्लक्ष्यसंस्कारकाणि वाक्यान्युपप्लवन्त इत्याशयेनैवमुक्तम् । ज्ञीति संपदादिभावक्विबन्ताङ्ङौ रूपम् । नक्षत्रविशेषवाचिपूर्वपदकयोगशब्दान्तात्कृदन्ताज्जानात्यर्थे णिच स्यात्

सरला ।

इति ग्रन्थेन स्पष्टमित्यर्थः । पूर्वकार्य एवेति स्पष्टमेवेति । तथा च "हनश्च वधः" इति वधादेशस्य अप्प्रत्ययसंनियोगशिष्टत्वेऽपि परत्वेन तस्य वधादेशे निमित्तत्वाभावेन "न लुमताऽङ्गस्य" इति प्रत्यय-लक्षणनिषेधाप्रवृत्त्या प्रत्ययलक्षणेन निमित्तसत्त्वात् परिभाषया वधादेशाप्रवृत्तिर्न स्यादिति प्रकृतिप्र-त्यापत्तिवचनस्य तत्रत्यस्य वधादेशनिवृत्तये आवश्यकत्वमिति न तत्तदनित्यत्वे ज्ञापकमिति तदाशयः । तदेवाह–तस्मादिति । भाष्यकृत्कृतेति । "हेतुमति च" इति सूत्रे "नक्षत्रयोगे ज्ञि" इति वार्तिकार्थप्रद-

ज्ञापकम् , लक्ष्यानुरोधाद्व्यवस्थेति भावः। यथोत्तरमिति । तथा चाद्यत्वे भाष्यकारोक्त्यैव व्यवस्थेति भावः।

यत्तु प्राचोक्तम्–बहुव्रीहौ सर्वादेः सर्वनामता न स्यात् । प्रियसर्वाय । सूत्रकारमते बहुव्रीहौ न सर्वनामता। भाष्यकारमते गौणत्वमात्रे। 'त्वत्कपितृको' 'मत्कपितृक' इत्यत्र समासावयवयोर्युष्मदस्मदोः सर्वनामत्वादनङ्गकार्यत्वेनाकच् स्यात् स मा भूत्, कप्रत्यय एव स्यादित्येतदर्थमिदं सूत्रमिति न्यासकृन्मत-

---

शब्दरत्नम् ।

वृत्कृतप्रत्यापत्त्यनुवृत्तिर्ज्ञापिका। तत्र हि "चजोः" इति घिति परतः कुत्वमिति बोध्यम्। भाष्यकारोक्त्येति ।

"अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयौ ।"

इति च तदुक्तिः । एतदेवाभिप्रेत्य "धिन्विकृण्व्योर च" इति सूत्रे किमर्थमत्वं विधीयते वलोप एवास्त्वित्याशङ्क्यात्वेऽल्लोपे तस्य स्थानिवत्त्वेन गुणाभावाय तत् । न च वलोपेऽपि "न धातु—"इति गुणनिषेधः सिद्ध इति वाच्यम् । तत्प्रत्याख्यानपक्षे गुणप्राप्तेरित्युक्तम्। अनेन सूत्रमतात् प्रत्याख्यानवादिमतं प्रबलमिति प्रत्याख्यानवादिसंमत-

भैरवी ।

योगशब्दान्तात्प्रातिपदिकाज्जानात्यर्थे णिच् कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमिति तदर्थः। अत्र कुत्वनिमित्तस्य विनाशोन्मुखत्वात्कुत्वं न स्यात्। एतदेवाह—तत्र हीति। अत्र घिति परे कुत्वस्य विधानमिति "न लुमता"इति निषेधस्य प्राप्तिरस्तीति भावः। प्रत्यङ्गमिति। प्रत्यवयवमित्यर्थः। स्वरः–"स्वाङ्गशिटाम्" इति विहितः। मुक्तसंशयमिति क्रियाविशेषणघटितपाठान्तरम्। तदुक्तिः—भाष्यकारोक्तिः। स्मृतिद्वयप्रामाण्याद्विकल्पस्तु नेत्याशयेनाह–एतदेवेति । यथोत्तरम्मुनीनाम्प्रामाण्यमेव । तदिति। उक्तमत्वविधानमित्यर्थः । तत्प्रत्याख्याने—न धात्विति सूत्रस्य प्रत्याख्याने । अनेन–उक्तरीत्याऽत्वविधानप्रयोजनकथनेन।

भावप्रकाश ।

कृल्लुकप्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीत्यर्थः । पुष्यकर्तृकचन्द्रकर्मकयोगकर्मकज्ञानेऽयं साधुः। अत एव पुष्यस्य योगे कर्तृत्वात्तेन रूपेणावस्थानं णिच्संनिधौ। अत्र कुत्वनिमित्तस्य घञो विनाशोन्मुखत्वात्कुत्वं न स्यात्। न च प्राग्वत् प्रत्ययलक्षणम्, अलित्वावस्थानिवत्त्वेऽपि विशेषणतयाऽल्लाश्रयणेऽतृणेडित्यादिवत्तत्प्रवृत्तेरिति वाच्यम्। सिद्धान्तेऽस्यापि नियमार्थत्वेनाप्राप्तेस्तदाह—तत्र हीति। अत्र संनियोगशिष्टत्वाभावेन परत्वेनोल्लेखादिति भावः। इति बोध्यमिति। तथा च मूलस्थप्रत्यापत्तिपदमनुवृत्तिपरमन्यथा कृल्लुकि तयैव कुत्वनिवृत्तौ तदनुवृत्तिर्व्यर्था स्यादिति भावः। स्वरः–"स्वाङ्गशिष्टाम्" इत्यनेन। प्रत्यङ्गं–प्रत्यवयवं पूर्वत्र परत्र वेति भावः। संशयाविति। संशयमिति पाठान्तरम्। चो ह्यर्थे। तदुक्तिरिति। गोनर्दीय आहेति प्रागुक्त्यैतदुक्तेरिति भावः। ननु एवं स्मृतिद्वयप्रामाण्याद्विकल्पोऽस्त्वत आह—एतदेवेति। यथोत्तरं मुनीनां प्रामाण्यमेवेत्यर्थः। स्थानिवत्त्वेनेति । तथा च तेन प्रतिबन्धात् प्राप्तलघूपधगुणाभावार्थमत्वविधानमिति भावः। अत एव मध्ये चः। तथा च 'इति च' इत्यस्य चेतीत्यर्थो बोध्यः। उक्तमिति। तथा च तत्सूत्रभाष्योभयमूलकमेवेदमिति भावः। अनेनेति। उक्तग्रन्थेनेत्यर्थः। चतुष्टयं ध्वनितमिति भावः। तदेव क्रमेणाह—सूत्रेति। संभवे इत्यन्तेन द्वितीयमुक्त्वा तृतीयमाह—

सरला ।

शंके "नक्षत्रयोगे जानात्यर्थे कृदन्ताण्णिज् वक्तव्यः कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम्" इति भाष्ये कृतेत्यर्थः। कुत्वमितीति। तथा च कुत्वे परत्वेन घित्प्रत्ययस्य निमित्तत्वात्

मिति। अत्रेदं वक्तव्यम्। किं बहुव्रीहौ संज्ञा नेति विवक्षितम् उत तदवयवानां सर्वादीनामिति? नाद्यः। समासावयवयोर्युष्मदस्मदोरित्युत्तरग्रन्थविरोधात्, समुदाये प्राप्तिविरहाच्च। न च तदन्तविधिना प्राप्तिः। बहुव्रीह्यवयवानामुपसर्जनतया सर्वादिबहिर्भावेन तदन्ते प्राप्तेर्दूरापास्तत्वात्। अत एव न द्वितीयोऽपि। न चोपसर्जनानां पाठात् पर्युदासो वार्तिककृतोक्तो न तु सूत्रारूढ इति

शब्दरत्नम्।

लक्ष्यमेव कथंचित्सूत्रमतेऽपि साध्यं, न तु विपरीतं सति सम्भवे। अन्यथा सूत्रमप्रमाणमेवेति च, प्रत्याख्यानं सूत्रसंमतमिति च ध्वनितम्। सूत्रकृत्खण्डितप्राचीनऋषिवाक्यानामप्रामाण्यवत्सूत्रकारवचःखण्डनप्रवृत्तभाष्यवार्तिकवचनैस्तदंशे सूत्रकारवचसोऽप्यप्रामाण्यकल्पनैवोचितेति दिक्।

किमिति। बहुव्रीहौ नेत्यस्य द्वेधा व्याख्यानसम्भवादिति भावः। उत्तरग्रन्थेति। न्यासकारस्यापि सूत्रलभ्यार्थप्रतिपादने एव तात्पर्यादिति भावः। प्राप्तेरिति। प्राप्तेरभावे निषेधो व्यर्थ एवेति भावः। अत एवेति। अवयवानामुपसर्जनत्वेन सर्वादिबहिर्भा-

भैरवी।

कल्पनैवेति। एतेन विकल्पकल्पनानिरासः। दृष्टार्थत्वं तस्य। अदृष्टार्थत्वन्त्वस्तु न तत्र विवादः। अत एव तत्र तत्रापाणिनीयन्तु भवतीति भाष्यकारोक्तिः सङ्गच्छते। एवञ्च "न बहुव्रीहौ" इति सूत्रमुपसर्जनप्रतिषेधानुवादकमेवेत्याशयेनाह—दिगिति।

द्वेधेति। "न बहुव्रीहौ" इति सूत्रे सर्वादीनीत्यनुवृत्त्या बहुव्रीहौ यानि सर्वादीनि तेषामिति, तेषामन्येषाञ्च यो बहुव्रीहिस्तस्य वा सर्वनामसंज्ञा नेत्येवं द्वेधेत्यर्थः। ननूत्तरग्रन्थस्य मतान्तराभिप्रायकत्वात्तद्विरोधो न क्षतिकरोऽत-आह—न्यासकारस्यापीति। प्रतिपादने एवेति। त्वन्मत इति शेषः। भवन्मतेऽवयवस्यैव निषेधे तात्पर्यम्। न्यासकृतः समासावयवयोर्युष्मदस्मदोरिति दर्शनादिति वक्तव्यम्। एवञ्चाद्यपक्षे तद्विरोधः स्पष्ट एव। तस्यार्थ इत्यस्यान-

भावप्रकाशः।

अन्यथेति। सूत्रान्तरसंभवे इत्यर्थः। नन्वस्य ग्रन्थस्यात्रग्रहणस्य च भाष्यानुरोधित्वेऽपि कथमनेन चतुष्टयध्वननमेवं चोक्तरीत्या विकल्पतादवस्थ्यमत आह—सूत्रकृदिति। "तदशिष्यम्" इत्यादिनेति भावः। तदंशे इति। अन्यथा वृद्धिसूत्रभाष्यविरोध इति भावः। अप्रामाण्येति। दृष्टार्थसाधने इति शेषः। अदृष्टार्थप्रामाण्यं त्वस्त्येव। अत एव तत्र तत्रापाणिनीयं तु भवतीति भाष्योक्तिः संगच्छते। एतेन नेदमु शासानायाः श्रुतेः स्मृतेर्वा वाक्यं येन प्रमाणमिति शङ्का प्रत्युक्ता। किञ्च भाष्यस्यासंदिग्धत्वेन संदिग्धार्थस्य सूत्रस्यान्यथा व्याख्यैवोचिता। किञ्चेतिहासपुराणाद्यैर्वेदार्थवर्णनवद्वार्तिकभाष्यादिग्रन्थैः सूत्रार्थवर्णनमुचितम्। तस्मात्तयोः प्रवृत्त्या सूत्रं व्यर्थमेव। तदाह—दिगिति।

मूले प्राचोक्तं-प्रक्रियाकृदुक्तम्। बहुव्रीहौ नेति सूत्रार्थानुवादः। द्वेधेति। सर्वादीनीत्यनुवृत्त्या तत्र यानि तानि तेषां यो बहुव्रीहिस्तत्र नेत्येवमित्यर्थः। ननूत्तरग्रन्थस्य मतान्तरत्वेन तद्विरोधो न दोषावहोऽत आह—न्यासेति। स चावयवनिषेधपरः स्पष्टः। अन्यथा निर्मूलत्वेनाप्रामाण्यापत्तिरिति भावः। एवेति। अस्य त्वन्मते इति शेषः। मम तु स सिद्धान्त एवेति भावः। हेतौ विशेष्यपरा-

सरला।

"न लुमताऽङ्गस्य" इत्यस्य प्रवृत्तिः स्पष्टैवेति प्रत्ययलक्षणाभावेन निमित्तविनाशसत्त्वात्परिभाषयैव प्रकृतिप्रत्यापत्तेः सिद्धौ तद्वैयर्थ्यं स्पष्टमिति तत्रत्यतत्पदानुवृत्तिस्तदनित्यत्वे ज्ञापिकेति भावः। दिगिति। दिगर्थस्तु महर्षीणामेवं सति सर्वज्ञत्वभङ्गापत्तिरतोऽस्मिन् शास्त्रे उत्तरमुनितात्पर्यानुसारेणैव पूर्वमुनेस्तात्पर्यमवधारणीयमिति बोध्यः।

वाच्यम् । अन्वर्थसंज्ञाबलेन सूत्रान्तरैरेव तल्लाभात् । एतेन सूत्रकारमते बहुव्रीहौ न सर्वनामतेत्यपि परास्तम् । बहुव्रीहावेवेति तस्यार्थः । भाष्यकारमते इत्याद्यपि न । विशेषोपादानेन हि सूत्रकारवार्तिककारयोर्मतमन्यादृशमिति प्रतीयते । देवदत्तो वामेनाक्ष्णा पश्यतीत्युक्ते दक्षिणेन न पश्यतीतिवत् । तच्च न । सूत्रवार्तिकमतेऽपि गौणपर्युदासस्येष्टत्वात् । यत्तु त्वत्कपितृक इत्यादि । तदित्थं प्राचा व्याख्यातम्—त्वं पिता यस्य, अहं पिता यस्येति विगृह्य बहुव्रीहिसमासे कृते समासावयवयोः समासान्तःपातिनोर्युष्मदस्मदोः सर्वार्थवाचकत्वेन सर्वनामसंज्ञकत्वादज्ञाताद्यर्थविवक्षायाम् "अव्ययसर्वनाम्नाम्" इत्यकच् प्रसज्येत । तस्य स्मैप्रभृतीनामिवाङ्गाधिकारविहितत्वाभावेनाङ्गसंज्ञानपेक्षत्वात् । ततश्च त्वकत्पितृक इत्याद्यनिष्टं प्रसज्येतेति । न्यासकृताऽपि अन्वर्थसंज्ञाबलादेव संज्ञानिरासे कृतेऽकज् न भविष्यतीत्याशङ्क्य समुदायो हि विशेषे वर्तते, पूर्वपदन्तु सर्वार्थताया अनपेतमेवेत्युक्तम् । तदेतत्सर्वं प्रामादिकमेव । तथा हि—जहत्स्वार्थायां

## शब्दरत्नम् ।

वादेवेत्यर्थः । **अन्वर्थेति** । सर्वेषां नामेत्येवंरूपेत्यर्थः । **तस्यार्थ इति** । सोऽनुचितः, अन्वर्थसंज्ञया गौणमात्रे तदप्रवृत्तेस्तत्संमतत्वादिति शेषः । **सूत्रेत्यादि** । तन्मतेऽन्वर्थत्वेन, वार्त्तिकमते तु वचनेनेत्यर्थः । स्वोक्तार्थे न्यासकृद्ग्रन्थसंवादमाह—**न्यासकृताऽपीति** । **अनपेतमेवेति** । समुदाये एकार्थीभावाङ्गीकारेण समुदायस्यान्यपदार्थोपसर्जनत्वेऽप्यव-

## भैरवी ।

न्तरं हेत्वनुपादानान्नाकाङ्क्षाशान्तिरत आह—सोऽनुचित इत्यादि । तत्सम्मतत्वात्—सूत्रकारसम्मतत्वात् । ननु "संज्ञोपसर्जनप्रतिषेध" इति वार्तिककृतोक्तम्न तु सूत्रकृतेति सूत्रवार्तिकेत्यनुपपन्नमत आह—तन्मत इति । सूत्रकृन्मत इत्यर्थः । न्यासकृताऽपीत्यादिमूलोक्तोऽन्यदीयो ग्रन्थ इति भ्रमनिवारणायाह—स्वोक्तेति । अत्र स्वशब्दार्थो व्याख्याता प्रसादकारः ।

## भावप्रकाश ।

मर्शभ्रमनिरासायाह—**अवयवेति** । हेतुं विनाऽऽकाङ्क्षाशान्त्यभावादाह—**सोऽनुचित इति** । **तत्संमतेति** । सूत्रकृत्संमतेत्यर्थः । **तन्मते**—सूत्रकृन्मते । ननु गौणत्वान्निषेधसिध्या सूत्रानर्थक्यं किं सूत्रकृतं प्रत्युत भाष्यवार्त्तिककृतौ प्रति ? नाद्य इत्याह—**सूत्रेति** । स निषेधो वार्त्तिककृत इति भावः । अन्त्यमिष्टापत्त्या परिहरति—भाष्येति । मात्रशब्दः कार्त्स्न्ये । यद्वा, पूर्वग्रन्थशेषोऽयम् । ननु तन्निषेधसत्वात्कथं सूत्रकृन्मते बहुव्रीहावेव न सर्वनामतेत्याशङ्क्य मतान्तरमेतदित्याह—भाष्येति । वार्त्तिकस्याप्युपलक्षणमिदं, तथा च नेदं सूत्रमतमिति भावः । नन्वन्वर्थत्वेन सूत्रकृन्मतेऽपि निषेधसिध्या वैयर्थ्यं तदवस्थमतः फलान्तरमाह—त्वत्केत्यादीति । प्रकाशकृतैव पूर्वत्रारुचिसूचनान्नोक्तदोषः । वस्तुतो मूलप्रकाशावयुक्तावेवान्वर्थत्वस्यापि भाष्यकृद्दूषितत्वेन तदनिष्टत्वात् । अतः प्रक्रिया सुयोजैव । भाष्यादिमताङ्गीकारे वैयर्थ्ये इष्टापत्तावपि सूत्रमते तदभावादिति चेदत एवाग्रिमं खण्डयति मूलकृत्—यत्त्वित्यादिना । प्राचा—प्रसादकृता । इतीत्यन्तेन व्याख्यातमित्यस्यान्वयेन तद्ग्रन्थसमाप्त्या न्यासकृताऽपीत्याद्यन्यदीयो ग्रन्थ इति भ्रमनिरासायाह—**स्वोक्तार्थे इति** । यद्यपि तत्र ननु चान्वर्थेति नैतदस्ति समुदाय इत्येवमुक्त्या तदीयत्वेनात्रोल्लेखस्तथाऽपि न्यासग्रन्थे एतद्दर्शनात्तदीयत्वं निश्चित्य तत्पदोल्लेखो मूले । तामानुपूर्वीं वक्ष्यति—उज्जग्राहेत्यादिना । तदेवं तदभिप्रेत्याह—**न्यासकृदिति** । एवं चायमपि प्रसादग्रन्थ एवेति इत्युक्तमित्यग्रे योज्य इति भावः । मूलेऽकज् नेति । विशेषविषयत्वेन सर्वार्थत्वासंभवादिति भावः । **एकार्थीभावेति** । एकोपस्थितिनियामकशक्तीत्यर्थः । **समुदायस्येति** । स्वार्थद्वारेति भावः । अभिमानपदसूचितारुचिस्तु विपरीतोक्तिस्तवेति सा च दोषोक्त्या स्पष्टीभविष्यति । तदेतत्सर्वमित्यादिमूले प्रका-

वृत्तौ समासावयवयोरर्थ एव नास्ति । अजहत्स्वार्थायामपि स्वार्थविशिष्टान्यपदार्थ-वृत्तित्वेनोपसर्जनत्वं स्पष्टमेव । एवं च समासान्तःपातिनोर्युष्मदस्मदोः सर्वार्थवाच-कत्वेनेत्यादिग्रन्थः, समुदायो हीत्यादिन्यासग्रन्थश्च पक्षद्वयेऽपि व्याहतः । किं चैवम् अतिसर्वायेत्यत्र स्मायादेशो दुर्वारः, अङ्गाधिकारे तदन्तग्रहणात् । त्वदुक्तरीत्या स-र्वशब्दस्य सर्वार्थतानपायात् । न हि पूर्वपदे सर्वार्थता उत्तरपदे तु नेति युक्तिमत् ।

### शब्दरत्नम् ।

यवस्य तत्त्वे मानाभाव इत्यभिमानः । व्याहत इति । अजहत्स्वार्थायामपि अवयवा-र्थस्यान्यपदार्थविशेषणतयैवोपस्थित्योपसर्जनत्वाक्षतेरितरार्थविशेषणत्वेनोपस्थितिविषयत्व-स्यैवोपसर्जनत्वपदार्थत्वादिति भावः । सर्वशब्दस्येति । उत्तरपदभूतस्यापीत्यर्थः । युक्ति-मदिति । न चोत्तरपदे लक्षणा, पूर्वपदं तात्पर्यग्राहकमिति मते तद्युक्तिमदिति वाच्यम् । तत्र मते हि पूर्वपदं निरर्थकं स्वार्थप्रतिपादकं वा ? नाद्यः । नैरर्थक्येन सर्वार्थकत्वाभावादेवा-प्राप्तेः । नान्त्यः । पूर्वपदार्थे विशेषणान्वयापत्तेः, विनिगमनाविरहेण पदद्वयेऽपि लक्षणौ-

### भैरवी ।

तत्त्वे—उपसर्जनत्वे । अभिमान इति । एतद्बीजमग्रे स्फुटम् । यदुक्तम्प्रागभिमान इति तद्बीज-म्प्रकटयन्व्याघातमुपपादयति—अजहदित्यादिना । विशेषणतयैवेति । परार्थाऽभिधानं वृत्तिरिति सि-द्धान्तादिति भावः । पूर्वोक्तमुपसर्जनत्वं बहुव्रीहावेवेति सामान्यत उपसर्जनत्वस्य स्वरूपमाह—इतरार्थेति । नन्ववर्णान्तादङ्गात्परस्य सर्वनाम्नो विहितस्य ङेः स्मै इत्यर्थाङ्गीकारान्न किञ्चे-त्यादिनोक्तदोष इत्यत आह मूले—न हीति । तथा च तदीयग्रन्थे पूर्वपदग्रहणं व्यर्थम् । विनि-गमकाभावेनोभयपदयोस्तुल्यत्वादिति भावः । खण्डनकृदुक्तं विनिगमकं खण्डयति—न चेत्या-दिना । विशेषणेति । सुन्दरादिविशेषणान्वयापत्तेरित्यर्थः । पक्षद्वयसाधारणन्दोषमाह—विनीति । ननु प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वमिति व्युत्पत्तिरुत्तरपदस्य लक्षणासाधि-

### भावप्रकाश ।

न्यासानुवादः । सर्वं मूलं यथाश्रुतं व्याख्यानं न्यासग्रन्थानुवादश्चेत्यर्थः । मूले स्वार्थेति । न तावन्मात्राभि-धानेन पूर्वपदपर्यवसानम् । परार्थाभिधानं वृत्तिरिति सिद्धान्तादिति भावः । नन्विदमयुक्तम् अन्यपदा-र्थस्य प्रधानपदसमुदायशक्यत्वात् । तस्य प्राधान्यं चावयवाबोध्यप्रधानभूतान्यपदार्थबोधकत्वात् । अत एव वृत्तिलक्षणसङ्गतिरेकार्थीभावव्यवहारश्चात आह—अजहदिति । उपसर्जनत्वपदार्थेति । तथा च तदपि वाक्यं भङ्क्त्वैवं योज्यमिति भावः । इदं चोपसर्जनत्वमत्रैवेत्युक्तं प्राक् । पूर्वपदे तु तेनाङ्गीकारा-दाह—उत्तरेति । अपिस्तत्समुच्चायकः । नन्ववर्णान्तादङ्गात्परस्य सर्वनाम्नो विहितस्य ङेः स्मै इत्यर्था-ङ्गीकारान्नायं दोषोऽत आह मूले—न हीति । न चेत्यर्थः । तथा च तद्ग्रन्थे पूर्वपदग्रहणं व्यर्थं विनिगम-काभावेन पूर्वोत्तरपदयोस्तुल्यत्वादिति भावः । विनिगमकसत्तायास्तुल्यत्वं नास्तीति खण्डनकृन्मतं खण्डयति—न चेति । विशेषणेति । सुन्दरादिविशेषणेत्यर्थः । पक्षद्वयसाधारणं दोषमाह—विनीति । ननु प्रत्ययानां संनिहितपूर्वपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिस्तत्र तत्करणनियामिकेति नव्यन्यायमते

### सरला

पदद्वयेऽपि लक्षणौचित्याच्चेति । उत्तरपदस्य लक्षणा पूर्वपदं तात्पर्यग्राहकम् इति यथा तथैव पूर्वपदस्य लक्षणा उत्तरपदं तात्पर्यग्राहकमित्यपि वक्तुं शक्यमिति अस्यार्थो न तु पदद्वयात्मकसमुदाये लक्षणेत्यर्थोऽस्य समुदाये शक्तिमनङ्गीकृत्यैव लक्षणाचर्चाया युक्तत्वेन तत्र पदद्वये शक्तेर्वक्तुमशक्यतया तत्र लक्षणाया वक्तुमशक्यत्वात् । वस्तुतस्तु प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वमिति व्युत्पत्ति-स्तत्रोत्तरपदलक्षणायां विनिगमिका, किञ्च पूर्वपदलक्षणायां समुदायोत्तरविभक्तेः पूर्वपदप्रकृतिकत्वाभावेन

अपि चैवं गौणत्वे सर्वादीनां सर्वार्थवाचकत्वं नास्तीति स्वोक्त्या सह विरोधः स्यादिति यत्किंचिदेतत्।

यदपि व्याचख्युः—त्वं पिता यस्येत्यादौ विग्रहवाक्ये प्राप्ता संज्ञा निषिध्यते इति। तदपि न। विग्रहवाक्यं हि लौकिकमलौकिकं वा विवक्षितम्? नाद्यः। प्रक्रियावाक्येऽयं निषेधो न तु लौकिक इति कैयटग्रन्थविरोधात्, प्रकृतसन्दर्भगतपूर्वापरस्वग्रन्थविरोधाच्च। न द्वितीयः। तस्य युष्मद् सु पितृ सु इत्याकारकत्वेन त्वं पितेत्याकारकत्वायोगात्।

यदपि व्याचख्युः—नन्वतिसर्वादौ संज्ञा न प्रवर्तते त्वत्कपितृकादौ तु संज्ञा प्रवर्तत इत्यत्र किं विनिगमकन्तत्राह—अनङ्गकार्यत्वेनेति। अङ्गशब्दः समुदायपरः। तेनातिसर्वे इत्यत्राङ्गस्य संज्ञाऽपेक्षिता सर्वनाम्नोऽङ्गात् स्मायादिविधानादवयवमात्रस्य सत्यपि सर्वनामत्वे दोषाभावात्। समुदाये च समुदायार्थं प्रति सर्वादेरुपसर्जनत्वात् तदन्तस्य संज्ञा न भवतीति युक्तम्। इह तु अवयवमात्रस्य सा चिकीर्षिता न समुदायस्य, अवयवश्च स्वार्थमात्रप्रधान इति स्यात् प्रसङ्ग इति वैष-

शब्दरत्नम्।

चिन्त्याच, एकार्थीभाववादिभिस्तथा वक्तुमशक्यत्वाच्च। एवं च तद्घटकावयवानां सर्वनामत्वाभाव एवोचित इति दिक्। **स्वोक्त्येति**। एतत्प्रकरणस्थयेत्यर्थः।

**स्वग्रन्थेति**। तैरप्यलौकिक एव निषेधस्योक्तेरिति भावः।

भैरवी।

काऽस्तीत्यत आह—एकार्थीभावेति। तन्मते समुदायेन शक्त्यैव भवत्सम्मतलक्ष्यार्थस्य प्रतिपादनादिति भावः। तद्घटकेति। बहुव्रीहिघटकेत्यर्थः। उचित इति। तथा च बहुव्रीहाविति व्यर्थमेवेत्याह—दिगिति। स्वोक्तिर्न प्रकरणान्तरस्थेति विस्मृतिशङ्काऽपि न कार्येत्याह—एतत्प्रकरणेति।

पुनः प्रसादकृदुक्तिं खण्डयति मूले—यदपीति। तैरप्येति। प्रकाशकृद्भिरपीत्यर्थः।

भावप्रकाशः।

नायं दोषोऽत आह—एकार्थीभावेति। तन्मते समुदायशक्तेरेवसत्त्वेनावयवानामतत्त्वादिति भावः। **एवं चेति**। तेषामसर्वार्थकत्वे चेत्यर्थः। **तद्घटकेति**। बहुव्रीहिघटकेत्यर्थः। **उचित इति**। एवं च न बहुव्रीहाविति व्यर्थमेव। तदाह—दिगिति। प्रकरणान्तरस्थत्वे भिन्नपरतया विरोधाभावादाह—एतदिति। नन्विदं प्रकाशकृतैवोक्तमिति किमपूर्वमत आह—यदपीति। मूले। प्रकाशोक्तिरियम्। बहुव्रीहिशब्दस्तादर्थ्यात्ताच्छब्द्यमिति भाष्योक्तरीत्याऽलौकिकवाक्यपर इति स्वीकृतं तैः। अनयैव दिशा समासावयवयोरिति समासग्रहणमपि समासार्थवाक्योपलक्षकं, यद्वाऽवयवत्वमारम्भकत्वं विग्रहवाक्यगतत्वेनेति ध्येयमिति च तैरुक्तम्।

**तैरपीति**। प्रकाशकृद्भिरपीत्यर्थः। अत्र खण्डनकृत्—चिन्त्यमिदं मूलम्। यद्वाक्योपमर्देनायं बहुव्रीहिः क्रियते तस्मिन्बहुव्रीहिप्रकृतौ त्वं पिता यस्येत्यादिविग्रहवाक्ये प्राप्तेत्यादिप्रकाशोक्तोऽस्वत्समानार्थकविग्रहवाक्ये इत्यर्थकत्वेनादोषात्। अत एव यद्वाक्योपेति विशेषणं तैर्दत्तम्। भवताऽप्यलौकिके फलोक्त्यवसरेऽतिक्रान्तो भवकन्तमतिभवकानितिवदित्युक्तम्। तस्य च यथार्थं विनाऽनुपपत्तिरेवेति। तन्न। यथाऽतिक्रान्त इत्यलौकिकवाक्ये प्रवृत्तोऽकजतिभवकानिति समासे श्रूयते तथाऽत्रेति नार्थः, किं तु तेन ग्रन्थेन च दृष्टान्तद्वयमुच्यते इति प्रागुक्तत्वेनादोषात्। किं च समासार्थकथनं तत् नाकच्प्राप्तिविषयभूतविग्रहदर्शनं तस्यालौकिके प्राप्तत्वात्। एवं तु त्वया वक्तुमशक्यमिति स्पष्टमेवेति भेदात्। ननु

सरला।

तल्लक्षितार्थस्य विभक्त्यर्थेऽनन्वयापत्तिरित्यरुचेराह—**एकार्थीभावेति**।

र्थ्यमस्तीत्याशय इति । तदपि न । अङ्गाधिकारे तदन्तविधेः सर्वसंमतत्वेनावयवमात्रे सत्यपि सर्वनामत्वे दोषो नास्तीत्युक्तेर्व्याहतत्वात् । अङ्गाधिकारपरिभाषया स्मै स्यादिति स्वग्रन्थविरोधाच्च । अथायमाशयः—प्राक् प्रवृत्ताऽपि संज्ञा अर्थान्तरोपसंक्रमे सति गतेति । तर्हि अकजपि गच्छतु । ननु कार्यकालपक्षे स्मायाद्यर्थं पुनः संज्ञाऽपेक्षिता, सा च दुर्लभेत्याशय इति चेत ? अस्त्वेवम् । न त्वसौ प्रकृतग्रन्थार्थः । न्यासग्रन्थविसंवादेन 'इति न्यासकृन्मतम्' इति वाक्यशेषविरोधात् । न्यासग्रन्थस्त्वनुपदमेवोदाहरिष्यते ।

यदपि व्याचख्युः—अङ्गमप्रधानं बाध्यं तद्विरुद्धमनङ्गं बाधकमित्यर्थः । तथा च कप्रत्ययापवादत्वादकच् स्यादित्यर्थ इति । तदपि क्लिष्टं व्यर्थं च, न्यासग्रन्थासंमतं च । तथा हि, त्वत्कपितृको मत्कपितृक इति वृत्तिग्रन्थं व्याख्याय न्यास-

शब्दरत्नम् ।

**अर्थान्तरोपसंक्रमे सति गतेति ।** तेनातिसर्वायेत्यादौ न दोषः । **पुनः संज्ञा तु दुर्लभा,** संज्ञोपसर्जनानां निषेधात् । पाठात्पर्युदासेन तदन्तग्रहणेनापि न संज्ञा । अर्थान्तरसंक्रमात्पूर्वन्तु स्मैभावस्य न प्रवृत्तिः । अकच्प्रवृत्तिस्तु ततः प्रागस्त्येवेति तन्निवृत्तये इदं सूत्रमित्यभिमानः । **गच्छत्विति ।** निमित्तापायपरिभाषयेति भावः । **दुर्लभेति ।** उपसर्जननिषेधादिति भावः ।

**इत्यर्थ इति ।** अनङ्गकार्यत्वेनेत्यस्यार्थ इति भावः । **क्लिष्टमिति ।** तत्त्वं तु स्पष्टमेव । न्यासग्रन्थासंमतिमुपपादयन्ननङ्गकार्यत्वेनेत्यस्य वैयर्थ्यमुपपादयति—**तथा हीति ।**

भैरवी ।

पुनरिति । **समाससंज्ञोत्तरकालमित्यर्थः ।** न संज्ञेति । **न संज्ञाकार्यमित्यर्थः । समुदायघटकस्य तदन्तस्य चेति** शेषः। न प्रवृत्तिरिति । **लुग्विषयतायाः सत्त्वादिति** शेषः।**अभिमानपदोपादानसूचितामरुचिम्प्रकटयति**—निमित्तापायेति । एतेन यत्सूत्रारम्भस्य फलं 'त्वत्कपितृकः' इत्यादिरूपसिद्धिरिति, सा अधुनाऽपि जातेति सूत्रवैयर्थ्यमेवेति भावः। प्राक् प्रवृत्ता संज्ञा गतेति न ब्रूमो येन भवदुक्ता प्रतिबन्दिः स्यादित्याशयेन शङ्कते मूले—ननु कार्यकालेति । दुर्लभेति । अतिसर्वायेत्यादाविति शेषः ! मूले—विरोधादिति । अनङ्गकार्यत्वेनेति हेतूक्त्याऽऽनर्थक्यापत्तेश्चेत्यपि बोध्यम् । तत्त्वम्—**क्लिष्टत्वम् ।**

भावप्रकाश ।

भवत्वेवं प्रकाशोक्तिस्तु तथा युक्तैवात आह—यदपीत्यादि । तदुक्तिरेवेयम् । मूले विरोधाच्चेति चेनाङ्गशब्दस्य समुदाये निर्बीजलक्षणाश्रयणदोषसमुच्चयः । मूले प्रागिति । अर्थान्तरसंक्रमादिति शेषः । **पुनरिति।** तत्र स्मायाद्यर्थमिति भावः । **न संज्ञेति ।** समुदायस्य तदन्तस्येति भावः । **न प्रवृत्तिरिति ।** नैव प्रवृत्तिरित्यर्थः, द्वितीयान्तत्वादिति भावः । **ततः प्राक्**—अर्थान्तरोपसंक्रमात्प्राक् । अभिमानपदसूचितारुचिमाह—**निमित्तेति ।** तथा च त्वत्कपितृक इत्यादिसिद्ध्या सूत्रमेव व्यर्थम् । तदनित्यत्वं तु ज्ञापकान्तरेणापि सुसाधमिति भावः । **दुर्लभेतीति ।** अतिसर्वायेत्यादाविति भावः । मूले विरोधादिति । किं चानाङ्गकार्यत्वेनेति हेतूक्त्यानर्थक्यापत्तेः। नन्वेवं नायं दोषः । तत्पुरुषवाक्यगतसर्वाद्यभिप्रायेणावयवमात्रे सत्त्वमीत्यादिग्रन्थः । एवं च अङ्गाधिकारे तदन्तविधावपि व्याघाताभावः स्पष्टः । अङ्गस्य समासस्योक्तरीत्या सर्वनामान्तत्वाभावात् । अङ्गाधिकारपरिभाषया स्मै स्यादित्यादिग्रन्थस्तु बहुव्रीह्यन्तःपातिनामपि सर्वादीनां सर्वनामसंज्ञानिवृत्तये सूत्रमिति वदतां प्राचां मतं दूषयितुं तद्रीत्याऽतिसर्वायेत्यादावतिप्रसङ्गदानाय प्रवृत्तोऽङ्गस्य सर्वनामान्तत्वात्समञ्जस इति तद्विरोधस्याप्यभाव इत्येवं तत्तात्पर्यस्य खण्डनकृतैवोक्तत्वादत आह मूले—यदपीति । तदुक्तिरेवेयम् । मूले—बाधकमित्यर्थ इति । तथा च तादृशं कार्यमकच्च तदाह—तथा चेति। **इत्यर्थ इति ।** द्वितीयप्रतीकम् । **स्पष्टमेवेति ।** अत्र शास्त्रे तदप्रसिद्धेरिति भावः। **वैयर्थ्यमिति ।** तथा-

कार उज्जग्राह—ननु च अन्वर्थसंज्ञाकरणादेवात्र संज्ञानिरासे कृतेऽकज् न भविष्यति। न ह्यत्र सर्वार्थता संभवति विशेषविषयत्वात्। नैतदस्ति। समुदायो हि विशेषे वर्तते पूर्वपदं तु सर्वार्थताया अनपेतमेव। भवतु तर्हि अनयोरनन्तरयोरेतत्सूत्रविषयता। प्रियविश्वायेत्यादेस्तु नोपपद्यते। न हि प्रियविश्वादयः सर्वेषां नामानि। नापि तदवयवभूतानां विश्वादिशब्दानां किञ्चित्सर्वनामकार्यमुपपद्यते। स्मैप्रभृतीनामङ्गकार्यत्वात्। विश्वादिशब्दानामनङ्गत्वात्। एवं मन्यते—त्वत्कपितृको मत्कपितृक इत्यत्राकज्मा भूद् इत्येतदर्थं तावदेतदारब्धव्यम्। प्रियविश्वायेत्यादावपि विस्पष्टार्थं भविष्यतीति। अनेन हि न्यासग्रन्थेनाङ्गसंज्ञाऽनपेक्षत्वमेवार्थो लभ्यते, स च स्वोत्प्रेक्षितव्याख्यायां दूरोत्सारित एव।

यदपि व्याचख्युः—यद्यपि सूत्रवार्त्तिककृतोरप्येतन्मतं तथाऽपि न्यासकृता विवृतत्वाद् न्यासकृन्मतमित्युक्तमिति। तदपि स्थवीयः, वार्तिककृता अस्यार्थस्यास्पृष्टत्वात्। न्यासकृता समासे कृते सतीत्यादिवदता त्वदुक्तार्थस्य दूरत्यक्तत्वेन तद्विवृतत्वाभावाच्च।

यदप्याहुः—न्यासकृच्छब्देन सूत्रकार एव विवक्षित इत्यादि। तदपि न। सूत्रकारमते बहुव्रीहावित्यादिपूर्वग्रन्थेन सह विरोधात्। भाष्यकारमते त्विति ग्रन्थे-

शब्दरत्नम्।

**विशेषविषयत्वादिति।** अन्यपदार्थविशेषणत्वादित्यर्थः। **समुदायो हीति।** तस्यैव तद्विशेषणत्वमित्यभिमानः। **अनन्तरयोरिति।** त्वत्कपितृकमत्कपितृकयोरित्यर्थः। **अङ्गसंज्ञाऽनपेक्षत्वमेवार्थ इति।** एवं चानुपदोक्ते यदपीति पक्षे कप्रत्ययापवादत्वस्याकचि प्रसिद्धत्वादेवोक्तरीत्या तदुक्तिर्व्यर्थेति बोध्यम्।

**इत्यादि वदतेति।** वृत्तिग्रन्थव्याख्याऽवसरे इति शेषः।

भैरवी।

**विशेषविषयत्वमुपपादयति—**अन्यपदार्थेति। तस्यैव—समुदायस्यैव। वृत्तिग्रन्थेति। पूर्वोक्तरीत्या सूत्रस्यार्थद्वयमुक्त्वा प्रियविश्वायेत्याद्युदाहृत्य 'त्वत्कपितृको' 'मत्कपितृक' इत्यत्राकज्न भवतीति वृत्तिग्रन्थेत्यर्थः।

ननु यत्किञ्चित्पदोपादानेन तृतीयेत्याद्युच्चारणेन विहितत्वम्प्रतिपदोक्तत्वङ्कर्तृकरण इत्यभावप्रकाश।

ऽर्थवैयर्थ्ये एतस्यापि तत्त्वस्य फलितत्वादिति भावः। **विशेषणत्वादिति।** तत्त्वेनैवोपस्थितेरित्यर्थः। तस्यैवेत्यनेन पूर्वपदव्यावृत्तिः। अभिमानपदसूचितारुचिस्तु प्रागुक्तैव। **त्वत्केति।** अत एव त्वत्केत्यादिवृत्तिग्रन्थं व्याख्यायेत्युक्तम्। मूले यत्तु यदपीत्याद्युक्तिद्वयमनूद्य तन्न। वार्त्तिककृतोऽप्यस्यार्थस्याप्रतिषिद्धत्वेनानुमतत्वात्, गोनदीयस्त्वाहेति तुशब्देन प्रागुदाहृतवाक्यावयवसर्वनामत्वनिषेधस्य सूत्रवार्तिककृदनुमतेः स्पष्टत्वाच्च, न्यासग्रन्थान्तर्गतसमासपदस्य तत्प्रकृतिवाक्यार्थकत्वेन व्याख्यातृभिर्व्याख्यातत्वेनोक्तार्थस्य तद्विवृतत्वसम्भवाच्च, पूर्वग्रन्थास्वरसप्रवृत्तप्रकृतग्रन्थे दोषलेशाभावात् द्वितीयोक्तेरयुक्तत्वाच्चेति खण्डनकृत्। तदसत्। वार्त्तिककृतस्तथेष्टत्वे तदनुक्तौ न्यूनतापातात्। तुशब्दापाठाच्च समासपदस्य तत्परत्वेऽपि कृते सतीत्याद्यक्षराननुगुणत्वाच्च पूर्वग्रन्थारुचिप्रवृत्तत्वेऽपि मूलोक्तदोषानुद्धाराच्च। तद् ध्वनयन्नाह—**वृत्तिग्रन्थेति।** सूत्रस्यार्थद्वयं संलिख्य प्रियविश्वायेत्याद्युदाहृत्य इह चेत् त्वत्कपितृको मत्कपितृक इत्यकच् न भवतीत्युक्तवृत्तिग्रन्थेत्यर्थ इत्यलम्।

ननु यत्किञ्चित्पदोच्चारणेन तृतीयेत्युल्लेखेन वा विहितत्वं प्रतिपदोक्तत्वं कर्तृकरणे कृतेत्यस्यापि दुर्वा-

न तस्य विच्छिन्नत्वाच्च । तस्मादिह प्राचः प्रक्रियाग्रन्थास्तद्व्याख्यातृग्रन्थाश्चापातरमणीया एवेत्यास्तां तावत् ।

यदि तु प्रक्रियाग्रन्थोऽपि कथंचिद्भाष्याविरोधेन व्याख्येय इत्याग्रहस्तर्हीत्थं व्याख्यायताम्-ननु प्रियविश्वायेति गौणतया गतार्थम् । अतो निष्कर्षमाह—सूत्रकारमत इति । बहुव्रीहाविति । चिकीर्षिते सतीति शेषः । गौणत्वमात्र इति । मात्रशब्दोऽवधारणे, गौणत्वे एव न तु ततः प्राक् । तथा च सूत्रं प्रत्याख्यातमिति भावः । न्यासकृन्मतस्य तु अतिफल्गुत्वात् स्वरूपव्याक्रियैव पराक्रियेत्याशयेनाह—त्वत्कपितृक इत्यादि । एतच्च प्राचीनतत्तद्ग्रन्थपरिशीलनशालिभिर्विभावनीयम् । प्रकृतमनुसरामः । संज्ञाकार्यमिति । सर्वनामसंज्ञाप्रयुक्तं स्मायादिकमित्यर्थः । अन्तर्गणकार्यमिति । "अद्ड्डतरादिभ्यः" "त्यदादीनामः" "तदोः सस्सौ" इत्यादिकमित्यर्थः ।

तृतीयासमासार्थेति । इह "पूर्वसदृश"इति विहितः समासो गृह्यते प्रतिप-

---

शब्दरत्नम् ।

प्रतिपदोक्तत्वादिति । यदन्तत्वमादाय सर्वनामत्वप्राप्तिस्तमुच्चार्य विहितत्वाद् वाक्यमपि तत्सम्बन्ध्येव प्रत्यासत्तेरिति भावः । तेन करोतिद्वारा सामर्थ्ये मासेन कृताय पूर्वस्मै मासपूर्वस्मै इति समासे तत्सम्बन्धिनि वाक्ये च न । तत्र वाक्यस्य प्रतिपदोक्त-

भैरवी ।

स्यापि दुर्वारमत आह-यदन्तत्वमिति । तेन त्वयकासदृशस्त्वकत्सदृश इत्यत्र निषेधो न । अनेनायं निषेधोऽपि समुदायस्येति भाष्यीयसिद्धान्तार्थो ध्वनितः "तृतीयासमासे"इति सूत्रे । "विभाषा दिक्"इति सूत्रात्समास इत्यनुवृत्त्यैव सिद्धे पुनस्तत्र समास इत्यस्योपादानमसमास इति पदच्छेदाय । तेन समासभिन्नस्य समाससदृशस्य लौकिकविग्रहवाक्यस्य लाभ इत्याशयेनाह-वाक्यमपीति । उभयोर्व्यावृत्तावाह-तेनेति । इति समास इति । "तृतीया तत्कृत"इति सूत्रविहितसमास इत्यर्थः । नत्वत्र "पूर्वसदृश"इत्यस्य प्रवृत्तिः, तस्य यत्र हेतौ तृतीया तत्र चरि-

भावप्रकाश ।

रमत आह—यदन्तत्वेति । तेन त्वयका सदृशस्त्वकत्सदृशः सर्वकेण सदृशः सर्वकसदृश इत्यादौ न । अनेन समुदायस्यैवायं निषेधो नावयवानामिति भाष्यसिद्धान्तः सूचितः । एतेन चिन्त्यमिदमनवधानात् । तथा हि, "विभाषा दिक्" इति सूत्रात् समास इत्यनुवृत्त्येष्टसिद्धे पुनः समासग्रहणात्समासार्थवाक्येऽपीत्यर्थलाभेऽपि तादृशवाक्यमत्र लौकिकमेव नालौकिकं निषेधवैयर्थ्यापत्तेः । तच्च प्रतिपदोक्तसमासग्रहे सत्येव सम्भवति । अन्यथा न त्वत्कृतमित्यादि कर्तृकरणतृतीयासमासप्रकृतिभूतालौकिके वाक्ये अकज्भावाय संज्ञानिषेधसम्भवात् । एवं च यावत्प्रतिपदोक्तसमासग्रहणं न सिद्धं तावदलौकिकवाक्यस्यैव तादर्थ्येन ग्रहणं स्यादिति त्वयकाकृतमिति लौकिकवाक्योदाहरणमनुपपन्नमिति खण्डनकृदुक्तमपास्तम् । तेन हेतुना तत्सिद्धेः अनुवृत्त्यैव सिद्धेः पुनः समासग्रहणादसमासे इति च्छेदेन तद्भिन्नतत्सदृशलौकिकवाक्यस्यैव ग्रहणाच्च । अत एवाह—वाक्यमपीति । उभयोर्व्यावर्त्ये आह—तेनेति । समासस्य वाक्यस्य च तादृशस्य विवक्षणेनेत्यर्थः । पूर्वस्मा इति । परिनिष्ठितविभक्तिसमासाभिप्रायमिदम् । समासे इति । "तृतीया तत्कृत" इत्यनेन । कृतग्रहणसामर्थ्यात्करोतिद्वारासामर्थ्ये तत्प्रवृत्तेः । पूर्वसदृशेति सूत्रं तु हेतुत्वादितृतीयायां मिथोऽन्वये चारितार्थ्येन करोतिद्वारा सामर्थ्ये न प्रवर्तत इति भावः । तत्र—सूत्रे तयामध्ये

पदोक्तत्वात् , न तु "कर्तृकरणे कृता" इति। तेन त्वयका कृतमित्यत्र निषेधो न।

समुदायस्येति। तत्रैव द्वन्द्वशब्दस्य मुख्यत्वान्न तु द्वन्द्वे यानि सर्वादीनीति-सम्बन्धः,कारकाणां क्रिययैवान्वयात्। न च द्वन्द्वे विद्यमानानि यानीति सम्बन्धः। विद्यतिक्रियाऽध्याहारे गौरवात्।निषेद्ध्यायाभ वतिक्रियाया एव प्राधान्येन तदन्वयस्यैव न्याय्यत्वाच्च। किं च त्यदादीनां द्वन्द्वो नास्ति एकशेषेण बाधितत्वात्। ततः

शब्दरत्नम्।

समाससम्बन्धिन एव ग्रहणे फलान्तरमप्याह–त्वयकेति। तृतीयासमासमात्रस्य ग्रहणे हि तदर्थे वाक्ये यत्र क्वापि स्थितस्य सर्वादेः संज्ञा नेत्यर्थेऽत्रापि स्यादिति भावः।

न्याय्यत्वाच्चेति। किं चावयवमात्रनिषेधे "प्रयोजनं सर्वनामाव्ययसंज्ञायाम्"इति "येन विधिः" इति सूत्रस्थभाष्यप्रामाण्येन तदन्तस्य संज्ञायां वर्णाश्रमेतराणामिति भाष्यप्रयोगानुपपत्तिः। न ह्यत्र सर्वार्थवाचकत्वं नास्तीति वक्तुं शक्यं, मानाभावात। लोकव्युत्पत्तिसिद्धस्या तस्यानेन निषेद्धुमशक्यत्वात्। नापि तस्य सर्वादिपाठो निषिध्यत इति युक्तम्। तस्या-

भैरवी।

तार्थतया करोतिद्वारा सामर्थ्यं न प्रवृत्तिरिति भावः। तत्र–सूत्रे, तयोर्मध्य इत्यर्थो वा। तदर्थे–समासार्थे। मूले यदुक्तन्याय्यत्वादिति तद्बलस्यावयवनिषेधे फलाभावस्य किञ्चेत्यादिनोपपादनेऽपि यत्फलादिति तस्यानुपपादनान्न्यूनतापरिहारायाह–किञ्चावयवेति। नत्वनेन निषेधात्सर्वार्थवाचकत्वं नास्तीति ब्रूम इत्यत आह–न ह्यत्रेति। मानाभावादिति। संज्ञानिषेधेऽपि स्वीयसर्वार्थवाचकसर्वादित्वानपायादिति भावः। ननु तस्यैव निषेधः किन्न स्यादत आह–लोकेति। तस्य–सर्वार्थवाचकत्वस्य। तस्य–द्वन्द्वान्तर्गतेतरशब्दस्य। तस्य–पाठस्य। यद्यपीत्यादिना

भावप्रकाश।

वा। फलान्तरमपीति। एतेन प्रतिपदोक्तः समासो गृह्यत इति प्रतिज्ञायते न त्वयकाकृतमित्यत्र वाक्ये निषेधो नेति फलोक्तिरनेकधाऽसम्बद्धेति परास्तम्। यद्यपि प्रकाशानुवादतया मूलकृतो न दोषस्तथाऽपि परमकारुणिकतया तमपि ग्रन्थं योजयितुं मूलकृतोऽज्ञानं निरसितुं च तदाशयमाह—तृतीयेति। मात्रं कार्त्स्न्ये हिस्त्वर्थे। नन्वेवं त्वकत्कृतमित्यादौ दोष इति चेन्न। समुदायनिषेधस्य भाष्यकृतोऽभिमतत्वेन त्वद्रीत्या तृतीयातत्कृतेति समासे पूर्वोदाहृतेऽतिप्रसङ्गेऽप्यत्रानतिप्रसङ्गात्। अस्य तदन्तत्वाभावा.। वाक्ये निषेधस्त्ववयवस्यैव स चेदानीं प्रत्यासत्त्यभावेन सर्वत्र; तदाह—यत्र क्वापीति। एतेन मूलानुयायिकौस्तुभरत्नाकरदण्डचादयः परास्ताः।

मूले न्याय्यत्वाच्चेत्यन्तेन न्यायबलस्य किञ्चेत्यादिनाऽवयवनिषेधे फलाभावस्य चोपपादनेऽपि फलबलानुपपादनात्तदुपपादयितुं खण्डनकारोक्तिं खण्डयितुं चाह—किञ्चावयवेति। मात्रपदेन समुदायव्यावृत्तिः। इत्थं हि तदाकूतम्। अवयवस्यैव निषेधः। 'सर्वादीनि सर्वनामानि'नेत्यनयोरनुवर्त्तनेन द्वन्द्वे सर्वादीनि सर्वनामानि न भवन्तीति वचनव्यक्तिलाभे सर्वाद्यधिकरणकनिषेधस्यैव लाभादनन्यगत्या विद्यमानानीत्यध्याहाराङ्गीकारात्, भूतले देवदत्तो न पचतीत्यत्र भूतलस्येवेहापि द्वन्द्वस्याध्याहारं विनैवान्वयाच्च। समुदायनिषेधे तु अवयवस्य तत्त्वात्तदन्तविधिना सुट्प्रसङ्गः। न चैवमपि संज्ञायां तदन्तविधेः समुदायस्य सर्वाद्यन्तत्वेन तत्त्वात् स दुर्वार एवेति वाच्यम्। तत्र तदन्तविध्यभावस्य प्रागेवोक्तत्वात्। एवं च द्वन्द्वे यानीत्यादिमूलं चिन्त्यमिति। संज्ञायामिति। सर्वार्थवाचकसर्वाद्यन्तत्वात्। तथा च सुडापत्तिस्तथा च तत्सामर्थ्यात्तदभावकल्पनापेक्षया स पक्ष एवोचित इति भावः। एतेन तदन्तविध्यभावस्य प्रागेवोक्तत्वादिति तदुक्तं निरस्तम्। इति भाष्येति। एतत्सजातीय"विभाषादिक्समासे" इत्यादिसूत्रस्थदक्षिणोत्तरपूर्वाणामिति।भाष्यप्रयोगेत्यर्थः। नास्तीति। अनेन निषेधादिति भावः। मानाभावादिति। तस्य संज्ञानिषेधेऽपि सर्वार्थवाचकसर्वादित्वानपायादित्यर्थः। ननु तस्यैव निषेधोऽत आह—लोकेति। तस्येति। सर्वार्थवाचकत्वस्येत्यर्थः। प्रधानानुरोधेन षष्ठी। तस्येति। द्वन्द्वा-

प्राचीनास्त्वदन्तास्तत्र काकचोर्न विशेषः । न च दक्षिणोत्तरपूर्वाणामित्यत्रेष्टमपि पुंवद्भावं निषेद्धुमिदं किं न स्यादिति वाच्यम् । "सर्वनाम्नो वृत्तिमात्र" इति मात्रग्रहणं हि क्वचित्सर्वनामत्वेन दृष्टानां सम्प्रति संज्ञाऽभावेऽपि पुंवद्भावार्थम् । अत एव दक्षिणपूर्वायै इत्यत्र संज्ञाऽभावेऽपि पुंवद्भावः । तस्माद् न्यायबलाद् फलबलाच्च समुदायग्रहणमेवोचितम् । यद्यपि त्वच्छब्दस्तान्त इति पक्षेऽवयवनिषेधेऽपि फलं सुवचम् , तथाऽपि शास्त्रस्याल्पविषयता स्याद् न्यायश्च विरुध्येतेति भावः । सुद्प्रसङ्ग इति । वर्णाश्रमेतराणामित्यादाविति भावः । न च

---

शब्दरत्नम् ।

ऽप्रक्रान्तत्वादविधेयत्वाच्च । न च निषेधवैयर्थ्यम् । अवयवकुत्साबोधकाकज्व्यावृत्त्या चारितार्थ्यात् । तदेव ध्वनयन्नाह—फलबलाच्चेति । फलं सुवचमिति । तथा दक्षिणोत्तरपूर्वकाणामित्यादाववयवनिषेधेन कप्रत्यये समुदायसंज्ञाभावोऽपि फलम् । द्वन्द्वावयवमात्रे सुन्दरादिविशेषणान्वयाभाववत् कुत्सादिविवक्षाया अभावः, समुदाये तद्विवक्षायान्तु समुदायोत्तरप्रत्ययेन तदुक्तेर्नावयवात्तदुत्पत्तिरिति चिन्त्यमेतत् । समुदायनिषेधे तु द्वन्द्वस्य संज्ञिनोऽधि-

भैरवी ।

मूलोक्तम्प्रयोजनङ्खण्डयति—द्वन्द्वावयवेत्यादिना । मात्रपदं कात्स्न्यें । तेन समाहारेतरेतरयोगयोः संग्रहः । अभाव इति । उभयत्र समूहस्य विशेष्यतयाऽवयवस्य तद्विशेषणत्वेन पदार्थैकदेशत्वान्न तत्र विशेषणान्वय इति भावः । तद्विवक्षायाम्—कुत्साद्यर्थान्वयविवक्षायाम् । तदुक्तेरिति । अवयवगतकुत्सादेरप्युक्तेरित्यर्थः । एवञ्च 'उक्तार्थानामप्रयोगः' इति न्यायेनावयवेभ्यस्तदुत्पत्तिर्नेति भावः । यद्ययम्प्रकारो भवता नाद्रियते, तदा भवन्मते प्रत्येकङ्कप्रत्ययोऽपि स्यात् । चिन्त्यमेतदिति । शास्त्रस्याल्पविषयता स्यादिति कथनेन परोक्तफलस्य स्वीकरणमिति यत्तच्चिन्त्यमित्यर्थः । त्वच्छब्दस्योक्तरीत्या तान्तस्य सत्त्वमस्तु, तथाऽपि तस्य सर्वादौ पाठे प्रमाणाभावः । बहूनामसम्मतश्च सः । एवञ्चावयवनिषेधे फलाभाव इत्यपि बोध्यम् । ननु यद्ययं द्वन्द्वात्मकसमुदायस्यैव सर्वनामसंज्ञानिषेधस्तर्हि 'द्वन्द्व' इति सप्तम्यनुपपन्नेत्यत आह—समुदा-

भावप्रकाश ।

न्तर्गतेतरादिशब्दस्येत्यर्थः । तदेवेति । भाष्यप्रयोगोपपादनरूपफलमेवेत्यर्थः । द्वन्द्वावयवमात्रे इति । अनेन समाहार इवेतरेतरयोगेऽपि साहित्यस्य विशेष्यता सूचिता । अभाव इति । एकार्थीभाववशादिति भावः । तत्—कुत्सादि । तदुक्तेरिति । अवयवगतकुत्सादेरप्युक्तेरित्यर्थः । तथा चोक्तार्थत्वात्तेभ्यः पृथक् तदनुत्पत्तिः । अन्यथा तत्र प्रत्येकं कप्रत्ययोत्पत्त्यापत्तिः । तथा चाशङ्कैवायुक्ता । अत एव पूर्वं वैलक्षण्यसूचकस्तुः प्रयुक्त इति भावः । चिन्त्यमेतदिति । किञ्च त्वच्छब्दस्य तादृगर्थकस्य सत्त्वेऽपि तस्य तत्त्वे मानाभावाद्, बहुसम्मतत्वाच्च । एवं चावयवनिषेधे फलाभावः । एतेन न बहुव्रीहाविति वद् द्वन्द्वे चिकीर्षिते इति अस्याप्यर्थ इति कस्यचिदुक्तिस्तदनुयायिमन्दोक्तिश्च, एतेनालौकिकप्रक्रियावाक्ये एकार्थीभावकल्पनातः पूर्वमनुपसर्जनत्वादेः सत्त्वेन प्रथमोपस्थितान्तरङ्गस्वपदार्थमात्रापेक्षत्वादन्तरङ्गत्वात्कुत्सादिविवक्षायाः कर्तुं शक्यत्वेन प्राप्ताकज्वारणायावयवस्यैव निषेध इति सप्तमीनिर्देशश्चरितार्थ इति यथाश्रुतमेव सम्यगिति चिन्त्यमेतदिति चिन्त्यमित्युक्तिश्चापास्ता । फलाभावात्; अन्त्ये मूलोक्तदोषापत्तेश्च । तस्मात्समुदायस्यैव निषेधः । अत एव विभाषा जसीत्यत्र भाष्ये उक्तम्—अकज् हि न भवतीति । समुदायनिष्ठकुत्साबोधकः स नेति तदर्थः । कृताकचा समासे उक्तरीत्या विकल्प एव । समुदायकुत्साविवक्षायां के तु न विकल्पः, द्वन्द्वस्य सर्वाद्यन्तत्वाभावात् । परश्चेत्यनेन तस्यापि द्वन्द्वावयवत्वबोधनादिति दिक् । नन्वेवं सप्तम्यनुपपत्तिरत आह—समुदायेति । संज्ञिन इति । तथा च षष्ठी उचितेति भावः । अधिकरणत्वेति । सर्व-

शब्दरत्नम् ।

करणत्वविवक्षया सप्तमी बोध्या । यद्वा, इयं सप्तमी प्रथमार्थे ।

"अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ ।"

इति भाष्योक्तैतत्प्रकरणविषयस्मृत्यन्तरेण तद्विषये "न बहुव्रीहौ" इत्येतत्साहचर्येण वा एतत्प्रकरणस्थसप्तमीनिर्देशानां तदर्थकत्वौचित्यात् । किं च "विभाषा जसि" इत्यनेन फलाभावादवयवनिषेधाभावेन तत्साहचर्येणार्थाधिकारानुरोधेन च "द्वन्द्वे च"

भैरवी ।

यनिषेधे त्विति । तद्विषयेति । भाष्योक्तिविषयेत्यर्थः । तदर्थकेति । प्रथमार्थकत्वेत्यर्थः । 'द्वन्द्वे च' इत्यस्य समुदायस्य संज्ञाव्यावर्तकत्वम्प्रकारान्तरेण साधयति—किञ्चेति । फलाभावादिति । शीभावे कर्तव्य एव तेन विकल्पविधानं, शीभावस्य च सर्वनाम्नो विहितस्य जसः स्थाने प्राप्तिरिति समुदायस्य तेन विकल्पेन संज्ञाविधानम् । निषेधस्य विकल्पे विधिविकल्पस्य फलितत्वेन परममूले उक्तसंज्ञा वा स्यादित्युक्तम् । अत एवात्र निषेधाभावेनेत्युक्तिसङ्गतिरिति भावः । तत्सा-

भावप्रकाश ।

-नामसंज्ञा वर्त्तो तद्द्वाराऽभावप्रतियोगिसत्तायामन्वय इति भावः । लाघवात्मकमूलमतमाह—यद्वेति । प्रकरणेति । अविशेषादिति भावः । ननु यत्र पाठस्तत्रैव श्रुत्या विनियोगेन कथं प्रकरणविषयत्वमत आह—तद्विषये इति । अन्यथा जातस्य मुक्तवन्तमिति न्यायेन निवारणासम्भवात् तस्य यथा वैयर्थ्यमुक्तम् एवमस्यापि तत्त्वापत्तिः । एवं च प्रागुदाहृतभाष्योदाहरणसङ्गतिरतः प्रथमार्थे सप्तम्येवोचिता, न तु स्वार्थे इति भावः । आवश्यकत्वमस्याह—किञ्चेति । फलाभावादिति । जसाधारे एव शीभावे विकल्पविधानाद्

सरला ।

इयं सप्तमी प्रथमार्थे इति । "छन्दोवत्सूत्राणि भवन्ति" इत्यभियुक्तोक्तेः सूत्राणां छन्दोवत्त्वात्तत्र च "व्यत्ययो बहुलम्" इत्यनेन प्रथमार्थे सप्तमीविधानादिति भावः । वस्तुतस्तु "आकाशे त्रिदिवे नाकः" इत्यादौ सप्तम्या वाचकत्वादिरूपार्थकत्वदर्शनादत्रापि वाचकत्वं सप्तम्यर्थं स्वीकृत्य वाचकतासम्बन्धेन द्वन्द्वसमासे सर्वनामपदं पाणिनिसङ्केतसम्बन्धेन न तिष्ठतीत्यर्थस्वीकारेण सामञ्जस्ये प्रथमार्थे सप्तमीस्वीकारो वृथेति । किञ्च प्रथमार्थे सप्तमीस्वीकारे द्वन्द्वसमासः सर्वनामपदाभिन्नो नेत्यर्थः । संज्ञास्थले सर्वत्रापि शब्दार्थयोस्तादात्म्याङ्गीकारेण वाच्यवाचकयोरभेदान्वयो भवति । अत एव "वृद्धिरादैच्" "अदेङ्गुणः"

रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः ।

इत्यादिप्रयोगाः सङ्गच्छन्ते । तच्च तादात्म्यं विकल्पात्मकज्ञानविषयत्वरूपमेव । विकल्पज्ञानं तु "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति चरके पतञ्जलिनोक्तम् । शब्दज्ञानमात्रेणानुपाती बुद्धावनुपतनशीलो वस्तुशून्यः बाह्यार्थरहितः विशेषेण कल्प्यते इति विकल्पो बुद्धिपरिकल्पित इति तदर्थः । तेन न मुखे अग्न्यादिशब्देन दाहादिप्रसङ्ग इति तादात्म्यस्य विकल्पज्ञानेनोपपादने गौरवं क्लेशश्चेति बोध्यम् ।

मूले सुट्प्रसङ्ग इति । वस्तुतस्तु "न बहुव्रीहौ" "तृतीयासमासे" "द्वन्द्वे च" इत्यादिसूत्रैस्तद्घटकानि सर्वादीनि न भवन्तीत्यर्थस्वीकारेण संज्ञोपसर्जनानामिव सर्वादित्वमेव निषिध्यते न तु सर्वनामसंज्ञा । तथा च 'वर्णाश्रमेतराणाम्' इत्यादौ इतरशब्दस्य सर्वादित्वनिषेधे तदन्तस्य सर्वनामसंज्ञाया दूरापास्तत्वेन तदन्तविधिपक्षेऽपि न सुट्प्रसङ्ग इति बोध्यम् ।

मूले जारमिति । न च शरदादौ 'जराया जरस् च' इत्यन्तर्गणसूत्रस्य वैयर्थ्यात्तेन 'तद्धिते चेत्समासान्त एव' इति नियमेनैव 'जारम्' इत्यादौ दोषवारणाद् विभक्ताविति व्यर्थमिति वाच्यम्, जराशब्दात् क्यजन्तात्क्विपि "क्यचि च" इतीत्वे अल्लोपयलोपयोः कृतयोः 'जरी' इत्यादौ अल्लोपस्य "अचः परस्मिन् पूर्वविधौ" इति स्थानिवद्भावेनाच्परकत्वाद् जरसादेशापत्तेः, जराशब्दादाचारक्विबन्तात्त्यदादाविडागमे आतो लोपं बाधित्वा परत्वाज्जरसादेशापत्तेश्च । मूले विशेष्यमिति । विशेष्यमेवेत्यर्थः । एवञ्च पदाधिकारेऽङ्गाधिकारे उत्तरपदाधिकारे चासति प्रमाणान्तरे पदस्य अङ्गस्य उत्तरपदस्य च विशेष्यत्वमेवेतीयं परिभाषा

### शब्दरत्नम् ।

इत्यस्याप्यवयवनिषेधकत्वाभावः । एतेन सप्तमीनिर्देशसामर्थ्याद् बहुलक्ष्यसंस्कारानुरोधाच्च विद्यमानानीत्यध्याहारेण समुदायस्यावयवानां चायं निषेधः । तत्र समुदायस्य व्यपदेशिवद्भावेन निषेधः । आधाराधेयभावेऽपि व्यपदेशिवद्भावस्य "अनद्यतने लङ्" "तुल्यास्य" "प्रत्ययस्थात्" इत्यादिसूत्रस्थभाष्यादौ स्पष्टत्वात् । तत्फलं च वर्णा-

### भैरवी ।

हचर्येणेति । "विभाषा जसि"इत्युत्तरसूत्रसाहचर्येणेत्यर्थः। सूत्रान्तरसाहचर्यं न व्यवस्थानियामकमित्याशयेनाह—अर्थाधिकारेति । खण्डनकृदुक्तिं खण्डयति–एतेनेति । "अकच्स्वरौ तु कर्तव्यौ"इत्युक्तं किञ्चेत्याद्युक्तप्रकारद्वयेनेत्यर्थः । सामर्थ्यादिति । यदि समुदायस्यैव संज्ञानिषेधोऽभिप्रेतः स्यात्तदा 'द्वन्द्वश्च'इत्येव वदेदिति भावः। विद्यमानानीति। अत्र बहुवचनं समूहावयवाभिप्रायम् । ननु द्वन्द्वे द्वन्द्वस्य वर्तमानत्वं कथम् अभेदे आधाराधेयभावविरहादत आह–तत्रेति। तयोर्मध्ये इत्यर्थः । ननु भष्भावादौ व्यपदेशिवद्भावस्यावयवान्वयविभावस्याश्रयणस्थल एव प्रसिद्धिरत आह–आधाराधेयेति । अनद्यतन इत्यादि। आद्ये "अद्य ह्योऽभुक्ष्महीत्यत्र व्यामिश्रे लुङेव यथा स्यादित्येवमर्थमनद्यतन इत्यत्र बहुव्रीहिनिर्देशः कर्तव्यः । अविद्यमानाद्यतनेऽनद्यतने" इत्यभिधाय, "यद्येवमद्यतनेऽपि लङ् प्राप्नोति, न ह्यद्यतनेऽद्यतनो विद्यत इति पूर्वपक्षे अद्यतनेऽप्यद्यतनो वर्त्तते । कथम् ? व्यपदेशिवद्भावेन"इत्युक्तम् । द्वितीये आस्यशब्दस्य मुखमात्रपरत्वोपक्रमे "किमास्योपादाने प्रयोजनम्"इति पूर्वपक्षः।"सिद्धन्त्वास्ये तुल्यदेशप्रयत्नं सवर्णम्"इति न्यासःपक्षे कृतः । ततः "प्रयत्नविशेषणमास्योपादानम्। सन्ति हि आस्याद्बाह्याः प्रयत्नास्ते हापिता भवन्ति"इति समाधाने "एवमपि व्यपदेशो न प्रकल्पते। आस्ये येषां तुल्यो देश इति। व्यपदेशिवद्भावेन व्यपदेशो भविष्यति" इत्युक्तम् । तृतीये कादित्यत्र सङ्घातग्रहणं वर्णग्रहणं वेति विचारे सङ्घातग्रहणमिति पक्षे एतिकेति न सिध्यतीति पूर्वपक्षे वचनसामर्थ्याद्भविष्यतीति परेणोक्ते अस्ति वचने प्रयोजनम्, किम्? कारिकेति। अत्राप्येकादेशे व्यपवर्गाभावान्न प्राप्नोति, अन्तादिवद्भावेन व्यपवर्ग इत्युक्तम्। तत्फलमिति । तादृशव्याख्यानफलमित्यर्थः। अपिः–

### भावप्रकाश ।

ङस्विषयताया द्वन्द्वोत्तरमेव सत्त्वेन जसीति विषयसप्तम्या वक्तुमशक्यत्वात्। एतेन जसि विवक्षिते द्वन्द्वे चेत्यनेन प्राप्तो निषेधो वा स्यात् । निषेधाभावे शीवदकजिष्ट एव समुदायनिषेधमते इव । एतेन किञ्च विभाषेत्यादिशब्दरत्नग्रन्थः, त्वन्मते यत्फलं शीरूपं तस्यैव मयाऽपि वक्तुं शक्यत्वात् । न हि जसः शीतिविहितविशेषणमिति प्रागेवोक्तमिति मन्दोक्तमपास्तम् । विहितविशेषणत्वस्य प्राक् समर्थितत्वाच्चेति भावः । खण्डनकारोक्तिं खण्डयति–**एतेनेति** । अकच्किञ्चेत्यादिहेतुद्वयेनेत्यर्थः । **सामर्थ्यादिति** । समूहनिषेधेष्टत्वे द्वन्द्वश्चेत्येव वदेदिति भावः। नन्वाद्यपक्षरीत्या तन्निर्देशचारितार्थ्यमत आह–**बह्विति** । **विद्यमानानीति** । बहुवचनं समूहाभिप्रायम् । एवं च सर्वादीनीत्यस्य गौरवादनन्वयान्निष्फलत्वाच्च नानुवृत्तिरिति भावः । तदाह–**समुदेति** । **तत्र**–तयोर्मध्ये । नन्ववयवावयविभावस्थले एव भष्भावादिविधौ तत्प्रवृत्तिः प्रसिद्धा, अत आह–**आधारेति** । आस्ये तुल्यदेशप्रयत्नं सवर्णमिति न्यासे एवमपि व्यपदेशो न प्रकल्पते । आस्ये येषां तुल्यो देश इति व्यपदेशिवद्भावेन व्यपदेशो भविष्यतीत्युक्तं मध्यसूत्रे, एवमप्यवर्णस्य न प्राप्नोति बाह्यं ह्यास्यात्स्थानमवर्णस्य सर्वमुखस्थानमवर्णमेके इच्छन्तीत्युपक्रम्य । एवमाद्यन्तयोरपि बोध्यम् । फलाभावं निराचष्टे–**तत्फलं चेति** । अपिः समूहतत्प्रयुक्ततत्परामर्शकः ।

### सरला ।

बोधयति । अन्यथा "गर्गादिभ्यो यञ्" इत्यादौ प्रातिपदिकाद् इत्यस्य विशेषणत्ववद् अङ्गस्य पदस्य च कदाचिद्विशेषणत्वं स्यात् । ततश्च 'अतिजरसौ' इत्यादौ जराशब्दस्याजादिविभक्तिनिरूपिताङ्गत्वाभावाज्जरसादेशानापत्तिः । एतेन एतत्परिभाषावत् "तस्मिन्निति निर्दिष्टे पूर्वस्य" इत्यादिपरिभाषालभ्यार्थमादाय 'अव्यवहितपूर्वस्य कार्याणि भवन्ति' इत्यादिपरिभाषाः सिद्ध्येयुरित्यपास्तम् ।

निषेधसामर्थ्यम् । अनाङ्गस्य त्रतसिलादेर्व्यावृत्त्या चरितार्थत्वात् ।

**जसाधारमिति** । यद्यपि शीभावेन जस् अपह्रियते, तथाऽपि औपचारिकमाधारत्वं बोद्धव्यम् । यद्वा, जसः इः जसिः, तस्मिन् । सौत्रः सप्तम्या लुक्, इत्यर्थतो व्याचष्टे—जसाधारमिति ।

**"जराया जरसन्यतरस्याम्"** । **विभक्ताविति** । एतच्च "अष्टन आ विभक्तौ" इत्यतोऽनुवर्तते । तेन जराया इदं जारमित्यादौ नातिव्याप्तिरिति भावः । **पदेति** । पदमङ्गं च विशेष्यम्, विशेषणेन च तदन्तविधिरिति भावः । **तदनुसारिभिरिति** । इनातोः पूर्वविप्रतिषेध एकसूत्रोपात्तत्वात् स्यादेशोऽपि ग्रहीतुमुचित इति तेषामा-

## शब्दरत्नम् ।

अमेतराणामित्यादाववयवसर्वनामत्वप्रयुक्तोऽपि नाकजित्यपास्तम् । इतरकशब्देन समासेऽतिभवकानित्यादाविव तच्छ्रवणस्य दुर्वारत्वेन तन्निषेधे फलाभावाच्चेति दिक् । **व्यावृत्त्येति** । समुदायात्प्राप्तस्येति शेषः ।

**यद्यपीति** । जसीत्याधारसप्तमीति भावः । **जस इरिति** । इकारेण ईकारग्रहणं बोध्यम् ।

## भैरवी ।

समुदायप्रयुक्तत्वपरामर्शकः । अवयवस्य सर्वनामसंज्ञानिषेधो यादृशरूपव्यावृत्तये भवता स्वीक्रियते, तादृशरूपन्तादृशव्याख्यानेऽपि दुर्वारमिति भवदीयन्तादृशव्याख्यानन्निष्फलमित्याह—इतरकशब्द इति । एतेनावयवस्य संज्ञानिषेधे प्रमाणाभावमाशङ्क्य "अकज्झि न भवति" इति भाष्योक्तिरेव तत्र मानमिति कथनं परास्तम् । तस्य भाष्यस्य समुदायस्य संज्ञानिषेधे फलप्रदर्शनपरत्वात् । दिगर्थस्तु "न बहुव्रीहौ" इतिसूत्रवद् "द्वन्द्वे च" इति सूत्रमप्युपसर्जनप्रतिषेधानुवादकमेव । इतरेतरयोगद्वन्द्वेऽप्युद्भूतावयवभेदसमूहस्य विशेष्यत्वसिद्धान्तादिति । समुदायादिति । ज्ञापिताद्वाचनिकाद्वा तदन्तविधेरित्यादिः ।

आधारसप्तमीति । आधारवाचकसप्तमीत्यर्थः । तथा च विद्यमानयोरेव पदार्थयोराधाराधेयभावस्य प्रसिद्धतया जसाधारमित्यनुपपन्नमिति भावः । ह्रस्वेकारात्मकसर्वनामकार्यस्याप्रसिद्धेराह—इकारेणेति ।

## भावप्रकाश ।

तन्निषेधे—अवयवनिषेधे । एतेनानाङ्गस्येति मूलमनूद्य वस्तुतस्तु वक्ष्यमाणविधयाऽवयवनिषेधावश्यकत्वाद्विहितविशेषणं व्यर्थम् । तथा हि, ननु जहत्स्वार्थावृत्तावदोषेऽप्यजहत्स्वार्थावृत्ताववयवनामुक्तरीत्या सर्वनामत्वेनाकज् दुर्वार इति चेन्न । सूत्रे च पाठसामर्थ्यादवयवानामपि निषेधाङ्गीकारात् तेषामेव तत्त्वे तु वाचनिकतदन्तविधिना समूहसंज्ञायामुक्तदोषा दुर्वारस्त्रतलोरापत्तिश्च । न चावयवनिषेधसामर्थ्यान्नैवमिति वाच्यम् । इतरार्थस्यैवाज्ञाताद्यर्थविवक्षायामकजादिव्यावर्त्तकतया तस्य चारितार्थ्यादतो नोक्तदोषः । एवं चावनिषेधाभिप्रायेण समूहस्यायं निषेध इति कैयटप्रकाशाद्युक्तिर्न विरुध्यते । कौमुद्यां विहितविशेषणमुक्तमयुक्तं तु न, उपायस्योपायेति न्यायेन तस्याः सुयोजत्वात् । न च निषेधद्वयाङ्गीकारे न मानम् । अत्रैवाकज् हि न भवतीति भाष्योक्तेरेव मानत्वाद् इति रत्नाकरदण्ड्याद्युक्तमपास्तम् । अत एव वक्ष्यति—समुदायात्प्राप्तेति । **दिगिति** । तदर्थस्तु उद्भूतावयवभेदसमूहस्येतरेतरद्वन्द्वे विशेष्यतयोपसर्जनसंज्ञाया अप्राप्त्या "द्वन्द्वे च" इत्यपि "न बहुव्रीहौ" इतिवदिति । **समुदायादिति** । ज्ञापिताद्वाचनिकाद्वा तदन्तविधेः । एतेनावयवप्रयुक्तो जायत एवेति सूचितम् ।

**आधारेति** । विद्यमानयोरेव स इति भावः । **इकारेणेति** । तद्रूपस्य सर्वनामकार्यस्याभावादिति भावः ।

शयः । अत एव—

वीतजन्मजरसः परं शुचि ब्रह्मणः पदमुपैतुमिच्छताम् ।

इति भारविप्रयोगमसमञ्जसं मत्वा वीतजन्मरजस इति पठनीयमिति तैरुक्तम् । एतच्चेति । भाष्यकृता हि "टाङसि" इति सूत्रे इनातौ प्रत्याख्याय नादेशमदादेशं च विधाय नादेशे परे एत्वं योगविभागेन साधितम् । "बहुवचने झल्येत्" "ओसि च" । तत "आङि" आङि च परेऽत एत्वं स्यात् । रामेण । तत "आपः संबुद्धौ च" एकारः स्यात् संबुद्धौ आङि ओसि च । न चैवमनेने-ष्यत्र हलि लोपः स्यादिति वाच्यम् । अनादेशस्य नकारे परे विशिष्य विधानात् । तथा हि, "अ नापि" नकारे आपि च परेऽन स्यादित्यर्थः । सूत्रे अ इति नान्तस्य नपुंसकनिर्देशः । न च ङसेरदादेशे कृते पररूपं स्यादिति वाच्यम् । अकारोच्चारणसामर्थ्याद्दीर्घसम्भवादिति । तथा च "जराया जरसन्यतरस्याम्" इति सूत्रे उक्तम् 'गोनर्दीयस्त्वाह—अतिजरैरिति भवितव्यं सन्निपातपरिभाषया' इति । एवं च पूर्वविप्रतिषेधेनेत्यादि सर्वं भाष्यविरुद्धमित्यर्थः ।

"पद्दन्नो" । अत्र शस्प्रभृतयो निमित्ततयोपात्ताः । ते च पदाद्यादेशानुरूपान्

---

**शब्दरत्नम् ।**

**प्रत्याख्यायेति ।** प्रत्याख्यानेन चेदं ध्वन्यते—वक्ष्यमाणक्लेशपरिहारार्थं सूत्रकारो, न तु फलान्तरेऽभिनिवेष्टव्यमिति, अदादेशे त्वदिति च्छेद एव सूत्रतात्पर्यमिति ।

**ते चेति ।** ये निमित्ततयोपात्तास्ते शस्प्रभृतय इत्यर्थः । **अनुरूपानिति ।** स्वार्थबो-

**भैरवी ।**

ननु भाष्यकृतेकारस्य प्रत्याख्यानमपि सूत्रकाररीत्या वृत्त्युक्तरूपमस्त्वित्यत आह—प्रत्याख्यानेनेति । वक्ष्यमाणः-योगविभागादिरूपः । एतेन यथोत्तरम्मुनीनाम्प्रामाण्याद्भाष्य-कारसम्मतलक्ष्यातिरिक्तस्य रूपस्यासाधुत्वमिति ध्वनितम् ।

मूले-अत्र शस्प्रभृतय इत्यादिना स्थानिलाभोपाय उक्तस्तत्र वाक्यभेदेन ते चेत्यादिना स्थानिलाभप्रदर्शनमधिकमेकवाक्यतयाऽप्युपपादनस्य कर्तुं शक्यत्वादेवञ्चैवं कथनं यत्तदोर्नित्य-सम्बन्धप्रदर्शनार्थमेवेत्याशयेनाह—ये निमित्तेति । आनुरूप्यप्रयोजकधर्मन्दर्शयति-स्वार्थेत्यादिना ।

**भावप्रकाश ।**

ननु भगवता प्रत्याख्यानेऽपि सूत्ररीत्या वृत्तिग्रन्थो युक्त एवात आह—**प्रत्येति ।** यथोत्तरं मुनीनां प्रामाण्ये तत्सम्मतलक्ष्यस्यैव सूत्रमतेऽपि कथंचिदपि साधनीयत्वस्यानुपदमेवोक्तत्वादिति भावः । **क्लेशेति ।** योगविभागादीत्यर्थः । चोऽन्त्येत्यग्रे योज्यः(?) । तेन द्वयोः समुच्चयलाभः । ननु 'अत्र शस्' इत्यादिना पाददन्तेत्यवतारितम् । तत्र ते च निमित्ततयोपात्ता इत्यधिकम् । न च प्रकाशानुरोधेनान्त्यमुक्तम् । तत्रापि दोषसत्त्वादिति चेत् ? अत्र मान्याः—शस्प्रभृतिष्विति नादेशविशेषणं, शास्त्रप्रवृत्तिकाले तेषामभावेन पौर्वापर्याभावात् । स्थानिनस्तु नैवोपात्ताः । एवं च तेन स्थानिन एवोपात्ताः सप्तमी तु "शेषे लोपः" इतिवदितिभ्रमं निराचष्टे—**अत्रेति ।** अत एव परत्र पाठः । स्थानिलाभे उपायमाह—ते चेतीत्याहुः । तत्र निमित्ततयेत्युक्तिस्वारस्यस्य युक्तत्वेऽपि वाक्यभेदेन ते चेत्याद्युपपादनमयुक्तं, सम्भवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वात् । तद् ध्वनयन् व्याचष्टे—ये **निमित्तेति ।** तदो यच्छब्दाकाङ्क्षत्वात् । मूले चो हेतौ । अत्र च यतो हेतोः पूर्वोक्ताद्ये शसादयो निमित्तयोपात्तास्ते इत्यर्थ इति भावः । एतेन तथा रत्नाकरादिग्रन्थाः प्रत्युक्ताः । स्वं रूपमित्यत्र रूपग्रहणादर्थविशिष्टशब्दस्यात्र शास्त्रे कार्यित्वादिना आश्रयणादुपस्थितोभयत आनुरूप्यमत्र विवक्षितमित्याह—**स्वार्थेति ।** तेन चरणादीनामन्यवाचकपादादीनां च नेति भावः ।

निषेधसामर्थ्यम् । अनाङ्गस्य त्रतसिलादेर्व्यावृत्त्या चरितार्थत्वात् ।

जसाधारमिति । यद्यपि शीभावेन जस् अपह्रियते, तथाऽपि औपचारिकमाधारत्वं बोद्धव्यम् । यद्वा, जसः इः जसिः, तस्मिन् । सौत्रः सप्तम्या लुक्, इत्यर्थतो व्याचष्टे—जसाधारमिति ।

"जराया जरसन्यतरस्याम्" । विभक्ताविति । एतच्च "अष्टन आ विभक्तौ" इत्यतोऽनुवर्तते । तेन जराया इदं जारमित्यादौ नातिव्याप्तिरिति भावः । पदेति । पदमङ्गं च विशेष्यम्, विशेषणेन च तदन्तविधिरिति भावः । तदनुसारिभिरिति । इनातोः पूर्वविप्रतिषेध एकसूत्रोपात्तत्वात् स्यादेशोऽपि ग्रहीतुमुचित इति तेषामा-

---

शब्दरत्नम् ।

अमेतराणामित्यादाववयवसर्वनामत्वप्रयुक्तोऽपि नाकजित्यपास्तम् । इतरकशब्देन समासेऽतिभवकानित्यादाविव तच्छ्रवणस्य दुर्वारत्वेन तन्निषेधे फलाभावाच्चेति दिक् । व्यावृत्त्येति । समुदायात्प्राप्तस्येति शेषः ।

यद्यपीति । जसीत्याधारसप्तमीति भावः । जस इरिति । इकारेण ईकारग्रहणं बोध्यम् ।

भैरवी ।

समुदायप्रयुक्तत्वपरामर्शकः । अवयवस्य सर्वनामसंज्ञानिषेधो यादृशरूपव्यावृत्तये भवता स्वीक्रियते, तादृशरूपन्तादृशव्याख्यानेऽपि दुर्वारमिति भवदीयन्तादृशव्याख्यानन्निष्फलमित्याह—इतरकशब्द इति । एतेनावयवस्य संज्ञानिषेधे प्रमाणाभावमाशङ्क्य "अकज्झि न भवति" इति भाष्योक्तिरेव तत्र मानमिति कथनं परास्तम् । तस्य भाष्यस्य समुदायस्य संज्ञानिषेधे फलप्रदर्शनपरत्वात् । दिगर्थस्तु "न बहुव्रीहौ" इतिसूत्रवद् "द्वन्द्वे च" इति सूत्रमप्युपसर्जनप्रतिषेधानुवादकमेव । इतरेतरयोगद्वन्द्वेऽप्युद्भूतावयवभेदसमूहस्य विशेष्यत्वसिद्धान्तादिति । समुदायादिति । ज्ञापिताद्वाचनिकाद्वा तदन्तविधेरित्यादिः ।

आधारसप्तमीति । आधारवाचकसप्तमीत्यर्थः । तथा च विद्यमानयोरेव पदार्थयोराधाराधेयभावस्य प्रसिद्धतया जसाधारमित्यनुपपन्नमिति भावः । ह्रस्वेकारात्मकसर्वनामकार्यस्याप्रसिद्धेराह—इकारेणेति ।

भावप्रकाश ।

तन्निषेधे—अवयवनिषेधे । एतेनानाङ्गस्येति मूलमनूद्य वस्तुतस्तु वक्ष्यमाणविधयाऽवयवनिषेधावश्यकत्वाद्विहितविशेषणं व्यर्थम् । तथा हि, ननु जहत्स्वार्थावृत्तावदोषेऽप्यजहत्स्वार्थावृत्तावयवानामुक्तरीत्या सर्वनामत्वेनाकज् दुर्वार इति चेन्न । सूत्रे च पाठसामर्थ्यादवयवानामपि निषेधाङ्गीकारात्, तेषामेव तत्त्वे तु वाचनिकतदन्तविधिना समूहसंज्ञायामुक्तदोषा दुर्वारस्त्रतलोराप्तिश्च । न चावयवनिषेधसामर्थ्यान्नैवमिति वाच्यम् । इतरार्थस्यैवाज्ञातार्थविवक्षायामकजादिव्यावर्त्तकतया तस्य चारितार्थ्यादतो नोक्तदोषः । एवं चावनिषेधाभिप्रायेण समूहस्यायं निषेध इति कैयटप्रकाशायुक्तिर्न विरुध्यते । कौमुद्यां विहितविशेषणमुक्तमयुक्तं तु न, उपायस्योपायेति न्यायेन तस्याः सुयोजत्वात् । न च निषेधद्वयाङ्गीकारे न मानम् । अत्रैवाकज् हि न भवतीति भाष्योक्तेरेव मानत्वाद् इति रत्नाकरदण्ड्याद्युक्तमपास्तम् । अत एव वक्ष्यति—समुदायात्प्राप्तेति । दिगिति । तदर्थस्तु उद्भूतावयवभेदसमूहस्येतरेतरद्वन्द्वे विशेष्यतयोपसर्जनसंज्ञाया अप्राप्त्या "द्वन्द्वे च" इत्यपि "न बहुव्रीहौ" इतिवदिति । समुदायादिति । ज्ञापिताद्वाचनिकाद्वा तदन्तविधेः । एतेनावयवप्रयुक्तो जायत एवेति सूचितम् ।

आधारेति । विद्यमानयोरेव स इति भावः । इकारेणेति । तद्रूपस्य सर्वनामकार्यस्याभावादिति भावः ।

शयः । अत एव—

वीतजन्मजरसः परं शुचि ब्रह्मणः पदमुपैतुमिच्छताम् ।

इति भारविप्रयोगमसमञ्जसं मत्वा वीतजन्मजरस इति पठनीयमिति तैरुक्तम् । एतच्चेति । भाष्यकृता हि "टाङसि" इति सूत्रे इनातौ प्रत्याख्याय नादेशमदादेशं च विधाय नादेशे परे एत्वं योगविभागेन साधितम् । "बहुवचने झल्येत्" "ओसि च" । तत "आङि" आङि च परेऽत एत्वं स्यात् । रामेण । तत "आपः संबुद्धौ च" एकारः स्यात् संबुद्धौ आङि ओसि च । न चैवमनेने-त्यत्र हलि लोपः स्यादिति वाच्यम् । अनादेशस्य नकारे परे विशिष्य विधानात् । तथा हि, "अ नापि" नकारे आपि च परेऽन स्यादित्यर्थः । सूत्रे अ इति नान्तस्य नपुंसकनिर्देशः । न च ङसेरदादेशे कृते पररूपं स्यादिति वाच्यम् । अकारोच्चारणसामर्थ्याद्दीर्घसम्भवाद्दिति । तथा च "जराया जरसन्यतरस्याम्" इति सूत्रे उक्तम् 'गोनर्दीयस्त्वाह—अतिजरैरिति भवितव्यं सन्निपातपरिभाषया' इति । एवं च पूर्वविप्रतिषेधेनेत्यादि सर्वं भाष्यविरुद्धमित्यर्थः ।

"पद्दन्नो" । अत्र शस्प्रभृतयो निमित्ततयोपात्ताः । ते च पदाद्यादेशानुरूपान्

---

शब्दरत्नम् ।

प्रत्याख्यायेति । प्रत्याख्यानेन चेदं ध्वन्यते—वक्ष्यमाणक्लेशपरिहारार्थं एकारो, न तु फलान्तरेऽभिनिवेष्टव्यमिति, अदादेशे त्वदिति च्छेद एव सूत्रतात्पर्यमिति ।

ते चेति । ये निमित्ततयोपात्तास्ते शस्प्रभृतय इत्यर्थः । अनुरूपानिति । स्वार्थबो-

भैरवी ।

ननु भाष्यकृतेकारस्य प्रत्याख्यानमपि सूत्रकाररीत्या वृत्त्युक्तरूपमस्त्वित्यत आह—प्रत्याख्यानेनेति । वक्ष्यमाणः—योगविभागादिरूपः । एतेन यथोत्तरम्मुनीनाम्प्रामाण्याद्भाष्य-कारसम्मतलक्ष्यातिरिक्तस्य रूपस्यासाधुत्वमिति ध्वनितम् ।

मूले—अत्र शस्प्रभृशतय इत्यादिना स्थानिलाभोपाय उक्तस्तत्र वाक्यभेदेन ते चेत्यादिना स्थानिलाभप्रदर्शनमधिकमेकवाक्यतयाऽप्युपपादनस्य कर्तुं शक्यत्वादेवञ्चैवं कथनं यत्तदोर्नित्य-सम्बन्धप्रदर्शनार्थमेवेत्याशयेनाह—ये निमित्तेति । आनुरूप्यप्रयोजकधर्मन्दर्शयति—स्वार्थेत्यादिना ।

भावप्रकाश ।

ननु भगवता प्रत्याख्यानेऽपि सूत्ररीत्या वृत्तिग्रन्थो युक्त एवात आह—प्रत्येति । यथोत्तरं मुनीनां प्रामाण्ये तत्सम्मतलक्ष्यस्यैव सूत्रमतेऽपि कथंचिदपि साधनीयत्वस्यानुपदमेवोक्तत्वादिति भावः । क्लेशेति । योगविभागादीत्यर्थः । चोऽन्त्येत्यग्रे योज्यः(?) । तेन द्वयोः समुच्चयलाभः । ननु 'अत्र शस्' इत्यादिना पादन्तेत्यवतारितम् । तत्र ते च निमित्ततयोपात्ता इत्यधिकम् । न च प्रकाशानुरोधेनान्त्यमुक्तम् । तत्रा-पि दोषसत्त्वादिति चेत्? अत्र मान्याः—शस्प्रभृतिष्विति नादेशविशेषणं, शास्त्रप्रवृत्तिकाले तेषामभावेन पौर्वापर्याभावात् । स्थानिनस्तु नैवोपात्ताः । एवं च तेन स्थानिन एवोपात्ताः सप्तमी तु "शेषे लोपः" इतिव-दितिभ्रमं निराचष्टे—अत्रेति । अत एव परत्र पाठः । स्थानिलाभे उपायमाह—ते चेतीत्याहुः । तत्र निमित्तत-येत्युक्तिस्वारस्यस्य युक्तत्वेऽपि वाक्यभेदेन ते चेत्याद्युपपादनमयुक्तं, सम्भवत्येकवाक्यत्वे वाक्यभेदस्या-न्याय्यत्वात् । तद् ध्वनयन् व्याचष्टे—ये निमित्तेति । तदो यच्छब्दाकाङ्क्षत्वात् । मूले चो हेतौ । अत्र च यतो हेतोः पूर्वोक्ताधे शसादयो निमित्तयोपात्तास्ते इत्यर्थ इति भावः । एतेन तथा रत्नाकरादिग्रन्थाः प्रत्युक्ताः । स्वं रूपमित्यत्र रूपग्रहणादर्थविशिष्टशब्दस्यात्र शास्त्रे कार्यित्वादिना आश्रयणादुपस्थितोभयत आनुरूप्यमत्र विवक्षितमित्याह—स्वार्थेति । तेन चरणादीनामन्यवाचकपादादीनां च नेति भावः

प्रकृतिविशेषानाश्रित्य न्त्यीत्याह—पाद्दन्तेति । यद्यपि "शीर्षंश्छन्दसि" इत्यतोऽत्र 'छन्दसि' इत्यनुवर्तते, तथाऽपि भाषायामपि क्वचिद्भवति "मासश्छन्दसि" इति वार्तिके छन्दोग्रहणाद् ज्ञापकाद् इति वक्ष्यते । प्रामादिकमिति । तथा हि, "आस्नो वृकस्य वर्तिकामभीके" इति मन्त्रे मुखादित्यर्थः औचित्यात् । "वृकस्य चिद्वर्तिकामन्तरा स्यात्" इति मन्त्रान्तरसंवादाच्च । एवं "हृत्या जुह्वान आसनि" "आसन्यं प्राणमूचुः" इत्यादावपि । व्याख्यातं च तथैव वेदभाष्येषु । अत एव हरदत्तेनापि काशिकायाः प्रामादिकत्वमाविष्कृतमिति ध्येयम् ।

### शब्दरत्नम् ।

धनसमर्थान्स्वसदृशवर्णवतश्चेत्यर्थः । वस्तुतो "वा शोकष्यञ्" इतिवद् व्यवस्थार्थमेवेति बोध्यम् । अनुवर्त्तते इति । अस्य 'इति प्राञ्चः' इति शेषः । ज्ञापकादिति । तन्निवृ

### भैरवी ।

अर्थविशिष्टस्य शब्दस्यात्र शास्त्रे कार्यित्वेनाश्रयणादत्रार्थोपादानम् । चरणादिशब्दव्यावृत्तये-स्वसदृशेति । अनेकधर्मस्य सादृश्यप्रयोजकत्वस्य सम्भवे तत्त्यागोऽनुचित इति भावः । न च पदाद्यादेशानां वैकल्पिकतया चरणशब्दस्य पदादेशेऽपि पक्षे चरणशब्दस्य शसादौ प्रयोगः सिद्ध एवेति स्वसदृशवर्णवत इति व्यर्थमिति वाच्यम् । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इति कोशाच्चरणशब्दस्य नपुंसकत्वमप्यस्तीति, यद्ययम्पदादेशश्चरणशब्दस्यापि स्यात्तदा 'तानि पन्दि पूजय' इति प्रयोगस्याप्यापात्तःरतिस्वसदृशेत्यस्यावश्यकत्वात् । किञ्चोदकशब्दस्येवाप्शब्दस्याप्युदन्नादेशे स्त्रीलिङ्गत्वस्यापि सम्भवेनास्मान्नान्तलक्षणङीबापत्तिरपि स्यात् । ननु स्वमते छन्दसीत्यस्यानुवृत्तिर्नास्तीत्यनुवर्त्तत इत्यनुपपन्नमत आह–अस्येतीति । अत्र स्यान्तम्पृथक्

### भावप्रकाश ।

स्वसदृशेति । भूयसा व्यपदेश इति न्यायात् सादृश्यस्य भेदाधिष्ठानत्वाच्च सूत्रानर्थक्यापत्तेश्च किंचिदसादृश्येऽपि न स व्यवहारः किं त्वयमिति भावः । ननु छन्दसीत्यनुवृत्तौ "ये च तद्धिते" इत्यादावपि तदापत्तिः । न च विकल्पानुवृत्त्यर्थमावश्यकमण्डूकप्लुत्या निर्वाह इति वाच्यम् । मानाभावात्, तदाश्रयणे स्वरितत्वकल्पने गौरवाच्च । विकल्पानुवृत्तेरप्यनिष्टत्वाच्च । न च तत्र तदनुवृत्ताविष्टापत्तिः, हरदत्तकैयटाद्यसम्मतत्वात्, ये चेत्यत्रापि शीर्षंश्छन्दसि वेतिवार्तिकासङ्गत्यापत्तेश्च । अत एव केचिदत्र छन्दसीत्यनुवर्तयन्ति । अपरे पुनरविशेषणमिच्छन्ति ।

> व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च ।
> व्याधयो नोपसर्पन्ति वैनतेय इवोरगाः ॥

इति काशिकाकृतोक्तम् । अत एव खण्डनकृता 'युक्तं चैतत्' इत्यादिनैतत्समर्थयता तत्रारुचिसूचनं कृतमिति चिन्त्यं मूलमत आह–अस्येतीति । तन्निवृत्तेरिति चेति ।

### सरला ।

स्वार्थबोधनसमर्थानिति । तेन आसनशब्दस्य सकारादिघटितत्वेऽपि न आसन् आदेशः । स्वसदृशवर्णवत इति । तेन चरणशब्दस्य न पदादेश इति न कदाचित् 'पन्दि' इति नपुंसके रूपम् । एवं रात्रिशब्दस्य न निश् आदेशः । तथा च 'इदमहर्निशा गतम्' इत्यत्र निशादेशस्य स्थानिवद्भावेन रात्रिशब्दत्वमादाय 'रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्' इति रुत्वं न । एवञ्च पदादिविशिष्टत्वं पदाद्यनुरूपत्वम् । वैशिष्ट्यञ्च–स्वबोध्यार्थबोधकत्वम्, स्वघटकव्यञ्जनघटितत्वमेतदुभयसम्बन्धेनेति फलितमिति तदाशयः । व्यवस्थार्थमेवेतीति । शसादिषु पादादीनां पदादीनां च प्रयोगः, सुटि च पादादीनामेव प्रयोगो न पदादीनामिति प्रयोगव्यवस्थार्थमित्यर्थः । अत एव "शीर्षंश्छन्दसि" इति सूत्रभाष्ये "शीर्षन्निति प्रकृत्यन्तरं द्रष्टव्यम्" इत्युक्तम् ।

"अल्लोपोऽनः"। अत्र प्राञ्चः—अन्नन्तस्य भस्याङ्गस्याकारस्य लोपः स्यादिति। तथा सति 'तक्ष्णा' इत्यादौ तकाराकारस्यापि लोपः स्यात्। भस्याङ्गस्यानोऽकारस्य इति व्याख्याने तु 'अनसा, मनसा' इत्यादौ स्यात्। तन्त्रावृत्त्यादिनाऽन्नन्तस्य भस्यानोऽकारस्येति व्याख्यानेऽपि 'अनस्तक्ष्णा' इत्यादौ अतिव्याप्तिरेवातो व्याचष्टे—अङ्गावयव इत्यादि। भस्येत्यनेनाक्षिप्तः प्रत्ययविशेषोऽङ्गं चेति द्वयमनो विशे-

शब्दरत्नम्।

षणमिति भावः। अत एव भाष्ये तदनुवृत्तिर्नोक्ता।

**तथा सतीति**। प्राचीनसंमतव्याख्यादरे इत्यर्थः। **भस्येत्यनेनेति**। अङ्गस्येत्येतत्साहितेनेत्यर्थः। एतेन भत्वस्य वृषणोऽप्रत्ययत्वस्वश्वशब्दयोरपि विधानात्तेन न प्रत्ययाक्षेप इत्यपास्तम्। **अङ्गं चेति**। अधिकारलब्धमिति भावः। ननु भत्वस्य तत्सूत्रे "यस्मात्प्रत्ययविधिः" इत्यनुवृत्त्याऽङ्गनिष्ठत्वेन तेनाङ्गनिष्ठयजादिपरत्वाक्षेपेण तदवयवस्य

भैरवी।

पदम्। अत एव—छन्दोग्रहणवैयर्थ्यापत्तिदोषादेव।

**मूले—अत्र प्राञ्च इति**। काशिकाकृदादयः। तथा सतीति। एतादृशव्याख्याने सतीत्यर्थकं यदुक्तन्तस्य वैयर्थ्यन्दोषोपपादनमात्रस्योचितत्वादत आह—प्राचीनेति। एतेन यद्यपि मया तस्यादरः कृतस्तथाऽपि तद्दुष्टमिति ध्वनितम्। एतेन—अङ्गस्येत्येतत्साहित्यकथनेन। अत एव मूले अङ्गञ्चेतीत्यभिहितम् अङ्गस्येत्यस्याप्रक्रान्तत्वशङ्कानिरासायाह—अधिकारेति। एवं सति वृषणश्च इत्यत्राल्लोपाभावोऽपि द्रष्टव्यः। अत्राङ्गस्येत्यस्याधिकारलब्धत्वकथनेन भस्येत्यस्यापि तथैव लाभ इति ध्वनितम्। नन्वत्राङ्गस्य भस्येत्यस्य च यद्यप्यधिकाराल्लाभस्तथाऽप्यङ्गस्य भस्यान इत्येवार्थः स्यान्न तु प्रत्ययविशेषस्य ततो लाभः। आक्षेपेणेति चेत्कोसावाक्षेपः, अनुमानं वा भसंज्ञासूत्रेणैकवाक्यता वा ? तत्राद्यः पक्षो न युक्त इत्याशयेनाशङ्कते—नन्विति। अनुमानमत्र प्रत्ययविध्युपादानम् असर्वनामस्थानयजादिस्वादिपरं भाङ्गपदोद्देश्यत्वादित्येवङ्कार्यम्। तदवयवस्य तत्त्वालाभ इति। तस्य पक्षतावच्छेदकत्वन्न तु पक्षत्वमिति भावः। किञ्च पदभेदेनोद्देश्यताभेदान्न पदयोर्द्वित्वेन हेतुतावच्छेदकत्वमिति भत्वादिनैव तत्त्वं वक्तव्यम्।

भावप्रकाश।

प्राञ्च इति। कैयटवृत्त्यादय इत्यर्थः। तथा चात्रोपन्यासोऽस्य नोचित इति भावः। मुख्यं बीजं ध्वनयितुमाह—**अत एवेति**। छन्दोग्रहणवैयर्थ्यादित्यर्थः। **भाष्ये इति**। एतेन भाष्ये तु छान्दसमेवैतदिति स्थितमिति हरदत्तोक्तिः, ततस्तदनुवृत्तेश्छान्दसमेतदिति भाष्यमिति प्रकाशोक्तिर्मूलानुयायिरत्नाकरदण्ड्याद्युक्तिरपास्ता।

मूले प्राञ्च इति। काशिकाप्रक्रियाकृत इत्यर्थः। अत एव बहुत्वोक्तिः। ननु तत्र तत्र लोपापत्तेरिति वाच्ये तथा सतीत्यधिकमत आह—**प्राचीनेति**। तथा च तदादरे दोषेण तस्य दुष्टत्वं फलितमिति भावः। **एतेनेति**। तत्साहित्यनिवेशेनेत्यर्थः। एतेनाङ्गेनापि प्रत्ययाक्षेपादुक्तार्थलाभ इति मान्योक्तिः प्राचामनुरोधेन तावता प्रत्ययसामान्यलाभेऽपि विशेषालाभाद् ज्ञानगौरवाच्चेति ध्वनितम्। एतेन भाष्यरीत्या कार्यकाले तदुपस्थितेरेवाक्षेपपदार्थत्वेन शङ्कासमाध्योरयुक्तत्वमिति मन्दोक्तमपास्तम्। तथाऽर्थस्यैतच्चेत्यनेन वक्ष्यमाणतयाऽत्र प्रसिद्धतरत्वेनानुमानादेरेव ग्रहणेनान्त्योक्तेरयुक्तत्वात्। अत एव नन्वित्यादितदवतरणसङ्गतिरिति दिक्। **विधानादिति**। तथा च तादृशप्रत्ययपरत्वाभाववति भत्वसत्त्वेन व्यभिचारान्नाक्षेपसम्भवः। एतेन तथा रत्नाकरदण्ड्यादिग्रन्थाः परास्ता इति भावः। **लब्धमिति**। एतेन भस्येत्यपि तथेति सूचितम्। नन्वाक्षेपोऽत्रानुमानादि भसंज्ञासूत्रेणैकवाक्यता वा। नाद्य इत्याह—**ननु भत्वस्येति**। **तत्सूत्रे इति**। यचि भमित्यत्रेत्यर्थः। अन्यथेऽपि यथोद्देशः कार्यकाले

षणम् । अन् तु अकारस्य, अतो नोक्तदोष इति भावः । एतच्च "ष्यङः संप्रसारणम्" इति सूत्रे भाष्ये स्पष्टम् ।

---

शब्दरत्नम् ।

तत्त्वालाभः । किं चानो विशेषणेऽपि 'विधौ परिभाषोपतिष्ठते नानुवादे' इति निर्दिष्टपरिभाषाऽनुपस्थितेरनन्त्यलक्षणेत्यादौ दोषो दुर्वार इति चेत्तत्राह—एतच्चेति । तथा च भाष्यम्—"एवं तर्हि कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यं "भस्य" इत्युपस्थितमिदं भवति "यचि भम्" इति, तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः, अना चाकारम् । यजादिस्वादिपरस्यानोऽकारस्य" इति । तस्यायं भावः—कार्यकालपक्षे "भस्य" इति श्रुते भपदार्थजिज्ञासायां "यचि भम्" इत्युपस्थितेन शक्तिग्रहे

भैरवी ।

एवञ्च वृषण्वस्वश्वयोरित्यनेन ययोर्भसंज्ञा तयोरपि भत्वावच्छिन्नोद्देश्यत्वसत्त्वेन तत्र निरुक्तसाध्याभावेन व्यभिचारः । एवं पदशब्दोद्देश्यत्वस्य राजभ्यामित्यत्रैव व्यभिचारः । न द्वितीयः, यथोद्देशपक्षे संज्ञाशास्त्रस्य पृथगेव वाक्यार्थबोधेनैकवाक्यताया अलाभात् । कार्यकालपक्षेऽपि वाक्यैकवाक्यता न पदैकवाक्यतेति निरुक्तार्थालाभाच्च । प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया तद्विशेषणताया न्याय्यत्वाच्चेति । परोक्तमन्विशेषणत्वमभ्युपगम्याऽऽह–किञ्चेति । दोषः-अतिव्याप्तिः । भाष्यमिति । एतच्च भाष्यन्तस्मिन् सूत्रे "अनन्त्यविकारेऽन्त्यसदेशस्य" इति परिभाषायाः प्रयोजनखण्डनावसरे प्रवृत्तम् । ननु प्रत्ययस्याङ्गसाकाङ्क्षत्वमेव "अङ्गस्य" इति सूत्रभाष्ये "परस्परम्प्रत्यङ्गं प्रत्ययसंज्ञाऽभावात्" इत्यनेन दर्शितमित्यन्विशेषणत्वङ्कथमत्रोक्तमत आह–तस्यायम्भाव इति । श्रुते–अधिकारतो लब्धे । जिज्ञासायामिति । एतेन भपदस्य श्रवणमात्रेण कृत्रिमाकृत्रिमन्यायेन यस्येयं संज्ञा कृता तस्यार्थस्योपस्थितिसत्त्वात्पुनर्वाक्यार्थबोधस्य नापेक्षेति निरस्तम् । कार्यकालपक्षेण काल्यते स्वसन्निधिम्प्राप्यते इति व्युत्पत्त्या कार्यविधायकशास्त्रघटकसंज्ञाशब्दघटितं यत्संज्ञासंज्ञिभावसम्बन्धबोधकं शास्त्रं तस्य जिज्ञासां जनयित्वोपस्थितिः कार्यते इत्येव "भस्येत्युपस्थितमिदम्भवति यचि भम्" इति भाष्येण लभ्यते । तच्छास्त्रोपस्थितिमात्रेण विधायकशास्त्रवाक्यार्थबोधासम्भव इति पुनस्तत्र संज्ञासूत्रेण वृत्तिग्रहो भव-

भावप्रकाश ।

वा ? नाद्यः, तत्रैकवाक्यताया अभावात् । सामग्रीसत्त्वेऽवान्तरवाक्यार्थबुद्धावबाधकेन वाक्यैकवाक्यत्वाच्च । एतेनान्त्योऽपि निरस्तः । किं च प्रत्ययस्याङ्गांश उत्थिताकाङ्क्षत्वेन तत्रैवान्वयौचित्यात् । तुष्यतु दुर्जनन्यायेन मूलरीत्या दोषमाह–किञ्चेति । दोषः–अतिव्याप्तिः । भाष्यमिति । अनन्त्यविकारे इत्यस्य फलकथनप्रघट्टकेऽत्र फलं मूलकृद्रीत्या 'अनस्तदगा' इत्यादावप्रवृत्तिरूपमुपन्यस्य तत्खण्डकमित्यर्थः । स्थितं द्रष्टव्यमिति पाठः । एवं सामान्यमुक्त्वा विशिष्याह–भस्येतीति । परस्यान इति । तत्परस्यानो योऽकारस्तस्येत्यर्थः । नन्वस्य भाष्यस्य मूलसमत्वेनानिर्वाहस्तदवस्थ एवात आह–तस्यायमिति । अत्र मान्याः–कार्यकाले एकवाक्यतेति निर्विवादम् । सा च पदानां, न वाक्ययोः । यत्र भशब्दस्तत्र यस्मात्प्रत्ययविधिस्तदादि यचीति चोपतिष्ठते इति सूत्रार्थः । तत्र चोपस्थितपदानां यथेष्टमभिसम्बन्धः । यथा ज्योतिष्टोमराजसूयादिपदानां यागविधौ सामानाधिकरण्यान्नामधेयत्वावगतिर्न तु यन्न दुःखेनेत्यादिभिः स्वर्गशब्दार्थावगमवद्वाक्यान्तरेण, तथाऽत्र पक्षे भादिशब्दानाम् । एतेन प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन तत्रैव यचीत्यादीनामन्वय उचित इत्यपास्तम् । भाष्यप्रामाण्येन लक्ष्यानुरोधेन चेदृशे विषये उत्थाप्याकाङ्क्षैवान्वयाङ्गीकारादिति । तत्प्राचामनुरोधेन । तथेष्टत्वे हि यचिभमिति न वदेत्, यचीत्येव वदेत् । किं च पदैकवाक्यतयाऽन्वयेऽपि स्वोपस्थापकोपस्थापिते यतः प्रत्ययविधिस्तदादावेवान्वयापत्तिर्भाष्यप्रामाण्यात्तु मदुक्तार्थ एवोचितः । तद् ध्वनयन्नन्यथा तदाह–कार्येति । श्रुते इति । अधिकारलब्ध इत्यर्थः । सायांचे

वृत्ते एतद्वाक्यार्थबोधकाले लक्ष्यानुरोधेन तन्त्रादिन्यायाश्रयणाद् यचीत्यस्यान्विशेषणताऽपि । विधौ परिभाषेति न्यायस्तु "इको गुणवृद्धी" "अचश्च" इति व्यतिरिक्ते नास्त्येव, "उदात्तस्वरितयोर्यण" इत्यादावुदात्तस्वरितस्थानिकयण इत्यर्थस्येष्टत्वादिति । एतच्च स्त्रीप्रत्यये इत्वप्रकरणे निरूपयिष्यामः ।

यदि तु अदसुयङित्यर्थमनन्त्यविकार इति परिभाषाऽऽवश्यकी, तयैव अनस्तक्षणेत्यादौ व्यावृत्तिः । अत्र सान्तमहत इत्यादौ चानेकक्लिष्टकल्पनापेक्षया परिभाषास्वीकार एवोचितः । भाष्यन्तु वार्तिकोक्तफलानां अन्यथासिद्धिप्रदर्शनमात्रपरम् । अत एव यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्येति भाष्ये उपसंहृतम् । यत्तु "न सम्प्रसारणे" इति सूत्रे "नैतस्याः परिभाषायाः सन्ति प्रयोजनानि" इति भाष्यं, तत्तु "न सम्प्रसारणे" इत्यादेरेव ज्ञापकात्प्रयोजनाल्पत्वसूचकमित्युच्यते, तदाऽस्तु अङ्गविशेषणमेव तदित्याहुः ।

भैरवी ।

ति । स च प्रकृतोपयोग्येव । शास्त्रान्तरे पुनस्तथा जिज्ञासायाम्पुनरप्येवमेव कल्पनेति । एतद्वाक्यार्थबोधकाले—विधायकशास्त्रार्थबोधकाले । अन्विशेषणताऽपीति अपिनाऽङ्गविशेषणतायाः समुच्चयः । एवञ्चोभयविशेषणत्वं सकृदुपस्थितिमात्रेण न सम्भवत्यतस्तन्त्रादिन्यायाश्रयणम् । अत एव भस्याङ्गस्यानोऽकारस्यासर्वनामस्थानपरस्येति व्याख्यानस्योपपत्तिः । यदुक्तम्प्राग्विधावित्यादि, तन्नेत्याह—विधाविति । एतच्च—तस्याः परिभाषायाः सार्वत्रिकत्वन्नास्तीत्येतच्च । तत्र विधीयत इत्यस्याध्याहारेण तद्विषयताया उचितत्वादिति भावः। अत्रेदन्तत्वम्—तस्यायम्भाव इत्यत्र तच्छब्दोपादानेन "ष्यङः सम्प्रसारणम्" इति सूत्रस्थम्भाष्यमेकदेश्युक्तिः, प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन तद्विशेषणत्वस्यैव न्याय्यत्वात् , आकडाराधिकारीयभपदसंज्ञाविषये यथोद्देशपक्षस्यैव सिद्धान्तितत्वाच्च । तथा च प्रकृतविषये दोषाभावोऽनन्त्यविकार इति परिभाषयैव सम्पादनीय इति ।

भावप्रकाश ।

ति । अन्यथा श्रवणमात्रेणोपस्थितिर्न स्यादिति भावः । **वृत्ते इति** । प्रकृतविषयके इति भावः । **यचीत्यस्येति** । उपस्थितत्वादिति भावः । अपिः भिन्नवाक्यीयाङ्गविशेषणत्वसमुच्चायकः । एतेन मूलमनूद्य तत्र प्राचां ग्रन्थे हि भस्येत्यतो विशेषणम् । तदर्थश्च कार्यकालं संज्ञापरिभाषमिति यञ्चावसर्वनामस्थानपरस्येति । तत्परत्वं च येन नेति न्यायेन मात्राव्यवहितस्यातो गृह्यते तेनोक्तदोषाभावात् । एवं व्याख्यानेऽन इत्यस्याङ्गेन सामानाधिकरण्यान्वयोऽनुकूलः । अङ्गावयवस्येति व्याख्याने तु वैयधिकरण्यान्वयापत्तिरिति खण्डनकृदुक्तम् । भाष्यकृता परिभाषां विनाऽपि सिद्धिरुक्तेति स एव पक्षः सर्वैरुक्तः । वृत्तिकृता तु तामाश्रित्य यथोद्देशेऽपि तथा व्याख्यातम् । एवं च प्राचां व्याख्यायाः पक्षद्वयेऽपि सम्भवात् कौमुद्युक्तव्याख्यायास्तु कार्यकाले एव सम्भवादेतदाश्रित्य नव्योक्तं तत्खण्डनमनुचितमिति मन्दोक्तं चापास्तम् । **इको गुणेति** । तत्र विधीयेते इत्यध्याहारेण तन्मूलकत्वादिति भावः । **नास्त्येवेति** । फलाभावादिति शेषः । हेत्वसिद्धिं निराचष्टे—**उदात्तेति** । नन्वेवमुदीचामात इत्यत्र स्थानेग्रहणानर्थक्यं, तद्धि तज्ज्ञापकत्वे सार्थकमिति चेद् ? व्यर्थमेव तत् । स्थानसम्बन्धोऽन्तरङ्गत्वलभ्यो न परिभाषालभ्य इत्यस्य षष्ठीस्थाने इत्यत्र भाष्ये स्पष्टमुक्तत्वेन ज्ञापकत्वासम्भवश्च । अत एवान्विशेषणत्वेऽप्यव्यवधानलाभादुक्तभाष्यसङ्गतिस्तदा इ—**एतच्चेति** । तस्यायं भाव इत्यत्र तस्येत्यनेनारुचिः सूचिता । एकदेश्युक्तिरियमङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षत्वेन तथाऽर्थस्यैवौचित्यात् , आकडारात्संज्ञासु कार्यकालपक्षाभावस्य सिद्धान्तितत्वाच्चेति । एवं च तयैवावश्यिकयाऽत्र निर्वाह इति प्राचोक्तं व्याख्यानमेव युक्तमिति दिक् ।

षणम् । अन् तु अकारस्य, अतो नोक्तदोष इति भावः । एतच्च "ष्यङः संप्रसारणम्" इति सूत्रे भाष्ये स्पष्टम् ।

शब्दरत्नम् ।

तत्त्वालाभः । किं चानो विशेषणेऽपि 'विधौ परिभाषोपतिष्ठते नानुवादे' इति निर्दिष्टपरिभाषाऽनुपस्थितेरनन्त्यत्वेनोक्तो दोषो दुर्वार इति चेत्तत्राह—एतच्चेति । तथा च भाष्यम्—"एवं तर्हि कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यं "भस्य" इत्युपस्थितमिदं भवति "यचि भम्" इति, तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः, अना चाकारम् । यजादिस्वादिपरस्यानोऽकारस्य" इति । तस्यायं भावः—कार्यकालपक्षे "भस्य" इति श्रुते भपदार्थजिज्ञासायां "यचि भम्" इत्युपस्थितेन शक्तिग्रहे

भैरवी ।

एवञ्च वृषण्वस्वश्वयोरित्यनेन ययोर्भसंज्ञा तयोरपि भत्वावच्छिन्नोद्देश्यत्वसत्त्वेन तत्र निरुक्तसाध्याभावेन व्यभिचारः । एवं पदशब्दोद्देश्यत्वस्य राजभ्यामित्यत्रैव व्यभिचारः । न द्वितीयः, यथोद्देशपक्षे संज्ञाशास्त्रस्य पृथगेव वाक्यार्थबोधेनैकवाक्यताया अलाभात् । कार्यकालपक्षेऽपि वाक्यैकवाक्यता न पदैकवाक्यतेति निरुक्तार्थालाभाच्च । प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया तद्विशेषणताया न्याय्यत्वाच्चेति । परोक्तमनुविशेषणत्वमभ्युपगम्याप्याह—किञ्चेति । दोषः-अतिव्याप्तिः। भाष्यमिति । एतच्च भाष्यन्तस्मिन् सूत्रे "अनन्त्यविकारेऽन्त्यसदेशस्य" इति परिभाषायाः प्रयोजनखण्डनावसरे प्रवृत्तम् । ननु प्रत्ययस्याङ्गसाकाङ्क्षत्वमेव "अङ्गस्य" इति सूत्रभाष्ये "परस्परम्प्रत्यङ्गं प्रत्ययसंज्ञाऽभावात्" इत्यनेन दर्शितमित्यनुविशेषणत्वङ्कथमत्रोक्तमत आह—तस्यायम्भाव इति । श्रुते-अधिकारतो लब्धे । जिज्ञासायामिति । एतेन भपदस्य श्रवणमात्रेण कृत्रिमाकृत्रिमन्यायेन यस्येयं संज्ञा कृता तस्यार्थस्योपस्थितिसत्त्वात्पुनर्वाक्यार्थबोधस्य नापेक्षेति निरस्तम् । कार्यकालपक्षेण काल्यते स्वसन्निधिम्प्राप्यते इति व्युत्पत्त्या कार्यविधायकशास्त्रघटकसंज्ञाशब्दघटितं यत्संज्ञासंज्ञिभावसम्बन्धबोधकं शास्त्रं तस्य जिज्ञासां जनयित्वोपस्थितिः कार्यते इत्येव "भस्येत्युपस्थितमिदम्भवति यचि भम्" इति भाष्येण लभ्यते । तच्छास्त्रोपस्थितिमात्रेण विधायकशास्त्रवाक्यार्थबोधासम्भव इति पुनस्तत्र संज्ञासूत्रेण वृत्तिग्रहो भव-

भावप्रकाश ।

वा ? नाद्यः, तत्रकवाक्यताया अभावात् । सामग्रीसत्त्वेऽवान्तरवाक्यार्थबुद्धावबाधकेन वाक्यैकवाक्यत्वाच्च । एतेनान्त्योऽपि निरस्तः । किं च प्रत्ययस्याङ्गांश उत्थिताकाङ्क्षत्वेन तत्रैवान्वयौचित्यात् । तुष्यतु दुर्जनन्यायेन मूलरीत्या दोषमाह—किञ्चेति । दोषः—अतिव्याप्तिः । भाष्यमिति । अनन्त्यविकारे इत्यस्य फलकथनप्रवृत्तकेऽत्र फलं मूलोक्तरीत्या 'अनस्तद्गा' इत्यादावप्रवृत्तिरूपमुपन्यस्य तत्खण्डकमित्यर्थः । स्थितं द्रष्टव्यमिति पाठः । एवं सामान्यमुक्त्वा विशिष्याह—भस्येतीति । परस्यान इति । तत्परस्यानो योऽकारस्तस्येत्यर्थः । नन्वस्य भाष्यस्य मूलसमत्वेनानिर्वाहस्तदवस्थ एवात आह—तस्यायमिति । अत्र मान्याः—कार्यकाले एकवाक्यतेति निर्विवादम् । सा च पदानां, न वाक्ययोः । यत्र भशब्दस्तत्र यस्मात्प्रत्ययविधिस्तदादि यचीति चोपतिष्ठते इति सूत्रार्थः । तत्र चोपस्थितपदानां यथेष्टमभिसम्बन्धः । यथा ज्योतिष्टोमराजसूयादिपदानां यागविधौ सामानाधिकरण्यान्नामधेयत्वावगतिर्न तु यन्न दुःखेनेत्यादिभिः स्वर्गशब्दार्थावगमवद्वाक्यान्तरेण, तथाऽत्र पक्षे भादिशब्दानाम् । एतेन प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन तत्रैव यचीत्यादीनामन्वय उचित इत्यपास्तम् । भाष्यप्रामाण्येन लक्ष्यानुरोधेन चेदृशे विषये उत्थाप्याकाङ्क्षयैवान्वयाङ्गीकारादिति । तत्राचामनुरोधेन । तथेष्टत्वे हि यचिभमिति न वदेत्, यचीत्येव वदेत् । किं च पदैकवाक्यतयाऽन्वयेऽपि स्वोपस्थापकोपस्थापिते यतः प्रत्ययविधिस्तदादावेवान्वयापत्तिर्भाष्यप्रामाण्यात्तु मदुक्तार्थ एवोचितः । तद् ध्वनयन्नन्यथा तदाह—कार्येति । श्रुते इति । अधिकारलब्ध इत्यर्थः । सायांचे

शब्दरत्नम् ।

वृत्ते एतद्वाक्यार्थबोधकाले लक्ष्यानुरोधेन तन्त्रादिन्यायाश्रयणाद् यचीत्यस्यान्विशेषणता-ऽपि । विधौ परिभाषेति न्यायस्तु "इको गुणवृद्धी" "अचश्च" इति व्यतिरिक्ते नास्त्येव, "उदात्तस्वरितयोर्यण"इत्यादावुदात्तस्वरितस्थानिकयण इत्यर्थस्येष्टत्वादिति । एतच्च स्त्रीप्रत्यये इत्वप्रकरणे निरूपयिष्यामः ।

यदि तु अदसुयङित्यर्थमनन्त्यविकार इति परिभाषाऽऽवश्यकी, तयैव अनल्लक्षणेत्यादौ व्यावृत्तिः । अत्र सान्तमहत इत्यादौ चानेकक्लिष्टकल्पनापेक्षया परिभाषास्वीकार एवोचितः । भाष्यन्तु वार्तिकोक्तफलानां अन्यथासिद्धिप्रदर्शनमात्रपरम् । अत एव यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्येति भाष्ये उपसंहृतम् । यत्तु "न सम्प्रसारणे" इति सूत्रे "नैतस्याः परिभाषायाः सन्ति प्रयोजनानि" इति भाष्यं, तत्तु "न सम्प्रसारणे" इत्यादेरेव ज्ञापकात्प्रयोजनाल्पत्वसूचकमित्युच्यते, तदाऽस्तु अङ्गविशेषणमेव तदित्याहुः ।

भैरवी ।

ति । स च प्रकृतोपयोग्येव । शास्त्रान्तरे पुनस्तथा जिज्ञासायाम्पुनरप्येवमेव कल्पनेति । एतद्वाक्यार्थबोधकाले—विधायकशास्त्रार्थबोधकाले । अन्विशेषणताऽपीति अपिनाऽङ्गविशेषणतायाः समुच्चयः । एवञ्चोभयविशेषणत्वं सकृदुपस्थितिमात्रेण न सम्भवत्यतस्तन्त्रादिन्यायाश्रयणम् । अत एव भस्याङ्गस्यानोऽकारस्यासर्वनामस्थानपरस्येति व्याख्यानस्योपपत्तिः । यदुक्तम्प्राग्विधावित्यादि, तन्नेत्याह—विधाविति । एतच्च—तस्याः परिभाषायाः सार्वत्रिकत्वन्नास्तीत्येतच्च । तत्र विधीयत इत्यस्याध्याहारेण तद्विषयताया उचितत्वादिति भावः । अत्रेदन्तत्वम्—तस्यायम्भाव इत्यत्र तच्छब्दोपादानेन "ष्यङः सम्प्रसारणम्" इति सूत्रस्थम्भाष्यमेकदेश्युक्तिः, प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन तद्विशेषणत्वस्यैव न्याय्यत्वात्, आकडाराधिकारीयभपदसंज्ञाविषये यथोद्देशपक्षस्यैव सिद्धान्तितत्वाच्च । तथा च प्रकृतविषये दोषाभावोऽनन्त्यविकार इति परिभाषयव सम्पादनीय इति ।

भावप्रकाश ।

ति । अन्यथा श्रवणमात्रेणोपस्थितिर्न स्यादिति भावः । वृत्ते इति । प्रकृतविषयके इति भावः । यचीत्यस्येति । उपस्थितत्वादिति भावः । अपिः भिन्नवाक्यीयाङ्गविशेषणत्वसमुच्चायकः । एतेन मूलमनूद्य तत्र प्राचां ग्रन्थे हि भस्येत्यतो विशेषणम् । तदर्थश्च कार्यकालं संज्ञापरिभाषमिति यजाद्यसर्वनामस्थानपरस्येति । तत्परत्वं च येन नेति न्यायेन मात्राव्यवहितस्यातो गृह्यते तेनोक्तदोषाभावात् । एवं व्याख्यानेऽन इत्यस्याङ्गेन सामानाधिकरण्यान्वयोऽनुकूलः । अङ्गावयवस्येति व्याख्याने तु वैयधिकरण्यान्वयापत्तिरिति खण्डनकृदुक्तम् । भाष्यकृता परिभाषां विनाऽपि सिद्धिरुक्तेति स एव पक्षः सर्वैरुक्तः । वृत्तिकृता तु तामाश्रित्य यथोद्देशेऽपि तथा व्याख्यातम् । एवं च प्राचां व्याख्यायाः पक्षद्वयेऽपि सम्भवात् कौमुद्युक्तव्याख्यायास्तु कार्यकाले एव सम्भवादेतदाश्रित्य न्योक्तं तत्खण्डनमनुचितमिति मन्दोक्तं चापास्तम् । इको गुणेति । तत्र विधीयेते इत्यध्याहारेण तन्मूलकत्वादिति भावः । नास्त्येवेति । फलाभावादिति शेषः । हेत्वसिद्धिं निराचष्टे—उदात्तेति । नन्वेवमुदीचामात इत्यत्र स्थानेग्रहणानर्थक्यं, तद्धि तज्ज्ञापकत्वे सार्थकमिति चेद् ? व्यर्थमेव तत् । स्थानसम्बन्धोऽन्तरङ्गत्वलभ्यो न परिभाषालभ्य इत्यस्य षष्ठीस्थाने इत्यत्र भाष्ये स्पष्टमुक्तत्वेन ज्ञापकत्वासम्भवश्च । अत एवान्विशेषणत्वेऽप्यव्यवधानलाभादुक्तभाष्यसङ्गतिस्तदाह—एतच्चेति । तस्यायं भाव इत्यत्र तस्येत्यनेनारुचिः सूचिता । एकदेश्युक्तिरियमङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षत्वेन तथाऽर्थस्यैवौचित्यात्, आकडारासंज्ञासु कार्यकालपक्षाभावस्य सिद्धान्तितत्वाच्चेति । एवं च तयैवावदियकयाऽत्र निर्वाह इति प्राचोक्तं व्याख्यानमेव युक्तमिति दिक् ।

"रषाभ्याम्"। पदे इतीयतैव सामर्थ्यादेकपदत्वे लब्धेऽपि समानग्रहणं यत्समानमेव, अखण्डमिति यावत्। तत्र यथा स्यात्तेन समासे न भवति।

---

शब्दरत्नम्।

**सामर्थ्यादिति**। निमित्तनिमित्तिनोरपदस्थयोरसम्भवादिति भावः। **अखण्डमिति**। तत्त्वं च निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वम्। तेन 'मातृभोगीणः' इत्यत्र णत्वसिद्धिः। केवलभोगीनेत्यस्य प्रत्ययमात्रस्य वा तत्त्वाभावात्। अत एव "आत्मन्विश्व-

भैरवी।

मूले सामर्थ्यादित्यस्य पदपदोपादानेत्यादिः। अत एवाह–निमित्तेत्यादि। तेन विभिन्नपदस्थानाम्मातुर्नमनमित्यादौ णत्वाभावः सिद्धः। नन्वेकपदस्थत्वं यत्र निमित्तनिमित्तिनोस्तत्र णत्वमित्येतल्लब्धन्तावता रामनामेत्यत्रातिप्रसङ्गवारणासम्भव इत्यत आह–तत्त्वञ्चेति। न च निमित्तिमत्त्वं विधीयमानस्य णकारस्य, न तु नकारस्येति कथन्निमित्तस्थानिनोरेकपदस्थत्वस्य लाभ इति वाच्यम्। स्वप्रयोज्यकार्योद्देश्यत्वस्य षष्ठ्यर्थत्वमाश्रित्यैनि प्रत्ययस्य स्वीकारात्। निमित्तानधिकरणानिमित्तिमत्पदघटितं यत्तद्भिन्नं यत्पदन्तदवयवत्वं यत्र द्वयोस्तत्र णत्वमित्यर्थः। तेन-निमित्तिमति पदत्वविशेषणेन। तत्त्वाभावादिति। पदत्वाभावादित्यर्थः। "आत्मन्विश्व"इत्यनेन खप्रत्ययस्य मातृभोगशब्दाद्विधानेन तदर्थविशिष्टस्वार्थबोधकत्वमेव तस्य, न तु भोगशब्दमात्रार्थविशिष्टस्वार्थबोधकत्वमिति वक्ष्यमाणपदत्वाभावः स्पष्ट एव। अत एव-उक्तस्य समान-

भावप्रकाश।

**असम्भवादिति**। तथा च तत्सामर्थ्यादेकत्वे लब्धे एकपदवृत्तिनिमित्तनिमित्तिनोः सतोर्णो भवतीत्यर्थलाभेन मातुर्नमनमित्यादिवाक्यवारणेऽपि रामनामेत्यादिवारणाय समानेति, तच्च एकपरमिति भावः। यत्तु दण्डी–निमित्तवत्पदभिन्नपदत्वाभाववत्त्वं समानपदत्वमिति। तन्न, रामेण यूष्णः मातृभोगीण इत्यादिसिद्धावपि रामनामेत्यादावुत्तरपदत्वे चेति प्रत्याख्यानरीत्याऽतिव्याप्तेः। सुबुत्पत्तेः प्राक् समासे गन्धर्वगानमित्यादावतिव्याप्तेश्च। एतेन न बहुव्रीहिः, किं तु कर्मधारय इत्यप्यपास्तम्। आद्ये समुदायप्रकृतिमादायापि दोषापत्तेश्च। पदत्वस्य क्लेशतोऽप्यनादराच्च सुपर्वणेत्यादावव्याप्त्यापत्तेश्च। यत्तु रत्नाकरकृद्–निमित्तस्य निमित्तिमत्पदस्थत्वमेव समानपदस्थत्वमिति। तन्न, रामनाम गन्धर्वगानमित्यादावतिव्याप्तेः। अन्यथा मातृभोगीण इत्यादावव्याप्तेः। अत्र मान्याः–अखण्डत्वं चात्र रेफषकारानधिकरणसमभिव्याहृतपदावृत्तित्वमित्याहुः, तत्प्राचामनुरोधेन। तस्य नकारनिष्ठत्वेऽपि पदानिष्ठत्वादखण्डत्वं चेति विशेष्यविरोधापत्तेः। तदेतत्सर्वं ध्वनयन्नत्राह–**तत्त्वं चेति**। अखण्डत्वं चेत्यर्थः। तदनधिकरणत्वं निमित्तिमत्त्वं च पदविशेषणमिति भावः। तथा विवक्षायां पदत्वनिवेशफलमाह—**तेनेति**। **इत्यत्रेति**। इत्यादावित्यर्थः। मात्रकेवलशब्दौ स्पष्टार्थौ। **तत्त्वाभावात्**–पदत्वाभावात्। एवं निवेशेनात्र णत्वकरणे बीजमाह–**अत एवेति**। नन्वाद्यविशेषणाभावे रामेणेत्यादौ न दोषः, निमित्तिमतोऽपदत्वान्निमित्तिमत्पदरू-

सरला।

**तत्त्वमिति**। अखण्डपदत्वं च निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वम्। 'रामनाम' इति विशिष्टपदस्य निमित्तं रेफस्तदनधिकरणं निमित्ती नकारस्तद्वत् पदं 'नाम' इति, तद्घटितत्वमेव न तु तदघटितत्वमिति न णत्वम्, 'मातृभोगीणः' इत्यस्य च तद्धितविशिष्टस्य निमित्तम् ऋकारस्तदनधिकरणं पदं भोग इति, न तद् निमित्तिमत्, यच्च निमित्तिमद् भोगीन इति, न तत्पदमिति निमित्तानधिकरणन्निमित्तिमत्पदमुदासीनं तदघटितत्वमेवेति तत्र णत्वसिद्धिः। न चैवं 'रामनरेण' 'परमाग्नीध्रेण' इत्यादौ 'नर' 'आग्नीध्र' इत्यनयोर्निमित्तभूतरेफघटितत्वेन निमित्तानधिकरणनिमित्तिमत्पदत्वं तयोर्नास्ति किन्तूदासीनस्य 'नाम' इत्यादेरेवेति तदघटितत्वेन 'रामनरेण' 'परमाग्नीध्रेण' इत्यनयोरखण्डपदत्वापत्त्या 'नर' 'आग्नीध्र' घटकनकारस्थाने णत्वापत्तिरिति वाच्यम्, निमित्तविशिष्टनिमित्तिमत्पदाघटितत्वमखण्डपदत्वम्, वैशिष्ट्यञ्च—स्वोत्तरत्वं, स्वाघटितपदघटकत्वमेतदुभयसम्बन्धेनेति विवक्षणेनादोषात्। तथा हि, निमित्तपदेन

## शब्दरत्नम् ।

जन" इति सूत्रस्थम् "आचार्यादणत्वं च" इति चरितार्थम् । सुपर्वणेत्यादिसिद्धये निमि- त्तानधिकरणेति । पदं चात्र लोके विभक्तीतरानपेक्षयाऽर्थबोधकत्वेन दृष्टम् । तेन गन्धर्व- गानमित्यादौ सुबुत्पत्तेः प्राक् समासेऽपि णत्वं न । क्षुभ्नादिषु नृनमनशब्दस्तु संज्ञाभूतो- ऽखण्ड इति तस्य ऋवर्णात्परस्य णत्वे ज्ञापकता भाष्योक्ता नासङ्गतेत्याहुः ।

## भैरवी ।

पदत्वाश्रयणादेव । चरितार्थमिति । तावन्मात्रेणातिप्रसङ्गवारणासम्भवादणत्वमित्यावश्यकमिति भावः। इत्यादिसिद्धये–णत्वघटितप्रयोगस्य सिद्धये। नन्वत्र पदत्वम्पारिभाषिकमुतार्थवत्त्वमात्रम् । नाद्यः, गन्धर्वगानं रामनमनमित्यादौ सुबुत्पत्तेः प्राक् समासेनोत्तरपदस्य पारिभाषिकपदत्वा- भावाण्णत्वापत्तेः। नापि द्वितीयम्, रामेणेत्यादावेव णत्वासिद्धेरत आह–पदं चात्रेति। अत्र–उक्त- समानपदत्वलक्षणे। अर्थबोधकत्वम्–अर्थबोधजनकसमुदायघटकत्वम्। तच्च विभक्तिसहकारेण यस्य बोधकता तद्घटके खप्रत्ययेऽप्यस्तीति मातृभोगीण इत्यत्र णत्वाप्राप्तिरतोऽभावद्वयनिवेशः। तेन– उक्तरूपस्य पदत्वस्य लक्षणघटकत्वेन। निमित्तानधिकरणत्वन्निमित्तानवयवकत्वम्, तच्च मातृ- भोगीण इत्यत्र भोगशब्देऽस्तीति तदनवयवकत्वरूपन्तदघटितत्वं समुदायस्य नास्तीत्यत्र णत्व- न्न स्यादतो–निमित्तिमदिति। ननु 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्त' इति पक्षे ऋकारात्परस्य णत्वे क्षुभ्नादिगणे नृनमनशब्दपाठस्य ज्ञापकता भाष्ये उक्ता, सा निरुक्तस्याखण्डपदत्वस्याश्रयणे कथं सङ्गच्छेत। तत्र भवत्सम्मताखण्डपदत्वस्याभावेन णत्वप्राप्त्यभावादत आह–क्षुभ्नादिष्विति। संज्ञाभूतऽखण्ड इति। अनेन पूर्वोत्तरसमुदायस्य संज्ञात्वसूचनेन "पूर्वपदात्संज्ञायामगः" इति सू- त्रस्य प्रवृत्तिर्ध्वनिता। "छन्दस्यृदवग्रहात्" इत्यस्य तु न प्राप्तिरत्रावग्रहस्यादर्शनात्। भाष्यो-

## भावप्रकाश ।

क्तत्वाच्च । अत एव मातृभोगीण इत्यादौ न दोषोऽत आह–सुपर्वेति । तदनधिकरणत्वं च तदनवयवक- त्वम् । तत्र मातृभोगीण इत्यादौ तदनधिकरणसुभोगरूपपदघटितत्वात्तत्सिद्धये–निमित्तिमदिति । ननु किं पारिभाषिकं पदत्वमुतार्थवत्त्वम्? नाद्यः, रामनमनमित्यादौ सुबुत्पत्तेः प्राक् समासे णत्वापत्तेः । इष्टा- पत्तिस्तु न, पक्षान्तरे तदप्राप्तेः । एतेन प्राक् सुबुत्पत्तेः समासे णत्वं, सुबन्तेन समासे तु नेति विवेक इति भ्रान्त्योक्तिः प्राचामनुरोधेनेति ध्वनितम् । नान्त्यः, रामेण मातृभोगीण इत्यादौ णत्वासिद्धेरत आह–पदं चेति । लक्षणेति भावः । अत्रेति । अनेनान्यव्यावृत्तिः । अनपेक्षयेति । अभावद्वयनिवेशफलमर्थव- त्सूत्रोक्तरीत्या बोध्यम् । प्रत्ययस्य भोगीनेत्यस्य चातत्त्वान्न प्रागुक्तदोष इति भावः । अपिस्तदुत्तरसमा- सस्मुच्चायकः । नन्वेवं क्षुभ्नादौ नृनमनशब्दपाठो व्यर्थो यौगिकत्वादत आह–क्षुभ्नेति । न च तत्र छन्दस्यृदवेति प्राप्तिः, ईदृशे विषयेऽवग्रहाभावात् । तद् ध्वनयन्नाह–तस्येति । वर्णैकदेशानां वर्णग्रहणे- नाग्रहणमिति पक्षे इति भावः । आहुरिति । अत्रारुचिबीजं तु तस्य तत्त्वे तदसाङ्गत्येऽपि तत्र संज्ञात्व-

## सरला ।

रामघटकस्य परमघटकस्य वा रेफस्य ग्रहणे तदुत्तरत्वं नरघटके आग्नीध्रघटके वा नकारे वर्तते, एवं तदघटितं पदं नर इति आग्नीध्र इति वा तद्घटकत्वमपि तत्र नकारे इति निमित्तविशिष्टो निमित्ती नर आग्नीध्र घटकनकारस्तद्घटितं नर इति आग्नीध्र इति वा तद्घटितत्वमेव रामनर परमाग्नीध्र इत्यस्य, न तु तदघटि- तत्वमिति नाखण्डपदत्वम् । यत्तु निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वरूपे अखण्डपदत्वपरिष्कारे दोष- मुद्भाव्य निमित्तविशिष्टस्य नस्य णत्वम्, वैशिष्ट्यञ्च–स्वोत्तरत्वं, स्वाघटितपदाघटकत्वमेतदुभयसम्बन्धे- नेति णत्वविधायकसूत्रस्यार्थविवक्षणेन राम–परमघटकरेफमादाय द्वितीयसम्बन्धाभावाद् नर आग्नीध्रशब्दा- वयवरेफस्य ग्रहणे तु पूर्वसम्बन्धाभावात्तन्निराकरणमिति, तच्चिन्त्यम्, प्रकारान्तरेण दोषवारणेऽप्यखण्डप- दत्वस्यानिर्वचनादिति ।

रामनाम । यूषण इति । यूषो मण्डः ।

मुद्गामलकयूषस्तु भेदी दीपनपाचनः ।

इति दर्शनात् । इति पक्षे त्विति । एतेन पञ्चमीसमासस्य पाक्षिकतां ध्वनयति। तथा हि, भाष्ये—बेभिदिता, माथितिकः, अपीपचन्निति प्रयोजनत्रयमुक्तम् । तच्चान्यथा सिद्धम्। "एकाच उपदेशे"इत्यत्र विहितविशेषणादेव बेभिदितेत्यत्र

---

शब्दरत्नम् ।

मण्ड इति । तद्विशेष इत्यर्थः । बेभिदितेति । बेभिद्यतेर्यङन्तात्तृचि अल्लोपयलो-

भैरवी ।

क्तेति । "एओङ्" सूत्रे इत्यादिः । वस्तुतस्तु यदीयमखण्डा नशब्दान्तसंज्ञा तदा संज्ञात्वभङ्गापत्या तत्र णत्वाभावस्य सिद्धौ गणे तस्य पाठो व्यर्थ एव स्यादिति तस्य यौगिकत्वमेवास्ति, न तु संज्ञात्वम् । न चैवं सति पाठस्य वैयर्थ्यमाशङ्कनीयम् , तेन निरुक्तस्याखण्डपदत्वस्य "रषाभ्याम्"इति सूत्रे सत्ताऽस्तीति बोधनद्वारा विध्यप्राप्तिरेव बोध्यते। अत एवाह—इति भाव इति । नन्वेतादृशाखण्डपदत्वमेव यदि णत्वप्रवृत्तिसम्पादकं,तदा सर्वनाथरघुणेत्यत्र निमित्तानधिकरणनिमित्तमन्नाथपदघटितत्त्वस्य समुदाये सत्त्वाण्णत्वं न स्यादिति चेत् ? न, पदे निरुक्ताखण्डत्वन्निरुच्य नकारे तत्स्थत्वनिवेशापेक्षया लाघवान्नकार एव निमित्तानधिकरणनिमित्तिमत्पदावयवत्वविशेषणविवक्षासत्त्वेनादोषात् । नचैवमपि रघुनरेणेत्यत्र नरशब्दावयवस्य नस्य णत्वन्दुर्वारमिति वाच्यम् । निमित्तिमत्त्वमित्यत्र निमित्तिमत्त्वन्नकारे निविष्टन्तच्च स्वोत्तरत्वसम्बन्धेन रेफषकारान्यतरत्वरूपमेव । एवञ्च यस्य स्वपदेनोपादानन्तत्र तस्यैव प्रत्यासत्त्या निमित्तानधिकरणेत्यत्र निमित्तपदेन ग्राह्यतया नरशब्दाद्यनकारस्य परेण रेफेण निमित्तत्वव्यवहार एवं नेति यद्रेफव्यक्तिमादाय निमित्तत्वव्यवहारस्तस्य नकारस्य तद्व्यक्त्यनधिकरणत्वस्य नरशब्दे सत्त्वेनादोषात् ।

ननु मण्डशब्दस्य तण्डुलैर्निर्मिते द्रवे प्रसिद्धेर्मुद्गामलकयूषस्त्विति परवाक्यविरोधो यूषो मण्ड इति व्याख्याने प्राप्नोतीत्यत आह—तद्विशेष इति। एवञ्च यथा तण्डुलजलनिर्मिते यूषव्यवहारस्तथा मुद्गैः कृतेऽपि यूषव्यवहारस्यायुर्वेद एव सुप्रसिद्धतया न परवाक्यविरोध इति भावः । मूले—पाक्षिकतामिति । तस्यानित्यत्वादनाश्रयणेऽपि तत्साधनीयकार्यस्य प्रकारान्तरेण सिद्धतामित्यर्थः । तामेवाह—तथा हीत्यादिना । तस्यानित्यत्वे प्रमाणन्तु "निष्ठायां सेटि" इति सूत्रे इटि कृते एव णिलोपो, न तु ततः प्रागिति कालावधारणार्थकसेड्ग्रहणमिति

भावप्रकाश ।

भङ्गभियैव णत्वाभावे सिद्धे तत्र तत्पाठानर्थक्यमेवेति । तस्मादीदृशासमानपदत्वविवक्षासूचनद्वारा विधेरप्राप्तिबोधक एव स न तथेति तत्त्वं बोध्यम् ।

ननु यूषो न मण्डः, तयोर्भेदस्यायुर्वेदादावुक्तत्वात् । तथा हि, वृद्धसुश्रुतः—

तण्डुलैश्च कृतो मण्डः साधनं तस्य कथ्यते । सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता ॥

विलेपी बहुसिक्था स्याद्यवागूर्विरलद्रवा । अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे ॥

चतुर्दशगुणे मण्डो यवागूः षड्गुणेऽम्भसि । स्याद्धितः साधितो यूषस्त्वष्टादशगुणे जले ॥ इति ।

नलः—

भृष्टमुद्गदलानां तु पलैकेन विपाचितः । पूतोपनीतविदलस्तनुर्यूषः कृताकृतः ॥ इति च ।

अत एव"मण्डस्तु त्रिविधो ज्ञेयः"इत्यादिना मण्डवर्गे लाजमण्डादिकथनेऽपि यूषानुक्तिरग्रे पार्थक्ये मुद्गयूषाद्युक्तिरत आह—तद्विशेष इति । एतेन तथा प्रकाशरत्नाकरदण्डथाद्युक्तमपास्तम् । अल्लोपेति । नित्य-

इण्निषेधो न । मथितं पण्यमस्येति विग्रहे ठकि ठस्येकादेशे "यस्येति च" इत्य-

शब्दरत्नम् ।

पयोः "एकाच उपदेशे" इति निषेधादिण् न स्यात् । पञ्चमीसमासे त्वल्लोपस्य स्थानि-वत्त्वान्निषेधाप्रवृत्तिरिति भावः । एवमितरयोः कादेशजुसोरभावो बोध्यः । विहितविशे-षणेति । एवं च स्थानिवत्त्वं विनाऽपि तदप्रवृत्तिः सिद्धेति भावः । विहितविशेषणत्वं चास्य "एकाचो द्वे" इत्यत्र भाष्ये ध्वनितम् । तत्र हि यङ्लोपे बेभिदितेत्यत्र यङन्ता-त्तृचि इट्प्रतिषेधमाशङ्क्यैकाचोऽङ्गादिति व्याख्यानेन परिहृतम् । तद्भाष्यस्य यथाश्रुतत्वे बिभित्सतीत्यादौ दोषवारणायोपदेशग्रहणस्यैकाजंशेऽपि सम्बन्धे बेभिदितेत्यादावपि परि-हारासम्भवेन तस्य विहितविशेषणत्वे तात्पर्यमावश्यकम् । प्रत्ययविधानावधेरेव प्रायेणा-ङ्गत्वादङ्गादित्यनेनेदं सूचितम् । विहितविशेषणे च बिभित्सतीत्यादावदोषेणैकाजंशे उप-

भैरवी ।

वक्ष्यते। स्पष्टञ्चेदङ्कुदन्ते मूले। निषेधादिति। भिदेरेव द्विःप्रयोगसत्त्वेन तस्योपदेशे एकाच्त्वा-दिति भावः । पञ्चमीसमासे । "अचः परस्मिन्पूर्वविधौ"इति सूत्रे पूर्वविधिशब्दे पूर्वस्मा-द्विधिरिति पञ्चमीसमासे । इतरयो.—माथितिकः अपीपचन्नित्यनयोः । तदप्रवृत्तिरिति । इ-ण्निषेधाप्रवृत्तिरित्यर्थः । यत्तु पञ्चमीसमास आवश्यक इति तेनैवेष्टसिद्धौ विहि-तविशेषणाश्रयणे प्रमाणाभाव इति । तन्न, बिभित्सतीत्यस्य सिद्ध्यर्थन्तस्यावश्यकत्वात्, भाष्यकारसम्मतत्वाच्च, इत्याशयेनाह—विहितविशेषणत्वञ्चेति । परिहृतमिति । अत्र ह्यावृत्त्या द्व्यचकमङ्गन्न त्वेकाजिति निषेधाप्रवृत्तिरिति भावः । यथाश्रुतत्वे—एकाचोऽङ्गात्परस्य वलादे-रार्द्धधातुकस्येड् न स्यादित्यर्थकत्वे । दोषवारणाय—इण्निषेधानापत्तिरूपदोषवारणायेत्यर्थः । सम्बन्ध इति । तथा सति य उपदेशे एकाच् ततः परस्याङ्गसंज्ञानिमित्तस्येड् न स्यादित्यर्थः । बेभिदितेत्यादावपीति। सौलभ्यार्थकैवकारार्थकोऽत्रापिशब्दः। तस्य—एकाचोऽङ्गादिति भाष्यस्य । आवश्यकमिति । तस्य भाष्यस्य दोषवारणाय प्रवृत्तत्वेन यथा दोषपरिहारो भवति तदर्थकत्व-न्तस्यावश्यकमिति भावः। नन्वङ्गादित्येतावन्मात्रेण कथन्तस्य लाभोऽत आह—प्रत्ययविधे-ति । यस्मात्प्रत्ययविधानन्तदादेरित्यर्थः, अङ्गसंज्ञाविधायकसूत्रे तथोपादानादिति । प्रत्यय-विधानावधेरेकाचः परस्येति व्याख्येयमिति तात्पर्यम्। यस्मात्प्रत्ययविधानन्तद्भिन्नस्य तदा-देरप्यङ्गत्वं भवामीत्यादौ दृष्टमतः—प्रायेणेति । इदमिति । विहितविशेषणमित्यर्थः । अदोषेणेति । इट्प्रतिषेधानापत्तिरूपदोषाभावेनेत्यर्थः । न च विहितविशेषणपरतया तस्य भाष्यस्य योजने गोधुक्शब्दादाचारक्विबन्तादिट्प्रतिषेधो न स्यादिति वाच्यम् ? तत्र दुहित्यस्याङ्गत्वाभावेन

भावप्रकाश ।

त्वादिति भावः । सर्वविधिस्य इड्विधिरिति तु नास्त्येवेति भावः । निषेधादिति । भिदेरेव द्विःप्रयोगा-दुपदेशे एकाच्त्वाच्चेति भावः । पञ्चमीति । "अचःपर" इत्यत्र पूर्वविधावित्यस्यावृत्त्येति भावः । एव-मितरयोरिति । 'माथितिकः' 'अपीपचन्' इत्यनयोरल्लोपस्य णिलोपचङन्त्यकारैकादेशयोश्च स्थानिवत्त्वा-दित्यर्थः । तदप्रवृत्तिरिति । इण्निषेधप्रवृत्तिरित्यर्थः । यत्तु आवश्यकपञ्चमीसमासेन सिद्धे विहितवि-शेषणं व्यर्थं, "निष्ठायां सेटि"इति सेट्ग्रहणविरुद्धं चेति रत्नाकरकृत् । तन्न, भाष्यविरोधात्, बिभित्सतीत्या-द्यसिद्धेश्च, तस्य चिन्त्यप्रयोजनत्वाच्च । तद् ध्वनयन्नाह—विहितेति । बेभिदितेत्यत्र यङन्तात्तृचि यङ्लोपे अल्लोपयलोपयोरित्यन्वयार्थौ । एकाचोऽङ्गादितीति । उपदेशपदेनानुदात्त एव विशेष्यते न त्वेकाजिति भावः । आवृत्तिसंख्यया च द्व्यजङ्गमिदं नैकाजिति कैयटः । श्रुतत्वे इति दोषेणान्वेति । प्रत्यय-विधानावधेरेकाचः परस्येति व्याख्याने इत्यर्थः । अन्तरङ्गत्वात्सन्नन्ते द्वित्वे कृते तावेव सुप्तिङावित्युक्त-रीत्या समुदायस्यैवाङ्गत्वेनैकाचोऽङ्गादपरत्वेनेटो दुर्वारत्वमिति भावः । आदावपीति । अपिरेवार्थे ।

ल्लोपे "इसुसुक्तान्तात्कः" इति कादेशस्तु न भविष्यति। ठस्याभावात्॥ न च स्थानिवद्भावेन ठत्वमल्विधित्वात्। "ठस्येकः" इत्यत्र हि स्थान्यादेशयोरकार

शब्दरत्नम्।

देशग्रहणासम्बन्ध इति तदाशयः। न भविष्यतीति। स्थानिवत्त्वं विनाऽपीति शेषः। अल्विधित्वादिति। "ठस्येकः" इत्यत्र स्थानिनि प्रत्ययेषु च सर्वत्राकारो न विवक्षितः। आदेश एव तु विवक्षितः। अन्यथा निषादकर्षूशब्दाद् "ओर्देशे" इति ठञि व्यञ्जनमात्रस्य व्यञ्जनरूपकादेशे कशब्दस्य लाक्षणिकत्वात् "केऽणः" इति ह्रस्वानापत्तिरिति भावः। स्थान्यादेशयोरिति। इकादेशस्थानिभूतप्रत्यये आदेशविधायके सूत्रे चेत्यर्थः। स्पष्टं

भैरवी।

यथाश्रुतेऽपि निषेधाप्राप्तेः, हलन्तेभ्य आचारक्विपोऽनभिधानाच्च। स्थानिवत्त्वमिति। "अचः परस्मिन्" इति स्थानिवत्त्वमित्यर्थः।

"ठस्येकः" इत्यत्राकारान्तस्य ठेत्यस्य स्थानित्वेनाश्रयणमिति कथमल्विधित्वमत आह-ठस्येक इत्यत्रेति। प्रत्ययेषु-ठकारादिप्रत्ययेषु। एतेन ठचो व्यावृत्तिः। अन्यथेति। मूलोक्तरीत्या स्थान्यादेशयोरेव तस्याविवक्षायाम्। लाक्षणिकत्वादिति। स्थानिबोधकं यट्ठस्येति, तत्र व्यञ्जनमात्रस्य विवक्षितत्वे तस्य स्थाने ककाररूपव्यञ्जनादेशे पूर्वकालस्थिताकारान्तस्य कशब्दस्य लक्षणद्वयानुसन्धानप्रयोज्यप्रतिपत्तिकस्वरूपत्वादित्यर्थः। अत्र ह्रस्वत्वस्य प्रवृत्तौ "अव्ययात्त्यप्"सूत्रस्थम्भाष्यमेव मानम्। तत्र हि निषादकर्षूर्नाम देशः नैषादकर्षुकः, दाक्षिकर्षुक इत्युक्तं, दाक्षिकर्षुर्नाम वाहीकग्रामः,"तत्र भवः" इति ठञ् "इसुसुक्तान्तात् कः" "केणः" इति ह्रस्वः। उक्तकल्पनायामपि मूलं नासमञ्जसमित्याह—इकादेशस्थानिभूतेति। स्पष्टमिति। तत्र हि ठस्येत्यत्र वर्णस्य ग्रहणं सङ्घातस्य वेति विचारे प्रथमपक्षे धात्वन्तस्य प्रतिषेधो वक्तव्यः-पठति, पठितुम्। अस्तु तर्हि सङ्घातग्रहणम्। सङ्घातग्रहणञ्चेदुणादिमाथितिकानाम्प्रतिषेधो वक्तव्यः। उणादीनान्तावत्-कण्ठः, शण्ड इति। इह च मथितम्पण्यमस्य माथि-

भावप्रकाशः।

सविकरणादौ विशिष्टस्याङ्गत्वादाह-प्रायेणेति। चस्त्वर्थे। स्थानिवत्त्वमिति। अल्लोपस्येति भावः। वक्ष्यमाणयथाश्रुतमूलासङ्गतेराह-ठस्येक इति। लाघवात्प्रासङ्गिकमाह-प्रत्ययेषु च सर्वत्रेति। प्रत्ययविधायक"कालाट्ठञ्"इत्यादिष्वित्यर्थः। एतेनादेशेऽप्यकारोऽविवक्षित इत्यपास्तम्। बहुषु प्रयोगेषु तत्त्वकल्पनापेक्षयाऽऽदेशयोरेव तत्त्वकल्पने लाघवात्, तदाह-आदेश इति। जातावेकवचनं, तयोरित्यर्थः। तेनोत्तरग्रन्थसंगतिः। एतेन यद्वा कादेशेऽकारो विवक्षितः, तेन व्यञ्जनमात्रस्य कादेशे ठाकारेण सह "अतो गुणे" इति पररूपमित्यादि मान्योक्तिः प्राचामनुरोधेनेति ध्वनितम्। यत्तु प्रत्ययेऽविवक्षायां "ठस्येक" इत्यत्रापि सा सिद्धैवेति चासङ्गतिः पुनरुक्तिश्चैवमग्रेऽपीति मन्दः तन्न, तत्र सत्त्वेऽपि सूत्रेऽन्यग्रहणनिरासाय तथोक्तेरिति दिक्। अन्यथा—लाघवमनादृत्य मूलोक्तरीत्यङ्गीकारे। यत्तु मन्दः—"केऽणः" इत्यत्राप्यस्योच्चारणार्थत्वं मति। तन्न, राका पाक इत्यादावतिप्रसङ्गापत्तेः। वर्णपक्षेऽङ्गस्येत्यनेन वारयितुमशक्यत्वात्। स्वरीत्या क्रमेण लक्षणया मूलं योजयति-इकेति। जातावेकवचनम्। अत्रार्थे मानमाह-स्पष्टमिति। एतेन"ओर्देशे ठञ्""इसुसुक्तान्तात्कः"इत्यादौ अकारे फलाभावात् टीकोक्तरीतिर्न तु "ठस्येकः" इत्यादौ कण्ठादिव्यावृत्तये स्वरितसंगार्थं साफल्यादिति मन्दोक्तमपास्तम्। भाष्यादिविरोधात् तेषाम-

सरला।

इकादेशस्थानिभूतप्रत्यये इति। ठक्ठञादिप्रत्ययेऽकारस्य "उपदेशेऽजनुनासिक इत्" इतीत्संज्ञायां तल्लोपे ठकारमात्रस्यैवाऽऽदेश इति भावः। तदाह-आदेशविधायके सूत्रे चेत्यर्थ इति। "ठस्येकः" इति सूत्रे ठपदेऽकार उच्चारणार्थोऽविवक्षित इति यावत्। तेन ठकारस्य 'इक' आदेशो भवतीति सूत्रार्थः। इकादेशेऽकारस्तु विवक्षितः। अनेकप्रत्ययेषु ठक्ठञादिष्वकारविवक्षापेक्षयाऽऽदेशमात्रेऽ-

उच्चारणार्थः । अपीपचन्नित्यपि णिलोपस्य चङन्त्यकारयोरेकादेशस्य च स्थानिवद्भावं विनाऽपि सिद्धम् । विदिसाहचर्यादभ्यस्तादपि लङ एव झेर्जुस्विधानात् । न च भिचा साहचर्याद् लुङ एव किं न स्यादिति वाच्यम् । पूर्वसाहचर्यात्परसाहचर्यस्य बलीयस्त्वादिति दिक् ।

---

शब्दरत्नम् ।

चेदं "ठस्येकः" इत्यत्र भाष्यकैयटयोः । इदमुपलक्षणम् । सन्निपातपरिभाषयाऽपि कादेशवारणं बोध्यम् । स्पष्टं चेदं "ठक्छसोश्च" इति वार्त्तिकभाष्ये । बलीयस्त्वादिति । एतच्च "यस्य विभाषा" "वित्तो भोग—" इति सूत्रस्थकैयटे स्पष्टम् । एतत्सर्वम् "अपरवि-

भैरवी ।

तिक इति, अकारलोपे कृते तान्तादिति कादेशः प्राप्नोति । वर्णग्रहणे पुनः सति अल्विधिरयम्भवति । तस्माद्विशिष्टग्रहणम् । तस्माद्विशिष्टस्य ठकारस्य ग्रहणङ्कर्त्तव्यम् । तस्माद्विशिष्टस्येति तद्धितस्य ठादेरिति कर्त्तव्यम् । एवञ्च ठादेरिति वचनादल्विधित्वात्स्थानिवद्भावाभावात्कादेशप्रसङ्गः । अस्तु तावद्वर्णग्रहणम् । ननु चोक्तण्ठादेशे वर्णग्रहणञ्चेद्धात्वन्तप्रतिषेध इति । नैष दोषः । अङ्गादिति वर्तते । अर्थवशाद्विभक्तिविपरिणाम इति कैयटः । एतेन वर्णमात्रस्य स्थानित्वमिति प्रतिपादितम् । इदमिति । अल्विधित्वेन समाधानमित्यर्थः । सन्निपातेति । अजादिसन्निपातेन जातस्य तान्तत्वस्य तद्विघातकादेशम्प्रत्यनिमित्तत्वमिति भावः । एतच्च—परसाहचर्यस्य बलीयस्त्वञ्च । कैयटे स्पष्टमिति । तत्रत्यभाष्ये भगवता—"बहव इमे विदयः पठ्यन्ते, तत्र न ज्ञायते कस्य नित्यन्नत्वम् , कस्य विभाषा, कस्य इट्" इति प्रश्ने—

"वेत्तेस्तु विदितो निष्ठा विद्यते विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दतेः ॥" इत्युक्तम् ।

एतेन 'विद सत्तायाम्' इत्यस्मान्नत्वम् , 'विद विचारणे' इति धातोर्निष्ठायान्नत्वविकल्पः, उन्दिना परेण साहचर्यात् । यद्यपि "नुदविद"इति सूत्रे नुदधातुस्तौदादिक आदौ पठितस्तथाऽपि शब्दपरविप्रतिषेधादुन्दिरत्र व्यवस्थाहेतुर्न तु नुदिरिति कैयटः । 'विद्लृ लाभे' इत्यस्मात्तु प्रतिषेधो भोगप्रत्यययोः, 'विद ज्ञाने' इत्यस्मात्तु इटा व्यवधानान्नत्वाभावः । यस्तु तुदादौ पठ्यते तस्माद् "विभाषा गमहनविदविशाम्" इति क्वसुप्रत्यये इड्विकल्पाद् "यस्य विभाषा"इतीण्णिषेधः, विभाषेति सूत्रे हनसाहचर्याददादिकस्य तु न ग्रहणम्पूर्वसाहचर्यात्परसाहचर्यस्य बलवत्त्वादिति भावः । ननु "विप्रतिषेधे परङ्कार्यम्" इति सूत्रे कार्यशब्दोपादानेनाप्राप्तस्यापूर्वस्य विधेयस्य ग्रहणमिति परसाहचर्यस्य बलवत्त्वाश्रयणमशक्यमत आह—एत-

भावप्रकाश ।

व्युत्पन्नत्वाच्च । त्वदुक्तरीत्या ठस्येत्यत्रापि विवक्षापत्त्या मूलानुद्धाराच्चेति दिक् । ननु तत्र भाष्ये संघातग्रहणपक्षोऽपि वर्णग्रहणपक्षवदस्ति । अल्विधित्वेनैव पञ्चमीसमासेन सिद्धेरित्युक्तस्तत्कथं प्रत्याख्यानमत आह—इदमुपेति । अजादिसंनिपातेन जाततान्तता कथमजादिविघातं कुर्यादिति भावः । "कृन्मेजन्तः" इत्यत्रोक्तफलानामुदाहरणत्वात्कथमत्र प्राप्तिरिति शङ्कानिरासायाह—स्पष्टं चेदमिति । उक्तपक्षभेदेनोक्तसमाधिद्वयमित्यर्थः । तत्र हि इके कृते "भस्याढे" इत्येव सिद्धे ठक् न कार्यं इत्याशङ्क्य माथितिकादिवत् कादेशो न स्यादित्युक्तम् । वर्णपक्षेऽल्विधित्वादस्थानिवत्त्वात्, संघातपक्षे सन्निपातपरिभाषया नेति कैयटः । एतेन मथितमाचष्टे मथित्, तत्पण्यमस्येति भ्रान्तोक्तं, मथितयतेः क्विपि मथित् तेन चरतीत्यर्थे ठकि तद्रूपासिद्धिरिति रत्नाकरोक्तं चापास्तम् । मथितं पण्यमस्य माथितिक इत्यकारलोपे कृते तान्तादिति कादेशो नेति भाष्यद्वयविरोधापत्तेः, अकारलोपे इत्यस्य वैयर्थ्यापत्तेश्च । मन्मते इकप्रवृत्तिकाले काप्राप्तिसत्त्वेनोत्सर्गप्रवृत्तिरविघ्नेति बोधार्थं तदुक्तिः । शास्त्रप्रवृत्तिमात्रकथनतात्पर्यकत्वे णिलोपादीनां त्यागे बीजानापत्तेश्च, समुदायग्रहणे दोषो न वर्णग्रहणे इति तत्र तद्भाष्यविरोधापत्तेश्चेति दिक् । एतच्चेति । परसाहचर्यबलीयस्त्वं

शब्दरत्नम् ।

धाविति तु वक्तव्यम्'' इति वार्त्तिकस्थकैयटानुरोधेन । दिगिति । दिगर्थस्तु एतदर्थं पञ्चमीसमासस्यावश्यकत्वम् । तथा हि परसाहचर्यस्य बलवत्त्वे मानाभावः । विप्रतिषेधसूत्रे कार्यशब्देन शास्त्रीयस्यैव ग्रहीतुमौचित्येनात्र तदप्राप्तेः ।

"नित्यः परयणादेशः परश्चासौ व्यवस्थया ।
युगपत्सम्भवो नास्ति बहिरङ्गेण सिध्यति ॥"

इति "अचः परस्मिन्" इति सूत्रस्थभाष्योक्तरीत्या पूर्वसाहचर्यस्यान्तरङ्गत्वेन तस्यैव ग्रहीतुमौचित्याच्च । "विभाषा गमहनविदविशाम्" इत्यत्र लुग्विकरणपरिभाषाऽ-

भैरवी ।

त्सर्वमिति । अनुरोधेनेति । अयम्भावः—तेन हि पूर्वविधाविति न्यासपक्षे य आयन्धिन्वन्तीत्यादिप्रयोगस्तस्यानिर्वाह इति मनसि निधाय यद्वार्तिकम्प्रवृत्तम् "अपरविधाविति तु" इति, तस्य युक्तत्वमित्याशयेन तादृशन्यासान्तरे निमित्तापेक्षया परत्वाश्रयेण बेभिदितेत्यादिसिद्धिरुक्ता, न तु पूर्वविधाविति न्यासेनैव तेषां सिद्धिरित्यभिहितन्तद्रीत्येति । वस्तुतस्तु पूर्वविधाविति न्यासेनैव सर्वेष्टसिद्धिर्भवति , पञ्चमीसमासस्य वक्ष्यमाणप्रयोजनानुरोधेनावश्यकत्वात् ।

यद्यप्यस्मिन् पक्षे हे गौरित्यत्र स्थानिवद्भावेन "एङ्ह्रस्वात्" इति लोपः प्राप्नोति, तथाऽपि पञ्चमीसमासमाश्रित्य यः स्थानिवद्भावस्तस्यानित्यत्वेन "एङ्ह्रस्वात्" इति सूत्रे एङ्ग्रहणसामर्थ्याद्वा तत्र स्थानिवत्त्वाप्राप्त्या दोषः परिहर्तुं शक्य इत्याशयेन दिगर्थमाह—दिगर्थस्त्विति । एतदर्थम्—अपीपचन्नितिरूपसिद्ध्यर्थम् । शास्त्रीयस्यैव—शास्त्रविधेयस्यैव । अत्र—साहचर्यविषये । तदप्राप्तेरिति । विप्रतिषेधशास्त्राप्राप्तेरित्यर्थः । सामान्यतः परत्वाश्रयणेऽपि न विप्रतिषेधशास्त्रस्य प्राप्तिरित्याशयेनाह—नित्यः परेत्यादि । भाष्योक्तरीत्येति । पट्व्या मृद्व्येत्यादेः "अचः परस्मिन्" इति सूत्रारम्भाभावेऽपि सिद्धिर्यथोक्ता तद्रीत्येत्यर्थः । अन्तरङ्गत्वं पूर्वोपस्थितत्वरूपमात्रान्तरङ्गत्वम् । नन्वेवं सति "विभाषा गम"इतिसूत्रविषये परसाहचर्याश्रयणपरभाष्यविरोध इत्यत आह—विभाषेति । तथा च लुग्विकरणपरिभाषाऽनुरोध एव तत्र परसाहचर्याश्रयणबीजं न तु तस्य बलीयस्त्वेनेति भावः । ननु यदि पूर्वसाहचर्य्यस्यान्तरङ्गत्वन्तदा

भावप्रकाशः ।

त्येयर्थः।"विभाषागमहन"इत्यत्र हन्तिसाहचर्याद्वेत्तेर्न ग्रहणं,किं तु तौदादिकविशिसाहचर्यात्तस्यैव लाभार्थस्य उक्तहेतोरित्याद्ये; "नुदविदोन्द"इत्यत्र तौदादिकनुदिना साहचर्यं न, किं तु रौधादिकोन्दिनोक्तयुक्तेरित्यन्त्ये उक्तमित्यर्थः।अत्रारुचिसूचनेन सिद्धान्तं वक्तुमाह—एतत्सर्वमिति । पञ्चमीसमासखण्डनप्रकाररूपं सर्वमित्यर्थः । नन्वपरविधावित्युक्ते स्थान्यादेशान्यतरापेक्षयाऽपरत्वे कथं बेभिदितेत्यादिसंग्रहः? उच्यते, यस्य स्थानिवत्त्वं तन्निमित्तापेक्षयाऽपरत्वविज्ञानान्न दोष इति कैयटः । पञ्चमीसमासस्त्वेवं न वदेदिति भावः । एतदर्थम्—अपीपचन्नित्येतदर्थम् । तथा हीति पाठः । अन्तरङ्गत्वेनेति । एतेन परश्चासाविति भाष्यविरोधाच्चिन्त्यमिदमिति मन्दोक्तमपास्तम् । तस्य पूर्वपक्षत्वात् तत्र शब्दपरविप्रतिषेधेऽपि परसाहचर्याभावाच्च । नन्वेवमप्युक्तसूत्रद्वयकैयटविरोधोऽत आह—विभाषेत्यादि । अनित्यत्वादितिच्छेदः । तन्मूलकेन

सरला

कारविवक्षणे लाघवाच्चेति न मूलासङ्गतिरिति भावः । सूत्रस्थभाष्योक्तरीत्येति । 'पट्व्या' 'मृद्व्या' इत्यत्र 'पटु ई आ' 'मृदु ई आ' इत्यवस्थायां पूर्वोपस्थितिनिमित्तकत्वेन पूर्वयणादेशस्यान्तरङ्गतया प्रवृत्तिरिति भाष्यकृता पूर्वोपस्थितिनिमित्तकत्वरूपमन्तरङ्गत्वं स्वीकृतम् । तथा च पूर्वसाहचर्यस्यापि पूर्वमुपस्थितत्वादन्तरङ्गत्वेन परसाहचर्यापेक्षया प्राबल्यमिति भावः ।

शब्दरत्नम् ।

नुग्रहाय परसाहचर्याश्रयणं "नुदविदोन्दत्रा" इत्यत्राप्यन्तरङ्गपरिभाषानित्यत्वाद्व्याख्यानेन परसाहचर्याश्रयणमिति बोध्यम् । प्रत्यैषिषन्नित्यादौ लङि "उभे अभ्यस्तम्" इति सूत्रस्थभाष्यसंमते एवमपि दोषाच्च । पूर्वोत्तरसाहचर्येण भावरूपादेशानपहृतविकरणकाभ्यस्तस्यस्यैव ग्रहणमित्यप्यतिक्लिष्टं, ततो वरं पञ्चमीसमास एव । "अपरविधाविति तु वक्तव्यम्" इति न्यासान्तरेऽपि पञ्चमीसमासो वक्तुं शक्यः। न्यासान्तरन्तु स्वविधेरपि

भैरवी ।

"नुदविद" इतिसूत्रविषये कथम्भवन्मते लक्ष्यसिद्धिरत आह-नुदेति । परिभाषा पूर्वोपस्थितविषये प्रवर्तते या'बहिरङ्गान्तरङ्गयोरन्तरङ्गम्बलीयः' इत्येषा परिभाषा सा । अनित्यत्वादिति । "ओमाङोश्च" इतिसूत्रस्थाङ्ग्रहणादित्यादिः । व्याख्यानेन-पूर्वोक्ताकरसम्मतव्याख्यानेन । प्रत्यैषिषन्निति । अत्र प्रतिपूर्वकात् प्रश्लिष्टकारात्मकाद् धातोः सन् तदन्ताल्लङ् । एवमपि-परसाहचर्यस्य बलवत्त्वाश्रयणेऽपि । ननु परसाहचर्यस्य बलवत्त्वानाश्रयणेऽपि प्रत्यैषिषन्नित्यादेः पञ्चमीसमासानाश्रयणेनापि विलक्षणार्थग्रहणेन सिद्धिर्भविष्यतीत्यत आह—पूर्वोत्तरेति । अनपहृतविकरणकेति । अत्र हि पररूपेण विकरणस्य चङोऽपहारसत्त्वात्सूत्रविहितस्य जुस्भावस्य प्रवृत्तिर्न भविष्यतीति भावः । अतिक्लिष्टमिति । उभयसाहचर्यस्याश्रयणापूर्वार्थाश्रयणप्रयुक्तगौरवेणातिक्लेशकरमित्यर्थः । यत्तु मूले परसाहचर्याश्रयणस्य बलवत्त्वमाश्रित्यापीपचन्नित्यस्य सिद्ध्याऽऽश्रयणं न्यूनं, यत उक्तरीत्या जुस्वारणेऽपि "अदभ्यस्तात्" इत्यद्भावस्यावारणादिति । तन्न, झत्वाभावेन तदप्राप्तेः । स्थानिवद्भावेन तु तदलभ्यमल्विधित्वात् । जुसादेशविषयेत्येवं वक्तुमशक्यत्वम् , झेरिति समुदायाश्रयणात् । ननु यदाऽपरविधाविति न्यासान्तरन्तदा परस्य विधौ स्थानिवद्भावस्य निषेधो भविष्यतीति तदाऽपीपचन्नित्यस्य परसाहचर्यस्य बलवत्त्वाश्रयैव सिद्धिर्भवताऽपि वक्तव्यैवेत्यत आह—अपरविधाविति । परस्माद्विधिरिति पञ्चमीसमासस्तदाऽपि वक्तुं शक्य इत्यर्थः । न्यासान्तरम्—अपरविधाविति न्यासान्तरम् । स्वविधेरपीति । तेन आयन्नासन्नित्यस्य सिद्धिः । वस्तुतस्तु क्लृप्तानुपूर्वीकेन "अचः परस्मिन्" इति सूत्रेणैव सर्वेष्टसिद्धौ न्यासान्तराश्रयणन्न कार्यमिति तुशब्दोपादानेन ध्वनितम् । ननु यदि न न्यासान्तरन्तदा कथमायन्नासन्नित्यनयोर्धिन्वन्तीत्यादेश्च सिद्धिरिति चेन्न । असिद्धवत्सूत्रेण लावस्थायामडागमेन वाऽऽद्ययोः "अचः परस्मिन्" इत्यत्राभावातिदेशेनान्तस्य सिद्धेः । ननु यदि पञ्चमीसमास आश्रीयते तदा विगणय्येत्यादावतिप्रसङ्ग इत्यत

भावप्रकाश ।

व्याख्यानेन व्याख्यानत इति परिभाषयेत्यर्थः । एतेन तयोस्तत्स्वीकारादिदं चिन्त्यमिति मन्दोक्तमपास्तम् । ननु व्याख्यानादिना तत्रेवेहापि तदाश्रयणमस्त्वत आह-प्रत्यैषीति । इणः सनि रूपम् । भाष्येति । "सहग्रहणं कार्यम् । न कार्यम् । उभेपदं तदर्थकम् । संज्ञिनिर्देशो द्वे इत्यनुवृत्त्या सिद्धः । इदं तर्हि फलं द्वयोः श्रवणे एव संज्ञा । इह माभूत्-ऐत्सन् , ऐप्सन् । अन्यथैकादेशे कृते शबन्त्यकारयोरभ्यस्तात्परत्वाज्जुस्स्यात् । एवं तर्हि स्थानिवद्भावाद् व्यवधानम् । पूर्वस्य विधौ सः । नायं तथा । पूर्वस्मादपि विधि.पूर्वविधिरित्युभेपदं व्यर्थं सत्तदर्थम्" इति तत्रोक्तम् । तेनोभे यत्र श्रूयेते इत्यर्थेन तद्वारणेऽपि प्रत्यैषिषन्निति सिद्धये आवश्यकेन पञ्चमीसमासेन तत्सिद्धावुभेपदं सहार्थमिति तद्भावः । एवमपीति । परसाहचर्याश्रयणेनीत्यर्थः । अत एव लङीत्येवोपात्तम् । नन्वपीपचन् प्रत्यैषिषन्नित्यादौ च तदभावेऽपि न दोषो वक्ष्यमाणयुक्तेरत आह-पूर्वोत्तरेति । क्लिष्टमिति । दुरूहत्वादिति भावः । ततः-उक्तविवक्षातः । एतेन तादृशसाहचर्यस्य दुर्ज्ञेयत्वं ततस्तदाश्रयणे गौरवाभावश्चेति सूचितम् । एतेन 'ऐत्सन्' 'ऐप्सन्' इतिभाष्योदाहरणासङ्गतेर्मूल चिन्त्यमिति रत्नाकरोक्तं फलाभावात्पञ्चमीसमासो माऽस्त्विति मन्दोक्तं चापास्तम् । नन्वेवमपरविधावित्यादिभाष्यासङ्गतिः बेभिदितेत्यादीनामत्र न्यासेऽसिद्धेरत उक्तविवक्षाद्वयान्यतराङ्गीकारोऽत आह-अपरेति । शक्य इति । एवं च तत्संग्रह इति भावः । नन्वेवं न्यासान्तरप्रवृत्तिर्निर्बीजाऽत आह—न्यासान्तेति । स्वशब्देन स्थानी

**पूर्वत्रासिद्धे नेति** । एतच्च न्यायसिद्धमित्यवोचाम । त्रिपाद्या असिद्धत्वेन तत्रत्ये कार्ये कर्तव्ये "अचः परस्मिन्" इत्यतिदेशस्याप्रवृत्तेः । **तस्येति** । तस्य–'पूर्वत्रासिद्धे'इत्यस्य । तथा च स्थलत्रये स्थानिवद्भावो वक्तव्य इत्यर्थः । **संयोगादिलोपे** चक्रयत्र । **लत्वे** निगाल्यते । **णत्वे** माषवपनी । इह "यस्येति च" इति अल्लोपस्य स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्तत्वाभावाद् णत्वं न ।

यत्त्वाहुः–कथंचित्स्थानिवत्त्वाभावेऽपि यूष्ण इत्यादौ "रषाभ्याम्"

## शब्दरत्नम् ।

सङ्ग्रहायेति स्पष्टमेव । अतिप्रसङ्गस्त्वनित्यत्वेन परिहरणीय इति ।

**चक्रयत्रेति** । तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि लोपाभावोऽपि फलम् । **निगाल्यते**

## भैरवी ।

**आह—अतिप्रसङ्ग इति** ।

**चक्रयत्रे**त्यस्य यणन्तसंयोगाद्योः स्कोर्लोपो नेत्यर्थो "यणः प्रतिषेधो वाच्यः" इति वार्तिकस्य क्रियते चेत्सिद्धिर्भविष्यतीत्यतः असाधारणप्रयोजनमाह–**तक्षीति** । **निगाल्यत**

## भावप्रकाश ।

आदेशश्च । अपिना पूर्वपरयोः समुच्चयः । अत्रत्यप्रागुक्तकैयटस्त्वयुक्त एव । एतन्न्यासखण्डनायाग्रे भगवता निमित्तस्यावधिताया वक्ष्यमाणतया तदनाश्रयेणैतद्भाष्यप्रवृत्तेः । अत्र तुभ्यामरुचिः सूचिता । एकदेश्युक्तिरियम् । असिद्धवत्सूत्रादिसिद्धानामायन्नादीनां फलत्वेनोक्तेरिति स्पष्टमुद्द्योते । एतेनायन्नादौ स्वविधावाद्यर्थमपरेति वार्तिके पञ्चमीसमासासम्भवाद्भाष्यविरोध न्न्यासान्तरेऽपीति चिन्त्यम् । न हि यथान्यासं संस्थाप्य द्वितीयं तत्कार्यमित्युक्तं भगवतेति मन्दोक्तमपास्तम् । नन्वेवमपि प्रगणय्येत्यादावल्लोपस्य स्थानिवत्त्वादय् न स्यात् । वचनसामर्थ्यात्तथा व्यवधाने प्रवृत्तिरिति तु न, प्रशमय्येत्यादौ साफल्यात् । किं च हे गौरित्यत्र वृद्धेः स्थानिवत्त्वात्सम्बुद्धिलोपापत्तिः । पूर्वस्मान्निमित्तत्वेनाश्रितादिति कैयटोक्तव्याख्याने तु न मानमित्युक्तं प्राक्, उद्द्योते स्पष्टं चात आह–**अतिप्रेति** । अनित्यत्वे ज्ञापकं तु "निष्ठायां सेटि"इति सेट्ग्रहणं प्रगणय्येति भाष्योदाहरणं वेति स्फुटीभविष्यति टीकायाम् । एतेन–एतेन कृदन्ते विगणय्येत्यत्राथवा पञ्चमीसमासस्त्यज्यतामित्यादिमूलोक्तमपास्तम् । तस्मात्तस्य पाक्षिकत्वासम्भवान्मदुक्तैव मूलयोजना सम्यक् । न च तदनित्यत्वाभिप्रायेण मूलं सुयोजम् । अनित्यत्वोक्तेरत्रानुपयोगाट्टीकाग्रन्थासङ्गतेश्चेति रत्नाकरोक्तं प्रगणय्येत्यादौ दोषास्तु माऽस्त्विति मन्दोक्तं चापास्तमिति दिक् । ननु झलपदानुवृत्त्या झलन्तसंयोगस्यैव ग्रहणान्न चक्रयत्रेत्यत्र दोषोऽत आह–**तक्षीति** । कौस्तुभरीत्येदम् । अपरिनास्थायाम् । तद्बीजं तु झलो लोपः संयोगान्तलोप इति भाष्येण तत्सम्बन्धबोधनमिति । बहिरङ्गासिद्धत्वं तु वक्ष्यमाणरीत्या नेति भावः । **णिलो-**

## सरला ।

**अतिप्रसङ्ग इति** । 'प्रविगणय्य' इत्यत्रातिप्रसङ्ग इत्यर्थः । तथा हि, प्रविपूर्वक 'गण संख्याने' धातोर्णिचि "अतो लोपः" इत्यल्लोपे ततः क्त्वाप्रत्यये ल्यबादेशे च "ल्यपि लघुपूर्वात्" इति सूत्रेण णेरयादेशे तत्सिध्यति । पञ्चमीसमासस्य नित्यत्वे तत्राल्लोपस्य स्थानिभूतादकारात्पूर्वत्वेन दृष्टाण्णकारात्परस्य णेरयादेशे कर्तव्ये स्थानिवद्भावप्रवृत्तौ अयादेशाप्राप्त्या तदसिद्धिप्रसङ्ग इति । पञ्चमीसमासस्यानित्यत्वे प्रमाणं तु 'प्रविगणय्य' इति भाष्योदाहरणमेव । तेन 'हे गौः' इत्यत्र वृद्धेः स्थानिवत्त्वान्न सम्बुद्धिलोपः । अनित्यत्वाभावे तु वृद्धेः स्थानिभूतादोकारात्पूर्वत्वेन दृष्टाद् गकारात्परस्याः सम्बुद्धेः "एङः पदान्तादति" इति लोपः स्यादिति फलं बोध्यम् । केचित्तु पूर्वस्मादव्यवहितपरस्यैव कार्ये स्थानिवत्त्वं, 'हे गौः' इत्यत्र च औकारव्यवधानान्न दोष इति न फलं, 'प्रविगणय्य' इत्यादौ तु स्थानिवद्भावलब्धाकारस्यैव व्यपदेशिवद्भावेन लघुपूर्वत्वमादाय न दोष इति नापि मानमित्याहुः । वस्तुतस्तु व्यपदेशिवद्भावस्य "एकस्मिन्" इत्युक्त्या असहाये एव प्रवृत्तिस्वीकारेण 'प्रविगणय्य' इत्यत्र व्यपदेशिवद्भावाप्रवृत्तौ अल्लोपस्य पूर्वोक्तरीत्या स्थानिवद्भावे णेरयादेशानापत्त्या भाष्योक्तस्य 'प्रविगणय्य' इति रूपस्यासिध्या तत्तदनित्यत्वे प्रमाणमेवेति बोध्यम् ।

इत्यस्य नोपयोगः, ष्टुत्वेन सिद्धेः । तथा च षग्रहणमुत्तरार्थमिति आकरे स्थि-

शब्दरत्नम् ।

इति । न चात्र णिलोपात्पूर्वं लत्वम् । सपादसप्ताध्यायीस्थकार्यस्य प्रवृत्तियोग्यतया तदप्रवृत्तेः । न च स्था निवत्त्वमल्विधित्वात् । प्रत्ययलक्षणं तु नियमार्थमिति भावः । अत्र बहिरङ्गासिद्धत्वं न नाजानन्तर्ये इति तन्निषेधात् त्रिपाद्यां तदप्रवृत्तेरेव विसर्जनीयसूत्रस्थभाष्यसम्मतत्वाच्चेत्यन्यत्र प्रपञ्चितम् । एवं प्लायत इत्यप्ययतावित्यस्योपसर्गविशेषणत्वे फलम् । माषवपनीति । इह ङीबुत्पत्तेः प्राक् समासे ङीपि अल्लोपे समासरूपप्रातिपदिकान्तत्वाण्णत्वं प्राप्तम् । पूर्वपदाक्षिप्तसमासरूपप्रातिपदिकान्तस्य तेन णत्वविधानात्तस्यापि पूर्वपरोभयसापेक्षत्वेन समासत्वज्ञानसापेक्षत्वेन च समत्वात् त्रिपादीस्थत्वाच्च बहिरङ्गासिद्धत्वाशङ्का नात्रेति बोध्यम् ।

भैरवी ।

इत्यस्यान्तरङ्गत्वाण्णिलोपात्प्राग्लकारादेशेन सिद्धिर्भविष्यतीत्याशङ्कां निराचष्टे–न चेत्यादिना। प्रवृत्तियोग्यतयेति । सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्ये विषये त्रैपादिकशास्त्रं न प्रवर्तते इत्यर्थस्तस्थावित्यादिसिद्ध्यर्थमवश्यं वाच्योऽन्यथा ष्टुत्वस्य पूर्वम्प्रवृत्तौ ततो द्विर्वचनेऽभ्यासे टकारस्य श्रवणापत्तिः, एवमन्यत्रापि बोध्यम् । स्थानिवत्त्वमिति । प्रथमसूत्रेण स्थानिवत्त्वमित्यर्थः । विशेषणत्वे इति । एतच्च प्लायत इत्यस्य सिद्ध्यर्थमावश्यकम् । न चात्रैकदेशविकृतन्यायेनोपसर्गत्वम्परादिवद्भावेन चाकारादावयतित्वमिति स्थानिवद्भावं विनाऽपि लत्वम्भविष्यतीति वाच्यम् ? अर्द्धविकारस्य सत्त्वादुपसर्गत्वस्याक्तपरिमाणनिष्ठत्वात् । ननु माषवपनीत्यत्र माषाणां वपनीति समासे समासरूपं यत् प्रातिपदिकन्तदन्तो न नकार इति णत्वस्य प्राप्तिरेव नेति कथम्माषवपनीति णत्वोदाहरणमत आह–इहेति । प्राक्समास इति । करणल्युडन्तवपनशब्दस्येत्यादिः । गतिकारकोपपदानाङ् कृद्भिः सह समासस्य सुबुत्पत्तेः स्त्रीप्रत्ययोत्पत्तेश्च प्राक् प्रवृत्तेरिति भावः । नन्वन्तरङ्गणत्वापेक्षया बहिर्भूतप्रत्ययापेक्षाल्लोपस्यासिद्धतया णत्वन्न भविष्यतीत्यत आह—तस्यापीति । णत्वस्यापीत्यर्थः । ज्ञानसापेक्षत्वेन चेति । प्राचामनुरोधेनेदम् । स्वसिद्धान्तरीत्याऽऽह—त्रिपादीस्थत्वेति । मूले–कथञ्चिदिति । पूर्वस्माद्विधौ स्थानिवद्भावस्यानित्यत्वादप्रवृत्तिस्वीकारादिति भावः ।

भावप्रकाश ।

पादिति । तल्लोपजनकाचणादेरित्यर्थः । तदानीं तस्यैवोपस्थितनिमित्ततया प्राप्तेरिति भावः । कार्यस्य प्रवृत्तीति । तत्रापि "पूर्वत्रासिद्धम्"इति प्राप्तेरिति भावः । स्थानिवत्त्वमिति । "स्थानिवदादेशः" इत्यस्य प्रवृत्तिरित्यर्थः । नियमार्थमिति । भाष्यसिद्धान्तरीत्येदं, वार्त्तिकमतेऽपि विशेषणतयाऽलाश्रयणे एव विध्यर्थत्वेनादोषात् । अत्रेति । लत्वे कार्ये णिलोपस्येति भावः । मूलरीत्या आह—नाजेति । भाष्यरीत्याऽऽह—त्रिपाद्यामिति । अन्यत्र-उद्द्योतादौ । प्रतिपादितञ्चैतत्सन्धिप्रकरणे । ननु युगपद्द्वयोः प्राप्तौ "पूर्वत्रासिद्धम्" इत्यस्य नियामकत्वेऽपि तद्योग्यतायां तत्त्वाभावोऽत आह—एवमिति । इत्यपीति । इत्याद्यपि फलमित्यर्थः । मूलमते उभयत आश्रयणेऽन्तवद्भावाभावादिति भावः । उपसर्गेति । श्रुतत्वाद् रेफविशेषणत्वे तु प्लायते निलयते इत्यादौ श्रुतिकृताव्यवधाने एव स्यादिति पल्ययत इत्यादौ न स्यात् । एतेन तत्पक्षे परादिवत्त्वेनायतिपरत्वाद्रेफस्य सिद्धिरिति सूचनायेदमित्यपास्तम् । ननु स्थानिवत्त्वनिषेधेऽपि माषशब्दस्य वपनीशब्देन समासे तदन्तो नो नेति णत्वं न स्यादत आह—इहेति । "गतिकारकोप" इति वचनादिति भावः । ङीबुत्पत्तेरित्यस्यापि पूरयिष्यमाणत्वादिति भावः । यत्तु णत्वपदं व्यर्थं बहिरङ्गतयाऽल्लोपस्यासिद्धत्वादिति, तत् खण्डयति मूलरीत्या–पूर्वेति । समत्वादित्यन्त एको हेतुः । समासरूपेति । एतेनोत्तरपदं यत्प्रातिपदिकं तदन्तस्येति कैयटकौस्तुभरत्नाकरदण्डयाद्युक्तमपास्तम् । भाष्यरीत्या आह–त्रिपा-



तम् । ततश्च रभसवादेनैतदुपन्यस्तमिति । स एवायं रभसवादः । तथा हि, उत्तरार्थतयाऽपीह षग्रहणं स्थितम् । ततश्च यूष्णः पुष्णाति इत्यादौ "रषाभ्याम्" इति णत्वस्य प्रवृत्तिः केन वार्यताम्? ष्टुत्वेनेति चेन्न । तस्यासिद्धत्वात् । न च वचनप्रामाण्यात् सिद्धत्वम् । पुष्ण्रित्यादौ चरितार्थत्वात् । तस्य षयोगे ण इत्यंशोऽचरितार्थ इति चेन्न । तस्य पृथगनुक्तेः । इह षात्परस्येत्युक्तिरचरितार्थेत्यस्यापि तुल्यत्वाच्च । आकरे हि इह षग्रहणं विना लक्ष्यासिद्धिर्नास्ति इत्येवाभिप्रेतं, न तु पुष्णातीत्यादौ "रषाभ्याम्" इत्यस्याप्रवृत्तिरिति दिक् ।

"नलोपः प्रातिपदिकान्तस्य" । लुप्तषष्ठीकं इति । सौत्रत्वान्न तु षष्ठीतत्पुरुषयोः पूर्वपदे, सापेक्षत्वेन समासासम्भवात् प्रातिपदिकस्य पदविशेषणत्वाच्चेति भावः । तदन्तस्येति । षष्ठीतत्पुरुषः । तस्यान्तो यो नकारस्तस्येत्यर्थः । उक्तं च हरदत्तेन—'विशेष्यमन्तस्येत्यस्य नेत्येतदविभक्तिकम्, तथैव प्रातिपदिकेत्येतत्पदविशेषणम्' इति । यत्तु प्राचोक्तम्—प्रातिपदिकान्तस्य पदान्तस्य नस्येति । यच्च व्याख्यातम्—अन्तस्येत्युभाभ्यां संबध्यते इति । तद्गौरवग्रस्तम्, अन्तस्येत्यस्यावृत्तिप्रसङ्गाद् व्यधिकरणषष्ठीद्वयापत्तेश्च । यदि तु अभेदेनैव सम्बन्धेन प्रातिपदिकेनेव नेत्यनेनापि पदं विशेष्यते, तदा विशेषणेन तदन्तविधौ सौत्रमन्तग्रहणं शक्यमकर्तुम् ।

---

शब्दरत्नम् ।

अप्रवृत्तिरिति । अभिप्रेतेति शेषः ।

सापेक्षत्वेनेति । 'नलोप' इत्येतद्विषयमिदम् । अन्ये आह—पदविशेषणत्वाच्चेति । व्यधिकरणषष्ठीति । प्रातिपदिकस्य पदस्येत्यनयोः परस्परानन्वितयोरन्तेनान्वयादिति भावः । अभेदेनैवेति । सम्बन्धान्तरासत्त्वेऽपि विशेष्यविशेषणभावसम्बन्धेनेत्यर्थः । शक्यमकर्तुमिति । पदस्येत्यस्य क्वचिद्वैयधिकरण्येनान्वयेऽस्य तात्पर्यग्रा-

भैरवी ।

एतत्-रषाभ्यामिति णत्वमित्येतत् । प्रागुक्तस्याभिप्रेतशब्दस्य नपुंसकत्वादाह—अभिप्रेतेति ।

अन्त्य इति । प्रातिपदिकान्तस्येत्यत्र यत्प्रातिपदिकपदन्तत्रेत्यर्थः । एतेनैकार्थीभावाभावः सूचितः । व्यधिकरणषष्ठीत्वमुपपादयति-प्रातेति । यद्यप्युभयोरपि षष्ठ्योरवयवावयविभावार्थकत्वन्तथाऽपि व्यधिकरणप्रातिपदिकप्रकृतिकत्वेन व्यधिकरणत्वन्द्रष्टव्यम्, एतदेवाह—परस्परेति । अभेदस्य सम्बन्धत्वमन्यत्र निरस्तमत आह—सम्बन्धान्तरेति ।

भावप्रकाश ।

दीति । तत्र तदप्रवृत्तेरसकृदुक्तत्वादिति भावः । न त्वित्यस्य पूर्वसाकाङ्क्षत्वादाह—अभीति । एतेनात्र सत्त्वेऽपि प्रयोजनाभावान्न सम्बन्धः । किं त्वग्रे एवेति चिन्त्यं मूलमिति खण्डनकृदुक्तमपास्तम् । द्वन्द्वासम्भवेन निर्देशासङ्गतेरिति भावः । मूले-तदन्तस्येति षष्ठीति । एतेन सौत्रमन्तग्रहणं न व्यर्थमेति सूचितम् । अनन्वितयोरिति । एतेन विरुद्धविभक्त्यनवरुद्धानामर्थद्वयस्याभेदान्वयव्युत्पत्तिभङ्ग इति प्रकाशोक्तदोषस्य शब्दान्तरेण क्रोडीकारे प्रसादखण्डकतद्ग्रन्थानुवादपूर्णता सूचिता । अभेदस्य तत्रत्य खण्डयिष्यमाणत्वादाह—सम्बन्धान्तरेति । अवयवावयविभावादीत्यर्थः । 'येन विधिः' इत्यस्यानित्यत्वज्ञापनायान्तपदं तेन समासप्रत्ययेत्यादिसिद्धमिति कश्चिदिति मान्यास्तत्प्राचामनुरोधेन, भाष्यविरोधात् । एतेन पदस्येत्यस्यावयवषष्ठ्यन्तत्वमेव न स्थानषष्ठ्यन्तत्वमिति

"विभाषा ङिश्योः" । शीति "नपुंसकाच्च" इति विहितो न तु जश्शसोः शिः, तस्मिन् भत्वासम्भवात् । "भस्य" इत्यनेनासर्वनामस्थानस्यैव यजादेराक्षेपात्तदेतदाह—असर्वनामस्थानेति । अत एवेति । दोषणी इति प्रयोगात् । यद्यपि समाहारद्वन्द्वस्य एकशेषे कृतेऽपि भाष्यं सुयोजं, तथाऽपि ककुदित्यस्य पृथक्पदत्वं न्याय्यम् । अन्यथा ककुद एकत्वं बाह्वोर्द्वित्वं च न लभ्येत इति भावः ।

---

शब्दरत्नम् ।

इकत्वं भाष्ये उक्तम्; तत्तु लक्ष्यानुसारिव्याख्यानादेव ज्ञापकं विनाऽपि सिद्धमित्यभिमानः ।

**भत्वासम्भवादिति** । सर्वनामस्थानत्वेनेति भावः । **समाहारद्वन्द्वस्येति** । प्राण्यङ्गत्वात्कृतसमाहारद्वन्द्वस्य ककुद्दोःशब्दस्येत्यर्थः । **सुयोजम्**-दोःशब्दस्य पुंस्त्वेऽपि सुनिर्वाहम् । **न्याय्यम्** । अल्पाच्तरत्वेन दोःशब्दस्य द्वन्द्वे पूर्वनिपातापत्तेः । किं च तदन्ते आदेशो दुर्लभः, विशेष्यासन्निधानादिति भावः । **ककुद एकत्वमिति** । प्रकर-

भैरवी ।

विशेष्यविशेषणभावनियामकसम्बन्धान्तरेत्यर्थः । भाष्ये उक्तमिति । एवञ्च सौत्रमन्तग्रहणं शक्यमकर्तुमित्यसङ्गतम् । नराभ्यामित्यादौ नलोपव्यावर्त्यकत्वेनान्तपदस्य चरितार्थत्वात् । न चान्तपदाभावेऽपि नेत्यनेन प्रातिपदिकं विशेष्यताम्, पदस्येति तु व्यधिकरणमस्तु, पदावयवस्य नान्तप्रातिपदिकस्य लोप इत्यर्थोऽस्तु, तावताऽपि नराभ्यामित्यस्य व्यावृत्तिर्भविष्यतीति वाच्यम् ? लोमनिशयाभ्यामित्यादौ नलोपस्य वारणाय तस्यावश्यकत्वात् । सौत्रान्तपदस्य सत्त्वे तु चरमावयववाचकान्तपदस्यावयविसाकाङ्क्षतया प्रत्यासत्त्या पदस्येत्यस्य सम्बन्धेन पदावयवस्य नान्तप्रातिपदिकस्य पदान्तस्य लोप इत्यर्थेनेष्टसिद्धेः । तद्विति । वैयधिकरण्येन सम्बन्धकल्पनन्त्वित्यर्थः । मूले द्विवचनोपपत्तये आह—समाहारेति ।

न्याय्यत्वमुपपादयति—अल्पेति । पूर्वनिपातप्रकरणस्यानित्यत्वादाह—किञ्चेति । असन्नि-

भावप्रकाश ।

ज्ञापनार्थमेव तदिति रत्नाकरोक्तमप्यपास्तम् । तद् ध्वनयन्नाह—पदस्येति । तेन वृक्षवन्तावित्यादौ "मादुप"इति वत्वसिद्धिरन्यथा मत्वन्तपदस्य मादुपधायाः परस्य मस्य व इत्यर्थेन वृक्षवानित्यत्रैव स्याद् न तु तत्र । मम तु पदावयवस्य मतुप इत्यादिव्याख्यानान्न दोष इति भावः । **अभिमान इति** । अत्रारुचिबीजं तु तादृशव्याख्यानस्य दुर्ज्ञेयत्वं लक्ष्यैकचक्षुष्कतायां बाधितत्वमतिप्रसङ्गग्रस्तत्वं चेति भाष्योक्तमेव साध्विति । संज्ञापरद्वन्द्वशब्दान्ततत्पुरुषस्याग्रेऽनन्वयाद् बहुव्रीहिं सूचयितुमाह—**प्राण्यङ्गेति** । न्याय्यत्वे हेत्वनुक्तेराह—**अल्पाजिति** । द्वन्द्वे सतीत्यर्थः । तत्प्रकरणस्यानियतत्वादाह—**किञ्चेति** । **तदन्त इति** । अस्य यत इत्यादिः । **विशेष्येति** । एतेनाऽस्मादेव भाष्यात्तदन्तेऽपि भवति विहितविशेषणाभावादिति गम्यते । तथा च प्रयोगः—अशिथिलभुजबन्धव्याप्तैकैककदोष्णोरिति प्रकाशोक्तम्, द्वयोर्दन्ताः द्विदतः पश्य । न च तदन्तविध्यभावे कथमिदमिति वाच्यम् । "ष्यङः सम्प्रसारणम्" इति सूत्रस्थपूर्वपक्षन्यायेन "सिद्धं त्ववयवानन्यत्वात्" इत्याष्टमिकभाष्यवार्त्तिकन्यायेन वाऽवयवस्य कार्यलाभात् । अन्यथा हास्तिशीर्ष्याऽपैपीत्यादावगतेः इति कौस्तुभोक्तं चापास्तमुक्तहेतोः । किञ्चाद्ये सम्पूर्णस्यादेशापत्तेः स्थानिनामाक्षेपेणैव लाभेन निर्दिश्यमानस्य कस्याप्यभावात् । एतेन ककुद्दोषणी इत्येकं पदमन्यथोक्तप्रकारासङ्गतिरिति रत्नाकरोक्तमपास्तम् । अपि चान्त्ये आद्ययुक्तेः पूर्वपक्षत्वादेवानादेयत्वात्, आक्षिप्तस्य

सरला ।

**ककुद्दोःशब्दस्येति** । ककुत् च दोः चानयोः समाहारः ककुद्दोः, समाहारस्य 'स नपुंसकम्' इति नपुंसकत्वम्, ततः ककुद्दोः ककुद्दोः अनयोरेकशेषे द्विवचने 'ककुद्दोषणी' इति रूपसिद्ध्या भाष्यं सुयोजमिति भावः ।

"तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः ।"

इति रघुः । तत्र दक्षिणं दोरिति उद्यम्येत्यनेन कर्मतया सम्बध्यते । दोषं तस्येति ।

"दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुणम् ।"

इति श्रीहर्षप्रयोगः । तत्र दोषं हस्तं दूषणं च भजतश्चापस्य गुणं मौर्वीमतिशयं च गृह्णन् इति सम्बन्धः । अमरव्याख्यातारस्तु—दोषशब्दं स्त्रियामपि स्त्रीकृत्य भागुरिमतेन टापि दोषेत्युक्त्वा—

"दोर्दोषा च भुजो बाहुः पाणिर्हस्तः करस्तथा ।"

इति धनञ्जयनिघण्टुमुदाजह्रुः ।

द्वयोरह्नोर्भव इति । "तद्धितार्थ" इति समासः, कालाट्ठञ् । "द्विगोर्लुगनपत्ये" इति लुक् । "राजाहःसखिभ्यः" इति टच् । "अह्नोऽह्न एतेभ्यः" इत्यह्नादेशः । अह्नः साय इति । स्यतेर्घञि अवसानवचनः सायशब्दः । "संख्याविसाय—" इति ज्ञापकादेकदेशिसमासः ।

इत्यदन्ताः ।

हाहानिति । गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदम् । कौमारास्तु—जहातीति हाहा इति क्रियाशब्दं वदन्तो विश्वपावद्रूपमाहुः । तन्मते

शब्दरत्नम् ।

णात् श्रुतौ तथार्थकमेवेदमिति भावः । दक्षिणं तमुद्यम्य दोर्नामा निशाचर इत्यन्वयभ्रमवारणायाह—तत्रेति । एकदेशिसमास इति । तत्प्रत्याख्याने तु कर्मधारय इति बोध्यम् ।

जहातीति । हा इति शोकव्यञ्जकशब्दमित्यादिः ।

भैरवी ।

धानादिति । शब्दस्वरूपं विशेष्यमादाय तदन्तविधिस्तु सत्येव गमक इति शेषः । तत्प्रत्याख्याने—एकदेशिसमासस्य प्रत्याख्याने । दिनावयवेऽपि तदवयवसद्भावमात्रेणाप्यहरस्तीति लौकिकव्यवहारदर्शनादहःशब्दस्य प्रवृत्त्याऽत्र कर्मधारयः ।

मूले जहातीति । हाशब्दे उपपदे विच्, न तु क्विप्, इत्वस्य प्रसङ्गात् ।

भावप्रकाश ।

प्रायेण विशेषणत्वस्य तत्र सिद्धान्तितत्वाच्च, दृष्टान्ते एकाक्षेपः अत्र तु द्वयोरिति वैषम्याच्च, तत्र मानाभावाच्च, शसादिष्वित्युक्त्या तत्प्रकृतिभूतानामेवादेशौचित्येनान्त्ययुक्तेरप्ययुक्तत्वाच्च, उक्तप्रयोगाणां प्रकृत्यन्तरत्वेन सिद्धेश्च सूत्राणां व्यवस्थाबोधकत्वस्य मूले एव वक्ष्यमाणत्वाच्च । अत एव ककुदिति विहाय 'दोषणी याचते महादेवः' इति प्रतीकं कैयटेन धृतमिति दिक् । तद् ध्वनयन्नाह—प्रकरणाच्छ्रुताविति । उच्छिन्नायामिति शेषः । तैत्तिरीयब्राह्मणे तृतीयाष्टके षष्ठप्रपाठके पञ्चमेऽनुवाके होतृकर्तृकाधिगुप्रैषे तु "प्रशसा बाहू शला दोषणी" इत्येव श्रूयते । बाहू प्रशसा प्रकृष्टच्छेदनौ कुरुत दोषणी प्रवेष्टौ शला शलाकाकारे निर्मांसौ कुरुत । कालोपरछान्दस इति माधवाचार्याः । लौकिकोऽयं प्रयोगः । शिववाहनस्य वृषस्यैकत्वात्ककुद एकत्वं बाह्वोर्द्वित्वमेव न्याय्यम् । यद्यपि तदुत्पत्तिसिद्धं, तथाऽपि वाहनसमर्थं ककुदादिकं याच्यते । तेनावस्थाविशेषो ध्वनित इति तु मान्याः । एतेन बाह्वोर्द्वित्वस्य तथाऽपि लाभेन तदंशे मूलं चिन्त्यमिति सूचितम् । भाष्यरीत्या मूलासङ्गतेराह—तत्प्रत्येति । "समुदाये दृष्टाः शब्दाः" इति न्यायेनेति भावः ।

व्युत्पत्तिमात्रेण रूपासिद्धेर्द्वित्वेन सिद्धावपि कर्माकाङ्क्षासत्त्वाच्चाह—हेति । हा इतीत्यादिरित्यर्थः । शोकेति अर्थकथनद्वारा तस्य स्वरूपकथनम् । अत एव सन्ध्यकरणम् । अत्र भाष्यमते संग्रहः—शसि

प्रत्युदाहरणं तु 'अकारो वासुदेवः स्यात्' तेन सह वर्तन्त इति साः, तान् सान् इति बोध्यम् ।

इत्यादन्ताः ।

"आङो नाऽस्त्रियाम्" । पुंसीति तु नोक्तम्, अमुना कुलेनेत्यत्र यथा स्यात् । न च नुमा रूपसिद्धिः । मुत्वस्यासिद्धत्वात् "इकोऽचि" इति नुमोऽप्राप्तेः । नादेशे तु नासिद्धत्वं "न मु ने" इति निषेधात् । न च, "न मु ने" इति निषेधो नुम्येवास्तु, ने इत्यकारस्योच्चारणार्थत्वादिति वाच्यम् । अमुष्मै कुलायेत्याद्यसिद्ध्यापत्तेः ।

"अच्च घेः" । "इदुद्भ्याम्" इति "ङेः" इति "औत्" इति च पदत्रयमनुवर्तते इत्याशयेन व्याचष्टे-इदुद्भ्यामुत्तरस्य इत्यादिना । घेरुत्तरस्येति तु नोक्तम् ।

शब्दरत्नम् ।

**नुम्यप्यस्त्विति** । अयं भावः-तन्त्रेण नाभावे नकारे च कार्ये तं प्रति अन्यं प्रति च, कृते च कार्यान्तरं प्रति मुभावो नासिद्ध इति तदर्थः । एतेन मुत्वस्यासिद्धत्वेनेनादेशे गुणे नुमादेरप्राप्तिरिति परास्तम् । नुम्येवास्त्विति पाठे एवकारोऽप्यर्थः । **उच्चारणार्थत्वादिति** । तन्त्रेणोच्चारिते द्वितीयनेशब्दे इत्यर्थः । **अमुष्मै इति** । "न मु ने" इति सूत्रविषये पूर्वं विभक्तिनिमित्तकार्याप्रवृत्तौ मुत्वे तस्य नकारविषये क्रमपि प्रत्यसिद्धत्वा-

भैरवी ।

अमुना ब्राह्मणेनेत्यत्र नाभावे कर्तव्येऽप्यसिद्धत्वस्य निषेधाय नुम्यप्यस्त्वित्यत्रापि-शब्दः । एवञ्च नेत्यनेन कथमुभयस्मिन्कर्तव्ये निषेधलाभ इत्यत आह—अयम्भाव इति । तम्प्रतीति । नाभावनकारोभयम्प्रतीत्यर्थः । अन्यम्प्रतीति । विभक्तिसम्बन्धिकार्यान्तरम्प्रतीत्यर्थः । "सुपि च" इतिदीर्घव्यावृत्तये आह—कृते चेति । एतेन—अन्यम्प्रतीति व्याख्यानेन । नुमादेरिति । पुंसि नाभावस्य संग्रहायात्रादिपदम् । नन्वकारस्योच्चारणार्थत्वे नाभावस्यैव संग्रहो न स्यादत आह—तन्त्र इति । वक्ष्यमाणयोरमू कुले, अमुयोरित्यनयोः संग्रहायाह—विभक्तिनिमित्तेति । न चैवं त्यदाद्यत्वस्याप्यप्रवृत्तिः स्यादिति वाच्यम् ? तस्याप्रवृत्तौ "न मु ने" इति सूत्रविषयत्वस्याभावेनोपजीव्याविरोधाय तद्भिन्नस्यैव ग्रहणात् । एवम्पररूपस्यापि पूर्वम्प्रवृत्तिर्बोध्या, तस्यापि नाभावसम्पादकत्वात् । अत एवाह—क्रमपीति । नुमः प्रक्रान्तत्वेन

भावप्रकाश ।

हाहान्, ङेऽपि तथा हाहै, हाहाः ङसिङसोः, ओसोर्हाहौः, ङौ तु हाहे, टायां हाहा । अन्यदुक्तवद् इति ।

नुम्येवेति पाठे नाभावस्यासंग्रहादाह-नुम्यप्येति । ननु सकृदुच्चरितात्कथमिष्टार्थद्वयलाभः कथं वा सारूप्यमत आह-अयं भावः तन्त्रेणेति । उच्चारणार्थाकारमादाय सारूप्यमिति भावः । तं प्रति-नाभावं नकारं च प्रति । अन्यं प्रति चेति । इनाद्यादेशं प्रतीत्यर्थः । अन्यथा निषेधवैयर्थ्यमेवेति भावः । कृते च कार्यान्तरं प्रतीति । चः प्रतीत्यग्रे योज्यः, "सुपि च" इति दीर्घं प्रति चेत्यर्थः । अन्यथा स स्यादिति भावः । इदं च नाभावांशे बोध्यम् । मु इति समाहारद्वन्द्वः । अन्यं प्रतीत्यस्य फलं खण्डनकृदुक्तिनिरासरूपमाह-एतेनेति । इनादेशे इति । तदानीं नाभावाद्यप्राप्तेरिति भावः । उक्तरीत्यैवाह-अप्यर्थ इति । पूर्वरूपमेव निषिध्यते इत्यादौ यथेति भावः । अत एवाह-तन्त्रेणोच्चारिते इति । तन्त्रेण कल्प्यमानावृत्त्योच्चारिते इत्यर्थः "ल्यप्त्यात्" इत्यत्रेवेति भावः । विभक्तिनिमित्तेति । विभक्तौ तस्याश्च प्रवर्त्तमानमविभक्तावप्रवर्त्तमानं कार्यमित्यर्थः । अन्यथा तत्सूत्रानर्थक्यमुक्तमेवेति भावः । प्रकृतलक्ष्याशयेनाह-नकारविषये इति । सूत्रे ने इति विषयसप्तमीति भावः । उक्तरीत्यैवाह-क्रमपीति

सूत्रे "घेः" इत्यस्य षष्ठयन्तत्वात् । तन्त्रावृत्त्यादौ च प्रमाणाभावात् "औत्" इतिपूर्वसूत्रे इदुद्भ्यामुत्तरस्य ङेरिति क्लृप्तसम्बन्धस्य त्यागायोगाच्च । औत्स्यादिति । अत्र व्याचख्युः—औतस्तित्त्वं स्वरितार्थम् । "न विभक्तौ" इतीत्त्वनिषेधस्तु न भवति, अनित्यत्वात् । अनित्यत्वं च "इदमस्थमुः" इति थमो मकारस्ये-

शब्दरत्नम् ।

भावेन विभक्त्यादेशं प्रत्यसिद्धत्वेऽपि वाऽस्य स्मैभावात्परत्वेन नुमापत्तेः । आदिना अमु कुले, अमुयोरिति । तयोरेत्वस्याप्रवृत्तौ मुत्वे नुमि चानिष्टं स्पष्टमेव । "न मु टादेश" इति वार्तिकस्वारस्येन नादेश इत्येव तदर्थ उचित इत्यपि बोध्यम् ।

भैरवी ।

झटित्युपस्थितत्वादाह—विभक्त्यादेशमिति । अत्र वाशब्दोऽनास्थायाम् । एतेनैतादृशार्थकल्पनेनादेशासंग्रहापत्त्या नुम्यप्यस्त्विति पूर्वग्रन्थासङ्गतिरित्यपास्तम् । एत्वाप्रवृत्ताविति । अमू इत्यत्र "नपुंसकाच्च" इति शीभावे सति "आद् गुणः" इत्येकादेशसम्पाद्यस्य एत्वस्यामुयोरित्यत्र "ओसि च" इत्येत्वस्य चाप्रवृत्त्येत्यर्थः । न्यूनतापरिहारायाह—नमुटादेश इति । एतच्च वार्तिकं "न मु ने" इति सूत्रस्य नादेशे कृते यत्कार्यम्प्राप्नोति तस्मिन्कर्तव्ये मुत्वन्नासिद्धमित्येवार्थ इत्यभिप्रायेण प्रवृत्तम् । टादेश इत्यस्य टाया आदेशष्टायाम्वा य आदेश इत्यर्थः

भावप्रकाश ।

स्मायादिकं प्रत्यपीत्यर्थः । तथा चानदन्तत्वात्स्मैभावाप्राप्त्या नुमापत्तिर्निर्विघ्नैवेति भावः । ननु तत्सूत्रारम्भात् पूर्वं विभक्तिकार्याप्रवृत्तिरित्येवाङ्गीक्रियते, न त्वन्यं प्रतीति व्याख्यानम्, अमुनेत्यस्य तावतैव सिद्धेरिति कमपि प्रतीत्यस्य खपुष्पायमाणत्वेनादन्तत्वात्स्मैभावे नुमोऽप्राप्त्या अमुष्मै इति सिद्धमत आह—विभक्त्यादेशमिति । यत्तु नुम्येवेत्यवधारणगर्भपाठे आदिना पुंसि अमुनेत्यसिद्धिरूपदोषसंग्रह इति तन्न, उपक्रमविरोधात् पाठान्तरे तदसम्भवाच्च । अत आह—आदिनेति । उक्तरीत्यैवाह—तयोरित्यादि । एतेन न च नुम्यपीति पाठे अनेकान्तत्वे नुमि नस्य कथञ्चिद्विधेयत्वेऽपि नादेशे तस्य तत्त्वासम्भव इति वाच्यम् । "आङो नुट् पुंसि" इति न्यासेऽदोषात् । नुम्येवेति पाठे "नुमाङि पुंसि" इत्येव पठेन सर्वत्र नुमेवास्त्वित्यर्थः । न ह्येदृशे विषये प्रकृत्यंशस्य पदत्वे तदभावे वा विशेषोऽस्ति । अत एवेनादेशप्रत्याख्यानं भाष्योक्तं सङ्गच्छते इति मान्योक्तम् नुम्येवेतिपाठघटितमनूद्य तन्न, तत्र पुंसि अमुनेत्यसिध्या शङ्काया निर्दलत्वादुत्तरे एतदनुक्तेर्न्यूनत्वाच्च । किं च मुत्वस्यासिद्धत्वेन ततः प्राक् स्मायादावनजादिपरत्वान्नुमोऽप्राप्त्या कथममुष्मा इत्यसिद्धिः ? न च नेत्युक्त्या नादेशोऽपि ग्राह्यः, तत्र विशिष्टविधिना नमात्रस्याविधेरिति खण्डनकृदुक्तम् न च अमुनेत्याद्यसिध्यापत्तेरित्यनूद्य तन्न, अमुना चैत्रेणेत्यत्राव्याप्तेः नाभावे नमात्रस्य विधेरसिद्धत्वानिषेधात् । 'आङि नुम्पुंसि" इतिन्यासेऽप्यतिप्रसङ्गतादवस्थ्यमेव । न चासिद्धनिषेधो नुम्येव, न स्मायादाविति तेषु सत्सु न नुमः प्राप्तिः ? परत्वाद् "इकोऽचि" इतिनुमो दुर्वारत्वात् । युगपत्सर्वप्रमाप्रमौ द्वयोः पुंसोरिवैकस्यैवादसस्तत्तच्छास्त्रं प्रत्युदन्तत्वादन्तत्वे अपि स्त इत्यतिप्रसङ्ग एव । अन्यथा अमुनेत्यपि न स्यात् । मुत्वासिध्येनस्य दुर्वारत्वात् । एतेनाङो नुडस्त्रियामित्यपि निरस्तमिति रत्नाकरोक्तम्, अमुना घटेनेत्याद्यसिद्ध्यापत्तेरिति दण्डयुक्तम् । आङोऽस्त्रियां नङिति नगिति वा सुवचं पुंसीत्येव सिद्धे क्लीबरूपे नङाद्यर्थं क्रियमाणास्त्रियांग्रहणसामर्थ्यान्मुत्वस्य नासिद्धत्वम् । अथवा प्रयय इत्यादिनिर्देशात् "पूर्वत्रासिद्धम्" इत्यस्यानित्यत्वेनात्राप्रवृत्त्या "न मुने" इत्यस्याभावेऽपि रूपासिद्धिः, गमकं त्वत्रोक्तरीत्याऽस्त्रियामित्येव । एतेन मूलं सव्याख्यानं सर्वमपास्तम् । किं च यथाश्रुतेऽपि तन्त्राद्यनुचितं गौरवादिति मन्दोक्तं चापास्तम् । तदेतद्दोषान्तरसूचनद्वारा ध्वनयन्नाह—नमुटादेश इति । टायाष्टायां वा आदेश इत्यर्थः, अजादिगणपाठाट्टाबिति । अत एव स्त्रीतिवन्नीति नोक्तं सूत्रकृता । एवं च मूलमप्ययुक्तमेवेति भावः ।

त्संज्ञापरित्राणार्थादुदित्करणाल्लभ्यत इति तत्रैवोक्तमिति । तच्चिन्त्यम् । "न विभक्तौ" इति सूत्रे ङेरौतस्तकार उच्चारणार्थो नेत्संज्ञ इति स्वयमेवोक्तत्वेन पूर्वापरविरोधात् । युक्तं चोच्चारणार्थत्वं न तु स्वरितार्थत्वम् । "स्तीर्णे बर्हिषि समिधाने अग्नौ" इत्यादौ स्वरितत्वादर्शनात् । 'अत्' इति तपरत्वं तु बुद्धावित्या·

शब्दरत्नम् ।

**नेत्संज्ञ इति** । इयमपि तदुक्तिश्चिन्त्या "तस्य लोपः" इति सूत्रभाष्ये उच्चारणार्थानामपीत्संज्ञकत्वस्य स्पष्टमुक्तत्वात् । **स्वरितत्वादर्शनादिति** । नन्वौतः स्वरितत्वेऽपि

भैरवी ।

टाशब्दस्याऽजादिगणे पाठाट्टाप् । स्वारस्येन—आदेशपदोपादानस्वारस्येन । एवम्पुंसीति न्यासे—गौणेऽपि "षट्त्रिचतुर्भ्यः" इत्यस्य प्रवृत्तिरिति मते, प्रियत्रिणा कुलेनेत्यत्र नाभावस्याप्रवृत्त्या तस्य स्वरस्याप्रवृत्तिः स्यादित्यपि बोध्यम् । एतच्च मतं हलन्तप्रकरणेऽष्टन्शब्दस्य निरूपणावसरे स्फुटम् ।

तदुक्तिः—"न विभक्तौ" इतिसूत्रे प्राचामुक्तिः । इत्संज्ञकत्वस्येति । यद्युच्चारणार्थानां विनैवेत्संज्ञां निवृत्तिः स्यात्तदा येषाङ्कार्यार्थमुपादानन्तेषामपीष्टतत्तत्कार्यसम्पादकत्वेन चरितार्थानां स्वभावतः एवोच्चारणार्थकस्येव निवृत्तिसम्भवेन "तस्य लोपः" इति सूत्रस्य वैयर्थ्यापत्तिरिति भावः । स्पष्टमुक्तत्वात्—स्पष्टन्ध्वनितत्वादित्यर्थः । अग्नावित्यत्र स्वरितौकारादर्शनतात्पर्यकेण स्वरितत्वादित्यनेनौतस्तकारः उच्चारणमात्रफलकः । स्वरितत्वप्रयोजकत्वाभावादित्यनुमानन्ध्वनितम् । "किमोऽत्" इति सूत्रविधेयाच्छब्दघटकतकारो व्यतिरेके दृष्टान्त इति, तत्र स्वरितत्वादर्शनस्योपायान्तरेणोपपत्तावुच्चारणमात्रफलकत्वकल्पनमन्याय्यमित्याशयेन शङ्कते—नन्विति । अग्निशब्दान्त्यावयवेकारस्यानुदात्ततया नात्र "एकादेश उदात्तेन"-

भावप्रकाश ।

**इयमपीति** । नेत्संज्ञ इत्येतन्मात्रापीत्यर्थः । अपिर्मूलानूदिततदुक्तिद्वयसमुच्चायकः । **तदुक्तिः**—प्रकाशकृदुक्तिः । **संज्ञकत्वस्येति** । अन्यथा कार्यार्थिनामपि तथैवापगमेन "तस्य लोपः" इत्यस्य वैयर्थ्यापत्तिः स्वभाववादस्योभयत्रापि समत्वादिति भावः । **स्पष्टमुक्तत्वादिति** । स्पष्टं ध्वनितत्वादित्यर्थः । स्पष्टं चेदं सर्वमुद्द्योतादौ । एतेन तादृशभाष्यानुपलम्भ इति मन्दोक्तमपास्तम् । अत्र खण्डनकृदुक्तप्रकाशयोजना तु न युक्तियुक्तेति नानूद्य दूषितेति बोध्यम् । खण्डनकृदुक्तदूषणं खण्डयति—**नन्वौत इति** ।

सरला ।

**स्पष्टमुक्तत्वादिति** । "तस्य लोपः" इति सूत्रे भाष्ये—"सर्वादेशे च दोषो भवति दिव औत् औत्सर्वादेशः प्राप्नोति" इत्यनुबन्धा एकान्ता इति पक्षे उक्तम् । यदि औतस्तकारस्योच्चारणार्थत्वेनेत्संज्ञा न स्यात्तर्हि अनेकाल्त्वात्सर्वादेशत्वशङ्काऽसङ्गता स्यात् । एवञ्चोच्चारणार्थानामपीत्संज्ञयैव निवृत्तिरिति तत्त्वम् । अत एव "अद्ड्डतरादिभ्यः पञ्चभ्यः" इति सूत्रस्थभाष्यसङ्गतिः । तत्र हि अद्डादेशस्य डित्वाभावे कतर अद् इति स्थितौ "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घमाशङ्क्य "सिद्धन्त्वनुनासिकोपधत्वात्" इति समाहितम् । इत्संज्ञां विनैवोच्चारणार्थानां वर्णानां निवृत्तौ तु "उच्चारणार्थत्वात्" इत्येव वदेदिति । अनुनासिकोपधत्वादित्यस्य अदादेशे उपधाभूतोऽकारोऽनुनासिकः पठ्यते, तस्य चेत्संज्ञालोपाभ्यां निवृत्तौ न पूर्वसवर्णदीर्घापत्तिरित्यर्थः ।

वस्तुतस्तु अग्रे शब्दरत्ने एव "उच्चारणार्थ इत्यस्य च वर्णान्तरोच्चारणे मुखस्य क्लेशवारणार्थो न त्वन्यफलार्थ इत्यर्थ" इति वक्ष्यमाणत्वेन तस्य लोपसूत्रस्थभाष्यस्य "दिव औत्" सूत्रस्थतकारस्याने काल्त्वद्वारा सर्वादेशत्वसम्पादकतया "अद्ड्डतरादिभ्यः" इति सूत्रस्थभाष्यस्य चाकारस्य पूर्वसवर्णदीर्घसम्पादकतया उच्चारणमात्रार्थत्वाभावेन सुसङ्गततयोच्चारणार्थानामित्संज्ञया विनैव निवृत्तौ न किञ्चिद्बाधकमिति ।

दावत्वे कृते स्त्रियां टाब् मा भूद् इत्येतदर्थमित्याहुः। तदपि चिन्त्यम्।

---

शब्दरत्नम्।

नाम्नावित्यत्र स्वरितश्रवणमग्निशब्दस्यान्तोदात्तत्वेन "एकादेश उदात्तेन" इत्यनेनोदात्तत्वादिति चेन्न। वृत्तौ "अनुदात्तस्य" इत्यस्य तत्रानुवर्त्तितत्वात्। शेषनिघातेनौकारस्वरि-

भैरवी।

इत्यस्य प्राप्तिः, किञ्च "एकादेश उदात्तेन" इति सूत्रे "उदात्तस्वरितयोः" इति सूत्रादनुदात्तस्येत्यस्यानुवृत्तिदर्शनेन न तस्य सूत्रस्य प्राप्तिरित्याशयेन तदुक्तिन्दूषयति—वृत्तावित्यादिना। अत्र वृत्तावित्युक्तिरुपलक्षणम्, "तस्यादित उदात्तमर्द्धह्रस्वम्" इति सूत्रस्थभाष्यमपि प्रमाणम्। तत्र हि सुब्रह्मण्योमित्यत्र सुब्रह्मणि साधुः सुब्रह्मण्या इति स्वरितान्तः सुब्रह्मण्याशब्दः "तत्र साधुः" इति यति सुब्रह्मन्शब्दप्रकृतिकयदन्तः सुब्रह्मण्यशब्दस्तस्य टापो ऽनुदात्तस्य चैकादेश आन्तरतम्यात्स्वरितः ॐशब्दो निपातत्वादाद्युदात्तस्तस्यैकादेशोऽप्युक्तरीत्या स्वरित एव, तस्य स्थाने "न सुब्रह्मण्यायाम्" इत्यनेनोदात्त इत्युक्तम्। यद्येकादेशेति सूत्रे अनुदात्तस्येत्यस्यानुवृत्तिर्न स्यात्तदा भवदुक्तरीत्या सुब्रह्मण्योमितिप्रयोगघटकस्योकारस्योदात्ततया भाष्यासङ्गतिः स्पष्टैव। एवं सति वृत्ताविति नारुचिकङ्किन्तु प्रामाण्यार्थमेवेति बोध्यम्। यदुक्तमग्निशब्दस्यानुदात्तत्वन्तदुपपादयति—शेषनिघात इति। ननु भवदुक्तरीत्याऽग्निशब्देकारस्यानु-

भावप्रकाश।

वृत्ताविति। "तस्यादितः"इति सूत्रभाष्यादिस्वरसोऽप्येवम्। तत्र हि सुब्रह्मणि साधुरिति यति तित्स्वरिते तेन सहानुदात्तटाप एकादेशे आन्तरतम्यात्स्वरिते तेन सहनिपातत्वादाद्युदात्तोम्शब्दस्यैकादेश उक्तरीत्या स्वरित एव, तस्य न सुब्रह्मण्यायामित्यनुदात्तत्वमित्युक्तम्। इदं च तदनुवृत्तावेव सङ्गच्छते। अन्यथा तत्रैव तेनैवोदात्तसिद्धिरिति तदसङ्गतिः स्पष्टैव। "तानि नरा जुजुषाणोयम्। इन्द्रो हिमवत्स्यन्धसः। शतं यथेमं शरदो न यातीन्द्रः। क्वावरं मरुतः अद्यूत्येनं से" इत्यादौ तु च्छान्दसत्वं शरणम्। तथा हि, क्वावरमित्यत्र तित्स्वरितस्य शिट्त्वादाद्युदात्तावरशब्देनैकादेशः। एवं सर्वत्र प्रक्रिया बोध्या। अत्र—

"उदात्तवत्येकीभावे उदात्तं सन्ध्यमक्षरम्।
अनुदात्तोदये पुनः स्वरितं स्वरितोपधे"॥

इत्यनेनोदात्तः। यत्र पूर्वमुत्तरं वोदात्तम्, अन्यस्तु उदात्तानुदात्तस्वरितप्रचितानामन्यतमस्तस्मिन्नेकीभावे पदान्तपदाद्योः सन्धौ तत्र भवं सन्ध्यमक्षरमुदात्तं ज्ञेयम्। स्वरितोपधेऽनुदात्तोदये संध्यमक्षरं स्वरितं ज्ञेयम्। क्षीरं सर्पिर्मधूदकम्। 'क्वे यथक्वेदसि' इत्युत्तरार्धस्य लक्ष्यमिति तद्भाष्यवृत्तिकृत्। अत्रानुदात्तोदये इत्यस्य पूर्वान्वयभ्रमवारणाय पुनः शब्दः। शौनकीयप्रातिशाख्येऽपि स्वराष्टकमुपक्रम्य

एकादिष्टमुदात्तेन तं तमेव नयेत्स्वरम्।

इत्युक्तम्। उदात्तेनैकादिष्टं तम् अष्टकान्यतमं स्वरं तमेवोदात्तमेव नयेत्। उदात्तत्वमेव प्रापयेदिति तद्भाष्यकृत्। लोके तु क्वावरमित्यादौ न भवत्येवोदात्तः किं तु लौकिकसुब्रह्मण्योमितिवत्स्वरित एव। एतेन निष्फलत्वाल्लक्ष्यविरोधाच्च नानुवर्तते तदिति मूलकौस्तुभादिग्रन्थाः परास्ताः। सकललोकवेदसाधारणस्यास्य तदेकवाक्यताया अयुक्तत्वात्। एवं च वृत्ताविति नारुचिबोधकं, किन्तु प्रामाण्यार्थमिति बोध्यम्। रूपग्रहणेन सुब्रह्मण्योमित्यस्य यथा न सिद्धिस्तथा सन्धिप्रकरणे निरूपितम्। यद्यपि अथोक्थ्योऽप्यतिरात्रः याज्यै वैनमेतयाप्यायतीत्यादावथअपिशब्दयोर्निपातत्वादाद्युदात्तयोर्मध्य आद्यस्य यता स्वरितान्तोक्थ्यशब्देनैकादेश आन्तरतम्यादनुदात्तः सन्नतरः स्वरितस्यैकादेशदृष्ट्या असिद्धत्वेनानुदात्तद्वयस्थानिकत्वात्। एवमग्र्यैकादेशस्यापि स्वरितत्वं प्राप्तम्। तथा ण्यदन्तयाज्याशब्दस्य स्वरितान्तत्वात्प्रश्लिष्टस्य आङ उदात्तत्वादेवस्य चान्तोदात्तत्वात्प्राग्वत्स्वरितत्वं प्राप्तमिति तद्बाधायावश्यकेन तैत्तिरीयप्रातिशाख्येन उदात्तधर्मविशिष्टे वर्णे पूर्वतः परत उभयतो वा स्थिते उभे अप्येकादेशमापन्ने उदात्तं धर्ममाप्नुत इति त्रिभाष्यरत्नाकरोक्तार्थकेन "सविता प्रार्पयतु ब्रह्मयच्छायाग्रे पूषा धत्त दिवीव

## शब्दरत्नम् ।

तत्वमादायाग्निशब्दस्य सर्वानुदात्तत्वाच्च। स्वरितस्य तु नोदात्तपदेन ग्रहणम् "उदात्तस्वरितयोः" इत्यादौ स्वरितग्रहणात् । उच्चारणार्थानामित्संज्ञकत्वेऽपि 'प्रत्ययाप्रत्यययोः' इत्येव सिद्धे पुनः "तिति प्रत्ययग्रहणं कर्तव्यम्" इति वार्त्तिकेनौपदेशिकप्रत्ययत्ववत्येव तत्प्रवृत्त्या नात्र स्वरितत्वप्रवृत्तिरिति तत्त्वम् । आदेशेषु दकारस्थानिकचर्त्वनिष्पन्नतकारस्य सत्त्वेन दित्त्वात्तदप्राप्तेः । उच्चारणार्थं इत्यस्य च वर्णान्तरोच्चारणे मुखस्य क्लेशवारणार्थौ नत्वन्यफलार्थं इत्यर्थः । अत एव भाष्ये औकारं डितमाश्रित्यादिति प्रत्याख्यातम् ।

## भैरवी ।

दात्तत्वेऽपि स्वरिते,उदात्तभागस्यापि सत्त्वेन "एकादेश उदात्तेन" इत्यनेनाऽग्नावित्यत्रोदात्तत्वं भविष्यतीति स्वरितत्वादर्शनादित्यसङ्गतमत आह—स्वरितस्य त्विति। ननूच्चारणार्थानामपीत्संज्ञास्वीकारे भवन्मतेऽप्यग्नावित्यत्र स्वरितत्वापत्तिरस्त्येव, औतस्तकारस्येत्त्वादित्यत आह—उच्चारणार्थानामिति । एतेनौतस्तकार उच्चारणार्थो नेत्संज्ञक इति ग्रन्थः स्वरितत्वापत्तिपरिहाराभिप्रायकोऽसङ्गत एव स्वरितत्वस्य तत्र प्राप्तेरेवाभावादिति सूचितम् । अत एव भाष्ये "दिव उत्" इत्यादौ दित्त्वमाश्रित्य "तिति प्रत्ययग्रहणम्",इति वार्तिकस्प्रत्याख्यातम् । स्वरितत्वस्य यत्र यत्रानिष्टत्वं तत्र दित्त्वस्यैव स्वीकारात् । न चैवं "तिति प्रत्ययग्रहणम्" इति वार्तिकसद्भावेऽग्नावित्यत्र स्वरितत्वन्प्राप्नोति दित्त्वपक्षेतु नेति फलभेदे प्रत्याख्यानासङ्गतिरिति वाच्यम् ? विधानकालिकप्रत्ययत्ववतो ग्रहणमित्यत्र वार्तिकस्य तात्पर्यात् ।

ननु यद्युच्चारणार्थकवर्णविषयेऽपीत्संज्ञा तदा तत्र शास्त्रस्य व्यापारो जात एवेति तादृशकथनासङ्गतिः, उच्चारणमेव फलं, न तु तत्र शास्त्रस्य प्रवृत्तिरिति तदर्थादत आह–उच्चारणेति । वर्णान्तरेति । औकारादीत्यर्थः । न त्वन्यफलार्थः–प्रयोगसम्बन्धिफलान्तरन्तस्य नेत्यर्थः । इत्संज्ञालोपश्चेत्येतौ तु न प्रयोगसम्बन्धिनाविति तयोर्न व्यावृत्तिरिति भावः। "इद्वृद्धौ" "पत्यावैश्व-

## भावप्रकाश ।

चक्षुः वसन्तीन्द्रो हि मैत्रावरुणीत्याहि" इतिलक्ष्यकेन "उदात्तमुदात्तवति" इत्यनेन सुब्रह्मण्योमित्यस्य सिद्धिरिति 'स्वरितस्य तूदात्तः' इति निष्फलं, "न सुब्रह्मण्यायाम्" इत्येव कार्यमेकश्रुतिनिषेधाय; तथापि "इन्द्रागच्छ हरिवोऽत्रागच्छ मेधातीथे मेषवृषणश्वस्य मेने" इत्यादिनिगदे एकादेशाभावेन प्रातिशाख्याप्रवृत्त्याऽगादिवर्णेषूदात्तार्थं तस्यावश्यकत्वम् । अत एव तत्र न स्वरूपं गृह्यते किं तु निगद इत्यन्यत्र विस्तरः । इदमेव ध्वनयितुं वक्ष्यति–दिगिति । स्वरितार्थत्वादिशङ्काकरीत्या मूलमते दोषमाह––शेषेति । एवं चोदात्ताभावेन "एकादेश" इत्यस्याप्राप्त्या स्वरितश्रवणापत्तिः । एतेन कावरमित्यादिवत्प्रातिशाख्येन सिद्धिरित्यपास्तमिति भावः । एतेन कावरमित्याद्यर्थमननुवृत्तेस्तैरेवोक्तत्वेन पूर्वापरविरोध इति यथाश्रुतस्वरितार्थत्वमपि नातीव दुष्यतीति खण्डनकृदुक्तमपास्तम् प्रासादवासिन्यायेन शङ्कते–स्वरितस्येति । दकारेति । तिति प्रत्ययग्रहणस्य प्रत्याख्यानायेदमाश्रितं भाष्यादौ । अत एव प्रत्ययग्रहणमित्यस्य विधानकालिकप्रत्ययत्ववद्ग्रहणमित्यर्थः । अन्यथा फलभेदापत्तिः । "प्रत्ययाप्रत्यययोरिति तु न लक्ष्यसिध्युपयोगिनी, छान्दसत्वात्तत्र स्वरितो न" इत्युद्द्योतोक्तिस्तूपायान्तरपरेति भावः । नन्वेवमुच्चारणार्थत्वभङ्गः । तन्मात्रमेव फलं न शास्त्रमात्रप्राप्तिरिति तदर्थादत आह–उच्चेति । वर्णान्तेति । औकारादीत्यर्थः । वारणार्थं इति । तदेव प्रयोजनमित्यर्थः । नत्वन्येति । कार्यान्तरं प्रयोगीयं श्रवणं च नेत्यर्थः । अत एव तत्त्वप्रतिज्ञयैव "न विभक्तौ" इत्यस्य तत्राप्रवृत्तिः । एवं चेत्संज्ञालोपयोर्न व्यावृत्तिः । अत एव "इद् वृद्धौ" "पत्यावैश्वर्ये" इत्यादिनिर्देशसङ्गतिरिति भावः । अत एव—उच्चारणार्थत्वादेव । "अथ वा डिदौ करिष्यते औडच्च घेः" इति ग्रन्थे

तपरग्रहणाद्धि टापा सह दीर्घो मा भूत्। टाप् तु स्यादेव, लक्षणद्वयबाधे मानाभावात्। अत एव "क्तन्मेजन्तः" इति सूत्रभाष्यवार्त्तिकयोर्विवरणे च सन्निपातपरिभाषया टाब् नेत्युक्तम्। टापा व्यवधाने हि आनन्तर्यविघातः

शब्दरत्नम्।

न हि तदा तित्त्वमस्ति। न च डित्त्वे विंशतौ तिलोपापत्तिः। भाष्यप्रामाण्येन तस्य सप्तम्यामनभिधानादिति दिक्। अदिति। अस्य यदपीत्यादिः। दीर्घो मा भूदिति। भिन्नकालव्यावृत्त्यर्थत्वात्तपरत्वस्येति भावः। न च "ज्ञोऽविदर्थस्य" इति प्रकरणेन समासबाध इवानेन टापोऽपि बाध इति वाच्यम्। "प्रतिपदविधाना षष्ठी न समस्यते" इति

भैरवी।

यं" इत्यादिनिर्देशा अत एव सङ्गच्छन्ते। नन्वौतस्तकारस्योच्चारणार्थत्व एवोक्ता कल्पना सम्भवति, तत्रैव तु किम्मानमत आह—अत एव भाष्य इति। तदा—डित्त्वपक्षे। विंशताविति। अर्थपरे विंशताविति शब्द इत्यर्थः। भाष्यप्रामाण्येन—प्रत्याख्यानपरभाष्यप्रामाण्येन। न च "नस्तद्धिते" इति सूत्रस्थस्य तद्धित इत्यस्य मण्डूकप्लुत्या विंशतेरित्यत्रानुवृत्त्या लोपाभावेनोपपत्तावनभिधानकल्पनमन्याय्यमिति वाच्यम्? मण्डूकप्लुतेः सम्बन्धतदभावकल्पनाभ्यां गुरुत्वादिति भावः। परत्रोपात्तस्य तदपीत्यस्य साकाङ्क्षत्वादाह—अस्येति। ननु तपरोच्चारणेऽणुदित्सूत्रादिप्राप्तसवर्णग्रहणस्य व्यावृत्तिरेवान्यत्र दृष्टेति टापा सह दीर्घो माभूदित्यसङ्गतमत आह—भिन्नेति। "भाव्यमानेन सवर्णानां ग्रहणन्न" इत्यनेनैव सिद्धे प्रकृतं तकारोच्चारणमेतादृशार्थतात्पर्यकमिति भावः। मूले—टाप्तु स्यादेवेति। तपरस्याकारस्य विधानेन यथा तस्य श्रवणम्भवति तथैव कल्प्यतां न तु तत्स्वरूपाश्रवणप्रयोजककार्यबाध इति भावः। परोक्तङ्खण्डयति—न चेति। प्रकरणेन—अष्टसूत्र्या। अनेन टापोऽपीति। अत्रापिशब्दो भिन्नक्रमः अनेनेत्युत्तरं योज्यः, यथा तत्र षष्ठ्येव यथा स्यान्न तु तन्निवृत्तिप्रयोजकः समास इति कल्पना, तथात्राप्यकारनिवृत्तिप्रयोजकष्टाब्न भवतीति कल्पना भविष्यतीति भावः। न चात्रापि

भावप्रकाश।

नेति भावः। तित्त्वमिति। तन्न्यासप्रदर्शकभाष्ये तकारानुच्चारणादिति भावः।। एतेनौत् डित्करिष्यते इति मन्दोक्तमपास्तम्। विंशताविति। विंशताविति शब्दे इत्यर्थः। तस्य—अर्थपरविंशतिशब्दस्येत्यर्थः। अभिव्यक्तेति न्यायेन तत्रैव तत्प्रवृत्तिः। एतेनानभिधानोक्तथा विंशतावित्युल्लेखो विरुद्ध इत्यपास्तम्। यद्वा पूर्वपक्षेऽभिधानमस्ति सिद्धान्ते तद्रीत्या तदुक्तिः। एतेन न च विंशतौ तिलोपापत्तिः "गच्छतौ परदारादिभ्यः" इतिनिर्देशेन तिलोपाभावसिद्धेरिति मन्दप्रसादोक्तमपास्तमिति दिक्। तदपीत्यस्य साकाङ्क्षत्वादाह—अस्य यदपीति। भिन्नेति। यद्यप्यणुदित्सूत्रादिप्राप्तदीर्घादिव्यावर्त्तकत्वं तस्य "अतो गुणे" "ऋत इद्धातोः" इत्यादौ दृष्टं न तु स्त्रीप्रत्ययनन्तरप्राप्तदीर्घव्यावर्त्तकत्वम्, "इतोऽत्सर्व" इत्यनेनादेशे तस्येष्टत्वात्, किं चात्र विधेयत्वेन भिन्नकालाग्रहणप्रसङ्गस्तथाऽपि परत्वस्य साफल्ये इष्टे तत्स्थाने लक्ष्ये लक्षणान्तरप्राप्तोऽपि स व्यावर्त्तते। "दिव उत्" इत्यादाविव शब्दतरतथैव लाभात्। एवं च यथाऽलुका लुगेव बाध्यते न तु समासः, एवं सवर्णदीर्घ एव न स्यात् टाप् तु स्यादेव वाच्यवृत्त्या तदभावस्य दुरनुपपादत्वादिति भावः। प्रकरणेन-तदारभ्याष्टसूत्रात्मकेन। अनेन टापोऽपीति। अनेनापि टाप

सरला

सप्तम्यामनभिधानादिति। वस्तुतस्तु "ति विंशतेर्डिति" इत्यत्र डश्चासाविन् च डि, तस्मिन् डिति इति कर्मधारयसमासमाश्रित्य इत्संज्ञकडकारादौ प्रत्यये विंशतेः तिशब्दस्य लोप इत्यर्थेन 'विंशतौ' इत्यत्र औकारादेशस्य डित्त्वेऽपि तदप्राप्त्याऽनभिधानमप्रामाणिकमेव। यद्वा, "तिर्विंशतेर्डिति" "टेः" "नस्तद्धिते" इति सूत्रत्रयस्थाने "टेर्डिति" "ति विंशतेस्तद्धिते" "नः" इतिन्यासेन विंशतेस्तिशब्दस्य डिति तद्धिते एव लोपप्रवृत्त्या 'विंशतौ' इति रूपे न तिलोपप्रसङ्ग इति बोध्यम्।

स्यादिति । तस्माद् औत इव अतोऽपि तपरकरणमुच्चारणार्थमेवेत्यवधेयम् ।

"अन् सौ" ॥ "सोर्डा" इत्येव सिद्धे अनङ्विधानमन्यतोऽपि स्यादिति ज्ञापनार्थम् । तेन उशनसः सम्बुद्धौ अनङ् सिध्यतीति प्राञ्चः । तच्चिन्त्यम् । सोर्डेत्युक्ते हि "ऋदुशनस्" इत्युत्तरसूत्रेणापि डा स्यात् । ततश्च उशनेत्यत्र "सर्वनामस्थाने चासम्बुद्धौ" इति दीर्घः स्यात् । पुरुदंसेत्यत्र "सान्तमहत"इति दीर्घः स्यात् । यद्वा, 'संज्ञापूर्वको विधिरनित्य' इति वा अङ्गवृत्तपरिभाषया वा समाधानं बोध्यम् ।

"हल्ङ्याब्भ्यो" ॥ दीर्घादित्येतन् ङ्यापोरेव विशेषणम् , न तु हलोऽसम्भवात् इत्याह—दीर्घाविति । परमिति । न त्विदं विहितविशेषणं या, सा, का इत्यादावव्याप्तेः । न च तत्र हलन्ताद्विहितत्वेन निर्वाहः । यः, स इत्यादावति-

शब्दरत्नम् ।

वार्त्तिकानुरोधेन तत्र तथा कल्पनेऽपीह तथा कल्पने मानाभावात् ।

**अनङ् सिध्यतीति।** वैकल्पिकत्वमात्रं तु वाचनिकमिति तद्भावः। संज्ञापूर्वक इत्यस्य भाष्यास्पृष्टत्वादाह-**अङ्गवृत्तेति** । इयमगतिकगतिः । **सोर्डेति** न्यासे लाघवाभावश्च डित्त्वसामर्थ्याट्टिलोपकल्पने गौरवं च । तस्मादुशनसोऽनङ् तद्वैकल्पिकत्वं च चिन्त्यमेव भाष्यानुक्तत्वादिति प्रामाणिकाः ।

भैरवी ।

"पत्यावैश्वर्ये" इत्यादिनिर्देशो मानमिति वाच्यम् ? सन्निपातपरिभाषयाऽपि तस्योपपत्तिसम्भवात् ।

प्रकाशकारोक्तिङ्खण्डयितुमुपक्रमते—सोर्डेत्येवेति । तद्भावः—प्रकाशकारस्य भावः । नन्वगतिकगतित्वेऽपि क्वचित्तदाश्रयणमस्त्येवेत्यत आह—सोर्डेतीति । लाघवाभावः—पदलाघवाभावः । सोरिति रेफमादाय मात्रालाघवाभाव इत्यपि बोध्यम् । प्रत्युत कल्पनागौरवमित्याह—डित्त्वेति । एवञ्च क्लृप्तां रीतिं परित्यज्याक्लृप्तकल्पनायां ज्ञानगौरवं स्पष्टमेव ।

ननु "हल्ङ्याभ्य"इत्यत्र विहितविशेषणत्वाभ्युपगमेऽपि न मूलोक्ताव्याप्त्यतिव्याप्त्योरवसरः ? "त्यदादीनामः"इति सूत्रे विभक्तावित्यस्य विषयसप्तमीत्वाभ्युपगमेन विभक्त्युत्पत्तेः प्रागेव तस्य प्रवृत्त्याऽव्याप्तेः परिहारसम्भवात् । एवञ्च हलन्ताद्विधानाभावेन यः स इत्यादावतिव्याप्तिरपि परिहर्तुं शक्या । एवमनङ्विधावपि सौ इत्यत्र विषयसप्तमीत्वमेवास्त्विति

भावप्रकाश ।

इत्यर्थः । मानाभावादिति । न च "सम्बुद्धौ शाकल्यस्य" इति निर्देशो ऽत्रापि मानमस्त्येवेति वाच्यम् । सन्निपातपरिभाषयैव तत्सिद्धौ तस्यामानत्वात् । एतेन तन्मानस्यात्रापि सत्त्वमिति मन्दोक्तमपास्तम् ।

तद्भाव इति । प्रकाशाशय इत्यर्थः । एतेन तेनानङ् वा नलोपश्च वा, हेउशनन्निति वक्ष्यमाणमुपपन्नमिति प्रकाशोक्तिरपि तथा योजनीयेति सूचितम् । नन्वगतिकगतित्वेऽपि तत एवाश्रयणमत आह—सोर्डेतीति । लाघवेति । मात्रापदलाघवेत्यर्थः । ननु प्रक्रियालाघवमस्तीत्यत आह—डित्त्वेति । एवं चक्लृप्तप्रक्रियातोऽक्लृप्तप्रक्रियाप्रयुक्तज्ञानगौरवमेवेति भावः । चिन्त्यमेवेति । एतेन प्रकाशो मूलं तदनुयायिरत्नाकरदण्ड्यादिग्रन्था अपि चिन्त्या एवेति सूचितम् । खण्डनकृदपि इत्थमेव प्रकाशाद्युक्तज्ञापकमात्रमिषितवानिति वृत्तिमाधवादिग्रन्था अपि चिन्त्या एवेति बोध्यम् । ननु "त्यदादीनामः" इत्यत्र विभक्तावित्यस्यानङ्विधौ सावित्यस्य च विषयसप्तमीत्वाभ्युपगमे मूलोक्तदोषाभावोऽत आह—

व्याप्तेः 'कर्ता'इत्यादावव्याप्तेश्चेति भावः। हलिति। तस्य च सुतिसीत्येवंरूपत्व-मेकदेशविकृतन्यायेन बोध्यम्। लुप्यत इति। यद्यपीह "लोपो व्योः" इत्यतो लोप इत्यनुवर्तते। तच्च तत्र भावसाधनं तथाऽपीह कर्मसाधनं हलिति प्रथमान्तेन सामानाधिकरण्यादिति भावः। दीर्घग्रहणं किम्? अतिखट्वः, निष्कौशाम्बिः। ननु इह समस्तस्य ङ्याबन्तत्वं नास्ति। न च 'स्त्रीप्रत्यये तदादिनियमो नास्ति' इति वाच्यम्। अनुपसर्जने हि तथा। इह तूपसर्जनत्वात् तदादिनियमोऽस्त्येव।

---

शब्दरत्नम्।

**चेतीति।** "तस्मादित्युत्तरस्य" इति जाग्रति विहितविशेषणासम्भवश्चशब्दार्थः। **एकदेशविकृतन्यायेनेति।** स्थानिवत्त्वस्योपलक्षणमिदम्। अर्द्धाधिकविकारेण प्रत्यभि-ज्ञाभावाच्छिन्नपुच्छश्वदृष्टान्तमूलकन्यायस्यात्राप्राप्तिरिति बोध्यम्। **प्रथमान्तेनेति।** यद्यपि "तस्मादित्युत्तरस्य" इत्युक्तेः षष्ठ्यन्तताऽपि सम्भवति तथाऽपि बहुषु पदेषु विभ-क्तिविपरिणामकल्पनाऽपेक्षयाऽऽगन्तुकलोपशब्दे एवार्थान्तरकल्पनमुचितमिति भावः। ननु सुतिसीति प्रत्ययैः 'यस्मात्स विहितस्तदादेः' इत्युपश्लिष्टत्या तस्य हल्ङ्याब्भ्य इति विशेषणमिति हल्ङ्याबन्तात्तदादेः परस्येत्यर्थेन प्रकृत्याक्षेपादुपसर्जनस्त्रीप्रत्यये तदादिनिय-

भैरवी।

कर्त्तेत्यत्राव्याप्तिरपि परिहर्तुं शक्येत्यत आह—चेतीति। वक्ष्यमाणरीत्याऽत्रैकदेशविकृतन्याय-स्याप्राप्तिसत्त्वेन 'तस्य च' इत्याद्युक्तमूलासङ्गतिम्पर्यालोच्याह—स्थानिवत्त्वेति। अर्द्धाधिकेति। अ-र्द्धश्चाधिकश्चार्द्धाधिकौ तयोर्विकार इति समासः। एवञ्च वर्णगणनायामर्द्धस्य मात्राया गणने तु तदर्द्धस्य विकारसत्त्वेन जातिव्यञ्जकभूयोऽवयवसंस्थानाभावेन नात्रैकदेशविकृतन्यायस्य प्र-वृत्तिरिति भावः। षष्ठ्यन्ततापीति। हलित्यस्येति शेषः। बहुष्विति। सुतिसि अपृक्तं हलित्यत्र चेत्यर्थः। नात्र दोष इति। अतिखट्वः, निष्कौशाम्बिरित्यत्र। सोर्विधानं यस्मात्तदादेराबन्त-त्वङ्यन्तत्वयोरभावेन दोषाभाव इत्यर्थः। स च दोषः सोर्लोपस्य प्राप्तिरूपः। एवञ्च दीर्घ-

भावप्रकाश।

**तस्मादिति।** एतेन तेन सिद्धे नाव्याप्त्यतिव्याप्तीति तन्निर्दुष्टमिति मन्दोक्तमपास्तम्।

**स्थानिवत्त्वेति।** "सर्वे सर्वपदा" इति न्यायेन स्वादिस्थाने जातस्य सादेः सुत्वादिबुद्धिरिति भावः। **अर्धेति।** अर्धश्चाधिकश्चार्धाधिकौ तयोर्विकारेणेत्यर्थः। वर्णरीत्याऽर्धविकारो मात्रारीत्याधिकवि-कारस्तथा च तज्जातिव्यञ्जकभूयोऽवयवदर्शनाभाव इति भावः। एतेन तथा रत्नाकरदण्ड्यादिग्रन्थाः परास्ताः। **षष्ठ्यन्तताऽपीति।** हलित्यस्येति शेषः। षष्ठीप्रक्लृप्तिपक्षे इति भावः। **बहुषु-** सुतिसि अपृक्तं हलित्येष्वित्यर्थः। एतेन लाघवं द्विविधं सूचितम्। तत्पक्षस्य दूषितत्वादाह—**उचित-मिति।** यद्यपि ङ्याबंशे प्रत्ययग्रहणपरिभाषया सिद्धं तथाऽपि हलंशसाधारण्यायाह—**सुतीति।** तदन्तान्तस्य तु बाधान्न सा। अत एवात्र पञ्चम्यन्तता; तदाह—**तदादेः परस्येति।** **उपसर्जनेति।** अत एव—'अतिकारीषगन्ध्यापुत्रः' इत्यादौ संप्रसारणं नेतिभावः। **ङ्याबन्तत्वाभावेन नात्र दोष इति।** 'अतिखट्वः' इत्यादौ तदादेर्ङ्याबन्तत्वाभावेन नातिव्याप्तिरित्यर्थः। एवं च दीर्घपदं व्यर्थम्,

सरला।

**प्रत्यभिज्ञाभावादिति।** वस्तुतस्तु एकदेशविकृतन्यायस्य छिन्नपुच्छे शुनि श्वत्वव्यवहारमूल-कतया पुच्छनाशेऽपि श्वत्वप्रत्यभिज्ञासत्त्वेन तद्व्यवहारवद् यत्र यत्र तत्त्वप्रत्यभिज्ञा तत्र सर्वत्र अर्द्ध-विकारे तदधिकविकारेऽपि वा तन्न्यायस्य प्रवृत्तेर्निर्विवादतया तिस्योर्विषये इकारलोपेऽपि तकारसकार-मात्रेऽपि तत्त्वप्रत्यभिज्ञायाः सत्त्वेन तत्र तन्न्यायप्रवृत्तौ न किञ्चिद् बाधकमिति बोध्यम्। **उक्तं विशेष्य-**

सत्यम् । तथाऽपि उत्तरपदस्य ङ्याबन्तत्वेन सोऽस्ततः परत्वानपायात् । न हीदं विहितविशेषणमित्यवोचाम । अत एव 'बहुश्रेयसी' इत्यत्र सुलोपः ।

## शब्दरत्नम् ।

सत्त्वात् च प्रकृतेर्ङ्याबन्तत्वाभावेन नात्र दोष इत्यत आह–अत एवेति । एतत्सिद्ध्यर्थं "येन विधिः" इति परिभाषया शब्दरूपं विशेष्यमादाय तदन्तविधौ ततः प्रत्ययग्रहणपरिभाषयोक्तं विशेष्यमादाय पुनस्तदन्तविधौ "टिड्ढाणञ्" इति सूत्रेऽणन्तान्तादिवद् ङ्याबन्तान्तादित्यर्थस्यावश्यकत्वेनात्र दोषः । मालेत्यादौ तु व्यपदेशिवद्भावेन

## भैरवी ।

ग्रहणस्य कथमेतद्व्यावर्त्यमिति भावः । एतत्सिद्ध्यर्थमिति । बहुश्रेयसीत्यस्य सिद्ध्यर्थमित्यर्थः । अस्य आवश्यकत्वेनेत्यत्रान्वयः । नच मूलविरोधः तत्रात एवेत्यस्योत्तरपदस्य ङ्याबन्तत्वेन ततः परत्वात्प्राप्तस्य सुलोपस्य व्यावृत्त्यर्थमत एवेत्युक्तमित्यर्थः प्रतीयत इति वाच्यम् ? तत्रत्यस्यात एवेत्यस्य बुद्धिस्थहेतोरित्यर्थात् । अत्र प्रत्ययग्रहणपरिभाषयोक्तं विशेष्यमादाय तदन्तविधौ पुनः "येन विधिः" इति परिभाषया शब्दस्वरूपं विशेष्यमादाय तदन्तविधिरिति योजना बोध्या । क्वचित्त्वेवमेव पाठः । उक्तमिति । अस्य तदादेरित्येतदित्यर्थः । अत्र दोषः–अतिखट्वः निष्कौशाम्बिरित्यत्र सुलोपस्य प्राप्तिरूपो दोषः । स च दीर्घग्रहणेन परिहर्तव्य इति शेषः ।

नन्वेवं सति मालेत्यादौ तदन्तविधिद्वयलभ्यार्थाभावेन सुलोपानापत्तिरत आह–मालेत्यादाविति । तस्येति तु व्यपदेशिवद्भावानाश्रयणपक्ष इति भावः । न च "व्यपदेशिवद्भावोऽप्रातिपदिकेन" इति निषेधो भविष्यतीति वाच्यम् ? तस्य प्रत्ययविधिविषयत्वात् । एतच्च "ङ्याब्ग्रहणेऽदीर्घः" इति स्थानिवत्सूत्रीयवार्तिकव्याख्यानावसरे निष्कौशाम्बिरतिखट्व इत्यत्र सुलोपापत्तिवारणं तस्य वार्तिकस्य फलमित्यभिधाय "ननु दीर्घादित्युच्यते, तन्न वक्तव्यम्" इत्युक्तम्भाष्यकृता, तदभिप्रायेण व्याख्यातम् । तदन्तविधिद्वयाभावेऽपि दीर्घग्रहणमावश्यक-

## भावप्रकाश ।

उत्तरपदस्येत्यादिमूलोक्तं तथा हरदत्तरत्नाकरदण्ड्याद्युक्तं चायुक्तं चेति भावः । एतदिति । 'बहुश्रेयसी' इत्यादिसलोपरूपसिध्यर्थमित्यर्थः । आवश्यकत्वेनेत्यत्रान्वयः । एतेनात एवेत्यस्य बौद्धविवक्षात एवेत्यर्थो न तूक्तहेतोरेवेतीति सूचितम् । 'प्रत्ययग्रहणपरिभाषयोक्तं विशेष्यमादाय तदन्तविधौ ततो "येन विधिः" इतिपरिभाषया तमादाय पुनस्तदन्तविधौ टिड्ढेति' इति पाठः । उक्तमिति । तदादीत्यर्थः । ङ्यापोः प्रत्ययत्वेन तदादीत्युपस्थितेः । एवञ्च सम्पूर्णा "प्रत्ययग्रहणे" इति परिभाषा प्रवृत्तेति भावः । ष्यमादायेति । शङ्कोक्तरीत्योपस्थिततदादीतिविशेष्यमादायेत्यर्थः । अत्र शङ्कोक्तरीतिर्द्रष्टव्या । ङ्याबन्तान्तादिति । हलंशे तु शङ्कोक्तरीतिरेवेति भावः । अत्र दोष इति । 'अतिखट्वः' इत्यादावतिव्याप्तिरित्यर्थः । एतेन क्वचिदुपसर्जनेऽपि तदादिनियमो नेत्यत्र दीर्घग्रहणं ज्ञापकमिति "गोस्त्रियोः" "इयसश्च" इत्यत्र कैयटोक्तिः, सर्वादिसूत्रे कौस्तुभोक्तिश्चात्र सूत्रे हरदत्तोक्तिश्चापास्ता । "वृक्षसूस् सू इति प्रसज्येत । अस्तु । संयोगान्तलोपेन सिद्धम्" इतिभाष्यं सरूपसूत्रस्थं यथा सुयोजं तथोद्द्योते स्पष्टम् । तत्र कैयटस्य प्रमाद एवेति भावः । व्यपेति । 'अप्रातिपदिकेन' इतिनिषेधस्तु प्रत्ययविधिविषय इति भावः । ननु 'बहुश्रेयसी' इत्यत्र लोपो न, मूलोक्तरीत्या तदभावपक्षस्यापि "ईयसश्च" इत्यत्र कैयटोक्तत्वेन सन्देहात् विहितविशेषणत्वाभ्युपगमेऽप्राप्तेश्च । कर्त्रेत्यादौ गतिस्तूक्तैव । एतेन

## सरला ।

मिति । सुतिसिभिस्तदादिरिति धर्मी उपस्थापनीयो ङ्याब्भ्यां वा तदादिरिति धर्मी उपस्थापनीय इत्यत्र नियामकाभावाद्विनिगमनाविरहेणोभाभ्यामपि तदुपस्थितौ सुतिसीत्येतदुपस्थापितं तदादिं विशेष्यमादाय पुनस्तदन्तविधिः । तथा च ङ्याबन्तं यत्तदादि तदन्तं यत्तदादि तस्मात्परीभूतं सुतिसीत्येतदपृक्तं हल् लुप्यते इति सूत्रार्थः फलितः । तदाह—ङ्याबन्तान्तादित्यर्थस्येति ।

स्यादेतत्। गङ्गीयतेः क्विप्। गङ्गीः। इहेकारस्य स्थानिवद्भावेनाप्त्वाद्दीर्घत्वा-च्चातिव्याप्तिरिति चेत्? सत्यम्, ङी ई, आ आप्, इति प्रश्लिष्य दीर्घग्रहणस्य प्रत्या-ख्यानान्न कश्चिद्दोषः। सुतिसीति किम्? भेत्ता। तासेस्तकारस्य लोपो मा भूत्। न चैवमपि 'अभैत्सीत्' इत्यादौ सिचो लोपापत्तिः। सुतिभ्यां साहचर्येण विभ-क्तेरेव ग्रहणात्। अपृक्तं किम्? भिनत्ति, छिनत्तीति प्रत्युदाहरन्ति। तच्चिन्त्यम्, विशिष्टस्याहल्त्वात्। सुतिसीनां हलिति क्लिष्टं व्याख्यायातिप्रसङ्गापादनस्यानु-

शब्दरत्नम्।

सिद्धिरिति भावः। श्रविष्ठासु जातः श्रविष्ठ इत्यादौ तद्धितलुकि स्त्रीप्रत्ययलुकि च प्रत्य-यलक्षणेन टाबन्तत्वादतिव्याप्तिवारणार्थं दीर्घग्रहणमित्यपि बोध्यम्।

अतिव्याप्तिरिति। अस्य स्त्री ई, देवदत्तस्य ई देवदत्तेरित्यादावपि सेति बोध्यम्। प्रत्याख्यानादिति। दीर्घग्रहणेनोपस्थितत्वादीकाररूपस्यैव दीर्घस्य ग्रहणाच्चेत्यपि

भैरवी।

मित्याशयेनाह—श्रविष्ठास्विति। श्रविष्ठा-ज्येष्ठा। तद्धितलुकि "श्रविष्ठाफल्गुनी" इतिसूत्रवि-हिते लुकि स्त्रीप्रत्ययस्य लुक् "लुक् तद्धितलुकि" इत्यनेन। प्रत्ययलक्षणेन-स्थानिवद्भावेन। दीर्घग्रहणे तु न स्थानिवत्त्वम्, अल्विधित्वात्। प्रत्ययलक्षणसूत्रन्तु नियमार्थम्।

मूले गङ्गीयतेः क्विबिति। न च पञ्चमीसमासपक्षेऽल्लोपस्य स्थानिवद्भावेन कथमत्रातिव्या-प्त्यभिधानमिति वाच्यम्? तस्यानित्यत्वेन तदप्रवृत्तिरित्याशयेन तदभिधानात्। देवदत्तेरिति। अत्र देवदत्ते इत्येकारान्तस्य दीर्घङ्यन्तत्वम्पूर्वान्तवद्भावेन बोध्यम्। मूले ङी ई आ आबि-ति। ङीरूपो य ईकारः आब्रूपो य आकारस्तदन्तादित्यर्थ इति भावः। ननु सूत्रकारमते दोष एव, न चेष्टापत्तिः, फलभेदे प्रत्याख्यानासम्भवादत आह—दीर्घग्रहण इति। उपस्थितत्वादिति। ङ्याप्पदेनोपस्थितत्वादित्यर्थः। एवञ्च ङ्याप्पदेन यस्येकारस्याकारस्य च प्रथममुपस्थिति-स्तादृशो य ईकार आकारो वा तस्यैव प्रत्यासत्त्या ग्रहणमिति देवदत्तेरित्यत्र तादृशस्याभा-वेन न सूत्रकारमतेऽपि दोष इति भावः। एतेन कस्य स्त्री की, तस्मादाचारक्विबन्ताद्धिचि गुणे 'केः' इत्यादौ सूत्रकारमते लोपो दुर्वारः। एवमतिखट्वस्य अः अतिखट्वा, निष्कौशाम्बेः ई निष्कौशाम्बीः इत्यत्रापि दीर्घस्य सत्त्वाल्लोपः स्यादित्यपास्तम्। यस्य प्रथममुपस्थितिस्त-

भावप्रकाश।

बहुश्रयसीत्यथ विहितविशेषणं नेति रत्नाकरदण्ड्याद्युक्तमपास्तम्। अत आह—श्रविष्ठेति। ज्येष्ठेत्यर्थः। "श्रविष्ठाफल्गुनी" इत्यनेनाद्यो लुक्। प्रत्ययलुकि चेति पाठः "लुक्तद्धितलुकि" इत्यनेन। सर्वथा दीर्घ पदमावश्यकमिति तात्पर्यम्। एवं च सा कैयटोक्तिरयुक्तैव। विहितविशेषणत्वं त्वसम्भावितमित्युक्तमे-वेति भावः।

ननु "क्वौ लुप्तम्" इत्यस्यासार्वत्रिकत्वेनाल्लोपस्य स्थानिवत्त्वाद्गङ्गीरित्यादौ न दोषोऽत आह—अस्य स्त्रीति। ननु सूत्रमते दोष एव। न चेष्टापत्तिः, फलभेदेन उभयोः प्रत्याख्यानासम्भवादत आह—दी-र्घेति। उपेति। ङ्याप्पदोपस्थितत्वादित्यर्थः। प्रत्यासत्त्येति भावः। एतेन कस्य स्त्री की, तस्मादाचार-क्विबन्ताद्धिचि केरित्यादौ सूत्रमते लोपो दुर्वार इत्यपास्तम्। न चैवमपि अतिखट्वस्य अः अतिखट्वाः, निष्कौशाम्बेः इः निष्कौशाम्बीः इत्यादौ पक्षद्वयेऽपि दोष एवेति वाच्यम्। "ङ्याब्ग्रहणेऽदीर्घः" इति वार्त्ति-कानुरोधेनोक्तसर्वेषामनभिधानस्य वक्ष्यमाणत्वात्। दीर्घात्प्राक् मानाभावात् फलाभावाच्च स्थानिवत्त्वाप्रवृ-त्तेश्च, लाक्षणिकत्वाच्च। एतेन निष्कौशाम्बीयतेः क्विपि निष्कौशाम्बी इति भवत्येव। अत एवोक्तवार्त्तिकं प्रश्लेषेण प्रत्याख्यातमित्यादिरत्नाकरदण्ड्याद्युक्तमपास्तम्। मध्ये ह्रस्वादेशेन तत्त्वस्य विच्छेदाच्च। तेन

चितत्वात् । यदप्याहुः—सुरां सुनोतीति सुरासुत्, तमाचष्टे सुरासयति, ततः क्विप्, सुराः, सुरासौ, सुरासः । इह सुनोतेरवयवस्य सस्य लोपं व्यावर्तयितुं अपृक्तग्रहणमिति । तदपि न, परस्परसाहचर्येण सुतिसीनां विभक्तीनामेव ग्रहणात् । अन्यथा सिचो लोपापत्तेरुक्तत्वात् । प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणाच्च । हल् किम् ? बिभेद ।

ननु प्रथमहल्ग्रहणं व्यर्थम् । हलन्तात्परेषां संयोगान्तलोपसम्भवात् ।

शब्दरत्नम् ।

बोध्यम् । सुरासयतीति । न च "णौ चङि" इति सूत्रस्थभाष्यप्रामाण्येन इदुदुपधेभ्यो णिज्नास्तीति सिद्धान्तात्कथमत्र णिजिति वाच्यम् ? तद्भाष्यस्य तेषां लुङि प्रयोगाभावकल्पनेनोपपत्तेः सर्वथा तदभावकल्पनमप्रामाणिकमित्यभिमानात् । ग्रहणाच्चेति । सावनुनासिकोकारपाठाच्चेत्यपि बोध्यम् । एवं चापृक्तग्रहणं चिन्त्यप्रयोजनम् । वस्तुतो

भैरवी ।

स्येहाभावात् । सूत्रस्थभाष्येति । तत्र हि "णेर्णिच्युपसङ्ख्यानम्" इति वार्तिकमवश्यं वाच्यम् । अन्यथा वादितवन्तम्प्रयोजितवानित्यर्थेऽवीवदद्वित्यत्र णिजन्ताण्णिचि लुङि च्लिस्तस्य स्थाने चङि द्वितीयणिलोपस्य चङ्परनिर्ह्रासे कर्तव्ये स्थानिवद्भावस्य निषेधे ऽपि तेनैव णिलोपेनाग्लोपित्वात् "नाग्लोपि" इति निषेधः स्यात् । एवमुक्ते परत्वाद् वृद्धौ सत्यां णिलोप इति नेहाग्लोप्यङ्गमिति पूर्वपक्षिणा शङ्किते "वृद्धेर्लोपो बलीयान्" अन्यथाऽपपटदिति न सिध्यतीति नाग्लोपीतिसूत्रे प्रत्याहारनिर्देशेन ज्ञापकेनोक्तम् । यद्यप्यरराजदित्यत्र ह्रस्वत्ववारणायाकारस्यावश्यकत्वं तथाऽपि प्रत्याहारनिर्देशो ज्ञापक एव । एतच्च ज्ञापकमिदुदुपधेभ्यो णिज् नास्तीति कल्पनायामेव सङ्गच्छते । अन्यथा स्वामिनमाख्यत् असस्वामत्, गोदुहमाख्यत् अजुगोदुहदित्यत्र प्रत्याहारनिर्देशस्य चारितार्थ्येन तस्यासङ्गतिः स्यात् । उक्तञ्च तत्रानभिधानङ्कैयटेन । अत्र—सुरासयतीत्यत्र । तद्भाष्यस्य-प्रत्याहारनिर्देशस्य ज्ञापकत्वप्रदर्शनपरभाष्यस्येत्यर्थः । अप्रामाणिकमिति । एवञ्चानभिधानकथनपरः कैयटश्चिन्त्य इति भावः । "प्रत्ययाप्रत्यययोः" इति परिभाषाया लक्ष्यसाधकत्वेन भाष्यकृताऽनाश्रयणादाह—सावनुनासिकेति । एवञ्च-साहचर्येण लोपाभावस्य सिद्धौ च । पूर्वोक्तानभिधानपक्षसूचितामरुचिं ध्वनयति-वस्तुत इति । चिन्त्यमिति । यदि तेषामभिधानं स्यात्तदा "ङ्याब्ग्रहणेऽदीर्घः"

भावप्रकाश ।

निष्कौशाम्बिरित्यादौ स्थानिवद्भावो निषिध्यत इत्युपपादनग्रन्थविरोधाच्चेति दिक् । सूत्रेति । तत्र हि णेर्णिचीत्यवश्यं कार्यम् । अन्यथा स्थानिवत्त्वनिषेधेनाव्यवधानेऽप्यग्लोपित्वान्निषेधापत्तिः । न च परत्वाद्वृद्धिः । तत एव ज्ञापकेन वृद्धेर्लोपस्य बलवत्त्वबोधनात् । अकारस्यात्यरराजदित्यादौ साफल्येऽपि प्रत्याहारस्य तत्त्वं युक्तमेवेत्युक्तम् । अन्यथा स्वामिनमाख्यदसस्वामदित्यादौ वृद्ध्यप्रसङ्गाल्लोपो ह्रस्वनिषेधाय स्यादिति ज्ञापकासङ्गतिस्तस्मादनभिधानमिति कैयटः । अप्रामाणीति । एवञ्च कैयटश्चिन्त्य इति भावः । अभिमानात्-प्रसादकृतस्तदनुयायिनां चेति भावः । तस्याः लक्ष्यसिध्यर्थत्वेन भाष्येऽनाश्रयणादाह—सावनुनेति । यथा तदनाश्रयणं तथा स्पष्टमन्यत्र । अत एव हरदत्तेन तस्या नामापि नाग्राहि । एतेन तां समर्थयन् रत्नाकरदण्ड्यादिः परास्तः । ननु यत्त्वाहुरित्यादिमूलं चिन्त्यम् । प्रसादप्रकाशयोस्तथाऽनुपलम्भात् । "अपृक्त एकाल्" इत्यत्र "प्रत्यय इति किम् ? सुराम्" इत्यादिप्रसादग्रन्थमनूद्य हि मूलोक्तरीत्या प्रकाशकृता खण्डितः । एवं च रत्नाकरदण्ड्याद्युक्तिरप्ययुक्तैवेति चेत् ? अत्राहुः । तद्ग्रन्थे धातुसस्य लोपो मा भूदित्युक्त्या तदभावे संज्ञाऽतिप्रसङ्गेऽत्र तत्सत्त्वेऽपि लोपातिप्रसङ्गदानेनात्रत्यस्याप्युक्तमेव फलं तत्तात्पर्यविषयीभूतमित्याशयेन तथोक्तमिति । तद् ध्वनयन् मूलतात्पर्यमाह-एवञ्चेति । साहचर्यादिना लोपाभावे चेत्यर्थः । चिन्त्येति । एतेन तत्र प्रत्ययपदं संज्ञारम्भश्च तथेति सूचितम् । अ-

अत्राहुः—

संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति ।
रात्तु तेनैव लोपः स्याद्धलस्तस्माद्विधीयते ॥

तथा हि, सखेत्यत्र नलोपो न स्यात् , संयोगान्तलोपस्यासिद्धत्वात् । स्यादेतत् । संयोगान्तलोपो नासिद्धः "न ङिसम्बुध्योः" इति सूत्रे सम्बुद्धिग्रहणाज्ज्ञापकात् । न चैवं गोमानित्यादावपि नलोपापत्तिः । ज्ञापकस्य विशेषविषयत्वात् । यत्र हि नकारविभक्त्योरानन्तर्यन्तत्रैव सिद्धत्वम् , व्याख्यानात् । यत्त्वाहुः—हे ब्रह्मन्निति नपुंसकार्थत्वाद् नैतज्ज्ञापकमिति । तन्न, लुका लुप्ते प्रत्ययलक्षणाभावेन "सम्बुद्धौ वा नपुंसकानाम्—" इत्यस्यावश्यकतया च सम्बुद्धिग्रहणस्य नपुंसक-

---

शब्दरत्नम् ।

'गङ्गीः' 'हुराः' इत्यादेरभिधाने दृढं मानं चिन्त्यम् ।

**विभक्त्योरानन्तर्यमिति** । एवं च विभक्तिसंयोगान्तलोपस्य सिद्धत्वं ज्ञाप्यत इति तात्पर्यम् । गोमानित्यादौ लक्ष्यभेदाद्वारं वारं संयोगान्तलोपः । **नपुंसकार्थत्वादिति** । "स्वमोः" इति हि तत्र लुगिति तत्र नलोपनिषेधायावश्यकत्वादिति भावः । **लुका लुप्ते इति** । "ङिसम्बुद्धयोः" इति सप्तमीति भावः । **आवश्यकतया चेति** ।

भैरवी ।

इति वार्तिकविरोधः स्पष्ट एवेति भावः ।

मूले–अत्राहुरिति । वार्तिककृत इति अस्य शेषः । नकारविभक्त्योरिति विशेषोपादानसूचितमर्थम्प्रकटयति—एवञ्चेति । नकारविभक्त्योरानन्तर्ये सिद्धत्वस्य ज्ञापने चेत्यर्थः । अत्र विभक्तिपदोपादानेन विभक्तेर्यत्र संयोगान्तत्वहेतुको लोपस्तस्यैव सिद्धत्वङ्गोमानित्यत्र तलोपस्यासिद्धत्वन्तु भवत्येवेति भावः ।

ननु गोमानित्यत्र संयोगान्तलोपस्य प्रवृत्तत्वात्पुनः संयोगान्तलोपो "लक्ष्ये लक्षणस्य" इति न्यायेन न भविष्यतीत्येवमभिधानमफलमत आह—गोमानिति । संयोगान्तपदत्वावच्छिन्नस्योद्देश्यत्वात् । एवञ्चोद्देश्यतावच्छेदकाश्रयभेदाद्भवत्येव तस्य प्रवृत्तिरित्याशयात् । मूले–यत्त्वाहुरिति । प्रकाशकृत इति शेषः । तत्र–हे ब्रह्मन्नित्यत्र । लुगिति । अनेन संयोगान्तलोपस्याभावेनासिद्धत्वशङ्काया अभावः सूचितः । ङिसम्बुध्योरिति तु षष्ठीति तद्भावः । सप्तमीति । अयमेव पक्षो युक्तः । यतोऽस्मिन् पक्षे निषेधसामर्थ्यात् "न लुमता" इतिनिषेधस्य वैकल्पिकत्वस्य प्रवृत्तिरिति "वा नपुंसकानाम्" इत्यस्यापूर्वत्वाभावः सिध्यतीति लाघवमभ-

भावप्रकाश ।

भिमानपदसूचितारुचिं ध्वनयितुमाह—**वस्तुत इति** । अत एव "ङ्याप्ग्रहणेऽदीर्घः" इति वार्तिकेन न फलभेदः । एवञ्च कैयटो युक्त एवेति मूलादयश्चिन्त्या एवेति भावः ।

मूले अत्राहुरिति । वृत्तिकृत इत्यर्थः । स्यादेतदित्यादि भाष्यानुवादिहरदत्तानुवादः । फलितमाह—**एवंचेति** । तयोरानन्तर्ये सिद्धत्वज्ञापने चेत्यर्थः । **विभक्तीति** । विभक्तेः संयोगान्तत्वहेतुकलोपस्यैवेत्यर्थः । तेन तलोपासिद्धत्वाद्गोमानित्यादौ नलोपो नेति भावः । ननु हल्ङ्यादिसूत्राभावे पुनः संयोगान्तलोपो दुर्लभः "लक्ष्ये लक्षणस्य" इति न्यायादत आह—**गोमानिति** । संयोगान्तपदत्वावच्छिन्नस्यास्य लक्ष्यत्वेनैकत्र कृतेऽप्यन्यत्र प्रवृत्त्यौचित्यात् । अत एव राजन्वान् स्वतवानित्यादिनिर्देशसंगतिरिति भावः । यत्त्वाहुरिति । प्रकाशकृत इत्यर्थः । **तत्र**–ब्रह्मन्नित्यत्र । षष्ठीपक्षे निषेधाप्रवृत्तेः सिद्धान्तरीत्या आह–**ङिसमिति** । अत एव निषेधसामर्थ्याद् "न लुमता" इति निषेधानित्यत्वेन "वा नपुंसकानाम्" इत्यस्य

विषयत्वासम्भवेनोक्तज्ञापकस्य सुस्थत्वात्। तस्मान्नलोपो न प्रयोजनमिति चेत्? इह तर्हि अभिनोऽत्रेत्यत्र रोरुत्वं न स्यात्। तदिदमुक्तं नलोपादिरिति। तथा 'अबिभर्भवान्' इत्यत्र तिलोपो न स्यात् "रात्सस्य" इति नियमात्।

---

### शब्दरत्नम्।

"ङिसम्बुद्धयोः" इत्यस्य षष्ठ्यन्तत्वपक्षेऽपि विकल्पार्थमावश्यकतया चेत्यर्थः। यद्यपि 'वा नपुंसकानाम्' इत्येवं भाष्ये पठितं, सम्बुद्धिग्रहणं च सूत्रादेव सम्बध्यत इति तदर्थं तच्चरितार्थं, तथाऽप्यत्र पाठेनोक्तार्थज्ञापकताऽपि। सम्बुद्धिग्रहणं भाष्ये प्रत्याख्यातमिति तु न भ्रमितव्यम्। सूत्रस्थङिग्रहणस्य "ङिसम्बुद्धयोरनुत्तर" इतिवार्त्तिकस्थसम्बुद्धिग्रहणस्य च प्रत्याख्यानेऽपि सूत्रस्थस्याप्रत्याख्यानादिति भावः।

### भैरवी

वति। अत एव षष्ठ्यन्तत्वपक्षेऽपीत्यपिशब्द उपात्तः। यन्मूले आवश्यकतयेत्यभिहितन्तत्तु षष्ठीपक्ष एवेत्याशयेनाह—ङिसम्बुद्धयोरिति। अस्मिन्पक्षे निषेधसामर्थ्यकल्पनन्न कार्यमित्येतल्लाघवं यद्यपि भवति, तथाऽपि वचनान्तरानारम्भकृतं लाघवं सप्तमीपक्षेऽस्तीति भावः। षष्ठीपक्षे शङ्कते—यद्यपीति। सम्बुद्धिग्रहणञ्चेति। अत्र ङिपदस्यानुपादानं भाष्यकारीयतत्प्रत्याख्यानाभिप्रायेण। अत एव "वा नपुंसकानाम्" इत्येतद्वचनोदाहरणप्रदर्शनसमये 'हे चर्म'इति सम्बुद्धावेवोदाहृतम्। एकदेशे स्वरितत्वप्रतिज्ञया च तावन्मात्रस्य तत्र सम्बन्धः। तदर्थम्—तत्र सम्बन्धार्थम्। अत्र पाठेन—न ङीतिसूत्रे पाठेन। अन्यथा वार्तिक एव तथा पठितं स्यादिति। ज्ञापकता च "इह किञ्चित्रपो" इति न्यायेन। एवञ्चान्यफलसिध्यर्थमावश्यकं सम्बुद्धिग्रहणमिति 'हे राजन्' इत्यस्य सिद्धिः। सम्बुद्धिपदमपि प्रत्याख्यातमिति परोक्तं खण्डयति—सम्बुद्धिग्रहणमित्यादिना। सूत्रस्थङिग्रहणस्येति। ङौ भसंज्ञासत्त्वादेव न नलोपः। अल्लोपस्तु न, उभयसंज्ञान्यपीतिवचनात्। वार्तिकस्थेति। हे राजन्सुन्दरोऽसीत्यत्रासामर्थ्यात्समासाप्राप्तेः। अत एव "ङावुत्तरपदे प्रतिषेधः" इत्येव वाच्यमिति भाष्ये स्पष्टम्। मूले तस्मादिति। उक्तज्ञापकस्य सुस्थत्वादित्यर्थः। न प्रयोजनमिति। हल्ङ्याबितिसूत्रारम्भस्येति शेषः। इह तर्हीत्यत्र यदिहेति तदर्थं स्पष्टप्रतिपत्तये आह—अभिन इति।

### भावप्रकाश।

सिद्धेरिति लाघवादेवञ्च प्रकाशो युक्त इति गूढाकूतं स्फुटीभविष्यति चाग्रे। मूलरीत्या आह—ङिसमिति। निषेधसामर्थ्यानुसरणक्लेशाकरणप्रयुक्तलाघवस्यात्र पक्षे सत्त्वादिति भावः। पक्षे वीति पाठः। तेन च तस्यासिद्धान्तत्वं ध्वनितं वक्ष्यते च। षष्ठीपक्षे शङ्कते—यद्यपीति। सम्बध्यत इति। ङिपदस्य प्रत्याख्यानात् हे चर्मन् हे चर्मेतिसम्बुद्धावेवोदाहृतत्वाच्च तन्मात्रविषयत्वात्तस्यैकदेशे स्वरितत्वाभ्युपगमेनेति भावः। चरितार्थमिति। एवं च प्राचोक्तं सर्वथा युक्तमिति भावः। अत्र पाठेनेति। नङीति सूत्रपाठेनेत्यर्थः। "इह किञ्चित्रपो" इति न्यायेन। अन्यथा वार्त्तिक एव पाठ्यं स्यात्। अपिरनुवृत्तिसमुच्चायकः। न च नहि वार्त्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्तिरितिन्यायेनायमर्थो वक्तुमशक्य इति

### सरला।

अप्रत्याख्यानादिति। "न ङिसम्बुध्योः" इति सूत्रभाष्ये "भत्वात्तु ङौ प्रतिषेधानर्थक्यम्" इत्यनेन 'परमे व्योमन्' 'आर्द्रे चर्मन्' 'लोहिते चर्मन्' इत्यादौ ङिलुकि प्रत्ययलक्षणेनान्तर्वर्तिविभक्त्या सुबन्तत्वात्पदत्वेन प्राप्तोऽपि नलोपः "उभयसंज्ञान्यपि छन्दांसि दृश्यन्ते" इत्युक्त्या भत्वान्न भवतीति यथा सूत्रस्थङिग्रहणं प्रत्याख्यातम्, एवं चर्मणि तिला अस्य चर्मतिलः, राजन् वृन्दारक–राजवृन्दारक इत्यादौ समासे ङिसम्बुध्योर्लुकि सूत्रेण नलोपनिषेधो मा भूदिति "न ङिसम्बुध्योरनुत्तरपदे"इति वार्तिकमुक्त्वा "सम्बुध्यन्तानां न समासः" इति वार्तिकस्थं सम्बुद्धिग्रहणं च यथा प्रत्याख्यातम्; न तथा सूत्रस्थसम्बुद्धिग्रहणफलस्य 'हे राजन्' इत्यादेरन्यथासिद्धिप्रदर्शनम्, नापि तत्प्रत्याख्यानप्रकारो वा भाष्ये दृश्यते इति भावः।

अत्रेदमवधेयम् । ङ्याब्ग्रहणं सोरेव विशेषणं न तु तिस्योः, व्याख्यानात् । अस्मिन्नेव सूत्रे 'ङ्यब्ग्रहणं तिस्योश्च ग्रहणं न कर्त्तव्यं भवति' इति भाष्यं चेह प्रमाणम् । यदि हि ङ्याब्ग्रहणं तिस्योरपि विशेषणं स्यात् तर्हि कथं तिस्योर्ग्रहणस्याकर्तव्यतां ब्रूयात् । यत्तु ङ्याब्भ्यां तिस्योरसम्भव एवेति । तत्र ङ्यन्तादसम्भव इति सत्यम् । आबन्तात्तु आचारक्विबन्ताल्लङः तिप्सिपौ स्त एव । अगङ्गात्, अगङ्गाः इति यथा । न च शपा व्यवधानम्, एकादेशस्य पूर्वान्तत्वेन

शब्दरत्नम् ।

**भाष्यमिति** । 'यदि पुनरयमपृक्तलोपः संयोगान्तलोपो विज्ञायेत' इत्युपक्रम्य तद्भाष्यं प्रवृत्तम् । **पूर्वान्तत्वेनेति** । न चैवं बुद्धावित्यादौ सन्निपातपरिभाषया टाब्नेति भाष्यविरोध इति वाच्यम् । दीर्घप्रवृत्त्युत्तरमन्तादिवद्भावप्रवृत्तावपि टाबुत्पत्तिकालिकानन्तर्यविघातस्य तेन वारयितुमशक्यत्वात् अशास्त्रीयत्वात्सन्निपातस्यान्तवद्भावेनातिदे-

भैरवी ।

व्याख्यानादिति । भाष्योक्तिदर्शनमूलकव्याख्यानादित्यर्थः । तदेव व्याख्यानमूलमाह— अस्मिन्नेवेति । इह-ङ्याब्ग्रहणं सोरेव विशेषणमित्यत्र । ननु तस्माद्भाष्यात्कथमभवदुक्तार्थलाभ इत्यत आह—यदीत्यादि । तद्भाष्यमिति । तथाच संयोगान्तलोपस्य ङ्याबन्तविषयेऽसम्भवेन ङ्याब्ग्रहणं सोरेव विशेषणमिति स्पष्टमेव । संयोगान्तलोपोपक्रमेण भाष्यकारीयोक्तिङ्याबन्तात्तिस्योरनभिधानाभिप्रायिकेति बोध्यम् । अत्र इत्युपक्रम्येतिकथनेनोपक्रमोक्तेः पूर्वपक्ष्युक्तित्वेनापसिद्धान्तत्वेन तद्भाष्यमूलकस्यात्रायन्निष्कर्ष इति ग्रन्थस्याप्यपसिद्धान्त्युक्तित्वं ध्वनितम् । प्रसादकारोक्तिङ् खण्डयितुमुपक्रमते—यत्त्वित्यादि । तत्र तत्रेत्यादि । तदुक्त्यनुवादः । असम्भव इति । शपा व्यवधानादित्यादिः । एवञ्चैतत्साहचर्यादापोऽपि सोरेव लोपः । एवम्—पूर्वान्तवद्भावेनाव्यवधानोपपादने । भाष्येति । क्रुन्मेजन्तसूत्रस्थेत्यादि । तत्रापि टापि सत्येकादेशे पूर्वान्तवद्भावेन सन्निपाताविघातादिति भावः । तेन—पूर्वान्तवद्भावेन । एतच्च सन्निपातविघातायापि पूर्वान्तवद्भावस्य प्रवृत्तिमभ्युपेत्योक्तम् । वस्तुतस्तु तत्र कर्तव्ये "अन्तादिवच्च" इति शास्त्रन्न प्रवर्तत इत्याह—अशास्त्रीय-

भावप्रकाश ।

वाच्यम् । तस्य सूत्रमते अन्यार्थं तद्वावश्यकत्वेन नः समीहितसिद्धेः । अत एव यथान्यासे हेराजन्नित्यादिसिद्धिः । तस्य क्लीबमात्रविषयत्वे तु सर्वोपप्लवः स्यात् । एतेन नलुमतेत्यस्यानित्यतया प्रत्ययलक्षणासम्भवेन तेन च वार्त्तिकानावश्यकतया संबुद्धिपदस्य क्लीबविषयत्वसम्भवान्मूलं चिन्त्यमिति खण्डनचैतत्तथा स्पष्टं कैयटादौ ।क्रुदुक्तमपास्तमिति भावः । संबुद्धिग्रहणस्य चेति पाठः । चेन वार्त्तिकस्थङिग्रहणसमुच्चयः । यथा—

ननु सूत्रान्तरेणापृक्तस्य हलन्तादिव ङ्याबन्तादपि लोपसिद्ध्या तदकर्त्तव्यत्वोक्त्या कथं तद्भाष्यादुक्तार्थलाभोऽत आह—**यदीति** । तथा च संयोगान्तलोपोपक्रमेण तदकर्त्तव्यत्वोक्तिङ्याबन्तात्तिस्योरनभिधानं विना दुर्वचा । अन्यथाऽसंबद्धप्रलपितत्वादिति तद् उक्तार्थसाधकमिति भावः । अत्रायं निष्कर्ष इत्यादिग्रन्थस्यासिद्धान्ततां ध्वनयितुमाह—**उपक्रम्येति** । तथा चोपक्रमस्थत्वेन पूर्वपक्षत्वादसिद्धान्तत्वम् । अत एव तत्र यदि पुनरित्युक्तमिति भावः । मूले यत्त्विति प्रसादोक्तिः । तत्रेत्यादिप्रकाशानुवादः । **ङ्यन्तादसम्भव इति** । एवं च तत्साहचर्यादापोऽपि सोरेव लोपः । इदमेव प्राग्व्याख्यानपराभिमतमिति भावः । **एवम्**—पूर्वान्तवत्त्वेन व्यवधाननिरासे । **भाष्येति** । "क्रुन्मेजन्त"सूत्रस्थेत्यर्थः । तत्रापि टापि सवर्णदीर्घे पूर्वान्तवत्त्वेन सन्निपाताविघातादिति भावः । **तेन**—अन्तवद्भावेन । एकादेशाभावेन तदानीमप्रवृत्तेरिति भावः । इदं च तत्प्रवृत्तिमभ्युपेत्य, वस्तुतः सैव नेत्याह—**अशास्त्रीति** । एका-

ग्रहणात् । न च स्थानिवद्भावः, अपूर्वविधित्वात् ।

शब्दरत्नम् ।

ष्टुमशक्यत्वाच्च । अत्राबन्तात्विति तुनाऽरुचिर्बोधिता । पञ्चमी समासाश्रयणे स्थानिवद्भावोऽस्ति । अस्याभिधाने च न दृढं मानम् । आबन्तेभ्य आचारक्विबेव नास्ति, "आतो धातोः" इति सूत्रस्थभाष्यप्रामाण्यात् । तत्र वार्तिककृता 'आतोऽनापः' इत्युक्तमिति तद्बीजम् । आचारक्विबन्ताद्यङ्लुक्तु नास्त्येव । तेन कस्य स्त्री की कीशब्दादिभ्य आचा-

भैरवी ।

त्वादिति । एतेन लोपस्य शास्त्रीयत्वात्तस्मिन्कर्तव्ये पूर्वान्तवद्भावस्य प्रवृत्तिः स्यादेवेति ध्वनितम् । एतावता ग्रन्थेन प्राचीनोक्त्यनुवादमुपपाद्य पूर्वोच्चारिततुशब्दसूचितामरुचिं प्रकटयति—अत्रेत्यादिना । स्थानिवद्भावोऽस्तीति । तथा चाबन्तादप्यसम्भव एव । एतेन पञ्चमीसमासानावश्यकत्वाभिप्रायकप्राचीनोक्त्यनुवाद एव मूलकृता कृतो न तु तत्रैव तात्पर्यमिति यत्पञ्चमीसमासावश्यकत्वेन मूलासङ्गत्यभिधानं दण्ड्युक्तं तन्निरस्तमिति सूचितम् । ननु पञ्चमीसमासस्यानित्यत्वेन तदप्रवृत्तौ निर्वाहोऽत आह—अस्येति । अस्य अगङ्गादित्यादेः । एतेनानभिधानं ध्वनितम्, तत्र बीजमाह—आबन्तेभ्य इति । सूत्रस्थभाष्यप्रामाण्यादिति यदुक्तं तदुपपादयति—वार्तिककृतेति । इत्युक्तमिति । रक्तः श्नः इत्यादिरूपसिद्ध्य इत्यादिः । एवञ्चाबन्तेभ्य आचारे क्विप्सत्त्वे "आतो" धातोः इति न्यासे लोपो भविष्यति । वार्तिककारीयन्यासे तु नेति फलभेदस्य स्पष्टतया तदभिधानमेव नास्तीति दर्शितम् । तद्बीजमिति । अनभिधानबीजमित्यर्थः । तदुक्तं दोषान्तरं नास्तीत्याह—आचारेति । नास्त्येवेति । यङ्लुगन्तस्य छान्दसत्वेन छन्दसि दृष्टानुविधानस्य सत्त्वेन तादृशरूपस्य छन्दसि सत्त्वे छान्दसत्वेनैव निर्वाहः । तस्यासत्त्वे तु अनभिधानं स्पष्टमेव । किञ्च तस्याभिधानेऽसिद्धवत्सूत्रस्थभाष्यविरोधोऽपि भवति । तथा हि, जहीत्यत्रासिद्धवत्सूत्रस्य प्रयोजनमतो हेरिति लुग्वारणरूपमुक्त्वा "उतश्च प्रत्ययात्" इत्यतः प्रत्ययादित्यस्य सम्बन्धं कृत्वाऽकारान्तात्प्रत्ययात्परस्य हेर्लुगित्यर्थेन जहीति प्रयोजनान्यथासिद्धिरुद्भाविता । यद्याचारक्विबन्ताद्यङ्लुक् स्यात्तदा कशब्दादाचारक्विबन्ताद्यङ्लुकि लोटि तस्य ह्यादेशे सूत्रसत्त्वे लुकः प्राप्तिरत इत्यत्र प्रत्ययादित्यस्य सम्बन्धे तु नेति फलभेदस्य स्पष्टतयाऽन्यथासिद्ध्युद्भावनासङ्गतिः स्पष्टैव । तेन—आचारक्विबन्ताद्यङ्लुङ् नास्तीतिकथनेन । कस्येति । ब्रह्मण इत्यर्थः । शब्दादिभ्य इति । अत्रादि-

भावप्रकाश ।

देशोत्तरमिति शेषः । अत्र तु तेन लोपप्रवृत्तिरिति स्पष्ट एव ततो विशेष इति भावः । एतेनात्र सन्निपातपरिभाषाऽविषयत्वाच्चिन्त्यमिदमित्यपास्तम् । न हि तद्रीतेरत्राङ्गीकारः, किन्तु एतद्रीतेस्तत्रेति दोषाभावात् । रत्नाकराद्युक्तदोषानपाकर्त्तुमाह—अत्रेति । उक्तेऽर्थे इत्यर्थः । तामेवाह—पञ्चमीत्यादि भावाच्चेत्यन्तेन । एतेन पञ्चमीसमासावश्यकत्वोक्त्या वैरूप्ये बीजाभावान्मूलं चिन्त्यमिति रत्नाकरदण्ड्याद्युक्तमपास्तम् । ननु तदनित्यत्वेन निर्वाहोऽत आह—अस्येति । अगङ्गादित्यादेः लक्ष्यस्य प्रमितत्वे तदनित्यत्वमपि सुवचं, तदेव नेति भावः । तत्र हेतुमाह—आबन्तेभ्य इति । यत इत्यादि । तत्र हेतुमाह—आत इति । तदुपपादयति—तत्रेति । "आत" इति सूत्रे इत्यर्थः । इति तद्बीजमिति । इति यदुक्तं तत्तद्बीजमित्यर्थः । अन्यथा तादृशगङ्गाशब्दाच्छसि सूत्रमते लोपो वार्तिकमते तु नेति फलभेदापत्तिरिति भावः । तदुक्तं दोषान्तरमुद्धर्त्तुमाह—आचारेति । नास्त्येवेति । अत एव"अतो हेः"इत्यत्र प्रत्ययादिति सम्बन्धेनादन्तप्रत्ययात्परस्य हेर्लुगित्यर्थाज्जहीत्यत्रादोषेणासिद्धवदत्रेति सूत्रं मास्त्विति तत्सूत्रभाष्यं सङ्गच्छते । अन्यथा तादृशकशब्दाद्यङ्लुकि हेर्लुगनापत्त्या फलभेदापत्तिः । एतेन टावन्तज्ञाशब्दात्तादृशाद्यङ्लुकि 'अजाज्ञाः'इत्यत्र लङस्तिप्सिपोर्लौपार्थं तिस्योर्ग्रहणावश्यकत्वेनानभिधाने मानाभावात् मूलं चिन्त्यम् । न च द्विहलित्यादिप्रागुक्तभाष्यं मानं, तस्य पूर्वपक्ष्याशयवर्णनमात्रपरत्वात् । अत एव तत्कर्त्तव्यमेवेत्युपसंजह्रुः । उक्तलक्ष्यानिष्टत्वे तिस्योरित्याद्युपसंहारं नैव कुर्युः । अन्यथोपक्रमे पूर्वपक्षस्य हल्मात्रबि-

अत्रायं निष्कर्षः। ङ्याप: सोरित्येव सूत्रमुचितम्। न च सुराः सुरासौ इत्यादौ धातोः सकारेऽतिप्रसङ्गः। ङ्याब्भ्यां साहचर्यात्, 'प्रत्ययाप्रत्यययोः' इति परिभाषया च प्रत्ययस्यैव सोर्ग्रहणात्। राजेत्यादौ नलोपस्तु "न ङिसम्बुद्ध्योः" इति ज्ञापकेन साधित एव। किं चाभिनोऽत्रेति उत्वमपि सूपपादम्। 'संयोगान्तलोपो रोरुत्वे' इति सिद्धकाण्डे पाठात्। हरिवो मेदिनं त्वेति यथा। अबिभर्भवान् इत्यत्रापि न दोषः। "रात्सस्य" इत्यत्र तकारस्यापि प्रश्लेषेण त्सस्येति

## शब्दरत्नम्।

रक्विबन्तेभ्यो यङ्लुकि लङि 'अचेकेत्' इत्यादौ ङ्यन्तादपि सम्भव इत्यपास्तम्, ईकाररूपत्वाभावाच्च।

**उत्वमपीति**। अपिना पूर्वरूपम्। **रोरुत्वे इति**। कर्त्तव्ये कृते चेति शेषः। "न मु ने" इतिवत्। **हरिव इति**। हरिशब्दान्मतुपि "छन्दसीरः" इति वत्वे नुमि संयोगान्तलोपे "मतुवसोः" इति रुत्वे उत्वे गुणः। **छेदादिति**। कीर्त्तयतेः क्विब्विचावेव न स्तः,

## भैरवी।

पदं स्वादिशब्दसमुच्चायकम्। अभ्युपेत्यवादेनाप्याह—ईकाररूपत्वेति। एतेन तस्याभिधाने दीर्घग्रहणप्रत्याख्यानपरभाष्यविरोधोऽपि सूचितो दीर्घग्रहणसत्त्वे दीर्घङ्यन्तत्वस्य सत्त्वात्।

मूले द्विहलपृक्तग्रहणन्तिस्योश्च ग्रहणन्न कर्तव्यमिति पक्षमाश्रित्याह—अत्रायमिति। एतेन पूर्वपक्ष्युक्त्यनुवादो ऽयमिति लब्धम्। ङ्याब्भ्यां साहचर्यादिति। यद्यपि ङ्यापौ प्रकृतिघटकौ लोपस्तु प्रत्ययस्य चिकीर्षित इति भेदस्तथाप्येकसूत्रोपात्तत्वसत्त्वादित्थमुक्तम्। पूर्वोक्तभेदस्य स्फुटत्वादाह--प्रत्ययेति। "संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति"--इति पूर्वोक्तानुपपत्तिमपि परिहर्तुमाह–राजेत्यादाविति। पूर्वरूपमिति। एतेन "रोरुत्वे" इत्यनेन रुत्वे सिद्धेऽपि पूर्वरूपे कर्तव्ये ऽसिद्धत्वं स्यादेवेति मूलासङ्गत्यभिधानन्निरस्तम्। रोरुत्व इत्येव तत्रोक्तमिति पूर्वरूपे कर्तव्य इत्यस्य कथं लाभ इत्यत आह--कृते चेति इति। वत्व इति। इवर्णान्ताद्रेफान्तात्परस्य मतोर्मस्य वः स्यादित्यर्थकादित्यर्थः। हरिवान् गीर्वानित्युदाहरणे "रात्तु तेनैव लोपः स्यात्" इत्युक्तन्दोषमुद्धरति, मूले—अबिभरिति। तकारस्य प्रश्लेषपक्षे सम्भावितं दोषम्परिहरति–कीर्तयतेरिति। ननु संयोगान्तलोपविधायकशास्त्रदृष्ट्या संयोगादिलेपविधायकशास्त्रस्यासिद्धत्वेन ननूखास्रदित्याद्यसङ्गतमिति चेत्? न, पदान्तेऽनवकाशेन संयोगादिलोपेनासिद्धत्वाभावस्य ज्ञापनादिति भावः। नच यदुक्तम्भवता यङ्लुग्विषये न स्त इत्यादि तेन नामधातुस्थपरममूलेन विरोध इति वाच्यम्? तस्य माधवमतानुसारित्वात्।

## भावप्रकाश।

षयकत्वात् सिद्धान्तेऽपि तस्यात्रोपसंहारस्य न्याय्यत्वात्। अत एव गूढाभिसन्धेर्भगवतः कर्त्तव्यमेवेत्येवकारोक्तिः सङ्गच्छते। एतेनानभिधानेऽसिद्धवत्सूत्रप्रत्याख्यानपरभाष्यं मानमित्यपास्तमिति रत्नाकरोक्तमपास्तम्। असिद्धवत्सूत्रभाष्यासङ्गत्यापत्तेः। हिहलित्यादेः पूर्वपक्षयुक्तित्वेऽपि तस्य तथाशयकत्वस्य प्रागुक्तत्वाच्च। तिस्योरित्याद्युपसंहारफलस्य 'अबिभा राज्यम्' इत्यादेर्वक्ष्यमाणत्वाच्च पूर्वपक्षस्यापृक्तविषयकत्वेन हल्मात्राविषयकत्वाच्चेति दिक्। कस्य–ब्रह्मणः। आदिभ्यां स्त्रीशब्दस्यअतिस्त्रेरित्यादिसंग्रपः। **रूपत्वेति**। ङीपो दीर्घस्य चेति भावः। **कृतेचेति**। विनिगमकाभावादिष्टसिद्ध्यर्थत्वाच्चेति भावः। अत एव हरिवोऽत्रेति प्रयोगः सङ्गच्छते। अत्र च प्रकृतसूत्रस्थभाष्यसंदर्भ एव मानम्। एतेनोत्वे सिद्धत्वेऽप्येङ इति पूर्वत्वेऽसिद्धत्वस्य दुर्वारत्वाच्चिन्त्यं मूलमिति खण्डनकृद्रत्नाकराद्युक्तमपास्तम्। **छन्दसीति**। तत्रेवर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य इत्यर्थः। हरिवान्, गीर्वानिति लक्ष्ये। **न स्त इति**।

च्छेदात् । ननु उखास्रदित्यादौ संयोगादिलोपः स्यादिति चेत् ? न, दत्वे कृते तदप्राप्तेः । असिद्धं दत्वमिति चेत् ? न, सिद्धकाण्डे 'वस्वादिषु दत्वम्' इति पाठात् । नन्वपदान्तत्वाद् दत्वं न स्यादिति चेत् ? न । सावपि पदं भवतीति पक्षाश्रयणात् । तद्बीजन्तु "असर्वनामस्थाने यचि" इति च्छित्वा यजादौ सर्वनामस्थाने पदं नेति व्याख्यानम् ।

न चैवं राजेत्यादौ नलोपे कृते सो रुत्वविसर्गौ स्यातामिति वाच्यम् । "इतोऽत्" इति सिद्धे "पथिमथि" इत्याकारविधानेन प्रथमं सुलोपस्य ज्ञापनात् । ननु नैतज् ज्ञापकं, संबुद्धौ चरितार्थत्वात् । हे-पन्थाः, मन्थाः, ऋभुक्षाः । तत्र हि दीर्घः "असंबुद्धौ" इति पर्युदस्तः, नलोपश्च निषिद्ध इति चेत् ? एवं तर्हि नलोपात्

शब्दरत्नम् ।

वृतेर्यङ्लुकि लङि ईडभावे तिप्सिपोः प्रयोग एव नास्ति । 'यथाऽलक्षणमप्रयुक्ते' इत्यत्रैव भाष्योक्तेः । अप्रयुक्ते लक्षणप्रवृत्त्यभावस्यैव योग्यतेत्यर्थः । प्रयुक्तानामिदमन्वाख्यानमितिसिद्धान्तात् । नेति व्याख्यानमिति । उपपादितं चेदं रामशब्दान्ते ।

नलोपे कृते इति । संयोगान्तलोपस्यासिद्धत्वादिति भावः । नलोपात्प्रागिति ।

भैरवी ।

यथेति । अत्र यथाशब्दो योग्यतार्थकः । अलक्षणमिति च्छेदः । तेन यादृशार्थलाभस्तमाह—अप्रयुक्त इति । तत्रैव हेतुमाह—प्रयुक्तानामिति । एतेनानभिधानन्तस्य ध्वनितम् ।

ननु नलोपात्प्राक् संयोगान्तलोपसिद्धत्वस्योक्तज्ञापकेन कल्पनेनादौ तस्य प्रवृत्तौ राजा

भावप्रकाश ।

"अभिव आवर्त्सुमतिर्नवीयसी" इति तु छान्दसमिति भावः । नास्तीति । यङ्लुगन्ते कौमुद्यां तदुक्तिस्तु माधवाद्यनुरोधेनेति भावः । उभयत्र हेतुमाह—यथेति । अत्रैवेति । प्रकृतसूत्रे एवेत्यर्थः । भाष्यवृत्त्यादेरेतादृशस्याप्युपलक्षणमिति भावः । नन्वप्रयुक्ते शास्त्रमनतिक्रम्य कर्त्तव्यमिति तदर्थात्कथमनभिधानसिद्धिरत आह—अप्रयुक्त इति । यथाशब्दो योग्यतार्थकः । अलक्षणमिति च्छेद इति भावः । नन्वत्रार्थे एव किं विनिगमकमत आह—प्रयुक्तानामिति । अत एवाप्रयुक्ते इति सफलम् । यथेथमेव व्याख्या युक्ता न सा तथा स्पष्टमन्यत्र । एतेन तप्रश्लेषो न युक्तः । कीर्त्त इत्यत्रातिव्याप्तेः । नचेष्टापत्तिः । उक्तवैदिकप्रयोगविरोधात् छान्दसत्वस्यागतिकगतित्वात् । अववर्त् इत्यादिमूललक्षवासङ्गतेश्च । एवञ्च चिन्त्यं मूलमिति रत्नाकरोक्तं कीर्त्त इत्यत्र फलभेदापत्तिरिति हरदत्तोक्तं चापास्तम् ।

सरला ।

इत्यर्थ इति । यद्यप्यन्यत्र कैयटेन "यथालक्षणमप्रयुक्ते" इति भाष्यं द्वेधा व्याख्यातम्—"यस्य विशिष्टः प्रयोगो न स्मर्यते, नापि प्रयोगनिषेधस्मृतिः तद् यथालक्षणमनुगन्तव्यम्" इति, "नैव वा लक्षणमप्रयुक्ते प्रवर्तते, प्रयुक्तानामेव लक्षणेनान्वाख्यानात्" इति च, तथाप्यत्र सूत्रे "यथालक्षणम्" इति भाष्यप्रतीकमादाय "लोके प्रयुक्तानामिदमन्वाख्यानमिति अप्रयुक्ते लक्षणानामप्रवृत्तिलक्षणं लक्षणमित्यर्थः । तत्रास्य प्रयोगाभावान्न दोषो न प्रयोजनमित्युक्तं भवति" इत्यन्त्यव्याख्याया एव कैयटेनोक्तत्वात्सैव तत्संमतेति गम्यते । अप्रयुक्ते लक्षणाभावस्यैव योग्यता ननु लक्षणप्रवृत्तेरित्यर्थसंगतेः । आद्यव्याख्यायाम् अप्रयुक्ते इति वाक्यशेषासङ्गतेश्च प्रयुक्तेऽपि लक्षणानतिक्रमादिति । विस्तरस्तु शब्देन्दुशेखरे प्रियाष्टन्शब्दे द्रष्टव्यः ।

अत्रेदमवधेयम्—यथालक्षणमित्यत्राकारप्रश्लेषः, लक्षणशब्देन सह तस्य अर्थाभावेऽव्ययीभावः, लक्षणस्य अभावोऽलक्षणम् । ततो यथाशब्दस्य तेन यथाऽर्थेऽव्ययीभावः, अलक्षणस्य लक्षणाभावस्य योग्यता यथाऽलक्षणमिति ।

प्राक् संयोगान्तलोप इत्यर्थे "न ङिसंबुद्ध्योः" इति सूत्रमेव ज्ञापकमस्तु। तथा हि—'ङिसम्बुद्ध्योः' इति षष्ठी न तु सप्तमी, ङेर्लुका लुप्ततया प्रत्ययलक्षणा-

---

शब्दरत्नम्।

विभक्तिसंयोगान्तलोपस्य नलोपविषयेऽसिद्धत्वाभावज्ञापनद्वारेति शेषः। एतेन राजैधते चक्र्यत्र राजाच्छत्रमित्यादौ वृद्धियण्तुगादिकं न स्यात्संयोगान्तलोपस्यासिद्धत्वात्। किं च कर्त्र्येत्यादावेकमेव यणशास्त्रं पूर्वपरविषयभेदाद्भिन्नमिति शब्दपरविप्रतिषेधात्परयणादेश इति "अचः परस्मिन्" इत्यत्र भाष्यकैयटयोः स्पष्टम्। विषयगतपौर्वापर्यस्य लक्षणे आरोप इति तदाशयः। तेन धीमानित्यादौ सुविषयसंयोगान्तलोपशास्त्रस्य तलोपविषये तत्र पूर्वस्मिन्नसिद्धत्वेन तलोपो न स्यादित्यपास्तम्। सावपि पदमिति पक्षे ऽन्त्येऽदोषाच्च। आरोपे मानाभावाच्च। षष्ठीति। अत एव ङौ नलोपनिषेधः सार्थकस्तदाह—ङेरिति। न च "न लुमता" इति निषेधानित्यत्वान्न दोषः तदपेक्षया षष्ठ्यन्ततया

भैरवी।

इत्यस्य निर्विसर्गस्य सिद्धावपि राजैधत इत्यादिप्रयोगासङ्गतिरेव, वृद्धौ संयोगान्तलोपस्यासिद्धत्वादत आह—नलोपविषय इति। एतेन यत्र लोपस्य प्राप्तिस्तत्र तस्मिन्कर्तव्ये कृते च तस्मिन्नन्यशास्त्रदृष्ट्याऽप्यसिद्धत्वन्नेति फलितम्। एतेनेति। उक्तार्थकल्पनेनेत्यर्थः। इत्यादाविति। आदिना राजाश्वः राजा इत्यादेः परिग्रहः। प्रथमे सवर्णदीर्घस्य, द्वितीये नलोपस्य च सिद्धिः। एतेषु कर्तव्येषु नलोपस्यासिद्धत्वन्तु न भवति। "नलोपः सुप्" इतिनियमात्। विषयत्वनिवेशस्य फलान्तरमप्याह—किञ्चेति। तत्र पूर्वस्मिन्निति। पूर्वस्थानिके संयोगान्तलोपविधायके शास्त्रे कर्तव्ये इत्यर्थः। अन्त्ये इति। धीमानित्यादावित्यर्थः। अदोषादिति। सुविषयकसंयोगान्तलोपस्यासिद्धत्वे परस्मिन्सौ तान्तस्य पदत्वमिति संयोगान्तलोपस्य सिद्धेर्दोषाभावादित्यर्थः। नचैवं सौ पदत्वमाश्रित्य नलोपोऽपि स्यादिति वाच्यम्? तस्मिन्कर्तव्ये तलोपस्यासिद्धत्वात्। एवं पूर्वपरस्थानिभेदेनैकस्य शास्त्रस्य भेदकल्पनमपसिद्धान्त इत्यत आह—आरोप इति। "अचः परस्मिन्" इति सूत्रविषये पूर्वपक्षिणा विषयगतपौर्वापर्यारोपेण तथोक्तावपि विप्रतिषेधसूत्रस्य प्रवृत्तावन्यत्राष्टाध्यायीपाठकृतं परत्वमेव वास्तवं नियामकमिति स्वीकारादिति भावः। अतएव-षष्ठीस्वीकारादेव। सार्थक इति। एतेन ङौ निषेध एवोक्तार्थे सामान्यापेक्षज्ञापक इत्यत्र तात्पर्यम्। न दोष इति। न ङौ निषेधवैयर्थ्यरूपदोष इत्यर्थः। तदपेक्षया-निषेधस्यानित्यत्वेन प्रकृते शास्त्राप्रवृत्तिकल्पनापेक्षया। स्थितस्य पदस्य षष्ठ्यन्त-

भावप्रकाश।

एतेनेति। अनन्तरोक्तज्ञापितेनेत्यर्थः। अन्यथा तावन्मात्रज्ञापनेऽपि चारितार्थ्याभावः स्पष्ट एव। एतेन तादृशद्वारा ज्ञापितेऽप्यनुपपत्त्यभावाच्छेषपूरणं चिन्त्यम्। यदज्ञापनेऽनुपपत्तिस्तदेव हि तेन ज्ञाप्यं, नतु यत्किञ्चिदपीति ज्ञापः सोरितिमूलसिद्धान्तश्चिन्त्यः। वृत्रहागतः दण्ड्यस्ति मघवाच्छत्रमित्यत्र सवर्णदीर्घयणतुगनापत्तेरिति च मन्दोक्तमपास्तम्। आदिना चक्रि अत्र राजाश्वः राजेत्यादौ ह्रस्वसवर्णदीर्घनलोपादिपरिग्रहः। लोपस्येति। नलोपस्य तु नासिद्धत्वं "नलोप· सुप्" इतिनियमादिति भावः। विषयत्वनिवेशफलमाह—किंचेति। सामान्यापेक्षं ज्ञापकमिति भावः। तत्र पूर्वस्मिन्निति। संयोगान्तलोपशास्त्रे पूर्वस्थानिके कर्त्तव्य इत्यर्थः। तान्तसंयोगान्तस्य पदत्वाभावादिति भावः। अन्त्ये—धीमानित्यादौ। तस्योक्तरीत्या पदत्वसत्त्वादिति भावः। अस्य पक्षस्यासिद्धान्तत्वादाह–आरोपे इति। तत्र पूर्वपक्षिणा तथोक्तावपि पाठक्रमगतपरत्वस्यैव विप्रतिषेधसूत्रप्रवृत्तौ नियामकत्वस्य सिद्धान्ततात्पर्यविषयीभूतस्योद्द्योतादौ प्रतिपादितत्वादिति भावः। सार्थक इति। तथाच तदेवात्र गमकं, तच्च सामान्यापेक्षं, षष्ठ्या एकत्वादिति भावः। नचेति। तत्सामर्थ्यादेवेति भावः। न्यूनतां

भावात्, ङ्यन्तस्य च प्रातिपदिकस्येति सामानाधिकरण्येनान्वयः । न च प्रथमं संयोगान्तलोपं विना सम्बुद्ध्यन्तप्रातिपदिकं लभ्यते । तस्मान् ङ्यापः सोरिति न्यासे न किंचिद् बाधकम् । यदि तु 'वस्वादिषु दत्वम्' इति वार्तिकं प्रत्याख्याय-ते । अधातुग्रहणेनैवोखास्रदित्यादौ दीर्घाभावसिद्धेः । तर्हि हल्ङ्यापः सोरिति

## शब्दरत्नम् ।

व्याख्यानस्यैव लघुत्वात् । सम्बुद्ध्यन्तेति । सम्बुद्ध्यन्तप्रातिपदिकान्तनस्य लोपो नेत्य-र्थः । इति सूत्रमस्त्विति । अत एव सुपीरित्यादिसिद्धिः । अन्यथा पदान्ते संयोगादि-लोपस्य संयोगान्तलोपापवादत्वात्तत्प्रवृत्तौ "र्वोः" इति दीर्घो न स्यात् । "तिप्यनस्तेः" "सिपि धातोः" इति सूत्राभ्यां धातुसम्बन्धिपदान्तसस्य दत्वरुत्वविधायकाभ्यां कसा-हचर्येण च प्रकृतिप्रत्ययसम्बन्धिवर्णसंयोगमाश्रित्य सस्य पदान्ते संयोगादिलोपाप्रवृत्तिकल्प-ने तु न किंचिल्लाघवम् । किं च "न ङिसम्बुद्ध्योः" इति सप्तम्येव युक्ता । ङिग्रहणाच्च

## भैरवी ।

त्वेन व्याख्याने लाघवमिति भावः । मूलोक्तव्याख्याने न्यूनतां परिहर्तुं व्याचष्टे-सम्बुद्ध्यन्तेति । अत एव-हल्पदघटितस्य सूत्रस्य करणादेव । अन्यथा-हल्पदमकृत्वा संयोगान्तलोपस्यैव स्वी-कारे । न स्यादिति । सुस्थानिकस्य रेफस्य धात्वनवयवत्वान्न स्यादित्यर्थः । ज्ञापकाभ्यान्नि र्वोहशङ्कान्निरस्यति-तिप्यनस्तेरित्यादिना । अत्र धातोरित्यस्य लाभस्तु अनस्तेरिति पर्युदासात् श्तिपा आक्षेपेण वा भवति । नचैवं सति "सिपि धातोः" इति सूत्रे धातोरिति व्यर्थमिति वाच्यम् ? दश्चेत्युत्तरार्थत्वात् । संयोगान्तलोपापवादस्य संयोगादिलोपस्य प्रवृत्तौ सूत्रद्वय-वैयर्थ्यं स्पष्टमेव । ननु पदान्तसंयोगादिलोपस्य तदपवादत्ववद्दत्वरुत्वयोरप्यपवादत्वमस्त्वि-त्यत आह-कसाहचर्येण चेति । न किञ्चिल्लाघवमिति । एवङ्कल्पनायां ज्ञानकृतगौरवस्यानुमानि-कवचनकल्पनाप्रयुक्तगौरवस्य च स्फुटत्वादिति भावः । न ङिसम्बुद्ध्योरित्यस्य षष्ठ्यन्तत्व-मवलम्ब्य कृत व्याख्यानमभ्युपेत्य न्यासं समर्थयति-किञ्चेत्यादिना । इति वार्तिकमिति । एतेन

## भावप्रकाश ।

निराचष्टे-सम्बुद्ध्यन्तेति । ङ्यन्तांशेऽप्येवं बोध्यम् । अत एवेति । हल्पदघटितसूत्राङ्गीकारादेवेत्यर्थः । आदिना सुतूरित्यादिसंग्रहः । न स्यादिति । सुस्थानिकरेफस्य धात्वनवयवत्वादिति भावः । एतेनो-क्तरीत्या सुपीरित्याद्यसिद्ध्या ननुखास्रदित्यादिमूलं चिन्त्यमिति खण्डनकृद्रत्नाकरमन्दाद्युक्तम-पास्तम् । धात्विति । अनस्तेरिति पर्युदासेन तिपाद्याक्षेपेण च धातोरित्यस्य लाभः । धातोरिति तु द-श्चेत्याद्युत्तरार्थम् । तदपवादसंयोगादिलोपप्रवृत्तौ तु व्यर्थमेव सूत्रद्वयं स्यादिति भावः । ननु चकासा-दिधातोर्णिचि विचि आचारक्विपि लङि प्रकारार्थकप्रभृतिग्रहणसामर्थ्यात्तिप्सिपोः शब्लुकि णिचः स्था-निवत्त्वेन संयोगादिलोपाप्राप्तौ सूत्रद्वयसाफल्यं स्पष्टमेव । किञ्च पदान्तसंयोगादिलोपस्य तदपवादत्वस्य तयोः स्वीकाराच्च तयोर्वैयर्थ्यमेवात आह-कसाहचर्येण चेति । ननु हल्पदसत्त्वे साहचर्यसम्भवेऽपि तद-भावे कथं तत् ? शक्नोतेः शीकृसेचने इत्यादेश्च क्विब्विचोः सौ च तत्प्राप्तेः । किञ्च यङ्लुकि लङि तिपसिपोरडुढौक् अशाशगित्यादावपि तत्प्राप्तेरिति चेन्न । काष्ठशकुस्थातेत्यत्र झल्परसंयोगा-दिलोपमाशङ्क्य तद्वारणाय स्कोरिति वाच्यमित्युक्त्वा काष्ठशगेव नास्ति कुतः काष्ठशकुस्थातेति तत्ख-ण्डनपरेण "परेश्च घ"इति सूत्रभाष्येणानभिधानात्कान्तात्तयोरभावबोधनात्, लोके कान्ते यङ्लुगभा-वस्य "कस्य च दः" इत्यत्र हरदत्तेन ध्वनितत्वाच्च, लोके यङ्लुको ज्ञापकसिद्धत्वेनासार्वत्रिक-त्वाच्च । एवञ्च सुपीः सुपया इत्यादि प्रयोगसत्त्वेऽपि साहचर्यं सुपपादमिति भावः । कल्पने इति । युक्तं चैतत् । अन्यथा सुपिस्स्थाता सुपयस्स्थातेत्यादौ दोषस्य दुर्वारत्वेन स्कोरित्यस्यावश्यकत्वेन खण्डनासङ्गतेः । सनः सकारमारभ्य महिङो ङकारेण प्रत्याहारः । न किञ्चि-

शब्दरत्नम् ।

"न लुमता" इत्यस्यैतद्विषयेऽनित्यत्वम् । एतन्मूलकमेव "वा नपुंसकानाम्" इति वार्त्तिकम् । एवं च ब्रह्मन्नाद्यर्थं सम्बुद्धिग्रहणस्यावश्यकत्वेन ज्ञापकासम्भवः । अपूर्ववचनकरणेन सिद्धप्रत्याख्यानन्तु न युक्तम् । इदमेवाभिप्रेत्य सूत्रशेषे भाष्ये "तस्मादशक्यो हल्पृक्तलोपः संयोगान्तलोपो विज्ञातुम् । न चेद्विज्ञायते द्विहलपृक्तग्रहणं तिस्योश्च ग्रहणं कर्त्तव्यम्" इत्युक्तम् । इति सूत्रमित्युपलक्षणम् , हल्ङ्याप: सुतिसि हलिति सूत्रमस्त्विव-

भैरवी ।

तस्यापूर्वत्वाल्लाघवमिति ध्वनितम् । एवञ्च—उक्तवार्तिकस्योक्तरीत्याऽपूर्वत्वाभावे च । अपूर्ववचनकरणेनेति । "वा नपुंसकानाम्" इति वचनस्यापूर्वस्य करणेनेत्यर्थः । इदमेव—नलोपदीर्घाद्यसाधनमेव । मूलसम्मतन्यासे न्यूनतापरिहाराय व्याचष्टे—इति सूत्रमित्यादिना । अत एव—अपृक्तपदाघटितस्य सर्वस्य कृतत्वादेव । अबिभा राज्यमिति । तिप्सिपो रूपम् । दीर्घसिद्धिरिति । अन्यथा तस्मिन्कर्तव्ये संयोगान्तलोपस्यासिद्धत्वाद्दीर्घो न स्यात् । एतेनाबिभाराज्यमित्याद्यसिद्ध्या।मौलान्त्यनिष्कर्षोऽयुक्त इति परोक्तमपास्तम् । ननु "ढ्रलोपे" इति सूत्रव्याख्यानावसरे शब्देन्दुशेखरे 'अजर्घाः' इत्यादौ "सिपि धातो रुर्वा" इति रुत्वस्य 'लीढः' इत्यादौ ढत्वादीनां पितू राज्यमित्यादौ संयोगान्तलोपस्यासिद्धत्वात्कथन्दीर्घ इत्याशङ्क्य प्रकृतसूत्रे ढग्रहणेन लण्सूत्रभाष्ये 'अजर्घाः' इति भाष्योदाहरणेन च तत्तच्छास्त्रैकवाक्यतापन्नपूर्वत्रासिद्धमितिसूत्रस्थपूर्वग्रहणेनैतत्सूत्राग्रहणबोधनादित्युक्तम्, तेनैव समाधानेनाबिभाराज्यमित्यस्य सिद्धाविहैतस्य सिद्ध्यर्थं यदिति सूत्रमित्यादिनोक्तन्तन्निष्फलमिति चेन्न,

भावप्रकाश ।

दिति । प्रत्युतात्र पक्षे ज्ञापनकृतस्यानुमानिकवचनकल्पनाकृतस्य च गौरवस्य स्फुटत्वादिति भावः । सुपिस्स्थातेत्यादौ तु झलादौ प्रत्यये इत्यर्थान्न दोषः । वस्तुतः सङ्गीत्येव युक्तम् । प्रत्याख्यानमेकदेश्युक्तिरिति गूढाकूतम् । एतेन नच "तिप्यनस्तेः" इति लिङ्गान्न धातुसकयोर्लोपः । ज्ञापकान्तराश्रयणे न किञ्चिद्बाधकमित्यसङ्गतेः । किं चैवं हल्ङ्यापः सोरिति निष्कर्षो व्यर्थः । हल्पदाभावेऽपि उखास्रदित्यादौ संयोगादिलोपाभावस्योक्तलिङ्गेनैवोपपत्तेः शीर्गित्याद्यसिद्ध्यापाताच्च अशाशगित्यादावनिष्टापाताच्च । नहि कान्तारिकविव यङ्लुगपि नास्तीत्यत्र किंचिन्मानमस्ति । एतेन हल्ङ्यापः सोरिति न्यासोऽपि प्रत्युक्तः । उक्तयङ्लुगन्तरूपासिद्धेरिति रत्नाकरोक्तमपास्तम् । किंचैवमित्यादितदुक्तेः सर्वथा ऽसाङ्गत्यं ध्वनयितुं गौरवमभ्युपेत्यापि तथान्यासं समर्थयति—किंचेति । ननु ङेर्लुका लुप्तत्वेन प्रत्ययलक्षणाप्राप्त्या कथं सा युक्ताऽत आह—ङिग्रहणाचेति । चो ह्यर्थे । एतद्विषये—सूत्रप्राप्तिविषये । नन्वेवमप्येतदपेक्षया षष्ठ्यन्तव्याख्याने लघुत्वस्यैव प्रागुक्तत्वेन कथं युक्तत्वमत आह—एतदिति । एतेन तत्र पक्षेऽपूर्ववचनकल्पनापत्त्या गौरवं सूचितम् । नन्वेतावताऽपि प्रकृते किमायातमत आह—एवंचेति । वार्त्तिकस्यानपूर्वत्वे चेत्यर्थः । असम्भव इति । ज्ञापकस्य सम्बुद्धिग्रहणस्यासम्भव इत्यर्थः । 'शिखी ध्वस्तः' इतिवत्प्रयोगः । यद्वा धर्मपरो निर्देशः । एवं च सखेत्यादौ नलोपापत्तिरिति हल्पदमावश्यकमिति भावः । नन्वेवमपि वार्त्तिकमादृत्य हल्पदमेव त्यज्यतां तत्रैव विनिगमकाभावादत आह—अपूर्वेति । अत्रार्थे मुख्यं प्रमाणं ध्वनयितुमाह—इदमेवेति । नलोपदीर्घाद्यसाधनमेवेत्यर्थः । नन्वेवमपि मूलासङ्गतिरेव । तिस्योरपि ग्रहणस्य कर्त्तव्यत्वस्य भाष्ये उक्तत्वेनात्र तदनुक्त्या तद्विरोधात् । अत आह—इति सूत्रमिति । इतिर्मूलोक्तपरामर्शकः । नन्वपृक्तग्रहणस्योपसंहारे उल्लेखेऽपि तन्निष्फलमेवैवं तिस्योरपि ग्रहणं तत्रास्तु इति यथाश्रुतं मूलं युक्तमेवात आह—अत एवेति । अपृक्तवर्ज्यस्य सर्वस्य कृतत्वादेवेत्यर्थः । अबिभा इति । तिप्सिपोः रूपम् । एतेनाबिभा राज्यम् इत्याद्यसिद्ध्या मौलान्त्यनिष्कर्षोऽयुक्त इति मन्दोक्तं सिग्रहणं न कार्यमवशिष्टं सर्वं कार्यमिति हरदत्तोक्तं चापास्तम् । एवं चास्त्वित्यनेनानादरो ध्वनितः । तद्बीजं तूक्तरीत्या हल्ग्रहणे वैयर्थ्यमेवेति मान्योक्तिः प्राचामनुरोधेनेति

सूत्रमस्तु । यत्तु यथाश्रुतं सूत्रं प्राचा व्याख्यातम्—ङ्यन्तादाबन्ताद् दीर्घाच्चेति । तन्न, ङ्यापौ हि दीर्घौ, न तदन्तमपि । न च दीर्घाद् ङ्यन्तादित्यादेर्दीर्घो यो ङी तदन्तादित्यादिरर्थो लभ्यते । दीर्घात् इति पञ्चम्या अनन्वयात् । समासे उपसर्जनयोर्ङ्यापोर्विशेषणायोगात् । उक्तं हि भाष्ये—"सविशेषणानां वृत्तिर्न" "वृत्तस्य वा विशेषणयोगो न" इति । एतेन अनदीसंज्ञं ह्रस्वम् इउवर्णान्तमित्यपि प्राचो वृत्तिः प्रत्युक्ता ।

"सख्युरसम्बुद्धौ" ॥ इह "इतोऽत्सर्वनामस्थाने" इत्यतः "सर्वनामस्थाने" इत्यनुवर्तते । तत् "असम्बुद्धौ" इत्यनेन विशेष्यते । "गोतो णित्" इति सूत्राद् "णित्' इत्यनुवृत्तं तत्सामानाधिकरण्येन सप्तम्याः प्रथमा कल्प्यत इत्याह—सम्बुद्धिवर्जं सर्वनामस्थानमिति । सख्युरसम्बुद्धिरित्येव तु सूत्रं युक्तम् ।

"ख्यत्यात्परस्य" । कृतयणादेशयोः खिखीशब्दयोरनुकरणं ख्य इति । एवं तितीशब्दयोः त्य इति । उभयत्राप्यकार उच्चारणार्थो न तु मुख्यापत्यादिशब्दैक-

---

### शब्दरत्नम् ।

त्याशयात् । अत एवाबिभा राज्यमित्यदौ "ढ्रलोप" इति दीर्घसिद्धिरिति दिक् । दीर्घाच्चेति । हलन्तादित्येतदपेक्षश्चकार इति तद्व्याख्यातारः । न तु तदन्तमपीति । तस्याज्झलसमुदायरूपत्वादिति भावः । प्रत्युक्तेति । इउवर्णान्तस्य ह्रस्वत्वासंभवादिउवर्णयोरेकदेशत्वेन तद्विशेषणासम्भवाच्चेति भावः ।

युक्तमिति । "अनङ् सौ" इत्यत्र विभक्तिविपरिणामः कार्यः । "सर्वनामस्थाने"

### भैरवी ।

प्रकृतसूत्रभाष्ये उखास्रत् पर्णध्वदित्यस्य प्रकृतसूत्रे।पञ्चम्यन्तहल्ग्रहणासत्त्वे संयोगान्तलोपापवादसंयोगादिलोपे कृते ऽसिद्धिरित्याशङ्क्य संयोगादिलोपात्प्राक् दत्वस्य 'सावपि पदम्' इति पक्षमाश्रित्य वस्वादिषु दत्वं सिद्धमिति वार्तिकोपष्टम्भेन च प्रवृत्तिरित्युक्त्वा यदि सावपि पदम्भवति राजा तक्षेत्यत्र संयोगान्तलोपस्यासिद्धत्वान्नलोपे कृते ऽसिद्धिर्विभक्तेः श्रवणात्प्राप्नोतीत्यभिधाय सूत्रशेषे तस्मादशक्यो हलपृक्तलोपः संयोगान्तलोपो विज्ञातुम्, नचेद्विज्ञायते द्विहल्पृक्तग्रहणन्तिस्योश्च ग्रहणङ् कर्तव्यमित्युक्तं तदभिप्रायेणेह भाष्यकारोक्तिम्मनसि निधाय पाणिनीयन्यासेनैवाबिभाराज्यमित्यस्य सिद्धिरित्युपलक्षणमित्यादिना दर्शिता । वस्तुतस्तु कृतेऽपि द्विहल्ग्रहणे तिस्योश्च ग्रहणे पितूराज्यमित्यादेः संयोगान्तलोपस्यासिद्धत्वादसिद्धिरेवेत्याशयेनाजर्घैतिभाष्यकारीयप्रयोगोपष्टम्भेन "ढ्रलोप" इति सूत्रस्याग्रहणं तत्र तत्तत्सूत्रैकवाक्यतापूर्वग्रहणेन प्रतिपादितम् । एतदेवाह—इति दिगिति । प्राचोक्तव्याख्याने न्यूनताम्परिहर्तुमाह–हलन्तादित्येतदिति । मूले सविशेषणानामिति । एतच्च प्राचामनुरोधेनोक्तम् । एतेनास्य वचनस्यैकार्थीभावलक्षणसामर्थ्यानाश्रयणपक्ष एव सत्त्वेनैतद्वचनेन प्राचोक्तव्याख्यानासङ्गतिप्रदर्शनमनुचितमित्यपास्तम् ।

### भावप्रकाश ।

बोध्यम् । तद्ध्वनयन्नाह–दिगिति । मूले प्राचा–प्रक्रियाकृता । वृत्तिग्रन्थोऽप्येवम् । व्याख्यातारः–प्रकाशकृतः । हलन्तात्परं सुतिसीत्येतदपृक्तं हल्लुप्यते दीर्घाच्च ङ्यन्तादाबन्तात्परं सु इत्येतल्लुप्यते इति तैर्वृत्तियोजनेन तस्य तदपेक्षत्वं तदभिमतम् । एवञ्च ङ्यन्तादौ तदन्वयस्तदभिमत इति भावः । एतेनेत्यस्योक्तहेतुद्वयसजातीयहेतुद्वयपरता नाव्यवहितमात्रपरतेति ध्वनयितुमाह—उवेति । तद्विशेषणेति । तयोरिउवर्णयोर्विशेषणस्य ह्रस्वस्यासम्भवाच्चेत्यर्थः । ज्ञापकसम्भव इत्युक्तवत्प्रयोगः ।

देशानुकरणमिदम्। "सख्युर्यः" "पत्युर्नः" "संख्यायाः संवत्सरसंख्यस्य च" "आपत्यस्य च तद्धिते" इत्यादिनिर्देशात्; इत्यभिप्रेत्याह—खितिशब्दाभ्या-मित्यादि। परस्येतिग्रहणम् "एकः पूर्वपरयोः" इत्यधिकारनिवृत्त्यर्थम्।

"औत्"। एतच्च नदीसंज्ञकेषु "इदुद्भ्याम्" इति पूर्वसूत्रेण बाध्यते, घि-संज्ञकेषु "अच्च घेः" इत्युत्तरसूत्रेण। तस्मात् संज्ञाद्वयशून्योऽस्य विषयः। न च तादृश उकारोऽस्ति, अत आह—उकारेति। यत्तु प्राचा घिनदीसंज्ञावर्जिताभ्या-मिदुद्भ्यां परस्येत्युक्तम्। तन्न, तादृशोकारस्याप्रसिद्धेः। समुदायस्येति। न च पर्युदासेऽपि पर्युदस्यमानसमर्पके सखिशब्दे तदन्तग्राहकत्वं शङ्क्यम्, विशेष्या-सन्निधानात्। यत्त्विह "ग्रहणवता" इत्याद्युपन्यस्तं हरदत्तेन, यच्च स्युत्यात्सूत्रे

---

शब्दरत्नम्।

इत्यस्य "गोतो णित्" इत्यत्र प्रथमान्ततायाः क्लृप्तत्वान्न तन्निवृत्तिरित्यभिमानः।

**विशेष्यासन्निधानादिति**। शब्दस्वरूपं विशेष्यं त्वव्यावर्त्तकम्। किं च सत्यपि विशेष्ये सखिशब्दभिन्नान्तस्येत्येव स्यान्न तु सख्यन्तभिन्नस्येति, नञैकार्थीभावापन्नस्यान्य-

भैरवी।

कार्य इति। सावित्यनेन सामानाधिकरण्यसिद्धय इत्यादिः। क्लृप्तत्वादिति। यथा इतोदिति सूत्रस्थसर्वनामस्थानशब्दात् या सप्तमी सा पूर्वत्र चरितार्था, तस्य विपरिणामेन "गोतो णित्" इतिसूत्रे णिदित्यनेन सामानाधिकरण्याय प्रथमा कल्प्यते, तथेहासम्बुद्धिरिति प्रथमायाः कृतार्थाया उत्तरत्रानङ् सावित्यत्र सप्तम्या विपरिणामः कार्य इति भावः। न तन्निवृत्तिः-न सर्वनामस्थान इत्यस्य निवृत्तिः। अभिमान इति। अत्रारुचिबीजन्तु यद्यसम्बुद्धि-रिति पठ्येत तदा भिन्नविभक्तिकत्वाद् "णलुत्तमो वा" इत्यनेन विच्छेदाच्च सर्वनामस्थान इत्यस्य निवृत्तिः स्यादिति यथान्यासमेवोचितमिति।

मूले पर्युदस्यमानेति। संज्ञिविशेषणभेदप्रतियोगिबोधकेत्यर्थः। यदि तदन्तविधिस्तदा सखिशब्दान्तभिन्नमित्यर्थः, इति तु सखिशब्दस्य घिसंज्ञा न भविष्यतीति भावः। ननु शब्दस्वरूपस्य विशेष्यत्वमस्त्वित्यत आह-शब्दस्वरूपमिति। अव्यावर्तकम्-सार्वत्रिकम्। ननु कार्यकालपक्षे घिसंज्ञाशास्त्रस्य विधिप्रदेशे उपस्थितावङ्गस्येति विशेष्यबोधकमभविष्यती-त्यत आह-किञ्च सत्यपीति। इत्येव स्यादिति। प्रतियोगिबोधकस्य सखिशब्दस्य तदन्तबोधक-तया एवमेव स्यादित्यर्थः। आपन्नस्येति। सखिशब्दस्येति शेषः। अन्यत्र-अङ्गे। एवञ्च यदि सखिभिन्नान्तस्याङ्गस्येत्यर्थस्तदा केवले सखिशब्देऽतिप्रसङ्गोऽस्त्येव सखिभिन्नेकारान्तत्वा-

भावप्रकाश।

**कार्य इति**। सावित्यनेन सामानाधिकरण्यादिति भावः। **क्लृप्तत्वादिति**। पूर्वत्र कृतार्थस्य तत्र णिदित्यनेन सामानाधिकरण्यादुत्तरत्र कृतार्थाया असम्बुद्धाविति सप्तम्याः प्रकृते इवेति भावः। **अभिमान इति**। अत्रारुचिबीजं तु भिन्नविभक्तिकत्वात् णलुत्तमोवेति विच्छेदाच्च सर्वनामस्थाने इत्यस्य निवृत्तिरेव स्यादिति यथान्यासमेवोचितमिति। अत एवासम्बुद्धाविति पर्युदासस्तद्घटितेन मध्ये विच्छि-न्नमपि तदिहाकृष्यत इति प्रकाशोक्तिः सङ्गच्छते।

**अव्यावर्त्तकमिति**। सार्वत्रिकमित्यर्थः। एतेन शब्दशास्त्रप्रसिद्धः शब्दो विशेष्य इत्यपास्तम्। यत्तु कार्य्यकालेऽङ्गं विशेष्यमस्त्येवेति, तत्खण्डयति—किञ्चेति। **विशेष्ये—अङ्गरूपे** इत्यर्थः।

सरला।

**सखिशब्दभिन्नान्तस्येति**। नच सखिभिन्नं खीति तदन्तस्य इकारस्य घिसंज्ञेत्यर्थे सखिशब्द-स्यैव घिसंज्ञा दुर्वारेति वाच्यम्, सखिभिन्नं यत्प्रातिपदिकं तदन्तस्येकारस्य घिसंज्ञेत्यर्थविवक्षणेन

कैयटेन, तन्न, तस्य प्रत्ययविधिविषयत्वात् ।
गौणत्वेऽपीति । अस्थ्याद्यनङ्वदिति भावः । तथाच "येन विधिः" इति

शब्दरत्नम् ।

त्रान्वयायोगादिति भावः । तस्य प्रत्ययविधीति । एवं च हरदत्तानुरोधेनेदं सर्वमिति

भैरवी ।

दिति पर्युदासस्य वैयर्थ्यमेव स्यादिति भावः । भाष्याविरोधाय मूलस्य तात्पर्यार्थमाह–एवञ्चेति । मूलोक्तहेतुना तदभिमतार्थस्य साधने चेत्यर्थः । इदं सर्वमिति । समुदायस्येत्यादिना परममूलोक्तनचेत्यादिना मूलोक्तमित्यर्थः । वस्तुतस्तु सखिशब्दस्य तदवयवलक्षणया सखिशब्दावयवभिन्नयोरिदुतोरित्येवार्थः, यथाऽत्वसन्तस्येतिसूत्रे धातुशब्दस्य तदवयवे लक्षणा भवति । अत एव 'पिण्डग्रः' इत्यत्र न दीर्घः । एवञ्च सुसखिशब्दावयवस्यापि न घिसंज्ञा सखिशब्दस्य तदवयवलक्षणायाम्मानन्तु यस्येतिचेतिसूत्रस्थभाष्यमेव । तत्र हि "इवर्णस्य ईति किमुदाहरणम्? अतिसखेरागच्छति" इत्युक्तम् । अत्र सख्यशिश्वीति स्त्रीप्रत्यये सखिशब्दान्त्यस्य लोपेन निवृत्तौ श्रूयमाण इकारो न सखिशब्दावयव इति घिसंज्ञायाङ्घेर्ङितीतिगुणः सिद्धो भवति । लोपाभावे तु सवर्णदीर्घे ऽन्तवद्भावेनायं सखिशब्दावयव एवेति घिसंज्ञा न स्यादिति तात्पर्यम् । यदि परममूलसम्मत एवार्थः स्यात्तदाऽतिसखिशब्दभिन्नतया सवर्णदीर्घे ऽप्यतिसखेरित्यस्य सिद्धौ भाष्योक्तलोपोदाहरणप्रदर्शनासङ्गतिः स्यात् । नच लोपेऽपि लिङ्गविशिष्टपरिभाषया दोषः, तस्या अनित्यत्वात् । ननु "द्वितीया" इति-

भावप्रकाश ।

आपन्नस्येति । सखिशब्दस्येत्यर्थः। तं विनेति शेषः । अन्यत्र—अङ्गे । विशेषणत्वेनेति भावः। मूले हरदत्तेनेति । प्रकाशोऽप्येवम् । भाष्याविरोधाय गूढं मूलतात्पर्यमाह—एवञ्चेति । तस्य तत्त्वस्य ताभ्यामेव दिवउत्सूत्रादिषूक्तत्वेन पूर्वापरविरोधेन तदीयहेतोरयुक्तत्वेऽपि मूलोक्तहेतुना तदभिमतसाध्यसाधनेचेत्यर्थः । सर्वमिति । समुदायस्येत्यादि परममूलं नचेत्यादि मूलं शब्दरूपमित्यादिव्याख्यानं चेत्यर्थः । वस्तुतस्तु "यस्येतिच" इति सूत्रभाष्यात्सखिशब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नेदुतोरित्यर्थः । यथा "अत्वसन्तस्य" इत्यत्र धात्ववयवभिन्नासन्तस्येत्यर्थो लक्षणया 'पिण्डग्र'इत्यादिसिद्ध्यर्थम् । एवं च सुसखिशब्दादौ नैव घिसंज्ञा । तदन्तसंज्ञापक्षेऽपि असखीति घेरेव विशेषणमुक्तरीत्या ततस्तदन्तविधिः "उतश्च प्रत्ययात्" इत्यत्रेव सख्यवयवान्येवर्णाद्यन्तमित्यर्थः । तदन्तविधिश्च शेषपदार्थविशेषणतयेति प्रतीयते । तत्र हि भाष्ये "इवर्णस्य ईति किमुदाहरणम्? अतिसखेरागच्छति" । यद्यत्र लोपो न स्यात् तदा कृतदीर्घस्य पूर्वान्तवत्त्वेन सखिशब्दत्वात् अतिदेशविषये प्रतिपदोक्तन्यायाप्रवृत्त्योपसर्जनह्रस्वत्वे कृतेऽपि तत्त्वादसखीति घिसंज्ञा न स्यात् । लोपे तु तन्न्यायेन न दोष इत्युक्तम् । भवद्रीत्या तु विशिष्टस्य तद्भिन्नत्वेन घिसंज्ञा निर्बाधैवेति तदसङ्गतिः स्पष्टैव । नचेकारलोपेऽपि लिङ्गविशिष्टपरिभाषया दोषः, तस्यानित्यत्वादिति तदाशयः । ख्यत्यात्सूत्रे "किमर्थं विकृतनिर्देशः? न सखिपतिभ्यामित्येवोच्येत । अतिसखेरित्यत्र माभूत्"इति भाष्येऽपि ङ्यन्तप्रकृतिक एवायम् । विहितविशेषणानाश्रयणेनेव प्रतिपदोक्तन्यायानाश्रयणेनैव भाष्यं प्रवृत्तमिति न तद्विरोध इति बोध्यम् । रत्नाकरोप्येवम् । तत्रत्य-

सरला ।

सखिमात्रस्य प्रातिपदिकत्वाभावेनाऽदोषात् । हरदत्तानुरोधेनेति । नवीनास्तु "इवर्णस्य ईति किमुदाहरणम्? अतिसखेरागच्छति । यद्यत्र लोपो न स्यात्तदा कृतदीर्घस्य पूर्वान्तवद्भावेन सखिशब्दत्वादतिदेशविषये प्रतिपदोक्तपरिभाषाया अप्रवृत्त्योपसर्जनह्रस्वत्वे कृतेऽपि घिसंज्ञा न स्यात् । लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोषः" इति "यस्येति च" इति सूत्रस्थभाष्यप्रामाण्येन सखिशब्दस्य सख्यवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोर्घिसंज्ञेति सख्यवयवभिन्नेवर्णाद्यन्तं घिसंज्ञं भवतीति वा वर्णसंज्ञापक्षतदन्तसंज्ञापक्षयोरर्थेन सुसखिशब्दे नैव घिसंज्ञाप्रवृत्तिरिति सिद्धान्त इत्याहुः । विस्तरस्तु शब्देन्दुशेखरे तट्टिप्पण्यां च द्रष्टव्यः ।

सूत्रे "परमसखायाविति बहुव्रीहिः, तत्पुरुषे हि टचा भाव्यम्" इति कैयटः। तथा "द्वितीया श्रित" इति सूत्रे सोमसखेति प्रतीकमुपादाय बहुव्रीहित्वान्न समासान्त इति कैयटः। "मिदचोऽन्त्यात्" इति सूत्रे "तृज्वत्क्रोष्टुः" "स्त्रियां च" इति सूत्रे च भाष्यकैयटयोः व्याधातौ माधवग्रन्थे च स्फुटमेतत्। 'अनुद्युत्तो वरुण इन्द्रसखा' 'आग्नेया हि मरुत्सखा' 'तीव्रं सोमं पिबति गोसखायम्' इत्यादिप्रयोगाश्चैवमेव सङ्गच्छन्ते। तत्र बहुव्रीहिप्रयुक्तस्य पूर्वपदप्रकृतिस्वरस्य दर्शनेन गौणत्वात्। एतेन घिसंज्ञासूत्रे शोभनः सखा यस्य सुसखिरित्युदाहरन्तौ हरदत्तन्यासकारौ तदनुगामिनश्चान्ये उपेक्ष्याः।

"पतिः समास एव"। एवकार इष्टतोऽवधारणार्थः। अन्यथा हि समासे पतिरेवेति सम्भाव्येत। "धात्वादेः" इत्यादिज्ञापकानुसरणे च प्रतिपत्तिगौरवं स्यात्। अथ कथं—सीतायाः पतये नमः? पराशरश्च—

"नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ" इति?

उच्यते, पतिरित्याख्यातः पतिः णौ टिलोपे "अच इः" इत्यौणादिक इः। अयं पतिशब्दः "पतिः समास एव" इत्यत्र न गृह्यते, लाक्षणिकत्वात्। एतेन 'कृष्णस्य सखिरर्जुनः' इति भारतं 'सखिना वानरेन्द्रेण' इति रामायणं च व्याख्यातम्।

"बहुगण"। बहुगणौ प्रातिपदिके संख्यावाचके गृह्येते, न तु संघवैपुल्य-

---

शब्दरत्नम्।

भावः। तथा द्वितीयेति। तत्पुरुषविषये बहुव्रीहिर्नेति उपक्रम्य "उभयं खल्वपीष्यते सोमसखा गवां सखः" इति भाष्यम्। अन्त्ये "षष्ठ्या आक्रोशे" इत्यलुक्।

**संख्यावाचके इति**। त्र्यादिसंख्याव्यापकधर्मविशेषवाचके इत्यर्थो न तु बहुत्वं

भैरवी।

**सूत्रस्थप्रयोगे सोमेति** सम्बोधनान्तमपृथक् पदमिति भ्रमः स्यादत आह—तत्पुरुषेति। उभयमिति। तत्पुरुषो बहुव्रीहिश्चेत्येतदुभयमित्यर्थः। सोमसखेति बहुव्रीहिः। कप्प्रत्ययस्तु वैकल्पिकत्वान्न कृतः। अन्त्ये—तत्पुरुषे।

ननु संख्यात्वस्य नियतविषयपरिच्छेदकत्वरूपतया बहुगणयोस्तथात्वविरहेण संख्यावाचके इत्यनुपपन्नमत आह—त्र्यादीति। त्र्यादिसंख्या व्याप्या यस्य धर्मस्य तद्वाचक इत्यर्थः।

भावप्रकाश।

कैयटस्य तु प्रमाद इत्यन्यत्र विस्तरः। हे सोम त्वं मे सखेत्यर्थकमसमस्तमेव भाष्ये इति भ्रमं निरस्यति—**तत्पुरुषेति**।

यथाश्रुतमूलोक्तिर्भाष्यविरुद्धेति ध्वनयितुं तद्रीत्या व्याचष्टे—**त्र्यादीत्यादिना**। त्र्यादिसंख्या त्र्यादीत्यादिना व्याप्या यस्य बहुत्वाख्यधर्मविशेषस्येत्यर्थः। व्यापकेतिपाठस्तु सुलभ एव। उक्तमेवार्थं व्यतिरेकमुखेन द्रढयति—**नन्विति**। अत एव सूत्रे बहुगणग्रहणम्। एतेन नियमार्थं तयोर्ग्रहणं, तेन भूर्यादीनां नेति

सरला।

**त्र्यादिसंख्याव्यापक इति**। बहुत्वे त्रित्वादिसंख्याव्यापकत्वस्य सत्त्वेऽपि निरुक्तसंख्यात्वव्याप्ययावद्धर्मप्रकारकसंशयसामान्यनिष्ठप्रतिबन्ध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयत्वं नास्तीति न बह्वादिपदं संख्यावाचकं नापि बहुत्वादिकं संख्या, किन्तु त्रित्वाद्यतिरिक्तमेव धर्मविशेष इति भावः। अत एव दूरस्थसमुदितजनेषु त्रित्वाद्यन्यतमसंख्याप्रतीत्यभावेऽपि बहुत्वभानम्। **नियतविषयपरि-**

वाचके अपि ; संख्यायते अनयेति अन्वर्थसंज्ञाविधानात् । अत एव डतिरपि तद्धित एव गृह्यते, वतुना साहचर्याच्च ; न तु पातेर्डतिः ।

'षड्भ्यो लुक्' । षड्भ्यः परयोरिति । बहुवचननिर्देशोऽर्थप्राधान्यसू-

---

शब्दरत्नम् ।

संख्या, नियतविषयपरिच्छेदहेतुत्वरूपसंख्यात्वस्य तत्राभावात् । अत एव भाष्ये 'यद्-यमसंख्यां संख्येत्याह' इत्युक्तम् । संख्यायते ऽनयेति । साक्षाद् व्याप्यसंख्याद्वारा वेत्यर्थः । अत एव—बहुगणसाहचर्येण संख्यासम्बन्ध्यर्थप्रतिपादकस्य ग्रहणादेव ।

बहुवचनेति । अन्यथा षष इत्येव वदेत् । अर्थप्राधान्येति । षट्शब्देन षट्-

भैरवी ।

नियतेति । अस्य नियत इतरव्यावृत्तो यो विषयपरिच्छेदस्तस्य हेतुत्वेत्यर्थः । अतएव—बहुत्वस्य निरुक्तसंख्यात्वविरहादेव । ननु यदि बहुगणौ न तथा तर्हि वक्ष्यमाणान्वर्थसंज्ञाप्रदर्शनविरोधो ऽत आह—साक्षादिति । साक्षान्नियतविषयपरिच्छेदहेतुत्वमेकादिशब्दानां प्रसिद्धमेव । ननु कतिशब्दस्य संख्यानकरणीभूतार्थविषयकप्रश्नार्थकतया न साक्षात्परम्परया वा तथात्वमि-त्यत एवेत्यनुपपन्नमत आह—बहुगणेति ।

ननु षट्शब्दस्य नित्यम्बहुवचनान्ततया बहुवचननिर्देश इत्याद्यनुपपन्नमत आह—अन्यथेति । अर्थपरस्य बहुवचनान्तत्वेऽपि स्वस्वरूपपरस्यैकवचनान्तत्वमपि सर्वनाम्न इतिवत्सम्भाव्यतेइति भावः । अर्थप्राधान्येति मूलाद्बहुवचननिर्देशसामर्थ्यादिह नार्थविशिष्टः शब्दः संज्ञा, किन्तु श-ब्दविशिष्टार्थ इत्यर्थः प्रतीयते, स चायुक्तः; 'पञ्चकाः' इत्यत्र लुगापत्तेरत आह—षट्शब्देनेत्यादि । अयम्भावः, सूत्रे षड्भ्य इत्यत्र तन्त्रेण निर्देशः एकः षट्शब्दः शब्दयुक्तार्थपरः अपरोऽर्थयुक्त-

भावप्रकाश ।

कौस्तुभमान्यरत्नाकरदण्डथुक्तमपास्तम् । नियतः इतरव्यावृत्तो यो विषयपरिच्छेदस्तद्धेतुत्वेत्यर्थः । विष-यपरिच्छेदहेतुत्वेऽपि तत्र नियतत्वाभावादिति भावः । तदेव भाष्यमाह—अत एवेति । तस्याः संख्यात्वा-देवेत्यर्थः । उद्देश्यविशेषणत्वेन वार्तिककृत्कृतसंख्याग्रहणखण्डनायोक्तपक्षचतुष्टयमध्ये ऽतिदेशार्थमेतत्सूत्रं न संज्ञाकरणमिति पक्षोऽन्यथानुपपन्न इति भावः । उक्तहेतोरेवाह—साक्षादिति । एकादीनां साक्षाद् बह्वादीनां स्वव्याप्यत्रित्वादिद्वारेत्यर्थः । अत एवातिदेशपक्षान्वर्थसंज्ञापक्षयोरेकफलता । एवञ्च मिथःसाह-चर्यात्तादृशयोरेव तयोर्ग्रहणं न सङ्घवैपुल्यवाचकयोरिति भावः । ननु कतिशब्दस्य संख्यानकरणीभूतार्थ-विषयप्रश्नार्थकतया साक्षात्संख्यानाकरणत्ववत्परंपरयाऽप्यतत्त्वात्सर्वथाऽत एवेत्यादि चिन्त्यमत आह—बह्विति । दृष्टान्ते त्र्यादिसंख्याव्यापकबहुत्वादिधर्मरूपार्थेत्यर्थः । दार्ष्टान्तिके शङ्कोक्तरीत्या तत्सम्बन्ध्यर्थ-प्रतिपादकत्वमिति भावः । एतेन यथाश्रुते मूलानुयायिकौस्तुभरत्नाकरदण्ड्यादयः परास्ताः ।

षष इति । "सर्वनाम्नः स्मै"इत्यादिवदिति भावः । ननु अर्थप्राधान्येत्यस्य यत्र लक्ष्ये तदर्थः प्रधानं तत्रैव भवत्विति फलकबहुवचनेन "स्वं रूपम्" इतिवचनेनार्थविशिष्टशब्दसंज्ञासत्त्वेप्यत्र शब्दविशि-ष्टार्थस्य ग्रहणमित्यर्थः प्रतीयते । अत एव षडर्थेत्याद्युक्तिः । स चायुक्तः, द्वित्राः, पञ्चकाः शकुनय इत्यादौ लुगापत्तेरत आह—षट्शब्देनेति । तथाच न प्रागुक्तस्तस्यार्थः किन्त्वर्थप्राधान्यस्यापीत्यर्थः । अपिना शब्दप्राधान्यसमुच्चयः । अयं भावः—सूत्रे तन्त्रादिनाऽनेकार्थत्वाद्बोद्धृबोधायावृत्तिस्तथा चैकोऽर्थयुक्त-शब्दपरोऽपरः शब्दयुक्तार्थपर इति शब्दादर्थाच्च परत्वं विवक्षितम् । अपिर्निमित्तसमुच्चायको न तु पृथङ्निमित्तता । आद्येन द्वित्राः पञ्चकाः इत्यादिनिरासः । अन्त्येन 'प्रियपञ्चानः' इत्यादिगौणव्यावृत्ति-

सरला ।

च्छेदहेतुत्वेति । यद्धर्मप्रकारकनिश्चयोत्तरं लोके गणनायां प्रसिद्धा ये स्वातिरिक्ता यावद्धर्मास्तद्धर्म-प्रकारकसंशयसामान्यं नोदेति तद्धर्मावच्छिन्नवाचकत्वं तत्त्वमित्यर्थः ।

चनार्थः। षडर्थगतसंख्याभिधायिनोरिति फलितोऽर्थः।

शब्दरत्नम्।

संज्ञकः शब्दस्तदर्थसंख्याश्रयश्चेत्युभयमपि विवक्षितम्, तेषां बहुत्वादिदं बहुवचनम्। तत्रार्थात्परत्वं स्वगतसंख्यानुवादकत्वरूपं गौणम्। तदाह—षडर्थेति। तेन गौणे न। इदं प्राचामनुरोधेन। 'षड्भ्य' इति बहुवचनं 'तिसृभ्य' इतिवत्, षट्संज्ञकानां बहुत्वाच्च। न हि सर्वं जातिनिर्देश एवोचितः, आचार्यशैली वा; षष्शब्दस्य बहुवचनान्तस्यैव संज्ञात्वाच्च। तस्मा

भैरवी।

शब्दपरश्चेति शब्दादर्थाच्च परत्वं विवक्षितम्। उभयमपीति। अपिशब्देन समुदायस्य निमित्तत्वमिह विवक्षितन्नतु प्रत्येकम्। पञ्चका इत्यस्यान्त्येन, प्रियपञ्चान इत्यादेराद्येन निरासः। तन्त्रनिर्देशेऽपि न द्विवचननिर्देश इत्यत्र बीजमाह-तेषामिति। ननु प्रत्ययस्यार्थात्परत्वं कथमत आह-तत्रार्थादिति। तेन-आद्येन। प्राचां-प्रकाशकृताम्। तर्हि यत्र षट्संज्ञकानामर्थःप्रधानं, तत्र षडर्थगतसंख्याभिधायिनोर्जस्शसोर्लुगित्युक्तम्। यदुक्तम्प्राचामिति तद्बीजमाह-षड्भ्य इति। तिसृभ्य इति वदिति। तत्र यथा प्रयोगभेदेन शब्दबाहुल्याद्बहुवचनं तद्वदित्यर्थः। अर्थगतं बहुत्वं शब्दे आरोप्य बहुवचनन्तिसृभ्य इति तु मनोरमायामुक्तम्। षट्संज्ञकानामिति। एवञ्च वचनं युक्तमेवेति भावः। ननु सर्वनाम्न इतिवज्जातिनिर्देश एवास्त्वित्यत आह-नहीति। विनिगमकाभावात्। यदि सर्वत्र जातिनिर्देश एव तदा"उदात्तादनुदात्तस्य"इत्यादावपि तथात्वस्य सत्त्वे अनुदात्तसामान्यस्य स्वरितापत्तिः स्यात्। संज्ञास्वरूपनिर्देशे एकवचनेनैव निर्देश इत्यपि न आचार्यशैलीत्याह—आचार्येति। सर्वनामानीत्यत्र व्यभिचारात्। ननु टिघुभादिवदेकवचनान्तस्य संज्ञात्वेन विनियोगे कर्तव्ये बहुवचनान्तस्य करणमर्थविशेषस्य साधकम्भविष्यतीत्यत आह—षष्शब्दस्येति। अत्र षष् इति पृथक् शब्देनाऽसमस्तम् अनुकार्यानुकरणयोरभेदविवक्षया निर्दिष्टमतो जश्त्वन्न। अत्र चकारोऽनुक्तस्यापि समुच्चयार्थः—परशब्दस्य भवदुक्तार्थकत्वे प्रमाणाभावात् षट्संज्ञकस्य स्वार्थगतसंख्याभिधायित्वसम्बन्धेन विभक्तावन्वयस्य दुरुपपादत्वाच्चेति। कथन्तर्हि गौणव्यावृत्तिरत आह—तस्मादिति। परमपञ्चेत्यत्राव्याप्ति

भावप्रकाशः।

रिति। अत एवाह—उभयमपीति। तदर्थसंख्येत्यस्य षट्संज्ञकपञ्चन्नादिशब्दस्यार्थः प्रवृत्तिनिमित्तं या संख्या तदाश्रयः संख्येय इत्यर्थः। यद्वा, तदर्थश्चासौ संख्याश्रयश्चेत्यर्थः। नन्वेवं द्विवचनापत्तिरत आह—तेषामिति। अर्थानामित्यर्थः। ननु षट्शब्दस्य बहुवचनान्तत्वेन तस्यैव संज्ञात्वान्नापि स्वगतमिति भावः। तत्र-शब्दार्थयोर्मध्ये। आद्यात्परत्वं प्रसिद्धमुपेक्ष्याह-अर्थादिति। स्वगतेति। संख्येयनिष्ठेत्यर्थः। तेन—अन्त्यार्थेन। प्राचां-प्रकाशकृताम्। बहुवचनेत्याद्युक्त्वा तेन यत्र षट्संज्ञानामर्थः प्रधानं तत्र षडर्थगतसंख्याभिधायिनोर्जश्शसोर्लुगित्यर्थो भवतीति तैरुक्तत्वादिति भावः। तत्र हेतुमाह-षट्भ्य इति। यत इत्यादिः। तिसृभ्य इति। तत्र बहुवचनं प्रयोगभेदेन शब्दबाहुल्यात् "अन्नेभ्यः" इतिवत् एवमत्रापि तदुपपत्तिरिति भावः। ननु तथाप्यत्र विनिगमकाभावात्तथैवास्त्वत आह—षट्संज्ञेति। नत्वर्थबहुत्वादिति भावः। ननु सर्वनाम्नइत्यादिवज्जातिनिर्देश एवोचितोऽन्यथा तत्रापि बहुवचनापत्तिरत आह—नहीति। विनिगमकाभावाच्छास्त्रव्यवहारोच्छेदापत्तेश्चेति भावः। ननु मीमांसकरीत्या न दोषद्वयमत आह—आचार्येति। सर्वादीनीत्यादौ बहुवचननिर्देशादिति भावः। अत्रैव विनिगमकाभावादाह—षषिति। षषिति शब्दस्येत्यर्थः। असमस्तम् अनुकार्यानुकरणयोरभेदविवक्षया जश्त्वं न। लोकप्रसिद्धसंख्याशब्दस्यैवात्र संज्ञिविशेषे नियमनसंभवेन तत्त्यागे मानाभाव इति भावः। ननु टिघुभादिवदन्य एवैकवचनान्तः संज्ञाऽस्त्वित्यत आह—चेति। तेन हेत्वन्तरसमुच्चयः। तथाहि, उक्तार्थस्य परशब्दवाच्यत्वे मानाभावाच्च पञ्चम्यन्तस्य त्वदुक्तसम्बन्धेन विभक्त्यन्वयस्य दुरुपपादत्वाच्च, आवृत्तौ मानाभावाच्चेति। कथं तर्हि गौणादिव्यावृत्तिरत आह—तस्मादिति। इष्टानुरोधेन "तस्माद्" इत्यस्या-

"प्रत्ययलोपे" स्थानिवत्सूत्रेण सिद्धे नियमार्थमिदम्। प्रत्ययस्यासाधारणं यत्र

शब्दरत्नम् ।

दिदं विहितविशेषणम् । परमपञ्चादीनामपि संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन संख्यावाचितया षट्त्वमस्त्येव । लोके गणनायां प्रसिद्धानामेव ग्रहणमित्यत्र न मानम् । उपसर्जने तु अतिक्रान्ताद्यर्थप्राधान्यं न तु संख्याया इति न दोषः । स्पष्टं चेदं "सर्वादीनि" इति सूत्रे भाष्ये इति तत्त्वम् ।

सिद्धे इति । "तृणह" इति सूत्रे 'अचि' 'न' इत्यनुवृत्त्या तृणहानीत्यादिव्या-

भैरवी ।

वारयति—परमेत्यादिना । अपिः केवलसमुच्चायकः । जनकत्वेनेति । तृतीया तु यदि बोधजनकत्वमेव शक्तिरिति मतन्तदाऽभेदे, यदि शक्तिस्ततो भिन्ना तदा हेतौ । ननु लोकेऽस्य गणनायामप्रसिद्धत्वात्कथं ग्रहणमत आह—लोक इति । पञ्चका इत्यादौ तु षट्त्वस्यैवाभावः । स्पष्टञ्चेदमिति । तत्र हि उपसर्जनाप्रतिषेधखण्डनाय अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तदङ्गवति । यद्येवम्परमपञ्चेत्यत्र लुङ्न प्राप्नोति ? नैष दोषः, षट्प्रधान एष समासः" इत्युक्तम् । अस्माद्भाष्यान्मदुक्तार्थस्य लाभः स्पष्ट इत्याशयेनाह—तत्त्वमिति ।

नन्वतृणेडित्यत्रेमागमस्य हलादौ विधानेनाल्विधित्वात्कथं सिद्धिरत आह–तृणहइतीति। अचि नेत्युनुवृत्त्या–नाभ्यस्तस्याचीति सूत्रादचीत्यस्य नेत्यस्य चानुवृत्त्या। आशीरित्यस्या-

भावप्रकाश ।

प्रवृत्तेरिति भावः । नन्वेवं कथमिष्टं तदन्तेऽत आह-परमेति। अपिः केवलसमुच्चायकः । जनकत्वेनेति । अभेदे तृतीया वार्तिकेन । वस्तुतस्तयोर्भेद एवेति मञ्जूषायां स्पष्टम् । ननु तेषां लोके तत्त्वेनाप्रसिद्ध्या कथंग्रहणमत आह—लोके इति । यत इत्यादिः । ग्रहणमिति । अस्य षट्संज्ञाविषये इति शेषः । 'द्वित्राः' 'पञ्चकाः'इत्यादौ षट्संज्ञाया अभावादेव न दोष इत्यभिप्रेत्य गौणे व्यतिरेकमाह—उपसर्जनेति। आदिनाऽन्यपदार्थादिसंग्रहः । संख्यायाः—तत्प्रकारकसंख्येयस्येत्यर्थः । स्पष्टमिति । उपसर्जनप्रतिषेधखण्डनाय 'अथवाऽङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तदङ्गवति । यद्येवं परमपञ्च षड्भ्य इति लुङ्न प्राप्नोति । नैष दोषः, षट्प्रधान एष समासः' इति तत्रोक्तम् । निरूपितं चेदमुद्द्योते । कैयटस्तु मूलगुरुश्चिन्त्य एव, तदनुसारिरत्नाकरादयोपि तथा; तद् ध्वनयन्नाह—तत्त्वमिति ।

नन्विमादीनामल्विधित्वात्कथं तेन सिद्धिरत आह-तृणेति । "नाभ्यस्तस्याचि" "इत्यतस्तद्बोध्ये ।

सरला ।

विहितविशेषणमिति । षट्संज्ञकविशिष्टयोर्जश्शसोर्लुगिति "षड्भ्यो लुक्" इति सूत्रस्यार्थः । वैशिष्ट्यञ्च स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वसम्बन्धेन । तेन 'पञ्च ब्राह्मणाः' 'षट्कल्पाः' इत्यादौ न दोषः । ब्राह्मणपदोत्तरजसि कल्पबन्तप्रकृतिकजसि च षट्संज्ञकनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वस्याभावात् । बोधजनकत्वेनेति । यस्य संख्यावाचकत्वं वक्तव्यं तदन्तपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती या विशेष्यता तादृशविशेष्यतानिरूपितप्रकारत्वासमानाधिकरणा या संख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठविशेष्यता तादृशविशेष्यताप्रयोजकतापर्याप्त्यधिकरणत्वं संख्यावाचकत्वं विवक्षितमिति परमपञ्चन्शब्दघटकपञ्चन्शब्दे तादृशसंख्यावाचकत्वस्य सत्त्वेन "षड्भ्यो लुक्" इत्यादावुद्देश्यताया अपर्याप्ताया अपि विवक्षणात् 'परमपञ्च' इत्यत्र लुक्सिद्धिः । षट्त्वमस्त्येवेत्यस्य एकदेशे षट्त्वस्य सत्त्वेन तन्निमित्तककार्यस्य विशिष्टेऽपि सिद्धिरित्यर्थः । तेन दण्डिन इव त्रय इत्यर्थके त्रिदण्डिनः इत्यत्र संख्येयनिष्ठविशेष्यताप्रयोजकतापर्याप्तिः त्रिइत्येतन्मात्रस्य नतु त्रिदण्डिन्नित्यस्येति न तत्र षट्संज्ञा नापि तत्संज्ञाप्रयुक्तो लुक् त्रिशब्दमुद्दिश्य जश्शसोर्विधानाभावात् । 'प्रियपञ्चानः' इत्यादौ पञ्चन्शब्दार्थसंख्येयनिष्ठविशेष्यताया बहुव्रीह्यर्थनिष्ठविशेष्यतानिरूपितप्रकारतासमानाधिकरणत्वमेव नत्वसामानाधिकरण्यमिति तत्रापि न दोष इत्यन्यत्र विस्तरः ।

सिद्धे इतीति । स्थानिवत्सूत्रेणैव सिद्धे "प्रत्ययलोपे प्रत्ययलक्षणम्" इति सूत्रं नियमार्थम् प्रत्य-

रूपं प्रयोजकं, तदेव कार्यं प्रत्ययलोपे सति भवति न तु प्रत्ययाप्रत्ययसाधारण-मिति। तेन शोभना दृषदोऽस्य सुदृषत् प्रासाद इत्यत्र "अत्वसन्तस्य" इति

शब्दरत्नम्।

वृत्तौ 'हलि' इत्यननुवृत्त्या अतृणेडित्यस्य सिद्धिः। 'शास इत्' 'अङि'। अजादौ क्ङिति चेदङ्येवेति नियमेनाजादिव्यावृत्तौ तत्र हलग्रहणाकरणेन मित्रशीरित्यस्य सिद्धिः, एवमन्य-त्रापीति भावः। प्रत्ययस्यासाधारणमिति। इदं द्वितीयप्रत्ययग्रहणेन लभ्यते।

भैरवी।

शासः क्वाविति वचनेन सिद्धिम्मनसि निधायाह—शास इदिति। इदं सामान्यसूत्रम्, "अ-ङि"इति तु नियमार्थमित्याह—अजादाविति। अजादिव्यावृत्तौ—'आशासात'इत्यादिव्यावृत्तौ। अन्यत्रापीति। आर्द्रे चर्मन्नित्यत्र स्थानिवद्भावेन ङिपरत्वान्नङीति नलोपाभावस्य सिद्धिरित्य-र्थः। "प्रत्ययलोप" इति सूत्रस्य नियमार्थत्वेऽपि नियमस्यैवंरूपत्वे मानमाह—इदमिति। प्रथमं प्रत्ययग्रहणं तु प्रत्ययपर्याप्त्यधिकरणलोपे यथा स्यादवयवलोपे माभूदित्यर्थम्। तेना-

भावप्रकाश।

व्यावृत्तौ—सत्यामिति शेषः। एवमग्रेऽपि। आशीरित्यस्य "आशासः क्वौ" इति वार्त्तिकेन सिद्धिः स्पष्टैवेति। तदुपेक्ष्याह—शास इति। सामान्यसूत्रमिदम्। ततः "अङि" इति नियमार्थम्। उक्तवा-र्त्तिकं तु परस्मैपदविहिताङ्साहचर्यात्तत्र शासोरेव ग्रहणे बुध्यर्थम्, अन्यथा नियमार्थमिति 'आशास्ते' इत्यादौ न दोष इति भावः। अजादीति। 'आशासाते' इत्यादेरिति भावः। अन्यत्रापीति। "न ङि-संबुद्ध्योः" इति सूत्रेणार्द्रेचर्मनित्यादौ ङौ नलोपाभावसिद्धिरित्यर्थः। ननु नियमार्थत्वेऽपि तस्यैवंरूपत्वे किं बीजमत आह-इदमिति। द्वितीयेति। आद्यं तु 'कृत्स्नलोपे यथा स्यादवयवलोपे मा भूत्' इत्य-र्थम्। तेनाध्नीतेत्यादौ नानुनासिकलोपः। पूर्वसूत्रस्थप्रत्ययपदेनैतत्सिद्धौ त्वन्यत्र च्छक्यमकर्त्तुमिति भाष्ये स्पष्टम्। इत एकावयवेऽपि प्रत्ययत्वकार्यम्। तेन "आदेशप्रत्यययोः" "इदुदुपध" इत्यनयोर्न लक्षणेति स्पष्टमन्यत्र। प्रत्ययेति। अन्यथा लक्षणमित्येव वदेत्। करणसाधनः सः। एवमग्रेऽपि। प्रत्यासत्त्या च

सरला

यपर्याप्तस्थानिताकलोपे सति प्रत्ययलक्षणमेव नतु स्थानिवद्भाव इति। प्रत्ययलक्षणमित्यस्य च प्रत्यय-त्वव्याप्यधर्मावच्छिन्ननिमित्तताकं कार्यमित्यर्थः। तथाच स्थानिवत्सूत्रघटकादेशपदार्थे प्रत्ययलोपातिरि-क्तत्वेन सङ्कोच इति प्रत्ययलोपभिन्नादेशस्यैव "स्थानिवदादेशोऽनल्विधौ" इति सूत्रेण स्थानिवत्त्वमिति 'सुदृषत् प्रासादः' इत्यत्र जसो लुको न स्थानिवत्त्वमिति असन्तत्वमादाय "अत्वसन्तस्य चाधातोः" इत्य-नेन न दीर्घः। नापि प्रत्ययलक्षणम्, असत्वस्य धातावपि सत्त्वेन प्रत्ययत्वव्याप्यत्वाभावात् असन्तत्व-निमित्तकदीर्घस्य प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताककार्याभावात्। नच "अत्वसन्तस्य" इति सूत्रे अतुसाहचर्यात् सकारप्रश्लेषाद्वाऽसन्तमपि श्रूयमाणासन्तमेव गृह्यते इति सुदृषत् प्रासाद इत्यत्र श्रूयमा-णस्याऽसोऽभावेन न दीर्घप्राप्तिरिति न तत् नियमव्यावर्त्यमिति वाच्यम्, 'यवमत्' शब्दात् णिजन्तात् क्विपि णिलोपटिलोपयोः ततः सुविभक्तौ तत्र अतोरपि अश्रूयमाणस्य सम्भवेन अतुसाहचर्यस्य श्रूयमाण-त्वेन ग्रहीतुमशक्यत्वात् साहचर्यपरिभाषाया अनित्यत्वस्याप्यनेन ज्ञापनाच्च साहचर्येण दीर्घस्य वारणे-ऽपि सुदृषत् शब्दादुक्तरीत्याऽसन्तत्वमादाय "अस्माया मेधास्रजो विनिः" इति विनेरापत्तेदुर्वारत्वाच्च। नियमे तु प्रत्ययलोपे स्थानिवत्त्वाप्रवृत्त्या विनिप्रत्ययकार्यस्य प्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकत्वा-भावेन प्रत्ययलक्षणस्य चाप्रवृत्त्या न दोषः। विस्तरस्त्वन्यत्र द्रष्टव्यः।

इदमिति। प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताकं कार्यमित्यर्थः। द्वितीयप्रत्ययग्रहणेनेति। "प्रत्ययलोपे तल्लक्षणम्" इत्येव सूत्रन्यासेन प्रत्ययलक्षणमित्यर्थस्य सिध्द्या प्रत्ययग्रहणसामर्थ्येन प्रत्यय-त्वव्याप्यधर्मावच्छिन्ननिमित्तताकलाभ इति तदाशयः। एवं "प्रत्ययस्य लुक्श्लुलुपः" इत्यतः सूत्रात् प्रत्य-यग्रेत्यनुवृत्त्या सिद्धे प्रथमप्रत्ययग्रहणात् प्रत्ययपर्याप्तस्थानिताकलोपे एवैतत्प्रवृत्तिर्नतु प्रत्ययैकदेशलो-

दीर्घो न । यद्वा यत्र प्रत्ययः प्राधान्येनाश्रीयते तत्राल्विधित्वेऽपि विद्ध्यर्थमि-

शब्दरत्नम् ।

यत्रप्रत्ययस्य विशेष्यत्वं तत्रैवेति नियमस्तु न, राजेत्यादौ पदत्वानापत्तेः । दीर्घो नेति । असो लुकः स्थानिवत्त्वेनासन्तत्वेऽपीति शेषः । न चातुसाहचर्याच्छ्रूयमाणासन्त एव दीर्घ इति वाच्यम् । तदनित्यत्वस्याप्यनेन ज्ञापनात् । प्राधान्येनेति । तत्त्वं च वर्णविशे-

भैरवी ।

घ्नीतेत्यत्र नानुनासिकलोपः। यदि पूर्वसूत्रस्थप्रत्ययपदस्यानुवृत्त्या तस्य लाभ इत्युच्यते, तदा तन्न कर्तव्यमिति भाष्ये स्पष्टम् । इदमेव प्रत्ययपदमवयवेऽपि प्रत्ययव्यवहारे ज्ञापकम् । तेनादेशप्रत्यययोरित्यत्र न षष्ठीभेदकल्पना कार्या । द्वितीयप्रत्ययपदाभावे तु लक्षणमित्येव वाच्यम् । करणसाधनेनानेन प्रत्यासत्त्या प्रत्ययनिमित्तककार्यस्य प्राप्तिर्भविष्यतीति भावः । स्थानिवत्पदानुवृत्त्यैव सिद्धे इति ।तु नोक्तं तादृशकल्पनायां द्वितीयस्य प्रत्ययपदस्य वैयर्थ्य-मेवेत्यस्य ध्वननायेति बोध्यम् । प्रत्ययस्यासाधारणमित्यस्य प्रत्ययमात्रवृत्तीत्यर्थः । प्रत्य-यत्वतद्व्याप्यान्यतरधर्मपुरस्कारेण यत्र प्रत्ययस्याश्रयणं तत्रेति स्पष्टोऽर्थः । अन्योक्तनियम-स्वरूपन्निरस्यति—यत्र प्रत्ययस्येति । पदत्वानापत्तेरिति । अत्र पदसंज्ञारूपङ्कार्यं तदन्तस्येति स्पष्टमेव । स्थानिवत्त्वेनासन्तत्वे ऽपीति । अत्र स्थानिवद्भावेन लुको ऽस्त्वमेवातिदिश्यते । तस्य स्वंरूपमितिशास्त्राच्छास्त्रीयत्वात् । तदन्तत्वं त्वर्थसमाजग्रस्तमिति बोध्यम् । तदनित्यत्वस्य—साहचर्यपरिभाषाया अनित्यत्वस्येत्यर्थः । अपिः पर्युदासानित्यत्वस्य समुच्चायकः । अनेन—सूत्रेण। एतेन सोमनसी अलोमोषसीत्यत्र पर्युदासेन श्रूयमाणासन्तस्यैव ग्रहणमिति न सुदृष-त्प्रासाद इत्यत्र स्वरस्य प्राप्तिरिति नियमो व्यर्थ एवेति निरस्तम् । एतावता प्रबन्धेन भा-ष्यसम्मतनियमार्थत्वपक्षं समर्थ्य वार्तिककारसम्मतं प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वपक्षमुप-पादयति—मूले यद्वेति । ननु यत्र प्रत्ययस्य निमित्तत्वेनाश्रयणं तत्र कार्यिविशेषणत्वं तस्मि-न्निति परिभाषया स्पष्टमेवेति "तृणहः" इति सूत्रे प्रत्ययस्य कथम्प्राधान्यमत आह—तत्त्व-ञ्चेति । प्राधान्यञ्चेत्यर्थः । वर्णाविशेषगत्वम्—वर्णनिष्ठविशेष्यतानिरूपितविशेषणत्वाभाव

भावप्रकाशः ।

तन्निमित्तकमित्यर्थलाभः। यद्वा, तदपि मास्तु स्थानिवदित्यनुवृत्त्या सिद्धेः। तदनुल्लेखस्तु प्रत्ययवदिति-न्यासेन सिद्धे सिद्धान्ते तदानर्थक्यमेवेति ध्वनयितुमिति भावः। प्रत्ययत्वतद्व्याप्यान्यतरधर्मपुरस्कारेण क्रियमाणं कार्यमिति फलितोऽर्थः। तेतिक्ते इति किं निपात्यते ? तङ्। नैतदस्ति। "अनुदात्तङितः" इत्येव सिद्धम्। नियमार्थं तर्हि भविष्यति अत्रैव यङ्लुगन्तस्य, नान्यत्र बेभिदीति दाधर्तीतिसूत्रभाष्यानुरोधेना-शङ्कते—यत्रेति। मूलोक्तफलस्येतोऽपि सिद्धेरिति भावः। पदसंज्ञातदन्तकार्यमिति तदभावेऽनिष्टं स्प-ष्टमेव। श्रूयमाणेत्युपलक्षणं विभक्तित्वानाक्रान्तस्यैवासो ग्रहणमित्यपि बोध्यम्। तद्भाष्यं तु वार्तिकसंमत-विधिपक्षानुसारीति न तद्विरोध इति भावः। स्थानिवत्त्वेनेति। "स्वं रूपम्" इत्यनेन शास्त्रीयास्त्वा-दार्थसमाजग्रस्ते इति शेषः। तदनित्यत्वस्येति। साहचर्यानित्यत्वस्येत्यर्थः। अपिर्लघुभूतपर्युदासा-नित्यत्वसमुच्चायकः। अनेन—सूत्रेण। अन्यथाऽलोमोषसीति पर्युदासेन श्रूयमाणासन्तस्यैव ग्रहणमिति नि-यमोऽपि व्यर्थ एवेति तत्प्रतिपादकभाष्यासंगतिरिति भावः। नन्विमादौ प्रत्ययस्य विशेषणत्वात्कथं तत्त्व-मत आह—तत्त्वं चेति। प्राधान्यं चेत्यर्थः। वर्णनिष्ठविशेष्यतानिरूपितविशेषणत्वाभाववत्त्वमिति तद-

सरला ।

पेऽपीति 'आघ्नीय' इत्यत्र सीयुटः सकारस्य लोपेऽपि प्रत्ययपर्याप्तस्थानिताकलोपाभावेन प्रत्ययलक्षणा-प्रवृत्त्या "अनुदात्तोपदेश" इत्यनेन नानुनासिकलोप इति बोध्यम्। इदमेव प्रत्ययग्रहणं प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारं ज्ञापयति। तेन "आदेशप्रत्यययोः" इत्यत्र उभयोरपि सकारेऽभेदेनैवान्वयसत्त्वेन सह-विवक्षोपपत्त्या निर्देशसङ्गतिः। अन्यथा आदेशपदार्थस्य अभेदेन प्रत्ययस्य च अवयवावयविभावेनान्वय इति सहविवक्षाया अभावे द्वन्द्वानुपपत्तिः स्यादिति।

सामर्थ्याल्लब्धमिति। प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताकं कार्यं प्रत्ययलक्षणग्रहणसाम-

दम् । तेन अतृणेडित्यत्र हलादौ पिति सार्वधातुके विहित इम् लुप्तेऽपि तस्मिन् भवति । 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति तु वर्णप्राधान्यविषयकम् । तेन गवेहितं गोहितमित्यत्र अव् न। अस्मदिति। अत्र प्राचा अव्ययेत्यपि पठितं

---

शब्दरत्नम् ।

षणत्वरूपम् । एतच्च 'स्थानिवत्' इत्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणमित्येतत्सामर्थ्याल्लब्धम् । इमिति । मित्रशीरित्यादौ हलादौ क्ङिति विधीयमानमित्वं च सिध्यतीत्यपि बोध्यम् । वर्णप्राधान्येति । वर्णस्य तत्त्वं च प्रत्ययनिरूपितविशेष्यत्वमितराविशेषणत्वं च । अण् योऽकार इत्याद्यर्थके "टिड्ढाणञ्" इत्यादौ "इको यणचि" इत्यादौ च । तत्रान्त्यमुदाहरति—तेनेति । आद्योदाहरणं तु चित्रायां जाता चित्रेत्यादावण् योऽकारस्तदन्तादिति

भैरवी

इत्यर्थः । एतल्लाभसाधनमाह—एतच्चेति । नच द्वितीयं प्रत्ययग्रहणङ्किमर्थमित्येव भाष्यकृतोक्तन्नतु प्रत्ययलक्षणग्रहणङ्किमर्थमित्युक्तमिति भवदुक्तकल्पनायाः कथम्भाष्याल्लाभ इति वाच्यम् ? बहुव्रीहिसमासेनोक्तार्थलाभात् । वार्तिककारमते फलान्तरमप्याह—मित्रशीरिति । इत्वमिति । "शास इदू"इत्यनेनेत्यर्थः । ननु यत्र वर्णस्यान्यनिष्ठविशेष्यतानिरूपितविशेषणत्वाभावरूपप्राधान्यं तत्रैव चेत्प्रत्ययलक्षणस्य प्रतिषेधस्तदा चित्रायाञ्जाता चित्रेत्यत्राण् योऽकारस्तदन्तादिति व्याख्यानेनाकारस्य प्रातिपदिकविशेषणतया न निरुक्तं प्राधान्यमिति प्रत्ययलक्षणप्रतिषेधो न स्यादत आह—वर्णस्य तत्त्वं चेति । क्रमेण द्विविधप्राधान्यस्योदाहरणमाह—अण् य इत्यादिना । इत्यादौ चेति । अस्तीति शेषः । तत्र—तयोर्मध्ये ।

ननु इको यणचीत्यस्य गवेहितमिति नोदाहरणमिति तेनेत्यनुपपन्नमिति चेन्न तस्योपलक्षणत्वात् । तेन हरिहितमित्यादिस्थले यणादि नेति बोध्यम् । चित्रायाञ्जातेति । नक्षत्रेण युक्तः कालः" इत्यणो "लुबविशेषे" इति लुपि युक्तवद्भावात्स्त्रीत्वं, ततो जातार्थे "सन्धिवेला" इति

भावप्रकाश ।

र्थः । नन्वलिविधौ विध्यर्थत्वेऽपि कथमेतल्लाभोऽत आह—एतच्चेति । लक्षणमिति । एतेन द्वितीयं प्रत्ययग्रहणं किमर्थमिति भाष्यस्य प्रत्ययलक्षणमिति किमर्थमित्यर्थः सूचितः । तल्लक्षणमित्येवास्तु प्रत्ययपदं निमर्थमिति कैयटव्याख्या तु चिन्त्या । प्रकृते तच्छब्दप्रत्ययशब्दयोः पर्यायत्वेन तद्विचारस्यायुक्तत्वात् । एतेन तथा कौस्तुभरत्नाकरदण्ड्याद्युक्तमपास्तम् । उक्तार्थलाभस्त्वित्थम्—लक्षणपदसामर्थ्यात्षष्ठीतत्पुरुषो न, तत्र पक्षे लक्षणं दर्शनं प्रादुर्भावः; किं तु बहुव्रीहिः । तथा च प्राधान्येन प्रत्ययत्वतद्व्याप्यान्यतरधर्मावच्छिन्नलक्षणकं कार्यमित्यर्थ इति । वार्तिकमतं द्रढयितुं फलान्तरमाह—मित्रेति । क्तिोति प्रकृताभिप्रायम् । अनुवृत्तिस्तु "अनिदिताम्"इत्यतः क्ङितीत्यस्येति बोध्यम् । इत्वमिति । "शासः" इत्यनेनेति भावः । ननु वर्णप्राधान्यन्नामान्यनिष्ठविशेष्यतानिरूपितप्रकारत्वाभाववत्त्वं, तच्च बाधितमेवोक्तरीत्याऽत आह—वर्णस्येति । न्यूनतां निराचष्टे—प्रत्ययेति । प्रत्ययनिष्ठप्रकारतानिरूपितेत्यर्थः । इतरेति । इतरच्चन्निमित्तं तन्निष्ठविशेष्यतानिरूपितविशेषणत्वाभाववत्त्वमित्यर्थः । यथाश्रुते तूक्तरीत्याऽसंगतिरुभयोः स्पष्टैव । विवक्षितमिति शेषः । क्रमेण तयोरधिकरणमाह—अणिति । इत्यादौ चेति । अस्यास्तीति शेषः । तत्र—तयोर्मध्ये । तेनेतीति प्रतीकधारणेन कर्त्तरि हितमित्यप्युदाहरणं सूचितम् । एवञ्च मूलमुपलक्षणम् । एवमग्रेऽपि । अतएवेकोयणचीत्युक्तम् । चित्रायामिति । "नक्षत्रेण युक्तः" इत्यणो "लुबविशेषे" इति लुप् । युक्तवद्भावात् स्त्रीत्वे ततो जातेर्थे 'संधिवेलादि" इत्यणो "चित्रारेवती" इतिवार्तिकेन लुक् । न चाणो लुकि"लुक्तद्धित"इति टापो लुकि पुनष्टाप् दुर्लभो 'लक्ष्ये लक्षणस्य" इतिन्या-

सरला

र्यादृतिदिश्यते । तेन "एचोऽयवायावः" इत्येतच्छास्त्रनिमित्ततायां प्रत्ययत्वव्याप्यधर्मावच्छिन्नत्वाभावेन अवादेशे कर्तव्ये न प्रत्ययलक्षणमिति भावः ।

शब्दरत्नम् ।

विहितो ङी नेति बोध्यम् । न च गाहृतमित्यत्र "न लुमता" इति निषेधः । लुप्तप्रत्ययनिमित्तकाङ्गोद्देश्यककार्ये एव तेन निषेधात् । अत एवोत्क्रामेत्यादौ "क्रमः परस्मैपदेषु" इति दीर्घसिद्धिः, परस्मैपदपरशिन्निरूपिताङ्गत्वस्य तेन दीर्घविधानात् । "तस्मिन्" इति न्यासेऽपि लुक्स्थानिभूतप्रत्ययाव्यवहितप्रकृत्युद्देश्यककार्ये एव प्रवृत्तिरिति बोध्यम् ।

भरवी ।

सूत्रेणाण्, तस्य "चित्रारेवती"इति वार्तिकेन लुक् "लुक् तद्धितलुकि"इति टापो लुक् । नच जातार्थकप्रत्ययान्तात्पुनष्टाप् प्रत्ययो "लक्ष्ये लक्षणस्य"इति न्यायेन । दुर्लभ इति वाच्यम् ? पूर्वकालजातस्य टापो नक्षत्रगतस्त्रीत्वद्योतकत्वेऽपि जातार्थगतस्त्रीत्वाद्योतकतया पुनस्तदुत्पत्तौ बाधकाभावात् । तत्रान्त्यविवक्षाया वैयर्थ्यमाशङ्क्य निराचष्टे—नचेति । निषेध इति । तथाच यणादेः प्राप्तिर्न भविष्यतीति भावः । समाधत्ते-लुप्तेति । निमित्तान्तो बहुव्रीहिः । अङ्गत्वस्य विशेषणमेतत् । तथा चाङ्गशब्दो ऽत्र संज्ञास्वरूपबोधकशब्दप्रकृतिक अर्शआद्यजन्तो बोध्यः । अत एव-उक्तार्थकल्पनादेव । यणादेर्वर्णोद्देश्यकत्वं नत्वङ्गोद्देश्यकत्वमिति स्पष्टमेव । "क्रमः परस्मैपदेषु" इत्यस्याङ्गाधिकारीयत्वेऽपि यथा दीर्घस्य न लुप्तप्रत्ययनिमित्ताङ्गोद्देश्यकत्वं तथोपपादयति—परस्मैपदेति । "ष्ठिवुक्लमु"इत्यतः शिताति तत्र वर्तते । अत एव निश्चक्रमतुर्निश्चक्रमुरित्यत्र न दीर्घः । वार्तिकमते ऽप्याह—तस्मिन्निनीति । प्रकृत्युद्देश्यकेति । प्रत्ययेनाक्षेपः प्रकृतेर्भवतीत्यभिप्रायेण । ननु भाष्यकारेण विधिपक्षं दूषयित्वा नियमार्थत्वं स्थापितमिति मूलकारस्यापि तदुपपादनमेवादौ कर्त्तुमुचितंतथा तु न कृतं किन्तु वैपरीत्येन कृतमित्यत्र किम्बीजमिति चेत् ? न, भाष्यकृता प्रयोजनान्यथासिद्धिम्प्रदर्श्य विधिपक्षो दूषितो नतु दोषेणेति नियमाद्विधेर्लघुत्वं ध्वनयितुम्मूले वैपरीत्येनाभिधानात् । वस्तुतस्तु "यथोत्तरम्मु-

भावप्रकाश ।

यादिति वाच्यम् । जातगतस्त्रीत्वबोधनरूपफलस्यासिद्धतया तत्प्रवृत्तेरिति भावः । निषेध इति । तथा च नावादेः प्राप्तिरिति न सा विवक्षा कार्येति भावः । निमित्तान्तो बहुव्रीहिरङ्गविशेषणम् । तत्र बीजं लक्ष्यसिद्धिरूपं ध्वनयितुमाह—अत एवेति । अत्र चावाद्यादेशो वर्णमात्रोद्देश्यको नाङ्गोद्देश्यक इति भावः । वार्त्तिकमतेप्याह—तस्मिन्निति । लुक्स्थानिभूतप्रत्ययाव्यवहितप्रकृत्युद्देश्यककार्ये इति पाठः । प्रत्ययेन प्रकृत्याक्षेपः । "तस्मिन्" इति परिभाषयाऽव्यवहितत्वलाभः उपस्थितप्रत्ययाक्षिप्तप्रकृत्युद्देश्यककार्ये इति त्वपाठः, गोहितमित्यादिसिद्धावपि उत्क्रामेत्याद्यसिद्धेरिति बोध्यम् । ननु भाष्ये विधिपक्षं संदूष्य नियमपक्ष उक्त इति कथं मूले तदुक्तिः कथं चोत्तरपक्षत्वेन तदुपन्यास इति चेत् ? न, नियमतो विधिपक्षे लाघवस्य सुप्रसिद्धत्वात् । फलान्यथासिद्धया दूषितत्वेऽपि दोषेणादूषितत्वाच्च विधायकसूत्रस्य काचित्कत्वात्साहचर्यपर्युदासाभ्यां वा स्वरदीर्घयोस्तत्र पक्षेऽदोषाच्च । अत एव वार्त्तिकपक्षे स्वरदीर्घव्या-

सरला ।

ङीन्नेति बोध्यमिति । अयं भावः—"प्रत्ययलोपे प्रत्ययलक्षणम्" इति न्यासे प्रत्यासत्त्या प्रत्ययत्वव्याप्येति पूर्वोक्तार्थलाभसंभवे प्रत्ययग्रहणं प्राधान्येन यत्र प्रत्ययस्य निमित्तत्वेनाश्रयणं तत्रैव प्रत्ययलक्षणमिति स्वावयवनिष्ठविशेष्यतानिरूपितप्रकारत्वासमानाधिकरणा या प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयता तादृशविषयताके कार्ये एव प्रत्ययलक्षणमित्यर्थस्य फलिततया "टिड्ढाणञ्" इति सूत्रे अत इत्यस्यानुवृत्त्या तत्राण्पदस्य विशेषणतया प्रत्ययस्याप्राधान्येनाश्रयणात् प्रत्ययलक्षणाप्रवृत्त्या न ङीबिति । एतन्मूलकमेव "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" "वर्णप्राधान्यविषयमेतत्" इति च पठ्यते । अनेन तत्परिभाषायामिदमेव ज्ञापकमिति लभ्यते इति परिभाषेन्दुटिप्पण्यां विस्तरः ।

शब्दरत्नम् ।

यद्वेत्यादिनोक्तो वार्त्तिककृत्सम्मतः पक्षस्तत्फलानामन्यथासिद्ध्या भाष्यकृता दूषयित्वा नियमार्थत्वपक्ष उक्त इति दिक् ।

भैरवी ।

नीनाम्प्रामाण्यम्" इति नियमपक्ष एवोचित इत्याशयेनाह—यद्वेत्यादीति ।

यदुक्तम्प्रायेणेति तस्य प्रयोजनमाह—विभक्तीति । कस्याश्चित् कस्यचित् किञ्चित् रात्रौ सायम् वामित्यादेरित्यर्थः । एवञ्च परममूलं लिङ्गत्रययोगेऽपि सारूप्यप्रतिपादनपरन्तु लिङ्गाभावप्रदर्शनपरम् । तथासत्यलिङ्गा इत्येव वदेत् । वक्ष्यमाणरीत्या युष्मदस्मच्छब्दयोर्लिङ्गबोधकत्वमेव । "न षट्स्वस्रादिभ्य" इति ज्ञापकाच्च षट्सञ्ज्ञकानामपि तत्त्वमस्त्येव । त्रिषु सारूप्यञ्च लिङ्गबोधकप्रत्ययानुत्पत्त्या । "अलिङ्गे युष्मदस्मदी" इति भाष्यस्य त्वयमर्थः—पदान्तरसमभिव्याहारं विना तन्मात्राल्लिङ्गविशेषस्य न प्रतीतिरिति । अव्ययन्त्वेतादृशं न, तस्य लिङ्गप्रतिपादकत्वसाधकानुपलम्भात् । नच "अव्ययादाप्सुपः" इति ज्ञापकस्य सूत्रस्य "सदृशं त्रिषु लिङ्गेषु" इत्यस्य चाव्ययानामपि लिङ्गप्रतिपादकत्वसाधकत्वं

भावप्रकाशः ।

वृत्तये उपायान्तरमन्वेषणीयमिति कौस्तुभोक्तिस्तदेतदभिप्रेत्याह—यद्वेत्यादीति । तदिति । उक्तपक्षमित्यर्थः । फलानाम्—इमादीनाम् । अन्यथासिध्द्या—न तु सुदृषदित्यादौ दोषेणेति भावः । एवं च तत्र पक्षे तदनित्यत्वानुमानसाहचर्याद्याश्रयणं वा तदाकूतमिति तात्पर्यम् । नन्वेवं मूलसौष्ठवे भाष्यासंगतिरेवेति चेन्न, तत्पक्षे उक्तरीत्या दीर्घवारणेऽपि पर्युदासेन प्रत्ययासन्तस्यैव ग्रहणापत्तौ सुवरित्यादौ स्वरानापत्त्या तदनङ्गीकारेण स्वरसिद्धये नियमपक्षावश्यकत्वेन भाष्यसौष्ठवे मूलस्यैव चिन्त्यत्वात् । सुपूर्वाद्वस्तेः क्विपि अधातोरित्युक्तेरदीर्घे रूपम् । एवं च उक्तभाष्येण काचित्कत्वानुमानमिति योगविभागेनोभयार्थत्वं यदुक्तरीत्या न विधौ फलं तर्हि उक्तरीत्यैव नियमेऽपि न फलम् । किं च यथान्यासे विधित्वे इत्वरूपं फलं दुर्वारम् । किं चेन्विधावचि नेत्यनुवृत्तावपि वाक्यभेदे मानाभावेन पित्यचि इन्नेत्यर्थापत्तिः । तथा च फलमुखगौरवस्यादोषत्वेन विधायकवाक्यकल्पनापत्तावच्येव विकल्पापत्तिः । सामान्यवाक्यकल्पने तु विकल्पो नेत्यन्यदेतदिति च मान्योक्तिः प्राचामनुरोधेनेति ध्वनितम् । एतेन लोप इत्येव सूत्रं कार्यं प्रत्ययपदं स्थानिवदिति चानुवर्त्तते तच्च विशेषधर्माश्रितपरं शब्दाधिकारात् । नियमार्थं चेदं, तेन स्वरदीर्घौ न । अत्र मानं तु लोपे इत्येव सूत्रम् । अन्यथा वैयर्थ्यं स्पष्टमेव । वस्तुतस्तदपि मास्तु स्वरदीर्घयोरुक्तरीत्या वारणादिति मन्दोक्तमपास्तम् । तदाह—दिगिति । अत्र कैयटकौस्तुभयोर्यदुक्तम् अनेनैव न्यायेन "न धातुलोप" इत्यत्रापि धातुलोप इति बहुव्रीहिणैव सिद्धे आर्धधातुकग्रहणसामर्थ्यादार्धधातुकत्वपर्याप्त्यधिकरणतावच्छेदकधर्मत्वेन निमित्तता लभ्यते । एतेन यङ्लुक्यचोऽच्त्वेन हेतुत्वेऽपि तत्त्वेनाहेतुत्वाल्लोलुवादिसिद्धिरित्यपास्तम् । तेन धिविकृव्योर्नुमि विचि वल्निमित्ते वलोपे ऽकृतलोपे विचस्तत्रार्धधातुकत्वादिनाऽनिमित्तत्वान्नधात्वित्यप्राप्तया पुगन्तेति गुणे सुना समासे सौ हल्ङ्यादिलोपनलोपयोः सुधे सुधेनौ सुधेनः सुकः सुकर्णौ सुकर्ण इत्यादि सिद्धम् । गुणनि-

सरला ।

दूषयित्वेति । सुदृषत् प्रासादः इत्यादौ दीर्घापत्त्या दूषयित्वेत्यर्थः । वस्तुतस्तु तत्रापि "अनिनस्मन्" इति परिभाषया असत्वे वर्णत्वव्याप्यत्वस्यातिदेशेनानल्विधाविति स्थानिवद्भावस्य प्रत्ययलक्षणस्य च निषेधेनैव दोषवारणमिति वार्तिककारमतमपि सम्यगेवेति बोध्यम् ।

लुप्तप्रत्ययनिमित्तकाङ्गोद्देश्यककार्ये एवेति । लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना लुप्तप्रत्ययनिमित्तकाङ्गसंज्ञावत्पर्याप्तधर्मेण साक्षात्परंपरया वाऽवच्छिन्ना च योद्देश्यता तादृशोद्देश्यताके कार्ये प्रत्ययलक्षणं न भवतीति "न लुमताऽङ्गस्य" इति सूत्रार्थस्वीकार इति भावः । तेन राजपुरुषादौ भसंज्ञा 'परमत्रिपुत्रः' इत्यादौ त्रयादेशश्च न भवति । साक्षात् लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नत्वनिवेशात् 'उत्क्राम' इत्यादौ न दोष इति । तदाह—अत एवेति ।

तत्तु अव्ययानां प्रायेण निर्लिङ्गत्वाद् अव्ययीभावस्य क्लीबत्वेऽपि लिङ्गान्तराभा-

शब्दरत्नम् ।

**प्रायेणेति । विभक्तिप्रतिरूपकाणां लिङ्गयोगेऽपि त्रिषु सारूप्याभाव इत्याशयः ।**

भैरवी ।

दृश्यत एवेति वाच्यम्, "अव्ययादाप्सुपः" इति सूत्रस्थापग्रहणस्य प्रत्याख्यानात् सदृश-
भावप्रकाश ।

धेधे तु आद्ये "सौ च" इति दीर्घे तल्लोपयोः सुधी सुधिनौ सुधिन इति, अन्त्ये दीर्घे "उपधायाश्च" इतीत्वे रपरत्वे तल्लोपयोर्वोरिति दीर्घे सुकीः सुकीर्णौ सुकीर्ण इति च स्यात् । पठन्ति च—

सुधे सुधेवारिवधात्सुराणां सुका रणे लाघवतश्च रामः ।
विशेषणे द्वे य इहादिकर्त्तुर्वदेदधीती स हि कैयटीये ॥ इति ।

अरिवधात्सुराणां सुधेवामृतमिव सुधे सुष्ठु प्रीतिजनकः रणे लाघवतः स्वल्पोपायेनार्थादरीणां सुकश्च सुष्ठु हिंसकश्च रामो दाशरथिर्विजयते इति पूर्वार्धार्थः । यद्वा, सुष्ठु धीयतेऽस्मिन्निति सुधिः अधिकरणे किः हेसुधे हेविष्णो त्वं यतः अरिवधात्सुराणां सुधे सुष्ठु प्रीतिजनकः सुकः सुष्ठु शत्रुनाशको वा भवसि । वा विकल्पे समुच्चये वा, अतो वयं भवन्तमाश्रित्य रणे लाघवतः अनायासेन च गच्छामो रामो भक्षयामो वाऽर्थाच्छत्रूनित्यर्थः । इह पूर्वार्द्धे आदिकर्त्तुः रामादेर्द्वे विशेषणे कर्म हीतिनिश्चयेन स कथयेत् यः कैयटीये कैयटसम्बन्धिभाष्यव्याख्यानग्रन्थेऽधीती । भावक्तान्ताद् "इष्टादिभ्यश्च" इति कर्त्तरि इनौ "क्तस्येन्विषय" इति कर्मणि सप्तम्यां तदध्ययनकर्त्ता नान्य इत्युत्तरार्धार्थः । यद्वा हि यतः तत्राधीती अतः स एव वदेदित्यर्थः । सहकैयटीय इति पाठे कैयटीये विद्यमाने एवार्थाद्भाष्येऽधीतीत्यर्थः । यद्वा कैयटीयेन सह सहिते भाष्ये इत्यर्थ इति । तच्चिन्त्यम् । अत्र प्रत्ययग्रहणसामर्थ्यात्तथार्थलाभेऽप्यार्धधा-तुक इत्यस्य कैयटरीत्या तोतोर्त्तीत्यादिव्यावृत्त्या चारितार्थ्येन तत्र तथार्थग्रहे मानाभावात् "पूर्वसूत्रे आर्धधातुकग्रहणमनवकाशम्" इति "क्ङिति च" इतिसूत्रभाष्यविरोधाच्च । आवृत्त्यादिना तथार्थकल्पने तु न मानम् । किञ्च तथार्थकल्पने "यङ्लुक्क्यवलोपे" इतिवार्त्तिकस्य तदुदाहरणपरस्य 'जीरदानुः' इति तत्सूत्रभाष्यस्य वाऽसंगत्यापत्तेश्च । उक्तपद्यं तु अन्यथाऽपि सुयोज्यम् । तथाहि, हेसुधे उक्तव्युत्पत्त्या हेविष्णो त्वमरिवधात्सुराणां सुधेव अमृतमिव सुकाः ऋच्छतीति ऋगतिप्रापणयोः, विच्, सुकस्य अः सुकाः त्वमरिवधात्सुराणां सुधेव सुकाः विष्णो सुष्ठुसुखप्रापकः अतो भवन्तमाश्रित्येत्यादि प्राग्वत् । हीति का-काम् । अपितु केवलभाष्याध्ययनवानपि वदेत् । उक्तरीत्या कैयटस्य चासङ्गतत्वान्न तथा रूपे इमे किंतूक्तरीत्या यथाकथंचिन्निमित्तत्वादेव लोलुवादिसिद्धिरधीति तात्पर्यमित्याकलनीयं सूक्ष्मदृग्भिः ।

प्रायेणेत्यस्य कृत्यमाह—**विभक्तीति** । कस्याश्चित् कस्यचित् किंचित् रात्रौ सायमित्यादीनामि-त्यर्थः । **त्रिषु सारूप्येति** । एतेन परममूलं लिङ्गत्रययोगेऽपि सारूप्यप्रतिपादकं न लिङ्गत्रयाभावप्रति-पादकम् । तथासत्यलिङ्गा इत्यस्यैवौचित्यात् । अव्ययप्रकरणसमीपएव युष्मदादीनां प्रतिपादनौचित्याच्च "ङेप्रथमयोः" "स्वमोर्नपुंसकात्" इति सूत्रभाष्यवार्त्तिकाभ्यां "न षट्" इतिसूत्राच्च तेषां लिङ्गसत्ता-बोधनाच्च । तथाच सारूप्यं लिङ्गबोधकप्रत्ययानुत्पत्त्या रूपाविशेषरूपम् । "अलिङ्गे युष्मदस्मदी" इति भाष्यस्य पदान्तरसंनिधानं विना तन्मात्रात्तद्विशेषप्रतीतिरित्यर्थ इति न विरोधः । नैतादृशमव्ययं तस्य लिङ्गाभावात् । तत्प्रतिपादकसूत्राद्यनुपलब्धेः तदभावप्रतिपादकभाष्यवार्त्तिकाद्युपलब्धेश्चेति सूचितम् । एतेन प्रसादप्रकाशउभयसमर्थिताव्ययेति प्रक्रियोक्तिर्युक्तैव । "अव्ययादाप् सुपः" इत्यनेन "सदृशं त्रिषु लिङ्गेषु" इत्यनेन चाव्ययस्यापि लिङ्गयोगबोधनात् । एवं च तत्त्यागः परममूलकृतश्चिन्त्यः, तन्नित्यादि-हेतुरपि चिन्त्यः । सरूपा इत्यस्योक्तार्थकत्वेनलिङ्गाभावाप्रतिपादकत्वादिति खण्डनकृदुक्तं "सरूपा इत्युक्तार्थम्" । शब्दान्तरवाच्येऽर्थलिङ्गविशेषयोगेऽपि युष्मदादिना शब्दशक्तिस्वाभाव्यादलिङ्गस्य प्रति-पादनात् । एतच्चाव्ययानामप्युपलक्षणं, युक्तितौल्यात् । एतेनात्र प्राचेत्यादिमूलं प्रत्युक्तम् । "अव्यया-दाप्" इतिसूत्रेण सलिङ्गत्वबोधनाच्च" इति रत्नाकरोक्तं चापास्तम् । आप्पदस्य प्रत्याख्यातत्वात् सदृशमि-त्यादेर्लिङ्गाभावपरत्वाच्च हेतोः सारूप्याभावाशयकत्वमिति दिक् । **आशय इति** । अनेन वस्तुतस्तेषा-

वाच्योपेक्षितम् । वस्तुतस्त्विति । अर्थप्राधान्यबोधकस्य बहुवचनस्याभावात् गौणत्वेऽपि त्रयादेशो न्याय्यः अस्थ्याद्यनङ्वदिति भावः ।

अकारो वक्तव्य इति । तथा च बहुत्वाभावे औडुलोमिशब्द इकारान्तः । बहुत्वे तु अकारान्त उडुलोमशब्दोऽन्य एव । तस्य च इकारान्तेषु व्युत्पादनं प्रासङ्गिकमिति भावः । तथा चौडुलोमिशब्दस्य इदन्तस्य बहुत्वे अदन्तत्वमिति

---

शब्दरत्नम् ।

अर्थप्राधान्यबोधकस्येति । अर्थप्राधान्य एव प्रवृत्तिबोधकस्येत्यर्थः । बहुवचनस्येत्युपलक्षणम् । तद्बोधकाभावादित्यत्र तात्पर्यम् । गौणमुख्यन्यायस्तु पदकार्य एव न प्रातिपदिककार्ये । किं चाप्रसिद्धत्वरूपस्य वा गौणलाक्षणिकत्वस्य वा गौणत्वस्य तत्र ग्रहणम् । न चायं तथा । इतरविशेषणत्वेन उपसर्जनत्वं तु न गौणत्वम् । अत एव प्रियतिसेत्यादौ तिस्रादयो भाष्यकृतोदाहृताः । गौणत्वेऽपीति । उपसर्जनत्वेऽपीत्यर्थः ।

भैरवी ।

मित्यादेरपि लिङ्गसङ्ख्याकारकाभावपरत्वस्य वक्ष्यमाणत्वाच्च । ननु बहुवचनस्यार्थप्राधान्यबोधकत्वं प्राङ् निरस्तम् इति तेन विरोधोऽत आह—बहुवचनस्येति । तद्बोधकाभावात्—तद्बोधकस्य विहितविशेषणस्याभावात् । ननु गौणमुख्यन्यायेनैव तस्य गौणत्वेऽप्रवृत्तिरित्यस्य लाभो भविष्यतीत्यत आह—गौणमुख्येति । इदञ्च न्यायस्य प्राप्तिमभ्युपेत्य । वस्तुतस्तु सैव नेत्याह—किञ्चेति । वाशब्दः समुच्चये । तथा—गौणलाक्षणिकः । तादृशस्यैव गौणत्वस्य परिभाषाघटकत्वादेवोपसर्जनप्रतिषेधो वार्तिककृता कृतः । अत एव—तादृशस्यैव गौणत्वस्य परिभाषाघटकत्वादेव । नन्वेवं सति गौणत्वेऽपीति मूलविरोधोऽत आह—उपसर्जनेति ।

भावप्रकाश ।

मप्यलिङ्गत्वमेवेतिप्रायेणेतिव्यर्थमेवेति सूचितम् । बहुवचनस्यार्थप्राधान्याबोधकत्वादाह—अर्थेति । "षड्भ्य"इत्यत्रमूलोक्तरीत्येति भावः । एतेन तथा रत्नाकरदण्ड्याद्युक्तमपास्तम् । ननु बहुवचनस्य तद्बोधकत्वस्य प्रागुक्तत्वेन विरोधोऽत आह—बह्विति । विहितविशेषणादेरिति भावः । एवञ्च बहुवचनपदं व्यर्थमेव, तदाह—तद्बोधकेति । त्रेरित्यस्य पञ्चम्यन्तत्वे तथा स्यात्, तदेव न, "निर्जा त्रयाणाम्"इति निर्देशात् । अत एव न तान्त आदेशः किन्तु षष्ठीति न तद्गमकं, साहचर्यं त्वसार्वत्रिकं, सूत्रान्तरस्थतदाश्रयणे दृढतरमानाभावश्चेति भावः । नन्वेवमपि गौणमुख्यन्यायेनात्र न स्यादत आह—गौणेति । स्पष्टं चेदं सर्वमन्यत्र । इदं च न्यायप्राप्तिमभ्युपेत्य । वस्तुतस्तदेव नेत्याह—किञ्चेति । अत एवोपसर्जनानां सर्वनामत्वं नेति वार्तिकोक्तिः । अन्यविशेषणतामात्रेणोपसर्जनत्वे तु तदसङ्गतिः स्पष्टैव । शुद्धलक्षणानिरासाय गौणेति । वाशब्दः समुच्चये, "वा स्याद्विकल्पोपमयोः" इति कोशात् । अत एवसदृशलाक्षणिकाग्निसोमपदयोर्द्वन्द्वे तन्नामकावित्यर्थके च नेत्वषत्वे । नचेति । नहीत्यर्थः । अयं तथेति । अन्यपदार्थविशेषणत्वेनोपसर्जनीभूतोऽपि त्रिशब्दो न निरुक्तोभयविधगौण इत्यर्थः । त्रित्वसंख्यारूपमुख्यार्थप्रतिपादकस्यैवेतरविशेषणत्वादिति भावः । ननूपसर्जनत्वसमनियतमेव गौणत्वमस्तु, मास्तु च तद्वार्त्तिकं, लाघवात्, अत आह—अत एवेति । ईदृशगौणत्वाङ्गीकारादेवेत्यर्थः । एतेन त्रेः सम्बन्धिन्यामीतिविज्ञानाद्गौणेनेति प्रकाशोक्तयुक्तिरपास्ता । अत्रापि तथार्थापत्त्या भाष्यासङ्गत्यापत्तेः । वषम्ये तु न बीजमिति भावः । निरुक्तगौणत्वाभावादाह—उपेति । एतेन तथा प्रकाशरत्नाकरदण्ड्याद्युक्तमपास्तम् । यत्तु अन्यबहुवचनान्तमदन्तेष्वनुक्त्वा तत्रैव नित्यबहुवचनान्तोऽयमित्यनुक्त्वा च इदन्तेषु यत्त-

सरला ।

पदकार्य एवेति । तत्त्वं च स्त्रीत्वानिमित्तकत्वे सति भविक्त्यनिमित्तककार्यत्वम् ।

न भ्रमितव्यम् ।

इति इदन्ताः ।

किदिति । तेन "आतो लोप इटि च" इत्यालोप इति भावः । ययीपप्या-दय इति । यत्तु प्राचोक्तम्—एवं देवयज्यतिलक्ष्म्यादय इति । तन्न, देवान् यज-त इति विग्रहे "इन्" इत्यौणादिकसूत्रेण ह्रस्वान्तस्यैव देवयजिशब्दस्योज्ज्वल-दत्तादिभिः साधितत्वात् । "अद्मो द्विजान्देवयजीन्निहन्म" इति भट्टिप्रयोगस्य ह्रस्वविषयकतयैव व्याख्यातत्वात् । न च यजेर्दीर्घ ईप्रत्ययः प्रतिपदोक्तोऽस्ति । बहुलग्रहणात्कल्प्यत इति चेद् ? भवेदेवं, यद्यनन्यथासिद्धं कल्पकमुपलभ्येत । वेदेऽपि ह्रस्व एव प्रयुज्यते—"आयजिं त्वा मनवे जातवेदसे" इति । अतिल-क्ष्मीशब्दस्य तु नदीत्वाद् ह्रस्वे आडागमे नुटि आमि च कृते महदेव वैलक्षण्य-मिति न वातप्रमीसाम्यम् । एतच्च मूले एव स्पष्टीभविष्यति । क्विबन्तेति । एतच्च 'माङ् माने शब्दे च 'इति धातौ माधवग्रन्थे स्पष्टम् । बहुश्रेयसीति । "ईयसश्च"

---

शब्दरत्नम् ।

न भ्रमितव्यमिति । एतद्भ्रमनिवृत्त्यर्थमेवात्रास्य व्युत्पादनमिति भावः ।

ह्रस्वविषयकतयैवेति । जयमङ्गलायामिति शेषः । माङ् माने इति । "घुमा-स्था" इतीत्वविधायकसूत्रस्थम् 'अवकारादौ' इति वार्तिकं भाष्ये प्रत्याख्यातमिति ईत्वं

भैरवी ।

मूले अन्य एवेति । इन्प्रत्ययान्ताकारप्रत्ययान्तयोर्भेदस्य स्पष्टत्वादिति भावः । भ्रमनि-वृत्त्यर्थमिति । प्रत्ययविशेषोत्पत्त्यभिधानेन विशेषदर्शनस्य प्रतिपादनात्तादृशभ्रमनिवृत्त्यर्थ-मित्यर्थः ।

ननु माधातोः क्विपि "ईत्वमवकारादा" इति वार्त्तिकादात्वं दुर्लभम् , ङित्साहचर्यात्कि-दपि श्रूयमाण एव निमित्तत्वेन गृह्यतेऽत एव शंस्था इत्यत्रेत्वन्नेति केचित् । तन्न युक्तमि-त्याशयेनाह मूले—एतच्चेति । ईत्वमवकारादावितिवार्तिकविरोधम्परिहरति—घुमेति । वस्तु-तस्तु "ईत्वमवकारादौ" इति वार्तिकस्य पावान् इत्यादेर्वनिपा साधनेन तत्प्रत्याख्यानपर-

भावप्रकाश ।

दुक्तं, तदनवधानात् इति खण्डनकृत् तत्खण्डयति—एतदिति । अन्यथा रामहरिशब्दाद्युपन्यासेनादिद-न्तान्यकृत्तद्धितान्तवदयमप्युपन्यस्तप्राय इति विशिष्यास्योपन्यासोऽयुक्त एव स्यादिति तदर्थमेव तत्रान-वधानेनेति भावः । जयेति । एतेन बाहुलकादौणादिक इप्रत्ययः, तेनेयङ् न; उज्ज्वलदत्तेन तु ह्रस्व उक्तः भट्टिप्रयोगस्तु साधारण इति प्रकाशोक्तमपास्तम् । यत्तु माधातोः क्विपि इत्वं दुर्लभम् अवकारा दावित्युक्तेः प्रत्ययलक्षणसूत्रस्य नियमार्थत्वाच्च, स्थानिवत्त्वस्यानल्विधाविति निषेधाच्च, ङित्साहचर्येण श्रूयमाणे एव किति इत्वप्रवृत्तिरित्यर्थस्य भाष्यादिसंमतत्वाच्च । अत एव संस्थाशब्दे नेत्वमित्यरुचिसूच-नाय आह—एतच्चेत्यादि । 'मीङ् माने' इत्यतः क्विपि न दोष इति ध्वनयितुं धातुविशेषोक्तिरिति मा-

सरला ।

प्रत्याख्यातमिति । 'वसां वसापावानः पिबत' 'घृतं घृतपावानः पिबत' इत्यादिषु 'पावानः' इत्यादीनां वनिपा सिद्धिमाश्रित्य प्रत्याख्यातमिति ततश्च 'वातप्रमीः' इत्यत्रेत्वासिद्धिरिति भावः ।

इति न कप्। नाप्युपसर्जनह्रस्वः, 'ईयसो बहुव्रीहेर्न' इति निषेधात्।

---

शब्दरत्नम्।

सुलभम्। शंस्थाशब्दे तु भाष्यप्रयोगादेवेत्वाभावः। ततो विजेवेत्यन्ये। न च तेनेत्वेऽपि तस्यासिद्धत्वात्कथं यणिति वाच्यम्। क्वौ ईत्वं, विभक्तौ यणादेश इति व्याश्रयत्वादिति बोध्यम्। न कबिति। समासान्तविधौ लिङ्गविशिष्टपरिभाषाभावस्य "ङ्याप्प्रातिपदिकात्" इति सूत्रे भाष्ये उक्तावप्यस्य तन्निषेधकत्वेनात्र प्रवृत्तिरस्त्येव। "गोस्त्रियोः"

भैरवी।

भाष्यस्य च फलैक्याय पादिधातुभ्यः क्विपोऽनभिधानमेव युक्तमित्याह—तत इति। पादिभ्य इत्यर्थः। ननु "असिद्धवदत्राभात्" इति यणादेशे कर्तव्ये ईत्वस्यासिद्धत्वं प्राप्नोतीत्यत आह-नचेति। व्याश्रयत्वादिति। ननूभयोरप्यङ्गसम्बन्धित्वमिति कथं व्याश्रयत्वमिति चेन्न, प्रत्यासत्त्यैकनिमित्ताङ्गसञ्ज्ञासम्बन्धित्वमेवोभयोस्तत्र व्याश्रयत्वाभावः, इह तु न तथेत्याशयात्। अत एव विगणय्येत्यादावयादेशे कर्तव्येऽतो लोपो नासिद्ध इति भाष्यं सङ्गच्छते। ननु समासान्तविधौ लिङ्गविशिष्टपरिभाषाया अप्रवृत्त्या 'बहुश्रेयसी'इत्यत्र ईयसन्तोत्तरपदकत्वाभावेन कथं तेन न कबित्युक्तमत आह—समासान्तेति। अस्य—"ईयसश्च"इत्यस्य। तन्नि-

भावप्रकाश।

न्यास्तत्खण्डयति—द्युमेति। सुलभमिति। वार्णादाङ्गन्यायेनापृक्तलोपात्प्रागिति शेषः। एवं च मान्योक्तदोषत्रयानवकाशः। अत एवाह—प्रयोगादिति। इदं च हरदत्तादिरीत्या। उक्तवचनपाठे 'सुपावा' इत्यादि न स्यात्। तस्माद्भाष्यप्रयोग.न्नेत्वमिति "स्थः क च"इत्यत्र तेनोक्तेः। एवं च मीङ इव माङोऽपि रूपं निर्बाधमिति सिद्धान्तसंमतिबोधकमेव मूलं न तत्सूचकमिति भावः। वस्तुत उक्तवार्तिकस्य पावान इत्यादेर्वनिपा सिद्धिरिति तत्प्रत्याख्यानभाष्यस्य च फलैक्याय द्व्यादितः क्विपोऽनभिधानमावश्यकमित्याशयेनाह—तत इति। स्थाधातोरित्यर्थः। एतेन चात् क्विबिति "स्थः क च"इत्यत्रत्यकौमुदीचिन्त्येति ध्वनितम्। एवं च न माङ्स्तद्रूपमित्यरुचिसूचकमेव मूलमिति माङ्धात्वभिप्रायं परममूलमितिभावः। ननु पूर्वमतेऽपि "एरनेकाचः" इयि यण् दुर्लभः तत्रेत्वस्याभीयासिद्धत्वादिति मान्यास्तत्खण्डयति सिंहावलोकनन्यायेन नचेति। असिद्धत्वात्—आभीयासिद्धत्वात्। व्याश्रयत्वादिति। अतएव "विगणय्य' इत्यादौ "अतो लोपो नासिद्धो अयादेशे" इति भाष्यं सङ्गच्छते। एतेन क्विबन्तवातेति परलमूलस्य ईप्रत्ययान्तवातप्रमीशब्दादाचारक्विबन्तात्कर्तरि क्विबन्तस्य तस्येत्यर्थः। तेन वार्तिकेन निषेधात्कथमीत्वमिति नाशङ्क्यमिति रत्नाकरदण्डिमन्दाद्युक्तमपास्तम्। उक्तरीत्या माङा मीङा वा निर्वाहे तावत्पर्यन्तगमने बीजाभावात्। विधाविति। समासान्तसम्बन्धिविधावित्यर्थः। "समासान्तेषु च" इति भाष्यस्य तत्प्रकरणेष्वित्यर्थः। एवं चात्रापि तदप्रवृत्त्या ईयसन्तोत्तरपदत्वाभावात्कथं निषेध इति भावः। समासान्तकर्मकविधाविति तदर्थः। उक्तभाष्यस्य तेषु विधीयमानेष्वित्यर्थः। अत एव 'राजाहः, मद्रराजः, मद्रराज्ञी' इत्युदाहृतं भगवतेत्याशयेन समाधत्ते—अस्येति। "ईयसश्च" इत्यस्येत्यर्थः। एवमग्रेऽपि। एतेन "ईयसश्च" इति निषेधान्न कबिति मूलार्थः सूचितः। प्रत्ययग्रहणपरिभाषया ईयसन्तग्रहणेन बहुव्रीहिप्रातिपदिकपदानुवृत्त्या च सामान्यविशेषरूपाभ्यां प्रातिपदिकबोधकशब्दग्रहणसत्त्वात् परिभाषाप्रवृत्त्या ङ्यन्तोत्तरपदकबहुव्रीहौ ईयसन्तोत्तरपदकत्वलाभ इति भावः। नन्वत्रैव किं विनिगमकम् उक्तोदाहरणभाष्यस्योपलक्षणत्वेनापि सुयोजत्वादतो मध्य-

सरला।

भाष्यप्रयोगादेवेति। वस्तुतस्तु 'ईत्वमवकारादाविति वाच्यम्' इत्यस्य प्रकृतिविशेषोद्देश्यकक्विपि परत एव प्रवृत्तिः स्वीक्रियते इति 'शंस्थाः' इत्यत्र "स्थः क च" इति चकारेण स्थाधातोः क्विपो विधानेन वार्तिकप्रवृत्त्या नेत्वम्। 'वातप्रमीः' इत्यत्र तु "क्विप् च" इत्यनेन क्विपो विधानात्तत्र च प्रकृतिविशेषोपादानाभावेन वार्तिकाप्रवृत्त्या ईत्वप्रवृत्तौ न किञ्चिद्बाधकमिति बोध्यम्।

"**यूस्त्र्याख्यौ**"। ईदूदन्ताविति। इह वर्णयोरेव संज्ञेत्यपि पक्षोऽस्ति "आच्छीनद्योः" इति सूत्रस्वरसात्। तयोस्त्र्याख्यत्वं तु ङ्यादिषु स्वतः क्वचित्स्त्रीवाचकवर्णसमुदायघटकत्वेन प्रवेशात्। शक्तिपर्याप्त्यधिकरणत्वस्याविवक्षितत्वात्।

**शब्दरत्नम्।**

इति सूत्रे बहुश्रेयसीति भाष्योदाहरणाद् 'अनन्तरस्य' इति न्यायं बाधित्वा "नद्यृतश्च" इत्यस्याप्ययं निषेध इति भावः।

**ङ्यादिष्विति**। बहुवचनं प्रयोगभेदाभिप्रायेण। **शक्तीति**। स्त्रीत्वनिरूपितशक्तीत्यर्थः। तेन लक्ष्म्यादिशब्दसङ्ग्रहः। तदन्तसंज्ञापक्षे तु 'शीनद्योः' इत्यादौ नदीशब्द-

**भैरवी।**

बेधकत्वेन—समासान्तनिषेधकत्वेन। एवञ्च समासान्तकर्मकविधितात्पर्यकत्व एव भाष्यस्य प्रवृत्तिरिति तात्पर्यम्। "ईयसश्च" इत्यत्र बहुव्रीहिपदानुवृत्त्या ईयसन्तोत्तरपदकस्य लाभे लिङ्गविशिष्टपरिभाषया ईयस्ग्रहणेनेयसीशब्दस्यापि ग्रहणेन निषेधस्य प्राप्तिः। "ईयसश्च" इत्यस्योभयनिषेधकत्वे साधकमाह—गोस्त्रियोरितीति।

यूस्त्र्याख्यावित्यनेन ईदूदन्तयोर्नदीसञ्ज्ञा भवतीत्याशयेन सूत्रम्परममूले व्याख्यातम्—ईदूदन्ताविति। वर्णयोरेव सञ्ज्ञेति पक्षाभिप्रायेणाह मूले—इह वर्णयोरेवेति। तयोः—ईदूतोः। स्त्र्याख्यपदस्य स्त्रियमाचक्षाते स्त्र्याख्यौ, तयोः स्त्रीत्वद्योतकत्वमतेऽपि सिद्धान्तिसम्मते द्योतनया स्त्र्याख्यत्वं बोध्यम्। स्वत इति। "स्त्रियाम्" इत्यधिकृत्य विधानात्। क्वचित्—श्रीभ्रूशब्दादौ। शक्तीति। स्त्रीत्वनिरूपिता या शक्तिस्तत्पर्याप्त्यधिकरणत्वस्येत्यर्थः। तेन—पर्याप्त्यधिकरणत्वानिवेशेन। नच ङीबादेर्द्योतकत्वमते तत्र शक्तिर्नास्त्येवेति शक्तीत्यसङ्गतमिति वाच्यम्? बोधजनकत्वस्यैव शक्तिरूपतया लक्षणाव्यञ्जनयोरप्यत्रैवान्तर्भावात्। तदन्तसञ्ज्ञापक्षे—ईदूदन्तयोर्नदीसञ्ज्ञापक्षे। नचायम्पक्षो निर्मूल इति शङ्क्यम्? उत्तरसूत्रेऽ-

**भावप्रकाश।**

मणिन्यायेन हेतुमाह—**गोस्त्रियोरिति**। **नद्यृतश्चेति**। न च बहुव्रीहेर्नद्यन्तत्वाभावात्तदप्राप्तिरेवेति वाच्यम्—"प्रत्ययग्रहणे" इत्यस्याः प्रत्ययमात्रग्रहणे प्रवृत्त्या "उगितश्च" इत्यत्रेवात्राप्रवृत्त्याक्षतेः बहवो दण्डिनो यस्यामित्याद्यर्थके 'बहुदण्डिनी' इत्यादौ कबापत्तिवारणाय नद्यन्तप्रकृतिकसुबन्तोत्तरपदकेत्यस्य सिद्धान्तितत्वाच्च। न च तत्र नद्यन्तस्य बहुव्रीहित्वम् लिंगविशिष्टपरिभाषया सत्त्वात्। स्पष्टं चेदं "बहुव्रीहेरूधसः" इत्यत्र भाष्ये। एवं चोक्तभाष्योदाहरणात्तस्यापि निषेध आवश्यकः। अन्यथा नित्यकबापत्तिर्दुर्वारैवेति भावः। "न संज्ञेयसोः" इत्येव वाच्ये योगविभागसामर्थ्यात्तस्यापि निषेध इत्यपि बोध्यम्। ङीबादिष्विति ङ्यादाविति वा वाच्ये ङ्यादिष्वित्युक्तौ मदुक्तप्रकारेणैव बहुत्वोपपत्तिर्न मूलोक्तप्रकारेणेति सूचयितुमाह—**बह्विति**। एतेन तथा रत्नाकरदण्ड्याद्युक्तमपास्तम्। शक्तीत्यस्य साकाङ्क्षत्वादाह—**स्त्रीत्वेति**। स्त्रीत्वावच्छिन्ननिष्ठवाच्यतानिरूपितवाचकतापरपर्यायादिशक्तीत्यर्थः। **तेन**—क्वचिदित्यादिमूलोक्तार्थेन। नन्वयुक्तमेतत्, ङ्यादावपि द्योतकतापक्षस्य सिद्धान्तितत्वेनान्यरीत्यैव तत्त्वात्पूर्वापरविरोधाच्च। न च तथैवास्तु स्त्र्याख्यावित्यस्य लक्षणापत्तेः। एतेन "तदन्तपक्षेऽपि वर्णस्य संज्ञा स्त्रियामित्यधिकारे ङीबादेर्विधानाद् व्यपदेशिवद्भावेनेकारान्तत्वाच्च। एतेन 'वर्णयोरेवेत्येवकारो व्यर्थः' इति भ्रान्तोक्तमपास्तम्। न च मुख्येकारान्तत्वमादाय स्त्रियां लोके प्रयोगात्तदन्तस्यापि स्यादिति वाच्यम्। अनन्यथासिद्धफलाभावात्तदप्रवृत्तेः। अस्माकं तु "आच्छीनद्योः" इति सूत्रबोधितमसाधारणं फलमस्ति। अपिस्तु तदन्तपक्षरहितवर्णसंज्ञापक्षसमुच्चायकः" इति मान्योक्तिः प्राचामनुरोधेनेति ध्वनितम्। ससहायत्वेन व्यपदेशिवद्भावाप्रवृत्तेश्चात आह—**तदन्तेति**। परममूलोक्ते इत्यर्थः। न चायं निर्मूलः उत्तरसूत्रे स्त्रिया इति वाच्येऽस्त्रीतिप्रथमान्तनिर्देशस्यैव मूलत्वात्। लक्षणा चेत्सममत्रापि; तदाह—**शीनद्योरिति**। किञ्चाङ्गत्वात्तदन्तविधौ नद्यन्तादित्यादिव्यवहारे किं बाधकम्।

तेन नद्यन्तादित्यादिव्यवहारो न विरुध्यते । एवं घिसंज्ञायामपि इउवर्णौ तदन्तं वा घिसंज्ञि इति पक्षद्वयं बोध्यम् । वर्णसंज्ञापक्षे 'असखि' इत्यस्य सखिभिन्नस्यावयव इत्यर्थो न तु सखिशब्दावयवं वर्जयित्वेति । तेन 'अतिसखिना' इत्यादि निर्बाधमित्यवधेयम् । पूर्वमिति । वृत्तेः प्रागित्यर्थः । वक्तव्यमिति । संज्ञाया यथोद्देशप्रवृत्तौ न्यायसिद्धमिदं, कार्यकालत्वे तु वाचनिकम् ।

शब्दरत्नम् ।

स्य तदवयवे लक्षणा । नद्यन्तादित्याद्यप्यतिलक्ष्म्याद्यर्थमावश्यकं- लक्ष्मीशब्दे व्यपदेशिवद्भावेन तत्त्वं बोध्यम् । इउवर्णाविति । अत एव 'घ्यन्तादजाद्यदन्तं विप्रतिषेधेन' इति सङ्गच्छते । न त्वित्यादि । इदं हरदत्तानुरोधेन । न्यायसिद्धमिति । अन्तरङ्गत्वात्पूर्वं प्रवृत्तनद्यन्ततयैव समुदाये तत्संज्ञत्वात्कार्यसिद्धिरिति भावः । वाचनिकमिति । स्त्रीत्वविशिष्टार्थमात्रबोधकस्यैव संज्ञेत्यभिमानेनेदम् । जहत्स्वार्थावृत्तित्वाभिमानेन वा । भाष्यकृता त्वजहत्स्वार्थायामवयवस्य नित्यस्त्रीत्वविशिष्टार्थबोधजनकत्वेन तस्य संज्ञायां 'कुमार्यै ब्राह्मणाय' 'खरकुट्यै ब्राह्मणाय' इत्यादौ क्विलुब्विषये आनुपूर्व्यैक्येन भेदाग्रहात्समासे नद्यन्तत्वात्कार्यसिद्धिमाश्रित्य प्रत्याख्यातमिदम्—'अवयवस्त्रीविषयत्वात्सि-

भैरवी ।

स्त्रीतिसामानाधिकरण्येन निर्देशस्यैव मूलत्वात् । नन्वस्मिन्पक्षे "ह्रस्वनद्याप" इति सूत्रव्याख्यानावसरे यदुक्तन्नद्यन्तादिति तद्विरोध इत्यत आह—नद्यन्तेति । तत्त्वम्—नद्यन्तत्वम् । इउवर्णयोर्घिसञ्ज्ञायां सम्मतिमाह—अत एवेति । वर्णयोर्घिसञ्ज्ञास्वीकारादेव । इदम्—नत्वित्यादिकथनम् । एतद्व्याख्यानबीजम्प्राक् प्रतिपादितम् । पूर्वं प्रवृत्तेति । अर्थान्तरसङ्क्रमात्प्राक् प्रवृत्तेत्यर्थः । इत्यभिमानेनेति । अस्य तु समुदायघटकतया पुम्बोधकताऽपीति न तन्मात्रबोधकत्वमित्याशयः । जहदिति—पदद्वयेपीऽत्यादिः । अभिमानोक्तिबीजम्प्रकटयति-भाष्यकृतेति । यत्र रूढिर्विरोधिनी तत्रैव जहत्स्वार्थेति तेषाम्भावः । अवयवस्य—कुमारीश्रेयसीशब्दयोः । कुमार्यै इति । अत्र कुमारीमिच्छन्कुमारीवाऽऽचरन्ब्राह्मणः कुमारी क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप् । खरकुट्यै इति । खरकुटीवेत्यर्थे इवार्थे "संज्ञायाम्" इति कनो "लुम्मनुष्ये" इति लुप् । अत्र शास्त्रीयोपसर्जनत्वाभावान्न "गोस्त्रियोः" इति ह्रस्वत्वम् । पञ्चम्यन्तद्वयस्य कार्यसिद्धावन्वयः । समासे—बहुश्रेयसीत्यादिसमासे । यथा प्रत्याख्यातं तम्प्रकारमाह—अवयवेति । एतस्य व्याख्याऽवयवोऽत्र स्त्रीविषयस्तदाश्रया नदीसंज्ञा भविष्यतीति भगवता

भावप्रकाश ।

तत्र फलाभावं निराचष्टे—नद्यन्तादिति । यत्तु नद्यन्तादित्यादिमूलस्य नद्यन्तादित्युक्त्वा दत्तानि कुमारीणामित्याद्युदाहरणानि न विरुध्यन्ते इत्यर्थ इति मान्यास्तदपि नेत्याह—लक्ष्मीति । तत्त्वम्—नद्यन्तत्वम् । वर्णसंज्ञापक्षे बीजकथनेन युक्तत्वमत्र ध्वनयति—अत एवेति । इदमिति । प्रतिपादितमधस्तात् । पूर्वेति । अर्थान्तरसंक्रमात्प्राग्विद्यमानं नित्यस्त्रीत्वमादाय प्रवृत्तेत्यर्थः । अकृतेति तु अनित्या नास्त्येवेति भावः । जहदिति । पदद्वये इति भावः । एवं चार्थवत्त्वाभावेन स्त्र्याख्यत्वस्य सुतरामभावात्सूत्राप्राप्ताविदमिति भावः । उभयत्र अभिमानपदसूचितामरुचिमाह—भाष्येति । अवयवस्येति । कुमारीश्रेयसीशब्दादेरित्यर्थस्तस्य तदा नित्यस्त्रीवाचकत्वेन वृत्तावपि विशेषणतयेति शेषः । कुमार्यै इत्यादि । कुमारीमिच्छन् वाऽऽचरन्नित्यर्थे क्यचि आचारक्विपि वा कर्त्तरि क्विप् । खरकुटीवेति इवार्थे "संज्ञायाम्" इति कनो "लुम्मनुष्ये" इति लुप् । "गोस्त्रियोः" इति तु न । पारिभाषिकस्यैवोपसर्जनस्य तत्र ग्रहणात् । समासे—बहुश्रेयसीत्यादिसमासे त्वित्यर्थः । पञ्चम्यन्तद्वयं कार्यसिद्धावन्वेति । इदम्—प्रथमेतिवार्त्तिकम् । तदेवाह—अवयवेति । एवञ्चोभयथाऽपि वार्त्तिकं मास्तु । अत एव

"अचि श्नु" ॥ इह य्वोरिति धातोरेव विशेषणं न तु श्नुभ्रुवोरव्यभिचाराद् इत्याह–इवर्णोवर्णान्तधातोरिति । श्नुप्रभृतीनामिवर्णोवर्णयोरिति व्याख्याने तु इयङुवङोर्ङित्त्वं व्यर्थं वैयधिकरण्यं च दोषः। च्चिपति अद्युतत् दिदि-

शब्दरत्नम् ।

द्धम्' इति । तन्मात्रबोधकत्वनिवेशे न मानम् । यौगिकेषूत्तरपदे जहत्स्वार्थत्वाभावश्चेति तदाशयः । अवयवशब्देनात्र वृत्तिप्रकृतिभूतशब्दग्रहणम् । अत एव क्यजाद्यन्ते न दोषः । तत्रापीच्छादिविशेषणतया कुमारीशब्दादेर्नित्यस्त्रीलिङ्गार्थबोधकत्वात् ।

श्नुप्रभृतीनामिति । तदन्ताङ्गानामित्यर्थः । दोष इति । सामानाधिकरण्ये विशेषणविशेष्यभावमात्रम् । वैयधिकरण्ये तु भेदसम्बन्धः सचेति गौरवं दोष इत्यर्थः ।

भैरवी ।

कृता । अत्र भविष्यतीति कथनेन कार्यकालेऽपि सा भविष्यतीति ध्वनितम् । यदि यथोद्देशपक्ष एवाभिमतः स्यात्तदाऽवयवोऽ नदीसंज्ञोऽस्तीत्येव वदेत् । एवं व्याख्यानेनोत्तरपदे जहत्स्वार्थत्वाभावः स्पष्ट एव । नन्ववयवत्वस्य समुदायसापेक्षत्वेन समासावयवसङ्ग्रहेऽपि कुमार्यै इत्यादेः कथं सङ्ग्रहो ऽत आह—अवयवशब्देनेति । शब्दग्रहणमिति । शब्दसामान्यस्य ग्रहणमित्यर्थः । क्यजाद्यन्ते-प्रागुक्ते कुमार्यै इत्यादौ । इच्छादीति । आदिपदेनाचारपरिग्रहः । एतेन कुमाय खरकुट्य ब्राह्मणायेत्यादाववयवस्य नित्यस्त्रीलिङ्गस्यानुपलम्भान्न सूत्रेण नदीसंज्ञाप्राप्तिः, कार्यकालपक्ष इति यथोद्देशपक्षाभिप्रायक एवायं ग्रन्थ इत्यपास्तम् ।

तदन्ताङ्गानामिति । एतेन प्रक्रान्तस्याङ्गस्येत्यस्य विशेष्यता सूचिता । तेन सुभ्रुवावित्यादिसिद्धिः । मूले वैयधिकरण्यन्दोष इत्येवाभिहितन्नत्वत्र साधकमभिहितमिति निर्बीजाभिधानमयुक्तमित्याशङ्कावारणायाह—सामानेति । मात्रमिति । एतेन विशेष्यविशेषणभावनियामकसम्बन्धान्तरस्य व्यवच्छेदः कृतः । भेदसम्बन्धः—विशेषणविशेष्यभावनियामकः कश्चन सम्बन्धः । सच–विशेषणविशेष्यभावश्च । एवंचावयवावयविभावाद्यनपेक्षत्वेन सामानाधिकरण्येनार्थबोधकसामग्रयास्तत्संसर्गप्रकारत्वघटिततात्पर्यज्ञानानपेक्षत्वेन भिन्नविषयकप्रत्यक्षप्रतिबन्धकतायां लाघवमिति ध्वनितम् । ननु तात्पर्यज्ञानस्य नानार्थस्थल एवापेक्षा नतु सर्वत्रे-

भावप्रकाश ।

अवयवोऽत्र स्त्रीविषयस्तदाश्रया नदीसंज्ञा भविष्यतीति व्याख्यातं भगवता । कार्यवेलायामपि भविष्यतीति तदर्थः । एतेन यथोद्देशेन इदमिति कैयटरीतिश्चिन्त्या । तथा सति नदीसंज्ञाऽस्तीति वदेत् इति भावः । तन्मात्रेति । इदमुपलक्षणं प्राधान्येन तद्बोधकत्वनिवेशाभावस्यापि । उत्तरपदेति । अत एव तत्र पक्षे राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोतीति समर्थसूत्रभाष्यं सङ्गच्छते । नन्वेवमपि क्विबन्तकुमारीशब्दे कार्यकालपक्षे नदीकार्यप्रवृत्तिसमये नित्यस्त्रीलिङ्गरूपावयवस्य पृथक्तयाऽनुपलभ्यमानत्वेन सूत्रेण नदीसंज्ञा दुर्लभेति वाचनिकत्वमेव युक्तमिति मान्यास्तत्खण्डयति--अवेति । शब्देति । शब्दमात्रेत्यर्थः । तेनावयवत्वव्यवच्छेदः । क्यजाद्यन्ते--प्रागुक्ते कुमार्यै इत्यादौ । इच्छादीति । आदिना आचारादिपरिग्रहः ।

सुभ्रुवावित्यादिसिद्ध्यर्थत्वादङ्गाधिकारस्थत्वाच्चाह--तदन्ताङ्गेति । एतेन तथा रत्नाकराद्युक्तमपास्तम् । ननु न वैयधिकरण्यस्य दोषत्वं, दूषकताबीजाभावात् समानाधिकरण्यतोऽत्र गौरवाभावात्, तत्त्वेन दुष्टत्वे उच्छेदापत्तेश्च । सम्भवतीतिन्यायसंचाराभिप्रायकत्वे तु दोषपदमधिकमत आह--सामानेति । विशेषणविशेष्येति । मात्रपदेनाभेदव्यवच्छेदः, तस्य सम्बन्धत्वादिति भावः । भेदेति । अवयवावयविभाव इत्यर्थः । सचेति । विशेष्यविशेषणभावसम्बन्धश्चेत्यर्थः । इति गौरवमिति । इत्येवमुभयकल्पनया गौरवं ततोऽत्र पक्षे दोष इत्यर्थः । एवञ्च न तत्त्वेन दोषत्वम्, न वा तन्न्यायसंचारोऽ-

वतुः ऊयतुः इत्यादौ चातिव्याप्तिः। तद्वारणाय इवर्णोवर्णयोरच्परत्वेन विशेषणे तु क्लिष्टतेति भावः। आन्तरतम्यादिति। स्थानत इति भावः।

'एरनेकाचः"। "अचि श्नुधातु" इति सूत्रे द्वन्द्वनिर्देशेऽपि धातुरेवेह संबध्यते नतु श्नुभ्रुवौ, तयोरिवर्णासम्भवात्। धातुग्रहणं चावृत्त्या उभयोर्विशेषणं संयोगस्य चाङ्गस्य चेति व्याचष्टे—धात्ववयवसंयोगेत्यादि। तत्र धातुना संयोगस्य विशेषणादिह यण्—उन्न्यौ, उन्न्यः। अङ्गविशेषणन्तु 'हरिम्, हरी, हरीन्' इत्यादिसिद्धये।। यदि हि धातुनाऽङ्गं न विशेष्येत तर्हि इहापि 'प्रद्ध्यं,

---

शब्दरत्नम्।

दिदिवतुरिति। अत्र यणापत्तिस्तत्रापि तद्रीत्या वैयधिकरण्यात्। यदि यण्विधौ सामानाधिकरण्यमेव तदेयङ एवापत्तिः। न चैषु लोपेन निर्वाहः। प्रत्ययनिमित्तेयङादेरसिद्धत्वात्। अनित्यत्वात्तदभावेऽप्याह—ऊयतुरिति। क्लिष्टतेति। अजादिप्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वादिति भावः।

उभयोर्विशेषणमिति। व्याख्यानाल्लक्ष्यानुरोधाच्चैकदेशान्वयेऽपि सौत्रत्वाद् वृत्तिरिति भावः। उन्न्याविति। अत एव स्वरपूर्वा पदपूर्वा चोपधा यस्येवर्णस्य तस्य यणित्यर्थकं 'स्वरपदपूर्वोपधस्य' इति वार्त्तिकं सङ्गच्छते। उक्तोपायेन प्रत्याख्यातमित्य-

भैरवी।

त्यतस्तथाऽन्वये दोषमप्याह—क्षिपतीत्यादिना। अत्र यणापत्तिरिति। एतेन पूर्वलक्ष्ययोरियङापत्तिर्ध्वनिता। ननु यण्विधाविवर्णान्तस्याङ्गस्येत्येव व्याख्याऽस्तीत्यत आह—तत्रापीति। "सम्भवति सामानाधिकरण्ये" इति न्यायानुसारेणाह—यदीति। लोपेन निर्वाह इति। जातेऽपीयङादेशे "लोपो व्योर्वलि" इति लोपेन निर्वाह इत्यर्थः। असिद्धत्वादिति। बहिर्भूतनिमित्तापेक्षत्वेनेयङादेशस्य लोपापेक्षया बहिरङ्गत्वमित्यसिद्धपरिभाषयाऽसिद्धत्वादित्यर्थः। तदभावेऽपीति। तस्याः परिभाषायाः प्रवृत्त्यभावेऽपीत्यर्थः। ऊयतुरितीति। अत्र वलपरत्वस्याभावेन लोपसम्भावनापि नास्तीति भावः। क्लेशमुपपादयति—अजादीति। तथाच क्लृप्ताकाङ्क्षां विहायाक्लृप्तकल्पनायाम्मनोव्यापारगौरवं स्पष्टमेवेति भावः।

व्याख्यानादिति। "स्वरपदपूर्व"इति वक्ष्यमाणवार्तिकानुसारिव्याख्यानादित्यर्थः। वृत्तिरिति। असंयोगपूर्वस्येत्यत्र वृत्तिरित्यर्थः। अत एव—उक्तव्याख्यानेन उन्न्यावित्यादौ यणादेशस्येष्टत्वादेव। निन्यतुरित्यस्य सिद्धये—स्वरपूर्व्वेति। पदपूर्व्वेति। तथाचान्न्यावित्यादिसिद्धिः। उक्तोपायेन—धातुना संयोगविशेषणेन। तथा वृत्त्यादौ भाष्यकारोक्तिरपि प्रमाणमिति भावः।

भावप्रकाश।

भिमत इति भावः। अत्रेति। एतेनेतः पूर्वलक्ष्ययोरियङाद्यापत्तिर्ध्वनिता। इन्वादीनामङ्गस्य च स्थानषष्ठ्यनिर्देशात् संयोगपूर्वकत्वाच्चेति भावः। नन्वयुक्तमेतत्, इयङापत्तेरेवात्रापि सत्त्वात्। तत्रेवर्णान्ताङ्गस्येत्येवार्थादतआह—तत्रापीति। करण्यात्—तदापत्तेः। एकोनसहस्राधिकरणन्यायेनाह—यदीति। करण्यमेवेति। सम्भवतीतिन्यायादित इति भावः। एषु—दिदिवतुरितिव्यतिरिक्तेषु तत्सहितेषु वेत्यर्थः। लोपेन—"लोपो व्योः" इत्यनेन। असिद्धत्वात्। बहिरङ्गपरिभाषया। तदभावेऽपि—तत्परिभाषाप्रवृत्त्यभावेऽपीत्यर्थः। ऊयतुरितीति। अवलपरत्वादिति भावः। काङ्क्षत्वादिति। तथा च क्लृप्ताकाङ्क्षां विहायाकाङ्क्षान्वययोः कल्पने क्लेशः स्फुट इति भावः।

संयोगविशेषणत्वेनाह—व्याख्यानादिति। "पदार्थः पदार्थेन"इति न्यायानङ्गीकार इति भावः। वृत्तिरिति। असंयोगपूर्वस्येत्यत्रेति भावः। ननून्न्यावित्यादौ यणभावे इष्टापत्त्या संयोगविशेषणत्वमफलमतआह—अत एवेति। तद्रीत्या तत्र यण इष्टत्वादेवेत्यर्थः। निन्यतुरुन्न्यावित्यादिलक्ष्ये। उक्तो-

प्रद्ध्य:' इत्यादाविव पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यण् स्यात् । धात्ववयवसंयोगपूर्वको न भवति य इवर्णस्तदन्तत्वादङ्गस्य । वृश्चिकशब्दस्येति। भाष्यकृता हि बुद्धिपरिकल्पितमपायमाश्रित्य "भीत्रार्थानाम्" इति सूत्रं प्रत्याख्यातम्,

---

शब्दरत्नम् ।

न्यत् । तदन्तत्वादिति । न च धात्ववयवसंयोगपूर्वत्वस्य धात्ववयवेकार एव सम्भवेन संयोगवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वेन तद्भिन्नस्यापि धात्ववयवस्यैव ग्रहणान्न दोष इति वाच्यम् । तन्त्रीरित्यादौ धात्ववयवसंयोगपूर्वस्याधात्ववयवस्यापि सम्भवात् । "परिमाणाख्यायाम्" इति सूत्रे भाष्ये 'अजपावपि संज्ञायामेव यथाजातीयक उत्सर्गस्तज्जातीयकेनापवादेनापि भवितव्यम्' इत्युक्तं तन्मूलकेन 'उत्सर्गसमानदेशा अपवादाः' इति न्यायेन तु न निर्वाहः । अङ्गांशे तदसम्बन्धे हरिमित्यादावपि तत्प्राप्त्या तेन येननाप्राप्त्यभावेन तदपवादत्वस्यैवाभावात् । यद्यपि प्रत्यासत्त्या "इको गुणवृद्धी' इति निर्देशोप-

भैरवी ।

नचोन्नीशब्दादिभ्यः क्यजन्तेभ्यः क्विपि द्विवचने वार्तिकारम्भपक्षे यण् प्राप्नोति, प्रत्याख्यानरीत्या तु नेति फलभेदस्य स्पष्टतया कथम्प्रत्याख्यानमिति वाच्यम् ? प्रत्याख्यानपरभाष्यप्रामाण्येन तेभ्यः क्यजन्तेभ्यः क्विबादेरनभिधानमित्याशयात् । खण्डनकारोक्तिमनूद्य खण्डयति—नचेत्यादिना । न दोष इति । हरिमित्यादौ न दोष इत्यर्थः । भवदुक्तः संयोग एवात्र नास्तीत्याशयेनाह—तन्त्रीरित्यादाविति । तदुक्तम्प्रकारान्तरमपि दूषयति—परिमाणेति । सूत्रे भाष्य इति । तत्र हि सर्वेभ्य इत्यत्र सर्वग्रहणस्यैकस्तण्डुलनिश्चायः, द्वौ शूर्पनिष्पावावित्यत्र घञ्सिद्धिः प्रयोजनमित्यभिधाय "अकर्त्तरि च कारके" इत्यनेन सिद्धौ तन्न कार्य्यम्, न सिद्ध्यति । संज्ञायामिति हि तत्रास्ति, नचैषा सञ्ज्ञा । तत्प्रत्याख्यायते। अथापि क्रियते, तथापि न दोषः । अजपावपि सञ्ज्ञायामेवेत्याद्युक्तम्। यद्यप्ययं न्यायः इनमादौ व्यभिचरितस्तथाप्यत्र त्यागे न प्रमाणमत आह— अङ्गांश इत्यादि । तत्प्राप्त्या-यणादेशस्य प्राप्त्या । तेन— "एरनेकाचः" इत्यनेन । प्रकारान्तरेण दोषाभावशङ्कान्निरस्यति-यद्यपीत्यादिना । निर्देशोपेति ।

भावप्रकाश ।

पायेन—धातुना संयोगविशेषणेन । उन्नीशब्दादिभ्यः क्यजन्तेभ्यः कर्त्तृ क्विप् तु नानभिधानात् । तेन न फलभेदः । केचित्तु भाष्यानुरोधेन वार्त्तिके पदशब्देन धात्ववयवत्वानधिकरणं पदमेवेति नाभिधानेऽपि फलभेद उभयमतेऽपि यणभावादित्याहुः । खण्डनकाराद्युक्तं दोषमुद्धरति--नचेति । पूर्वत्वस्य- पूर्वकत्वस्य । एवमग्रेऽपि । संयोगवदित्यादि । प्रतिपादितमिदमधस्तात् । न दोष इति । हरी इत्यादाविति भावः । सम्भवादिति । एवं च संयोगाभावे विप्रयोगाभावः सुतरामिति भावः । तदुक्तं दोषान्तरमुद्धरति--परीति । अजपोरपि विषये एकस्तण्डुलनिश्चायः द्वौ शूर्पनिष्पावावित्यत्र घञ्सिद्धये सर्वग्रहणं कार्यं, न कार्यं, परिमाणेत्येव सिद्धत्वात् । नचैकः पाक इत्याद्यर्थं वचनं, पूर्वेणाकर्त्तरिचेत्यनेन तत्र सिद्धेः । न सिध्यति, संज्ञायामिति हि पूर्वयोगे । नचैषा संज्ञा, तत्प्रत्याख्यायते । अथापि क्रियते, तथापि न दोष इत्युपक्रम्याजेत्यादि तत्रोक्तम् । तन्मूलकेनेति । उपलक्षणम्—असिद्धवत्सूत्रभाष्यसंमतत्वस्य युष्माकाद्यादेशविधानरूपज्ञापकसिद्धत्वस्य प्रत्ययोत्तरेति सूत्रस्थमपर्यन्तानुवृत्तिज्ञापकतापरभाष्यमानकत्वस्य च । अस्य फलं तु 'एधि इति बोध्यम् । तुना ऽरुचिः सूचिता—तत्सत्त्वे मानाभावः फलाभावश्चेति । यत्तु तस्य इनमादौ व्यभिचारान्नात्र प्राप्तिरिति । तन्न, तत्र मित्त्वादिना तत्त्वेऽप्यत्र तत्त्यागे मानाभावात् । अत आह—अङ्गांशे इति । तदसम्बन्धे—धातुपदासम्बन्धे । तत्प्राप्त्या—"एरनेकाचः" इत्यस्य प्राप्त्या । निर्देशोपेति । तत्प्रमाणिकयेत्यर्थः । अन्यथा 'गुणवृद्धी'इत्यत्रापि यणापत्तिरिति भावः । यत्तु रत्नाकरमन्दादयः—अनेकाचोऽसंयोगादित्येव कार्यं, य्वोरित्यनुवर्तते । "ओःसुपि" इति-

ततश्च सम्बन्धमात्रविवक्षायां षष्ठ्येवेति भावः। सूत्रमतेऽप्याह—वृश्चिकसम्बन्धिनीति।

अल्लोपयलोपाविति। न च परत्वात् "वेरपृक्तस्य" इति स्यादिति वाच्य-

---

### शब्दरत्नम्।

ष्टब्धया धात्ववयवसंयोगपूर्वभिन्नस्य धात्ववयवस्यैव ग्रहणमिति हरिमित्यादौ न दोषस्तथाऽपि स्पष्टप्रतिपत्तये आवृत्तिरेवाश्रितेति दिक्। सूत्रमतेऽपीति। "भीत्रा" इति सूत्रं षष्ठीबाधनार्थमिति वैतण्डिकतया ये वदन्ति तत्सिद्धसूत्रमतेऽपीत्यर्थः। वस्तुतो भयहेतुरित्युक्त्याऽस्य तृतीयाबाधकत्वं बोध्यम्। न च परत्वादिति। एवं च यलोपो दुर्लभ

### भैरवी।

अन्यथा अत्रापि पूर्वसवर्णदीर्घबाधको यणादेशः स्यादिति भावः। आश्रितेति। आवृत्तौ पदजन्यपदार्थोपस्थितिघटितशाब्दबोधसामग्र्याः सिद्धिरस्तीति विवक्षितविशेषणविशेष्यावगाहिविशिष्टार्थबोधो भवति। आवृत्तिमकृत्वा तन्निर्देशरूपानुमानेन धात्ववयवसंयोगपूर्वभिन्नस्य धात्ववयवग्रहणमित्यर्थस्य कल्पनेऽनुमितेः परामर्शादिघटिता सामग्री स्वीकार्या। ततोऽनुमितेस्ततः शाब्दबोधस्य विलक्षणस्य कल्पनेऽतिगौरवमिति भावः। दिगिति। दिगर्थस्तु धात्ववयवसंयोगपूर्वभिन्नस्य धात्ववयवस्यानुमानेन कल्पनायामपि 'उदियौ' इत्यादौ यणापत्तिर्दुर्वारैव। यदि चानुमानेन धात्ववयवसंयोगपूर्वभिन्नस्य धात्ववयवपूर्वस्य ग्रहणमित्युच्यते, तथापि 'लिडियौ' इत्यादौ दोष एव। मम तु आवृत्तधातुपदाभ्यां तदर्थस्योपस्थितौ प्रत्यासत्त्या तद्धात्ववयवसंयोगपूर्वभिन्नस्य तद्धात्ववयवपूर्वस्य ग्रहणमिति तत्र नातिप्रसङ्गः। यद्यनुमितिरपि तद्धातुघटितार्थस्य कल्प्यते तदा तत्पदं प्रत्येकस्य बोधकमिति। यदि नीधातुघटितार्थविषयकानुमितिस्तदा चिच्यतुरित्यादावव्याप्तिरस्त्येवेति। वैतण्डिकतयेति। स्वपक्षस्थापनाग्रहरहितः परपक्षखण्डनतत्परो वैतण्डिकस्तस्य भावेन तादृशाग्रहेणेत्यर्थः। तत्सिद्धेति। तदुक्तिसिद्धेत्यर्थः। यद्वैतण्डिकतया षष्ठीबाधनार्थमित्युक्तं तदेव विरुद्धमित्याह—वस्तुत इति। यत्तु विभक्तिप्रकरण एवाकर्त्तरीतिसूत्रानन्तरम्भीत्रार्थानाम्भयस्येति सूत्रं कार्यं, हेतावित्यस्य पञ्चमीत्यस्य चानुवृत्त्येष्टसिद्धिर्भविष्यतीतिः तन्न, कारकत्वप्रयुक्तकार्यानापत्तेः। मूले परत्वादिति। "लोपो व्योः" इत्येतदपेक्षया परत्वादित्यर्थः। निमित्तत्वस्थानित्वयोरेकस्मिन्कालेऽसम्भवरूप एवात्र विरोधो बोध्यः। मूले यादृशानुपू-

### भावप्रकाश।

नियमाल्लुलुवतुरित्यादौ न दोषः। विपरीतस्तु स न, सुधीशब्दे निषेधारम्भादिति, तन्न, यवक्रियावित्यादावपि धात्ववयवसंयोगभिन्नरेफात्परत्वेनातिप्रसङ्गापत्तेः। सिद्धान्ते तु धात्ववयवसंयोगपूर्वभिन्नस्येत्यर्थान्न दोषः। यदि त्वसंयोगादितिसामर्थ्याद्धात्ववयवसंयोगात्परस्य नेत्यर्थस्तर्ह्युदियावित्यादौ दोषः। मम तु पूर्वग्रहणसामर्थ्येन पर्युदासवृत्त्या च तद्भिन्नस्य धात्ववयवपूर्वस्यैव ग्रहणान्न दोषः। वार्त्तिकेऽपि साहचर्यादेवमेवेति न फलभेदः। अस्तु वा तथा सिद्धे पूर्वपदं व्यर्थं तत्सामर्थ्यात्पर्युदासेन तद्भिन्नस्य तदवयवस्येव तदघटकस्यैव ग्रहणात्। एरिति त्वावश्यकमेव। अन्यथा य्वोरङ्गस्य चानुवृत्तेस्तुल्यत्वात्प्राधान्याच्चाङ्गविशेषणत्वमेव तस्य स्यात्तथा च यवक्रियावित्यादावतिप्रसङ्ग एव। तदाह—दिगिति। स्वपक्षस्थापनहीनः परपक्षदूषणमात्रतात्पर्यको वैतण्डिकः। तत्सिद्धेति। तदुक्तिसिद्धसूत्रमतेऽपीत्यर्थः। एवं च समूलं मूलं चिन्त्यमिति भावः। अत्र व्याख्याने बीजमाह—वस्तुत इति। अस्य—भीत्रेतिसूत्रस्य। विभक्तिप्रकरणे तु न कृतम्। कारकत्वहेतुककार्यानापत्तेः। एतेन तथा रत्नाकरदण्ड्या-

म्, 'वेरपृक्तलोपाद्वलि लोपः पूर्वविप्रतिषेधेन' इति वार्त्तिककारोक्तेः। कौ लुप्त-मिति। नपुंसके भावे क्तः। कौ लोप इत्यर्थः। इदं सर्वं कुमारीमिच्छन् कुमा-रीत्यत्रापि बोध्यम्। अनन्यतयेति। गौणत्वेऽपि अनङ्गत्वयोः प्रवृत्तेरुक्तत्वा-च्चेति बोध्यम्। दीर्घस्यापीति। एतदर्थं कृतयणादेशनिर्देश इति भावः। नन्व-तिसखेः भूपतेः इति गुणविषये व्यावर्तयितुं यणा निर्देश इति चेत्? अस्त्वेवम्, तथाऽपि दीर्घे प्रवृत्तेर्दुर्वारत्वात्। न हि ह्रस्वेषु भाव्यं न दीर्घेष्वित्यत्र प्रमाण-मस्ति। सौत्रस्य विकृतनिर्देशस्याव्याप्त्यतिव्याप्त्युभयवारकत्वेन तत्सारवत्त्वला-भेन तथैवौचित्याद् भाष्यारूढत्वाच्च। यत्तु प्रावा वेति केचित् इत्युक्त्वा सख्युः इत्याद्युक्तम्। यच्च तद्व्याख्यातृभिरुभयमप्येतद्भाष्ये स्थितमित्युक्तम्। यच्चात्रोपष्टम्भार्थं प्रसादकृता—

सख्युः पत्युः प्रसिद्ध्यै यत् ख्यत्यादित्याह पाणिनिः।

---

शब्दरत्नम्।

इति भावः। **वार्त्तिककारोक्तेरिति।** "लोपो व्योः" इति सूत्रे 'क्वावुपसंख्यानम्' इति वार्त्तिकम्। तस्यापूर्वत्वापेक्षया क्वौ यथा लोपसिद्धिर्भवति तथा वक्तव्यमित्यर्थः। सा च पूर्वविप्रतिषेधेनेत्याशयेनैवमुक्तमिति बोध्यम्। **गौणत्वेऽपीति।** इच्छाकर्तृरूपार्थं प्र-त्युपसर्जनत्वेऽपीत्यर्थः। **कृतयणेति।** अन्यथा खितेः परस्येत्येव वदेदिति भावः। **गु-णविषये इति।** प्रकृतिप्रत्ययापेक्षगुणापेक्षया तदवयवमात्रापेक्षस्यान्तरङ्गत्वेन ततः पूर्वं प्रवृत्तिः स्यादिति भावः। **दुर्वारत्वादिति।** तदर्थं कृतस्यान्यसङ्ग्राहकत्वेऽपि बाध-काभावादिति भावः। **विकृतनिर्देशस्येति।** यकारान्तानुकरणनिर्देशस्येत्यर्थः। अ-

भैरवी।

व्युंक्ता वार्त्तिकस्य सा नोपलभ्यते इत्यत आह—लोपो व्योरितीति। इत्यर्थं इति। लाघवादु-चित इति शेषः। सा च—लोपसिद्धिश्च। एवमुक्तमिति। वेरपृक्तलोपाद्वलि लोपो विप्रतिषेधेने-त्येवमुक्तमित्यर्थः। गाणलाक्षणिकत्वरूपगौणत्वस्य प्रकृतेऽभावादाह—इच्छेति। अन्यथा—दीर्घ-स्यापि सङ्ग्रहाभावस्येष्टत्वे। प्रकृतीति। अन्यथेत्यादिः। तदर्थमिति। गुणविषयव्यावृत्त्यर्थ-मित्यर्थः। मूले विकृतनिर्देशस्येति। अस्य विकृतस्य निर्देश इत्यर्थः। सचानुकरणशब्दोच्चा-

भावप्रकाश।

द्युक्तमपास्तमितिभावः। मूलोक्तानुपूर्वीकवार्त्तिकाभावादाह—लोपो व्योरिति। इत्यर्थ इति। अस्य लाघवादुचित इति शेषः। साच—लोपसिद्धिश्च। एवमुक्तमिति। वार्त्तिकार्थक्रोडीकारात्तथोक्तम्, न तु सर्वथा निर्मूलम्। क्यजन्ताद्विच् तु नानभिधानादिति भावः। इत्याशयेनेत्यनेनारुचिर्भाष्यासम्मत-त्वरूपा ध्वनिता पूर्वविप्रतिषेधे। भाष्ये हि लोपोव्योर्वलि। ततो वेः। पूर्वसूत्रमनुवर्त्तते, व्यन्तस्य व्यो-र्लोपो भवति वलि। वल् च प्रत्यासत्त्या वेरेव तत्सामर्थ्यात्पूर्वं वलि लोपः प्रत्ययलक्षणं वा। ततोऽपृ-क्तस्य, वेर्लोप इत्येव। व्योर्वलीति निवृत्तमिति योगविभागेन वार्त्तिकं प्रत्याख्यातम्। अत एव वार्त्तिके ककारोऽविवक्षित इति मान्याः। विचोऽत्यल्पविषयताध्वननाय स इत्यन्ये। निरुक्तगौणत्वाभावादाह— इच्छेति। इच्छाकर्तृरूपोभयार्थं प्रतीत्यर्थः। अन्यथा—दीर्घे ऽप्रवृत्तौ। प्रकृतीति। अस्यान्यथे-त्यादिः। ननु विकृतनिर्देशस्येत्यस्यैकारान्तानुकरणेन सूत्रे विकार इत्यर्थः स चायुक्तः, अन्यतरानुकर-णेऽन्यतरासंग्रहापत्ते दीर्घसंग्रहेण निर्देशस्य चारितार्थ्येन वाक्यार्थानन्वयित्वे मानाभावेन 'यणिविषये

साधारणं तन्मन्वानाः सुख्युः सुत्युः सुखीः सुतीः ॥
सुखीयतिसुतीयत्योर्यौ क्विबन्तौ तयोर्विदुः ।
निष्ठादेशस्य पूर्वत्रासिद्धत्वाल्ल्यन्युरादिकम् ॥
सुख्य इत्यादि साध्वेतदुभयं भाष्यगौरवात् ।

इति विचारचिन्तामणिस्थश्लोकोपन्यसनं कृतं, तदेतत्सकलं भाष्यकैयटापर्यालोचनमूलकमिति कृतबुद्धय एव विदांकुर्वन्तु । शुष्क्रिय इति । यत्तु शुष्क्युः, पक्व्युः, शुष्क्यः, पक्व्यः, इत्युदाजह्रुः ; भाष्ये स्थितमिति चोपसंजह्रुः ; तदतिरभसात् ॥

इति ईदन्ताः ।

"तृज्वत् क्रोष्टुः" ॥ क्रुश आह्वाने । अस्मात् 'सितनि' इति तुन्प्रत्यये क्रोष्टुशब्दः, तृचि तु क्रोष्टृशब्दः । द्वावपि शृगालवाचिनौ । तत्राविशेषेण द्वयोः प्रयोगे प्राप्ते सर्वनामस्थाने स्त्रियां च तृजन्त एव, तृतीयादावच्युभयम्, अन्यत्र तु तुन्नन्त

शब्दरत्नम् ।

कारस्तूच्चारणार्थ इति भावः । साधारणमिति । ह्रस्वदीर्घसाधारणमित्यर्थः । विदांकुर्वन्त्विति । भाष्येऽस्यार्थस्यास्पृष्टत्वादिति भावः । अतिरभसादिति । संयोगपूर्वकत्वेन यणो दुर्लभत्वादिति भावः । इयङ्यतो लोपस्याभीयासिद्धत्वं तु न, व्याश्रयत्वात् ।

इतीदन्ताः

भैरवी ।

रणरूप एवेत्याशयेनाह—यकारान्तानुकरणेति । अकारेति । एतेनायं यणादेशार्थमागन्तुको निर्दिष्ट इति यत्र यणादेशस्तत्रैवास्य प्रसक्तिरिति कस्यचिदुक्तिः प्रत्युक्ता । तथा सत्यागन्तुकाकारात्प्रागुच्चारितयोर्य्यदि ह्रस्वान्तत्वं तदाऽस्य दीर्घे, दीर्घान्तत्वे ह्रस्वान्ते सखिशब्दे पतिशब्दे चाप्रवृत्त्यापत्तिः, मम तु यणादेशानुकरणादुभयसङ्ग्रह इति भावः । मूले इत्यादीति । अविदुरित्यत्रान्वयः । ह्रस्वमात्रनिर्देशवादिन इति शेषः । एतदुभयमपि-भाष्यगौरवात्साध्वित्यर्थः। अतिरभसादिति । यणादेशस्य करणेनेत्यादिः । एतदेवाह—संयोगेति । विकल्पस्य निर्म्मूलत्वेन रभसत्वं यणादेशकरणेन च तस्यात्यन्तिकत्वमिति भावः । परममूले शुष्कीयतेः क्विपि शुष्कीः पक्वीरिति दीर्घान्तं व्युत्पाद्य इयङ् शुष्क्रियौ शुष्क्रिय इति यदुक्तं तदसङ्गतमियङादेशे कर्त्तव्येऽल्लोपस्यासिद्धत्वादिति यत्केनचिदुक्तं, तत्खण्डयति—इयङ्यत इति ।

ननु तुन्नन्तस्तृजन्तश्चेति द्वावपि स्तां शृगालवचनौ, तथापि यस्तुन्नन्तस्तस्य सर्व्वनाम-

भावप्रकाश ।

रत्वं, न गुणविषये' इत्यर्थासिद्धेश्चात आह—यकेति । तथा च मूले षष्ठीतत्पुरुष इति भावः । उच्चारणार्थ इति । न तु यणर्थः । तेनोभयं सिद्धमिति भावः । एतेन सूत्रे आगन्तुनाऽकारेण यणादेश इति प्रकाशोक्तं, पथ्यतिथिवसतिस्वपतेरितिनिर्देशेन पतिशब्दस्याप्राप्तौ तत्साहचर्येण सखिशब्देऽप्यप्रवृत्तिरिति खण्डनकृदुक्तं चापास्तम् । अन्ये आनुमानिकवचनकल्पनेगौरवापत्तेरिति दिक् । भाष्ये इति । एतेन खण्डनकृदुक्ततत्समर्थनमयुक्तमिति सूचितम् । विकल्पनिर्मूलत्वस्योक्तत्वादाह-संयोगेति । सच पर्युदासो लाघवात् । एतेन प्रसज्यप्रतिषेधः सः । तथा च पञ्चमीसमासेन स्थानिवत्त्वेन एरभावेन तस्यासंयोगपूर्वत्वेनाप्रतिषेधं यणुत्वयोर्बाधकाभाव इत्याशयिका प्रकाशोक्तिरिति खण्डनकृदुक्तमपास्तम् । असिद्धत्वमिति । तथा सति ईकारान्तधातोरभावात्स न स्यादिति भावः ।

ननु प्रयोगद्वयप्राप्तावपि सर्वनामस्थानादौ तुन्नन्ते तृज्वद्भावस्य कथमप्यप्राप्तत्वात्कथं नियमार्थत्व-

एवेति, नियमार्थं त्रिसूत्री आरभ्यते। क्रोष्टुरिति तुन्नन्तात् प्रथमा। तृज्वदिति तृतीयान्ताद्वतिः । निमित्तव्यपदेशतादात्म्यशास्त्रकार्यरूपविषयकत्वेनातिदेशस्य

शब्दरत्नम् ।

**नियमार्थमिति** । फलतः प्रयोगनियमार्थमित्यर्थः । **तृतीयान्तादिति** । तृजन्तेन तुल्यं रूपं लभत इत्यर्थः । **निमित्तेत्यादि** । "पूर्ववत्सनः" "आद्यन्तवत्" "सुबामन्त्रिते पराङ्गवत्" इत्याद्यत्रयस्योदाहरणम् । तत्र तृजन्तत्वरूपनिमित्तस्य तद्व्यवहारस्य वाऽतिदेशे आहत्य तृच्शब्दं समुच्चार्य विहितकार्यस्यैवापत्तौ जसि गुणावादेशयोस्तृजन्तोद्देश्यकः

भैरवी ।

स्थाने तृज्वद्भावः सूत्राभावे न प्राप्त इति नियमार्थमित्यसङ्गतमित्याशङ्कायामाह—फलत इति । एतेन नियमार्थत्वं शाब्दीयन्यायेन नेति ध्वनितम् । रूपमिति । एतच्च वक्ष्यमाणसिद्धान्तरीत्योक्तम् । निमित्तेतीति । येन निमित्तेन सनः प्रकृतिभूताद्धातोरात्मनेपदम्भवति तन्निमित्तं सन्नन्तेऽतिदिश्यते "पूर्ववत्सनः" इत्यनेन । यथा 'चिकीर्षति' 'चिकीर्षतः' इत्यत्र सन्नन्ते ञित्त्वस्यातिदेशः । यदि स्वातन्त्र्येणात्मनेपदस्य विधायकं तत्सूत्रं स्यात्तदा क्रियाफलस्य परगामित्वविवक्षायामप्यात्मनेपदं स्यात्पूर्ववदिति तु परस्मैपदप्रकृतित्वयोग्यप्रकृतिकसन्नन्तान्माभूदित्येतत्प्रतिपादकतया चरितार्थम् । कार्य्यसामान्यातिदेशस्तु न, 'प्रचिक्रंसते' इत्यादाविट्प्रसङ्गात् । आत्मनेपदप्रकरणविरोधापत्तेश्च । नचात्मनेपदस्यैवातिदेशोऽस्त्विति वाच्यम् । कर्तृगामित्वविवक्षायामेव तस्य प्रवृत्तिरिति विशेषालाभः स्यादित्याशयात् । व्यपदेशातिदेशोदाहरणमाद्यन्तवदिति । व्यपदेशस्यादित्वान्तत्वव्यवहारस्यातिदेशः । तेन यथा कर्त्तव्यमित्यादौ तव्यप्रत्यये आदित्वव्यवहारस्य मुख्यस्य सत्त्वादाद्युदात्तत्वम्भवत्येवम् 'औपगवः' इत्यादावण्प्रत्ययेऽप्याद्युदात्तत्वं भवति, तथाऽन्तत्वाऽतिदेशेन आभ्यामित्यादौ दीर्घस्य सिद्धिः । क्वचित्त्वेकस्मिन्नुभयधर्म्मातिदेशस्तेन 'एधते' इत्यादौ टिसञ्ज्ञासिद्धिः । तादात्म्यातिदेशोदाहरणं सुबामन्त्रित इति । तेन परशुना वृश्चन्नित्यत्र परशुनेत्यस्य वृश्चन्शब्दाङ्गत्वातिदेशेन पकाराकारस्यामन्त्रिताद्युदात्तत्वं भवति । तृज्वदित्यस्यापि निमित्तव्यपदेशातिदेशविधायकत्वशङ्कां वारयति—तत्रेति । आहत्येति । अस्य व्याख्यानं तृच्शब्दमिति । अन्यथा ऋवदित्येव ब्रूयात् । आपत्ताविति । आपादने प्राप्तइत्यर्थः । गुणावादेशयोरिति । प्रवृत्त्यनन्तरमिति

भावप्रकाश ।

आह मत—**फलतः प्रयोगेति** । न शाब्दोनापि तृज्वद्भावोय इति भावः । एतेन प्रत्येकवैयर्थ्यशङ्कायामुक्तरीत्या विध्यर्थत्वेऽपि त्रिसूत्रीति समाहारनिर्देशात्तस्या युगपद्वैयर्थ्यमाशङ्क्य नियमार्थत्वं वर्णनीयमिति मान्योक्तिः प्राचामनुरोधेनेति ध्वनितम् । यथाश्रुतेनेष्टासिद्धेराह—**तृजन्तेनेति** । वक्ष्यमाणसिद्धान्तरीत्या आह—**रूपमिति** । **पूर्ववदिति** । 'चिकीर्षति' 'चिकीर्षते' इत्यादौ सन्नन्तस्य तेन ञित्वातिदेशे कर्त्रभिप्राये तङ्सिद्धिः । कार्यातिदेशस्तु नायं, तथासति 'चिक्रंसते' 'प्रचिक्रंसते' इत्यादाविट्प्रसङ्गात् आत्मनेपदप्रकरणपाठासगङ्गतेश्च । नाप्यात्मनेपदमात्रातिदेशोऽतिप्रसंगापत्तेः, पूर्ववदित्यस्य वैयर्थ्यापत्तेश्च । विशिष्टातिदेशे गौरवं स्पष्टमेव । एतेन कार्यातिदेशेन गतार्थं यद्यपि, तथापि निमित्तप्रतिसन्धानपूर्वकत्वात्तस्येति भिन्नः स उक्त इति रत्नाकरोक्तमपास्तम् । **आद्यन्तेति** । कर्त्तव्यमित्यादौ सावकाशप्रत्ययाद्युदात्तत्वफलक आदित्वव्यपदेश औपगवादावतिदिश्यते । तथा आभ्यामित्यत्रान्तत्वव्यपदेशः । **सुबिति** । 'द्रवत्पाणी शुभस्पती' इत्यत्र शुभस्शब्दस्य पराङ्गवत्त्वे सति विशिष्टस्य षाष्ठामन्त्रिताद्युदात्तत्वसिद्धिः । **तत्र**—तेषु मध्ये । ननु निमित्तातिदेशो दुर्वचः, न हि ब्राह्मणस्य श्राद्धभोजनादौ निमित्तं ब्राह्मण्यं वचनसहस्रेणापि क्षत्रियेऽतिदेष्टुं शक्यते इति चेत् ? न, आहार्यारोपेणापि शास्त्रप्रवृत्तेस्तस्य सुवचत्वात् । ब्राह्मण्यं त्वनारोपितमेव तत्र निमित्तमिति लोके न दोष इत्याशयेनाह-**तृजन्तत्वेति** । आहत्येत्यस्य व्याख्यानं—**तृच्छब्दमिति** । तृज्वदित्युक्तेरन्यथा ऋवदित्येव वदेत् । न चैवमपि सा-

### शब्दरत्नम् ।

"अप्तृन्" इति दीर्घ एव स्यात् सौ औजसादिषु चानङ्गुणौ न स्याताम् । न चोत्तरसूत्रद्वयेन सामर्थ्यात् "अप्तृन्" इत्यत्र क्रोष्टुग्रहणेनैव सिद्धावाद्येनापि सामर्थ्यात्कार्यमात्रप्रवृत्तिरिति वाच्यम्, तत्सामर्थ्येन रूपातिदेशस्यैव ज्ञापयितुं युक्तत्वात् । तादात्म्यातिदेशस्त्वसम्भवो, सहप्रयोगाभावात् । शास्त्रकार्यातिदेशावपि न, तुन्नन्तस्याद्युदात्ततया तृज्वद्भावेनोकारस्य रेफरूपयणादेशे ऽपि तस्योदात्तस्थानिकयणोऽभावेन "उदात्तयणो हल्पूर्वात्" इति स्वरानापत्तेः । अर्थातिदेशस्त्वसम्भवी, तयोरैक्यस्य स्वत एव सत्त्वाच्च ॥

### भैरवी ।

शेषः । न स्यातामिति । एतयोस्तृच्शब्दमुच्चार्य विधानाभावादिति शेषः । कार्य्यसामान्यातिदेशशङ्कान्निरस्यति–नचेति । सामर्थ्यादिति । स्त्रियान्तृतीयादावचि च तृच्शब्दमुच्चार्य्य कार्य्यविशेषस्य विधानन्नास्तीति अतिदेशसामर्थ्यादित्यर्थः । प्रथमसूत्रविषयेऽप्याह—अप्तृन्नित्यत्रेति । सामर्थ्यादिति । दीर्घप्रवृत्तिमात्रस्य फलत्वं प्रागुपपादितरीत्याऽस्ति, तच्चाधुनाऽपि सिद्धमिति भावः । कार्य्यमात्रेति । अत्र मात्रपदं कात्स्न्र्ये । "गोतो णित्" इति सूत्रे गकारवदत्र चकारोऽपि सामर्थ्यादविवक्षितो भविष्यतीति भावः । तत्सामर्थ्येन–सूत्रत्रयसामर्थ्येन । युक्तत्वादिति । सूत्रत्रयसामर्थ्यादुच्चारितस्य चकारस्याविवक्षायाः कल्पनापेक्षया रूपातिदेशे न कस्यचिद्वैयर्थ्यशङ्केति भावः । सहप्रयोगाभावादिति । उभयोरेकार्थबोधकतया सहप्रयोगाभावादित्यर्थः । शास्त्रातिदेशोदाहरणं "कालेभ्यो भववत्" इति । अनेन भवार्थे यच्छास्त्रं "तत्र भव" इत्यधिकारविहितं "कालाट्ठञ्" इति "प्रावृष एण्यः" इति च, तस्यातिदेशः क्रियते । तेन मासो देवताऽस्य मासिकम्, प्रावृड् देवता ऽस्य प्रावृषेण्यमित्येव भवति । यदि तत्र कार्य्यातिदेश एव स्यात्तदा प्रकृतिप्रत्ययानां साङ्कर्य्यापत्त्या मासशब्दादप्येण्यः स्यात् । कार्य्यातिदेशस्तु स्थानिवद्भावस्थले प्रसिद्ध एव । आद्युदात्ततयेति । निदन्तत्वेनाद्युदात्ततयेत्यर्थः । एतेनान्त्यस्योकारस्यानुदात्तत्वं सूचितम् । स्वरानापत्तेरिति । क्रोष्ट्रेत्यादावित्यादिः । असम्भवीति । सर्वत्रासम्भव्येवेत्यर्थः, शब्दार्थसम्बन्धस्य नित्यत्वादिति भावः । अभ्युपेत्यवादेन प्रकृताभिप्रायेणाह—तयोरिति । यद्वा यथा स्त्रीपुंवच्चेतिसूत्रेणार्थातिदेशः क्रियते तथाऽस्त्वि-

### भावप्रकाश ।

मान्यातिदेश इत्यनेन तथैव स्यादिति वाच्यम् । उपस्थितसामान्यातिदेशसम्भवे इति तदर्थात् । न हि ब्राह्मणवदित्यनेन मनुष्यत्ववर्णत्वधर्मा अतिदिश्यन्ते, न ब्राह्मण्यधर्माः; किं तु ब्राह्मण्यसामान्यधर्मातिदेशो न माठरत्वादीनामिति यथा, एवं प्रकृतेऽपीति भावः । आपत्ता—आपादने, प्रापणे इति यावत् । ननु क्रोष्टुशब्दे उपधायामचोऽभावेन दीर्घाप्राप्त्याऽतिदेशवैयर्थ्यमत आह—जसि गुणेति । तथा चानिष्टरूपापत्तिस्तत्रेति भावः । अत एवाह—सौ औजसादिषु चेति । तथा चेष्टरूपासिद्धिस्तेष्विति भावः । किं चैवमुत्तरसूत्रद्वयवैयर्थ्यापत्तिः । किञ्च अप्तृन्नित्यत्र क्रोष्टुग्रहणेनैव सिद्धावस्यापि वैयर्थ्यापत्तिः । न चास्य क्रोष्ट्रित्यादौ "तृजकाभ्याम्" इति षष्ठीसमासनिषेधोऽपि फलमिति नान्त्यरीत्या ऽऽद्यवैयर्थ्यमिति वाच्यम्, अस्य शृगालादौ रूढत्वेन कर्मषष्ठ्या असम्भवात् कर्त्तुरुक्तत्वेन कर्त्तृषष्ठ्या अप्यसम्भवाच्चेत्याशयेन शङ्कते—न चेति । तृज्वदिति तकारस्तु गोत इति गकारवदिति भावः । तत्सामर्थ्येन–सूत्रत्रयसामर्थ्येनेत्यर्थः । युक्तत्वादिति । अत एव तः सार्थकः । गोत इति तपरत्ववदविवक्षासाधकस्येहाभावात् दृष्टान्ते वैषम्यम् । एवं चात्रार्थे तत्सामर्थ्यवत्तात्पर्यग्राहकः स इति तत्त्वम् । असम्भवीति । अत्रेति शेषः । शास्त्रकार्येति । यथा कालेभ्योभववदित्यनेन कालवाचिभ्यस्तत्र भव इत्यधिकारे यद्यच्छास्त्रन्तद्देवतार्थेऽतिदिश्यते तेन मासिकं प्रावृषेण्यमित्यादौ यथाविहितं ठञेण्यादि सिध्यति । कार्यातिदेशे हि प्रकृतिप्रत्ययादीनां साङ्कर्यापत्तिः यथा च गोतोणित् तत्कार्यवृद्धिः प्राधान्येनातिदिश्यते । अपिः शास्त्रसमुच्चायकः । स्थानिकत्वाभावेनेति पाठः । क्रोष्ट्रित्यादाविति भावः । असम्भ-

षड्विधत्वेऽपि प्राधान्यादिह रूपमेवातिदिश्यते । तच्च न पचादेर्यस्य कस्यचित् किं तु क्रुशेरेव, उपस्थितत्वादर्थत आन्तर्याच्चेत्यभिप्रेत्य फलितमाह—क्रोष्टु शब्दस्थाने इति ।

नियमार्थमिति । अन्येषां संज्ञाशब्दानां मा भूदित्येतदर्थमित्यर्थः । क्रोष्टेति ।

शब्दरत्नम् ।

षड्विधत्वेऽपीति । अर्थातिदेशासम्भवं मत्वेदम् । युक्त्यन्तरमाह—प्राधान्यादिति । रूपमिति । तच्च 'तृज्वत्' इत्यत्र ऋकारस्योपस्थित्या वह्निशिष्टं क्रोष्ट इति । तच्च तृज्वदिति चकारोच्चारणसामर्थ्यादन्तोदात्तस्वरविशिष्टमिति ऋकारस्योदात्तत्वात् 'उदात्तयण' इत्यादिस्वरसिद्धिरिति बोध्यम् ।

संज्ञाशब्दानामिति । उणादिव्युत्पन्नानामिति शेषः । अतो धातृशब्दस्य दीर्घो भवत्येव । परत्वादिति । इदमग्रिमं च कार्यैक्येऽसम्भवाभावे च विप्रतिषेध इत्यभिमा-

भैरवी ।

न्यत आह-तयोरिति । मत्वेदमिति । अत्र मत्वेतिकथनेन स्त्रीपुंवच्चेत्यस्य सत्त्वेनारुचिर्ध्वनिता । तथाच सप्तविधत्वेऽपीत्युचितमिति भावः । ननु पूर्वोक्तरीत्या सर्व्वेषां रूपातिरिक्तानां वारणे सिद्धे प्राधान्यादिति हेतूपादानस्य वैयर्थ्यमत आह—युक्त्यन्तरमिति । प्राधान्यं चास्य सर्व्वेष्टसम्पादकत्वेन बोध्यम् । रूपातिदेशेऽपि प्रयोगसमवायिनः कस्य रूपस्यातिदेश इत्याशङ्कायामाह—तच्चेति । रूपञ्चेत्यर्थः, तृजन्तस्यान्वेषणार्थं शास्त्रान्तरपर्य्यालोचनापेक्षयोपस्थितत्वात्तदेव शास्त्रमधिकरणत्वेन कल्प्यत इति भावः । स्वरासिद्धिमपि वारयति-तच्चेति ।

उणादीति । नियमस्य सजातीयापेक्षत्वम्प्रसिद्धमेवेत्यस्य लाभः । अतः-एतच्छेषात् । भवत्येवेति । उणादिव्युत्पन्नभिन्नत्वादिति भावः । नन्वप्तृन्निरयस्य सर्व्वनामस्थानेचेत्यस्य चैककार्य्यविधायकत्वेन विरोधाभावात्परत्वादित्यसङ्गतमत आह—इदमिति । परत्वादप्तृन्नित्यत्रोक्तमित्यर्थः । अग्रिमं चेति । हेरमे इत्यत्र हल्ङ्यादिलोपात्परत्वात्सम्बुद्धिलोप इत्यत्रोक्तमित्यर्थः । विप्रतिषेधः । अनयोरपि विप्रतिषेधो बाध्यबाधकभाव इत्यर्थः । अभिमानेनेति । भाष्य-

भावप्रकाश ।

वीति । सर्वत्रासम्भव्येवेत्यर्थः, शब्दार्थयोर्नित्यसम्बन्धात्, अतिदेशवाक्ये वत्प्रकृत्यर्थनिष्ठधर्माणामतिदेशस्य ब्राह्मणवदिति लोके स्थानिवदादेश इति शास्त्रे च दृष्टत्वेनार्थातिदेशस्योक्तिसम्भवाभावाच्च । जात्याख्यायामित्यादावपि कार्यातिदेश एवेति भावः । ननु "स्त्रीपुंवच्च" इत्यादावर्थातिदेशं विनाऽगतिरिति न सर्वथाऽसम्भवित्वमतः प्रकृतेऽसम्भवमाह—तयोरिति । मत्वेति । अनेनोक्तरूपारुचिः सूचिता । तथाच सप्तविधत्वं वक्तुमुचितम् । अत एव—

कार्यरूपनिमित्तार्थशास्त्रतादात्म्यशब्दिगाः ।<br>
व्यपदेशांश्च सप्तैतानतिदेशान् प्रचक्षते ॥

इत्यभियुक्तोक्तिः सङ्गच्छते । नन्वेवं सर्ववारणे हेत्वसङ्गतिरत आह—युक्त्यन्तेति । साधारणयुक्तिमित्यर्थः । तेन नापि वैयर्थ्यम् । प्राधान्यं चात्र सर्वप्रयोगनिष्पादकत्वादेव । ननु प्रयोगसमवायिक्रोष्टारित्यादिरूपातिदेशो दुर्वचः, अनेकत्वात् उक्तरीत्या "उदात्तयणः" इति स्वरानापत्तेश्चात आह—तच्चेति । रूपं चेत्यर्थः । एवमग्रेऽपि । तत्तूपलक्षणमिति भावः । तृजन्तत्वबोधार्थं शास्त्रान्वेषणावश्यकत्वेन तस्यैवोपस्थितत्वात्प्रत्यासन्नत्वाच्चेत्यपि बोध्यम् । नन्वेवमपि स्वरासिद्धिस्तदवस्थैवात आह—अन्त इति । तस्य कृद्व्युत्पन्नत्वेऽपि पङ्कजादिवद्योगरूढिस्वीकारे बाधकाभावादिति भावः ।

विध्यर्थं न आदिग्रहणमिति तु तत्त्वम् । इदमिति । 'परत्वादप्तृन्' इत्यत्रत्यं परत्वमित्यर्थः । अग्रिमं चेति । 'हेरमे इत्यत्र हल्ङ्यादिलोपतः परत्वेन सम्बुद्धिलोपः' इत्यत्रत्यपरत्वं चेत्यर्थः । भावे चेति । अनयोरपि विप्रतिषेध इत्यर्थः । अभीति । द्वयोः कार्ययोरन्यत्र सावकाशयोर्युगपत्प्राप्तयोर्युगपद-

अनङ्। हल्ङ्यादिलोपात्परत्वादुपधादीर्घः। स च "सर्वनामस्थाने च" इत्यनेन यद्यपि लभ्यते तथापि परत्वात् "अप्तृन्" इत्येव न्याय्यः। कृतेऽप्यनङि एकदेशविकृतस्यानन्यत्वेन तृच्त्वात्। अन्यथा गुणे कृतेऽपि दीर्घो न स्यादिति भावः।

"रात्सस्य"॥ इह तकारोऽपि प्रश्लिष्यत इति पक्षान्तरम्। तेन हल्ङ्यादिसूत्रस्थाने ङ्यापः सोरिति निष्कर्षे अबिभर्भवानित्यादि सिद्ध्यति। अजर्घर्त् इत्यत्र तु चर्त्वस्यासिद्धत्वात् तलोपो न। ननु कीर्तयतेः क्विपि कीर्त् इह स्यादिति चेत्? न "यथालक्षणमप्रयुक्ते" इति भाष्यम्। एतेनाववर्त् इति व्याख्यातम्। परत्वादिति। न च नुण्नित्य इति वाच्यम्, तृज्वद्भावे कृते सन्निपातपरिभाषया नुटो दुर्लभत्वादिति भावः। नुमचिरेति। ननु रेण स्वविषये प्राप्तं सर्वं बाध्यम्, बाध्यसामान्यचिन्ताश्रयणात्। तथा च वक्ष्यते—'गुणदीर्घोत्वानामपवाद' इति।

---

शब्दरत्नम्।

नेन। यद्वा परत्वादुत्कृष्टत्वात् विशेषविहितत्वेन शीघ्रोपस्थितिकत्वादित्यर्थः।

निष्कर्ष इति। भाष्यस्थपूर्वपक्षिण इति शेषः। यथालक्षणमिति। अप्रयुक्ते लक्षणाभावस्य योग्यतेत्यर्थः। बाध्यसामान्यचिन्तेति। सा च तृज्वत्सूत्रे भाष्ये स्पष्टा। एवं च 'अचि र' इति सूत्रस्थम् 'अचि रादेशे जस्युपसंख्यानं गुणपरत्वात्' इति वार्त्तिकं बाध्यविशेषचिन्ताभिमानेन प्रवृत्तमिति भावः। एतेन तद्वार्त्तिकबलाज्जसोऽन्यत्र प्रियतिसर-

भैरवी।

सम्मतस्य विप्रतिषेधपदार्थस्याभावेन विप्रतिषेध इति कथनमभिमानेनेत्यर्थः। तत्र हि द्वयोः शास्त्रयोरन्यत्र लब्धावकाशयोर्युगपत्प्राप्तयोर्युगपदसम्भवे विप्रतिषेधस्य प्रतिपादनमेवास्ति। विशेषविहितत्वेन-प्रतिपदोक्तत्वेन निरवकाशत्वाभावेऽपि पूर्वप्रवृत्तिप्रयोजकत्वमस्यास्त्येव।

ननु तादृशनिष्कर्षस्य दूषितत्वादिति निष्कर्ष इत्यनुचितमत आह—भाष्यस्थेति। मूले नुण्नित्य इति। कृताकृतप्रसङ्गित्वेन तस्य नित्यत्वमिति भावः। तच्च कृताकृतप्रसङ्गित्वं दूषितम्। सन्निपातेत्यादिना रादेशस्य बाध्यसामान्यचिन्ता सप्रमाणा इत्याह—सा चेति। एवञ्च बाध्यसामान्यचिन्ताया भाष्यसम्मतत्वे च। अभिमानेन प्रवृत्तमिति। यदि तद्विषये बाध्यविशेषचिन्ता सप्रमाणा स्यात्तदा पुरस्तादपवादन्यायेन रादेशस्य जसि यो गुणस्तद्बाधकत्वमेव

भावप्रकाश।

सम्भवे विप्रतिषेध इति भाष्योक्तेरिति भावः। यद्वेति प्रकारस्तत्रापि बोध्यः। सर्वथा मूलमयुक्तमिति गूढाकूतम्। एतेन तथा रत्नाकरदण्ड्याद्युक्तमपास्तम्। विशेषेति। प्रतिपदोक्तत्वेनेत्यर्थः। निरवकाशत्वाभावेऽपि पूर्वप्रवृत्तिप्रयोजकबलवत्त्वस्यास्य सत्त्वादिति भावः।

निष्कर्षस्य दूषितत्वादाह—भाष्येति। अप्रयुक्ते इति। व्याख्यातमिदम्। प्रकृते तदाश्रयणे निर्मूलत्वशङ्कां निराचष्टे—सा च तृज्वदिति। तत्र हि नुमचिरेति वार्त्तिकव्याख्यावसरे "नुड्रेफयोर्विप्रतिषेधो न वाच्यः, तेनेष्टासिद्धेः। किं तर्हि? नुड्विषये रप्रतिषेधो वाच्यः। इतरथा हि सर्वापवादो रः स यथैव गुणपूर्वसवर्णौ बाधते एवं नुटमपि बाधेत"इत्युक्तम्। अत्र पक्षे येनेत्यस्य स्वेतरेणेत्यर्थ इति बोध्यम्। अचिर इत्यत्रत्यभाष्यविरोधं परिहरति—एवं चेति। तस्याः समूलत्वे चेत्यर्थः। प्रवृत्तमिति। अन्यथा तत्र पक्षे पुरस्तादपवादन्यायेन रादेशो जसि गुणं बाधेत न सर्वनामस्थानगुणमिति भावः। अभिमानेनेत्यस्य चिः

एवं चाविशेषाद् नुडप्यनेन बाध्यः । तत्कथं विप्रतिषेधः । उत्सर्गापवादयोस्तद्-योगादिति चेत् ? सत्यम्, अत एव तदंशे विप्रतिषेधं दूषयित्वा "न तिसृचतसृ" इति ज्ञापकाद् नुडिति भाष्यकृतोक्तमिति सन्तोष्टव्यम् ।

इत्युदन्ताः ॥

हूहूरिति । अव्युत्पन्ना संज्ञेयम् । अतिचमूशब्दे त्विति । 'प्रथमलिङ्गग्रहणं च' इत्युक्तेः । तथा च एवमतिचम्वादय इति प्राचो ग्रन्थो भाष्यविरुद्ध इति भावः ।

"वर्षाभ्वश्च" । वर्षाभूशब्दस्य नित्यस्त्रीत्वात् स्त्रीलिङ्गप्रकरण एव एतत्सूत्रं वक्तुं युक्तम् । पुंल्लिङ्गे तु क्रियाशब्दाभिप्रायेण कथं चिद्योज्यमिति व्याचख्युः, तद्भसात् । दर्दुरे हि पुंल्लिङ्गोऽयम्—

भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः ।

इत्यमरोक्तेः । भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषितत्वात्,

---

शब्दरत्नम् ।

मित्यादौ गुणं कल्पयन्तः परास्ताः । तृज्वत्सूत्रस्थभाष्यविरोधात् "मपर्यन्तस्य" इति सूत्रस्थप्रियतिस्रावित्यादिभाष्यविरोधाच्च । अनेन—रेण । विप्रतिषेध इति । अचिरेणेत्यर्थः । दूषयित्वेति । यद्यपि "न तिसृ" इति ज्ञापकेन तदपवादत्वाभावकल्पनया विप्रतिषेध उपपद्यते, तथापि ज्ञापकानुसरणस्यावश्यकत्वेनैव तं संसाध्य तं दूषयित्वेत्यर्थः । इदं च तृज्वत्सूत्रे भाष्ये । सन्तोष्टव्यमिति । अतिक्षोदस्तदंशे वार्त्तिके न कार्य इति भावः ।

भैरवी ।

स्यान्नतु सर्व्वनामस्थाने यो गुणस्तद्बाधकत्वम् । एतेन—वक्ष्यमाणदूषणेन । गुणम्—ऋतोङीतिगुणम् । तद्दूषणमेवाह—तृज्वदिति । तत्र हि "नुमचिर" इति वार्तिकव्याख्यानावसरे नुड्रेफयोर्विप्रतिषेधो न वाच्यः । किन्तर्हि नुड्विषये रादेशस्य प्रतिषेध एव वक्तव्यः । इतरथाहि सर्व्वापवादो रः स यथैव गुणं पूर्व्वसवर्णञ्च बाधते । एवन्नुटमपि बाधेतेत्युक्तम् । भाष्यान्तरविरोधमप्याह—मपर्य्यन्तस्येतीति । अचिरेणेति । नुडागमस्येति शेषः । अथ "न तिसृ" इति सूत्रं रेफादेशस्य नुडपवादत्वाभावे एव ज्ञापकत्वमस्तु । एवञ्च विप्रतिषेधस्योपपत्तिर्भविष्यतीत्याशङ्कते-यद्यपीति । तेनैव-ज्ञापकेनैव । तम्—नुटम् । तन्दूषयित्वा—विप्रतिषेधं दूषयित्वा । तृज्वत्सूत्रभाष्य इति । उक्तभाष्यानन्तरन्तत्र "तस्मान्नुड्विषये रप्रतिषेधो वाच्यः, न वाच्यः, आचार्य्यप्रवृत्तिर्ज्ञापयति—न रादेशो नुटम्बाधत इति । यदयन्न तिसृचिति नामिदीर्घत्वस्य प्रतिषेधं शास्ति" इत्युक्तम् । अतिक्षोदः—अतिविचारः । तदंशे-रांशे । मूले नुमागमोऽनुस्वारश्चेति । परसवर्णार्थमिति शेषः ।

भावप्रकाश ।

सूचिता समूलावश्यिकया तथैव सिद्धे वार्तिकं नावश्यकमिति तद्भाष्यमेकदेश्युक्तिरिति । गुणमिति । शब्दपरत्वेन रादेशाप्रसक्ते चतसरीतिवार्त्तिके इवेति भावः । एतेनेत्यस्यार्थमाह—तृज्वदिति । उक्तोऽर्थः । अभ्युपेत्यापि तेनानिर्वाहमाह-मपर्यन्तेति । मौलविप्रतिषेधशब्दस्य न सामान्यपरत्वमित्याह—अचीति । एतेन भाष्येऽप्येवमेवेति सूचितम् । तदपेति । नुडपवादत्वेत्यर्थः । त्वेनैवेत्यादि । ज्ञापकेनैव नुटं संसाध्य विप्रतिषेधं दूषयित्वेत्यर्थः । इदं चेति । उक्तभाष्यादग्रे तत्र "तस्मान्नुड्विषये रप्रतिषेधो वाच्यः । न वाच्यः; आचार्यप्रवृत्तिर्ज्ञापयति न रादेशो नुटं बाधते इति यदयं नतिसृचिति ।नामिदीर्घत्वप्रतिषेधं शास्ति" इत्युक्तम् । क्षोदोऽत्र विचारः । तदंशे—रांशे ।

भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान् ॥

इति यादवकोशाच्च । दर्दुरे षणीति पाठान्तरम् । षणीति पुंलिङ्गस्य प्राचां संज्ञा । दृभतीति । दृभी ग्रन्थे तुदादिः । व्युत्पादित इति । यद्यप्युज्ज्वलदत्तेन दृम्फूरिति पवर्गद्वितीयं पठित्वा दृम्फेर्नलोपाभावो निपात्यते इति व्याख्यातं, तथाऽपि वृत्त्यन्तरेषु दृभी ग्रन्थे इत्यस्मात् डूप्रत्यये नुमागमो निपात्यते इत्युक्तम् । एतच्च माधवग्रन्थे स्पष्टम् । दशपादीवृत्तौ तु दर्भणं दृम्भूः । नुमागमोऽनुस्वारश्च निपात्यते इत्युक्तम् । अयमूकारो न धातोरित्युवङोऽप्रसङ्गात् "इको यणचि" इति यण् । स च "अमि पूर्वः" "प्रथमयोः पूर्वसवर्णः" इत्याभ्यां बाध्यत इत्याशयेनोदाहरति–दृम्भूमित्यादि । न चेह 'दृन्कर' इति यण् शङ्क्यः । तत्र अर्थवत एव ग्रहणात् । अस्य तु दृन्शब्दस्य भूशब्दस्य च अनर्थकत्वादिति भावः । एवं चायं हूहूवदिति फलितम् । श्रीपतिमतेनाह–दृन्निति । माधवस्तु–'अन्दूदृम्भू' इत्यादिसूत्रेण दृढशब्दे उपपदे कूप्रत्ययः, उपपदस्य दृन्नादेशश्च निपात्यत इत्याह—दृन्भूरिति । तरुः सर्पजातिभेद इति केचित् । कपिरित्यन्ये । दृन्करेति । अत्र दृन्निति नान्तपाठो मुख्यः । मान्तपाठोऽपि केषांचित् । वक्तव्य इति । "वर्षाभ्वश्च" इति । चकारोऽनुक्तसमुच्चयार्थः । अनुक्तं च भाष्यवार्त्तिकबलान्निर्णेयमिति भावः । तथा च वर्षाभूपुनर्भ्वश्चेति वार्त्तिकं व्याख्याय भाष्यकार आह–अस्त्यल्पमिदमुच्यते, वर्षादृन्कारपुनःपूर्वस्य भुव इति वक्तव्यमिति । वामनेन तु दृन्शब्दो न पठित एव । एवं स्थिते यत्प्राचा दृक्कारेति पठितं, यच्च तत्पौत्रेण महाभाष्यकारवचनमर्थतोऽनुवदति इत्युक्तम् । यच्चान्यैर्वार्त्तिकेन पूरित-

शब्दरत्नम् ।

दशपादीति । अत्रारुचिबीजं तु नुन्निपातनं व्यर्थम् । न च परसवर्णाभावार्थमुभयनिपातनम् । नुम्येव निपात्येऽनुस्वारनिपातनसामर्थ्यनैव तदभावसिद्धेरिति । एवं चायमूकारो न धातोरित्युवङोऽप्रसङ्गाद्यणा भाव्यमिति 'दृन्पूर्वकभूप्रकृतिकदृन्भूशब्देन सह न रूपे विशेषः' इति माधवश्चिन्त्यः । निपात्यतेइति । एकादेशस्य पूर्वान्तत्वेन भूत्वमिति भावः । वार्त्तिकमिति । एतेन भाष्ये पूर्वग्रहणं व्यवहितेऽपि प्रवृत्त्यर्थमिति वर्षोद्भूरि-

भैरवी ।

अत्र—दशपादीति विशेषतः कथने । उभयेति । नुमनुस्वारेत्यर्थः । अनुस्वारेति । अनुस्वारमात्रेत्यर्थः । एवञ्च–उभयथाप्यस्योकारस्योणादित्वे च । चिन्त्य इति । तत्रोवङादेशस्य प्रवृत्तेरत्र तु तदभावस्येति रूपे विशेषस्य स्पष्टत्वादिति शेषः । कूप्रत्यय इति । भुव इति शेषः, तत एकादेश इति च । एकादेशस्य–प्रत्ययोकारेणैकादेशस्य । एतेनात्र पक्षे भूशब्दस्य लाक्षणिकत्वान्न वार्तिकेन यणित्यपास्तम् । अतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेरन्यत्रोपपादनात् । भाष्ये पूर्वग्रहणमिति । "वर्षादृन्कारपुनर्भ्यो

भावप्रकाश ।

उभयेति । नुमनुस्वारेत्यर्थः । अनुस्वारेति । तन्मात्रेत्यर्थः । नन्वेवमरुचिप्ररतमतोल्लेखो निर्बीजोऽतआह—एवंचेति । उभयथाऽप्यूप्रत्ययान्तत्वेनामि पूर्वः प्रथमयोरिति विषये रूपभेदे चेत्यर्थः । यणा—इकोयणचीत्यनेन । इतिः अविशेषे हेतुत्वसूचकः । सहेति । अस्येति शेषः । एकेति । एतेनात्र पक्षे भूशब्दस्य लाक्षणिकत्वान्न वार्त्तिकेन यणित्यपास्तम् । भाष्येपूर्वेति । अन्यथा "वर्षादृन्कारपुनर्भ्यो

मर्थमुदाहरतीत्यवतारितं, तत्सर्वं रभसकृतमेव। न च भाष्येऽपि दृगित्येव पाठ इति भ्रमितव्यम्। अन्दूदृन्भू इति निपातित इति माधवग्रन्थेन कैयटादिग्रन्थैश्च विरोधापत्तेरिति यत्किंचिदेतत्। दीर्घपाठे इति। अयं च भाष्यवृत्त्यादिबहुग्रन्थसंमतः पाठः। अनुस्मृतौ तु ह्रस्वः पठ्यते। यत्तु तद्विवृतावुक्तम्—एकदेशविकृतस्यानन्यत्वात् कारपूर्वस्यापि सिद्धमिति। तन्न, तथाप्यण्प्रत्ययविशिष्टस्यान्यत्वात्। न ह्यण्प्रत्ययोऽपि त्रिकारः। तस्माद्ध्रस्वपाठे कारपूर्वस्य उवङेव, तथा दीर्घपाठे करपूर्वस्य उवङिति विवेकः। स्वयम्भूवदिति। प्राचा तु दृग्भूकाराभूशब्दौ वर्षाभूशब्दवदुदाहृतौ। तन्निर्मूलत्वादुपेक्ष्यमिति भावः।

इत्यूदन्ताः॥

"नृ च"। इह "छन्दस्युभयथा" इति सूत्रात् 'उभयथा' इत्यनुवर्तते। 'छन्दसि' इति तु निवृत्तम्। तेन 'चिन्ताजर्जरचेतसां बत नृणां का नाम शान्तेः कथा' 'नृणामेको गम्यस्त्वमसि' इत्यादिप्रयोगाः सङ्गच्छन्ते। केचित्तु 'छन्दसि' इत्यनुवर्त्तयन्ति। तदयुक्तम्, पूर्वसूत्रेणैव सिद्धे 'नृ च' इति सूत्रस्य वैयर्थ्यापत्त्यादावपि यणिति परास्तम्।

---

शब्दरत्नम्।

त्यादावपि यणिति परास्तम्। सूत्रवार्त्तिकानुरोधेन पूर्वग्रहणस्य परिभाषाप्राप्तार्थानुवादत्वौचित्यात्। उपेक्ष्यमिति। काराभूरित्यत्र काराशब्दः करोतेर्ण्यन्ताद्भिदाद्यङि निष्पन्नो बन्धनगृहवाचकस्तस्य टापा सहैकादेशस्य पूर्वान्तत्वेऽपि वार्तिके ग्रहणं न, प्रसिद्धत्वेन ह्रस्वपाठैकवाक्यतया च हस्तवाचकस्यैव ग्रहणादिति भावः।

भैरवी।

भुवः" इत्येव पाठे इष्टसिद्धेः। एतेनेत्येतद्व्याचष्टे—सूत्रेति। वर्षाभ्वश्चेति सूत्रस्य वर्षाभूपुनर्भ्वश्चेति वार्तिकस्यानुरोधेनेत्यर्थः। यन्मूले तन्निर्मूलत्वाच्चिन्त्यमित्येव वक्तव्ये उपेक्ष्यमित्युक्तन्तस्य बीजान्तरमप्याह—काराभूरित्यत्रेति। अङीति। टापि चेति शेषः। एवञ्च काराशब्दो दुष्टाचरणकृतां यत्र स्थाने निग्रहो राजकर्तृकस्तद्वाचकः। यत्र तु कारागृहमिति प्रयोगस्तत्र "सकीचकैर्मारुतपूर्णरन्ध्रैः" इतिवत्प्रयोगः। तत्र यथा

"कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः"।

इति कोशात्कीचकपदस्य मारुतपूर्णरन्ध्रविशिष्टे शक्तिसत्त्वेऽपि पुनर्मारुतपूर्णरन्ध्रैरित्येतदुपपादनाद्वेणुमात्रपरत्वं तथाऽत्र काराशब्दो बन्धनमात्रपरः। प्रसिद्धत्वमुभयत्र तुल्यमित्याशयेनाह—हस्वेति।

भावप्रकाश।

भुवः" इत्येव पाठे परिभाषयेष्टसिद्धिरिति भावः। एतेनेत्यस्यार्थमाह—सूत्रेति। "वर्षाभ्वश्च" इति सूत्रं, "वर्षाभूपुनर्भ्वश्च" इति वार्त्तिकम्। तथा च तस्य वाचनिकत्वं न। अन्यथा तयोरतेन विरोधापत्तिरिति भावः। मूले प्राचा—प्रक्रियाकृता। पौत्रेण—प्रसादकृता। अन्यैः—प्रकाशकृद्भिः। एवमग्रेऽपि बोध्यम्। मूले उदाहृतौ—वर्षाभूशब्दं ससूत्रं संलिख्य दृग्भूशब्दं सतथापाठसहितवार्तिकं संलिख्यैवं काराभूरित्युक्तमिति भावः। यत्तु खण्डनकृत्—दीर्घपाठेऽणन्तस्येव टाबन्तस्यापि वार्त्तिके ग्रहणं पूर्वान्तत्वेनेति मूलं चिन्त्यमिति; तत्खण्डयति—कारेति। अङीति। टाबादौ चेत्यपि बोध्यम्। बन्धनेति। कारा बन्धने इति तत्र पाठात्। अत एव 'कारा बन्धनस्थानम्। कारागृहमिति यथा' इति प्रकाशकृता व्याख्यातम्। स च नित्यस्त्रीलिङ्गः। कारागृहमिति प्रयोगस्तु सकीचकैर्मारुतपूर्णरन्ध्रैरित्यादिवदिति भावः। अपिर्लिङ्गविशिष्टपरिभाषासमुच्चायकः। प्रसिद्धत्वस्य तुल्यत्वादाह—ह्रस्वेति। सम्भवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वात्। अत एव 'दृक्कारेत्यनाकरः पाठः' इति प्रक्रिया दूषिता प्रकाशकृता। एतेनाऽप्रश्लेषेण प्रक्रिया सुयोजेति कस्य चिदुक्तिरपास्तेति भावः।

अनङ्। हल्ङ्याब्दिलोपात्परत्वादुपधादीर्घः। स च "सर्वनामस्थाने च" इत्यनेन यद्यपि लभ्यते तथापि परत्वात् "अप्तृन्" इत्येव न्याय्यः। कृतेऽप्यनङि एकदेशविकृतस्यानन्यत्वेन तृच्त्वात्। अन्यथा गुणे कृतेऽपि दीर्घो न स्यादिति भावः।

"रात्सस्य" ॥ इह तकारोऽपि प्रश्लिष्यत इति पक्षान्तरम्। तेन हल्ङ्यादिसूत्रस्थाने ङ्यापः सोरिति निष्कर्षे अबिभर्भवानित्यादि सिद्ध्यति। अजर्घर्त् इत्यत्र तु चर्त्वस्यासिद्धत्वात् तलोपो न। ननु कीर्तयतेः क्विपि कीर्त् इह स्यादिति चेत्? न "यथालक्षणमप्रयुक्ते" इति भाष्यम्। एतेनावर्वर्त् इति व्याख्यातम्। परत्वादिति। न च नुण्नित्य इति वाच्यम्, तृज्वद्भावे कृते सन्निपातपरिभाषया नुटो दुर्लभत्वादिति भावः। नुमचिरेति। ननु रेण स्वविषये प्राप्तं सर्वं बाध्यम्, बाध्यसामान्यचिन्ताश्रयणात्। तथा च वक्ष्यते—'गुणदीर्घोत्वानामपवाद' इति।

---

शब्दरत्नम्।

नेन। यद्वा परत्वादुत्कृष्टत्वात् विशेषविहितत्वेन शीघ्रोपस्थितिकत्वादित्यर्थः।

निष्कर्ष इति। भाष्यस्थपूर्वपक्षिण इति शेषः। यथालक्षणमिति। अप्रयुक्ते लक्षणाभावस्य योग्यतेत्यर्थः। बाध्यसामान्यचिन्तेति। सा च तृज्वत्सूत्रे भाष्ये स्पष्टा। एवं च 'अचि र' इति सूत्रस्थम् 'अचि रादेशे जस्युपसंख्यानं गुणपरत्वात्' इति वार्त्तिकं बाध्यविशेषचिन्ताभिमानेन प्रवृत्तमिति भावः। एतेन तद्वार्त्तिकबलाज्जसोऽन्यत्र प्रियतिसर·

भैरवी।

सम्मतस्य विप्रतिषेधपदार्थस्याभावेन विप्रतिषेध इति कथनमभिमानेनेत्यर्थः। तत्र हि द्वयोः शास्त्रयोरन्यत्र लब्धावकाशयोर्युगपत्प्राप्तयोर्युगपदसम्भवे विप्रतिषेधस्य प्रतिपादनमेवास्ति। विशेषविहितत्वेन-प्रतिपदोक्तत्वेन निरवकाशत्वाभावेऽपि पूर्वप्रवृत्तिप्रयोजकत्वमस्यास्त्येव।

ननु तादृशनिष्कर्षस्य दूषितत्वादिति निष्कर्ष इत्यनुचितमत आह—भाष्यस्थेति। मूले नुण्नित्य इति। कृताकृतप्रसङ्गित्वेन तस्य नित्यत्वमिति भावः। तच्च कृताकृतप्रसङ्गित्वं दूषितम्। सन्निपातेत्यादिना रादेशस्य बाध्यसामान्यचिन्ता सप्रमाणा इत्याह—सा चेति। एवञ्च-बाध्यसामान्यचिन्ताया भाष्यसम्मतत्वे च। अभिमानेन प्रवृत्तमिति। यदि तद्विषये बाध्यविशेषचिन्ता सप्रमाणा स्यात्तदा पुरस्तादपवादन्यायेन रादेशस्य जसि यो गुणस्तद्बाधकत्वमेव

भावप्रकाश।

सम्भवे विप्रतिषेध इति भाष्योक्तेरिति भावः। यद्वेति प्रकारस्तत्रापि बोध्यः। सर्वथा मूलमयुक्तमिति गूढाकूतम्। एतेन तथा रत्नाकरदण्ड्याद्युक्तमपास्तम्। विशेषेति। प्रतिपदोक्तत्वेनेत्यर्थः। निरवकाशत्वाभावेऽपि पूर्वप्रवृत्तिप्रयोजकबलवत्त्वस्यास्य सत्त्वादिति भावः।

निष्कर्षस्य दूषितत्वादाह—भाष्येति। अप्रयुक्ते इति। व्याख्यातमिदम्। प्रकृते तदाश्रयणे निर्मूलत्वशङ्कां निराचष्टे—साचतृज्वदिति। तत्र हि नुमचिरेति वार्त्तिकव्याख्यावसरे "नुड्रेफयोर्विप्रतिषेधो न वाच्यः, तेनेष्टासिद्धेः। किं तर्हि? नुड्विषये रप्रतिषेधो वाच्यः। इतरथा हि सर्वापवादो रः स यथैव गुणपूर्वसवर्णौ बाधते एवं नुटमपि बाधेत" इत्युक्तम्। अत्र पक्षे येनेत्यस्य स्वेतरेणेत्यर्थ इति बोध्यम्। अचिर इत्यत्रत्यभाष्यविरोधं परिहरति—एवं चेति। तस्याः समूलत्वे चेत्यर्थः। प्रवृत्तमिति। अन्यथा तत्र पक्षे पुरस्तादपवादन्यायेन रादेशो जसि गुणं बाधेत न सर्वनामस्थानगुणमिति भावः। अभिमानेनेत्यरुचिः

एवं चाविशेषाद् नुडप्यनेन बाध्यः । तत्कथं विप्रतिषेधः । उत्सर्गापवादयोस्तद्-योगादिति चेत् ? सत्यम्, अत एव तदंशे विप्रतिषेधं दूषयित्वा "न तिसृचतसृ" इति ज्ञापकाद् नुडिति भाष्यकृतोक्तमिति सन्तोष्टव्यम् ।

इत्युदन्ताः ॥

हूहूरिति । अव्युत्पन्ना संज्ञेयम् । अतिचमूशब्दे त्विति । 'प्रथमलिङ्गग्रहणं च' इत्युक्तेः । तथा च एवमतिचम्वादय इति प्राचो ग्रन्थो भाष्यविरुद्ध इति भावः ।

"वर्षाभ्वश्च" । वर्षाभूशब्दस्य नित्यस्त्रीत्वात् स्त्रीलिङ्गप्रकरण एव एतत्सूत्रं वक्तुं युक्तम् । पुंल्लिङ्गे तु क्रियाशब्दाभिप्रायेण कथं चिद्योज्यमिति व्याचख्युः, तद्भसात् । दर्दुरे हि पुंल्लिङ्गोऽयम्—

भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः ।

इत्यमरोक्तेः । भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषितत्वात्,

---

शब्दरत्नम् ।

मित्यादौ गुणं कल्पयन्तः परास्ताः । तृज्वत्सूत्रस्थभाष्यविरोधात् "मपर्यन्तस्य" इति सूत्रस्थप्रियतिस्रावित्यादिभाष्यविरोधाच्च । अनेन—रेण । विप्रतिषेध इति । अचिरेणेत्यर्थः । दूषयित्वेति । यद्यपि "न तिसृ" इति ज्ञापकेन तदपवादत्वाभावकल्पनया विप्रतिषेध उपपद्यते, तथापि ज्ञापकानुसरणस्यावश्यकत्वेनैव तं संसाध्य तं दूषयित्वेत्यर्थः । इदं च तृज्वत्सूत्रे भाष्ये । सन्तोष्टव्यमिति । अतिक्षोदस्तदंशे वार्त्तिके न कार्य इति भावः ।

भैरवी ।

स्यान्नतु सर्व्वनामस्थाने यो गुणस्तद्बाधकत्वम् । एतेन-वक्ष्यमाणदूषणेन । गुणम्-ऋतोङीतिगुणम् । तद्दूषणमेवाह-तृज्वदिति । तत्र हि "नुमचिर" इति वार्तिकव्याख्यानावसरे नुड्रेफयोर्विप्रतिषेधो न वाच्यः । किन्तर्हि नुड्विषये रादेशस्य प्रतिषेध एव वक्तव्यः । इतरथाहि सर्व्वापवादो रः स यथैव गुणं पूर्व्वसवर्णञ्च बाधते । एवन्नुटमपि बाधेतेत्युक्तम् । भाष्यान्तरविरोधमप्याह—मपर्य्यन्तस्येतीति । अचिरेणेति । नुडागमस्येति शेषः । अथ "न तिसृ" इति सूत्रं रेफादेशस्य नुडपवादत्वाभावे एव ज्ञापकत्वमस्तु । एवञ्च विप्रतिषेधस्योपपत्तिर्भविष्यतीत्याशङ्कते-यद्यपीति । तेनैव-ज्ञापकेनैव । तम्—नुटम् । तन्दूषयित्वा—विप्रतिषेधं दूषयित्वा । तृज्वत्सूत्रभाष्य इति । उक्तभाष्यानन्तरन्तत्र "तस्मान्नुड्विषये रप्रतिषेधो वाच्यः, न वाच्यः, आचार्य्यप्रवृत्तिर्ज्ञापयति-न रादेशो नुटम्बाधत इति । यदयन्न तिसृचतसृ इति नामिदीर्घत्वस्य प्रतिषेधं शास्ति" इत्युक्तम् । अतिक्षोदः-अतिविचारः । तदंशे-रांशे । मूले नुमागमोऽनुस्वारश्चेति । परसवर्णार्थमिति शेषः ।

भावप्रकाश ।

सूचिता समूलावश्यिकया तयैव सिद्धे वार्तिकं नावश्यकमिति तद्भाष्यमेकदेश्युक्तिरिति । गुणमिति । शब्दपरत्वेन रादेशप्रसक्ते चतसरीतिवार्त्तिके इवेति भावः । एतेनेत्यस्यार्थमाह-तृज्वदिति । उक्तोऽर्थः । अभ्युपेत्यापि तेनानिर्वाहमाह-मपर्यन्तेति । मौलविप्रतिषेधशब्दस्य न सामान्यपरत्वमित्याह-अचीति । एतेन भाष्येऽप्येवमेवेति सूचितम् । तदपेति । नुडपवादत्वेत्यर्थः । त्वेनैवेत्यादि । ज्ञापकेनैव नुटं संसाध्य विप्रतिषेधं दूषयित्वेत्यर्थः । इदं चेति । उक्तभाष्यादग्रे तत्र "तस्मान्नुड्विषये रप्रतिषेधो वाच्यः । न वाच्यः; आचार्यप्रवृत्तिर्ज्ञापयति न रादेशो नुटं बाधते इति यदयं नतिसृचतसृ इति नामिदीर्घत्वप्रतिषेधं शास्ति" इत्युक्तम् । क्षोदोऽत्र विचारः । तदंशे—रांशे ।

भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान् ॥

इति यादवकोशाच्च । दर्दुरे षणीति पाठान्तरम् । षणीति पुंलिङ्गस्य प्राचां संज्ञा । दृभतीति । दृभी ग्रन्थे तुदादिः । व्युत्पादित इति । यद्यप्युज्ज्वलदत्तेन दृम्फूरिति पवर्गद्वितीयं पठित्वा दृम्फेर्नलोपाभावो निपात्यते इति व्याख्यातं, तथाऽपि वृत्त्यन्तरेषु दृभी ग्रन्थे इत्यस्मात् डूप्रत्यये नुमागमो निपात्यते इत्युक्तम् । एतच्च माधवग्रन्थे स्पष्टम् । दशपादीवृत्तौ तु दर्भणं दृम्भूः । नुमागमोऽनुस्वारश्च निपात्यते इत्युक्तम् । अयमूकारो न धातोरित्युवङोऽप्रसङ्गात् "इको यणचि" इति यण् । स च "अमि पूर्वः" "प्रथमयोः पूर्वसवर्णः" इत्याभ्यां बाध्यत इत्याशयेनोदाहरति–दृम्भूमित्यादि । न चेह 'दृन्कर' इति यण् शङ्क्यः । तत्र अर्थवत एव ग्रहणात् । अस्य तु दृन्शब्दस्य भूशब्दस्य च अनर्थकत्वादिति भावः । एवं चायं हूहूवदिति फलितम् । श्रीपतिमतेनाह–दृन्निति । माधवस्तु–'अन्दूदृम्भू' इत्यादिसूत्रेण दृढशब्दे उपपदे कूप्रत्ययः, उपपदस्य दृन्नादेशश्च निपात्यत इत्याह—दृन्भूरिति । तरुः सर्पजातिभेद इति केचित । कपिरित्यन्ये । दृन्करेति । अत्र दृन्निति नान्तपाठो मुख्यः । मान्तपाठोऽपि केषांचित् । वक्तव्य इति । "वर्षाभ्वश्च" इति । चकारोऽनुक्तसमुच्चयार्थः । अनुक्तं च भाष्यवार्त्तिकबलान्निर्णेयमिति भावः । तथा च वर्षाभूपुनर्भ्वश्चेति वार्त्तिकं व्याख्याय भाष्यकार आह—अत्यल्पमिदमुच्यते, वर्षादृन्कारपुनःपूर्वस्य भुव इति वक्तव्यमिति । वामनेन तु दृनशब्दो न पठित एव । एवं स्थिते यत्प्राचा दृक्कारेति पठितं, यच्च तत्पौत्रेण महाभाष्यकारवचनमर्थतोऽनुवदति इत्युक्तम् । यच्चान्यैर्वार्त्तिकेन पूरित-

शब्दरत्नम् ।

**दशपादीति** । अत्रारुचिबीजं तु नुन्निपातनं व्यर्थम् । न च परसवर्णाभावार्थमुभयनिपातनम् । नुम्येव निपात्येऽनुस्वारनिपातनसामर्थ्येनैव तदभावसिद्धेरिति । एवं चायमूकारो न धातोरित्युवङोऽप्रसङ्गाद्यणा भाव्यमिति 'दृन्पूर्वकभूप्रकृतिकदृन्भूशब्देन सह न रूपे विशेषः' इति माधवश्चिन्त्यः । **निपात्यतेइति** । एकादेशस्य पूर्वान्तत्वेन भूत्वमिति भावः । **वार्त्तिकमिति** । एतेन भाष्ये पूर्वग्रहणं व्यवहितेऽपि प्रवृत्त्यर्थमिति वर्षादृभूरि-

भैरवी ।

अत्र—दशपादीति विशेषतः कथने । उभयेति । नुमनुस्वारेत्यर्थः । अनुस्वारेति । अनुस्वारमात्रेत्यर्थः । एवञ्च–उभयथाप्यस्योकारस्योणादित्वे च । चिन्त्य इति । तत्रोवङादेशस्य प्रवृत्तेरत्र तु तदभावस्येति रूपे विशेषस्य स्पष्टत्वादिति शेषः । कूप्रत्यय इति । भुव इति शेषः, तत एकादेश इति च । एकादेशस्य–प्रत्ययोकारेणैकादेशस्य । एतेनात्र पक्षे भूशब्दस्य लाक्षणिकत्वान्न वार्तिकेन यणित्यपास्तम् । अतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेरन्यत्रोपपादनात् । भाष्ये पूर्वग्रहणमिति । "वर्षादृन्कारपुनर्भ्यो

भावप्रकाश ।

उभयेति । नुमनुस्वारेत्यर्थः । अनुस्वारेति । तन्मात्रेत्यर्थः । नन्वेवमरुचिग्रस्तमतोल्लेखो निर्बीजोऽतआह—एवंचेति । उभयथाऽप्यूप्रत्ययान्तत्वेनामि पूर्वः प्रथमयोरिति विषये रूपभेदे चेत्यर्थः । यणा—इकोयणचीत्यनेन । इतिः अविशेषे हेतुत्वसूचकः । सहेति । अरयेति शेषः । एकेति । एतेनात्र पक्षे भूशब्दस्य लाक्षणिकत्वान्न वार्त्तिकेन यणित्यपास्तम् । भाष्येपूर्वेति । अन्यथा "वर्षादृन्कारपुनर्भ्यो

मर्थमुदाहरतीत्यवतारितं, तत्सर्वं रभसकृतमेव । न च भाष्येऽपि दृगित्येव पाठ इति भ्रमितव्यम् । अन्दूदृन्भू इति निपातित इति माधवग्रन्थेन कैयटादिग्रन्थैश्च विरोधापत्तेरिति यत्किंचिदेतत् । दीर्घपाठे इति । अयं च भाष्यवृत्त्यादिबहुग्रन्थसंमतः पाठः । अनुस्मृतौ तु ह्रस्वः पठ्यते । यत्तु तद्विवृतावुक्तम्—एकदेशविकृतस्यानन्यत्वात् कारपूर्वस्यापि सिद्धमिति । तन्न, तथाप्यण्प्रत्ययविशिष्टस्यान्यत्वात् । न ह्यण्प्रत्ययोऽपि विकारः । तस्माद् ध्रस्वपाठे कारपूर्वस्य उवङेव, तथा दीर्घपाठे करपूर्वस्य उवङिति विवेकः । स्वयम्भूवदिति । प्राचा तु दृग्भूकाराभूशब्दौ वर्षाभूशब्दवदुदाहृतौ । तन्निर्मूलत्वादुपेक्ष्यमिति भावः ।

इत्यूदन्ताः ॥

"नृ च" । इह "छन्दस्युभयथा" इति सूत्रात् 'उभयथा' इत्यनुवर्तते । 'छन्दसि' इति तु निवृत्तम् । तेन 'चिन्ताजर्जरचेतसां बत नृणां का नाम शान्तेः कथा' 'नृणामेको गम्यस्त्वमसि' इत्यादिप्रयोगाः सङ्गच्छन्ते । केचित्तु 'छन्दसि' इत्यनुवर्त्तयन्ति । तदयुक्तम् , पूर्वसूत्रेणैव सिद्धे 'नृ च' इति सूत्रस्य वैयर्थ्याप-

---

शब्दरत्नम् ।

त्यादावपि यणिति परास्तम् । सूत्रवार्त्तिकानुरोधेन पूर्वग्रहणस्य परिभाषाप्राप्तार्थानुवादत्वौचित्यात् । उपेक्ष्यमिति । काराभूरित्यत्र काराशब्दः करोतेर्ण्यन्ताद्भिदाद्यङि निष्पन्नो बन्धनगृहवाचकस्तस्य टापा सहैकादेशस्य पूर्वान्तत्वेऽपि वार्तिके ग्रहणं न, प्रसिद्धत्वेन ह्रस्वपाठैकवाक्यतया च हस्तवाचकस्यैव ग्रहणादिति भावः ।

भैरवी ।

भुवः" इत्येव पाठे इष्टसिद्धेः । एतेनेत्येतद्व्याचष्टे—सूत्रेति । वर्षाभ्वश्चेति सूत्रस्य वर्षाभूपुनर्भ्वश्चेति वार्तिकस्यानुरोधेनेत्यर्थः । यन्मूले तन्निर्मूलत्वाच्चिन्त्यमित्येव वक्तव्ये उपेक्ष्यमित्युक्तन्तस्य बीजान्तरमप्याह—काराभूरित्यत्रेति । अङीति । टापि चेति शेषः । एवञ्च काराशब्दो दुष्टाचरणकृतां यत्र स्थाने निग्रहो राजकर्तृकस्तद्वाचकः । यत्र तु कारागृहमिति प्रयोगस्तत्र "सकीचकैर्मारुतपूर्णरन्ध्रैः" इतिवत्प्रयोगः । तत्र यथा

"कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः" ।

इति कोशात्कीचकपदस्य मारुतपूर्णरन्ध्रविशिष्टे शक्तिसत्त्वेऽपि पुनर्मारुतपूर्णरन्ध्रैरित्येतदुपपादनाद्वेणुमात्रपरत्वं तथाऽत्र काराशब्दो बन्धनमात्रपरः । प्रसिद्धत्वमुभयत्र तुल्यमित्याशयेनाह—ह्रस्वेति ।

भावप्रकाश ।

भुवः" इत्येव पाठे परिभाषयेष्टसिद्धिरिति भावः । एतेनेत्यस्यार्थमाह—सूत्रेति । "वर्षाभ्वश्च" इति सूत्रं, "वर्षाभूपुनर्भ्वश्च" इति वार्त्तिकम् । तथा च तस्य वाचनिकत्वं न । अन्यथा तयोरतेन विरोधापत्तिरिति भावः । मूले प्राचा–प्रक्रियाकृता । पौत्रेण–प्रसादकृता । अन्यैः– प्रकाशकृद्भिः । एवमग्रेऽपि बोध्यम् । मूले उदाहृतौ—वर्षाभूशब्दं ससूत्रं संलिख्य दृग्भूशब्दं सतथापाठसहितवार्तिकं संलिख्यैवं काराभूरित्युक्तेरितिभावः । यत्तु खण्डनकृत्—दीर्घपाठेऽणन्तस्येव टाबन्तस्यापि वार्त्तिके ग्रहणं पूर्वान्तत्वेनेति मूलं चिन्त्यमिति; तत्खण्डयति—कारेति । अङीति । टाबादौ चेत्यपि बोध्यम् । बन्धनेति । कारा बन्धने इति तत्र पाठात् । अत एव 'कारा बन्धनस्थानम् । कारागृहमिति यथा' इति प्रकाशकृता व्याख्यातम् । स च नित्यस्त्रीलिङ्गः । कारागृहमिति प्रयोगस्तु सकीचकैर्मारुतपूर्णरन्ध्रैरित्यादिवदिति भावः । अपिर्लिङ्गविशिष्टपरिभाषासमुच्चायकः । प्रसिद्धत्वस्य तुल्यत्वादाह—ह्रस्वेति । सम्भवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वात् । अत एव 'दृक्कारेत्यनाकरः पाठः' इति प्रक्रिया दूषिता प्रकाशकृता । एतेनाङ्प्रश्लेषेण प्रक्रिया सुयोजेति कस्य चिदुक्तिरपास्तेति भावः ।

त्तेः । यदपि पूर्वसूत्रे 'तिसृचतसृ' इत्यनुवर्तयन्ति; तदप्ययुक्तम्, अविशेषेण विकल्पदर्शनात् । तथा च "धाता धातृणाम्" इति मन्त्रे तैत्तिरीयैर्ह्रस्वः पठ्यते, बह्वृचैस्तु दीर्घ इति दिक् । इत्यृदन्ताः ॥

ओतो णिदिति वाच्यमिति । गोत इत्यपहाय ओत इति वाच्यमित्यर्थः । तथा च गामित्यत्र परत्वाद्वृद्धौ सत्यामात्वं न स्यादित्याशङ्क्य निरवकाशतया आत्वेन वृद्धिर्बाध्यत इति "औतोऽम्शसोः" इति सूत्रे भाष्यकृतोक्तम् । कैयटोऽपि तत्रेत्थमाह—ओत इति सूत्रे पाठ्यम् । गोत इत्योकारोपलक्षणतया वा व्याख्येयमिति । वृत्त्यादिग्रन्थेष्वप्येवमेव स्थितम् । स्मृतौरिति । यत्त्वाहुः-गोशब्देन औणादिकेन सादृश्याद् द्योशब्द एव लक्ष्यते न त्वोकारान्तमात्रम् । तेन स्मृतोः स्मृतवौ स्मृतव इत्येव भवतीति, तद्भाष्यविरुद्धम् । गोद्योभ्यामेव परस्य णित्वाभ्युपगमे हि 'औतोऽम्शसोः' इत्यात्वस्य स्मृतामित्यादिरवकाशः स्यात् । तथा च गामित्यत्र परत्वाद्वृद्धेर्दुर्वारतया उदाहृतभाष्योक्तमात्वस्य बाधकत्वं निरवकाशत्वं च न सङ्गच्छेतेति दिक् ॥

इत्योदन्ताः ॥

---

शब्दरत्नम् ।

इत्यपहायेति । एतदवयवगकारमपहायेत्यर्थः । इत्योकारोपलक्षणतयेति । तपरकरणेन गस्याविवक्षितत्वलाभादिति भावः । निरवकाशत्वं चेति ।

भैरवी ।

गोत इत्यपहायेति मूलोक्तरीत्या समुदायस्य त्यागो न चमत्कारकारीत्यतस्तद्व्याचष्टे-एतदवयवेति । एतन्मूलकफक्किकायां गोत इत्यवयवावयविभावार्थिका षष्ठीति भावः । कैयटोक्तम्प्रकारान्तरम्मूलकार आह-गोत इत्योकार इति । एवञ्च पूर्व्वङ्कारो यद्यपि पाणिनिनोच्चारितस्तथापि "आचार्य्याः कृत्वा न निवर्त्तन्ते" इति न्यायेन तस्य न त्यागः कृत इत्याशयः । केचित्तु गकारोच्चारणम्मङ्गलार्थम् । ओत इति तु विवक्षितमत एव चित्रगुरित्यत्र न दोषः, गकारस्य विवक्षितत्वे स्थानिवद्भावेन गुशब्दस्य गोशब्दतया ऽङ्गाधिकारे तदन्तविधिसत्त्वेन गोशब्दान्तत्वेन दोषः स्यादेव । मम त्वल्विधित्वान्न सूत्रस्य प्रवृत्तिः । वस्तुतस्तु प्रकृतसूत्रे भाष्ये तपरत्वं प्रत्याख्यातम् । चित्रगुरित्यत्रातिप्रसङ्गस्य तु गोः पू० त्वणित्त्वेत्यनेन स्थानिवद्भावस्य प्रतिषेधादेव निरासः । द्योश्च सर्व्वनामस्थाने णित्वं वक्तव्यम् । ननु मूलोक्तम्बाधकत्वन्निरवकाशत्वं चेत्ययुक्तञ्चकारोपादानं, निरवकाशत्वाभावेऽपि बाधकत्वस्य प्रतीतेरत

भावप्रकाश ।

यथाश्रुतमूलोक्तौ गौरवमपाणिनीयत्वं चात एव कैयटेन पक्षान्तरमुक्तम् । तेन स्वोक्तपूर्वमतेऽरुचिः सूचितेत्यत आह—एतदिति । तथा च फक्किकायां गोत इत्यवयवषष्ठीति सूचितम् । अपहायेत्यस्याविवक्षयित्वेत्यर्थः । मूले वाच्यमित्यस्य विवक्षणीयमित्यर्थ इति भावः । एतेन तथा रत्नाकरदण्ड्याद्युक्तमपास्तम् । अत एव कैयटीयपूर्वमतं त्यक्त्वोत्तरमतं व्याचष्टे—तपरेति । प्रागन्योकारान्तासत्त्वेऽपि गो इत्युक्तावपि न ह्याचार्या इति न्यायेन तस्यानिवर्त्यत्वात्तत उपस्थितद्योशब्दसंग्रहाय तकार इति स तद्विवक्षायां मानमिति । सप्लुतानुकरणवारणेन सर्वतत्कालग्रहणेन वा तावतैव वा स चरितार्थः । अन्यथा वैयर्थ्यं स्पष्टमेवेति भावः । प्रकाशोपीत्थमेव । मङ्गलार्थं गकारोच्चारणमिति तु मान्याः । अत एव चित्रगुरित्यादौ न दोषः । अन्यथाऽङ्गाधिकारे तदन्तविधिसत्त्वेन स्थानिवत्त्वेन गोन्तत्वाद्दोषः स्यादेव । मम त्वनोकारान्तत्वादल्विधावस्थानित्वाच्च न दोषः । वस्तुतो ऽत्र सूत्रे भाष्ये तपरत्वं प्रत्याख्यातं गोः पूर्वणित्त्वेति निषेधाच्चित्रगुरित्यादौ न दोषः । हे चित्रगो इत्यादौ तु लाक्षणिकत्वान्नेति । स्पष्टञ्च द्योः सर्वनामस्थाने णित्वं वाच्यमित्यौतोमित्यत्र भाष्ये उक्तमिति बोध्यम् । अन्यतराभावेऽन्यतरस्य स्थिति-

"राया हलि" । 'अर्थे रैविभवा अपि' इत्यमरात्पुंस्त्वम्, 'सं राया भूयसा सृजा' इत्यादिप्रयोगाच्च । 'रा यिः छान्दसः' इति भाष्यम् । तच्च क्यजन्तस्य रैशब्दस्य छान्दसत्वपरं न तु केवलस्यापीति "वान्तो यि" इति सूत्रे कैयटः । केवलोऽपि च्छान्दस इति पक्षान्तरं स एवाह । इत्यैदन्ताः ।

'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः । एवं जनानवतीति जनौः । "ज्वरत्वर" इत्यूठ् । "एत्येधति" इति वृद्धिः । जनावौ जनाव इत्यादि ॥

॥ इत्यजन्ताः पुँल्लिङ्गाः ॥

शब्दरत्नम् ।

चो हेतौ । यतो निरवकाशत्वमतो बाधकत्वमित्युक्तं न सङ्गच्छेतेत्यर्थः ।

अमरात्पुंस्त्वमिति । भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषणादिति भावः । भाष्यमिति । स्थानेऽन्तरतमसूत्रे इति भावः । **क्यजन्तस्येति** । राः रैशब्दो यि यकारादिप्रत्ययान्तश्छान्दस इति भाष्याक्षरार्थः । यकारेण यकारादिः प्रत्ययो लक्ष्यते । इकार उच्चारणार्थः । प्रायेण विसर्गरहित एव पाठः । तदा यादौ प्रत्यय इत्यर्थ इति भावः । **न त्विति** । अत एव रायमिच्छतीति विग्रहप्रदर्शनपरभाष्यं सङ्गच्छते । न हि विग्रहश्छन्दः । अत एव रायि आशा राय्याशा इति "अचः परस्मिन्" इत्यत्र भाष्ये प्रयुक्तमिति भावः । **पक्षान्तरमिति** । अत्रारुचिबीजं स्पष्टमेव ॥ इत्यजन्ताः पुँल्लिङ्गाः ॥

भैरवी ।

आह—चो हेताविति ।

मूले संराया भूयसेति । यद्ययं स्त्रीलिङ्गः स्यात्तदा भूयस्या इति स्यादिति भावः । ननु स्थानिवत्सूत्रस्थभाष्याद्रैशब्दस्य च्छान्दसत्वप्रतीत्या वैदिकेष्वस्य प्रतिपादनं युक्तमितीह तस्य कथनमयुक्तमित्याशङ्कानिवारणायाह—मूले रायिरित्यादि । उक्तभाष्यं व्याचष्टे—राः रैशब्द इति । उच्चारणार्थ इत्यन्तो ग्रन्थः । वस्तुतस्त्विकारः सप्तम्येकवचनरूप एवेत्याशयेनाह—प्रायेणेति । अत एव—केवलस्याच्छान्दसत्वादेव । अत एव—उक्तोऽर्थः । मूले स एवेति । कैयट एवेत्यर्थः । स्पष्टमेवेति । यद्ययं केवलोऽपि च्छान्दसः स्यात्तदा यिशब्दोच्चारणवैयर्थ्यापत्तिः, उक्तभाष्योक्तप्रयोगद्वयविरोधश्च स्पष्टमेवेत्यर्थः ॥ इत्यजन्तपुंल्लिङ्गविवरणम् ।

भावप्रकाश ।

रित्यर्थाभावबोधनार्थमुभयोरुल्लेख इति मान्यास्तन्न सार्वत्रिकं, किन्तु प्रकृताभिप्रायमिति सूचयन्नाह—**चो हेताविति** । यतः शास्त्रान्तरेण विषयस्य व्याप्तत्वात् ।

**क्यजन्तस्येतीति** । उपक्रमभाष्यात्तथैव लाभादिति भावः । अक्षरतोऽपि तथैव लभ्यते इत्याह—**राइति** । **यकारादिरिति** । स चोपक्रमानुरोधेन क्यजेव । एवमग्रेऽपि । एतेन राय्या शामित्यादौ यणि व्यपदेशिवद्भावेन यादिप्रत्ययान्तत्वस्य यादिप्रत्ययपरत्वस्य च सत्वाच्छान्दसत्वापत्तिरुभयथापीत्यपास्तमिति भावः । **पाठ इति** । भाष्ये इति भावः । एतेन रायिरित्ययुक्तम् । क्यजन्तरैशब्दादिक्यप्यात्वस्य दौर्लभ्यात् हलादिविभक्त्यपरत्वात्, रैशब्दात्क्विक् दुर्लभ इत्यपास्तम् । **विग्रहेति** । लौकिकविग्रहेत्यर्थः । विग्रहस्य छन्दस्त्वमभ्युपेत्याप्याह—**अत एवेति** । केवलस्याच्छान्दसत्वादेवेत्यर्थः । प्रागप्येवं बोध्यम् । **बीजं स्पष्टमेवेति** । कोशविरोधः । न हि तत्र वैदिकानामन्वाख्यानम् । किञ्च क्यजन्तोपक्रमभाष्यविरोधः भाष्येऽपीत्यस्य वैयर्थ्यापत्तिश्च, उक्तभाष्यद्वयस्थप्रयोगासङ्गतिश्चेति भावः॥ इत्यजन्ताः पुंलिङ्गाः ॥

सरला ।

**अजन्ता इति** । अत्र कुत्वेन अगन्ता इति प्रयोगो न्याय्य इति केचित् । वस्तुतस्तु "अल्पाच्तरम्" इति निर्देशेन "आदिरन्त्येन सहेता" इति सूत्रबोधितसंज्ञासु हलन्त्यकार्यं नेति बोधनेन प्रकृते न कुत्वमिति बोध्यम् ।

# अथ अजन्तस्त्रीलिङ्गप्रकरणम् ।

**रमेति ।** लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वात् स्वादयः । यत्तु आबन्तत्वादिति, यच्च व्याचख्युः—प्रत्ययान्तत्वादप्रातिपदिकत्वेऽपि पृथक् ङ्याप्ग्रहणात् इत्यर्थ इति; तन्न, ङ्याब्ग्रहणस्यान्यार्थतायाः प्रागेवोक्तत्वात् । **एङ्ह्रस्वादिति ।** परत्वात्प्रतिपदोक्तत्वाच्च "सम्बुद्धौ च" इत्येत्वे कृते हल्ङ्यादिलोपो न प्राप्नोति, स्थानिवद्भावादाप्त्वेऽप्याकाररूपत्वाभावात् । आआबित्याकारं प्रश्लिष्य

---

शब्दरत्नम् ।

**लिङ्गविशिष्टेति ।** तया परिभाषया प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टे बोधनेन तया प्रातिपदिकत्वादित्यर्थः । ध्वनितं चेदं "बहुव्रीहेरूधसः" इत्यत्र भाष्ये । **परत्वादिति ।** असम्बुद्धौ हल्ङ्यादिलोपश्चरितार्थः । कृते लोपे एत्वं सावकाशमित्यभिमानः । ननु 'सत्यपि सम्भवे बाधनम्' इति न्यायविरोधोऽत आह—प्रतिपदोक्तत्वा-

भैरवी ।

## अथ अजन्तस्त्रीलिङ्गप्रकरणम् ।

यत्तु लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वादिति, तन्न युक्तम् परिभाषया तद्विशिष्टस्य ग्रहणमेव बोध्यते इति, तन्नेत्याशयेनाह—तयेति । विशिष्टे—लिङ्गबोधकप्रत्ययविशिष्टे । बोधनेन—अतिदेशेन । ध्वनितमिति । नद्यन्ताद्बहुव्रीहेः कबित्यर्थे 'कुण्डोध्नी'इत्यत्र कबापादनपरभाष्येण ध्वनितमित्यर्थः । यदुक्तं प्रागग्रिमञ्चेति, तदिह दर्शयति—असम्बुद्धावित्यादिना । साव-

भावप्रकाश ।

यत्तु खण्डनकृत्—परिभाषया प्रातिपदिकत्वात्स्वादय इति चिन्त्यम् । तया तत्त्वाभावात् । नच तथा स्वादय इत्यन्वयः, प्रातिपदिकत्वादित्यस्यानन्वयात् । पूर्वान्तवत्त्वाशयेन तत्त्वोक्तौ तु परिभाषोक्त्यानर्थक्यात् । उभयोर्हेतुत्वोक्तौ तु समुच्चयार्थकचानुक्तेर्न्यूनता । नचाप्रातिपदिकत्वात्तया ते इत्यन्वयः, अप्रत्यय इति पर्युदासाङ्गीकारेण पूर्वान्तवत्त्वेन च तत्त्वात् । निषेधेऽपि तत एव तस्य सत्त्वादेवं चाप्रातिपदिकत्व रूपहेतुः स्वरूपासिद्धः । प्रातिपदिकग्रहणे स्त्रीप्रत्ययविशिष्टस्य ग्रहणमिति परिभाषार्थेनात्र तेनाबन्तस्यापि ग्रहणात्तस्याः प्रवृत्तावप्याबन्तत्वादिति हेतुरुचित इति; तत्खण्डयति—**तयेति । विशिष्टे**—लिङ्गबोधकप्रत्ययविशिष्टे । **बोधनेन**—अतिदेशेन । **ध्वनितमिति ।** व्याख्यातमेतन्ङ्याप्प्रातिपदिकादित्यत्र । एतेन—'तया ते' इति दण्ड्युक्तं, 'पूर्वान्तवत्त्वेन प्रातिपदिकत्वात्तया वा ते' इति रत्नाकरोक्तं, 'तया ते इत्युक्त्वा मूले तत्त्वात्ते इत्युक्तं तद्व्यर्थम् । व्याख्यापि चिन्त्या, तद्व्याप्यधर्माणामिति गुरुव्याख्याने फलाभावात् तस्यां यथा कथंचित्प्रातिपदिकग्रहणे प्रमाणाभावात् तद्वैयर्थ्यानुद्धाराच्च । न च बहुव्रीहेरित्यत्रत्यं भाष्यं मानम् । तत्रैतस्यार्थस्यासंस्पर्शात् समासान्तेषु तदप्रवृत्तेश्च । मूलयोजनाग्रहे तु तस्माद्ये ते विहितास्ते ङ्याबन्तादपि भवन्तीत्यर्थः' इति मन्दोक्तं चापास्तम् । एवं चैवं दुर्गादय इति परममूलेन हलन्तप्रकृतिकटाबन्ता अप्युक्ताः रुयादयस्तूपनिबद्धा एव । तथाचाद्यो हेतुर्वाचा स्त्रीइत्याद्याशयेन, द्वितीयो रमाद्याशयेन । एतेनोभयोर्हेतुत्वे चानुक्तेर्न्यूनतेति भ्रान्तोक्तमपास्तम् । सनच्छेदे तु एकादेशरहितविषयतया एकादेशेऽपि कार्यकालाशयेन वा ग्रन्थो व्याख्येय इति क्लिष्टमान्योक्तिरपि नादर्त्तव्येति भावः । वार्त्तिकमतस्य दूषितत्वादन्यत्र सावकाशयोरिति भाष्योक्तेश्चाह—**अभीत । विरोध इति ।**

सरला

**प्रातिपदिकत्वादित्यर्थ इति ।** अयं भावः, "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" इति परिभाषया सामान्यप्रातिपदिकत्वधर्मस्य प्रातिपदिकत्वव्याप्यकुमारत्वकुम्भत्वादिधर्माणां च लिङ्गबोधकप्रत्ययविशिष्टेऽतिदेशो भवति । तेन 'वाचा' 'अनडुही' इत्यादौ स्त्रीप्रत्ययान्ते प्रातिपदिकत्वात्सुबुत्पत्तिः,

दीर्घग्रहणप्रत्याख्यानात् । यथाश्रुतेऽपि "एङ्ह्रस्वात्" इति लोपस्यैव परत्वेन न्याय्यत्वादिति भावः ।

"याडापः" । यद्यपि यडित्येवोचितम् । न च "अतो गुणे" इति पररूपापत्तिः, अकारोच्चारणसामर्थ्येनैव तद्बाधात्, तथाऽप्युच्चारणार्थोऽकार इति सम्भाव्येत । अतः स्पष्टार्थं याट् कृतः । वृद्धिरेचीति । यत्तु प्राचा "आटश्च" इत्यु-

शब्दरत्नम्

श्चेति । अपवादत्वाच्चेत्यर्थः । यथाश्रुतेऽपीति । आकारप्रश्लेषाभावेऽपीत्यर्थः । परत्वेनेति । यौगपद्यसम्भवेऽपि विप्रतिषेध इत्यभिमानेनेदम् ।

आटश्चेत्युदाहृतमिति । समुदायावयवयोः सन्निधानेऽनुबन्ध उभयोपकारकः ।

भैरवी ।

काशमिति । प्रत्ययलक्षणेनेति शेषः । अपवादत्वात्–निरवकाशत्वेनापवादत्वात् । अभिमानेनेति । एतेन पूर्वोक्तार्थः स्मारितः ।

भावप्रकाश ।

तेन न्यायेनेदृशस्थलेऽपवादत्वाद्बाधस्यैव प्रतिपादनादिति भावः । निरवकाशत्वे सत्येव तस्य बाधकत्वादाह–अपेति । अस्य परत्वस्यासाङ्गत्ययोजने प्रागुक्ते इति स्मारयितुं शब्दान्तरेण किञ्चिदाह—यौगेति । अत एव तत एव हेतोः स न्याय्य इति प्रकाशः सङ्गच्छते ।

अवयवमात्रोपकारकत्वं त्वनाशङ्क्यमेव, याडादीनामिष्टदेशानापत्तेः वृद्धेरन्यथासिद्धया फलाभावाच्च, अत आह–समुदायेति । फलाभावे गौरवेऽपि चेष्टानुरोधेन तथाङ्गीकारादिति भावः । समाध्या-

सरला ।

'अयस्कुम्भी' इत्यादौ कुम्भत्वातिदेशेन "अतः कृकमि" इत्यादिसूत्रेण सत्वं च सिध्यति । आद्ये "ङ्याप्प्रातिपदिकात्" इति सूत्रे भाष्ये अनया परिभाषया प्रातिपदिकत्वमारोप्य ङ्याब्ग्रहणवैयर्थ्यशङ्कापरं भाष्यं प्रमाणम्, अन्त्ये च "न खृतश्च" इत्यस्य नद्यन्तबहुव्रीहेरित्यर्थे 'कुण्डोध्नी' इत्यत्र कबापादनपरं भाष्यम् । अन्यथा ङ्यन्ते बहुव्रीहित्वाभावात्तदसङ्गतिः स्पष्टैवेति । नन्वेवं कुमारत्वस्य 'कुमार क्रीडायाम्' इति धातावपि सत्वेन कुमारत्वस्य प्रातिपदिकत्वव्याप्यत्वाभावेन ज्ञापकासङ्गतिरिति, नच समर्थकुमारत्वं प्रातिपदिकत्वव्याप्यमिति तस्यैवातिदेशेनादोष इति वाच्यम्, अदन्तप्रातिपदिकत्वस्यापि प्रातिपदिकत्वव्याप्यत्वेन खट्वाशब्दे तदतिदेशे "अत इञ्" इति इञापत्तेः 'अत इनिठनौ" इति इनिप्रत्ययापत्तेश्चेति चेत्? न, तया परिभाषया प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्मस्यातिदेशकरणाङ्गीकारात् । विषयतायां प्रातिपदिकमात्रवृत्तित्वं च प्रातिपदिकवृत्तित्वे सति प्रातिपदिकेतरावृत्तित्वम् । तत्र प्रातिपदिकेतरवृत्तित्वाभावश्च अभेदान्वयाप्रयोज्योऽभ्युपेयते इति । खट्वा इत्यत्र अदन्तत्वे प्रातिपदिकेतरवृत्तित्वाभावस्य अभेदान्वयप्रयोज्यत्वेन न दोषः। कुमारपदं च समर्थकुमारप्रकृतिके लाक्षणिकमिति तत्र समर्थत्वे प्रातिपदिकेतरावृत्तित्वं नाभेदान्वयप्रयोज्यमिति तत्र समर्थ कुमारत्वस्यातिदेशे न किञ्चिद्बाधकमिति । विस्तरस्तु परिभाषेन्दुटिप्पणे द्रष्टव्यः । वस्तुतस्तु लिङ्गविशिष्टपरिभाषाप्रवृत्तौ स्त्रीत्वावच्छिन्नबोधकप्रत्ययविशिष्टत्वज्ञानायान्तवत्सूत्रप्रवृत्तेरवश्यं करणीयतया तेनैव स्वाद्युत्पत्तेः सिध्या नात्र परिभाषाप्रवृत्तेरावश्यकता, किन्तु 'वाचा' 'अनडुही' बहुरामा' इत्यादौ स्वाद्युत्पत्तेः परिभाषाधीनतया तदर्थं परिभाषाप्रवृत्तिरावश्यिकेति बोध्यम् ।

अपवादत्वात्चेत्यर्थ इति । तदप्राप्तियोग्येऽचारितार्थ्यरूपबाधबीजस्यात्र सत्वादिति भावः । एतदर्थमेवैतद्बाधबीजस्वीकारः । वस्तुतस्तु एतद्बाधबीजास्वीकारेऽपि हल्ङ्यादिलोपे प्रत्ययलक्षणेन "सम्बुद्धौ च" इत्यैत्वसिद्धिरस्त्येवेति परिभाषेन्दुटिप्पणे निरूपितम् ।

द्दाहृतम्, तन्न, याट्स्याटोष्टकारस्य समुदायानुबन्धत्वेनेह आटोऽभावात्।

"सर्वनाम्नः स्याड्ढ्रस्वश्च"। दीर्घोच्चारणं प्राग्वत्। अत्र वदन्ति—सर्वनाम्नोऽसुङ् चेत्येव सूत्र्यताम्। एवं च याटि परे ङित्त्वादन्त्यादेशे असुङि सर्वस्या इत्यादि सिद्धम्। स्याट्करणे ह्रस्वविधाने च प्रयोजनं चिन्त्यमिति। अत्रेयं चिन्ता-असुङ् चेत्युक्तेऽमुष्यै इत्यादि न सिध्येदिति। वस्तुतस्तु आमि

शब्दरत्नम्।

न चायमनर्थकः, आटोऽर्थवतः क्वाप्यभावादिति तदाशयः। इहाटोऽभावादिति। अयं भावः, सानुबन्धकनिर्देशेषु प्रायोगिकरूपासम्भवादौपदेशिकरूपग्रहणमिति घसंज्ञादिसूत्रे भाष्ये स्पष्टम्। उपदेशे च तेषामित्संज्ञकत्वादुपस्थिततद्गुणवतामेव प्रदेशेषु भानमिति टकारेत्संज्ञकाकारस्येत्यादिक्रमेणार्थः। "क्तक्तवतू निष्ठा" इति सूत्रे भाष्ये स्फुटमेतत्। पाणिनेश्च तत्र तत्र विशिष्टोपदेशे तात्पर्येण तत्प्रयुक्तेत्संज्ञकेन तस्यैव टित्त्वादिव्यवहारो नावयवस्य, तदुपदेशे तात्पर्याभावात्। एतेनौपदेशिकस्याच्परत्वाभावेन न वृद्धिप्राप्तिः, नेष्यते च तत्र वृद्धिः। प्रयोगे तु नाडिति "आटश्च" इत्यसङ्गतमित्यपास्तमिति।

याटि परे इति। अन्तरङ्गत्वात्पूर्वं याडिति भावः। न सिद्ध्येदिति।

भैरवी।

प्राचामाशयमाह—समुदायेति। भाष्ये स्पष्टमिति। तत्र "सर्वेषु सानुबन्धकनिर्देशेषु रूपमाश्रीयते-यत्रास्यैतद्रूपमिति, रूपनिर्ग्रहश्च नान्तरेण लौकिकः प्रयोगस्तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानामप्रयोगो नास्तीति द्वितीयः प्रयोग उपास्यते को ऽसावुपदेशो नाम" इत्युक्तम्। तेषाम्-अनुबन्धत्वेनाभिप्रेतानाम्। प्रकृताभिप्रायेणाह—टकारेत्संज्ञकेति। एतेन यदुपदेशप्रयुक्ता यस्येत्सञ्ज्ञा तस्यैव तदनुबन्धकत्वव्यवहार इति निदर्शितम्, प्रकृतस्य टकारस्य तु याडुपदेशप्रयुक्तैवेत्सञ्ज्ञेति नाटश्चेत्यस्य प्राप्तिरिति भावः। यथा टकारस्य नाडवयवत्वं तथाऽन्यत्राप्यनुबन्धविषये द्रष्टव्यम्। अत एव महिङिति ङकारस्समुदायस्यैवावयव इति वव्रश्चिमहे इत्यत्र सम्प्रसारणन्न। एतेन-टकारेत्सञ्ज्ञकेति व्याख्यानेन। नन्वाडजादीनामित्यत्राच्परत्वमस्त्येवेत्यत आह—नेष्यत इति।

अन्तरङ्गत्वादिति। याटः सर्वनामसञ्ज्ञानपेक्षत्वेनान्तरङ्गत्वमसुङस्तु कार्यकालपक्षमाश्रित्य तत्प्रवृत्तिसापेक्षत्वेन बहिरङ्गत्वमिति भावः। मूले-इत्यादि न सिध्येदिति। सर्वनाम्नोऽसुङा-

भावप्रकाश।

भासं निराचष्टे—नचेति। क्वापीति। तद्विशिष्टस्यैवार्थवत्ताया न्याय्यत्वात् भाष्ये स्पष्टमुक्तत्वाच्चेति भावः। तदाशयः-प्रक्रियाशयः, प्रकाशाद्युक्तकल्पः। ननु मूले समुदायानुबन्धत्वेनेत्यस्य तन्मात्रानुबन्धत्वेनेत्यर्थः। तथासति नायं दोषः उक्तरीत्या तेनतन्मतस्यैवानङ्गीकारादिति यथाश्रुतमूलानुपपत्तिमुद्धरन् तदाशय इति सूचितामरुचिं तत्र प्रकटयन्नाह—अयमिति। यद्यपि भाष्ये सर्वेष्वेव सानुबन्धग्रहणेष्वित्युक्तं तथापि तत्प्रकृताभिप्रायम्, शब्दमात्रग्रहणेऽपि "स्वं रूपम्" इत्यनेन रूपाश्रयणादित्याशयेनाह—निर्देशेष्विति। आदिना निष्ठासंज्ञासूत्रसंग्रहः। तावताऽपि तदिष्टसिद्धेराह—उपेति। अव्यवहिततदुत्तरकाले इत्यर्थः। अन्तरङ्गत्वादिति भावः। तेषाम्—अनुबन्धानाम्। तद्गुणेति बहुव्रीहिः। टकेति। इत्संज्ञकटोपलक्षितेत्यर्थः। अर्थः—आटश्चेत्यादेः। तावतापि स्वेष्टासिद्धेराह—पाणिनेश्चेति। तत्र तत्र—याट्स्याडादौ। केनेति। अस्य टादिनेति शेषः। प्राधान्यादिति भावः। तदुपेति। अत एव 'वव्रश्चिमहे' इत्यादौ महिङो ङित्त्वमाश्रित्य न सम्प्रसारणमिति भावः। कस्य—"आण्नद्याः" इत्यत्रत्यस्य।

अन्तेति। सर्वनामसंज्ञानिरपेक्षत्वेन। एवं च याडित्यस्य चेनानुवृत्त्या सप्तम्या विभक्तिविपरिणामेऽपि

सर्वनाम्नः सुट् याटो ह्रस्वश्चेति सूत्रयितुं युक्तम् । न चैवं याट एव ह्रस्वापत्तिः,

शब्दरत्नम् ।

इत्याद्येव न सिद्ध्येदित्यर्थः । पूर्वमसुडि असान्तत्वाभावेन मुत्वानापत्तिः । पूर्वं मुत्वे त्वसिद्धिः स्पष्टैव । एवं चामुमुयङित्यादिवद् व्याख्याभेदेन रूपद्वयमिहापि स्यात् । मुत्वपक्षे आप्स्थानिकत्वेनासुडः प्रत्ययतया तदवयवत्वेन षत्वसिद्धिः । एवं च तत्रालान्तस्येत्यर्थं इत्यत्र स्याड्ग्रहणमपि ज्ञापकमिति भावः ।

परे तु संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणेन नित्यत्वादसुडि रूपासिद्धिः । न च चेन याडपि विधेयोऽसुङ्चेति न्यासे इति वाच्यम् । "विभाषा द्वितीया" इति सूत्रेण विनि-

भैरवी ।

देशे सकारस्य प्रत्ययावयवत्वाभावेन षत्वाप्राप्त्या न सिध्येदित्यर्थः । ननु परादिवद्भावेनाकारस्य प्रत्ययतया तदादेशस्यासुङः प्रत्ययतया तदवयवस्य षत्वम्भविष्यति ? नच सर्वनामत्वम्पूर्वान्तवद्भावेन वाच्यमित्युभयत आश्रयणे नान्तादिवदिति निषेधो भविष्यतीति वाच्यम्, विभिन्नकार्यसम्पादकशास्त्रयोः प्रवृत्तये उभयाश्रयणेऽपि तन्न्यायविषयत्वाभावाद्यत्रैककार्यार्थमुभयाश्रयणन्तत्रैव तस्य प्रवृत्तेः; अत आह—इत्याद्येवेति । पूर्वमसुङीति । मुत्वस्यासिद्धत्वेन पूर्वमसुङीत्यर्थः॥ "न मुने" इति सूत्रे नेति योगविभागाभिप्रायेणाह-पूर्वम्मुत्व इति । तथाच तृतीयव्याख्यापक्षे अः सेरित्यस्य वाक्यस्य प्रवृत्त्याऽमुमुयङिति यथा भवति तथा यद्यप्यसुङादेशस्य पूर्वम्प्रवृत्तिपक्षे मुत्वम्भविष्यति तथाप्याद्यव्याख्यायान्न सिद्ध्येदिति भावः॥ एवञ्चेति । अमुष्यै इत्यस्यैवेष्टत्वे च । तत्र–"अदसो ऽसेः"इति सूत्रे । स्याड्ग्रहणमपीति । अपिनाऽमुमुयङिति लक्ष्यस्य संग्रहः ।

सञ्ज्ञाकृतेति । "नलोपः सुप्" इतिसूत्रे कृतितुग्ग्रहणात्तदनाश्रयणं बोध्यम् । इति न्यासे इति । अत्र चकारस्य विधेयबोधकपदोत्तरमुपादानेन विधेयान्तरस्य समुच्चयो भविष्यतीति

भावप्रकाश ।

न सन्नियोगशिष्टत्वम् । एतेन तदनुवर्त्य सप्तम्या विपरिणमय्य तत्र परतस्तत्संन्नियोगेनासुडिति खण्डनकृत्कृतप्रकाशाशयवर्णनमपास्तमिति भावः । यत्तु खण्डनकृत्--मूलं चिन्त्यं परादिवत्त्वेनैकादेशस्य प्रत्ययत्वात्तदादेशस्यासुङस्तत्त्वेन तदवयवत्वात् षत्वेन रूपसिद्धेः । न च सर्वनामत्वं पूर्वान्तवत्त्वेनेत्युभयत आश्रयणम् । लिङ्गविशिष्टपरिभाषया तत्कार्यसम्भवात् एकत्र तदनाश्रयणाच्च । न चैवमप्यसेरिति सान्तनिषेधादुत्वमेव न । मान्या अप्येवम् । अत एवामुमुयङित्यादिसिद्धिरिति वाच्यम् । तृतीयव्याख्याश्रयणात् । एवञ्च प्रकाशो युक्त इति, तत्खण्डयितुमाह--इत्याद्येवेत्यादिना । तामुपपादयति—पूर्वमित्यादिना । मुत्वस्यासिद्धत्वात् । तथा चादस्यै इत्येव स्यादिति भावः । कार्यासिद्धत्वमते नमुने इति योगविभागमते वा आह—पूर्वमिति । तथाचासुङेव न स्यादसर्वनामत्वादारूपाभावाच्चेति भावः । तुनाऽरुचिः सूचिता-द्वयोरपि मतयोरसिद्धान्तत्वरूपा । एवद्योत्यार्थमाह—एवञ्चेति । एवघटितव्याख्याने चेत्यर्थः । रूपद्वयम्—अदस्यै अमुष्यै इत्येवम् । दादिद्वयाभावात्तृतीयरूपस्याप्रसङ्ग एव । बहिरङ्गपरिभाषा सर्वथा त्रिपाद्यां न प्रवर्त्तत इति मुत्वे ऽसुङोऽसिद्धत्वे नेष्टस्यैवोभयथाऽसिद्धिरिति दुर्वचनमिति भावः । अःसेर्यस्येति व्याख्याने षत्वोपपत्तिमाह--मुत्वेति । स्थानिन्याप्त्वञ्च परादिवत्त्वेन, सस्थानिकाकारत्वं तु टाबुत्पत्तेः प्राक्कालिकमिति भावः । षत्वेति । सस्येत्यादि । एवं चेति । अमुष्यै इति सिद्धौ चेत्यर्थः । तत्र—अदसोरिति सूत्रे । ग्रहणमपीति अपिरमुमुयङित्यादिलक्ष्यानुरोधादिसमुच्चायकः । एवं च ह्रस्वग्रहणमप्यावश्यकमिति बोध्यम् । एतेनान्यपक्षोपष्टम्भेन तादृङ्न्यासाङ्गीकारान्मूलमयुक्तमिति रत्नाकरोक्तमपास्तम् ।

संज्ञाकृतेति । कृतितुग्ग्रहणादिति भावः । नित्यत्वादिति । याटस्तु लक्षणान्तरप्राप्तत्वादप्राप्त-

शब्दरत्नम् ।

गमकाभावादुभयोरपि विकल्पे 'द्वितीयायै' इत्याद्यसिद्ध्यापत्तेः । किं चासुङो याडपवादत्वेन तद्विषये याट् दुर्लभः । "अचिरादेशान्नुट् पूर्वविप्रतिषेधेनेत्यसङ्गतम् , रादेशस्य बाध्यसामान्यचिन्तया सर्वापवादत्वेन नुडपवादत्वात्" इत्याशङ्क्य "न तिसृचतसृ" इति दीर्घत्वनिषेधाद्रादेशो नुटं न बाधते" इति भाष्ये उक्तं तृज्वत्सूत्रे । तस्माद्विषयभेदे ऽपि येन नाप्राप्तिन्यायेन बाधकत्वमिष्यत एव । यद्यप्यस्यङादेशेन सिध्यति तथाप्यवङ्सूत्रस्थभाष्यरीत्याऽऽन्तरतम्येन कदाचिदन्तस्योदात्तत्वे "एकादेश उदात्तेन" इत्यनेन

भैरवी ।

भावः । उभयोरपीति । असुङो याडागमस्य चेत्यर्थः । एवञ्चास्य याडाप इति सूत्रबोध्ययाडागमस्यापि ( विकल्पबोधकत्वेन ) पक्षे रूपासिद्धिः स्फुटैव । इत्याद्येति । आदिपदेनामुष्यै इत्यस्य संग्रहः । नच "द्वितीयायाञ्च" इति निर्देशरूपज्ञापकान्न तस्य सूत्रस्योभयविकल्पबोधकतेति वाच्यम् ? ज्ञापकाश्रयणेन प्रतिपत्तिगौरवस्य स्फुटत्वात् । दूषणान्तरमप्याह—किञ्चेति । ननु विषयभेदात्कथमपवादत्वमत आह—अचिरेति । "सर्वनाम्नः" इति सूत्रस्य याडपवादत्वेऽपि अस्यङादेशेनेष्टसिद्धिर्भविष्यतीत्याशङ्कां निराचष्टे—यद्यपीत्यादिना । ह्रस्वश्चेति न वाच्यमिति पूर्वपक्ष्यभिप्रायः । अवङ्सूत्रस्थभाष्यरीत्येति । गोरग्रवचनं स्वरसिद्ध्यर्थमिति वार्तिकस्य व्याख्यानावसरे उक्ता या रीतिस्तयेत्यर्थः । एवञ्च तस्य इत्यत्र ताशब्दस्यान्तोदात्तत्वबुद्ध्या तस्य स्थाने आन्तरतम्यादन्तोदात्तेऽस्यङादेशेऽयन्दोषो बोध्यः । यदा स्थानिन आद्युदात्तत्वबुद्धिस्तदा यद्यपि सिद्धिस्तथाप्यन्तोदात्तत्वबुद्धिरपि कदाचित्स्यादिति तात्पर्यम् । अमुष्यै इत्यत्र सस्य प्रकृत्येकदेशत्व एव दूषणम् । यदि तु याट एव सुट् तदा सकारः प्रत्ययावयव इति सुत्वे कृते षत्वम्भविष्यतीत्यभिप्रायेणाह मूले—वस्तुतस्त्विति । युक्तम्—आमीतिसूत्रानन्तरमेवं पठितुं युक्तम् । सर्वनाम्न इत्यस्य तत्रानुवृत्त्या सर्वनाम्नः परस्य याटः सुट् ह्रस्वश्चेति तदर्थः । एवं सति सर्वनाम्न इत्यस्य पञ्चम्यन्ततया स्थानित्वासम्भवेन याट इति षष्ठी यथाऽवयवावयविभावार्थिका तथा स्थानपदार्थनिरूपितसम्बन्धार्थिकाऽपि भविष्यतीत्यभिप्रायिकामाशङ्कां निराचष्टे—नचेति । दीर्घेति । याट इत्यत्र दीर्घ इत्यर्थः । यडागमे कर्तव्य इत्यादि । नन्वेवं यशब्दावयवो अकारोऽपदान्त इत्यतो गुण इति पररूपापत्तिरित्यत आह-ह्रस्वोच्चारण इति । युडागमे कर्तव्ये विवक्षिताकारविशिष्टयडागमविधानसामर्थ्यादित्यर्थः । याटो निष्पत्तिराबन्तादेवेति आप इत्यस्य प्रकृतस्याभावेऽप्यस्य सूत्रस्यावन्त एव प्रवृत्तिः । आमीत्यस्यास्मिन्सूत्रे न सम्बन्धः । नन्वेवंसति युडाद्यागमे यथो-

भावप्रकाश ।

त्वाद्वा न तत्त्वमिति भावः । न चेति । विधेयानुवृत्त्यर्थः स इति भावः । उभयोरिति । चानुकृष्टं नोत्तरत्रेति तु अनित्यं "लुटि च क्लृपः" इत्यत्रत्येन सर्वानुवृत्त्यर्थकचप्रत्याख्यानपरभाष्येण "कुलिजाल्लुक्खौ च" इत्यत्रत्यभाष्येण च विरुद्धं चेति भावः । अपिः सूत्रेणेत्यग्रे योज्यः । मिथः समुच्चायको वा सिद्धान्तसमुच्चायको वा । ननु "विभाषा द्वितीया" इति सूत्रप्रत्याख्याने 'द्वितीयायै' इति सिद्धमेवात आह-आदीति । तेनामुष्यै इति प्रागुक्तदोषसंग्रहः । तथाचोभयविधानमशक्यमिति भावः । ननु सत्यपि सम्भवे इतिन्यायविरोधान्न नित्यत्वेन तत्त्वमत आह--किञ्चेति । ननु विषयभेदेन येननेतिन्यायानवतारात्कथन्तत्त्वमत आह--अचिरेति । प्रतिपादितमनुपदमिदं सर्वम् । तस्मात्—भाष्यप्रामाण्यात् । तेन निषेधेन विषयभेदेऽपवादत्वाभाव एव बोध्य इति तु न विन्मतोर्लुका टिलोपमात्रस्य बाधानापत्तेरिति भावः । रत्नाकरोक्तिं खण्डयति--यद्यपीति । न चैवं ङितो याट्प्रसङ्गः, परत्वान्नित्यत्वाच्चास्यङि कृते आरूपस्यापोऽभावेन तदप्रसङ्गात् । एवञ्च ह्रस्वश्चेति सुत्यजमिति भावः । रीत्येति । प्रतिपादितमधस्तात्तत्रैव । अन्तस्योदात्तत्वे इति । एकादेश उदात्तेनेत्युदात्तस्थानिनो

दीर्घोच्चारणसामर्थ्यात् । ह्रस्वोच्चारणेऽप्यकारसामर्थ्यादेवातो गुणस्य वारयितुं शक्यत्वादित्यवधेयम् ।

"विभाषा" । गौणत्वादप्राप्ते विभाषेयम् । यत्त्वाहुः—"न बहुव्रीहौ" इति निषेधे प्राप्ते इति; तदापाततः, तस्यालौकिकप्रक्रियावाक्यान्तर्गतस्वर्वादिविषयत्वात्, अस्य च समासविषयत्वात् । योत्तरेति । यत्त्वाहुः—या पूर्वा सोत्तराऽस्या उत्तरपूर्वेति; तद्भ्रमसात्, पूर्वनिपातवैपरीत्यापत्तेः । तीयस्येति । इदं हि

---

शब्दरत्नम् ।

विभक्तेरुदात्तत्वापत्तिरित्याहुः । सामर्थ्यादेवेति । उच्चारणार्थत्वं तु न, व्याख्यानादिति भावः । "त्रेस्त्रय" इत्यत्र 'आमि' इत्यस्य मण्डूकानुवृत्तिरिति बोध्यम् ।

वैपरीत्यापत्तेरिति । अयं भावः-वाक्ये यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वं प्रतीयते,

भैरवी ।

कार उच्चारणार्थो भवति तथा यडागमेऽप्यकारस्तथास्त्वित्याशङ्कान्निराचष्टे—उच्चेति । व्याख्यानादिति । "सेनाया वा" इतिसूत्रनिर्देशदर्शनमूलकव्याख्यानादित्यर्थः । यद्यकार उच्चारणार्थः स्यात्तदा निर्देशासङ्गतिः स्पष्टैव । ननु प्रकृतसूत्रवत्त्रेरित्यात्रावप्यामीत्यस्य तर्हि सम्बन्धो न स्यादत आह—त्रेस्त्रय इति । मण्डूकानुवृत्तौ मानन्त्वत्रैव त्रेरिति निर्देशस्त्रेः सम्प्रसारणञ्चेति निर्देशश्चेति गृहाण । बहुषु सौत्रत्वकल्पनापेक्षया मण्डूकानुवृत्तिरेव ज्यायसी । मूले ऽवधेयमित्यनेनान्यदपि सूचितम् । तथाहि, यदि मण्डूकप्लुतिर्मध्ये सम्बन्धाभावोऽग्रे च सम्बन्ध इति कल्पनाभ्याङ्कुरुभूतेत्याग्रहस्तर्हि "सर्वनाम्नो याटः सुट् ह्रस्वश्च" 'आमि' "त्रेस्त्रयः" इति सूत्रत्रयमस्तु । आमीत्यत्र आज्जसेरिति सूत्रादादित्यस्य सम्बन्धो भविष्यति। "विभाषा द्वितीयातृतीयाभ्याम्" इति सूत्रमप्यत्रैव पाठ्यम् । तत्राविशेषादुभयोरपि विधेययोर्विभाषेत्यस्य सम्बन्धः । एवञ्च "अश्वक्षीर" इतिसूत्रानन्तरं यदामीति सूत्रन्तत्रत्यं सर्वनाम्न इति पदन्तदस्तु, "याडापः" इतिसूत्रानन्तरं यत्सर्वनाम्नः स्याडिति सूत्रन्तन्न कार्यमिति । एवञ्च या मण्डूकानुवृत्तिरुक्ता सा आमीति पृथक्सूत्राकरणपक्षे इति दिक् ।

"सप्तमी विशेषणे" इति सूत्रेण विशेषणवाचकस्य पूर्वनिपातो विधीयते पूर्वादिशब्दयोर्दिग्वाचकतया द्रव्यार्थाभिधायकत्वेन गुणत्वाभावात्कथम्पूर्वनिपातवैपरीत्यापत्तिरत आह—अयम्भाव इति । वाक्य इति । समासार्थप्रदर्शकलौकिकविग्रहवाक्य इत्यर्थः । प्रतीयत इति ।

भावप्रकाश ।

जायमानस्यास्यङ आन्तरतम्यादुभयत्रोदात्तत्वप्राप्तावप्येकपदे वचनं विनोदात्तद्वयाभावाच्छेषनिघातेनान्यतरस्योदात्तत्वे विनिगमनाविरहात्कदाचिदाद्युदात्तत्वेनेष्टसिद्धावप्यन्तोदात्तत्वे ऽनिष्टमित्यर्थः । विभक्तेः—तदादेशस्य, एकादेशस्य । उच्चारणार्थो ऽकार इत्यादिपूर्वग्रन्थविरोधं निराचष्टे–उच्चेति । अत एव सम्भाव्येत इत्युक्तं नतु निश्चीयेतेति । एवञ्च तद्यथाश्रुतसूत्राशयवर्णनमात्रं नतु क्षोदक्षममिति भावः । यत्तु रत्नाकरकृत्–अत्र पक्षे यामटतीति याट्, तत आमि याटामित्यत्रातिव्याप्तिः, अर्थवत्परिभाषया तस्यैव ग्रहणौचित्यञ्च । किञ्चामीत्यस्योत्तरार्थस्य प्रकरणात् ङेराम्येव सुट् स्यान्न ङेप्रभृतिषु । अन्यथा "त्रेस्त्रयः" इत्यादौ तदलाभ इति खण्डनकृदुक्तिरिति; तन्न, युक्तिसिद्धार्थवत्परिभाषापेक्षया ज्ञापकोपष्टब्धस्य प्रतिपदोक्तन्यायस्य कृत्रिमाकृत्रिमन्यायस्य च प्राबल्येनाद्यदोषाभावात् । एतेन विपरीततदुक्तिरपि परास्ता । अन्त्यदोषमुद्धरति—त्रेस्त्रय इति । एतेनामीति सूत्रं ह्रस्वश्चेत्यन्तैकसूत्रानन्तरं बोध्यम्, आनुपूर्व्यामतात्पर्यात् । एवं च मण्डूकप्लुतिर्नेति मान्योक्तिर्मूलाक्षराननुगुणेति सूचितम् ।

ननु पूर्वोत्तराशब्दयोर्दिगादिवृत्तित्वेन द्रव्यवाचकत्वाविशेषात्पूर्वनिपातानियमेन वैपरीत्यापत्तिरयुक्ताऽत आह—अयं भाव इति । तत्रादौ सिद्धान्तमाह-वाक्ये इति । अस्य यद्यपीत्यादिः । तथा चोद्देश्यस्यार्थप्राधान्येन विधेयस्य पूर्वास्वस्य विशेषणत्वात्पूर्वाशब्दस्य पूर्वनिपातापत्तिः । न च समासेपि

पुन्नपुंसकयोरावश्यकम् । अनेनैव सिद्धौ "विभाषा द्वितीयातृतीया" इति सूत्रं न

शब्दरत्नम् ।

योत्तरात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धपूर्वा यस्या इत्यर्थात् । तत्रोत्तरापदस्य ज्ञान-विशेष्यपर्यन्तलक्षकतया गुणवाचकत्वेन पूर्वनिपातः । उत्तरस्यां पूर्वात्वप्रकारकज्ञानविशे-ष्यत्वं तु न विधेयम्, पूर्वापदस्य पूर्वनिपातापत्तेः "न विधौ परः शब्दार्थे" इति विधेय-

भैरवी

यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।
तच्छब्द एवकारश्च स्यादुपादेयलक्षणम् ॥

इत्यभियुक्तोक्तेः । न च यत्र यच्छब्दयोगः प्राथम्यं वा तस्यैवोद्देश्यबोधकत्वमिति नियमो न सम्भवति, "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" "त्र्यङ्गैः स्विष्टकृतं यजति" इत्यादौ व्यभिचारादिति वाच्यम्, तत्रापि विशिष्टस्य विधेयता आदौ प्रतीयते, तात्पर्यन्तु गुणविविधाने इति कल्पनायाः सम्भवात् । यद्वा, पूर्वोक्ताभियुक्तवाक्ये आदिपदमुपात्तं तेन प्राप्ताप्राप्तविवेकन्यायस्यापि संग्रहः कार्यः । उद्देश्यविधेयत्वमिति द्वन्द्वोत्तरन्त्वप्रत्ययः । इत्यर्थादिति । अन्यथा द्वयोः पदयोः सामानाधिकरण्याभावेन "अनेकमन्यपदार्थे" इति समासानुपपत्तिः स्यादिति शेषः ।

ननु या पूर्वा सा उत्तरेत्येव विग्रहोऽस्तु उत्तरापदमेव लाक्षणिकमस्तु तथापि बहुव्रीहिर्भविष्यतीत्याशङ्कान्निराचष्टे—न विधाविति । जैमिनिशास्त्रप्रसिद्धोऽयन्न्यायः । उपक्रमोपसंहाराभ्यां यदर्थे तात्पर्यग्रहस्तत्रैवैकस्योद्देश्यत्वमपरस्य विधायकत्वम् । यदि विधायकस्या-

भावप्रकाश ।

तत्प्रतीत्योद्देश्यस्य प्राथम्येन विनिगमनाविरहस्तदवस्थ इति वाच्यम् । सप्तदशारत्निर्लोहितोष्णीषा इत्यादौ व्यभिचारात् । अत एवोद्देश्यलक्षणे आदिपदोल्लेखः । इदं च प्राप्तत्वादेव गमकम् । अत एव तस्या भ्रमाधिष्ठानत्वेन पूर्वप्रयोगस्य युक्तत्वमिति मान्योक्तिरप्ययुक्तेति भावः । विधेयत्वमिति । द्वन्द्वोत्तरन्त्वप्रत्ययः, यथासंख्येनान्वयः । अन्यतरस्य लक्षणां विना सामानाधिकरण्याभावात् बहुव्रीह्यनुपपत्तेराह—योत्तरात्वेति । विशेष्यशब्दो विशेष्यनिघ्नः न तु विशेषणप्रधानादिवदजहल्लिङ्गः । अत एव 'राजा विशेषणं पुरुषो विशेष्यः' इति "षष्ठी शेषे" इति सूत्रे 'कश्च नेविंशिर्विशेष्यः' इति "शदेः शितः" इत्यत्र च भाष्यम् ।

स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः ।

इत्यमरश्च सङ्गच्छते । विशेष्यं धात्वर्थ इति प्रयोगस्तु शक्यं क्षुदुपहन्तुमितिवत् । तत्रेति । अस्य तथापीत्यादिः । समासे इत्यर्थः । अन्यथा तदनुपपत्तिरुक्तैवेति भावः । गुणेति । गुणोपसर्जनद्रव्यवाचकत्वेत्यर्थः । ज्ञानस्य विशेषणत्वात्; एवं च विशेषणत्वात् "सप्तमीविशेषणे" इत्यस्य प्राप्तिः । तत्र हि सप्तम्यन्तान्योत्तरपदार्थविशेषणस्य विषयताविशेषरूपविशेषणत्वविशिष्टस्य ग्रहणमिति भावः । विनिगमकाभावादाह—उत्तरस्यामिति । प्रसिद्धोत्तरस्यामित्यर्थः । विशेष्यत्वन्त्विवति । 'एकैकवर्णवर्त्तित्वाद्वाचः' इति "परः सन्निकर्षः" इति भाष्यप्रयोगवत्साधुरयं प्रयोगः । एवं विशेष्यपर्यन्तमित्यपि प्रयोगः । पूर्वनीति । विशेष्यतासमानाधिकरणैव विधेयतेति नियमस्तूक्तरीत्या नेति भावः । एतेन रजतशुक्तिक इत्येव प्रयोग इति विपरीतमान्योक्तिरयुक्तेति सूचितम् । न विधाविति । जैमिनीयन्यायोऽयम् । उपक्रमोपसंहाराभ्यां यदनुरोधेन यदर्थे तात्पर्यग्रहस्तत्रैवान्यार्थत्वकल्पने प्रकरणविचारासङ्गतिर्विधायकत्वभङ्गश्च तन्मूलम् । यद्वा, यद्यपि समासेऽपि तत्प्रतीतिरस्त्येव तथापि स्फुटतरत्वादाह—वाक्य इति । अत

सरला ।

पूर्वनिपातापत्तेरिति । "सप्तमीविशेषणे बहुव्रीहौ" इति सूत्रेणेत्यादिः ।

कर्तव्यमिति भावः ।

**अम्बार्थनद्योः ॥** अत्र वार्तिकम्—'मातुर्मातच् पुत्रार्थमर्हते' इति । मातृश-

### शब्दरत्नम् ।

बोधके लक्षणानौचित्याच्च । त्वदुक्तविग्रहे तु पूर्वपदस्य यच्छब्दसमभिव्याहारेणोद्देश्यसमर्पकतया तस्यैव लाक्षणिकत्वेन गुणवचनतया पूर्वनिपातापत्तिरिति । **न कर्तव्यमिति ।** स्पष्टं चेदं भाष्ये । तृतीयाशब्दसाहचर्येण सहायवाचिद्वितीयाशब्दस्य न ग्रहणम् । भागार्थे विधीयमानस्यानो भक्ते विशेष्यत्वेन न स्त्रीत्वमनभिधानात् । एतेन तत्र लाक्षणिकत्वाद्वार्त्तिकाप्रवृत्तत्ताविदमावश्यकम् । अत्र सूत्रे न सा परिभाषा प्रवर्तते प्रतिपदोक्तस्याभावात् । न च महाविभाषयाऽनभावे वार्त्तिकप्रवृत्त्या रूपद्वयं सिद्धम् , अनो नित्यत्वाङ्गीकारात् । आद्युदात्तस्य तथापि रूपद्वयासिद्धेश्चेति परास्तमिति भावः ।

### भैरवी ।

पि लाक्षणिकत्वन्तदा लक्षणाया अनुपपत्त्यादिग्रहसापेक्षत्वेन गुरुतया स्पष्टप्रतिपत्तये विवक्षितार्थबोधकस्य वाचकशब्दस्यैव प्रयोगः कर्तुमुचित इति भावः । गुणवचनतयेति । गुणोपसर्जनद्रव्यवाचकतयेत्यर्थः । भाष्ये इति । "अन्तरम्बहिर्योग" इति सूत्रभाष्य इत्यर्थः । खण्डनकृदुक्तन्निरसितुम्भूमिकामारचयति—तृतीयाशब्देति । साहचर्येणेति । सदृशयोरेव सहायत्वस्य लोके "विपराभ्याञ्जेः" इत्यादिसूत्रभाष्यादौ च स्पष्टत्वादिति भावः । ननु द्वितीया विभक्तिर्द्वितीयेत्यस्तु पूरणाद्भाग इत्यन्प्रत्ययान्तो ऽयं शब्दोऽस्तु, एवञ्चान्नन्तस्य तीयप्रत्ययान्तत्वाभावेन वार्तिकाप्रवृत्ताविदमावश्यकमित्याशङ्कामुत्थानायाह—भागार्थ इति । अनभिधानादिति । अत्र मानन्तु सूत्रप्रत्याख्यानपरम्भाष्यमेव । एतेन—अनभिधानादस्त्रीत्वेन । तत्र—अन्नन्ते । अभावादिति । अनोऽभावेऽपि टाब्रेकादेशेन सर्वस्य लाक्षणिकत्वादिति भावः । प्रकारान्तरेण सूत्रसार्थक्यशङ्कां वारयति—नचेति । अङ्गीकारादिति । अत एव "प्राग्दिशः" इति सूत्रात्प्राक् तदधिकार इति वृद्धाः । सिद्धान्तिमतेनाह—आद्युदात्तस्येति ।

"मातुर्मातज्" इति वार्तिके सम्बुद्धावित्यधिकाराभावादनुपादानाच्च तस्य सम्बुद्धावेव

### भावप्रकाश ।

एवाह—योत्तरेति । इत्यर्थादित्यन्तं व्याख्यानं प्राग्वत् । तत्र—तत्प्रतीतौ सत्याम् । यच्छब्देति । वाक्ये इति शेषः । **भाष्ये इति ।** "अन्तरं बहिर्योगोप" इति सूत्रे इति भावः । एतेन सूत्रासिद्धस्योपसंख्यानेन पूरणेऽपि तेन तत्खण्डनमयुक्तं, तस्य पाश्चात्यत्वादिति प्रकाशोक्तमपास्तम् । साहचर्यमग्रहणे हेतुः । **सहायेति ।** "विपराभ्यां जेः" इत्यत्र 'अस्य गोर्द्वितीयेनार्थः' इत्यत्र "मुखनासिका" इति सूत्रे 'मुखद्वितीया वा नासिका' इत्यत्र च "अनेकमन्यपदार्थे" इति सूत्रे 'असिद्वितीयोऽनुससार पाण्डवम्'।

'सङ्कर्षणद्वितीयस्य बलं कृष्णस्य वर्धताम्'।

इत्यत्रोद्योगे कौरवान्प्रति दूतकृष्णवाक्ये ।

'मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमर्हति'।

इत्यादौ च प्रसिद्धः स तथेति भावः । विशेष्यत्वं स्त्रीत्वे हेतुः । **अनभिधानादिति ।** अत्र प्रत्याख्यानपरभाष्यं मानम् । अत एव स्पष्टं चेदमित्युक्तं प्राक् । **एतेन**—अनभिधानादस्त्रीत्वेन । **तत्र**—अन्नन्ते । **प्रतीति ।** अनोऽभावेपि टाबेकादेशेन सर्वत्र लाक्षणिकत्वादिति भावः । **रूपद्वयमिति ।** अन्तदभावाभ्यामिति भावः । **नित्यत्वेति ।** मूलमते "प्राग्दिशः" इत्यतः प्राक्तदधिकारादिति भावः । स्वमतेनाह—**आद्युदेति ।** अन्नन्तस्येत्यर्थः ।

ब्दस्य सम्बुद्धौ मातजादेशो भवति मात्रा पुत्रस्य श्लाघ्यत्वे द्योत्ये। गार्गी माताऽस्य गार्गीमातृकः। तस्य सम्बोधनं हे गार्गीमात। "नद्यृतश्च" इति समासान्तस्यापवादोऽयम्। यत्र तु श्लाघ्यत्वं न द्योत्यं किं तु स्वरूपकथनमात्रं तत्र कबेव—

शब्दरत्नम्।

अत्रोपसंख्यानमाह—सम्बुद्धाविति। अर्हन्तं पुत्रमभिधातुं यो मातृशब्दः प्रयुज्यते तस्येत्यर्थः। सापेक्षत्वेऽप्यत एव निपातनात्समासः। अर्हत्त्वं च पुत्रस्य मातृद्वारकमेव, तदाह—मात्रा पुत्रस्येति। अपवाद इति। यदीदं न स्यात्तदा प्राप्नोतीति

भैरवी।

प्रवृत्तिरिति कुत इत्यत आह—अत्रोपेति। 'पुत्रार्थम्' इत्यस्य पुत्रायेत्यर्थः। 'अर्हते'इति पुत्रायेत्यस्य विशेषणम्। तादर्थ्ये चतुर्थी। 'ब्राह्मणाय पायसम्' इत्यत्रेवोपकार्योपकारकभाव ऊहनीयः। अम्बार्थेति सूत्रात्सम्बुद्धावित्यस्य सम्बन्धः। यद्वा मातुरित्यस्य प्रयुज्यमानस्येत्यादि। अभिधातुमिति तुमुन्नन्तमप्रयुज्यमानमिति "क्रियार्थोपपदस्य" इति चतुर्थी। तत्फलितार्थमाह—अर्हन्तमिति। नन्वेवमर्हत इति पुत्रायेत्यस्य विशेषणमिति सापेक्षत्वात्कथमर्थशब्देन समास इत्यत आह—सापेक्षत्वेऽप्यत एवेति। यः पुत्र उत्कृष्टगुणयोगादुत्तमकुलसम्भूतत्वाच्च कुलीनायाम्मातरि अयज्ञात इति व्यपदेशयोग्यो भवति स एव यदा गार्गीमातेत्यादिबहुव्रीहिसमासेनाभिधीयते तदाऽयम्मातजादेश इष्यते। अत्र मातृपदार्थप्रशंसया पुत्रस्य प्रशंसा विवक्षिता। अर्हत इत्यत्र "अर्हः प्रशंसायाम्"इति शता मातृगतप्रशंसामूलकपुत्रप्रशंसाया गम्यमानत्व एवास्य प्रवृत्तेरिष्टत्वात्। अत एव भाष्ये—मातॄणाम्मातच् पुत्रार्थमर्हते" इति वार्तिके मातॄणामिति बहुवचनमुपात्तम्, गार्गीमातेत्यादौ "जातेश्च" इति पुंवद्भावस्य प्रतिषेधः। समास इति। अर्थशब्देन समास इत्यर्थः। माताऽत्र जनन्येव नत्वपरमाता, जनन्याः प्रत्यासत्त्योपस्थितेः। मातृद्वारकप्रशंसा पुत्रस्य समासात्मकसमुदायेन प्रयुज्यमानेन गम्यते। समासान्तस्य त्वलौकिके प्रक्रियावाक्ये प्रवृत्तिरिति नात्र येन नाप्राप्तिन्यायेनापवादत्वमत आह-यदीदमिति। तथा च "उपजनिष्यमाण" इति न्यायेन कपोऽयम्बा-

भावप्रकाश।

अत्र—अम्बार्थेति सूत्रे। अर्हते पुत्राय या माता तस्या मातुरिति शाब्दोऽर्थः। तादर्थ्ये चतुर्थी। यद्वा प्रयुज्यमानस्येति शेषपूरणेन क्रियार्थोपपदेति चतुर्थ्या अर्हन्तं पुत्रमभिधातुं प्रयुज्यमानस्य मातुरिति शाब्दोऽर्थः। तत्फलितमाह—अर्हन्तमिति। तदभिधानं च बहुव्रीहावेव सम्भवति। यः पुत्रः श्लाघ्यगुणवत्त्वात्कुलसम्भूतया मात्रा व्यपदेशमर्हतीति यावत्। अत एव "अर्हः प्रशंसायाम्" इति विहितशता सिद्धमर्हते इति सफलम्। अत एव पितुरज्ञाने मात्रा व्यपदेशे सति न। भाष्ये बहुवचनमर्थगतं पूजाद्योतकमिति तात्पर्यम्। समासः—अर्थशब्देन। अर्हत्त्वञ्चेति। शत्रन्तात् त्वः। मेवेति। प्रत्यासत्तेः। अत एव जननीवाच्येवात्र स गृह्यते इति भावः। येननाप्राप्तिन्यायेनापवादतेति कैयटप्रकाशादुयुक्तमयुक्तम्, कपः प्रक्रियावाक्यावयवत्वेनान्तरङ्गतया नाप्राप्ते तस्मिन्ननारम्भात्। तद्ध्वनयन्नाह—यदीदमिति। यदि कप् स्यात्तर्हि वार्तिकं व्यर्थमेव स्यात्। अतः सर्वथा अनवकाशत्वात्तद्बाधः। तत एव व्यवधानेऽपि प्रवृत्तिस्तु न, लक्ष्यानुरोधादिति भावः। एतेनैकशेषवदपवादतेत्यपास्तम्, वैपरीत्यस्यात्र सत्त्वात्। अत एव "विभाषा दिक्समासे" इति सूत्रस्थं प्रकाशखण्डकं मूलं युक्तमिति तदनुयायिरत्नाकरोक्तिस्तत्समर्थिका तस्यालौकिकवाक्यविषयत्वेऽपि समासे एव फलवत्त्वादिति खण्डनकृदुक्तिश्च चिन्त्येति बोध्यम्। यत्तु खण्डनकृत्—'याडापः" इत्यादावङ्गाधिकारात्तस्य "प्रत्ययग्रहणे" इति लब्धाबन्तादित्येतद्विशेषणत्वादङ्गसंज्ञकादाबन्तादित्यर्थे सति स्त्रीप्रत्यये तदादिनियमनिषेधात् प्राप्तोऽपि याट् न, लाक्षणिकत्वात्—गौणत्वात्। गुणभूतस्त्रीप्रत्यये तन्नियमाङ्गीकारादिति मूलोक्तरीत्या प्रकाशोक्तयोजनेन मूलं चिन्त्यमिति। तन्न, गौणलाक्षणिकोपसर्जनपदानां भिन्नार्थकत्वस्योक्तत्वात्।

गार्गीमातृक । आबन्तं यदङ्गमिति । यत्तु "याडापः" इति सूत्रं व्याचक्षाणैरुक्तम्-अतिखट्वायेत्यत्र लाक्षणिकत्वान्न याट्, एवमतिसर्वायेत्यत्र न स्याडिति; तद्भ्रमसात् । न ह्यतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषा प्रवर्तते, अतिदेशवैयर्थ्यापत्तेः । तेन याट् दुर्वारः । स्याटस्तु प्रसङ्ग एव नास्ति । संज्ञोपसर्जनयोः पाठात् पर्युदासात् । केचित्त्विति । परिशिष्टकारादयः ।

शब्दरत्नम् ।

भावः । वैयर्थ्यापत्तेरिति । नन्वाकारोऽयं लाक्षणिक इति तदाशयः । न च खट्वायै इत्यत्रापि याडनापत्तिः, सूत्रं तु निशायै इत्यत्र चरितार्थमिति वाच्यम् । यस्य रूपस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकस्य परिभाषाविषयत्वात्; न चेह तथा, एकादेशतः प्रागपि तद्रूपसत्त्वात्; इति चेत् ? न, वर्णग्रहणे तदप्रवृत्तेस्तैरप्युक्तत्वेन तद्विरोधादित्यभिमानः ।

भैरवी ।

धकः । यत्तु परैरुक्तमतिखट्वायेत्यत्र लाक्षणिकत्वान्न याडिति, तन्मतमाश्रित्य शङ्कते—नन्विति । ननु लाक्षणिकत्वं यदि याडप्रवृत्तिसाधकं, तर्हि खट्वायै इत्यादावपि न स्यादित्याशङ्कान्निराचष्टे—न चेति । तैः—परैः प्रकाशकारादिभिः । अपिशब्दः कैयटादिपरामर्शकः । अभिमान इति । एतेनारुचिर्ध्वनिता । तथाहि "ओत्" इतिसूत्रभाष्येऽदोऽभवदित्यत्रौदिति प्रगृह्यत्वप्राप्तिमाशङ्क्य लक्षणप्रतिपदोक्तपरिभाषया समाधानङ्कृतं, यदि वर्णग्रहणे तस्याः परिभाषाया अप्रवृत्तिस्तदा भाष्यविरोधः स्पष्ट एव । अत एव स्थानिवत्सूत्रभाष्ये अतिखट्वायेत्यत्रापः प्रत्ययत्वात्तदन्तस्य लाभे तस्याङ्गविशेषणत्वेनाबन्तान्तं यदङ्गमित्यर्थेनातिखट्वाय इत्यत्र प्राप्तस्यापि याटो "ङ्याब्ग्रहणेऽदीर्घ" इति वार्तिकेन समाधाने ऽपि श्रुताकारस्मृतानुबन्धाभ्यामाप्त्वमाश्रित्य पुनरपि याटः शङ्काङ्कृत्वा लाक्षणिकत्वेन समाधायाकारप्रश्लेषेण वार्तिकप्रत्याख्यानपक्षे समाधानान्तरन्न कृतमिति लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तिरेव समाधानमिति ध्वनितम् । नचाङ्गस्येत्यस्य विशेषणत्वेनाङ्गसंज्ञकं यदाबन्तमित्यर्थ एवोचित इति वाच्यम् ? "पदाङ्गाधिकारे" इति वचनेन तस्य विशेष्यताया एवोक्त-

भावप्रकाश ।

त्वद्ग्रन्थे प्रकाशे परिभाषायां च त्रयाणां पाठात् । किञ्च "प्रत्ययग्रहणे" इति परिभाषयाऽऽबन्तग्रहे तेनाङ्गविशेषणादाबन्तान्तं यदङ्गमित्यर्थादोषतादवस्थ्यात् । अङ्गस्य विशेष्यतैव ह्यनुपदं वक्ष्यमाणा । तद्ध्वनयन्नन्यथा तदाशयमाह—नन्विति । तदाशयः—प्रकाशाशयः । यस्य रूपस्येति । प्रतिपादितं संज्ञाप्रकरणे । इह—खट्वायै इत्यादौ । तैरपीति । प्रकाशकृद्भिरपीत्यर्थः । अपिना मूलकृत्संग्रहः । मूलोक्ताक्षरादुक्तार्थस्य कथमप्यलाभः । पूर्वकक्षा मूले उक्ताऽग्रे ऊह्यमित्यर्थेऽप्यनौचित्यं, तत्सूचयितुमाह—अभिमान इति । अनेनारुचिः सूचिता । तयैवात्र न याट्, वर्णग्रहणेऽपि तत्प्रवृत्तेरिष्टत्वात् । अत एवाबन्तान्तं यदङ्गमित्यर्थाशयेनातिखट्वायेति सिद्धये प्रवृत्ते "ङ्याब्ग्रहणेऽदीर्घः" इति वार्त्तिके श्रुताकारस्मृतानुबन्धाभ्यामाप्त्वेनाशङ्कां कृत्वा लाक्षणिकत्वेन समाधायाकारप्रश्लेषेण तत्प्रत्याख्याने एतत्परिहारोपायान्तराकथनं भाष्ये । किञ्च, पदाङ्गाधिकारे इति वार्त्तिकेनाङ्गस्य विशेष्यताया

सरला ।

निशायै इत्यत्रेति । इदमुपलक्षणं 'बहुदामायै' इत्यस्य, "ङ्याप्प्रातिपदिकात्" इति सूत्रेऽऽबन्ते पूर्वान्तवद्भावेनैव सिद्धे आब्ग्रहणस्य 'बहुदामा, बहुराजा' इत्यादिडाबन्तप्रयोजनप्रदर्शनपरभाष्यात् 'एकादेशानपहृतटापोऽसम्भवः' इति भाष्याच्च हलन्तेभ्य आचारक्विपोऽनभिधानेन 'निशायै' इत्यस्य निश्धातोरिगुपधलक्षणे के टापि खट्वाशब्दतुल्ययोगक्षेमत्वात् ।

"ङिति ह्रस्वश्च" अप्राप्तविभाषेयम्, ह्रस्वयोरप्राप्तावितरयोस्तु "नेयङुवङ्स्थानौ" इति निषेधे प्राप्ते आरम्भात्। इहेयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गाविति त्रीणि ईदूनोर्विशेषणानि, ह्रस्वयोस्तु स्त्रियामित्येव नतु नित्यस्त्री-

---

शब्दरत्नम्।

**ह्रस्वयोरप्राप्ताविति**। अत एव "यू स्त्र्याख्यौ" इति सूत्रे ह्रस्वघटितवाक्ये 'नेति निवृत्तम्' इत्युक्तं भाष्ये। **निषेधे प्राप्त इति**। भावतात्पर्यकतालाघवानुरोधेनाप्राप्तविभाषात्वमेवोचितमिति भावः। **ह्रस्वयोस्तु स्त्रियामित्येवेति**। इष्वादिष्वप्राप्तिमाशङ्क्य "ङिति ह्रस्वश्च" इत्यत्र "नित्यस्त्रीलिङ्गावित्येवंविधो नियमो नाश्रीयते" इति कैयटोक्तिरुपक्रमानुरोधाद्ध्रस्वांशमात्रविषया "यूस्त्र्याख्यौ" इति

भैरवी।

त्वात्। अत एवार्द्धखट्वायै इत्यत्र याटः प्रवृत्तिः। एवञ्चात्रत्यम्परममूलं मूलञ्च प्राचामनुरोधेनेति तत्त्वम्।

अत एव—ह्रस्वयोरप्राप्तेरेव। नेति निवृत्तमिति। निषेधस्य प्राप्तिपूर्वकत्वेन "यू स्त्र्याख्यौ" इति सूत्रे च दीर्घस्य ग्रहणेन विधेरप्राप्तेर्नेति निवृत्तमित्युचितमेवेति भावः। ननु ह्रस्वघटितवाक्यव्याख्यानावसरे तथाकथनेन दीर्घघटिते नेत्यस्य सम्बन्धोऽस्तीति गम्यते। तथाच तद्धटितवाक्यस्य वा न स्यादित्येव व्याख्यानमुचितमत आह—भावेति। भावमात्रेत्यर्थः। उभयत्र तात्पर्यकल्पनापेक्षयाऽप्राप्तभावस्यैकस्य कल्पने लाघवम्भवति। अत एव ह्रस्वघटितवाक्येनैकवाक्यताऽपि भवति। न च दीर्घघटितवाक्येऽपि नेत्यस्य निवृत्त्या तदंशे उभयत्र विभाषात्वमेवास्त्विति वाच्यम्? अक्लृप्तकल्पनापेक्षया क्लृप्तार्थस्य कल्पनायां लाघवात्। ननु स्त्र्याख्यपदस्य प्रक्रान्तत्वात्स्त्रियामित्येवेत्ययुक्तमत आह—इष्वादिष्विति। उपक्रमानुरोधात्—इष्वादिष्वप्राप्तिशङ्का या कृता सा आख्याग्रहणप्रयोजनप्रदर्शनोपक्रमानुरोधात्। तथाहि भाष्ये—आख्याग्रहणं किमर्थम्। नदीसञ्ज्ञायामाख्याग्रहणं स्त्रीविषयार्थम्। स्त्रीविषयावेव यौ नित्यं तयोरेव नदीसंज्ञा यथा स्यात्। इह मा भूत्—ग्रामण्ये—सेनान्ये—स्त्रियै इति। अत्र कैयटः—आख्याग्रहणसामर्थ्यान्नियम आश्रीयते—स्त्रियमेव यावाचक्षाते नतु लिङ्गान्तरयुक्तमपीत्यर्थः। आख्याग्रहणप्रयोजनप्रदर्शकेऽस्मिन्वार्तिके विषयशब्दोऽनन्यभावे तद्द्योतक एवकारो व्याख्यानपरभाष्ये एवकारार्थ एवेति नित्यशब्देनाख्यातः। ग्रामण्ये इति ग्रामणीशब्दः क्रियाविषयत्वात्त्रिलिङ्गत्वात्स्त्रीविषयो न भवतीति स्त्रियामपि वर्तमानो नदीसंज्ञो न भवति। एवम्भाष्यं व्याख्याय शङ्कितं 'यद्येवमिष्वशनिप्रभृतीनामुभयलिङ्गानाम्पट्वादीनां गुणवचन-

भावप्रकाश।

एवौचित्यबोधनम्, अन्यथोक्तवार्त्तिकस्य तत्प्रत्याख्यानायाकारप्रश्लेषस्य च वैयर्थ्यापत्तिः। किञ्चार्धखट्वायै इत्यादौ याडनापत्तिः। एवं च प्राचां सर्वेषामुक्तिर्मूलं परममूलं च चिन्त्यमिति।

ननु "यू स्त्र्याख्यौ" इत्यत्र ह्रस्वग्रहणपक्षस्यापि भाष्ये उक्तत्वेनाप्राप्तिर्दुरुपपादेत्यत आह—**अत एवेति**। तत्रैव पक्षे शेषपदमकृत्वा परत्वात् घिसंज्ञया बाध इत्यर्थस्याप्युक्तत्वेन न दोष इत्यत्रान्वयः (?)। **नेति** उपलक्षणं तद्घटितसूत्रस्य। ननु दीर्घवाक्ये इयङित्यादिनिवृत्त्या तदंशे उभयविभाषात्वमेवास्त्वत आह—**भावेति**। तन्मात्रेत्यर्थः। उभयकल्पनात एककल्पने लाघवं वाक्ययोः साम्यं चेति भावः। अक्लृप्तकल्पनातः प्रतिप्रसवविधौ क्लृप्तकल्पनप्रयुक्तलाघवमपि बोध्यम्। एवेनोभयत्र विभाषात्वव्यवच्छेदः। यत्तु खण्डनकृत्—इहेत्यादि पर्यन्तमित्यन्तं मूलं चिन्त्यम्, अतिश्रियै ब्राह्मण्यै इति भाष्योदाहरणात्कैयटोक्तनित्यस्त्रीत्वस्येदूद्विशेषणत्वायोगात्। अत एव सामान्यकैयटोक्तिः। वृत्त्युक्तस्य तु तस्य ह्रस्वयोरपि सम्भव इति इति; तत्खण्डयति—**इष्वादीति**। आदिना अशन्यादिपरिग्रहः। कैयटोक्तिः—स्त्रीविषयार्थमित्यादिव्याख्यावसरे इति भावः। **उपक्रमेति**। इष्वाद्यप्राप्तिरूप इत्यर्थः। यद्यपि पूर्वोत्तर-

त्वपर्यन्तम् । अन्यथा इष्वशनिप्रभृतीनामुभयलिङ्गानां सर्वलिङ्गानां च स्त्रीत्वेऽपि नदीत्वं न स्यात्, कैयटरीत्या नित्यस्त्रीत्वाभावात्, हरदत्तमतेऽपि ह्रस्वांशे

---

### शब्दरत्नम् ।

सूत्रेऽन्वत्येयङुवङ्स्थानावित्यंशस्य निषेधपरतया भाष्ये व्याख्यानेन निषेधस्य प्राप्तिपूर्वकतया तत्र नित्यस्त्रीलिङ्गावित्यस्यावश्यकत्वाच्चेति भावः । तदाह-अन्यथेति । कैयटरीत्येति । "स्त्रीविषयावेव यौ नित्यम्" इति भाष्यस्वारस्येन लिङ्गान्तरविशिष्टार्थानभिधायकत्वरूपस्य नित्यस्त्रीत्वस्य तेनोक्तेरिति भावः । हरदत्तमतेऽपीति । पूर्वभाष्ये एवो भिन्नक्रमः, नित्यमेव यौ स्त्रीविषयावित्यन्वयः, नित्यमेवेत्यस्य पदान्तरं विनापीत्यर्थं

### भैरवी ।

त्वात्सर्वलिङ्गानां स्त्रीविषयत्वाभावात्स्त्रियां वृत्तौ "ङिति ह्रस्वश्च" इति नदीसंज्ञा न प्राप्नोति' इति । ततः एवन्तर्हि "ङिति ह्रस्वश्च" इत्यत्रैवंविधो नियमो नाश्रीयते इति समाहितम् । क्रियाविषयत्वादित्यनेन प्रवृत्तिनिमित्तैक्यं दर्शितम् । यत्र प्रवृत्तिनिमित्तभेदस्तत्रैव वाचकशब्दभेदः । विशेष्यभेदे लिङ्गभेदे च न, तत्तद्भेदेऽपि शब्दभेदव्यवहाराभावात् । ततः स्पष्टप्रतिपत्त्यर्थङ्केवलस्य स्त्रीशब्दस्यानुवर्तनाददोषः इति चोक्तम् । तदुक्तेर्ह्रस्वांशमात्रपरत्वे भाष्यमेव साधकमस्तीत्यत आह—यू स्त्र्याख्याविति । तदाहेति । ह्रस्वघटितवाक्यस्य नित्यस्त्रीलिङ्गभिन्नेऽपि प्रवृत्तिरस्त्येतदाहेत्यर्थः । एवञ्चोपक्रमभाष्यग्रन्थस्यात्र दीर्घघटितवाक्येऽनुवृत्तं यत्स्त्र्याख्यपदं तन्नित्यस्त्रीलिङ्गबोधकावित्यर्थकमिति 'कटप्रुवे ब्राह्मण्यै' इत्यत्र नदीसंज्ञा नेति भावः । वस्तुतस्तु "ङिति" इतिसूत्रेऽनुवृत्तं यत्स्त्र्याख्यपदन्तत्स्त्रीवाचकावित्येतन्मात्रार्थकं शब्दाधिकारानुरोधात् । तच्च ङिदाक्षिप्ताङ्गविशेषणमिति 'कटप्रुवे ब्राह्मण्यै" इत्यत्र विकल्पो भवत्येव । ङितीत्यत्रैवंविधो नियमो नाश्रीयते इत्युक्तिरुभयसाधारणी । मूलन्तु प्राचामनुरोधेन। परममूलन्तूभयसाधारणम् । अत एव "ङिति ह्रस्वश्च" इति प्रतीकमुपादाय ह्रस्वघटितवाक्ये दीर्घघटितवाक्ये चैतदिति भाष्यप्रदीपोद्योते उक्तम् । लिङ्गान्तरविशिष्टेति । अत्र प्रवृत्तिनिमित्तैक्य इत्यस्याकथनेन यत्र प्रवृत्तिनिमित्तभेदस्तत्र शब्दस्य वाचकभेद एवास्तीति ध्वनितम् । तेन—कैयटेन । हरदत्तसम्मतार्थस्य लाभोपायमाह—पूर्वभाष्य इति । स्त्रीवि-

### भावप्रकाश ।

तन्त्रयोः प्राचीननिबन्धेषु अगत्या विकल्पो दृश्यते तथापि सर्वत्रोपक्रमप्राबल्यस्यैवोपक्रमपराक्रमे दीक्षितैर्व्यवस्थापितत्वादिति भावः । एतेन नित्यस्त्रीत्वाभावे ङितीत्यस्य साफल्येन नित्यस्त्रीलिङ्गे ङित्सु अन्तरङ्गत्वान्निषेधापत्तिरित्यपास्तम् । नन्वनिष्टापत्त्या दीक्षितोक्तनियमादरो वैयाकरणैर्दुष्करोऽत आह—यूस्त्र्येति । उपक्रमे इति भावः । अन्वत्येति । अत्रानुवृत्तेत्यर्थः । निषेधेति । तत्र ह्रस्वग्रहणपक्षे ङितीति योगविभागे ङितिचेयङुवङ्स्थानौ स्त्र्याख्यौ यू अस्त्री वा नदीसंज्ञौ न भवत इति तदुक्तेश्चेत्यपि बोध्यम् । एवं च कटप्रुवे ब्राह्मण्यै इत्यत्र विकल्पो न, लिङ्गान्तरविशिष्टार्थाभिधायकत्वेन तत्त्वाभावादिति भावः । तत्र-अत्रानुवृत्ततदंशे । इति भाव इत्याभ्यां सूचिताऽरुचिस्तु शब्देन्दुशेखरे स्पष्टा तत एव बोद्धव्या । अत एव परममूलं सङ्गच्छते । मूलं तु प्रकाशानुरोधेन । तद्भाष्यं त्वेकदेशियुक्तिः । कैयटस्तु साधारणः, उपसंहारानुरोधात् । कटप्रुवे इत्यादौ विकल्पो भवत्येव । स्त्रीवाचकावित्येतन्मात्रार्थस्त्र्याख्यावित्येतदत्रानुवृत्तं, शब्दाधिकारात् । तच्च ङिदाक्षिप्तस्याङ्गस्योभयत्रापि विशेषणमिति बोध्यम् । यौ नित्यमिति । वार्त्तिके विषयशब्दोऽनन्यभावे । तद्द्योतक एवकारो भाष्ये एवार्थ एव नित्यग्रहणेनान्वाख्यायते इति भावः । इदं च सर्वमाख्याग्रहणसामर्थ्याल्लभ्यते । ननु भाष्यविरोधाद्वृत्तिमतमयुक्तमत आह—पूर्वेति । अयं भावः—भाष्ये 'आध्यै प्रध्यै स्त्रियै' इत्यादावुभयत्रापि निषेधमाशङ्क्य यत्र नदीकार्याश्रयेऽङ्गे बाधकाबाधितेयङादिस्थितिः क्वचिद् दृष्टा तस्य तदवयवस्य च निषेध इत्यर्थेन परिहृतम् । तत्र न बहुव्रीहिः, कबापत्तेः; किन्तु प्रकृष्टं ध्यायतीत्यर्थः । तथासति कैयटोक्तरीत्या नित्यस्त्रीत्वाभावेन भाष्यासङ्गतिरतो

नित्यग्रहणव्यावर्त्यालाभाच्च। अत एव आख्याग्रहणमपहाय स्त्रीशब्दमात्रं निष्कृष्य सम्बद्ध्यते; तदेतदाह—ह्रस्वौ च इउवर्णौ स्त्रियामिति। औत्वे प्राप्त इति। परत्वादिति भावः। यत्तु प्राचा "औत्" इति सूत्रे घिनदीसंज्ञावर्जिता-

### शब्दरत्नम्।

इति वृत्त्याशयं व्याचष्टे। इष्वादीनां च शब्दार्थ एव स्त्रीत्वमिति तेषां पदान्तरं विनापि स्त्रियां वर्तमानत्वेन व्यावर्त्याभाव इति भावः। **आख्याग्रहणमपहायेति।** नित्यत्वार्थकमपहायेत्यर्थः। **स्त्रीशब्दमात्रमिति।** स्त्र्याख्यपदं स्त्रीबोधकावित्येतन्मात्रार्थकं निष्कृष्य पूर्वोक्तार्थमपहाय संबद्ध्यते इत्यर्थः। **परत्वादिति।** ङेराममपेक्ष्येत्यादिः।

### भैरवी।

षयात्वेव यौ नित्यमिति भाष्य इत्यर्थः। व्याचष्टे-प्रकाशयति। शब्दार्थ एव-शब्दवाच्य एव। एवञ्च केवलस्याप्शब्दस्य प्रयोगे यथा स्त्रीत्वस्य प्रतीतिस्तथेष्वादिमात्रप्रयोगेऽपि भवतीति भावः। व्यावर्त्याभाव इति। व्यावर्त्यत्वाभाव इत्यर्थः। तन्मते व्यावर्त्यन्तु अतिकौशाम्बिरित्यादिरिति यद्यपि सम्भवति तथापि वार्तिकेन "प्रथमलिङ्गग्रहणञ्च" इत्यनेन तु दुर्वारमिति खल्प्वादिकं व्यावर्त्यम्बोध्यम्। 'वृत्त्याशयम्' इत्यनेनात्रारुचिर्ध्वनिता। उक्तभाष्याज्झटिति तादृशार्थाप्रतीतिरिति ह्रस्वघटितवाक्येऽपि स्त्र्याख्यपदमेव सम्बध्यते, नतु स्त्रीत्येकदेश एव। अत एव "यू स्त्र्याख्यौ" इति सूत्रे ह्रस्वयोर्ग्रहणमिति पक्षे शकटये इत्यत्र गुणो न प्राप्नोति। नदीसञ्ज्ञया घिसंज्ञाया बाधितत्वादिति शङ्कां कृत्वा "यू स्त्र्याख्यौ नदी" "नेयङुवङ्स्थानावस्त्री" "वामि" ततः "ङिति" ङितिचेयङुवङ्स्थानौ यू वा अस्त्री नदीसंज्ञौ न भवतः। ततः 'ह्रस्वौ' ह्रस्वौ स्त्र्याख्यौ यू ङिति नदीसंज्ञौ भवतः। इयङुवङ्स्थानौ वा नेति निवृत्तम्। ततो 'घि' घिसंज्ञौ भवतः स्त्र्याख्यौ यू ह्रस्वौ ङिति इत्युक्तम्। एतत्पक्षे घिनदीसञ्ज्ञयोरेकविषयत्वादेकसञ्ज्ञाधिकारात्पर्यायेण प्रवृत्तौ शकव्य शकटये इति भवति। एवं योगविभागेन समाधाय ह्रस्वदीर्घयोरविशेषेण नदीसंज्ञां विधाय तस्याः ह्रस्वयोर्घिसंज्ञा बाधिका तस्मान्नित्यं प्राप्तायामियङ्ङिति विभाषा आरभ्यते इति योगविभागाभावमाश्रित्योक्तम्। एतस्मिन्भाष्यग्रन्थे ह्रस्वघटितवाक्येऽपि स्त्र्याख्यपदस्यैव सम्बन्धः कृतो नत्वेकदेशस्येति केवलस्त्रीपदमात्रानुवृत्तिर्न युक्ता। एवंसति मूलासङ्गतिः प्राप्नोति तद्योजनायाह—नित्यत्वार्थकमिति। परत्वादित्यत्र विशेषाकाङ्क्षानिवृत्तये आह—ङेरामेति। नच परत्वादौत्वेऽपि

### भावप्रकाश।

भिन्नक्रमतेति। **व्याचष्टे इति।** अस्य प्रकाशयतीत्यर्थः। स्वयमेव यौ स्त्रियमाचक्षाते इति फलितार्थः, तदाह-**इष्वादीनामिति।** आदिना पट्टमृदुप्रध्यादिसंग्रहः। **शब्दार्थ एवेति।** अत एव पट्टरानीयतामित्युक्ते स्त्रियमानीय कृती भवति। **व्यावर्त्याभाव इति।** व्यावर्त्यत्वाभाव इत्यर्थः। न चास्याव्यावर्त्यत्वेऽपि अतिकौशाम्ब्यादेस्तत्त्वम्, प्रथमलिङ्गमिति वार्तिकेन दुर्वारत्वात्। एतेन तस्य तत्त्वसम्भवः। ग्रामण्यादेरपि अत्र मते नित्यस्त्रीत्वेन व्यावर्त्यत्वाभावस्तदंशेऽपीत्यर्द्धजरतीयानौचित्यमिति खण्डनकृदुक्तमपास्तम्। **भाव इति।** अनेनारुचिः सूचिता। सूत्रभाष्याक्षरैरीदृशनित्यस्त्रीत्वालाभः। भाष्योदाहरणे च बहुव्रीहिरेव। क्प्तुन, ऋसाहचर्येण यस्य वृत्तेः प्राङ् नदीत्वं तदुत्तरपदके एव तत्प्रवृत्तेः। धीशब्दस्य तु तन्न, इयङ्स्थानत्वेन निषेधात्। तत्रत्यकैयटस्तु चिन्त्य एवेति। एकदेशानुवृत्तेरयुक्तत्वाद्भाष्ये ह्रस्ववाक्ये आख्याविति कण्ठत उक्तत्वाचाह-**नित्यत्वेति।** तथा चाख्याग्रहणमिति मूले बहुव्रीहिरर्थपर इति भावः। एतेन बहुव्रीहिः स्त्र्याख्याविति समूहपरः। तेन विशिष्टनिवृत्त्या महासंज्ञया स्त्रीत्वमात्रं लभ्यते नित्यस्त्रीत्वेन साहृश्यस्याग्रहादिति मान्योक्तिरयुक्तेति सूचितम्। उक्तरीत्या योजयति-**स्त्र्याख्येति।** मूले बहुव्रीहिरिति भावः। **निष्कृष्येति।** अस्य व्याख्या-**पूर्वोक्तेति।** द्विर्बद्धमिति न्यायेनापौनरुक्त्यमिति भावः। **ङेरामिति।** एतेन परत्वादौत्वेऽपि पुनः प्रसङ्गविज्ञानेन 'ङे-

भ्यामिति व्याख्यातं, नासावक्षरार्थः किं तु पूर्वोत्तरसूत्रद्वयलभ्यः । एवं च "इदुद्भ्याम्" इति सूत्रानुपन्यसनं प्राचः प्रामादिकमेव ।

"अचि र ऋतः" ॥ गुणदीर्घोत्वानामिति । तिस्रस्तिष्ठन्तीत्यत्र "ऋतो ङि" इति गुणस्य, तिस्रः पश्येत्यत्र "प्रथमयोः" इति पूर्वसवर्णदीर्घस्य, प्रियतिस्र आगतः, प्रियतिस्रः स्वमित्यत्र "ऋत उत्" इत्युत्वस्य रत्वमपवाद इत्यर्थः, बाध्यसामान्यचिन्तायां स्वविषये प्राप्तस्य सर्वस्य बाधादिति भावः । विशेषचिन्तायां तु 'मध्येऽपवादा' इति न्यायेन दीर्घोत्वयोरेव बाधः स्यान्न तु गुणस्य ।

शब्दरत्नम् ।

तिस्रस्तिष्ठन्तीति । इदं प्रियतिस्रावित्यादेः "मपर्यन्तस्य" इतिभाष्योदाहृतस्योपलक्षणम् । बाध्यसामान्येति । इदं च "तृज्वत्क्रोष्टुः" इत्यत्र भाष्ये स्पष्टम् । बाध इति । अनन्तरस्येति न्यायाश्रयणे उत्वस्यैव बाधः स्यादिति बोध्यम् । ननु यत्रानेकविधिं प्रति येननाप्राप्त्याऽपवादत्वं प्राप्तं तत्र व्यवस्थापका मध्येऽपवादा

भैरवी ।

पुनः प्रसङ्गविज्ञानन्यायेन "ङेराम्" इत्यनेनैव सिद्धमिति "इदुद्भ्याम्" इति व्यर्थमिति वाच्यम् । पुनः प्रसङ्गविज्ञानन्यायानित्यत्वज्ञापनार्थन्तस्य सत्त्वात् । तेन सकृद्गताविति नापूर्वमिति बोध्यम् ।

ननु रादेशविषये विशेषचिन्तायामपि तिस्र इत्यस्य जसि रादेशो वक्तव्यो गुणस्य परत्वादित्यर्थकेन 'जसि रादेशो गुणपरत्वात्'इत्यनेन सिद्धिर्भविष्यतीत्याशयेनाह–इदमिति । इदम्–लक्ष्यम् । आदिना प्रियचतस्रावित्यस्य संग्रहः । इदञ्चेति । बाध्यसामान्यचिन्ताश्रयणञ्चेत्यर्थः । मूले विशेषचिन्तापक्षे यो दीर्घोत्वयोर्बाध उक्तः स केवलमध्येऽपवादन्यायमात्राश्रयणपक्षे, यदि त्वनन्तरस्येति न्यायस्यापि प्रवृत्तिचिन्तनं तदाप्याह—अनन्तरस्येतीति । अथ विशेषचिन्तायामपि रादेशविषयताव्यापकविषयताकत्वन्न कस्याप्यस्तीति येन नाप्राप्तिन्यायविषयताया अभावात्सर्वशास्त्रस्य बाधः सिद्ध एवेति बाध्यसामान्यचिन्ताश्रयणं व्यर्थमित्याशङ्कते—नन्विति । "येन नाप्राप्त" इति परिभाषायां येनेत्यस्य यद्धर्मावच्छिन्नकार्येणेत्यर्थः । एवञ्च पररूपत्वावच्छिन्नकार्येऽवश्यम्प्राप्ते आरभ्यमाणया वृद्ध्या पररूपसामान्यबाधे प्राप्ते व्यवस्थापकन्यायविशेषस्य सञ्चारो भवति यथा, तथाऽत्र

भावप्रकाशः ।

राम्" इत्येव सिद्धे "इदुद्भ्याम्" इति सूत्रमनावश्यकमिति प्राचा ध्वनितत्वादनुपन्यासः प्रामादिक इति मूलं चिन्त्यमिति खण्डनकृदुक्तमयुक्तम् । यत्र परस्मिन् कृते पूर्वप्रवृत्तौ परप्रवृत्तिवैफल्याभावस्तत्रैव तत्प्रवृत्तेः । स्पष्टं चेदम् "अचश्च" इत्यत्र भाष्यकैयटोद्द्योतेषु । अत एवेदुद्भ्यामित्यत्र वार्त्तिकतत्खण्डकभाष्यकैयटादिग्रन्थाः सङ्गच्छन्त इति सूचितम् । यत्तु परिभाषावृत्तौ सीरदेवेनोक्तं–यत्र पूर्वेण प्रवर्त्तमानेन परस्य बाधस्तत्र सकृद्गतिन्यायो यत्र विपरीतं तत्र पुनः प्रसङ्गेति केषांचिन्मतमयुक्तम्, 'अक्षी' इत्यत्र परत्वाद् "ई च द्विवचने" इतीत्वे कृते नुमापत्तेरिति; तन्न, तस्य छान्दसत्वादित्याहुः । निर्णीतं चैतत्परिभाषेन्दुशेखरकाशिकायाम् ।

ननु विशेषचिन्तायामपि जसि रादेश इति वार्त्तिकेन तिस्र इत्यस्य सिद्धिरत आह–इदमिति । लक्ष्यमित्यर्थः । मूलं तु प्रकाशानुरोधेनेति भावः । आदिना प्रियचतस्रावित्यस्य संग्रहः । इदं चेति । सामान्यचिन्ताश्रयणं चेत्यर्थः । आश्रयणेत्विति पाठः । प्रतिपादितं सर्वमनुपदमेव । नन्विति । अयम्भावः–विशेषचिन्तापक्षे येनेत्यस्य लक्षणेनेत्यर्थो यद्धर्मावच्छिन्नकार्येणेत्यर्थो वा ? आद्ये एषामसन्देहेना-

सामान्यविशेषपक्षौ च जातिव्यक्तिपक्षवल्लक्ष्यानुरोधाद् व्यवस्थितौ इति कैयटादौ स्पष्टम् ।

यत्तु व्याचख्युः—अपवादशब्दो बाधकत्वोपलक्षकः । पूर्वविप्रतिषेधेन गुणमपि बाधते इत्याशय इति । तन्निर्मूलं क्लिष्टं च । यदपि प्रसादकृतोक्तम्—गुणस्य पूर्वविप्रतिषेधेनेतरयोः परविप्रतिषेधेन बाधक इत्यर्थ इति । तन्न, रविधेरचरितार्थत्वात् । न च टौसोश्चरितार्थता, यणा गतार्थत्वात् ।

त्रिचतुरोर्विशेषणादिति । श्रुतत्वाद्धि त्रिचतुरोरित्यस्यैव 'स्त्रियाम्' इति

---

### शब्दरत्नम् ।

इत्यादिन्यायाः, प्रकृते च रभावस्य न केनापि येननाप्राप्तिरिति चेत् ? न, किमिदं येननाप्राप्तिन्यायेन पूर्वसवर्णदीर्घापवादतया प्रथमाद्वितीयामात्रविषयम्, उत "ऋत उत्" इत्यपवादतया पञ्चमीषष्ठीमात्रविषयम्, उत "ऋतो ङि" इति गुणापवादतया सर्वनामस्थानङिमात्रविषयमिति संशये व्यवस्थाकाङ्क्षया तन्न्यायप्रवृत्तेः सूपपादत्वात् । तन्निर्मूलमिति । 'जसि रादेशो वक्तव्यो गुणपरत्वात्' इत्येतत्सूत्रस्थं वार्तिकं मूलमिति न वाच्यम्, बाध्यसामान्यचिन्तामाश्रित्य तत्प्रत्याख्यानस्य तृज्वत्सूत्रे भाष्ये ध्वनितत्वेन तस्य दृढमूलत्वाभावात् बाध्यसामान्यचिन्ताश्रयणे एव तस्य मूलत्वौचित्याच्च । तदाह—क्लिष्टं चेति ।

### भैरवी ।

नास्ति कुत्रापि शास्त्रे स्वविषयताव्यापकविषयताकत्वसत्त्वस्याभावादिति भावः । समाधत्ते—किमिदमिति । अयम्भावः, लक्ष्यानुरोधेन प्रकृते व्यक्तिपक्ष आश्रीयते । तस्मिन्पक्षे लक्षणस्य भेदेनैकैकलक्षणेन येन नाप्राप्तिन्यायस्य निरूपणङ्कर्तुं शक्यमिति । गुणपरत्वादिति । गुणस्य परत्वादित्यर्थः । प्राप्ताविति शेषः । वक्तव्य इत्यस्य पूर्वविप्रतिषेधेनेति शेष इति तदभिप्रायः । बाध्यसामान्यचिन्तेति । एतेन तस्य वार्तिकस्य बाध्यविशेषचिन्तायामारम्भः कृत इति पूर्वविप्रतिषेधाभिप्रायकत्वन्तस्येति सूचितम् । किञ्च भाष्ययोरेकवाक्यत्वोपपत्तये रादेश इत्यस्य बाध्यसामान्यचिन्तयेत्यादौ पूरणीयमित्येव युक्तमित्याह—बाध्यसामान्येति । क्लिष्टञ्चेतीति । एकेन हेतुना सर्वबाधसिद्धावनेकहेतुना तस्य कल्पनं क्लिष्टमित्यर्थः ।

### भावप्रकाश ।

विषयेऽपि द्वितीये पररूपत्वावच्छिन्ने कार्ये प्राप्ते आरभ्यमाणाया वृद्धेस्तद्बाधकत्वे निर्णीते किं शास्त्रविहितस्येत्येवं तद्विशेषचिन्तायां तत्प्रसरोऽस्त्येवेति । चस्त्वर्थे । न केनेति । एतद्विषये सर्वत्र कस्याप्यप्राप्तेरेवं च कथं मध्येपवादन्यायसञ्चार इति भावः । व्यक्तिपक्षाभिप्रायेण समाधत्ते—किमिदमित्यादि । अत्र क्रमबोधने तात्पर्यात् पूर्वनिपातव्यत्यय उभयत्र बोध्यः । व्यवस्थेति । तस्य अवश्यापेक्षिततयेत्यर्थः । उक्तवार्तिकस्य मूलत्वेन प्रकाशसौष्ठवे मूलं चिन्त्यमिति खण्डनकृद्रत्नाकराद्युक्तदोषमुद्धरति द्विर्बद्धमितिन्यायेन—जसीति । एतदिति । प्रकृतेत्यर्थः । शङ्कायाः निस्सारत्वादादौ नञनुल्लेखः । औचित्याच्चेति । अत एव भाष्ययोरेकवाक्यता भवति । अन्यथा विरोधो दुष्परिहरः । किञ्च तावताऽपि प्रियतिस्रावित्यादेरनिर्वाहः । ततो विशेषचिन्ताङ्गीकारे जस्ग्रहणं ङिसर्वनामस्थानोपलक्षणमित्यन्ते क्लेशः । एवं चैवं सति विशेषचिन्तापक्षे उक्तक्लेशावश्यकत्वादुपलक्षणतेति खण्डनकृद्रत्नाकराद्युक्तमपास्तमिति भावः ।

विशेषणं नाङ्गस्येति भावः । प्रियत्रिरिति । अत्र व्याचक्षते—स्त्रिया अन्यपदार्थत्वेन बहुव्रीहिरूपमङ्गं तत्र वर्तते, त्रिशब्दस्तु पुन्नपुंसकयोरेवेति तिस्रादेशो नेत्यादि । अत्रेदं वक्तव्यम् । जहत्स्वार्थायां त्रिशब्दोऽनर्थकः । अजहत्स्वार्थायां तु स्त्रियां वर्तत एव । तत्कथं पुन्नपुंसकवृत्तिता सङ्गच्छतामिति । अत्रेदं तत्त्वम् । जहत्स्वार्थैव वृत्तिरिहाभिमता, लक्ष्यानुरोधात् । तेनाङ्गं स्त्रियामिति सम्यगेव । त्रिशब्दस्य पुन्नपुंसकवाचिता तु भूतपूर्वगत्या । उत्तरपदार्थप्रधानस्तत्पुरुष इत्यादिसिद्धान्तप्रवादस्यैवमेव निर्वाह्यत्वात् । एवं प्रियातसा पुमानित्यत्र स्त्रियां

---

शब्दरत्नम् ।

नाङ्गस्येति । तस्याश्रुतत्वात् । स्त्रियां वर्त्तत एवेति । अजहत्स्वार्थायामन्यपदार्थस्य त्रिशब्देनाप्युक्ततया तस्य स्त्रियां वृत्तिः । न चेदं स्त्रीत्वं पदान्तरसापेक्षतया बहिरङ्गमिति वाच्यम् । त्रिशब्देन सर्वत्र स्त्रीरूपार्थप्रतिपादने तात्पर्यग्राहकस्यापेक्षिततयाऽन्तरङ्गाभावादिति भावः । तत्कथमिति । स्त्रियां तत्र च वृत्तिरिति पुन्नपुंसकयोरेवेति

भैरवी ।

अश्रुतत्वादिति । अङ्गस्याश्रुतत्वात्तत्सम्बन्धस्य श्रुतत्रिचतुर्विशेषणत्वेन विशेष्याकाङ्क्षानिवृत्तेरनाकाङ्क्षत्वेनासम्भवादिति भावः । ननु स्त्रिया अन्यपदार्थत्वेन समुदायस्य स्त्रियां वृत्तिर्नत्ववयवयोस्त्रिचतुःशब्दयोरिति स्त्रियां वर्तत एवेत्यसङ्गतमतो भावं व्यनक्ति—अजहदिति । त्रिशब्देनापीति । अपिनाऽङ्गस्य समुच्चयः । नच स्त्रीनिष्ठसंख्यासमर्पकयोरित्यर्थेनानयोः स्त्रियामित्येतद्विशेषणवैशिष्ट्यमिति वाच्यम् ? स्त्रियां वर्तमानयोरित्यर्थस्य तद्ग्रन्थे दर्शनेन तद्रीत्याऽस्य दोषस्याभिधानात । अन्तरङ्गं यत्स्वगतं स्ववाच्यार्थगतं वा स्त्रीत्वन्तत्रैवादेशो नतु पदान्तरसन्निधानजन्यप्रतीतिविषयस्त्रीत्वे इत्याशयिकामाशङ्कान्निराचष्टे—न चेति । बहिरङ्गमिति । एतेनान्तरङ्गं यत्पुंस्त्वं नपुंसकत्वन्तदेव कार्यस्य प्रयोजकन्नत्वेतादृशम्बहिरङ्गम् । अत एव 'पञ्चाजी' इत्यत्र न टाबिति सूचितम् । तात्पर्यग्राहकान्तरानपेक्षप्रतीतिविषयत्वमन्तरङ्गत्वन्तच्च स्त्रीत्वे नास्तीत्याशयेन तदुक्तिन्निरस्यति—त्रिशब्देनेत्यादिना । ननु कथम्पुन्नपुंसकवृत्तिता सङ्गच्छतामिति मूलासङ्गतिः, यदि पुन्नपुंसकवृत्तित्वाभावस्यादेशप्रवृत्तौ निमित्तता स्यात्तदा पुन्नपुंसकवृत्तित्वस्यादेशाभावप्रयोजकत्वं स्यात्तथा तु नास्तीत्यत आह—स्त्रियामिति । तत्र च-पुन्नपुंसकयोश्च । तथाच मूलग्रन्थस्य तदुक्तनियमखण्डन एव तात्पर्यमिति भावः । नच स्त्रियान्तत्र चेत्यसङ्गतम्, विरुद्धलिङ्गद्वयवृत्तित्वस्यासम्भवादिति वाच्यम् ? दारानित्येतस्मात्पुंस्त्वेन वस्तुतःस्त्र्यर्थस्य प्रतिपादनदर्शनेन लिङ्गयोर्विरो-

भावप्रकाश ।

अश्रुतत्वादिति । एतेनाव्याप्त्यतिव्याप्तिप्रसङ्गाच्चेति रत्नाकरोक्तहेतुः परास्तः । साध्यसिद्धेः प्राक् तदनिर्णयादिति भावः । यद्यपि मूलमते स्त्रीनिष्ठसंख्यायां वर्त्तमानयोरित्यर्थस्तथापि प्रकाशे दूष्ये स्त्रियां वर्त्तमानयोस्तयोरिति तद्रीत्यैवाह—स्त्रियां वर्त्तत एवेतीति । तथैव व्याचष्टे-अजहदिति । अपिरङ्गादिसमुच्चायकः । बहिरङ्गमिति । एवं चान्तरङ्गस्वगतपुंस्त्वादिप्रयुक्तमेव कार्यमिति भावः । अत एव 'पञ्चाजी' इत्यादावत्र पक्षे न टाबिति स्पष्टं कौस्तुभादौ । सर्वत्र—समासेऽसमासे च । अन्तरङ्गेति । अन्तरङ्गस्य स्त्रीत्वस्य क्वाप्यभावादित्यर्थः । एवं च सामर्थ्यात्तत्प्रवृत्त्यान्तरङ्गकार्याभावः । स चात्राप्यविशिष्टो विनिगमकाभावात् । 'पञ्चाजी' इत्यत्र तु नैवम् । एतेन तद्ग्रन्थविरुद्धमेतदित्यपास्तमिति भावः। ननु पुंनपुंसकेति मूलमयुक्तम् । तदभावस्यादेशप्रवृत्तावनिमित्तत्वादत आह-स्त्रियामिति । तत्र च—पुंसि क्लीबे चेत्यर्थः । तथा च तन्मात्रवृत्तिता प्रकाशोक्ता कथं सङ्गच्छतामिति मूलार्थो बोध्यः । दारा

वृत्तिरपि भूतपूर्वगत्यैव । अजहत्स्वार्थापक्षे तु स्त्रीनिष्ठसंख्यासमर्पकयोस्त्रिचतु-

शब्दरत्नम् ।

त्वदुक्तं विरुद्धमिति भावः । अजहत्स्वार्थापक्षे त्विति । तुनोक्तार्थेऽरुचिर्ध्वनिता । तद्बीजं तु रूढेरविरोधित्वे जहत्स्वार्थावृत्तेरभावः । किं च जहत्स्वार्थाऽजहत्स्वार्थाशब्दयो-रवयवानां वाक्यदृष्टस्वार्थत्यागतदभावावित्येवार्थस्तत्रान्त्ये स्वार्थपुमादिवृत्तेः कथमन्य-

भैरवी ।

धस्यवाभावात् । उक्तार्थे-अत्रेदं वक्तव्यमित्यादिग्रन्थेनोक्तार्थे । रूढेरविरोधित्वे इति ।

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ॥

इति वृद्धव्यवहारस्य सत्त्वादिति भावः । रूढिः समुदायशक्तिर्यत्रावयवार्थाभिन्नार्थाऽ-वृत्तिस्तत्रैव जहत्स्वार्था । यथा रथन्तरमण्डपादिषु, तथा त्विह नास्ति, समुदायशक्ते-स्तद्विरुद्धत्वाभावात् । ननु वृद्धोक्त्यनादरेण मूलग्रन्थस्य योजनं स्यादेवेत्यत आह— किञ्चेति । इत्येवार्थ इति । जहति पदानि स्वानि यं स जहत्स्वः, जहत्स्वोऽर्थो यस्यां सा जहत्स्वार्था । एवमजहत्स्वार्थेत्यत्रापि । बहुवचनं प्रयोगभेदेन । अयमत्र विवेकः, यत्र रूढिर्विरोधिनी तत्रावयवानां वाक्यदृष्टस्य स्वार्थस्य सर्वथा त्याग एव, समुदायशक्त्यैवार्थ-विशेषस्य प्रतीतिः । यत्र तु न रूढिर्विरोधिनी राजपुरुष इत्यादौ यथा, तत्रापि राजपदस्य राजत्वनिष्ठप्रकारतानिरूपिता या मुख्यविशेष्यता तदवच्छिन्नोऽर्थस्तद्घटकस्य प्राधान्यांशस्य त्यागो वृत्तावेतावतैव जहत्स्वार्थावृत्तिरिति व्यवहारः । सर्वथानर्थकत्वेऽवयवशक्तिग्रहाभा-वेऽपि समुदायशक्तिग्रहाद्बोधापत्तिरिति । अत एवावयवशक्तिसहकृतसमुदायशक्त्या विशि-ष्टैकोपस्थितिजनकत्वमेकार्थीभाव इति वदन्ति । भाष्येपीत्थं व्युत्पाद्य पक्षान्तरमुक्तमथ-वाऽन्वयाद्विशेषणम्भविष्यतीति । एतत्पक्षे राजादुपसर्जनपदे वृत्तौ स्वार्थस्य त्याग एव, पुरुषादिपदमेव राजसम्बन्धविशिष्टपुरुषे शक्तमिति । यथा चम्पकादिपुष्पाणामभावेऽपि तदीयामोदान्वयमात्रेण चम्पकपुटमित्यादिव्यवहारस्तद्वत्पुरुषादिपदेन राजसम्बन्धवत्पुरु-षादीनाम्प्रतिपादनेन राजत्वविशिष्टस्य तत्र भानाद्राजपदार्थः पुरुषे विशेषणमिति व्यव-हारः । एतत्पक्षे जहति पदान्युपसर्जनीभूतानि स्वार्थं यस्यामिति जहत्स्वार्थेत्यस्यार्थः । अजहत्स्वार्थापक्षे तु नैवम् । अजहत्स्वार्थापक्ष एव "व्यपेक्षां सामर्थ्यमेके" इत्यनेनोक्तः । अन्त्ये

भावप्रकाश ।

इत्यादौ पुंस्त्वेन स्त्रीत्वावच्छिन्नस्य भानान्न लिङ्गयोर्विरोध इति भावः । तुना—उक्तवैलक्षण्यसूचकेन । उक्तार्थे-अत्रेदं वक्तव्यमित्यर्थे । अभाव इति ।

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ।

रूढिः समुदायशक्तिर्यत्रावयवार्थविरोधिनी तत्रैव सा । रथन्तरशालपर्णीगौरखरादाविति तदर्थः । तत्र पदद्वयस्य नैरर्थक्येऽपि रथकरणकतरणकर्तृत्वादिकस्याहार्यारोपेण प्रक्रियानिर्वाहो बोध्यः । मुनित्रया-सम्मतत्वाद्वृद्धोक्त्यनाश्रयणेन ग्रन्थसौष्ठवेऽपि वक्तव्यग्रन्थायुक्तत्वमेवेत्याह—किञ्चेति । स्वार्थाशब्दयो-रिति पाठः । जहति स्वानि पदानि यमिति जहत्स्वः सः अर्थो यस्यां सेत्यर्थः । एवं तत्रापि । बहुवचनं प्रयोगबहुलाभिप्रायम् । अयं भावः, पदानां तत्तद्विषयताविशिष्टे शक्तिरत एव बोधे विषयतानियमः । एवञ्च राजपदस्य राजत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नं स्वार्थस्तत्र समासे विशेष्यत्वांशत्यागः, एतावता जहत्स्वार्थत्वम् । अत्र च बीजं समुदायशक्तिः । एवं चावयवशक्तिसहकृतसमुदायशक्त्या विशि-ष्टोपस्थितिरिति पक्षमुक्त्वा पक्षान्तरं भाष्ये उक्तम्—अथवा अन्वयाद्विशेषणं भविष्यतीति । तस्यायं भावः—सर्वथोपसर्जनपदे स्वार्थत्यागः, वृत्तौ राजपदसम्बन्धमात्रेण पुरुषपदमेव राजसम्बन्धिपुरुषबोधकं, पुष्पाणामभावेऽपि आमोदान्वयमादाय चम्पकपुट इत्यादिव्यवहारवद्राजपदार्थः पुरुषे विशेषणमित्यादिव्य-वहार इति । एवं जहत्स्वार्थापदस्य जहत्युपसर्जनपदानि स्वार्थं यस्यां सेत्यर्थ उक्तो हेलाराजादिभिः ।

गोरिति विवक्षितोऽर्थः । "प्रत्ययोत्तरपदयोश्च" इत्येतत्सूत्रगतभाष्यग्रन्थसन्दर्भश्चेह प्रमाणम् । अनित्यत्वादिति । "इकोऽचि" इत्यज्ग्रहणं चेह लिङ्गम् । तद्धि सम्बुद्धौ नुमं वारयितुं कृतम् । भ्यामादिषु सत्यपि नुमि तल्लोपसम्भवात् । सम्बुद्धिश्च लुका लुप्तेति प्रत्ययलक्षणेन नुमः प्राप्तिर्वाच्या । प्रत्ययलक्षणं च "न लुमता" इति निषेधस्यानित्यतां विना दुर्लभमित्याकरे स्पष्टम् । न चेदमनित्यत्वं

---

## शब्दरत्नम् ।

पदार्थे स्त्रियां वृत्तिः । न चान्यपदार्थस्य समुदायशक्यत्वेऽपि समुदायघटकत्वेनावयवस्यापि स शक्य इत्याशयस्तर्हि जहत्स्वार्थत्वेऽपि तुल्यं, तत्रापि पक्षेऽन्यपदार्थस्य समुदायशक्यत्वात् । यदि स्त्रीवाचकतापर्याप्त्यधिकरणत्वविवक्षेत्युच्यते, तदा अजहत्स्वार्थत्वेऽपि तुल्यमिति ।

तल्लोपसम्भवादिति । पञ्चत्रपुभ्य इत्यादौ समुदायभक्तो नुम् नावयवस्येगन्तत्वविघातक इतीगन्तोत्तरपदद्विगुत्वप्रयुक्तपूर्वपदप्रकृतिस्वरोऽन्तरङ्गत्वात् नुमः

## भैरवी ।

इति । अजहत्स्वार्थापक्षे प्रागुक्तार्थके । सः—अन्यपदार्थः । इत्याशय इति । स्त्रियां वर्त्तनवादिन इत्यादिः । तुल्यमिति । तथा चाजहत्स्वार्थापक्षविशेषोपादानमफलमिति भावः । समुदायघटकत्वेन स्त्रियां यद्यपि वृत्तिस्तथापि त्रिशब्दमात्रे न पर्याप्तिसम्बन्धेन स्त्रीवाचकत्वम् । प्रकृते च तादृशी विवक्षाऽभिप्रेतेत्याशयेन शङ्कते—यदीति । तुल्यमिति । प्रियत्रिरित्यादावुक्तयुक्तिद्वयकृतभेदाभाव इत्यर्थः । एतेन ग्रन्थेन यत्त्वित्यादिना यत्प्रसादकारमतन्दर्शितन्तदेव युक्तन्नतु मूलोक्तमिति दर्शितम् ।

नन्विकोचीति सूत्रेऽज्ग्रहणाभावे भ्यामादौ नुमः प्रवृत्तिस्वीकारे या इष्टापत्तिः सत्यपि नुमि तल्लोपसम्भवादित्यनेन दर्शिता, सा न युक्ता पञ्चत्रपुभ्यामित्यादौ परत्वान्नुमि तस्य लोपेऽपि स्वरविधौ नलोपस्यासिद्धत्वेनानिगन्तत्वादिगन्तकालेत्यादिसूत्रविहितस्वरानापत्तेरत आह—पञ्चेति । प्रकृतिस्वर इति । सिद्ध इति शेषः । अन्तरङ्गत्वादिति । नुमागमापेक्षयाऽ-

## भावप्रकाश ।

अत एव च—

> जहत्स्वार्थविकल्पे च सर्वार्थत्यागमिच्छता ।
> बहुव्रीहिपदार्थस्य त्यागः सर्वत्र दर्शितः ॥

इति हरिरिति । तत्रान्त्ये—तयोः पक्षयोरन्त्ये पक्षे । वृत्तेरिति । त्रिशब्दस्येति शेषः । जहत्स्वार्थत्वाजहत्स्वार्थत्वशब्दयोः प्रागुक्तरीत्योपपत्तिर्बोध्या । एवं तु जहत्स्वार्थाजहत्स्वार्थशब्दयोरित्यपि पाठः सुयोजः । आशयः—मूलकृतः । शक्यत्वादिति । एवं च वस्तुतोऽनर्थकत्वेऽप्युक्तरीत्या तदापत्तिरिति भावः । अत्र वारणोपायमाह-यदीति । तुल्यमिति । प्रियत्रिरित्यादावुक्तयुक्तिद्वयकृतभेदाभाव इत्यर्थः । एवं च प्रकाशसौष्ठवे मूलमयुक्तमिति तात्पर्यम् । एतेन मुनित्रयानुक्तत्वाद्वचनमप्रमाणं तत्रे वा रूढिलक्षणाविषयं कुशलादिपदेष्विवेत्यरुचिबीजाभावः । किञ्च तत्रैव तदङ्गीकारे समर्थसूत्रभाष्यविरोधः । किञ्च रथन्तरादौ केनापि रूपेणानन्वये जहत्स्वार्थत्वं, प्रकारत्वेनान्यान्वयित्वेऽजहत्स्वार्थत्वमिति भेदसत्त्वेन तुल्यत्वाभाव इति मन्दोक्तमपास्तम्, व्याख्यानरीत्या दोषलेशाभावादिति दिक् ।

ननु पञ्चत्रपुभ्यामित्यादौ परत्वान्नुमि तल्लोपस्य "नलोपः सुप्स्वर" इत्यसिद्धत्वेनानिगन्तत्वाद् "इगन्त" इति स्वरो न स्यादत आह—पञ्चेति स्वरइत्यन्तेन । पूर्वपद—संख्यारूपम् । तथाच

सम्बुद्धिगुणमात्रविषयकमित्यभिनिवेष्टव्यम्, लक्ष्यानुरोधेनान्यत्रापि क्वचि-

### शब्दरत्नम् ।

पूर्वमेव स्वरप्रवृत्तेश्च । अकृतव्यूहपरिभाषा त्वनित्या । अतिराभ्यामित्यत्रापि नुमं बाधित्वा परत्वादात्वं 'वृद्ध्यौत्व' इत्यत्र वृद्धिशब्दविहितवृद्धेरेव ग्रहणान्न पूर्वविप्रतिषेधेन नुमिति शङ्क्यम् । प्रियतिसृभ्यामित्यादावपि नुमः परत्वात्तिस्रादेश इव । एतेन निर्दि-श्यमानत्रिशब्दस्य व्यवहितत्वादादेशो न स्यादित्यपास्तम् । शुचीनामित्यादौ 'नुमचिर' इति पूर्वविप्रतिषेधेन सकृद्गतिन्यायेन नुमोऽप्राप्त्या तत्र "इन् हन्" इति नियमाद्दीर्घो न स्यादिति न शङ्क्यम् । बहुभिः कुलैरित्यत्र नुमि षट्त्वेऽपि 'झल्युपोत्तमम्' इत्यस्य प्राप्त्या तदभावेऽपि बहुशब्दस्यान्तोदात्ततया न स्वरे विशेषः । न चोत्तरार्थं, तत्रैव कर्तुं

### भैरवी ।

न्तरङ्गत्वादित्यर्थः । नुम् विभक्तिसापेक्षत्वेन बहिरङ्ग इति भावः । एतच्च नुम इगन्तत्व-विघातकत्वमभ्युपेत्योक्तम् । नन्वकृतव्यूहपरिभाषया तर्हि पूर्वं स्वरो न भविष्यतीत्याशङ्का-यामाह–अकृतेति । अनित्या । छ्वोरितिसूत्रे सतुक्कग्रहणादिति शेषः । तथाचासिद्धमिति परिभाषया नुमः पूर्वं स्वरो भविष्यतीति भावः । नन्वेवमप्यतिराभ्यामित्यादौ नुमः समुदाय-भक्ततयाऽवयवस्य रैशब्दस्य हलादिविभक्तिपरत्वाभावादात्वन्न स्यादत आह–अतिराभ्यामित्य-त्रेति । नन्वाकारस्य वृद्धिसञ्ज्ञकत्वेन पूर्वविप्रतिषेधेनादा नुमागम एव स्यादित्याशङ्कां वार-यति–वृद्ध्याविति । उक्तरीत्या प्रियतिसृभ्यामित्यत्र तिस्रादेशप्रवृत्तिशङ्कां वारयति–प्रियेति । न-न्वेवमपि शुचीनामित्यादौ पूर्वविप्रतिषेधेन नुटि सति नुमागमे नलोपे तस्यासिद्धत्वादिन्नन्त-त्वेन दीर्घो न स्यादिति शङ्कां वारयति –शुचीति । तथाच लक्ष्यानुरोधेन सकृद्गतिन्यायस्यैव प्रवृत्त्या दोषपरिहारो भविष्यतीति भावः । बहुभिरित्यत्र नुमागमे नलोपेऽपि तस्यासिद्ध-तया नान्तसङ्ख्यावाचकत्वेन षट्त्वात् "षट्त्रि" इति स्वरापत्तिरिति शङ्कां वारयति— बहुभिरित्यादिना । षट्त्वेऽपि–नलोपस्यासिद्धत्वात्षट्त्वेऽपि । तदभावेऽपीति । अज्ग्रहणसत्त्वे तदभावेऽपीत्यर्थः । अन्तोदात्ततयेति । फिट्त्वेनेत्यादिः । उत्तरार्थम्–तृतीयादिष्विति सूत्रार्थम् ।

### भावप्रकाश ।

तदुत्तरं स्वरे नित्यत्वं तूभयोः समम् । अत एव पञ्चत्रपुणेत्यादौ स्वरसिद्धिरिति भावः । उत्तरपदावय-वत्वमभ्युपेत्याह––अन्तरङ्गत्वात्पूर्वमेवेति । वारहितस्त्वपाठः । पूर्वोपस्थितनिमित्तकत्वात् न्यूनत्वा-च्चेत्यर्थः । अन्तरङ्गत्वान्नुमः पूर्वमेव स्वरप्रवृत्तेश्चेति पाठस्तु सुयोज एव । अन्ययुक्तिं द्रढयति–– अकृतेति । तुना वस्तुतोऽसत्त्वं सूचितम् । नन्वेवमप्यतिराभ्यामित्यादौ नुमा व्यवधानाद्राय आत्वानाप-त्तिरत आह—अतीति । एवं च पूर्वपक्षो निस्सारः । नन्वाकारस्य वृद्धितया वृद्ध्यौत्वेति विप्रतिषेधो ममाकूतमत आह—वृध्याविति । ग्रहणमशङ्कायां हेतुः । उक्तरीत्यैवाशङ्कायामाह—प्रियेति । अत्र वार्त्तिकशङ्कापि नेति शेषः । नन्वेवमपि शुचीनामित्यादौ परत्वान्नुमि नुट्नुमोर्वा "इन्हन्" इति नियमाद्दीर्घो न स्यादत आह—शुचीति । विप्रतिषेधेनेति । नुटि तत इति शेषः । सकृद्गतीति । यदि नुटि सति नुम् स्यात्तर्हि नुट्प्रवृत्तिरफलैव स्यान्नलोपेनैकनश्रवणात् । दीर्घस्तूक्तरीत्या न, अनित्यत्वान्न लक्षणप्रतिपदोक्तन्यायसञ्चार इति भावः । अप्राप्तिरशङ्कायां हेतुः । नन्वेवमपि बहुभिः कुलैरित्यत्र नुमि नलोपेऽपि तस्यासिद्धत्वान्नान्तसंख्यावाचित्वेन षट्त्वात् "षट्त्रि" इति स्वरापत्तिरत आह––बहुभि-रिति । नुमीति । तत्र तल्लोपे तदसिद्धत्वात् षट्त्वेऽपीत्यर्थः । तदभावेऽपीति । अज्ग्रहणसत्त्वे इति भावः । अन्तोदात्तेति । फिट्त्वादिति भावः । उत्तरार्थमिति । अज्ग्रहणमिति शेषः । तृतीयादि-

त्तदभ्युपगमे बाधकाभावात्। तथा च प्रियतिसृ प्रियत्रि इति रूपद्वयमपि उक्त-रीत्यैव कैयटेन समर्थितम्।

पूर्वविप्रतिषेधेनेति। न चात्र प्रमाणाभावः, प्रियतिसृणि इत्यादिभाष्योदाहरणस्यैव तत्र प्रमाणत्वात्। द्वेरत्वे सन्याविति। विभक्तिसन्निपातकृतमपि त्यदाद्यत्वं टापो निमित्तम्, सन्निपातपरिभाषाया अनित्यत्वात् "न यासयोः" इति ज्ञापकाच्चेति भावः।

इयादेश इति। अजादौ य इयादेशो विहितः स उपसर्जनत्वे पुंसि विद्यमानस्य स्त्रीशब्दस्यौसादिषु चतुर्ष्वेव न त्वन्यत्र, गुणनाभावादिभिः पूर्वोक्तैर्बाधितत्वादित्यर्थः।

"नेयङुवङ्स्थानावस्त्री" ॥ तिष्ठतो ययोरिति स्थानौ, अधिकरणे ल्युट्। इयङुवङोः स्थानाविति षष्ठीसमासः। फलितार्थमाह—इयङुवङोः स्थिति-

शब्दरत्नम्।

युक्तत्वादित्यन्यत्र विस्तरः। प्रियतिसृ इति। तथैव भाष्ये उदाहृतत्वेनानङि "न लुमता" इति निषेध एवेति बोध्यम्। अनित्यत्वे प्रमाणमाह—नयासेति। चो हेतौ।

षष्ठीसमास इति। इयङादिस्थित्यधिकरणत्वेन क्वचिद्दृष्टावित्यर्थः। तेन हे श्रीरित्यादौ निषेधसिद्धिः।

भैरवी।

युक्तत्वात्। स्वरितत्वाकल्पनेन तत्रैव पाठस्य युक्तत्वादिति शेषः। अन्यत्र-भाष्यादौ। ननु निषेधानित्यत्वेन प्रियतिसृशब्दे यदि तिस्रादेशस्तदा तथैवानङपि स्यादत आह—तथैवेति। सन्निपातपरिभाषाया अनित्यत्वे प्रकृते ज्ञापकान्तरन्नोपन्यस्तमिति चकारासङ्गतिरत आह—चो हेताविति।

स्थानग्रहणलभ्यार्थस्योपलक्षणत्वाभिप्रायेण व्याचष्टे–इयङादीति। तेन-उपलक्षणत्वस्य सूचनेन। निषेधसिद्धिरिति। श्रियावित्यादावियङः स्थितेः सत्त्वादिति भावः। उपलक्षणत्वे मानन्तु "यूस्त्र्याख्यौ" इति सूत्रस्थभाष्यमेव। तत्र हि आध्यै प्रध्यै इत्यादौ आसमन्ताद्धीर्यस्येत्यर्थकेऽवयवस्य स्त्रीविषयत्वादित्यर्थेऽवयवस्य स्त्रीविषयत्वात्सिद्धमिति चेदियङ्स्थानस्य निषेधो यण्स्थानेऽपि स्यादवयवस्येयङ्स्थानत्वादित्याशङ्क्य सिद्धन्त्वङ्गरूपग्रहणात्। यस्याङ्गस्य इयङुवङौ भवतस्तस्येदङ्ग्रहणमिति, नचैतस्याङ्गस्येयङुवङौ भवत इत्युक्तम्।

वामि। अत्र केचित्–'वाचि ह्रस्वश्च' इत्येकयोग एव कर्तव्ये "वामि" "ङिति ह्रस्वश्च" इति सूत्रद्वयकरणङ्किमर्थमिति चिन्तनीयमिति। अत्राहुः, श्रियै श्रिया इत्यादावाट्सम्पादकतया नदीसञ्ज्ञायाश्चरितार्थाया: श्रीणामित्यत्र नुट्प्रयोजकत्वन्न स्यात्सन्निपातपरिभाषाविरोधादिति 'सुदत्याम्' इत्यादौ "नद्यृतश्च" इति कबापत्तेश्चेति। परेतु सूत्रद्वयकरणमुभयोः

भावप्रकाश।

रिति सूत्रार्थमित्यर्थः। युक्तत्वादिति। एवं हि स्वरितत्वं न प्रतिज्ञेयमिति लाघवं भवति। अन्यत्रेति। भाष्यकैयटोद्द्योतादावित्यर्थः। नन्वनित्यत्वेनानङपि स्यादत आह—तथैवेति। अनङि-कार्य इति शेषः। ज्ञापकेनाप्यनित्यत्वस्यैव पर्यवसानात्समुच्चयाभावादाह—अनित्यत्वे इति। केचित्तु "बहुवचने झलि" इत्यत्र बहुवचनरूपज्ञापकसमुच्चायकः सः। रामस्येत्यत्रानयैवैत्ववारणे व्यर्थं सत्सामान्यतोऽनित्यत्वे ज्ञापकमित्याहुः।

तेन—उपलक्षणत्वसूचकेन। क्वचिद्दृष्टाविति निवेशेन श्रियावित्यादौ तत्स्थितिसत्त्वात्।

ययारिति। यत्रयङुवङौ निष्पद्येते तत्रैवायं निषेधः। यत्र त्वपवादेन बाध्येत तत्र न निषेध इत्येतदर्थं स्थानग्रहणम्।

"वामि"॥ यद्यपि प्रकृतो निषेधोऽनेन विकल्प्यत इति प्राञ्चः, तथाऽपि निषेधविकल्पे विधिविकल्प एव फलति। तथाच लाघवात् स एव सूत्रार्थ उचित इत्याशयेनाह—वा नदीसंज्ञौ स्त इति। "ङिति ह्रस्वश्च" इतिसूत्रेऽप्येवमेव।

कथं तर्हीति। उवङ्स्थानत्वेन नदीत्वाभावात् ह्रस्वोऽनुपपन्न इत्याक्षेपः। बहव इति। केचित्तु "वामि" इत्यतो वाग्रहणमिहापकृष्य व्यवस्थितविभाषां

शब्दरत्नम्।

ह्रस्वोऽनुपपन्न इति। "नेयङ्" इत्यत्रेयङादिनाङ्गाक्षेपात् यत्र नदीकार्याश्रयेऽङ्गे बाधकाबाधितेयङादिसत्ता क्वचित्प्रयोगे दृष्टा तस्य तदवयवस्य च निषेध इति भावः।

भैरवी।

सूत्रयोर्विभिन्नव्यवस्थासिद्धय इति कल्प्यते। वामीति सूत्रं वृत्तावङ्गस्य स्त्रीत्वेऽस्त्रीत्वे च ङितीति सूत्रन्तु यदा वृत्तौ प्रवर्तते तदा इयङुवङ्स्थानिनोः ह्रस्वस्य च तदन्ताङ्गस्य च स्त्रीत्व एव। नचैवंसति श्रीशब्दात्कनि लुपिच श्रियै ब्राह्मणाय श्रिये ब्राह्मणायेति न स्यात्, इयङ्स्थानिनः पुंस्त्वादिति वाच्यम्। "लुपि युक्तवत्" इत्यनेन प्रत्ययार्थनिष्ठलिङ्गप्रयुक्त-कार्याभावस्यातिदेशात्। एवञ्च प्रत्ययार्थनिष्ठं यत्पुंस्त्वं तत्प्रयुक्तस्याङ्गस्य स्त्रीत्व एवेति नियमप्रयोज्यस्य विकल्पाभावस्याभाव एव। यथा चञ्चाः पश्येत्यत्र प्रत्ययार्थनिष्ठपुंस्त्वाभा-वातिदेशेन नत्वाभावो भवति; तद्वत्। नचैवञ्चञ्चा अभिरूप इति भाष्यीयप्रयोगस्याप्यस-ङ्गतिः। "विशेषणानाञ्चाजातेः" इत्यनेन विशेषणे पुंस्त्वाभावातिदेशस्य प्राप्तेरिति वाच्यम् "मनुष्यलुपि प्रतिषेधः" इत्यनेन प्रतिषेधात्। एवञ्च विशेष्यस्य न्यायप्राप्तं यत्पुंस्त्वन्तद-वच्छिन्नसामानाधिकरण्यादभिरूपपदस्य पुंस्त्वम्। अत एव लुबन्ते शकट्यै ब्राह्मणायेत्यत्रापि विकल्पो भवत्येव। यथा दारादिशब्दानां शक्तिस्वाभाव्याच्छास्त्रीयोपचयरूपपुंस्त्वाभिधाय-कत्वन्तथा लुबन्तस्य लुपि युक्तवदित्यनेन प्रकृतिगतलिङ्गातिदेशाच्छास्त्रीयापचयरूपस्त्रीत्वा-भिधायकत्वं स्वीक्रियते इति वदन्ति। ननु "ङिति" इति सूत्रेऽनुवृत्तं यवू इति तद्विभक्ति-विपरिणामेन य्वोर्ह्रस्वावित्येतदर्थकञ्जातमिति पुनर्यू इत्यस्य विशेष्यस्य कथं लाभ इति चेत्? न, ह्रस्वश्चेति चकारस्य ह्रस्वातिरिक्तसंज्ञिसमुच्चायकतया ऽक्लृप्तकल्पनापेक्षया प्रकर-णप्राप्तस्य यूइत्यस्य समुच्चये लाघवात्। 'हेसुभ्रु' इत्यत्र "नेयङुवङ्" इत्यस्य यथाप्राप्ति-स्तद्दर्शयति-इयङादीत्यादिना। अङ्गाधिकारे ऽस्य सूत्रस्यापाठादाह—आक्षेपादिति। बाधका-बाधितेति। तेन प्रकृष्टा धीः प्रधीः प्रध्यै इत्यत्र न निषेधस्तत्र यणादेशेनेयङो बाधस्य सत्त्वा-दिति भावः। नचाक्षिप्तार्थस्य शाब्दबोधे भानाभावेनाङ्गघटितवाक्यार्थबोधः कथमिति

भावप्रकाश।

अङ्गाधिकारेऽपाठादाह—आक्षेपादिति। बाधकेति। तेन प्रकृष्टा धीः प्रधीः प्रध्यै इत्यादौ न दोष इति भावः। निषेध इति। अत एव "अवयवस्त्रीविषयत्वात्सिद्धमिति चेदियङ्स्थाननिषेधो यण्स्थानेऽपि स्यात्, अवयवरयेयङ्स्थानत्वादाध्यै प्रध्यै। सिद्धं त्वङ्गरूपग्रहणाद्यस्याङ्गस्येयुवौ भवतस्त-

सरला।

इति भाव इति। नच प्रधीरित्यादौ धीरूपेऽङ्गे इयङसिद्धेः 'धियौ' 'धियः' इत्यादौ दृष्टतया नि-षेधापत्तिरिति वाच्यम्। अजादिविभक्तिपरत्वप्रकारकसम्भावनाप्रयोज्या यस्मिन्नङ्गे इयङुवङ्प्रवृत्तिसम्भा-वना तस्य तदवयवस्य च नदीसंज्ञानिषेध इत्यर्थस्य विवक्षणात्। यदङ्गावयवयोर्नदीसंज्ञानिषेधश्चिकी-र्षितस्तदुत्तरमजादिप्रत्ययं सम्भाव्य यस्मिन्नङ्गे इयङुवङौ सम्भाव्येते तस्य तदवयवस्य च निषेध इति तात्पर्यमिति बोध्यम्।

चाश्रित्य समादधुः । तन्मन्दम्, तथा सतीह नञ्ग्रहणस्य "वामि" इत्युत्तर-सूत्रस्य च वैयर्थ्यापत्तेः । अन्ये तु सामान्ये नपुंसकमिति कथंचित्समादधुः ।

"न षट्" ॥ स्त्रियां यदुक्तं तन्न भवतीति व्याख्यानाद् अनन्तरो ङीबिव व्यवहितष्टाबपि निषिद्धचत इत्याशयेनाह—ङीप्टापौ नेति । रः पुंवदिति ।

शब्दरत्नम् ।

कथं चिदिति । अनेन सीताविरहिणो रामस्य वाक्ये सीताया एव विवक्षितत्वेने-दमप्यप्रयोजकमिति सूचितम् । नञ्घटितमनित्यमिति तु भाष्यानुक्तत्वान्न लक्ष्यसंस्कारो-पयोगि ।

इत्यजन्ताः स्त्रीलिङ्गाः ।

भैरवी ।

वाच्यम् ? "यूस्त्र्याख्यौ" इति सूत्रस्थभाष्यप्रामाण्येनाक्षिप्तस्याप्यङ्गस्य तत्र भानाङ्गीकारात् । तत्र हि क्विब्लुप्समासस्थले 'कुमार्यै ब्राह्मणाय' 'खरकुट्यै ब्राह्मणाय' 'अतितन्त्र्यै' 'अतिल-क्ष्म्यै' इत्यत्र च नदीसंज्ञासिद्ध्यर्थं "प्रथमलिङ्गग्रहणञ्च" इति वार्तिककृतोक्तम् । यः शब्दः प्रथमं स्त्रीत्वविशिष्टार्थमाह, पश्चात्तु प्रकारान्तरेणार्थान्तरं लिङ्गान्तरयुक्तम्प्रतिपादयति तस्यापि नदीसञ्ज्ञा भवतीति तदर्थः । तर्हि वक्तव्यं ? न वक्तव्यम् अवयवस्त्रीविषयत्वा-त्सिद्धम् । अवयवोऽत्र स्त्रीविषयस्तदाश्रया नदीसञ्ज्ञा भवतीत्येवंरीत्या तस्य वार्तिकस्य प्रत्याख्यानङ्कृत्वा अवयवस्त्रीविषयत्वात्सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधे यण्स्थान-प्रतिषेधप्रसङ्गोऽवयवस्येयङुवङ्स्थानत्वात् 'आध्यै ब्राह्मण्यै' इत्याशंक्य सिद्धन्त्वङ्गरू-पग्रहणात् । यस्याङ्गस्येयङुवङौ भवतस्तस्येदङ्ग्रहणन्नचैतस्याङ्गस्येयङुवङौ भवत इत्यु-क्तमिति प्रतिपादितम् । एवञ्च प्रकृष्टा धीर्यस्या यस्य वा प्रधीरित्यत्रावयवस्य धीशब्दस्य नदीसञ्ज्ञा ऽस्त्येवेति भावः ।

रामस्य वाक्ये इति । रावणकृतसीतापहारे रामविलापोऽयम् । सीताया इति । हेसुभ्रु इत्यस्य हे सीते इत्यर्थं एव कवितात्पर्यम् । इदमपि—सामान्ये नपुंसकत्वमपि । केचित्तु सुभ्रु क्रिया-विशेषणमित्याहुः । तच्चिन्त्यम्, हे इत्यस्यानन्वयापत्तेः धात्वर्थफलाभेदान्वयविवक्षायां क्रियाविशेषणानाङ्कर्मत्वक्लीबत्वयोरङ्गीकाराच्च । वस्तुतस्तु हापितः इति विधिना त्वयाऽहं हापितस्त्याजितः हेसुभ्रु त्वङ्क्वासि इत्येवं बहु विललापेत्यर्थः । एवञ्च विरहपीडितत्वाद-नवधानतया तथोक्तौ विरहस्य पुष्टता गम्यत इति काव्यगुणत्वेन यत्परममूले प्रमाद एवाय-मित्यनेनानवधानलक्षणः प्रमादोऽभिहितः स एव समाधिर्युक्त इति बोध्यम् । अत्र प्राची-नोक्तं समाधानन्निरस्यति—नञ्घटितमिति ॥

इत्यजन्तस्त्रीलिङ्गविवरणम् ।

भावप्रकाशः ।

स्येदं ग्रहणं, न चैतस्याङ्गस्य तौ भवतः" इति भाष्यं सङ्गच्छते । एवं च प्रकृष्टा धीर्यस्या यस्य वा प्रधीरित्यत्रावयवधीशब्दस्य नदीत्वमस्त्येवेति भावः ।

वाक्ये इति । रावणकृतसीतापहारे रामविलापोऽयमिति भावः । सीताया एवेति । सुभ्रु इत्यस्य सीतेत्यर्थं एव तात्पर्यादिति भावः । इदमपि—सामान्ये नपुंसकमपि । एतेन तथाप्रकाशरत्नाकरदण्ड्या-दयुक्तमपास्तम् । विनार्थनञा समासेनानुदात्तं पदमनेकमिति वाच्ये वर्जग्रहणेन ज्ञापनसम्भवादाह—इति तु भाष्येति । यत्तु सुभ्रु इति क्रियाविशेषणमितिः तन्न, हे इत्यस्यानन्वयात् धात्वर्थफलेनाभे-

सरला ।

मूले—ङीप्टापौ नेताति । "न षट्स्वस्रादिभ्यः" इत्यत्र "टाब्ऋचि" इत्यतष्टापः "ऋन्नेभ्यो" इत्यतश्च ङीपोऽनुवृत्त्योभयनिषेध इति भावः ।

रैशब्दस्य स्त्रीलिङ्गतया अपि स्मरणादिति भावः। तथाच क्षीरस्वामी—रात्येनं राः स्त्रीत्येके इति। स्त्रियां नौस्तरणिस्तरिरित्यमरः।

इत्यजन्ताः स्त्रीलिङ्गाः॥

# अथाजन्ता नपुंसकलिङ्गाः।

"अतोऽम्"॥ स्वमोरिति। अमोऽम्विधानं लुग्बाधनार्थम्। अम् स्यादिति। एतच्च प्राचामनुरोधाद् व्याख्यातम्। संयोगान्तलोपो झल इत्यभिप्रायेण वा। वस्तुतस्तु म् इत्येव पदच्छेदो लाघवात्। तत्र सामें कृते ज्ञानमिति सिद्धम्। द्वितीयैकवचने तु "आदेः परस्य" इत्यकारस्य मकारे कृतेऽन्त्यस्य मस्य संयोगान्तलोपे सिद्धमिष्टम्। यत्तु वदन्ति—एवं सति "सुपि च" इति दीर्घत्वं स्यादिति। तन्न, सन्निपातपरिभाषाविरोधात्। यदपि दीर्घविधौ सा न प्रवर्तत

शब्दरत्नम्।

## अथाजन्तनपुंसकलिङ्गाः।

झल इत्यभिप्रायेणेति। एकवाक्यतया झल एव लोप इत्यभिप्रायेणेत्यर्थः। संयोगान्तलोपे इति। झल्ग्रहणस्य तत्रापकर्षेऽपि वाक्यभेदेन सम्बन्धः। तेन च पूर्ववाक्यस्य यण्व्यतिरिक्ते ऽझल्यपि क्वचित्प्रवृत्तिरिति भावः। सन्निपातेति। ह्रस्वाकारसन्निपातेन

भैरवी।

## अथाजन्तनपुंसकलिङ्गाः।

वक्ष्यमाणरीत्या 'म्' इति च्छेदेऽपीष्टसिद्धिरित्यभिप्रायेणाह—एकेति। तेन च—संयोगान्तस्य झलो लोप इति वाक्येन च। पूर्ववाक्यस्य—संयोगान्तस्य लोप इति वाक्यस्य। क्वचिदिति।

भावप्रकाशः।

दान्वययोग्यस्यैव द्वितीयान्तत्वक्लीबत्वाङ्गीकाराच्च। अन्यथा दण्ड्यादीनामपि तदापत्तौ सर्वोपप्लवः स्यात्। जयमङ्गलायां तु भ्रूशब्दाद् "अप्राणिजातेश्च" इत्यूङि तदन्तेन समासे उपसर्जनह्रस्वे कृतेऽपि स्वभावान्मनुष्यजातिवचनत्वेन पुनः "ऊङुतः" इत्यूङि पूर्वान्तवत्त्वेन प्रातिपदिकत्वे सति सम्बुद्धौ ह्रस्वत्वमूङभावे तु दीर्घ इत्युक्तम्। इदं सर्वं "विमानना सुभ्रु कुतः पितुर्गृहे" इति कुमारसम्भवेऽपि बोध्यम्। वस्तुतो हा पित इति पितुः सम्बोधनम्। यद्वा विधिना त्वया हापितस्त्याजितः स लक्ष्मणः हे सुभ्रु त्वं क्व सीत्येवं बहु विललापेत्यर्थः। एवञ्च विरहपीडितत्वादनवधानतया तथोक्तावपि तस्या विरहपोषकत्वेन काव्यगुणत्वमिति परममूलोक्तिरेव युक्ता। अनुकरणत्वान्नासाधुत्वमिति बोध्यम्॥

इत्यजन्ताः स्त्रीलिङ्गाः॥

वक्ष्यमाणरीत्या तत्रापि न दोषोऽत आह—एकेति। मूले लाघवादिति। पदच्छेदे 'मत' इतिन्यासे च तत्त्वादित्यर्थः। एवं च "एङ्ह्रस्वात्" इत्यत्र वक्ष्यमाणभाष्याद्दृतानाश्रयणे महल्लाघवमिति मान्याः। एतेन यथासन्निवेशे शब्दार्थयोरलाघवेन चिन्त्यं मूलटीके इति मन्दोक्तमपास्तम्। रीतिमेवाह—झलिति। अन्यथाऽत्रैव कर्तव्ये तत्र तत्करणानर्थक्यापत्तिरिति भावः। तथा च पूर्ववाक्यस्य तेन काचित्कत्वं ज्ञाप्यते। तदाह—तेन चेति। व्यतिरिक्ते इति। अन्यथा "यणः प्रतिषेधः" इति वचनेन फलभेदापत्तिरिति

इति । तदपि न, "रुधादिभ्यः श्नम्" "श्नान्नलोपः" इति सूत्रयोः "सुपि च" इति दीर्घत्वे सन्निपातपरिभाषाप्रवृत्तेर्भाष्यकृता ध्वनितत्वात् कैयटेनोपपादितत्वाच्च । यदप्याहुः—अतिजरसमिति न सिद्ध्येदिति । तदपि न, द्वितीयैकवचने हि "अतोम्" इति बाधित्वा परत्वाज्जरसि कृते सन्निपातपरिभाषया लुकोऽप्र-

---

शब्दरत्नम् ।

जातस्य तद्विघातकत्वायोगादिति भावः । परत्वाज्जरसीति । परे तु जराया इति सूत्रोक्तेनाजरांसीत्यत्र 'नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरस्' इति भाष्यप्रामाण्येन पूर्वविप्रतिषेधात् पूर्वं विभक्त्यादेशप्रवृत्तिरधिकविभक्त्यपेक्षज सादेशापेक्षया विभक्त्यादेशानामन्तरङ्गत्वाद्वा ऽवश्यं वाच्या । अन्यथा शिभावात्पूर्वमेव जरसः प्रवृत्तौ नुमा तस्य विप्रतिषेधविचारासङ्गतिः स्पष्टैव । अत एव "टाङसि" इति सूत्रे कैयटेनोक्तं—'भाष्यकारस्तु सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नतिजरेणातिजरादिति भाष्यं न त्वतिजरसिन अतिजरसादिति गौरवमुद्भावितवान्' इति । भवद्रीत्या परत्वात्पूर्वं जरसादेशे इनाद्यप्राप्त्या तदभावपक्षे तस्याप्राप्त्या परिभाषया जरसादेशमनभ्युपयन्नित्यस्यासङ्गतिः स्पष्टैवेत्युच्यते तदा-

भैरवी ।

एतच्च "यणः प्रतिषेधो वाच्यः" इत्यनेन फलाभेदायोक्तम् । सन्निपातपरिभाषाप्रवृत्तिमुपपादयति—ह्रस्वाकारेति । जातस्येति । मादेशस्येत्यर्थः । मूले—भाष्यकृता ध्वनितत्वादिति । तत्र हि श्नमः शित्करणङ्किमर्थमिति विचारे शकाराभावे नान्नलोप इत्यस्य यज्ञानामित्यत्रातिप्रसङ्गमाश-य दीर्घे जाते नास्ति लोपस्य प्राप्तिरिति पूर्वपक्षिणा शङ्किते परत्वाद्दीर्घम्बाधित्वा नलोपः स्यादिति सिद्धान्तिनोक्तम् । तत्र कैयटः-अग्नीनामित्यत्र दीर्घस्य हिनस्तीत्यत्र नलोपस्य चरितार्थतया परत्वान्नलोपः स्यात् । यद्यपि लोपात्परत्वात्सुपिचेति दीर्घः सम्भवति तथापि सन्निपातपरिभाषया न भविष्यति । "नामि" इति दीर्घे तु सन्निपातपरिभाषा न प्रवर्तते, आरम्भसामर्थ्यात् । यद्यपि "कष्टाय क्रमणे" इति निर्देशेन "सुपि च" इति दीर्घे ऽपि सन्निपातपरिभाषाया अनित्यत्वादप्रवृत्तिरिति लभ्यते, तथाप्यन्यत्रानित्यत्वे न मानमिति तात्पर्यम् । अत एव परिभाषेन्दुशेखरे 'यादेशः सुपिचेति दीर्घत्वस्य'इत्युक्तम् । वस्तुतस्तु "एङ् ह्रस्वात्" इतिसूत्रे 'हेकुल' इत्यादेः साधनाय वैयधिकरण्येनान्वयरूपस्य प्रयासस्य भाष्ये कृतत्वेनास्मिन्पक्षे तस्य वैयर्थ्यापत्त्या म् इति च्छेदो भाष्यविरुद्ध इतिबोध्यम् । मूलन्दूषयति—परेत्वित्यादिना । प्राप्तयोरिति । 'कुण्डानि' 'अतिजरसः' इत्यत्र चरितार्थयोरित्यादिः । पूर्वम्—जरसादेशात्पूर्वम् । पक्षान्तरमाह—अधिकेति । अधिका व्यापिका या विभक्तिर्यस्मिन्निमित्तत्वेन स अधिकविभक्तिर्जरस् तदपेक्षयेत्यर्थः । अन्तरङ्गता चेति पाठः । अन्यथा—उक्तरीत्यनङ्गीकारे । असङ्गतिरिति । तदा तस्यासर्वनामस्थानत्वेन नुमः प्राप्त्यभावेन विप्रतिषेधविचारासङ्गतिः, मम तु जरसादेशात्प्राक् शिभावे तस्य सर्वनामस्थानत्वा-

भावप्रकाशः ।

भावः। जातस्य-अम इति शेषः । मूलं दूषयति-परे तु इति । अतिजरांसीति पाठः । प्राप्तयोः-जरसोः कुण्डानीत्यादौ सावकाशयोः । पूर्वेति । अपूर्वाङ्गाक्रियमाणादिति आदिः । पूर्वं—जरसादेशतः । लाघवात्पक्षान्तरमाह—अधिकेति । व्यापकं यद्विभक्तित्वं तज्ज्ञानसापेक्षा यो जरसादेशस्तदपेक्षयेत्यर्थः । अमि तु व्याप्यधर्मज्ञानापेक्षेति भावः । क्वचित्तु अधिकविभक्त्यपेक्षयेति पाठः । तत्राधिका व्यापिका विभक्तिर्यस्मिन्निमित्तत्वेन सोऽधिकविभक्तिर्जरस् तदपेक्षयेत्यर्थः । रीतिः पूर्ववत् । अन्तरङ्गता वेति पाठः । एतेन विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गमित्यपास्तमिति स्पष्टं परिभाषेन्दुशेखरे । अन्यथा—मूलोक्तरीत्यङ्गीकारे । असङ्गतिरिति । तदा तस्यासर्वनामस्थानत्वात्, मम तु जरसः प्राक् शिभावे तत्सङ्गतिः

वृत्तौ रूपसिद्धिः स्पष्टैव, प्रथमैकवचने तु अतिजरमित्येवेष्यते, सन्निपातपरिभाषया जरसादेशस्याप्रवृत्तेः। अत इति तकार उच्चारणार्थः।

भसंज्ञायामिति। "सुडनपुंसकस्य" इति पर्युदासेनासर्वनामस्थानत्वादिति भावः।

---

शब्दरत्नम्।

ऽत्राप्यन्तरङ्गत्वादतोऽमि तया जरसभाव एवोचितः। न च तत्र नाकारान्तसन्निपातलक्षणमेवाजादित्वं किंतु तदभावेऽपि। एषा तु सन्निपातलक्षणविधिप्रवृत्तिं विना न यस्य प्रवृत्तियोग्यता तत्रैवेति वाच्यम्। मानाभावात "टाङसि" इति सूत्रस्थेनातिजरेणेत्येतद्विषयककैयटेन विरोधाच्च। एवं च जराशब्दविषयं परत्वादिनादीन्बाधित्वा जरसित्यादि मूलमत्रत्यमनोरमा च प्राचामनुसारेणेति। तदाह—एकवचने त्विति। तत्रापीत्यर्थः। अत

भैरवी।

त्तत्सङ्गतिः। अत्रापि—द्वितीयैकवचनेऽपि। अत इति तपरत्वस्य दीर्घव्यावृत्तिर्न फलम्, "ह्रस्वो नपुंसके" इति ह्रस्वस्यैव सत्त्वादत आह—अत इतीति। ननु अतोमिति सूत्रे म् इति च्छेदे पूर्वोक्तरीत्या सन्निपातपरिभाषाप्रवृत्तिसम्पादनद्वारा तपरकरणश्चरितार्थमित्युच्चा-

भावप्रकाशः।

स्पष्टैव। अत एव टाङसीतिसूत्रस्थकैयटसङ्गतिरिति भावः। अत्रापि—द्वितीयैकवचनेऽपीत्यर्थः। प्रतिषेधादिनेति पाठः। अभाव एवेति। एवं चेनादीन्बाधित्वेत्यादिपरममूलस्यात्रत्यमूलस्य तदनुयायिरत्ना-

सरला।

प्राचामनुसारेणेति। अस्य 'आहुः' इति शेषः। वस्तुतस्तु विभक्तिसम्बन्धिकार्यमात्रात्प्रागेव जरस। यत्र जरसादेशस्य परत्वं तत्र "विप्रतिषेधे परम्" इति जरस्। यथा 'अतिजरांसि'। यत्र याडादयः पराः तत्रापि पूर्वविप्रतिषेधेन जरस। यथा 'जरसे' इति। अत्र याटं बाधित्वा जरस्। अत एव "जरसोऽवकाशः जरसा जरसे" इति भाष्यं संगच्छते। अन्यथा "याडापः" इत्यनेन याटि अजादिविभक्तिपरकत्वाभावेन जरसोऽप्राप्त्या तत्सङ्गतिः स्पष्टैव। अत एव "अथेह लुक् कस्मान्न भवति अतिजरसं पश्य इति? किं पुनः कारणं द्वितीयैकवचनमेवोदाह्रियते न पुनः प्रथमैकवचनमपि अतिजरसं तिष्ठति इति? अस्त्यत्र विशेषः—नाप्राकृतेऽम्भावे जरस्भावः प्राप्नोति। किं कारणम्? अचीत्युच्यते" इति भाष्यं तदप्राप्तियोग्ये चारितार्थ्याभावविशिष्टा कृते चारितार्थ्याभावविशिष्टा या अपवादशास्त्रप्रवृत्त्यनन्तरोत्सर्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्यापवादशास्त्रवैयर्थ्यसम्भावना तादृशसम्भावनारूपबाधकत्वबीजवता "अतोऽम्" इति शास्त्रेण "स्वमोर्नपुंसकात्" इति सूत्रे स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविधेयघटितातिरिक्तत्वेन च सङ्कोचात् 'अतिजरसं तिष्ठति' इति प्रथमैकवचने जरसादेशे कृते अम्घटितातिरिक्तस्वमोरभावेन लुकोऽप्राप्तिरिति द्वितीयैकवचने एव लुक् कस्मान्न भवति इति शङ्कोचिता, नतु प्रथमैकवचने इति विशेषप्रदर्शकं सङ्गच्छते। अन्यथा द्वितीयैकवचनेऽपि भवद्रीत्याऽमादेशे सन्निपातपरिभाषया तत्रापि जरसोऽप्रवृत्तौ इदं भाष्यमसङ्गतं स्यात्। मम तु परत्वाज्जरसि द्वितीयैकवचने लुक् कस्मान्नेति शङ्का युज्यते। अग्रेऽपि "यदा जरस्भावः कृतः तदा लुक् न भविष्यति सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति" इति सिद्धान्तिना समाहितम्। अत एवाग्रे पूर्वपक्ष्येकदेशिना "यद्येवमतिजरसमतिजरसैरित्यत्र न प्राप्नोति अतिजरमतिजरैरिति भवितव्यम्" इति प्रथमैकवचनतृतीयाबहुवचनयोः शङ्का कृता। ततः सिद्धान्तिना इष्टापत्तिं मत्वा "गोनर्दीय आह—इष्टमेवैतत्संगृहीतं भवति अतिजरमतिजरैरिति भवितव्यम्। सत्यामेतस्यां परिभाषायां सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति भाष्यमुक्तं सङ्गच्छते। अन्यथा विशेषोपपादन एव लुगैसोः सन्निपातपरिभाषया जरसोऽप्राप्त्या इमे शङ्कासमाधाने असङ्गते स्याताम्।

"यस्य" ॥ इश्च अश्च यं तस्य । तदाह—इवर्णावर्णयोरिति । औङःश्या-

शब्दरत्नम् ।

**इतीति** । न तु तपरसूत्रप्रवृत्त्यर्थं इत्यर्थः । नपुंसके ह्रस्वावश्यम्भावाद् व्यावर्त्याप्रसिद्धेरिति भावः । ननु तकारस्योच्चारणार्थत्वे 'म्' इति च्छेदे सन्निपातपरिभाषया दीर्घवारणं कथमिति चेत् ? न, यादृशशब्दसन्निपातेन सोरादेशस्तस्य विनाशेनादोषात् । अत एव दाक्षिरित्यादौ अङ्गसंज्ञा अकारान्तप्रकृतिप्रत्ययसन्निपातकृताऽनया परिभाषया ऽल्लोपस्य निमित्तं न स्यादित्याशङ्क्य अनित्यत्वेन भाष्ये समाहितमतस्तस्य सन्निपातस्य शब्दापात्त्वाऽऽग्रहाभावात् । भाष्यकृता तु मादेशे सन्निपातपरिभाषया सम्बुद्धिलोपाप्रसिभिया 'अम्' इत्येव च्छेदमङ्गीकृत्य 'एङ्ह्रस्वात्' इत्यत्र व्यधिकरणान्वयहल्पदानुवृत्तिरूपगौरवं फलमुखत्वान्न दोषावहमित्यनुसृतम् । परिभाषाऽनित्यत्वेन तु न समाहितम्, तस्यागतिकगतित्वात् । किंच तस्यानित्यत्वे दीर्घापत्तिः । इदमपि तत्रैव भाष्ये ध्वनितमित्यलम् ।

भैरवी ।

रणार्थ इत्यसङ्गतमिति चेन्न, तस्य ग्रन्थस्यामिति छेदाभिप्रायकत्वात् । एतेन स्वस्यामिति च्छेद एवाभिमत इति ध्वनितम् । पूर्वोक्तार्थं स्पष्टयति—नन्विति ।

भावप्रकाशः ।

करदण्ड्यादेश्चायुक्तत्वेऽपि प्रकाशः स था ऽयुक्त एवेति भावः । एवञ्च मूले प्रथमैकवचने स्विति तुरप्यर्थे । एवञ्च भाष्यरीत्योभयैकवचनेऽतिजरमित्येव साध्विति तात्पर्यम् । ननूच्चारणार्थत्वे ह्रस्वाकारेत्यादिस्वतन्मूलाभ्यां विरोधोऽत आह—**न त्विति** । एवं चोच्चारणार्थ इत्यस्यायमर्थो न तु सर्वथा ऽविवक्षित इति ।

सरला ।

नच "नुमोऽनङ्जरसौ भवतो विप्रतिषेधेन अतिजरांसि ब्राह्मणकुलानि" इति भाष्यविरोधः । भवद्रीत्या शिभावादेव परत्वाज्जरसि नुम्जरसोर्विप्रतिषेधविचारस्यासङ्गत्यापत्तेरिति वाच्यम्, अतिजर अस् इति स्थिते परमपि जरसादेशं बाधित्वा नित्यत्वाच्छिः कस्मान्न भवतीति शङ्कां मनसि निधाय श्यादेशे कृतेऽपि परत्वान्नुमं बाधित्वा जरसेव भविष्यतीति जरसादेशोऽपि नित्य इति बोधयितुं तद्वार्तिकप्रवृत्तेः । अग्रिमभाष्येण तथैव लाभात् । एतेन यद्वा अम्भावे कृते सन्निपातपरिभाषया न जरसिति पाठभेदेन विशेषोपपादनम्, एवं स्त्रियां जरसादेशे कृते "याडापः" इत्यादीनामाकारप्रश्लेषेण वारणं विफलमेव तेषां परत्वादिति कथनं च परास्तम् । पूर्वोक्तभाष्यप्रामाण्येन पूर्वविप्रतिषेधेन जरसि याडादिवारणाय प्रश्लेषस्यावश्यकत्वात् । नच "टाङसिङसाम्"इति सूत्रस्थेनातिजरेणेत्यतद्विषयकेण कैयटेन विरोध इति वाच्यम्, अतिजर आ इति स्थिते जरसभावपक्षे इनादौ कृते तदनन्तरं कुतो न जरसिति शङ्कां मनसि निधाय सन्निपातेत्यादिग्रन्थस्य प्रवृत्त्या तत्सङ्गतेः । जरसादेशस्य स्थानिवत्त्वप्रतिषेधोऽपि 'ङ्याब्ग्रहणे ह्रस्वः' इति वक्तव्येऽदीर्घ इत्युक्त्यैव तत्संग्रहेणारब्ध एवेत्यन्ये ।

**नतु तपरसूत्रप्रवृत्त्यर्थं इति** । केचित्तु अत्रत्यं तपरकरणं नपुंसकलिङ्गे "ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यस्य सर्वत्र प्रवृत्तेर्दीर्घान्ताभावेन तद्व्यावर्त्याभावाद् व्यर्थं सद् 'अपरनिमित्तकमन्तरङ्गम्' इत्यत्र ज्ञापकम् । तेन अश्च आश्चेति समाहारद्वन्द्वे सुब्लुकि सवर्णदीर्घं बाधित्वाऽपरनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वं ह्रस्वप्रवृत्तौ ततो दीर्घे लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाप्रवृत्तौ 'आ' इति रूपं सिद्ध्यति । अत एव "ऊकालः" इति निर्देशः सङ्गच्छते । अन्यथा लाघवानुरोधेन समाहारद्वन्द्वेन 'उकालः' इत्येव वदेत् । सत्यामेतस्यां परिभाषायां तु अन्तरङ्गत्वाद्दीर्घात्पूर्वं ह्रस्वे ततो दीर्घ इति "ऊकालः" इत्येव भवति नतु 'उकालः' इति इत्याहुः ।

**अनुसृतमिति** । वस्तुतस्तु 'सुपि च" इत्यत्र विघातकशास्त्रे 'कष्टाय' इति निदर्शनेन "ङेर्यः" इत्येतदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् दीर्घो भवतीति संकोचे गुणात्संबुद्धेः इत्येव वक्तव्ये एङ्-

मिति । विभक्तित्वापेक्षया श्यामिति स्त्रीलिङ्गनिर्देशः ।

---

### शब्दरत्नम् ।

विभक्तित्वापेक्षयेति । तद्गतविभक्तित्वाश्रयणेन विभक्ताविति विशेष्यापेक्षयेत्यर्थः ।

### भैरवी ।

ननु विभक्तित्वस्यापेक्षायामपि तस्य नपुंसकत्वेन स्त्रीत्वस्योपपादनासम्भव इत्यत आह—तद्गतेति ।

साहचर्यपरिभाषावन्निरनुबन्धकपरिभाषाया अपि प्रवृत्तिः स्यादिति शङ्कां वारयति—

### भावप्रकाशः ।

एवं च परिभाषासञ्चारो दुर्निवारः । किञ्च यादृशशब्दसन्निपातेन स्वमोरादेशस्तस्य विनाशेनादोषः । अत एव दाक्षिरित्यादौ प्रकृतिप्रत्ययसन्निपातकृताऽङ्गसंज्ञाऽनया ऽल्लोपनिमित्तं न स्यादित्याशङ्क्यानित्यत्वेन "क्ङ्मेजन्तः" इत्यत्र भाष्ये समाहितम् । अत एव कार्यस्य निमित्तं ययोः सन्निपातस्तयोः सूत्रे उपादानमपेक्षितमित्याग्रहाभावः । एतेनोच्चारणार्थत्वस्य भवतैवोक्तत्वेन निमित्तस्याकारसन्निपातस्य दीर्घे सत्यविघातान्मूलं चिन्त्यमिति खण्डनकृदुक्तम् ह्रस्वाकारेति तद्वारणमयुक्तं नत्वित्यादि ग्रन्थविरोधादिति मन्दोक्तं चापास्तम् । अत एवामितिच्छेदे आहात इतानि मान्योक्तिः प्राचामनुसारिणीति बोध्यम् । वस्तुतोऽमिति छेदो युक्तो न तु मिति, ज्ञानमित्यादौ सुपि चेति दीर्घापत्तेः । अत एव मत इति आन्म इति वा नापत्तिः । विधेयस्य पूर्वनिपातादर्थन्यासोऽयुक्त एवेति मन्दोक्तिस्तु शास्त्राज्ञानसूचिका । अन्त्ये संज्ञापूर्वक इति अङ्गवृत्ते इति वा तत्कृतनतद्वारणमपि तथेति बोध्यम् । तया दीर्घवारणे तु हेज्ञानेत्यादौ सम्बुद्धिलोपानापत्तिः, मनिमित्तप्रकृतिप्रत्ययसन्निपातस्य प्रत्ययलोपेन विनाशात् । स्थानिवद्भावेन तु न सन्निपातः, तस्याशास्त्रीयत्वात् । अत एवैङ्ह्रस्वादिति सूत्रे ज्ञानेत्यादौ मलोपाय कतरदित्यादौ लोपाभावाय चाङ्गाक्षेपव्यधिकरणान्वयहलपदानुवृत्तयो गुरुभूता अपि फलमुखत्वाददुष्टा आदृता भाष्ये, न तु तदनित्यत्वं हृदि निधाय मिति च्छेद उक्तः, अनित्यत्वस्यागतिकगतित्वात् दीर्घापत्तितादवस्थ्याच्च । एवं च मिति पक्षे सुपि चेति दीर्घस्तु प्राप्नोति, तस्या अनित्यत्वादत प्रकाशो दोषांशे युक्तो हेत्वंशेऽयुक्तः । एतेन कष्टायेति ज्ञापककल्पितवाक्यं न यमात्रविषयमपि तु सुपिचेत्येतद्विषयम् । अन्यथाऽसन्देहाल्लाघवाच्च मत इत्येवावक्ष्यत् । अत एवैङ्ह्रस्वादित्यत्र हल्पदानुवृत्तावादेः परस्येत्यल्लोपे सुपि चेति दीर्घे कुण्डमिति स्यादिति भाष्यं सङ्गच्छते इति प्रकाशाशयप्रकाशकखण्डनकृदुक्तं तथा रत्नाकरोक्तञ्चापास्तम्, उक्तयुक्तेः तद्भाष्यस्य पूर्वपक्षत्वाच्च, यशब्दान्यस्थले तदनित्यत्वाश्रयणे फलाभावाच्च । एवं च मूलं तदनुयायिदण्ड्याद्युक्तिश्च चिन्त्या । प्रागुक्तमान्योक्तिरपि तथेति बोध्यम् ।

धर्मस्य लिङ्गायोगादनुपस्थितेश्चाह—तद्गतेति । स्थानिवत्त्वेन शीगतेत्यर्थः । वस्तुत औङ्गतं यद्विभक्तित्वं तस्याश्रयणेन श्यादेशे आरोपेणाक्षिप्तं यद्विभक्ताविति विशेष्यं तदपेक्षयेत्यर्थः । गौरादिपाठेन ङीष् । एवं प्रकाशोऽपि युक्त इति भावः ।

अपिना द्वयोस्समबलता सूच्यते । एतेन तया तस्यैव ग्रहणं शङ्क्यमिति रत्नाकरोक्तं लोकशास्त्रसिद्धत्वेन साहचर्यस्यैव प्राबल्यमिति मन्दोक्तं चापास्तम् । बीजानिरुक्तेः, प्रत्युतानित्यत्वेन वैपरीत्याच्च,

### सरला ।

ह्रस्वग्रहणेन च अतोऽमित्येतदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् लोपो भवतीति "एङ्ह्रस्वात्" इत्यत्र च सङ्कोचे च "सुपि च" इत्यत्र अतोऽमित्येदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् दीर्घो भवतीत्येवं संकोचाभावेन 'ज्ञानम्' इत्यादौ सन्निपातपरिभाषयैव दीर्घवारणं 'हे ज्ञान' इत्यत्र च तयैव परिभाषया संबुद्धिलोपप्राप्तिरिति'म्' इति च्छेदे न कोऽपि दोषो नापि "एङ्ह्रस्वात्संबुद्धेः" इत्यत्र व्यधिकरणान्वयहल्पदानुवृत्त्यङ्गाक्षेपरूपगौरवमिति ।

विशेष्यापेक्षयेत्यर्थ इति । शेखरकृता तु 'अत एव निर्देशादस्य नित्यस्त्रीत्वम्' इत्युक्तम् ।

"जश्शसोः" ॥ जसा साहचर्यात् शसपि सुबेव गृह्यते। तेनेह न, कुण्डशो ददाति।

शि ॥ शीत्यविभक्तिको निर्देशः। महासंज्ञाकरणं पूर्वाचार्यानुरोधात्।

अन्यतमस्य त्विति। एवं च 'सामान्यादिष्वन्यतमत्' इत्यादिप्रयोगाः प्रामादिका एवेति भावः। सोरमादेशे इति। यत्तु प्राचोक्तम्—स्वमोरमादेशे वा जरसिति, तद्भाष्यविरुद्धम्। एवं च अजरसं वर्तते इति, हे अजरसमिति चापशब्द एव। अजरसं पश्येति तु प्रयोगः साधुः। किं तु अमादेशे कृते जरस् इति प्राच उक्तिरेवासाध्वी, परत्वाज्जरसो न्याय्यत्वात् पूर्वविप्रतिषेधे प्रमाणाभावाच्च।

"सान्त महतः संयोगस्य" ॥ सान्तेति पृथक् पदं लुप्तषष्ठीकं संयोगस्ये-

---

शब्दरत्नम्।

सुबेवेति। निरनुबन्धकपरिभाषया तद्धितशसोऽपि ग्रहणमिति न वाच्यम्। येनानुबन्धेन सानुबन्धकत्वं तदनुच्चारण एव तत्प्रवृत्तेः।

अनुरोधादिति। तेन स्वशास्त्रस्य प्रामाण्यज्ञापनमिति भावः।

तद्भाष्येति। सन्निपातपरिभाषया विभक्त्यादेशे जरसभावस्य "जराया" इति सूत्रे भाष्ये स्पष्टमुक्तेरिति भावः। पश्येति त्विति। तुनाऽत्रारुचिर्बोधिता। तद्बीजं तूक्तम्।

भैरवी।

निरनुबन्धकेति। तदनुच्चारण एवेति। ज्ञापकसाजात्यादिति शेषः।

तेन—प्राचीनोक्तसंज्ञाकरणेन।

सन्निपातपरिभाषयेति। अस्य तृतीयान्तस्य जरसभावेऽन्वयः।

मूले सान्तेति पृथक्पदमिति। इदमत्र बोध्यम्, पृथक्पदञ्च न बहुव्रीहिसंज्ञकं किन्तु समासात्मकलुप्तषष्ठीकपदद्वयसमुदायरूपम्। अत एव हंस इत्यत्र न दीर्घः। सेति संयोगस्य समानाधिकरणं विशेषणम्। तदन्तविधिना सान्तसंयोगस्य लाभः। अङ्गस्येति तु प्रकृतं, तदन्तपदार्थे चरमावयवे, अन्तपदार्थश्च सान्तसंयोगस्य विशेषणमिति सम्बुद्धिभिन्नसर्वनामस्थानपरकाङ्गचरमावयवाभिन्नसान्तसंयोगस्य यो नकारस्तदुपधाया इत्यर्थात्। ननु सर्वनामस्थानस्य सान्तसंयोगविशेषणत्वेन निर्दिष्टपरिभाषया हंस इत्यादौ न दोष इतिचेन्न, प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन तद्विशेषणत्वस्य न्याय्यत्वात्। अत एव "अनन्त्यविकारे" इतिपरिभाषया हंसशिरांसीत्यादि प्रयोजनान्युपपद्यन्ते। "ष्यङः सम्प्रसारणम्" इति सूत्रभाष्ये निमित्तस्य कार्यिविशेषणत्वकल्पनेनोक्तपरिभाषायाः प्रयोजनान्यथासिद्धिप्रदर्शनन्तु शिष्यबुद्धिवैशद्यार्थम्। अत एव परिभाषाया आवश्यकत्वाभिप्रायेण तत्सूत्रव्याख्यान-

भावप्रकाशः।

तस्या लौकिकत्वाज्ज्ञापकसिद्धत्वेन प्राबल्याच्च। तदनुच्चेति। धर्मिग्राहकमानात्। अत एव "तान्येक" इत्यत्रैकश इति प्रयोगः। तानीत्युपक्रमात् क्लीबादेकशब्दात्तत्र शस्। एतेन क्लिष्टमान्योक्तिर्नादर्त्तव्येति सूचितं, ययतोरित्यत्र यथा नैवमत्रेति भावः।

अनुरोधफलमाह—तेनेति।

यथाश्रुतमूलमयुक्तं, परेत्विति सिद्धान्तरीत्या योजयितुं हेतुमाह—सन्निपातेति। जरसभावे हेतुः। विभक्तीति। पूर्वविप्रतिषेधादन्तरङ्गत्वाद्वेति भावः। एवं च प्राचोक्तवदजरसं पश्येत्यादि मूलं तदनुयायिरत्नाकरदण्ड्याद्युक्तं तन्मूलप्रकाशोक्तं च चिन्त्यमेव। तद्ध्वनयन्नाह—जराया इति। एवञ्च मूले तुरुक्तारुचिसूचक इति न दोष इति बोध्यम्।

त्यनेन समानाधिकरण्यमिति व्याचष्टे—सान्तसंयोगस्येति । उपधाया इति । उपधाग्रहणं पूर्वमात्रोपलक्षणं पारिभाषिकार्थस्येहासंभवात् । मासश्छन्दसीति । मासि त्यस्य तकारः स्यात् भादौ प्रत्यये छन्दसीति वाक्यार्थः । 'माद्भिः शरद्भिर्दुरोदरं तव' इत्युदाहरणम् ।

"ह्रस्वो नपुंसके" ॥ इह ह्रस्वश्रुत्या "अचः" इत्युपस्थितम् । तेन प्रातिपदिकस्य विशेषणात् तदन्तविधिरित्याह—अजन्तस्येति । प्रातिपदिकस्याच इति तु न व्याख्यातम् । सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात् सुवाग्ब्राह्मणकुलमित्यादौ अतिव्याप्तेश्च । सन्निपातेति । अवर्णमाश्रित्य कृतो यादेशः कथं तल्लोपे निमित्तं स्यात् । एतच्च "एओङ्" सूत्रे "इको गुणवृद्धी" इति सूत्रे च भाष्ये ध्वनितं कैयटेन प्रतिपादितं शब्दकौस्तुभे निष्कर्ष प्रापित-

---

शब्दरत्नम् ।

अवर्णमिति । ह्रस्वत्वविशिष्टमवर्णमित्यर्थः, यादेशेऽत इत्यनुवृत्तेः । तत्र यद्यपि 'कष्टाय' इति निर्देशप्रापितदीर्घेण ह्रस्वत्वांशो निवर्तितस्तथाप्यवर्णत्वमादेशेऽनुवर्तते, तदपि चेल्लोपेन निवर्त्येत तर्हि परिभाषाविरोधः स्पष्ट एवेति भावः । भाष्ये इति । गाधातोष्टे गुणेन अकारे आर्धधातुकोपदेशेऽदन्तत्वाभावादतो लोपाभावेऽपि पररूपेण सामगस्य सिद्धौ गापोष्टकः कित्करणाल्लिङ्गादाकारस्य गुणो नेति व्यर्थं तत्रेग्ग्रहणमिति भाष्ये उक्तम् । कैयटेनेति । सामगायेत्यत्रासति टकः कित्त्वे एकादेशस्य पूर्वान्तत्वेन ग्रहणात् आकारस्य धात्ववयवत्वेनातो लोपः स्यात्, कित्त्वे तु 'आतो लोप' इत्यालोपे धात्वनवयवत्वादप्रवृत्तिरित्याशङ्क्य सन्निपातपरिभाषयाऽकित्त्वेऽपि न आतो लोप इति तेन प्रतिपादितम् ।

भैरवी ।

शेषे उदात्तनिर्देशात्सिद्धमित्युपसंहारः कृतो भगवता । तया परिभाषया हंसो ध्वंसक इत्यत्र दोषपरिहारस्तु न सम्भवति, अन्त्यसदेशानन्त्यसदेशयोर्युगपत्प्राप्त्यभावेन तस्याः प्राप्त्यभावात् । नच हंस इत्येतत्सिद्धये या रीतिरुक्ता तयैव हंसशिरांसीत्यत्र दोषाभावे सिद्धेऽनन्त्यविकार इति परिभाषायास्तत्र सञ्चारो विफल इति वाच्यम् ? "सान्त" इतिसूत्रस्य यथाश्रुतार्थपक्षाभिप्रायकत्वात् ।

पारिभाषिकार्थस्य अन्त्यादव्यवहितपूर्वस्य श्रीपायेत्यत्र सन्निपातपरिभाषया दोषाभावप्रतिपादनं यत्परममूले कृतन्तदुपपादनमवर्णमाश्रित्येत्यादिना मूले कृतन्तन्नोपपद्यते, यादेशोपजीव्यस्य ह्रस्वाकारस्य दीर्घेणैव निवर्तनात्तस्यासत्त्वेन "आतो धातोः" इत्यनेन तदनिवर्तनादतो भावं व्यनक्ति—ह्रस्वत्वविशिष्टमित्यादिना । तत्र—श्रीपायेत्यत्र । अवर्णत्वम्—अत्वजातिः। अनुवर्तते—अस्ति । ग्रहणादिति। पूर्वान्तवद्भावलभ्यधात्ववयवत्वस्याचः परस्मिन्नित्यनेनाकारेऽतिदेशादित्यर्थः। इत्याशङ्क्येति। तद्व्यावृत्त्या चरितार्थटकः कित्त्वं कथमाकारस्य गुणो नेत्यर्थे ज्ञापकम्भविष्यतीति भावः। सन्निपातपरिभाषयेति। एतत्परिभाषाप्रवृत्तिश्चोक्तरीत्यैव। अकित्त्वेऽ-

भावप्रकाशः ।

आशयं वक्तुं न्यूनतां परिहरति—ह्रस्वत्वेति । तत्र-श्रीपायेत्यत्र । अनुवर्त्तते । अस्त्येवेत्यर्थः । येन ध्वनितं तदाह-गाधातोरिति । तत्रेक्ग्रहणमिति। अष्टाध्याय्यामाकारनिमित्तं वा बहुव्रीहिणा योगविभाग इत्यर्थः(?) ॥ ग्रहणादिति । अचःपरस्मिन्निति तन्निष्ठपूर्वान्तत्वस्य सति दीर्घे ऽतिदेशादिति शेषः । अप्रवृत्तिरिति । तथा च तद्व्यावृत्त्या चरितार्थं कित्त्वमिति भाष्योक्तज्ञापकता तस्यानुपपन्नेति भा-

मिति तत एवावधार्यम् । एवं च याधातौ शुभंयाशब्दस्य क्लीबस्य ङयि शुभंय इति यत् माधवेनोदाहृतं, तन्नादर्तव्यमिति भावः ।

शब्दरत्नम् ।

**शब्दकौस्तुभे इति** । पूर्वोक्तभावश्च तत्रोक्तः । परे तु व्याप्याऽत्वजातियजादिसन्निपातनिमित्तो दीर्घो न स्वसन्निपातविघातकलोपनिमित्तम् । सन्निपातपरिभाषायाश्च सन्निपातलक्षणविधिप्रवृत्तेः प्राक् तन्निमित्तभूतो यः सन्निपातस्तद्विघातकस्य स्वातिरिक्तस्य स्वयमनिमित्तमित्यर्थ इत्याहुः ।

भैरवी ।

पीति । एतेन कित्त्वस्य ज्ञापकतोपपादिता । कौस्तुभोक्तरीत्योक्तां ज्ञापकताङ्खण्डयति—परे त्वित्यादिना । व्याप्यात्वजातीति । व्याप्याऽत्वजातिर्यस्मिन्नित्यर्थः । यादेशो लोपस्यानिमित्तमित्यर्थः परिभाषया न लभ्यते । जातिः पदार्थ इति पक्षे तपरसूत्रस्य जातिपक्षप्राप्तसवर्णग्रहणवारकत्वस्यैव सत्त्वेन यत्र यत्र तपरकरणन्तत्र सर्वत्र व्याप्यजातिनिर्देश एव बोध्यते । एवञ्च प्रकृते "ङेर्यः" इत्यस्य प्रवृत्तौ यादृशव्याप्यजातिविशिष्टसन्निपातो निमित्तन्तस्य दीर्घेणैव निवर्तनात्तद्विघातकत्वन्न लोपस्यास्तीति भावः । ननु परिभाषायाः सन्निपातलक्षणो विधिः स्वनिमित्तसन्निपातस्य साक्षात्परम्परया यद्विघातकन्तस्यानिमित्तमित्यर्थोऽस्त्विति परिभाषाप्रवृत्तिः स्यादेवेत्यतस्तत्परिभाषार्थमाह—सन्निपातपरिभाषायाश्चेति । परिभाषाघटकतत्पदस्य यच्छब्दसाकाङ्क्षत्वेन यद्व्यक्तिसन्निपातनिमित्तककार्यमग्रिमकार्योपजीव्यम्प्रवृत्तन्तस्य

भावप्रकाशः ।

वः । तेन—कैयटेन । **पूर्वोक्तेति** । अवर्णमिति प्रतीके ह्रस्वत्वेत्यादिनोक्तोऽभिप्रायः कौस्तुभे उक्त इत्यर्थः । चादन्यस्यापि तत्रत्यस्य समुच्चयः । तच्चेत्थं—दीर्घांशे परं ज्ञापकात् सा बाध्यते, न चैवं लोपेऽपि तद्बाधोऽस्तु, तदबाधेऽप्युपपत्तेरिति । वस्तुतो यादेशो लोपस्यानिमित्तमित्यर्थोऽयुक्तः परिभाषातोऽलाभात् । किञ्च सिद्धान्ते जातिपक्षे तपरसूत्रं व्याप्यजातिनिर्देशस्यैव बोधकमिति यादेशनिमित्तभूतसन्निपातस्य दीर्घेण निवर्त्तितत्वात्कस्याप्यनुवृत्तेरभावात्तदसंचार एव स्यादिति भाष्याद्युच्छेदोऽत आह—**परेत्विति** । लोपनिमित्तमिति पाठः । ननु परिभाषायास्तादृशो विधिस्तत्प्रवृत्त्युत्तरं विद्यमानतत्सन्निपातस्य साक्षात्परम्परया वा विघातकशास्त्रान्तरस्यानिमित्तमित्यर्थेन मन्मतेऽपि प्रवृत्तिरस्त्येवात आह-**प्रागिति** । यः-यादृशः । अयंभावः, यादृशसन्निपातं हेतूकृत्याग्रिमकार्योपजीव्यकार्यं जातं तस्य किञ्चित्सन्निपातविघातकत्वस्य सत्त्वे असत्त्वे वापि साक्षात्सर्वनिपातविघातकशास्त्रान्तरानिमित्तत्वमित्यर्थस्तस्याः, यत्तदोर्नित्यसम्बन्धात् प्रत्यासत्तेश्च । एवं च यादेशहेतुं तमादाय दीर्घे तद्धेतुन्तमादाय लोपे तत्सञ्चारेऽपि न मूलोक्तरीत्या सञ्चारः । यादेशदीर्घाभ्यां सर्वथा तन्नाशेन लेशतोऽपि तस्यासत्त्वादिति ।

यत्तु अन्तरङ्गानपीति न्यायः "सुपो धातु" इति लुग्विषयः "प्रत्ययोत्तरपदयोश्च" इति धर्मिग्राहकमानात् तथैव भाष्योदाहरणाच्च तद्राजसूत्रस्थकैयटाच्च । न च त्रपु जत्वित्यादौ सम्बोधने एङ्ह्रस्वादिति लोपे नित्यगुणापत्तेरभावाय तत्प्रवृत्तिरावश्यिकेति वाच्यम् । लुग्लोपयोःप्रत्ययलक्षणतदभावकृतविरोधाद्यौगपद्यासम्भवेन परत्वाल्लुकि हे वारीत्यादेः पक्षे वारे इत्यादेश्च सिद्धत्वादिति सर्वे प्राञ्चः। तत्र अन्तरङ्गानपीति न्यायस्थापिना परनित्ययोः समुच्चयेन लुकोऽपवादतुल्यतासूचनेन सर्वविधिभ्यो लुग्विधिर्बलवानि-

सरला

**सन्निपातपरिभाषयेति** । सामोपपदकगाधातोः "गापोष्टक्" इति सूत्रे ककाराभावपक्षे टप्रत्यये "इको गुणवृद्धी" इति सूत्रे इक्पदग्रहणाभावे "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे आकारस्य स्थानेऽकारे कृते पररूपे ततो ङेविभक्तौ यादेशे "कष्टाय क्रमणे" इति निर्देशेन दीर्घे कर्तव्ये सन्निपातपरिभाषाया अनित्यत्वेन तदप्रवृत्त्या दीर्घे जाते यदि आलोपः स्यात्तर्हि यादेशनिमित्तात्वजातिमदकारस्य विघातः स्यादिति सन्निपातपरिभाषया न "आतो धातोः" इति आकारलोप इति तदाशयः ।

"स्वमोर्नपुंसकात्" ॥ अयं लुक् पूर्वविप्रतिषेधेन त्यदाद्यत्वस्य किमःकादेशस्य च बाधकः। परत्वाद्धि त्यदाद्यत्वे ऽम्भावेन तं कुलमिति स्यात्।

वृद्ध्यौत्वेति। 'अतिसखीनि कुलानि'इत्यत्र "सख्युरसम्बुद्धौ" इति णिद्वद्भावाद्वृद्धिः प्राप्ता, 'वारिणि'इत्यत्र तु "अच्च घेः" इत्यौत्वम्, 'प्रियक्रोष्टूनि'इत्यादौ तृज्वद्भावः प्राप्तः। ननु नुम्नुटोः को विशेषस्तत्राह—नामीति। नुमस्तु अङ्गभक्तत्वात् तस्मिन् सति दीर्घो न स्यादिति भावः।

"तृतीयादिषु" ॥ पुंवदिति। अर्थान्नुम्ह्रस्वयोः प्रतिषेधोऽयम्। प्रवृत्ति-

---

शब्दरत्नम्

पूर्वविप्रतिषेधेनेति। 'अन्तरङ्गानपि' इत्यस्योपलक्षणमिदम्। अत्रत्यवार्तिकानुरोधेन त्वेतदुक्तम्। 'त्यदादिभ्यश्चेति वक्तव्यम्' इति हि तत्र वार्त्तिकम्। तं कुलमिति स्यादिति। द्वितीयैकवचन इति शेषः। प्रथमैकवचने तु सं कुलमिति स्यादिति बोध्यम्।

नुम्ह्रस्वयोरिति। पुंसि विहितस्य भावस्यातिदेशस्यास्याभावात् ह्रस्वनुमो-

भैरवी।

तस्य निमित्तस्य तादृशमग्रिमङ्कार्यं विघातकन्नेत्यर्थं एव लभ्यते। एवञ्च न मूलोक्तरीतिमादाय परिभाषायाः सञ्चारः, किन्तु यञादिप्रत्ययत्वावच्छिन्नसन्निपातनिमित्तो दीर्घो लोपे निमित्तन्न भवतीत्येव परिभाषायाः प्रवृत्तिर्भवतीत्याशयः।

ननु लुकः सर्वापेक्षया बलवत्त्वस्य सिद्धान्तसिद्धतयाऽतुल्यबलत्वेन पूर्वविप्रतिषेधेनेत्ययुक्तमत आह–अन्तरङ्गेति। मूलासङ्गतिम्परिहरति–अत्रेति। तत्र–भाष्ये। अत्र तुना न्यायसञ्चारेणैव समाधानमुचितन्नतु विप्रतिषेधशास्त्रेणेति ध्वनितम्। मूलासङ्गतिं शेषपूरणेन परिहरति–द्वितीयेति।

ननु पुंवद्भावेन पुंसि यत्कार्यं विहितन्तद्भाव एव लभ्यते न त्वभावातिदेश इत्यत आह–पुं-

भावप्रकाशः।

त्यर्थकस्य सर्वत्रान्तरङ्गत्वाद्यनपेक्षप्रवृत्तिकस्य विषयतया वासुदेवार्जुनाभ्यामिति ज्ञापितेन सर्वतोभ्यर्हितपूर्वत्वस्य प्राबल्येन मूलप्रयोगासङ्गतिं ध्वनयितुमाह–पूर्वविप्रतिषेधेनेतीति। अत एव लोपलुकोर्लुगवधारणादिति एङ्ह्रस्वादिति सूत्रे भाष्यवार्त्तिकप्रयोगः सङ्गच्छते। तत्त्वं त्वागमित्वव्यापकत्वादिना यथायथं बोध्यम्। धर्मादित्वं वा कल्प्यम्। विप्रतिषेधाविषयत्वात्। अत एवैङ्ह्रस्वान्न्यासयोरित्यादि सूत्रस्थाकरसङ्गतिः। आद्ये हेत्रपु इत्यादावनेन न्यायेन लोपं बाधित्वा लुग्भवतीत्युक्तम्। अन्त्येऽ तरङ्गांश्च विधीन्सर्वोपि लुग्बाधते न सुब्लुगेवेत्युक्तम्। तद्ध्वनयन्नाह–अन्तरङ्गानपीति। एतेनोक्तरीत्या मूलं चिन्त्यमिति मन्दोक्तमपास्तम्। मूलस्योक्तिसम्भवमाह–अत्रत्येति। तत्र—भाष्ये। तुनाऽरुचिः सूचिता तदर्थाज्ञानरूपा। तथाहि, तत्र काकुः न वक्तव्यमित्यर्थः। हेतुस्तु प्रसिद्ध एवान्तरङ्गानपीति न्यायरूप इति तदाशयः। एवं च मूलं तदनुयायिरत्नाकरदण्ड्यादयश्च चिन्त्या इति बोध्यम्। प्रकाशानुरोधेन तु तथोक्तम्। तं कुलमिति स्यादित्यन्तमुक्त्वा सर्वविधिभ्य इति तु सुपो धात्विति विषयं तस्मात्पूर्वविप्रतिषेधेन लुकाऽत्व बाध्यत इति वक्तव्यमिति तत्त्वम्। तुर्वैलक्षण्यसूचकोऽत एव शेषपूरणम्। यत्तु तं कुलमित्यादि बोध्यमित्यन्तमनूद्य तत्र प्राक् सोरमि एकादेशे चोभयत आश्रयेऽन्तादिवत्त्वाभावादम्त्वाभावे तस्य स्थानिवत्त्वेन सुत्वाभावात्सत्वस्याप्रवृत्तेरयमेव तङ्कुलमिति वदतो मूलकृत आशय इति मन्दः। तन्न, परत्वादत्वकादेशयोरिव सत्वस्यापि प्राक्प्रवृत्तेः। एतेन प्रथमान्तत्यागे बीजाभाव इत्यपास्तं, प्रकाशानुरोधेन तथोक्तत्वात्। एतेन तथा रत्नाकरोक्तमपास्तम्।

पुंसीति। अनेन सप्तम्यन्ताद्वतिः सूचितः, स्थानिवद्भाववदित्यादाविवात्र न तथेति भावः।

निमित्तभेदादिति । पीलुशब्दस्य हि वृक्षत्वव्याप्यजातिर्वृक्षे प्रवृत्तिनिमित्तम्, फले तु फलत्वव्याप्यजातिर्वृक्षविशेषप्रभवत्वं वा । उभयथाऽपि पुन्नपुंसकयोर्नैकं प्रवृत्तिनिमित्तमिति भावः ।

"अस्थिदधि ॥ अतिदध्नेति । दधि अतिक्रान्तेनेत्यर्थः । यत्तु प्रियदध्नेति उरःप्रभृतिषु 'दधिमधुशली'इति पाठात् नित्यः कप् प्राप्तो भाष्यकारप्रयोगादेव प्रियदधिशब्दे न भवतीत्याहुः । तच्चिन्त्यम् । भाष्ये तादृशपाठस्य बहुषु पुस्तकेष्वनुपलम्भात् । स्त्रियान्तु प्रियदध्न्या प्रियदध्न्यै इति केचित् । तन्न । सन्निपातपरिभाषया बहिरङ्गपरिभाषया च ङीपोऽप्रवृत्तेः । तस्मात् पुंसीव स्त्रियामपि अतिदध्नेत्यादिकमेव बोद्ध्यम् ।

सुधिनी इति । परत्वान्नुमा इयङ् बाध्यते । सुधियेति । पुंवत्त्वपक्षे नुमो-

---

शब्दरत्नम् ।

निषेधोऽतिदेशसामर्थ्याद् व्याप्तिन्यायाश्रयणाच्चेति भावः । 'नब्विषयस्य' इति स्वरस्य तु न निषेधो भिन्नकर्तृकत्वात् । विषयपदेन नपुंसकत्वाभावे ऽपि तत्प्रवृत्त्यङ्गीकाराच्च ।

नुमोऽभावादिति । ह्रस्वाभावेन नाभावाभावाच्चेयङिति भावः । उपसर्जन-

भैरवी ।

सीति । अभावद्वयातिदेशे हेतुमाह–व्याप्तिन्यायादिति । स्वराभावस्याप्यतिदेशो भविष्यतीति शङ्कां वारयति–नबिति । भिन्नेति । पाणिनिभिन्नशान्तनवकर्तृकत्वादित्यर्थः । ननु पाणिनिना यथा "अयामन्त" इति सूत्रेणान्याचार्यविहितप्रत्ययानुवादेनायादेशविधानङ्कृतन्तथात्रान्यविहितस्वराभावस्याप्यतिदेशः स्यादत आह–विषयपदेनेति । ह्रस्वान्तस्य स्त्रीविषयस्येत्यतो विषयपदानुवृत्त्यैव सिद्धे पुनर्विषयपदोपादानसामर्थ्येनातिदेशिकलिङ्गान्तरयोगाय तस्य प्रवृत्तिरित्यर्थो भविष्यतीति भावः ।

न्यूनताम्परिहर्तुमाह—ह्रस्वाभावेनेति । एतेन नुमोऽभावेपि परत्वान्नाभावेनेयङादेशस्य

भावप्रकाशः ।

निषेध इति । फलित इत्यर्थः । क्लीबत्वयुक्तार्थबोधकस्य पुंस्त्वयुक्तार्थबोधकरूपातिदेशे क्लीबत्वरूपार्थनिवृत्तेस्तत्प्रयुक्तसर्वकार्याप्रवृत्तेः । एतेन यथा पुंशब्दे तयोरभावो दृष्टस्तद्द्वारा यत्नाद्द्वयं तन्नपुंसकेप्यतिदिश्यत इति प्रकाशोक्तमपास्तम् । ननु प्रकृतत्वान्नुम एव निषेधोऽत आह–अतिदेशेति । नेति वक्तव्ये पुंवदित्यतिदेशसामर्थ्यादित्यर्थः । लाघवादाह–व्याप्तीति । प्रपञ्चितमत्रत्यमधस्तात् । नन्वेवमतिप्रसक्तोऽत आह–नब्विषयेति । भिन्नेति । पाणिनिशान्तनवयोस्तत्त्वादिति भावः । ननु तत्त्वेपि पाणिनेरन्यत्र तदङ्गीकारवत्तत्खण्डनवच्चात्रापि निषेधः स्यादेवात आह–विषयेति । ह्रस्वान्तस्य स्त्रीविषयस्येत्यतो विषयपदानुवृत्तौ सत्यां पुनस्तत्पदोपादानसामर्थ्येनातिदेशिकलिङ्गान्तरयोगेऽपि तत्प्रवृत्त्यङ्गीकाराच्चेत्यर्थः । यद्वा क्लीबत्वं न विशेषणं, तथाहि सति नप इत्येव वदेत्; किन्तूपलक्षणं तत्र तात्पर्यग्राहकं विषयपदम् । तथा च "सर्वनाम्नो वृत्तिमात्रे" इति तुल्यता, न तु स्त्रीविषयावेव यौ नित्यमिति तुल्यता । अत एव मधमाक्षिकमकरन्दान्यतमवाचकस्योभयलिङ्गस्य मधुशब्दस्य भाष्यसंमतस्वरसिद्धिरिति भावः । स्पष्टं चेदमीच द्विवचने इत्यत्र कैयटे ध्वनितं च तत्रैव भाष्ये ।

ननु नुमोऽभावेपि परत्वान्नाभावेनेयङो बाध्यत्वापत्तिरेवात आह–ह्रस्वेति । अत एव प्रतिज्ञातार्थसि-

सरला ।

ह्रस्वनुमोर्निषेध इति । अभावातिदेश इत्यर्थः । व्याप्तिन्यायाश्रयणादिति । क्लीबत्वविशिष्टार्थवाचकस्य पुंस्त्वविशिष्टार्थवाचकत्वातिदेशे क्लीबत्वरूपार्थस्य निवृत्तेस्तत्प्रयुक्तसर्वकार्याप्रवृत्तिरिति भावः ।

ऽभावादियङ् । बह्व्यः श्रेयस्यो यस्य तत् बहुश्रेयसी कुलम् । अत्र नपुंसकह्रस्वत्वं न, 'ईयसो बहुव्रीहेर्न' इति ह्रस्वमात्रस्य प्रतिषेधादिति श्रीपतिपुरुषोत्तममिश्ररूपादयः । अन्ये तु उपसर्जनह्रस्व एव निषिद्ध्यते, नपुंसकह्रस्वत्वं तु स्यादेव,

---

शब्दरत्नम् ।

**ह्रस्वप्राप्तेति ।** 'ईयसो बहुव्रीहौ पुंवत्' इति हि भाष्ये पठितम् । ईयसः परस्य स्त्रीप्रत्ययस्य बहुव्रीहौ विद्यमानस्य पुंवत् पुंविषयस्य ईकारस्य यथा न ह्रस्वस्तथाऽस्यापीति तदर्थः । ईयसन्ताद्विहितो यः स्त्रीप्रत्ययस्तदन्तान्तबहुव्रीहौ पुंवदिति तु नार्थः । बहुव्रीहेः पुंवत्त्वेऽपि उपसर्जनस्य श्रेयसीशब्दस्य स्त्रीप्रत्ययान्तत्वानपायेन उपसर्जनह्रस्वस्य दुर्वारतापत्तेः । एवं च प्रत्यासत्त्या स्त्रीप्रत्ययत्वनिमित्तकगोस्त्रियोरित्यस्यैव तेनाभावातिदेश इति भावः । तदेवार्थतोऽत्र पठितम् । न च नेत्येव सिद्धे पुंवद्वचनं व्यर्थम् । वार्त्तिकेषु लाघवगौरवविचाराभावस्य तत्र तत्र भाष्ये ध्वनितत्वादिति बोध्यम् ।

भैरवी ।

बाधापत्तिरिति कस्यचिदुक्तिः प्रत्युक्ता । उपसर्जनह्रस्वस्यैव यथा बाधकस्तथोपपादयति—ईयस इत्यादिना । प्रत्यासत्त्या-तत्र पाठात्तच्छेषत्वस्य झटिति प्रतीतिरित्येवम्प्रत्यासत्त्या । तदेव-तद्वार्तिकमेव । एवञ्चानुपूर्वीव्यत्यास एवात्र नत्वर्थभेद इति "ईयसो बहुव्रीहेर्न" इति वचनन्निर्मूलमिति शङ्का - कार्येति सूचितम् । अन्योक्तसाधकन्निरस्यति—नचेति । व्यर्थमिति । एवञ्च तृतीयादिष्विति सूत्रस्थपुंवदिति पदे इवात्रापि तथास्त्विति भावः । वार्तिकेष्विति । एतद्विशेषोपादानेन सूत्रेषु लाघवगौरवविचारार्थं वार्तिककारस्य भाष्यकारस्य च प्रवृत्त्या तत्र तथाकल्पनमुचितमिति ध्वनितम् ।

भावप्रकाशः ।

ध्या न न्यूनता । न भूसुधियोरिति निषेधाच्चेत्यपि बोध्यम् । ननु व्याप्तिन्यायेन पूर्वमतमेव युक्तमत आह—**ईयस इति । हि भाष्ये पठितमिति ।** गोस्त्रियोरिति सूत्रे । कैयटोक्तं तदर्थमाह—**ईयस इति ।** तत्रैवेदं कृतमन्यथा पुंवद्भावप्रकरणे एव वदेत । एतेन शिशीनुमोऽपि न । यद्यपि दीर्घवचनेन नेदं लभ्यं तथापि पुंवद्वचनेन लभ्यत एव । अत एव तेन तत्प्रत्याख्यानम् । स्त्रीप्रत्ययनिवृत्तिस्तु न, भाष्ये तथैवोदाहृतत्वात् । ह्रस्वो नेति कैयटोक्तेश्चेति रत्नाकरोक्तमपास्तम् । तथा सति तृतीयादिष्विति पुंवद्भावप्रकरणे एव पठितुमौचित्यात् । स्त्रीप्रत्ययनिवृत्त्यभावाय भाष्योदाहृतिकैयटोक्त्यङ्गीकारे तत एव तेषां सत्वस्यापि सिध्या पूर्वापरविरोधापत्तेश्चेति दिक् । एतेन तथा प्रकाशोक्तमपास्तम् । विपरीतार्थसाधकमान्योक्तमर्थं निराचष्टे—**ईयसन्तादिति । दुर्वारतेति ।** तथाच तत्र पाठानर्थक्य चेति भावः । **इत्यस्यैवेति ।** एतेन स्त्रीप्रत्ययस्यापि निवृत्तिः स्यादतिदेशेनेत्यपास्तम् । अत एव अनुशासनाभागत वातप्रमीरित्यादावीकारश्रवणं यथा तथा तत्र स्त्रीप्रत्ययभूतस्यापीत्येवं वचनव्यक्तेरिति भावः । षष्ठ्यन्तादतिः । एतेन गोस्त्रियोरिति प्राप्तो ह्रस्वः पुंवद्भावेन निवर्त्यतइति ततः प्राक्तनकैयटे गोस्त्रियोरिति तस्याप्युपलक्षणमिति रत्नाकरोक्तमपास्तम् , मूलशैथिल्यात् । **एवं च—प्रत्यासत्त्येति** तत्र पाठेनोभयसाफल्याय तथार्थाङ्गीकारे च । प्रकरणात्तच्छेषत्वरूपप्रत्यासत्त्येत्यर्थः । एतेन तन्न्यायाद्व्याप्तिन्यायप्राबल्यमित्यपास्तम् । ननु वार्त्तिकार्थोऽस्तु तथा, वृत्तिहरदत्तप्रकाशाद्युक्तितुल्यस्य परममूलोक्तस्य तु तदन्यस्याऽनारभ्याधीतस्योक्त एवार्थोऽत आह—**तदेवेति ।** एवं चानुपूर्वीभेदो न त्वर्थभेदः, निर्मूलत्वादिति भावः । **अत्र** -मूलादौ । एतेन गोस्त्रियोरित्यत्र निषेधो वाच्य इत्येवोक्तमिति हरदत्ताद्युक्तं चिन्त्यं भाष्ये तादृगपाठात् । कैयटेन पुंवदित्येव प्रतीकग्रहणादिति रत्नाकरोक्तमपास्तम् । पाश्चमिकपुंवद्वचनेन स्त्रीप्रत्ययानिवृत्तये वृत्तौ तत्र तथोक्तमित्येव तदुक्तेः । मान्यरत्नाकराद्युक्तसाधकं निराचष्टे—**नचेति ।** तृतीयादिष्वित्यत्रत्यतद्वदिति भावः । **वार्त्तिकेष्विति ।** सूत्रेषु तु तद्विचारार्थमेवोभयोः प्रवृत्तिरिति भावः । अत एवाह—

बहुश्रयसि बहुश्रेयसिनी इत्याद्याहुः ।

स्नुः प्रस्थः सानुरस्त्रियामित्युभयलिङ्गः सानुशब्दः । तस्य नपुंसकत्वे रूपमाह—स्नूनि सानूनीति । पुंसि शम्भुवत् । प्रियक्रोष्टूनीति । यत्तु प्राचा प्रियक्रोष्टृणीत्युक्तम् । तत्पूर्वविप्रतिषेधपरभाष्यवार्तिकविरुद्धम् ।

यत्तु व्याचख्यु "विभाषा तृतीयादिष्वचि" इत्येतद्विषयको विप्रतिषेधः ।

---

शब्दरत्नम् ।

इत्याहुरिति । अत्रारुचिबीजं तु "ईयसश्च" इति सूत्रे भाष्ये 'ईयस उपसर्जनस्त्रीप्रत्ययस्य दीर्घत्वं वक्तव्यम् बहुश्रेयसी । पुंवद्वचनात्सिद्धम्' इत्युक्तं, तेनास्य नपुंसकह्रस्वनिवृत्त्यर्थत्वं लभ्यते । अन्यथा वचनेन वचनप्रत्याख्यानासङ्गतिः । मम तु मते नपुंसकह्रस्वनिवृत्त्यर्थमावश्यकं तदिति युज्यते एव तेनास्य प्रत्याख्यानम् । दीर्घत्वं हि प्रत्यासन्नस्योपसर्जनह्रस्वत्वापवादः । सामान्यतो ह्रस्वमात्रापवादत्वे हि प्रत्याख्यानासङ्गतिरिति दिक् ।

पूर्वविप्रतिषेधपरभाष्येति । अङ्गाधिकारे तदन्तविधेः सत्त्वेन तदन्तग्रहणेन

भैरवी ।

अत्र—आहुरित्युपादानविषये । तदिति । पुंवद्वचनमित्यर्थः । तेन—तादृशभाष्येण । अस्य—उपक्रान्तदीर्घत्ववचनस्य । ननु दीर्घत्वविधायकवचनस्याप्युभयबोधकत्वमस्त्वित्यत आह—दीर्घत्वं हीति । प्रत्यासत्त्या उपसर्जनपदोपादानरूपप्रत्यासत्तिनिमित्तेन प्रत्याख्यानपरभाष्यप्रामाण्येन पुंवद्भावबोधकवचनस्थले न प्रत्यासत्तिर्विवक्षिता, अत्र तु सा विवक्षितेति भावः। न चैवम्पुंवद्भावेन ह्रस्वमात्रबाधवत् "जश्शसोः शिः" इत्यादिबाधोऽपि स्यादिति बहुश्रेयसीनी बहुश्रेयसीनीत्यादिरूपाणामसिद्ध्यापत्तिरिति वाच्यम् ? ह्रस्वप्रकरणे पाठे तत्तदभावबोधकत्वस्यैव कल्पनात् । अत एवाह—दिगिति ।

मूले—पूर्वविप्रतिषेधेति । वृद्ध्यौत्वेति पूर्वविप्रतिषेधसूचकभाष्येत्यर्थः । ननु पूर्वविप्रतिषेधादस्तु नुमागमस्तथापि पुनःप्रसङ्गविज्ञानन्यायेन निर्दिश्यमानपरिभाषया चोक्तरूपं स्यादेवेति शङ्कानिरासायाह—अङ्गाधिकारेति । सूत्रे षष्ठीनिर्देशाभावेनेति कथनेन तस्याः परिभाषाया अत्र विषयतैव नास्तीति सूचितम् । एतेन नुम्नित्यः तृज्वद्भावस्तु कृते नुमि तेन व्यवधानान्न प्राप्नोतीत्यनित्य इति नित्यानित्ययोरतुल्यबलत्वेन विप्रतिषेधासङ्गतिरिति कल्प-

भावप्रकाशः ।

अत्रारुचीति । तेन—तादृशभाष्येण । अस्य—उपक्रान्तपुंवद्वचनस्य । निवृत्त्यर्थमपीति पाठः । तत्—गोस्त्रियोरित्यत्रत्यं वचनम् । एवमग्रेऽपि । अस्य—ईयसश्चेत्यत्रत्यस्य । ननु दीर्घत्वविधेरपि ह्रस्वविशेषमनारभ्याधीतत्वात्सामान्यत्वमत एव रत्नाकरकृता तथैवोक्तम् । एवञ्च त्वन्मतेपि तदसंगतिरेवात आह—दीर्घत्वं हीति । उपसर्जनेत्युक्तिसामर्थ्यादिति भावः । युक्त्यन्तरमाह—सामान्यत इति । हिश्चार्थेऽसंगतिपदोत्तरं योज्यः । तथाच प्रत्याख्यानपरभाष्यप्रामाण्यात् पुंवद्वचने प्रत्यासत्तिर्न । अत एव तदुत्तरवार्त्तिके नपुंसकह्रस्वत्वस्यापि निषेध इति भ्रमव्यावृत्तये समासनिवृत्त्यर्थमित्युक्तम् । अत एव च तत्र विग्रहे स इत्यादि न प्रयुक्तं, शिशीलुङ्नुमादयस्तु भवन्त्येव, प्रकरणानुरोधेनोपस्थितह्रस्वाभावस्यैव ग्रहणात् भाष्यकैयटाभ्यान्तथालाभस्योक्तत्वाच्च । एवं च क्लीबे बहुश्रेयसीनीत्यादिरूपाणीति बोध्यम् । तदाह—दिगिति ।

तत्र तद्विरोधं ध्वनयितुं स्वोक्तरूपप्रक्रियामाह—अङ्गेति । यद्वा ननु नुम् नित्यः तृज्वद्भावस्तु नुमि कृते तेन व्यवधानादप्राप्त्याऽनित्य इति तत एव नुम्सिद्ध्या किं पूर्वविप्रतिषेधेनात आह—अङ्गेति । तदन्तग्रहणेन—क्रोष्टुशब्दान्तपदेनेत्यर्थः । इदं च ग्रहणेऽपीत्यत्र कर्तृत्वेनान्वेति । एवमप्यन्तेन प्राचोक्तरू-

भाष्ये प्रियक्रोष्टने अरण्यायेत्यस्यैवोदाहृतत्वादिति ; तन्न, उदाहरणस्य सङ्कोचकत्वे मानाभावात्। यदाहुः—न चोदाहरणमादरणीयमिति। किं च पूर्वविप्रतिषेधस्य वैकल्पिकतृज्वद्भावमात्रविषयकत्वे तत्र तृज्वद्भावग्रहणं व्यर्थमेव स्यात्। प्रियक्रोष्टुनेत्यादेर्विप्रतिषेधं विनापि पक्षे सुसाधत्वात्। न च प्रियक्रोष्ट्रेत्यादिनिवृत्तिस्तत्फलम्। पुंवद्भावपक्षे तस्य दुर्वारत्वात् स्वयमपि तथादाहृत-

शब्दरत्नम्।

यदागमा इति न्यायेन नुम्विशिष्टस्य ग्रहणेऽपि सूत्रे षष्ठीनिर्देशाभावान्निर्दिश्यमानस्य नुमा व्यवधानमित्यस्याभावेऽपि पूर्वविप्रतिषेधसामर्थ्यात्सकृद्गतिन्यायेन पुनस्तृज्वत्त्वाभावः। अत्रानयोर्यौगपद्यासम्भवेन विरोध इति भावः।

**इत्यस्यैवेति**। अन्यथा प्रथमोपस्थितसर्वनामस्थानोदाहरणत्यागो निर्बीजः स्यादिति भावः। **पक्षे**—तृज्वत्त्वाभावपक्षे। **उदाहृतत्वाच्चेति**। न च प्रियक्रोष्टूणे इत्यादिव्यावृत्त्या चारितार्थ्यम्। प्रियक्रोष्टु ए इत्यवस्थायां नुम्तृज्वत्त्वयोः प्राप्तयोः पर-

भैरवी।

चिदुक्तिः प्रत्युक्ता। अत्रानयोः-वार्तिकबोध्यलक्ष्ये नुम्तृज्वत्त्वयोः। असम्भवेनेति। स्वस्वनिमित्तानन्तर्यविघातकत्वेनेत्यादिः।

अन्यथा—"तृज्वत् क्रोष्टुः" इति सूत्रविहितबाधकत्वस्यापि कल्पने। मूले उदाहृतत्वाच्चेत्यन्तेन भवदुक्त्या पूर्वविप्रतिषेधपरवचनस्य चारितार्थ्यन्न सम्भवतीति प्रतिपादित-

भावप्रकाशः।

पसम्भावनोक्ता। तदुक्तसमाधानाभासमाह—**सूत्रे इति**। तृज्वत्क्रोष्टुरित्यत्र। इदं च मध्यमणिन्यायेनोभयत्रान्वेति। **अभावेऽपीति**। अपिरनास्थायाम्। एतेन परमक्रोष्टुशब्दे विशिष्टस्य तृज्वत्त्वापत्त्या सूत्रे इत्याद्यप्यन्तं चिन्त्यमिति मन्दोक्तमपास्तम्। एवं च प्राचीनरीत्यैवायं ग्रन्थः। वस्तुतस्तदेव मुख्यं समाधानमिति नात्र पक्षे सामर्थ्याश्रयणमिति बोध्यम्। एवं च तदन्ते नुमि कृतेऽपि अङ्गभक्तत्वात्तस्य तेन तद्विशिष्टग्रहणेन तत्र तृज्वत्त्वप्राप्त्या तस्यापि नित्यत्वं समानमिति परत्वात्तत्प्राप्तौ तदावश्यकतेति भावः। नन्वेवमपि व्यर्थ एव सः उक्तरीत्यैव पुनस्तदापत्तेरत आह—**पूर्वेति**। **अत्रानयोः**—वार्तिक लक्ष्ये वा नुम्तृज्वत्त्वयोः। **असम्भवेन**—स्वस्वनिमित्तानन्तर्यविघातकृतेन।

**स्यादिति**। युक्तं चैतत्। अत एव वृत्तौ विभाषेति सूत्रे एवैतद्वचनोदाहृतिरिति खण्डनकृत्। मूले सर्वत्र चतुर्थ्यन्तपाठः, तृतीयान्ते नाभावस्यैव प्राबल्यात्। ननु पक्षे इत्यस्य न पुंवत्पक्षे इत्यर्थो बाधात्, नापि तदभावपक्षे इत्यर्थः तत्र तृज्वत्त्वं विनापीत्यसंगतेरत आह—**तृज्वत्त्वाभावेति**। खण्डन-

सरला।

**इत्यस्याभावेऽपीति**। न च "तृज्वत्क्रोष्टुः" इत्यादौ निर्दिश्यमानपरिभाषाया अप्रवृत्तौ परमक्रोष्ट्रेत्यादौ परमक्रोष्टुशब्दस्य स्थाने तृजन्ततदादिरूप 'क्रोष्टृ' इत्येतदादेशापत्तिरिति वाच्यम्, अनुत्तरपदस्थस्य इति ज्ञापकेन क्वचित्तदादिविधेरप्रवृत्त्या परमक्रोष्टु इत्यस्य स्थाने "स्थानेऽन्तरतमः" इति परिभाषया 'परमक्रोष्टृ' इति तृजन्तादेश इत्यदोषात्।

यद्वा क्रोष्टुरिति षष्ठ्यन्तमेव, तृज्वदिति च मतुबन्तम्। तथाच क्रोष्टुशब्दस्य स्थाने तृज्वानादेशो भवतीत्यर्थ इति षष्ठ्याः सत्त्वेन निर्दिश्यमानपरिभाषयैव दोषवारणात्। अत एव 'अङ्गस्य क्रोष्टुस्तृज्वत्' इति भाष्यमपि संगच्छते। नच तृजन्तक्रोष्टृशब्दस्य सूत्रे कथं 'क्रोष्टुः' इति षष्ठ्यन्तं रूपं स्यादिति वाच्यम्, "प्रकृतिवदनुकरणम्" इति परिभाषया अनेनैव तृज्वद्भावे "घेर्ङिति" इति गुणेन तद्रूपसिद्धेरिति।

त्वाच्च। न च समाहारद्विगौ पञ्चक्रोष्टुनेत्यादौ पुंवद्भावाभावात् तत्र तृज्वद्भाव-निवृत्तिः फलमिति वाच्यम्। एवमपि भाष्योदाहरणासामञ्जस्यात्। उपलक्षणं तदिति चेत्, हन्तैवं प्रियक्रोष्टूनीत्येवोपलक्ष्यतां भाष्योदाहृतप्रातिपदिकांशानुग्र-हायेति दिक्।

सुल्वेति। पुंवत्त्वपक्षे नुमभावाद्यण्। सुलुनेति। "ओः सुपि" इति यणं बाधित्वा परत्वान्नुम्।

यद्गिन्तमिति। एतच्च रा दाने इति धातौ अतिरि ब्राह्मणकुलमिति प्रक्रम्य माधवेन स्पष्टीकृतम्। अन्ये तु सुद्योशब्दो भाषितपुंस्कः। स एवेदानीमिगन्तः,

शब्दरत्नम्।

स्वात्तृज्वत्त्वे सकृद्गतिन्यायेन नुमभावसिद्धेः। पुनः प्रसङ्गविज्ञानाश्रयेण वचनारम्भापेक्षया सकृद्गतीत्याश्रित्य वचनानारम्भस्यैव लघुत्वादिति भावः। पुंवद्भावाभावादिति। भाषितपुंस्कत्वाभावादिति भावः। इत्येवेति। इत्यपीत्यर्थः। प्रातिपदिकांशेति। प्रातिपदिकांशस्याप्यनुग्रहायेत्यर्थः।

इति दिगिति। दिगर्थस्तु यद्यपि चतुर्थ्यन्तोदाहरणपरभाष्यप्रामाण्यात् पुंवत्त्वपक्षे-ऽनभिधानेन तृज्वत्त्वाभावकल्पना न्याय्या, भाष्यकृता हि सूत्रत्रयस्य प्रत्याख्यानाया-श्रितस्य शब्दानां नियतविषयकत्वस्य सूत्रारम्भेऽप्यावश्यकत्वद्योतनाय पूर्वविप्रतिषेधवार्तिके तदुदाहृतं, तथाऽपि न चोदाहरणमादरणीयमिति न्यायेन सर्वनामस्थानविषयकताऽ्य-

भैरवी।

न्तत्रान्यकृतशङ्कां वारयति—नचेति। वचनेति। पूर्वविप्रतिषेधवचनेत्यर्थः। भाषितेत्यादि। समाहारे द्विगौ तस्य "स नपुंसकम्" इति नपुंसकत्वविधानादिति भावः। प्रियक्रोष्टूनीत्ये-वेत्येवकारेण नित्यतृज्वद्भावविषयकत्वन्तस्येति लभ्यते। तच्चायुक्तम्, प्रागुक्तभाष्यी-यप्रयोगविरोधात्; अत आह—इत्यपीति। प्रातिपदिकांशस्यापीति। अपिना तदवयवस्य परि-ग्रहः। अत एव भाष्ये कृशक्रोष्टुने इत्यस्योपादानेपि मूले प्रियक्रोष्टुने इत्युदाहृतम्। एतच्च मूलग्रन्थसङ्गमनायोक्तम्। वस्तुतस्त्वेवङ्कल्पना नोचिता, भाष्यकृतोऽज्ञानकल्पनापत्तेरतो दिगर्थमाह—दिगर्थस्त्विति। अभावकल्पनेति। अभावस्यैव कल्पनेत्यर्थः। तदुदाहृतमिति। चतु-

भावप्रकाशः।

कृदुक्तसाफल्यं विफलयति—नचेति। तदुक्तयुक्तिमपि निराचष्टे—पुनरिति। प्रियतिसृणामित्यादाविवेति भावः। वचनेति। पूर्वविप्रतिषेधवचनेत्यर्थः। नित्यत्वं तूभयोस्तुल्यमुक्तमेव। एतेन प्रियक्रोष्टूणे इति वारणाय पाक्षिकतृज्वत्त्वविषयकः पूर्वविप्रतिषेध इत्यस्य सुवचत्वेन तस्या वैयर्थ्यमन्यथा पुंवत्त्व इव तदभा-वेऽपि पाक्षिकतृज्वत्त्वेन तुर्यं रूपं दुर्वारमिति रत्नाकरोक्तमपास्तम्। भाषितेति। समाहारस्य नित्यक्ली-बत्वादिति भावः। इत्येवेत्येवकारस्वारस्येन नित्यतृज्वत्त्वविषय एव लभ्यते, तदयुक्तं, पूर्वत्र मात्रपदोक्त्या सर्वविषयत्वेष्टत्वानुमानात्। अन्यथा तदानर्थक्यापत्तेश्चात आह—इत्यपीत्यादि। अंशस्येति। तद्रू-पांशस्य तदवयवांशस्य चेत्यर्थः। अत एव भाष्ये कृशक्रोष्टुने इत्यस्योक्तत्वेपि मूले प्रियक्रोष्टुने इत्याद्येवो-क्तम्। एतेन प्रियक्रोष्टुने अरण्यायेति भाष्योदाहृतत्वादिति रभसाभिधानमिति रत्नाकरोक्तमपास्तम्।

वस्तुतो नेदं युक्तम। तथोदाहरणे भगवतोऽज्ञानस्यैव मूलत्वापत्तेः। तच्चायत्वे तदुक्तयैव निर्वा-हादयुक्तमत आह—दिगर्थ इति। अभावकल्पनेति। अभाव इत्येव कल्पनेत्यर्थः। एवेनाज्ञाननिरासः। अत एव वार्तिकसाफल्यम्। कृशक्रोष्टुन इति व्यावृत्तिस्तु न फलम्, उक्तलाघवेन तस्यैवाप्राप्तेः। सकृद्ग-तीत्यस्यान्यत्रेवात्रापि प्रवृत्त्या तदर्थमेव वार्तिकमित्यपि न, कृशक्रोष्टुन इति तु तृज्वत्त्वाभावपक्षे साध्विति भावः। तदुपपादयति—भाष्यकृता हीति। तत्—चतुर्थ्यन्तम्। अयं भावः। क्लीबे प्रियक्रोष्टे इति

एकदेशविकृतस्यानन्यत्वात्; अतः पुंवद्भावो भवतीत्याहुः। तथा च रूपमालादौ

शब्दरत्नम्।

स्य न्याय्या, उदाहृतातिरिक्तोदाहरणाभाव इत्यवंपरतया नादरणीयमिति तदर्थं इति बोध्यम्।

**एकदेशविकृतस्येति**। स च न्यायोऽशास्त्रीयस्याप्यतिदेशकोऽशास्त्रीयविकारे चेति 'प्राग्दीव्यत' इति सूत्रस्थभाष्यसम्मतत्वादिति भावः। **पुंवद्भाव इति**। तेन सुन्दर-भार्थ इत्यादौ जातनिवृत्तेरपि दृष्टत्वेनात्रापि तेन जातह्रस्वनिवृत्तिः। ननूपजीव्यविरोधेन

भैरवी।

र्थ्यन्तमुदाहृतमित्यर्थः। अस्य—उक्तवार्तिकस्य। न्याय्या—स्वार्थसिद्ध्यर्थमारब्धस्याहावस्य पान्थोपकारकत्त्वेऽधिकाभ्युदयवदेषा न्याय्या। न चोदाहरणेति ग्रन्थस्योदाहरणत्यागः कार्य इत्यर्थो यद्यप्यागतः प्रतीयते तथापि तदुदाहरणप्रदर्शनान्यथानुपपत्त्या स नोचित इत्याशयेनाह—उदाहृतेति।

ननु सुद्योशब्दनिष्ठस्य भाषितपुंस्कत्वस्य सुद्युशब्देऽतिदेश एकदेशविकृतन्यायेनेति वक्त-व्यन्तच्च नोचितम्भाषितपुंस्कत्वस्याशास्त्रीयत्वादत आह—स चेति। विकारे चेतीति। चकारेण शास्त्रीयविकारसमुच्चयः। भाष्यसम्मतत्वादिति। तत्र हि "दीव्यतिशब्दैकदेशादी-व्यच्छब्दानुकरणमित्युक्त्वा किमर्थं विकृतनिर्देशः क्रियते एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा एकदेशविकृतमनन्यवदिति"। अत एव रामावित्यादौ मकाराद्यन्ते यस्मा-द्विहितस्तत्त्वस्यातिदेशेन पदत्वस्य सिद्धिः। ननु पुंवद्भावेन जातस्य ह्रस्वत्वस्य निवृत्तिरित्ये-तदयुक्तम् 'भुक्तवन्तम्' इति न्यायविरोधादित्यत आह—जातनिवृत्तेरिति। जातस्य स्त्रीप्रत्य-यस्य निवृत्तेरित्यर्थः।

उपजीव्यविरोधेन—पुंवद्भावस्य प्रवृत्ताविह यदुपजीव्यमिगन्तत्वं तद्विरोधेन।

भावप्रकाशः।

व्यावृत्तिर्वार्त्तिकफलं नान्यदित्यनुपदमेवोक्तं, तच्च पुंवत्पक्षे दुर्वारमेवेति तत्सामर्थ्यात् क्लीबे तस्यानिष्टत्व-वत् पुंवत्पक्षेऽनभिधानात्तदभाव एव वार्त्तिकसूत्रसंमत इति ध्वनयितुं तावत्पर्यन्तधावनम्, एवं च तद्रूपम-युक्तमेव मूलाद्युक्तम्। सर्वनामस्थाने तु पुंवत्त्वाप्राप्त्या न तथाप्रसङ्गः। एवं च लोके नपुंसके वा तृज्वत्वा-भावोनभिधानादिति। अस्य—वार्त्तिकस्य। न्याय्येति। प्रासादार्थमारोपितदीपस्य रथोपकारकत्ववदिति। भावः। उदाहृतेति। साभिप्रायमुदाहृतेत्यर्थः। इतीति। बोध्यमिति पाठः।

स च न्याय इति। एतेनान्यत्र तथा नेति सूचितम्। तेन यत्खण्डनकृता रामायावधिष्ट समाचे-त्यादौ सुप्लुहन्तित्वानादिष्टादचः पूर्वत्वादीनामतिदेशो ऽतएवेत्युक्तं, तदपास्तम्। अत्र दोषाभावस्य प्रपञ्चितत्वात्। एतेन तस्याशास्त्रीयत्वादतिदेशो दुर्लभः। अत एव वयेस्तासाविति संगच्छते इति भाष्यो-क्तिरपि तथेति सूचितम्।

**विकारे चेतीति**। विकारे चेत्यस्येत्यर्थः। खण्डनकृतो मूलाज्ञानं ध्वनयितुमाह—**प्रागिति**। प्रकृते च भाषितपुंस्कत्वमशास्त्रीयम्। ननु पुंवत्त्वेपि न ह्रस्वनिवृत्तिः, जातनिवृत्तेः क्वाप्यदृष्टत्वात्। अत एव "न धातुलोप" इत्यत्रेकपदाननुवृत्तौ नलोपे हतो हथ इत्यादावकारनिवृत्तिमाशङ्क्यान भनिर्वृत्तस्य निवृत्तिः क्रियते शास्त्रेण नतु निवृत्तस्येति भाष्यं संगच्छते। ह्रस्वात्पूर्वं तु तत्त्वं दुर्लभमनिगन्तत्वादत आह—**तेनेति**। पुंवद्भावेनेत्यर्थः। तेन—"ह्रस्वो नपुंसके" इति सूत्रेण। लोपादिवत्प्रक्रियायां तथा स्वीक्रियते, उक्तभाष्यं तु स्वाभाविकपरमिति न तद्विरोध इति भावः। तेनाऽभावातिदेशादुक्तरीत्या वा अतिदेशाद्ध्रस्वनिषेधः क्रियते स च प्रसक्तस्यैव न जातस्येति भाष्यादौ स्पष्टं तन्त्रान्तरसिद्धं युक्तिसिद्धं च। एवं च प्राप्तिकाले अनिग-न्तत्वादप्राप्तिरेव, तन्निष्पत्त्यनन्तरं तु तन्निषेधो दुष्कर इति मान्याद्युक्तजघुभूतसिद्धान्तरीतिर्यद्यपि सुवचा अत एवापिरनास्थासूचकः प्रयुक्तस्तथापि प्रकारान्तरेण दूष्यत्वान्नेदमुक्तं, तदेवाह—**नन्विति**। क्लीबस्य तेन न्यायेन भाषितपुंस्कत्वस्य च सत्त्वेपीगन्तत्वरूपोपजीव्यनाशात्कथं तेन तदभावः? स्वनिमित्ताविघाते अनादिशब्दादौ साफल्येन तद्विघाते अप्रवृत्तेरिति भावः। संनिपातपरिभाषाया मूलमाह—**उपजीव्येति**।

पुंवद्भाव उदाहृतः । तस्मादेजन्तेषु क्लीबेषु पुंवद्भावो माधवमते नास्ति, मतान्तरे त्वस्ति । अतः प्रद्युवा प्ररायां सुनावेत्यादि प्राचोदाहृतमपि नातीव दुष्यति ॥

इत्यजन्ता नपुंसकलिङ्गाः ॥

---

शब्दरत्नम् ।

ह्रस्वानिवृत्तिः । अत एव 'समासस्य' इति सूत्रे भाष्ये 'यतोऽनाव' इत्यनाव इति प्रतिषेधो 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्' इत्यस्य ज्ञापक उक्तः । नाव्यमित्यादौ आदिर्नकारो न स्वरयोरयो यश्चाकारस्तद्धाग्यो नासावादिरित्यनाव इति निषेधो ऽनर्थकः । न चादिरेव नकार उदात्तगुणविशिष्टान्तरतमाज्रूपोऽस्तु, यदन्तस्य द्व्यच्कस्यादिरुदात्तगुणकरूपो भवतीति च 'यतोऽनाव' इत्यस्यार्थ इति वाच्यम् । एवं हि निमित्तभूतद्व्यच्कत्वविनाशादुपजीव्यविरोधेनाद्युदात्ताप्राप्तिरिति तदाशय इति चेन्न । माधवाद्यनुरोधेनास्य ग्रन्थस्य सत्वात् ।

इत्यजन्ता नपुंसकलिङ्गाः ।

---

भैरवी ।

अत एव–उपजीव्यविरोधस्यान्याय्यत्वादेव । अनाव इति प्रतिषेधस्य ज्ञापकत्वमुपपादयति–नाव्यमित्यादावित्यादिना । यत्र यत्रोदात्तादिविधानन्तत्र गुणविधानस्याशक्यत्वात्तत्तद्धर्मविशिष्टधर्मिविधानमेवेत्याशयेनाशङ्क्य निराचष्टे–नचेति । अन्तरतमाज्रूपः–स्थानतो ऽन्तरतमलृकाररूपादेशनिवर्त्यो तु । एवं हि–नकारस्य स्थाने तादृशादेशकल्पने हि । निमित्तभूतेति । "यतोऽनाव." इति सूत्रप्रवृत्तिनिमित्तभूतेत्यर्थः । तदाशयः–उक्तस्यानाव इति प्रतिषेधस्य ज्ञापकत्वप्रतिपादनाशयः । माधवाद्यनुरोधेनेति । अयमाशयः—यदि नुटि कृतेऽप्यात्वन्तदा सन्निपातपरिभाषा नुड्विषये न प्रवर्तते इति वक्तव्यम् । नचैवं सति रमाणामित्यादौ सुपि चेत्येव दीर्घे नामीत्यस्योपन्यासो व्यर्थः स्यादिति वाच्यम्? नित्यत्वेन तदुपन्यासात् । एवञ्च यथा ऽनित्यायास्तस्याः कार्यसम्पत्त्यर्थं प्रवृत्त्यप्रवृत्तिमध्ये आत्वायाप्रवृत्तिकल्पना तथेहापि पुंवद्भावेन जातह्रस्वनिवृत्तये तस्या अप्रवृत्तिकल्पना स्यादिति ॥

इत्यजन्तनपुंसकविवरणम् ।

---

भावप्रकाशः ।

अत एव ग्रामणिकुलमित्यादौ न नुक्, प्रातिपदिकाजन्तत्वमुपजीव्य ह्रस्वप्रवृत्तेः । एतेन तस्या वैयर्थ्यं तत्र जातनिवृत्तेरावश्यकत्वं चेत्यपास्तम् । अत्र साक्षादुपजीव्यस्यैव ग्रहणं, तेन स्त्रियाः पुंवदित्यादौ न दोष इति भावः । अत एवेत्यस्यार्थं कथयन् ज्ञापकोपपादनद्वारा तदाशयमाह—नाव्यमिति । अन्तरतमश्चानुनासिकह्रस्वाकारः, प्राथम्यात् । तत्त्वं च प्रमाणतः । त्यदादीनाम इत्यादिना अन्त्यस्य हलो अजिवेति भावः । सूत्रात्तथा लाभमाह—यदन्तेति । चो ह्यर्थे । एवं हीति । हि—यतः । एवमुक्ताङ्गीकारे सतीत्यर्थः । माधवाद्यनुरोधेनेति । अयंभावः, अत्र सा न प्रवर्त्तते । अन्यथा प्ररीणामित्यादौ दीर्घो न स्यात्, नुड्हेतुसंनिपातस्य दीर्घेण विनाशात् । नामीति तु सुपिचेत्येतं नित्यत्वाद्बाधते । एवं च यथा आत्वं तन्मते भवत्येवं तदनुरोधिना केनचिदुक्तरीत्या पुंवद्भावोऽपि सुवच इति उक्तमिति । एवं च पूर्वापरविरोधात्तस्य यदि तस्या अप्रवृत्तिस्तर्हि पूर्वग्रन्थासंगतिरिति तदंगीकारस्तर्हि आत्वासंगतिरिति सेयमुभयतस्पाशा रज्जुरिति सर्वथा तन्मतमयुक्तमिति भावः ।

इत्यजन्ता नपुंसकलिङ्गाः ॥

# अथ हलन्तपुँल्लिङ्गाः ॥

लिडिति । लिह आस्वादने क्विप् । लिट्सु लिट्त्स्विति । ढस्य जश्त्वेन डः, तस्य "खरि च" इति चर्त्वेन टः, तस्यासिद्धत्वात् "डः सि" इति धुट्, चर्त्वम् तकारः । "न पदान्ताट्टोः" इति ष्टुत्वनिषेधः । 'चयो द्वितीया' इति तु नेह प्रवर्तते, चर्त्वस्यासिद्धत्वात् । एतेन ते च प्रत्याहारा एकचत्वारिंशदिति प्राचो ऽनर्थं व्याचक्षाणैर्यदुक्तं लिट्सु लिठ्स्विति टठाभ्यां रूपद्वयमिति, तत् प्रत्युक्तम् । तथा च प्रातिशाख्येऽपि "ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजम्" इति श्लोकेऽपदान्तेत्यादिविशेषणं सङ्गच्छते ।

---

शब्दरत्नम् ।

## अथ हलन्तपुँल्लिङ्गाः ॥

धुडिति । "डः सि" इतिसूत्रेऽनुवृत्त पदस्येति व्यधिकरणं, पदावयवस्य सस्येत्यर्थ इति भावः । एके द्वितीयमिति । अत्रत्यवार्तिककारा इत्यर्थः । अपदान्तभाजमिति । इदमचर्त्वभाजमित्यर्थोपलक्षकम् । पदान्ते प्रायो जश्त्वप्राप्त्या चर्त्वं विना

भैरवी ।

## अथ हलन्तपुँल्लिङ्गाः ॥

यत्तु "डःसि धुट्" इति सूत्रे सप्तमीनिर्देशसत्त्वेन सादेः पदस्येत्यर्थकल्पनात्कथमत्र धुडिति कस्यचिदुक्तिः, सा नोचिता, विशेषणबोधकस्य सप्तम्यन्तस्य तदादिबोधकत्वं सप्तम्यन्तविशेष्यबोधकसन्निधान एवेति सिद्धान्तादितीह पदस्येति व्यधिकरणमेवेत्याह—डः सीतीति । एके इत्येतदर्थस्यान्यत्वविशिष्टस्याभियुक्तत्वसूचनायाह—अत्रत्येति । अपदान्तभाजमित्यपदान्तशब्दस्य भावप्रधाननिर्देशेन पदान्तत्वपरतया पदान्तत्वरहितमित्यर्थः स्यात्तथा च सुगण्ठ्षष्ठ इत्यस्यासिद्धिरतस्तदर्थमाह—इदमचर्त्वेति ।

भावप्रकाशः ।

ननु धुट् दुर्लभः। डः सीत्यत्र पदस्येत्यनुवृत्त्या सीत्यस्य तद्विशेषणत्वेन सप्तमीनिर्दिष्टत्वेन च यस्मिन्विधिरिति प्रवृत्त्या सादेः पदस्यैव तद्विधानादत आह—डः सीतीति । उभयोः सप्तम्यन्तत्व एव तत्प्रवृत्तिः वलादेरित्यत्रादिग्रहणात् । तथाच व्यधिकरणान्वय एवोचित इति भावः । एकवाक्यतां स्पष्टयति—अत्रत्येति । व्याकरणस्येत्यर्थः । यत्तु खण्डनकृत्-चर्त्वासिद्ध्या 'चयो द्वितीयाः" इत्यप्रवृत्तिरयुक्ता "उदः स्था" इत्यत्रोक्तहेतोरिति; तन्न, तत्रैव समाहितत्वात् । यदपि वार्तिकस्य साधारणत्वात् प्रातिशाख्यस्य चापदान्तमात्रविषयत्वाल्लोकाविषयत्वाच्च कथमुपष्टम्भकता ? अत एव सुगण्ठ् षष्ठः इति भवदाद्युक्तसङ्गतिरिति; तत्खण्डयति—इदमचर्त्वभाजमिति । चर्त्वमात्रसाध्यस्वरूपकभिन्नमित्यर्थः । अत एवाग्रे तथा तदभावः प्रतिपाद्यते । नन्वेकेऽपदान्तभाजमित्यनयोस्तथाऽर्थकरणे मानाभावोऽत आह—

सरला ।

इत्यर्थोपलक्षकमिति । ऊष्मा तत्संज्ञकवर्णः शषसहान्यतम उदयः परो यस्मात्तादृशमपदान्तभाजं पदान्तत्वरहितं स्पर्शं प्रथमं वर्गाद्यवर्णं कचटतपान्यतमम् द्वितीयं खफछठथान्यतममेके वार्तिककारा आहुरिति प्रातिशाख्यार्थः । चर्त्वनिष्पन्नभिन्नस्य वर्गाद्यवर्णस्य स्थाने द्वितीयादेशो भवति शलि परे इति फलितम् । तेन सुगण्ठ् षष्ठः इत्यादौ जश्त्वं प्रति ष्टुत्वस्यासिद्धत्वेन जश्त्वाप्रवृत्त्या चर्त्वं विनैव टकारस्य सत्त्वेन पदान्तत्वेऽपि द्वितीयादेशसिद्धिरिति ।

"दादेर्धातोर्घः" ॥ धातोरित्यावर्त्तते । तत्रैकमतिरिच्यमानमुपदेशकालं

---

शब्दरत्नम् ।

चयोऽलाभात् । तथा चेति वदता मूलकृता अस्यार्थस्य सूचनात् । अत एव सुगणूःषष्ठ इत्यादौ भवत्येव । दुगादीनां जश्त्वं प्रत्यसिद्धत्वेन तदप्राप्त्या चर्त्वस्याप्यभावादिति भावः।

धातोरित्यावर्तते इति । इदं प्राचामनुरोधेन । दादेरित्यावर्तते इति युक्तम् । धातोरित्यनेन हि औपदेशिकस्य धातोरित्यर्थेन दामलिहो व्यावृत्तावपि अधोगिति न संगृह्येत । दादेर्दादेरित्यनेनौपदेशकालिकदादेरित्यर्थकेनोभयं सिध्यति। उपदेशकालमित्यस्य तात्कालिकं

भैरवी ।

धातुपदस्य दादेरिति सूत्रे स्थितस्य धातुप्रकृतिककर्तृक्विबन्तदामलिहादिव्यावृत्त्या तस्य चारितार्थ्येनोपदेश इत्यर्थलाभप्रयोजकत्वन्न स्यादत आह—मूले धातोरित्यावर्तते इति । अयम्भावः, सौत्रन्धातोरिति पदमेकाच इत्युत्तरसूत्रस्य तद्वादशब्दावयवद्वाह इत्यस्यैकाचः सत्त्वेन दस्य धकारवारणायावश्यकमिति प्रकृतसूत्रेऽप्युपकारोऽस्तु तावताप्युपदेशकाल इत्यर्थालाभः स्यादत आवृत्तियुक्तेति। प्राचाम् हरदत्तादीनाम्। प्राचामित्युक्तिबीजम्प्रकटयति-धातोरिति । न सगृह्येतेति । तथा चाव्याप्तिरस्त्येवेति भावः । कालमात्रे लक्षणायामपोष्टासिद्धिरत आह—तात्कालिकमिति । एवञ्चोपदेशकालपदे बहुव्रीहिरिति स्वीकार्यम्। उपदेश-

भावप्रकाशः ।

तथाचेतीति । एतेन-प्रत्युक्तमिति 'प्राङ्ख्षष्ठः' इत्यादिवद् द्वितीयादेशो लौकिकोदाहरणे वक्तुं न शक्यते इति भावः। वैदिकोदाहरणं साध्यते इत्यपि वक्तुमशक्यमित्याह-तथाचेतीति मान्योक्तव्याख्यानमपास्तम्, अक्षरमर्यादातोऽलाभात् सम्भवतीति न्यायाच्च। प्रायःपदकृत्यं वक्तुं पूर्वग्रन्थविरोधमुद्धरति-अत एवेति । इदं सर्वं मूलाशयवर्णनमात्रम्। एतत्तत्त्वमधस्तात्प्रतिपादितम्। तद् ध्वनयन्नाह-इति भाव इति । एतेन सवटीकामनूद्य तत्र स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्ज्महे इतिन्यायेन निर्बीजलक्षणायां गौरवात् पर्जन्यवल्लक्षणप्रवृत्त्या चर्त्वभाक्त्वाच्च। तस्मादयमर्थः—एके पौष्करसाद्यन्ये अपदान्तेति यथाश्रुतमेव। तन्मते ढुगादीनां पदान्तत्वान्न द्वितीयः, पौष्करसादिमते तु साधारणत्वात्स भवत्येव। अत एवैके इत्यरुचिसूचकम्। तथा चेति मूले संमतिस्तु चयः शरि द्वितीये एव नत्वपदान्तत्वे इति मन्दोक्तमपास्तम्, उक्तयुक्तेः पर्जन्यवल्लक्षणप्रवृत्तावपि प्रागुक्तरीत्या दोषाच्च, पौष्करसाद्यन्ये इत्यर्थे मानाभावाच्च, एके इत्यस्य विकल्पबोधकत्वेनारुच्यबोधकत्वाच्च, अपदान्तेत्यादीत्यादिमूलासंगतेश्चेति दिक्।

ननूपदेशे इति परममूले निर्मूलम्। न च धातुपदसामर्थ्यात्तल्लाभः। धातुप्रकृतिककर्तृक्विबन्तान्तदामलिडादिप्रातिपदिकव्यावृत्त्या साफल्यादत आह—धातोरित्येति । प्राचाम्—हरदत्तप्रकाशकृदादीनाम्। युक्तत्वे हेतुमाह—धातोरित्यादि सिध्यतीत्यन्तेन । हि—यतः। अस्याग्रेऽप्यनुवृत्तिः । इत्यर्थेन—इत्यर्थकेन। पूर्वत्र विशेषणम्। एवमग्रेऽपि । न संगृह्येतेति । प्रयोगस्थधातावौपदेशिकत्वं धातुपाठपठितसजातीयत्वं, तच्च यद्यप्यधोगित्यत्रस्थधातौ धुगित्यत्र चाऽस्ति, क्वयजन्तप्रकृतिकक्विबन्ते दामलिडित्यत्र नास्ति तथाप्यडागमेन दादित्वविघातः। तच्च विशेषणं नोपलक्षणं मानाभावात्। नन्वधोगित्यत्र तादृशो धातुर्दुहिति अदुहिति वा? आद्ये दादित्वमप्यस्ति, अन्त्ये औपदेशिकधातुत्ववदौपदेशिकत्वमस्तीति ब्रूषे तर्हि दादित्वमपि तत एव सुवचमिति कथमेतदिति चेत्? न, आद्ये तस्यामवस्थायां सर्वसत्त्वेपि घत्वाप्राप्तेः। अनन्तरं तस्य तयोः सत्त्वेऽपि तेन दादित्वविघातात्तदप्राप्तेश्च अनर्थकत्वेनाक्रियावाचकत्वेन तदा तस्याधातुत्वाच्च। द्वितीये तयोः सत्त्वेपि दादित्वाभावात् अनागमकानां सागमका इतिपक्षे स्थानिवत्सूत्रेणास्यागतार्थत्वशङ्कासमाधानपराकरप्रामाण्यादल्विधावस्या अप्यप्रवृत्तेः। अन्यथा बहूपप्लवापत्तेश्चेति भावः। धातोरित्यावृत्तिमात्रं दुष्टं नत्वग्रिममित्यवशिष्टं मूलं वक्ष्यमाणगौरवदोषनिवारणाय स्वरीत्या योजयति-उपदेशेति ।

लक्षयतीत्याशयेनाह—उपदेश इति । आवृत्तिफलं पृच्छति—उपदेशे किमिति।

शब्दरत्नम् ।

लक्षयतीत्यर्थः । उपदेशे दादेरिति तु फलितोऽर्थः । वाच्यार्थत्वे षष्ठ्यन्तस्य सप्तम्या विपरिणामोऽपि कर्तव्यः स्यादिति गौरवम् । धातोरित्यस्यैव लक्षणया तथार्थकस्य दादेरित्यनेनान्वयेऽपि न क्षतिरित्याशयेन तु मूले धातोरित्युक्तम् । अत एव भाष्ये घत्वस्यासिद्धत्वाद्धुगित्यत्र ढत्वं प्राप्नोतीत्याशङ्क्यापवादत्वेन समाधायाथवा एवं वक्ष्यामि हो ढोऽदादेरिति ततो धातोरिति दादेरिति वर्तते नेति निवृत्तमित्युक्तम् । द्रुहेस्तु 'वा द्रुह' इत्यनेन ढत्वस्यापि विधानात् ध्रुडित्यादौ न दोषः इति तदाशयः । तत्र धातोरिति सूत्रे भाष्यकृत्कृतदादेरित्यनुवृत्तेः फलान्तराभावेन तदुपदेशवद्दादिलक्षकं, सामर्थ्यात् ।

भैरवी ।

कालिकदादित्ववतो धातोरिति सूत्रार्थः । वाच्यार्थत्वे-मूलवाक्यवाच्यार्थपरत्वे । सप्तम्या—तदन्तेन । अपिना आवृत्तिलक्षणयोः समुच्चयः । मूलासङ्गतिमपरहरन्नाह-धातोरित्यस्यैवेति । अत एव-दादिपदस्यैवौपदेशिकदादित्ववत इत्यर्थकत्वादेव । एतेन स्वोक्तव्याख्या भाष्यकारसम्मतेति दर्शयति—अपवादत्वेनेति । दादेरिति विशेषत उपादानेन विधीयमानढत्वन्निरवकाशत्वेन ढत्वबाधकमिति भावः । अथवेति । संहितया सूत्रपाठाभिप्रायेण होढोऽदादेरिति पृथक्करणम् । तथा च दुहधातोर्दादित्वान्न ढत्वप्राप्तियोग्यतेति धुगित्यत्र घत्वमेव भविष्यति । अस्मिन्पक्षे घत्वमुत्सर्गः, ढत्वमदादिधातोर्विहितमपवाद इति घत्वमर्थाद्दादिधातोरेव भविष्यतीति दादिपदं यथाश्रुतार्थकमनर्थकमिति भावः । ततो धातोरितीत्यस्य धातोर्घ इत्यर्थः । नन्वेवन्न्यासे द्रुहधातोः "वा द्रुह" इतिसूत्रविहितघत्वाभावपक्षे ढत्वन्न स्यादत आह—द्रुहेस्त्विति। तत्रोपात्तो वाशब्दस्समुच्चयार्थ इति व्याख्यास्यत इति भावः । तदाशयः—भाष्याशयः । तत्र-अन्त्यपक्षे । फलान्तराभावेन-अदादिव्यावृत्तिरूपफलाभावेन । असिद्धत्वे-

भावप्रकाशः ।

अनेन बहुव्रीहिस्तत्र सूचितः । उपदेशकालिकदादित्ववतो धातोरिति वाच्यार्थ इति भावः । तथासति परममूलासंगतिं निराचष्टे—उपदेशे इति । एवं वृत्तिग्रन्थोऽपि संगत एव । तुना वाच्यार्थत्यागे निर्बीजत्वरूपाऽरुचिर्ध्वनिता । ननु मूलस्य यथाश्रुतार्थत्वेन परमूलोक्तो वाच्यार्थ एवास्त्वत आह—वाच्यार्थत्वे इति । सप्तम्या—तदन्तेन । अपिरावृत्तिलक्षणयोः समुच्चायकः । नन्वेवं परममूले धातोरित्यधिकं उपदेशे इत्यनेनैव दामलिडादिव्यावृत्तिसिद्धेरत आह—धातोरित्येति । एवेन दादिपदव्यावृत्तिः । आवृत्तस्येति भावः । तथार्थकस्य । औपदेशिकत्ववदर्थकस्य, न तु मूलोक्तार्थस्योक्तदोषापत्तेरिति भावः । अपिर्मूलोक्तप्रकारादिसमुच्चायकः । क्षतिः-अन्यतरापरिहाररूपा । मूले-कौमुद्याम् । तुनाऽरुचिः सूचिता-तस्य लक्षणायां मानाभावः, अत्र सूत्रे उत्तरत्र वा चारितार्थ्यात् । किञ्च तथा सत्यपि औपदेशिकत्वस्य धातुत्वे एवान्वयः स्यात् शक्यसम्बन्धग्रहस्य सुकरत्वात्, न दादित्वनिष्ठमौपदेशिकत्वं शक्यसम्बन्धित्वेन प्रसिद्धं, किञ्च साक्षात्सम्बन्ध एव लक्षणानियामकः । अत एव धातोरित्यावृत्तिपक्षे तथैवार्थः स्यादिति सा न युक्तेत्युक्तम्। अथ तात्पर्यानुपपत्त्या प्रकृते तथैव स्वीक्रियते इति चेत्तर्हि दादिपदस्यैव लक्षणा युक्ता भाष्यविरोधोपि । एवं सति तदर्थस्य भाष्यध्वनितत्वमाह—अत एवेति । दादिपदलक्ष्योक्तार्थाङ्गीकारादेवेत्यर्थः । ततो धातोरितीति । धातोर्घ इत्यर्थः । नन्वत्र न्यासे द्रुहेर्ढत्वानापत्तिः, वा द्रुहेत्यनेन तु घत्वस्यैव विधानात्; तथा च भाष्यमयुक्तमेवात आह—द्रुहेस्त्विति । तुर्वैलक्षण्ये । समुच्चयार्थकवाशब्देन ढस्य समुच्चयः । अपिना घत्वसमुच्चयः । अनुवृत्त्या च तल्लाभ इति भावः । तदाशयः—भाष्याशयः । ध्वनितत्वं तत्राद्यपक्षे ध्वनयितुमन्त्यपक्षेऽर्थमाह—तत्रेति । अन्त्यपक्षे इत्यर्थः । फलान्तराभावेनेति । अ-

सरला ।

वाच्यार्थत्वे—उपदेशकालमात्रार्थत्वे । फलान्तराभावेनेति । दादिभिन्ने धातौ घत्वस्यासिद्ध-

शब्दरत्नम् ।

अर्थाधिकारानुरोधाच्च पूर्वत्र निषेध्यसमर्पकेऽप्येवम् । अत एव नामधातुविषये दामलिडित्यादौ ढत्वधत्वाभावौ सिद्धौ। एवं च तदेकवाक्यतयाऽपवादत्वपक्षेऽपि दादिपदस्यापदेशकालिकदादिलक्षकतोचिता । आवृत्त्याश्रयणं तु बालानां स्फुटं तत्प्रतिपत्तय इति बोध्यम् । न चोपदेशे इत्येव कुतो नोक्तम्, गौरवापत्तेः । धातोरिति तु तद्धाडित्यादिव्यावृत्तये उत्त-

भैरवी ।

नादादा तस्याप्रवृत्तिः सिद्धैवेति भावः । तत्–दादिपदम् । नन्वेवमुत्तरसूत्रेऽनुवृत्तिसामर्थ्यात्तल्लाक्षणिकमस्तु पूर्वसूत्रे तु दादिव्यावर्तकत्वेन चरितार्थमिति दामलिडित्यादौ ढत्वन्न प्राप्नोतीत्यत आह—अर्थाधिकारेति । चस्त्वर्थे । एवम्–औपदेशिकदादित्ववल्लक्षकत्व । अत एव–उक्तार्थलाक्षणिकत्वादेव । यद्यप्यन्यत्रोपदेशोद्देशपदविषये सङ्कीर्णता दर्शिता तथाप्यत्र दादिपदसामर्थ्याद्भेदः कल्प्यत इति भावः । एवञ्च– उक्तरीत्येष्टसिद्धौ च । तदेकवाक्यतया–उत्तरपदैकवाक्यतया । उचितेति । द्वयोः पक्षयोः फलैक्य-यौचित्यप्रयोजकत्वम् । नन्वेवमावृत्तिकथनविरोधोऽत आह—आवृत्त्येति । स्फुटप्रतिपत्तये उपदेशे इत्येव वाच्यमिति कस्यचिच्छङ्कां निरस्यति–नचेति । गौरवेति । पदगौरवेत्यर्थः । नन्वेवमुपदेशे दादिर्धातुरेवेति धातोरिति व्यर्थमत आह—धातोरिति त्विति । इत्यादिव्यावृत्तये–इत्यादौ भष्भावलक्ष्यत्वस्य व्यावृ-

भावप्रकाशः ।

दादिव्यावृत्तिरूपफलाभावेनेत्यर्थः । असिद्धत्वेन दादिभिन्नविषये ढत्वस्यैव प्रवृत्तत्वादिति भावः । तत्—अनुवृत्तदादेरिति पदम् । वृत्त्यायैकवाक्यतयेति भावः । नन्वत्र सामर्थ्यात्तथार्थसंभवेपि पूर्वत्र न, दादिव्यावृत्या साफल्यादेवं च दामलिडित्यादौ वक्ष्यमाणवैयधिकरण्यान्वयेऽपि धत्वाभाववत् ढत्वमपि न स्याद्दादेरिति निषेधादत आह—अर्थेति । चस्त्वर्थे । एवं—तल्लक्षकम् । उभयत्र तथार्थकरणफलमाह—अत एवेति । धातुत्वसंपत्तये आह—नामेति । ननैवमपि न दामलिहो व्यावृत्तिः उद्देशोपदेशयोः संकीर्णत्वेनौपदेशिकदादित्वस्य धातुत्वस्य च सत्त्वात् इति वाच्यम् । दादिपदानुवृत्तिसामर्थ्यादत्र तयोर्भेदस्यैवाङ्गीकारादिति भावः । प्रकृतमाह—एवंचेति । तत्र तयोः सिद्धौ चेत्यर्थः । तदेकेति । तत्पक्षैकेत्यर्थः । उचितेति । अन्यथा फलभेदेन पक्षभेदस्यैवासांगत्यापत्तेरिति भावः । नन्वेवं मौलावृत्त्युक्तिरसंगताऽत आह—आवृत्त्येति । इत्येवेति । एवेनावृत्तिलक्षणायनाश्रयणेन ज्ञानलाघवं सूचितं; दामलिडादेस्तूपदेशाभावादेव नेति भावः । गौरवेति । पदगौरवेत्यर्थः । ज्ञानगौरवात्पदगौरवगरीयस्त्वस्य टाङ्खलाति सूत्रभाष्यादौ ध्वनितत्वादिति भावः । ननु एवं धातुपदं व्यर्थमत आह—धातोरितीति । तद्धाडित्यादेर्भष्भावलक्ष्यत्वनिरासायेत्यर्थः । इत्यादौ व्यावृत्तये इति पाठे तु तत्र भष्भावव्यावृत्तये इत्यर्थः। आदिना धुगित्यादिसंग्रहः । द्धाडित्यादेरेकाच्त्वझषन्तत्वाभ्यां तदवयवत्वस्य दैसत्त्वादिति भावः । एतेन दादिग्रहणावृत्त्योक्तार्थलाभे धातुपदं सुत्यजमित्यपास्तम् । समासस्यैकदेशस्थावृत्तेः

सरला ।

स्वाद् ढत्वेन न तत्र घत्ववारणाय सेति भावः । ननु दाद्यवयवभिन्नस्य हस्य ढत्वविधानेन लेढीति लिट् दामनो लिट् दामलिडित्यत्र हस्य दाद्यवयवत्वेन ढत्वानापत्तिरिति चेत् ? न, अर्थाधिकारानुरोधेनौपदेशिकदादिधात्ववयवभिन्नस्य हस्य ढत्वमित्यर्थेनादोषात् ।

परेतु दादेरित्यस्यानुवृत्तेरत्रार्थाधिकारानुरोधाद्दादिधात्ववयवभिन्नस्येत्यर्थसंपादनेन चारितार्थ्यात्ताद्दृशार्थकल्पने प्रमाणाभावः । नचैव क्यजन्तनिष्पन्नदामलिट्शब्दे ढत्वानापत्तिरेति वाच्यम्, इष्टापत्तेः। अत एव भाष्ये 'घोऽदादेरित्युच्यते कथमधोगिति" इति शङ्कायां धातोरवयवो यो दादिरिति वैयधिकरण्येनैव समाधानमुक्तम् । दामलिट्शब्दे घत्ववारणाय तदर्थमत्रार्थं लक्षणाश्रयणे तेनै [illegible] नेर्गे-हे "घोऽदादेरित्युच्यते" इति शङ्काया वैयधिकरण्येन समाधानस्य चासङ्गतिः स्पष्टैव । तस्मात्तादृशार्थे लक्षणाऽप्रामाणिकी । अत एव सूत्रे धातोरिति चरितार्थम् । अन्यथौपदेशिकदादित्ववतो धातुभिन्नस्या-

अव्याप्त्यतिव्याप्तिपरिहारः फलमित्याह—अधोगित्यादिना ।

"एकाचो बशो भष्" । झलीति निवृत्तमिति । यत्तु प्राचोक्तम्—प्रातिप-

---

शब्दरत्नम् ।

त्रावश्यकम् । अव्याप्तीति । अधोगित्यादौ सा । ननु धातोरवयवो यो दादिरित्यर्थे इदं सिद्धं, वैयधिकरण्यं च गर्दभयतेरप्रत्यये गर्धबित्यादौ भष्भावायोत्तरसूत्रे आवश्यकं, दोग्धेति व्यपदेशिवद्भावात्सिद्धम् । स्पष्टं चेदं भाष्येऽत आह—अतिव्याप्तीति । दाम-लिडित्यादौ सा । न च प्रागुक्तभाष्योत्तरमधोक्सिद्धये वैयधिकरण्यान्वयपर्यन्तं भाष्यकृ-तोऽनुधावनं व्यर्थमिति वाच्यम्। दादेरिति वर्तते इत्यस्योक्तमाशयमजानत 'एवमपि घोऽ

भैरवी ।

त्तये । अधोगित्यादावपि नाव्याप्तिरित्याशङ्कते—नन्विति । यदि दादिपदमौपदेशिकदादित्वव-ल्लक्षकन्तदोत्तरभाष्यविरोध इति शङ्कान्निरस्यति—नचेति । प्रागुक्तभाष्येति । घत्वस्यासि-द्धत्वादित्यादि निवृत्तमित्यन्तभाष्येत्यर्थः । व्यर्थमिति । आवश्यकदादिपदलक्षणयैवेष्टसिद्ध्या

भावप्रकाशः ।

क्लिष्टत्वाच्च । एवंच स्पष्टार्थं तदिहैव कृतम् । दामलिडादिप्रातिपदिकानां तूपदेशाभावादेव व्यावृत्तिः । औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणमिति परिभाषा तु तत्रतत्रोपदेशपदकृत्सूत्रविरोधेन "तरप्तमपौ घः" "अत्वसन्तस्य" इत्यादिसूत्रस्थभाष्यविरोधेन चाप्रामाणिकीति स्पष्टमन्यत्र । इत्यर्थे इति । सत्सप्त-मी निमित्तत्वसूचिका । इदम्—अधोगित्यादिरूपम् । ननु स एवार्थो दुर्वचः संभवतीति न्यायविरोधादत आह—वैयधीति । लक्ष्यानुरोधेन तन्न्यायाश्रयणस्य तत्रावश्यकत्वेनार्थाधिकारानुरोधादिहापि तदा-वश्यकम् । अस्यार्थस्य सिद्धान्तत्वं ध्वनयति—स्पष्टमिति । यत्तु खण्डनकृद्रत्नाकरकृदादयः—दामलि-गित्येव रूपं तस्य आवृत्तौ मानाभावात् हरदत्तादीनां भाष्यविरुद्धत्वेनानादरणीयत्वात् । अवयवषष्ठ्या ऽव्याप्तिपरिहारपरभाष्योच्छेदापत्तेश्च । ननूक्तवक्ष्यमाणभाष्ये उपस्थितत्वाद्धस्यैवान्यपदार्थत्वस्योभयत्र लाभेन दात्परस्य हस्य घो भवतीत्यर्थलाभे येन नाव्यवधानन्यायेन दोग्धेत्यादावेव घत्वप्राप्तिर्न दाम-लिडादाविति तत्र भाष्यरीत्या ढत्वं निर्बाधम् । न चादिपदं व्यर्थम् ? इष्टापत्तेः । एवं च कत्यो भाष्य-विरोध इति चेत् ? न, अदादेरित्यत्र बहुव्रीहिघटितनञ्तत्पुरुषोऽयमसमर्थसमास इति कैयटोक्त्या स-मानाधिकरणबहुव्रीहौ दपूर्वहकारस्येत्यर्थलाभेन निर्दिष्टपरिभाषानुपस्थितौ तदपवादभूतयेनानेति न्या-यस्य सुतरामप्राप्तेः । वस्तुतोऽनुवृत्तहापेक्षया धातोरिति षष्ठ्युपस्थापितावयवस्यैवान्यपदार्थत्वं युक्तम् । भाष्योक्तान्यपक्षेऽप्याद्यसूत्रे सामर्थ्याद्ध इत्यनेन हान्तोऽवयव्युपस्थाप्यः, श्रुतत्वेपि ह इत्यस्य दादि-त्वस्य बाधात्तन्न्यायस्य निरस्तत्वात् । एवं च हान्तस्य दादेर्ढत्वं न तादृशस्य धातोरवय-वस्य घत्वमिति भाष्यार्थे पर्यवसन्ने दामलिडिति ढत्वं घत्वाभावो वा कथमिति निरीक्ष्यताम् । ततश्च भाष्यस्थपक्षद्वयैकरूप्यार्थमाद्यपक्षेऽप्युक्तरीत्याऽवयवस्यैवान्यपदार्थत्वं निर्बाधम् । एतेनादिपदं व्यर्थ-मित्यपास्तम् । किं च दात्परस्येति व्याख्याने उत्तरसूत्रस्योभयत्रविभाषात्वं कैयटाद्युक्तं व्याकुप्येत । किं च दर्दं हिनोतीति ददहित् तमाचक्षाणे दात्परस्यापि हस्य सत्त्वेन दधगि-तीष्यते त्वन्मते दधडिति स्यात् । अत एव वृत्तिकृताऽभ्यर्हितं भाष्यपक्षमुपन्यस्य जघन्यावृ-त्तिपक्ष उपन्यस्त इति ; तन्न , आवृत्तेर्मन्दप्रयोजनकत्वस्य तत्रार्थे भाष्यमानकत्वस्य च प्रागुक्तत्वात् तद्भाष्याशयस्य वक्ष्यमाणत्वेन तदनुच्छेदाच्च , तथा कैयटोक्तिद्वयस्याप्यभावाच्च दस्य हानवयवत्वेन बहुव्रीहिणा तथार्थस्य दुर्वचत्वाच्च । अन्यथा तव वस्तुतस्त्विति मतविरोधापत्तेश्च दधडित्यस्य दामलि-ट्समकक्षत्वेनानुपन्यसनीयत्वाच्च । तद् ध्वनयन्नाह—न च प्रागुक्तेति । घत्वस्यासिद्धत्वादित्यादिनि-वृत्तमित्यन्तेत्यर्थः । व्यर्थमिति । अतिव्याप्तिवारणायावश्यकदादिपदलक्षणयैव निर्वाहात् । तथा च शङ्काया एवानुदयेन समाधिः सुतरामयुक्त इति भावः । अजानत इत्यस्य शङ्कायामित्यत्रान्वयः । नन्वेवं

शब्दरत्नम् ।

दादेरित्युच्यते । तत्राधोक् न सिध्यति' इति शङ्कायामुत्तरसूत्रार्थमपि प्रसङ्गान्निर्णेतुं दादिपदलक्षणायामधोगित्यस्यासाधारणफलत्वाभावं दर्शयितुं च तथोक्तेः । अत एवाग्रे वैयधिकरण्यस्योत्तरार्थमावश्यकत्वोक्त्येहार्थमनावश्यकत्वं भाष्ये ध्वनितं सङ्गच्छत इत्यलम् ।

भैरवी ।

तद् व्यर्थमिति भावः । तथोक्तेरिति । वैयधिकरण्येनान्वयोक्तेरित्यर्थः । अत एव-पूर्वसूत्रे सामानाधिकरण्येनोक्तरीत्या ससम्बन्धेऽपीष्टसिद्धेरेव ।

भावप्रकाशः ।

शङ्कायोजनेप्युत्तरे तदेव वाच्यमावश्यकत्वादत आह—**उत्तरेति** । एकाचो बश इत्यर्थः । ननु लेशतोप्येतदर्थकत्वाभावे तन्निर्णयस्यात्रानुपयोगोऽप्यसङ्गतिश्च ग्रन्थयोरत आह—**दादिपदेति** । **लक्षणायाम्**—अङ्गीक्रियमाणायामिति शेषः। दर्शयितुं चेति पाठः । च दर्शयितुमिति पाठे चो भिन्नक्रमः । **तथोक्तेरिति** । तदुपेक्ष्य वैयधिकरण्योक्तेरित्यर्थः । तथा च न भाष्यविरोध इति तेषामुक्तिरयुक्तैवेति भावः । ननु तथोक्त्याऽधोगित्यत्र लक्षणासाधारणफलत्वाभावे बोधितेऽपि तदग्रे दामलिडर्थं लक्षणाया आवश्यकत्वं त इति तथापीदं सिध्यतीति दादेरिति वर्ततइति ग्रन्थाशयस्तत्र तत्साधारणफलत्वं स्पष्टयितुं कुतो न प्रकाशितो यद्यभिमतो भवेदत आह—**अत एवेति** । साधारणफलत्वसत्त्वादेवेत्यर्थः । उक्त्येत्यस्य ध्वनितमित्यत्रान्वयः । **अनावश्येति** । लक्षणयैव निर्वाहात । अन्यथाऽधोगित्यादौ घत्वप्रवृत्तिरूपफलान्तरसिद्धयेऽत्रैव सूत्रे तस्यावश्यकत्वेनोत्तरत्र तदावश्यकत्वप्रतिपादनस्य निर्बीजतापत्तिस्तथा च तेनापि दादेरित्यस्योक्तार्थकत्वं सूचितमिति तथाशयः प्रकाशितप्राय इति भावः । **इत्यलमिति** । तदर्थस्तु दादेरिति वर्तत इति भाष्यस्य नोक्ताशयः । अग्रिमग्रन्थानां दुर्योजत्वापत्तेः । किन्तु इत्थम्—असिद्धत्वेनाशङ्कयापवादत्वेन समाधायाथवेत्याद्युक्तं भाष्ये । तयोः पक्षयोरयं भेदः—पूर्वमसिद्धत्वमूरीकृत्यापवादत्वेन समाहितं मूलभूतासिद्धत्वादेरभावः प्रतिपाद्यते । अनेन दादेरिति वर्तत इत्यादिव्यवच्छेदः । तथाहि—हो ढोदादेरित्युक्तिमात्रेण अपवादत्वान्यनिषेधप्रकारेण शङ्कासमाधानेऽप्यसिद्धत्वं निषेधद्वारा विपरीतमपवादकल्पकत्वं च पर्यवसितं न निरस्तमिति स्वीकृतमेव नामधातुदामलिडाद्यर्थमाद्यमावश्यकं चेति न पूर्वोक्तसमाधितो वैलक्षण्यमत उत्तरसूत्रे दादेरित्यनुवृत्तिः कृता । तथा च भिन्नविषयत्वान्नापवादत्वं न वा तत्कल्पकत्वं नाप्यसिद्धत्वमिति ततो वैलक्षण्यं स्फुटमेव । यद्वोक्तशङ्कायास्तथोक्तिमात्रेण समाधानेऽप्यग्रे यथान्यासीय एवार्थो नार्थान्तरमिदानीमिति स्पष्टं बोधनाय दादेरिति वर्तते नेति निवृत्तमित्युक्तम् । यद्वा पूर्वसूत्रेऽदादेरित्यत्र बहुव्रीहिरुत नञ्समासात् षष्ठी उत कर्मधारय उत नञ्समासात्पञ्चमी ? आद्येऽपि किं व्यधिकरणो बहुव्रीहिरुत समानाधिकरणः ? तत्र नाप्याद्यः गमकाभावात् आदिपदस्यावयववाचित्वेन प्रसिद्धत्वाच्च । आद्यान्त्ये दादेरिति कस्य विशेषणं, न धातोस्तस्यासत्त्वान्न पदस्य झल्घटितवाक्ये तदसम्बन्धात् दुहादेर्धातोरनुकरणे अभेदविवक्षायां धुङ्भवतीत्यापत्तेश्च, सकृच्छ्रुतस्यान्तपदेन कल्पसम्बन्धत्वाच्च आवृत्तौ मानाभावाच्च । नापि हस्य, दस्य हानवयवत्वात् आदिपदस्यावयववाचित्वात् । तथा च कर्मधारये आदिभूतदात्परस्य हस्य ढत्वं नेत्यर्थः पर्यवसितः । एवं हि दोग्धा धुगित्यादीष्टसिद्धावपि उक्तन्यायेन दन्दग्धि दन्धुगित्यादीनामसिद्धिः अधोगित्यादौ ढत्वापत्तिश्च । न चैवमादिपदं व्यर्थं, दन्दग्धि अधोगित्यादावनिष्टकरणेन साफल्यात् दधडित्यादीष्टसाधनेन साफल्याच्च । अतो भगवता पूर्वसूत्रेऽपि बहुव्रीहिणा धातोरेव विशेषणमिदमिति सूचयितुं तथोक्तम् । यद्वा अदादेरिति लाघवात्पर्युदासे आदिभूतदभिन्नात्तत्सदृशात्परस्य हस्य ढत्वमित्यर्थे दाग्धेत्यादीनां सर्वेषामसिद्ध्यापत्तिः । न चोत्तरसूत्रानर्थक्यं, तथाहि सति विकल्पापत्तिरतः प्रसज्यप्रतिषेधः सः न पर्युदास इति सूचयितुं तथो-

सरला ।

प्रसिद्ध्या तद्वैयर्थ्यं स्पष्टमेवेत्याहुः । **अलमिति** । अलमर्थस्तु "दादेर्धातोर्घः" इत्यनेन गकार एव जश्त्वाप्रवृत्तिलाघवानुरोधेन विधेय इति तु न शङ्कनीय, गत्वे झषन्तत्वाभावेन भष्भावानापत्तेरिति बोध्यः ।

दिक्संज्ञस्य तु झलि परतः पदान्ते चेति। तत्प्रामादिकमेव, अधोक् अधोग् अजर्घा इत्याद्यसिद्ध्यापत्तेः प्रातिपदिकग्रहणस्याप्रकृतत्वाच्च, तत्र झलो निमि-

शब्दरत्नम्।

तत्प्रामादिकमिति। धुग्भ्यामित्यादेः पदान्तत्वादेव सिद्धेरिति भावः।

भैरवी।

यन्नवदीयव्याख्यानफलं तदन्यथासिद्धमित्याह—धुग्भ्यामिति। खण्डनकृदुक्तिन्निरस्यति-

भावप्रकाशः।

क्तम्। तथाहि दादिना नञोऽसम्बन्धात्केवलस्यानुवृत्तिः सुगमेति तदाकूतम्। यद्वा अदादेरितिच्छेदे तस्यैवात्राग्रेऽनुवृत्त्या ढत्वघत्वयोस्तुल्यविषयकत्वेन विकल्पापत्तिरतो भगवता तथोक्तमिति। नचैवमेवाशयकल्पने किं विनिगमकमिति वाच्यम्। अग्रे बहुषु ग्रन्थेषु दुर्योजनापेक्षयाऽत्र एकत्रैव तथाशयकल्पने लाघवात्। एवञ्च भिन्नविषयतादिप्रतिपादकमिदमिति न तथार्थो लक्षणया भाष्याभिमतः। तथा च दामलिडादिप्रातिपदिकानामनभिधानमेव भाष्याभिमतम्। अन्यथाऽऽद्यपक्षे नामधातुप्रातिपदिकभेदेन दामलिंक् दामलिडिति रूपद्वयस्य ण्यन्ताण्यन्तभेदेन तक् तडित्यादि रूपद्वयस्येव प्राप्त्याऽन्त्यपक्षे नामधातावमिलिगितिवत् प्रातिपदिकस्यापि अदादेरिति निषेधाड्ढत्वाभावात् जश्त्वेन तथैवेति फलभेदापत्तेः। एतदर्थमेवाथर्वेति पक्षोक्तिः। किं चान्यत्रोत्तरार्थत्वस्यावश्यकत्वोक्त्या सर्वथा तदावश्यकत्वस्य बहुषु स्थलेषु दृष्टत्वेनेहानावश्यकत्वकल्पनमयुक्तम्। किं च तथाभिमतत्वे वदेत्तथा भाष्यकृत्, यतो नोक्तमतो नाभिमतम्। किं चाधोक्सिद्धये वैयधिकरण्यमेवोक्त्वा तस्येहावश्यकतां ध्वनयितुं न तस्येहैवावश्यकत्वमपि तूत्तरत्रापीत्याह। सा चावश्यमवयवयोगा षष्ठी विज्ञेयोत्तरार्थेति। सा षष्ठी अवयवयोगाऽवश्यमुत्तरार्था च विज्ञेया। चात् इहार्थेत्यर्थः, तत्रेह फलस्योक्तत्वात्। तत्राह—किं प्रयोजनमिति। उत्तरयति—एकाच इति। इहापि यथा स्यात्—गर्द्धबिति। एवमुभयत्रावश्यकत्वे उक्ते अत एव प्रकृते पुनः शङ्कते—यदि तथा षष्ठी दोग्धेत्यादौ न प्राप्नोतीति। समाधत्ते—एषोपीति। यद्युक्तग्रन्थात्तथाभिमतं भवेत्तर्हि यद्यवयवयोगेत्यादि ग्रन्थासङ्गतिरेव स्यात्। शङ्काया अज्ञानतो योजनेऽपि सिद्धान्ते तथाशयस्य प्रकाश्यत्वेनेषोपीत्याद्यसङ्गतिरेव। तथाच भाष्यस्योक्त एवार्थो न भवदुक्त इति दादेरित्यनुवृत्तेस्तथाशयकल्पने तदसङ्गतिरेवेति मदुक्ताशयकल्पनैवोचिता। अत्रार्थे धातुपदमपि लिङ्गम्। अन्यथा भवल्लक्षितार्थेनैवाधातुव्यावृत्तिसिद्ध्या तदानर्थक्यापत्तिः। उत्तरार्थत्वेऽपीह किञ्चित्करमिति न्यायेनेह करणस्य सफलत्वौचित्येनेह तदभावात्। एवं च मूलपरममूलवृत्तिहरदत्तप्रकाशखण्डनकृद्रत्नाकरदण्ड्यादयश्च चिन्त्या एव। उद्योतशेखरादयस्तु प्रागनुरोधिमान्यानुरोधेन। एतेन यन्मन्देनोक्तं मूलोक्तार्थो भाष्यानुक्तत्वान्निर्मूलः प्रत्युत तदनभिमतश्च उक्तभाष्यविरोधात्। न च भाष्ये आद्ये सिद्धान्ते अव्याप्त्यतिव्याप्तिशङ्का न कृता द्वितीयेऽव्याप्तिमात्रमाशङ्क्य तथा समाहितम्। एवं चोभयत्रादोषाय तदावश्यकमिति तस्य तदभिमतत्वमिति वाच्यम्। व्यधिकरणत्वेनैव सर्वसामञ्जस्यात्। तथाहि—दामलिडादौ धातोरवयवो दादिर्दामिति, न तदीयो ह इति नातिव्याप्तिः, अधोगित्यत्र धात्ववयवो दोहिति तदीयो ह इति नाव्याप्तिरित्येवं मदुक्तभाष्ययोजने आद्यपक्षेऽपि तयोर्निरासः। नव्योक्तौ तु न, अज्ञानतः शङ्केति वैयधिकरण्यस्योत्तरार्थत्वमेवेति च क्लेशो नात्र मते इति, तदपास्तम्, तदाशयस्योक्तत्वात्। दामलिडादौ वारणप्रकारेण धुगित्यत्रापि तदभावापत्तेश्च तत्रापि दु इत्यस्यैव ग्रहणसम्भवात् वैषम्ये बीजाभावाच्च, अर्थवत्परिभाषाया वर्णग्रहणेऽप्रवृत्तेश्च, एवमपि व्यपदेशिवद्भावेन दुर्वारत्वाच्च, दादेरिति वर्तत इति भाष्यस्यायोजनेन मदुक्तेरस्य साहसिकत्वाच्च, नव्योक्तौ पक्षद्वयेऽप्यदोषेण तथोक्तेरान्ध्यप्रणीतत्वाच्च, परमार्थतो भाष्यनव्याशयवर्णनद्वारा दामलिडादीनामनभिधानस्योक्तत्वेन दोषलेशस्याप्यभावाच्चेत्यलम्।

**निवृत्तमितीति।** प्रतीकपाठः। तत्प्रामादिकमितीत्यपाठः, मूलेन पौनरुक्त्यापत्तेः। यद्वा प्रामादिकत्वे मूलोक्तदोषाणां मध्ये इदमेव निकृष्टं दूषणमिति ध्वनयन् तथाप्रतीकं धृत्वा तथा व्याख्यातम्।

त्तत्वानुपयोगाच्च । धुग्भ्यां धुक्षु इत्यादौ पदान्त इत्येव सिद्धेः । यदपि तत्पौत्रेण व्याख्यातम्–झलि परे प्रातिपदिकसंज्ञस्यैवेत्यादि; तदपि निर्मूलं निष्फलं चेत्युपेक्ष्यम् । भष्भाव इति । जश्त्वचर्त्वयोरसिद्धत्वात्ताभ्यां प्रागेवेति भावः । षत्वचर्त्वे इति । चर्त्वस्यासिद्धत्वात् पूर्व षत्वं, ततश्चर्त्वमिति भावः ।

"वा द्रुह" । द्रुहेर्दादित्वात् नित्यं प्राप्तेऽन्येषामप्राप्ते उभयत्र विभाषेयम् । ननु द्रुहादयो दिवादिषु अनेनैव क्रमेण पठचन्ते, तत्र वा द्रुहादीनामित्येवास्तु, दिवाद्यन्तर्गणस्य पुषादेरन्तर्गणो रधादिः, तदन्तर्गणो द्रुहादिरस्तु । मैवम् । तथा हि सति यङ्लुकि न स्यात्, 'निर्दिष्टं यद्गणेन च' इति निषेधात् । दोध्रक्, दोध्रुट् ।

शब्दरत्नम्

उपेक्ष्यमिति । एतेन 'एकाचो बश'इति सूत्रे 'ह्रस्वादङ्गात्' इत्यतोऽङ्गादित्यनुवर्तते, अङ्गं च द्विविधं धातुरूपं प्रातिपदिकरूपं च । तत्र धातोः पदान्त एव, प्रातिपदिकस्य झलि पदान्ते चेति प्राचामाशय इत्यपास्तम् । स्वरितत्वकल्पनविभक्तिविपरिणामादीनां निर्मूलत्वान्निष्फलत्वाच्च, तद्धाट् तद्धाड्भ्यामित्यादावतिव्याप्तेश्चेति दिक् ।

निषेधादिति । भष्भावस्तु एकाज्ग्रहणेऽपि अजर्घा इति भाष्योदाहरणेन निषेधाऽनित्यत्वाद्भवतीति भावः । श्तिपाशपेति भाष्यानुक्तत्वादप्रमाणं, वैचित्र्याय तु तथा

भैरवी ।

—एतेनेति । निष्फलत्वकथनेन । वस्तुतः स्वरितत्वाभावादाह—कल्पनेति ।

ननु यदि श्तिपाशपेत्याश्रीयते, तर्हि भष्भावोऽपि न स्यादत आह—भष्भावस्त्विति । स्वसिद्धान्तरीत्याह—श्तिपाशपेति । वैचित्र्यायेति । लघुना शब्देनेष्टार्थस्य लाभेऽपि क्वचित्

भावप्रकाश ।

मूले—तत्पौत्रेण–प्रक्रियाकृत्पौत्रेण प्रसादकृता । खण्डनकृदुक्तयुक्तिं खण्डयति—एतेनेति । अनुवृत्तं च षष्ठ्या विपरिणम्यते इत्यपि बोध्यम् । पदान्त एवेति । एवेन झलो निरासो न तु स्ध्वोरिति बोध्यम् । सञ्ज्ञस्य त्विति पाठः । एतेनेत्यस्यार्थमाह—स्वरितत्वेति । वस्तुतस्तस्याभावादाह–कल्पनेति । आदिनाऽन्वयवैषम्यवाक्यभेदनियमपरिग्रहः । अत एव बहुवचनम् । नन्वेवमपि सम्भवमात्रेणैतदुक्तमिति प्रकाशोक्तयुक्त्या सोऽपि ग्रन्थः सुयोज एवात आह--तद्धाडिति । धातोरित्यस्य तत्राऽसम्बन्धादिति भावः । अनेनात्र धात्वनुवृत्त्या वैयधिकरण्यान्वये न फलं, श्रुतेनैव निर्वाहादिति भ्रान्तोक्तमपास्तम् । दिगिति । तदर्थस्तु धातोस्तस्य भष् स्यात् झलि सकारे ध्वशब्दे पदान्ते च; प्रातिपदिकसंज्ञस्य तु तस्य धातोः यत्र प्रातिपदिकत्वे सति धातुत्वं तत्र पदान्ते । तुश्चार्थे । तेन पदान्ते प्रातिपदिकसंज्ञस्य चशब्दात् केवलस्यापि धातोः । झलीति तु पदान्त इत्यस्यानुवृत्त्यर्थं दर्शितम् । अन्यथा तत्सम्बद्धस्य तस्याप्यननुवृत्त्यापत्तिः । तच्चोपरञ्जकं स्ध्वोर्विशेषणं न स्वतन्त्रमिति । यद्यपि प्रकाशोक्तरीत्या नातिव्याप्तिस्तथापि निर्मूलत्वनिष्फलत्वे स्त एव । न च तद्धाडिति ग्रन्थावतरणेन तयोरप्युद्धारः कृत एवेति वाच्यम् । अन्वयवैषम्यादेः प्राचोक्तस्य मूलानुदितस्य प्रकाशोक्तयुक्त्या उद्धारेऽपि तदाशयप्रदर्शकखण्डनकृदुक्तस्य वस्तुतोऽसत्त्वेन कल्प्यस्वरितत्वादेरनुद्धार एवेति ।

नन्वेवं भष्भावोऽपि न स्यादत आह—भषिति । भाष्योदेति । "लण्" सूत्रे इति भावः । अनित्यत्वात्—तत्कल्पनात् । अनुक्तत्वादिति । तदध्वनितत्वाच्चेत्यपि बोध्यम् । एतेनानुक्तत्वस्योभयत्र तुल्यत्वे दादेरित्यत्रोपदेशो इति स्वीकारः परिभाषायास्तु त्याग इत्यत्र बीजाभाव इति मन्दोक्तमपास्तम् । वस्तुतस्तस्याप्यनाश्रयणाच्च । वैचित्र्याय-अदृष्टाय । तथा-"वा द्रुहादीनाम्" इति सूत्रमित्यर्थः ।

सरला ।

इत्यादाविति । 'तद्धाट्' इत्यत्र भष्भावेन धत्वेऽपि पुनर्जश्त्वेन रूपसिद्धिरिति आदिग्रहणम् । तेन

"इग्यणः" ॥ यणः स्थाने इति । विधिप्रदेशेषु सूत्रशाटकवद्भाविसंज्ञाश्रयणमिति भावः ।

शब्दरत्नम् ।

नोक्तमित्यन्ये ।

**सूत्रशाटकवदिति** । अस्य सूत्रस्य शाटकं वयेत्यादौ 'यदि वातव्यो न शाटको यदि शाटको न वातव्यः' इति विरोधमाशङ्क्य 'मन्ये स वातव्यो यस्योतस्य शाटक इत्येषा संज्ञा भवति' इति भाष्ये उक्तम् । तथा प्रकृतेऽपि यणः स्थाने स भवति यस्य सम्प्रसारणशब्देन जातस्य सम्प्रसारणसञ्ज्ञा भवतीत्यर्थं इति भावः । तेन दिव उतो न सम्प्रसारणत्वम् ।

भरवी ।

स्पष्टप्रतिपत्तये गुरुभूतशब्दोच्चारणमपि साध्वित्येव वैचित्र्यमिति भावः। तथा-मूलोक्तरीत्या। न्यायस्य स्वरूपन्दर्शयति—अस्येत्यादिना । तेन—सम्प्रसारणशब्देन जातस्येति

भावप्रकाशः ।

न्यायस्वरूपं प्रदर्श्यात्र योजयति—**अस्येत्यादिना** । **भाष्ये**—प्रकृतसूत्रे । **तथा**—तेन प्रकारेण । **प्रकृतेपि**—"इग्यणः" इति संज्ञासूत्रेऽपि। अस्य चेत्यर्थ इत्यत्रान्वयः। वर्णसंज्ञापक्षे विधावदोषायेति शेषः। नन्वेवमदुद्वितरामित्यादौ लस्योत्तमैकवचनेटः सम्प्रसारणत्वापत्त्या "हलः" इति दीर्घापत्तिः? इष्टापत्तिस्तु न, वाक्यार्थः संज्ञीति भाष्योक्तपक्षान्तरे दौर्लभ्यात् । न च यथासंख्यसम्बन्धाददोषः, ऋलृक्सूत्रे लृकारोपदेशः किमर्थं इत्यादिभाष्यविरोधात्। किं चाक्षद्युश्चा आवरुणश्चाक्षद्व्यरुण इत्यादौ पूर्वरूपापत्तिः। समानाङ्गग्रहणं तु प्रत्याख्यातमेव भाष्य इति स्पष्टमन्यत्रात आह—**सम्प्रसारणशब्देन जातस्येति** । अयं भावः, प्रदेशेषु यण इगित्येव सिद्धे संज्ञाविधानसामर्थ्येन तन्त्राद्याश्रयणेन तद्भाविपक्षाश्रयणम् । अत्रपक्षे पक्षान्तरेऽनुवादे "संप्रसारणस्य" इत्यादौ सम्प्रसारणजातस्य सम्प्रसारणग्रहणेन ग्रहणमित्युक्तं भाष्ये इति तदेकवाक्यत्वौचित्यात् । अत एव पक्षयोः समफलता । अत्र पक्षे तत्र स्थले दोषपरिहारौ च नोक्तौ भाष्ये इति । फलान्तरमाह—**तेन दिव उत इति** । तस्यापीत्यर्थः । तथात्वे तु दीर्घः स्यात् । न च तपरत्वसामर्थ्यान्न दीर्घ इति कैयटप्रकाशकौस्तुभरत्नाकरदण्ड्याद्युक्तं युक्तम् । तस्य 'भाव्यमानोऽप्युकार' इति परिभाषाज्ञापकत्वस्य "तिस्वरितम्" इत्यत्र भाष्ये उक्तत्वात् दीर्घस्य बहिरङ्गतया तेन व्यावृत्तेरशक्यत्वाच्च । अत एव "ॠत इत्" इति तपरत्वेन सामर्थ्यादसिद्धत्वं बाधित्वा चिकीर्षतीत्यादौ "हलि च" इति दीर्घस्य न व्यावृत्तिस्तन्निमित्तदीर्घस्तु जुगूर्षतीत्यादौ सफलः 'द्व्यूचः' इत्यादौ "चौ" इति दीर्घसिद्धिश्चेति भावः। एतेन "इको गुण" इत्यत्रैवात्र तथाश्रयणे मानाभावः। तन्त्राद्याश्रयणे गौरवात् तपरत्वेन दिवउतस्तत्त्वेऽदोषाच्च, भाष्यविरोधाच्च । तत्र हि पक्षद्वयेऽन्यत्र दोषपरिहारः कृतो न भवदुक्तमुक्तम् । भवतां भ्रमे बीजं तु पक्षान्तरीयप्रागुक्तभाष्यं, न हि तद्विधायके येन भवदुक्तं सङ्गच्छेतेति मन्दोक्तमपास्तम् । प्रागुक्ततदाद्याग्रहणेन तवैव भ्रान्ततमत्वात् । सम्प्रसारणमात्रेणाफलितत्वेऽपि प्रकाशोक्तं तदाह—**सम्प्रेति** ।

सरला ।

यद्वाडित्यस्य संग्रहः । यदुम् अह्वोतीति विग्रहः । अत्र पदान्ते दकारस्याभावाद्भष्भावोत्तरं न जश्त्वप्रवृत्तिरिति बोध्यम् ।

**संप्रसारणशब्देन जातस्येति** । प्रयोज्यत्वं तृतीयार्थः । नचैवं विधिप्रदेशेषु "वसोः सम्प्रसारणम्" इत्यादिषु वाक्यार्थबोधात्पूर्वं सम्प्रसारणशब्दजातत्वज्ञानाभावात्तद्वाक्यार्थज्ञानाधीनं सम्प्रसारणशब्दजातत्वज्ञानं, तज्ज्ञाने जाते च सम्प्रसारणम् इति पदार्थज्ञानं, ततश्च वाक्यार्थज्ञानमिति अन्योन्याश्रय इति वाच्यम् । संप्रसारणशब्दप्रयोज्यत्वस्योपलक्षणत्वेनादोषात् संप्रसारणपदप्रयोज्ये यणस्थानिकेत्वावच्छिन्ने च खण्डशः शक्तिस्वीकारेण विधेयस्थले संप्रसारणपदप्रयोज्यत्वस्य मोषस्वीकारेणादोषाच्च।

**न संप्रसारणत्वमिति** । तेन 'द्युभ्याम्' इत्यत्र न "हलः" इत्यनेन दीर्घः । तत्रानुवादस्थले उभयोरंशयोरुपस्थितया उकारस्य संप्रसारणपदप्रयोज्यत्वाभावात् । विस्तरस्तु शेखरटिप्पणे द्रष्टव्यः ।

"वाह ऊठ्"॥ "वसोः सम्प्रसारणम्" इत्यतोऽनुवृत्तं सम्प्रसारणमूठो विशेषणम्। तेन "अलोऽन्त्यस्य" इति न। यत्तु प्राचा वाशब्दस्येत्युक्तम्। नासौ सूत्रार्थः, किन्तु कथंचित्फलितार्थकथनपरतया नेयम्। छन्दस्येवेति। "छन्दसि सहः" "वहश्च" इति सूत्रे छन्दसीत्यनुवृत्तेरिति भावः। यत्तु ऊठि कृते सवर्णदीर्घः भूहः, भूहेत्यादि प्राचोक्तं, तद्भाष्यविरुद्धम्। तथा हि। ऊठ्ग्रहणं मास्तु। सम्प्रसारणमेव विधीयताम्। तस्य लघूपधगुणे कृते "वृद्धिरेचि" इति वृद्धौ सिद्धं विश्वौह इत्यादि। एवं स्थिते क्रियमाणं बहिरङ्गपरिभाषां ज्ञापयति। सत्यां हि तस्यां बहिरङ्गस्य सम्प्रसारणस्याऽसिद्धत्वादन्तरङ्गो गुणो न स्यादिति भाष्ये स्थितम्। नन्वनकारान्तेऽकारान्तोपसर्गे चोपपदे रूपे विशेषः स्यादिति चेत्? मैवम्, भाष्यकारोक्तज्ञापकबलेनैव तादृशस्थले ण्विप्रत्ययाभावस्यानुमानादिति कैयटहरदत्तादयः। एतेन वार्यूहः प्रौह इत्यादिप्रयोगा अपि परास्ताः। अथवा ऊहतेः क्विप् इत्यवधेयम्।

शब्दरत्नम्।

**फलितार्थेति**। सम्प्रसारणपूर्वत्वाभ्यां फलितेत्यर्थः। **ऊठि कृते इति**। भूवादृशब्दे इति शेषः। **क्रियमाणमिति**। ऊठ्ग्रहणमित्यर्थः। **तादृशस्थले इति**। भत्वविषये इत्यर्थः। भूवाडित्यादि तु भवत्येव। **ऊहतेरिति**। एतद्वार्यूह इत्येतद्विषयम्॥

भैरवी।

व्याख्यानेन।

ननु परममूलोक्तोदाहरणे ऊठि कृते न सवर्णदीर्घस्य प्राप्तिरत आह—भूवाडिति। अनकारान्तोपपद इत्यर्थभ्रमवारणाय—भत्वेति। एतेन सर्वत्र तदभाव इति कस्यचिदुक्तिः प्रत्युक्ता, यावता विना ऽनुपपत्तिस्तावत एव ज्ञाप्यत्वात्। मूले-अथवा ऊहतेरिति। एतच्च समाधानं वार्यूह इत्येतद्विषयम्। नच प्रौह इत्यत्राप्यस्त्विति वाच्यम्? अस्याऽकारान्तस्योहशब्दस्याऽकृदन्तत्वात् 'प्रादूहोढो' इत्यत्रोढसाहचर्येण कृदन्तस्यैव ग्रहणात्। अर्थवत एव तत्र ग्रहणाच्च। अस्यानर्थक्यन्तु स्पष्टमेवात आह—एतदिति।

ननु स्रंसुध्वंस्वोरपि विचि हल्ङ्यादिलोपसंयोगान्तलोपयोः कृतयोः सकारान्तत्वाभा-

भावप्रकाशः।

यद्यपि विश्वौह इत्यादौ दीर्घस्याऽविषय इति न तद्विषयोऽयं ग्रन्थः। भूह इत्यादेरग्रे स्पष्टमुक्तत्वाच्च। यद्यग्रिम ऊहतेस्तत्र्यूठि कृते इत्यस्यासङ्गतिरेवेति भूवाट्शब्दविषयक एवायं ग्रन्थस्तथापि तत्राऽन्वयभ्रमस्य स्पष्टं वारणायाह-**भूवाडिति**। सम्प्रसारणाग्रहणायाह—**ऊठिति**। अनकारान्तोपपदे इत्यर्थाभावायाह—**भत्वेति**। तस्य फलमाह--**भूवाडिति**। अत एव प्रकाशकृता सुटि रूपाणि संलिख्य शसादौ दीर्घमुक्त्वा एतत्परमतेनोदाहृतमुक्तभाष्यकैयटहरदत्तादिविरोधात्। तथा च कातन्त्रविस्तरे 'वाहेर्वाशब्दस्य औः अनवर्णाद् ऊः। एतेन वार्यूहः शाल्यूह इत्यादयो व्याख्याताः' इत्युक्तम्। एतेन सर्वत्र तदभाव इति रत्नाकरोक्तमपास्तम्। ननु अथवेति पक्षे प्रौह इत्यस्य न सिद्धिः वृद्धेर्दुर्लभत्वात्। न च 'प्रादूह' इति सा। ऊढादिसाहचर्येण कृदन्तोहशब्दस्यैव तत्र ग्रहणात्। ऊहेत्यकारान्तस्याऽऽनर्थक्याच्चेत्यत आह-**एतदिति**। धातूनामनेकार्थत्वान्नार्थासङ्गतिः। एवं तु भूह इत्याद्यपि साध्वेव। परन्तु न वहतेरिति तत्त्वम्। अत्रत्यं तत्त्वमन्यतोऽनुसन्धेयम्। एवं च खण्डनकृदुक्तेर्नावसरः।

यत्तु रत्नाकरकृत्--वृत्तिप्रकाशमनोरमादयश्चिन्त्याः। तयोर्विचि सुपि संयोगान्तलोपे व्यभिचारसम्भवात्, तस्मादनुबन्धनिर्देशान्न तद्विशेषणम्। तेन दस्वे पर्णध्वत् पर्णध्वद्भ्यामित्याद्येव। अप-

"वसुस्रंसु"। वसुः प्रत्ययः। तेन तदन्तं ग्राह्यम्। "ससजुषो रुः" इति सूत्रात् 'स' इत्यनुवर्तते। तच्च वसोरेव विशेषणम्, न तु स्रंसुध्वंस्वोः, अव्यभिचारात्। नाप्यनडुहः, असम्भवादित्यभिप्रेत्याह—सान्तवस्वन्तस्येति। पदान्ते इति। झलीति तु प्राचः प्रमादः, स्रस्तमित्यादावतिव्याप्तेः।

"सहेः साडः सः"। सहेरिति किम्? सह डेन वर्तत इति सडः। यस्य नाम्नि डशब्दोऽस्ति। यथा मृड इति। सडस्यापत्यं साडिः॥

हान्ताः॥

"दिव औत्"। प्रातिपदिकस्येति। अव्युत्पन्नस्य, 'दिवेर्डिविः' इति न्या-

---

शब्दरत्नम्।

**अव्यभिचारादिति।** स्रंसुध्वंस्वोर्विच् तु नास्त्यनभिधानात्। अतः संयोगान्तलोपे तत्र व्यभिचार इत्यपास्तम्। अत एव भाष्यकृता सस्येत्यननुवृत्तौ पपिवान् इत्यत्रैव दत्वशङ्का कृता, अनुवृत्तौ चानडुद्भ्यामित्यत्रैव दत्वाभावशङ्का कृतेति दिक्।

**न्यासोहितेति।** न्यासकृदूहितेत्यर्थः। **निरनुबन्धकेति।** डिवेः प्रत्ययस्य सा-

भैरवी।

चाव्यभिचारसम्भवादव्यभिचारादित्यसङ्गतमत आह—स्रंस्वित्यादि। अत एव—अनुवर्तमानसग्रहणस्य वसुमात्रविशेषणत्वस्य तादृशस्थले विचोऽनभिधानस्याभिप्रेतत्वादेव। ननु नचोदाहरणमादरणीयमिति न्यायेन वस्वन्तोदाहरणमुपलक्षणमस्त्वित्यत आह—अनुवृत्ताविति। यद्युपलक्षणत्वमभिप्रेतं स्यात्तदा प्रथमम्परित्यज्याग्रिमकथनं सन्दर्भविरुद्धं स्यादिति भावः।

न्यासपदस्य ग्रन्थाभिधायकत्वेन न्यासोहितेत्यसङ्गतमत आह—न्यासकृदिति।

भावप्रकाशः।

दान्ते तु पर्णध्वंसौ पर्णध्वंस इत्यादि सनकारमपि साध्विति। तत् खण्डयति—**स्रंसुध्वंस्वोरित्यादि।** शेषे षष्ठी। **तत्र**—विजन्ते। अनभिधाने न मानमिति तदुक्तिखण्डनायाह—**अत एवेति**—अनभिधानादेवेत्यर्थः। अन्यथा विजन्तयोरपि तयोः शङ्कोचितेति भावः। एवमत्रापि। अननुवृत्तौ तत्रैव शङ्काकरणेपि 'न चोदाहरणमादरणीयम्' इति न्यायेन तस्यासङ्कोचकत्वमिति तदुक्तिखण्डनायाह—**अनुवृत्तौ चेति।** तथा च तन्न्यायविषयः, साभिप्राये लक्ष्याणां प्रथमं विहायाग्रिमकथने तत्सञ्चारात्। एवं च ततः प्राथमिकसूत्रोपात्तयोरनयोस्त्यागे निर्बीजत्वापत्तिरित्यनभिधानमेवाभिमतम्। न च तयोर्नेष्टत्वादेव न शङ्केति नानभिधानसिद्धिरिति वाच्यं, सिद्धान्ते तस्य तदविशेषणत्वेनानिष्टत्वस्य दुर्निश्चेयत्वादिति भावः। कैयटोऽप्येवम्। अत एव मान्योक्तरीतिर्नानुसृताऽत्र। किं चानुबन्धनिर्देशस्य विशेषणत्वाप्रतिबन्धकत्वं तद्विशिष्टानां तद्रहितस्वरूपबोधकत्वात्। किं चैवं वसुविशेषणत्वस्याभावापत्तेः। न चानुबन्धनिर्देशाभावे निरनुबन्धकपरिभाषया वसुप्रत्ययस्यैव ग्रहणापत्तिः। सिद्धान्तेऽपि "एकानुबन्धक" इति परिभाषया क्वसोरग्रहणापत्त्या व्याख्यानेन तदसञ्चारस्यैव शरणीकरणीयत्वेनात्राप्यदोषात्। नचैवमपि तदभावे धातुसाहचर्याद्धातुग्रहणापत्तिः। सिद्धान्तेपि 'वसु स्तम्भे' इत्यस्याग्रहणायोक्तरीत्याऽनित्यत्वेन वा तदसञ्चारावश्यकत्वेनात्राप्यदोषात्। एवं च सनकाराणि रूपाण्यसङ्गतान्येव। तदाह—**दिगिति।** एतेन त्रयाणां तद्विशेषणमुक्तरीत्या भाष्यीयोदाहरणस्योपलक्षणत्वादैच्छिकेऽनभिधाने न मानमिति चिन्त्यमिदमिति मन्दोक्तमपास्तम्।

**ननु** न्यासोहितेत्यत्र कर्मधारये तत्पदानर्थक्यं, तृतीयातत्पुरुषे ग्रन्थादिरूपन्यासस्योहने कर्तृत्वासम्भवतोऽत आह—**न्यासकृदिति।** एवं च मूले अर्शआद्यजन्तं न्यासपदं, तथा च व्युत्पत्तौ प्रामाण्यं, वस्तुतः स्वाऽनभिमतत्वं च सूचितमिति भावः। नन्वन्त्यपक्षे सानुबन्धकत्वमेवात आह—**डिवेरिति।**

सोहितसूत्रेण व्युत्पन्नस्य वा, न तु 'दिवु क्रीडादौ' इति धातोः, निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषया। तेनाक्षद्यूरित्यादौ न भवति ॥ औतस्तकार उच्चारणार्थः ।

सुद्युभ्यामिति । उकारस्य सम्प्रसारणत्वात् "हलः" इति दीर्घः प्राप्त 'उत्'

---

## शब्दरत्नम् ।

नुबन्धकत्वेऽपि तदन्तस्यातथात्वादिति भावः। इदं चात्र सूत्रे भूवादिसूत्रे च भाष्ये स्पष्टम्। उच्चारणार्थ इति । न तु स्वरितार्थः। उच्चारणार्थानामित्सञ्ज्ञायामपि तिति प्रत्ययग्रहणमिति वार्तिकेन तदप्रवृत्तिरिति भावः ।

## भैरवी ।

अतथात्वादिति । सानुबन्धकत्वाभावादित्यर्थः। डकारस्य प्रत्ययोपदेशमादायेत्सञ्ज्ञाप्रवृत्त्या तदनुबन्धत्वमेवेति । अत्र न्यासकृदित्यनेन तस्य व्युत्पन्नत्वन्तन्मते, स्वमते त्वव्युत्पन्नत्वमेवेति ध्वनितम् । अक्षद्यूरित्यत्र निरनुबन्धकपरिभाषाया दोषाभावप्रतिपादनमसङ्गतं तत्रत्य सोर्दिव्प्रकृतिकत्वविरहादेवाऽप्राप्तेरिति तु न शङ्कनीयम्, अङ्गाधिकारे तदन्तग्रहणस्य सम्भवात्। अत एव परमद्यौरित्यत्र भवति सूत्रप्रवृत्तिरत एवाह—इदञ्चेति। एतेन सा परिभाषा भाष्यप्रामाण्यादप्रत्ययग्रहणेऽपि प्रवर्तते इति ध्वनितम्। उच्चारणार्थ इति शब्द उच्चारणमेवार्थ इत्येवकारगर्भबहुव्रीहिसञ्ज्ञकस्तत्रवकारव्यवच्छेद्यं स्पष्टयति—नत्विति। तदप्रवृत्तिः—स्वराप्रवृत्तिः ।

## भावप्रकाशः ।

नन्वक्षद्यूरित्यादौ सोरदिव्प्रकृतिकत्वान्न दोष इति चेन्न । अङ्गाधिकारे तदन्तविधेरदोषात् । अत एव परमद्यौरित्यादिसिद्धिस्तदाह--इदं चेति। तया धातोर्ग्रहणं चेत्यर्थः। एतेन परिभाषा प्रत्ययग्रहणविषयिण्येवेति प्रतिपदोक्तत्वाद्धातोरेव ग्रहणमिति चापास्तं, भाष्यविरोधापत्तेः, पराभिमते लाक्षणिकत्वेऽप्याद्येऽतत्त्वाच्च । अत एव तदुक्तिसाफल्यम्। यत्तु मूलानुयायिनः उच्चारणार्थ इत्यस्य न त्वित्संज्ञक इति शेषः, फलाभावात् वार्तिकबलात्स्वरितत्वाप्राप्तेरिति, तन्न, अनुवादे तथासम्भवेऽपि विधावपूर्वविधानेन तान्तस्यैव विधानापत्तेः। किं च द्वितीयवर्णोच्चारणे सहायसम्पादनेन सफलेषु तत्र तत्र विशेषणार्थेष्विव प्राप्तहलन्त्यसूत्राप्रवृत्तौ मानाभावात् । किं चाऽऽदेशेषु सर्वत्र तथात्वे वार्तिकाऽसङ्गत्यापत्तेस्तस्माद्विधेये इत्संज्ञैवोचिता। ध्वनितं चेदम् "अद्ड्डतरादिभ्यः" "तस्यलोपः" "तित्स्वरितम्" "वेरपृक्तस्य" "इदितो नुम् धातोः" "गाङ्लिटि" इत्यादिसूत्रभाष्येषु। अनुवादे तु तत्सहितस्य तद्रहिते लक्षणा। विधौ तु सा न, 'न विधौ' इति न्यायात्।"णौ गमिः" इत्यादौ तु इका निर्देशस्तद् ध्वनयन्नाह—न तु स्वरितार्थ इति । तत्र हेतुमाह—उच्चेति । प्रतिपादितमिदमधस्तात्। प्रत्ययाऽप्रत्ययोरित्यस्या लक्ष्यसंस्कारकत्वेन भाष्ये क्वाप्यनाश्रयणादाह—तितीति । तदप्रवृत्तेरिति पाठः। दित्त्वमाश्रित्य वार्तिकं प्रत्याख्यातमित्यन्यत्। एतेन त इदिति यथाश्रुतं साधु, प्रक्रियाग्रन्थमनूद्य इत्वे प्रयोजनाभावा-

## सरला ।

अतथात्वादिति । यदुपदेशप्रयुक्ता यस्येत्संज्ञा तस्य तदनुबन्धकत्वमेवेति डकारानुबन्धकत्वं डिव एव नतु दिव् इति प्रकृतिप्रत्ययसमुदायस्येति भावः ।

नतु स्वरितार्थ इति । उच्चारणार्थस्य वर्णस्य इत्संज्ञाया अस्वीकारेणादेशस्य तित्त्वाभावेन "तित्स्वरितम्" इत्यस्याप्रवृत्तेः। इत्संज्ञायामपीति । अनेन उच्चारणार्थानामपि इत्संज्ञयैव निवृत्तिरिति सूचितम्। तकारस्येत्संज्ञाया अभावे आदेशे तान्तत्वापत्तिः स्यात्। किञ्च द्वितीयवर्णोच्चारणे सहायसंपादनेन चरितार्थेऽपि तकारे "हलन्त्यम्" इति सूत्रप्रवृत्तौ न किञ्चिद्बाधकमिति। विस्तरस्तु शब्देन्दुशेखरे द्रष्टव्यः। नन्वेवं तकारस्येत्त्वे स्वरितस्वरापत्तिरत आह—तिति प्रत्ययग्रहणमिति ।

इति तपरत्वसामर्थ्यान्न भवति । यत्तु प्राचोक्तम्—'दिवो वा आत्वममि' इति; तदुपेक्षितम्, मुनित्रयानुक्तेर्निष्फलत्वाच्च । द्यामिति रूपं तु द्योशब्दस्यैवेति बोध्यम् ॥

वान्ताः ॥

"षट्चतुर्भ्यश्च" ॥ बहुवचननिर्देशादर्थप्राधान्यं विवक्षितम् । अर्थाचामः परत्वं शब्दद्वारकम् । तेन तदन्तविधौ सत्यपि परमचतुर्णामित्यादावेव भवति,

---

शब्दरत्नम् ।

सम्प्रसारणत्वादिति । अतद्भावितस्यापि सञ्ज्ञेति पक्षे इदम् ।

शब्दद्वारकमिति । न चैवं तद्वाचकशब्दात्परत्वमेवार्थात्परत्वमित्यायातम् । ततश्च प्रियपञ्चन् आमित्यत्रापि तद्वाचकपञ्चन्शब्दात्परत्वमस्त्येवेति दोषस्तदवस्थ इति वाच्यम् । एतत्सामर्थ्येन प्रधानीभूतषडर्थवाचकशब्दात्परत्वं विवक्षितमित्यभिमानात् । इदं प्राचामनुरोधेन । द्विवचननिर्देशे गौरवात्समाहारेण सर्वत्र सूत्रेषु निर्देशादर्शनाच्च षट्सञ्ज्ञकानां बहुत्वाच्च बहुवचनोपपत्तेः । किं च "न षट्स्वस्रादिभ्यः" इत्यादौ शब्दबाहुल्याभिप्रायेण बहुवचनवत् "तिसृभ्यो जसः" इत्यादौ प्रयोगबाहुल्याभिप्रायेण तद्वचेहापि

भैरवी ।

ननु सुद्युभ्यामित्यत्र दीर्घप्रवृत्तिसञ्चार एवासङ्गतः सम्प्रसारणशब्देन जातस्यव सम्प्रसारणशब्देन ग्रहणादत आह—अतदिति । अत्र पक्षे इत्युपादानम्भाष्यकारसिद्धान्तविरुद्धत्वेन तस्य पक्षस्य स्वानभिमतत्वसूचनाय ।

अथ प्रत्ययस्य शब्दादेव परत्वन्नत्वर्थादिति शब्दस्य द्वारत्वकल्पना कृता । तथाच प्रियपञ्चन् शब्दे दोष इत्याशङ्क्य निराचष्टे—नचैवमित्यादिना । इदम्—बहुवचननिर्देशेनार्थविशेषस्य कल्पनम् । ननु द्विवचननिर्देशे गौरवात्समाहारद्वन्द्वेनैकवचननिर्देश एवास्त्वित्यत आह—समाहारेणेति । ननु सर्वत्र तथानिर्देशाभावेऽपि "स्तोः श्चुना श्चुः" इतिसूत्रे तथा निर्देशो दृश्यत एवेत्यत आह—षट्संज्ञकानामिति । ननु संज्ञिनां बहुत्वेऽप्येकवचनं "वृद्धिर्यस्याचामादिः" इत्यादौ दृश्यत एवेत्यत आह—किञ्चेति । ननु बहुवचनस्योक्तरीत्योपपत्तावपि गौणस्य वारणन्न स्यादितिचेन्न । विहितविशेषणाश्रयणेन तस्यापि सम्भवात् । तद्वच्चेति ।

भावप्रकाशः ।

देतीति इत् उच्चारणार्थ इति व्याख्येयमिति प्रकाशोक्तं "तस्य लोप" इति सूत्रस्थभाष्यविरोधादुच्चारणार्थस्त इत्ययुक्तमिति खण्डनकृदुक्तं चापास्तम् ।

पूर्वग्रन्थाविरोधायाह—अतद्भावीति । पक्षे इत्यनेनारुचिः सूचिता भाष्यानभिमतत्वरूपेति प्रागुक्तम् । एतेनात्र मूले शङ्का समाधानं चायुक्तमिति सूचितम् । एवं चात्रत्यमान्योक्तिः प्राचामनुरोधेनेति बोध्यम् । मूले—द्योशब्दस्येति । पृथिवी उत द्यौरित्यादौ पठ्यमानमन्तोदात्तमप्यस्यैवेति भावः । अत्र प्रकरणे वृक्षवृश्चब्दोऽप्युदाहार्यः । पूर्वभाष्यतः परभाष्यस्य प्राबल्येनाऽनभिधाने मानाभावादिति । रत्नाकरोक्तं त्वयुक्तमेवेत्यावेदितं प्राक् ।

एवम्—अर्थात्परत्वस्य तद्द्वारकत्वाङ्गीकारे । अपिः प्रधानसमुच्चायकः । 'इत्यत्रापि तद्वाचकपञ्चन्शब्दात्परत्वम्' इति पाठः । एतदिति । बहुवचननिर्देश इत्यर्थः । अभिमानपदसूचितां बहुवचननिर्देशसामर्थ्याभावरूपामरुचिमाह—इदमित्यादिना । अत्रोपपत्तिर्हेतुः । तत्क्रमेण हेतुत्रयमाह—द्विवचनेत्यादिना । मात्रागौरवस्यासार्वत्रिकत्वादाह—समेति । ननु सर्वत्र तदभावेऽपि स्तोरित्यादौ स दृश्यत एवात आह—षडिति । ननु सञ्ज्ञिभेदेऽपि वृद्धिर्यस्येत्यादावेकवचनं दृष्टमत आह—किं चेति । तद्वच—बहुवचनवच्च । एतेन तथा रत्नाकरदण्ड्यादिग्रन्थाः परास्ताः । नन्वेवं बहुवचनोपपत्तावपि गौण-

न तु बहुव्रीहौ । तदेतद्वक्ष्यति—'गौणत्वे तु नुट् नेष्यते' इत्यादिना । द्वित्वमिति । "अचो रहाभ्याम्" इत्यनेन ।

रान्ताः ॥

शब्दरत्नम् ।

बहुवचनं वक्तुं युक्तम् । किं च "नामि" इति सूत्रे भाष्ये 'आमि' इत्येव सूत्रमस्तु । न च नित्यत्वात्पूर्वं दीर्घे ह्रस्वाश्रयो नुट् न स्यात्, ह्रस्वान्ताद् नुडित्येतत्सामर्थ्येन भूतपूर्वगत्या ह्रस्वान्तत्वमादाय तत्प्रवृत्तेः । न च नृणामित्यत्र चारितार्थ्यम्, नैकमुदाहरणं योगारम्भं प्रयोजयति—नृनद्याप इत्येव ब्रूयात् । न च तिसृणामित्यत्र चारितार्थ्यम् । षडित्यत्र त्रेरित्यनुवृत्त्या सिद्धेः इत्युक्तम् । गौणेऽस्याप्रवृत्तौ प्रियचतसृणामित्यत्र चारितार्थ्येन भाष्यासङ्गतेः । 'ऋन्नद्यापः' इति न्यासे तु न भाष्यतात्पर्यं त्रिशब्दानुवृत्तिपरभाष्यासङ्गतेः, नैकमुदाहरणमित्यस्यासङ्गतेश्च, गौणे नुटोऽप्रवृत्तिसाधकभाष्यान्तराभावाच्च । न चवं पदां दतामित्यादौ भूतपूर्वगत्याश्रयणेऽतिप्रसङ्गः । ह्रस्वत्वं नाम मात्राकालिकाच्त्वम् । तत्र सामर्थ्याद् विशेषणभूतमात्राकालिकत्वांशे एव भूतपूर्वगत्याश्रयणं न तु विशेष्यभूताच्त्वांशेऽपीत्यदोषादिति दिक् ।

भैरवी ।

बहुवचनवच्चेत्यर्थः ।

भावप्रकाशः ।

वारणाभाव एवेति चेन्न । विहितविशेषणमित्याद्यर्थस्य "षड्भ्यो लुक्" इत्यत्र प्रतिपादितत्वात् । एतेन गौणे नुडापत्तेश्चिन्त्यमिदमिति मन्दोक्तमपास्तम् ।

सरला ।

**भूतपूर्वगत्येति** । पञ्चमीसमासेन स्थानिवद्भावाद् ह्रस्वान्तत्वातिदेशेनेति भावः । **नैकमुदाहरणमिति** । सामान्यधर्मावच्छिन्नोद्देश्यताकं शास्त्रमेकमुदाहरणं न प्रयोजयतीति तदर्थः । तेन "अग्नेर्ढक्" इत्यादिकरणेऽपि न दोषः । **इत्येव ब्रूयादिति** । ननु "ह्रस्वनद्याप" इति कल्पे 'नृ-आम्' इति स्थिते परत्वात् "नृ च" इति दीर्घे ह्रस्वान्तत्वाभावान्नुटोऽप्राप्त्या यणि 'न्राम्' दीर्घाभावे 'नृणाम्' इति रूपद्वयम्, 'नृनद्यापः" इतिसूत्रन्यासपक्षे तूभयत्र नुटि 'नृणाम्' 'नॄणाम्' इति रूपद्वयमिति फलभेदः; एवं नृशब्दादाचारक्विबन्तात्कर्तरि क्विपि तुकि तस्मादामि नृत् आम् इत्यत्र "ह्रस्वनद्याप" इति कल्पे नुट न भवति, नृनद्याप इति न्यासे च भविष्यतीति फलभेदः; एवं नृशब्दस्य ऋशब्देन समासे तत आमि सूत्रपक्षे नुडभावो न्यासपक्षे च नुडिति फलभेद इति चेत्? न, "नृन्नद्यापः" इति न्यासे तत्तात्पर्यावधारणात् । तथाच तपरकरणसामर्थ्यात् ह्रस्वऋकारान्तस्यैव नृशब्दस्य ग्रहणं नतु दीर्घान्तस्य तुगन्तस्य वेति न दोषः । तुगन्ते यदागमा इति परिभाषया ह्रस्वान्तनृशब्दत्वं तु दुर्लभं तस्या वर्णग्रहणेऽप्रवृत्तेरिति । विस्तरस्तु शेखरटिप्पणे "नामि" सूत्रे द्रष्टव्यः । **सिद्धेरित्युक्तमिति** । नच "आमि" इति कल्पे ह्रस्वनद्यापः इति सूत्रे ह्रस्वग्रहणसत्त्वे त्रिशब्दादामि त्रयादेशे परत्वाद्दीर्घे ह्रस्वान्तत्वाभावान्नुडभावे त्रयामिति, ह्रस्वग्रहणाभावे "षट्चतुर्भ्यश्च" इत्यत्र त्रेरित्यनुवृत्तिकल्पे त्रयादेशे दीर्घ स्थानिवद्भावेन त्रिशब्दत्वस्य सत्त्वान्नुटि त्रयाणामिति च रूपमिति फलभेद इति वाच्यम्, षट्चतुर्साहचर्येणानकारान्तत्रिशब्दस्यैव ग्रहणे त्रयादेशे नुटोऽप्राप्त्या त्रयामित्येव रूपं भवतीति फलभेदाभावात् । त्रितामित्यादावपि साहचर्यादिना फलभेदो नेति । **दिगिति** । 'किञ्च नामि' इत्यारभ्य 'दिक्' इत्यन्तो ग्रन्थः प्रक्षिप्त इवाभाति आदर्शपुस्तकेष्वदर्शनादस्य विषयस्य शेखरे उक्तत्वाच्च ।

भिन्धकीत्यत्र "अकचि कृते धित्वं न प्राप्नोति" इति भाष्योक्तेरकज्विशिष्टस्य निर्दिश्यमानत्वाभावबोधनेन प्रकृतसूत्रे तत्परिभाषाप्रवृत्तौ तन्मध्यपतितन्यायेन विशिष्टस्य ग्रहणेऽपि निर्दिश्यमानत्वा-

कमला लक्ष्मीः ॥ लान्ताः ॥

"मो नो धातोः" ॥ पदान्त इति । झलीति तु यद्यपि प्राचाऽनुवर्तितं, तथाऽपि काशिकादावभावात् निष्फलत्वाच्चोपेक्ष्यम् ।

"किमः कः" ॥ ननु इम इत्येव सूत्र्यताम् । त्यदादीनामिमोऽः स्याद् इति व्याख्यास्यते । किंशब्दश्च द्वेःप्राक् पठिष्यते । 'नानर्थक' इति निषेधादारम्भसामर्थ्याच्चालोऽन्त्यविधिर्न भविष्यति, तत् किं कादेशेनेत्याशङ्क्याह—अकच्सहितस्यापीति । टेरत्वे कक इति स्यात् । "कु तिहोः" इत्याद्यथ च किम इत्यवश्यं वक्तव्यमिति भावः । नन्वेवं गणकार्यत्वाभावादुपसर्जनत्वेऽपि स्यात् ? मैवम्, त्यदादीनामित्यनुवर्त्य वचनविपरिणामेन त्यदादेः किम इति व्याख्यानात् ।

---

शब्दरत्नम् ।

**इम इति** । अत्र 'त्यदादीनामः' इत्यनुवर्तते, तदाह—**त्यदादीनामिति** । अत एव सिद्धान्ते उपसर्जने नेति भावः । **द्वेः प्रागिति** । तेन द्विपर्यन्तानां त्यदादित्वेऽपि न दोषः । "किंसर्वनामबहुभ्यः" इत्यत्र किंग्रहणं न कार्यमिति भावः । न चेमौ इत्यत्राव्याप्तिः । 'अङ्गकार्यं कृते' इति निषेधात । **आरम्भसामर्थ्याच्चेति** । "त्यदादीनामः" इत्यनेनैवान्त्यादेशे सिद्धे इम इत्यारम्भसामर्थ्यादित्यर्थः । कक इति **स्यादिति** ।

भैरवी ।

अत्र—इम इति सूत्रे । अनुवर्तत इति । अत एव क्विबन्ततिमादावतिप्रसङ्गो न । नन्वनुवृत्तिकल्पनाप्रयुक्तगौरवमत आह—अतएवेति । तदनुवृत्तिसत्त्वादेवेत्यर्थः । एवङ्कल्पनायां लाघवमप्यस्तीत्याशयेनाह—किं सर्वनामेति । ननु किम्शब्दस्य द्वेः प्राक् पाठस्य करणकथनमसङ्गतम्, "त्यदादीनि च" इत्यत्र व्यभिचारादिति चेन्न । सर्वत्र तादृशनियमाभावेऽपि "त्यदादीनामः" इति सूत्रे त्यदादिपदस्य द्विपर्यन्तबोधकत्वमेव भाष्यकारेष्टव्याऽस्तीत्यर्थाधिकारानुरोधादत्रापि तथा भविष्यतीत्यतस्तथा पाठकल्पनमुचितमित्याशयात् । इमाविति । विभक्त्यासहैकादेशेऽपि परादिवद्भावेन विभक्तिपरत्वमस्तीति भावः । अङ्गकार्येति । अङ्गकार्यमत्राऽत्वम्मत्वञ्च बोध्यम् । नच "अचः परस्मिन्" इत्येकादेशस्य स्थानिवद्भावेन न विभक्तिपरत्वमिम् इत्यस्येति वाच्यम् ? विभक्ताविव्यस्याङ्गविशेषणत्वात् । इदमुपलक्षणम्, लक्षणप्रतिपदोक्तपरिभाषयापि तत्रातिप्रसङ्गवारणसम्भवात् । नानर्थकपरिभाषाया भाष्यकृता प्रत्या-

भावप्रकाशः ।

अत्रेत्यतः प्रागिम इति प्रतीकपाठः । अत एवात्रेत्युक्तिसङ्गतिः । **अनुवर्तत इति** । सम्पूर्णसूत्रमनुवर्तत इत्यर्थः । तेन क्विबन्ततिमादौ नातिप्रसङ्ग इति भावः । नन्वयमेव दोषोऽत्र पक्षे ऽतआह—**अत एवेति** । एकदेशानुवर्तनादेवेत्यर्थः । **सिद्धान्ते**—यथाश्रुतन्यासे । स्फुटमेतन्मूले एव । एतेन सन्निधानाच्च किम इति विज्ञास्यते इति प्रकाशोक्तमपास्तम् । यत्तु रत्नाकरकृत्—अनुवृत्तिसामर्थ्यादित्याद्यनुपदाग्रिमग्रन्थविरोधेन द्वेः प्रागिति चिन्त्यमिति, तत्खण्डयति—**तेनेति** । यद्यपि अत्र शास्त्रे त्यदादयो द्विपर्यन्ता एवेति न नियमः,"त्यदादीनि च"इत्यादौ व्यभिचारात् । तथापि पूर्वे सूत्रे द्विपर्यन्तानां तेषामत्वं वचनमिति नियमसत्त्वादर्थाधिकारानुरोधादिहापि तथैवोचितम् । अत एवाग्रे सामर्थ्याश्रयणं मूले । एतेनाऽत्वस्य नियतत्वेऽपि तेषां सर्वत्रानियमान्मूलं चिन्त्यमिति खण्डनकृदुक्तमपास्तमिति भावः। **इति भाव इति** । इत्याशय इत्यर्थः। **इमाविति** । एकादेशोत्तरं परादिवत्त्वेन विभक्तिपरत्वस्येदमः सत्त्वादिति भावः । **अङ्गेति** । अत्वस्य मत्वस्य चाङ्गाधिकारस्थत्वात् । "अचःपर"इत्यनेन तु न वारणं विभक्ताविव्यस्य त्यदादिविशेषणत्वौचित्यादिति भावः । लक्षणप्रतिपदोक्तपरिभाषयाऽपि वारणं बोध्यम् । 'नानर्थके'इतिपरिभाषाया भाष्ये प्रत्याख्यानादाह—**आरम्भेति** । तदुपपादयति—**त्यदादीति** । एतेन तया निर्वाह इति रत्ना-

शब्दरत्नम् ।

मम तु 'तन्मध्यपतित' इति न्यायेन साकच्कस्य किंशब्दत्वात्सिद्धम् । निर्दिश्यमानस्येति परिभाषा त्वत्र न प्रवर्तते, कादेशविधानसामर्थ्यात् । न च सुबन्तात्तद्धितोत्पत्त्या विभक्त्युत्पत्त्यनन्तरं परत्वात्कादेशे कृते ऽकचि कक इत्येव स्यादिति वाच्यम् । प्रातिपदिकादित्येवाधिकारात्सुपः शब्देन निमित्तत्वेनानाश्रयणादङ्गसंज्ञानिमित्तप्रत्ययानपेक्षणेन चाऽकचोऽन्तरङ्गत्वादिति भावः। किम इत्यवश्यमिति । 'कु तिहोः' 'काति' इत्यादेशे कद्वयश्रवणापत्तिः । उ तिहोरतीति न्यासे उकारस्यान्त्यादेशत्वापत्तिरेतदर्थं 'नानर्थक' इत्यारम्भे गौरवम् । अङ्गवृत्तपरिभाषया क्वेत्यत्र गुणस्य वारणे

भैरवी ।

ख्यानादाह-मूले आरम्भेति । मम तु—"किमः कः" इति न्यासकर्तुस्तु । ननु निर्दिश्यमानपरिभाषया किम्शब्दस्यैवादेशे कक इति दुर्वारमत आह-निर्दिश्येति । अत्र-अकज्विषये न प्रवर्तते इति । कादेशविधानसामर्थ्यादिति । क इति समुदायरूपादेशविधानसामर्थ्यादित्यर्थः । अत्र किम्शब्दोपादानसामर्थ्यादिति तु नोक्तम्, तस्योत्तरार्थत्वात् । ।ननु यदर्थमयम्प्रयासस्तस्य प्रकारान्तरेण दुर्वारतया प्रयासवैयर्थ्यमित्याशङ्कान्निराचष्टे—नचेति । सुबन्तादिति । "कुत्सिते" इति सूत्रस्थभाष्यात्तथालाभादिति भावः । यद्यपि जायमानस्तद्धित उक्तरीत्या सुबन्ताद्भवति तथापि शब्दतस्तथा नोक्तमित्याशयेन समाधत्ते—प्रातिपदिकादित्यादिना । अनाश्रयणादिति । सुप इत्यर्थासम्भव इति शेषः । ननूक्तरीत्या तस्य लाभः स्यादेवेत्यत आह—अङ्गसंज्ञेति । उत्तरार्थत्वमुपपादयति—कु तिहोरिति । उ तिहोरिति । अत्र उ इति लुप्तप्रथमान्तम् । तादौ हादौ चेम उः स्यादिति प्रथमस्य, अति चेम उः स्यादिति द्वितीयस्यार्थो भविष्यति, सच न युक्त इत्याह—उकारस्येति । गुणस्य—"ओर्गुणः" इति गुणस्य ।

भावप्रकाशः ।

कराद्युक्तमपास्तम् । नन्वेवमपि निर्दिश्यमानस्येतिन्यायेन किम एव कादेशेन कक एव भविष्यतीत्यत आह—निर्दिश्येति । अत्र—अकज्विषये । तथासत्यत्र नैव स्यात्, यो निर्दिश्यते स लाक्षणिकः, योऽलाक्षणिकः स न निर्दिश्यमान इति हेतोः । किम इत्यस्योत्तरार्थमावश्यकत्वादाह—कादेशेति । सुबन्तादिति । प्रियकुत्सनादिषु ततः प्रवर्ततइति भाष्यादिति भावः । इत्येवेति । इत्यस्यैवेत्यर्थः । जायमानतद्धितस्य तदुत्तरमेवोक्तभाष्यात् प्रवृत्तावपि सूत्रे तत्त्वेनानाश्रयणादकचो निरपेक्षत्वेनाऽन्तरङ्गत्वं युक्तमेव । तदाह—शब्देनेति । अनाश्रयणादकचो ऽन्तरङ्गत्वादिति पाठः । अनाश्रयणमन्तरङ्गत्वे हेतुः, अनाश्रयणादङ्गसंज्ञानिमित्तप्रत्ययानपेक्षणेन चाकच इति पाठः । कक इत्येव स्वीकर्तॄणां मते उक्तफलाभावेन कादेशानवेक्षणरूपाऽच्याऽत्रेम इतिन्यासेन क इति सिद्धावपि उत्तरत्र किम इत्यवश्यं वाच्यमिति यतस्तेन संज्ञानपेक्षत्वेन तत्त्वं वाच्यमन्यथा पौनरुक्त्यापत्तेस्तच्च नाभिमतम्भगवतः । यद्वा मूलमतेनाह—अङ्गेति । एवमिहार्थत्वेन परस्येक्षया सम्पूर्णस्य साफल्यमुक्तम् । तदुपपादयति—कुतीति । 'इमः' इति न्यासे इत्यादि । तद्वारणायाह-उतीति । वातीति मान्योक्तन्यासे परलाघवाभावादाह-अतीति । इम उः स्यात्तादौ हादौ चाति चेति सूत्रद्वयार्थः । एतदर्थम्—एतन्निवारणार्थम् । गौरवमिति । विपरीतं गौरवमित्यर्थः । भाष्यकृता फलान्यथासिद्ध्या तत्प्रत्याख्यानादिति भावः । गुणस्य—"ओर्गुणः"

सरला ।

भावेन साकच्कस्य न कादेशसिद्धिर्भवितुमर्हत्यत आह—निर्दिश्यमानस्येतीति । अत्र न प्रवर्तते इति । अकज्विशिष्टस्यादेशप्रवृत्तौ तस्याः परिभाषाया अप्रवृत्त्या तन्मध्यपतितन्यायेन ककिंशब्दस्य किंग्रहणेन ग्रहणाद्विशिष्टे कादेशसिद्धिरिति भावः ।

कादेशविधानसामर्थ्यादिति । अन्यथाऽकज्विशिष्टस्यादेशप्रतिबन्धेन कक इत्यस्यैवावश्यं भावे तस्य अकारादेशमात्रेणैव सिध्या किं कादेशेनेति तत्सामर्थ्यादत्र सूत्रे तत्परिभाषाया अप्रवृत्तिर्ज्ञाप्यते

अनुवृत्तिसामर्थ्याच्चेह सूत्रे द्विपर्यन्तानाम् इति नियमस्य त्यागात् ।

उत्सर्ग इति । तेन "तदोः सः सौ" इति सूत्रे ऽनन्त्ययोरिति किम् ? 'हे स' इति भाष्यं 'भो अच्युत भवन्नच्युत' इति च न विरुद्ध्यत इति भावः । नास्तीत्यत्र मूलं तु प्रचुरप्रयोगादर्शनमेव । यत्त्वाहुः—

इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम् ।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥ १ ॥

इति वचनादेवंविधस्यार्थस्याभिमुखीकरणानर्हत्वादिति ; तदापाततः, सन्निकृष्टादिशब्दानामिव इदमादीनामपि सम्बोध्यसमर्पकत्वे बाधकाभावात् । विप्रकृष्टस्यापि बुद्ध्या सन्निधापितस्य बहुशः सम्बोधनदर्शनाच्च । तथा च भट्टिः—

'हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः' इति ।

"अनाप्यकः" ॥ प्रत्याहार इति । न तु टाप्, विभक्ताविति विशेषणादिति भावः ।

अनभ्यासविकार इति । तेन "भृञामित्" "अर्तिपिपर्त्योश्च" इतीत्वे-

---

शब्दरत्नम् ।

च क्लेश इति भावः । किमो द्वेरनन्तरं पाठेऽपि दोषाभावमाह-अनुवृत्तीति ।

इति च न विरुद्ध्यत इति । यद्यप्ययं प्रयोगो निपातमादाय सिध्यति । तथापि 'विभाषा भवत्'इति वार्त्तिकं न विरुध्यत इति तात्पर्यम् । विप्रकृष्टस्यापीति । परोक्षस्य चेत्यपि बोध्यम् ।

पिपर्त्योरिति । अयं निर्देश एवाहत्यांशस्य ज्ञापक इत्याहुः ।

भैरवी ।

च क्लेश इति । अत्र यश्चकारस्तस्य क्लेशपदोत्तरं योजना कार्या । अङ्गवृत्तपरिभाषाया भाष्यकृता लक्ष्यसिद्ध्यर्थमनाश्रितत्वाद्भवता तस्या इहार्थङ्कल्पनायाङ्क्लेश इति भावः । पूर्वग्रन्थाविरोधायाह—किम इति ।

अयम्प्रयोगः—भोअच्युत इति प्रयोगः । वार्तिकमिति । अस्य मतुवसोरितिसूत्रस्थमित्यादिः । मूले इदमस्त्वित्यादि । अत्र विषयपदाध्याहारेण सन्निकृष्टं वस्त्विदमो विषय इत्यर्थः । एवमदस इत्यस्यापि । अभिमुखीकरणेत्यादि । सम्यक् ज्ञापनं हि सम्बोधनविभक्त्यन्तशब्दप्रयोगस्य फलं तच्च दूरदेशस्थत्वेऽपरोक्षत्वे चोचितमिति भावः । न्यूनताम्परिहर्तुमाह—परोक्षस्य चेति ।

अस्यांशस्य—अनभ्यासविकार इत्यंशस्य ।

भावप्रकाशः ।

इति प्राप्तस्य । च क्लेश इति । क्लेशश्चेत्यर्थः । तस्या लक्ष्यसिद्ध्यर्थत्वेन भाष्ये क्वाप्यनाश्रयणात् । अयं चोऽन्वाचये । तेनास्मिन्न्यासेऽयमपि दोषो, मान्योक्ते तु स एवेति बोध्यम् । पूर्वग्रन्थाविरोधायाह—किमइति । एतेनात्रत्यमन्दोक्तिमौलादिन्यासस्समर्थनपराऽपास्ता । शब्दपरत्वाद् द्वेरिति प्रयोगो नासङ्गतः ।

वार्तिकम्—"मतुवसोः" इति सूत्रस्थम् । मूले-सन्निकृष्टादीति । सम्यक् ज्ञापनस्यैव सम्बोधनपदार्थत्वादिति भावः । मूले न्यूनतां निराचष्टे— परोक्षेति ।

अंशस्येति । अनेनान्यांशस्य वाचानकत्वम् , "इदमो मः" "इदश्च यः सौ" "अय् पुंसि" इत्येव

सरला

इति । तथाच विशिष्टस्य कादेशे 'कः' इत्येव रूपं भवतीति । विस्तरस्तु परिभाषेन्दुटिप्पणे द्रष्टव्यः ।

अयं निर्देश एवेति । 'पिपर्त्ति' इति निर्देश इत्यर्थः ।।अस्यांशस्य—'अनभ्यासविकारे' इत्यंश-

ऽलोन्त्यविधिरस्त्येव । बिभर्ति, पिपर्ति ।

ननु स्मायादेशात्परत्वादनादेशः स्यादित्याशङ्क्याह–नित्यत्वात् ङेः स्मै इति। कार्यं विधातुमिति । अपूर्वं बोधयितुमित्यर्थः । 'ईषदर्थे क्रियायोगे' इति श्लोके तु ईषदर्थादयो न विधीयन्ते, किन्त्वनूद्यन्ते । तेन एनादेशो न। एतेन–

नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ।

इत्यपि व्याख्यातम् , भीरुत्वस्यानुवाद्यत्वेन विवक्षितत्वात् ॥

मान्ताः ॥

---

शब्दरत्नम् ।

अनादेशः स्यादिति । तत्र कृते सकृद्गतिन्यायेन पुनः स्मैनं स्यादिति भावः । नित्यत्वादिति । लक्ष्यानुरोधेन बाधकाबाधितप्रसङ्गस्यैवात्र ग्रहणान्नाऽनादेशो नित्य इति भावः ।

अपूर्वं बोधयितुमिति । अज्ञातज्ञापनमेवोभयत्रापि विधानं, न तु प्रवर्तनाविषयत्वमित्यर्थः । न विधीयन्ते—नाज्ञाता बोध्यन्ते । अनुवाद्यत्वेनेति ।

भैरवी ।

नन्वनादेशोत्तरम्भवतु स्मैभावस्ततो हलि लोपेनेष्टसिद्धिः स्यादत आह—तत्र कृते इति । ननु नित्यत्वमनित्यापेक्षया बलवत्त्वप्रयोजकमिह तु अनादेशस्य स्मैभावे कृतेऽपि प्राप्तिरित्युभयोर्नित्यत्वमिति नित्यत्वादित्यनुपपन्नमत आह—लक्ष्येति । प्रसङ्गस्य–कृताकृतप्रसङ्गस्य । अत्र–प्रकृतप्रयोगे ।

ज्ञापनमेवेति । एवकारेण इदमेव यत्र कथनन्तत्रेत्यस्यानादरो ध्वनितः । उभयत्रापि–कार्यं विधातुङ्कार्यान्तरं विधातुमित्यनयोः । अत एव 'वन्यद्विपेनोन्मथिता त्वगस्य' 'अथैनमद्रेस्तनया शुशोच' इत्यस्योपपत्तिरिति भावः । ननु विधानस्य परित्यक्तत्वान्न विधीयन्त इत्यनुपपन्नमत आह—नाज्ञातेति । यत्तु नन्दस्य निदेशत इति तस्य पद्यस्य व्याख्या-

भावप्रकाशः ।

सिद्धे इद्ग्रहणरूपज्ञापकान्तरसिद्धत्वं वा सूचितं, प्राच इत्यर्थकेन आहुरित्यनेनारुचिः सूचिता वस्तुतस्तदभावरूपा ।

तत्र—अनादेशे । पुनः—पश्चात् । एतेन तस्य नित्यत्वं निरस्तम् । ननु पुनः प्रसङ्गविज्ञानमिति पक्षे यथा स्मै नित्यस्तथाऽनपि कृताकृतप्रसङ्गित्वमात्रेण, एतेन हलि लोपेन बाधान्न तथेत्यपास्तमत आह—लक्ष्येति । प्रसङ्गस्य—कृताकृतप्रसङ्गस्य । अत्र—प्रकृतलक्ष्यविषये ।

ज्ञापनमेवेति । एवकारेण इदमेवेत्याग्रहाऽनादरोऽपि ध्वनितः । उभयत्रापि । कार्यं विधातुं कार्यान्तरं विधातुमित्यनयोः । तथाच यम्प्रति वेदाध्ययनादिकं बोध्यते तेन न किञ्चित्पूर्वं बुद्धमिति तत्रादेशसिद्धिरिति भावः । नन्विति । अत एवेमकाभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीतमित्युदाहरणसङ्गतिरिति भावः । यत्तु तट्टीकाकृत् नन्दवाक्यमिदमिति, तन्न, तथासति चिरकालिकरहःकेलीनां तदतात्पर्यविषयत्वेनाऽसङ्गत्यापत्तेः । गृहप्रापणस्यैव तात्पर्यविषयत्वेन भीरुत्वस्य विधेयत्वापत्तेश्चात आह—

सरला ।

स्येत्यर्थः । 'नानर्थकेऽलोऽन्त्यविधिः' इत्यंशे तु ज्ञापकं "नाम्रेडितस्यान्त्यस्य तु वा" इतिसूत्रस्थमन्त्यस्य ग्रहणम् । अन्यथा तत्र "अलोऽन्त्यस्य" इत्यनेनैवान्त्यस्यादेशसिद्धौ तद्वैयर्थ्यं स्पष्टमेवेति भावः ।

बाधकाबाधितेति । वस्तुतस्तु उपसञ्जनिष्यमाणन्यायेनात्राऽनादेशस्य प्राप्तिरेव नेति नित्यलक्षणे बाधकाबाधितत्वनिवेशो व्यर्थ इति बोध्यम् । इति भाव इति । वस्तुतस्तु "अन्वादेशश्च कथितानुकथनमात्रम्" इति भाष्येणाऽज्ञातज्ञापनस्थले एवाऽन्वादेश इति न नियम इति बोध्यम् ।

सुगाणिति ॥ "अनुनासिकस्य क्विझलोः" इति दीर्घः । न च तस्मिन् कर्तव्येऽल्लोपणिलोपयोः स्थानिवद्भावः शङ्क्यः । दीर्घविधौ तन्निषेधात्, क्वौ विधिं प्रति निषेधाच्चेति भावः । एतेन सुगण्णीश इति प्राचो ग्रन्थं गणयतेः क्विबिति व्याचक्षाणा उपेक्ष्या इति ध्वनयति । तदीयो ग्रन्थोऽपि समर्थनीय इत्याग्रहे तु इत्थं समर्थ्यताम्—सर्वलोपित्वेन क्विबिवाचरतीति क्विप् । क्विप्शब्दादाचारक्विबन्तात् कर्तरि क्विप्, तेन विजित्यर्थः ॥ णान्ताः ॥

उपधादीर्घ इति ॥ "सर्वनामस्थाने चासम्बुद्धौ" इत्यनेन । ङौ सम्बुद्धौ चेति । प्राचामनुरोधेनेत्थं व्याख्यातम् । ङ्यन्तस्य सम्बुद्ध्यन्तस्य च पदस्येति षष्ठ्यन्ततया व्याख्यानं तूचितम् । एवं हि प्रत्ययलक्षणं सुलभमिति तदर्थ निषे-

---

शब्दरत्नम् ।

सखीवाक्यमिदम् । तत्र कृष्णे आरोपितभीरुत्वं भाविकामिव्यवहारसङ्गोपनायानुवाद्यत्वेनैव विवक्षितमिति भावः । नन्दनिदेशत इति—नन्दनीयनिदेशादित्यर्थकं बोध्यम् ।

दीर्घविधाविति । न पदान्तसूत्रे सपादसप्ताध्यायीस्थदीर्घस्यापि ग्रहणमित्यर्थस्य "चिण्णमुलोः" इति सूत्रे भाष्ये ध्वनितत्वादिति भावः । उपेक्ष्या इति । दीर्घप्राप्तेरिति भावः ।

व्याख्यानं त्विति । तुनाऽरुचिर्बोधिता । सप्तम्यन्तपाठेऽपि "न लुमता" इति

भैरवी ।

नन्तदसङ्गतम्, चिरकालिकरहःकेलीनान्तात्पर्यविषयत्वानुपपत्तेरत आह—सखीवाक्यमिति ।

ननु पूर्वत्रासिद्धे न स्थानिवदित्याश्रयणेन दीर्घग्रहणस्यापि प्रत्याख्यानाद्दीर्घविधावित्यनुपपन्नमत आह—न पदान्तसूत्र इति । दीर्घस्यापीति । अपिना त्रैपादिकस्य परिग्रहः । ध्वनितत्वादिति । तत्र हि शंशमयतेः—'अशंशमि' 'अशंशामि' 'शंशमम् शंशमम्' 'शंशामम् शंशामम्' इत्यत्र विकल्पेन दीर्घसिद्ध्यर्थं 'यङ्लोपे उपसंख्यानम्' इति वार्तिककृतोक्तम् । तदभिप्रायं 'यश्चात्र णिश्चिण्णमुल्परो न तस्मिन्नङ्गम्' इत्युक्त्वा 'लोपे कृते चिण्णमुल्परो भवति' इत्याशङ्क्य 'स्थानिवद्भावान्न चिण्णमुल्परः । ननु च प्रतिषिध्यते स्थानिवद्भावः, दीर्घविधिम्प्रति न स्थानिवत्' इति समाहितम् । अत्र "न पदान्त" सूत्रस्योपन्यासेन सपादसप्ताध्यायीस्थदीर्घस्यापि तेन दीर्घशब्देन ग्रहणम्भवतीति ध्वनितत्वादित्यर्थः । "वरे यलोपस्वरवर्जन्द्विर्वचनादीनि न वक्तव्यानि" इत्यत्र वर्ज्यकोटौ दीर्घस्यापि तस्य वाक्यस्योपलक्षणतया संग्रहः कार्यः ।

पाठेऽपीति । अस्य लाघवमस्तीत्यत्रान्वयः । तथाच षष्ठ्यन्ततया व्याख्यानपक्षे निषेध-

भावप्रकाशः ।

सखीवाक्यमिदमिति । राधा सखीत्यर्थः । तत्र—सखीवाक्ये । वास्तवभीरुत्वस्य तत्राभावाद् बहुशोऽभीरुकार्यकरणात्तात्पर्यार्थासम्पादनाच्चाह—आरोपितेति । एवेन सर्वथा तत्र तात्पर्यविषयत्वं सूचितम् । अन्यथोक्तदोष एव । अत एव त्वमेवेत्येवकारसङ्गतिः, अन्यथा त्वमपीति वदेत् । अत एव तदिममित्यादिस्वारस्यं मेघैरित्यादिनोद्दीपनविभावादिबोधनसाङ्गत्यं चेति भावः । नन्वेवन्नन्दनिदेशात् इत्यसङ्गतं स्यादत आह—नन्देति । भाविसुरतजनकत्वेन निदेशस्याऽऽनन्दनीयत्वमिति भावः । कर्मणि धननीयरौ । नन्दनदेशत—इति पाठस्समुचितः तत्रान्तर्भावितण्यर्थान्नन्द्यादेल्युः नन्दना सखी तदाज्ञात इत्यर्थः । ङ्यापोरिति बहुलग्रहणाद् ह्रस्वः ।

यत्तु ननु वरेयलोपस्वरवर्जं द्विर्वचनादि न कार्यमिति प्रत्याख्यानैकवाक्यतया दीर्घपदेन त्रैपादिक एव गृह्यते इत्यरुचेराह क्वौ विधिमिति मान्याः । तत्प्राचामनुरोधेनेति ध्वनयन्नाह—न पदान्तेति । एवं च तत्र दीर्घोऽपि बोध्य इति भावः । उत्तरहेतूक्तिस्तु उपायस्योपायान्तरादूषकत्वात् नानुपपन्ना इति तात्पर्यम् ।

अस्तीतीति । एवं च स एव पक्ष उचितः । एतेन तथा रत्नाकरदण्ड्याद्युक्तमपास्तम् । प्रतिपादि-

घसामर्थ्यानुसरणक्लेशो न कर्तव्यः । पूर्वस्मादपि विधौ स्थानिवत्त्वमाश-ङ्क्याह— न चेति । षाष्ठीमिति । "वाह ऊठ्" इत्यत्र ज्ञापितत्वेन तद्देशस्थत्वा-दिति भावः ।

इत्यसिद्धत्वादिति । नियमसूत्राणां विधिरूपेण प्रवृत्तिः सामान्यशा-

---

शब्दरत्नम् ।

निषेधानित्यत्वेन "वा नपुंसकानाम्" इत्यस्य सिद्धिरिति लाघवमस्तीति । आचित्य-मेव दर्शयति—एवं हीति ।

सामान्यशास्त्रेति । प्राप्तस्य पुनर्विधानसामर्थ्येन सामान्यशास्त्रस्य संकोचस्त-दितरपरतारूप इत्यर्थः। संकोचश्च नलोपविधा "पूर्वत्रासिद्धम्" इत्यस्यानुपस्थितिरूपः । अर्थवत्सूत्रे चार्थवत्पदेनार्थवत्समुदायाग्रहणरूपः । एवं चास्य विधित्वं स्पष्टम् । इदमेव च नियमस्य विध्यपेक्षया गुरुत्वम् । निषेधवादिनोऽप्यस्यावश्यकत्वम् , अन्यथा विकल्पाप

भैरवी ।

सामर्थ्यं यद्यपि नाश्रणीयन्तथापि "वा नपुंसकानाम्" इति वचनारम्भः कार्य इति गौरवं, सप्तम्यन्ततया व्याख्याने तु निषेधवचनारम्भेण "नलुमता" इत्यस्याऽनित्यत्वमात्रङ्कल्प्य-न्तावतैव "न ङिसम्बुद्ध्योः" इति वचनस्य प्रवृत्तिर्भविष्यति, "वा नपुंसकानाम्" इति नापू-र्वमिति लाघवात्सप्तम्यन्ततया व्याख्यानमुचिततरमिति भावः ।

प्राप्तस्य—"नलोपः प्रातिपदिकान्तस्य" इतिसूत्रेऽनुवर्तमान 'पूर्वत्रासिद्धम्'इत्यनेन सुबा-दिविधौ प्राप्तस्यासिद्धत्वस्य । संकोचस्य स्वरूपमाह—तदितरपरतेति । तथाच पूर्वत्रासिद्ध-मिति नलोपातिरिक्तविषयकमिति लब्धम् । एवञ्च यथाफलितन्तथाह—सङ्कोचश्चेत्यादिना । दृष्टान्तप्रदर्शनेनोक्तार्थदार्ढ्यायान्यत्रापि सामान्यशास्त्रतात्पर्यसङ्कोचमाह—अर्थवत्सूत्रे चेति । एवञ्च—पूर्वत्रासिद्धमित्यस्य नलोपाविषयकत्वसिद्धौ च । अस्य—"नलोपः सुप्" इतिसूत्रस्य । इदमेव च—नियमशास्त्रस्य सामान्यशास्त्रतात्पर्यसङ्कोचकत्वरूपमेव च । न केवलन्नियमशा-स्त्राणां विधायकत्ववादिमत एवैषा कल्पना किन्तु तेषान्निषेधरूपेण प्रवृत्तिरिति वादिमतेऽ-पीत्याह—निषेधवादीति । अस्य—इतरसङ्कोचस्य । अन्यथा—सामान्यशास्त्रस्य निषेधविष-यविषयकत्वस्यापि कल्पने । विकल्पापत्तेरिति । षोडशिग्रहणाग्रहणयोरिव विकल्पापत्तेरित्यर्थः । ननु यदि नियमशास्त्राणां विधिरूपेण प्रवृत्तिस्तदा "उभयप्राप्तौ कर्मणि" इतिसूत्रे 'षष्ठ्याः प्रतिषेधेऽकादिप्रयोगेऽप्रतिषेधः' इति वार्तिककारीयप्रतिषेधत्वकथनासङ्गतिरत आह—

भावप्रकाशः ।

तमिदमधस्तात् । एतेन छन्दसि सम्बुद्धेः सुपांसुलुगिति लुकः सत्त्वे तत्रापि निषेधाऽऽपत्त्या मूलं चिन्त्य-मिति खण्डनकृदुक्तमपास्तम् । अन्यदन्यतोऽनुसन्धेयम् ।

ननु विधिरूपेण प्रवृत्त्याऽस्य वैयर्थ्यम् । नलोपविधावनुवर्तमानपूर्वत्रासिद्धमित्यनेन सिद्धत्वादत आह—सामान्यशास्त्रेतीति । तदुपपादयति—प्राप्तस्येत्यादिना । तदितरेति । नलोपः प्राति-पदिकेतीतरेत्यर्थः । उक्तमेव विशदयति—सङ्कोचश्चेति । तादृशः सङ्कोचश्चेत्यर्थः । प्रासङ्गिकमाह—अर्थवदिति ।एवञ्चेति । तत्र तदनुपस्थितौ चेत्यर्थः । एवं सति सर्वथाऽप्राप्त्यर्थप्रापकत्वरूपविधिल-क्षणाक्रान्तत्वान्नलोपः सुबित्यस्य विधायकत्वं स्पष्टमित्यर्थः । इदमेव च—इतरसङ्कोचकत्वमेव । आवश्यक-त्वादिदमेव वरमित्याह—निषेधेति । नलोपादि अन्येषु असिद्धत्वं नेत्येवं व्याख्यातुरपीत्यर्थः । अस्य—इतरसङ्कोचकत्वस्य । विकल्पेति । उदिताऽनुदितहोमवदिति भावः । नन्वेवम् "उभयप्राप्तौ कर्मणि इति

शब्दरत्नम् ।

त्तेः । सामान्यशास्त्रसङ्कोचे चान्यत्र तदभावस्याप्यर्थतः सिद्धेः । अर्थसिद्धं तमादाय नियमशास्त्रेषु प्रतिषेधत्वव्यवहारोऽपि । कृत्तद्धितेतिसूत्रस्थसमासग्रहणकृतनियमेन बाध्यसामान्यचिन्तया कृदंशस्यापि सङ्कोच इति मूलकेनोपदंशमित्यादौ न कृदन्तत्वप्रयुक्तं प्रातिपदिकत्वम् । 'पञ्च पञ्चनखा भक्ष्याः' इति शास्त्रेणापि प्रापकप्रमाणरागप्राप्तभक्षणस्य तदितराविषयत्वरूपसंकोचकल्पनम् । तेनान्येषां भक्षणाभावो गम्यते, तद्ध-

भैरवी ।

सामान्यशास्त्रेत्यादि । अन्यत्र—कर्मातिरिक्ते कर्तरि । तदभावस्य—षष्ठ्यभावस्य । प्रकृतसूत्रविषये तु सुबादिचतुष्कादिभ्योऽन्यत्रेति कल्प्यम् । तम्—निषेधम् । एवञ्च तत्र तत्र प्रतिषेधत्वव्यवहारः फलितार्थकथनपरो नतु शब्दार्थपर इति भावः । नन्वेवं समासग्रहणकृतनियमेन सामान्यशास्त्रस्यार्थवत्सूत्रस्यैव सङ्कोचः स्यान्नतु कृद्ग्रहणस्येति मूलकेनोपदंशमित्यादौ "कृद्ग्रहणे गतिकारक"—इति परिभाषया दोषः स्यादेवेत्यत आह—कृत्तद्धितेतीति । बाध्येति । लक्ष्यानुसारादित्यादिः । नायम्प्रकारः पाणिनीयनियमशास्त्रविषय एव किन्तु स्मृतावपीत्याह—पञ्च पञ्चेति । प्रमाणरागेति । प्रमाणपदान्तस्य रागपदेन कर्मधारयः । तदितरेति । शशकादिपञ्चनखे-

भावप्रकाशः ।

षष्ठ्याः प्रतिषेधे ऽकादियोगे प्रतिषेधः" इति वार्तिकादिव्यवहारासङ्गतिरत आह—सामान्येति । अन्यत्र—सुबादिचतुष्काद्यन्यत्र द्वयोरप्यप्राप्तेरिति भावः । हारोपीति । अस्य सुवच इति शेषः । एवञ्च फलितार्थः स न तु शाब्द इति भावः । नन्वेवमपि मूलकेनोपदंशमित्यादौ कृदन्तत्वेन प्रातिपदिकत्वाऽऽपत्तिः, समासनियमेन येननाप्राप्तिन्यायादर्थवत्सूत्रस्यैव सङ्कोचकल्पनात् । निषेधमुखेन प्रवृत्तौ तु तथाऽप्यपवादेनाऽपि तेन परत्वेन "निषेधाश्च बलीयांसः" इति न्यायेन वा तस्यापि बाधादिष्टसिद्धिरित्याशङ्कां स्वमते उक्ताशयेनैव समाधत्ते—कृत्तेति । बाध्येति । लक्ष्यानुसारेणेति भावः । प्रयुक्तमिति । प्रयुक्तमपीत्यर्थः । प्रतिपादितमिदमधस्तात् । नायं प्रकारः शास्त्रे एव किन्तु अन्यत्रापीत्याह—पञ्चेति ।

सरला ।

भक्षणाभावो गम्यते इति । ज्ञानसामान्यार्थकस्य गमेरुपादानेन प्रतिषेधस्य (भक्षणाभावस्य) आर्थिकत्वं लभ्यते । अन्यथा भक्षणाभाव उच्यते इति वक्तव्यं स्यादिति । 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यत्र लिङ्गस्य विलम्बितप्रवृत्तिकत्वात् प्रथमप्रवृत्तश्रुत्याऽश्वरशनादानेऽप्राप्तमन्त्रविनियोगे बोधिते विनियोगाकाङ्क्षाया अभावेन लिङ्गस्याप्रवृत्तेर्गर्दभरशनादाने मन्त्रविनियोगो नैव प्राप्नोतीति अन्यनिवृत्तिरार्थिक्येव । एवं पञ्च पञ्चनखा भक्ष्या इत्यत्र शशक, शल्लक, गोधा, खड्गि, कूर्म रूपपञ्चनखभक्षणस्य तदितरवानरादिपञ्चनखभक्षणस्य च रागतो नित्यप्राप्तत्वेनाऽपूर्वविधिद्वारकान्यनिवृत्तिफलकस्य परिसंख्याविधेः 'इमामगृभ्णन्' इत्याश्रितस्यासम्भवेऽपि सामर्थ्यादन्यनिवृत्तिफलको नियमद्वारकः परिसंख्याविधिः पञ्चपदस्याऽवधारणविषयबुद्धिस्थशशकादिवृत्तिपञ्चत्वसंख्याविशिष्टे लक्षणयाऽऽश्रयणीयः । अवधारणविषयबुद्धिस्थशशकादिवृत्तिपञ्चत्वसंख्यावन्तः प्रेरणाविषयभूतभक्षणविषया इति बोधः । अवधारणं च स्वविषयसंख्यातिरिक्तसंख्याधिकरणासम्बन्धि समभिव्याहृतपदार्थप्रकारकज्ञानरूपम् । ततश्च बुद्धिस्थशशकादिवृत्तिपञ्चत्वसंख्यातिरिक्तसंख्याधिकरणवानराद्यवृत्तिभक्ष्यत्वरूपसमभिव्याहृतपदार्थप्रकारकं 'वानराद्यवृत्ति भक्ष्यत्ववन्तः' इति ज्ञानं तद्विषयसंख्याविशिष्टाः शशकादयो भक्ष्या इति बोधस्य वानरादावभक्ष्यत्वं विनाऽनुपपत्त्या रागतः सामान्यतः प्राप्तस्य भक्षणस्य शशकाद्यतिरिक्तवानरादिपञ्चनखविषयत्वनिवृत्तिः कल्प्यते । नचैतावता शाब्दत्वं शङ्क्यम्, वस्तुतो वानराद्यसंसृष्टस्य समभिव्याहृतपदार्थस्य मानसज्ञानविशेषणतया भानेऽपि शब्देन वानरादौ भक्ष्यत्वाभावस्याप्रतिपादनात् । न च विधिना शशकादौ भक्ष्यत्वप्रतिपादने तस्यावश्यानुष्ठेयत्वापत्तिः, अश्वरशनाऽऽदाने मन्त्रोच्चारणस्येवेति वाच्यम् । नियमद्वारकपरिसंख्यायां तथाऽनङ्गीकारात् ।

शब्दरत्नम् ।

क्षणे प्रायश्चित्तं च गम्यते । "पतिः समास एव" इत्यादौ एवकारो घिसञ्ज्ञाशास्त्रस्य समासाघटकपतिशब्दाविषयकत्वरूपसंकोचस्य स्फुटं द्योतनाय, पतिघटितसमा-

भैरवी ।

तरपञ्चनखकर्मकत्वाभावरूप इत्यर्थः। नन्वेवं "पतिः समास एव" इति सूत्रे एवकारं विनापीष्टसिद्धावेवकारवैयर्थ्यमत आह—पतिरिति । स्फुटमिति । समासपदोत्तरमेवकारोपादानेन यत्रैवकारस्ततोऽन्यत्र नियम इति सामान्यतः क्लृप्तो यो व्यवहारस्तद्विषयतायाः सत्त्वेनेष्टार्थसिद्धिः

भावप्रकाशः ।

प्रापकं प्रमाणं यो राग इत्यर्थः । अन्येषां-पञ्चभिन्नानां शास्त्रान्तराविहितानां पञ्चनखानामपञ्चनखानां च । नन्वेवं पतिः समास एवेत्यादावेवकारो व्यर्थोऽत आह—पतिरिति । समासघटकेति पाठः । स्फुटत्वं च विपरीतार्थनिरासपूर्वकेष्टोक्तार्थविषयकत्वद्योतनम् । तत्रानुक्तं तन्निरासमाह—पतीति । इतिर्हेतौ, यत एतदर्थसम्भवोऽतस्तन्निरासपूर्वकोक्तार्थस्य द्योतनाय स इति भावः । नन्वेवमन्ययोगव्यवच्छेद एव-

सरला ।

यद्वा—प्रापकप्रमाणस्य यत्र नियतत्वं तत्रावश्यानुष्ठेयत्वम् । यत्र तु तस्याऽनियतत्वन्तत्र नाऽऽवश्यकत्वम् । अवघाते प्रापकं प्रमाणं पुरोडाशादिविधिरूपं, मन्त्रविनियोगे लिङ्गरूपं श्रुतिरूपं वा नियतमेवेति तदनुष्ठानमावश्यकम् । शशकादिभक्षणप्रापकं रागरूपन्त्वनियतम् । दोषदर्शनादिना रागस्य निवृत्तेः । "पञ्च पञ्चनखा भक्ष्याः" इति शास्त्रन्तु रागस्य नियमेन प्रवृत्तिप्रयोजकत्वात् शीघ्रप्रवृत्तिकत्वाच्च पूर्वमेव नियमेन भक्षणप्राप्तौ प्रापकं न भवतीति किन्तु अन्यनिवृत्तिफलकमभ्यनुज्ञामात्रं करोति इति न प्रापकम् इति तद्विषयस्य भक्षणस्य नावश्यकत्वम् । अभ्यनुज्ञाविधिविषयस्य च सर्वथा निवृत्तिप्रयोजकबलवदनिष्टसाधनत्वाभावमात्रप्रतीतेः, इष्टसाधनत्वस्य विधिनाऽप्रतीतेः रागत एव तत्र प्रवृत्तिरिति न तस्य धर्मत्वमिति विरागिणान्तत्राप्रवृत्तावपि न तदननुष्ठानमूलकम्पापन्तेषामुद्भवति । अत एव विवाहाद्यननुष्ठानेऽपि न तेषाम्प्रत्यवायः । रागनिवृत्त्या तत्राधिकारस्य तेषां निवृत्तत्वात् । "अग्नीषोमीयवपायां हुतायां दीक्षितान्नमश्नीयात्" इति विहितेऽशनस्यापि अभ्यनुज्ञाविषयत्वमेवेति न तस्य धर्मत्वम् , नाप्यधर्मत्वन्तस्य । वेदबोधितानिष्टसाधनताकत्वाभावात् ।

व्याकरणशास्त्रेऽपि नियमद्वारिका परिसंख्या निवृत्तिफलिकाऽऽश्रीयते न तु शाब्दीनिवृत्तिः । दोषत्रयाऽऽपत्तेः । अत एव सर्वत्र एवगर्भ एव वाक्यार्थः प्रदर्श्यते । यथा–'कर्मण्येव षष्ठी स्यात्' इत्यादि । प्रापकप्रमाणस्य सामान्यशास्त्रस्य नियतत्वाच्च तत्तद्विधेयस्याऽऽवश्यकत्वमेवेति न पाक्षिकत्वाऽऽपत्तिरपि । तस्मात् विधिमुखेन प्रवृत्तौ दोषाभावात् दोषत्रयविशिष्टा निषेधमुखेन प्रवृत्तिर्नाङ्गीकार्येति मञ्जूषायां विस्तरः ।

एतेन "सर्वविधमांसभक्षणस्य रागतः प्राप्तत्वात्, इच्छायाश्च सङ्कोचासम्भवात् क्वचिन्निषेधमुखेनापि प्रवृत्तिरङ्गीकार्या । गमेर्ज्ञानार्थकत्वेन शाब्दबोधविषय इत्यर्थेनाविरोधात् । किञ्च "पञ्च पञ्चनखा भक्ष्याः" इत्यस्य विधित्वे 'अहरहः सन्ध्यामुपासीत' इत्यनेन सन्ध्याकरणाऽभावस्याऽनिष्टजनकत्वबोधनवदभक्ष्यस्याप्यनिष्टजनकत्वबोधापत्तिः ।

प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ।

इत्येतद्विरोधापत्तिश्च । किञ्च विधिमुखेन प्रवृत्तिस्वीकारे "तपस्तपः कर्मकस्यैव" इत्यत्र तप इति योगं विभज्य सकर्मकाणाञ्चेत्तप एवेति नियमेन 'सकर्मकाणां प्रतिषेधो वक्तव्यः' इति वार्तिकं प्रत्याचक्षाणेन भगवतोक्ते योगविभागेऽन्यतरयोगस्य वैयर्थ्यापत्तिः" इत्यपास्तम् । सर्वदोषाणां परिहृतत्वात् । "तपस्तपः कर्मकस्यैव" इत्यत्र तप इति योगस्य तप् धात्वतिरिक्ते सकर्मकमात्रे कर्मवद्भावनिवृत्तिफलकत्वेन वैयर्थ्याभावाच्चेति दिक् ।

सुतात्पर्यसङ्कोचकता चेति पक्षस्य "द्युद्भ्यो लुङि" इति सूत्रे भाष्यकृता ध्वनि-तत्वादिति भावः। निषेधरूपेण प्रवृत्तिरिति पक्षे तु "पूर्वत्रासिद्धम्" इत्यनेनेति

शब्दरत्नम्।

सान्यसमासाविषयकत्वरूपसंकोचो मा भूदिति। अन्ययोगव्यवच्छेद एवकारार्थ इति तु सामान्यप्रमाणसङ्कोचफलितमर्थमादाय नेयम्। द्युद्भ्यो लुङीति। "द्युद्भ्यो लुङि" इति सूत्रमुपक्रम्य "अनुपराभ्याम्" इति सूत्र इत्यर्थः।'पञ्च पञ्चनखा भक्ष्याः' इत्यत्र भक्ष्यनियमे-ऽभक्ष्यप्रतिषेधो गम्यते' इति ग्रन्थेन पस्पशायां च भाष्ये स्पष्टमेतत्। भक्ष्यनियमे—प्राप्त-भक्ष्यस्य पुनर्विधाने इत्यर्थः। निषेधरूपेणेति। सुबादिपदस्य स्वव्यतिरिक्तविधौ लक्ष-णया, भवतीत्यस्य च न भवतीत्यर्थे लक्षणयेति भावः। निषेधश्च नलोपविधावनुवर्तमा-नपूर्वत्रासिद्धत्वस्य। अत एवात्र स्वार्थहानि-प्राप्तबाध-परार्थकल्पनारूपदोषत्रयं मीमांस-

भैरवी।

स्फुटेति भावः। तान्त्रिकव्यवहारस्याप्युपपत्तिमाह—अन्ययोगेति। अत्र तुना प्रकारान्तरेण तस्याऽयुक्तत्वमेवेति ध्वनितम्। "द्युद्भ्यो लुङि" इति सूत्रस्याव्याख्यानादाह—द्युद्भ्य इति। तत्र हि "अनुपराभ्याम्" इति सूत्रस्य प्रयोजनकथनावसरे 'स्वरितजितः' इत्यनेन परस्मै-पदस्य प्रतिषेधात् कृञादिष्वनेन परस्मैपदं विधीयते' इत्युक्त्वा 'यद्यनेन परस्मैपदं विधीयते तर्हि आत्मनेपदस्य प्रतिषेधो वक्तव्य' इति पूर्वपक्षे 'न वा द्युतादिभ्यो वावचनात्—यदयं द्युतादिभ्यो वावचनङ्करोति तज्ज्ञापयत्याचार्यो न परस्मैपदविषये आत्मनेपदम्भवति' इत्युक्त्वा 'यद्वा यथा कर्त्रभिप्राये क्रियाफले आत्मनेपदेन परस्मैपदं बाध्यते, एवम्परस्मैप-देनाप्यात्मनेपदम्बाधिष्यत इति कृञादिभ्य आत्मनेपदस्य प्रतिषेधो न वाच्यः' इत्युक्तम्। यदि नियमशास्त्रस्य निषेधमुखेन प्रवृत्तिः स्यात्तदा निषेधस्य शाब्दत्वाद्बाध्यत इत्युक्तिरस-ङ्गता स्यात्, नियमस्थले प्रतिषेधत्वव्यवहारो गम्यमानार्थमादाय नतु शब्दार्थमादायेत्यत्र भाष्यमपि प्रमाणमित्याह-पञ्च पञ्चेति। न च पञ्च पञ्चेत्यस्य परिसङ्ख्योदाहरणत्वात्कथन्नि-यमत्वव्यवहारः, परिसङ्ख्यातो नियमेऽस्ति विशेषः, पाक्षिकाप्राप्तिकांशपरिपूरणफलो नियमः, परिसङ्ख्या तु अन्यनिवृत्तिफलेति वाच्यम्? नियमेऽप्यप्राप्तांशपरिपूरणेनार्थिकान्यनिवृत्तेः सत्त्वेनाभेदमाश्रित्य परिसङ्ख्याविषयेऽप्यत्र शास्त्रे नियमत्वव्यवहारस्य कृतत्वात्। प्रकृते नियमश्चात्मनेपदादिविधायकादीनाम्बोध्यः। निषेधरूपेण प्रवृत्तिप्रकारन्दर्शयति—सुबादीति। नन्वत्र निषेध्याभावादेतदयुक्तमत आह—निषेधश्चेति। अत एव-निषेधरूपेण प्रवृत्तौ लक्षणा-ङ्गीकारादेव। अत्रेति। अस्य मीमांसकैरुच्यत इत्यत्रान्वयः। अत्रेत्यस्य परिसङ्ख्यायामि-

भावप्रकाशः।

कारार्थ इति तान्त्रिकमतोच्छेदापत्तिरत आह—अन्येति। सामान्यप्रमाणेति। सामान्यशास्त्रेत्यर्थः। अत्र तुनाऽरुचिर्बोधिता। वस्तुतोऽन्यप्रकारेणाऽयुक्तमेवैतदिति। अत एव नेयमित्युक्तम्। स्पष्टं चेदं मञ्जूषायामेवकारवादे। द्युद्भ्योलुङीति सूत्रस्य भाष्यास्पृष्टत्वादाह—द्युद्भ्य इति। तत्र हि 'आत्मनेपदप्रतिषेधो वाच्यो न वा द्युतादिभ्यो वावचनात्' इत्युक्त्वा 'यद्वा यथा कर्त्रभिप्राये क्रियाफले आत्मनेपदेन परस्मैपदं बाध्यते एवमत्र विपरीतं भविष्यतीति स न वाच्य' इत्युक्तम्। निषेधमुखेन प्रवृत्तौ हि तन्निषेधस्य शाब्दत्वाद् बाध्यत इत्युक्तिरसङ्गतैव स्यात्। ध्वनितत्वादस्पष्टत्वे विशेषादाह—पञ्चेति। प्राप्तेति—अस्य रागेत्यादिः। निषेधमुखप्रवृत्तेरेव नियमत्वे तु तदसङ्गतिः स्पष्टैव। नन्वस्य परिसंख्यात्वात्कथं नियमत्वेन व्यवहारः, अस्ति चानयोर्भेदः पाक्षिकाप्राप्तिकाप्राप्तांशपरिपूरणफलो नियमः, अन्यनिवृत्तिफला च परिसंख्येति चेन्न। नियमेऽप्यप्राप्तांशपरिपूरणरूपफलबोधनद्वाराऽर्थाऽन्य-निवृत्तेः सत्त्वेनाभेदमाश्रित्योक्तेः। प्रकृते च परिसंख्याविषयः, नियमस्त्वत्रात्मनेपदविधायकादौ बोध्यः। नन्वेवमपि निषेध्याभावादयुक्तमेतदत आह-निषेधश्चेति। अतएवेति। तथा प्रवृत्तौ लक्षणाङ्गीकारा-

बोध्यम् । सुब्विधिमुदाहरति—आत्वमित्यादिना । स्वरविधौ तु—पञ्चार्मम् । "दिक्संख्ये संज्ञायाम्" इति समासे नलोपे कृते अवर्णान्तं पूर्वपदं जातमिति "अर्मे चावर्णं द्व्यच्त्र्यच्" इति पूर्वपदाद्युदात्तत्वं प्राप्तं नलोपस्यासिद्धत्वान्न

शब्दरत्नम् ।

कैरुच्यते, परिसंख्यापदेन चायं व्यवह्रियते इति बोध्यम् । इति पक्षे त्विति । अनेना रुचिर्बोधिता । तद्बीजं तु लक्षणायां गौरवं फलाभावश्च, तदभावे लक्षणाया अनौचित्यं चेति । इति समासे इति । इत्यनुवर्तमाने 'तद्धितार्थ' इति समासे इत्यर्थः । 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति तु नात्र, तस्य स्वरोद्देश्यकविधावेव प्रवृत्तेः । "नोत्तरपदेऽनुदा ाादावपृथिवीरुद्रपूषमन्थिषु" इति सूत्रे देवताद्वन्द्वे उत्तरपदप्रकृतिस्वरनिषेधके

भैरवी ।

त्यर्थः । अयं–नियमः । यद्यपि मीमांसकमते भेदस्तथाप्युक्तभाष्यादस्मच्छास्त्रे नियमोऽपि तादृश एवेति परिसङ्ख्याविषयेऽपि नियमत्वव्यवहारः । ननु निषेधरूपेण नियमशास्त्रस्य प्रवृत्तिरिति पक्षेऽस्तु तथा, विधिरूपेण प्रवृत्तिरिति पक्षे तु कथमुभयोरभेदलाभ इति चेच्छृणु, यथाश्रुतशब्दात्प्रतीयमानेऽर्थे तात्पर्याभावात्तात्पर्यतस्त्यागः, अन्यार्थे तात्पर्यकल्पनेन तात्पर्यतः परार्थकल्पना, प्राप्तस्यार्थस्य बाधश्चेति । लक्षणायाम्–उभयत्र लक्षणायाम् । फलाभावः—विधिरूपेण प्रवृत्तिस्वीकारेणोपपत्तौ पक्षान्तरं स्वीकृत्य लक्षणाकल्पने फलाभावः । तदभावे–फलस्याभावे, रूढ्यन्यलक्षणायाः फलवत्त्वनियमादिति भावः । ननु लोपस्यासिद्धत्वेऽपि व्यञ्जनस्याविद्यमानवद्भावेनावर्णान्तत्वमस्त्येवेत्यत आह—स्वरविधाविति । स्वरोद्देश्यकविधित्वञ्च स्वरविशेषानुवादेन विधित्वम् । तत्र मानमाह—नोत्तरपद इति । अत्रानुदात्तादाविति कथनेन स्वरोद्देश्यकविधित्वं स्पष्टमेव । व्यञ्जनस्याविद्यमानवद्भावाभावे पृथिव्यादीनामनुदात्तादित्वाभावादप्राप्ता तद्वैयर्थ्यं स्पष्टमेव । स्वरोद्देश्यकविधावेव तस्य प्रवृत्तौ

भावप्रकाशः ।

देवेत्यर्थः । अत्र—नियमे । अयं—नियमः । चो व्यवह्रियते इत्यग्रे योज्यः । तथाच तेषां मते इवास्मन्मतेपि विधिनिषेधरूपाभ्यां यद्यपि तयोर्भेदः तथाप्युक्तभाष्यादत्र शास्त्रे सापि नियमपदेनोच्यतइति भावः । वस्तुतो दोषत्रयमाद्येऽपि बोध्यम् । यथाश्रुते प्रतीयमाने स्वार्थे तात्पर्याभावात्तात्पर्यतस्त्यागोऽन्यार्थे तात्पर्याङ्गीकारेण तात्पर्यतः परार्थकल्पना प्राप्तबाधश्चेति वक्तुं शक्यत इति बोध्यम् । लक्षणायाम्—अनेकलक्षणायाम् । ननु रुढेरविषयेऽपि फलवशादेकलक्षणावत्तदङ्गीकारो ऽत आह—फलेति । ननु तदभावेऽपीष्टाऽनुरोधेन तदङ्गीकारो ऽत आह—तदभावे इति । फलाभावे इत्यर्थः रूढ्यन्यलक्षणायाः फलवत्त्वनियमात्तदन्यतृतीयहेतोरभावादिति तदभावः । अत्रत्यं तत्त्वं मञ्जूषातो ऽवगन्तव्यम् । इत्यनुवर्तमाने तद्धितार्थेति समासे इति । इत्यतो दिक्संख्ये इत्यनुवर्तमाने तद्धितार्थेति समाहारसमासे इत्यर्थः । न चैवमेव मूले कुतो नोक्तम् ? प्रकाशानुरोधात् । एतेन यथाश्रुतं दण्ड्याद्युक्तं "दिक्संख्ये" इति समासे एकवचनमनुपपन्नमिति रत्नाकरोक्तं च संज्ञाभावान्मूलमयुक्तं सम्पूर्णसूत्रानुवृत्त्या टीकाऽयुक्तेति मन्दोक्तं चापास्तम् । नन्वेवमप्यत्र स्वरविधाविति परिभाषया स्वरे इष्टापत्तिरेवेति सूत्रे स्वरग्रहणं व्यर्थमेवात आह—स्वरेति । तस्य–स्वरविधाविति न्यायस्य । तत्रैव तत्प्रवृत्तौ यद्यपि स्वरग्रहणं हेतुः सम्भवति तथापि निःसन्दिग्धहेतुमाह–नोत्तरेति । "उभे वनस्पत्या" इत्यतउभे युगपदिति च, "प्रकृत्या भगालम्" इत्यतः प्रकृत्येत्यस्य चानुवृत्तियुतेन "देवताद्वन्द्वे च" इति पूर्वसूत्रेण प्राप्तस्य उभयपदप्रकृतिस्वरस्य प्रतिषेधोऽयमत एवेहापि तत्सर्वमनुवर्तते तदाह—देवतेति । पूर्वोत्तरपदेति पाठः । निषेधके इत्यनेन स्वरोद्देश्यकविधित्वं निरस्तम् । स्वरोद्देश्यकविधित्वं तु स्पष्टमेव । अत एव वक्ष्यति—तथैवेति । आयइन्द्रावरुणाविति, इन्द्राग्निभ्यां कंवृषण इति च विधिनिषेधयोर्लक्ष्यं,

भवति। सञ्ज्ञाविधौ—'पञ्चेत्यत्र नलोपे कृतेऽपि' इत्यादिना स्त्रीप्रत्ययेषु वक्ष्यति। कृति तुग्विधौ तु—वृत्रहभ्याम्। "ह्रस्वस्य पिति" इति तुग् न। कृति किम्? वृत्रहच्छत्रम्। "छे च" इति तुक् स्यादेव। प्रतिदिवेति। "कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः" इति कनिन्।

"हलि च"। यत्तु प्राचा "उपधायां च" इत्युपन्यस्तम्; तन्न, दिवेर्वकारस्यानुपधात्वात्।

"इनहन्" ॥ उपधाया इति। उपधादीर्घस्यैवायं नियमः। तेन 'वृत्रहायते'

## शब्दरत्नम्।

पृथिव्यादिपर्युदासरूपधर्मिग्राहकस्य तथैव सत्त्वात्। अत एव "अचः कर्तृयकि" "शतुरनुमो नद्यजादी" इत्यादौ 'अच' इति 'अजादी' इत्यादि च चरितार्थम्। अत एव राजवतीत्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वाद् "अन्तोऽवत्याः" इति स्वरो न। उदश्वित्वानित्यत्र "ह्रस्वनुड्भ्याम्" इति मतुबुदात्तत्वं च नेत्याकरः। इदं "समासस्य" इति सूत्रे भाष्ये स्पष्टम्। इदमेवाभिसन्धाय "यतोऽनावः" इत्येतन्निषेधमूलकं हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्' इति परिभाषान्तरं भाष्ये तत्रैव स्पष्टमुक्तम्। अनुपधात्वादिति। धातोरुपधाभूतरेफवकारयोर्हल्परयोरिति तदर्थादिति भावः।

## भैरवी।

गमकान्तरमाह—अत एवेति। तत्रैव तत्प्रवृत्तेरेवेत्यर्थः। "अचः" कर्तृयकि अजन्तानामित्यर्थः। स्वरकर्मकविधावप्यविद्यमानवद्भावेऽज्ग्रहणवैयर्थ्यं स्पष्टमेव। अत एव—उक्तोऽर्थः। अस्याऽऽकर इत्यत्रान्वयः। इदमिति। प्रागुक्तमित्यर्थः। इदमेव—स्वरविधाविति परिभाषायाः स्वरोद्देश्यकविधौ प्रवर्तनमेव। तत्रैव—समासस्येतिसूत्रभाष्य एव। परिभाषान्तरस्य प्रयोजनन्तु राजदृषदित्यादि। ननु प्रतिदीव्न इत्यत्रानुपधात्वादिति कथनमसङ्गतन्तस्योपधात्वस्य स्पष्टत्वादित्यत आह—धातोरिति। एतेन मूलेऽनुपधात्वादित्यस्य धातोरित्यादिः सूचितः।

## भावप्रकाशः।

इन्द्र आद्युदात्तो रन्नन्तत्वात्, अग्निरन्तोदात्तः फिट्स्वरेण, वरुणस्तूनर्वन्नन्तानामित्याद्युदात्तः। एवं चान्त्ये समाससामान्यस्वरः। धर्मीति। तत्रैव प्रवृत्तिर्धर्मस्तद्धर्मी—उक्तपरिभाषारूपः। ग्राहकस्येत्यग्रे मानस्येति शेषः। अन्यथा पृथिव्यादीनामनुदात्तादित्वाऽभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव। गमकान्तरमप्याह—अत एवेति। तत्रैव तत्प्रवृत्तेरेवेत्यर्थः। उपदेशेऽजन्तानां कर्तृयकि आदिरुदात्तो वा। लूयते केदारः स्वयमेव। अनुम् यः शता तदन्तादन्तोदात्तात् परा नदी अजादिः शसादिश्चोदात्ता। अच्छारवं प्रथमा जानती कृण्वते। अजादी इति। विसन्धिः पाठः। स्वरमात्रविधौ तत्प्रवृत्तौ सर्वत्र तदन्तत्वतदादित्वसत्त्वात्तद्वैयर्थ्यमेव। आदिभ्यां "स्वपादिर्हिंसाम्" इत्यत्राऽचीति, "कर्षाऽत्वत" इत्यत्र मतुप्च "ह्रस्वनुड्भ्याम्" इत्यत्र नुट् च संगृह्यते। एवं सूत्राऽभिमतत्वेऽपि तस्य भाष्याऽद्यभिमतत्वं ध्वनयति—अत एवेति। उक्तोऽर्थः। अस्य चाऽऽकर इत्यत्राऽन्वयः। अवतीशब्दस्यान्त उदात्तः। वेत्रवती। इदं भाष्याद्यनुक्तमप्युक्तप्रायमिति ध्वनयितुन्तदुक्तमाह—उदेति। अत एवाऽऽकरपदोल्लेखः नन्वृद्धयोपादानं च। मतुबुदात्तत्वं नेति निश्चः पाठः। ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्तः। योऽब्दिमाँ उदनिमाँ इयर्ति। अक्षण्वन्तः। अन्यथा तु स्यादेवेत्याकराऽसङ्गतिः स्पष्टैव। इदं—प्रागुक्तं सर्वम्। तस्याः तद्ध्वनितत्वं पोषयति—इदमेवेति। तस्यास्तत्रैव प्रवर्तनमेवेत्यर्थः। इत्येतदिति। इत्यत्रत्याऽनाव इत्येतदित्यर्थः। यदन्तं द्व्यच्कमाद्युदात्तम्। युञ्जन्त्यस्य काम्या। तत्रैव—समासस्येति सूत्रे एव। राजदृषदित्यादौ स्वरविध्यर्थमिति शेषः। तस्याः सार्वत्रिकत्वे तदङ्गीकारो वृथैवेति भावः। इदं च ज्ञापकं प्रागुपपादितम्। ननु वस्यानुपधात्वस्य ब्रह्मणाऽपि दुर्वचत्वमत आह—धातोरिति। तथा च मूलेऽ-

इत्यत्र "अकृत्सार्वधातुकयोः" इति दीर्घो भवत्येव । तथा 'वृत्रहणी' इत्यत्र "अनुनासिकस्य क्विझलोः" इति यो दीर्घः सोऽपि नियमेन व्यावर्त्यते, उपधादीर्घमात्रापेक्षया नियमविज्ञानादिति भावः ।

"हन्तेरत्पूर्वस्य" इति सूत्रं योगविभागेन व्याचष्टे—"हन्तेः" । प्रसङ्गादस्योदाहरणमाह—प्रहण्यादिति ।

प्रकृतोपयुक्तमंशमाह—अत्पूर्वस्य ॥ एकाजुत्तरेति । न चाल्लोपे कृते एकाच्त्वं नास्तीति वाच्यम् । पूर्वस्मादपि विधौ स्थानिवत्त्वात् । न च 'पूर्वत्रासिद्धे न स्थानिवत्' इति वाच्यम् । 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इत्युक्तेः । यत्तु—"अट्कुप्वाङ्" इति सूत्रे 'वृत्रघ्नः, स्रुघ्नः' इति भाष्यमुपादाय कैयटेन

## शब्दरत्नम् ।

प्रतिदिवन्शब्दादाचारक्विप्यपि अनुनासिकस्येति दीर्घे इदं रूपं दुर्लभम् । वस्तुतो हलन्तेभ्य आचारक्विपोऽनभिधानमन्यत्रोक्तम् ।

तथेति । यथोपधाग्रहणादकृदिति दीर्घाव्यावृत्तिस्तथा सर्वनामस्थानग्रहणाऽसम्बद्धोपधापदानुवृत्तेरस्य व्यावृत्तिरित्यर्थः ।

## भैरवी ।

यत्तु प्रतिदिवन्शब्दादाचारक्विबन्तात्कर्तरि यत्र क्विप् तत्पर एवायङ्ग्रन्थ इति कश्चित् । तन्नेत्याह—प्रतिदिवन्नित्यादि । अन्यत्र—"ह्रस्वनद्यापः" इति सूत्रस्थे विवरणे, तत्र सूत्रे भाष्ये "कास्प्रत्ययात्" इति विहितस्यामो "ह्रस्वनद्यापः" इति सूत्रे ग्रहणमाशङ्क्याऽकारेणानुबन्धेनाऽस्यामः सानुबन्धकत्वात्समाधायाकारोऽनुबन्धो न कार्यः । नच तदभावे मस्येत्त्वापत्तिः ? फलाभावादित्सञ्ज्ञा न भविष्यतीति कथिते मिदचोऽन्त्यात्परत्वम्प्रयोजनम्भविष्यतीत्याशङ्कायां "प्रत्ययादयमाम् विधीयते तत्र नास्ति विशेषो मिदचोन्त्यात्परत्वे प्रत्ययपरत्वे वा" इत्युक्तम् । यदि हलन्तेभ्य आचारे क्विप्स्यात्तदा विशेषः स्पष्ट एवेति तथा कथनेनाऽनभिधानन्ध्वनितमिति भावः ।

दृष्टान्तदार्ष्टान्तिकयोरेकत्वाभावात्तथेत्यनुपपन्नमतस्तद्योजयति—यथोपधेति । एवञ्च वैषम्येऽयन्दृष्टान्तः । नन्वेवं सति पथीनति मथीनतीत्यादावप्युपधादीर्घो न स्यादिति नामधातुस्थपरममूलविरोध इति चेन्न । माधवानुरोधेन तस्य ग्रन्थस्य सत्त्वात् । अयं हि तदाशयः-नियमस्य सजातीयापेक्षत्वं सुप्रसिद्धमिति सर्वनामस्थाननिष्ठसर्वनामस्थानत्वस्यवानपेक्षा नतु तद्गतसुप्त्वस्येति सुबानन्तर्य एव नियमफलनिषेधस्य प्रवृत्तिरिति । परे तु तेषामप्युक्तरीत्याऽनभिधानमेवेत्याहुः ।

## भावप्रकाशः ।

नुपधात्वादित्यस्य धातोरित्यादिर्बोध्यः । खण्डनकृदुक्तिं खण्डयति—प्रतीति । क्विप्यपीति । तथा च तस्य तत्त्वात्सूत्रप्राप्त्या प्राचोक्तं युक्तमेवेति भावः । क्विप्यपीति पाठेऽपि सत्सप्तमी निमित्तत्वफलिका । दीर्घ इति । तदापत्तावित्यर्थः । निमित्तत्वफलिका सत्सप्तमीऽयम् । एवं प्रयोगमङ्गीकृत्य दोषमभिधाय वस्तुतः स एव नेत्याह—वस्तुत इति । अन्यत्र—"ह्रस्वनद्याप" इत्यत्रत्यकैयटादौ तत्रत्यभाष्यप्रामाण्यात् । तत्र हि कास्प्रत्ययेत्यत्रत्यामो ह्रस्वनद्याप इत्यादौ ग्रहणमाशङ्क्य निरनुबन्धकपरिभाषया निवार्य स एव मास्तु—इत्कार्याभावान्मस्य नेत्संज्ञा, मिदचोऽन्त्यादिति तु न तत्कार्यं, यतः प्रत्ययान्तादयं विधीयते तत्र नास्ति विशेषस्तेन परत्वे प्रत्ययपरत्वे वेत्युक्तम् ।

प्रकाशग्रन्थादधिकं पतितं तथेति पदं योजयति—यथेति । उपधाग्रहणात् तद्दीर्घस्यैव नियमात् । मूलस्थोपधादीर्घमात्राऽपेक्षयेत्यस्याऽर्थसूचनायाऽऽह—सर्वेति । एवं च वैषम्ये दृष्टान्तः इयमपि परि-

व्याख्यातं—"प्रातिपदिकान्त" इति णत्वप्रसङ्ग इति, तत् पञ्चमीसमासो मास्त्वित्याशयेन, तस्य दोष इत्यत्र णत्वग्रहणं मास्त्वित्याशयेन वा बोध्यम्। णत्वग्रहणप्रत्याख्यानं तु भाष्ये ध्वनितं कौस्तुभे प्रपञ्चितम्। वस्तुतस्तु "कुमति च" इति नित्यं णत्वमिह न्याय्यम्। सर्वथाऽपि वैकल्पिकं नित्यं वा प्राप्तं णत्वं नियमेन निवर्त्यत इति सिद्धम्। भाष्ये तु–'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः। किंप्रयोजनम्? वृत्रघ्नः, स्रुघ्नः, प्राघानि। "हन्तेरत्पूर्वस्य" इति अत्पूर्वग्रहणं न कर्तव्यं भवति' इत्युक्तम्। एतच्च वार्तिकाशयवर्णनमात्रं, न तु वस्तुस्थितिः। वार्तिकेन सूत्रावयवप्रत्याख्यानाऽपेक्षया योगविभागमाश्रित्य वार्तिकार्थोप-

---

शब्दरत्नम्।

**पञ्चमीसमासो मास्त्विति**। सार्वत्रिको मास्तु अनित्यत्वादित्यर्थः। तदनित्यत्वेन स्थानिवत्त्वाभावे एकाच्त्वाभावादेव 'एकाजुत्तर' इति णत्वव्यावृत्तिः सिद्धेति भावः। **णत्वग्रहणमिति**। माषवपनीत्येतद्धि तत्प्रयोजनम्। तच्च बहिरङ्गतया "यस्येति च" इत्यल्लोपासिद्धत्वेनापि सिद्धमिति तन्मास्त्विति भावः। इदं त्रिपाद्यां तत्परिभाषाप्रवृत्त्यभिमानेन। **भाष्ये ध्वनितमिति**। अन्यथासिद्धमाषपवनीत्येतस्य तदुदाहरणत्वोक्त्येत्यभिमानः। **न्याय्यमिति**। तस्य प्रातिपदिकान्तेत्यपवादत्वादिति भावः।

भैरवी।

मूले पञ्चमीसमासो मास्त्विति। 'वेभिदिता' 'माथितिकः' 'अपीपचन्' इत्येतदुदाहरणानामन्यथासिद्धेः प्रदर्शनान्मास्त्वित्यर्थः। वस्तुतस्तु प्रत्यैषिषन्नित्यादेरुक्तरीत्या तदुदाहरणत्वसम्भवेन तस्यावश्यकत्वेऽपि "निष्ठायां सेटि" इतिसूत्रे सेड्ग्रहणेन तस्याऽनित्यत्वं ज्ञापितमिति स सार्वत्रिको नेति मास्तु इत्यस्य इहेत्यादिः पूरणीय इत्याशयेनाह—**सार्वत्रिक इति**। 'तस्य दोष' इति वचनस्थणत्वग्रहणस्याभावेऽपि तदीयप्रयोजनान्यथासिद्धिमुपपादयति—**माषेत्यादिना**। इदम्–बहिरङ्गत्वेन "यस्येति च" इति लोपस्यासिद्धत्वप्रदर्शनम्। **अन्यथासिद्धेति**। उक्तरीत्याऽन्यथासिद्धेत्यर्थः। **अभिमान इति**। एतद्बीजन्तु त्रिपाद्यां सर्वथा बहिरङ्गपरिभाषा न प्रवर्तत इत्यसकृदावेदितमिति। न्याय्यत्वे साधकमाह—**तस्येति**।

भावप्रकाशः।

संख्यै व। एतेन नामधातुप्रक्रियायामुक्तानि पथीनतीत्याद्युदाहरणान्यपास्तानि पूर्वापरविरुद्धानि च। पथेनतीत्यादीनि वाच्यानि। वस्तुतोऽनभिधानमेव तेषामिति तत्त्वम्।

ननु अपीपचन्नित्याद्यर्थं पञ्चमीसमासस्यावश्यकत्वोक्तेर्मूलमयुक्तमत आह—**सार्वेति**। एतेनोक्तरीत्या मूलं चिन्त्यमिति रत्नाकरोक्तमपास्तम्। **भाष्ये ध्वनितमिति**। "अनितेरन्तः" इति सूत्रे इति शेष इति मान्योक्तिः प्राचामनुरोधेन, तद्भाष्यस्य पञ्चमीसमासानित्यत्वाशयकत्वात्। अत एव न पदान्तसूत्रस्था तथा कौस्तुभोक्तिश्चिन्त्या। अत एवाभिमानादुल्लेखस्तद् ध्वनयन्नाह—**अन्यथेति**। उक्तरीत्येति भावः। **तदुदाहरणेति**। नपदान्तेत्यत्रत्य–'तस्य दोषः' इत्यत्रत्यणत्वोदाहरणेत्यर्थः। एवं च नोक्तार्थस्य भाष्यध्वनितत्वं न वा युक्तिसहत्वमित्यभिमानपदाभ्यां सूचितम्। सर्वथा त्रिपाद्यान्तरप्रवृत्तेरसकृदावेदितत्वात्। एतेन तथा रत्नाकरोक्तमपास्तम्। न्याय्यत्वे हेतुमाह—**तस्येति**। कुमतिचेत्यस्य। एवं च कैयटश्चिन्त्यः, प्रातिपदिकान्तेत्यनुवर्तमाने कुमति चेति णत्वमित्यभिप्रायको वा। एतेनैकाजुत्तरेति तु नात्र, अल्लोपेऽतत्वात्; अत एव तत्र कैयट इति प्रकाशोक्तमपास्तमिति भावः। यत्तु रत्नाकरकृत् सन्निपातपरिभाषया तदप्राप्तिरेवेत्ययं विचार उपायस्योपायान्तरादूषकत्वमित्याशयक इति, तत् खण्ड-

सङ्ग्रहस्यैव न्याय्यत्वादिति दिक्।

### शब्दरत्नम्।

न च सन्निपातपरिभाषया तदप्राप्तिः। सर्वत्रेषु कवर्गव्यवायाऽऽश्रयणेन तद्विषये तस्या अनित्यत्वाऽऽवश्यकत्वात्। हादेशेष्विति। हादेशकवर्गव्यवाये इत्यर्थः। आर्षत्वाद्वार्तिके समासः। वार्तिके हादेशेत्युक्तेर्वृत्रघ्न इत्यादौ 'पूर्वपदात्' इति णत्वं सिध्यति। तत्र हि हन्तेरप्प्रत्ययो घनादेशश्च। अत एव "अगारैकदेश" इति सूत्रे प्रघणप्रघाणयोः कृतणत्वयोरुच्चारणम्। तत्रापि हन्तेर्घनघानादेशविधानात्। न्याय्यत्वादिति। न च

### भैरवी।

रत्नाकरोक्तं खण्डयति—नचेति। सन्निपातपरिभाषया घत्वस्य नकारसन्निपातजन्यतयेति भावः। तदप्राप्तिः—"कुमति च" इत्यस्याऽप्राप्तिः। सर्वेति। अट्कुप्वाङ्नुम्ग्रहणस्य सर्वत्र सम्बन्धादिति भावः। तद्विषये—णत्वविषये। अनित्यत्वावश्यकत्वादिति। यदि तस्या अनित्यत्वादप्रवृत्तत्वं स्वीक्रियत इति तदा णत्वमात्रस्य कवर्गनिमित्तकत्वेन सन्निपातपरिभाषाप्रवृत्तेर्दुर्वारत्वादपूर्वग्रहणस्य हादेशेतिवार्तिकस्य च वैयर्थ्यापत्तिरिति भावः। हादेशेष्वितीति। कुव्यवायनिमित्तके णत्वे हस्थानिकेषु आदेशे प्रत्यासत्त्या कवर्गरूपेषु सत्सु प्रतिषेधो वक्तव्य इति वार्तिकार्थः। फलितार्थमाह—हादेशेत्यादिना। हादेशेत्युक्तेरिति। हकारविशिष्टादेशपदोक्तेरित्यर्थः। एवञ्च विशेषणाभिधानफलप्रदर्शनमेतदिति लब्धम्। घनादेशश्चेति। "करणेऽयोविद्रुषु" इत्यनेन साधित इति शेषः। अत एवेति। तत्र तादृशोक्तेरेवेत्यर्थः। सूत्रेण वार्तिककारोक्तस्यार्थस्य सम्भव एव चेत्तदा न्याय्यत्वमित्याशङ्कान्निराचष्टे—नचेत्यादिना।

### भावप्रकाशः।

यति—नचेति—घस्य नकारहकारसम्बन्धजत्वादिति भावः। तदप्राप्तिरिति। कुमति चेत्यप्राप्तिरित्यर्थः। एवं चोक्तोपायनैष्फल्यमिति भावः। सर्वेति। अट्कुप्वाङित्यस्य सर्वणत्वविधिष्वनुवृत्तेरिति भावः। तद्विषये—णत्वविषये। आवश्यकत्वादिति। अन्यथा णत्वमात्रस्य कवर्गनिमित्तत्वादुक्तपरिभाषाया दुर्वारत्वेनापूर्वस्येत्यंशस्योक्तवार्तिकस्य च वैयर्थ्यापत्तिरिति भावः। कुव्यवायनिमित्तके णत्वविधिमात्रे हस्य स्थाने आदेशेषु प्रत्यासत्त्या कवर्गरूपेषु सत्सु प्रतिषेधो वक्तव्य इति वार्तिकवाच्यार्थः, सर्वत्र वार्तिकरीतेरित्थमेव सत्त्वात्, पूर्वोत्तरसन्दर्भानुरोधाच्च। तदेतन्मनसि निधाय फलितमर्थमाह—हादेशेति। इत्यर्थः—इति फलितार्थः। आर्षत्वाद्वार्तिके समास इति—अपाठः उक्तयुक्तेः। हादेशेत्युक्तेरिति। हविशिष्टतदुक्तेरित्यर्थः। विशेषणे पर्यवसानं तात्पर्यार्थः। सिध्यतीति। अन्यथा "अट्कुप्वाङ्" इत्यत्राऽस्य पाठात्सर्वणत्वनिषेधकत्वस्येष्टत्वेन तन्न स्यादत एव भाष्ये स्रुघ्न इत्युदाहृतं, तत्र चाधिकरणे घञर्थे क इति भावः। हन्तेरिति। द्रावुपपदे इति शेषः। षष्ठीपञ्चम्योस्तन्त्रेण निर्देशः। स चादेशोऽन्तोदात्त इति बोध्यम्। वार्तिकार्थस्य सूत्रारूढत्वं ध्वनयितुं तदुक्तेर्निःसन्दिग्धं फलमाह—अत एवेति। तत्र तदुक्तेरेवेत्यर्थः। कृतेति। पूर्वपदादिति सूत्रकृतेत्यर्थः। अपूर्वस्येति तु अत्र पक्षे नास्ति, अत एवोभयोल्लेखः, अन्यथा तस्याऽपि निरर्थत्वापत्तिरिति भावः। ननु तत्र हादेश एवाऽत आह—तत्राऽपीति। आदिना पाक्षिकवृद्धिपरिग्रहः। यत्तु खण्डनकृद्रत्नाकरदण्डिमन्दादयः मूलं चिन्त्यन्तत्सामर्थ्यात् "कुमति च" इति व्यवहितव्यावृत्तावपि "प्रातिपदिकान्त" इत्यादिव्यावृत्तौ मानाभावात्। किं च अदिति तो विवक्षितो न वा? आद्ये बहुवृत्रहाणीत्यत्र णत्वानापत्तेः। नचेष्टापत्तिः, स्वपरग्रन्थविरोधाद्वृत्तिग्रन्थविरोधाच्च। द्वितीये प्राघानीत्यत्राऽपि तदापत्तेः। किञ्च पक्षद्वयेऽपि वृत्रघ्न इत्यादौ स्थानिवत्त्वेनापूर्वत्वाऽनपायात् कथं नियमेन व्यावृत्तिः। न च तत्सामर्थ्यान्न स्थानिवत्त्वं, बहुवृत्रहाणीत्यत्राऽनिष्टाऽऽपादकत्वेनैव साफल्यात्। यदि तु स विवक्षित इति प्राघानीत्यत्र न दोषः। न च दीर्घस्य बहिरङ्गासिद्धत्वात् स तदवस्थ एव। यथोद्देशे तदप्रवृत्तेः। "एकाजुत्तर" इत्यत्राऽधिकणग्रहणं नियमेन व्यावर्तितस्याऽपि विधानार्थमिति बहुवृत्रहाणीत्यत्र णत्वम्। योगविभा-

**माधवेनोक्तमिति** । इत्थं हि तदीयो ग्रन्थः 'भसञ्ज्ञायामल्लोपे उत्तरपद-मनच्कं स्यात् । स्थानिवद्भावश्चाऽल्विधित्वान्नेति एकाजुत्तरपदत्वाऽभावात् "प्रातिपदिकान्तनुम्विभक्तिषु च" इति विकल्पो भवति—वृत्रघ्नो वृत्रहणा इति । तद्भाष्येति । किं चाऽल्विधित्वान्नेत्यसङ्गतम् । अल्विध्यर्थमेव "अचः परस्मिन्" इत्यस्याऽऽरम्भात्, तस्याऽप्रवृत्तौ युक्त्यन्तरस्यैव वाच्यत्वात् । विकल्प इत्यप्यसङ्गतम्, "कुमति च" इति सूत्रस्य दुर्वारत्वादित्यवधेयम् ।

### शब्दरत्नम् ।

वार्तिकरीत्या बहुवृत्रहाणीति णत्वमायाति, सूत्रारम्भे तु नेति वार्तिकारम्भस्यैव ज्याय-स्त्वात्कथं न्याय्यत्वं, बहिरङ्गत्वेन दीर्घस्यासिद्धत्वे तु प्राघाणीत्यत्र दोषः । तथा सूत्रा-रम्भे प्रघनाघन इत्यत्र णत्वं प्राप्नोति, वार्तिकरीत्या तु नेति वाच्यम् । 'अत्पूर्वस्य' इत्यनेन ह्रस्थानिककवर्गाऽभाववद्धन्तेरेवोपलक्षणेनाऽदोषात् । प्रघणप्रघाणयोः कृतण-त्वयोः 'अगारैकदेशे' इति सूत्रे उच्चारणमत्रत्यात्पूर्वग्रहणस्योक्ताऽर्थोपलक्षणत्वे मानम् ।

### भैरवी ।

बहिरङ्गत्वेनेति । यथोद्देशपक्षे त्रिपाद्यान्तस्या अप्रवृत्तिः, कार्यकालपक्षे तु प्रवृत्तिरिति भावः । दोषः—णत्वापत्तिरूपो दोषः । उपलक्षणेनेति । अत्र मानन्तु अत इति पञ्चम्यैव निर्वाहे पूर्व-ग्रहणम्भूमार्थकबहुव्रीहिलाभार्थम्, अकारः पूर्वो यस्माद्धन्ति नकारादिति तेन लब्धन्तथा-चोपलक्षणत्वं स्फुटमिति भावः । मानान्तरमप्याह—प्रघणप्रघाणयोरिति ।

### भावप्रकाशः ।

स्येष्टमात्रसिध्यर्थत्वात् प्राघानीत्यत्र न दोषः । किञ्च, लक्ष्याऽनुरोधेन कार्यकालपक्षस्यैवाऽङ्गीकारेण बहिरङ्गपरिभाषया तत्सिद्धिः । पञ्चमीसमासाऽनित्यत्वेन पक्षद्वयसाधारणदोषोऽपि न । बाध्यसामान्य-चिन्ताश्रयणादाद्यदोषोऽपि नेति विभाव्यते तथाऽपि णग्रहणं स्पष्टार्थमिति स्वग्रन्थविरोधाऽऽपत्तिः, इह तत्फलाऽनुक्तेर्न्यूनता च "अनन्तरस्य" इति न्यायं बाधित्वेति वदद्भिर्बाध्यविशेषचिन्ताया एवाश्रयणं च । यद्यपि स ग्रन्थो वार्तिकरीत्येति नाऽऽद्यदोषः, किं च तदभिमतप्रकारान्तरेण तत्सिद्धेर्वक्ष्यमाणत्वा-त्तदर्थं णग्रहणम् । अत एव न्यूनतापि न, विशेषचिन्तायामनन्तरस्येत्यादिन्यायसञ्चारेण बाधित्वेत्यु-क्त्या सामान्यचिन्ताया एवाश्रयणेन तृतीयदोषोक्तिर्मूर्खप्रलपितैवेति सुवचं, तथाप्युपसर्गादित्यस्याऽग्रे-ऽनुवृत्त्याऽत्पूर्वस्येत्यत्राऽपि सम्बन्धेन तदपेक्षनियमापत्तौ प्रघ्न इत्याद्यसिद्धिः । न च योगविभागवैय-र्थ्यम् । अनन्तरेति न्यायबाधेन साफल्यात् । नचैकयोगेऽप्यत्पूर्वग्रहणसामर्थ्यात् प्रघ्न इत्यादौ हन्तेरि-त्यस्यैव व्यवहितबाधसिद्धिः । प्रघ्नन्तीत्यादिव्यावृत्त्या तत्साफल्यात् । एवं च वार्तिकावश्यकत्वे योग-विभागो व्यर्थ एवेत्याहुः, तन्न । "ब्रह्मभ्रूण" इति नियमेन प्रघ्न इत्यादेरभावात् । वार्तिकस्यान्याशयक-त्वस्य वक्ष्यमाणत्वात् । एतेन तत्सम्बन्धे सति भ्रूणघ्न इत्यादौ तदभावेऽपि वृत्रघ्न इत्यादौ तद्दुर्वारमु-क्तवार्तिकादातोनुपसर्गे क इत्यत्रानुपसर्गग्रहणस्य सामान्यापेक्षज्ञापकत्वात्तत्प्रयोगसम्भव इति दण्ड्युक्त-मपास्तं, किञ्चोक्तवार्तिके वृत्रघ्नः सुघ्न इति भाष्योदाहरणादेव तदर्थसंग्राहके योगविभागे तदसम्ब-न्धादिति दिक् । तदेतद्ध्वनयन्नाह—**न चेति** । **आयातीति** । हादेशाद्यभावादिति भावः । **नेतीति** । तपरत्वात् । **ज्यायस्त्वादिति** । उत्तरमुनिप्रणीतत्वादिति भावः । अत्र एवेयमुनिभ्यां तस्यैव सिद्धा-न्तत्वं बोधितं दोषत्रयाभावाय । अत्पूर्वग्रहणस्य तदुपलक्षणत्वे मानाभावश्च इति तत्त्वम् । **दोष इति** । त्रिपाद्यां तत्प्रवृत्तिस्वीकर्तृमते अव्याप्त्यतिव्याप्तिपरिहाररूपव्यवस्थाभावापत्तिरूप इत्यर्थः । अर्धजर-तीयाऽनौचित्यात् । अत्र तुनाऽरुचिर्बोधिता त्रिपाद्यां सर्वथा तदप्रवृत्तिरूपा । अन्यथा दुष्परिहरं दोष-माह—**तथेति** । **वार्तिकेति** । "हन्तेर्द्वित्वमच्याक्चाभ्यासस्य" हस्य च घत्वमुत्तरस्याभ्यासाच्चेति कुत्वमिति तदुक्तेरिति भावः । तत्र मानमाह—**प्रघाणेति** । यत्तु मन्दः—हस्थानिकत्वं हत्वेन घटकत्वेन

"मघवा बहुलम्" ॥ "अर्वणस्त्रसावनञः" इति सूत्रात् तृ इत्यनुवर्तते । तदपेक्षया च मघवेति षष्ठ्यर्थे प्रथमा । तदाह—मघवन्शब्दस्येति ।

अधातोरिति । अधातुभूतपूर्वस्याऽपीत्यर्थः । अञ्चतिग्रहणं हि नियमार्थम्–

---

शब्दरत्नम् ।

णत्वनिपातनकल्पनाऽपेक्षयोक्ताऽर्थग्राहकत्वौचित्यादिति भावस्तदेतद् ध्वनयतोक्तम्—वार्तिकार्थोपसङ्ग्रहस्येति ।

भूतपूर्वपर्यन्तमधातुपदस्य लक्षणायां बीजमाह—अञ्चतिग्रहणं हीति । अ-ञ्चतेरिति । नलोपिनोऽञ्चतेरित्यर्थः । नलोपेन निर्देशात् । सामान्यापेक्षश्च नियम-

भैरवी ।

नलोपिन इति विशेषणविशिष्टाञ्चतिपरमत्राञ्चतिपदमित्यत्र साधकमाह—नलोपेनेति । एतेन "उगिदचाम्" इति सूत्रव्याख्यानाऽवसरे नलोपिनोऽञ्चतेरिति यत्परममूले उक्तन्तेनैकवाक्यता भवतीति ध्वन्यते । नचैवं सति नलोपिन एव यथा स्यान्न पूजार्थस्येत्यस्य लाभार्थमञ्चतिग्रहणञ्चरितार्थमिति कथम्मूलाद्युक्तनियमलाभ इति वाच्यम् ? भाष्यप्रामाण्येनाऽचामित्यस्याऽऽवृत्त्योभयार्थलाभ इत्याशयात् । तत्रैको नियमो मूले एव दर्शितो द्वितीयस्तु

भावप्रकाशः ।

वा ? नाद्यः मूर्त्तौ घन इति लक्ष्ये प्रघन इत्यत्र तदभावेन णत्वापत्तेः, अन्त्ये द्रुघण इत्यादौ त दनापत्तेरिति; तन्न, तत्राऽप्रघन इत्यादेरेव प्रयुक्तत्वेन प्रघन इति प्रयोगाऽभावात् प्रस्योपसर्गत्वाभावाच्च । अन्यथा वार्तिकमतेऽपि त्वदभिमते तद्दोषापत्तेश्च । एतेन प्राक् द्रुघण इत्यत्रेव तादृशे प्रघन इत्यत्राऽपि तदाशङ्क्य प्रघण इति कृतणत्वनिर्देशेनोपसर्गात् परस्य च नस्य णत्वाऽभावज्ञापनादित्यपि तदुक्तमपास्तम् । एवञ्चाद्य एव पक्षे न किञ्चिद्बाधकम् । ननु तत्र निपातनाण्णत्वमत आह—णत्वेति । यद्यपि सूत्ररीत्या प्रघणशब्दे वार्तिकरीत्योभयत्राऽपि सूत्रेणैव तत्सिद्धिरिति तन्निपातनं व्यर्थं तथापि आद्ये प्रघाणस्य कृतणत्वस्योच्चारणेन न णत्वनिपातनाऽङ्गीकारः, किं तु तदर्थकत्वमत्पूर्वग्रहणस्य वार्तिकस्वीकाराऽपेक्षया पदलक्षणाया लघुत्वात् . अत एवौचित्यम् । एवं च नक्षत्रं दृष्ट्वेतिवदत्पूर्वत्वमपि विवक्षितमेव । एवं प्रघाणप्रघणयोः कृतणत्वयोर्मध्ये प्रघाणस्योच्चारणमिति तदर्थो बोध्यः । तदेतत्सर्वं हृदि निधायाऽऽह—ग्राहकत्वौचित्यादिति । ग्राहकत्वस्यैवौचित्यादित्यर्थः । वार्तिकार्थोपेति । अत्राऽर्थशब्दोऽभिधेयप्रयोजनोभयपरः । ध्वनयतेत्यनेनारुचिः सूचिता, यथोत्तरं मुनीनां प्रामाण्यादुपलक्षणत्वे मानाभावादुक्तदोषत्रयापत्तेश्च तत्करणयोगविभागोपलक्षणत्वज्ञापकत्वनियामकत्वापेक्षया वार्तिकमेव ज्याय इति ।

पर्यन्तमिति । अस्यार्थं बोधयितुं कृतायामितिशेषः । परममूलैकवाक्यत्वायाह—नलोपिन इति । नचैवं नलोपिन एव तथा स्यान्न पूजार्थस्येत्येतदर्थमचामित्यस्य चारितार्थ्यात् कथं मूलाद्युक्तनियम इति वाच्यम् । भाष्यप्रामाण्येनाचामित्यस्याऽऽवृत्त्या तस्याऽपि सुलभत्वात् । एकं तु नियमशरीरं मूलोक्तमेव । अञ्चतेश्चेत्तर्हि नलोपिन एवेत्यपरमिति भावः । तत्र बीजमाह—नलोपेनेति । सूत्रे इति शेषः । न च क्विन्नन्ताऽनुकरणेन स न्यायसिद्ध एवेति कथं तस्य तद्बीजत्वमिति वाच्यं, अकारलोपस्यापि न्यायप्राप्तत्वेन तदकरणपूर्वकमेतेन निर्देशस्य विवक्षार्थत्वादित्यर्थः । एवं च पूजार्थस्य प्राञ्चीत्यादयोऽपशब्दा एव । अत एव प्राञ्चावित्यादौ नकारद्वयश्रवणाशङ्काऽपि नेत्यपरमनुकूलम्, एतेन प्राञ्चीत्याद्यौपदेशिकलक्ष्यं विहाय प्राचीत्याद्यातिदेशिकलक्ष्यदानं भाष्ये निर्बीजमिति भ्रान्तोक्तमपास्तम् । उगितश्चेत्यत्राञ्चतेरिति वार्तिकस्याऽपि नलोपिनोऽञ्चतेरित्यर्थः । अत एवोक्तनियमेन तत्प्रत्याख्यानम्भाष्ये । एतेनोक्तभाष्यद्वयबलादञ्चतिमात्रविषयकनियम एवेष्टः । एवं च नलोप्यञ्चतिग्रहणे नियमोऽपि तद्घटित एव स्यादिति प्राञ्चीत्यादौ ङीबभावाऽऽपत्तिः । आवृत्तावपि न मानमिति मूलं चिन्त्यमिति खण्डनकृदुक्तमपास्तम् । ननु औपदेशिकधातोश्चेत्तर्ह्यञ्चतेरेवेति विशेषापेक्ष एव नियमोऽस्तु, नियमस्य सजातीयापेक्षत्वौचित्यात्, अत्राञ्चतिग्रहणमपि मानम् । एवं च गोमत्यतेः क्विपि गोमानित्यादिनामधातौ नुम्सिद्धिः, पर्णध्वत् इत्या-

धातोश्चेद्भवति अञ्चतेरेवेति। एवं च गोमानिवाचरति गोमानित्यादौ सम्प्रति धातुत्वेऽपि विद्धयर्थमधातुग्रहणम्। एतच्च मूल एव स्फुटीभविष्यति। ननु कुर्वन् इत्यादाविव संयोगान्तलोपस्याऽसिद्धत्वेन नान्तत्वाऽभावादीर्घत्वं न स्यादित्याशङ्कयाऽऽह—इहेति। बहुलग्रहणादिति। क्वचिदन्यदेवेत्यर्थकादित्यर्थः। निपातनादिति। महेह्कारस्य घकारः अवुगागमः कनिप्रत्ययश्चेत्यस्य त्रितयस्य निपातनादित्यर्थः। प्रत्याख्यातमिति। तथा च "छन्दसीवनिपौ" इत्यत्र कैयटेनोक्तम्—"मघवा बहुलम्" इत्येतन्न कर्तव्यं श्वन्नुक्षन्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयस्य सिद्धत्वादिति।

यत्त्वत्र वार्तिककृतोक्तम्—

अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्।

---

शब्दरत्नम्।

एतेन पर्णध्वद् गोमत्यतेः क्विपि गोमानित्यादौ "उगितश्च" इति ङीबपि नेति दिक्। स्पष्टं चेदमत्र भाष्ये, 'उगितश्च' इति सूत्रे च। कैयटेनेति। अयं च कैयटः "केशाद्वः" इति सूत्रस्थः। अर्वणस्तृ इत्यादि। अर्वणो मघोनश्च तृ न शिष्यं यतस्तच्छान्दसं

भैरवी।

अञ्चतेश्चेन्नलोपिन एवेति बोध्य इति। तेन—नियमस्य सामान्यापेक्षत्वेन। एवञ्चाधिकलक्ष्यसङ्ग्रहस्योचितत्वात्सामान्याऽपेक्षनियम एवोचित इति भावः। ङीबपीति। अपिना नुमः परिग्रहः। दिगिति। दिगर्थस्तु प्रथमनियमेन पर्णध्वदित्यत्रेव गोमानित्यत्राऽपि ङीब् न। किञ्च प्रकृतसूत्रे झल्ग्रहणापकर्षेण नुम् झलन्तक्षण एव ग्राह्यः, तेन शमी शमिनावित्यादौ नातिप्रसङ्ग इति बोध्यम्। अत्र भाष्य इति। तत्र मूलोक्तरीत्या स्पष्टम्। 'अन्त्ये धातोरुगितः प्रतिषेधः कार्यः, अञ्चतेश्चोपसङ्ख्यानम्, प्राचीनोभयङ्कर्त्तव्यम्, उक्तनियमेन सिद्धिः' इत्युक्तम्। कैयटग्रन्थस्य तादृशस्याप्रसिद्धत्वशङ्कां वारयति—अयञ्चेति। तृइति। इदञ्च स्वरूपपरन्नपुंसकम्। ननु तृविधायकसूत्रयोश्छन्दसीत्यस्यानुक्तेश्छान्दसमित्यसङ्गतमत आह—

भावप्रकाशः।

दौ च। ननु उगिदचामित्यत्राधातुपदं मास्तु, न च धातोश्चेन्नुम् तर्हि तस्यैवेति विशेषाऽपेक्षत्वमेवास्तु, पर्णध्वदित्यादिव्यावृत्तिः फलम्, नामधात्वर्थमधातुपदमिति वाच्यं, लाघवात्तत्रैवौपदेशिकत्वं निवेश्याऽधातुपदत्यागस्यैवौचित्यात्, तथा सति स एवास्तु इति चेन्न। अधातुग्रहणेनाधातुग्रहणं भूतपूर्वार्थमिति भाष्येण वक्ष्यमाणेनोगितश्चेत्यत्रत्यभाष्येण चौपदेशिकत्वनुम्त्वानन्तर्भावेण सामान्यापेक्षनियमज्ञापनात्। अत एव स्पष्टमित्यादिग्रन्थे उभयोल्लेखः। तद्धृदि निधायाह—सामान्येति। अपिर्नुम्समुच्चायकः। आद्यनियमे तु पर्णध्वदित्यादाविव गोमानित्यादावपि ङीब्नेति बोध्यम्। तदाह—दिगिति। अत्रापकर्षणादच्साहचर्याच्चोगिज्झलन्त एव। तेन शमी शमिनावित्यादौ नातिप्रसङ्ग इति स्पष्टं युवोरनाकावित्यत्र भाष्ये। स्पष्टं चेदमिति। आद्ये मूलोक्तवत् स्पष्टम्, अन्त्ये तु "धातोरुगितः प्रतिषेधः उखास्रत्। अञ्चतेश्चोपसंख्यानं प्राचीनोभयं कार्यम्। उक्तनियमेन सिद्धेः" इत्युक्तम्। एतेनौपदेशिकधातोस्तद्विहितप्रत्ययस्य चेत्तर्ह्यञ्चतेरेव तेनोखास्रत् शमीत्यादौ नातिप्रसङ्ग इति मन्दोक्तमपास्तं भाष्यविरोधात्। द्वितीये निर्मूलत्वाच्च, गोमानित्यादौ ङीबापत्तेश्च, विद्वान् जरन्नित्यादौ नुमनापत्तेश्चेति दिक्। खण्डयितुं स्थलं निर्दिशति—अयं चेति।

तृ इति स्वरूपपरं नपुंसकम्, अन्यथा ता इति वदेत्। हेत्वर्थमाह—यत इति। ननु मतुबादिविधौ

मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात् ॥ १ ॥ इति,

शब्दरत्नम् ।

सामान्यतो बोधितानामपि केषांचिद्घृधात्वादिवन्नियतविषयत्वादित्यर्थः । एवं च 'छन्दसि दृष्टाऽनुविधिः' इति न तदर्थः शास्त्राऽऽरम्भ इति तात्पर्यम् । एवं हि छान्दसलक्ष्यसाधकसर्वसूत्रप्रत्याख्यानं स्यादतः प्रकारान्तरेणाऽपि सिद्धिमाह—मतुब्वन्योरिति । ऋधातोर्विजन्तान्मघशब्दाच्च मतुब्वनिभ्यां रूपद्वयसिद्धिरिति भावः । ननु सूत्रारम्भे नित्यस्तृ आदेशाऽर्वणः, प्रत्याख्याने तु पक्षे तदभावोऽपीत्यत आह—छन्दस्युभयेति । आदेशतदभावेत्यर्थः । तदुदाहरणमिमान्यर्वणः पदानीति । एतत्प्रत्याख्याने दीर्घो घकारोदात्तत्वं च लभ्यते । एतेनाऽस्य छान्दसत्वाच्छन्दसि आदेशपक्षे मघवन्नित्येव रूपं, तच्च मत्वन्तस्य छान्दसत्वाद्दीर्घाभावेन साध्यमिति प्रत्याख्यानाशयः । लोके तु मत्वन्ते दीर्घो

भैरवी ।

सामान्यत इति । अत एव तृज्वत्सूत्रे भाष्यकृतोक्तम् 'अविशेषविहिता अपि शब्दा नियतविषया दृश्यन्ते' इति, तथा च मतुपः सामान्यतो विधानेऽपि अर्वन्मघवच्छब्दयोश्छन्दस्येव प्रयोगो भविष्यतीति भावः । एवं हीति । उक्तसूत्रद्वयवद्धि । विजन्तादिति । ऋधातोर्यो विच् तदन्तादित्यर्थः । नित्य इति । विकल्पबोधकस्य पदस्य तत्रानुक्तेर्नित्य इत्यर्थः। तदभावोऽपीति । उक्तरीत्येति भावः। उक्तरीत्या प्रत्याख्याने फलान्तरस्यापि सिद्धिमाह-एतदिति । दीर्घः—"अत्वसन्त" इति विहितः।उदात्तत्वमिति।"ह्रस्वनुड्भ्याम्"इति प्राप्तस्य मतुप उदात्तत्वस्य "न गोश्वन्" इति प्रतिषेधे तस्य पित्त्वादनुदात्तत्वे फिट्स्वरस्यैवाऽवस्थानादिति भावः । एतेन—उक्तव्याख्यानेन । अस्य-मघवेतिसूत्रस्य । इत्येवेति । संयोगान्तलोपस्यासिद्धत्वात्तद्दा दीर्घाऽप्राप्तेरि-

भावप्रकाशः ।

छन्दसीत्यस्याप्रक्रान्तत्वात्कथं तत्त्वमत आह—सामान्यत इति।अत एव तृज्वत्सूत्रे भाष्यम् 'अविशेषविहिता अपि शब्दा नियतविषया दृश्यन्ते' इति । तरेणापीति । तथा च प्रकारान्तरसमुच्चितछान्दसत्वं तत्त्वे हेतुर्नैवमन्यत्रेति भावः । विजन्तादिति । ऋधातोर्यो विच् तदन्तादर्शब्दादित्यर्थः । मघशब्दात्—धनार्थकात् । प्रसिद्धतरत्वेनाभ्यर्हितत्वान्मतुपः पूर्वनिपातः । अत एव वार्तिकनिर्देशसङ्गतिः । अर्वण इति । मघवन्शब्दे तु नायं भेद इति भावः । पक्षे इति। उक्तरीत्येति भावः। आदेशतदभावरूपोभयदर्शनादिति वाक्यस्यैकदेशानुकरणमभावान्तम् । उभयशब्दार्थमाह—आदेशेति । मघवच्छब्दे रूपद्वयस्य सूत्रकृतोऽपि सम्मतत्वात् तुविशिष्टार्वशब्देऽविवादात्तदुपेक्ष्यान्तमुक्तम् । तल्लक्ष्यमाह—तदुदेति । एवं च सूत्रारम्भेप्यत्र तदभावस्य छान्दसत्वेनैव साधनावश्यकत्वे ततो वरं तदकरणमिति भावः। दीर्घः—"अत्वसन्त"इत्यनेन । घकारोदात्तत्वं चेति । "ह्रस्वनुड्भ्याम्" इति प्राप्तमतुबुदात्तत्वस्य "न गोश्वन्" इति निषेधेन पित्त्वादनुदात्तत्वे तस्योदात्तत्वमित्यर्थः । एवं च आदेशपक्षेऽप्यन्तोदात्तत्वं दीर्घवद्बहुलग्रहणेन बाधित्वा घकाराऽकारोदात्तत्वमप्यङ्गीकार्यमन्यथा फलभेदे प्रत्याख्यानासम्भव इति बोध्यम्। अत्र कश्चित्—प्रत्याख्यानानुरोधेन आदेशपक्षे प्रसादकृदूरीकृतदीर्घखण्डकप्रकाशकृदुक्तिर्यत्वाद्धुर्मतुप्पक्षेऽपीत्यादिना या, खण्डिता मूले, साऽयुक्ता । मतुबन्तस्य छान्दसत्वमिति तदनाशयात् । इत्थं हि तदाकूतं, प्रत्याख्यानानुरोधेन आदेशश्छन्दोमात्रविषयः, वनिबन्तस्यैवोद्देश्यकोटौ प्रवेशात् । तत्र च मघवन्नित्येव रूपम् । तथा च मतुप्यपि छन्दसि "बहुलं छन्दसि" इति दीर्घाभावस्वरव्यत्ययाभ्यां तत्समानस्वरूपं सुसाधमिति वार्तिकाद्याशय इति प्रत्याख्यानं युक्तमेव । लोके तु मतुबन्ते दीर्घो भवत्येवेतीति ; तत् खण्डयति—एतेनेति । अस्य-मघवेतिसूत्रस्य । छान्दसत्वात्—प्रत्याख्यानानुरोधेन छन्दोविषयलक्ष्यमात्रसाधकत्वात् । अत एवाह—छन्दसीति । इत्येवेति । संयोगान्तलोपासिद्धत्वान्न दीर्घः । छान्दसत्वं दीर्घाभावे

यच्च तद्व्याख्यावसरे कैयटेन भाषायामसाधुतेत्युक्तं, तद्वनिबन्तमद्युदात्त-मघवन्शब्दविषयकम्। छन्दस्येव वनिब्विधानात्। अतो न कैयटस्य पूर्वाऽपरविरोध इति ध्वनयन्नाऽऽह—छन्दसीत्यादि। अन्तोदात्तं त्विति। यद्यपि श्वन्नुक्षन्नित्यत्र कनिनन्ता एते इत्युज्ज्वलदत्तादिग्रन्थमहिम्ना आद्युदात्तत्वं लभ्यते, तथापि "उक्षा समुद्रो अरुणः सुपर्णः, पूषा त्वेतो नयतु, अग्निर्मूर्धा,

---

शब्दरत्नम्।

भवत्येवेति परास्तम्। वार्तिकाक्षरस्वारस्येन तथाऽप्रतीतेर्मघवानृजीषीत्यादौ वेदेऽपि दीर्घस्य पठ्यमानत्वाच्च।

तदेतत्कैयटेनोक्तम्—भाषायामसाधुतेति। "केशाद्व" इति सूत्रस्थ उक्तकैयटस्तु एतत्सूत्रस्थवार्तिकविरोधात्स्वग्रन्थविरोधाच्च हेय एवेति ध्येयम्।

यत्तु छान्दसा अपि क्वचिद्भाषायामित्याश्रित्य भाषायां प्रयोग इति ; तन्न। तज्ज्ञापकस्य "वयस्यासु मूर्ध्नो मतुप्" इति सूत्रप्रयोगस्य छन्दोवत्सूत्राणि भवन्तीति भाष्यकारेष्ट्याऽन्यथासिद्धत्वादिति तदाशयः। तद्वनिबन्तेति। इदं चिन्त्यं 'न शिष्यं छान्दसं हि तत्' इति सामान्यप्रवृत्तवार्तिकस्य सङ्कोचे मानाभावात्। कविप्रयोगाणां बहुशः

भैरवी।

स्येवेत्यर्थः। तथाऽप्रतीतेरिति। मघवेति सूत्रस्य छान्दसत्वाऽप्रतीतेः। किन्तु तत्साध्यप्रयोगस्यैव प्रतीतेः।

नन्वेवम्पूर्वोक्तकैयटविरोध इत्यत आह—केशाद्व इतीति।

अन्योक्ताङ्कैयटासङ्गतिङ्खण्डयति-यत्त्विति। इत्याश्रित्येति। इति परिभाषामाश्रित्येत्यर्थः। वयस्यास्विति। अत्र "तद्वानासाम्" इति मतुपो लुक् यत्प्रत्ययश्च तस्य सूत्रस्य छन्दस्येव प्रवृत्त्या छन्दोभिन्ने सूत्रे तथोच्चारणेन सा ज्ञाप्यत इति तद्भावः। इदञ्चिन्त्यमिति। विशेषोपादानञ्चिन्त्यमित्यर्थः। सङ्कोचे-वनिबन्तविषयकत्वकल्पने। बहुश इति। बहूनामित्यर्थः। तम्पातयाम्प्र

भावप्रकाशः।

हेतुः। भवत्येवेति। तथा च न भट्टिप्रयोगादिविरोध इति भावः। एतेनेत्यस्यार्थमाह—वार्तिकेति। भाष्याक्षरेत्यपि बोध्यम्। यथा ततः प्रतीयते तथोक्तं वक्ष्यते च। उक्तार्थस्तु सूत्राक्षरबहुलग्रहणस्वारस्येन प्रतीयते। अन्यथा वेत्येव वदेदिति भावः। ननु तथा प्रतीतावपि फलाभेदायैवमेव कल्प्यतेऽत आह—मघेति।

तदेतत्। हृदि निधायेति शेषः। यद्वा तत्तस्माद्धेतोः एतत् कर्म। तत्पदार्थमाह—भाषायामिति। उक्तेति। मूले इति शेषः। वार्तिकेति। अस्योक्तेत्यादिः। स्वग्रन्थेति। एतत्सूत्रस्थोक्तकैयटग्रन्थेत्यर्थः। हेय एवेति। तथा च मूलोक्तरीत्या तयोरविरोधसमर्थकखण्डनकृद्रत्नाकरदण्ड्यादयश्चिन्त्या एवेति बोध्यम्।

अत्रत्यकैयटाऽसङ्गतिं केनचिदुक्तां खण्डयति—यत्त्विति। इत्याश्रित्य—इति परिभाषामाश्रित्य। अयं भावः, "वयस्यासु मूर्ध्नः" इत्यत्र वयसास्वित्यस्या ज्ञापकम्। अन्यथा "तद्वानासाम्" इति यत्प्रत्ययस्य छन्दस्येवविधानात्तदनुपपत्तिः, तेन लोके परिपन्थिभिः पार्थिवैः सहस्रद्गवंगवं इत्यादिप्रयोगसिद्धिरिति। तज्ज्ञापकस्य—तत्वेनाभिमतस्य। नैषेष्टिररित छन्दोवत्कवयः कुर्वन्तीति "यू स्त्र्याख्यौ" इत्यत्र भाष्योक्तेराह—छन्दोवत्सूत्राणीति। तथा चात्रेष्टौ नार्षत्वं प्रयोजकं किं त्वङ्गत्वमेव तथेति भावः। भाष्यकारेष्ट्येति। तेनैव ज्ञापितयेति शेषः। एतेन विनिगमनाविरहो निरस्तः, तस्या भाष्यानारूढत्वात्। अन्यथासिद्धत्वात्—चारितार्थ्यात्। तदाशयः—कैयटाशयः। तथा च भाष्यकारीयातिदेशात्सूत्रेषु छन्दःकार्यप्रवृत्त्या सौत्रप्रयोगाणामिव तेषां साधुत्वं नार्षमात्राणां, किं पुनर्वाच्यं मानुषाणामिति तत्त्वम्। तद्ध्वनयन् वक्ष्यति—'कवि' इति, 'अत्र यत्' इति च। ननु कविप्रयोगाणामेव मानत्वमत आह—कवीति। बहुशः—बहूनाम्। संख्यावाचित्वात् "संख्यैकवचनाच्च" इति शस्। एवं च तेषां सर्वथा भाषाया-

निर्भज्वानं न पर्वणो जभार, त्वमर्यमा भवसि यत्" इत्यादौ तत्सूत्रोपात्तानामु-क्षन्नादीनामन्तोदात्तत्वस्य निर्विवादतया कनिप्रत्यय एवोचित इति भावः ।
"मघवा बहुलम्" इति सूत्रे मघोन इति प्रतीकमुपादाय मघशब्दस्याऽकारस्य "यस्य" इति लोपमाशङ्क्य 'नैतदस्ति, अन्यदेव हीदमव्युत्पन्नं प्रातिपदिकम्, तथा हि-भाषायामप्यस्य प्रयोगो दृश्यते' इति वदन्न्यासकारोऽपि मघवन्श-ब्दस्याऽन्तोदात्तत्वे भाषायामपि साधुत्वे चाऽनुकूलः । एवं स्थिते मतुपमाश्रित्य त्रादेशं प्रत्याचक्षाणौ भाष्यवार्तिककृतौ मघवानित्यत्र त्रादेशपक्षेऽपि दीर्घ स्वी-कुरुत एव । फलभेदे प्रत्याख्यानाऽसम्भवात् । अतो बहुलग्रहणान्नाऽसिद्धत्व-मिति यदुक्तं तद्भाष्यादिसम्मतमेव ।

यत्त्वाहुः, मतुप्पक्षेऽपि छान्दसत्वान्न दीर्घ इत्येव भाष्यस्याऽऽशय इति; तन्न । मतुबन्तस्य छान्दसत्वे मानाऽभावात् । उदाहृतभट्टिकैयटविरोधाच्चेति दिक् । एतेन श्वन्नुक्षन्नित्यत्र निपातितस्य मघवन्नित्यस्य त्रादेशे दीर्घाभावात् मघवन्निति क्षीरस्वामिग्रन्थः प्रत्युक्तः । तथा च कातन्त्रसूत्रं 'सौ मघवान् मघवा च' इति । विचारचिन्तामणावपि 'मघवानेव मघवा' इत्युक्तम् । काशिकाया-मपि दीर्घ एव दृश्यत इत्यलं बहुना ।

"अर्वणस्तृ" ॥ ऋधातोर्विचि गुणे च अरिति रूपम्, तस्मान्मतुपि अर्व-न्तावित्यादि सेत्स्यति । 'छन्दसीवनिपौ' इति वनिपि वेदे अर्वेति । लोके तु ऋधातोरेव वनिपि सेत्स्यति । रूढिशब्दश्चायम् ।

'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' । इत्यमरकोशात् । अतोऽर्थोऽपि न भिद्यते । तथापि नान्ततान्तयोः सर्वत्र प्रयोगे प्राप्ते व्यवस्थार्थमिदं सूत्रं, "तृज्वत्क्रोष्टुः" इति त्रिसूत्रीवत् । यत्तु हरदत्तेनोक्तम्—'अर्वन्मघवन्शब्दयो-

---

शब्दरत्नम् ।

प्रामादिकानां दर्शनेन तेषामार्षवचनसङ्कोचे न मानत्वमिति दिक् । उचित इति भाव

भैरवी ।

थममासेत्यादीनां यथा । आर्षवचनेति । वार्तिककारीयवचनेत्यर्थः । दिगर्थस्तु—येषां छान्दसत्व-न्तेषाम्भाषायां सर्वथाऽप्रयोग एव । कविना ऋषिभिन्नेन प्रयोगे तु तस्य प्रयोगस्याऽसा-धुत्वमेव । यदि मघवन्शब्दो वनिबन्तस्तदा मघोन इत्यादौ "यस्येति च" इति लोपाऽऽपत्ति-रपि न, छान्दसत्वात् । अत एव मघोनामिति सूत्रनिर्देशस्याप्युपपत्तिः । "यस्येति" लोपे आभीयासिद्धत्वन्तु न व्याश्रयत्वात् । नच तत्र लोपे कर्तव्ये बहिरङ्गस्य सम्प्रसारणस्यासिद्ध-त्वम्, 'असिद्धम्' इति परिभाषाया "वाह ऊठ्" इति सूत्रस्थोठ्ग्रहणेन ज्ञापितायास्तस्या अप्याभीयतया तत्प्रवृत्तिकाले आभीयस्याऽन्तरङ्गस्यासिद्धत्वेन तस्याः परिभाषाया अप्र-वृत्तेः । समानाश्रयत्वन्त्वन्तरङ्गस्य शास्त्रस्य य आश्रयः स एव परिभाषाया अप्याश्रय इति

भावप्रकाशः ।

मप्रयोगः । किं चासिद्धवत्सूत्राद्युक्तस्य व्युत्पन्नप्रातिपदिकरूपस्याप्युक्तरीत्या तथा । मघोन इति तु अन्तो-दात्तस्य रूपम् । "एकादेश" इति स्वरप्रवृत्त्या न तत्कृतो विशेषः । छन्दस्यापाद्यमानरूपाभावान्नानिष्टापा-दनम् । यद्वा मध्योदात्तस्याऽपि रूपम् । सम्प्रसारणे "यस्येति च" इति लोपस्तु न, छान्दसत्वात् मघोनामिति निर्देशाच्च । तदाह—दिगिति । उणादीनामव्युत्पन्नत्वस्य सूत्रभाष्यसम्मतत्वात् । तदंशे

द्वयोरपि भाषायामसाधुत्वमेव 'अर्वणस्तृ मघोनश्च' इत्यादि भाष्यादिति; तदापातत:। भाष्यस्य विशेषविषयतायाः प्रागेवोक्तत्वात्। तथा च श्रीहर्षः —
'वाहैरलुप्यत सहस्रदृगर्वगर्वः। इति प्रायुङ्क्त।
ननु 'गुणा अभेदका' इति पक्षे सूत्रेऽननुनासिकोच्चारणेऽपि आन्तरतम्याद्-

---

शब्दरत्नम्।

इति। तथा च "वनो र च" इति सूत्रे भाष्ये मघोनीत्यत्र प्राप्नोति, मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकमिति।

प्रायुङ्क्तेति। अत्र यद्वक्तव्यं तदुक्तम्।

इति पक्षे इति। "अस्थिदधि" इत्यत्रोदात्तपाठेन सिद्धे उदात्तग्रहणेन शास्त्रे विना यत्नं स्वरूपेणोच्चारितगुणस्याविवक्षयाऽभेदकत्वज्ञापनादिति भावः।

भैरवी।

कनिन्प्रत्यय एवोचित इति व्युत्पत्तिपक्षे। वस्तुतस्तूणादीनामव्युत्पन्नत्वस्यैव सिद्धान्तिसम्मततया तत्र प्रत्ययकल्पना नोचिता। अत्र भाष्यमपि साधकमित्याह—तथा चेति। प्राप्नोतीति। ङीब्रादेशश्चेत्यादिः।

अत्र—कविप्रयोगविषये। एतेन कविप्रयोगदर्शनेनाऽर्थविशेषस्य कल्पनाः प्रत्युक्ताः।

ननु 'गुणा अभेदकाः' इत्यस्योदात्तत्वादयो गुणा उच्चार्यमाणा अपि न विवक्षिता इत्यर्थः। एवञ्च प्रकृते निरनुनासिकस्यैवोच्चारणाद्विशेषस्याऽनुपादानात्कथमविवक्षेत्यत आह—अस्थिदधीत्यादि। उदात्तपाठेन—उदात्तत्वगुणयुक्तस्याऽकारस्य पाठेन। तथाच गुणकृतभेदाभाव एव ज्ञाप्यते, न तु भवदुक्तोऽर्थ इति भावः। यत्नम्—उदात्तादिशब्दोच्चारणेन बोधनरूपम्। अविवक्षयाऽभेदकत्वेति। अत्र तृतीयाऽभेदे प्रकृत्यादित्वात्। तथा निर्गुणस्योच्चारणमशक्यमिति निरनुनासिकत्वस्य भेदकत्वन्न स्यादिति नकारस्य स्थानेऽनुनासिकः प्राप्नोतीति भावः। यद्वा-स्वरूपेण नान्तरीयकतया उच्चारितस्याऽपि गुणस्याऽविवक्षया-व्यावर्तकत्वाविवक्षया, अभेदकत्वं-स एवायमित्याकारा या प्रत्यभिज्ञा तद्विषयत्वं ज्ञाप्यत इत्यर्थः। एवञ्चाऽविवक्षयेत्यत्र तृतीया हेतौ। न चास्थ्यादीनामन्त्यानुदात्तत्वात्तदनुरूपेऽनुदात्त एवोच्चारयितव्ये उदात्तोच्चारणं विवक्षार्थम्भविष्यतीति कथमुदात्त इति शब्दोच्चारणस्य ज्ञापकत्वमिति वाच्यम्? परमास्थ्यादिशब्दान्त्यस्योदात्ततया उदात्तत्वगुणकोच्चारणमपि स्थान्यनुरूपमेवेति उदात्तशब्दोच्चारणस्य ज्ञापकत्वसम्भवात्। ननु यत्रोदात्तादिशब्दोच्चारणन्तत्रैव भेदप्रतीतिर्यत्र तेषां शब्दानामनुच्चारणन्तत्र यत्नाभावादविवक्षेति चेत् "उञ ऊँ" इत्यत्र उदात्तादिशब्दो-

भावप्रकाशः।

मूलासाङ्गत्यं ध्वनयितुं फलाभेदेनोक्तार्थे भाष्यं प्रमाणयति—तथा चेति। प्राप्नोतीति। वनिबन्तस्य रो ङीबिति शेषः। एवमसिद्धवत्सूत्रेऽप्युक्तम्।

अत्र—कविप्रयोगविषये। एतेन प्रकाशानुयायिमूलानुयायिखण्डनकृद्रत्नाकरदण्डिमन्दादयः प्रत्युक्ता इति दिक्।

यत्तु मान्याः-ननु 'गुणा अभेदका' इत्यस्योच्चार्यमाणो गुणोऽविवक्षित इत्येवार्थः। गुणशब्देन चोदात्तत्वादयश्चत्वारः। प्रकृते च निरनुनासिकस्यैवोच्चारणात्पक्षसम्भावनैव नेति चेत्? अत्राहुः। "अनुदात्त" इत्युदात्तग्रहणेन गुणकृतभेदाभाव एव ज्ञाप्यते न तूक्तोऽर्थः, गौरवादिति, तत् प्राचामनुरोधेन। "अनुदात्तादेरञ्"इत्यादौ दोषापत्तेः। बहुषु तत्सामर्थ्यकल्पनाऽपेक्षयैकत्रोक्ताऽर्थज्ञापन एव लाघवेनौचित्याच्च। अत एव तस्य साफल्यम्। अन्यथा पुनः सामर्थ्यकल्पनापत्तिः। स्पष्टं चेदं वृद्धिसञ्ज्ञासूत्रे भाष्ये। तद्ध्वनयन्नाह-अस्थीति। यत्नम्-उदात्तादिसंज्ञाशब्देन बोध्यत्वरूपम्। अविवक्षयेति। प्रकृ-

नुनासिकः स्यादित्याशङ्क्याह—आ आदिति । यत्त्वाहुः—इहानुनासिको न । अनण्त्वेन सवर्णग्रहणाभावात् । न च "तपरस्तत्कालस्य" इति अनणि विध्यर्थमिति वाच्यम् । 'भाव्यमानः सवर्णान्न गृह्णाति' इति निषेधात् । गुणानामभेदकत्वेऽपि शुद्धैकव्यक्तेः सूत्रे निर्देशान्नातिप्रसङ्ग इति । अत्रेदं वक्तव्यम्—अनणि

शब्दरत्नम् ।

"उञः ऊँ" इत्यत्र नासिकाव्यापारेण क्लेशाधिक्येनोच्चारणादानुनासिक्यं विवक्षितमिति सर्वेषां समानम् । भेदकत्वेऽपि तपरसूत्रस्याऽनणि विध्यर्थत्वाद्दोषः । तत्राऽप्रत्ययग्रहणाऽ-

भैरवी ।

च्चारणाभावादनुनासिकोच्चारणेऽपि निरनुनासिकः स्यादत आह—उञः ऊँ इति । एतेन उदात्तादिशब्दोच्चारणमेव न यत्नः, किन्तु प्रयत्नाधिक्यमेव विवक्षितमिति । यत्र प्रयत्नाधिक्याभावस्तत्राविवक्षाऽन्यत्र तु विवक्षेत्येव ज्ञाप्यशरीरमित्यनुनासिकस्य ऊँ इत्यस्योच्चारणं विवक्षार्थम्भवतीति भावः । अत एव चतसर्याद्युदात्तनिपातनङ्करिष्यत इत्यादीनामुपपत्तिः । सर्वेषाम्—सर्वव्याख्यातॄणाम् । ननु यदि निपातनस्थले विशेषोच्चारणमेव विवक्षाहेतुस्तदा पथ्यादीनामन्त्यस्यानुनासिकत्वात्तदनुरूपेऽनुनासिक एवोच्चारयितव्ये निरनुनासिकोच्चारणमेव विवक्षाया हेतुर्भविष्यतीति प्रश्लेषो व्यर्थ इत्यत आह—भेदकत्वेऽपीति । दोष इति । स्यादिति शेषः । ननु तपरसूत्रेऽप्रत्ययग्रहणानुवृत्तिरस्तु तस्य च भाव्यमानभिन्नबोधकतास्त्विति नानुनासिकस्य प्राप्तिरत आह—तत्रेति । तत्र—तपरसूत्रे । तथा तपरसूत्रमनणीव विधीयमानेऽपि विध्यर्थमस्त्विति भावः । एवञ्च—तस्य तत्रानुवृत्त्यभावस्य भाष्यकारसम्म-

भावप्रकाशः ।

त्यादित्वादभेदे तृतीया । न चाऽत्र स्वरूपेणोच्चारितस्य कस्यापि गुणस्याऽभावादयुक्तमेतदिति वाच्यम् ; निरनुनासिकस्वरस्यैव गुणस्य तथा सत्त्वात् । यद्वा स्वरूपेणोच्चारितस्यापीत्यर्थः। तथा च तत्र यथा प्रत्यभिज्ञया भेदकत्वमेवमनुच्चरिते सुतरां तथेति भावः । वस्तुतस्तु अनुनासिकस्यात्रानुच्चारणेपि उदात्तत्वादियत्किञ्चिद्गुणस्योच्चारणमस्त्येव; निर्गुणस्योच्चारणाभावात् । सर्वत्रैकश्रुत्या सूत्रपाठे मानाभावादत एव ज्ञापकता तस्य । एवं च "वृद्धिरादैच्"इत्यत्रैवात्राऽपि गुणाऽभेदकपक्षोक्तिः सुवचैवेति बोध्यम् । अत्र पक्षद्वये अविवक्षयेति हेतावेव तृतीया । तया प्रत्यभिज्ञाप्रतिबन्धनिरासे, तया तेषां मिथो भेदकत्वज्ञापनादित्यर्थः । नन्वेवम्"ऊँ"इत्यत्राप्यविवक्षाऽऽपत्त्या मूलोक्तरीत्या शुद्धाऽऽपत्तिः, किञ्च "अनुदात्तादेः" इत्यादौ स्वरूपेणेति विशेषणेन दोषनिरासे यत्नं विनेत्यधिकमत आह—उञ इति । क्लेशाधिक्येनेति । बहुव्रीहिव्यापारविशेषणम् । अन्यथा प्रतिपत्तिलाघवाय निरनुनासिकमेव वदेत् । तथा च न पूर्वोक्तो यत्नः किन्तु प्रयत्नाधिक्यमात्रम् , अत एव निपातनस्थलेऽपि न दोषः । अत एव तत्सफलमपि । सर्वेषाम्—मान्यादीनाम् । एतेन विपरीतरीत्याऽत्रापि तद्वद्भेदकत्वमेवेति तद्रीत्यापि मूलादिचिन्त्यमिति ध्वनितम् । ननु चतुर्णामेव गुणत्वस्याऽऽकरे स्पष्टत्वादाद्यपक्षो युक्तः । किञ्च तदुत्तरपक्षद्वयाऽऽश्रयणमप्ययुक्तम् । तथा सति सिद्धान्ते जातिपक्षेण प्राप्तस्यैवाऽभेदकपक्षप्राप्तस्याऽपि "अप्रत्यय"इति निषेधेनादोषात् । स चाणनणसाधारण इति स्पष्टमन्यत्र । किं च सर्वपक्षे गुणानामभेदकत्वेऽपि शुद्धैकव्यक्तेरिति प्रकाशदूषकभवद्ग्रन्थदूषितत्वस्याऽत्र सत्त्वेन पूर्वाऽपरग्रन्थविरोधेन च तुरगाऽऽरूढस्य तुरगविस्मरणायितत्वापत्तिरिति खण्डनकृदुक्तिप्रसरः । भेदपक्षे प्रश्लेषवैयर्थ्यादयं पक्ष एवात्रेष्टः । प्रश्लेषसामर्थ्यादत्र तस्य बाध इति सूत्रार्थः । न हि सर्वनामानीत्यत्र णत्वबाधेनाऽपरपक्षोत्थानम् । प्रकाशोक्तिस्तु नैव सुपेशा । अभेदकबाधे हेत्वनुक्तेरिति मान्योक्तिस्तु न युक्ता, शुद्धैकव्यक्तेः सूत्रे प्रश्लेषेण निर्देशादिति प्रकाशार्थेन द्वयोः साम्यात् । अन्यथा वदतो व्याघात एव तस्य स्यात् ; अतो रत्नाकररीत्योपलक्षणत्वेन मूलं योजयति—भेदकत्वेऽपीति । एतेन तथा दण्ड्याद्युक्तं तस्योच्चारणार्थत्वात्तपरसूत्राऽप्रवृत्तिरिति मान्योक्तं चापास्तम् । नन्वेवमप्यप्रत्ययपदानुवृत्त्या निषेधः स्यादत आह—तत्रेति । तथा चानणीव विधीयमानेऽपि

विध्यर्थमिति शङ्कायां 'भाव्यमान' इत्याद्युत्तरमसङ्गतम् । अन्यथा "चोः कुः" इत्यादावपि निषेधापत्तेः । तत्रोदित्करणसामर्थ्यान्न निषेध इति चेत् ? किमनेन बकबन्धनप्रयासेन । "तपरस्तत्कालस्य" इति सूत्रेऽप्रत्ययग्रहणस्य भाष्यकृताऽननुवर्तितत्वाच्च । किञ्च शुद्धैकव्यक्तेरित्यसङ्गतम् । अभेदकत्वे दोषस्य दुरुद्धरत्वात् । एका व्यक्तिर्गृह्यत इत्युक्त्या हि व्यक्त्यन्तरं न निर्दिष्टमित्यर्थः फलितः । स च गुणानां भेदकत्वे सत्येव सङ्गच्छते नान्यथेत्यास्तां तावत् । एतेन 'भाव्यमानोऽण् सवर्णान्न गृह्णाति' इति निषेधादाकारो नानुनासिक इति प्रसादग्रन्थोऽपि प्रत्युक्तः । दीर्घस्यानण्त्वेन मूलशैथिल्यात् ।

"थो न्थः" ॥ स्थान्यादेशौ द्वावप्यनच्कौ । थेन्थ इत्येव सिद्धे "इतोऽत्" वचनं ऋभुक्षिन्नर्थम् । न्थादेश इति । केचित्तु अन्थादेशमाहुः । तत्राऽकारप्रश्लेषो व्यर्थः । यत्तु न्यासकृता प्राचा चोक्तमनेकाल्त्वेऽपि थकारमात्रस्यायमादेशो 'निर्दिश्यमानस्यादेशा भवन्ति' इति न्यायादिति ; तन्न । तद्विशिष्टस्याप्रसङ्गेनोक्तपरिभाषाया इह विषयाभावात् ।

प्रसङ्गादाह—स्त्रियामिति । सुपथीति । "इनः स्त्रियाम्"इति तु कब् न कृतः; समासान्तविधेरनित्यत्वात् , "युवोरनाकौ" इति सूत्रे सुपथीति भाष्याच्च । "न पूजनात्" इति निषेधस्य तु नायं विषयः। षचः प्राचीनेष्वेव स इति (१)ब-

शब्दरत्नम्

नुवृत्तौ मानाऽभावादित्यपि बोध्यम् । अननुवर्तितत्वाच्चेति । एवं च तत्र सूत्रे तत्सम्बन्धे मानाभावः । एवं च भेदकत्वेऽपि तपरसूत्रस्याऽनणि विध्यर्थत्वाद्दोष इति भावः । नान्यथेति । एवं च गुणानामभेदकत्वेपि इत्युपक्रम्य तादृश्युक्तिरसङ्गतेति भावः । मूलशैथिल्यादिति । सवर्णग्रहणाऽप्राप्तेरिति भावः ।

तद्विशिष्टस्येति । थ इति स्थानिश्रवणात्तदन्तविध्यभावाच्चेति भावः ।

अयम्—"इनः स्त्रियाम्" इत्येषः । एवं च "ऋक्पूः" इत्येष तेन निषेधेनाऽपि वारयितुं

भैरवी ।

तत्वे च । तत्सम्बन्धे–अप्रत्ययग्रहणसम्बन्धे । भेदकत्वेऽपि–शुद्धैकव्यक्तेरुच्चारणस्य भेदकत्वेऽपीत्यर्थः । तादृश्युक्तिः–सर्वेषां सङ्ग्रहप्रतिपादकशब्दानुच्चारणरूपा उक्तिः । निषेधादाकारो नानुनासिक इत्यसङ्गतम् । निषेधस्य प्राप्तिपूर्वकत्वेन प्रकृते प्राप्तेरेवाभावेन तथाभिधानमसङ्गतमित्याह–सवर्णेति ।

मूले तद्विशिष्टस्येति । घटकत्वसम्बन्धेन थकारविशिष्टसमुदायस्येत्यर्थः ।

भावप्रकाशः ।

विध्यर्थमिति भावः । मूलसम्मतमेवेदमिति ध्वनयितुमन्याऽऽशयकमपि मूले तथाशयकतया व्याचष्टे—एवं चेति । तस्य तदननुवर्तितत्वे चेत्यर्थः । तपरसूत्रे प्रत्ययपदसम्बन्धे मानाभाव इत्यग्रिमाऽर्थः । एवं च—तदसम्बन्धे च । अनणि विधीयमानेऽपीत्यादिः । एवं च भेदकपक्षे एव शङ्का तत्रैव प्रश्लेषेण समाधिरिति मूलतात्पर्यम् । अत एव मूलवैषम्यात्सर्वथा प्रकाशासङ्गतिमाह—एवं चेति । तस्य तदविषयत्वे चेत्यर्थः । अपिर्मूलोक्तप्रकारसमुच्चायकः । एतेन मौलन्यूनता निरस्ता ।

(१) "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इत्यतः प्रागयं निषेधः 'प्राग्बहुव्रीहिग्रहणं कर्तव्यम्' इति वार्तिकोक्तेरिति भावः ।

क्ष्यमाणत्वात् । पथिमथीत्यात्वं थो न्थश्च लिङ्गविशिष्टपरिभाषया प्राप्तं विभक्तौ लिङ्गविशिष्टाग्रहणान्न भवति । शाविति । यत्तु प्राचा "इतोऽत्सर्वनामस्थाने" "थो न्थः" इति सूत्रद्वये सुटीति व्याख्यातं, तदसत् । निर्बीजलक्षणाऽऽपत्तेः । क्लीबे औङः श्यां सुपथी इत्यत्राऽतिव्याप्तेः । सुपन्थानि पश्येति शसि रूपस्याऽसिद्धिप्रसङ्गाच्चेति भावः । अत्रेदमवधेयम् । पन्थानमात्मन इच्छति पथीयति । ततः क्विप् । अलोपः । यलोपः । एकदेशविकृतस्यानन्यत्वात् "पथिमथि" इत्यात्वम् । थो न्थः । पन्थाः । "इतोत्सर्वनामस्थाने" इत्यत्वं न भवति, इत इति तपरकर-

---

शब्दरत्नम् ।

शक्य इति भावः । थो न्थश्चेति । "थो न्थः" इति सूत्रमित्यर्थः । चाट्टिलोपः । प्राप्तमिति । तदन्तग्रहणादिति भावः । न भवतीति । न च टिलोपो न विभक्तिनिमित्तकोऽन्यत्रापि तत्प्रवृत्तेरिति वाच्यम् । प्रकृतोदाहरणे विभक्तिनिमित्तत्वमात्रेण तत्प्रवृत्तेः । अत एव "युवोरनाकौ" इति सूत्रभाष्ये श्वयुवेत्यादेः परिभाषाफलत्वेनोपन्यासःसङ्गच्छते ।

भैरवी ।

अनयोस्तदन्तविधिना समुदायस्य प्राप्तिमाह—तदन्तेति । विभक्ताविति परिभाषाया यस्मिन्कार्ये विभक्तिरेव निमित्तन्तत्रैव प्रवृत्तिरित्याशङ्कान्निराचष्टे—न चेति । अन्यत्र—विभक्तिभिन्ने, प्रातिपदिकप्रकृतिकणिचि । विभक्तिनिमित्तत्वमात्रेति । विभक्तेर्निमित्तत्वमात्रेत्यर्थः । अत एव—तावतैव परिभाषायाः प्रवृत्तिसत्त्वादेव । श्वयुवेत्यादेरिति । श्वयुवेत्यादिशब्दनिमित्तस्य "न गोश्वन्" इति निषेधस्य सम्प्रसारणस्य चेत्यर्थः । शुन्या इत्यादि प्रथमस्योदाहरणम्, युवतीः पश्येत्यादि द्वितीयोदाहरणम् । द्वितीयविधायकसूत्रेऽतिप्रसङ्गपरिहाराय "अल्लोपोनः" इतिसूत्रादन इत्यस्यापकर्षो नाश्रयणीयः । शुन्येत्यादौ निषेधस्य निवृत्तये सा परिभाषाऽवश्यमाश्रयणीया तयैव निर्वाहादिति भावः । अत्रोभयोरपि सूत्रयोर्विभक्तौ परतः प्रवृत्तिमात्रेण परिभाषायाः प्रवृत्तिः । मूले न्थः पन्था इति । न चास्य स्वीकारे "युवोरनाकौ" इति सूत्रभाष्ये विभक्ताविति परिभाषायाः प्रयोजनकथनावसरे पथी मथी इत्यत्रात्वन्नेत्युदाहरणत्वेनोपन्यस्तम् । ततः परेण 'न केवलः पथिशब्दः स्त्रियामस्ति' इत्युक्तन्तदस्य पथीशब्दस्य स्त्रियां सत्त्वसम्भवाद्विरुध्यत इति चेन्न । एतदजानता एकदेशिना तथोक्तत्वात् । ततो भगवता सुपथीत्युदाहृतम् । केवलं स्त्रियां वृत्त्यभावेऽपि तदन्तस्य सम्भवति तत्र प्रयोग इत्याशयः । न च तदाचारक्विपाऽपि सम्भवतीति वाच्यम् ? हलन्तेभ्य आचारक्विपोऽनभिधानात् । यद्वा न केवलेत्यस्य स्त्रीबोधकप्रत्ययान्तो नेत्याशयः कल्प्यः । वस्तुतो झटिति प्रतीयमानतदर्थविरोधादेतदसङ्गतमिति अस्याप्यभिधाने न दृढम्मानमिति बोध्यम् । ननु समबलस्थले व्यवस्थापकत्वम्परत्वस्य, नित्याऽनित्ययोस्तु तथात्वविरहात्कथन्तत्र परत्वस्य नियामकत्व-

भावप्रकाशः ।

प्राप्तमित्यत्राऽन्वयायाऽऽह—थोन्थ इतीति । न्यूनतां निराचष्टे—चादिति । टिलोपविधिसूत्रं चेत्यर्थः । तथा च नायं मिथः समुच्चायकः किन्त्वन्यस्याऽपीति भावः । तदन्तेति । तदन्तस्यापि ग्रहणादित्यर्थः । एतेन समुदायनिष्ठस्त्रीत्वस्य हेतुतया समुदायाल्लिङ्गबोधकप्रत्ययविधानेन तस्य तद्विशिष्टत्वेऽपि तदुद्देश्यककार्याभावान्न दोष इति भ्रान्तोक्तमपास्तम् । चाट्टिलोप इत्याशङ्कते—न चेति । विभक्तीति । विभक्तेर्निमित्तत्वमात्रेणेत्यर्थः । श्वयुवेत्यादेरिति । इत्येतन्निमित्तकस्य "न गोश्वन्" इति निषेधस्य "श्वयुव" इति सम्प्रसारणस्य च यथाक्रमं शुन्या युवतीरित्यादौ प्राप्तस्य निवृत्तेरित्यर्थः । अयमेव बहुव्रीहिणा आदिपदार्थः । न हि तत्र सूत्रद्वये विभक्तित्वेन निमित्तत्वं येन तदुक्तिसाङ्कर्यं स्यात्, तस्मादुक्त एवाशय इति भावः । विवेचितञ्चेदमारम्भे । ननु सबलव्यवस्थापकत्वं परत्वस्य, न हि नित्यानि-

णात् । "एरनेकाच" इति यणं बाधित्वा परत्वान्नित्यत्वाच्च "थो न्थः"। संयोगपूर्वकत्वान्न यण् । पन्थियौ, पन्थियः, पन्थियम् , पन्थियौ । भस्य टेर्लोपः । पथः, पथीभ्याम् , पथीभिः । इत्यादि । एतेन "इतोऽत्सर्वनामस्थाने"

शब्दरत्नम् ।

**परत्वादिति** अभ्युच्चयः । न चाऽभिव्यक्तपदार्था इति न्यायेन कथमत्राऽत्वादीनां प्रवृत्तिः । तस्य न्यायस्य पदकार्यविषयत्वेन तपरकरणादनित्यत्वेन चेहाऽप्रवृत्तेः । न च 'न केवलः पथिशब्दः स्त्रियामस्ति' इति "युवोरनाकौ" इति सूत्रस्थभाष्यप्रामाण्यादेभ्यः क्यजन्तेभ्यः क्विपोऽनभिधानमिति वाच्यम् । स्त्रीप्रत्ययाऽप्रवृत्त्या तदङ्गीकारेऽप्यक्षतेः । विभक्तौ लिङ्गविशिष्टाऽग्रहणमित्येतत्प्रयोजनकथनाऽवसरे हि भाष्ये तदुक्तम् । **न यणिति** । ननु तदभावेऽपीयङ् दुर्लभः । सुब्विधावन्तर्वर्तिविभक्त्याश्रयनलोपस्यासिद्धत्वेनेवर्णाऽन्ताऽङ्गाऽभावादिति वाच्यम् । सुप्त्वतद्व्याप्यधर्मनिमित्तकइङ्विधेरेव ग्रहणात् । अत एव

भैरवी ।

मत आह—अभ्युच्चय इति । अर्थवादवाक्यवत्प्रकर्षमात्रतात्पर्यकस्तथावादो न तु स्वार्थतात्पर्यक इति भावः । अभिव्यक्तेति न्यायस्य सामान्यतः प्रवृत्त्यभिमानशङ्कान्निरस्यति—न चेति । स्वीयसिद्धान्ताऽभिप्रायेणाह-तस्येति । प्राचीनरीत्याऽऽह-तपरकरणादिति । पूर्वोक्तार्थंन्द्रढयितुं शङ्कासमाधाने करोति-न चेत्यादिना । स्त्रीप्रत्ययाप्रवृत्त्येति । एतेन स्त्रीप्रत्ययस्तत्प्रकृतिको नास्तीत्यर्थः सूचितः । तथा च तादृशस्त्रीप्रत्ययान्तो नास्तीति फलितम् । मूले पन्थियावित्यत्र न्थादेशकल्पने थेन्थं इत्येवसिद्धे इतोऽद्वचनमृभुक्षिन्नर्थमिति पूर्वग्रन्थविरोध इति तु न वाच्यम् । ऋभुक्षिन्नर्थमित्यस्यैतदुपलक्षणत्वात् । सुब्निमित्तकविधावित्यर्थमात्राऽभिप्रायिकामाशङ्कान्निरस्यति-नन्वित्यादिना । अत एव-"नलोपः सुप्" इति सूत्रे सुप्त्वतद्व्याप्यधर्मावच्छिन्नवि-

भावप्रकाश ।

स्यादौ तथेत्यत आह--अभ्युच्चय इति । तस्योक्तार्थवादवत्तत्स्तावको न तु स्वार्थपर इति भावः । **न्यायेन**—गौणमुख्यन्यायमूलकेन । अत्र-क्यजन्तात् क्विबन्ते । मूलमते प्रातिपदिककार्येऽपि प्रवृत्तेस्तद्रीत्यैवाह-तपरेति । "इत" इति तपरेत्यर्थः । तस्य चैतया वृत्त्यैव साफल्यादिति भावः । **एभ्यः**-पथ्यादिभ्यः । अन्यथा कर्तृस्त्रियां क्विपा तस्यापि लाभेन तदसङ्गतिः स्पष्टैव । **स्त्रीप्रत्ययेति**—कर्तृस्त्र्यर्थकक्विन्नूपस्त्रीप्रत्ययेत्यर्थः । **तदङ्गीकारेऽपीति** । पुमादिकर्त्रर्थकक्विबङ्गीकारेऽपीत्यर्थः । तत्र मानमाह-**विभक्ताविति** । **हि**-यतः । तथा चोपक्रमोपसंहाराभ्यां तथैव भाष्यसामञ्जस्येनाधिकतत्कल्पनायां मानाभाव इति भावः । जगन्नाथोक्तिं खण्डयति—**नन्विति** । विधिरूपेण प्रवृत्तिरित्याशयेनाह—**सुब्विधाविति** । बाह्यसुब्हेतुकेयङ्विधावित्यर्थः । अन्तर्वर्तीति विशेषणं तत्स्वरूपोपादनद्वारा तस्य पूर्वजातत्वसूचकम् । न च तस्यासिद्धत्वे कार्ये अल्लोपस्य "अचः पर" इति स्थानिवत्त्वम् ; पूर्वत्राऽसिद्धीये इति निषेधात् । **व्याप्यधर्मः**-सुप्त्वादिः । तद्धर्मावच्छिन्नोद्देश्यकविधेरेवेत्यर्थः । सुब्ग्रहणं स्पष्टार्थम् ।

सरला ।

**सुब्विधेरेव ग्रहणादिति** । वस्तुतस्तु "पूर्वत्रासिद्धम्" इत्यतः पूर्वत्रेत्यनुवर्त्य पूर्वसुप्स्वरसंज्ञातुग्विधिषु कर्तव्येषु नलोपोऽसिद्ध इत्यर्थकरणात् षत्वस्य पूर्वत्वाभावादस्याप्राप्त्या एतादृशार्थे प्रमाणाभावः । किञ्च त्वन्नये 'इकोऽचि' इत्यस्य सुब्विधित्वाभावेन अज्ग्रहणाभावपक्षे नपुंसकदण्डिन्शब्दाद् ङ्यामि नलोपे नुमि लक्ष्यैलक्षणन्यायेन पुनर्नलोपाप्राप्त्या नकारश्रवणेन, अज्ग्रहणे नुमोऽप्राप्त्या तदश्रवणेन फलभेदाद् 'इह किञ्चित् त्रपो' इति भाष्यविरोधापत्तिः । यद्यपि सुप्त्वव्याप्यविषयताके इत्याद्यर्थस्वीकारेण न भाष्यविरोधस्तथापि 'अशुद्धं कृत्वा कुचोद्यम्' इति न्यायेनात्र न तादृशार्थ उचित इति दिक्" इति शेखरदीपकीयनलोपःसुप्स्वरसूत्रस्थग्रन्थमनूद्यात्र तदर्थखण्डनप्रयासोऽनुवादाकौशलद्योतक एव । तदर्थास्वीकारे 'पन्थियौ' इत्यत्र नलोपस्यासिद्धत्वेन सुब्निमित्तकेयङो दौर्लभ्यापत्तेरनिराकरणात् ।

इत्यत्र स्थानिन्यादेशे च तपरकरणं मुखसुखार्थमिति हरदत्तग्रन्थः प्रत्युक्तः । यत्तु न्यासकारस्तदनुसारिणोऽन्ये च सुखीः, सुतीरितिवत् 'पथीः पथ्यौ, पथ्य इत्या-

---

शब्दरत्नम् ।

दण्डिष्वित्यादौ षत्वे नलोपस्याऽसिद्धत्वं न । न च न्थादेशेऽङ्गवृत्तपरिभाषया नेयङ् । तस्या अनित्यत्वात् । न चेयङि कृतेऽत्वं दुर्वारम् । संनिपातपरिभाषया स्वातिरिक्ततद्विघातकस्य बाधेनाऽदोषादिति भावः । न च प्रकृतिप्रत्ययविशेषापेक्षन्थादेशापेक्षयाऽन्तरङ्गत्वाद्यणेव स्यादिति वाच्यम् । प्रातिपदिकस्याऽप्यत्र प्रकृतित्वेन हलादेरपि तन्निमित्तत्वेन यणप्रकृ-

भैरवी ।

धेरेव ग्रहणादेव । षत्व इति । कर्तव्य इति शेषः । असिद्धत्वन्नेति । सुब्विधावसिद्धत्वस्याऽपूर्वविधित्वन्नेत्यर्थः एतेन षत्वविधिः परो, नलोपशास्त्रन्तु पूर्वमिति कथं षत्वे कर्तव्ये, नलोपासिद्धत्वस्य प्राप्तिरिति परास्तम् । अस्य ग्रन्थस्य स्वरादिविधौ यथा नियमत्वन्तथा सुब्विधावपि तदेकवाक्यतया नियमत्वमेवेत्याशयात् । तच्च नियमत्वं सुब्विधिशब्दस्य सुप्त्वतद्व्याप्यधर्मावच्छिन्ननिमित्तकविधावित्यर्थकत्व एव सङ्गच्छत इति तात्पर्यम् । तस्याः—अङ्गवृत्तपरिभाषायाः । अत्वं दुर्वारमिति । एतदवयवस्य ह्रस्वेकारस्य । सन्निपातपरिभाषयेति । इयङादेशे इत्वावच्छिन्नस्य सत्त्वं निमित्तन्तच्चेयङादेशेऽप्यनुवर्तते एव । यद्यस्येकारस्यात्वं स्यात्तदा तद्विघातः स्पष्ट एवेति भावः । मतान्तरङ्खण्डयति—न चेति । प्रकृतीत्यादेः पथ्यादिप्रकृतिसर्वनामस्थानरूपप्रत्ययविशेषापेक्षेत्यर्थः । यण्विधौ चेवर्णान्तधात्वादिरूपसामान्यस्याऽजादिप्रत्ययरूपसामान्यस्य चापेक्षेति यणन्तरङ्ग इति भावः । यत्र विशेषापेक्षशास्त्रनिमित्तत्वं सामान्यापेक्षशास्त्रनिमित्तत्वस्य व्याप्यं तत्रैव समान्यापेक्षेऽधिकस्याप्यपेक्षासत्त्वेन बहिरङ्गत्वव्यवहारः । प्रकृते तु तथा नेत्याशयेनाऽऽह—प्रातिपदिकेति । अत्र—"थोन्थ" इत्यत्र । प्रकृतित्वेन—सर्वनामस्थानप्रकृतित्ववत्त्वेन । हलादेः—सोः । यण्प्रकृतीति । यणादेशशास्त्रोक्तप्रकृतित्वतत्रत्यनिमित्तप्रत्ययत्वव्याप्यत्वाभावादित्यर्थः । एतेन सामान्यापेक्षशास्त्रनिमित्तत्वनिष्ठव्यापक-

भावप्रकाशः ।

सुब्विधिशब्देन ग्रहणादित्यर्थसूचकं वा । षत्वे—कार्ये । असिद्धत्वं नेति । तदपूर्वविधिर्नेत्यर्थः । तत्र प्रत्ययत्वेनाश्रयणेनाऽतत्त्वात् । स्वरादिसाहचर्येण षत्वस्यैतद्दृष्ट्याऽसिद्धत्वेन च नलोपशास्त्रात्पूर्वपठितशास्त्रेण विहितसुब्विधेरेव ग्रहणाच्च । एतेनात्र विधित्सम्भवे नियमोऽयुक्त इत्यपास्तम् । वैरूप्यापत्तेश्च । खण्डनकृदुक्तिं खण्डयति—न चेति । रत्नाकरोक्तिं खण्डयति—न चेति । अत्वमिति । तदिकारस्येति शेषः । तथा च पन्थियौ, पन्थिय इत्याद्युचितम् । न च दुर्गोक्तरीत्या नान्तानुकरणान्न दोष इति प्रकाशोक्तिर्युक्ता ; तदनुकरणे मानाभावात् , नलोपासिद्धत्वेन नान्तत्वानपायाच्च, मूलोक्तदोषद्वयापत्तेश्चेति तद्भावः । उक्तपरिभाषाया अनित्यत्वस्योक्तत्वादाह—सन्निपातेति । स्वातीति । इयङन्यसन्निपातनाशकत्वस्येत्यर्थः । प्रतिपादितमिदमधस्तात् । प्रकारद्वयेन मतान्तरं खण्डयति—न चेति । अत एवेति भाव इत्यनन्तरमेतदुक्तिः । अयं भावः—विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गं तच्च न तत्त्वमात्रेण किन्तु तत्र विशेषधर्मस्याऽधिकस्य निमित्तत्वेन । "थोन्थ" इत्यत्र पथ्यादिसर्वनामस्थानापेक्षा । यण्विधौ चाजादिप्रत्ययेवर्णान्तधात्वपेक्षा । आद्येऽङ्गत्वज्ञानाय प्रकृतित्वप्रत्ययत्वज्ञानं चावश्यकमिति यणन्तरङ्गः । तथा च पन्थाः पन्थ्यावित्याद्येव रूपम् । तपरकरणं तु स्पष्टार्थमेव । एरदित्युक्तौ ततो लाघवाभावाच्च । अन्यथा विधेयेऽपि तपरकरणात्कुरुत इत्यादौ गुणाभाववत्पन्थानावित्यादौ दीर्घाऽनापत्तिः । हलन्तेभ्य आचारक्विप् तु नास्त्येवेत्युक्तं प्राक् । अर्थपूर्वकं दीर्घत्वानुमानं पुंस्यपीति तदर्थं तपरकरणमादेशे तूच्चारणार्थमिति मिश्रोक्तिश्चिन्त्येति रत्नाकरोक्तमपास्तमिति । अपिना नामधातुसंग्रहः । अत्र—थोन्थ इत्यत्र । प्रकृतित्वेन—सर्वनामस्थानप्रकृतित्वस्य विवक्षितत्वेन । यण्प्रकृतीति । यण्शास्त्रोक्तप्रकृति—तत्रत्ययण्निमित्तोभयेत्यर्थः । अयम्भावः—यत्र विशेषापेक्षस्य सामान्यापेक्षनिष्ठव्यापकता निरूपिता व्याप्यता तत्र तत्प्रवृत्तिः । यथा "रुदादिभ्यः

शब्दरत्नम् ।

त्तितन्निमित्तव्याप्यत्वाभावात् "तदोः सः सौ" इति सूत्रेऽनन्त्ययोरित्युक्त्या तत्प्रत्याख्यानाय भाष्यकृताऽदस इति योगविभागकरणेन च तादृशान्तरङ्गत्वस्य सर्वत्राना-

भैरवी ।

तानिरूपितव्याप्यत्वाभावः सूचितः। विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गमित्यस्य तु यत्र सामान्यापेक्षे विशेषापेक्षशास्त्रीयनिमित्तस्य ततोऽधिकस्य चापेक्षा तत्रैवोक्तव्यापकतानिरूपितव्याप्यतायाः सत्त्वात्प्रवृत्तिरित्यभिप्रायः। परिभाषाया एतादृशार्थबोधिकायाः प्रवृत्तिस्तु "रुदादिभ्यः सार्वधातुके" इत्यत्र स्फुटा। तत्र हि रुदादित्वं सार्वधातुकत्वञ्च निमित्ततावच्छेदकम्। तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानम्प्रत्ययस्य प्रत्ययत्वज्ञानञ्चावश्यकमिति यासुडन्तरङ्गः। एतन्निमित्ततावच्छेदकधातुत्वप्रत्ययत्वरूपसामान्यधर्मनिष्ठव्यापकतानिरूपितव्याप्यता रुदादित्वसार्वधातुकत्वयोरस्ति। वस्तुतस्तु तत्र नित्यत्वाद्यासुडित्येव नत्वन्तरङ्गत्वात्। विशेषस्य व्याप्यत्वेन तद्व्यापकस्याऽनुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावात्। अत एव भाष्यकृतैतादृशान्तरङ्गबहिरङ्गभावस्याऽसिद्धपरिभाषाप्रवृत्तौ हेतुता नोक्ता। न भाष्यानुक्तत्वमात्रन्तादृशान्तरङ्गबहिरङ्गभावस्याऽनाश्रयणे बीजङ्किन्तु भाष्यान्तरमपि तत्र बीजमित्याह—तदोः सः सावितीति। तत्र हि विभक्तित्वरूपसामान्यधर्मावच्छिन्ननिमित्तकत्वं, तदोरिति तु साविति विशेषापेक्षमिति। यथाश्रुतार्थिकया तया परिभाषयाऽत्वस्यान्तरङ्गतया पूर्वम्प्रवृत्तावनन्त्यस्यैव भविष्यतीत्यनन्त्ययोरिति व्यर्थं स्यात्। एवं योगविभागेन गुरुभूतेन तत्प्रत्याख्यानमपि वृथा स्यात्, उक्तरीत्याऽनन्त्यस्यैव सिद्धेरिति भावः। सर्वत्रेति। एवमुक्तिस्तु कैयटेन "अनुदात्तङित" इति सूत्रे लादेशानां पूर्वम्प्रवृत्तये एषोक्तेत्यभिप्रायेण। यत्तु आत्वात्मके सुब्विधौ नलोपस्यासिद्धत्वे नस्याऽऽत्वे पन्थ्या इति

भावप्रकाशः।

सार्वधातुके" इत्यत्र रुदादित्वं सार्वधातुकत्वं च निविष्टम्; तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं, प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति यासुडन्तरङ्गः। अस्ति च तत्र यासुट्निमित्तधातुत्वप्रत्ययत्वरूपव्यापकधर्मनिरूपिता रुदादित्वसार्वधातुकत्वयोर्व्याप्यता न तथा प्रकृते इति। वस्तुतस्तत्रापि नित्यत्वाद्यासुट्, न त्वन्तरङ्गत्वात्। विशेषस्य व्याप्यत्वेन व्यापकस्याऽनुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावेनाऽधिकधर्मनिमित्तत्वाऽनुपपादनात्। अत एव भाष्ये एवंविधाऽन्तरङ्गबहिरङ्गभावस्य काऽप्यनुल्लेख इत्याशयेनाह— तदोरिति। अन्यथा विभक्तिसामान्यापेक्षत्वेनाऽन्तरङ्गत्वादन्त्यस्याऽत्वेऽनन्त्यस्यैव सत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। अत एव तथा तत्प्रत्याख्यानप्रकारोऽपि वृथेति भाष्यारूढत्वमस्येत्याह-- तत्प्रत्येति। सर्वत्रेत्युक्तिस्तु "अनुदात्तङित" इत्यत्र कैयटेन तदाश्रयणं कृतमिति तदभिप्राया। अत एव "तदोः" इति सूत्रे वक्ष्यति–'न क्वापि' इति। अत एव च न तेन विरोधः। स्फुटीभविष्यति चेदं तत्रैवेति दिक्। यत्तु खण्डनकृद्रत्नाकरादयः–एवमपि आत्वरूपे सुब्विधौ नलोपस्याऽसिद्धत्वेन नस्याऽऽत्वे सौ पथ्या इति रूपं स्यात्। न च बहिरङ्गत्वेनात्वस्यासिद्धत्वान्नलोपप्रवृत्तिरित्याद्याशङ्क्या युक्ता। अन्तरङ्गे कार्ये जातस्य तत्कालप्राप्तिकस्य च बहिरङ्गस्याऽसिद्धत्वेऽपि पश्चात् प्राप्तबहिरङ्गस्य तत्त्वे मानाऽभावात्। अत एव पूर्वमन्तर्वर्तीति विशेषणं दत्तमिति; तन्न। स्वरादिसाहचर्येण नलोपात् पूर्वं नकारमात्रप्रतिबन्धेनाप्राप्तसुब्विधेरेव ग्रहणात्। प्रत्यासत्त्या यत्र सुपि नलोपस्तत्रैव, यत्र विधिस्तत्रैवाऽसिद्धत्वाच्च। यत्तु रत्नाकरकृत्—मान्यदण्डयभिमतैतन्न्यायाङ्गीकारेणनिषेधार्थं सुत्राद्यन्यविधावारब्धस्याऽस्य तत्रापि तात्पर्यकल्पने वाक्यभेदाऽऽपत्तिः। अधिकप्रत्यासत्तिलाभे त्यागाऽयोगेन तत्र निषेधाऽनापत्तिश्च। किन्त्वेवं वयजन्ते एवाऽऽत्वन्थादेशौ स्यातां न तद्भिन्ने द्विमात्रे स्थानित्वे क्व्यवधाने च कृतार्थत्वात्। तथा च सुख्यरूपाऽसिद्धिरतदवस्था। न चाऽयमसिद्धत्वविधिर्नापि सुनिमित्तो नलोपः येन न्यायावतारः स्यात्। अतस्तदाश्रयणमयुक्तमिति; तन्न। नियमशास्त्राणां विधिमुखेनैव प्रवृत्तेः

द्यदाजहुस्तच्चिन्त्यम् । सावात्वस्य दुर्वारत्वात् । यत्तु पथिमथ्यृभुक्षामिति नान्त-
प्रकृत्यनुकरणमेतदिति ; तदप्यनर्थकम् । एकदेशविकृतन्यायस्य दुर्वारत्वात् ।
पन्थाः इत्यत्राऽपि नित्यत्वाद्विशेषविहितत्वाच्च पूर्वमात्त्वे कृतेऽनान्तत्वेन
न्थादेशाप्रसङ्गाच्च । यदप्याहुः—अल्लोपस्य स्थानिवत्त्वान्नात्वादि । 'क्वौ लुप्तं न

---

शब्दरत्नम् ।

अयणाच्चेति बोधनात् । सावात्वस्येति । न्थादेशस्याप्युपलक्षणम् । यदि
वैयात्यान्नात्रातिदेश इति वदेत्तत्राप्याह-पन्था इति । न्थादेशेति । अत्वस्याप्युपलक्ष-
णम् । नात्वादीति । न च "न पदान्त" इति निषेधः । अनान्ततया "नः क्ये" इति निय-
मेन संज्ञाविधौ नलोपासिद्धत्वेन चेकारान्ते पदत्वाऽभावात् । तेन पदान्तत्वात् "इकोऽस-

भैरवी ।

रूपमिति तन्न । सुपि यो विधिर्नकारेण स्वसत्तया प्रतिबध्यते, तस्यैव तत्र ग्रहणात्स्वरसाह-
चर्येण तादृशस्य पूर्वमुपस्थितत्वात् । "थोन्थ" इत्यस्य प्रवृत्तिप्रतिबन्धकानुपलम्भेनात्वमा-
त्राभिधाने न्यूनतेत्यत आह-न्थादेशस्येति । वैयात्यादिति । धार्ष्ट्यादित्यर्थः । नात्रातिदेश इति ।
अल्विधावेकदेशविकृतन्यायप्रवृत्तिरप्यनिष्टेति तद्भावः । वस्तुतस्तु एतदयुक्तम् । नान्तप्रकृ-
त्यनुकरणेऽपि नान्तानाम्पथ्यादीनामित्यथ मानाभावेन विकृतावयवनिबन्धनकार्याभावेन
तेन न्यायेन पथिन्शब्दत्वातिदेशस्य दुर्वारत्वात् । न्यूनतापरिहारायाह—अत्वस्येति । निषेध
इति । पदस्यान्तः पदान्त इत्यर्थाभिप्रायेणेयमाशङ्का । अनान्ततयेति । सम्प्रतीत्यादिः । पद-
त्वाभावादिति । कार्यकालपक्षाभिप्रायेणेदम् । न चाकडाराधिकारस्थभपदसञ्ज्ञाविषये यथोद्दे-

भावप्रकाशः ।

सिद्धान्तितत्वेन दोषत्रयाभावात् । परम्परया नलोपस्याऽपि सुब्निमित्तत्वाच्च । स्वादीनां पथ्याद्यङ्ग-
विशेषणत्वस्यैवौचित्याच्च । स्थानेऽन्तरतमे इति सप्तम्यन्तपाठस्य भाष्ये दूषितत्वाच्च । किञ्च तस्याऽस-
द्धित्वेऽपि देवदत्तहन्तृहतन्यायेन तदभावात्तस्य तदप्राप्तेः । किञ्च न हि रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्ति
न गोचरयतीति न्यायेन जायमानकार्यस्याऽऽदेशे एव स्थानिबुद्ध्या प्रवृत्त्यङ्गीकारेणात्रादेशस्याभावस्य
कार्याधारताया बाधादित्यलम् । उपसंहाराऽनुरोधेनाऽह—न्थादेशेति । अल्विधावेकदेशविकृतन्या-
याऽप्रवृत्तिः शास्त्रसिद्धेत्यरुचेराह—पन्था इतीति मान्योक्तिः प्राचामनुरोधेन । न हि तेन नान्तत्वमा-
नीयते; तस्योभयथा ब्रह्मणाऽपि दुरुपपादत्वात् । छिन्नपुच्छे शुनि पुच्छवत्त्वस्येव, बलादित्वस्येव च । किन्तु
पथिन् शब्दत्वं तत्र निर्बाधम् । एतेनोभयत्र तपरकरणं सुखसुखार्थमित्युक्त्वा मूलोक्तरीत्या स्थानिनि
तत्साफल्यमभिधाय एकदेशेति न्यायेनात्वमाशङ्क्य सुपन्था ग्राम इत्याद्यसिध्या अर्थप्राधान्ये एव तदिति
समाधिं सन्दूष्य, क्वौ लुप्तत्वात् स्थानिवत्त्वं निवार्य, दुर्गोक्तं नान्तानुकरणमस्माभिरप्यादरणीयं, ततश्चा-
ऽऽत्ववदत्वमपि न प्रसज्यत एवेति तन्मुखसुखार्थं एवेति प्रकाशोक्तं मूले यत्त्वित्यादिना संक्षिप्यानूदित-
मपास्तम् । तद्ध्वनयन्नाह—यदीति । वैयात्यात्—अविनीतत्वात् । अतिदेशः—एकदेशेतिरूपः ।
तथोल्लेखस्तु वक्ष्यमाणरीत्या स्थानिवत्त्वमपि सुवचमिति सूचनाय । न्यूनतां निराचष्टे—अत्वेति ।
अकारप्रश्लेषात्तदप्रवृत्तिरिति मान्याः । आत्वात्वांशयोः शङ्कते—न चेति । अनान्तेति । सम्प्रती-
त्यादिः । इदं च हेतुद्वयं कार्यकाले पक्षेत्यादि ग्रन्थवत् । ननु नलोपाऽसिद्धत्वेन नान्तत्वमेवात आह—
संज्ञेति । इदं च कार्यासिद्धत्वे । तेन च स्थानी आयातीति पक्षे इति केचित् । अन्ये तु—यथोद्देशे "नः
क्ये" इति नान्तपदत्वस्येकारान्ते एकदेशेति न्यायेन लाभः । नः क्ये इति सामान्यापेक्षनियमेनैतत्प्राप्तस्यापि
वारणात्तदाह—अनान्तेति । ननु न तेन न्यायेन सा आनीयते तत्र, किन्तु नलोपाऽसिद्धत्वेन, एवं
च नियमेन न वारणमत आह—सञ्ज्ञाविधाविति । अपूर्वसञ्ज्ञाविधावित्यर्थः, पूर्वोत्तरसाहचर्यात् ।
न चैवं सञ्ज्ञेति सामान्योक्तिर्व्यर्था, विसञ्ज्ञाग्रहणेन साफल्यात् । तथा च प्रकृतेऽपूर्वविध्यभावेनाऽसि-

स्थानिवत्'इति नेहाश्रीयते इति; तदपि चिन्त्यम्। तथा सति यण्प्रसङ्गात्। "ख्यत्यात्"इति सूत्रे सुखीः सुतीरित्यादिनिर्वाहाय 'क्वौ लुप्तं न स्थानिवत्' इत्यस्य कैयटादिभिराश्रितत्वात्। "इतोऽत्"इत्यत्र तपकरणं कुर्वतः सूत्रकृतोऽपि इहाऽनुकू-

---

शब्दरत्नम्।

वर्ण" इति ह्रस्वेऽप्यात्वं दुर्वारमित्यपास्तमिति भावः। आश्रितत्वादिति। तत्प्रकृतिक-सख्युरिति रूपे ङस्निमित्तो यण्। क्यजकारनिमित्तकत्वे हि क्विनिमित्तकलोपाऽऽपत्तिः। ङस्निमित्तकस्य तु बहिरङ्गत्वेनाऽसिद्धत्वान्न लोपः। स्थानिवत्त्वे हि व्यवधानात्तन्निमि-त्तकोऽपि न स्यात्। अनुकूलत्वाच्चेति। आत्वादिप्रवृत्तिप्रतिबन्धकन्यायानामनि-

भैरवी।

शपक्षस्यैव स्वसिद्धान्ते सत्त्वेनेदमसङ्गतमिति वाच्यम्? यत्र तदधिकारीयसञ्ज्ञाद्वयप्रसक्ति-स्तत्र यथोद्देशस्यैवाश्रयणमिह तु न तथेत्याशयात्। अत्र–उक्तरूपेषु। वस्तुतस्तु पदेऽन्तः पदा-न्त इति भाष्यकारीयोक्त्या परपदस्थाजादेशस्यव स्थानिवत्त्वस्य तेन सूत्रेण निषेधादेतत्सर्व-म्प्राचीनरीत्येति न कापि क्षतिः, इह तद्रीत्या ग्रन्थसङ्गमनमिति बोध्यम्। सखीयतेः सख्यु-रिति भाष्यकारोक्त्यभिप्रायेणाह–तत्प्रकृतिकेति। यण्–"एरनेकाचः"इति यण्। अकारलोपस्य स्थानिवद्भावादाह—क्यजेति। अधुना यण् तु "इको यणचि" इति बोध्यः। न चास्मिन्कर्त-व्ये क्विनिमित्तकलोपस्य बहिरङ्गाऽसिद्धत्वं स्यादिति वाच्यम्? बहिरङ्गपरिभाषाया अनि-त्यत्वात्। लोपाऽऽपत्तिः–"लोपो व्योः" इति लोपाऽऽपत्तिः। न च स्थानिवद्भावः यलोपे तन्नि-षेधादपूर्वविधित्वाच्च। निमित्तकस्य त्विति। यण इति शेषः। इदं 'क्वावुपसङ्ख्यानम्'इति वार्ति-काभिप्रायेण। अन्यथा ङस्निमित्तकस्य वलपरत्वन्नास्तीति लोपस्य प्राप्तेरेवाभावेनेदमनु-पपन्नं स्यात्। वार्तिकप्रत्याख्याने तु "वेरपृक्तस्य" इति सूत्रे वेरिति योगं विभज्य तत्र व्यो-रित्यनुवर्त्य विप्रत्ययान्तयोर्व्योरिति व्याख्यानेन लोपो बोध्यः। स्थानिवत्त्वे हीति। क्यजल्लो-पस्येत्यादिः। व्यवधानादिति। तेनैव व्यवधानादित्यर्थः। तन्निमित्तकः–ङस्निमित्तक इत्यर्थः। तस्माद्भाष्यप्रामाण्यात्क्यजाद्यल्लोपे स्थानिवद्भावप्रवृत्तिरावश्यकीति भावः। आत्वादिति। आदिनाऽत्वन्थादेशयोः सङ्ग्रहः। न्यायानामिति। अभिव्यक्तेतिन्यायस्येत्यर्थः। न्यायाना-

भावप्रकाशः।

द्धत्वमित्याहुः। एतेनाऽऽकडारस्थभपदसंज्ञासु यथोद्देशपक्षस्यैवाऽऽश्रयणेन शास्त्राऽसिद्धत्वस्याऽऽदेशे एक स्थानिबुद्ध्या कार्यस्य चाङ्गीकारेऽचेदं चिन्त्यमित्यपास्तम्। अत्र—उक्तरूपेषु। तथा च पन्थौ, पन्था इत्या-द्येव रूपाणीति मिश्राद्युक्तिरेव युक्तेति मूलं चिन्त्यमिति भावः। वस्तुतस्तु परपदस्थाजादेशस्यैव तेन स्थानिवत्त्वनिषेधादाशङ्कैवाऽयुक्तेति प्राचीनरीत्यापि ग्रन्थयोजने बाधकाऽभाव इति बोध्यम्। सखीयतेः सख्युरिति तत्र भाष्योक्तेर्यथाश्रुतमूलासङ्गतेराह-- तत्प्रकृतीति। कथमाश्रितं तत्राऽह--ङस्निमि-त्त इत्यादिना। यण्—"एरनेकाचः" इत्यनेन। स्थानिवद्भावादाह–क्यजेति। निमित्तकत्वे हि। "इकोयण्"इति यणीति शेषः। अत्र क्विबपेक्षक्यच्सम्बन्धियलोपस्य बहिरङ्गाऽसिद्धत्वं तु न अनित्यत्वात्। लोपेति। "लोपो व्योः"इत्यनेन, यलोपे तन्निषेधादादिष्टादचः पूर्वत्वेन तदप्रसङ्गाद्वेति भावः। तथा च तथा-रूपासम्भवेन भाष्याऽसङ्गतिरिति तात्पर्यम्। स्थानीति। क्यजल्लोपस्येति भावः। तन्निमित्तकोपि न स्यादिति। ङस्निमित्तकोऽपि यण् न स्यादित्यर्थः। तथा च भाष्यासङ्गतिस्तदवस्थैव। तस्मात्तत्प्रा-माण्यात् क्यजाद्यल्लोपे तन्निषेधप्रवृत्तिरावश्यकी, सा चोक्तवार्तिकायत्तैवेति तदाश्रयणमावश्यकम्। अत एव तादृशप्रकृतिकस्य सखीः सुखीरित्यादेः सिद्धिः। अन्यथा खान्तरूपापत्तिः स्पष्टैवेत्याशयेनैव सुखीः सुतीरिति मूले उक्तमिति भावः। ननु तपरकरणस्य कथं तद्बोधकत्वं, किञ्चाऽऽत्वे एव तदाश्रयणं स्यान्ना-त्वन्थादेशयोरपीत्यत आह—आत्वेति। अष्टाध्याय्यां प्राथम्यादस्योल्लेखः। आदिना तयोरपि संग्रहः। अन्यथाऽऽत्वसंग्रहो न स्यात्। न्यायानाम्–स्थानिवत्त्वादीनाम्। एतेन यण्मात्रविषयेऽत्राऽपि तदाश्रयणं

ल्त्वाच्च । तस्मादात्वं न्थादेशश्च न्याय्य एवेति स्थितम् । एतेन मथीः, मथ्यौ, मथ्यः इत्याद्यपि प्रत्युक्तम् । मन्थाः, मन्थियौ, मन्थियः इत्यादेरेव न्याय्यत्वात् । यदपि ऋभुक्षीः, ऋभुक्ष्यौ, ऋभुक्ष्यः इत्यादि; तत्र सावात्वं दुर्वारमित्युक्तमेव । औङादिषु यण् तु दुर्लभः संयोगपूर्वकत्वात् । तस्मादृभुक्षाः, ऋभुक्षियौ, ऋभुक्षियः इत्यादि बोद्धव्यम् ।

"ष्णान्ता षट्" । स्त्रीलिङ्गनिर्देशः संख्यां विशेषयितुम् । तत्सामर्थ्याच्च पूर्वत्र संज्ञापरमपि संख्याग्रहणमिह संज्ञिपरं सम्पद्यत इत्याशयेनाह—संख्येति । यत्तु प्राचा उपदेशकाले षान्ता नान्ता चेत्युक्तम् । तत्पञ्चेत्यत्र नलोपे कृतेऽपीत्यादिस्वग्रन्थविरुद्धम् । सम्प्रत्यनान्तत्वेऽपि उपदेशे नान्तत्वमासीदिति किम-

---

शब्दरत्नम् ।

त्यत्वेनैतद्विषयेऽप्रवृत्तिबोधकतयेति भावः ।

**विशेषयितुमिति** । विशेष्यसाकाङ्क्षत्वात्तस्येति भावः । **तत्सामर्थ्याच्चेति** । ष्णान्तेत्यनेन विशेषणसामर्थ्यादित्यर्थः । संख्याशब्देन तदन्तत्वाऽसम्भवादिति भावः । **इहेति** । अनुवृत्तमिति शेषः । **संज्ञिपरमिति** । यद्यपि संज्ञिषु बहुगणवतुडतिष्वपि तदसम्भवस्तथापि लोके संख्याप्रकारकबोधजनकाः पञ्चादय इह तत्त्वेन विवक्षिता इति बोध्यम् । **किमसिद्धत्वेनेति** । नलोपे कृतेऽपीत्यादिग्रन्थप्रतिपादितेनेति भावः ।

भैरवी ।

मिति बहुवचनं स्थानिवद्भावसंग्रहाय । 'एवं क्वौ लुप्तम्' इति न सार्वत्रिकम् । किन्तु 'क्वौ विधिम्प्रति' इत्येव तु तथेत्यपि बोध्यम् ।

मूले स्त्रीलिङ्गनिर्देश इति । बहुव्रीह्युत्तरस्त्रीलिङ्गनिर्देश इत्यर्थः । अत एवाह—विशेष्येति । सञ्ज्ञिपरमित्यत्र यः सञ्ज्ञाशब्दः स एतच्छास्त्रीयसञ्ज्ञापरो भविष्यति, कृत्रिमाकृत्रिमन्यायात् । तथा च न तद्बोध्यार्थस्य ष्णान्तत्वमित्याशङ्कते—यद्यपीति । तत्त्वेन-सञ्ज्ञित्वेन । विवक्षिता इतीति । 'उभयगतिरिह भवति' इति परिभाषयेति शेषः । प्रतिपादितेनेति । स्त्रीप्रत्ययप्रक-

भावप्रकाशः ।

नत्वात्वादौ उक्तभाष्यकैयटादिस्वारस्येन तस्य क्वाचित्कत्वप्रतीतेः । क्वौ विधिमित्यस्यैवौत्सर्गिकत्वात् । किञ्च मिश्रमते तस्योच्चारणार्थत्वमाचारक्विबन्तात् कर्त्तरि क्विपि पथीनित्यत्र तत्सार्थक्यञ्च, एवं च मूलं चिन्त्यम् । तस्मात्पथीः पथ्यावित्याद्येव न्यासप्रकाशाद्युक्तरूपं साधु । नलोपासिद्धत्वेन हलङ्यादिलोपोप्यत एव न इति खण्डनरत्नाकरकृदाद्युक्तमपास्तम् । अत्राऽऽश्रयणेऽपि क्वाचित्कत्वाऽव्याघातात् एवं तस्य सार्थक्ये मिश्रोक्तेरेव चिन्त्यत्वाच्च तत आचारक्विबभावाच्चेति दिक् । वस्तुतस्तु तेषामनभिधानमेव, स उच्चारणार्थ एव । अन्यथा विधेये दोषापत्तिरित्याद्यन्यतस्तत्त्वमनुसन्धेयम् । एतेन केवलपदोक्त्या सुपथीत्यादेरिवाऽस्याऽपि स्त्रियामपि वस्तुतोऽभिधानमेवेति मन्दोक्तमपास्तं वैषम्यात् । असहायत्वं हि केवलत्वम् ।

**तस्य**—स्त्रीलिङ्गनिर्देशस्य, अन्यपदार्थबोधकत्वादिति भावः । स्त्रीलिङ्गनिर्देशस्याऽन्यव्यावृत्त्या साफल्येन परामर्शासम्भवादाह—**ष्णान्तेति** । तथा च विशेषयितुमित्युपात्तविशेषणक्रिया परामृश्यत इति भावः । सामर्थ्यमुपपादयति—**संख्येति** । **तदन्तत्वेति** । ष्णान्तत्वेत्यर्थः । इहेत्यस्याऽन्वयायाह—**अन्विति** । कृत्रिमाकृत्रिमेति न्यायेनाशङ्कते—**यद्यपीति** । **तदसम्भवः**—ष्णान्तत्वाऽसम्भवः । एतेन तथाप्रकाशरत्नाकरदण्डद्याद्युक्तमपास्तम् । **तत्त्वेन**—सञ्ज्ञित्वेन । अतिशदन्तेति पर्युदासादुभयगतेरिह शास्त्रेऽङ्गीकारादिति भावः । यथाश्रुतप्रक्रियाखण्डकप्रकाशानुवादन्यूनताप्रभिमतार्थसिद्धये निराचष्टे—**नलोपे इति** । स्त्रीप्रत्ययप्रकरणस्थेनेति भावः । मूले तुल्य इति । तत्राप्युभयत्र प्रक्रियावदुक्तेरिति भावः ।

सिद्धत्वेन ? नन्वयं पूर्वापरविरोधः काशिकायामपि तुल्य इति चेत् किं ततः।
"बाधे दृढेऽन्यसाम्यात् किं दृढेऽन्यदपि बाध्यताम्" इति न्यायात्।

यत्तु व्याचख्युः—उपदेशकाले यौ षकारनकारौ तदन्तेत्यर्थः। देवदत्तस्य गुरुकुलमितिवत् समुदायेन सम्बन्धान्नासमर्थसमास इति; तन्नायातत:। अवयवेन सम्बन्धं व्याख्याय समुदायेन सम्बन्धादित्युक्तेः परस्परव्याघातात्। किं च यत्रोपसर्जनपदार्थः ससम्बन्धिकस्तत्र द्वयीविधा। सापेक्षोऽपि समस्यत इत्येका। प्रधानपदार्थस्यैव कुलादेर्गुर्वादिनेव देवदत्तादिनाऽपि सम्बन्धः। स च गुरुणा सह उत्पत्तिगर्भः। देवदत्तेन सह तु तदीयगुरूत्पाद्यत्वरूपो गुरुघटित इति द्वितीया विधा। उक्तं च हरिणा—

सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते।
वाक्यवत् सा व्यपेक्षा हि वृत्तावपि न हीयते॥ इति॥
समुदायेन सम्बन्धो येषां गुरुकुलादिना।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह॥ इति च॥

---

शब्दरत्नम्।

**बाधे**—दूषणे। **अवयवेनेति**। ष्णान्तपदावयवेन षकारनकारेणेत्यर्थः। **समुदायेन**—ष्णान्तपदेन। **ससम्बन्धिकः**—नित्यं सम्बन्ध्यन्तरसापेक्षो यथा गुर्वादिः। **सापेक्षोऽपीति**। सापेक्षस्याऽसमासे हि ततो बोधाभावो बीजम्। न च नित्यसापेक्षे तद्बीजमस्तीति भावः। तदेवाह—**वाक्यवदिति**। व्यपेक्षा—आकाङ्क्षा। **अवयवान्**—गुर्वा-

भैरवी।

रणस्थेनेति शेषः। मूले, बाधे दृढ इति। अत्र बाधे दृढ इति छेदः। तत्र तन्त्रान्तरीयप्रसिद्धिविषयबाधस्याऽनुपयोगादाह—दूषण इति। ननु विशेषणस्य विशेष्यसम्बन्धित्वात् सर्वत्र ससम्बन्धिकत्वमत आह—नित्यमिति। नित्यसापेक्षस्थले समासस्य प्रवृत्तौ बीजन्दर्शयति—सापेक्षस्येति। ततः—वाक्यात्। पूर्वार्द्धोक्तेऽर्थे साधकमाह—तदेवाहेति। व्यपेक्षालक्षणसामर्थ्यस्य वाक्य एव सम्भवादाह—आकाङ्क्षेति। तथा च तादृशस्थले बोधो भवत्येवेति न वृत्तिप्रतिबन्धः। गुर्वादीनिति। गुरुकुलेति समुदायावयवत्वङ्गुरोः समुदायजन्यशाब्दबोधीयविशेष्यतानिरूपितविषयताश्रयत्वात्। एवञ्चतादृशस्थले चैत्रादिपदार्थस्य धर्मिपारतन्त्र्येण कुलेनाऽन्वयस्वीकारेण यद्यपि निर्वाहः संस्पृश्येत्यक्षरस्वारस्यञ्चोपपद्यते तथापि स्पष्टप्रतिपत्तये

भावप्रकाशः।

अदृढे इति च्छेदः। तन्त्रान्तरप्रसिद्धस्यात्र प्रसिद्धस्य चासम्भवादाह—**दूषणे इति**। प्रक्रियायोजकप्रकाशोक्तिमूले खण्डयति—यत्तु व्याचख्युरिति। एवमग्रेऽपि। बहुवचनान्तेनानुवादे तदुक्तिर्बोध्या। नन्ववयवत्वेन बोधकान्तपदेन सम्बन्धाऽव्याख्यानान्मूलमयुक्तमत आह—**ष्णान्तपदेति**। विशेष्यसम्बन्धेन सम्बन्धिकत्वस्य सर्वत्र सत्त्वादाह—**नित्यमिति**। ननु नित्यसापेक्षे समासाङ्गीकारे निराकाङ्क्षत्वात्ततो बोधो न स्यादन्यत्रेवात आह—**सापेक्षेति**। हि यतस्तस्य तदभावे बीजं ततो वाक्याद्बोधाभावः। न च न हि नित्यसापेक्षे तदङ्गीकारे तद्बीजमस्तीत्याखण्डलार्थः। अत्र मानं दर्शयितुमाह—**तदेवेति**। अन्यथा तदाधिक्यं स्पष्टमेवेति भावः। व्यपेक्षासामर्थ्यस्य वाक्ये एवाङ्गीकारादाह—**आकाङ्क्षेति**। तथा च ततो बोधो भवत्येवेति भावः। **गुर्वादीनिति**। गुरुकुलादिसमुदायाऽवयवत्वादिति

अत्र उपसर्जनं न ससम्बन्धिकम् । येन द्वयी विधाऽवकाशमासादयेत् । नन्विहाप्यन्तशब्दः ससम्बन्धिकार्थोऽस्तीति चेत् ? उपदेशकाले यौ षकारनकाराविति वदद्भिस्तदन्वयस्य त्यक्तत्वात् । अन्यथा हि उपदेशकालेऽन्तौ यस्येति वक्तव्यं स्यात् । वस्तुतस्तु तदपि न । अन्तशब्दो हि अवयविनि साकाङ्क्षो न तु यत्र कुत्र चित् । अन्यथा ऋद्धस्य राजपुरुष इति स्यात् । राज्ञोऽपि ईशितुरीशितव्यं प्रति साकाङ्क्षत्वात् ।

"राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः" इति कोशात् ।

यदि तु ऋद्धं प्रत्यनाकाङ्क्षतेति ब्रूषे तर्हि समं प्रकृतेऽपि । संनिपातेति । तथा चोपदेशकाल इति व्याख्यानं निष्फलमपीति भावः । यत्त्वाहुः—परिभाषाया अनित्यत्वाल्लुक् स्यादिति ; तत् साहसमात्रम् । इष्टस्थलेऽप्यप्रवृत्तौ परिभाषाया निष्फलत्वापत्तेः । किञ्चोपदेश इति निर्मूलमपि । यत्तु वदन्ति—अन्तग्रहणसामर्थ्यादौपदेशिकत्वं लभ्यते इति ; तदपि न । संख्येत्यस्याऽऽकर्षणेन संज्ञिपरत्वसम्पादनेन च सामर्थ्योपक्षयात् ।

---

शब्दरत्नम् ।

दीन् । संस्पृश्य युज्यन्ते इत्यस्य तद्द्वारकसम्बन्धेन युज्यन्त इत्यर्थः । **उपसर्जनम्**—ष्णापदम् । **न ससम्बन्धिकम्**—न सम्बन्ध्यंशे नित्यसाकाङ्क्षम् । **साकाङ्क्षः**—नित्यसाकाङ्क्षः । **ईशितव्यम्**—प्रजाभूम्यादि । **समं प्रकृतेऽपीति** । अन्तशब्दस्य उपदेशकालं प्रति न नित्यसाकाङ्क्षतेति भावः । **संज्ञिपरत्वेत्यादि** । संख्यापदस्येत्यादिः । अन्तग्रहणं समाससम्पादनद्वाराऽन्यपदार्थबोधकत्वेन तत्सम्पादकमिति भावः ।

भैरवी ।

**आह**—तद्द्वारकेत्यादि । गुरुद्वारकसम्बन्धश्च स्वीयगुरूत्पाद्यत्वरूपो बोध्यः । वस्तुतस्तु नित्यसाकाङ्क्षत्वमेव नैतादृशरीत्याऽन्वयेऽपि वृत्तिप्रयोजकङ्किन्तु गमकत्वमेवेत्यन्यत्र निरूपितम् । इहोपसर्जनस्यान्तपदस्य तथात्वादाह—ष्णापदमिति । नित्यसाकाङ्क्षत्वमेवैतादृशस्थले समासप्रयोजकमित्येतेन दर्शितम् । नित्यसाकाङ्क्षत्वञ्च सम्बन्धविषयकोत्थिताकाङ्क्षाप्रयोजकत्वम् । एतेन यादृशस्थले नोत्थिताकाङ्क्षा किन्तूत्थाप्या तत्र न समास इति दर्शितम्भवति । राज्ञः पुरुषस्य धनमित्यादौ यथा । मूले सङ्ख्येत्यस्येति । अन्तपदाभावे ष्णा इत्येव यद्युच्यते तदा पदान्तरसन्निधानाभावेन बहुव्रीह्यर्थस्यालाभः स्यात् । ष्णापदोपादानसामर्थ्यादिदम्पदं षकारनकारान्तस्त्रीशब्दबोधकमिति यदि ब्रूषे, तर्हि तादृशशब्दमात्रस्य ग्रहणापत्तिः । एवञ्चातिषडादिशब्देऽतिप्रसङ्ग इत्यन्तपदं सूत्रे सार्थकम् । एतदेवाह—अन्तग्रहणमित्यादिना । तत्सम्पादकम्—आकृष्टस्य संख्यापदस्य तदन्तत्वासम्भवेन तस्य तत्संज्ञिपरत्वसम्पादकम् । ननु स्वरितत्वं संख्यापदस्य कल्प्यताम् ; शब्दाधिकारश्च कल्प्य इति प्रकृतसूत्रेऽन्तपदाभावेऽपि

भावप्रकाशः ।

भावः । **तद्द्वारकेति** । गुरुद्वारकेण—तदीयगुरूत्पाद्यत्वरूपेणेत्यर्थः । एतेन गुर्वादीन्संस्पृश्येत्यस्य तान् द्वारीकृत्येत्यर्थः सूचितः । उपसर्जनस्यान्तपदस्य तथात्वादाह-**ष्णेति** । पूर्वरीत्याह—**सममिति** । सम्बन्ध्यतरांशे इत्यर्थः । अत एवाह—**नित्येति** । तद्व्यावर्त्यं तु राज्ञो देवदत्तस्य गृहमित्यादावुत्थाप्याकाङ्क्षायाः सत्त्वेन देवदत्तस्य सम्बन्धिकत्वेऽपि समासाऽभावरूपं बोध्यम् । मूले—संख्येत्यस्येति । अन्तपदाभावे ष्णान्तशब्दमात्रग्रहणापत्तिः । यथाकथंचिद्वापि तदन्वये चान्योपस्थापिततदन्तस्त्रीलिङ्गशब्दमात्रग्रहणाऽऽपत्तिरिति भावः । उक्तस्याऽपि स्पष्टायानुषङ्गमाह—**संख्येति** । **बोधकत्वेन—हेतुना** । तथा च तदन्तत्वस्य संख्यापदेऽसम्भवात्पञ्चादिपरत्वसम्पादकत्वं तस्येति भावः । ननु स्वरितत्वादनुवृत्तेः शब्दाधि-

"नोपधायाः"। नेति लुप्तषष्ठीकमङ्गस्य विशेषणम्। गौणत्वे त्विति॥ बहुवचननिर्देशस्यार्थप्राधान्यार्थत्वादिति भावः। प्रियपञ्चानामिति। नकारद्वयमध्ये चकारः।

"अष्टन आ"॥ हलादाविति। "रायो हलि" इत्युत्तरसूत्राद्धलीत्यपकृष्यते, तच्च विभक्तेर्विशेषणमिति भावः। तेनाऽष्टानामित्यत्र नुटः पश्चादेव सन्निपातपरिभाषाया अनित्यत्वादात्वं, न तु प्राक्। अन्यथा अष्टन् आमिति स्थिते

शब्दरत्नम्।

किं चान्तग्रहणस्य तदर्थत्वे तस्य विशेषणतया सप्तम्यन्तत्वेन च पूर्वनिपातापत्तिः। उणादीनामव्युत्पत्तिपक्षे प्रत्ययानां समुदायानां वोपदेशाभावेन त्वदुक्तार्थासङ्गतिश्चेत्यपि बोध्यम्। 'उपदेशग्रहणं कर्त्तव्यम्' इति वार्त्तिकस्य तु स्वप्रकृतिकप्रत्ययोपदेशकाले ष्णान्तेत्यर्थः। त्वया तु समस्तान्तपदार्थभूतस्य उपदेशकालस्य तथान्वयो वक्तुमशक्य इति स्पष्टमेवेति दिक्॥

हलीत्यपकृष्यत इति। 'हलीत्युभयोः शेष' इति भाष्योक्तेरिति भावः। संनिपातेति। नान्तत्वप्रयुक्तषट्सञ्ज्ञकसंनिपातेन जातस्य नुटस्तद्विघातकत्वमिति तस्याः प्राप्तिः। अनित्यत्वादिति। न च नुटि "नोपधायाः" इति दीर्घे नलोपेनाऽष्टानामित्यस्य सिद्धेः किमनित्यत्वेन। न च नलोपस्याऽपि संनिपातपरिभाषयाऽप्राप्तिः, नलोपस्याऽसि-

भैरवी।

तत्सम्पादनीयार्थलाभेऽन्तपदमुक्तार्थगमकम्भविष्यतीत्यत आह—किञ्चेति। तदर्थत्वे—उपदेशकाले इत्यर्थकत्वे। पूर्वनिपातप्रकरणस्यानित्यत्वेऽप्याह—उणादीनामिति। नन्वेवंसत्युपदेशग्रहणङ्कर्तव्यमिति वार्तिकासङ्गतिरत आह—उपेति। स्वप्रकृतिकेति। षकारनकारान्तप्रकृतिकेत्यर्थः। ननु मयाप्येवं सुवचमत आह—त्वया त्विति।

हलीत्यस्यापकर्षे प्रमाणमाह—हलीत्युभयोरिति। नुटि कृते कथं सन्निपातपरिभाषाप्रवृत्तिरत आह—नान्तत्वेत्यादि। ननु सन्निपातपरिभाषाया अनित्यत्वादात्वमिति स्वीकारो व्यर्थः, इष्टस्याऽष्टानामित्यस्य प्रकारान्तरेण सिद्धेरित्याशङ्कान्निराचष्टे—न चेति। वाच्यमिति परेणान्वयः। सन्निपातपरिभाषयाऽप्राप्तिरिति। नान्तसन्निपातेन षट्संज्ञायान्नुटि सति भसञ्ज्ञा-

भावप्रकाशः।

कारासञ्ज्ञिपरत्वस्य च सिद्धेर्मूलं चिन्त्यमिति रत्नाकरोक्तिरयुक्तेत्यत आह—किञ्चेति। तदर्थत्वे—उपदेशकाले इत्यर्थकत्वे। अन्यपदार्थविशेषणत्वस्य तुल्यत्वादाह—सप्तम्यन्तेति। ननु तदनित्यत्वेन नाऽयं दोषोऽत आह—उणादीनामिति। पक्षे—भाष्यादिसम्मते। यद्यपि 'प्रातिपदिकानां नोपदेशः' इत्यर्थासङ्गतिरेव, तथापि प्रकृतिप्रत्ययादिविभागेन प्रतिपादनरूपं यद्गुणैः प्रापणं तस्याऽत्र ग्रहणेन प्रकृत्यादिभिरुपदेशे प्रातिपदिकस्वरूपबोधने या ष्णान्ता संख्या निष्पन्ना सा षट् सञ्ज्ञेत्यर्थेऽप्यसाङ्गत्याऽयेदं 'षट्सञ्ज्ञायामुपदेशग्रहणम्' इति भाष्यवार्तिकाद्युक्तेरुपदेशे इति निर्मूलमगीति मूलं चिन्त्यमिति रत्नाकरोक्तिं खण्डयितुमाह—उपदेशेति। स्वेति। ष्णान्तसंख्याप्रकृतिकस्वादिप्रत्ययोपदेशेत्याद्यर्थः। इदं च शतानीत्यादिसिध्यर्थम्। अत एवाग्रे भाष्ये सन्निपातपरिभाषादिना तदन्यथा संसाध्येदं प्रत्याख्यातम्। अयमेव च दिगर्थः। ननु मयाप्येवं सुवचमत आह—त्वया त्विति। तस्मात्तथाऽन्वयाऽसुवचत्वे हेतुगर्भं विशेषणम्। समस्तेति। तद्घटकान्तपदेत्यर्थः।

शेष इति। योगविभागेनेति भावः। ननु षट्संज्ञकसन्निपातस्याऽस्त्वे सत्त्वेन कथं तत्प्राप्तिरत आह—नान्तत्वेति। षट्सञ्ज्ञकशब्दः आम् एतदुभयसन्निपातेनेत्यर्थः। अष्टानामित्यादि प्रागित्यन्तं मूलमनूद्यात्र नव्या इत्यादिदण्ड्युक्तिं खण्डयति—न चेति। अन्तोदात्तत्वमपि षट्त्रीत्येः सिद्धमिति भावः।

परत्वान्नित्यत्वाच्च आत्वे कृतेऽनान्तत्वे षट्संज्ञाभावान्नुट् न स्यात्। न च यथोद्दे-

शब्दरत्नम्।

द्धत्वेन तद्विषये तदप्राप्तेरिति वाच्यम्? "कृन्मेजन्तः" इति सूत्रभाष्ये सन्निपातपरिभाषा-दोषनिरूपणावसरे हे गौरीत्यादौ सम्बुद्धिलोपेऽपि तस्य स्थानिवत्त्वेन ह्रस्वनिमित्तसन्निपातविघाताभावात्तत्राऽतिव्याप्तिपरभाष्यासङ्गतेः। सन्निपातस्याऽशास्त्रीयत्वान्न स्थानिवत्त्वमिति चेत्तत्रासिद्धत्वमपि कथमिति विभावय। किञ्च पूर्वत्र कर्त्तव्ये तदसिद्धत्वेऽपि तत्र कृते तस्याऽसिद्धत्वे मानाभावः। अन्यथा—हलीत्यस्यात्राऽसम्बन्धे। परत्वादि त अभ्युच्चयः। नित्यत्वाच्चेति। कार्यकालपक्षे संज्ञायास्तत्तद्विध्येकवाक्यतया षट्त्वाऽ-

भैरवी।

प्रतिबन्धेन षट्सञ्ज्ञाप्रवृत्तिस्ततो नलोपस्य प्राप्तिरिति परम्परया नुड्विषये सन्निपातपरिभाषाप्राप्तिरिति भावः। असिद्धत्वेनेति। सन्निपातपरिभाषायाः "कृन्मेजन्तः" इति सूत्रभाष्ये पाठेनाऽस्याः सपादसप्ताध्यायीस्थत्वादिति तद्दृष्ट्या सन्निपातविघातकशास्त्रासिद्धत्वेनेत्यर्थः। अत्रासिद्धत्वं किम्परिभाषादृष्ट्या; उत सन्निपातनिमित्तकनुड्विधिदृष्ट्या; इति वितर्क्य दूषणम्प्रथमपक्षे दोषमाह—कृदिति। प्रत्ययलक्षणसूत्रस्य नियमार्थत्वपक्षाभिप्रायेणाह—स्थानीति। अभावादित्यन्तस्यासङ्गतौ हेतुत्वम्। तत्र—गौरीत्यादौ। भाष्येति। नदीह्रस्वत्वं सम्बुद्धिलोपस्येति भाष्येत्यर्थः। यदि दोषनिरूपणपरभाष्यसङ्गमनाय तत्राशास्त्रीयत्वं स्थानिवद्भावरूपातिदेशस्याप्रवृत्तौ हेतुस्तर्हीहापि नलोपस्यासिद्धत्वातिदेशः कथमिति परिभाषादृष्ट्याऽसिद्धत्वमप्रयोजकमिति भावः। द्वितीये आह—किञ्चेति। तत्र कृते—पूर्वस्मिन् कृते। एवञ्च नुटप्रवृत्त्युत्तरकालिकप्राप्तिकर्तृकनलोपशास्त्रस्य नुटम्प्रत्यसिद्धत्वस्याऽप्राप्तिरेवेति सन्निपातपरिभाषाया अनित्यत्वेनैव नलोपो वाच्य इति चेन्न। लोपस्यासिद्धत्वेन परिभाषाया अनित्यत्वादात्वमिति युक्तमिति भावः। नन्वेवं षट्सञ्ज्ञाया अपि कृताऽकृतप्रसङ्गित्वेन नित्यतया नित्यत्वादित्यसङ्गतमत आह—कार्यकालपक्ष इति। तथा च षट्सञ्ज्ञाया नुडेकवाक्यतापन्नत्वेन तत्कालप्रवृत्तिकतया आत्वे कृते न षट्सञ्ज्ञैकवाक्यतापन्ननुडप्राप्तिरिति कृताकृतप्रसङ्गित्वमधुना आत्वस्यैवेति तस्यैव नित्यत्वम्। न च नित्यादप्यन्तरङ्गस्य बलवत्त्वमित्यपरनिमित्तकत्वेन षट्सञ्ज्ञाऽन्तरङ्गा आत्वात्प्राग् भविष्य-

भावप्रकाशः।

असिद्धत्वेनेति। तस्याः "कृन्मेजन्तः" इति सूत्रस्थायाः सन्निपातलक्षणविधिः स्वेतरतद्विघातकस्याऽनिमित्तमित्यर्थेनात्र स्वेतरतद्विघातकस्य नलोपस्यासिद्धत्वेन व्यवच्छेद्याभावात्तद्विषये तदप्रवृत्तेरित्यर्थः। नन्वसिद्धत्वं किं परिभाषादृष्ट्योत सन्निपातलक्षणनुड्विधिदृष्ट्या; तत्राद्ये दोषमाह—कृदिति। प्रत्ययलक्षणसूत्रस्य नियमार्थत्वादाह—स्थानीति। अभावादित्यन्तोऽसङ्गतौ हेतुः। तत्र—गौरीत्यादौ। भाष्येति। नदीह्रस्वत्वं सम्बुद्धिलोपस्यानिमित्तं स्यादित्यर्थः। आतिदेशिकसन्निपातविघाताभावमादाय तत्र तदप्रवृत्तावत्रापि तथा स्यादिति तात्पर्यम्। तत्र सन्निपाते आनेये अस्य मध्यमणिन्यायेनोभयत्रान्वयः। अन्त्ये दोषमाह—किं चेति। यत इति शेषः। पूर्वत्र—नुटि। तदसिद्धत्वेपि—नलोपासिद्धत्वेपि। तस्मान्नलोपस्यापि परिभाषाऽनित्यत्वेनैव साध्यतया तस्य तद्दृष्ट्याऽसिद्धत्वादात्वमेव युक्तम्। तदनित्यत्वेनेति गूढाकूतम्। एतेन षट्सञ्ज्ञामुपजीव्य जातस्य नुटस्तदविघातकत्वात्तया आत्वं न, दीर्घं तु नैवम्। न च नलोपे तद्विरोध एव नुटोऽनकारनिमित्तकत्वात्। षट्सञ्ज्ञायास्तत्त्वेपि तत्र नलोपासिद्धत्वेन सन्निपातविघाताभावात्। एतेनानित्यत्वेनाऽऽत्वाप्रतिपादकमूलं तद्व्याख्यानं च चिन्त्यमिति मन्दोक्तमपास्तम्। अन्यथेत्यस्य ततः प्रागात्वे इत्यर्थे पौनरुक्त्यादाह—हलीति। नन्वन्तरङ्गत्वात् यथोद्देशे षट्त्वे तत आमि नुटः प्राक् नित्यत्वादात्वेप्यस्य बहिरङ्गासिद्धत्वेन षट्त्वाऽनिवृत्तौ तत्प्रयुक्तनुटीष्टसिद्धिरत आह—कार्येति। नन्वत्र पक्षे न तच्छास्त्रस्य पुनः प्राप्तिः, किन्तु तद्धर्मस्य कार्या-

शपक्षेऽन्तरङ्गत्वात् प्रागेव कृता षट्संज्ञा एकदेशविकृतन्यायेन कृतात्वेऽपि सुल-भेति वाच्यम्। अल्विधौ उक्तन्यायाऽयोगादिति भावः।

"अष्टाभ्य औश्" ॥ कृताकारादिति। ननु हलीत्यपकृष्यत इत्युक्तम्, तत् कथं कृताकारतेत्यत आह—अष्टभ्य इति। कृतात्वस्येदमनुकरणं, न तु लक्ष-

---

शब्दरत्नम्।

ऽत्वयोर्बहिरङ्गत्वं समानमिति भावः। अल्विधाविति। षट्संज्ञाया अल्विधित्वेन तन्मूलककार्याणामप्यल्विधित्वमित्यभिमानः। यदि तु नान्तसंख्यावाचकत्वसमानाधिक-रणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यल्धर्मत्वाऽभावेन तत्प्रयुक्तकार्यस्य नुडादेरपि नाल्वि-धित्वमिति स्थानिवत्त्वेनैकदेशविकृतन्यायेन च नुट् सुलभस्तर्हि मुख्ये कार्यकालपक्षे तत्सि-द्धिर्हलीत्यनुवृत्तेः फलमिति बोध्यम् ॥

भैरवी।

तीति वाच्यम्। कार्यकालपक्षे षट्सञ्ज्ञाया नुडेकवाक्यतया तस्य च प्रकृतिप्रत्ययोभय-सापेक्षतया आत्वसमलक्षतया षट्त्वमपि बहिरङ्गमित्याशयात्। ननु कार्यकालपक्षे लक्ष्या-ऽसिद्धिश्चेत्तर्हि यथोद्देशपक्षे एवास्त्वित्याशङ्कान्निराचष्टे—मूले न चेति। सुलभेति। तथा च नुट् भविष्यतीति शेषः। नुड्विधायकशास्त्रस्य नाल्विधित्वमिति चेत्तत्राह—षट्सञ्ज्ञाया इति। अल्विधित्वमिति। तथा चैतत्पक्षेऽपि हलीति प्रकृतसूत्रेऽपकृष्टव्यमिति भावः। अभिमानपदसूचितामरुचिम्प्रकटयति—यदि त्विति। अत्र रूपस्येत्यन्तम्परिचायकं षट्त्वस्य न तु विशेषणन्तेन स्थानिवद्भावस्य षट्त्वबुद्धिसम्पादनायापेक्षा न तु तादृशवि-शेषणविशिष्टषट्त्वसम्पादनायेति विशेषणतयाऽलाश्रयणमस्त्येवेति न शङ्क्यम्। स्थानिवत्त्वे-नेति। 'सर्वे सर्वपदादेशाः' इति न्यायेनाऽऽदेशकल्पनया स्थानिवत्त्वेनेत्यर्थः। तदभावेप्याह—एकदेशेति। एतेन षट्त्वमात्रसन्निपातनिमित्तक इह नुट्, स च न सन्निपातपरिभाषाया इह प्रवृत्तिसम्पादकः, आत्वनलोपयोः षट्त्वाविघातकत्वादिति मूलोक्तस्य सन्निपातपरिभाषा-या अनित्यत्वस्य नोपयोग इति ध्वनितम्। तत्सिद्धिरिति। अष्टानामित्यस्य सिद्धिरित्यर्थः। 'हलीत्युभयोः शेष' इति भाष्यमपि कार्यकालपक्षाभिप्रायकम्। अनुवृत्तेरिति। अनु-पश्चात् वृत्तेः-सम्बन्धस्येत्यर्थः।

भावप्रकाशः।

र्थमतिदेशेनाऽऽनयनं, तच्चात्र नुडादि, तत्र च शब्दतो न स्थान्यल्वृत्तिधर्मत्वत आश्रयणमत आह—षडिति। एतेन पथिन्शब्दस्य स्वग्रन्थविरुद्धमिदमित्यपास्तम्। वैषम्यात् प्रतिपादितमिदं तत्रैव। अभिमान इति। तथा चात्र पक्षे हलीति नुडादिसिध्यर्थमावश्यकमिति भावः। एतत्सू-चिताऽरुचिमाह—यदि त्वित्यादि। प्रकृताभिप्रायेणाह—नान्तेति। नुडादेर्नाल्विधित्वमिति पाठः। सर्वे सर्वपदेति पक्षे आह—स्थानीति। तदभावेप्याह—एकदेशेति। विकृतावय-वाऽनिबन्धननुडादौ षट्त्वस्य तेन सौलभ्यादिति भावः। अत एवाह—नुडिति। एतेन षट्त्वमात्रसन्निपातनिमित्तको नुट्, न च तद्विघातकावात्वनलोपाविति तस्या अप्राप्तिरेवेति अनि-त्यत्वं मूलोक्तमसङ्गतमिति स्वसिद्धान्तः सूचितः। एतेन षट्त्वं नाल्धर्म इति तत्प्रवृत्तिः सुवचैव। अन्यथा दोदेद्घेटां कृतात्वानां धातुत्वानापत्तिरिति मूलं चिन्त्यमिति रत्नाकरोक्तमपास्तम्। सर्वेषां कार्यार्थत्वात्तत्र मुख्यत्वम्। तत्सिद्धिरिति। अष्टानामित्यत्र नुट्सिद्धिरित्यर्थः। अन्यथा मूलोक्तरीत्या न स्यात्। एवं चोभयोः शेष इति भाष्यमपि कार्यकालाभिप्रायम्। एतेन प्रियाष्टानामित्याद्यर्थमपि सेति रत्नाकर-दण्ड्याद्युक्तमपास्तम्। तदनभिधानस्य वक्ष्यमाणत्वात् इति भावः। अनुवृत्तेरिति। अनु—पश्चात् वृत्तेः-सम्बन्धस्येत्यर्थः। तदपकर्षस्येति यावत्।

शावशसम्पन्नमात्वम् । तथा हि सति वक्ष्यमाणज्ञापकेन तस्य वैकल्पिकतया लाघवार्थमष्टभ्य इत्येव ब्रूयादिति भावः । इदमिति । श्रुतमनुमितं चेत्यर्थः । अष्टनो दीर्घादिति । दीर्घान्तादष्टनः परा असवनामस्थानविभक्तिरुदात्ता स्यात् । अष्टाभिः । दीर्घात् किम् ? अष्टभिः । मध्योदात्तमिदम् । "षट्त्रिचतुर्भ्यो हलादिः" इति बाधित्वा "झल्युपोत्तमम्" इत्यस्य प्रवृत्तेः । षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्यादिति तस्यार्थः । एवं स्थिते ह्रस्व-व्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणमात्वस्य नित्यत्वे व्यर्थं स्यादित्यर्थः । पूर्वस्मा-

---

शब्दरत्नम् ।

श्रुतम्—हलादौ । अनुमितम्-जश्शसोः । ह्रस्वव्यावृत्त्यर्थमिति । ह्रस्वेऽन्तोदात्तव्यावृत्त्यर्थमित्यर्थः । व्यर्थं स्यादिति । ननु ज्ञापितेऽपि व्यर्थमेव तत्; अष्टाभिरित्यत्र सावकाशस्याष्टन इति सूत्रस्याष्टभिरित्यत्र परत्वात् "झल्युपोत्तमम्" इत्यनेन बाधे, सकृद्गतिन्यायेन पुनरप्रवृत्तेरिति चेन्न । दीर्घग्रहणेनैव सकृद्गतिन्यायाऽनित्यत्वस्याऽपि ज्ञापनात् । यद्वाऽत्र यथोद्देशपक्ष एव ज्ञाप्यते । तत्राऽऽत्वस्य बहिरङ्गतया प्राक् षट्त्वे

भैरवी ।

जश्शसोरिति । तथा चेह ज्ञापकं सामान्यापेक्षं, सामान्ये प्रमाणानामपक्षपातादिति भावः । पर्यवसितार्थाभिप्रायेणाह—ह्रस्वेऽन्तोदात्तेति । सावकाशस्येति । कार्यकालपक्षेऽनान्तत्वेन षट्सञ्ज्ञाया अत्राऽप्राप्त्या "षट्त्रि" इत्यादेरप्राप्त्या सावकाशस्येत्यर्थः । षट्स्वरस्तु पञ्चभिरित्यादौ चरितार्थः । अप्रवृत्तेरिति । "अष्टन" इति सूत्रस्याप्रवृत्तेरित्यर्थः । कार्यकालपक्षमभिप्रेत्यैव समाधत्ते—दीर्घेति । न्यायानित्यत्वस्यापीति । एवञ्च तस्याऽनित्यतया तदप्रवृत्तौ पुनःप्रसङ्गविज्ञानन्यायस्येह प्रवृत्तेरिति भावः । ननु पूर्वोपपादितरीत्याऽष्टभिरित्यस्य दीर्घग्रहणव्यावर्त्यता सिद्धेति तद्वैकल्पिकत्वे ज्ञापकत्वङ्कथमिति चेन्न । 'यावता विनाऽनुपपत्तिस्तस्य सर्वस्य ज्ञाप्यत्वम्' इति न्यायेनोभयत्र दीर्घग्रहणस्य ज्ञापकत्वात् । अत एवाह—अपीति । अत्रेदम्बोध्यम् । यद्युभयोर्ज्ञाप्यता स्वीक्रियते, तदा लाघवाभावात्कृताऽऽत्वस्य षट्सञ्ज्ञासत्त्वे आत्वस्य वैकल्पिकत्वे च तज्ज्ञापकमस्तु; एतावतापीष्टार्थसिद्धिर्भवतीति पूर्वोक्तरीत्या दीर्घग्रहणं वैकल्पिकत्वे ज्ञापकं कार्यकालपक्षे । यदि त्विह यथोद्देशपक्ष एव ज्ञाप्यते; तदा हलीत्यस्याऽऽत्वविधायकसूत्रेऽपकर्षो न कार्यः । एवञ्च लाघवम्भवतीत्याशयेनाह—यद्वेति । अत्र-षट्सञ्ज्ञायाम् । पक्ष एवेति । एवकारेण सकृद्गतिन्यायाऽनित्यत्वस्य कृताऽऽत्वस्य षट्सञ्ज्ञा भवतीति कल्पनस्य च निरासः । अस्मिन्पक्षे "अष्टनो दीर्घात्" इति दीर्घग्रहणस्याऽऽत्ववैकल्पिकत्वमात्रांशे ज्ञापकता कल्प्या । बहिरङ्गतया–विभक्त्युत्पत्त्युत्तरकालिकतया । प्रागिति ।

भावप्रकाशः ।

जश्शसोरिति । ज्ञापकस्य सामान्यापेक्षत्वादष्टन्सम्बन्ध्यात्वमनित्यमिति भावः । पर्यवसितार्थमाह—ह्रस्वे इति । सावकाशेति । न ह्यष्टाभिरित्यत्र "झल्युपोत्तमम्"इति प्राप्नोति कार्यकालेऽनान्तत्वेनाऽषट्त्वात् । अल्विधित्वेनाऽस्थानिवत्त्वाच्च । विकृतावयवत्वनिबन्धनत्वेन लौकिकन्यायस्याप्यनवतारात्चेति भावः । तत्रैव पक्षे समाधत्ते—दीर्घेति । एवेन ज्ञापकान्तरनिरासः । अनित्यत्वेति । तदप्रवृत्तिपूर्वकपुनःप्रसङ्गविज्ञानप्रवृत्तेरित्यर्थः । अपिना वैकल्पिकत्वसमुच्चयः । यावता विनाऽनुपपत्तिस्तत्सर्वं ज्ञाप्यमिति सिद्धान्तादिति भावः । इदं च तदपकर्षे । तदभावे तु स्थाने कृताऽऽत्वषट्त्वेति ज्ञाप्यद्वयं वेति बोध्यम् । हलीत्यपकर्षाभावजलाघवादाह—यद्वेति । अत्र—षट्संज्ञायाम् । एवेन तदनित्यत्वकृतात्वषट्संज्ञयोर्निरासः । वैकल्पिकत्वं तु ज्ञाप्यमेव । ज्ञाप्यते इत्यत्र दीर्घग्रहणेनैवेत्यस्यानुषङ्गः । उक्तार्थ चतुष्टयं सूचयितुं तत्र हेतुमाह—तत्रेत्याद्यपवादत्वादित्यन्तेन । तत्र—यथोद्देशे । बहिरिति । विभक्तिसापेक्षत्वेनेति भावः । प्राक् । विभक्तेरिति शेषः ।

दपीति। एवञ्च प्रियाष्ट्ण इति हरदत्तोदाहृतं ष्टुत्वं न संभवतीति भावः। न च

शब्दरत्नम्।

जाते नान्तसंख्यावाचकत्वसमानाधिकरणधर्मरूपस्य षट्त्वस्याऽल्धर्मत्वाभावेन स्वरादेरल्विधित्वाभावात्। स्थानिवद्भावेनैकदेशविकृतन्यायेन वाऽकारान्तस्यापि षट्त्वेन तत्रापि "झल्युपोत्तमम्" इत्यस्य प्राप्त्याऽष्टनूस्वरस्य तदपवादत्वात्। तत्र पक्षे, भविष्यति किञ्चिदनेन प्रयोजनमित्यभिसन्धिमात्रेणैव संज्ञाप्रवृत्तेः प्रगृह्यसंज्ञाप्रकरणे कैयटेनोक्तत्वात्। स्पष्टं चेदं षट्संज्ञासूत्रेऽष्टनो दीर्घादिति सूत्रे च भाष्यकैयटयोः। आकारान्तस्य षट्त्वेऽप्यौश्विधिसामर्थ्यादष्टावित्यत्र लुग्न।

नन्वेवमष्टावित्यत्राष्टनूस्वरस्य चारितार्थ्यम्। हलादित्वाभावेन षट्स्वरस्य तत्राप्राप्तेः। न चका-

भैरवी।

विभक्त्युत्पत्तेरिति शेषः। जात इति। ततो विभक्तिस्तत आत्वमिति प्रक्रियाऽत्र। एवञ्चाष्टाभिरित्यत्रापि "षट्त्रि" इति सूत्रस्य प्राप्त्या "अष्टनः" इति सूत्रस्याऽचारितार्थ्येनाऽपवादत्वेनाष्टाभिरित्यत्रेवाऽष्टभिरित्यत्रापि स्यादिति दीर्घग्रहणमिति भावः। स्वरादेरिति। "षट्त्रि" इति "झल्युपोत्तमम्" इति वा विहितस्वरादेरित्यर्थः। आमिनाऽष्टानामित्यत्र नुटः परिग्रहः। स्थानिवद्भावेनेति। 'सर्वे सर्वपदादेशाः' इति न्यायेन समुदायस्यादेशत्वकल्पनया स्थानिवद्भावेनेत्यर्थः। एकदेशविकृतन्यायेन वेति। न हीदानीन्नान्तत्वस्यापेक्षा, किन्तु षट्त्वमात्रस्य। इत्थञ्च विकृताऽवयवत्वस्य नानयनमित्येकदेशविकृतन्यायस्य प्रवृत्तिर्भविष्यतीति भावः। ननु विभक्त्युत्पत्तेः प्राक् षट्त्वस्य न फलमत आह—तत्र पक्षे। ननु कृतात्वेऽपि चेत्षट्त्वन्तदाऽष्टावित्रापि लुक्स्यादत आह—औश्विधिसामर्थ्यादिति।

एवमिति। औश्विधिसामर्थ्यादष्टावित्यत्र लुगभाव इत्यर्थः। अष्टावित्यत्र—द्वितीयाबहु-

भावप्रकाशः।

जाते। तत आमि नुटः प्राग् नित्यत्वादात्वे इति शेषः। आमुत्तरमसिद्धत्वापूर्वं वा संज्ञा ततो नुटः प्राक् नित्यत्वादात्वे इति शेषः। तत्रादौ तस्य तत्संज्ञानयने फलाभावमाह—नान्तेत्यादिना। अल्—स्थान्यल्। स्वरादेः—तत्प्रयुक्तस्य षट्त्रीत्यादिस्वरादेः। उभयोल्लेखः पूर्ववत्। दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्येति भाष्यस्याप्ययमेवाशय इति न विरोधस्तेनेति गूढाकूतम्। तदनित्यत्वज्ञापने फलाभावमाह—तत्रापीति—आकारान्तेऽपीत्यर्थः। अपिरष्टभिरित्यस्य समुच्चायकः। एवञ्चानवकाशत्वं तस्य। तदाह—अपवादत्वादिति। एवञ्चाष्टाभिरित्यत्रेवाष्टभिरित्यत्रापि तत्प्रवृत्तिः स्यादिति तद्व्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणं विकल्पज्ञापकमिति भावः नन्वफलत्वादादावेव सा न स्यादत आह—तत्रेति। यथोद्देश इत्यर्थः। युक्तं चैतदित्याह—स्पष्टमिति। नन्वाकारान्तस्य तत्त्वेऽष्टावित्यत्र लुगापत्तिरत आह—आकारान्तेति।

एवं—तत्सामर्थ्यात्तत्र तदलुकि। अष्टावित्यत्र—द्वितीयाबहुवचने। चारितार्थ्यमिति। तथा चाऽनपवादत्वेन यथोद्देशपक्षज्ञापनेऽपि उभयत्र परत्वान्मध्योदात्तेन बाधे तन्न्यायेन पुनरप्रवृत्तिरिति वैकल्पिकत्वे ज्ञापितेऽपि वैयर्थ्यं तदवस्थमेवेति तन्न्यायानित्यत्वज्ञापनमावश्यकमिति तदेवास्तु किं तेनेति भावः। हलादित्वाभावेनेति। तथा च झलादित्वाभाव इति भावः। षट्स्वरस्य—"षट्त्रि" इत्यपवादस्य "झल्युपोत्तमम्" इत्यस्य। एवमग्रेऽपि। एकादेशे इति। नित्यत्वादन्तरङ्गत्वाच्चेति शेषः। उभयत आश्रये तदभावादिति भावः। एवञ्च तदचारितार्थ्यमिति तात्पर्यम्। तत्सिद्धये तदप्रवृत्तेस्तत्र भाष्ये ध्वनितत्वा-

सरला।

तदपवादत्वादिति। नच 'अष्टानाम्' इत्यत्र तस्य चारितार्थ्यमिति वाच्यम्, "झल्युपोत्तमम्" इत्यस्याप्राप्तावपि "षट्त्रिचतुर्भ्यो हलादिः" इत्यस्य प्रवृत्त्या निरवकाशत्वस्य तदवस्थत्वात्।

शब्दरत्नम्।

देशे व्यपवर्गाभावः। स्वरात् पूर्वं सन्धिकार्याप्रवृत्तेरेहीत्यत्राऽऽङ्निमित्तनिघातसिद्धये "यद्धि तु परम्" इति सूत्रे भाष्ये ध्वनितत्वादिति चेन्न। एतद्भाष्यप्रामाण्यादेवा-ष्टनूशब्दस्य घृतादिपाठादन्तोदात्तत्वेन "एकादेश उदात्तेनोदात्तः" इत्येव तत्रान्तो-दात्तत्वसिद्धेः। ननु प्रियाष्टाभ्यामित्यादावष्टन्स्वरः सावकाशः। षट्स्वरविधायके विहितविशेषणाऽऽश्रयणेन समासे गौणे तदप्राप्तेः। अत एव "चतुरः शसि" इति सूत्रे 'स्त्रियां प्रतिषेधो वाच्यः' चतस्रः पश्य, चतसर्याद्युदात्तनिपातनात्तत् सिद्धम्। तन्नि-

भैरवी।

वचने। व्यपवर्गाभाव इति। अन्तरङ्गत्वादेकादेशे षट्सञ्ज्ञकात्परत्वाभाव इत्यर्थः। अप्रवृत्ते-रिति। अस्य ध्वनितत्वादित्यत्रान्वयः। एहीत्यत्रेति। तत्र भाष्ये रोहा३वेहीति प्रयोगे रोहा३ एहीति स्थिते आङः परत्वमिहीत्यस्येति "तिङ्ङतिङः" इति प्राप्तस्य निघातस्य "लोट् च" गत्यर्थलोटा युक्त इति च निषेधमाशङ्क्य छान्दसत्वेन समाहितम्। कैयटश्च तत्र नित्य-त्वादेकादेशे निघाताप्राप्तिमाशङ्क्य एवंविधभाष्यविचारात्पूर्वं सन्धिकार्याप्रवृत्तिरनुमीयत इत्याह। "नेन्द्रस्य परस्य" इति सामान्यापेक्षं ज्ञापकमिति तदाशयः। एतद्भाष्येति। दीर्घ-ग्रहणस्य ज्ञापकतापरभाष्येत्यर्थः। पाठादन्तोदात्तत्वमिति। अन्यथा 'त्रःसङ्ख्यायाः' इत्याद्युदा-त्तत्वं स्यात्। तत्र—अष्टावित्यत्र। नन्विति। एवमपीति शेषः। षट्स्वरविधायके—षट्सञ्ज्ञ-कात्परत्वमाश्रित्य प्राप्तस्वरविधायकसूत्रद्वये। अत एव—विहितविशेषणाश्रयणादेव। वाच्य इति। अन्यथा शसि कृतान्तोदात्तत्वकचतुरशब्दस्य स्थाने चतस्रादेशोऽप्यन्तोदात्तः स्याच्च-था च "उदात्तयणो हल्पूर्वात्" इति स्वरः स्यात्। यदि तु शब्दान्तरप्राप्त्योभयोरनित्यत्वेन स्वरविधायकशास्त्रात्परत्वात् "त्रिचतुरोः" इत्यस्य "अचि र ऋतः" इत्यस्य च प्राक् प्रवृत्ति-स्तस्य स्थानिवत्त्वेन चतुरशब्दत्वात् "चतुरः शसि" इत्यस्य प्रवृत्तौ तकाराऽकारस्योदात्तत्वं स्यात्। आद्युदात्तनिपातनादिति। समासत्वात्सूत्रेऽन्तोदात्तपाठे कर्तव्ये चतसृशब्दावयवचका-रस्योदात्तस्य पाठादित्यर्थः। ननु वार्तिकारम्भे "चतुरः शसि" इत्यस्यवाऽप्रवृत्तिः, निपातने

भावप्रकाशः।

दित्यन्वयः। परैर्योगे चैतैरेव नान्यैरित्यर्थेन जाये स्वारोहावेहीत्यत्र रोहावेत्यस्य "गत्यर्थलोटा" "लोट् च" इति निघातनिषेधाभावेन "तिङ्ङतिङः" इति निघातसिद्धिफलकनियामकतया "यद्धि तु" इति सूत्र-साफल्यमभिधायाथ रोहावयुक्तत्वादेहीत्यत्राऽऽङ्निमित्तेष्टनिघातस्य "लोट् च" इति निषेधः कुतो न; न हि तत्र नियमेन वारणं सम्भवतीत्याशङ्क्य 'न रुहिर्गत्यर्थः' इत्युक्तम्। तत्र उक्तरीत्या समाशंक्याऽस्माद्भा-ष्यादनुमीयते प्राङ्निघातस्तत एकादेश इति कैयटेन व्याख्यातं च। "नेन्द्रस्य परस्य" इति सामान्यापेक्षं ज्ञापकमिति तदाशय इति गुरुचरणाश्च। किञ्चैकादेशे कृतेऽप्येकदेशेति न्यायेन टान्तेऽष्टनूशब्दत्वं परादि-वत्त्वेनौ इत्यस्य विभक्तित्वं चेत्यदोषादित्यपि बोध्यम्। एतद्भाष्येति। दीर्घग्रहणज्ञापकत्वपरभाष्येत्यर्थः। पाठे हेतुरयम्। तत्र—तादृशेऽष्टावित्यत्र। तथा चाऽचारितार्थेनाऽपवादत्वात्तत्साफल्यमिति न तदा-वश्यकत्वमिति भावः। नन्विति। एवमपीति शेषः। इति चेन्नेत्यत्रान्वयः। तथा चानुपदोक्तरीतिरेव स्यादिति भावः। विधायके—सूत्रद्वये। मुख्ये समासे इष्टत्वादाह—गौणे इति। तदप्राप्तेः—षट्स्वराऽप्राप्तेः। तत्र मानमाह—अत एवेति। तदाश्रयणेन तत्राप्राप्तेरेवेत्यर्थः। सङ्गच्छते इत्यत्रान्वयः। चतस्र इति। स्थानिवत्त्वेन तकाराकारस्योदात्तत्वं स्यादिति भावः। ननु वार्तिकारम्भे "चतुरः शसि"

सरला

घृतादिपाठादिति। फिट्स्वरेण तु नात्र सिद्धिः, "त्रः संख्यायाः" इत्यनेन फिट्स्वरबाधेनाऽऽद्यु-दात्तत्वापत्तेः।

शब्दरत्नम्।

पातनेऽपि चतसृणामिति विभक्तिस्वरः सिद्धः। "षट्त्रि" इति सूत्रे हलादिग्रहणेन निपातनस्वरस्य विभक्तिस्वराऽबाधकत्वज्ञापनात्। आद्युदात्तनिपातने हि हलादिग्रहणानर्थक्यम्, 'न ह्यन्यद्धलादिग्रहणं प्रयोजयति, अन्यदतश्चतसृशब्दादिति' भाष्योक्तं सङ्गच्छते। अन्यथा प्रियाष्टान इत्यादेः सम्भवेन तदसङ्गतिः। अष्टौ परमाष्टावित्यादेरेकादेशस्वरेण सिद्धेः। न च कदष्टावित्यादि व्यावर्त्यम्; संख्याप्रकारकसंख्येयविशेष्यकबोधज-

भैरवी।

तु तस्य सर्वबाधकतया "षट्त्रि" इत्यस्याऽपि बाधापत्तिरत आह–तन्निपातनेऽपीति। अपिर्वार्तिकारम्भसमुच्चायकः। विभक्तिस्वरः—विभक्तेरुदात्तत्वम्। निपातने हीति। निपातनस्य सर्वबाधकत्वे हीत्यर्थः। चतसृशब्दादिति। एतत्सम्बन्ध्यजादिविभक्तिवारकतयैव तस्य चारितार्थ्यमस्ति। यदि निपातनस्य सर्वबाधकत्वन्तदा तद्व्यर्थमेव स्यादिति। अयम्भावः-षट्त्रिचतुर्भ्यो एकवचनद्विवचने न भवत एव, षड्भ्यो जश्शसोर्लुगेव, अन्याः सर्वा हलादिविभक्तय एव, त्रिचतुरोर्जसि तु न प्रयोजनम्। "अन्चेश्छन्दसि" इति सूत्रादसर्वनामस्थानग्रहणस्य "षट्त्रि" इति सूत्रेऽनुवर्तनात्। त्रीनित्यत्र शसि तु "एकादेश उदात्तेन" इति सिद्धम्। तिस्रः पश्येत्यत्र तु "उदात्तयणः" इत्येव सिद्धम्। चतुरः पश्येत्यपि न व्यावर्त्यम्, "चतुरः शसि" इत्यस्याऽऽरम्भात्। तस्माच्चतस्रः पश्येत्येव व्यावर्त्यमिति। यदि निपातनस्वरस्य सर्वबाधकत्वन्तदा तद्वैयर्थ्यं स्पष्टमेव। एतेन प्रकारेण निपातनस्वरस्य विभक्तिस्वराबाधकत्वे ज्ञापिते चतसृणामित्यत्र विभक्तिस्वरः सिद्ध इति। अन्यथा—विहितविशेषणानाश्रयणे। तदसङ्गतिः—न ह्यन्यदिति ग्रन्थासङ्गतिः। अष्टावित्याद्यपि न व्यावर्त्यमित्याह—अष्टावित्यादि। न चेति। वाच्यमिति परेणान्वयः। कदष्टावित्यस्य प्रदर्शनम्,

भावप्रकाशः।

इत्यस्यैव बाधः, निपातने तु "षट्त्रि" इति स्वरस्यापि बाधापत्तिस्तस्य सर्वबाधकत्वादत आह–तन्निपेति। अपिर्वार्तिकसमुच्चायकः। विभक्तिस्वरः। तदुदात्तत्वम्। ज्ञापकमुपपादयति—आद्युदात्तेति। तस्य सर्वबाधकत्वादिति भावः। चतसृशब्दादिति। चतसृसम्बन्धिशसन्तादिरर्थः। अयम्भावः–षट्त्रिचतुराम्नित्यबहुवचनान्तत्वात्तद्विवचनैकवचने न स्तः। तत्र षड्भ्यो जश्शसोर्लुगेव। अन्या हलादयः असर्वनामस्थाने इत्यनुवृत्त्या। त्रिचतुरोर्जसि नेदम्। त्रीनिति शसि "एकादेश उदात्तेन" इति सिद्धम्। तिस्र इति जसि "तिसृभ्यो जसः" इत्यस्य विषये तूक्तरीत्या न। तिस्रः पश्येत्यत्र "उदात्तयणः" इत्यनेन सिद्धम्। अन्या हलादयः। चतुरः पश्येत्यत्रापि न। "चतुरः शसि" इत्यारम्भसामर्थ्येन तस्य बाधात्। तस्माच्चतस्रः पश्येत्येव तद्व्यावर्त्यम्। यदि निपातनस्वरो विभक्तिस्वरबाधकः स्यात्तदा तद्वैयर्थ्यं स्पष्टमेव। तस्मात्तस्य तदबाधकत्वं ज्ञाप्यते, तेन चतसृणामित्यादौ विभक्तिस्वरसिद्धिरिति। अन्यथा—तदनाश्रयणेन तत्र तत्प्रवृत्तौ। प्रियाष्टान इति। प्रागुक्तरीत्या लुकोऽत्राप्राप्तेरिति भावः। नन्वसर्वनामस्थानपदानुवृत्त्या नेदं तद्व्यावर्त्यमत आह—आदेरिति। तेन शसन्तरूपपरिग्रहः। सम्भवेन—तद्व्यावर्त्यत्वसम्भवेन। तदसङ्गतिरिति। षट्संज्ञकेषु हलादिग्रहणव्यावर्त्यत्वसम्भवेन तत्र तन्नास्तीति भाष्याऽसङ्गतिरित्यर्थः। ननु द्वितीयशङ्कोक्तरीत्याऽष्टौ पश्येत्यादितद्व्यावर्त्यमितिभाष्यमेकदेश्युक्तिरेवात आह—अष्टाविति। इदं दृष्टान्तार्थम्। वक्ष्यमाणरीत्याऽष्टन्स्वरेणाऽसिद्धेराह—एकादेशेति। नन्वेवमपि कदष्टावित्यादितद्व्यावर्त्यं, तस्याव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वादेकादेशस्वरेणाऽसिद्धेः। एवञ्च भाष्यस्यैकदेश्युक्तित्वाऽऽवश्यकत्वेन तदाश्रयणे न मानत्वमित्याशयेनाऽऽशङ्कते—न चेति। आदिनाऽनष्टावित्यादिसंग्रहः। ननु यस्य षट्त्वं ततोऽविहितत्वादेवानतिव्याप्तिरत आह–संख्येत्यादि।

सरला।

कदष्टाविति। कुत्सिता अष्टौ कदष्टावित्यत्र कुशब्दस्य अष्टन्शब्देन "कुगतिप्रादयः" इति समासे

शब्दरत्नम् ।

नकतयोत्तरपदार्थप्रधानसमासे समुदायस्याऽपि षट्त्वात् । स्पष्टं चेदं "सर्वादीनि" इत्यत्र भाष्ये । ततो विहितत्वाच्चेति वाच्यम् । एतद्भाष्यप्रामाण्येन तदनभिधानादिति चेन्न । एतज्ज्ञापकपरभाष्यप्रामाण्यादष्टन इत्यस्यापि विहितविशेषणाश्रयणेन समासेऽप्रवृत्तेः । प्रियाष्टादीनामनभिधानस्य षट्सञ्ज्ञासूत्रे भाष्ये स्पष्टत्वाच्च । "तिसृभ्यो जसः" इति सूत्र-

भैरवी ।

अव्ययपूर्वपदप्रकृतिस्वरस्यात्र प्रवृत्त्या एकादेशस्वरेणासिद्धिप्रदर्शनाय। ततः—षट्संज्ञकात्। एतद्भाष्येति । "चतुरः शसि" इत्यत्रोक्तभाष्येत्यर्थः । तदनभिधानम्—कदष्टावित्याद्यनभिधानम् । एतज्ज्ञापकेति । दीर्घग्रहणस्य ज्ञापकतापरभाष्येत्यर्थः । वस्तुत एतत्सर्वमभ्युपेत्यवादेन। सिद्धान्ते त्वनभिधानमेवेत्याह—प्रियाष्टादीनामिति । तिसृभ्य इति । तत्र हि जस्ग्रहणङ्किमर्थमिति प्रश्ने तिसृकेति कन्प्रत्ययान्तम्प्रत्युदाहरणमुक्त्वा जस्ग्रहणमनर्थकमन्यत्राभावादित्युक्तम् । अस्य नित्यम्बहुवचनान्ततया तदन्ययोरभाव एव, शसि तु "उदात्तयणः" इत्येव सिद्धम् । अन्याः सर्वा हलादयस्तत्र "षट्त्रिचतुर्भ्यः" इत्येव भविष्यति । तिसृकेत्यपि न प्रयोजनम् । मध्येऽपवादन्यायेन "तिसृभ्यः" इत्यस्य "अनुदात्तौ सुप्पितौ" इत्येतद्बाधकतया नित्स्वरेण "तिसृभ्य" इत्यस्य बाधो भविष्यतीत्युक्त्वा 'उपसमस्तार्थमेके जसो ग्रहणमिच्छन्ति अतितिस्रौ अतितिस्रः' इति जस्ग्रहणस्य व्यावर्त्यन्दर्शितम् । यद्यपि वार्तिककृता तत्खण्डितन्तथाप्याचार्यान्तरसम्वादेन जस्ग्रहणस्य प्रयोजनम्भाष्यकारोऽभिहितवान् । तच्च प्रयोजनं विहितविशेषणसत्त्वे तु नोपपद्यत इति परत्वमेव नियामकमिति जस्ग्रहणाभावे विभक्तेरुदात्तत्वं स्याज्जस्ग्रहणसत्त्वे तु तस्याऽप्रवृत्तौ समासस्वरबाधकाऽव्ययपूर्वपदप्रकृतिस्वरबाधकेन "अतेरकृत्पदे" इत्यनेनातेः परमकृदन्तम्पदशब्दश्चान्तोदात्त इत्यर्थकेनान्तो-

भावप्रकाशः ।

लोके गणनायां प्रसिद्धानामेव "ष्णान्ता" इत्यत्र ग्रहणे मानाभाव इति भावः । तदेव ध्वनयितुमाह—स्पष्टमिति । प्रतिपादितमधस्तात्सर्वम् । वक्ष्यमाणरीत्याऽष्टन्स्वरेणासिद्धेराह—एतद्भाष्येति । "चतुरः शसि" इत्यत्रत्योक्तभाष्येत्यर्थः । तदनभीति । कदष्टावित्याद्यनभिधानादित्यर्थः । एतेनोक्तरीत्या तत्राष्टन्स्वरः सावकाश इत्यपास्तम् । एतज्ज्ञापकपरेति । दीर्घग्रहणज्ञापकपरेत्यर्थः । विशेषणाश्रयणेन । तत्त्वाश्रयणेन समासे गौणे इति शेषः । अप्रवृत्तेः । अष्टन् स्वरस्यापीति शेषः । इदं च तत्सत्त्वमभ्युपेत्य । वस्तुतस्तदभाव एवेत्याह—प्रियाष्टेति । गौणानामिति भावः । इदं चाऽनुपदमेव स्फुटीभविष्यति । ननु कैयटोक्तमूलाऽनूदितप्रथमव्याख्यादरेऽनभिधानम्, आद्ययुक्तिरपि भाष्यविरोधादयुक्तेत्यत आह—तिसृभ्य इति । तत्र हि नित्यबहुवचनान्तत्वात्तदन्ययोरभाव एव शसि"उदात्तयण" इति भाष्यम् । अन्या हलादयः । तत्र "षट्त्रि""झलि"इति च सिद्धम् । तिसृकेत्यत्रापि टापैकादेशस्यादिवत्त्वात् पित्स्वरप्राप्त्या "अनुदात्तौ" इत्यस्य येन नाप्राप्तिन्यायेन बाधेऽपि नित्स्वरेण सह तदभावान्मध्येपवादन्यायाद्वा परत्वात् नित्स्वरेण भाव्यमित्याशयेन वार्तिककृता 'तिसृभ्यो जस्ग्रहणानर्थक्यमन्यत्राभावात्' इति खण्डितमपि जस्ग्रहणं भाष्यकृता चाऽर्थान्तरमवष्टभ्य स्थापितवान् । 'उपसमस्तार्थमेके जसो ग्रहणमिच्छन्ति" । अतितिस्राविति समस्ततिसृशब्दसमीपजन्यविभक्तिव्यावृत्त्यर्थं

सरला ।

"कोः कत्तत्पुरुषेऽचि" इति कोः कदादेशे तत्सिद्धम् । तत्र समासान्तोदात्ते ततो वृद्ध्या एकादेशे औकारे तस्य "एकादेश उदात्तेन" इत्यन्तोदात्तत्वेन कथं तस्य व्यावर्त्यत्वम् ? अत्रोच्यते, कुशब्दस्य निपातत्वेन "निपाता आद्युदात्ताः" इत्याद्युदात्ततया "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्यय" इत्यनेन पूर्वपदप्रकृतिस्वरेण अष्टावित्यस्याद्युदात्तत्वात् । अत्र "अव्यये नञ्कुनिपातानाम्" इति परिगणनेन पूर्वपदप्रकृतिस्वरव्यावृत्तिस्तु न कर्तुं शक्यते स्थानिवत्त्वेन कत् इत्यस्य कुशब्दत्वाक्षतेः ।

'पूर्वत्रासिद्धीये न स्थानिवत्' इति निषेधः, तस्य दोष इति सापवादत्वात्। ननु "रषाभ्याम्" इति प्रतिपदोक्तं णत्वं तत्र ग्रहीष्यामः, न तु ष्टुत्व-

शब्दरत्नम्।

स्थेनोपसमस्तार्थमेक इति भाष्येण तुल्यन्यायात् षट्स्वरस्याऽपि तदन्ते प्रवृत्तेरुक्तत्वाच्च। "चतुरः शसि" इति सूत्रस्थन्तु वार्तिकं 'जस्ग्रहणानर्थक्यमन्यत्राभावात्' इति "तिसृभ्यः" इति सूत्रस्थवार्तिकवदेव दूष्यम्। एके इति च मुख्यार्थकमिति दिक्। प्रतिपदोक्तमिति।

भैरवी।

दात्तत्वे कृते उदात्तस्य ऋकारस्य यणादेशे "उदात्तस्वरितयोः" इति स्वरित औकारोऽकारश्च भवति। तुल्यन्यायादिति। यथा "तिसृभ्यो जसः" इति सूत्रस्य प्रवृत्तिविषये व्यवस्था तद्वत्। अपिना। अष्टन्स्वरस्य परिग्रहः।

नन्वेवं विशेषणाश्रयणबोधकोक्तभाष्यस्य का गतिरत आह—चतुर इति। वार्तिकं—विभक्तिस्वरभावश्च हलादिग्रहणादित्येतत्। दूष्यमिति। जस्ग्रहणस्योपसमस्तार्थत्ववत्तत्र सूत्रे हलादिग्रहणस्यापि समस्ते प्रियत्रीनित्यादौ प्रयोजनलाभाद्दूष्यम्। नन्वेवमेके इत्युक्त्या तस्य सिद्धान्त्युक्तित्वङ्कथमत आह—एके इतीति। दिगिति। दिगर्थस्तु "चतुरः शसि" इति सूत्रस्थं 'स्त्रियाम्प्रतिषेधो वाच्य' इति वार्तिकमपि न कार्यम्। चतस्रः पश्येत्यत्र स्वर-रेफादेशयोः प्राप्तौ परत्वाद्रेफादेशे तस्य स्थानिवत्त्वेन व्यवधानात्तकाराकारस्य स्वराप्राप्तेः। न च रेफस्यैव स्वरो भवत्विति वाच्यम्? हल्स्वरप्राप्तौ व्यञ्जनस्याऽविद्यमानवद्भावात्। न च स्थानिवद्भावस्य स्वरे कर्तव्ये निषेधो भविष्यतीति वाच्यम्? स्वरदीर्घयलोपेषु लोपाजादेशस्यैव स्थानिवद्भावनिषेधात्। एवमाद्युदात्तयोस्त्रिचतुरोरान्तरतम्यादाद्युदात्ते सिद्धे आद्युदात्तनिपातनमपि न कार्यम्। हलीत्यस्यापकर्षस्तु प्रतिपत्तिलाघवायेति।

वर्णग्रहणे प्रतिपदोक्तपरिभाषाया अप्रवृत्तिवादिमतेऽप्याह—संयोगादीति। तदेकवाक्यतया—प्रत्याख्यानैकवाक्यतया। अत्र—सूत्रे णग्रहणस्य सत्त्वपक्षे। यत्तु णग्रहणं संज्ञापूर्वकविधेरनित्यत्वबोधनाय, तेन दुर्भवानीत्यत्र णत्वन्न। एवं "पदान्तस्य" इति सूत्रमपि 'नञ्घटित-

भावप्रकाशः।

तदिति तदर्थः। तस्मादिति सत्त्वे विहितविशेषणाश्रयणमप्रमाणम्। एवञ्चाऽतेः परमकृदन्तं पदशब्दश्चान्दोदात्त इत्यर्थकेन "अतेरकृत्पदे" इत्यनेनान्तोदात्तस्वरे कृते "उदात्तस्वरित" इति औकारः स्वरितः। जस्ग्रहणाभावे तु तेनोदात्तः स्यादिति तदाशयः। इमां रीतिमतिदिशति—तुल्यन्यायादिति। षट्स्वरस्य—द्विविधस्य। अपिः—अष्टन्स्वरसमुच्चायकः। तदन्ते। गौणेपीत्यर्थः। उक्तत्वाच्च—उक्तप्रायत्वाच्च। एवञ्च तस्य तदपवादत्वं निर्मूलमिति भावः। नन्वेवं तदाश्रयणबोधकोक्तभाष्यविरोधोऽत आह—चतुर इति। वार्तिके विभक्तिस्वरभावश्च हलादिग्रहणादित्येतत्। दूष्यमिति। जस्ग्रहणस्य तत्र चारितार्थ्यवद्धलादिग्रहणस्यापि तत्र चारितार्थ्येनाऽऽनर्थक्याभावात्। एवञ्चाद्युदात्तनिपातनमुपदेशिवद्भावकरणापत्त्या दुष्टम्। एवञ्च शसि 'स्त्रियां प्रतिषेधः' इति वार्तिकमपि न कार्यम्। स्वरात् प्राक् परत्वाद्रेकृतेऽव्यवहितस्योदात्तयोग्यस्याभावात्। तकाराऽकारस्य पूर्वविधौ रेफस्य स्थानिवत्त्वेन ऋकारेण व्यवहितत्वाच्च। तस्य च स्वविधावस्थानिवत्त्वाच्च तस्यैवाप्राप्तेः। स्वरे निषेधस्तु लोपाजादेशस्यैव। एवञ्च स्थानिवत्त्वेनाद्युदात्तत्वे सिद्धे निपातनमफलमपि। तस्मात् गौणे "षट्त्रि"इत्यादेः "चतुरः शसि"इत्यादेश्च प्रवृत्तिरस्त्येव सत्यभिधाने इति भाष्यसम्मतमिति प्रियत्रीनित्यादिव्यावृत्त्या हलादिग्रहणं सार्थकमिति ध्येयम्। नन्वेके इत्युक्त्या कथं तस्य सिद्धान्तत्वमत आह—एके इति। चस्त्वर्थे। वस्तुतः प्रियाष्टादीनामनभिधानमेवेति तृतीयाशङ्का युक्तैव। प्रतिपत्तिलाघवाय च हलीत्यस्यापकर्ष इति तत्त्वं तदाह—दिगिति। स्फुटीभविष्यति चानुपदमेव तत्।

विधिलभ्यमिति चेत् ? मैवम् । भाष्यमते तदयोगात् । तथा हि—"रषाभ्याम्" इति सूत्रे "अपदान्तस्य मूर्द्धन्यः" इति सूत्रमनुवर्त्य णग्रहणं; "पदान्तस्य" इति निषेधसूत्रं च भाष्ये प्रत्याख्यातम् । न च मूर्द्धन्यशब्देन ष्टुत्वशब्देन वा निर्वर्त्यमाने णकारे वैषम्यं सुवचम् ; यथोत्तरं मुनीनां प्रामाण्यमिति स्थानिवद्भाव एवोचितः । शब्दकौस्तुभे 'तस्य दोष' इत्यत्र णत्वग्रहणं मास्त्विति निष्कर्षः कृतस्तद्रीत्याप्याह—कार्यकाल पक्ष इति । न च यथोद्देशमाश्रित्य ष्टुत्वमस्त्विति वाच्यम् । फलभेदे प्रत्याख्यानासम्भवेन कार्यकालपक्षस्यैवेह न्याय्यत्वादिति भावः । अत एव पञ्चमीसमासस्य प्रत्याख्यानोपष्टम्भेनापि ष्टुत्वं प्रत्याशा न

---

## शब्दरत्नम् ।

संयोगादिलोपसाहचर्याल्लत्वस्येवेति भावः । प्रत्याख्यातमिति । तदेकवाक्यतयाऽनानित्यत्वेन णत्वांशे प्रतिपदोक्तपरिभाषासाहचर्यपरिभाषयोरप्रवृत्तिरिति भावः । प्रत्याख्यानेन च तयोरुपादानं स्पष्टार्थमेव, न तु फलान्तराऽभिनिवेशः कार्य इति सूच्यते । प्रत्याख्यानाऽसम्भवेनेति । उक्तरीत्या भाष्यध्वनितणत्वग्रहणेत्यादिः, णग्रहणेति वा । पञ्चमीसमासेति । 'अपरविधाविति वक्तव्यम्' इति "अचः परस्मिन्" इति सूत्रस्थवार्तिकव्याख्यानावसरे कैयटध्वनितेत्यर्थः । वस्तुतस्तदयुक्तमिति प्राङ्निरूपितम् ।

## भैरवी ।

मनित्यम्' इत्येतद्बोधनद्वारा सार्थकं, तेन हे प्राणित्यस्य सिद्धिरित्याहुस्तन्न युक्तमित्यत आह—प्रत्याख्यानेन चेति । फलान्तरेति । निरुक्तस्येत्यर्थः । णत्वग्रहणप्रत्याख्यानस्य भाष्यानारूढत्वादाह—णग्रहणेति । कैयटध्वनितेति । प्रागुक्तरीत्या कैयटध्वनितप्रत्याख्यानेत्यर्थः । अत्र कैयटेत्युपादानमरुचिबोधनायात एवाह—वस्तुत इति । प्रागिति । यूष्ण इत्येतन्निरूपणा-

## भावप्रकाशः ।

मूलमते वर्णग्रहणे तदप्रवृत्तेराह—संयोगेति । लत्वस्येवेति । तथा च यण्परसवर्णादिनिष्पन्नस्य तस्याऽग्रहणमिति भावः । तावता सूत्रमते किमायातमत आह—तदेकेति । प्रत्याख्यानैकेत्यर्थः । अत्र सूत्रपक्षे अनित्यत्वे हेतुरयम् । अत्र—सूत्रपक्षे । अन्यथा फलभेदेन प्रत्याख्यानासंगतिः । णत्वांशे इत्यनेन लत्वांशे तयोः प्रवृत्तिरस्त्येवेति सूचितम् । भाष्यमते वर्णग्रहणेऽपि तत्प्रवृत्तेराह—प्रतीति । मूलमतेनाह—साहेति । वस्तुतस्तु मूर्द्धन्यपदानुवृत्तिः पाणिनेरपीष्टा । अत एव तत्पदं सार्थकम् । तत्फलन्तु लाक्षणिकत्वसम्पत्तिरेव । णग्रहणं तु 'सञ्ज्ञापूर्वक' इत्यनित्यत्वार्थम् । अत एव "स्वं रूपम्" इति सूत्रं सार्थकं, तेन दुर्भवानीत्यादि सिद्धम् । "पदान्तस्य" इति सूत्रं तु 'नञ्घटितमनित्यम्' इति बोधनार्थम् । अत एव प्राणित्यादौ णत्वसिद्धिः । "आदेच उपदेशे" इत्युपदेशग्रहणाद्वर्णग्रहणे लक्षणप्रतिपदोक्तेत्यप्रवृत्त्या सूत्रभाष्ययोर्न विरोध इति तत्त्वमिति मान्योक्तिं निराचष्टे—प्रत्येति । यत्तु मान्याः—णग्रहणतत्प्रत्याख्यानयोर्णत्वग्रहणतत्प्रत्याख्यानयोश्च पञ्चमीसमासतत्प्रत्याख्यानयोश्च फलैक्यायेत्यर्थ इति । तत्र तृतीयोक्तिरयुक्ता । पञ्चमीसमासप्रत्याख्यानाऽभावस्य प्रागुक्तत्वादत आह—णत्वेति । तत्प्रत्याख्यानस्यापि भाष्यानारूढत्वस्य प्रागुक्तत्वादाह—णग्रहणेति वेति । मूलासाङ्गत्यं ध्वनयति—अपरेति । ध्वनितेति । ध्वनितप्रत्याख्यानेत्यर्थः । तत्—तत्प्रत्याख्यानम् । प्राक्—यूष्ण इत्यत्र । यथा ध्वनितत्वं यथा चायुक्तत्वं तथा तत्रैव विविक्तं तत एव बोध्यम् । नन्वेवमत एवेत्यस्यार्थबोधकस्य

कार्या। फलैक्याय कार्यकालपक्षस्यैव न्याय्यत्वेनासिद्धत्वस्य दुर्वारत्वात्। "निष्ठायां सेटि" इति सेड्ग्रहणाज्ज्ञापकात् पूर्वस्माद्विधौ स्थानिवद्भावस्याऽनित्यतया नेह प्रवृत्तिरिति तु सम्भवदुत्प्रेक्षा, यदि लक्ष्ये ष्टुत्वं प्रमितं स्यात्। लक्षणैकचक्षुष्कतायां तु अनित्यत्वपुरस्कारोऽनुचित एवेत्यास्तां तावत्। जश्शसोरिति। औश्त्वं हि लुग्लुटाविव गौणत्वे न भवति। अष्टाभ्य इति बहुवचननिर्देशात्। अन्यथा हि कृताऽऽत्वानुकरणेऽपि एकवचनेनैव निर्दिशेत्—अष्टा औशिति, अष्ट इति वा। एतच्च "षणान्ता" इति सूत्रे भाष्यकैयटयोः

---

शब्दरत्नम्।

तत्प्रत्याख्यानमभ्युपेत्यापि समाधत्ते—फलैक्यायेति। प्रत्याख्यानस्यायुक्तत्वं ध्वनयन् पञ्चमीसमासपक्षे लक्ष्यसिद्धिं शङ्कते—निष्ठायामिति। तत्र हि सेड्ग्रहणं नानिड्व्यावृत्त्यर्थं णिजन्तात्तदसम्भवात्। न च ज्ञपेः "सनीवन्त" इतीड्विकल्पात्संज्ञपित इत्यादौ "यस्य विभाषा" इतीण्निषेधे तत्संभवतीति वाच्यम्? "यस्य विभाषा" इत्यत्रैकाच इत्यनुवृत्तेः। अन्यथा दरिद्रातेरपि सनि विकल्पितेट्त्वेन दरिद्रित इतीण्न स्यात्। "वा दान्त" इति सूत्रे ज्ञप्ता इति निपातनेनेडभावस्यैव णिलोपस्यापि निपातनाच्च। तस्मात्तद्योगविभागेन कालावधारणार्थमिटि कृते एव णिलोपो न तु ततः प्रागिति। अन्यथा कारितमित्यादौ परमपीटं बाधित्वा नित्यत्वाण्णिलोपे "एकाचः" इतीण्निषेधः स्यात्पूर्वस्माद्विधौ स्थानिवत्त्वे त्वप्राप्त एव निषेधो णिचा व्यवधानादिति भावः। यदि तु "एकाच उपदेशे" इत्यत्र विहितविशेषणपक्षे सेटीति चिन्त्यप्रयोजनमि-

भैरवी।

वसरे इत्यर्थः। प्रत्याख्यानेति। पञ्चमीसमासस्येत्यादिः। तत्सम्भवतीति। अनिट्त्वं सम्भवतीत्यर्थः। विकल्पितेट्त्वेन—तनिपतीति विकल्पितेट्त्वेन। ननु "वा दान्त" इति सूत्रेण विकल्पेनेड्विधानात्तदभावे णिजन्तात्तत्सम्भवतीति तद्व्यावृत्त्यर्थं सेड्ग्रहणमस्तु तत्सामर्थ्यात्पूर्वसूत्रेणापि न णिलोप इत्यत आह—वा दान्तेति। सिद्धान्तमाह—यदि त्विति। विहितविशेष-

भावप्रकाशः।

फलैक्यायेत्युत्तरग्रन्थस्याऽसङ्गतिरत आह—तत्प्रत्येति। अभ्युपेत्येति। अनेन समाधिरपि अभ्युपेत्यवाद इति सूचितम्। फलैक्यायेतीति। णग्रहणतत्प्रत्याख्यानपक्षयोरित्यर्थः। एवं चैत, त्वत्पर्यन्तमेकदेश्युक्तिः। अग्रिमोक्तेः सिद्धान्ततां ध्वनयितुमाह—प्रत्याख्यानस्येति। पञ्चमीसमासेत्यादिः। सेड्ग्रहणादितीति प्रतीकान्तरं, प्रागनुक्तत्वात्। अत्र ज्ञापकमुपपादयति—तत्र हीत्यादिना। ज्ञपेरिति। परस्य सन इति शेषः। यस्येति। सम्बन्धसामान्ये षष्ठी। तत्सम्भव इतीति। अनिण्निष्ठासम्भव इत्यर्थः। तत्सम्भवतीति पाठे तदिति सामान्ये नपुंसकम्। सनीति। षष्ठ्यर्थस्याधिकरणत्वविवक्षायां सप्तमी। विकल्पीति। 'तनिपति' इति वार्तिकेनेति भावः। ननु ज्ञप्त इत्यत्र "वा दान्त" इतीडागमविकल्पेन तदभावे णिजन्तात्तत्सम्भव इति तद्व्यावृत्त्यर्थं सेड्ग्रहणं तत्सामर्थ्यात्पूर्वेणापि न सोऽत आह—वा दान्तेति। ज्ञप्ता इति। सूत्रैकदेशानुकरणम्। तथा च तत्साफल्याय णिलोपोऽपि निपात्यः। अन्यथा पक्षद्वयेपि तदसिद्ध्या तदसङ्गतिः स्पष्टैव। तदाह—णिलोपेति। नित्यत्वादित्यादिः। क्वचित्तथैव पाठः। इट् तु न नित्यः तत्सामर्थ्यादत्र बाधकाबाधितप्रसङ्गस्यैव ग्रहणादिति भावः। व्यवधानादिति। तथा च तेन तदनित्यत्वं ज्ञाप्यते इति सिद्धमिति भावः। सिद्धान्तमाह—यदि त्विति। विहितेति। प्रागुपपादितम्। सेटीति चिन्त्येति। एवं तर्हि नार्थःसेट्ग्रहणेनेति भाष्यस्यायमेवाशयः। 'नापि सूत्रेण। कथं? सप्तमे योगविभागः करिष्यते' इत्यादितदुत्तरभाष्यं त्वेकदेश्युक्तिरिति भावः। एतेन सूत्रस्यैव

स्पष्टम् । तथा च औश्त्वविधा कृतात्वनिर्देशबलेनानुमीयमानमात्वमपि प्राधान्ये एवोचितम् । तथा च जसि प्रियाष्टान इत्येव स्यान्न तु प्रियाष्टा इत्याशङ्क्योक्तं भाष्ये

शब्दरत्नम् ।

त्युच्यते, तदा प्रविगणय्येति भाष्योदाहरणादेव तदनित्यत्वम् । अन्यथाऽल्लोपस्य स्थानिवत्त्वात् "ल्यपि लघुपूर्वात्" इति णेरयादेशो न स्यात् । "ल्यपि" इति सूत्रं प्रशमय्येत्यादौ चरितार्थमिति दिक् । स्पष्टमिति । वस्तुतस्तु "षड्भ्यो लुक्" इत्येतत्साहचर्यादस्य गौणे न प्रवृत्तिः । तस्य च विहितविशेषणाद्गौणेऽप्रवृत्तिरिति सर्वादिसूत्रे भाष्ये स्पष्टम् । गौणे औशोऽप्रवृत्तौ तज्ज्ञाप्याऽऽत्वमपि नेति बोध्यम् । इत्येव स्यादिति । यद्यपि हलीत्यपकर्षपक्षे 'प्रियाष्टाविति न सिध्यति प्रियाष्टान इति प्राप्नोति' इति भाष्ये उक्तम् । तथापि अपकर्षाभावेऽप्यात्वस्य वैकल्पिकतया प्रियाष्टान इत्यस्य दुर्वारत्वेन यथाश्रुतभाष्यासङ्गतेरेवगर्भतया तद् व्याख्यातम् । प्रियाष्टा इतीति ।

भैरवी ।

णपक्ष इति । एतच्च प्राङ्निरूपितम् । भाष्योदाहरणादिति । प्रगदय्य, प्रस्तनय्येत्यस्याप्युपलक्षणम् । अल्लोपस्य स्थानिवद्भावेन तस्यैव लघुपूर्वत्वमाश्रित्य णेरयादेश इति तु न सत् । पूर्वत्वस्य सावधिकत्वेनाकारस्य सम्प्रत्यश्रवणात्तादृशव्यवहारासम्भवात् । नापि स्थानिवत्त्वेन पूर्वस्य परस्य वा विधौ स्थानिवत्त्वस्य प्रवृत्तिर्न तु स्वस्यैव व्यवहाराविशेष इति स्पष्टमेव । ननु बहुवचननिर्देशस्य साधकत्वमन्यत्र निराकृतमत आह—वस्तुत इति । इत्येतत्साहचर्यादिति । यथा तत्सूत्रङ्गौणे न, तथेदमपि तत्र न प्रवर्तते । न च सूत्रान्तरसाहचर्यस्यानियामकत्वसिद्धान्तादिदमसङ्गतमिति वाच्यम् ? षड्ग्रहणस्य ततोऽपकर्षङ्कृत्वा तत्सूत्रस्थं षड्ग्रहणं वक्ष्यमाणरीत्या प्रधानीभूतार्थबोधकमितीहापि तादृशस्यैव बोधनमुचितमित्यभिप्रायात् । तस्य गौणेऽप्रवृत्तिं स्पष्टयति—तस्य चेति । भाष्ये एवकारादर्शनेनैवकारघटितं व्याख्यानं भाष्यविरुद्धमित्याशङ्कानिवृत्तये आह—यद्यपीत्यादि । अत्र न भवत्येवेति व्याख्या न युक्तेति । यथालक्षणमित्यस्य लक्षणमनतिक्रम्येत्यर्थः प्रथमव्याख्यायाम् । द्वितीयव्याख्यायान्तु यथेति पृथक्पदम्, अलक्षणमितिच्छेदः, यथाशब्दो योग्यतार्थकः—लक्षणाभावस्य योग्यतेत्यर्थः । आद्यव्याख्यायां भाष्यकाराभिप्रेतत्वे इष्यते एवैतदिति ब्रूयादिति

भावप्रकाशः ।

प्रत्याख्यानान्मूलं चिन्त्यमित्यपास्तम् । प्रविगणय्येति । प्रगणय्य, प्रस्तनय्येत्यस्योपलक्षणम् । माधवीय्येवम् । ण्याश्रयत्वेनाभीयानसिद्धत्वादाह—स्थानीति । व्यवधानादिति शेषः । उभयत्राप्यव्यवहित एव गृह्यते । अन्यथा प्रचिकीर्ष्येत्यादौ दोष इति भावः । आदिना प्रतमय्येत्यादेः सङ्ग्रहः । दिगिति । तदर्थस्तु लघुपूर्वादित्यस्य वर्णविशेषणत्वेन वर्णग्रहणे जातिग्रहणेनाऽनेकग्रहणेऽपि वर्णद्वयस्यैव ग्रहणेन प्रचिकीर्ष्येत्यादावदोषेऽपि विद्यमानस्यैव तद्द्वयस्य ग्रहणेन स्वविधावस्थानिवत्त्वेन चाऽत्रानिर्वाह इति तदनित्यत्वमावश्यकम् । एतेन तथाकौस्तुभोक्तं चिन्त्यमितीति बोध्यम् । बहुवचननिर्देशस्योपपत्तेरसकृदुक्तत्वादाह—वस्तुत इति । अत्र तदङ्गीकारे भाष्यादिगमकाभावादाह—साहचर्यादिति । उक्तमपि मन्दानुग्रहाय स्मारयति—तस्य चेति । विहितविशेषणात् । तद्घटितत्वादित्यर्थः । नन्वेवं मा भूत् गौणे औश्, आत्वन्तु स्यादेव न ह्यनेन तद्विधीयतेऽत आह—गौणे इति । तथा चात्रैव विधिः कल्प्यत इति भावः । इदमपि मूलरीत्या । यदि तु हलीत्यपकृष्यमाणं वाक्यभेदेन पुनर्विधानार्थं तेनाऽष्टन इत्यस्य क्वचिदस्वपि प्रवृत्तिरित्युच्यते; तदा वक्ष्यमाणमनभिधानमेव शरणमिति बोध्यम् । भाष्ये एवकाराभावान्मूलाऽसङ्गतिं निराचष्टे—यद्यपीति । हलीति । अष्टानामिति सिद्धये इति भावः । तत्—भाष्यम् । व्याख्यातं-व्याख्यातप्रायम् । साहचर्यात्तदाश्रयणेन मूलकृतेति शेषः । मूलमते प्रथमैकवचने तथा रूपसत्त्वेऽपि तस्य भाष्येऽनुल्लेख एव, सोर्हलादित्वात् । बहुवचने तु प्रियाष्टाविति प्रियाष्टान इति वा भा-

'यथालक्षणमप्रयुक्ते' इति । न भवत्येवात्रात्वमित्यर्थ इति कैयटः । वामनोऽपि—

शब्दरत्नम् ।

आवादेशे वकारस्य "लोपः शाकल्यस्य" इति लोपः । अत्र गौणत्वेऽप्यौश्त्वप्रवृत्तौ हि भाष्यमसङ्गतमेवेति भावः । कैयट इति । अत्राऽरुचिबीजं तु 'यथालक्षणम्' इत्यस्य तत्कृता नैव वा लक्षणमप्रयुक्ते प्रवर्त्तते प्रयुक्तानामेव लक्षणेनाऽन्वाख्यानादिति द्वितीयव्याख्यैव युक्ता । आद्यव्याख्यायामप्रयुक्ते इति वाक्यशेषासङ्गतिः । प्रयुक्तेऽपि लक्षणानतिक्रमसत्त्वात् । प्रयुक्तानामिदमन्वाख्यानमित्यभियुक्तोक्तिविरोधाच्च । 'यथालक्षणम्' इत्यस्याऽप्रयुक्ते लक्षणाभावस्यैव योग्यता न तु लक्षणप्रवृत्तेरित्यक्षरार्थः । किं च भाष्यकारस्य लक्ष्यकचक्षुष्कतयैवैव व्याख्योचिता । एकस्यैव प्रयोगस्य भाष्यफक्किकाव्याख्यानभेदेन साधुत्वाऽसाधुत्वयोरनौचित्याच्च । तस्मादत्रत्यं मूलं टीका चैवंव्याख्यातृकैयटाद्यनुरोधेन । वस्तुतः प्रियाष्टादीनामनभिधानमेवेति दिक् ।

भैरवी ।

भावः । प्रकारान्तरेण तस्य व्याख्यानस्यासाङ्गत्यमाह—आद्येति । तादृशव्याख्यानमनुचितमपीत्याह—किञ्चेति । मूलम्—कौमुदीस्थो गाणत्वे त्वित्यारभ्य इतीत्यन्तो ग्रन्थः । टीका—मनोरमा, पूर्वस्मादित्यारभ्य प्रियाष्टन इतीत्यन्ता । सिद्धान्तभूतद्वितीयव्याख्यानुरोधेनाह—वस्तुत इति । दिगिति । दिगर्थस्तु बहुवचननिर्देशाद्गौणे नेत्येतद्व्याख्यानम् "अष्टाभ्य औश्"

भावप्रकाश ।

व्यमिति मूलं चिन्त्यमत आह—आवादेशेति । एतेन तथा भाष्यमपि प्रत्याख्यातम् । साहचर्यात्तदाऽऽश्रयणेन औशोऽप्रवृत्तावात्वमपि गौणे नेत्यर्थे तथा चेत्यादिना मानमुक्तं मूले, तदुपपादयति—गाणत्वेऽपीति । तदवच्छिन्नेऽपीत्यर्थः । औश्त्वेति । औशित्यर्थः । त्वप्रयोगस्तु अनुकरणाद्नुकार्यरूपे भावे इति बोध्यम् । असङ्गतमेवेति । अस्य स्यादिति शेषः । अयं भावः, यद्यपि भाष्ये द्विवचनान्तमप्युपात्तं तथापि गौणे औशभावे तज्ज्ञाप्याऽऽत्वाभावे चाऽजादावात्वाभावे च जसन्तमेव मानमिति तस्यैव मूले उक्तिः । अत एवोपपादकग्रन्थे आत्वाऽनुल्लेखः । एवञ्च यदि अपकर्षेऽव्याप्तिमात्रदानम्भाष्याभिमतं भवेत्तर्हि द्विवचनान्तमेवोच्येत न तु जसन्तम् । तत्र ज्ञापकसाध्यत्वौशोस्तथापि दुर्वारत्वेनानिष्टाभावेनाऽऽपादनासङ्गतेः । एवञ्च जसन्तोपादानान्यथानुपपत्त्या तद्भाष्याभिमतमिति । सिद्धान्तमाह—अत्रेत्यादिना । तत्कृता—कैयटकृता । व्याख्यैव युक्तेति । मूलोक्तार्थे हि इष्यत एवैतदित्येव ब्रूयादिति भावः । युक्त्यन्तरमाह—आद्येति । अभियुक्तः—भाष्यकृदादिः । तदर्थस्य ततो लाभमाह—यथेति । लक्षणस्याभावोऽलक्षणं तस्य योग्यता यथालक्षणमित्यव्ययीभावः । फक्किकेति । अनेन वचनत्वं निरस्तम् । एवञ्च तादृशप्रयोगोऽसाधुरिति भावः । तदाह—तस्मादित्यादिना । मूलम्—गौणत्वे त्वित्यादिर्हलीत्यन्ता कौमुदी । टीका—पूर्वस्मादपीतीत्यारभ्य प्रियाष्टन इतीत्यन्ता मनोरमा । एवम्—आद्यप्रकारेण । सिद्धान्तभूतद्वितीयव्याख्यानुरोधेनाह—वस्तुत इति । अत एव "अष्टाभ्य औश्" इति सूत्रे भाष्ये 'विभाषा आत्वं यदयमात्वभूतस्य ग्रहणं करोति अष्टाभ्य इति अन्यथाऽष्टन इत्येव ब्रूयात्' इत्युक्तम् । कैयटरीत्या गौणे प्रवृत्त्यभावाय बहुवचननिर्देशस्यावश्यकतया तदसङ्गतिः स्पष्टैव । एवं च हरदत्तादिरत्नाकरान्तानामेतत्प्रयोगविचारः सर्वोऽपि निष्फल एवेति बोध्यम् । तदाह—दिगिति ।

सरला ।

दिगिति । दिगर्थस्तु "यथालक्षणमप्रयुक्ते" इति भाष्यस्य 'नैव वा लक्षणमप्रयुक्ते प्रवर्तते प्रयुक्तानामेव लक्षणेनान्वाख्यानात्' इति कैयटव्याख्यानं लक्षणस्याभावाऽलक्षणम् अलक्षणं योग्यं यथालक्षणम् इत्यव्ययीभावसमासद्वयेन लक्षणशब्दस्य च लक्षणप्रवृत्तिपर्यन्तं लक्षणाश्रयणेन भवितुमर्हति; तच्च न, मुख्यवृत्त्या कार्यसिद्धौ जघन्यवृत्तिकल्पनाया अनौचित्यात् । एवं चाऽऽद्यव्याख्यैव युक्तेति बोध्यम् ।

"अष्टाभ्य औश्" इति सूत्रे तदन्तग्रहणात्परमाष्टावित्युक्त्वा प्रियाष्टान इत्यत्राऽऽत्वस्याभावादौश्त्वं न भवतीत्याह। हरदत्तस्तु—तत्रैव 'प्रियाष्टान इत्यत्र' इतिवृत्तिग्रन्थमुपादाय यथा पुनर्गौणतायामात्वं न भवति तथा तद्विधावेव वक्ष्यत इति प्रतिज्ञाय "अष्टन आ विभक्तौ" इति सूत्रे एकवचननिर्देशादुपसर्जनेऽप्यात्वम्, भविषये आतो लोपः प्रियाष्टः पश्येत्यादि वदन् पूर्वप्रतिज्ञातार्थविपरीतं भाष्यवृत्त्यादिविरुद्धं कथमभिहितवानिति स एव प्रष्टव्यः। हलादावेवेति। यद्यपि हलीत्यस्यापकर्षमकृत्वाऽपि व्याख्यानं भाष्ये प्रतीयते। तथाऽपि तस्याऽपरितोषग्रस्तत्वं प्रपञ्चितमन्यत्रेति भावः। प्रियाष्टा इति प्रथमैकवचनम्। उक्तं संगृह्णाति प्रियाष्ट्न इति॥ नान्ताः॥

भुदिति। बुद्धचतेः क्विप्॥ धान्ताः॥

"ऋत्विग्दधृक्"॥ किंचिदिति॥ ऋतावुपपदे यजेः किन्। धृष्णोतेर्द्विर्वचनमन्तोदात्तत्वं च। सृजेः कर्मणि किन् अमागमश्च। दिशेः कर्मणि। उत्पूर्वात् स्निहेः किन् उपसर्गान्तलोपः षत्वम्। अञ्चेः सुप्युपपदे किन् चेत्यर्थः। युजेरिति। कुञ्चेरप्येवम्। नलोपाभावस्त्वधिकः। कनाविति।

---

शब्दरत्नम्।

आत्वस्याभावादौश्त्वं नेति। अत्र वृत्तिकृता औशोऽभावादात्वं नेति वक्तुं युक्तम्। प्रथमैकवचनमिति। हल्ङ्यादिलोपात् परत्वादात्वे सोर्लोपाप्राप्त्या रुत्वविसर्गौ। न च लोपोऽन्तरङ्गः प्रकृतिप्रत्ययोभयसापेक्षत्वेन समत्वादित्यभिमानः।

नलोपाभावस्त्विति। क्रुञ्चधातुर्नोपध इति संमताकारीयधातुवृत्त्यनुसारेणेदम्। "परेश्च" इति सूत्रभाष्यात्तु अयं ञोपध इति लभ्यते। तत्र हि क्रुञ्चेत्यत्र

भैरवी।

इति सूत्रस्थभाष्यविरुद्धमपि। तत्र हि 'विभाषा आत्वं यदयमात्वभूतस्य ग्रहणङ्करोत्यष्टाभ्य इति अन्यथा अष्टन इत्येव ब्रूयात्' इत्युक्तम्। यदि कैयटोक्तरीत्या गौणेऽस्याप्रवृत्तिरिष्टा स्यात्तदाऽष्टन इत्येव ब्रूयादित्यसङ्गतं स्यादिति।

"अष्टाभ्य" इति सूत्रस्य प्राधान्येनौशादेशविधायकत्वमेवाऽऽत्वन्त्वनुमीयत इत्याशयेनाह—अत्र वृत्तिकृतेत्यादि। अन्तरङ्ग इति। अङ्गाधिकारस्थभिन्नत्वादित्याशयः। समत्वादिति। अत एव भाष्यकृता तदुपन्यासो न कृत इति शेषः। अभिमान इति। एवङ्कथनबीजन्तु यथालक्षणमप्रयुक्ते' इत्येतत्सूचिताऽनभिधानमेवेति प्रागुक्तम्।

ननु "परेश्च घाङ्कयोः" इति सूत्रस्थवक्ष्यमाणभाष्यविरुद्धम्मूलोक्तन्नलोपाभावस्त्वधिक इति व्याख्यानमत आह—क्रुञ्चधातुरिति। सम्मताकारः—ग्रन्थकारविशेषः। ञोपध इति। उपदेश इत्यादिः। अत एव 'क्रुञ्च्यात्' इत्यादौ ञकारस्य श्रवणं सिध्यति, नोपधत्वे नलोपः

भावप्रकाशः।

तदुक्तार्थस्य सम्मतत्वादाह—अत्रेति। युक्तमिति। औशः प्रधानशिष्टत्वात् अनुमीयमानाऽऽत्वाभावोपायेनैवौश्भावस्य सुवचत्वाच्च। हलीत्यनपकर्षेण प्रधाने इवाऽऽत्वस्य दुर्वारत्वाच्चेति दिक्। अन्तरङ्ग इति। अनाङ्गत्वादिति भावः। समत्वादिति। अत एवापकर्षाऽनपकर्षपक्षयोस्तत्राविशेष इति तदनुपन्यासो भाष्ये। अभिमान इति सूचितारुचिस्तूक्तैव तदनभिधानरूपेत्यलम्।

वक्ष्यमाणभाष्यविरोधादाह—क्रुञ्चेति। सम्मताकारः—ग्रन्थकारः। परेश्चेतीति। "परेश्च घाङ्कयोः" इति सूत्रेत्यर्थः। ञोपध इतीति। औपदेशिकेत्यादिः। अत एव क्रुञ्च्यादित्यादौ ञश्रव-

इकारस्तूच्चारणार्थ इति भावः।

सन्निहिते इति। यत्तु प्राञ्चस्तृतीये धात्वधिकारे इति; तन्न, सन्विधौ धातुग्रहणस्य उत्तरत्रानुवृत्तेरभावेनाधिकारत्रयाभावात्।

"युजेरसमासे" ॥ सर्वेति। यत्तु प्राचोक्तं–सुटीति; तन्न, सर्वनामस्थाने इत्यस्यैव प्रकृतत्वात्, लक्षणायां बीजाभावात्, क्लीबे युजी इति द्विवचनेऽति-व्याप्तेश्च। यत्तु वदन्ति–नपुंसके शसि युञ्जीत्यत्र नुम् न स्यादिति; तन्न, "नपुं-

शब्दरत्नम्।

कुत्वमाशङ्क्य क्रुञ्चामिति ऋत्विगादिसूत्रस्थनिपातनात्सिद्धमित्युक्तम्। तस्य नकारजत्वे तु परसवर्णासिद्धत्वात्कुत्वाऽप्राप्तौ भाष्याऽसङ्गतिः। निर्देशेन च चयोगे कुत्वाभावो निपात्यते इति क्रुङ्क्त्यादौ कुत्वं भवत्येव, तदा लोपस्य प्राप्तिरेव नेति तत्त्वम्। उच्चारणार्थ इति। न तु तदित्संज्ञाप्रयुक्तकार्यभागयमतो विशिष्य तस्य नोक्ता सा। उच्चारणे सहायसम्पादनेन वर्णोच्चारणस्य चारितार्थ्ये विधेये तदपगममात्रफलिका तु साऽस्त्येवेति न "तस्य लोपः" इति सूत्रस्थभाष्यविरोध इति बोद्धव्यम्।

भरवी।

स्यात्। ननु निपातनस्य बाधकतया यदि कुत्वाभावो निपात्यते; तदा क्रुङ् इत्यत्रापि कुत्वन्न स्यादत आह—निर्देशेन चेति। च योग इति। तथा च झल्निमित्तककुत्वस्याभावो निपात्यत इति। "क्विन्प्रत्ययस्य" इति भवत्येवेति भावः। केचित्तु सामान्यतो ञकारोच्चारणेन तत्सामर्थ्यात्कुत्वाभावोऽनुमीयत इत्याहुः; तन्न, क्रुङ् इत्यस्याऽसिद्ध्यापत्तेः। उच्चारणार्थानामपि इत्सञ्ज्ञयैव निवृत्तिरिति सिद्धान्तेनाह—न तु तदिति। तस्य—इकारस्य। सा–इत्सञ्ज्ञा। भाष्यविरोध इति। तत्र हि 'अनुबन्धलोपे भावाऽभावयोर्विप्रतिषेधादप्रसिद्धिः, न ज्ञायते केनाभिप्रायेण प्रसज्यति, केन निवृत्तिङ्करोति' इत्याशङ्क्य, 'भावे हि कार्यार्थोऽनन्यार्थो लोपः कार्यङ्करिष्यामीत्यनुबन्ध आसज्यते, कार्यादन्यन्माभूदिति लोप' इत्युक्तम्। एतेन यस्योच्चारणार्थ उपदेशस्तस्योच्चारणे सहायकत्वात्प्रयोगे इत्सञ्ज्ञायाः सत्त्वेन निवृत्तेर्न्याय्यत्वादश्रवणम्भवतीति सूचितम्।

भावप्रकाशः।

णम्। नोपधत्वे हि नलोपः स्यात्। एतेन परसवर्णस्य श्चुत्वस्य वाऽसिद्धत्वाद्भाष्योक्तं चिन्त्यमिति रत्नाकरोक्तमपास्तम्। श्चुत्वस्य वेत्यस्य सर्वथाऽयुक्तत्वाच्च। कुत्वमिति। चोःकुर्झलीति ञस्य कुत्वमित्यर्थः। सङ्गीत्यकरणे इति भावः। यत्तु ञकारोच्चारणसामर्थ्यादेवाकुत्वसिद्धौ निपातनपर्यन्तधावने वैयर्थ्यापत्त्या भाष्यमयुक्तमेवेति मान्यास्तन्न, क्रुङ्क्त्यादावपि कुत्वानापत्तेः। निपातनेन तु च योगे कुत्वाभावबोधनान्न दोषः। तदुन्नयन्नाह—निर्देशेन च चयोग इति। चस्त्वर्थे। तदा—भाष्यमते। भाष्यविरोधादन्याशयकमपि मूलमन्यथा योजयति—न त्विति। अयम्—ऋत्विगादिसूत्रस्थप्रकृतिभागः। नोक्ता सेति। एवञ्च न्यूनता निरस्ता। परन्तूपलक्षणत्वेन साऽपि बोध्या। अन्यथा हि निवृत्तिरेव न स्यात्तदाह—उच्चारणे इति। विधेये इति अनुवाद्यनिरासाय। अस्त्येवेति। क्विन् प्रत्ययस्येत्यत्र विशेषणार्थकनकारस्येव। अन्यथा गुणनिषेधार्थतया कस्यैव स्यान्न तु तस्यापीति भावः। अत एव क इ न एते इत इति प्रक्रियाग्रन्थस्तद्व्याख्यातृग्रन्थश्च सङ्गच्छते इति दिक्। इदमसकृदावेदितं तत एव बोध्यम्।

सरला।

मूले सन्निहिते इतीति। तत्फलं तु णिजादीनां न संज्ञा, तेन 'स्तूयते' इत्यादौ 'अकृद्' इति पर्युदासो नेति।

सकस्य झलचः" इति नुमः सम्भवात् । सुलोप इति । कुत्वस्याऽसिद्धत्वात् परत्वादादौ नुम् । ततो हल्ङ्यादिलोप इति भावः ।

"क्विन्प्रत्ययस्य कुः" ॥ पदान्ते इति । यत्तु प्राचोक्तं झलीति; तन्न, झलीत्यस्याऽसन्निहितत्वात् निष्फलत्वाच्च । यत्तु तत्पौत्रेण व्याख्यातम्—"झलो झलि" इत्यतो मण्डूकप्लुत्या झलीत्यस्मिन्ननुवर्तमानेऽपि न कश्चिद्दोष इति; तन्न, स्पृष्ट इत्यादावतिव्याप्तेः ॥

शब्दरत्नम् ।

कुत्वस्यासिद्धत्वादिति । "चोः कुः"इति कुत्वस्येत्यर्थः । इदं सर्वं न्यायसिद्धार्थकथनमात्रम् । परत्वादिति । हल्ङ्यादिलोपादित्यर्थः ।

असंनिहितत्वादिति । सुब्धोर्ग्रहणसामर्थ्येन "एकाचो बशः"इत्यतस्तन्निवृत्तेर्निष्ठादेशप्रकरणेन विच्छेदाच्च । एतेनात्रैव चोरिति वक्तव्यम् । तत्रैव वा क्विन्प्रत्ययस्येति वक्तव्यम् । एवं च कुग्रहणं व्यर्थमित्यपास्तम् । चोरित्यत्र तत्सम्बन्धादत्र तदसम्बन्धाच्च । निष्फलत्वाच्चेति । सिद्धान्तिसम्मतफलाभावादित्यर्थस्तद् ध्वनयन्नाह—अतिव्याप्तेरिति ।

भैरवी ।

कुत्वस्यासिद्धत्वादिति । सम्प्रति कुत्वं "क्विन्प्रत्यय" इति सूत्रेण न प्राप्नोतीत्याशयेनाह—चोः कुरितीति । नन्वत्र प्रथमतः "चोः कुः" इत्यस्य प्रवृत्तिर्भवतु ततः सुलोपप्रत्ययलक्षणयोर्नुमि लोपकुत्वाभ्यां युङिति निर्बाधमत आह—इदमिति । परत्वादित्यस्यावधिसाकाङ्क्षत्वादाह—हलिति ।

ननु "झलो झलि" इति प्रक्रान्तं सन्निहितमेवेति मूलेऽसन्निहितत्वादित्यनुपपन्नमत आह—स्ध्वोर्ग्रहणेति । ननु मण्डूकप्लुत्या सम्बन्धोऽस्त्वित्यत आह—निष्ठादेशेति । तथा च प्रकरणव्यवधानेनानुवृत्तिः क्वापि न दृष्टा सा इह कथम्भविष्यतीति भावः । एतेन—वक्ष्यमाणविशेषेण । अत्रैव—क्विन्प्रत्ययस्येत्यत्रैव । तत्रैव-चोः कुरित्यत्रैव । कुग्रहणमिति । एकेनैव कुग्रहणेन निर्वाहे द्वितीयं व्यर्थमित्यर्थः । तत्सम्बन्धात्—झलीत्यस्य सम्बन्धात् । अत एव पक्त्येत्यादेः सिद्धिः । अत्र-क्विन्प्रत्ययस्येत्यत्र । तदसम्बन्धादिति । अत्र तदसम्बन्धे हेतुः प्रागुक्तः । नन्वनिष्टफलसम्पादनार्थमेव तस्य सम्बन्धोऽस्त्वित्यत आह—सिद्धान्तिसम्मतेति । प्रत्युत तत्सम्बन्धोऽनिष्टफलसम्पादक इत्याह मूले-स्पृष्ट इत्यादाविति । "स्पृशोऽनुदके क्विन्" इत्यस्मात्क्विनो विधानादस्यात्र प्राप्तिः ।

भावप्रकाशः ।

मूले—नुमः सम्भवादिति । तत्र तेन तथैव व्याख्यानात् इति भावः । एतेनात्र लक्षितस्यैवोत्तरसूत्रेऽप्यनुवृत्तिप्रसङ्गेनोक्तदूषणस्यातिदृढत्वान्मूलं चिन्त्यमिति रत्नाकरोक्तमपास्तम् । इदानीं "क्विन्प्रत्यय" इत्यस्याप्राप्तेराह—चोः कुरिति । नन्वादौ "चोः कुः" इति कुत्वे सुलोपे च ततः प्रत्ययलक्षणेन नुमि लोपकुत्वाभ्यां युङिति निर्बाधमत आह—इदमिति । असिद्धत्वपरत्वयोर्विरोधादाह—हलिति ।

ननु "झलो झलि" इत्यस्य प्रक्रान्तत्वात्कथमसन्निहितत्वम् । अन्यथा "स्कोः" इत्यादावपि तदसम्बन्धापत्तिरत आह—सुब्धोरिति । ननु तथाऽपि मण्डूकप्लुतिरस्त्वत आह—निष्ठेति । तथा च सूत्रव्यवाये तदङ्गीकारेऽपि प्रकरणव्यवाये न सा दृष्टचरेति भावः । अत्रैव—"क्विन्प्रत्यय" इत्यत्रैव । तत्रैव—"चोः कु." इत्यत्रैव । कुग्रहणमिति । द्वितीयमित्यादिः । तत्सम्बन्धात्—झलीति सम्बन्धात् । उक्तहेतोरेवाह—अत्रेति । अनिष्टफलसम्पादनेन सफलत्वान्निष्फलत्वादित्ययुक्तमत आह—सिद्धान्तीति । अतिव्याप्तेरितीति । अन्यथाऽस्याधिक्यं स्पष्टमेव । एवञ्च प्रसादोक्तिरयुक्तेति भावः ।

खन् इति । खञ्जतीति खन् । खजि गतिवैकल्ये । "परौ व्रजेः" । दीर्घ-श्चेति । यत्तु प्राचा व्याख्यातं विण्, णित्त्वादुपधावृद्धिरिति; तन्न, पञ्चपाद्यां दशपाद्याञ्चानेन क्विब्दीर्घयोरेव विधानात् ।

"स्कोः" ॥ संयोगेति लुप्तषष्ठीकं झलन्ताभ्यां विशेष्यते इति व्याचष्टे—पदान्त इत्यादिना । भृज्जतीति भृट् । क्विप् । सस्येति । जश्त्वस्यासिद्धत्वात्पूर्व श्चुत्वमित्यर्थः । एतेन प्राचो विपरीतोक्तिः प्रत्युक्ता । ऊर्गिति । ऊर्ज बलप्राणनयोः । अस्माच्चुरादिण्यन्तात् "भ्राजभास" इत्यादिना क्विप् । णिलोपः । स च चोः कुत्वे न स्थानिवत्, पदान्तविधित्वात् पूर्वत्रासिद्धत्वाच्च । इह जान्तेऽवयवा इति नोदाहृतम् । मन्त्रे श्वेतवहोक्थेति प्रकृत्य "अवे यज" इति विहितस्य ण्विनस्तदपवादस्य पदान्ते डसश्च छान्दसत्वात् । यत्तु—श्वेतवाडुक्थशा-

शब्दरत्नम् ।

लुप्तषष्ठीकमिति । एतेनोपसर्जनस्य सविशेषणत्वात्समासानुपपत्तिरित्यपास्तम् । पदान्ते झलि च यौ स्कौ संयोगादी तयोर्लोप इति न सूत्रार्थः । संयोगादित्वस्य पदान्तत्वस्य चैकस्मिन्नसम्भवात् । तदपवादस्येति । सूत्रद्वयविहितण्विनपवादस्येत्यर्थः । तत्र "मन्त्रे" इति सूत्रे उपपदानां धातूनां च पृथक् पाठे कर्तव्ये समुदायोच्चारणमलाक्षणिकानां निपातनार्थम् । तत्र श्वेतशब्दे कर्तृवाचिन्युपपदे वहेः कर्मणि प्रत्ययः । उक्थे

भैरवी ।

एतेन—पृथक्पदत्वस्वीकारेण । उपसर्जनस्य—संयोगस्य । ननु नोपसर्जनविशेषणत्वमत्राभिमतङ्किन्तु विशेष्यस्यादिपदार्थस्यैवेत्यत आह—पदान्त इत्यादि । मूले प्राचो विपरीतोक्तिरिति । सस्य दत्वं श्चुत्वमिति प्रसादोक्तिरित्यर्थः । यत्तु "न मु ने" इति योगविभागान्न जश्त्वासिद्धत्वमिति तन्न । योगविभागस्याऽदर्शनात् । डसो न "अवे यज" इति सूत्रविहितण्विन्प्रत्ययमात्राऽपवादत्वमत आह—सूत्रद्वयेति । प्रसङ्गादाह—तत्रेति । तत्र–डस्विधायकवचनबाध्यसूत्रयोर्मध्ये । पृथगिति । कोटिद्वयेनेत्यर्थः । समुदायोच्चारणमिति । धातूपपदसमुदायोच्चारणमित्यर्थः । तत्र—प्रथमसूत्रे प्रतिपादितानान्त्रयाणाम्मध्ये । सूत्रे श्वेतवहशब्देऽकार उच्चारणार्थः । कर्मणि प्रत्यय इति । श्वेतैरुह्यत इत्यर्थः । उक्थ इति । सामविशेष-

भावप्रकाशः ।

उपसर्जनस्य—संयोगस्य । एतेन गुणभूतोऽपि संयोगो झलन्ताभ्यां विशेष्यत इति प्रकाशोक्तमपास्तम् । लुप्तषष्ठीकं विना केनचिदुक्तपक्षं खण्डयति—पदान्ते इति । मूले–प्राचो विपरीतोक्तिरिति । सस्य दत्वं श्चुत्वमिति प्रक्रियाकृदुक्तिरित्यर्थः । यत्तु "न मु ने" इति योगविभागादनसिद्धत्वमिति प्रसादप्रकाशकृतौ; तन्न, तत्र मानाभावात् फलाभावाच्च । यत्तु खण्डनकृत्, "झलाजश् झशि" इति निर्देशान्न शस्य जश्त्वम् । तथा च "भृज्जतीनाम्" इति निर्देशो योगविभागे लिङ्गमिति; तन्न, मूलाद्युक्तरीत्यान्त्यनिर्देशस्य निर्बाधत्वात् । असन्देहायाऽविकृतस्वरूपप्रतिपादने आद्यतात्पर्येण तस्याऽज्ञापकत्वाच्चेति दिक् । तन्मात्रानपवादत्वेन यथाश्रुतमूलासङ्गतेराह—सूत्रेति । एवञ्चायमपि चतुर्भ्य एव 'श्वेतवहादीनां डस्पदस्य' इति तयोरेवोपसंख्यानादिति भावः । ननु सूत्रद्वयेन ण्विन्मात्रविधानेऽधिकेष्टकार्यालाभोऽत आह—तत्रेति । सूत्रयोर्मध्ये इत्यर्थः । पृथगिति । कोटिद्वयेनेत्यर्थः । 'श्वेतोक्थपुरस्सुवहिशंसिदाशिभ्य' इति यावत् । समुदायेति । धातूपपदसमुदायेत्यर्थः । अलाक्षणिकानामिति । कार्याणामित्यर्थः । ण्विन्तु विधेय इति न निपात्यते इति भावः । कानि तानीत्यत आह–तत्रेत्यादीतीत्यन्तेन । तत्र–तेषां त्रयाणां मध्ये इत्यर्थः । वहेरिति । सूत्रे अकार उच्चारणार्थः । श्वेतैरुह्यते इति विग्रहः । उक्थं—

स्पुरोडाशावयजां डसिति प्राचोक्तम्; तन्न । डसः प्रकृतिभूतयोर्वहियज्योर्दीर्घाभावात् । यदपि अवया इति प्रतीकमुपादाय ण्विनिति प्राचा व्याख्यातम् । तन्न, अपवादस्य डसो विषये उत्सर्गस्य ण्विनोऽप्रवृत्तेः ।

---

शब्दरत्नम् ।

कर्मणि करणे वोपपदे शंसेः प्रत्ययो नलोपश्च । अस्य नलोपेऽपि न वृद्धिः । 'उक्थशस्शब्दस्य सामान्येन रुः सिद्धो न तस्य निपातनं क्रियते' इति भाष्येण तत्र तदभावस्यापि निपातनात् । दाश्रृ दाने इत्यस्मात्पुरःपूर्वकात्प्रत्ययः कर्मणि, दाश आदेर्डत्वं चेति । वहियज्योरिति । शंसेरप्युपलक्षणमिदम् । किं चोक्तभाष्यादुक्थशासित्युच्चारणमपि प्राचामसङ्गतम् । न च डस्न विधेयः "अवयाः श्वेतवाः पुरोडाश्च" इति पदान्तविषये रुत्वे रूपसिद्धेरिति वाच्यम् ? वृद्धौ अतः परत्वाभावेनोत्वानापत्तौ श्वेतवोभ्यामित्याद्यसिद्ध्यापत्तेः । अप्रवृत्तेरिति । ननु पदान्तविषये वासरूपन्यायेन ण्विनप्यस्तु निपातनं चेदुभयोरत एव रुप्रकरणे अवया इति सूत्रपाठः । अन्यथा डसन्ते "ससजुषो रुः" इति रुत्वे सिद्धे दीर्घमात्रस्य निपातनात्तत्प्रकरणे एव कृतं स्यादिति चेन्न । 'डस् वक्तव्यः । किं प्रयोजनं ? वैर्थम् । क्रियते वैर्थं निपातनम् अवयाः श्वेतवा इति, तन्न वक्तव्यम् । अवश्यं तद्वक्तव्यम् । डसारम्भेऽपि सम्बुद्धौ दीर्घार्थम् । तर्हि डस्न वक्तव्यः । डसपि वक्तव्यः । श्वेतवो-

भैरवी ।

बोधक इति शेषः । शंसेः प्रत्यय इति । कर्तरीति शेषः । अस्य—शंसेः । तस्य—रोः । एतेनाऽन्येषान्निपातनमिति ध्वनितम् । 'विशेषविधिनिषेधयोः शेषनिषेधाभ्यनुज्ञाफलकत्वम्' इति न्यायात् । दाश्रृ दान इति । पुरो दाश्यत इति विग्रहः । उक्तभाष्यादिति । उक्थशस्शब्दस्येत्यादिभाष्यादित्यर्थः । परस्य शङ्कान्निराचष्ट—न चेति । रुत्व इति । हादीनामिति शेषः । वृद्धिस्तु ण्विन्प्रत्ययनिमित्तिका सिद्धैवेति भावः । पदान्त एव निपातनेनाऽपदान्ते श्वेतवाहावित्यादौ दोषाभावादाह—वृद्धाविति । प्रकाशकारोक्तिसमर्थनायाह—नन्विति । उभयोः—ण्विनन्तडसन्तयोः । अत एव—ण्विनः सत्त्वादुभयोर्निपातनादेव । अन्यथा—ण्विनोऽसत्त्वे । तत्प्रकरणे-दीर्घप्रकरणे । वैर्थन्निपातनमिति । हादीनामेव रुत्वविधानार्थमित्यर्थः । तन्नेति । डसैव रूपस्य सिद्धत्वादवया इति निपातनन्न कर्तव्यमित्यर्थः । तद्वक्तव्यम्—निपातनं वक्तव्यमि-

भावप्रकाशः ।

सामविशेषः । उक्थान्युक्थैर्वा शंसतीति विग्रहः । एवञ्च कर्त्तरि स इति भावः । अस्य—शंसेः । एवञ्च वहेर्भवत्येवेति भावः । न वृद्धिरिति । ण्विनं मत्वा "अत उपधायाः" इति नेत्यर्थः । उक्थशस्शब्दस्य—तत्प्रकृतिकस्य । सामान्येन—"ससजुषो रुः" इत्यनेन । न तस्येति । इतीत्यादिः । उक्थशस्शब्दस्येत्यर्थः । "अवयाः" इति सूत्रे इति शेषः । तत्र—उक्थशस् इत्यत्र । तदभावेति । वृद्ध्यभावेत्यर्थः । तत्र तथोक्त्या ह्रस्वस्यापि निपातनेन तत्सामर्थ्यात् । अन्यथोक्थशासिति वाच्ये तथोक्तेरसङ्गतिः स्पष्टैवेति भावः । दाश्रृ दाने इति । पुरो दाश्यत इति विग्रहः । यत्तु मान्याः—शास् धातोः प्रत्ययानुरोधेनाह—वहियज्योरितीति; तन्न, उक्तभाष्यविरोधापत्तेः; अत आह—शंसेरपीति । तदेव ध्वनयितुमाह—किञ्चेति । उक्तभाष्यादिति । उक्थशस्शब्दस्येति भाष्यादित्यर्थः । एवञ्चान्येषां ण्विनन्तानां तथा रूपसम्भवेप्यस्य सर्वथा नेति भावः । रुत्वे इति । हादीनामिति शेषः । दीर्घस्तु ण्विनिवृत्त्यैव सिद्ध इति भावः । पदान्ते एव निपातनेन श्वेतवाहावित्यादावदोषादाह—वृद्धाविति । प्रसादप्रकाशाद्युक्तिं समर्थयति कश्चित्—नन्वित्यादिना । निपातनमिति । अवयाः इति निपातनं, डसन्तण्विनन्तयोरित्यर्थः । अत एव प्राचां व्याख्यानसङ्गतिः । अत एव—तत्र ण्विनोऽपि सत्त्वात् उभयोर्निपातनाङ्गीकारादेव । अन्यथा—तत्र ण्विनोऽसत्त्वे । तत्प्रकरणे—दीर्घप्रकरणे । वैर्थमिति । तेन हादीनामेव रुत्वमिति भावः । तन्नेति । डसैव सिद्धत्वादवयाः इति निपातनं नेत्यर्थः । तर्हि डस्नेति ।

"तदोः सः सावनन्त्ययोः" । अनन्त्ययोः किम् ? हे स । परत्वात् त्यदाद्यत्वं बाधित्वा सत्वं स्यात् । ततो हल्ङ्यादिलोपे रुत्वविसर्गौ स्याताम् । किं च

शब्दरत्नम् ।

भ्यामित्यर्थम्' इति भाष्यविरोधात् । अन्यथा ण्विन्पक्षे रुत्वार्थमपि तस्याऽऽवश्यकत्वेन सम्बुद्धौ दीर्घार्थमिति भाष्यस्य निर्दलतापत्तिः । तस्मादत्र वार्तिकनये वासरूपाऽप्रवृत्तिः क्तादिष्विव व्यवस्थितविभाषयाऽङ्गीकार्या । रुप्रकरणे सूत्रं तु सूत्रकृता डसोऽकरणात् कृतम् । ण्विनन्ते रुत्वमात्रस्यैव तदिष्टत्वात् । श्वेतवोभ्यामिति प्रयोगन्तु सूत्रकृन्न जानात्येवेति स्पष्टं भाष्यविदाम् । केचित्तु ण्विन आदेशो डस् 'श्वेतवहादीनां डस्पदस्य' इति वार्तिकात् । एतत्सम्बन्धिनो ण्विनः प्रत्ययस्य डस् तदन्ते पदत्वस्य भावित्वे इति तदर्थः । अत एव वृत्तिकृता ण्विनं प्रक्रम्य श्वेतवा इत्युदाहृतम् । एवं च वासरूपस्यात्र विषय एव नेत्याहुः ।

परत्वादिति । नित्यत्वं तु नाऽत्वस्य शब्दान्तरस्य प्राप्तेः । सत्वं स्यादिति ।

भैरवी ।

त्यर्थः । अन्यथा—पदान्ते वासरूपन्यायेन ण्विनोऽपि सत्त्वे । तस्य—निपातनस्य । अत्र—डस्विषये । नन्वेवं सति रुत्वस्य सिद्ध्या दीर्घप्रकरण एव तत्सूत्रम्पठनीयमत आह—रुप्रकरण इति । मात्रपदेन दीर्घनिरासः । तदिष्टत्वात्—सूत्रकृदिष्टत्वात् । नन्वेवमुक्तरीत्या श्वेतवोभ्यामित्येतन्न स्यादत आह—श्वेतवोभ्यामितीति । उक्तभाष्यानुसारिसिद्धान्तिमतमाह—केचित्त्विति । श्वेतवहादीनामित्यनन्तरपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका षष्ठी । अत एवाह—एतत्सम्बन्धिन इति । ननु डसुत्पत्तिवेलायाम्पदत्वङ्कथमत आह—तदन्त इति । अत एव—डसो ण्विनादेशत्वादेव । एवञ्चेति । तस्य सूत्रस्यापवादविषय एव प्रवृत्तेरिति भावः ।

मूले—हे स इति । न चासम्बुद्धेः पुरः स्फूर्तिकत्वात्तदुपेक्षा नोचितेति वाच्यम् ? सत्यप्यन्त्यस्य सत्वे हल्ङ्यादिलोपरुत्वविसर्गैरिष्टस्य रूपस्य सिद्धेः । न च "अत्वसन्तस्य" इति दीर्घापत्तिरिति वाच्यम् ? प्रतिपदोक्तस्यासन्तस्याऽतुसाहचर्येण ग्रहणात् । ननु नित्यान्न परस्य बलवत्त्वमत आह—नित्यत्वमिति । एकस्यैव सत्वमित्यत्र नियामकाभावादाह—

भावप्रकाशः ।

हादीनामेव रुत्वम्, दीर्घस्तु ण्विनिवृत्त्यैव सिद्ध इति भावः । विरोधमुपपादयति–अन्यथेति । पदान्ते तन्न्यायेन ण्विनोऽपि सत्त्वे इत्यर्थः । तस्य–निपातनस्य । अत्र-डस्विषये । भाष्यमतस्य वक्ष्यमाणत्वादाह-वार्तिकेति । नन्वेवं रुत्वस्य सिध्या दीर्घप्रकरणे एव पाठ्यमत आह—रुप्रेति । मात्रपदेन दीर्घनिरासः । प्रयोगस्तु वृद्ध्या सिद्ध इति भावः । तदिष्टत्वात्—सूत्रकृदिष्टत्वात् । नन्वेवं श्वेतवोभ्यामित्याद्युक्तरीत्या न स्यादत आह—श्वेतेति । उक्तभाष्यप्रामाण्यादेव सिद्धान्तमतमाह—केचित्त्विति । भाष्यानुयायिन इत्यर्थः । वहादीनामित्यनन्तरयोगे षष्ठी, तदाह—एतत्सम्बन्धिन इति । ननु डसुत्पत्तिवेलायां कथं पदत्वमत आह—तदन्ते इति । डसन्त इत्यर्थः । एव नेतीति । एवञ्च प्रकाशायुक्तिस्सर्वथाऽयुक्तैव । यद्यपि स्थानिपरतया सा सुयोजाऽत्र मते तथापि "अत उपधायाः" इति वृद्धिरिति ण्विनपवादो डसिति च तदुक्तिरसङ्गतैवेति भावः । वस्तुतस्तु उक्थशस्शब्दस्येति भाष्याच्छंसेर्नलोपोपधावृद्ध्यभावयोर्निपातनाच्छासेर्वोपधाह्रस्वनिपातनात् वृद्ध्यभावे उक्थशोभ्यामित्यस्य सिद्धेः शासेर्विचि सम्बुद्धावुक्थशा इत्यस्यापि सिद्धेर्द्वयमपि न कार्यम् । अत एव उक्थशासश्चरन्तीति छान्दसप्रयोगसङ्गतिः । आपाद्यरूपं तु वेदे नास्त्येव । विच्ण्विनोः स्वरेऽपि न विशेषः एकाच्त्वात् । यदि ण्विनन्तस्य समासस्याद्युदात्तत्वमिष्टं निरुक्तसामर्थ्याद्विशिष्टस्य प्रकृतित्वेन निर्देशाच्च तर्हि वृषादित्वाद्विजन्तस्यापि तस्य तत्त्वं कल्प्यम् । एवमादेशपक्षेऽपि स्वराऽभेदो बोध्यः । एतेनाऽनयाः इत्यादिवदुक्थशा इत्यपि निपातनं कार्यमनभिधानं वाश्रयणीयमिति भाष्यतात्पर्यमित्यभियुक्तोक्तिः परास्तेति बोध्यम् ।

स्त्रियां सेति न स्यात् । वस्तुतस्तु अनन्त्यग्रहणं शक्यमकर्तुम् । न चोक्तदोषः,पुनः प्रसङ्गविज्ञाने त्यदाद्यत्वसम्भवात् । सकृद्गताविति पक्षेऽपि "तदोः सः सौ" इत्यस्यानन्तरमदस इति योगं विभज्याऽदस एव दस्य सत्वं नान्यस्य दस्येति व्याख्यातुं शक्यत्वात् । ननु यथान्यासे द्वीयतेः क्विपि स्व इति प्राप्नोति, नियमे तु द्व इति स्यादिति चेत् ? मैवम् । गौणे अत्वसत्वयोरसम्भवेन द्वीरित्यस्यैव न्याय्यत्वात् ।

"ङे प्रथमयोरम्" । ङे इति पृथक्पदं लुप्तषष्ठीकम् । प्रथमाशब्दः प्रथमाद्वितीययोः समुदाये गौण इति व्याचष्टे–ङे इत्यस्येत्यादिना । ङे सुटोरम् इति सुवचम् ।

---

शब्दरत्नम्

उभयोरपीति भावः । असो लाक्षणिकत्वेन "अत्वसन्तस्य" इत्यस्य न प्रवृत्तिः । न च प्रत्ययविशेषापेक्षसत्वापेक्षयाऽन्तरङ्गत्वादत्वे रूपसिद्धयेदं व्यर्थम् । तादृशान्तरङ्गत्वस्य शास्त्रेऽनाश्रयणज्ञापनार्थत्वात् । अत एव भाष्ये ईदृशमन्तरङ्गत्वं न क्वाप्याश्रितम् । पुनः प्रसङ्गेति । कृताकृतप्रसङ्गित्वमात्रेण नित्यतायां सापि सुवचा । शब्दान्तरप्राप्त्याऽनित्यत्वमभ्युपेत्य प्रवृत्तं भाष्योक्तं समाधिमाह—सकृदिति । अनन्त्ययोरित्येतदेव सकृद्गतिन्यायज्ञापकमिति तदाशयः । न्याय्यत्वादिति । वस्तुत एषामनभिधानमेव, एतदाशङ्क्य 'यथालक्षणमप्रयुक्ते' इति भाष्योक्तेः । अस्यार्थश्चाष्टन्शब्दे उक्तः ।

द्विवचनोपपत्तये आह-पृथक्पदमिति । अत्र गौरवं मत्वा प्रकारान्तरमाह-प्रथमाशब्द

भैरवी ।

उभयोरपीति । सामान्यापेक्षस्यान्तरङ्गत्वाभिमानिनः शङ्कान्निराचष्टे—न चेति । तादृशान्तरङ्गत्वस्य-सामान्यापेक्षान्तरङ्गत्वस्य । न्यूनतामपरिहर्तुमाह—कृताऽकृतेति । पूर्वोक्तरीत्या अनित्यत्वेऽप्याह—शब्दान्तरेति । अभ्युपेत्येत्यनेनोक्तस्य कृताकृतप्रसङ्गित्वस्याश्रयणे लाघवमिति दर्शितम् । तदाशयः—भाष्याशयः । कैयटोक्तद्वितीयव्याख्यानुसारेणाह—वस्तुत इति ।

अत्र—पृथक्पदत्वे । गौरवमिति । तदा ङेशब्दादुत्पन्नषष्ठ्या लुक्कल्पना, एकस्य प्रथमाशब्दस्य द्वितीयायां लक्षणाङ्कृत्वा एकशेषस्य कल्पना, ततो द्वन्द्वस्य कल्पनेति गौरवमित्यर्थः । मत्वेति । एतेन प्रथमपक्ष एव भाष्यसम्मत इति ध्वनितम् । तत्र हि "प्रथमयोरित्यु-

भावप्रकाशः ।

अनन्त्यस्येष्टत्वादाह–उभयोरिति । न चेति । इदं विवेचितं पथिन्शब्दे मूले । किञ्च "स्त्रियाम्"इति भाष्येऽप्येवम् । "न यासयोः"इति लिङ्गाश्रयणे त्वनेककल्पनापत्तिरिति कैयटः । एतेनोक्तलिङ्गात्तत्सिद्ध्या मूलं चिन्त्यमिति प्रकाशानुयायिरत्नाकराद्युक्तमपास्तम् । नन्वनन्त्यग्रहणसामर्थ्यात्सकृद्गतिन्यायस्यैवाश्रयणमत आह—कृताऽकृतेति । नित्यतायां शास्त्रेऽङ्गीक्रियमाणायामिति शेषः । साऽपि सुवचा-नित्यताप्यत्वप्रवृत्तौ निमित्तत्वेन वक्तुं शक्या । एवञ्च नित्यत्वेनादावत्वमिति भावः । नन्वेवं भाष्याऽसङ्गतिरत आह—शब्दान्तरेति । अभ्युपेत्येत्यनेन लाघवात्तस्यैवौचित्यं ध्वनितम् । न्यायज्ञापकम्—तन्मात्राश्रयणज्ञापकम् । तदाशयः—भाष्याशयः । कैयटोक्तद्वितीयव्याख्यानानुरोधेनाह—वस्तुत इति । एषाम्—स्वः द्वः द्वीत्येषाम् । एतत्—द्व इति प्राप्नोति स्व इति चेष्यते इत्येतत् । ननु कथमेतावताऽनभिधानमत आह—अस्येति । एतेनोक्तरीत्या शङ्कयित्रा भाष्यकृता कृत्रिमोपसर्जनानामेव सर्वादित्वनिषेधध्वननात् द्व इत्येव न्याय्यमिति मतं सम्यक्, न तु कैयटानुसारिमूलोक्तमिति रत्नाकरोक्तमपास्तम् ।

पदमितीति । तथा चैकशेषेण द्विवचनमेकः प्रथमाशब्दो द्वितीयापर इति भावः । मूले पक्षान्तरत्वबोधकवाचभावादाह—अत्रेति । लुप्तषष्ठीकपृथक्पदत्वे इत्यर्थः । मत्वेति । अनेन तस्यैवौचित्यं ध्वनि-

**अधिकरणत्वविवक्षयेति** । यदि तु शेषे इति विभक्तिविशेषणं स्यात् तर्हि व्यर्थमेव तत् । आत्वयत्वाभ्यां विशेषविहिताभ्यां स्वविषये लोपस्य बाधसम्भवात् । न चैवमन्त्यलोप इति पक्षस्य निरालम्बनत्वापत्तिः । "साम आकम्" इति ससुट्कनिर्देशेन तस्यापि ज्ञापितत्वादिति भावः ।

**युवं वस्त्राणीति** । शेषे लोपः । यत्तु काशिकायामुक्तम्—

पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि ।
यान्यद्विवचनान्यत्र शेषे लोपो विधीयते ॥

इति, तद्भाषापेक्षया । छन्दसि तु प्रथमाद्विवचनमपि शेषे लोपस्य विषय एवेति बोध्यम् । **मपर्यन्तस्य किमिति** । अधिकारसूत्रं किमर्थमिति प्रश्नः ।

**अङ्गकार्ये इति** । एतेन 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति परिभाषा अर्थत उपनिबद्धा । अङ्गे—अङ्गाधिकारे वृत्तं—वर्तनं यस्य तदङ्गवृत्तं—शास्त्रं, तस्मिन् कृते

---

शब्दरत्नम् ।

इति । एवं च तस्यैकत्वान्डेशब्देन समासे द्विवचनमिति भावः । **तस्यापीति** । तस्यैवेत्यर्थः । अन्त्यलोपस्यैवेत्यर्थः । अनेनायमेव पक्षः सूत्रसंमत इति सूचितम् । किं च शेषस्य लोप इत्यर्थे फलाभावः । अन्त्यलोपेऽप्यस्य विभक्तिसन्निपातनिमित्तकत्वात्सन्निपातपरिभाषया बुद्धावित्यत्रेव टापो निवृत्तेः । शेषग्रहणन्तु भाष्ये प्रत्याख्यातमेव ।

भैरवी ।

च्यते, कयोः प्रथमयोः ; विभक्त्योः । वचनयोस्तु न ग्रहणम् "द्वितीयायाश्च" इति लिङ्गात्" इति कथितम् । ननु तस्यापीत्यसङ्गतम् ; एकस्मिन्काले पक्षद्वयाङ्गीकारस्यानुचितत्वादत आह—अन्त्यलोपेति । अपिरेवार्थे इति भावः । ननु शेषग्रहणेन बोधितत्वाट्टिलोपपक्षोऽपि सूत्रकारसम्मत एवेत्यत आह—किञ्चेति । ननु त्वमित्यादौ टाबभाव एव फलमत आह—अन्त्यलोप इति । अस्य—अन्त्यलोपस्य । बुद्धावित्यत्रेवेति । इदञ्च "कृन्मेजन्त" सूत्रभाष्ये स्पष्टम् । तत्र हि सन्निपातपरिभाषायाः प्रयोजनकथनावसरे "शकटौ पद्धतौ अत्वे कृते "अत" इति टाप् प्राप्नोति, सन्निपातलक्षणो विधिरनिमित्तन्तद्विघातस्येति न दोषो भवति" इत्युक्तम् । एतेन "न यासयोः" इति लिङ्गाट्टाब्विषये सन्निपातपरिभाषा न प्रवर्तत इति परास्तम् । तेन निर्देशेनानित्यत्वम्परं ज्ञाप्यतान्तस्याः सर्वथाऽप्रवृत्तिकथनमयुक्तमेव । नन्वेकस्य

भावप्रकाशः ।

तम् । अत एव "प्रथमयोरित्युच्यते कयोः प्रथमयोर्विभक्त्योः, वचनयोस्तु न ग्रहणं "द्वितीयायाञ्च" इति लिङ्गात्" इति भाष्यं सङ्गच्छते । एतेनोक्तज्ञापकेन मूलोक्तद्वितीयपक्षमुक्त्वा पृथक्पदत्वे क्लेशो वचनग्रहणशङ्कापि, एवञ्च मूलमयुक्तमिति मन्दोक्तमपास्तम् । तस्य—समुदायस्य । समासे— द्वन्द्वे । यथाश्रुतमूलासङ्गत्याऽन्यथा व्याचष्टे—अन्त्येति । अपिरेवार्थ इति भावः । तद्रीत्यैवाह—अनेनेति । ननु शेषग्रहणज्ञाप्यत्वात्तस्यापि सूत्रसम्मतत्वमत आह—किञ्चेति । ननु त्वमित्यादौ टाबभाव एव फलमत आह—अन्त्येति । अस्य—अन्त्यलोपस्य । बुद्धाविति । स्पष्टं चेदं "कृन्मेजन्तः" इत्यत्र भाष्ये । एतेन "न यासयोः" इति लिङ्गाट्टाप्विषये न सेति परास्तम् । नन्वेवं शेषग्रहणानर्थक्यं आत्वादिना स्वविषये बाधाद्विभक्तिविशेषणत्वे फलाभावाच्चात आह—शेषेति । ननु विनिगमनाविरहोऽत आह—

सति-प्रवृत्ते सति पुनरन्यस्य प्रवृत्तौ-प्राप्तायामविधिरिति हि तस्या अर्थः । एषा च परिभाषा "ज्यादादीयसः" "ज्ञाजनोर्जा" इति सूत्रद्वयेऽपि ज्ञापितेति भाष्ये स्थितम् । अन्यथा हि ज्यादादिति आकारं न ब्रूयात् । "बहोर्लोप" इत्यतो लोपमेवानुवर्तयेत् । "अकृत्सार्व" इति दीर्घे सिद्धं ज्यायानिति । ज्ञाजनोश्च जं विदध्यात् । "अतो दीर्घो यञि" इति दीर्घो भविष्यतीति । न चैवं द्वाभ्यामित्यत्र

शब्दरत्नम् ।

ससुट्कनिर्देशप्रत्याख्यानापेक्षयाऽस्य प्रत्याख्यानमेव ज्यायः । "त्यदादीनामः" इति सूत्रभाष्योक्तोऽप्ययं पक्षस्तत्रैवाहुरित्युक्त्या बोधितारुचिक इत्यन्यत्र निरूपितम् ।

अन्यस्य—अङ्गवृत्तशास्त्रस्य । दीर्घो भविष्यतीति । जानातीत्यादौ मूलोक्तस्य दीर्घनिर्देशसामर्थ्यान्न ह्रस्व इत्यस्याङ्गवृत्तपरिभाषाज्ञापनद्वारा न ह्रस्व इत्यर्थ इति न तद्विरोधः । नन्वनेन दीर्घे पचामि भो इतिवत् जानामि भो इत्यादावनन्त्यस्याऽपीति प्लुतो न स्यात् । अत आदित्येव सिद्धे तत्रत्यदीर्घग्रहणस्य प्लुतनिवर्तकत्वात् ।

भैरवी ।

प्रत्याख्याने ससुट्कनिदश एव प्रत्याख्यायतामत आह—ज्याय इति । ससुट्कनिर्देशस्य करणे लाघवादस्य ज्यायस्त्वम् । ननु "त्यदादीनामः" इति सूत्रभाष्ये—

'टिलोपष्टाबभावार्थः शेषे लोप इति स्मृतः ।
लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिम्मनीषिणः' ॥ इत्युक्तम् ।

लुप्ते यः शिष्टस्तस्मिन्कार्यस्य टाबभावस्य सिद्धिं तस्य शेष इत्यस्य फलमाहुरित्यर्थः । यदि टिलोपो नैव स्वीक्रियते तदैतद्विरोध इत्यत आह—"त्यदादीनामः" इतीति । बोधितारुचिक इति । एतद्बीजन्तु गौरवरूपमुक्तमेव । अन्यत्र—उद्द्योते ।

ननु यदि जानातीत्यत्र जादेशे कृतेऽपि "अतो दीर्घो यञि" इति दीर्घस्तर्हि जानातीत्यत्र प्वादित्वाद्ध्रस्वत्वमाशङ्क्य दीर्घनिर्देशसामर्थ्यान्न ह्रस्व इत्युक्तन्तद्विरुध्यत इति चेन्न । तस्य ग्रन्थस्याङ्गवृत्तपरिभाषाज्ञापनद्वारा न ह्रस्व इत्यर्थात् । "अतो दीर्घो यञि" इति सूत्रीयग्रन्थविरोधोद्भावनमन्यकृतं स्वमते नास्तीत्येतद्वक्तुमुपक्रमते—नन्विति ।

भावप्रकाशः ।

ससुट्केति । तवममादौ स्थानिवत्त्वेन ह्रस्वत्वात् प्राप्तस्यादेशस्तु यथा न तथा मूले एव स्पष्टम् । अकाररूपत्वविशेषणविधेर्नियमरूपस्य पाश्चात्यत्वेनापूर्वविधिविषयस्यानेकाल्त्वाभावेन शित्त्वं न व्यर्थमिति तद्भावः । मात्रापदप्रतिपत्तिलाघवायाह—ज्याय इति । ननु—

टिलोपष्टाबभावार्थः शेषे लोप इति स्मृतः ।
लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिं मनीषिणः ॥ १ ॥

इति "त्यदादीनामः" इति सूत्रस्थं भाष्यम् । लुप्ते यः शिष्टस्तस्मिन्कार्यस्य–टाबभावस्य सिद्धिः तस्य-शेष इत्यस्य फलमाहुरित्यर्थकं विरुध्येताऽत आह–त्यदादीति । अयं पक्षः–टिलोपपक्षः । अरुचीति । तद्बीजं तु तया तन्निवृत्तिरूपमुक्तमेव । अन्यत्र—उद्द्योतशेखरादौ । एतेन "मपर्यन्तस्य" इत्यस्य ततः परस्येत्यर्थेन टिलोपसिद्धौ शेषपदं त्याज्यम् । अन्त्यस्य तु मूलाद्युक्तरीत्या न । एवञ्चान्त्यलोपपक्षो निर्मूलः । गुरुभूतससुट्कनिर्देशस्य ज्ञापकत्वस्वीकारे फलाभावात् । किञ्च युष्माकमित्यत्र नुट् दुर्वारः । अपवादे निषिद्धे उत्सर्गो नेत्युक्तौ तु अतित्वाकमित्यादौ तदापत्तिर्दुर्वारैवेति मन्दोक्तमपास्तम् ।

अर्थत उपनिबद्धेत्यस्य सिद्ध्यर्थमाह—अङ्गवृत्तेति । "अतो दीर्घो यञि" इति सूत्रस्थस्वग्रन्थविरोधं केनचिदुद्भावितं परिहर्तुमाह—नन्वनेनेत्यादिना । अनेन—"अतो दीर्घः" इत्यनेन । पचामीति । तत्र हि तथा तैः प्रतिपादितमिति भावः । तदभावे तदुक्तं हेतुमाह—अत इति । प्लुतेति । उक्तप्लुतेत्यर्थः । निवर्तकत्वात्—निवर्तकत्वस्य तत्रोक्तत्वात् । ननु तत्र तस्यैवाप्राप्तेः स ग्रन्थोऽयुक्त

त्यदाद्यत्वे कृते "सुपि च" इति दीर्घो न स्यादिति वाच्यम् ? द्वयोरेकस्येत्यादि-

शब्दरत्नम् ।

न चानन्त्यस्य पदस्य च टेरिति तदर्थात्कथं पचामीत्यादौ तत्प्राप्तिरिति वाच्यम् ? दीर्घग्रहणसामर्थ्येनानन्त्यविषय एव तत्सम्बन्धात् । वाक्यद्वयोः क्लृप्तसम्बन्धत्यागे मानाभावात् । तेन वाक्यस्यानन्त्यस्य पदस्य प्लुतः स्यादन्त्यस्य पदस्य च टेरित्यर्थः । तपरकरणेन तु न प्लुतव्यावृत्तिः । प्लुतस्यासिद्धत्वात् । अत एव गीः पूरित्यादौ दीर्घः। अन्यथा तस्यापीदुदिति तपरत्वसामर्थ्यादप्रवृत्त्यापत्तिः । दीर्घग्रहणे तु तत्सामर्थ्यादसिद्धत्वस्यापि बाधः । आकारान्तरप्रश्लेषेण वारणं तु क्लिष्टम् । अस्तु वा तदुपायान्तरमिति चेन्न । उक्तज्ञापकपरभाष्यप्रामाण्यात् प्लुतस्य तत्रानिष्टत्वे वैकल्पिकत्वेनेदृशे विषये प्लुताऽप्रवृत्तेः । "अतो दीर्घः" इत्यत्र दीर्घग्रहणं "हलि लोपः" इति सूत्रे 'हल्यशि' इति वक्तव्ये

भैरवी ।

तत्सम्बन्धादिति । टिसम्बन्धादित्यर्थः । अन्त्यस्य पदस्य टेरनन्त्यस्य पदस्याऽचश्चेत्यर्थादिति भावः । हेत्वन्तरमाह-वाक्येति । क्लृप्तसम्बन्धेति । "वाक्यस्य टेः"इति सूत्रे क्लृप्तसम्बन्धेत्यर्थः । यथा तदत्यागस्तथा दर्शयति—तेनेति । पदस्येति । अच इति शेषः । नन्वात् इति तपरकरणेन प्लुतव्यावृत्तिर्भविष्यतीत्यत आह—तपरकरणेनेति । अत एव-त्रैपादिकस्यासिद्धत्वेन तपरकरणेन तदव्यावृत्तेरेव । दीर्घः-"र्वोरुपधाया" इति दीर्घः । ननु दीर्घविधायकशास्त्रदृष्ट्यापि प्लुतस्यासिद्धत्वात्कथन्तेन तद्व्यावृत्तिरत आह—दीर्घग्रहणे त्विति । क्लिष्टमिति । तत्र तात्पर्यग्राहकाभावेन स्वकल्पनया तथा कल्पनङ्क्लेशकरमित्यर्थः । ननु लाघवमेव तात्पर्यग्राहकम्भविष्यतीत्यत आह—अस्तु वेति । उक्तज्ञापकेति । "ज्ञाजनोर्जा" इति दीर्घनिर्देशस्य ज्ञापकतापरभाष्येत्यर्थः । अन्यथोक्तरीत्या दीर्घग्रहणस्यावश्यकतया ज्ञापकतापरभाष्यविरोधः स्पष्ट एवेति भावः । तत्र—पचामि, जानामीत्यादौ । वैकल्पिकत्वेनेति। तदुक्तम्भाष्ये "सर्वः प्लुतः साहसमनिच्छता विभाषा कर्तव्य" इति । नन्वेवं दीर्घग्रहणस्य वैयर्थ्यं स्यादत आह—"अतो दीर्घः" इत्यत्रेति । अस्य नार्थसाधकमित्यत्रान्वयः । यथा तदनेकपदघटितसूत्रे पदलाघवगौर-

भावप्रकाशः ।

एवेति कुतो विरोध इत्याशयेनाऽऽशङ्कते-न चेति । कथमिति । चा इत्याकारस्याऽटित्वात् । तथा च दीर्घग्रहणेन तन्निवारणमफलमिति भावः । अत एवाह—दीर्घेति । तत्सम्बन्धादिति । टिसम्बन्धादित्यर्थः । अन्त्यस्य पदस्य टेः, अनन्त्यस्य पदस्याटेरपीत्यर्थादिति भावः । हेत्वन्तरमाह—वाक्यद्वयोरिति । "वाक्यस्य टेः" इति सूत्रे तयोः सम्बन्धः क्लृप्तः तत्रत्यक्रमेणैवेदं साधु, अभ्यर्हितत्वाद्वा । यथा तदत्यागस्तथा दर्शयति—तेनेति । पदस्येति । अच इति शेषः । नन्वा इत्येव वाच्ये तपरकरणेन तद्व्यावृत्तिः सुशकेति तदर्थमेवात आह—तपरेति । तत्सामर्थ्यन्तु न, षण्णां ग्रहणेन साफल्यात् । असिद्धत्वादिति । तत्सूत्रदृष्ट्येति भावः । उक्तार्थं द्रढयति—अत एवेति । दीर्घ इति । "र्वोः" इत्यनेनेति भावः । अन्यथा—असिद्धस्यापि तद्व्यावर्त्यत्वे । सामर्थ्यादिति । व्यावृत्ताविति शेषः । नन्वेवं दीर्घग्रहणेनापि तद्व्यावृत्तिस्तदुक्ताऽयुक्तैवात आह—दीर्घेति । अपिना प्लुतसमुच्चयः । क्लिष्टमिति । तात्पर्यग्राहकाभावेन तस्य दुरूहत्वादिति भावः । लाघवस्यैव तात्पर्यग्राहकत्वादाह—अस्तु वेति । उपायान्तरम् । प्लुतव्यावृत्ताविति भावः । तथा च जानामि भो इत्यादौ स न स्यादिति दोषस्तदवस्थ एवेति तात्पर्यम् । उक्तज्ञापकेति । "ज्ञाजनोर्जा" इति दीर्घनिर्देशज्ञापकपरेत्यर्थः । अन्यथा तत्र तत्साधनेन दीर्घोच्चारणसाफल्ये तदसङ्गतिः स्पष्टैवेति भावः । तत्र—पचामि, जानामीत्यादौ । वैकल्पिकेति । योगविभागेन प्लुतमात्रस्य तत्त्वस्य स्थितत्वादिति भावः । नन्वेवं दीर्घग्रहणानर्थक्यमत आह—अत इति । दीर्घग्रहणमित्यस्य नार्थसाधकमित्यत्रान्वयः । तस्य च न मूलोक्तार्थसाधकमित्यर्थः ।

निर्देशेनोक्तपरिभाषाया अनित्यत्वज्ञापनात् ।

यत्तु केचित्—परिनिष्ठितस्येति पठन्ति; द्वाभ्यामिति तु दीर्घं विना न परिनिष्ठितमिति च वदन्ति । तद्भाष्यविरुद्धम् । ज्यायान् , जानाति , ज्ञायते इत्येतेषामपि दीर्घं विनाऽपरिनिष्ठितत्वेन भाष्योक्तज्ञापनस्यापि शिथिलमूलत्वापत्तेः । यदि तु "भ्यसोऽभ्यम्" इति सूत्रे भाष्येऽपि परिनिष्ठितस्येत्येव पाठस्तर्हि वाचनिकतामेवाश्रित्य पक्षान्तरपरतया योज्यः । अनित्यत्वबलफलितार्थकथनं तत् , न तु ज्ञाप्यांशप्रविष्टमिति वाऽस्तु । एवं तु काशिकादिग्रन्थोऽपि कथंचिन्नेतुं शक्य इति दिक् । मकारान्तरमिति । उपलक्षणम् । "जसः शी" इत्यत्र जसः स् इति सकारं प्रश्लिष्य सान्तस्य जस इति व्याख्यानाद् "अतोऽम्" इति सूत्रादम्ग्रहणमनुवर्त्य अम् अमेवेति व्याख्यानाद्वेति बोध्यम् ।

अविभक्तिकमिति । तथा च "ङे प्रथमयोः" इति पूर्वसूत्रेण प्राप्तस्याऽमः प्रतिषेधोऽयमिति भाष्ये शङ्कितम् । न च तथैव किं न स्यादिति वाच्यम् ? स्त्रीनपुंसकयोर्नत्वाप्राप्तेः—युष्मान् ब्राह्मणीः कुलानि वा, अलिङ्गत्वे युष्मान् ब्राह्मणानित्यादेरसिद्धिप्रसङ्गाच्च ।

"योऽचि" ॥ अचि किम् ? युवाभ्याम् । यदि तु "युष्मदस्मदोरनादेशे"

शब्दरत्नम् ।

लोपग्रहणवत्सत्त्वेन नार्थसाधकमिति दिक् । निर्देशेनेति । अन्यथा त्यदाद्यत्वे एत्वं न स्यादिति भावः । वाचनिकत्वे गौरवं ज्ञापकद्वयशैथिल्यं चापरिहृतमित्यत आह—अनित्यत्वबलेति ।

भैरवी ।

वविचार एव मुख्यो, मात्रागौरवन्तु क्वचिदेव दृष्टमित्यर्थबोधकन्तथेदमपि भविष्यतीति भावः । सत्त्वेनेति । दीर्घग्रहणस्येति शेषः । वस्तुतस्त्वत्रत्यन्दीर्घग्रहणस्य ज्ञापकत्वप्रदर्शनपरम्मूलम्भाष्यस्थज्ञापनपरैकदेशिमतानुसारेण । अत एव भाष्ये "पिबतेर्गुणप्रतिषेध उक्तः । स न वक्तव्यो भवति" इत्येव तस्य प्रयोजनमुक्तन्न त्वसाधारणलक्ष्यसिद्धिरूपमिति दिगित्यनेन दर्शितम् । वाचनिकत्व इति । परिनिष्ठितस्येत्यस्येति शेषः । ज्ञाप्यकोटिप्रविष्टत्वे आह—ज्ञापकद्वयेति ।

भावप्रकाशः ।

सत्त्वेन इत्यस्य दीर्घग्रहणस्येति शेषः । अयं भावः, यथाऽनेकपदघटितसूत्रेषु पदलाघवगौरवविचार एव, मात्रालाघवं तु क्वाचित्कमित्यर्थबोधकं तथैवेदमपीति । दीर्घनिर्देशसामर्थ्यान्न ह्रस्व इति क्र्यादिपरममूलोक्तस्य तु अङ्गवृत्तपरिभाषाज्ञापनद्वारा न ह्रस्व इत्यर्थ इति न तद्विरोधः । वस्तुतस्तु, तस्याः परिभाषायाः लक्ष्यासंस्कारकत्वेनोक्तज्ञापकपरभाष्यमेकदेश्युक्तिरित्यत्रत्यं मूलं चिन्त्यमेव । दीर्घग्रहणस्थितिस्तूक्तैवेति तत्रत्यमूलमपि तथैव, सम्यगेव वा तदिति बोध्यम् । तदाह—दिगिति । ज्ञाप्यकोटिप्रविष्टत्वे आह—ज्ञापकेति । चस्त्वर्थे । तत्कोटिप्रविष्टत्वे त्वित्यर्थः ।

सरला ।

दिगिति । तदर्थस्तु "अतो दीर्घो यञि" इति सूत्रस्थदीर्घग्रहणस्य न प्लुतनिवर्तकत्वं, "सुपि च" इत्यत्रानुवृत्त्या चारितार्थ्यात् । न च "अत आत्" इति न्यासेऽपि आत्पदस्यानुवृत्तिरिति वाच्यम् , तदनुवृत्तौ तितउशब्दाण्णिजन्तात्क्विपि टिलोपे णिलोपे च ततो भ्याम्विभक्तौ णिलोपस्य टिलोपस्य वा स्थानिवत्त्वेन "सुपि च" इत्यस्याप्रवृत्त्यापत्तेः । दीर्घग्रहणानुवृत्तौ तु दीर्घे न स्थानिवदिति स्थानिवद्भावनिषेधेन दीर्घप्रवृत्त्या 'तिताभ्याम्' इति रूपसिद्धिरिति ।

इत्यत्र "रायो हलि" इत्यतो हलीत्यनुवर्तते तदा इहाचीति माऽस्तु परिशेषादेव सिद्धेः।

"युष्मदस्मदोः" ॥ हलादाविति। योऽचीत्यज्ग्रहणात्परिशेषात्सिद्धमिदम्। रायो हलीत्यतोऽनुवृत्त्या लब्धं वा। नन्वेवं किमनादेशग्रहणेन न त्वादेशो हलादिरस्ति? मैवम्। भ्यमः सत्त्वात्। अभ्यम्पक्षे तु योऽचीत्यत्रानुवृत्त्यर्थमनादेशग्रहणं बोध्यम्।

पक्षद्वयेऽपीति। न चान्त्यलोपपक्षे पररूपं बाधित्वा सवर्णदीर्घः स्यादकारोच्चारणसामर्थ्यादिति वाच्यम्? एत्वनिवृत्त्याऽकारोच्चारणस्य चरितार्थत्वात्।

"युष्मदस्मद्भ्यां ङसोऽश्" ॥ शित्त्वं सर्वादेशार्थम्। अन्यथा हि "आदेः परस्य" इति स्यात्। न च वैयर्थ्यम्, आदेशव्यपदेशेन यत्वनिवृत्त्यर्थत्वात्।

---

शब्दरत्नम्।

अनुवृत्त्यर्थमिति। स्पष्टमेतद्भाष्येऽन्नैव।

अभ्यमिति च्छेदस्यैव मुख्यत्वं ध्वनयन् शङ्कते—न चेति। अत एव "युष्मदस्मदोः" इति सूत्रे "न चादेशो हलादिरस्ति" इति भाष्यं सङ्गच्छते। एत्वनिवृत्त्येति। अङ्गवृत्तपरिभाषाया अनित्यत्वबोधनद्वारेति भावः। एवं च पररूपेण बाधान्न सवर्णदीर्घ इति तात्पर्यम्।

वैयर्थ्यमिति। अकारस्याऽकारविधिवैयर्थ्येनान्त्यस्यैवाऽकारेऽतो गुणे च सिद्धं तवेत्यादीति व्यर्थमेव शित्त्वमित्यर्थः। न च पररूपबाधनार्थमेवाऽऽदेरत्वविधानं स्यादिति वाच्यम्? विधिबाधापेक्षया "आदेः परस्य" इति परिभाषाबाधस्य न्याय्यत्वात्। आदेशो-

भैरवी।

अभ्यमितिच्छेदस्यैव मुख्यतान्ध्वनयितुमाह—स्पष्टमिति।

अत एव—अभ्यमितिच्छेदस्यैव मुख्यत्वादेव। नन्वङ्गवृत्तपरिभाषया एत्वस्य निवृत्तिः सिद्धेत्यकारोच्चारणसामर्थ्याद्दीर्घः स्यादत आह—अङ्गवृत्तपरिभाषेति—द्वयोरिति निर्देशवदिदमपि तदनित्यत्वे ज्ञापकमिति भावः। एवञ्च—परिभाषाया अनित्यत्वबोधनद्वाराऽकारोच्चारणस्य चरितार्थत्वे च।

वैयर्थ्येनेति। एवञ्च "आदेः परस्य" इत्यस्यानुपस्थितिरित्यत्र तात्पर्यम्। लक्षणैकचक्षुष्कशङ्कां वारयति—न चेति। न्याय्यत्वादिति। गुणे त्वन्याय्यकल्पनेतिपरिभाषाबाधो न्याया-

भावप्रकाशः।

अस्यैव सिद्धान्ततां ध्वनयितुमाह—स्पष्टमिति।

तदुपपत्त्यर्थमेवाह—अभ्यमिति। तत्र प्रमाणमाह—अत एवेति। तच्छेदस्यैव मुख्यत्वादेवेत्यर्थः। ननु परिभाषया तन्निवृत्तौ तदुच्चारणं व्यर्थमिति तत्सामर्थ्याद्दीर्घः स्यादेवात आह—अङ्गेति। द्वयोरित्यादिनिर्देशवदिदमपि तदनित्यत्वे ज्ञापकमिति भावः। एवञ्च। तदनित्यत्वबोधनद्वारा तन्निवृत्त्या तच्चारितार्थ्ये च इत्यर्थः। बाधात्। पुरस्तादपवादन्यायेन।

शित्त्वाभावे ङसो इति न्यासे ङसः अ इति च च्छेदे निर्विभक्तिकनिर्देशे लाघवम्। सविभक्तिकनिर्देशेऽपि शविशिष्टेऽविधेयत्वेन तदत्रमसस्येव तद्बुद्धि निधाय मूलतात्पर्यार्थमाह—अकारस्येति। वैयर्थ्येनेति। तथा च "आदेः" इत्यस्य बाधः। तदाह—अन्त्यस्यैवेति। लक्षणैकचक्षुष्कः शङ्कते—न चेति। तथा च दीर्घेण तवा इत्याद्येव रूपमस्त्विति भावः। न्याय्यत्वादिति। 'गुणे त्वन्याय्यकल्पना' इति

न चावयवस्यादेशे सत्यपि विभक्तेरनादेशताऽस्त्येवेति वाच्यम् ? 'सर्वे सर्वपदा-

शब्दरत्नम् ।

ति । आदेर्विधानेऽप्यादेशत्वसम्पादनेन यत्वनिवृत्त्या शेषे लोपार्थमकारविधानं चरितार्थमिति "आदेः परस्य" इत्यस्य बाधे मानाभावेन सर्वादेशार्थं शित्त्वमिति भावः । न च "योऽचि ङसि" इत्युक्त्यैव यत्वनिरासशेषेलोपौ सिद्धाविति वाच्यम् ? पर्युदासे एकवचनेत्यादिना सादृश्यग्रहणापत्तेः "युष्मदस्मदोः" इत्यात्वस्य प्रासेश्च । हलादाविति हि परिशेषसिद्धाऽर्थस्तत्रेति भावः । अनादेशताऽस्त्येवेति । अनादेश इति हि तत्पुरुषो लाघवात् । एवं च त्वमहमित्यादौ सम्पूर्णविभक्त्यादेशे यत्वाभावसम्पादकमनादेश इति प्रकृते यत्वं स्यादेव ।

नन्वेवमादेरकारस्य विधानं व्यर्थमिति सामर्थ्यादन्त्यस्य स्यात् । तत्र च "अतो

भैरवी ।

नुगृहीत एवेति तात्पर्यम् । शित्त्वस्य यथा चारितार्थ्यन्तम्प्रकारमाह-आदेरित्यादिना । उक्तप्रयोजनान्यथासिद्धिवादिनः शङ्कान्निरस्यति—न च योच्येति । एकवचनेत्यादिनेति । आदिना ङित्त्वपरिग्रहः । एवञ्च युवयोरित्याद्यसिद्धिरिति भावः । प्रसज्यप्रतिषेधपक्षे आह—युष्मदस्मदोरिति । नन्वात्वं हलादि हेतुकमिति कथन्तस्य प्रासिरत आह—हलादावितीति । "योऽचि" इत्यज्ग्रहणपरिशेषसिद्धेः इत्यर्थः । एवञ्च ङसोऽपि परिशिष्टत्वेन तत्राप्यात्वापत्तिरित्ति भावः । यदि तु "युष्मदस्मदोः" इत्यत्र हलीत्यस्यानुवृत्तिरिति स्वीक्रियते तदा "योऽचि" इति सूत्रेऽज्ग्रहणाभावेनैतादृशस्य न्यासस्य करणासम्भव इति बोध्यम् । ननूक्तरीत्या आदेशस्य सत्त्वात्कथमनादेशता इत्यत आह—अनादेश इतीति । तत्पुरुष इति । कर्मघञन्तादेशशब्दस्य नञ्समासः । लाघवादिति । अन्यपदार्थबोधकबहुव्रीह्यपेक्षया वर्तिपदार्थमात्रबोधकत्वेन तत्पुरुषत्वे लाघवादित्यर्थः । एवञ्च-तत्पुरुषत्वे च । प्रकृते-आदिस्थानिकादेशघटिते ।

एवम्—उक्तस्थले कृतेऽप्यादेशे यत्वापत्तौ । आदेरकारस्यविधानम्—"आदेः परस्य" इति शास्त्रैकवाक्यतया आदिस्थानिकाऽकारकर्मकं विधानम् । तत्र—तस्मिन्नन्त्यस्थानिकाऽ-

भावप्रकाशः ।

न्यायादिति भावः । सतात्पर्यमर्थमाह—आदेरिति । आदेशत्वेति । अर्शआद्यजन्तात् त्वः । सादेशत्वेत्यर्थः । अनादेश इति बहुव्रीहिरिति भावः । तेनेत्यादिः शेषः । चरितार्थमितीति । तथा च विसर्गान्तरूपापत्तिरिति भावः । शित्त्वमित्यर्थ इति पाठः । इति भाव इति पाठोपि क्वचित् । इत्युक्त्यैवेति । युष्मदस्मद्भ्यामित्यपूर्वविध्यकरणप्रयुक्तलाघवादिति भावः । निर्विसर्गसूत्रानुकरणे तु द्वन्द्वादाह–शेषे लोपाविति । तत्सूत्रप्रवृत्तिरित्यर्थः । सिद्धाविति । तथा चाऽपूर्वविधिसामर्थ्यादुक्तरीत्या तवेत्यादिसिद्धिरिति शित्त्वं व्यर्थमिति भावः । आदिना ङित्त्वपरिग्रहः । तथा च युवयोरित्यादि न स्यादिति भावः । आपत्तेरिति । तेनापि तस्य सम्भवादिति भावः । प्रसज्यप्रतिषेधे आह—युष्मदिति । तथा चाशेषत्वेन लोपासिद्ध्या तदर्थमादेरत्वविधानमिति परिभाषाबाधे मानाभावेन सर्वादेशार्थं शित्त्वमावश्यकमिति भावः । ननु हलादिहेतुकाऽऽत्वस्य कथं प्रासिरत आह–हलादावितीति । परिशेषेति । "योऽचि" इत्यज्ग्रहणपरिशेषेत्यर्थः । तथा च ङसोपि परिशिष्टत्वेन तत्राप्यात्वं दुर्वारमिति भावः । तत्र हलीत्यनुवृत्तौ तु अज्ग्रहणाभावेनेदृशन्यासस्य दुर्वचत्वमिति बोध्यम् । ननूक्तरीत्या सादेशत्वे कथं तत्त्वमत आह–अनादेश इतीति । तत्पुरुष इति । कर्मघञन्तादेशपदेन नञ्समास इत्यर्थः । लाघवात्—अन्यपदार्थबोधकबहुव्रीह्यपेक्षया वर्तिपदार्थमात्रबोधकत्वेन तस्य सत्त्वात् । अन्यथाऽनादेशायामित्यस्यैव सूत्रे न्याय्यत्वम् , विभक्तावित्यस्यैव प्रकृतत्वादिति भावः । एवञ्चेति । तस्य तत्पुरुषत्वे चेत्यर्थः । इतीति । इति पदमिति हेतोरित्यर्थः । मुख्ये चारितार्थ्येन गौणग्रहणे मानाभावादिति भावः ।

एवम् । यत्वापत्तावेव । आदेरिति । तत्स्थानिकाऽकारकर्मकविधानमित्यर्थः । सामर्थ्यादित्यस्य तदित्यादिः । तत्र चेति । तस्मिन्नकारे परत इत्यर्थः । एकदेशविकृतन्यायलब्धविभक्तित्वस्य स्थानिवत्त्वे-

देशा' इति सिद्धान्तात् । इदमेव शित्वं ज्ञापयति 'सर्वे सर्वपदादेशा' इति । अर्थवत्येव स्थान्यादेशभावविश्रान्तिरित्यर्थः । सिच्ङादयस्तु वचनसामर्थ्यादनर्थकस्यापि बोध्याः ।

इदं त्ववधेयम् । अन्त्यलोपपक्षे अशः स्यादेशः प्राप्तोऽङ्गवृत्तपरिभाषया वारणीयः । यदि त्वङ्गस्य यत्कार्यं तद्विषयिण्येव सा परिभाषा, न त्वङ्गाधिकारमा-

शब्दरत्नम् ।

गुणे" इति पररूपे आदेशरूपविभक्तित्वमिति यत्वाऽप्राप्तिः । न च वार्णादाङ्गमिति परिभाषया पररूपात्पूर्वं यत्वप्राप्तिरिति वाच्यम् ? वार्णाङ्गयोरेकस्थानिकत्वे एव धर्मिग्राहकमानेन तत्प्राप्तेरिति चेन्न । "युष्मदस्मदोरनादेशे" इत्यत्र प्रत्यासत्त्या युष्मदादिग्रहणेन विहिताऽऽदेशरूपविभक्तेरेव ग्रहणेनाऽन्त्यादेशे पररूपेऽपि तादृशविभक्तेरभावेन यत्वापत्तेर्दुर्वारत्वात् । पररूपादेशस्तु न तथेति भावः । सर्वे सर्वेति । स्पष्टं चेदं भाष्ये । एवं चाऽकारविधानेऽपि यत्वव्यावृत्त्या तस्य चारितार्थ्येन "आदेः परस्य" इत्येतद्भावे मानाभावेन सर्वादेशार्थं शित्वं सार्थकमिति भावः । अत्र पदशब्देनार्थवद्गृह्यत इत्याह–अर्थवत्येवेति । अर्थवत्त्वं च कल्पितमेव गृह्यते । एतेन कृत्वा इत्यस्य कृत्य इत्यादेशे प्रकृतिप्रत्ययसम्मोहे "ह्रस्वस्य" इति तुक् न स्यादित्यपास्तम् । सिजादीनां कल्पितोऽप्यर्थो नास्तीत्यत आह—सिच्ङादय इति । द्योत्यार्थेन सोऽप्यर्थवानित्यन्ये ॥

भैरवी ।

कारे । पररूप इति । प्रत्ययावयवमात्रसम्बन्धिवर्णापेक्षत्वेनान्तरङ्गत्वात्कृत इति शेषः । अन्तरङ्गपरिभाषाबाधकपरिभाषाभ्यां यत्केनचित्कृतं समाधानन्तन्निरस्यति—न चेति । एकस्थानिकत्वे—अङ्गसम्बन्धिन्याङ्गे । अत्रैकस्थानिकत्वे एवेत्युपादानमेकनिमित्तक त्ववादिमतनिरासाय । धर्मिग्राहकेति । धर्मी–'वार्णादाङ्गं बलीय' इति परिभाषाबोध्यार्थः । तद्ग्राहकेति—तज्ज्ञापकेत्यर्थः । यदि समाननिमित्तकत्वं परिभाषाप्रवृत्तौ नियामकं स्यात्तदा इयायेत्यादावुभयोस्समाननिमित्तकत्वाभावेन परिभाषाया अप्रवृत्तौ सम्पूर्णसूत्रस्य चारितार्थ्यन्दुरुपपादमिति भावः । तत्प्राप्तेः—परिभाषायाः प्राप्तेः । युष्मदादिग्रहणेन । युष्मदादिशब्दमुच्चार्य । न तथेति । न युष्मदादिशब्दोच्चारणेन विहितादेशरूपविभक्तिरूप इत्यर्थः । एवञ्च—उक्तसिद्धान्ताङ्गीकारे च । अत्र—उक्तपद्ये । अर्थवद्गृह्यत इति । पद्यते गम्यतेऽर्थोऽनेनेति व्युत्पत्तेरिति भावः । एतेनेति । कल्पितार्थवत्त्वस्य ग्रहणेन क्त्वाप्रत्ययस्यापि भावाभिधायकतया तस्य यादेशे स्थानिवद्भावेन कृत्त्वात्तुकः सिद्धिरिति भावः । ननूक्तपदशब्दार्थाभिन्नश्चिल्लनास्तीति तस्य सिजादयो न स्युरित्यत आह—सिजादीनामिति । सोऽपि—

भावप्रकाशः ।

नाऽऽदेशे लाभादाह–आदेशेति । यत्वाप्राप्तिरिति । तथा च तच्छङ्कापरभाष्यादिग्रन्था अयुक्ता एवेति भावः । मान्योक्तयुक्तिं निराचष्टे–न चेति । एकस्थानिकत्वे एवेति । एतेन समाननिमित्तकत्वरूपसमानाश्रये सेत्यपास्तम् । ज्ञापितेपीयायेत्याद्यसिद्ध्यापत्तेः । धर्मिग्राहकेति । धर्मी–परिभाषा तद्ग्राहकम्सवर्णग्रहणं सम्पूर्णसूत्रं वा । तत्प्राप्तेः–परिभाषाप्राप्तेः । ग्रहणेन । तत्पदमुच्चार्य । अन्त्येति । आदेर्वैयर्थ्यादित्यादिः । न तथेति । न तत्पदमुच्चार्यविहितादेशरूपविभक्तिरूप इत्यर्थः । तुह्यर्थे । तथा च वैयर्थ्यमिति प्रतीकोक्तरीत्या शित्वं व्यर्थमेवेति भावः । पूर्ववदाह–स्पष्टमिति । एवञ्च–उक्तसिद्धान्ताङ्गीकारे च । आदेरिति शेषः । विवरणविध्रियमाणयोर्विरोधादाह—अत्रेति । पद्ये इत्यर्थः । पद्यते गम्यतेऽर्थोऽनेनेति व्युत्पत्तेरिति भावः । कल्पितमेवेति । प्रक्रियायां पाणिनिशास्त्रबोधितमेवेत्यर्थः । न्यायस्य प्रक्रियायामेवोपयुक्तत्वात् । दाक्षीपुत्रस्य पाणिनेरिति वाक्यशेषाच्च । तत्फलमाह–एतेनेति । कल्पितार्थवत्त्वमात्रग्रहणेन क्त्वामात्रस्य तत्र सत्त्वेन तस्य यादेशेन तुकः सिद्धत्वेनेत्यर्थः । सोऽपि । सिजादिरपीत्यर्थः । अन्ये—

त्रपरेति दुराग्रहस्तर्हि अशित्यत्र "अतो गुणे" इति पररूपेणाऽकारान्तरं प्रश्लिष्याऽकाररूप एव अश् भवति, न विक्रियते इति व्याख्येयम् । यत्तु स्यादेशस्यापवादोऽशिति; तन्न, अशादेशप्रवृत्तिकाले शेषे लोपाभावेन स्यादेशस्याप्रसक्तेः॥

भाविन इति । कृते हि शेषे लोपेऽकारान्तत्वात् प्राप्तः सुट् ससुट्कस्य स्थानित्वेन निर्देशसामर्थ्यान्निवर्तत इति भावः । शेषे लोपष्टिलोप इति पक्षे तु

शब्दरत्नम् ।

दुराग्रहइति । "ज्यादादीयसः" इत्यस्य ज्ञापकत्वपरभाष्यविरोधादस्य दुराग्रहत्वम् ॥

अकारान्तत्वात् प्राप्त इति । ससुट्कनिर्देशाभाव इति शेषः । निर्देशसामर्थ्यादिति । अयं भावः-सामः प्रसङ्गे आकमिति सूत्रार्थः । तेन आम्सकारयोरत्र विषयेऽत्यन्तमप्रयोगो बोध्यते । स्थान्यादेशभावविषये सर्वत्रैवमेव । यथाऽऽर्धधातुकविषयेऽस्तेरप्रयोगो भुवः प्रयोगश्च "अस्तेर्भूः" इत्यनेन प्रतिपाद्यते, न तु सतो निवृत्तिः । शब्दानित्यत्वप्रसङ्गात् । किन्तु प्रसक्तबुद्धेरेव निवृत्तिः । तत्र सकारबुद्धेः प्रकृते साम्प्रतिक्या असम्भवाद्भाविन्या ग्रहणं सकारोच्चारणसामर्थ्यादिति भाष्ये स्पष्टम् । तन्निवृ-

भैरवी ।

त्तिलरपि । एवञ्च मूलञ्चिन्त्यमिति भावः । इत्यस्य—इत्याकारविधानस्य । भाष्यविरोधादिति । ज्यायानित्यत्रेयस आदेर्लोपे प्रकृते दीर्घे सति व्यर्थं यदाकारविधानन्तस्य स्वविषये चारितार्थ्यन्न स्यात् । लोपदीर्घयोरङ्गसम्बन्धित्वाभावेन परिभाषायास्तत्र प्रवृत्तिर्न स्यादिति परिभाषाज्ञापकत्वपरभाष्यविरोधः स्पष्ट एवेति भावः ।

ननु ससुट्कस्य स्थानित्वेन निर्देशसामर्थ्यादित्यनुपपन्नं वक्ष्यमाणरीत्या गौणव्यावर्तकत्वेन ससुट्कनिर्देशस्य चारितार्थ्यादत आह-अयम्भाव इति । इति सूत्रार्थ इति । भाष्यकारीयसिद्धान्तरीत्या इति सूत्रार्थः । तेन-प्रसज्यमानतादृशसमुदायस्य स्थानित्वकल्पनेन । न केवलमत्रैवेयं रीतिः, किन्तु स्थान्यादेशभावविषये सर्वत्रेत्याशयम्प्रकटयति-यथेत्यादिना । अत्र "इको यणचि" इत्यस्यैव दृष्टान्तत्वेनोपादाने कर्तव्ये आर्द्धधातुकाधिकारीयादेशस्य प्रदर्शनं समुदायादेशत्वेनाष्टाध्यायीपाठेन च पुरःस्फूर्तिकयेति बोध्यम् । न तु सतो निवृत्तिरिति । आदेशेन विद्यमानस्य स्थानिनो निवृत्तिर्नेत्यर्थः । प्रसङ्गादिति । निवृत्तेर्ध्वंसरूपतया विद्यमानस्य ध्वंसकल्पने घटादिपदार्थवदनित्यत्वापत्तरिति भावः । प्रसक्तबुद्धेरिति । स्थानित्वेनाभिप्रेतस्येत्यादिः । एवञ्च बुद्धिनिष्ठनिवर्त्यनिवर्तकभावस्य बुद्धिविषये आरोपः सर्वत्र कल्प्य इति भावः । प्रकृतार्थमाह—तत्रेति । बुद्धिद्वयमध्ये इत्यर्थः । नन्वेवमपि कथम्प्रकृते तद्बुद्धिनिवृ-

भावप्रकाशः ।

मान्यप्रभृतयः । तथा च मूलं चिन्त्यमिति भावः । इत्यस्येति । इत्याकारस्येत्यर्थः । तत् इति शेषः । ज्यायानित्यत्र प्रकृते दीर्घेपि प्रत्ययस्येकारलोपो नाङ्गकार्यमिति तद्विरोध इति भावः ।

ससुट्कनिर्देशे वक्ष्यमाणरीत्या कथमप्यप्राप्तेराह-ससुट्केति । तत्सामर्थ्यात्तन्निवृत्तिप्रकारस्य मूलानुक्तस्यायुक्तत्वस्य वक्ष्यमाणत्वाद्भाष्योक्तं सिद्धान्तमाह—अयम्भाव इत्यादिना । शब्दार्थमुक्त्वा तात्पर्यार्थमाह-तेनेति । सूत्रेणेत्यर्थः । अत्र विषये-आकम्विषये । न केवलमत्रैवेत्थं किन्त्वन्यत्रापीति । प्रसङ्गादाह—स्थान्यादेशेति । सर्वं नाम धातुजमितिरीत्या सूत्रपाठे प्राथम्याच्च । दिग्प्रदर्शनार्थमुदाहरणमाह—यथेति । एतेन "इको यणचि" इत्यस्य त्यागे बीजं चिन्त्यमित्यपास्तम् । ननु सर्वत्र किमित्येवमङ्गीकारोऽन्यथापि गतिसम्भवादत आह—न त्विति । सतो निवृत्तिस्तु नेत्यर्थः । नन्वेवं स्थान्यादेशव्यवहारो न स्यात् निवर्त्यनिवर्तकत्वाभावादत आह-किन्त्विति । तथा च यद्बुद्धेर्यद्बुद्धिनिवर्तकत्वं तयोरपि तत्त्वमारोपेणाविरुद्धमिति भावः । प्रकृतमाह—तत्रेति । द्वयोर्बुद्ध्योर्मध्ये इत्यर्थः ।

अतित्वाकमतिमाकमिति। यत्तु वदन्ति "साम आकम्" इत्यत्र यद्यपि सुड्ग्रहणं न स्थानिविशेषणं, बाधात् ; तथाऽपि उपलक्षणं भवति। तेन यस्याम: सुडग्रे भावी तस्यैव आम आकमा भवितव्यम्। न चैतद् गौणत्वे सम्भवति इत्याकम् न प्रवर्त्तते। न च समुदायनिर्देशे विशेषणत्वमुपलक्षणत्वं वा विहाय तृतीयः प्रकारोऽस्ति। न च सुडामोः पृथक् स्थानित्वमिह निर्दिश्यते। चशब्दस्य द्विवचनस्य च अभावात्। यदि तु स् च आम् चेति समाहारद्वन्द्वो व्याख्यायेत, योग्यताबलाच्च स्शब्देन सुडेव गृह्येत, तथापि यदि सुड्ग्रहणमन्वाचयशिष्टं ततः समासो न स्यात्। अन्यत्र तु साहित्यविवक्षया केवलस्यामोऽप्रसक्तेरिति।

अत्रेदं वक्तव्यम्। यस्यामः सुडग्रे भावीत्यादि तावद् बाधितम्। आकमाऽपहृतस्य सुडन्वयाभावात्। आकमः सुड् भवतीति चेत्? तर्हि तमेवोपल-

शब्दरत्नम्।

थ्यादेव तद्बाधादिति। 'उभयगतिरिह शास्त्रे भवति' इति संख्यासंज्ञासूत्रस्थभाष्योक्तेश्चेति तत्त्वम्। अन्यथा द्वयोरेकस्मिन्नित्युक्त्यैव युष्मदादिविशेषणतया सिद्धे वचनग्रहणसार्थक्यं दुरुपपादमिति बोध्यम्।

बाधादिति। आकमुत्पत्तिकालेऽन्त्यलोपाभावेन सुटोऽसत्त्वादिति भावः। न चैतद्गौणत्वे इति। सर्वनामत्वाभावादिति भावः। योग्यताबलाच्चेति। आम्समभिव्याहारे युष्मदस्मद्भ्यां तस्यैव सम्भवादिति भावः।

भैरवी।

वाच्यम्? यत्र सङ्ख्याविशेषणभाने साधकाभावस्तत्रैव तथा। इह तु सङ्ख्याभासकस्यादेशस्य तदभावस्य वा सत्त्वात्सा भासत एवेति विशेषात्। यत्तु द्वयोरेकस्मिन्नित्युक्ते सन्निहितत्वात्तयोर्युष्मदादिविशेषणत्वापत्तिरतो वचनग्रहणम्। तथा च कृत्रिमयोरेव ग्रहणमिति विपरीतमपि सम्भाव्यत इति मूलोक्तञ्चिन्त्यमितिमतं तत्खण्डयितुमाह—उभयगतिरिहेति। अन्यथा—उक्तप्रकाराऽनङ्गीकारे मूलोक्तस्यैवादरे। युष्मदादिविशेषणत्वञ्चोक्तभाष्याद्वचनग्रहणसत्त्वेऽपि, न तु तदन्तविशेषणत्वमिति बोध्यम्।

मूले—न स्थानिविशेषणमिति। तदा हि सुट्साहित्यावच्छिन्नस्योद्देश्यत्वं स्यात्तथा चोद्देश्याप्रसिद्धिः स्यादिति। तात्पर्यमाह—बाधादिति। बाधमुपपादयति—आकमिति। द्वन्द्वनिर्देशरूपतृतीयप्रकारसत्त्वशङ्कान्निराचष्टे—मूले-न च सुडामोरिति। योग्यताबलादिति। साहित्यान्वययोग्यताबलादित्यर्थः। तां योग्यतामुपपादयति—आम्समभिव्याहार इति। युष्मदस्मद्भ्यामिति। परस्येति शेषः।

भावप्रकाशः।

तम्। यत्तु रत्नाकरकृत्, वचनग्रहणाभावे द्वित्वे इत्याद्युक्ते सन्निहिततरत्वेन युष्मदादिविशेषणत्वापत्तिरतस्तन्निरासाय वचनपदम्। तत्र सति कृत्रिमत्वेन सङ्केतितावेव तौ गृह्येते इति वैपरीत्यस्यापि सुवचत्वान्मूलं चिन्त्यमिति तत्खण्डयितुमाह—उभयेति। अस्य प्रकारस्याऽऽवश्यकतां ध्वनयन्नाह-अन्यथेति। मूलोक्तस्यैवाङ्गीकारे। युष्मदादीति। सिद्धान्तेऽप्युक्तभाष्यप्रामाण्याद् गृह्यमाणस्यैव तद्विशेषणं न तदन्तस्य, तत्र तु तदन्तविधिना सिद्धमिति भावः।

असत्त्वादिति। विशेषणत्वस्य तन्मात्रवृत्तित्वादिति भावः। अभावादिति। 'संज्ञोपसर्जनीभूता' इति निषेधादिति भावः। अस्मद्भ्यामिति। परस्येति शेषः।

क्षयेत् । आदेशद्वारकेण परम्परासम्बन्धेन स्थानिनमुपलक्षयति चेत्? हन्तैवं युष्माकमित्यादौ सुट् श्रूयेत । साम इति निर्देशसामर्थ्यान्न श्रूयते इति चेन्न । निर्देशस्य गौणव्यावृत्त्या चरितार्थत्वेन सामर्थ्याभावात् । यदपि समाहारद्वन्द्वं प्रक्रम्यान्वाचयशिष्टत्वे दूषणाभिधानं, तदप्यसम्भवदुक्तिकम् । साहित्यविवक्षया केवलस्याप्रसक्तिरिति परमवशिष्यते । तदपि न । प्रक्रियादशायां स्थितस्याऽऽम उत्तरकालभावित्वेनोत्प्रेक्षितस्य सुटश्चैकबुद्ध्युपारोहेणैव साहित्याभ्युपगमात् । अतीताऽनागतयोरयं द्रष्टेतिवत् । तत्रोभयोरेकस्मिन् दर्शने सम्बन्ध इति चेदिहाप्येकस्मिन्नादेशे इति तुल्यम् । तथा च इरयोः इति सूत्रे दध्रे इत्यादौ धात्वो झस्य इरेचि आतो लोपे रेभावे तस्य कृसृभृ प्रभृतिषु चरितार्थतया इटि कृते "इरयोः" इति द्विवचननिर्देशाल्लाक्षणिकस्याऽपि रेभावः पुनः क्रियते इति स्थितमाकरे । इरयोरित्येकशेषः । साम इति तु द्वन्द्वः । सहविवक्षा तूभयत्र तुल्यैव ।

---

शब्दरत्नम् ।

**साहित्याभ्युपगमादिति** । समूहाभ्युपगमादित्यर्थः । **कृस्निति** । तेभ्यो लिट इण्निषेधादिति भावः । **उभयत्र तुल्यैवेति** । एवञ्च पूर्वमाम आकमि ततः सुटि तद्विशिष्टस्य पुनराकम् सुखत्रे । गौणत्वे त्वाम एव । सूत्रे सकारग्रहणं तु सुड्विशिष्टपरमिति भावः ।

एवं परोक्तसमाहारद्वन्द्वेऽपि गौणे आकममुपपाद्य स्पदस्य सुड्विशिष्टे लक्षणामसहमानैस्तदीयैरन्यैरुक्तं प्रकारान्तरमपि 'स्वरूपव्याक्रियैव पराक्रिया' इति न्यायेन

भैरवी ।

साहित्यं यदि सहितधर्मस्तदा सहितपदार्थाप्रसिद्ध्या तद्धर्माप्रसिद्धिरत आह—समूहेति । प्रसादकारोक्तद्वन्द्वपक्षे । समाहारद्वन्द्वपक्षे प्रक्रान्तदोषं खण्डयित्वा मूलतात्पर्यमाह—एवञ्चेति । उक्तरीत्या समाहारद्वन्द्वाङ्गीकारे च । तत इति । स्थानिवद्भावेनेति शेषः । ननु पुनराकमादेशः सकारमात्रस्यैव स्यान्न तु तद्विशिष्टस्य साधकाभावादत आह-सकारग्रहणमिति ।

एवमिति । उक्तरीत्येत्यर्थः । तदीयैः—समाहारद्वन्द्वाङ्गीकर्तृसम्बन्धिभिः । मूले—तन्त्रेणेति । न तु साम इति द्वन्द्वः । तथा सति स्थानिभेदादादेशद्वयापत्तेः । तथा पूर्वपरयोरिति,

भावप्रकाशः ।

साहित्यस्य सहितधर्मत्वेनाऽऽम्सुड्भ्यामनन्वयवारणायाह—समूहेति । एवं प्रकाशखण्डितसमाहारद्वन्द्वपक्षसमर्थकं मूलतात्पर्यार्थमाह—एवञ्चेति । उक्तरीत्या द्वन्द्वाङ्गीकारे चेत्यर्थः । तत इति । स्थानिवत्त्वेनाऽऽम्त्वादिति भावः । ननु पुनः प्रवृत्तावपि सकारस्यैव स्यान्न तद्विशिष्टस्य तद्ग्रहणे मानाभावादत आह—सूत्रे इति ।

यद्यपि, ननु साम इति न द्वन्द्वः, तथा सति स्थान्यनेकत्वे आदेशद्वयापत्तेः । अत एव "एकः पूर्वपरयोः" इत्येकग्रहणं सफलम् । किञ्च सन्नियोगशिष्टन्यायेन गौणे आकमोऽभावापत्तेः । अपि च सुट आगमत्वेन "दीधीवेवीटाम्" इत्यादाविव परनिपातापत्तेः । समासान्तरे तु सामिति समूहस्याऽऽकमित्यर्थापत्तौ सूत्रं व्यर्थमेव स्यादत आह—वस्त्वित्वति । अत्र च मानं सनिर्देश एव । एतेन तन्त्रेण निर्देशे तत्सामर्थ्यात्ससुट्कस्यादेशलाभे तन्निर्देशो व्यर्थ इत्यपास्तमिति मान्यैर्व्याख्यातं, तथाऽपि नाऽयुक्तं तत् । एतादृशतन्त्रस्य शास्त्रेऽप्रसिद्धत्वात् । न हि साम्शब्दस्याम्शब्दोपि वाच्यः । तुल्यन्यायतया नाम्शब्देप्याम उपस्थितौ चर्मणामित्यत्र "नोपधायाः" इति दीर्घापत्तेराम्विधावयतेरासेश्च ग्रहणवैफल्यापत्तेरिति रत्नाकरोक्तिं खण्डयितुं मूलमन्यथा योजयति—**एवं परोक्तेत्यादिना** । परः—प्रकाशकृत् । असहमानत्वं

वस्तुतस्तु "साम आकम्" इति सूत्रे केवलोऽप्याम् तन्त्रेण निर्दिष्टः। तस्याऽऽकमि स्थानिवद्भावेनाम्त्वात् ससुट्कत्वाच्च "साम" इति प्रवर्तते। गौणत्वे तु प्रथमप्रवृत्त्यैव पर्यवसानम्। अत एव शेषे लोपष्टिलोप इति पक्षेण सह फलैक्यमपि सिद्ध्यति।

शब्दरत्नम्।

दुष्टमिति बोधयन्ननुवदति—वस्तुत इत्यादिना। फलैक्यमिति। तत्पक्षेऽपि प्रथमप्रवृत्त्यैव पर्यवसानादिति भावः। सिद्ध्यतीति। अस्य एवं त्वदीयैरुक्तमिति शेषः। एतेन साम्पदस्याऽऽम्पदेन न तन्त्रमसारूप्यात्। सारूप्यस्यैव तद्बीजतया हर्यादिभिरुक्तेः। पूर्वं तन्त्रं कृत्वा ततः सुपदेन समासे उभयोरपि तत्सम्बन्धबोधापत्तिः। किञ्चैवमपि गौणे नुट् वारयितुमशक्यः। न चाऽऽमा सहितस्यामश्चाकमित्यर्थः। गौणे नुटि तत्सहितस्याप्याक

भैरवी।

द्विवचननिर्देशादादेशद्वयवारणाय "एकः पूर्वपरयोः" इत्यत्रैकग्रहणङ्कृतमिति 'सन्नियोगशिष्ट'न्यायेन गौणे आकमभावापत्तेश्च। यदि तु सुत्सहित आम् सामिति मध्यमपदलोपिसमासाङ्गीकारस्तदा सूत्रस्यैव स्थान्यलाभाद्वैयर्थ्यापत्तौ लक्ष्यासिद्धिरेव स्यादिति भावः। दुष्टमिति। अयम्भावः—एवंविधद्वन्द्वपक्ष एतादृशतन्त्रस्य शास्त्रे प्रसिद्धिसत्त्वे उपपादयितुं शक्यः। स एव तु नास्ति, तन्त्रस्वीकारो हि यत्रोपात्तशब्दस्य तदर्थाभिधायकता तत्र सम्भवति। न हि साम्शब्दस्याम् शब्दोऽपि वाच्यः, तथा सति नाम्शब्दोऽपि केवलामो बोधकः स्यादिति चर्मणामित्यत्र "नोपधायाः" इति दीर्घापत्तिः स्यादिति। मूले-अत एव—तन्त्रनिर्देशाङ्गीकारादेव। सिध्यतीति। अन्यथा टिलोपपक्षे सुटः सर्वथाऽसम्भवित्वेनाकमनापत्तौ फलभेदः स्पष्ट एवेति भावः। एवञ्च टिलोपपक्षे यथा न फलभेदस्तथाह—तत्पक्षेऽपीति। सिध्यतीत्येवमभिधानेन तस्य व्याख्यानस्याऽस्वाभिमतत्वमेवेति भ्रमनिवृत्तये आह—सिध्यतीत्यस्येति। त्वदीयैरिति। अनेन स्वानभिमतत्वन्दर्शितम्। एतेन—त्वदीयैरिति कथनेन। पूर्वन्तन्त्रङ्कृत्वा—आम्पदमात्रे तन्त्रं कृत्वा। ततः समासे—सुपदेन समासे। तत्सम्बन्ध इति। सुट् सम्बन्ध इत्यर्थः। आपत्तिरिति। तथा च सूत्रा [illegible] ङ्गतिरेव स्यात्। तुष्यतु दुर्जनन्यायेनैकत्रैव तत्सम्बन्धाभ्युपगमेप्याह—किञ्चेति। एवमपि—एकत्रैव तत्सम्बन्धाभ्युपगमेऽपि। गौणे—अतित्वाकमित्यादौ। अशक्य इति। केवलस्याऽऽमः स्थानित्वेनाकमादेशेऽपि स्थानिवत्त्वेनाम्त्वान्नुटः प्राप्तेरिति भावः। गौणे नुड्वारणाय परोहितकल्पनान्निरसितुमाह—न चेत्यादिना। आमा सहितो वर्तत इति साम् इति "तेन सहेति तुल्ययोगे"

भावप्रकाशः।

प्रकारान्तरोक्तौ हेतुः। तत्पक्षेऽपीति। अपिरत्वर्थे। यद्वा अन्त्यलोपपक्षसमुच्चायकः सः मुख्येऽपीति शेषः। यथा तत्पक्षे मुख्ये गौणे च प्रथमप्रवृत्त्यैव पर्यवसानं तथाऽत्र पक्षे गौणे, मुख्ये तु पुनः प्रवृत्तिरित्यर्थः। अन्यथा तत्पक्षे तदश्रवणेनाऽत्र पक्षे एवं व्याख्यानाभावेन तच्छ्रवणे फलभेदापत्तिः स्पष्टैवेति भावः। अनुवादसूचकाभावेन कथं तदीयत्वमत आह-एवमिति। रत्नाकराद्युक्तिं खण्डयति-एतेनेति। समासे। शाकपार्थिवादित्वात्। आपत्तिरिति। तथा च सूत्रासङ्गतिरिति भावः। तुष्यतु दुर्जनन्यायेन व्याख्यानादेकत्रैव सम्बन्धाभ्युपगमेप्याह—किं चेति। एवमपि—एकत्रैव तत्सम्बन्धाङ्गीकारेऽपि। गौणे—अतिरवाकमित्यादौ। एतेन समाहारद्वन्द्वपक्षेऽपि साहित्याऽविवक्षया प्रत्येकमुभयोः स्थानित्वावगमात्तत्काले सुटोऽसन्निधानेऽपि रोपधयोरितिवन्निवृत्तिः। स् इति लुप्तषष्ठीकं पृथक्पदमिति पक्षेपीत्थम्। यद्वा साम इति लिङ्गेनाऽऽम आकमिति लक्षणान्तरमनुमीयते। अग्रे मूलोक्तवदिति रत्नाकरोक्तमपास्तम्। तत्रैव पक्षे नुड्वारणाय शङ्कते—न चेति। साम इति सपुत्र इतिवत्तेन सहेति बहुव्रीहिः। तत्सहितस्य। आम्सहितस्य नुट इत्यर्थः। गौणमुख्ययोराम आकमि ततो नुट्सुट्सहितयोः पुनः स इति

सर्वथाऽपि अतित्वयामतिमयामिति कैश्चिदुत्प्रेक्षितं समर्थयितुं नाभिनिवेष्टव्यम् । अतित्वाकमतिमाकमित्यादेर्भाष्यकृतैवोदाहृतत्वादिति दिक् ॥

षष्ठ्यादिविशिष्टयोरिति ॥ एतच्च सर्वस्य "पदस्य" इत्यधिकाराल्लभ्यते ।

---

शब्दरत्नम्

मिति वाच्यम् ? प्रथमप्रवृत्त्यैवेत्यादेरसङ्गत्यापत्तेः, तन्त्रे एवमर्थस्य निरूपयितुमशक्यत्वाच्चेति वस्तुतस्त्वित्याद्युक्तिरसङ्गतेत्यपास्तम् । अस्यापि ग्रन्थस्य परमतानुवादत्वेन दुष्टत्वेऽप्यदोषात् । तदनुवादफलं च तेषां परस्परविरोधप्रदर्शनम् । तदेतत्सकलं ध्वनयन् परमतदूषणमुपसंहरति—सर्वथेति । अत्र नुटो निवृत्तिस्तु पूर्वमुपपादितेति दिक् ।

ननु "पदस्य"इत्यधिकारेऽपि युष्मदस्मदादिरूपपदस्य विभक्त्यविशिष्टस्यापि भ्यामादौ सम्भवाद्विशिष्टयोरित्यर्थालाभः । षष्ठीद्वितीययोरसम्भवेन पदावयवयोः इत्यर्थलाभेऽपि त्वदुक्तार्थे न मानम् । न च पदावयवत्वस्याव्यभिचारित्वेन तदनुवृत्तिसामर्थ्यात्तदर्थलाभः, तदनुवृत्तेरुत्तरत्रावश्यकत्वेन सामर्थ्यायोगादत आह—सर्वस्येति । तत्सामर्थ्या-

भैरवी ।

इति बहुव्रीहिः । एवन्नुट्सुट्सहितस्यामः पुनरादेशः । असङ्गत्यापत्तेरिति । तत्राप्युभयवाक्यार्थविषयतया वारद्वयमादेशकल्पनादिति भावः । अशक्यत्वादिति । सामपदे तन्त्रस्वीकारेऽप्येकत्र साहित्यप्रतिपत्तिरन्यत्र नेत्यस्य निरूपयितुमशक्यत्वादिति भावः । अदोषादिति । प्रागुक्तसिद्धान्ते दोषाभावादित्यर्थः । ननु खण्डनानुवादकरणमफलमत आह—तदनुवादेति । तेषामिति । प्रसादकृतां तदीयानाञ्च । परमतदूषणम् । प्रसादकारमतदूषणमित्यर्थः । अत्र—गौणे ।

सर्वस्य पदस्येत्यधिकारादितिमूलग्रन्थस्य सर्वस्य पदस्येत्युभयाधिकारादित्यर्थ इति ध्वननाय शङ्कते—नन्विति । ननु चतुर्थ्यां विभक्त्यविशिष्टस्य पदत्वलाभेऽपि षष्ठीद्वितीययोर्विभक्तिविशिष्टयोरेव पदत्वलाभेन तत्साहचर्याच्चतुर्थ्यामपि विभक्तिविशिष्टस्यैव ग्रहणम्भविष्यतीत्यत आह—षष्ठीति । अवयवयोरिति । युष्मदस्मदोरिति शेषः । त्वदुक्तार्थे—विभक्तिविशिष्टयोरित्यर्थे । न मानमिति । तथा च प्रकृतिमात्रस्यादेशापत्तिः । परोक्तन्निरस्यति—न चेति । तदनुवृत्तिसामर्थ्यात्—पदस्येत्यनुवृत्तिसामर्थ्यात् । तदर्थलाभः—मूलोक्तार्थलाभः । उत्तरत्र—"तिङ्ङतिङः" इत्यादौ । तत्सामर्थ्यात्—उभयाधिकारसामर्थ्यात् । अत्र सर्वस्येत्यस्याऽनुपा-

भावप्रकाशः ।

भावः । एवमर्थस्य—एकत्र तत्सम्बन्धो नान्यत्रेत्येवं रूपस्य । एतेनेत्यस्यार्थमाह—अस्यापीति । अपिः पूर्वग्रन्थसमुच्चायकः । लक्षणापरत्या सोऽपि दुष्ट इति भावः । अदोषादिति । प्रागुक्तसिद्धान्ते दोषाभावादित्यर्थः । ननु खण्डनोऽनुवादो व्यर्थोऽत आह—तदन्विति । तेषाम्—प्रकाशकृदादीनाम् । परमतेति । प्रकाशमतेत्यर्थः । अत्र—गौणे । दिगिति । तदर्थस्तु अतित्वाकमित्यत्रोक्तरीत्या सुडभावेप्याकमुपपाद्य, तथा च भाष्ये साक्षात्तथोदाहृतमित्युक्त्वा, मतान्तरमाह—'गौणतायाम्' इतिग्रन्थं ... धृत्वा साम इत्याद्यप्रसक्तेरित्यन्तेन, तदाशयस्य प्रकाशकृतोक्तत्वेन तस्य तत्समर्थनाऽनभिनिवेशेन मूलमयुक्तमेव । अत एव खण्डनकृदुक्तेर्नावसर इति ।

सर्वस्य पदस्येत्यधिकारादितिमूलस्य सर्वस्य पदस्येत्युभयाधिकारसामर्थ्यादित्यर्थं सूचयितुं शङ्कते—ननु पदस्येति । इत्यर्थाऽलाभ इति । तथा च तत्रैव स्यान्नान्यत्रेति भावः । नन्वेवं षष्ठीद्वितीयाग्रहणं व्यर्थं, न हि तयोः परतस्तद्रूपपदसम्भवोऽत आह—षष्ठीति । अवयवयोरिति । अस्य युष्मदस्मदोरिति शेषः । न मानमिति । तथा च प्रकृतिमात्रस्य सर्वत्रादेशापत्तिरिति भावः । तदनुवृत्तीति । पदस्येत्यनुवृत्तीत्यर्थः । एवमग्रेपि । तदर्थेति । मूलोक्तार्थः । उत्तरत्र—"तिङ्ङतिङः" इत्यादौ । तत्सामर्थ्यात् । उभयाधिकारसामर्थ्यादित्यर्थः । तत एव युष्मदस्मदोरित्यस्य तद्घटितपदे लक्षणेत्या-

स्थग्रहणं तु विभक्तौ श्रूयमाणायामेव यथा स्यान्न तु लुप्तायामित्येतदर्थमिति वक्ष्यति । वेदैरशेषैरिति ।

युष्मान् रक्षतु गोविन्दोऽस्मान् कृष्णः सर्वदाऽवतु ।

इति तु प्राचः पाठस्त्यक्तः, अस्मानित्यस्य समानवाक्यस्थत्वाभावादेवाऽप्राप्तेः । स्थग्रहणादिति । तिष्ठतिरिहाऽहानौ वर्तते । यथा—समये तिष्ठ सुग्रीवेति, समयं मा हासीरिति गम्यते । तेन षष्ठ्यादीनजहतोरेवादेशा इत्यर्थः । इति युष्मत्पुत्र इति । युवयोर्युष्माकं वा पुत्र इति विग्रहः । पदात् परत्वं सम्पादयितुमिति शब्दः । प्राचा तु नासौ प्रयुक्तः । तत्र पदात् परत्वाभावादेवादेशो न भविष्यतीति किं स्थग्रहणेन ॥

"न चवा" ॥ चादिपञ्चकेति । पञ्चानां मध्येऽन्यतमेन योग इत्यर्थः ॥ युक्त इति । "नपुंसके भावे क्तः" ॥

"पश्यार्थैः" ॥ अत एव निपातनाद्भावे शः । दर्शनं पश्यः । तच्चेह ज्ञानमात्रम् । "अदर्शनं लोपः" इत्यत्र यथा । न तु चाक्षुषज्ञानमेव, "अनालोचने" इति निषेधात् । तदेतदाह—अचाक्षुषज्ञानार्थैरिति ।

---

शब्दरत्नम् ।

युष्मदाद्यवयवकस्य सर्वस्य पदस्येत्यर्थ इति भावः । अत एव युवाभ्यामित्यादौ प्रकृतिभागस्य न असहाये एव व्यवदेशिवद्भावप्रवृत्त्या युष्मदाद्यवयवकत्वाभावात् । एकाज्द्विर्वचनन्यायेन समुदाये एव तत्प्रवृत्तेश्च । अतितवेत्यादीनां तु न ते इत्याद्यादेशाः, षष्ठ्यादेः प्रकृत्याकाङ्क्षायां प्रत्यासत्त्या श्रूयमाणयुष्मदादिप्रकृतिकस्यैव ग्रहणेनादोषात् ।

भैरवी ।

दानात्कथन्तादृशोभयाधिकारलाभ इति तु न शङ्कनीयम्, "अनुदात्तं सर्वम्" इत्यतः सर्वमित्यनुवर्त्तते, विभक्तिविपरिणामश्चेत्याशयात् । अत एव—उक्तार्थकरणादेव । प्रकृतिभागस्य—प्रकृतिभागमात्रस्य । ननु युवाभ्यामित्यादौ प्रकृतिभागमात्रे युष्मदाद्यवयवकत्वं व्यपदेशिवद्भावेनाऽस्तीति दोषस्तदवस्थ एवेति शङ्कां वारयति—असहाये एवेति । अभ्युपेत्यवादेनाह-एकाजिति । ननु युष्मदाद्यवयवकस्य सर्वस्य पदस्येत्यर्थे अतितवेत्यादिविशिष्टस्य प्राप्नोतीति शङ्कां वारयति-अतीत्यादिना । प्रकृतिकस्येति । षष्ठ्यादेरित्यर्थः ।

भावप्रकाशः ।

शयेनाह—युष्मदिति । अत्र सर्वस्येत्यस्य लाभस्तु "अनुदात्तं सर्वम्" इत्यतोऽनुवृत्त्या विभक्तिविपरिणामेनेति भाष्यकैयटादयः । अन्ये तु, विभक्तिविपरिणामाऽकरणलाघवेन "सर्वस्य द्वे" इत्यतस्तदनुवृत्तिः, तत्तु स्पष्टार्थमेवेत्यन्यत्र विस्तर इत्याहुः । इत्यर्थ इति । सूत्रस्येति भावः । अत एव—उक्तार्थाङ्गीकारादेव । ननु व्यपदेशिवद्भावेन तस्यापि तदवयवकत्वात्प्रकृतिभावः स्यादेवात आह—असहाय इति । एकस्मिन्नित्युक्तेरिति भावः । अभ्युपेत्याप्याह—एकाजिति । पूर्वमते तु नैतन्न्यायप्राप्तिः, समुदायावयवयोः प्राप्तावेव तदवतारात् । पदावयवयोरितिव्याख्याने हि समुदाये न प्रवृत्तिरिति भावः । नन्वेवमप्यतितवेत्यादीनां ते इत्याद्यादेशापत्तिरत आह—अतीति । षष्ठ्यादेरिति । प्रत्ययस्येति शेषः । प्रकृतिकस्यैवेति । षष्ठ्यादेर्विशेषणम् । मूले—अप्राप्तेरिति । यत्तु खण्डनकृत्—अस्मानित्यन्तमेकं वाक्यं, कृष्ण इत्यादि तु पादादित्वसम्पादकमिति मूलं चिन्त्यमिति ; तन्न, पादादित्वसम्पत्तेस्तद्विशेषणोक्त्या सम्भवे कृष्ण इत्यादेर्वैयर्थ्यापत्तेः । कर्माध्याहारे गौरवापत्तेश्च । च शब्दाभावेनाऽनन्वयाच्चेति दिक् ।

भक्त इत्यादि । अत्र व्याचख्युः—येन हरेस्त्वं भक्तस्तेनैव कारणेनाऽहमपि भक्त इति योज्यम् । यदि तु तेनेत्यनेन भक्तत्वं त्राणे हेतुर्निर्दिश्यते, ततः सापेक्षविधाने त्वमेव तदिममितिवदन्वादेशो न स्यादिति । अत्रेदं वक्तव्यम्—सापेक्षविधानेऽन्वादेशत्वं नास्ति इति तावदसङ्गतम् । आदेशो हि विधिः । किञ्चिद्विधाय पश्चादितरविधिश्चान्वादेशो, न तु निरपेक्षत्वगर्भोऽशब्दार्थत्वात् , शास्त्रे तथा अपरिभाषितत्वाच्च । न च प्रयोगदर्शनादेव तथा कल्प्यत इति वाच्यम् ? वन्यद्विपेनोन्मथिता त्वगस्य, अथैनमद्रेस्तनया शुशोचेत्यादौ सापेक्षत्वेऽपि एनादेशादर्शनात् । तत्र हेतुत्वं न शब्देनोपात्तमिति चेन्न,

तदेनमुल्लङ्घितशासनं विधेर्विदेहि कीनाशनिकेतनातिथिम् ।

इत्यादिमाघप्रयोगविरोधात् । नक्तं भीरुरयमिति तु नायं विधिः किं त्वनुवादः । अतस्तदिममिति न विरुध्यते । एवं स्थिते येन त्वं भक्त इति यच्छब्दाध्याहारक्लेशो व्यर्थः । किन्तु तेन त्रायत इत्येव सम्बन्धः । प्रक्रान्तार्थत्वाच्च न यच्छब्दापेक्षेति दिक् । अत्र तेनेति पूर्व विद्यमानं पदं, ततो हरिरिति प्रथमान्तं, ततः परस्याऽऽदेशः । तथा त्रायत इत्यस्मात् परं स इति प्रथमान्तम् । न च त्रा-

शब्दरत्नम् ।

**तेनैवकारणेनेति ।** श्लोकस्थं तेनेति भक्तत्वे हेतुकथनमिति तद्भावः । **विधिरिति ।** स चाऽज्ञातज्ञापनरूपोऽत्र, न तु प्रवर्तनारूपः । **दिगिति ।** तदर्थस्तु भक्तत्वे हेत्वाकाङ्क्षाया अभावः । त्राणे आकाङ्क्षितहेत्वर्थकस्याध्याहारे सापेक्षत्वं तवापि दुर्निवारं च । शब्दमर्यादया तेनेत्यस्य त्राणे एवान्वयप्रतीतेः शाब्दमर्यादात्यागश्चेति । **न चेति ।**

भैरवी ।

भक्तत्वे हेतुकथनमिति । सर्वनाम्नाम्प्रक्रान्तपरामर्शकत्वस्यौत्सर्गिकत्वादिति भावः । अज्ञातज्ञापनरूपः—यः पुरुषो बोधयितुमिष्टस्तेनाज्ञातस्य ज्ञापनरूपः । मूले—प्रक्रान्तार्थत्वाच्चेत्यादिः । अत एव सप्तमोल्लासे काव्यप्रकाशकृता प्रक्रान्तप्रसिद्धानुभूतार्थकतच्छब्दोपादानेन यच्छब्दापेक्षेत्युक्तम् । हेत्वाकाङ्क्षाया अभाव इति । तथा च तेन कारणेन भक्त इत्यर्थासम्भव इति भावः । हेत्वर्थकस्येति । शब्दस्येति शेषः । तेन भक्तत्वेनेतिशब्दाध्याहारपक्ष इति भावः । अध्याह्रियमाणशब्दार्थे तेनेत्यस्यान्वये कारकाणाङ्क्रिययैव सम्बन्धस्य प्रसिद्धत्वात्क्लृप्तनियमभङ्ग इति बोध्यमित्याशयेनाह—शब्दमर्यादयेति । भक्तस्त्वमप्यहन्तेनेति

भावप्रकाशः ।

युष्मदस्मदोरिति द्विवचनसत्त्वेन युक्ते इत्येकवचनमयुक्तमत आह मूले—भावे क्त इति ।

मूले—ज्ञानमात्रमिति । तस्मिन्निष्टे 'परावरे मनसैवाऽनुद्रष्टव्यः, आत्मा वाऽरे द्रष्टव्यः' इत्यादौ मानसज्ञाने प्रयोगादिति भावः । बहिरिन्द्रियजन्यज्ञानमात्रं दर्शनमनालोचन इति पर्युदासादिति कश्चित्; तन्न, अनालोचनार्थैरित्येव तेन सिद्धे पश्यार्थैरित्यस्याऽऽनर्थक्यापत्तेः । यत्तु खण्डनकृत्—अग्निचिदित्यादौ क्विबादीनां लोपेऽपि ज्ञानत्त्वेन दृष्टान्तासङ्गतेर्मूलं चिन्त्यमिति; तन्न , तत्रातिदेशेन कार्यकरणेपि क्विपज्ञाने मानाभावात् लोपेन क्विपः स्मरणेपि तस्य लोपाविरोधित्वेनादोषाच्च । स्मरणात्मकज्ञाने दृशेरप्रयोगाच्चेति दिक् । तदेव ध्वनयन्नाह—अदर्शनमिति ।

**कथन**मित्यत्र करणे ल्युट् । **तद्भावः**—प्रकाशाशयः । उक्तमप्यर्थं दार्ढ्याय स्मारयति—**स चेति ।** **अत्र ।** न त्वन्यत्रेति भावः । नन्वनार्षकविप्रयोगाणां न गमकत्वमत आह—**तदर्थस्त्विति ।** **हेत्वर्थकस्य**—शब्दस्य । **प्रतीतेरिति ।** कारकाणां क्रियान्वयेन तत्सम्बन्धस्य झटित्युपस्थितेरिति भावः । तथा च षट्कु-

यत इति भिन्नवाक्यस्थमिति भ्रमितव्यम् , स हरिस्त्वां मां त्रायत इति तन्त्रेणाऽनेककारकसम्बन्धात् । अनुषङ्गाभ्युपगमेऽपि

शब्दरत्नम् ।

त्रायत इत्यस्य हरिस्त्वामित्यनेन शाऽब्दोऽन्वयः । स मामित्यत्राध्याहारः । वैपरीत्यं तु न, अध्याहारस्यानुपपत्तिमूलकत्वेनोत्तरत्रैव युक्तत्वात् । किञ्चाध्याहृतस्य 'आगन्तूनामन्ते निवेशः' इति न्यायेनान्त एव निवेशेन स मामित्यस्य तदर्थकत्वमित्यस्यैवाध्याहारपदार्थत्वेन च स इत्यस्य विद्यमानपूर्वकत्वाभावः । श्रूयमाणं तु न समानवाक्यस्थमिति भावः । अनुषङ्गेति । अनुषङ्गो हि तत्सजातीयशब्दान्तरकल्पना, उपात्तस्यैव

भैरवी ।

पक्षे स मामित्यस्य त्रायत इत्येतद्ग्रहणेन यद्विद्यमानपूर्वत्वोपपादनन्तन्न युक्तमित्यभिप्रायिकामाशङ्कान्निराचष्टे मूले—न चेति । शङ्काभिप्रायमाविष्करोति—त्रायत इत्यस्येति । अध्याहार इति । एवञ्चोच्चारितभिन्नवाक्यस्थमिति तात्पर्यम् । युक्तत्वादिति । यत्राऽनुपपत्तिप्रतिसन्धानन्तत्राध्याहारस्तच्चवाग्र एवेति तत्रैवाध्याहार इति भावः । ननु शब्दाध्याहारे तत्सम्भवोऽस्त्येवेत्यत आह—किञ्चेति । स्वसिद्धान्तसिद्धाध्याहारपदार्थमाह—स मामित्यस्येति । तथा परसम्मताध्याहारपक्षे, स मां त्रायत इति वाक्यरचना स्यात् । द्वितीयपक्षे तु स मामित्येव । तदर्थकत्वमिति । तेन विद्यमानपूर्वकत्वाभावः स्पष्टः । ननु त्रायत इत्यन्तमेव पूर्वं विद्यमानमिति नानुपपत्तिरत आह—श्रूयमाणमिति । एतेन समानवाक्यस्थेन विद्यमानपूर्वकत्वमुपपादनीयन्तच्च त्रायत इत्यन्तेन न सम्भवतीति भावः । शङ्काया निराकरणाभिप्रायमाह—स हरिरित्यादिना । मूले—तन्त्रेणानेककारकेति । एतेन त्रायत इत्यस्य कर्मभेदेन वस्तुतो भिन्नो योऽर्थस्तत्प्रतिपादकत्वेप्येकत्वान्न वाक्यान्तरस्थत्वमिति तात्पर्यम् । एतेन प्रकृतप्रयोगान्यथाऽनुपपत्त्या निषेधविधायकवाक्ये समानवाक्ये इत्यस्याऽसम्बन्ध इति कल्पयन्तः पूर्ववाक्यस्थत्रायत इतिपदमादायैव विद्यमानपूर्वकत्वं स मामित्यत्राऽस्तीति कथयन्तो निरस्ताः । स्वाभिमतप्रकारेण समानवाक्यस्थत्वमुपपाद्य परोहितरीत्या समानवाक्यस्थत्वोपपादनन्त्वयुक्तमिति ध्वनयन्स्वरूपव्याक्रियैव पराक्रियेति न्यायेन तदुक्तमनुवदति मूलकारः—अनुषङ्गेत्यादिना । अस्य युक्तत्वञ्चापिशब्दोपादानेन ध्वनितम् । तदेतद्विषदयति—अनुषङ्गो

भावप्रकाशः ।

दीप्रभातन्यायापत्त्या तथान्वादेशो नेष्ट इत्येव वाच्यमिति यथाश्रुतमेव साधु । न तु तथा योजना । एवं च कविप्रयोगा अपि युक्ता एवेति तात्पर्यम् । तथा च तेनेत्यस्य भक्तत्वेनेत्यर्थः । प्रक्रान्तार्थत्वान्न यच्छब्दोपादानापेक्षा । अत एव सप्तमे काव्यप्रकाशे प्रक्रान्तप्रसिद्धानुभूतार्थे कतच्छब्दोपादानं नापेक्षत इत्युक्तम् । अनुपादानेपि यत्प्रक्रान्तं यत् प्रसिद्धं यदनुभूतमित्येतदर्थस्य सामर्थ्यादेवाक्षेपसम्भवादिति तद्व्याख्यातार इति तत्त्वम् । युक्तत्वादिति । तस्या अग्रे एव प्रतिसन्धानादिति भावः । नन्वेवमपि शब्दाध्याहारे तत्सम्भवत्येवात आह—किञ्चेति । तथा च स मां त्रायत इति वाक्यरचनेति भावः । सिद्धान्तमाह—स मामिति । तथा च समानवाक्यस्थत्वेपि तन्नेत्याह—विद्यमानेति । श्रूयमाणम्—त्रायते इत्येतत् । तं मत्वा विद्यमान पूर्वत्वमस्तीत्यत आह—न समानेति । तथा च समानवाक्यस्थेन विद्यमानपूर्वकत्वाभाव इति तात्पर्यम् । एतेन समानवाक्याधिकारस्य निषेधेऽप्रवृत्त्या तेनेत्यस्य भिन्नवाक्यस्थत्वेऽपि न दोष इति प्रकाशोक्तमपास्तम् । त्रायते इत्यस्य मध्यमणिन्यायेनोभयत्र तन्त्रेणान्वयेन स इत्यस्यापि तत्त्वमस्त्येवेत्युत्तरतात्पर्यम् । पूर्वपक्षाशयमाह-अनुषङ्गेति । शब्दानुषङ्गपक्षे आह—तत्सेति । सिद्धान्तमाह—उपात्तस्यैवेति । स मामित्यस्यैवेत्यर्थः । तथा चावन्ते निवेशेनान्त्ये

'एकतिङ् वाक्यम्' इति परिभाषितैकवाक्यत्वानपायाच्च ।

"सामन्त्रितम्" ॥ संज्ञाविधावपि महासंज्ञाकरणसामर्थ्यात्तदन्तग्रहणम् । आमन्त्रणमामन्त्रितम् । उपचारात्तत्साधने वृत्तिः । विभक्त्यन्तेन चामन्त्र्यते न तु केवलया विभक्त्येत्याशयेनाह—तदन्तमिति ।

"आमन्त्रितं पूर्वमविद्यमानवत्" ॥ यत्तु प्राचोक्तम्-विशेष्यपूर्वं सम्बोधनेतरपूर्वं च सम्बोधनं हित्वाऽन्यस्मात् सम्बोधनात् परयोर्नैते आदेशा इति केचिदिति । तत्र केचिदित्यनुचितम् , उक्तार्थस्य प्रकृतद्विसूत्रीसिद्धत्वात् । यच्च व्याचख्युः–त्रिसूत्र्या अयमर्थ इति तन्न, तृतीयसूत्रार्थस्य तेनाऽसंस्पर्शात् ।

"पादः पत्" ॥ तदवयवस्येति । 'निर्दिश्यमानस्यादेशा' इति परिभाषयेदं लभ्यते ॥ दान्ताः ॥

अग्निं मन्थतीति । मथ्नातेर्मन्थतेश्च क्विपि एतदेव रूपम् । इदितस्तु नलोपाभावात् । अग्निमन् , अग्निमन्थौ, अग्निमन्थः ॥ थान्ताः ॥

ङकार इति । आन्तरतम्यादिति भावः ।

---

शब्दरत्नम् ।

तदर्थकत्वं वा । तत्रोपात्तस्यान्वयाभावेन समानवाक्यत्वं दुरुपपादमिति भावः । एकतिङिति । एकशब्दो हि तत्र समानवाचीति भावः ।

भैरवी ।

हीत्यादिना । तत्र—प्रथमपक्षे । उपात्तस्य—श्रूयमाणस्य त्रायत इत्यस्य । अन्वयाभावेनेति । अनेन कल्पितस्य शब्दान्तरस्यैव तत्रान्वय इत्येतत्सूचितम् । द्वितीयपक्षे त्रायत इति शब्दस्य तद्वाक्यघटकता नास्तीति तु स्फुटमेवेति भावः । 'एकतिङ् वाक्यम्' इत्यत्रैकशब्दस्य स्वसजातीयद्वितीयरहितत्वरूपत्वे ब्रूहि ब्रूहि देवदत्तेत्यस्यैकवाक्यत्वन्न स्यादत आह—एकशब्दो हीति । तथा च समानानुपूर्वीकतिङन्तघटितमिति फलितम् । एतच्च स्वशास्त्रीयकार्योपयोगी । तेन पचति भवतीत्यत्र लौकिकवाक्यत्ववति नाऽव्याप्तिः । लौकिकवाक्यत्वन्तु—

सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता ।

इत्यनेन दर्शितम् । एतादृशमेकवाक्यत्वमयन्दण्डो हराऽनेनेत्यत्र नास्तीति हरेत्यस्य न निघातापत्तिरिति भावः । मूले—द्विसूत्रीसिद्धत्वादिति । अयम्भावः—यत्र सम्बोधनविभक्त्यन्तस्य विशेष्यपूर्वत्वमग्ने तेजस्विन्नित्यादौ तत्राऽविद्यमानवद्भावस्य "नामन्त्रिते समानाधिकरणे" इत्यनेन निषेधाद्भवत्येव निघातः, 'हरे दयालो नः पाहि' इत्यत्र नसादेशश्च । एवं सम्बोधनेतरपूर्वस्थले 'इमम्मे गङ्गे यमुने सरस्वति' इत्यादौ सम्बोधनेतरपूर्वत्वाद्भवत्येव । देवाः शरण्याः, वो भजे, इत्यत्र तु विभाषितसूत्रस्य प्राप्त्याऽविद्यमानवद्भावाभावपक्षे आदे-

भावप्रकाशः ।

तस्यैवाभावेन विद्यमानपूर्वकत्वाभाव इति भावः । श्रूयमाणं गृहीत्वा तु नेत्याह—तत्रेति । वाक्ये इत्यर्थः । उपात्तस्य—त्रायते इत्यस्य । जनितान्वयबोधेन निराकाङ्क्षत्वादिति भावः । एकतिङिति बहुव्रीहिः, समानानुपूर्वीकतिङन्तघटितमित्यर्थः । तेन पचतीत्यादिमात्रस्य न वाक्यत्वम् । ब्रूहि ब्रूहीत्युदाहरणम् । इदञ्च स्वशास्त्रकार्योपयोग्येव । तेन पचति भवतीत्यादौ लौकिकैकवाक्यत्ववत्यपि नाव्याप्तिः । लौकिकैकवाक्यत्वं त्वन्यादृशमत्र कैयटहरदत्तप्रकाशादीनान्तु महान्प्रमाद इत्यन्यत्र विस्तरः । तद्ध्वनयन्नाह—एकेति । अन्यथा भाष्योक्ततदुदाहरणासङ्गतेरिति भावः । एतेनाऽयं दण्डो हराऽनेनेत्यत्रास्तीति गम्यमानक्रियायां दण्डस्य पृथगन्वयेप्यनया रीत्या तदनपायाद्धरेत्यस्य "तिङ्ङतिङ" इति

ह्रस्वव्यञ्जनयोरिति । व्यञ्जनस्य हि ह्रस्व ईषत्सदृशो, दीर्घस्तु विसदृश इति भावः । उक्तं चेति । वार्तिककृतेति शेषः । केचित्तु पूर्वस्यैव मुत्वादमुय्ङि- त्युदाहरन्ति । तद्भाष्याऽऽदौ नोक्तमित्युपेक्षितम् ।

"उद ईत्" ॥ अच इत्यस्यापवादः ॥ चान्ताः ॥

"अत्वसन्तस्य चाऽधातोः" ॥ इहाऽधातोरिति योगो विभज्यते । तत्साम- र्थ्यादनन्तरस्याऽसन्तस्यैव प्रतिषेधो, नाऽत्वन्तस्येति कैयटहरदत्तादयः । तदेतदृश-

---

शब्दरत्नम् ।

केचित्तु पूर्वस्यैवेति । 'अदसोऽद्रेः पृथङ्मुत्वम्' इति पृथग्वाक्यम् । तेन कदा- चित् पूर्वस्येति तदाशयः । उपेक्षितमिति । 'केचिदन्त्यसदेशस्य' इत्यस्य वैयर्थ्यापत्ते- श्चेत्यपि बोध्यम् ।

विभज्यते इति । तत्र चाऽसन्तस्येत्येकदेशे स्वरितत्वप्रतिज्ञानात्तावत एव तत्र सम्बन्ध इति भावः । अतु इति वा लुप्तषष्ठीकं पृथक् पदम् ॥ कैयटेति ।

भैरवी ।

शो भवति । यत्र तु नोक्तः प्रकारो देव माम्पाहीत्यादौ तत्र निषेधाप्राप्त्या देवेत्यस्याविद्य- मानवद्भावेन मामित्यस्यादेशो नेति ।

परममूलोक्ते 'अदसोद्रेः पृथङ्मुत्वम्' इति वाक्ये लत्ववत्केचिदिच्छन्तीत्यत्र केचिदित्य स्याऽनन्त्यविकार इति परिभाषायाः प्रवृत्तिमविचारयन्त इत्यर्थः । केचिदन्त्यसदेशस्येति तु तस्याः परिभाषायाः प्रवृत्तिवादिमतेन । नेत्येक इति स्फुटमेव । पूर्वस्यव मुत्वमिति हेतुर- हितं तादृशवार्तिकासम्मतमिति तु न वाच्यङ्किन्तु वार्तिकसम्मतमेवेति तन्मतोपपत्तये आह- केचित्तु पूर्वस्यैवेतीति । तदाशयः—पूर्वस्यैवेति वदत आशयः । उपेक्षाबीजमाह—केचिदन्त्येति । पूर्वोक्तरीत्यैव तद्बोध्यार्थलाभादिति भावः । तथावादिनोऽभिप्रायस्तु प्रथमोपस्थितत्वात्प्र- थमोच्चारितस्य मुत्वमादौ भवति, ततो लक्षणस्य प्रवृत्तत्वात्पुनर्न भवतीति । परन्त्विद- म्प्रथमोपस्थितत्वन्न नियामकम् , "निजान्त्रयाणाम्" इति सूत्रे त्रयाणाङ्ग्रहणात् , उद्दे- श्यस्य भेदेन पुनः प्रवृत्तौ बाधकाभावाच्चेति । अत एवाहुः-'अदसोऽद्रेः पृथङ्मुत्वम्' इति । तत्र—विभक्ते "अधातोः" इति सूत्रे । मूलाशयं वर्णयित्वा भाष्यसिद्धान्तरीत्याह— अत्विति । सौत्रश्चशब्दस्त्वर्थे द्रष्टव्यः । अतु इत्यस्य पृथक्पदत्वादेव गोमत्यतेरप्रत्यये गोमा-

भावप्रकाशः ।

निपातापत्त्या मूलं चिन्त्यमिति खण्डनकृदुक्तमपास्तम् , वैषम्यस्य तथापि स्फुटतरत्वात् । अत्र विषये मन्दोक्तिस्तु सुमन्दत्वसूचिकेति स्पष्टीकृतं शेखरव्याख्यायां वक्ष्यते च ।

केचित्त्विति । अयं भावः—प्रथमातिक्रमे कारणाभावात्सकृत्प्रवृत्त्या च लक्षणस्य चारितार्थ्या- द्व्यक्तिपक्षाश्रयणात्पूर्वस्यैव मुत्वम् । तथा चाहुः—

परतः केचिदिच्छन्ति केचिदिच्छन्ति पूर्वतः ।
उभयोः केचिदिच्छन्ति केचिन्नेच्छन्ति चोभयोः ॥ इति प्रकाशकृदिति ।

उक्तार्थस्य भाष्योक्तपद्यप्रतिपाद्यत्वेन समूलत्वमाह—अदस इति । अदसः अद्रेश्च पृथक्—पर्यायेण मुत्वमिति तदर्थः । तत्फलितमाह-तेनेति । पूर्वस्य । तस्यैवेत्यर्थः । उक्तरीत्या मूलोक्तदूषणासङ्गतेराह- केचिदिति । तथा च तथाभाष्यानभिमतत्वे मूलोक्तदोषो दृढ इति भावः ।

तत्र चेति । विभक्ते सूत्रे इत्यर्थः । यद्वा तस्मिन् योग विभागे च सतीत्यर्थः । तत्र—अधातोरि- त्यत्र । एवं मूलाशयमुक्त्वा भाष्यसिद्धान्तमाह—अत्विति । अत्रापि त्वर्थकचशब्दादसन्तस्यैवाऽधातो-

यति—धातुभिन्नाऽसन्तस्येति ॥

"उभे अभ्यस्तम्" ॥ द्वे इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं समुदायप्रतिपत्त्यर्थमिति व्याचष्टे—उभे समुदिते इति । अन्यथा हि नेनिजतीत्यत्र "अभ्यस्तानामादिः" इत्याद्युदात्तत्वं प्रत्येकं पर्यायेण स्यात् ॥

---

शब्दरत्नम् ।

"उगिदचाम्" इति सूत्रे हि तेनेदमुक्तम् ।

**द्वे इत्यनुवृत्त्यैवेति** । अनुवृत्तं च "पूर्वोऽभ्यासः" इत्यादाविवानुवाद्यमिति भावः । **समुदायेति** । गर्गाः शतं दण्ड्यन्तामित्यत्रेवेति भावः । अन्यथा ब्राह्मणभोजनन्यायेन प्रत्येकं संज्ञा स्यादिति भावः । **अन्यथा**—प्रत्येकं संज्ञायाम् । **अभ्यस्तानामिति** । अनिटि अजादौ लसार्वधातुकेऽभ्यस्तानामादिरुदात्त इति तदर्थः ।

भैरवी ।

निति भाष्यकारीयप्रयोगः सङ्गच्छते । इदम्—अधातोरिति योगविभागेनोक्ताऽसन्तघटितवाक्य एवाऽधातुरित्यस्य सम्बन्ध इत्येतत् ।

यद्यपि द्वे इत्येतत् "एकाचः" इति सूत्रे विधेयबोधकन्तथापि "पूर्वोऽभ्यासः" इत्यत्र द्वे इत्यस्य विधेयाऽबोधकताया दर्शनादिह तथात्वन्न भविष्यति, किन्त्वनुवाद्यत्वमित्याशयेनाह—अनुवृत्तमिति । "पूर्वोऽभ्यासः" इति सूत्रात्पूर्व इत्येतत्तु न सम्बध्यते, अस्वरितत्वात्सञ्ज्ञान्तरकरणसामर्थ्याच्च । यत्त्वत्रोभेग्रहणाभावेऽपि द्वे इत्यनुवृत्त्यैव सिद्धे पुनरुभेग्रहणं सहभावोपसर्जनद्वित्वविशिष्टार्थकमिति ; तन्न , तादृशार्थस्य शक्त्या अलाभात् । अत एव भाष्ये, समुदायप्रतिपत्त्यर्थमित्येतत्तात्पर्यकस्य "उभे अभ्यस्तम्" 'सहेति वक्तव्यम्' इति वार्तिकस्थसहग्रहणस्य प्रत्याख्यानाय गर्गदण्डनन्यायो दर्शितस्तदेवाह—गर्गा इति । अन्यथा—एतन्न्यायानङ्गीकारे । एतेनोक्तवार्तिकस्थसहग्रहणवदुभेग्रहणमपि तेन न्यायेन प्रत्याख्येयमिति ध्वनितम् । मूले—अन्यथेति । अस्य शतभोजनन्यायस्य प्रवृत्त्यङ्गीकारे इत्यर्थः । इत्येतत्तात्पर्येणाह—प्रत्येकमिति ।

भावप्रकाशः ।

रिति विशेषणमिति भावः । अत एव "उगिदचाम्" इत्यत्र गोमत्यतेरप्रत्यये गोमानिति भाष्यप्रयोगः सङ्गच्छते । तद्ध्वनयन्नाह— उगिदिति ।

ननु द्वे इत्यस्य विधेयसमर्पकस्य कथमनुवाद्यत्वमिति चेन्न, "पूर्वोऽभ्यासः" इत्यत्र पूर्वशब्दस्य साकाङ्क्षत्वेन तत्र तस्य तत्त्वस्य क्लृप्तत्वात् । पूर्वं इति तु नानुवर्ततेऽस्वरितत्वात् । योगविभागस्य संज्ञान्तरकरणस्य च वैयर्थ्यापत्तेश्चेत्याशयेनाह—अन्विति । **समुदायेतीति** । यत्तु तत्सामर्थ्यात्सहभावोपसर्जनद्वित्वविशिष्टाविति तदर्थः । तेन समुदिते इत्यर्थलाभ इति मान्याः, तन्न, अशब्दार्थत्वात् , शब्दाधिक्यादर्थाधिक्यस्य बहुशो भाष्ये निन्दितत्वाच्च । अत एव गर्गदण्डनन्यायेन सहग्रहणं भाष्ये प्रत्याख्यातम् । तुल्ययुक्त्योभेग्रहणमपि तथैवेति बोध्यम् । एतेन प्रकाशानुयायिमूलरत्नाकरदंडयाद्युक्तमपास्तम् । तद्ध्वनयन्नाह—**गर्गा इति** । **अन्यथा**—एतन्न्यायानङ्गीकारे । अन्यथेत्यस्य तदर्थकोभेग्रहणानङ्गीकारे इत्यर्थनिरासायाह—**प्रत्येकमिति** । उक्तन्यायेनेति भावः । स्पष्टार्थमाह—अनिटीति ।

सरला ।

**अन्यथा ब्राह्मणभोजनेति** । उद्देश्यतापर्याप्त्यनुयोगितावच्छेदकधर्म एव यत्र विधेयतापर्याप्त्यनुयोगितावच्छेदकस्तत्र गर्गदण्डनन्यायस्य प्रवृत्तिरन्यत्र ब्राह्मणभोजनन्यायस्येति विवेकः । प्रकृते तु उद्देश्यतापर्याप्त्यनुयोगितावच्छेदको धर्मो द्वित्वं स एव विधेयतापर्याप्त्यनुयोगितावच्छेदक इति अत्र गर्गदण्डनन्यायप्रवृत्तिरेवेति उभेग्रहणफलमिति भावः ।

"जक्षित्यादयः षट्" ॥ जक्ष् इति पृथक् पदम्। इतिशब्देन जक्षितिरेव परामृश्यते। इति आदिर्येषामित्यतद्गुणसंविज्ञानो बहुव्रीहिस्तदेतदाह—षड् धातवोऽन्ये इति ॥ तान्ताः ॥

गोपायतीति गुप्। क्विपि विवक्षिते "आयादय आर्द्धधातुके वा" इत्यायाऽभावः ॥ पान्ताः ॥

"त्यदादिषु" ॥ अनालोचने किम्? तत्पश्यतीति तद्दर्शः। "कर्मण्यण्" तादृशादयस्तु रूढिशब्दत्वादसताऽप्यवयवार्थेन व्युत्पाद्यन्ते। अत एव अज्ञानार्थाद् दृशेरिति सङ्गच्छते। भाष्ये तु-कर्मकर्त्तरिव्युत्पत्तिर्दर्शिता। तमिवेमं पश्यन्ति

शब्दरत्नम्।

इति आदिरिति। आदिशब्दः पूर्ववर्तिवाची।

भाष्ये तु कर्मकर्तरिव्युत्पत्तिर्दर्शितेति। तमिवेमं पश्यन्ति जनाः, सोऽयं स इव दृश्यमानस्तमिवात्मानं पश्यतीति भाष्ये उक्तम्। तत्राऽध्यारोपितप्रेषणपक्षे कर्मकर्तृत्वे, पश्यतीत्यस्य च दर्शयतीत्यर्थं इति स्पष्टमेव। तत्राधिकार्थत्वादज्ञानार्थत्वं बोद्ध्यम्। निवृत्तप्रेषणकर्मकर्तर्यपि सौकर्याय व्युत्पत्तिं दर्शयति—तमिवेममित्यादि। अत्र पक्षे कर्मणीत्यधिकारबाधः सामर्थ्यादिति बोद्ध्यम्।

भैरवी।

यद्यपि जक्ष् इति पृथक् पदन्तथापि इतिशब्दस्योपस्थितपरामर्शकतया जक्ष् इत्यस्यव परामश तद्गुणसंविज्ञानबहुव्रीह्यङ्गीकारे षण्णामेव लाभः स्यादतोऽत्राऽतद्गुणसंविज्ञानबहुव्रीहिरेव स्वीकार्यः। स चाऽऽदिशब्दस्याऽवयववाचकत्वेऽनुपपन्न इत्याशयेनाह–आदि शब्द इति। जक्षित्यस्य पृथक्पदत्वेन समवायसम्बन्धेन सम्बन्धी नान्यपदार्थ इत्यतद्गुणत्वं सुलभम्।

भाष्ये कर्मणीत्येतदधिकाराबाधाय व्युत्पत्त्यन्तरन्दर्शितन्तत्र तमिवेत्येतत्पूरणेन व्याख्यातुं शक्यमित्याशयेन व्याचष्टे—तमिवेत्यादिना। पश्यन्तीति। अत्र दृश्धातुश्चाक्षुषज्ञानविषयत्वानुकूलव्यापारार्थकः। तत्र—भाष्योक्तौ। अध्यारोपितप्रेषणपक्षे—दृश्धातोरेव कर्मनिष्ठो यो विलक्षणो व्यापारस्तस्य पूर्वोक्तव्यापारानुकूलत्वविवक्षया चाक्षुषज्ञानविषयत्वानुकूलव्यापारार्थकत्वविवक्षापक्षे। तत्र—कर्मणः कर्तृत्वे। अधिकेति। विषयीकरणापेक्षया तदनुकूलव्यापाररूपाधिकार्थकत्वादित्यर्थः। अज्ञानार्थत्वं—प्रधानीभूतचाक्षुषज्ञानविषयत्वानुकूलव्यापारभिन्नार्थकत्वम्। न केवलमध्यारोपितप्रेषणपक्ष एव भाष्यसङ्गमनङ्किन्तु पक्षान्तरेऽपीत्याशयेनाह—निवृत्तप्रेषणेति। सामर्थ्यादिति। सूत्रसामर्थ्यादित्यर्थः। अत्र पक्षे पूर्वकालस्थितप्रधानीभूतव्यापारस्य त्यागेनाऽज्ञानार्थत्वं स्पष्टमेव।

भावप्रकाशः।

ननु पृथक्पदत्वेऽप्यवयवत्वबोधकादिशब्दोक्तेस्तद्गुण एव स्यात्तथा च षण्णामेव ग्रहणं स्यादत आह-आदीति। पृथक्पदकरणसामर्थ्यात्। अत एव जक्षितीति निर्देशः सफलः। तथा च संयोगसमवायान्यतरसम्बन्धेन सम्बन्धित्वाभावान्न स इति भावः।

भाष्ये कर्मणीत्यधिकाराबाधायान्यथाव्युत्पत्तिदर्शनेन तमिवेत्यादिमूलमसम्बद्धमतो भेदेन मध्ये पूरणेन मूलं योजयति—तमिवेत्यादि। पश्यन्ति—चाक्षुषज्ञानविषयीकुर्वन्ति। दृश्यमानस्तद्विषयः। तत्र—भाष्योक्तौ। एवमग्रेऽपि। चाक्षुषज्ञानविषयीकरणापेक्षया प्रेरणाया आधिक्यादाह—अधिकेति। उत्तरग्रन्थासङ्गतिं परिहरति—निवृत्तप्रेषणकर्मेति। निवृत्तप्रेषणपक्षीयकर्मकर्तर्यपीत्यर्थः। सामर्थ्यात्—सूत्रवैयर्थ्यात्। एतेन तथा प्रकाशरत्नाकरदण्ड्याद्युक्तमपास्तम्।

जनाः । स इवायं पश्यति । ज्ञानविषयो भवतीत्यर्थः । तत्र विषयत्वापत्तिमात्रवृत्तित्वेऽपि विषयीकरणाऽवृत्तित्वादज्ञानार्थादिति सङ्गच्छते ॥

"नशेर्वा" । अत्र झल्यपीत्यपाणिनीयम् । नष्टमित्यादावतिप्रसक्तं च । नागति । षडगकाः प्राग्वत् ॥ शान्ताः ।

"नुम्विसर्जनीयशर्व्यवायेऽपि" ॥ ष्टुत्वेनेति । सनः सस्य रुत्वविसर्गयोः कृतयोः "वा शरि" इति विकल्पात् पक्षे सकारः । तेन शरा व्यवाये सुपः सस्य षत्वं पूर्वस्य ष्टुत्वं, न तु "आदेशप्रत्यययोः" इति षः, "अपदान्तस्य" इति निषेधादिति भावः । एवं स्थिते सकारग्रहणेन सिद्धे शर्ग्रहणस्य प्रयोजनं चिन्त्यम् ॥ व्याख्यानादिति । असम्भवादिति हरदत्तोक्तिस्तु नादर्तव्या, सुहिन्सु इत्यत्र सम्भवादिति भावः । संयोगान्तेति । न चास्मिन् कर्तव्ये बहिरङ्गत्वेनाऽतो लोपस्यासिद्धत्वं शङ्कयम्, पदसंज्ञासापेक्षत्वेन संयोगान्तलोपस्यैव बहिरङ्गत्वात् । कथं तर्हि काव्यं कलत्रं शास्त्रं वाऽऽचक्षाणे संयोगान्तलोपो नेति प्रागुक्तमिति चेन्न । तत्र 'यणः प्रतिषेधो' 'न वा झलो लोपात्' इति पक्षद्वयेऽपि लोपाभावे निर्णीते तदैकरूप्याय पूर्वं पूर्वमन्तरङ्गमिति ग्रहीतुं युक्तम्, अतिदेशेन लभ्यस्य पदत्वस्य तत्प्रयुक्तलोपस्य च लक्ष्यपूर्वभागे विश्रान्तेः स्पष्टत्वात् । इह तु आद्यपक्षद्वये संयोगान्तलोपस्य स्पष्टतया तदैकरूप्याय बहिर्भूतनिमित्ता-

---

## शब्दरत्नम् ।

पूर्वस्य—विसर्गस्थानिकसस्य । अस्मिन्-संयोगान्तलोपे । पूर्वपूर्वमन्तरङ्गमित्याश्रित्येति भावः । पदसंज्ञासापेक्षत्वेनेति । बहिर्भूतसुब्निमित्तकेत्यादिः । तदपेक्षया बह्वपेक्षत्वरूपं बहिरङ्गत्वं प्रबलमिति भावः । प्रागुक्तमिति । पूर्वं पूर्वमन्तरङ्गमित्याश्रित्याल्लोपासिद्धत्वेनेत्यादिः । अतिदेशेनेति । विभक्त्याश्रयस्यैकदेशविकृतन्यायेन लभ्यस्येत्यर्थः । लक्ष्यपूर्वभागे इति । काव्यादिशब्दरूपलक्ष्यस्य पूर्वभागे—ऽद्यन्ते इत्यर्थः । बहिर्भूतेति । बहिर्भूतनिमित्तापेक्षत्वरूपबहिरङ्गत्वस्येत्यर्थः । वस्तु तेषामनभिधानमेव । पूर्वं

## भैरवी ।

पूर्वम्पूर्वमित्यस्य पूर्वम्पूर्वं शास्त्रमित्यर्थभ्रमवारणायाह—पूर्वम्पूर्वमिति । पूर्वपूर्वस्थानिकमित्यर्थः । संज्ञाकृतबहिरङ्गत्वस्य सिद्धान्तविरुद्धत्वादाह—बहिर्भूतेति । तदपेक्षया—पूर्वपूर्वस्थानिकमन्तरङ्गमित्येतदपेक्षया । अत्र सुबन्ताण्णिचोऽभावेनातिदेशेन लभ्यस्येत्यधिकमतस्तन्मूलं योजयति—विभक्त्याश्रयेति । अनभिधाने हेतुमाह—पूर्वम्पूर्वमित्यस्य चेति । चो ह्यर्थे ।

## भावप्रकाशः ।

पूर्वत्वस्य पाक्षिकविसर्गेऽपि सत्त्वादाह—विसर्गेति । स्पष्टार्थमाह—संयोगेति । बह्वपेक्षत्वरूप बहिरङ्गत्वाभावादाह—पूर्वमिति । पूर्वपूर्वस्थानिकमिति तदर्थः । संज्ञाकृततत्त्वाभावादाह—बहिर्भूतेति । अत एवाह—तदपेक्षयेति । पूर्वं पूर्वमन्तरङ्गमित्यपेक्षयेत्यर्थः, शब्दमर्यादया तथैव लाभात् । यथा चैतत्तथा प्रागुक्तमेतत्सूचिकैव मूले एवोक्तिरिति भावः । शङ्कोत्थितये आह—पूर्वं पूर्वमिति । इत्यादिरिति । संयोगान्तलोपो नेत्यस्येति शेषः । सुबन्ताण्णिचोऽभावेनातिदेशेन लभ्यस्येत्ययुक्तमत आह—विभक्तीति । बहिर्भूतसुब्निमित्तकेत्यर्थः । लक्ष्यात्पूर्वभागे इत्यर्थे असम्भवः । लक्ष्यस्य पूर्वभागे इत्यर्थेऽपि काव्य इति रूपे तत्राऽसम्भव एवात आह—काव्यादीति । विशिष्टे न्याय्यत्वान्नयायाह—बहिरिति । एवं यथाश्रुतं मूलं व्याख्याय सिद्धान्तमाह—वस्तुत इति । तेषाम्—तादृशकाव्यादीनाम् । अन-

पेक्षं बहिरङ्गमित्यस्यैव न्याय्यत्वादिति दिक्। तन्निरक्षिभ्यामित्यादि। यत्तु वदन्ति—शुक्लं चक्रं शुक्रं वाऽऽचक्षाणेषु क्लोपः। शुल्। शुक्लौ। शुल्भ्याम्। चः। चक्रौ। चर्भ्याम्। शूः। शुक्रौ। शूर्भ्यामित्यादि, तत्सर्वमनेन प्रत्युक्तम्। अयं तु विशेषः तगृर्गित्यत्र संयोगान्तलोपो निर्विवादः। तत्र तु सोऽपि दुर्लभ इति। दिधगिति। यत्तु दहेर्हो ढः "षढोः" इति कत्वस्यासिद्धत्वात् संयोगान्त-लोपे ढस्य जश्त्वे दिधडिति नैमिषीयेणोक्तम्; तत्प्रामादिकम्, "दादेर्धातोर्घः" इति घत्वस्य ढत्वापवादस्य जागरूकत्वात्॥ षान्ताः॥

विद्वानिति। विदेः शतुर्वसुः अदादित्वाच्छपो लुक्। सेदिवानिति। "भाषायां सदवसश्रुवः" इति क्वसुः।

सेदुष इति। ननु 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषया "विदेः शतुर्वसुः" इत्यस्यैव वसोः संप्रसारणं युक्तं न तु क्वसोः; सत्यम्। वसो-रुकारानुबन्धकरणं क्वसोः सामान्यग्रहणार्थम्, उगित्त्वस्य स्थानिवद्भावेनापि सिद्धेः। इह गमिप्रभृतिभ्यः क्वसुर्नोदाहृतश्छान्दसत्वात्। कयवस्तु प्रयुञ्जते। 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' 'तं तस्थिवांसं नगरोपकण्ठे' इत्यादि छान्दसा अपि क्वचिद्भाषायां भवन्तीति 'मासश्छन्दसि' इति सामान्यापेक्षज्ञापकमाश्रित्य कथं चित्समाधेयम्।

---

शब्दरत्नम्।

पूर्वमित्यस्य च पूर्वपूर्वनिमित्तकमित्येवार्थ इत्यन्यत्र प्रपञ्चितम्। दुर्लभ इति। यण्त्वादझल्त्वाच्चेति भावः।

स्थानिवद्भावेनापि सिद्धेरिति। ङित्त्ववदिति भावः। न च तदनुबन्धक-परिभाषाप्रवृत्त्यर्थमेव तत्, निरनुबन्धकत्वेनापि तत्सिद्धेः। कथं चिदिति।

भैरवी।

इत्येवेति। भाष्यसम्मतत्वादिति शेषः। अन्यत्र—शेखरादौ।

स्थानिवद्भावेनापीत्यपिशब्दसमुच्चयार्थस्य स्पष्टप्रतिपत्तये आह—ङित्त्ववदिति। अनु-बन्धकार्येऽनल्विधाविति निषेधस्याप्रवृत्तेरिति भावः। तदिति—उगित्त्वमित्यर्थः। तत्सिद्धे-रिति। तत्परिभाषायाः प्रवृत्तेर्यत्फलन्तस्य सिद्धेरित्यर्थः। वस्तुतस्तु वसुसादेशेनास्यापि

भावप्रकाशः।

भिधाने हेतुमाह— पूर्वमिति। चो ह्यर्थे। अन्यथैकस्य लक्ष्यस्य पाक्षिकं साधुत्वमसाधुत्वं चापद्येतेति भावः। यद्वा चो यथाश्रुत एव साध्यार्थद्वयसमुच्चायकः। हेतुस्तूभयत्र प्रागुक्त इत्यत्र नोक्तः। इत्येवेति। भाष्यसम्मतत्वादिति भावः। अन्यत्र—उद्द्योतशेखरादौ, प्राक् च। एतेनात्रेदमवधेयमा-द्यपक्षद्वये तदभावेऽप्यन्त्यपक्षे सम्भवस्यैव, पदसंज्ञासापेक्षत्वेन तस्यान्तरङ्गत्वाभावात्। आद्यपक्षद्वयै-केति नव्योक्तिस्तु न युक्ता, 'सिद्धन्तु लकारनिर्देशात्' इति हलन्त्यसूत्रस्थवार्त्तिकविरोधेन त्वदुक्तान्तरङ्ग-बहिरङ्गभावानाश्रयणात्। तथा च पक्षभेदेन तेषां साधुत्वं दुर्वारमित्यास्तान्तावदिति रत्नाकरोक्तमपास्तम्, संज्ञाकृततत्त्वस्याभावाच्च तद्भाष्यस्यान्याशयकत्वाच्चेति दिक्।

अनुबन्धप्रयुक्तकार्येऽनल्विधाविति निषेधाप्रवृत्तये आह—ङित्त्वेति। तत्—उगित्त्वम्। तत्सि-द्धेरिति। तत्परिभाषाप्रवृत्तिफलसिद्धेरित्यर्थः, 'निरनुबन्धक' इति परिभाषासत्त्वात्। एनेनोकार उच्चा-रणार्थ इत्यपास्तम्। निरनुबन्धकपरिभाषया क्वसुग्रहणानापत्तेरिति भावः। वस्तुतो वसुसादेशेन तस्यापि द्व्यनुबन्धत्वमेव, स्पष्टं चेदं भाष्ये इति बोध्यम्। कथंचिदितीति। अनेनेति शेषः। अस्य च सूचितमि-

"पुंसोऽसुङ्" ॥ विवक्षित इति । तेन परमपुमानित्यत्र परत्वादसुङि कृते समासान्तोदात्तत्वं भवदसुङ एवाकारस्य भवति । परसप्तम्यां तु नैतत्सिद्धयेत्, सर्वनामस्थानोत्पत्तेः प्रागेव पुंशब्दोकारस्योदात्तत्वे कृते स्रंसनधर्मिणो हलः स्थाने तद्धर्मिणोऽनुदात्तस्यैवादेशस्य प्रसङ्गात् । न चोकारस्य कृतोऽपि स्वरोऽनन्त्यत्वान्निवर्तयिष्यते । असुङश्चान्त्यत्वात् करिष्यत इति वाच्यम्, अन्तरङ्गे स्वरे कर्त्तव्ये बहिरङ्गस्याऽसुङोऽसिद्धत्वादिति भावः । एतच्च कैयटहरदत्तादीनामनुरोधेनोक्तम् ।

---

शब्दरत्नम् ।

तेन "पद्दन्न" इति सूत्रे छन्दसीति निवृत्तेः कल्पनया तस्य चारितार्थ्येनैतदर्थज्ञापकत्वासम्भव इति सूचितम् ।

प्रागेवेति । अन्तरङ्गत्वादिति भावः । निवर्तयिष्यते इति । अकृतव्यूहपरिभाषया पूर्वमेव न प्रवर्तयिष्यते इति भावः । अन्तरङ्गे इति । अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः । तदेवाह—कैयटेत्यादि । भाष्येऽपि 'उपदेशिवद्भाववचनं कर्त्तव्यम्' इत्युक्तम् ।

भैरवी ।

ङ्यनुबन्धकत्वमिति भाष्ये स्पष्टम् । तेन—"मासश्छन्दसि" इति वार्तिकस्थछन्दोग्रहणेन । कल्पनयेति । तृतीयान्तपदघटककल्पना शब्दार्थे ह्ययं हेतुः । क्वचित्तु एतेनेति पाठः । तत्रैतेनेत्यस्य, कथञ्चित्पदोल्लेखेनेत्यर्थः । तस्य—"मासश्छन्दसि" इति वार्तिकस्थछन्दोग्रहणस्य । कथञ्चित्पदस्वारस्येनायमेव पाठो युक्तः । एवञ्च कविप्रयोगाणामुपपत्तिस्तु 'निरङ्कुशा' इति न्यायेन कार्या ।

मूले-तेनेति । विवक्षित इत्यर्थकरणेन । परत्वादिति । समासान्तोदात्तत्वादित्यादिः । वक्ष्यमाणमूलोक्तप्रकारस्याऽयुक्तत्वध्वननायाह—अन्तरङ्गत्वादिति । कृतमपीपि परिभाषाया गुरुत्वेन खण्डनादाह—अकृतव्यूहेति । अकृतव्यूहपरिभाषामाश्रित्य कृतस्य पूर्वपक्षस्य तद्बाध्याऽसिद्धपरिभाषया निराकरणं यन्मूले कृतन्तदयुक्तमिति भ्रान्तिनिवारणाय मूलकारस्य भावं व्याचष्टे—अकृतेत्यादि । तदेवाह—उक्तार्थस्य सिद्धान्तत्वमेवाह । विवक्षितव्याख्यानस्य निरालम्बनत्वशङ्कानिवारणायाह—भाष्येपीति । कर्तव्यमिति । अस्य स्वरसिध्यर्थं बहिरङ्गलक्षणत्वादिति शेषः । एतेनोपदेशिवद्वचनारम्भ एव युक्तः । विवक्षित इति व्याख्यानेऽपि, वि-

भावप्रकाशः ।

त्यत्रान्वयः । तेन—'मासश्छन्दसि' इति वार्तिकस्थछन्दोग्रहणेन । एवमग्रेपि कल्पनायां हेतुरयम् । यद्वा एतेनेति पाठः । कथञ्चित्पदोल्लेखेनेति तदर्थः । तस्य—'मासश्छन्दसि' इति वार्तिकस्थछन्दोग्रहणस्य । कल्पनायां हेतुस्तु तत्सामर्थ्यरूपः स्पष्टत्वान्नोक्तः । एतेनोक्तरीत्या मूलं चिन्त्यन्तस्माद्बहुग्रहणं सामान्यापेक्षं ज्ञापकमाश्रयणीयमिति खण्डनकृदुक्तमपास्तम्, कथञ्चित्पदस्वारस्याज्ञानात् । तथा च निरङ्कुशाः कवय इति तत्त्वम् । वयस्यास्विति प्रयोगस्याप्यन्यथाप्रागुपपादितत्वात्तस्याप्यत्राज्ञापकत्वम् । एवं च बहुश्नु ग्रहणस्य सामान्यापेक्षज्ञापकताप्यप्रामाणिकीति भावः ।

मूलोक्तप्रकास्य वक्ष्यमाणयुक्त्याऽसाङ्गत्यध्वननायाह-अन्तरङ्गेति । कृतमपीत्यस्या गुरुत्वेन खण्डितत्वादाह-अकृतेति । अस्य पक्षस्य सिद्धान्ततां ध्वनयितुमाह-अकृतेति । तदेवाहेति । उक्तार्थस्य सिद्धान्तत्वमेवाहेत्यर्थता, न स्वरुचिमाहेतीति भावः । अयं पक्ष एव युक्त इत्याह-भाष्येपीति । कर्तव्यमिति । अस्य स्वरसिध्यर्थं बहिरङ्गलक्षणत्वादिति शेषः । एतेन भाष्यानभिमतत्वात्कैयटाद्युक्तेरप्रामाण्यमित्यपास्तम् । अनेन वचनमेव ज्यायः । विवक्षितसप्तम्यामपि विभक्तिवुद्धिनिमित्तकत्वेन बहिरङ्ग-

वस्तुतस्तु परसप्तमीपक्षोऽपि सूपपादः। अकृतव्यूहपरिभाषाया अन्तरङ्गपरिभाषापवादत्वादित्यवधेयम्। नन्वेवमसमासेऽप्यसुङि कृते प्रातिपदिकस्वरेण सतिशिष्टेन प्रत्ययस्वरस्य बाधादसुङ उदात्तत्वं स्यात्, इष्यते तूकारस्य। पुमान् पुमांसं परिपात्वित्यादौ तथैव पाठादिति चेत्सत्यम्। डुम्सुनो नित्करणसामर्थ्यात् प्रातिपदिकस्वरो न भवतीति हरदत्तादयः। नन्वेतदयुक्तम्। प्रकृतिप्रत्ययविभागशून्येष्वेव "फिषः" इत्यस्य प्रवृत्तेरिति चेत्सत्यम्। क्वचित्सखण्डेष्वपि प्रवृत्ताविदं लिङ्गम्। यद्यपि 'असिद्धं बहिरङ्गम्' इत्येवेदं सिद्धं, तथाऽपि बहिरङ्गपरिभाषाया अनित्यत्वमपि ज्ञापयितुं नित्करणमिति निष्कर्षः। उच्चारणार्थं

शब्दरत्नम्।

**अकृतव्यूहपरिभाषाया इति।** सत्वे इति शेषः। **नन्वेतदिति।** अन्तोदात्तत्ववारणाय नित्करणसामर्थ्याश्रयणमित्यर्थः। फिट्स्वरस्यैवात्र प्राप्तेरिति भावः। **इदम्**—डुम्सुनो नित्त्वम्। **यद्यपि असिद्धमिति।** नित्त्वाभावेऽपि "फिषोऽन्त" इति कर्तव्ये असुङो बहिरङ्गस्यासिद्धत्वात्प्रत्ययस्वरेणोकारस्योदात्तत्वे एव स्थिते ततोऽसुङनुदात्त एवेति भावः। **नित्करणमिति।** व्युत्पत्तिपक्षे इत्यादिः।

भैरवी।

भक्तिबुद्धिनिमित्तकत्वेनाऽसुङादेशस्य बहिरङ्गत्वादन्तरङ्गत्वेन समासान्तोदात्तत्वस्य पूर्वं प्रवृत्तौ मूलोक्तरीत्या दोषः स्यादेवेति सूचितम्।

अकृतव्यूहपरिभाषामाश्रित्य कृतस्य वस्तुतस्त्वित्यारभ्याऽवधेयमित्यन्तग्रन्थेन परसप्तमोपक्षसमर्थनस्यापसिद्धान्तत्वमिति ध्वननायाह—सत्वे इतीति। मूले—नन्वेवमिति। एवम्—असुङादेशोत्तरं स्वरस्य प्रवृत्त्यङ्गीकारे। नन्वेतदित्यत्र यदेतदिति तदर्थमाह—अन्तोदात्तत्वेत्यादि। एतेन हरदत्तोक्तत्वस्यैतच्छब्दार्थत्वमिति शङ्काया निरासः। एतदित्यस्य प्रातिपदिकत्वप्रयुक्तेत्यादिः। तत्र हेतुमाह—फिडिति। यद्यपीति शङ्काया भावार्थमाह—नित्त्वाभावेऽपीत्यादिना। निष्कर्षान्तग्रन्थेन कृतस्य सिद्धान्तस्यापसिद्धान्तत्वध्वननायाह—व्युत्पत्तिपक्षे इतीति। सा च 'पूञो डुम्सुन्' इति 'पातेर्डुम्सुन्' इति वा। "स्त्रियाम्" इति सूत्रस्थभाष्यकारकृता सूतेः सस्य पो ह्रस्वो म्सुन् प्रत्यय इति बोध्या। वस्तुतस्तूणादीनामव्युत्पन्नत्वस्यैव भाष्यकृता सिद्धान्तिततयाऽन्तरङ्गतयोदात्तत्वमुकारस्यादौ भवति। ततोऽसुङनुदात्त एवेत्यु-

भावप्रकाशः।

त्वात्ततः पूर्वं परमपुमानित्यादावन्तरङ्गत्वेन समासस्वरप्रवृत्तौ मूलोक्तरीत्या दोषतादवस्थ्यादिति भाष्यसिद्धान्तोऽपि सूचितः।

वस्तुतस्त्वित्याद्यवधेयमित्यन्तस्याऽसिद्धान्ततां ध्वनयति—**सत्त्वे इति शेष इति।** एतेन यद्यपीत्यादिनिष्कर्ष इत्यन्तग्रन्थ एतद्ग्रन्थ विरोधादयुक्त इति रत्नाकरोक्तमपास्तम्। मूले—नन्वेवमिति। असुङ्प्रवृत्त्युत्तरं स्वरप्रवृत्त्यङ्गीकारे इत्यर्थः। ननु हरदत्ताद्युक्तत्वे प्रतिपाद्ये नन्वयमयुक्त इत्युचितमत आह—**अन्तोदात्तेति।** प्रातिपदिकत्वप्रयुक्तेत्यादिः। अत एव तत्र हेतुमाह—**फिडिति।** अप्राप्तौ मूलोक्तहेतुर्बोध्यः। दूरस्थत्वादाह—**डुम्सुन इति।** तया सिद्धिमाह—**नित्त्वेति।** डुम्सुन इति भावः। **बहिरिति।** तत्त्वञ्च प्रागुक्तरीत्या बोध्यम्। एतेन परसप्तम्यां तस्य तत्त्वादितिमान्योक्तिरयुक्तेति सूचितम्। **स्थिते इति।** सति सप्तमी। तथा च फिट्स्वरप्रवृत्तिरफलेति भावः। **तत इति।** जात इति शेषः। नन्वेवमित्यादिनिष्कर्ष इत्यन्तसकलोक्तार्थस्यासिद्धान्ततां ध्वनयति—**व्युत्पत्तीति।** सा च पूञः पातेर्वा डुम्सुन्नित्यनाकरात् सूतेः सस्य पो ह्रस्वो म्सुन्प्रत्यय इति "स्त्रियाम्" इतिसूत्रस्थभाष्योक्ता वा। वस्तुत उणादीनामव्युत्पन्नत्वस्यैव भाष्यसिद्धान्तत्वेन प्रागन्तरङ्गत्वात् फिट्स्वरेऽसुङनुदात्त एवेति उकारोदात्तत्वसिद्धिरिति

इति । यत्तु प्राचोक्तमुङावितावितिः, यच्च तत्पौत्रेण व्याख्यातमुकार उगित्कार्यार्थं इति, तदसङ्गतमिति भावः । हे पुमन्निति । असम्बुद्धावित्युक्तेर्न दीर्घः । पुंस्विति । संयोगान्तलोपे "मोऽनुस्वारः" । नुम्स्थानिकस्यैवानुस्वारस्योपलक्षणात् "नुम्विसर्जनीय" इति न षत्वम् । अस्य सम्बुद्धाविति । एतच्च वाचनिकम् । यत्तु हरदत्तादय आहुः—सोर्ङेति वाच्ये अनङ् साविति वचनेन क्वचिदनङ एव श्रवणस्य ज्ञापितत्वादेतत्सिद्धमिति; तत्तु प्रागेव दूषितम् । अङ्गवृत्तपरिभाषया वा समाधेयम् ।

"अदस औ सुलोपश्च" ।। ननु सोरेवौकारो विधीयतां त्यदाद्यत्वेनाऽसाविति सिद्धे किं सुलोपविधानेन; मैवम्, असकौ स्त्रीत्यत्र टापि "प्रत्ययस्थात्" इतीत्त्वप्रसङ्गात् । अमुक इति । औत्वाभावे त्यदाद्यत्वं सादुत्वम् । अमुक इति

---

शब्दरत्नम् ।

उङावितावितीति । लोपेतरेत्संज्ञाप्रयुक्तकार्यार्थमिति भावः । तद् ध्वनयन् तद्व्याख्याताऽऽह—उगित्कार्यार्थं इति ।

इत्त्वप्रसङ्गादिति । न चेत्त्वविधायके आ आपीति प्रश्लिष्टनिर्देशान्नेत्त्वम्, प्रश्लेषसामर्थ्यादित्त्वस्य बाधे कारिके इत्यादावपि इत्त्वानापत्तेः । तस्मात्प्रश्लिष्टनिर्देशो नात्रेत्यत्रैव भाष्ये स्पष्टम् । एतेन विभक्तावित्यस्य "त्यदादीनामः" इत्यत्र विषयसप्तमीत्व-

भैरवी ।

कारस्योदात्तस्य श्रवणसिद्धिरिति । उच्चारणार्थानामपीत्सञ्ज्ञयैव निवृत्तिरिति सिद्धान्तात्प्रक्रियोक्तरीत्या ग्रन्थसङ्गमनं युक्तमेवेति मूलमसङ्गतमिति केनचिदुक्तन्तत्प्रक्रियोक्त्याशयानभिज्ञतयेति ध्वननायाह—लोपेतरेदिति । तद्व्याख्याता—प्रक्रियाव्याख्याता प्रकाशकारः ।

असकावित्यत्रेत्त्वापत्तिरूपदोषस्य प्रकारान्तरेण परिहारशङ्कान्निरस्यति—न चेत्यादिना । नेत्त्वमिति । अस्य वार्णपरिभाषया वृद्धेः प्रागित्यादेः । नन्वेवं सति प्रश्लेषो व्यर्थ एव स्यादिति तत्सामर्थ्याद्वार्णपरिभाषा बाध्यतामत आह-कारिके इत्यादाविति । अत्रापि प्रश्लेषसामर्थ्यात्प्राग्विभक्तिकार्ये कृते आकाररूपाऽऽप्परत्वाभावेनेत्त्वानापत्तेरिति भावः । अत्रैव-"अदस औ" इति सूत्र एव । एतेनेति । वक्ष्यमाणदोषेणेत्यर्थः । यदि विभक्ताविति विषयसप्तमी तदाऽन्तरङ्गत्वादत्वे टापि विभक्तावेकादेशे आकाररूपस्याऽऽपोऽभावेन नेत्त्वस्य प्राप्तिरिति भावः ।

भावप्रकाशः ।

संखण्डे तत्प्रवृत्तिकल्पनाद्यप्रमाणमिति बोध्यम् । एतेन तथा प्रकाशरत्नाकरदण्डयाद्युक्तमपास्तम् । सिद्धान्तरीत्या प्रक्रियाग्रन्थसौष्ठवे मूलमयुक्तमत आह—लोपे इति । एवञ्च व्याख्यानाशयिका सा सव्याख्याना चिन्त्या, अन्यथा तु युक्तैवेति मूलमयुक्तमेवेति तात्पर्यम् । एतेन प्रकाशोक्तं क्लिष्टं व्याख्यानं, प्रागुक्तं मूलानुयायिरत्नाकराद्युक्तञ्चापास्तम् ।

नेत्त्वमिति । न च वार्णादाङ्गस्य बलीयस्त्वेन वृद्धेः प्राक् तद्दुर्वारमेवेति वाच्यम् ? प्रश्लेषसामर्थ्याद्वार्णादित्यस्य बाधात् । अत एवाह-कारिके इत्यादाविति । तत्सामर्थ्यादत्रापि तद्बाधेन प्राक् विभक्त्यादिकार्ये कृते इत्त्वं दुर्लभमुक्तरीत्येति भावः । आदिना हारिका इत्यस्य परिग्रहः । नात्र-प्राक् प्रक्रान्तेत्त्वविधायके इत्यर्थः । अत्रैव-"अदस औ" इत्यत्रैव । इत्यत्र । अत्रैवानुवृत्तस्येति भावः । एतेने-

सरला ।

मूले न दीर्घ इति । "सर्वनामस्थाने चासम्बुद्धौ" इति सूत्रादसम्बुद्धिपदानुवृत्तेः सत्त्वेन 'सान्तमहतः' इति सूत्रेण न दीर्घ इत्यर्थः ।

त्वसाधुः। सत्वेन मुत्वस्य बाधात्। एवममुकी अमुकशर्मा इत्यादयोऽप्यसाधव एव। असुका अदकः शर्मेत्यादेरेव न्याय्यत्वात्।

शब्दरत्नम्

मपास्तम्। एवं हि विभक्त्युत्पत्तेः पूर्वं त्यदाद्यत्वे टापि सौ "अदस" इत्यन्त्यस्यौत्वेऽपि स्थानिवत्त्वेनाऽऽप्त्वादित्त्वापत्तेः। निर्दिष्टपरिभाषायां सत्यां विषयसप्तम्या वक्तुमशक्यत्वाच्चेति दिक्। न्याय्यत्वादिति। क्वचित्सान्तत्वेन मुत्वाप्राप्तेः। क्वचित्सत्वेन बाधा-

भैरवी।

तन्दोषमेवाह—एवं हीत्यादिना। सिद्धान्तेऽपीत्यादिः। अन्त्यस्य-आकारस्य। वस्तुतस्तादृशं व्याख्यानमेवासङ्गतमित्याह-निर्दिष्टेति। प्रमाणसद्भाव एवैतत्परिभाषाया अप्रवृत्तिः। प्रमाणाभावे तु सर्वत्र प्रवर्तत एवेति भावः। एतेनाऽदसो डौरिति सूत्रम्पाठ्यम्। विभक्ताविति तु विषयसप्तमी। एवञ्च विभक्त्युत्पत्तेः प्रागत्वेऽपि सोर्डौ आदेशे टिलोपे च रूपस्य सिद्धिरिति परास्तम्, विषयसप्तमीत्वे प्रमाणानुपलम्भात्। दिगिति। दिगर्थस्तु "वार्णादाङ्गं बलीय" इति परिभाषामाश्रित्याऽसकावित्यत्रेत्त्वापादनमसङ्गतम्, तस्याः परिभाषायाः समानकार्यित्व एव प्रवृत्तिरितिसिद्धान्तात्। असौब्राह्मणि इत्यत्र "सम्बुद्धौ च" इति सूत्रेणैत्वस्य प्राप्तिरेवं स्यादिति तु वक्तुमशक्यम्, तत्र "बहुवचने झल्येत्"इति सूत्राज्झलीत्यस्य सम्बन्धात्। हे असावित्यत्र "एङ्ह्रस्वात्" इति लोपापत्तिरपि न, हल्ग्रहणस्य तत्र सम्बन्धात्। असकौ ब्राह्मणीत्यत्र "प्रत्ययस्थात्" इतीकारादेशवारणाय तत्राऽऽकारस्य प्रश्लेषः कल्प्यते चेत्कारिके इत्याद्यसिद्धिरिति। नन्वसुक इत्यत्र सत्वेन मुत्वस्यास्तु बाधः; तथाप्यदकः शर्मेत्यत्र न सत्वस्य प्राप्तिरित्येवमिति शब्दस्य प्रयोगासङ्गतिरत आह—क्वचिदिति।

भावप्रकाशः।

त्यस्यार्थमाह—एवं हीति। विषयसप्तमीत्वे हीत्यर्थः। स्वार्थादिप्रयुक्तकार्याणां क्रमिकत्वस्वीकारादाह-टापीत्यादि। अन्त्यस्यौत्वेऽपीति। अपिना सोरौत्वपक्षः समुच्चीयते। अत एव प्रकृतसङ्गतेयमाशङ्केति भावः। प्रश्लेषाभावेनाल्विधित्वाभावादाह—स्थानीति। इत्त्वापत्तेरिति। न चेष्टापत्तिः, प्रकृतसूत्रस्थभाष्यादिविरोधात्। तद्विरोधमभ्युपेत्याप्याह—निर्दिष्टेति। विना प्रमाणं तत्परिभाषाबाधाभावादिति भावः। एतेनादसो डौरित्येव वाच्यम्। तत्र विषयसप्तम्या ततः प्रागत्वे एकादेशे टिलोपे 'असौ' इत्यस्य सिद्धेः। एवञ्च प्रसङ्गादिति प्रतीकमुपादाय यत् विषयसप्तमीत्वं खण्डितं तन्मदुक्तन्यासे गर्भस्रावेणैव गतमिति मन्दोक्तमपास्तम्, विषयसप्तमीत्वस्यैवायुक्तत्वात्। एवञ्च शेखरग्रन्थोपि सङ्गतः।

शब्देन्दुशेखरस्त्वीशो गौरी चेयं मनोरमा।
तयोस्तु पुंस्त्वस्त्रीत्वाभ्यां युक्ता भक्तिक्वचित्ततः॥
असावित्यसकौ चेति रूपयोः सुविचारणा।
विषयासक्तचित्तानां मुक्तिर्भवतु शाश्वती॥

इदञ्च सर्वमत्रत्यकैयटानुरोधेन व्याख्यातम्। वस्तुतस्तु अयुक्तमेतत्, वार्णादाङ्गमित्यस्य समानकार्यित्वरूपसमानाश्रयत्वे एव प्रवृत्त्या प्रश्लेषेण असकावित्य व्यावृत्तेः कारिके इत्यादिसंग्रहस्य च सिद्धत्वात्। तच्च द्विवचनं सम्बोधनं वा। नन्वेवं भाष्यस्य तन्मूलस्य अस्य ग्रन्थस्य चासङ्गतिरिति चेत्? इत्थं गुरुचरणाकूतम्। भाष्ये मूलोक्तरीत्या समाशङ्क्य हे असावित्यत्र "एङ्ह्रस्वात्"इति लोपमापाद्य हलो लोपः सम्बुद्धिलोप इति परिहृत्य हे असौ ब्राह्मणीत्यत्र "सम्बुद्धौ च" इत्येत्वमापाद्य झलीत्यनुवृत्त्या परिहृत्य असकौ ब्राह्मणीत्यत्रेत्त्वमापाद्य प्रश्लेषेण समाधानं कारिके इत्यादावव्याप्त्या सन्दूष्य तं दोषं संस्थाप्याऽसौ ब्राह्मणीत्यत्र "औङ आप" इति शीरूपदोषान्तरमापादितम्। तस्यायमाशयः—कारिके इत्यादिदोषः पदस्य विभज्यान्वाख्याने। औङित्यौकारविभक्तेः संज्ञेति पक्षे तुर्यदोषः। अत्र च सुलोपविधानमेव ज्ञापकमिति। कैयटहरदत्तादीनान्तु महानत्र प्रमादः। उद्द्योतोपि तदनुसार्येवेति बोध्यम्। तदाह—दिगिति। असुकेत्यत्र सत्वेन मुत्वबाधेप्यदकः शर्मेत्यत्र तदभावेनैवं शब्दासंगतिरत आह—क्वचि-

"एत ईद् बहुवचने" ॥ पारिभाषिकस्य बहुवचनस्य ग्रहणे अमीभिरित्यादिसिद्धावपि जसि अमी इति न सिद्ध्येत् । न ह्यत्र एकारस्य बहुवचनपरताऽस्त्यतो व्याचष्टे—बह्वर्थोक्ताविति ।

"न मु ने" ॥ ने इति विषयसप्तमीत्याह—नाभावे कर्त्तव्ये इति । अन्यथा घेः परत्वाभावान्नाभावो न स्यादिति भावः । नन्वेवमपि कृते नाभावे "सुपि च" इति दीर्घः स्यात्, दीर्घं प्रति मुत्वस्यासिद्धत्वादत आह—कृते चेति । सन्निपातपरिभाषया वा समाधेयम् । अत्रेदमवधेयम्—अधुनेतिवदमुनेति वक्तव्ये "न मु ने" इत्युक्तिर्नेति योगविभागार्था । तेन रामो रामेभ्य इत्यादि सिध्यति । अन्यथा रोरसिद्धतयोकारस्येत्संज्ञालोपौ कथं स्याताम् । न चानुनासिकनिर्देशसामर्थ्यादित्संज्ञालोपौ प्रत्यसिद्धत्वं नेति वाच्यम् ? तरुमूलमित्यादौ "हशि च" इत्यस्य व्यावृत्तये "अतो रोः" इत्यत्रानुनासिकस्यैव निर्देशेन तत्रैव चरितार्थत्वात् ।

---

शब्दरत्नम् ।

दिति भावः ।

न स्यादिति । इनादेशगुणौ च स्यातामित्यपि बोद्धयम् । हशि चेत्यस्येति । तवर्थमित्यादौ "अतो रोः" इत्यस्य व्यावृत्त्यर्थमित्यपि बोद्धयम् । तत्रैव चरितार्थत्वा-

भैरवी ।

अदक इत्यत्र सान्तत्वेन मुत्वाऽप्राप्तिः । असुकीत्यत्र तु सत्वेन मुत्वस्य बाध इत्येवं शब्द उभयत्र मुत्वाप्राप्तिसूचक इति भावः । यत्र तु प्रामाणिकाऽमुकशब्दस्य प्रयोगो दृश्यते तत्र तस्याव्युत्पन्नत्वमिति वाच्यम् ।

मूले अन्यथेति । विषयसप्तमीत्वानङ्गीकार इत्यर्थः । नाभावे कर्तव्य इत्यर्थस्वीकारे नाभावस्य सिद्धावपि मुत्वस्यासिद्धत्वेनेनादेशगुणौ स्यातामिति रूपासिद्धिरेव दोष इति सूत्रासङ्गतिरस्त्येवेति विषयसप्तमीत्वमावश्यकन्तथा च नाभावविषये मुत्वन्नासिद्धमित्यर्थः । एवञ्चेनादेशगुणदृष्ट्याप्यसिद्धत्वन्नेति फलितम् । तरुमूलमित्यत्र "हशि च" इत्यस्य व्यावृत्तिर्यथानुनासिकनिर्देशस्य फलन्तथा तवर्थमित्यत्र "अतो रोः" इति सूत्रस्य प्रवृत्तिवारणमपि फलमिति प्रथमस्य तस्य त्यागे बीजाभाव इत्यत आह—तवर्थमिति । आदिना तवर्थेरीत्यादेः सङ्ग्रहः । अत्र योगविभागाभावे इत्संज्ञालोपौ प्रति चोत्वविधायकशास्त्रदृष्ट्याप्यसिद्धत्वं स्यादित्युत्वविधायकसूत्रमेवासम्बद्धं स्यादिति तत्सामर्थ्यादुत्वं सर्वादेशः स्यादिति केचित् । वस्तुतस्तु "आदेः परस्य" इति शास्त्रैकवाक्यतया तवर्थमित्यादावादौ रेफस्योत्वं स्यादिति बोध्यम् । ननूत्वविधायकशास्त्रस्थरुशब्दः प्रतिपदोक्तस्य बोधको भविष्य-

भावप्रकाशः ।

दिति । तथा चाऽऽद्यांशमादाय साम्यसूचक एवं शब्द इति भावः । केचित्त्वज्ञाताद्यर्थाऽनवगतेर्नाकचीदं रूपं किन्त्वव्युत्पन्नोऽदःशब्दपर्यायोऽमुकशब्दोप्यस्तीत्याहुः ।

ननु नाभावार्थं तथार्थस्वीकारेऽप्यनिष्टमेव, मुत्वासिद्धत्वेनेनादेशगुणयोः प्रागेव दुर्वारत्वात् । तथा च सूत्रमसम्बद्धमेवात आह—नेति । अयं भावः—नाभावविषये मुत्वं नासिद्धम् । तच्च नाभावं प्रत्येवेति नाग्रहः । तथा च तदर्थेन तयोरविचारणमिति । प्रथमोपात्त "अतो रोः" इत्यस्य त्यागस्य निर्बीजत्वप्रतिपादनायाह—तवर्थमिति । अन्यथा सामर्थ्यादुत्वं सर्वादेशः स्यात् । एवञ्च तवर्थादावेव

सरला ।

सन्निपातपरिभाषया वेति मूले । वस्तुतस्तु "सुपि च" इति दीर्घे कर्तव्ये सा परिभाषा न प्रवर्तते इत्यन्यत्र निरूपितम् ।

न च "अतो रोः" इत्यत्र मास्त्वनुनासिकता, प्रतिपदोक्तग्रहणेनैव निर्वाहादिति वाच्यम् ? एवमपि देव रुहीत्यत्र रुधातोर्दुर्वारत्वात् । राम इत्यादावत्र्यनुनासिकस्य रोः श्रवणस्याऽऽपाद्यमानतया चरितार्थत्वस्य सुवचत्वाच्च । एवं च स्थानिवत्सूत्रस्यापि प्रवृत्तौ पदत्वाद्विसर्गोऽपि लभ्यते । "प्रत्ययः" "परश्च" इत्यादिनिर्देशा यत्वविधावश्ग्रहणं चेह लिङ्गमिति दिक् ॥

इति हलन्ताः पुलिङ्गाः ॥

"नहो धः" ॥ द इत्येव नोक्तम् , तथा हि सति नद्धमित्यत्र "रदाभ्याम्"इति नत्वं स्यात् । "झषस्तथोः" इति च न स्यात् । अत्रेदमवधेयम्—सुष्ठु अनड्वा-

---

शब्दरत्नम् ।

दिति । सामर्थ्याच्चोत्वं सर्वादेशः । एवं च—योगविभागेनासिद्धित्वाभावे च । अश्ग्रहणं चेति । अत्र यद्वक्तव्यं तदुक्तं प्राक् ॥

इति हलन्ताः पुल्लिङ्गाः ॥

ननु संनिपातपरिभाषया नत्वं न स्यादत आह—झष इति । धत्वे कृते संनिपात-

भैरवी ।

तीति न तर्वर्थमित्यादौ दोष इति शङ्कां निरस्यति मूले—न चेति । एवमपि-प्रतिपदोक्तस्य रुशब्दस्य ग्रहणेऽपि । रुहीति । अत्र रुशब्दः प्रतिपदोक्त एवेति भावः । रुहीत्यत्र रुशब्द इति, रुधातुः । लोडन्तमेतत् । एवञ्चेति । योगविभागेनान्यत्राप्यसिद्धत्वन्नेत्यर्थः । मूले—स्थानिवत्सूत्रस्यापीति । अन्यथा एतदृष्ट्याप्यसिद्धत्वं स्यादिति स्थानिवद्भावानापत्तिः स्यात् । दिगर्थस्तु यद्यपि योगविभागः प्रकृतसूत्रेऽप्रामाणिक इति शङ्का भवति, तथापि यत्वविधावश्ग्रहणाल्लिङ्गात्क्वचिदसिद्धत्वाभावोऽनुमातुं शक्यते । तथा हि "प्रत्ययः" "परश्च" इत्यादिनिर्देशाद्विसर्गविधावेवासिद्धत्वाभावोऽनुमातुं शक्यते इति यद्यपि सम्भवति, तथापि "भोभगो" इति सूत्रेऽश्ग्रहणन्देवाः सन्तीत्यादौ यत्वस्यासिद्धत्वाद्विसर्गेऽपि तस्य स्थानिवद्भावेन रुत्वाद्यत्वम्माभूदित्येवमर्थङ्कृतम् । तच्च त्रैपादिकस्य शास्त्रस्यासिद्धत्वे व्यर्थमिति तत्क्वचिदसिद्धत्वन्नेत्यंशे लिङ्गमिति अश्ग्रहणमनर्थकमिति रीत्या तत्प्रत्याख्याने तु "हलोऽनन्तरा" इत्यादि निर्देशाः पदान्तत्वप्रयुक्तपूर्वरूपप्रवृत्त्योपपाद्यमानाः प्रकृतार्थज्ञापका भविष्यन्ति । अत एव तेष्वनन्तरा इत्यादीनामुपपत्तिर्भवतीति । अत्र-अश्ग्रहणविषये योगविभागविषये च । तदुक्तमिति । अश्ग्रहणं व्यर्थमेव । योगविभागोऽप्यप्रामाणिक एवेति सर्वं सन्धिप्रकरणे उक्तमित्यर्थः ।

इति हलन्तपुल्लिङ्गविवरणम् ॥

प्रक्रियालाघवमूलिकामाशङ्कान्निरस्यति मूले-द इत्येव नोक्तमिति । सन्निपातपरिभाषयेति ।

भावप्रकाशः ।

स्यादितित्वस्याश्रयात् सिद्धत्वे मानाभावेन मनोरथादेरसिद्धिरेव स्यादिति भावः । इष्टार्थस्य दूरत्वादाह—योगेति । अत्र-अश्ग्रहणविषये योगविभागविषये च । तदुक्तमिति । अश्ग्रहणं व्यर्थमेव । योगविभागोऽप्रामाणिक एवेति सर्वं सन्धिप्रकरणे उक्तमित्यर्थः । विवेचितं चेदमारम्भे तत्रापि चेति तत एव द्रष्टव्यम् । एतेन दुरुपपादत्वात् क्लिष्टत्वाच्चाश्ग्रहणस्य ज्ञापकत्वं नव्योक्तमुपेक्ष्यमिति रत्नाकरोक्तमपास्तम् ॥

इति हलन्ताः पुल्लिङ्गाः ।

द्वौ यस्य मिति बहुव्रीहौ स्वनड्वानित्यादि पुंवदेव रूपम् । यत्तु गौरादिङीषं कृत्वा स्वनड्वाहीत्युदाजहरुस्तच्चिन्त्यम् "अनुपसर्जनाद्" इत्यधिकारविरोधात् । गीरिति । गॄ निगरणे शब्दे च । क्विप् । "ऋत इत्" इतीत्त्वम् । "र्वोरुपधाया" दीर्घः । पूरिति । पॄ पालनपूरणयोः । "उदोष्ठ्यपूर्वस्य" इत्युत्त्वम् ।

आशिषाविति । 'आशासः क्वावुपसंख्यानम्' इत्युपधाया इत्वम् । "शासिवसि" इति षत्वम् ।

इति हलन्ताः स्त्रीलिङ्गाः ॥

अन्वादेश इति । अयं चाऽम्येवेति व्याख्यातारः । तस्य लुका लुप्तत्वेऽपि वचनसामर्थ्यात्प्रत्ययलक्षणमित्याहुः । वस्तुतस्तु सूत्रे एवैनद्वक्तव्यः । एनम्, एनौ इत्यादि तु त्यदाद्यत्वेन सिद्धम् । क्लीबेऽमि लुका लुप्तेऽपि तकारोच्चारणसाम-

---

शब्दरत्नम् ।

परिभाषाया अनित्यत्वान्नद्धमित्यादौ जश्त्वं बोध्यम् ॥

इति हलन्ताः स्त्रीलिङ्गाः ॥

अम्येवेति । औशसादिष्वेतेनैव सिद्धिरिति भावः । त्यदाद्यत्वेनेति ।

भैरवी ।

या ह्यसिद्धत्वविषयेऽपि भवतीति प्रागुक्तम् । ननु हस्य धकारादेशेऽपि नद्धमित्यत्र जश्त्वं सन्निपातपरिभाषया न स्यादसिद्धत्वादत आह—अनित्यत्वादिति । अत एव पास्पर्द्धीत्यादौ जश्त्वम्माधवादिभिरुक्तम् । न च द इति न्यासे सन्निपातपरिभाषया नत्वं वार्यते, ध इति न्यासे तु तस्याः परिभाषाया अनित्यत्वादप्रवृत्तिं स्वीकृत्य जश्त्वमुपपाद्यत इति पूर्वापरविरोध इति वाच्यम् ? इष्टानुरोधेनाऽनित्यस्य वचनस्य प्रवृत्त्यप्रवृत्त्योः स्वीकारस्य सुप्रसिद्धत्वात् । मूले-गॄ निगरण इति । तुदादिरयम् । शब्दे चेति । अयङ्क्र्यादिः ।

इति हलन्तस्त्रीलिङ्गविवरणम् ।

अम्येवेतीति । यद्येनादेशः क्रियते तदा "अतोम्" इत्यमि कृते एनमिति स्यादत एनद्विधिरिति भावः । औशसावित्यत्राऽऽदिना ओसोर्ग्रहणम् । एतेनैव सिद्धिरिति । विशेषविहितत्वात् ।

भावप्रकाशः ।

असिद्धविषयेऽपि सन्निपातेति परिभाषाप्रवृत्तेः सन्धिप्रकरणे उक्तत्वेन जश्त्वाऽसिद्धत्वेन तदप्रवृत्तेरिति मान्योक्तेरयुक्तत्वादाह—अनित्यत्वादिति । अत एव पास्पर्द्धीत्यादौ जश्त्वाद्युपन्यस्तं माधवादिभिः । एतेन द इत्यादि न स्यादित्यन्तं मूलमनूद्य तच्चिन्त्यं "दो दद्धोः" इत्यत्र स्वयं स्वीकृतदान्तपक्षे इवोक्तपरिभाषया नत्वानापत्तेः । धग्रहणस्य श्रवणार्थत्वस्यैवावश्यकत्वात् शङ्काया निर्दलत्वापत्तेश्च । उत्तरे एतदनुक्तेर्न्यूनत्वाच्च । न हि भवन्मते धत्वे कृते जश्त्वं सुलभमुक्तपरिभाषाविरोधात् । यदि तु-मान्योक्तरीतिर्विभाव्यते; विभाव्यतां नाम न त्वेतावता पूर्वापरविरोधः सुपरिहर इति खण्डनकृदुक्तमपास्तम् । अनित्यत्वस्येष्टानुरोधेनाश्रयणेन दोषलेशाभावादिति दिक् ॥

इति हलन्ताः स्त्रीलिङ्गाः ।

---

अम्येवेतीति । एनादेशे तु सति "अतोम्" इत्यमि एनमिति स्यादत एनद्विधिस्तत्रेति भावः । आदिना टौसोर्ग्रहणम् । एतेनैव सिद्धिरिति । विशेषविहितत्वात् । एनत् प्रवृत्तावपि अन्तरङ्गत्वादत्वात पूर्वं प्रवृत्तौ ततोऽत्वे विशेषाभावादेवमुक्तम् । इति भाव इति । 'अन्वादेशे नपुंसकैकवचने एनदिति वाच्यम्' इति वार्तिकानुकारिप्रक्रियाग्रन्थस्य नपुंसकैकवचनमात्रम् । "द्वितीयाटौस्स्वेनः" इत्यत्रास्य पाठादिति व्याख्यातॄणां प्रकाशकृतामिति भावः । प्रकाशीयपूर्वपक्षं सिद्धान्ततया मूले आह—वस्तुत

र्थ्यादेनदादेशः । न चैवमेतच्छ्रित इत्यत्रापि तदापत्तिः, एकपदाश्रयत्वेनान्तरङ्गे स्वमोर्लुकि चरितार्थत्वेन बहिरङ्गे सामासिके लुकि तदप्रवृत्तेः ।

## शब्दरत्नम् ।

न च येन नाप्राप्तिन्यायेनैनदस्त्यदाद्यत्वापवादत्वेन तत्र कृते कथं त्यदाद्यत्वम्। न चोपसर्जन एनच्चरितार्थः, त्यदाद्यत्वेन सिद्धमिति भाष्यासङ्गत्यापत्तेः । एनदोऽप्युपसर्जने "एतदस्त्रतसोः" इति साहचार्यैणाप्रवृत्तेः स्वीकारात् । न च नपुंसकेऽमि तच्चारितार्थ्यं द्वितीयादिग्रहणस्यैवमप्यचारितार्थ्यादिति वाच्यम् ? "आर्धधातुके" इत्येतत्साहचर्येणास्यापि द्वितीयादिविषये पूर्वमेव प्रवृत्तेरित्याशयात् । एतत्सर्वं भाष्ये 'यद्येनत् क्रियत' इत्याद्येकदेश्युक्त्या ध्वनितम् । स्वमोर्लुकीति । तद्विषये "न लुमता" इति निषेधबाधेन चारिता-

## भैरवी ।

न चेति । वाच्यमिति परेणान्वयः । अपवादत्वेनेति । अत्वे कृतेऽकृते वा एनदादेशे विशेषाभावादिति भावः । उपसर्जनेऽसर्वनामत्वेनान्तर्गणकार्याप्रवृत्तेरपि स्वीकारे इहापवादत्वमेनदादेशस्य न सम्भवतीति शङ्कां वारयति—न चोपेति । भाष्यासङ्गत्यापत्तेरिति । "एतदस्त्रतसोः"इति पूर्वसूत्रस्य त्रतसोरित्येतदनुवादेन सर्वनामत्व एव प्रवृत्तिस्वीकारेणैतच्छब्दस्यानुपसर्जनार्थप्रतिपादकस्यैव तत्र ग्रहणादर्थाधिकारानुरोधादनुपसर्जनस्यैवेहाऽपि ग्रहणमिति भावः । उक्ताशयादेवाह—एनदोप्युपेति । तच्चारितार्थ्यमिति । तत्र लुग्विधेः प्रवृत्त्याऽत्वस्याप्राप्तेरिति भावः। द्वितीयादि ग्रहणस्य—तत्सूत्रपठितद्वितीयादिग्रहणस्य । पूर्वमेव प्रवृत्तेरिति । "आर्द्धधातुके" इतिवद् "द्वितीयाटौसु" इति विषयसप्तमीति भावः । उक्तार्थस्याग्रे निराकरिष्यमाणतयाऽनभिमतत्वं सूचयन्नाह—एतत्सर्वमिति । तद्विषयेति । "स्वमोर्नपुंसकात्" इति सूत्रविषये-

## भावप्रकाशः ।

स्त्विति । न च परत्वेन त्यदाद्यत्वे तत एनदादेशे 'लक्ष्ये लक्षणम्' इति न्यायेनाऽत्वं दुर्लभमिति वाच्यम्? अपवादत्वादत्वस्यांगसंज्ञासापेक्षत्वेन बहिरङ्गतयान्तरङ्गत्वाच्चैनदादेशस्यैव प्राक् प्रवृत्तेः । अत एव सूत्रे एनतं विधाय तकारोच्चारणसामर्थ्येन क्लृप्तबाधाप्रधानातिदेशनिषेधस्य "न लुमता" इत्यस्यैव बाधो न त्वस्येति क्लीबे लुक्यपि प्रवृत्तिं स्वीकृत्य वार्तिकप्रत्याख्यानं भाष्योक्तं सङ्गच्छते । अन्वादेशे वर्तमानयोरिदमेतदोरित्यर्थस्य सत्त्वेनोपसर्जनेऽप्राप्तिः । अभिव्यक्तेति न्यायेन संज्ञायां नेति मान्योक्तेरसांगत्यं ध्वनयन्नाह—न चेति । तान्तदान्तयोरविशेषादाह—एनदिति । एतेन दान्तत्वं तकारोच्चारणसामर्थ्येनेत्यग्रिमग्रन्थविरुद्धमिति मन्दोक्तमपास्तम् । उपसर्जने, एनदतिक्रान्तं कुलमत्येनदित्यादौ न्यायेन तथार्थलाभाय हेत्वन्तरमाह—एनदोऽपीति । अपिरत्वदेनस्यापि समुच्चायकः । साहचर्येणेति । त्रतसोरनुपसर्जनादेव सम्भवादिति भावः । यद्वा एको हेतुरयं असङ्गत्यापत्तिः साहचर्यं हेतुः। तच्चारितार्थ्यमिति । तस्य लुका लुप्तत्वेन त्यदाद्यत्वाप्राप्त्या मूलोक्तरीत्या एनदादेशचारितार्थ्यमित्यर्थः । द्वितीयादीति । तत्सूत्रेऽस्यपाठादिति भावः । एवञ्चौशसादिष्वत्वाभावेन तश्रवणापत्तिरिति त्यदाद्यत्वेन सिद्धमित्ययुक्तमेवेति भावः । पूर्वमेवेति । "आर्धधातुके" इतिवत् "द्वितीयाटौसु" इति विषयसप्तमीति भावः । उक्तार्थस्याग्रे खण्डनाय यक्षाऽनुरूपो बलिरिति न्यायेन तत्र तादृशसम्मतिमाह—एतत्सर्वमिति । आदिपदग्राह्यं त्वग्रे स्फुटीभविष्यति । एकदेश्युक्त्येति । यदिगर्भवाक्ये पूर्वपक्ष्युक्तित्वस्यैवौचित्यात् अपवादत्वमेकदेशी न जानातीति भावः । तद्विषयेति । "स्वमोर्नपुंसकात्" इति लुग्विषयेत्यर्थः ।

## सरला ।

एकदेश्युक्त्येति । यदिपदघटितत्वादस्य भाष्यस्य तत्त्वमिति भावः । वस्तुतस्तु न तस्य तत्त्वं, तत्रोत्तरादानाद् भाष्यान्तरविरोधाभावाच्च । तथा च एनादेशो न वक्तव्यः, त्यदाद्यत्वविषये तक्रन्यायाप्रवृत्त्या शब्दरत्नोक्तदिशा विषयसप्तम्याश्रयणाद्वा एनदादेशेऽपि त्यदाद्यत्वेन सिद्धेः । तक्रन्यायस्य तत्रविषयेऽप्रवृत्तेरेव 'सः' इत्यत्र सत्त्वेऽपि त्यदाद्यत्वप्रवृत्तिरिति ।

"रोऽसुपि" ॥ अहर्भातीति । प्राचा तु "अहन्" इत्युपन्यस्तं तदिहानुचितम् । अहोभ्यामित्याद्यर्थतया कथं चिद्योज्यम् ।

असृक्शब्दस्त्विति । एतच्च क्षीरस्वामिग्रन्थे स्पष्टम् ।

वहूर्जीति । अन्त्यादिति च वाचनिकम् । तथा च वार्तिकम्—'बहूर्जि

---

शब्दरत्नम् ।

र्थ्येन बहिरङ्गलुग्विषये तद्बाधे न मानमिति भावः ।

वस्तुत एतत्सर्वमत्र्यकैयटानुरोधेन, तकारोच्चारणसामर्थ्येन नपुंसकलुकीवात्रापि सामर्थ्यादेवैनत्प्रवृत्तेः । न च बहिरङ्गत्वम् , लुग्विषये बहिरङ्गपरिभाषाऽप्रवृत्तेः । अत एव 'एनदादेशे एतच्छ्रितक इति न सिद्ध्यति, एनच्छ्रितक इति प्राप्नोति' इति भाष्य सङ्गच्छते । एनद्विधानेन एतत्सूत्रविषये "न लुमता" इत्यस्याप्रवृत्तिरिति तदाशयः । वस्तुत एषामनभिधानमेव, अस्यां शङ्कायां 'यथालक्षणमप्रयुक्ते' इति भाष्योक्तेः । विषयसप्तम्यां माना-

भैरवी ।

त्यर्थः । बहिरङ्गलुग्विषयेति । बहिरङ्गो यो "द्वितीयाश्रित" इति समासस्तत्प्रयुक्त "सुपो धातु" इति लुग्विषये "न लुमता" इति सूत्रबाध इत्यर्थः ।

अत्रापि । सामासिकलुक्यपि । सामर्थ्यादिति । स्पष्टार्थम्पुनरुपादानम् । परिभाषाऽप्रवृत्तेः—परिभाषायाः प्रवृत्त्यभावात् । अन्तरङ्गानपीति न्यायादिति भावः । अत एव—तत्र तदप्रवृत्तेरेव । एनदादेश इति । सूत्रेण क्रियमाण इति शेषः । एतच्छ्रितक इति पाठः । एतत्सूत्रेति—प्रक्रान्तद्वितीयाटौस्स्वेनदिति सूत्रेत्यर्थः । तदाशयः—भाष्याशयः । एवमेकदेश्युक्त्या मूलन्दूषयित्वा सिद्धान्तमाह—एषामिति । अन्वादेशविषये इदमेतदोः "द्वितीयाश्रित" इति समाससञ्ज्ञकसमुदायानामित्यर्थः । अस्याम्—यद्येनदित्यादिना सूचितायाम् । यदार्धधातुक इत्यादिना प्रागुक्तन्दूतषयति—विषयेति । "आर्द्धधातुके" इत्यत्र विषयसप्तम्या भाष्यसन्मतत्वेऽ-

भावप्रकाश ।

बहिरिति । बहिरङ्ग "द्वितीयाश्रित" इति समासप्रयुक्त "सुपो धातु" इति लुग्विषये "न लुमता" इति बाधे इत्यर्थः ।

अत्रापि—सामासिकलुक्यपि । सामर्थ्यादेवेति । स्पष्टार्थं पुनरुक्तम् । परिभाषाऽप्रवृत्तेरिति । परिभाषाप्रवृत्त्यभावादित्यर्थः । अन्तरङ्गानपीति न्यायादिति भावः । अत एव—अत्र तदप्रवृत्तेरेव । एनदादेशे इति । सूत्रेण क्रियमाणे इति शेषः । विधानेनेति । "द्वितीया" इति सूत्रेणेति भावः । अत एवाह—एतत्सूत्रेति । प्रक्रान्तद्वितीयेति सूत्रे इत्यर्थः । लुकोप्यस्त्विति भावः । तदाशयः—भाष्याशयः । एवमेकदेश्युक्त्यापि मूलं सन्दूष्य सिद्धान्तमाह—एषामिति । अन्वादेशविषये इदमेतदोः श्रितादिभिः सह कृतद्वितीयाश्रितेति समाससंज्ञानां पूर्वोक्तानामित्यर्थः । अस्यामिति । 'यद्येनत् क्रियते एनो न वाच्यः कथमेनमित्यादि त्यदाद्यत्वेन सिद्धं यद्येवमेतच्छ्रितको न सिध्यति एनत् श्रितक इति पाप्नोति' इति पूर्वोक्तशङ्कायामित्यर्थः । यथा ततोऽनभिधानं तथा प्रागुक्तम् । मानाभावे त्विति । तत्र भाष्यवार्तिकादिप्रामाण्यात्साहचर्याङ्गीकारेण विषयसप्तम्यङ्गीकारेपि अत्र गमकाभावात्साहचर्यस्याऽनाश्रयणा-

सरला ।

अनभिधानमेवेति । वस्तुतस्तु अनभिधाने न मानम्, "यथालक्षणमप्रयुक्ते" इति भाष्यस्य 'अप्रयुक्ते लक्षणानुसारेण साधुत्वं प्रत्येतव्यम्' इत्यस्य प्रियातिसृशब्दे प्राग्व्यवस्थापितत्वेन तकारोच्चारणसामर्थ्येन अन्तरङ्गनपुंसकलुकि प्रवृत्तावपि बहिरङ्गसामासिकलुकि प्रवृत्तौ मानाभावेन 'एतच्छ्रितकः' इत्यस्यैव न्याय्यत्वात्तदेव साध्विति बोध्यम् ।

प्रतिषेधः' 'अन्त्यात्पूर्वो नुमित्येके' इति । भाष्ये तु अचः परो यो झल् तदन्तस्य नुमित्यर्थमाश्रित्य प्रथमं वार्तिकं प्रत्याख्यातम् । एवं तु उर्द् माने, गर्ह गर्हाया-मित्यादीनामपि क्विबन्तानां नुमा न भाव्यमेव—यथोत्तरं मुनीनां प्रामाण्या-दिति दिक् । अल्लोपस्येति । 'क्वौ लुप्तं न स्थानिवत्' इति तु नेहाश्रीयते, तस्य क्वाचित्कत्वात् । 'क्वौ विधिं प्रति न स्थानिवत्' इत्यस्यैव सार्वत्रिकत्वा-

शब्दरत्नम् ।

भावे त्वेनैनतौ पृथग्वक्तव्यौ इत्याहुः ।

अचः पर इति । "नपुंसकस्य" इति सूत्रेऽज्ग्रहणसामर्थ्येनाऽऽवृत्त्या अच इत्यस्य झल्विशेषणत्वम् । अन्यथेगन्तानाम् "इकोचि" इत्येव सिद्ध्या एजन्तेषु नपुंसकह्रस्वत्वेन चाकारग्रहणमेव कुर्यात् । आवृत्तौ मानं च "दाण्डिनायन" इति सूत्रे हिरण्मयानीति निर्देश एव । काष्ठतक्षीत्यादौ झल्त्वजातेरचः परत्वाद्भवत्येव नुम् । ऊर्क् शब्दादौ तु नेति भावः । तदाह—एवमिति । एतेन युजशब्दाद् "नपुंसकस्य" इति "युजेः" इति च नुमृद्वय-मित्यपास्तम् , "युजेः" इत्यस्य नित्यत्वात् पूर्वं प्रवृत्तौ अचः परझलोऽभावेन "नपुंस-कस्य" इत्यस्याऽप्राप्तेः । वस्तुत ऊर्जादेः क्विपि नपुंसके नुम्विषयेऽनभिधानमेव वार्तिका-

भैरवी ।

पीह तदाश्रयणे मानाभाव इति भावः । पृथगिति । अन्यथोक्तरूपाणामसिद्धिः स्यात् । अत एव भाष्ये-'नपुंसकैकवचने एनद् वक्तव्यः, कुण्डमानय प्रक्षालयैनत्' इत्युक्तम् । अत्र नपुंस-कैकवचन इत्युक्त्याऽन्यत्रैनादेशो वाच्य इति स्पष्टमेवोक्तं वार्तिककृता सिद्धान्तिना । इत्या-हुरिति । भाष्यतत्त्वविद इत्यर्थः ।

"नपुंसकस्य" इति सूत्रेऽच इत्यस्य सकृच्छ्रुतत्वात्कथमर्थद्वयलाभ इत्यत आह—नपुंस-कस्येतीति । अन्यथा—उभयविशेषणत्वानङ्गीकारे । झल्विशेषणत्वे प्रमाणन्तु प्रथमवार्तिकप्र-त्याख्यानपरभाष्यमेव । अङ्गविशेषणत्वे प्रमाणाकाङ्क्षायामाह—आवृत्ताविति । अच इत्यस्य झल्विशेषणत्वेऽव्याप्तिशङ्कां वारयति—काष्ठेत्यादिना । "दिव औत्" इति सूत्रीयभाष्यस्थोऽ-यम्प्रयोगः । ऊर्क् शब्दादाविति । रेफे झल्त्वजातेरभावात् । एतेन-वक्ष्यमाणदोषेण । तद्दूषण-मुपपादयति—युजेरित्यस्येति । स्वीयसिद्धान्तमाह—वस्तुत इति । नुम्विषय इति । यदंशे फल-

भावप्रकाशः ।

दिति भावः । पृथगिति । अन्यथोक्तरीत्या औडन्तादिरूपासिध्यापत्तिः । अत एव भाष्ये 'नपुंसकैक-वचने एनद्वक्तव्यः, कुण्डमानय प्रक्षालयैनत्' इत्युक्तम् । अत्र नपुंसकैकवचने इत्युक्त्या अन्यत्र एनो वाच्य इति स्पष्टमेवोक्तं वार्तिककृता सिद्धान्तिना । एवञ्चाऽत्येनमिति सिध्यर्थमेनोऽपि कार्यः । उक्तवार्तिकेन विधीयमान आदेशः क्लीबनिष्ठसंख्यासमर्पकेष्वेव स्यान्न तु समासविभक्तौ । एनस्तु गौणत्वेऽपि भवति स्वरूपमात्राश्रयत्वादिति प्रकाशः संगत एव । एवञ्च, भाष्यकृता एनस्य प्रत्याख्यानादयमयुक्त इति मूला-नुयायिरत्नाकरोक्तं, तथा दंड्युक्तञ्च उक्तसमासे तु द्वावपि न स्तः, विभक्तेर्लुका लुप्तत्वात् । तथा च एतद् श्रित इत्येव भाव्यमिति प्रकाशोक्तञ्च सर्वथा अयुक्तमेवेति दिक् । आहुरिति । भाष्यानुयायिन इत्यर्थः ।

ननु "अच" इत्यस्य सकृच्छ्रुतत्वात् कथं तथार्थलाभोऽत आह-नपुंसकेति । विशेषणत्वं तदपी-त्यर्थः । वैयर्थ्यमाह-अन्यथेति । नन्वफलत्वादग्रहणस्याप्यभावे तदर्थस्य तावतैव लाभेन किमावृत्त्याऽत आह—आवृत्ताविति । तत्फलन्तु कुण्डानीत्यादिसिद्धिः । काष्ठतक्षीति । "दिव औत्" इति सूत्र-भाष्योक्तोऽयं प्रयोगः । ऊर्गिति । रेफे झल्त्वजातेरभावादिति भावः । एतेनेत्यस्यार्थमाह-युजेरिति । क्लीबतोऽन्यत्र प्रयोगसत्त्वसूचनायाऽऽह-नपुंसक इति । नुम्विषयतोऽन्यत्रापि तत्सत्त्वादाह-नुमिति ।

दिति स्पष्टमाकरे ।

अश्वाक्षिभूतानीति । सप्तविंशत्यधिका पञ्चशतीत्यर्थः । तथा हि-सौ नवानामन्त्यस्य द्वित्वेऽष्टादश । औङि चतुर्णां मध्ये पूजार्थानां त्रयाणां अद्वित्वे सप्त । अनुनासिकस्तु नास्ति प्रगृह्यत्वात् । जसि अद्वित्वस्यानुनासिकस्य च विकल्पात् द्वादश । सङ्कलनया सप्तत्रिंशत् । एवं द्वितीयायामपि । टायां चतुर्दश । भ्यामि अष्टचत्वारिंशत्, भप्राग्वर्ण-य-मानां द्वित्वात् । भिसि चतुर्विंशतिः । ङयि सप्त । अनुनासिकस्तु नास्ति, एकारस्याऽनण्त्वात् । भ्यसि भ्याम्वत् । ङसौ—ङसादिपञ्चके चतुर्दश । सुपि गत्यर्थे त्रयाणां ककारषकारयोर्द्वित्वेन उकारस्यानुनासिकेन चतुर्विंशतिः । एवं कुक्पक्षे षण्णां ङषयोर्द्वित्वे अनुनासिके च अष्टचत्वारिंशत् । कुगभावे त्रयाणां ङकारद्वित्वे अनुनासिके च द्वादश । सु १८ औ ७ जस् १२ अम् १८ औ ७ शस् १२ टा १४ भ्यां ४८ भिस् २४ ङे ७ भ्यां ४८ भ्यस् ४८ ङसि १४ भ्यां ४८ भ्यस् ४८ ङस् ओस् आम् ङि ओस् प्रत्येकम् १४ सुप् ४८ । अत्रेदमवधेयम्—पूजायां जसि नुमागमे कृते तस्य पाक्षिके द्वित्वे अकारत्रयसहितं रूपषट्कम् । एवं शस्यपीति सङ्कलनया द्वादश । तथा च-रूपं ग्रहाग्नि ५३९ भूताख्यमिति, भाष्यव्यतिरिक्तमते इति दिक् । यत्तु वदन्ति-

शब्दरत्नम् ।

नुरोधात् । अन्यथा भाष्यवार्त्तिकयोः फलभेदापत्तेरित्याहुः । आकरे इति । "दीधीवेवीटाम्" इति सूत्रे "न पदान्त" सूत्रे च भाष्यकैयटयोरित्यर्थः ।

सङ्कलनयेति । तत्कृत्यं मन्दबोधनम् । चतुर्दशेति । पूजार्थानां त्रयाणां अद्वित्वात् सप्तानामनुनासिकविकल्पाच्च । चतुर्विंशतिरिति । भप्राग्वर्तिवर्णविसर्गद्वित्वात् । विसर्गे तु नानुनासिकः, अप्रगृह्यस्येति पर्युदासेनाऽऽक्षरसमाम्नायिकेष्वेव तत्प्रवृत्तेः । ङषयोरिति । षकारद्वित्वं 'शरः खय' इत्यनेन । भाष्यव्यतिरिक्तमते इति । भाष्यम-

भैरवी ।

भेदस्तत्रैवानभिधानमिति भावः । अन्यथा—अनभिधानाकल्पने । फलभेदेति । वार्तिकमते बहूर्जिशब्द एव नुम्प्रतिषेधो नोर्दादौ, भाष्यमते तु तत्रापि नुमोऽप्राप्तिरिति फलभेदापत्तिरित्यर्थः । आकर इति । एतेन भाष्यकैयटादिग्रन्थस्य प्रामाण्यलाभः ।

तत्कृत्यमिति । सङ्कलनाकृत्यमित्यर्थः । मूले हेत्वकथनादाह—पूजेति । विसर्गस्याऽकारोपरिपाठेनाऽण्त्वादनुनासिकापत्तिं वारयति—विसर्गे त्विति । भाष्यव्यतिरिक्तमित्यनेन भाष्यासम्मतत्वमुक्तन्तदुपपादयति—भाष्यमत इत्यादिना । मूले-त्रिसप्तत्यधिकमिति । परमूलोक्तानि

भावप्रकाशः ।

यदंशे फलभेदस्तत्रैवाऽनभिधानमिति भावः । फलभेदेति । वार्तिकमते बहूर्जिशब्दे एव नुम्प्रतिषेधो नोर्दादौ, भाष्यमते तु तत्रापीति फलभेद इत्यर्थः । आकरे इत्यस्य हरदत्ताद्यर्थकत्वेनाऽरुचिसूचकत्वभ्रमनिवारणायाह-दीधीति । भाष्ये ध्वनितम् कैयटे स्पष्टमित्यर्थः ।

सङ्कलनयेत्यस्य रूपानुपपादकत्वेनाधिक्यादाह-तदिति । एतत् कार्यमित्यर्थः । मूले हेतोरभावादाह-पूजेति । सप्तानामिति । सगत्यर्थकानामित्यर्थः । प्राग्वदाह-भेति । भप्राग्वर्तिवर्णस्य विसर्गस्य च द्वित्वादित्यर्थः । एवम्भप्राग्वर्तिवर्णस्य यमयोश्च द्वित्वादिति मूलार्थो बोध्यः । विसर्गे त्विति । विसर्गस्य त्वित्यर्थः । अकारोपरिपाठेन तस्याप्यणत्वात् । तथा चाऽष्टचत्वारिंशद्रूपाणि स्युरिति भावः । आक्षरसमाम्नायिकेष्विति । चतुर्दशसूत्र्यां पठितेष्वेव, न तु कल्पितपाठेष्वित्यर्थः । "अचो र" इत्यादेरप्राप्तेराह-शर

ऊह्यमेवं द्वित्वपुनर्द्वित्वलोपविकल्पनैः ।
अष्टपञ्चाशतो वृद्धया त्रिसप्तत्यधिकं शतम् ।। इति ।

तच्चिन्त्यम् , पुनर्द्वित्वस्याऽप्रामाणिकत्वात् रूपानन्त्यप्रसङ्गाच्च । अष्टपञ्चाशतो वृद्धावुपपत्त्यभावाच्चेति दिक् ।

तिरश्ची इति । भत्वात् "अच" इत्यल्लोपः । अलोप इति वचनात्तिर्यादेशाभावः ।

स्वबिति । शोभना आपोऽस्मिन् सरसीति बहुव्रीहिः । "ऋक्पूः" इति समासान्ते प्राप्ते "न पूजनात्" इति निषेधः । यत्त्वनित्यत्वादिति प्राचोक्तं; तत्प्रामादिकम् । "द्व्यन्तरुपसर्गेभ्य" इति तु न भवति तत्राप इति कृतसमासान्तस्यानुकरणमिति वक्ष्यमाणत्वात् । सुपुमांसीति । "पुंसोऽसुङ्" इति सूत्रे सुटीति व्याचक्षाणस्य प्राचो मते शसि नैतत्सिद्ध्येत् । औङि चातिव्याप्तिः । अस्माकं तु सर्वनामस्थान इति यथासूत्रं ब्रुवतां सर्वेष्टसिद्धिरिति भावः ।।

इति हलन्ता नपुंसकलिङ्गाः ।।

"स्वरादिनिपातमव्ययम्" । स्वरादयो निपाताश्चेति समाहारद्वन्द्वः । स्वरिति स्वर्गे परलोके च । अन्तरिति मध्ये । प्रातरिति प्रत्यूषे । पुनरिति अप्रथमे विशेषे च । सुनुतर् अन्तर्धाने, स्वराद्याः पञ्च रेफान्ताः ।। उच्चैस् महति । नीचैस् अल्पे । शनैस् क्रियामान्द्ये । ऋधक् सत्ये । वियोगशीघ्रसामीप्यलाघवेष्वित्य-

---

शब्दरत्नम् ।

तेऽचः परो यो झलित्यर्थेन प्रकृतेऽचः परझल्त्वजातेरभावान्नुमोऽप्राप्तेरेवञ्चैतान्यसाधून्येवेति भावः । उपपत्त्यभावादिति । नियमे मानाभावादिति भावः ।

प्रामादिकमिति । शास्त्रेणैव सिद्धेरिति भावः ॥

इति हलन्ता नपुंसकलिङ्गाः ॥

भैरवी ।

नवाधिकशतरूपाणि । न चेह षण्णामाधिक्यमिति शङ्काग्रन्थरीत्या षट् अष्टपञ्चाशदधिकानि प्रक्रियाप्रकाशे उक्तानि एवं सङ्कलनयाऽष्टपञ्चाशतो रूपाणां वृद्धौ त्रिसप्तत्यधिकरूपाणि सम्पद्यन्त इत्यभिप्रायः । तावतामेव रूपाणां वृद्धिरित्यत्र प्रमाणाभावेन भवदुक्ता सङ्ख्या अनुपपन्नेत्याशयेन दूषयति—अष्ट पञ्चाशत इति । ननूक्तरीत्योपपत्तिः सम्भवत्येवेत्यत—आह—नियम इति । अष्टपञ्चाशत एव वृद्धिरिति नियमे मानाभाव इति भावः ।

प्रामादिकत्वे हेत्वनुक्तेर्न्यूनतेत्यत आह—शास्त्रेणैवेति ।

इति नपुंसकलिङ्गविवरणम् ॥

भावप्रकाशः ।

इति । झल्त्वजातेरिति । जातिव्यक्त्योरभेदाभिप्रायमिदं, नकारे झल्त्वजातेरभावादिति भावः । एतानि—सनुम्कानि । ननु तदुक्तरीत्या उपपत्तिसम्भवे मूलमयुक्तमत आह—नियमे इति । अष्टपञ्चाशत एव वृद्धिरिति नियमे इत्यर्थः ।

हेत्वनुक्तेराह—शास्त्रेणेति ॥

इति हलन्ता नपुंसकलिङ्गाः ।

न्ये । ऋते वर्जने । युगपदित्येककाले । आराद् दूरसमीपयोः । पृथक् भिन्ने । ह्यस् अतीतेऽन्हि । श्वस् अनागतेऽन्हि । दिवा दिवसे । रात्राविति निशि । सायमिति निशामुखे । चिरमिति बहुकाले । मनाक्, ईषत्, इमावल्पे । जोषं सुखे मौने च । तूष्णीमिति मौने । बहिस् अवस् इमौ बाह्ये । समयेति समीपे मध्ये च । निकषेत्यन्तिके । स्वयमित्यात्मनेत्यर्थे । वृथेति व्यर्थे । नक्तमिति रात्रौ । नञ् निषेधे । हेताविति निमित्ते । इद्धेति प्राकाश्ये । अद्धा इति स्फुटावधारणयोः, तत्त्वातिशययोरित्येके । सामीत्यर्द्धजुगुप्सयोः । वत् "तेन तुल्यम्" इत्यादिभिर्विहितो वतिप्रत्ययः । यस्तु "उपसर्गाच्छन्दसि धात्वर्थे" इति विहितः स नेह गृह्यते, 'यद्वुद्वतो निवतो यासि' । सना सनत् इत्येते नित्ये । उपधेति भेदे । तिरस् अन्तर्द्धौ तिर्यगर्थे परिभवे च । अन्तरेति मध्ये विनार्थे च । अन्तरेणेति वर्जने । ज्योगिति काले भूयस्त्वे प्रश्ने शीघ्रार्थे सम्प्रत्यर्थे च । कमिति वारिमूर्द्धनिन्दासुखेषु । शं सुखे । सहसेत्याऽऽकस्मिकाऽविमर्शयोः । विनेति वर्जने । नानेत्यनेकविनार्थयोः । स्वस्तीति मङ्गले । स्वधा पितृदाने । अलं भूषणपर्याप्तिशक्तिवारणनिषेधेषु । वषट् वौषट् श्रौषट् एते हविर्दाने । अन्यदित्यन्यार्थे । अस्तीति सत्तायाम् । उपांश्वित्यप्रकाशोच्चारणरहस्ययोः । क्षमेति क्षान्तौ । विहायसेति वियदर्थे । दोषेति रात्रौ । मृषा मिथ्येत्येतौ वितथे । मुधेति व्यर्थे । पुरेत्यविरते चिरातीते भविष्यदासन्ने च । मिथो मिथस् एतौ रहस्सहार्थयोः । प्रायस् इति बाहुल्ये । मुहुस् पुनरर्थे । प्रवाहुकं समकाले सिद्धार्थे च । प्रवाहिकेति पाठान्तरम् । आर्यहलमिति बलात्कारे । शाकटायनस्तु आर्येति प्रतिबन्धे, हलमिति प्रतिषेधविवादयोरित्याह । आभीक्ष्ण्यमिति पौनःपुन्ये । साकं सार्द्धमेतौ सहार्थौ । नमस् नतौ । हिरुक् वर्जने । धिक् निन्दाभर्त्सनयोः । अम् शैघ्र्येऽल्पे च । आम् अङ्गीकारे । "किमेत्तिङव्यय" इति "कास्प्रत्ययात्" इत्यादिभिश्च विहितः प्रत्ययोऽपीह गृह्यत इत्येके । पपाचतराम्, कारयामास । प्रताम् ग्लानौ । प्रशान् समानार्थे । प्रतान् विस्तारे । मा, माङ् एतौ शङ्कानिषेधयोः ।

आकृतिगण इति । तेनान्येऽपि ज्ञेयाः । तथा हि—कामं स्वाच्छन्द्ये । प्रकामित्यतिशये । भूय इति पुनरर्थे । साम्प्रतमिति न्याय्ये । परमिति किन्त्वर्थे । साक्षात्प्रत्यक्षे । साचि तिर्यगर्थे । सत्यमित्यर्द्धाङ्गीकारे । मङ्क्षु, आशु एतौ शैघ्र्ये । सम्वत् वर्षे । अवश्यं निश्चये । सपदि शैघ्र्ये । बलवदित्यतिशये ।

शब्दरत्नम्

इत्यादिभिरिति । आदिना "तत्र तस्येव" "तदर्हम्" । इत्येक इति । अत्रारुचिबीजं "किमेत्तिङ्" इति विहितस्य "तद्धितश्च" इत्यनेन सिद्धिः "कास्प्रत्ययात्"

भैरवी ।

तदर्हमिति । अस्य अनयोर्ग्रहणमिति शेषः । विहितस्येति । आम इति शेषः ।

भावप्रकाशः ।

तदर्हमिति । अस्य अनयोर्ग्रहणमिति शेषः । विहितस्य—आमः । एवमग्रेपि ।

सरला

मूले—नेह गृह्यते इति । छान्दसत्वादेव तत्र सिद्धेरिति भावः ।

प्रादुस् , आविस् इति प्रकाशे । अनिशं, नित्यं, नित्यदा, अजस्रं, सन्ततं, एते सातत्ये । उषेति रात्रौ । रोदसी द्यावापृथिव्यर्थे । ॐ इत्यङ्गीकारे ब्रह्मणि च । भूरिति पृथिव्याम् । भुव इत्यन्तरिक्षे । झगिति, झटिति, तरसा, इति शैघ्र्ये । सुष्ठु प्रशंसायाम् । दुष्ठु अतिकष्टे । सु पूजायाम् । अह आश्चर्ये । कु इति कुत्सितेषदर्थयोः । अञ्जसा तत्त्वशीघ्रार्थयोः । मिथु इति द्वावित्यर्थे । भाजक् इति शैघ्र्ये । चिराय, चिररात्राय, चिरस्य, चिरं, चिरेण, चिरात् इत्येते चिरार्थकाः । अस्तमिति विनाशे । आनुषक् आनुपूर्व्ये । अनुषक् अनुमाने । अम्नस् शीघ्रसाम्प्रतिकयोः । स्थाने इति युक्ते । वरमितीषदुत्कर्षे । सुदि शुक्लपक्षे । वदि कृष्णपक्षे इत्यादि ।

वेति समुच्चयादिषु । 'वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये' । हेति प्रसिद्धौ । अहेति पूजायाम् । एवेत्यवधारणेऽनवक्लृप्तौ च । एवमिति उक्तपरामर्शे । नूनमिति निश्चये तर्के च । शश्वदिति पौनःपुन्ये, नित्ये, सहार्थे च । युगपदिति ऐककाल्ये । भूयस् पुनरर्थे आधिक्ये च । कूपदिति प्रश्ने प्रशंसायां च । कुविदिति भूत्यर्थे प्रशंसायां च । नेदिति शङ्काप्रतिषेधविचारसमुच्चयेषु । चेदिति यद्यर्थे । चण् अयं चेदर्थे णित् । समुच्चयादौ त्वननुबन्धः । कच्चिदिति इष्टप्रश्ने । यत्रेत्यनवक्लृप्त्यमर्षगर्हाश्चर्येषु । नावकल्पयामि न मर्षये गर्हे आश्चर्यं वा यत्र भवान् वृषलं याजयेत् । नहेति प्रत्यारम्भे । हन्तेति हर्षे विषादे अनुकम्पायां वाक्यारम्भे च । माकिः माकिं नकिरिति त्रयोऽपि वर्जने ।

माङ्नञौ स्वरादिषु उक्तौ । इह पाठस्तु निपातत्वार्थः । तेन आद्युदात्तत्वं सिद्ध्यतीति प्राञ्चः; तच्चिन्त्यम्, फिट्स्वरेणापीष्टसिद्धेः । यदप्याहुः—सत्त्ववचनानामपि अव्ययसंज्ञार्थः स्वरादिपाठ इति; तदपि चिन्त्यम् , लक्ष्मीवाचकस्यापि माशब्दस्याव्ययत्वापत्तेः । तस्मादुभयत्र पाठे फलं चिन्त्यम् ।

यावत् तावत् एतौ साकल्यावधिमानावधारणेषु । साकल्ये-यावत् कार्यं तावत् कृतम् । अवधौ—यावत् गन्तव्यं तावत्तिष्ठ । माने—यावद्दत्तं तावद्भुक्तम् । अवधारणे-यावदमत्रं ब्राह्मणानामन्त्रयस्व । त्वै विशेषवितर्कयोः । द्वै वितर्के । न्वै इति पाठान्तरम् । रै दाने अनादरे च । रै करोति, ददातीत्यर्थः । त्वं रै किं करिष्यसि । श्रौषट् वौषट् एतौ हविर्दाने । स्वाहा देवताभ्यो दाने । स्वधेति पितृभ्यः । श्रौषडादीनामनेकाचामुभयत्र पाठः स्वरभेदार्थः । तुमिति तुङ्कारे । गुरुं तुङ्कृत्य—हुङ्कृत्य । तथाहि निदर्शने । खलु निषेधे वाक्यालङ्कारे निश्चये च । किलेति वार्तायामलीके च । अथेति मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु । अयं स्वरादिरपि । तेन मङ्गलवाचकस्य सत्त्वार्थत्वेऽप्यव्ययत्वं सिद्ध्यति । तथा च श्रीहर्षः—

उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरे ।
यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयाम्बभूव ताम् ॥

अत्र हि स्नपयाम्बभूवेत्यस्य मङ्गलं स्नपनं चकारेत्यर्थः । निपातस्तु स्वरूपेणैव मङ्गलं मृदङ्गध्वनिवत् । सुष्ठु स्वरभेदार्थः पाठः । स्मेत्यतीते पादपूरणे च । आदहेत्युपक्रमहिंसाकुत्सनेषु ।

अवदत्तमिति । इहानुपसर्गत्वात् "अच उपसर्गात्तः" इति न भवति । अहमिति सुबन्तप्रतिरूपकम् । एतेन 'गेये केन विनीतौ वाम्' इति व्याख्यातम् । युवामर्थे हि वामित्यव्ययम् । अस्तीति तिङन्तप्रतिरूपकम् । एवमस्मीत्यऽहमर्थे । त्वामस्मि वच्मि । आहेत्युवाचेत्यर्थे । आसेति बभूवेत्यर्थे इत्यादि ।

अ इति सम्बोधने अधिक्षेपे निषेधे च । आ इति वाक्यस्मरणयोः । इ इति सम्बोधनजुगुप्साविस्मयेषु । ई उ ऊ ए ऐ ओ औ सम्बोधने । पशु सम्यगर्थे । पशु मन्यमानाः । शुकं शैघ्र्ये । यथाकथाचेत्यनादरे । पाट् प्याट् अङ्ग हे है भो अये दते सम्बोधने । द्योत हिंसाप्रातिलोम्यपादपूरणेषु । विषु नानार्थे । एकपदे इत्यकस्मादित्यर्थे । युत् कुत्सायां हेतौ । आत इतोऽपीत्यर्थे । आकृतिगण इति । तद्यथा—यत् तत् इति हेतौ । आहोस्वित् विकल्पे । सिम सर्वतोभावे । कं पादपूरणे । सुकमतिशये । अनुकं वितर्के । शम्बट् अन्तःकरणे आभिमुख्ये च । व पादपूरणे इवार्थे च । दिष्ट्या इत्याऽऽनन्दे । चटु चाटु प्रियवाक्ये । हुमिति भर्त्सने । इवेति सादृश्ये । अद्यत्वे इदानीमित्यर्थे इत्यादि ।

अत्रेदमवधेयम् । स्वरादिचाद्योराकृतिगणत्वाऽविशेषेऽपि येषां निपातस्वरो दृष्टस्ते चादिषु । अन्ये स्वरादिषु । स्वरद्वयभाजस्तूभयत्र बोद्धव्याः । यथा—उतशब्दः स्वरादिषु 'ईडचो नूतनैरुत' इत्यन्तोदात्तप्रयोगात् । यत्तु उतशब्दस्य स्वरादितामुक्त्वा निपातस्वरमाशङ्क्यान्तोदात्तनिपातनमाश्रित्य समादधुस्तद्भ्रमसात् । स्वरादेरनिपातत्वात्, अन्तोदात्तत्वनिपातवैयर्थ्याच्च । यदपि काशिकायामुक्तम् । स्वर् शनैस् ऋधक् दिवा वृथा नक्तमित्यादयोऽन्तोदात्ता इति । यच्च, सनत् सनात् एवमादय आद्युदात्ता इति; तत्सर्वं प्रामादिकम् । लक्ष्यविसम्वा-

---

शब्दरत्नम् ।

इति विहितात्परस्य "आमः" इत्यनेन लुक्सिद्धया तस्य तत्त्वे फलाभाव इति ।

अनुपसर्गत्वादिति । अवदत्तं चेत्यादि भाष्ये तकाराऽकरणेन गुणभूतोपसर्गत्वबाधो बोद्धव्य इति भावः ।

यदपीति । स्वरादीनुपक्रम्यान्तोदात्ताः पठ्यन्त इति काशिकायाम् । प्रामादिक-

भैरवी ।

आम इति । लेरिति तत्र नानुवर्तत इति भावः । तस्य—तद्विहितस्यामः । तत्त्वे—अव्ययत्वे । चण् अयञ्चेदर्थे णिदिति मूले उक्तम् । "निपातैर्यद्यदि" इति सूत्रेऽस्य ग्रहणम् ।

अवेत्यस्य प्रादिपठिताऽवशब्दसमानानुपूर्वीकत्वेऽप्युपसर्गत्वाभावे मानमाह—अवदत्तमित्यादि । गुणभूतेति—"अच उपसर्गात्तः" इति सूत्रस्य प्रवृत्तिनिमित्तांशविशेषणीभूतेत्यर्थः । क्रियायोगसत्त्वेनोपसर्गत्वेऽपि तत्वस्य भाष्यकारीयप्रवृत्तिरिति यदि ब्रूषे तदा तत्वस्य विधेयत्वेन प्राधान्यात्तस्य बाधोऽनुचित इति गुणबाध एवोचित इति भावः ।

स्वरादीनिति । अत्र स्वरादिशब्दो मूलपठितस्वरादिसमुदायपरः । तेन पुनःशब्दस्य निरा-

भावप्रकाशः ।

आम इति । "लेः" इति तत्र नानुवर्तते । अतिप्रसंगस्त्वन्यत्र वारित इति भावः । तस्य—तद्विहितामः । तत्त्वे—अव्ययत्वे ।

अवदत्तं विदत्तं चेत्यादीति पाठः । 'गुणे त्वन्याय्यकल्पना' इति न्यायेन प्रधानतादेशबाधो न न्याय्य इत्याशयेनाह—गुणेति ।

स्वरादीनिति । पुनर्वर्ज्यमिति बोध्यम् । लक्ष्यविसम्वादादित्यस्यार्थं सूचयितुमादौ दोषमाह—

दान्निर्मूलत्वाच्चेति शब्दकौस्तुभे प्रपञ्चितम् ।

"तद्धितश्चासर्वविभक्तिः"। सर्वेति । वचनत्रयात्मिकेत्यर्थः । नेति । किं तु एकवचनमेवोत्पद्यते इति भावः । तद्धितः किम् ? एकः द्वौ त्रयः । असर्वेत्यादि किम् ? औपगवः ।

"कृन्मेजन्तः"। जीवसे इति । "तुमर्थे सेसेन्" इति असेप्रत्ययः । पिबध्यै इति । तेनैव शध्यैप्रत्ययः "पाघ्रा" इति पिबादेशः । यत्त्वाहुः—कर्त्तरि शबिति, तद्भ्रमसात् । 'अव्ययकृतो भावे' इति सिद्धान्तात् । अन्तग्रहणमौपदेशि-

---

शब्दरत्नम् ।

मिति । 'न्यङ्स्वरौ स्वरितौ' इति फिट्सूत्रेण स्वरितत्वात् । 'सनाच्च होता नव्यः' 'तिरः पुरुचिदश्विना' इत्यादौ सनात्तिरसोरन्तोदात्तपाठाच्च । निर्मूलत्वाच्चेति । आद्युदात्तप्रापकशास्त्राऽभावादिति भावः ।

सिद्धान्तादिति । व्यत्ययेन यगभाव इति भावः । अन्तग्रहणमिति । मेज्भ्यां

भैरवी ।

सः । यदुक्तं लक्ष्यविसम्वादादिति तस्य लक्ष्यविसम्वादस्य बोधनायाह—न्यङ्स्वराविति । एतेन स्वरशब्दस्य स्वरितत्वविधानेनाऽन्तोदात्ता इत्ययुक्तमिति भावः । इदमुपलक्षणम् । 'अन्तरिक्षमथो स्वः' इति स्वरितस्य प्रयोगोऽपि बोध्यः । अन्त्ये लक्ष्यविसम्वादमाह—सनादिति । शास्त्राभावादिति । एतेन निपातनेन कल्पनायान्दृढतरमानसत्त्वे साधुत्वमिति दर्शितम् ।

ननु यदि शध्यैप्रत्ययो भावे भवति तदा "सार्वधातुके यक्" इत्यस्यापत्तिरत आह—व्यत्ययेनेति । यत्तु शप्यपि "पुगन्त" इति गुणापत्तिमाशङ्क्य व्यत्ययेन गुणाभाव इति ; तन्न, भावे प्रत्ययसत्त्वेन शपः प्राप्तेरेवाभावात् । नन्वन्तग्रहणस्य वैयर्थ्ये सति ज्ञापकता वाच्या, सैव तु कुत इत्यत आह—मेज्भ्यामिति । लक्षणप्रतिपदोक्तपरिभाषाया वर्णग्रहणेऽपि प्रवृत्ते-

भावप्रकाशः ।

न्यङिति । इदमुपलक्षणम् 'अन्तरिक्षमथो स्वः' इति स्वरितप्रयोगोऽपि बोध्यः । तथैवान्त्ये आह—सनादिति । एतेन स्वरादेर्ऋधकोऽन्तोदात्तत्वं वृत्तावुक्तमप्ययुक्तम् 'ऋधगित्थासमर्त्यः' इत्यादिलक्ष्यविरोधादिति केचित्तन्न, 'ऋधक् सोमस्वस्तये' इत्यादावन्तोदात्तस्यापि तस्य पाठात् । तस्मादौत्सर्गिकमन्तोदात्तत्वन्तस्य तद्विशिष्टमिति खण्डनकृदुक्तमपास्तम्, तस्य मूलकृत्तात्पर्यविषयत्वस्यैवाभावात् । 'वाक्यं सावधारणम्' इति न्यायेन अन्तोदात्ता एवेति निर्धारणस्यायुक्तत्वाच्च । 'सनुत्तरादयो नवान्तोदात्ताः' इति वृत्त्युक्तमप्ययुक्तम्, 'शनैश्चिद्यन्तो अद्रिवः' 'पृथक् प्रायन् प्रथमा' इत्यत्र द्वयोराद्युदात्तत्वस्य प्रसिद्धत्वात् । एवं ह्यसादयः साम्यन्ता द्वाविंशतिरन्तोदात्ता इत्यपि तदुक्तमयुक्तम्, 'दिवाचित्तमः कृण्वति' 'वृथाऽसृजत् पथिभिः' 'नक्तं ददृश्रे कुह चिद्दिवेयुः' इत्यादावाद्युदात्तप्रयोगात् । शास्त्राभावादिति । तन्निपातने मानाभावादिति भावः । एतेन प्रातराद्युदात्त इति प्रसादोक्तमपास्तम्, 'प्राता रत्नम्' 'प्रातरग्निम्' 'प्रातरिन्द्रं हवामहे' इत्यादावन्तोदात्तप्रयोगाच्च ।

सिद्धान्तादितीति । तथा च कर्त्रर्थकसार्वधातुकपरत्वाभावाच्छपोऽप्राप्तेरिति भावः । नन्वेवं यगापत्तिरत आह—व्यत्ययेनेति । एतेन प्रकाशखण्डकमूलमयुक्तम्, तत्र सूत्रोल्लेखेन यकि प्राप्ते व्यत्ययेन शबिति तदाशयात् । स्वस्यैव परं शबनुक्तेर्न्यूनत्वाच्चेति खण्डनकृदुक्तमपास्तम्, प्रकृते गुणाभावेन लाघवाद्बाहुलकेन यगभावस्यैवौचित्येन शप्करणे फलाभावात् । अत एव 'पिबध्यै' इति प्रतीकमुपादाय यक्, तस्य "बहुलं छन्दसि" इति लुगिति हरदत्तः । वैयर्थ्याभावेन तदर्थालाभादाह—मेज्भ्यामिति ।

कत्वप्रतिपत्त्यर्थम्। तेनेह न। आधये। चिकीर्षवे। लक्षणप्रतिपदोक्तसन्निपातपरिभाषाभ्यां सिद्ध्यैतयोरनित्यत्वज्ञापनायेदम्।

"क्त्वातोसुन्कसुनः"। उदेतोरिति। उत्पूर्वादिणो "भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्"। विसृप इति। "सृपितृदोः कसुन्"।

आब्ग्रहणमिति। तथा च वार्त्तिकम्—'अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावात्' इति। सूत्रभ्योक्तिसम्भवस्तु "स्त्रियाम्" इति सूत्रे स्त्रीसमानाधिकरणादिति पक्षं गृहीत्वा बोद्ध्यः। स च न स्थितः, भूतमियं ब्राह्मणीत्यादावतिव्याप्तेः। अलिङ्गत्वे आथर्वणविद्यागतश्रुतिविरोधमाशङ्क्याह—सदृशमिति। लिङ्गकारकेति। विभक्तिवचनशब्दौ कारकसंख्यापराविति भावः। यथा वाचेति। परिगणनमिदमित्येके। अन्ये तूदाहरणमात्रमित्याहुः। वगाह इति। आदिरेवाकारो लुप्यते नान्त्यः, अपिना साहचर्यात्।

इत्यव्ययानि॥

---

शब्दरत्नम्।

कृतो विशेषणात्तदन्तलाभे सिद्धे इत्यादिः। लक्षणेति। क्वचिद्वर्णग्रहणेऽपि तत्परिभाषाप्रवृत्तिः। तत्राऽप्रवृत्तिज्ञापकं च तदनित्यत्वमात्रज्ञापकमिति भावः।

भूतमिति। भूतशब्दः पौतन्यवृत्तिर्नित्यनपुंसकस्तत्र पर्जन्यवल्लक्षणप्रवृत्त्याऽन्तरङ्गत्वात् ह्रस्वे शब्दान्तरसन्निधानोत्तरं टापि लक्ष्ये लक्षणस्येतिन्यायेन न पुनर्ह्रस्व इति भावः।

इत्यव्ययानि॥

भैरवी।

भाष्यसम्मतत्वान्मूलं युक्तमेवेत्याह—क्वचिदिति। वर्णग्रहणे तस्याः परिभाषाया अप्रवृत्तिमभ्युपेत्याह—सन्निपातेति।

'भूतमियम्' इत्यत्र भूतशब्दः स्त्रियाङ् क्लीबे वा? आद्ये भूतेयमिति स्यात्; अन्त्ये स्त्रीसमानाधिकरणादिति पक्षे टाप्यपि नपुंसकह्रस्वत्वेनेष्टसिद्धिर्भविष्यतीत्यत आह—भूतशब्द इति। पौतन्यम्पूतनाया भावः-पूतनावृत्त्यसाधारणो धर्मः। सामान्ये नपुंसकम्। धर्मधर्मिणोरभेदेन ब्राह्मणीपदेन सामानाधिकरण्यम्। अन्तरङ्गत्वादिति। टाबपेक्षयेत्यादिः। लक्ष्य इति। विकारस्याऽऽनुपूर्व्यैक्येन लक्ष्यभेदाऽभावादिति भावः। आदिना ब्राह्मणीभिर्दारैरित्यस्य सङ्ग्रहः। इत्यव्ययानां विवरणम्।

भावप्रकाशः।

विशेषणात—विशेष्यीकरणात्। ननु वर्णग्रहणे तदप्रवृत्तेर्मूलाभिमतत्वेनात्राप्रवृत्त्येदं मूलमयुक्तमत आह-क्वचिदिति। "ओत्" सूत्रस्थभाष्यादिप्रामाण्यात्। एवञ्चेदं मूलं युक्तमेवेति भावः। नन्वेवमपि मूलान्तरासंगतिरेवाऽत आह-तत्रेति। वर्णग्रहणे तदप्रवृत्तावुपदेशग्रहणं ज्ञापकमिति यदुक्तं मूले, तत्परिभाषायाः सामान्यतोऽनित्यत्वमात्रज्ञापकमित्यर्थः। मात्रपदेनोक्तार्थज्ञापकत्वव्यावृत्तिः। लक्ष्यानुरोधेनोभयत्र व्यवस्था। एवञ्च मूलस्य पूर्वापरविरोधो नेति भावः। एतेन वर्णग्रहणे तदप्रवृत्त्येदमयुक्तमित्यरुचेराह-सन्निपातेतीति मान्योक्तव्याख्यानमपास्तम्, सिद्धान्तरीत्यैव योजनौचित्यात्।

ननु भूतमियमित्यत्र भूतशब्दः स्त्रियां क्लीबे वा? आद्ये भूतेयमित्यस्यैव भाव्यत्वात्। अन्त्ये तत्पक्षे टाप्यपि नपुंसकह्रस्वत्वेनेष्टसिद्धेरत आह-भूतेति। पूतनायाः भावः पौतन्यं-तद्वृत्तिर्धर्मः। तथा च 'सामान्ये नपुंसकम्' इति क्लीबत्वम्। तदाह-नित्येति। तत्र-भूतशब्दे। विकारान्यानुपूर्व्या ऐक्यमित्याशयेनाह-लक्ष्य इति। मूले आदिना ब्राह्मणीभिर्दारैरित्यादिसंग्रहः॥

इत्यव्ययानि।

# अथ स्त्रीप्रत्ययाः ।

खट्वेति । "अशूप्रुषिलटिखटिकणिविशिभ्यः क्वन्" । पञ्चाजीति । न च तदन्तविधिविरहादेव टाब्नेति वाच्यम् ? अमहत्पूर्वग्रहणेनाऽनुपसर्जनाधिकारेण च स्त्रीप्रत्ययेषु तदन्तविधिज्ञापनात् । मूषिकेति । 'वृश्चिकृषोः किकन्' इत्यधिकारे 'मुषेर्दीर्घश्च' इति किकनि इकारमदृष्ट्या मूषिकशब्दः । यस्तु मूष स्तेये इति दीर्घोपधात्संज्ञायां क्वुनि मूषकशब्दो माधवेनोक्तस्ततोऽप्ययं टाप् । "प्रत्ययस्थात्" इतीत्वमिति तु विशेषः । यत्तु क्वुन्नन्तोऽसौ अजादिगणे पाठं न प्रयुङ्क्ते, तस्य जातिलक्षणङीप्बाधानार्थत्वात् संज्ञायाश्चाऽजातित्वादित्याहुः ; तच्चिन्त्यम् , व्याघ्रीत्यादिवत् सञ्ज्ञात्वेऽपि जातित्वाऽनपायात् ।

---

शब्दरत्नम् ।

**अनुपसर्जनाधिकारेण चेति** । तस्य हि बहुकुरुचरा व्यावर्त्या । एवं च "वनो र च" इत्यत्रेवात्रापि तदन्तविधिरिति भावः । **जातित्वानपायादिति** । क्वुनादिवि-

भैरवी ।

तस्य हि—अनुपसर्जनाधिकारस्य हि, हिशब्द एवार्थः । एतेनाऽऽपिशलिना प्रोक्तमधीते आपिशलमिति न व्यावर्त्यं प्रोक्ताणः स्त्रियामवर्तमानात् । अध्येत्रण् तु लुप्तः । अध्येत्रर्थगतस्त्रीत्वमादाय श्रूयमाणाऽण्णन्तात्प्रत्ययस्तु न, स्त्रियामित्यस्य गृह्यमाणविशेषणत्वात् । काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी तामधीते काशकृत्स्ना ब्राह्मणी, अत्राध्येत्रर्थकस्याणो लुकापहारे "लुक् तद्धित" इति स्त्रीप्रत्ययस्यापि लुकि 'लक्ष्ये लक्षणम्' इति न्यायेन पुनर्न ङीबिति नान्यव्यावर्तकत्वेन तदधिकारचारितार्थ्यमिति ध्वनितम् । एवञ्च—बहुकुरुचरेत्यस्य तदन्तविधिम्विनाऽनुपपन्नत्वे च । "वनो र च" इति सूत्रे तदन्तविधेः "वनो र च" इति सूत्रे स्पष्टमुक्तत्वात्तस्य दृष्टान्तता । ननु संज्ञाशब्दस्थले शब्दस्वरूपमेव प्रवृत्तिनिमित्तन्न जातिरिति मूषकशब्दस्य संज्ञायां व्युत्पादितस्य कथञ्जातिवाचकत्वमत आह—क्वुना-

भावप्रकाशः ।

आपिशलिना प्रोक्तमधीते आपिशला ब्राह्मणीति तु न तद्व्यावर्त्यम् , प्रोक्ताऽणः स्त्रियामवर्तनात् । अध्येत्रण् तु लुप्तः । अण् योऽकार इति व्याख्यानेन वर्णाश्रये प्रत्ययलक्षणाभावात् । अध्येत्रर्थगतस्त्रीत्वमादाय तदण्निमित्तकस्तु ङीप् न , 'स्त्रियाम्' इत्यस्य गृह्यमाणविशेषणत्वात्तदण एतत्स्त्रीत्वेऽवर्तनात् । अत एव काशकृत्स्निना प्रोक्तां मीमांसामधीते काशकृत्स्ना ब्राह्मणीत्यत्रापि न ङीप् । प्रोक्तार्थगतस्त्रीत्वमादाय तु पुनर्न ङीप् , लक्ष्ये लक्षणस्येति न्यायात् । एवञ्चेदमपि न तद्व्यावर्त्यम् । तदेतद् हृदि निधायाह—**बह्विति** । लिङ्गस्य शब्दनिष्ठत्वमपीत्याशयेनाह—**व्यावर्त्येति** । अन्यथा पुन्निर्देश उचितः । एवञ्च—तद्व्यावर्त्यत्वस्य तदन्तविधिं विनाऽनुपपन्नत्वे च । मूलकृता तत्र तदन्तविधेः स्पष्टमुक्तत्वात्तस्य दृष्टान्तत्वमाह—**वन इति** । वन्नन्तान्तादित्यर्थवदजाद्यन्तादित्यर्थः । अन्यथा तत्रापि

सरला ।

अनुपसर्जनाधिकारेणेति । "शूद्रा चामहत्पूर्वा जातिः" इति वार्तिकप्रत्याख्यानपक्षे तदन्तविधौ "अनुपसर्जनात्" इत्यधिकारो ज्ञापकः । स च 'बहुकुरुचरा' इत्यत्र टजन्तत्वप्रयुक्तङीब्वारणाय कृतः । न च तत्र तदन्त विध्यभावे कथमपि तत्प्राप्तिः, बहुकुरुचर इत्यस्य टजन्ततदादित्वाभावात् । तदन्तविधौ तु टजन्ततदादि कुरुचरेति, तदन्तत्वं बहुकुरुचरेऽव्याहतमिति तत्र ङीब्वारणाय सोऽधिकार इति । कुरुचरेत्यस्य उपसर्जनत्वेन न तत्र ङीप् । नचाऽनुपसर्जनाधिकारो गौर इवाचरति गौरायते, गौरायते इति गौरा इत्यत्र "षिद्गौरादिभ्यश्च" इति ङीष्वारणाय चरितार्थ इति वाच्यम् ? ज्ञापकपरभाष्यप्रामाण्येन

भस्त्रफलेति । भस्त्रेव फलानि यस्या इति विग्रहः । ङ्याप्पोरिति । एतच्च फल निष्पत्ताविति धातौ माधवग्रन्थे स्थितम् । भाष्ये तु प्रायेण दीर्घ एव पठ्यते ।

प्रत्यक्पुष्पेति । "पाककर्ण" इत्यादिसूत्रस्थभाष्यवार्तिकपर्यालोचनयेदमुक्तम् । तेन सत्प्राक्काण्डेति पाठो नादर्तव्यः ।

शूद्रा चेति । शूद्रशब्दष्टापमुत्पादयति जातिश्चेत् । महत्पूर्वस्तु न । जातिश्चेदितीहापि सम्बध्यते । पुंयोगे त्विति । पुंयोगो दाम्पत्यरूप एवेति न नियमः, किन्तु जन्यजनकभावोऽपि । तेन—

'वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ' इति सिद्धम् । महाशूद्रीति ।

'आभीरीतु महाशूद्री जातिपुंयोगयोः समा' इत्यमरः ।

अत्रेदमवधेयम् । अजादिगणे शूद्रेत्येव पाठ्यम् । जातिरिति व्यर्थम् ।

---

शब्दरत्नम् ।

धौ संज्ञापदेन रूढिरेव गृह्यते न तु शब्दप्रवृत्तिनिमित्तकत्वरूपं संज्ञात्वं गृह्यते । अत एव 'घ्रः संज्ञायाम्' इत्यादिना व्याघ्रादिसिद्धिरिति दिक् ।

भैरवी ।

दीति । अत एव—संज्ञापदेन रूढिग्रहणादेव । सा च रूढिर्व्याघ्रत्वजात्यवच्छिन्न एवेति व्याघ्रीत्यस्य सिद्धिः । दिगिति । दिगर्थस्तु 'त्रयीशब्दानाम्प्रवृत्तिर्न सन्ति यदृच्छाशब्दा' इति पक्षे सर्वेषां संज्ञाशब्दानाञ्जातिशब्दत्वमेवेति तदा शङ्कैव नास्ति ।

भावप्रकाशः ।

तदन्तविधिर्न स्यात् । एवञ्च प्राधान्यात्तदधिकाराच्च 'स्त्रियाम्' इति ङीप्प्रकृतिविशेषणमेव । सा च तदन्तात् केवलाद्वेत्यन्यत् । अत एव धीवानमतिक्रान्ताऽतिधीवरीत्यादि सिद्धम् । अनुपसर्जनादिति च सामर्थ्याद् गृह्यमाणविशेषणमेव । न चैवं केवलान्न स्यात् 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधादिति वाच्यम् ? तस्य सूत्रोपात्ताऽन्ताद्यादिशब्दविषयकत्वस्य सिद्धान्तितत्वेनाऽत्राऽप्राप्तेः, 'तस्य च' इति वार्तिकेन निर्वाहाच्चेति भावः । एतेन पञ्चाजीत्यत्र तदन्तविधिनिषेधाभ्यां कथं टाबित्याशंक्योक्तज्ञापकाभ्यां "येन विधिः" इति तदन्तविधेरनित्यत्वज्ञापनेन निषेधयोरप्राप्तिरितिमन्दोक्तमपास्तम्, तदन्तविधिनैव तयोः सार्थक्येन तदनित्यत्वस्य ताभ्यां ज्ञापयितुमशक्यत्वात् । तथापि प्रकृतग्रन्थासम्बद्धत्वस्य तदवस्थत्वाच्च । अत एव—संज्ञाशब्देन रूढिग्रहणादेव । रूढेश्च व्याघ्रत्वजात्यवच्छिन्ने सत्त्वात्तद्ग्रहणे सोपसर्गात्प्रत्ययोत्पत्तौ व्याघ्रादितद्वाचकशब्दसिद्धिरिति भावः । दिगिति । तदर्थस्तु त्रयी पक्षे तेषामपि जातिशब्दत्वमेवेति शंकैव नेति ।

सरला

आचारक्विबन्तप्रकृतिककर्तृक्विबन्तानां स्त्रियामनभिधानकल्पनात् । न च तत्र सूत्रेऽत इत्यनुवृत्तेरदन्तेभ्यो गौरादिभ्यो ङीषित्यर्थेन प्रकृतेऽदन्तत्वाभावादेवाप्राप्तिरिति वाच्यम् ? बहुशब्दादाचारक्विबन्तात् कर्तरि क्विपि "बह्वादिभ्यश्च" इति सूत्रस्याप्रवृत्त्यर्थं तदनभिधानस्यावश्यकल्पनीयत्वात् । एवमनडुह्शब्दस्य अशब्देन समासे तस्मादाचारक्विबन्तात्कर्तरि क्विपि अतो लोपे 'अनडुह्' इत्यस्मादपि ङीषभावार्थमनभिधानस्य कल्पनीयत्वात् । न चानडुह्शब्दादाचारक्विबन्तात्कर्तरि क्विप्येव दोषसत्त्वेन अशब्देन समासपर्यन्तमनुधावनं विफलमिति वाच्यम् ? "ह्रस्वनद्यापो नुट्" इति सूत्रे "प्रत्ययान्तादयं विधीयते तत्र नास्ति विशेषः मिदचोऽन्त्यात्पर इति वा परत्वे प्रत्ययः परश्च इति वा परत्वे" इत्यादिभाष्याद्धलन्तेभ्य आचारक्विपोऽनभिधानस्य क्लृप्तत्वेन तत्प्रकृतिककर्तृक्विपो दुर्लभत्वेन समासपर्यन्तानुधावनादृते गत्यन्तराभावात् । न च बहुशब्दादाचक्षाणण्यन्तात्कर्तरि क्विपि तत्र ङीषभावार्थं तस्य चारितार्थ्यमिति वाच्यम् ? तस्याप्यनभिधानकल्पनात् । विस्तरस्तु शेखरतोऽवगन्तव्यः ।

मुख्ये कार्यसम्प्रत्ययाज्जातिलक्षणो ङीषेव बाधिष्यते। पुंयोगे हि गौणी वृत्तिः। अमहदित्याद्यपि व्यर्थम्। महाशूद्रशब्दो हि विशिष्ट एव जात्यन्तरे वर्तते।

शब्दरत्नम्

**गौणी वृत्तिरिति**। लाक्षणिकत्वाऽपरपर्यायं गौणत्वमित्यभिमानेनेदम्। सदृशलाक्षणिकत्वमप्रसिद्धत्वमेव वा गौणत्वम्। गौणमुख्यन्यायश्च पदकार्यविषयोऽत एवाजस्य स्त्रीत्वर्थेऽजेत्येवेति। सिद्धान्ते तु जातिरित्यावश्यकमिति बोध्यम्। **जात्यन्तर इति**। ब्राह्मणादुग्रजातिकन्यायामुत्पन्ने आभीरजातावित्यर्थः। नृपात् शूद्रायामुत्पन्नोग्रजातिकन्या। न तु शूद्रत्वं तत्रास्ति। अत एव शूद्रसधर्माणस्ते इत्येव स्मृतिषूक्तं न तु शूद्रा इति।

भैरवी।

मूले तेनेति। जन्यजनकभावरूपस्यापि पुंयोगस्य ग्रहणादेव। यदि दाम्पत्यभावरूप एव पुंयोगो विवक्षितः स्यात्तदा वैश्याशूद्रयोरित्यनुपपन्नं स्यात्। या शूद्रेण विवाहिता सा राजन्येन विवाहिता न भवति। माहिष्यादिव्यवहारश्च विवाहितायामुत्पन्नानामेव, विन्नास्वेष विधिः स्मृतइतितत्प्रकरणशेषात्। गौणी वृत्तिरिति। तथा च गौणमुख्यन्यायेन सिद्धे जातिरिति व्यर्थमिति भावः। ननु सादृश्याद्यत्र प्रयोगस्तत्रैव गौणत्वव्यवहाराद् गौणीत्यनुपपन्नमत आह—लाक्षणिकत्वेति। अभिमानपदसूचितामरुचिं सूचयन् सिद्धान्तार्थमाह—सदृशेति। एवञ्च गौणमुख्यन्यायस्य नात्र विषयता। यत्र पुंयोगाज्जातिवाचकस्य शब्दस्य स्त्रियां वृत्तिस्तत्र तस्य शब्दस्यारोपेण प्रवृत्तेः स्त्रीकारान्न वस्तुतः शुद्रत्वजातिसत्त्वस्य शब्दप्रवृत्तिनियामकत्वमिति प्रकृते जातिरित्यस्याभावे टाप्स्यादिति जातिरित्यावश्यकमित्याशयः। गौणत्वमभ्युपेत्याप्याह—पदकार्येति। अत एव—वस्तुतः शूद्रत्वस्य महाशूद्रशब्दवाच्येऽसत्त्वादेव। स्मृतिषूक्तमिति।

'शूद्राणान्तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः'॥ इति।

अपध्वंसः—शूद्राविवाह इति तद्व्याख्यातारः। न तु शूद्रा इति। वस्तुतः शूद्रत्वजातिशून्या

भावप्रकाशः।

ननु गुणयोगाद्या लक्षणा सा गौणीति सिद्धान्तात्कथमत्र तत्त्वमत आह—**लाक्षणिकेति**। अभिमानपदसूचितामरुचिं ध्वनयन् सिद्धान्तमाह—**सदृशेति**। एवञ्च गौणत्वेन तन्न्यायाऽप्रवृत्तेरिति भावः। गौणत्वं अभ्युपेत्यापि तदप्रवृत्तिमाह—**गौणेति**। चो विषयपदोत्तरं योज्यः। स्पष्टं चेदम् "ओत्" सूत्रे कैयटे। एवञ्चाऽयं मूलभूतः कैयटो मूलवच्चिन्त्य एव। किञ्च तन्नते अजादिभ्यः पुंयोगे ङीषि अजीत्यादि स्यात्। न च सिद्धान्तेऽपि येन नाप्राप्त्या स्वार्थनिमित्तजातिलक्षणङीषबाधेन गणपाठस्य चारितार्थ्येन पुंयोगे ङीष् जायत एवेति वाच्यम्? बाध्यसामान्यचिन्तया गणपाठस्य सर्वबाधकत्वस्वीकारात्। अत्र च जातिग्रहणमेव मानम्। अत एव तन्न्यायस्यात्र सूत्रेऽप्रवृत्तिः, पदकार्यविषयत्वं वा। अन्यथा मुख्यारोपितार्थयोरुक्तरीत्या क्रमेण टाप्ङीषोः सिद्ध्या तदानर्थक्यमेव। तद् धृदि निधायाह—**अत एवेति**। उक्तहेतुद्वयादेवेत्यर्थः। इत्यर्थे। तत्रापि एवेन ङीषो व्यावृत्तिः। **आवश्यकमिति**। विधावित्यर्थः। तत्फलन्तु पुंयोगे शूद्रीति। एतेन विशिष्टयोरुपादाने तत्प्रवृत्तेः पदकार्यविषयत्वे मानाभावात्फलाभावाच्च चिन्त्योऽयं शब्दरत्न इति मन्दोक्तमपास्तम्। **उग्रेति**। उग्रत्वजातीयकन्यायामुत्पन्ननिष्ठाऽऽभीरत्वजातावित्यर्थः। ब्राह्मणादुग्रकन्यायामाभीरो नाम जायते। इति स्मृतेः। **नृपादिति**। 'वैश्याशूद्रयोस्तु' इति स्मृतेः। ननु पितृजातिसम्बन्धवन्मातृजातिसम्बन्धेन शूद्रत्वमपि तत्रास्तीत्यत आह—**अत एवेति**। उभयराहित्यादेव शूद्राणान्तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः। इति स्मृतेः। अपध्वंसः—शूद्राविवाहः। **न तु शूद्रा इतीति**। अत एव तत्कर्मणि न तेषामधिकारः। तद्वधेन

सरला।

**सदृशलाक्षणिकत्वमिति**। यथा पुरुषकृतधर्माऽधर्माभ्यां पुण्यपापयोः स्त्रीषु संक्रमः, एवं तद्वृत्तिधर्मान्तरस्यापीति। एवं च पत्नीत्वेनारोपो न सदृशत्वेनेति बोध्यम्। **पदकार्यविषय इति**। स्त्रीत्वानि-

तत्रावयवस्याऽनर्थकतया शूद्रशब्दार्थसमवेतस्त्रीत्वाभावात् टापः प्रसङ्ग एव नास्ति । या तु महती शूद्रा तत्र महाशूद्रेतीष्यत एव । क्रुञ्चेत्यादि । त्रयोऽमी हलन्ता इत्येके । 'क्रुञ्चानालभेत' 'उष्णिहककुभौ' इत्यादिप्रयोगमुदाहृत्याऽदन्ता अपि भाष्ये स्वीकृताः । पुंयोगेऽपीति । यदा ज्येष्ठादयः प्रथमजातादौ वर्तन्ते तदा अदन्तत्वादेव टाप् सिद्धः । यदा तु ज्येष्ठस्य स्त्रीत्यादिविवक्षा तदा पुंयोगलक्षणो ङीष् प्राप्तः सोऽनेन बाध्यत इति सूचयितुमपिशब्दः ।

मूलान्नञः । नञः किम्, शतमूली । अमूलेति । आषधिजातिरियम् ।

## शब्दरत्नम् ।

इष्यत एवेति । अतस्तद्व्यावृत्त्यर्थं नैतदिति भावः । भाष्यवार्तिककारौ तु शूद्रजातिवृत्तिमत्त्वेन तां जातिं तत्रारोप्य शूद्रशब्दप्रयोग इति शूद्रशब्दार्थसमवेतस्त्रीत्वस्य सत्त्वादस्त्येव टापः प्राप्तिरित्यमहत्पूर्वेति । शूद्रशब्दार्थसमवेतस्त्रीत्वेऽपि शूद्रशब्दादेव टाप्स्यान्न तु तदन्तादिति तदन्तविधिज्ञापकताऽपि भाष्योक्ता नासङ्गता । अत एव शङ्खेन—मातृजात्यारोपेणैव

## भैरवी ।

इत्यर्थः । अत एव तेषां शूद्रकर्मणि नाधिकारः । मूले, या तु महती शूद्रेति । अत्र शूद्रशब्दः शूद्रत्वजातिविशिष्टायामेव महच्छब्दार्थस्तत्राभेदेन विशेषणम् । न तु समुदायस्य जात्यन्तरविशिष्टार्थाभिधायकत्वम् । नैतदिति—नाऽमहत्पूर्वग्रहणमित्यर्थः । समासात्प्रागन्तरङ्गत्वात्प्राप्तस्य टापो वारणासम्भवात् । भाष्यवार्तिककाराविति । इति मन्येते इत्यत्रान्वयः । शूद्रजातिवृत्तिमत्त्वेनेति । शूद्रशब्दः शूद्रत्वात्मकधर्मपरस्तद्बोधकस्य जातिपदेन सम्बन्ध्यर्थे बहुव्रीहिस्तस्य षष्ठ्यन्तस्य वृत्तिपदेन "षष्ठी" इति सूत्रेण समासान्मतुपि त्वः प्रत्ययः । वृत्तिशब्दश्च जीवनोपायपरः । शूद्राणां यो जीवनोपायः स एवैषामित्यत्र मानन्तु 'शूद्राणान्तु सधर्माण' इति पूर्वोक्ता स्मृतिरेव । तथा च शूद्रसमानधर्मवत्त्वमूलकशूद्रत्वजात्यारोपविषयत्वेन तत्र शूद्रशब्दस्य प्रयोग इति भावः । टापः प्राप्तिरिति । महाशूद्रीशब्द इति शेषः । अयम्भावः—यद्यपि

ब्राह्मणादुग्रकन्यायामाभीरो तामजायत ॥

इत्यनेन संज्ञान्तरमेषामिति बोधितन्तथापि—

आभीरी तु महाशूद्री जातिपुंयोगयोः समा ॥

इति कोषेण महाशूद्रशब्दस्य तत्र वृत्तिर्बोध्यते । एवञ्च महाशूद्रशब्दः पङ्कजशब्दवद्योगरूढस्तत्र न तु केवलरूढः प्रवीणादिशब्द इव, इति शूद्रशब्दोऽप्यर्थवानेव । अजहत्स्वार्थेव वृत्तिरत्रत्येवाऽतिप्रसङ्गवारणायाऽमहत्पूर्वेत्यावश्यकमिति भावः । नन्वेवंसत्यमहत्पूर्वग्रहणस्य चारितार्थ्यात्तदन्तविधिज्ञापकता भाष्योक्ता कथं सङ्गच्छतामत आह—शूद्रशब्दार्थेति । अत एव—अनुलोमसङ्कराणाम्मातृजातिवृत्तित्वादेव । शङ्खेनेति । अस्य इत्युक्तमित्यत्रान्वयः । मातृजात्यारो-

## भावप्रकाशः ।

तद्वधप्रयुक्तप्रायश्चित्तं चेति स्मृतौ द्रष्टव्यम् । नैतदिति । अमहत्पूर्वग्रहणमित्यर्थः । समासात्प्रागन्तरङ्गत्वाट्टाबुत्पत्तेर्निष्पन्नस्य निवारणासम्भवाच्चेति भावः । वृत्तीति । धर्मेत्यर्थः । शूद्रत्वजात्यवच्छिन्नशूद्रसमानधर्मवत्त्वेनाऽऽरोपमूलभूतेन शूद्रत्वजातिमारोप्य तत्र शूद्रशब्दप्रयोग इत्यर्थः । इतीति । इतीत्यग्रे महाशूद्रीशब्दे महाशूद्रशब्दः पङ्कजादिवद्योगरूढो न तु डित्थादिवदिति, शूद्रशब्दोऽप्यमर्थवानेवेतीति शेषः । पूर्वेतीति । अस्यावश्यकमिति शेषः । नन्वेवं चारितार्थ्ये तस्य भाष्योक्तज्ञापकत्वासङ्गतिरत आह—शूद्रेति । शब्दादेवेति । प्रत्यासत्तेरिति भावः । तदन्तादिति । 'ग्रहणवता' इतिनिषेधादिति भावः । ज्ञापकतापीति । अमहत्पूर्वग्रहणस्येति शेषः । अत एव—अनुलोमसंकराणां मातृजातिवृत्तित्वादेव ।

"उगितश्च" ॥ भवतीति । सर्वादिषु भवतु इत्युदित्पठितो 'भातेर्डवतुः'

---

शब्दरत्नम् ।

ब्राह्मणक्षत्रियवैश्यैः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्रा एवेत्युक्तम् । तत्र जातिरि-त्यस्याभावे पूर्वं जातिमात्रविवक्षया कुक्कुटाण्डवत् शूद्रशब्देन समासे ततः स्त्रीत्वविवक्षा-

भैरवी ।

येणेति । मातरि वर्तमाना या जातिस्तस्या आरोपेणेत्यर्थः । प्रागुक्तशूद्रसधर्माण इति स्मृति-रारोपितशूद्रत्ववत्त्वं तत्र, न तु वास्तवं शूद्रत्ववत्त्वमिति बोधयितुम्प्रवृत्तेति भावः । 'शूद्रा-चामहत्पूर्वा जातिः' इत्यत्र शूद्रा जातित्येकं वाक्यम् । अमहत्पूर्वेति द्वितीयम् । जातिरिति द्वितीयस्यापि शेषः । तत्र—द्वितीयवाक्ये । कुक्कुटाण्डवदिति । यथा-'कुक्कुट्यादीनामण्डादिषु' इत्यनेन पुंवद्भावेन साधनीयप्रयोगाणां कुक्कुटत्वजात्यवच्छिन्नस्याण्डमित्यर्थविवक्षया समा-सेन साधयित्वा तद्वचनम्प्रत्याख्यातन्तथेत्यर्थः । शूद्रशब्देनेति । शूद्रत्वजातिमात्रविवक्षयेत्या-दिः । ततः—समासोत्तरम् । पूर्वं शूद्रशब्दस्य प्रवृत्तिस्तु जात्यन्तरनिवृत्तितात्पर्याभिप्राये-

भावप्रकाशः ।

स्मृतिषु तथैवोक्तेः । अत एव सधर्माण इति प्रागुक्तस्मृतिविरोधोऽपि न । आरोपितशूद्रवत्त्वं तत्र न तु वास्तवमिति बोधयितुन्तथोक्तम् । न तु स्पष्टं शूद्रा इत्युक्तमिति तदाशयात् । समासात्प्रागित्याद्युक्त हेतुद्वयेन निषेधे जातिग्रहणं व्यर्थमिति हरदत्तोक्तिमपाकुर्वन्नाह—तत्रेति । निषेधे इत्यर्थः । पूर्वं जाति-मात्रेति । 'कुक्कुट्यादीनामण्डादिषु' इति वचनप्रत्याख्यानरीत्या स्त्रीत्वरहितशूद्रत्वमात्रविवक्षयेत्यर्थः । तदा जात्यन्तरनिवृत्तिपरत्वे तात्पर्यादिति भावः । शूद्रशब्देनेति । महच्छब्दस्येति भावः । विवक्षा-

सरला

मित्तकत्वे सति विभक्त्यनिमित्तकत्वं पदकार्यविषयत्वम् । कुक्कुटाण्डवदिति । भाष्ये "कुक्कुट्यादी-नामण्डादिषु" इति वार्तिकप्रत्याख्यानाय पूर्वं स्त्रीत्वाविवक्षया सिद्धानां कुक्कुटस्येत्यादीनाम् अण्डा-दिशब्दैः समासे 'कुक्कुटाण्डम्' इत्यादिरूपसिद्धिरित्युक्तम्, तथा प्रकृतेऽपीति भावः । नचैवमनुपसर्जना-धिकारस्य तदन्तविधिज्ञापकत्वं न सङ्गच्छेत, पूर्वं स्त्रीत्वाविवक्षायां बहुशब्दस्य कुरुचरशब्देन समासे पश्चात्तद्विवक्षायां प्राप्तङीब्वारणार्थं तस्य चारितार्थ्यसम्भवादिति वाच्यम्, कुरुचरशब्दस्य बहुशब्देन समासे कुरुचरपदार्थमात्रे 'वृत्तस्य विशेषणयोगो न' इत्यनेन स्त्रीत्वान्वयासम्भवेन कुरुचरमात्रात् । ङीपो-ऽप्राप्त्या चारितार्थ्यानवकाशात् । अत्र तु महच्छब्देन समासे विशिष्टे स्त्रीत्वान्वयेऽपि तदन्तविधेः सत्त्वेन जातिवाचकशूद्रशब्दान्तात्प्रातिपदिकाट्टाबित्यर्थात् टाप् सिध्यति । अमहत्पूर्वेत्यत्र जातिरित्यस्या-भावे तेन निषेधाट्टाप् न स्यात् । अतस्तत्र जातिरित्यस्य सम्बन्ध आवश्यकः । केचित्तु प्रत्याख्यानपर-भाष्यप्रामाण्येन मृगक्षीरादौ तथा कल्पनेऽपि सर्वत्र तथा कल्पने मानाभावः । अत एव च 'कृतपूर्वी कटम्' इत्यत्र "एवं रीत्या साधुत्वेऽत्रायं भाष्यमेव मानम्" इति स्वोक्तिः सङ्गच्छते । अमहत्पूर्वेत्यत्र जातिरित्यस्य सम्बन्धफलं तु महाशूद्रेत्यत्र महच्छब्दस्य शूद्रशब्देन सह समासात्प्रागेव "शूद्रा च" इति प्राप्तटापः "यद्यत्र टाप् न स्यात् तर्हि महच्छब्देन समासेऽमहत्पूर्वेति निषेधः स्यात्" इति सम्भाव-नायाः सत्त्वादुपसर्जनिष्यमाणन्यायेन अमहत्पूर्वेति निषेधाभाव एव । तदसम्बन्धे तु तेन न्यायेन तत्र निषेधप्रवृत्तिर्दुर्वारैवेत्याहुः ।

अन्ये तु उपसर्जनिष्यमाणन्यायेन भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचेऽपि तद्बाधकातिरिक्तत्वेन सङ्कोचे मानाभावेन तत्रामहत्पूर्वेति निषेधप्रवृत्तौ मानाभावेन टापः सिद्ध्या न तत्र जातिरित्यस्य सम्ब-न्धस्य फलं निषेधाभावः, किन्तु पूर्वोक्तकुक्कुटाण्डवत्समासे निषेधाभाव एव । अत्रापि अमहत्पूर्वेत्यत्र जातिरित्येतस्य सम्बन्धप्रतिपादकभाष्यस्यैव पूर्वं स्त्रीत्वाविवक्षया समाससाधुत्वे प्रमाणत्वात् । अत एव गतिकारकोपपदानामित्यस्य 'व्याघ्री' 'अश्वक्रीती' इति फलमुक्तं भाष्ये अत एव च 'अयजे इन्द्रम्' इत्यादौ गुणसिद्धिरिति प्राहुः ।

ततः स्त्रीत्वविवक्षायामिति । ननु शूद्रशब्दे लिङ्गाविवक्षायां नपुंसकत्वेन "परवल्लिङ्गम्" इति

इति व्युत्पादितश्च । शत्रन्तात्तु ङीपि "शप्श्यनोः" इति नित्यो नुम् ।

"वनो र च" ॥ सुत्वानमिति । "सुयजोर्ङ्वनिप्" । अतिधीवरीति । दधातेः क्वनिप् । शर्वरीति । शॄधातोर्वनिप् । गुणे कृते हशन्तात्परत्वेऽपि हश-

शब्दरत्नम् ।

याममहत्पूर्वेति निषेधेन टाप् न स्यादिति मन्येते इत्यन्यत्र विस्तरः ।

व्युत्पादितश्चेति । न्यासकृतेति शेषः । इदं व्युत्पादनमप्रामाणिकं भाष्यासंमतेः ।

दधातेः क्वनिबिति । "घुमास्था" इतीत्वम् । पावान इत्यस्य वनिपा सिद्धिमा-श्रित्य 'ईत्वमवमकारादौ' इत्यस्य तत्रैव भाष्ये प्रत्याख्यानात् । "स्थः क च" इति सूत्र-

भैरवी ।

णात्रापि स्त्रीत्वविवक्षायान्तु महती शूद्रा इत्यर्थोऽभिप्रेतः । टाप् न स्यादिति । महाशूद्रा इ-त्येव तत्रेष्यते, या हि महती शूद्रा महाशूद्रेत्येव सा भवतीति भाष्यात् । द्वितीयवाक्ये जातिरित्यस्य सम्बन्धे तु न निषेधः विशिष्टस्य जातिवाचकत्वाभावादिति भावः । अन्यत्र-उद्द्योतादौ । मूले-अदन्ता अपीति । अपिना हलन्तानां सङ्ग्रहः । भाष्ये-ङ्याप्सूत्रभाष्ये । एवञ्च गणे तन्त्रेणोभयोर्ग्रहणम् । तत्राऽदन्तानाङ् ग्रहणन्तु स्त्रीत्वविवक्षायाञ्जातिलक्षणङीष्बा-धनार्थमिति भावः ।

भाष्ये-भवती, अतिभवती, महती, अतिमहतीति प्रयोग "उगितश्च" इति सूत्रे दृश्यते । यद्ययं व्युत्पन्न एव तदोगित्त्वस्य प्रत्ययमात्रसम्बन्धित्वेन प्रत्ययग्रहणपरिभाषया अतिमहती-त्यत्र ङीप् न स्यादिति । भवच्छब्दस्याव्युत्पन्नोगित्त्वं स्वीकार्यमिति व्युत्पादितश्चेत्यसङ्ग-तमत आह—न्यासकृतेति । भाष्यासम्मतेरिति । उक्तरीत्या-भाष्यविरोधादित्यर्थः ।

क्वनिबिति । "अन्येभ्योऽपि दृश्यन्ते" इत्यनेन भाषायामपि क्वनिप्प्रत्ययः । 'ईत्वमवकारा-दौ' इति वार्तिकम्पावान इति प्रयोगसाधनायारब्धन्तद्विरोधात्कथं "घुमास्था" इतीत्त्वमि-त्याशङ्कायामाह—पावान इत्यस्येति । उपायस्योपायान्तराऽदूषकत्वादाह-स्थः क चेतीत्यादिना ।

भावप्रकाशः ।

यामिति । महती शूद्रेत्यर्थे इति भावः । इष्यते तु महाशूद्रेति टाबेव, स न स्यात् तेन निषेधात् । किन्तु अनुपसर्जनाऽधिकारेण प्रधाने तदन्तविधिसत्त्वात् "जातेः" इति ङीप् स्यात्, अतस्तत्र तत्सम्बन्ध आवश्यकः । तथा सति तु न निषेधः विशिष्टस्याऽजातिवाचकत्वात् । टाप् तु भवत्येव, शूद्रशब्दे जातिवाचकत्वस्य स्त्रीत्वे शूद्रशब्दार्थसमवेतत्वस्यापि सत्त्वात् । या हि महती शूद्रा महाशूद्रेत्येव सा भवतीति भाष्यस्यापि—या हि महत्त्वगुणविशिष्टा शूद्रा तस्यां बोधनीयायां(१) जातिमात्रविवक्षया टाबु-त्पत्तेः पूर्वं समासे ततः स्त्रीत्वविवक्षायां महाशूद्रेव सा भवतीत्यर्थः । एवञ्च प्रयोगचतुष्टयं निर्बाधम् । "त्यदादीनि" इति सूत्रभाष्ये त्वनारोपाभिप्रायमिति न तद्विरोध इति दिक् । तदाह—अन्यत्रेति । उद्द्योतशेखरादावित्यर्थः । एतेन तथाप्रकाशरत्नाकरदंड्याद्युक्तमपास्तम् ।

यथाश्रुतमूलासङ्गतेराह—न्यासेति । तामेवाह—इदमिति ।

क्वनिबितीति । "अन्येभ्योऽपि दृश्यन्ते" इत्यनेन भाषायामिति भावः । ननु 'ईत्वमवकारादौ' इत्युक्तत्वेन नेह तत्प्राप्तिः । न च तत्पाधातुविषयकमेवेति मान्योक्तं युक्तं, मानाभावात् । अत आह—पावान इति । पवर्गादिः । तत्रैव—"घुमास्था" इति सूत्रे एव । नन्वेवं शंस्थाः सव्येष्ठा इत्यत्र क्विप्य-पीत्वापत्तिरत आह—"स्थः क च" इति । भाष्यप्रयोगादेव तदभावकल्पनापेक्षयाऽकल्पकल्पनात् इति

सरला ।

नपुंसकत्वापत्तिरिति चेत् ? न, अवयवात्समुदायाच्च स्त्रीत्वविवक्षायामवयवस्य स्त्रीलिङ्गत्वेन तस्यैवाति-

(१) विवक्षितायामित्यर्थः ।

न्ताद्विहितत्वाभावाद् ङीत्रयोर्निषेधो न । अवावेति । न्यासकारस्तु प्रायिकोऽयं

शब्दरत्नम् ।

भाष्यस्थे 'शंस्था' इत्यत्र "अम्बाम्ब" इति सूत्रभाष्यस्थे 'सव्येष्ठा' इत्यत्र च "स्यसिच्" इत्यतो वा ग्रहणं मण्डूकप्लुत्याऽनुवर्त्य व्यवस्थितविभाषाश्रयणात्तदभावः । तत्र विजेवेत्यन्ये । अत एव 'धीर्ध्यायतेर्दधातेर्वा इति 'ध्यायतेः संप्रसारणम्' इति वार्तिकस्थं भाष्यं सङ्गच्छते । "घुमास्था" इत्यत्र हलीत्यस्याऽनजादावित्यर्थात् । प्रत्ययलक्षणसूत्रस्य नियमार्थत्वेऽपि प्रत्ययलक्षणकार्यं सुलभमिति दिक् । निषेधो नेति ।

भैरवी ।

तदभाव इति । इत्त्वाभाव इत्यर्थः । व्यवस्थितविभाषा परिगणितस्थल एवेत्याशयेनाह—तत्रेत्यादि । तत्र-संस्थासव्येष्ठशब्दयोः । "ईत्त्वमवकारादौ" इति वार्तिकप्रत्याख्यानस्य सिद्धान्तत्वन्द्रढयितुमाह—अत एवेति । तत्प्रत्याख्यानादेव । अत्र दधातेर्वेत्युक्तिर्वार्तिकासत्त्व एव सङ्गच्छते । ननु धीरित्यत्र क्विपो लोपे हलादिङ्क्तिपरत्वाभावात्कथमीत्त्वम् । न च स्थानिवद्भावेन, विशेषणतयाऽलाश्रयणात् । प्रत्ययलक्षणसूत्रन्तु नियमार्थमत आह—घुमास्थेत्यत्रेति । अनजादावित्यस्य, अजादौ नेत्यर्थः । लक्षणायामानन्त्यूक्तभाष्यमेव । वस्तुतस्तु हलीतिसूत्रे न पाठ्यम्, "दीङो युडचि" इत्यतोऽचीत्यप्यनुवर्तनीयम् "न ल्यपि" इत्यतो मण्डूकप्लुत्या नेत्यस्यापि सम्बन्धश्च वाक्यभेदेन । तेन प्रसज्यप्रतिषेधलाभ इति बोध्यम् । नियमार्थत्वेऽपीति । अपिना विध्यर्थत्वपक्षसमुच्चयः । कार्यमिति । धीरित्यत्रेत्त्वरूपङ्कार्यमित्यर्थः । नन्वेवमपि क्विब्लुत्वेऽनल्विधाविति निषेधात्कथन्तल्लाभ इति चेन्न, "न ल्यपि" इति निषेधेनाऽनुबन्धकार्येऽनल्विधाविति निषेधाप्रवृत्तेः । एवञ्च 'ध्याप्योः सम्प्रसारणञ्च' इति वार्तिकमपि न कार्यम् । अत एवाह—दिगिति । ननु भाष्यकारादिभ्योऽधिकदर्शित्वन्तस्यास्त्वित्यत आह—

भावप्रकाशः ।

न्यायेन लाघवादाह—स्यसिजिति । ननु परिगणितान्यव्यवस्थितविभाषाणामप्रामाण्यमत आह—तत्रेति । शंस्थाः सव्येष्ठा इत्यनयोरित्यर्थः । विजेवेति । येन क्विबिति, तत्सूत्रस्थभाष्ये क्विप्पदेन सादृश्याद्विजेवोच्यत इति भावः । प्रत्याख्यानस्य सिद्धान्ततां द्रढयितुमाह—अत एवेति । तत्प्रत्याख्यानादेवेत्यर्थः । दधातेर्धीरिति भाष्यस्य क्वावीत्वं विना असङ्गतिरतस्मात्प्रत्याख्यानमेव युक्तम् । ननु वार्तिकमते प्रत्ययलक्षणसञ्चारेऽपि भाष्यमते तदभावाद्भाष्यमयुक्तमेवेति कथं सा सिद्धान्तोक्तिरत आह—घुमास्थेति । अनजादाविति । अजादौ नेत्यर्थादित्यर्थः । उक्तभाष्यमेवात्र गमकम् । इदमत्राकूतम्—"दीङो युडचि" इत्यतः क्ङितीतिवदचीत्यनुवर्त्तते "न ल्यपि" इत्यतो मण्डूकप्लुत्या नेत्यपकृष्यते "संयोगान्तस्य" इति सूत्रे झल्ग्रहणाऽपकर्षपक्ष इव वाक्यद्वयेनोक्तार्थलाभ इति हलीति न कर्त्तव्यमिति । अपिना विध्यर्थत्वपक्षसमुच्चयः । कार्यमिति । धीरित्यत्रेत्वमित्यर्थः । "न ल्यपि" इति ज्ञापकात् क्ङित्त्वस्याऽऽर्धधातुकत्वस्य च प्रत्ययासाधारणधर्मत्वात्तत्प्रवृत्तेरिति भावः । एवञ्च "ध्याप्योः सम्प्रसारणम्" इति वार्तिकमपि तद्वन्न कार्यम् । "घुमास्था" इत्यत्रत्यभाष्यकैयटस्तु चिन्त्य एवेति दिक् । तदाह—दिगिति । शर्वरीत्यस्य 'वनो न हश्' इत्यतः प्रागुदाहृतत्वेन व्यपदेशिवद्भावस्य च तत्फलमिति भ्रम-

सरला ।

देशात् । न च महत्पूर्वकशूद्रशब्दान्तप्रातिपदिकात् टाब् नेत्यर्थे महाशूद्रशब्दस्य महत्पूर्वत्वेऽपि शूद्रशब्दस्य तत्त्वाभावात् टाप् सुस्थ इति वाच्यम्, तथा सत्यमहत्पूर्वग्रहणवैयर्थ्येन महच्छब्दपूर्वकशूद्रशब्दान्तप्रातिपदिकावयवाट्टाब् नेत्यर्थस्वीकारेणादोषात्, स्त्रीत्वबोधकप्रत्ययस्यावयवात्समुदायाच्च प्राप्तौ वृक्षप्रचलनन्यायेन समुदायादेव प्राप्तेः सत्त्वाच्च । ननु विशिष्टाल्लिङ्गाविवक्षायां नपुंसकत्वापत्तिः, विशिष्टाल्लिङ्गसामान्याविवक्षायामस्य लिङ्गद्वयकार्यभाक्त्वस्य भङ्गापत्त्या विशिष्टात्तद्विवक्षैवेति स्वीकारात् । अन्यथाऽस्य लिङ्गत्रयप्रयुक्तकार्यभाक्त्वेन नियतलिङ्गकत्वभङ्गापत्तिः ।

निषेधस्तेन अवावरीत्याह । न त्वेतद्भाष्यादौ दृष्टम् । पक्षे डाबिति । तथा च द्विवचने बहुधीवर्यौ, बहुधीवानौ, बहुधीवे इति रूपत्रयम्भवतीति भावः ।

"टाबृचि" ॥ पूर्वेण प्राप्तस्य ङीपोऽपवादः । असिद्धत्वादिति । कार्यकालपक्षेणेदम् । यदि तु यथोद्देशं षट्संज्ञा यदि वा उपदेशकाले ष्णान्तेति व्याख्यानं तदा असिद्धत्वोपवर्णनं नोपयुज्यत इत्याहुः ।

वस्तुतस्तु यथोद्देशपक्षेऽपि असिद्धत्वमुपयुक्तमेव । एकदेशविकृतस्योपसंख्यानं हि स्थानिवत्सूत्रे पठ्यते । आदेशग्रहणसामर्थ्यात् 'सर्वे सर्वपदादेशा' इत्याश्रित्य आनुमानिकोऽप्यादेशः स्थानिवदिति वा व्याख्यायते । उभयथाऽपि अल्विधौ न तत्प्रवृत्तिः । एतच्च आकरे स्पष्टम् ।

बहुयज्वानाविति । "न संयोगात्" इति निषेधान्नायमुपधालोपी तेन "अन उपधालोपिन" इति न प्रवर्तते ।

---

शब्दरत्नम् ।

'वनो न हश्' इति वार्तिके विहितविशेषणस्येदमेव फलमिति भावः । न त्वेतदिति । अतोऽप्रमाणमिति भावः ।

व्याख्यानमिति । 'उपदेश इति वक्तव्यम्' इति वदतो वार्तिककारस्येति भावः ।

आनुमानिकोऽपीति । "एरुः" इत्यनेन तेस्तोरनुमानादिति भावः । एतच्चाकर इति । अत्रारुचिबीजं तु षट्त्वं नाऽल्धर्म इति तदाश्रयविधीनां नाऽल्विधित्वमिति ।

भैरवी ।

अत इति । अप्रमाणम् । भाष्यासम्मतस्यार्थस्याप्रमाणत्वं सर्वसम्मतमिति भावः ।

ष्णान्तेति सूत्रेऽन्तशब्दोपादानेनोपदेशकाल इत्यस्य लाभ इत्येतद्दूषितमिति व्याख्यानमित्यसङ्गतमत आह—उपदेश इतीति । मूले, अल्विधाविति । विशेषणतया अलाश्रयके विधावित्यर्थः । नान्तत्वसामानाधिकरण्यविशिष्टसंख्यावाचकत्वसामानाधिकरण्यविशिष्टषट्त्वस्य स्थानिवद्भावेनाऽऽनयनन्न सम्भवति नकारस्याऽल आश्रयणादिति भावः । नाऽल्धर्म इति । नान्तसंख्यावाचकत्वं षडिति संज्ञाप्रवृत्तावुपयोगि आदेशे आनयनन्तु षट्त्वमात्रस्य तस्य समुदायधर्मतया नाल्विधित्वमिति भावः ।

मूले वचनसामर्थ्यादिति । सूत्रत्रयकरणसामर्थ्यादित्यर्थः । यदि डापो नित्यत्वन्तदा मनो

भावप्रकाशः ।

निवृत्तये आह—वनो नेति । विशेषणस्य । तस्यापीत्यर्थः । भाष्यादितोऽधिकदर्शित्वं तस्येति मूलतात्पर्यमिति भ्रमवारणायाऽऽह—अत इति ।

अन्तग्रहणादुपदेशकाल इत्यर्थलाभ इत्यस्य दूषितत्वादाह—उपेति । अत्रत्यन्तत्त्वं प्रागुक्तम् । नाल्धर्म इति । प्रतिपादितमिदमष्टन्शब्दे । एतेन तथा प्रकाशदण्ड्याद्युक्तम् "ईदूत्" सूत्रे यथोद्देशे षट्संज्ञा स्थानिवत्त्वात्सिध्यतीति सिद्धान्तितत्वान्मूलं चिन्त्यमिति रत्नाकरोक्तं चाऽपास्तम् ।

मूले वचनसामर्थ्यादिति—पृथक् सूत्रत्रयकरणसामर्थ्यादित्यर्थः । अन्यथा मनो डाप्, अनो बहु-

सरला ।

मूले असिद्धत्वादितीति । "नलोपः सुप्स्वर" सूत्रे परिगणितेषु आपोऽभावेन तत्र कर्तव्ये न नलोपासिद्धत्वमिति तत्प्राप्तिः । नच तत्र सुबिति आपः पकारेण प्रत्याहाराश्रयणेन आपि कर्तव्येऽपि नलोपस्यासिद्धत्वमिति वाच्यम्, 'बहुचर्मिका' इत्यादौ आबूनिमित्तकेत्वविधावपि नलोपस्यासिद्धत्वेनेत्वानापत्तेरिति स्पष्टं भाष्ये । कार्यकालेति । यथोद्देशे तु स्थानिवत्त्वेनैव षट्त्वं सुलभम्, तस्य संकेतसम्बन्धेन षट्पदवत्त्वरूपत्वेन अल्धर्मत्वाभावादिति भावः ।

"डाबुभाभ्याम्"॥ ननु निषेधडापोर्वचनसामर्थ्यात् पर्यायः सिद्धः, सत्यम्। "अन्यतरस्याम्" इति योगो विभज्यते। तत्र "मनः" इति निवृत्तम्। अनो बहुव्रीहेर्डाब् वा स्यात्। ङीपा सह विकल्पलाभार्थमिदम्। "अन उपधालोपिन" इति सूत्रन्तु नियमार्थम्। अनो योऽसौ विकल्पः स उपधालोपिन एवेति। तथा च सुपर्वेत्यादौ अनुपधालोपिनि निषेधार्थमिदम्। बहुराज्ञीत्यादौ तु "ऋन्नेभ्य"

---

शब्दरत्नम्।

सिद्ध इति। एवं चान्यतरस्याङ्ग्रहणं किमर्थमिति भावः। ङीपेति। "ऋन्नेभ्य" इति विहितेन। अनो याऽसौ विकल्प इति। "अन्यतरस्याम्" इति विभक्तसूत्रेण प्राप्त इत्यर्थः। "अन" इति सूत्रेऽपि अन्यतरस्यामित्यस्य सत्त्वाद्विकल्पनियमलाभोऽन्यथा स नित्यार्थो विधिरेव स्यादिति भावः। स उपधेति। स उपधालोपिनोऽनुपसर्जनस्य बहुव्रीहेरेवेत्यर्थः। निषेधार्थमिति। योगविभागेन पक्षे प्राप्तस्य "ऋन्नेभ्य" इति

भैरवी।

डाप् अनो बहुव्रीहेरित्येव वदेदिति भावः। एवञ्च—उक्तरीत्या तस्य सिद्धत्वे चेत्यर्थः। मूले मन इति निवृत्तम्। योगविभागस्येष्टसिद्ध्यर्थत्वादिति शेषः। तेन दाम्नीति न प्रयोग इति भावः। अन उपधेत्यस्य प्रागुपात्तत्वेन योऽसावित्येतच्छब्देन तस्य बोधनमिति भ्रमवारणायाह—अन्यतरस्यामितीति। ननु विभक्तसूत्रेण विकल्पसिद्धौ "अन उपधा" इत्यत्रान्यतरस्याङ्ग्रहणं व्यर्थमत आह—अन इति सूत्र इति। विकल्पनियमलाभ इति। विकल्पस्य-विभक्तसूत्रेण प्राप्तस्य नियमलाभ इत्यर्थः। अन्यथा—तत्र सूत्रेऽन्यतरस्यामित्यस्याभावे। तस्य सूत्रस्यानुपसर्जनाधिकारे पाठादाह—अनुपसर्जनस्य बहुव्रीहेरिति। अत्रानुपसर्जनग्रहणस्य बहुव्रीहिविशेषणत्वाद् बहूनि दामानि सन्ति येषु तानि बहुदामानि, बहुदामान्यतिक्रान्ता नगरी अतिबहुदामेत्यत्र ङीब्न। न च शेखरेऽनुपसर्जनादित्यनुवृत्तमप्यत्र न सम्बध्यते तस्य गृह्यमाणविशेषणतया गृह्यमाणस्य चान्नन्तबहुव्रीहावनुपसर्जनस्यासम्भवादित्युक्तन्तदेवं सति विरुध्येतेति वाच्यम्? तस्य ग्रन्थस्य भाष्यकाराभिधानसंवादित्वात्। अत एव तत्रत्यशेखर एव स्वोक्त्युपष्टम्भाय ध्वनितञ्चेदं "वनो र च" इति सूत्रभाष्ये। तत्र ह्यनो बहुव्रीहेरित्यनन्तरमुपधालोपिनो वेति न्यासो दर्शित इत्युक्तम्। अत्रत्यमनुपसर्जनस्येत्यस्य सम्बन्धेन व्याख्यानन्तु मूलकारतात्पर्यवर्णनपरमतो न विरोध इति। निषेधार्थमित्यत्र प्रतियोग्याकाङ्क्षायामाह—योगविभागेनेति। निषेधार्थमित्यस्य, निषेधतात्पर्यकमित्यर्थः। यथाश्रुता-

भावप्रकाशः।

व्रीहेरित्येव वदेदिति भावः। मूलस्य साकाङ्क्षत्वादाह–एवञ्चेति। ततस्तस्य सिद्धत्वे चेत्यर्थः। मूले-निवृत्तमिति। योगविभागस्येष्टसिद्ध्यर्थत्वादिति भावः। योगविभागस्य फलमाह—ङीपेति। "अन उपधा" इत्यस्य नियामकत्वस्येष्टत्वादाह—ऋन्नेभ्य इति। विहितेनेत्यनेन सूचितम्—पक्षे तत्प्रवृत्तिरिति। अत एव रत्वसिद्धिः। ननु "अनो बहुव्रीहेः" इति निषेधात्सिद्धान्ते ङीप्विकल्पो दुर्लभोऽत आह—अन्येति। ननु विभक्तेनैव विकल्पसिद्धौ नियमे अन्यतरस्यां ग्रहणं व्यर्थमत आह–अन इति। सूत्रेऽपीति। "अन उपधा" इतिसूत्रेऽपीत्यर्थः। विकल्पेति। विकल्पस्य–विभक्तसूत्रप्राप्तस्य नियमलाभ इत्यर्थः। अन्यथा—तत्रान्यतरस्यामित्यस्याऽसत्त्वे। सः। "अनुपसर्जनात्" इत्यधिकारस्य अन उपधेति योग इत्यर्थः। एवेन नियमत्वव्यावृत्तिः। तदधिकारस्थत्वात् "बहुव्रीहेरूधस" इत्यतस्तदनुवृत्तेश्च यथाश्रुतमूलमसङ्गतमत आह–स उपधेति। "ऋन्नेभ्य" इति ङीपः "अनो बहुव्रीहेः" इति निषिद्धत्वादाह–योगेति। अभिमानेनेत्यनेन सूचितम्। वस्तुतोऽयुक्तमेतदिति प्राङ् निरूपितमिति। एतेन वस्तुतः परिसंख्यारूपनियमस्य सुपर्वेत्यादौ पक्षे प्राप्तस्य ङीपो निषेध एव विधेयो न ङीबिति ङीपि निषिद्धे रोपि

इत्येव ङीप् । तेन बहुधीवरीति सिद्ध्यति। "ऋन्नेभ्य" इति हि ङीपमनूद्य तत्सन्नियोगेन विधीयमानो रेफः प्रकरणान्तरस्थेन ङीपि कृते न सिद्ध्येत्। ननु "वनो र च" इति सूत्रमेव ङीब्रौ विधत्तामिति चेन्न, उभयविधौ गौरवात्। किञ्चैव-

## शब्दरत्नम्

ङीप इत्यर्थः। इत्येव ङीबिति। नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरित्यभिमानेनेदम्। तेनेति। "अन उपधा" इत्यस्य नियमत्वेनेत्यर्थः। ऋन्नेभ्य इति। अस्यान्यथेत्यादिः। "अन उपधा" इत्यस्य विधायकत्वे इति तदर्थः। प्रकरणान्तरस्थेनेति। तेनानन्तरत्वं बोधितम्। गौरवादिति। मम तु "ऋन्नेभ्य" इति प्राप्तङीपमनूद्य तत्संनियोगेन रभावमात्रविधायकं तदिति भावः। ननु "वनो र च" इत्यस्योभयविधायकत्वे "अनो बहुव्रीहेः" इत्यनन्तरत्वादस्य निषेधकमुत येनेति न्यायेन "ऋन्नेभ्य" इत्यस्य; नाद्य इत्याह—किं चेति। "अन उपधा" इत्यनेन ङीप्यपि रो दुर्लभ एवेति भावः। किं चवं

## भैरवी।

भिप्रायेणाह—नियमशास्त्राणामिति। "अन उपधा" इत्यस्य विध्यर्थत्वे बहुधीवरीत्यत्र योगविभागमात्रेण "ऋन्नेभ्य" इत्येतद्विषयता न सिध्यतीत्यत आह-अन उपधेत्यस्येति। अयमभिसन्धिः—विभक्तान्यतरस्यामित्यनेन "ऋन्नेभ्य" इत्यस्यैव पक्षे प्रवृत्तिरभ्यनुज्ञायते। अन उपधेति तु तस्यानुवादः। एवञ्च "ऋन्नेभ्य" इति सूत्रविहितङीबनुवादेन विहितो रेफादेशः सिध्यति। बहुव्रीहौ वेति तु न वक्तव्यमिति। शेषभूतान्यथेत्यस्यार्थमाह—अन उपधेति। तेन—प्रकरणान्तरस्थत्वकथनेन। अनन्तरत्वमिति। अन उपधेत्यस्येति शेषः। मम तु—अन्यतरस्यामित्यस्य "ऋन्नेभ्य" इति सूत्रप्राप्तङीप उपजीवकत्ववादिनो मम तु। न केवलमस्मिन्पक्षे लाघवमेव फलं किन्तु फलान्तरमपीत्याह—वनो र चेत्यादिना। अनन्तरत्वात्—अन्नन्तोद्देश्यकप्राप्तियोग्यविधिसूत्राव्यवहितभिन्नत्वात्। मूले—निषिद्धे रोऽपीति। अपिशब्दो निषिद्ध इत्यनन्तरम्बोध्यः। "वनो र च" इति सूत्रविहितस्य ङीपो निषेधे तत्सन्नियोगशिष्टस्य रेफादेशस्याप्रवृत्तौ प्रकरणान्तरस्थेन "अन उपधा" इत्यनेन ङीप्यपि रो दुर्लभ इति योजना। ननु बहुधीवरीत्यत्र बहुव्रीहौ वेत्यस्य प्रवृत्तिः स्यादेव तस्यापि "अन उपधा" इति सूत्रवद्विधायकत्वादत आह—किञ्चेति। एवम्—"अनो बहुव्रीहेः" इत्यस्य "वनो र च" इति सूत्रमात्रनिषेधकत्वे। बहुश्वन्शब्दो न वन्नन्त इति निषेधाविषयतयाऽनन्तरेण "ऋन्ने-

## भावप्रकाशः।

दुर्लभ इत्ययुक्तमित्यवधेयमिति रत्नाकरोक्तमपास्तम्। इदमिति। निषेधार्थमिदं इत्येव ङीबित्युभयमित्यर्थः। केवलान्यथं तु वक्ष्यमाणरीत्यापि सुयोजम्। तस्य विध्यर्थत्वे बहुधीवरीत्यत्र तद्विषयत्वायोगविभागमात्रेणासिद्धेराह—अन इति। अयं भावः। योगविभक्तान्यतरस्यांग्रहणेन पक्षे "ऋन्नेभ्य" इति ङीबभ्यनुज्ञाने तस्याऽनउपधेत्यस्य नियामकत्वेनानुवादरूपत्वात्तेन ङीप्यपि बहुधीवरीत्यादौ "वनो र च" इति रत्वं सिद्धमिति "बहुव्रीहौ वा" इति न वक्तव्यमिति। यथाश्रुतासङ्गतेराह—अस्येति। अनन्तरत्वमिति। अन उपधेत्यस्येति शेषः। अनन्तर "ऋन्नेभ्य" इति विहितङीप्सन्नियोगेनैव तद्विधानादिति भावः। स्वमते लाघवमाह—मम त्विति। ननु त्वन्मते वैरूप्यापत्तिरतो गौरवमेव वरमित्याशयेनाशङ्कते—नन्विति। अस्य—"वनो र च" इत्यस्य। "ऋन्नेभ्य" इत्यतो विशेषविहितत्वादाह—अन इति। एतेन मूलेऽपिनिषिद्धपदोत्तरं योज्यः। तथा च तस्योभयविधायकत्वेऽपि अनन्तरत्वात्तेन तन्ङीपि निषिद्धे सन्नियोगशिष्टन्यायेन रत्वाभावेऽपि अपिनोक्तरीत्या "अन उपधा" इति ङीप्यपि अनन्तरत्वात्तस्य रो दुर्लभ इतिमूलार्थः सूचितः। ननु "बहुव्रीहौ वा" इति वार्तिकेन बहुधीवरीत्यादिसिद्धिस्तस्याप्यन उपधेतिवद्विध्यर्थत्वादत आह—किं चेति। एवम्—आनन्तर्यात्तस्यैव तन्निषेधकत्वाङ्गीकारे।

मपि ङीपि निषिद्धे रोऽपि दुर्लभः, सन्नियोगशिष्टत्वात्। भाष्ये तु सूत्रभङ्गेन समाहितम्। तद्यथा—"अनो बहुव्रीहेः" इत्यस्यानन्तरमुपधालोपिनो वेति सूत्र-

---

शब्दरत्नम्।

बहुधीवेत्यत्र "ऋन्नेभ्य" इति ङीबापत्तिः। किं च 'बहुव्रीहौ वा' इति वार्तिकस्या-प्यपूर्वविधायकतापत्त्या सुपर्वन्शब्दे ङीब्रयोरापत्तिः। सिद्धान्ते तु अन उपधेत्येतत्प्रा-पितङीबनुवादेन रभावस्य तेन विधानान्न दोषः। एतेनान्त्यपक्षो बाध्यसामान्यचिन्तयोभ-यबाधकमिति पक्षश्च परास्तः। 'बहुव्रीहौ वा' इत्यनेन सुपर्वन्शब्दे ङीब्रयोरापत्तेरिति दिक्। इत्यस्यानन्तरमिति। अनो बहुव्रीहेर्डाबुभाभ्याम्, अनुपसर्जनात्, उपधालो-

भैरवी।

भ्य" इत्यनेन ङीप्स्यादिति भावः। नन्वेवम् "अनो बहुव्रीहेः" इति बाध्यसामान्यचिन्त-योभयोर्निषेधकमिति स्वीकुर्म इत्यत आह—किञ्चेति। अपिना "वनो र च" इत्यस्य समु-च्चयः। अपूर्वेत्यस्य ङीब्रयोरित्यादिः। तस्य वार्तिकस्य "वनो र च" इति सूत्रस्थत्वादुभय-विधायकत्वमिति अव्याप्तिपरिहारेऽप्यतिव्याप्तिः स्यादिति भावः। सिद्धान्ते—"वनो र च" इत्यस्य "ऋन्नेभ्य" इत्येतत्प्रापितङीबनुवादेन रभावमात्रविधायकत्वसिद्धान्ते। तेन—'बहु-व्रीहौ' इति वार्तिकेन। अन्त्यपक्षः—"अनो बहुव्रीहेः" इति "ऋन्नेभ्यः" इत्यस्यैव बाधक-मिति पक्षः। एतेनेत्यस्यार्थमाह—बहुव्रीहौ वेत्यनेनेति। दिगिति। दिगर्थस्तु आद्यपक्षे "अनो बहुव्रीहेः" इत्यस्य 'बहुव्रीहौ वा' इति वार्तिकसत्त्वेन वैयर्थ्यम्। किञ्च बहुराज्ञीत्यादौ "ऋन्नेभ्य" इत्यनेन ङीपः सिद्ध्या "अन उपधा" इत्यस्य वैयर्थ्यापत्तिः। तस्मादन्यतरस्या-मित्येतद्विधायकम्। "वनो र च" इति तु नोभयविधायकम्। "अन उपधा" इति नियाम-कमेव। 'बहुव्रीहौ वा' इति तु नापूर्वमिति। ननु मूलोक्तरीत्या भाष्यसम्मतः सूत्रभङ्गेन पाठश्चेत्तदा "अन उपधा" इत्यस्यानुपसर्जनाधिकारे प्रागुक्तम्फलं; तस्य निर्वाहः कथमत आह—अन इत्यादि। अस्मिन्पक्षेऽन्यतरस्याङ्ग्रहणमनावश्यकमतस्तस्यानुपादानम्। उप-धालोपिनो वेत्यत्र "अनो बहुव्रीहेः" इत्यनुवर्तते तथा चात्र बहुव्रीहेरुपधालोपिनोऽनुपसर्ज-नात् डाप् वा स्यादित्यर्थः। अत्र वाग्रहणम् "ऋन्नेभ्य" इति ङीपा सह विकल्पलाभार्थम्।

भावप्रकाशः।

बाध्यसामान्यचिन्तापक्षेऽयमपि न दोषोऽत आह—किं चेति। अपिरन उपधेत्यस्य समुच्चा-यकः। विधायकतेति। ङीप्रयोरिति शेषः। तद्वार्तिकस्य "वनो र च" इति सूत्रस्थत्वात् सुत्वरी, अतिधीवरीत्यादौ चरितार्थस्य "वनो र च" इत्यस्य "अनो बहुव्रीहेः" इत्यनेन नित्यनिषेधे प्राप्ते वैयर्थ्याद्विधायकेन वार्तिकेन बहुधीवरीत्यादिसिद्ध्याऽव्याप्त्यभावेऽपि अतिव्याप्तिर्दुरुद्धरे-त्यर्थः। सिद्धान्ते त्विति। "वनो र च" इत्यस्य "ऋन्नेभ्य" इति ङीप्सन्नियोगेन रमा-त्रविधायकत्वे त्वित्यर्थः। तेन—'बहुव्रीहौ वा" इति वार्तिकेन। अत एव तस्य "अनो बहुव्रीहेः" इति निषेधबाधकत्वेऽपि वचनसामर्थ्यात्प्रकरणान्तरविहितपाक्षिकङीपि रविधायकत्वेन अनुपधालोपिनि सुपर्व-ण्यादावप्राप्तिरिति विकल्पोऽर्थसिद्ध इत्युक्तम्। तथा च बहुधीवरीत्यादौ "अनो बहुव्रीहेः" इति ङीपो निषे-धाद्रस्याऽभावे प्राप्ते "अन उपधा" इति प्रकरणान्तरस्थङीबनुवादेनाऽपूर्वरविधानार्थं वार्तिकमित्यनुपधा-लोपिनि सर्वथा ङीबप्राप्त्या रो नेति नातिव्याप्तिरिति भावः। बाध्यसामान्येति। तेन बहुधीवेत्यत्र न दोष इति भावः। एतेनेत्यस्यार्थमाह—बहुव्रीहाविति। किं च आद्ये उक्तवार्तिकसत्त्वेन "अनो बहु-व्रीहेः" इत्यस्य वैयर्थ्यापत्तेः। अपि च "ऋन्नेभ्य" इत्येव बहुराज्ञीत्यादौ ङीप्सिद्ध्या "अन उपधा" इत्यस्य वैयर्थ्यापत्तेस्तस्मात्तस्योभयविधित्वाभावेन तस्य विध्यर्थत्वेन तत्सिद्धिरिति तस्य नियामकत्वमेवात्र पक्षे एष्टव्यमिति दिक्। तदाह—दिगिति। ननु सूत्रकृता "अन उपधा" इत्यस्य तदधिकारे पाठात्फलस्यावश्य-सत्त्वेन अत्र पक्षे तदसम्बन्धात्तदसिद्ध्या यथाश्रुतमूलासङ्गतिरत आह—अन इति। अत्र पक्षे अन्य-

मस्तु । "अन उपधा" इत्यादिप्रदेशान्तरस्थं सूत्रं, डाप्सूत्रे "अन्यतरस्यां" ग्रहणं च मास्तु इति ।

---

शब्दरत्नम् ।

पिनो वेति पाठ्यमिति भावः । यथाश्रुते "अनुपसर्जनात्" इत्यस्य सम्बन्धो दुर्घटः । अत एव बहुदामानि पुराण्यतिक्रान्ता नगरीत्यत्र ङीप् न । ग्रहणं चेति । चेन 'बहुव्रीहौ

भैरवी ।

एवञ्चानुपधालोपिनि सुपर्वेत्यादौ नित्यस्य ङीपः प्रतिषेधेन डापोऽभावः सिद्धः । यश्चोपधा-लोपी बहुराजन्शब्दस्तस्योक्तरीत्या रूपत्रयम् । एवं बहुधीवरीत्यादौ डाप्समुच्चितस्य "ऋन्नेभ्य" इति ङीपः प्रवृत्त्या तत्सन्नियोगशिष्टो रेफादेशः सिद्धः । अस्मिन्पक्षे ङीपः प्रकरणान्तरत्वस्य शङ्कैव न । यथाश्रुते—मूलोक्तपाठस्यैवाश्रयणे । अत एव—अनुपसर्जनादि-त्यस्य करणादेव । तस्य सम्बन्धे त्वनुपसर्जनं योऽन्नन्त उपधालोपी बहुव्रीहिस्तदन्तात्प्रा-तिपदिकादित्यर्थः । वस्तुतस्त्वेतत्सूत्राशयवर्णनमात्रन्न तु भाष्यकारीयसिद्धान्तरीत्या । तत्र हि—"अनो बहुव्रीहेः" इत्यनन्तरमुपधालोपिनो वेति न्यासो दर्शितः । तदोपधालोपिन इति वाक्येऽनुपसर्जनपदसम्बन्धसम्भव एव नेति तद्भाष्यैकवाक्यतयाऽनुपसर्जनाधिकारे "अन उपधालोपिन" इति सूत्रस्य स्थितिपक्षेऽप्यनुपसर्जनस्येत्यस्य गृह्यमाणविशेषणत्वं वक्तव्यम् । गृह्यमाणञ्चान्नन्तन्तच्च बहुव्रीहावुपसर्जनमेवेति बाधापत्त्या तत्रानुपसर्जनस्येत्य-स्यासम्बन्ध एव । एवञ्च बहुदामानि पुराण्यतिक्रान्ता नगरीत्यर्थप्रयोगे सत्यभिधाने ङीब्भ-वत्येव । नो चेत्तदर्थकवाक्यप्रयोग एवेति बोध्यम् । यदर्थोऽयम्भाष्यकारीयप्रयासस्तदनुक्ते-र्न्यूनतापत्तिरिति तत्परिहारायाह—चेनेति । ननु मूले 'अन्यतरस्याम्' इत्यस्य पृथक्करणेन पृथग् व्यवस्थामुक्त्वा, भाष्ये त्वित्यादिना भाष्यसम्मतमार्गो दर्शितस्तेन पूर्वोक्तो न भाष्य-सम्मत इति प्रतीयते ; स चायुक्तः "वनो र च" इति सूत्रभाष्ये 'बहुव्रीहेश्च' इति वचनस्य

भावप्रकाशः ।

तरस्यां ग्रहणस्याफलत्वादसत्त्वादाह—डाबुभाभ्यामिति । पाठ्यमितीति । अयं भावः । अन्नन्ता-द् बहुव्रीहेरुपधालोपिनो वा डाप् स्यादिति तदर्थः । ऋन्नेभ्य इति ङीपा सह विकल्पलाभार्थमिदम् । तथा च "अनो बहुव्रीहेः" इत्यनेनाऽनुपधालोपिनि सुपर्वेत्यादौ नित्यङीप्प्रतिषेधेन डाऽभावः सिद्धः । बहु-राज्ञीत्युपधालोपिनि तूक्तरीत्या रूपत्रयं सिद्धम् । एवं बहुधीवरीत्यादिवन्नन्तेऽपि डाप्समुच्चित "ऋन्नेभ्य" इति ङीप्सन्नियोगेन रत्वे पूर्ववद्रूपत्रयसिद्धिरित्यत्र पक्षे ङीपः प्रकरणान्तरस्थत्वशंकैव नेति । तामसङ्ग-तिमेवाह—यथाश्रुते इति । मूलोक्तन्यासे इत्यर्थः । सम्बन्धस्यावश्यकत्वमाह—अत एवेति । तत्स-म्बन्धादेवेत्यर्थः । बह्विति । बहूनि दामानि येषु तानीत्यर्थः । तथा च अनुपसर्जनं योऽन्नन्त उपधालोपी बहुव्रीहिस्तदन्तात्प्रातिपदिकादिति सूत्रार्थोऽत्र पक्षे बोध्यः । अनेनैवाभिप्रायेण स उपधालोपिनोऽनुप-सर्जनस्य बहुव्रीहेरेवेत्यर्थ इति व्याख्यातम् । इदं च सर्वं सूत्रमतेन । वस्तुतस्तु यथाश्रुतन्यासे अन उपधेत्यस्य तदधिकारे पाठेऽपि तत्र तदसम्बन्ध एव, तस्य गृह्यमाणविशेषणतया तस्य चान्नन्तस्य बहुव्री-हावनुपसर्जनस्याभावात् । अत एव "वनो र च" इत्यत्रभाष्ये 'बहुव्रीहेश्च' इति वचनमुक्त्वा अनो बहु-व्रीहेः प्रतिषेधे उपधालोपिनो वा वचनम्' इति पक्षान्तरमुक्तं वार्तिककृता । भगवता च नित्यविकल्प-प्रयुक्तविशेषमुद्भाव्य प्रागुक्तरीत्या समाधायापि तत्सम्बन्धासम्बन्धप्रयुक्तविशेषो नोद्भावितः । तस्मात्तदेव तदभिमतम् । तदन्तविशेषणत्वे तु व्यर्थमेव तत्स्यात् । एवञ्च भाष्यवत् मूलं यथाश्रुतमेव साधु । बहुदा-मानि पुराण्यतिक्रान्ता नगरीत्याद्यर्थकप्रयोगेषु सत्यभिधाने ङीप् भवत्येव । उक्तभाष्यात्तदनभिधानमेव वा । अत एव, बहुदामानि पुराण्यतिक्रान्ता नगरीति वाक्यमेव प्रदर्शितं गुरुचरणैर्न समासः । अत एवोद्-द्योतशेखरादिविरोधो नेति बोध्यम् । भाष्ये यदर्थोयं प्रयासः कृतस्तदनुक्तेर्न्यूनत्वादाह—चेनेति । ननु मूले योगविभागप्रकारमुक्त्वा भाष्ये त्वित्युक्त्या पूर्वोक्तं न तत्रत्यमिति प्रतीयते; तच्चायुक्तम् , 'बहु-

"अन उपधा" ॥ "बहुव्रीहेरूधसो ङीष्" इत्यतो बहुव्रीहिग्रहणं "संख्याव्ययादेर्ङीप्" इत्यतो ङीप् चानुवर्तते इत्याशयेनाह—अन्नन्तादित्यादि । नियमार्थमिदमित्युक्तम् । न चैवं पूर्वेण विकल्पसिद्धौ इहान्यतरस्यां ग्रहणं व्यर्थमिति वाच्यम् । असति हि तस्मिन् नित्यार्थो विधिरेवायं स्यान्न तु नियमः ।

"प्रत्ययस्थात्कात् पूर्वस्य" ॥ कादित्यकार उच्चारणार्थः । व्यञ्जनमात्रं विवक्षितम् । विशिष्टविवक्षायां तु एतिकाश्चरन्तीत्यादौ अकचि न स्यादित्याश-

---

शब्दरत्नम् ।

वा" इत्यस्यापि संग्रहः । पूर्वोक्तयोगविभागप्रकारस्तु गुरुभूत इति भाष्याशयः ।

**इत्युक्तमिति** । डाप्सूत्रे 'अन्यतरस्याम्' इति योगविभागकरणपक्षे इदमुक्तमित्यर्थः । **पूर्वेणेति** । उक्तयोगविभागेनेत्यर्थः ।

**अकचि न स्यादिति** । तदकारो हि पचतकीत्यादिसिद्धये न प्रयोगसमवायीति

भैरवी ।

प्रत्याख्यानाय भगवता तस्य प्रदर्शनादत आह—पूर्वोक्तेति । गुरुभूत इति । एतेन तस्यापसिद्धान्तत्वेनात्र तदीयत्वेन नोक्त इति भाष्याशय इत्यनेनाभिहितम् । वस्तुतस्तु मूले—भाष्ये त्वित्यत्र तुशब्दोपादानेन तस्य पक्षस्याऽरुचिग्रस्तत्वन्ध्वनितम् । सा च सूत्राक्षरमर्यादया समीहितार्थलाभे सम्भवति सति सूत्रभङ्गकल्पनमन्याय्यमिति । एवञ्च समाहितमित्यस्य वार्तिककृतेति शेषः । अत एव भगवता सूत्रभङ्गस्योपपादनङ्कृत्वा तत्तर्हीत्यादिना पूर्वोक्तः प्रकारो दर्शितः । तथा च पूर्वोक्तप्रकार एव भगवतो निर्भर इति पर्यवसितम् । एतेन सूत्रभङ्गेन समाधानं वार्तिककाराभिमतन्न तु भाष्यकारस्येति भाष्ये त्वित्याद्यभिधानमयुक्तमिति कस्यचित्प्रलपितमपास्तम् ।

ननु परममूले "अन उपधा" इत्यस्य नियमार्थत्वन्नोक्तमितीत्युक्तमित्यसङ्गतमत आह—डाप्सूत्रे इति ।

नन्वकचि ककारादुत्तरत्राकारस्योपलम्भादकचि न स्यादित्ययुक्तमत आह—तदकार इति । पचतकीत्यादीति । "तिङश्च" इति टेः प्रागकच् । न प्रयोगसमवायीति । न लौकिकप्रयोगघटकाकच्प्रत्ययावयवकोत्तरकालिकश्रुतिविषय इत्यर्थः । किन्तूच्चारणार्थत्वादविवक्षितः । अत एव "न यासयोः" इति सूत्रं सार्थकम् । ननु वर्णत्वपर्य्याप्त्यधिकरणस्य बोधने 'वर्णात्कार'

भावप्रकाशः ।

व्रीहेश्च'इत्यस्य प्रत्याख्यानाय वार्तिककृता सूत्रभङ्गे कृतेऽपि तदभावे तत्प्रत्याख्यानाय भगवतैव तत्प्रकारस्य स्पष्टमभिधानात् । अत आह-**पूर्वोक्तेति** । **गुरुभूत इति** । अस्य भाष्योक्तोऽपीत्यादिः । **भाष्याशय इति** । भाष्ये त्वितिवदतो मूलकृत आशय इत्यर्थः । यद्यपि सोऽपि भाष्योक्तस्तथापि गुरुभूतत्वादसिद्धान्तत्वेनात्र तदीयत्वेन नोक्तः, किं तु पृथगुक्त इति भावः । वस्तुतस्तु मूले, भाष्ये इत्यस्य मध्यमणिन्यायेनोभयत्रान्वयः, तु शब्द उत्तरपक्षेऽरुचिसूचकः । सा च सूत्राक्षरमर्यादयैवेष्टसिद्धौ सूत्रभङ्गो नोचित इति । समाहितमित्यस्य वार्तिककृतेति शेषः । अत एव सूत्रभङ्गे उक्तामरुचिं मनसि निधाय सूत्रशेषे तत्तर्हीत्यादिना स प्रकारो भगवतोक्तः । एवञ्च सिद्धान्तभाष्यमतमादावुक्त्वा वार्तिकमतमग्रे फल्गुत्वादभिहितं मूले इति बोध्यम् । एतेन वार्तिकमतमेतन्न भाष्यमतमिति मूलं चिन्त्यमितिरत्नाकरोक्तमपास्तमिति दिक् । ननु उक्तरीत्या डाप्सूत्रे अन्यतरस्यामिति व्यर्थम् । अन उपधेति विध्यर्थमेव । बहुव्रीहौ वेत्येवोचितं, प्रत्याख्यानस्य गुरुभूतत्वात् । फले न कश्चिद्विशेष इति तत्त्वम् । तदेव ध्वनयन्नाह—**डाप्सूत्रे इति** । यथाश्रुते विकल्पासिद्धेराह—**उक्तेति** ।

नन्वकचोऽप्यकारस्य सत्त्वेन तत्र कुतो नेत्यतस्तत्र हेतुमाह—**तदकार इति** । अत एव हिः प्रयुक्तः । **न प्रयोगेति** । उच्चारणार्थत्वात् अविवक्षित इति भावः । अत एव "न यासयोः" इति

येनाह—ककारादिति । वर्णनिर्देशे हि कारप्रत्ययो विहितः । क्वचित्समुदायात् प्रयोगस्तु "उच्चैस्तरां वा वषट्कारः" इति निर्देशरूपयत्नसाध्य इति भावः । आपि पर इति । एतच्च अकारस्य विशेषणम् । तत्र सामर्थ्यात् ककाराऽकाराभ्यां

शब्दरत्नम् ।

भावः । यत्नसाध्य इति । एतत्प्रयोगरूपज्ञापकसाध्य इत्यर्थः । एतच्च अकारस्येति । सन्निहितत्वात्, साक्षाद्विध्युद्देश्यत्वेन प्राधान्याच्चेति भावः । तत्र सामर्थ्यादिति । कात्पूर्वस्येति शास्त्रसामर्थ्यात्ककारेण व्यवधानं सह्यते । आबकारयोस्त्वेकादेशे कृते "अचः परस्मिन्" इति स्थानिवत्त्वेनाकारव्यवधानेऽपि श्रौतमव्यवधानं गृहीत्वा प्रवृत्तिः । अकारशब्देनात्वजातिग्रहणम् । तेनैतिकेत्यादावकारद्वयसत्त्वेऽपि न क्षतिरिति भावः ।

भैरवी ।

इत्यनेन विधीयमानकारप्रत्ययः समुदायान्न स्यादतो मूले उक्तं—यत्नसाध्य इति । तावता सौत्रप्रयोगोपपत्तावपि चकार एवकार इत्यादिप्रयोगाणाञ्च गतिरत आह—एतत्प्रयोगेति । तथा च वषट्कार इति निर्देशः समुदायादपि कारप्रत्ययः क्वचिद्भवतीत्यर्थे ज्ञापक इति कल्प्यते । अतिप्रसङ्गपरिहारस्तु ज्ञापकसिद्धस्यासार्वत्रिकत्वात्कार्य इति भावः । आपः प्रत्ययतया तस्याङ्गविशेषणत्वन्न्याय्यन्तस्य त्यागे तु किम्बीजमत आह—सन्निहितेति । मूले—तत्र सामर्थ्यादिति । तत्र—आपीत्यस्याकारविशेषणत्वे । सामर्थ्यात्—सूत्रारम्भसामर्थ्यात् । अत एव—ककाराकारमात्रव्यवधाने प्रवृत्तिस्वीकारादेव । आद्याकारस्य—सकाराकारस्य । न च कात्पूर्वस्येत्यनेन काद्व्यवहितपूर्वस्यैव स्यादिति कथमाद्याकारस्य प्राप्तिरिति वाच्यम्? तत्राव्यवधानांशलाभे मानाभावात् । एतच्च पाणिन्युच्चारितानुपूर्वीकसूत्राभिप्रायेणोपपादनम् । प्रत्ययस्थे कीति तु स्वोत्प्रेक्षामात्रमतो न विरोधः । तत्र सूत्रारम्भसामर्थ्यात्ककारव्यवधानेऽपि प्रवृत्तिः । अकारविषये तु काद्वैलक्षण्यमित्याशयेनाह—आबकारयोरिति । अकारशब्देन—ककाराकाराभ्यामित्येतद्वाक्यघटकाकारशब्देन । एतच्च यथाश्रुतमूलरीत्या । यदि तु श्रौताव्यवधानमकारांशे गृह्यते तदा तु न जातिग्रहणस्य प्रयोजनम् । एवमुपपादनं वार्णपरिभाषाया अनित्यत्वादप्रवृत्तिमभ्युपेत्य । यदि तु तस्याः प्रवृत्तिस्त-

भावप्रकाशः ।

सफलम् । तेन वर्णग्रहणमित्येव ज्ञाप्यते इति निष्कर्षः । निर्देशरूपयत्नसाध्यत्वे सौत्रप्रयोगाणां सिद्धावपि एवकारश्चकार इत्यादिभाष्यप्रयोगासिद्धिरत आह—एतदिति । ज्ञापकसिद्धस्याऽसार्वत्रिकत्वान्नातिप्रसङ्गः । किं च तत्त्वे वर्णादिति व्यर्थं, निर्देशे इत्यनुवृत्त्यैव सिद्धेः । धातुपदस्य तु नानुवृत्तिर्योगविभागाद् क्यादत एव क्वचिदित्युक्तं मूले इति भावः । वषट्कार इत्यादावुच्चारणार्थककृधातोर्घञि षष्ठीसमासे न काचिद्दोषशङ्केति तु मान्याः । अन्यविशेषणत्वत्यागे मूलाद्युक्तबीजासाङ्गत्यस्य वक्ष्यमाणत्वाद्बीजान्तरमाह—सन्नीति । ननु इदमित्त्वे अतिप्रसक्तमत आह—विध्युद्देश्येति । तत्त्वमन्यत्राप्यतिप्रसक्तमतः साक्षादिति विशेषणम् । विधेयत्वलक्षणप्राधान्येन तद्विशेषणत्वन्तु दूषयिष्यमाणमिति भावः । तत्र—तस्य तद्विशेषणत्वे, लक्ष्ये वा । ननु मूले आनन्तर्यांशोपस्थितावपि सामर्थ्यादित्यस्य सूत्रारम्भसामर्थ्यादित्यर्थकस्योभयव्यवधाने प्रवृत्तिहेतुत्वस्योक्तत्वेपि अकारव्यवाये न्यायेनैव प्रवृत्त्या सामर्थ्यं न तत्र हेतुरित्याशयेन व्याचष्टे—कात्पूर्वेति । समुदाये प्रवृत्ताः शब्दा इति न्यायेनाह—शास्त्रेति । यथाश्रुतमूलरीत्या आह—अकारशब्देनेति । ककाराकाराभ्यामित्यत्रत्येनेत्यर्थः । सत्त्वेऽपीति । अपिना वस्तुतः श्रौताव्यवधानमादाय तत्रापि प्रवृत्तिरिति नैषा विवक्षा युक्तेति स्वमतं सूचितम् । स्थानिवत्त्वेन व्यवधानेऽपि आनन्तर्यांशोपस्थितावपि 'येन नाव्यवधानम्' इति न्यायेनैकाऽकारव्यवधानेऽपि तत्प्रवृत्तिः रथकट्यादौ नातिप्रसङ्गश्च । एतिका इत्यादौ द्वयोरकारयोरेकादेशे टापा सहैकादेशस्य स्थानिवत्त्वादेकेनैवाऽकारेण व्यवधानम् । पुनः स्थानिवत्त्वं तु न,

व्यवायेऽपि भवति । न तु रथकटचेत्यादौ त्रिचतुरादिव्यवाये । अत एव सर्विकादौ आद्याऽकारस्य न भवति । तदेतदुक्तम्—अकारस्येकारः स्यादापि पर इति । ककारविशेषणत्वे तु विवक्षिते आप्परात्ककारात् पूर्वस्यात इत्यवक्ष्यत् ।

यत्तु प्राञ्चः-आपीति ककारविशेषणं सर्विकेत्यादौ तु एकादेशस्य स्थानिवद्भावादकारेण व्यवधानेऽपि वचनसामर्थ्याद्भविष्यतीति ; तन्न, रथकटयादावतिप्रसङ्गात्, व्यवहितस्यापि परत्वानपायात् । न च निर्दिष्टपरिभाषया निस्तारः, अनुवादे परिभाषाणामनुपस्थितेः । अनूद्यमानस्य विशेषणेष्विति हि तदर्थः ।

शब्दरत्नम् ।

अत एव "न यासयोः" इति चरितार्थम् । त्रिचतुरादिति । श्रौतत्रिचतुरादीत्यर्थः । आद्याकारस्येति । इदं च कात्पूर्वस्येत्यंशेऽप्यनूद्यमानविशेषणत्वान्नाव्यधानांशप्रवृत्तिरिति वादिनां मते बोध्यम् ।

वचनसामर्थ्यादिति । श्रौताव्यवधानमाश्रित्येत्यर्थः । अनूद्यमानस्येति । साक्षादनूद्यमानविशेषणतया वाऽनूद्यमानस्येत्यर्थः । विशेषणेषु—आपीत्या-

भैरवी ।

दाऽकारव्यवधाने प्रवृत्तिरपि सामर्थ्यादेवेति बोध्यम् । अत एव—अकारांशे जातिग्रहणादेव । ननु मूलोक्तरीत्यास्यैतिकेत्यत्र त्रिव्यवधाने प्रवृत्तिर्दृश्यत एवेत्यत आह—श्रौतत्रीति । ननूत्तरस्येत्यंशविकलायास्तस्मादिति परिभाषाया उपस्थितावाद्याकारस्य कथम्प्राप्तिरत आह-इदञ्चेति । अत्र मते इत्युपादानात्तस्याः परिभाषाया असत्त्वं सूचितम् । वस्तुतः पूर्वस्य कार्यविधानादुत्तरस्येत्यस्यानुपस्थितावव्यवधानांशस्याप्यनुपस्थितिः कल्प्येति तात्पर्यम् । मूले—आपीत्यस्य ककारविशेषणत्वपक्षे रथकट्येत्यत्र दोषोपपादनमनूद्यमानविशेषणनियामिका । अत्र "तस्मिन्" इति परिभाषा न भवतीतिमतेन । सा च परिभाषा साक्षादनूद्यमानविशेषणे "इको यणचि" इत्यादौ दृष्टैवेत्यत आह—अनूद्यमानविशेषणतयेति । एवञ्चानूद्यमानविशेष्यविशेषणनियामिका परिभाषा न भवतीति तदर्थः । अस्ति च प्राचीनसम्मतव्याख्याने आपीत्यस्यानूद्यमानाकारविशेषणककारविशेषणत्वमिति भावः ।

भावप्रकाशः ।

लक्ष्येलक्षणस्येति न्यायात् । टापा सहैकादेशस्य तत्त्वं विना पूर्वैकादेशस्य तत्त्वमशक्यन्तस्य तदेकादेशेनापहारेणादर्शनात् इत्यपि बोध्यम् । तदेतत् ध्वनयन्निति भाव इत्यग्रे आह—अत एवेति । एतिकेत्यादौ त्रिव्यवधाने मूलोक्तरीत्या प्रवृत्तिसत्त्वादाह—श्रौतेति । प्रागुक्तरीत्या पक्षद्वयेऽपि सर्विकेत्यादावाद्याऽकारस्याप्राप्त्या मूलासङ्गतेराह—इदं चेति । अपिरापि क इत्यंशसमुच्चायकः । विशेषणत्वादिति । अनूद्यमानाकारविशेषणपूर्वत्वविशेषणत्वादित्यर्थः । अव्यधानांशेति । पूर्वस्येति तूपात्तमेवेति भावः । वादिनाम्—प्रकाशकृताम् । मूले-अवक्ष्यदिति । विवरणे इति शेषः । एतेन परशब्दोच्चारणे विपरीतगौरवान्मूलं चिन्त्यमिति रत्नाकरोक्तमपास्तम् ।

तत्रैव प्राञ्चः प्रसादकृदादयः । स्वरीत्या व्याचष्टे—श्रौतेति । श्रौतवर्णकर्तृकव्यवधानाभाव इति तदर्थः । मूले तत्र प्रकाशोक्तं दोषमाह—रथेत्यादि । आदिना सर्विकेत्यादावाद्याकारपरिग्रहः । नन्वत्र पक्षेऽनुवादे इति परिभाषास्वीकारेणातिप्रसङ्गस्थापने आपीत्यस्याकारविशेषणत्वेऽपि तद्दोषतादवस्थ्यमत आह मूले—अनूद्यमानस्येति । अयम्भावः । अनूद्यमानविशेषणेषु तन्नियामकपरिभाषा नोपतिष्ठत इति तदर्थः । विध्यङ्गभूतपरिभाषाणां विधेयेनासिद्धतया सम्बन्धाभावेऽपि तद्विशेषणे व्यवस्थापकत्वेन चरितार्थानां तद्विशेषणव्यवस्थापकत्वे मानाभाव इति ततोऽत्र वैषम्यं स्फुटमेवेति । नन्वेवं सिद्धान्ते निर्वाहेप्यत्र पक्षे अनिर्वाह एव । न हि कस्यानूद्यमानाकारविशेषणत्वमत आह टीकायां—साक्षादित्यादि । तथा

अत्र च "उदीचामात" इति सूत्रे स्थानेग्रहणं लिङ्गम् । फलं तु वृद्धसंज्ञायामिक्परिभाषानुपस्थानात् शालीयादिसिद्धिः । यद्प्याहुः—आपीति विधीयमानस्येतो

शब्दरत्नम् ।

दिषु । सिद्धिरिति । अस्य तैरुक्तमिति शेषः । अनेन तत्र सूत्रे एतस्यैव ज्ञापकत्वं वर्णयतोऽत्र चैवं वदतस्तव पूर्वापरविरोध इति भावः ।

यदि त्वन्तरङ्गत्वेन स्थानसम्बन्धलाभ इत्यर्थः "षष्ठी स्थाने" इत्यत्र भाष्ये स्पष्ट

भैरवी ।

मूले—शालीयादिसिद्धिरिति । यद्यनूद्यमानविशेष्यविशेषणनियामिकापि परिभाषा स्यात्तदा 'गुणो वृद्धिरिति यत्रोच्यते तत्रेक्परिभाषोपतिष्ठत' इति "इको गुणवृद्धी" इति सूत्रार्थमाश्रित्य "वृद्धिर्यस्य" इति सूत्रेऽपीक्परिभाषोपतिष्ठेत । तथा च यत्समुदायाद्यजभिन्नेक्स्थानिका वृद्धिरिति सूत्रार्थः स्यात्तथा चौपगवादिशब्दस्यैव वृद्धिसंज्ञाप्रवृत्तावौपगवीय इत्यादिसिद्धावपि शालीयादिसिद्धिर्न स्यादिति भावः । वक्ष्यमाणरीत्या मूलासङ्गतिपरिहारायाह—अस्येति । अस्य-रथेत्यारभ्य सिद्धिरित्यन्तग्रन्थस्येत्यर्थः । तैः—प्रकाशकृद्भिः । उक्तम् । "वृद्धिर्यस्य" इति सूत्रे उक्तमिति शेषः । यद्यप्यनूद्यमानविशेषणेष्विति तेन नोक्तन्तथाप्यन्यथानुपपत्त्या तथा कल्प्यत इति तदपि तदनुमतमेवेति भावः । ननु निष्प्रयोजनकानुवादो नोचितोऽत आह—अनेनेति । तादृशोक्तानुवादेन । तत्र सूत्रे—"वृद्धिर्यस्य" इति सूत्रे । एतस्यैव—स्थानेग्रहणस्यैव । अत्र च—प्रकृतसूत्रे च । एवम्—अनूद्यमानविशेषणेष्वित्यभिप्रायकमनुवादे इत्येवम् । यदि स्थानेग्रहणस्य ज्ञापकता तदा साक्षादनूद्यमानविशेषणनियामिका नेत्यर्थो भविष्यति तथासति प्रकृतानुपयोगः "इको यणचि" इत्यादौ दोषश्च स्यात् । अनूद्यमानविशेषणविशेषनियामिका सा नेति तदर्थश्चेत्तदाऽस्या न ज्ञापकसाध्यत्वमिति पूर्वापरविरोधस्तवेति भावः । इति भाव इति । अत्र यदितीति तस्य ध्वनितमिति शेषः ।

शेषपूरणे फलमाह—यदीत्यादिना । स्थानसम्बन्धलाभः—स्थानपदार्थनिरूपितसम्बन्धलाभः । भाष्ये स्पष्ट इति । तत्र हि यद्यपि लोके बहवः सम्बन्धा दृष्टास्तथापि शब्दस्य शब्देन कोन्योऽभिसम्बन्धो भवितुमर्हति अन्यत्; अतः स्थानात् । यद्यप्यानन्तर्यादयोऽपि सम्ब-

भावप्रकाशः ।

चानूद्यमानाऽकारविशेषणतयाऽनूद्यमानापूर्वत्वविशेषणे कादित्यत्र तन्नियामकपरिभाषाया अनुपस्थितिरिति भावः । नन्वेवं साक्षादितिकल्पः प्रकृतानुपयुक्तत्वादधिकोऽत आह—आत इत्यादिष्विति । तथा च तत्र साक्षादात इत्यस्याऽनूद्यमानाकारविशेषणत्वं न तु तद्विशेषणत्वमिति तत्कल्पावश्यकत्वम् । अत एव तस्याः समूलत्वम् । अत एव च ज्ञापकसङ्गस्योत्तरग्रन्थसङ्गतिरिति भावः । आदिना कादित्यादिपरिग्रहः । वक्ष्यमाणरीत्या यथाश्रुतमूलाऽसङ्गतेराह—अस्येति । रथेत्यारभ्य सिद्धिरित्यन्तग्रन्थस्येत्यर्थः । तैरिति । अस्येतीत्यादिः । प्रकाशकृद्भिरिति तदर्थः । उक्तमिति । रथेत्याद्यनुपस्थितेरित्यन्तमत्रोक्तम् । अत्र चेत्यादि सिद्धिरित्यन्तं वृद्धिर्यस्येति सूत्रे उक्तमित्यर्थः । तस्यैवान्तरङ्गत्वाद् ग्रहणमिति तत्रोक्तं, स्थानिवदादेश इति ज्ञापकमप्यत्र बोध्यम् । यद्यप्यनूद्यमानस्य विशेषणेष्विति नोक्तमत्र तथापि अन्यथानुपपत्त्या तत्तदभिमतमेवेति भावः । ननु निःखण्डनकानुवादे न प्रयोजनमत आह—अनेनेति । तादृशोक्तानुवादेनेत्यर्थः । तत्र सूत्रे—वृद्धिर्यस्येति सूत्रे । एतस्यैव—स्थानेग्रहणस्यैव । अत्र च । प्रकृतसूत्रे च । एवम् । अनूद्यमानस्य विशेषणेष्वित्यभिप्रायकमनुवादे इत्येवमित्यर्थः । स्थानेग्रहणस्य ज्ञापकत्वे साक्षादनूद्यमानविशेषणेष्वित्येव लभ्यते । तथा सति नात्र प्रवृत्तिः; यथा त्वत्र प्रवृत्तिर्नासौ ज्ञापकसाध्य इति विरोध इति भावः । इतीति । अस्य सूचितमितीति शेषः ।

शेषपूरणेन योजनफलमाह । यदि त्वित्यादि । स्थानसम्बन्धेति । स्थानार्थनिरूपितसम्बन्धेत्यर्थः । स्पष्ट इति । 'यद्यपि लोके बहवः सम्बन्धास्तथापि शब्दस्य शब्देन कोन्योभिसम्बन्धो भवितु-

शब्दरत्नम् ।

इति स्थानेग्रहणं व्यर्थमेव, तस्य परिभाषालभ्यत्वाभावेन ज्ञापकासम्भवात् । वृद्धसंज्ञाया-मिक्परिभाषानुपस्थितिस्तु "मालादीनां च" इति ज्ञापकात् । तद्धि "प्रस्थेऽवृद्धम्" इति पर्युदासे प्राप्ते आरभ्यते । अनुवाद इति च निर्मूलम् । यद्वा इक्परिभाषाच्परिभाषयो-र्विधीयते इत्यध्याहारात्तत्र तस्या अप्रवृत्तिरनुवादे इति च तद्विषयमेव । अत एव "अ-ल्लोपोऽनः" इत्यत्र यजादिस्वादिपर इत्यस्यान्विशेषणत्वेऽपि अव्यवधानलाभ इति "क्य-ङ" इति सूत्रभाष्यध्वनितं सङ्गच्छते इति विभाव्यते ; तदा संनिहितत्वाद्धिनैवापीत्यस्या-

भैरवी ।

न्धास्तथापि तस्यैवान्तरङ्गत्वाद् ग्रहणमिति प्रतिपादितम् । "अस्तेर्भूः" इत्यादौ स्थानप-दार्थनिरूपितसम्बन्धार्थकत्वं षष्ठ्या इत्यत्र "स्थानिवदादेश" इति "हल" इति च सूत्रं ज्ञापकमप्यस्ति । ज्ञापकासम्भवात्—ज्ञापकत्वासम्भवात् । ननु यदि सा परिभाषा न स्वीक्रि-यते तदा "वृद्धिर्यस्य" इत्यत्र पूर्वोक्तानुपपत्तिरेवेत्यत आह—वृद्धसंज्ञायामिति । ज्ञापकादिति । "प्रस्थेऽवृद्धम्" इत्यनेन प्रस्थशब्दे उत्तरपदे परे कर्क्यादिवर्जितमवृद्धम्पूर्वपदमाद्युदात्तमित्य-र्थकेन मालाप्रस्थ इत्यत्राद्युदात्तत्वे सिद्धे "मालादीनां" इति सूत्रे वृद्धार्थमारब्धं यत्तद्रूप-ज्ञापकादित्यर्थः । एवञ्च "उदीचाम्" इति सूत्रे स्थानेग्रहणं स्पष्टार्थमेव । "षष्ठीस्थान" इति सूत्रन्तु 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषार्थलाभायेति बोध्यम् । निर्मूल-मिति । यदि परिभाषा न ज्ञापकसाध्या तदा निर्मूलमित्यर्थः । भाष्यकारानुक्तत्वन्तस्य सत्त्वे बाधकमपि द्रष्टव्यम् । प्राचां तादृशोद्घोषस्य तस्य का गतिरत आह—यद्वेति । तत्र—वृद्ध-सञ्ज्ञायाम् । तस्याः—इक्परिभाषायाः । विधौ परिभाषोपतिष्ठत इत्युक्तसूत्रद्वयविषयकमे-वेत्यत्र साधकमाह—अत एवेति । तस्या निर्मूलत्वात्तदुभयविषयकत्वादेव वेत्यर्थः । विभाव्यत इति । तथा चापीत्यस्य ककारविशेषणत्वेऽपि निर्दिष्टपरिभाषया रथकट्यादावदोष एवेति भावः । ननु यद्यनुवादेऽपि निर्दिष्टपरिभाषाप्रवृत्तिस्तदा आपीत्यस्याकारविशेषणत्वस्वीकारे किम्बीजमत आह—सन्नीति । आदिपदेन साक्षाद्विध्युद्देश्यत्वप्रयुक्तप्राधान्यस्य परिग्रहः ।

भावप्रकाश ।

मर्हति अन्यदतः स्थानात् । यद्यप्यनन्तरादयोभिसम्बन्धास्तथापि तस्यैवान्तरङ्गत्वाद् ग्रहणम्' इति तत्रो-क्तम् । स्थानिवदादेश इति ज्ञापकमप्यत्र बोध्यम् । व्यर्थमेवेति । एतेन परिभाषानित्यत्वमात्रं तेन ज्ञाप्यते तेनेष्टतो व्यवस्थेति रत्नाकरोक्तमपास्तम् , तत्सत्त्वे एव फलाभावेन मूलशैथिल्यात् । ननु तथापि ज्ञापकार्थं तदत आह—तस्येति । तादृशसम्बन्धस्येत्यर्थः । परिभाषा—"षष्ठी स्थानेयोगा" इति । तत्फलं तु 'निर्दिश्यमानस्य' इत्यस्य सिद्धिः । ज्ञापकासम्भवादिति । तत्त्वासम्भवादित्यर्थः । स्थाने-ग्रहणस्येति शेषः । नन्वेवं शालीयाद्यसिद्धिरत आह—वृद्धेति । प्रस्थशब्दे उत्तरपदे परतः कर्क्यादि-वर्जितमवृद्धं पूर्वपदमाद्युदात्तमित्यर्थकेन तेनैवान्यथासिद्धेर्वृद्धार्थमारब्धस्य "मालादीनां च" इत्यस्य वैयर्थ्या-पत्तिरिति भावः । एतेन ऋगयनादिव्याकरणशब्दपाठाच्छबाधनार्थादेवोक्तार्थज्ञापनसम्भवात्स्थानेग्रहणं चिन्त्यप्रयोजनमिति वदतः कौस्तुभकृद्रत्नाकरकृदृव्यादयः परास्ताः । च निर्मूलमिति । निर्मूलं चेत्यर्थः । भाष्यानुक्तत्वादिति भावः । नन्वेवं प्राचामनादिसिद्धतदुद्घोषासङ्गतिरत आह—यद्वेति । "इको गुण-वृद्धी" "अचश्च" इत्यनयोरित्यर्थः । इदं तत्रैव प्रतिपादितम् । तत्र—वृद्धसंज्ञायाम् । तस्याः—आद्यायाः । च:—इत्यर्थः । अप्रवृत्तिरित्यस्याग्रे योज्यः । अप्रवृत्तिरित्यनुवादे इति उक्तपरिभाषाद्वयविष-यकमेवेत्यर्थः । उक्तार्थस्यावश्यकतामाह—अत एवेति । तस्यानिर्मूलत्वात्तदुभयविषयकत्वादेव वेत्यर्थः । अपिरकारविशेषणत्वे समुच्चायकः । विभाव्यते इति । एवञ्च कविशेषणत्वेऽपि निर्दिष्टपरिभाषया न रथकट्यादिषु दोषः । अत एव प्रसादकृता रथकट्यादिषु नापः ककारोऽनन्तर इत्यप्रसङ्ग इत्युक्तम् । एवं च प्रकाशोक्तं यथाश्रुतमूलं तदनुयायिरत्नाकरदण्ड्याद्युक्तं चापास्तम् । नन्वेवं तर्हि प्रसादोक्तिः किमि-त्युपेक्षिताऽत आह—सन्नीति । अत एव प्राक् तथैवोक्तम् । आदिना साक्षाद्विध्युद्देश्यत्वप्रयुक्तप्राधा-

विशेषणमिति; तत्स्थवीय: । आपीत्यस्याऽङ्गविशेषणत्वं तु नाऽऽशङ्क्यमेव, रथकट्या पुत्रकाम्येत्यत्रातिप्रसङ्गात् । शकेति । पचाद्यच् । स्थग्रहणं विस्पष्टार्थम् । ककारमात्रस्य प्रत्ययस्याभावादेव तात्स्थ्यलाभात् । पूर्वस्य किम् । सर्विकेत्यादौ

---

शब्दरत्नम् ।

कारविशेषणतेति बोद्धव्यम् । तत्स्थवीय इति । विधेयस्यासिद्धत्वेन तद्विशेषणासम्भवादिति भावः । नाशङ्क्यमेवेति । श्रुतेनान्वयसम्भवे अश्रुतेनान्वयायोगादिति भावः । लक्ष्यविसंवादमप्याह—रथेत्यादि । तात्स्थ्यलाभादिति । कान्तात्प्रत्ययादिति तु

भैरवी ।

मूले स्थवीय इत्येवोक्तन्न तु तत्र हेतुरुपात्त इति तत्र हेतुमाह—विधेयस्येति । श्रुतेनेति । 'श्रुताऽनुमितयोः श्रुतसम्बन्धो बलीयान्' इति परिभाषया तथा प्रतिपादनादिति भावः । ननु ककारमात्रस्य प्रत्ययत्वाभावात्प्रत्ययस्य विशेष्यत्वमेवास्तु कादिति तु विशेषणन्तदन्तपरमस्त्वित्यत आह—कान्तादिति । तादृशार्थकल्पने सर्विकेत्यादावकचि पूर्वसूत्रस्याचारितार्थ्येऽपि कारिकेत्यादावव्याप्तिः स्यादतस्तदन्तविधिर्न । वस्तुतः प्रत्ययस्य विशेषणत्वमेवा-

भावप्रकाशः ।

न्यपरिग्रहः । एतेनोक्तदोषनिवृत्तिः । मूले हेत्वनुक्तेराह—विधेयस्येति । तद्विशेषणेति । तद्विशेषणस्य आप इत्यस्यासम्भवादित्यर्थः । एवं च प्रसादं सन्दूष्य यत्सिद्धान्तितं प्रकाशकृता तद् दुर्वचमिति भावः । ननु तथान्वयस्यैवाप्राप्तत्वेन रथेत्याद्यसङ्गतिरत आह—श्रुतेनेति । प्रकरणादितः श्रुतेर्बलवत्त्वमित्येतन्मूलिकया 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इति परिभाषयेति भावः । नन्वेवमप्युत्तरग्रन्थासङ्गतिरेवात आह—लक्ष्येति । एवं चानुषङ्गिकदोषपरं मूलमिति भावः । अपिस्तस्यपरामर्शकः । यत्तु रत्नाकरकृत्-स्थपदाभावे अकाराविवक्षायाममानान्मूलं चिन्त्यम् । न च प्रत्ययादिति विशेषणसामर्थ्यादेव तदविवक्षा, अन्यथा प्रत्ययाप्रत्यययोरित्येव सिद्धे किं तेनेति वाच्यम् ? तथापि तदन्तविधौ कान्तात्प्रत्ययादित्यर्थेऽकच एव ग्रहणे सर्विकेत्यादावाद्याऽकारस्यैव स्यात्कारिकेत्यादौ तु नैवेत्यव्याप्त्यतिव्याप्त्यापत्तेः । न चैवमकच इत्येव वाच्यम् ? कारकादिशब्देभ्यो ण्यन्तेभ्यो अचि टाबन्तानामपि सत्त्वात्, वर्णग्रहणे तदन्तग्रहणमित्यनेन वर्णस्यविशेषणत्वमेव न विशेष्यत्वमिति नियमात् । अतो वर्णग्रहण इत्यस्य बाधार्थं तदिति तत्त्वमिति ; तन्न, तदभावेपि तद्विवक्षायां मानस्योक्तत्वात् । 'प्रत्ययाप्रत्यययोः' इत्यस्या लक्ष्यासंस्कारकत्वाच्च । प्रत्ययस्येति षष्ठ्यन्तपाठेन निर्वाहाच्च । तदेतत् ध्वनयन् तात्त्विकं दोषं

सरला ।

मूले पूर्वस्यकिमिति । अयं भावः—"प्रत्ययस्थात् कात्पूर्वस्य" इति सूत्रे पूर्वस्यग्रहणाभावे कादिति दिग्योगलक्षणपञ्चमीश्रुत्या "तस्मादित्युत्तरस्य" इति परिभाषाया अव्यवहितत्वोत्तरत्वविधेयान्वयिषष्ठ्यर्थैत्वंशत्रयाणामुपस्थितौ प्रत्ययस्थात् ककारादव्यवहितोत्तरस्य ह्रस्वाकारस्येत्वं भवत्यापि परे इत्यर्थेन कटुकशब्दाट्टापि कृते 'कटुक आ' इति स्थिते सवर्णदीर्घमाङ्गत्वेनापवादत्वाच्च प्रबाध्य इत्वं स्यात् । नचैवं 'सर्विका' इत्यत्रैव 'सर्वक आ' इति दशायामुक्तप्रकारेणेत्वापत्तिसत्त्वेन कटुकापर्यन्तमनुधावनस्य वैयर्थ्यमिति वाच्यम्, "सूतकापुत्रिका" इति वार्तिके प्रश्लेषेणाकारविधानसामर्थ्येन "प्रत्ययस्थात्" इति सूत्रे "तस्माद्" इति परिभाषाया अप्रवृत्तिज्ञापनाद् दिग्योगलक्षणपञ्चम्याऽऽकाङ्क्षितदिग्वाचकपदाध्याहारे प्रसक्ते परस्येत्यस्यैव स इति नियमाभावेन परस्येति पदाध्याहारे सवर्णदीर्घबाधकल्पनं, पूर्वस्येति पदाध्याहारे तु नेति सूत्रबाधपरिहारलाघवेन सर्विकेत्यादिलक्ष्यसंस्काराय पूर्वस्येत्यस्यैवाध्याहारेण तत्र दोषाभावात् । यत्रोदाहरणे पूर्वोऽकारो न सम्भवति तत्रागत्या परस्येत्यस्याध्याहार इति 'कटुका' इत्यत्र पूर्वाकारासम्भवात्तत्रेत्वप्रवृत्त्यर्थं परस्येत्यध्याहारे दोषः स्पष्ट एवेति तत्पर्यन्तानुधावनस्य सार्थकयात् ।

"प्रत्ययस्थात्" इति सूत्रे तस्मादिति परिभाषाप्रवृत्तौ तु 'सूतका' 'पुत्रिका' 'वृन्दारका' इत्यत्र ककारात्परस्याकारस्यैव सत्त्वेन तस्य विकल्पेन इत्वविधानेऽपि रूपद्वयसिद्धौ प्रश्लेषेणाकारविधानस्य

टाबेकादेशं बाधित्वा कात्परस्य मा भूत् "तस्मादित्युत्तरस्य" इति परिभाषणात्। यत्तु—'वार्णादाङ्गम्' इति परिभाषया एकादेशो बाध्यत इत्याहुः; तन्न, अपवादे परत्वस्येव उक्तपरिभाषाया अपि निष्फलत्वात्। वस्तुतस्तु "प्रत्ययस्थे कि" इति सप्तमीनिर्देश एवोचितः। पूर्वग्रहणं च सुत्यजम्। अत इति तपरः किम्। "कृदाधारार्चिकलिभ्यः कः"। धाका। राका। मामिकेति। "केवलमामक" इत्यादिना सञ्ज्ञाच्छन्दसोरेवेति नियमान्न ङीप्। त्यक्त्यपोरिति।

---

शब्दरत्नम्।

नार्थः, क्षिपकादीनां निषेधस्य व्यर्थत्वापत्तेः। अपवादे इति। येन नाप्राप्तिन्यायेन बाधकविषये तेनैव न्यायेन बाध्यबाधसिद्धेरिति भावः। प्रत्ययस्थे कीति। प्रत्यये कीत्येव युक्तम्। "न यासयोः" इति ज्ञापकात् कादौ प्रत्यये इति नार्थ इति बोध्यम्। एवं चाऽऽप्परस्य प्रत्ययस्थककारपरस्य चात इदित्यर्थः। तत्र सामर्थ्यादाप्परत्वांशे कका-

भैरवी।

भिमतम्। 'क्षिपकादीनाञ्च' इति वार्तिकारम्भसामर्थ्यादित्याह—क्षिपकादीनामिति। तेषामिकारादेशनिषेधकस्य क्षिपकादीनाञ्चेति वार्तिकस्येत्यर्थः। तेनैव न्यायेन—येन नाप्राप्तन्यायेन। वस्तुत इदानीमित्त्वन्निरवकाशत्वेनैकादेशस्य बाधकम्। येन नाप्राप्तन्यायस्य तु तक्रकौण्डिन्यन्यायमूलकतया तस्य यत्रोत्सर्गप्रवृत्त्युत्तरमपि प्रवृत्तिस्तत्र प्रवृत्तेः स्वीकारादिति तद्विषयताया इहाभाव इति बोध्यम्। बाधकत्वमुभयथेति साधर्म्यादेवमुक्तम्। मूले—प्रत्यये के इति क्वचित्पाठः स त्वयुक्तः। केतिसमुदायस्य प्रत्ययस्य यत्राज्ञाताद्यर्थे कस्तत्र सत्त्वेऽपि सर्विकाकारिकेत्यादावप्राप्तेः। किन्तु बहुषु प्रत्ययस्थे के इत्येव पाठः। ततोऽपि लाघवादाह—प्रत्यये कीति। व्यधिकरणे सप्तम्यौ न तु समानाधिकरणे। अतस्तदादिविधिशङ्कैव नास्ति। अत एव "न यासयोः" इति चरितार्थम्। तथा च प्रत्यय इति ककारस्य विशेषणमेव। सामर्थ्यात्—कीत्युक्तिसामर्थ्यात्। तत्र कपरत्वमव्यवहितत्वसामानाधिकर-

भावप्रकाशः।

वक्तुमाह—कान्तादिति। क्षिपकादीनां चेति निषेधस्य इति पाठः। न हि तत्र कान्तः प्रत्ययः सम्भवतीति भावः। क्षिपकादीनां निषेधस्येति पाठे, तेषां निषेधकस्य क्षिपकेति वार्तिकस्येर्थः। निष्फलत्वे हेतुमाह—येनेति। बाधकविषये इति। बाधकत्वविषये इत्यर्थः। तेनैवेति। येननेति न्यायेनैवेत्यर्थः। एतेनान्यव्यावृत्तिः। एवञ्च तया निर्वाहेऽपि औचित्यन्तरस्यैवेति प्रकाशोक्तिरयुक्तेति भावः। यत्तु रत्नाकरकृत्—'यस्मिन्विधिः' इत्युपस्थितया सर्विका कारिकेत्यादावव्याप्तेः प्रत्यये के इत्यादिमूलं चिन्त्यं, प्रत्ययस्थे कि इति तु सुवचमिति; तन्न, प्रत्ययस्थे कि इत्येव तत्र पाठात्। तद् ध्वनयन्नाह—प्रत्ययस्थे कि इतीति। वस्तुतस्तु तथा पाठेऽपि मूलं युक्तमिति ध्वनयितुं ततोऽपि लघुभूतं न्यासमाह-प्रत्यये कि इतीति। अत्रपक्षे समुदायग्रहणशंकैव नेति ज्ञापकानाश्रयणप्रयुक्तं लाघवमिति भावः। तदुक्तदोषमुद्धरति—न येति। मान्यास्तु प्रत्यये कि इत्येव प्रतीकं धृत्वा उक्तज्ञापकात्तदादिविधिर्नेत्याहुः। अत्र पाठे निष्कृष्टं सूत्रार्थमाह—आप्परस्येति। उभयमुक्तरीत्याऽकारविशेषणमिति भावः। तत्र—तयोर्मध्ये। सामर्थ्यात्—कीत्युक्तिसामर्थ्यात्। अकारव्यवधानांशे गतिस्तु द्विधोक्तैव। कपरत्वं तु सर्वत्राव्यवहितमस्त्येवेति भावः। मूले—पूर्वस्य किमित्यादि राकेत्यन्तग्रन्थः परममूलस्थप्रत्युदाहरण-

सरला।

यर्थ्यं स्पष्टमेव। इदानीं तु 'सुतका' 'वृन्दारका' इत्यत्र ककारात्पूर्वस्याकारस्य सत्त्वेऽपि 'पुत्रिका' इत्यत्र ककारात्पूर्वस्येकारस्याकारविधाने 'पुत्रका' तदभावपक्षे 'पुत्रिका' इति रूपद्वयसिद्धिरिति तत्सार्थक्यमिति।

"उदीचामातः स्थाने" इति विकल्पस्यापवादः । दाक्षिणात्यिकेति । दक्षिणस्यामदूरे दक्षिणा आजन्तः । दक्षिणा भवेति विग्रहः । यत्तु—दक्षिणस्यां दिशि भवेति प्राचा विगृहीतम् ; तन्न, त्यग्विधावव्ययसाहचर्यादाजन्तस्यैव दक्षिणाशब्दस्य ग्रहणात् । अन्यथा—'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भावापत्तेश्च । यत्तु—समासे एव पुंवदिति तन्नेति वक्ष्यते । त्यकि "किति च" इत्यादिवृद्धौ टाप्, ततोऽज्ञाताद्यर्थे कः । "केऽणः" इति ह्रस्वष्टाप् । इहत्यिकेति । "अव्ययात्त्यप् ।

"न यासयोः" ॥ अत्र न्यासकारः । या इत्येतस्य "उदीचामातः स्थाने" इति विकल्पे प्राप्ते निषेधोऽयमिति; तन्न, 'आतः स्थाने'इत्यंशस्येहाभावात् । या सेति यत्तदोरुपलक्षणमित्याशयेनाह—यत्तदोरिति । स्वरूपस्याविवक्षायां फलमुदाहरति—यकां, तकामिति । यासयोरित्यपहाय यत्तदोरित्येव वक्तुमुचितम् । उपत्यकेति । "उपाधिभ्यां त्यकन्नासन्नारूढयोः" । 'क्षिपकादीनां च' । नेत्यनुषज्यते । क्षिपकेति । क्षिपेरिगुपधलक्षणः कः । ततोऽज्ञातादौ कः । चट भेदने । पचाद्यच् । ततः कः । तारकेति । तरतेर्ण्वुल् । ज्योतिर्नक्षत्रं, नेत्रकनीनिका च । वर्णका—प्रावारविशेषः । तन्तूनां विकारस्तान्तवम् । "ओरञ्" । अन्यत्र वर्णिकेति । ग्रन्थविशेषस्य व्याख्या स्तोत्रकर्त्री च । वर्त्तयतीति वर्तका—शकुनौ इत्वं वा । अन्यत्र नित्यमेव । पितरश्च ताः देवताश्च पितृदेवतास्तदर्थं कर्म पितृदेवत्यम् । "देवतान्तात्तादर्थ्ये यत्" इति यत् । अश्नन्ति ब्राह्मणा यस्यां सा अष्टका । 'इष्यशिभ्यां तकन्' । अष्टिकाग्न्येति । अष्टौ परिमाणमस्याः "संख्याया अतिशदन्तायाः कन्" ।

अर्थगतं स्त्रीत्वमाकारेऽध्यारोप्य "यकपूर्वायाः" इति स्त्रीलिङ्गनिर्देशः । तेन

---

शब्दरत्नम् ।

रव्यवधानं सोढव्यमेवेति भावः । विग्रह इति । "दक्षिणापश्चात्" इति त्यक् । अन्यथा—दिग्वाचकस्यापि ग्रहणे । चेन साहचर्यत्यागे मानाभावः संगृहीतः ।

इहाभावादिति । अकचः सत्त्वादिति भावः । प्रावारविशेष इति । वर्णयत्या-

भैरवी ।

त्र्यविशिष्टपूर्वत्वात्मकम् । अकारव्यवधानांशे तु गतिरुक्तैव । दिग्वाचकस्यापीति । अपिना आजन्तपरिग्रहः । मूले—यत्त्विति । प्रक्रियोक्तिरियम् । साहचर्यानाश्रयणे विनिगमनाविरहादुभयोर्ग्रहणमिति भावः । सङ्गृहीत इति । तथा च नोभयोर्ग्रहणशङ्केति भावः ।

वर्णयतीति । चौरादिकाद्वर्णधातोर्ण्यन्ताण्ण्वुल् । मूले—अत्राहुरिति । प्रकाशकृत इति शेषः ।

भावप्रकाशः ।

योऽछायाव्याख्यानरूपो बोध्यः । ननु यस्यायं विग्रहः स क इत्यत आह—दक्षिणेति । ननु अन्यथेत्यस्य तदग्रहणे इत्यर्थे दोषोक्त्यसङ्गतिरत आह—दिग्वाचकेति । अपिना तस्यापि संग्रहः । साहचर्यानङ्गीकारे हि विनिगमनाविरहादुभयोर्ग्रहणमिति भावः । ननु निर्बीजसाहचर्यत्यागस्यैवायुक्तत्वात्तदग्रहणाप्रसङ्गेनाऽन्यथेत्यादिदोषोक्तिरयुक्तेत्यत आह—चेनेति । पक्षे इचेत्यत्रत्येनेत्यर्थः । मूले—यत्त्विति, प्रक्रियाकृदुक्तिः । अत एव त्यग् विधौ तेन, इह च प्रसादकृता दक्षिणस्यां जातादिर्दाक्षिणात्यिकेति विगृहीतम् । तन्नेतीति । निर्हेतुकसङ्कोचस्यायुक्तत्वात् इति भावः । एतेन तत्रत्यवृत्तिपदस्य तद्धितान्यवृत्तिपरत्वात् मूलं चिन्त्यमिति रत्नाकरोक्तमपास्तम् । तत्र हेतुत्वेनाभिमतस्यान्यथा नेष्यमाणत्वाच्च । अत एवाऽतसुचोऽकाराभावे दक्षिणत इत्यसिद्धिमाशंक्य सर्वनाम्न इत्येव सिद्धमिति भाष्यं सङ्गच्छते ।

अकच इति । तस्य टेः प्राग् जायमानत्वादिति भावः । वर्णयतीति । वर्णं वर्णक्रियावि-

स्त्रीप्रत्ययो लभ्यत इत्याशयेनाह—स्त्रीप्रत्ययाकारस्येति । साङ्काशियकेति । सङ्काशेन निर्वृत्तं साङ्काश्यम् "वुञ्छण्" आदिसूत्रेण सङ्काशादिभ्यो ण्यः । ततो भवार्थे "धन्वयोपधाद् वुञ्" अकादेशः। स च साङ्काश्यभवां स्त्रियमाहेति तदकारस्यापि इत्त्वं विकल्प्येत; तस्मादात इत्युक्तम् । ननु यथायमकारो नाकारस्थानिक एवं स्त्रीप्रत्ययस्थानिकोऽपि नेति द्व्यचङ्गविकलमेतत् । अत्राहुः—सति ह्यात इत्येतस्मिन् स्त्रीलिङ्गनिर्देशबलात् स्त्रीवाचक आकारः स्त्रीप्रत्यय एवेति लभ्यते । असति तु तस्मिन् स्त्रीवाचकस्य योऽकार इत्येतावल्लभ्येत ततः साङ्काशियकेत्यत्रापि प्रसज्येतेति ।

अत्रेदं वक्तव्यम् । यकपूर्वायाः स्थाने, इति स्थानेशब्दे जागरूके कथमवयवषष्ठीत्वं गम्यताम् । न च वुञः स्थानेऽयमिति वाच्यम् , अकेति समुदायस्य तथात्वेऽपि अकाररूपावयवस्याऽतथात्वात् । वुञो यकपूर्वत्वाभावाच्च । न हि तस्यामवस्थायां "यस्य" इति लोपोऽपि लभ्यते । किं च प्रतिपदोक्तस्य स्त्रीप्रत्ययस्य लाभे भवार्थे विहितस्य वुञादेः प्रसङ्ग एव नास्ति । तस्मादात इति स्पष्टार्थमेव । अश्विकेति । कौमारास्तु भस्त्रादिवाक्येऽश्वशब्दमपि पठन्तोऽस्यापि इत्त्वविकल्पमिच्छन्ति । शुभं यातीति शुभंयाः । विच् । ततः कः । "केऽणः" । शुभमिति मान्तो निपातः । सुष्ठु नयो यस्याः सा सुनया । ततः कः ।

---

शब्दरत्नम् ।

च्छादयतीति व्युत्पत्तेः । जागरूके इति । स्थानेपदाभावेऽप्यन्तरङ्गत्वात्स्थानसम्बन्धस्यैव लाभ इत्यपि बोद्धव्यम् । प्रतिपदोक्तस्येति । "स्त्रियाम्" इत्यधिकृत्य विहितस्येत्यर्थः । विशिष्य तदनुपादानात् कथं तल्लाभ इति चिन्त्यम् । इच्छन्तीति । स-

भैरवी ।

स्थानेशब्दे जागरूक इति । स्थानेशब्दो 'विधौ' इति परिभाषाज्ञापकत्वेन स्थापित इत्यभिप्रायेणेत्थमुक्तिः । वस्तुतस्तु पूर्वोक्तरीत्या तस्यानावश्यकत्वादाह—स्थानेपदेति । स्थाने इति पद इत्यर्थः । एवञ्च यकपूर्वस्थानिकाकारस्येति वाक्यार्थः । यकपूर्वत्वञ्चाव्यवहितमेव गृह्यते । यकौ पूर्वौ यस्या इति विग्रहे उत्तराङ्गविकलायास्तस्मादिति परिभाषाया अनुवादेऽप्युदात्तस्वरितयोरित्यादाविव प्रवृत्त्या तत्समानार्थकवृत्तेरपि तदर्थकत्वात् । तेन कुशराशब्दादल्पे कुत्सायां वा के इत्त्वस्य विकल्पो न । विहितस्य । टाबादेरिति शेषः । लक्षणप्रतिपदोक्तपरिभाषाघटकस्य प्रतिपदोक्तस्येत्यस्य साक्षादुच्चारितस्य तत्तच्छब्दानुवादेन वा विहितस्येत्यर्थ इत्याशयेनाह—विशिष्येति । ननु क्विप्प्रत्यय एव याधातोर्वक्तुमुचित इत्याशङ्कान्नि-

भावप्रकाशः ।

स्तावचनेष्विति चौरादिकण्यन्तात् ण्वुल् । वर्णयति महत्त्वादिकं गुणविशेषमिति तु प्रकाशकृत् । मूले, अत्राहुः—प्रकाशकृतः । प्रसज्येतेत्यग्रे, अत्र बहुचिन्त्यमस्ति विस्तरभयात्तु नोच्यते इति प्रकाशकृता उक्तम् । तदाह मूले-अत्रेदं वक्तव्यमित्यादिना । तत्पदस्य खण्डितत्वादाह—स्थानेपदेति । स्थाने इति पदेत्यर्थः । एवञ्च यकपूर्वकस्त्रीबोधकस्थानिकाकारस्येति तदर्थः । ननु घटकत्वेन तस्यापि तत्त्वमस्त्येवात आह मूले—वुञ इति । तत्त्वं चाव्यवहितमेव गृह्यते, निर्दिष्टपरिभाषाप्रवृत्तेः । अत एव कुशराशब्दात् के ह्रस्वे इत्त्वविकल्पो न । तदाह—न हीति । एतेन पूर्वशब्दस्य व्यवहिताव्यवहितपूर्वमात्रवाचित्वान्मूलं चिन्त्यमिति रत्नाकरोक्तं परास्तम् । विहितस्येति । टाबादेरिति भावः । तदनुपादानादिति । रत्नाकरोप्येवम् । तावता प्रामाण्यवारणायाह—तदिति । ननु क्विबित्युचितमत आह—

"भस्त्रैषा" ॥ तदन्तेति । आङ्गत्वादिति भावः । एवं चेति । उक्तं च हरदत्तेन—

अत्रातः स्थान इत्येतत्स्वशब्दस्य विशेषणम् ।
सम्भवव्यभिचारौ हि तत्र स्तः काकऽचोः सतोः ॥
द्वैषयोः सम्भवो नास्ति, नान्यत्र व्यभिचारिता ।
सर्वनाम्नः स्वशब्दस्य तेन नाऽयं विधिर्भवेत् ॥ इति ।

इह स्वशब्दस्येत्यस्याऽनन्तरमत इति शेषो बोद्धव्यः । एतच्च इह मूलेऽपि ध्वनितम् । एवं च

हंसं तनौ सन्निहितं चरन्तं मुनेर्मनोवृत्तिमिव स्विकायाम् ।

---

शब्दरत्नम्

द्भाष्यादावदर्शनादयुक्तम् । शुभंयाः विच्, ततः क इति । नदीसंज्ञासूत्रस्थभाष्यप्रामाण्याद् आदन्तेभ्यः क्विपोऽनभिधानाद्विजुक्तः । तत्र हि 'स्त्र्याख्यौ' इति पदे आदन्तलक्षणो विजुक्तो न तु क्विप् इत्याहुः । कैयटस्तु—शुभं यातीति क्विप्, शुभमिति निपातः, अज्ञातादौ कः, "केऽणः" इति ह्रस्व इत्याह ।

मूलेऽपि ध्वनितमिति । 'स्वशब्दस्यातो विशेषणम्' इत्यादिना 'भवत्युदाहरणम्' इत्यन्तेन ग्रन्थेनेति भावः । स्विकायामितीति । स्वाशब्दादत्यन्तस्वार्थिके के इत्वे साधु । न

भैरवी ।

रस्यति—नदीसञ्ज्ञेति । तत्र हि—तत्सूत्रभाष्ये हि । तथा च यथा तत्र छान्दसत्वाद्विजुक्तस्तथाऽत्रापि छान्दसत्वाद्विजेवोचितः । लोके त्वीदृशानामनभिधानम् । कैयट इति । उक्तभाष्यविरोधरूपाऽरुचिरनेन ध्वनिता ।

ध्वनने कर्त्राकाङ्क्षायामाह—स्वशब्दस्येति । ननु स्वशब्दस्यात्मीयवाचिनः सर्वनामत्वादकचि तद्विशिष्टाट्टापः सत्त्वे "सर्वनाम्नः स्याड्ढ्रस्वश्च" इति स्यादिति स्विकायामित्यनुपपन्नमत आह-स्वाशब्दादिति । तथा च कान्तस्यासर्वनामत्वेन नेह स्याटः प्राप्तिः । अत्र कात्पूर्वोऽकार आकारस्थानिकोऽपि भवतीति युक्तमस्योदाहरणत्वम् । अत एवाह-साध्विति । अकचः स्वार्थिककापवादत्ववदत्यन्तस्वार्थिककापवादत्वमस्तीति शङ्कां वारयति—न ह्यकजिति । अकचोऽपवादत्वन्तक्रकौण्डिन्यन्यायेन वाच्यं तच्च न सम्भवति, कुत्साद्यर्थविवक्षायामकचः प्राप्तिस्तदा तु नात्यन्तस्वार्थिकस्य विवक्षेति भावः । नन्वेवं स्विकायामिति प्रयोगवद् व्याख्यातृग्रन्थस्याप्युपपत्तिर्भवतीति 'व्याचक्षाणा उपेक्ष्या' इति मूलासङ्गतिरत

भावप्रकाशः ।

नदीति । तत्र हि । यतस्तत्सूत्रभाष्ये इत्यर्थः । आदन्तेति । एवं च तद्वदिदमपि छान्दसम् । एवं चाऽऽदन्तधातुप्रकृतिकमादन्तं प्रातिपदिकं लोकेऽसाधु भाष्यादिप्रयोगं विना । यदि ततः क्विप् स्यात्तर्हि छान्दसविजुक्तिरयुक्ता स्यादिति भावः । कैयट इति । अनेनात्रारुचिः सूचिता उक्तभाष्यविरोधमूला ।

ध्वनने कर्त्राकाङ्क्षायामाह-स्वशब्देति । व्याचक्षाणानामुपेक्ष्यत्वेऽपि प्रयोगसाधुत्वे निर्विवादत्वादत्यन्तस्वार्थिकेऽपि ङ्याबन्तादेवेति मूलमतेन । तदाह-स्वाशब्दादिति । स्वार्थिके के इति पाठः । अग्रे 'सर्वनाम्न इति प्राप्तं पुंवत्त्वं परत्वात् "केऽण" इति बाधित्वा ह्रस्वे टापि च' इति शेषः । इत्वे इति । "भस्त्रैषा" इति वैकल्पिकेत्वे इत्यर्थः । आतः स्थाने इत्यंशस्य सत्त्वात् कान्तस्याऽसर्वनामत्वात्स्याटोऽप्राप्तिः, तदाह-साध्विति । एतेनायं प्रयोगोऽसाधुरेवाऽऽत्मीयायां सर्वनामत्वेन स्याट्प्रवृत्तेरिति दण्डयुक्तमपास्तम् । ननु स्वार्थिकवदत्यन्तस्वार्थिकस्याप्यकजपवाद इति आतः स्थाने इत्यंशाभावेन विकल्पाऽप्राप्त्या नित्येत्वेऽपि स्याडापत्त्या रूपमयुक्तमेवात आह-न हीति । समानार्थकत्वाभावेन तद्विषये तदप्राप्तेरिति भावः ।

इतिश्रीहर्षश्लोके "भस्रैषा" इति वैकल्पिकमित्त्वमिति व्याचक्षाणा उपेक्ष्या इति भावः। आत्मीयायामिति। आत्मज्ञातिधनेषु तु स्त्रीत्वमेव नास्तीति भावः। यत्तु—ज्ञातिधनयोः स्वका, स्विका, इति रूपद्वयमाकरे स्थितमित्याहुः; तच्चिन्त्यम्, तादृशस्याऽऽकरस्याऽप्रसिद्धेः, लिङ्गानुशासनविरोधाच्च। यत्तु—स्वका, स्विका, इति काशिकायामुदाहृतं; तत्सञ्ज्ञाविषयकं, न तु ज्ञातिधनविषयकम्। यदपि 'स्वार्थिकाः क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति परिजह्रुः। तदपि चिन्त्यम्, उक्तरीत्या कप्रत्ययान्ताट्टाप्सम्भवेऽपि प्रकृतेरस्त्रीलिङ्गतया 'आतः स्थाने' इत्यंशस्य दुरुपपादत्वात्। प्रत्युदाहरणान्युक्त्वा उदाहरणान्याह—निर्भस्त्रिकेत्यादि। निष्क्रान्ता भस्त्राया निर्भस्त्रा। उपसर्जनह्रस्वः, टाप्। ततोऽज्ञातादौ कः। कृतषत्वेति। सूत्रे विकृतनिर्देशो विवक्षितविषयो न तु "न यासयोः" इतिवदुपल-

---

शब्दरत्नम्

क्षणम्। अत्यन्तस्वार्थिकस्याप्ययवादः। व्याचक्षाणा इति। अकचमुक्त्वा वैकल्पिकमित्वं व्याचक्षाणा इत्यर्थः। स्त्रीत्वमेव नास्तीति।

स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने।

इति कोशादिति भावः। संज्ञाविषयकमिति। संज्ञाया अपि "सञ्ज्ञापूरण्योश्च" इति पुंवत्त्वनिषेधेन भाषितपुंस्कत्वबोधनात्। "अभाषितपुंस्काच्च" इत्यनेन न सिद्धिरिति भावः। अत्यन्तस्वार्थिककान्तविषयं चेत्यपि बोध्यम्। उपलक्षणमिति।

भैरवी।

आह—अकचमिति। स्त्रीत्वाभावे साधकमाह—स्वो ज्ञातावात्मनीत्यादि। ननु सञ्ज्ञाभूतस्य कथमेतत्सूत्रोदाहरणत्वन्तस्याऽभाषितपुंस्कत्वादत आह—सञ्ज्ञाया अपीति। पुंवत्त्वनिषेधो हि पुंवत्त्वस्य प्राप्तिपूर्वकस्तस्य प्राप्तिश्च भाषितपुंस्कत्वं विना नेति भावः। ननु तेन निषेधेन सञ्ज्ञाभूतस्याऽभाषितपुंस्कत्वमेव बोध्यते; सिद्धानुवादत्वे लाघवात्। किञ्च "क्तिच्क्तौ च" इति संज्ञायां विहितस्य क्तप्रत्ययस्य देवदत्तादिशब्दे सत्त्वेन क्रियाप्रवृत्तिनिमित्तकत्वस्य सत्त्वेन च तस्यास्तु भाषितपुंस्कत्वमस्य तु तथात्वे न प्रमाणम्। यद्यस्यात्मीयत्वम्प्रवृत्तिनिमित्तीकृत्य सञ्ज्ञात्वेन विनियोग इति ब्रूषे; तदा सर्वनामत्वादकजपि स्यादित्यातः स्थानिकाकारस्यालाभ इत्यत आह—अत्यन्तस्वार्थिकेति। अत्रेदं बोध्यम्—अत्यन्तस्वार्थिककान्तमपि तस्योदाहरणन्न सम्भवति। तस्य ड्याब्वुत्पत्तेः प्रागुत्पत्तेरातः स्थानिकत्वस्येहालाभः। एवञ्च तत्र नित्यमेवेत्वम्। व्याख्यातृग्रन्थस्योपेक्षणीयत्वञ्च

भावप्रकाशः।

नन्वेवं प्रयोगोपपत्तिव्याचक्षाणग्रन्थस्याप्युपपत्त्या मूलासङ्गतिरत आह—अकचमिति। तथाच तथाप्रयोगनिर्वाहेऽपि तथा नोक्तं तैः, किं तु तथोक्ते तत् दुर्वचं तदंशाभावात् स्याडापत्त्या रूपाऽसङ्गतेश्चेति भावः। एतेनोक्तरीत्या व्याचक्षाणग्रन्थोपपत्त्या मूलं चिन्त्यमिति रत्नाकराऽभिमतमपास्तम्। स्त्रीत्वाऽभावे हेतुमाह-स्वो ज्ञाताविति। ननु संज्ञाभूतो नास्योदाहरणं तस्य "अभाषितपुंस्काच्च" इत्यनेनैव सिद्धेरत आह-संज्ञाया अपीति। बोधनादिति। आत्मीयत्वपुरस्कारेणैव संज्ञाकरणादिति भावः। पुंवत्त्वं तु ह्रस्वेन बाध्यते इत्युक्तमेव। ननु तेन निषेधेनाऽभाषितपुंस्कत्वमेव बोध्यते, सिद्धानुवादे लाघवात्। किंच क्रियाप्रवृत्तिनिमित्तकदेवदत्तादिसंज्ञास्थले भाषितपुंस्कत्वसम्भवेऽपि नाऽतथाभूते स्वाशब्दे। किं चात्मीयत्वपुरस्कारेण संज्ञाकरणेऽपि सर्वनामत्वस्याऽनिवारणादकचि तदंशाभावेन विकल्पासम्भवोऽत आह—अत्यन्तस्वार्थिककान्तेति। इदमपि प्रागुक्तमतरीत्या। वस्तुतस्तु उभयमयुक्तम्। बृहच्छेखरेश्चात्यन्त-

क्षणमिति भावः । स्त्रीलिङ्गनिर्देशादजादयः स्त्रीलिङ्गा एव गृह्यन्ते । तेनेह न, शुभ्रोऽजोऽस्याः शुभ्राजिका । जानातीति ज्ञः । प्रियो ज्ञोऽस्याः प्रियज्ञिका इति ।

"अभाषितपुंस्काच्च" ॥ विहितविशेषणतया व्याख्यायाः फलमाह—बहुव्रीहेरिति । नित्यमिति । अस्य विकल्पस्याप्रवृत्तेः "प्रत्ययस्थात्" इत्युत्सर्ग एव प्रवर्तत इत्यर्थः। परविशेषणत्वे त्वयं विकल्पः स्यादेवेति भावः । बहुव्रीहेरित्युपसर्जनोपलक्षणम् । तेनाऽतिखट्विका निःखट्विकेत्यादावपि नित्यमेव । शैषिके कपीति । "आपोऽन्यतरस्याम्" इति ह्रस्वपक्षे इति भावः ।

अभिव्याप्येति । अत एव बहुयुवा शालेत्यत्र "यूनस्तिः" उपसर्जनत्वान्नेति

शब्दरत्नम् ।

भस्त्राशब्दसाहचर्येण व्याख्यानेन च श्रुतानुपूर्वीकस्यैवैषाशब्दस्य ग्रहणम् । अत एव 'एषाद्वे नञ्पूर्वे उदाहरणम्' इति भाष्येऽप्येषेत्येवोक्तम् । अन्यथा 'एतदूद्वी' इत्येव वदेदिति भावः । शुभ्राजिकेति । बहुव्रीहेष्टापि ततः स्वार्थिकः क इति भावः । एतेनाऽऽतः स्थानिकत्वाभावादत्राप्राप्तिरित्यपास्तम् ।

परविशेषणत्वे त्विति । समुदायस्य भाषितपुंस्कत्वेऽपि तदवयवस्य खट्वशब्दस्यातत्त्वेन ततः परत्वात् परविशेषणे दोषः स्यादेवेति भावः । ह्रस्वपक्षे इति । बहु जस् खट्वा जस् , इत्यवस्थायां कपि सुब्लुकि प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात् समाससंज्ञायां "समासान्ताः" इति शास्त्रबलात्कबन्तस्यैव समासत्वेनोपसर्जनस्त्रीप्रत्य-

भैरवी ।

पूर्वोक्तरीत्या । काशिकोक्तिस्तु सञ्ज्ञाविषयिण्येवेति । विकृतनिर्देशस्य विवक्षितविषयत्वे मानमाह—भस्त्राशब्देति । एवञ्च भस्त्राशब्दस्य निर्णायकतयाऽभ्यर्हितत्वेन पूर्वनिपातः सङ्गच्छते । साहचर्यस्य सर्वत्र व्यवस्थापकत्वे मानाभावादाह—व्याख्यानेन चेति । शिष्टकृतव्याख्यानेन चेत्यर्थः । तेषां व्याख्यानं सप्रमाणमित्याशयेनाह—अत एवेति । तादृशस्य ग्रहणादेवेत्यर्थः । अन्यथा—उपलक्षणत्वे । एतेन—उक्तरीत्या साधुत्वस्य व्युत्पादनेन ।

अतत्त्वेन—अभाषितपुंस्कत्वेन । ह्रस्वत्वपक्षे विकल्पस्योपपत्तिमाह—बह्विति ।

मूले—अत एवेति । "यूनस्तिः" इति सूत्रमभिव्याप्य "अनुपसर्जनात्" इत्यधिकारस्य

भावप्रकाशः ।

स्वार्थिकानां व्याब्युत्पत्तेः प्रागेव प्रवृत्तेः प्राक् प्रतिपादितत्वेनाऽऽतः स्थानिक इत्यंशाभावेन विकल्पाप्राप्तेः। एवं च तत्र नित्यमेवेत्वम् । अत एव स्वपूर्वापरग्रन्थविरोधो लघुशेखरविरोधो भाष्यविरोधश्च न । अत्रापि पक्षे तत्प्रयोगनिर्वाहेऽपि व्याचक्षाणग्रन्थस्योक्तरीत्योपेक्ष्यत्वमेव । काशिकोक्तिस्तु संज्ञाविषयिण्येव । प्रक्रियायां गौरवस्यावश्यं स्वीकारादयुक्तैव वा सेति बोध्यम् । उपलक्षणत्वाभावे हेतुमाह—भस्त्रेति । अत एव भस्त्राशब्दस्य पूर्वनिपातः । निर्णायकत्वेनाभ्यर्हितत्वात् साहचर्यस्यासार्वत्रिकत्वादाह—व्याख्यानेनेति । व्याख्यानमेव समूलयति—अत एवेति । तेन तादृशग्रहणादेवेत्यर्थः । अन्यथा-उपलक्षणत्वे । तत इति । स्वार्थिके तन्न्यायप्रवृत्तेरिति भावः ।

ननु परविशेषणत्वेऽपि नायं दोषः समुदायाद् भाषितपुंस्कात्परत्वेनैतदप्राप्तेरत आह—समुदायेति । अतत्त्वेनेति । भाषितपुंस्कत्वेनेत्यर्थः । तस्य नित्यस्त्रीत्वादिति भावः । ततः—अभाषितपुंस्करूपतदवयवात् । ह्रस्वपक्षे विकल्पमुपपादयति—बह्विति । अलौकिकप्रक्रियावाक्ये एव समासान्तप्रवृत्तेः प्रागुक्तत्वादाह-कपीति । "शेषात्" इत्यनेनेति भावः । ततस्तद्धितान्तत्वेन प्रातिपदिकत्वं, तदाह—सुब्लुकीति । इदं च मूलरीत्या । प्रागुक्तसिद्धान्तमते तु समासप्रातिपदिकसंज्ञयोर्यौगपद्यं बोध्यम् । एतेनादौ

प्राञ्च आहुः ।

"टिड्ढा" ॥ इह वृत्तिकृता सूत्रे ख्युन् प्रक्षिप्तः । औत्सीति । उत्से भवा,

---

## शब्दरत्नम् ।

यान्तसमासरूपप्रातिपदिकत्वाभावाद् "गोस्त्रियोः" इति ह्रस्वत्वाभावे "केऽणः" इति ह्रस्वत्वे च "न कपि" इति निषिद्धे "आपोऽन्यतरस्याम्" इति ह्रस्वे कपः प्राग्वर्तिनः खट्वशब्दात्परस्याऽऽपोऽभाषितपुंस्काद्विहितत्वेन तत्स्थानिकाऽकारस्यायं विकल्पः । ह्रस्वाभावे तु बहुखट्वाकेतीति भावः ।

**प्राञ्च आहुरिति ।** न च 'स्त्रियाम्' इत्यस्य गृह्यमाणविशेषणत्वान्नात्र दोषः । अनुपसर्जनाधिकारेण तदन्तविधेरिव 'स्त्रियाम्' इत्यस्य स्त्रीप्रत्ययप्रकृतिविशेषणतायाश्च ज्ञापनेनादोषात् । अत एव धीवानमतिक्रान्ता अतिधीवरीति सिद्ध्यति । प्राधान्येन

## भैरवी ।

सत्त्वादेव । गृह्यमाणेति । 'श्रुतानुमितयोः' इति न्यायादिति भावः । नात्र दोष इति । बहुयुवा शालेत्यत्रातिव्याप्तिरूपो दोषो नेत्यर्थः । नन्वेवमनुपसर्जनाधिकारवैयर्थ्यमत आह—अनुपसर्जनेति । स हि 'बहुकुरुचरा' इत्यादौ ङीपः प्रवृत्तिवारणायारब्धः । यदि स्त्रियामिति गृह्यमाणस्यैव विशेषणं स्यात्तदा टितः स्त्रियामवर्तनान्ङीपः प्राप्तिर्नास्तीति तदधिकारो व्यर्थः स्यादिति 'यावता विना' इति न्यायेनोभयोरपि ज्ञाप्यत्वमिति भावः । अदोषादिति । न चेत्याद्युक्तदोषाभावादित्यर्थः । अत एव—'स्त्रियाम्' इत्यस्य स्त्रीप्रत्ययप्रकृतित्वाभिमतविशेषणत्वादेव । यदि श्रुतविशेषणत्वमेव स्यात्तदा वन एव श्रुतत्वात्तद्विशेषणत्वं स्त्रियामित्यस्य स्यादित्यत्र वन्नन्तस्य स्त्रियामवर्तमानात् "वनो र च" इत्यस्य प्रवृत्तिर्न स्यादिति भावः । न केवलं लक्ष्यानुरोध एव स्त्रियामित्यस्य स्त्रीप्रत्ययप्रकृतित्वाभिमतविशेषणतातात्पर्यग्राहकः किन्तु 'प्रधानाप्रधानयोः प्रधानानुरोध एव प्रबलः' इति न्यायोऽपि 'स्त्रियाम्' इत्यस्य तत्त्वे नियामक इत्याशयेनाह—प्राधान्येनेति । साक्षाद्विध्युद्देश्यत्वेनोपात्तनिष्ठप्रकारतानिरूपितविशेष्यत्वरूपमस्य प्राधान्यं द्रष्टव्यम् । नन्वेवमनुपसर्जनादित्यपि

## भावप्रकाशः ।

बहुव्रीहिस्ततः सुब् लुक् तत उपसर्जनह्रस्वत्वं बाधित्वा शेषादिति कबिति रत्नाकरदण्ड्याद्युक्तप्रक्रिया निरस्ता । प्रतिपादितमिदमधस्तात् । **चस्त्वर्थे । ह्रस्वे इति ।** अस्य पाक्षिकेत्यादिः । **बहुखट्वाकेतीति ।** तथा च रूपत्रयमिति भावः ।

**गृह्यमाणेति ।** 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इत्युक्तेरिति भावः । **नात्र दोष इति ।** "यूनस्तिः" इत्यत्र तस्य युवन्शब्दविशेषणत्वाद्बहुयुवेत्यत्र तस्याऽतत्त्वान्नातिव्याप्तिरित्यर्थः । एव चातिव्याप्त्यव्यर्थेति भावः । एवंसत्यधिकार एव निष्फलः स्यादित्याशयेनाह—**अनुपेति ।** 'यावता विनाऽनुपपत्तिस्तत्सर्वं तेन ज्ञाप्यमिति सिद्धान्तादिति भावः । **स्त्रीप्रत्ययप्रकृतीति ।** सा च सूत्रोपात्ता तदन्ता वेत्युक्तं प्राक् । 'अजाद्यतः' इति तु षष्ठ्यन्तमिति तत्र सूत्रोपात्तस्यैव तद्विशेषणमिति भावः । **ज्ञापनेन दोषादिति पाठः ।** तत्रातिव्याप्तेरिति तदर्थः । ज्ञापनादोषादिति पाठे न चेत्याद्युक्तदोषाभावादित्यर्थो बोध्यः । एवं चाभिव्याप्तिरवश्यमाश्रयणीयेति भावः । तत्र द्वितीयार्थज्ञापनफलमाह—**अत एवेति ।** तस्य तत्प्रकृतिविशेषणत्वस्य ज्ञापनादेवेत्यर्थः । **धीवरीति सिध्यतीति** पाठः । अन्यथा वन एव श्रुतत्वात्तद्विशेषणत्वे तस्यातत्त्वात्तदसिद्धिः स्पष्टैव । ननु तदधिकारस्य प्रत्याख्यानात्कथं तदर्थसिद्धिः । तदन्तविधिस्त्वमहत्पूर्वग्रहणेनैव ज्ञापितः तस्य चाण्णन्तादेः प्रातिपदिकविशेषणत्वेनाऽण्णन्तान्त इत्यादिरूप इत्यर्थः । अन्यथा प्रत्ययविधौ निषेधात्स दुर्लभः स्यात् । प्रत्ययग्रहणपरिभाषालभ्यस्य तु नायं निषेधः, प्रातिपदिकादित्यनेन सहानन्वयापत्तेरत आह—**प्राधान्येनेति ।** यद्वा न्यायेनैव सिद्धे ज्ञापकानुपयोग

"उत्सादिभ्योऽञ्" । न च "शार्ङ्गरवाद्यञ" इति ङीना सिद्धमिदमिति वाच्यम्,

### शब्दरत्नम् ।

तद्विशेषणतायाः न्याय्यत्वाच्च । 'अनुपसर्जनात्' इति तु गृह्यमाणस्यैव विशेषणम् । अत एव 'कौम्भकारेय' सिद्धिः । अन्यथा कुम्भकारेयोऽप्यापद्येत । कुम्भेन समासेऽपि केवलस्य कारस्य

### भैरवी ।

प्रधानस्यैव विशेषणं स्यादिति 'बहुकुरुचरा' इत्यस्य तद्व्यावर्त्यत्वानुपपत्तिरिति तदधिकारस्य तदन्तविधिज्ञापकत्वानुपपत्तिरत आह-अनुपसर्जनादिति त्विति । विशेषणमिति । "अनुपसर्जनात्" इत्यस्य तदन्तविधिज्ञापकतापरभाष्यप्रामाण्यादिति शेषः । अत एव—अनुपसर्जनाधिकारेण तदन्तविधेर्ज्ञापनादेव । सिद्धिरिति । तन्मात्रस्य सिद्धिरित्यर्थः । व्यतिरेकप्रदर्शनमुखेनोक्तार्थत्वन्द्रढयति-अन्यथेति । अन्यथा-तज्ज्ञापिततदन्तविध्यभावे अपि शब्दोऽत्रेष्टसिद्धिसमुच्चायकः । सा च तदन्तविध्यभावे केवलात्कारशब्दान्ङीप्यप्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेन समुदायस्य स्त्रीप्रत्ययान्ततया ततो ढकि बोध्या । न च समुदायस्य स्त्रीप्रत्ययान्तत्वेऽपि न प्रातिपदिकत्वमिति वाच्यम्, तत्र प्रातिपदिकादित्यस्यासम्बन्धात् । अन्यथा ङ्याब्ग्रहणस्यैतदर्थमावश्यकतयाऽन्यार्थत्ववर्णनपरङ्याप्सूत्रस्थभाष्यविरोधः स्यादिति । आपाद्यं रूपं व्युत्पादयति—कुम्भेनेत्यादिना । समासेऽपीति । अपिशब्दोऽयङ्कार-

### भावप्रकाशः ।

इत्याशयेनाह—प्राधान्येनेति । साक्षाद्विध्युद्देश्यत्वेनोपात्तनिष्ठप्रकारतानिरूपितविशेष्यतावत्त्वेन वा प्राधान्येनेत्यर्थः । "प्रधानाप्रधानसन्निधौ" इति न्यायेनेति भावः । नन्वेवम् "अनुपसर्जनात्" इत्यस्यापि 'स्त्रियाम्' इत्यनेन तुल्यतापत्तिरत आह-अनुपेति । गृह्यमाणस्यैव । टिड्ढादेः-सामर्थ्यादिति शेषः । अन्यथा तद्वैयर्थ्यं स्पष्टमेवेति भावः । आद्यज्ञापनफलमाह-अत एवेति । तदन्तविधेर्ज्ञापनादेवेत्यर्थः । सिद्धिरिति । तन्मात्रसिद्धिरित्यर्थः । उक्तमेवार्थं व्यतिरेकेणाह-अन्यथेति । तज्ज्ञापिततदन्तविध्यभावे इत्यर्थः । अपिरिष्टसिद्धिसमुच्चायकः । सा चात्र पक्षे केवलात् ङीप्यपि अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेन समुदायाड्ढकि बोध्या । "स्त्रीभ्य" इत्यत्र प्रातिपदिकादिति न सम्बध्यते । अन्यथा हि ङ्याब्ग्रहणस्यैतदर्थमावश्यकत्वेन ङ्याप्सूत्रस्थभाष्यविरोध इति भावः । ननु नेष्टसिद्धिरत्र पक्षे, किं त्वनिष्टमेव । प्रत्ययग्रहणपरिभाषया विशिष्टस्याऽनणन्तत्वात्केवलस्य तत्त्वेपि अनर्थकत्वेन अप्रातिपदिकत्वात्कुम्भेनैकार्थीभूततया निष्कृष्य स्त्रीत्वेनान्वयस्य दुर्वचतयाऽत्र ङीप एवानुत्पत्तेः । एवं च तत्सिद्धेरेव तदन्तग्रहणफलत्वे वाच्ये कौम्भेत्याद्यापद्येतेत्यन्तमयुक्तमत आह-कुम्भेनेत्यादि । कारस्य—तस्यापी-

### सरला ।

कौम्भकारेयसिद्धिरिति । नच कुम्भकारीशब्दाद् ढक् दुर्लभः, तस्य शिल्पिवाचकत्वेन "सेनान्तलक्षणकारिभ्यश्च" इति ण्यप्रत्ययेन बाधादिति वाच्यम्; हिंसार्थकात् कधातोरणि घटस्फोटकवाचकस्य यौगिकस्यान्यार्थकस्यापि कुम्भकारशब्दस्य सत्त्वात् ।

ननु प्रत्ययार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकतापर्याप्त्यधिकरणीभूतप्रातिपदिकात् प्रत्ययो भवति अत एव राजपुरुषस्यापत्यमित्यर्थे राजपौरुषिरिति न भवति । अत एव च सूत्रनडस्यापत्यमित्यर्थे सौत्रनाडिरित्येव तथेहापि अपत्यार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकतापर्याप्त्यधिकरणीभूतप्रातिपदिकं कुम्भकारीति, नतु कारी इति; तत् कथं तस्माद् ढगापादनं भाष्यादाविति चेत्? न, तस्य नियमस्य प्रत्ययनिष्ठोद्देश्यतावच्छेदकताकप्रत्ययनिष्ठविधेयताककार्यातिरिक्ते एव प्रवृत्तेः । "स्त्रीभ्यो ढक्" इत्यत्र स्त्रीप्रत्ययनिष्ठोद्देश्यतावच्छेदकता, ढक्प्रत्ययनिष्ठा विधेयता च वर्तते इति तन्निरूपककार्यत्वस्यैव सत्त्वान्न तन्नियमप्रवृत्तिः । अत एव परमगार्ग्यस्यापत्यमिति विग्रहे परमगार्ग्यायण इत्यस्य सिद्धिः । अन्यथा गार्ग्येति यञन्ततदादेः तादृशप्रकारताप्रयोजकतापर्याप्त्यभावेन स न स्यादित्यर्थः । अत एव च शिवभागवत इत्यस्य "अयःशूल" इति सूत्रभाष्ये प्रयुक्तस्य सिद्धिः । तदर्थं "भक्तिः" इति सूत्रे मत्व-

शब्दरत्नम् ।

प्रातिपदिकत्वेन तदर्थस्यापि स्त्रीत्वेन योगात्ततो ङीपि कुम्भेनैकार्थीभूतस्यापि विशिष्टस्या पत्येन योगे तस्यायोगस्य वक्तुमशक्यत्वात् तेनापि योगे कदाचित्ततो ढकि विशिष्टस्य

भैरवी ।

स्येत्यनन्तरं द्रष्टव्यः । तेन कारशब्दस्य समासात्मकसमुदायस्य च प्रातिपदिकत्वलाभः । तदर्थस्यापीति । अपिशब्दः समुदायपरामर्शकः । एकार्थीभूतस्यापीति । अस्य तस्येत्यत्रान्वयः । विशिष्टस्य-ङीब्विशिष्टस्य । तस्य-कारीशब्दस्य । अयोगस्य-तदर्थेनायोगस्य । अपत्यार्थेन सहेत्यादिः । वक्तुमशक्यत्वादिति । अजहत्स्वार्थवृत्तिसद्भावात् ।

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ।

इति सिद्धान्तात् । तेनापि योगे—तदर्थेनापत्यार्थेन योगे । एवञ्चोभाभ्याम्प्रत्ययोत्पत्तिसम्भव इत्याशयेनाह-कदाचिदिति । विशिष्टस्य-समासात्मकसमुदायस्य । ननु कुम्भेनैकार्थीभूतस्य

भावप्रकाशः ।

स्यर्थः । अपिः समाससमुच्चायकः । तत्र तस्य समासत्वमप्रयुक्तं तदवयवस्य कृदन्तत्वप्रयुक्तम् । अजहत्स्वार्थायामर्थवत्त्वस्य सत्वात् । जहत्स्वार्था तु न सार्वत्रिकी । यद्वा पूर्वपदे एव तत्त्वं नोत्तरपदे इति भावः । तदर्थस्य—कारार्थस्य । निष्कर्षनिवेशे मानाभावादिति भावः । अपिः समासार्थसमुच्चायकः । ततः—तस्मात् । कारशब्दादेवेत्यर्थः । अपिद्वयं मिथस्तद्योगसमुच्चायकम् । विशिष्टस्य—ङीब्विशिष्टस्य । तस्यायोगस्य कार्यर्थस्यापत्याऽयोगस्येत्यर्थः । तेनापि योगे । कार्यर्थेनाप्यपत्यार्थेन योगे इत्यर्थः । एवं चोभयतोपि तत्सम्भवोऽत आह-कदाचिदिति । नियामकाभावादिति भावः । ततः-कारीशब्दात् । यद्यपि 'सर्वादीनि' इति सूत्रे भाष्ये-प्रत्याख्यायते योग इत्युक्तम्, चतुर्थे तु प्रधानेन

सरला ।

न्तभगवत् इत्यस्य पाठकल्पनात् । लिङ्गविशिष्टपरिभाषया च देवीभागवत इत्यस्य सिद्धिः । ग्रन्थेऽपि प्रतिपादकत्वेन सेवकत्वोपचारात् तत्प्रयोगः साधुः । एतेन ग्रन्थे 'देवीभागवत' इति प्रयोगमशुद्धं वदन्तः परास्ताः ।

ननु कारीति ङीपोऽनुपसर्जनस्त्रीप्रत्ययत्वात् "स्त्रीप्रत्यये चानुपसर्जनेन" इति परिभाषया तदादिनियमनिषेधाद् वृक्षप्रचलनन्यायेन कुम्भकारीत्यस्मादेव ढकि कौम्भकारेय सिद्ध्या द्वितीयतदन्तविधिस्वीकरणं व्यर्थम्, नच विशिष्टे तदारोपेऽपि ङीपो विशिष्टप्रकृतिकत्वाभावेन विशिष्टवृत्तिप्रातिपदिकत्वादेः तदन्तेऽनारोपान्न ततो ढकः सिद्धिरिति वाच्यम्, 'परमगार्ग्यायणः' इत्यादाविवार्थवत्सूत्रेण प्रातिपदिकत्वे ढकः सिद्धेः; इति चेत् ?

न, कुम्भकारीव मनुष्यः कुम्भकारी, इत्यत्र इवार्थे कनि तस्य "लुम्मनुष्ये" इति लुपि स्त्रीप्रत्ययस्यान्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वरूपोपसर्जनत्वस्य सत्त्वे नोपसर्जनस्त्रीप्रत्यये तदादिनियमनिषेधाभावेन कारीत्यस्मात् ढकि कुम्भकारेय इति स्यात्, तद्व्यावृत्त्यर्थं द्वितीयतदन्तविधेरावश्यकत्वात् । न च द्वितीयतदन्तविधिलाभे कुम्भकारेत्यस्मात् ङीप्यपि "स्त्रीप्रत्यये चानुपसर्जनेन" इति परिभाषया अतदादावपि कारीत्यत्र तदादित्वस्यारोपात् कुम्भकारेय इति स्यादेवेति वाच्यम्; अनुपसर्जनाधिकारसामर्थ्यात्तदादिघटिते एव तदादित्वस्यारोपो ननु तद्घटके इति कल्पनेन वृक्षप्रचलनन्यायेन वा विशिष्टादेवोत्पत्तेः ।

केचित्तु वृक्षप्रचलनन्यायस्य प्रकृते न विषयः समुदायस्य कार्यसम्बन्धे यत्रावयवस्य कार्यसम्बन्धो नान्तरीयको भवति, अवयवस्य कार्यसम्बन्धे च समुदायस्य कार्यसम्बन्धो नान्तरीयको न भवति तत्रैव तन्न्यायविषयत्वात् । प्रकृते च ढग्रूपकार्यस्य अवयवेन कारीशब्देन अव्यवहितोत्तरत्वसम्बन्धे समुदायेन कुम्भकारीशब्देनापि तत्सम्बन्धस्य जायमानत्वात्, ढक्प्रयोज्यादिवृद्ध्यादिरूपकार्यस्य च समुदायेन कुम्भकारीशब्देन सम्बन्धे अवयवेन कारीशब्देन सम्बन्धस्याजायमानत्वादित्याहुः ।

शब्दरत्नम् ।

तन्निरूपिताङ्गत्वाभावेन कुम्भशब्दोकारस्य वृद्ध्यनापत्तेः । निष्कृष्यैकार्थीभावस्यैव प्रत्ययोत्पत्तिनिमित्तत्वे न मानम् ? समुदायेनैकार्थीभावेऽवयवेनापि तस्यैव सत्त्वात् । न च समुदायान्ङीप्यपि अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेन कदाचित्कारीशब्दादपत्तिस्तत्रापीति वाच्यम् ? एतदधिकारसामर्थ्यादेव तदादिनियमाभावेनाधिकस्यैव कार्यं

भैरवी ।

तस्य कथमपत्येन योगोऽत आह—निष्कृष्यैकेति । न मानमिति । अत एव "तद्धितार्थ" इत्यनेनोत्तरपदे परे समासविधानं सङ्गच्छते। अत एव च "येन विधिः" इतिसूत्रे प्रत्ययग्रहणपरिभाषायाः प्रयोजनङ्गार्ग्यायणः, परमगार्ग्यायण इत्युपात्तम्। कृद्ग्रहणपरिभाषा त्वत्र न प्रवर्तते, कृन्मात्रग्रहणाभावात् । कस्यचिच्छङ्कान्निरस्यति—न चेति । एतदधिकारसामर्थ्यात् -अनुपसर्ज-

भावप्रकाशः ।

तदन्तविध्यादिज्ञापनद्वारा कौम्भकारेयसिध्यर्थं योग इत्युक्तमिति मिथो भाष्यद्वयं विरुद्धं प्रतीयते; तथापि तमित्थं परिजहुः कैयटकौस्तुभकृदादयः—प्रत्याख्यायते इति सिद्धान्त्युक्तिः । चतुर्थस्था त्वेकदेश्युक्तिः, तं विनापि तस्य सुसाधत्वात् । तथा हि—अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेन ,कारशब्दादपि ङीपि समुदायात् ढक् भविष्यति । न च कदाचित्कारीशब्दादपि स्यात् । एकाज्द्विर्वचनन्यायेन समुदायादेवोत्पत्तेः । कुम्भेनैकार्थीभूततया निष्कृष्यापत्येनान्वयाभावाच्च । सूत्रारम्भेऽपि औपगवीत्यादाविव केवलात्कारशब्दादपि कदाचिन्ङीप्प्रसङ्गेन कौम्भकारेये पाक्षिकदोषस्येत्थमेव वारणीयत्वाच्च । नन्वेवं कुम्भकारीत्यत्र ङीवेव न स्यात् । कुम्भेनैकार्थीभूततयाऽणन्तस्य केवलस्य स्त्रीत्वेनायोगात्, यस्य च विशिष्टस्य स्त्रीत्वेन योगो न तदणन्तमिति चेत् ? न, अमहत्पूर्वग्रहणेन तदन्तग्रहणज्ञापनात् । न चैवं बहुकुरुचरेत्यादावतिप्रसङ्गवारणायायं निषेधोपि सार्थक इति वाच्यम्, "टिड्ढाणञ्" इत्यादावुपात्तस्य टिदादेरेव स्त्रीत्वेन विशेषणेनादोषात् । पूर्वत्रोपात्तं तदन्तं च स्त्रीत्वेन विशेष्यते, उत्तरत्र चोपात्तमेवेत्यत्र व्याख्यानमेव शरणम् । इदं च सूत्रारम्भेप्यावश्यकम् । अन्यथा पञ्चाजीत्यत्र टाप्प्रसङ्ग इति । अत्र गुरुचरणाः—प्रत्याख्यायते इति वार्तिकसिद्धान्तरीत्या । चतुर्थे तु भाष्यसिद्धान्तः । इत्थं हि तदाकूतम् । अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेऽपि कदाचित्कारीशब्दादपि स्यादिति पाक्षिको दोष एव । युगपद्विवक्षायां तन्न्यायप्रवृत्त्या समुदायकार्येणावयवानामनुग्रहेण च नैकाज्द्विर्वचनन्यायेन निर्वाहः। कुम्भेनेत्याद्युक्तिरप्ययुक्ता, निष्कृष्यापत्येनैकार्थीभावेऽपि समुदायेनैकार्थीभावेऽवयवेनापि तस्यैव सत्त्वात्तासमर्थ्याक्षतेः विशिष्टसम्बन्ध्यपत्येऽपि विशेष्यसम्बन्धस्याव्याहतेश्च, सिद्धान्ते दोषाभावस्य वक्ष्यमाणत्वाच्च । अनभिधानेन प्रत्याख्यानं तु न चमत्कारि । अत एव परमगार्ग्यस्यापत्यमित्यर्थे तदेकदेशगार्ग्यशब्दात्प्रत्यये सति प्रत्ययग्रहणे तदन्तविधिप्रयोजनावसरे "येन विधिः" इति सूत्रे गार्ग्यायणः परमगार्ग्यायणः इत्युदाहृतं भाष्ये इति । तदेतद्धृदि निधायाह—**निष्कृष्येति** । **तस्यैव**—एकार्थीभावस्यैव । एवेन तदभावव्यावृत्तिः । अन्यथोक्तरीत्या समासेपि तथात्वापत्तौ "तद्धितार्थोत्तर" इत्युत्तरपदे समासविधानानर्थक्यापत्तिस्तत्र तदनाश्रये सूत्रं तदेव गमकमिति चेदिहापि भाष्यद्वयं गमकमिति भावः। 'कृद्ग्रहणे' इत्यस्याः कृन्मात्रग्रहणे प्रवृत्त्या न तया विशिष्टादेव ङीबुत्पत्ति प्रत्याशा । तस्मात्तत्सिध्यर्थं तदन्तविधिरावश्यकः, स चैतदधीनः । अमहत्पूर्वग्रहणेन तज्ज्ञापने तु बहुकुरुचरेत्यादिव्यावृत्त्यर्थमनुपदं वक्ष्यमाणार्थसिध्यर्थं चेदमावश्यकमिति तात्पर्यम् । तत्र पक्षे शङ्कते—**न चेति** । **समुदायात्**—तस्मादेव । **तत्रापि**—तदन्तविधिवादिनोऽपि । अयं भावः । कुम्भकर्मकोत्पत्त्यनुकूलक्रियाश्रयसम्बन्धित्वे विवक्षिते सामान्योत्पत्त्यनुकूलक्रियाश्रयसम्बन्धित्वविवक्षाया अप्यनपायेन तस्यापि, प्रथमोच्चारितत्वाच्च स्यादेव ततस्तदुत्पत्तिः। एकार्थीभावस्तूक्तरीत्याऽस्त्येव। न च तस्यासुबन्तत्वम्, वचने न तन्निमित्तकोटौ प्रविष्टं किं तु न्यायप्राप्तमिति भाष्याशयात् । प्रातिपदिकादिति तु तत्र न सम्बध्यत इत्युक्तमेवेति । **सामर्थ्यादेवेति** । एतेनैतदर्थाबोधने तु तदन्तग्रहणेऽनिष्टाप्राप्तिसहितेष्टमात्रकौम्भकारेयसिद्धिरूपफ-

शब्दरत्नम् ।

बोद्ध्यते, न तु न्यूनस्येत्यदोषादिति तदाशयः । विस्तरस्त्वन्यत्र बोद्धयः ।

भैरवी ।

नाधिकारसामर्थ्यात् । तदाशयः—चातुर्थिकस्यानुपसर्जनादित्येतत्प्रयोजननिरूपणपर 'प्रधानेन तदन्तविधिर्यथा स्यात्' इत्येतद्भाष्यस्याशयः । न च तदन्तविधावपि व्यपदेशिवद्भावेन कारीशब्दस्याण्णन्तत्वात्कुम्भकारेयो दुर्वार इति वाच्यम्, एतदधिकारसामर्थ्यादसहाय एव व्यपदेशिवद्भावप्रवृत्तेः । तत एव स्वस्य चेत्यपि न । प्रत्ययग्रहणपरिभाषयाऽधिकस्यैव व्यावृत्तिर्न तु न्यूनस्येति तु युक्तमेव । अत एव अस्य गोत्रापत्यमित्यर्थे इञि "यस्य" इति लोपेऽपि यूनि फक्सिद्धिः ।

ननु कुम्भेन समासेऽपि केवलस्य कारस्य प्रातिपदिकत्वेनेत्यसङ्गतम्, शेखरोक्तरीत्या केवलस्य सूत्रद्वयसाधारणपारिभाषिकार्थवत्त्वाभावात्, प्रत्ययान्तत्वेन पूर्वसूत्रस्याप्राप्तेश्च । न च कृदन्तत्वादुत्तरसूत्रेण प्रातिपदिकत्वम्, एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धस्वरूपप्रशस्तार्थवत्त्वाभावेनोत्तरसूत्राप्राप्तेः इति चेत्? न, व्याघ्री, अश्वक्रीती, कच्छपी, इत्यत्र 'गतिकारकोपपदानाम्' इत्यस्य प्रयोजननिरूपणावसरे स्त्रीप्रत्ययोत्पत्तेः प्राक् यथा घ्रशब्दादीनां प्रातिपदिकत्वन्तथाऽत्र कारशब्दस्याऽपि भविष्यति, "कृत्तद्धित" इतिसूत्रस्यैव च प्रवृत्तिरत्राभिप्रेता । विभिन्नवृत्तिद्वयस्यात्र सत्त्वेन तन्मात्रवृत्त्येकार्थीभावस्यात्र सत्त्वमस्ति । 'पञ्चगवधनः' इत्यत्र तु समासद्वयरूपा सजातीया वृत्तिरित्येकार्थीभाव एक एवेत्याशयात् ।

ननु "सर्वादीनि" इतिसूत्रभाष्ये–'अनुपसर्जनादिति योगः प्रत्याख्यायते'इत्युक्तम् । इह तु 'प्रधानेन तदन्तविधिर्यथा स्यात्'इत्यनुपसर्जनादित्यस्य प्रयोजनमुक्तमित्येतद् द्वयं विरुद्धमिति चेत्? अत्राहुः कैयटादयः, प्रत्याख्यायत इत्युक्तिः सिद्धान्तिनः, प्रकृतसूत्रस्थापनपरा चतुर्थाध्यायस्था तु एकदेशिनः । तदन्तविध्यभावेऽपि स्त्रीप्रत्यये तदन्तविध्यभावेन कुम्भकारीतिसमुदायादवयवात्स्त्रीप्रत्ययोत्पत्तावपि ढक् भविष्यति, एकाज्द्विर्वचनन्यायात् । न च केवलकारीशब्दादपि कदाचित्स्यादिति वाच्यम्, कुम्भेनैकार्थीभूतस्य निष्कृष्यापत्येनानन्वयात् । अन्यथा तदन्तविधावपि केवलकारशब्दादपि कदाचित्स्त्रीप्रत्यये सति ततो ढकि कुम्भकारेय एव स्यात् । न च कुम्भस्य यथा कारीत्यस्य न योगस्तथाकारेत्यस्य स्त्रीत्वेन कथं योग इति वाच्यम्, असमहत्पूर्वग्रहणेन तदन्तग्रहणज्ञापनात् । न चास्य सूत्रस्यानारम्भे

भावप्रकाशः ।

लाभावेनैतद्वैयर्थ्यं स्पष्टमेवेति भावः । एतेनात्र पक्षेऽपि कारशब्दस्य व्यपदेशिवद्भावेनाणन्तान्तत्वात्ततोऽपि कदाचित् ङीपि कुम्भकारेयो दुर्वार इत्यपास्तम् । एतदधिकारात् ज्ञापकादेवासहाये एव व्यपदेशिवद्भावप्रवृत्तेः अर्थवत्सूत्रोक्तार्थवत्त्वाभावेनाणन्तस्याप्रातिपदिकत्वाच्च । एतेन व्यपदेशिवद्भावाभावेऽप्यणन्तादित्यप्यर्थात्स्यादेव दोष इत्यपास्तम् । किं च व्यपदेशिवद्भावलब्ध एव सोऽर्थो न स्वतन्त्रः । एवं स्वस्य चेत्यपि तथेत्यदोषात् । न तु न्यूनस्येति । युक्तं चैतत् । यतः प्रत्ययग्रहण इति नियमेनाधिकस्यैव व्यावृत्तिर्न न्यूनस्य, अस्य युवापत्यमित्यर्थे अशब्दादिञि यस्येति लोपे यञिञोश्चेति फकोऽनापत्तेः । एवं च तन्निषेधेन तेन तद्घटावर्त्यर्थस्यैव संग्रहो न स्वतघावत्यर्थस्य न्यूनस्येति । तदाशय इति । तदन्तविधिज्ञापनद्वारा तस्य तत्सिद्धिः फलमिति वदतां भाष्यकृतामाशय इत्यर्थः । नन्वेवमपि चिन्त्यमिदं केवलकारस्याप्रातिपदिकत्वेन ततो ङीबभावेन पाक्षिकानिष्टाभावेन तरफलोक्त्यसङ्गतेः । प्रत्ययान्तत्वेनार्थवत्सूत्राप्राप्तिवदेकार्थीभावेनेत्यादिमूलोक्तार्थवत्त्वाभावेन गुरुचरणोक्तसूत्रद्वयसाधारणार्थवत्त्वाभावेन च "कृत्तद्धित" इति सूत्राप्राप्तेरिति चेत्?

अत्र केचित्— समासे च कृतेऽवयवादुत्पत्तिः प्राप्नोति । अवयवादुत्पत्तौ सत्यां को दोषः? कौम्भकारेयो न सिध्यति । अवयवस्य वृद्धिस्वरौ स्यातामिति । तत एवैकदेशिभाष्यानुरोधेनायं ग्रन्थः । एवञ्च कुम्भकारीति सिद्धिरेव मुख्यं तदन्तविधेः फलम् । अत एव 'इदं तर्हि प्रयोजनं प्रधानेन तदन्तवि-

तत्र 'जातेः' इत्यनुवृत्तेः । अन्यथा पुंयोगेऽपि स्यात् । एतेन इह अन्ग्रहणं स्पष्टार्थमिति प्राचो ग्रन्थः प्रत्युक्तः। इहानेकं वाक्यं, तत्र अनुपसर्जनमण् योऽका-

शब्दरत्नम् ।

पुंयोगेऽपि स्यादिति । इष्यते तु ङाषित्यर्थः । प्रत्युक्त इति । अनेनैव सिद्धे

भैरवी

स्यपतशब्दो ङीबापत्तिरिति वाच्यम् । "टिड्ढाणञ्" इत्यादावुपात्तस्य स्त्रीत्वेन विशेषणात् । पूर्वत्र तूपात्तन्तदन्तञ्च तथा, व्याख्यानात् । व्याख्यानञ्च प्रामाणिकं स्त्रीप्रत्ययोत्पत्तावावश्यकमेव । अत एव पञ्चाजीत्यत्र टाप्नेत्याहुः । वस्तुतस्तु प्रत्याख्यायत इत्युक्तिर्वार्त्तिकरीत्या, चतुर्थं तु भाष्यकारीयसिद्धान्तः । निष्कृष्यैकार्थीभाव एव वृत्तिप्रयोजक इति न भाष्यकारस्य सम्मतम् । अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेऽपि कदाचिदवयवादपि ढक् स्यादेव । यदपि समुदायादेव प्रत्ययोत्पत्तावेकाज्द्विर्वचनन्यायोपन्यसनं तन्न युक्तम्; यत्र युगपद्विवक्षा समुदायकार्येणावयवानुग्रहश्च तत्र तन्न्यायप्रवृत्तेः। कृद्ग्रहणपरिभाषया कुम्भकारशब्दादेव स्त्रीप्रत्ययो भविष्यतीति तु वक्तुमशक्यम्, तस्याः परिभाषायाः कृन्मात्रग्रहणे प्रवृत्तेः सिद्धान्तात् । यदि तु तदन्तविधिरमहत्पूर्वग्रहणेन ज्ञाप्यते, तदा बहुकुरुचरेत्यत्र ङीपोऽभावाय "अनुपसर्जनात्" इत्यावश्यकम् । 'स्त्रियाम्' इत्यस्य स्त्रीप्रत्ययप्रकृतित्वाभिमतविशेषणतायान्तस्यानुपदं ज्ञापकत्वस्याभिधास्यमानत्वादित्येवंरीत्या भाष्ययोरविरोध उपपादनीयः । तदेतद् ध्वनयन्नाह—विस्तरस्त्विति ।

मूले अन्यथेति । ङीन्विधायके 'जातेः' इत्यस्याऽननुवृत्तावित्यर्थः । पुंयोगेऽपीति । ङीविधि-

भावप्रकाशः ।

धिर्यथा स्यात् कुम्भकारी नगरकारी'इति भाष्यं सङ्गच्छते । अत एवावयवादुत्पत्तिरिति ग्रन्थव्याख्यावसरे "कृत्तद्धित"इत्यत्र कृद्ग्रहणे इत्यस्य सञ्चारेण समुदायप्रातिपदिकत्वेन तत एव ङीबिति कैयटोक्तशङ्कायां 'वस्तुतो अवयवस्याऽप्रातिपदिकत्वात्समुदायस्य चानणन्तत्वात् ङीपोऽप्राप्तिरेवेति शङ्कितुमुचितम्' इत्युद्द्योतोक्तिरर्थवत्सूत्रोक्तार्थवत्त्वाभावेनाणन्तस्याप्रातिपदिकत्वाच्चेति लघुशेखरोक्तिश्च सङ्गच्छते इत्याहुः ।

परे तु कारशब्दस्याणन्तत्वादर्थवत्त्वमस्त्येव । वृत्त्याऽर्थबोधजनकस्य कल्पितस्य भौतपूर्विकत्वस्य सत्त्वात् । वृत्तिद्वयस्य भिन्नत्वेन तद्धेतुभूतैकार्थीभावस्यापि भिन्नत्वात् कारमात्रवृत्त्यैकार्थीभावेन लौकिके प्रसिद्धत्वस्य सत्त्वाच्च । न हि प्रसिद्धत्वेऽपि स्वातन्त्र्यं विवक्षितम् । किञ्च 'पञ्चगवधनः' इत्यादौ पूर्वं त्रयाणां बहुव्रीहौ तदेकार्थीभावेन व्यापकेनैव घटककार्ये सिद्धे पृथक् तदनङ्गीकारेऽप्यत्र पूर्वं कृद्वृत्तौ प्रकृतिप्रत्ययमात्रवृत्त्यैकार्थीभावेन व्याप्येन समासासिध्द्या तत्पर्याप्तस्य भिन्नस्य तस्यावश्यकत्वात् । अत एव नगरकारीत्यतोऽग्रिमम् "अत्र हि तदादिनियमादवयवादुत्पत्तिः स्यात् । कृद्ग्रहणे इत्यस्यास्तु कृदकृद्ग्रहणादसञ्चार एव । एवं तर्हीकारान्तेन समासो भविष्यति । यद्येवं लभ्येत, कृतं स्यात्तत्तु न लभ्यं "गतिकारकोप"इति हि समास एव तावद्भवति । तत्र च कृतेऽवयवादुत्पत्तिः" इत्यादि भाष्यं, चतुर्थस्थं "येनविधिः"इत्यत्रत्योक्तभाष्यं च सङ्गच्छते । अन्यथा तयोर्दत्तजलाञ्जलित्वापत्तिः स्पष्टैव । किं च तदनङ्गीकारे "गतिकारक" इत्यत्रोपपदग्रहणानर्थक्यापत्तेः । त्वद्रीत्याऽर्थवत्त्वाभावेनाप्रातिपदिकत्वात्सुप एवाप्राप्तेः। अत एव उद्द्योते 'शङ्कितुम्'इत्युक्तं वक्तुमिति नोक्तम् । तस्याः शङ्काया उत्तरमिदमेव । न चैवमपि गुरुचरणोक्तरीत्याऽर्थवत्त्वं नायातीति वाच्यम्, तत्र तथार्थवत्त्वाङ्गीकारे एतत्सूत्रस्य "गतिकारक" इत्यादेश्च गमकत्वेनेतः प्राक् तदनङ्गीकारः, किं तु पूर्वोक्तस्येत्यदोषात् । एतत्तत्त्वे तु तदङ्गीकारः । अत एव तदन्तग्रहणेऽपि प्रागुक्तरीत्या द्वेधा समाशङ्क्यैतदधिकारादेव ज्ञापकादसहाये एव व्यपदेशिवद्भावप्रवृत्तेः अर्थवत्सूत्रोक्तार्थवत्त्वाभावेनाणन्तस्याप्रातिपदिकत्वाच्च, तदादिनियमाभावेनाधिकस्य कार्यं बोध्यते न तु न्यूनस्येत्यदोषाच्च । अन्यथा तदन्तग्रहणे फलाभावेन तद्वैयर्थ्यं स्पष्टमेवेत्युक्तं लघुशेखरे । तत्रैतदधिकारादेव ज्ञापकादित्यस्य हेतुत्रयेऽन्वयः । अत एव सर्वान्ते अन्यथेति ग्रन्थसङ्गतिः । एवं च न भाष्ययोर्मिथो विरोधः, कैयटकौस्तुभाद्यसङ्गतिश्चैति प्राहुः । तदेतद् ध्वनयन्नाह—विस्तरस्त्विति ।

रस्तदन्तादिति व्याख्यानान्नेह—आपिशलमधीते आपिशला ब्राह्मणीति। अत्र

---

शब्दरत्नम्।

तत्राञ्ग्रहणं तूत्सस्यापत्यं स्त्रीत्यत्र जातिलक्षणङीष्बाधनार्थमिति बोद्धयम्। अत्र हीति। न चैवमुपसर्जनाधिकारस्य चारितार्थ्ये मूलोक्ततदन्तविधिज्ञापकतानुपपत्तिरिति वाच्यम्, लक्ष्यानुसारिव्याख्यानेन 'स्त्रियाम्' इत्यस्य गृह्यमाणविशेषणतयाऽपि तद्वारणसम्भवात्। तस्माद्बहुकुरुचरेत्येव तद्व्यावर्त्यम्। तच्च तदन्तविधिं विना नोपपद्यते इति तज्ज्ञापकत्वम्।

भैरवी।

यम्बाधित्वा परत्वादिति शेषः। न ह्येवंसति फलाविशेषः। अञन्तान्ङीनि समुदायस्याद्युदात्तत्वमेव भविष्यति। ङीषि तु सतिशिष्टप्रत्ययस्वरेणान्तोदात्तत्वमिति विशेषस्य स्पष्टत्वात्। तत्रेष्टापत्तिन्निराचष्टे—इष्यत इति। इत्यर्थः-इति तात्पर्यार्थः। ननु "टिड्ढा" इतिसूत्रस्थाञ्ग्रहणेनाञन्तान्ङीप्यप्यौत्सीत्यादेः सिद्धौ "शार्ङ्गरवा" इति सूत्रेऽञ्ग्रहणस्य वैयर्थ्यमत आह—अनेनैवेति। अपत्यं स्त्रीति। गोत्रापत्यं स्त्रीत्यर्थः। एतेन 'गोत्रञ्च चरणैः सह' इति जातित्वमस्तीति सूचितम्। मूले—इहानेकमिति। न च "ऋन्नेभ्य" इत्यादावपि लक्ष्यभेदेनानेकवाक्यताऽस्त्येवेति वाच्यम्, तत्र संग्राहकवाक्यस्यैकत्वमिह तु तस्य नानात्वमित्याशयात्। अत एव पञ्चाश्वेत्यत्र न ङीप्। न चैवमिति। एवम्-आपिशलमधीते आपिशलेत्यस्य व्यावर्त्यस्य लाभे। व्याख्यानेनेति। मूलोक्तरीत्या "अनुपसर्जनात्" इत्यस्य प्रयोजनमुक्त्वा "एतदपि नास्ति प्रयोजनम्। स्त्रियामिति वर्त्तते। तेनाणं विशेषयिष्यामः। स्त्रियां योऽण् विहितः। एवमपि काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, तामधीते 'काशकृत्स्ना ब्राह्मणी' अत्र प्राप्नोति, नैष दोषः। अध्येत्र्यामभिधेयायामण ईकारेण भवितव्यम्। पश्चादध्येत्र्यामभिधेयायामण्' लुप्तः सः। यश्च श्रूयते, उत्पन्नस्तस्मादीकार इति पुनर्न भविष्यति" इति भाष्यकृदुक्तग्रन्थमूलकव्याख्यानेनेत्यर्थः। तस्मात्-उक्तरीत्या तद्वारणात्। तच्चेति।

भावप्रकाशः।

पुंयोगेऽपि स्यादितीति। ङीषं बाधित्वा परत्वात्। अञन्तस्याद्युदात्ततया ङीप्ङीनोः स्वरे विशेषाभावेपि ङीष्ङीनोर्विशेषस्य सत्त्वादिति भावः। इष्टापत्तिं निराचष्टे—इष्यते इति। इत्यर्थ इति। इति तात्पर्यार्थः। प्रत्युक्त इतीति। यत्तु रत्नाकरकृत्—एतेन अञ्ग्रहणं स्पष्टार्थमिति प्रसादोक्तमपास्तमिति मूलं रभसाभिधानम्। "शार्ङ्गरवाद्यञ" इत्यत्र पुनरञ्ग्रहणं जातिलक्षणङीषं बाधितुम्। तत्र हि 'जातेः'इति वर्त्तते तेन पुंयोगे ङीषेवेति प्रसादग्रन्थसत्त्वादिति; नन्न, उक्तं संलिख्यैवं च यदत्र प्राचोक्तं "शार्ङ्गरवाद्यञो ङीन्" इति सिद्धे पुनरञो ग्रहणं जातिलक्षणङीषं बाधितुम्। यदि तत्र 'जातेः'इति वर्त्तते तर्हि स्पष्टार्थमिति, तत् ङीनि जात्यनुवृत्तावजातौ औत्सीत्यादावप्राप्तङीप्प्रापणार्थत्वस्य सम्भवात्कथमञ्ग्रहणस्य स्पष्टार्थत्वमिति चिन्त्यमित्यस्य स्वपरमगुरुचरणप्रकाशेऽभिहितत्वेन तदनुरोधेन मूलस्य सत्त्वात्। तदेतत् ध्वनयितुं तदनुवादन्यूनतां निराचष्टे—अनेनैवेति। अत्रत्याञ्ग्रहणेनैवेत्यर्थः। तत्र—शार्ङ्गरवेति सूत्रे। जातीति। गोत्रं च चरणैरिति जातित्वादिति भावः। मूले—अनेकं वाक्यमिति। यद्यपि "ऋन्नेभ्य" इत्यादावपि लक्ष्यसंस्कारकवाक्यानां नानात्वं तथापि तत्र संग्राहकवाक्यमेकमेव। इह तु तदपि न, द्वयसजादिरूपाऽकारासम्भवेन तत्र वैयधिकरण्येनैवान्वयात्। अत एव पञ्चाश्वेत्यादौ नानेन ङीबिति स्पष्टं मूले। एवमिति। पूर्वसूत्रनिर्देशो वा "आपिशलमधीते" इति वार्तिकानुसारिव्याख्याने क्रियमाणे इत्यर्थः। मूलोक्तेति। कौमुद्युक्तेत्यर्थः। व्याख्यानेनेति। "एतदपि नास्ति प्रयोजनम्। 'स्त्रियाम्'इति वर्त्तते। तेनाऽणं विशेषयिष्यामः" इत्यादिना "उत्पन्नस्तस्मादीकार इति कृत्वा पुनर्न भविष्यति इत्यन्तेन ग्रन्थेन भाष्यकृतोक्तेन प्रागनूदितेनेत्यर्थः। इदं चाभेदेन हेतुत्वेन च विशेषणतायामन्वेति। अपिस्तस्यैव समुच्चायकः। अतस्तन्नासाधारणं तत्फलं तदाह—तस्मादिति। उक्तप्रकारेण तद्वारणादित्यर्थः। तच्चेति। तस्य तद्व्यावर्त्यत्वं चेत्यर्थः। ननु तज्-

हि प्रोक्तार्थेऽण् उपसर्जनम् , अध्येत्रण् तु लुप्तः, वर्णप्राधान्यान्न प्रत्ययलक्षणम् ; अतष्टाबेव भवति। ताच्छीलिके इति। अयं भावः–"शीलम्" "छत्रादिभ्यो णः" इति यो णस्तस्मिन् अण्कार्यं भवति, "कार्मस्ताच्छील्ये" इति ज्ञापकात् । अनेन हि "अन्" इति अणि विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते । चौरीति । चुरा शीलमस्याः ।

"हलस्तद्धितस्य" ॥ उपधाभूतस्येति । ननु "यस्येति च" इति यञोऽकार-लोपे कृते यकारस्य ईकारपरत्वमस्त्येव किमुपधाग्रहणानुवृत्त्या ? न चाल्लोपस्य स्थानिवद्भावः, यलोपे तन्निषेधात् ; मैवम् , यलोपे कार्ये अल्लोपस्याऽऽभीयत्वेना-

---

शब्दरत्नम् ।

'स्त्रियाम्' इत्यस्य प्रकृतिविशेषणत्वज्ञापकत्वं चेति बोद्धयम् । तत्करणे एतद्व्यावृत्तिरपि अनेनैव उपसर्जनपदेनोभयोरपि ग्रहणमित्याशयात् । अण्कार्यमिति । ङीबित्यर्थः ।

भैरवी ।

तस्य तद्व्यावर्त्यत्वञ्चेत्यर्थः । नन्वेवमुक्तरीत्या तस्य तदन्तविधिज्ञापनेऽपि स्वविषये चारितार्थ्यन्दुरुपपादमिति कथं ज्ञापकत्वमत आह—स्त्रियामित्यस्येति । तत्करणे-तद्व्यावृत्त्यर्थम् "अनुपसर्जनात्" इत्यस्य करणे। एतद्व्यावृत्तिरपीति । आपिशला काशकृत्स्ना एतयोरपीत्यर्थः । अनेनैवेति । प्रक्रान्तेनानुपसर्जनाधिकारेणेत्यर्थः । ननु प्रतियोगिसमर्पकमुपसर्जनपदं शास्त्रीयोपसर्जनबोधकमिति कथं व्यावृत्तिरत आह—उपसर्जनेति । कृत्रिमाकृत्रिमन्यायोऽत्रानुपसर्जनाधिकारप्रयोजनप्रदर्शनपरभाष्यप्रामाण्येन बाध्यत इति भावः। इत्याशयादिति । मूलस्येति शेषः । अण्कार्यमित्यत्राण्रूपं कार्यमित्यर्थस्य भ्रमवारणायाह—ङीबित्यर्थ इति । इदमुपलक्षणम् "अणो द्व्यचः" इति फिञ्सिद्धिरपि प्रयोजनम् । एतेन यदि ङीप्सिद्धिरेव प्रयोजनन्तदा स्वातन्त्र्येण ङीब्विधानेन सिद्धे ज्ञापनस्य नोपयोग इति परास्तम् । न च छत्रादिभ्यो लाघवादणेव कार्यः किमनया कुसृष्ट्येति वाच्यम् , ज्ञापकसिद्धस्यासार्वत्रिकत्वेन छात्रेत्य-

भावप्रकाशः ।

ज्ञापकत्वेति अनुपदोक्तव्याख्याऽनङ्गीकारे तस्याचारितार्थ्यं तदवस्थमेवात आह—स्त्रियामितीति । तत्करणे इति । तद्व्यावृत्त्यर्थम् "अनुपसर्जनात्"इति सूत्रकरणे इत्यर्थः । एतद्व्यावृत्तिरपीति । आपिशला, काशकृत्स्नेत्येतद्व्यावृत्तिरपीत्यर्थः । अनेनैव—प्रक्रान्तेनानुपसर्जनाधिकारेणैव । एवेनोक्तप्रकारव्यावृत्तिः । ननु तत्र शास्त्रीयोपसर्जनस्यैव ग्रहणौचित्येन कथं तद्व्यावृत्तिरत आह—उपेति । उभयोरपीति । एतदधिकारसामर्थ्यात्तन्न्यायो बाध्यत इति भावः । आशयात्—इति मूलस्येति शेषः । न हि तदेव प्रयोजनं तेन तस्य बोध्यते, किं तु तदर्थं कृतेनेदमपि सिद्ध्यतीति बोध्यते इति भावादित्यर्थः । अण् रूपं कार्यमित्यर्थभ्रमवारणायाह–ङीबितीति। इदमुपलक्षणम् "अणो द्व्यचः" इति फिञोऽपि । अत एवोपक्रमभाष्येऽण्कृतानीति बहुवचनप्रयोगः सङ्गच्छते। एतेन "कार्मं" इति सूत्रं न कार्यं तथा न ज्ञाप्यं च । लाघवेन ङीबर्थं वचनमेव कार्यमिति भ्रान्तोक्तमपास्तम् । ज्ञापकसिद्धस्यासार्वत्रिकत्वात्

सरला ।

ङीबित्यर्थ इति । "शीलं, छत्रादिभ्यो णः" इति विहितो यो णस्तस्मिन्नण्कार्यं भवतीत्येतदर्थक 'ताच्छीलिके णेऽपि' इति परिभाषया णप्रत्ययान्ते चौर इत्यत्र अणन्तत्वारोपेण ङीबिति भावः । अत्र च "कार्मस्ताच्छील्ये" इति ज्ञापकम् । तत्र हि "अन्" इति सूत्रेणाणि परे विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते । यदि तु णप्रत्यये अण्कार्यं न स्यात्तर्हि किं तेन ? ताच्छीलिकस्यैव णप्रत्ययस्याण्कार्यज्ञापनात् "तदस्यां प्रहरणमिति क्रीडायां णः" इति विहिते णे दाण्डा इत्येव । नचैवं लाघवात् छत्रादिभ्योऽणेव विधीयतां किं णप्रत्ययविधानेन, तस्याण्कार्यज्ञापनेन चेति वाच्यम् ; ज्ञापकसिद्धस्यासार्वत्रिकतया 'छात्रा' इत्येतत्सिद्ध्यर्थत्वात् ।

ऽसिद्धत्वात् । अनपत्येति । यद्यपि 'आपत्यग्रहणं कर्तव्यम्' इति वार्तिकन्तथाऽपि अपत्याधिकारविहितपरं तत् । तादृशश्च गर्गादियञेव, न तु देवाद्यञ् । तस्याऽपत्याधिकारात् प्रागेव पाठात् । अत एव भाष्यकृता 'कञ्जूकरपोऽयञञ्च' इति 'गर्गादिभ्यो ऽयञ्' इति च अकारः प्रश्लिष्टः । "यस्कादिभ्यो गोत्रेऽयञ·

शब्दरत्नम् ।

'ताच्छीलीके' इत्युक्तेः "तदस्यां प्रहरणम्" इति णे 'दाण्डा' इत्येव ।

**अकारः प्रश्लिष्ट इति** । तद्वार्तिकप्रत्याख्यानायेति शेषः । "अभिजिद्विदभृत्" इत्यादिसूत्रे अस्त्रियामित्यनुवृत्तेस्तस्य गोत्रार्थकत्वेऽपि न तत्र ङीप् सिद्धान्तेऽपीष्टः ।

भैरवी ।

स्य सिद्ध्यर्थमेवमभिधानात् । दाण्डेत्येवेति । एवन्ताच्छीलिक इत्युक्तौ तत्पदोपादानेन यत्र प्रथमान्तात्तच्छीलार्थे णस्तत्रैवाण्कार्यमित्यपि बोधितम् । अत एव 'शीलिकामि' इति वार्तिकस्य मांसशीला, मांसकामेत्याद्येवोदाहृतम् ।

मूले—अत एवेति । आपत्यशब्दस्यापत्याधिकारविहितपरत्वादेव । अयञिति । अयमकारोऽनुनासिकस्तस्येत्संज्ञया निवृत्तिरिति बोध्यम् । अकारप्रश्लेषस्य फलमाह—तद्वार्तिकेति । एवञ्च तद्वार्तिकप्रत्याख्यानपरभाष्यमेवापत्यशब्दस्यापत्याधिकारविहितपरत्वे मानमिति दर्शितम् । ननु स्थलत्रय एव यद्यकारस्य प्रश्लेषस्तदा "अभिजिद्" इति सूत्रविहितयञन्ताङ्ङीब्नापत्तिरत आह—अभिजिदिति । अस्त्रियामित्यनुवृत्तेरिति । "व्रातच्फञ" इति सूत्रादित्यादिः । सा च मण्डूकप्लुत्या कार्या । गोत्रार्थकत्वेऽपीति । किमत्र मानमिति चेत् ? तत्सूत्रभाष्यप्रघट्टकमेव । तथा हि तत्र "गोत्रमिति वक्तव्यम् । अस्य गोत्रत्वप्रयुक्तङ्कार्यं भवतीति तदर्थः । किम्प्रयोजनम् ? आभिजितकः । अभिजिदित्यस्यायमित्यत्र "गोत्रचरणात्" इति वुञ् यथा स्यात् । तच्चाकर्तुं शक्यम् । गोत्रादयं स्वार्थिको गोत्रे एव भवति" अत्र भाष्ये वुञ् एव फलत्वेनोक्तो न तु ङीप् । एतेन गर्गादिभ्योऽयञित्यत्रैवाभिजिदितिसूत्रेऽप्यकारप्रश्लेष इति वदन्तः परास्ताः । पीष्ट इति । एवञ्च स्त्रियां यञेव । स नास्तीति न तत्र ङीपः

भावप्रकाशः ।

छात्रेत्येव । एतेन छत्रादिभ्यो लाघवादणेव कार्यः किमनया कुसृष्टयेति कैयटोक्तमपास्तम् । केचित्तु "अणन्तादितीकार" इत्युपसंहारभाष्यानुरोधात्फिञ्व्यावृत्त्यर्थत्वेन यथाश्रुतमेव युक्तं, नोपलक्षणम् । बहुवचनं तु प्रयोगभेदाभिप्रायम् । पूर्वमतेऽपीदमावश्यकम् । अन्यथा हि द्विवचनौचित्यमित्याहुः । **इत्युक्तेरिति** । ज्ञापकस्य तद्विषयत्वादिति भावः । **दाण्डेत्येवेति** । अत एव 'शीलिकामि' इति वार्तिके 'मांसभक्षा' इत्येवोदाहृतं भाष्ये ।

वार्तिकप्रश्लेषयोर्यौगपद्ये फलाभावादाह—**तद्वार्तिकेति** । तथा च तत्प्रत्याख्यानपरभाष्यमेव वार्तिकस्य तदधिकारस्थप्रत्ययपरत्वे मानमिति भावः । ननु स्थलत्रये एव प्रश्लेषे "अभिजिद्" इत्यादिसूत्रविहितयञन्तात् ङीब्नापत्तिः तथाचाऽभिजितोऽपत्यं स्त्रीत्यणन्तात्स्वार्थेऽभिजिदिति यञि आभिजितीति रूपासिद्धिरत आह—**अभीति** । **अस्त्रियामित्यनुवृत्तेरिति** । "आयुधजीवि" "वृकाट्टेण्यण्" इत्यादिभिर्विच्छिन्नयापि "व्रातच्फञोः" इतिसूत्रस्थाऽस्त्रियामित्यस्य मण्डूकप्लुत्याऽनुवृत्तेरित्यर्थः । अत एव "अभिजिद्" इति सूत्रे "गोत्रमिति वक्तव्यम् । अस्य गोत्रत्वप्रयुक्तं कार्यं भवतीति तदर्थः । किं प्रयोजनम् ? आभिजितकः । आभिजित्यस्यायमिति "गोत्रचरणाद्" इति वुञ् यथा स्यात् । तच्चाकर्तुं शक्यम् । गोत्रादयं स्वार्थिको गोत्र एव भवति" इति भाष्ये वुञेव फलत्वेनोक्तो न ङीप् । अत्र गोत्रपदेनाऽपत्यमात्रम् । एतेन भाष्यकृता "करपोऽयञश्च" इत्यत्रैव कण्ठतः प्रश्लेषे उक्तेऽपि तन्निर्वाहाय "गर्गादिभ्य" इत्यादौ यथा कल्प्यते; तथाऽत्रापि मण्डूकानुवृत्तौ च न मानमिति मान्यानुयायि रत्नाकरदण्ड्याद्युक्तमपास्तम् । **तस्य—**यञः । उक्तरीत्येति भावः । आभिजितो मुहूर्तः, आभिजितः, स्थालीपाक इत्यादौ वारणाय गोत्रादित्यावश्यकं, तदाह-**गोत्रेति** । **पीष्ट इति** । एवं च स्त्रियां यञेव नेति न तत्र ङीप्सम्भावना, किं तु

ञोश्च" इति सूत्रे ऽप्येवम् ।

"प्राचां ष्फ." ॥ तद्धितग्रहणं प्रातिपदिकसंज्ञार्थम् । ननु तां विनाऽपि षित्करणसामर्थ्यादेव ङीष् भविष्यति । एवं तर्हि तद्धितग्रहणमिञन्तादपि क्वचित्

---

**शब्दरत्नम् ।**

"संवाङ्क" इति सूत्रे एतद्भाष्यप्रामाण्यादेकानुबन्धकपरिभाषाया अप्रवृत्त्या गर्गादियञ एव ग्रहणमिति भावः । **एवमिति** । अकारः प्रश्लिष्ट इत्यर्थः ।

**प्रातिपदिकसंज्ञार्थमिति** । तत्फलं च ङीषिति भावः । न च लिङ्गविशिष्टपरिभाषया तत्सिद्धिः, एतत्सूत्रस्थैतत्समानार्थभाष्यप्रामाण्येनास्याः स्त्रीप्रत्ययप्रकरणेऽनुपस्थितेः । **सामर्थ्यादेवेति** । अप्रातिपदिकत्वेऽपीति भावः ।

**भैरवी ।**

सम्भावना, किन्तु गोत्रार्थबोधकत्वातिदेशाज्जातिलक्षणङीष् एवेति न तत्राकारस्य प्रश्लेषः 'स्त्रियाम्' इत्यस्यासम्बन्धेऽपि । ननु "गर्गादिभ्य" इति सूत्रे अकारस्य प्रश्लेषे "सङ्घाङ्क" इति सूत्रेऽस्य द्व्यनुबन्धकत्वाद् ग्रहणन्न स्यादत आह-सङ्घाङ्केतीति । एतद्भाष्येति । "सङ्घाङ्क" इतिसूत्रे गार्गो घोषः, गार्गोऽङ्क इत्युदाहरणपरभाष्येत्यर्थः । अभिजिदित्यस्यापत्याधिकारपठितभिन्नत्वात्तत्र गोत्रपदेन ऋष्यपत्यरूपं लौकिकं गोत्रमिति बोध्यम् ।

कस्यचिदुक्तिङ्खण्डयति—न चेति । एतत्समानार्थेति । "तद्धितेति किमर्थम् ? षितः प्रातिपदिकाधिकारार्थम् । नैतदस्ति प्रयोजनम् । षित्करणसामर्थ्यादेवात्रेकारो भविष्यति" इति भाष्येत्यर्थः । अस्याः-लिङ्गविशिष्टपरिभाषाया इत्यर्थः ।

**भावप्रकाशः ।**

जातित्वान्ङीषा तद्रूपसिद्धिरिति न तत्र प्रश्लेषः । बहुत्वे तु अयञो भावेपि "तद्राजस्य" इति लुक् सिद्ध इति भावः । ननु गर्गादिसूत्रेऽयञिति च्छेदे, संघाङ्केति सूत्रे अस्य ग्रहणं न स्यात्, गार्ग्य इत्यादिसिद्धये तदकारस्यानुनासिकत्वेत्संज्ञकत्वाल्लुप्तत्वेनैकानुबन्धकग्रहणे द्व्यनुबन्धकस्याग्रहणात् । तथा च देवाद्यञाविरयस्यैव ग्रहणेनोक्तातिप्रसङ्गः । दैव्यानां सङ्घ इत्यर्थे दैवकमितीष्टं न स्याद् दैवः सङ्घ इति स्यादत आह—**सङ्घाङ्केतीति** । **एतद्भाष्येति** । गार्गो घोषो, गार्गोऽङ्क इत्याद्युदाहरणरूपसङ्घाङ्केति सूत्रस्थभाष्येत्यर्थः । ज्ञापकसिद्धत्वेनाऽसार्वत्रिकत्वस्य तत्र बलवत्त्वादिति भावः । तथा च ऋष्यपत्यरूपं लौकिकमेव गोत्रं तत्र गृह्यते इति नोक्तातिप्रसङ्गः । तदाह—**गर्गादियञ एवेति** । "सङ्घाङ्क" इतिसूत्रे इञ्साहचर्यादपत्यार्थकस्यैव ग्रहणमत एवकारः । एवमित्यस्य गोत्रे इति तदधिकारविहितपरमित्यर्थभ्रमवारणायाह—**अकार इति** । "हरितादिभ्योऽञोऽयञिञोश्च" इत्यत्राप्येवं बोध्यम् ।

**तत्फलमिति** । तत्र प्रातिपदिकाधिकारादिति भावः । चस्त्वर्थे । कस्यचिदुक्तिं खण्डयति—**न चेति** । ङीबादिवत् ष्फस्यापि लिङ्गबोधकत्वादिति भावः । **तत्सिद्धिः—**ङीष्सिद्धिः । **एतत्समानेति** । "तद्धितेति किमर्थं ? षितः प्रातिपदिकाधिकारार्थम् । नैतदस्ति प्रयोजनं षित्करणसामर्थ्यादेवात्रेकारो भविष्यति" इति भाष्येत्यर्थः । अत एवाह—**अप्रातीति** । एवं च तत्प्रातिपदिकत्वार्थमिति प्रसादोक्तिरयुक्तेति भावः ।

**सरला ।**

**अप्रातिपदिकत्वेऽपीति** । वस्तुतस्तु चिन्त्यमेतत्, षित्करणसामर्थ्येन ङीषः सिद्धावपि ङीषः प्रातिपदिकप्रकृतिकत्वाभावेन लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वानारोपात् ततः सुबाद्यसिद्धेः । स्वाप्रकृतिकलिङ्गबोधकप्रत्ययान्ते स्ववृत्तिधर्मारोपे तु 'अयः परमकुम्भी' 'अयः कुम्भपुत्रा' इत्यादावपि सत्वापत्तिः । 'षित्करणसामर्थ्यादेवात्र ईकारो भविष्यति' इति भाष्योक्त्या च स्त्रीप्रत्यये कर्तव्ये लिङ्गविशिष्टपरिभाषायाः प्रवृत्त्यभावो व्यज्यते । तेन भवतीमतिक्रान्ता 'अतिभवतिः' इत्यत्र "उगितश्च" इति ङीप् धीवरीमतिक्रान्ता 'अतिधीवरिः' इत्यत्र "वनोर च" इति रादेशसन्नियोगशिष्टो ङीप् च नेति । एतेन लिङ्ग-

ष्फ इति ज्ञापयति। यत्त्वन्ते सवर्णदीर्घेणापि रूपसिद्धौ "यस्येति" लोपस्याऽनावश्यकत्वात्। तेन 'आसुरेरुपसंख्यानम्' इति वक्ष्यमाणं सिध्यति।

"आयने"॥ फकारादिष्वकार उच्चारणार्थः। आयनीनोर्नकारस्य नेत्त्वम्, फिनो नित्करणसामर्थ्यात्।

"कौरव्य"॥ कथं तर्हि 'यद्यसौ कूपमाण्डूकि तवैतावतिकः स्मय' इति भट्टिः। अत्राहुः—कौरव्यसाहचर्यादपत्यप्रत्ययान्तस्यैव माण्डूकस्येह ग्रहणम्। इह तु मण्डूकस्येयं भार्येति "तस्येदम्" इत्यण्।

कुमारीति। प्रथमवयोवाची एष शब्दो न त्वनूढत्वप्रयुक्तः। वृद्धकुमारीति तु गौणः प्रयोगः।

---

शब्दरत्नम्

**उच्चारणार्थ इति**। तेन ढूक आदेशसिद्धिः। **नित्करणेति**। असञ्जातविरोधन्यायसहकृतेत्यर्थः।

**न त्विति**। अल्पवयस्यूढायामपि प्रयोगादिति भावः। **गौण इति**। पुंसाऽसन्नियोगरूपसादृश्यादिति भावः।

भैरवी।

तेन-अकारस्योच्चारणार्थत्वेन। तदकारस्य विवक्षितार्थत्वे रेफपरस्याकारान्तत्वाभावेनादेशो न स्यादिति भावः। उच्चारणार्थत्वे मानन्तु "फढखछघाम्" इति निर्देश एव। ढक इति। फिनोऽप्युपलक्षणम्। मूले—फिनो नित्करणेति। यद्यायनादेशावयवस्य नस्येत्संज्ञा स्यात्तदाऽनेनैव "ञ्नित्यादिः" इत्यस्य प्रवृत्तिसिद्धौ फिनो नित्त्वं व्यर्थं स्यादिति भावः। ननु आयनो नित्करणसामर्थ्यात्फिनो नस्य नेत्त्वमिति वैपरीत्यमेव कुतो नेत्यत आह—असञ्जातेति। 'असञ्जातविरोधात्सञ्जातविरोधस्य सङ्कोच एवोचितः' इति न्यायेत्यर्थः। सञ्जातो विरोधो वैयर्थ्यशङ्कया विरोधो यस्य तस्येत्यर्थः। उत्तरकालिकप्रतीतिविषये यदीत्संज्ञा तदा प्राथमिकप्रतीतिविषये फिनि नित्त्वार्थं नकारोच्चारणं व्यर्थमिति शङ्का भवतीति तत्रेत्संज्ञाप्रापकशास्त्रसङ्कोच एवोचित इति भावः। एवञ्च तादृशन्यायसहकृतं यन्नित्करणन्तत्सामर्थ्यादिति फलितम्।

अल्पवयसि-प्रथमवयसि। अपिना अनूढासमुच्चयः। एवञ्च या अल्पवयस्का ऊढा च तस्यान्तादृशप्रयोगदर्शनेनास्य प्रथमवयसः प्रवृत्तिनिमित्तकत्वमावश्यकम्। नन्वेवंसति वृद्धकुमारीत्येवम्प्रयोगो "न मुने" इतिभाष्ये दृश्यते, तस्य कथमुपपत्तिरित्यत आह मूले-वृद्धकुमारीति। गौणः-लाक्षणिकः। लक्षणाप्रयोजकसम्बन्धमाह-पुंसाऽसन्नियोग इति। कौमार·

भावप्रकाशः।

**उच्चारणार्थ इतीति**। छवामिति निर्देशात्। तत्फलमाह-**तेन ढूक इति**। अन्यथा रेफपरत्वेन ढ इति रूपाभावात्स न स्यादिति भावः। इदमुपलक्षणं फिनादेरपि। ननु वैपरीत्यं कुतो नेत्यत आह—**असञ्जातेति**। **कृतेत्यर्थ इति**। सहकृतं यन्नित्करणसामर्थ्यं तस्मादित्यर्थ इत्यर्थः।

ननु पुंस्यपि कुमार इति प्रयोगादिति प्रकाशानुयायिरत्नाकरोक्तहेतुरयुक्तः, तद्वत्तत्रापि तदभावे प्रयोगस्य निर्बाधत्वादत आह—**अल्पेति**। प्रथमेत्यर्थः। **अपिना अनुढासमुच्चयः**। सादृश्यमूलकलक्षणाया एव गौणीत्वादाह—**पुंसेति**। कौमारयौवनवृद्धत्वभेदात्त्रीणि वयांसीत्येके। यथाहुः—

पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥ इति।

सरला।

विशिष्टपरिभाषया ष्फान्तस्य प्रातिपदिकत्वात् तत्प्रकृतिकङीषन्तेऽपि प्रातिपदिकत्वारोपात् सुबादिसिद्धिरित्यपास्तम्। अत एव भाष्ये 'तद्धितग्रहणं न कर्तव्यम्' इति नोपसंहृतम्।

त्र्यनीकेति । त्रयाणामनीकानां समाहारः, अत्राजादेराकृतिगणत्वात् टाबिति त्र्यनीकाधिकरणे मीमांसकाः ।

पञ्चाश्वेति । नन्वत्र "द्विगोः" इति ङीप् मा भूत् । ठगन्तत्वात्तु स्यादेवेति चेत् ? न ठको योऽकार इति व्याख्यानात् । द्विबिस्तेति । 'सुवर्णबिस्तौ हेम्नोऽक्षे' इत्यमरः । 'आचितो दश भाराः स्युः' । द्विकम्बल्येति । द्वाभ्यां कम्बल्याभ्यां क्रीता । कम्बल्यमूर्णापलशतम् । "कम्बलाच संज्ञायाम्" इति यत् । क्रीतार्थस्य

---

शब्दरत्नम् ।

ठगन्तत्वादिति । द्वाभ्यां शताभ्यां क्रीता द्विशतेत्यादौ निषेधश्चरितार्थः । अत्र

भैरवी ।

यौवनवृद्धत्वात्मकानि त्रीणि वयांसि । यथाहुः—

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ इति ।

केचित्तु बाल्यमध्यत्ववृद्धत्वात्त्रीणि—

आषोडशाद्भवेद्बालो यावत्क्षीरान्नवर्तकः ।
मध्यमः सप्तति यावत्परतो वृद्ध उच्यते ॥ इत्याहुः

आयुषश्चतुर्भागैश्चत्वारीत्यन्ये । यथाहुः—

आद्ये वयसि नाधीतन्द्वितीये नार्जितन्धनम् ।
तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति ॥ इति ।

'वयस्यचरम' इति वार्तिकं सर्वथाऽऽरब्धव्यमेवेति बोध्यम् ।

ननु पञ्चाश्वेत्यत्र यदि ठगन्तत्वान्ङीपः प्राप्तिस्तदा निषेधवैयर्थ्यमत आह—द्वाभ्यां शताभ्यामिति । आदिना पञ्चानामजानान्निमित्तं धनपतिसंयोग इत्यर्थे "गोद्वयच" इति यतः "अध्यर्द्ध" इति लुकि पञ्चाजेत्यस्य सङ्ग्रहः । "अपरिमाण" इति सूत्रे परिमाणशब्दः पारिभाषिकस्यार्थस्य बोधकः ।

यथाहुः—

ऊर्ध्वमानङ्किलोन्मानम्परिमाणन्तु सर्वतः ।
आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः ॥ इति ।

अत एव द्वे वर्षे भूता, द्वाभ्यां शताभ्याङ् क्रीता, द्विवर्षा, द्विशतेत्यादौ, तिर्यङ्माने द्विहस्ता भित्तिरित्यादौ च निषेधस्य सिद्धिः । नन्वेवंसत्युन्मानवाचकौ बिस्तकम्बल्य-

भावप्रकाशः ।

बालत्वमध्यत्ववृद्धत्वात् त्रीणीत्यपरे । यथाहुः—

आषोडशाद्भवेद् बालो यावत् क्षीराऽन्नवर्त्तकः । मध्यमः सप्ततिं यावत् परतो वृद्ध उच्यते ॥ इति ।

आयुषश्चतुर्भागैश्चत्वारीत्यन्ये । यथाहुः—

आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम् । तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति ॥ इति ।

सर्वथाऽपि वार्तिकमावश्यकम् । यौवनस्याऽप्रथमत्वात् । बालकशब्दस्याजादिषु पाठाट्टाबेवेत्याहुः ।

ननु निषेधवैयर्थ्यमत आह—द्वाभ्यामिति । आदिना पञ्चानामुष्ट्राणां निमित्तं धनपतिसंयुक्तिः "गोद्वयच" इति यतः "अध्यर्ध" इति लुकि पञ्चोष्ट्रेत्यादिसंग्रहः । अत्र परिमाणशब्देन 'परिमाणं तु सर्वतः' इति पारिभाषिकमेव गृह्यते इति मूले उत्तरसूत्रे स्पष्टम् । अत एव द्वे वर्षे भूता, द्वाभ्यां शताभ्यां क्रीता—द्विवर्षा, द्विशतेत्यादौ, तिर्यङ्माने द्विहस्ता भित्तिरित्यादौ च निषेधसिद्धिः । यत्तु रत्नाकरकृत-तथाङ्गीकारे बिस्तकंबल्यग्रहणवैयर्थ्यापत्तिः, तयोरूर्ध्वमानत्वस्य कौस्तुभे स्वयमेवोक्तत्वात् । तस्मादूर्ध्व-

ठञो लुक् । द्व्याढकीति । द्वावाढकौ पचतीति "आढकाचितपात्रात्खोऽन्यतरस्याम्" "द्विगोष्ठँश्च" इति खठनभ्यां मुक्ते प्राग्वतीयष्ठञ्, तस्य लुक् । एतेन द्व्याचिता व्याख्याता ।

"काण्डान्तात्" ॥ षोडशहस्तप्रमाणो दण्डः काण्डम् । यद्यपि विशेषणेन तदन्तविधिः सिद्धस्तथाऽपि अन्तग्रहणे असति क्षेत्रे इत्येतत् श्रुतत्वात्काण्डस्यैव विशेषणं स्यान्न तदन्तस्य । ततश्चेहापि स्यात् । द्वाभ्यां काण्डाभ्यां—काण्डप्रमिताभ्यां क्षेत्राभ्यां क्रीता द्विकाण्डी वडवेति । इह तु न स्यात्—द्विकाण्डा क्षेत्रभक्तिरिति । अतोऽन्तग्रहणम् । मात्रच इति । यत्तु प्राचोक्तं द्वयसचो लुगिति ; तन्न,

प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम ।

इति सिद्धान्तात् । द्विकाण्डी रज्जुरिति । नन्विह परिमाणान्तादिति पूर्वेण निषेधः स्यात्, काण्डशब्दस्याऽऽयामपरतया अपरिमाणार्थत्वात् । परितः सर्वत आरोहतः परिणाहतश्च येन मीयते तद्धि परिमाणमाढककुडवादि । न तु यथाकथञ्चित्परिच्छेदकमात्रम् । यदाहुः—

---

शब्दरत्नम् ।

हि कनो लुक् । **कम्बल्यमिति** । अपरिमाणत्वेऽप्येतयोर्ग्रहणं नियमार्थम्—उन्मानस्य चेद् बिस्तकम्बल्ययोरेवेति । तेनान्यत्रोन्माने द्विपली द्विनिष्कीत्यादिसिद्धिः ।

**श्रुतत्वादिति** । अवान्तरवाक्यार्थबोधोत्तरं "येन विधिः" इत्यस्य प्रवृत्तेस्तत्काले श्रुतत्वात्तेनैव सम्बन्धे जाते पश्चात्तदन्तविधावपि पुनर्व्यापारे मानाभावः । **इहापीति** । इहैवेत्यर्थः । **सिद्धान्तादिति** । षोडशहस्तप्रमाणदण्डार्थकाण्डशब्दस्तु तिर्यङ्मानमिति न तस्योर्ध्वमानत्वमिति भावः ।

भैरवी ।

शब्दौ नोपादेयावपरिमाणत्वादेव सिद्धेरत आह—अपरिमाणेति ।

ननु श्रुतस्य शब्दस्य तदन्तपरतया श्रुतत्वादित्येतन्मात्रोपादानेन कथमिष्टसिद्धिरत आह—अवान्तरेति । तत्काले—अवान्तरवाक्यार्थबोधकाले । अयम्भावः "येनविधिः" इत्यस्य प्रवृत्तिर्विशेषणज्ञानाधीना, तज्ज्ञानन्त्ववान्तरवाक्यार्थबोधोत्तरमेवेति । मानाभाव इति । प्रत्युत निराकाङ्क्षत्वमत्र प्रतिबन्धकमस्तीति बोध्यम् । अपिशब्दोपादाने "इह तु न स्यात्" इत्युत्तरवाक्यासङ्गतिरत आह—इहैवेति । तथा चापिशब्द एवार्थे इति भावः । तिर्यगिति । प्रकृत इत्यादिः । आयामपरिच्छेदकत्वेन प्रमाणवाचित्वादिति भावः । मूले—आयामपरतया—आयामपरिच्छेदकपरतया । आरोहतः—उच्छ्रायात् । परिणाहतः—विस्तारात् ।

भावप्रकाशः ।

मानं परिमाणं च द्वयमपि गृह्यते इति मूलं चिन्त्यमिति तत्खण्डयति—**अपरिमाणेति** । एतयोः—बिस्तकम्बल्ययोः ।

ननु पूर्वं तदन्तविधिरत आह—**अवान्तरेति** । विशेषणत्वग्रहस्य तदधीनत्वादिति भावः । व्यापारे । तत्सम्बन्धे निराकाङ्क्षत्वादिति भावः । अर्थसंगतेराह—**इहैवेति** । तथोक्तबीजं तु प्रकाशानुरोध एव । **तिर्यगिति** । प्रकृते इत्यादिः । आयामपरिच्छेदकत्वेन प्रमाणवाचित्वादिति भावः । एतेन यदि क्षेत्रस्य काण्डद्वयमुन्मानं तदाद्ययोर्लुगन्यथा मात्रच एवेति द्वयसचो लुगिति प्रक्रियायोजनं प्रकाशोक्तमपास्तम् । "तत्पुरुषस्याङ्गुलेः" इत्यत्रत्यमूलविरोधो यथा न तथा तत्रैव स्फुटीभविष्यति । एतेन मिथो विरोधान्मूलं चिन्त्यमिति खण्डनकृदुक्तमपास्तम् ।

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः ॥ इति ।

अत एव द्विहस्ता भित्तिरित्यत्र ङीब् न । अत्राहुः-नियमार्थमिदम् । क्षेत्रे एव निषेधो यथा स्यादिति । अतो द्विकाण्डी रज्जुरित्यत्र ङीबेव सूत्रस्य फलमिति ।

"पुरुषात्प्रमाणे" ॥ यद्यपि पुरुषशब्दो जातिवचनस्तथाऽपि द्वौ पुरुषौ प्रमाणमस्या इति वाक्ये प्रमाणे वर्तते एव, प्रमाणशब्दसामानाधिकरण्यात् । वृत्तौ तु तत्स्वभावादेव । तथा च शुल्बसूत्रम्—"पञ्चारत्निः पुरुष" इति । द्विपुरुषीति । अत्र न्यासकारः 'प्रमाणे लो द्विगोर्नित्यम्' इति द्वयसचो लुगित्याह ; तन्न, पुरुषशब्दस्य प्रमाणवाचित्वाभावेन 'प्रमाणे ल' इति श्लोकवार्तिकस्य तत्राप्रवृत्तेः । ये हि शमादिवत् प्रमाणत्वेन प्रसिद्धास्तत्रैव तत्प्रवर्तते न तु पुरुषशब्देऽपि ।

शब्दरत्नम् ।

**प्रमाणे वर्तत एवेति** । परिच्छेदके वर्त्तत इत्यर्थः । **तत्स्वभावादिति** । वृत्तिस्वभावादित्यर्थः । **द्वयसचो लुगिति** । तस्यायं भावः-आयामो दैर्घ्यम् । तच्च द्विविधम्—तिर्यगूर्ध्वं च । उन्मानं च तुलादावारोप्य येन मीयते तद् इदं च विनिगमनाविरहादिति । **प्रमाणवाचित्वाभावेनेति** । तिर्यङ्मानस्यैव प्रमाणत्वात् । तिर्यङ्मानस्यैवायामपदेन प्रमाणलक्षणे ग्रहणं न तूर्ध्वमानस्य 'ऊर्ध्वमानं किलोन्मानम्' इत्युक्तेरिति भावः । द्विगोर्लुगित्यंशेऽपि 'प्रमाणे' इत्यनुवर्त्तत एवेति तात्पर्यम् । **प्रमाणत्वेन प्रसिद्धा इति** । तिर्यङ्मानत्वेन प्रसिद्धा इत्यर्थः । शमादीनामूर्ध्वाधरदिगवस्थितवस्तुपरिच्छेदकत्वेऽपि तिर्यगवस्थितवस्तुनोऽपि परिच्छेदकत्वात्तत्त्वेन सिद्धिरक्षता ।

भैरवी ।

अत एव—आयामपरिच्छेदकस्यापरिमाणार्थत्वादेव ।

येन—कर्षादिना । इदञ्च—ऊर्ध्वायामपरिच्छेदकञ्च । एवञ्चास्य द्विरूपत्वमिति फलितम् । ननु पुरुषशब्दस्य प्रमाणवाचित्वाभावेनेत्यसङ्गतम्पूर्वग्रन्थविरोधादत आह—तिर्यङ्मानस्यैवेति । इत्युक्तेः—इति पृथगुक्तेः । ननु श्लोकवार्तिके 'प्रमाणे ल' इत्यस्य भिन्नवाक्यत्वेन तत्प्रवृत्तेर्निर्बाधतया तदुक्तिरदुष्टैवेत्यत आह—द्विगोरिति । शमादीनाम्पुरुषतुल्यत्वशङ्कां वारयति—शमादीनामिति । शमशब्दो हस्तवाची 'पाणिः शमः शयो हस्तः' इत्यमरोक्तेः । 'पञ्चशाखः शमः पाणिः' इति पाठान्तराच्च । आदिना अङ्गुल्यादीनाङ्ग्रहणम् । वस्तुनोऽपीति । अत एव द्विशमी, द्विशमेति तत्र रूपद्वयम्भवति । वस्तुत आद्ये लुगप्राप्त्या द्विशमद्वयसीत्येव ।

भावप्रकाशः ।

वक्ष्यमाणरीत्याह—**परीति** । अत एवोत्तरग्रन्थविरोधो नेति भावः । वृत्तौ तु तत्स्वभावादित्युक्त्या तत्पदेनान्यपरामर्शभ्रमवारणायाह—**वृत्तीति** । तस्य—न्यासकारस्य । **आयाम इति** । प्रमाणलक्षणे इत्यादिः । येन—कर्षादिना । इदञ्च—ऊर्ध्वायामपरिच्छेदकं च । एवं चास्य द्विरूपतेति भावः । पूर्वग्रन्थाविरोधायाह—**तिर्यगिति** । एवेन तदिष्टव्यावृत्तिः । तस्य तत्त्वे हेतुमाह—**तिर्यगिति** । यत इत्यादिः । **इत्युक्तेरिति** । इति पृथगुक्तेरित्यर्थः । ननु श्लोकवार्तिके 'प्रमाणे लः' इत्यस्य भिन्नखण्डत्वेनोत्तरखण्डप्रवृत्तेर्निर्बाधत्वेन तदुक्तिर्युक्तैवात आह—**द्विगोरिति** । ननु शमादीनां पुरुषतुल्यत्वेन कथं तत्त्वेन प्रसिद्धिरत आह—**शमादीनामिति** । शमशब्दो हस्तवाची 'पाणिः शमः शयो हस्तः' इत्यमरमालोक्तेः । 'पञ्चशाखः शयः पाणिः' इत्यमरकोशे शम इति पाठान्तरमिति क्षीरस्वाम्युक्तेश्च । आदिना अङ्गुल्यादीनां ग्रहणम् । **वस्तुनोऽपीति** । अत एव द्विशमी द्विशमेत्यादिरूपद्वयसिद्धिरित्याहुः ।

अन्यथा पुरुषद्वयसमित्यत्रापि लुक् स्यात्। स्पष्टं चेदं "पुरुषहस्तिभ्यामण् च" इति सूत्रे पदमञ्जर्याम्। न चैवं द्वयसज्दघ्नचावपि नास्मात्स्यातामिति वाच्यम्? 'ऊर्ध्वमाने मतौ मम' इति वचनात्। एवं "पुरुषात्प्रमाणे" इत्यस्यापि सामर्थ्यादेव प्रवृत्तिः। यत्तु तत्रैव सूत्रे 'द्विगोर्नित्यं लुक्' इति वृत्तिग्रन्थमुपादाय हरदत्तेनोक्तं 'तस्मादप्राप्त एवात्र लुग्विधीयते' इति; तदपि चिन्त्यम्, मुनित्रयानुक्तस्य विधानोक्तेर्न्याय्यत्वात्। यदपि प्राचीनप्रक्रियां व्याचक्षाणैरुक्तं "पुरुषहस्तिभ्याम्" इत्यत्र पठ्यमानेन वार्तिकान्तरेण लुगिति; तदपि रभसोक्तिमात्रम्, उदाहृतत्रस्य भाष्यवार्तिककाराभ्यामस्पृष्टत्वादित्यास्तां तावत्। वस्तुतस्तु "पुरुषात्प्रमाणे" इति सूत्रे द्विगोस्तद्धितलुकि इत्यनुवर्तते। तत्सामर्थ्याल्लुगप्याक्षिप्यते। हरदत्तोक्तिरपि कथंचिदेवंपरतयैव नेयेति सहृदयैराकलनीयम्। प्रमाणे किम्? द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा गौः। तद्धितलुकीत्येव। समाहारे पञ्चपुरुषी।

---

शब्दरत्नम्।

अन्यथेति। न च 'प्रमाणे ल' इत्यत्र "समर्थानां प्रथमाद्वा" इत्यतो वेत्यनुवृत्तेरुक्तप्रयोगसिद्धिः, आद्यपदयोरननुवर्तनेन वेत्यस्याप्यसम्बन्धात्। लुक् स्यादिति। शम इत्यादाविवेति भावः। सामर्थ्यादिति। तिर्यगवस्थितवस्तुपरिच्छेदकत्वेऽपि सामर्थ्यात्प्रमाणपदस्य परिच्छेदकमात्रपरत्वमिति भावः। लुगप्याक्षिप्यत इति। इदमपि वृत्त्याशयवर्णनमात्रम्। वस्तुतस्तु द्वौ पुरुषौ प्रमाणमस्या इत्यर्थे "तदस्य परिमाणम्"

भैरवी।

तत्त्वेन-तिर्यङ्मानत्वेन। अत एव 'वितस्तिर्द्वादशाङ्गुलः' इति प्रसिद्धिः। पुरुषशब्दस्य तु ऊर्ध्वाधरदिगवस्थितवस्तुमात्रपरिच्छेदकत्वेन क्वचिदपि न प्रमाणवाचकत्वम्। प्रयोगसिद्धिरिति। लुको वैकल्पिकतयोक्तप्रयोगसिद्धिः। आद्यपदयोः-समर्थानाम्प्रथमादित्यनयोः। तयोः प्रत्ययविधावुपयुक्तत्वेनायोग्यत्वादत्रासम्बन्ध इति भावः। असम्बन्धादिति। सन्नियोगशिष्टन्यायोऽत्र साधक इति भावः। दृष्टान्तप्रदर्शनेन कथितस्य दार्ढ्यम्भवतीत्याशयेनाह—शम इत्यादाविवेति। सामर्थ्यं स्पष्टयति—तिर्यगवेति। सामर्थ्यात्-तदुपादानसामर्थ्यात्। इदमपि—वस्तुतस्त्वित्यादिना मूलोक्तमपि। उपादानसामर्थ्यमेव नास्तीत्याह—वस्तुत इति। "आ-

भावप्रकाशः।

वस्तुतः आद्ये लुगप्राप्त्या द्विशमद्वयसीत्याद्येवेति बोध्यम्। तत्त्वेन-तिर्यङ्मानत्वेन। अत एव 'वितस्तिर्द्वादशाङ्गुलः' इति प्रयोगसिद्धिः। पुरुषशब्दस्य तु ऊरुशब्दादीनामिवोर्ध्वाधरदिगवस्थितवस्तुमात्रपरिच्छेदकत्वेन क्वचिदपि न प्रमाणवाचकत्वम्। एतेन "तत्पुरुषस्याङ्गुलेः" इत्यत्र वक्ष्यमाणरीत्या न्यासग्रन्थः सुयोज इत्यपास्तमिति भावः। आद्येति। समर्थानां प्रथमादित्यनयोरित्यर्थः। तयोः प्रत्ययविधावुपयोगेनात्रातथात्वादिति भावः। असम्बन्धादिति। सन्नियोगशिष्टन्यायादिति भावः। विशिष्टेऽर्थे पुरुषमिति बोधनेन साफल्याद्विधानसामर्थ्यं न शङ्क्यमिति ध्वनयन्नाह-शम इतीति। अपरीति। आयामलक्षणे तस्यैव ग्रहणस्योक्तत्वादस्य चोर्ध्वाधरदिगवस्थितवस्तुमात्रपरिच्छेदकत्वेनोन्मानत्वादिति भावः। सामर्थ्यात्-तद्विशेषणत्वासम्भवेनोपादानसामर्थ्यादित्यर्थः। इदमपीति। वस्तुतस्त्वित्याद्यपीत्यर्थः। मात्रपदेन स्वाभिमतत्वनिरासः। एतेन "पुरुषहस्तिभ्याम्" इत्यत्र निराकरिष्यमाणत्वादाक्षिप्यत इत्यन्तं मूलं चिन्त्यमिति खण्डनकृदुक्तमपास्तम्। तत्रैव बीजं ध्वनयन् सिद्धान्तमाह—वस्त्विति। आद्यादिति

"ऊधसोऽनङ्" ॥ नादेशेनैव सिद्धेऽनङ्करणं "धनुषश्च" इत्येदर्थम् ।

"दाम" ॥ बहुव्रीहिविशेषणत्वादेव सिद्धे अन्तग्रहणं स्पष्टार्थम् । संख्यादेरिति । स्वरितत्वबलादेकदेश एवानुवर्तत इति भावः ।

"केवलमामक" ॥ इत्यादीति । अद्ध्वर्य्यां मामकी तनू । मित्रावरुणयोर्भागधेयी । अनिषेव्यास्तन्वः सन्तु पापीः । उतापरीभ्यो मघवा विजिग्ये । समानीव आकूतिः । आर्यकृती । सुमङ्गली । सुमङ्गलीरियं वधूः । शिवा रुद्रस्य भेषजी ।

---

शब्दरत्नम् ।

इति ठकञौ वा "अद्ध्यर्द्ध" इति लुकि शास्त्रस्य चारितार्थ्यात् तदाक्षेपे न मानम् । तत्र हि परिमाणशब्देनोत्तरसूत्रानुरोधेन परिच्छेदकमात्रग्रहणमिति तत्त्वम् ।

नादेशेनेति । अत एव "ऊधसो नकारो लिङ्गाधिकारे" इति वार्तिककृतोक्तम् । एतेन लाक्षणिकत्वाद्व्यानो "अङ्लोरोऽन" इति न स्यात् । कुण्डोध्न्यादिभ्य आचारक्विप्यात्मनेपदार्थं च ङकार इत्यपास्तम् , अत्रत्यवार्त्तिकभाष्यप्रामाण्येनान्ग्रहणे प्रतिपदोक्तपरिभाषाया आचारक्विबभावस्य तदन्ते आत्मनेपदाभावस्य वा कल्पनात् ।

भैरवी ।

हात्" इति सूत्रे परिमाणम्पारिभाषिकमेवेत्याशयेनाह—ठक इति । उन्मानस्याग्रहणमिति मतेनाह—ठञ इति । उत्तरसूत्रेति । "सङ्ख्यायाः सञ्ज्ञासङ्घ" इति सूत्रेत्यर्थः । 'सङ्ख्या बाह्या तु सर्वतः' इत्युक्तेस्तद्वाचकस्यापरिमाणवाचकत्वात्सामानाधिकरण्यानुपपत्तिरन्यथा स्यादिति भावः । अत एव षष्टि जीवितपरिमाणमस्य षाष्टिक इत्यस्य सिद्धिः ।

मूलस्थपूर्वपक्षदार्ढ्यायाह—अत एवेति । नादेशेन सिद्धत्वादेवेत्यर्थः । एतेन—उक्तार्थस्य वार्तिककारसम्मतत्वेन । न स्यादिति । एतेनाकारोच्चारणस्य फलमुक्तम् । ङकारोच्चारणस्य फलमाह—कुण्डोध्न्यादिभ्य इति । एतेनेत्येतदर्थं स्पष्टयति—अत्रत्येति । अन्ग्रहण इति । अर्थवत्परिभाषावदिति शेषः । तङ्भावकल्पनमात्रेणोपपत्तौ क्विबभावकल्पनन्नोचितमित्याशयेनाह—आत्मनेपदेति । मूले—सुमङ्गलीरियमिति । अत्र सुमङ्गली इत्युदाहरणम्बोध्यम् । सुम-

भावप्रकाशः ।

सूत्रे परिमाणं पारिभाषिकमेवेति मतेनाह—ठक इति । उन्मानमपीति "असमास"इतिभाष्यस्वरसरीत्याह—ठञो वेति । एतेन मूलानुयायिरत्नाकरदण्ड्याद्युक्तमपास्तम् । ननु परिमाणग्रहणात्तस्यैवाप्राप्तिरत आह—तत्र हीति । "तदस्य" इति सूत्रे हीत्यर्थः । उत्तरेति । "सङ्ख्यायाः सञ्ज्ञासङ्घ" इति सूत्रेत्यर्थः । अत एव सङ्ख्यायास्तत्रानेन विशेषणे षष्टि जीवितपरिमाणमस्य षाष्टिक इति सिद्धम् । यत्तु खण्डनकृत् प्रकाशग्रन्थमनूद्यास्पृष्टत्वादित्यन्तं मूलोक्तमयुक्तम् , "एवे चानियोगे" इतिसूत्रोक्तरीत्या वृत्तिस्थवचनान्तरेणेति तदर्थात् । वृत्तौ हि तत्सूत्रे 'द्विगोर्नित्यं लुक्' इति पठ्यते , अप्राप्त एवात्र लुग्विधीयते इति मिश्रैरपि व्याख्यातमिति; तन्न, अक्षरमर्यादया तथार्थाप्रतीतेः मुनित्रयानुक्तत्वेनाप्रमाणत्वाच्चेति दिक् । तद्ध्वनयन्नाह—तत्त्वमिति ।

मूलस्थपूर्वपक्षं पोषयति—अत एवेति । नादेशेन सिद्धत्वादेवेत्यर्थः । अन्यथा 'अनङ् लिङ्गाधिकारे' इत्युक्तं स्यादिति भावः । मूलखण्डकरत्नाकरदण्ड्याद्युक्तिं खण्डयति—एतेनेत्यादि । नादेशपक्षे इति शेषः । एवमकारफलमुक्त्वा ङकारफलमाह—कुण्डोध्न्यादीति । तथा च मूलं चिन्त्यमिति भावः । एतेनेत्यस्यार्थमाह—अत्रत्येति । "बहुव्रीहेरूधसः" इत्यत्रत्योक्तवार्तिकतद्भाष्येत्यर्थः । अन्यथा तेनासिद्ध्या तयोर्निर्दलत्वापत्तिः स्पष्टैव । यथोक्तमुनिप्रामाण्यस्य प्रतिपादनीयत्वाद्वार्तिकशब्दस्य पूर्वनिपातः । अन्ग्रहणे इति । अर्थवत्परिभाषावदिति भावः । ननु तङाद्यभावकल्पनेन भाष्यवार्तिकोपपत्तौ क्विबभावकल्पने न मानमत आह—आत्मनेपदेति । आचारक्विबन्ते इत्यर्थः । स्फुटीभविष्यति चेदम्

प्रत्युदाहरणं त्विति । यत्तु प्राचाऽन्तर्वतो पतिवतीति प्रत्युदाहृतं, तदयुक्तमिति भावः । व्यस्ते कथमिति चेदिति । यत्तु प्राचा समस्तेऽप्युपचार इति वर्णितं, तन्मुधेति भावः ।

"पूतक्रतोरै च" ॥ ऐकार आदेशो न तु प्रत्ययः, उत्तरसूत्रे उदात्त इत्युक्तेः ।

न त्विति । अन्यथा—वृषाकपिशब्दो 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्त उदात्तत्वं प्रयोजयति । अग्न्यादिषु त्रिषु "स्थानेऽन्तरतम" इत्येव सिद्धमिति प्राचां ग्रन्था विरुध्येरन्निति भावः ।

उदात्तैकार इति । मनुशब्दो ह्याद्युदात्तः 'शॄस्वृस्निहि' इत्यादौ मनेरुप्रत्ययविधायके सूत्रे 'धान्ये नित्' इत्यधिकारात् । समासनिर्देशेनैतद्दर्शयति—उदात्त इत्यनुवर्त्तमानं सम्बन्धानुवृत्तेरैकारेणैव सम्बध्यते न त्वौकारेणापीति । ततश्च यदुक्तं प्राचा ऐकारौकारावुदात्तौ स्त इति, तदुपेक्ष्यं वृत्तिपदमञ्जर्यादिविरोधादिति भावः । मनायीति । मध्योदात्तम् । इतरद्द्वयमाद्युदात्तम् ।

---

शब्दरत्नम् ।

तदयुक्तमिति । अन्तर्वतीत्यत्र मतुपोऽप्राप्तेरिति भावः तन्मुधेति । "विभाषा सपूर्वस्य" इत्यस्यासम्बन्धात् । अतएवाऽऽशायाः पतिराशा पत्नीति तत्रोदाहृतं भाष्ये । आशापूरकत्वेन कस्याश्चित्पतित्वमिति भावः ।

इत्युक्तेरिति । प्रत्ययत्वे हि "आद्युदात्तश्च" इत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति भावः ।

न त्वौकारेणेति । ततश्च स आन्तरतम्यादनुदात्त एवेति भावः । इतरद्द्वयम्—

भैरवी ।

ङ्गलीरियमिति त्वीप्रत्ययान्तम्प्रसङ्गादुच्चारितम् । क्वचित्तु सुमङ्गली शिवेति पाठः । यदि तु सुमङ्गलीरित्येवोदाहरणमित्याग्रहस्तदा छान्दसत्वात्सुलोपाभाव इति बोध्यम् ।

अयुक्तत्वे हेतुमाह—मन्तरिति । ननु न तन्मुधा यज्ञसंयोगाभावादत आह—विभाषेति । अत एव—यज्ञसंयोग इत्यस्यं तत्रासम्बन्धादेव ।

तद्वैयर्थ्यम्—उदात्तशब्दोपादानवैयर्थ्यम् । ततश्च—मनुशब्दस्याद्युदात्तत्वेनान्त्यस्यानुदात्ततया च ।

भावप्रकाशः ।

"उगवादिभ्यो यत्" इत्यत्र टीकायाम् ।

साध्यस्य हेतुसाकाङ्क्षत्वेन तदभावजन्यूनतां निराचष्टे—अन्तरिति । अधिकरणशक्तिप्रधानतयाऽस्तिसामानाधिकरण्याभावादिति भावः । अप्राप्तेरिति । पतिवतीत्यत्र वत्वाप्राप्तेश्चेत्यपि बोध्यं, नुक्सन्नियोगेनार्थविशेषे एव तथा प्रकृतिभागयोर्निपातनात् । स्पष्टं चेदं भाष्यादौ । एतेन परिग्रहवाच्यन्तःशब्द आधेयप्रधानोऽप्यस्तीति ततो मतुपि अन्तर्वतीति प्रक्रियोक्तप्रत्युदाहरणं युक्तमिति प्रसादोक्तमपास्तम्, आधेयप्रधानत्वे मानाभावात्, मध्ये इत्यर्थस्य भाष्यादौ दृष्टत्वाच्चेति दिक् । इदमेव ध्वनयितुं तत्रैव हेतुरुक्तष्टीकायाम् । पूर्ववदाह—विभाषेति । अप्राप्तविभाषात्वादिति समस्तेष्टसिद्धिरिति भावः । असम्बन्धादिति । भाष्ये "कथं तुषजकस्य पत्नी"इतिव्यस्ते एव प्रश्नादिति भावः । अत्र गमकान्तरमाह—अत एवेति । तदसम्बन्धादेवेत्यर्थः । तत्र—"विभाषा" इति सूत्रे । ननु तृष्णारूपाऽऽशास्वामित्वस्य क्वाप्यसम्भवोऽत आह—आशेऽति । दिक्स्वामित्वं तु स्त्रियामप्रसिद्धमिति भावः ।

तद्वयर्थ्यम्—उदात्तपदवैयर्थ्यम् । अर्थाधिकारानुरोधाच्च पूर्वसूत्रेऽप्यादेशत्वमिति भावः ।

फलितमाह—ततश्चेति । सः—औकारः ।

एता-कर्बुरा । वर्णानामिति । एतः, शोणः, शितिः, पृश्निः, पृषत् इत्युदाहरणानि । त्र्येण्येति । अत्र उत्तरपदस्योपसर्जनत्वेऽपि समस्तस्य अनुपसर्जनत्वमिति भावः । सञ्ज्ञात्वाण्णत्वं छान्दसत्वाद्वा । क्रमेके इति । अत्र छन्दसीति भाष्योक्तेर्लोके 'गतो गणस्तूर्णममसिक्निकानाम्' इत्यादिप्रयोगाः प्रामादिका इति प्राञ्चः । वस्तुतस्तु छन्दस्येके इत्यन्वयात् भाषायामपि इति भाष्याभिप्रेतम् । अन्यथा एकग्रहणं न कुर्यात् । न हि छन्दसि 'पलिक्नीरियुवतय' इत्यादिप्रयो-

---

शब्दरत्नम् ।

सनावी सनुरित्येतत् ।

समस्तस्येति । एत च गृह्यवृत्त्यनुसारेणोक्तम् । "टिड्ढाणञ्" इत्यादाविवात्रापि गृह्यमाणविशेषणत्वमेवेति "उपमानानि" इति सूत्रभाष्यसंमतपक्षे त्रिषु स्थानेषु एनी त्र्येणीति बोध्यम् । छान्दसत्वाद्वा ङीप् । तद् ध्वनयन्सञ्ज्ञात्वानङ्गीकारे आह—छान्दसत्वाद्वेति । ङीप् णत्वं चेति शेषः । प्राञ्च इति । कैयटादय इत्यर्थः । छान्दसेषु सूत्रेषु वाग्रहणवदिदमेके इत्यपीति तेषां भावः ।

भैरवी ।

एतच्च—समासात्मकसमुदायस्यानुपसर्जनत्वस्य प्रदर्शनञ्च । गृह्यवृत्त्यनुसारेणेति । तत्र हि नारायणेन बहुव्रीहिङ्कृत्वानेन ङीबित्युक्तम् । भाष्यसम्मत इति । तत्र हि "शस्त्री श्यामा इत्यत्र श्यामाशब्दः शस्त्र्यामेव वर्तते । उपमेयन्तु समासवाच्यमिति पक्षे, शस्त्री श्यामो देवदत्त इत्यत्र ह्रस्वत्वन्न सिध्यति । यद्युपसर्जनह्रस्वत्वन्तदा कुम्भकपाललोहिनीत्यत्रानुपसर्जनलक्षण ईकारो न प्राप्नोति" इत्युक्तम् । त्रिषु—एनीत्यत्र सुप्सुपेति समासः । सुप्सुपेति समासकल्पनस्यागतिकगतित्वादाह—छान्दसत्वादिति । आर्षत्वादित्यर्थः । असञ्ज्ञात्वादाह—णत्वञ्चेति । यदि त्वस्य सञ्ज्ञारूपत्वन्तदा छान्दसत्वं ङीबंशे एव हेतुः । वस्तुतस्त्वित्युक्तरीत्या कैयटमते एक इत्यस्य वैयर्थ्यम्प्राप्नोतीत्यतः कैयटाद्याशयमाह—छान्दसेष्विति । तेषाम्—कैयटादीनाम् ।

भावप्रकाशः ।

यथाश्रुतमूलासङ्गतेराह--एतच्चेति । "अनुपसर्जनात्" इत्यस्य तदन्तप्रातिपदिकविशेषणत्वमत्रेत्येवंपरं मूलं परममूलं चेत्यर्थः । गृह्यवृत्तीति । तत्र हि नारायणेनात्र बहुव्रीहिं कृत्वा तेन ङीबित्युक्तम् । तत्र बीजं ध्वनयन्सिद्धान्तमाह--टिड्ढेति । मेवेति । अन्यथा तदानर्थक्यमुक्तमेवेति भावः । भाष्येति । तत्र हि "शस्त्रीश्यामेत्यादौ श्यामा शब्दः शस्त्र्यामेव उपमेयं तु समासवाच्यमिति पक्षे, शस्त्रीश्यामो देवदत्त इत्यत्र ह्रस्वत्वं न सिध्यति । यद्युपसर्जनस्येति ह्रस्वत्वं तदा कुम्भकपाललोहिनीत्यत्राऽनुपसर्जनलक्षण ईकारो न प्राप्नोति"इत्युक्तम् । त्रिषु स्थानेषु । सप्तमीति योगविभागात् सुप्सुपेति वा समासः । एतेनोक्तरीत्या मूलादि चिन्त्यमिति खण्डनकृदुक्तं मूलवद्रत्नाकरदण्ड्याद्युक्तं चापास्तम् । नन्विदमपि चिन्त्यम्, आद्यस्य भाष्यानारूढत्वादन्त्यस्याऽगतिकगतित्वात्, णत्वार्थं तस्यावश्यकत्वाच्च, तथार्थस्य तत्रासम्भवाच्चात आह--छान्दसत्वादिति । आर्षत्वादित्यर्थः । तथोक्तिस्तु मूलानुरोधात् । तथा च तद्रीत्या बहुव्रीहावपि आर्षत्वात् ङीप्नकारौ । एवं च मूलं तदनुसारीति युक्तमेवेति भावः । अनङ्गीकारे इति । तथा च "पूर्वपदात्" इत्यस्याप्राप्तेस्तत्त्वमावश्यकमिति भावः । चेन नत्वस्यापि समुच्चयः । शेष इति । तथा च सञ्ज्ञात्वाण्णत्वमिति पूर्वशेषः । छान्दसत्वाद्वेति तूभयापेक्षया विकल्पबोधको न तु णत्वमात्रस्य । अत्रापि पक्षे प्रागुक्तं मूलं परममूलं च तदनुसार्येवेति बोध्यम् । मूलकृदनभिमतस्य प्राञ्च इत्युक्तस्य मतस्य सिद्धान्तत्वं ध्वनयितुमाह-कैयटेति । वस्तुतस्त्वित्याद्युक्तयुक्तिं खण्डयति-छान्दसेष्विति । तेषाम्—कैयटादीनाम् । अत एव वस्तुतस्तु इत्यादिना

गेषु कश्चिद्विप्रतिपद्यते। विशुद्धवाचीति। दैप् शोधने इति स्मरणात्। 'अवदात्तः सितो गौर' इति कोशे तु विशुद्धत्वसाधर्म्यात् प्रयोग उपनिबद्ध इति भावः।

लघाविति। अन्ते एकस्मिन् लघौ, द्वयोश्च लघ्वोः परतो बह्वषो—बह्वच्कस्य गुरुरुदात्तः स्यात्। अष् इति अचः प्राचां संज्ञा। कृष्णेति। 'कृषेश्च' इति नप्रत्यये 'कपेश्च' इति सौत्राद्धातोरौणादिके इलचि च कृष्णकपिलावन्तोदात्तौ।

"षिद्गौरादिभ्यश्च" ॥ श्वन्शब्दोऽत्र पठ्यते। तेन "ऋन्नेभ्यो ङीप्" इत्यत्र यत्प्राचा शुनीत्युदाहृतं, तत्प्रामादिकम्। यत्तु व्याचक्षते—श्वानमाचष्टे श्वेवाचरतीति वाऽर्थे णिचः क्विपो वा कौ उपसर्जनत्वात् ङीषभावे निःशुनीत्यादिवत् ङीबिति; तन्न, णिचि सम्प्रसारणटिलोपयोरुक्तं रूपं मुख्यमते दुर्लभम्।

---

शब्दरत्नम्।

नप्रत्यये इति। दशपाद्यनुसारेणेदम्। तत्र हि नप्रत्ययप्रकरणे "तृषिशुषिरसिकृषेश्च कित्' इति, इलच्प्रकरणे 'कपेश्च' इति पठितम्। कपिः सौत्र इति चोक्तम्। पञ्चपाद्यां तु 'कृषेर्वर्णे' इति नक्प्रत्ययः, 'कमेः पश्च' इति इलजित्युक्तम्।

पठ्यत इति। इदं चासिद्धवत्सूत्रे भाष्ये स्पष्टम्। उक्तं रूपमिति। नान्तं रूपमित्यर्थः। णिचि "नस्तद्धिते" इति टिलोपे तदभावः स्पष्ट एव। न च "नस्तद्धिते" इति टिलोपो नेष्ठवद्भावेन "टेः" इति तु "प्रकृत्यैकाच्" इति निषिद्धमिति वाच्यम्?

भैरवी।

तत्र हि—दशपाद्यां हि। "षिद्गौरादिभ्यश्च" अस्मिन्गणे गवयादीनामपि पाठ इति कस्यचिन्मतन्तन्न युक्तं, "जातेरस्त्री" इति सूत्रे 'योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेध' इति वार्तिकविरोधादिति कैयटः। एवञ्चात्र "सूर्यतिष्य" इति सूत्रस्य लेखो गौरादिषु मत्स्यशब्दस्य पाठभ्रमादिति बोध्यम्।

उक्तं रूपमित्यस्य शुनीतिरूपमिति नार्थः ङीप एवाप्राप्तेरत आह—नान्तमिति। एवञ्च नान्तत्वाभावेन "ऋन्नेभ्यो" इत्यस्य न प्राप्तिरिति भावः। एतदेवोपपादयति—णिचीत्यादिना। तदभावः—नान्तरूपाभावः। खण्डनकारोक्तिन्निरस्यति—न चेति। नेष्ठवद्भावेनेति। यदिष्ठनि दृष्टन्तस्यातिदेशो ह्यनेन क्रियते, "नस्तद्धिते" इति टिलोपस्तु न दृष्टः "टेः" इत्यस्यैव प्रवृत्तेः परत्वाद् ब्रह्मिष्ठ इत्यादौ दर्शनात्। निषिद्धमिति। प्रकृतिभावे हि तस्याप्रवृत्तिर्भवतीति निषेधफलसम्पत्त्या निषिद्धमित्युक्तम्। न च प्रकृतिभावेनैव "नस्तद्धिते" इत्यस्यापि प्रवृत्त्यभावे सिद्धे "नस्तद्धिते" इति न दृष्ट इति हेतूपन्यासोऽयुक्त इति वाच्यम्,

भावप्रकाशः।

उक्तव्याख्यानं भाष्यानभिमतम्। तस्माद्वस्तुतस्त्वित्यादिमूलं तथा प्रकाशरत्नाकरदण्ड्याद्युक्तं चायुक्तमित्युक्तप्रयोगोऽसाधुरेव। अत एव भाष्ये तु "छान्दसमेतत्" इति स्थितमिति प्रकाशोक्तिः सङ्गच्छते।

उणादौ स्वयं नक्प्रत्ययोक्त्या कम्धातूक्त्या च विरुद्धत्वान्मूलं चिन्त्यमिति खण्डनकृदुक्तिखण्डनायाह—दशेति। एतेन तथा दण्ड्युक्तमपास्तम्। तत्र हि—दशपाद्यां हि। इति च पठितमितिपाठः।

पाठे मानमाह—इदञ्चेति। तेन वैपरीत्यशङ्का निरस्ता। उक्तं रूपमित्यस्य शुनीति रूपमिति नार्थः, मूले कुठारेण ङीपोऽप्राप्तेरत आह—नान्तमिति। "ऋन्नेभ्य" इत्यत्र निमित्तत्वेनोपात्तमिति भावः। तदुपपादयति—णिचीति। तदभावः—नान्तरूपाभावः। खण्डनकृदुक्तिं खण्डयति—न चेति। नेष्ठवदिति। इष्ठनि तस्याऽदृष्टत्वात्, ब्रह्मिष्ठ इत्यादौ परत्वात् "टेः" इत्यस्यैव प्रवृत्तेरिति भावः। निषिद्धमिति। येन नाप्राप्यनन्तरस्येति न्यायाभ्यामिति भावः। एवं च प्रकृतिभावाट्टिलोपाऽसम्भ-

## शब्दरत्नम् ।

अस्य मतस्य नामधातौ दूषयिष्यमाणत्वात्। तद् ध्वनयतोक्तम्-**मुख्यमते इति** । "नस्त द्धिते" इत्यस्यापि प्रकृतिभाव इति "षपूर्व" इति "प्रकृत्यैकाच्" इति सूत्रभाष्ये ध्वनि-तत्वेन पूर्वं टिलोपाभावेऽपि सम्प्रसारणे 'वार्णादाङ्गम्' इति पररूपात्पूर्वं टिलोप इति

## भैरवी ।

येन नाप्राप्तिन्यायेन प्रकृतिभावस्य "टेः" इति सूत्रबाधकत्वस्यैव निर्णयात्। एवञ्च प्रकृति-भावाट्टिलोपासम्भवान्नान्तस्य लाभ इति मूलं चिन्त्यमिति तदाशयः। अस्य मतस्य-प्रकृति-भावस्य "टेः" इति सूत्रमात्रबाधकत्वमिति मतस्य। यदि प्रकृतिभावष्टेरित्यस्यैव बाधक-स्तदा नैकाजित्येव सिद्धे प्रकृत्येत्येतदुपादानस्य वैयर्थ्यमिति भावः। प्रकृतिभावस्य सर्वबा-धकत्वादेव "अल्लोपोऽनः" इत्यल्लोपोऽपि तद्विषये नेतिप्रतिपादितम्। प्रकृत्येत्येतदुपादान-सामर्थ्यात्तद्विषये न्यायाप्रवृत्तिरित्याशयः। अत एवाह—नस्तद्धित इत्यस्यापीति। अपिना टिलोपसामान्यसङ्ग्रहः। षपूर्वेतीति। तत्र हि "किमिदं षपूर्वादीनाम्पुनर्वचनमल्लोपार्थमा-होस्विन्नियमार्थम्। कथं वा अल्लोपार्थम्? कथं वा नियमार्थम्? यद्यविशेषेणाल्लोपटिलो-पयोः प्रकृतिभावस्ततो विध्यर्थम्। अथ हि अणि टिलोपस्यैव प्रकृतिभावस्ततो नियमा-र्थम्" इति भाष्ये उक्तम्। तत्र कैयटः—"प्रकृत्यैकाच्" इत्यादिः प्रकृतिभावः प्राकरणिकानि कार्याणि भेदेनापेक्षयेरन्नभेदेन वेति पक्षद्वयोपपत्तिरित्याह—अविशेषेणेति। अल्लोपटिलोपस-मुदायमपेक्ष्य प्रकृतिभावो विधीयते। भेदेनेत्यनेन बाध्यविशेषचिन्तोक्ता। तदा 'अनन्तरस्य' इति न्यायाट्टिलोपस्यैव प्रकृतिभाव इति पक्षः। अस्मिन्पक्षे "अल्लोपोऽनः" इति सिद्धे नियमार्थम्। यदि बाध्यसामान्यचिन्ता तदा प्रकृतिभावस्य सर्वबाधकतयाऽल्लोपस्यापि प्रकृ-तिभावेन निवृत्तौ प्राप्तायां विध्यर्थमिदं सूत्रम्। अत्र भाष्ये अल्लोपटिलोपयोरिति बाध्य-सामान्यचिन्ताभिप्रायेणोक्तन्तदा "नस्तद्धिते" इत्यस्यापि प्रकृतिभावेन निवृत्तिरिति युक्त-मेव। अत एव नैकाजिति नासूत्रि। प्रकृत्यैकाजितीति। तत्र हि "प्रकृत्यैकाच्" इति किमिष्टे-मेयस्तु आहोस्विदविशेषेण? किन्त्वतः, यद्यविशेषेण स्वी खी शौवम् अधुना अत्रापि प्राप्नोति, तद्धितसामान्ये प्रकृतिभावविधानात्। "अत इनिठनौ" इति स्वखशब्दयोरिनौ प्रकृतिभावे सति "यस्येति" लोपाप्रसङ्गः। शौवमित्यत्र शुनो विकारावयवयोः प्राण्यञि कृते "नस्तद्धित" इति टिलोपो न प्राप्नोति। अधुनेत्यत्र इदमः इशादेशोऽधुना प्रत्ययश्चेति यदा प्रक्रिया तदा "यस्येति" लोपाप्रसङ्ग इति पूर्वपक्षे,

'एकाक्षरात्कृतो जातेः संख्यायाञ्च न तौ स्मृतौ'॥

इत्यनेन स्विखिनोरनभिधानम्प्रतिपाद्य शौवमित्यस्य श्वन्शब्दादञि द्वारादित्वादैजाग-मस्य टिलोपस्य च प्राप्तौ परत्वादैजागमे प्रकृतिभावस्याप्राप्तौ 'पुनःप्रसङ्गविज्ञानात्' टिलो-पस्य प्रवृत्त्या सिद्धिमुक्त्वा अधुनेत्यत्र सम्प्रत्ययकस्य स्थाने निपातनङ्क्रियते इत्युक्त्वा तस्य सिद्धिरुक्ता। तत्रान्यथासिद्धिप्रदर्शनेन सूत्रस्य प्रत्याख्यानेप्यारम्भपक्षे प्रकृतिभा-वस्य "नस्तद्धिते" इति टिलोपबाधकत्वं शौवमित्युदाहरणप्रदर्शनेन ध्वनितमित्यर्थः।

## भावप्रकाशः ।

वाच्च रूपसौलभ्यात् मूलं चिन्त्यमिति तात्पर्यम्। तन्मतमेव तदसिद्धिसहितमाह—**नस्तेति**। **भाव इतीति**। अग्रेऽस्येति शेषः। **सूत्रभाष्ये इति**। जातावेकवचनं तयोरित्यर्थः। तत्राद्ये प्रकृतिभावस्य-"अल्लोपोऽनः"इत्येतद्बाधकत्वमयुक्तम्। नैकाजित्येव सिद्धे प्रकृतिग्रहणेन तद्विभायके न्यायाप्रवृत्तिर्बोधिता-च। अन्त्ये "नस्त" इत्यस्य "टेः"इत्यपेक्षया परत्वमित्यर्थः सूचितः। **सम्प्रसारणे इति**। नित्यत्वात्

अन्यत्र तु आस्तां कथंचित् ।

**आवपनं चेदिति** । ओप्यते निक्षिप्यते धान्यं यस्मिन् । **गोणान्येति** । यस्या याहच्छिकं नाम । **अकृत्रिमेति** । यथा—"सैषा स्थली यत्र विचिन्वता त्वाम्" इति । **स्थलान्येति** । कृत्रिमा–पुरुषेण संस्कृता । यथा–स्थल्योदकं परिगृह्णन्ति । श्राणा–पक्का । **अयोविकार इति** । फाल इति प्रसिद्धः । **कुशान्येति** । छन्दोगाः स्तोत्रियागणनार्थान् औदुम्बरान् शङ्कून् कुशा इति व्यवहरन्ति । "अतः कृकमि" इति सूत्रे "हानौ तूपायनेति" व्याससूत्रे "कुशा वानस्पत्या स्थ तामा पात" इति श्रुतौ च प्रसिद्ध एवायम् ।

**पतिंवरेति** । तथा च पाणिग्रहणोत्कण्ठाभिधायित्वाद् गुणवचनोऽयमिति भावः ।

---

### शब्दरत्नम् ।

**तस्य दौर्लभ्यम्** । तदुक्तं-सम्प्रसारणटिलोपयोरिति । **अयन्त्र**—क्विबन्तात् कौ "अनुनासिकस्य" इति दीर्घेऽपि एकदेशविकृतन्यायेनाऽन्त्वमिति सम्प्रसारणं भवतीति भावः । **कथं चिदिति** । अनेनारुचिः सूचिता । तद्बीजमेषामनभिधानम् । अन्यथा "अनुपसर्जनात्" इति सूत्रस्य तदन्तविधिज्ञापकता भाष्योक्ता भज्येत । किं चाचक्षाणकर्त्रादिरूपार्थस्यापि श्वशब्दार्थत्वेन तस्यानुपसर्जनत्वादस्त्येव ङीषः प्राप्तिः । अभिव्यक्तेति न्यायस्तु पदकार्यविषय एवेति भावः ।

### भैरवी ।

तस्य–नान्तरूपस्य । तदुक्तमिति । तदेतदभिप्रेत्योक्तमित्यर्थः । एकदेशविकृतन्यायेनेति । स्थानिवद्भावेनेत्यर्थः । अनेन–कथञ्चिदित्युपादानेन । एषाम्–क्विबन्तात् क्विबन्तानाम् । भज्येतेति । यद्यस्याभिधानं स्यात्तदैतद्वारकतया तदधिकारस्य प्रकृतसूत्रे चरितार्थतया वैयर्थ्याभावेन ज्ञापकता भज्येतेत्यर्थः । अभिधानमभ्युपेत्याह–किञ्चेति । आचक्षाणकर्त्रादिरूपार्थस्य–आचक्षाणरूपो यः कर्त्रादिरूपोऽर्थस्तस्य । श्वशब्दार्थत्वेनेति । 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन श्वन्शब्देनैव श्वकर्मकाख्यानकर्तुः प्रतिपादनादिति भावः । एवञ्च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येनोपसर्जनत्वान्ङीषभाव इत्युपादानं विरुद्धमिति तात्पर्यम् । नन्वभिव्यक्तेतिन्यायेनैतादृशस्य श्वन्शब्दस्य गणपठितशब्देन बोधनेऽपि ततो ङीष् न भविष्यतीत्यत आह–अभिव्यक्तेतीति । "ह्रस्वनद्यापः" इति सूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारे क्विबभावाच्चेदृशानामनभिधानमित्यपि बोध्यम् ।

### भावप्रकाशः ।

**वृद्धेः** प्रागिति भावः । **तस्य**–नान्तरूपस्य । **तदुक्तम्**–तदेतदभिप्रेत्योक्तम् । रत्नाकरोक्तिं खण्डयति–**अनुनेति** । **न्यायेन**–शास्त्रीयेन । कथञ्चिदित्यनेन "अनुना" इति दीर्घापत्त्योक्तरूपासिद्धिरिति बोधितमिति मान्यास्तत्तथा तत्सिद्धेरुक्तत्वादत आह—**अनेनेति** । **एषां**—क्विबन्तानाम् । **अन्यथा**—तदङ्गीकारे । **भज्येतेति** । तथा च तदेव स्त्रियां तदनभिधाने मानमिति भावः । अभिधानमभ्युपेत्यापि दृष्टान्तवैषम्यात्प्रकाशोक्तिरयुक्तेत्याह—**किञ्चेति** । आचक्षाणरूपो यः कर्तेत्यर्थः । **तस्य**—श्वन्शब्दस्य । **अनुपसर्जनत्वात्** । शास्त्रीयलौकिकोपसर्जनत्वाभावादित्यर्थः । दृष्टान्ते प्रधानबोधकपदान्तरसत्त्ववदत्राऽभावादिति भावः । **पदकार्येति** । प्रतिपादितमिदमधस्तात् । एतेन यस्या याहच्छिकं नामेत्युत्तरग्रन्थोऽपि व्याख्यातप्रायः । **एवेतीति** पाठः । तदग्रे **भाव** इति तु लेखकप्रमादात् । किञ्च हलन्तेभ्य आचा-

"बह्वादिभ्यश्च" ॥ बहुशब्दस्य गुणवाचित्वात् पूर्वेण सिद्धे उत्तरार्थं ग्रहण-मित्याहुः। वस्तुतस्तु बहुशब्दो "नित्यं छन्दसि" इत्युत्तरसूत्रं चेति द्वयमपि

शब्दरत्नम् ।

इत्याहुरिति । अत्रारुचिर्बीजं त्वाकडारसूत्रस्थभाष्यविरोधः । तत्र हि समस्तकृदन्त-तद्धितसर्वनामजातिसंख्यासञ्ज्ञाशब्दातिरिक्तप्रातिपदिकमात्रस्य गुणवचनसंज्ञा कृता । बहु-शब्दश्च संख्या । अत्रार्थे बहुग्रहणमपि मानम् । 'सत्त्वे निविशते' इत्यादि गुणलक्षणमपि त-

भैरवी ।

मूले-उत्तरार्थमिति । "नित्यञ्छन्दसि" इति सूत्रार्थमित्यर्थः । अत्रेति । आहुरिति कथने । अतिरिक्तप्रातिपदिकमात्रस्येति । तत्र हि "कानि पुनरस्य योगस्य प्रयोजनानि" इत्युपक्रम्य "बाध्या बाधिकाश्च सञ्ज्ञा दर्शिताः । तन्मध्ये या याः परा अनवकाशाश्च तास्ताः पूर्वाः सा-वकाशाश्च बाधन्ते" इत्युक्त्वा "अर्थवत्प्रातिपदिकं गुणवचनञ्च—गुणवचनसञ्ज्ञकञ्च भवत्य-र्थवत्" इत्युक्तम् । अत्र चकारोपादानेन प्रातिपदिकगुणवचनसञ्ज्ञयोः समावेशो दर्शितः । ततः समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गाजातिरिति क्रमेण दर्शिताः । तत "एतच्च वक्त-व्यम्" इत्युक्त्वा "संख्या-संख्यासञ्ज्ञा वक्तव्या । डु च—डुसञ्ज्ञा वक्तव्या । का पुनर्डु-सञ्ज्ञा ? षट्सञ्ज्ञा, एकद्रव्योपनिवेशिनी सञ्ज्ञा इत्येतच्च वक्तव्यम् । किमर्थमिदमुच्यते ? यथान्यास एव—भूयिष्ठाः सञ्ज्ञाः क्रियन्ते । सन्ति चैवात्र काश्चिदपूर्वाः सञ्ज्ञाः । अपि च एतेनानुपूर्व्येण सन्निविष्टानाम्बाधनं यथा स्यात् । गुणवचनसञ्ज्ञायाश्चैताभिः सञ्ज्ञाभि-र्बाधनं यथा स्यात्" इत्युक्तम् । एवं क्रमेण बाध्यबाधकभावे पाणिनेरपि सम्मतिमाह—अत्रार्थे इति । न चैवं सति राजपौरोहित्यादौ समाससञ्ज्ञया गुणवचनसञ्ज्ञाया बाधात्कथं ष्यञिति वाच्यम् ? ब्राह्मणादित्वात । ननु बहुशब्दस्य "वोतो गुणवचनात्" इति सूत्रभाष्योक्तगुण-लक्षणाक्रान्तत्वाद् गुणवचनत्वमस्त्येवेत्यत आह—सत्त्व इति ।

'सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः' ॥

इतिगुणलक्षणमप्याकडारसूत्रस्थगुणवचनलक्षणैकवाक्यतापन्नमिति सङ्ख्यासञ्ज्ञयाऽस्या गुणवचनसञ्ज्ञाया बाधः स्यादेवेति भावः । सत्त्वे निविशते-द्रव्ये निविशते-प्रवर्तते, अपैति-द्रव्यस्य सत्त्वेऽपि नाशो भवति । एताभ्यां विशेषणाभ्यां सञ्ज्ञाया जातेश्च निरासः । न हि संज्ञा जातिश्चाश्रयस्य द्रव्यस्य सद्भावेऽपि रक्तादिशब्दवाच्यवत्कदाचित्प्रवर्त्तते कदाचिन्नेति । पृथग्जातिषु दृश्यते—जात्याश्रयेषु पृथग्भिन्नोऽभिन्नश्च शब्दो दृश्यते । एतेन सर्वनाम्नो

भावप्रकाशः ।

रक्विबभावस्य "ह्रस्वनद्याप" इति सूत्रे भाष्ये स्पष्टत्वादित्यपि बोध्यम् । तद्धितान्तेति पाठः । अति-रिक्तेति । प्रातिपदिकमात्रस्य तत्सञ्ज्ञामुक्त्वाऽग्रे एताः सञ्ज्ञास्तद्बाधकत्वेनोक्ता इति भावः । तदर्थे पाणिन्यभिमतत्वमप्याह—अत्रार्थे इति । ऐक्यं राजपौरुष्यमित्यादौ तु ब्राह्मणादित्वात् ष्यञिति भावः । ननु तद्गुणवचनसंज्ञाभावेऽपि "वोतो गुण" इति सूत्रोक्तगुणलक्षणाक्रान्तत्वात्तस्य तत्त्वमस्त्ये-वात आह—सत्त्वे इति । तदेकेति । "आकडार"सूत्रस्थगुणवचनलक्षणैकेत्यर्थः । सा चेत्थं 'सत्त्वे

सरला ।

सत्त्वे निविशते इत्यादीति । "वोतो गुणवचनात्" इति सूत्रे भाष्ये—

सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥

इति गुणलक्षणमुक्तम् । तस्यार्थः—सत्त्वे द्रव्ये निविशते सम्बध्यते, अपैति ततो निवर्तते, पृथग् भिन्नासु जातिषु जात्याधारेषु अर्थात् भिन्नजातीयेषु द्रव्येषु दृश्यते च यः, स गुणः, यथा शुक्लादिः । स हि घटादौ यस्मिन् सम्बध्यते, तत एव च पाकादिना निवर्तते, भिन्नजातीयेषु पयःशङ्खादिषु दृश्यते च । अनेन जातेर्गुणत्वनिरासः । घटत्वादिजातिर्हि यस्मिन् घटादौ सम्बध्यते न तं कदाचिज्जहाति, न च भिन्नजातीयेषु पटादिषु दृश्यते । एवं सति क्रियायां गुणत्वं प्रसज्यते । तस्या अपि घटादौ कदाचिदुप-

ऽयर्थमेव, सर्वविकल्पानां छन्दसि व्यवस्थितत्वात्।

पुंयोगादिति। तथा च गौणी वृत्तिरिति भावः। यदा तु मुख्यार्थात् "तस्येदम्" इत्यण् तदा 'गोपी'इत्येव भवति। पुंयोगश्चेह दाम्पत्यभाव एव गृह्यत इत्येके। वस्तुतस्तु सङ्कोचे मानाभावाज्जन्यजनकभावोऽपि गृह्यते। तथा च भट्टिः—

## शब्दरत्नम्।

देकवाक्यतापन्नमित्यन्यत्र प्रपञ्चितम्। ऽयर्थमेवेति। उत्तरार्थमिति वदतां मते इति शेषः।

गौणी वृत्तिरिति। लक्षणयेत्यर्थः। न त्वेषा गौणी, सादृश्यसम्बन्धमूलकलक्षणाया

## भैरवी।

निवृत्तिः। यथा शुक्लादिगुणतौल्येऽपि गोत्वाश्रये शुक्ल इत्येवाश्वे तु कर्क इति व्यवह्रियते, नैवं सर्वनामशब्दाः। एवञ्जातिरूपं यद् द्रव्यत्वन्तद्वाचकस्य द्रव्यशब्दस्य घटपटादिषु विभिन्नजातीयेषु प्रवृत्तिदर्शनेऽपि कदाचिदपैतीत्येतन्नास्ति तेन तस्यापि निरासः। आधेयः—यत्नेन निष्पाद्यः। यथा रक्तादिगुणा आश्रयसद्भावेऽपि यत्नेन निष्पाद्या भवन्ति। एतेन संख्याया निरासः। अक्रियाजश्चेत्यनेन कृदन्तनिरासः। क्रियाबोधकधात्वर्थवाच्यार्थप्रवृत्तिनिमित्तकत्वम्पाचकादिशब्दानामिति तेषां क्रियाजत्वं प्रसिद्धमेव। सोऽसत्त्वप्रकृतिरित्यनेन सत्त्ववाचकप्रकृतिभिन्न इत्यर्थकेन समासतद्धितान्तयोर्निरासः। यद्वाऽद्रव्यस्वभाव इति तदर्थः। यथा द्रव्यस्याऽसमवायिकारणसंयोगनिवृत्तेर्नाशस्तथा यो न भवति स इति। अन्यत्र—भाष्यप्रदीपोद्द्योते। प्रपञ्चितमिति। यथासम्भवं विशेषणानां सार्थक्यमुपपाद्य तस्य लक्षणस्यैकदेशयुक्तित्वङ्कथितमित्यर्थः। तथा हि—आधेयश्चाऽक्रियाजश्चेत्येव लक्षणं कार्यम्। आधेय इत्यनेनाऽनित्यत्वस्याऽक्रियाजश्चेत्यनेन नित्यत्वस्य लाभे सति नित्याऽनित्यवृत्तिजातिमत्त्वमित्येव वक्तव्यम्, न चैवन्तादृशसत्ताजातिमत्त्वं क्रियायामपि वर्तत इत्यतिव्याप्तिरिति वाच्यम्, द्रव्याऽवृत्तित्वेनापि जातेर्विशेषणात्। एतेनैव सर्वगुणसंग्रहे 'सत्त्वे निविशते' इत्याद्युक्तिर्विफलेति तद्भाष्यमेकदेशयुक्तिः। अत एव तथापाठोत्तरन्तेषां विशेषणानां व्याख्यानेन सार्थक्यन्न प्रदर्शितम्भगवता। न्यूनतापरिहारायाह—उत्तरार्थमितीति।

## भावप्रकाशः।

निविशतेऽपैति'इत्याद्यपादेन संज्ञाजात्योर्निरासः। न हि तयोः शब्दयोर्द्रव्ये सत्येव कदाचिद्रक्तादिशब्दवद्वाचकत्वेन प्रवृत्तिः कदाचिन्नेति भवति। जातिषु पृथक्—जात्याश्रयेषुभिन्नोऽभिन्नः शब्दो दृश्यते इत्यर्थकेन द्वितीयपादेन सर्वनाम्नो निरासः। यथा शुक्लादिशब्दास्तुल्ये तद्गुणे गवि शुक्ल इति अश्वे कर्क इति, नैवं तस्य शब्दस्य नियतविषयत्वम्। संख्यावारणाय आधेयश्चेति। यत्नेन आधेय इत्यर्थः। न हि सङ्ख्या रक्तादिगुणवत् द्रव्ये सत्येव यत्नाधेया। अक्रियाजश्चेत्यनेन कृदन्तनिरासः। क्रियाबोधकधातुजन्य इति तदर्थः। सोऽसत्त्वप्रकृतिर्गुण इत्यनेन सत्त्ववाचकप्रकृतिभिन्न इत्यर्थकेन समस्ततद्धितान्तयोर्निरास इति। तत्रत्यकैयटोक्तिस्तु चिन्त्या। वस्तुतो भाष्यमप्येकदेशयुक्तिः। विस्तरस्तूद्द्योते बोध्यः। तदाह—अन्यत्रेति। एतेन संज्ञाजातिक्रियाऽन्ये गुणवचनाः, भाष्ये तु सत्त्वे इत्यादि उक्तमिति दण्ड्युक्तमपास्तम्। उक्तरीत्या सार्थक्यादाह—उत्तरार्थमितीति। एतेन तथा प्रकाशरत्ना-

## सरला

लम्भात् कदाचित्ततो निवृत्तेः, भिन्नजातीयेषु घटपटादिषु दर्शनाच्च, अतो विशेषणान्तरमाह—आधेय इति। उत्पाद्य इत्यर्थः। अक्रियाजः—अनुत्पाद्य इत्यर्थः। तथाच नित्यानित्यवृत्तिपदार्थविभाजकोपाधिमत्त्वमित्यर्थः। गुणत्वस्य पाकजरूपादिषु अनित्येषु, आकाशमहत्त्वादिषु नित्येषु च सत्त्वात्तद्वत्सु शुक्लादिषु लक्षणसमन्वयः। क्रियात्वस्यच्च नित्यावृत्तित्वात्तद्वत्यां क्रियायां नातिप्रसङ्गः। एवमपि अवयविद्रव्येऽतिव्याप्तिः, तस्यावयवेषु सम्बध्यमानत्वात् असमवायिकारणसंयोगनिवृत्तौ ततो निवर्तमानत्वात्, भिन्नजातीयेषु हस्तपादादिषु दृश्यमानत्वात्, नित्यानित्यवृत्तिद्रव्यत्वरूपोपाधिमत्त्वाच्च, अत आह—असत्त्वप्रकृतिरिति। अद्रव्यस्वभाव इत्यर्थः। द्रव्यभिन्नत्वमिति यावत्। तेन तत्र नातिप्रसङ्गः।

कौसल्ययाऽसावि सुखेन रामः प्राक्केकयीतो भरतस्ततोऽभूत् ॥

इति । केकयस्य दुहिता केकयी । "जनपदशब्दात्" इत्यपत्यप्रत्यये अञि तु कैकेयीति स्यात् । न च तस्य "अतश्च" इति लुक्, "न प्राच्यभर्गादि" इति निषेधात् । तथा च कालिदासः—"कैकेयि कामाः फलितास्तव" इति । एतेन देवकी व्याख्याता ।

दुष्टो यवो यवानीति । जात्यन्तरमेवानेनाभिधीयते । अयमेव अस्य दोषः—यदुक्तयवत्वजातेरभावेऽपि तदाकारानुकृतिः । ङीष् वाच्य इति । इदञ्च तृतीये भाष्ये "इङश्च" इति सूत्रे स्थितम् । कथमिति । यत्तु वदन्ति—दीर्घोच्चारणसामर्थ्याद् आ अनुक् इति पदं विभज्यते । तत्रेन्द्रादीनामनुकैव सिद्धे आकारादे-

---

शब्दरत्नम् ।

एव गौणीत्वादिति स्पष्टमेव ।

इङश्चेति सूत्रे इति । 'अपादाने स्त्रियां वञ उपसंख्यानं तदन्ताच्च वा ङीष्' इति तत्रोक्तम् । उपेत्याधीयते यस्या इति विग्रहः । दीर्घोच्चारणेति । न चेन्द्रशब्दात् आचक्षाणणिचि टिलोपे इन्द्राणीति सिद्ध्यर्थं तत्; अदन्तत्वाभावेन तत्राप्राप्तेः । पदं विभज्यते इति । तत्र नकारोच्चारणसामर्थ्यात् श्रुतक्रमानुरोधेन च पूर्वमाकारस्ततोऽनु-

भैरवी ।

मूले—इत्येक इति । यथेयम्भर्तृपापकृतान्वधादीन् लभते तथा तच्छब्दमपीति भाष्याक्षरस्वारस्यविदः । अपरे तु तद्भाष्यमुपलक्षणमित्याशयेन जन्यजनकभावात्मकोऽपि पुंयोगो ग्राह्य इति मेनिरे । तन्मतन्दर्शयति—वस्तुतस्त्वित्यादिना । देवकी व्याख्यातेति । "जनपदशब्दात्" इत्यजन्तस्तु नायन्देवकस्य जनपदवाचकत्वाभावात् । सादृश्यसम्बन्धमूलेति बहुव्रीहिः । लक्षणा हि शक्यतावच्छेदकाऽऽरोपात्मिका । तत्र सादृश्यसम्बन्धो यत्र मूलन्तत्रैव लोके गौणीति व्यवहार इति भावः ।

प्रसादोक्तिम्मूले खण्डयति—यत्त्वित्यादिना । तत्र अजादि इति लुप्तपञ्चम्यन्तम् । दीर्घोच्चारणस्य परोक्तरीत्या सार्थक्यं खण्डयति—न चेति । तत्—दीर्घोच्चारणम् । अदन्तत्वाभावेनेति । न च ब्रह्माणीत्येतत्सिद्धितात्पर्यकदीर्घोच्चारणसामर्थ्यादत इत्यधिकारोऽपि बाध्यतामिति वाच्यम्, प्रतिलक्ष्यं लक्षणभेदेन नान्तप्रकृतिकब्रह्माणीत्यस्य साधकवाक्येऽत इत्यधिकारबाधेऽप्यन्यत्र तद्बाधे मानाभाव इत्याशयात् । ननु पदविभागेऽपि पूर्वमनुगागमस्ततोऽन्त्यस्याऽऽकारादेश इत्येव प्रक्रिया कुतो नेत्यत आह-तत्रेत्यादि । तत्र—अनुकि । यद्यागमोत्तरमाकारा-

भावप्रकाशः ।

करदण्ड्याद्युक्तमणस्तम् ।

मूले विशिष्याऽनुक्त्या स्फुटं सन्देहाऽनिवृत्तेराह—अपेति । प्रसादानुयायिरत्नाकरोक्ति प्रकाशोक्त्या खण्डयति- न चेति । तत्—दीर्घोच्चारणम् । अप्राप्तेरिति । न च तदधिकारोऽप्यत एव बाध्यतामन्यथा ब्रह्माणीत्यत्राप्यादेशाऽनुपपत्तिरिति रत्नाकरोक्तं युक्तमिति वाच्यम्? तत्सामर्थ्यात्तदंशे तद्बाधेऽप्यन्यत्र तद्बाधे मानाभावात् । ननु पदविभागेपि वैपरीत्यापत्त्याऽनिष्टमेवात आह—तत्रेति । अनु-

शविधानसामर्थ्यात् क्वचिदन्यतोऽपि विधानमनुमीयते। तेन ब्रह्माणीति सिद्धमिति; तच्चिन्त्यम्, अनुकि कृते "अतो गुणे" इति पररूपप्रसङ्गात्। नन्वकारोच्चारणसामर्थ्यात् दीर्घो भविष्यति, अन्यथा हि नुकमेव कुर्यादिति चेत्? "अल्लोपोऽनः" इत्यस्य बाधेन चरितार्थत्वात्। "पत्युर्नो" इत्यादिवदादेशे कर्त्तव्ये आगमलिङ्गककारोच्चारणसामर्थ्यादेवाल्लोपो न भविष्यतीति चेत्? न, शर्वशब्दे ककारस्य चारितार्थ्यात्। न हि तत्र लोपोऽस्ति, "न संयोगात्" इति निषेधात्।

---

शब्दरत्नम्।

गिति बोध्यम्। स्पष्टार्थं दीर्घोऽऽकार आदेश उक्तः। प्रसङ्गादिति। इन्द्रादिशब्दे इति भावः। अकारोच्चारणेति। अनुकीति शेषः। अल्लोपोऽन इत्यस्य बाधेनेति। "अल्लोपोऽनः" इत्यत्र लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः "बहुव्रीहेरूधस" इति सूत्रभाष्यसम्मततया अकाराभावे अवश्यप्राप्तस्य "अल्लोपोऽनः" इत्यस्य बाधेनाऽकारोच्चारणस्य चारितार्थ्यादित्यर्थः। न भविष्यतीति। एवं च न तद्बाधनार्थमकारोच्चा-

भैरवी।

देशः स्यात्तदा नकारस्यैवादेशः स्यादिति नकारोच्चारणवैयर्थ्यापत्तिरिति भावः। नन्विन्द्रादिशब्दे फलाभावादाकारादेशाभावेन तेष्वेव नकारोच्चारणञ्चरितार्थमित्यत आह—श्रुतक्रमेति। यथा—"धिन्विकृण्व्योर च" इति सूत्रोदाहरणे श्रुतक्रमानुरोधेनादेशस्य प्रवृत्तिरादौ भवति तथेहाप्याश्रीयत इति तात्पर्यम्। ननु ह्रस्वाऽकारादेश एव विधेयस्तेन ब्रह्मन्शब्दान्त्यनकारस्य निवृत्तौ तेन सह पररूपेऽपि अनुगागमाऽकारेण सह सवर्णदीर्घेण रूपस्य सिद्धौ दीर्घाकारस्य विधानवैयर्थ्यमित्यत आह—स्पष्टार्थमिति। सामर्थ्यात्पररूपबाधकल्पनापेक्षया दीर्घादेशे तच्छङ्कैव नोदेतीति भावः। उक्त इति। प्रकाशकृतेति शेषः। प्रसङ्गादिति। यद्यपि ब्रह्माणीत्यत्राऽकारादेशेन सिद्धिस्तथापि भवतैवेन्द्रादिशब्देष्वाकारादेशस्याऽकल्पनेन मूलोक्ता पररूपापत्तिरिन्द्रादिशब्देष्वित्यत आह—इन्द्रादिशब्द इति। अकारोच्चारणे सन्दिग्धमत आह—अनुकीति। यत्तु नुगागमेऽनो लाक्षणिकत्वेन "अल्लोपोन" इत्येतन्न स्यादिति मूलञ्चिन्त्यमित्याहुस्तदुक्तिन्निरस्यति—अल्लोपोन इत्यत्रेति। सूत्रभाष्येति। 'ऊधसो नकारो लिङ्गाधिकारे' इत्येतद्व्याख्यानावसरे प्रतिपादितमेतत्। अकाराभावे—अनुक्यकाराभावे। अवश्यप्राप्तस्येति। पररूपस्य तु नावश्यप्राप्तत्वमिति तद्बाधे मानाभाव इति भावः। एवञ्च—आगमलिङ्गककारोच्चारणसामर्थ्येनाऽल्लोपाप्रवृत्तिसिद्धौ चेत्यर्थः। तद्बाधनार्थम्—

भावप्रकाशः।

कीत्यर्थः। यथाश्रुते सूत्रेण सर्वत्र तद्विधानादिति भावः। नन्विन्द्रादौ फलाभावात्तदप्रवृत्त्या तदुच्चारणं सफलमत आह—श्रुतेति। "धिन्विकृण्व्योः" इत्यत्रेवेति भावः। स्पष्टार्थमिति। तेन पररूपेऽपि अनुपदवक्ष्यमाणोक्तरीत्या अनुगकारेण सह पररूपं बाधित्वा दीर्घे रूपसिद्धेः। एतेन ब्रह्मन् शब्दे नकारनिवृत्त्या अकारादेशसाफल्यात्पररूपे ब्रह्माण्यसिद्धेः स आवश्यक इत्यपास्तम्। उक्त इति। प्रकाशकृतेति शेषः। ब्रह्माणीत्यस्याऽकारादेशेन सिद्धेराह—इन्द्रादीति। उक्तहेतोरेवाह—अनुकीति। नुक्यनो लाक्षणिकत्वेनाऽल्लोपाऽप्राप्तेर्मूलं चिन्त्यमिति खण्डनकृदनुयायिरत्नाकरोक्तिं खण्डयति—अल्लोपोन इति। सम्मततयेति। प्रतिपादितमिदं तत्रैव। अकाराभावे। अनुकि इति भावः। अवश्येति। पररूपस्य तु न तथात्वमिति तद्बाधाऽसम्भव इति भावः। एतेन विनिगमनाविरहात् द्वयोर्बाध इति खण्डनकृदुक्तमपास्तम्। अत्र मान्योक्तं तथा व्याख्यानं तु क्लिष्टमुक्तभाष्यविरुद्धं चेत्युपेक्षितम्।

तस्मात् ककराकारयोः सामर्थ्यविरहे पररूपबाधनार्थं दीर्घोच्चारणमावश्यक-मिति । एतेनानुक् ह्रस्वादिरेव लाघवाद्वक्तव्य इति हरदत्तोक्तिः परास्ता । कर्म-ण्यणिति । तदन्तान् ङीप् । "पूर्वपदात्संज्ञायाम्" इति णत्वम् ।

वस्त्रक्रीतेति । वस्त्र भिस् क्रीत इत्यस्यामवस्थायां प्राक् सुबुत्पत्तेः समासेऽ-दन्तत्वान् ङीष् । क्वचिन्नेति । "कर्तृकरणे कृता" इति सूत्रे बहुलग्रहणात् क्वचि-

---

शब्दरत्नम् ।

रणमिति पररूपस्य तेन बाधादिति भावः । पररूपबाधनार्थमिति । अल्लोपबाधनेन चरितार्थस्य पररूपबाधकत्वे मानाभावेनेन्द्रशब्दे पररूपबाधनाय आकारोच्चारणस्यावश्य-कत्वेन त्वदुक्तकल्पनानवकाश इति भावः । ङीबिति । "इन्द्रवरुण" इति सूत्रं त्विन्द्री-त्यादिव्यावृत्त्यर्थम् । उदात्तनिवृत्तिस्वरेण च स्वरे न विशेष इति भावः ।

सुबुत्पत्तेरिति । टाबुत्पत्तेश्चेत्यपि बोद्धव्यम् । बहुलग्रहणादिति । तत एव 'गति-

भैरवी ।

अल्लोपबाधनार्थम् । पररूपस्येति । स्वाऽभावेऽप्राप्तस्यापीत्यादिः । तेन-अकारोच्चारणेन । अल्लोपबाधनेनेति । स्वाऽभावेऽवश्यप्राप्तिकस्याऽल्लोपस्य बाधनेन चरितार्थस्य ऽकारस्य सत्त्वे तु 'वार्णादाङ्गम्' इति न्यायेनैकादेशात्पूर्वम्प्राप्तस्याऽल्लोपस्य बाधनेनेत्यर्थः । न चाऽसमा-ननिमित्तकत्वात् कथं वार्णपरिभाषाप्रवृत्तिरिति वाच्यम् ? अङ्गसम्बन्धिन्याङ्ग एव प्रवृत्तेः स्वीकारात् । त्वदुक्तेति । प्रकाशाद्युक्तपूर्वोक्तेत्यर्थः । ननु यथा ब्रह्माणीत्यस्य सिद्धिः कृता तथैवेन्द्राणीत्यादिसिद्धौ "इन्द्रवरुण" इति सूत्रस्य वैयर्थ्यमत आह—इन्द्रवरुणेतीति । इन्द्री-त्यादिव्यावृत्त्यर्थम्–पुंयोगे प्राप्तस्येन्द्रीत्यादेर्व्यावृत्त्यर्थम् । यत्तु–सूत्रारम्भे इन्द्राणीत्यन्तोदात्तं, इन्द्रमानयतीति रीत्या तत्साधने तु ङीबन्तत्वेनाऽनुदात्तान्तत्वमिति स्वरेऽपि विशेष इति; तन्नेत्याशयेनाह—उदात्तनिवृत्तिस्वरेणेति ।

वस्त्रेण क्रीता इति विग्रहस्थले अलौकिकविग्रहवाक्ये सुबुत्पत्तेः प्राक् समासेऽपि टाबु-त्पत्त्यनन्तरं यदि समासस्तदा वस्त्रक्रीतीत्यस्याऽसिद्धिरत आह—टाबुत्पत्तेरिति । एवञ्च 'ग-तिकारकोपपदानाम्' इति वचने सुब्ग्रहणं स्त्रीप्रत्ययस्याप्युपलक्षणम् । वचनान्तराऽनारम्भ-कृतलाघवन्दर्शयति—तत एवेति । बहुलग्रहणादेवेत्यर्थः ।

भावप्रकाशः ।

पररूपस्य । स्वाभावेऽप्राप्तस्यापीत्यादिः । तेन–अकारोच्चारणेन । तथा च प्रकाशोक्तं युक्तमेवेतिभावः । एतेन प्रागाङ्गत्वेनाल्लोपस्यैव न्याय्यत्वात्पररूपापादनासङ्गतेः । क्वचित्तथैव पाठः । यत्तु नरित्याद्याशङ्का-समाधानयोरतिफल्गुत्वाच्च मूलं चिन्त्यमिति रत्नाकरोक्तमपास्तम् । अल्लोपबाधनेनेति । स्वाभावेऽ-वश्यप्राप्तस्य 'वार्णादाङ्गम्'इत्यनेनैकादेशात्पूर्वं प्राप्तस्याऽल्लोपस्य बाधनेनेत्यर्थः । एतेन भिन्नाश्रयत्वेनो-क्तपरिभाषाया अप्रवृत्त्याऽल्लोपादन्तरङ्गपररूपबाधकत्वमेवेति मूलं चिन्त्यमिति खण्डनकृदुक्तमपास्तम् । अभिमतसमानाश्रयत्वस्य सत्त्वात् । चरितार्थस्य—अनुकोऽकारस्य । आकारेति । दीर्घस्येत्यर्थः । त्वदु-क्तेति । प्रकाशकृदुक्तपूर्वोक्तकल्पनेत्यर्थः । एतेन हरदत्तोक्तिरपास्तेत्युक्तिरेवापास्तेति रत्नाकरोक्तिरपा-स्तेति दिक् । ननु ब्रह्माणीतिवदिन्द्राणीत्यादिसिद्धौ सूत्रं व्यर्थम्? एतेन णत्वार्थं सूत्रमित्यपास्तम्, "पूर्वपदात्"इति सिद्धेरत आह–इन्द्रेति । ननु ङीष्यन्तोदात्तत्वं ङीपि त्वनुदात्तत्वमिति स्वरभेदा-त्तदर्थमावश्यकत्वे कथं तद्व्यावृत्त्यर्थत्वमत आह––उदात्तेति । "अनुदात्तस्य च"इति, सूत्रेणेति भावः । चस्त्वर्थे ।

ननु सुबुत्पत्तेः प्राक् टाबन्तेन समासेऽप्यनिष्टसिद्धिरेवात आह––टाबिति । वचनान्तराकरणलाघ-वायाह––तत एवेति । बहुलग्रहणादेवेत्यर्थः । तथा च सुबन्तेन समासस्य तत्र फलिततया ततः प्रा-

त्सुबन्तेन समासः। तत्र च सुपः प्रागेवान्तरङ्गत्वात् टाप। ततोऽदन्तत्वाभावान्न ङीष् इति भावः।

तेन बह्विति। अयं भावः—"बहोर्नञ्वदुत्तरपदभूम्नि" "नञ्सुभ्याम्" "जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः" इति ह्यन्तोदात्तताविधायकानि। तत्र जातिपूर्वादित्युक्तेर्बह्वादिपूर्वकस्यार्थाद् व्युदास इति। अस्वाङ्गपूर्वपदाद्विकल्पस्य वक्ष्यमाणत्वादिह स्वाङ्गपूर्वपदमेवोदाहरणमित्याह—ऊरुभिन्नीति। जातान्तादिति। "वर्णादनुदात्तात्" इतिवद् 'बहुव्रीहेरुदात्तात्' इत्येव सिद्धेऽन्तग्रहणं नित्यत्वप्रतिपत्त्यर्थम्। "वा जाते" इति तु वैकल्पिक उदात्तो न तु नित्य इति भावः।

सुमुखा शालेति। एवं च फलमुखी कारणमुखी चावनस्थेत्यादिप्रयोगाः प्रामादिका इति बोध्यम्।

उरः क्रोडेति। स्त्रीलिङ्गोऽयमिति हरदत्तादयः। तत्रोपसर्जनह्रस्वत्वे कृतेऽदन्तत्वाद् ङीषः प्राप्तिः। अमरस्तु—'न ना क्रोडं भुजान्तरम्'इत्याह। रत्नमतिस्तु पुंस्त्वमाह। गणे च क्रोडेति प्रातिपदिकमात्रं पठ्यते न तु टाबन्तमिति गणरत्नमहोदधिकारः। एवं चाविशेषाल्लिङ्गत्रयेऽप्युदाहरणं बोध्यम्। माधवस्तु तुदादिगणे क्रुड निमज्जन इति धातावाह-क्रोडः। घञ्। क्रोडा-अश्वानामुरः। टाबन्तोऽयं स्वभावतो विशेषविषयः, क्रोडादिषु टाबन्तस्यैव पाठात्। भुजान्तरमात्रविषयस्य क्रोडशब्दस्य बहुव्रीहौ स्वाङ्गलक्षणो ङीषूविकल्पो भवत्येव। कल्याणक्रोडी, कल्याणक्रोडा मयूरीति।

ङीषो ङीबादेश इति। "दिक्पूर्वपदात्" इति पञ्चम्या ङीषिति प्रथमायाः

---

शब्दरत्नम्।

कारक' इत्यादेरनित्यत्वेनाप्रवृत्तिरिति भावः।

सुखादिभ्य इति। सुखादयश्च "सुखादिभ्यः कर्तृवेदनायाम्" इत्यत्र पठिताः सुखदुःखकृच्छ्रादयः।

'सङ्गदाख्यातनिर्ग्राह्या' इत्यन्तं द्वितीयं लक्षणम्। तत्राख्यातमुपदेश इत्याशयेनाह—

भैरवी।

गणपाठे सुखादिप्रदर्शनाभावादाह-सुखादयश्चेति। कृच्छ्रादय इति। अत्रादिना आस्त्राऽलीकादयो विवक्षिताः। तथाच "जातिकालसुखादिभ्य" इत्यत्र गणपाठाऽप्रदर्शनेऽपि "सुखादिभ्य" इति सूत्रे ये निर्दिशितास्तेऽत्र ग्राह्या इति भावः।

लिङ्गानाञ्च न सर्वभागित्येव द्वितीयलक्षणमिति भ्रमवारणायाह— सकृदिति। तत्र लक्षणे आख्यातपदेन तिङन्तपरमित्याह— तत्रेति। लिङ्गानाञ्चेति चशब्दो निर्ग्राह्येत्यनन्तरम्बोध्यम्। उपदेश इति। कथनमित्यर्थः। परममूले "जातेरस्त्री" इतिसूत्रे द्वितीयलक्षण

भावप्रकाशः।

रन्तरङ्गत्वाट्टापि अनदन्तत्वान्न ङीषिति भावः।

तत्र गणपाठाभावादाह—सुखेति। आदिना आस्रअलीककरुणकृपणादयः।

भागित्यन्तमेव द्वितीयलक्षणमिति भ्रमव्युदासायाह—सकृदिति। तथा च चो निर्ग्राह्येत्यग्रे योज्यः। उपदेश इति। स च ब्राह्मणात् ब्राह्मण्यामुत्पन्नो ब्राह्मण इत्यादिरूपः। भावे क्त इति भावः। परममूले

षष्ठी प्रकल्प्यत इति भावः। यदि तु स्वतन्त्रो ङीप् स्यात् तर्हि प्राग्गुल्कादावपि प्रसज्येत। तत्परिहाराय पूर्वोक्तपर्युदासस्य प्रसज्यप्रतिषेधानां वाऽनुवृत्तौ गौरवमिति भावः।

वृषलीति। एकस्यां व्यक्तौ वृषलत्वे कथिते तदपत्यतत्सहोदरादौ कथनं विनाऽपि तस्य सुग्रहत्वादिति भावः। औपगवीति। अणन्तलक्षणं ङीपं परत्वादयं बाधते। एवं चापत्याधिकारे औपगवीति प्रतीकमुपादाय "टिड्ढाणञ्" इति ङीबिति व्याचक्षाणा उपेक्ष्या इति भावः। ब्राह्मणीत्यत्रेति। एवं च प्राचो ङीपुदाहरणं प्रामादिकमिति भावः।

---

शब्दरत्नम्।

एकस्यामित्यादि। ब्राह्मणत्वमप्येवं तत्पितृपितामहादौ सुग्रहमिति बोध्यम्। इयं च नाकृतिग्रहणा, ब्राह्मणक्षत्रियाद्याकारस्य समत्वादिति बोद्धयम्। बाधते इति। गोत्राणीति शेषः। प्रतीकमुपादायेति। औपगवीत्यस्य गोत्राऽनन्तराऽपत्यसाधारणत्वेन विशिष्य तदुक्तिरुपेक्ष्येत्यर्थः। एतेन जातिलक्षणे "एको गोत्रे" इतिसूत्रस्थभाष्यप्रामाण्येन

भैरवी।

लक्ष्यप्रदर्शनावसरे वृषलीति प्रदर्शितन्तेन ब्राह्मणत्वन्न जातिरिति भ्रमः स्यादत आह—ब्राह्मणत्वमप्येवमिति। अपिना क्षत्रियत्ववैश्यत्वयोर्ग्रहणम्। वक्ष्यमाणदोषस्य प्रकृतेऽभावायाह-गोत्रेति। गोत्रार्थकेऽणीत्यर्थः। "एको गोत्रे" इति सूत्रस्थभाष्यविरोधेनाऽपत्यप्रत्ययान्त इत्येतन्मात्राभिधानं यत्परममूले कृतन्तदयुक्तमिति यत्केनचिदुक्तन्तदयुक्तमित्याह–एतेनेति। परममूलस्यापि भाष्यसम्मतरीत्या व्याख्यानेनेत्यर्थः। जातिलक्षणे–"जातेरस्त्री" इति जातिलक्षणे। भाष्यप्रामाण्येनेति। तत्र हि "गोत्राद्यूनि प्रत्ययो भवति स्त्रियान्तु लुगिति न्यासे, औपगवी माणविकेत्यत्राण् योऽनुपसर्जनमित्यनुपसर्जनलक्षण ईकारो न प्राप्नोति। मा भूदेवमणन्तादनुपसर्जनादित्येकदेशिनोक्ते तदभ्युपेत्य इह तर्हि औपगवीभार्यः जातिलक्षणः पुंवत्त्वस्य प्रतिषेधो न प्राप्नोति? माभूदेवम्, वृद्धिनिमित्तस्येत्येवम्भविष्यति। एवन्तर्हि ग्लुचुकायनीभार्य इत्यत्र दोष" इत्यनेन युवापत्यप्रत्ययान्तेऽजातित्वाद् दोषाधानङ्कृतम्। तत्र औपगवी माणविकेत्यत्र "टिड्ढा" इति सूत्रात् 'जातेः" इति सूत्रस्य परत्वात्तस्यैव प्रवृत्त्यभिधाने कर्त्तव्ये "टिड्ढा" इत्येतदभिधानमपत्यसामान्यस्य जातिलक्षणे ग्रहणे विरुध्येत।

भावप्रकाशः।

वृषलीपर्यन्तधावनेन ब्राह्मणत्वं न जातिरिति भ्रमनिरासायाह-ब्राह्मेति। एवं-वृषलत्ववत्। आदिना तत्पुत्रादिपरिग्रहः। द्वितीयलक्षणसाफल्याय पूर्वेणाऽगतार्थतामाह–इयञ्चेति। वृषलत्वब्राह्मणत्वादिरूपा जातिरित्यर्थः। आदिना वैश्यपरिग्रहः। समत्वादिति। शिखायज्ञोपवीतादेरपि तुल्यत्वादिति भावः। वक्ष्यमाणदोषाभावायाह–गोत्राणीति। गोत्रार्थकेऽणि सतीत्यर्थः। नन्वेवमनन्तराऽपत्याशयेन प्रकाशोक्तिर्युक्ताऽत आह--औपगवीत्यस्येति। अस्योपेदपत्वे हेतुत्वम्। विशिष्येति। "टिड्ढाणञ्" इति ङीबित्येवं रूपेत्यर्थः। तस्य साधारण्यादुभयं वाच्यं,वा न किञ्चिद्वाच्यमिति तस्येष्टत्वेपि तथोक्तिरयुक्तेति भावः। तदुक्तिः—प्रकाशकृदुक्तिः। भाष्यविरोधान्मूलं चिन्त्यमिति खण्डनकृद्रत्नाकरदण्डधायुक्तिं खण्डयति–एतेनेति। प्रकाशानुरोधेन मूले तथोक्तस्याप्यन्यथाव्याख्यानेनेत्यर्थः। जातीति। 'गोत्रं च चरणैः सह' इत्यत्रेति भावः। भाष्येति। तत्र हि गोत्राद् यूनि प्रत्ययो भवति स्त्रियां लुगिति न्यासे "औपगवीमाणविकेत्यत्राण्योऽनुपसर्जनमित्यनुपसर्जनलक्षण ईकारो न प्राप्नोति माभूदेवमणन्तादनुपसर्जनादित्येवं भविष्यति"इति प्रौढया पूर्वपक्षिणोक्ते तदभ्युपगम्यैव" इह तर्हि औपगवीभार्यः जातिलक्षणः पुंवत्त्वप्रतिषेधो न प्राप्नोति माभूदेवं वृद्धिनिमित्तस्येत्येवं भविष्यति एवं तर्हि ग्लुचुकायनीभार्यदोष"

कुरूरिति । लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वात्स्वादयः । प्राचा तु "अन्तादिवच्च" इति सूत्रमुपन्यस्याऽऽदिवद्भावात्स्वादय इत्युक्तम् । अत्रेदं वक्तव्यम्–परं प्रत्यादिवद्भावो विधीयते । तथा चेहाऽप्रत्यय इति निषेध एव स्यान्न तु स्वादयः । यत्तु व्याचख्युः–आदिः–ऊङपेक्षया पूर्वः, प्रातिपदिकं, तद्वद्भावात्–तदवयवत्वेन ग्रहात् पूर्वान्तवद्भावादिति यावदिति ; तदपि क्लिष्टं स्वपरग्रन्थविरुद्धं च । उक्तरीत्या हि काण्डे कुडचे इत्यादावपि 'एकवचनमुत्सर्गत' इति सुः

शब्दरत्नम् ।

पारिभाषिकगोत्रस्यैव ग्रहणम् । अवन्तीत्यादौ गोत्रत्वारोपेण जातित्वमिति प्राचीनोक्तमदुष्टमित्यपास्तम् ।

लिङ्गविशिष्टेति । यत्तु लिङ्गबोधकप्रत्ययान्तत्वरूपलिङ्गवैशिष्ट्यस्य प्रातिपदिकत्वस्य च लाभाय पूर्वान्तत्वपरादित्वयोरावश्यकत्वेनोभयत आश्रयणेऽन्तादिवत्त्वाभावान्ना-

भैरवी ।

एवञ्जातिलक्षणपुंवत्त्वस्य प्रतिषेधो न प्राप्नोतीत्यपि विरुध्येत । नन्वेवमवन्तीत्यत्रानन्तरापत्यप्रत्ययान्ते "वृद्धेत्कोसल" इत्यनेन ञ्यङि तस्य "स्त्रियामवन्ति" इत्यनेन लुकि "इतो मनुष्यजातेः" इति ङीष् इति "अनुपसर्जनात्" इति सूत्रभाष्ये उक्तं, तद्विरुध्येतेत्यत आह–अवन्तीत्यादाविति । गोत्रत्वारोपेणेति । यथाऽश्वत्थाम्नि द्रौणायनित्वारोपस्तद्वत् । यूनि तु न गोत्रत्वस्यारोपः तत्र युवैव न गोत्रमिति नियमस्य प्रदर्शनात् । प्राचीनोक्तम्–प्रकाशकृदुक्तम् । अदुष्टमिति । "एको गोत्रे" इत्यत्र पारिभाषिकस्य ग्रहणेऽपि प्रकृते पारिभाषिकस्यैव गोत्रत्वे मानाभाव इति तदाशयः । किञ्चाऽत्र तैः साधारण्येनोक्तम्, तत्र तु विशिष्येति तेषाम्पूर्वापरविरोधोऽपि दोषः ।

खण्डनकृता लिङ्गविशिष्टपरिभाषयेति मूलोक्तमर्थतोव्याख्याय खण्डितन्तन्न युक्तमित्येतद् बोधयितुं तदुक्तमनूद्य दूषयति—यत्त्वित्यादिना । वैपरीत्येनान्वयोऽत्र बोध्यः । अयम्भावः-यत्र प्रकृतौ प्रातिपदिकत्वस्य लिङ्गबोधकप्रत्ययान्तत्वस्य च सत्ता, तत्र तादृशसमुदायस्य तया परिभाषया ग्रहणम्बोध्यते । यथा—पक्त्री, दण्डिनीत्यादौ सद्भाव उभयोरस्तीति तस्य समुदायस्य प्रातिपदिकग्रहणेन ग्रहणम्भवति । नात्रेति । कुरूरित्यत्र तथा नास्तीत्यर्थः । अत्र हि पूर्वान्तवद्भावं विना प्रातिपदिकत्वस्य, परादिवद्भावं विना लिङ्गबोधकप्रत्ययान्तत्वस्य च

भावप्रकाशः ।

इति युवापत्यस्य जातित्वमुक्तम् । अन्यथा जातिलक्षणङीष एव परत्वाद्वक्तुं युक्तत्वं पुंवत्त्वप्रतिषेधासिद्धिरेव दोष इत्ययुक्तं चेति स्पष्टमेव । एवेन मूलाद्युक्तव्यावृत्तिः । नन्वेवमवन्तेः साक्षादपत्ये "वृद्धेत्कोसल" इतीदन्तत्वात् ञ्यङि तस्य "स्त्रियामवन्ति" इति लुकि "इतो मनुष्य" इति जातिलक्षणे ङीष्यवन्तीति "अनुपसर्जनात्" इति सूत्रभाष्यविरोधोऽत आह–अवन्तीत्यादाविति । अश्वत्थाम्नि द्रौणायनिवत् । यूनि तु न शास्त्रीयगोत्रत्वारोपः, तत्र युवैव न गोत्रमिति नियमेन तत्सञ्ज्ञानिषेधात् इति भावः । प्राचीनोक्तम्—प्रकाशकृदुक्तम् । तत्र भाष्यप्रामाण्यात्तदङ्गीकारेप्यत्र तत्त्वे मानाभाव इति तदाकूतम् । किञ्चात्र तैः साधारण्येन व्याख्यातं तत्र च तथोक्तमिति पूर्वापरविरोधोपि तेषामनुसन्धेयः । "कौरव्य" इति सूत्रस्थस्वग्रन्थविरोधस्तु खण्डनकृदुक्तो न युक्तः, तत्र टाप्ङीषोरिति पाठादिति दिक् ।

खण्डनकृदुक्तिं खण्डयति । यत्त्विति । व्युत्क्रमेण यथासंख्यमत्र बोध्यम् । तया तादृशप्रत्ययान्तत्वस्य प्रातिपदिकत्वस्य च यत्र प्रकृतौ सत्ता तद्विशिष्टस्य प्रातिपदिकग्रहणेन ग्रहणं बोध्यते, तस्यामुभयोराश्रयणात् । तच्चात्राऽन्तादिवत्सूत्राधीनमिति तदप्रवृत्त्या साऽपि न प्रवर्त्तते । कर्त्री, दण्डिनीत्यादौ तु तत्प्रवृत्तिं विनापि तयोः सत्त्वात्सा प्रवर्तत एवेति न वैयर्थ्यं तस्याः । तद्ध्वनयन्नाह—नात्रेति ।

प्रवर्तेत । तद्वारणाय चाऽप्रत्यय इति प्रसज्यप्रतिषेधाभ्युपगमे प्रकृते दोषः ।

### शब्दरत्नम् ।

श्रेयमिति ; तन्न, इन्द्राणीत्यसिद्ध्यापत्तेः । तस्मात् प्रातिपदिकत्वोपयोगो न कश्चित् । नापि लिङ्गविशिष्टप्रातिपदिकस्येति परिभाषायां पठ्यते । तथा प्रातिपदिकत्वतद्व्याप्य-धर्माणां लिङ्गप्रत्ययविशिष्टेऽतिदेशाच्चेति दिक् । ननु "सप्तम्यधिकरणे च" इति निर्देशेन

### भैरवी ।

सत्ता नास्तीत्युभयोरावश्यकतया 'उभयत आश्रयणे नान्तादिवत्' इति निषेधः प्रवर्तत इति । यत्र न पूर्वान्तवत्त्वपरादिवत्त्वयोरुपयोगस्तस्य ग्रहणम्परिभाषया भवतीति भवदुक्तमिन्द्राणी-त्यादौ नास्ति । अत्र स्त्रीप्रत्ययान्तसमुदाये प्रातिपदिकत्वन्नास्ति । यत्र च प्रकृतिभागे प्रा-तिपदिकत्वमस्ति तत्र तादृशप्रत्ययान्तत्वन्नास्ति, अन्तशब्दस्य चरमावयववाचकत्वात् । इन्द्राणीत्येतदेकदेशाभावोदाहरणोपलक्षणम् । तेन दण्डिनीत्यादेरपि भवदुक्तरीत्या ग्रहणन्न स्यादिति 'प्रातिपदिकग्रहण' इति परिभाषा निष्फला स्यादिति भावः । तस्मात्—परिभा-षया यस्य समुदायस्य ग्रहणम्भवता बोधनीयन्तस्यैव ग्रहणाभावापत्तिसद्भावात् । उपयोग इति । परिभाषायाः प्रवृत्तिकोटावित्यादिः । नन्वन्तशब्दो न सर्वत्र चरमावयवस्यैव बोधको-ऽस्ति, "अतो ल्रान्तस्य" इत्यादौ व्यभिचारात् । किन्तु समीपवाच्यपि । तथा च परिभाषा-घटकं यद्विशिष्टपदन्तस्यान्तपरत्वेऽपि तदर्थः समीप इत्येव । एवञ्च गृह्यते येन तद् ग्रहणम् प्रातिपदिकस्य ग्रहणम्प्रातिपदिकग्रहणमिति समासाश्रयणेन प्रातिपदिकवाचकः शब्दो बो-ध्यते । तस्मिन् लिङ्गबोधकप्रत्ययः समीपो यस्य तद्वत्तामात्रम्परिभाषया बोध्यत इति नेन्द्राणीत्याद्यसङ्ग्रहः, इत्यत आह—नापीति । इदम्भवदुक्तन्तादृशपाठसत्त्वे वक्तुं शक्यम् । वस्तुतो यत्परिभाषायाः कृत्यन्तदाह—तथेति । दिगिति । दिगर्थस्तु 'प्रातिपदिकग्रहणे' इति सप्तमी कर्त्रर्थे व्यत्ययेन । प्रातिपदिकपदञ्च प्रातिपदिकत्वतद्व्याप्यान्यतरधर्मविशिष्टपरम् । तथा च प्रातिपदिकत्वतद्व्याप्यान्यतरधर्मविशिष्टस्य ग्रहणं यत्र शास्त्रे तेन लिङ्गबोधकप्रत्यय-विशिष्टस्य ग्रहणं—बोधनम्भवतीत्येव परिभाषार्थः इति न कुरूरित्यत्रादिवत्त्वोपयोग इति । कुरूरित्यस्य साधुत्वन्न लिङ्गविशिष्टपरिभाषया भवतीति ब्रूमः, किन्तु "अन्तादिवच्च" इति सूत्रेणेति वदामः । अत आदिवद्भावादिति पदं यदर्थकन्तदाह मूले—यत्तु व्याचख्युरित्या-दिना । तदपि—तादृशव्याख्यानमपि । क्लिष्टम्—आदिशब्दस्याऽऽद्यावयवत्वावच्छिन्नबोध-कत्वस्य "आद्यन्तौ टकितौ" इत्यत्र क्लृप्तस्य त्यागेन क्लिष्टमित्यर्थः । स्वपरग्रन्थेति । स्वस्य-व्याख्यातुर्यः परग्रन्थस्तद्विरोध,इत्यर्थः । काण्डे कुड्ये इत्यत्र यथा प्रसज्यप्रतिषेधाऽऽश्रयेण भवता सुबुत्पत्त्यापत्तिरूपो दोषो वार्यते, तथा कुरूरित्यादावपि सुबभावापत्तिः स्यादित्याह—उक्तरीत्येति । प्रक्रियाव्याख्यानपरप्रकाशग्रन्थे यथा न स्वपरग्रन्थविरोधात्मको दोष आपतति तथा शङ्कते—नन्विति । ज्ञापनादित्यन्तेन मूलोक्तम्प्रकारमुद्भाव्य सिद्धान्तरीत्याह—

### भावप्रकाशः ।

नन्वन्तशब्दश्चरमावयववाची उत समीपवाची ? नाद्य इत्याह—इन्द्राणीति । कर्त्र्यादिरप्युपलक्ष-णम् । तस्मादुभयत्राप्रवृत्त्या सा निष्फला स्यादिति भावः । अत एवाह—तस्मादिति । तदप्रवृत्त्या-सुपोऽसिध्या निष्फलत्वादेवेत्यर्थः । उपयोग इति । तत्प्रवृत्तिनिमित्तकोटौ इति शेषः । नान्त्य इत्याह—नापीति । इदं च तथार्थमभ्युपेत्य । वस्तुतः स एव नेत्याह—तथेति । प्रतिपादितमिदमधस्तात् । एतेनाऽऽदिवत्त्वेनोह्वे हि तया स्वादयः, तादृशप्रत्ययान्तमेव हि तत्र लिङ्गविशिष्टमिति वृत्त्यादौ स्थितं, स्वस्यैव परं तदनाश्रयणे तदुपन्यासोऽसङ्गत इत्यपि तदुक्तमपास्तम् । तदाह—दिगिति । प्रक्रियामुकरी-त्या संखण्ड्य तदाशयवर्णकप्रकाशे स्वपरविरोधदोषो नेत्याह—नन्विति । तत्रादौ मूलादिरीत्याह—सप्त-

श्वश्रूरित्यत्रैकादेशाऽभावेन लिङ्गविशिष्टपरिभाषया आवश्यकत्वाच्च । यत्तु—तत्र "श्वशुरः श्वश्र्वा" इति निर्देशात्साध्विति; तन्न, निर्देशस्य शब्दपरत्वात् । "विपराभ्यां जेः" "ङेर्यः" इतिवत् ।

श्वशुरस्येति । पुंयोगलक्षणे ङीषि प्राप्ते ऊङ् । तत्सन्नियोगेन च विधीयमानो लोपः सन्निहितत्वादन्त्यस्यैवाऽकारस्य, न त्वादेः । एतच्च वचनं "श्वशुरः श्वश्र्वा" इति निर्देशसिद्धार्थकथनपरम् । अतोऽपि प्रथमाऽकारस्य लोपो न शङ्क्यः ।

उपमानवाचि पूर्वपदमिति । 'धात्रीकराभ्यां करभोपमोरुः' इत्यत्र तु न, करभशब्दस्योपमानवाचित्वेऽपि पूर्वपदत्वाभावात् ।

शफौ खुराविति । यद्यपि 'शफं क्लीबे खुरः पुमान्' इत्यमरस्तथाऽपि शफशब्दस्य पुंस्त्वमपि बहुसम्मतम्, शफाविव जर्भुराणेति श्रुतौ "ग्राम्यपशुसंघेषु" इति सूत्रस्य व्याख्यावसरे न्यासहरदत्तादिग्रन्थेषु वाचस्पत्यादिनिबन्धेषु च प्रचुरप्रयोगदर्शनात्, "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति भाष्याच्च, 'शफो भुजो गुदं घोणा' इति गणरत्नमहोदधौ क्रोडादिगणे पाठाच्च, 'शफः खुरे गवादीनां मूले विटपिनामपि' इति हेमचन्द्रकोशाच्च । विश्वकोशे च पुन्नपुंसकतोक्ता ।

---

शब्दरत्नम् ।

विभक्त्येकादेशस्यान्तवत्त्वाभावज्ञापनादुत्सर्गस्यासार्वत्रिकत्वाच्च ह्रस्वस्य सत्त्वप्रधाने एव प्रवृत्तेश्च काण्डे इत्यादौ न दोषोऽत आह—श्वश्रूरित्यत्रेति ।

वचनमिति । वृत्त्यादिपठितमित्यर्थः ।

भैरवी ।

उत्सर्गेत्यादि । असार्वत्रिकत्वादिति । गमकसद्भाव एव तत्प्रवृत्तेः स्वीकारादिति भावः । सत्त्वप्रधान एवेति । "ह्रस्वो नपुंसके यत्तस्य" इति न्यासेन सिद्धे प्रातिपदिकग्रहणं सत्त्वप्रधानप्रातिपदिकलाभार्थमिति भावः । मूले-आवश्यकत्वाच्चेति । तथा च लिङ्गविशिष्टपरिभाषास्त्रीकारस्याऽऽवश्यकतया तथैव कुरूरित्यस्यापि सिद्धावादिवद्भावादिति कथनस्य नोपयोग इति भावः । परोक्तं श्वश्रूरित्येतत्साधकरीतिमनूद्य दूषयति—यत्त्विति ।

भाष्ये तादृशवचनानुपलम्भादाह—वृत्त्यादीति । मूले अतोऽपीति । अतः—"श्वशुरः श्वश्र्वा" इतिनिर्देशात् । अपिः ऊङ्सन्निहितत्वस्य समुच्चायकः । ङ्याप्सूत्रस्थभाष्यस्वारस्यात्तु श्वशुरशब्दादूङि श्वश्रूशब्दस्य सिद्धिरिति न, किन्त्वव्युत्पन्नोयमिति । तत्र हि "ङ्याब्ग्रहणङ्किमर्थम् । न, प्रातिपदिकादित्येव सिद्धम् । न सिध्यति "अप्रत्ययः" इति प्रातिपदिकसंज्ञायाः प्रतिषेधः प्राप्नोति । यद्येष ङ्याब्ग्रहणे हेतुः त्यूङ्ग्रहणमपि कर्तव्यम् । तावपि हि प्रत्ययौ तिग्रहणे तावद्वार्तम्, तद्धितः प्रातिपदिकमिति प्रातिपदिकसंज्ञा भविष्यति, ऊङ्ग्रहणे चापि वार्तम्, उवर्णान्तादूङ् विधीयते । तत्रैकादेशः, एकादेशे कृते पूर्वस्याऽन्तवद्भावात्प्रातिपदिकसंज्ञा भविष्यति" एवमूङ्ग्रहणस्याकर्तव्यतोक्ता । यदि मूलोक्तरीत्याऽस्य सिद्धिस्तदा तत्रोङेकादेशाभावेनैतदर्थमूङ्ग्रहणस्यावश्यकत्वेन पूर्वान्तवद्भावेन तस्याऽनावश्यकत्वप्रतिपादनं विरुध्येतेति ।

भावप्रकाशः ।

स्येति । सिद्धान्तरीत्या ह्रस्वौ क्रमेण निराचष्टे—उत्सर्गेत्यादि । गमके सत्येव तत्प्रवृत्तेरुक्तत्वादिति भावः । ह्रस्वेति । तत्र प्रातिपदिकग्रहणादिति भावः ।

भाष्येऽभावादाह-वृत्त्यादीति । ङ्याप्सूत्रभाष्यस्वरसस्तवयमनूङन्तोऽव्युत्पन्नं प्रातिपदिकमिति ।

वामौ सुन्दरौ ऊरू यस्या इति विग्रहः । इह सर्वत्र उपमानाभावादप्राप्ते विधिः । कथं तर्हि 'पीवरोरु पिबतीव बर्हिणः' इति कुमारः ? प्रमाद एवायम् । सञ्ज्ञापूर्वकत्वात्सम्बुद्धिगुणो नेत्येके । हितेन सहेति । 'समो वा हिततयोः' इति

शब्दरत्नम् ।

उपमानाभावादिति । उपमा उपमानं-सादृश्यं तदभावात्-तस्य समासाऽवाच्यत्वादित्यर्थः । यद्वोपमानत्वेन प्रतीत्यभावादित्यर्थः । शफोरूरित्यत्रापि सादृश्यमूलकः शफत्वारोपो न तु तत्प्रतीतिरिति भावः । एवं च करभोरूशब्देऽपि आरोपविवक्षायामूङ् न भवत्येव । एतेन करोरुभिरिति व्याख्यातम् । एके इति । तस्य भाष्यानुक्तत्वात् साधु-

भैरवी ।

ननु वस्तुत उपमानस्य सत्त्वादुपमानाभावादित्यसङ्गतम्, किञ्च "ऊरूत्तरपदात्" इतिसूत्र उपमानेति शब्दो नोपात्त इत्युपमानाभावादित्यसङ्गतमत आह—उपमा उपमानमिति । उपमानशब्दे भावे ल्युडिति ध्वननायोपमा उपमानमित्युक्तम् । अत एवाह—सादृश्यमिति । ननु करभोरूरित्यत्रोदाहरणेऽपीवशब्दस्योपमावाचकस्याभावादुपमायाः कथम्प्रतीतिः, तस्येवादिशब्दसत्त्व एव प्रतीतेरत आह—तस्येति । सादृश्यस्येत्यर्थः । एवञ्च करभोरूरित्यत्र सादृश्यान्तर्भावेण वृत्तिस्वीकारादुपमायाः प्रतीतिरस्ति । करभोपमोरूरित्यत्र तु सादृश्यस्य समासवाच्यत्वन्नास्तीति भावः । मूलस्थोपमानशब्दः करणल्युडन्त एवास्त्वित्याशयेनाह—यद्वेति । प्रतीत्यभावादिति । पूर्वपदार्थस्येत्यादिः । एवञ्चोपमीयतेऽनया सा उपमा, उपमानत्वम्—सादृश्यमित्यर्थः, तद्बोधकम् ऊरूत्तरपदम्प्रातिपदिकमत्र नास्ति । यादृशस्थले समासस्य सादृश्यान्तर्भावेण शक्तिस्तत्रेष्यते सूत्रस्य प्रवृत्तिः । ऊर्वन्तादित्येव वक्तव्ये उत्तरपदग्रहणेन पूर्वपदस्याक्षेपाद्यत्र पूर्वपदस्योपमावाचकत्वन्तत्रास्य सूत्रस्य प्रवृत्तेरिति भावः । यत्तु खण्डनकृदाह—शफौ खुरौ ताविव संश्लिष्टत्वादुपचारादिति, चिन्त्यम् । उपचारेऽपि पूर्वपदस्योपमानवाचित्वव्याघातात्पूर्वसूत्रेणैव सिद्धयेह शफग्रहणवैयर्थ्यम् । अतः संहितवाचकः शफशब्द इति तन्नेत्याशयेनाह—शफोरूरित्यत्रेति । एवञ्च शक्यतावच्छेदकस्यारोपोऽत्र न तु सादृश्यान्तर्भावेण वृत्तिरिति न पूर्वसूत्रस्य प्राप्तिः । एवञ्च-पूर्वत्राऽऽरोपस्य सिद्धौ च । करोरुभिरिति व्याख्यातमिति । 'विचकरे च करेण करोरुभिः' इतिमाघस्थपद्य इति आदिः । तस्य—

भावप्रकाशः ।

ननु वस्तुत उपमानस्य सत्त्वात्तदभावादित्ययुक्तम् । किञ्च सूत्रे उपमाने इति नोक्तं किं त्वौपम्ये इति, अत आह—उपमा उपमानमिति । उपमेति विग्रहप्रदर्शनं भावे ल्युडिति भावः । तदाह—सादृश्यमिति । ननु करभोरूरित्यादावप्यिवादेर्वाचकस्याभावात्तदभाव एवेति सूत्रवैय्यर्थ्यमेवात आह—तस्येति । सादृश्यस्येत्यर्थः । तत्र तु तदन्तर्भावेण समासात्तस्य तद्वाच्यत्वमिति भावः । यथाश्रुतमेव करणल्युडन्ते युक्तमित्याशयेनाह—यद्वेति । अभावादिति । पूर्वपदार्थस्येति भावः । एतेनोपमीयतेऽनयेत्युपमोपमानं तद्भाव औपम्यं—सादृश्यम् उपमानत्वं वा तद्बोधकोरूत्तरपदादित्यर्थः । समासस्य तत्र तदन्तर्भावेण शक्त्यभ्युपगमात्तस्य तत्त्वं सूपपादम् । उत्तरपदाक्षिप्तं पूर्वपदं प्रत्यासत्त्योपमानवाच्येव । अत एवोत्तरपदग्रहणं सफलम् । अन्यथोर्वन्तादित्येव वदेत् । अत एव 'धात्रीकराभ्यां करभोपमोरूः' इत्यत्र नेति पूर्वसूत्रस्थं तत्त्वं सूचितम् । यत्तु शफौ खुरौ ताविवेति परममूलं चिन्त्यम्, उपचारेऽपि पूर्वपदस्योपमानवाचित्वमव्याहतमेवेति पूर्वसूत्रेणैव सिद्धयेह शफग्रहणवैयर्थ्यापत्तेः । अतः सहितपर्यायः शफशब्द इति हरदत्तोक्तिरेव युक्तेति खण्डनकृत्तत्खण्डयति—शफोरूरिति । आरोपः । ऊरुपदार्थे इत्यादिः । न तु तत्प्रतीतिरिति । समासात्र सादृश्यप्रतीतिर्न वा पूर्वपदादुपमानत्वेन प्रतीतिरित्यर्थः । एवं च न तत्प्राप्तिरिति तद्युक्तमिति भावः । एवञ्चेति । एवमारोपेण तदप्राप्तौ चेत्यर्थः । व्याख्यातमिति । 'विचकरे च करेण करोरुभिः' इति माघस्थमिदम् । तस्य—'सञ्ज्ञापू-

व्युत्पादित: सहितशब्दस्तु नेह गृह्यते, एकदेशविकृततया संहितग्रहणादेव सिद्धेरिति भावः।

**अञो योकार इति**। अञा अकारविशेषणं किम्? शूरसेनी। "जनपदशब्दात्" इत्यञो "अतश्च" इति लुकि जातिलक्षणो ङीष्। शार्ङ्गरवीति। शृङ्गरुशब्दादपत्यार्थे अण्। नृनरयोरिति। नृशब्दाद् "ऋन्नेभ्य" इति ङीपि, नरशब्दाज्जातिलक्षणे ङीषि प्राप्ते वचनम्। ननु नरशब्दे अलोऽन्त्यस्य वृद्धिः स्यात्। यत्त्वाहु:—अन्त्यस्य "यस्येति" लोपेनापहारादनन्त्यस्याप्यकारस्य वृद्धिर्भ-

शब्दरत्नम्।

त्वे न नियामकतेत्यरुचिरत्र।

**ङीषिति**। अत एव "न प्राच्य" इति सूत्रे यौधेयादिग्रहणं चरितार्थम्। तद्धि "पर्श्वादियौधेयादिभ्यामणञौ" इति स्वार्थिकाऽञा "अतश्च" इति प्राप्तलुको निषेधार्थम्। तत्फलं चाऽञन्तत्वान्ङीन्यथा स्यात्। ढगन्तत्वात् ङीष् माभूदिति। नरशब्दादिति। यद्यपि नृशब्देन नारी सिद्धा, नरी च पुंयोगे दुर्वारा, तथाऽपि नरत्वजातिमात्रप्रति-

भैरवी।

-संज्ञापूर्वक इतिवचनस्य। न नियामकतेति। ; याद्ध वचनम्भाष्यकारसम्मतन्तस्यैव साधुतानियामकत्वमिति भावः।

अञ्योऽकार इति व्याख्याने साधकमाह—अत एवेति। शूरसेनीत्यत्रातिव्याप्तिवारकतया तादृशव्याख्यानस्यावश्यकत्वादेव। तद्धि—यौधेयादिग्रहणं हि। "अणञौ" इतीति। इति सूत्रेण विहितेत्यर्थः। तत्फलम्-निषेधस्य फलम्। ढगन्तत्वादिति। युधाशुभ्राशब्दाभ्यां "द्व्यचः"इतिसूत्रविहितढकः सत्त्वात्। यदि त्वञो लुक् स्यात्तदा वर्णप्राधान्ये प्रत्ययलक्षणाभावेन ङीन् न स्यादिति भावः। नृनरयोरित्यत्र नरशब्दोपादानाभावेऽपि नारीतिरूपं नृशब्दोपादानमात्रेण सिद्धम्; नरीतिरूपव्यावृत्तिस्तदुपादानस्य फलमित्यपि न, पुंयोगे तस्यैव दुर्वारत्वादित्याक्षिप्य समाधत्ते—यद्यपीत्यादिना। पुंयोगे नरीतिप्रयोगोऽपि दृश्यते 'किन्नरीणान्नरीणाम्' इति। जातिमात्रेति। अत्र मात्रपदेन पुंयोगस्य व्यवच्छेदः। नृशब्दावयवऋकारस्य यथा "अलोन्त्य" परिभाषया वृद्धिर्भवति तथा नरशब्देऽपि प्राप्नोतीत्याक्षेपः। मूले—नन्विति। तत्र "स्थानेऽन्तरतमे" इति सप्तम्यन्तपाठाभिप्रायेण समाधानवादिमतमनुवदति—यत्त्वाहुरित्यादिना। अन्त्याकारस्य वृद्धौ यदि "यस्येति च" इत्यनेन तस्य लोपस्तर्हि वृद्धि-

भावप्रकाशः।

र्वक' इति वचनस्य। **न नियामकेति**। एतेन तथा रत्नाकरदण्डयादिभिः सिद्धान्ततयोक्तमपास्तम्।

तथा व्याख्याने गमकमाह—**अत एवेति**। तत्रातिव्याप्तिवारकतया व्याख्यानादेवेत्यर्थः। **इतीति**। अस्य विहितेति शेषः। युधाशुभ्राभ्यां "द्व्यचः" इति ढकि "पर्श्वादि" इति स्वार्थेऽञि तेन लुकि वर्णप्राधान्येन प्रत्ययलक्षणाभावेन ङीनोऽप्राप्तिरिति तदर्थं तत्कृतम्। यदि तु तथा व्याख्यानं नेष्टं तर्हि लुक्यपि प्रत्ययलक्षणेन ङीन्स्यादेवेति तदानर्थक्यं स्पष्टमेव। ननु ढगन्तत्वादेव रूपसिद्धौ तदानर्थक्यमेवात आह—**तत्फलञ्चेति**। ङीप्युदात्तनिवृत्तिस्वरेणान्तोदात्तत्वं स्यादिष्यते त्वन्ताऽनुदात्तत्वमिति भावः। यद्यप्यन्यतरोपादानेपि "नारी" इतीष्टसिद्धिस्तथाप्यन्यतरस्याऽनिष्टरूपाभावाय द्वयोरुक्तिरिति प्रकाशरत्नाकरदण्ड्यादयस्तथापि लाघवादाह—**नृशब्देनेति**। चस्त्वर्थे। **पुंयोगे इति**। जातिग्रहणानुवृत्त्या तत्रास्याप्रवृत्तेः। तथा च जातिग्रहणं व्यर्थमिति भावः। अत एव किन्नरीणां नरीणामिति प्रयोगः सङ्गच्छते। एतेनोभयोरत्रोपादानसामर्थ्यादिकृपरिभाषानुपस्थितावविशेषेण वृद्धावुक्तप्रयोगोऽसाधुरेवेति रत्नाकरोक्तमपास्तं, पुंयोगे तस्य दुर्वारत्वात्। तथा च नरग्रहणं व्यर्थमिति भावः। **मात्रपदेन** पुंयोग-

वत्यान्तरतम्यात् । 'गुणे त्वन्याय्यकल्पना' इत्यलोन्त्यपरिभाषाबाधस्यैव न्याय्यत्वादिति; तन्न, प्रत्ययसन्नियोगशिष्टाया वृद्धेरन्तरङ्गत्वेन परमपि "यस्येति" लोपं बाधित्वा प्रवृत्त्यौचित्यात् । किं चास्तु कथंचिल्लोपस्तथाऽपि रेफस्यैव वृद्धिः स्यान्न त्वकारस्य, अन्तरतमपरिभाषापेक्षयाऽलोन्त्यपरिभाषायाः परत्वात् । अपि चान्तरतमपरिभाषाऽसदृशमादेशं व्यावर्तयति न तु स्थानिनं नियच्छति, तत्कथं

शब्दरत्नम् ।

पादनेच्छायां नरीत्यस्य वारणार्थं नरग्रहणं बोध्यम् । ननु वृद्धिविधानसामर्थ्याल्लोपबाधोऽत आह—**गुणे त्विति** । अलोन्त्यपरिभाषाबाध एव न्याय्य इति भावः । **अन्तरङ्गत्वेनेति** । सामर्थ्याद्बाधो ह्यनुचितः । न्यायप्राप्तबाधस्तूचित एवेति भावः । **कथं चिदिति** । सन्नियोगशिष्टत्वाऽनङ्गीकारेणेत्यर्थः । **तत्कथमिति** । "स्थानेऽन्तरतमे" इति सप्तम्य-

भैरवी ।

विधानं व्यर्थमिति तत्सामर्थ्याल्लोपस्य बाधोऽस्त्वित्याक्षिपति—नन्विति । यद्यलोन्त्यपरिभाषैकवाक्यतयाऽन्त्यस्य वृद्धौ तत्सामर्थ्याल्लोपस्य बाधस्तदा साक्षाद्विधिशास्त्रस्य बाधस्तदपेक्षया लोपस्यादौ प्रवृत्तावपि योऽन्तरतमोऽवशिष्टावयवस्तस्य स्थाने वृद्धिर्भविष्यतीत्याशयेनाह—गुणे त्वन्याय्येति । गुणे—गुणीभूतशास्त्रे परिभाषारूपे, अन्याय्यस्य—अप्रर्त्तनस्य कल्पना उचितेति शेषः । तथाप्यादौ वृद्धेरेव प्रवृत्तिः स्यात्, तस्याश्च सामर्थ्यान्निवृत्तिर्न स्यादिति भावेन समाधत्ते—तन्नेति । अन्तरङ्गत्वे सन्नियोगशिष्टत्वमत्र हेतुः । एवञ्चादौ वृद्धेरन्तरङ्गाया अन्तरतमपरिभाषाऽलोन्त्यपरिषाभ्यामेकवाक्यतया प्रवृत्तिस्ततो लोपस्य यदि प्रवृत्तिः स्यात्तदा वृद्धिविधानवैयर्थ्यम्, इति सामर्थ्यात्परस्यापि लोपस्य बाधेन वृद्धेः श्रवणं स्यात् । न ह्यत्र केवलान्तरङ्गपरिभाषाया एव प्रवृत्तिः, किन्तूक्तयोरपीति न्यायप्राप्त एव लोपस्य बाधः सामर्थ्यादिति तात्पर्यम् । कथञ्चिदित्युक्तेस्तात्पर्यमाह—सन्नियोगशिष्टेति । तथा च वस्तुतः सन्नियोगशिष्टत्वेऽपि यदि तस्याऽनङ्गीकारस्तदा क्लेशः स्पष्ट एव । तथा च परलोपोत्तरम्पूर्वान्तरतमपरिभाषापेक्षया परत्वेन बलवती याऽलोन्त्यपरिभाषा सैव वृद्धे रेफस्थानिकत्वे नियामिका स्यादित्यनिष्टापत्तिः । नन्वत्र गुणे त्वन्याय्येति पूर्वोक्तन्यायेनाऽलोन्त्यपरिभाषाया अप्रवृत्तिः कल्प्यते, अन्तरतमपरिभाषा तु प्रवर्तत इति तदेकवाक्यतया नकाराऽकारस्य वृद्धिः स्यादितीष्टसिद्धिरत आह मूले—अपि चेति । न तु स्थानिनमिति । कुमार्यत्रेत्यादौ दीर्घस्य स्थाने यणादेशः "स्थानेन्तरतमे" इति सप्तम्यन्तपाठे न स्यात् तादृशपाठे स्थानिनः सङ्कोचादिति स पाठो नोचितः, किन्तु "स्थानेऽन्तरतमः" इति प्रथमान्तपाठ एव । तथा चाऽनन्तरतमादेशस्य निवृत्तिरित्यादेशसङ्कोच एवेति भावः । एतावता परोक्तरीत्याऽलोन्त्यपरिभाषाया बाधमभ्युपेत्यान्तरतमपरिभाषयानिष्टसिद्धिरित्यभिहितम् । वस्तुतस्तु परोक्ता 'गुणे त्वनाय्य'इति रीतिरेव प्रकृतेऽयुक्ता, परि-

भावप्रकाशः ।

व्यावृत्तिः । ग्रन्थसङ्गतिमाह—**नन्विति** । **एवेन** लोपबाधव्यावृत्तिः । अन्तरङ्गत्वेनेतीति । यद्यपि सन्नियोगशिष्टत्वेन तन्निमित्तकत्वादविशेषस्तथापि तत्त्वेनाऽनुल्लेखादस्या अन्तरङ्गत्वमिति भावः । एतेन वार्णपरिभाषया लोप इति तत्त्वमिति तदाशयवर्णकरत्नाकरदण्डधायुक्तमपास्तं, वार्णत्वस्य दुरुपपादत्वात् । ननु तन्न्यायेन तद्बाधोऽयुक्त इत्युक्तमेवेति कथमन्तरङ्गत्वात्तया तद्बाधोऽत आह-**सामर्थ्यादिति** । तथा च सामर्थ्याद्बाधे तन्न्यायसञ्चारो न तु न्यायप्राप्तबाधे, सिद्धान्तभङ्गापत्तेरनिष्टापत्तेश्च, केषाञ्चित्सूत्राणामानर्थक्यापत्तेश्चेति भावः । **हिरवधारणे** । **अनङ्गीति** । तथा च तत्त्वे सति तदनङ्गीकार एव क्लेश इति भावः । ननु सप्तम्यन्तपाठाश्रया आन्तरतम्यादिति तदुक्तिरत आह—स्थानेऽन्तरेति । ननु पूर्वो-

रेफस्य स्थानित्वव्यावृत्तिः। किं च 'गुणे त्वन्याय्य' इति न्यायोपन्यसनं स्थवीय एव, परिभाषयोः परस्परं गुणगुणिभावायोगात्।

अत्रेदं तत्त्वम्। "नर" इति रान्तलुप्ताकारानुकरणं नरः अः नरः। ना च नरश्च तयोरिति व्याख्येयम्। यद्वा नरस्य अः नरः, कतन्तवत् पररूपम्। ना च नरश्च तयोर्नृनरयोः। नरस्य च प्रथम एव अकारो गृह्यते न तु द्वितीयः प्रश्लेष-

---

### शब्दरत्नम्।

न्तपाठस्य भाष्ये "कुमार्यत्र" इत्यादौ यणनापत्त्या दूषितत्वादिति भावः। परिभाषयोरिति। तद्व्याख्यातृग्रन्थानुसारेणेदम्। तर्हि अलोन्त्यस्यैव बाधो न त्वन्तरतमपरिभाषाया इति व्याख्यातम्।

व्याख्येयमिति। नृनरयोरित्यावर्त्तते एकत्र पञ्चम्यर्थे षष्ठी ताभ्यां ङीन्, नुर्नरोऽकारस्य च वृद्धिरित्यर्थ इति भावः। अत एव वानरशब्दे नातिप्रसङ्गः। यतो नरशब्दान्ङीन् तदीयरेफान्तसम्बन्ध्यकारस्यैव वृद्धिविधानात् वानरे नरस्याऽऽनर्थक्यात्ततो न

### भैरवी।

भाषयोः समत्वात्। किन्तु परत्वमलोन्त्यपरिभाषाया इति सैव प्रवर्त्ततेत्याशयेनाह--किञ्चेति। ननु परिभाषयोर्गुणगुणिभावोऽत्र न केनाप्युक्त इति कथमेवं वदसीत्यत आह--तद्व्याख्यात्रिति। प्रकाशव्याख्यातृग्रन्थानुसारेणेत्यर्थः। यद्वा तच्छब्दोऽत्र बुद्धिस्थायाः प्रक्रियाया बोधकः। एवञ्च प्रक्रियाया व्याख्यातॄणां ये ग्रन्थाः प्रकाशप्रदीपादयस्तदनुसारेणेत्यर्थः।

परोक्तम्प्रकारं सन्दूष्य युक्तं समाधानमाह--अत्रेदमित्यादिना। लुप्तेति। "यस्येति च" इतिसूत्रेण लुप्तेत्यर्थः। एवं व्याख्याने यस्मात्प्रत्ययस्य विधानन्तस्य स्थानित्वेन निर्देशो न जात इति वानरशब्देऽतिप्रसङ्ग इत्यरुचेराह--यद्वेति। मूलोक्ताभ्याम्प्रकाराभ्यां वृद्धिरूपादेशस्य स्थानिनो निश्चयेऽपि प्रत्ययविधानावधेरलाभ इत्यत आह–नृनरयोरित्यावर्तत इति। अत एव—द्वितीयपक्षाश्रयणेनावृत्त्या चाऽर्थविशेषस्य स्वीकारादेव। तदेव स्फुटयति--यत इति। ततः--वानरशब्दावयवनरशब्दात्। नन्वात्मज इति कोशबलात्सर्वेषां दुहितृप्रतिपा-

### भावप्रकाशः।

त्करीत्या परिभाषयोस्तत्त्वस्यैवाऽनङ्गीकारान्नायं दोषोऽत आह—तद्व्याख्यात्रिति। प्रकाशव्याख्यातृग्रन्थेत्यर्थः। यद्वा तस्याः प्रक्रियाया व्याख्यातॄणां ये ग्रन्थाः प्रसादप्रदीपादय इत्यर्थः। बाधः। तत्सामर्थ्यादिति भावः। इति व्याख्यातमिति। न तु पूर्वोक्तरीत्येति भावः। यद्यपि प्रकाशोक्तेस्तथापि व्याख्यानं सम्भवति तथापि निर्मूलं तदिति भावः।

यद्यपि आद्यपक्षे वानरेऽतिप्रसङ्गो नान्त्यपक्षे इत्येवं मूलं सुयोजं तथापि तथा खण्डनकृद्रत्नाकराद्युक्तिं खण्डयितुमाद्यपक्षेऽपि तमुद्धरति–नृनरयोरितीति। एकत्र जातिग्रहणमन्यत्रैकदेशग्रहणमिति भावः। अत एवेत्यस्यार्थमाह–यत इति। यस्मादित्यर्थः, प्रत्यासत्त्येति भावः। ननु वानरशब्दे ङीनेव कुतो नाऽत आह—वानरे इति। अर्थवत्परिभाषयेति भावः। ततः—वानरीयनरशब्दात्। एतेनाऽऽद्यपक्षे जातेरग्रहणे कथं ततो ङीप् "जातेः" "स्त्रियाम्" इत्यस्य चाधिकारात्तत्सामर्थ्यात्तद्विशिष्टग्रहणे तत्रातिप्रसङ्गः। न च 'यं समुदायं यो न व्यभिचरति' इति न्यायेन निस्तारः, अविशेषणस्य नरो ङीनि प्रकृतित्वेनान्वाख्याय पृथगनुसन्धानस्य क्लिष्टत्वात् प्रकाशोक्तरीत्या निर्वाहाच्चेति खण्डनकृदुक्तमपास्तम्। वस्तुतस्त्विदं गणसूत्रमनार्षमिति स्पष्टमन्यत्र। ननु कोशबलात्पुत्रशब्दादपि स्त्रीबोधापत्तिरत

सामर्थ्यात् । अधिकं शब्दकौस्तुभे बोध्यम् । पुत्रशब्दोऽत्र पठ्यते । शैलपुत्री । 'पुत्रीव हर्षं हृदये तनोति' 'कुर्वे तदुर्वीपतिपुत्रि सर्वम्' । न च पुत्रशब्दः कन्यायां नास्तीति भ्रमितव्यम् ,

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ।
आहुर्दुहितरं सर्वे, इत्यमरोक्तेः ।

अत एव "प्रत्ययस्थात्" इतीत्वप्रकरणे 'वा सूतकापुत्रिकावृन्दारकाणाम्' इति वार्तिकं तद्भाष्यादिकं च सङ्गच्छते । यत्त्वत्र हरदत्तेनोक्तम्—केवलपुत्रशब्दः स्त्रियां न वर्त्तते इति; तद्भाष्यादिविरोधादुपेक्ष्यम् , इत्वप्रकरणस्थस्वग्रन्थविरोधाच्च ।

इदं तु चिन्त्यम्—"कारे सत्यागदस्य" इति सूत्रे 'सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा'इति वार्तिकं किमर्थमिति । यत्तु वदन्ति स्वरार्थमिति, तन्न, टित्वान् ङीपि कृते उदात्तनिवृत्तिस्वरेणोदात्तङीनन्तेन तत्पुरुषेपि समासस्वरेणान्तोदात्त एवेति स्वरे भेदाभावात् । यदपि शार्ङ्गरवादौ पुत्रशब्दः प्रक्षिप्तो न तु साम्प्रदायिक इति; तदपि न, उदाहृतप्रयोगविरोधात् , 'वा सूतका' इत्यादिवार्तिके कैयटहरदत्तादिकृताऽकारप्रश्लेषविरोधाच्चेत्यास्तां तावत् ।

आम्बष्ठ्येति । "वृद्धेत्कोसल" इति यङ् । कारीषगन्ध्येति । करीषस्येव गन्धोऽस्य करीषगन्धिः । "उपमानाच्च" इति गन्धस्येदन्तादेशः । तस्य गोत्रापत्यं

---

शब्दरत्नम् ।

ङीनिति बोध्यम् । तदाह—अधिकमिति । अमरोक्तेरिति । तत्र स्त्रीत्वबोधे ईकारसमभिव्याहारस्तन्त्रम् । केवलाऽकारान्तपुत्रशब्दस्तु पुंस्त्वविशिष्टस्यैव बोधकः । अत एव स पुत्र इत्यतो न सन्देहः । "पुमांसं पुत्रमाधेहि" इत्यादौ पुंस्त्वेन विशेषणं त्वतिशयितपुंस्त्वबोधनायेति भावः ।

चिन्त्यमिति । चिन्ताबीजं तु सूतादिपुंशब्देभ्यः परे ङीनन्ते तत्पुरुषे "पुत्रः

भैरवी ।

दकतया स्त्रीत्वविवक्षायामप्यकारान्तपुत्रशब्दस्य प्रयोगापत्तिरत आह--तत्रेति । पुत्रशब्द इत्यर्थः । पुत्रशब्दनिष्ठईकारसमभिव्याहारे ईकाराव्यवहितपूर्वोच्चरितत्वं पुत्रशब्देन स्त्रीत्वबोधे तन्त्रन्नियामकमित्यर्थः । पुत्रशब्दस्त्विति । स्त्रीत्वबोध इत्यस्यादिः । अत एव--केवलाऽकारान्तस्य पुंस्त्वविशिष्टप्रतिपादकत्वादेव । ननु भवदुक्तार्थस्वीकारे 'पुमांसम्पुत्रमाधेहि' इति श्रुतौ पुमांसमिति विशेषणोपादानमनर्थकमापद्येतेत्यत आह--पुमांसमित्यादि । अतिशयितपुंस्त्वम्--पराक्रमातिशयः । एवञ्च स्त्रियामपि वृत्तिरकारान्तपुत्रशब्दस्यैव । परं तु स्त्रीत्वे बोधनीये स्त्रीप्रत्ययसमभिव्याहारो द्योतक इति सिद्धम् । अत एवाह मूले--यत्त्वत्रेत्यादिना ।

इदन्तु चिन्त्यमिति । इदं-वक्ष्यमाणम् । खण्डनकारोक्तञ्चिन्ताबीजमाह-चिन्ताबीजन्त्विति । पुंशब्देभ्यः--पुंवाचकशब्देभ्यः । ङीनन्ते तत्पुरुषे । ङीनन्तोत्तरपदकतत्पुरुषे कृते सूतपुत्रीत्या-

भावप्रकाशः ।

आह-तत्रेति । तयोर्मध्ये इत्यर्थः, पुत्रशब्दे इत्यर्थो वा । न सन्देह इति । स्पष्टीकृतं चैतत् गुरुचरणैः काव्यप्रदीपोद्योते । ननु श्रुतौ विशेषणोक्त्या केवलस्यैवोभयत्र वृत्तिरिति प्रकाशमान्याद्युक्तिं निराचष्टे-पुमांसमिति । एवं च हरदत्तोक्तिर्युक्तेति मूलं तथा रत्नाकरदण्ड्याद्युक्तं च चिन्त्यमितिगूढतात्पर्यम् ।

खण्डनकारोक्तं चिन्ताबीजमाह-चिन्तेति । ङीनन्ते । पुत्रीशब्दे सतीति शेषः । तत्पुरुषे । कृते

स्त्री, अण्। "अणिञोः" इति ष्यङादेशः। स च यद्यपि स्त्रियामेव विहितस्तथाऽपि

शब्दरत्नम्।

पुम्भ्यः" इत्यनेन पुँल्लिङ्गशब्दात्परपुत्रशब्दान्ततत्पुरुषे पुत्रस्यादिरुदात्त इत्यर्थकेन लिङ्गविशिष्टपरिभाषया पुत्रशब्दोकारोदात्तत्वम्। पुत्रडादेशे तु न तत्प्रवृत्तिः सानुबन्धकत्वादतस्तत्रोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वमिति। "नादिन्याक्रोशे पुत्रस्य" इत्यस्य पुत्रटि अप्रवृत्तिस्तु न फलम्, एतत्सम्बन्ध्यचः परस्य यर आदिनीशब्दपरत्वासम्भवात्। पुत्रटः स्थानिवद्भावेन दुहितृशब्दत्वेऽपि "न षट्" इति निषेधो न, तस्य "ऋन्नेभ्य" इति ङीब्मात्रबाधकत्वात् टित्त्वसामर्थ्याच्च। इदं च वार्तिकं तत्पुरुषे एव प्रवर्त्तते "कारे सत्या" इति सूत्रे उपसंख्यानात्। तत्रान्यासम्भवात् पूर्वोत्तरसाहचर्येण च तत्पुरुष एव। एतेन बहु-

भैरवी।

दाविति शेषः। ननु पुत्रीशब्दः पुत्रशब्दाभिन्न एवेत्यत आह—लिङ्गेति। उदात्तत्वमिति। भवतीति शेषः। उदात्तनिवृत्तिस्वरेण—टित्त्वान्ङीपि कृते "अनुदात्तस्य च यत्रोदात्तलोपः" इत्यनेनेत्यादिः। यत्तु कश्चित्—पुत्रडादेशपक्षे 'सूतपुत्र्यादिनी त्वमसि पापे' इति प्रयोगे सानुबन्धकत्वादस्य पुत्रस्य "नादिन्याक्रोश" इति सूत्रे न ग्रहणमित्येव चिन्ताबीजमिति तदपेशलमित्याह—नादिन्येति। आदिनीशब्दपरत्वासम्भवादिति। ङीपाऽत्रव्यवधानेन 'येन नाव्यवधानम्' इति न्यायेन रेफाकारमात्रव्यवधान एव तस्य प्रवृत्तेरिति भावः। ननु पुत्रडादेशपक्षे सूतपुत्रीत्यत्र स्थानिवद्भावेन दुहितृशब्दत्वात् "न षट्" इति निषेधः स्यादत आह—पुत्रट इति। ऋन्नेभ्य इतीति। 'येन नाप्राप्ति' न्यायेनेत्यादिः। ननु टापोऽपि निषेधस्य सिद्ध्यर्थं तत्र षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च यत्प्राप्तमिति प्राग्व्याख्यातमिति "टिड्ढा" इत्यस्यापि निषेधः स्यादेवेत्यत आह—टित्त्वसामर्थ्यादिति। "कारेसत्या" इति सूत्रस्य तत्पुरुषे एव प्रवृत्तौ साधकमाह—तच्चेति। "कारेसत्या" इति सूत्रञ्चेत्यर्थः। पूर्वोत्तरेति। "वाचंयम" इति "श्येनतिल" इतिसूत्रयोरित्यर्थः। एतेनोग्रजातीया कन्येत्यस्य सम्भवादन्यासम्भवादित्यसङ्गतमिति तत्परास्तम्, साहचर्यस्य बलवत्त्वप्रयोजकताया दर्शनात्। एतेन—उक्तरीत्या सूतोग्रेत्यस्य वार्तिकस्य तत्पुरुषसमासे एव प्रवृत्तेरेव। बहुव्रीहौ ङीबर्थमिति। सूता दुहिता यस्या इति बहुव्रीहौ ङीबर्थमित्यर्थः। यद्येतद्वार्तिकन्न स्यात्तदा सूता पुत्री यस्येत्येवं विग्रहे समासे

भावप्रकाशः।

'सूतपुत्री' इत्यादाविति शेषः। पुत्रीशब्दे प्राप्त्यर्थमाह—लिङ्गेति। पुत्रशब्देति। तथा चाऽन्ताऽनुदात्तत्वमिति भावः। आदेशे तु। टित्वान्ङीपि सूतपुत्रीत्यादाविति शेषः। अतस्तत्र—उक्तहेतोरव्यवहितोक्ते। तथा च स्वरभेदात्तदावश्यकमिति भावः। खण्डनकृदुक्तिविशेषं खण्डयति—नादिनीति। सूतपुत्र्यादिनीत्यादाविति भावः। अप्रवृत्तिरिति। सानुबन्धकत्वाद् इति भावः। अभिव्यक्तेति न्यायादिति तदुक्तिरयुक्ता, द्वयोरपि तुल्यार्थत्वेन तदप्रवृत्तेः। एतत्सम्बन्धीति। सूतपुत्रीसम्बन्धीत्यर्थः, यादिना व्यवधानात्। एवं च स्त्रियामुभयत्रापि नेति भावः। एकवर्णव्यवधानं त्वावश्यकमिति सोढव्यमेवेति तात्पर्यम्। ननु न तद्व्यवधानं ङीप एवाऽसत्त्वादित्याशये नाशङ्क्ते—पुत्रटः स्थानीति। तस्य—उक्तनिषेधस्य। मात्रपदेन "टिड्ढा" इत्यस्य निरासः। मध्येऽपवादाऽनन्तरस्येति न्यायाभ्यामिति भावः। रत्नाकरोक्तिं खण्डयितुमाह—इदञ्चेति। पुत्रड्विधायकमित्यर्थः। ननु तदेव तत्पुरुषे कुतोऽत आह—तच्चेति। उक्तसूत्रं चेत्यर्थः। अन्येति। कारस्य सत्यागदाभ्यां तत्पुरुषान्यसमासाऽसम्भवादित्यर्थः। यथाकथञ्चित्सम्भवेप्याह—पूर्वोत्तरेति। वाचं यम श्येनतिलेत्यादीत्यर्थः रत्नाकरोक्तिं खण्डयति—एतेनेति। तत्पुरुषे एव प्रवर्तनेनेत्यर्थः। बहुव्रीहौ इति। राज्ञी

ङित्करणसामर्थ्यात्तदन्तादप्ययं चाप्। पौतिमाष्येति । पूतिमाषशब्दो गर्गादिः ।

"तद्धिताः" ॥ बहुवचनमनुक्तानामुपसंख्येयानां सङ्ग्रहार्थम् । महासञ्ज्ञाकरणं च तेभ्यः प्रयोगेभ्यो हितास्तद्धिता इत्यन्वर्थत्वाय । तेन यथाऽभिधानमेव स्युः । स्यादेतत् । टापः प्रागयमधिकारोऽस्तु ष्फविधौ तद्धितग्रहणं

शब्दरत्नम् ।

वीहौ ङीबर्थमिदमित्यपास्तम् , टित उपसर्जनत्वेन तत्र ङीपोऽप्राप्तेश्चेति दिक् ।

ङित्करणसामर्थ्यादिति । "यङश्च" इत्यत्र सामान्यग्रहणाऽविघातार्थङित्करणसामर्थ्यादित्यर्थः । द्योतकत्वाच्चेत्यपि बोद्धव्यम् ।

अनुक्तानामिति । तेन अल्पार्थे ग्रामटिकादयः साधवः । इदन्तु भाष्ये न दृश्यते । टापः प्रागिति । ङीबादिषु ङस्येत्सञ्ज्ञा तु 'चुटू' इति सूत्रकरणेन सेत्स्यति, टीबादय एव वा ते सन्तु । तद्धितान्तत्वात्प्रातिपदिकत्वेऽपि फिट्स्वरो न, प्रकृतिप्रत्ययविभा·

भैरवी ।

वाच्यस्तथासति "नद्यृतश्च" इति नित्यकबापत्तिः स्यादिति तात्पर्यम् । ङीबर्थमित्यप्यसङ्गतमत्याह—उपसर्जनत्वेनेति ।

मूले ङित्करणसामर्थ्यादिति । ष्यङो ङित्करणसामर्थ्यादित्यर्थः । एतद्भावमाह—यङश्चेत्यत्रेति । प्रकारान्तरेणापि 'उक्तार्थानाम्' इति न्यायस्यात्राऽप्रवृत्तिमाह—द्योतकत्वादिति । स्त्रीप्रत्ययस्य द्योतकत्वादित्यर्थः । द्योतकविषये द्वौ ब्राह्मणावित्यादौ पञ्चकम्प्रातिपदिकार्थपक्षे द्वित्वसंख्यायाः प्रकृत्याऽभिधानेपि तत्र समुच्चयस्य दर्शनादिति भावः ।

तेन—अनुक्तानामिति व्याख्यानेन । ग्रामटिकेति । अल्पो ग्रामो ग्रामटिका । ग्रामशब्दाट्टिकच्प्रत्ययस्य प्रयोगः । इदम्—बहुवचनोपादानेनानुक्तानां संग्रह इत्येतत् । ननु टापः प्रागधिकारकरणे ङीबाद्यवयवङकारस्याऽतद्धित इति निषेधादित्संज्ञा न स्यादत आह—ङीबादिष्विति । ननु "चुटू" इति सूत्रे ङकारोच्चारणे गौरवमत आह—टीबादय इति । ङकारस्य स्थाने टकारस्यैवोच्चारणमस्त्वित्यभिप्रायः । टाबादीनान्तद्धितसंज्ञायान्तदन्तप्रातिपदिकत्वापत्त्या 'फिषोन्त उदात्तः' इत्यन्तोदात्तत्वापत्तिरित्याशङ्कां वारयति—तद्धितान्तेति । नन्वेवंसति सर्वं नाम धातुजमाह—निरुक्ते व्याकरणे शकटस्य तोकमिति शाकटायनमते सर्वत्रैव प्रकृति-

भावप्रकाशः ।

दुहिता यस्याः, उग्रा दुहिता यस्याः, राजपुत्री-उग्रपुत्रीत्यादावित्यर्थः । अपास्तमिति । तथा च राजदुहितेत्यादय एव प्रयोगा न तु तथा इति भावः । एतेन टित्वसामर्थ्यादुपसर्जनेपि ङीबिति तदुक्तिरप्यपास्ता, टित्वसार्थक्यस्य प्रागुक्तत्वाच्च । तद् ध्वनयन्नाह—टित इति । तत्र—बहुव्रीहौ टित्वसार्थक्यस्य प्रागुक्तत्वाच्च । यत्तु वार्तिके आद्युदात्तः स निपात यत इति; तन्न, तथा सति स्वरप्रकरणे एव वार्तिकस्य कर्तुं युक्तत्वेन टस्य दुहितृपदस्य च वैयर्थ्यात् । एवञ्च प्रकाशोक्तिरपि तदभिप्रायेति युक्तैवेति मूलं तथा रत्नाकरदण्ड्याद्युक्तं चायुक्तमिति बोध्यम् । तदाह—दिगिति ।

नन्वफलत्वान्ङित्त्वमेव मास्त्वत आह—यङ इति । अत्र यत्सामान्यग्रहणं तदविघातायेत्यर्थः । सिद्धान्तरीत्या आह—द्योतकेति । द्वौ ब्राह्मणादित्यादौ तत्समुच्चयस्य दृष्टत्वात् तन्न्यायस्य क्वचित्तत्र व्यभिचरितत्वात् । एतेन द्योतकत्वेपि तन्न्यायप्रवृत्त्या चिन्त्यमिदमित्यपास्तम् ।

ग्रामटिकेति । अल्पो ग्रामो ग्रामटिका टिकच्प्रत्ययस्तदन्ताट्टाप् । न दृश्यते इति । एवं चाप्रमाणमिति भावः । ननु टापः प्राक् तत्करणे "लशक्व" इति ङस्येत्संज्ञा न स्यादत आह—ङीबादिष्विति । ततोपि लाघवादाह—टीबादय इति । आदिना डाप्ङीनोः सङ्ग्रहः । एवेन ङनिरासः ।

यस्येति लोपे ईद्ग्रहणं च मास्त्विति चेत् ? मैवम्, पटूवीत्यत्र ओर्गुण प्रसङ्गात् ।

---

## शब्दरत्नम् ।

गशून्ये एव तत्प्रवृत्तेः पकारषकाररूपभिन्नानुबन्धवैयर्थ्यापत्तेश्च । अत एव सिद्धान्ते लिङ्गविशिष्टपरिभाषया नात्र फिट्स्वरः; डाप्प्रत्यये विजातीयडकारानुबन्धश्च न कार्य इत्यपरं लाघवं, टिलोपस्य "नस्तद्धित" इत्यनेनैव सिद्धेः । **यस्येति लोपे** इति । 'औङः श्याम्' इति वार्तिकस्याप्युपलक्षणम् । **ओर्गुणेति** । न च ईद्ग्रहणं ङीबादिषु तद्धितकार्याभावज्ञापनार्थं, तेन पटूवीत्यादौ न "ओर्गुण" इति वाच्यम् ? कुरूरित्यादिसिद्ध्यर्थं स्त्रीप्रत्ययेषु तदभावज्ञापने आसुरायणीत्यादौ ष्फेऽपि "यस्येति" लोपानापत्तेः । अत एव दण्डिनीत्यादौ टिलोपो नेति दिक् ।

## भैरवी ।

प्रत्ययविभागसम्भवात्तादृशसमुदायस्याप्रसिद्धिरत आह—पकारेति । पकारषकाररूपौ यौ भिन्नावनुबन्धौ तत्करणसामर्थ्यादित्यर्थः । यदि सर्वत्र फिट्स्वरः स्यात्तदान्तोदात्तत्वमेव स्यादिति तयार्वैयर्थ्यं स्पष्टमेव । अत एव—तादृशेष्वेव फिट्स्वरस्य प्रवृत्तिस्वीकारादेव । सिद्धान्ते—"यूनस्तिः" इति सूत्रात्प्रागेव पाठरूपसिद्धान्ते । टापः प्राक् तद्धिताधिकारकरणे लाघवान्तरमप्याह—डाप्प्रत्यय इति । "यस्येति च" इति सूत्रे ईकारग्रहणाभावे 'औङः श्याम्' इति वार्तिकमपि न कार्यमित्याह—औङ इति । ईद्ग्रहणमिति । "यस्येति च" इति सूत्रे ईद्ग्रहणमित्यर्थः । ईद्ग्रहणेन ईकारादौ स्त्रीप्रत्यये एव साजात्यात्तद्धितकार्याभावकल्पने कुरूरित्यादौ तद्धितकार्यापत्तिरतः स्त्रीप्रत्ययत्वेन साजात्यमादाय ज्ञाप्यं वचनं स्वीकार्यं, तथा चाव्याप्तिरित्याह—कुरूरित्यादीति । अत एव—टापः प्राक् तदधिकाराकरणादेव । दिगिति । दिगर्थस्तु ईद्ग्रहणेनाज्रूपस्त्रीप्रत्यये तद्धितकार्याभावो ज्ञाप्यतान्तावतैवाऽऽसुरायणीत्यादिसिद्धिर्यद्यपि भविष्यति तथापि ज्ञापकसिद्धवचनान्तरकल्पनापेक्षया यथाश्रुतमेव लघु इति ।

## भावप्रकाशः ।

नन्वेवमपि फिट्स्वरापत्तिरत आह—**तद्धितान्तेति** । सर्वं नाम धातुजमिति मतेप्याह—**पकारषकाररूपेति** । पकारषकारादिरूपा ये भिन्नानुबन्धास्तत्करणवैयर्थ्येनेत्यर्थः । अत एव—अनुबन्धवैयर्थ्यादेव । **सिद्धान्ते**—अधिकारस्य यथास्थितत्वे । अत्र—स्त्रीप्रत्ययान्ते । चः—तद्धितादिसमुच्चायकः । **अपरं**—मूलोक्तातिरिक्तम् । न्यूनतां निराचष्टे—**औङ इति** । तस्याऽतद्धितत्वात् । तथा चेदमप्यपरं लाघवमिति भावः । रत्नाकरसिद्धान्तानुवादकदण्ड्याचार्युक्तिं खण्डयति—**न च ईद्ग्रहणमिति** । "यस्येति च" इत्यत्रेति भावः । **आदिना** ङीष्ङीनोः सङ्ग्रहः । यदि साजात्यात् त्रिष्वेव तत् ज्ञापनं तर्हि कुरूरित्याद्यसिद्धिस्तत्र गुणापत्तितादवस्थ्यम्, अतः सामान्यापेक्षत्वमावश्यकं, तदाह—**स्त्रीप्रत्ययेति** । **तदभावेति** । तद्धितकार्याभावेत्यर्थः । **ष्फेपीति** । अधिकृततद्धितपदसम्बन्धस्य ज्ञापकस्य सत्त्वादिति भावः । ननु ङीष्ङीनोर्गुणाभाव एव ज्ञाप्यत इति रत्नाकरोक्त्या नायं दोषोऽत आह—**अत एवेति** । सामान्यापेक्षज्ञापनादेवेत्यर्थः । अन्यथा ङीपि "नस्त" इति टिलोपापत्तिः स्पष्टैव । किं च तथा सति चारितार्थ्यासम्भवादित्यपि बोध्यम् । यदि तु सामान्यापेक्षज्ञापनेऽपि फडिति न्यासेनाऽऽसुरायणीत्यादिसिद्धिरित्युच्यते तर्हि सिध्यत्येवं, किं तु अपाणिनीयत्वापत्तिः स्पष्टैव । तदाह—**दिगिति** । सिद्धान्ते तु फडिति न्यासेन यथा सर्वेष्टसिद्धिस्तथा स्पष्टमन्यत्र ।

शत्रन्तादिति । यौति मिश्रीकरोति पत्येति व्युत्पत्तेः । केचित्तु बाहुलकात यौतेरौणादिकं कतिप्रत्ययं वदन्ति । उभयथाऽपि युवतीनां समूहो यौवतम् । त्यन्तात्तु अणि पुंवद्भावात् यौवनमित्येव । भिक्षादिपाठसामर्थ्यान्न पुंवदिति वृत्तिस्तु भाष्यविरुद्धा, भाष्ये तत्पाठस्य प्रत्याख्यानादिति दिक् ॥

इति स्त्रीप्रत्ययाः ।



---

शब्दरत्नम् ।

मिश्रीकरोतीति । आत्मानमिति शेषः । दिगिति । दिगर्थस्तु-पाठस्य विकाराभावमात्रतात्पर्यकत्वे वृद्ध्यादीनामप्यभावापत्तिः । अत एव युवतीकरनिर्मथितं दधीत्यादिप्रयोगसिद्धिः । युवतिशब्दे लिङ्गविशिष्टपरिभाषयैव प्रातिपदिककार्ये सिद्धेऽत्र "तद्धिताः" इति अधिकारो लिङ्गविशिष्टपरिभाषाऽनित्यत्वज्ञापनार्थ इति दिक् ॥

इति स्त्रीप्रत्ययाः ॥



भैरवी ।

योगार्थमात्रं वृद्धायामतिप्रसक्तमत आह—आत्मानमितीति । मूले—उभयथापि । शत्रन्तस्य कतिप्रत्ययान्तस्य च सत्त्वेऽपि । यौवनमिति । 'भस्याढे' इति पुंवद्भावः । अनयोरर्थे विशेषः—शत्रन्तात् "उगितश्च" इति ङीप्, कतिप्रत्ययान्तात्तु 'कृदिकारात्' इति ङीष् । आद्ये "शतुरनुम" इत्यस्य प्रवृत्त्या नद्या उदात्तत्वमिति । वृत्त्युक्तन्दूषयति-भिक्षादीति । अत एव-पूर्वोक्तरीत्या युवतीत्याकारकस्य शब्दद्वयस्य स्वीकारादेव। ननु "यूनस्तिः" इतिसूत्रात्प्राक् "तद्धिताः" इत्यस्य पाठो न कार्यो लिङ्गविशिष्टपरिभाषयैव सिद्धेरत आह—युवतिशब्द इति । दिगिति । दिगर्थस्तु "ऋन्नेभ्य" इति ङीपि यूनीशब्दोऽपि साधुरिति कश्चित्; तन्न, 'येन नाप्राप्ति' न्यायेन "यूनस्तिः" इत्यस्य "ऋन्नेभ्य" इति सूत्रापवादत्वात्, कृतेऽपि ङीपि लिङ्गविशिष्टपरिभाषयाऽस्य प्राप्तेरिति ॥

इति स्त्रीप्रत्ययविवरणम् ॥

---

भावप्रकाशः ।

कर्माकाङ्क्षायामौचित्यादाह—आत्मानमिति । मात्रशब्दः कार्त्स्न्य । आदिना लोपादिपरिग्रहः । तस्मात्पाठेन तदभावोक्तिरयुक्तैवेति यौवनमिति सिद्धं त्यन्तस्य । नन्वस्तु तथा तथापि तदन्यस्य यौवनमित्ययुक्तं, मूलप्रयोगस्यैवाभावादत आह—अत एवेति । शत्रन्तप्रकृतिकङीबन्तस्य प्रकाशोक्तस्य कत्यन्तप्रकृतिकस्य 'कृदिकारात्' इति ङीषन्तस्य वा अङ्गीकारादेवेत्यर्थः । त्यन्तात्तु "इतो मनुष्य" इति न ङीप्, अजातित्वात् । अत्रेति । उत्तरार्थत्वे तत्रैव कुर्यादिति भावः । अनित्यत्वेति । न च षष्ठीग्रहणेनैव तत्सिद्धं विनिगमनाविरहात् वार्तिककृता ज्ञापितेऽपि सूत्रकृतोऽपि तज्ज्ञापनस्याऽऽवश्यकत्वा च तदाह—इति दिगिति ॥

इति स्त्रीप्रत्ययाः ॥



# अथ विभक्त्यर्थाः

## कारकप्रकरणम् ।

**मात्रशब्दस्येति** । तस्य चावधारणमर्थः । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । प्रातिपदिकार्थादीन्येव तन्मात्रमित्येवकारेणास्वपदविग्रहः । मयूरव्यंसकादित्वात्समासः । **कृष्ण इति** । यद्यपि नीलरूपवत्परोऽयमनियतलिङ्गस्तथाऽपि

### शब्दरत्नम् ।

**नीलरूपवदिति** । "प्रत्ययस्थात्" इति सूत्रस्थेन 'असुब्वतः' इति भाष्यप्रयोगेण

### भैरवी ।

अथ "स्वौजसमौट्" इत्यादिना विहितानाम्प्रत्ययानामर्थविशेषे व्यवस्थां दर्शयति—**प्रातिपदिकार्थेति** । मूले—**मात्रशब्दस्येति** । अत्र शब्दशब्दोपादानेन नायम्मात्रच्प्रत्यय इति स्पष्टयति-**अस्वपदविग्रह इति** । मयूरव्यंसकादिसमासस्य विभाषाऽधिकारीयत्वेऽपि मात्रशब्दस्य शब्दशक्तिस्वभावाद् वृत्तिविषयत्वमेवेत्येवमुक्तम् । अत एव कार्त्स्न्यार्थकमात्रशब्देन घटमात्रं रूपवदित्यादौ सर्वे घटा इति वृद्धानां विग्रहः । इदमपि सूत्रं क्रियायोगे एव प्रवर्तते, 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकोक्तेः । ननु 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इति वचनं वृत्तिद्वयाकल्पनमूलकमस्ति, यथा-नीलघटम्भूतलमित्येव प्रयोगो नतु नीलघटवदिति, मत्वर्थबहुव्रीहिणैव विवक्षितार्थलाभात् । बहुव्रीहिश्चेदित्युपादानात्कृष्णसर्पवानित्यादि भवत्येव । अत्र कृष्णसर्पशब्दस्य कर्मधारयसंज्ञकस्य जातिविशेषावच्छिन्ने रूढिर्बहुव्रीहिस्तु न तादृशजातिविशेषावच्छिन्नप्रतिपादकः, एवञ्च तद्वचनविरोधान्नीलरूपवदित्यनुपपन्नमत आह—**नीलरूपवदितीति** । **भाष्यप्रयोगेणेति** । तत्र हि "असुप इति किम्बहुर्वा

### भावप्रकाशः ।

प्राशस्त्ये मतुप् तृतीयासमासो वेतिमान्योक्तोपपत्तेः क्लिष्टतामगतिकगतितां च ध्वनयितुमन्यत्राऽऽवश्यकयुक्तिमाह—**प्रत्येति** । तत्र हि "असुप इति । कथमिदं विज्ञायते असुब्वतोऽङ्गस्येति आहोस्वित्र चेत् सुपः पर आविति ? आद्ये बहुचर्मिकेत्यत्र दोषाद् द्वितीयो युक्तः" इत्युक्तम् । तस्यायमाशयः—सूत्रे किमसुप इति बहुव्रीहिर्न सुप यस्मिन्नङ्गे तदसुबिति; अथ नञ्तत्पुरुषः न सुपोऽसुप इति; प्रत्ययग्रहणत्वात्तदन्तविधिरुभयत्रापि , तत्राऽन्त्यपक्षो युक्तः । सः प्रसज्यप्रतिषेधः , पर्युदासे बहुपरिव्राजिकेत्यादौ समुदायादसुबन्तात्परत्वेनाऽनिष्टापत्त्याऽसुप इत्यस्य वैयर्थ्यापत्तेः । तत्राऽसुप इत्यस्य स्पष्टं बहुव्रीहित्वप्रदर्शनाय लाघवाऽनाश्रयेण मतुबन्तेन नञ् समासं कृत्वा 'असुब्वतः' इत्युक्तमितीति कैयटः । एवं च तत्प्रयोगस्य सौत्रतत्पदार्थकथनतात्पर्यकत्वेन कथमपि नान्यथोपपत्तिरसुपोऽङ्गस्येत्येव सिद्धेरतः स ज्ञापक एवेति बोध्यम् । तदाह—**प्रयोगेणेति** । अयञ्च सूचनद्वारा ज्ञापने हेतुः । एकदेशिनेत्यादिसौत्रप्रयो-

### सरला ।

श्रीगुरुः शरणम् ।

आरोहणावरोहणक्रमयोर्मध्येऽवरोहणक्रमेण शब्दसाधुत्वाभिधायकग्रन्थरचने प्रवृत्तः श्रीमद्भट्टोजीदीक्षितः पूर्वं वाक्यस्फोटस्यैव वैयाकरणसिद्धान्तसिद्धतया वाक्यस्फोटाभिव्यञ्जकवाक्यसाधुत्वाभिधायकपञ्चसन्धिप्रकरणमुक्त्वा वाक्यसाधुत्वं वाक्यघटकसुबन्ततिङन्तपदसाधुत्वाधीनमिति पूर्वं सूचीकटाहन्यायेन सुबन्तसाधुत्वाभिधाय कषड्लिङ्गप्रकरणमव्ययप्रकरणं च प्रतिपाद्य सुप्प्रातिपदिकमध्यगतत्वात्स्त्रीप्रत्ययोत्तरमपि

वासुदेवे भगवति नियतलिङ्ग एवेति भावः। ज्ञानमिति। भावे ल्युट्। द्रोण इति। न च प्रातिपदिकमात्रे प्रथमेहाऽस्त्विति वाच्यम्? तथा सति परिच्छेद्य-

शब्दरत्नम्।

क्वचिल्लाघवानादरस्यापि सूचनात्कर्मधारयान्मत्वर्थीयोऽपि क्वचिदिति ज्ञापनान्नैतत्प्रयो-

भैरवी।

हिः, न विद्यते सुप्—सुम्बन्तं यस्मिन्नङ्गे तदसुबिति, आहोस्विन्न सुप् असुबिति तत्पुरुषः" इति

भावप्रकाशः।

गाणामप्युक्तार्थज्ञापकता बोध्या। तं त्यक्त्वैतत्पर्यन्तधावनबीजन्तु सौत्रत्वात्तस्योपपत्तिरेतद्ग्रन्थस्योत्तरमु-निप्रमाणकत्वध्वननञ्च बोध्यम्। ननु 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इत्यभि-युक्तोक्तेः, 'समानाधिकरणसमासो बहुव्रीहिः कदाचित्कर्मधारयः सर्वधन्याद्यर्थः' इति "वर्णो वर्णेन" इति सूत्रस्थवार्तिककृदिष्टेश्च, तत्रत्यभाष्यकैयटादिपर्यालोचनया च सर्वधन्याद्यन्यत्र कर्मधारयान्मत्वर्थीयस्याऽ-साधुत्वलाभेऽप्यसुब्वत इत्यस्यातथात्वेनोपपत्तिरविघ्ना। नञ्तत्पुरुषस्य कर्मधारयत्वं तु दुर्वचमेव, ततः सामानाधिकरण्याऽप्रतीतेः। अत एव "तत्पुरुषोऽनञ् कर्मधारयः" इत्यत्र नञ्पदं सार्थकम्। किं च तत्र मतुबन्तेन नञ्समासः कैयटेनोक्तो न तु नञ्समासान्मतुप्। एवं च कथं ज्ञापकत्वमिति चेत्? न, लघुभूतैकवृत्त्या निर्वाहे गुरुभूतवृत्तिद्वयस्य समानेऽर्थे अनङ्गीकार इतितात्पर्येण कर्मधारयादिपदेन नञ्समासादेरपि ग्रहणात्। ध्वनितं चेदं "रक्तत" इत्यत्र भाष्ये। तत्र हि परिगणनाऽभावपक्षे हलादेरि-त्यस्याङ्गविशेषणत्वेऽङ्गीकृतेऽप्रथीयानित्यत्र रो न स्यादित्याशङ्क्य तद्धितान्तेन समासेन संसाध्य समासा-त्तद्धितपक्षे कथमित्याशङ्क्य बहुव्रीहिणोक्तत्वात् समासात्तद्धित एव नेति समाधाय तत्पुरुषात्तद्धितपक्षे कथ-मित्याशङ्क्य समासस्याऽऽकडारसूत्रोक्तगुणवचनत्वाभावात्समाधायाऽगुणवचनत्वेपि "विन्मतोः" इति ज्ञापकात्तदन्तादजादित्वसम्भवेन तत्र कथमित्याशङ्क्य बहुव्रीहिपक्षे तेनोक्तत्वात्तत्पुरुषपक्षे तत्रो लाघवा-द्बहुव्रीहेर्न्याय्यत्वान्मतुबाद्यभावेन समाधायाऽर्थभेदेन मतुप् स्यादेवेत्याशङ्क्याऽनभिधानात्तत्प्रकृतिभूतबहु-व्रीहिरेव क्वचिन्नेति समाधाय तद्धितान्तेन समासेनाऽप्रथीयानिति सिद्ध्या तदङ्गीकारः स्थापितः। एवं चेष्टिरावश्यिका शब्दलाघवबोधिका। अत एव वृक्षवनस्पत्यादिषु नातिप्रसङ्गः। विप्रतिषेधपरं तु नैतद्वार्तिकं कर्मधारयस्यान्तरङ्गत्वात्। यद्यपीष्टिपक्षेऽपीदं भाष्ये खण्डितम्, उक्तरीत्या लाघवेनास्यार्थस्य न्यायसि-द्धत्वात्। सर्वधनी सर्वकेशीत्यादीनां ठन्बाधनायावश्यकेन सर्वादेरिनित्यनेन सिद्धिः व्रीह्यादिपाठाद्वा, गौरखरवत्। गौरमृगवच्चारण्यम्, कृष्णसर्पवान्वल्मीकः, लोहितशालिमान् ग्रामः इत्यादीनान्तु जातिविष-यत्वप्रतीत्यन्यथाऽनुपपत्त्या सिद्धिः। अत एवैकदेशिनेत्यादिप्रयोगसङ्गतिः। तदप्रतीतौ तु बहुव्रीहिरेवैषु। अदण्डी अवाग्मीत्यादौ मत्वर्थपातेन नञ्समासः। बहुव्रीहिणा दण्डसंयोगस्यग्बहुभाषित्वनिषेधयोर-प्रतीतेस्तथाप्येकदेश्युक्तिः सा, वृक्षवनस्पत्यादिष्वतिप्रसङ्गापत्तेः "असुब्वतः" इति भाष्यप्रयोगासङ्गतेश्च। मम तु सर्वधन्याद्यर्थ इत्यादिशब्दस्य प्रकारार्थत्वान्न दोषः। तदेतत्सर्वं हृदि निधायेष्टिप्रतिपाद्यार्थमाह— क्वचिदिति। सर्वधनीत्यादावित्यर्थः। अपिना वीरपुरुषको ग्राम इत्यादौ लाघवमूलकतदादर-परिग्रहः। अभियुक्तोक्तिरपि एतन्मूलिकैव। एतेनेदं वार्तिकमिति नैयायिकाद्युक्तमपास्तम्, तथा तदनु-पलम्भात्। सूचनादिति। एवं च मुख्यं ज्ञाप्यमिदमेव। वक्ष्यमाणस्य तु तत्त्वं फलमिति। अत एवाऽस्य ज्ञापकत्वसङ्गतिः। अन्यथा चारितार्थ्याभावात्तदसङ्गतिः स्पष्टैव। उभयज्ञापकत्वे तु गौरवमतो लाघवादि-दमेवोचितम्। अत एव मध्ये सूचनादित्यन्तहेतूक्तिरिति भावः। अपिर्मतुबन्तेन नञ्समासस्य तत्रो मतुपश्च समुच्चायकः। क्वचिदिति। उक्तार्थकम्। द्विरस्योल्लेखस्तु स्पष्टार्थः। नैतत्प्रयोगेति। नील-

सरला।

"ङ्याप्प्रातिपदिकात्" इत्यनेन सूत्रेण सुपां विधानाच्च पूर्वं स्त्रीप्रत्ययप्रकरणमभिहितम्। ततः सुप्प्र-कृतिभूतप्रातिपदिकसाधुत्वाभिधायकसमासतद्धितप्रकरणापेक्षया पूर्वं तदीयोद्देश्यतावच्छेदकसम्पादकत्वेन सुप्साधुत्वबोधककारकप्रकरणस्यैवोल्लेखस्यौचित्येन कारकप्रकरणमभिधत्ते—मात्रशब्दस्येतीत्यादिना।

परिच्छेदकभावस्य संसर्गविधया भानायोगान्नामार्थयोरभेदसंसर्ग एवेति

---

शब्दरत्नम्।

गानुपपत्तिरिति बोध्यम्। नामार्थयोरिति। नामार्थश्च नामार्थश्चेत्येकशेषः। अभेदसंस-
र्ग इति। यद्यप्यभेदो न संसर्गः 'राहोः शिरः' इत्यादावौपाधिकभेदेन षष्ठ्युपपादनस्य भाष्ये

भैरवी।

वितर्क्य "यदि विज्ञायते असुब्वतोऽङ्गस्येति बहुचर्मिकेत्यत्रेत्वन्न प्राप्नोति" इत्युक्तम्।
आति परे यदङ्गमविद्यमानसुबन्तकन्तदवयवाऽकारस्य प्रत्ययस्थकात्पूर्वस्येत्वमिति सूत्रार्थस्य
तदानीन्निष्पत्तेः। तत्र लाघवाऽनादरेण स्पष्टप्रतिपत्त्यर्थम्बहुव्रीहेः मतुपि 'असुब्वतः' इति दर्शि
तमिति लाघवानादरो भाष्यसम्मत एवेति भावः। नामार्थयोरित्यस्य नाम्नः अर्थाविति
समासं कृत्वाऽभेदः संसर्गः प्रतिपाद्यत इति वाच्यन्तदनुपपन्नं, पुष्पवन्तपदार्थयोः सूर्याचन्द्र-
मसोरभेदाऽप्रतीतेरत आह—नामार्थश्चेत्यादि। न च नाम्नोरर्थौ नामार्थौ तयोरिति षष्ठीत-
त्पुरुषोऽस्त्विति वाच्यम्? वृत्तावभेदैकत्वसङ्ख्याया यत्नं विना भानस्यान्यत्र सिद्धान्ति-
तत्वेन द्विवचनान्तेन समासासम्भवात्। सम्बन्धस्य सम्बन्धिनोर्यत्र भेदस्तत्रैव विशिष्ट-
बुद्ध्युपपत्तयेऽङ्गीकार इति सिद्धान्तात्कथमभेदः संसर्ग इत्याशङ्कते-यद्यप्यभेद इति। औपाधिक-
भेदेनेति। दिवसाद्यवच्छिन्नो राहुशब्दार्थो घट्याद्यवच्छिन्नः शिरःशब्दार्थ इति कल्पनया
अवयवावयविभावरूपसम्बन्धोपपादनेनेत्यर्थः। किञ्चाभेदो यदि संसर्गस्तदा 'नीलो घटः'
इत्यत्र नीलशब्दान्नियमेन षष्ठी स्यादिति तादृशवाक्योच्छेदापत्तिः। न चैवं सति समाना-
धिकरणाधिकारे समासविधानानुपपत्तिरिति वाच्यम्? विशेषणवाचकप्रातिपदिकात्षष्ठीस-
त्त्वेऽपि विरुद्धविभक्त्यर्थानवरुद्धत्वे सत्येकविशेष्यकप्रतीतिजनकत्वरूपसामानाधिकरण्योपपा-
दनसम्भवेन तस्य सार्थक्यात्। अत एव तक्षकस्य सर्पस्येत्यादौ समानाधिकरणेन षष्ठीसमास-
निषेधस्याप्युपपत्तिः। किञ्चाऽभेदस्य संसर्गत्वे 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानम्भाव-

भावप्रकाशः।

रूपवदिति प्रयोग इत्यर्थः। एतेन तुल्यार्थत्वे तादृशमतुबन्ताद्बहुव्रीहिरेव न्याय्य इति "वर्णो वर्णेन" "र-
क्त" इत्यत्र भाष्ये सिद्धान्तितत्वेन मतुपो दौर्लभ्याच्चिन्त्यमिदमिति खण्डनकृद्रत्नाकरोक्तम्, आर्ष-
प्रयोगाणां तेन साधुत्वेऽप्यस्मदादिकृतप्रयोगस्यापि तेन साधुत्वे 'स्वायत्त' इति न्यायविरोधापत्तिः,
अन्यथा 'न कर्मधारयात्' इति निषेधस्य निर्विषयतापत्तिः, नञ्समासस्याऽकर्मधारयत्वेन भाष्यप्रयो-
गस्य साधुत्वेन ज्ञापकत्वासम्भवश्चेति मन्दोक्तं चापास्तम्। ननु 'नामार्थयोः' इत्यत्र किं द्वन्द्व उत षष्ठी-
तत्पुरुषः? अन्त्येऽप्येकवचनान्तेन स उत द्विवचनान्तेन? नाद्यः, वाच्यवाचकयोरभेदस्य सर्वतन्त्रविरुद्ध-
त्वात् तथा सत्त्वेपि तथार्थस्य व्युत्पत्त्यलभ्यत्वाच्च, प्रकृतेष्टासिद्धेश्च। अत एव न द्वितीयः, अक्षपुष्पव-
न्तादिषु एकनामवाच्ययोरप्यभेदापत्तेश्च। नान्त्यः, तथाविग्रहेऽपि वृत्तौ संख्यासामान्याभावस्य भाष्यस-
म्मतत्वे नेष्टार्थालाभादत आह—**नामार्थश्चेति**। नाम—सुबन्तं, तदर्थत्वं च तज्जन्यप्रतीतिविशेष्यत्वम्।
**न संसर्ग इति**। सम्बन्धिभेदनियतत्वात्तत्त्वस्येति भावः। तत्रैव किं मानमत आह—**राहोरिति**।
**औपाधिकभेदेन**—व्यपदेशिवद्भावेन। **भाष्ये**—"आद्यन्त" सूत्रस्थे। यद्यपि तस्य सम्बन्धत्वेऽपि तद्भा-
ष्यात्तस्य षष्ठीनिमित्तता नेति नायं दोष इति सुवचं, तथाप्यतिरिक्ततत्सम्बन्धाङ्गीकारे गौरवं फलाभा-
वश्च। अन्यथा भेदसंसर्गस्याप्यतिरिक्तत्वापत्तिः, निर्हेतुकवैषम्यस्य निर्बीजत्वात्। तथाबोधाऽबोधाभ्यां
तदङ्गीकाराऽनङ्गीकाराविति तु स्ववासनामात्रकल्पितत्वाद् दुर्वचम्। एवं चाऽभेदो न संसर्ग इत्यस्य
नातिरिक्तः सम्बन्धविशेष इत्यर्थो बोध्यः। किञ्च तस्य तत्त्वे नीलो घट इत्यादौ षष्ठ्यापत्तेः। भेदमूलक-
सम्बन्धे एव षष्ठीत्यर्थस्य सूत्रतो वाच्यवृत्त्याऽलाभात्। न च प्रथमार्थः स इत्यशेषः, तथानुशासनाभा-
वात् धान्येन धनवान्, नीलं घटं पश्येत्यादाविष्टतज्ज्ञानाऽभावप्रसङ्गाच्च। अपिच राजपौरुष्यमित्यादौ

शब्दरत्नम् ।

कृतत्वात्तथाऽपि इतरसम्बन्धानवच्छिन्नविशेष्यविशेषणभावसंसर्गस्य तेन शब्देनाऽ-

भैरवी ।

प्रत्ययेन' इति सिद्धान्ताद्राजपौरुष्यमित्यादौ भावप्रत्ययेन सम्बन्धस्यैव नीलोत्पलत्वमित्यादावपि सम्बन्धाभिधानापत्तिः । न चाभेदसंसर्गः प्रथमावाच्य एवेति भ्रमितव्यम्, धान्येन धनवान्नीलङ्कटम्पश्येत्यादावपि तदभिधानदर्शनात् । सम्बन्धानवच्छिन्नेति । यत्राऽभेदः संसर्ग इति व्यवहारस्तत्र विशेषणतायाः सम्बन्धाऽनवच्छिन्नायाः सम्बन्धघटकतया भानेन सम्बन्धानवच्छिन्नविशेषणविशेष्यभाव एव पदार्थयोः संसर्गत्वेन व्यवह्रियत इति भावः । अयमपि विशेषणतावच्छेदकविशेष्यतावच्छेदकधर्मभेदमूलकाऽऽरोपित आश्रययोर्भेदो यत्र तत्रैव संसर्गतया भासते । तेन घटो घट इत्यादि न प्रयोगः । तादृशसम्बन्धस्य भाने दृष्टान्तमाह—

भावप्रकाशः ।

भावप्रत्ययेन सम्बन्धविशेषस्यैव नीलोत्पलमित्यादौ तदभिधानापत्तेश्च । विशेष्यविशेषणभावस्य तु न षष्ठीप्रयोजकता, प्रागुक्तविशेषसम्बन्धान्यबोधकशेषपदस्वारस्यात् । नापि भावप्रत्ययवाच्यता तस्य 'कृत्तद्धितसमासेभ्यः' इत्यभियुक्तोक्त्या सम्बन्धविशेषाभिधायकत्वप्रतिपादनात् । अन्यथा भावप्रत्ययान्तानां कृत्तद्धितसमासानां तुल्यार्थतापत्तिः । नीलोत्पलत्वराजपुरुषत्वादीनां विशेष्यभूतानां तुल्यत्वापत्तिश्चेत्यन्यत्र विस्तरः । एतेनोक्तभाष्यादभेदसम्बन्धातिरिक्तसम्बन्धे एव षष्ठी । किञ्च तेनाऽन्वय एवाऽभेदसम्बन्धः । स च नीलो घट इत्यादावस्ति, सम्बन्धत्वं तस्य नास्ति इति दुराग्रहमात्रं लाघवगौरवाभावादिति मन्दोक्तमपास्तम् । सम्बन्धेति । इतरविशेषसम्बन्धेत्यर्थः । कचित्तथैव पाठः । विशेष्यविशेषणेति । एतदतिरिक्तस्य वाक्ये आकाङ्क्षालभ्यत्वाभावात् । अयमपि धर्मभेदमूलकाऽऽरोपितभेदे वास्तवभेदे च । अत एव घटो घट इत्यादौ न सः । तेन शब्देन—अभेदसंसर्गपदेन । स्वस्वामिभावादेर्भेदसम्बन्धपदेनैव । तथा च नीलाभिन्नमिति बोधेपि तद्विशिष्टमित्येवार्थो बोध्यत इति भावः । न दोष इति । सर्वग्रन्थकृद्व्यवहाराऽनुपपत्तिरूपदोषो नेत्यर्थः । अभेदान्वय इत्यस्याऽभेदेप्यन्वयो विशेषणाभाव इत्येवार्थो न त्वभेदसंस

सरला ।

इतरसम्बन्धानवच्छिन्नेति । अत्रेतरेत्यविवक्षितम्, अभेदस्य सम्बन्धत्वनिराकरणेन व्यावर्त्याभावात् । तथाच सम्बन्धानवच्छिन्नविशेष्यविशेषणभावसंसर्गस्येति तदर्थो बोध्यः ।

अत्र सूत्रे लिङ्गवचनग्रहणसामर्थ्येन 'पञ्चकं प्रातिपदिकार्थः' इत्युक्तस्वार्थद्रव्यलिङ्गसंख्याकारकाणां प्रातिपदिकार्थपदेन ग्रहणं कर्तुमनर्हमिति नियतोपस्थितिकस्य ग्रहणम् । तेन कर्माद्यधिक्ये प्रथमा न भवतीति । तदाह परममूले—नियतोपस्थितिकः प्रातिपदिकार्थ इति । नियता उपस्थितिर्यस्येति विग्रहः । निपूर्वकयमधात्वर्थो व्यापकता, क्तप्रत्ययार्थ आश्रयः, षष्ठ्यर्थो विषयता । तथाच व्यापकताश्रयोपस्थितिविषयत्वं प्रातिपदिकार्थत्वमिति शब्दार्थः । तत्र व्यापकताया यत्किञ्चिन्निष्ठव्याप्यतानिरूपितत्वनियमादुपस्थितत्वात्प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपिता व्यापकता ग्राह्या । तथाच प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिविषयताश्रयत्वं प्रातिपदिकार्थत्वमिति सम्पन्नम् । तत्रेयं शङ्का—प्रातिपदिकोच्चारणं समवायेन वक्तरि, तदर्थोपस्थितिश्च श्रोतरीति कथं व्याश्रयपदार्थयोर्व्याप्यव्यापकभावः? अत्रोच्यते, स्वजन्यश्रावणप्रत्यक्षसमवायित्वसम्बन्धेन प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिविषयताश्रयत्वमित्यस्य विवक्षणेन स्वजन्यश्रावणप्रत्यक्षसमवायित्वसम्बन्धेन प्रातिपदिकोच्चारणमपि श्रोतर्येवेति तयोर्न व्याश्रयत्वमिति न दोषः । नन्वेवमपि येन श्रोत्रा घटप्रातिपदिकस्य घटत्वादौ शक्तिर्न गृहीता तत्रोक्तसम्बन्धेनोच्चारणस्य सत्त्वेपि तदर्थोपस्थितेरभावेनोपस्थितेर्न व्यापकत्वमिति चेत्? न, स्वनिष्ठशक्तिज्ञानसमवायित्व–स्वजन्यश्रावणप्रत्यक्षसमवायित्वोभयसम्बन्धेन प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिविषयत्वमित्यस्य विवक्षणेन उपस्थित्यभाववति अगृहीतशक्तिकघटपदश्रोतरि स्वनिष्ठशक्तिज्ञानसमवायित्वसम्बन्धेन प्रातिपदिकोच्चारणस्याप्यभावेनोक्तदोषानवसरात् ।

सरला ।

व्यापकतावदुपस्थितिविषयत्वमित्यस्य व्यापकतावच्छेदकोपस्थितिविषयताश्रयत्वमित्यर्थो वाच्यः। तेन घटपदात् घटत्वप्रकारकोपस्थितावुद्बोधकान्तरवशात्कदाचित् पटभानेऽपि तत्र व्यापकतावच्छेदकोपस्थितिविषयताश्रयत्वं नास्ति, केवलं घटोपस्थितिमति पटोपस्थितेरभावात् ।

नन्वेवमपि शक्तिग्रहे जातेऽपि उपेक्षादिनाऽनुत्पन्नसंस्कारस्य पुरुषस्य कालान्तरे लुप्तसंस्कारस्य वा शक्तिज्ञानसत्त्वेऽपि ततोऽर्थोपस्थितिर्न जायते इति तत्रोपस्थितौ प्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकता नास्ति तेन तत्रोक्तप्रातिपदिकार्थत्वं न स्यादिति चेत्? न, स्वनिष्ठशक्तिज्ञानसमवायित्वसम्बन्धस्थाने स्वनिष्ठशक्तिविषयकोद्‌बुद्धसंस्कारसमवायित्वसम्बन्धनिवेशेन तत्रोक्तसम्बन्धेन प्रातिपदिकस्यैवाभावेनोक्तदोषाभावात् ।

ननु प्रातिपदिकार्थत्वपरिष्कारस्थ उपस्थितिपदं स्मृतिपरं शाब्दबोधपरं वा? नाद्यः, तटपदाल्लिङ्गत्रयविषयकशाब्दबोधस्य तत्कारणीभूताकाङ्क्षाविरहेणाभावेऽपि लिङ्गत्रयस्याप्युपस्थितेर्युगपत्सम्भवेन तस्या उक्तसम्बन्धद्वयेन तटप्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतावत्त्वेन लिङ्गस्यापि प्रातिपदिकार्थत्वं सञ्जातमिति सूत्रे तदर्थं क्रियमाणस्य लिङ्गग्रहणस्य वैयर्थ्यं स्यात् । नान्त्यः, तटपदाल्लिङ्गस्य कस्यचिदेकस्यैव शाब्दबोधे भानसम्भवेन चालनीन्यायेन सर्वेषु लिङ्गेषु व्यापकतावदुपस्थितिविषयताया अभावेन प्रातिपदिकार्थत्वाभावेनोक्तदोषाभावेऽपि शक्तिग्रहसंस्कारादिमतः पुरुषस्यापि आकाङ्क्षाद्यभावे 'घटः कर्मत्वम् आनयनं कृतिः' इत्यतो बोधाभावेन तत्र शाब्दबोधे निरुक्तव्यापकताया अभावादिति चेत्? न, स्वनिष्ठशक्तिविषयकोद्‌बुद्धसंस्कारसमवायित्वसम्बन्धस्थाने स्वविशेष्यकशक्तिज्ञानाकाङ्क्षादिघटितशाब्दबोधसामग्रीसमवायित्वसम्बन्धस्य विवक्षणेन प्रकृते उक्तसम्बधेन प्रातिपदिकस्यैवाभावेनोक्तदोषाभावात् ।

नन्वेवमपि सर्वं वाक्यं क्रियया परिसमाप्यते इति सिद्धान्तेन वैयाकरणैः क्रियाविशेष्यकबोधस्यैव स्वीकारात्प्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतायाः क्रियाविषयकबोधे सत्त्वात्तादृशशाब्दबोधीयविषयता क्रियायामपीति क्रियाया अपि प्रातिपदिकार्थत्वापत्तिरिति चेत्? न, प्रातिपदिकनिष्ठशक्तिनिरूपकत्वमिति विशेषणस्य तत्र निवेशेन क्रियायाः प्रातिपदिकनिष्ठशक्तिनिरूपकत्वाभावेन दोषाभावात् । एवं च प्रातिपदिकनिष्ठशक्तिनिरूपकत्वे सति स्वविशेष्यकशक्तिज्ञानाकाङ्क्षादिघटितशाब्दबोधसामग्रीसमवायित्व—स्वविषयकश्रावणप्रत्यक्षसमवायित्वोभयसम्बन्धावच्छिन्न प्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतावच्छेदकोपस्थितिविषयताश्रयत्वं प्रातिपदिकार्थत्वमिति परिष्कारः सम्पन्नः ।

नन्वेवमपि हरिपदनिष्ठेन्द्राद्यन्यतमयत्किञ्चिदर्थनिरूपितशक्तिज्ञानाकाङ्क्षादिघटितशाब्दबोधसामग्रीसमवायिनः पुरुषस्य तदन्यविषयकशाब्दबोधाभावेन हरिपदजन्यचतुर्दशरूपार्थबोधस्य चालनीन्यायेन तद्व्यापकतया कस्याप्यर्थस्य हरिपदप्रातिपदिकार्थत्वं न स्यात् । यद्येतदर्थं तत्तदर्थविषयकशाब्दबोधसामग्रीसमवायित्वसम्बन्धेन प्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतावद्बोधीयविषयताश्रयत्वं प्रातिपदिकार्थत्वं, तेन यदर्थविषयकशाब्दबोधसामग्रीस्यात्तदर्थविषयकबोधे प्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकताऽक्षतैवेति नोक्तदोष इत्युच्यते, तर्हि तटादिपदार्थलिङ्गस्यापि बोधस्योक्तरीत्या व्यापकतया सूत्रे लिङ्गग्रहणवैयर्थ्यापत्तिः । तद्दोषवारणाय उच्चारितप्रातिपदिकप्रयोज्यबोधीयमुख्यविशेष्यतासमानाधिकरणशक्तीयविशेष्यतानिरूपितप्रकारताविशिष्टत्वं प्रातिपदिकार्थत्वं, वै० च स्वाश्रयत्व-स्वाश्रयावच्छिन्नविषयताश्रयत्व—एतदन्यतरसम्बन्धेनेति वक्तव्यम् । तटपदप्रयोज्यशाब्दबोधीया मुख्यविशेष्यता तटे, तत्समानाधिकरणा शक्तीया विशेष्यताऽपि तटे एव नतु पुंस्त्वादिलिङ्गे, तन्निरूपितप्रकारता तटत्वे तदाश्रयत्वं तटत्वस्य, तदाश्रयावच्छिन्नविषयताश्रयत्वं तटस्य न तु पुंस्त्वादेरिति सूत्रे तदर्थं लिङ्गग्रहणमावश्यकमिति । हरिपदप्रयोज्यशाब्दबोधीयमुख्यविशेष्यता इन्द्रादितत्तदर्थे तत्समानाधिकरणा शक्तीया विशेष्यताऽपि तत्र तत्रार्थे एव, नानाशक्तिकपदस्थले हरिपदमिन्द्रं बोधयतु, हरिपदं विष्णुं बोधयतु इत्येवं शक्त्याकारस्य सत्त्वेन क्रमशः सर्वेष्वप्यर्थेषूक्तप्रातिपदिकार्थत्वसिद्धिः ।

नन्वेवमेवपदे अन्ययोगव्यवच्छेदोभयोरर्थयोःखण्डशः शक्तिसत्त्वेन एवपदप्रयोज्यशाब्दबोधीया मुख्यविशेष्यता व्यवच्छेदे एव नत्वन्ययोगे, तथा च तत्समानाधिकरणशक्तीयविशेष्यतानिरूपितप्रकारता-

सरला।

विशिष्टत्वं व्यवच्छेदव्यवच्छेदत्वयोरेव नत्वन्ययोगान्ययोगत्वयोरिति तयोरेवपदप्रातिपदिकार्थत्वानापत्तिरिति वाच्यम्, स्वजन्यबोधविषयत्वप्रकारकतात्पर्यविषयतापर्याप्त्यधिकरणत्व स्वाभाववत्त्वसम्बन्धाभ्यां प्रातिपदिकविशिष्टत्वं प्रातिपदिकार्थत्वमिति परिष्कारकरणेनोक्तदोषवारणात्। स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयतावत्त्व—स्वप्रयोज्यधर्मितानिरूपितप्रकारताविशिष्टत्व—एतदुभयसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावो ग्राह्यः। शक्तिवैशिष्ट्यं च—स्वविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्व—स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानिरूपितत्व—एतदुभयसम्बन्धेन। प्रकारतावैशिष्ट्यं च स्वाश्रयत्व—स्वनिरूपितावच्छेदकताश्रयत्वैतदन्यतरसम्बन्धेन। तथाच अन्ययोगे अन्ययोगत्वे च एवपदोच्चारणे 'व्यवच्छेदं अन्ययोगं च बोधयतु' इति तात्पर्यस्य सत्त्वेन एवपदजन्यबोधविषयत्वप्रकारकतात्पर्यविषयतापर्याप्त्यधिकरणत्वं वर्तते, एवमेवपदप्रयोज्यधर्मितानिरूपितप्रकारताविशिष्टत्वं तत्र नास्ति, सावच्छिन्नविषयताया एव धर्मितापदेन ग्रहणात्प्रकृते तन्निरूपितप्रकारताया अभावात् एकसत्त्वेऽपि द्वयं नास्तीति प्रतीत्या निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताक स्वाभावेऽपि वर्तते इति तयोस्तत्त्वमक्षतम्। एवं सर्वत्र प्रवृत्तिनिमित्ते तदाश्रये च प्रातिपदिकार्थत्वलक्षणं समन्वयनीयम्।

नियतलिङ्गघटादिपदप्रातिपदिकार्थत्वं पुंस्त्वादौ, 'घटत्वाद्यवच्छिन्नं पुंस्त्वविशिष्टं घटादि बोधयतु' इत्याकारकतात्पर्यस्य सत्त्वेन घटादिपदजन्यबोधविषयत्वप्रकारकतात्पर्यविषयतापर्याप्त्यधिकरणत्वं वर्तते, एवं धर्मितारूपघटत्वाद्यवच्छिन्नघटादिनिष्ठविशेष्यतानिरूपितप्रकारतायाः पुंस्त्वादौ सत्त्वेऽपि घटादिपदनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयतावत्त्वस्य सम्बन्धस्याभावेन एकसत्त्वेऽपि द्वयं नास्तीति पूर्वोक्तदिशोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावस्तत्र सुलभ एवेति उक्तोभयसम्बन्धेन प्रातिपदिकविशिष्टत्वस्य तत्राक्षतेः। अनियतलिङ्गतटादिपदप्रातिपदिकार्थत्वं पुंस्त्वादिलिङ्गे नास्ति, तत्र प्रथमसम्बन्धस्य सत्त्वेऽपि स्वाभाववत्त्वसम्बन्धस्याभावेन प्रातिपदिकविशिष्टत्वस्यासत्त्वात्। तथाहि, तत्र पुंस्त्वादौ कस्मिन्नपि लिङ्गे तटादिपदप्रयोज्यधर्मितारूपतटत्वाद्यवच्छिन्नतटादिनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वस्य, पुंस्त्वादिविषयकबोधे स्त्रीत्वत्वादिना स्त्रीत्वादिविषयको नेति चालनीन्यायेन भेदमादाय स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयतावत्त्वस्य सत्त्वेनोक्तोभयसम्बन्धाभावो नेति सूत्रे लिङ्गग्रहणं सार्थकम्। स्त्रीत्वत्वादौ च प्रकारतानिरूपितावच्छेदकताश्रयत्वसम्बन्धेन प्रकारताविशिष्टत्वं बोध्यम्।

अत्र क्रियायामतिव्याप्तिवारणाय इन्द्रे अश्वविषयकबोधतात्पर्येणोच्चरितहरिपदप्रातिपदिकार्थत्वापत्तिवारणाय च प्रथमसम्बन्धोपादानम्। अन्यथा अश्वारूढ इन्द्रः इति प्रकृत्यर्थप्रत्ययार्थयोराधाराधेयभावसम्बन्धेनान्वयबोधापत्तिः। सूत्रे लिङ्गग्रहणसार्थक्याय स्वाभाववत्त्वद्वितीयसम्बन्धोपादानम्। अभावीयप्रतियोगितावच्छेदकप्रथमसम्बन्धोपादानं पुंस्त्वादौ नियतलिङ्गघटादिप्रातिपदिकार्थत्वसिद्धये। घटादौ तटादिपदप्रातिपदिकार्थत्वसिद्धये अभावीयप्रतियोगितावच्छेदकद्वितीयसम्बन्धोपादानम्। प्रमेयत्वेन पुंस्त्वविषयताको नेति भेदमादाय पुंस्त्वादावव्याप्तिवारणाय शक्तिवैशिष्ट्ये प्रथमसम्बन्धोपादानम्। प्रमेयत्वस्य घटादिपदनिष्ठशक्तिविषयत्वाभावेन प्रमेयत्वावच्छिन्नपुंस्त्वविषयत्वनिष्ठभेदीयप्रतियोगितावच्छेदकताया घटादिपदनिष्ठशक्तिविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्वाभावेन पुंस्त्वादौ स्वाभाववत्त्वस्य सत्त्वेन प्रथमसम्बन्धस्यापि सत्त्वेन प्रातिपदिकविशिष्टत्वस्य सत्त्वाद् घटादिप्रातिपदिकार्थत्वम्। पुंस्त्वादौ नियतलिङ्गघटादिपदप्रातिपदिकार्थत्वसिद्धये शक्तिवैशिष्ट्ये द्वितीयसम्बन्धोपादानम्। अन्यथा पदान्तरप्रयोज्यस्त्रीत्वादिविषयकबोधे घटादिपदनिष्ठशक्तिविषयविषयतानिरूपितनिरूपकत्वसम्बन्धेन पुंस्त्वविषयतावान्नेति भेदस्य सत्त्वेन तादृशभेदीयप्रतियोगितावच्छेदकतायाः शक्तिविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्वेन पूर्वोक्तदिशा उक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावस्य पुंस्त्वादौ असत्त्वेन प्रातिपदिकवैशिष्ट्यस्याभावेन प्रातिपदिकार्थत्वं न स्यात्।

नन्वेवमपि तत्पुरुष इत्यादौ तत्पदार्थस्य तत्पुरुषपदप्रातिपदिकार्थत्वं न स्यात्, लोमादीनां लोमवल्लाङ्गूलवत्परतत्पदप्रातिपदिकार्थत्वं च न स्यात्, स्वप्रयोज्यपुरुषत्वावच्छिन्नधर्मितानिरूपितप्रकारतावत्त्वस्य, पूर्वोक्तरीत्या चालनीन्यायेन स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयतावत्त्वस्य च सत्त्वेनोभयसम्बन्धा-

व्युत्पत्तेः । न चाषष्ठ्यर्थबहुव्रीहौ व्यभिचारः, एकार्थीभावाभ्युपगमात् ।

शब्दरत्नम् ।

भिधानान्न दोष इति बोध्यम् । व्युत्पत्तेरिति । नीलमुत्पलमित्यादौ तथा क्लृप्तत्वादिति भावः । अषष्ठ्यर्थबहुव्रीहाविति । अत्र षष्ठीपदं सप्तम्या अप्युपलक्षणं, वीराः पुरुषा यस्मिन्नित्यत्राप्यव्यभिचारात् । एवं च प्राप्तोदकादावित्यर्थः । न च व्यपेक्षा-

भैरवी ।

नीलमुत्पलमिति । 'प्राप्तोदको ग्रामः' इत्यादौ तादृशनियमे व्यभिचाराऽऽशङ्कां निरस्यति मूलेन चेति । षष्ठ्यर्थे बहुव्रीहिश्चित्रगुरित्यादौ, तज्जन्यबोधश्चित्राऽभिन्नगोसम्बन्धीत्याद्याकारकः, तत्र पूर्वपदार्थस्योत्तरपदार्थे तादृशसम्बन्धस्य विशेषणतानियामकत्वदर्शनादषष्ठ्यर्थे इति । अत्र—उक्तनियमे । अव्यभिचारादिति । वीररूपस्य पूर्वपदार्थस्योत्तरपदार्थे तादृशसम्बन्धेन विशेषणतया भानस्य दर्शनादिति भावः । प्राप्तोदकादाविति । प्राप्तमुदकं यमिति वाक्याद्यत्कर्मकप्राप्तिक-

भावप्रकाशः ।

र्मको बोध इति बोध्यम् । तथा—तत्संसर्गकाऽन्वयबोधस्य । तथा च तथाव्युत्पत्त्यङ्गीकार इति भावः । यत्तु 'ग्रामे गच्छति' 'भूमौ पतितः' इत्यादिवत्कर्मणोऽधिकरणत्वविवक्षायां प्राप्तमुदकं यस्मिन्निति विग्रहस्यापि सम्भवात् 'अषष्ठ्यर्थबहुव्रीहौ' इत्युक्तमिति मान्यास्तत्प्राचामनुरोधेन, कर्मणः सम्बन्धत्वेन विवक्षायां प्राप्तमुदकं यस्येतिविग्रहस्यापि सम्भवेन षष्ठ्यर्थेऽपि व्यभिचारसम्भवेन पर्युदासानर्थक्यापत्तेः। अत आह—अत्रेति । नन्वेवमप्यनुपपत्तिस्तदवस्थैव प्राप्तोदकादावुक्तरीत्या तदर्थेपि व्यभिचारसम्भवादिति चेत् ? न, प्रसिद्धषष्ठीसप्तम्यर्थबहुव्रीहेश्चित्रगुर्वीरपुरुषक इत्यादितोऽन्यबहुव्रीहाविति तदर्थात्, क्रियाशब्दघटितबहुव्रीहाविति यावत्, तदाह—एवं चेति । तस्योपलक्षणत्वावश्यकत्वे चेत्यर्थः । तथाचेदमेवोपलक्ष्यं न तत्, दोषाऽनिस्तारात् । अयं च कस्मिन्नप्यर्थऽस्त्विति भावः । एतेन षष्ठीपदस्य तदुपलक्षकत्वेऽपि दोष एवेत्यपास्तम् । ननु व्यपेक्षापक्षे व्यभिचारसत्त्वेन तथाशङ्का एकार्थीभावेति समाध्युक्तिश्च युक्ता; तदेव न, तत्र तदप्राप्त्येवात्र सर्वथा तत्सत्त्वेन तदभावात्तथाऽयुक्तं मूलमित्याशयेनाऽऽशङ्कते—न चेति ।

सरला ।

वच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्य दुर्लभत्वादिति चेत् ? न, स्वप्रयोज्यधर्मितानिरूपितप्रकारतायामाकाङ्क्षाभास्यसम्बन्धावच्छिन्नत्वविवक्षणेन वैयाकरणमते समासे विशिष्टशक्तिसत्त्वेन पुरुषत्वावच्छिन्नधर्मितानिरूपिततत्पदार्थनिष्ठप्रकारतावच्छेदकसम्बन्धः शक्तिभास्यो नत्वाकाङ्क्षाभास्य इति तादृशसम्बन्धावच्छिन्नप्रकारतावत्त्वं तत्पदार्थे नास्तीति एकसत्त्वेऽपि द्वयं नास्तीति रीत्या स्वाभाववत्त्वस्य सुलभत्वात्।

नचैवमपि वासुदेववाचककृष्णपदप्रातिपदिकार्थत्वं पुंस्त्वस्य न स्यात्, तत्र कृष्णपदनिष्ठनीलरूपवन्निरूपितशक्तिज्ञानाधीनोपस्थितिप्रयोज्यक्लीबत्वप्रकारकबोधनिष्ठभेदप्रतियोगितानिरूपिता या तन्निष्ठशक्तिविषयपुंस्त्वविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नाऽवच्छेदकता तद्विषयताश्रयत्वस्य कृष्णपदप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्वस्य च सत्त्वेनोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्य दुर्लभत्वादिति वाच्यम्, स्वाभाववत्त्वसम्बन्धस्थाने स्वनिष्ठशक्तिविशिष्टत्वस्य निवेशेनादोषात् । वैशिष्ट्यं च स्वप्रयोज्यबोधविषयत्वप्रकारकतात्पर्यविषयतापर्याप्त्यधिकरणत्व—स्वाभाववत्त्वोभयसम्बन्धेन । अभावश्च स्वप्रयोज्यधर्मितानिरूपितप्रकारताविशिष्टत्व—स्वविशिष्टावच्छेदकताविषयतावत्त्वैतदुभयसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । प्रकारतावैशिष्ट्यं पूर्वोक्तमेव । स्ववैशिष्ट्यं च स्वविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्व—स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानिरूपितत्वैतदुभयसम्बन्धेन । तथाच प्रकृते वासुदेववाचककृष्णपदस्य नीलरूपवत्परकृष्णपदस्यानुपूर्व्यैक्येऽपि शक्यतावच्छेदकभेदेन शक्तिभेदाद् वासुदेवार्थनिरूपितशक्तिज्ञानधीनोपस्थितिप्रयोज्यपुंस्त्वप्रकारकबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य वासुदेवार्थनिरूपितशक्तिविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्वस्य च पुंस्त्वविषयतायामसत्त्वेनोक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्य सुलभत्वात् । विस्तरस्तु शेखरदीपकटिप्पणे द्रष्टव्यः ।

शब्दरत्नम् ।

वादेऽपि प्राप्तपदादिविषये पचतीत्यादौ क्लृप्तत्यागस्य प्रत्ययार्थप्राधान्यस्य वृत्तौ त्यागेन विशेषणविशेष्यभाववैपरीत्यस्य सिद्धतया प्रकारीभूतकर्त्रोदकस्याभेदेनैवान्वयात् क्व व्यभिचार इति वाच्यम् ? नामजन्यप्रतीतिविशेष्ययोरेवान्वयः, स चाभेदेनैवेति 'पदार्थः पदार्थेन' इत्येतत्सिद्धो नियम इति नामजन्यप्रतीतिविशेष्ययोस्तथाऽन्वयनियमस्य व्यभि-

भैरवी ।

तृउदकमिति बोधः, समासात्तूदककर्तृकप्राप्तिकर्मेतिरीत्या बोधः, तत्रोदकस्य प्राप्तौ कर्तृतयाऽन्वयदर्शनेन व्यभिचार इत्यर्थः । व्यपेक्षारूपस्य सामर्थ्यस्य सत्त्वं समास इति मतमाश्रित्य कृतामाशङ्कान्निराचष्टे—न चेति । क्लृप्तत्यागस्येति । वक्ष्यमाणेन 'भावप्रधानमाख्यातम्' इति वचनेन प्रत्ययार्थकर्तुः प्रकृत्यर्थक्रियायां विशेषणतया भानस्यानुभवसिद्धत्वादिति । यद्यपि कृदन्ततद्धितान्तजन्यबोधे प्रकृत्यर्थनिष्टप्रकारतानिरूपिता प्रत्ययार्थनिष्ठा विशेष्यता, तथाऽपि तिङन्तजन्यबोधे प्रत्ययार्थो विशेषणतयैव भासते उक्तवचनबलात् ; तद्वद् वृत्तिजन्यबोधेऽपि विशेषणविशेष्यभावस्य वैपरीत्यं कल्प्यते । विशेषणविशेष्यभाववैपरीत्यञ्च भवतामपि क्लृप्तमेव । चित्रगुरित्यादौ विग्रहवाक्यजन्यबोधस्य गोपदार्थ मुख्यविशेष्यकस्य, समासजन्यस्य तु गोविशेषणकान्यपदार्थमुख्यविशेष्यकस्य दर्शनात् । प्रकारीभूतकेति । "गत्यर्थाकर्मक" इत्यनेन कर्तरि क्तप्रत्ययस्य विधानात् उक्तदृष्टान्तेन प्रकृत्यर्थस्य विशेष्यतया भानस्वीकारे प्रत्ययार्थस्य तत्र विशेषणत्वन्तस्मिन्कर्तरि उदकशब्दार्थो विशेषणमिति न व्यभिचार इति भावः । "नामार्थयोः" इति व्युत्पत्तौ नामपदं सुबन्तपरमेवेति स्फुटीभविष्यति । एवञ्च तज्जन्यबोधविशेष्यताऽधुना कर्तृविशिष्टप्राप्तिक्रियायां सम्पन्नेति तादृश्यां क्रियायामेवाऽन्वयो वाच्यः । स च भवता परित्यक्त इति व्यभिचारो दुरुद्धरः, विशेष्यस्यैव ग्रहणे साधिका च । गौर्नित्या परशुपशुरिति वाक्यस्य प्रामाण्यापत्तिवारणाय स्वीकृता या 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति व्युत्पत्तिः, सैवेत्याशयेन दूषयति—नामजन्येत्यादिना । इत्येतत्सिद्ध इति । एतेनेयं व्युत्पत्तिर्यद्यपि लौकिकी तथापि सहकारित्वेनाऽऽश्रीयते । नामजन्यप्रतीतिविशेष्ययोर्भेदसम्बन्धेनापि राज्ञः पुरुष इत्यादावन्वयो भवति यद्यपि, तथापि यत्र सामानाधिकरण्यन्तत्राऽभेदेनैव । भेदसम्बन्धेनाऽप्येतादृशस्थले तत्स्वीकारे 'राजा पुरुषः' इति वाक्यादपि स्वत्वसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारताकबोधापत्तिरिति भावः। परोक्तरीत्या क्तप्रत्ययार्थकर्तुर्विशेषणत्वमभ्युगम्याप्युक्तरीत्यान्वयबोधानुपपत्तिर्दर्शिता । वस्तुतः प्रत्यया-

भावप्रकाशः ।

अपिरेकार्थीभावसमुच्चायकः । विषये इति । अस्य सिद्धतयेत्यत्राऽन्वयः । तत्र हेतुमाह—पचतीत्यादित्यागेनेत्यन्तेन । क्लृप्तेति । 'क्रियाप्रधानमाख्यातम्' इति यास्कोक्तेः । एवं चैतद्दृष्टान्तेन तत्रापि त्याग इति भावः । ग्रामकर्मकप्राप्तिकर्त्रभिन्नमुदकमिति वाक्यबोधेन तत्र तत्सत्त्वादाह—वृत्ताविति । प्रकारीभूतेति । प्रकृत्यर्थं प्रतीत्यादिः । "गत्यर्थ" इति सूत्रेण कर्तर्याप्नोतेः क्तविधानादाह—कर्त्रेति । क्तार्थकर्त्रेत्यर्थः । नामार्थत्वं च तज्जन्यप्रतीतिविषयत्वमात्रं न तु पूर्वोक्तम् । तदाह—अभेदेनैवेति । पूर्वोक्तरीत्या समूलया समाधत्ते—नामेति । उभयत्र क्रमेण मानमाह—पदार्थः पदार्थेनेति । एतत्—नामार्थयोरभेदेनैवान्वय इत्येतत् । एतदुभयसिद्धो नियम इत्यर्थः । पदार्थ इत्यत्र तु नोभयग्रहणं, नत्विति वाक्यशेषात् । मूलं योजयितुं तयोरेकवाक्यतया सिद्धं समुदितं तमेवाऽऽह—नामेति । तथा—अभेदेनैव । तथाच तयोरभेदेनैवाऽन्वय इतिनियमस्येत्यर्थः । प्रकारीभूतस्य तेनाऽग्रहणाद्विशेष्ये च तदसम्भवाद्व्यभिचार इति भावः । समानाधिकरणयोरित्यादिस्तस्य बोध्यः । एतेन राज्ञः पुरुष इत्यादौ विशेष्ययोर्भेदेनाऽन्वयेन व्यभिचाराच्चिन्त्यमिदमित्युक्तम् ;-तयोरेवाभेदस्तयोरभेद एव वा ? नाद्यः, वैश्वदेवी, स्तोकं पचतीत्यादौ व्यभिचारात् । नान्त्यः, घटपटावित्यादौ व्यभिचारात् । तथाच सम्भवति सामान्ये तन्मूल-

शब्दरत्नम् ।

चार इत्याशयात् । पचतीत्यादौ तिङां द्योतकतया प्रत्ययार्थप्राधान्यत्यागेऽप्यत्र तत्यागे मानाभाव इत्यन्ये । प्राप्तावुदकस्य कर्तृतयाऽन्वयः, क्तस्य कर्मणि लक्षणेति तु न युक्तम्,

भैरवी ।

र्थस्य विशेषणत्वे एव न किञ्चिदत्र साधकमित्याशयेनाह—पचतीत्यादौ तिङामिति । अयम्भावः—श्रूयमाणानामनेकतिबादीनाङ्कर्त्रादौ शक्तिकल्पनाऽपेक्षायामप्रत्ययानुपूर्व्या नानात्वाच्छक्ततावच्छेदकता नानाधर्मे कल्पनीयेति गौरवम् । तत्प्रकृतिभूतकानुपूर्व्यवच्छिन्नधातोरेव शक्तिः पञ्चसु कल्प्यते चेल्लाघवम्भवति, तिङान्तु द्योतकत्वैवेति काल इव द्योत्यः कर्ता तत्र विशेषणमित्यस्तु । अत एव 'अधोक्' 'अलेट्' इत्यादौ धातुमात्रादपि कर्तृविशेषणकधात्वर्थक्रियाविशेष्यकबोधोपपत्तिः । द्योत्यार्थस्य विशेषणता च "हेतुमति च" इतिसूत्रभाष्ये स्पष्टा । अत एव "स्त्रियाम्" इति सूत्रभाष्ये स्त्रीत्वस्य टाबादिवाच्यत्वपक्षे तस्य प्राधान्यापत्तौ द्विवचनाद्यनुपपत्तिरुक्ता न तु स्त्रीत्वस्य प्रत्ययद्योत्यत्वपक्षे । यत्र तु प्रत्ययार्थप्राधान्ये साधकमस्ति तत्र तु तस्य विशेष्यत्वमेव । एवञ्च "तयोरेव" इति "कर्तरि कृत्" इति "गत्यार्थाकर्मक" इत्यादिशास्त्रबलात्कृत्प्रत्ययसमभिव्याहारे तस्य कर्तुर्विशेष्यत्वमेवोचितमिति । ननु नात्र प्रत्ययार्थप्राधान्यस्य त्यागः, प्रत्ययस्य कर्मणि लक्षणाया अभ्युपगमाद्विशेषणीभूतक्रियायाङ्कर्तृतासम्बन्धेनोदकस्यान्वय इति नानुभवसिद्धशाब्दबोधानुपपत्तिरिति

भावप्रकाशः ।

कत्वमस्येति द्रोण इत्यादौ प्रातिपदिकार्थे प्रथमायामदोषेण मूलं चिन्त्यमिति मन्दोक्तं च;—अपास्तम् । भाष्याऽदृष्टत्वं लोकसिद्धत्वं चोभयोरपि सममिति भावः । इत्याशयादिति । अनेनाऽत्राऽरुचिः सूचिता । तद्बीजं त्वत्र पक्षे 'पदार्थः पदार्थेन' इत्येतत्सिद्धनियमव्यभिचारेऽपि मूलोक्तनियमाऽव्यभिचारात् । किञ्च मातेव हितकारिणीमित्यादौ प्रतियोगिविशिष्टसादृश्यवत इवार्थत्वेन तदेकदेशे प्रतियोगिनि मातुरभेदान्वयात् षष्ठ्यप्राप्त्या प्रातिपदिकार्थे प्रथमायाः साधुत्वेन तत्र व्यभिचारावश्यकत्वात् । सादृश्यमस्तीत्यादिवदिवास्तीत्यादि त्वनभिधानान्न साधु इति बोध्यम् । अत एव मतान्तरमाह—पचतीति । प्रतिधातु प्रतिप्रयोगमनन्तलाद्यादेशानां शक्तिकल्पनाऽपेक्षया एकस्य धातोरेव वर्तमानकालादाविव तत्रापि शक्तिकल्पने लाघवात् । अत एव अधोग्, अलेट् इत्यादौ धातुमात्रात्सर्वबोधः सङ्गच्छते । लुप्तस्मरणात् बोध इति त्वयुक्तं, लोपमजानतो बोधानापत्तेः । 'प्रत्ययार्थः प्रधानम्' इति तु प्रत्ययस्य यत्र वाचकता तद्विषयकं, द्योत्यार्थस्य प्रकारत्वस्यैव "स्त्रियाम्" इति सूत्रभाष्यादौ स्पष्टत्वात् । तदाह—त्यागेऽपीति । अत्र—प्राप्तपदादौ । प्रतीत्यनुरोधेन भाष्यादिप्रामाण्याच्च तद्वैषम्येणात्र वाचकत्वात्तत्सञ्चारः । तत्र हि तन्नियतम् । अत एव "स्त्रियाम्" इत्यत्र भाष्ये स्त्रीत्वस्य प्रत्ययार्थत्वपक्षे प्राधान्याद् द्विवचनाद्यनुपपत्तिमाशङ्क्य प्रधानस्यापि द्रव्याऽभेदेन प्रतीत्या समाहितं न तु तस्य प्रकृत्यर्थं प्रति विशेषणत्वाश्रयेण । अत एव सूत्रकृतापि "प्रधानप्रत्ययार्थवचनमशिष्यमर्थस्यान्यप्रमाणत्वात्" इत्येवोक्तं न तु व्यभिचरितत्वादित्यप्युक्तमित्यन्यत्र विस्तरः । एवं च व्यभिचारोक्तिस्तत्र युक्तैव । न च प्राप्तिकर्त्रभिन्नमुदकमिति बोधोत्तरं प्राप्तपदस्य तात्पर्यग्राहकत्वादुदकपदस्य स्वकर्तृकप्राप्तिकर्मत्वसम्बन्धेन तत्सम्बन्धिग्रामलक्षणया नायं व्यभिचार इति वाच्यम्? उदककर्तृकप्राप्तिकर्म ग्राम इति विवक्षिताऽर्थानिर्वाहादिति भावः । अन्ये इति । अनेनारुचिः सूचिता । वस्तुतस्तत्र न व्यभिचारः यतो वृत्तिवाक्ययोः समानार्थत्वानुरोधात्प्राप्तिकर्त्रभिन्नोदककर्मेत्येव बोध उभयत्र । अत एव बहुव्रीह्युपजीव्यैकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य न भङ्गः । युक्तं चैतत् । अन्यथाऽलौकिकविग्रहे एकार्थीभावकल्पनया तन्मूलके विशेषणविशेष्यभावव्यत्यासे पदयोरसामानाधिकरण्येन समासशास्त्राऽप्राप्तिः । उदके तन्निरूपकत्वबाधात्प्रकारीभूतप्राप्तौ तत्पर्यवसानम्, स्वर्गी ध्वस्त इति वत् । स्पष्टं चेदमुद्द्योतादाविति । नैयायिकाद्युक्तरीत्या व्यभिचार

नापि निपातार्थे, तेषां द्योतकताऽभ्युपगमात् । न च सिद्धान्तेऽपि प्रकृतिप्र-

## शब्दरत्नम् ।

अन्यपदार्थस्य दुरुपपादत्वात् । **एकार्थीभावेति** । एवं चैकैवोपस्थितिर्व्युत्पत्तयश्च भिन्नोपस्थितिविषया इति न दोष इति भावः । एतेन राजपुरुष इत्यादौ व्यभिचारः; राजपदार्थपुरुषपदार्थयोः स्वस्वामिभावेनैवान्वयात् । सम्बन्धिलक्षणायां तु न मानमित्यपास्तम् । **नापीति** । घटश्चेत्यादौ समुच्चयस्य घटेन भेदसम्बन्धेनान्वयादिति भावः । **द्योतकतेति** । घटपदेनैव विशिष्टस्योपस्थितिरिति तत्रान्वयस्यैवाऽभाव इति भावः ।

## भैरवी ।

यत्केनचिदुक्तन्तद् दूषयति—प्राप्तावुदकयेति । दुरुपपादत्वादिति । भवदुक्तरीत्या कर्मणोऽन्यपदार्थत्वेनाभिप्रेतस्य प्राप्तपदेनैव लाभादिति भावः । एवम्बहुव्रीह्युपजीव्यस्यैकधर्मिविशेष्यकबोधजनकत्वस्य भवदुक्तरीत्या त्यागेन बहुव्रीहिसमासानुपपत्तिरपि द्रष्टव्या । एकार्थीभावेति । वाक्ये पृथगर्थबोधकत्वेन दृष्टानाम्पदानामेकशक्त्या विशिष्टविषयैकोपस्थितिजनकत्वमेवैकार्थीभावः, स एवात्र "समर्थः पदविधिः" इति शास्त्रादाश्रीयते । व्युत्पत्तयः—नामार्थयोरित्यादयः । भिन्नोपस्थितिविषयाः—विभिन्नशब्दाभ्याञ्जनिता या भिन्नशक्त्योपस्थितिस्तद्विषयाः । एतेन—एकार्थीभावाभ्युपगमेन । व्यभिचार इति । तत्पुरुषे एव व्यभिचारदर्शनाद्बहुव्रीहिपर्यन्तानुधावनं व्यर्थमिति भावः । अत्रेदम्बोध्यम्—व्यपेक्षावादेऽप्यषष्ठ्यर्थबहुव्रीहौ व्यभिचारप्रदर्शनं 'वृत्तिवाक्ययोः समानार्थबोधकत्वम्' इति नियमस्य त्यागेन । वस्तुतस्तु तादृशनियमानुरोधेन प्राप्तोदकेत्यादिसमुदायाद्वाक्याच्च प्राप्तिकर्त्रभिन्नोदककर्मत्येव बोधः । अत एव पूर्वोत्तरपदयोः सामानाधिकरण्ये एव विहितबहुव्रीहिसमासस्योपपत्तिः । अत एव प्राप्तभार्य इत्यादौ प्राप्तिकर्माभिन्नभार्याकर्तृतिबोधात्प्राप्तपदभार्यापदयोः सामानाधिकरण्यात्पुंवद्भावस्य सिद्धिः । उदकादौ कर्तृतानिरूपकत्वबाधेऽपि विशेषणीभूतक्रियायान्तत्पर्यवसानम्बोध्यं शिखी ध्वस्त इतिवत्, शाब्दबोधस्तु विशिष्टे आरोपेणोपपाद्य इति शब्देन्दुशेखरे स्पष्टम् । मूले—नापि निपातार्थे इति । व्यभिचार इति शेषः । यथा घटः पटश्चेत्यत्र चशब्दार्थसमुच्चये पटस्य निरूपितत्वसम्बन्धेनान्वयदर्शनात् । तेषाम्—निपातानाम् । एवञ्च पटसमुच्चितः पटशब्दार्थ एव, तस्य घटेऽभेदेनान्वयान्न व्यभिचार इति भावः । एवञ्च

## भावप्रकाशः ।

इति कश्चित्, तत्खण्डयति—**प्राप्तावेति** । **क्तस्य**—कर्त्रर्थकस्य । **दुरुपपादत्वादिति** । उदकरूपकर्तुरनुक्तत्वेन ततस्तृतीयायां प्रथमान्तत्वस्य सामानाधिकरण्यस्य च हानेश्चेत्यपि बोध्यम् । एवञ्च बहुव्रीहिर्न स्यादिति भावः । नन्वेकार्थीभावाङ्गीकारेऽप्युक्तरीत्या व्यभिचारस्तदवस्थ एवाऽत आह—**एवं चेति** । तदङ्गीकारे चेत्यर्थः । **एकैवेति** । समुदायात्समुदितार्थस्येति शेषः । एकोपस्थितिनियामकसमुदायशक्तेरेवैकार्थीभावत्वमिति भावः । **व्युत्पत्तयः**—नामार्थयोरित्यादयः । चस्त्वर्थे । एवं चात्रान्वय एव नेति व्यभिचारो दूरोत्सारितः । तदाह—**न दोष इति** । व्यभिचाररूपदोषाऽभाव इत्यर्थः । ननु तत्पुरुषे एव व्यभिचारसम्भवेन बहुव्रीहिपर्यन्तं धावनं व्यर्थं मूलकृत इति कस्यचिदुक्तिं खण्डयति—**एतेनेति** । एकार्थीभावाङ्गीकारेणेत्यर्थः । तथा च तुल्यनिवारणकत्वेन तथोक्ताविशेषात् तथाबोधस्य जायमानत्वेन तदन्यथानुपपत्त्या परमते लक्षणाङ्गीकारेण तथैवान्वयाद्व्यभिचाराभावाच्च तावत्पर्यन्तधावनमिति भावः । **समुच्चयस्य**—चवाच्यस्य । **घटेनेति** । सहेति शेषः । **भेदेति** । अवयवावयविभावेनेत्यर्थः । समुच्चये घटस्तेन सम्बन्धेनान्वेतीति परमार्थः । द्योतकत्वे व्यभिचाराभावमुपपादयति—**घटेति** । **विशिष्टस्येति** । समुच्चयविशिष्टस्य घटस्येत्यर्थः । तथा च 'समुच्चितो घट' इति बोधः, द्योत्यार्थस्य प्रकारत्वात् । पूर्वमते तु घटसमुच्चय इति बोध्यम् । **तत्र**—घटश्चेत्यत्र । अन्वय-

त्ययार्थयोरभेदान्वयो दुर्लभः, अन्यत्रादृष्टत्वादिति वाच्यम्? देवतार्थकतद्धितादौ दृष्टत्वादिति भावः। वचनं संख्येति। तथैव प्राचां व्यवहारात्।

शब्दरत्नम्

अत एवाऽनुभूयते इत्यादौ सकर्मकत्वम्। निपातातिरिक्तत्वेन विशेषणाददोष इत्यन्ये। देवतार्थकेति।

भैरवी।

घटः पटश्चेत्यादौ पृथग्बुद्धेन संसर्गो यत्र तत्रान्वयबोध इति व्यवहारेण नानुपपत्तिरिति भाव इति। अत एव—निपातानान्द्योतकताभ्युपगमादेव। सकर्मकत्वमिति। प्रकृते भूधातुरन्वित्युपसर्गसमभिव्याहारादनुकूलव्यापारबोधक इति स्वार्थफलव्यधिकरणव्यापारबोधकत्वात्सकर्मकत्वमित्यर्थः।

केचित्तु निपातानां वाचकत्वेऽपि 'नानुभूयते सुखम्' इत्यादा धातोः सकर्मकत्वस्य सुखादेः कर्मत्वस्य च नानुपपत्तिः, स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वस्य सकर्मकत्वरूपत्वात्कर्मत्वस्याप्युक्तान्यतरार्थफलसम्बन्धित्वेनोद्देश्यरूपत्वात्। एवञ्च सुखादेर्धातुयुक्तनिपातार्थफलसम्बन्धित्वात्कर्मणि लकारसिद्धिरितिचेत्? न, वैकुण्ठमधिशेते, हरिरध्यासिता भूमय इत्याद्यसिद्धिप्रसङ्गात्, वैकुण्ठादेर्भवदुक्तकर्मत्वस्यासम्भवात्। तस्मादेतच्छास्त्रीयकर्मसञ्ज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वमेतच्छास्त्रबोधितकर्मसञ्ज्ञकत्वङ्कर्मत्वमित्येव युक्तम्। धात्वर्थान्वयित्वविवक्षायान्द्योतकत्वमेव। तद्व्यतिरिक्तनिपातानां वाचकत्वमपि। अत एव "अव्ययं विभक्ति" इत्यादि सङ्गच्छते। एवञ्चानुभूयते सुखमित्यादावेतच्छास्त्रीयकर्मसञ्ज्ञाया उपपत्तयेऽन्वित्यस्य द्योतकत्वमेव। एवं 'शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव' इत्यादावपि विशेषणविशेष्यवाचकपदयोरेकविभक्तिकत्वोपपत्तये द्योतकत्वमेव। घटः पटश्चेत्यादावपि वाचकत्वस्वीकारे निपातार्थयोर्भेदसम्बन्धेनान्वयबोधस्याव्युत्पन्नतया द्योतकत्वमेव युक्तम्। सङ्कटमुद्धृतमित्यादौ तु वाचकतेति नानुपपत्तिरित्यन्यत्र विस्तरः।

अन्ये तु 'घटः पटश्च' इत्यादौ चाद्यर्थे पटादेरन्वयोपपत्तये वाचकत्वपक्षेऽपि निपातातिरिक्तनामार्थयोर्भेदसम्बन्धेनाऽन्वयबोधोऽनुपपन्न इति निपातातिरिक्तत्वन्नाम्नि विशेषणन्देयमिति वदन्ति। तन्मतमाह—निपातातिरिक्तत्वेनेति। अन्ये इति। अरुचिबीजन्त्वेतादृशस्थले द्यो-

भावप्रकाशः।

त्येति। स च पृथगुद्धपदार्थयोः संसर्गरूपः, अन्वयपदस्य तत्रैव व्युत्पत्तेः। उक्तपक्षं द्रढयति—अत एवेति। तेषां द्योतकत्वादेवेत्यर्थः। अनुभूयते इति। अस्य सुखमिति शेषः। सकर्मकत्वमिति। अस्य धातोरिति शेषः। व्यापारव्यधिकरणफलवाचकत्वमिति तदर्थः। एवं च कर्मणि लसिद्धिरिति भावः। आदिना उपास्यते गुरुरित्यादिसङ्ग्रहः। ननु स्वस्वयुक्तनिपाताऽन्यतरार्थफलव्यधिकरणव्यापारवाचित्वं सकर्मकत्वम्, ईदृशफलाश्रयत्वमेव कर्मत्वम्, इति कर्मणि लसिद्ध्या किं द्योतकत्वेनेति चेत्? न, अध्यासिता भूमयः, इत्यादौ क्ताद्यसिद्धिप्रसङ्गात्। भूमौ धातुनिपातान्यतरोपस्थाप्यफलाश्रयत्वाभावेन लक्षणद्वयस्याप्यत्राऽसम्भवात्। अत्र "अधिशीङ्" इत्यनेनाऽऽधारस्य कर्मसञ्ज्ञाविधानात्। एतच्छास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम्। तदनन्वय्यर्थकत्वमकर्मकत्वम्। कर्मत्वमप्येतच्छास्त्रबोध्यकर्मसञ्ज्ञकत्वमेवेति तु तत्त्वम्। अधिकमन्यत्र बोध्यम्। नन्वेवमपि तेषां वाचकत्वे दोष एवाऽत आह—निपातेति। विशेषणात्—विशेष्यीकरणात्, नामार्थस्येति भावः। अन्ये इति। अनेनारुचिः सूचिता। नैयायिकाद्यभिमताऽर्धजरतीयस्य हेयत्वेऽपि न सर्वेषां द्योतकत्वमेव वाचकत्वमेव वेति मूलाद्युक्तम्, "अव्ययं विभक्ति" "गतिर्गतौ" इत्यादिसूत्रस्थभाष्यविरोधापत्तेः। किं तु गमकसत्त्वे द्योतकत्वमन्यथा वाचकतैव, वृत्तिद्वयकल्पनाऽभावजलाघवात्। तस्माल्लक्ष्यानुरोधात् क्वचिद् द्योतकत्वं क्वचिद्वाचकत्वमिति फलितम्। अत्र पक्षे तत्र क्वाचित्के वाचकत्वेपि न व्यभिचारः, अव्ययेषु नामत्वाऽभावस्य मञ्जूषायां प्रतिपादितत्वात्। एवं च तद्विशेषणं निष्फलमिति।

### शब्दरत्नम् ।

'आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः' ।

इति मीमांसकमते इति शेषः । एकार्थीभाववादिनामस्माकं तु विशिष्टोपस्थित्या तत्रापीदृशान्वयो दुर्लभ एव । द्रोणो व्रीहिमानयेत्यादि त्वनभिधानान्न । सर्पिः कुडव-

### भैरवी ।

तकत्वस्वीकारेणैवोपपत्तौ निपातातिरिक्तत्वविशेषणदाने गौरवमिति । मूले—सिद्धान्तेऽपीति । परिमाणाधिक्ये प्रथमेति सिद्धान्ते इत्यर्थः। देवतार्थकेत्यादि। प्रथमान्तात्प्रातिपदिकाद्देवतासम्बन्धिन्यर्थेऽणिति "साऽस्य देवता" इति सूत्रार्थाद्देवतायाः प्रत्ययार्थत्वम् । तत्रैकदेशान्वयस्वीकारे देवताविशिष्टन्देयम्प्रत्ययार्थः । तदस्वीकारेतु देवता देयञ्च प्रत्ययार्थ इति विभिन्नशक्तिः स्वीकार्या । अत एवाह—आमिक्षामित्यादि । वस्तुतस्तु तन्न स्वमतमित्याह—एकार्थीभावेति । ननु द्रोणो व्रीहिरित्यादौ परिमाणरूपप्रत्ययार्थे द्रोणादेस्तस्य च व्रीह्यादावन्वयोपगमे द्रोणपदव्रीहिपदयोः सामानाधिकरण्याभावेन व्रीहिपदार्थस्य क्रियान्तरम्प्रति कर्मत्वविवक्षायान्द्रोणो व्रीहिमानयेत्यादिप्रयोगापत्तिरत आह—द्रोणो व्रीहिमिति । अनभिधानादिति । प्रातिपदिकार्थादिसाहचर्येण समानविभक्तिकनामान्तरार्थे भेदेनान्वयविवक्षायामेव परिमाणाधिक्ये प्रथमायाः स्वीकारात् । एवञ्च प्रथमान्तार्थस्य द्रोणाभिन्नपरिमाणस्य प्रथमान्तार्थे व्रीह्यादौ भेदेनान्वयेऽपि व्रीहिपदस्य तिङ्सामानाधिकरण्यादभिहिते प्रथमा, 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिककारोक्तेः । नन्वेवं सर्पिः कुडवमित्यादौ कुडवाभिन्नपरिमाणस्य सर्पिःपदार्थेऽन्वयात् "इसुसोः सामर्थ्ये" इति षत्वापत्तिरत आह—सर्पिरिति ।

### भावप्रकाशः ।

'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इत्यत्र देवताविशिष्टं देयं प्रत्ययार्थः, प्रकृत्यर्थः प्रत्ययार्थैकदेशे अभेदेन विशेषणम् । यद्वा, देवताप्रदेययोर्भिन्नैव प्रत्ययस्य शक्तिः । विश्वेदेवाऽभिन्नदेवतासम्बन्धि इति बोधः । प्रदेयं हि सम्बन्धित्वेनैव प्रत्ययार्थः । प्रदेय इति मन्त्रस्याप्युपलक्षणम् । आमिक्षादिपदैश्च सम्बन्धित्वेन बुद्धस्य प्रदेयस्य विशेषसमर्पणं क्रियते । विश्वेदेवादिपदैर्देवताया लाभेऽपि देवतात्वेनाऽलाभात्तेन रूपेण लाभाय देवतायां शक्तिरिति मीमांसकानां मतं तदाशयेन मूलमित्याह—आमिक्षामिति ।

"आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम्"

इत्यस्योत्तरार्धम् । इति मीमांसकेति । देवतात्वं प्रदेयं च तदर्थः । तत्र प्रकृत्यर्थस्य देवतात्वे आधेयतासम्बन्धेनान्वयः । प्रदेये देवतात्वस्य निरूपकतासम्बन्धेनान्वयः । विश्वेदेववृत्तिदेवतात्वनिरूपकसम्बन्ध्यभिन्नामिक्षेति बोधः ।

यद्वा प्रदेयमेव प्रत्ययार्थः, स्ववृत्तिदेवतात्वनिरूपकत्वसम्बन्धेन प्रकृत्यर्थस्य प्रत्ययार्थेऽन्वयः, उक्तसम्बन्धेन विश्वेदेवविशिष्टसम्बन्ध्यभिन्नामिक्षेति बोधः, इति रीत्या तु तन्मतेऽपि तथा नेति भावः । शेषपूरणेन योजने बीजमाह—एकार्थीभावेति । अस्माकं—वैयाकरणानाम् । तुः वैलक्षण्यसूचकः । तत्रापि—देवतार्थकतद्धितादावपि । अन्वयः—उक्तरूपः । एवं च यथाश्रुते मूले पूर्वापरग्रन्थविरोधः स्पष्ट एवेति भावः । ननु द्रोणादिशब्देभ्यः परिमाणे प्रथमायां तस्य परिच्छेद्यत्वेन व्रीहावन्वये तस्य प्रधानाऽऽनयनकर्मत्वविवक्षायां राज्ञः पुरुषमानयेतिवत् द्वितीयायां द्रोणो व्रीहिमानयेत्यादेरपि साधुतापत्तिः । न च परिमाणं प्रातिपदिकार्थ इति तत एव तल्लाभात्तत्र तद्विधानं व्यर्थम्, द्रोणत्वादिना तस्य तदर्थत्वेऽपि परिमाणत्वेनातदर्थत्वात्, तथा च शाब्दबोधवैलक्षण्याय सूत्रे ग्रहणे स दोष एवात आह—द्रोण इति । नन्वेवमपि सर्पिः कुडव इत्यादावुक्तरीत्याऽन्वयात्, 'समानाधिकरणमसमर्थवत्' इत्यादिवचनाऽप्राप्त्या च सामर्थ्यस्य सत्त्वेन "इसुसोः सामर्थ्ये" इति षत्वविकल्पापत्तिरत आह—सर्पिरिति । कुडवमात्रमिति । अत्र मात्रशब्दोऽवधारणे न तु प्रत्ययः, तस्य सम्बन्धिनि विधानेन सर्पिषा सामानाधि-

शब्दरत्नम् ।

मात्रमित्यादौ षत्वविकल्पोऽपि व्यवस्थितविभाषया नेति दिक् ।

वस्तुतस्तिङ्समानाधिकरणे प्रथमेति लक्षणैकवाक्यतया परिमाणेत्यस्य परिमाणे वर्त्तमानात्प्रातिपदिकादित्येवार्थः । नच प्रातिपदिकार्थत्वात्सिद्धिः, प्रवृत्तिनिमित्ततदाश्रयद्रव्य-

भैरवी ।

दिगिति । दिगर्थस्तु 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकैकवाक्यतया नीलो घट इत्यादावुभयत्र प्रथमायाः साधुत्वोपपत्तये समानविभक्तिकनामार्थयोरभेदान्वयादुभयत्र तिङ्सामानाधिकरण्यं यथा तथा यत्र परिमाणाधिक्ये प्रथमा तत्रापि परिमाणे वर्तमानात्प्रातिपदिकाद्यत्र प्रथमा तत्रापि तत्साहचर्यान्नामान्तरार्थे भेदसम्बन्धेन नान्वयः किन्त्वभेदेनैवेति द्रोणो व्रीहिमानयेत्यस्य नापत्तिरिति ।

सिद्धान्तार्थमाह—वस्तुत इति । परिमाणे वर्तमानात्प्रातिपदिकाद् यत्र प्रथमा तत्रापि परिमाणत्वेन परिमाणम्प्रकृत्यर्थे प्रकारतया भासत इति द्रोणः खारी आढकमित्याद्येवोदाहरणम् । एतेभ्यः परिमाणाऽभिन्नो द्रोण इत्याद्याकारक एव बोधः । यत्र च तिङन्तम्पदन्न श्रूयते तत्रापि "अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति" इति भाष्योक्तेरस्तीत्यस्याध्याहारेण तिङ्सामानाधिकरण्यम् । 'हरीतकीम्भुङ्क्ष्व राजन्मातेव हितकारिणीम्' इत्यादिरसाधुरेव । न च तिङ्सामानाधिकरण्ये एव चेत् प्रथमा तदाऽधिकरणशक्तिप्रधानेभ्य उच्चैरादिभ्यः कथम्प्रथमासिद्धिः, तिङ्सामानाधिकरण्याभावादिति वाच्यम् ? "अव्ययादाप्सुपः" इति ज्ञापकात्तदुपपत्तेः, तिङ्सामानाधिकरण्ये प्रथमैवेति नियमाद्वा । ननु द्रोणादिशब्दानाम्परिमाणत्वेन परिमाणमपि वाच्यमिति प्रातिपदिकार्थे प्रथमेत्येव सिद्धे परिमाणग्रहणमनर्थकमित्याशङ्कान्निराचष्टे—न चेति । द्रव्ययोरेवेति । एवकारेण लिङ्गव्यवच्छेदः । यद्यपि पञ्चकम्प्रातिपदिकार्थस्तथापि प्रकृतसूत्रे प्रातिपदिकार्थपदेन द्वयोरेव ग्रहणम् । एवञ्च प्रातिपदिकार्थमात्रे प्रथमेत्यस्योदाहरणम् उच्चैर्नीचैरित्याद्यलिङ्गाः, स्त्री पुमान् नपुंसकमिति लिङ्गप्रवृत्तिनिमित्तकञ्च, कृष्णः श्रीः ज्ञानम् , तटस्तटी तटमित्यादीनि च लि-

भावप्रकाशः ।

करण्यस्य सत्त्वेन वाचनिकाऽसामर्थ्येनैव षत्वाप्राप्तेः । अत एव क्वचित्कुडवमित्येव पाठो दृश्यते । कुडवमिति पाठे तूभयलिङ्गता बोध्या । अत एव द्रोणः खारी आढकमिति भाष्यसङ्गतिः । दिगिति । तदर्थस्तु अनभिधाने व्यवस्थितविभाषायां च न मानम् । न च 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकमेव तत्र मानम् । न हि तदा द्रोणो व्रीहिमित्यस्य प्रसङ्गोऽस्ति । एवं च प्रातिपदिकार्थादिसाहचर्येण नाम्नोः सम्बन्धे समानविभक्तिकनामान्तरार्थेऽन्वये एव परिमाणे प्रथमायाः साधुत्वं सूत्रमते कल्प्यते । न च शाब्दबोधभेदापत्त्या वार्तिकमयुक्तमेवेति कथं तदेकवाक्यतया तथाकल्पनमिति वाच्यम् ? शाब्दबोधकृतवैलक्षण्याऽनादरेणापि तत्र तत्र वार्तिकवृत्तेर्दर्शनात् । एवं सामानाधिकरण्येनाऽसमर्थतया षत्वप्रसङ्गोऽपि तदा नास्तीति वाच्यम् । तदेकवाक्यत्वे द्रोणो व्रीहिरित्यादौ भेदान्वये तदनिष्टत्वस्यैव लाभेनाऽभेदान्वये एव साधुत्वमित्यस्य वक्तुमौचित्यात् । किं च द्रोणं व्रीहिमानयेत्यादावभेदबोधानापत्तिः । यदि तत्र लक्षणा तर्ह्यत्रापि तथैवास्तु किमनेन प्रयासेन ? व्यवस्थितविभाषापरिगणनपरभाष्यविरोधापत्तेश्च । एवं च मूलोक्तपक्षे उक्तदोषत्रयं दृढमिति ।

तदेतद् ध्वनयितुं खण्डनकृद्रत्नाकराद्युक्तिं खण्डयितुं च मूलकृदभिमतसिद्धान्तमाह—वस्तुत इति । अस्य 'उपलक्षणम्' इत्यस्य शेषभूते 'इति बोध्यम्' इत्यत्रान्वयः । लक्षणैकेति । वार्तिकलक्षणैकेत्यर्थः । न हि तदा परिमाणस्य विभक्त्यर्थत्वं लभ्यते । एवेन मूलाद्युक्तव्यवच्छेदः । प्रकारान्तरमप्यत्र वक्ष्यते । ननु द्रोणादिशब्दानां परिमाणे वृत्तौ तेभ्यस्तस्य नियतोपस्थितिकत्वेन प्रादिपदिकार्थत्वादेव प्रथमासिद्धिरित्यत्र मते परिमाणग्रहणं व्यर्थमित्याशयेनाह—न चेति । प्रवृत्तीति । तत्तच्छब्देत्यादिः । तदाश्रय-

शब्दरत्नम् ।

योरेवात्र प्रातिपदिकार्थपदेन ग्रहणात् । द्रोणादिपदानां च द्रोणत्वाद्येव प्रवृत्तिनिमित्तम् । परिमाणत्वेन परिमाणं तु लिङ्गवद्विशेष्यान्वय्येव । द्रोणः परिमाणमिति तु द्वौ ब्राह्मणावि-त्यादिवदुपपन्नम् । द्रोणत्वादि चेयत्ताविशेषावच्छिन्नपलादिपरिच्छिन्नधान्यादिपरिच्छेदक-

भैरवी ।

ङ्गाधिक्ये इत्यस्य । अथ परिमाणग्रहणस्य सार्थक्यमाह—द्रोणादिपदानामिति । द्रोणत्वाद्येवेति । लाघवादित्यादिः । एवकारेण तादृशोऽखण्डोपाधिसमानाधिकरणत्वेन प्रतीयमानं यदियत्तावि-शेषावच्छिन्नधान्यादिपरिच्छेदकत्वं तस्य प्रवृत्तिनिमित्तघटकत्वस्य व्यवच्छेदः । एतेन द्रोण-त्वादिना प्रतीयमानेऽर्थे यत्परिमाणत्वेन परिमाणम्भासते तस्याऽऽधिक्यात्प्रथमासिद्ध्यर्थ-म्परिमाणग्रहणमिति ध्वनितम् । यद्यपि परिमाणन्तदर्थन्तथापि तस्याऽभेदेन द्रोणत्वावच्छि-न्ने द्रोणादिशब्दजन्यप्रतीतौ विशेषणतया भानम् । ननु यदि द्रोण इति शब्दमात्रात्परिमा-णाऽभिन्नो द्रोण इति प्रतीतिस्तदा 'उक्तार्थानामप्रयोगः' इति न्यायाद् द्रोणः परिमाणमिति प्रयोगानुपपत्तिरत आह—द्रोणः परिमाणमिति त्विति । इत्यादिवदिति । तत्र यथा द्विवचनेन द्वित्व-स्योपस्थितिरस्ति यद्यपि, तथापि 'सम्भेदेनाऽन्यतरवैयर्थ्यम्' इति न्यायेन द्विशब्दप्रयोग-स्योपपत्तिस्तथा परिमाणशब्दस्यापि प्रयोग उपपद्यते । इदमत्र बोध्यम्—धान्यपरिच्छे-दके 'परिमाणन्तु सर्वतः' इति लक्षणलक्षिते परिमाणविशेषे एव द्रोणादिशब्दानाम्प्रयोगः । तदुक्तम्—

अष्टमुष्टिर्भवेत्किञ्चित्किञ्चिदष्टौ तु पुष्कलः ।
पुष्कलानि तु चत्वारि आढकः परिकीर्तितः ॥

भावप्रकाशः ।

द्रव्ययोरेवेति । एवकारेण मूलाद्युक्तव्यावृत्तिः । अत्र—सूत्रे, न त्वन्यत्र । अत एव लिङ्गग्रहणमपि सार्थकम् । अन्यथा "स्वमोर्नपुंसकात्" इत्यादिशास्त्रप्रामाण्येन लिङ्गस्यापि प्रातिपदिकार्थतया तद्वैयर्थ्यं स्पष्टमेव । अत एव "स्त्रियाम्" इति सूत्रे भाष्ये स्त्रीत्वे द्योत्ये इत्यर्थ इति सिद्धान्तितम् । तदाश्रयश्च मुख्य इवारोपिततदाश्रयोऽपि । अत एव गोपीत्यादौ स्वादिप्रकृतेर्लाक्षणिकत्वेऽपि न दोषः । न ह्येवं सति शाब्दबोधप्रयुक्तं वैलक्षण्यम् । अत एवैकवाक्यता सर्वांशे । भाष्यमपि अत्र गमकं वक्ष्यते । इदमेवा-भिप्रेत्य वृत्तौ प्रक्रियायां च प्रातिपदिकार्थः सत्तेत्युक्तम् । सत्तेति प्रवृत्तिनिमित्तोपलक्षणम् । आश्रयस्तु तदाक्षिप्तत्वान्न पृथगुक्तः । न च 'अभिहिते प्रथमा' इति वार्तिकस्वारस्येनाऽभिहितकारकस्य प्रथमा-र्थत्वं लभ्यते, तत् तव न सिद्ध्येत्, त्वदुक्तप्रातिपदिकार्थत्वाभावादिति वाच्यम् ? तत्तत्प्रातिपदि-कार्थगतकारकशक्तावन्येनाभिहितायां स्वार्थे प्रातिपदिकात्प्रथमेत्यर्थेन तद्विरोधाभावात् । यत्तु-भाष्योक्तं तत्प्रत्याख्यानमयुक्तम्, प्रासादे आस्ते इत्यादौ प्रधानक्रियानिरूपितानभिहिताधिकरणत्वसत्त्वात्सप्तम्युप-पत्तेरिति मन्दस्तन्न, परत्वात्प्रथमाप्राप्तेः । क्रिययोर्मिथोऽत्र गुणगुणिभावेन प्रधानत्वाच्छक्तिर्गुणाश्रयेति-न्यायाविषयत्वाच्चेति बोध्यम् । ननु द्रोणादिशब्दानामियत्ताविशेषावच्छिन्नपलादिपरिच्छिन्नधान्यादि-परिच्छेदके शक्ततया परिमाणमेव तत्र प्रवृत्तिनिमित्तमिति तथापि तस्यासिद्धिरेवाऽत आह—द्रोणा-दीति । चो ह्यर्थे । एवव्यावर्त्यमाह—परिमाणत्वेनेति । परिमाणस्यागत्या द्रोणादिशब्दवाच्य-त्वाङ्गीकारेण ततो भासमानमपि तल्लिङ्गवन्न प्रवृत्तिनिमित्तं किं तु विशेष्ये विशेषणमित्येव, यं धर्मं प्रकारीकृत्य वृत्तिग्रहस्तस्यैव प्रवृत्तिनिमित्तत्वात् । एवं च तस्याऽत्र लिङ्गवत्प्रातिपदिकार्थपदेनाऽग्रहणात् द्रोणत्वाद्यपेक्षया परिच्छेदकत्वस्याऽधिकस्य भानात्प्रथमा न प्राप्तेति तद्धःपरिमाणग्रहणमिति भावः । नन्वेवं द्रोणः परिमाणमित्यादिप्रयोगाऽसिद्धिरत आह—द्रोण इति । द्रोणशब्दस्यानेकार्थत्वादित्यपि बोध्यम् । नन्वस्तु द्रोणत्वं प्रवृत्तिनिमित्तं तच्च न उक्तरूपपरिमाणातिरिक्तं मानाभावात् । तथा च तत्त्वेन सिद्ध्या तद्वैयर्थ्यमेवात आह—द्रोणत्वादीति ।

पलं च कुडवः प्रस्थ आढको द्रोण एव च ।

शब्दरत्नम् ।

त्वसमानाधकरणो धर्मः । द्रोणः, खारी, आढकमित्येव तदुदाहरणं भाष्योक्तं साधु । द्रोणो भरवी ।

चतुराढको भवेद् द्रोण इत्येतन्मानलक्षणम् ॥ इति ।

धान्यपरिच्छेदके एवैषाम्प्रवृत्तौ मानन्तु—

पलञ्च कुडवः प्रस्थ आढको द्रोण एव च ।
धान्यमानेषु विज्ञेयाः क्रमशोऽमी चतुर्गुणाः ॥ इति ।

आढकद्रोणशब्दावर्द्धर्चादी । तदुक्तममरसिंहेन—

अस्त्रियामाढकद्रोणौ खारीवाहो निकुञ्चिकः ।
कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ॥ इति ।
पलन्निकुञ्चिकम्मुष्टिः कुडवस्तच्चतुष्टयम् ।
चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम् ॥
अष्टाढको भवेद् द्रोणो द्विद्रोणः शूर्प उच्यते ।
सार्द्धः शूर्पो भवेत्खारी द्विशूर्पा गोण्युदाहृता ॥
तामेव भारञ्जानीयाद्वाहो भारचतुष्टयम् ।
शुष्कमेयेष्विदम्मानन्द्विगुणन्तद् द्रवेषु तु ॥ इति ।

सूत्र परिमाणग्रहणमुन्मानप्रमाणयोरप्युपलक्षणम् । अत एव तुलादिशब्देभ्यः प्रथमासिद्धिः ।
ननु लक्षणया साध्वित्यनुपपन्नं लक्ष्यार्थानामनियततया प्रातिपदिकजन्यनियतोपस्थितिकभावप्रकाशः ।

धान्यमानेषु बोद्धव्यं क्रमशोऽमी चतुर्गुणाः ॥ इति ।
अष्टमुष्टिर्भवेत् किञ्चित्किञ्चिदष्टौ तु पुष्कलम् ।
पुष्कलानि तु चत्वारि आढकः परिकीर्तितः ।
चतुराढको भवेद् द्रोण इत्येतन्मानलक्षणम् ॥ इति चाभियुक्तोक्तेः ।

अन्ते तुर्यं पादे 'पूर्णपात्रं तदुच्यते' इति श्रौतादौ पाठान्तरम् । अष्टमुष्टिर्भवेत्कुञ्चिदिति त्वपपाठः । अत एव—

किञ्चित्सास्थिवधे देयं प्राणायामस्त्वनस्थिके ।

इति प्रकीर्णकप्रकरणोक्तयाज्ञवल्क्यपद्यव्याख्यावसरे कृकलासादिप्राणिनां प्रत्येकं वधे किञ्चित्तुल्यं धान्यहिरण्यादि देयम् । तत्र किञ्चिदिति यदा हिरण्यं दीयते तदा पणमात्रम्, यदा तु धान्यं तदाऽष्टमुष्टि देयम् । अष्टमुष्टिर्भवेत् किञ्चिदिति स्मरणादिति विज्ञानेश्वरोक्तिः सङ्गच्छते । **धर्म इति** । स चाऽखण्डोपाधिर्जातिविशेषो वा । भाष्यप्रामाण्येन तथैवाऽनुभवेन लाघवेन च तादृशस्य तस्यैव प्रवृत्तिनिमित्तकत्वस्वीकारादिति भावः । ननु सूत्रे परिमाणग्रहणात्तथार्थस्य तदभिमतत्वेऽपि न भाष्याभिमतत्वमत आह—**द्रोण इति** । अस्येतीत्यादिः । **एवेन** यदा मेये द्रोणादीनां वृत्तिस्तदा तस्यानेकत्वेन, परिमाणमात्रपरत्वे तदबोधेन च व्यभिचारान्मेयस्य नियतोपस्थितिकत्वाभावेनाप्रातिपदिकार्थत्वादसिद्धौ कर्मण्युत्पत्त्या प्रमेयार्थकं परिमाणग्रहणमिति कैयटाद्युक्तस्यापि निरासः, सिंहो माणवक इत्याद्यसिद्ध्यापत्तेस्तद्वदस्यापि सिद्धेश्च, नियमांशनिवेशे मानाभावाच्च । यत्तु—प्रवृत्तिनिमित्तं मुख्यतदाश्रयश्चेति द्वावेवात्र तत्पदेन विवक्षितावत्यन्तरङ्गत्वात् । अतः प्रमेयार्थकपरिमाणग्रहणं लाक्षणिकार्थोपलक्षणम् । इदमेव च लाक्षणिकानां साधुत्वे मानमिति कैयटाशय इति केचित्; तन्न, द्रोणः खारीत्यादिभाष्योक्तोदाहरणेषु व्रीह्यादिपदानुपादानात्तदानुगुण्याभावात्, पदे एव लक्षणेति "ओत्" सूत्रस्थसिद्धान्तकैयटोक्तिविरोधाच्च । तस्मान्मतत्रयमप्ययुक्तम् । तद् ध्वनयन् तदकरणोपपत्तिमाह—**द्रोण इति** । ननु पदे एव लक्षणेति वादिनामत्र दोषशङ्कालेशाभावेऽपि प्रातिपदिकलक्षणापक्षे सदृशत्वस्याधिकस्य भानादप्रातिपदिकार्थत्वात्कथं प्रथमासिद्धिः । यद्यपि तदेव प्रवृत्तिनिमित्तमत्र तदुत्तरत्वप्रत्ययेनाभिधीयमानत्वस्यैव प्रवृत्तिनिमित्तत्वस्य

शब्दरत्नम् ।

व्रीहिरिति तु सिंहो माणवक इतिवल्लक्षणया साधु । लक्षणा च शक्यतावच्छेदकाऽऽरोप एव । एवं च प्रातिपदिकार्थं इत्यस्याऽलिङ्गा लिङ्गप्रवृत्तिनिमित्तकाश्चोदाहरणम् । अन्ये सर्वे लिङ्गाद्याधिक्यस्य । परिमाणग्रहणं परिच्छेदकमात्रोपलक्षणम् ।

भैरवी ।

त्वस्य तत्राऽसत्त्वादत आह—लक्षणा चेति । तथा च यस्य पदस्य लक्षणया वाक्यार्थबोधजनकता तत्पदशक्यतावच्छेदकस्यारोपो लक्ष्ये आदौ भवतीति कल्पनीयम् । स चाऽऽरोपो मुख्यार्थबाधज्ञानानन्तरमिति मुख्यार्थबाधज्ञानमस्याः कारणं, मुख्यार्थसम्बन्धग्रहश्च तथा । लक्षणा च स्वरूपसती हेतुर्न तु शक्तिवज्ज्ञाता शाब्दबोधहेतुः, पदपदार्थसम्बन्धस्यैव वृत्तित्वात् । गङ्गायाङ् घोष इति वाक्याद् गङ्गावृत्तिघोष इत्येव बोधः । तदुक्तङ्काव्यप्रकाशे—

मुख्यार्थबाधे तद्योगरूढितोऽर्थप्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया ॥ इति ।

अत्र मुख्यार्थबाधादित्रितयं हेतुः । आरोपिता क्रिया–आरोपितो व्यापार इति तद्व्याख्यातारः । एवञ्च मुख्यार्थबाधज्ञानञ्च मुख्यार्थोपस्थितिसाध्यमिति मुख्यार्थस्य प्रथममुपस्थितिः पदादेव भवति । तच्च पदं स्वार्थं एव प्रथमतः संस्कृतम्भवतीति पदे एव लक्षणा । सिंहो माणवक इत्यत्र मुख्यार्थस्य सिंहस्य क्रौर्यादयो ये गुणास्तत्सजातीयगुणानां माणवके दर्शनेन सिंहत्वस्य तत्रारोपो भवति । सिंह इति पदञ्च स्वप्रवृत्तिनिमित्तरूपप्रातिपदिकार्थे एव संस्कृतम्भवति यथा तथा द्रोणो व्रीहिरित्यादावपि व्रीहौ द्रोणत्वारोपानन्तरं द्रोणाऽभिन्नो व्रीहिरित्याकारकबोध एव । एतेभ्य आरोपितद्रोणत्ववान्व्रीहिरित्याद्याकारक एव बोध इति केचित्; तन्न, कचतस्रस्यति वदनमित्यादिभ्यश्चमत्काराभावापत्तेः । एतेन द्रोणाभिन्नपरिमाणपरिच्छेद्यो व्रीहिरिति बोधोपपत्तये देवतार्थकतद्धितादिदृष्टान्तोपादानमयुक्तमिति ध्वनितम् । एवञ्च–प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणस्य सिद्धौ च । अलिङ्गाः–अव्ययानि । लिङ्गप्रवृत्तिनिमित्तकाः–लिङ्गमेव प्रवृत्तिनिमित्तं येषान्ते स्त्री पुमान् नपुंसकमिति यथा । अन्ये सर्वे–कृष्णः, श्रीः, ज्ञानमित्यादयः । उपलक्षणमिति । तेन 'यौतवन्द्रुवयम्पाय्यम्' इत्यादि

भावप्रकाशः ।

विवक्षितत्वादिति समाधिरत्र सुवचस्तथापि सिद्धान्तरीत्या समाधा सूचयन्प्रसङ्गाल्लक्षणास्वरूपसिद्धान्तमाह—लक्षणा चेति । एतेन शक्यसम्बन्धादीनां निरासः । एवं च माणवकत्वविशिष्टः सिंहत्ववानितिवद् व्रीहित्वविशिष्टो द्रोणत्ववानिति बोध इति तत्पक्षेपि तत्सिद्धिः सुवचैव । स्पष्टं चेदमन्यत्र । फलितमाह—एवञ्चेति । तयोरेव तेन ग्रहणे चेत्यर्थः । अलिङ्गाः—उच्चैरादयः । लिङ्गेति । पुमानित्यादयः । 'प्रातिपदिक' इति परिभाषया स्त्रीशब्दोऽप्यस्यैवोदाहरणम् । अत एव "स्त्रीपुमान्नपुंसकमिति प्रातिपदिकार्थत्वादेव सिद्धम्" इति भाष्यं सङ्गच्छते । अन्ये सर्वे । नियतलिङ्गाः कृष्णः श्रीर्ज्ञानमित्यादयोऽनियतलिङ्गास्तटकुमारादयश्चेत्यर्थः । आदिना द्रोणादयः परिमाणाधिक्ये इत्यस्येत्यादिपरिग्रहः । नन्वेवमपि सूत्रमते हस्तो, वितस्तिरित्याद्युन्मानादौ न स्यादत आह—परीति । "आर्हात्" इति सूत्रे संख्यायाः सर्वतो बाह्यत्वं वदतस्तेषां परस्परं ग्रहणस्य सूचनात् । तेन 'यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम्' इति त्रिविधपरिच्छेदकेभ्यः प्रथमा सूत्रमते भवतीति भावः । एतेन द्रोणं व्रीहिमानयेत्यादाविव लक्षणया निर्वाहे परममूलं चिन्त्यम् । परिमाणग्रहणं तु कैयटाद्यनुयायिप्रकाशाद्युक्तरीत्या

सरला ।

शक्यतावच्छेदकारोप एवेति । एवं च लक्ष्यार्थस्यापि शक्यतावच्छेदकरूपेणैव भानमिति न तत्र लक्ष्यार्थे विभक्त्यर्थान्वयानुपपत्तिः । स्वप्रकारकारोपविशेष्यत्वसम्बन्धेन लक्ष्यार्थस्यैव प्रकृत्यर्थतावच्छेदकत्वविशिष्टत्वम् । अत एव 'गङ्गायां मीनघोषौ' इति प्रयोगसाधुत्वम् । अन्यथा शक्यलक्ष्ययोर्विभिन्नरूपेणोपस्थित्या एकरूपावच्छिन्ने मीनघोषयोरनन्वयेन सहविवक्षाया अभावे द्वन्द्वानुपपत्तेः ।

इह सूत्रेऽर्थे लिङ्गे च प्रथमेत्येतावदेव सुवचम् । इतरत्सर्वं त्यक्तुं शक्यम् । तथाहि-अर्थे प्रथमेत्युक्ते कस्यार्थे इत्याकाङ्क्षायां यस्मात्स्वादिविधिस्तस्येति लभ्यत एव । स्वादयश्च प्रातिपदिकाल्लिङ्गप्रत्ययविशिष्टाच्च विधीयन्ते । तदर्थत्वञ्च ततो नियतोपस्थितिकत्वमेव । एवं च मृडानीत्यादौ पुंयोगमहत्त्वादेरपि भ्यन्ता-

शब्दरत्नम् ।

तद् ध्वनयन्नाह-एतावदेव सुवचमिति । नियतोपस्थितिकत्वमिति । तद्वच्च प्रवृत्तिनिमित्ततदाश्रयरूपम् । परिमाणञ्च प्रातिपदिकांशे, लिङ्गप्रत्ययविशिष्टांशे तु लिङ्गमहत्त्वा-

भैरवी ।

सङ्ग्रहः । तद् ध्वनयन्-द्रोणाभिन्नपरिमाणपरिच्छेद्यो व्रीहिरिति रीत्या शाब्दबोधकृतवैलक्षण्यानादरं ध्वनयन् । तद्वच्चेति । तज्जन्यनियतोपस्थितिकत्ववच्चेत्यर्थः । प्रवृत्तिनिमित्ततदाश्रयरूपं लिङ्गस्याप्युपलक्षणम् । तेन यत्र दारानित्यादौ लिङ्गस्यापि नियमेन प्रातिपदिकजन्यनियतोपस्थितिकत्वन्तत्र प्रातिपदिकार्थे प्रथमेत्यनेनैव प्रथमासिद्धिः । परिमाणग्रहणस्याऽनावश्यकत्वं स्पष्टयति—परिमाणञ्चेति । प्रातिपदिकांशे इति । अस्य नियतोपस्थितिकमित्यत्रान्वयः । यदि कुण्डादिशब्दजन्योपस्थितौ लिङ्गस्यापि नियमेन भानन्तदा तेभ्योऽपि प्रातिपदिकार्थ इत्येव सिद्धमित्याशयेनाह—लिङ्गप्रत्ययेति । यत्र लिङ्गबोधकप्रत्ययविशिष्टाद्रमा,

भावप्रकाशः ।

सफलम् । गौर्वाहीक इतिवन्निर्वाहे तु प्रत्याख्यातमेव परिमाणग्रहणमुक्तरीत्या हरदत्तादिभिः । न च बोधवैलक्षण्यार्थं तदावश्यकम्, तथा बोधाऽनुभवस्य प्रामाणिकैरनुक्तेः । व्रीहिपरिच्छेदकसन्देहनिवृत्तेस्तथा बोधादप्युपपत्तेश्च । अन्यथा त्वयापि वक्ष्यमाणं प्रत्याख्यानं न सङ्गच्छेत । एतेन न चेत्यादि अभ्युपगमादित्यन्तं मूलमपास्तम्, अभेदबोधस्यैव तत्रेष्टत्वात् स्वयमप्यङ्गीकाराच्चेति खण्डनकृदुक्तं, बोधवैलक्षण्येन फलभेदे प्रत्याख्यानायोगात्परिमाणग्रहणं न कार्यमिति मूलोक्तं चिन्त्यमिति रत्नाकरोक्तम्, द्रोणो व्रीहिरित्यत्र प्रातिपदिकार्थौ द्रव्यं परिमाणं गुणः प्रत्ययार्थस्तयोश्चाश्रयाश्रयिभावेनान्वयः । द्रोणाश्रितं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरिति बोधः । परममूलोक्तं त्वयुक्तम्, 'गुणगुणिनोस्तादात्म्यायोगात्' इत्यादि मन्दोक्तं चापास्तम्, उक्तरीत्या आद्यद्वयोक्तदोषाभावात्, अत्र शास्त्रे परिमाणादिशब्दानां परिच्छेदकद्रव्यपरत्वस्येष्टत्वेनान्त्यदोषाभावाच्चेति दिक् । तद् ध्वनयन्—वस्तुत इत्यादिनोक्तमूलार्थस्यैव मूलकृदभिमतत्वं न तु परममूलोक्तार्थस्येति ध्वनयन्नित्यर्थः । एतावदेव सुवचमितीति । एतावदेव सुवचमित्यादि न स्यादित्यन्तमित्यर्थः । अत एव तत्र वक्ष्यति—परिमाणग्रहणस्येति । स्वादयश्च प्रातिपदिकाल्लिङ्गप्रत्ययविशिष्टाच्च विधीयन्ते इत्युक्तं मूले । तत्र क्रमेणोक्ताशयं तस्य स्पष्टयितुं व्याचष्टे-तद्वच्चेत्यादिना । नियतोपस्थितिकत्वविशिष्टं चेत्यर्थः । तत इत्यादिः । परिमाणञ्चेति । चेन लिङ्गसमुच्चयः । तथाच प्रातिपदिकांशे क्वचिदलिङ्गलिङ्गप्रवृत्तिनिमित्तकस्थले तद्वत्प्रवृत्तिनिमित्ततदाश्रयरूपं नियतलिङ्गस्थले तद्वच्च तदुभयं लिङ्गं च द्रोणादिस्थले तद्वच्च तत् त्रितयं परिमाणं चेत्यन्वयार्थौ 'इति तत्सर्वम्' इत्यत्रान्वयः । द्वितीये आह—लिङ्गेति । आदिना पुंयोगलिप्यादिपरिग्रहः ।

सरला ।

तद्वच्चेति । इदं शब्दरत्नकारमतेन । दीक्षितमते तु नियतलिङ्गप्रातिपदिकानां लिङ्गान्यपि प्रातिपदिकार्थपदेन गृह्यन्ते । शब्दरत्नकारास्तु लिङ्गग्रहणस्य सामर्थ्येन स्वार्थद्रव्यलिङ्गसंख्याकारकरूपपञ्चप्रातिपदिकार्थमध्ये लिङ्गसंख्याकारकाणां त्यागे द्वयोरेवावशेषे स्वार्थद्रव्ययोरेव प्रातिपदिकार्थत्वमुचितम् क्वचिल्लिङ्गस्य तत्त्वं क्वचिन्नेति वैषम्यस्यायुक्तत्वात् नियमांशनिवेशे मानाभावाच्च । स्वार्थः प्रवृत्तिनिमित्तं, द्रव्यं तदाश्रय इति प्रवृत्तिनिमित्ततदाश्रययोरेव तत्त्वम् । तथाचैतन्मते प्रवृत्तिनिमित्तविशिष्टत्वं प्रातिपदिकार्थत्वम् । वैशिष्ट्यञ्च स्वावच्छिन्नविषयताश्रयत्व-स्वतादात्म्योभयसम्बन्धेनेति प्रातिपदिकार्थलक्षणमनुसन्धेयम् ।

नियतभानेन प्रथमा सिद्ध्यतीत्यपरमनुकूलम्। यथान्यासे तु सा न स्यात्।

---

### शब्दरत्नम्

दिकं च ततो नियतोपस्थितिकमिति तत्सर्वं तदर्थत्वेन गृह्यते। लिङ्गोदाहरणं तटस्तटीतटमिति बोध्यम्, अकारान्तप्रातिपदिकारकस्यापि नियमेनानुपस्थितेस्तस्य तदर्थत्वाभावात्। सा न स्यादिति। न च लिङ्गविशिष्टपरिभाषया सिद्धिः, यथान्यासे प्रातिप-

### भैरवी।

गौरीत्यादेर्लिङ्गमात्रमधिकं बुध्यते, तत्र तावन्मात्रस्य। यत्र तु पुंयोगमहत्त्वादिकमपि यस्मात्प्रथमा विधीयते तज्जन्यनियतोपस्थितिकमिति तत्रापि तावन्मात्रेणैव प्रथमायाः सिद्धिरिति भावः। ननु लिङ्गग्रहणन्तर्हि व्यर्थमेव स्यात्तत्राह—लिङ्गोदाहरणमिति। अत्र किमपि लिङ्गन्न प्रातिपदिकजन्यनियतोपस्थितिकमिति लिङ्गग्रहणेनैव तादृशेभ्यः प्रथमासिद्धिः।

### भावप्रकाशः।

चेन तद्द्वयस्य परिमाणस्य च समुच्चयः। तथा च तत्र कचिद्रमा गौरीत्यादौ तदुभयं लिङ्गं च ततो नियतोपस्थितिकं, मृडानी हिमानीत्यादौ तदुभयं लिङ्गं पुंयोगमहत्त्वादिकं च तथा, खारीत्यादौ तदुभयं लिङ्गं परिमाणं च तथेति तत्सर्वमित्याद्यन्वयार्थौ। तदर्थत्वेन। प्रातिपदिकार्थत्वेन लिङ्गप्रत्ययविशिष्टार्थत्वेन चेत्यर्थः। नन्वेवं लिङ्गग्रहणमपि व्यर्थमत आह—लिङ्गोदेति। सूत्रे कृतलिङ्गग्रहणोदेत्यर्थः। तटीत्यस्य द्वितीयरीत्या सिद्धत्वादाह—तटस्तटीतटमिति। नन्वनयोरप्याद्यरीत्या सिद्धिरत आह—अकारान्तेति। कस्यापि। लिङ्गस्येत्यर्थः। अनियतलिङ्गत्वादिति भावः। तस्य—लिङ्गस्य। तदर्थत्वाभावात्—प्रातिपदिकार्थत्वाभावात्। इदं प्राचामनुरोधेनेति स्फुटीभविष्यत्यनुपदोक्तमते। अत्रमान्योक्तव्याख्यान-

### सरला।

प्रवृत्तिनिमित्तलक्षणं तु पक्षधरमिश्रैः प्रकाशग्रन्थेऽभिहितं—'वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वम्' इति। आकाशपदजन्योपस्थितीयप्रकारताश्रये शब्दाश्रयत्वे आकाशपदप्रवृत्तिनिमित्तत्ववारणाय वाच्यत्वे सतीति निवेशः। शब्दाश्रयत्वं नाकाशपदवाच्यं किन्तु आकाशत्वाकाशयोरेव तत्पदवाच्यतेति। "जात्याकृतिव्यक्तयः पदार्थाः" इति सिद्धान्तादाकृतेरपि अवयवसंयोगविशेषरूपाया घटादिपदवाच्यत्वेन तत्रातिव्याप्तिवारणाय वाच्यवृत्तित्वे सतीति निवेशः। अत्रावयववृत्तित्वेऽप्याकृतेर्न घटादिवृत्तित्वम्। वाच्यवृत्तितावच्छेदकसम्बन्धोऽपि वाच्य एवापेक्ष्यते। तेन स्वसमवायिसमवेतत्वसम्बन्धेनाकृतेर्घटादिवृत्तित्वेऽपि घटघटत्वयोरिव समवायसम्बन्धस्यैव घटादिपदवाच्यत्वेन स्वसमवायिसमवेतत्वस्यावाच्यत्वात् न दोषः। मृत्पदवाच्यसमवायसम्बन्धेन मृत्पदवाच्यकपालवृत्तिमृत्पदवाच्ये घटे मृत्पदप्रवृत्तिनिमित्तत्ववारणाय 'वाच्योपस्थितीयप्रकारताश्रयत्वम्' इत्यस्य निवेशः।

नन्विदं लक्षणं पुंस्त्वत्वादावतिव्याप्तं, तत्र वाच्यत्वस्य वाच्यपुंस्त्वादिवृत्तित्वस्य वाच्यपुंस्त्वाद्युपस्थितीयप्रकारताश्रयत्वस्य च सत्त्वात्। न चेष्टापत्तिः, तस्य प्रवृत्तिनिमित्तत्वे तस्य तदाश्रयत्वेन पुंस्त्वादिलिङ्गस्य च प्रातिपदिकार्थत्वापत्तौ सूत्रे लिङ्गवैयर्थ्यापत्तेरिति चेद् ? अत्रोच्यते, वैयाकरणमते आश्रयत्वादेरिव पुंस्त्वादेरप्यखण्डोपाधित्वाङ्गीकारेणाखण्डोपाधिरूपस्य च तस्य शब्दाश्रयत्वादेरिव स्वरूपतो भानेन पुंस्त्वादेर्वाच्यत्वानङ्गीकारात् तस्य वाच्यत्वाभावेनादोषात् वाच्योपस्थितीयप्रकारत्वाभावेनादोषाच्च। येषां मते लिङ्गविशिष्टे घटादौ घटादिप्रातिपदिकानां शक्तिस्तेषां मते यद्यपि पुंस्त्वे वाच्यत्वादिधर्मत्रयस्य सत्त्वेन प्रवृत्तिनिमित्तत्वापत्तिः पुनरपि तदवस्थैवेति; तथापि वाच्योपस्थितीयविशेष्यताया वाच्योपस्थितीयप्रकारतानिरूपिताया निरवच्छिन्नाया एव विवक्षितत्वेन पुंस्त्वादिलिङ्गस्य घटत्वाद्यवच्छिन्ने एवान्वयेन पुंस्त्वादिनिष्ठप्रकारतानिरूपितघटादिनिष्ठविशेष्यताया नियमेन घटत्वाद्यवच्छिन्नत्वात् निरवच्छिन्नत्वाभावेनोक्तापत्तेरभावो बोध्य इति दिक्।

### शब्दरत्नम् ।

दिकार्थशब्देन प्रवृत्तिनिमित्ततदाश्रययोरेव ग्रहणेन लिङ्गग्रहणेन तन्मात्राधिक्यस्यैव ग्रहणेन हिमानीत्यादौ महत्त्वस्याधिक्यसत्त्वेन तदसिद्धिरित्याशयात् । द्रोणादिशब्देभ्यः परिमाणस्यापि नियतोपस्थित्या तदपि तदर्थ एवेति तेभ्यः प्रथमासिद्धिः । परिमाणग्रहणस्य मूलोक्तार्थकत्वे तु तथा बोधार्थं तस्यावश्यकत्वेनैतावदेव सुवचमित्युक्तेरसङ्गतिः स्पष्टैव ।

### भैरवी ।

मूले–यथान्यासे इति । प्रातिपदिकपदघटितन्यासे इत्यर्थः । लिङ्गग्रहणेनेति । मात्रपदसहितेनेति शेषः । अर्थे लिङ्गे चेत्येतावन्मात्रोपादानेऽपि यथान्यासे यत्परिमाणग्रहणोपादानस्य फलन्तदन्यथासिद्धमित्याशयेनाह—द्रोणादिशब्देभ्य इति । प्रथमासिद्धिरिति । एवञ्च परिमाणग्रहणमनर्थकमिति शेषः । तथाबोधार्थम्—द्रोणाभिन्नपरिमाणपरिच्छेद्यो व्रीहिरित्येतादृशबोधार्थम् । स्पष्टैवेति । एवञ्च मूलं यथाश्रुतसूत्राशयवर्णनपरमिति भावः । मूले यदि त्वित्यादिना लिङ्गग्रहणमपि न कार्यमिति प्रतिपादितन्तत्र पूर्वलक्षणारम्भपक्षे शक्यार्थस्यार्थपदेन ग्रहणन्नियमांशस्य प्रवेशो द्विकञ्च प्रातिपदिकार्थ इति पक्षस्तदा लिङ्गग्रहणङ्कर्तव्यम् । यदि नियमांशस्य त्यागस्त्रिकम्प्रातिपदिकार्थ इति पक्षोऽर्थः शब्दश्च वृत्तिविषयसामान्यपर इति पक्षस्तदा लिङ्गग्रहणन्न कार्यमिति प्रतीयते इति यत्के नचिदुक्तन्तदाशयाऽज्ञानेनेति ध्वनयन्नाह—

### भावप्रकाशः ।

स्याक्षरस्वारस्यानावहत्वेनानादेयतां ध्वनयितुमाह–न चेति । प्रवृत्तीति । प्रवृत्तिनिमित्ततदाश्रययोरेवेत्यर्थः । इत्याशयादिति सूचितारूचिबीजं तु न तन्न्यासे तदसिद्धिः, प्रातिपदिकार्थशब्देन तयोरेव ग्रहणेऽपि लिङ्गे वर्तमानात्परिमाणे वर्तमानादित्यत्र तत्त्यागवत् प्रातिपदिकार्थे इत्यत्र तत्परिभाषोपस्थित्या लब्धङ्यन्ताद्यर्थे इति अत्रापि तत्त्यागेन स्त्रीत्यत्रेव हिमानीत्यादावपि तदुपस्थितार्थत्वमात्रेण तत्प्राप्तेः । किं च शक्यतावच्छेदकारोप एव लक्षणेति मते प्रवृत्तिनिमित्ततदाश्रययोरेव स्त्रीत्यत्रेव हिमानीत्यादौ भानेन लिङ्गमात्रस्याधिक्येऽपि प्रागुक्तरीत्या गौरीत्यादाविव तत्प्राप्तिः । नच तेन तयोरेव ग्रहणेऽपि तत्र परिभाषाप्रवृत्त्या ङ्यन्तादिग्रहणेन तदर्थे तस्य भानेन तत्सिद्धिरिति न लिङ्गग्रहणेनेत्यादिग्रन्थोपयोगः । न हि तेन तत्र साध्यते सा किं तु परिभाषयेति वाच्यम्, ङ्यन्ताद्यर्थस्यापि तदुभयरूपस्यैव ग्रहणेन स्त्रीति भाष्यीयोदाहरणसाङ्गत्येऽपि प्रकृते आधिक्येन तदप्राप्तेः । न च प्रातिपदिकांशे इव ङ्यन्ताद्यंशेऽपि लिङ्गग्रहणात्तत्सिद्धिरिति वाच्यम्, उक्तरीत्या तस्यापि दुर्वचत्वात्तदाह—लिङ्गग्रहणेनेति । यद्यपि लिङ्गमात्रे इत्याद्येवाक्षरार्थस्तथापि तदुभयं विना लिङ्गाद्यप्रतीतिस्तद् ध्वनयन्नाह—आधिक्यस्यैवेति । ग्रहणेनेति । अत एव खारीति परिमाणोदाहरणं भाष्योक्तं सङ्गच्छते । महत्त्वेति । महत्त्वादेरित्यर्थः । आधिक्यसत्त्वेनेति । गुरुकुलवत्समासः । तदसिद्धिः—हिमानीत्यादौ प्रथमाया असिद्धिः । इत्याशयादिति । तथा च वस्तुत इत्याद्युक्त एवार्थो मूलकृदभिमतो न तु परममूलोक्तार्थस्तथा सति तया तत्सिद्धौ न स्यादित्ययुक्तमेव स्यादिति भावः । मूलस्य तथाशयकत्वे न विवाद इति स्पष्टयितुं द्रोणादिभ्यस्तत्सिद्धिमुक्तां स्पष्टयति—द्रोणादीति । परिमाणस्य—परिच्छेदकत्वस्य । अपिस्तदुभयादिपरिग्राहकः । तदपि—परिच्छेदकत्वमपि । तदर्थ एव—द्रोणादिप्रातिपदिकार्थ एव । एवं च परिमाणग्रहणं व्यर्थमिति भावः । मूलोक्तेति । कौमुद्युक्त इत्यर्थः । तथा बोधार्थम्—द्रोणाऽभिन्नपरिमाणपरिच्छिन्नो व्रीहिरिति बोधार्थम् । तस्य—परिमाणग्रहणस्य । स्पष्टैवेति । तथाच परममूलं कैयटान्यरीत्यापि सूत्राशयो यथाश्रुतो वर्णयितुं शक्य इत्यभिप्रायपरमिति तद्रीत्या व्याख्यायोत्तरमुन्यनुरोधेन सूत्रमतेऽपि वस्तुत इत्याद्युक्त एवार्थ इति ध्वनयितुं प्रत्याख्यानमिहेत्यादिना मूलकृता प्रतिपादितमिति न विवरणविव्रियमाणयोः पूर्वापरग्रन्थयोर्मिथो विरोध इति बोध्यम् । नन्वर्थे लिङ्गे चेति न्यासे शक्त्या नियतोपस्थितिकस्य 'अर्थे' इत्यनेन ग्रहणात्तटस्तटमित्यादावप्राप्त्या लिङ्गे इति यथा कृतं तथा द्रोणो व्रीहिः, सिंहो माणवक इत्यादिषु लाक्षणिकेष्वव्याप्तिवारणाय न किञ्चित् कृतम् । ततो लघुभूते यदि त्विति पक्षे तु त्रिकपक्षाश्रयणान्निय-

यदि तु—अर्थशब्दो वृत्तिविषयपरः, वृत्तिस्तु शक्तिर्लक्षणा च, गौणी तु लक्षणान्तर्भूता पृथग्वाऽस्तु; त्रिकं प्रातिपदिकार्थः—इत्याश्रीयते; तदा लिङ्गेत्यपि मास्तु।

शब्दरत्नम्।

**लक्षणा चेति।** इदं च स्वरूपकथनं न तु प्रकृतोपयोगि, पदस्य स्वार्थे एवाऽन्वाख्यातस्य पदान्तरसमभिव्याहारे लक्षणेति सिद्धान्तात्। **लक्षणान्तर्भूतेति।** सादृश्यसम्बन्धमूलकलक्षणाया एव गौणीत्वमिति भावः। **पृथग्वेति।** मीमांसकरीत्येदम्। **त्रिकम्—स्वार्थ-**

भैरवी।

इदमिति। इदम्—लक्षणाया वृत्तिशब्दप्रतिपाद्यत्वप्रदर्शनम्। प्रकृतोपयोगित्वाभावन्दर्शयति—पदस्येत्यादिना। स्वार्थे—प्रवृत्तिनिमित्ततदाश्रयरूपे। पदान्तरसमभिव्याहारे—स्वार्थान्वयित्वेनाभिप्रेतो योऽर्थस्तद्वाचकसमभिव्याहारे। मुख्यार्थबाधग्रहसत्त्वे चेति शेषः। इति सिद्धान्तादिति। तथा च पदसंस्कारवेलायां लक्षणाया अवसर एव नास्तीति लक्षणाया गौण्याश्च वृत्तिशब्दवाच्यत्वव्यवस्थापनमप्रकृतानुपयुक्तमिति भावः। मूलकेति। लक्षणा न शक्यसम्बन्धरूपा किन्तु शक्यार्थसम्बन्धज्ञानोत्तरजायमानो यः शक्यतावच्छेदकारोपस्तद्रूपा। तत्र पूर्वकालिकसम्बन्धग्रहविषयः सम्बन्धो यदि सादृश्यरूपस्तदोत्तरकालिकारोप एव गौणीत्वेन व्यवह्रियते, यदा त्वन्यस्तदा लक्षणेत्येव व्यवहार इति भावः। मीमांसकरीत्येति। अभिधायाः पदार्थान्तरत्ववत्तदनुपपत्तिज्ञानोत्तरं जायमानज्ञानविषयस्यापि पदार्थान्तरत्वमिति। तेषामपि मते लक्षणाया मुख्यार्थबाधादिकन्नियामकमस्ति। तत्र यदि सादृश्यात्मकसम्बन्धज्ञानम्पूर्वम्भवति तदा गौणीव्यवहारोऽन्यदा शुद्धेति। स्वार्थः—प्रवृत्तिनि-

भावप्रकाशः।

मांशत्यागाच्च तटादौ नाव्याप्तिरिति लिङ्गे इत्यनावश्यकमित्युक्तं यथा, तथोक्तेषु लाक्षणिकेषु अव्याप्तिवारणाय 'अर्थशब्द' इत्यादि 'अस्तु' इत्यन्तं व्याख्यातमिति केषांचिद् भ्रमं निराकुर्वन्नाह—**इदं च स्वरूपेति।** वृत्तिभेदव्यवहारस्वरूपेत्यर्थः। कथं तर्हि तेष्वव्याप्त्युद्धारोऽत आह—**पदस्येति। स्वार्थे एव—**शक्यार्थे एव। साधुत्वेनेति शेषः। **समभिव्याहार इति।** तदा अन्वयाद्यनुपपत्त्या वक्तृश्रोतृभ्यां लक्षणाश्रयणात्। अन्यथा गङ्गायां घोष इत्यादौ सुबुत्पत्तेः प्राक् प्रातिपदिकस्यैव लक्षणायां नपुंसकह्रस्वत्वापत्तिः। न चैवमपि गोपीत्यादौ स्वादिप्रकृतेर्लक्षणासत्त्वेन तत्र प्रथमार्थे तदुपयोग एवेति वाच्यम्, आरोपितशक्यताऽवच्छेदकरूपेण शक्यस्यैव तत्पदवाच्यत्वेन प्रसिद्धान्यव्यक्तिबोधे व्यक्तिविशेषबोधे वा लक्षणेति व्यवहारेण तस्यास्तदनतिरिक्तत्वादिति भावः। एवं च अर्थेत्याद्यस्त्वित्यन्तग्रन्थः पक्षद्वयसाधारणः स्वरूपबोधको न प्रकृतोपयोगी। त्रिकञ्चेत्याद्यपि पूर्वसाधारणमिति वक्ष्यते। नियमांशत्यागमात्रं पूर्वतो विशेषः। एतेन पूर्वपक्षे अर्थशब्दो नियतोपस्थितिकत्वपरो दुर्वचः, लवणः सूपः, लवणं शाकमित्यादौ दोषापत्तेः लक्षणादिना सर्वशब्दानां सर्वत्र प्रवृत्तेः सम्भवाच्च। अर्थभेदाच्छब्दभेदेन दोषाभावाङ्गीकारे तु तट इत्यत्र स्त्रीनपुंसकयोस्तटीत्यत्र पुन्नपुंसकयोस्तटमित्यत्र स्त्रीपुंसयोस्तटशब्दान्नियततया भानाभावेऽपि तटादिशब्दानां भेदाङ्गीकारात्तत्तच्छब्दैस्तेषां नियतोपस्थितिकत्वमस्त्येवेति लिङ्गपदवैयर्थ्यं दुष्परिहरम्। एवंच वृत्तिविषय एवार्थशब्दः फलित इति मान्योक्तं प्राचामनुरोधेनेति ध्वनितम्, लवणादेस्तटादितुल्यत्वात् स्वार्थे एवेत्याद्युक्तेश्च तटीत्यस्यान्यथासिद्धेश्चेति दिक्। **सम्बन्धमूलकेति।** अनेन सम्बन्धातिरिक्ता लक्षणेति सूचितम्। यथा चैतत्तथा स्फुटमन्यत्र। **लक्षणाया एवेति।** न त्वन्यस्या इति भावः। ननु पार्थक्यं स्वनैयायिकादिविरुद्धमत आह—**मीमांसकेति।** ननु त्रिकशब्देन पञ्चसु केषां त्रयाणां ग्रहणमिति भ्रमं व्युदस्यन्नाह—**स्वार्थेति।** दृष्टासिद्धेरभियुक्तासम्मतत्वाच्च न तथा किं तु वृत्तिकाराद्युक्तत्वादादितस्त्रयाणां तदा ग्रहणमिति भावः। यथाकथञ्चिच्छक्तिग्रहविषयोऽपि तदर्थ इति तदाशयः। इदं च चतुष्कपञ्चकपक्षयोरप्युपलक्षणम्। एवञ्च मूले त्रिकमित्येकद्विकपक्षनिराकरणपरं बोध्यम्। नन्वित्याश्रीयते इत्यनेन पूर्वपक्षे तथा नाश्रीयत इति प्रतीयते; तदयुक्तम्, तत्रापि लिङ्गस्य तदर्थत्वमङ्गीकृत्य सर्व-

लक्ष्याणां विचित्रत्वेऽपि न क्षतिः, नियमांशत्यागात् । [तथा च अर्थे प्रथमेत्येव

शब्दरत्नम्

द्रव्यलिङ्गानि । इत्याश्रीयते इति । अनेन सूत्रारम्भेऽस्यानाश्रयणं ध्वनितम् । एवं च लिङ्गस्यापि "स्वमोर्नपुंसकात्" इत्यादिशास्त्रबलेन प्रातिपदिकार्थत्वात्तत्रापि सिद्धिरिति भावः । विचित्रत्वेऽपीति । क्वचिल्लिङ्गस्य नियमेन भानं क्वचिदनियमेनेत्येवं विचित्रत्वेऽपीत्यर्थः । तदाह—नियमांशेति । नियतोपस्थितिक इत्यत्र नियमांशेत्यर्थः । इत्येव सारमिति । प्रातिपदिकग्रहणस्य सूत्रोपक्रमे संख्याविध्येकवाक्यतयाऽव्ययेभ्योऽप्राप्त्या तेभ्यो विधानार्थत्वं वदता "तद्धितश्चासर्वविभक्तिः" "बहुषु" इत्यादिसूत्रेषु अव्ययेभ्यः प्रकारान्तरेण विभक्तिं साधयता प्रातिपदिकग्रहणं प्रत्याख्यातं भाष्यकृता ।

भैरवी ।

मित्तम् । अस्य—त्रिकपक्षस्य । एतेन सूत्रारम्भे द्विकपक्षमाश्रित्यैव लिङ्गग्रहणस्य सत्त्वात्तदा प्रातिपदिकार्थपदेन प्रवृत्तिनिमित्ततदाश्रययोर्ग्रहणमिति यत्तन्मूलकाराभिप्रेतमेवेति ध्वनितम् । एवञ्च—अर्थशब्दमात्रस्योपादाने च । शास्त्रबलेनेति । नपुंसकशब्दस्य नपुंसकाभिधायकशब्दपरतया लिङ्गस्य यस्मात्स्वादयो विधीयन्ते तदर्थत्वेन सूत्रे लिङ्गपदाभावेऽपि न क्षतिरिति भावः । क्वचित्—कृष्णः श्रीः ज्ञानं गौरी मृडानी दाराः इत्यादौ । क्वचित्—तटस्तटी तटमित्यादौ । तदाह—तद भिप्रायेणाह । तदर्थत्वन्तज्जन्यबोधविषयत्वमात्रन्तच्च सर्वसाधारणम् । ननु प्रकृतसूत्रभाष्ये कस्यापि पदस्याऽप्रत्याख्यानात्तत्तदुक्त्या यद्यपि प्रातिपदिकादिपदानामनावश्यकत्वस्य लाभस्तथापि तेषाम्प्रत्याख्यानम्भाष्यविरुद्धमत आह—प्रातिपदिकग्रहणस्येति । सूत्रोपक्रमे-सूत्रार्थकथनप्रारम्भे । एतदग्रे प्रातिपदिकग्रहणस्येत्यस्य विधानार्थत्वमित्यत्रान्वयः । "द्व्येकयोर्द्विवचनैकवचने" इतिसूत्रैकवाक्यतया अर्थे प्रथमेत्यस्यएकत्वे द्वित्वे बहुत्वे चैकवचनादीत्यर्थे प्रत्ययनियमपक्षेऽन्येभ्यः प्राप्तावप्यव्ययेभ्यस्तेषामप्राप्त्या तेभ्यः प्रथमासिद्ध्यर्थम्प्रातिपदिकग्रहणं विद्ध्यर्थमित्यर्थः । प्रकारान्तरेण—एकत्वादावेकवचनमे-

भावप्रकाशः ।

लक्ष्यसिद्धेरुक्तत्वात्, अत आह—इत्याश्रीयते इतीति । एवं चेदमपि पूर्वसाधारणमेवोक्तं ननु ततो विशेष इति भावः । अनाश्रयणमिति । किन्तु द्विकं प्रातिपदिकार्थ इत्यस्यैवाश्रयणमिति भावः । द्विकं प्रातिपदिकार्थ इत्यस्यापि प्रथमाविधायके प्रवृत्तिनिमित्ततदाश्रयरूपं द्विकं प्रातिपदिकार्थशब्देन गृह्यते इत्यर्थः । तावदेव प्रातिपदिकार्थ इति पक्षस्तु न सूत्रभाष्यादिसम्मतस्तदाह-एवं चेति । पक्षद्वये तदाश्रयणे चेत्यर्थः । आदिना "नपुंसकस्य" इत्यादिसूत्रस्य "स्त्रियाम्" इति सूत्रस्थभाष्यसिद्धान्तस्य च परिग्रहः । तत्रापि—लिङ्गेऽपि । क्वचित्प्रातिपदिकं क्वचिल्लिङ्गप्रत्ययसहितं क्वचिच्छक्तं क्वचिल्लाक्षणिकं क्वचिद् गौणं क्वचिन्निरर्थकमेवेति मान्योक्तलक्ष्यवैचित्र्यस्य प्राचामनुरोधित्वम्, उक्तयुक्तेर्नियमांशत्यागादितिहेतुविरोधापत्तिरत आह—क्वचिदिति । कृष्णः श्रीः ज्ञानं द्रोणः दाराः तटी स्त्री मृडानीत्यादौ नियतलिङ्गस्थले इत्यर्थः । क्वचिदिति । तटस्तटमित्यादावनियतलिङ्गस्थले इत्यर्थः । तटादिशब्दानामपि लिङ्गं वाच्यमेव । द्योतकास्तु विसर्गादयः । पूर्वं तल्लिङ्गं बुद्धिस्थीकृत्यैव तस्य तस्य विसर्गादेः साधुत्वान्वाख्यानादिति भावः । तदाहेति । यत् नियमाऽनियमभानकृतं वैचित्र्यं व्याप्तिकरन्तस्यागमाहेत्यर्थः । ननु विभक्तिविधिषु नियमाङ्गीकारस्य वक्ष्यमाणत्वात्कथं त्यागोऽत आह—नियतोपेति । अत एवांशपदसार्थक्यम् । एवंच वृत्त्युपस्थितिविषयत्वमर्थत्वमत्र विवक्षितमिति निष्कर्षः । मूलकृता प्रातिपदिकग्रहणत्यागेनोक्तरीत्या लिङ्गादिग्रहणं प्रत्याख्यातं स च त्यागो भाष्यारूढ इत्याह—प्रातिपदिकेति । सूत्रोपक्रमे—सूत्रव्याख्यानप्रारम्भे । तत्र तया अव्ययेभ्यो विभक्त्यप्राप्त्या तस्य विधानार्थत्वमित्यन्वयः । एकवाक्यतापक्षे तदर्थे एकत्वादिविशिष्टे वर्तमानात् एकवचनादीत्यर्थेनासङ्ख्यात्वादव्ययेभ्योऽप्राप्तिरिति भावः । आदिना "अव्ययादाप्" इत्यादिसूत्रपरिग्रहः । प्रकारान्तरेणेति । ज्ञापकेनैकत्वे एकवचन-

सारम्। द्रोणो व्रीहिरित्यपि द्रोणशब्दस्य तत्परिमिते उपचारात्सिद्धम्, गौर्वाहीक इतिवत्। एको द्वावित्याद्यपि 'न केवला प्रकृतिः प्रयोक्तव्या' इति निषेधादेव सिद्धम्, अनन्वितार्थकप्रयोगापेक्षयाऽनुवादकमात्रप्रयोगस्य न्याय्यत्वात्। एवं

शब्दरत्नम्।

स्वादीनां प्रातिपदिकादेव विधानेन कस्यार्थे इत्याकाङ्क्षायां यस्मात्स्वादिविधिस्तदर्थे इत्यस्य लाभ इति भावः। उपचारात्—द्रोणत्वारोपात्। इतिवदिति। अत्र यथा वाहीके गोत्वारोपस्तद्वत्। वचनग्रहणप्रत्याख्यानोपायमाह—एक इत्यादि। एतत् "अनभिहिते" इति सूत्रे भाष्ये स्पष्टम्। न्याय्यत्वादिति। इदं च यथान्यासेऽप्याव-श्यकम्। अन्यथा एकादिषु वचनविपर्ययो दुर्वारः स्यादिति भावः। ज्ञापकेनेति।

भैरवी।

वेत्यादिरीत्याऽर्थनियमेन। प्रत्याख्यातम्—तत्फलस्यान्यथासिद्ध्या प्रत्याख्यातप्रायम्। आ-रोपादिति। एवञ्च यस्यारोपविषयता तद्धर्मप्रकारिका प्रतीतिः शाब्दबोधरूपा भवतीति प्रत्या-ख्यानम्भाष्यसम्मतमेवेति भावः। भाष्ये स्पष्टमिति। तत्र हि एको द्वावित्यादौ प्रातिपदिके-नोक्तत्वाद्विभक्तिर्न स्यादित्याशङ्क्य "अर्थतः समयाद्भविष्यति" इत्युक्त्या भगवता वचनग्र-हणमपि प्रत्याख्यातप्रायमेव। अर्थत इत्यस्याऽनुवादकविभक्तेर्न्याय्यत्वमित्यर्थ इति कैय-टः। इदम्—अनन्वितार्थकेतियुक्तेराश्रयणम्। यथान्यास इति। वचनग्रहणस्य सत्त्वे। अन्यथा—तस्याऽनादरे। दुर्वार इति। सङ्ख्यामात्र इत्यनेन विधीयमाना प्रथमा एकादिशब्देभ्यो वचन-वैपरीत्येनापि स्यादिति भावः। मूले—सम्बोधने चेतीति। "अर्थे प्रथमा" इति प्रथमा सम्बो-धनाधिक्येऽपि भविष्यतीति तस्य सूत्रस्य वैयर्थ्यं तस्य ज्ञापकत्वमित्यर्थः। न च तेन सूत्रेण प्रथमायां "सामन्त्रितम्" इत्यामन्त्रितसञ्ज्ञा भवति। तस्य सूत्रस्याभावे उद्देश्यतावच्छे-

भावप्रकाशः।

मेवेत्याद्यर्थनियमेनकत्वे एवैकवचनं न द्वित्वादावित्यादिप्रकृतार्थापेक्षप्रत्ययनियमेन चेत्यर्थः। वदता साधयता च भाष्यकृता तत्प्रत्याख्यातमित्यन्वयः। प्रत्याख्यातमिति। ज्ञापकादिना सिद्धनभिङ्क्षैक-देव्युक्तोच्चैरादिफलान्यथासाधकेन फलान्तरं न कल्प्यमित्येतत्तात्पर्यकेण भगवता तत्प्रत्याख्यातप्राय-मित्यर्थः। भाष्याशयं सूचयितुं मूलोक्तमेव तल्लाभोपायमाह—स्वादीनामिति। प्रातिपदिकादेवेति। एवोऽप्यर्थे। स च लिङ्गप्रत्ययविशिष्टपरामर्शकः। 'विधानेनाऽर्थे प्रथमे'त्युक्तावपि कस्यार्थे' इति पाठः। भाव इति। अस्य तदित्यादिः। तथाच मूलोक्तप्रत्याख्यानं भाष्याभिमतसिद्धमिति भावः। यद्यप्युपचारो लक्षणेति नैयायिकादिसम्मततया न सिद्धिस्तथापि सिद्धान्तरीत्या आह—द्रोणत्वेति। तदारोपमूलकप्रवृत्तेरित्यर्थः। अन्यथा षष्ठ्यन्तानन्वयापत्तिः। इदमुपलक्षणं स्वार्थे एवेत्यादिप्रकार-स्यापि। यद्यपि गौर्वाहीक इतिवद् द्रोणो व्रीहिरित्यपि सिद्धमित्येवमुपमानोपमेयभावेन मूलं सुयोजं तथापि यत्प्रकाराधीना तत्सिद्धिस्तयोरेवोपमानोपमेयभावो वक्तुमुचितः। अत एव दृष्टान्ते वैपरीत्य-शङ्का नेत्याशयेनाह—अत्र यथेति। यथा वाहीकत्वविशिष्टे गोत्वारोपमूलकगोशब्दप्रवृत्तिस्तथा व्रीहित्वविशिष्टे द्रोणत्वारोपमूलकतच्छब्दप्रवृत्तिरित्यर्थः। दृष्टान्तेनोक्तयुक्तेरावश्यकता ध्वनिता। अन्यथा परिमाणग्रहणे कृतेऽपि तदसिद्धिः स्पष्टैव। एवं द्राक् स्फुटत्वेन निरवतरणेन परिमाणग्रहणं प्रत्या-ख्यायोत्तरग्रन्थोक्तौ सङ्गतिमाह—वचनेति। इदं समूलयति—एतदिति। स्पष्टमिति। तत्र एको द्वावि-त्यादौ उक्तत्वाद्विभक्तिर्न स्यादित्याशङ्क्य "समयाद्भविष्यत्यर्थतो व्यवस्था" इत्युक्तम्। अर्थत इत्यादेरनु-वादकविभक्तेर्न्याय्यत्वमित्यर्थ इति तत्रैव कैयटः। एवं चेदमपि तदारूढमेवेति भावः। मूले—न केवलेति। अत्र बीजं "परश्च" इति नियामकसूत्रमित्यन्यत्र स्फुटम्। अयं च न्यायः शास्त्राऽबोधिताऽन्यतरप्रयोग-विषयः। अत एव लिट्, इयानित्यादौ न दोषः। इदं चेति। अनन्वितेत्याद्युक्तञ्चेत्यर्थः। अन्यथा—एतदनङ्गीकारे। ज्ञापकेनेतीति। न च "सामन्त्रितम्" इत्येतदर्थं "सम्बोधने च" इत्यस्यावश्यकत्वेन

मात्रग्रहणमपि व्यर्थम् , "सम्बोधने च" इति ज्ञापकेन कर्माद्याधिक्ये प्रथमाया अप्रवृत्तेः ।

## शब्दरत्नम् ।

ननु प्रातिपदिकार्थे एवेति नियमा त्तदाधिक्येऽप्राप्तौ किं ज्ञापकेनेति चेत् ? न, यथा—कर्मण्येव द्वितीयेति नियमेन कर्मत्वाभावसमानाधिकरणार्थान्तरस्यैव व्यावृत्तिर्न तु तत्समानाधिकरणार्थान्तरस्य, अत एव 'गां दोग्धि पयः' इत्यादावपादानत्वादिशक्तिबोधेऽपि द्वितीया भवति, तथा प्रातिपदिकार्थाभावसमानाधिकरणार्थान्तरस्यैव व्यावृत्तिः स्यान्न तु तत्सत्त्वे

## भैरवी ।

दकरूपापरिचयात्कथन्तन्निर्वाह इति वाच्यम् ? "सम्बोधने आमन्त्रितम्" इत्येकयोगः कार्यः प्रथमेत्यस्याऽनुवृत्तिश्च । सम्बोधने या प्रथमा तदन्तमामन्त्रितमित्यर्थः । महासञ्ज्ञाकरणेन प्रत्ययग्रहणेऽपि तदन्तविधिः । एवञ्च योगविभागो व्यर्थ इति तत्सामर्थ्येन ज्ञापकत्वमित्यर्थः । अत्र केचित् "स्वौजसमौट्" इति सामान्यसूत्रेण सिद्धेऽर्थ इत्येतन्नियमार्थम्प्रातिपदिकार्थे एव प्रथमेति । तेन प्रथमाया अर्थान्तरसम्बन्धनिवृत्त्या कर्मसम्बन्धाभावे सिद्धे योगविभागकरणस्य ज्ञापकत्वाश्रयणमयुक्तमिति; तन्मतमनूद्य दूषयति—नन्वित्यादिना । "अर्थे" इति सूत्रवत् "कर्मणि" इत्याद्यपि सूत्रन्नियमार्थमिति तत्र प्रत्ययनियमपक्षे यथा व्यवस्था तथैवात्रापि स्यादित्याशयेनाह—यथा कर्मण्येवेति । कर्मत्वाभावसमानाधिकरणाऽर्थान्तरस्य—कर्मत्वशक्तिप्रकारकज्ञानासमानाधिकरणशक्त्यन्तरप्रकारकज्ञानविशेष्यस्य । न त्विति । कर्मत्वज्ञानसमानाधिकरणशक्त्यन्तरज्ञानविषयस्य न व्यावृत्तिरित्यर्थः । सामानाधिकरण्यञ्चैककालावच्छिन्नैकाधिकरणवृत्तित्वसम्बन्धेन । तत्रार्थे "आकडारादेका" इति सूत्रस्थभाष्यं मानमित्याह—अत एवेति । उक्तनियमादेवेत्यर्थः । अपादानत्वादिशक्तिबोधेऽपीति । विभागानुकूलव्यापारानुकूलव्यापारो दुहेरर्थः । गोर्वि भागावधित्वादपादानत्वम्प्राप्तम्प्रधानीभूतव्यापारप्रयोज्यविभागाश्रयत्वात् "कर्तुः" इति कर्मत्वम्प्राप्तमुभयविवक्षा च, तत्र कर्मसञ्ज्ञायाः परत्वात्सैव भवति । तत्र शक्तिद्वयज्ञानयोः सत्त्वेऽपि न नियमेनोक्तरीत्या व्यावृत्तिरिति भावः । द्वितीया भवतीति । "अपादानमुत्तराणि कारकाणि, गान्दोग्धि पय इत्यत्र परत्वात्कर्मसञ्ज्ञा" इति भाष्यमत्र मानमिति शेषः । यथा तत्र सूत्रे नियमस्तथा "प्रातिपदिकार्थे" सूत्रेऽपि स्यादित्याह—तथेति । अत्र हि प्रातिपदिकार्थसत्त्वे एव प्रथमा न तु तदसत्त्वे इत्याकारको नियमः स्यात् । तेन यस्य व्यावृत्तिस्तमाह—प्रातिपदिकार्थाभावेति । तत्सत्त्वे—प्रातिपदि-

## भावप्रकाशः ।

कथं ज्ञापकत्वमिति वाच्यम् ? सम्बोधने आमन्त्रितमित्येकयोगे कार्ये पृथग्योगकरणस्य ज्ञापकत्वात् । तदेतद्धृदि निधायाऽन्यथा शङ्कते—नन्विति । एवेत्यस्य प्रथमेति शेषः । अर्थान्तरसम्बन्धनिवर्तकरूपान्ययोगव्यवच्छेदकोक्तप्रत्ययनियमाश्रयणादित्यर्थः । एवमग्रेऽपि । तदाधिक्ये—कर्माद्याधिक्ये । किं ज्ञापकेनेति । मात्रग्रहणं तु सुतरां व्यर्थमिति भावः । अर्थान्तरस्यैव—प्रथमातृतीयाद्यन्तार्थस्यैव । अर्थान्तरस्य—द्वितीयान्तार्थस्य । अव्यावृत्तेर्लक्ष्यमाह—अत एवेति । तादृशस्याऽव्यावर्त्तनादेवेत्यर्थः । बोधेऽपीति । अत एव "आकडारात्" इति सूत्रे "अपादानमुत्तराणि कारकाणि बाधन्ते गां दोग्धि पयः अत्र परत्वात् "कर्तुः" इति कर्मत्वम्" इति भाष्यं सङ्गच्छते । दुहेरन्तःस्थितद्रवद्रव्यविभागानुकूलव्यापारोऽर्थः । ग्रामादायाति, ग्रामं गच्छतीत्यादौ तयोरवकाश इति तद्भावः । इदं च तत्रैव स्फुटीभविष्यति । भवतीति । एवं च कर्मणि सत्येव द्वितीया न तु तदसत्त्वे इति नियमाकार इति भावः । दृष्टान्तमुक्त्वा प्रकृतमाह—तथेति । प्रातिपदिकार्थत्वाभावेति पाठः । एवमग्रेऽपि । व्यावृत्तिः स्यादिति । उक्तनियमेनेति भावः । तत्सत्त्वे एवेति । प्रातिपदिकार्थत्वसत्त्वे एवेत्यर्थः । तत्समानाधिकरणस्यैवेति तु फलितोऽर्थः । एवंच प्रातिपदिकार्थत्वसत्त्वे एव प्रथमा न तु तदसत्त्वे इति नियमाकार इति भावः ।

यत्तु प्राचोक्तम्–प्रातिपदिकार्थः सत्तेति । यच्च व्याख्यातं योऽर्थः सन्नित्येव

---

शब्दरत्नम् ।

एव कर्मत्वादेरिति भावः । नच प्रातिपदिकार्थाभावसमानाधिकरणार्थान्तरस्याऽप्रसिद्ध्या नियमव्यावर्त्याऽप्रसिद्धिरिति नियमसामर्थ्यात्तत्समानाधिकरणार्थान्तरस्यापि तेन व्यावृत्तिरिति वाच्यम् ? प्रातिपदिकार्थं एव प्रथमा न तु निरर्थके इति तद्व्यावृत्तेरेव फलत्वात् । तत्सत्त्वे तु कर्मादियोग्यार्थकप्रातिपदिकाच्चेत्तद्रहितस्वार्थे इत्यर्थान्न दोषः । संख्याधिक्ये तु भवत्येव "द्व्येकयोः" इत्यादिभिरस्यैकवाक्यत्वात् । वार्तिककृता तु अर्थनियममा-

भैरवी ।

कार्थत्वसत्त्वे । इति भाव इति । "सम्बोधने च" इत्यस्य ज्ञापकत्वं वर्णयतो भाव इत्यर्थः । तत्समानाधिकरणेति । प्रातिपदिकार्थत्वसमानाधिकरणेत्यर्थः । अपिरेवार्थः । अर्थान्तरं–कर्मत्वादि । प्रत्ययनियमपक्षे तादृशनियमसामर्थ्यादन्ययोगव्यवच्छेदेन कर्मत्वाद्याधिक्य इव सम्बोधनाधिक्येऽपि सा न स्यादिति "सम्बोधने च" इतिसूत्रं विध्यर्थङ्कार्यमिति भावः । सजातीयापेक्षोऽत्र नियमः स्यादित्याशयेनाह—प्रातिपदिकार्थे एवेति । न च निरर्थकाप्रसिद्धिः, चवैतुहीत्यादिपादपूरणार्थानामनर्थकनिपातानाञ्च सत्त्वात् । न चेष्टापत्तिः, धार्मिकोऽसि वै त्वा सुखम्प्राप्नोतीत्यादौ "सपूर्वायाः प्रथमाया विभाषा" इत्येतत्प्राप्तेरेव फलत्वात् । तत्सत्त्वे तु—ज्ञापकसत्त्वे तु । न दोष इति । अनर्थकेभ्यः प्रथमाया अप्राप्तिरूपो दोषो नेत्यर्थः । ननु पूर्वोक्तनियमस्वीकारे पञ्चकम्प्रातिपदिकार्थ इति पक्षे सङ्ख्याधिक्ये प्रथमा न स्यादत आह—सङ्ख्याधिक्य इति । एकवाक्यत्वादिति । एकत्वादिविशिष्टे प्रातिपदिकार्थे कर्मत्वादियोग्यार्थक प्रातिपदिकाच्चेदित्येवन्नियमादिति भावः । अर्थनियममिति । प्रातिपदिकार्थे प्रथमैव न द्विती-

भावप्रकाशः ।

इति भावादिति पाठः । ज्ञापकशातुर्मूलकृतोऽभिप्रायादिति तदर्थः । एवं च नियमेनावारणे ज्ञापकेन वारणे मात्रपदानर्थक्यमेवेति भावः । तत्समानेति । प्रातिपदिकार्थत्वसमानाधिकरणेत्यर्थः । अपिरेवार्थे । तथाच नियमेन तदाधिक्ये अप्राप्त्या सूत्रं विध्यर्थं न ज्ञापकार्थमिति भावः । तद्व्यावृत्तेरेवेति । निरर्थकव्यावृत्तेरेवेत्यर्थः । तथा चाऽनर्थकनिपातेभ्यः प्रथमाऽनुत्पत्तौ तत्समभिव्याहारे "सपूर्वायाः" इति शास्त्रप्रवृत्तिर्न स्यात् । 'निपातस्यानर्थकस्य' इति वार्तिकं तु स्वरादिप्रवर्तनेन सफलम् । तथाच तद्व्यावर्त्यप्रसिद्ध्या तदाधिक्ये तत्प्रत्याख्यातस्य ज्ञापकत्वं सुस्थमिति तदानर्थक्यमेवेति भावः । नन्वेवमपि निरर्थकव्यावृत्तिस्तदवस्थैवात आह–तत्सत्त्वे त्विति । ज्ञापकसत्त्वे त्वित्यर्थः । कर्मादियोग्येति । कर्मशब्दः शक्तिपरः, कर्मत्वादियोग्येत्यर्थः । ज्ञापकत्वार्थस्य नियमव्यावर्त्यकुक्षौ प्रवेशो युक्त इति भावः । तत्सत्त्वे द्वितीयादेरेव जायमानत्वाद्योग्यतानिवेशः । तद्रहितेति । कर्मत्वादियोग्यरहितप्रातिपदिकार्थे एवेत्यर्थः । इत्यर्थादिति । इत्यर्थकात्प्रत्ययनियमादित्यर्थः । तथाचानेन नियमेन कर्मत्वादिसमानाधिकरणप्रातिपदिकार्थस्यैव व्यावृत्तिर्न तु निरर्थकस्य तस्य, तद्द्योत्यार्थकप्रातिपदिकत्वाभावात् । तथा च तत्र प्रथमोत्पत्त्या तच्छास्त्रप्रवृत्तिर्युक्तेति न निरर्थकेऽनिष्टं, तदाह—न दोष इति । इदमेव मात्रग्रहणं "कर्मणि द्वितीया" इत्यादेस्तथाकारनियमत्वे मानम् । मात्रग्रहणाच्च सूत्रकारस्य प्रत्ययनियमपक्ष एवेष्ट इति गम्यते इति बोध्यम् । नन्वेवं रामावित्यादौ संख्याधिक्येऽपि सा न स्यादत आह—संख्येति । ततश्च कर्मत्वादियोग्यत्वरहिते एकत्वादिविशिष्टे स्वार्थे एवेत्येवमेकवाक्यतया नियमाङ्गीकारात्तदाधिक्ये भवत्येवेति भावः । अस्य—प्रातिपदिकार्थेत्यस्य । नन्वेवं "सम्बोधने च" इत्यस्य प्रत्याख्यानाऽसङ्गतिर्ज्ञापनार्थमावश्यकत्वादत आह—वार्तिकेति । अर्थनियममिति । कर्मणि द्विती-

सरला ।

अर्थनियममिति । अर्थे नियमः अर्थनियमः इति व्युत्पत्त्या 'प्रातिपदिकार्थे प्रथमैव' इत्याकारकनियममित्यर्थः । प्रातिपदिकार्थे प्रथमाया नियमनादयमर्थनियम उच्यते । यत एवकारस्ततोऽन्यत्र नियम इति तत्त्वम् ।

केवलं भासते न जात्यादिरूपो न लिङ्गसंख्याकारकयोगी, स विवक्षितः। यथा·

## शब्दरत्नम् ।

श्रित्य मात्रग्रहणं "सम्बोधने च" इति सूत्रं लिङ्गादिग्रहणं च प्रत्याख्यातमिति दिक् ।

जात्यादिरूप इति । जात्यादिना रूप्यत इति व्युत्पत्त्या जात्यादिधर्मविशिष्ट इत्यर्थः।ननूच्चैरादीनामप्याधारतात्वविशिष्टाऽऽधारताशक्तिर्वाच्येति तदप्रसिद्धिरित्यतस्तद्

## भैरवी ।

यादीत्येवंरूपोऽर्थनियममित्यर्थस्तदानीं विभक्त्यन्तरस्य व्यावृत्तिर्न त्वर्थान्तरसम्बन्धस्येति सम्बोधने लिङ्गाधिक्ये च प्रथमा भविष्यति। कर्मत्वाद्याधिक्ये तु कर्मादौ द्वितीयाद्येवत्ये-वंरूपनियमार्थं "कर्मणि द्वितीया" इत्यादिसूत्रमिति द्वितीयाद्येव भवति। दिगिति। दिग-र्थस्तु यद्यपि प्रत्ययनियमः सूत्रकारसम्मतस्तथाप्यर्थनियमपक्षे लाघवमित्ययमेव युक्त इति।

मूले—सन्नित्येव केवलमिति। सन्—वर्तमान इत्याकारा या प्रतीतिस्तद्विषयो भवति। केवलपदार्थमाह—न जात्यादिरूप इति। अत्रैव यदादिपदन्तद्बोध्यार्थमाह–न लिङ्गसंख्याका-रकेति। तत्र न जात्यादिरूप इत्यस्य न जात्यादिस्वरूप इत्यर्थोऽपि सम्भाव्येत। न चेष्टाप-त्तिः, सन्नित्येव केवलमित्यनेन विरोधात्। तादृशप्रतीतिविषयस्य जातिस्वरूपत्वानपायादत आह—जात्यादिनेति। तथाच वर्तमानत्वमाधेयत्वन्धर्मिणि सत्ता, तया यद्भासते इत्येव वि वक्षितम्। धर्मी तु न धर्मिणि सत्तया भासते इति तद्व्युदास इति भावः। ननु जात्यादी-त्यत्रादिनाऽखण्डोपाधेरपि ग्रहणं स्यात्तथाच सर्वस्यैव जात्यादिविशिष्टधर्मिरूपतया लक्ष्या-प्रसिद्धिरित्याह—ननूच्चैरादीनामिति। तद्व्याचष्टे इति। सन्नित्येतत्पदं व्याचष्ट इत्यथः। एवञ्च

## भावप्रकाशः ।

यैव, प्रातिपदिकार्थे प्रथमैवेत्यादिरूपं विभक्त्यन्तरसम्बन्धनिवर्तकं नियममाश्रित्येत्यर्थः। अनेन नियमेन कर्मादौ द्वितीयादेः सम्बोधने लिङ्गाद्याधिक्ये च प्रथमायाश्चाऽव्यावृत्त्येष्टसिध्या तदकरणलाघवादिति भावः। तदाह—मात्रेत्यादि। एतेन मात्रग्रहणात्सम्बोधनाधिक्ये अप्राप्तौ तत्प्रत्याख्यानपक्षे च कर्मा-द्याधिक्ये प्रथमाया अप्रवृत्तिज्ञापनाय चेदमिति रत्नाकरोक्तं, तद्ग्रहणात्तत्प्रत्याख्यानपक्षेऽपि प्रातिपदि-कार्थ एवेति नियमाद्वा तदाधिक्ये अप्राप्तावस्यारम्भ इति दण्डयुक्तं चापास्तम्। दिगिति। तदर्थस्तु भाष्यकृतोऽपीदमेवेष्टम्। एवं च सूत्रमतावलम्बे सर्वमपेक्षितमेव। उक्तरीत्या भाष्यवार्तिकदृष्टप्रत्याख्यानाव-लम्बे तु "सम्बोधने च" इत्यपि त्याज्यमेवेति तदवलम्बनेन प्रत्याख्यानपक्षपर्यवसानं तु मूलोक्तमयु-क्तम्। नन्वेवमपि वीरः पुरुष इत्यादौ विशेष्यविशेषणभावस्याधिक्यस्य भानात्प्रातिपदिकार्थमात्रत्वाभावेन मतद्वयेऽपि प्रथमा न स्यात्, "पूर्वापर" इत्यादिसमासविधानं तु वीरं पुरुषमानयेत्यादौ सफलमिति चेत्? न, संसर्गस्य वाक्यार्थत्वेन बहिरङ्गत्वात्स्वार्थमात्रनिमित्तकप्रथमप्रवृत्तसंस्कारबाधानुपपत्तेरि-तीति दिक्।

मूले—यत्त्विति। इदं खण्डनं यथाश्रुताभिप्रायं व्याख्यानाभिप्रायं वा, तदाशयस्य प्रागुक्तत्वात्। प्राचा—वृत्तिकृता प्रक्रियाकृता च। यच्च व्याख्यातमिति। हरदत्तेनेति शेषः। मूले एव केवलपदव्यव-च्छेद्यमाह—जात्यादीति। अस्य च तत्स्वरूप इति नार्थः, सत्ताश्रय एव भासत इत्यर्थकेन योऽर्थः सन्नित्येवेति व्याख्येयग्रन्थेनैव निर्वाहेऽस्य विशेषस्य वैयर्थ्यापत्तेः, स्वेष्टासिद्धेश्चाऽत आह—जात्यादि-नेति। रूप्यते—विशेष्यीक्रियते। आदिना गुणादिपरिग्रहः। एवंच सन्नित्येवत्येवव्यावर्त्यप्रदर्शकमिद-मिति न वैयर्थ्यमिति भावः। नन्वेवमपि स्वेष्टासिद्धिरपरिहृतेत्याशयेनाशङ्कते—नन्विति। अपि-रन्वयसमुच्चायकः। आधारताशक्तिर्वाच्येति। तद्विशिष्टाऽऽधारतारूपा शक्तिः कारकवाच्यार्थ इत्य-र्थस्तथा प्रतीतेरिति भावः। तदप्रसिद्धिरिति। सर्वत्र तत्तद्धर्मविशिष्टस्य वाच्यत्वे लक्ष्याऽप्रसिद्धिरि-त्यर्थः। इत्यतस्तद्व्याचष्टे। इति हेतोर्न जात्यादिरूप इत्येतत् तथार्थं त्यक्त्वा प्रकारान्तरेण व्याचष्टे

ऽव्ययार्थः। यथाऽव्ययार्थो हि केवलमस्तीति शक्यते वक्तुं न पुनरीदृशस्तादृश इतीति चेत्? न, उच्चैर्नीचैरित्यादिशब्दानां सन्नित्याकारकप्रतीतिजनकत्वस्य सर्वतन्त्रविरुद्धत्वात्, अस्त्यादिसामानाधिकरण्यस्यापि असत्त्वार्थकेषु दुर्लभत्वात्, न लिङ्गसंख्याकारकयोगीति त्वदुक्तिविरोधाच्च पदान्तरोपस्थापितस्य अस्तिसामा-

शब्दरत्नम्।

व्याचष्टे—न लिङ्गेति। ईदृशस्तादृश इति। अमुकलिङ्गादिरित्यर्थः। ननु सन्नि-त्याकारकप्रतीत्यभावेऽपि अस्तिसामानाधिकरण्यं स्यादत आह—अस्त्यादीति। विरो-

भैरवी

जात्यादिपदं लिङ्गादेरुपलक्षणम्। लिङ्गादिविशिष्टोऽर्थो यो न भवतीत्यत्र तात्पर्यमिति भावः। न जात्यादिरूप इत्यस्य न लिङ्गादिविशिष्ट इत्येवार्थ इत्येतद् ध्वनयति मूले—अव्ययार्थो हीत्यादिना। अमुकलिङ्गादिरिति। अत्रादिना संख्यायाः परिग्रहः। अव्ययार्थो हि, स्त्रीलिङ्गः पुंलिङ्गो नपुंसकलिङ्ग एकत्वादियुक्त इत्येवं वक्तुं न शक्यते इति भावः। इत्यर्थ इति। इति तात्पर्यार्थः। सन्नित्येव केवलम्भासते इत्यस्य प्रातिपदिकजन्या या सन्नित्याकारिका प्रतीति-स्तद्विषय इति, अस्तिसामानाधिकरण्येन यो भासते इत्यर्थो वा? तत्र नाद्य इत्याह मूले—उच्चैर्नीचैरित्यादीति। न द्वितीय इत्याह—अस्त्यादीति। दुर्लभत्वादिति। यदि अस्तिसामाना-धिकरण्यन्तदा कारकत्वं सम्पन्नमित्यसत्त्वार्थकत्वस्यैव हानिः स्यादिति भावः। ननु नास्ति-सामानाधिकरण्यमात्रेणासत्त्वार्थकत्वस्य हानिः, स्वरादिषु स्वोऽस्ति स्वः पश्येत्यादिदर्शना-त्तेषामप्यस्तिसामानाधिकरण्यस्य सुलभत्वादत आह—न लिङ्गसंख्येति। यद्यस्तिसामानाधि-करण्यन्तदा तदर्थस्य कारकत्वमिति न लिङ्गेत्याद्युक्तिविरोधः स्पष्ट एव। एवम्प्रकारेण स्वरा-दीनामस्तिसामानाधिकरण्यस्य वक्तुं शक्यत्वेऽपि चवाशब्दयोरुच्चैरादिशब्दानामधिकरण-शक्तिप्रधानानामस्तिसामानाधिकरण्यन्दुरुपपादमित्यपि बोध्यम्। ननु तैः प्रतिपादिता येऽ-र्थास्ते यदा समुच्चयविकल्पाधिकरणादिपदैः प्रतिपादिता भवन्ति तदाऽस्तिसामानाधिकरण्य-मस्त्येवेत्यस्तिसमानाधिकरणार्थप्रतिपादकत्वं सर्वत्र सुलभमत आह—पदान्तरोपेति। तस्य—पदा-न्तरोपस्थितिमादायाऽस्तिसामानाधिकरण्यस्य। अव्यावर्तकत्वादिति। सर्वत्रैव तस्य सत्त्वेन

भावप्रकाशः।

इत्यर्थः। तथाच जातिपदं लिङ्गोपलक्षणम्, अविवक्षितं वा। आदिना न गुणादिपरिग्रहः किं तु स्वा-र्थादिपञ्चसु लिङ्गादिपरिग्रह इति सर्वस्य प्रवृत्तिनिमित्तविशिष्टत्वेऽपि लिङ्गादिविशिष्टोऽर्थो यो न भवति अव्ययबोध्यः स इह लक्ष्यत्वेनाभिमत इति तद्वान्कृष्णाद्यर्थो व्यावर्त्यत्वेन विवक्षित इति भावः। तदेव प्रतिपादयति मूले—अव्ययार्थो हीति। ननु ईदृशस्तादृश इत्यस्य तद्धर्मविशिष्ट इति नार्थः, उक्तयुक्ते-रत आह—अमुकेति। आदिना संख्यादिपरिग्रहः। पुंलिङ्गादिरेकत्वादिविशिष्ट उच्चैराद्यव्ययार्थ इति न शक्यते वक्तुमिति तात्पर्यार्थः। कृष्ण इत्यादौ तु लिङ्गग्रहणात्सिद्धिरिति तदाशयः। ननु योऽर्थः स-न्नित्येव केवलं भासत इत्यस्य ततः शब्दाद् याऽर्थप्रतीतिः सा सन्नित्येवमाकारेत्यर्थो विवक्षित उत तदर्थस्त-त्समानाधिकरणो भासत इत्यर्थः? तत्र न तावदाद्य इत्याह मूले—उच्चैर्नीचैरित्यादीति। तत उच्चैरि-त्याद्याकारैव प्रतीतिः सर्वानुभवसिद्धेति भावः। अत एव द्वितीयखण्डनायाशङ्कते—नन्विति। प्रतीत्य-भावेऽपीति। अस्य ततः शब्दात्तदर्थस्येति शेषः। अस्तिसामानाधिकरण्यमिति। तिङन्तेन कृदन्तेन चेति भावः। ननु असत्त्वार्थेषु अनेकशक्तिप्रधानेषु स्वरादिषु स्वोऽस्ति स्वः पश्येत्यादिदर्शनात्तेषामपि तत्सु-लभमत एव 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकसङ्गतिरत आह मूले—न लिङ्गसंख्येति। एतेनोच्चैरादीना-मधिकरणशक्तिप्रधानत्वात्तदभावस्य वक्तुमौचित्येनाऽसत्त्वार्थकत्वात्तेषां तद्दौर्लभ्यप्रतिपादनं चिन्त्यमित्यपा-स्तम्, स्वरादीनामिव तेषामपि तस्य सुवचत्वात्। तत्प्रधानत्वस्य तत्राऽप्रतिबन्धकत्वमिति सूचयितुं तथोक्तेः।

नाधिकरण्यमस्तीति चेत् ? न, तस्य अव्यावर्तकत्वात्, न पुनरित्यादिवाक्यशेषविरोधाच्च, कृष्णः श्रीरित्यादावव्याप्तेश्च । न च लिङ्गग्रहणात्तत्सिद्धिः, मात्रशब्देनाऽधिकव्यवच्छेदात् ।

यदपि प्राचा व्याख्यातं–यत्रार्थान्तरानपेक्षया शब्दप्रवृत्तिः स सर्वः प्रातिपदिकार्थः, शब्दप्रवृत्तिनिमित्तमिति यावत् । यथा उच्चैर्नीचैरिति । अलिङ्गसंख्यावेतौ

शब्दरत्नम् ।

**धाच्चेति** । सन्नित्यनेन सामानाधिकरण्ये कारकत्वस्य दुर्वारत्वादिति भावः । **वाक्यशेषविरोधाच्चेति** । तत्सत्त्वे लिङ्गादेरपि सम्भवेन तद्विरोध इति भावः । **अव्याप्तेश्चेति** । ततः सन्नित्याकारकप्रतीतेरभावादिति भावः । **अधिकव्यवच्छेदादिति** । कृष्णत्वादेः सत्तालिङ्गाभ्यामधिकस्य भानादिति भावः ।

**अलिङ्गेति** । अलिङ्गसंख्यावेतौ केवलमनाश्रितं, निरपेक्षं–लिङ्गादिनिरपेक्षं, स्वार्थ-

भैरवी ।

व्यावर्तकत्वाभावात् । तत्सत्त्वे–पदान्तरोपस्थापितस्य तस्यास्तिसामानाधिकरण्यसत्त्वे । लिङ्गादेरपीति । गृहस्योच्चैः पताकाऽस्तीत्यस्यार्थस्य विवरणे ऊर्ध्वदेशेऽस्तीत्यादौ ऊर्ध्वदेशनिष्ठाधिकरणतायाः प्रतिपादक उच्चैः शब्द इत्यादौ च पदान्तरोपस्थिताधिकरणतायां लिङ्गसङ्ख्ययोः सम्भवेनेत्यर्थः । ननु यदि प्रातिपदिकार्थ इत्यस्याव्ययान्येवोदाहरणानि तदा कृष्ण इत्यादीनि कस्योदाहरणानि प्रातिपदिकार्थ इत्यस्य लिङ्ग इत्यस्य वा ? तत्र नाद्यस्येत्याह मूले–कृष्ण इत्यादि । अव्याप्तिमुपपादयति–तत इति । योऽर्थः सन्नित्येव केवलम्भासत इत्यस्य यतः सन्नित्याकारा प्रतीतिर्भवति तस्य प्रातिपदिकात्प्रथमेत्यत्र प्रातिपदिकपदेन ग्रहणादिति भावः । न द्वितीयस्येत्याह मूले—न च लिङ्गग्रहणादिति । कृष्णत्वादेरिति । भवदुक्तव्याख्यानेन प्रातिपदिकार्थपदस्य सत्ताबोधकतया लिङ्ग इत्यस्य सत्तापेक्षया लिङ्गमात्रं यत्राधिकम्भासत इत्येवं वचननिष्पत्तिर्भवदुक्तरीत्या स्यात् । तथाच कृष्णत्वादेरधिकस्य तज्जन्यबोधे भानेन तेष्वव्याप्तिरिति भावः ।

ननु प्रातिपदिकार्थः सत्तेत्यत्र सत्तापदम्प्रवृत्तिनिमित्तस्यैव बोधकन्न तु तद्भिन्नसत्ताबोध-

भावप्रकाशः ।

तत्सौलभ्ये दोषे तद्विरोधे बीजमाह—**सन्नित्यनेनेति** । तिङन्तस्याप्युपलक्षणमिदम् । **दुर्वारत्वादिति** । कर्त्तर्यभेदेनान्वयात्तथाच तत्सौलभ्यमिदं दुर्वचमिति भावः । ननु उच्चैरित्याद्यर्थस्य तद्दौर्लभ्येऽपि उन्नतदेशाधिकरणमित्याद्यर्थस्य तत्सौलभ्यमित्याशयेन मूले शङ्कते—पदान्तरोपेति । ननु तस्य तत्सामानाधिकरण्ये कथं वाक्यशेषविरोधोऽत आह—**तत्सत्त्वे इति** । पदान्तरोपस्थापितस्याऽस्तिसामानाधिकरण्यसत्त्वे तस्य लिङ्गादेरित्याद्यर्थः । एवं च द्वितीयार्थस्य दुर्वचत्वादाद्यो वाच्यः । सोऽपि उच्चैरित्यादिदोषाक्रान्तः । एवं पक्षद्वयस्यायुक्तत्वेऽप्यभ्युपेत्याद्ये प्रकाशोक्तं दोषमाह मूले—कृष्ण इति । तमुपपादयति—**तत इति** । कृष्णादिशब्दादित्यर्थः । लिङ्गसंख्याद्यनन्वितस्यैवार्थस्य तत्प्रतीतिविषयत्वस्वीकारस्य तत्सम्मतत्वादिति भावः । यद्यपि तथा प्रतीतिः सर्वत्र तथापि लिङ्गादियोगित्वान्नास्य तल्लक्ष्यमित्याशयेनाह मूले—न चेति । नन्वेवं न प्रातिपदिकार्थलिङ्गाधिकं किञ्चिदिति दोषासंगतिरत आह–**कृष्णत्वादेरिति** । आदिना श्रीत्वादिपरिग्रहः । कृष्णादिव्यक्तिस्तु सत्त्वेन प्रतीतिविषयः प्रातिपदिकार्थो न तु तत्त्वेनेति त्वन्मते अनिर्वाह इति भावः । एवं च वृत्तिव्याख्यातृहरदत्तग्रन्थं सङ्खण्ड्य प्रक्रियाव्याख्यातृप्रसादग्रन्थखण्डनं प्रकाशोक्तमाह—मूले यदपीति । प्राचा—प्रसादकृता । केषांचित्पदानां भासमानवैयर्थ्यपरिहारायाह—**लिङ्गेति** ।

केवलमित्यस्य व्याख्यानम्—**अनाश्रितमिति** । आश्रयरहितमिति तदर्थः । निरपेक्षमित्यस्य व्याख्यानं—**लिङ्गादीति** । वैपरीत्यं तु न, स्वार्थादीनां क्रमेणोपस्थितेः । स्वार्थ-

केवलं जात्यादि निरपेक्षं स्वार्थमाहतुरिति; तदपि न, प्रवृत्तिनिमित्तमिह प्रकारीभूय भासते। तथाच तन्मात्रबोधोऽसम्भवी। यदि सोऽपीष्टस्तर्हि घटादिशब्देभ्योऽपि स्यादिति संख्याकारकाद्यनन्वय एव स्यात्।

यदपि द्रोणपरिमिते व्रीह्यादौ द्रोणशब्दः सोऽयमित्यभिसम्बन्धात्प्रवर्तते। तत्र गौणमुख्यन्यायान्न प्राप्नोतीति परिमाणग्रहणमिति; तन्न, पदकार्येष्वयं न्य यो न प्रातिपदिककार्येष्विति सिद्धान्तात्, अन्यथा सिंहो माणवक इत्याद्यसिद्धिप्रसङ्गाच्च।

---

## शब्दरत्नम्।

जात्याद्याहतुरित्यन्वयः। असम्भवीति। प्रकारताया विशेष्यतानिरूपितत्वात्। कारकादीति। आदिना लिङ्गम्।

सिद्धान्तादिति। "ओत्" सूत्रे कैयटे स्फुटमेतत्। इदमेव युक्तम्। विशिष्टरूपोपादा-

## भैरवी।

कमिति न भवदुक्तो दोष इत्यर्थमनूद्य दूषयति मूले—यदपि प्राचेति। जात्यादीति। आदिनोपाधिपरिग्रहः। तथा चोच्चैरादीनामूर्ध्वदेशनिष्ठाऽऽधारतावृत्त्याधारतात्वात्मकप्रवृत्तिनिमित्तप्रतिपादकतया नाव्याप्तिरित्याशयः। इत्यन्वय इति। अनेन जात्यादीति निरपेक्षमिति च भिन्ने पदे इति ध्वनितम्। नन्वेवं प्रवृत्तिनिमित्तमात्रं यज्जन्यबोधविषयो भवतीत्यर्थः स्यात्, तथा चासम्भव इत्याशयेन दूषयति मूले—प्रवृत्तिनिमित्तमिहेति। तन्मात्रबोधासम्भवमुपपादयति—प्रकारताया इति। न च प्रातिपदिकजन्यनिर्विकल्पके प्रवृत्तिनिमित्तमात्रस्य भानं स्यादिति वाच्यम्? प्रातिपदिकजन्यज्ञानस्य स्मृतिरूपता शाब्दबोधरूपता वोभयथाऽपि विशेष्यविशेषणोभयविषयकत्वस्यानपायादिति भावः।

कैयटे स्फुटमिति। तत्र भाष्यकृता ध्वनितङ्कैयटे प्रकटीकृतमित्यर्थः। तत्र भाष्ये-'अनदः अदः समभवत् अदोऽभवत्'इत्यत्र प्रगृह्यत्ववारणाय वार्तिककृता "ओतश्च्विप्रतिषेधः" इत्युक्तस्य "लक्षणप्रतिपदोक्तपरिभाषया सिद्धम्"इत्यनेन प्रत्याख्याने "एवमप्यगौगौः समभवद्गोभवदित्यत्र प्राप्नोति" इति शङ्कया गौणमुख्यन्यायेन समाधाने कृते "कथन्तर्हि वाहीके वृध्यात्वे भवतः" इति परेण शङ्किते "अर्थाश्रये एतदेवम्भवति शब्दाश्रये च वृध्यात्वे" इति समाहितम्। एतेन यत्रार्थविशेषपुरस्कारेण कार्यं विधीयते तत्र मुख्यार्थः प्रथमम्बुध्यारूढो

## भावप्रकाशः।

मित्यस्य विशेष्यत्वेन व्याख्यानम्-जात्यादीति। आदिना गुणादिपरिग्रहः। इत्यन्वय इति। तथा च 'जात्यादि, निरपेक्षम' इति पृथक् पदे। आद्ये सामान्ये नपुंसकम्। एतेन कर्मधारयः निरपेक्षत्वं च विशेष्येण। यद्वा तृतीयासमासः। व्यक्तिमात्रबोधोऽपि सर्वतन्त्रविरुद्ध इति मान्योक्तं प्राचामनुरोधेनेति ध्वनितम्, आद्ये तस्य पूर्वनिपातापत्तेः, अन्त्ये स्वार्थपदानन्वयापत्तेः तथादोषोक्त्या मूलकृतोऽनभिमतत्वाच्चेति भावः। विशेष्येति। तन्निष्ठविशेष्यतानिरूपितत्वादित्यर्थः। तथा च यदि धर्ममात्रं विशेष्यतया भासते तर्हि कथं तस्य प्रवृत्तिनिमित्तत्वम्? अथ तद्वद् द्रव्यं तत्कथं तन्मात्राभिधायित्वम्? शब्दान्निष्प्रकारकज्ञानानुदयादिति भावः। ननु पञ्चसु कारकस्यान्त्यत्वेन तदग्रिमाऽभावेनादिपदं व्यर्थमत आह—कारकादीतीति। प्राक् तस्योपक्रान्तत्वादिति भावः।

पुनरपि तद्ग्रन्थखण्डनं प्रकाशोक्तमाह—मूले—यदपीति। प्रसादकृतोक्तमिति शेषः। सिद्धान्तादितीति। प्राचामिति शेषः। अत्र मान्याः—स्वमते तु विशिष्टरूपोपादाने एव गौणमुख्यन्याय इति "ओत्" सूत्रे कौस्तुभे स्पष्टम्। न्यायाऽप्रवृत्तेरुभयथा तुल्यत्वेपि पूर्वापरविरोधप्रदर्शनार्थं तन्मतानुवाद इति; तत्प्राचामनुरोधेनेति ध्वनयन्नाह—ओत्सूत्रे इत्यादि। तत्र हि "ओत-

यदप्याहुः—द्रोणादयः शब्दा लौहं दारुमयं वा परिमाणमेव न व्यभिचरन्ति, परिमेयं तु व्यभिचरन्त्येव । अतस्तस्य प्रातिपदिकार्थत्वाभावादप्राप्तेः परिमाणग्रहणमिति; तदपि न, गौणलाक्षणिकेषु 'सिंहो माणवकः' 'मञ्चाः क्रोशन्ति'इत्यादिष्वव्याप्त्यापत्तेः । तत्र विशेष्यस्य माणवकादेर्भेदेऽपि सिंहसदृश इत्यर्थो गौण्यां नियतोपस्थितिक एवेति यदि, तर्हि व्रीह्यादेर्भेदेऽपि द्रोणपरिमितो नियतोपस्थि-

शब्दरत्नम् ।

नाभावादस्या अत्राप्रवृत्तेर्द्रोणादिशब्दानां लाक्षणिकत्वेऽपि गौणत्वाभावाच्चेत्यपि बोध्यम् ।

भैरवी ।

भवति, गौणार्थप्रतीतिस्तु पदान्तरसम्बन्धवेलायामिति पदकार्यविषयकत्वमस्य न्यायस्येति ध्वनितम् । कैयटेन तु स्पष्टतयैवोक्तम् । अर्थाश्रय इत्यस्य लौकिकार्थवत्त्वयोग्यपदाश्रय इत्यर्थः । मूले सिद्धान्तादिति । अनेन यत्र तस्य न्यायस्य प्रवृत्तियोग्यता तत्र तेन न्यायेन कार्यनिष्पत्तिर्वाच्या, वस्तुतस्तु प्रकृते तत्प्रवृत्तियोग्यतैव नेति ध्वनितम् । तदेतत्स्पष्टयति—इदमेवेति । इदमेव—गौणमुख्यन्यायाऽविषयत्वमेव । युक्तत्वे हेतुमाह—विशिष्टेति । अर्थबोधकतावच्छेदकानुपूर्वीविशिष्टेत्यर्थः । गौणमुख्येति न्यायोऽर्थवद्ग्रहणपरिभाषामूलकः । सा परिभाषा यत्र विशिष्टरूपोपादानन्तत्रैव प्रवर्तते, तत्रैवार्थोपस्थितिसत्त्वेनोपस्थितस्यार्थस्य शब्दम्प्रति विशेषणत्वसम्भवात् । एतेनाऽपदस्य प्रयोगानर्हत्वेन पदस्यैव पदान्तरार्थसम्बन्धवेलायां गौणार्थत्वावगतिरिति द्रोणादिपदानां स्वार्थ एव साधुत्वान्वाख्यानञ्चार्थम् । तदानीन्तु मूलभूता याऽर्थवत्परिभाषा तद्विषयतैव नास्ति, उपात्तं-विशिष्यार्थोपस्थापकं रूपं यत्र तत्रैव तस्याः प्रवृत्तेः । प्रकृतसूत्रे तु न तादृशरूपोपादानमिति परिमाणग्रहणमनर्थकमिति ध्वनितम् । वस्तुतस्तु परसम्मतगौणमुख्यन्यायप्रवृत्तिमभ्युपेत्य प्रातिपदिकसंस्कारवेलायान्तस्याः प्रकृते प्रवृत्त्यभावकथनमित्याशयेनाह—द्रोणादिशब्दानामिति । गौणत्वाभावादिति । सदृशलाक्षणिक-

भावप्रकाशः ।

श्च्विप्रतिषेधः । अनदः अदः अभवत् अदोऽभवत् । न वक्तव्यः । 'लक्षणप्रतिपदोक्त' इति सिद्धम् । एवमप्यगौः गौः समपद्यत गोऽभवत् अत्र दोषः । एवं तर्हि गौणमुख्यन्यायेन सिद्धम् । यथा गौरनुबन्ध्य इति—न वाहीकोऽनुबध्यते । कथं तर्हि वाहीके वृध्यात्वे—गौस्तिष्ठति, गामानयेति ? अर्थाश्रये एतदेवं भवति शब्दाश्रये च वृध्यात्वे" इति भाष्यम् । तत्र शब्दाश्रये चेति प्रतीकमादाय 'स्वार्थे पदं संसाध्य पदान्तरसन्निधाने गौणत्वप्रतीतिः । नहि तदा मुख्यव्यवहारो गौणाभावादिति पदकार्येष्वयं न्यायो न प्रातिपदिककार्येष्वित्युक्तम् । शब्दाश्रये चेति । न त्वत्रार्थो नापेक्ष्यते' इति कैयटः । एवं चैतत्तुल्यं प्राचोक्तमपि सूपपादमिति नात्रारुचिसूचकोत्तरदोषदार्ढ्यसूचकशेषपूरणं युक्तमिति भावः । तदेतत् पदे एव लक्षणेति सिद्धान्तस्योक्तत्वेनाऽन्यदोषाऽयुक्तत्वं च ध्वनयितुं सिद्धान्तमाह—इदमेवेति । एतेन तद्व्यावृत्तिः । युक्तत्वे हेतुमाह—विशिष्टेति । उपात्तविशिष्यार्थोपस्थापकविभक्तिविशिष्टेत्यर्थः । तथा चोपात्तं विशिष्यार्थोपस्थापकं विभक्तिविशिष्टं रूपं यत्र तादृशपदकार्ये एवायं न्यायः । परिनिष्ठितस्य पदान्तरसम्बन्धे हि 'गौर्वाहीकः' इत्यादौ गौणत्वप्रतीतिर्न तु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्गत्वाज्जातसंस्कारबाधायोगः प्रातिपदिककार्ये प्रवृत्त्यभावे बीजम् । कैयटप्राचीनमूलादेरप्यत्रैव तात्पर्यम् । अत एवानेन तस्य युक्तत्वप्रतिपादनम् । उक्तभाष्यस्थ लौकिकार्थवत्त्वयोग्यपदाश्रये एव न्यायस्तद्रहितशब्दाश्रये च ते इत्यर्थः । "गोतः" इति यथाश्रुतसूत्रे विशिष्टरूपोपादानसत्त्वेनोक्तरीत्यैव तस्य व्याख्येयत्वात् । अधिकमन्यतोऽवगन्तव्यम् । अत्राऽप्रवृत्तेरिति । प्रथमाविधायके परिभाषाया अप्रवृत्तेरित्यर्थः । इदं च न्यायविषयत्वमङ्गीकृत्योक्तम् । वस्तुतो न्यायविषयत्वमेव नेत्याह—द्रोणादीति । आदिना मञ्चादिपरिग्रहः । गौणत्वाभावाच्चेति । अप्रसिद्धत्वं गौणलाक्षणिकत्वं च तत्र गौणत्वं निषिद्धं न तु शुद्धलाक्षणिकत्वमुपसर्जनत्वं चेति भावः । चो मूलोक्तसिद्धान्तादिति दोषसमुच्चायकः । अपिना पदे

तिङ एवेति तुल्यम् ।

"संबोधने च" । मात्रग्रहणात्संबोधनाधिक्ये न प्राप्नोतीत्यारम्भः । इह संबोधनं प्रकृत्यर्थं प्रति विशेष्यं, क्रियां प्रति विशेषणमिति सिद्धान्तः । उक्तं च-

संबोधनपदं यच्च तत् क्रियायां विशेषणम् ।

शब्दरत्नम् ।

सम्बोधनपदमिति । अत्र पुञ्जराजः 'आख्यातं सविशेषणं वाक्यम्' इति वाक्यलक्षणं, तत्रास्य क्रियाविशेषणत्वाभावे वाक्यत्वं न स्यादिति 'समानवाक्ये' इति प्रकृत्य विहितो निघातो न स्यादिति भाव इति ।

वस्तुतस्तु एवं सति नद्या यत् कूलं तत्र तिष्ठतीत्याद्यर्थके नद्यास्तिष्ठति कूले इत्यादौ षष्ठ्यन्तस्य क्रियायां विशेषणत्वाभावात्तद्घटितस्य वाक्यत्वाऽनापत्तौ समर्थसूत्रभाष्यसम्मतनिघातस्य तत्राऽनापत्तिः । तस्मात् सविशेषणमित्यस्य साक्षादन्यद्वारा वा यद्विशेषणं तत्सहितमित्यर्थोऽवश्यं वाच्यः । एतेन यतः पदात्परस्य पदस्य निघातादयः क्रियन्ते

भैरवी ।

स्यैव गौणत्वादिति शेषः ।

यदुक्तं सम्बोधनपदस्य क्रियाविशेषणत्वन्तत्र साधकमाह—अत्रेति । सविशेषणम्—साक्षात्परम्परया च यद्विशेषणन्तद्बोधकसहितम् । तेन गभीरायान्नद्याम्मीनोऽस्तीत्यस्यैकवाक्यत्वम् । तत्र-"सम्बोधने च" इतिसूत्रविहितप्रथमान्तपदघटितसमुदायमध्ये । अस्य—देवदत्तेत्यादिपदस्य । निघातो न स्यादिति । आष्टमिकेन "आमन्त्रितस्य च" इत्यनेन समानवाक्यस्थस्याऽऽमन्त्रितस्य पदात्परस्यैव निघातविधानादिति भावः । 'व्रजानि देवदत्त' इत्यस्मात्पुञ्जराजसम्मतो देवदत्तसम्बन्धिसम्बोधनविषयो मत्कर्मकङ्गमनमिति शाब्दबोधः ।

तत्र साक्षाद्यत्क्रियाम्प्रति विशेषणन्तत्सहितस्यैवैकवाक्यत्वमिति कश्चित्, तन्न युक्तमित्याशयेनाह—वस्तुतस्त्विति । एतेन—उक्तसमर्थसूत्रसम्मतनिघाताऽप्राप्तिरूपदोषेण ।

भावप्रकाशः ।

एव लक्षणासत्त्वाच्चेत्यस्य समुच्चयः । मूले—यदप्याहुरिति । कैयटानुयायिप्रकाशकृत इत्यर्थः । गौणलाक्षणिकेष्विति । गौणेषु लाक्षणिकेषु चेत्यर्थः ।

यदभिप्रायेण मूले सम्मतिर्दत्ता तमभिप्रायमसिद्धान्तत्वादन्यमुखेनाह—अत्रेति । अस्मिन् हरिपद्ये इत्यर्थः । लक्षणमिति । अस्य 'समर्थसूत्रे भाष्ये उक्तम्' इति शेषः । इदं च लौकिकम्,

साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् ।
क्रियाप्रधानं गुणवदेकार्थं वाक्यमिष्यते ॥

'अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इत्यादिहयुक्तमीमांसकाभिमतलक्षणेन समानार्थत्वात् । अत एव 'पचति भवति' इत्येतत्साधारणमिदम् । आख्यातमित्यत्रैकत्वविवक्षायामपि सविशेषणाख्यातस्यात्राप्येकत्वात् । अत एवामराद्येकवाक्यता । तत्र—व्रजानि देवदत्तेत्यत्र । अस्य—सम्बोधनस्य । निघातो न स्यादिति । पदात्परस्याऽपादादौ स्थितस्याऽऽमन्त्रितस्य सर्वानुदात्त इत्यर्थकेन "आमन्त्रितस्य च" इत्याष्टमिकसूत्रेणेत्यर्थः । अतस्तत्र साक्षाद्विशेषणम् । तथाच देवदत्तसम्बन्धिसम्बोधनविषयो मत्कर्तृकं गमनमिति बोध इति भावः । ननु समर्थसूत्रभाष्यविरोधादिदमयुक्तमत आह—वस्तुतस्त्वित्यादि । अस्याऽपास्तमित्यस्य शेषभूते इति बोध्यमित्यत्रान्वयः । एवं सति । साक्षात्क्रियान्वयित्वे एव वाक्यत्वाङ्गीकारे सतीत्यर्थः । आदिना 'शालीनां ते ओदनं ददामि' इत्यादिपरिग्रहः । निघातस्येति उपलक्षणं ते इत्याद्यादेशस्यापि । तत्र—उक्तवाक्यस्थतिङन्तादौ । तस्मात्—उक्तदोषात् । अवश्यं वाच्य इति । तथाच तस्य साक्षात्क्रियाविशेषणत्वाभावेऽपि निघातसिद्धिस्तद्वत्तत्रेति नैतत्तत्र तथा तदन्वयसाधकमिति मूलं तथा कैयटप्रका-

व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥ इति ।

एवं च 'राम मां पाहि' इति वाक्यस्य रामसंबन्धिसंबोधनविषयो मत्कर्मकं रक्षणमर्थः ॥

इति प्रथमा ॥

---

शब्दरत्नम् ।

तयोः परस्परान्वयनियम इत्यपास्तम् । वस्तुतो 'व्रजानि देवदत्त' इत्यादौ 'जानीहि'

भैरवी ।

नियम इति 'समानवाक्ये' इति वार्तिकबोध्य इति शेषः। यत्तु सम्बोधनविभक्त्यन्तस्य विधेयभूतक्रियायामेवान्वयः स एव निघातस्य प्रयोजको, वक्ष्यमाणहरिग्रन्थस्वारस्यात्। एवञ्च 'व्रजानि देवदत्त' इत्यत्र व्रजनस्य विधेयत्वाभावेन कथमत्र निघातसिद्धेः फलत्वेन कथनमिति केचित् ।

भावप्रकाशः ।

शभूषणरत्नाकरदण्डयाद्युक्तं च चिन्त्यमिति बोध्यम्। एतेन-उक्तभाष्यविरोधेन । आदिना ते इत्याद्यादेशपरिग्रहः। तदाह मूले—एवं चेति। अत्रेदं बोध्यम्। "सम्बोधने च" इत्यस्य सम्बोधनाधिके प्रातिपदिकार्थे वर्तमानात्प्रातिपदिकात्प्रथमेत्यर्थः। तत्र सम्बोधनमभिमुखीभावः। तत्फलं प्रवृत्तिनिवृत्ती। तेन सम्बोधनविभक्तिरनुवाद्यविषयैव, सम्बोध्यतावच्छेदकरूपेण सम्बोध्यस्य सिद्धिं विना तत्रासम्भवात्। तेन 'राजा भव युध्यस्व' इन्द्रशत्रुर्वर्धस्व' इत्यादौ न सम्बोधनविभक्तिः, राजत्वादेरसिद्धत्वेनाऽननुवाद्यत्वात्। अत एव 'राजन् युध्यस्व' इत्यस्य कुमारावस्थायां, 'राजा भव युध्यस्व' इत्यस्य राजावस्थायां न प्रयोगः। अत एव सिद्धिर्बाह्या विवक्षिता न बौद्धा। "इन्द्रशत्रो विवर्धस्व" इति भागवतं तु चिन्त्यमेव । एवं च सम्बोधनविभक्तेरनुवाद्यविषयतया अनुवाद्यत्वस्य च विधेये एवान्वयेन विधेयतायाश्च क्रियानिष्ठत्वेन तस्यामेवैतदर्थान्वय उद्देश्यतया। तदेतदुक्तं हरिणा—

> सिद्धस्याऽभिमुखीभावमात्रं सम्बोधनं विदुः ।
> प्राप्ताऽऽभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते ।
> सम्बोधनं न वाक्यार्थ इति वृद्धेभ्य आगमः ॥ इति ।

अस्यार्थः। सिद्धस्य—सम्बोध्यतावच्छेदकरूपेण सिद्धस्य। अनेनानुवाद्यविषयत्वमस्य बोधितम्। अभिमुखीभावः-अनभिमुखः अभिमुखः सम्पद्यते तथा भावोऽभिमुखीभावः—सम्मुखीभाव इत्यर्थः। प्रयोक्तृवचनार्थग्रहणे सादरत्वभवनम्। तद्व्यञ्जकं च मुखपरावृत्त्यादि। मात्रपदेन सम्यक् ज्ञापनं सम्बोधनमित्यादिमतान्तरव्यावृत्तिः। तत्सम्बोधनं विदुः। तत्फलमाह—प्राप्तेति। हि—यतः। प्राप्तमाभिमुख्यं सम्मुखता येन मुखपरावृत्त्यादिना तादृशः। अर्थात्मा-अर्थपूर्ण आत्मा इति शाकपार्थिवादिः। प्रयोक्तृवचनार्थज्ञानवान्। यद्वा शब्दरूपत्वव्यावृत्तये अर्थात्मेति कर्मधारयः। रामादिरिति तदर्थः। यद्वा, अर्थ्यते बोध्यते इत्यर्थस्तद्रूपात्मा सम्बोध्यमान इत्यर्थः। क्रियासु—प्रयोक्तृज्ञाप्यक्रियासु विनियुज्यते-प्रेर्यते। अनेन प्रवर्तनाविषयक्रियासम्बन्धोऽस्येति बोधितम्। तथाच क्रियासु विनियोगफलकोऽभिमुखीभावः सम्बोधनमिति फलितम्। एवंचाऽभिमुखीभवद्रामोद्देश्यकप्रवर्तनाविषयो मत्कर्मकं रक्षणमिति बोधः हे राम मां पाहीत्यत्र। एवंच सम्बोधनं प्रकृत्यर्थं प्रति विशेषणं, तद्विभक्त्यन्तार्थश्च क्रियां प्रति विशेषणमिति सिद्धम्। एतेन सम्बोधनं प्रकृत्यर्थं प्रति विशेष्यं, तथाच राम मां पाहीति वाक्यस्य रामसम्बन्धिसम्बोधनविषयो मत्कर्मकं रक्षणमर्थ इति मूलं तथा प्रकाशभूषणरत्नाकरदण्डयाद्युक्तं चापास्तम्। हे शब्दादि सम्बोधनतात्पर्यग्राहकम्। असन्निकृष्टेऽचेतने च तत्त्वारोपेण गौणः प्रयोगः। एतेनाऽसन्निकृष्टे 'हा देवि धीरा भव' इत्यादौ तदसम्भवाच्चिन्त्यमिदमिति मन्दोक्तमपास्तम्। चरमार्धार्थस्तु वक्ष्यते इति। अयमेव सम्बोधनपदमिति हरिपद्यार्थः। तत्रापि क्रियाशब्देन प्रयोक्तृज्ञानार्थक्रियाया एव ग्रहणात्। एवं च तदेकवाक्यता सिद्धा। पुञ्जराजस्याप्यत्रैव तात्पर्यमिति। एवं सति व्रजानीत्यादौ व्रजनक्रियायां सम्बोधनस्य विनियोगाभावेन तत्त्वानुपपत्त्या तद्विभक्त्यनुपपत्तिः; अतस्तदेतत्सर्वं हृदि

शब्दरत्नम् ।

इति शेषस्तत्र व्रजनस्य कर्मत्वेन देवदत्तस्योद्देश्यत्वेनान्वयान्न दोषः । प्राप्तकालेऽत्र लोट्

भैरवी ।

तन्मतेऽपि निघातसिद्धये आह—वस्तुतो व्रजानीत्यादि । न दोष इति । व्रजनस्याऽविधेयतया देवदत्तेत्यनेनाऽन्वयाभावान्निघाताऽप्राप्तिरूपदोषो नेत्यर्थः, अवबोधनरूपा या क्रिया विधेयत्वेन विवक्षिता तस्यामुभयोरन्वयेन समानवाक्यत्वस्य सत्त्वात् । न च जानीहीत्यस्य शेषत्वे तिङन्तद्वयघटितवाक्यस्य "एकतिङ्वाक्यम्" इति परिभाषितं यन्निघातोपयोग्येकवाक्यत्वन्तदभावेन दोषोऽस्त्येवेति वाच्यम् ? जानीहीति शेष इत्यस्य व्रजानि देवदत्त इति समुदायस्य व्रजानि देवदत्त जानीहीत्यस्य योऽर्थस्तत्र वृत्तिर्वाक्यैकदेशन्यायेनेति श्रूयमाणैकतिङ्घटितत्वेन निघातस्य प्राप्तिरित्याशयात् । अभिमुखीभवद्देवदत्तोद्देश्यकं मत्कर्तृकं प्राप्तकालाऽधिकरणकगमनकर्मकं प्रेरणाविषयो ज्ञानमित्याकारको ह्यस्माच्छाब्दबोधः । प्राप्तकाल इति । गमनयोग्यस्य कालस्य प्राप्तिविवक्षायामित्यर्थः । लोट्—"प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" इत्य-

भावप्रकाशः ।

निधाय तदुपपत्तिमाह—वस्तुतो व्रजानीति । इतिराद्यर्थकः । तत्र—ज्ञाने । अन्वयादिति । अत एवोभयोः समानवाक्यस्थत्वं, लौकिकोक्ततल्लक्षणसत्त्वात् । "एकतिङ् वाक्यम्" इत्यस्य च बहुव्रीहिणा श्रूयमाणसमानानुपूर्वीकतिङन्तघटितमित्यर्थ इति तदपि लक्षणमस्त्येवेति भावः । न दोष इति । न तदनुपपत्तिरूपदोष इत्यर्थः । उक्तभाष्यात्तस्य तथार्थाङ्गीकारेऽपि व्रजानीत्यादौ मूलोक्तरीत्या व्रजनक्रियान्वयेनैवैकवाक्यत्वे तु तस्यां तस्याऽविनियोगेन 'क्रियासु विनियुज्यते' इति हरिविरोधापत्तिरूपदोष इति भावः । नन्वेवं व्रजानीत्यत्र कथं लोट् ज्ञानस्यैव विधेयत्वेनात्र विध्याद्यसम्भवादत आह—प्राप्तेति । "प्रैषातिसर्ग" इति सूत्रेणेति भावः । अत्र—व्रजानीत्यत्र । अत्रेदं तत्त्वम् । उद्देश्यविधेयभावो वाक्यार्थः । अभिमुखीभवनानुकूलस्य सम्बोधनविभक्त्यन्तशब्दप्रयोगरूपस्य व्यापारस्येतरनैरपेक्ष्येणैव प्रतीतेस्स न वाक्यार्थः । अयमेव हरिचरमार्धार्थः । तत्र सम्बोधनपदस्य नाभिमुखीभावपरत्वं किन्तूक्तव्यापारपरत्वम् । अत एव गच्छेत्यध्याहारे 'धिङ् मूर्ख' इत्यादौ प्रथमा, अनध्याहारे तु द्वितीयैव । तथाचाभिमुखीभवद्देवदत्तोद्देश्यको मत्कर्तृकप्राप्तकालगमनकर्मकः प्रवर्त्तनाविषयो बोध इति बोधः । वस्तुतो वाक्यैकदेशन्यायेन 'व्रजानिदेवदत्त' इत्यनेनैव जानीहीत्येतद्घटितवाक्यार्थबोध इति न श्रूयमाणत्वविशेषणोपयोग इति तन्मात्ररहितोक्तार्थकं यथाश्रुतमेकतिङ्वाक्यमिति वाक्यलक्षणमपि तत्रास्त्येवेति निघातसिद्धिरिति बोध्यम् । एतन्मूलक एव सम्बोधनस्य कर्तृकारकत्वव्यवहारो वृद्धानाम्, तस्यैव त्वम्पदार्थत्वेन विनियोज्यक्रियाकर्तृत्वात् । अत एव 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकमते प्रथमासिद्धिः सम्बोधने तन्न्यासे हि 'प्रातिपदिकार्थ' इति सूत्रवदस्याप्यकरणमेव इति वार्तिकमते प्रथमासिद्धिः सम्बोधने । अत एव प्रथमापि कारकविभक्तिः, कर्मणि द्वितीयेत्यादिसाहचर्येण क्रियायोगे एव तत्प्रवृत्तेश्च, तथैवाकाङ्क्षितत्वाच्च, अस्तिक्रियायाः सर्वत्र सत्त्वाच्च, तदर्थस्य क्रियाजनकत्वाच्च । आख्यातार्थक्रियान्वयिकर्त्रादावभेदान्वयेन तद्द्वारकः क्रियायोगो बोध्यः । यत्र क्रिया न श्रूयते तत्राध्याहारोऽस्तीत्यनन्ततोपि 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोप्यस्ति' इति भाष्यात् । तत्र भवन्तीपर इत्युपलक्षणमन्यलकारस्यापि । अत एव 'उपपदविभक्तेः' इति न्यायेन प्रथमासिद्धिर्भाष्यादौ

सरला

**न दोष इति** । साक्षात्परम्परासाधारणाख्यातार्थनिष्ठविषयतानिरूपितत्ववद्विषयताप्रयोजकत्वमेकवाक्यत्वम्, 'एकतिङ् वाक्यम्' इत्यस्य च श्रूयमाणैकतिङन्तघटितमित्यर्थ इति न तद्विरोधः । ज्ञाने व्रजनस्य विषयत्वसम्बन्धेन, देवदत्तस्य च स्वोद्देश्यकत्वसम्बन्धेन प्रवर्तनायामन्वयद्वारा; प्रवर्तनायाश्च विषयत्वसम्बन्धेन साक्षादन्वयः । तथाचात्र देवदत्तपदस्य व्रजानीत्याख्यातार्थव्रजननिष्ठविषयतानिरूपितज्ञाननिष्ठविषयतानिरूपितप्रवर्तनानिष्ठविषयतानिरूपितदेवदत्तनिष्ठविषयताप्रयोजकत्वेनैकवाक्यत्वादामन्त्रितनिघातासिद्धिरूपदोषो नेत्यर्थः ।

शब्दरत्नम् ।

इति दिक् ॥ इति प्रथमा ॥

भैरवी ।

नेन लोट् । दिगिति । दिगर्थस्तु यत्र विधेयभूतक्रियावाचकम्पदं नास्ति केवलसम्बोधनविभक्त्यन्तस्यैव प्रयोगस्तत्र तादृशक्रियावाचकपदाध्याहारेण शाब्दबोधः । यथा मूर्खेत्यादौ । अत्र सम्यगाचरेतिपदाध्याहारे सति मूर्खोद्देश्यकं सम्यगाचरणम्प्रेरणाविषय इति बोधो भवति । सम्बोधनन्त्वभिमुखीकरणम्, तच्च प्रयोक्तृवचनार्थग्रहणे आदरत्वसम्पादनम् । तत्फलम्प्रवृत्तिनिवृत्ती । मुखपरावृत्त्यादिकन्तु तस्याऽभिव्यञ्जकम् । सादरत्वसम्पत्त्यनुकूलो व्यापारश्च सम्बोधनविभक्त्यन्तशब्दप्रयोग एव । उद्देश्यतावच्छेदकरूपेण सिद्धश्च यदा ज्ञातो भवति, तदा तद्धर्मावच्छिन्नोद्देशेन क्रिया विधीयत इति सम्बोध्यतावच्छेदकरूपेण सिद्धत्वं सम्बोधनविभक्त्यन्तशब्दप्रयोगे नियामकम् । अतो व्यवस्थयैव 'राजन् युध्यस्व' 'राजा भव युध्यस्व' इत्यनयोः प्रयोगः । तदुक्तं हरिणा—

सिद्धस्याऽभिमुखीभावमात्रं सम्बोधनं विदुः ।
प्राप्ताऽऽभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते ॥ इति ।

सिद्धस्य—सम्बोध्यतावच्छेदकरूपेण सिद्धस्य । अभिमुखीभावमात्रमित्यनेन फलनिर्देशः । मुखपरावृत्त्यादिना सम्बोध्यतावच्छेदकावच्छिन्नो यदा फलवत्त्वेनानुमितो भवति, तदा क्रिया विधीयते, तदाह—प्राप्ताभिमुख्य इति । आभिमुख्यं-सादरत्वं प्राप्तमाभिमुख्यं येन स एव अर्थः—अर्थपूर्णः आत्मा सम्बोध्यः । उष्ट्रमुखवत्समासः । प्रयोक्तृवचनार्थज्ञानवान् क्रियासु बोधनीयक्रियासु विनियुज्यते—प्रवर्त्यते । एवञ्च सम्बोधनमभिमुखीकृत्याज्ञातार्थज्ञानानुकूलव्यापारानुकूलव्यापार इति फलितम् । यत्र सम्बोध्योऽसन्निकृष्टोऽचेतनो वा तत्र सन्निकृष्टत्वारोपेण चेतनत्वारोपेण च गौणः सम्बोधनविभक्त्यन्तशब्दस्य प्रयोग इति । किञ्च "तिङ्समानाधिकरणे प्रथमा" इति वार्तिकस्वारस्यात्प्रथमाऽपि क्रियाजनकरूपकारकार्थिका विभक्तिः । अत एव "सहयुक्तेऽप्रधाने" इतिसूत्रे अप्रधानग्रहणस्याऽकर्तव्यत्वम् । "अप्रधानग्रहणं शक्यमकर्तुम् । न चैवम्पुत्रेण सहागतः पितेत्यत्र पितुरपि तृतीयापत्तिः, "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति प्रथमा भविष्यति" इत्यभिहितम्भाष्ये । "उपपदविभक्तेः" इति परिभाषा तु वाचनिकीति स्पष्टमन्यत्रेति दिक् ।

इति प्रथमाविवरणम् ।

भावप्रकाशः ।

स्फुटा । एतेन सा न कारकविभक्तिः, तदधिकारस्य कर्त्रादिसंज्ञामुपजीव्य विधीयमानविभक्तित्वस्य तत्त्वात् । क्रियान्वितविभक्तित्वं तु न तत्त्वं, शुद्धधियाविश्यादौ यणाद्यापत्तेः । "सहयुक्ते" इत्यत्र भाष्येऽप्रधानग्रहणाऽभावे तन्न्याये प्रधानात्प्रथमासाधके तु कारकशब्दस्यान्तरङ्गपरत्वम् । अन्यथा 'पुत्रेण सह पितुर्गौः' 'तेन सह स्थूलः' इत्यादौ न्यायाऽप्राप्त्या ततस्तृतीयापत्तेः । तस्मात्सर्वग्रन्थविरोधाच्चिन्त्यमिदमिति मन्दोक्तमपास्तम् । शुद्धशब्दस्य सत्त्वभूतार्थकधीशब्दार्थविशेषणत्वेनाऽकारकत्वाच्च, अरुणाधिकरणन्यायेन विशेषणविभक्तिसाधनेऽपि उत्तरपदार्थनिरूपितकारकत्वाभावाच्च, कारकाणां भावनान्वय इत्यस्य क्रियान्वयिनां क्रियान्वय इत्यर्थापत्त्या क्रियान्वयित्वं कारकत्वमित्यस्यायुक्तत्वस्य वक्ष्यमाणत्वाच्च, अन्तरङ्गत्वस्य तत्र "सहयुक्त" इत्यत्र खण्डनीयत्वाच्च । किं च युक्तग्रहणात्तत्र तृतीयापत्तेः सुनिवारत्वात् "अन्तराऽन्तरेणयुक्ते" इति युक्तग्रहणाद्यथा कमण्डलोर्द्वितीया न, तद्वत् । किं च पुत्रस्वामिकत्वसमानकालिकपितृस्वामिकत्ववती गौरित्याद्यर्थेन पूर्वं गवा पितुः सम्बन्धः पश्चात्सहार्थेन, अन्यथा कस्य सहत्वं प्रतिपाद्येत, अतोऽन्तरङ्गत्वेन तत्र षष्ठीत्याशयात् । उपपदविभक्तेरिति वचनं तु क्रियायोगे प्रधानात्प्रथमादिनिषेधार्थम्, तत्रान्तरङ्गत्वाभावात् । अधिकं "सहयुक्ते" इत्यत्र स्फुटीभविष्यतीति दिगिति; तदाह—इति दिगिति ।

इति प्रथमा ।

"कर्तुरीप्सिततमं कर्म" ॥ कर्तुरिति "क्तस्य च वर्तमाने" इति कर्तरि षष्ठी। आप्नोतेः सन्नन्तात् "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्तः। मतिरिच्छा न तु बुद्धिः, पुनर्बुद्धिग्रहणात्। एवंच कर्त्रा आप्तुमिष्यमाणं कर्मेत्यर्थः। कर्ता च धातूपात्तव्यापाराश्रयः। स च केनाऽऽप्तुमिच्छतीत्याकाङ्-

शब्दरत्नम्।

आप्नोतेरित्यादि। अनेन व्याख्यानात् क्रियाशब्द एवात्रेप्सितशब्दो न त्वभिप्रेतपरो रूढ इति सूचयति। आप्तुमिति। संबन्द्धुमित्यर्थः। व्यापाराश्रय इति।

भैरवी।

अनेनेति। व्युत्पत्तिप्रदर्शनेनेत्यर्थः। अस्य सूचयतीत्यत्र, व्याख्यानादित्यस्य तु रूढिरित्यत्रान्वयः। रूढ इति। न च

'अभीष्टमीप्सितं हृद्यं दयितं वल्लभं प्रियम्'।

भावप्रकाशः।

ननु कर्तरि षष्ठीत्ययुक्तम्।

'अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्'।

इति कोशादीप्सितशब्दस्य रूढत्वेनाक्रियावाचित्वेन तत्तदर्थान्वयेनातत्त्वादत आह मूले—आप्नोतेरित्यादि। तदेव ध्वनयन् व्याचष्टे—अनेनेति।व्युत्पत्तिप्रदर्शनेनेत्यर्थः।अस्य सूचनेऽन्वयः। करणमिदम्। कर्त्ता तु मूलकृद् बोध्यः। व्याख्यानादिति। अयं भावः।कर्तृषष्ठ्येव युक्ता। सा न शेषे षष्ठी, घटे नैल्यं करोतीत्यत्र घटे परत्वात्कर्मत्वापत्तेः, "जासिनिप्रहण" इति शेषे कर्मणि षष्ठीविधानाल्लिङ्गाच्च। एवंचास्य क्रियाशब्दत्वे कर्तुरिति कर्तृकारकानन्वयापत्तिः तत्साधनीभूतक्रियाया अभावे केवलपदार्थस्याभीष्टत्वासम्भवेनानन्वयापत्तिश्च। न च यानभोजनासनभोगाद्यर्थमेव वस्तुनोऽभीष्टत्वेनाक्षिप्तक्रियायामेव सा कारकषष्ठीति वाच्यम्? श्रौतक्रियामादाय तथैव युक्तत्वात् घटे इत्यादिप्रागुक्तदोषद्वयापत्तेश्च। एतेन रूढिर्योगमिति न्यायेन तथोचितमित्यपास्तमिति। एतेन पङ्कजादिवद्योगरूढिरपि निरस्ता, तदङ्गीकारे फलाभावात्, उक्तदोषद्वयापत्तेश्च। अत्र—सूत्रे। इदमुपलक्षणम् "तथायुक्तं" "स्पृहेरीप्सितः" "वारणार्थानाम्" इत्यादिसूत्राणामपि। स्पष्टं चेदं "वारणार्थानाम्" इति सूत्रे भाष्यकैयटादौ। रूढ इति। एतेन कोशे विशिष्टपाठादभ्युपसर्गरहितस्य तदर्थत्वे मानाभावाच्चेति मान्योक्तहेतुः प्राचामनुरोधेनेति ध्वनितम्, उपेयिवानित्यत्रेव कोशे तस्याविवक्षितत्वात् 'अथेप्सितं भर्तुः' इत्यादिप्रयोगदर्शनाच्च। आप्लृव्याप्ताविति स्मरणाद् व्याप्तुमित्यर्थनिरासाय आह—सम्बन्धुमिति। सानुस्वारः पाठः। 'बन्धुं न सम्भावित एव

सरला।

नत्वभिप्रेतपर इति। अभिप्रेतश्च कर्तुरिच्छोद्देश्यं तदीयसुखदुःखनिवृत्त्यन्यतरत् तत्साधनं वा। क्रियाशब्दस्यैव ग्रहणे प्रमाणं तु "वारणार्थानामीप्सितः" इतिसूत्रस्थं भाष्यमेव। तत्रहि—"किमुदाहरणम्? माषेभ्यो गा वारयति। भवेद्यस्य माषाः न गावः; तस्य माषा ईप्सिताः स्युः। यस्य तु खलु गावो न माषाः; कथं तस्य माषा ईप्सिताः स्युः? तस्यापि माषा एवेप्सिताः। अतश्चेप्सिताः यदेभ्यो गा वारयति" इत्युक्तम्। 'माषा एवेप्सिताः' इत्यस्य माषा ईप्सिता एवेत्यर्थः। अत्र माषाणां तदस्वामिनं वारकं प्रति न सुखसाधनत्वं नवा दुःखनिवृत्तिसाधनत्वं, तदुपयुज्यमानत्वाभावादिति माषाणामभिप्रेतत्वं नास्ति, किन्तु वारककर्तृवृत्तिव्यापारप्रयोज्यो यो गोनिष्ठव्यापारजन्यसंयोगाभावस्तदाश्रयत्वेनेच्छोद्देश्यत्वमस्त्येवेति क्रियापरेप्सितशब्दग्रहणे एवैतद्भाष्यसङ्गतिरिति। तदग्रे च 'अग्नेर्माणवकं वारयति' इत्यत्र माणवकस्यापादानसंज्ञा प्राप्नोतीत्याशङ्क्य ईप्सितमात्रे अग्न्यादावस्या अपादानसंज्ञायाश्चारितार्थ्येनानवकाशया कर्मसंज्ञया ईप्सिततमे माणवके परत्वाद्बाधो भवतीत्युक्तम्। अत्र भाष्ये अनभिप्रेतेऽग्न्यादावपादानसंज्ञायाश्चारितार्थ्येन कर्मसंज्ञयाऽनवकाशत्वाद्बाधकथनं "कर्तुरीप्सिततमं कर्म" इति सूत्रेऽपि ईप्सितशब्दस्य फलाश्रयत्वप्रकारकेच्छोद्देश्यत्वरूपार्थपर इति क्रियापरत्वं तस्य बोधयति।

त्यायां विशेषणीभूतेन व्यापारेणेत्यर्थाल्लभ्यते । तदेतदाह–क्रिययेति । क्तप्रत्य-

शब्दरत्नम् ।

प्रधानधात्वर्थाश्रय इत्यर्थः । केनेति करणाकाङ्क्षाप्रदर्शनम् । विशेषणीभूतेनेति । कर्तृ-पदार्थविशेषणीभूतेनेत्यर्थः । उपस्थितं परित्यज्याऽनुपस्थितकल्पने मानाभावादिति

भैरवी ।

इति कोशे पाठाद्रूढिरेवाभिप्रेतेति वाच्यम्? योगरूढेः स्वीकारात् । अत्र मानन्तु "वारणार्थानामीप्सितः" इति सूत्रस्थभाष्यमेव । तथाहि "किमुदाहरणम्? माषेभ्यो गा वारयति । भवेद्यस्य माषा न गावस्तस्य माषा ईप्सिताः स्युः ।" ईप्सितशब्दस्या-भिप्रेते रूढत्वाभिप्रायेण यस्य स्वामिनः पुरुषस्य माषास्तस्य त एव ईप्सिताः । पूर्वोक्त-मेवार्थं द्रढयितुमाह—"यस्य तु खलु गावो न माषाः, कथं तस्य माषा ईप्सिताः स्युः? तस्यापि माषा एवेप्सिताः ।" 'ईप्सितशब्दः क्रियाशब्द आश्रीयते, तत्र वारणक्रियया पर-कीया अपि माषा वारयितुराप्तुमिष्टा भवन्ति माऽश्नन्नेते इत्येभ्योऽसौ गा वारयतीति कैयटः । माषा एवेत्यत्र एवकारो भिन्नक्रमः । माषा ईप्सिता एवेत्यर्थः । अत एव भाष्य-कार आह—"आतश्चेप्सिताः यदेभ्यो गा वारयति" । पूर्वापेक्षया किञ्चिद्वैलक्षण्याभि-प्रायेण पुनराह—"इह कूपादन्धं वारयतीति कूपेऽपादानसंज्ञा न प्राप्नोति । न हि तस्य कूप ईप्सितः, कस्तर्हि? अन्धः" । न प्राप्नोतीति । अन्धसम्बन्धे सति कूपस्य न विनाशो नापि राजभयमिति प्रश्नः । कस्तर्ह्यन्ध इति तत्प्रत्यनुकम्पायाः सद्भावात्तस्येप्सितत्वम्मन्यते । "तस्यापि कूप एव ईप्सितः । पश्यत्ययमन्धः कूपम्माप्रापदिति" । तस्यापोति । वारणक्रियया आप्तुमिष्ट इत्यर्थः । एतेन ईप्सितशब्दस्य क्रियाशब्दतया कूपस्यापि तत्संयोगाऽभावरूपफ-लाश्रयतया कूपस्येप्सितत्वमस्त्येवेति प्रघट्टकेन ईप्सितशब्दो यौगिक इति सूचितम् । एकदे-श्याह–"इहाग्नेर्माणवकं वारयतीति माणवकेऽपादानसंज्ञा प्राप्नोति"? सिद्धान्त्याह–"कर्म-संज्ञा बाधिका भविष्यतीति" । ईप्सितमात्रे सावकाशा अपादानसंज्ञा परत्वादीप्सिततमस्य कर्मसंज्ञया बाध्यत इति भावः । करणाकाङ्क्षा–सन्प्रकृतेराप्नोतेः करणाकाङ्क्षा । मानाभावादिति । यथा–'सोमेन यजेत'इत्यत्र भावनायाः करणाकाङ्क्षायामुपस्थितत्वात्फलांशस्य करणत्वेना-ऽन्वयो भवति तथा प्रकृतेऽपि कारकाधिकारात्कर्तृग्रहणस्य सूत्रे सत्त्वाच्च कर्तृकारकवृत्ति-

भावप्रकाशः ।

पाश' इति रघुपद्येऽपि तथैव बोध्यम् । एवञ्च सम्बन्धमात्रमत्राप्तिर्न तु व्याप्तिरेव । सा चावच्छेदकाव-च्छेदेन सम्बन्धः, 'सेनया ग्रामो व्याप्त' इत्यादौ तथैव प्रतीतेरिति भावः । कर्तुरुपात्तत्वादाह—कर-णेति । सन्प्रकृतयाऽऽप्नोतेः करणाकाङ्क्षेत्यर्थः । यथा–"सोमेन यजेत"इत्यादौ भावनायाः करणाकाङ्-क्षायां समानपदोपात्तत्वाद्यागस्यैव करणत्वेनान्वयो न पदान्तरार्थसोमादेस्तथाऽत्र भिन्नपदोपात्तत्वेऽप्येकसू-त्रोपात्तक्रियाया एवेति भावः । यत्तु, कर्मत्वादीनां शब्दविशेषोपाधिकत्वात्कारकाधिकाराच्च केनाप्तुमिष्ट-मित्याकाङ्क्षायां प्रकृतधातूपात्तव्यापारेणेत्यर्थाल्लभ्यते । तथा च "अनुग्वलं गामी" इति सूत्रस्य मूलो-क्तरीत्या सङ्कोचे मानाभावाच्च विक्लित्यनुकूलव्यापारेण संपूर्णधात्वर्थेन यदीप्सितं तण्डुलादि तदेव कर्मसंज्ञं भवतीति सूत्रार्थ इति फलस्य न कर्मत्वमिति कश्चित्; तन्नेति ध्वनयन्नाह मूले–विशेषणीभू-तेनेति । प्रकरणाच्छ्रुतेर्बलीयस्त्वेन फलान्यव्यापारस्यैव कर्तृशरीरे विशेषणतया प्रविष्टत्वेन तस्यैव कर-णत्वेनान्वय उचित इति मान्याः । तदेतद् ध्वनयन्व्याचष्टे—कर्तृपदार्थेति । प्रकृतसूत्रोक्तकर्तृपदार्थ-विशेषणीभूतक्रियायाः फलानवच्छिन्नत्वेनैवोपस्थित्या तस्या एव करणत्वमिति भावः । तत्र हेतुमाह—उपस्थितमिति । प्रकरणाच्छ्रुतेरित्यनेन समानार्थोऽयं न्यायः । तथाचाधिकारप्राप्तकारकपदलभ्योक्तार्थ-स्य बहिरङ्गत्वादेकसूत्रोपात्तकर्तृपदलभ्यस्य तस्यान्तरङ्गत्वेन प्राबल्यात्तत्कल्पनं न्याय्यमिति भावः । एतेन कर्तृग्रहणं व्यर्थम्, ईप्सितेत्यनेन तदाक्षेपात् । वारणार्थानामित्यादाविव प्रत्यासत्त्या प्रकृतधात्व-र्थद्वारकसम्बन्धेनैव यत्क्रिययेप्सितं तस्यैव कर्मत्वे न माषादावतिप्रसङ्ग इति तदर्थमपि तन्मास्तु

शब्दरत्नम् ।

भावः । लभ्यते इति । एवंचेप्सितपदेन कर्तृव्यापारप्रयोज्यफलाश्रय उच्यते ।

भैरवी ।

व्यापारस्यैव तथान्वय इति प्रकृतधात्वर्थप्रधानीभूतव्यापारलाभ इति भावः । ईप्सितपदेनेति । ननु सूत्रस्थकर्तृपदेनेति पूर्वोक्तरीत्या वक्तव्ये ईप्सितपदेनेति पूर्वविरुद्धमिति चेत् ? न, यथा—"वारणार्थानामीप्सितः" इति सूत्रे कर्तृपदाभावेऽपि कर्मणि क्तप्रत्ययस्येप्सित इत्यत्र सत्त्वात्कर्मणः कर्तृव्यापारजन्यफलाश्रयत्वज्ञानसत्त्व एव तदुपपत्तिरित्यध्याहारेण कर्तुर्लाभस्तथा प्रकृतसूत्रेऽपीप्सितपदेनैव विवक्षितार्थस्य लाभे कर्तृग्रहणं स्पष्टार्थमिति ध्वननायेत्थमभिधानात् । ननु "वारण" इति सूत्रे वारणेत्यस्य विशेषत उपादानात्तदर्थभूतो यः प्रधानीभूतो व्यापारस्तत्प्रयोज्यफलाश्रयस्यैव लाभाद्यवानामेवेप्सितपदेन ग्रहणमिति तेषामेवाऽपा-

भावप्रकाशः ।

इत्यपारतम् । एवं च कर्त्रा स्वनिष्ठव्यापारे सम्बन्धुमिष्यमाणमित्यर्थः । सम्बन्धश्चात्र जन्यतारूपो जन्याश्रयतारूपश्च । इष्यमाणत्वं च तथाव्यापारोद्देश्यत्वमेव सना गर्भितम् । इदं च साक्षात्फलरूपधात्वर्थे, क्रियायाः फलेच्छापूर्वकेच्छाविषयत्वात् । तदाश्रयत्वात्तण्डुलादीनामपि तत्त्वम् । एवं च कर्त्रा स्वनिष्ठव्यापारजन्यफलेन सम्बन्धुमिष्यमाणमित्यर्थः फलितः । जन्यत्वं चात्र जन्यतज्जन्यसाधारणम् । अत एव चैवं ग्रामस्य कर्मत्वम् । फलसम्बन्धश्चाश्रयता । तत्फलितमाह—एवं चेति । आप्यर्थसम्बन्धस्य कर्तृपदार्थविशेषणीभूतव्यापारद्वारकत्वाङ्गीकारे चेत्यर्थः । ईप्सितेति । अस्य कर्तुरित्येतत्सहितेनेत्यादिः ।

यद्वा—"वारणार्थानामीप्सितः" इत्यादौ यथा कर्मत्वानुपपत्त्या अध्याहारेण कर्तुर्लाभस्तथा प्रकृतेऽपि इति तद्वैयर्थ्यध्वननाय तावन्मात्रमुक्तम् । अध्याहृतेन तेनैव करणाकाङ्क्षानिवृत्तिः, अत एव प्रथमोपस्थितत्वेन तस्याऽन्तरङ्गत्वम् । अत एवोपस्थितमित्येवोक्तं न तु प्रकरणाच्छ्रुतेरिति । तस्य क्रियाशब्दत्वलाभोऽपि उक्तप्रकारान्तरेण सिद्ध इति नैतदर्थं तदिति न पूर्वोत्तरविरोधः ।

ननु 'माषेष्वश्वं बध्नाति' इत्यादौ अतिव्याप्तिवारणाय स्वतन्त्रकर्तृसंज्ञकलाभाय तदावश्यकं, न चैवं शत्रूनितिप्रतीके वक्ष्यमाणमूलविरोधापत्तिरिति वाच्यम् ? स्वातन्त्र्यं च धातूपात्तव्यापाराश्रयत्वमेवेत्यनेनैव तत्र समाधानस्य तेनैवोक्तत्वात्, प्रयोजककर्तृव्यापारप्रयोज्यसंयोगरूपफलाश्रयत्वेन स्वर्गादेः कर्मत्वस्योपलक्षणत्वाभावेऽपि सिद्धत्वाच्च, उत्तरपदार्थप्रधानस्तत्पुरुष इत्यादिवद्गौणपूर्विककर्तृत्वमादाय ण्यन्ते कर्तुरितिभाष्योपपत्तेश्च, णिजुत्पत्तेः प्रागेव स्वर्गादीनां कर्मत्वप्रवृत्तेश्च, तदा कर्तृत्वसत्त्वात् "अकृत" इति तु नास्त्येवेति चेत् ? न, प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वमीप्सिततमत्वमित्यस्य वक्ष्यमाणत्वेनाऽतिव्याप्तेरभावात् । अत एवात्र 'ईप्सितपदेन' इत्येवोक्तं न तु तमान्तेन । फले धात्वर्थत्वनिवेशात्पुष्ट्यर्थमेव माषक्षेत्रे यदा अश्वं बध्नाति तदापि न कर्मत्वम् । एतेन 'स्वार्थाद्धीयते' इत्यत्र कर्तुरुपादानत्वेऽपि कर्मणि लकारसिध्यर्थं सूत्रे स्वतन्त्रलक्षकं तदावश्यकमिति सम्प्रदानसंज्ञासूत्र-

सरला ।

उच्यते इति । आप् धातोः सम्बन्धार्थः, सच फलाश्रयत्वरूपः, सनर्थ इच्छा, क्तप्रत्ययः कर्मणि, तदर्थो विषयता 'सविषयकधातुसमभिव्याहारे कर्मप्रत्ययार्थो विषयता' इति नियमात् । सा च विषयता उद्देश्यतारूपा इच्छार्थकधातुसमभिव्याहारे नियतेति कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यः कर्म इति फलितम् ।

अत्र फलाश्रयता फलतावच्छेदकसम्बन्धेनैव विवक्षिता । सच सम्बन्धः कर्तृसमवेतेच्छीयफलनिष्ठविषयतावच्छेदक एव गृह्यते नतु फलनिष्ठकार्यतावच्छेदकः । अन्यथा कालिकसम्बन्धेन फलोत्पत्तौ तादात्म्येन कालस्य कारणतया कालिकसम्बन्धस्य फलतावच्छेदकतापत्त्या 'कालं पचति' इति प्रयोगापत्तेः । मम तु 'तण्डुलं पचति' इत्यादौ 'समवायेन विक्लित्त्याश्रयस्तण्डुलो भवतु' इत्याकारकेच्छया कर्तुः पाके प्रवृत्तेः कर्तृसमवेतेच्छीयफलनिष्ठविषयतावच्छेदकत्वस्य समवाये एव सत्त्वेन समवायसम्बन्धेन फलाश्रयस्यैव पचधातुप्रयोगे कर्मत्वं नतु कालिकादिना फलाश्रयस्येति नोक्तदोषः ।

शब्दरत्नम्

यथा—'तण्डुलं पचति' इति । फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात्कर्मत्वम् ।

भैरवी ।

दानसंज्ञा न त्वाक्षिप्तकर्तृपदार्थसामान्यस्य यो व्यापारस्तत्प्रयोज्यफलस्य । अन्यथोत्तरदेशनिष्ठसंयोगानुकूलव्यापारवतो गवादेर्यथा 'यवेभ्यो गां वारयति'इत्यादौ कर्तृत्वसत्त्वात्तन्निष्ठव्यापारजन्यफलाश्रययवादीनामपादानत्वप्रसक्तिः, तथा वारणकर्तुरप्याक्षिप्तकर्तृपदार्थतया तद्वृत्तिव्यापारजन्यफलाश्रययवादीनामप्यपादानत्वं स्यात्, भक्षणादिफलानुकूलव्यापारवत्त्वेन यथा गवादीनां कर्तृत्वं तथा परावृत्त्यादिफलानुकूलव्यापारवत्त्वाद्वारयितुरपि, परावर्तयतीत्यत्र कर्तृत्वदर्शनात्; तथा प्रकृतसूत्रे न धात्वर्थविशेषोपादानमिति 'माषेष्वश्वम्बध्नाति' इत्यादौ गलाधः संयोगानुकूलव्यापारवतोऽश्वस्यापि आक्षिप्तकर्तृपदार्थतया तन्निष्ठव्यापारजन्यफलाश्रयमाषाणामपि कर्मत्वापत्तेर्वारणायाऽन्यानधीनस्य कर्तुरेव कर्तृपदेन ग्रहणार्थं कर्तृपदमस्त्विति चेत्? न, प्रकृतसूत्रे प्रकर्षार्थकतमप उपादानात् प्रकृतधात्वर्थप्रधानीभूतव्यापारवत एवाक्षिप्तकर्तृपदेन लाभसम्भवात् । एवञ्च माषेष्वश्वम्बध्नातीत्यत्र प्रकृतधातुर्बन्धधातुस्तदर्थो देशान्तरसञ्चारविरोधिशङ्क्वादिसंयोगानुकूलव्यापारस्तदाश्रयचैत्रादेराक्षिप्तकर्तृपदार्थत्वमिति । कर्तृव्यापारप्रयोज्यफलाश्रय इति । अत्र प्रयोज्यत्वनिवेशस्य फलन्तु न साक्षात्प्रधानीभूतव्यापारजन्यफलस्यैव ग्रहणङ्किन्तु तज्जन्यजन्यस्यापि ग्रहणमिति सूचनाय । तेन यत्र माषभक्षणेन पुष्टिर्जायतामितीच्छया माषक्षेत्र एवाश्वस्य बन्धनन्तत्रापि माषेष्वश्वम्बध्नातीति प्रयोग इष्यते । अत्र प्रकृतधातुर्बन्धधातुस्तदर्थव्यापारप्रयोज्यम्फलङ्गलाधः संयोगोऽपि तदाश्रयत्वान्माषाणामपि कर्मत्वापत्तिः, अतः फलेऽपि प्रकृतधात्वर्थत्वन्निवेशनीयमिति ध्वननमेव । एवञ्च प्रकृतधात्वर्थव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयस्यैवेप्सिततमपदेन ग्रहणमिति तदाश्रयस्यैव कर्मसंज्ञा भवति । न चोक्तरीत्या फले प्रकृतत्वनिवेशनस्य प्रयोज्यनिवेशे एव चेत्सार्थक्यं तदा प्रकृतधात्वर्थजन्यत्वमेव निवेश्यताम्, फले प्रकृतत्वं त्यज्यतामिति वाच्यम्? भाष्यपठितदुहादिभिन्नानान्द्विकर्मत्वस्याऽनुपपत्तेः । व्यापारद्वयार्थकत्वेनैव तेषान्तत्त्वस्योपपादनीयत्वात् । अत एव "दुहिपच्योर्बहुलं सकर्मकयोः" इति "सृजियुज्योः श्यंस्तु" इत्यस्योपपत्तिरिति । तत्र दृष्टान्तमाह—यथा तण्डुलम्पचतीति । अत्र प्रकृतो धातुः पचिति तदर्थः पूर्वकालास्थितरूपादिनिवृत्तिपूर्वकरूपाद्यन्तरोत्पत्तिरूपफलानुकूलव्यापार इति प्रधानव्यापारप्रयोज्यप्रकृतधात्वर्थतादृशरूपाद्यन्तराश्रयत्वात्तण्डुलानाङ्कर्मता । तण्डुलपदञ्च तण्डुलावयवे लाक्षणिकम् । 'घटम्पचति' इत्यादौ तु पिठरपाकवादिमते घटपदङ्घटपरमेव, पीलुपाकवादिमते तु घटावयवे लाक्षणिकम् । 'भूतानि कालः पचति' इत्यादौ वैलक्ष्यनिष्पत्त्यनुकूलव्यापारः पच्धात्वर्थ इति यथायथमूहनीयम् । नन्वेवन्तण्डुलपदार्थे कर्मत्वसिद्धावपि स्तोकम्पचतीत्यादौ स्तोकादेन तादृशफलाश्रयत्वमिति कथन्तेषाङ्कर्मत्वसिद्धिः । न च स्तोकपदार्थेऽभेदेन फलवत्त्वसत्त्वात्तस्यादेव कर्मत्वमिति वाच्यम्? फलतावच्छेदकसम्बन्धेन फलाश्रयस्यैव कर्मत्वात् । अन्यथा पर्वतस्यापि कालिकसम्बन्धेन विक्लित्त्याश्रयत्वात् 'पर्वतम्पचति' इत्याद्यापत्तेः । फलतावच्छेदकसम्बन्धश्च प्रकृते समवाय एवात आह—फलस्यापीति । स्वज्ञान-

भावप्रकाशः ।

स्यकैयटः परास्तः; उक्तलक्षणेन तत्रापि सिद्धत्वात् । ध्वनितं चेदं "वारणार्थानाम्" इत्यत्र भाष्ये, स्फुटीभविष्यति चेदमग्रे इति दिक् । तथाच कर्त्रा स्वनिष्ठव्यापारजन्यफलेन सम्बन्धुमिष्यमाणमित्यर्थः फलितः । तत्र जन्यत्वं जन्य-: तज्जन्यजन्यसाधारणं, फलसम्बन्धश्चाऽऽश्रयता, तदाह — कर्त्रिति । तल्लक्ष्यमाह — यथेति । देवदत्तनिष्ठव्यापारजन्यविक्लित्त्याश्रयत्वादिति भावः । नन्वेवमपि 'स्तोकं पचति' इत्यादौ न स्यात् तदनाश्रयत्वात् । कालिकादिसम्बन्धेनाऽतिव्याप्तिवारणाय फलतावच्छेदकसम्बन्धविशेषनिवेशस्यावश्यकत्वात्सामानाधिकरण्यस्य तदनवच्छेदकत्वादत आह — फलस्यापीति । क्रियायाः फलेच्छापूर्वकेच्छा-

येनोपस्थितं वर्तमानत्वं नेह विवक्षितम्। तेन 'कटं कृतवान्' 'कटं करिष्यति' इत्यादि सिद्ध्यति। कारकमिति। एतच्च "कारके" इत्यधिकाराल्लभ्यते। तत्र हि व्यत्ययेन प्रथमार्थे सप्तमी। प्रतिसूत्रं वाक्यं भित्त्वा कारकसञ्ज्ञा विधीयते। तद्यथा—अपाये ध्रुवं कारकसंज्ञं स्यात्। ततः "अपादानम्" उक्तं कारकमपादानसंज्ञं

शब्दरत्नम्।

अत एव तत्समानाधिकरणे शोभनं पचतीत्यादौ कर्मत्वसिद्धिः। **वाक्यं भित्त्वेति**। योगविभागेनेत्यर्थः। **सञ्ज्ञा विधीयते इति**। तदुक्तं भाष्ये "किमिदं कारक इति ? सञ्ज्ञानिर्देश इति"। वाक्यभेदं दर्शयति—**अपाये इत्यादिना**। नन्वेवमप्येकसञ्ज्ञाधिकारा-

भैरवी।

स्य क्रियोत्पत्तिप्रयोजकत्वात्फलस्य कारकत्वम्बोध्यम्। व्यपदेशिवद्भावेनेति। अत्र मानन्तु "ओजःसहोम्भसा वर्तते" इत्यतो वर्तते इति प्रकृते "तत्प्रत्यनुपूर्वमीपलोमकूलम्" इत्यनेन द्वितीयान्तेभ्यः प्रत्ययविधानमेव। अत एव 'प्रतीपं वर्तते प्रातीपिकम्' इति व्याख्यानं सङ्गच्छते। अत एव—फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात्कर्मत्वस्य स्वीकारादेव। एतेन "क्रियाविशेषणानां कर्मत्वम्" इति वचनमुक्तयुक्तिमूलकमेव न त्वपूर्वमिति बोध्यम्। एतच्च न सर्वदा किन्तु विवक्षाधीनम्। अन्यथा "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यत्र ज्योतिष्टोमपदात्तृतीयानापत्तिः स्यात्। मम तु धात्वर्थफलस्य व्यपदेशिवद्भावेन फलाश्रयत्वविवक्षा यदा तदा कर्मत्वं, यदा तु भावनाम्प्रति भावनाभाव्यनिर्वर्तकत्वरूपपारिभाषिककरणत्वविवक्षा तदा करणत्वस्य सत्त्वेन अभेदेन तदन्वय्यर्थवाचकात्तृतीया भवति। अत एव भाष्यकृता—"क्रियाविशेषणानाङ्कर्मत्वम्" इति वचनन्न पठितम्। अपूर्ववचनसत्त्वे तु तेन बाधस्य प्राप्तेस्तृतीयाया अनुपपत्तिः स्यात्। ननु वाक्यभेदेन संज्ञाद्वयविधानेऽपि संज्ञाद्वयसमावेशः कथमत आह—योगविभागेनेति। एतेन यदि योगविभागो न स्यात्तदा द्वितीयवाक्ये कारकस्योद्देश्यत्वाऽलाभः स्यात् 'नचैकयोगेऽनुवृत्तिर्भवति' इति न्यायादिति ध्वनितम्। "कारके" इति सप्तमी तु प्रथमार्थे इत्याशयः। तदुक्तम्—"कारके" इत्यस्य कारकसंज्ञाविधायकत्वमुक्तम्। एवमपि—

भावप्रकाशः।

विषयत्वास्सना गर्भितोद्देश्यत्वस्य साक्षात्फलरूपे धात्वर्थे एव सत्त्वात्कर्मत्वात्, तदाश्रयत्वात्तु तण्डुलादीनामपि तत्त्वम्। फलस्यापि क्रियाजनकत्वेन कारकत्वात्, तज्ज्ञानपूर्वकं क्रियोत्पादनादिति भावः। ननु तस्याऽप्रातिपदिकत्वेन द्वितीयाऽप्राप्त्या निष्फलं फलस्य कर्मत्वम्। न च तत्कर्मणि क्तादिसिध्यर्थं तत्, कर्तृसाहचर्येण धात्वर्थफलाश्रयरूपकर्मण एव तत्र ग्रहणात्। अत एव 'तृप्तिं पचति' इत्यादि न। प्रत्यासत्त्या प्रकृतधात्वर्थवाचककारकसम्बन्धस्यैव ग्रहणाच्चात आह—**अत एवेति**। तस्य कर्मकारकत्वादेवेत्यर्थः। **तत्समानेति**। "ज्योतिष्टोमेन यजेत" इत्यादौ यागस्य भावनाकरणत्वे तस्याप्रातिपदिकत्वात्ततस्तृतीयाभावेऽपि तत्समानाधिकरणज्योतिष्टोमादिपदाद्यथा तृतीयोत्पत्तिस्तद्वदित्यर्थः। एतेन 'क्रियाविशेषणानां कर्मत्वं तेभ्यो द्वितीया वा वक्तव्या' इति वचनात् द्वितीयेति नैयायिकाद्युक्तमपास्तम्, ज्योतिष्टोमेनेत्याद्यसिद्ध्यापत्तेः तादृशवचनस्य मुनित्रयोक्तस्यानुपलम्भाच्चेति भावः। ननु एकोद्देशेनोभयविधाने तन्त्रेतरोक्तवाक्यभेदवत् तथाङ्गीकारे समावेशसिद्धिर्न स्यादत आह—**योगेति**। अत एवाऽऽद्ये संज्ञिलाभः। अन्यथा "कारके" इत्यत्र सञ्ज्ञानिर्देशाद्वाक्यार्थाभावेनोत्तरत्रानुवृत्तावप्युभयोर्विशिष्टस्य वा सहविधावुद्देश्यविधेयभावेनान्वयाभावेनेष्टासिद्धिरेवेति भावः। समूलत्वाय सम्मतिमाह—**तदुक्तमिति**। **वाक्यभेदमिति**। योगविभागेनेति भावः। **एवमपि**—योगविभागेन सूत्रद्वयेन सञ्ज्ञाद्वयविधानेऽपि।

सरला।

**व्यपदेशिवद्भावेनेति**। आश्रयत्वस्यापि घटितत्वघटकत्वयोरिव तेनातिदेशादिति भावः। वस्तुतस्तु फलोत्पत्त्यनुकूलव्यापारः पचादेरर्थ इति स्वीकारेण उत्पत्त्याश्रयत्वात्फलस्य कर्मत्वसिद्धिरिति बोध्यम्।

### शब्दरत्नम् ।

त्पर्यायापत्तिः।न च क्रियाजनकानां सञ्ज्ञिनामाक्षेपेण तेषां योगविभागानुवृत्तिभ्यां विनाऽपि कारकसञ्ज्ञाविधानेन पर्याये सिद्धे योगविभागेनानुवृत्त्या प्रतिवाक्यं सञ्ज्ञाविधानं समावेशार्थमिति वाच्यम् ? आक्षेपे क्रियाजनकमात्रस्य सञ्ज्ञापत्तौ 'नटश्रुतम्' इत्यादौ

### भैरवी ।

योगविभागेन संज्ञाद्वयविधानेऽपि । प्रथमवाक्ये ध्रुवमित्यस्योपादानं संज्ञिनिर्देशार्थम् । पर्यायापत्तिरिति । कारकसंज्ञयेत्यादिः । परोक्तं संज्ञाद्वयसमावेशप्रकारन्दूषयति–न चेत्यादिना । अयं हि तेषाम्भावः—व्यत्ययेन कारके इति सप्तमी प्रथमार्थे एव । तथाच कारकमित्येवैकं वाक्यं, तत्र संज्ञिलाभस्त्वाक्षेपादिति । इयं च सञ्ज्ञाऽन्वर्था—करोतीति कारकम् , निर्वर्तयतीत्यर्थः । निर्वर्तनञ्च साध्यत्वेन प्रतीयमानक्रियाया एवेति क्रियावाचकपदाक्षेपो भविष्यति । द्रव्यगुणयोः पदान्तरसमभिव्याहारेणैवार्थिकसाध्यत्वस्य प्रतीतिर्मनसा भवति , क्रियायास्तु शब्दतः साध्यत्वस्य प्रतीतिरिति विशेषः । तथाच क्रियाजनकमित्यस्य चाऽऽक्षेपाल्लाभ इति । योगविभागेनेति । "ध्रुवमपाये" इति योगविभागेनेत्यर्थः । अनुवृत्त्या—कारके इत्यस्याऽनुवृत्त्या । आक्षेपे—महासंज्ञाबलादाक्षेपे । नटश्रुतमित्यादाविति । अत्र नटशब्दात्कारकवाचकादपि

### भावप्रकाशः ।

पर्यायेति । समावेशाभावेनेत्यादिः । वचनद्वयसामर्थ्यादिति भावः। आक्षेपेणेति । 'कारके' इति सूत्रे महासञ्ज्ञाकरणबलादिति शेषः। अयं भावः—उक्तहेतोरन्वर्थेयं सञ्ज्ञा–करोति निर्वर्तयतीति कारकमिति । साध्याकाङ्क्षायां क्रियाया एव शब्दतः साध्यत्वेन प्रतीतिः, क्रियैव च तत्त्वेन सम्बध्यते न तु द्रव्यादिः, करोत्यादिपदान्तरसमभिव्याहारे एव तस्य तथा प्रतीत्या शब्दात्तथाऽप्रतीतेः। तथाच क्रियानिर्वर्त्तकमुद्दिश्य "कारके" इत्यनेनैव सञ्ज्ञा क्रियते न तु विभक्तैकवाक्यतया, महासञ्ज्ञाकरणसामर्थ्यादिति । "ध्रुवमपाये" इति योगविभागं कारकपदानुवृत्तिं च विना उत्तरत्रानुवृत्तावपि सूत्रद्वयसामर्थ्यात् पर्याये सिद्धे "ध्रुवमपाये" इति योगविभागेन तत्र कारके इत्यनुवृत्त्या च प्रतिवाक्यं कारकसञ्ज्ञाविधानसामर्थ्यात्समावेशार्थम् अवश्यमन्वर्थत्वं त्वयापि स्वीकर्त्तव्यम् । अन्यथा ग्रामस्य समीपादायातीत्यादावतिप्रसङ्गः कारकादिसञ्ज्ञानामिति । एतेन सञ्ज्ञिनामनुपादानात्कथं तेन सञ्ज्ञाविधानमित्यपास्तम् । योगविभागेनेति । प्रतिवाक्यत्वे हेतुः । अनुवृत्त्येति । सञ्ज्ञाविधाने हेतुरिति बोध्यम् । आक्षेपे इति । महासञ्ज्ञया अन्वर्थत्वेनेति भावः । मात्रशब्दः कात्स्न्र्ये । विशेषसञ्ज्ञाविनिर्मुक्तस्यापि तस्येत्यर्थः । सञ्ज्ञापत्तौ—कारकसञ्ज्ञापत्तौ । नटश्रुतमिति । केवलात् अन्तर्भावितण्यर्थाद्वा श्रुधातोः "क्तिच्क्तौ च सञ्ज्ञायाम्" इत्यनेनाशिषि सञ्ज्ञायां भावे कर्मणि वा क्तः । स च निष्ठान्तस्य द्व्यचः सञ्ज्ञायामादिरुदात्तो न त्वाकार इत्यर्थकेन "निष्ठा च द्व्यजनात्" इत्यनेनादिरुदात्तः । ततो गीतद्वारा नटस्य श्रुतिजनकत्वेन कारकत्वेऽपि "न लोक" इति निषेधाद् विशेषसञ्ज्ञाया अभावात्कारकषष्ठ्यभावे सम्बन्धित्वेन विवक्षायां नटस्य श्रुतं नटश्रुतमिति शेषषष्ठीसमासः । तत्र कारकसञ्ज्ञायां सत्यां "समासस्य" इति प्राप्तमन्तोदात्तत्वं बाधित्वा एभ्यः परं कृदन्तप्रकृतिकमुत्तरपदं प्रकृतिस्वरं स्यादित्यर्थकेन

### सरला ।

मूले कटं करिष्यतीत्यादि सिध्यतीति । पाणिनिना यस्मिन्काले ईप्सितपदं प्रयुक्तं तत्कालात् प्राक् परो वा यो यः कालस्तद्वृत्तिक्रियाबोधतात्पर्येणोच्चरितकृधात्वर्थक्रियाजन्योत्पत्तिरूपफलाश्रयस्य कर्मसंज्ञेत्यर्थो वर्तमानत्वाविवक्षायां सिध्यतीत्यर्थः । तथाच तादृशकालवृत्तिक्रियाबोधतात्पर्येण 'कटं करोति' इति प्रयोगोऽपि सिध्यति । अत्रेदं बोध्यं—क्तप्रत्ययोपात्तवर्तमानत्वस्याविवक्षितत्वे 'वर्तमानार्थबोधतात्पर्येणोच्चरितक्तप्रत्ययोगे षष्ठी' इत्यर्थकस्य "क्तस्य च वर्तमाने" इति सूत्रस्याप्राप्त्या 'कर्तुः' इत्यत्र कथं षष्ठीति ? अत्रोच्यते, 'वर्तमानत्वं नेह विवक्षितम्' इत्यस्य कर्मपदवाच्यतावच्छेदकत्वेन पाणिनितात्पर्यविषयो नेत्येवार्थो नतु ईप्सितपदजन्यबोधीयविषयतावच्छेदकत्वेन पाणिनितात्पर्यविषयो नेति । तेन नोक्तदोषप्रसङ्गः ।

स्यात्। पुनः कारकशब्दानुवृत्तिसामर्थ्यात् विशेषसञ्ज्ञाभिः सह समावेशः।

शब्दरत्नम्।

स्वरवारणाय "कारकाद्दत्त" इत्यादौ स्वरितपाठाद्याश्रयणेऽधिकगौरवादित्यत आह—पुनः

भैरवी।

सम्बन्धसामान्यविवक्षायां षष्ठीङ्कृत्वा षष्ठीसमासः। कर्तरि षष्ठी तु न. नटशब्दात् "न लोक" इति निषेधात्। श्रुतशब्दो हि नटेन श्रावितमित्यर्थविवक्षयाऽन्तर्भावितण्यर्थाच्छ्रुधातोः "क्तिच्क्तौ च संज्ञायाम्" इत्यनेन गोतरूपे कर्मणि विवक्षिते कर्मक्तान्तो "निष्ठा च व्यजनात्" इत्यनेन निष्ठान्तस्य व्यच आकारभिन्न आदिरुदात्त इत्यर्थकेनाऽऽद्युदात्तः। स्वरवारणायेति। "समासस्य" इत्यन्तोदात्तत्वबाधक "गतिकारक" इति कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्ते प्राप्ते तम्बाधित्वा "कारकाद्दत्तश्रुतयोरेवाशिषि" इत्यनेन आशिषि संज्ञायान्दत्तश्रुतयोरन्त उदात्त इत्यर्थकेनाऽन्तोदात्तत्वम्प्राप्तं तद्वारणायेत्यर्थः। स्वरितपाठेति। कारकशब्दस्य स्वरितस्य पाठ आश्रयणीय इत्यर्थः। न च कारकशब्दे "लिति" इति सूत्रेणाऽऽकारस्य स्थाने उदात्ते तदेकवाक्यतापन्नशेषनिघातेन रेफाऽकारस्यानुदात्तत्व "उदात्तादनुदात्तस्य" इत्यनेन स्वरितत्वन्तस्य भवत्येवेति कथमेतद्दोषावसर इति वाच्यम्? "स्वरितेनाधिकारः" इतिसूत्रघटकं स्वरितपदञ्च "समाहारः स्वरितः" सूत्रबोध्यपरम्, किन्तु दोषविशेषपरम्, तादृशदोषविशिष्टरकारघटितस्य कारकशब्दस्य पाठः कार्य इत्याशयात्। आदिपदेन अधिकः कारोऽधिकारः, स च कारकाधिकारायाऽपादानादिसंज्ञाप्रवृत्तिरूपो यत्रास्ति तस्य ग्रहणङ्कार्यमित्येवंरूपस्तस्यान्यत्राश्रितस्य परिग्रहः। कारकत्वन्तु नटशब्दार्थेऽस्त्येव, "आख्यातोपयोगे" इति

भावप्रकाशः।

"गतिकारकोपपदात् कृत्" इत्यनेनोत्तरपदाद्युदात्तत्वं प्राप्तं बाधित्वा "थाथघञ्" इति प्राप्तमुत्तरपदान्तोदात्तत्वं बाधित्वा प्राप्तम् "अनाचितादीनाम्" इत्यस्य नियामकेन कारकात्परयोर्दत्तश्रुतयोरेवाशिषि सञ्ज्ञायामन्त उदात्तः स्यादित्यर्थकेन "कारकाद्दत्तश्रुतयोरेवाशिषि" इत्यनेन प्राप्ताऽन्तोदात्तत्ववारणायेत्यर्थः। नन्वत्रासत्यां कारकसञ्ज्ञायां 'समासस्य' इत्यन्तोदात्तत्वेन भाव्यम्, सत्यामपि तस्यां प्रागुक्तरीत्या अन्तोदात्तत्वेनैवेत्यविशेषान्नात्र दोषोऽत आह—आदाविति। अनेन नटश्रवणं नटश्रुतिरित्यादिपरिग्रहः। अत्र हि "थाथ" इत्यादीनामप्राप्त्या लित्वनित्त्वाभ्यामाद्युदात्तत्वेन "गतिकारक" इति प्रकृतिस्वरप्राप्त्या स्वरे विशेषस्य स्पष्टत्वादिति भावः। अत्र पक्षे स्वरवारणायेत्यस्योत्तरपदप्रकृतिस्वरवारणायेत्यर्थः। ननु एवं सति 'कारकाद्दत्त' इत्यत्र न दोषोऽत आह—आदाविति। अनेन "गतिकारकोपपदात्कृत्" इत्यादिपरिग्रहः। आदिपदघटितमूलकैयटयोरप्ययमेवाशयः। पाठादीति। आदिना आवृत्त्यादिपरिग्रहः। अधिकगौरवादिति। ननु गौरवादित्येव वाच्येऽधिकेत्यधिकमिति चेत्? अयं भावः—आक्षेपाऽपेक्षया योगविभागानुवृत्त्योरेव लघुभूतत्वादेकं गौरवं तत्स्वीकार एव। किञ्च समस्ते तथाऽन्वयेऽपि घटम् इत्यादाविवैकासमस्तपदोपस्थाप्ययोरर्थयोरुद्देश्यविधेयभावेनाऽन्वयस्याव्युत्पन्नत्वात्तदङ्गीकारे च द्वितीयं गौरवम्। तथा सति नटश्रवणमित्यादावपादानत्वाद्यविषये कारकसञ्ज्ञायाः सावकाशत्वेन विशेषसञ्ज्ञाविषये ताभिर्बाधे प्राप्ते तद्वारणाय योगविभागानुवृत्तिभ्यां प्रतिवाक्यं सञ्ज्ञाविधानं पर्यायार्थमेव स्यान्न समावेशार्थमिति तथापि महोत्याश्रयणमिति तृतीयं गौरवम् उक्तरीत्या स्वरिताद्याश्रयणं चतुर्थं गौरवं चेति। एतेन ननु "ध्रुवमपायेऽपादानम्" इति सूत्रे कारकपदानुवृत्तिसामर्थ्यादेव सिद्धौ कृतं योगविभागेनेति चेन्न, कारकपदानुवृत्तौ मानाभावात्। "अपादानम्" इति सूत्रे हि विनिगमनाविरहात्सर्वपदानुवृत्तावौत्तरकालिकी सामर्थ्यकल्पनोचितैव। किञ्च "ध्रुवमपायेऽपादानम्" इत्यत्र तदनुवृत्तिः पर्यायार्था स्यात्। न च "कारके" इति सूत्रेण महासञ्ज्ञाकरणबलात् क्रियान्वयिनामाक्षेपेणापादानादीनां कारकसञ्ज्ञाविधानसामर्थ्यात्पर्यायसिद्धावनुवृत्तिः समावेशार्थैव भविष्यतीति वाच्यम्? 'नटस्य शृणोति' इत्यादौ सावकाशत्वात्। अत एव दुह्यादिपरिगणनं चरितार्थम् "अकथितञ्च" इत्यस्य निर्विषयता च न। तथा च योगविभागं विनैवानुवृत्त्या पर्याये सिद्धे

भैरवी ।

**सूत्रे उपयोगग्रहणप्रत्युदाहरणपरत्वेनास्योपन्यासस्येदृशस्थले करणात् । तत्र हि—"उपयोगे किम्? नटस्य शृणोति" इत्युक्तम् । ननु कारकशब्दानुवृत्तिः 'गृहस्य द्वारादागतः' इत्यत्र गृहस्याऽपादानत्ववारणाय चरितार्था । किञ्च पुनः कारकेतिमूलात्तत्रैव पुनरनुवर्तमानस्याऽऽवृत्तिरित्यर्थः**

भावप्रकाशः ।

योगविभागकरणम् "अपादानम्" इति सूत्रे कारकमित्यस्यानुवाद्यत्वलाभार्थम् । असति हि योगविभागे सह विधानेनोद्देश्यविधेयभावेनान्वयो न स्यात्तदेतदाह—पुनरितीति मान्योक्तं प्राचामनुरोधेनेति ध्वनितम्, स्वरितत्वप्रतिज्ञाया एव तत्र मानत्वात्, अन्यथा अधिकारत्वानुपपत्तेः क्रियान्वयित्वं कारकत्वमित्यस्य खण्डनीयत्वाच्च, तत्र सावकाशत्वे प्रागुक्तशेषापत्तेश्च योगविभागेन कारकसञ्ज्ञाविधानेऽपि परिगणनसाफल्यस्य तत्सूत्रान्निर्विषयत्वस्य च सत्त्वाच्च, अत एव योगविभागं विना पर्यायासिद्धेश्च, उक्तदोषद्वयापत्तेश्चेति दिक् । एतेनोक्तरीत्या कैयटाद्युपपादितसञ्ज्ञापक्षे विशेषसंज्ञानिर्मुक्तं कारकं नास्तीति फलितम् तच्चिन्त्यम् "आख्यातोपयोगे" इत्यस्य 'नटस्य शृणोति' इत्यत्र विभक्त्यर्थद्वारा क्रियान्वयिनो नटस्य कारकत्वमभ्युपगच्छता भाष्यकृता सह विरोधात् । ततश्च 'नटश्रवणम्' इत्यत्र भाष्यसम्मतकृदुत्तरपदप्रकृतिस्वरानापत्तिः । यत्त्विहैव सूत्रे नटस्य न कारकत्वमित्युक्तं कौस्तुभे, तदेतेन निरस्तम्, "आख्यातोपयोगे" इत्यत्रोपयोगे किं नटस्य शृणोति "अकथितं च" इत्यत्र नटस्य शृणोतीत्यत्रातिप्रसङ्गनिवृत्तये परिगणनमित्येवंपरोत्तरकौस्तुभेन सह विरुद्धत्वाच्च । एतेन "अधीगर्थ" इति सूत्रे 'हरिस्मरणम्' इत्यत्र शेषकारकषष्ठीसमासयोः स्वरे विशेष इति "ज्ञोऽविदर्थस्य करणे" इत्याद्यष्टसूत्री स्वरार्थेति निष्कर्ष इति नव्याद्युक्तिर्निरस्ता । तस्मात्कारक इति लक्षणं चाधिकारश्च । एवं चोत्तरसूत्रेषु संज्ञिविशेषसमर्पणद्वारैकवाक्यतयैव कारकपदं सम्बध्यते न तु भिन्नवाक्यतया, फलाभावात्प्रमाणाभावाच्च । ततश्च वाक्यभेदाभावकृतं लाघवं नटस्येत्यादीनां कारकत्वं चास्मिन्पक्षे सिध्यति । अत एवासंज्ञात्वपक्षेण सह फलैक्यमप्यस्मिन्पक्षे सङ्गच्छते इति रत्नाकरोक्तमपास्तम्, उक्तदोषगणापत्तेः उपयोगग्रहणाभावे "आख्यात" इत्यनेन तत्पक्षे तद्रहितेऽपि संज्ञाया निष्प्रत्यूहत्वेन तद्भाष्यविरोधाभावाच्च, नटश्रवणमित्यादौ स्वरानिष्टत्वाच्च । एतेनेतरथः "आख्यातोपयोगे" इत्यत्रत्यश्च कौस्तुभः समर्थित इति तत्खण्डनस्यायुक्तत्वाच्च, एवमकथितमिति योगविभागेन परिगणनाभावपक्षे विधीयमानकारकसञ्ज्ञायाश्चेति विहितकर्मसञ्ज्ञासहितेऽपि निष्प्रत्यूहत्वेनाकथितं चेत्यत्रत्यकौस्तुभस्यापि युक्तत्वेन तत्खण्डनस्यापि तथात्वाच्च । अत एव तन्निष्कर्षस्यापि युक्तत्वेन तत्खण्डनस्यापि तथात्वाच्च, अस्य पृथग्लक्षणत्वे कारकसञ्ज्ञाया अतिप्रसङ्गापत्तेश्च, नटश्रवणमित्यादावदोषाय स्वरितपाठाद्याश्रयणे गौरवाच्च, असमस्तैकपदोपस्थाप्ययोरुद्देश्यविधेयभावासम्भवेन वाक्यार्थबोधासम्भवेन लक्षणत्वासम्भवाच्च । किञ्च अस्य लक्षणत्वे विशेषसञ्ज्ञानिर्मुक्ते सावकाशायास्तस्याः कारकसञ्ज्ञाभिः स्वविषये बाधप्राप्तेरेकसूत्रेऽनुवृत्तेः पर्यायार्थत्वस्यैव सत्त्वेन समावेशार्थं योगविभागस्यावश्यकत्वेन फलाभावात्प्रमाणाभावाच्चेत्युक्तेर्बाधितत्वाच्च, "कारक इति सञ्ज्ञानिर्देशश्चेत्संज्ञिनोऽपि निर्देशः इतरथा ह्यनिष्टप्रसङ्गो ग्रामस्य समीपादायाति" इति भाष्येण योगविभागेन समावेशस्यैव ध्वनितत्वाच्च । अन्यथा त्वन्मते सञ्ज्ञिनिर्देशे पृथग्वाक्यार्थाभावेन अग्रेऽनुवृत्तावपि तद्विध्यनङ्गीकारेणोद्देश्यत्वस्य सुतरामसम्भवेन च सूत्रमूकतापत्तेरेव वक्तुमुचितत्वेनातिप्रसङ्गाऽऽपादनस्य निर्दलत्वापत्तेः । ग्रामस्य समीपादायातीत्याद्यवच्छिन्नजनकस्य ग्रामादेर्विशेषसञ्ज्ञाव्यावृत्त्या कारकपदानुवृत्तश्चारितार्थ्याच्च, तथापि पर्यायस्यैव सिध्या समावेशाऽसिद्धेश्च, नटस्य क्रियाजनकत्वरूपकारकत्वस्येष्टत्वेऽपि तत्सञ्ज्ञाया अनिष्टत्वाच्च । अत एवात्र पक्षे कृत्रिमाकृत्रिमन्यायेन स्वराप्राप्त्या फलाभावाच्च पक्षान्तरेऽपि तत्र कर्त्रादिकषट्कग्रहणे प्रमाणस्याष्टसूत्री स्वरार्थेति निष्कर्षे वक्ष्यमाणत्वाच्च । एवं च न भाष्यादिविरोधो न वा स्वग्रन्थविरोधो न व्याख्यातृग्रन्थविरोधः । नन्वेवमपि 'पौराणिकाच्छृणोति' इत्यत्र पौराणिकोऽपादानं कारकं च, नटस्य शृणोतीत्यादौ नटस्तु नोभयमिति कौस्तुभविरोध इति चेन्न, उपयोगग्रहणसत्त्वेनोभयं न द्विसंज्ञाकमिति तदर्थात् । तदभावे तु एकसत्त्वेऽपि द्वयं नास्तीतिवत् द्विविधकारकत्वसत्त्वेऽपि उभयाभाववदित्यर्थादित्यलम् । ननु कारकशब्दानुवृत्तिः 'ग्रामस्य

शब्दरत्नम्

कारकेति। विभक्तेष्वपादानमित्यादिषु तदनुवृत्त्या तदनुवादेन विशेषसंज्ञाविधानादित्यर्थः।

भैरवी।

प्रतीयते स चाऽयुक्तः आवृत्तेर्व्यर्थत्वादत आह—विभक्तेष्वपादानेति। एतेन तस्य मूलस्य विभक्तेषु—पश्चादुच्चारितसूत्रेष्वित्यर्थ इति सूचितम्। तदनुवादेनेति। पूर्वसूत्रवदस्यापि कारकसंज्ञानिष्ठविधेयताशालिशाब्दबोधस्य जनकत्वेनेत्यर्थः। अपाये ध्रुवङ्कारकं सदपादानं स्यादित्येवं वचनकल्पनयेति तात्पर्यम्। तत्र कारकसंज्ञाया विहिताया एव पुनर्विधानेन तस्या अनुवादः सम्पद्यते, "वनोर च" इति सूत्रेण ङीब्रयोर्विधानेऽपि ङीबनुवादेनेति व्यवहारवत्। केचित्तु पूर्वसूत्रविहितसंज्ञाविशिष्टस्योद्देश्यत्वकल्पनेन तदनुवादेनेत्युक्तमिति, तन्न, एकसंज्ञाधिकारबाधापत्त्या पर्यायत्वापत्तेः। एवञ्च 'प्रकल्प्याऽपवादविषयम्' इति न्यायेनोद्देश्यतावच्छेदककारकसंज्ञावैशिष्ट्यमपवादतत्तत्संज्ञाविधानकाले प्रसिद्धमिति शङ्काया अवकाशोऽपि न। न चैवं सति योगविभागो न कार्यः, प्रथमार्थसप्तम्यन्तस्य "कारके" इत्यस्योत्तरसूत्रेष्वनुवृत्तिङ्कृत्वा 'अपाये ध्रुवङ्कारकं सदपादानम्' इति व्याख्यानङ्कार्यमिति समावेशो भविष्यतीति वाच्यम्? विधेयभेदे सति वाक्यभेदस्य सर्वतन्त्रप्रसिद्धत्वेन फलतो योगविभाग एव पर्यवसानमितीह योगविभागस्य कथनमित्याशयात्। उत्तरसूत्रे कारकशब्दानुवृत्तिसामर्थ्यात्समावेश इति तु न युक्तम्, ब्राह्मणस्य पुत्रम्पन्थानम्पृच्छतीत्यादौ क्रियानन्वयिनाम्ब्राह्मणादीनाम् "अकथितञ्च" इत्यनेन कर्मसंज्ञावारकत्वेन 'कारके' इति शब्दानुवृत्तेः सफलत्वात्। अत एव सर्वथाऽपादानत्वादीनां यत्राप्रसक्तिस्तत्र कारकसंज्ञाया "आख्यातोपयोगे" इति सूत्रे उपयोगपदोपादानेन सत्त्वात् "अकथितञ्च" इत्यनेन कर्मत्वम्प्राप्नोति इत्याशङ्क्य, दुह्यादिपरिगणनेन भाष्ये समाहितम्। उपयोगाभावादपादानत्वमपि न, तादृशमुदाहरणं नटस्य शृणोतीति।

यत्तु कैयटेन कारकसंज्ञायां विभक्तसूत्रेण सत्यस्य प्रयोजनं 'नटश्रुतम्' इत्युक्तम्। नटश्रुतिर्नटश्रवणमित्यनयोरुपलक्षणम्। अत्र हि कारकसंज्ञाया असत्त्वे "समासस्य" इत्यन्तोदात्तत्वं, सति तु तस्मिन् "गतिकारकोपपदात्कृत्" इत्युत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वमिति विशेषस्य स्पष्टत्वात्। उभयोरपि नित्स्वरलित्स्वराभ्यामाद्युदात्तत्वात्। नटश्रुतमित्येव तु न युक्तङ्कारकसंज्ञायाः सत्त्वेऽसत्त्वे वा तत्र विशेषस्याऽसत्त्वात्। तथा हि-तस्याः सत्त्वे "गतिकारकोपपदात्" इत्येतद्बाधकथाथादिस्वरेणान्तोदात्तत्वस्य सत्त्वात् तस्या असत्त्वे तु "समासस्य" इत्यन्तोदात्तत्वबाधकयोः कृदुत्तरपदप्रकृतिस्वरथाथादिस्वरयोरप्राप्तावन्तोदात्तत्वस्यैव प्राप्तेः। कैयटेन तु श्रुतेति समुदायस्य सञ्ज्ञात्वमाशीर्विषयत्वञ्चाभ्युपेत्य "कारकाद्दत्तश्रुतयोरेवाशिषि" इत्यन्तोदात्तत्वमपादानादिसञ्ज्ञाया विषये एव जायत इति च स्वीकृत्योक्तम्।

भावप्रकाशः।

समीपात्' इत्यादौ ग्रामादिष्वावृत्त्या चरितार्था। किं च पुनः कारकेत्यादिमूलस्याऽपाये ध्रुवमित्यत्रैव द्वितीयवारं तदनुवृत्तिसामर्थ्यादित्यर्थः प्रतीयते, स चायुक्तः, तत्र पुनस्तदनुवृत्तेर्निष्फलत्वात्। सकृदनुवृत्तया निराकाङ्क्षत्वेन तस्योद्देश्यतया विधेयतया वाऽन्वयासम्भवाच्चात आह—विभक्तेष्विति। एतेन पुनःशब्दस्य पश्चाद्भूते विभक्तसूत्रे इत्यर्थः सूचितः। तदनुवृत्तया—कारके इत्यनुवृत्तया। तदनुवादेन। कारकं सदपादानमितिरीत्येति भावः।

यत्तु कैयटादिदण्डयन्ताः समावेशफलं-'स्तम्बेरमः' इति। अत्राधिकरणत्वात् सप्तमी कारकत्वात् कृदुत्तरपदप्रकृतिस्वरश्च सिध्यति। अन्यथा "तत्पुरुषे तुल्यार्थ" इति पूर्वपदप्रकृतिस्वरः स्यात् स्तम्बकर्णयोरिति निर्देशात्प्रातिपदिकस्योपपदत्वेऽपि सप्तम्यन्तस्य तथात्वान्नोपपदस्वरेणान्यथासिद्धिः। नापि थाथादिस्वरेणान्तोदात्तत्वं शङ्क्यम्, अपा साहचर्येणैरच एव तत्रोपादानात् इति; तन्न, उपपदत्वादेव सिद्धेः, उपपदमिति महासञ्ज्ञया सुबन्तस्यैवोपपदताया उपपदसञ्ज्ञासूत्रे भाष्ये उक्तत्वात् त्वन्मतेऽपि पूर्वा

अन्वर्था चेयं संज्ञा—करोतीति कारकमिति । तेन क्रियाऽनन्वयिनो न भवति—ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति । इह हि ब्राह्मणः पुत्रविशेषणं न तु क्रियान्वयि ।

## शब्दरत्नम् ।

समावेशफलं तु 'ग्रामेवासः' इत्यादावधिकरणत्वात्सप्तमी, कारकत्वात्कृदुत्तरपदप्रकृतिस्वरश्चेति बोध्यम् । करोतीति । क्रियाञ्जनयतीत्यर्थः । तज्जनकं च प्रत्यासत्त्या तत्रैवान्वेति । क्रियाऽनन्वयिन इति । तदन्वयप्रयोजकतज्जनकत्वाभाववत इत्यर्थः । ब्राह्मणस्य पुत्र-

## भैरवी ।

त्तच्च "सञ्ज्ञायामनाचित" इति सूत्रात्सञ्ज्ञायामित्यनुवृत्तेः । वस्तुतस्तु तादृशसञ्ज्ञाया अप्रसिद्धतया तस्योदाहरणस्योपलक्षणत्वमेव युक्तमिति ध्येयम् ।

ग्रामेवास इति । "शयवास" इति सप्तम्या अलुक् । कृदुत्तरपदप्रकृतिस्वरश्चेति । अस्य "समासस्य" इत्यन्तोदात्तत्वबाधक "तत्पुरुषे तुल्यार्थ" इति पूर्वपदप्रकृतिस्वरबाधकस्य "गतिकारकोपपदात्कृत्" इतिसूत्रविहितकृदुत्तरपदप्रकृतिस्वरस्य प्राप्त्या वासशब्दस्य घञन्तत्वेन मध्योदात्तत्वमिति नार्थः, "गतिकारक" इत्येतद्बाधकस्य "थाथ" इति सूत्रस्य प्राप्तेः ; किन्तु कृदुत्तरपदप्रकृतिस्वरप्रवृत्तेर्निदानस्य कारकत्वस्य सत्त्वेन "थाथ" इत्यनेनाऽन्तोदात्तत्वमित्यर्थः, तत्रापि कारकादित्यनुवृत्तेः । न च "भीत्रार्थानाम्भयहेतुः" इत्यादावुक्तरीत्या योगविभागाऽसम्भवेन कथं सञ्ज्ञाद्वयसमावेश इति वाच्यम् ? तेषु कारकशब्दस्याऽऽवृत्त्याऽर्थाधिकाराद्वाक्यभेदेन सञ्ज्ञाद्वयसमावेश इत्याशयात् । क्रियामिति । स्वभावतः साध्यत्वेन प्रतीयमानाम्प्रधानीभूतव्यापारात्मिकक्रियामित्यर्थः । एवञ्च कारकस्य प्रत्यासत्त्या तत्रैवान्वय इत्याह—तज्जनकञ्चेति । ननु क्रियानन्वयिन इति मूलग्रन्थात् क्रियान्वयित्वङ्कारकत्वमिति प्रतीयते इति मूलविरोध इत्यत आह—तदन्वयेति । यदि क्रियान्वयित्वङ्कारकत्वं स्यात्तदा कारकाणां क्रियान्वयित्वमितिवाक्यस्योद्देश्यतावच्छेदकविधेययोरेकत्वेन 'घटो घट' इति वाक्यस्येवाऽबोधकत्वापत्तिरिति क्रियाजनकत्वङ्कारकत्वमित्येव युक्तमिति भावः । 'ब्राह्मणस्य पुत्रम्' इत्या-

## भावप्रकाशः ।

न्तवत्त्वेन तत्रोपपदत्वस्य सुवचत्वाच्च । अत एव "कृत्तद्धित" इति सूत्रस्थसमासपदस्य उक्तनियमार्थत्वमपि सङ्गच्छते ।

तदेतत् ध्वनयन्नाह-ग्रामेवास इति । "शयवासवासिष्वकालात्" इति सप्तम्यलुक् । कृदुत्तरपदप्रकृतिस्वरश्चेति । "समासस्य" इत्यस्य बाधके "तत्पुरुषे तुल्यार्थ" इति पूर्वपदप्रकृतिस्वरे प्राप्ते तद्बाधकेन "गतिकारकोपपदात्कृत्" इत्यनेनोत्तरपदाद्युदात्तत्वमित्यर्थ इति कश्चित् , तन्न "थाथघञ्" इति तदपवादान्तोदात्तत्वस्यैव प्राप्तेः । तस्मादित्थं व्याख्येयं–कृदुत्तरपदं घञन्तप्रकृतिकोत्तरपदं प्रकृतिः कारणं निमित्तं यस्य थाथेति स्वरस्य सः घञन्तोत्तरपदान्तोदात्त इति यावदिति । क्वचित्तु कारकत्वाद् घञुत्तरपदस्वरश्चेति पाठो दृश्यते स तु युक्त एवेति बोध्यम् । "भीत्रार्थानाम्" इत्यादौ स्वर्थाधिकाराश्रयणादावृत्त्योक्तरीत्यैव वा समावेशो बोध्यः । अत्र प्रकरणे यथाश्रुतमूलासङ्गतेर्वक्ष्यमाणत्वादन्यथा व्याचष्टे—क्रियामिति । धात्वर्थप्रधानभूतां साध्यत्वेन प्रतीयमानामित्यर्थः । एवमग्रेऽपि बोध्यम् । ननु क्रियाजनकत्वस्य कारकत्वे तस्यान्यथाश्रुतमूलासङ्गतेरन्यथान्वयापत्तिस्तावतापि तत्त्वाक्षतेरत आह—तज्जनकञ्चेति । तत्रव—क्रियायामेव । स्फुटीभविष्यत्यनुपदमेतत् । पूर्ववदाह—तदन्वयेति । तत्प्रयोजकं यत् तज्जनकत्वं तदभाववत इत्यर्थः ।

ननु मूले न भवतीत्यनेन कस्य व्यावृत्तिर्यत्प्रयुक्तमनिष्टमापद्येत । सामान्यसंज्ञाप्रयुक्तं तु नानिष्टमिति प्रागेवोक्तमिति चेदत्र मान्याः—सुन्दरत्वादिविशिष्टपुत्रस्य क्रियाव्याप्यत्वेन सुन्दरं पुत्रमित्यादौ सुन्दरादीनां कर्मत्ववद्ब्राह्मणस्यापि कर्मत्वापत्तेः । तच्चोभयोर्विशेषणम् । मन्मते तु न दोषः, अरुणाधिकरणन्यायेन सुन्दरादीनां क्रियान्वयवत् तस्य तदभावात् । यद्वा पुत्रशब्देन जन्यताया अपि बोधनाद

## शब्दरत्नम् ।

मिति । अत्र "अकथितं च" इत्यनेन पृच्छिकर्म पुत्रनिमित्तस्य कर्मत्वापत्तिः । क्रियाजनकत्वं तु न तस्य, पुत्रेणान्यथासिद्धेः । "अकथितं च" इत्येतत् प्राप्ताऽपादानत्वाद्यविवक्षायां, सर्वथा तदप्राप्तौ च प्रवर्त्तते । अत एवास्य न क्रियान्वय इत्याह—न त्विति ।

## भैरवी ।

दिवाक्येऽतिप्रसङ्गमुपपादयति-अत्रेत्यादिना । निमित्तस्येति । अनेन दुहादिपरिगणनलभ्यस्योपयोगनिमित्तमित्यस्य सत्त्वं ध्वनितम् । अन्यथासिद्धेरिति । अन्यथासिद्धस्य न कारणत्वम्,

अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता ।
कारणत्वम्भवेत—

इत्यभियुक्तोक्तेः । अत्राऽन्यथासिद्धिरन्यम्प्रति पूर्वभाव इति न, पुत्रजनकत्वघटितधर्मेण पूर्ववर्तित्वस्याकल्पनात्, किन्तु जनकम्प्रतीति तुरीया अवश्यक्लृप्तेति पञ्चमी वा । 'ब्राह्मणस्य पुत्रम्पन्थानम्पृच्छति' इत्यत्र प्रश्नपदार्थः—स्ववृत्तिजिज्ञासाज्ञानानुकूलशब्दोच्चारणरूपव्यापारात्मिका क्रिया, तद्विशेषणज्ञानाश्रयत्वात्कारकत्वम्पुत्रस्य, पथस्तु जिज्ञासाविषयत्वात्पृच्छिकर्मत्वन्तदाश्रयेण स्वविषयकज्ञानाश्रयत्वम्ब्राह्मणस्येति स्वसमवेतज्ञानविषयत्वसम्बन्धेन कर्मयुक्तत्वम् । एतेन प्रश्नक्रियाजनकत्वेन ब्राह्मणे कर्मत्वम्प्राप्नोतीति शङ्का निरस्ता । ननु "अकथितञ्च" इति सूत्रे अकथितशब्दोपादानेन यत्राऽपादानत्वादीनामप्रसक्तौ तदविवक्षा तत्र तस्य प्रवृत्तिरिति कथन्तस्य सूत्रस्य प्राप्तिरत आह—अकथितञ्चेत्येतदिति । तदप्राप्तौ—अपादानत्वादीनामप्राप्तौ । अत एवाऽकथितशब्दस्यासङ्कीर्तितपरता वक्ष्यमाणा साधु सङ्गच्छते । सर्वथा तदविवक्षायामपि तस्य सूत्रस्य प्रवृत्तौ प्रमाणन्तु 'नटस्य शृणोति' इत्यादौ सर्वथा तदविवक्षाविषयेऽस्य सूत्रस्य प्राप्तिमाशङ्क्य दुहादिपरिगणनेन समाधानपरम्भाष्यम् । अत एव—ब्राह्मणस्योक्तकारकत्वाभावादेव । अस्य—ब्राह्मणस्य । पुत्रस्य तु जिज्ञासाविषयार्थज्ञानानुकूलव्यापारस्य पृच्छार्थतया तद्घटकज्ञानजनकत्वेन कारकत्वमस्त्येव । एवञ्च पुत्रपदार्थस्याश्रयतया ज्ञानेऽन्वयः ।

## भावप्रकाशः ।

ब्राह्मणस्य विश्लेषाश्रयत्वेन "ध्रुवमपाये" इत्यपादानत्वापत्तिस्तदविवक्षायां तु "अकथितं च" इत्यनेन पथिरूपकर्मयोगेन पुत्रस्येव पुत्ररूपकर्मयोगेन ब्राह्मणस्यापि कर्मत्वापत्तिरिति; तत्प्राचामनुरोधेन । क्रियाऽन्वयित्वं क्रियाजन्यफलाश्रयत्वेन तत् ब्राह्मणस्येत्याद्यपक्षासङ्गतेः, तत्सूत्रे दुह्यादिपरिगणनात् दुह्याद्यर्थनिरूपितापादानत्वाद्यविवक्षायामेव तत्प्रवृत्तेः "अकथितं च" इत्यादेरप्ययुक्तत्वात् । न हि त्वद्रीत्या पृच्छ्यर्थनिरूपितमपादानत्वं किं तु जननादिक्रियानिरूपितमिति तदापत्तेरप्ययुक्तत्वाच्च । तदेतद् ध्वनयन्नाह—अत्रेति । ब्राह्मणस्येति वाक्ये इत्यर्थः । पुत्रनिमित्तस्य—तस्य निमित्तस्य हेतुभूतस्य ब्राह्मणस्येत्यर्थः । पृच्छेः पथिरूपकर्मयुक्तत्वेन पुत्रस्येव पुत्ररूपकर्मयुक्तत्वेन ब्राह्मणस्यापि प्राप्तिरित्यर्थः । एवं चान्यपुत्रम्प्रति न प्रश्न इति भावः । नन्वेवं प्रश्नक्रियाजनकत्वमपि तस्येति दोषस्तदवस्थ एवात आह—क्रियेति । प्रकृतप्रश्नक्रियेत्यर्थः । तस्य—ब्राह्मणस्य । अन्यथासिद्धेरिति । अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तद्भिन्नमन्यथासिद्धमित्यन्यथासिद्धेरित्यर्थः । ननु प्राप्तपूर्वकाविवक्षायां तस्य प्रवृत्तिः, प्रकृते तु सर्वथा तदप्राप्तेः कथं तेन कर्मत्वापत्तिरत आह—अकथितं चेत्येतदिति । तदप्राप्तौ च—अपादानत्वाद्यप्राप्तौ च । अकथितशब्दस्यासङ्कीर्तितपरत्वस्य वक्ष्यमाणत्वात् । अत एव 'नटस्य शृणोति' इत्यादौ सर्वथा तदविषये कर्मत्वमाशङ्क्य परिगणनेन समाहितम् "आख्यातोप" इति सूत्रे भाष्ये इति भावः । अत एव—पुत्रेणान्यथासिद्ध्या क्रियाजनकत्वाभावादेव । अस्येत्यत्रान्वयः । अस्य—ब्राह्मणस्य । न चैवं पुत्रस्यापि कारकत्वं न स्यात् । जिज्ञासाविषयार्थज्ञानानुकूलः केन पथा गन्तव्यमित्यभिलापादिरूपो व्यापारः पृच्छेरर्थः । तत्र ज्ञानविषयत्वेन पथः कर्मत्वम्, प्रष्टुः श्लोक्तव्यापाराश्रयत्वात्कर्तृत्वमिति तयो-

यद्वा कारकशब्दः क्रियापरः, करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः । तथाच अपादानादिसंज्ञाविधौ क्रियायामित्यस्योपस्थित्या क्रियान्वयिनामेव तत्तत्संज्ञा विधीयन्ते । "कारकाद्दत्तश्रुतयोः" इत्यादौ तु कारकशब्दः स्वर्यते । तेनैतदधिकारोक्तं कर्त्रादिषट्कमेव गृह्यते । अस्मिन् पक्षे वृत्तावपि कारकमित्यस्य क्रियान्वयीत्यर्थः । आद्यपक्षे तु कारकसंज्ञा स्यात् । तच्च कारकं कर्मसंज्ञं स्यादिति व्याख्येयम् ।

शब्दरत्नम् ।

**करोतीति** । स्वजनकत्वेनैतान् व्यपदेशान् करोतीत्यर्थः । तदुक्तं भाष्ये—"यावद् ब्रूयाद् क्रियायामिति तावत्कारके" इति । क्रियायां विषय इत्यर्थः । विषयत्वं च जनकत्वेनेति बोध्यम् । **क्रियान्वयिनामिति** । क्रियान्वययोग्यतावच्छेदकक्रियाजनकत्ववतामित्यर्थः । **गृह्यते इति** । अत एव 'नटश्रुतम्' इत्यादौ न दोषः । **क्रियान्वयीत्यर्थ इति** । तदन्वययोग्यतावच्छेदकक्रियाजनकत्ववदित्यर्थः । यथाश्रुतं तु न युक्तं 'कारकाणां

भैरवी ।

स्वजनकत्वेन—**क्रियाजनकत्वेन** । एतान्—**कर्त्रादिरूपान्** । **द्वितीयव्याख्यायाम्भाष्यसम्मतिमाह—तदुक्तमिति** । **सप्तम्यन्तार्थान्वय्याकाङ्क्षाशान्तये आह**—विषय इति । **अत्र विषयता न ज्ञानादिसम्बन्धरूपा क्रियायास्तादृशविषयत्वाऽप्रसिद्धेः, किन्तु जनकतारूपैव । क्रियायामिति सप्तम्यर्थो निरूपितत्वम्, तस्य जनकपदार्थैकदेशजनकतायामन्वयः । "ध्रुवम्" इत्यादिसूत्राणामपाये यद्ध्रुवङ्क्रियाजनकमितिरीत्याऽर्थः कार्यः । पूर्वकल्पवदत्र पक्षे न वाक्यभेदादिकल्पनेति लाघवम् । अत्र पक्षे पूर्वोक्ताभिप्रायेण व्याचष्टे**—क्रियान्वययोग्यतेत्यादि । **अत एव—स्वरितत्वप्रतिज्ञया कर्त्रादिषट्कस्य ग्रहणादेव** । नटश्रुतमित्यादाविति । **गीतद्वारा नटस्य क्रियाजनकत्वेऽपि उक्तषट्कभिन्नत्वेनातिप्रसङ्गो नेति** भावः । **क्रियान्वयीति यथाश्रुतमूलन्दूषयति**—तदन्वयेत्यादिना । तुल्यतापत्तेरिति । **उद्देश्यतावच्छेदकविधेययोरैक्येनाऽबोधकत्वापत्तेरित्यर्थः** ।

भावप्रकाशः ।

स्तज्जनकत्वेऽपि यं प्रति प्रश्नस्तस्य तदजनकत्वादिति वाच्यम् ? ज्ञानविषयकज्ञानाश्रयत्वसम्बन्धेन पुत्रे तत्त्वसौलभ्यात् । एवंच तस्य तद्विषयकज्ञानेऽऽश्रयत्वसम्बन्धेन अन्वयः ।

पूर्ववदाह—**स्वजनकत्वेनेति** । क्रियाजनकत्वेनेत्यर्थः । **एतान्**—कर्त्रादिरूपान् । इमं पक्षं समूलयति—**तदुक्तमिति** । यत्तु क्रियायामित्यत्रान्वेतीत्यध्याहारः क्रियान्वयित्वं च कारकत्वमिति मूलानुयायी कश्चित् । तन्न, तस्य खण्डनीयत्वात् । अत आह—**विषय इति** । अयं च सप्तम्यर्थ उक्तः । ननु विषयत्वमतिप्रसक्तमत आह—**विषयत्वं चेति** । तथाच क्रियाविषयस्तज्जनको यस्स कर्मादिसञ्ज्ञ इत्यर्थः । सृष्टौ ब्रह्मा, पालने विष्णुरित्यादौ यथा तथात्रापीति भावः । एवं च वाक्यभेदव्यत्ययादिकल्पना नेति महल्लाघवम् । पूर्ववदाह—**क्रियाऽन्वयेति** । अत एव—तत्प्रतिज्ञया तत्षट्कग्रहणादेव । अत एव पक्षद्वयैकवाक्यता । क्रियाजनकत्वमात्रेण तु न पूर्वमते तदापत्तिः, कृत्रिमेति न्यायेन संज्ञाया एव तत्र ग्रहणात् । एतेन नटश्रुतमित्यादावव्याप्त्या मूलोक्तं मानाभावात्तत्र षण्णामेव ग्रहणमिति कैयटोक्तं च चिन्त्यम् । एतेन षडेव कारकाणीति नैयायिकाद्युक्तमपास्तमिति रत्नाकरोक्तमपास्तम्, उक्तयुक्तेः । नटश्रुतमित्यत्र दोषस्योक्तत्वादाह—**आदाविति** । तेन नटश्रवणमित्यादिपरिग्रहः । पूर्वव-

सरला ।

**एतत्तुल्यतापत्तेरिति** । वस्तुतस्तु चिन्त्यमिदम्, करोति—क्रियायां स्वसम्बन्धेन विशेषरूपतामापादयति इति व्युत्पत्त्या महासंज्ञया क्रियापरत्वपक्षे शीघ्रोपस्थितिकत्वेन 'अन्वयि' इत्यस्याध्याहारेण क्रियान्वयित्वस्यैव कारक—कर्मादिसंज्ञोद्देश्यतावच्छेदकत्वलाभः । रूढ्यर्थतावच्छेदकं तु कारकपदवत्त्वं

शब्दरत्नम् ।

भावनान्वयः' इति वाक्यस्य 'घटत्ववतां घटत्ववत्ता' इत्येतत्तुल्यतापत्तेः । अत एव भाष्ये—क्रियाजनकत्वमेव कारकत्वमुक्तम् । तज्जनकत्वं चैषां तत्क्रियोपयोगिक्रियाश्रयत्वेनेति चोक्तम् । अत एवैषां क्रियान्वयः । क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन क्रियाया जनकाऽऽकाङ्क्षया च तत्रैवान्वयस्यौचित्यात् । अविद्यमानस्य

भैरवी ।

अत एव—तस्य वाक्यस्यानर्थक्यापत्तेरेव । तज्जनकत्वञ्च—क्रियाजनकत्वञ्च । अत एव "कारके" इतिसूत्रभाष्ये करोति—क्रियान्निर्वर्तयतीति व्युत्पत्तिप्रदर्शनङ् कृतम् । तत्क्रियोपयोगीति । धात्वर्थक्रियोपयोगीत्यर्थः । तदुपयोगिक्रिया तु स्वस्वाऽवान्तरक्रिया बोध्या । अत एव—क्रियाजनकत्वरूपस्य कारकत्वस्य ग्रहणादेव । क्रियान्वयः—क्रियायामेवान्वयः । तत्र प्रमाणम्परम्पराकाङ्क्षारूपन्दर्शयति—क्रियाजनकमित्यादिना । ननु सन्निहितेन सम्प्रदानेन 'मह्यं देहि' इतिशब्दोच्चारणादिरूपव्यापारेण दातुः प्रवृत्तिर्जन्यत इति तस्यास्तु तज्जनकत्वम्, असन्निहितस्य तु तत्कथमत आह—अविद्यमानस्येति । स्वज्ञानद्वारा—दातृसमवेतं यत्क्रियाहेतुभूत-

भावप्रकाशः ।

दाह—तदन्वयेति । एवमत्र प्रकरणेऽन्यथाव्याख्याने बीजमाह—यथाश्रुतं त्विति । जातावेकवचनम् । तुल्यतापत्तेरिति । उद्देश्यविधेयभावस्य भेदविषयत्वात् तत्र भेदाभावेन तद्वदानर्थक्यापत्तेरित्यर्थः । अत एवेति । तद्वाक्यानर्थक्यापत्तेरेवेत्यर्थः । अस्योक्तद्वयेऽन्वयः । भाष्ये—"कारके" इति सूत्रस्थे । जनकत्वमेवेति । करोति—क्रियां निर्वर्तयतीति तत्र व्युत्पत्तिप्रदर्शनादिति भावः । एतेन मूलोक्तव्यावृत्तिः । तज्जनकत्वं च—धात्वर्थक्रियाजनकत्वञ्च । एषां—कारकाणाम् । तत्क्रियोपयोगीति । धात्वर्थप्रधानक्रियोपयोगिनी या क्रिया स्वस्वाऽवान्तरक्रिया तदाश्रयत्वेनेत्यर्थः । एतेन तथारत्नाकरदण्ड्याद्युक्तमपास्तम् । अत एवेति । क्रियाजनकत्वरूपकारकत्वाङ्गीकारादेवेत्यर्थः । क्रियान्वय इति । क्रियायामेवान्वय इत्यर्थः । उपस्थितत्वात् परस्पराकाङ्क्षायाः सत्त्वाच्चेति भावः । तदाह—क्रियेति । ननु सन्निहितसम्प्रदानस्य 'मह्यं देहि' इत्यादिप्रेरणादिना दानक्रियाजनकत्वेऽपि देशान्तरवर्तिनस्तस्य कथं तत्त्वमत आह—अविद्यमानस्येति । असन्निहितस्येत्यर्थः । दातृबुद्धिस्थत्वावश्यकत्वेन दातृज्ञानपूर्वकालत्वेनैव तस्य जनकत्वं, तावतैव दानक्रियाया निष्पत्तेः । एवं स्तोकं पचतीत्यादौ फलस्यापि । घटं स्मरति घटं करोतीत्यादौ तु बौद्धघटादेः पूर्वकालत्वात्स्मृत्यादिनिष्पादकत्वं बोध्यम् । एतेनादृष्टस्य स्वर्गाव्यवहितप्राग्वृत्तित्वेऽपि यागस्यातत्त्वात्कथं करणत्वम् । न चाव्यवहितपूर्ववर्तित्वस्वव्यापारान्यतरत्वमेव तत्त्वम्, व्यापारस्य जनकत्वगर्भतया आत्माश्रयापत्तेरित्यपास्तम्, प्राग्वत् ज्ञानद्वारा अदृष्टद्वारा वा तस्य तत्त्वसम्भवात् । अत एवादृष्टस्वीकारः । एतेन क्रियान्वितप्रत्ययार्थान्वयित्वं कारकत्वमित्यपास्तम्, उक्तभाष्यविरोधापत्तेः अधिकरणस्य कारकत्वेन क्रियान्वय इत्यादिव्यवहारासङ्गत्यापत्तेश्च, 'पक्व ओदनः' इत्यादौ प्रत्ययार्थे कारकत्वकर्मत्वव्यवहारानापत्तेश्च, 'कारकाणां भावनान्वय' इत्यस्य भङ्गापत्तेश्च । एतेन क्रियान्वितविभक्त्यर्थान्वयित्वं तत्त्वमित्यपि निरस्तम् । न च कारकशब्दस्य कर्तरि ण्वुला कर्तृपर्यायत्वेन कारकं कर्मेत्यादिविरुद्धं कारकं कर्त्तेतिपुनरुक्तञ्चेति वाच्यम् ?

> निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके ।
> व्यापारभेदापेक्षायां करणादित्वसम्भवः ॥

सरला ।

तज्ज्ञाप्यशक्तिमत्त्वं वेति 'कारकाणां भावनान्वयः' इतिप्रयोगोपपत्तिः । घटं करोतीत्यादौ घटादेरविद्यमानसम्प्रदानादेश्च क्रियान्वयित्वसत्त्वात्कारकत्वमिति न तत्र ज्ञानद्वारा आरोपेण वा तदुपपादनापेक्षा । अधिकरणस्यापि कर्तृकर्मादिघटितपरम्परासम्बन्धेन क्रियायां साक्षादेवान्वय इति कारकत्वम् । 'अक्षशौण्डः' इत्यादौ समासप्रयोजकसामर्थ्यं शौण्डादिपदस्य आसक्तशौण्डादौ लक्षणयोपपाद्यमिति न तत्रापि दोष इति ।

## शब्दरत्नम् ।

संप्रदानस्यापि स्वज्ञानद्वारा क्रियाजनकत्वमित्यलम् ।

## भैरवी ।

प्रवृत्तिपूर्वकालिकम्मदीयमिदन्द्रव्यन्तत्स्वत्ववद्भवत्वित्यादीच्छाजनकज्ञानन्तद्द्वारा । एवमेव क्रियाविशेषणानां शोभनादीनामपि बोध्यम् । न च घटङ्करोतीत्यादौ घटादेः क्रियाजनकत्वन्नोपपद्यते, तेषां क्रियोत्तरकालिकत्वादिति वाच्यम् ? तद्विषयकस्मृतेः क्रियापूर्वकालिकत्वेन विषयेऽपि तत्क्रियापूर्वकालिकत्वव्यवहारात्, सत्कार्यवादसिद्धान्ताद्वा । न चैवमपि सर्वेषाङ्कारकाणां स्वस्वक्रियाजनने स्वातन्त्र्यात्कर्मणः कर्तृसंज्ञाऽपि प्राप्नोतीति वाच्यम् ? "स्वतन्त्रः कर्ता" इतिसूत्रे "कारके" इत्यस्य सम्बन्धेन स्वातन्त्र्ये उक्तरूपात्मके लब्धे पुनः स्वतन्त्रपदोपादानं यस्य स्वातन्त्र्यमेव न तु पारतन्त्र्यमपि तद्व्यावृत्त्यर्थमित्याशयात् ।

अत्रेदम्बोध्यम्, यस्य यस्य ज्ञानं क्रियापूर्वकालिकन्तेषां सर्वेषाङ्कारकत्वमिति ब्राह्मणस्य पुत्रम्पन्थानम्पृच्छतीत्यत्र पुत्रज्ञानवत्कदाचिद्ब्राह्मणज्ञानस्यापि क्रियापूर्वकालिकत्वसम्भवादतिव्याप्तेः क्रियान्वयित्वविवक्षापि प्रयोजिका । क्रिया च धात्वर्थप्रधानीभूतव्यापार रूपैव । कर्मणस्तत्क्रियाजनकत्वम्फलद्वारा । अधिकरणस्य तु कर्तृकर्मद्वारा । यदि साक्षाज्जनकत्वमात्रं विवक्षितं स्यात्तदा ग्रामङ्गच्छति, ग्रामे गच्छतीति, प्रयोगद्वैविध्यासङ्गतिः स्यात् । फलस्य क्रियात्वस्वीकारस्तु प्राचामनुरोधेन । धात्वर्थप्रधानव्यापारान्वयित्वञ्च न विशेषणतयैव, किन्तु क्वचिद्विशेष्यतयापि । अत एव 'पाचकस्य स्थितिः' इत्यादौ स्थितिक्रियाम्प्रति विशेषणत्वेऽपि पाचकस्य पुरुषस्य ग्राममित्यादौ कर्तृकारके ण्वुल्प्रत्ययोपपत्तिः ।

## भावप्रकाशः ।

इति हर्युक्तेः । सर्वेषां स्वस्वव्यापारद्वारा स्वातन्त्र्येणैव क्रियाजनकत्वात्कर्तृत्वेन कारकत्वम् । ततः कः केन किं पचतीति विवक्षायां स्वस्वव्यापारवशेन करणादित्वम् । तत्र सामान्यपूर्वकत्वाद्विशेषस्य कारकत्वमनुवृत्तमिति नोक्तदोषद्वयम् । कर्मत्वाद्यवस्थायां कर्तृसंज्ञा तु न, कारकत्वादेव स्वातन्त्र्ये लब्धे पुनस्तद्ग्रहणं यस्य स्वातन्त्र्यमेव न तु पारतन्त्र्ययुक्तस्वातन्त्र्यं तस्य कर्तृत्वार्थमित्युक्तत्वात् । कारकसंज्ञा तु वस्तुसत्स्वातन्त्र्यस्य स्थितिमात्रेण कर्मादीनां विधानसामर्थ्यात्प्रवर्तते इति तद्भावः । प्रकारान्तरमपि मञ्जूषायामुद्द्योते च स्पष्टम् । स्पष्टं चेदं सर्वं "कारके" इति सूत्रे भाष्ये सूक्ष्मदृशा । एवं च क्रियान्वयित्वे कारकत्वे तेषां कर्तृसमवायेऽपि कर्मकारकमित्यादेरनुपपत्त्यभावात्तत्र तदाशङ्कासमाधानपरभाष्यासङ्गतिस्तदर्थे कारकशब्दस्य साधुत्वानुपपत्तिश्चेत्यपि दूषणं बोध्यम् । एतेन क्रियान्वयित्वं कारकत्वं, न तज्जनकत्वं, सम्प्रदानादीनां तत्त्वानापत्तेः । न च यागस्यापूर्ववृत्तित्वेऽप्यपूर्वस्य तत्त्वेन तद्द्वारा तत्त्वमात्रेण यागस्य करणतावत्तज्ज्ञानस्य पूर्ववृत्तित्वेन तस्य तत्त्वं सूपपन्नमिति वाच्यम् ? ब्राह्मणसम्बन्धिपुत्रस्य क्रियाव्याप्यत्वेन पुत्रज्ञानस्येव ब्राह्मणज्ञानस्यापि पूर्वं सत्त्वात् जनकत्वांशं त्यक्त्वा क्रियान्वयित्वविवक्षायां क्षत्यभावाच्च । न चैवमपि ब्राह्मणस्य कर्मसंज्ञा दुर्वारा, पुत्रद्वारा तस्यापि क्रियान्वयित्वात् । न च साक्षात्तदन्वयित्वमेवेष्टं, कर्मकारकस्य फलद्वारा अधिकरणकारकस्य कर्तृकर्मद्वारा तदन्वयानुभवस्य सूत्रादिसम्मतस्य विना प्रमाणमपलापायोगात् । ग्रामं गच्छति, ग्रामे गच्छतीति प्रयोगयोरुक्तप्रकारं विनोपपादनाऽसम्भवाच्चेति वाच्यम् ? क्रियायाः कारकाकाङ्क्षया कारकाणां क्रियाकाङ्क्षया च तत्र साक्षात् परम्परया वाऽन्वयस्य क्लृप्तत्वेऽपि षष्ठ्यन्तस्थले तादृशकल्पने मानाभावात् फलस्यापि क्रियात्वाच्च । तत्र क्रियान्वयश्च प्रकारत्वेनैवेति नाग्रहः, किन्तु विशेष्यत्वेनापि। अत एव 'पाचकस्य देवदत्तस्य गृहं' 'देवदत्तेन पक्वस्य तण्डुलस्य समूहः' इत्यादौ वा पाकक्रियानिरूपितं कर्तृत्वादिकं सङ्गच्छते इति मान्योक्तं प्राचामनुरोधेनेति ध्वनितम् , उक्तदोषगणापत्तेः । एतेन तदधिकारपठितसंज्ञावत्त्वमेव तत्त्वं न तु क्रियान्वयित्वं, प्रथमाया अपि तत्त्वापत्तेः । नचेष्टापत्तिः । "सम्बोधनान्तं कृत्वोर्थाः" इत्यत्र सम्बोधनपदस्य वैयर्थ्यापत्तेः । कृत्वोर्थादीनामपि तदन्वयित्वेन प्रथमाया अपि तत्त्वापत्तेः । नचेष्टापत्तिः । सम्बोधनान्तं कृत्वोर्था इत्यत्र सम्बोधनस्य तथात्वापत्तेः । तथा च पितृवद्भोरित्यादौ

अनभिहिते ॥ ननु बहुपटुरित्यादौ बहुचा उक्तार्थत्वाद्यथा कल्पबादयो न, एवं क्रियते कट इत्यादावपि तिङादिभिरुक्तार्थत्वाद् द्वितीया न भविष्यति, किं च

### शब्दरत्नम् ।

तिङादिभिरिति । तैरेव तस्याः शक्तेरुक्तौ कटादिप्रातिपदिकस्य उद्भूततच्छक्ताव-

### भैरवी ।

एवञ्च कारककाधिकारपठितसञ्ज्ञावत्त्वं यस्य तस्य प्रधानीभूतव्यापारान्वयित्वात् कारकपदेन ग्रहणम्, न तु यथाकथञ्चित्क्रियान्वयिनामिति । यत्तु तदधिकारपठिताऽपादानादिसञ्ज्ञकत्व-मेव कारकत्वम् । अन्यथा—

"सम्बोधनान्तङ्कृत्वोर्थाः कारकम्प्रथमो वतिः"

इत्यत्र सम्बोधनान्तस्य पृथगुपादानवैयर्थ्यापत्तिः, कृत्वसुजर्थकप्रत्ययान्तानाङ्कारकत्वा-पत्तिश्च । एवम्प्रथमवत्यन्तेऽपि । न चेष्टापत्ति, 'द्विर्ध्यानकर्तारं' इत्यर्थे ध्यायतेः क्विपि 'द्विधियौ' 'द्विधियः' इत्यादौ ब्राह्मणवद्धीरित्यादौ च कारकपूर्वत्वेन "एरनेकाच" इति यणापत्तिरिति केचित्, तन्न, कारकशब्दस्य करोतीति कारकमिति व्युत्पत्तेर्भाष्यकृतैव दर्शनात् । प्रथमान्तस्य कारकार्थत्वमिष्टमेव । ब्राह्मणवसिष्ठन्यायेन सम्बोधनान्तस्य कृत-त्वात् । कृत्वोर्थानाङ्क्रियाभ्यावृत्तिगणनार्थत्वं न तु क्रियाजनकत्वम् । एवमेव वत्यन्तस्या-पीति न यणापत्तिरित्याशयेनाह—अलमिति ।

ननु पञ्चकम्प्रातिपदिकार्थ इति पक्षे प्रातिपदिकेन कर्मादावुक्तेऽपि यथा द्वितीयादि भवति तथा क्रियते कट इत्यादावपि स्यात्, 'द्विर्बद्धं सुबद्धम्भवति'इति न्यायेन द्वौ ब्राह्मणा-वित्यादौ समावेशस्य दृष्टत्वात् । विभक्तिसमभिव्याहाराभावे कारकप्रतीत्यभावेन तत्तद्वि-भक्तीनान्तत्तदर्थद्योतकत्वम् । क्वचित्तु 'सत्यपि सम्भवे' इति न्यायेन द्योतकविषयेऽपि बाध्यबाधकभावः । यथा—इनम्यासुड्भ्यां सीयुटः शपश्च बाध इत्यत आह—तैरेवेति ।

### भावप्रकाशः ।

यणाद्यापत्तिः । "कारकाद्दत" इत्यादौ स्वरितत्वाश्रयणे गौरवाच्च । किञ्च तदन्वयः साक्षादुत परम्परया ? नाद्यः, सप्तम्या अकारकत्वापत्तेः । नान्त्यः, षष्ठ्या अपि तत्त्वापत्तेः षष्ठीसप्तम्योर्वैषम्ये बीजाभावाच्च । चरमे तदन्वयेत्यादिनव्योक्तव्याख्यानमप्ययुक्तम्, षष्ठ्यादिव्यावृत्तयोग्यताया दुर्वचत्वात् । मदुक्तलक्षणे तु "कारके" इत्यधिकारसूत्रे उभयविधसम्बन्धग्रहणे न कोपि दोषः, षष्ठ्यास्तदधिकारापठितत्वात् । त्वयापि तत्स्वीकारे प्रथमाया अकारकत्वापत्त्या भवत्सिद्धान्तहानिरिति मन्दोक्तमपास्तम्, उक्तदोषगणा-पत्तेः, तदर्थं कारकशब्दस्य साधुत्वे मानाभावाच्च, प्रथमायास्तत्त्वेष्टत्वस्य प्राक् प्रतिपादितत्वाच्च, तद्वैयर्थ्यनाऽक्षतेश्च ब्राह्मणवसिष्ठन्यायेन तत्र निर्वाहाच्च, कृत्वोर्थादीनां तदजनकत्वेन तत्त्वानापत्तेश्च । अत एव न तत्र यणापत्तिः । त्वन्मतेऽपि तत्र निमित्तापरत्वेनाप्राप्तेश्च, मूलशैथिल्येन किञ्चेत्यादेरयुक्त-त्वाच्च, मान्योक्तरीत्या निर्वाहाच्च । अत एव तथा व्याख्याने दोषलेशाभावाच्चेति दिक् । तदाह—इत्यलमिति ।

ननु पञ्चकपक्षे संख्यान्यचतुष्कपक्षे च प्रातिपदिकेनोक्तेऽपि कर्मत्वादौ यथा द्वितीया भवति तथा क्रियते कट इत्यादौ तिङादिभिरुक्तेपि तत्र सा दुर्वारा, विभक्तीनां द्योतकत्वेन तत्समभिव्याहारं विना प्राति-पदिकमात्रस्य तदबोधकत्वात्, प्रविना जयतेः प्रकृष्टजयबोधकत्ववत् । किंच दृढतरत्वबोधार्थं "समा-सस्य" इति सूत्रभाष्योक्तेन 'द्विर्बद्धं सुबद्धं भवति'इति न्यायेनोक्तार्थप्रयोगोऽप स्यात् । अत एव द्वौ घटौ व्यतिलुनीते इत्यादौ न द्योतकवाचकयोर्द्योतकयोश्च समुच्चयः सङ्गतिः बहुधा तु कल्पबादीनां बाधात्र समा-वेशः, 'सत्यपि सम्भवे' इतिन्यायात् । अतएव यासुटइनमादिविषये सायुटशबादिकं नेत्यत आह—तैरेवेति । तिङादिभिरेवेत्यर्थः । तस्याः शक्तेः—कर्मशक्तेः । उक्तौ—वाचकत्वेन द्योतकत्वेन वोद्भूत-

कटं करोतीत्यादौ सावकाशा द्वितीया 'कृतः कटः' इत्यादिषु प्रथमया बाधिष्यते, निरवकाशत्वात् । न च वृक्ष इत्यादिरवकाशः; तत्रापि प्रतीयमानामस्तिक्रियां प्रति कर्तृत्वेन तृतीयाप्रसङ्गात् । अथ नीलमिदं न तु रक्तमित्यादौ विशेषणान्तर-निवृत्तितात्पर्यके अस्तिक्रियाया अनावश्यकत्वात् प्रथमाया अवकाशं ब्रूषे, तर्हि विप्रतिषेधात् प्रथमाऽस्तु । एवं चानभिहिताधिकारो वृथेति चेत् ?

मैवम् , संख्या विभक्त्यर्थ इति पक्षे सूत्रारम्भात् । तथा चाऽनभिहिते

शब्दरत्नम् ।

वृत्तेः कर्मणि वर्त्तमानात्प्रातिपदिकादित्यर्थेऽपि तदनापत्तिरिति भावः । अनभिहितसूत्रमपि अभिधानविषये प्रातिपदिकस्य उद्भूततच्छक्तौ वृत्त्यभाव इत्यत्रैव तात्पर्यग्राहकमिति बोध्यम् । सावकाशेति । मात्रग्रहणेन कर्माधिक्ये प्रथमाया अप्रवृत्तेरिति भावः । प्रतीयमानामिति । अत एव 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकन्यासः सङ्गच्छते । अनावश्यकत्वादिति । तदभिमानादित्यर्थः ।

सङ्ख्येति । "द्व्येकयोः" "कर्मणि" "स्वौजस्" इत्यादेरेकवाक्यतयाऽन्वये कर्मणीति

भैरवी ।

तिङादिभिरेवेत्यर्थः । तस्याः शक्तेः— कर्मादिशक्तेः । उक्तौ— वाचकत्वेन द्योतकत्वेन वोद्भूततया बोधने । उद्भूते कर्मणि वर्तमानात्प्रातिपदिकाद् द्वितीयेतिरीत्या "कर्मणि द्वितीया" इत्यादिसूत्राणामर्थादिति भावः । नन्वेवम् "अनभिहिते" इति सूत्रन्तर्हि व्यर्थमेव स्यादत आह—अनभिहितसूत्रमपीति । अभिधानविषये— तिङादिभिर्यत्र बोधनन्तद्विषये । ननु कटङ्करोतीत्यादावपि प्रातिपदिकार्थसद्भावात्प्रथमा प्राप्नोतीति कथं सावकाशत्वमत आह—मात्रग्रहणेनेति । "सम्बोधने च" इत्यस्योपलक्षणमेतत् । अत एव—प्रतीयमानक्रियासत्त्वादेव । 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोप्यस्ति' इति न्यायस्याऽभियुक्तानुभवसिद्धत्वादिति भावः । नन्वनावश्यकत्वकथनमसङ्गतमुक्तन्यायस्य जागरूकत्वादत आह—तदभिमानादिति ।

सङ्ख्याया विभक्त्यर्थत्वमुपपादयति—द्व्येकयोरित्यादिना । न च संख्याया नित्यपरतन्त्रतया एकत्वविशिष्टे कर्मणीत्येवम्परतयैवाऽर्थ उचित इति वाच्यम् ? कारकस्य प्रातिपदिका-

भावप्रकाशः ।

तया बोधने । अयं चाऽऽवृत्तौ हेतुः । अवृत्तिश्च तदनापत्तौ हेतुः । तत्त्वञ्चोद्भूतत्वे सति नान्यथेति तदनापत्तिरिति भावः । नन्वेवमनभिहितसूत्रं तत्पक्षेऽपि व्यर्थमिति वक्ष्यमाणं तदावश्यकत्वमसङ्गतमत आह—अनभिहितेति । तथा चोद्भूते कर्मणि वर्तमानाद् द्वितीयेत्यर्थः फलितः, तदाह—अभिधानेति । तिङादिभिरुक्तरीत्या बोधनविषये इत्यर्थः । मात्रेति । "सम्बोधने च" इति ज्ञापकस्याप्युपलक्षणमिदम् । अत एव—प्रतीयमानक्रियासत्त्वादेव । इदमेव "अस्तिर्भवन्तीपरः" इत्यादिभाष्याद्युक्तौ बीजम् । एतेन तन्निर्बीजमित्यपास्तम् । तथा च प्रथमाया अपि क्रियान्वयिकर्त्राद्यन्वये एव साधुत्वमिति भावः । उक्तवार्तिकभाष्यादिविरोधादाह-तदभीति । अनेनारुचिः सूचिता । अत एव मूले 'ब्रूषे' इत्येकवचनमुपात्तम् । तद्बीजं तु नीलमिदमित्यस्याप्युल्लेखो नोचितः, उक्तरीत्या प्रथमाया असाधुत्वं च तत्र स्यादिति । एतेन नित्यो घट इत्यादौ नित्यादीनां घटत्वादावन्वयविवक्षायां प्रथमावकाश इति भ्रान्तोक्तमपास्तं, विशिष्टस्य वृत्त्युपस्थितत्वेऽपि जातेरतत्त्वाच्च । अत एव 'पदार्थः पदार्थेऽन्वेति न तदेकदेशे' इति व्युत्पत्तिबोधः सङ्गच्छते । सा च क्रिया क्वचिच्छ्रूयमाणा क्वचित्प्रतीयमानेत्यन्यदेतत् ।

ननु "कर्मणि द्वितीया" इति सूत्रात्कथं संख्याया विभक्त्यर्थत्वमत आह—द्व्येकयोरिति । एकवाक्यतयेति । वाक्यैकवाक्यतयेत्यर्थः । आकाङ्क्षावशात्तामनुभूयैव तेषां लक्ष्यसंस्कारकत्वम् । पदैक-

कर्मणि यदेकत्वं तत्र द्वितीयैकवचनममित्यर्थः। सूत्रानारम्भे च कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमम् इति हि वाक्यार्थः। तथा सति 'कृतः कटः' इत्यादौ

---

शब्दरत्नम्।

सप्तम्या "द्व्येकयोः" इतिसूत्रोपात्तैकत्वाद्यपेक्षत्वात्कर्मणि यदेकत्वं तत्रामित्यर्थे हि सा विभक्त्यर्थ इति पक्षः। न च 'गुणानां च परार्थत्वात्' इति न्यायेन कर्मणि एकत्वे चामित्येवार्थ उचितः, सङ्ख्याया आश्रयापेक्षायां प्रत्यासत्त्या कर्मादेरेव तत्त्वमित्युक्तोऽर्थोऽसङ्गत इति वाच्यम्? सङ्ख्यासङ्ख्येययोर्नियमतः साकाङ्क्षत्वेनेदृशे विषये गुणयोरपि परस्परान्वया-

भैरवी।

र्थत्वेन तत्र विभक्तिविधानानुपयोगात्संख्याया विशेष्यत्वकल्पनया तत्र विधानं युक्तमित्याशयात्। यत्तु "द्व्येकयोः" इति षष्ठीति; तन्न, बहुष्वित्यादिभिर्विरूप्यापत्तेः। सप्तम्यर्थस्तु वाचकत्वम्। इयं च वाक्यैकवाक्यतयाऽन्वयपक्षे स्वीकार्या। परन्त्वेवमर्थकल्पनेन सूत्राणां स्वत एव लक्ष्यसंस्कारकत्वं, किन्तु तदनन्तरकल्पितकर्मणि यदेकत्वमित्येवंरीत्या यद्वाक्यन्तद्द्वारेति गौरवमतः पदैकवाक्यतयैवादौ नित्यसाकाङ्क्षयोः सङ्ख्यासंख्येययोरन्वय इति दर्शयति—सङ्ख्येत्यादिना। पदैकवाक्यता तु कर्मत्वादियोग्यार्थकप्रातिपदिकात्तदर्थमात्रगतैकत्वे प्रथमैकवचनं सुर्भवति, कर्मत्वशक्तिसमानाधिकरणैकत्वे द्वितीयैकवचनममिति स्वीकार्या। 'गुणानाञ्च' इति न्यायसञ्चारस्तु यत्रानेकगुणोपस्थितिर्नित्यसाकाङ्क्षत्वाभावश्च तत्रैव। "अरुणयैकहायन्या पिङ्गाक्ष्या सोमङ् क्रीणाति" इत्यादौ यथा। तत्र ह्यनेकगुणवाचकपदश्रवणेन परस्परनिरपेक्षाणान्तेषां प्रधानीभूतभावनायामेवारुण्यादिकरणिका सोमकर्मकक्रयकरणिका भावनेतिरीत्याऽन्वयः, नत्वारुण्यपिङ्गाक्षित्वैकहायिनीत्वविशिष्टैकद्रव्यकरणिका भाव-

भावप्रकाशः।

वाक्यतयाऽन्वये तु कर्मत्वादियोग्यार्थकप्रातिपदिकात्तदर्थमात्रगते एकत्वे प्रथमैकवचनम्, कर्मशक्तिसमानाधिकरणे एकत्वे द्वितीयैकवचनमित्यादिप्रकारेण बोधादन्यत्राव्ययादौ प्राप्तिरुपपादयितुमशक्यैव। किञ्चार्थनियमप्रकृतार्थापेक्षप्रत्ययनियमशुद्धप्रत्ययनियमेति कथोच्छेद एव एकवचनादिशब्दे भाविसञ्ज्ञाविज्ञाने गौरवं च। यद्यप्याद्यदोषः "अव्ययात्" इति ज्ञापकात्सूद्धरः, फलतो नियमान्मध्यदोषोऽपि; तथापि चरमदोषो दृढ एवेति भावः। सप्तम्या इति। ननु द्वितीयायाः सूत्रे श्रुतत्वात्तदपेक्षैव सप्तम्युचिता न त्वेकत्वाद्यपेक्षया। किञ्च संख्यायाः प्रायेण विशेषणत्वस्यैव दृष्टत्वादेकत्वविशिष्टे कर्मणीत्येवार्थ उचितः। एवं च प्रथमपक्ष एवायुक्त इति चेत्? न, कारकस्य प्रातिपदिकार्थत्वेन तत्र विधानानुपयोगात्। शुद्धनियमार्थत्वापेक्षया कर्मण एकत्वविशेषणतया विधित्वद्वारा नियमस्यापि आर्थिकी सिद्धिरिति विधित्वौचित्येन तथैवान्वय उचित इत्याशयात्। अत्र चेदमेव सूत्रं गमकम्। तथाचात्र पक्षे यथा प्रातिपदिकेनोक्ते द्वितीयादयो भवन्ति तथा तिङाद्यभिहितेऽपि स्युरित्येतदर्थं सूत्रमावश्यकमिति भावः। एतेन 'अरुणया' इत्यादौ यत्रानेकगुणश्रवणं तत्र 'गुणानां च' इति न्यायसञ्चारो नचात्र तथेति नचेत्यादिशङ्का चिन्त्येत्यपास्तम्, उक्तरीत्या पक्षसिद्धौ तस्या एव शङ्काया उदयात्। अत एव आह—नचेति। यत्तु कैयटः—"द्व्येकयोः" इति षष्ठीति; तन्न, "बहुषु" इत्यत्र सप्तमीदर्शनेन द्व्येकयोरित्यस्यापि तथौचित्यात्। तद्ध्वनयन्नाह—एकत्वे चेति। सप्तमी बोध्यत्वप्रतिपादिकेति भावः। प्रत्यासत्त्येति। सा च वाक्यैकवाक्यतयाऽनभिहिते कर्मणीत्यादिना मूल एव दर्शिता। एकत्वादेराश्रयाकाङ्क्षानिवृत्तये एवमेकवाक्यतेति तद्भावः। स्पष्टार्थमेवव्यावर्त्यमाह—उक्तोऽर्थ इति। पूर्वत्र संख्याया एव प्राधान्यम् उद्देश्यतया सूत्रजबोधविषयोऽत्र तूभयोरिति विशेष इति भावः। ईदृशे इति। तथाच नित्यसाकाङ्क्षस्थलेऽनित्यत्वात्तन्न्यायानाश्रयणमिति भावः। प्रतिपादितमिदमादौ। कैयटस्याप्ययमेवा-

च क्तेन कर्ममात्रोक्तावपि तदेकत्वस्यानुक्ततया अम् दुर्वारः। परत्वात्प्रथमेत्यपि न, 'क-

## शब्दरत्नम् ।

ङ्गीकारात् । स्पष्टं चेदमत्रैव कैयटे । तदेकत्वस्येति । प्रधानप्रत्ययार्थस्येत्यर्थः । एवं चाप्रधानकर्मादिविशेषणार्थमावश्यकं सूत्रम्, 'उक्तार्थानाम्', इति न्यायश्च प्रधानार्थविषय एवेति भावः । कर्त्तव्यः कट इति । न चात्र द्वितीयातः परत्वात्प्राप्तायाः षष्ठ्याः "कृत्यानाम्" इति विभक्तसूत्रेण निषेधापत्तिस्तदधिकाराभावे उभयप्राप्तेः सत्त्वादिति वाच्यम् ।

## भैरवी ।

नेति बोधः उक्तन्यायविरोधादिति, नचैवमत्रेति भावः । स्पष्टञ्चेदमिति । उक्तरीत्या सङ्ख्याया विभक्त्यर्थत्वप्रतिपादनं स्पष्टमित्यर्थः । अत्रैव—"अनभिहिते" इतिसूत्र एव । सङ्ख्याया विभक्त्यर्थत्वञ्च "कर्मण एकत्वे कर्मणो द्वित्वे" इत्यादिभाष्येण ध्वनितमेव। कैयटेन तत्प्रकटीकृतमत एवाह—कैयट इति । प्रधानप्रत्ययार्थेति । प्रधानीभूतो यः प्रत्ययार्थः सङ्ख्यारूपस्तस्येत्यर्थः । एवञ्च—उक्तरीत्या तत्तत्सूत्राणामेकवाक्यत्वसत्त्वे च । अप्रधानेति । सूत्रजन्यशाब्दबोधविषयेत्यादिः । विशेषणार्थमिति । सूत्रजन्यशाब्दबोधविषयप्रधानार्थे उक्तेन न्यायेन वारणं युक्तमप्रधानकर्मादिरूपार्थोक्तौ तु तस्यार्थस्याप्रधानत्वादेव न्यायाप्रवृत्तिरित्याह । पूर्वोक्तरीत्या न्यायेन नात्र पक्षे निर्वाह इति दर्शयति–उक्तार्थानामितीति । न्यायश्चेति । एवञ्चातिव्याप्तिवारणाय सूत्रमावश्यकम् । यदि तस्य न्यायस्याप्रधानार्थविषयत्वमपि स्यात्तदा एकन्द्वौ त्रीन् पश्येत्यत्रैकवचनादेरुत्पत्तिर्न स्यात्, प्रकृत्या सङ्ख्याया उक्तत्वात् । दर्शनक्रियाकर्मगतमेकत्वन्तु प्रकृत्या नोक्तमिति भवत्येव विभक्तिः । मूले-परत्वात्प्रथमेति ।अत्र परत्वादिति पदं विप्रतिषेधसूत्रेऽस्तीति तत्स्मरणेनोक्तम् । ततोपीति । प्रथमायाः परत्वेनेत्यर्थः । निषेधापत्ति-

## भावप्रकाशः ।

अथ इति ध्वनयितुमाह-स्पष्टं चेदमिति । उक्तरीत्या संख्याविभक्त्यर्थत्वप्रतिपादनमित्यर्थः । अत्रैव— "अनभिहित" इत्यत्रैव । एतेन तत्रानित्यत्वात्तदङ्गीकारस्यानुक्तत्वेन सम्मतिरयुक्तेत्यपास्तम् । कैयटे इति सुचिरात्विस्त्वनुपदमेव स्फुटीभविष्यति । अत्रापि पक्षे न्यायेन निर्वाह इति भ्रमवारणाय न्यायव्यवस्थां वक्तुं व्याचष्टे—प्रधानप्रत्ययार्थेति । प्राधान्येन सूत्रेणोक्तरीत्याऽमद्योत्यत्वेन बोधितस्येत्यर्थः। ननु कृतेऽपि सूत्रेऽत्रातिप्रसङ्ग एव, कर्मगतैकत्वेऽनभिहिते द्वितीयैकवचनमित्यर्थस्यैवौचित्येन तत्प्राप्तेः सत्त्वात् । एवं च व्यर्थमेव सूत्रमत आह—एवं चेति । अत्र पक्षे तथा वाक्यार्थाङ्गीकारे चेत्यर्थः । अप्रधानेति । सूत्रेणाप्राधान्येनाम्द्योत्यत्वेन बोधितं यत्कर्मादि तत्र विशेषणत्वेनान्वयार्थम् "अनभिहिते" इत्यावश्यकमित्यर्थः। तथा चानभिहितकर्मगतैकत्वे स इति वाक्यार्थ इति भावः । नन्वेवमपि तद् व्यर्थमेव, कर्मण उक्तत्वेन न्यायेन तदापत्तेर्वारणादत आह-उक्तार्थानामितीति । प्रधानार्थेति । प्राधान्येन सूत्रबोधितार्थेत्यर्थः । अत्र—कर्तव्यः कट इत्यत्र । षष्ठ्या इति । न्यायस्य प्रधानविषयत्वात् कृदन्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्तृकर्मगतैकत्वे षष्ठ्येकवचनमित्यर्थकेन "कर्तृकर्मणोः" इति सूत्रेण प्राप्तायास्तस्या इत्यर्थः । एकसूत्रे मौलदोषानुद्धारादाह—विभक्तेति । "कृत्यानां" योगे उभयप्राप्तौ सत्यां कर्तृकर्मणोः षष्ठी नेतितदर्थः । अत्रोभयप्राप्तावित्यनुवृत्तिस्तु निषेधविकल्पयोर्व्यवस्थार्था तत्रैव भाष्ये कण्ठत उक्ता नोत्तरविभक्तसूत्रे, तेन नेतव्या व्रजं गावः कृष्णेन, मया मम वा सेव्यो हरिरिति प्रयोगव्यवस्था सिद्धेति भावः । निषेधापत्तिरिति । तत्प्राप्तिरित्यर्थः । एवं च कथं षष्ठ्यापादनमिति भावः। नन्वत्र नोभयप्राप्तिरत आह-तदधीति । "अनभिहिते" इत्यधिकारेत्यर्थः । उभयप्राप्तेः । तस्या अपीत्यर्थः । यद्यप्येकसूत्रपक्षे दोषो दुरुद्धरः, योगविभागस्तु भाष्यका-

## सरला ।

प्रधानार्थविषय एवेति । शास्त्रजन्यबोधीययत्किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतया भासमानस्यार्थस्य पदान्तरेणोक्तौ तस्मिन्नर्थे पदान्तरस्य शास्त्रेण न साधुत्वं बोध्यते इति 'उक्तार्थानामप्रयोग'इत्यस्यार्थः ।

शब्दरत्नम् ।

अधिकाराभावे सर्वत्रैवोभयप्राप्तिविषयत्वात्कर्मण्येव षष्ठ्यापत्तौ "कर्तृकर्मणोः" इति सूत्रस्थकर्तृग्रहणस्य "उभयप्राप्तौ" इति सूत्रस्य च वैयर्थ्यापत्त्या "आत्ममाने खश्च" इति सूत्रस्थभाष्यप्रामाण्येन चोभयोः प्रयोग एवोभयप्राप्तेर्वाच्यतया प्रकृते नोभयप्राप्तिरित्या-

भैरवी ।

रिति । प्रथमाबाधकषष्ठ्या इत्यादिः । कर्तव्यः कटश्चैत्रेणेति शेषपूरणेनोभयत्र प्राप्त्युद्भावनमेतत् । ननु कर्मण उक्तत्वान्न कर्मणि षष्ठीप्राप्तिरिति चेत् ? शृणु, अनभिहिताधिकाराभावे कर्तरि कर्मणि यदेकत्वन्तत्र ङस् इतिरीत्या तस्यापि सूत्रस्यार्थात् । सर्वत्रैवेति । नच सकर्मकधातुप्रकृतिककृत्यप्रयोगे भवदुक्तरीत्या यद्यप्युभयप्राप्तिसत्त्वन्तथाप्यकर्मकप्रकृतिककृत्प्रयोगे 'चैत्रस्य शायिका' 'मैत्रस्यासिका' इत्यादावुभयोः सत्त्वस्यैवाभावेन सर्वत्रैवेत्यसङ्गतमिति वाच्यम् ? वक्ष्यमाणरीत्या देशकालादिकर्मसत्त्वस्य तत्रापि सम्भवात् । नच यत्र स्वार्थव्यापारकरणकेऽर्थे धातोर्न वृत्तिस्तत्रैवाकर्मकधातुप्रयोगे नोभयप्राप्तिरिति वाच्यम् ? 'देशः कालो भावो गन्तव्योऽध्वा च' इति वार्तिकात्सर्वत्र तथा कल्पनात् । वैयर्थ्यापत्त्येति । भवदुक्तरीत्याऽवच्छेदकावच्छेदेनोभयप्राप्तिसम्भवेन कर्तरि षष्ठीनिषेधस्य प्राप्त्या कर्तृग्रहणस्याव्यावर्तकतया "उभयप्राप्तौ कर्मणि" इतिसूत्रस्य च वैयर्थ्यापत्तिरित्यर्थः ।भाष्यप्रामाण्येनेति । इत्थंहि तत्र भाष्यम्-"आत्ममान इति किमर्थम् ? परमाने माभूत्, कृतेऽपि तत्र प्राप्नोति । कुत एतत् ? आत्मन इति कर्तरि षष्ठी, मान इत्यकारो भावे । स्वकर्मकमानवत्परकर्मकमानोऽपि स्वकर्तृक एव भवति । नैष दोषः, आत्मन इति कर्मणि षष्ठी "कर्तृकर्मणोः" इति । ननु च कर्तर्यपि तेनैव विधायते तत्र कुत एतत् कर्मणि भविष्यति, न पुनः कर्तरि? एवन्तर्हि आत्मग्रहणसामर्थ्यात्कर्मणि विज्ञास्यते" । अत्र कैयटः—"आत्मशब्दः प्रत्यगात्मनः परस्य व्यावृत्तिङ्करोति। तत्र यदि कर्तरि षष्ठी स्यादात्मग्रहणमनर्थकं स्यात्, कर्तृसम्बन्धाव्यभिचारान्मननक्रियायाः" इति । अत्र भाष्ये आत्मग्रहणसामर्थ्यात्कर्मणि षष्ठी प्रतिपादिता, नतु "उभयप्राप्तौ" इति

भावप्रकाशः ।

रीयो न वार्तिककारीय इत्युद्योते उक्तं, षष्ठ्यापत्तिस्तु वार्तिककारीयेति स्पष्टमेव भाष्ये, तथापि भाष्यमतेऽपि दोषं सूचयितुमन्यथा समाधत्ते—अधिकारेति । सर्वत्रैवेति । उक्तेऽनुक्ते च कर्मणि कर्तरि चेत्यर्थः । उभयप्राप्तिविषयसत्त्वादिति । "उभयप्राप्तौ" इत्येतद्विषयत्वसत्त्वादित्यर्थः । विषयत्वादित्येव क्वचित्पाठः, स तु युक्त एव । एवं च "उभयप्राप्तौ" इत्यस्यैव सर्वत्र प्राप्तिः फलिता । तदाह—कर्मण्येवेति । एवं च "कर्मणि कृति" इत्येव सूत्रं कार्यं, सूत्रद्वयं व्यर्थम्, तदाह—कर्तृकर्मणोरित्यादि । "कर्मणि च" इत्यस्यानिष्टे प्रवृत्तिस्तु तुल्यैवेति भावः । ननु सकर्मकेष्वेतत्सम्भवेपि 'भवतः शायिका' 'भवत आसिका'इत्यादावकर्मकेषु कर्मणोऽभावात्तदविषयत्वेन सर्वत्रैवेति उभयवैयर्थ्यमिति चासङ्गतमिति चेत् ? शृणु, 'अकर्मकधातुयोगे देशकालादिकर्मणोऽवच्छेदकावच्छेदेन सत्त्वात्तदुक्तिस्तद्वैयर्थ्यं च सङ्गतमेवेति । नवासनादिकरणकव्यापनाद्यर्थो यदा न विवक्षितः किन्त्वासनमात्रं, तदा पुनस्तदसङ्गतमेवेति वाच्यम् ? 'देशः काल' इति वार्तिकतद्भाष्यप्रामाण्यादकर्मकधातुयोगे तदविवक्षाया एवासत्त्वमित्याशयात् । एवं सूत्रप्रमाणकेऽर्थे भाष्यमपि प्रमाणमित्याह—आत्ममाने इति । इति कश्चित् ।

वस्तुतस्तु न तद्वार्तिकं, भाष्येऽनुपलम्भात् । यदुपलभ्यते, न तद्विधायकं हियुक्तत्वात् । अत एव "समां समां विजायते" इत्यत्र 'समायां समायां विजायत' इति विग्रहकथनपरं भाष्यं सङ्गच्छते । अन्यथा

सरला ।

यत्किञ्चिन्निष्ठविशेष्यतानिरूपितप्रकारतया भासमानार्थस्य पदान्तरेणोक्तावपि तत्र शास्त्रेण पदान्तरस्य साधुत्वबोधने नायं न्यायः प्रतिबन्धक इति । यथा 'एकं पश्य' इत्यत्र । अत्र संख्येयनिष्ठविशेष्यतानिरूपितप्रकारतया एकत्वस्य प्रातिपदिकेनोक्तावपि अस्य न्यायस्याप्रवृत्त्या द्वितीयैकवचनसिद्धिरिति तदाशयः ।

शब्दरत्नम्।

श्यात। आकृष्टव्या ग्रामं शाखेत्यत्र "कृत्यानाम्" इति विभक्तसूत्रस्थभाष्योदाहरणे

भैरवी।

कर्तरि निषेधेन। तस्माद्यत्रोभयोः प्रयोगस्तत्रोभयोः प्राप्तिरिति सामर्थ्यपर्यन्तकथनेन कल्प्यते। स्यादेतत्, सङ्ख्या विभक्त्यर्थ इति नोचितं "कर्मणि द्वितीया" इत्यादिसूत्रेषु कर्मणीत्यादिसप्तम्याः 'श्रुतानुमितयोः' इति न्यायेन श्रुतद्वितीयादिभिरेव सम्बन्धस्य युक्तत्वात्। एकत्वादिकन्तु शास्त्रान्तरैकवाक्यतया लभ्यते। किञ्च सङ्ख्यायाः सङ्ख्येयपरतन्त्रतया विशेषणत्वस्यैव घटोऽस्ति पटोऽस्तीत्यादौ दृष्टत्वेनैकत्वविशिष्टे कर्मणीत्येवार्थ उचितः। किञ्च "स्वौजसमौट्" इतिसूत्रेण द्वितीयायाः कर्मणि सिद्धतया "कर्मणि द्वितीया" इतिसूत्रं नियमार्थमिति भाष्यसिद्धान्तः। अत एव—

"सुपाङ्कर्मादयोऽप्यर्थाः सङ्ख्या चैव तथा तिङाम्।
प्रसिद्धो नियमस्तत्र—"

इति भाष्ये उक्तम्। स च नियमोऽर्थस्य वा प्रत्ययस्य वेत्यन्यदेतत्। यत्तु देशकालादिकर्मणः सर्वत्रैवाकर्मकधातुप्रयोगे 'अकर्मकधातुयोगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसञ्ज्ञकः' इति वार्तिकात्सम्भव इति प्रागभिहितं तन्न, तादृशवार्तिकानुपलम्भात्। "भावकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणां देशश्च" इति भाष्ये उक्तम्। तत्र हिशब्दोपादानेन यदा धात्वर्थकरणकव्यापनेऽर्थे धातोर्वृत्तिस्तदा तेषाङ्कर्मत्वस्य प्रसिद्धत्वन्ध्वनितम्। यदा तु जननादिरूपार्थमात्रस्य धात्वर्थविवक्षा तदा न तेषाङ्कर्मत्वम्। अत एव "समां समां विजायते" इति सूत्रव्याख्यानावसरे "समायां समायां विजायत" इति विग्रहप्रदर्शनम्भाष्ये सङ्गच्छते। तादृशवार्तिकसत्त्वे तेन द्वितीयायास्तत्र साधुत्वस्य बोधनेन तदसङ्गतिः स्पष्टैव। नच "केचित्कालादिभिरकर्मकाः" इति भाष्यस्य तदसङ्गतिरिति वाच्यम्? धातुमात्रस्य स्वार्थकरणकव्यापने वृत्त्या केचिदपि कालादिकर्मसम्बन्धाभाववन्तो नेति तदर्थात्। एवञ्च कालादिकर्मणामप्रयोगत्वसामानाधिकरण्येन सत्त्वमित्यत्र तत्तात्पर्यम्। एवञ्च सङ्ख्या विभक्त्यर्थ इति पक्षो न युक्त इति। अत एव वक्ष्यति—कारकं विभक्त्यर्थ इति पक्ष इत्यादि। ननु यत्रोभयोः प्रयोगस्तत्रैव चेदुभयप्राप्तिस्तदा "कृत्यानाम्" इति विभक्तसूत्रस्य यदुदाहरणं भाष्यो-

भावप्रकाशः।

तेन द्वितीयाया एव तत्र साधुत्वबोधनेन तदसङ्गतिः स्पष्टैव। एवं च तादृशप्रयोगे तदविषयत्वात्तत्सर्वमसङ्गतमेव। न च "केचित्कालादिभिरकर्मकाः" इति भाष्यस्य तु धातुमात्रस्य कालादिकर्मकार्थवृत्तित्वं, तदपि प्रयोगानुरोधेन न तु प्रयोगत्वावच्छेदेनेति तात्पर्येण न तद्विरोध इति बोध्यम्। इत एवाकुचेराह—आत्ममाने इति। इत्थं हि तत्र भाष्यम् "आत्ममाने इति किमर्थं? परमाने माभूत्, कृतेऽपि तत्र प्राप्नोति। कुतः? आत्मन इति कर्तरिषष्ठी मान इत्यकारो भावे। स्वकर्मकमानवत्परकर्मकमानोऽपि स्वकर्तृक एव भवति। नैष दोषः। आत्मन इति कर्मणि षष्ठी "कर्तृकर्मणोः" इति। ननु कर्तर्यपि तेनैव विधीयते तत्र कुत एतत्कर्मणि भविष्यति, न पुनः कर्त्तरि? एवं तर्हि आत्मग्रहणसामर्थ्यात्कर्मणि विज्ञास्यते" इति। अत्र कैयटः—"आत्मशब्दः प्रत्यगात्मनः परव्यावृत्तिं करोति। तत्र यदि कर्त्तरि षष्ठी स्यादात्मग्रहणमनर्थकं स्यात्, कर्तृसम्बन्धाव्यभिचारान्मननक्रियायाः" इति।

अयं भावः, यद्यपि "उभयप्राप्तौ" इति नियमादपि न कर्त्तरीति सुवचं तथाप्युभयोः प्रयोगाभावादत्र तदप्राप्तिरिति तत्सामर्थ्यपर्यन्तानुधावनमिति। नन्वेतावता "उभयप्राप्तौ" इत्यत्र तथार्थाङ्गीकारेऽपि "कृत्यानाम्" इत्यत्र तथात्वे किं मानं 'मान' इत्यत्र हि न कृत्यः, एवं च शब्दाधिकार एव तत्र। अत एवाकृष्टव्या ग्रामं शाखेति तदुदाहरणं भाष्योक्तं यथाश्रुतमेव साधु इति चेत्? न, शब्दाधिकारतोऽप्यर्थाधिकारस्य ज्ञानतो लाघवेन तदनुरोधात्तथैव तत्राङ्गीकारात्। अत एव तत्र षष्ठ्यापादकप्रकृतसूत्रस्थवार्तिकतद्भाष्यादिकं सङ्गच्छते। तदाह—इत्याशयादिति। तत्र तदापाद-

सेऽय: क:' इत्यादौ ततोऽपि परत्वेन कृद्योगलक्षणषष्ठीप्रसङ्गात्। कारकं विभ-

शब्दरत्नम्।

आश्चर्यपदकर्तृपदे अध्याहृत्योभयप्राप्तिनिरूप्या। इत्यादाविति। आदिना भवतो लाभो-ऽश्वः क इत्येतत्। कारकमिति। संख्यायाः सर्वत्र विशेषणतया भानादेकत्वे यत्कर्म-

भैरवी।

क्तं 'ग्राममाकृष्टव्या शाखा' इति, तस्य कथमुपपत्तिरत आह—आकृष्टव्येति। आश्चर्यपदा-ध्याहारस्य प्रयोजनन्तु यत्राश्चर्यम्प्रतिपाद्यन्तत्र कर्ताऽसमर्थं आकर्षणक्रियायां, दुराकर्षा च शाखा, परन्तु सा तादृशेन कर्त्रा आकृष्यत इत्यर्थस्य प्रतिपत्तिस्तदैव तत्प्रतिपत्तिरिति। इत्थम्भाष्यकारमतेनोदाहरणं संयोज्य मुनित्रयमतेनाह—आदिनेति। "अकर्तरि च कारके संज्ञायाम्" इति सूत्रे संज्ञायामित्यस्य प्रायिकत्वात् 'लाभ' इत्यत्र कर्मणि घञ्। भवन्नि-ष्ठव्यापारजन्यलाभाश्रयो जिज्ञासाविषयोऽश्वः क इति ततः शाब्दबोधः। अत्राश्वपदादन-भिहिताधिकाराभावे षष्ठी स्यात्, संख्यायाः कर्मनिष्ठाया अनभिधानादतः सूत्रमाव-श्यकमिति।

सुपाङ्कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्।

इति भाष्योक्तरीत्या कर्मादीनां विभक्तिवाच्यत्वे यथा वाक्यनिष्पत्तिस्तथाऽऽह-सङ्ख्याया इति। विभक्त्युत्थसङ्ख्याया इत्यर्थः। विशेषणतया भानादिति। नव घटपटादिशब्दप्रकृतिक-

भावप्रकाशः।

कवार्तिकाद्यनुवादकमूलस्येति भावः। नन्वेवं तदुदाहरणासङ्गतिरत आह—आकृष्टव्येति। ननु किमर्थमत्र कर्तृपदाध्याहारः? ततस्तत्र तदनुवृत्तेरेव कल्पनात्। अथ तत्रैव तत्पूर्वोक्त-योः किमुच्यते भव्यादीनामिति भाष्ये ध्वनिता "एवं तर्हि" इत्यादिभाष्ये कण्ठत उक्ता इत्युच्यते तथापि तदनुरोधेन तत्र तथार्थानङ्गीकार एव कुतो नेतिचेत्? न, तदुत्तर-त्वात्। किञ्च तत्रैव "उभयप्राप्तिर्नाम सा भवति यत्रोभयस्य युगपत्प्रसङ्गः" इति भाष्येणापि तथार्थसूच-नात्। अन्यथा तदनुपपत्तेः स्पष्टत्वात्। न च बहुव्रीहेरेकत्र कृते युगपदुभयत्र प्रसङ्ग एव तदर्थो न तु द्वयोः प्रयोगः, गेयो माणवक इत्यस्य तावतापि सिद्धिरिति वाच्यम्? तादृशप्रसङ्गस्योभयप्रयोगं विना बाधितत्वात्। स्पष्टं चेदं तत्रैवोद्द्योते। एवं च पूर्वं स्वाशयानुद्घाटनेन तत्सम्बन्धाज्ञानेन तन्मात्रस्यो-दाहृतत्वेपि उत्तरभाष्यानुरोधादेव तेनेत्यस्याध्याहार आवश्यकः। तत्पोषकञ्चाश्चर्यपदम्। अयं भावः—अत्र वाक्ये आश्चर्यं प्रतिपाद्यम्। तच्च यद्यसमर्थ आकर्षणकर्ता, दुराकर्षा च शाखा आकृष्टव्या तदैव निर्वहति, न त्वन्यथेति। तदाह—आश्चर्येत्यादि। एवं भाष्यमतेऽपि तन्दोषं संयोज्य मुनित्रयसाधारणं निःसन्दिग्धमतिस्पष्टं दोषमाह—आदिनेति। "अकर्तरि च" इत्यत्र सञ्ज्ञाग्रहणस्य प्रायिकत्वाल्लाभ इत्यत्र कर्मणि घञ्। भवन्निष्ठव्यापारजन्यलाभाश्रयो जिज्ञासाविषयोऽश्व इति बोधः। कर्तुस्तदिष्टत्वेऽपि ततो न स्यात्कर्मण एव स्यात्। तदभावे भाष्ये "को भवता लाभो लब्ध:"इत्यत्र तृतीया तु क्तान्तेऽन्वयाभिप्रायेणेति न तद्विरोध इति भावः। ननु सङ्ख्याया विभक्त्यर्थत्वे यथा "अनभिहिते" इति गमकं, नैवं कारकविभक्त्यर्थत्वे किञ्चिदिति स पक्ष एव निर्मूलोऽत आह-सङ्ख्याया इति। विभ-क्त्युत्थसङ्ख्याया इत्यर्थः। एतेन ब्राह्मणानां विंशतिरित्यादौ तस्या अप्रकारत्वाच्चिन्त्यमिदमित्यपा-स्तम्, तत्रापि तस्यास्तत्त्वात् प्रकृत्यर्थसङ्ख्याया अतत्त्वाच्च। एकाद्यष्टादशान्तसङ्ख्यावाचकेषु तु "आदशत" इति सिद्धान्तात्तस्याः प्रकारत्वं स्पष्टमेवेति न तत्र दोषः। अत एव सङ्ख्याविभक्त्यर्थत्वपक्षे कारकविभक्त्यर्थत्वपक्षे च भाष्ये 'एकः' इत्यादावेव दोषो दत्तो नैकं पश्येत्यादौ। आद्ये कर्मणोऽनभि-हितत्वादेकत्वे उक्तेऽपि द्वितीया भविष्यति। अन्त्ये न्यायस्य प्रधानविषयत्वादेकत्वे उक्तेऽपि प्रधानकर्मा-भिधानाय सा भविष्यतीति तदाशयः। सङ्ख्यान्यघटादिशब्देऽपि तस्याः प्रकारत्वं लोकप्रसिद्धमेव। न च-भावप्रत्ययान्तसङ्ख्यावाचकस्थले एकत्वं पश्येत्यादौ न विशेषणत्वं तस्याः, प्रकृत्यर्थसङ्ख्यायाः

शब्दरत्नम् ।

त्यर्थः । वृक्षे शाखेतिवदेकत्वे इति सप्तमी आधेयस्याधारत्वविवक्षया । एवं चैकत्वविशिष्टे

भैरवी ।

विभक्त्यन्तशब्दजन्यशाब्दबोधो यद्यपि सङ्ख्याप्रकारको जायते, तथापि सङ्ख्यावाचकेभ्यो यत्र विभक्तिस्तत्र सर्वत्र न विभक्त्यर्थसङ्ख्यायाः प्रकारत्वानुभव इति वाच्यम् ? 'आदृशतः सङ्ख्याः सङ्ख्येये' इति सिद्धान्तात्तेभ्यो विभक्तौ सङ्ख्यायाः प्रकारता स्पष्टैव ; यत्र तु ब्राह्मणानां विंशतिरिति सङ्ख्यानार्थकशब्दादेकवचनन्तत्रापि विभक्तिद्योत्यमेकत्वम्प्रकृत्यर्थे तादृशसमुदाये प्रकारतया भासत एवेत्याशयात्। ननु सङ्ख्येयार्थकशब्दाद्द्विवप्रत्यये सति तज्जन्यशाब्दबोधे न सङ्ख्यायाः प्रकारत्वम्। नच तस्माद्विभक्तावेकत्वं पश्येत्यादौ विभक्त्यर्थैकत्वम्प्रकारतया भासत एवेति वाच्यम् ? तत्रापि प्रत्ययार्थसङ्ख्यायाः प्रकृत्यर्थसङ्ख्यातोऽनतिरेकात्। एवं द्व्येकयोरित्यत्रापि न सङ्ख्यायाः प्रकारत्वम्। नच 'आदशतः संख्याः संख्येये' इति "संख्ययाऽव्यय" इति सूत्रस्थसिद्धान्तविरोध इति वाच्यम् ? तेषां संख्येयार्थकत्वम्बहुषु प्रसिद्धं, संख्यार्थकत्वन्तु क्वचिदेवेत्याशयात्। एवञ्च सर्वत्रेत्यसङ्गतमिति चेत् ? न, सर्वत्रेत्यस्यानेकप्रयोगेष्वित्यर्थात्। नन्वेकत्वस्याधेयतया एकत्ववद्यत्कर्मेत्येव व्याख्यानमुचितमित्यत आह—वृक्षे शाखेति। तत्र यथा शाखाया वृक्षावयवत्वेन समवायिकारणतया शाखैव वृक्षाधारस्तथापि स्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धेन सा वृक्षनिष्ठेति तादृशसम्बन्धावच्छिन्नाधारत्वं वृक्षस्य विवक्षितमिति 'वृक्षे' इति सप्तमी, तथाऽत्रापीति भावः। एवमन्यत्रापि बोध्यम्। एवं विवक्षया प्रसिद्धस्य लौकिकप्रयोगस्योपपत्तिः कार्या, न तु सर्वत्र। तेन शुक्ले वर्णे घट इति न प्रयोगः, किन्तु घटस्य शुक्ल इति, घटे शुक्ल इति वा भवति। एवञ्च—अधिकरणसप्तम्यङ्गीकारे च। प्रत्याख्यातमित्यत्र हेत्वाकाङ्क्षाया-

भावप्रकाशः ।

प्रत्ययार्थसंख्यातोऽनतिरेकात्। एवं द्व्येकयोरित्यादावपि। न चैवम् "आदशतः संख्याः संख्येये" इति "संख्ययाऽव्यया" इति सूत्रस्थभाष्यसम्मतप्रवादविरोध इति वाच्यम् ? तेषां संख्येयार्थकत्वं तु क्वाचित्कमप्रसिद्धमिति तदाशयात्। एवञ्च सर्वत्रेत्यसङ्गतमिति वाच्यम् ? सर्वत्रेत्यस्य बहुष्वित्यर्थात्। यद्वा लोकप्रसिद्धसंख्याशब्दतदन्यघटपटादिशब्दबोध्यायाः इत्यपि तदर्थाङ्गीकारात्। अत एव प्रायेणेति प्रागुक्तम्। विशेषणतयेति। तयैवेत्यर्थः। तथा च सूत्रेणैकत्वमप्राधान्येन चोद्यते, कारकं तु प्राधान्येन। इयमेवारुचि स्तत्र पक्षे। तदाह—एकत्वे यत्कर्मेति। यद्यप्यत्र पक्षे प्रातिपदिकार्थस्यैकत्वे सति तद्गतकर्मशक्तौ द्वितीयैकवचनमित्यर्थ उद्द्योते उक्त इति स एवास्य बोध्यस्तथापि 'उपपदविभक्तेः' इति न्यायेन कारकविभक्तिरुचितेत्याशयेन तद्वाक्यार्थं स्पष्टयितुमाह—वृक्षे इति। कर्मशब्दः शक्तिमत्परो न तु शक्तिपरः। तथाच यथा तत्रावयवावयविनोः शाखावृक्षयोर्निशिष्टाविशिष्टाभ्यां राहोःशिर इतिवत् भिन्नयोरप्यवयवेऽवयवी समवेत इति शाखायां वृक्ष इत्यस्य कपाले घट इतिवत्सत्त्वेऽपि आधेयस्य वृक्षादेराधारत्वविवक्षा तदुपपत्तये, तथा संख्याया गुणत्वात्तस्य च गुणाश्रितत्वात्कर्मणि यदेकत्वमित्यस्यौचित्येऽपि आधेयस्य गुणस्याधारत्वविवक्षा तदुपपत्तये, सप्तम्युपपत्तिस्तु गृहे उपरिदेशे पर्यङ्के स्वास्तरणे शेते देवदत्त इत्यादौ गृहादिष्विवात्रापि बोध्या। तथा चैकत्वाधारकं यत्कर्मकारकशक्तिमत्तदाधारकद्वितीयाकर्तृका सत्तेति बोध इति भावः। नन्वयुक्तमेतत्, दृष्टान्तवैषम्यात्। तथाहि, अवयवावयविस्थलेऽवयवस्याधारत्वस्य तादृशलौकिकप्रयोगबलात् कल्पत्वेऽपि तथा विवक्षा, नैवात्र एतादृशलौकिकप्रयोगाभावात्, गुणस्य गुण्याधारत्वस्यादृष्टत्वात्। अन्यथा घटे शुक्लो गुणोऽस्तीतिवच्छुक्लगुणे घटोऽस्तीत्याद्यप्यापद्येत। द्वेधा हि गतिर्दृष्टा गुणगुणिस्थले—सामानाधिकरण्ये शुक्लो घट इति, वैयधिकरण्ये घटस्य शुक्लो घटे शुक्लो वा इति। तथा च कथमेतत्पक्षोपपत्तिरत आह—एवञ्चेति। सति सप्तमीं त्यक्त्वाऽधिकरणसप्तम्यङ्गीकारे चेत्यर्थः। एकत्वविशिष्टे कर्मणीति।

क्त्यर्थ इति पक्षे तु सूत्रं प्रत्याख्यातमाकरे ।

---

शब्दरत्नम्

कर्मणीत्यर्थ इति भावः । प्रत्याख्यातमिति । न्यायेनैव सिद्धेरिति भावः ।

भैरवी ।

माह—न्यायेनैवेति । 'उक्तार्थानामप्रयोग' इति न्यायेनेत्यर्थः । नच द्योतकवाचकयोर्द्योतकयोः समुच्चयो दृष्टः-'द्वौ ब्राह्मणौ' 'व्युतिलुनीते' इत्यादौ यथा । उक्तार्थानामिति तु तत्र न प्रवर्तते, 'द्विर्बद्धं सुबद्धम्' इति न्यायात् । तथा कृतः कटः, क्रियते कट इत्यादावपि स्यादिति "अनभिहिते" इति सूत्रङ्कर्तव्यमिति वाच्यम् ? यद्यपि क्वचित्समुच्चयो दृष्ट इत्यत्रापि तथा स्यादिति वक्तुमशक्यम्, अन्यथा 'उक्तार्थानाम्' इति न्यायस्य निर्विषयत्वापत्तिरिति लक्ष्यानुरोधेन प्रकृते तस्य न्यायस्याश्रयणं युक्तमित्याशयात् । अत एव 'प्रासादको ग्रामः' इत्यादा समासेन कर्मादेरुक्तत्वात्सा सा विभक्तिर्न भवति । अत्रेदं बोध्यम्—कर्मादीनां द्योत्यत्वमेव युक्तम् । यथैकत्वादिसङ्ख्यायाः प्रकारतया भानस्यानुभवसिद्धतया तेषान्द्योत्यत्वन्तथा हरिम्भजतीत्यादिभ्यः कर्मीभूतहरिकर्मकम्भजनमित्येवंरीत्या शाब्दबोधस्यानुभवसिद्धत्वात् । "सुपां कर्मादयोऽप्यर्था" इत्यादिभाष्येऽर्थपदन्द्योत्यतया तेषाम्बोध्यत्वेन निर्वाह्यम् । अत एव "कर्मणि द्वितीया" इत्यादिशास्त्राणान्नियमार्थत्ववर्णनं सङ्गच्छते । 'उक्तार्थानाम्' इति न्यायसञ्चारस्तु "प्रातिपदिकार्थलिङ्ग" इति सूत्रव्याख्यानावसरे विभक्तेरुक्तार्थत्वादप्राप्तौ वचनमित्यनेन परममूले एव कृत इति । ननु मूले 'सङ्ख्या विभक्त्यर्थ इति पक्षे सूत्रारम्भात्' इत्यनेन सङ्ख्यातिरिक्तञ्चतुष्कम्प्रातिपदिकार्थ इति पक्षे सूत्रारम्भस्यावश्यकता लभ्यते । तत्र देवदत्तो वामेनाक्ष्णा पश्यतीत्यादौ 'विशेषविधिनिषेधयोः शेषनिषेधाभ्यनुज्ञाफलकत्वम्' इति न्यायेन यथा दक्षिणेन न पश्यतीति लभ्यते, तथाऽत्रापि कारकस्य विभक्त्यर्थतापक्षे सूत्रारम्भस्यानावश्यकता लभ्यत एवेति 'कारकं विभक्त्यर्थ इति पक्षे' इति विशेषाभिधानमनर्थक-

भावप्रकाशः ।

सामानाधिकरण्येनैकत्वविशिष्टकर्मशक्ताविल्यर्थः । कर्मशब्दः शक्तिपर एव । तथाचोभयत्र द्वितीयारूपवत्तद्द्वारा सप्तम्युपपत्तिस्तुल्यैवेति न कोऽपि दोषः । अयं च संख्यान्तं चतुष्कं प्रातिपदिकार्थ इति पक्षेऽर्थो बोध्यः । त्रिकपक्षे तु कर्मणि द्वितीया भवतीत्येवार्थोऽस्य सूत्रस्य । ततः कर्मण एकत्वे तदेकवचनमित्यर्थः संख्याबोधकस्येति बोध्यम् । युक्तश्चायमेवेत्यनुपदमेव स्फुटीभविष्यति । एवं यथाश्रुतग्रन्थसामञ्जस्ये एवं वेति पाठं प्रकल्प्य वैयधिकरण्येनान्वयं विवक्षयेत्यन्तेनोक्त्वा लक्षणया सामानाधिकरण्येनान्वयमाह—एवं वेतिव्याख्यानमनादर्तव्यमिति बोध्यम् । नन्वत्र पक्षेऽप्यावश्यकं तत् 'द्विर्बद्धं सुबद्धम्' इति न्यायेन 'द्वौ ब्राह्मणौ' 'व्यतिलुनीते' इत्यादौ द्योतकवाचकयोर्द्योतकयोश्च समावेशस्य दृष्टत्वेन 'कृतः कटः' इत्यादौ 'क्रियते कटः' इत्यादौ च प्राप्ततद्वारणार्थत्वात्; इति चेत्? न, आद्ये विशेष्यत्वेन भानेन तस्य द्योत्यत्वासम्भवात् । अन्त्ये क्रियां प्रति तस्य विशेषणत्वेऽपि कटपदार्थे तत्त्वाभावेन तदुत्तरद्वितीयाद्योत्यताया असम्भवात्, प्रकृते लक्ष्यानुसारात् 'उक्तार्थानाम्' इति न्यायानुसरणस्यैव सुवचत्वाच्च । तथाच तन्न्यायानाश्रयणम् । अत एव समासेनोक्तत्वादिवादेः प्रयोगो नेति सङ्गच्छते । तद् ध्वनयन्नाह—न्यायेनैवेति । 'उक्तार्थानाम्' इति न्यायेनैवेत्यर्थः । एवं च कर्मादीनां द्योत्यत्वमेव । भाष्येऽप्येषां पक्षभेदेन विभक्त्यर्थत्वव्यवहारो द्योत्यतयैव, एकत्वादीनां विशेषणतयैव भानेन तत्पक्षस्यैवौचित्यात् । न त्वेतावता तच्छक्यत्वमेषां भ्रमितव्यं, नियमत्वानुपपत्तेरिति स्पष्टं "बहुषु" इति सूत्रभाष्यादिषु । तन्न्यायस्य तु द्योतकविषयेऽपि सञ्चारो दृश्यते "अभिशीङ्" इति सूत्रे भाष्ये, अपूपौ द्वावित्यादौ व्यभिचारश्च तत्रैवोक्त इति भावः । ननु संख्या विभक्त्यर्थ इतिमूलग्रन्थाद् देवदत्तो वामेनेत्यादिवत्संख्यारहितं चतुष्कं प्रातिपदिकार्थ इति पक्षे सूत्रमावश्यकं तदितरपक्षेषु च नेति लभ्यते एवेति कारकं विभक्त्यर्थ इति ग्रन्थो-

शब्दरत्नम् ।

अनेन पञ्चकं प्रातिपदिकार्थं इति पक्षेऽप्यावश्यकता सूचिता । तत्र यथा प्रातिपदिकेनोक्ते

भैरवी ।

मत आह—अनेनेति । कारकं विभक्त्यर्थं इति ग्रन्थेनेत्यर्थः । पञ्चकमिति । अयम्पक्षः "कुत्सिते"इति सूत्रभाष्य एवोक्तः । तत्र हि "स्वार्थमभिधाय शब्दो द्रव्यमाह समवेतम्, समवेतस्य वचने लिङ्गं सङ्ख्यां विभक्तिञ्च अभिधाय तान्विशेषानपेक्षमाणश्च कृत्स्नमात्मानं प्रियकुत्सनादिषु ततः प्रवर्ततेऽसौ विभक्त्यन्तः" इति । "कर्मणि द्वितीया" इत्यादिसूत्राणान्नियमार्थत्ववर्णनमपि पञ्चकम्प्रातिपदिकार्थं इति पक्षे साधु सङ्गच्छते, सामान्यसूत्रेण'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थं भवन्ति' इति न्यायेन विभक्तेर्विशेषाभिधायकताया लाभात् । अत एव यत्र न विभक्तेः श्रवणं-दधि राजेत्यादौ, तत्रापि पञ्चकप्रतीतिः । लोपमजानतोऽपि बोधात् लुप्तविभक्तिस्मरणेन सर्वेषाम्बोध इति तु न युक्तम् । अत एव "क्रीतात्करणपूर्वात्" इति सूत्रभाष्ये 'गवा क्रीता'इत्यादावतिप्रसङ्गमाशङ्क्य"विभक्त्या व्यवधानान्न"इति समाहितम् । यदि करणस्य विभक्त्यर्थत्वं स्यात्तदा विभक्त्यन्तस्य करणार्थतया समाधानासङ्गतिः स्पष्टैव ।

भावप्रकाशः ।

ऽधिकः "बहुषु" इति सूत्रस्थभाष्यकैयटविरुद्धश्च अत आह—अनेनेति । कारकं विभक्त्यर्थं इति ग्रन्थेनेत्यर्थः । तत्रादौ मुख्यत्वादाह—पञ्चकेति । अयमेव पक्षो मुख्यः त्रिकादिपक्षस्त्वभ्युच्चय इति तत्त्वम् । कथमिति चेत्? शृणु, द्योतकतापक्ष एव हि मुख्यः, स च तं विनाऽनुपपन्नः । अत एव "कुत्सिते"इत्यत्र भाष्ये "स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम् समवेतस्य च वचने लिङ्गं संख्यां विभक्तिं चाभिधाय तान्विशेषानपेक्षमाणश्च कृत्स्नमात्मानं प्रियकुत्सनादिषु ततः प्रवर्त्ततेऽसौ विभक्त्यन्तः"इत्यनेन पञ्चकं प्रातिपदिकार्थं इत्येवोक्तं, सर्वत्र स्वार्थाभिधायकशब्दस्यैवाभिधानकर्तृत्वप्रतीतेः । "कर्मणि द्वितीया" "द्व्येकयोः" इत्यादीनां भाष्ये नियमत्वोक्त्यापि पञ्चकप्रातिपदिकार्थपक्ष एव लभ्यते । तदा हि 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति'इति सर्वत्र सिद्धौ तेषान्नियमत्वं युज्यते । तदुक्तं "बहुषु" इति सूत्रे भाष्ये "सुपोऽविशेषेण प्रातिपदिकमात्राद्विधीयन्ते" इति कैयटेन च स्पष्टमेवोक्तम् । अत एव दधि राजेत्यादौ प्रातिपदिकमात्राद् सर्वबोधः सङ्गच्छते । लुप्तस्मरणं तु लोपमजानतोऽसम्भवि, एकशेषसूत्रे प्रत्ययलक्षणकार्यं लोपफलं वदता भाष्यकृता तिरस्कृतं च । अत एव "क्रीतात्करणपूर्वात्" इति सूत्रे गवा क्रीतेत्यत्रातिप्रसङ्गमाशङ्क्य "विभक्त्या व्यवधानान्न"इत्युक्तम् । अन्यथा विभक्त्यन्तस्यैव करण-

सरला ।

पञ्चकं प्रातिपदिकार्थं इति । द्विकं त्रिकं वा प्रातिपदिकार्थ इति पक्षे कर्मादिकारकेषु एकत्वादिसंख्यासु च विवक्षितेषु द्वितीयादिविभक्तीनामेकवचनादीनां च साधुत्वबोधनार्थं "कर्मणि द्वितीया" "द्व्येकयोर्द्विवचनैकवचने" इत्यादीनां चारितार्थ्येन भाष्योक्तनियमत्वानुपपत्त्या पञ्चकं प्रातिपदिकार्थं इति पक्षाश्रयणम् । तथाच प्रातिपदिकेनैव संख्याकारकयोरप्यभिधानेन 'कर्मणि वर्तमानात् प्रातिपदिकाद् द्वितीया' 'एकत्वे वर्तमानात् प्रातिपदिकादेकवचनम्' इत्येवं "कर्मणि द्वितीया"इत्यादिसूत्रार्थस्य वाच्यतया तत्र च स्वादिसूत्रेणैव सिद्धेः "कर्मणि द्वितीया" इत्यादिसूत्राणां भाष्योक्तनियमत्वमुपपद्यते । नियमश्च प्रत्ययानामर्थानां चेत्यन्यदेतत् । अत एव 'दधि' इत्यादौ लोपादिकमजानतोऽपि कारकबोधः संख्याबोधश्च सर्वानुभवसिद्धः । नचैवं सर्वत्र सर्वकारकबोधप्रसङ्गेनानवस्थेति वाच्यम्, सर्वकारकेषु प्रातिपदिकमात्रस्य शक्तावपि अमादिना कर्मत्वादिशक्तेरुद्बुद्धत्वेन स्वरूपतश्चावभासनेन तत्तत्समभिव्याहारे एव स्वरूपतस्तत्तत्कारकशक्तिपुरस्कारेण बोधात् । अयं भावः, 'कारकत्वव्याप्यत्वोपलक्षिततद्धर्मावच्छिन्नः संख्यात्वव्याप्यत्वोपलक्षितधर्मावच्छिन्नश्च घटादिपदवाच्यः' इत्येवं सामान्यतः शक्तिग्रहानन्तरम् अमादिसमभिव्याहारज्ञाने कर्मत्वादौ कारकत्वव्याप्यत्वादौ चावगते मनसा 'कर्मत्वादिशक्तिमान् एकत्वादिमांश्च घटपदवाच्यः' इति विशिष्यशक्तिज्ञाने स्वरूपतस्तत्तद्विशेषपुरस्कारेण बोधः । दध्यादिपदात्तु तृतीयादिसमभिव्याहारज्ञानेनैव तथा शक्तिं गृहीत्वा विशेषपुरस्कारेण बोधः, शब्दशक्तिस्वभावात् । एवञ्चात्र पक्षे सुपां द्योतकत्वमेवेति

### शब्दरत्नम् ।

कर्मत्वादौ भवति तथा तिङादिभिरुक्तेऽपि स्यादतस्तद्वारणार्थमिदम् । एवं संख्यातिरिक्तं चतुष्कं प्रातिपदिकार्थः, संख्यामात्रं विभक्त्यर्थ इति पक्षेऽप्यावश्यकं तत् । एवं च कारकस्य विभक्त्यर्थत्वं यत्र यत्र पक्षे तत्र तत्रानावश्यकमिति सूचितम् ।

### भैरवी ।

अपिशब्दो मूलोक्तसङ्ख्याविभक्त्यर्थ इति पक्षसमुच्चायकः । तत्रेति । पञ्चकपक्षे इत्यर्थः । उक्तेऽपि स्यादिति । समुच्चयस्यान्यत्र दृष्टत्वात् । पूर्वोपात्तापिशब्दसमुच्चितार्थं स्पष्टप्रतिपत्तये पुनराह—एवमिति । पञ्चकपक्षवदित्यर्थः । पञ्चकपक्षस्य मुख्यत्वसूचनायात्र सादृश्यप्रदर्शनम् । तत्—"अनभिहिते" इति सूत्रम् । एवञ्च मूले सङ्ख्या विभक्त्यर्थ इत्यस्य तन्मात्रं विभक्त्यर्थ इत्यर्थः । ननु तद्वत्कारकं विभक्त्यर्थ इति ग्रन्थस्यापि कारकमात्रं विभक्त्यर्थ इति पक्ष इत्यर्थो लभ्यते स च न युक्तः, स्वार्थादित्रयस्य प्रातिपदिकार्थत्वपक्षेऽप्यनावश्यकत्वस्य लाभादत आह—एवञ्चेति । यत्र यत्र पक्षे इति । त्रिकम्प्रातिपदिकार्थ इति पक्षे सङ्ख्याकारके विभक्तिवाच्ये, एवं सङ्ख्यान्तचतुष्कं प्रातिपदिकार्थः कारकं विभक्त्यर्थ इति पक्षे चेत्यर्थः । अनावश्यकमिति । 'उक्तार्थानाम्' इति न्यायेनैव सिद्धेरिति भावः । यद्यपि—

> यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।
> तच्छब्द एवकारश्च स्यादुपादेयलक्षणम् ॥

### भावप्रकाशः ।

वाचकत्वेन तदसङ्गतिः स्पष्टैवेति दिक् । अपिः मूलोक्तविभक्त्यर्थपक्षसमुच्चायकः । अनेन कथं सूचितमिति चेत् ? शृणु, कारकस्य विभक्त्यर्थत्वे प्रत्याख्यानोक्त्या तदन्यपक्षेषु सत्त्वलाभेन पञ्चकपक्षस्य तदन्यत्वात्तथा लाभः । अत एवैतद्ग्रन्थाधिवयन्नेति बोध्यम् । ननु तत्रापि न्यायेनैव सिद्धमत आह- तत्रेति । पञ्चकपक्षे इत्यर्थः । कर्मत्वं शक्तिः । भवतीति । अस्य कटङ्करोतीत्यादौ द्वितीयेत्यादि । परिगणनादाह—तिङादिभिरुक्तेऽपीति । तत्र पक्षे सुपां द्योतकत्वाद्वाचकद्योतकयोर्द्योतकयोश्च समुच्चयस्य दृष्टत्वात् 'क्रियते कटः' इत्यादौ तिङाद्यभिहितेऽपि प्राप्तद्वितीयावारणार्थमित्यर्थः । स्पष्टं चेदं "बहुषु" इति सूत्रे भाष्यकैयटयोः । यथाश्रुतपूर्वमूलासङ्गतेः कञ्चिद्विशेषं वक्तुमपिसमुच्चेयमौलावश्यकत्वमाह—एवमिति । तद्वदित्यर्थः । तस्य मुख्यत्वादस्य तदन्यत्वात्सादृश्योपपत्तिः । अत एव विपरीतं नोक्तम् । मात्रमित्यनेन कारकव्यावृत्तिः । अपिरस्यैव समुच्चायकः । तत्—"अनभिहिते" इत्येतत् । 'कृतः कटः' इत्यादौ मूलोक्तरीत्या द्वितीयावारणायेति भावः । एवं च मूले सङ्ख्या विभक्त्यर्थ इत्यस्य तन्मात्रं विभक्त्यर्थ इत्यर्थो बोध्यः । नन्वेवं कारकं विभक्त्यर्थ इत्यस्यापि तन्मात्रं विभक्त्यर्थ इत्यर्थः स्यात्तथा च त्रिकपक्षे आवश्यकत्वानावश्यकत्वयोर्न लाभोऽत आह—एवं चेति । पक्षद्वयमात्रे आवश्यकत्वलाभे चेत्यर्थः । यत्र यत्र पक्षे इति । त्रिकं प्रातिपदिकार्थः संख्याकारके विभक्त्यर्थ इति पक्षे सङ्ख्यान्तं चतुष्कं प्रातिपदिकार्थः कारकमात्रं विभक्त्यर्थ इति पक्षेचेत्यर्थः । तत्र तत्रेति । उक्तरीत्या न्यायेनैव सिद्धेरिति भावः । यद्यपि यत्पदे वीप्सा यत्र न तत्पदे सा । यत्पदीयद्वित्वेन यत्पदार्थसंसर्गे यत्पदार्थतावच्छेदकव्यापकत्वे बोधिते विनापि द्वित्वं तत्पदार्थसंसर्गे तच्छब्दार्थतावच्छेदकव्यापकत्वबोधात्,

> कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेत् ।

इति "अकथितं च" इत्यत्र भाष्ये प्रयोगात् । अत एव यो यो धूमवान् सोऽग्निमानिति सङ्गच्छते इति तत्रैवोचितन्तथापि "व्यञ्जनानि यस्य यस्यच कार्यमुच्यते तं तं भजन्ते" इति "अजादेः" इतिसूत्रस्थभाष्यप्रयोगात्स्पष्टत्वाय कचित्तत्पदेऽपि वीप्साद्वित्वम् । अत एव—

> यं यन्देशं समुद्रस्य जगाम स महाकपिः ।

### सरला ।

सिद्धान्त इति । अनावश्यकमिति । कारकस्य विभक्त्यर्थत्वपक्षे कृदादिनोक्ते कारके 'उक्तार्थानामप्रयोगः' इति न्यायेन विभक्तेरप्राप्तेर्न तत्र "अनभिहिते" इति सूत्रारम्भावश्यकतेति भावः ।

हरिं भजतीति । भजनक्रियया हरौ प्रीतेरुत्पादात् प्रीतिविशिष्टतया क्रियाव्याप्यत्वेन हरिः कर्म । तद्विशिष्टं भजनं वाक्यार्थः । 'हरिः सेव्यते' इत्यत्रा-

---

### शब्दरत्नम् ।

प्रीतेरिति । तत्प्रीतिरेव च शुभफलजनिकेति भावः । क्रियाव्याप्यत्वेनेति । क्रियासम्बन्धित्वेनेत्यर्थः । तज्जन्यफलाश्रयत्वं हि तत्त्वम् । एवमेवेति । धात्वर्थ एव

### भैरवी ।

इत्यभियुक्तोक्तेर्यत्र द्विरुक्तयत्पदेन नानाव्यक्तीनामुपस्थितिस्तत्र तावन्निष्ठोद्देश्यतावच्छेदकव्यापकत्वं विधेयसंसर्गे भासते । एतद्भासनार्थमेव वीप्सायाम् द्विर्वचनम् । एवञ्चैकेन तत्पदेन तावद्व्यक्तिपरामर्शेन निरुक्तव्यापकत्वलाभान्न तत्पदे वीप्सा । अत एव "अकथितञ्च" इति सूत्रभाष्ये—

कारकञ्चेद्विजानीयाद्यां याम्मन्येत सा भवेत् ॥

इत्यत्र वीप्साया विवक्षितत्वेऽपि तत्पदे द्विर्वचनन्न कृतम् । अत एव च 'यो यो धूमवान् सोऽग्निमान्' इति नैयायिकवृद्धप्रयोगसङ्गतिः । एवञ्च तत्र तत्रेत्यनुपपन्नं तथापि—

यं यन्देशं समुद्रस्य जगाम स महाकपिः ।
स स तस्याङ्गवातेन सोन्माद इव लक्ष्यते ॥

इति रामायणीयप्रयोगात् ।

यां यां प्रियः पश्यति कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव ।

इति महाकविप्रयोगाच्च तत्पदेऽपि द्विर्वचनप्रवृत्तिः स्पष्टप्रतिपत्तये भवतीति न दोषः ।

तत्प्रीतिरेवेति । हरिप्रीतिरेवेत्यर्थः । एवकारेण तदनुकूलव्यापारनिरासः । ननु क्रियाव्याप्यत्वेनेति मूलमसङ्गतं, क्रियानिष्ठव्यापकतानिरूपितव्याप्यतायाः कर्मण्यसत्त्वादत आह—क्रियासम्बन्धित्वेनेति । तथाचात्र व्याप्तिःसम्बन्ध एव विवक्षितः । ननु क्रियाशब्दः कर्तृनिष्ठव्यापारबोधकस्तत्सम्बन्धित्वञ्च न कर्मण इत्यत आह—तज्जन्येति । तत्त्वम्—सम्बन्धित्वम् । एवमेवेति मौलप्रयोगाद्व्यापारविशेष्यकः शाब्दबोधः कर्माख्यातेऽपीति प्रतीयते यद्यपि, तथाप्येवन्तात्पर्येण न मूलकृता तथोक्तमित्याशयेनाह—धात्वर्थेति । कर्तृप्रत्ययसमभिव्याहाराद्व्या-

### भावप्रकाशः ।

स स तस्याङ्गवातेन सोन्माद इव लक्ष्यते ॥ इति रामायणम्,
यां यां प्रियः पश्यति कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव ।

इति च सङ्गच्छते इति न दोषः । सूचितमिति । सुष्ठु योग्यमित्यर्थ इति फलितमिति तात्पर्यार्थः । तत्प्रीतिरेवेति । हरिप्रीतिरेवेत्यर्थः । एवेन व्यापारमात्रव्यावृत्तिः । तथा च तदनुकूलो व्यापारो भजेरर्थ इति भावः । क्रियाव्याप्यत्वेनेत्यस्य क्रियानिष्ठव्यापकतानिरूपितव्याप्यत्याश्रयत्वेनेति नार्थो बाधितत्वादत आह—क्रियासम्बन्धित्वेनेति । तथा च व्याप्तिः सम्बन्ध एव न तु तन्त्रान्तरप्रसिद्धा । अत एवाप्तिः सम्बन्धरूपैव सूत्रे निविष्टेत्युक्तं प्राक् । ननु क्रिया कर्तृनिष्ठो व्यापारस्तथा च तत्सम्बन्धित्वं कर्तुर्न कर्मण इति तथा व्याख्याप्ययुक्तेत्यतस्तत्र हेतुमाह—तज्जन्येति । व्यापारप्रयोज्येत्यर्थः । तत्त्वं—क्रियासम्बन्धित्वम् । एवं च क्रियाव्याप्यत्वमपीदमेव । तथा च परम्परया क्रियासम्बन्धोऽत्र विवक्षित इति भावः ।

यत्तु एवमेवेत्यस्य भावनैव विशेष्येत्यर्थ इति भूषणकृत्, रत्नाकरदत्ताद्भिरपि तदेवानुसृतं; तन्न, पक्वस्तण्डुल इत्यादौ कर्मकृत्समभिव्याहारे फलव्यापारयोर्व्यत्यासेन बोधस्यावश्यकतया कर्माख्यातेऽपि फलविशेष्यकबोधस्यैवौचित्यात् । अत एव प्रत्ययार्थं साक्षात्सम्बन्धेन प्रकृत्यर्थविशेषणान्वयित्वस्योत्सर्गतः फलस्य न त्यागः । तच्चान्वयित्वं विशेष्यत्वेन विशेषणत्वेन वेत्यन्यदेतत् । एतेन कर्तृलकारेऽपि फलविशेष्यको बोध एवास्त्वित्यपास्तम्, फलस्य प्रागुक्तौत्सर्गिकनियमभङ्गापत्तेः, विशेषणत्वेनान्वितस्य न्यग्भूतस्याख्यातोपात्ताश्रयेऽन्वयानापत्तेश्च । एवंच एवमेवेति मूलग्रन्थो धात्वर्थ एव विशेष्य इत्याशयेनैव व्याख्येय इति मनोरमाविलासे मान्यगुरुचरणाः, तन्मतमनुसरति—धात्वर्थ एवेति । तत्र कर्मप्रत्यये

शब्दरत्नम् ।

विशेष्य इत्यर्थः । इयांस्तु विशेषः—तत्र फलांशो विशेष्यः, कर्त्तरि तु व्यापारांश इति । अत एव "सुप आत्मनः" इति सूत्रे भाष्यम्—"इष्यते पुत्र इत्यर्थे पुत्रीयतीति न प्रयोगो भिन्नार्थत्वात्" इति । यदा क्रियाफलस्य प्राधान्यं प्रतिपिपादयिषितं तदा वाक्यमेव, व्यापारप्राधान्ये तु क्यजिति कैयटश्च । यद्यप्ययमर्थः प्रतीकान्तरे कैयटेनोक्तस्तथाऽप्यत्रापि स एवार्थ उचितः, अत्रैव वेत्यन्यत्र विस्तरः ।

भैरवी ।

पारविशेष्यकफलप्रकारकः, कर्मप्रत्ययसमभिव्याहाराच्च व्यापारप्रकारकफलविशेष्यकः शाब्दबोधः; उभयथाऽपि धात्वर्थविशेष्यकत्वस्य न क्षतिरिति भावः । पक्वस्तण्डुल इत्यादिभ्यः फलविशेष्यकबोधः, सर्वानुभवसिद्ध एव । अत एव 'प्रत्ययानामप्रकृत्यर्थविशेष्यान्वय्यर्थप्रतिपादकत्वम्' इति नियमस्य न त्यागः । स्वाभिमतेऽर्थे साधकमप्याह-अत एवेति । भिन्नार्थत्वादिति । अस्य वृत्तिबोध्यार्थबोधकवाक्यादित्यादिः, समानविशेष्यबोधजनकत्वं हि समानार्थत्वन्तच्चात्र नास्तीत्येवंविग्रहे न क्यच्, किन्तु पुत्रमिच्छतीति विग्रह एवेति तत्त्वम् । नच कर्मणि यत्र कृत्प्रत्ययस्तत्र फलस्यास्तु व्यापारविशेष्यता, कर्माख्याते तु तत्सत्त्वे मानाभाव इति वाच्यम् । इष्टः पुत्र इत्यत्र यथोभयोः पदयोः सामानाधिकरण्यन्तथा इष्यतेकल्पम्पुत्र इत्यत्रापि सामानाधिकरण्यमिति फलस्य विशेष्यत्वस्वीकारस्यावश्यकत्वात । अत एव भाष्यकृता "अथेह कस्मान्न भवति इष्टः पुत्र इष्यते पुत्र इति" इत्याशङ्क्य भिन्नार्थत्वादित्येकमेव समाधानङ्कृतम् । वाक्यमेवेति । इष्टः पुत्र इत्यादि । न तु क्यच्, क्यजन्तस्याकर्मकतया ततः कर्मणि प्रत्ययानुत्पादादिति भावः । तस्याकर्मकत्वन्तु धात्वर्थसङ्गृहीतकर्मकत्वेन बहिर्भूतकर्माकाङ्क्षाया अभावाच्च । यत्र कर्मणि लकारस्तत्रकाश्रयकव्यापारजन्या पुत्रकर्मिका इच्छेति बोधः । पुत्रमिच्छतीत्यस्मात्तु एकाश्रयकपुत्रकर्मकेच्छानुकूलव्यापार इति बोध इति भिन्नार्थत्वं स्पष्टमेव । प्रतीकान्तर इति । स्वशब्देनोक्तत्वादित्येतदूघटकस्वशब्देनेतिप्रतीक इत्यर्थः । अत्रापीति । भिन्नार्थत्वोपपादके इह भवन्त इत्यादिप्रतीक इत्यर्थः । प्रतीकान्तरे एतदर्थकथनम्प्रासङ्गिकमत्र, तु तस्यावश्यकत्वमेवेत्याशयेनाह—अत्रैव वेति । नच 'हरिः सेव्यते' इत्यस्माद्यदि फलविशेष्यकबोधस्तदा फलस्यैव प्राधान्येन कालान्वयोऽपि तत्रैव

भावप्रकाशः ।

तन्मतानुसरणे तदुक्तमेव बीजान्तरमाह- अत एवेति । कर्मप्रत्यये फलस्य विशेष्यत्वाङ्गीकारादेवेत्यर्थः । भिन्नार्थत्वादिति । अस्य 'किन्तु पुत्रमिच्छतीत्यत्रार्थ एव' इति शेषः । कैयटेनापीत्थमेव भाष्ये व्याख्यातमित्याह--यदा क्रियाफलस्येति । तथा च विग्रहे फलस्य विशेष्यतया पुत्रीयतीत्यादौ व्यापारस्य विशेष्यतया भिन्नार्थत्वान्न तदर्थेऽयं क्यच् किन्तु पुत्रमिच्छतीत्यत्रार्थे एव । कर्मणि च फलस्य विशेष्यत्वमिष्टः पुत्रः, इष्यतेकल्पं पुत्र इत्यादौ सामानाधिकरण्यानुरोधेनाप्यवश्यमङ्गीकार्यम् । एतेन कर्मकृदन्ते तथाऽङ्गीकारेऽपि कर्माख्याते न तथेत्यपास्तं, सामानाधिकरण्यान्वयस्यापि विशिष्टत्वेन वैषम्ये बीजाभावात् । अत एव भाष्ये "इष्टः पुत्रः, इष्यते पुत्रः" इति तिङ्कृतोः साम्येनोपादानम् । अन्यथा त्वदुक्तरीत्या वैषम्यात्तदसङ्गतिः । 'इष्यते पुत्रः' इत्यत्र समाधानानुक्त्या न्यूनता च स्पष्टैवेति भावः । वाक्यमेवेति । अस्य 'पुत्र इष्ट' इत्यादि न तु क्यच्, क्यजन्तस्याकर्मकत्वात्कर्मणि प्रत्ययानुत्पादात्' इति शेषः । अन्यथैकाश्रयकपुत्रकर्मकेच्छानुकूलव्यापार इति बोधयोरुभयत्रापि तुल्यत्वेन भिन्नार्थत्वादित्यस्यासङ्गतिः स्पष्टैव । मम तु कर्मलकारे एकाश्रयकव्यापारजन्या पुत्रकर्मिकेच्छेति बोधः; कर्तृलकारे तूक्त इति भिन्नार्थत्वं स्पष्टमेव । प्रतीकान्तरे इति । स्वशब्देनेतिप्रतीके इत्यर्थः । अत्रापीति । भिन्नार्थत्वोपपादके इह भवन्त इति मतेऽपीत्यर्थः । वस्तुतः प्रतीकान्तरे एतदर्थकथनमसम्बद्धप्रलपितमेवेत्याह---अत्रैव वेति । एतेन तद्व्यावृत्तिः । सोऽर्थ उचित इत्यस्यानुषङ्गः । नचैवं कालान्वयोऽपि फले स्यादिति

भैरवी ।

स्यादिति वाच्यम् ? व्यापारेणैव तस्य साकाङ्क्षत्वाद्विशेषणीभूतेऽपि तस्मिन्कालान्वयात् । अत एव—

क्रियाभेदाय कालस्तु सङ्ख्या सर्वस्य भेदिका ।

इति हरिणोक्तम् । नचैवम्फलानुत्पत्तौ व्यापारस्य सत्त्वे पच्यते इति स्यादिति वाच्यम् ? इष्टापत्तेः । पचतीत्यादिभ्यो व्यापारविशेष्यकबोधस्येष्टतया प्रधानभूते तस्मिन्कालान्वय उचित एव । नच पच्यते तण्डुल इत्यादिभ्यः फलविशेष्यकबोधस्वीकारे प्रधानीभूतधात्वर्थाश्रयत्वे तण्डुलस्य कर्तृत्वापत्तिरिति वाच्यम् ? कर्तृप्रत्ययसमभिव्याहारे इत्यस्यापि तत्र निवेशात् । अत्र "लः कर्मणि" इत्यनेन कर्मणि लकारविधानमेव मानम् । एतेन पच्यत इत्यादिभ्यः फलविशेष्यकबोधस्वीकारे फले कालान्वयः स्यात् । एवं 'क्रियाप्रधानमाख्यातम्' इतिवचनविरोधश्च, क्रियापदस्य व्यापार एव प्रसिद्धेः । किञ्च प्रधानीभूतधात्वर्थाश्रयस्य कर्तृत्वेन प्रधानफलाश्रयतण्डुलादेरेव कर्तृत्वापत्तौ देवदत्तेन पच्यते तण्डुल इत्यत्र देवदत्तपदात्तृतीयानुपपत्तिः । किञ्च पाकानुकूलक्रियाम्पश्येत्यर्थे पचति पश्येतिवत्पच्यते पश्येत्यपीष्यते, तच्च फलस्य प्राधान्ये न स्यात्, क्रियायाः फलविशेषणत्वात् । नाप्यस्मिन्मते "सुप आत्मन" इति सूत्रस्थभाष्यविरोधः । पुत्रीयतीतिशब्दजन्यशाब्दबोध एकाश्रयकव्यापारजन्या पुत्रकर्मिकेच्छेत्याकारकस्तस्मिन् कर्तुः कर्मण इच्छाया विषयता । इष्यते पुत्र इत्यस्मात्तु जातशाब्दबोधेन कर्तुः विषयत्वमिति भिन्नार्थत्वं स्पष्टमेवेति परास्तम्, उक्तरीत्याऽनुपपत्तिपरिहाराय विशेषणीभूतेऽपि व्यापारे कालान्वयस्य स्वीकारात्, 'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' इत्यस्य यास्कीयवचनस्य-भावपदस्य धात्वर्थपरतया क्रियाप्रधानमिति वचने क्रियापदस्य साध्यत्वेन प्रतीयमानार्थपरतया चोपपत्तेश्च । तण्डुलादेः कर्तृत्वापत्तिस्तु

भावप्रकाशः ।

वाच्यम् ? व्यापारेणैव तस्य साकाङ्क्षत्वाद्विशेषणीभूते तत्रैव तदन्वयेन तदंशे उत्सर्गस्यागात् । अत एव-

क्रियाभेदाय कालस्तु संख्या सर्वस्यभेदिका ।

इति वाक्यपदीयं सङ्गच्छते । नन्वेवं फूत्कारादिदशायां विक्लित्यनारम्भे पच्यते इति न स्यादिति चेत् ? इष्टापत्तेः । पचतीति तु भवत्येव, तत्र व्यापारस्यैव प्राधान्येन तत्रैव कालान्वयाङ्गीकारात् । नचैवमप्योदनादेः कर्तृत्वापत्तिरिति वाच्यम् ? कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वाभावात् । तदेव हि तत्त्वम्, अत एव कर्मणि लविधिश्चरितार्थः । तदाह—इत्यन्यत्रेति । उद्योतादाविदमर्थः । एतेन नव्योक्तफलविशेष्यकबोधो न युक्तः, मनोरमादिसकलग्रन्थविरोधात् क्रियाप्रधानमिति वचनविरोधाच्च । क्रियात्वं च फलनिष्ठकार्यतानिरूपितकारणतावच्छेदकतया सिद्धो जातिविशेषः अखण्डोपाधिर्वा । न च फले सोऽस्ति येन वचनं सङ्गच्छेत । क्वचित्तत्रापि प्रयोगस्तु गौणः । किञ्च फलस्य क्रियात्वे विशेष्यत्वे च तत्रापि कालान्वयः स्यात् । किञ्च प्रधानीभूतधात्वर्थव्यापाराश्रयत्वेनौदनादेः कर्तृत्वं स्यात्, न स्याच्च देवदत्तादेरप्रधानव्यापाराश्रयत्वात् । किञ्च पचति भवतीत्यस्यैव विक्लित्यनुकूलक्रियां पश्येत्यर्थं पच्यते पश्येत्यस्यापि साधुत्वमिष्टं, तच्च फलस्य विशेष्यत्वे न स्यात् । न च "सुप आत्मनः" इति सूत्रभाष्यात्तथाङ्गीकारः, तस्यान्याशयकत्वात् । तथा हि पुत्रीयतीत्यतो यावानर्थः प्रतीयते कर्तृकर्मादिरूपः, स सर्वोऽपि पुत्रमिच्छतीत्यस्मादपि प्रतीयते । इष्यते पुत्र इत्यतस्तु न कर्तृप्रतीतिरतो भिन्नार्थत्वम् । न च तत्रापि कर्त्राक्षेपात्समानार्थत्वं, लाघवात्पदद्वयघटितविग्रहे चरितार्थो विधिः पदत्रयघटितविग्रहे न प्रवर्तत इत्याशयादिति मन्दोक्तमपास्तं, मूलखण्डकं प्रति तद्विरोधोक्तेरयुक्तत्वात् सिद्धान्तरीत्याऽपि तद्योजनेन तदविरोधाच्च, वचनार्थस्य अन्यथा—वक्ष्यमाणत्वेन तस्याप्यविरोधाच्च । अत एव तत्र क्रियात्वं "भूवा" इति सूत्रस्थभाष्यार्थप्रतिपादक"यावत्सिद्ध" "गुणभूतैः" इति हरिकारिकाद्वयारूढसाध्यत्वापरपर्यायधात्वर्थत्वरूपं निविष्टम् । अस्तु वा त्वदुक्तमेव, फलस्योद्देश्यरूपस्य तत्र ग्रहणान्न दोषः । स्फुटीभविष्यति चैतदनुपदमेव । कालान्वयकर्तृत्वापत्त्योक्तरीत्या

ष्येवमेव, 'क्रियाप्रधानमाख्यातम्' इति सिद्धान्तात् । धातूपस्थिता क्रिया

शब्दरत्नम् ।

ननु नव्यन्यायादिग्रन्थे प्रथमान्तविशेषयकबोधस्यैवानुभवप्रदर्शनात्तथैव युक्तमित्यतआह—क्रियाप्रधानमिति । इदं च रूपप्सूत्रे भाष्ये । क्रियेति ।

भैरवी ।

न, कर्मणि लकारविधानानुपपत्तेरिति प्रागेवावेदितम् । अस्मादेव ज्ञापकात्कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयस्यैव कर्तृत्वमिति स्वीकारात् । किञ्च वृत्तिः क्यजन्ता, तदर्थमध्ये न कर्तुः प्रवेशो यथा, तथा 'पुत्र अम् इष्' इति समुदायार्थेऽपि न तस्य प्रवेशः । एवमिष्यते पुत्र इत्यर्थेऽपि न तस्य प्रवेश इति कर्तारङ्गृहीत्वा भिन्नार्थत्वोपपादनमयुक्तमेव । विक्लित्त्यनुकूलक्रियाम्पश्येत्यर्थे पच्यते पश्येत्यस्य साधुत्वे मानाभावाच्च ।

यत्तूक्तम्प्राक् धात्वर्थ एव विशेष्य इति तद्घटकैवकारेण प्रथमान्तार्थस्याऽपि निरासे ध्वनिते प्रथमान्तार्थविशेष्यकशाब्दबोधस्वीकारे दोषोऽप्यस्तीति प्रतिपादयितुं शङ्कते—नन्वित्यादिना । नव्यपदोपादानेन तच्चिरन्तनमतेऽस्मदभिमतरीत्यैव बोध इति ध्वनितम् । इदञ्चेति । सिद्धान्तार्थसूचकवाक्यञ्चेत्यर्थः । रूपप्सूत्रे भाष्य इति । तत्र हि पचतिरूपम्पचतोरूपमित्यादेरसिद्धिमाशङ्क्य "क्रियाप्रधानमाख्यातन्द्रव्यप्रधानन्नाम, यतः क्रियाम्पृष्टस्तिङा-

भावप्रकाशः ।

सुपरिहरत्वाच्च, लकाराणां कर्मणि विध्यानर्थक्यापत्तेश्च । अत एव देवदत्तादेः कर्तृत्वोपपत्तेश्च । व्यापारत्वं सन्निवेश्य कर्तृत्वापत्तेरसम्बद्धत्वाच्च, व्यापारपदेन फलस्य काप्यग्रहणात्; विक्लित्त्यनुकूलक्रियां पश्येत्यर्थे पच्यते पश्येत्यस्य साधुत्वस्य मुनित्रयासम्मतत्वाच्च, त्वदुक्तभाष्याशयस्य मूर्खप्रलपितत्वाच्च । तथाहि—लोके पुत्रीयति देवदत्त इतिवत् पुत्रमिच्छति देवदत्त इति, इष्यते पुत्रो देवदत्तेनेति च प्रयुज्यते । क्वचिदुभयत्राकर्तृप्रयोगस्तु वाक्यैकदेशन्यायेन । तथा च सर्वत्र कर्तृप्रतीतेस्तुल्यत्वात्तदप्रतीतिप्रयुक्तं भिन्नार्थत्वम् । अत एव न च तत्रापीत्याद्युक्तेऽर्थे लाघवादित्यादिहेतूक्तिरसम्बद्धा,तस्य प्रयोगेऽप्रयोगे च प्रतीतेस्तुल्यत्वात् । किञ्च वृत्त्यर्थावबोधकवाक्यस्यैव विग्रहत्वेन पदद्वयघटितस्यातत्त्वेन विग्रहत्वोक्तेरयुक्तत्वात् । किञ्च तथा लाघवाङ्गीकारे पुत्रमिच्छति देवदत्त इत्यस्यापि विग्रहत्वानापत्तेः । अथ देवदत्त इत्यस्य वृत्तिवाक्येऽपि सत्त्वेन पुत्रीयतीत्यस्यैव विग्रहप्रदर्शनमुचितं; तच्च पुत्रमिच्छतीत्यस्यैवेति ब्रूषे तर्हि इष्यते पुत्र इत्यत्रापि तत्त्वं तुल्यम् । किंचैवं लाघवे महान्तं पुत्रमिच्छति, महान्तं कुम्भं करोति, माणवकं मुण्डं करोतीत्यादौ तत्तदापादनसमाधिपरभाष्यग्रन्थानां दत्तजलाञ्जलित्वापत्तेरिति यत्किंचिदेतत् । एवं च एवमेवेतिमूलस्थैवंशब्दस्य सादृश्यार्थकत्वादुक्ततुल्य एव विशेष्य इत्यर्थः। तुल्यत्वं च धात्वर्थत्वेन बोध्यम् । तदेतदभिप्रेत्य तात्पर्यतो व्याख्यातं धात्वर्थएवेत्यादि। एवव्यावर्त्यस्तु प्रथमान्तार्थविशेष्यको बोधो न तु फलविशेष्यक इति तद्भावः। तदेतद् ध्वनयितुमुत्तरग्रन्थमधिकं तत्रापि योजयितुं शङ्कते—नन्विति । तथाचैवव्यवच्छेद्यकारकविशेष्यकबोधे क्रियेत्यादिहेतूक्तिरिति न तदाधिक्यमिति भावः। नव्येति। अनेन तच्चिरन्तनग्रन्थेऽस्मदभिमत एवार्थः प्रतिपादित इति सूचितम् । यथा चैतत्तथा स्पष्टं मञ्जूषायाम् । आदिना वैशेषिकपरिग्रहः। प्रथमान्तेति । तदर्थेत्यर्थः । एवमग्रेऽपि। स च पाकानुकूलकृत्याश्रयो देवदत्त इत्यादिरीत्या बोध्यः। एवव्यावर्त्यस्त्वसमदिष्टबोध इति भावः। युक्तमिति । अनुभवापलापस्य कर्तुमशक्यत्वादिति भावः। ननु मुनित्रयानुक्तेर्निर्मूलोऽयं सिद्धान्तोऽत आह—इदंचेति । सिद्धान्तार्थकवाक्यं चेत्यर्थः। तत्र हि पचतिरूपं पचतोरूपमित्यादेरसिद्धिमाशङ्क्य "क्रियाप्रधानमाख्यातं, द्रव्यप्रधानं नाम । यतः क्रियां पृष्टस्तिङाचष्टे–किं चैत्रः करोति ? पचतीति। द्रव्यं पृष्टः कृताऽऽचष्टे कतरश्चैत्रो यः पाचकः" इत्युक्तम् । कृतेत्यस्य तत्प्रकृतिकसुबन्तेनेत्यर्थः। इदं च तद्धितादेरप्युपलक्षणम् । भाष्ये इति । अस्य स्पष्टमिति शेषः। इदमुपलक्षणं "ह्रस्वो नपुंसके" इति सूत्रस्थभाष्यस्यापि । तत्र हि "प्रातिपदिकग्रहणं तिङन्तव्यावृत्त्यर्थं–काण्डे कुड्ये रमते ब्राह्मणकुलम् । न वा लिङ्गायोगात् । काण्डे इत्यादिविभक्त्यर्थप्रधानं,

तिङर्थं प्रति विशेष्या न तु कृदर्थं प्रतीव विशेषणमिति हि तस्यार्थः । अत एव

शब्दरत्नम् ।

धात्वर्थांशद्वयस्यापि क्रियात्वेन व्यवहारो द्रष्टव्यः । तस्यार्थ इति ।

भैरवी ।

ऽऽचष्टे किञ्चैत्रः करोति? पचतीति, द्रव्यम्पृष्टः कृताऽऽचष्टे कतरश्चैत्रो यः पाचकः" इत्युक्तम् । अत्र कृतेत्यस्य कृदन्तप्रकृतिकसुबन्तेनेत्यर्थः । कृत्पदञ्च तद्धितादेरप्युपलक्षणम् । "ह्रस्वो नपुंसके" इति सूत्रभाष्येऽपि "प्रातिपदिकग्रहणं तावन्न व्यावृत्त्यर्थम्" इत्युक्त्वा तद्व्यावर्त्यं 'रमते, काण्डे' इत्यभिधाय "रमते इति क्रियाप्रधानं काण्ड इति विभक्त्यर्थप्रधानं, नचैतयोरर्थयो-लिङ्गसङ्ख्याभ्यां योगोऽस्ति" इत्युक्तम् । ननु पूर्वोक्तभाष्यद्वयेऽपि क्रियापदस्यैव सत्त्वेन व्यापारविशेष्यकबोध एवायातोत्यत आह—अंशद्वयस्यापीति । क्रियायाः प्राधान्यन्तु प्रत्य-यार्थनिष्ठप्रकारतानिरूपितविशेष्यत्वं नामार्थनिष्ठप्रकारतानिरूपितविशेष्यत्वञ्च । आद्यं यथा—पचति देवदत्त इत्यादौ, अन्त्यम्भूयते घटेनेत्यादौ । अत्रेदं बोध्यम्—धातोः फल-व्यापारयोः पृथक् शक्तिः । कर्तृप्रत्ययसमभिव्याहारे व्यापारस्य, कर्मप्रत्ययसमभिव्याहारे तु फलस्य प्राधान्यमिति सम्प्रदायः ।

परे तु फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले च पृथक्शक्तिः । तत्तत्प्रत्ययसमभि-व्याहारश्च तत्तद्विशेष्यकबोधनियामकः, प्रामाणिकङ्गौरवन्न दोषायेत्याहुः ।

द्रष्टव्य इति ।

"क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्" । इत्यत्र

"कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्" ॥

इत्यत्र च हरिग्रन्थे इत्यर्थः । अत्र क्रियात्वं साध्यत्वेन प्रतीयमानत्वरूपम् । तेन हिरु-गादिषु नातिव्याप्तिः । तेषु क्रियाप्रधानत्वव्यवहारस्तु क्रियामात्रविशेषणत्वेनोपपाद्यः सिद्ध-

भावप्रकाशः ।

रमते इति क्रियाप्रधानम् । न चैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगोऽस्ति" इत्युक्तम् । नन्वेवमपि वक्ष्यमाणलक्षणेषु क्रियायाः क्रियान्तरं प्रति प्रकारत्वेन सिद्धान्तोऽयुक्त एव अत आह—मूले धातूपस्थि-तेति । तथा च तत्र तस्याः क्रियान्तरं प्रति तत्त्वेऽपि तिङर्थं प्रति तत्त्वाविघातान्न सिद्धान्तासंगतिरिति भावः । ननूक्तसिद्धान्ताङ्गीकारे तत्र क्रियाग्रहणे व्यापारविशेष्यकबोधस्यैव सर्वत्र सिद्धत्वेन प्रथमान्तार्थ-विशेष्यकबोधवत्फलविशेष्यकबोधस्याप्यसिद्धिरिति "एवमेवेति" प्रतिज्ञातार्थासिद्धिरतः क्रियेतिप्रतीकं धृत्वा व्याचष्टे—धात्वर्थांशेति । धातुवाच्यफलव्यापारसमूहावयवफलव्यापारद्वयस्यापीत्यर्थः । उक्त-सिद्धान्तस्थक्रियापदे इति भावः । अनेन फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले च धातूनां शक्तिर्न तु तयोः पृथक् शक्तिरुद्देश्यविधेयभावेनान्वयापत्तेः, कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्च तत्त-द्बोधे नियामकः, गौरवं च प्रामाणिकत्वान्न दोषायेति सूचितम् । अधिकं मञ्जूषायां द्रष्टव्यम् । यद्व्यापा-रानन्तरं क्रियानिष्पत्तिस्तत्प्रकृष्टं कारणमित्याद्यभियुक्तोक्तौ—

"क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्" । इति ।

कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् ।

इति च हर्युक्तौ च प्रसिद्धतरस्तद्व्यवहारः; तद् ध्वनयन्नाह—द्रष्टव्य इति । अत एवात्रेति नोक्तम् । क्रियात्वं च लक्षणे साध्यत्वरूपमित्युक्तं, तेन हिरुगादिषु नैतल्लक्षणाति-व्याप्तिः । तेषां क्रियाप्रधानत्वं तु तन्मात्रविशेषणत्वरूपम् । अत एव तदर्थे न कारकान्वयः, तदन्वययोग्यस्य साध्यत्वस्य तत्राभानात् । वस्तुतो हिरुगाद्यर्थस्य सिद्धत्वेनाभानमात्रेण गौणक्रियात्व-व्यवहारः । धात्वर्थफलस्याप्युक्तक्रियात्वसत्त्वान्न कर्माख्याते एतल्लक्षणाव्याप्तिः । ये तु क्रियान्तराकाङ्क्षा-नुत्थापकतावच्छेदकवैजात्यस्य कारकान्वये नियामकत्वं वदन्ति, तेषामोदनं भुक्त्वा ग्रामं गच्छतीत्यादौ

सरला ।

धात्वर्थांशद्वयस्य—फलस्य व्यापारस्य च । 'फलव्यापारयोर्धातुः' इत्यनेन धातोः फले व्यापारे च

शब्दरत्नम् ।

आख्यातशब्देनात्र नियमेन जनकाकाङ्क्षविभक्त्यन्तम् "आख्यातमाख्यातेन" इत्यादौ

भैरवी ।

त्वेनाप्रतीयमानत्वेन वेति । उक्तद्विविधक्रियायाङ्कारकान्वयः । यत्तु क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकवैजात्यावच्छिन्ने कारकान्वय इति ; तन्न, ओदनम्भुक्त्वा ग्रामङ्गच्छतीत्यादौ क्त्वाप्रकृत्यर्थे कारकान्वयानापत्तेः ।

अन्ये तु यद्यपि "आख्यातमाख्यातेन" इत्यत्राख्यातपदन्तिङन्तपरं तथाऽपि आख्यायते सर्वप्रधानीभूतोऽर्थोऽनेनेति व्युत्पत्त्याऽऽख्यातपदेन धातुरेवोच्यते । अत एव "नामाख्यातोपसर्गनिपाताः" इति भाष्ये निरुक्ते च प्रकृतीनामेवोल्लेखः कृतः । अत एव "नामान्याख्यातजानि" इति शाकटायनोक्तेरप्युपपत्तिः । अत एव "उणादयो बहुलम्" इति सूत्रे भाष्ये "सर्वन्नाम धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्" इत्युक्तम् । एतेन कृतिराख्यातार्थः, भावना आख्यातार्थः इति नैयायिकानाम्प्रवादो न श्रद्धेयः । "आख्यातमाख्यातेन" इत्यादौत्वाख्यातपदन्धातुप्रकृतिकतिङन्ते लाक्षणिकमिति । एवञ्च विशेष्यतासम्बन्धेन कारकप्रकारकशाब्दबुद्धिम्प्रति धातुजन्योपस्थितिः कारणमिति कार्यकारणभावः कर्तृकर्मोभयसाधारण एव । नचोक्तकार्यकारणभावात्पक्वस्तण्डुल इत्यत्रापि तण्डुलपदार्थस्य धात्वर्थविशेषणत्वापत्तिरिति वाच्यम् ? 'सत्त्वप्रधानानि नामानि' इति विशेषवचनेन द्रव्यप्राधान्यस्योपपत्तेरित्यूचुः ।

भावप्रकाशः ।

क्त्वाप्रकृत्यर्थे कारकान्वयो न स्यादिति भावः । ननु तत्र किं नामाख्यातमिति चेदत्र मान्याः—यद्यपि "आख्यातमाख्यातेन" इत्यादावाख्यातशब्दोऽन्यत्र प्रसिद्धस्तथाप्यत्र आख्यायते सर्वप्रधानीभूतोऽर्थोऽनेनेति व्युत्पत्त्याऽऽख्यातशब्देन धातुरुच्यते, "नामाख्यातोपसर्गनिपाताः" इति भाष्ये निरुक्ते च प्रकृतीनामेवोद्देशाच्च, अग्रेऽपि तत्र "नामान्याख्यातजानि" इतिशाकटायनो नैरुक्तसमयश्चेत्युक्तत्वाच्च । नहि प्रत्ययजं तदन्तजं वा नाम सम्भाव्यते किन्तु धातुजम् । अत एवैतत्समानार्थकं वाक्यं—'सर्वं नाम धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्' इति "उणादय" इत्यत्र भाष्ये पठितम् । एतेन 'कृतिराख्यातार्थः' 'भावनाख्यातार्थः' इत्यादिनैयायिकमीमांसकानां प्रवादः प्रत्युक्तः, मूलशैथिल्यात् । अत एव पर्यांचक्रे इत्यादावामन्तस्य क्रियाविशेष्यकबोधकजनकत्वम् । तच्च प्राधान्यं परस्परमाकाङ्क्षावशाद् ये क्रियान्वयितया प्रमाणान्तरेण निर्णीतास्तान्प्रति । तथा च लाघवात्कारकप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति धातुजन्योपस्थितेः कारणत्वस्य क्लृप्ततया कर्मादिकमपि धात्वर्थं प्रति विशेषणम् । यद्यप्युक्तवचनेन 'चैत्रेण काष्ठैः पक्वस्तण्डुलः' इत्यादौ चैत्रादीनामिव तण्डुलस्यापि क्रियां प्रति विशेषणत्वं प्रसक्तं तथापि तदुत्तरवचनेन "सत्त्वप्रधानानि नामानि" इत्यनेन प्रत्ययार्थविशेष्यता बोध्या । तत्र च प्रत्यासत्तिन्यायेन परिसमाप्तार्थकं सत्त्ववाचकप्रत्ययान्तं नाम गृह्यते । अत एव पचतिकल्पमित्यादौ न दोषः । एतेनैधामित्यादौ प्रत्ययार्थत्वात् कर्तृविशेष्यकबोधापत्तौ लिङ्गसंख्याकारकान्वयादव्ययत्वोक्तिरसंगतेत्यपास्तमिति, तत्प्राचामनुरोधेन, क्रियाप्रधानो धातुरित्युक्त्या तिङर्थस्य विशेषणत्वस्य सामञ्जस्ये नालाभात् शिष्ये इति तिङन्तेऽतिव्याप्तेश्च, कृत्प्रकृतिभूतधातावव्याप्तेश्च, क्रियावाचकत्वमात्रे वक्तव्ये प्राधान्यनिवेशस्य व्यर्थत्वाच्च । तदेतद् ध्वनयन्नन्यथा व्याचष्टे—आख्यातेति । अत्रेति । उक्तसिद्धान्ते इत्यर्थः । तथा च लोके आख्यातशब्दस्य तिङन्ते योगरूढत्वेऽपि शास्त्रे उक्तवक्ष्यमाणहेतुभिरत्रापि तस्य योगरूढ्यङ्गीकारात्पारिभाषिकमाख्यातत्वं तस्य । क्वचिदन्यत्र प्रयोगस्तु लाक्षणिक इत्यनुपदमेव स्फुटीभविष्यति । विभक्त्यन्तमिति । सुप्तिङन्यतरविभक्त्यन्तमित्यर्थः । अत एव धिवन्यं भुक्त्वा कर्तुं पचतिरूपमेषां पाचयाम् इत्यादि नामसरूपमाख्यातमेव, भाष्ये "किं कर्तव्यम्" इत्यादिक्रियाप्रश्ने "यद्वक्तव्यम्" इत्याद्युत्तरात् । तथाच 'तिङाचष्टे' इति भाष्यमुपलक्षणम् । पाचक इत्यादावेकदेशस्य तदाकाङ्क्षत्वेऽपि विभक्त्यर्थस्य न तदाकाङ्क्षत्वमिति न तत्राख्यातलक्षणातिव्याप्तिः । तत्र धातोरग्रहणे विभक्त्यन्तग्रहणे हेतुमाह—आख्यातमिति । तथा

शब्दरत्नम्

तथा प्रतीतेः । रूपप्सूत्रे कैयटोऽपि 'आख्यातात्कालसङ्ख्यासाधवाचकात्मेऽपि तस्य क्रियाप्रधानत्वम्' इति । 'नामान्याख्यातजानि' इति शाकटायनोक्तौ आख्यातावयवधातुजानीत्यर्थः । अत एव 'सर्वं नाम धातुजमाह' इति तत्समानार्थ-

भैरवी ।

वस्तुतस्तु धातुमात्रस्योक्तव्युत्पत्त्या आख्यातपदेन ग्रहणे "आख्यातमाख्यातेन" इत्यत्र लक्षणाया आपत्तेः शिष्ये इत्यादितिङन्तेऽतिव्याप्तेश्चाख्यातपदन्तिङन्तपरमेवेत्याशयेन व्याचष्टे—आख्यातशब्देनेति । अत एव—आख्यातपदस्याख्यातावयवधातुलाक्षणिकत्वादेव । मूले—अत एव—धात्वर्थविशेष्यकबोधस्वीकारादेव । एकवाक्यत्वाभावमुपपादयति—पाक-

भावप्रकाशः ।

प्रतीतेः-तथैव प्रतीतेरित्यर्थः । तदन्तपरिग्रहमात्रेण सादृश्यम् । अन्यथा तत्र तिङन्तस्यैव ग्रहणादत्रोभयोर्ग्रहणात्तदसङ्गतिः स्पष्टैव । किं च "चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताः" इत्युपक्रमोक्तेः । अपि च "भावकालकारकसंख्याश्चत्वारोऽर्था आख्यातस्य, तत्र भावः प्रधानम्" इति तद्भाष्योक्तेः । अत एव विभक्त्यन्तमित्युक्तं न तु तिङन्तमिति, तथा सति एधितव्यादीनां नियमतो जनकाकाङ्क्षत्वेऽपि तिङन्तत्वाभावेनासंग्रहाच्चतुर्विधत्वभङ्गापत्तेः । नामपदेन तु न तत्संग्रहः "किं कर्तव्यम्" इत्याद्युक्तभाष्यान्नियमतो जन्यतया क्रियाकाङ्क्षं यत् तस्यैव तत्र नामत्वेन ग्रहणात् । अत एवोक्तरूपक्रियात्वप्रतिद्वन्द्वितया नामलक्षणे सिद्धत्वापरपर्यायसत्त्वनिवेशः । तथा च तथाप्रतीतेः क्रियाप्रधानकोभयविधप्रत्ययान्तस्य तत्राख्यातपदेन ग्रहणम् । अत एव क्रियाप्रधानमाख्यातमिति बहुव्रीहिणा सामानाधिकरण्यं सङ्गच्छते । एवं च क्रियाप्रधानमित्यस्य प्रत्ययान्तार्थापेक्षया यत्र धात्वर्थः प्रधानं तदाख्यातमित्यर्थः । एवं च मूले तिङर्थ प्रतीत्युपलक्षणमन्यप्रत्ययार्थस्यापि । एतेनाख्यातं तिङन्तं धात्वर्थप्रधानमिति रत्नाकरदण्ड्यादिव्याख्यानमपास्तम् । प्राग्वक्तव्यमपि विभक्त्यन्तग्रहणे हेत्वन्तरमपि सूचयितुं फलाद्यपेक्षया तस्याः प्राधान्यमित्येव तदर्थोऽस्त्विति शङ्कान्निरसितुमुक्तार्थे सम्मतिमाह—रूपबिति । उक्तभाष्यप्रतीके इति भावः । आख्यातादित्यस्याऽऽख्यातवति प्रश्नवाक्ये प्रकरणादितः क्रियाप्रश्नावगतौ आख्यातेनैवोत्तरोपादानादित्यादिः । आदिना क्रियापरिग्रहः । तत्र कचिच्चतुर्णान्ततोऽवगमः क्वचित् त्रयाणां क्वचिद् द्वयोरित्यन्यत् । तस्य—आख्यातस्य । क्रियाप्रधानत्वमिति । फलव्यापारान्यतरप्रधानत्वमित्यर्थः । नन्वेवं नाम्नस्तिङन्ताजन्यत्वादत्राख्यातजानीत्यसङ्गतं स्यादत आह—नामानीति । नोक्ताविति । तत्र त्वित्यर्थः । अवयवेति । असम्भवात्तदवयवे लक्षणेति भावः । तत्रैव हेत्वन्तरं सूचयितुं सम्मतिमाह–अत एवेति । लक्षणया तथार्थाङ्गीकारादेवेत्यर्थः । तत्समानेति । 'व्याकरणे शकटस्य च तोकम्' इति तदग्रे एवोक्तेरिति भावः । एवं निष्कौशाम्बिरित्याद्युदाहरणविषये लुप्ताख्यातेषु चेतिसमर्थसूत्रस्थवार्तिके कृत्यपि आख्यातपदप्रयोग उपचारादिति बोध्यम् । ननु तन्मते एकं वाक्यं स्यादित्यस्य आर्थिकस्य तल्लक्षणाक्रान्तं स्यादित्यर्थ उत तथाबोधः स्यादित्यर्थ उत तथाऽपूर्वं वाक्यं निष्पद्येतेत्यर्थो वा ? नाद्यः, इष्टापत्तेः 'एकतिङ्वाक्यम्' इति परिभाषितनिघाताद्युपयोगिवाक्यत्वाभावेन–तत्त्वाभावेऽपि लौकिकवाक्यत्वस्य सत्त्वेन तत्त्वस्य दुर्निवारत्वात् । लौकिकवाक्यत्वं च—

सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता ।

इत्यमरोक्तम् । अत्र वाशब्दश्चेदर्थे । बोध्येति शेषः । कारकान्वितक्रियाबोधकसुप्तिङन्तचयो वाक्यमित्यर्थः । कारकं च तिङन्तवाच्यं तदन्यपदवाच्यं वेत्यन्यत् । सुप्तिङन्तचय इत्यत्र सुप् च तिङ् च तयोः समाहारः सुप्तिङ् सुब्विशिष्टं तिङ् सुप्तिङ् तयोरेकशेषेऽन्तशब्देन बहुव्रीहिः, ततश्चयशब्देन षष्ठीतत्पुरुषः । तेन सुबन्तचयतिङन्तचयसुप्तिङन्तचयास्तेषां त्रयाणां लाभः । तत्र सुबन्तचयः—चैत्रेण शयितव्यं, प्रकृतिसिद्धमिदम्, इदं हि महात्मनामित्यादिः, अस्तीत्यध्याहारस्यानावश्यकत्वात् । तिङन्तचयः—पचति

सरला ।

खण्डशक्तिप्रतिपादनादिति भावः । जनकाकाङ्क्षविभक्त्यन्तम्–तिङन्तम् । धातुजानि । अस्य

पाचको व्रजतीतिवत् पचति व्रजतीति नैकं वाक्यम्। पाककर्तृकर्तृकं गमनं हि

**शब्दरत्नम्।**

कम् 'उणादय'' इति सूत्रे भाष्ये पठितम्। नैकं वाक्यमिति। साधु इति

**भैरवी।**

कर्तृकेति। ननु नैकं वाक्यमित्ययुक्तम्पदसमूहस्यैव वाक्यत्वादत आह—साधु इति।

**भावप्रकाशः।**

व्रजतीत्यादिः। अन्यश्चैत्रः पचतीत्यादिः। क्रिया वेत्यनेन निरर्थकपदसमुदायव्यावृत्तिः। सुप्तिङन्तचय-पदेन केवलस्य पचतीत्यादेर्व्यावृत्तिः। तस्यापि कर्त्रादिविशिष्टक्रियाबोधकत्वात्। एतेन सुप्तिङन्तचय इत्यनेन चयद्वयसंग्रहः। वाशब्दस्य समुच्चयार्थकत्वात्कारकान्वितक्रियाबोधकमपि वाक्यमित्यनेनान्यसंग्रहः। केचित्तु भाष्यमतेनाऽऽद्यः पक्ष एकतिङिति, वार्तिकमतेनापर इत्याहुरिति रामाश्रमाद्युक्तमपास्तम्, अतिप्रसङ्गापत्तेः स्पष्टत्वात्। इदमेव 'आख्यातं सविशेषणं वाक्यम्' इत्यादिना समर्थसूत्रे भाष्ये प्रतिपादितम्। एतदेवैकोद्देश्यकैकविधेयकत्वगर्भमेकवाक्यलक्षणम्। तदुक्तं हरिणा भट्टैश्च—

साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्।

क्रियाप्रधानं गुणवदेकार्थं वाक्यमुच्यते॥ इति।

वाक्यमित्यस्यैकं वाक्यमित्यर्थः, "अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति जैमिनिसूत्रात्। अत एवोद्देश्यस्य विधेयस्य चानेकत्वे वाक्यभेद इति मीमांसकोद्घोषः। गुणवदित्यस्य साक्षात्परम्परया वा यद्विशेषणं तद्वदित्यर्थः। तेन 'नद्यास्तिष्ठति कूले' इत्यादौ नद्या इत्यादेः समानवाक्यस्थत्वसिद्धिः। अत्र वाक्यत्वं तु "सविशेषणम्" इत्यस्योक्तरीत्या अर्थाङ्गीकारात्। वस्तुतस्तु "एकतिङ्" इति लक्षणेनात्र तत्त्वं बोध्यम्। यदि वाक्यलक्षणमेकार्थत्वगर्भं स्यात् तर्हि "समानवाक्ये" इत्यत्र समानपदोपादानमनर्थकं स्यात्। तस्मादाख्यातं सविशेषणमित्येतद् "वाक्यस्य टेः" इत्येतच्छास्त्रलोकसाधारणम्। अत एव 'पच पचस्व च देवदत्त३' इत्यादौ प्लुतो भवत्येव। 'एकतिङ्' इति तु समानवाक्ये इत्येतद्विषयं क्वचित् प्लुतविषयं च। अत एव ब्रूहिब्रूहीत्युदाहरणसंगतिः। अत्र हि "अनन्त्यस्यापि" इति प्लुतः, प्रश्नोत्तरत्वात्। कैयटादीनां त्वत्र महान्प्रमाद इति स्पष्टमुद्योतादौ। एतेनामरे वाशब्दोत्तरं द्वौ ककारौ एकः ककारो वेति पाठद्वयं दृश्यते। तस्य चायमर्थः वच्धातोर्वाधातोर्वा बाहुलकात्कर्मणि क्विप्। आद्ये "क्विब्वचि" इत्यादिना दीर्घः। यद्वा वातेः कर्मणि 'घञर्थे क' इति के टाप्। ये गत्यर्थास्ते ज्ञानार्थाः। यद्वा वाच्याशब्दैकदेशस्य वाच्शब्दस्य वाशब्दस्य वा भीम इतिवत् ग्रहणम्। अत एव "नब्विषयस्य" इत्यत्र नपुंसकैकदेशो नप्शब्दः "जे प्रोष्ठपदानाम्" इत्यत्र जातैकदेशो जाशब्दः "आहौ प्रभूतादिभ्यः" इत्यत्राहेति तिङन्तैकदेशो हान्तः शब्दः "राजाऽऽसे" इत्यत्र समासैकदेशः सशब्द इति तत्र तत्र व्याख्यातारः। तेन कारकान्वितक्रियाया वाच्यत्वं यदा तदैव बोधकस्य वाक्यत्वम्। अत एव "अर्थैक्यादेकम्" इति जैमिनिसूत्रेण "वचोऽशब्दसंज्ञायाम्" इति सूत्रेण च सह न विरोधः। एवं चैतेन देवदत्तः पचतीत्यस्य नैयायिकरीत्या प्रथमान्तविशेष्यकबोधे क्रियान्वितकारकपरत्वाद्वाक्यत्वमेव न स्यादिति बोधितम्। तथा च "वाक्यादेरामन्त्रितस्य" इत्यादिकार्याणां भावलकारे चरितार्थानां कर्तृकर्मलकारे अप्रवृत्त्यापत्तौ भाष्यादिविरोधः स्पष्टः। 'एकतिङ्' इति तु निघातादिविषयकं पारिभाषिकमुक्तलक्षणेन संगृहीतं च। यत्तु क्रिया वेति लक्षणान्तरमर्थनिष्ठवाक्यत्वबोधकमिति; तन्न, "वचोऽशब्दसंज्ञायाम्" इति कुत्वनिषेधेनार्थे वाक्यशब्दप्रयोगादिति मान्योक्तं प्राचामनुरोधीति सूचितम्, क्लिष्टत्वात् पचति व्रजतीत्यत्र तन्मते तत्त्वापादकमूलविरोधापत्तेश्च स्वपूर्वग्रन्थविरोधापत्तेश्च। तस्मादन्वितेत्यत्रान्वयो विशेष्यतया विशेषणतया वेत्यत्र नाग्रह इत्येव तदभिमतं, तयोर्लक्षणयोर्भिन्नविषयत्वावश्यकत्वस्योक्तत्वाच्चेति दिक्। अत एव न द्वितीयोऽपि, इष्टापत्तेः स्वस्वव्युत्पत्त्यनुसारेण बोधस्य दुर्वारत्वात्, आक्षिप्तपाकानुकूलकृतिमति गमनानुकूलकृतिमत्त्वान्वयस्य योग्यतया सम्भवेनाविरोधात्। अत एव तृतीयोऽपि न, इष्टापत्तेः शब्दानां नित्यत्वाच्च; अत आह—साध्विति शेषः इति। साधुत्वं च तत्तदर्थनिरूपणाभियुक्तवैयाकरणसंमतेऽर्थे एव नान्यत्र। तदुक्तं हरिणा—

पाचक इत्यादेरर्थः। एककर्तृका पचिक्रिया गमिक्रिया च पचतिव्रजत्योः पृथगेवार्थः। एवंच प्रथमान्तविशेष्यको बोध इति नैयायिकोद्घोषो भाष्याद्य-

शब्दरत्नम्।

शेषः। प्रथमान्तविशेष्यके बोधे तु तस्य तत्त्वं दुर्वारमिति भावः। एवं च—

भैरवी।

शेष इति। लौकिकवाक्यत्वलक्षणानाक्रान्तत्वादिति भावः। लौकिकैकवाक्यत्वञ्च—

सुप्तिङन्तचयो वाक्यङ् क्रिया वा कारकान्विता ॥

इत्यनेनामरसिंहेनोक्तम्। अत्र वाशब्दश्चेदर्थे। एवञ्च कारकान्वितक्रियाबोधकत्वे सति सुप्तिङन्तचयो वाक्यमिति फलितम्। सुप्तिङन्तचय इत्यस्य सुबन्तचयतिङन्तचयसुप्तिङन्तचय इत्यर्थः। कारकपदार्थस्तु क्वचित्सुबन्तवाच्यः क्वचित्तिङन्तवाच्यश्च। आद्यं यथा—देवदत्तेन शयितव्यमिति। अत्रास्तीत्यस्याध्याहारलभ्यत्वेऽपि तदनुपादानात्सुबन्तचयत्वमव्याहतम्। द्वितीयं यथा—पचतिभवतीत्यादि। तृतीयन्तु—चैत्रः पचतीत्यादि क्रिया वा कारकान्वितेत्येतदुपादानन्तु 'दशदाडिमानि षडपूपाः' इत्यादीनां समुदायस्यैकवाक्यत्वव्यवहारापत्तिवारणाय। 'एकतिङ् वाक्यम्' इति तु "समानवाक्ये निघातयुष्मदस्मदादेशाः" इत्येतद्विषयम्, क्वचित्तिङन्तस्य ब्रूहिब्रूहीत्यस्य यत्र द्विर्वचनन्तत्र प्रश्नोत्तरत्वे "अनन्त्यस्यापि प्रश्नाख्यानयोः" इत्यनेन यत्र प्लुतस्तद्विषयञ्च। जैमिनिना तु "अर्थैक्यादेकं वाक्यं साकाङ्क्षञ्चेद्विभागे स्यात्" इत्युक्तम्। विभागे-पृथक्प्रयोगे यदि साकाङ्क्षं स्यात्तदा तादृशसाकाङ्क्षपदसमुदायस्यार्थैक्यादेकविशेष्यकविशिष्टार्थविषयकप्रतीतिजनकत्वादेकवाक्यत्वव्यवहार इति तदर्थः। अत्र कारकान्वितक्रियाबोधकसुप्तिङन्तचयस्य देवदत्तः पचतीत्यस्यैकवाक्यत्वं सर्वमतसिद्धन्तच्च प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकर्तृमते नोपपद्यते इति तेषान्तादृशोद्घोषो नादर्तव्य इति बोध्यम्। यदि तेषाम्मतसिद्धमेवैकवाक्यत्वं शास्त्रीयकार्यप्रवृत्तिसम्पादकं स्यात्तदा "वाक्यादेरामन्त्रितस्य" इति द्विर्वचनस्य 'देवदत्त शिष्ये त्वया' इत्यादौ चरितार्थस्य कर्तरि कर्मणि वा यत्र लकारस्तत्र प्रवृत्तिर्न स्यात्।

यत्तु क्रिया वेत्यनेनार्थनिष्ठैकवाक्यत्वसूचकं लक्षणान्तरङ्कृतमिति; तन्न, "वचोऽशब्दसञ्ज्ञायाम्" इति कुत्वनिषेधेन तत्र वाच्यत्वव्यवहारस्यैव मुनिसम्मतत्वात्। अत एवोक्तं—'साधु इति शेष इति'।

तस्य तत्त्वमिति। एकवाक्यत्वमित्यर्थः। चैत्र इत्यस्याध्याहारेण पाकानुकूलकृतिमांश्चैत्रो व्रजनानुकूलकृतिमानित्यन्वयबोधस्य सम्भवेनैकवाक्यत्वन्दुर्वारमिति भावः। नच प्रथ-

भावप्रकाशः।

भेद्यभेदकसंबन्धोपाधिभेदनियन्त्रितम्।

साधुत्वं, तदभावेऽपि बोधो नेह निवार्यते ॥ इति।

न च गाव्याद्यपभ्रंशवदसाधुत्वे ततस्तेषां तत्तदर्थबोधो न स्यादिति वाच्यम्? साधुत्वज्ञानस्य बोधाजनकत्वादसाधुत्वज्ञानस्य तदप्रतिबन्धकत्वाच्चेति तुर्यपादाशयः। एतेन "नैकं वाक्यमिति, परेषां मते कर्तुर्वाच्यत्वे प्रत्ययार्थत्वात्तस्य विशेष्यत्वे एकं वाक्यं स्यात्, कर्तुरप्रत्ययार्थत्वे तु शब्दानुपस्थितेरेकत्वमनन्वितं स्यात्, पचतीत्युक्ते एकः कर्तेतिनिश्चयश्च न स्यात्, पचति पचत इत्यादीनां पर्यायता स्यात्, व्याकरणस्मृतिविरोधश्चाधिकः। नैयायिकोद्घोष इति। कर्तृकर्मणोस्तिङ्वाच्यत्वे अवाच्यत्वे चेतिशेषः" इति मान्यव्याख्यानं प्राचामनुरोधेनेति सूचितम्। मूले-अत एवेति। अस्य क्रियाविशेष्यकबोधाङ्गीकारादेवेत्यर्थः। एतेन परमते लब्धमर्थमाह-प्रथमान्तेति। तस्य-पचति व्रजतीत्यस्य। तत्त्वं-साधुत्वम्। तच्चोपपादितम्। ननु स्वमतेऽप्ययं दोषः चैत्रस्य पाकगमने इतिवदेकचैत्रकर्तृकसमुच्चितक्रियाद्वयप्रधानकबोधाङ्गीकारात्। इयान्परम्भेदः परमते उभयप्रकारकैकविशेष्यको बोधः, स्वमते तु एकप्रकारकोभयविशे-

नुसारिभिर्नादृतव्यः । यास्कोऽप्याह–'भावप्रधानमाख्यातं, सत्त्वप्रधानानि

---

**शब्दरत्नम् ।**

अस्य साधुत्वापत्तेश्च । भावप्रधानमिति । भावकालकारकसंख्याश्चत्वारोऽर्था आख्यात-

**भैरवी ।**

मान्तपदाध्याहाराभावेनैकवाक्यत्वाभावस्योपपत्तिर्भवत्येवेति वाच्यम् ? कर्तुराख्यातार्थ-त्वेन तस्य विशेष्यत्वम्प्रत्ययार्थत्वेन स्यादिति पाककर्ता व्रजनकर्त्रभिन्न इति बोधस्यैक-विशेष्यकस्य सम्भवात् ।

कृतिराख्यातार्थ इति तु न युक्तम्, आख्यातवाच्यसङ्ख्यायाः स्वान्वययोग्यस्य शब्दा-नुपस्थितत्वेनानन्वितत्वापत्तेः। सङ्ख्याऽपि नाख्यातवाच्येति चेत्पचतीत्यादिजन्यबोधानन्तर-कर्ता एक अनेको वेति संशयापत्तिः, पचति पचत इत्यादीनाम्पर्यायत्वापत्तिश्च स्यात्। क्रिया-प्राधान्यबोधक "ह्रस्वो नपुंसके" इत्यादिसूत्रस्थभाष्यविरोधापत्तिश्चेति दिक्। मूले—नैया-यिकोद्घोष इति। कर्तुर्वाच्यत्वेऽवाच्यत्वे चेति शेषः। अस्य साधुत्वापत्तेश्चेति। पचतिव्रजती-

**भावप्रकाशः ।**

त्यको बोधः। एवं च मूलादि चिन्त्यमिति चेत् ? न, चं विना तथा बोधासम्भवेन प्रधानद्वयस्य परस्परा-न्वयायोगात्स्वमते नैकं वाक्यं साध्वितिमूलादितात्पर्यात्। परमते तु प्रधानयोस्तयोरभेदसम्भवेन एकत्रोभ-योरन्वयसम्भवेन वा तस्वापत्तिः। यदि तु चस्तत्रैव प्रयुज्यते तदा भवत्येवैकं वाक्यं स्वमतेऽपि। अत एव 'पच पश्य च देवदत्त ३' इति प्रागुक्तप्लुतोदाहरणसंगतिः। अत एव दृष्टान्तोक्तिः—यथा तत्र चम्विना तदर्थे एकवाक्यत्वं, नैवमत्रासम्भवात्। अत एव 'पृथगेवार्थ' इति मूले उक्तमिति भावः। एवं चेत्यस्योक्तसि-द्धान्तानङ्गीकारे चेति नार्थः, निर्युक्तिकसिद्धान्तस्यानङ्गीकाराद् भाष्यानुसारिभिरित्यस्य पौनरुक्त्यापत्तेश्च तस्य व्यवहितत्वाच्चात आह–अस्य साधुत्वापत्तेश्चेति। पचति व्रजतीत्यस्य तन्मते साधुत्वा-पत्तेश्चेत्यर्थः।

मूले—उद्घोष इति। स चेत्थं 'ग्रामं गच्छति चैत्रः' इत्यत्र द्वितीयार्थौ वृत्तित्वं भेदश्च। फलावच्छि-न्नव्यापारो धात्वर्थः। तदनुकूला कृतिराख्यातार्थः। तत्र संयोगरूपफले निरूपकतासम्बन्धेन वृत्तित्वं, व्यापारे भेदः सामानाधिकरण्यसम्बन्धेनान्वेति, प्रकृत्यर्थश्च ग्रामादिर्द्विविधेऽपि प्रत्ययार्थे क्रमेणाधेयतया प्रतियोगितया च, धात्वर्थश्चाख्यातार्थकृतौ, सा च प्रथमान्तोपस्थाप्ये। तथा च ग्रामनिष्ठवृत्तित्व-निरूपकसंयोगजनकं ग्रामप्रतियोगिकभेदसमानाधिकरणञ्च यद् गमनन्तदनुकूलकृतिमांश्चैत्र इति बोधः। गम्यते ग्रामश्चैत्रेणेत्यत्र तु फलं भेदश्च तदर्थः, तृतीयार्थस्तु कृतिः। तत्र प्रथमान्तार्थग्रामः स्व-प्रतियोगितावत्त्वसम्बन्धेन भेदे, स च धात्वर्थे गमने सामानाधिकरण्येन, तच्च धात्वर्थगमनं जन्यतासम्ब-न्धेन पुनस्तदर्थे फले, तच्चाश्रयत्वेन नामार्थग्रामे, चैत्रस्तु तृतीयार्थकृतौ, सा च गमने जन्यत्वसंसर्ग-णान्वेति। ततश्च चैत्रनिष्ठकृतिजन्यग्रामभिन्नचैत्रसमवेतसंयोगजनकगमनजन्यसंयोगाश्रयो ग्राम इति बोध इति। स्वमते तु ग्रामाभिन्नाश्रयवृत्तिसंयोगजनक एकचैत्राभिन्नाश्रयवृत्तिर्व्यापारः, एकचैत्राभिन्नाश्र-यवृत्तिव्यापारजन्य एकग्रामाभिन्नाश्रयवृत्तिः संयोग इति बोधः। एतेन तन्मते हि पाककर्ता व्रजनानुकूल-कृतिमानिति दृष्टान्तार्थः। पाकानुकूला कृतिर्व्रजतीति दार्ष्टान्तिकार्थः। स च भाष्यादिग्रन्थविरुद्धः। किं च कर्तृकर्मप्रत्यययोरेकरूप एव बोध इत्युक्तं, तन्मते तु प्रथमान्तभेदाद्भिन्न इति विशेषस्तस्मात्तन्मताना-दर इति रत्नाकरदण्डपाण्युक्तमपास्तम्।

भावप्रधानमितीति। चत्वारि पदजातानि नामाख्यातोपसर्गनिपातास्तत्रैव तन्नामाख्यातयोर्ल-क्षणमित्यादिः। यास्कोक्तेरपि तथार्थो नेति सूचयितुं कैयटसजातीयमर्थमाह–भावेति। आख्यातस्य-

**सरला ।**

'लक्षणया' इति शेषः। भावकालकारकेति। अत्र भावपदेन क्रियाया ग्रहणम्। सा च फलं व्यापार-श्चेत्युच्यते। भावपदं च भावत्वस्योपलक्षणम्। तेन क्रियात्वं क्रिया कालः संख्या कारकं चेति पञ्चक

नामानि'। पश्य मृगो धावतीत्यादौ तु मृगकर्तृकं गमनं दृशिक्रियायां कर्म,

शब्दरत्नम् ।

स्य, तत्र भावः प्रधानमिति तदर्थं तद्भाष्यकार आह । नामानीति । नामपदेन सुबन्तमिति च तद्भाष्ये स्पष्टम् । तच्चाव्ययातिरिक्तमित्यन्यत्र निरूपितम् । नमन्त्याख्यातार्थं प्रति विशेषणीभवन्तीति नामानीति तद्व्युत्पत्तिर्निरुक्तभाष्ये दर्शिता । किं चैतन्निरुक्तोत्तरं

भैरवी ।

त्यस्य साधुत्वापत्तेश्चेत्यर्थः । तद्भाष्यकारः—यास्कोक्तिभाष्यकारः । तच्च—नाम च । अतिरिक्तमिति । एवञ्च तेषां सत्त्वप्राधान्याभावेऽपि न क्षतिः । यदि तु पचतिव्रजति चेति चकारः प्रयुज्यते, तदा चशब्दार्थम्प्रत्युभयोर्विशेषणत्वेनैकवाक्यत्वन्दुर्वारमेव । एतेन भवन्मतेऽपि पचतिव्रजतीत्यनयोरेकवाक्यत्वापत्तिर्दुर्वारैव, एककर्तृका पचिक्रिया व्रजिक्रिया चेति बोधस्य सम्भवात् । भवन्मतादस्मन्मते एतावानेव विशेषः—भवन्मते एकप्रकारकोभयविशेष्यकोऽस्माकम्मते तूभयप्रकारकैकविशेष्यक इति मूलोक्तञ्चिन्त्यमिति परानुयायिप्रतिपादितमपास्तं, चकारं विना जायमानस्य बोधस्योभयविशेष्यकतयाऽथक्याभावेन वाक्यभेदस्य सत्त्वात् । चकारस्य सत्त्वे तु समुच्चयस्यैकस्य विशेष्यतयाऽस्त्येवैकवाक्यत्वमिति प्रागेवाभिहितम् । नामपदस्य सुबन्तपरत्वे साधकमाह—नमन्त्याख्यातेति । ननु पञ्चकम्प्रातिपदिकार्थ इति पक्षे यथा द्रव्यस्य स्वार्थादिनिरूपितम्प्राधान्यन्तथा क्रियात्वक्रियाकालकारकसङ्ख्येतिपञ्चकस्य धात्वर्थत्वमिति "क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इत्यस्यास्मन्मतेऽपि नासङ्गतिरत आह—किञ्चेति । तन्निरुक्तोत्तरम्—भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानीति निरुक्तोत्तरम् । "अथ पुनर्यत्र ते उभे भवतो वाक्ये, तत्र ते भावप्रधा-

भावप्रकाशः ।

उक्तलक्षणलक्षितस्य । अत एवात्र चत्वार इति कादाचित्काभिप्रायं न तु सार्वत्रिकमित्युक्तम् । तत्र—तेषां चतुर्णां मध्ये । तदर्थम्—उक्तनिरुक्तार्थम् । तद्भाष्येति । निरुक्तभाष्येत्यर्थः । उक्तमान्योक्तेः प्राचामनुरोधित्वं सूचयितुं व्याचष्टे—नामपदेनेति । सुबन्तमिति । अत एव पदजातानीत्युपक्रमोक्तिरविरुद्धा, नियमतो जन्यतया क्रियाकाङ्क्षत्वमपि, तस्यैव परिपूर्णत्वात् । अत एव 'परिपूर्णं पदं पदान्तरेणान्वेति' इति "कुत्सित" सूत्रभाष्यादि सङ्गच्छते इति भावः । चस्त्वर्थे पदेनेत्यनन्तरं योज्य आख्यातशब्देनैतद्ग्रहणेऽप्यत्र तथा नेति वैलक्षण्यसूचकः । तद्भाष्ये—निरुक्तभाष्ये । इत्थं हि तत्रोक्तम्—प्रकृतिः प्रत्ययो विभक्तिरित्येतावन् नाम, सत्ता द्रव्यं लिङ्गं संख्येति नामार्थास्तेषु द्रव्यं प्रधानमिति । एतेन वचनाभ्यामुभयोःप्राधान्यबोधनाद्वाक्ये तथाननुभवाद्विरोधाच्चासम्भवाद्वचनयोरप्रामाण्यमेवेत्यपास्तम् । तच्चेति । उक्तलक्षणलक्षितं नाम चेत्यर्थः । अव्ययातिरिक्तमितीति । अन्यथोक्तभाष्योक्तार्थकसत्त्वप्रधानत्वस्याव्ययेष्वसम्भवात्तदसङ्गतिः स्पष्टैव । तदेतदुभयं मञ्जूषादौ स्पष्टीकृतमित्याह—अन्यत्रेति । सुबन्तग्रहणे तद्भाष्यान्तरमपि साधकमिति ध्वनयितुं नामाख्यातयोर्योगे क्रियाया एव प्राधान्यं द्रव्यस्य कुतो नेति शङ्कामपाकर्तुं चाह—नमन्तीति । एवं च यत्र नामपदं तत्रैतदुक्तलक्षणलक्षितस्यैव ग्रहणमिति नामार्थेति व्युत्पत्तौ निपातेतरग्रहणे सिद्धे निपातातिरिक्तेति विशेषणदानमयुक्तमेतत्फलितार्थकथनपरतया वा तदबोध्यमिति बोध्यम् । अत एवोपसर्गनिपाता इत्युक्तिश्चत्वारीत्युक्तिश्च सफला । सा चाव्ययमात्रोपलक्षणमिति निरुक्तभाष्याकूतम्, अन्यथा चत्वारीति प्रतिज्ञाभङ्गापत्तिः । द्योतकत्वाक्रियासमभिव्याहारनियमाच्च निपातादुपसर्गस्य पृथगुक्तिः । तत्र द्रव्यस्य सत्तालिङ्गसङ्ख्यानिरूपितप्राधान्येऽपि तस्य क्रियाकारकभावसम्बन्धं प्रति विशेषणत्वेन काण्डे इत्यादेर्विभक्त्यर्थप्रधानत्वोक्तिर्न विरुद्धेति भावः । ननु पञ्चकं प्रातिपदिकार्थ इत्यादिपक्षे स्वार्थादिनिरूपितं यथा द्रव्यस्य प्राधान्यं तथा क्रियात्वक्रियाकालकारकसङ्ख्येति पञ्चकं धात्वर्थ इत्यादिपक्षेऽपि क्रियात्वादिनिरूपितं प्राधान्यं क्रियायाः न तु प्रत्ययार्थापेक्षयाऽपीति यास्कोक्तेरर्थ इति कारकादिविरोध इति नैयायिकोक्तं साध्वेवात आह—किं चैतन्निरुक्तोत्तरमिति । भावप्रधानमित्यायुक्त-

शब्दरत्नम् ।

"यत्रोभे भावप्रधाने भवतः" इति निरुक्ते उक्तम् । यत्रोभे नामाख्याते भवतो वाक्ये, तत्र ते भावप्रधाने क्रियाप्रधाने इत्यर्थकतया च तद्भाष्ये तद् व्याख्यातम् । अतः पूर्वनिरुक्तस्य व्याख्यानान्तरं नादरणीयम् । किं च कर्तृविशेष्यकबोधेऽपचदोदनं देव-

भैरवी ।

ने-आख्यातार्थप्रधाने, वाक्ये ह्याख्यातम्प्रधानं तदर्थत्वाद्, गुणभूतन्नाम, तदर्थस्य भावनिष्पत्तावङ्गत्वात्, एवन्तावद्वाक्ये आख्यातम्प्रधानम्" इति यन्निरुक्तन्तस्य योऽर्थः शेषपूरणेन व्याख्यातस्तन्दर्शयति—यत्रोभे इति । व्याख्यानान्तरम्—पूर्वोक्तं व्याख्यानम् । एवञ्चोत्तरनिरुक्तानुरोधेन पूर्वनिरुक्तस्यापि तथैवार्थः कल्पनीय इति स्वीयसिद्धान्त इति भावः । एवं सति 'प्रकृतिप्रत्ययौ सहार्थम्ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्' इत्यौत्सर्गिकस्य नियमस्य तिङन्ते त्यागः, उक्तनिरुक्तवाक्यात् । त्वत्कल्पितव्याख्याने तु स्वीयभाष्यविरोधोऽप्यस्तीत्याह—किञ्च कर्तृविशेष्यकेति । औत्सर्गिकनियमानुरोधेन कर्तृविशेष्यकबोध इत्यर्थः ।

भावप्रकाशः ।

निरुक्तोत्तरमित्यर्थः । तदर्थस्तु तद्भाष्ये एवमुक्तः—"नामाख्यातयोः—परस्पराविनाभूतयोः स्वस्वपदार्थौकैकस्य भावप्राधान्यमेकस्य सत्त्वप्राधान्यम् । अथ पुनर्यत्र ते उभे भवतो वाक्ये तत्र ते भावप्रधाने-आख्यातार्थप्रधाने, वाक्ये ह्याख्यातं प्रधानं" तदर्थत्वात् । गुणभूतं नाम, तदर्थस्य भावनिष्पत्तावङ्गत्वात् । एवं तावद्वाक्ये आख्यातं प्रधानमिति" यत्रोभे इति पृथग्वाक्यं, भवत इत्यस्यानुषङ्गः, उत्तरत्र तत्र ते इति शेषः । वाक्ये इति तु यत्रेत्यस्य विवरणमिति तदाकूतम् । तत्सर्वं हृदि निधाय सङ्क्षिप्तं तद्भाष्यार्थमाह—यत्रोभे इति । चो व्याख्यातमित्यग्रे योज्यः । व्याख्यानान्तरम्—उक्तरूपमित्यर्थः । एवञ्चोत्तरानुरोधेन पूर्वनिरुक्तस्य तथाऽर्थनिर्णये तदनुरोधादुक्तसिद्धान्तस्यापि तथाऽर्थनिर्णयः । एतेन प्रथमान्तसमभिव्याहारे एकाश्रयकपाकाश्रयो देवदत्त इति प्रथमान्तार्थविशेष्यक एव बोधोऽस्त्वित्यपास्तम्, उक्तोत्तरनिरुक्तविरोधात्, तथा बोधाननुभवाच्च । न च धात्वर्थापेक्षया क्रिया कृतिः प्रधानमिति तदर्थः, भावशब्देनापि कृतिरेवेति वाच्यम् ? प्रत्ययार्थः प्रधानमित्येव सिद्धेः भावाख्यातेऽव्याप्तेश्च । अत एव वसन् ददर्शेत्यादौ "धातुसम्बन्धे प्रत्ययाः" इत्यनेन प्रधानतिङन्तवाच्यक्रियानुरोधेन गुणभूतक्रियावाचिभ्यः कालान्तरे प्रत्ययाः, न तु तिङ्कालान्तरे इति व्यवस्थासिद्धिरिति भावः । पश्येत्यादि अकिञ्चित्करत्वादित्यन्तग्रन्थस्य स्वमते वाक्यार्थप्रतिपादनपूर्वकपरमते दोषप्रतिपादकस्य पूर्वग्रन्थसङ्गतिं सूचयितुं पश्य मृगो धावतीत्यस्यैकवाक्यत्वे निर्मूलतामपाकर्तुं नैयायिकमते तृतीयोऽयं दोष इति सूचयितुं च पूरयति—किञ्च कर्तृविशेष्यकेति । तिङर्थकर्तृविशेष्यकेत्यर्थः, 'प्रकृतिप्रत्ययधोः' इति न्यायादिति भावः । ओदनकर्म-

सरला ।

धात्वर्थं इति फलति । तेषु पञ्चसु फलस्य व्यापारस्य वा प्राधान्यमिति चेति तदाशयः । तद् व्याख्यातमिति । "एवमेके मन्यन्ते तद् यत्रोभे, भावप्रधाने भवतः । एवं तावदनयोर्नामाख्यातयोः परस्पराविनाभूतयोः स्वस्वपदार्थौकौ एकस्य भावप्राधान्यम्, एकस्य सत्त्वप्राधान्यम् । अथपुनर्यत्रैते उभे भवतः । क्व च पुनरेते उभे भवतः ? वाक्ये । तत्र कस्य प्रधानमर्थः कस्य गुणभूत इति ? शृणु, भावप्रधाने भवतः, तस्य चिकीर्षितत्वात् । वाक्ये हि आख्यातं प्रधानं, तदर्थत्वात् । गुणभूतं नाम, तदर्थस्य भावनिष्पत्तावङ्गभूतत्वात्" इति हि निरुक्तभाष्यम् । व्याख्यानान्तरम्—"अपरे पुनर्भावकालकारकसंख्याश्चत्वार एतेऽर्था आख्यातस्य तेषां भावप्रधानता भवति" इति व्याख्यानान्तरमित्यर्थः । पञ्चकं प्रातिपदिकार्थं इति पक्षे द्रव्यस्य यथा स्वार्थादिषु प्राधान्यं तथा धात्वर्थपञ्चकमध्ये भावस्य प्राधान्यं, क्रियात्वादीनां तु तद्विशेषणत्वमिति ; तेन नामार्थस्य क्रियापेक्षया प्राधान्येऽपि नोक्तनिरुक्तग्रन्थविरोधो नैयायिकानां प्रथमान्तमुख्यविशेष्यकबोधस्वीकर्तॄणामिति तदाशयः । नादरणीयमिति । तदादरणे हि "यत्रोभे" इति निरुक्तग्रन्थविरोधः स्पष्ट एवेति भावः ।

प्रधानं दृशिक्रियैव । उक्तं च—

सुबन्तं हि यथाऽनेकं तिङन्तस्य विशेषणम् ।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम् ॥ इति ।

शब्दरत्नम् ।

दृत्तं पश्येति प्रयोगः शतृविधायकभाष्यकैयटयोरापादितः । यद्यप्यन्तरङ्गा प्रथमा तथाऽपि प्रधानानुरोधिनी द्वितीया भवतीति तदाशयः । तदनुसारेणाह—पश्येति । मृगस्य कर्मत्वे तु प्रधानानुरोधिनी द्वितीयैव स्यादिति भावः । उक्तं चेति ।

भैरवी ।

आपादित इति । ओदनकर्मकविक्लित्त्यनुकूलभूतकालिकैकत्वसङ्ख्यावद्व्यापाराश्रयाभिन्नदेवदत्त-कर्म्मकदर्शनानुकूलव्यापारविषयप्रवर्तनाविषयप्रवृत्तिमांश्चैत्र इति हि तस्माद्बोधः स्यात् । एव-ञ्चात्र शत्रादेः प्रसङ्ग एव नास्ति इति ध्वनितम् । ननु कर्त्तुः प्रथमोपस्थितत्वात्तन्निमित्ता प्रथ-मा पूर्वम्भविष्यति, ततो दर्शनक्रियायां सम्बन्धेऽपि जातसंस्कारस्य बाधनन्न सम्भवतीति भाष्याद्यसङ्गतिरत आह—यद्यप्यन्तरङ्गेति । प्रधानकार्यस्यान्तरङ्गादपि बलवत्त्वं "हेतुमति च इतिसूत्रभाष्ये स्पष्टम् । तदाशयः—उक्तभाष्याशयः । तदनुसारेण—उक्तभाष्यानुसारेण । अत्रा-ऽपि मृगशब्दाद् द्वितीयापादानमुक्तरीत्यैवेत्याह—मृगस्येति । धावनक्रियाविशिष्टस्य मृगस्य कर्मत्वे विशिष्टस्य शुद्धानतिरेकान्मृगस्य दर्शनक्रियाविषयत्वात्कर्मत्वमस्त्येवेति भावः ।

भावप्रकाशः ।

कविक्लित्त्यनुकूलभूतकालिकैकत्वसङ्ख्यावद्व्यापाराश्रयाभिन्नदेवदत्तकर्मकदर्शनानुकूलव्यापारविषयप्रवर्तनाज-न्यप्रवृत्त्याश्रयाभिन्नस्स इति तदा तत्र बोधाकारः । तत्र शत्रादीनां सम्भावनैव नेति तदाकूतम् । ननु कर्तुः सर्वतः प्रागुपस्थित्याऽन्तरङ्गत्वाज्जातप्रथमारूपसंस्कारस्य ब्रह्मणापि दुर्निवारत्वाद्भाष्याद्यसङ्गतिरत आह—यद्यपीति । प्रधानेति । प्रधानकार्यस्यान्तरङ्गादपि बलवत्ता या "हेतुमति च" इति सूत्रस्थ-भाष्यसम्मतत्वादिति भावः । तदाशयः—भाष्याद्याशयः । तदनुसारेणाहेति । उक्तभाष्याद्यनुसारेण नैयायिकमते तृतीयदोषं वक्तुं स्वमते तदुपपादनप्रकारमाह इत्यर्थः । तत्फलितं वक्ष्यमाणमपि स्पष्टत्वाय सन्निष्कर्षमाह—मृगस्येति । कर्मत्वे त्विति । धावनविशिष्ट मृगस्य ज्ञाने विषयतया साक्षात्प्रकारत्वेन प्रधानदृशिक्रियानिरूपितस्य "कर्तुः" इति कर्मत्वस्य सत्त्वात् । तथा च तद्वाक्यासिद्धिः । न च प्रत्यया-र्थप्राधान्यमते नव्यन्यायमते च यथा तदापत्तिस्तथा क्रियाविशेष्यकबोधवादिमतेऽपि मृगीयधावनस्य विशिष्टस्य दर्शनकर्मत्वे विशेष्यस्याप्रातिपदिकत्वेन ततस्तदप्राप्तावपि विशेषणस्य मृगस्य कर्मत्वात्प्राति-पदिकत्वाच्च ततो द्वितीयापत्तिस्तदवस्थैवेति वाच्यम् ? विशिष्टकर्मत्वस्थले अभेदेनान्वयिविशेषणादेव विशे-ष्यविभक्त्यङ्गीकारात् । यथा कटं भीष्ममुदारं शोभनं कुरु इति । अत एव राज्ञो दण्डधरं पुरुषमानयेत्यादौ राजशब्दात्सा न, दण्डधरशब्दात्तु सेति व्यवस्थासिद्धिः । किञ्च मृगस्य धावनविशेषणत्वेन तत्प्रयुक्त-स्यान्तरङ्गसंस्कारस्य प्रथमारूपस्यानिवृत्तेः । तव तु तस्य धावनविशेष्यत्वादुक्तरीत्या सा दुर्वारा ।

श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः ।

इति त्वार्षम् । नचैवमपि क्रियाया ईप्सितत्वे किम्मानमिति वाच्यम् ? "कर्मणा यमभिप्रैति" इति सूत्रे "क्रियापि क्रियया ईप्सिता भवति । कया क्रियया ? सन्दर्शनादिक्रियया" इति भाष्ये उक्तत्वात् । तथाच कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयतद्धात्वर्थत्वरूपफलत्वन्दाःकसत्त्वात् यथा तण्डुलादीनां कर्मत्वमेवं धावनस्यापि । तद्धात्वित्युक्तेरत्र धावनादेर्न फलत्वम् । अन्यथा प्रधाना-नुरोधिकर्मत्वस्य बलवत्त्वान्मृगस्य कर्तृत्वं न स्यात् । कर्मत्वस्य चात्राकाङ्क्षावशात्संसर्गतया भानमित्यनु-पदमेव स्फुटीभविष्यति । मृगस्य तु कर्मत्वे न तत्रान्वयसम्भवः, विभक्त्यर्थमद्वारीकृत्य नामार्थधात्वर्थयो-

सरला ।

आपादित इति । देवदत्त ओदनमपचदिति पश्येत्यर्थे देवदत्तशब्दाद्द्वितीयापत्तिरिति तदाशयः ।

एवं पचति भवतीत्यस्य पचिक्रिया भवतीत्यर्थः ।

शब्दरत्नम् ।

हरिणेति शेषः । तिङन्तसुबन्तशब्देन तदर्थक्रियादिः। पचिक्रिया भवतीत्यर्थ इति स्पष्टं

भैरवी ।

धातूपस्थितक्रियायाः क्रियान्तरविशेषणत्वे हरिसम्मतिरस्तीत्याह—हरिणेतीति । ननु राज्ञो दण्डधरम्पुरुषम्पश्येत्यादौ राजन्शब्दादपि पूर्वोक्तरीत्या द्वितीया प्राप्नोति राजसम्बन्धविशिष्टदण्डधराभिन्नस्य पुरुषस्य दर्शनकर्मत्वेन राज्ञोऽपि तद्विषयत्वसम्भवादिति चेत् ? न, अभेदसम्बन्धेन विशेष्यान्वयि यद्विशेषणन्तद्वाचकादपि विशेष्यवाचकपदप्रकृतिकविभक्तिसजातीयविभक्त्युत्पत्तिस्वीकारात् । कटम्भीष्मङ्कुर्वित्यादौ यथा । विशेष्यस्य तु कारकाधिकारीयतत्संज्ञाविशिष्टत्वन्तद्बोधिका विभक्तिर्भवत्येवेति भवन्मते मृगस्य विशेष्यतया कर्मत्वेन तद्वाचकाद् द्वितीया प्राप्नोतीति भावः ।

श्रुत्वा ममैतन्माहात्म्यन्तथाचोत्पत्तयः शुभाः ॥

इत्तत्त्वार्षम् । क्रियायाः ईप्सितत्वे मानन्तु "कर्मणा यमभिप्रैति" इति सूत्रस्थं 'क्रियाऽपि क्रियया ईप्सिता भवति । कया क्रियया? सन्दर्शनादिक्रियया" इति भाष्यमेव । सन्मते भावनस्य प्राधान्यात्तस्य कर्मत्वेऽपि तद्वाचकस्याप्रातिपदिकत्वान्न ततो द्वितीया । सुबन्ततिङन्तशब्दौ रामः पचतीत्यादिशब्दपरौ, तयोश्च न विशेषणविशेष्यभावः प्रसिद्ध इत्यत आह—तिङन्तेत्यादि । स्वोक्तार्थे प्रामाण्यमप्रदर्शयितुमाह—स्पष्टम्भूवादिसूत्रे भाष्ये इति । तत्र क्रियावचनो धातुरिति न्यासे "कथम्पुनर्ज्ञायते क्रियावचनाः पचादयः" इति प्रश्ने "यदेतेषाङ्करोतिना सामानाधिकरण्यम्—किङ्करोति ? पचति, किङ्करिष्यति ? पक्ष्यति, किमकार्षीत् ? अपाक्षीत्" इत्युक्तम् । ततः शङ्कितम् "अस्तिभवतिविद्यतीनान्धातुसंज्ञा न प्राप्नोति । यथा हि भवता करोतिना पचादीनां सामानाधिकरण्यन्दर्शितन्न तथाऽस्त्यादीनान्निदर्श्यते, न हि भवति किङ्करोति अस्तीति" इत्याद्युक्त्वा "यदि पुनर्भाववचनो धातुरित्येतल्लक्षणं क्रियेत" इत्युक्तम् । "कथम्पुनर्ज्ञायते भाववचनाः पचादयः, यदेतेषां भवतिना सामानाधिकरण्यं-भवति पचति, भवति पक्ष्यति, भवति अपाक्षीत्" इति कथितम् । तादृशन्यासे "पचादीनान्धातुसंज्ञा न प्राप्नोति, यथा हि भवता क्रियावचने धातौ करोतिना सामानाधिकरण्यन्निदर्शितन्न तथा भाववचने धातौ निदर्श्यते करोतिः पचादीनां सर्वान्कालान्सर्वान्पुरुषान्सर्वाणि वचनान्यनुवर्तते, भवति पुनर्वर्तमानकालञ्चैकत्वञ्च" । तत्र कैयटः—"भवति पुनरिति। नहि भवति—भविष्यति पक्ष्यति, अभूदपाक्षीत्, भवतः पचतः, भवन्ति पचन्ति । ततो भाष्यकृतोक्तम्—"का तर्हीयं वाचोयुक्तिः—भवतिपचति, भवति पक्ष्यति, भवत्यपाक्षीदिति प्रश्ने

भावप्रकाशः ।

भेदेनान्वयायोगात् ; क्रिययोस्तथान्वये तु न तथानियमः, उक्तभाष्यादिति दिक् । यास्कादिसम्मत्यानुक्त्वार्थमाह—हरिणेतीति । विशेष्यविशेषणभावस्य साकाङ्क्षार्थसम्बन्धरूपत्वाद्यथाश्रुतासङ्गतेराह—तिङन्तेति । आदिना सत्त्वपरिग्रहः । अर्थद्वारकतत्वाभावोऽप्युक्तयुक्तस्यविशिष्ट इति भावः । पचिक्रियेति । नन्वत्राथ पचति भवतीत्यस्यैकवाक्यत्वे मानाभावः । किं चैकदेवदत्ताभिन्नाश्रयको विक्लित्त्यनुकूलो वर्तमानो व्यापार इति पचतीति शब्दाद्बोधे फूत्कारादिनिष्ठभवनस्यापि तत्त्वात् पचधातुनैवोक्तत्वेन भवतीत्यस्य पृथक् प्रयोगो न युक्तः, तदाश्रयत्वं च देवदत्तस्य फूत्कारादिद्वारकमेवेति चेत् ? न, विक्लित्त्यनुकूलव्यापारजातान्तर्गतत्वेन भवनवदनुकूलतया ततो बोधेऽपि फूत्कारादिकर्तृकत्वेन भवनस्य

सरला ।

क्रियामुख्यविशेष्यकबोधे त्वपचदित्यस्य कर्मत्वेऽपि-अप्रातिपदिकत्वान्न ततो द्वितीयेति बोध्यम् । पचिक्रियेति । अस्य पचति भवतीत्यस्येत्यादिः ।

अयं तु विशेषः—तिङन्तोपस्थितायाः क्रियायाः क्रियान्तरं प्रति विशेषणत्वे-

शब्दरत्नम्।

भूवादिसूत्रे भाष्ये। "योऽश्वमेधेन यजते स ब्रह्महत्यां तरति" इत्यादौ यत्कर्तृका यागक्रिया तत्कर्तृका तरणक्रियेत्येव बोध इत्यन्यत्र विस्तरः।

भैरवी

एषैषा वाचोयुक्तिः पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति। यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रान्या चान्या च क्रिया, यत्र तु खलु सैव क्रिया, तत्र कथं-भवेदपि भवेत्, स्यादपि स्यात्? इति"। अत्रैकैव क्रिया तस्याः साध्यसाधनभावो विरुद्ध इति भावः। "अत्राप्य-न्यत्वमस्ति। कुतः? कालभेदात्साधनभेदाच्च। एकस्यात्र भवतेर्भवतिः साधनं सर्वकालश्च प्रत्ययः, अपरस्य बाह्यं साधनं वर्तमानकालश्च प्रत्ययः। यावताऽत्राप्यन्यत्वमस्ति पचादयश्च क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति" इत्युक्तम्।

ननु "योऽश्वमेधेन यजते स ब्रह्महत्यान्तरति" इति वाक्यादश्वमेधयागकर्ता यः स ब्रह्मह-त्यातरणकर्तेति बोधो जायत इति क्रियाविशेष्यक एव शाब्दबोध इति सिद्धान्तो व्यभिच रित इत्यत आह—योऽश्वमेधेनेति। इत्येव बोध इति। एवञ्च न सिद्धान्तभङ्ग इति भावः। यत्तदोर्नित्यसम्बन्धादुभयक्रियाकर्तृत्वमेकस्य मनसा निश्चीयत एव। नन्वेवम्पचतिभवती-त्यादिभ्योऽपि यत्कर्तृका पचिक्रिया तत्कर्तृका भवनक्रियेति बोधः कस्मान्न भवतीतिचेत्? न, तत्र तादृशशाब्दबोधजनकगमकयत्तत्पदस्य सत्त्वादत्र गमकाभावात्। किञ्च पचतीत्य-नेनैव पचिक्रियाकर्तुर्वर्तमानसत्त्वमवगतमिति भवतीत्यस्य वैयर्थ्यापत्तिश्च। अत एव भवि-ष्यति पक्ष्यति, अभूदपाक्षीदिति न भवति। नैयायिकमते तु तस्यापत्तिरुक्तभाष्यविरोधश्चेति दिक्। अन्यत्र—उद्द्योतादौ।

ननु पदार्थत्वस्पदजन्यप्रतीतिविशेष्यत्वं, तदभावश्च न प्रकारत्वाभावसाधकः, घटादिशब्द जन्यशाब्दबोधे घटत्वादेः प्रकारत्वमस्ति, पदजन्यप्रतीतिविशेष्यता तु तेषान्नास्तीत्यत आह—

भावप्रकाशः।

पचतीत्यनेनाबोधात्तादृशप्रतिपिपादयिषायां भवतीति प्रयोगस्य दुर्वारत्वात्, पचतीत्यनेन फूत्कारादि-निष्ठभवनस्य सर्वत्राभिधाने मानाभावाच्च। ध्वनितं चेदं "भूवादि" सूत्रे "का तर्हीयं वाचोयुक्तिः पचति भवति, त्वं पचसि भवति, पक्ष्यति भवति" इति प्रश्ने "पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति" इत्युत्तरं ददता भाष्यकृता। एतेनाद्यशङ्कापि निरस्ता। पक्ष्यति भवतीत्यस्य भविष्यन्ती पाकक्रिया सत्का-र्यवादाङ्गीकारात्सूक्ष्मरूपेण भवतीत्यर्थः। न च तत्र वादे कार्यनित्यतया सामग्रीवैयर्थ्यं, तस्या अभिव्यक्त्य-र्थत्वात्। न चाभिव्यक्तेर्जन्यत्वे सत्कार्यवादबाधः, नित्यत्वे सदाभिव्यक्त्यापत्तौ व्यवहारापत्तिः अभि-व्यक्त्यन्तरापेक्षायां त्वनवस्थापत्तिरिति वाच्यम्? अभिव्यक्त्यभिव्यक्तेस्तदनतिरेकात्, तवोत्पत्तेरुत्प-त्तिवत्। अधिकं मञ्जूषायां द्रष्टव्यम्। पक्ष्यति भवतीत्यत्रत्यमाप्योक्तिस्तु प्राचामनुरोधेनेति दिक्। तदेतत् ध्वनयन्नाह—स्पष्टमिति। ननु योऽश्वमेधेन यजते इत्यादावर्थात्तच्छब्दस्य लाभेनोद्देश्यवि-धेयभावेनान्वयादश्वमेधाख्ययागकर्ता यः स ब्रह्महत्यातरणकर्तेति बोधादुक्तसिद्धान्तभङ्ग इत्यत आह—योऽश्वेति। इत्येव बोध इति। तावतापि वैयधिकरण्यनिरासस्यैकवाक्यत्वस्य च सम्भवात्। तथा च न तद्भङ्ग इति भावः। नन्वेवं पचति भवतीत्यादावपि यत्कर्तृका पचिक्रिया तत्कर्तृका सत्तेति बोधसम्भ-वात्पचतो भवतः, पचन्ति भवन्तीत्यादेरप्यापत्तिरिति चेत्? न, तत्र तथा बोधगमकस्य यदादेरभावात्। किं चोक्तार्थस्याप्यसम्भवात् पचतीत्यनेनैव तत्कर्तुर्वर्तमानसत्त्वावगत्या भवतीत्यस्यानुपयोगात्। अत एव भविष्यति पक्ष्यति, अभूदपाक्षीदित्यादिप्रयोगा न। अत एव "करोतिः पचादीनां सर्वान्कालान्सर्वा-न्पुरुषान् सर्वाणि वचनान्यनुवर्तते। भवतिः पुनर्वर्तमानकालं चैकत्वं च' इति भाष्ये ततः प्रागुक्तम्। नैयायिकमते तु तदापत्तिर्भाष्यविरोधश्च स्पष्ट एवेति दिक्। तदाह—इत्यन्यत्रेति। उद्द्योतादावि-त्यर्थः। ननु पदजन्यप्रतीतिविशेष्यस्य प्रकारत्वस्य क्वाप्यनङ्गीकारात् अपदार्थत्वादित्ययुक्तमत आह—

ऽपि शब्दाध्याहारवादे कर्मत्वं संसर्ग एव, नतु प्रकारः; अपदार्थत्वात् । अर्था-
ध्याहारवादे तु प्रकारत्वेऽपीष्टापत्तिः । पचतीत्यादौ धातूपात्तफलस्यापीत्थमेव

शब्दरत्नम् ।

**अपदार्थत्वादिति** । तन्नये पदजन्योपस्थितिविषयस्यैव प्रकारत्वविशेष्यत्व-
स्वीकारात् पदाध्याहारस्यात्रासम्भवादिति भावः । **प्रकारत्वेऽपीति** । अपिना सर्व-
पक्षे विभक्त्यर्थस्य संसर्गत्वमिति समर्थसूत्रषष्ठीसूत्रभाष्योक्तः सिद्धान्तः सूचितः ।

भैरवी ।

तन्नय इति । शब्दज्ञानादेवार्थबोध इति नय इत्यर्थः । एवञ्चापदार्थत्वादित्यस्य पदजन्यप्र-
तीतिविषयत्वाभावादित्येवार्थः । ननु तन्नयेपिधेहीत्यादिभ्यो द्वारमित्यादिशब्दाध्याहारा-
द्यथा शाब्दबोधस्तथात्रापि तामित्यादिशब्दाध्याहारेण शाब्दबोधो भवत्वित्यत आह—
पदाध्याहारस्येति । अत्र—धावति पश्य, पचति भवतीत्यादौ । असम्भवादिति । यद्यत्र तामि-
त्यादिपदमध्याह्रियते तदा वाक्यभेदः स्यान्न त्वेकवाक्यतेति पदाध्याहारेऽप्येकवाक्यताया
असम्भवादिति भावः । सर्वपक्षे—शब्दाध्याहारार्थाध्याहारोभयपक्षे । संसर्गत्वम्—संसर्गत्व-
मेव । समर्थसूत्रेत्यादि । "राज्ञः पुरुष इत्यादिवाक्ये तयोरभिसम्बन्धस्य षष्ठी वाचिका 'काष्ठं
श्रितः' इत्यत्र क्रियाकारकयोरभिसम्बन्धस्य द्वितीया वाचिका भवति" इति भाष्याक्षरस्वा-
रस्येन सर्वत्र विभक्त्यर्थस्य संसर्गत्वमेव स्वीक्रियत इति भावः । ननु विभक्तिजन्योपस्थि-

भावप्रकाशः ।

**तन्नये इति** । शब्दज्ञानादेवार्थबोध इति मते इत्यर्थः । एवेन तदन्यव्यावृत्तिः । संसर्गत्वस्य तदन्यस्या-
पि स्वीकारादाह—**प्रकारत्वविशेष्यत्वेति** । तथा च मूले तत्र विषयत्वमात्रं निविष्टं न तु विशेष्यत्व-
मिति भावः । नन्वत्र पक्षे पिधेहीत्युक्ते द्वारमित्यध्याहारादेव यथा बोधस्तत्प्रकारकस्तथात्रापि तामित्य-
ध्याहारेण तथाबोध आस्तामत आह—**पदेति** । अत्र—धावति पश्य पचति भवतीत्यादौ । असम्भवा-
दिति । एकवाक्यत्वभङ्गापत्तेरिति भावः । भाष्यविरोधाद्यथाश्रुतासङ्गतेराह—**अपिनेति** । **सर्वपक्षे**
इति । शब्दाध्याहारार्थाध्याहारोभयपक्षे इत्यर्थः । **संसर्गत्वं**—संसर्गत्वमेव । तथाचापिः सावधारण-
तत्पक्षसमुच्चायको न तु वैकल्पिकतत्पक्षसमुच्चायक इति भावः । **समर्थेत्यादि** । तत्र हीत्थमभिहितं—
"काष्ठं श्रितो भवतीत्यत्र क्रियाकारकयोरभिसम्बन्धस्य द्वितीया वाचिका भवति" इति । यत्तु तत्र कैय-
टेनोक्तम्—अत्राभिसम्बन्धपदेन शक्तिरेवोच्यते तयोरभिसम्बन्धनिमित्तत्वादिति; तन्न, "राज्ञः पुरुष इत्यत्र
राजा विशेषणं, पुरुषो विशेष्यः, तयोरभिसम्बन्धस्य षष्ठी वाचिका; तथा काष्ठं श्रितः" इत्यादिसन्दर्भेण षष्ठी-
वदस्यापि सम्बन्धवाचकत्वस्यैव प्रतीतेः, भाष्यस्थसम्बन्धशब्दस्य लाक्षणिकत्वे मानाभावाच्च । क्रियात्व-
कारकत्वसमूहः सम्बन्ध इति तद्भाष्यार्थः । तथा चेत्थमेतन्मतनिष्कर्षः—कर्मत्वादिशक्तिमान् तद्गतं विशे-
षणत्वं क्रियाकारकभावः सम्बन्धश्च द्वितीयाद्यर्थस्तद्द्योत्यो वेति । अयं भावः—भेदसमानाधिकरणवि-
शेषणत्वज्ञाने एव सम्बन्धाकाङ्क्षेति; तदपि तथा विशेषणत्वं च शक्तिमत्त्वे एवेति सोऽपि तथा विशेष-
णभूतत्वेऽपि कर्म हरीतिवद्धरिकर्मकेत्यप्युल्लेखः, कर्मशब्दस्य समासघटकस्य सञ्ज्ञाशब्दत्वेन तत्र विशे-

सरला ।

**अपदार्थत्वादितीति** । शब्दाध्याहारवादे विषयतासम्बन्धेन शाब्दबोधं प्रति पदजन्यपदार्थोप-
स्थितेः कारणत्वस्वीकारेण पश्य मृगो धावतीत्यादौ धावतीत्यस्य कर्मत्वेन कर्मत्वबोधकस्य चामादेस्त-
तोऽप्रातिपदिकत्वेनाप्राप्त्या संसर्गविधयैव कर्मत्वस्य भानमिति भावः ।

**असम्भवादिति** । 'ताम्' इति पदस्याध्याहारसम्भवेऽपि तत्रैकवाक्यत्वं न स्यादित्याशयः । **प्रका-
रत्वेपीतीति** । अर्थाध्याहारवादश्च वाक्यार्थे वाक्यस्य शक्तिरितिमते । तत्र हि वाक्यस्येव वाक्यैकदे-
शस्यापि वाक्यार्थे शक्तिरिति 'पिण्डीम्' इत्यनेनैव आनयपदाध्याहारं विनैव पिण्डीकर्मकं स्वकर्तृकं प्रेर-
णाविषयकमानयनमिति बोधः । तथाच कर्मत्वादेरपि पदजन्योपस्थितिविषयत्वेन प्रकारतया तद्भानमिति ।

शब्दरत्नम् ।

शब्दोपस्थितस्यापि संसर्गत्वं षष्ठ्यां सर्वैरङ्गीकृतमेव वृद्धैः । **फलस्यापीति** । अपिना 'पक्वः' इत्यादौ व्यापारस्य सङ्ग्रहः, तत्र तस्य फलं प्रति विशेषणत्वात् । इत्थमेवेति ।

भैरवी ।

तिविषयस्य पदार्थत्वात्प्रकारत्वमेव न्याय्यमत आह—शब्दोपस्थितस्यापीति । तथा च पदादनुपस्थितस्य प्रकारत्वन्नेत्येव नियम इति भावः । मूले—फलस्यापीत्थमेव मतभेदेन व्यवस्थेति । शब्दाध्याहारवादे फलस्य कर्मतासम्बन्धेन व्यापारविशेषणत्वमर्थाध्याहारवादे कर्मत्वस्य प्रकारत्वमपि सम्भवति विक्लित्त्यादिकर्मिका भावनेति शाब्दबोधस्य सम्भवादिति भावः । न च फलस्य कर्मत्वानङ्गीकारेऽपि शोभनादिपदार्थस्य धात्वर्थफलसमानाधिकरणस्य कारकत्वाभावात्तत औत्सर्गिकमेकवचनम्प्रथमाया अस्तु, नपुंसकत्वञ्चास्त्विति वाच्यम् ? 'निपुणस्त्वम्पचसि मृदु त्वा राजा द्रविणेन योजयति' इत्यत्र "त्वामौ द्वितीयायाः" इत्यस्यैव प्रवृत्तिर्भवति, प्रथमान्तत्वे तु "सपूर्वायाः प्रथमाया विभाषा" इत्यस्य भवन्मते प्रवृत्तिः स्यात्, त्वां वेत्यपि स्यादिति शोभनादिपदाद् द्वितीयैव भवतापि स्वीकार्येत्याशयात् । सङ्ग्रह इति । कर्मप्रत्ययसमभिव्याहारे फलव्यापारयोर्विशेष्यविशेषणभावव्यत्यासस्यानुभवसिद्धत्वेन फलनिरूपिता प्रकारता व्यापारेऽस्ति, तस्य तम्प्रति कर्तृत्वमप्यस्तु, भावनाकर्तृका विक्लित्तिरित्यादिप्रकारेण शाब्दबोधोऽस्तु, तत्कर्तृत्वविषये भानव्यवस्थातूक्तरीत्यैव स्वीकार्येति भावः ।

स्यादेतत् । शोभनम्पचतीत्यादौ कर्मणि फलेऽभेदेनान्वितशोभनार्थवाचकाद् द्वितीयावज्ज्योतिष्टोमेन यजेतेत्यादौ करणफलान्वयिवाचकात्तृतीयावच्च शोभनेन पक्व इत्यादौ शोभनादिपदार्थस्य कर्तृव्यापारेऽभेदेनान्वितस्य कर्तृत्वमिति तद्वाचकात्तृतीयाया अपि साधुत्वं स्यात् । न चेष्टापत्तिः, "कर्तृकर्मणोः कृति" इतिसूत्रव्याख्यानावसरे शब्देन्दुशेखरे 'स्तोकम्पाकः' इत्यादौ स्तोकपदात्षष्ठीवारणाय धात्वर्थे भेदसम्बन्धेनान्वयि यत्कर्म तद्वाचकात्षष्ठी भवति कर्तृसाहचर्यादित्युक्तन्तद्विरोधापत्तेः, भवन्मते कर्तुरप्यभेदेनान्वयस्य दर्शनादितिचेत् ? सत्यम्, परेत्वित्यादिनोपदर्शितं यन्मतम्फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले धातोः पृथक् शक्तिः कर्तृकर्मवाचकप्रत्ययसमभिव्याहारश्च तत्तदर्थोपस्थितौ तात्पर्यग्राहक इति, तद्रीत्या पक्व इत्यत्र व्यापारस्य विशेषणतया भासमानस्य पदार्थैकदेशतया तत्राभेदेन शोभनाद्यन्वयासम्भवात् । न च शोभनम्पचतीत्यत्र फलावच्छिन्नव्यापारस्योपस्थितिरस्तीति तत्रापि फलस्य पदार्थैकदेशतया तत्र कथं शोभनादिपदार्थान्वय इति वाच्यम् ? तत्र "तत्प्रत्ययनुपूर्वम्" इत्युक्तज्ञापकात्तथान्वयस्वीकारेऽपि प्रकृते पदार्थैकदेशव्यापारे तथान्वयस्वीकारे मानाभाव इत्याशयात् । ननु पचतिभवतीत्यादौ पृथक्पदाभ्यामुपस्थितयोस्तथान्वयोऽस्तु नाम' पक्व इत्यादौ त्वेकेनैव

भावप्रकाशः ।

ष्यविशेषणभावे कामचारात् इति । एतेन मीमांसकाद्युक्तमर्द्धजरतीयं नव्योक्तरीत्या संखण्ड्योक्तसमर्थसूत्रस्थभाष्यबलात्कर्मत्वादिकमेव विभक्तिवाच्यम् । अत एव कैयटेन तथा व्याख्यातम् । "सुपां कर्मादयोऽपि" इति तु कर्मत्वादयोऽपीत्येवं व्याख्येयम् । कृत्यक्तखलर्थादीनामपि धर्मे एव शक्तिर्धर्मिणि तु निरूढलक्षणेति भाष्यानुसारिणां पन्था इति तत्रारुचिसूचकरत्नाकरोक्तिरपास्ता । तद् ध्वनयन्नाह—शब्दोपेति । अपिरन्यत्र तदन्यसमुच्चायकः । षष्ठ्यां—श्रूयमाणायां लुप्तायां वा । अत एव शब्दोपस्थितस्यापि षष्ठ्यामित्युक्तं, न तु षष्ठ्युपस्थितस्यापीत्येवोक्तम् । एवं च तस्य प्रकारत्वविशेष्यत्वे एवेत्यपास्तमिति बोध्यम् । अपिः प्रागुक्तसमुच्चायक इति भ्रमं व्यावर्तयितुं न्यूनतां परिहर्तुं च प्रागुक्तसिद्धान्तरीत्या योजयति—अपिनेति । मूलकृतोऽप्ययमावश्यक इति ध्वनयितुं तिङन्तं विहाय कृदन्तमाह—पक्व इति । आदिना पच्यते इत्यादिसंग्रहः । तदुपपादयति—तत्रेति । कर्मप्रत्ययस्थले इत्यर्थः । तस्य—व्यापारस्य । विशेषणत्वात् । कर्तृतासम्बन्धेनेति भावः । इत्थमेवेत्यस्य सामाना-

मतभेदेन व्यवस्था। अत एव तत्समानाधिकरणे 'शोभनं पचति'इत्यादौ द्वितीयैकवचनोत्पत्तिः 'अग्निष्टोमेन यजेत'इत्यादौ तृतीयोत्पत्तिश्च सङ्गच्छते। न च दृष्टान्ते

शब्दरत्नम्।

कर्मत्वभानविषये उक्तप्रकारेणैवेत्यर्थः। व्यवस्थेति। सर्वसम्मतेति शेषः। तद्वत्प्रकृतेऽपीति भावः।

वस्तुतस्तत्रापि संसर्गतैव घटपदे घटघटत्वयोः समवायस्येव उपस्थितिपूर्वकं पृथगाकाङ्क्षाया अदर्शनेनाध्याहारस्योक्तिसम्भवाभावादिति ध्येयम्।

अत एव—फलस्य कर्मत्वादेव। तृतीयेति। तत्र तस्य करणत्वेनान्वयादिति भावः। दृष्टान्ते—शोभनं पचतीत्यादौ। तत्र नव्यनैयायिकवैयाकरणयोरुभयोरपि मते फलव्यापारयोः परस्परान्वयस्य सत्त्वेन तस्य दृष्टान्तत्वौचित्यात्। 'पश्य मृगः' इत्यादौ तु धावनदर्शनयोरन्वयस्य नैयायिकासम्मततया साध्यत्वेन न दृष्टान्तत्वमिति

भैरवी।

पदेनोपस्थितयोस्तथान्वयस्याऽदृष्टतयाऽध्याहारस्यासम्भवदुक्तिकतया चेत्थमेवेत्यनुपपन्नमित्यत आह—सर्वसम्मतेति। प्रकृतेऽपि—पश्य मृगो धावतीत्यादावपि। भाष्यसम्मतरीत्याह—वस्तुत इति। तत्रापि—पचतीत्यादिस्थलेऽपि। संसर्गतैवेति। कर्मत्वस्येति शेषः। पदाध्याहारस्य सम्भवे कदाचिद्विशेषणत्वसम्भावना स्यात्तस्यात्रासम्भव एवेत्याह-उपस्थितिपूर्वकमिति। तत्र—भावनायाम्। तस्य—फलस्य। वादिप्रतिवाद्युभयसम्मतस्य दृष्टान्तत्वमित्याशयेन शोभनम्पचतीत्यादेर्दृष्टान्तत्वमित्याह—तत्र नव्येत्यादिना। धावतीत्येतद्घटकधातुजन्योपस्थिति-

भावप्रकाशः।

धिकरण्येन व्यवस्थाविशेषणत्वे इयमेवेत्युचितं, वैयधिकरण्येन तत्त्वे तु मतभेदेनेत्यधिकमत आह—कर्मत्वेति। कर्मत्वभानविषये पश्य मृगो धावतीत्यादावुक्तो यः प्रकारः प्रकारत्वसंसर्गत्वान्यतररूपस्तेनैवेत्यर्थः। तथा चेदं मतभेदस्य समानाधिकरणं व्यधिकरणं वा विशेषणमिति नोक्तदोष इति भावः। पचतीत्यादि सङ्गच्छत इत्यन्तग्रन्थस्य प्रकृतानुपयुक्तत्वं निराकर्तुं 'न च दृष्टान्ते' इत्याद्युत्तरग्रन्थं योजयितुं चाह—सर्वसम्मतेति। नैयायिकभाष्यकृदन्यचिरन्तनवैयाकरणमीमांसकसम्मतेत्यर्थः। तच्चानुपदमेवाग्रे स्फुटम्। तावतापि यथाश्रुते इष्टासिद्धेस्तत्तात्पर्यमाह—तद्वदिति। प्रकृतेऽपीति। पश्य मृगो धावतीत्यादावपि तथेत्यर्थः। तथा च लुप्तोपमेयमिति भावः।

दार्ष्टान्तिकेऽध्याहारस्योक्तिसम्भवेऽपि दृष्टान्ते न तथेति सर्वसम्मतव्यवस्था न युक्तेति तद्दृष्टान्तेन प्रकृते साधकं मूलासङ्गतिध्वंनयितुं च सिद्धान्तमाह—वस्तुत इति। तत्रापि—पचतीत्यादावपि। फलादिकर्मत्वादेरिति शेषः। तत्र दृष्टान्तमाह—घटेति। तत्र हेतुमाह—उपस्थितीति। पृथक्त्वं मध्यमणिन्यायेनोभयत्रान्वेति। उक्तिसम्भवेति। तथा च तादृशाकाङ्क्षैवाध्याहारे बीजम्। सा च नात्रेति न तदुक्तिसम्भवः, पूर्वत्र तु तस्याः सम्भवादुक्तिसम्भवोऽस्ति तस्य यद्यपि; तथापि वाक्यभेदापत्त्या स न। अत एवासम्भवादित्येव तत्रोक्तम्।

ननु पचतीत्यादौ फलादेस्तत्त्वे एव मानाभावाद् व्यवस्थोक्तिरयुक्ताऽत आह मूले—अत एवेति। तदभिप्रेत्य व्याचष्टे-फलस्येति। फलादेः कर्मत्वादिनैवेत्यर्थः। अत एव ज्योतिष्टोमेनेत्युत्तरग्रन्थसङ्गतिः। एतेनोक्तरीत्या व्यवस्थाङ्गीकारादेवेति कस्यचिद्व्याख्यानमपास्तम्। मूले—ज्योतिष्टोमेनेति स्वमीमांसकोभयरीत्या ग्रन्थोऽतः सामान्यत एव व्याचष्टे—तत्र तस्येति। प्रत्ययार्थभूतायां धात्वर्थभूतायां वा भावनायां फलरूपस्य यागस्येत्यर्थः। अत्रापि कर्मत्वेनैवान्वय इत्यपि मतं मञ्जूषायां स्पष्टम्। व्याख्यातरीत्याह—शोभनमिति। आदिना ज्योतिष्टोमेनेत्यादिपरिग्रहः। ननु कुतस्तस्यैव दृष्टान्तत्वम् एतद्दृष्टान्तेन तत्रैव तथार्थस्याप्रसङ्गात्साध्यत्वेनानुपयुक्तत्वपरिहारस्य तावतापि सम्भवादत आह—तत्रेति। शोभनं पचतीत्यादावित्यर्थः। अपिर्मीमांसकसमुच्चायकः। अन्वयस्य—उक्तरूपस्य। तस्य—शोभनं पचतीत्यादेः। पश्य मृग इत्यादौ तु नैवमित्याह—पश्य मृग इत्यादौ त्विति। असम्मततयेति।

विशेष्यसमर्पकाद्दार्ष्टान्तिके विशेषणसमर्पकाच्च कर्मत्वादिवाचिकायाः सुब्विभक्तेः प्रयोगोऽस्त्विति वाच्यम्? धातुतिङन्तयोरप्रातिपदिकत्वात्। नैयायिकानां तु स्यादेष दोषः। तथा हि, धावन्तं मृगं पश्येतिवत् धावति मृगमित्यपि स्यात्। न चाप्रथमासामानाधिकरण्ये शतृशानचोर्नित्यत्वान्नैवं प्रयोग इति वाच्यम्? एवमपि द्वितीयानुत्पत्तेर्दुरुपपादत्वात्। ननु तत्र वाक्यभेद एव, पश्येत्यत्र तमिति कर्माध्याहारात्; पचति भवतीत्यादि तु पाको भवतीत्याद्यर्थेऽनिष्टमेवेति चेत्? मैवम्, अध्याहारे गौरवात्, तस्य च मुनिवचनविरोधेनाप्रामाणिकत्वात्,

---

शब्दरत्नम्।

बोध्यम्। **दार्ष्टान्तिके**—पश्य मृगो धावति, पचति भवतीत्यादौ। **विशेषणसमर्पकादिति**। अन्वयबोधकाले इत्यादिः। **दुरुपपादत्वादिति**। एवं च तथाप्रयोगविलय एव स्यादिति भावः।

**गौरवादिति**। एकवाक्यतयाऽन्वये सम्भवति अध्याहारेण वाक्यभेदे गौरवादिति भावः। ननु प्रामाणिकं गौरवं न दोषायेत्यत आह—**तस्य चेति**। शतृसूत्रस्थेन भूवा-

भैरवी।

विषयक्रियायाः सर्वदा न विशेषणत्वमत आह—अन्वयबोधकाल इति। एवञ्च—द्वितीयानुत्पत्तेर्दुरुपपादत्वे च। तथा प्रयोगविलय एव—पश्य मृगो धावतीति प्रयोगविलय एव। यत्तु—वासरूपन्यायेन तिङ् भविष्यति मृगपदादन्तरङ्गत्वात्प्रथमाऽस्त्विति न प्रयोगविलय इति; तन्न, लादेशेषु वासरूपन्यायाभावस्य भाष्यकारमतसिद्धत्वात्, प्रधानकार्यस्यान्तरङ्गादपि बलवत्त्वस्य "हेतुमति च" इतिसूत्रभाष्यसम्मतत्वाच्च।

अध्याहारेणेति। यत्तदोर्नित्यसम्बन्धेन य इत्यस्य तमित्यस्य चाध्याहारेणेत्यर्थः। वाक्यभेद इति। यो धावति मृगस्तम्पश्येत्येवंरूपवाक्यभेद इत्यर्थः। प्रामाणिकमिति। प्रामाणिकस्य पश्य मृगो धावतीत्यादिवाक्यस्योपपत्तिप्रयोजकमित्यर्थः। शतृसूत्रस्थेनेति। शतृविधायकसू-

भावप्रकाशः।

इदं चानुपदमेव मूले स्फुटीभविष्यति। अत एव व्याचष्टे—**पश्य मृग इति**। ननु 'क्रियाप्रधानमाख्यातम्' इति सिद्धान्ताद्धावति पचतीत्यनयोर्द्वयोरपि विशेष्यसमर्पकत्वेन विशेषणसमर्पकाच्चेत्ययुक्तमत आह—**अन्वयेति**। एतदन्वयेत्यर्थः। अन्यथा तदन्वयबोधकाले तथाऽसत्त्वादादिपूरणेनापि नेष्टसिद्धिः। मूले—इत्यपि स्यादिति। तथा चाप्रथमान्तत्वेनाख्यातार्थकृतेरन्वयो दुरुपपादः। अस्मत्सिद्धान्ते तु आख्यातक्रियाया विशेष्यत्वात्तत्रोपसर्जनत्वेनान्वितस्यान्यत्र तत्त्वेनान्वयाभावान्न दोषः। अत एवाह—**नित्यत्वादिति**। इष्टापत्तिं परिहरति—**एवञ्चेति**। द्वितीयोपत्तौ चेत्यर्थः। **तथेति**। तिङन्तप्रथमान्तघटितप्रयोगेत्यर्थः। न च वाचनिक्येव प्रथमेति वाच्यम्? तादृशवचनस्य पाणिनीयशास्त्रेऽभावेन क्रियाविशेष्यबोधानुभवानुमानात्, स्पष्टतया भूवादिसूत्रादावभिहितत्वस्य प्रागुक्तत्वाच्च। अत एव पश्य मृगो धावतिकल्पं, दर्शनं मृगो धावतिकल्पस्येत्यादि सङ्गच्छते। एतेनान्तरङ्गत्वात्प्रथमान्तस्य कर्मत्वेऽपीत्यपास्तम्, अन्यक्रियां प्रति कर्मत्वेन प्रातिपदिकार्थमात्रत्वाभावात्। अत एव पाचकं पश्येत्यादौ द्वितीयादिसिद्धिः। न च वासरूपन्यायेन, तिङ्लादेशेषु तदभावस्य भाष्ये स्पष्टत्वात्। अयमेव च दिगर्थः।

नन्वध्याहारे गौरवे पिधेहीत्यादावपि तदनापत्तिरत आह—**एकवाक्येति**। पदैकवाक्यतयेत्यर्थः। एवमग्रेऽपि। **अध्याहारेणेति**। तमित्यस्याध्याहारेण। **वाक्यभेद इति**। यो धावति मृगस्तमित्येवंरूपवाक्यभेदेत्यर्थः। तथा च न तत्र गौरवं किन्तु तन्निवर्तकवाक्यभेद इति नोक्तदोष इति भावः। **तस्य चेतीति**। गौरवस्येत्यर्थः। ननु नान्यमुनिवचनविरोधो दोषावहः, किञ्च कुत्रत्यमुनिवचनविरोधोऽत आह—**शत्रिति**। तद्विधायकसूत्रस्थेन वार्तिकरूपेणेत्यर्थः। **भूवादीति**। प्रागुक्तभाष्यरूपेणेत्यर्थः। ननु

त्वदीयानिच्छामात्रस्याकिञ्चित्करत्वात् । अपि च 'अपाक्षीद्देवदत्तोऽवेहि' इत्यादौ शत्रादेः प्रसङ्ग एव नास्ति । एकवाक्यत्वं च भाष्यवार्तिकादिसकलसम्मतम् । न

---

शब्दरत्नम् ।

दिसूत्रस्थेन च मुनिवचनेन विरोध इति बोध्यम् । अकिञ्चित्करत्वादिति । ऋषीणा-मेकवाक्यतया बोधे साधुत्वस्येच्छासत्त्वे इत्यादिः । नास्तीति । एवं च तत्र द्वितीया दुर्वारेति भावः । न चेदृशे स्थले विशिष्टस्य देवदत्तमृगादेः कर्मत्वं, विशिष्टवाचकं च न प्रातिपदिकमिति न दोषः,

'श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः' ।

इतिवदिति वाच्यम् ? नीलत्वविशिष्टस्य घटस्य कर्मत्वे प्रतिपादनीये नीलं घटमित्यादौ द्वि-

भैरवी ।

त्रस्थेनेत्यर्थः । तत्र हि "लस्याप्रथमासमानाधिकरणेनायोगादादेशानुपपत्तिः" इति वार्तिकम् । अयम्भावः—"लः कर्मणि" इत्यनेन विधीयमानो लकारः क्रियाप्रधानीभूताम्प्रति गुणभूते कर्तृकर्मणी प्रतिपादयति, "क्रियाप्रधानमाख्यातम्" इति सिद्धान्तात् । एवञ्चैकविशेषणत्वे-नोपस्थितस्य कारकस्यान्यत्र तथान्वयाऽयोगादप्रथमासामानाधिकरण्यन्नोपपद्यत इति" । एवम्पूर्वपक्षे अभ्युपेत्यवादेन "अथ मतमेतत् , भवति योग इति चेत् ? अन्यत्रापि योगः स्यात् । क्वान्यत्र ? लङि 'अपचदोदनन्देवदत्त' इति" अत्रापि लवाच्यसाधनस्य देवदत्तेन सामानाधिकरण्ये सति अपचदोदनन्देवदत्तम्पश्येति प्रयोगापत्तिरिति भावः । "एवञ्चेदं सूत्र-मनुपपन्नं स्यात्" इति समाहितम् । अथवा आदेशे सामानाधिकरण्यन्दृष्ट्वाऽनुमानाद्गन्त-व्यम्प्रकृतेरपि सामानाधिकरण्यं भवतीति । शत्राद्यादेशयोग्यो लकारः अप्रथमासमानाधिक-रणः, अप्रथमासमानाधिकरणादेशस्थानित्वात् । तादृशलकारो यद्यप्रथमासमानाधिकरणो न स्यात्तदाऽप्रथमासमानाधिकरणत्वेन शास्त्रानुवादविषयो न स्यादित्यनुकूलस्तर्कः । भूवादि-सूत्रस्थेन का तर्हीत्यादिना कथितेन मुनिवचनेन यथाक्रमं वार्तिकभाष्यकारवचनेन उभयस-ङ्ग्रहार्थमेवात्र मुनिपदोपादानम् । नव्यनैयायिकानामपि शास्त्रार्थनिर्णायकतया तान्प्रति त्वदीयेतिकथनमनुचितमित्याह—ऋषीणामिति । द्वितीया दुर्वारेति । देवदत्तशब्दादिति शेषः । नैयायिकानुयायिनः शङ्कान्निरस्यति—नचेत्यादिना । विशिष्टस्येति । पाकानुकूलभूतकालिक-व्यापारविशिष्टस्य देवदत्तस्य धावनानुकूलवर्तमानव्यापारविशिष्टस्य मृगस्येत्यर्थः । एवञ्च यत्रावयवस्य कर्मत्वादिकमस्ति द्वितीयादि तु न दृश्यते तत्रायमेव प्रकारो बोध्यः । अत्र साधकन्दृष्टान्तमाह—श्रुत्वेत्यादिना । द्वितीयानापत्तेरिति । तस्माद्विशिष्टस्याप्रातिपदिकत्वेऽपि वाक्यावयवस्य प्रातिपदिकस्य तत्तच्छक्तियोग्यतायां तत्तद्बोधिका विभक्तिर्भवत्येवेति कल्प-

भावप्रकाशः ।

मुन्यनिच्छाविशिष्टतदीयानिच्छायाः किञ्चित्करत्वेन मूलमयुक्तमत आह—ऋषीणामिति । पाणिन्यादीनां गौतमादीनां चेत्यर्थः । अत एव सामान्येनोक्तम् । स्पष्टं चेदं मञ्जूषायाम् । एवं चेति । शत्राद्यप्रसङ्गे चेत्यर्थः । तत्र—अपाक्षीद्देवदत्तोऽवेहीत्यत्र । तथा च तथाप्रयोगविलयापत्तिरिति भावः । नव्यनैया-यिकोक्तिं खण्डयति—न चेति । ईदृशे स्थले । कर्मत्वादिबोधजनकद्वितीयादिरहितवाक्ये इत्यर्थः । विशि-ष्टस्येति । विक्लित्त्यनुकूलभूतकालिकव्यापारानुकूलकृतिविशिष्टदेवदत्तरूपस्य धावनानुकूलवर्तमानकालि-कव्यापारानुकूलकृतिविशिष्टमृगरूपस्य वाक्यार्थस्येत्यर्थः । अभ्यर्हितत्वाद्देवदत्तस्य पूर्वनिपातः । आदिना

पश्य लक्ष्मण पम्पायाम्बकः परमधार्मिकः ।

इत्यादिसंग्रहः । न दोषः—न द्वितीयापत्तिः । विशिष्टस्याप्रातिपदिकत्वेन तदर्थस्यानामार्थ-त्वादेव व्युत्पत्तेर्नामार्थविषयकत्वात्तद्विरोधो नेत्यपि बोध्यम् । नीलत्वेति । नीलेत्यर्थः । नापत्ते-

शब्दरत्नम् ।

-तीयानापत्तेः । श्रुत्वेत्यादि त्वार्षमित्यलं मुनिविरुद्धविचारेण । क्रियाप्रधानमित्यत्र क्रि-

भैरवी ।

नीयम् । अत एव कटम्भीष्मम् , उदारं शोभनमित्यत्र द्वितीयोपपादकभाष्यसङ्गतिः । तस्मा-द्विशेष्यवाचकाद्यत्र द्वितीयादिविभक्तिस्तत्र तत्समानाधिकरणविशेषणवाचकेभ्योऽपि सा भवति । राज्ञः पुरुषम्पश्येत्यत्र तु राज्ञ इति व्यधिकरणमेव । श्रुत्वेत्यादेरुपपत्तिमाह–आर्षमिति । एवञ्चार्षत्वाद्व्यत्ययेन द्वितीयास्थाने प्रथमा पूर्वसवर्णदीर्घाप्रवृत्तिरप्यत एव बोध्या ।

पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः ॥

इत्यादावपीयमेव गतिः सति सम्भवे, नोचेदसाधुत्वमेव । न च पश्य मृगो धावतीत्यादौ क्रियाया एव कर्मत्वे तण्डुलमपाक्षीद्देवदत्तोऽवेहीत्यादौ तण्डुलादीनां "कर्मणा यमभिप्रैति स सम्प्रदानम्"इति सूत्रेण सम्प्रदानसञ्ज्ञायाञ्चतुर्थी स्यादिति वाच्यम् ? एतादृशे स्थले 'स्वार्थे परिपूर्णस्यार्थान्तराकाङ्क्षा' इति न्यायेनान्तरङ्गत्वादेकक्रियासम्बन्धेन कर्मत्वादिकम्भवत्येव, अत एव घटन्न पश्यामि इत्यत्र पश्चान्नञर्थान्वयः, पुरीमवस्कन्देत्यादौ पुर्यादिपदोत्तरद्वितीयाङ्कृत्वा तद्विशिष्टार्थस्यास्वास्थ्यपदार्थान्वय इत्याशयात् ; इत्यशयेनाह—अलमिति । धावनादिक्रियायाः क्रियान्तरम्प्रति विशेषणत्वेऽपि न यास्कवचनविरोध इत्याशयेनाह—क्रियाप्र-

भावप्रकाशः ।

रिति । तथा च विशिष्टस्याप्रातिपदिकत्वेपि तदवयवस्य सति योग्यत्वे यथार्थं सा भवत्येव । अत एव विशिष्टस्य कर्मत्वमादाय भीष्ममुदारं, शोभनं कटमित्यादौ विशेष्यवत् विशेषणेभ्यो द्वितीयोत्पत्तिरिति भाष्यं सङ्गच्छते । एतेन वाक्यार्थस्य नामार्थातिरिक्तत्वाभावेन विभक्त्यर्थमद्वारीकृत्यापि भेदसम्बन्धेनान्वयासम्भवाद्वाक्यार्थकर्मत्वमादाय न वाक्यभेदो न वा तमित्यध्याहार इति नैयायिकोक्तं चिन्त्यम् । अन्यथा राज्ञः पुरुषः पश्येत्यत्राप्येकवाक्यतया साधुतापत्तिः । अस्तु वाक्यार्थेऽतिरिक्तः, तथापि राज्ञः पुरुषः पश्येति प्रयोगेऽप्येकवाक्यतापत्तिः । न चेष्टापत्तिः, "तिङ्ङतिङः" इति निघातापत्तेः । न च तिङन्तार्थविशिष्टस्यैव तिङन्तार्थे प्रत्यन्वय एव वाक्यार्थस्य कर्मत्वस्वीकारान्न प्रकृते दोष इति वाच्यम् ? पुरीमवस्कन्देत्यादावपि विशिष्टस्य कर्मत्वादस्वास्थ्यपदोत्तरं द्वितीयानापत्तेरिति मन्दोक्तमपास्तम् , सुबन्तस्यैव नामत्वेन तस्य तदतिरिक्तत्वस्य स्पष्टत्वात् , राज्ञः पुरुषः पश्येत्यस्योक्तरीत्याऽवारणाच्च । अत एव राज्ञः पुरुषः पश्येत्यत्रापि न दोषः, निघातस्येष्टत्वाच्च । अत एव पश्य मृग इत्यादौ तत्स्वीकारः सफलः, तत्रैव तत्स्वीकारे मानाभावाच्च, द्वितीयैवाधिक्याच्च, पश्य लक्ष्मणेत्यादौ निर्वाहाभावाच्च, उक्तभाष्यविरोधापत्तेश्च, पुरीमवस्कन्देत्यादावन्यथासत्त्वेनादोषाच्च स्फुटमेतदनुपदमेवाग्रे हेतुसाध्ययोरवयवत्वाच्चेति दिक् । नन्वेवं श्रुत्वेत्यादीनां का गतिरत आह–श्रुत्वेत्यादीति । आर्षमिति । तत्त्वाद् द्वितीयास्थाने प्रथमा, विशेष्ये तत्रैव पूर्वसवर्णदीर्घाप्रवृत्तिर्वेति भावः । पश्यलक्ष्मणेत्यादावपि इयमेव गतिः सतिसम्भवे, तदसम्भवे तु तत्र विशिष्टकर्तृकसत्ताया एव कर्मत्वेन न दोषः । एवंरीत्या राज्ञः पुरुषः पश्येत्यादावपि प्रामाणिकप्रयोगत्वे तथाङ्गीकारे इष्टापत्तिरेव । तद् ध्वनयन्नाह—इत्यलमिति । मुनीति । यास्कादिपाणिन्यादिगौतमादीत्यर्थः । एतेन वैयाकरणमतमनूद्य यदुक्तं नव्यनैयायिकैः–तथाहि, अत्रेदं मम प्रतिभाति धावनानुकूलकृतिविशिष्टमृगस्य दर्शने कर्मतासम्बन्धेनान्वयः । मृगपदात् द्वितीया तु न, विशिष्टस्य कर्मत्वेन ततस्तदापादनासम्भवात् , यत्र केवलमृगस्य कर्मत्वे तात्पर्यं तत्र तदुत्तरं तस्याः साधुत्वात् । नच तथापि विशिष्टमृगस्य नामार्थस्य धात्वर्थे दर्शने कथं भेदेनान्वयः । अन्यथा तण्डुलः पचतीत्यादौ तण्डुलादेरपि तेन सम्बन्धेन पाकेऽन्वयापत्तेरिति वाच्यम् ? केवलनामार्थस्य धात्वर्थे भेदेनान्वयानङ्गीकारात् , वाक्यार्थस्य तु तत्र भेदेनान्वयेऽक्षतेः । अत एव श्रुत्वा ममैतदित्यादौ प्रथमान्तोपस्थापितशुभत्वविशिष्टोत्पत्तीनां भेदेन श्रवणेऽन्वयः सङ्गच्छते ।

भावप्रकाशः ।

एवं च तण्डुलः पचतीत्यादौ तस्य न साक्षादन्वयबोधः। शुक्लस्तण्डुलः पचतीत्यादौ च विशिष्टवाक्यार्थस्य तथान्वयबोधो निराबाध एव, विशेष्यतासम्बन्धेन तण्डुलपदजन्यतण्डुलप्रकारकशाब्दबोधे विभक्तिजन्योपस्थितिप्रथमान्तशुक्लादिपदसमभिव्याहृतप्रथमान्ततण्डुलपदोत्तरपच्यादिधातुजन्योपस्थित्यन्यतरस्य कारणत्वकल्पनादिति ।

केचित्तु पश्य मृगो धावतीत्यादिवाक्योत्तरं कर्मत्वोपस्थापकमिति पदमध्याहृत्य सर्वत्र वाक्यार्थकर्मस्थलेऽन्वयबोधः, निपाताव्ययातिरिक्तनामार्थयोरेवान्वयबोधस्याव्युत्पन्नत्वेन निपातेतिपदोपस्थापितकर्मत्वे मृगो धावतीत्याद्यर्थस्य धावनकर्तृकमृगादेरन्वयबोधे बाधकाभावात् । एवं निपातातिरिक्तनामार्थस्यैव धात्वर्थे साक्षादन्वयबोधस्याव्युत्पन्नतया इतिपदोपस्थापितकर्मत्वस्य धात्वर्थदर्शनादौ साक्षादन्वयबोधस्यापि निराबाधता । "नातिरात्रे षोडशिनं गृह्णाति" इत्यादौ निपातीभूतनञर्थेन सह धात्वर्थान्वयबोधस्य सर्वसम्मतत्वेन तत्र तद्विशेषणस्यावश्यकत्वात् । घटो न चन्द्र इवेत्याद्यनुरोधेन तु तत्र तद्विशेषणावश्यकत्ववत् कर्मत्वादौ नामार्थस्योद्देश्यतयैवान्वय इति व्युत्पत्तेरितिपदसमभिव्याहारे सङ्कोच इत्याहुः ।

अन्ये तु अध्याहृतेतिपदेनैव तादृशवाक्यार्थोपस्थितिस्तादृशवाक्यं च तात्पर्यग्राहकम्, इतिपदोत्तरद्वितीयायाश्च कर्मत्वमर्थः तावतैव विभक्त्यर्थद्वारा धात्वर्थनामार्थान्वयबोधसम्भवादित्याहुः।

तदुभयमप्यसत्, वाक्यार्थकर्मस्थले इतिपदमध्याहृत्यान्वयबोधस्वीकारे तण्डुलः पचतीत्यादावपि इतिपदमध्याहृत्यान्वयबोधसम्भवे तण्डुलः पचति, शुक्लस्तण्डुलः पचतीत्यादौ सर्वत्र नामार्थधात्वर्थयोः साक्षादन्वयबोधस्यैव स्वीकर्त्तुमुचितत्वात् । तस्मात्केवलनामार्थस्य भेदेन धात्वर्थेऽन्वयाव्युत्पन्नत्वेऽपि वाक्यार्थस्य धात्वर्थे तेनान्वये न दोष इत्युक्तरीतिरेव युक्ता । यत्तु विशिष्टस्यानतिरिक्ततया वाक्यार्थस्यापि नामार्थतया तस्य धात्वर्थे भेदेनान्वयासम्भवान्न सा युक्तेति, तन्न, विशिष्टस्यानतिरिक्तत्वेऽपि विशिष्टकेवलप्रकारतयोर्भेदात् ।

यद्वा दृशधातोरेव धावनकर्तृमृगकर्मकदर्शने लक्षणा, निरुक्तवाक्यं तात्पर्यग्राहकम्, तादात्म्यस्य अवयसम्बन्धस्य लघुत्वात् । पदान्तरस्य सा न ।

अथवा दृशधातोर्मृगकर्तृकोत्कटधावनकर्मकदर्शने लक्षणा । मृगो धावतीति वाक्यं तात्पर्यग्राहकमिति । युक्तं चैतत् । अन्यथा "जानामि सीतां जनकप्रसूताम्" इत्यादौ वैयाकरणानामप्यनिर्वाहात् । निह्नुते भावपदस्य कृतिपरत्वान्न तद्विरोधः। तस्मात्प्रथमान्तार्थमुख्यविशेष्यकबोधाङ्गीकारे न कोऽपि दोषः प्रत्युत क्रियामुख्यविशेष्यकबोध एवायुक्तः। तथाहि—तदभ्युपगमे चैत्रः पचतीत्यादौ चैत्रभावनयोः सर्वजनसिद्धस्योद्देश्यविधेयभावस्य भङ्गापत्तिः । एवं चैत्रः पाकभावनावान्नवेति संशयानुत्पादस्यानिर्वाहः । एवं 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थप्राधान्यम्' इति व्युत्पत्तिभङ्गः । किं च तन्मते क्रियायामाख्यातार्थाश्रयस्याधेयतासम्बन्धेनैवान्वयो वाच्यः। स च न सम्भवति, चैत्रो न पचतीत्यादावनन्वयापत्तेः, आधेयतासम्बन्धस्य वृत्त्यनियामकतयाऽभावप्रतियोगितानवच्छेदकत्वात् । अपिच चैत्रः पचतीत्यादौ पाकत्वावच्छेदेन चैत्राश्रयकत्वस्य बाधेन पाकत्वसामानाधिकरण्येनैव तदन्वयो वाच्यः। तथाच तस्मिन्पचत्यपि चैत्रो न पचतीति स्यात्, तत्सामानाधिकरण्येन तदभावसत्त्वात् । न च नञ्समभिव्याहारे पाकत्वावच्छेदेन बोधाभ्युपगमस्तदसमभिव्याहारे तु तत्सामानाधिकरण्येनेति वाच्यम् ? प्रतियोग्यभावान्वयस्य तुल्ययोगक्षेमत्वव्यवस्थापनेन नञ्सत्त्वाऽसत्त्वाभ्यां प्रकारभेदाश्रयणासम्भवादिति; तदपास्तम्, मुनिविरोधेन तस्यायुक्तत्वात्, केवलत्वनिवेशेऽन्यतरस्य कारणत्वकल्पने गौरवाच्च, अव्ययान्यस्यैव नामत्वेन निपातेतरत्वविशेषणे फलाभावाच्च, इतिपदोत्तरं द्वितीयाया बाधितत्वाच्च, इतेस्तदर्थकत्वे मानाभावाच्च, लक्षणां विनैव निर्वाहे तदाश्रयणस्य दुष्टत्वाच्च, जानामीत्यादौ प्रागुक्तरीत्या निर्वाहाच्च, निर्हेतुकसाध्यासिद्ध्योद्देश्यविधेयभावानुपपत्तिरूपदोषस्य गर्भस्रावेणैव गतत्वाच्च, विशेषरूपेणाश्रयस्य पदान्तरोपादानेन तात्पर्यवशात्तदुपपत्तेश्च तुल्यवित्तिवेद्यतया संशयस्य निरासाच्च, भाष्ययास्काद्यनुरोधेन व्युत्पत्तेः सङ्कोचकल्पनाच्च, वृत्त्यनियामकस्याप्यभावप्रतियोगितावच्छेदकत्वाङ्गीकाराच्च, तादृशविशेषसम्बन्धस्यापि तत्र सम्भवाच्च, नञ्समभिव्याहारे व्युत्पत्त्यन्तरकल्प-

च तिङन्तस्थले क्रियाविशिष्टक्रियान्तरबोधो जायत एवेति वाच्यम् ? तथैव व्युत्पन्नानां तादृशबोधस्य दुर्वारत्वात् । ईदृशेऽर्थे साधुत्वं नेष्टमित्यपि न, साधुत्वानुशासनार्थं प्रवृत्तैरेव तस्य स्वीकारात्, धातुसम्बन्धाधिकारव्युत्पादिते 'पुरीमवस्कन्द' इत्यादौ तस्यावश्यकत्वाच्च । ननु सिद्धान्ते आख्यातवाच्यक्रियाया अपि कर्तृत्वकर्मत्वस्वीकारे तस्या असत्त्वरूपत्वं भज्येतेति चेत् ? न, लिङ्गस-

शब्दरत्नम् ।

याया: प्राधान्यमाख्यातघटकप्रत्ययार्थापेक्षयैव बोध्यते । अतो दृश्यादिकं प्रति धावनादेर्विशेषणत्वेऽपि न क्षतिरिति दिक् । भाष्येति । भूवादिसूत्रस्थं भाष्यम् । "पच्यादय: क्रिया भवतिक्रियाया: कर्त्र्यो भवन्ति" इति तत्रोक्तम् । वार्तिकम्—शतृविधायकस्थम् । तस्य—क्रियाविशिष्टक्रियाबोधस्य । कर्मत्वस्वीकारे इति । क्रियान्तरनिरूपिततत्-

भैरवी ।

धानमित्यत्रेति । नैयायिकानुयायिनस्तु पश्य मृगो धावतीत्यादौ धावनानुकूलकृतिविशिष्टमृगादेर्दर्शनक्रियाम्प्रति कर्मतासम्बन्धेन विशेषणत्वम् । न च 'नामार्थधात्वर्थयोर्भेदेनान्वयबोधोऽव्युत्पन्नः' इति व्युत्पत्तिविरोधः, विशिष्टस्य नामार्थत्वाभावात् । न च शुभ्रस्तण्डुलः पचतीत्यप्येवंसति स्यादिति वाच्यम् ?प्रामाणिकप्रयोगस्थल एवैतादृशकल्पना न तु सर्वत्रेति स्वीकारात् । वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वस्वीकाराद्व्याघ्रो धावति न पश्येत्यादौ नानुपपत्तिरित्याहुः; तन्न, तादृशकल्पनायामपि "भावप्रधानमाख्यातम्" इत्यादिवाक्यस्य भाष्यादिसम्मतार्थकस्य विरोधो दुर्वार एवेत्याशयेनाह— दिगिति । शतृविधायकस्थमिति । तच्च प्रदर्शितमधस्तात् । ननु धातूपस्थितफलव्यापारयोरन्यतरस्यान्यतरम्प्रति कर्मत्वकरणत्वकर्तृत्वस्य स्वीकारादिदन्नासत्त्वरूपताप्रतिबन्धकमत आह—क्रियान्तरेति तथा च तयोरन्यतरस्य परस्परम्प्रति तथात्वेऽपि क्रियान्तरनिरूपितन्तत्त्वम्प्रतिबन्धकं स्यादेवेति भावः । ननु कारकशब्दस्य शक्तिमत्परत्वेन पूर्वपक्षविरोधापत्तिरत आह—

भावप्रकाशः ।

नाच । अत एवाग्रे तस्मात्प्रथमान्तार्थस्यैव मुख्यविशेष्यत्वमुपसंहृत्य वस्तुतस्तु नैयायिकमते सर्वत्र प्रथमान्तार्थविशेष्यक एव बोध इति न नियमः कैरप्यभियुक्तैस्तथाऽलिखनादनिर्वाहाच्च, किन्तु यथासम्भवं तत्तद्विशेष्यकः । अत एव पचतीत्यादौ प्रथमान्तपदासमभिव्याहारे भावनाविशेष्यकः, भावाख्यातस्थले क्रियाविशेष्यक एव बोधो नैयायिकानां लीलावतीप्रकाशविवरणे दीधितिकृता उक्तः । एवं "न कलञ्जं भक्षयेत्" इत्यादौ कलञ्जभक्षणं बलवदनिष्टाननुबन्धित्वाभाववदित्यादिबोधाङ्गीकरणं मणिकृतां सङ्गच्छते इति भवदुक्तं सङ्गच्छते इति दिक् । ननु दृश्यादिकं प्रति धावनादेर्विशेषणत्वे निर्णीते क्रियाप्रधानमिति भाष्यादिविरोधोऽत आह—क्रियाप्रधानमिति । आख्यातेति । उक्तलक्षणलक्षितेत्यर्थः । पेक्षयैवेति । प्रत्यासत्त्येति भावः । अतः—तस्य तथार्थाङ्गीकारात् । आदिभ्यां भवनादिपश्याद्योः संग्रहः । न क्षतिः—न यास्कादिविरोधः । अत एव प्रागुक्तभाष्याद्यविरोध उक्तहरिनिकृतिश्चेति भावः । उपपादितमिदं प्राक् । कुत्रत्यभाष्यमत आह—भूवादीति । तदेवाह—पच्यादय इति । तत्र—भूवादिसूत्रे । वार्तिकं कुत्रत्यमत आह—शतृविधायकस्थमिति । "लटः शतृशानचौ" इतिसूत्रस्थमित्यर्थः । तस्येत्यस्याव्यवहितोक्तसाधुत्वस्येत्यर्थभ्रमवारणायाह—क्रियाविशिष्टेति । पुरीकर्मकावस्कन्दनादिरूपविशेषक्रियाविशिष्टास्वारस्यकर्मकक्रियारूपसामान्यक्रियाबोधस्येत्यर्थः । अन्यथा लोट एवानुपपत्तिरिति तत्रैव स्फुटीभविष्यति । ननु सिद्धान्ते आख्यातादिवाच्यक्रियाघटकफलव्यापारान्यतरस्य कर्तृत्वकर्मत्वकरणत्वाद्यन्यतमस्य सर्वत्र सत्त्वात्तस्य तदप्रतिबन्धकत्वेन शङ्कैवायुक्ताऽत आह—क्रियान्तरेति । भिन्नपदोपात्तक्रियानिरूपितकर्तृत्वादिस्वीकारे इत्यर्थः । कारकशब्दस्य शक्तिमत्परत्वे

ङ्क्षयोः कर्तृकर्मेतरकारकस्य चाभावमात्रेण तथात्वोपपत्तेः, कर्मत्वस्य प्रकारतया-

शब्दरत्नम् ।

स्वीकारे इत्यर्थः । **कारकस्य**—करणादिकारकशक्तेः । 'हरिं नमेच्चेत्सुखं यायात्' इत्यादौ हेतुहेतुमद्भावेनान्वयो न क्रियाकारकभावेनेति न दोषः । स्ववाचकधात्वर्थं प्रति तु कर्मत्वान्वयः करणत्वान्वयश्च नासत्त्वरूपताप्रतिबन्धकः 'शोभनं पचति' 'ज्योतिष्टोमेन यजेत' इत्यादौ दर्शनात् । **अन्यत्रेति** । कर्मत्वस्य सर्वत्र संसर्गतैवेति भाष्यसंमतपक्षे त्वा-

भैरवी ।

करणादीति । भिन्नपदोपात्तक्रियान्तरनिरूपितेत्यादि। अत एव वक्ष्यति 'स्ववाचकेत्यादि'। ननु क्रियान्तरम्प्रति क्रियायाः करणत्वं 'हरिन्नमेत्' इत्यत्र 'भुक्त्वा तृप्तो न पीत्वा' इत्यत्र च नमनभोजनयोर्दृष्टमेवेत्यत आह— हरिन्नमेदित्यादि। दर्शनादिति । एवञ्च पृथक्पदोपात्तक्रियानिरूपितकरणत्वाद्ययोगित्वमसत्त्वरूपत्वमिति फलितम् । सर्वत्र-तद्वाचकविभक्तेः सत्त्वेऽसत्त्वे वा । आद्यमेवेति । इदञ्च सामान्यतोऽभिहितम् । वस्तुतस्तु लिङ्गसङ्ख्यानन्वयित्वङ्करणादिशक्ति-

भावप्रकाशः ।

पूर्वपक्षविरोधापत्तिरतदितरस्य तस्य सर्वत्र सत्त्वं चात आह—**करणादीति** । भिन्नपदोपात्तक्रियानिरूपितेत्यादिः । तथा च लिङ्गसंख्याकरणादिशक्त्ययोगित्वमेवासत्त्वम् । इदञ्च पञ्चमीकारकान्ते स्फुटीभविष्यति । नन्वेवमपि कर्तृकर्मेतरकारकान्वयः कृष्णं नमेच्चेदित्यादावस्त्येवात आह—**हरिमिति** । आदिना भुक्त्वैव तृप्तो न पीत्वेत्यादिपरिग्रहः । **हेतुहेतुमदिति** । तथैव प्रतीत्यनुभवात्, हेतुत्वस्याकारकत्वादिति भावः । **न दोष इति** । असत्त्वरूपताभङ्गापत्तिरूपदोषो नेत्यर्थः । तथा व्याख्यानफलमाह—**स्ववाचकेति** । स्वस्य—विक्लित्तित्यागादिरूपफलादेर्वाचको यो धातुस्तदर्थव्यापारादिकं प्रतीत्यर्थः । इदं च स्वरीत्या । मीमांसकरीत्या तु स्वबाचकपदार्थं प्रतीति बोध्यम् । सर्वथापि भिन्नपदोपात्तार्थं प्रति नान्वय इति भावः । **कर्मत्वान्वयः**—कर्मत्वेनान्वय इत्यर्थः । एवमग्रेऽपि । चेन कर्तृत्वान्वयसमुच्चयः । आदिना पच्यते तण्डुल इत्यादिपरिग्रहः । तथा च सर्वत्र सत्त्वात्तस्य प्रतिबन्धकत्वे तद्भङ्गापत्त्या बहुव्याकुलीभावापत्तिरिति भावः । ननु प्रागुक्तभाष्यात्कर्मत्वस्य सिद्धान्ते सर्वत्र संसर्गत्वस्यैवाङ्गीकाराद्व्याते तथाऽनभ्युपगमादित्यर्थः, कर्मत्वस्य प्रकारतयाऽनभ्युपगमाद्वेत्ययुक्तमत आह—**कर्मत्वस्येति** । तथा चान्यत्रेत्यनेनैव सिद्धान्तोक्तिसूचनेन तत्रारुचिः सूचिता । एतेन मान्योक्तव्याख्यानं प्राचामनुरोधीति ध्वनितम् । **सर्वत्र**—तद्वाचकविभक्तिसत्त्वेऽसत्त्वे चेत्यर्थः । ननु सर्वत्रानभ्युपगम एव तदर्थः, तथासति हर्यादिपदार्थस्याप्यसत्त्वरूपतापत्तेः । अथ लिङ्गसंख्यानन्वयित्वमपि विशेषणं देयमिति चेत्ततो वरमाद्यकल्पस्तदाह—**आद्यमेवेति** । लिङ्गसंख्यानन्वयित्वे सति कर्तृकर्मेतरकारकत्वेन करणादिशक्तिरूपेण भिन्नपदोपात्तक्रियायामनन्वयित्वमसत्त्वमित्येवेत्यर्थः ।

सरला ।

**करणादिकारकशक्तेरिति** । तथाच लिङ्गसंख्यानन्वयित्वे सति कर्तृकर्मेतरकारकानन्वयित्वमसत्त्वभूतत्वम् । तदुक्तं हरिणा—

> क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः ।
> असत्त्वरूपता तस्या इयमेवावधार्य्यताम् ॥ इति ।

क्रियानाधारकारकाणि च कर्तृकर्मेतरकारकाणि, कर्त्तुः कर्मणश्च धात्वर्थव्यापाररूपक्रियाश्रयत्वाद् धात्वर्थफलरूपक्रियाश्रयत्वाच्चेति । क्रिया च फलं व्यापारश्चेति पूर्वमेवोक्तम् । **दर्शनादिति** । तथाचासत्त्वभूतलक्षणे कारकपदे भिन्नपदोपात्तक्रियानिरूपितेति विशेषणीयम् । एवं च लिङ्गसंख्यानन्वयित्वे सति भिन्नपदोपात्तक्रियानिरूपितकर्तृकर्मेतरकारकानन्वयित्वमसत्त्वभूतत्वमिति निष्कर्षः । **आद्यमेवेति** । लिङ्गसंख्यानन्वयित्वाद्युक्तलक्षणमेवेत्यर्थः ।

ऽनभ्युपगमाद्वेत्यन्यत्र विस्तरः । अभिहिते त्विति । नन्वेवं 'पक्वमोदनं भुङ्क्ते' इत्यत्रापि द्वितीया न स्यादिति चेत् ? मैवम्, इह हि पचिभुजिनिरूपिते द्वे कर्मत्वशक्ती, तत्र प्रधानक्रियानिरूपितामनभिहितां शक्तिमादाय द्वितीयोत्पत्तेः । उक्तं च हरिणा—

> प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
> शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥

---

शब्दरत्नम् ।

द्वयमेव सारम् । **अभिहिते त्वितीति** । तिङादिभिः कर्मादिशक्तेरभिधाने प्रातिपदिकस्योद्भूततच्छक्तिकेऽर्थे वर्त्तमानत्वाभावाद् द्वितीयादेः कर्मादिशब्देभ्य इवाप्राप्तिरिति भावः । **न स्यादितीति** । पच्धातूत्तरनिष्ठयाऽभिधानादिति भावः । **गुणाश्रया**—गुणनिरूपिता । **प्रधानम्**—प्रधानक्रियानिरूपितां शक्तिम् । अनुरोधमेव विशदयति—

भैरवी ।

रूपेण भिन्नपदोपात्तक्रियायामनन्वयित्वं वाऽसत्त्वरूपत्वमिति लक्षणद्वयमेव बोध्यम् । कारकस्य विभक्त्यर्थत्वपक्षे 'उक्तार्थानाम्'इति न्यायेनाभिधानस्थले विभक्तेरप्राप्तावपि सङ्ख्याविभक्त्यर्थ इति पक्षे सूत्रस्यावश्यकतोक्तैवेत्यत आह—तिङादिभिरिति । भाष्यकृत्परिगणनलब्धमिदम् । उद्भूतेति । उद्भूतकर्मत्वादिशक्तिकेऽर्थे वर्तमानादित्यर्थे "अनभिहित" इति सूत्रं तात्पर्यग्राहकमिति भावः । उद्भूतत्वञ्च तिङाद्यद्योत्यत्वम् । प्रथमा तु प्रातिपदिकार्थस्याभिधानेऽपि भवत्येव । अत एव "अभिहिते प्रथमा"इति वार्तिकमभिहितम् । ततः "सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्नः"इति भाष्यञ्च सङ्गच्छते । अभिधानादिति । ओदनपदार्थ-

भावप्रकाशः ।

अत्रेदं बोध्यम् । आद्यमित्येकदेशोक्तिर्मूलोक्तरीत्या वस्तुतो लक्षणद्वयमेव, एकत्र निवेशे फलाभावादिति कारकविभक्त्यर्थत्वपक्षेऽप्यभिधानस्थले 'उक्तार्थानाम्' इति न्यायेन द्वितीयाद्यप्राप्तेः स्पष्टत्वेन तदुपेक्ष्य पञ्चकपक्षे संख्यान्यचतुष्कपक्षे च सूत्रावश्यकत्वस्योक्तत्वात्तत्र तदप्राप्तिमुपपादयति:—**तिङादिभिरिति** । परिगणनलब्धमिदम् । **उद्भूतेति** । उद्भूतकर्मत्वादिशक्तिकेऽर्थे इत्यर्थः । उद्भूते कर्मणि वर्तमानाद् द्वितीयेत्यर्थोऽत्र फलितः, "अनभिहिते" सूत्रेणाभिधानविषये प्रातिपदिकस्योद्भूततच्छक्तौ वृत्त्यभावस्यैव बोधनात् । उद्भूतत्वं च तिङाद्यद्योत्यत्वम् । दृष्टान्ते विशेष्याभावप्रयुक्तविशिष्टाभावः, दार्ष्टान्तिके विशेषणाभावप्रयुक्तः स इति परं भेद इति भावः । उपपादितमधस्तात्सर्वमिदम् । **द्वितीयादेरिति** । प्रथमा तु प्रातिपदिकार्थस्य तेनोक्तत्वेऽपि भवत्येव । अत एव "अभिहिते प्रथमा"इति वार्तिकं सङ्गच्छते । षष्ठी तु न, अशेषत्वात् । अत एव "अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्नः" इति भाष्यं सङ्गच्छते । **कर्मादीति** । सकर्मकधात्वसमभिव्याहारे इत्यादिः । **न स्यादितीति** । 'उक्तार्थानाम्' इति न्यायादनभिहिताधिकाराच्चेति भावः । **अभिधानादितीति** । ओदनगतकर्मत्वस्येति भावः । मूले—द्वितीयोत्पत्तेरिति । अप्रधानक्रियानिमित्ताभिहितत्वमादाय प्रथमोत्पत्तौ विभिन्नविभक्तित्वादभेदान्वयानापत्तावभिहितत्वस्यैवानापत्तिस्तथा चात्र नियत एव प्रयोगः । न च "अनभिहिते" इति निषेधः ? लाघवेन पर्युदासत्वादिति भावः । तत्रैवोक्तं चेत्यादि । अयमर्थः, यत्र प्रयोगे । प्रधानं चेतरा चेति द्वन्द्वः । प्रधानशब्दो नित्यनपुंसकलिङ्गः । क्रिययोरिति । षष्ठ्या निरूप्यनिरूपकभावः सम्बन्धोऽर्थः । द्रव्यस्य—एकत्वावच्छिन्नस्य । निष्ठत्वं षष्ठ्यर्थः । अत एवौदनं पक्त्वा ग्रामो गम्यते देवदत्तेनेत्यादौ द्वितीया, कर्मशक्त्योरेकनिष्ठत्वाभावात् । शक्तिरित्यस्यास्तीति शेषः । तत्र—प्रयोगे । अत एव शक्तेर्गुणाश्रयत्वाभावादाह—**गुणेति** । अप्रधानक्रियानिरूपितेत्यर्थः । एवमग्रेपि । प्रधानमित्यस्य तथा क्रियामित्यर्थे तस्यास्तदननुरोधादसङ्गतिरत आह—**प्रधानक्रियानिरूपितां शक्तिमिति** । उत्तरश्लोकस्य वैयर्थ्यं परिहरति—**अनुरोधमेवेति** । तथा च संक्षिप्तोक्तार्थप्रकाशकत्वेन न तस्य वैयर्थ्यमिति

प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते ॥ इति

अत एव 'पक्त्वौदनो भुज्यते' इत्यत्र भुजिप्रत्ययेनाभिहिते प्रथमैव, पचेरप्राधान्यात् ।

## शब्दरत्नम् ।

**प्रधानविषयेति** । गुणेऽनुक्ताऽपि तद्वदुक्तवत् प्रतीयते, तुल्यन्यायाद् गुणनिरूपिता उक्ताऽपि प्रधाननिरूपितानुक्तशक्तिवत्प्रकाशत इति । अत एव 'प्रासादे आस्ते' इत्यादौ सदिनिरूपिताधिकरणत्वस्योक्तत्वेऽप्यासिनिरूपितस्यानभिधानेनानभिहितत्वात्सप्तमीसि-

## भैरवी ।

गतकर्मत्वशक्तेरित्यर्थः । प्रधानविषयेत्यादिना प्रदर्शितानुरोधेन प्रक्रान्ताशङ्कासमाधानासम्भवादाह—तुल्यन्यायादिति । अत एव—उक्तानुरोधस्य सत्त्वादेव । सदिनिरूपितेति । प्रआ-

## भावप्रकाशः ।

भावः । **प्रधानविषयेतीति** । प्रधानक्रियानिरूपितेत्यर्थः । प्रत्ययेनेत्यस्य तदुत्तरप्रत्ययेनेत्यर्थः । यदेति-पूर्वान्वयी । तुल्यवित्तिवेद्यत्वबललब्धमर्थं वक्तुमुद्देश्यार्थं स्पष्टत्वादुपेक्ष्य विधेयार्थमाह—गुणे इति । तदेत्यादिः । निरूपितत्वं सप्तम्यर्थः । अप्रधानक्रियानिरूपिता शक्तिस्तदुत्तरप्रत्ययेनानुक्तापीत्यर्थः । तमेवार्थमाह—तुल्यन्यायादिति । इति बोध्यमिति पाठः । एतदर्थफलमाह—अत एवेति । द्वितीयार्थस्याप्यङ्गीकारादेवेत्यर्थः । प्रसीदत्यस्मिन्निति प्रासादः, अधिकरणे घञ् । आदिना शयने आस्ते इत्यादिसंग्रहः । अत्र घञोक्तत्वेऽपि तिङाऽनभिधानमिति भावः । एतेन पक्वमोदनमित्यादौ शक्तिद्वयं प्रासादे आस्ते इत्यादावेकस्या एव शक्तेरौपाधिकभेद इति वैषम्यमङ्गीकुर्वन् रत्नाकरकृदपास्तः । निरूपितस्य । अधिकरणत्वस्येत्यस्यानुषङ्गः ।

मान्यास्त्वत्र वस्तुतस्त्वित्यादि उक्तमतमेव समर्थयन्ति । तथाहि—पक्त्वा भुज्यत इत्यादाविति । आदिना पक्त्वा सूपौदनरोटिका भुज्यन्ते इत्यादिसंग्रहः । न युगपदिति । जनितान्वयबोधेन नैराकाङ्क्ष्यात् । किं चैकत्र विशेषणत्वेनान्वितस्यापरत्र विशेषणत्वेनान्वयो दुर्वचः । अपि चौदन इति प्रथमान्तस्य कर्मतासंसर्गेण धात्वर्थेऽन्वयोऽव्युत्पन्नः, नामार्थप्रकारकधात्वर्थविशेष्यकबोधे भेदसम्बन्धेन विभक्तिजन्योपस्थितेः कारणतायाः सर्वतन्त्रसिद्धत्वात् कर्मणि द्वितीयैवेत्यादिनाऽसाधुत्वबोधनाच्च । द्वितीयान्तस्य तु भुज्यते इति क्रियान्वयायोग्यत्वं स्पष्टमेव । नन्वेवं मया भुक्त्वा व्रजामीति प्रयोगापत्तिः, अहं भुक्त्वा व्रजामीत्यर्थे क्त्वाप्रकृत्यर्थक्रियायाः सामानाधिकरण्यसम्बन्धेन प्रधानक्रियायामन्वयस्य दुर्वारत्वेन क्त्वाप्रकृत्युपात्तक्रियायाः पार्थक्येन कर्त्रंशे आकाङ्क्षाया अभावात् । कर्मादौ तु पार्थक्येनाकाङ्क्षास्त्येव । मया भुक्त्वा व्रजामीति प्रयोगोऽप्यत एव न । एतेन सर्वत्रैव विवक्षाभेदेन प्रयोगद्वये प्रागुक्तहरिग्रन्थो निर्विषय एवेति शङ्कापि समाहिता । वस्तुतस्तु कारकान्वयं विना क्रियास्वरूपस्य वक्तुमशक्यत्वाद्विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वाच्च 'परिपूर्णं पदं पदान्तरेणान्वेतुं योग्यम्' इति न्यायाच्च साधुत्वज्ञानस्याहेतुत्वाच्च असाधुत्वज्ञानस्याप्रतिबन्धकत्वाच्च सङ्कोचे मानाभावाच्च ओदनं पक्त्वा भुज्यते इत्यादिवच्चैत्रेण पक्त्वा भुङ्क्ते इत्यादि भवत्येव ।

'यदा गुणे तदा तद्वदनुक्तापि प्रतीयते' ।

इति हरिकारिकयोक्तप्रयुक्तकार्यं बोध्यते न तु स्वनिष्ठानुक्तप्रयुक्तकार्यव्यावृत्तिः, वतिघटितवाक्येन तादृशार्थस्यैव बोधनात् । एवं च क्त्वाप्रत्ययस्य कर्तृवाचकत्वे ईदृशप्रयोगानापत्तिरिति दोषो बोध्यः ।

वस्तुतस्तु न्यायाभासमूलत्वेन हरिग्रन्थस्य भाष्यग्रन्थानामिवाशुद्धत्वे क्षत्यभावः, हरिं पूजयितुं दर्शनमस्तीत्यादौ पितामहचरणोक्तेरेव शरणीकर्तव्यत्वात् । पूजयितुं शक्यते इति । शक्यत इत्यत्र पूजयितुं हरिमित्युभयं कर्म । अत एव जिगमिषितव्यो ग्राम इत्यादौ ग्रामादिकर्मणि कृत्यादयः । नच हरिः स्वेन रूपेण शक्यः किन्तु पूज्यत्वेनेति पूजनं प्रत्यपि हरेः कर्मत्वमस्त्येव । अत एव ग्रामाय गन्तुं शक्यत

**शब्दरत्नम् ।**

द्धिः । इदं च "स्वादुमि णमुल्" इति सूत्रे भाष्ये स्पष्टम् । तत्रत्यभाष्यार्थानुवादिन्यौ चेमे हरिकारिके इत्यन्यत्र प्रपञ्चितम् । एवमुभयनिरूपितशक्तेरनभिधाने गुणक्रियानिरूपितशक्तेरप्यभिधायिनी विभक्तिर्भवति । यथा—ग्रामाय गन्तुमिच्छति, ग्रामं गन्तुमिच्छतीति च । 'इष्यते ग्रामो गन्तुम्' इत्यादौ प्रधाने इषिक्रियानिरूपितशक्तेरभिधाने गुणनिरूपिताया अप्यभिधानान्न कदापि चतुर्थीद्वितीये,

**भैरवी ।**

ङ्पूर्वात्सद्धातोरधिकरणे घञ् । आदिना शयने आस्ते इत्यस्य सङ्ग्रहः स्वादुमिणमुलिति । सूत्रे भाष्ये इति । इदमनुपदमेव व्यक्तीभविष्यति । अनुरोधमेव विशदयति—एवमुभयेति । इति चेति । "गत्यर्थकर्मणि" इति द्वितीयाचतुर्थ्यौ । प्रकृतार्थं भाष्यान्तरतो द्रढयति-इष्यत इति । न कदापि । गन्तुमित्यत्र ग्रामपदार्थस्यान्वयकाले । एतेनार्थान्वयः शाब्दान्वयो वोभयथा

**भावप्रकाशः ।**

इति सिद्धं, "गत्यर्थकर्मणि" इति चतुर्थ्या विधानात् । शक्तिप्रत्यन्वयस्तु एकत्र द्वयं, विशिष्टस्य वैशिष्ट्यं, विशेष्ये विशेषणं, तत्र च विशेषणान्तरमिति वा बोध्यः । एवं विवक्षाभेदेन ग्रामो गन्तुं शक्यते, ग्रामाय गन्तुं शक्यते इति प्रयोगद्वयं बोध्यमिति तत्प्राचामनुरोधेन, "स्वादुमि" इति सूत्रस्थभाष्यवार्तिकयोरनुक्तिसम्भवग्रस्तत्वापत्तेः, व्याख्यातॄणामनुभवकलहे आर्षानुभवस्यैव नियामकत्वौचित्यात्, अत एवान्यायाभासमूलत्वेनानशुद्धत्वाच्च, अन्यथा क्वापि तेषां प्रामाण्यं न स्यात्; कर्मांशे भिन्नाकाङ्क्षा न, कर्मादौ त्वस्त्येवेति वैषम्ये बीजाभावाच्च, वतिघटितवाक्येन अतिदिश्यमानधर्मविरुद्धस्वाश्रयप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वस्य स्थानिवत्सूत्रभाष्यादौ स्पष्टत्वाच्च, हरिकारिकयोर्विवरणविक्रियमाणपरत्वेन भिन्नार्थकत्वाभावात्तदभिप्रायोक्तदोषस्य हरिं पूजयितुं दर्शनमस्तीत्यादेरेवमुभयेत्यादिग्रन्थेनोद्धरिष्यमाणत्वाच्च । अत एवानुरोधमेव विशदयति प्रधानविषयेतीत्यवतारिता द्वितीयकारिका ।

तदेतद् ध्वनयन्नाह—इदं चेति । प्रागुक्तमर्थद्वयमित्यर्थः । तच्च भाष्यमनुपदमेव स्फुटीभविष्यति । ननु तर्हि भाष्यमेव मूले वक्तुमुचितमत आह—तत्रत्येति । "स्वादुमि" इति सूत्रस्थेत्यर्थः । अन्यत्र—उद्द्योतमञ्जूषादौ । तथा च कर्त्रादेरेकत्वे प्रधानतिङन्तार्थक्रियानिरूपितशक्तेरभिधानेऽनभिधाने च क्त्वान्ताद्यर्थगुणक्रियानिरूपितशक्तेरप्यभिहितवत्त्वस्यानभिहितवत्त्वस्य च भाष्यादिप्रामाण्येनाङ्गीकार इति सिद्धम् । एतेनेष्टकाः पक्त्वाऽहम्भोक्ष्ये, अहं भुक्त्वा व्रजामीत्यादौ तृतीयापत्तिः । न च तिङन्तेन कर्तुरभिधानान्न सेति वाच्यम्? तिङन्तार्थकर्तुरुक्तत्वेऽपि क्त्वान्तार्थकर्तुरभिधानाभावात् "अनभिहित" इति पर्युदासात् । अत एव प्रासादे आस्ते इत्यादौ सप्तमीति भाष्यादौ स्पष्टम् । तस्मात् कर्तुः क्त्वार्थमाश्रित्यैव तृतीया वारणीयेति परिमलेऽप्यय्यदीक्षितोक्तमपास्तम् । क्रियान्तरसम्बन्धस्य बुद्धिविषयत्वे एव क्त्वः साधुत्वम् । एतेन पूर्वक्त्वान्तार्थमात्रस्य बुद्धिविषयत्वे तस्य कर्तृकर्माकाङ्क्षासत्त्वादन्तरङ्गत्वेन तृतीयादिकं दुर्वारमित्यपास्तम् । तदाह—**प्रपञ्चितमिति** । एवमुक्तप्रकृतं द्रढयितुं हरिं पूजयितुं दर्शनमस्तीति दोषमुद्धर्तुं च तदुपयोगिप्रासङ्गिकमाह—**एवमिति** । अन्यतरनिरूपितशक्त्यनभिधाने यथा प्रधाननिरूपितशक्त्यभिधायिन्येव भवति, "स्वादुमि" इत्यत्रत्यभाष्यार्थकहरिबलात्तथा सन्सूत्रस्थभाष्यबलाद्वक्ष्यमाणमपि भवतीत्यर्थः । **उभयनिरूपितशक्त्योरिति** । गुणप्रधाननिरूपितशक्त्योरित्यर्थः । **शक्तेरिति** पाठे तु शक्तिद्वयस्येत्यर्थः । जातावेकवचनम् । वस्तुतो लाघवाच्छक्तिरेकैव निरूपकभेदाद् भेद इति यथाश्रुतमेव साधु, परं त्वत्र पक्षे पूर्वोत्तरग्रन्थसन्दर्भ औपाधिकभेदपरतया व्याख्येयः स्यादिति बोध्यम् । **अपिः** प्रधानक्रियानिरूपितशक्तिसमुच्चायकः । **अभिधायिनी विभक्तिरिति** । जातावेकवचनम् । तदभिधायिविभक्त्यौ द्वितीयाचतुर्थ्यौ भवत इत्यर्थः । तदेव आह—**यथेति** । **चेन** गन्तुं ग्राममिच्छतीत्यस्य समुच्चयः । एवं प्रासङ्गिकमुक्त्वा तत्प्रसङ्गेन प्रकृतं भाष्यान्तरतोऽपि द्रढयितुं प्रकृतजातीयमाह—**इष्यत इति** । **गुणनिरूपितायाः**, शक्तेरित्यस्यानुषङ्गः । **कदापि**—गन्तुमित्यत्र तस्य शाब्दा-

शब्दरत्नम् ।

गमेर्ग्रामः कर्मेषेस्तूभे कर्मणी इति तत्सूत्रे भाष्ये स्पष्टम् । एवं चोभयत्राप्यावृत्त्या शाब्दो ऽन्वयःप्रतीयते । अत्र प्रयोगे गमिक्रियापेक्षे द्वितीयाचतुर्थ्यौ न कदाऽपि भवत इति कैयटात् । एवं चैतद्विरोधादोदनं पक्त्वेत्यपास्तमेवेति यत्केनचित् प्राचीनेन 'वस्तुतस्तु

भैरवी ।

चतुर्थीद्वितीययोरप्रवृत्तिर्ध्वनिता । स च शाब्दोऽन्वयः सकृच्छ्रुतस्य न सम्भवतीत्यावृत्तिरपि सूचिता, कदापीत्यस्योपादानात् । सन्सूत्र इति । सन्विधायके "धातोः कर्मणः" इति सूत्रे इत्यर्थः । वस्तुतस्त्वित्यादिना यन्मनोरमायामभिहितन्तत् "स्वादुमि" इति सूत्रस्थभाष्य-विरुद्धमिति केचित् ; तन्न, मनोरमाकारस्य तत्र निर्भराभावादिति सूचयन्नाह—एवञ्चैतद्वि-रोधादिति । अत्र प्रयोग इत्यारभ्य यत्कैयटेनोक्तन्तद्विरोधात् । यद्यपि "स्वादुमि" इतिसू-

भावप्रकाशः ।

न्वये अर्थान्वये चेत्यर्थः । एतेन वयन्तु ब्रूमः तत्पदोपात्ते गुणक्रियानिरूपिता शक्तिर्नास्त्येव यतः सकृ-च्छ्रुतस्य युगपदुभयत्र शाब्दान्वयासम्भवेनैकेनैव प्रधानेन शाब्दोऽन्वयः इतरेण तु संनिधानादार्थः । हरिणाप्युक्तम्—

पक्त्वा भुज्यत इत्यादौ केषांचिन्न व्यपेक्षते । ओदनं पचतिसोऽसावनु मानात्प्रतीयते ॥

इति हरदत्तोक्तमपास्तम्, ग्रामाय गन्तुमिच्छतीत्यादिसन्विधायकसूत्रस्थभाष्यप्रयोगविरोधापत्तेः । ग्रामस्य गतिकर्मत्वाभावेन चतुर्थ्यप्राप्तेः । मम तु शाब्दान्वयाङ्गीकारात्तन्निरूपितकर्मत्वस्य सत्त्वेन पर-त्वाद् "गत्यर्थकर्मणि" इत्यस्य प्रवृत्त्या न दोषः । एवं ग्रामाय गत्वा द्रक्ष्यतीत्यपि साधु । अत एव तत्र केषांचिदित्युक्तम् । प्रथमान्तौदनपदवाच्यस्यायोग्यत्वान्न पचिक्रियया सम्बन्धः किन्तु भुजिनैवेति न पचिनिरूपिता शक्तिरुपात्तौदनपदार्थे किन्तु सामर्थ्यात् द्वितीयान्तौदनपदार्थस्तत्र गम्यते इति केषांचि-न्मतमिति तदर्थः । अत एव—

इषेश्च गतिसंस्पर्शाद् ग्रामे यो लो विधीयते । तत्रेषिणैव निर्भोगः क्रियते गतिकर्मणः ॥

इति हरिः संगच्छते । संस्पर्शात्—इषौ क्रियासुखेनैव द्रव्यसम्बन्धात् । निर्भोगः अभिधानम् । इषिणा तद्विहितलादिना । तदेतद् ध्वनयन्नाह—गमेर्ग्राम इति । एवंतर्हीत्यादिः । उभे—ग्रामगमने । सन्सूत्रे—तद्विधायके "धातोः कर्मण" इति सूत्रे इत्यर्थः । फलितमाह—एवं चेति । उक्तार्थस्य भाष्ये स्पष्टत्वे चेत्यर्थः । सकृच्छ्रुतस्य युगपदन्वयासम्भवादाह—आवृत्त्येति । प्रतीयते, उक्तभाष्यादिति भावः । ननु कथं तत्प्रतीतिस्ततोऽत आह—अत्र प्रयोग इति । इष्यते ग्रामो गन्तुमित्यत्रेत्यर्थः । न च कैयटे कदापीति नास्तीति कथं कैयटात्तथा भाष्याशयलाभ इति वाच्यम् ? तद्गूढाशयेन तथोक्तेः । तथाहि—एवं तर्हीति प्रतीके "इष्यते ग्रामो गन्तुमित्यत्र गमनस्य ग्रामार्थत्वादप्राधान्याद्भिन्नकक्षयोः शब्द-योरेकेन शब्देनाभिधानासम्भवात्प्रधाने कार्यसंप्रत्ययाद् ग्रामस्यैवाभिधानं लकारेण भवति । इषिक्रिया-याश्चाख्यातवाच्यत्वात्प्राधान्यमिति प्रधानक्रियाशक्त्यभिधाने गुणक्रियाशक्तेरभिहितवच्चकासनाद् गमिक्रियापेक्षे द्वितीयाचतुर्थ्यौ न भवतः" इति कैयटः । इत्थं हि तदाकूतम्—नन्विषेरुभयकर्मत्वे कदाचिद् गमनरूपे कर्मणि प्रत्यये इष्यते ग्रामं गन्तुमित्यपि स्यादत आह— इष्यते ग्राम इति । ग्रामार्थत्वादिति । ग्रामप्राप्त्युद्देश्यकत्वादित्यर्थः । अत एव गमनस्य स्वतोऽनुद्देश्यत्वादप्राधान्यम् । तदाह—अप्राधान्यादिति । एतेन युगपदुभयोरभिधानं स्यादित्यपास्तम् । भिन्नकक्षयोरिति । प्रधानाप्रधानयोरित्यर्थः । नन्वेवं कदा-चिदप्रधाने एव स्यादत आह—प्रधाने इति । नन्वेवमपि गतिनिरूपितकर्मत्वस्य अनभिधानात्ततो द्विती-या स्यादेवेति पूर्वोक्तप्रयोगापत्तिर्दुर्वारेत्यत आह—इषिक्रियाया इति । "अथेह ग्रामं गन्तुमिच्छतीति कस्य किं कर्म" इत्याद्युपक्रमभाष्यपर्यालोचनयाऽस्यापि भाष्यस्यैकप्रयोगे उभयत्र ग्रामस्यावृत्त्या शाब्दा-न्वयपरत्वलाभः । अन्यथा कदाचिद् गमेर्ग्रामः कर्मकदाचिदुभे इषेरित्येव स्पष्टत्वाय वदेदिति । नन्वेवं प्रस्थितं मूलेनात आह—एवं चेति । उभयसूत्रस्थभाष्यप्रामाण्यादुभयत्र शाब्दान्वयलाभेन पक्त्वौदनो

## शब्दरत्नम् ।

पक्त्वा' इत्यादिना 'साधु'इत्यन्तेनोक्तं तदतितुच्छमिति बोद्धयम् । 'स्वरूपव्याक्रियैव च पराक्रिया' इति न्यायेन तथैवानुवदति—वस्तुतस्त्वित्यादिना । अत एव "स्वादुमि" इति सूत्रेभाष्ये "तुमुन्क्त्वाणमुलादयः स्वान्वयिना समभिव्याहृतेनानुप्रयुज्यमानेन समानाधिकरणे तद्वाच्यकारके वक्तव्याः। तेन 'पक्त्वौदनो भुज्यते' इत्यादावोदने द्वितीया

## भैरवी ।

त्रस्थभाष्यमादावेव वक्तुमुचितन्तथापि कैयटोक्तमपि सप्रमाणमिति बोधयितुं तद्भाष्यमाह–अत एवेत्यादिना। उक्तार्थस्येष्टत्वादेवेत्यर्थः। "आच तुमुनः समानाधिकरणे प्रत्ययाः" इति हि तत्र वार्तिकन्तस्य व्याख्यानपरम्भाष्यमाह—तुमुन् क्त्वेति। तुमुनस्तत्रत्यमुदाहरणं भोक्तुमोदनः पच्यत इति। वार्तिकस्थं यत्समानाधिकरणपदन्तदर्थस्य प्रतियोग्याकाङ्क्षाशान्त्यर्थम्पूरणेन यद्भाष्यकृतोक्तन्तदाह—स्वान्वयिनेति। तुमुनादिप्रकृत्यर्थान्वयिनेत्यर्थः। एतस्यैव विवरणं समभिव्याहृतेनेत्यारभ्यानुप्रयुज्यमानेनेत्यन्तम्। आख्यातेनेति शेषः। समानाधिकरण इति। समानमेकं यदधिकरणन्द्रव्यरूपङ्कारकन्तस्मिन्नित्यर्थः। अत एवाह—तद्वाच्येति। एवञ्चाख्यातवाच्यकारकाभिन्नं यत् क्त्वादिप्रकृत्यर्थकारकन्तस्मिन्निति फलितम्। कारकभेदे तु गुणीभूतक्रियाकर्मत्वबोधिका द्वितीया भवत्येव, पक्त्वौदनङ्ग्रामो गम्यत इति यथा। पूर्वोक्तवचनारम्भफलमाह—तेनेति। द्वितीया नेति। पच्धात्वर्थकर्मत्वबोधिकेति शेषः।

## भावप्रकाशः ।

भुज्यत इत्यस्यैव साधुत्वलाभे चेत्यर्थः। एतद्विरोधात्—प्रक्रान्तसूत्रद्वयस्थोक्तवक्ष्यमाणभाष्यविरोधात्। अयं चापि तुच्छत्वे हेतुः। अपिस्तत्समुच्चायकः। नन्वेवं तदनूद्य खण्डितुमुचितमत आह—स्वरूपेति। स्वरूपव्याख्यानमेव पराभिभवे हेतुरित्यर्थः। तथैव–प्राचीनानुपूर्व्यैव। तदितिशेषः। इत्यादिना–साध्वित्यन्तेनेति भावः। एतेन तथा रत्नाकराद्युक्तं मूलरीत्या सर्वं संलिख्य एतेन "आच तुमुन" इत्यादि "तत्तर्हिवक्तव्यम्" इत्यन्तं पूर्वपक्षभाष्यमाश्रित्य "अव्ययकृत" इत्यादिसिद्धान्तभाष्यानुसारि वस्तुतस्त्वित्यादि मनोरमाखण्डनपरनवीनग्रन्थोऽपास्त इति मन्दोक्तं चापास्तम्, तस्य पूर्वपक्षत्वेऽव्ययकृत इत्यादिना तदुक्तार्थसाधनस्यासंगत्यापत्तेः, आरम्भप्रत्याख्यानयोः समफलत्वस्य सार्वत्रिकत्वाच्च, तथेष्टत्वे तद्रीत्या तत्खण्डनौचित्याच्च, शङ्कापरभाष्यवार्तिकग्रन्थानां सर्वत्राप्रामाण्यापाताच्च, विरुद्धभाष्यान्तरदर्शने पूर्वपक्षत्वव्यवहाराच्चेति दिक्। यद्यपि स्वादुमीति सूत्रभाष्यं प्रागेव वक्तुमुचितं तथापि कैयटबलाद् भाष्यात्तथाशयलाभमुक्त्वा भाष्यादेव तथा लाभ इत्यर्थं सूचयितुमन्ते तदेव भाष्यमाह—अत एवेति। उक्तार्थस्येष्टत्वादेवेत्यर्थः। 'आच तुमुनः समानाधिकरणे प्रत्ययाः' इति वार्तिकं सव्याख्यानमाह–तुमुनिति। क्त्वादय इत्येवसिद्धे यद्यपि त्रयाणामुक्तिर्विशिष्यभाष्ये तेषामुल्लेखात् तथापि अल्पाच्तरत्वात्सूत्रपाठे प्राथम्याच्च क्त्वाणमुल् तुमुनादय इति वाच्ये तुमुनः प्रथमोक्तिस्तुमुन्त्वसामान्यात् "तुमुन्ण्वुलौ" इत्यस्यापि ग्रहणसूचनाय। अत एव 'भोक्तुमोदनः पच्यते' इति तदुदाहरणं तत्रत्यं भाष्योक्तं संगच्छते। अन्यथा आदिशब्दस्य प्रकारार्थत्वेन धातुसम्बन्धाधिकारविहिताव्ययकृतां तुमुनन्तानां ग्रहणेऽपि तस्य तदनन्तर्गतत्वात्तन्न स्यादिति भावः। भाष्यपूरितानुप्रयोगेणेत्यस्यार्थमाह—स्वान्वयिनेति। तुमुनादिप्रकृत्यर्थान्वयिनेत्यर्थः। तस्यैव विवरणं—समभीति। यद्वा स्वान्वयिना कारकेण समभिव्याहृतेनेत्यर्थः। अनुप्रयुज्येति। भाष्यस्थानुप्रयोगशब्दे कर्मणि घञिति भावः। आख्यातेनेति शेषः। समानाधिकरणे इति। अस्य समाने एकस्मिन् अधिकरणे द्रव्यरूपे कारके इत्यर्थः। तत्र समानशब्द एकपर्यायः। तदाह—तद्वाच्येति। आख्यातवाच्येत्यर्थः। आख्यातवाच्यकारकाभिन्नं यत्र क्त्वान्तादिकारकं तत्रेति यावत्। समानाधिकरणे कारके वर्तमानाद्धातोरिति तदर्थः। तेन तस्य धात्वर्थं प्रति विशेषणत्वमेवेति न बोधे वैषम्यम्। अत एव पक्त्वौदनं ग्रामो गम्यते देवदत्तेनेति सिद्धम्। वचनफलमाह—तेनेति। वचनेनेत्यर्थः। आदिना—अहम्भुक्त्वा व्रजामीत्यादिसंग्रहः। द्वितीयेति। उप-

वस्तुतस्तु,'पक्त्वा भुज्यते' इत्यादौ कर्मणः पचिभुजिभ्यां न युगपच्छाब्दोऽन्वयः, किं त्वन्यतरेण शाब्दोऽपरेणार्थः। तत्र च प्रथमाद्वितीये व्यवस्थिते एव। तद्यथा—पक्त्वा भुज्यते ओदनः। किं पक्त्वा? अर्थादोदनम्। यदा तु

शब्दरत्नम्।

न। अन्यथा कृत्वादस्य कर्त्तर्यापत्तौ पचिक्रियाकर्मत्वस्यानभिधानात्सा स्यादेव" इत्युक्त्वा 'न वक्तव्यमव्ययकृतां भावे विधानात्" इत्युक्तम्। अनेन हि भाष्येणोभयत्र शाब्दान्वय एव लभ्यते। तत्र वचनारम्भे एषां प्रयोगाणामुपपत्त्यभावात् प्रत्याख्यानेऽपि हर्युक्तरीत्या सनादिसूत्रस्थभाष्यसम्मत्याऽभाव एवोचितः। एवं च कैयटोक्तं 'क्षुधं प्रतिहन्तुं शक्यम्' इत्यप्यसाध्वेव, वचनारम्भेऽसिद्धेः। तुमुनाद्यन्वयिक्रियानिरूपितशक्तेरयं स्वभावो यत्स्व-

भैरवी।

न वक्तव्यमिति। उक्तार्थकन्तद्वार्तिकमित्यर्थः। विधानादिति। "अव्ययकृतो भावे" इति वचनादित्यर्थः। लभ्यते इति। अन्यथा आरम्भप्रत्याख्यानयोः फलभेदापत्त्या तदसङ्गतिः स्यात्। एतदेवोपपादयति—तत्रेति। आरम्भप्रत्याख्यानयोर्मध्ये। एषाम्—मूलोक्तानाम्। सनादीति। आदिना "स्वादुमि"इत्यस्य सङ्ग्रहः। असाध्वेवेति। अत एव क्षुत्प्रतिहन्तुं शक्यमिति भाष्यकारीयप्रयोगस्य सङ्गतिः। एवञ्चोक्तभाष्यद्वयबलाद्यत्फलितं तद्दर्शयति—तुमुनाद्यन्वयीति। स्वसमानाधिकरणेति। अत्र स्वपदं शक्तिपरम्।

भावप्रकाशः।

लक्षणमेतत् तृतीयाया अपि। अस्य—तुमुनादेः। आपत्तौ—विधानापत्तावित्यर्थः। पचिक्रियाकर्मत्वस्य—तन्निरूपितकर्मत्वस्य। तथैव खण्डयति—न वक्तव्या इति। न वक्तव्यमिति पाठे तु उक्तार्थकं तद्वार्तिकं न वक्तव्यमित्यर्थः। विधानादिति। "अव्ययकृतो भावे" इत्युक्तेरिति भावः। तदेवोपपादयति—अनेन हीति। अन्यथा आरम्भप्रत्याख्यानयोः फलभेदापत्त्या तदसंगतिः स्पष्टैव। तदेवाह—तत्रेति। आरम्भप्रत्याख्यानयोर्मध्ये इत्यर्थः। वचनारम्भे—"आचतुमुन" इति वचनारम्भे। एषां—मूलोक्तानाम्। ओदनं पक्त्वा भुज्यते, पूजयितुं शक्यते हरिमित्यादीनाम्। सनादीति। आदिना "स्वादुमि" इत्यादिसंग्रहः। अन्यथा भाष्यकृता तथोक्त्या तदज्ञानकल्पनापत्तिः। तच्च नोचितमित्याह—उचित इति।

यत्तु—हरिग्रन्थादौ प्रधानपदेन सर्वतः प्रधानं तिङन्तवाच्यक्रियैव, तच्छक्तेरेव वस्तुस्वभावमाहात्म्येन स्वसमानाधिकरणेतरशक्त्यभिभावकत्वात्। अत एव पक्त्वौदनं भुङ्क्ते देवदत्तः, पक्त्वौदनो भुज्यते देवदत्तेनेत्यत्र तृतीयाद्वितीये न। अत एव च क्षुधं प्रतिहन्तुं शक्यमित्यपि भवतीति पस्पशायां कैयटोक्तं संगच्छते। तत्र शक्यमित्यस्यापि नामत्वेनेतरक्रियां प्रति गुणत्वेन स्वसमानाधिकरणेतरशक्त्यभिभवे सामर्थ्याभावादिति कैयटानुयायिनः; तन्न, ग्रामं ग्रामाय वा गन्तुं शक्यमित्यस्याप्यापत्तेः, क्षुदुपहन्तुं शक्यमिति भाष्यप्रयोगसिद्ध्यनापत्तेश्च, नियमतो जन्यतया क्रियासाकाङ्क्षस्यैव नामत्वस्य प्राक् प्रतिपादितत्वेन तत्र शक्यमित्युक्तेरसंगतत्वाच्च, अपि च समानाधिकरणे इत्यस्यानुप्रयोगेणेत्येव व्याख्यानात्तथार्थाङ्गीकारे मानाभावात् कैयटोक्तप्रयोगस्यापि चिन्त्यत्वात् तद्वचनवादिमतेऽसिद्धेः। न च तदाख्यातान्तानुप्रयोगविषयं, क्षुदुपहन्तुं शक्यमिति भाष्यप्रयोगासिध्यापत्तेः, तुमुना कर्मणोऽनभिधानात् द्वितीयापत्तेरिति दिक्। तद् ध्वनयन्नाह—एवं चेति। भाष्यवार्तिकविरुद्धप्रयोगाणामसाधुत्वेत्यर्थः। अपिर्मौलप्रयोगसमुच्चायकः। क्षुधः प्रतिघातमात्रविशेषणत्वमपि न युक्तं, "गमेर्ग्रामः कर्मसंज्ञे" इति सन्सूत्रस्थभाष्यविरोधादिति बोध्यम्। तत्र पर्यवसितमुपसंहरति—तुमुनाद्यन्वयीति। तस्मादित्यादिः। तुमुनाद्यन्वयिनी या क्रिया प्रधानक्रिया तन्निरूपितशक्तेरित्यर्थः। अत एवाग्रे उक्तम्—गुणभूतेति। स्वपदेन शक्तिः। स्वसमानाधिकरणत्वं शक्तेर्विशेषणम्। यदित्यनेन स्वभावप्रकाशयो-

ओदनं पक्त्वा भुज्यते इति प्रयुज्यते तदा भुज्यत इत्यत्रार्थादोदन इति गम्यते । एवं च विवक्षाभेदेन 'पूजयितुं शक्यते हरिर्हरिं वा' इत्युभयं साधु ।

प्राप्तानन्द इति । आनन्दकर्तृकप्राप्तिकर्मीभूत इत्यर्थः । यदुक्तं प्रायेणेति, तस्य फलमाह—क्व चिदिति । विषवृक्ष इति । यदि तु वर्धिच्छिद्योरन्यतरेण

---

शब्दरत्नम् ।

समानाधिकरणगुणभूत मुनादिप्रकृत्यर्थनिरूपितशक्तेः स्ववदभिहितत्वेनानभिहितत्वेन वा प्रकाश इति सुधियो विभावयन्तु ।

अन्यतरेण सहेति । इदं प्रागुक्तवस्तुतस्त्वित्यादिरीत्योक्तं तद्वदेवेति बोध्यम् ।

भैरवी ।

तद्वदेवेति । खण्डनीयमेवेत्यर्थः । मैवमित्युक्त्वा शाब्दबोधवैलक्षण्यसूचनाय "कर्तुरी-

भावप्रकाशः ।

रभेदः सूच्यते । स्ववदित्यस्य प्रकाश इत्यत्रान्वयः । केन धर्मेण तुल्यत्वमित्याकाङ्क्षायामाह—अभिहितत्वेनेति । तथा च प्रकाशस्य स्वतुल्यत्वमन्यतरधर्मेणेति भावः । सुधियः—भाष्यादिपरिशीलनशालिनः ।

भाष्याद्यविरोधायाह—इदमिति । तद्वदेवेति । भाष्यादिविरोधात्तथाऽतितुच्छम् एवमिदमपि । तस्य यथा तद्बोधनाय तेन न्यायेनानुवादस्तथाऽस्यापीत्यर्थः । किं च विषवृक्षोऽपीत्यत्र तुमुनः साधुत्वायेष्यत इत्यध्याहार आवश्यकः । अन्यथा क्रियार्थक्रियोपपादकत्वाभावाच्छकादियोगाभावाच्च स दुर्लभः स्यात् । अध्याहारे तु "इच्छार्थेषु" इति तुमुन्सुलभः । विषवृक्षोऽपि संवर्ध्य च्छेतुमिष्यते इति यत्तदसाम्प्रतमन्याय्यमिति तदर्थः । एवं चाध्याहृततिङाऽभिधानान्न द्वितीयाप्रसक्तिः । तादृशेच्छाया अन्याय्यत्वं च तद्विषयस्यान्याय्यत्वेन । एवम् अमुं नारद इत्यबोधीत्यादौ नारद इतीति श्रीकृष्णीयज्ञानानुकरणं नारद इत्येतच्छब्दाभिलप्यमानाकारो बोध इति बोधः । एवं च प्रथमान्तस्याप्रातिपदिकत्वान्न तत्र द्वितीया । एवं च 'प्रायेण' इति 'क्वचिन्निपातेन' इत्याद्यपि च चिन्त्यमेव ।

युक्तं चैतत्—

"इति प्रकरणे हेतौ प्रकाशादिसमाप्तिषु । निदर्शने प्रकारे च स्यात् ॥"

इति कोशादितेः कर्मत्वद्योतकत्वे मानाभावात् । किं च साम्प्रतमित्यस्य

एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा ॥

इत्यमरादिदानीमित्यर्थकतया तदर्थत्वे मानाभावात् । किञ्च तथार्थे स्वयं दत्तवरस्य स्वतः क्षयोऽयोग्य इत्युपक्रमसत्त्वेन सम्प्रत्ययुक्तताप्रतिपादनेऽपि कालान्तरे युक्तताप्रतीत्याऽसङ्गतेः स्पष्टत्वात् । एवं च परिगणनमेवैतत् । अत एव भाष्ये "परिगणनम्" इत्येवोक्तम् । अत एव प्रकाशकारादिभिः प्रायेणेति नोक्तम्, परिगणनादेव कटं भीष्मं कुर्वित्यादौ विशेष्यादुत्पन्नद्वितीयया गतार्थत्वेऽपि विशेषणात्सा । अत एवाधिहरीत्यादौ समासः । तद्वचनसामर्थ्येन हि तस्य परिगणनत्वमेव कल्पयितुं युक्तम्, ऋषिताऽत्पर्यस्य ऋषिवचसैव निर्णेतुमुचितत्वात् । अत एव "अभ्र आं अप" इत्यादौ सप्तमी । किञ्च निपातेनाभिधानेऽपि प्रातिपदिकादुद्भूततत्तच्छक्तिमत्त्वेनैव भानमिति तत्र विभक्तिः सुलभा । शब्दशक्तिस्वभावादस्यैवार्थस्य द्योतकोऽधिर्निपातः । अत एव परिगणनप्रत्याख्यानेऽपि न दोषः । तच्चेत्थं—प्रक्रियादशायां कटोऽपि कर्म भीष्मादयोऽपीत्याश्रयणात्कटत्वविशिष्टकटनिष्ठकर्मत्वोक्तावपि भीष्मत्वादिगुणविशिष्टनिष्ठस्य तस्य बोधार्थं ततोऽपि सा । तेन विशेषणविभक्तिः साधुत्वार्थाऽभेदार्थिका वेत्यपास्तं, तथा शास्त्रे वचनाभावाच्च । बोधस्तु मिथस्तयोर्विशेष्यविशेषणभावेनैव । कारकाणां भावनान्वयव्युत्पत्तिः साक्षात्स्वाश्रयद्वारा वान्वयविषया । तिङ्कृतौ स्वप्रकृत्यर्थं प्रति यस्य यस्य कर्मता तस्य सर्वस्यापि कर्मतामाहतुरिति कृतः कटः सुन्दर इत्यादौ न क्वापि द्वितीया । कारकान्वययोग्यक्रिया च धातूपस्थितैव न तु द्वितीयाद्युपस्थिता । स्पष्टं चेदं "कर्तृकर्मणोः" इति सूत्रभाष्ये । अत एव शतेन क्रीत इत्यर्थकशस्यपदोपात्तक्रि-

सह कर्मतयाऽन्वयो विवक्ष्यते, तदा द्वितीया स्यादेवेति ध्येयम् ।

तृणं स्पृशतीति । यथा स्पृश्यमानस्य गङ्गादेरीप्सितस्य क्रियया योगस्तज्जन्यसंयोगादिफलाधारत्वात् तथैवानीप्सितस्य तृणादेरपीति भावः । स्यादेतत् धातूपस्थाप्यफलशालि कर्मेत्येवाऽस्तु, किमीप्सितानीप्सितयोः पृथक्कथनेनेति चेत् ? मैवम्,

---

### शब्दरत्नम् ।

मैवमिति । ग्रामं गच्छतीत्यादौ ईप्सिततमत्वोपलक्षितमुद्देश्यत्वं भासते, एतत्सूत्रबोध्यकर्मत्वशक्तेरुद्देश्यतासमानाधिकरणत्वात् । अत एव "कर्मणा यमभिप्रैति" इति सूत्रे कर्मणेत्यस्याभावे गां ददातीत्यत्र गोरप्युद्देश्यतया तत्रे-

### भैरवी ।

प्सिततमम्" इत्यस्यारम्भ इति नोक्तमिति न्यूनतापरिहाराय स्वयमाह—ग्राममिति । ईप्सिततमत्वोपलक्षितमिति । इच्छार्थकसन्प्रत्ययसत्त्वात् तेनोद्देश्यत्वं लक्ष्यते । अत एव—उद्देश्यत्वस्य भानादेव । गामिति । अस्य विप्रायेत्यादिः । गोरपीति । अपिना विप्रसमुच्चयः । तत्रैव—

### भावप्रकाशः ।

यायां न कारकान्वय इति न शस्यो देवदत्तेनेत्यादि । अधिका खारी द्रोणेनेत्यत्र तु हेतौ प्रकृत्यादित्वाद्वा तृतीया । एवं च शस्यशब्दात्कर्मादेः क्रियाजनकत्वेन विभक्तिवाच्यतावच्छेदकोद्भूतशक्तिमत्त्वेन च न भानमिति न विभक्तिप्रसक्तिः । एवं कर्मादिपदैरिव पक्वादिपदैरपि न विभक्तिप्रयोजकरूपेण कर्मादीनां भानम् । तिङ्कृत्तद्धितसमासैरभिधाने इत्यस्यायमर्थः—शक्तेरभिधाने तत्तच्छक्त्यावेशेन न भानमिति विभक्त्यप्रसक्तिः । "अनभिहित" सूत्रं तु अनुद्भूतशक्तिककर्मादिग्रहणं नेत्यत्रैव तात्पर्यग्राहकं, लिङ्गोक्तावपि घटोऽस्तीत्यादौ प्रातिपदिकस्योद्भूतकर्त्रादिशक्तावृत्तेः । शक्तावुद्भूतत्वं च सर्वत्र प्रतीयमानप्रातिपदिकार्थाभेदेन प्रतीयमानत्वम् । तद्वैपरीत्ये निमित्तं च कृदन्तादिप्रतिपाद्यत्वं तत्समानाधिकरणं च । तदुक्तम्—"अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्नः" इति । अन्तर्भूतत्वं च भेदेनाप्रतीयमानत्वमेव । एवं च मूलं परममूलं तदनुयायिदण्ड्याद्युक्तं च चिन्त्यमेव । एतेन विषवृक्ष इत्यादौ प्रथमाप्रयोजकं न निपातार्थसामानाधिकरण्यं, वैयाकरणमते तेषां वाच्यार्थाभावात् ; किन्तु असाम्प्रतमित्येतत्तात्पर्यग्राहकानुरोधेन न युज्यत इत्याक्षेपात्तत्रैव वृक्ष इत्यस्यान्वयः । अमुं नारद इत्यत्रापि अमुमबोधि किमित्यपेक्षायां नारदो भवतीति भवतिक्रियाध्याहारेणैव योजना । अन्यथा अमुमित्यत्रापि द्वितीयानापत्तेः । यत्तु अमुमित्यस्यादौ क्रियान्वयाङ्गीकारान्न दोष इति ; तथापि विभक्त्यर्थेऽव्ययीभावस्य दुर्वारत्वात्, 'सविशेषणानां वृत्तिर्न' इत्यस्यानित्यसमासविषयकत्वात् इति रत्नाकरोक्तमपास्तम्, उक्तदोषगणापत्तेः, निपातानां वाचकत्वस्यापि तत्सिद्धान्ते सत्त्वाच्च, तत्राध्याहारं विनैव निर्वाहाच्चेति दिक् । तदेतद् ध्वनयन्नाह—एवेति ।

मैवमितीति । फलसत्त्वादिति शेषः । ननु तथाप्युद्देश्यत्वादिभानाय सूत्रद्वयावश्यकत्वेनाऽग्नेरित्येतावत्पर्यन्तगमनं निर्बीजमत आदौ तदेव फलमाह—ग्राममिति । एतेन तथा रत्नाकरदण्ड्याद्युक्तमपास्तम् । ननु ईप्सिततमत्वघटकेच्छाविषयत्वस्य न भानमननुभवादत आह—उपलक्षितमिति । तथा च तदुपादाने तेन तदुपलक्ष्यं काकेन पुण्डरीकादिवदन्यथेति तदावश्यकमिति भावः । सम्बन्धं विना तदसम्भवादाह—एतदिति । अत एव सूत्रे सनुपात्तः । तेन हीच्छार्थकेनोद्देश्यत्वं गर्भितमिति भावः । ननु इच्छाविषयत्वादिवदुद्देश्यत्वादेरप्यभानात्तदुपलक्षणे न मानमत आह—अत एवेति । तद्भानाङ्गीकारादेवेत्यर्थः । गामिति । अस्य विप्रायेत्यादिः । अपिर्विप्रसमुच्चायकः । नन्वेवमिष्टसिद्धिरेव गवि कर्मत्वस्य विप्रे सम्प्रदानत्वस्याङ्गीकारादत आह—तत्रैवेति । गव्येवेत्यर्थः । एतेन विप्रव्यावृत्तिः । तथा चाव्याप्त्यतिव्याप्ती इति भावः । नन्वेवं दायोगे एव सम्प्रदानत्वमित्यस्यानाश्रयणात्कर्म-

शब्दरत्नम् ।

व पर्यायेण सम्प्रदानसंज्ञा; स्यादिति भाष्यकैयटोक्तं संगच्छते । चतु-
र्थ्या उद्देश्यत्वं वाच्यं तत्समानाधिकरणशक्तिर्वेति सर्वसम्मतमिति भावः ।

भैरवी ।

गव्येव । अयम्भावः—काकेन पुण्डरीकादिकं यथा परिचाय्यते तेन गृहविशेषस्य प्रतीति-
स्तथा ईप्सिततमशब्दस्येच्छार्थकसम्प्रत्ययघटितत्वात्तेनोद्देश्यत्वमुपलक्ष्यते । अत एव प्रकृत-
धात्वर्थप्रधानीभूतव्यापारजन्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वमीप्सिततमत्वमिति कथ-
यन्ति । तथाच विप्राय गान्ददातीत्यत्र स्वस्वत्वध्वंसविशिष्टपरस्वत्वोत्पत्त्यनुकूलव्यापारस्य
धात्वर्थतया इच्छारूपताद्दशव्यापारस्य विप्रविषयकत्वेन विप्रस्य सम्प्रदानसंज्ञा जायते
कर्मणेत्यस्य सत्त्वे । तदभावे तु यमभिप्रति-यं फलाश्रयत्वेनाभिसम्बन्धुमिच्छतीत्यर्थः स्यात्,
तथा च गोः सम्प्रदानत्वस्य प्राप्तिरिति । दाधातुप्रयोग एव सम्प्रदानसंज्ञा भवतीत्यस्याना-
श्रयणाद्धात्वन्तरार्थयोगेऽपि तस्य प्राप्तिरित्याशयेनाह—पर्यायेणेति । तदनाश्रयणे मानन्तु
प्रकृतभाष्यमेव । यमभिप्रैतीत्यत्र कर्तृबोधकतिङ्सत्त्वात्केनाभिप्रैतीत्याकाङ्क्षायां स्वनिष्ठक्रि-
ययेति प्रतीतं स्यात् । तया क्रियया प्रथमतो गौरभिप्रेयते पश्चाद् गवा विप्र इति गौरन्तर-
ङ्गत्वात्सम्प्रदानसंज्ञाप्राप्तिः । एतेन विप्रे सम्प्रदानसंज्ञा चरितार्था, धात्वन्तरार्थयोगे कर्म-
त्वञ्चरितार्थमिति परत्वाद्गोः कर्मसंज्ञैव स्यादिति "कर्मण एव स्यात्" इति भाष्यस्य तात्पर्य-
मिति ध्वनितम् । उद्देश्यत्वञ्च फलात्मकधात्वर्थे ग्राह्यम्, क्रियायाः फलेच्छापूर्वकेच्छाविषय-
त्वात् । तदाश्रयत्वाद् ग्रामादेरप्युद्देश्यत्वव्यवहारः । चतुर्थ्या उद्देश्यत्वार्थकत्व एवोक्तभाष्य-
सङ्गतिरित्याशयेनाह—चतुर्थ्या इति । उद्देश्यत्वन्तु उद्देश्यपदशक्यतावच्छेदकम्पदार्थान्तरम् ।
यत्तु इच्छाविषयत्वमेवोद्देश्यत्वमिति; तन्न, घटो द्रव्यमित्यादौ उद्देश्यविधेयभावेनान्वय
इति व्यवहारस्येच्छाविषयत्वस्याप्रतीतावपि दर्शनात् । शक्तिः-सम्प्रदानत्वशक्तिः । उद्देश्य-
त्वमेव चतुर्थीवाच्यमिति प्राचीनमतन्तत्समानाधिकरणं सम्प्रदानत्वमिति प्राचीननवीनो-
भयसम्मतमित्याशयेनाह—सर्वसम्मतमिति । एतेन प्रघट्टकेनोद्देश्यत्वस्य भानार्थं "कर्तुरीप्सि-
ततमम्" इति सूत्रमनुद्देश्यत्वभानार्थं "तथायुक्तम्" इति सूत्रमितिसूत्रकाराशयो वर्णितः ।
विप्राय गान्ददातीति शब्दाद्विप्राभिन्नसम्प्रदाननिष्ठोद्देश्यतानिरूपकन्दानमिति सम्प्रदानवि-

भावप्रकाशः ।

सञ्ज्ञानवकाशः स्यादत आह—पर्यायेणेति । तदनाश्रयणे प्रमाणन्तु भाष्यमेवाग्रे स्फुटम् । ननु दाधा-
तुयोगे विप्रस्याप्युद्देश्यत्वेन तत्र सम्प्रदानत्वं चरितार्थं, तदन्यधातुयोगे च कर्मत्वं, तथा च तद्योगे गोः
परत्वात्कर्मसञ्ज्ञैव स्यादिति कथं पर्यायतेति चेत्? न, कर्मणेत्यस्याभावे अभिप्रैतीति तिङुपस्थितकर्त्रा
पूर्वमन्तरङ्गत्वात्स्वनिष्ठदानक्रियया करणभूतयाऽभिप्रेयते सम्बध्यते गौः पश्चात् दानक्रियाभिप्रेतगवा
विप्रोऽभिप्रेयते इति तस्य क्रियासम्बन्धो बहिरङ्ग इति बहिरङ्गक्रियासम्बद्धे विप्रे सम्प्रदानत्वाप्राप्तेः, कर्तृ-
निष्ठधात्वर्थव्यापारजन्यफलसम्बद्धं सम्प्रदानसञ्ज्ञमिति तद्बहितत्सूत्रार्थात् । कारकाधिकारे च सामर्थ्य
गम्यप्रकर्षानाश्रयणेऽप्यन्तरङ्गबहिरङ्गभावाश्रयणमस्त्येव । न च पर्याये "गत्यर्थकर्मणि" इति व्यर्थम्,
सिद्धान्तेऽप्यनुवादत्वेनेदानीं तत्त्वस्यैवौचित्यादिति भावः । भाष्ये कर्मण एवस्यादित्येतावन्मात्रस्योक्त-
त्वादाह—कैयटेति । उद्देश्यत्वं च साक्षात्फलरूपे धात्वर्थे, क्रियायाः फलेच्छापूर्वकेच्छाविषयत्वात्,
तदाश्रयत्वात् ग्रामादेरपि तत्त्वमिति भावः । ननु चतुर्थ्या उद्देश्यत्वे वाच्ये एव प्रागुक्तभाष्यसङ्गति-
स्तत्रैव किंमानमत आह—चतुर्थ्या इति । तत्त्वं चोद्देश्यादिपदशक्यतावच्छेदकतया सिद्धं पदार्था-
न्तरम् । यत्तु इच्छाविषयत्वमेवोद्देश्यत्वमिति, तन्न, देवो रूपवानित्यादावुद्देश्यविधेयभावेनान्वयाद्
देवे उद्देश्यत्वप्रतीतावपीच्छाविषयत्वाप्रतीतेः । कश्चित्तत्समानाधिकरणमित्यन्यत् । इदं च प्राचोक्त-
रीत्या । सिद्धान्तमतेनाह—तत्समानेति । सर्वेति । प्राचीननवीनेत्यर्थः । विप्राय गां ददातीत्यादौ
विप्राभिन्नसम्प्रदाननिष्ठोद्देश्यतानिरूपकं दानमित्यादिरीत्या बोधः । स्वत्वस्युद्देश्यतानिरूपकत्वं सम्ब-

अग्नेर्माणवकं वारयतीत्यत्र "वारणार्थानाम्" इति सूत्रेण माणवकस्यापादानत्वं प्राप्तं तद्बाधनाय "कर्तुरीप्सिततमम्" इति वक्तव्यमेव । एवं च

---

**शब्दरत्नम्**

फलान्तरमप्याह—अग्नेरिति । ईप्सिततमपदाभावे "वारणार्थानाम्" इत्यस्यैव

**भैरवी ।**

प्रीयं विप्रसम्प्रदानकमिति वा बोधः । फलान्तरम्—पृथक्सूत्रद्वयोपादानस्य फलान्तरम् । यदुक्तम्मूले माणवकस्यापादानत्वम्प्राप्तमिति तदाशयमाह—ईप्सिततमपदाभाव इत्यादिना । तदपवादत्वापत्तेर्वारणार्थकधातुयोगे ईप्सितस्यापि कर्मत्वं प्राप्तमिति ।निरवकाशतया कर्म-

**भावप्रकाशः ।**

न्वः सम्प्रदानविप्रोऽयं विप्रसंप्रदानकमिति वा बोधः । एवं चोक्तभाष्यात्तस्य तत्र मानावश्यकत्वे तल्लाभाय "कर्तुः" इति सूत्रावश्यकत्वेऽनुद्देश्यद्वेष्योदासीनयोः संग्रहाय "तथायुक्तम्" इत्यस्याप्यावश्यकत्वम् । ईप्सितत्वानीप्सितत्वयोर्विभक्तिशाब्दत्वमिति न्यायसुधाया अप्यत्रैव तात्पर्यमिति बोध्यम् । एतेन धात्वर्थफलशालिकर्मेति सूत्रमस्तु, "तथा युक्तं चानीप्सितम्" इति न कर्तव्यमिति महल्लाघवम् । न चाग्नेर्माणवकमित्यादौ माणवकादेरनेनापवादत्वात्कर्मत्वं बाधित्वाऽपादानत्वं स्यादिति वाच्यं, धात्वर्थफलानधिकरणाग्न्यादौ चरितार्थत्वेन 'अपादानमुत्तराणि गान्दोग्धि' इत्यत्रेवापादानत्वं बाधित्वा परत्वात्कर्मत्वोपपत्तेः । धात्वर्थस्तु प्रवृत्तिध्वंसानुकूलो व्यापारः । सूत्रप्रत्याख्यानेनादोषाच्च । एतेन धातूपस्थाप्यस्याप्यावश्यकत्वादित्यन्तो मनोरमाग्रन्थोऽग्नेरिति प्रतीकमुपादाय 'ईप्सिततम' इत्यादि 'तत्रेति भावः' इत्यन्तस्तद्व्याख्यातृग्रन्थश्चापास्तः, संयोगस्य फलकोटौ प्रवेशे गौरवात्, यवनिष्ठसंयोगाद्यनुकूलगोमार्गपतनरूपव्यापाराभावानुकूलव्यापारविवक्षायां यवप्रतियोगिकगोऽनुयोगिकसम्बन्धसत्त्वाद्यवान् गोभ्यो वारयतीति प्रयोगापत्तेश्च । प्रवृत्तिध्वंसस्य धात्वर्थत्वे तु तस्याश्चेतननिष्ठत्वेन न तादृशप्रयोगः । एवं च प्रवृत्तिर्न संयोगानुकूलव्यापारः किन्तु कृतित्वव्याप्यजातिविशेषः । तथा च कृतित्वस्यैव प्रवृत्तित्वस्य लघुधर्मस्याभावप्रतियोगितावच्छेदकत्वसम्भवे संयोगानुकूलव्यापारत्वस्य गुरुधर्मस्य तदनवच्छेदकत्वे लाघवाच्चेति मन्दोक्तमपास्तम्, उक्तरीत्या शाब्दबोधकृतवैलक्षण्यार्थं तदावश्यकत्वस्योक्तत्वात् धात्वर्थकुक्षौ ध्वंसप्रवेशे प्रागभावात्यन्ताभावयोरिष्टतत्प्रयोगानापत्तेश्च, प्रत्याख्यानेऽपि सूत्रसिद्धार्थसत्त्वेन दोषाच्च । न हि प्रत्याख्यानं नाम तदर्थखण्डनं किन्तु तस्यान्यथासाधनम् । अत एव गौरवस्याप्यङ्गीकाराच्च । अन्यथा ण्यन्ते व्यापारद्वयार्थकत्वेऽपि गौरवापत्त्या तथार्थमानापत्तेश्च । "माणवके कर्मसञ्ज्ञया बाधेऽग्नावपि तर्हि बाधिका स्यात्" इति भाष्यस्य "कर्तुः" इति तमबघटितसूत्रस्थापकस्य संयोगानुकूलव्यापाररूपप्रवृत्तिपदार्थं विना निरालम्बनत्वापत्तेश्च, उक्तभाष्यप्रामाण्याद्यवानुयोगिकगोप्रतियोगिकसंयोगे एव तत्प्रयोगस्येष्टत्वाच्च, अपसारयतीत्यर्थे चोरादवान्वारयतीतिवत्तस्याभिधाने तत्प्रयोगे इष्टापत्तेश्च, प्रवर्तकनिष्ठव्यापारविशेषस्यैव प्रवृत्तित्वेन तस्याश्चेतनाचेतनसाधारणत्वेन त्वन्मतेऽपि तस्य दुर्वारत्वाच्च, प्रवृत्तेर्जातिविशेषस्वरूपत्वस्य दुरुपपादत्वाच्च, तत्त्वेनोत्तरग्रन्थासङ्गतेश्च, तदितरावृत्तित्वे सति तद्वृत्तित्वरूपवृत्तित्वस्य गुरुधर्मस्य दुष्परिहरत्वाद् दृष्टान्तासङ्गतेश्च, तस्यास्तद्रूपत्वे ध्वंसासम्भवाच्च, संयोगानुकूलव्यापारस्यापि प्रवृत्तित्वेन बोधे मन्मते एव तस्य लघुत्वाच्च, एतद्भाष्यप्रामाण्याद्विशिष्टशक्तिसिद्धौ गुरुधर्मस्य शक्यतावच्छेदकत्वाभावप्रतियोगितावच्छेदकत्वयोरङ्गीकारस्य प्रामाणिकत्वेनादोषाच्चेति दिक् । नन्वेवमग्रिममूलासङ्गतिरत आह—फलान्तरमिति । उक्तादन्यदित्यर्थः । अपिरुक्तसमुच्चायकः । यदि तावन्मात्रं फलं स्यात्तर्हि कर्तुरुद्देश्यं कर्मेत्येव वाच्यम्, ईप्सिततमग्रहणं व्यर्थमेव । एवं च विशिष्टसूत्रापेक्षया तन्मात्रापेक्षया वा फलान्तरत्वोक्तिः । अत एवापिसङ्गतिरिति भावः । द्वितीयपक्षाभिप्रायेण तदुपपादयितुं मूलीयापादानत्वप्राप्तौ हेतुमाह—ईप्सिततमेति । यद्यपि योगिकेप्सितशब्दस्य पयसोदनमिति व्यावृत्तिः फलमिति तमप एवेदं फलं तथापि प्रकृतिं विना तमपोऽभावात्तत्फलस्य दुर्वचत्वाद्धि-

शब्दरत्नम् ।

तदपवादत्वापत्तेः । न चाप्तौ तच्चरितार्थं, तस्यापि तदुपस्थाप्यसंयोगरूपफलाश्रयत्वात् । वारयतेश्च संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारोऽर्थः । तत्रापीप्सितशब्दः क्रियाशब्द एव । नन्वयं संयोगो न तत्कर्तृव्यापारजन्यः, तत्र कर्तृपदस्याभावात् । ईप्सिततममित्युक्तौ ईप्सितमात्रे सावकाशस्य परत्वादीप्सिततमेऽनेन बाधः ।

भैरवी ।

संज्ञापवादत्वापत्तेरित्यर्थः । तत्रापि—"वारणार्थानाम्" इति सूत्रेऽपि । अत एव कूपादन्धं वारयतीत्यादौ कूपादेरपादानत्वस्य सिद्धिः । यदीप्सितशब्द इच्छाविषयपरः स्यात्तदा तत्र कूपस्येच्छाविषयत्वाभावान्न स्यात् । ईप्सिततममित्युक्ताविति । वारणार्थकधातुयोगे माणवकादेः कर्मणोऽपवादत्वात्प्राप्तापादानत्ववारणायेप्सिततममित्येतत्पदघटितसूत्रकरणे इत्यर्थः । सावकाशस्येति । अयम्भावः—शुक्लतमः पट इत्यादौ यथा प्रवृत्तिनिमित्तशौक्ल्यगतप्रकर्षे तमप्प्रत्ययो भवति तथाऽत्रापीप्सितशब्दस्य यत्प्रवृत्तिनिमित्तमाप्तीच्छा तस्याः प्रकर्षे तमपा भवितव्यम् । इच्छायाः प्रकर्षस्तु यद्यपि स्वतः सम्भवति तथापि व्याख्यानात्तद्विशेषणाप्तिगतः प्रकर्ष इह विवक्षितः । आप्तिश्च—धात्वर्थफलानुकूलव्यापारात्मकः सम्बन्धस्तत्प्रकर्षश्च प्रकृते तादृशसम्बन्धघटकफले धात्वर्थप्रधानीभूतव्यापारप्रयोज्यत्वरूपः । एवञ्च वारयतेरुत्तरदेशसंयोगानुकूलव्यापाराभावानुकूलव्यापारार्थकतया तद्घटकतादृशव्यापाराभावात्मकफले प्रधानव्यापारप्रयोज्यत्वसत्त्वात्तदाश्रयमाणवकादौ कर्मसंज्ञा प्रवर्त्तते । यवेभ्यो गां वारयती-

भावप्रकाशः ।

शिष्टमुपात्तम् । अपवादत्वापत्तेरिति । कर्मत्वस्य सर्वत्र प्राप्तौ "वारणा" इति सूत्रस्य विशिष्यारम्भात् । एवं च तत्र माणवकस्य कर्मत्वं न स्यादिति भावः । तत्—"वारणार्था" इत्यपादानत्वम् । तथा च नापवादत्वं तस्येति भावः । तस्यापीति । अग्नेरपीत्यर्थः । अपिर्माणवकसमुच्चायकः । तदुपस्थाप्येति । वारयतीत्युपस्थाप्येत्यर्थः । एतेन "वारणार्थानां कर्मण ईप्सित" इत्येव न्यासः कार्य इत्यपास्तम् । तत्फलमनुपदमेव स्फुटीभविष्यति । तथाच तदभावेऽपवादत्वापत्तिर्दुर्वारैवेति भावः । ननु प्रवृत्तिविघातस्यैव वारणत्वेन संयोगरूपफलं न वारयतिवाच्यमत आह—वारयतेश्चेति । तत्सूत्रस्थोक्तभाष्यादिति भावः । आदिना भक्षणम् । तथा च क्वचिद् भक्षणादिजनकव्यापाराभावानुकूलो व्यापारः, क्वचित् संयोगानुकूलव्यापाराभावानुकूलव्यापार इति फलितम् । इतोऽपि मन्दोक्तिरयुक्तैवेति बोध्यम् । तथाच तद्धात्वर्थप्रयोज्यफलाश्रयोऽपादानमिति तत्सूत्रार्थ इति बोध्यम् । पर एव च प्रवृत्तिविघातपदेनोच्यते इति भावः । नन्वीप्सितशब्दस्याभिप्रेतपर्यायस्य रूढस्य तत्र ग्रहणेनयवादीनां स्वत्वे सतीप्सितत्वेन तत्रैव तत् प्राप्तिर्न तु गवि, गवादेः स्वत्वे तु तत्रैव तत्त्वेन तत्प्राप्तिरिति कथमुभयत्र युगपत् तदापादनमत आह—तत्रापीति । "वारणार्थानाम्" इति सूत्रेऽपीत्यर्थः । अत एव कूपादन्धमित्यादौ कूपादेरपादानत्वम् । अन्यथा राजधर्मभयादितो माषादीनां नाशाभावरूपफलाश्रयत्वेन गोस्वाम्यभिप्रेतत्वेऽपि अस्याऽतत्त्वात्तन्न स्यात् । न च संयोगो न तत्कर्तृव्यापारजन्य इति तत्र कर्मत्वाप्राप्तिरिति वाच्यम् ? कर्तृव्यापारवाचकधातूपात्तफलाश्रयत्वमित्यर्थस्यैव तेन लाभात् । फलस्य तद्धात्वर्थस्वपर्यन्तेऽनाग्रहात् । अपिना प्रकृतसूत्रसमुच्चयः । तच्च प्रतिपादितं प्राक् । एवञ्च वारणार्थकधातुप्रतिपाद्यव्यापारजन्यफलाश्रयत्वमेव तत्रेप्सितत्वमिति भावः । एतेन 'ईप्सितम् ? किं कूपादन्धं वारयति" इति "कर्तुः" इति सूत्रे प्रत्युदाहरन्तो रत्नाकरादयः प्रत्युक्ताः । यद्यपि कर्तुरुद्देश्यं कर्मेत्यस्य फलं तज्ज्ञानरूपमुक्तं, यौगिकेप्सितशब्दस्यापि पय सौदनम्भुङ्क्ते इति व्यावृत्तिः फलमुक्तम् ; न चेदमपि तमप एव कुतो न व्यावर्त्यमिति वाच्यम् ? अग्निपयःभयव्यावर्तकप्रकर्षस्य दुर्वचत्वात्, तथापि तमप इदं फलमिति बोधयितुं तदङ्गीकारे दोषाभावमुपपादयति—ईप्सिततममिति । विशिष्टोपादानं प्राग्वत् । इत्युक्तौ इति । इत्युक्तौ त्वित्यर्थः । सावकाशस्येति । "वारणार्थानाम्" इत्यस्येति भावः । ईप्सिततमे—माणवकादौ । अनेन—तद्घटितेन "कर्तुः" इति सूत्रेण । अयं भावः—प्रवृत्तिनिमित्तगतप्रकर्षे

द्वेष्योदासीनयोः संग्रहार्थं "तथा युक्तम्" इत्यस्याप्यावश्यकत्वात् । अनीप्सितग्रहणं तु स्पष्टार्थमेव न त्वावश्यकम् ।

---

शब्दरत्नम् ।

ईप्सिततमत्वं च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम् । अत एवाग्नेर्नोद्देश्यत्वप्रतीतिस्तत्रेति भावः । न त्वावश्यकमिति ।

भैरवी ।

स्यादौ तु भक्षणानुकूलव्यापाराभावानुकूलव्यापारात्मकः प्रवृत्तिविघात एतद्घटकप्रधानव्यापारप्रयोज्यभक्षणानुकूलव्यापाराभावात्मकफलाश्रयत्वाद्गोः कर्मत्वम्भवति । ईप्सिततमशब्दघटकेन सना इच्छार्थकेनोद्देश्यत्वमुपलक्षितमिति प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वङ्कर्मसंज्ञाप्रयोजकन्तच्च न कूपादाविति तेष्वपादानसंज्ञा चरितार्थेति सा ईदृशप्रकर्षयुक्तफलाश्रये कर्मसंज्ञया बाध्यते । "वारणार्थानाम्" इति सूत्रघटकेप्सितशब्दार्थस्तु वारणार्थकधातूपस्थाप्यफलाश्रयत्वरूपः । एतद्घटकाभावप्रतियोगित्वव्यापारप्रयोज्यं यत्फलमुत्तरदेशसंयोगादि तदाश्रयत्वादग्निकूपादावपादानसंज्ञा भवतीति । यतः सन्प्रत्ययेनोद्देश्यत्वमुपलक्षितम्, अत एवाह-अत एवेति । यत ईप्सिततमत्वमुक्तरूपात्मकं विवक्षितमत एवेत्यर्थः । तत्र अग्नेर्माणवकं वारयतीत्यत्र । उक्तरूपात्मकेप्सिततमशब्दार्थघटकफलव्यापारयोः प्रकृतत्वन्तु प्रत्यासत्त्या लब्धम् । तत्फलन्तु यदा माषभक्षणेनाश्वस्य पुष्टिर्जायतामितीच्छया माषक्षेत्र एवाश्वबन्धनङ्केनापि पुरुषेण कृतन्तत्र माषेष्वश्वम्बध्नातीति प्रयोगो भवति, तादृशस्थले कर्तृसमवेतो यः प्रधानीभूतो व्यापारस्तत्प्रयोज्यस्फलङ्गलाधः संयोगोऽपि तदाश्रयत्वान्माषाणाङ्कर्मसंज्ञा स्यादिति तद्वारणं, भक्षणरूपफलस्य बन्धधात्वर्थत्वाभावात् । उक्तरीत्या ईप्सिततमपदघटितसूत्रे कृते द्वेष्यस्योदासीनस्य च कर्मसंज्ञासिद्ध्यर्थं "तथायुक्तम्"इति सूत्रमपि कार्यम् । तच्चेप्सिततमभिन्नसङ्ग्रहार्थमिति द्वेष्योदासीनयोः सङ्ग्रह

भावप्रकाशः ।

णमवादिर्विधीयते । प्रवृत्तिनिमित्तं चात्रेच्छा । तस्याः स्वतः प्रकर्षसम्भवेऽपि व्याख्यानाद्विशेषणीभूतव्याप्तिगतः स गृह्यते । व्याप्तिप्रकर्षश्च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यधात्वर्थफलीयत्वरूपः । न च कर्तृग्रहणासिद्धमेतत् , तत्सूत्रे इवेप्सितेति कर्मणा कर्तुराक्षेपेणैव सिद्धे पुनः कर्तृग्रहणेन प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयस्यैव तेन ग्रहणादिति वाच्यम् ? लघुना तमग्रहणेन "कर्तुः" इत्यस्य प्रत्याख्याने तात्पर्यात्फलांशे प्रकृतधात्वर्थत्वस्य व्यापारांशे इव प्रत्यासत्त्यैव लाभेन माषेष्वश्वमित्यादावदोषादिति । इदं च प्राक् प्रतिपादितम् । तदाह—ईप्सिततमत्वं चेति । फलव्यापारयोः प्रकृतधात्वर्थत्वं तु प्रत्यासत्तिलभ्यमित्युक्तम् । तेन यदा पुष्ट्यर्थं माषभक्षणाय माषक्षेत्रे एवाश्वबन्धनं तदापि माषेष्वश्वं बध्नातीत्यादौ न माषाणां कर्मत्वं, बन्धनप्रयोज्यभक्षणफलाश्रयत्वेपि भक्षणस्यातदर्थत्वात् । प्रयोज्यत्वं च जन्यतज्जन्यसाधारणम् । अत एव गां दोग्धीत्यादौ विभागानुकूलव्यापारानुकूलव्यापारार्थकदुहियोगे पयसः कर्मत्वसिद्धिः । तच्च नाग्न्यादावित्यत आह—अत एवेति । ईदृशेप्सिततमत्वाङ्गीकारेणाग्नेस्तत्त्वाभावादेवेत्यर्थः । उपलक्षकाभावे उपलक्ष्याभावस्यावश्यकत्वादिति भावः । तत्र—अग्नेर्माणवकं वारयतीत्यत्र । न त्वावश्यकमितीति । "तथा युक्तम्" इत्यस्यारम्भसामर्थ्यादेव तदभावेऽपि तदर्थ-

सरला ।

इति बोध्यमिति । अत्रत्यं तत्त्वं शब्देन्दुशेखरे मूल एव स्पष्टं तत एवावधार्य्यम् । नत्वावश्यकमितीति । वस्तुतस्तु चिन्त्यमिदं कर्तृवृत्तिव्यापारवाचकधातुवाच्यफलाश्रयत्वेन वक्त्रा विवक्षितं कर्मेत्येतन्मात्रार्थस्वीकारेऽग्नेर्म्माणवकं वारयतीत्यादावग्नेर्म्माणवकस्य चानेन परत्वात्कर्मसंज्ञाप्राप्तौ "वारणार्थानामीप्सितः" इत्यस्य "कर्त्तुरीप्सित" इति सूत्रापवादत्वापत्तेर्माणवकादपि पञ्चम्यापत्तिः । नन्वेवमस्यैव नाप्राप्तत्वात् "येन नाप्राप्ते" इति न्यायेन "वारणार्थानाम्" इत्यपवादः स्यान्नतु "कर्त्तुरीप्सित"

शब्दरत्नम्

द्वेष्यसंग्रहोऽपि व्याख्यानादेव भविष्यतीति भावः, तस्यापीप्सिततमभिन्नत्वात् ।

भैरवी ।

इत्याशयेनाह—द्वेष्यसंग्रहोऽपीति । नन्वनीप्सितपदाभावे "तथायुक्तम्" इत्यस्येप्सिततमवत् क्रियायुक्तं क्रियाजन्यफलाश्रयः कर्मेत्यर्थः स्यात् । एवञ्च कूपादन्धं वारयतीत्यादौ कूपादेर्निरुक्तेप्सिततमभिन्नत्वात्पुनरपि "वारणार्थानाम्"इति सूत्रन्निरवकाशमिति वाच्यम् ? द्वेष्योदासीनयोरेव कर्मसञ्ज्ञा यथा स्यादित्येवमर्थमनीप्सितपदमपि कर्त्तव्यम्, तदर्थश्चेप्सिततमभिन्नमित्येव न, किन्तु नञोऽसुराधर्मादिपदघटकनञ्वदीप्सिततमविरोधीत्यर्थः । तद्विरोधश्च द्वेष्योदासीनयोः । तत्रोदासीनत्वमिच्छाद्वेषयोर्यत्राभावस्तत्त्वम्, एवञ्च कूपादेर्निरुक्तोदासीनत्ववत्त्वेऽपि प्रधानीभूतधात्वर्थव्यापारजन्यफलाश्रयत्वरूपं तथायुक्तत्वमिह विवक्षितमिति तथायुक्तत्वाभाववत्त्वेन न "तथायुक्तम्" इत्यस्य प्राप्तिरित्याशयात् । नचैवन्तथायुक्तमित्येवास्त्विति वाच्यम् ? पयसः करणत्वविवक्षया पयसा ओदनं भुङ्क्ते इति यत्र प्रयोगस्तत्र पयसः कर्मत्ववारणाय "तथायुक्तञ्चानीप्सितम्"इत्यस्याप्यावश्यकत्वात् । नचैवञ्च त्वावश्यकमिति मूलविरोध इति वाच्यम् ? मूलस्य यथाश्रुताभिप्रायकत्वात् । अत एवेहोक्तं "भाव इति"-मूलकारस्य भावः ।

वस्तुतस्तु तदावश्यकमित्यत्र तात्पर्यम् । पयसो यदा करणत्वमात्रविवक्षा तदा प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यता पयसो नेति तस्य न कर्मसञ्ज्ञा । द्वेष्योदाहरणञ्चोरान्पश्यतीति । अत्र चोराणामिन्द्रियसंयोगात् दृश्यमानत्वेऽपि न ते दर्शनोद्देश्या इति न पूर्वसूत्रस्य प्राप्तिरिति बोध्यम् ।

भावप्रकाशः ।

स्वसिद्धेरिति भावः । नन्वयुक्तमेतत्, तावन्मात्रेण इष्टासिद्धेः । तथाहि तदभावे इत्थं सूत्रार्थः- तथेति भिन्नं पदं, चोऽवधारणे तथेत्यग्रे योज्यः । तथैव युक्तमित्यर्थः । कथमित्यपेक्षायामीप्सिततमवत्क्रियया युक्तमिति लब्धम् । येन प्रकारेणेप्सिततमं क्रिययौदनभक्षणादिना युज्यते तेनैव प्रकारेण यद् युक्तं तदपि कर्मेत्यर्थः। एतेन चोऽप्यर्थ इति दण्डयुक्तमपास्तम् । एवं च अनीप्सितपदाभावे उदासीनसंग्रह एव स्याद् द्वेष्यसंग्रहो न स्यात् । किं चाग्नेर्माणवकमित्यादौ प्रकर्षहीनेप्सितान्न्यादेरेवानेन सञ्ज्ञाप्राप्तौ "वारणार्थानाम्" इत्यनवकाशं स्यात् । न च स्वविषये, अत एव 'तथा युक्तम्" इति प्राप्तकर्मत्वबाधेन तत्सफलमिति वाच्यं, स्वविषये प्रकर्षहीने तद्युक्ते चेप्सिते तत्प्राप्तौ बाध्यसामान्यचिन्तायां माणवकादेरप्यपादानत्वापत्तेः, विशेषचिन्तायामपि पुरस्तादपवादन्यायेन "कर्तुः" इत्यस्यैव बाध्यत्वेन माणवकादेरपादानत्वमग्न्यादेः कर्मत्वमिति वैपरीत्यापत्तेश्च । एवं चानीप्सितपदमावश्यकम् । तथा सति अधर्मानृतादिवदुत्तरपदार्थप्रतियोगिभूतं द्वेष्यमेव तेन पर्युदासेन न गृह्यते किन्तु तद्भिन्नमात्रम् । तेन द्वेष्योदासीनयोः संग्रहः। उदासीनत्वं च नोपेक्षाबुद्धिविषयत्वं, नदी कूलं कर्षतीत्यचेतने तदसम्भवात् ; किन्तु ईप्साद्वेषयोर्यत्राभावस्तत्त्वम् । एवं चाग्न्यादौ "तथायुक्तम्" इत्यस्याप्राप्त्या "वारणा" इत्यस्य सावकाशत्वात्प्रकर्षयुक्ते अनेन बाधो युक्तः । "तथा युक्तम्" इत्यप्यावश्यकम् । अन्यथा विषेणौदनं भुङ्क्ते इत्यादौ करणत्वमात्रविवक्षायां विषस्य तत्त्वापत्तिः । प्रयागात्काशीं गच्छतीत्यत्र प्रयागस्य च तत्त्वापत्तिः । तत्सत्त्वे तु समभिव्याहृतधात्वर्थप्रधानव्यापारप्रयोज्यतद्धात्वर्थफलाश्रयत्वरूपविवक्षितत्वाभावान्न दोषः । एवं च मूलं चिन्त्यम् । एतेन तथा रत्नाकरदण्डधाद्युक्तमपास्तम् । अत आह—द्वेष्येति । चौरान्पश्यतीति द्वेष्ये-

सरला ।

इत्यस्य तथाचाग्नेर्म्माणवकं वारयतीत्यादौ परत्वात्कर्त्तुरिति कर्म्मत्वे द्वितीया सूपपादेति चेत् ? न, यत्र वारकस्य माणवकोद्देश्यिका संयोगानुकूलव्यापाराभावप्रकारिकेच्छा नास्ति, स्वामिभयेन तु वारयति, तत्र "कर्त्तुरीप्सित" इत्यस्या प्राप्त्याऽस्य च "वारणार्थानाम्" इत्यनेन नाप्राप्तत्वाद्बाधे 'अग्नेर्माणवकाद्वारयति' इत्यापत्तेर्दुर्वारत्वात् ।

इदं त्ववधेयम् । ईप्सितानीप्सितयोः शाब्दबोध एकरूप एव ।

---

शब्दरत्नम् ।

**एकरूप एवेति ।** इच्छाविषयत्वानिच्छाविषयत्वभानकृतवैरूप्यरहित इत्यर्थः ।

भैरवी ।

व्याख्यानादेवेति । तथाशब्दोपादानमूलकादित्यर्थः । केचित्तु प्रकृतधात्वर्थफलवत्कर्मत्येव सूत्रञ्चार्यं तथायुक्तमिति न वाच्यमिति लाघवम् । न चैवम्मूलोक्तरीत्या "वारणार्थानामीप्सितः" इति सूत्रमनवकाशतया कर्मसञ्ज्ञाया वारणार्थकधातुप्रयोगे बाधकं स्यादिति वाच्यम् ? प्रवृत्तिविघातो हि वारणम् । प्रवृत्तिविघातश्च प्रवृत्तिध्वंसानुकूलव्यापार एव । स एव च सर्वत्र वारयतेरर्थः । एवञ्च कूपागन्यादौ नैतादृशधात्वर्थफलाश्रयत्वमिति कूपादेर्न कर्मत्वप्राप्तिरिति "वारणार्थानाम्" इत्यस्य चरितार्थत्वात् । द्वेष्योदासीनयोस्तु धात्वर्थफलाश्रयत्वाद्भविष्यति कर्मत्वमित्याहुः; तदपेशलम्, उक्तरीत्या शाब्दबोधकृतवैलक्षण्यसम्पादनाय सूत्रावश्यकत्वस्योक्तत्वात् ।

किञ्च यदा न गवि प्रवृत्तिः किन्तु सम्भावितप्रवृत्तिप्रागभावस्यात्यन्ताभावस्य वा विवक्षा तादृशस्थले ध्वंसस्य प्रतियोगिपूर्वकत्वेन प्रवृत्तिध्वंसस्य सम्भवाद्यवेभ्यो गां वारयतीति प्रयोगानुपपत्तिरिति प्रवृत्तिध्वंसानुकूलव्यापारमात्रस्य वारयत्यर्थत्वमयुक्तमेव । द्वेष्योदाहरणञ्चोरान्पश्यति व्याघ्रान्पश्यतीत्याद्येव नतु विषम्भुङ्क्त इति । महाभयादिभ्यो दुःखस्य सम्भावितस्य निवृत्त्यर्थं यदा विषम्भक्षयति तदा भक्षणक्रियाजन्यफलाश्रयत्वादुद्देश्यत्वाच्च तस्य "कर्तुः" इत्येव कर्मत्वस्य सिद्धत्वात् । अत एव "य एष मनुष्यो दुःखार्तो भवति सोऽन्यानि दुःखान्यनुनिशम्य विषभक्षणमेव ज्यायो मन्यते, आतश्चेप्सितं यत्तद्भक्षयति" इति भाष्यकारेणोक्तम् । उदासीनोदाहरणन्तृणं स्पृशतीत्याद्येव । यद्यपि द्वेष्योदासीनयोः प्रधानीभूतव्यापारजन्यफलाश्रयत्वन्तथापि तेषान्न मुख्योद्देश्यत्वमिति "कर्तुः" इत्यस्य तत्राप्राप्तिरिति बोध्यम् ।

वैरूप्यरहित इति । तेनोद्देश्यत्वभानकृतवैरूप्यस्य सत्त्वेऽपि न क्षतिरिति भावः । ईप्सा-

भावप्रकाशः

त्यर्थः । तत्र पूर्वेणाप्राप्तेः । विषयेन्द्रियसम्बन्धाद् दृश्यमाना अपि ते न दर्शनोद्देश्या अपि त्वनिष्टदर्शना एवेति भाष्यकैयटयोः स्पष्टत्वात् । विषं भुङ्क्ते इति तु न द्वेष्योदाहरणं, पराधीनतया विषे भुज्यमाने भुजिक्रियाफलाश्रयत्वेनोद्देश्यत्वात्पूर्वेणैव सिद्धत्वात् । तदुक्तं भाष्ये—"आतश्च विषमीप्सितं यत्तद्भक्षयति" इति । एतेन पराधीनतया भुज्यमानाभिप्रायेणेदमुदाहरणमिति वदन्तः प्रकाशकृद्रत्नाकरदण्डधादयः परास्ताः । अपिनोदासीनसंग्रहस्येष्टसिद्धेश्च समुच्चयः । व्याख्यानादेवेति । अयं भावः—सादृश्यार्थकतथाशब्दोल्लेखात्सूत्रस्य तदन्यार्थकत्वेऽपि किञ्चित्सादृश्येनोदासीने एव स्यात्प्रकर्षहीने ईप्सिते एव वा स्यादिति तवाभिमतन्तदयुक्तं, तथाशब्दस्य प्रकारार्थकत्वेऽप्युपात्तधर्मकृतसादृश्यस्यैव ग्रहणेनान्यसादृश्यानपेक्षणात् थालस्तत्रैवोत्पत्तेः । स च धर्मः प्रागुक्त एव । एवं चेप्सिततमभिन्नमात्रस्य तत्प्रकारयुक्तस्य तत्र ग्रहणेन प्रकर्षहीने तत्र "वारणा" इत्यादीनां सावकाशत्वात्प्रकर्षयुक्ते "कर्तुः" इत्यनेन बाधादनुद्देश्यद्वेष्योदासीनयोरेव तत्र ग्रहणं पर्यवस्यतीति ।

वस्तुतस्तु एतद्व्यवस्थार्थमेवानीप्सितग्रहणमावश्यकम् । अन्यथेष्टा व्यवस्था न सिध्येत् । अत एव च तत्रानुद्देश्यत्वभानमपि सुस्पष्टं सुवचमितीदञ्चिन्त्यमिति बोध्यम् । तदाह—इति भाव इति । व्याख्यानादित्युक्तमेवार्थमाह—तस्यापीति । द्वेष्यस्यापीत्यर्थः । अपिनोदासीनसंग्रहः । एतेन तृप्तिकामस्तण्डुलं पचेदित्यादौ "तथा युक्तम्" इत्यनेन कर्मत्वं, ग्रामं गच्छन् तृणं स्पृशति इति परममूले ग्रामं गच्छन्नित्युपन्यासो व्यर्थ इत्यपास्तं, तत्रेप्सिततमत्वस्य प्रागुक्तरूपस्य ग्रहणेन तण्डुलादेरपि प्रागुक्तरीत्योद्देश्यत्वेन च "कर्तुः" इत्येव सिद्धत्वात् । किञ्च पूर्वमनभिसंहितत्वेन तृणस्येप्सितत्वाभावेन तदुपस्पर्शनस्य नान्तरीयकत्वेऽपि ग्रामं गच्छन्नित्यस्य प्रयोगं विना नान्तरीयकतया अप्रतीतेरिति दिक् ।

नन्वीप्सितानीप्सितयोः शाब्दबोधभेदस्योक्तत्वेनेदं त्ववधेयमित्यादिग्रन्थासङ्गतिरत आह—इच्छेति ।

ईप्सानीप्सादेरधिशीङादिवत्सञ्ज्ञाप्रवृत्तावुपयोगेऽपि द्वितीयावाच्यकोटावप्रवेशात् । अनन्यलभ्यस्यैव शब्दार्थत्वात् । "कर्मणि द्वितीया"इति सूत्रे हि तत्तत्सूत्रैर्यावतां कर्मसञ्ज्ञा विहिता, ते सर्वे तेन रूपेणोपस्थितास्तेषु च विधीयमाना द्वितीया आधारवाचिका, लाघवात्, क्रियाया धातुना कर्तुश्च देवदत्तादिशब्दैर्ला-

शब्दरत्नम् ।

तदाह—**ईप्सानीप्सादेरिति** । इच्छाविषयत्वानिच्छाविषयत्वयोः । आदिना ईप्साग-तप्रकर्षस्येत्यर्थः । **उपयोगेऽपीति** । स्वरूपतः सत्तयेति भावः । तदुपलक्षितमुद्देश्यत्वादिकं तु भासत एव । तदाह—**अनन्यलभ्यस्यैवेति** । भासमानोद्देश्यत्वतदभावाभ्या-मर्थ त इच्छाविषयत्वादिलाभादिति भावः । **आधारवाचिकेति** । इदमुपलक्षणं, दिवो योगे करणवाचकत्वात् । आधारपदेन चात्राधारताशक्तिमात्रमुच्यते । "कर्तुरीप्सिततमम्" इति लक्षणे विशिष्टस्य प्रवेशात्प्रामाणिकं गुर्वेव शक्यमस्त्वित्यत आह-**क्रियाया इति** । फलस्य व्यापारस्य चेत्यर्थः । **देवदत्तादिशब्दैरिति** । आदिना तिङन्तम् ।

भैरवी ।

गतेति । इच्छाविशेषणीभूतव्याप्तिगतेत्यर्थः । भासत एवेति । एतच्च "कर्मणा यमभिप्रैति" इति सूत्रस्थभाष्याल्लभ्यत इति प्रागेवाभिहितम् । ननु सर्वत्राधारवाचकत्वमनुपपन्नं "दिवः कर्म च" इति सूत्रविषये आधारप्रतीत्यभावादत आह—इदमुपलक्षणमिति ।

भावप्रकाशः ।

एवं च प्रकारान्तरकृतवैरूप्यसत्त्वेऽपि न क्षतिरिति भावः । अग्रिमग्रन्थमपि तथा योजयति—तदाहेति । उक्तार्थे एव हेतुमाहेत्यर्थः । पूर्वैकवाक्यतायै ईप्सादिपदं कर्मार्थकप्रत्ययान्तमिति सूचयितुमाह—इच्छेति । ईप्सागतेति । तद्विशेषणीभूताप्तिगतेत्यर्थः । न च बोधे कथमुपयोगोऽत आह—स्वरूपत इति । संज्ञोत्पत्तौ निमित्तत्वेनोक्तानामर्थानां स्वरूपतः सत्त्वमपेक्षितमेव घटाद्युत्पत्तौ दण्डादेरिवान्यथा तदुक्तिरफला स्यादिति भावः । यथाश्रुतमूलार्थो न युक्तः किन्त्वयमिति अस्य प्रागुक्तमेव फलम् । उत्तरग्रन्थयोजनायाह—तदुपेति । इच्छाविषयत्वानिच्छाविषयत्वाभ्यामुपलक्षितमित्यर्थः । आदिना अनुद्देश्यत्वसंग्रहः । तदाहेति । तदेतद्ध्वनयन्नाहेत्यर्थः । अन्यथाऽनन्यलभ्य इति ग्रन्थस्यास्वारस्यमफलत्वं च स्यादिति भावः । तदुपपादयति—भासमानेति । इदं चोभयविशेषणम् । अर्थत इति । तदुपलक्ष्यस्य तत्सत्त्वं विना असत्त्वादिति भावः । आदिना—अनिच्छाविषयत्वसंग्रहः । आधारवाचिकेतीति । यत्तु माल्याः इदं च "अधिशीङ्स्थासां कर्म" "कर्तुरीप्सिततमं कर्म" इत्यादिसूत्रविषयकं बोध्यम्, ईप्सितादिरूपनिमित्तानां वाच्यताभ्रमस्य तत्र प्राप्तत्वात् । अत एव सम्बन्धमात्रं द्वितीयार्थ इति "अकथितं च" इत्यत्रत्यमूलं सङ्गच्छते । एवं च "दिवः कर्म च" इत्यादिविषये आधारावाचकत्वेऽपि न दोष इति, तत्प्राचामनुरोधेन । "तत्तत्सूत्रैः" इत्यादिमूलासामञ्जस्यं स्यात् । तत्रत्यमूलस्य खण्डयिष्यमाणत्वाच्च । तदेतद्ध्वनयन्नाह—इदमुपलक्षणमिति । क्वचित्करणवाचिकाया अपीति शेषः । तत्र हेतुमाह-दिव इति । एतेन दिवो योगे तदभावादिदं चिन्त्यमिति खण्डनकृदाद्युक्तमपास्तम् । मूले—लाघवादिति । 'सर्वविषये सकृत्प्रवृत्तैकविधौ नानार्थकल्पनाभाव इति भावः । ननु फलाश्रयस्य कर्मत्वेन द्वितीयावाच्यत्वप्राप्त्या फलस्य धातुना लाभादिति वक्तव्ये क्रियाया इत्याद्ययुक्तं, तत्र तद्वाच्यत्वस्यैवाप्रसक्तत्वादत आह—कर्तुरिति । नन्वित्यादिः । इति लक्षणे—इत्यादिलक्षणेष्वित्यर्थः । विशिष्टस्य—कर्त्रादिविशिष्टस्य । शक्यं-द्वितीयाया इति भावः । ननु तथापि क्रियाशब्देन व्यापारमात्रग्रहणेन फलस्य धातुना लाभस्यानुक्तत्वात् फलाश्रयरूपं विशिष्टमेव उक्तन्यायेन शक्यं स्यादत आह—फलस्येति । "क्रियायाः परिनिष्पत्तिः" इत्यादावाद्यप्रसिद्धिः, अन्त्यस्तु प्रसिद्धतर इति भावः । यद्यर्थादिना चैत्रादीनां ग्रहणमुचितं तथापि तद्घटितप्रयोगे तस्यावाच्यत्वाय देवदत्तत्वादिना लाभेऽपि कर्तृत्वेन लाभाय शक्तिः स्यादिति शङ्कानिरासाय च आह—आदिना तिङिति । इदं कृतोऽप्युपल-

भात्, इष्टतमत्वादेस्तु भानाभावात्। प्रकृतिप्रत्ययार्थयोश्चाभेद इह संसर्गः। तथा च हर्याधारिका या प्रीतिस्तदनुकूलो व्यापारो वाक्यार्थः। यद्यपि कर्मणि कर्त्तरि अधिकरणे च विहितानां द्वितीयादीनामाधारोऽर्थ इति तुल्यम्; तथाऽपि तन्निरूपकं फलं, व्यापारः, स्वाश्रयद्वारा तदुभयं चेति फलीभूते शाब्दबोधे वैलक्षण्यं

शब्दरत्नम्।

नन्वेवमाधारस्य धर्मिणोऽपि प्रकृत्या लाभः, आधारत्वेनालाभ इत्यस्याधारत्वं न लब्धमित्यत्रैवपर्यवसानात्तस्यैव शक्तिविशेषरूपस्य वाच्यत्वं युक्तम्, तस्य धर्मिसाकाङ्क्षत्वाद् विशेषणत्वञ्च युक्तमिति चिन्त्यम्। अभेद इति। विशेष्यविशेषणभाव इत्यर्थः। वाक्यार्थ इति। हरिं भजतीत्यत्रेति शेषः। फलमिति। "कर्त्तुः" इत्यादिविहितकर्मसञ्ज्ञकविषये फलमित्यर्थः। व्यापार इति। कर्तृविषये। स्वाश्रयेति। स्थाल्यां पचति तण्डुलमित्यत्र कर्मद्वाराऽधिकरणं, भूतले देवदत्तः पचतीत्यादौ कर्तृद्वाराऽधिकरणम्। फलीभूते इति। पदज-

भैरवी।

नन्वेवमिति। एवम्—अनन्यलभ्यस्यैव शब्दार्थत्वे। तस्यैव—आधारत्वस्यैव। शक्तिविशेषरूपस्य—अखण्डोपाधिरूपस्य। चिन्त्यमिति। चिन्ताबीजन्तु अखण्डोपाधिरूपधर्मस्य वाच्यत्वे तस्य विशेषणतयाशाब्दबोधविषयत्वकल्पने च "प्रकृतिप्रत्ययौ" इति न्यायविरोधः, "कर्मणि द्वितीया" इति सूत्रस्य "सुपाङ्कर्मादयोऽप्यर्थाः" इति भाष्यस्य च विरोधापत्तिरिति। किञ्च धर्मस्याखण्डोपाधिरूपस्य वाच्यत्वे तन्निष्ठधर्मस्य वाच्यतावच्छेदकत्वे तस्य च कर्मेतरावृत्तित्वविशिष्टसकलकर्मवृत्तित्वरूपत्वे महागौरवन्तस्याप्यखण्डोपाधिरूपत्वे तदाश्रयाखण्डोपाधिरूपधर्मस्य वाच्यतावच्छेदकत्वं युक्तमिति। वस्तुतस्तु पञ्चकम्प्रातिपदिकार्थ इति पक्षस्य मुख्यतया कर्मादीनां द्योत्यत्वेन प्रकृत्यर्थविशेषणत्वमेव युक्तम्। विशेष्यविशेषणभाव इति। इतरसम्बन्धानवच्छिन्नेत्यादिः। पदजन्योपस्थितावविशेषेऽपि—फलव्यापारयोर्धातुजन्योपस्थितिविषय-

भावप्रकाशः।

क्षणम्। तथाच तिङ्देवदत्तेत्यादिशब्दैरित्यर्थः। मूले 'आधारवाचिका' इत्यत्राधारपदेनाधारताशक्तिमानुच्यते, तदभिप्रायेणाशङ्कते—नन्वेवमिति। अनन्यलभ्यो हीति न्यायेन कर्त्रादीनामवाचकत्वे इत्यर्थः। शक्तिभ्रमवारणाय आह—धर्मिणोऽपीति। अपिरुक्तसमुच्चायकः। प्रकृत्या—द्वितीयाप्रकृत्या ओदनादिना। तस्यैव—शक्तिविशेषरूपाधारत्वस्यैव। क्वचित्तथैव पाठः, उक्तन्यायादिति भावः। तदाह—युक्तमिति। नन्वेवं प्रत्ययार्थत्वात्तस्य प्राधान्यापत्तिरत आह—तस्येति। पञ्चकं प्रातिपदिकार्थ इति पक्षे तस्य विभक्तिद्योत्यत्वात्। कारकं विभक्त्यर्थ इति पक्षेऽपि तथैव "संख्यावत् सत्त्वप्रधानानि नामानि" इति निरुक्ताच्च। 'विभक्त्यर्थश्चासत्त्वभूत" इति "तद्धितश्च" इति सूत्रभाष्ये स्पष्टम्। तत्र हि विभक्त्यर्थप्रधानाव्ययस्य विभक्त्यर्थप्रधानत्वादसत्त्वभूतत्वमुक्तम्। तदाह—युक्तमिति। एवं च "प्रकृतिप्रत्ययार्थयोः" इति न्यायोऽत्र न प्रवर्तत इति भावः। चिन्त्यमिति। तथा च तथा रत्नाकरदण्ड्यादयः परास्ताः। अभेदस्य तत्त्वस्य खण्डितत्वादाह—विशेष्येति। एवंचायं ग्रन्थो धर्मवाच्यत्वपक्षेऽपि सुयोज इति भावः। ननु विशेषणभूतत्वेऽपि हर्याधारिकेति बोधस्य प्रागुक्तरीत्या यद्यपि युक्तत्वं तथापि हरिः सेव्यत इत्यत्र नायं वाक्यार्थ इति प्रागुक्तमत आह—हरिमिति। ननु एकत्र सर्वनिरूपकाभावात्पार्थक्येऽपि "दिवः कर्म च" "अधिशीङ्" इत्यादिविषये फलस्य न निरूपकत्वमत आह—कर्तुरित्यादीति। आदिना "तथायुक्तम्" इत्यादिपरिग्रहः। फलमितीति। उक्तरीत्या तस्यैव कर्तुरीप्सिततमत्वादिति भावः। कर्तृविषय इति। कारकचक्रप्रयोक्तृत्वेन तद्रहितक्रियाया अभावेन च तस्यैव स्वतन्त्रत्वात्। अत एवात्र सूत्रानुल्लेखः। स्वाश्रयेतीति। "साधकतमम्" इति तमप्ग्रहणेन कारकाधिकारे गौणार्थस्यापि ग्रहणात्। साक्षात्तदाधारे तु परत्वात्कर्तृकर्मसंज्ञाभ्यां बाध इति भावः। तदाह—स्थाल्यामिति। फलीभूतत्वशाब्दबोधत्वयोर्विरोधादाह—पदजन्योपेति। शाब्दबोधका-

सङ्गच्छते । न चाधारतैव वाच्येति मन्तव्यम्, तन्निष्ठधर्मस्य वाच्यतावच्छेदक-

शब्दरत्नम् ।

न्योपस्थितावविशेषेऽपि तत्फलभूते शाब्दबोधे इत्यर्थः । इदमुपलक्षणं सञ्ज्ञयाऽर्थस्य नि-मित्तत्वे तत्तत्सञ्ज्ञाप्रकारिकैवोपस्थितिरिति कर्मत्वादिनैवोपस्थितेस्तत्रापि वैलक्षण्यमस्ती-त्यन्यत्र विस्तरः । तन्निष्ठधर्मस्येति । आधारेतरावृत्तित्वे सति सकलाधारवृत्तित्वरूपस्ये-त्यर्थः । आधारता तु शक्तिविशेषरूपाऽखण्डैवेत्याशयः । नन्वाधारतैव निरूपकाश्रयसम्बन्ध-

भैरवी ।

त्वस्य समानत्वेऽपि । इदमुपलक्षणमिति । फलभूतशाब्दबोधवैलक्षण्यप्रतिपादनमुपलक्षणमि-त्यर्थः । सञ्ज्ञया-कर्मादिसञ्ज्ञया । अर्थस्य—सञ्ज्ञिनः । निमित्तत्व इति । शाब्दबोधजनकोप-स्थितिनिमित्तत्व इत्यर्थः । तत्रापि—पदार्थोपस्थितावपि । इत्याशय इति । आधारादिरूपध-र्मिण एव वाच्यत्वमिति प्रतिपादकमूलस्याशय इत्यर्थः । निरूपकाश्रयेति । क्वचिदाश्रयतानिरू-पकं विक्लृतिरूपं फलं क्वचित्संयोगः क्वचिद्विभाग इति यथायथमूहनीयमित्यर्थः । आश्र-यः—तण्डुलादिः । सम्बन्धभेदेनेति । पचति गच्छतीत्यादौ फलाधारता समवायसम्बन्धाव-च्छिन्ना, यवेभ्यो गां वारयतीत्यादावभावरूपफलाधारता स्वरूपसम्बन्धावच्छिन्नेति भेदे-नेत्यर्थः । नन्वेवमाधारस्य शक्यत्वे तन्निष्ठाधारत्वस्योक्तरीत्या भिन्नस्य शक्यतावच्छेदकत्वे

भावप्रकाशः ।

रणीभूतायामिति भावः । अत एवाह—तत्फलभूते इति । उपस्थितिजन्ये इत्यर्थः । मिथः समभिव्याहा-रात् च्चिरविवक्षित इति भावः। ननु "आश्रयो द्वितीयार्थ" इति वदतोऽयमभिप्रायः—तत्र प्रकृत्यर्थो विशे-षणम्, आधेयतया फलं विशेष्यम्, आश्रयत्वं शक्यतावच्छेदकम् अखण्डोपाधिरूपम्, आश्रयतात्वं तद-नुगमकम्। आश्रयत्वस्य विभक्त्यर्थस्य निरूपकतया फलेऽन्वय इति तु न युक्तं, "कर्मणि" इति सूत्रस्व-रसभङ्गापत्तेः । न चाधेयत्वस्य संसर्गत्वे तण्डुलः पचतीत्यतोऽपि बोधापत्तिरिति वाच्यम्? विभक्त्यर्थम-द्वारीकृत्य धात्वर्थप्रातिपदिकार्थयोः साक्षाद्भेदेनान्वयाव्युत्पत्तेः । अन्यथा कर्मतासंसर्गकबोधस्याप्यापत्ति-रिति, तच्चिन्त्यम्, "सप्तमीपञ्चम्यौ कारकमध्ये" इत्यत्र कारकपदस्य शक्तिपरत्वेन शक्तिशक्तिमतोश्च अभेदेन शक्तिमत एव द्वितीयाद्यर्थताया भाष्यादिसम्मतत्वस्य प्रागुक्तत्वात् । किञ्चाश्रयत्वस्यातिप्रसक्त-त्वात्, शक्यतावच्छेदकत्वानौचित्यात् । न च फलादिनिरूपितत्वविशिष्टमाश्रयत्वं तथा, तद्रूपेणावच्छेद-कत्वे गौरवात्, 'वैकुण्ठमध्यास्ते' इत्यादौ तदभावेन तस्य न्यूनवृत्तितया द्वितीयायाः शक्यतावच्छेदक-त्वानौचित्याच्च । तत्र शुद्धाश्रयत्वस्य शक्यतावच्छेदकत्वे अमादेर्नानार्थत्वापत्तिः, तस्माद्भाष्यादिसम्मतमेव युक्तम् । इर्यादिपदात्तस्य लाभेऽपि शक्तिमत्त्वेनालाभान्न दोषः। कर्मादिपदवत्त्वेन शक्यत्वे तु गौरवम् । एवं च कथं तत्कृतं वैलक्षण्यमिति मूलं चिन्त्यमत आह—इदमुपेति । निमित्तत्वे—उपलक्ष्यसाधक-विधौ । तत इति शेषः । तत्तत्संज्ञेति । तत्तदर्थविभागवत् साधु । आदिना कर्तृत्वाधिकरणत्वसंग्रहः । तत्रापीति । अपिरेवार्थे । कर्मत्वादिप्रकारांशे एवेत्यर्थः । अयं भावः—मुख्यत्रयीपक्षे संज्ञाशब्दैरारोपितस्व-प्रवृत्तिनिमित्तबोधो यथा डित्थादिपदैः पूर्वं डित्थादिगुणारोपेण तत्तड्डित्थादिबोध इति "ऋलृक्" सूत्रे कैयटे स्पष्टम् । एवं चात्रत्यसंज्ञाशास्त्रैस्तत्तत्प्रवृत्तिनिमित्तशक्तेः संज्ञिनि बोधनमेवोचितम् । उद्देश्यतावच्छेद-कस्यैव तत्तत्संज्ञाप्रवृत्तिनिमित्तत्वे 'फलाश्रयत्वात्कर्मत्वम्' इत्यादिव्यवहारासंगत्यापत्तेः । न चास्य तत्त्वात्कर्मसंज्ञेत्यर्थः, लक्षणापत्तेः संज्ञामजानतोऽपि तथा व्यवहाराच्च, अत्रापि पक्षे कर्मादिपदानां पदा-प्रवृत्तिनिमित्तकत्वेन तदुत्तरत्वप्रत्ययेन पदानभिधानाच्च । अनादित्वाद्व्यवहारस्य पूर्वपूर्वव्यवहारेण कर्मादिपदानां तत्तच्छक्तिमति शक्तिग्रह इति; तदाह—अन्यत्रेति । मञ्जूषादावित्यर्थः । मूले तस्यानु-पादानादाह—आधारेतरेति । वृत्तित्वरूपस्येति । आधारतात्वस्यैति शेषः । मूलमते लाघवमाह—आधारतेति । आशय इति । आधारो वाच्य इति वक्तुरिति भावः । अनेन सूचितारुचिमाह—नन्विति एवेनाधारतात्वव्यावृत्तिः । निरूपकेति । निरूपकभेदेनाश्रयभेदेन सम्बन्धभेदेन चेत्यर्थः । निरूपकाश्र-

तापत्त्याऽतिगौरवात् "कर्मणि द्वितीया" इत्यादिसूत्रस्वरसभङ्गापत्तेश्च । अत एव भाष्यकार आह—

सुपां कर्मादयोऽप्यर्थाः, संख्या चैव तथा तिङाम् । इति ।

न च तिङोऽपि धर्ममात्रमर्थः, "कर्तरि कृत्" "लः कर्मणि च" "तयोरेव कृत्यक्तखलर्थाः" इति सूत्राणां वैरूप्यापत्तेः, पाचको देवदत्तः, पक्व ओदन इत्यादौ सामानाधिकरण्यानुरोधेन धर्मिवाचकतास्वीकाराच्च । तस्मादिह घटादिशब्दा-

---

शब्दरत्नम् ।

भेदेन भिन्ना, आश्रयतात्वमखण्डमिति न गौरवमत आह—**कर्मणीति** । लोके कर्मादिपदानां धर्मिपरताया दृष्टत्वेन सूत्रेऽपि तत्परतैवौचितेति भावः । आधारस्य शक्यत्वेनानन्ताधारतानामाधारतात्वेनानुगमान्न शक्त्यानन्त्यमिति बोध्यम् । **कर्मादयोऽपीति** । अपिना संख्यासूत्रवदेवात्रापि कर्मपदस्य धर्मिपरता, शक्तिरप्येतैर्धर्म्यभेदमापन्नैवोच्यत इति बोध्यम् । **संख्या चेति** । चेन कर्तृकर्मणी । **वैरूप्यापत्तेरिति** । कृद्विषये धर्मिपरता, तिङ्विषये धर्मपरतेति वैरूप्यापत्तेरित्यर्थः । कृतां धर्मिवाचकत्वे बीजमाह—**पाचक इत्यादि** । **स्वीकारादिति** । कृतामिति शेषः ।

भैरवी ।

शक्यतावच्छेदकभेदाच्छक्तिभेदापत्तिरत आह—**आधारत्वस्य शक्यत्व इति** । आधारतात्वेन । अखण्डोपाधिरूपेणेति शेषः । **अनुगमादिति** । अनुगताकारप्रतीतिविषयत्वात्, अनुगतधर्मावच्छिन्नशक्यतावच्छेदकतया एकत्वेन शक्तेरेकत्वमिति व्यवहार इति भावः । **शक्तिरपि**—कर्मत्वादिरूपा शक्तिरपि । **एतैः**—कर्मादिपदैः । **धर्म्यभेदम्**—शक्तिमदभेदम् । एवञ्च कर्मत्वादिशक्तिमान् द्वितीयार्थ इति रीत्या स्वीकार्यमिति भाष्यसम्मतमेव युक्तमिति बोध्यम् । यत्प्र-

भावप्रकाशः ।

यभेदात्सम्बन्धोऽपि स्वरूपरूपो भिन्न एवेति भावः । **अखण्डमिति** । अखण्डोपाधिरूपमित्यर्थः । **न गौरवमिति** । एतेन ननु लक्ष्यतावच्छेदकत्वस्येव शक्यतावच्छेदकत्वस्यापि गुरुणि स्वीकारे बाधकाभावः । अपि च तादात्म्यसम्बन्धेन तदेवावच्छेदकमित्यरुचेराह—कर्मणीति । मान्योक्तव्याख्यानं प्राचामनुरोधेनेति ध्वनितम् । ननु आधारत्वस्य वाच्यत्वे कर्मणीत्यनेन तस्यैवोपस्थितेः को वा सूत्रस्वरसभङ्गोऽत आह—**लोके कर्मादीति** । आदिना करणादेस्तत्तदर्थकबहुव्रीहेश्च परिग्रहः । **सूत्रेऽपि**—"कर्मणि द्वितीया" इत्यादिसूत्रेऽपि । अपिर्भाष्यादिसमुच्चायकः । **उचितेतीति** । अन्यथा सिद्धान्तव्याख्यायकत्वं शास्त्रस्य भज्येतेति भावः । नन्वेवमुक्तरीत्या त्रितयभेदेनाधारतानामानन्त्याच्छक्यतावच्छेदकानन्त्येन शक्त्यानन्त्यमत आह—**आधारस्येति** । **आधारतात्वेन**—उक्तरूपेण आश्रयतात्वरूपशक्यतावच्छेदकतावच्छेदकैक्याच्च न तदानन्त्यमिति भावः । मूले अर्था इत्यन्तं भिन्नं वाक्यम्, एवान्तैकवाक्ये तु चाप्योरन्यतरवैयर्थ्यापत्तिः, उत्तरवाक्ये इष्टमात्रसम्बन्धो न स्याच्चेत्याशयेनाह—**अपिनेति** । उपस्थितत्वात्प्रतीतेश्चेति भावः । अन्यथेदमपि विरुद्धं स्याद् इत्याशयेनाह—**सूत्रेति** । नन्वेवं शक्तिर्वाच्येति प्रागुक्तभाष्यसिद्धान्तविरोधोऽत आह—**शक्तिरपीति** । कर्मत्वादिरूपा शक्तिरपीत्यर्थः । अपिना पक्षद्वयसाम्यं सूचितम् । **एतैः**—कर्मादिपदैः । **धर्म्यभेदम्**—शक्तिमदभेदम् । एतेन भिन्नावाच्यत्वनिरासः । प्रतिपादितमिदमधस्तात् । सर्वसम्बन्धानिष्टत्वादाह—**चेनेति** । तथा च वचनविपरिणामेन तस्यात्र सम्बन्ध इति भावः । ननु सूत्राणां सारूप्यं ब्रह्मणापि दुरुपपादमत आह—**कृद्विषय इति** । कर्त्रादिपदानामिति शेषः । तथा चार्थवैरूप्यं तत्रारोप्य तत्त्वापत्तिरिति भावः । ननु कृत्स्वपि धर्ममात्रमर्थ इति न तदापत्तिरत आह—**कृतामिति** । अन्यथा पाचक इत्यादिहेतोरसामञ्जस्यं स्पष्टमेवेति भावः । अत एवाह—**कृतामिति** । एवं च स्वीकाराच्चेति मूलेऽपपाठः । एतेन चो हेताविति तत्समर्थनमपास्तमिति

नामिव विशिष्टमेव वाच्यम् । आकृत्यधिकरणाभ्युपगमे तु कृत्स्नेऽपि धर्ममात्रं, सर्वथाऽपि नैयायिकमीमांसकाद्यभ्युपेतमर्धजरतीयं हेयमेव । न हि तिङ्कृतोवैलक्षण्यं सूपपादम् । प्रपञ्चितञ्चैतच्छब्दकौस्तुभेऽस्माभिरित्यलमियता ।

परिगणनमिति । तेन नटस्य शृणोतीत्यादौ नातिप्रसङ्ग इति भावः । गां

## शब्दरत्नम् ।

**प्रपञ्चितमिति** । 'लादेशशत्रादेस्तिङां च वैषम्यं सर्वथा दुरुपपादमित्यादि' इति भावः ।

**तेन नटस्येति** । अपादानादिविशेषैरविवक्षा च प्रसक्तस्य बुद्धिपूर्वमविवक्षा, सर्वथाऽप्रसक्त्याऽविवक्षा वेत्युभयथाऽपि गृह्यते । प्रकृते चान्त्या । गीतद्वारा च तस्य "आख्यातोपयोगे" इति शास्त्रक्लृप्तं क्रियाजनकत्वम् । न च तस्य कर्मयुक्त्वाभावः,

## भैरवी ।

पञ्चितन्तदाह—लादेशेति ।

नटस्य शृणोतीत्यादौ यथा नटेऽतिप्रसङ्गप्राप्तिस्तथाह—अपादानादीति । अन्त्येति । "सर्वथाऽप्रसक्त्याऽविवक्षारूपा" । इति शास्त्रक्लृप्तमिति । उपयोगग्रहणस्य नटेऽपादानसञ्ज्ञाव्या-

## भावप्रकाशः ।

भावः । शत्रादेर्लादेशस्यापि सत्त्वादाह—**लादेशेति** । **आदिना** शानजादिपरिग्रहः । तिङामतत्त्वान्न तद्विशेषणम् । मिथोऽर्थकृतमिति शेषः । स्पष्टं चेदमन्यत्र । आदिनाऽर्धजरतीयत्यागादिपरिग्रहः ।

ननु अविवक्षायाः प्राप्तिपूर्वकत्वेन नटस्य तदप्राप्तत्वादक्रियाजनकत्वेनाकारकत्वाच्च "अकथितं च" इत्यस्याप्राप्तिरिति किमर्थं परिगणनमत आह—**अपादानादीति** । तत्तद्रूपेणाभानमित्यर्थः । चस्त्वर्थे । कारकाधिकारात्कारकं सदकथितमित्यर्थेन कारकत्वे सत्येव सञ्ज्ञया भाव्यमिति सामर्थ्याद्विशेषलाभः । अकथितशब्दोऽत्राकीर्तितपरो नाप्रधानपर इति भावः । **सर्वथाऽप्रसक्त्याऽविवक्षा वेति** । उभयत्राऽकारप्रश्लेषः । **अपि**रेवार्थे । गृह्यते इत्यग्रे योज्यः, प्रसिद्धौ यथाश्रुतौ वा । एवं च पूर्वविधिप्रसक्तिपूर्वकं तदविवक्षायां सर्वथा पूर्वविधेरप्रसक्तौ चैतत्प्रवृत्तिरिति भावः । सर्वथाऽप्रसक्त्या परिगणनेन तत्र वारणपरम् "आख्यातोपयोगे" इति सूत्रभाष्यमत्र प्रमाणमिति गूढाकूतम् । **प्रकृते चेति** । नटस्य शृणोतीत्यादौ त्वित्यर्थः, सर्वथा तत्र तदप्राप्तेरिति भावः । चस्त्वर्थे । एवमग्रेऽपि । यद्वा उभयोर्मिथः समुच्चायकं चद्वयम् । "**आख्यातोपयोगे" इति शास्त्रेति** । अन्यथा तत्रोपयोगपदानर्थक्यमिति स्पष्टं तत्रैव भाष्ये । नटं विना गीतश्रवणायोगात् द्वारेण द्वारिणो नान्यथासिद्धिरधिकरणवदिति भावः । **तस्य**—**नटस्य** । एवं प्रागपि । नटसम्बन्धि श्रवणमित्यर्थेन तस्याकर्मकत्वादिति भावः । एतेन गाथाकर्मकं नटसम्बन्धि श्रवणं वाक्यार्थ इति रत्नाकरदण्ड्याद्युक्तमपास्तं, षष्ठ्यन्तार्थस्य स्वान्वययोग्यार्थकनामसमभिव्याहारे तत्रैवान्वयव्युत्पत्तेः । स्फुटीभविष्यत्यनुपदमेतत् । न च परिगणनेऽपि गान्दोग्धि पयः स्थाल्यामित्यत्र स्थाल्यादेरधिकरणत्वाविवक्षायां कर्मत्वापत्तिः, पयोरूपकर्मयुक्त्वादिति वाच्यम् ? धात्वर्थव्यापारात्प्राक्

## सरला ।

**अपादानादिविशेषैरिति** । अपादानत्वादिरूपेणेत्यर्थः । कारकाधिकारात् कारकत्वस्य उद्देश्यतावच्छेदकतया तेन रूपेणाविवक्षितत्वस्य ग्रहीतुमशक्यतया पूर्वोक्तैरपादानत्वादिविशेषैरविवक्षितमित्यर्थो लभ्यते । "केनाकथितम् ? अपादानादिविशेषकथाभिः" इति भाष्योक्तप्रश्नोत्तराभ्यामकथितशब्दस्यासंकीर्तितरूपयोगार्थपरत्वलाभात् । अप्रधानरूपरूढ्यर्थपरत्वे तु 'पाणिना कांस्यपात्र्यां पयो दोग्धि' इत्यादौ कांस्यपात्र्यादेरधिकरणत्वादिविवक्षायामपि अनेन परत्वात् कर्मत्वमापद्येत, दुहाद्यतिरिक्तधातुयोगे अधिकरणादिसंज्ञानां चारितार्थ्यात् । **प्रसक्तस्येति** । प्रसक्तस्यापादानादेरप्यपादानत्वादिरूपेणाविवक्षेत्यर्थः । अस्योदाहरणम्—'गां दोग्धि पयः' इति । **अप्रसक्त्याऽविवक्षेति** । सर्वथा अपादानत्वाप्राप्तिरूपमित्यर्थः । अस्योदाहरणम्-'बलिं याचते वसुधाम्' इति । **प्रकृते चान्त्येति** । 'नटस्य शृणोति' इत्यत्र सर्वथा अपादानत्वाप्राप्तिरूपेत्यर्थः ।

दोग्धीति। गोसम्बन्धि पयःकर्मकं दोहनमर्थः। स्यादेतत्, "कर्तुरीप्सिततमं कर्म"

---

शब्दरत्नम्।

तदंशस्यापि परिगणनलभ्यत्वात्। न च नटान्निस्सरन्तं शब्दं गृह्णातीत्यर्थात्प्राप्तापादानत्वविवक्षैवात्रेति वाच्यम्? "आख्यातोपयोगे" इति सूत्रे उपयोगग्रहणेनानुपयोगे आख्यातुरीदृशलक्षणयाऽपादानत्वस्यानिष्टत्वबोधनादिति भावः। गोसम्बन्धीति।

भैरवी।

कर्तृकत्वेन भाष्यकृता चारितार्थ्यस्योक्तत्वेन तच्छास्त्रफलसमित्यर्थः। न च नटीयगीतेन श्रवणक्रियासम्भवे तद्भिन्नस्य नटस्यान्यथासिद्धतया क्रियाजनकत्वमिति वाच्यम्? द्वारेण द्वारिणोऽन्यथासिद्धत्वाभावात्। तदंशस्य—कर्मयुगित्यंशस्य। न च दुहादिपरिगणने कृतेऽपि स्थाल्यान्दोग्धि पय इत्यत्र स्थाल्या अधिकरणत्वाविवक्षायामनेन कर्मसञ्ज्ञा स्यादिति वाच्यम्? धात्वर्थव्यापारात्प्राक्कर्मयुक्तत्वस्य सञ्ज्ञानिमित्तत्वात्। द्विविधाऽविवक्षायाः प्रकृतसूत्रे ग्रहणे मानन्तु 'गान्दोग्धि पयः' इत्युदाहरणपरम्प्रकृतसूत्रभाष्यं 'नटस्य शृणोति' इति प्रत्युदाहरणपरञ्च भाष्यमेव। ननु 'नटस्य शृणोति' इत्यत्रान्त्याऽविवक्षा स्वीकृता, सा न सङ्गच्छते, श्रुधातोर्निःसरणविशिष्टश्रवणार्थकत्वेन प्रथमाया अपि तस्याः सम्भवादिति कस्यचिच्छङ्कान्निरस्यति—न चेत्यादिना। अनिष्टत्वेति। यदि निःसरणावधित्वाविवक्षायान्नटस्येति

भावप्रकाशः।

कर्मसम्बद्धस्यैव सति सम्भवे तत्र ग्रहणादिति बोध्यम्। कर्मयुक्तत्वं न परिगणनलभ्यं, तस्यात्र सत्त्वादिति प्राचोक्तिं खण्डयति—न चेति। गृह्णातीत्यर्थादिति। तथा च श्रुधातोर्निस्सरणाङ्के ग्रहणे लक्षणेति भावः। एवेनान्यव्यावृत्तिः। एवं चैकैव सा गृह्यते इति तत्रैवायं प्रयोग इति। अनुपयोगे तदर्थे तद्विवक्षायां नटाच्छृणोतीति भवत्येवेति भावः। ईदृशलक्षणयेति। निस्सरणाङ्के ग्रहणे श्रुधातोर्लक्षणयेत्यर्थः।

सरला।

इति भाव इति। एतेन दुहादीनां विभागानुकूलव्यापारानुकूलव्यापाराद्यर्थकत्वेन विभागादिरूपफलाश्रयत्वात् पयआदीनां तदनुकूलव्यापाररूपफलाश्रयत्वाच्च गवादीनां कर्मत्वसिद्धौ इदं सूत्रं व्यर्थम्। 'गौर्दुह्यते पयः' इत्यादावपि गवादेः प्रधानकर्मत्वेनैव प्रथमा सिद्ध्यति। अतस्तत्सूत्रस्य गवादिनिष्ठकर्मत्वस्य सम्बन्धत्वेन विवक्षायां प्राप्तायाः षष्ठ्याः बाधनार्थत्वम्। तेन एतद्बोधितकर्मसंज्ञावदर्थबोधकपदोत्तरद्वितीयातः सम्बन्धत्वपुरस्कारेणैव कर्मत्वं बोध्यते इति प्राचीनोक्तमपास्तम्। उचितमिति। व्यापारद्वयार्थकत्वे "कर्तुरीप्सित" इति सूत्रेण विभागानुकूलव्यापारस्य फलाश्रयत्वात् गवादीनां, विभागादिरूपफलाश्रयत्वाच्च पयआदीनां कर्मसंज्ञासिद्धावपि विभागानुकूलव्यापारमात्रस्य धात्वर्थत्वे फलतावच्छेदकसमवायात्मकसम्बन्धेन विभागरूपफलाश्रयस्य पयआदेः "कर्तुरीप्सित" इति सूत्रेण कर्मसंज्ञासिद्धावपि फलतानवच्छेदकावधितात्मकसम्बन्धेन तादृशविभागरूपफलाश्रयस्य गवादेः कर्मसंज्ञार्थमेतत्सूत्रमावश्यकम्। अत एव "अप्रधाने दुहादीनाम्" इति संगच्छते। एवञ्च यदापादानत्वेन गवादेर्विवक्षा तदा पञ्चम्येव, यदा च कर्मत्वेन विवक्षा तदा द्वितीयैव, यदा च क्षीरान्वयिसम्बन्धप्रतियोगित्वेन विवक्षा तदा षष्ठ्येव, 'स्वान्वययोग्यनामार्थेऽन्वये सम्भवति षष्ठ्यर्थस्य क्रियायामन्वयोऽव्युत्पन्नः' इति क्रियायां सम्बन्धत्वेनान्वयविवक्षायां षष्ठ्यपि नेति। एवञ्च 'एतत्सूत्रं यदि न स्यात् तदा षष्ठी स्यात्' इति सम्भावनयाऽस्य षष्ठ्यपवादत्वमाश्रित्य सम्बन्धत्वेन कर्मादिबोधकताकल्पने "कर्तुरीप्सित" सूत्रविहितकर्मसंज्ञावद्बोधकपदोत्तरद्वितीयाया अपि सम्बन्धार्थकतापत्तेः षष्ठीविधायकस्य कर्मसंज्ञाविधायकस्य च विरोधाभावेन बाध्यबाधकभावाप्रसक्तेश्च प्राचीनोक्तं चिन्त्यम्। किञ्च कर्मत्वपुरस्कारेण कर्मवाचकताविधायकतया सम्बन्धत्वपुरस्कारेण कर्मवाचकताविधायकतया च "कर्मणि द्वितीया" इति सूत्रस्य वाक्यभेदापत्तिः, एकवाक्येन वैरूप्येण बोधस्याशक्यत्वादिति। नच वैरूप्येण बोधकत्वं द्वितीयायाः "दिवः कर्म च" "अधिशीङ्स्थासां कर्म" इत्यादिविषये भवतोप्यावश्यकमिति वाच्यम्, करणा-

"तथायुक्तं चानीप्सितम्" इति सूत्राभ्यां गतार्थमेतत् । तथाहि, त्यजनोपस-

शब्दरत्नम् ।

गोकर्मकं पयःकर्मकं चेत्यर्थः । तत्र पयस एवेप्सिततमत्वे आह—तथा युक्तमिति ।

भैरवी ।

षष्ठी तदा निस्सरणावधित्वविवक्षायान्नटाच्छृणोतीत्यस्याप्यापत्त्या "आख्यातोपयोगे" इति सूत्रस्थोपयोगग्रहणवैयर्थ्यापत्तिरिति श्रुधातोर्लक्षणया तादृशार्थबोधकत्वन्नेति कल्पनीयमिति भावः । "अकथितञ्च" इति सूत्रस्य षष्ठीबाधनार्थमारम्भेणैतत्सूत्रसाध्यकर्मसञ्ज्ञायां या द्वितीया सा सम्बन्धार्थिकेति प्राञ्चस्तन्न युक्तं सर्वकारकविषयेऽप्येवमपवादत्वस्य सम्भवेन सम्बन्धार्थकत्वापत्तेरित्याशयेन व्याचष्टे—गोकर्मकमिति । स्यादेतदित्यादिना शङ्काकरणसमये "तथायुक्तम्" इति सूत्रस्योपन्यासः कृतस्तत्प्रयोजनन्दर्शयति—तत्रप यस एवेति ।

भावप्रकाशः ।

अन्यथोपयोगग्रहणवैयर्थ्यापत्तिः स्पष्टैव । अनेनोपयोगे प्रसिद्धार्थे तथा प्रयोगोऽस्त्येवेति सूचितम् । सम्बन्धमात्रमर्थ इति वक्ष्यमाणमौलसिद्धान्ताशयेन गोसम्बन्धीति बोधो न युक्तः, तस्यैव खण्डयिष्यमाणत्वादत आह—गोकर्मकमिति । रत्नाकरोऽप्येवम् । एवं च मूलं तथा दण्ड्याद्युक्तं च चिन्त्यमिति बोध्यम् । अन्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारो दुहेरर्थः । तत्र विभागावधित्वाविवक्षायामनेन कर्मत्वं गोरिति भावः । नन्वेवं "कर्तुः" इत्यनेनैव सिद्धौ "तथा युक्तम्" इत्यस्योपन्यासो व्यर्थोऽत आह—तत्रेति । तयोर्मध्ये इत्यर्थः । पयस एवेति । उद्देश्यत्वादिति भावः । वस्तुतस्तु प्रागुक्तेप्सिततमत्वस्यो-

सरला ।

धारादिरूपकर्मणां भेदेऽपि तावत्सु कर्मत्वशक्तेरैक्येन कर्मत्वशक्तिमद्बोधिका द्वितीयेत्यर्थे वैरूप्याभावात् । प्राचीनानान्तु एतद्विहितद्वितीयायास्तादृशशक्तिपुरस्कारेणाबोधकत्वाद् वैरूप्यस्य दुर्वारत्वादिति तदाकूतम् ।

वस्तुतस्तु अस्मिन्मते वैरूप्येण बोधकत्वं "कर्मणि द्वितीया" इति विहितद्वितीयाया इष्टमेव, उद्देश्यतावच्छेदकफलाश्रयत्वादिव्यतिरिक्तकर्मत्वादिशक्तीनां प्रमाणाभावेनानङ्गीकारात् । फलाश्रयत्वात् कर्मत्वमित्यादेस्तु फलाश्रयत्वात् कर्मसञ्ज्ञैवेत्यर्थ इति न पुनरुक्तिदोषः । कर्मत्वाविवक्षायामप्यनेन कर्मत्वमित्यस्य तु फलाश्रयत्वस्य स्वरूपतः फलाश्रयतात्वेन वा अविवक्षायामपि सम्बन्धत्वेन तद्विवक्षायामपि अनेन कर्मसंज्ञेत्यर्थ इति न तद्विरोधः । "कर्तुरीप्सिततमम्" इति सूत्रसत्त्वे कर्मत्वेन विवक्षायामेव तत्प्रवृत्त्या तत्र शेषत्वाभावेन षष्ठ्यप्राप्त्या अपवादत्वस्यैवाभावेन न तत्र द्वितीयायाः सम्बन्धार्थकतापत्तिः । "अकथितञ्च" इत्येतद्विषये तु अपादानत्वादिविशेषाविवक्षायामेव तत्प्रवृत्त्या तत्र च शेषत्वस्य सत्त्वेन षष्ठीप्राप्त्या येननाप्राप्ति न्यायेनापवादत्वाद् द्वितीयायाः सम्बन्धार्थकत्वं सूपपादम् । कर्मप्रवचनीयसंज्ञाविषयकद्वितीयाविधेः षष्ठीबाधकत्वस्य अन्यत्रोक्ततया अत्रापि तद्रीत्या बाध्यबाधकभावोपपत्तेः प्राचीनोक्तमपि युक्तमेवेति । प्रधानकर्मणीति । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः । इत्युत्तरार्धम् ।

नन्वेवं व्यापारद्वयार्थत्वपक्षे दुहादीनामप्रधाने कर्मण्येव लादयः स्युरिति चेत्? न, अप्रधाने दुहादीनाम्, इत्युत्तरार्द्धस्य दुहादीनामेकव्यापारार्थत्वकल्पे "अकथितञ्च" इति सूत्रारम्भपक्ष एव सत्त्वात् व्यापारद्वयार्थत्वकल्पे तु पूर्वार्द्धेनैवोत्तरार्द्धप्रयोजनसिद्धेः । तदा हि दुहादिधातुयोगे गवादीनामेव प्रधानकर्मत्वं, गत्यादिण्यन्तधातुस्थले च प्रयोज्यकर्त्तुरेव तत्त्वम्, कर्त्तृप्रत्ययसमभिव्याहारे कर्त्तृनिष्ठप्रधानव्यापारविशेषणफलाश्रयत्वस्यैव प्रधानकर्मत्वात्, तस्य च तत्रैव सत्त्वात् । एवञ्च व्यापारद्वयार्थत्वकल्पे पूर्वार्द्धे द्विकर्मपदेन दुहादीनां ण्यादीनां गत्यादिण्यन्तानाञ्च सर्वेषामपि ग्रहणम् । इदमेवाभिप्रेत्य शब्दरत्ने पूर्वार्द्धमेवोपात्तम् इति । यत्तु 'उत्तरार्द्धोपात्तदुहादिण्यन्तबुद्ध्याद्यर्थातिरिक्ता द्विकर्मकाः के' इति प्रश्ने ।

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥

इत्युक्तं तत्र व्यापारद्वयार्थकसर्वधातूनां ण्यादिग्रहणमुपलक्षणमिति न तत्र विरोधः, तत्रापि ण्यादिग्रहणेन कृषेरुपलक्षणीयत्वात् । अन्यथा तव मते द्विकर्मकेषु तदसंग्रहापत्तेरिति दिक् ।

र्जनं त्याजनं दुहेरर्थः, दापनमङ्गीकरणं च याचेः, विक्लेदनं निर्वर्तनं च पचेरि-त्यादि। एवं च धातूपात्तव्यापारविषयीभूतं यत् त्यजनदानाङ्गीकारादि, तदाश्रयत्वं गवादीनां स्पष्टमेव। अत एव हि अणौ कर्तुर्णौ कर्मत्वस्य न्यायसिद्धतया गत्यादिसूत्रं नियमार्थमिति प्राचां सिद्धान्तः। अत एव चाकडारसूत्रे "अपादानमुत्तराणि गां दोग्धि पय इत्यत्र परत्वात्कर्मसञ्ज्ञा" इति भाष्यं सङ्गच्छते। पञ्चकं प्रातिपदिकार्थ इति पक्षे त्ववधित्वफलाश्रयत्वयोर्युगपद् विवक्षायां चेद-

### शब्दरत्नम्।

त्यजनोपसर्जनमिति। गौः पयस्त्यजति, गवा पयस्त्याजयतीति प्रतीतेरिति भावः। न्यायसिद्धतयेति। व्यापारद्वयार्थत्वेनोक्तसूत्रद्वयसिद्धतयेत्यर्थः। प्राचाम्—"हेतुमति च" इति सूत्रे भाष्यकृताम्। परत्वादिति। 'ग्रामादायाति' इत्यादौ सञ्ज्ञान्तराप्राप्तावपादानत्वं सावकाशम्, कर्मसञ्ज्ञा तु ग्रामं गच्छतीत्यादौ। भाष्यमिति। एतच्च भाष्यं न "अकथितं च" इत्येतद्विषयम्, अस्यापादनत्वाविवक्षायां प्राप्त्या परत्वादित्युक्त्यसंगतेः। तद् ध्वनयन्नाह—पञ्चकमित्यादि। अवधित्वेत्यादि। अपादानत्वक-

### भैरवी।

ईप्सिततमत्वे—तदुपलक्षितोद्देश्यत्वे। अत्र यत्र यत्रोद्देश्यत्वन्तत्र तत्र "कर्तुः" इत्यस्य, यत्र तदभावस्तत्र "तथायुक्तम्" इत्यस्य प्राप्तिरिति विवेकः। इति प्रतीतेरिति। एतेन व्यापारद्वयार्थकत्वन्दर्शितम्। विभागानुकूलव्यापारानुकूलव्यापारो हि दुहेरर्थ इति भावः। यदुक्तं न्यायसिद्धतयेति तत्रान्यन्यायासम्भवादाह—सूत्रद्वयेति। "गतिबुद्धि" इति सूत्रस्य नियमार्थत्वम्भाष्यकारमतसिद्धमिति प्राचामित्यसङ्गतमत आह—हेतुमति चेतीति। एतच्च भाष्यम्—अपादानमुत्तराणीति भाष्यम्। अस्य—"अकथितञ्च" इतिसूत्रस्य। असङ्गतेरिति। पूर्वस्य परस्य च यत्र प्राप्तिस्तत्रैव विप्रतिषेधसूत्रस्य प्राप्तिरिति "कर्तुः" इत्यादिसूत्रद्वयविषयकमेव। तथा च "अकथितम्" इति सूत्रञ्च कार्यमित्येतदभिप्रायकमिति भावः। पञ्चकमित्यादीति। एतेन पञ्चम्या अवधित्वन्द्वितीयाया फलाश्रयत्वम्प्रतिपाद्यमित्युभयविवक्षा वक्तुमशक्येति शङ्काया नावकाश इति सूचितम्, गोशब्दस्यव शक्तिद्वयप्रतिपादकत्वसम्भवात्। पञ्चम्या अपादानत्वशक्तिविशिष्टार्थाभिधायकत्वमिति सिद्धान्ताभिप्रायेणाह-अपादानत्वेति। ननु यदि शक्तिद्वयविवक्षा तदा शक्तिद्वयप्रतिपादकत्वं विभक्तेरुपपादनीयन्तच्च न सम्भवति

### भावप्रकाशः।

भयत्र सत्त्वात्तदुपन्यासो व्यर्थ एव। अत एव तथा रत्नाकरदण्ड्याद्युक्तं चिन्त्यमिति बोध्यम्। प्रतीतेरिति। गां दोग्धि पय इत्यत इति भावः। न्यायसिद्धतयेत्यस्य सूत्रं विना नैयायिकादिवत् लोकसिद्धतयेत्यर्थभ्रमनिवारणायाह-व्यापारद्वयेति। उद्देश्यस्य "कर्तुः" इत्यनेन तदन्यस्य "तथा युक्तम्" इत्यनेन इति भावः। इदमपि मूलरीत्या न स्वरीत्येति बोध्यम्। मूलकृतारुचिबोधनाय तथोक्तत्वेऽप्यस्यैव सिद्धान्तत्वादाह—हेतुमतीति। परत्वमूलभूतं चारितार्थ्यं तयोराह-ग्रामादिति। सञ्ज्ञान्तरेति। ग्रामनिष्ठविभागस्य धात्ववाच्यत्वेनानुद्देश्यत्वेन च कर्मसञ्ज्ञाद्यप्राप्तावित्यर्थः। इत्यादाविति। अस्य सावकाशेति शेषः। तद्वैपरीत्यादिति भावः। ननु गां दोग्धीत्युदाहरणात्प्रकृतसूत्रविषयत्वलाभेन कथं गतार्थत्वे तद्भाष्यं साधकमत आह-एतच्च भाष्यमिति। इत्येतद्विषयमिति। इत्येतद्विषयकमित्यर्थः। असङ्गतेरिति। युगपत्समावेशाभावादिति भावः। उक्तरीत्या अवधित्वादेरवच्छेदकत्वेन सूत्रेऽनुपादानादाह—अपादानत्वेति। सञ्ज्ञाशब्देऽनियमादपादानत्वस्य पूर्वनिपातः। एतेन प्रकृतधातूपात्तफलाश्रयत्वरूपकर्मत्वस्य प्रकृतधातूपात्तगत्यनाविष्टत्वे सति तज्जन्यविभागाश्रयत्वरूपापादनत्वस्य च तत्समनियताखण्डोपाधिविशेषरूपस्य वा युगपद्विवक्षायाः कर्तुमशक्यत्वेनोभयोरप्राप्तौ कथं परत्वादित्युक्तिरित्यपास्तम्। नन्वेवं

म् , अवधिभूता या गौस्तन्निष्ठो यः पयःक्षरणानुकूलव्यापारस्तद्विषयिणी गोपनिष्ठा प्रेरणेत्यर्थात् । तथाच "अकथितं च" इति सूत्रं व्यर्थमिति चेत् ?

अत्रोच्यते, कर्मणः शेषत्वेन विवक्षायां 'न माषाणामश्नीयात्' इतिवत् षष्ठी प्राप्ता, तां बाधितुमिदं सूत्रम् । तथाचेह षष्ठीवत्सम्बन्धमात्रं द्वितीयार्थ इति

**शब्दरत्नम् ।**

र्मत्वशक्त्योरित्यर्थः । ईदृशे च विषये आकडारसूत्रतद्भाष्यबलादुभयोरपि द्वितीयैव बोधिकेति भावः ।

**इति स्थितमिति ।** प्राचां ग्रन्थे इति शेषः । अत्रारुचिबीजं तु यदा पयोनिष्ठविभागानुकूलव्यापार एव धात्वर्थस्तदाऽपादानत्वाविवक्षायामन्येनासिद्धेः कर्मत्वार्थमिदमावश्यकम् । एवमन्येष्वपि । किं च "कर्तुः" इत्यपि षष्ठ्यपवाद एव । तदभावे तद्विषयेऽपि षष्ठ्या एव प्राप्तेः; अतः षष्ठ्यपवादत्वमात्रेण न सम्बन्धत्वेन बोधकतोचिता । तस्मादत्रापि क्रियाजनकतासमानाधिकरणकर्मत्वशक्तिमत्त्वेनैव बोध इत्येवोचितम् ।

**भैरवी ।**

परत्वाज्जातकर्मसंज्ञायाः कर्मत्वमात्रस्य द्वितीयया प्रतिपादनसम्भवादत आह—ईदृशे चेति । उभयोः शक्त्योः प्रतिपादकेन प्रतिपादनविवक्षा, जाता त्वेकैव विभक्तिस्तादृशविषय इत्यर्थः ।

इति स्थितमित्यस्माद्भाष्ये स्थितमित्यर्थः प्रतीयते; परन्त्वेवं वक्तुमशक्यं, वक्ष्यमाणानुपपत्तेरत आह—प्राचाङ्ग्रन्थ इति । अत्र-प्राचामित्यनेन प्रतिपादने । अपादानत्वविवक्षायां गोः पयो दोग्धीत्येव भवतीत्याशयेनाह—अपादानत्वाविवक्षायामिति । अन्येन-शास्त्रान्तरेण । असिद्धेरिति । कर्मसंज्ञाया इति शेषः । एकव्यापारार्थकत्वं यदा पचादिधातूनान्तदा तत्कारकस्य कर्मसंज्ञार्थम् "अकथितञ्च" इति सूत्रम् । यदुक्तम्प्राक् षष्ठीबाधनार्थमिदं सूत्रमित्येतत्साध्यविभक्तेः सम्बन्धार्थकत्वमिति, तद् दूषयति—किञ्चेति । क्रियाजनकतासमानाधिकरणेति ।

**भावप्रकाशः ।**

कथमपादानत्वबोधो वाचकाभावादत आह—ईदृशे चेति । तद्भाष्येति । मूलोक्तेत्यर्थः । यदि तथा न स्यात्कथमेकैवेति नियमः कथं वा परत्वाद्बाधोक्तिरिति भावः । एवं च पयोनिष्ठविभागानुकूलव्यापारानुकूलव्यापारो दुहेरर्थः । तत्र विभागावधित्वस्य तदनुकूलव्यापाराश्रयत्वस्य च गवि सत्त्वम् , इतोऽप्याधारो द्वितीयार्थः इति प्रागुक्तमसङ्गतम् , किन्तूपलक्षणपरतयैव व्याख्येयम् । टीकायां तत्रैवैतदनुक्तिस्तु तस्यात्रात्र सत्त्वात् । एतेन तद्भाष्यानुरोधेनेदं सूत्रं नियमार्थम्—अकथितस्य यदि सा तर्हि दुहादिसम्बन्धिन एव । तेनान्तर्भावितण्यर्थतायां मैत्रश्चैत्रं पटं करोतीति न प्रयोगः । विध्यर्थत्वे त्विदं दुर्वारमिति प्राचोक्तमपास्तमिति बोध्यम् । इति स्थितमिति मौलसिद्धान्तस्यायत्तां बोधयितुमाह—प्राचामिति ।

तामेवाह—अत्रेति । उक्तार्थे इत्यर्थः । एवेन व्यापारद्वयनिरासः । अन्येन । तदवच्छिन्नोक्तसूत्रद्वयेनेत्यर्थः । वस्तुतोऽन्येन "कर्तुः" इति सूत्रेणेत्यर्थः । अन्येष्वपि—भाष्यापरिगणितयाचादिषु । मौलार्थमभ्युपेत्याप्याह—किं चेति । अपिना "तथायुक्तम्" इत्यादिपरिग्रहः । एवमग्रेऽपि । षष्ठ्यपवादत्वेति । तत्तच्छास्त्राभावे सर्वत्र षष्ठीप्राप्त्या सर्वासान्तदपवादत्वमात्रेणेत्यर्थः । सम्बन्धत्वेनेति । तत्तु एतन्निष्ठबोध्यतानिरूपितबोधकतेत्यर्थः । अन्यथा विशेषरूपेण बोधोच्छेदापत्तिः । अत एव "कर्मणि द्वितीया" इत्यस्य न वैरूप्यम् । अत एव चैतत्सूत्रशेषे भाष्येऽनेनैव सिद्धे आद्यसूत्रद्वयवैयर्थ्यमाशङ्क्य ईप्सितमात्रस्यानेन सञ्ज्ञायां "वारण" इत्यस्यानवकाशत्वे माणवकादपि पञ्चमी स्यादितीप्सिततमित्याद्यारब्धव्यमित्युत्तरितम् । एतेन दुहादीनां व्यापारद्वयार्थत्वे "कर्तुः" इति कर्मत्वे तत्त्वेनाविवक्षायामप्यनेन कर्मत्वमिति मूलोक्तमपास्तं, वदतो व्याघातात् । अत एव च "कर्तुः" इत्यनेन सिद्धिमाश्रित्यास्य वैयर्थ्यं भाष्ये नाशङ्कितम् । अत एव चोदेश्यत्वादेरत्राभानमिति भावः । तदेतद् ध्वनयितुमुपसंहरति—तस्मादिति । उक्तहेतोरित्यर्थः । अत्रापि-'अकथितं च' इत्येतद्विषयेऽपि । अपिरन्यसूत्रसमुच्चायकः । स्पष्टार्थमाह—क्रियेति ।

## शब्दरत्नम् ।

व्यापारद्वयार्थत्वे "कर्तुरीप्सिततमम्" इत्यनेनापि द्विकर्मकत्वमस्त्येव यथाप्रयोगं बहूनां धातूनाम् । तत्र ये व्यापारद्वयार्थत्वेन द्विकर्मकास्तेषां प्रधानकर्मणि लादयः,

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ॥ इत्युक्तेः ।

प्रधानकर्मत्वं च कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानधात्वर्थव्यापारमात्रविशेषणफलाश्रयत्वम् , ण्यन्तविषये ईदृशप्राधान्यस्यैव ग्राह्यत्वात् । 'गर्गाः शतं दण्डयन्ताम्' इत्यादौ गर्गाणामेव तत्त्वमिति तत्रैव कर्मणि लादयः ।

## भैरवी ।

एतेन कारकत्वमपि शक्तिविशेष एव । तेनैव रूपेण शाब्दबोधविषयता संज्ञिन इति ध्वनितम् । अपादानसम्प्रदानाधिकरणानामपादानत्वादिनाऽविवक्षायामनेन कर्मसंज्ञायाङ्कर्मत्वशक्तिमत्त्वेनैव शाब्दबोधविषयतेति बोध्यम् ।

मूलङ्खण्डयितुमुपक्रमते—व्यापारद्वयेति । अपिः "तथायुक्तम्"इति सूत्रसमुच्चायकः । यथाप्रयोगमिति । अनेनातिप्रसङ्गो वारितः । बहूनामिति । मूलपरिगणितभिन्नानामपि ग्रहणमित्यनेनोक्तम् । उक्तरीत्या धातूनान्द्विकर्मकत्वे बोधिते लकाराद्युत्पत्तिविषये व्यवस्थामाह—तत्रेत्यादिना । ये—दुहादयः पच्यादयश्च । इत्युक्तेरिति । इति भाष्यकारोक्तेरित्यर्थः ।

इष्टव्यवस्थासिद्धये प्रधानकर्मत्वन्दर्शयति—प्रधानेति । कर्तृप्रत्ययसमभिव्याहृतधातुजन्यशाब्दबोधे यः प्रधानभूतो व्यापारस्तस्मिन्साक्षाद्विशेषणं यत्फलन्तदाश्रयत्वम्प्रधानकर्मत्वम् । कर्तृनिष्ठेति व्यापारेति च स्वरूपकीर्त्तनम् । मात्रपदेन परम्परया विशेषणत्वव्यवच्छेदः । गर्गाः शतन्दण्डयन्तामिति भाष्यीयप्रयोगे यद्यपि न कर्तृप्रत्ययस्तथापि गर्गरूपकर्मणि लकारोत्पत्तिव्यवस्थामाह—गर्गा इति । गर्गाणामेवेति । कर्तृप्रत्ययसमभिव्याहारे गर्गान् शतन्दण्डयतीत्यत्र स्वसम्प्रदानकदानानुकूलव्यापारानुकूलव्यापारो दण्डयतेरर्थः, तत्र प्रधानभूतो व्यापारो द्वितीयस्तन्निष्ठविशेष्यतानिरूपिता साक्षात्प्रकारता प्रथमव्यापारस्येति तदाश्रयग-

## भावप्रकाशः ।

कारकत्वव्याप्यसञ्ज्ञानां स्वबोध्येऽर्थे कर्मत्वादिशक्तिमत्त्वबोधकत्वात् । एवं चापादानसम्प्रदानाधिकरणानां तत्त्वेनाविवक्षायां कर्मत्वेनैव विवक्षेति तत्त्वम् ।

मूलादि खण्डयितुमुपक्रमते—व्यापारद्वयेति । बहुव्रीहिः । अपिर्मूलोक्तरीत्या "तथायुक्तम्" इत्यस्य संग्राहकः । यथाप्रयोगमिति । अनेनातिप्रसङ्गो वारितः । बहूनामिति । अनेन मूलपरिगणितभिन्नानामपि ग्रहणं सूच्यते । नन्वेवं कथमिष्टलाभादिव्यवस्थेत्यत आह—तत्र ये इति । "कर्तुरीप्सित" "तथायुक्तम्" "अकथितं च" "गतिबुद्धि" इत्यादिविषयानेकद्विकर्मकण्यन्तदुहादिपच्यादिषु मध्ये ये आद्यसूत्रविषया द्विकर्मका इत्यर्थः । इत्युक्तेति । इति भाष्योक्तेरित्यर्थः ।

नन्वेवं प्रधानकर्मत्वमुद्देश्यत्वरूपं शतस्यैवेति तत्रैव लादयः स्युः, उभयत्र वा स्युरिष्यते तु गर्गरूप एव कर्मणि 'अप्रधाने दुहादीनाम्' इत्युक्तेः । अत एव गर्गाः शतन्दण्ड्यन्तामिति भाष्यप्रयोगसङ्गतिरत आह—प्रधानकर्म्मत्वं चेति । ननु कर्म्मप्रत्ययस्थले फलव्यापारयोर्विशेष्यविशेषणभाववैपरीत्यात्तत्रैवेष्टन्तत्त्वं गर्गाणां न स्यादत आह—कर्तृप्रत्ययेति । कर्तृनिष्ठेति व्यापारेति च स्वरूपकथनं, तस्यैव यद्विशेषणं फलमित्यर्थः । मात्रशब्देन साक्षाद्व्यापारजन्यफलस्यैव ग्रहणेन परम्परया विशेषणफलव्यावृत्तिः । ननु तेषां दुह्यादित्वं प्रकल्प्योद्देश्यत्वरूपमार्थप्राधान्यमेव लाद्युत्पत्तिनियामकं कुतो नोरीक्रियते इत्यत आह—ण्यन्तेति । 'ण्यादयो ण्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि' इत्यत्र मुख्यत्वस्य ण्यन्ते कर्तुश्च कर्मण इत्येतदेकवाक्यतया तादृशस्यैव ग्राह्यत्वादित्यर्थः, अन्यथा मिथो विरोधः स्पष्ट एवेति भावः । तदेवोदाहरणेन विशदयति—गर्गा इति । एवेन शतव्यावृत्तिः । तत्त्वम्—उक्तप्रधानकर्मत्वम् । स्वसम्प्रदा-

शब्दरत्नम्।

उद्देश्यत्वरूपमार्थप्राधान्यं तु शतस्येत्यनुद्देश्यत्वेनाप्रधानगर्गानुरोधान्न शतावृत्तिरिति न वृद्धिसूत्रस्थभाष्यविरोधः।

एकव्यापारार्थकदुहादियोगे त्वप्रधानकर्मणि। अप्रधानत्वं चात्रोक्तप्रधानकर्मभिन्नत्वम्। तच्च तन्त्रार्थे गवादीनामेव, फलाश्रयत्वाभावात्। एवं च

भैरवी

गर्गाणामप्रधानकर्मत्वम्। नन्वेवं "वृद्धिरादैच्" इति सूत्रभाष्येऽप्रधानकर्मगर्गाणाम्बहुत्वेऽपि न प्रधानस्य शतस्यावृत्तिरिति प्रतिपादितन्तद्विरोध इत्यत आह—उद्देश्यत्वेति।

दुहादीनामेकव्यापारार्थकत्वे "अकथितञ्च" इति सूत्रेण तद्योगे गवादीनामिति प्रागभिहितन्तदापि गवादिकर्मणि लकारादिव्यवस्थामाह—एकव्यापारेति। तदा हि विभागानुकूलव्यापार एव दुह्धात्वर्थः। विभागरूपम्फलम्प्रधानव्यापारविशेषणन्तदाश्रयत्वात्पयसः प्रधानकर्मत्वन्तद्भिन्नत्वङ्गवादीनामिति तेषामप्रधानकर्मत्वम्। एवञ्चेति। उक्तरीत्येष्टव्यवस्था-

भावप्रकाशः।

नकदानानुकूलव्यापारानुकूलशासनरूपव्यापारो दण्डेरर्थस्तत्र साक्षाव्द्यापारजन्यफलाश्रयत्वात्तेषामेव तत्त्वमिति भावः। नन्वेवं प्रधानगर्गानुरोधाच्छतस्यावृत्त्यापत्त्या वृद्धिसूत्रभाष्यविरोधोऽत आह—उद्देश्यत्वेति। अन्यथा "कर्तुः" इति कर्मत्वाभावेन द्वितीया न स्यादिति भावः। विरोध इति। तद्भाष्यस्य तादृशप्राधान्याप्राधान्यपरत्वादिति भावः। अत एव प्रधानकर्मणीति सर्वपक्षमुक्त्वोत्तरार्धोपात्तातिरिक्ता द्विकर्मकाः के इति प्रश्ने—

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च। द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः॥ इत्युक्तम्।

तत्र न्यादिग्रहणं तव कृषिवत् मम व्यापारद्वयार्थकधातूपलक्षणम्। 'अप्रधाने दुहादीनाम्' इत्यस्य विषयं वक्तुं तृतीयद्विकर्मस्थले तद्व्यवस्थामाह—एकेति। "अकथितं च" इति सूत्रविषये इति भावः। आदिना "दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ब्रुविशासिगुणेन च यत्सचते तत्तदकीर्तितमाचरितं कविना" इति भाष्योक्तसप्तानां ग्रहणम्। कर्मणीति। अस्य लादय इति शेषः। ननु धात्वर्थप्रधानव्यापारसाक्षाद्विशेषणफलाश्रयत्वस्य प्रधानकर्मत्वे परम्परया विशेषणतादृशफलाश्रयत्वमप्रधानकर्मत्वं लब्धं; तच्च न गोर्न वा पयस इति कथं तत्र निर्वाहः? अनुद्देश्यत्वरूपमप्राधान्यं तु न तदुत्पत्तौ नियामकमत आह—अप्रधानत्वं चेति। अप्रधानकर्मत्वं चेत्यर्थः। तन्त्रार्थे। पयोनिष्ठविभागानुकूलव्यापारे एव धात्वर्थे अङ्गीक्रियमाणे इत्यर्थः। अत एवाह—फलाश्रयेति। तस्य धात्वर्थत्वाभावादिति भावः। तथा सति वक्तव्यं फलितमाह—एवं चेति। तेषां प्रधानकर्मण्येतेषामप्रधाने कर्मणीत्येवं लादिव्यवस्थाया द्विकर्मकत्वस्य च सिद्धौ चेत्यर्थः। ननु परिगणनमध्ये भाष्यानुक्तमूलोक्तपच्यादीनां व्यापारद्वयार्थकत्वेन द्विकर्मकत्वस्य लादिव्यवस्थायाश्च मूलमते 'अप्रधाने दुहादीनाम्' इत्यनेनैवात्र मते 'प्रधानकर्मणि' इत्यनेन साधितत्वेऽपि तेषामेकव्यापारार्थकत्वे तदुभयं न स्यात्, भाष्ये परिगणनेन तद्विधानात्। तथा चासाधुत्वं स्यात्तत्र तथाप्रयोगस्य, अथ तद्विषये व्यापारद्वयार्थकत्वं नियतमिति चेत्सर्वत्रैव तथाऽस्तु माऽस्तु "अकथितं च" इति सूत्रमिति चेत्? न, तदनुक्तत्वेन तत्र तेषामसाधुत्वे इष्टापत्तेः, अत एव सूत्रावश्यकत्वाच्च। एतेन मूलोक्तमेव युक्तं न तु व्यापारद्वयार्थकत्वेन साधनमित्यपास्तम्। तद् ध्वनय-

सरला।

फलाश्रयत्वाभावादिति। फलतावच्छेदकसम्बन्धेनेति शेषः। एवञ्च फलतानवच्छेदकसम्बन्धेन फलाश्रयो गौणकर्म। फलतानवच्छेदकसम्बन्धश्च सर्वोऽपि न ग्राह्यः। किन्तु संयोगसमवायविषयविषयिभावान्यतम एव। तेन कालिकादिसम्बन्धेन सर्वेषां फलाश्रयत्वेन स्थाल्यादेर्न कर्मत्वम्। याचत्यादौ धनीयबौद्धत्यागसमवायोऽस्त्येवेति न दोषः। परिगणने इति। "आख्यातोपयोगे" इति सूत्रे 'दुहि याचि रुधि प्रच्छि भिक्षिचिञामिति इत्युक्ते परिगणने पचादिधातूनां भाष्यानुक्तानां तत्र पाठो न युक्त

शब्दरत्नम् ।

भाष्यानुक्तानां परिगणनेपाठोऽयुक्तः । "अर्थनिबन्धनेयं सञ्ज्ञा"इति चायुक्तम् । एवं

भैरवी ।

सिद्धौ च । भाष्यानुक्तानां—पचादीनाम् । भाष्योक्तास्तु दुहादयः। एकव्यापारार्थकत्वेऽपि तेषामप्रधानङ्कर्म यस्य "अकथितञ्च"इति सूत्रेण कर्मसंज्ञा तदेव । एषान्तत्तद्धात्वर्थप्रधानीभूतो यस्तादृशव्यापारस्तद्विशेषणं फलाश्रयभिन्नत्वमस्त्येव । इत्थं हि तत्रत्यं भाष्यम्-"केनाकथितम् , अपादानादिभिर्विशेषकथाभिः" इयं करणे तृतीया भूतकालोऽत्राविवक्षितः, तेन सर्वथा यत्रापादानादीनामप्रसक्तिस्तेषामप्यसङ्कीर्तितत्वादकथितत्वव्यवहारः।"किमुदाहरणम् ? दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितङ्कविना"। उपयोगनिमित्तमिति। उपयुज्यते इत्युपयोगः पयः फलादि तस्य निमित्तङ्गवादि। पयआदीनामुपयोगपदव्यवहार्यत्वप्रदर्शनेन तेषामीप्सिततमत्वन्दर्शितम् । गवादीनाञ्च तन्निमित्तत्वेन धात्वर्थव्यापारात्प्राक् पयआदिकर्मयुक्तत्वन्निदर्शितम् । गवादीनान्तथायुक्तत्वाभावात् "अकथितञ्च" इत्यनेनाऽपि कर्मसंज्ञा न भवति । अपूर्वविधावित्यत्र पूर्वत्वमुपलक्षणन्तेन परविधावपीयं सञ्ज्ञा न भवति । ब्रुविशासिगुणेनेति । ब्रुविशास्योर्गुणः साधनम्प्रधानङ्कर्म धर्मादिकन्तेन यत्सचते-सम्बध्यते इत्यर्थः । क्रियायाः साध्यत्वात्प्राधान्यङ्कारकाणान्तु तदर्थत्वाद् गुणत्वम् । एवम्परिगणनेन नटस्य शृणोतीत्यादावतिप्रसङ्गवारकेण "अकथितञ्च"इति सूत्रोदाहरणत्वमेषान्धातूनामिति प्रदर्श्य, "दुहि, गां दोग्धि पयः। नैतदस्ति, कथितात्रापादानसञ्ज्ञा गोः पय आदत्ते इत्यर्थावगमादपादानत्वङ्गवादीनाम्"। अनेन यदा गवादीनामपादानत्वविवक्षा तदा न भवति। यदा तु न तथा धातोर्व्यापारद्वयार्थकता च तदा "कर्तुः" इत्येव कर्मत्वमिति प्रदर्शितम् । "याचि, इदन्तर्हि पौरवं याचते । नैतदस्ति, कथितात्र पूर्वापादानसञ्ज्ञा, पौरवाद्गाञ्जिघृक्षत इत्यर्थस्य प्रतीतेः" । एतेनास्याप्यनुदाहरणत्वन्दर्शयित्वा तत उक्तं "न याचनादेवापायो भवति याचितोऽसौ यदि ददाति तदाऽपायेन युज्यते" । एतेन सर्वथाऽविवक्षायामनेनासङ्कीर्तितपौरवस्य कर्मत्वम् । "रुधि, अन्ववरुणद्धि गां व्रजम् । नैतदस्ति, कथितात्र पूर्वाऽधिकरणसञ्ज्ञा, गां व्रजे स्थापयतीति सम्प्रत्ययात्" । एतेन यदा गौर्व्रजं प्रविशति गवा व्रजमप्रवेशयतीत्यर्थविवक्षा तदा व्यापारद्वयार्थकत्वेन पूर्वसूत्रस्य प्रवृत्तिरित्यर्थादुक्तम्भवति। "प्रच्छि, माणवकम्पन्थानम्पृच्छति। नैतदस्ति, कथितात्र पूर्वापादानसञ्ज्ञा माणवकान्मार्गोपदेशं जिघृक्षत इत्यर्थ(?)विवक्षा दर्शिता तदाऽनुदाहरणत्वं, यदा तु प्रश्नमात्रमनङ्गीकृतापायन्धात्वर्थस्तदभिप्रायेण न प्रश्नादेवापायो भवति पृष्टोऽसौ यद्याचष्टे तदाऽपायेन युज्यते" इत्युक्तम् । अनेन सर्वथाऽविवक्षायामुदाहरणत्वम्पृच्छेर्दर्शितम् । "भिक्षि, पौरवं गां भिक्षते । नैतदस्ति, कथितात्र पूर्वाऽपादानसञ्ज्ञा न भिक्षणादेवापायो भवति भिक्षितोऽसौ यदि ददाति तदाऽपायेन युज्यते" । अनेन भिक्ष-

भावप्रकाशः ।

आह— भाष्यानुक्तानामिति । पच्यादीनामित्यर्थः अत एव तण्डुलान्विक्लेदयन् ओदनं निर्वर्तयतीत्यर्थ इति कैयटोक्तिः सङ्गच्छते । युक्तं चैतत् । अन्यथा "आख्यातोपयोगे" इति सूत्रभाष्योक्तपरिगणनस्वभङ्गापत्तिः । किञ्च भाष्ये भिक्षिग्रहणवैयर्थ्यापत्तिः, उभयार्थकयाचिग्रहणेनैव सिद्धेरिति । तदाह—अर्थेति ।

सरला ।

एव इत्यर्थः । मूले—अग्रेऽप्यूह्यमिति । एतत्तत्वं पूर्वमेवोक्तम् । अयुक्तमिति । येषामेतदर्थानां धातूनां द्विकर्मकत्वमिष्टं तेषां पूर्वोक्तरीत्या व्यापारद्वयार्थकत्वमाश्रित्य "कर्तुरीप्सिततमम्" इत्यनेनैव सिद्धेः, "आख्यातोपयोगे" इति सूत्रभाष्योक्तपरिगणनाच्च, भाष्ये पृथक् भिक्षिग्रहणाच्च । अन्यथा परस्वत्वनिवृत्तिस्वस्वत्वोत्पत्त्युभयानुकूलव्यापारार्थकस्य 'इदमवश्यं करिष्यामि' इति प्रतिज्ञावाक्योच्चारणजनकज्ञानविशेषरूपस्वीकारानुकूलव्यापारार्थकस्य च याचेरेव ग्रहणेन तदेकार्थकभिक्षेरपि द्विकर्मकत्वसिद्धौ पृथग् भिक्षिग्रहणवयर्थ्यं स्पष्टमेव ।

स्थितम् । अपादानत्वमात्रविवक्षायां तु पञ्चम्येव । गोः क्षीरविशेषणत्वे तु षष्ठी । तेन गोः पयो दोग्धीत्यपि प्रयोगः साधुरेव । एवमग्रेऽप्यूह्यम् । यत्तु प्राचोक्तम्—

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ इति,

दुह्याच्यर्थरुधिप्रच्छिचिब्रूशासुजिकर्मयुक् ।
नीहृकृष्मन्थवहदण्ड्ग्रहमुष्पचकर्मभाक् ॥ इति,

---

**शब्दरत्नम् ।**

द्व्यर्थत्वेनद्विकर्मकत्वातिप्रसङ्गस्त्वनभिधानेन वारणीय इति दिक् ।

**अपादानत्वमात्रेति ।** विभागानुकूलव्यापारमात्रार्थकत्वविवक्षायामिति भावः । **गोः क्षीरेति ।** न च क्रियान्वयेऽपि शेषत्वविवक्षायां सेति वाच्यम् ? "षष्ठ्यन्तार्थकस्य स्वान्वययोग्यार्थकनामसमभिव्याहारे तत्रैवान्वयः" इतिव्युत्पत्तेः । अत एव तण्डुला-

**भैरवी ।**

धातुविषये याचिधातुवदुदाहरणमनुदाहरणत्वञ्च कल्पनीयमिति कथितम् । "चिञ्, वृक्षमवचिनोति फलानि" । वृक्षस्यापादानत्वाविवक्षायामनेन कर्मत्वम् । नैतदस्ति, कथितात्र पूर्वाऽपादानसञ्ज्ञा वृक्षात्फलान्यादत्त इत्यर्थावगमात्" । एतेनात्रापादानत्वाविवक्षैव नास्तीति निदर्शितम् । "ब्रुवि शासि, पुत्रन्धर्मम्ब्रूते पुत्रन्धर्ममनुशास्ति" । पुत्रो धर्म्मं प्रतिपद्यते, पुत्रन्धर्मम्प्रतिपादयतीत्यर्थः । अनेन सम्प्रदानत्वाविवक्षायामुदाहरणत्वमित्युक्तम् । "नैतदस्ति, कथितात्र पूर्वा सम्प्रदानसंज्ञा वचनानुशासनकर्मणा धर्मेण पुत्रस्याभिप्रेयमाणत्वात्सम्प्रदानत्वम्" । तस्याविवक्षा चात्र नास्तीति प्रदर्शितम् । तस्मात् त्रीण्येवोदाहरणानि पौरवं गां याचते माणवकम्पन्थानम्पृच्छति पौरवं गां भिक्षत इति । इति चायुक्तमिति । भाष्योक्तपरिगणनपरवाक्ये याच्धातुसमानार्थकभिक्षेरुपादानादिति शेषः । एवन्द्व्यर्थत्वेन—दुहादिवद् द्व्यर्थत्वेन । अतिप्रसङ्ग इति । गमादिधातूनां संयोगानुकूलव्यापारानुकूलव्यापाराद्यर्थकतामाश्रित्य भृत्यञ्ग्रामङ्गच्छतीत्यादिप्रयोगापत्तिरूपोऽतिप्रसङ्ग इत्यर्थः । विस्तरस्त्वन्यत्र द्रष्टव्य इत्याशयेनाह—दिगिति ।

ननु क्रियायामन्वयेऽपि कदाचित्षष्ठीसम्भवात्क्षीरविशेषणत्वमात्रेण षष्ठीप्रतिपादनमयुक्तमित्याशयेनाशङ्काङ् कृत्वा तान्निराचष्टे—नचेति । षष्ठ्यन्तार्थकस्येति । शेषेत्यादिः । स्वान्वययोग्यार्थकनामसमभिव्याहार इति कथनेन यत्र तत्समभिव्याहाराभावः क्रियायामन्वयविवक्षा च शेषत्वविवक्षा च तत्र षष्ठी भवत्येव । मातुः स्मरति, नटस्य शृणोतीत्यादौ यथा । इति व्युत्पत्तेरिति । एतेन पयःपदसमभिव्याहारे धात्वर्थानन्वय इति दर्शितम् । अत एव—उक्तव्युत्प-

**भावप्रकाशः ।**

नन्वेवं द्विकर्मकत्वसाधनेऽतिप्रसङ्गापत्तिरत आह—एवं द्व्यर्थत्वेनेति । व्यापारद्वयस्य धात्वर्थत्वकल्पनया द्व्यर्थत्वेनेत्यर्थः । एवं च परममूलं मूलमत्रत्यमग्रिमं च तथा कैयटरत्नाकरदण्डयाद्युक्तं च चिन्त्यमिति बोध्यम् । विस्तरस्त्वन्यत्र बोद्धव्यः । तदाह—इति दिगिति ।

व्यापारद्वयार्थत्वे तत्त्वे मात्रविवक्षायामिति मूलतो लभ्यते, तच्चायुक्तमुक्तयुक्तेरतस्तत्राधिकरणमाह—**विभागेति ।** मात्रपदेन व्यापारद्वयव्यावृत्तिः । मौलमात्रपदेन कर्मत्वव्यावृत्तिः । रत्नाकराद्युक्तिं खण्डयति—**नचेति ।** एवं चोभयथापि तथा प्रयोग इति भावः । **षष्ठ्यन्तार्थस्येति ।** शेषेत्यादिः । **समभिव्याहारे इति ।** अनेन मातुः स्मरति, नटस्य शृणोतीत्यादीनां साधुता सूचिता । **व्युत्पत्तेरिति ।** एवं च तत्र न तदर्थस्य क्रियान्वय इति भावः । तत्र मूलं ध्वनयति—**अत एवेति ।** तत्सम-

अत्रेदं वक्तव्यम् । ग्रहेः पाठो निर्मूलः । जग्राह च्युतरुं शक्रमित्युदाहरणम-

शब्दरत्नम् ।

नामोदनं पचतीत्यादौ "द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी तण्डुलविकारमोदनं पाकेन निर्वर्त्तयति" इत्युक्तं भाष्ये, न तु पाकान्वये षष्ठीत्युक्तमिति दिक् ।

**निर्मूल इति** । अपादानत्वाद्यविवक्षायां तत्सम्बन्धिनः कर्मत्वे मूलं नास्तीति भावः । द्विकर्मकत्वं तु यदीष्टं तर्हि व्यापारद्वयार्थतया बोध्यम् । **उदाहरणमप्ययुक्त-**

भैरवी ।

त्तिसत्त्वादेव । आदिना तण्डुलानोदनम्पचतीत्यस्य सङ्ग्रहः । अत्र निर्वर्तनं विक्लेदनं च पचेरर्थः । तण्डुलान् विक्लेदयन्नोदनन्निर्वर्तयतीति वाक्यार्थः । इत्युक्तम्भाष्य इति । "कर्तुरीप्सिततमम्" इति सूत्रभाष्ये उक्तमित्यर्थः । तत्र हि "अथेह कथम्भवितव्यं तण्डुलानोदनम्पचतीति आहोस्वित्तण्डुलानामोदनम्पचतीति ? उभयथा भवितव्यम् । कथम् इह तण्डुलानोदनम्पचतीति? द्व्यर्थः पचिः तण्डुलान्पचन्नोदनन्निर्वर्तयतीति । इहेदानीन्तण्डुलानामोदनम्पचतीति ? द्व्यर्थश्चैव पचिः विकारयोगे षष्ठी तण्डुलविकारमोदनन्निर्वर्तयति" इत्युक्तम् । यद्यपि फलव्यापारावादाय सर्वेषामेव धातूनान्द्व्यर्थत्वमितीह द्व्यर्थत्वाभिधानमनुपयुक्तमिति शङ्का भवति तथापि विक्लेदनविशिष्टन्निर्वर्तनम्पचेरर्थ इत्यर्थाभिप्रायेण द्व्यर्थत्वाभिधानम् । विक्लेदनवैशिष्ट्यञ्च क्वचित्सामानाधिकरण्येन यथा आद्यं । तत्र वि।क्लित्तिरूपफलाश्रयत्वात्तण्डुलानान्निर्वृत्तिरूपफलाश्रयत्वात्तु ओदनस्य कर्मता । द्वितीयप्रयोगे तु करणत्वेन विक्लित्तिविशिष्टन्निर्वर्तनम्पचेरर्थः । तत्र तण्डुलानान्धात्वर्थप्रधानव्यापारविशेषणफलाश्रयत्वाभावान्न कर्मत्वङ्किन्तु विकारयोगविवक्षया शेषे षष्ठीति बोध्यम् । विक्लित्तेश्च सम्बन्ध्याकाङ्क्षायां सन्निधानात्तण्डुलसम्बन्धिनी सेति विज्ञायते । अत्र भाष्ये यथा मातुः स्मरतीत्यत्र कर्मणः शेषत्वविवक्षया षष्ठी भवति, तथैव तण्डुलपदादपि सा सिद्धैवेति विशिष्य विकारयोगे षष्ठीत्यभिधानेन षष्ठ्यन्तार्थस्य स्वान्वययोग्यार्थकनामसमभिव्याहारे तत्रैवान्वय इत्युत्सर्गतो व्युत्पत्तिः सूचिता ।

मूलन्नास्तीतीति । भाष्यानुक्तत्वादिति हेतुः पूरणीयः । अत एवाह—द्विकर्मकत्वमिति । ननूक्तरीत्या द्विकर्मकत्वं साधितमेवेति कथम्प्रक्रियाकृदुक्तोदाहरणस्यायुक्तत्वाभिधानमित्याका-

भावप्रकाशः ।

भिव्याहारे तादृशनियमादेवेत्यर्थः । आदिना तण्डुलानोदनं पचतीत्यादिसंग्रहः । तत्र हि निर्वर्तनं विक्लेदनं च पचेरर्थः, तण्डुलान् विक्लेदयन्नोदनं निर्वर्तयतीति वाक्यार्थः । षष्ठीति । निर्वर्तने च पाकस्य करणत्वमित्यपि बोध्यम् । तथा सति वाक्यार्थमाह—तण्डुलेति । भाष्ये इति । "कर्तुरीप्सित" इति सूत्रे इति भावः । न त्विति । तण्डुलानोदनं पचतीतिवत्कर्मत्वेनाविवक्षायां शेषत्वेन तदन्वये न त्वित्यर्थः । अतएव पचेर्द्विकर्मकत्वम् । वक्ष्यते चेदमनुपदमेव । तदाह—दिगिति । मूले प्राचा—प्रक्रियाकृता ।

यत्तु रत्नाकरदण्डयादि ग्रहेरित्यादि मूलं चिन्त्यं, तस्य पाठाभावेऽपि सञ्ज्ञाया अर्थनिबन्धनत्वाद् दण्डेर्ग्रहणार्थत्वात्तत्पर्यायस्य ग्रहेर्द्विकर्मकत्वानपायात् । न च निग्रहपूर्वकग्रहणं दण्डयर्थः, केवलं ग्रहार्थ इति न तयोः पर्यायतेति वाच्यम् ? दण्डिश्चेत्यादिस्वोक्तिविरोधापत्तेः, आग्रहपूर्वकप्रश्ने चुदेः केवलप्रश्ने पृच्छेश्च प्रयोगस्य सर्वानुभवसिद्धत्वेन तयोरपर्यायतया स्वोक्तार्थनिबन्धनज्ञापकस्यासम्बद्धत्वापत्तेश्च । अंशतोऽपि पर्यायत्वाङ्गीकारे तुल्यं प्रकृतेऽपीति; तन्न, 'अधिकं प्रविष्टम्' इति न्यायेन न्यूनार्थकेनाधिकार्थकग्रहणेऽपि वैपरीत्याभावेनादोषात् , सिद्धान्तरीत्या दोषलेशाभावाच्च, तदेतद् ध्वनयितुं यथाश्रुतमूलमयुक्तमपि सिद्धान्तरीत्या योजयति—अपादानेति । तत्सम्बन्धिन इति । वस्तुतस्तादृशस्येत्यर्थो न तु तत्त्वेन विवक्षितस्येत्यर्थः, उक्तयुक्तेः । मूलं नास्तीति । भाष्यानुक्तत्वादिति भावः । अत एवाह—द्विकर्मेति ।

प्ययुक्तम् । इतरेषां तु द्विकर्मकत्वं यद्यपि प्रामाणिकं तथाऽपि संदर्भाशुद्धिः । तथा हि—दुह्यादीन् न्यादींश्च द्वैराश्येनेह पठित्वा भावकर्मप्रक्रियाशेषे "लकृत्यक्तखलर्थाः किं द्विकर्मकेभ्यो मुख्ये कर्मणि स्युर्गौणे वा" इत्याकाङ्क्षायां स्वयमेव पठितम्—

न्यादयो ण्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि ।
प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथारुचि ॥ इति ।

एवं च दण्डिमन्थिभ्यामपि मुख्ये स्यात् । तथाच "गर्गाः शतं दण्डयन्ताम्" इति भाष्यं विरुद्ध्येत । शतं ह्यत्र प्रधानं, न गर्गाः "अर्थिनश्च राजानो हिरण्येन भवन्ति" इति वाक्यशेषात् । दण्डिश्चेह ग्रहणार्थो न तु निग्रहार्थः । अत एव ह्यत्र समुदाये वाक्यसमाप्तिः, गुणानुरोधेन प्रधानावृत्तेरसम्भवात् । तथा मन्थेरपि प्रधाने स्यात् । इष्यते तु गौणे । तथा च भारविः—

येनापविद्धसलिलस्फुटनागसद्मा
देवासुरैरमृतमम्बुनिधिर्ममन्थे ॥ इति ।

अत्रामृतं मुख्यम्, उद्देश्यत्वात्, अम्बुनिधिस्तु गौणः ।

---

शब्दरत्नम् ।

मिति । शक्रात् द्युतरुग्राहेत्येव प्रतीतेः पराक्रमातिशयद्योतनाय जहार द्युतरुमित्यस्यैवोचितत्वाच्चेति भावः । **द्विकर्मकत्वमिति** । अकथितसूत्रविषयतयेत्यर्थः, कैयटमाधवादिसंमतत्वादिति भावः ।

अतस्तद्रीत्यैव दूषणमाह—**एवं चेत्यादिना** । **प्रधानमिति** । उद्देश्यत्वादिति भावः । तस्योद्देश्यत्वे मानमाह—**अर्थिनश्चेति** । **न तु निग्रहार्थ इति** ।

भैरवी ।

च्छायामाह—शक्रादिति । एतेन तादृशप्रयोगाभाव एवेति ध्वनितम् । इतरेषान्द्विकर्मकत्वन्न व्यापारद्वयार्थत्वेनाभिहितमित्याशयेनाह—अकथितेति । ननु भाष्यानुक्तत्वेनेतरेषान्द्विकर्मकत्वस्य प्रामाणिकत्वाभिधानमयुक्तमत आह—कैयटेति ।

तद्रीत्यैवेति । कैयटाद्युक्तरीत्येत्यर्थः । ननु ग्रहणार्थत्वेऽपि निग्रहार्थत्वं सिद्धमेवेत्यत आह—

भावप्रकाशः ।

ननु द्विकर्मकत्वस्य तथा साधितत्वेन कथं प्रक्रियाकृदुक्तोदाहरणायुक्तत्वमत आह—**शक्रादिति** । अत एव यदीति प्रागुक्तम् । तेन च तथाप्रयोगाभाव एव सूचितः । एवं चापादानत्वविवक्षैव तत्रेति भावः । ननु तथाप्रतीतिसत्त्वे तदविवक्षायां तदपि सिद्धमेवातस्तदंशे आग्रहं विहाय मूले कुठारमाह—**पराक्रमेति** । अत एव द्युतरुमित्यन्तमेवोपात्तम् । एवं चानार्षतदीयप्रयोगे तथा पाठ एवाप्रयोजक इति मूलोच्छेद इति भावः । तथा द्विकर्मकत्वस्य तेषां सिद्धान्ते इष्टत्वेऽपि वक्ष्यमाणग्रन्थानुरोधेन मूलानभिमतत्वेन तथा दुर्योजनत्वादाह—**अकथितेति** । ननु भाष्यादिसम्मतत्वाभावेन कथं प्रामाणिकत्वमत आह—**कैयटेति** । आदिना हरदत्तपरिग्रहः ।

ननु प्रागुक्तमुख्यकर्मत्वस्य गर्गाणामेव सत्त्वेनादोषेण एवं चेत्याद्यसङ्गतमत आह—अत **इति** । तत्सम्मतत्वादित्यर्थः । **तद्रीत्यैव**—कैयटादिरीत्यैव । एवेन स्वरीतिव्यवच्छेदः । इदमेव ध्वनयितुं वक्ष्यति—लाद्युत्पत्तीति । **दूषणमिति** । सन्दर्भाशुद्धौ दूषणमाह इत्यर्थः । अग्रिममूलानुरोधेन तथैव तत्त्वमिष्टन्तस्येत्याह—**उद्देश्यत्वादिति** । **तस्य**—शतस्य । **अर्थिन** इत्यस्य हिरण्यकरणकप्रार्थनावन्त इत्यर्थः । एकदेशान्वयस्तदन्वये समासश्च भाष्यप्रामाण्यादिति भावः । ननु ग्रहणार्थत्वे नितरां ग्रहणा-

यदपि व्याख्यातार आहुः—द्विकर्मकेषु पचेरप्रामाणिकः पाठ इति, तद्भ्रमात् । तथा हि—"कर्मवत्कर्मणा" इति सूत्रे 'दुहिपच्योर्बहुलं सकर्मकयोः' इति वार्तिके तद्भाष्ये च पचेर्द्विकर्मकता लभ्यते । कैयटहरदत्ताभ्यां तत्रैव स्फुटीकृता ।

---

शब्दरत्नम् ।

।शारीरदण्डाद्यर्थं इत्यर्थः, तस्मादेव वाक्यशेषादिति भावः । एतत्सर्वं माधवादिरीत्या लाद्युत्पत्तिनियामकम् । यदि प्रागुक्तं प्रधानकर्मत्वं तदेदं सर्वमसंगतमित्युक्तदिशोह्यम् ।

**द्विकर्मकेष्विति** । अकथितसूत्रविषयेष्वित्यर्थः । पचेरप्रामाणिकत्वदूषणं कैयटाद्यनुरोधेनेति ध्वनयन्नाह-**कैयटेति** । अत्रारुचिबीजं तु पचेर्व्यापारद्वयार्थत्वे "कर्तुरीप्सिततमम्" इति कर्मणो वृक्षस्यैकव्यापारपरित्यागेन कर्तृत्वविवक्षयाऽपि भाष्यस्य सूपपादत्वेनैतत्सूत्रविषयत्वे न मानमिति ।

भैरवी ।

शारीरेति । तस्मादेवेति । अर्थिनश्चत्येतस्मादित्यर्थः । **एवञ्च मूले अर्थिनश्चेत्यादिवाक्यशेषादित्यन्तन्देहलादीपकन्यायेनोभयत्रान्वेति । मूलादि खण्डयितुमुपक्रमते**—एतत्सर्वमिति । **सर्वं**—**मूलम्परममूलं श्लोकस्य पठनम्प्राचीनखण्डनम्प्रागुक्तं वक्ष्यमाणञ्च सर्वम्** । प्रागुक्तमिति । **कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थव्यापारविशेषणेत्यादिना प्रागुक्तमित्यर्थः** ।

**ननु "कर्तुरीप्सिततमम्" इतिसूत्रस्थप्रागुक्तभाष्यसम्मतमेव पचेर्द्विकर्मकत्वमिति कथमप्रामाणिकत्वाभिधानमत आह**—अकथितसूत्रेति । अत्रेति । **कैयटेत्यादिकथने** । व्यापारद्वयार्थत्वे । **फलपाकानुकूलव्यापारानुकूलव्यापारार्थत्वे इत्यर्थः । तदा ह्युदुम्बरम्फलम्पचतीति प्रयोगः** । एकव्यापारेति । **फलपाकानुकूलव्यापार एव पचेरर्थः । तदा ह्युदुम्बरः फलम्पच्यत इति प्रयोगः । कालनिष्ठस्य द्वितीयस्य व्यापारस्याधुना परित्यागः** । भाष्यस्य—**"दुहिपच्योर्बहुलं सकर्मकयोः" इति भाष्यस्य । एतच्च भाष्यं "कर्मवत्" इति प्राप्तकर्मवद्भावस्य 'सकर्मकाणाम्प्रतिषेधः' इत्यनेन प्रतिषेधे प्राप्ते कर्मवद्भावविधायकम्** । एतत्सूत्रेति । "अकथितञ्च" **इति सूत्रेत्यर्थः** ।

भावप्रकाशः ।

र्थत्वं सुतरां सिद्धमत आह—**शारीरेति** । **तस्मादेवेति** । अर्थिनश्चेत्येतस्मादेवेत्यर्थः । एवं च मूले वाक्यशेषादिति हेतुर्मध्यमणिन्यायेनोभयत्रान्वेतीति भावः । मूलादि खण्डयति—**एतदिति** । **प्रागुक्तमिति** । कर्तृप्रत्ययसमभिव्याहार इत्यादिनोक्तमित्यर्थः । **इदं सर्वमिति** । मूलं परममूलं तथाश्लोकपठनं प्राचीनखण्डनमुक्तं वक्ष्यमाणं चेत्यर्थः । एवं प्रागपि । **उक्तदिशा**-उक्तरीत्या । एतेन तथा रत्नाकरदण्डयाद्युक्तं चिन्त्यमिति सूचितम् ।

मूले व्याख्यातारः—प्रकाशकृतः । ननु वक्ष्यमाणरीत्या पचेर्द्विकर्मकत्वस्येष्टत्वेन कथमप्रामाणिकत्वमत आह—**अकथितेति** । भाष्यानुक्तत्वादिति भावः । अत एव तैरत्रार्थे सम्मतित्वेन यदाह हरदत्तः-अकथितेत्यादि परिगणनादित्यन्तमूलोक्तग्रन्थो लिखितः । भाष्यासम्मतत्वादाह—**पचेरिति** । **दूषणमिति** । अप्रामाणिकत्वे "कर्मवत्कर्मणा" इत्याद्युक्तदूषणमित्यर्थः । **आदिना**—हरदत्तपरिग्रहः । तदेवाह—**अत्रेति** । **व्यापारेति** । फलपाकानुकूलव्यापारानुकूलव्यापारार्थत्वे इत्यर्थः । "कर्तुः" इत्युल्लेखेन "अकथितम्" इत्यस्याऽविषयता सूचिता । एतेनौदनं चैत्रं पचति मैत्र इति नव्यमते साधु, न भाष्यहरदत्तादिमते इति रत्नाकरोक्तमपास्तम् । **वृक्षस्यैकेति** । उदुम्बरः फलं पच्यते इति भाष्योदाहरणे इति भावः । **एकव्यापारेति** । कालनिष्ठप्रधानव्यापारे इत्यर्थः । **सूपपादत्वेनेति** । सूत्रप्राप्तकर्मवद्भावस्य 'सकर्मकाणाम्' इति निषेधे प्राप्ते तदुत्तरं 'दुहिपच्योः' इति वार्तिकपाठेन दुहिसाहचर्येण च सकर्मकत्वप्रयुक्ताप्राप्तावेवैतस्य विध्यर्थतोचितेति तथैव तद्भाष्यस्योपपत्तिः, अन्यथा निषेधात् प्रागेव पचेः पाठ उचित इति भावः । **एतदिति** । "अकथितम्" इत्येतत्सूत्रविषयकत्वे इत्यर्थः । दुहादिष्वस्य भाष्ये

माधवोऽप्याह—

जयतेः कर्षतेर्मन्थेर्मुषेर्दण्डयतेः पचेः । इत्यादि ।

उदाजहार च—तण्डुलानोदनं पचतीति ।

यत्तु—"अकथितं च" इति सूत्रे हरदत्तेनोक्तम्—अकथितशब्दो यद्यप्रधानार्थो गृह्येत तदा 'पाणिना कांस्यपात्र्यां दोग्धि पयः' इत्यत्र पाणिकांस्यपात्र्योरपि स्यात्, करणाधिकरणयोस्तु पचत्यादिरवकाशः, न हि तत्रास्य प्रसङ्गो दुहादिपरिगणनादिति; तन्मतान्तराभिप्रायेण । अन्यथा उदाहृतस्वपरग्रन्थविरोधादित्यास्तां तावत् । शतं जयतीति । जि अभिभवे । यत्तु जि जये इति व्याख्यातं, तन्न, तस्याकर्मकत्वात् । यद्यपि जयत्यादयो भाष्ये न पठितास्तथाऽपि चकारेण सङ्गृह्यन्त इति कैयटः ।

---

**शब्दरत्नम् ।**

**तन्मतान्तरेति** । पूर्वोपपादितभाष्यसंमतमतान्तरेत्यर्थः । भाष्यानुक्तानां ग्रहणमप्रमाणमित्यनेन सूचयति, उदाहृतस्वपरग्रन्थाश्च यथाश्रुतकैयटानुसारेणेति च ध्वनितमित्यन्यत्र विस्तरः । **कैयट इति** । अत्रारुचिबीजमुक्तम् ।

**भैरवी ।**

यदुक्तम्मूले मतान्तरेति तदयुक्तम्प्रागुक्तं यद्भाष्यसम्मतन्तद्रीत्या तस्य युक्तत्वमेवेत्याशयेनाह—पूर्वोपपादितेति । एवञ्च हरदत्तोक्तमसङ्गतमिति भावः । ध्वनितमिति । मतान्तरेत्यभिधानेन ध्वनितमित्यर्थः । उक्तमिति । "अकथितञ्च" इति सूत्रविषयत्वं यदि जयत्यादीनाम्भाष्यकाराभिमतन्तदा चकारेण तेषां सङ्ग्रह उचितस्तत्रैव तु न मानमित्युक्तप्रायमित्यर्थः ।

ननु यदि प्रकृतसूत्रस्यार्थनिबन्धनार्थत्वाभावेनाप्राप्तिस्तदा द्विकर्मकत्वङ्कथमनुक्तानामि-

**भावप्रकाशः ।**

अगणनात् । गौर्दुग्धे इत्यपि "कर्तुः" इति कर्मत्वे एवोदाहरणम् । विभागानुकूलव्यापारार्थकत्वे एव दुहेस्तदुदाहरणमिति तु न युक्तं, तत्रार्थे कर्मस्थक्रियया तुल्यक्रियत्वानुपपादनात् । एवं च प्रकाशोक्तिस्तथारत्नाकरदण्डथाद्युक्तिश्च युक्तैव । परन्तु तत्र अन्यदीयत्वं कैयटानुक्तत्वं मूलमतस्य सिद्धान्तत्वं च दण्डयुक्तं चिन्त्यम् । एवं च तण्डुलरूपे कर्मणि प्रत्यय इति मूलकृदाद्युक्तमयुक्तमिति बोध्यम् । एतेन माधवोऽपि निरस्तः ।

यत्तु मतान्तरेति, इदं च परसन्तोषमात्रं, वस्तुतस्तु मतान्तरे प्रमाणाभाव एवेति मान्यास्तत्प्राचामनुरोधेनेति ध्वनयति—पूर्वोपेति । पूर्वोपपादितं भाष्यसम्मतं यन्मतान्तरं मुख्यमतं तदित्यर्थः । एवं च हरदत्तो युक्त एवेति भावः । एतल्लेखेन मूलकृतोऽपीत्थमेवेष्टमित्याह—भाष्येति । अनेन । हरदत्तस्य मुख्यमताभिप्रायत्वप्रतिपादनपरोक्तग्रन्थेनेत्यर्थः । अन्यथा तदयुक्तमेवेत्येव सिद्धे एतदुक्तिरफलैवेति भावः । अस्य ध्वनितमित्यत्राप्यन्वयः । अत एव च प्रयुक्तः । मूले स्पष्टं तथोक्तत्वादत्र सूचयति ध्वनितमित्युक्तम् । **स्वपरेति** । स्वं—मूलकृत्, परो—माधवहरदत्तादिः । **यथाश्रुतेति** । अनेन मूलवदस्याप्यन्यथा योजने तु सोऽप्यदुष्ट एवेति सूचितम् । तथा हि तद्वार्तिके तदुदाहरणमादाय वृक्षस्य कर्तृत्वविवक्षायामत्यन्तमप्राप्ते वचनम् । यद्वा पचिरत्र द्विकर्मा वृक्षपाकं विना फलपाकासम्भवाद् वृक्षोऽकथितं कर्म, तस्यैव च यदा कर्तृत्वविवक्षा तदायं कर्मवद्भाव इति कैयटः । तत्राकथितपदमविवक्षितपरं, कर्मत्वेनाविवक्षितमित्यर्थः । किन्तेन तर्हि विवक्षेत्यत्राह—तस्यैव चेतीति । मूले—व्याख्यातमिति । प्रसादकृतेति भावः । **उक्तमिति** । व्यापारद्वयार्थत्वेनेत्यादिग्रन्थेनेति भावः ।

**अर्थनिबन्धनेति** । न तु स्वरूपाश्रया, "अहमपीदमचोद्यंचोद्ये" इति "तद्राज" सूत्रभाष्ये पृच्छिपर्यायस्य चुदेरपि द्विकर्मकत्वदर्शनादिति भावः । तथा च भट्टिः—

स्थास्नुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम् ।

कालिदासोऽपि—

शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ।

भारविश्च—

उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः ॥ इति ।

एवं च नाथत्यादयो बहवो द्विकर्मका बोद्धयाः ।

**देश इति** । कुरुपञ्चालादिरेव गृह्यते, तेन "अधिशीङ्स्थासाम्" इत्यादेर्न

---

शब्दरत्नम् ।

**इति भाव इति** । अर्थनिबन्धनेयं सञ्ज्ञेति वदतां कैयटादीनामित्यादिः । द्विकर्मकत्वं तु व्यापारद्वयार्थत्वेन सिद्धमिति तत्त्वम् ।

**कुरुपञ्चालादिरिति** । व्याख्यानात्तथैव भाष्योदाहरणाच्चेति भावः । **न वैयर्थ्यमिति** । शीङादेरपि शयनपूर्वके व्यापने वृत्त्या "कर्त्तुः"इत्येव कर्मत्वस्याऽऽस्यादियोग

भैरवी ।

त्याकाङ्क्षायामाह—द्विकर्मकत्वन्त्विति । यथाप्रयोगं व्यापारद्वयार्थकत्वं कल्पनीयमिति भावः ।

कुरुपञ्चालादेरेव देशपदेन ग्रहणे किम्मानमत आह—व्याख्यानादिति । "अधिशीङ्स्थासाम्" इत्यादिसूत्रारम्भमूलकाद्व्याख्यानादित्यर्थः । तथैव—कुरुपञ्चालादिशब्दानामेव । उदाहरणात्—देशवाचकत्वेनोदाहरणात् । मूले—इत्यादेरिति । अत्रादिपदेन "समानोदरे शयित ओ चोदात्तः" इति निर्देशस्य संग्रहः । "अकर्मकधातुभिर्योगे" इति वार्तिकमेव स्वातन्त्र्येण न कर्मसञ्ज्ञाविधायकङ्किन्तु स्वार्थकरणकव्यापने धातूनां वृत्तिकल्पनेन सिद्धकर्मत्वानुवादकमित्यस्य वक्ष्यमाणत्वात्तदभिप्रायेणाह—शीङादेरपीति । शयनपूर्वके—शयनादिकरणके । नन्वेवं तादृशदेशग्रहणेऽपि तस्य सूत्रस्य वैयर्थ्यमेवातस्तत्फलितमेवैतदित्याह—

भावप्रकाशः ।

मूलकृतस्तदर्थानिष्टत्वप्रतिपादनादाह—**अर्थेति** । आदिना माधवहरदत्तप्रकाशकृद्रत्नाकरदण्ड्यन्तानां ग्रहणम् । उपसंहरति—**द्विकर्मेति** । यथाप्रयोगं सर्वेषामिति भावः ।

ननु कुरुपञ्चालादेरेव ग्रहणे किं मानमत आह—**व्याख्यानादिति** । "अधिशीङ्" इत्यादिवैयर्थ्यंमूलकाद्विनिगमनाविरहादधिकरणविवक्षायां कुरुपञ्चालादिभिन्ने चेदं न प्रवर्तत इत्युभयार्थज्ञापनरूपादित्यर्थः । नन्वयुक्तमेतत् , आद्यार्थज्ञापनेन चारितार्थ्ये द्वितीयार्थज्ञापने मानाभावात् , यावता विनाऽनुपपत्तिस्तत्सव ज्ञाप्यमिति सिद्धान्तात् । नच विनिगमनाविरहः, तदुपस्थितेरेव विनिगमकत्वात् । किञ्चाधिपूर्वाणामेवैषामाधारः कर्मेति नियामकत्वेन तत्त्वसम्भवात् , तथाच 'वैकुण्ठे वर्तते' इत्यादावतिप्रसङ्ग एवात आह—**तथैवेति** । मूले—इत्यादेरिति । आदिना "समानोदरे शयित ओ चोदात्तः" इति बोध्यम् । यद्यपि मूलकृतो वार्तिकेनैव सिद्धत्वमिष्टं, तथापि तस्याविधायकत्वस्य वक्ष्यमाणत्वात् अन्यथा तत्त्वमुपपादयति—**शीङादेरपीति** । **शयनपूर्वके इति** । शयनादिकरणके इत्यर्थः । शयनादिना वैकुण्ठं व्याप्नोतीत्यर्थाद् व्याप्तिरूपफलाश्रयत्वात्कर्मत्वमिति भावः । **आस्यादीति** । तेषामप्यासनादिकरणके व्यापने वृत्त्या मासादिनिष्ठव्याप्तेः फलत्वेन तदाश्रयत्वात्तेन कर्मत्वं, मासमासनेन व्याप्नोतीत्यादिक्रमेणार्थ इति भावः । एतेन तथोपपादकरत्नाकरदण्ड्यादयः परा-

वैयर्थ्यम् । गोदोह इति । न चेह कालत्वात्सिद्धिः, लोके कालत्वेन प्रसिद्धस्य मासादेरेव ग्रहणात् । तेन 'घटमास्ते' इत्यादि न भवति । यत्तु प्राचोक्तम्—'अकर्मकधातुभिर्योगे देशकालाध्वभावेभ्यो द्वितीया' इति केचित्, नदीमास्ते, इत्यादि । अत्रेदं वक्तव्यम् । कर्मसञ्ज्ञाया अनुक्तत्वात्कर्मणि लादयो न स्युः । आस्यते मास इति यथा । केचिदित्यप्यसङ्गतम्, द्वितीयाया भाष्यसम्मतत्वात् । नदीमित्युदाहरणमप्यसङ्गतम्, "ग्रामसमूहकुर्वादिरेव देशो न तु प्रदे-

शब्दरत्नम् ।

इव सिद्धत्वादिति भावः । एवं चैवंकल्पनयोक्तदेशादीनामेव कर्मत्वं नान्येषामनभिधानादिति सूचयति । प्रसिद्धस्येति । क्रियायाः कालोपाधित्वमेव प्रसिद्धमिति भावः । तेनेति । देशादीनां ग्रहणेनेत्यर्थः । यत्तु मासादेरेव ग्रहणेनेत्यर्थ इति; तन्न, जन्यमात्रस्य कालोपाधित्वेऽपि कालत्वाभावात् । यदि तु जन्यमात्रस्य कालत्वमिति मतमस्ति, तदा घटत्वादिना न तस्य कालत्वं, किं तु मासत्वादिनैवेति भावः ।

भैरवी ।

एवञ्चेति । तादृशदेशग्रहणे चेत्यर्थः । एवं कल्पनया—स्वकरणकव्यापने वृत्तिकल्पनया । उक्तदेशादीनाम्—कुरुपञ्चालादीनाम् । एवकारेण वैकुण्ठादीनां व्यवच्छेदः । मूलादुक्तार्थस्य न झटिति प्रतीतिरत आह—सूचयतीति । ननु क्रियाऽपि काल एव, प्रसिद्धपरिमाणा सूर्यक्रिया क्रियान्तरपरिच्छेदहेतुत्वात्काल एवेत्युक्तेरत आह—क्रियाया इति । जन्यमात्रङ्कालोपाधिरित्यस्य जन्यमात्रन्तत्तत्पदार्थनिष्ठाधेयतानिरूपिता या कालनिष्ठा कालिकसम्बन्धावच्छिन्नाधिकरणता तदवच्छेदकमित्यर्थः । क्रियाया इव जन्यघटादेरपि मासादिपदव्यवहार्यत्वम् "कालाध्वनोरत्यन्तसंयोगे" इति सूत्रोदाहरणसिद्धये स्वीकार्यमेवेत्याशयेनाह—यदि त्विति । न तस्य कालत्वम्—न जन्यमात्रस्य कालपदव्यवहार्यत्वम् । ननु स्वप्धातोर्यदा स्वापकरणक-

भावप्रकाशः ।

स्ताः । नन्वेवं तादृशदेशग्रहणेऽपि तत्सूत्रवैयर्थ्यमुक्तरीत्या तदवस्थमेवातस्तत्फलितमाह—एवं चेति । तादृशदेशग्रहणे चेत्यर्थः । एतद्वचनाभावादाह—एवं कल्पनयेति । स्वकरणकव्यापनवृत्तिकल्पनयेत्यर्थः । उक्तदेशेति । कुरुपञ्चालाद्यादीनामेवेत्यर्थः । अन्येषाम्—वैकुण्ठादीनाम् । अन्यथा तत्सूत्रानर्थक्यं स्पष्टमेवेति भावः । मूलात्तथा स्पष्टमप्रतीतेराह—सूचयतीति । ननु क्रियाया अपि कालत्वेन प्रसिद्धिरस्ति, प्रसिद्धपरिमाणा सूर्यक्रियैव क्रियान्तरपरिच्छेदहेतुत्वात् काल इत्युक्तेरत आह—क्रियाया इति । एवेन कालत्वव्यवच्छेदः । साक्षात्काल एव क्रियाविशेषणत्वेन प्रसिद्धः । जन्यमात्रं कालोपाधिरित्यस्य जन्यपदार्थं प्रति कालस्य क्रियाद्वारा विशेषणत्वं न तु तस्य कालत्वमित्यर्थः । क्रिया न कालः किन्त्वतिरिक्त इति सर्वं मञ्जूषायां स्पष्टम् । अर्थान्तरनिराकरणायाह—देशेति । उक्तेत्यादिः । तदेवाह—यत्त्विति । सन्निहितत्वं तत्परामर्शे बीजम् । जन्यमात्रस्य कालत्वमिति तत्प्राप्तिः कालपरिमाणविशेषत्वात्काल उपाधिः—प्रवृत्तिनिमित्तं यस्य जन्यस्येति । कालत्वप्रवृत्तिनिमित्तकत्वं कालोपाधीत्यस्यार्थ इति तद्भावः । उक्ताशयेन समाधत्ते—जन्यमात्रस्येति । तुष्यतु दुर्जनन्यायेनाह—यदि त्विति । अनेन नैयायिकादीनां तथा सत्त्वेऽपि स्वीयं न तथा मतमिति सूचितम् । तदाशयस्तूक्तः । तदा—तदापीत्यर्थः । तस्य—जन्यमात्रस्य । एतेन तथा प्रकाशरत्नाकरदण्ड्याद्युक्तमपास्तम् । यत्त्विदमेव कर्मसंज्ञाविधायकमिति यथाश्रुतमूलसामञ्जस्ये तथा व्याख्यानमसङ्गतमिति; तन्न, भाष्ये तादृशवचनानुपलम्भात् "अकथितञ्च" इत्यत्राकर्मकप्रकृतिकण्यन्तानां कथं हि कर्मकत्वमित्याशङ्कायां "कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणां देशश्च" इति भाष्योक्तं तु न विधायकं, हिशब्दघटितत्वात् । किञ्च "कालाध्वनोः" इत्यत्र 'कालाध्वानौ कर्मवत्' इति वार्तिकप्रत्याख्यानाय "प्राकृतमेवैतत्कर्म यथा कटं करोति"

शमात्रम्। तेन ग्रामं स्वपितीत्यत्र न भवति" इत्याकरात्। अध्वेति च न्यूनम्, अध्वानं स्वपितीति प्रसङ्गात्। अत एवाऽऽकरे अध्वा गन्तव्यत्वेन विशेषितः। गन्तव्यत्वेन प्रसिद्धो नियतपरिमाणः क्रोशादिरिति व्याख्यातम्।

"गति बुद्धि" ॥ प्रत्यवसानं भक्षणम्। शब्दकर्मकाणामिति। शब्दः कर्म कारकं येषां, तेषामित्यर्थः। न त्विह "कर्तरि कर्मव्यतिहारे" इतिवत् कर्मशब्दः क्रियापरः, कृत्रिमे कार्यसम्प्रत्ययात् कर्मग्रहणसामर्थ्याच्च। अन्यथा "ग-

---

शब्दरत्नम्।

एतच्च नापूर्वं वचनमित्याकरे स्पष्टम्। अध्वानं स्वपितीति। स्वापमात्रार्थकोऽत्र स्वपितिः।

कार्यसंप्रत्ययादिति। कार्यसंप्रत्ययस्यौचित्यादित्यर्थः। ननु "कर्त्तरि कर्म" इति सूत्रे क्रियाया अपि कृत्रिमकर्मत्वोक्तेरिदमसङ्गतमत आह—कर्मेति।

भैरवी।

व्यापने वृत्तिस्तदाऽध्वानं स्वपितीतीष्टमेवेत्यत आह—स्वापमात्रेति। एतेन "अकर्मकधातुभियोंग" इति मौलवचनस्यापूर्वत्वशङ्कां वारयति, "अकथितञ्च" इति सूत्रे अकर्मकप्रकृतिकण्यन्तानां कथञ्चिद्कर्मकत्वमिति प्रश्ने ? 'कालभावाध्वगन्तव्याः कर्मसञ्ज्ञा ह्यकर्मणाम्' इत्यत्र प्रसिद्धत्वसूचकहिशब्दोपादानेन सर्वत्र स्वार्थकरणकव्यापने वृत्त्या कालादिकर्मकत्वसम्भवस्य सूचनात्। अकर्मणामित्युपलक्षणम्, सकर्मकाणामप्येवङ्कल्पनया कालादिकर्मकत्वस्य सम्भवात्।

'कृत्रिमाऽकृत्रिमयोः' इति परिभाषया कृत्रिमाधिकरणकं कार्यजातमुक्तन्नतु तत्र हेतुरुक्त इत्यत्रत्यग्रन्थस्य हेतुपरत्वमेवेत्याशयेनाह—कार्यसम्प्रत्ययस्येति। एवञ्चौचित्येन हेतुनोक्तार्थः साधनीय इति भावः। कृत्रिमकर्मत्वोक्तेरिति। तच्च गन्तुमिच्छतीत्यत्र प्राप्तैव। एवं सर्वत्र सन्दर्शनप्रार्थनाध्यवसायारम्भनिर्वृत्तेः सत्त्वेन तत्तन्निरूपितकर्मत्वमस्त्येवेति कृत्रिमकर्मत्वोक्तेरित्यर्थः। एवञ्च कृत्रिमाकृत्रिमन्यायेन कर्मकारकस्यैव ग्रहणमिति नियमासिद्धिरित्याह—इदमसङ्गतमिति। प्राञ्च इत्यभिधानं मूलकारस्य यद्यरुचिबोधनाय, तदा तस्यार्थस्य भाष्यका-

भावप्रकाशः।

इत्युक्तम्। प्रश्नादौ कृतं प्राकृतमुत्सर्गसूत्रं तेन बोधितमिति तदर्थः। तस्मादुक्तरीत्यैव कर्मत्वम्। अत एव 'समायां समायां विजायते' इति विग्रहकथनपरं भाष्यं सङ्गच्छते। सकर्मकविषयेऽप्यनेन प्रकारेण कालादिकर्मणां सकर्मकत्वं, तुल्यन्यायात्। तेन 'मासमोदनं पचति' इत्यादि भवत्येव। तत्र कालादिकर्माप्रधानं, द्रव्यकर्म तु प्रधानं, कालस्याधारत्वेन द्रव्यद्वारैव क्रियासम्बन्धात्। एवमकर्मकशब्देनात्यन्ताविद्यमानकर्मकस्येवाविवक्षितकर्मकस्यापि ग्रहणम्। तेन मासं पचतीति भवत्येवेति दिक्। तदेतद् हृदि निधायाह—एवञ्चेति। मूले प्राचा—प्रक्रियाकृता। ननूक्तरीत्या तत्प्रयोगो दुर्वार एवात आह—स्वापमात्रेति। उक्तभाष्यादिप्रामाण्यात्तत्रैव तत्कल्पनेति भाव; तदाह—अत्रेति। यद्यपि केचिदिति तन्मतारुचिसूचनायेति दोषत्रयं सुपरिहरं, तथापि 'नदीमास्ते' इत्युदाहरणासङ्गतिदोषस्तदवस्थ एवेति बोध्यम्।

ननूभयगतिरिहेत्युक्तेर्हेतोर्व्यभिचरितत्वं सामान्यापेक्षनियामकमत आह—कार्येति। कृत्रिमे एव कार्यसम्प्रत्ययादिति हि तदर्थोऽतत्संज्ञाकरणादिति भावः। यदि तु संज्ञानां सजातीयापेक्षनियमत्वं, तदोभयगतिरिति तात्पर्यम्। अपिना द्रव्यादिसमुच्चयः। कृतिकर्मेति। भोक्तुमिच्छतीत्यादौ। किञ्च सर्वत्र बुद्धिसन्दर्शनप्रार्थनाध्यवसायारम्भनिर्वृत्तिफलावाप्तेः सत्त्वेन सन्दर्शनादिक्रियातत्त्वमिति भावः। एवञ्चोभयोः कृत्रिमत्वेन ग्रहणापत्तिरिति हेतुरयुक्त इत्याह—इदमिति। एतेन विपरीतरत्नाकराद्युक्तिः

तिबुद्धिप्रत्यवसानशब्दार्थाकर्मकाणाम्" इत्येवावक्ष्यत् । नियमार्थं चैतत्सूत्रमिति प्राञ्चः । णिजर्थेनाप्यमानस्य यदि भवति तर्हि गत्याद्यर्थानामेव कर्तुरिति । तेन पाचयति देवदत्तो यज्ञदत्तेनेत्यत्र प्रयोज्ये प्रकृत्यर्थं प्रति कर्तृत्वस्यैव निरपवादत्वेनावस्थानात् तृतीया सिद्ध्यति । उक्तं च—

गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः ।
नियमात्कर्मसञ्ज्ञायाः स्वधर्मेणाभिधीयते ॥ इति ।

कर्तुः स्वधर्मेण तृतीययेत्यर्थः । ननु णिजर्थं प्रति कर्मत्वं बाधित्वा प्रकृत्यर्थं प्रति कर्तृत्वं परत्वादेव सिद्धम्, अन्तरङ्गत्वाच्च । स्वकारकविशिष्टा हि क्रिया णिजर्थेन सम्बद्ध्यते हेतुमति णिज्विधानात्, कर्तृप्रयोजकस्य हेतुत्वात् । अत एवोपजीव्याऽपि कर्तृसञ्ज्ञा । एवं च—

परत्वादन्तरङ्गत्वादुपजीव्यतयाऽपि च ।
प्रयोज्यस्यास्तु कर्तृत्वं ; गत्यादेर्विधितोचिता ॥ इति चेत् ?

अस्त्वेवं, लक्ष्यस्य निर्बाधत्वात् । नियमसूत्रमिदमिति ग्रन्थानां का गति-

शब्दरत्नम् ।

प्राञ्च इति । "हेतुमति च" इत्यत्र भाष्यकृत इत्यर्थः । **गुणक्रियायाम्**—णिच्प्रकृत्यर्थक्रियायाम् । **स्वातन्त्र्यादिति** । अस्य स्वधर्मेणाभिधाने हेतुत्वं, कर्मसञ्ज्ञानियमस्य च । प्रेषणे—ण्यर्थे । **तृतीययेति** । स्वधर्मेणेत्यस्य स्वकार्येणेत्यर्थः । विशिष्टक्रियायाः संबन्धे हेतुमाह—**हेतुमतीति** । **अन्तरङ्गत्वादिति** । एवं च परत्वादित्यभ्युच्चयः । लक्ष्यस्य

भैरवी ।

स्वसम्मतत्वादेवत्कथनमसङ्गतमेवेत्यत आह—हेतुमतीति । हरिकारिकायां स्वातन्त्र्यादित्यनेन कर्मत्वप्राप्तिहेत्वभिधानङ्कृतमिति भ्रमनिवारणायाह—स्वातन्त्र्यादित्यस्येति । स्वधर्मेणेत्यस्य कर्तृवृत्तिधर्मेण कर्तृत्वेनेत्यर्थे तृतीयया इत्यस्य न लाभ इत्यत आह—स्वकार्येणेत्यर्थ इति । एवञ्च तृतीययेति फलितार्थकथनमिति भावः । मूलेऽन्तरङ्गत्वमुपपादयति—स्वकारकेति । हेतुमति णिज्विधानादित्यनेन यद्युपजीव्यत्वमेवोपपादितमिति ज्ञायते तदाऽत एवेत्यनेन पुनरुपजीव्येत्यभिधाने पौनरुक्त्यमत आह—विशिष्टक्रियाया इति । स्वकारकविशिष्टायाः क्रियाया णिजर्थेन सम्बन्ध इत्यर्थः । मूले—अत एवेत्यस्योक्तहेतोरेवेत्यर्थः । एवञ्च—अन्तरङ्गत्वसत्त्वे च । "गतिबुद्धि" इति सूत्रस्य नियमार्थत्वम्भाष्यकाराभिमतमिति विधित्वपक्षस्य

भावप्रकाशः ।

परास्ता । मूलाद्युक्तत्वप्रतिपादनायाह—हेतुमतीति । हरिपद्यस्य "गतिबुद्धि" इति सूत्रविषयकत्वात्सामान्यपदानि विशिष्य योजयति—**णिजित्यादिना** । णिचो या प्रकृतिर्धातुस्तदर्थक्रियायामित्यर्थः । स्वातन्त्र्यादित्यस्य कर्मत्वप्राप्तौ हेतुत्वप्रतीतेराह—**स्वातन्त्र्येति** । ननु तर्हि नियमस्य तत्र हेतुत्वं स्यादत आह—**कर्मसंज्ञेति** । उभयोरप्यसम्भवात्तत्र न हेतुत्वं, किन्तु तत्रैव । तथाच तत्र कर्मत्वं प्राप्तोऽपि उभयहेतोस्तेनाभिधीयत इत्यर्थः । तथाच चशेषस्तत्र बोध्यः । ननु स्वधर्मेणेत्यस्य कर्तृधर्मेण कर्तृत्वादिनेत्यर्थेन तृतीययेति कथं लब्धमत आह—**स्वधर्मेणेति** । तथाच सा फलितोक्तिरिति भावः । मूले अन्तरङ्गत्वमुपपादयति—स्वकारकेति । ननु चं विना हेतुमतीत्यादिहेतोस्तत्त्वस्य कर्तृत्वसिद्धौ बाधितत्वं, यदि तूपजीव्यत्वसाधकोऽयं ग्रन्थस्तर्ह्यत एवेति पुनरुक्तम्, एवं चाधिकोऽयं ग्रन्थोऽत आह—**विशिष्टक्रियाया इति** । स्वकारकविशिष्टायाः क्रियाया णिजर्थेन सम्बन्धे इत्यर्थः । मूले—अत एवेति । उक्तहेतोरेवेत्यर्थः । कर्तुरीप्सिततमस्य कर्मत्वेन चेत्यपि बोध्यम् । **एवं चेति**—अन्तरङ्गत्वसत्त्वे चेत्यर्थः ।

रिति चेत् ? शृणु, णिजर्थस्य शाब्दं प्राधान्यं पुरस्कृत्य प्रधानानुरोधिन्याः कर्मसञ्ज्ञायाः प्राबल्याद् विप्रतिषेध एव नास्ति, अन्तरङ्गोपजीव्यत्वे अपि प्रधानं प्रति न प्राबल्यं प्रयोजयत इत्याशयेन ग्रन्थानामुक्तिसम्भवः। अर्थप्राधान्यपुरस्कारे तु विधायकत्वमेवोचितमिति ध्येयम्।

शब्दरत्नम्।

**निर्बाधत्वादिति**। अनेन 'अर्थनिबन्धनेयं संज्ञा'इत्यस्य अनभिमतत्वं सूचयति। एतच्चाऽनुपदमेव स्फुटीभविष्यति। अस्य विधित्वमित्ययं पक्ष आकडारसूत्रे भाष्ये ध्वनित इत्यभिमानः। तत्र हि परं कार्यमिति पाठे "गत्यादीनां ण्यन्तानां कर्म कर्तृसञ्ज्ञमपि प्राप्नोति, आरम्भसामर्थ्यात्कर्मसञ्ज्ञा परकार्यत्वाच्च कर्तृसंञ्ज्ञा प्राप्नोति"इत्युक्तम्। तत्रारम्भसामर्थ्यादित्यस्य गत्यादिसूत्रारम्भसामर्थ्यादित्यर्थं मन्यते। **पुरस्कारेत्विति**।

भैरवी।

निर्मूलस्य कथनमसङ्गतमत आह—अस्येति। अस्य—"गतिबुद्धि" इति सूत्रस्य। तदेवाह—तत्र हीति। "आकडारात्" इति सूत्र इत्यर्थः। कर्मेति प्रथमान्तम्। मन्यत इति। मूलकृदिति शेषः। अरुचिरभिमान इति मन्यत इत्याभ्यां सूचिता, सा अनुपदमेव व्यक्तीभविष्यति। मूले—शाब्दम्प्राधान्यम्पुरस्कृत्येति। प्राप्तायाः इति शेषः। न प्राबल्यम्प्रयोजयत इति। लौकि-

भावप्रकाशः।

उपपादितमिदं प्राक्। ननु नियमपरभाष्यस्य स्पष्टत्वेन कथं निर्मूलविधिपक्षोक्तिरत आह—अस्येति। "गतिबुद्धि" इति सूत्रस्येत्यर्थः। तदेवाह—तत्र हीति। आकडारसूत्रभाष्ये हीत्यर्थः। उक्तमित्यत्रान्वयः। कर्मेति। प्रथमान्तम्। अपिः कर्मसंज्ञासमुच्चायकः। तदेव विशदयति-आरम्भेति। कर्तृसंज्ञेति। प्राक्कडारात्परं कार्यमिति विधिनेति भावः। तावताऽपि कथं तल्लाभोऽत आह-तत्रेति। उक्तभाष्ये इत्यर्थः। इत्यर्थमिति। अयं च विधिपक्षे एव संभवति, नान्यथेति भावः। 'अभिमानः' 'मन्यते' इत्याभ्यां सूचिताऽरुचिस्त्वनुपदमेव स्फुटीभविष्यती। मन्यते इति। मूलकृत्। अयं भावः—यद्यपि शब्दशास्त्रे शाब्दप्राधान्यस्यैव मुख्यतयाऽन्तरङ्गोपजीव्यकर्तृसंज्ञापेक्षया प्रधानानुरोधित्वेन कर्मसं-

सरला।

**मन्यत इति**। इदं गत्यादिसूत्रस्य विधायकत्वे एवोपपद्यते। नियामकत्वे तु 'पाचयत्योदनं देवदत्तेन' इत्यादौ देवदत्तादेः "कर्तुरीप्सित" इत्यनेन प्राप्तकर्मसंज्ञाव्यावृत्त्यर्थं गत्यादिसूत्रस्यावश्यकतया "कर्तुरीप्सित" इत्यस्य च 'हरिं भजति' इत्यादौ कर्मत्वार्थं चारितार्थ्येनैकस्यापि वैयर्थ्याभावादारम्भासामर्थ्यादित्युक्तिरसङ्गता स्यात्, तस्मात् कर्मसंज्ञासूत्रस्थकर्तृपदस्य स्वतन्त्रोपलक्षकत्वेन कर्तृसंज्ञायाः कर्मसंज्ञोपजीव्यत्वाभावेऽपि परत्वान्तरङ्गत्वयोः सुवचत्वेन प्रयोज्यस्य परत्वादन्तरङ्गत्वाच्च प्राप्तकर्तृसञ्ज्ञाबाधनार्थं गत्यादिसूत्रमिति।

नवीनास्तु एवं सति "हेतुमति च" इति सूत्रभाष्ये प्रयोजकव्यापारस्य णिज्वाच्यत्वे 'प्रयोजकव्यापारेण प्रयोज्यस्येप्सिततत्वेन कर्मसञ्ज्ञा प्राप्नोति पाचयत्योदनं देवदत्तेनेति' इत्याशङ्क्य 'गतिबुद्धीति सूत्रं नियमार्थं भविष्यति एतेषामेव ण्यन्तानां यः कर्ता स णौ कर्मसञ्ज्ञो भवति नान्येषामिति' इत्युक्तं नियामकं न सङ्गच्छेत। अतः कर्तृसञ्ज्ञायाः परत्वान्तरङ्गत्वयोरपि कर्मसञ्ज्ञायाः प्रधानव्यापाराश्रितत्वात् प्रधानाश्रितायाश्च 'मूलकेनोपदंशं भुङ्क्ते' इत्यादौ तृतीयादीनामिव सर्वतो बलवत्त्वात् प्रयोज्ये सर्वत्र कर्मसंज्ञायां प्राप्तायां गतिबुद्धीतिसूत्रं नियामकं 'णिजर्थव्यापारप्रयोज्यफलाश्रयस्य कर्मसंज्ञा भवति चेद् गत्यादीनामेव' इति। तेन पाचयत्यादियोगे न। आकडारसूत्रभाष्योक्तस्य आरम्भसामर्थ्यादित्यस्य तु ण्यन्तधातुविषयस्य कर्तुरीप्सितसूत्रस्यारम्भसामर्थ्यादिति, अविरोधात् सर्वत्र संज्ञाद्वयप्रसङ्गे 'कर्तृसंज्ञाविशिष्टा कर्मसंज्ञा भवति चेद् गत्यर्थादीनामेव' इत्येतन्नियमारम्भसामर्थ्यादिति वाऽर्थः। परङ्कार्यमिति पाठे अविरोधात् संज्ञाद्वयप्रसङ्गे विधायकत्वस्य सर्वथा दुरुपपादत्वादित्याहुः। तदुपपाद-

शत्रूनिति । स्वर्गकर्मकं शत्रुनिष्ठं यद् गमनं तदनुकूलो यन्निष्ठो व्यापारः,

शब्दरत्नम् ।

तुनाऽरुचिः सूचिता । प्रयोजकव्यापारे अन्यानधीनत्वलक्षणार्थप्राधान्यस्य शाब्दप्राधान्यस्य च सत्त्वेनोद्देश्यत्वलक्षणार्थप्राधान्यस्य प्रयोज्यव्यापारनिष्ठस्य पुरस्कारो न युक्त इति । किं च कर्तृग्रहणं धात्वर्थप्रधानीभूतव्यापाराश्रयरूपस्वतन्त्रोपलक्षणं, न तु तत्सञ्ज्ञकपरम् । अत उपजीव्यत्वं दुरुपपादम् । आकडारसूत्रस्थस्यारम्भसामर्थ्यादित्यस्यैतन्नियमारम्भसामर्थ्यादित्यर्थः । किं च परं कार्यमिति पाठे विरोधाभावात्सर्वत्र सञ्ज्ञाद्वयप्राप्तावस्य नियमार्थतैवोचिता । एषां कर्मसञ्ज्ञैवेति नियमस्तु न, 'प्राक्कडारात्' इति

भैरवी ।

को दृष्टान्तोऽत्र साधकः यथा—अन्तरङ्गामात्यादिकार्यम्प्रधानराजाज्ञया बाध्यत इति, इह शास्त्रे शब्दस्य प्राधान्यात्तदनुरोधिकर्मत्वस्य राजवत्प्राबल्यमिति । ननु यथा शाब्दम्प्राधान्यम्प्रयोजकव्यापारे, तथोद्देश्यत्वलक्षणमार्थप्राधान्यम्प्रयोज्यव्यापारे, इति द्वयोः समत्वमेवेति ब्रूयादित्याशयेनाह—अन्यानधीनत्वेति । एवञ्च द्विविधम्प्राधान्यन्तत्रास्तीति प्रयोजकव्यापार एव प्रबल इति भावः । परोक्तमुपजीव्यत्वमपि खण्डयति—किञ्चेत्यादिना । भाष्यस्य परोक्तस्य तर्हि का गतिरत आह—आकडारेति । तस्य सूत्रस्य पाठभेदेप्यस्य नियमार्थत्वमेवेत्याह—किञ्चेति । विपरीतनियमशङ्कां वारयति—एषामिति । योगे कर्तुरिति शेषः ।

भावप्रकाशः ।

तैवोचिता, तथाप्युद्देश्यत्वलक्षणाऽऽर्थप्राधान्यस्य प्रयोज्यव्यापारे सत्त्वेनान्तरङ्गत्वोपजीव्यत्वयोश्चाधिक्येन विध्यर्थत्वस्यैवोचितत्वमिति "हेतुमति च" इति सूत्रभाष्यविरोधात् । यथाश्रुतमूलमयुक्तमपि सिद्धान्तरीत्या योजयति—तुनेति । एतेन पूर्वग्रन्थोऽप्येतज्जातीयस्तथेति सूचितम् । अत एव तत्राभिमानः, मन्यते इत्युक्तम् । एतेन तथा दण्ड्याद्युक्तमपास्तम् । शाब्दप्राधान्यस्येति । शब्दशास्त्रत्वात्तत्प्राधान्यस्यैव सर्वतो बलवत्त्वादिति भावः । ननु यथा प्राधान्यद्वयं तत्रास्ति तथोपजीव्यत्वसहितं तदत्रास्तीति तुल्यमत आह—किञ्च कर्तृग्रहणमिति । "तत्प्रयोजक" इत्यत्र तत्पदेन परामृष्टमित्यर्थः । स्विरविवक्षितः । इदं च "कर्तुः" इति सूत्रे इव तत्राप्यावश्यकमित्यनुपदमेव स्फुटीभविष्यति । युक्तं चैतत्, प्रधानशास्त्रबाधापेक्षया लक्षणायाः पदनिष्ठत्वेन लघुत्वात् । तदाह—अत इति । तस्यावश्यकत्वादित्यर्थः । नचैवमप्यन्तरङ्गत्वस्य तत्र सत्त्वेन तुल्यत्वमेवेति वाच्यम् ? लोके प्रधानराजकार्यापेक्षया मन्त्र्यादीनामन्तरङ्गस्याप्यात्मकार्यस्याकरणदर्शनादन्तरङ्गादपि प्रधानकार्यस्य बलवत्त्वात, 'प्रधानकार्यं सर्वतो बलवत्' इत्याकडारसूत्रे कैयटे स्पष्टत्वाच्च । किञ्चार्थप्राधान्यनिबन्धनकार्यस्य प्राबल्ये ओदनादेरपि कर्मत्वानापत्तेः, विक्लित्यादेरार्थं प्राधान्यमादाय कर्तृत्वस्य दुर्वारत्वात् । किञ्चैवं 'राज्ञः पुरुषः' इत्यादावप्रधानादेव षष्ठी न प्रधानादिति भवत्सिद्धान्तासङ्गतेरिति रत्नाकरकृत् । अत एव प्रकाशे नियमपक्ष एवोक्तो न तु स इति दिक् । नन्वेवमुक्तभाष्यासङ्गतिरत आह—आकडारेति । एतन्नियमेति । नियमशास्त्राणां विधिरूपेण प्रवृत्तिरिति सिद्धान्तादिति भावः । प्रत्युत तत्पाठे विधित्वसम्भावनैव नेत्याह—किञ्च परमिति । विरोधाभावादिति । पूर्वेणापवादेन निवर्तितस्य परकार्यस्य प्रवर्तकेन "प्राक्कडारात्" इत्यनेन निरवकाशपूर्वकार्यस्य निवर्तयितुमशक्यतया एकसंज्ञानियमराहित्येन च विरोधाभावादित्यर्थः । सर्वत्र—णिजन्तमात्रे । अस्य—"गतिबुद्धि" इत्यस्य । उचितेति । अत्र नियमे ण्यन्तधात्वन्तरपाचयत्यादिप्रयोज्यात्कर्मसंज्ञाव्यावृत्तावपि गत्यर्थादिप्रयोज्यस्य संज्ञाद्वयप्रसङ्गस्तदवस्थ इत्ययं पाठो न युक्त इत्यन्यदेतत् । तद्दोषोद्धारायैव तत्पाठे तदङ्गीकारे विपरीतनियममाशङ्कते—एषामिति । गत्याद्यर्थाना-

सरला ।

यति-प्रयोजकव्यापारे इति । शाब्दप्राधान्येति । तच्च शाब्दबोधीयविशेष्यताश्रयत्वरूपम् । इदं जनकत्वलक्षणार्थप्राधान्यस्याप्युपलक्षणम् । तेन स्वमते कर्मप्रत्ययसमभिव्याहारे फलस्य विशेष्यत्वेऽपि न क्षतिः ।

स श्रीहरिर्मे गतिरित्यर्थः। नन्विह कथं स्वर्गस्य कर्मत्वं, कर्तुरीप्सिततमं हि कर्म, नच शत्रवः कर्त्तारः, तेषां गत्यादिसूत्रेण कर्मत्वादिति चेत्? मैवम्, कर्मसञ्ज्ञायां हि कर्तृग्रहणं स्वतन्त्रोपलक्षणम्। स्वातन्त्र्यं च धातूपात्तव्यापाराश्रयत्वमेव। तच्च प्रयोजकसन्निधानेऽपि प्रयोज्यस्यास्त्येव। न चोपलक्षणत्वे प्रमाणाभावः;

'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्।
अप्रधाने दुहादीनाम्।' इत्युक्त्वा 'ण्यन्ते कर्तुश्च कर्मणः' इति वदतो

---

शब्दरत्नम्

शास्त्रबाधापत्तेः। स्पष्टं चेदं तत्रैव कैयटे।

नन्विहेति। "तथायुक्तम्"इत्यनेनापि न, तस्यानीप्सितत्वाभावात्। तत्रापि

भैरवी।

तदा हि गत्याद्यर्थानामणौ कर्तुर्णौ यदि भवति तदा कर्मसंज्ञैवेति नियमाकारः। शास्त्रबाधापत्तेरिति। तादृशनियमेन कर्तृसंज्ञाया व्यावृत्त्या परकार्यस्य विधानाभावादिति भावः। किञ्च भवदुक्तो नियमाकारश्चेत्पाचयत्यादियोगेऽपि कर्मसंज्ञाप्रयोजकव्यापारस्योक्तद्विविधप्राधान्यस्य सत्त्वात्प्राप्नोति। नचेष्टापत्तिः, आकडारादिति न्यासान्तरेण वैरूप्यापत्तेः। नचाणौ यः कर्ता स एव णौ कर्म भवति न तु तद्भिन्न इति विपरीतनियमः कस्मान्न भवतीति वाच्यम्? लक्ष्यविसंवादापत्तेः? ण्यन्ते कर्म्मान्तरस्य भवन्मतेऽभावेन 'ण्यन्ते कर्तुश्च कर्मणः' इति विशेषाभिधानानुपपत्तेश्च, कर्मान्तरसम्भावनाया अभावेन सौत्राकर्मकग्रहणवैयर्थ्यापत्तेश्च।

अनीप्सितत्वाभावादिति। प्रकृतिजन्यशाब्दबोधे प्रधानीभूते यो व्यापारस्तत्प्रयोज्यफलाश्रयत्वेनोद्देश्यत्वस्य सत्त्वेनोद्देश्यत्वाभावात्मकानीप्सितत्वाभावादित्यर्थः। ननु प्रयोज्यव्यापारोद्देशेन प्रयोजकव्यापारस्य प्रवृत्तेर्लौकिकमनीप्सितत्वं स्वर्गादीनामस्त्येवेत्यत आह—तत्रापीति। कर्तुः क्रियया तथायुक्तमित्येवंसूत्रार्थस्य सत्त्वात्। मूले—स्वतन्त्रोपलक्षणमिति। स्वतन्त्रे लाक्षणिकमित्यर्थः। कर्तृपदस्य शक्तिविशेषावच्छिन्ने परिभाषितत्वा-

भावप्रकाशः।

मित्यर्थः। योगे कर्तुरिति शेषः। एतेषामणौ कर्तुर्णौ यदि भवति तर्हि कर्मसंज्ञैवेति नियमाकार इति भावः। इति शास्त्रेति। "प्राक्कडारात्परं कार्यम्" इति शास्त्रेत्यर्थः, तेन नियमेन कर्तृसंज्ञाव्यावृत्त्या परकार्यविधानाभावात्। तथाच नियमान्तरे तद्बाधेनैवोपपत्तावत्र तद्बाधो न न्याय्यः। किञ्च पाचयत्यादिप्रयोज्यस्य संज्ञाद्वयापत्तिः। तस्मात्तथानियमो न। अत एव न्यासान्तरेण समफलतेति भावः। ननु सिद्धान्तेऽपि तेभ्यो यदि णौ सति कर्म भवति तर्हि प्रयोज्य एवेति विपरीतनियमः कुतो न, उदाहरणप्रत्युदाहरणयोरनिष्टं त्विष्टमेवेति चेत्? न, 'ण्यन्ते कर्तुश्च कर्मणः' इति वार्तिकात् सूत्रेऽकर्मकग्रहणवैयर्थ्यापत्तेश्च व्यावर्त्याभावात्। सिद्धान्ते तु पाचयत्यादियोगे नियमात्कर्मत्वाप्राप्तौ पच्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वरूपं प्राधान्यमादाय कर्तृत्वात्तृतीयेति दिक्।

इदमिति। तत्पाठेऽपि नियमार्थत्वमित्यर्थः। तत्रैव। "आकडारात्" इति सूत्रभाष्ये एवेत्यर्थः।

ननु "तथायुक्तम्" इत्यनेन सिद्धेः शङ्का न युक्ताऽत आह—तथेति। तस्य—स्वर्गस्य। स्वर्गादीनामीप्सितत्वात्। ननु प्रयोजकव्यापारस्य न तदुद्देशेन प्रवृत्तिरिति प्रागुक्ताऽनीप्सितत्वमस्त्येवात आह—तत्रापीति। "तथायुक्तम्" इत्यत्रापीत्यर्थः। कर्तुः क्रियया तथायुक्तमिति तदर्थ इति भावः। ननु लक्षणां विनेत्यस्य णिजन्तानां लक्षणां विनेति नार्थः, तेषां तदनुपयोगात्। नापि तत्प्रकृतेस्तां

भाष्यकृत एव तत्र प्रमाणत्वात् । न हि लक्षणां विना णिजन्तानां द्विकर्मकता लभ्यते, येन 'ण्यन्ते कर्तुः' इति वचनं सावकाशं स्यात् । ननु स्वतन्त्रे सङ्केतितस्य तत्रैव लक्षणा कथमिति चेत् ? सञ्ज्ञान्तरानुपहिते सङ्केतितस्य तदुपहितसाधारणे स्वतन्त्रमात्रे सेत्यवधेहि ।

---

**शब्दरत्नम् ।**

'कर्तुः'इत्यनुवृत्तेश्च । लक्षणां विनेति । कर्तृपदस्य स्वतन्त्रे लक्षणां विनेत्यर्थः । अत एव 'सार्थाद्धीयते'इत्यत्र कर्तुरपादानत्वेऽपि कर्मत्वप्रयुक्तलकारसिद्धिरिति सम्प्रदानसञ्ज्ञासूत्रे कैयटे स्पष्टम् । "तत्प्रयोजको हेतुः"इति सूत्रेऽप्येवमेव, अत एव णिच्सिद्धिः । अवधेहीति । किं च प्रयोजककर्तृव्यापारप्रयोज्यसंयोगरूपफलाश्रयत्वेनाक्षतं कर्मत्वम् ।

**भैरवी ।**

दिति भावः । अत एव—कर्तृपदस्य तत्र लक्षणासत्त्वादेव । हाधातोर्विभागानुकूलव्यापारोऽर्थः । तादृशविभागावधित्वस्य प्रकृतधात्वर्थप्रधानव्यापाराश्रयत्वेन कर्तृत्वस्य च प्राप्तौ परत्वात्कर्तृसंज्ञैव सार्थस्य स्यान्न त्वपादानत्वमिति कथमत्र पञ्चमीति न शङ्क्यम् । "अपादाने चाहीयरुहोः"इति ज्ञापकादिति गृहाण । अपादाने या पञ्चमी भवति, तदन्ताद्वा तसिः स्यात् तच्चेदपादानं हीयरुहसम्बन्धि नेति तदर्थः । ग्रामाद् ग्रामतो वा गच्छतीति तदुदाहरणम् । अत्र हीयेति कर्मप्रत्यये सति हीयते इति यद्भवति, तदेकदेशानुकरणम् । अतस्तेन पर्युदासरूपज्ञापकेन कर्मप्रत्ययान्तहाधातुयोगे "विप्रतिषेधे" इति शास्त्राप्रवृत्त्याऽपादानत्वम्भवति, 'सार्थ एनं जहाति, अयं सार्थाद्धीयते'इति सम्प्रत्ययात् । हीयत इति कर्मकर्तरि लः । हीयतेऽपगच्छतीत्यर्थः । न केवलं "गतिबुद्धि"इतिसूत्र एव कर्तृग्रहणं स्वतन्त्रोपलक्षणकिं त्वन्यत्राऽपीत्याह—तत्प्रयोजक इति । एवमेव—तत्पदमपि स्वतन्त्रपरामर्शकमेव । "कर्तुरीप्सिततमम्"इतिसूत्रे कर्तृपदस्य लक्षणां विनापि निर्वाह इत्याशयेनाह—किञ्च प्रयोजकेति । एतत्सर्वङ्कर्मसंज्ञायाः प्रागप्रवृत्तिमभ्युपेत्य । वस्तुतस्तु "गतिबुद्धि"इतिसूत्रस्य णिचि कृते प्रवृत्तिः, "कर्तुरीप्सिततमम्" इत्यस्य तु प्रागेव प्रवृत्तिरित्यनुपपत्तिगन्धोऽपि नेत्याह—

**भावप्रकाशः ।**

विनेत्यर्थः, णिचो वाचकत्वात् , कर्तृपदस्य तु तत्र लक्षणायाः प्रागनुक्तत्वात् ; अत आह–कर्तृपदस्येति । "कर्तुरीप्सित" इति सूत्रस्थस्येति भावः । तथाचोपलक्षणमिति प्रागुक्तमूलस्य लक्षणया बोधकमित्यर्थो बोध्य इति भावः । तदावश्यकतामाह— अत एवेति । तस्य तत्र तदङ्गीकारादेवेत्यर्थः । हाधातोर्विभागानुकूलव्यापारोऽर्थः । यद्यपि प्रकृतधात्वर्थप्रधानव्यापाराश्रयत्वात् कर्तृत्वस्य विभागावधित्वादपादानत्वस्य च सार्थस्य प्राप्तावपि 'अपादानमुत्तराणि' इति परत्वात्कर्तृत्वेन तृतीयोचिता, तथापि अपादाने या पञ्चमी तदन्ताद्वा तसिस्तच्चेद्धीयरुहसम्बन्धि नेत्यर्थकेन 'ग्रामाद् ग्रामतो वा गच्छति' इतिलक्ष्यकेण "अपादाने चाहीयरुहोः" इति सूत्रेण कर्मप्रत्ययान्तहाको योगेऽपादानत्वज्ञापनात्पञ्चमी । 'सार्थेन त्यज्यते' इत्यर्थकोऽयं प्रयोगस्तदाह–कर्तुरिति । कयटे इति । अनेनारुचिः सूचिता । लक्षणां विनापि प्रागुक्तरीत्या सिद्धिः । किञ्च हीयते इति कर्मकर्तरि लः। जहातिश्चापगमनायाम् । 'सार्थश्चैत्रं जहाति'–अन्नालाभादिना अपगमयतीत्यर्थः । कर्मणः कर्तृत्वविवक्षायां 'चैत्रः स्वयमेव हीयते' अपगच्छतीत्यर्थः । अपगमने अवधित्वाकाङ्क्षायां सार्थस्यान्वय इति केचित् । उक्तदार्ढ्याय प्रागुक्तमपि समूलयितुमाह—तत्प्रयोजक इति । एवमेव–कर्तृपरामर्शकतत्पदं स्वतन्त्रलक्षकमेव । मूले–मात्रशब्दः कार्त्स्न्ये इति भावः । "कर्तुः" इति सूत्रे वक्ष्यमाणरीत्या तया विना निर्वाहेऽपि तत्र तदावश्यकतामाह—अत एवेति । णिजिति । सर्वत्रेति शेषः । अन्यथा प्रयोजकसमभिव्याहारे तस्य सर्वत्र कर्मत्वेन कर्तृत्वाभावेन हेतुसंज्ञाया अभावेन "हेतुमति" इति णिच् क्वापि न स्यात्तथाच तद्बाधापत्तिरिति भावः । "कर्तुः" इति सूत्रे तत्पदस्य लक्षणां विनापि तदिष्टसिद्धिमाह— किंचेति । प्रयोज्येति । लक्षणे जन्यत्वं साक्षात्परम्परासाधारणं निविष्टमिति भावः ।

नीवह्योरिति। यद्यप्यनयोः प्रापणमर्थो न गतिस्तथाऽपि गतिरपि विशेषणीभूय प्रापणामध्ये प्रविष्टेत्येतावन्मात्रेण प्राप्तिं मत्वा प्रतिषेध उक्तः। नियन्त्रिति। नियन्ता पशुप्रेरको न तु सारथिरेव। तेन 'वाहयति बलीवर्दान्

---

शब्दरत्नम्।

किं च णिजुत्पत्तेः प्रागेव स्वर्गादीनां कर्मत्वप्रवृत्तिस्तस्यामवस्थायां कर्तृत्वसत्त्वात्। 'अकृतव्यूहाः' इति त्वनित्यं, नास्त्येव वा।

प्रापणमिति। उत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारो हि तत्। तथाऽपीति। अत एव प्रतिषेधाद्यथाकथंचिद् गत्यर्थानामप्यत्र ग्रहणमिति भावः। प्राप्तिं मत्वेति। "न वा" इति सूत्रे भाष्ये "हकोः" इत्यस्योभयत्र विभाषात्वमुक्त्वा प्राप्तेऽभ्यवहरतिमुदाहृत्याप्राप्ते 'हरति भारं देवदत्तो हारयति भारम्'

भैरवी।

किञ्च णिजुत्पत्तेरिति। ननु कृतमपि कार्यन्निवर्तयन्तीत्यर्थकाऽकृतेति न्यायेन प्राक् प्रवृत्तायाः संज्ञाया अपगमे पुनस्तस्याः प्रवृत्तिरभिप्रेता, अथवा प्रयोज्यस्य कर्तृत्वन्नङ्क्ष्यतीति स्वर्गादीनाङ्कर्मसंज्ञा प्राङ् न भविष्यतीत्यत आह—अकृतेति। अनित्यमिति। "छ्वोः" इतिसूत्रे सतुक्ग्रहणात्। एतत्कैयटानुरोधेन। स्वमतेनाह—नास्त्येवेति।

गतिरुत्तरदेशसंयोगानुकूलव्यापारमात्रम्, प्रापणन्तु तादृशव्यापारानुकूलव्यापार इत्याह—उत्तरदेशेति। अत एव प्रतिषेधादिति। नीवह्योरित्यस्मादेव प्रतिषेधादित्यर्थः। यथाकथञ्चित्—विशेषणतया। जातिविशिष्टस्य शब्दार्थत्वेऽपि जातिशब्दत्वव्यवहारवत्। अपिना विशेष्यतयेत्यस्य सङ्ग्रहः। अत्र-"गति" इतिसूत्रे। अत एव णिजन्तस्य गत्याद्यर्थकत्वमुपजीव्य गत्याद्यर्थानामणौ कर्ता यः स णाविति व्याख्यानमपि सुष्ठु सङ्गच्छते। एतावता प्रबन्धेन मूलं संयोज्य सिद्धान्तरीत्या मूलं खण्डयितुमुपक्रमते—नवेति सूत्र इत्यादिना। अभ्यवहरतिम्—अभ्यवपूर्वकहृधातुम्। प्रत्यवसानार्थत्वाद्धि प्राप्तिरत्र। अप्राप्तइति। संयोगानुकूलव्यापारमुख्य-

भावप्रकाशः।

इदमपि कर्मत्वमभिप्रेत्योक्तम्। वस्तुतस्तदेवादौ नेत्याह—किंचेति। कर्तृत्वेति। प्रयोज्यत्वेनाभिमतस्येति शेषः। तत्कर्मके हि गमने ते प्रेष्यन्ते। स्पष्टं चेदं प्रकाशे इति भावः। नन्वकृतेति न्यायेन तदा तत्र स्यादत आह—अकृतेति। तत्रादौ कैयटादिरीत्याऽऽह—अनित्यमिति। सिद्धान्तरीत्याऽऽह—नास्त्येव वेति।

ननु 'या प्रापणे' इत्यादेरिव तस्य तथापि गत्यर्थत्वमेवात आह—उत्तरदेशेति। हि तदिति। यतः प्रापणमित्यर्थः। गतिस्तूत्तरदेशसंयोगानुकूलव्यापारमात्रं, यातेरपि तावन्मात्रं वाच्यमिति तस्य गत्यर्थत्वमेवेति भावः। ननु तथापि तद्ग्रहणे किं मानमत आह—अत एवेति। "नीवह्योर्न" इत्यस्मादेव प्रतिषेधादित्यर्थः। यथाकथञ्चित्—विशेषणतया। अपिना विशेष्यतया तदर्थपरिग्रहः। अत्र—"गतिबुद्धि" इति सूत्रे। अत एवाणीति सफलम्। अन्यथा णिच्प्रकृतिकण्यन्तस्याधिकार्थत्वेनाऽगत्याद्यर्थत्वादप्राप्तौ किन्तेनेति भावः। सिद्धान्तरीत्या मूलं योजयितुं यथाश्रुतमूलं खण्डयति—नवेतीत्यादि सूचितमित्यन्तेन। अभ्यवहरतिम्—तत्पूर्वकहृधातुम्। 'अभ्यवहारयति सैन्धवान् त' वा'इत्येवमिति भावः। भारमि-

सरला।

यथाकथञ्चिद्गत्यर्थानामपीति। एतद्वार्तिकारम्भसामर्थ्येन 'विशेष्यतया विशेषणतया वा संयोगानुकूलव्यापाररूपगतिबोधकस्य गत्यर्थकपदेन ग्रहणम्' इत्यर्थस्य ज्ञापनात्। तथाचानयोर्विशेषणतया तादृशगतिबोधकत्वेन तत्र "गतिबुद्धि" इति सूत्रप्राप्तिरिति तन्निषेधार्थमिदं वार्तिकमिति स्वांशे चारितार्थ्यम्। अन्यत्र फलं चाभ्यां धातुभ्यां कर्तरि अधिकरणे च क्तप्रत्ययसिद्धिरिति बोध्यम्।

यवान्' इति सिद्ध्यति । अनिषेध इति । प्रयोज्यः कर्मेति वक्तव्यमिति फलितोऽर्थः । सूत इति ।

नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः ।

आदयतीति । अकर्त्रभिप्राये फले "शेषात्कर्त्तरि" इति परस्मैपदम् । कर्त्रभिप्राये तु "णिचश्च" इत्यात्मनेपदमेव, तदपवादस्य "निगरणचलनार्थेभ्यश्च" इत्यस्य 'अदेः प्रतिषेधः' इति निषिद्धत्वात् । सस्यमिति । क्षेत्रस्थानां यवानां

---

## शब्दरत्नम् ।

इत्युदाहरणात् 'विपूर्वो हरतिर्गत्यर्थोऽभ्यवपूर्वः प्रत्यवसानार्थः' इति तत्रत्यकैयटाच्च, "न गति"इतिसूत्रे "हृवह्योरप्रतिषेधः, सम्प्रहरन्ते राजानः"इति हिंसार्थ एव भाष्ये उदाहरणाच्च, तत्रैव "वहिर्न गत्यर्थः, देशान्तरप्रापणं वहेरर्थः"इति भाष्येण प्रापणस्य गतित्वाभावबोधनाच्च न गत्यर्थत्वेन तेषां ग्रहणम् । प्राप्तिश्च सम्बन्धमात्रं न संयोग एव, सुखं प्राप्तः, धनं प्राप्तः, भूः प्राप्तेत्यादिव्यवहारात् ।

## भैरवी ।

विशेष्यकोपस्थितिजनकस्य गत्यर्थत्वमिति तदाशयः । उदाहरणादिति । प्रापणार्थस्य गत्यर्थत्वेऽप्राप्त्यभिधानमसङ्गतं स्यादिति भावः । विपूर्व इति । 'विहरति देशान्तुरगः' इति शब्दात्सम्यग्गच्छतीत्यर्थावगमात्, केवलस्य गत्यर्थत्वे विपूर्व इति न वदेदिति भावः । अभ्यवपूर्व इति । हरतिरित्यस्यानुषङ्गः । अप्रतिषेध इति । "न गति" इति प्रतिषेधो नेत्यर्थः । प्रापणं यदि गतिः स्यात्तदा प्रतिषेधाभावाभिधानमसङ्गतं स्यादिति भावः । नन्वेतावता हरतेरस्तु तथा, वहतेस्तु गत्यर्थत्वाभावे किम्मानमत आह—तत्रैवेति । "न गति" इतिसूत्र एवेत्यर्थः । इति भाष्येणेति । वार्तिकस्थवहिग्रहणप्रत्याख्यानपरेणेति शेषः । वहधातोर्गत्यर्थत्वाभावे हेतुमाह— प्राप्तिश्चेति । एवञ्च संयोगत्वेन संयोगस्य तन्मध्येऽप्रवेशान्न गत्यर्थत्वमिति भावः । सुखम्प्राप्त इति । अत्र समवायत्वेन सम्बन्धस्योत्तरत्र स्वस्वामिभावत्वेन सम्बन्धस्य प्रवेश

## भावप्रकाशः ।

ति अस्य देवदत्तं तेन वेति शेषः। उदाहरणादित्यादिपञ्चम्यन्तचतुष्टयानां 'न गत्यर्थत्वेन तेषां ग्रहणम्' इत्यत्रान्वयः । प्रापणार्थस्य गत्यर्थत्वे तु हरति भारमित्यत्र वहतीति प्रतीत्या तत्त्वेन गत्यर्थत्वात्तत्प्राप्त्या तद्भाष्यासङ्गतिः स्पष्टैवेति भावः । विपूर्व इति । 'विहरति ग्रामम्' इत्यादौ गच्छतीत्यर्थावगमात्, केवलस्य तत्त्वे तु विपूर्व इति न वदेदिति भावः । अभ्यवपूर्व इति । अत्र हरतिरित्यस्यानुषङ्गः । तत्रत्येति । तत्सूत्रस्थोक्तभाष्यस्थेत्यर्थः । तत्रैव साधकान्तरमाह—न गतीति । अप्रतिषेध इति । प्रतिषेधो नेत्यर्थः । एवेन गत्यर्थव्यावृत्तिः । अत एव हरतेर्हिंसार्थत्वाद्वहतेर्गत्यर्थत्वात्प्राप्तिरिति कैयटेनोक्तम् । अन्यथा भाष्यकैयटयोर्न्यूनतापत्तिरिति भावः । नन्वेतावता हरतेरस्तु तथा, वहतेस्तु तत्त्वे किं मानमत आह—तत्रैवेति । "न गति" इति सूत्रे एवेत्यर्थः । उक्तवार्तिकस्थवहिग्रहणस्य तत्त्वाभावे हेतुमाह—देशान्तरेति । तेषां—यथाकथंचिद् गत्यर्थानां विहरत्यभ्यवहरत्यादीनाम् । उभयत्रार्थग्रहणादिति भावः । बहुवचनेन तुल्यन्यायान्नयतेरपि तथा सूचितम् । शेखरमञ्जूषादिकं तु मतान्तराभिप्रायमिति भावः । गतेर्विशेषणत्वमपि तत्र नास्ति यतः प्रापणं न प्रागुक्तरूपं किन्तु प्राप्त्यनुकूलव्यापारानुकूलव्यापारमात्रं, तदाह—प्राप्तिश्चेति । मात्रशब्दः कार्त्स्न्ये । "कर्तुः" इति सूत्रे वक्ष्यमाणरीत्या तया विना निर्वाहेऽपि 'सुखं प्राप्तः' इत्यादौ समवायस्वस्वामिभावादीनां भानादिति भावः। धनमित्यादेर्देशान्तरस्थोऽपीत्यादिः। नन्वेवं कर्मक्तेन भूः प्राप्तेत्यादिसिद्धावपि "गत्यर्थाकर्मक" इत्यप्राप्त्या 'सुखं प्राप्तः' इत्याद्यसिद्धिरत-

## सरला ।

इत्यादिव्यवहारादिति । 'सुखं प्राप्तः' इत्यत्र समवायसम्बन्धस्य 'धनं प्राप्तः' 'भूः प्राप्ता' इत्यादौ

भक्ष्यमाणानां हिंसा द्रष्टव्या, तस्यामवस्थायां तेषां चेतनत्वात्। स्मारयतीति। यत्तु—"णेरणौ" इति सूत्रे 'स्मरयत्येनं वनगुल्मः स्वयमेव' इत्युदाह्रियते; तत्र भाष्यप्रयोगादेव कर्मत्वं बोद्धव्यम्। शब्दायतेरिति। शब्दं करोतीत्यर्थे "शब्द-वैर" इत्यादिना क्यङ्, ततो हेतुमण्णिच्। धात्वर्थेति। एतेन 'शब्दाययति

## शब्दरत्नम्।

आदिकर्मणि च कर्तरि क्तः। देशान्तरप्राप्तेः परं गतिं विनाऽनुपपत्त्या क्वचिन्नान्तरीयकतया गतिप्रतीतिरस्त्येव, तादृशमपि गत्यर्थकत्वमित्यभिमत्य वार्तिकारम्भः। वस्तुतोऽप्राप्तिरेवेति अनेन सूचितम्। हिंसेति। हिंसाङ्गे भक्षणे च भक्षयतेर्वृत्तिर्बोद्धया। भाष्यप्रयोगादेवेति।

## भैरवी।

इति विवेकः। गत्यर्थत्वाभावे कर्तरि क्तप्रत्यय एव कथमत आह—आदिकर्मणीति। चस्त्वर्थे। नन्वेवन्तर्हि "नीवह्योः" इति वार्तिकस्य का गतिरत आह—देशान्तरप्राप्तेरिति। परं-केवलम्। सुखम्प्राप्त इत्यत्र तथावगत्यभावादाह—क्वचिदिति। ग्रामम्प्राप्त इत्यादौ नान्तरीयकतया तस्य प्रतीतिः। इत्यभिमत्य—एवमङ्गीकृत्य। उक्तभाष्यविरोधो ह्यभिमानत्वोक्तौ हेतुः। एवञ्च न्यायसिद्धार्थानुवाद एव वार्तिककृता कृत इति तत्त्वम्। ननु क्षेत्रस्थानां यवानाम्भक्षणे यवानां यद्यपि प्राणवियोगसत्त्वाद्धिंसा भवति तथापि धातोस्तदर्थत्वाभावान्न निषेधस्य प्राप्तिरत आह—हिंसाङ्गे इति। हिंसाया अङ्गं विशेषणमिति वाच्यार्थः। भक्षणकरणकहिंसने धातोर्वृत्तिरिति भावः। भक्षयतेः—स्वार्थणिजन्तप्रकृतिकहेतुमण्णिजन्तस्य भक्षयतेः। अस्मादेव निषेधात् "गतिबुद्धि" इतिसूत्रेऽणीत्यत्र हेतुमण्णिच एव ग्रहणम्। मूले-स्मारयतीति चिन्तनार्थोऽयन्न मित्। ननु यदि भाष्यप्रयोगात्कर्मत्वन्तदा स्मारयति देवदत्तेनेत्यत्रातिप्रसङ्ग इत्यत आह-

## भावप्रकाशः।

स्तत्रापि स्याद् गत्याक्षेप इति संयोग एव तदर्थः कुतो नेत्यत आह-आदीति। चस्त्वर्थे। नन्वेवं निषेधवार्तिकासङ्गतिरत आह—देशान्तरेति। परं-केवलम्। सुखं प्राप्त इत्यादावभावादाह-क्वचिदिति। ग्रामं प्राप्त इत्यादावित्यर्थः। तादृशम्—नान्तरीयकतया गतिबोधकत्वम्। अपिरुक्तपरामर्शकः। अभिमत्य—अभिमानेनाङ्गीकृत्य। तदुक्तभाष्यासंगतिरतः अभिमानसूचितारुचिं तत्र सूचयन्नाह-वस्तुत इति। अप्राप्तिरिति। कर्मत्वस्येति शेषः। वार्तिकं तु न्यायसिद्धार्थानुवाद एवेति भावः। अनेन-प्राप्तिं मत्वेत्यनेन। अन्यथैतदुक्तिरफलैव एतावन्मात्रेण प्रतिषेध उक्त इत्येव वदेत्। सूत्रेऽणीति च निवृत्तप्रेषणप्रकृतिकण्यन्ताण्णिचि आद्यण्यन्तकर्तरि कर्मत्ववारणाय। एवं चैवं मूलयोजनेऽपि तथा प्रकाशरत्नाकरदण्ड्याद्युक्तमपास्तमिति भावः। स्पष्टं तथोक्तत्वादाह-सूचितमिति। एवं च तत्प्रकाशानुरोधेनोक्तमिति बोध्यम्। ननु तद्भक्षणे हिंसायामपि धातोरतदर्थत्वान्निषेधापत्तिरेवात आह-हिंसाङ्गे इति। बहुव्रीहिः। तथा च हिंसातो भक्षयन्तीत्याद्यण्यन्तार्थः। यद्वा-षष्ठीतत्पुरुषोऽयं भक्षणेन हिंसन्तीति तदर्थः। भक्षयतेः—स्वार्थणिजन्तप्रकृतिकहेतुमण्णिजन्तस्य। 'भक्षयति बलीवर्दान् सस्यम्' इत्यत्रेति शेषः। अत एव निषेधात् "गति" इति सूत्रे उभयत्र हेतुमण्णिजेव गृह्यते, हकोस्तस्यैव संभवाच्च। ननु भाष्यप्रयोगा-

## सरला।

च स्वस्वामिभावसम्बन्धस्य प्रतीतेरिति भावः। अस्त्येवेति। 'गङ्गां प्राप्तः' इत्यादौ सम्बन्धत्वेन प्रतीयमानायाः संयोगरूपप्राप्तेः तदनुकूलव्यापाररूपगतिं विनाऽसम्भवात् तदाक्षेप इति तदाशयः। वस्तुतोऽप्राप्तिरेवेति। "न वहिर्गत्यर्थः" इति "न गतिहिंसार्थेभ्यः" इति सूत्रस्थभाष्यप्रामाण्येन प्रापणस्य गत्यर्थत्वेनाग्रहणबोधनादिति। तेन 'ग्रामं प्रापयति देवदत्तेन' इत्येव प्रयोगो नतु 'ग्रामं प्रापयति देवदत्तम्' इति। अत एव "सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन्" इत्यत्र 'सितिम्ना' इति प्रयोज्यकर्तरि तृतीयोपपत्तिरिति।

सैनिकैः रिपून्' इतिकर्म प्रयुञ्जानाः परास्ताः । यत्तु प्राचा—'अयक्रन्दशब्दायह्वेञां न' इत्युक्तम् । तत्राऽयतेरुक्तिस्तावन्निर्मूलैव । क्रन्दह्वेञोस्तु शब्दक्रियात्वमात्रेण प्राप्तिसम्भावना । वस्तुतस्तु नासौ सूत्रार्थ इत्युक्तम् ।

यदपि 'श्रुग्रहदृशाम्' इति कर्मत्वमुक्तम् ॥ तत्र दृशिग्रहणं प्रामाणिकमेव । शृणोतेस्तु शब्दकर्मकत्वात्सिद्धम् । ग्रहेस्तु द्विकर्मकत्वं यद्यपि सुधाकरादीनां संमतं तथाऽपि बहूनामसम्मतम् । अत एव 'अजिग्रहत्तं जनको धनुस्तद्' इति भट्टिप्रयोगमजिग्रहत् बोधितवानिति व्याचख्युः । तथा—

अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक ॥

इत्यत्र ग्राहयितुम्— उद्वाह्यत्वेन बोधयितुमिति ।

---

शब्दरत्नम् ।

आध्यानार्थकघटादिभिन्नस्मरतेरेव योगे तद्भाष्यप्रामाण्यात्कर्मत्वाभावो घटादेस्तु भवत्येव कर्मत्वमिति भावः । परास्ता इति । इदं च कैयटानुरोधेनोक्तम् । वस्तुतः शब्दक्रियाणामिति पक्षेभाष्ये ह्वाययतिशब्दाययतिक्रन्दयतीनां निषेध उक्तो न तु शब्दकर्मकाणामिति पक्षे । एवं च तत्र पक्षे शब्दायतौ प्रतिषेधानुक्त्याऽकर्मकशब्दायतिसत्त्वे न मानम् । शब्दस्य धात्वर्थेन संगृहीतत्वेऽपि बहिर्भूतपुत्रादिकर्माभावे न मानमिति बोद्धयम् ।

व्याचख्युरिति । तेन बोधनातिरिक्तार्थस्य न द्विकर्मकत्वम् । अन्यथाऽप्रसिद्धार्थपरिग्रहो व्यर्थ एव स्यादिति भावः ।

भैरवी ।

आध्यानेति । उत्कण्ठापूर्वकस्मरणेत्यर्थः । स्मरतेः—चिन्तनार्थस्य स्मरतेः । वक्ष्यमाणरीत्याऽयुक्तम्मूलं योजयति—इदमिति । 'शब्दायतेः' इति वचनमित्यर्थः । कैयटपदसूचितामरुचिमाह—वस्तुत इत्यादिना । एवञ्च—तत्र पक्षे प्रतिषेधानुक्तौ च । तत्र पक्षे—शब्दकर्मकाणामिति पक्षे । ननु धात्वर्थसङ्गृहीतकर्मकत्वमेव मानम्भविष्यतीत्यत आह—शब्दस्येत्यादि । बहिर्भूतेति । अन्तर्भूतशब्दात्मककर्मण इत्यादिः । तेन—एवं व्याख्यानेन । बोधनार्थस्य बुद्ध्यर्थकत्वेन "गतिबुद्धि" इतिसूत्रस्य प्राप्तिरन्यार्थकत्वे तु नेति भावः । अन्यथा—अन्यार्थस्यापि द्विकर्मकत्वस्य

भावप्रकाशः ।

त्कर्मत्वे 'स्मारयति देवदत्तेन' इत्यत्रापि अतिप्रसङ्ग इति मूलाद्ययुक्तमत आह—आध्यानेति । उत्कण्ठापूर्वकस्मरणेत्यर्थः । स्मरतेरिति । चिन्तार्थस्येत्यादिः । अत एव तत्राऽमित्त्वाद् ह्रस्वो न । तथा च अमित्संज्ञकस्मरतिजिघ्रत्यादीनां नेत्येवं विशेषापेक्षत्वं ज्ञापकस्य तद्भाष्यप्रामाण्यादवसीयते इति भावः । मूले—प्रयुञ्जाना इति । प्रक्रियाकृदादयः । परास्ता इति । स्पष्टं चेदं तत्रैव प्रकाशे । अयुक्तं मूलं योजयति—इदं चेति । शब्दायतेर्नेतिवचनं चेत्यर्थः । कैयटेत्यनेन सूचितामरुचिमाह—वस्तुत इति । बोध्यमित्यत्रान्वयः । तावता फलितमाह—एवं चेति । तत्र पक्षे तदुक्तौ चेत्यर्थः । तत्र पक्षे—शब्दकर्मकाणामिति पक्षे । ननु धात्वर्थसंगृहीतकर्मकत्वमेव तत्र मानमत आह—शब्दस्येति । यत इत्यादिः । तद्रूपस्य कर्मण इत्यर्थः । बहिरिति । धात्वर्थघटकशब्दादिति भावः । न मानमिति । ह्वयतादिवेति शेषः । तस्माच्चिन्त्योऽयं प्रतिषेधः । एतेन तथा प्रकाशरत्नाकरदण्डयाद्युक्तमपास्तम् । मूले प्राचा—प्रक्रियाकृता । तदुक्तकेचित्पदसूचितप्रकाशोक्तमेवाह—तत्रायतेरित्यादिना मूले । एवमग्रेऽपि । सुधाकरेति ।

तारेर्ग्रहिस्तथा याचेस्त्याजेर्दीपेश्च संग्रहः । कारिकायां चशब्देन सुधाकरमुखैः कृतः ॥

इति माधवोक्तेरिति भावः । बोधितवानिति । अनेन धनुषा भगवता त्रिपुरदाहः कृत इति बोधितवानित्यर्थः । व्याचख्युरिति । जयमङ्गलाकृत इति शेषः । तथा च तस्य "गतिबुद्धि" इत्येव तत्त्वं सिद्धमिति भावः ।

तदेवाह—तेनेति । तथा व्याख्यानेनेत्यर्थः । अतिरिक्तार्थस्य—आदानाद्यर्थकस्य । अन्यथेति ।

युक्तं चैतत्। ग्राहेर्द्विकर्मकत्वे हि जायाप्रतिग्राहितगन्धमाल्यामित्यत्र क्तेन प्रयोज्याया धेनोरभिधानं स्यात्, 'ण्यन्ते कर्तुश्च कर्मणः' इत्युक्तेः। ततश्च जायया गन्धमाल्ये प्रतिग्राहितामिति स्यात्। सिद्धान्ते तु प्रतिग्राहिते गन्धमाल्ये ययेति विग्रहः। जायानिष्ठप्रेरणविषयीभूतं गन्धमाल्यकर्मकं यत्प्रतिग्रहणं तत्क-

शब्दरत्नम्।

ग्राहेः—बोधनातिरिक्तार्थग्राहेः। ततश्चेति। एवं च व्यधिकरणत्वादन्यपदार्थाभावाच्च बहुव्रीहिर्न स्यादिति भावः। प्रतिग्राहिते इति। अस्य जाययेत्यादिः। तत्र जायाप्रतिग्राहितशब्दयोस्तृतीयातत्पुरुषं कृत्वा बहुव्रीहिः कार्य इति भावः। बहुव्रीहिणा तृतीयातत्पुरुषस्तु दुर्लभो विधायकाभावाद् अवयवेन सामर्थ्येऽपि समुदायेन तृतीयान्तस्यासामर्थ्याच्च। तदाह—जायानिष्ठेति। ननु द्विकर्मकत्वेऽपि धेनुरूपप्रयोज्यकर्मणः कर्मत्वाविवक्षायां गन्धमाल्यरूपकर्मण्येव क्ते इष्टसिद्धिरिति चेत्? न, णिजुत्पत्त्यर्थं

भैरवी।

प्रामाणिकत्वे। एवञ्चेति। धेनोरभिधाने च। अन्यपदार्थाभावादिति। धेनोः क्तेनाभिधानादिति भावः। तत्र जाययेत्यस्यादित्वे तृतीयान्तस्य व्यधिकरणत्वाद्बहुव्रीहिघटकत्वन्न सम्भवतीत्यत आह—तृतीयातत्पुरुषमिति। बहुव्रीहिरिति। जायाप्रतिग्राहितशब्दस्य द्वन्द्वसंज्ञकगन्धमाल्यशब्देन बहुव्रीहिसमास इत्यर्थः। ननु प्रतिग्राहिते गन्धमाल्ये ययेत्यथ बहुव्रीहिं कृत्वा तेन जाययेति तृतीयान्तस्य तत्पुरुषोऽस्त्वित्यत आह—बहुव्रीहिणेति। विधायकाभावादिति। समुदायार्थस्य तृतीयान्तार्थकृतत्वाभावेन "तृतीयातत्कृत" इति सूत्रस्याप्राप्तेरिति भावः। ननु अवयवद्वारकसामर्थ्यमादाय "सुप्सुपा" इतिसमासोऽस्त्वित्यत आह—अवयवेनेति। द्विकर्मकत्वेऽपीति। बोधनातिरिक्तार्थस्य ग्राहेर्द्विकर्मकत्वेऽपीत्यर्थः। कर्मत्वाविवक्षायामिति। सम्बन्धित्वेन विवक्षायामित्यर्थः। इष्टसिद्धिरिति। जायया प्रतिग्राहिते इत्यर्थे तृतीयातत्पुरुषं कृत्वा जायाप्रतिग्राहिते गन्धमाल्ये यस्या इत्यर्थे बहुव्रीहिसमासेनेष्टसिद्धिरिति भावः।

भावप्रकाशः।

सामान्यतस्तस्याङ्गीकारे। भाष्यानुक्तेरेव तत्त्वं नेति तु तत्त्वम्। मूले—इत्यत्र—कालिदासपद्ये। बोधयितुमितीति। अस्य व्याचख्युरित्यनुषङ्गः। हरदत्तादय इति शेषः। एवं च बहूनामित्यस्यापि अयमेवार्थो बोध्यः।

तदर्थकस्य तत्त्वस्येष्टत्वादाह-बोधनेति। ततश्चेत्यादिग्रन्थतात्पर्यमाह—एवं चेति। तथावाक्यसिद्धौ चेत्यर्थः। जायया गन्धमाल्ये प्रतिग्राहिता येति विग्रहेऽपि इति शेषः। धेनोः क्तेनैवोक्तत्वादिति भावः। ननु मूलात्प्रतिग्राहितगन्धमाल्येति समस्तेन जायाशब्दसमासः प्रतीयते, तच्चिन्त्यं, वक्ष्यमाणदोषादत आह—अस्येति। नन्वेवं व्यधिकरणत्वात्त्रिपदबहुव्रीहिर्दुर्लभोऽत आह—तत्रेति। तद्घटितवाक्ये इत्यर्थः। कृत्वेति। तस्य गन्धमाल्यशब्देनेति शेषः। एतेन त्रिपदबहुव्रीहिं कुर्वन् रत्नाकरदण्ड्यादिरपास्तः। ननु यथाश्रुतसामञ्जस्ये किमर्थं शेषोऽत आह—बहुव्रीहिणेति। कृतबहुव्रीहिणा प्रतिग्राहितगन्धमाल्यशब्देन जायाशब्दस्येत्यर्थः। ननु सुप्सुपेति विधायकमत आह—अवयवेनेति। प्रतिग्राहिते इत्यनेनेत्यर्थः। क्रियाकारकयोर्नित्यसाकाङ्क्षत्वादिति भावः। समुदायेन—प्रतिग्राहितगन्धमाल्याशब्देन। तृतीयान्तस्येति। अस्य मध्यमणिन्यायेनान्वयः। अवयवद्वारकं समुदायेन सामर्थ्यमिति स्वगतिकगतिरिति भावः। मूलं खण्डयितुं शङ्कते—नन्विति। बोधनान्यार्थग्राहेरिति शेषः। अविवक्षायामिति। सम्बन्धित्वविवक्षायामिति शेषः। इष्टसिद्धिरिति। अयं भावः, गन्धश्च माल्यं च गन्धमाल्ये इति द्वन्द्वः। समासे आरोपितसंख्याभाने मानाभावात् प्रवृत्तिनिमित्तयोरेकत्वाच्च द्विवचनम्। अत एवाऽस्तेजसी, द्व्येकयोरित्यादिप्रयोगाः सङ्गच्छन्ते। ततो जायया प्रतिग्राहिते इति तृतीया-

त्रींमित्यर्थः । अन्यपदार्थान्तर्भावेणेत्र विशेषणविशेष्यभाववैपरीत्येनैवैकार्थी-भावकल्पनात् ।

## शब्दरत्नम् ।

प्रयोजकजायाया हेतुत्वावश्यकत्वेन हेतोश्च कर्तृप्रयोजकरूपत्वेन प्रयोज्याया धेनोः कर्तृत्वार्थं जायानिष्ठप्रेरणविषयीभूतव्यापाराश्रयत्वविवक्षाया आवश्यकत्वेनेदृशार्थस्यैवैतत्कर्मसञ्ज्ञा-निमित्तकोटौ प्रवेशेनेदृशविषये कर्मत्वाविवक्षाया उपपादयितुमशक्यत्वात् । कर्मत्वशक्ते-रपि तत्समनियतत्वेनाविवक्षाया असम्भव इत्यभिमानात् । नव निवृत्तप्रेषणप्रतिग्रहधा-तोर्णिचि गन्धमाल्यकर्मण्येव क्ते इष्टसिद्धिर्जायापदेन षष्ठीसमास इति वाच्यम् ? प्रकृ-त्यैव तदर्थलाभे णिजुपादानस्याद्युष्टतापत्तेः । ननु गवादिपदानां विग्रहे स्वार्थमात्रपराणां समासेऽन्यपदार्थपरत्वमिव प्रतिग्राहितशब्दस्य धेनुपरत्वेऽपि वृत्तौ गन्धमाल्यपरत्वं भविष्यतीत्यत आह—अन्यपदार्थेति । तदन्तर्भावेणैकार्थीभावस्य सूत्रव्युत्पत्त्यादिव-

## भैरवी ।

हेतुत्वेति । हेतुसंज्ञेत्यर्थः । कर्तृत्वार्थमिति । कर्तृसंज्ञासिद्ध्यर्थमित्यर्थः । ईदृशार्थस्य—तादृ-शव्यापाररूपार्थस्य । एतत्कर्मसंज्ञेति । धेनोः कर्मसंज्ञानिमित्तकोटौ प्रवेशेनेत्यर्थः । ईदृश-विषये-कर्तुः कर्मत्वविषये । ननु कर्तृत्वकर्मत्वशक्त्योरन्यतरस्य सत्त्वमस्तु, अन्यतरस्य विव-क्षास्त्वित्यत आह—कर्मत्वशक्तेरपीति । तत्समनियतत्वेन-कर्तृत्वसमनियतत्वेन । अभिमानादि-त्यभिधानमरुचिसूचनाय । तद्बीजन्तु शक्त्योर्भेदे तथा विवक्षासम्भवत्येवेति । निवृत्तप्रेषण-ग्रहधातोः—स्वीकारमात्रार्थकग्रहधातोः । णिचि—तादृशस्वीकारानुकूलव्यापाररूपार्थे णिचि । उच्छृङ्खलस्य शङ्कां वारयितुमुपक्रमते-नन्वित्यादिना । अन्यान्तर्भावेणेति । वृत्तौ विग्रहघटकपदा-

## भावप्रकाशः ।

तत्पुरुषः । ततो जायाप्रतिग्राहिते गन्धमाल्ये यस्या इति षष्ठ्यर्थे बहुव्रीहिः । तस्यास्तत्त्वाविवक्षायामपि धात्वर्थः स एवेति द्वितीयकर्माभावात् 'ण्यन्ते कर्तुश्च' इत्यस्याप्राप्त्या तत्रैव क्तेन तयोः सत्त्वाद् बहुव्रीहि-रुक्तरूप इतीष्टसिद्धिरिति । हेतुत्वेति । हेतुसञ्ज्ञेत्यर्थः । अत एवाह—हेतोश्चेति । रूपत्वेनेति । धर्मपररूपशब्दोत्तरपदबहुव्रीहिस्त्वः । धेनोरित्यस्योभयत्रान्वयः । कर्तृत्वार्थम्—कर्तृसञ्ज्ञासंपादना-र्थम् । आवश्यकेति । अन्यथा णिजेव न स्यादिति भावः । ननु तत्त्वविवक्षया कर्तृत्वेऽप्य फलाश्रय-त्वात्कथं कर्मत्वं तस्या अत आह—ईदृशार्थस्यैवेति । तादृशव्यापाररूपार्थस्यैवेत्यर्थः । एतत्कर्मेति । धेनुकर्मसञ्ज्ञेत्यर्थः । ईदृशविषये—कर्तुः कर्मत्वविषये । ननु कर्तृत्वकर्मत्वशक्त्योरन्यतरसत्त्वेऽप्यन्यतरा-विवक्षा सूपपादाऽत आह—कर्मत्वशक्तेरपीति । अपिर्मिथः समुच्चायकः । तत्समेति । कर्तृत्वश-क्तिसमनियतत्वेनेत्यर्थः । अभिमानादिति । अनेनारुचिः सूचिता । तद्बीजं तु शक्त्योर्भेदेन तथा सम्भवः । दृष्टं चैतदन्यत्रापीति । तदेवं तदर्थे कर्मत्वाविवक्षायास्तद्रीत्या असम्भवेऽपि सोऽर्थ एव नेत्याश-येन शङ्कते-न चेति । प्रतिग्रहेति । प्रतिपूर्वकग्रहधातोरित्यर्थः । आदानमात्रार्थकादिति भावः । एतेन धेनोः कर्मत्वाभावेन तत्र क्तानिवृत्तिः । अत्र पक्षे हि तत्प्राप्तेरेवाभाव इति भावः । नन्वेवं णिजन्त-स्याऽऽदानानुकूलव्यापारार्थत्वेन प्रतिग्राहिते—स्वीकृते गन्धमाल्ये ययेति प्राग् बहुव्रीहौ प्रागुक्तरीत्या जायापदेन समासो न स्यादत आह—जायेति । एकदेशान्वयापत्त्या षष्ठीसमासायुक्तत्वादाह—षष्ठीति । विशिष्टेनान्वय इति भावः । प्रकृत्यैवेति । तथासतीत्यादिः । प्रतिग्राहितेति । अस्य विग्रहे इत्यादिः । अन्यपदार्थेतीति । एतेन वैपरीत्येनैवेत्यत्रैवकारो व्यर्थ इत्यपास्तम् । तद्वैपरीत्यानङ्गीकारे तु सूत्रोपात्तान्यपदार्थप्राधान्यं दुर्वचं, धेनुकर्तृकं जायानिष्ठप्रेरणविषयीभूतं यत्प्रतिग्रहणं तत्कर्मीभूते गन्ध-माल्ये इति विग्रहार्थात् । अत एवैतस्योपमानत्वेन निर्देशः; तदभिप्रेत्याह—तदन्तरिति । अन्यपदार्थस्य तद्वैपरीत्यस्य चान्तर्भावेणेत्यर्थः । सूत्रेति । सूत्रस्य व्युत्पत्त्यादेश्च बलेनेत्यर्थः । स्फुटीभविष्यति चेदं समा-

अभिवादिदृशोरिति । अभिवादयतेरप्राप्ते दृशेस्तु प्राप्ते विभाषेयम् ।

"अभिनि" । नेरल्पाच्तरत्वेन पूर्वनिपाते कर्तव्ये विपरीतोच्चारणं तादृशसमुदायविवक्षार्थमित्याह- संघातपूर्वकस्येति । तेनेह न-'निविशते यदि शूकशिखा पदे' इति । क्वचिन्नेति । "एष्वर्थेष्वभिनिविष्टानाम्" इति भाष्यप्रयोगश्चेह मानम् ।

उपपदविभक्तिमाह-उभसर्वतसोरित्यादिना । उभसर्वयोस्तसौ उभसर्वतसौ, तदन्तयोर्योगे द्वितीया कार्येत्यर्थः । अत्र प्राञ्चः-उभशब्देनोभयशब्दो लक्ष्यते , अन्यथा तसोऽसम्भवादित्याहुः ।

---

शब्दरत्नम् ।

लेनाङ्गीकारेऽप्यन्त्यान्तर्भावेण तत्स्वीकारे मानाभाव इति भावः । अभिवादयतेरिति । 'वदि, अभिवादन' इति ण्यन्तस्येत्यर्थः ।

व्याख्यानात् सङ्घात इणे स्थिते व्याख्याने बीजाभासं दर्शयति—पूर्वनिपात इति । निविशते इति । अत एव "सत्त्वे निविशते" इति भाष्यप्रयोगः संगच्छते । भाष्यप्रयोग इति । समर्थसूत्रस्थ इति शेषः ।

उभसर्वयोस्तसाविति । उभांशे उभशब्दघटितसमुदायोद्देश्यकत्वं षष्ठ्यर्थ इति

भैरवी ।

र्थातिरिक्तार्थस्यान्यपदार्थभिन्नस्य बोधकः शब्द इत्यर्थे मानाभाव इति भावः ।

व्याख्यानादिति । वक्ष्यमाणभाष्यप्रयोगमूलकव्याख्यानादित्यर्थः । बीजाभासमिति । पूर्वनिपातप्रकरणस्यानियतत्वात्पूर्वनिपातस्य संघातविवक्षासाधकत्वाभावाद्बीजाभासत्वमित्यर्थः । अत एव—संघातस्य विवक्षायाः सत्त्वादेव । भाष्यप्रयोगः—"वोतो गुणवचनात्" इतिसूत्रस्थभाष्यप्रयोगः । ननु "नित्यम्" इतिसूत्रेणाऽयचो वृत्तिविषये विधानादुभशब्दोद्देश्यकत्वं षष्ठ्यर्थ इति वक्तुमशक्यमित्यत आह—उभांश इति । ननु मौलवचने तर्हि कुतो नायजि-

भावप्रकाशः

सप्रकरणे । तत्स्वीकारे—बहुव्रीहिस्वीकारे ।

* युक्तं मूलं योजयति—व्याख्यानादिति । "सत्त्वे निविशते" इति भाष्यप्रयोगमूलकादित्यादिः । अयं भावः— अभिनीति द्वन्द्वस्तदन्तस्याप्यव्ययत्वेन पञ्चम्या लुक्, अभिनिपूर्वो विशतिर्मध्यमपदलोपिसमासो वेति; तदाह— संघातेति । बीजाभासमिति । प्रकाशाद्युक्तमित्यर्थः । अत्रारुचिबीजन्तु पूर्वनिपातप्रकरणस्यानित्यत्वं प्रत्याख्यातत्वं चेति । एवञ्च मूलस्य प्रकाशानुरोधित्वेऽपि प्रकाशरत्नाकरदण्डयाद्युक्तमयुक्तमिति भावः । पूर्वनिपाते इति, इति प्रतीकपाठः । व्याख्याने मूलं सूचयन्नाह—अत एवेति । नैषधपद्ये तदभावस्येष्टत्वादेवेत्यर्थः । भाष्यप्रयोग इति । "वोतो गुण" इति सूत्रस्थ इति भावः । अभिनिवेश आग्रहः—सन्मार्गविषयकाग्रहवानित्यर्थः । वैषयिकश्चायमाचारः । समर्थेति । एवञ्च 'अभिनिविश' इत्यानुपूर्व्यविकृता यत्र श्रूयते तत्रैवैतत्सूत्रप्रवृत्तिरिति न दोष इति भावः । परमूले कैयटानुसारिप्रकाशानूदितं तु न युक्तं, तदनुवृत्तौ तस्यारत्वे च मानाभावात् । एवं च तथारत्नाकरदण्डयाद्युक्तं चिन्त्यमिति बोध्यम् ।

ननु "नित्यम्" इति विभक्तसूत्रविहिताऽयचः स्वार्थिकत्वेनान्तरङ्गत्वाद् वृत्तिविषये पूर्वमेवोत्पत्तौ तत उभयशब्दात्तसि विहितत्वेऽपि नोभशब्दाद्विधानमिति 'उभसर्वतसोः' इत्ययुक्तमत आह—उभांशे इति । समुदायेति । उभयेत्यर्थः । तथाचोभयशब्दनिष्ठं प्रकृतित्वमुभशब्दे आरोप्य तत्प्रकृतिकत्वं षष्ठ्यर्थ इत्यर्थः । उभशब्दसर्वशब्दप्रकृतिकतसन्तयोगे इति तदर्थः । नन्वेवं वार्तिके वृत्तिविषयत्वसत्त्वादयच् स्यादत

वस्तुतस्तु वृत्तिविषये अयच्प्रवृत्तावपि उभशब्दाद्विहितो यस्तस् तदन्तमस्त्येवेति यथाश्रुतं साधु । धिगित्यविभक्तिको निर्देशो गवित्ययमाहेतिवदिति प्राञ्चः, तन्न, तथा सति अपदान्ततया दृष्टान्ते "लोपः शाकल्यस्य" इत्यस्येव दार्ष्टान्तिके जश्त्वस्यापि अप्रवृत्तिप्रसङ्गात् । न चायं गकारान्त एवेति भ्रमितव्यं, "कृस्य च दः" इति सूत्रे धकिदित्युदाहरणस्यासङ्गतिप्रसङ्गात् । तस्माद् धिगिति विभक्त्यन्तमेव । 'प्रकृतिवदनुकरणम्' इत्यतिदेशात्सुपो लुक् । उभयतः कृष्णमिति । कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः । आद्यादित्वात्तसिः । षष्ठ्यर्थे द्वितीया । एवमुपप-

शब्दरत्नम् ।

बोध्यम् । उभशब्दस्य शब्दपरत्वाद् वृत्तिविषयेऽपि नायच् वार्त्तिके । उदाहरणे तु अन्तरङ्गत्वात् पूर्वमेवायचि तत उभशब्दात्तस्यापि तद्घटितसमुदायोद्देश्यकत्वमस्त्येवेति न दोषः । वृत्तिविषये इति । वृत्तौ कृतायामित्यर्थः । प्राचीनैर्हि "उभौ साभ्यासस्य" इति निर्देशेन वृत्तिघटके परत एवायजिति व्याख्यातं, तदाह—उभशब्दादित्यादि । एवं च तेषां लक्षणाश्रयणं व्यर्थमिति भावः । अविभक्तिक इति । अनुत्पन्नविभक्तिक इति तदर्थं इति तद्व्याख्यातारः, दृष्टान्तबलेन तथैव लाभात् । तदभिप्रेत्याह—जश्त्वस्येति । अतिदेशादिति । अतिदेशेनाव्ययत्वादित्यर्थः । आद्यादित्वादिति । कृष्णस-

भैरवी ।

स्यत आह—उभशब्दस्येति । यत्र संख्येयपरताऽस्ति तत्र "उभादुदात्त" इत्यस्य प्रवृत्त्या "नित्यम्" इत्यस्यापि तत्रैव प्रवृत्तिरिति भावः । प्राचीनसम्मतव्याख्यानानुरोधेनाह—वृत्तौ कृतेति । धिगित्यत्र विभक्त्यश्रवणेनाविभक्तिकत्वं स्पष्टमेवेत्यत आह—अनुत्पन्नेति । सूत्रेणैव तसिल्प्रत्ययस्योपपत्त्यावाद्यादित्वकल्पनमनुचितमित्यभिप्रायेणाह—कृष्णसम्बन्धीति ।

भावप्रकाशः ।

आह—उभेति । शब्देति । तथा चासंख्यावाचित्वमिति 'अभिव्यक्त' इतिन्यायेन स नेति भावः । विषयेऽपीति धर्मपरो निर्देशः । यद्वोभशब्दे इति शेषः । उभयतः कृष्णमित्यादौ लक्षणं योजयति—उदाहरणे त्विति । अन्तरङ्गत्वादिति । अस्य स्वार्थिकत्वे नेत्यादिः । ततः—तस्मात् । यद्वा तदनन्तरम् । नन्वन्तरङ्गत्वेन प्राक् प्रवृत्तौ प्रसादकाराद्युक्ता "वस्तुतस्तु" इत्यादिना मूले-दोषोक्तिरयुक्ताऽत आह—वृत्तौ कृतायामिति । ननु नायं मूलादिसिद्धान्तोऽत आह—प्राचीनैर्हीति । यतः प्रसादादिभिस्तथा व्याख्यातमतस्तथार्थो बोध्यः । तदाहेति । तदनुसारेणाहेत्यर्थः । एवञ्च प्राचीनरीत्यैव प्राचीनग्रन्थदूषणं न स्वरीत्येति भावः । अत एव तत्फलितमाह—एवं चेति । तत्र तथाव्याख्यानेन तद्रीत्या यथाश्रुतसाधुत्वे चेत्यर्थः । तेषां—प्राचीनानाम् । अनेन स्वमते तदावश्यकत्वं ध्वनितम् । तच्चोक्तमेव प्राक् । व्यर्थमिति । अन्यथा पूर्वापरविरोधस्तेषाम् । तथा व्याख्यानत्यागेन लक्षणाश्रयणे तु मन्मतप्रवेश एवेति भावः । यथाचान्तरङ्गत्वात्प्राक् प्रवृत्तिस्तथोभशब्दे प्रपञ्चितम् । प्रकृतिद्वित्वेन तसोरिति द्विवनिर्देशः । एवञ्च तथा रत्नाकरदण्डनाद्युक्तमपास्तम् । नन्वव्ययत्वात्सुपो लुक्यश्रूयमाणविभक्तिकमित्यर्थकतयाऽविभक्तिकमिति प्रसादप्रकाशादिग्रन्थनिर्वाहे मूलमयुक्तं, नच तत्र न तथा व्यवहारः; "नलोपः प्राति" इति सूत्रे नेत्येतदविभक्तिकमित्यादिहरदत्तादिव्यवहारदर्शनादत आह—अनुत्पन्नेति । तत्रैव मानमाह—दृष्टान्तेति । तदभिप्रेत्येति । अनेनारुचिः सूचिता । तद्बीजन्तु निर्दृष्टान्त एवोक्ताशयकः प्राचां ग्रन्थः व्याख्यात्रभावश्च, तथाव्याख्यानाभावश्चेति । रत्नाकरोऽप्येवम् । एवञ्च मूलादि चिन्त्यमिति बोध्यम् । ननु नातिदेशेन लुक् सम्भवति विभक्त्यन्तस्यानुकरणत्वाभावादत आह—अतिदेशेनेति । ननु 'उभसर्वतसोः' इत्यत्र परसाहचर्यात्तसिलेव गृह्यते इति "आद्यादित्वात्तसिः" इतिमूलमयुक्तमत आह—कृष्णेति । एवं च मूलादि प्रकाशानुरोधेनेति भावः । यत्तु रत्नाकरदण्डिप्रभृतयः "अपादाने चाहीय" इति तसिः

द्विभक्तौ सर्वत्र बोध्यम् ।

> नाम्नोर्द्विधैव सम्बन्धः सर्ववाक्येष्ववस्थितः ।
> सामानाधिकरण्येन षष्ठ्या वाऽपि क्वचिद्भवेत् ॥

इति वृद्धोक्तौ षष्ठीग्रहणं तदपवादविभक्तेरप्युपलक्षणम् । द्विधेत्युक्तिः सामानाधिकरण्यवैयधिकरण्याभ्यां निर्वाह्या, षष्ठीतदपवादयोरेककोटितया वा । धिक् कृष्णाभक्तमिति । तस्य निन्द्यतेरयर्थः । कथं धिङ् मूर्खेति ? सम्बोधनपदस्य क्रियान्वय इति प्रागेवोक्ततया धिक्शब्दयोगाभावात् । क्रियापदं च

---

शब्दरत्नम्

म्बनिधपार्श्वद्वयाभ्यामागता इत्यर्थे पञ्चम्यास्तसिलित्यन्ये । **सामानाधिकरण्येन**—विनाऽपि सम्बन्धं विशेष्यविशेषणभावेन । **षष्ठ्येति** । भेदसम्बन्धपूर्वकविशेष्यविशेषणभावेनेत्यर्थः । नाम्नोरित्यनेन क्रियाकारकयोः क्रियाकारकभावरूपकारकविभक्त्यर्थसम्बन्धेनान्वय इति सूचितम् । **वैयधिकरण्येति** । षष्ठ्या वेत्येतद्वैयधिकरण्योपलक्षणमिति भावः । **क्रियान्वय इति** । बोधनीयक्रियान्वय इत्यर्थः । **धिक्शब्दयोगाभावादि-**

भैरवी ।

ननु सामानाधिकरण्यमेकाधिकरणवृत्तित्वं, तस्य सम्बन्धत्वन्तु 'नीलो घटः' इत्यादौ बाधितं द्वयोरभेदादत आह—विनापीति । सम्बन्धम्—सम्बन्धविशेषम् । षष्ठ्याः शब्दरूपतया सम्बन्धत्वन्न सम्भवतीत्यत आह—भेदसम्बन्धेति । भेदप्रयोज्यसम्बन्धेत्यर्थः । स च स्वस्वामिभावादिरूपः । ननु नाम्नोरेव द्विधाऽभिसम्बन्धाभिधानमसङ्गतम् क्रिययोरपि द्विधासम्बन्धस्य दर्शनात्, 'एधाञ्चक्रे' इत्यादौ 'पुरीमवस्कन्द' इत्यादौ चाभेदस्य, 'कृष्णन्नमेच्चेत्सुखं यायात्' इत्यादौ भेदसम्बन्धावच्छिन्नविशेष्यविशेषणभावस्य प्रतीतेरत आह—नाम्नोरिति । एवञ्च नाम्नोरेव द्विधा सम्बन्धप्रतिपादने न तात्पर्यङ्किन्तु क्रियाकारकयोर्विशेषसम्बन्धाभिधाने तात्पर्यमिति भावः । ननु वृद्धोक्तौ वैयधिकरण्यपदानुक्तेः कथमेवमभिधानमत आह—षष्ठ्या वेति । बोधनीयेति । विधेयभूतेत्यर्थः । एवञ्च 'धिङ् मूर्ख' इत्यत्र जीवसीत्यादिविधेयक्रियायाम्मूर्खेत्यस्यान्वयस्तस्यामेव धिक्शब्दार्थनिन्द्यत्वस्यान्वय इति क्रिया-

भावप्रकाशः ।

"हरेश्च" इति तसिलादेशे इदं रूपं, न तथा, उक्तयुक्तेः । तेन तत्र किंसर्वनामेत्याद्यनुवृत्त्या यत्र सञ्ज्ञायां तसिलोऽभावस्तद्योगे द्वितीया न; किन्तु षष्ठ्येवेति तत्र "पञ्चम्यास्तसिल्" इत्येव सिद्धे तावद्गौरवाश्रयणस्य निर्बीजत्वापत्तेः, तदेतद् ध्वनयन्नाह—पञ्चम्या इति । ननु सामानाधिकरण्येनेत्यस्याभेदेनेत्यर्थो न त्वन्यः; इष्टासिद्धेः, स चायुक्ततरत्वादत आह—विनापि सम्बन्धमिति । तद्विशेषमित्यर्थः । षष्ठ्याः शब्दरूपत्वेन सम्बन्धाऽजनकत्वादाह—भेदेति । स्वस्वामिभावादीत्यर्थः । अयमेव वैयधिकरण्यपदार्थः । ननु नाम्नोरित्युपलक्षणं वाच्यं लुनीहि लुनीहीत्येवायं लुनाति, पुरीमवस्कन्द, एधाञ्चक्रे, कृष्णं नमेच्चेत्सुखं यायात्, इत्यादौ तथा सम्बन्धान्वयस्येष्टत्वात्तथाच क्रियाकारकयोरपि सम्बन्धद्वैविध्यापत्तिरत आह—नाम्नोरिति । तथाच तेन सजातीयमेवोपलक्ष्यत इति क्रिययोरेव ग्रहणं न क्रियाकारकयोरिति भावः । तदाह—क्रियेति । क्रियाकारकभावरूपः कारकाधिकारपठितसञ्ज्ञानिमित्तविभक्तिद्वितीयादिवाच्यो यः सम्बन्धस्तेनैवेत्यर्थः । तथाचैकविध एव तत्र सम्बन्ध इति भावः । मूले—तदपवादेति । अत एवोपपदविभक्तीनां सम्बन्धोऽर्थः, विशिष्टार्थानुक्तेश्चेति भावः । नन्वेवं त्रिधेत्युचितमत आह मूले—द्विधेत्युक्तिरिति । ननु वृद्धोक्तौ वैयधिकरण्यस्यानुक्तेः कथं तेन निर्वाहोऽत आह—षष्ठ्या वेतीति तथाच तदर्थस्योक्ततया तदपवादविभक्तेरपि सङ्ग्रह इति भावः । तदुपलक्षणे मानाभावादाह मूले—षष्ठीति । व्रजानि देवदत्तेत्यादौ व्रजनक्रियायां तदन्वयाभावस्य वस्तुतस्त्वित्यादिना प्रतिपादितत्वादाह—बोधनीयेति ।

सरला ।

निन्द्यतेरयर्थ इति । 'कृष्णं धिक्करोति' इत्यादौ धिक्शब्देन निन्दाप्रतीतेर्धिगर्थो निन्देत्याशयः ।

क्वचिच्छ्रुतं क्वचिदाक्षिप्तमित्यन्यदेतत् । तथाच मूर्खसम्बोध्यकं निषिद्धाचरणादि निन्द्यत इति वाक्यार्थः । एतेन 'हा तात' 'हा देवि धीरा भव' इत्यादि व्याख्यातम् ।

यत्त्वाहुः—'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति सम्बोधने प्रथमैव भवति, सम्बोधनपदस्य कर्तृकारकवाचित्वादिति; तन्मन्दं, सम्बोधनपदस्य कर्तृकारकत्वे उक्तिसम्भवाभावात् । देव प्रसीदेत्यादौ वस्तुगत्या देव एव कर्तेति चेत् ? नैतावता कारकविभक्तित्वं लभ्यते । किं च देव त्वां भजे, त्वां भजन्तीत्यादौ सम्बोध्यस्य वास्तवमपि न कर्तृत्वमित्यास्तां तावत् । उपर्युपरीति । कथं

---

शब्दरत्नम् ।

[त] । संबोधनस्य क्रियान्वयात् तत्क्रिययैव धिको योगो न तेनापीति भावः । व्याख्यातमिति । तातेत्यादेर्हाशब्देन न योग इति भावः। हापदस्य चाध्याहृत'त्वाम्'इत्यनेन 'माम्' इत्यनेन वाऽन्वय इति तात्पर्यम् । कारकविभक्तित्वमिति । कर्तृकारकविभक्तित्वमित्यर्थः । संबोधनपदार्थस्य देवस्य त्वमित्यनेन सहाभेदेऽपि शब्दतः क्रियाश्रयत्वादिप्र-

भैरवी ।

या निन्द्यत्वस्य प्रतीतिर्नतु मूर्खत्वस्येति भावः । तथाच यस्मिन्वाक्ये सम्बोधनविभक्त्यन्तस्य क्रियावाचकस्य च तादृशस्य प्रयोगस्तत्र तस्याः क्रियायामन्वयो यत्र तु सम्बोधनविभक्त्यन्तमात्रस्य प्रयोगस्तत्र विधेयक्रियावाचकम्पदमध्याहर्तव्यमित्यत्र तात्पर्यम् । यत्र धिङ् मूर्खं जीवसीति प्रयुज्यते तत्र जीवनरूपा क्रिया न विधेया तस्याः सिद्धत्वात्किन्तु जानीहीत्यस्य शेषता कल्पनीया । अभिमुखीभवन्मूर्खोद्देश्यकं जीवनसम्बन्धि निन्दाकर्मकं यज्ज्ञानन्तदनुकूलप्रवर्त्तनाविषयो व्यापार इति शाब्दबोधः । न योग इति । किन्तु जानीहीत्येतदर्थं तातेत्यस्य । त्वां हा, मां वा हा, इति वाक्यद्वयमेवात्र बोध्यम् । हापदस्येति । खेदार्थकस्येति शेषः । ननु सम्बोधनपदार्थस्य क्रियायामन्वयस्य प्राक् प्रतिपादितत्वेन "तिङ्समानाधिकरणे प्रथमा" इति वार्तिकैकवाक्यतया प्रथमायाः कारकविभक्तित्वस्य सत्त्वाच्च "तन्मन्दम्" इत्यादिना प्रतिपादितमसङ्गतमत आह—कर्तृकारकेति । ननु यदि कारकत्वन्तर्हि तस्य कर्तृत्वमप्यस्त्वित्यत आह—सम्बोधनपदार्थस्येति । देव त्वम्प्रसीदेति वाक्य इत्यादिः । त्वमित्यनेन–एतदर्थेन । अभेदेऽपीति । फलिताभेदेऽपीत्यर्थः । शब्दत इति । सम्बोध-

भावप्रकाशः ।

विधेयेत्यर्थः । नन्वेवमपि धिक्शब्दयोगस्तस्य कुतो नेत्यत आह—सम्बोधनेति । क्रियेति । विधेयक्रियेत्यर्थः । एवमग्रेऽपि । तेनापीति । सम्बोधनेनापीत्यर्थः । अपिस्तस्या एव समुच्चायकः । अयं भावः—निषिद्धाचरणमित्यस्य जानीहीत्यस्य चाध्याहारेणाभिमुखीभवन्मूर्खोद्देश्यकनिषिद्धाचरणादिसम्बन्धि निन्दाकर्मकप्रवर्तनाविषयो ज्ञानमिति वाक्यार्थः, तथाच ज्ञाने एव तद्योगः । एतेन येषां धिक्कृष्णाभक्तमित्यादौ प्रथमार्थे द्वितीया, निन्द्यः कृष्णाभक्त इत्यर्थः; तन्मते मूर्खसम्बोध्यकं निषिद्धाचरणादि निन्द्यमिति वाक्यार्थ इति प्रकाशरत्नाकरदण्डयाद्युक्तं तदाशयकमेव मूलोक्तं चापास्तमिति । तद्ध्वनयैवाह—तातेत्यादेरिति । नन्वेवं हेत्यस्यानन्वयापत्तिरेवात आह—हापदेति । खेदार्थकस्येति भावः । मामिति । अस्याऽध्याहृतेत्यादिः । त्वत्सम्बन्धी मत्सम्बन्धी वा खेद इति तदर्थः । तथाच भिन्नमेवेदं वाक्यमिति भावः । सम्बोधनस्य कारकविभक्तित्वस्य प्राक् प्रतिपादितत्वादाह—कर्तृकारकेति । तथैवोपक्रमोपसंहारादिना लाभादिति भावः । ननु तस्य कारकत्वे कर्तृत्वमपि सूपपादमत आह—सम्बोधनेति । देव त्वं प्रसीदेत्यादाविति भावः । त्वमित्यनेन—त्वमित्यर्थेन । अभेदेऽपि—फलिताभेदेऽपि । अत एवाह—शब्दत इति । सम्बोधनपदार्थ इति शेषः । तस्योद्देश्यतयैव प्रतीतेस्तत्त्वेनैव तत्रान्वयात् । अत एव ववक्षिक्यः कारकविभक्त्य इति सिद्धान्त इति भावः । वस्तुतस्त्वं तु न

तर्हि 'उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धयः' ? उच्यते, उपरिबुद्धीनामुत्तानबुद्धीना-मुपरि चरन्तीत्यर्थः। एवं च आम्रेडितत्वाभावान्न द्वितीया। यद्वा—प्रतिपदोक्तस्य "उपर्यध्यधसः सामीप्ये" इति कृतद्वित्वस्यात्र ग्रहणम्, तेन वीप्सायां द्विर्वचने सति नास्य प्रवृत्तिः। "अन्यत्रापि दृश्यते" इत्युक्तं, तद्दर्शयति—अभितः परित

शब्दरत्नम्।

तीतेरुपपादनस्याशक्यतया कर्त्तृत्वं दुर्लभम्। वास्तवक्रियाश्रयत्वमादाय कर्त्तृत्वे तु बहूप-प्लव इति भावः। **नास्य प्रवृत्तिरिति**। अत एव 'सर्वेषामवमम्लानमुपर्युपरि वर्त्तते' इत्यादौ न द्वितीया। अत्र ह्युपर्युपरीत्यस्यातिशयोऽर्थो न सामीप्यम्। वीप्सायां

भैरवी।

नपदार्थे इत्यादिः। उद्देश्यतयैव तस्य तत्रान्वयस्य स्वीकारादिति भावः। ननु तस्मिन् वाक्ये त्वमित्येतदर्थेन सह देवेत्यस्याभेदस्य सत्त्वाद्वस्तुगत्याऽऽश्रयत्वमप्यस्तीत्यत आह— वास्तवेति। बहूपप्लव इति। वचनपुरुषाद्यव्यवस्थारूप इत्यर्थः। वस्तुतस्तु वाक्यैकदेशन्यायेन 'अजानि देवदत्त' इत्यस्य अजानि देवदत्त जानीहीत्येतदर्थकताऽस्ति। 'एकतिङ् वाक्यम्' इत्यस्य श्रूयमाणैकतिङ्वाक्यमित्यर्थ इति निघातस्य सिद्धिरप्यस्ति। अत एव सम्बोधनस्य कर्तृकारकवाचित्वव्यवहारोऽपि प्राचाम्, देवदत्तेत्यस्योक्तन्यायेन देवदत्त त्वं जानीहीत्येतद-र्थकत्वेन विधेयक्रियाकर्तृकारकवाचित्वात्। अत एव 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकस्याप्युपपत्तिः। यत्र क्रियावाचकम्पदन्न श्रूयते तत्रापि "अस्तिर्भवन्तीपर" इति न्यायेन गम्यमानक्रियान्वयोऽस्त्येव। भवन्तीपर इत्यस्य लट्पर इत्यर्थः। अत्र भवन्तीत्यु-पलक्षणम्, लकारान्तरस्यापि क्वचित्सम्भवात्, अत आह—इति भाव इति। एवञ्च मूलोक्त-श्चिन्त्यमित्यत्र तात्पर्यम्। ननु प्रथमसमाधानेन उपर्युपरिबुद्धीनामित्यस्य सूपपादत्वेन यद्वेत्यादि नोक्तद्वितीयसमाधानस्य नोपयोगः। किञ्च बुद्धीनाम् इना—श्रेष्ठा बुद्धीना, तामुप-र्युपरीत्येवन्द्वितीयापि वक्तुं शक्येत्यत आह—अत एवेति। द्वितीयसमाधानादेवेत्यर्थः। एतदेवाह—अत्रेति। उक्तवाक्ये इत्यर्थः। अतिशय इति। यथा 'उपर्युपरि लोकं हरिः' इत्यादौ

भावप्रकाशः।

नियामकमित्याह—वास्तवेति। बहूपप्लव इति। वचनपुरुषाद्यव्यवस्थापत्तिरूप इत्यर्थः। ननु सम्बोधनस्य कर्तृकारकत्वव्यवहारोऽपि प्राक् प्रतिपादितः स्पष्टतरश्च मञ्जूषायामत आह—इति भाव इति। एवञ्च मूलं तथा दण्डथाद्युक्तञ्च चिन्त्यमिति यत्त्वाहुरिति प्रकाशोक्तिर्युक्तैव। एतेन प्रकाशो-क्तरीत्या समाधाय यत्तु सम्बोधनपदं कर्तृकारकवाचीत्यन्तरङ्गत्वात्प्रथमेति केचित्; तन्न, देव प्रसीदेत्यादौ तस्य वारं तवकर्तृत्वेऽपि 'कृष्ण त्वां भजे' 'गच्छन्तु चैत्राः कृष्ण' इत्यादौ तदभावादिति नव्याः। द्वन्द्वघटित-तत्पुरुषाश्रयणे त्वेतदपि सुद्धरम्। यदपि, त्वं वेत्सीत्यध्याहारात्कर्तृत्वं तत्राप्यस्त्येवेति कश्चित्, तदपि न, तथाहि सत्येकतिङ्वाक्यमिति समानवाक्यत्वाभावात्तत्र निघातानापत्तेरित्यादिरत्नाकरोक्तमपास्तम्, तथा-प्रकाशाभावेन तथानुवादस्यायुक्तत्वात् तस्याऽवाचनिकत्वेन तदर्थाभिप्रायकत्वस्यापि दुर्वचत्वाच्च, उक्तरीत्या प्रकाशसौष्ठवे द्वन्द्वघटिततत्पुरुषाश्रयणे निर्बीजत्वाच्च, वेत्सीत्यध्याहारेऽपि प्रागुक्तरीत्या निघा-तस्य सिद्धत्वाच्च, विद्धीत्यध्याहारौचित्याच्चेति दिक्। ननु प्रथमसमाधानेनैव सिद्धे द्वितीयसमाध्यु-क्तिर्मूले निष्फला, किं च बुद्धीनाम् इना—श्रेष्ठा बुद्धीना तामिति द्वितीयान्तमेव तत्सुवचमत आह— अत एवेति। द्वितीयसमाध्यङ्गीकारादेवेत्यर्थः। तदेवोपपादयति—अत्र हीति। उक्तवाक्ये हीत्यर्थः। अतिशय इति। उपर्युपरि लोकं हरिरित्यादाविव। ननु द्विरुक्तोपर्यादेः समीपोर्ध्वदेशादिवृत्तित्वमर्थः, प्रतियोगित्वरूपः सम्बन्धो द्वितीयार्थः, लोकप्रतियोगिकसमीपोर्ध्वदेशवृत्तिरित्यादिक्रमेण बोधो नैवं प्रकृते इत्याह—न सामीप्यमिति। अनेन मूले द्वितीयपक्षेऽप्येवमेव बोध्यमिति सूचितम्। इतरबुध्यधिका-तिशययुता ईश्वरबुद्धयश्चरन्तीति हि तदर्थः। अत एवाह—वीप्सेति। चस्त्वर्थे। सर्वसम्बन्ध्यतिशयि-

इति । प्रतिभातीति । एष प्रतिशब्दः क्रियाविशेषकत्वादुपसर्गो न तु कर्मप्रवचनीयः ।

अन्तरा त्वां मामिति । तव मम च मध्ये इत्यर्थः ।

सामर्थ्यादिति । अत एव हेतुत्वपर्यन्तमपि शाब्दबोधे विषय इति स्वीक्रियत इति भावः ।

---

**शब्दरत्नम् ।**

द्विर्वचनं चात्रेति बोध्यम् । उपसर्ग इति । बुभुक्षितान्वितप्रत्यर्थसम्बन्धस्य क्रियागतत्वाद् बुभुक्षितस्य न भातीत्यन्वय इति भावः ।

मध्ये इति । अन्तरा इति हि मध्ये इत्यर्थकम् ।

**भैरवी**

द्विरुक्तस्योपर्युपरीत्यस्य समीपोर्ध्वदेशवृत्तित्वमर्थः, प्रतियोगित्वरूपः सम्बन्धो लोकपदोत्तरद्वितीयार्थः, लोकप्रतियोगिकसामीप्यवदूर्ध्वदेशवृत्तिर्हरिरित्यर्थः प्रतीयते, न तथा प्रकृते, किन्तु बुद्धीनां लौकिकपुरुषबुद्धीनामुपर्युपरि तदवधिकातिशयविशिष्टाश्चरन्तीत्यर्थ इति न द्वितीयाप्रसक्तिरिति भावः । द्विर्वचनञ्चात्रेति । चस्त्वर्थे । ननु 'बुभुक्षितन्न प्रतिभाति' इत्यत्र "कर्मप्रवचनीययुक्ते" इत्येव द्वितीया सिद्धा प्रतिशब्दस्येत्थम्भूताख्याने तस्याः सञ्ज्ञायाः प्राप्तेरत आह—बुभुक्षितेति । बुभुक्षितेनान्वितो यः प्रत्यर्थः प्रतिद्योत्यस्तद्रूपो यः सम्बन्धस्तस्य क्रियागतत्वमित्यर्थः । स च प्रतिभात्वरूप एव । तच्च झटिति स्फूर्तिकत्वमेव । एतस्य सम्बन्धस्य प्रतिद्योत्यता, वाच्यस्तु स धातोरेवेति सूचनाय बुभुक्षितस्य न भातीत्यस्य प्रतिशब्दाघटितस्य लेखः । कर्मप्रवचनीयत्वे तु तस्याप्युपादानङ्कृतं स्यात् । एवञ्च बुभुक्षितसम्बन्धी यत्किञ्चिद्विषयकप्रतिभाऽभाव इति बोधः ।

अन्तराशब्दस्याधिकरणशक्तिप्रधानत्वादाह—अन्तरा इति वीति । मध्यत्वान्वय्यवधित्वरूपः सम्बन्धो द्वितीयार्थः । "अन्तरान्तरेण" इति सूत्रे परस्परसाहचर्यादव्यययोरेव ग्रहणन्नतु टाबन्ततृतीयान्तयोः ।

**भावप्रकाशः ।**

तमम्लानमघं वर्तते इति वाक्यार्थः । ननु बुभुक्षितं न प्रतिभातीत्यादौ इत्थंभूताख्यानत्वेन कर्मप्रवचनीयत्वेन गतार्थताऽत आह--उपसर्ग इतीति । तदुपपादयति–बुभुक्षितेति । बुभुक्षितान्वितो यः प्रत्यर्थस्तद्द्योत्यो झटितिस्फुर्तित्वापरपर्यायः प्रतिभात्वरूपस्तत्सम्बन्धस्य भानक्रियागतत्वं न तु बुभुक्षितगतत्वमित्यर्थः । तमेव सम्बन्धं दर्शयति--बुभुक्षितेति । प्रतेर्द्योतकत्वाद्धातोरेव सोऽर्थ इति ध्वनयितुं प्रतेरनुल्लेखः । कर्मप्रवचनीयत्वे तु तदुल्लेख आवश्यकः, क्रियानिरूपितसम्बन्धविशेषद्योतकत्वस्यैव तत्त्वात् । अत एव तदभावात्तदभावः । तथा च "प्रतियोगे" इत्यस्य प्रतिद्योत्यार्थक्रियायोगे इत्यर्थः । बुभुक्षितसम्बन्धी यत्किञ्चिद्विषयकप्रतिभाऽभाव इति बोधः ।

नन्वन्तराशब्दस्य मध्यार्थकत्वेऽपि मध्ये इति कथं लब्धमत आह---अन्तरेति । आधेयप्राधान्ये मध्ये स वर्तते । अवधित्वरूपः सम्बन्धो द्वितीयार्थः, स च मध्यत्वान्वयी । त्वन्मदवधिकमध्यत्ववद्वृत्तिर्हरिरिति बोधः । सूत्रे मिथःसाहचर्यादव्यययोरेव ग्रहणं, गुरुभार्गवावित्यत्र ग्रहयोरिव, न तु टाबन्ततृतीयान्तयोः । हरेस्तु न सा, "उपपद" इति न्यायात्, युक्तग्रहणं तु स्पष्टार्थमिति भावः ।

**।सरला।**

मूले हेतुत्वपर्यन्तमपीति । "लक्षणेत्थम्भूतेत्यनेनानोः कर्मप्रवचनीयसञ्ज्ञायां सिद्धायां हेत्वर्थमिदं वक्तव्यम् । हेतुः शाकल्यस्य संहिता वर्षस्य, न लक्षणम् । लक्षणं हि नाम स भवति येन पुनः पुनर्लक्ष्यते, न यः सकृदपि निमित्तत्वाय कल्पते । सकृच्चासौ शाकल्येन सुकृतां संहितामनुनिशम्य देवः प्रावर्षत्" इति भाष्ये "हेत्वर्थमिदं वक्तव्यम्" इत्युक्तेर्हेतुत्वमपि अनुद्योत्यं द्वितीयार्थ इति भावः ।

नदीमन्विति। द्वितीयायाः सम्बन्धोऽर्थः। स चेह साहित्यरूप इत्यनुना द्योत्यते।

"लक्षणेत्थम्" ॥ वृक्षं प्रतीति। वृक्षसम्बन्धि द्योतनमर्थः। सम्बन्धश्च लक्ष्यलक्षणभाव इति प्रत्यादयो द्योतयन्ति। भक्तो विष्णुं प्रतीति। विष्णोर्भक्तेश्च विषयविषयिभावः प्रत्यादिद्योत्यः। लक्ष्मीरिति। लक्ष्मीरूपस्य भागस्य हरिणा सह स्वस्वामिभावः। वृक्षं वृक्षमिति। इह वीप्सा द्विर्वचनेनैव द्योत्यते, परिशब्दस्तु क्रियया संबध्यते। कर्मणि द्वितीया। कर्मप्रवचनीयसञ्ज्ञया उपसर्गसंज्ञाया बाधात् षत्वं न। एतदर्थमेव लक्षणादयो विषयतयोपात्ता इति व्याख्या-

---

शब्दरत्नम्।

लक्ष्यलक्षणेति। वृक्षप्रकाशेन विद्युद्विद्योतज्ञानाद् वृक्षो लक्षणं, विद्युद्विद्योतनं लक्ष्यम्। कर्मणीति। वृक्षपदार्थस्य सेचनं प्रति कर्मत्वात्। अत एव क्षस्य वृक्षस्य प्रतिसेचनमित्यादौ षष्ठीति भावः। विषयतयेति। अन्यद्योत्याया अपि वीप्सायाः

भैरवी।

अत एवेति। कर्मणि द्वितीयाङ्गीकारादेवेत्यर्थः। षष्ठीति। "कर्तृकर्मणोः" इति सूत्रविहिता षष्ठीत्यर्थः। एतेनास्य कर्मप्रवचनीयसंज्ञया षत्वाभावो यथा भवति तथा "कर्मप्रवचनीययुक्ते" इति द्वितीयापि सिद्धेवेति कर्मणि द्वितीया इत्ययुक्तमिति परास्तम्। शेषे षष्ठी तु वक्तुमशक्या, कर्मप्रवचनीययोगविहितद्वितीयायास्तद्बाधकत्वात्। ननु लक्षणादीनां विषयत्वन्द्योत्यत्वेन वाच्यत्वेन वा वक्तव्यन्तच्चान्यतरदप्यत्र न, वीप्सायान्द्विर्वचनस्य स्वीकारादत आह—अन्यद्योत्याया इति। द्विर्वचनद्योत्याया इत्यर्थः। विषयत्वन्तु तद्घटितवाक्यजन्यशाब्दबोधविषयत्वाद्बोध्यम्। वीप्साया विषयत्वबोधनाय सूत्रे वीप्सापदम्प्रत्यादिसान्निध्येनोपात्तम्। इतरे—वीप्सातः। ननु परिशब्दस्य क्रियया सम्बन्धो ननु वृक्षेणेति कथमपञ्चम्यापत्तिः? कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वस्यैव कर्मप्रवचनीययुक्तत्वादत आह—

भावप्रकाशः।

ननु लक्ष्यलक्षणत्वं यदि ज्ञाप्यज्ञापकत्वं तर्हि वैपरीत्यापत्त्या विद्युत्पदादेव द्वितीयापत्तिरत आह—वृक्षेति। तथा च नोक्तरूपं तत्, किन्तु ज्ञानजनकज्ञानविषयत्वं लक्षणत्वं, ज्ञानजन्यज्ञानविषयत्वं लक्ष्यत्वमिति नोक्तदोषः। वृक्षदर्शनजन्यज्ञानविषयो विद्युद्विद्योतनमिति बोध इति भावः। विद्योतज्ञानादिति। तत्समीपदेशविशेषावच्छिन्नविद्युद्विद्योतज्ञानादित्यर्थः। ननु कर्मप्रवचनीयं प्रत्यकर्मत्वात्कथं द्वितीयाऽत आह-वृक्षेति। ननु सञ्ज्ञया षत्वाभाववद् द्वितीयाऽपि भविष्यति, उपपदेति न्यायस्तु फलाभावान्न, शाब्दबोधकृतभेदस्तु दुष्परिहरोऽत आह—अत एवेति। कर्मणिद्वितीयाङ्गीकारादेवेत्यर्थः। षष्ठीति। "कर्तृकर्मणोः" इति षष्ठीत्यर्थः। अन्यथा तया तत्सिद्धावपीयं दुर्लभा स्यात्। शेषे षष्ठी तु न, अस्यास्तदपवादत्वादिति भावः। ननु विषयत्वमपि द्योत्यत्वेन वाच्यत्वेन वा वाच्यं, तच्च वीप्सायामन्यतरस्याप्यभावाद् दुर्वचमत आह—अन्यद्योत्येति। द्विर्वचनद्योत्येत्यर्थः। अत एवोद्देश्यत्वेन "अनुर्लक्षणे" इत्यादिवत्सञ्ज्ञिनां पूर्वनिर्देशे कर्तव्ये विपरीतोच्चारणं वीप्सारूपार्थस्य सान्निध्यबोधन-

सरला।

साहित्यरूप इति। "तृतीयार्थे" इति सूत्रे तृतीयापदेन "कर्तृकरणयोस्तृतीया, सहयुक्तेऽप्रधाने" इति सूत्रपाठे सन्निधानात्सहशब्दो लक्ष्यते, तदर्थः साहित्यमेव तत्र गृह्यते न तु सादृश्यमपि "सहार्थे" इत्येव लाघवात्कर्तव्ये "तृतीयाऽर्थे" इति सूत्रकरणसामर्थ्येन तृतीयानिमित्तभूतसमानकालिकक्रियादिमत्स्वरूपसहार्थद्योतकस्यैव ग्रहणादिति भावः।

तमाकरे । "पञ्चम्यपाङ्परिभिः" इति तु न भवति, वर्जनार्थेनापेत्यनेन साहचर्यात् ।

---

**शब्दरत्नम् ।**

सञ्ज्ञां प्रति निमित्तत्वादिति भावः । इतरे लक्षणादयस्तु द्योत्या एवेति बोध्यम् । इति तु न भवतीति । विशिष्टक्रियासम्बन्धे विशेषणेनापि सम्बन्धात्प्राप्तिरिति भावः । एतत्सर्वं हरदत्तानुरोधेन, कर्मत्वाविवक्षायामपि द्वितीयार्थं सञ्ज्ञाया आवश्यकत्वात् । किं

**भैरवी ।**

विशिष्टक्रियासम्बन्धे इति । परिद्योत्यसर्वतोभावविशिष्टक्रियासम्बन्धे इत्यर्थः । यदि क्रियया सम्बन्धो न स्यात्तदा कर्मत्वाभावाद् द्वितीयापि न स्यात् । एवञ्च कर्मप्रवचनीयद्योत्यसम्बन्धाश्रयान्वितत्वरूपमिह कर्मप्रवचनीययुक्तत्वमस्तीति भावः । अभ्युपेत्यवादोऽयमिति ध्वनयन्नाह—एतत्सर्वमिति । एतत्सर्वम्-इह वीप्सेत्यादिनोक्तम् । हरदत्तानुरोधेनेति । 'उपपदविभक्तेः' इति न्यायेनात्र कर्मण्येव द्वितीया, पर्यादयस्तु क्रियाविशेषका एवेतिहि तेनोक्तम् । कर्मत्वाविवक्षायामिति । तादृशशक्तिमत्त्वेन विवक्षायां "कर्मणि द्वितीया" इत्यस्य प्रवृत्तिरिति

**भावप्रकाशः ।**

द्वारा पुनर्विधानार्थम् । अत एव च वीप्साशब्दस्य परनिपात इति भावः । इतरे इति । वीप्सान्ये इत्यर्थः । तथाच निमित्तत्वद्योत्यत्वान्यतरत्वरूपं तद्विशिष्टम्, एकस्यैव निवेशे स्वपरत्र न स्यादिति भावः । ननु परैः क्रियासम्बन्धेन वृक्षेणासम्बन्धात्कथं पञ्चम्यापत्तिः, कर्मप्रवचनीययुक्तत्वं च कर्मप्रवचनीयद्योत्यतत्सम्बन्धाश्रितत्वमत आह—विशिष्टेति । कर्मत्वोपपत्तये क्रियान्वयस्यावश्यकतया परिद्योत्यसर्वतोभावविशिष्टसेचनसम्बन्धे वृक्षस्य विशेषणेनापि सम्बन्धात्परैर्योगः कर्मप्रवचनीययुक्तत्वं च यथाकथञ्चिदिति भावः । वस्तुतोऽयुक्तमेतदित्याह—एतत्सर्वमिति । इह वीप्सेत्यादि ग्रन्थं नेत्यन्तं मूलमत्रोपसर्गत्वाभावान्न ष इति परममूलं चेत्यर्थः । हरदत्तेति । उपपदविभक्तेरिति न्यायेनात्र कर्मण्येव द्वितीया । पर्यादयस्तु क्रियाविशेषका एवेति हि तेनोक्तम् । कर्मत्वाविवक्षायामिति । अयं भावः—द्वितीयार्थः कर्म, स्वप्रकृत्यर्थतावच्छेदकव्यापकतासम्बन्धेन तस्य सेचनक्रियान्वयः, ईदृशसम्बन्धद्योतकं च वीप्सा द्विर्वचनं, द्वितीया कर्मण्येव, प्रत्यादयः क्रियाविशेषकाः, एवं सञ्ज्ञाफलं त्वषत्वम् । वीप्सायां प्रतिनाऽव्ययीभावस्तु न, प्रतेरतदर्थकत्वात् प्रतिद्वितीयान्तयोः क्रियान्वयेनासामर्थ्याच्चेति प्राञ्चः ।

प्रतिभासमित्यादौ प्रतेर्वीप्साद्योतकत्वस्य दृष्टत्वेन वृक्षं वृक्षं प्रतीत्यादावुभयोरपि तद्द्योतकत्वमस्तु । न चान्यतरवैयर्थ्यम्, व्यतिलुनीत इतिवदुपपत्तेः । एवं च लक्षणादिसाहचर्यमप्यबाधितं भवति । न च कर्मणि द्वितीयासिध्या न फलं, तदविवक्षायां सम्बन्धत्वेन विवक्षायामपि द्वितीयासिद्धेः फलत्वात् । एवं च यत्र न द्वित्वं केवलः प्रतिरेव वीप्साद्योतकस्तस्य च क्रियाविशेषकत्वाभावः, तत्र द्वितीयार्थं सञ्ज्ञायाः साफल्येन लक्षणादिसाहचर्यबोधेन विषयत्वपर्यन्तव्याख्याने बीजाभावेन प्रतेः क्रियाविशेषकत्वे तद्द्योतकत्वे सञ्ज्ञाप्रवृत्तौ न मानम् । न च तादृशस्थले नित्यत्वादव्ययीभावो दुर्वार इति वाच्यम् । तद्विषये समासवैकल्पिकत्वस्य वक्ष्यमाणत्वादिति मान्याः ।

अन्ये तु—"कस्य लक्षणादयोऽर्था निर्दिश्यन्ते? वृक्षादीनाम्" इति भाष्यप्रामाण्यात्साहचर्यानाश्रयणेन विषयतया व्याख्यानस्यौचित्यम् । एवं चोभयत्रापि द्वितीया । किमिमे सामीप्यादिवत्प्रत्यादीनामर्था उत पदान्तरवाच्या अपि विषयतया सञ्ज्ञानिमित्तभूता इति प्रश्नः, उत्तरपक्षाश्रयेणोत्तरं वृक्षादीनामिति हि भाष्यार्थ इत्याहुः । तथाच वीप्सा द्विर्वचनद्योत्या । वीप्सापदेन बोधयितुमिच्छाविषयत्वरूपं व्याप्यत्वं

**सरला ।**

आवश्यकत्वादिति । 'वृक्षं वृक्षं प्रति सिञ्चति' इत्यत्र वृक्षस्य सेचने कर्मत्वे "कर्मणि द्वितीया" इत्यनेन द्वितीयासिद्धावपि कर्मत्वेनाविवक्षायां तदप्राप्तौ तत्रापि द्वितीयार्थमिदं कर्मप्रवचनीयसञ्ज्ञाविधानमावश्यकमिति भावः । क्रियाविशेषकत्वे इति । क्रियाविशेषविषयकतात्पर्यग्राहकत्वे इत्यर्थः ।

शब्दरत्नम् ।

च परेः क्रियाविशेषकत्वेऽन्वर्थत्वेन कर्मप्रवचनीयत्वस्यैवानापत्तिरित्यन्यत्र विस्तरः ।

भैरवी ।

स्पष्टमेव । अनापत्तिरिति । "कर्मप्रवचनीयाः" इत्यत्र बाहुलकात्कर्तरि भूतेऽनीयर् । कर्मशब्दोऽत्र क्रियागतविशेषस्य बोधकः । ये कर्म प्रोक्तवन्तः, सम्प्रति तु न तथा, किन्त्वप्रयुज्यमानक्रियाकृतसम्बन्धविशेषस्य द्योतका इति लब्धम् । एवञ्च यदि प्रयुज्यमानसेचनक्रियागतविशेषद्योतका एते तदा अप्रयुज्यमानक्रियाकृतविशेषाद्योतकत्वात्कर्मप्रवचनीयसंज्ञैव न स्यान्महासंज्ञाकरणादिति भावः । ननु भवन्मते कथमत्र कर्मप्रवचनीयसंज्ञेतिचेदित्थम्–वृक्षम्प्रति

भावप्रकाशः ।

बुद्धिस्थयावत्प्रकृत्यर्थनिष्ठमुच्यते, व्याप्यत्वविशिष्टवृक्षादीनां च स्ववृत्तिव्याप्तिः, प्रत्यर्थं शब्दनिवेश इत्यादावर्थस्य निवेशनक्रियानिरूपिताधिकरणत्वेप्यर्थमर्थम्प्रतीति विग्रहो भाष्ये दर्शितः । वृत्तिविषये तु प्रतिरेव वीप्साया अपि द्योतक इत्यन्यत् । अन्यथा प्रतेर्निवेशनक्रियान्वयित्वेनासामर्थ्यादर्थशब्देन समासानापत्तिः, निवेशनक्रियानिरूपिताधिकरणत्वादर्थपदात्सप्तम्यापत्तिश्च । तस्मादकर्मकश्रुतादियोगेऽर्थमर्थम्प्रति शब्दनिवेश इत्यादौ निविशत्यधिकरणे सकर्मकयोगेऽपि कर्मत्वाविवक्षायां सम्बन्धत्वेन विवक्षायां प्रत्यादिद्योत्यसम्बन्धेनान्वयविवक्षायां च द्वितीयार्थमिदं सूत्रमिति तत्त्वम् । किञ्च वृक्षादीनां सेचनादिकर्मत्वेऽपि षत्वाभावार्थं तत्संबन्धबोधार्थं तादृशसम्बधे द्योतकत्वमपि प्रत्यादीनां वाच्यम् । तथाच व्याप्यत्वविशिष्टवृक्षादिकर्मतानिरूपकव्यापकं सेचनमिति कर्मत्वपक्षे बोधः, तदविवक्षायान्तु व्याप्यत्वविशिष्टवृक्षादिसम्बन्धिव्यापकं सेचनमिति बोधः । तथाच बोधे वैलक्षण्येन कथं तत्र तत्सिद्धिः । रत्नाकरोऽप्येवम् । एतेन तथाप्रकाशदण्डथायुक्तमपास्तमिति दिक् । तदेतद् ध्वनयन्नाह–इत्यन्यत्रेति ।

सरला

अनापत्तिरिति । पूर्वं क्रियां प्रोक्तवन्त इति कर्मप्रवचनीयपदव्युत्पत्त्या सम्प्रति क्रियाविशेषाद्योतकस्यैव कर्मप्रवचनीयसञ्ज्ञालाभादत्र तदप्रवृत्तिरित्यर्थः । वस्तुतस्तु "कर्मणि द्वितीया" इत्यनेनैवात्र द्वितीया भवति "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति परिभाषया कारकविभक्तेः प्राबल्यात् । एवञ्चास्य सूत्रस्य षत्वाभावादिकमेव फलं, न तु द्वितीयासिद्धिरिति । न च कर्मत्वाविवक्षायां द्वितीया फलमस्येति वाच्यम्, अत्र कर्मत्वाविवक्षाया असम्भवात् । तथा सति द्वित्वमेव न प्रवर्तेत । "नित्यवीप्सयोः" इत्यनेन हि वीप्सायां द्वित्वं भवति पदस्यैव च । वीप्साद्योतकं पदं च द्विरुच्चारणीयत्वेन चिकीर्षितनिष्ठपदसञ्ज्ञाप्रयोजकविभक्त्यर्थसम्बन्धावच्छिन्नव्यापकतानिरूपितव्याप्यतावदर्थबोधकम् । अत एव कर्मतासम्बन्धावच्छिन्नव्यापकतायां द्विर्वचनेन बोधनीयायां 'वृक्षो वृक्षः सिञ्चति' इति न प्रयोगः, कर्मत्वस्य सुविभक्त्यर्थत्वाभावात् । अत एव चैकवृक्षमात्रसेचनेऽपि कालिकादिसम्बन्धेन वृक्षादिव्यापकतायाः सेचने सत्त्वेऽपि 'वृक्षं वृक्षं सिञ्चति' इत्यादयो न प्रयोगाः । एवं च यदि कर्मणि द्वितीया विधीयते तदा तु द्विरुच्यमानवृक्षपदनिष्ठपदसञ्ज्ञाप्रयोजकामर्थकर्मत्वसम्बन्धावच्छिन्नव्यापकतानिरूपितव्याप्यतावद्वृक्षबोधकस्य 'वृक्षम्' इत्यस्य प्रथमं द्वित्वं, ततश्च तद्व्यापकत्वद्योतकत्वप्रयुक्तैव प्रतेः कर्मप्रवचनीयसञ्ज्ञेति षत्वनिषेधोऽपि सिद्ध्यति । कर्मत्वाविवक्षायां तूक्तरूपव्यापकतानिरूपितव्याप्यतावदर्थबोधकत्वाभावेन प्रथमं द्वित्वं नैव प्रवर्तेत, ततः कर्मप्रवचनीयसञ्ज्ञाऽपि न स्यात्, द्वित्वादिसहकारेणैव प्रत्यादिप्रयोगं विनाऽपि 'वृक्षं वृक्षं सिञ्चति' इत्यादितो व्यापकताबोधाद् द्वित्वाभावे 'वृक्षं प्रति सिञ्चति' इत्यादितो व्यापकताया अबोधात् प्रत्यादेर्व्यापकताद्योतकत्वाभावात् । न च द्वित्वद्योत्यव्यापकताद्योतकत्वप्रयुक्तैव कर्मप्रवचनीयसञ्ज्ञा प्रागेव स्यादिति वाच्यम्, द्वित्वसहकारेणैव प्रत्यादेर्व्यापकताद्योतकतया द्वित्वात्प्राक् तद्द्योतकत्वस्याभावात् । कर्मत्वाविवक्षायामपि प्रत्यादेर्व्यापकतार्थकत्वमङ्गीकृत्य प्रकृते कर्मप्रवचनीययोगे द्वितीयाङ्गीकारे तु 'वृक्षो वृक्षः प्रति सिच्यते' इत्यत्रापि द्वितीयापत्तिः । अस्माकं तु तिङा कर्मत्वस्याभिधानान्न सेति न दोषः ।

यदप्युक्तं 'परेः क्रियाविशेषकत्वे' इत्यादि, तदपि न, पूर्वकालिकक्रियाविशेषकत्वमात्रस्यैवान्वर्थता-

ममाभिष्यादिति । मम भागः स्यादित्यर्थः । मामभिष्यादित्यपि प्राञ्चः प्रत्युदाहरन्ति । तत्र मां प्राप्नुयादित्यर्थः । उपसर्गवशेन अस्तेः सकर्मकत्वान्मामिति द्वितीया, अत्र च मम भाग इत्यर्थतः पर्यवसानात् । अभागे इति कर्मप्रवचनीयत्वे निषिद्धे "उपसर्गप्रादुर्भ्याम्" इति षत्वम् ।

पूजायां चेति । 'सुः पूजायाम्" इति पूर्वसूत्रात् पूजाग्रहणमनुकृष्यते ।

---

शब्दरत्नम् ।

नन्वत्रार्थे भागाप्रतीत्या कथं निषेधोऽत आह—**अत्र चेति**। अर्थतो भागे पर्यवसानमादाय निषेधप्रवृत्तिरिति भावः ।

भैरवी ।

विद्योतते विद्युदित्यत्र प्राप्तिरूपा याऽविद्यमाना क्रिया तत्कृतो यो विलक्षणो वृक्षविद्योतनयोर्लक्ष्यलक्षणभावाख्यः सम्बन्धस्तद्द्योतकत्वमस्ति ।

इत्थम्भूताख्याने उदाहरणम्—'अस्मिन्देशे प्रतिपुरुषं सौन्दर्यमस्ति' इत्यादौ प्राप्तिक्रियाजनिताधाराधेयभावाख्यस्य पुरुषसौन्दर्ययोः सम्बन्धस्य द्योतकतास्ति । भागे-'वृक्षम्प्रति फलानि तिष्ठन्ति' अत्राप्रयुज्यमानप्राप्तिक्रियाजनितो योऽवयवावयविभावो जन्यजनकभावो वा सम्बन्धस्तत्परिच्छेदकतास्ति । वीप्सायाम्-'वृक्षंवृक्षं प्रति सिञ्चति' इति । अत्र वृक्षस्य जलसंयोगाख्यसेचनस्य च यो व्याप्यव्यापकभावाख्यः सम्बन्धः सोऽप्रयुज्यमानतत्तद्वृक्षावच्छिन्नोत्पत्तिकृत इति कर्मप्रवचनीयत्वम् । किञ्च यद्यत्र वृक्षस्य क्रियाकर्मत्वमाश्रित्य कर्मणि द्वितीया, प्रतेः सेचनगतसर्वतोभावरूपसम्बधद्योतकता च कल्प्यते तदाऽसामर्थ्यात्प्रतिवृक्षमित्यत्र समासानापत्तिः । अत एव "प्रत्यर्थं शब्दनिवेशान्नैकेनानेकार्थस्याभिधानम्" इति सरूपसूत्रस्थभाष्यप्रयोगस्योपपत्तिः । अन्यथा प्रतेर्भवदुक्तरीत्या निवेशेनान्वयित्वेनासामर्थ्यात्समासो न स्यात् । अत एवैतत्सूत्रभाष्ये—"कस्य लक्षणादयोऽर्था निर्दिश्यन्ते? वृक्षादीनाम् । किमर्थम्पुनरिदमुच्यते? कर्मप्रवचनीयसञ्ज्ञा यथा स्याद् गत्युपसर्गसञ्ज्ञे माभूतामिति । नैतदस्ति प्रयोजनम्, यत्क्रियायुक्ताः प्रादयस्तम्प्रति गत्युपसर्गसञ्ज्ञे भवतः । नच वृक्षादीन्प्रति क्रियायोगः । इदन्तर्हि प्रयोजनम्—द्वितीया यथा स्यात्-"कर्मप्रवचनीययुक्ते द्वितीया" इति । वृक्षम्प्रति विद्योतते, वृक्षमनु विद्योतते" इति प्रघट्टकेन च वृक्षादीन्प्रति क्रियायोग इत्यनेन वृक्षप्रतिशब्दयोः सम्बन्धो दर्शितः कर्मप्रवचनीययोगेन द्वितीया च स्पष्टमभिहिता । किञ्चोक्तोदाहरणे द्युतेरकर्मकत्वात्कर्मणि द्वितीया वक्तुमप्यशक्येति बोध्यम् ।

मूले—प्राञ्च इति । प्रक्रियाकृत इत्यर्थः । तस्योपपत्तिरपि "तत्र"इत्यनेन दर्शिता । तत्र—तस्मिन्प्रत्युदाहरणे । अत्रार्थे—माम्प्राप्नुयादित्यत्रार्थे । यन्माम्प्राप्नुयात्तदीयतामित्युक्ते भाग एव वक्तृतात्पर्यावगमः । यदि तु यच्छब्दस्य बुद्धिस्थवाचकत्वेन भागवाचकत्वमेव प्रकृतेऽस्त्विति स्वीक्रियते, तदा तु न कापि शङ्केति बोध्यम् ।

कालाध्वनोर्योऽत्यन्तसंयोगः सम्बन्धो व्याप्यव्यापकभावस्तस्मिन्नर्थे प्रातिपदिकाद् द्वि-

भावप्रकाशः ।

शेखरादावित्यर्थः । मूले प्राञ्चः—प्रक्रियाकृतः । तदुपपत्तिं प्रकाशोक्तामाह—मूले तत्रेति । तस्मिन्प्रत्युदाहरणे इत्यर्थः । अत्रार्थे इति । माम्प्राप्नुयादित्यर्थे इत्यर्थः । अर्थतो भागे इति । एतेनात्र

सरला

बलभ्यत्वेन सम्प्रति क्रियाविशेषाद्योतकत्वस्य तेनालाभेन सञ्ज्ञाप्रवृत्तौ बाधकाभावात् । नचैवं वृक्षमित्यस्य क्रियायामेवान्वयेन प्रतिना सामर्थ्याभावे 'प्रतिवृक्षम्' इत्यत्र समासानापत्तिरिति वाच्यम्, वाचकाव्ययैरेव "अव्ययं विभक्ति" इत्यनेनाव्ययीभावस्य स्वीकारेण तत्र तदर्थं प्रतेर्व्यापकतावाचकत्वाङ्गीकारेण तदर्थव्यापकतायां वृक्षपदार्थान्वयेनैकार्थीभावरूपसामर्थ्योपपत्तेरिति दिक् ।

"कालाध्वनोः" ॥ अन्तं-विराममतिक्रान्तोऽत्यन्तः स चासौ संयोगो निरन्तरसन्निकर्ष इत्यर्थः । द्वितीया स्यादिति । श्रुतत्वात् कालाध्ववृत्तिभ्यामेव । मासस्येति । "कृत्वोऽर्थप्रयोगे कालेऽधिकरणे" इति षष्ठीत्याहुः; तन्न, तत्र शेषग्रहणानुवृत्त्या 'द्विरह्नो भोजनम्' इति कृदन्तेन सह समासाप्रवृत्तेरेव फलत्वात् । तस्मादिह "षष्ठी शेषे" इतिसूत्रेणैव षष्ठीति तत्त्वम् ।

इति द्वितीया ।

शब्दरत्नम् ।

कालाध्वेति । येन कालेनाध्वना वा अत्यन्तसंयोगस्तद्वृत्तिभ्यामित्यर्थः । तस्मादिति । अन्तरङ्गत्वाच्चेत्यपि बोद्ध्यम् । एतेन शेषग्रहणाननुवृत्तौ तेनैवेति परास्तम् ॥

इति द्वितीया ॥

भैरवी ।

तीयेत्यर्थे केनात्यन्तसंयोग इत्याकाङ्क्षायाङ्गुणेन क्रियया अभावेन वा स हि सम्भवतीति तेषां लाभे प्रत्यासत्त्या 'कालाध्ववृत्तिभ्यान्द्वितीया' इति यद्यपि लभ्यते; तथाप्यन्यकालेनात्यन्तसम्बन्धोऽन्यकालप्रतिपादकात्तु सेति कुतो नेत्यत आह—येन कालेनेति । संयोग इति । गुणादीनामित्यर्थः । अभावोदाहरणं 'मासम्भोजनाभावः' इति । ननु यन्मूले 'समासाप्रवृत्तेरेव फलत्वात्' इत्युक्त्वा तस्मादित्युपसंहृतन्तद्युक्तमन्यार्थङ् कृतस्य कुल्यादेरन्योपकारकत्वस्य दृष्टतया, तिङन्तेन योगे "कृत्वोऽर्थप्रयोगे" इति सूत्रप्रवृत्तेर्दुर्वारत्वादत आह—अन्तरङ्गत्वाच्चेति । अल्पापेक्षत्वरूपञ्चात्रान्तरङ्गत्वम् । नच विशेषविहितत्वेनान्तरङ्गादपि तत्सूत्रम्बलवद्भविष्यतीति वाच्यम्? अचारितार्थ्यविषयतायास्तस्योक्तेरिति भावः । एतेन—अन्तरङ्गत्वेन । अननुवृत्ताविति । "कृत्वोऽर्थ" इति सूत्र इत्यादिः । एवञ्च वक्ष्यमाणरीत्या ।तत्सूत्रामेव शेषग्रहणानुवृत्तिः । तेनैव—"कृत्वोऽर्थ" इत्यनेनैव । परास्तमिति । अल्पापेक्षस्यान्तरङ्गत्वन्तत्सम्मतमिति तद्रीत्यैव तदुक्तमपास्तमित्यर्थः । यदि तु तादृशान्तरङ्गबहिरङ्गभावो न सिद्धान्तिसम्मत इत्युच्यते तदा तु तेनैव द्वितीयेति तत्त्वम् ॥

इति द्वितीयाकारकस्य विवरणम् ॥

भावप्रकाशः ।

चार्थतो मम भाग इति पर्यवसानादिति मूलयोजना ध्वनिता । अत्र यन्मां प्राप्नुयात्तद् दीयतामिति शाब्दार्थपर्यवसानं, भागे एव वक्तृतात्पर्यादिति भावः । यच्छब्दस्य बुद्धिस्थत्वेन भागवाचित्वे तु दोषशङ्कैव नेति बोध्यम् ।

ननु औचित्यात्सामर्थ्याच्च सम्भवात् कालाध्वनोर्गुणक्रियाद्रव्यैरभावेन चात्यन्तसंयोगे व्याप्तिरूपे द्वितीयेत्यर्थे प्रत्यासत्त्या कालाध्ववृत्तिभ्यामित्यस्य लाभेऽपि अन्यसम्बन्धे ऽन्यतः कुतो नेत्यत आह—येनेति । अतिप्रत्यासत्तेरेवेति भावः । संयोग इति । गुणादीनामिति शेषः । मूले—आहुरिति । प्रकाशकृत इति भावः । तस्मादिति हेतोरुक्तिग्रस्तत्वादाह—अन्तरङ्गत्वादिति । एतेन कृत्वोऽर्थेत्यादितत्त्वमित्यन्तं मूलमनूद्य तन्न, अन्यार्थमारब्धस्यापि 'द्विरह्नो भुङ्क्ते' इत्यत्र परत्वात्प्रवृत्तौ बाधकाभावादिति रत्नाकरोक्तं, तस्य तत्र विशेषविहितत्वात्प्रवृत्तौ बाधकाभावादिति दण्ड्युक्तं चापास्तम् , परत्वादन्तरङ्गत्वस्य प्राबल्याद् अल्पापेक्षत्वरूपं विशेषविहितत्वं त्वचारितार्थ्ये सत्येव बाधकताप्रयोजकमित्यस्य प्राक् प्रतिपादितत्वाच्चेति दिक् । तामेवारुचिमाह—एतेनेति । अन्तरङ्गत्वेनेत्यर्थः । अननुवृत्ताविति । "कृत्वोऽर्थ" इत्यत्रेति शेषः । भाष्यादिसम्मतत्वात् तन्मते सप्तसूत्र्यामेव तदनुवृत्तिः । स्फुटीभविष्यति चेदं तत्रैव । तथाच प्रकाशसौष्ठवे मूलादि चिन्त्यमिति भावः । परास्तमिति । तथाचोक्तहेतोः प्रकाशासाङ्गत्यवन्मूलोक्तदोषो वृत्त्यनुसारेणेति दण्ड्याद्युक्तमयुक्तमिति बोध्यम् ॥

इति द्वितीया ॥

"स्वतन्त्रः कर्ता" ॥ प्रधानीभूतधात्वर्थं प्रति आश्रयत्वं स्वातन्त्र्यम् । आह च—
धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते ॥ इति ।

---

शब्दरत्नम् ।

प्रधानीभूतेति । प्राधान्यं च कर्तृप्रत्ययसमभिव्याहारे धात्वर्थनिष्ठविशेष्यतानि-

भैरवी ।

ननु प्राधान्यम्मुख्यविशेष्यत्वरूपञ्चेत्प्रयोज्यव्यापारे तदभावात्प्रयोज्यस्य कर्तृत्वं णिच्-समभिव्याहारे, कर्मणि यत्र प्रत्ययस्तत्र 'चैत्रेण पक्वः' इत्यादौ च फलव्यापारयोर्व्यत्यासात्तत्र कर्तृत्वं कस्यापि न स्यादत आह—प्राधान्यञ्चेति । 'देवदत्तेन पच्यते तण्डुलः' इत्यादौ देवदत्तस्य कर्तृत्वसिद्धये—कर्तृप्रत्ययसमभिव्याहार इति । धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यत्वमित्येतावन्मात्रोक्तौ विभागावच्छिन्नक्षरणानुकूलव्यापारस्य 'गोः पयो दोग्धि चैत्रः' इत्यत्र दुहधात्वर्थत्वात्तत्र क्षरणेऽतिव्याप्तिरिति धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताना-श्रयत्वनिवेशः । अत्र धातौ तत्त्वन्निवेशनीयम् । अन्यथा णिजन्तजन्यशाब्दबोधे प्रयोज्य-व्यापारस्य प्रयोजकव्यापारविशेषणत्वात्तत्र णिच्प्रकृतिकधात्वर्थस्य प्राधान्यव्यवहारो न स्यात् । नचेष्टापत्तिः, 'चैत्रेण पाचयति तण्डलं यज्ञदत्तः' इत्यत्र चैत्रेऽव्याप्तेः । णिच् तु प्रयो-

भावप्रकाशः ।

मुख्यविशेष्यताश्रयत्वरूपं प्राधान्यं प्रयोज्यव्यापारादावव्याप्तं कर्मप्रत्यये फलेऽतिप्रसक्तं चात आह—प्राधान्यं चेति । अत्र प्रकारतानाश्रयत्वमित्येवोक्ते प्रयोज्यव्यापारादाव व्याप्त्यादिरेवं । विशेष्यतानिरूपितप्रकारतानाश्रयत्वमित्युक्तेपि तथा, धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वमित्युक्तेपि तथा, अतो धात्वर्थत्वमित्यन्तं विशेष्यम् । तथाच प्रत्यासत्त्या तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वे सति तद्धात्वर्थत्वं लब्धं, तथाच णिचो वाचकत्वादेव ण्यन्तधान्तुतत्प्रकृतिधात्वोर्भिन्नत्वेन तदुभयवाच्य-व्यापारयोः स्वस्वार्थं प्रत्युक्तरूपप्राधान्यात्प्रयोज्यव्यापाराश्रयस्य कर्तृत्वसिद्धिः । द्योतकत्वे तु नैतत् सिध्येत् । अत एव पचति भवति, पश्य मृगो धावतीत्यादौ चैत्रमृगादेः कर्तृत्वसिद्धिः । पच्यते तण्डुलो देवदत्तेनेत्यादौ फलस्य विशेष्यत्वेऽपि देवदत्तादेः कर्तृत्वसिद्धये कर्तृप्रत्ययेति विशेषणम् । वस्तुतस्तु "कारके" इति सूत्रभाष्यात्तत्तद्धात्वर्थीयकारकचक्रप्रयोक्तृत्वं स्वातन्त्र्यमिति लभ्यते, प्रकृतसूत्रभाष्यात्स्वे-च्छाधीनप्रवृत्तिनिवृत्तिकत्वमपि स्वातन्त्र्यमिति लभ्यते । तच्चारोपितमनारोपितं च सञ्ज्ञानिमित्तम् । आद्यः स्थाल्यादावन्त्यं पुरुषे । यस्य च स्वातन्त्र्यविवक्षा तद्व्यापार एव धातुना प्राधान्येनोच्यते, शब्दशक्तिस्व-भावात् । मूलोक्तं तु न, स्वतन्त्रपदस्य तत्रापरिभाषणात्, लोके उक्तार्थयोरेव तत्प्रवृत्तेश्च । एतेन तथा

सरला

कर्तृप्रत्ययसमभिव्याहारे इति । तेन 'पक्वस्तण्डुलो देवदत्तेन' इत्यत्र कर्मणि प्रत्यये फलस्य प्राधान्येऽपि देवदत्तस्य कर्तृत्वसिद्धिः । नन्वेवं 'चैत्रेण मैत्रस्तण्डुलं पाचयति' इत्यादौ णिचो द्योतकत्वेन विक्लित्त्यनुकूलव्यापारानुकूलव्यापारस्य पचधातुवाच्यत्वेन प्रयोज्यचैत्रीयव्यापारस्य प्रयोजकमैत्रीयव्या-पारनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वेन तत्र प्रयोज्यस्य कर्तृत्वानापत्तिरिति चेत् ? न, णिचो वाच-कताभ्युपगमेन विक्लित्त्यनुकूलव्यापारमात्रवाचकपचधातुनिरूपितकर्तृत्वस्य तत्र सुलभत्वात् । एवं च धातुविशिष्टस्य कर्तृसञ्ज्ञा भवतीति सूत्रार्थः फलितः । वैशिष्ट्यं च कर्तृप्रत्ययसमभिव्याहारे स्वजन्यबो-धीयविशेष्यताश्रयधात्वर्थाश्रयत्वम्, स्वजन्यबोधीयविशेष्यतानिरूपितप्रकारतानाश्रयधात्वर्थाश्रयत्वम् एतदुभयसम्बन्धेनेति । प्रयोजके पाचिनिरूपितमेव कर्तृत्वम्, प्रयोज्ये च पचधातुनिरूपितमेवेति तत्त-द्धातुमादाय कर्तृत्वसिद्धिः । नचैवं कर्तृलक्षणे एव कर्तृत्वं प्रविष्टमिति आत्माश्रयो दोष इति वाच्यम्, ण्वुल्तृजन्यतरसमभिव्याहारे इति निवेशेनादोषात् । ण्वुलप्रत्ययस्तृच्प्रत्ययश्च सर्वस्मादपि धातोः कर्तर्येव भवतीति दिक् ।

"साधकतमं करणम्" ॥ प्रकृष्टेति । यद्व्यापारादनन्तरं क्रियानिष्पत्तिस्तत्प्रकृष्टम् । उक्तं च—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥ इति ।

विवक्ष्यते इत्यनेन स्थाल्यादीनामपि वैवक्षिककरणत्वमस्तीति ध्वनयति ।

## शब्दरत्नम् ।

रूपितप्रकारतानाश्रयधात्वर्थत्वम् । धातुनोक्तक्रिये कारके नित्यं कर्तृतेष्यते इत्यन्वयः ।

यद्व्यापारादिति । अनन्तरशब्दयोगे "दूरान्तिकार्थैः" इति सूत्रेण पञ्चमी । यत्र—येषां

## भैरवी

जकव्यापारवाचक एव । एवञ्च णिजन्ततत्प्रकृतिकधात्वोर्भिन्नतया तदुभयार्थव्यापारयोः स्वस्वार्थम्प्रति प्राधान्यस्य सत्त्वेन प्रयोज्यस्य कर्तृत्वसिद्धिः । "कारके" इति सूत्रस्थभाष्यात्तु तत्तद्धात्वर्थकारकचक्रप्रवर्तकत्वं कर्तृत्वमिति लभ्यते । तच्चारोपितमनारोपितं वेत्यन्यदेतत् । स्थाली पचतीत्यादावाद्यम् । चैत्रः पचतीत्यादावन्त्यम् । यद्व्यापारस्यान्यव्यापारप्रवर्तकत्वविवक्षा तदा तद्व्यापार एव धात्वर्थः । मूलोक्तार्थस्तु न युक्तः, तस्मिन्नर्थे भाष्यकृता स्वतन्त्रपदस्यापरिभाषणात् । कर्तृसंज्ञाबोधितकर्तृत्वशक्तिमत्त्वन्तु कर्तृत्वम् । सा चोक्तस्वतन्त्रे तिष्ठति, तस्या विभक्तिद्योत्यत्वात्प्रकृत्यर्थविशेषणता । कर्तृक्रियाभावसम्बन्धस्तु तृतीयार्थः । प्रकृत्यर्थस्य तद्घटककर्तर्यभेदेन विशेषणता । एवञ्च चैत्रः पचतीत्यादिभ्यः कर्तृचैत्राभिन्नकर्तृकः पाक इतिरीत्या बोधः । धातुना नित्यमुक्तक्रिय इति भ्रमवारणायाह—धातुनोक्तेति । अत्र क्रियापदम्प्रधानव्यापारपरं, तदाश्रयस्य कर्तृसञ्ज्ञैव, नतु कर्मसञ्ज्ञेत्यस्यार्थस्य स्पष्टप्रतिपत्तये नित्यपदम् ।

अनन्तरशब्दार्थेन योगे षष्ठी प्राप्ता, ताम्बाधित्वा पञ्चमीत्याशयेनाह—अनन्तरशब्देति । मूलपठितवचने यदेत्येतदपेक्षया यत्रेत्यधिकमत आह—यत्रेति । अधिकरणादीनामित्यर्थः ।

## भावप्रकाशः ।

प्रकाशरत्नाकरदण्डयाद्युक्तमपास्तम् । तथा कर्तृत्वं कर्तृसञ्ज्ञाबोधितकर्तृत्वशक्तिमत्त्वं, सा च शक्तिर्व्यापारतावच्छेदकसम्बन्धेनोक्तरूपस्वतन्त्रे वर्तते सूत्रस्वरसात्, स च तेन रूपेण कर्तृक्रियाभावसम्बन्धश्च तृतीयार्थः, तत्र प्रकृत्यर्थस्याभेदान्वयः, तस्य च धात्वर्थे आधेयतयाऽन्वयः । तथा च 'चैत्रेण सुप्यते' इत्यादौ चैत्राभिन्नकर्तृवृत्तिः स्वाप इति बोध इति प्राञ्चः । द्वितीयाप्रकरणोक्तदिशा चैत्रकर्तृकः कर्तृचैत्रीयो वा स्वाप इति बोध इत्युचितम् । स्पष्टं चेदं मञ्जूषायामिति बोध्यमित्यन्यत्र विस्तरः ।

यत्तु कृत्याश्रयत्वं तत्तत्क्रियानुकूलकृत्याश्रयत्वं वा तत्त्वमिति नैयायिकाः, अदृष्टद्वारा कार्यानुकूलज्ञानवत्त्वं तत्त्वमित्यौपनिषदाश्च; तन्न, कृत्यादेरपि धातुलभ्यत्वात् अचेतने ऽव्याप्तेश्च, लक्षणां विनैवोपपत्तेश्च, विभक्तौ लक्षणानौचित्याच्च, कर्मादावपि यत्किञ्चित्कृत्याश्रयत्वेनातिव्याप्तेश्चेति दिक् । पाठक्रमान्वयवारणायाह—धातुनोक्तेति । तथाच तत्र कर्मत्वादिव्यावृत्तये नित्यपदं, क्रियापदेनात्र प्रधानव्यापारः ।

अनन्तरयोगे शेषेषष्ठीप्राप्तेराह—अनन्तरेति । तथाच तदपवादत्वादुपपदविभक्तित्वेन षष्ठ्यर्थ एव सेति भावः । अत्र क्रियाशब्दः फलपरः । यदेत्यतो यत्रेत्यस्याधिक्यादाह-येषामिति । अधिकरणादीनामित्यर्थः । इत्युक्तिरियम् । एवमग्रेऽपि । तत्–करणत्वादिरूपं वस्तु अनिर्देश्यम् अश्वत्वादिकं सर्वं प्रति यथा नियतं तद्वदिदं न नियतं किन्तु वैवक्षिकमिति रत्नाकरोक्तव्याख्याने वस्तुत इत्यादेर्वैयर्थ्यापत्तिरप-

आह च—

वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥ इति ।

अयं भावः-कारकत्वं तद्व्याप्यकर्तृत्वादिषट्कं च वस्तुविशेषे विशेषणविशेष्यभाववन्न व्यवतिष्ठते । न हि गौस्सर्वं प्रति गौरेव न तु किंचित्प्रत्यगौरितिवद् विशेषणं विशेषणमेवेति सुवचम् । तथा च कयाचिद् धातुव्यक्त्या उपस्थापितेऽर्थे किं कर्त्रादिकमिति प्रश्ने प्रकृतव्यक्त्युपात्तव्यापाराश्रयतया विवक्षितः कर्ता, व्यापारव्यधिकरणफलाश्रयः कर्म, कर्तृकर्मद्वारकसम्बन्धेनाश्रयोऽधिकरणम् । पच्यर्थो व्यापारश्चानेकधा । एवं च पचेरधिश्रयणतण्डुलावपनैधोपकर्ष-

---

शब्दरत्नम् ।

कारकाणां मध्ये इत्यर्थः । **वस्तुत इति** । वस्तुनीत्यर्थः । सार्वविभक्तिकस्तसिः । तत्-कर्तृत्वादिकम् । **अनिर्देश्यम्** । 'इदं वस्तु कर्त्रैव'इत्यादिक्रमेण न निर्देश्यमित्यर्थः । हि-यतः वस्तु तत्तद्रूपेण न व्यवस्थितम् । तामेवाव्यवस्थां दर्शयति-**स्थाल्येत्यादि** । **कारकत्वमिति** । विशेषणत्वादि यथा खञ्जकुब्जादावव्यवस्थितमेवं कारकत्वं तद्व्याप्यमधिकरणत्वादिकं चेत्यर्थः । 'तण्डुलानोदनं पचति' इत्यत्र करणत्वाऽविवक्षयाऽकथितकर्मकारकस्यापि तण्डुलस्य 'तण्डुलानामोदनं पचति' इत्यादावोदनपदार्थान्वयेन षष्ठ्यन्तताद‍र्शनात्कारकत्वस्य व्यभिचारो द्रष्टव्यः । **प्रकृतव्यक्त्युपात्तेति** । प्रकृतधातुव्यक्तीत्यर्थः । अनेकधात्वमेव दर्शयति—**एवं च पचेरिति** । **तण्डुलधार-**

भावप्रकाशः ।

मानापमेयत्वेन व्याख्याने बीजाभावज्ञात आह—**वस्तुनीत्यादि** । वस्तुनि-घटादौ । एवमग्रेऽपि । सूत्रस्तसोऽप्राप्तेराह-**सार्वेति** । आद्यादेराकृतिगणत्वादिति भावः । ननु मुख्यतया तन्निर्देशो नैव सम्भवति, अयं कर्तेत्येवं प्रकारतया तु सर्वत्र सम्भवतीत्यत आह-**इदं वस्त्विति** । तथाच सर्वं वाक्यमिति न्यायेन वस्तुनि तदेवेति न निर्देश्यमिति मूलार्थो बोध्यः । ननु घटादेः पटादिभिन्नत्वाद्वस्तु व्यवस्थितमेवात आह—**तत्तद्रूपेणेति** । कर्तृत्वादिरूपेणेत्यर्थः । तथाच तदित्यस्यानुषङ्गेण योग्यविभक्तिकल्पनयाऽन्वय इति भावः । ननु नीलोत्पलादौ विशेषणत्वादेर्नियतत्वमेवात आह—**विशेषणेति** । मूले प्रत्येकतुल्यत्वे वतिरिति भावः । आदिना वाचकपाठकादिपरिग्रहः । **अधिकरणत्वेति** । निश्चिताधिकरणतापि स्थाली तनुतरकपालत्वाच्छीघ्रतरपाकसाधनत्वेनानुभवति वैवक्षिकं करणत्वमिति भावः । नन्वेवमपि कारकत्वव्यभिचारो न दृष्टोऽत आह—**तण्डुलानिति** । **कारकस्यापीति** । अस्य तण्डुलस्येति शेषः । क्वचित्तथा पाठ एव । एकत्रोल्लेखेऽप्यादिपदस्य सर्वत्र सम्बन्धो बोध्यः । **ओदनेति** । न तु क्रियेति भावः । अत एवाकारकत्वं, प्रतिपादितमिदं प्राक् । प्रकर्षश्च कर्तृपराधीनस्यापि न करणान्तरापेक्षः किन्तु कारकान्तरापेक्ष एव । कारकसामान्यवाचिसाधकशब्दादुत्पद्यमानेन तमपा तत एव प्रकर्षबोधनात् । अत एवाश्वेन यथा दीपिकया व्रजतीति भवतीति बोध्यम् । करणतृतीयाया आश्रयो व्यापारश्चार्थ इति भूषणकृत् । व्यापारमात्रमर्थ इति मनोरमाविलासकृत् । प्रकृत्यर्थस्य व्यापारे आधेयत्वसम्बन्धेनान्वयः, व्यापारस्य तु जन्यत्वेनेति तद्भावः । आश्रयमात्रमर्थः । तत्र प्रकृतिप्रत्ययार्थयोर्विशेष्यविशेषणभावस्तस्य च स्वनिष्ठव्यापारजन्यत्वसम्बन्धेन धात्वर्थेऽन्वय इति मण्डनकृतो मान्यमान्याः । वस्तुतस्तु करणत्वं करणताशक्तिमत्त्वम् । सा च शक्तिर्यद्व्यापाराव्यवधानेन फलनिष्पत्तिविवक्षा तन्निष्ठा । स च तेन रूपेण क्रियाकरणभावः सम्बन्धश्च तृतीयार्थः । करणबाणीयो बाणकरणको वा वध इति तत्त्वम् । कारकव्यक्तिपरिहारायाह—**प्रकृतधात्विति** । ननु अनेकधेत्यनन्तरमनेकव्यापारप्रदर्शनोत्तरमेवञ्चेति ग्रन्थः सङ्गतो न त्वन्यथेत्यत आह—**अनेकधात्वमेवेति** । तथाचैवञ्चेत्यस्य मूलस्थस्यात एवेत्यर्थः कर्तृत्वादीनां

शादितात्पर्यकत्वे तदाश्रयो देवदत्तः कर्त्ता, ज्वलनतात्पर्यकत्वे एधाः कर्त्तारः, तण्डुलधारणादिपरत्वे स्थाली कर्त्री, अवयवविभागादिपरत्वे तण्डुलाः कर्तारः। स्थाल्या पचतीत्यत्र तृतीयोपात्तव्यापाराश्रयाऽपि स्थाली करणमेव, न तु कर्त्री, देवदत्तादिव्यापारस्यैव तद्धातूपात्तत्वात्। तथा—आदिखादिभ्यामुपात्तेऽर्थे प्रयोज्यः कर्ता। तस्मिन्नेवार्थे भक्षयतिनोपात्ते कर्म। अधिपूर्वैः शीङादिभिरुपात्तेऽर्थे

---

शब्दरत्नम्।

णादिपरत्वे इति। आदिना आपाकसमाप्तिधारणम्। अवयवविभागादीति। आदिना रोटिकाद्यवयवमेलनम्। तण्डुलाः कर्तार इति। कर्मकर्तरीत्यर्थः। संप्रदानापादानयोस्तु न कर्तृत्वविवक्षा शब्दशक्तिस्वाभाव्यात्तद्व्यापारे धातोरवृत्तेरिति बोध्यम्। उपात्ते—उक्ते

भैरवी।

अव्यवस्थान्दर्शयति—तण्डुलानोदन मित्यादिना। कर्मणः कर्तृत्वस्थलमाह—कर्मकर्तरीति। कारकसामान्यस्य न कर्तृत्वविवक्षेत्याशयेनाह—सम्प्रदानेति। उपादानं ग्रहणं, तच्चार्थकर्मकन्न सम्भवतीत्यत आह—उक्त इति।

मूले—'आदिखादिभ्याम्' इत्यादिना 'केवलैरुपात्ते अधि करणम्' इत्यन्तेन ग्रन्थेनैकस्यैव शब्दभेदेन सञ्ज्ञाभेदः प्रदर्शितः। गलाधःसंयोगानुकूलव्यापारो यद्यपि णिच्प्रकृत्यद्धातुना, खादधातुना चाभिधीयते, स एव च भक्षधातुनाऽपि; तथापि "आदिखाद्योर्न" इति निषेधात्ताभ्यां णिचि सति प्रकृत्यर्थव्यापाराश्रयस्य कर्तृसञ्ज्ञैव भवति, नतु कर्मसञ्ज्ञा; यदा तु भक्षधातोर्णिचि सति स एवार्थो भक्षयतिनाऽभिधीयते, तदा निषेधवचनाभावात्प्रयोज्यव्यापाराश्रयस्य "गतिबुद्धि" इति सूत्रेण कर्मसञ्ज्ञा भवतीति प्रकारेण शब्दविशेषनिमित्तकत्वं

भावप्रकाशः।

वैवक्षिकत्वे चेत्यर्थो वा बोध्य इति अनेन सूचितम्। स्थाल्यां तण्डुलधारणान्यव्यापाराभावेनादिपदानर्थक्यं परिहरति—आदिनेति। तण्डुलेष्ववयवविभागान्यव्यापाराभावेनादिपदानर्थक्यादाह—आदिनेति। तथा च तण्डुलपदं मूलस्थमुपलक्षणमिति भावः। तण्डुलानां कर्तृत्वस्य तत्रैव सम्भवादाह—कर्मेति। नन्वेवं रीत्या सम्प्रदानापादानयोरपि कर्तृत्वं स्यादत आह— सम्प्रदानेति। उपादानं ग्रहणं, तस्यार्थे शब्दे चासम्भवादाह—उक्ते इति। ननु किं नाम स्वप्रकाशत्वं किं स्वश्चासौ प्रकाशश्च स्वप्रकाशस्तत्त्वं, सजातीयप्रकाशाप्रकाश्यत्वं वा, स्वसत्तायां प्रकाशव्यतिरेकविरहितत्वं वा, स्वव्यवहारहेतुप्रकाशत्वं वा, ज्ञानाविषयत्वं वा, ज्ञानाविषयत्वे सत्यपरोक्षत्वं वा, अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वं वा, तद्योग्यत्वं वा? नाद्यः, वेद्यस्यापि ज्ञानस्य स्वप्रकाशत्वाभ्युपगमात्। न द्वितीयः, प्रदीपादेः सजातीयप्रकाशाप्रकाश्यस्यास्वयम्प्रकाशत्वेन लक्षणस्यातिव्याप्तेः, घटादेरपि सजातीयप्रकाशाप्रकाश्यस्य स्वप्रकाशत्वप्रसङ्गाच्च। नहि प्रदीपादौ ज्ञाने वा घटत्वादिजातिरस्ति येन घटादयः सजातीयप्रकाशप्रकाश्या भवेयुः। ननु सत्तया सजातीयत्वं तत्राप्यस्तीति चेत्? न, विशेषणवैयर्थ्यापत्तेः। सत्ताविरहिणः प्रकाश्यस्यैवाभावात्। प्रकाशाप्रकाश्यत्वमित्येतावतैव चारितार्थ्यात्। न तृतीयः, सुखादावतिव्याप्तेः। सुखादेरपि स्वसत्तायां प्रकाशाव्यभिचारात्। न तुरीयः, प्रदीपादावतिव्याप्तेः। प्रदीपादेरपि स्वव्यवहारहेतुत्वात्, प्रकाशत्वाच्च। अथ ज्ञानव्यवहारहेतुप्रकाशत्वं विवक्षितं, तदपि न, अनुव्यवसायेऽतिव्याप्तेः। तस्य वेद्यत्वेऽपि व्यवसायज्ञानव्यवहारहेतुप्रकाशत्वात् प्रदीपज्ञानमिदमिति व्यवहारहेतौ प्रदीपप्रकाशेऽतिव्याप्तेश्च। किञ्च व्यवहारहेतुत्वं विशेषणमुपलक्षणं वा? नाद्यः, सुषुप्तिप्रलयादावव्याप्तेः। न द्वितीयः, उपलक्षणत्वस्यापि विशेषणत्वे प्रागुक्तदोषापत्तेः। स्वरूपमात्रत्वे तु ज्ञानं प्रकाश इत्येवापत्तेः। तथाच लक्षणासिद्धिः। नापि पञ्चमः, स्वयंप्रकाशत्वसाधकानुमानागमादिज्ञानविषयत्वेन लक्षणस्यासम्भवित्वात्। तस्याप्यविषयत्वे कथाप्रवृत्त्य

आधारः कर्म, केवलैरुपात्ते अधिकरणमित्यादि । एतेन ज्ञानस्य स्वप्रका-

---

भैरवा ।

सञ्ज्ञायाः । एतेनेति—वक्ष्यमाणपरिहारेणेत्यर्थः। ज्ञानस्य स्वप्रकाशत्व इति । एतादृशो व्यवहारो वेदान्तिनामस्ति, तस्योपपत्तिर्न सम्भवतीति केषाञ्चिदुक्तिरियम् । स्वप्रकाशश-ब्दस्य स्वमात्मानम्प्रकाशयति विषयीकरोतीत्यर्थः कार्यः । एवञ्चैकस्य कर्मत्वङ्कर्तृत्वञ्च बाधितं, कर्तृसञ्ज्ञायाः कर्मसञ्ज्ञाबाधकत्वादिति तेषाम्भावः । नच तेजसो यथा ग्राह्यत्व-न्द्रव्यत्वेन, ग्राहकत्वन्तूद्भूतानभिभूतरूपवत्तेजस्त्वेनोपाधिना भवति, उपाधिभेदस्यैवोभ-यव्यवहारनियामकत्वात्, तथा ज्ञानस्यापि भविष्यतीति वाच्यम्, "नित्यं विज्ञानमान-न्दम्ब्रह्म" इति श्रुत्या ज्ञानपदवाच्यम्ब्रह्मैव, तच्च—"नेह नानास्ति किञ्चन" इति श्रुत्या धर्मरहितत्वेन प्रतिपादितमित्युपाधिभेदस्यैवाभावात् । अन्यथाऽद्वैतानापत्तिः । नच लौकि-कोपाध्यभावस्य तत्र भवन्मते सत्त्वात्कथन्निर्धर्मिकत्वमिति वाच्यम्, अभावस्याधिकरणा-

भावप्रकाशः ।

नुपपत्तेः । नापि षष्ठः, अविषयत्वस्यैवासम्भवेन निरस्तत्वात्, विषयत्वशब्देन कर्मविवक्षायां गुरुमता-नुसारिणामात्मन्यतिव्याप्तेश्च तस्य ग्राहकतयासिद्धस्याविषयत्वेऽप्यपरोक्षतया तैरनङ्गीकारात् । नापि सप्तमः, प्रागुक्तदोषापत्तेः शुक्तिरजतादिसंसर्गेऽसत्ख्यातिवादिनामतिव्याप्तेश्च । तस्य व्यवहारविषयत्वेपि तैर्ज्ञानविषयतानङ्गीकारात् । नाप्यष्टमः, स्वप्रतिबद्धव्यवहारे सजातीयपरानपेक्षत्वस्य प्रदीपादौ घटादौ च भावेनातिव्याप्तेः । सत्तया सजातीयत्वविवक्षायां तु व्यवहारस्य सत्तया सजातीयादृष्टादिजन्यस्य तदपेक्षत्वेन लक्षणस्यासम्भवित्वप्रसङ्गात् । नापि नवमः, अवेद्यत्वेनुमानाद्यगोचरतया कथानवतारप्रसङ्गस्य दर्शितत्वात् । अपरोक्षव्यवहारविषयत्वमितिशब्देन प्रत्यक्षज्ञानविषयत्वस्य कण्ठत उक्तत्वात् तद्विपरीता-वेद्यताभिधाने मे माता वन्ध्येतिवद्व्याघाताच्च सुषुप्तिप्रलयमोक्षेष्वव्याप्तेश्च । तदा व्यवहारस्यैवाभावेन तद्वि-षयत्वाभावात् । नापि दशमः, उक्तव्यवहारयोग्यताया धर्मत्वे द्वैतवादिनामपसिद्धान्तापातात् । स्वरूपत्वे च ज्ञानस्वभावस्यात्मनो व्यवहारनिरूपणीयत्वात्सप्रतियोगित्वप्रसङ्गात् । अथावेद्यत्वे सत्यपरोक्षव्यव-हारयोग्यत्वमेवोत्तरमीमांसोक्तं तत्त्वम् । न च योग्यतारूपधर्माङ्गीकारेऽव्याप्तिर्मोक्षदशायां तदपसिद्धान्ता-पत्तिश्चेति वाच्यम् । योग्यत्वात्यन्ताभावानधिकरणत्वस्य तत्त्वात् । गुणवत्त्वात्यन्ताभावानधिकरणत्वस्य द्रव्यत्ववत्, तेन नाव्याप्तिः; नाप्यपसिद्धान्तः काल्पनिकधर्माणां संसारदशायामभ्युपगमात् ।

अक्षमा भवतः केयं साधकत्वप्रकल्पने ।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम् ॥

इति सुरेश्वराचार्योक्तेः । "आनन्दो विषयानुभवो नित्यत्वं च सन्ति धर्माः" इति पञ्चपादिकाचार्यो-क्तेश्च । मोक्षदशायां विवक्षितधर्माभावेऽपि कदाचित्सत्त्वेन तदत्यन्ताभावानधिकरणत्वस्य गुणाश्रयो द्रव्य-मितिवत्सिद्धेः । अपरोक्षव्यवहारयोग्ये घटादावतिव्याप्तिपरिहारार्थमवेद्यत्वे सतीति विशेषणम् । नचैतावं-देवास्तु तल्लक्षणमिति वाच्यम्, तथा सति अतीतानागतयोर्नित्यानुमेयेषु धर्मादिष्वतिव्याप्तेः । न च तेषा-मप्यागमवेद्यत्वान्नावेद्यत्वमिति वाच्यम्, फलव्याप्यतालक्षणवेद्यत्वस्य तत्राभावात् । तत्र विशिष्टशाब्द-प्रमाणबलात्तदाकारधीवृत्तिसमुल्लासमात्रादेव तद्व्यवहार इति वेदान्तिनां प्रक्रिया । न च योगिप्रत्यक्षतया अपरोक्षत्वं, धर्मादीनां चोदनैकप्रमाणवेद्यत्वात् । न चैतावता तेषां सर्वदर्शित्वाभावः, योगिनां सर्वदर्शि-त्वशब्देन योग्यसर्वद्रष्टृत्वस्य विवक्षितत्वात् ।

यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टं स्यान्न रूपे श्रोत्रवृत्तिता ॥ इति न्यायात् ।

अतो धर्मादिव्यवच्छेदार्थमपरोक्षव्यवहारयोग्यत्वे सतीति विशेषणम् । न चाज्ञानान्तःकरणतद्धर्मे-च्छादिषु शुक्तिरजतादिषु च लक्षणस्यातिव्याप्तिस्तदवस्था, तेषामपि फलव्याप्यत्वाभावेनावेद्यत्वात्, अहमज्ञ इत्याद्यपरोक्षव्यवहारयोग्यत्वाच्चेति वाच्यम् । तेषामवेद्यत्वेप्यपरोक्षव्यवहारयोग्यत्वाभा-वात् । अध्यस्ततयैव तेषां सिद्धिः । न च तथाप्यपरोक्षमिति व्यवहारदर्शनात्तद्योग्यता तत्र कल्पनीये-

शत्वे कर्तृकर्मविरोध इत्यादि परास्तम्, शब्दविशेषोपाधिकस्य कर्तृत्वादेः प्रत्यक्षादौ

शब्दरत्नम्।

इत्यर्थः। **स्वप्रकाशत्वे**—ज्ञानविषयत्वे। **कर्तृकर्मविरोध इति**। अभेदे आधाराधेयभावस्य विषयविषयिभावस्य चाभावादिति भावः। **शब्दविशेषोपाधिकस्य**—शब्दवि-

भैरवी।

त्मकतया स्वभिन्नधर्मशून्यत्वसत्त्वादित्याह—ज्ञानविषयत्व इति। आधाराधेयभावस्येति। अनेन कर्तृत्वखण्डनम्। विषयविषयिभावस्येति कर्मत्वखण्डनम्। एवञ्च ज्ञानस्य ब्रह्मात्मकस्य स्वप्रकाशत्वमिति व्यवहारासङ्गतिः।

उक्तविरोधस्य परिहारमाह मूले—शब्दविशेषोपाधिकस्येति। अत्रोपाधिशब्दो निमित्तपर इत्याशयेनाह—शब्दविशेषनिमित्तकस्येति। यद्धात्वर्थक्रियायां यस्य स्वातन्त्र्यविवक्षा स तद्धात्वर्थकर्ता, यद्धात्वर्थप्रधानव्यापारविशेषणफलाश्रयत्वविवक्षा यस्य तत् तत्कर्मेतिरीत्या धातुस्वरूपो यः शब्दस्तन्निमित्तकत्वन्तयोरित्यर्थः। प्रत्यक्षादाविति मूलेन ब्रह्मणः प्रत्यक्षरूपत्वन्दर्शितम्। तस्यायम्भावः—यथा घटादिविषयाणां स्वभिन्नाऽपरोक्षज्ञानविषयत्वेन प्रत्यक्षत्वव्यवहारस्तथा न ब्रह्मणः, किन्तु स्वात्मकस्वप्रकाशः, स एव प्रत्यक्षपदेन व्यवह्रियते इति, "यत्साक्षादपरोक्षात्" इति श्रुतेः। अपरोक्षादित्यस्यापरोक्षमित्यर्थः। ननु ब्रह्म यदि न जन्यज्ञानविषयस्तदा तस्मिन्स्वप्रकाशत्वव्यवहारोऽपि कथमिति चेत्? शृणु, किम्ब्रह्म यद्यवेद्यं स्यात्तदा तादृशव्यवहारविषयो न स्यादिति तर्केण तादृशव्यवहारं खण्डयसि, उत स्वप्रकाशत्वव्यवहारोऽस्माकमित्येतादृशव्यवहारविषयत्वेन हेतुना अवेद्यत्वाभावानुमानङ्करोषि? नाद्यः, आपाद्यापादकयोर्द्वयोरपि ब्रह्मणि सत्त्वाबोधकम्। न द्वितीयः—हेत्वसिद्ध्या स्वरूपासिद्धेः, ब्रह्मणः शब्दावेद्यत्वात्, "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुतेः। ननु भवन्मते ब्रह्म स्वप्रकाशमितिवाक्यघटकः स्वप्रकाशशब्दो यौगिको रूढो वा? आद्ये स्वम्प्रकाशयतीति व्युत्पत्त्या स्वपदार्थस्य कर्मत्वम्प्रकाशशब्दार्थस्य प्रकाशकर्त्रर्थकत्वं वाच्यम्, तच्च विषयत्वाश्रयरूपम्, उभयथाप्यनुपपत्तिः, निर्धर्मिकत्वबोधकश्रुतिविरोधात्।

भावप्रकाशः।

ति वाच्यम्। रजतादिव्यवहारायोग्येऽपि शुक्तिशकलादौ रजतव्यवहारदर्शनात। न चैवमवेद्यत्वविशेषणं व्यर्थम्, व्यवच्छेद्याभावात्, त्वन्मते घटादेरप्यध्यस्त तयाऽपरोक्षव्यवहारयोग्यत्वाभावाद् इति वाच्यम्, व्यवहारदशायां तेषां प्रत्यक्षप्रमाणाविषयाणामपरोक्षव्यवहारयोग्यताङ्गीकारात्। तथाप्यवेद्यत्वे सत्यपरोक्षत्वमेव लक्षणमस्त्वव्यभिचारादिति चेत्सत्यम्, अपरोक्षज्ञानविषयत्वेनैव घटादिष्वपरोक्षत्वाङ्गीकारात्, अत्रापि तथात्वाव्याघात इति विभ्रमो माभूदिति तत्तव्यवहारेणैव प्रतिवादिनामपि सम्प्रतिपन्नेन तदेव स्फुटीक्रियत इति न कश्चिद्दोषः। कथं तर्ह्यवेद्यस्य व्यवहारयोग्यत्वमिति चेत्? किमवेद्यत्वे व्यवहारविषयत्वं न स्यादित्यनिष्टापादनमुत व्यवहारविषयत्वाद्वेद्यतानुमानम्? नाद्यः, आपाद्यापादकयोरुभयोरपि परेषामसिद्धेः। नेतरः, तस्येत्यप्रतिसाधनं निरासासमये निराकरिष्यमाणत्वादिति। वेदान्तिमतमेवास्त्विति चेत्तर्हि स्वविषयत्वानङ्गीकारात्कर्तृत्वकर्मत्वसम्भवेन विरोधोपपत्त्या शब्दे विशेषेत्यादिदोषानवकाशोऽत आह—ज्ञानविषयत्वे इति। ज्ञानस्वरूपस्यात्मनः स्वरूपज्ञानविषयत्वे इत्यर्थः। स्वस्य स्वयमेव प्रकाश इति तदर्थ इति भावः। इदं च "विज्ञानमेवात्मा" इति वादिनां मते। प्राभाकरमतेप्ययं दोषः। कर्तृकर्मविरोध इतीति। कर्तृत्वं कर्मत्वं च विरुद्धमित्यर्थः, न तु तयोर्मिथोविरोध इत्यर्थः। तदाह—अभेदे इति। तत्र कर्तृत्वाभावे युक्तिमाह—आधारेति। कर्मत्वाभावे तामाह—विषयेति। नानेन विरोधः खण्ड्यते किन्तु कर्तृकर्मशब्दप्रयोगखण्डनं, तदाह—शब्दविशेषोपेति। तत्र शब्दविशेषस्योपाधिलक्षणानाक्रान्तत्वादाह—शब्दविशेषनिमित्तेति। यद्धात्वर्थक्रियायां यस्य स्वातन्त्र्यविवक्षा तदा तत्र स कर्ता, यदुपात्तया कर्तृक्रियया यदा आप्तुमिष्टतमत्वेन यद्विवक्षा तदा तत्कारकं तत् क्रियायां कर्मेत्येवं शब्द-

उक्तिसम्भवाभावात् । एतेन परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वं चेद् अपादानेऽतिव्याप्तिमाशङ्क्य धात्वर्थतावच्छेदकफलशालि कर्मेति परिष्कुर्वन्तोऽपि प्रत्युक्ताः, ग्रामं गमयति देवदत्तमित्यादौ गन्तर्यव्याप्तेः । तन्मते गमनस्य

शब्दरत्नम् ।

शेषनिमित्तस्य । कर्तृकर्मशब्दयोराश्रयविषयोपलक्षकत्वे, स्वप्रकाशत्वे इत्यस्य स्वप्रकाशपदव्यवहार्यत्वे इत्यर्थे वा लक्षणैव दोष इति बोद्धयम् । **परेति** । कर्मत्वाभिमतापेक्षया परेत्यर्थः । गम्यादिकर्तर्यतिव्याप्तिवारणायेदम् । **अपादाने इति** । 'प्रयागात् काशीं गच्छति'इत्यादौ, तस्यापि क्रियाजन्यविभागाश्रयत्वादिति भावः । **धात्वर्थतावच्छेद**

भैरवी ।

द्वितीये स्वप्रकाशशब्दः स्वप्रकाशशब्दव्यवहार्य इत्यर्थको वाच्यस्तत्रापि तच्छ्रुतिविरोध इत्यत आह—कर्तृकर्मशब्दयोरिति ।

ननु भवन्मते तस्य वाक्यस्य का गतिः ? इति चेदित्थम्—स्वश्चासौ प्रकाशश्चेति कर्मधारयः । प्रकाशशब्दो भावघञन्तः । स्वाभिन्नः प्रकाशः, तस्य भावः स्वप्रकाशत्वम्, "कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानम्भावप्रत्ययेन" इति सिद्धान्तात् त्वप्रत्ययार्थोऽत्र स्वाभेद एव, स च नातिरिक्त इति । यत्किञ्चिदपेक्षया परत्वमव्यावर्तकमत आह—कर्मत्वाभिमतेति । फलाश्रयत्वेनास्योपस्थितत्वादित्यर्थः । कर्मापेक्षयेति तु नोक्तम्, एतावत्पर्यन्तङ्कर्मत्वस्यासिद्धेः । अतिव्याप्तीति । 'ग्रामङ्गच्छति चैत्रः' इत्यत्र चैत्रे गमनक्रियाजन्यसंयोगाश्रयत्वसत्त्वादतिव्याप्तिरित्यर्थः । अत्र फले तद्धात्वर्थत्वमपि विशेषणन्देयम् । तेन स्यन्दने पूर्वोत्तरदेशयोः कर्मत्वापत्तिः । काशीङ्गच्छतीति । अत्र विभागजन्यसंयोगानुकूलव्यापारस्य गम्धात्वर्थत्वमिति विभागस्य धात्वर्थत्वमस्तीति भावः । एतन्मते भेदः आधेयत्वञ्च द्वितीयार्थः । भेदे प्रकृत्यर्थस्य तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयः, तस्य च भेदस्य सामानाधिकरण्यसम्बन्धेन व्यापारेऽन्वयः, ग्रामपदार्थस्याधेयत्वेऽप्यन्वयः, ग्रामपदार्थस्य च द्वेधा भानमिति ग्रामवृत्तिसंयोगानुकूलग्रामभेदविशिष्टव्यापारानुकूलकृतिमानित्यन्वयबोधः परमते । स्वमते तु कर्तृविशिष्टस्तादृशव्यापार इत्याकारकः । संयोगस्यैव तथात्वमिति गम्धातोः संयोगावच्छिन्नव्यापार एव शक्तिरिति भावः । धात्वर्थतावच्छेदकेत्यत्र धातुपदङ्गणपठितधातुपरम्, उत तद्भिन्नस्यापि बोधकम् ? नाद्य इत्याह–ग्रामङ्गमयतीति ।

भावप्रकाशः

वशेषनिमित्तकरयेत्यर्थः । प्रकारान्तराभिप्रायकशब्दप्रयोगेण तत्र तदुक्तिसम्भवेन मूलासाङ्गत्यं परिहरति–**कर्तृकर्मेति** । यथासंख्यान्वयः । नन्वेवमपि स्वप्रकाशशब्दस्यासाधुतापत्तिरत आह—**स्वप्रेति** । स्वं प्रकाशयतीति स्वप्रकाश इति व्युत्पत्तेरिति भावः । एतेन मूलोक्तदोषो वारितस्तथाच सम्यगेव तत्तदिति गूढाकूतम् । ननु यत्किञ्चिदपेक्षया परत्वस्यानियतत्वादनिष्टमप्यत आह—**कर्मत्वेति** । तस्यैव लक्ष्यत्वेनोपस्थितत्वात्तदन्यत्वस्यैवौचित्यादिति भावः । कर्मत्वस्यैतत्साध्यत्वेनेतः प्रागसत्त्वादाह—**अभिमतेति** । किमर्थमस्य निवेशोऽत आह—**गम्यादीति** । गच्छति ग्रामं चैत्र इत्यर्थः । संयोगस्य तत्रापि सत्त्वात्तत्संयोगस्य तत्र सत्त्वेपि स्वसमवेतक्रियाजन्यफलशालित्वमेव तत्रेति तस्मिन्सति वारणमिति भावः । **तस्यापि**–प्रयागस्यापि । क्रियाजन्यसंयोगस्य काश्या इवेति भावः । अत्रेत्थमेतन्मतनिष्कर्षः–परसमवेतधात्वर्थक्रियाजन्यधात्वर्थफलाश्रयत्वं कर्मत्वं, परसमवेतेति विशेषणाच्चैत्रश्चैत्रं गच्छतीति न प्रयोगः । तत्र द्वितीयया स्वप्रकृत्यर्थापेक्षया परत्वं बोध्यते, आख्यातेन तु स्वार्थसंख्यान्वय्यपेक्षया । परसमवेतत्वं च धात्वर्थक्रियान्वयि, तथैव कार्यकारणभावान्तरकल्पनात् । गमिपतयोः पूर्वदेशे त्यजेरुत्तरदेशे स्यन्देश्च पूर्वपरयोः कर्मत्ववारणाय धात्वर्थेति । तत्र क्रियायाः फलस्य च धातुनैव लाभादाधेयत्वं भेदश्च द्वितीयार्थः । तत्र फले आद्यान्वयोऽन्त्यस्य सामानाधिकरण्येन व्यापारे, भेदे प्रकृत्यर्थस्य फलान्वयिव्यक्तिविशेषावच्छिन्नप्रतियोगितयाऽन्वयः । एवञ्च ग्रामं गच्छतीत्यादौ ग्रामाधेयफलानुकूलग्रामभेद-

प्रकृत्यर्थत्वेऽपि तत्त्वानवच्छेदकत्वात् । तत्र णिचो व्यापारार्थकत्वं न प्रकृतेः । तत्त्वे वा पाचयत्यादिप्रयोज्यकर्तर्येतिव्याप्तेः । पारिभाषिकमनुशासनोपयोगि कर्मत्वं वचनबलाद् व्यवस्थितमिति चेद् ? अपादानेऽपि तर्हि तन्नास्तीत्यवधेहि, एकसञ्ज्ञाधिकारेऽनवकाशया सावकाशाया बाधात् ।

शब्दरत्नम् ।

केति । संयोगस्यैव तथात्वं न तु विभागस्येति भावः । तत्त्वेनेति । ण्यन्तधात्वर्थतावच्छेदकत्वे वेत्यर्थः । वचनबलात्—गत्यादिनियमबलात् । ननु विभागस्य तत्त्वेन "कर्तुः" इति "तथायुक्तम्" इति वा प्राप्नोति अपादानप्रकरणेऽवध्यन्वयिनो विभागस्य धात्वर्थताया वक्ष्यमाणत्वादित्यत आह—एकसञ्ज्ञेति । सावकाशाया इति । 'विषं भुङ्क्ते' इत्यादौ सावकाशाया इत्यर्थः । 'कर्तुः' इति कर्म-

भैरवी ।

तन्मते-नैयायिकमते । गमनस्य-संयोगावच्छिन्नव्यापारस्य । न द्वितीय इत्याह-तत्त्वेवेति ।

मूले—अपादानेऽपि तर्हीति । एवञ्च तद्व्यावृत्तये धात्वर्थतावच्छेदकत्वविशेषणनिवेशपर्यन्तानुधावनं विफलमिति भावः । एवं सति परया कर्तृसंज्ञया बाधेन चैत्रश्चैत्रङ्गच्छतीत्यादिप्रयोगापत्तिवारणेन यद्भेदेऽपि द्वितीयायाः शक्तिरिति प्रागुक्तन्तन्नोचितमिति च 'वचनबलात्' इत्यनेन सूचितम् ।

ननु स्वमते यदि सूत्रेणैव संज्ञाप्रवृत्तिनिर्णयस्तदाऽपादानस्य कर्मसंज्ञा प्राप्नोतीत्याशयेन शङ्कते—नन्विति । तत्त्वेन—धात्वर्थकुक्षिप्रवेशेन । विभागजन्यसंयोगानुकूलव्यापारो धात्वर्थ इत्याशयः । उद्देश्यत्वानुद्देश्यत्वभेदेन सूत्रद्वयोपन्यासः, द्वितीयसूत्राभिप्रायेणेदमुत्तरमित्याशयेनाह—विषम्भुङ्क्त इत्यादाविति । आदिनोदासीनतृणादिसंग्रहः । आद्यसूत्रस्य यत्र फलाश्रय-

भावप्रकाशः ।

समानाधिकरणव्यापारानुकूलकृतिमानिति बोधः । एतेन प्रतियोगितासामान्येनान्वये द्रव्यत्वावच्छिन्नप्रतियोगितयाऽन्वये तु देवदत्तो द्रव्यं गच्छतीत्यस्यानापत्तिरिति निरस्तमिति । तदभिप्रेत्याह—संयोगस्यैवेति । तथात्वं—धात्वर्थतावच्छेदकत्वम्, प्रयागात्काशीं गच्छतीत्यादौ संयोगावच्छिन्नव्यापारे एव शक्तिकल्पनात् । न तु विभागेति । प्रयागादिनिष्ठविभागस्य तद्धात्ववाच्यत्वेन तदनवच्छेदकत्वमिति भावः । ननु धात्वर्थतावच्छेदकेत्यत्र धातुपदेन गणपठितधातूनामेव ग्रहणमुत तदन्येषामपि ? तत्र नाद्य इत्याह—मूले ग्राममिति । तदुपपादयति—तन्मते इति । नैयायिकमते इत्यर्थः । गमनस्य-संयोगानुकूलव्यापारस्य ; प्रकृत्यर्थत्वेऽपि-णिच्प्रकृतिधात्वर्थत्वेऽपि । तत्त्वानवच्छेदकत्वात्-धात्वर्थत्वानवच्छेदकत्वात् । न द्वितीय इत्याह—तत्त्वेवेति । तद्व्याचष्टे—ण्यन्तेति । संयोगानुकूलव्यापारावच्छिन्नव्यापारे ण्यन्तशक्तिस्वीकारादिति भावः । ननु यत्क्रियाजन्यधात्वर्थतावच्छेदकफलशालि यत्तत्क्रियाकर्मेति तत्तत्क्रियाभेदेन नानालक्षणकरणान्नातिव्याप्तिः, पच्यादिप्रकृतिकणिजन्तस्थले प्रकृत्यर्थस्यावच्छेदकत्वानङ्गीकारात् । सर्वत्र प्रतीतिरेवानुसर्तव्यत्वात्, तथाच तत्र णिच एव शक्तिस्तत्र व्यापारे न तु ण्यन्तस्य विशिष्टे इति चेत् ? न, नानालक्षणकरणेऽतिगौरवात्, क्वावच्छेदकं क नेति नियन्तुमशक्यत्वाच्चेति भावः । विधिबलादित्यर्थवारणायाह—गत्यादीति । मूले अपादानेपि तर्हीति । एवंच तद्व्यावृत्तये धात्वर्थतावच्छेदकत्वविवक्षापरिश्रमो निष्फलः । किंच परया कर्तृसंज्ञया बाधेन तत्प्रयोगापत्तेरसम्भवेन भेदे शक्तिकल्पनस्य व्यर्थत्वात् । अधिकं मञ्जूषायां द्रष्टव्यम् । ननु स्वमते सूत्रेण नेष्टसिद्धिरिति परमतमेवावश्यकमित्याशयेन शङ्कते—नन्वित्यादि । तत्त्वेन—धात्वर्थत्वेन । विभागजन्यसंयोगानुकूलो व्यापारो धात्वर्थः । उद्देश्यत्वसत्त्वे आह-कर्तुरिति । तदभावे आह-तथायुक्तमिति वेति । हेत्वसिद्धिं परिहरति-अपादानेति । एतच्च तत्रैव स्फुटीभविष्यति । तथायुक्तमिति सूत्राशयेनेदमुत्तरमित्याह—विषमिति । आदिनोदासीनसंग्रहः । ननु आद्यसूत्राभिप्रायमिदं कुतो नेत्यत आह—कर्तुरितीति । "अपादानमुत्तराणि कार-

अत एव 'आत्मानमात्मना हन्ति' इत्यादौ परया कर्तृसंज्ञया कर्मसञ्ज्ञाबाधमाशङ्क्याहङ्कारादिविशिष्टात्म भेदमाश्रित्य समाहितं भाष्ये ।

---

### शब्दरत्नम् ।

सञ्ज्ञा त्वपादानसंज्ञायाः परत्वाद् बाधिका । अत एव 'ग्रामं त्यजति' इत्यादौ द्वितीयासिद्धिरिति तात्पर्यम् । अपादाननिष्ठविभागीयसम्बन्धस्य फलतानवच्छेदकत्वान्न दोष इत्यपि बोद्धयम् । अत एव-एकसञ्ज्ञाधिकारे सञ्ज्ञयोर्बाद्ध्यबाधकभावादेव । अहंकारादीति । आदिना शरीरम् ।

### भैरवी ।

त्वेनोद्देश्यता तत्र प्रवृत्त्या विभागजन्यसंयोगानुकूलव्यापारस्य धात्वर्थत्वेऽपि कर्तृवृत्तिव्यापारजन्यसंयोगाश्रयत्वेन प्रयागात्काशीङ्गच्छतीत्यत्र काश्या एवोद्देश्यता, नतु प्रयागस्येति तत्र प्रयोगे सावकाशाऽपादानसंज्ञा 'ग्रामन्त्यजति'इत्यत्र कर्मसंज्ञया बाध्यते । अत एव—प्रथमसूत्रविहितकर्मसंज्ञाया अपादानसंज्ञाबाधकत्वादेव । प्रकारान्तरेणाप्यतिप्रसङ्गं वारयति—अपादाननिष्ठेति । 'ग्रामाद् गृहमायाति' इत्यत्र यद्यपि विभागावच्छिन्नसंयोगानुकूलव्यापारो धात्वर्थस्तथापि संयोगीयो योऽनुयोगितारूपः सम्बन्धः स एव फलतावच्छेदको, नतु विभागीयः । फलतावच्छेदकसम्बन्धेन फलाश्रयत्वमेव कर्मसंज्ञाप्रयोजकम् । अन्यथा कालिकसम्बन्धेन संयोगाश्रयत्वस्य पर्वतादावपि सत्त्वेन 'ग्रामम्पर्वताद्गच्छति' इति यत्र, तत्र पर्वतं गच्छतीति स्यात् । यत्र विभागावच्छिन्नव्यापारो धात्वर्थस्तत्राप्यनुयोगितासम्बन्ध एव फलतावच्छेदको, नतु प्रतियोगितालक्षणः । अत एव 'वृक्षाद्विभजते' इत्यादौ वृक्षादिशब्देभ्यः पञ्चमीसिद्धिः । नच "आत्मानमात्मना हन्ति' इतिवच्चैत्रश्चैत्रङ्गच्छतीति प्रयोगापत्तिः, तत्रापि शरीराद्युपाधिभेदेन कर्तृकर्मणोर्भेदस्य कल्पनासम्भवादिति वाच्यम्, प्रामाणिकप्रयोगस्योपपत्तये एवङ्कल्पनायाः सत्त्वात् ।

स्वसिद्धान्ते पञ्चकम्प्रातिपदिकार्थस्तत्र विभक्तिद्योत्यकारकाणाम्प्रातिपदिकार्थविशेषणतैव, नतु क्रियाविशेषणत्वमिति प्रसक्ताम्मूलासङ्गतिम्परिहरति—विभक्त्यर्थ-

### भावप्रकाशः ।

काणि बाधन्ते" इत्युक्तेः । प्रतिपादितमिदं प्राक् सकर्मकाकर्मकस्थले सर्वत्रापादानत्वविषये तथायुक्तमित्यस्य प्राप्तिर्विभागस्य धात्वर्थत्वादिति तन्निरवकाशमिति तेन तद्बाधः । एवं सति अकर्मकयोगेऽपादानत्वस्य चारितार्थ्यात् विभागादन्यत्र कर्मत्वस्य चारितार्थ्यात्परत्वात्कर्तुरित्यनेन तस्य बाध इति भावः । अस्यावश्यकतामाह--अत एवेति । तस्यास्तद्बाधकत्वादेवेत्यर्थः । द्वितीयेति । उद्देश्यत्वसत्त्वेन कर्तुरित्यस्य प्राप्तेरिति भावः । मूले बाधादिति । तथायुक्तमित्यस्यापि फलस्य धातुवाच्यत्वे एव प्रवृत्तिरिति मते तु शास्त्रप्रवृत्तिरेव न । एतेन पुरस्तादपवादन्यायेन कर्तुरीप्सितमित्यस्यैव बाधः स्यादित्यपास्तम् "तत आगतः" इति सूत्रासाङ्गत्यापत्तेश्च । नन्वेवं प्रयागस्यापि तेनैव कर्मत्वापत्तिस्तद्वत्तत्राप्युद्देश्यत्वाङ्गीकारादत आह-अपादानेति । वस्तुतस्तस्य तत्त्वेऽपि तथायुक्तमित्यस्याप्राप्तिरेवेत्याह-अपादानेति । कालिकसम्बन्धेन फलाश्रयेऽतिव्याप्तिवारणाय कर्मलक्षणे उभयत्र फलतावच्छेदकसम्बन्धेन फलाश्रयत्वस्य विवक्षितत्वात्कर्तृनिष्ठविभागीयानुयोगितासम्बन्धस्यैव तत्र तत्त्वात् । अत एव 'वृक्षाद्विभजते' इत्यादौ पञ्चमी । अत्र विश्लेषस्यैव धात्वर्थत्वं सर्वेष्टमिति भावः । ययोः संज्ञयोर्बाध्यबाधकभाव उक्तस्तद्विषयत्वस्याग्रे सत्त्वादाह—एकसंज्ञेति । संज्ञयोः—तादृश्योः । शरीरमिति । न चैवं 'चैत्रश्चैत्रं गच्छति' इत्यत्रापि शरीरप्रदेशान्तरावच्छिन्नात्मभेदस्यापि कल्पनायां साधुत्वं स्यादिति वाच्यम्, सति प्रयोगे तथात्वे इष्टापत्तेरिति दिक् ।

रामेणेति। इह यद्यपि विभक्त्युपस्थितानां कारकाणां क्रियां प्रति विशेषणतैव तथाऽपि कृदुपस्थितानां विशेष्यतैव, "सत्त्वप्रधानानि नामानि" इत्युक्तेः। धातूपस्थाप्ययोः फलव्यापारयोरपि कर्मकृत्समभिव्याहारे विशेषणविशेष्यभावव्यत्यासः। तथा च रामनिष्ठो यो व्यापारस्तद्विषयीभूतबाणव्यापारसाध्यप्राणवियोगाश्रयो वालीति वाक्यार्थः।

यत्तु वाजपेयाधिकरणे मीमांसकैरुक्तं—'काष्ठैः पाकः' इत्यपि स्यादिति, तदि-

## शब्दरत्नम्।

विभक्त्युपस्थितानामिति। विभक्त्यर्थस्य संसर्गत्वमते तदन्तोपस्थितानामित्यर्थः। व्यत्यास इति। तद्व्यत्यासेनैव धातुतस्तदुपस्थितिरित्यर्थः। तत्र व्यापारजन्यफलमेव धात्वर्थ इति भावः।

तदिष्टापत्तीति। कृत्प्रकृत्यर्थक्रियायामपि कारकाणामन्वयादिति भावः। तत्रैव

## भैरवी

स्येत्यादिना। एवञ्च विभक्त्यन्तेनोपस्थितानान्तत्तद्विभक्त्यर्थसम्बन्धेन क्रियाविशेषणत्वं स्पष्टमेव। तद्व्यत्यासेन—फलव्यापारयोर्विशेष्यविशेषणभावव्यत्यासेन। फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले च धातोः शक्तिः, कर्तृकर्मबोधकप्रत्ययसमभिव्याहारस्तत्तद्बोधतात्पर्यग्राहक इति स्वसिद्धान्ताभिप्रायेणेदम्। तत्र कर्मबोधकप्रत्ययसमभिव्याहारे—मूले—रामनिष्ठो यो व्यापारस्तद्विषयत्वम्फलभूतधात्वर्थे उक्तं, तच्च स्वोत्पादकप्रवृत्त्युद्देश्यत्वरूपम्बोध्यम्। एवम्प्राणवियोगात्मकफले बाणव्यापारसाध्यत्वाभिधानङ् कृतन्तेन करणकारस्य सर्वत्र स्वव्यापारद्वारा फलम्प्रत्येव जनकत्वात्तत्रैवान्वय इति ध्वनितम्। मीमांसकैर्यदुक्तं 'काष्ठैः पाकः' इत्यपि स्यादिति, तत्पाकक्रियायाः सिद्धावस्थापन्नाया एव पाकपदेनाभिधानात्कारकान्वययोग्यतावच्छेदकसाध्यत्वेनानभिधानेन नात्र कारकान्वय इत्यभिमानेन।

वस्तुतस्तु पाकादिशब्दघटकधातुना अत्रापि साध्यत्वेनैव क्रियाया अभिधानेन तस्यां कारकान्वये बाधकाभाव इत्याशयेनाह—तदिष्टापत्तीति। तत्रैव—प्रकृत्या तेन रूपेणाभिधाने।

## भावप्रकाशः।

यथाश्रुतमयुक्तं मूलं सिद्धान्तरीत्या योजयति—विभक्त्यर्थस्येति। क्रियाकारकभावस्येत्यर्थः। संसर्गत्वमते—संसर्गत्वमितिमते। कर्मत्वादिशक्तिमत्कारकं तु न तद्वाच्योऽर्थः, किन्तु प्रातिपदिकार्थः, पञ्चकपक्षस्यैव सिद्धान्तितत्वादत आह—तदन्तेति। विभक्तेर्द्योतकत्वादिति भावः। तथाच तदुपस्थितानां तदुपस्थिततत्सम्बन्धेन क्रियां प्रति विशेषणत्वमिति मूलार्थो बोध्यो भाष्यरीत्या। मूले कर्मकृदिति। प्रकृताभिप्रायमेतत्। करणाधिकरणयोः कृति कर्माख्याते च व्यत्यासदर्शनात्। उपस्थितिशाब्दबोधयोः साम्यायाह—तद्व्यत्यासेनैवेति। विशेष्यविशेषणभावव्यत्यासेनैवेत्यर्थः। एतेन वैषम्यनिवृत्तिः। तदुपेति। फलव्यापारोपेत्यर्थः। तदेव स्पष्टयति—तत्रेति। कर्मादिप्रत्ययसमभिव्याहारे इत्यर्थः। एतेन वैपरीत्यनिवृत्तिः। मूले विषयीति। विषयश्चात्र धातुवाच्यः प्राणवियोग एव, तदुद्देशेनैव रामव्यापारप्रवृत्तेः। करणस्य च फलेऽप्यन्वयः, तस्य करणव्यापारजन्यत्वात्। एवञ्च भूतान्तसाध्यान्तयोः कर्मधारयोत्तरं वियोगान्तेन कर्मधारयो वैपरीत्यं चेति बोध्यम्। एवं सति रामस्य यथाकर्तृत्वं तथा प्राग् निरूपितम्। एतेन तथाप्रकाशरत्नाकरदण्डद्याद्युक्तं, कर्माख्याते न व्यत्यासः, तत्र कर्त्राख्यातवद् बोधः, कर्मकृति तु स इति दण्डद्युक्तं चापास्तम्। ननु मूले इष्टापत्तौ कर्तृकरणेकृत्वेति हेतुरुक्तः, स चायुक्तः, अत्र बहुलग्रहणेन वाक्यत्वेन च तत्सूत्रविषयत्वाभावादत आह—कृत्प्रकृत्यर्थेति। तदन्वययोग्यतावच्छेदकासत्त्वरूपत्वस्य तत्रापि सत्त्वादिति भावः। नन्वेवमुत्तरग्रन्थासङ्गतिरत आह—तत्रैवेति।

ष्टापत्तिग्रस्तम्। "कर्तृकरणे कृता बहुलं" "कर्तृकर्मणोः कृति" इत्यादिसूत्राणां कृत्प्रकृत्यर्थेन कारकान्वयं विनोक्तिसम्भवस्यैवाभावादिति सुधीभिराकलनीयम्।

अनभिहिते किम्? हरिः करोति। जीवन्त्यनेन जीवनः। शाब्दिकः। "शब्ददर्दुरं करोति" इति ठक्। कृतं विश्वं येन कृतविश्वः, विश्वकर्मककृत्याश्रय इत्यर्थः; अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरस्वीकारात्। यथा चैतत्तथा वक्ष्यते। प्रकृत्यादिभ्य इति। आकृतिगणोऽयम्। तेन 'नाम्ना सुतीक्ष्णश्चरितेन दान्तः'

---

शब्दरत्नम्।

मानमाह—कर्त्रित्यादि। यत्तु भवतिक्रियायां प्राथमिकान्वयेन तत्तद्विभक्तौ कृदन्तेन पार्ष्णिकान्वयात् तेषां चारितार्थ्यमिति; तन्न, भवतिक्रियायां कर्तृत्वेनान्वये कर्तुरुक्तत्वात्तृतीयानापत्त्या 'हरिणा त्रातः' इत्यसिद्ध्यापत्तेः, करणत्वेनान्वये पार्ष्णिकस्यापि हरिकर्तृकत्राणकर्मणो बोधानापत्तेः, कर्तृतृतीयान्तेन समासविधायकासङ्गतेश्च।

यत्कर्तृककृतिकर्म विश्वमिति विग्रहवाक्यजबोधाद्भिन्नबोधस्वीकारे न मानमत आह—अषष्ठ्यर्थेति। आकृतीति। इदं च यथायथं सर्वविभक्त्यपवादः। नाम्नेति।

भैरवी।

भवतिक्रियायामिति। 'काष्ठैः पाकः' इत्यादौ यद्यपि भवतिक्रियाबोधकम्पदन्नास्ति तथापि "अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति" इति भाष्यकारोक्तेरत्रापि सा प्रतीयत एवेत्याशयेनेदम्। कर्तुरुक्तत्वादिति। प्रधानेतरयोरिति न्यायेन प्रधानभवतिक्रियाकर्तृत्वस्याभिधानेन गुणभूतपचिक्रियाकर्तृत्वमप्यभिहितमिति भावः। ननु न प्रधानक्रियायाङ्कर्तृत्वेनान्वयः किन्तु करणत्वेनेति तदनुयायिनः शङ्कां वारयति—करणत्वेनेति। पार्ष्णिकस्यापीति। इदङ्कर्मण इत्यत्र सामानाधिकरण्येनान्वयि, तद्विषयकबोधस्य पश्चाद्भवत्वात्तद्विषयेऽपि पार्ष्णिकत्वव्यपदेशः। नन्वेतादृशे स्थले हरिकर्तृकत्राणबोधाभावे इष्टापत्तिरेवेत्यत आह—कर्तृतृतीयान्तेनेति। असङ्गतेरिति। तद्घटककर्तृपदांशस्यासङ्गत्यापत्तेरित्यर्थः।

विग्रहवाक्यजेति। लौकिकविग्रहवाक्यजेत्यर्थः। इदञ्चेति। "प्रकृत्यादिभ्यः" इति वार्तिकञ्चेत्यर्थः। आदिशब्दोऽत्र प्रकारे। तेन 'वन्हित्वेन घटाभावः' 'दण्डत्वेन कारणता' इत्या-

भावप्रकाशः।

तत्रापि तदन्वये एवेत्यर्थः। प्राचामुक्तिं खण्डयति—यत्त्विति। आख्यातवाच्यक्रियायामेव तदन्वय इति तदभिमानः। भवतीति। भवतिपदवाच्यक्रियायामित्यर्थः। एवमग्रेऽपि। "अस्तिर्भवन्तीपरः सर्वत्राप्रयुज्यमानोप्यस्ति" इति भाष्योक्तेरिति भावः। विभक्ताविति। अस्य सर्वा तत इति शेषः। पार्ष्णिकान्वयात्—पाश्चात्यान्वयाङ्गीकारात्। तेषां—"कर्तृकरणे" इत्यादीनाम्। ननु प्राथमिकान्वयस्तत्र किं कर्तृत्वेनोत करणत्वेन? तत्र नाद्य इत्याह—भवतीति। नान्त्य इत्याह—करणत्वेनेति। पार्ष्णिकस्येति। बोधस्य तत्त्वात्तद्विषयस्यापि तत्त्वमत एव तेन सामानाधिकरण्यमिति भावः। इष्टापत्तावुभयसाधारणं दोषमाह—कर्त्रिति। "कर्तृकरणे" इत्यत्र कर्त्रित्यंशस्येत्यर्थः।

विग्रहवाक्येति। लौकिकवाक्येत्यर्थः। भिन्नेति। समासे इति आदिः। इदं चाग्रे स्फुटीभविष्यति। आकृतीति। तथाच वार्तिके आदिशब्दः प्रकारे। मूलस्थादिना 'घटत्वेनाभावः' 'पटत्वेन विषयता' इत्यादिसंग्रह इति बोध्यम्। इदं चेति। वार्तिकं चेत्यर्थः। भाष्ये तथैव स्पष्टत्वादिति भावः। इदं

सरला।

फलमेवेति। व्यापारावच्छिन्नफले धातोः शक्तिस्वीकारादिति भावः। सर्वविभक्त्यपवाद इति। तत्र 'प्रायेणात्र याज्ञिकाः' इत्यत्र 'अत्र बहवो याज्ञिकाः' इत्यर्थे प्रायशब्दस्य बहुत्वविशिष्टार्थपरतया ततः प्राप्तां प्रथमां विभक्तिं प्रबाध्यानेन तृतीया। प्रायशब्दस्य बहुत्वमात्रार्थपरत्वे तु तस्य वैशिष्ट्यसम्बन्धेन

इत्यादि बोद्धव्यम् । द्वयोर्द्रोणयोः समाहारो द्विद्रोणम् । पात्रादित्वात्स्त्रीत्वाभावः । द्रोणद्वयसम्बन्धि धान्यमित्यर्थः ।

चादिति । करणशब्दानुवृत्त्या "परिक्रयणे सम्प्रदानम्" इत्युत्तरसूत्रस्था-न्यतरस्यांग्रहणापकर्षणेन वा सञ्ज्ञयोः पर्याये लब्धे समावेशार्थश्चकारः । तेन 'मनसादेवः' इत्यत्र कर्मण्यण्, करणे तृतीया चेत्युभयं सिद्ध्यति । "मनसः

---

शब्दरत्नम् ।

नामसम्बन्धितीक्ष्णत्ववानित्यर्थः ।

करणशब्दानुवृत्त्येति । एकसंज्ञाधिकारेण चेति बोद्धव्यम् । ननु 'मनसादेवः' इत्य-सङ्गतं, कृद्योगलक्षणषष्ठीप्राप्तेः । न च कर्तृसाहचर्यात्तत्र मुख्यव्यवहारेण धात्वर्थाश्रयस्यैव

भैरवी ।

दिप्रयोगाणामुपपत्तिः । नामसम्बन्धीति । नामज्ञाप्यमित्यर्थः । वन्हित्वेनेत्यादौ त्ववच्छिन्न-प्रतियोगिताकत्वन्तृतीयार्थः ।

ननु "दिवः" इति सूत्रे करणशब्दानुवृत्त्या संज्ञयोः समावेशो भविष्यतीत्यत आह—एकेति । मूले—यत् 'मनसा देवः' इत्येतत्सिद्धिरूपं संज्ञाद्वयसमावेशफलमुक्तन्तदसङ्गतमिति हरदत्तानुयायिन उक्तिं खण्डयति—नन्वित्यादिना । षष्ठीप्राप्तेरिति । यथा 'अक्षाणां देविता' इत्यत्रापवादत्वात्तृतीया बाध्यते तद्वदिति शेषः । तत्र—"कर्तृकर्मणोः कृति" इतिसूत्रे । कर्तृसाहचर्यादिति । यथा धातुप्रतिपाद्यप्रधानव्यापाराश्रयस्य कर्तृपदेन ग्रहणं, तथा मुख्यतया

भावप्रकाशः ।

चोदाहरणेष्वेव स्फुटम् । नामसम्बन्धीति । नामज्ञाप्येत्यर्थः । एवञ्चरितेन दान्त इत्यादावपि बोध्यम् ।

ननु तदनुवृत्तावुभयविधिसामर्थ्येन समावेशः सिद्ध एवेति किं चेनात आह—एकेति । एतेन तथारत्नाकरदण्डयादिग्रन्थाश्चिन्त्या इति बोधितम् । ननु अक्षाणां देवितेत्यादौ कृत्प्रत्यययोगे षष्ठ्याऽप-वादत्वाद् द्वितीया बाध्यते, तृतीया तु परत्वादिति कैयटविरोधान्मनसादेव इति प्रयोगश्चिन्त्य इत्याश-येन हरदत्तानुयायिप्रकाशानुवादं खण्डयति—नन्वित्यादि । प्राप्तेरिति । तृतीयाद्वितीययोः पर-त्वापवादत्वाभ्यां तया बाधादिति भावः । ननु कैयट एवासङ्गत इत्याशङ्कते—नचेति । "कर्तृकर्मणोः"

सरला ।

याज्ञिकपदार्थेऽन्वयात्तत्र "इत्थम्भूतलक्षणे" इत्यनेन तृतीयासिद्धावपि सम्बन्धसामान्येनान्वयविवक्षायां प्राप्तषष्ठीबाधिकेयमिति । तथाच तत्र 'बहुत्वसम्बन्धिनो याज्ञिकाः' इति बोधः । 'प्रकृत्या चारुः' इत्यत्र प्रकृतिसम्बन्धी चारुरित्यर्थे प्रकृत्यर्थस्य चारुपदार्थे सम्बन्धसामान्येनान्वयात् ततः षष्ठी प्राप्नोति, तद्बाधना-र्थमिदम् । 'गोत्रेण गार्ग्यः' इत्यत्र गोत्रपदार्थस्याभेदेन गार्ग्यपदार्थान्वये प्रथमा प्राप्नोति, सम्बन्धसामा-न्येनान्वये तु षष्ठी, तद्बाधिकेयं तृतीया । 'गोत्राभिन्नो गार्ग्यः' 'गोत्रसम्बन्धिगार्ग्यत्ववान्' इति च क्रमे-णार्थः । 'समेनैति' इत्यत्र गमनकर्मदेशसामानाधिकरण्याद् प्राप्तद्वितीयाबाधिकेयम् । 'द्विद्रोणेन धान्यं क्रीणाति' इत्यत्र द्विद्रोणाभिन्नं धान्यमित्यर्थात्परिच्छेद्यपरिच्छेदकयोरभेदोपचारेण द्विद्रोणशब्दाद् द्वितीया प्राप्नोति, तद्बाधिकेयम् । 'पञ्चकेन पशून् क्रीणाति' 'सहस्रेणाश्वान् क्रीणाति' इत्यादावपि सङ्ख्यस-ङ्ख्यिनोरभेदोपचारेण पञ्चत्वसंख्यावत्सङ्घाभिन्नपशून्, सहस्रसंख्यावत्सङ्घाभिन्नाश्वान् क्रीणातीत्यर्थ-प्रतीत्या द्वितीया प्राप्नोति तद्बाधिकेयमिति स्पष्टमन्यत्र । भाष्यकारास्तु ग्रहणधारणयोः सौकर्याय बाहु-ल्येनाधीयते याज्ञिकाः, प्रकृत्या स्वभावेन कृतश्चारुः सुन्दरो न तु वस्त्रादिना, अहं 'गार्ग्यः' इति गोत्रेण संज्ञाये—सञ्ज्ञातो भवामि, समेन पथा गच्छति, द्रोणद्वयपरिच्छिन्नवस्त्वन्तरेण तद्दानेन धान्यक्रयं करोति, पञ्चपशुसङ्घसाधनेन मूल्येन पशुक्रयं करोति, सहस्रपरिमाणेन हिरण्येनाश्वक्रयं करोति, इत्या-दिरीत्या सर्वत्राध्याहृतक्रियादिकमादाय करणविभक्तिमुपपाद्यैतद्वार्तिकं प्रत्याचख्युः । तेषां मते उक्तप्रयो-गेषु सम्बन्धसामान्येनान्वयविवक्षायां षष्ठी त्वनभिधानान्नेति, नाम्ना ज्ञापितः सुतीक्ष्णो न तु चारित्र्येण, चरित्रेण ज्ञापितो दान्तः इत्याद्यर्थेन तत्र "इत्थम्भूतलक्षणे" इति तृतीयेति बोद्धव्यमिति दिक् ।

सञ्ज्ञायाम्" इत्यलुक् । किंचाक्षैर्देवयते यज्ञदत्तेनेत्यत्र सकर्मकत्वादणि कर्तुर्णौ कर्मत्वं

### शब्दरत्नम् ।

कर्मणो ग्रहणम् ; अत एव 'स्तोकं पाकः' इत्यादौ षष्ठी नेति वाच्यम् । धात्वर्थे भेदेनान्वयिकर्मग्रहणेनैव तदुपपत्तावत्राप्रवृत्तौ मानाभावात् । ध्वनितं चेदमाकडारसूत्रे कैयटे । तादृशसञ्ज्ञासत्त्वे दृढतरमानाभावश्चेत्यरुचेराह—किं चेति । कर्मत्वं नेति । न च वैकल्पिक-

### भैरवी ।

तदर्थफलाश्रयस्य तत्र ग्रहणमित्यत्र साहचर्यं हेतुत्वेनाभिहितम् । मुख्यत्वाभिधानं व्यपदेशिवद्भावेन यस्य कर्मत्वं तद्व्युदासाय । अत एव—तादृशकर्मणो ग्रहणादेव । अत्र स्तोकपदार्थस्य व्यपदेशिवद्भावेन यत्कर्मत्ववत्तत्राभेदेनान्वयात्कर्मत्वं, नतु मुख्यं कर्मत्वमस्तीति न षष्ठीति भावः । "कर्मणि द्वितीया" इतिसूत्रे तु मुख्यकर्मण एव ग्रहणमित्यत्र साधकाभावाद्व्यपदेशिवद्भावलब्धकर्मत्ववतोऽपि ग्रहणमिति द्वितीया भवति । धात्वर्थ-फले । भेदेन-क्रियाकारकभावसम्बन्धेन । तदुपपत्तौ–'स्तोकम्पाकः' इत्यत्र षष्ठ्यभावोपपत्तौ, तत्र स्तोकपदार्थस्य फलेऽभेदेनान्वयादिति भावः । अत्र—मनसादेव इत्यत्र । अप्रवृत्ताविति । "कर्तृकर्मणोः" इत्यस्याप्रवृत्तौ—अत्र प्रमाणमाह—ध्वनितञ्चेदमिति । तत्रहि—अक्षाणान्देवितेत्यत्रापवादत्वाद् द्वितीयायाः षष्ठी बाधिका, तृतीयायास्तु परत्वादिति प्रतिपादितम् । अत्र षष्ठ्याः "कर्तृकर्मणोः" इति विहितायास्तृतीयाबाधकत्वाभिधानेन 'मनसा देवः' इत्यत्रापि तस्य सूत्रस्य प्रवृत्तिर्न्याय्यैवेति ध्वनितमित्यर्थः ।

ननु "कर्तृकर्मणोः कृति" इतिसूत्रे धात्वर्थफलाश्रयकर्मण एव ग्रहणमिति कल्पनया न षष्ठीप्राप्तिरत आह—तादृशसञ्ज्ञासत्त्वे इति । समाविष्टकर्मकरणसञ्ज्ञाद्वयसत्त्वे इत्यर्थः । न चैवं सति 'मनसादेव' इति प्रयोगस्यैव तद्धुच्छेदः स्यादिति वाच्यम्, "हेतौ" इति सूत्रविहिततृतीयान्तस्य पचाद्यजन्तदेवशब्देन समासात्प्रयोगोपपत्तेः । "दिवः कर्म च" इतिसूत्रे सञ्ज्ञाद्वयसमावेशफलकचकाराभावेऽपि किञ्चेत्यादिनोक्तफलमन्यथासिद्धमित्याशयकशङ्कान्निरसितुमाह—नचेति । वैकल्पिकत्वेऽप्यत्रेति । चकाराभावे कर्मकरणसञ्ज्ञयोः पर्यायेण प्रवृत्त्या वैकल्पिकत्वेऽपीत्यर्थः । अपिना समावेशसमुच्चयः । 'येषां देशकालादिभिन्नकर्म न सम्भवति त एवा-

### भावप्रकाशः ।

इत्यत्र प्रधानधात्वर्थव्यापाराश्रयस्य कर्तृपदेन ग्रहणात्साहचर्यान्मुख्यव्यवहारेण न तु व्यपदेशिवद्भावेन धात्वर्थफलाश्रयस्यैव कर्मपदेन ग्रहणमिति समुदितार्थः । साहचर्याश्रयणमनित्यत्वेऽप्यत्रावश्यकमित्याह—अत एवेति । तस्यैव ग्रहणेन स्तोकपदार्थे व्यपदेशिवद्भावेन तत्त्ववत्सामानाधिकरण्यादेवेत्यर्थः । द्वितीया तु ततो नीलघटमित्यादिवत्फलसामानाधिकरण्यादिति प्राक् प्रतिपादितम् । ननु कर्तृसाहचर्येण धात्वर्थकर्मण एव तत्र ग्रहणमिति तत्कैयटाशय इत्याशयेन समाधत्ते—धात्वर्थे इति । फले इत्यर्थः । भेदेनेति । क्रियाकारकभावरूपसम्बन्धेनेत्यर्थः । तदुपपत्ताविति । 'स्तोकं पाकः' इत्यत्र षष्ठ्यभावोपपत्तावित्यर्थः । तत्र स्तोकपदार्थस्य फलेऽभेदेनान्वय इति भावः । अत्राप्रवृत्ताविति । 'मनसादेवः' इत्यत्र "कर्तृकर्मणोः" इत्यस्याप्रवृत्तावित्यर्थः । एतेन स्तोकस्य पाक इत्यपि भवतीति नैयायिकोक्तमपास्तम् । अत्र मानमाह—ध्वनितमिति । उक्तः कैयटः । तथाच्चेदृशकर्मग्रहणमेव तदभिमतं न तु शङ्कोक्तम्, अन्यथा तदसङ्गतिः स्पष्टैवेति भावः । नन्वनार्षत्वाविशेषे हरदत्तोक्त्यनुरोधाय तादृशकर्मैव तत्र गृह्यतामिति धात्वर्थफलानाश्रयत्वान्मनसादेव इत्यत्र न षष्ठीप्राप्तिरत आह—तादृशेति । 'मनसादेवः' इत्यलुप्तविभक्तिकेत्यर्थः । सञ्ज्ञेत्यनेन प्रयोगसत्ता ध्वनिता । सा च हेतुतृतीयान्तमनःशब्देनाङ्पूर्वपचाद्यजन्तदेवशब्दस्य समासेन वाक्येन वा बोध्या । ननु कैयटाद्युक्तरीत्या द्वितीयमपि फलं नेत्याशयेन शङ्कते—नचेति । वैकल्पिकत्वेऽपीति । अस्य 'चं विनोक्तरीत्या कर्मकरणसञ्ज्ञयोरि:'इत्यादिः । अपिः समावेशसमुच्चायकः । येषां देशकालादिभिन्नं कर्म न सम्भवति ते एवात्र शास्त्रेऽकर्मका इति हि तैरुक्तम् ।

न, "अणावकर्मकात्" इति परस्मैपदं च नेति सिद्धान्तः।

यत्तु प्राचा कर्मसंज्ञं वा स्यादिति व्याख्यातम्, तदाकरविरोधादुपेक्ष्यम्।

स्यादेतत्, करणसंज्ञाया अवकाशः-देवना अक्षाः, करणे ल्युट्। कर्मसञ्ज्ञायास्तु-दीव्यन्ते अक्षाः, कर्मणि लट्। 'अक्षैर्दीव्यति' इत्यत्र तु सञ्ज्ञाद्वयप्रयुक्त-

---

शब्दरत्नम्।

त्वेऽप्यत्रात्यन्ताविद्यमानकर्मकत्वाभावात् कर्मत्वाभावः सिद्ध इति वाच्यम्, तत्रात्यन्ताविद्यमानकर्मकाणामेव ग्रहणे मानाभावस्यान्यत्र निरूपितत्वादिति भावः। फलान्तरमाह—अणाविति। दीव्यतेऽक्षैर्देवदत्तेनेति भावे लकाराभावः फलमित्यपि बोद्धव्यम्, करणत्वाच्च

भैरवी।

कर्मकपदेन गृह्यन्ते' इति तैरुक्तम्। कर्मत्वाभाव इति। गतिबुद्धीतिसूत्रविहितेत्यादिः। अन्यत्र निरूपितत्वादिति। अत्र शास्त्रेऽविवक्षितकर्मकाणामप्यकर्मकपदेन ग्रहणम्। अतएव भाष्यकृता 'कृतपूर्वी कटम्' 'भुक्तपूर्वी ओदनम्' इत्युदाहृतम्। अत एव "णेरणौ" इति सूत्रव्याख्यानावसरे 'लावयति केदारं देवदत्तः' इति प्रयोगे—लुनातेर्निवृत्तप्रेषणाण्णिचि द्वितीया कैयटेन स्वीकृता। अत एव "अधीगर्थ" इति सूत्रभाष्ये—कर्मणः शेषत्वविवक्षया 'मातुः स्मर्यते' इत्यत्र भावे लकार उदाहृतः। फलान्तरमिति। सञ्ज्ञयोः समावेशस्येत्यादिः। स्वयम्फलान्तरमाह—दीव्यत इत्यादिना। ननु स्थलत्रयेऽपि कर्मसञ्ज्ञायाः फलमुक्तं न तु करणसञ्ज्ञाया इत्यत आह—करणत्वाच्चेति। चकारो भिन्नक्रमेण तृतीयापदानन्तरं द्रष्टव्यः। मूले—यत्तु प्राचेति प्रक्रियाकृतेत्यर्थः। अस्योपस्थानमिति। "दिवः कर्म च" इत्यस्योपस्थानमित्यर्थः। वस्तुतस्तु मूलोक्तरीत्याऽक्षैरक्षानित्यस्योपपत्तिरयुक्ता। कार्यकालपक्षविशेषकथनेन 'देवदत्तो वामेनाक्ष्णा पश्यति' इत्युक्ते दक्षिणेन न पश्यतीति यथा गम्यते, तथा यथोद्देशपक्षेनासिद्धिरिति गम्येत; तदसङ्गतम्, यथोद्देशपक्षेऽपि "प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदम्प्रयुञ्जत" इति "क्ङिति च" इतिसूत्रस्थकैयटोक्तरीत्या "कर्मणि द्वितीया" इतिसूत्रस्यात्रागमनेन "दिव" इतिसूत्रस्यापि भेदस्य सत्त्वात्। किञ्च कार्यकालपक्षे "अपादानमुत्त-

भावप्रकाशः।

वस्तुतोऽयुक्तमेतत्। अविवक्षितकर्मणामपि तेन ग्रहणात्, क्तादीनामविवक्षितकर्मभ्यः कृतपूर्वी कटमित्यादौ भाष्यकृता कैयटेन चाङ्गीकारात्। लुनातेर्निवृत्तप्रेषणाण्णिचि 'लावयति केदारं देवदत्तः' इत्यादौ केदारस्य कर्मद्वितीयान्तस्य 'णेरणौ" इत्यत्र कैयटेन प्रयुक्तत्वाच्च। न चात्रार्थान्तरे वृत्त्याऽकर्मकत्वं न त्वविवक्षयेति वाच्यम्, तत्त्वप्रत्यभिज्ञयाऽर्थान्तरत्वाभावात्। तदुदाहरणं तु स्यन्दते इत्याद्यर्थकं 'नदी वहति' इत्याद्याकरे स्पष्टम्। अत एव कर्तुरिति सिद्धिरित्यपास्तम्, नियमेन व्यावृत्तेः। "अधीगर्थ" इतिसूत्रे कर्मणः शेषत्वविवक्षयाऽकर्मकत्वे 'मातुः स्मर्यते' इत्यत्र भावे लस्य भाष्ये उदाहृतत्वाच्च। अधिकं शेखरादौ द्रष्टव्यमित्याशयेन समाधत्ते—तत्रेति। अकर्मकपदघटितसूत्रे इत्यर्थः। एवोऽविवक्षितकर्मव्यावृत्तौ। अन्यत्र—उद्द्योतशेखरादौ। तदविवक्षा च द्वेधा—तदन्वययोग्यधात्वर्थत्यागात् सत्त्वे च तस्मिन्नर्थे संबन्धित्वादिनाऽन्वयविवक्षणाद्वा। प्रकृते च नोभयमिति तदभावसिद्धिरिति भावः। एतेन ननु संज्ञयोर्वैकल्पिकत्वेऽपि पक्षे कर्मयोगस्य सत्त्वेनात्यन्ताविद्यमानकर्मकत्वाभावेन कर्मत्वं न भविष्यत्येव। न चास्मिन्प्रयोगे तत्त्वमस्त्येव, अविवक्षितकर्मणि पचादावपि दोषापत्तेः। न च तस्मिन्नेवार्थे कर्मयोगोऽस्तीत्यतो न दोष इति वाच्यम्, प्रकृतेऽप्यदोषादित्यरुचेराह—अणावितीति मान्योक्तं प्राचामनुरोधेनेति ध्वनितम्। अत एवाह—फलान्तरमिति। फलान्तरमाह-दीव्यते इति। ननु स्थलत्रये कर्मसंज्ञाफलोक्तावपि करणसंज्ञाफलं नोक्तमिति न्यूनताऽत आह—करणत्वाच्चेति। चस्तृतीयेत्यग्रे योज्यः। मूले प्राचा—प्रक्रियाकृता। यदि तु वाशब्दोऽत्र चार्थे। यद्वा, संज्ञायां नानाफलकत्वेऽपि प्रकृतविभक्तिरूपकार्ययोरेकप्रकृतेः

कार्यद्वयप्रसङ्गे परत्वात् तृतीयैव स्यान्न तु द्वितीयेति चेत् ? अत्राहुः-कार्यकालपक्षे "कर्मणि द्वितीया" इत्यत्र यदस्योपस्थानं तस्यानवकाशत्वाद् द्वितीयेति । ननु 'दीव्यन्ते अक्षाः' इत्यत्र कर्मण्यभिहितेऽपि करणत्वस्यानभिधानात् तृतीया स्यात् तथा 'देवना अक्षाः' इत्यत्र ल्युटा करणस्याभिधानेऽपि कर्मणोऽनभिधानाद् द्वितीया स्यात् ? मैवम् , एकैव ह्यत्र शक्तिः सञ्ज्ञाद्वययोगिनी । तथाच उभयत्राप्यभिधानमेव न त्वनभिहितत्वम् ।

---

शब्दरत्नम् ।

तृतीयेति समावेशफलम् । द्वितीयेतीति । 'अक्षान् दीव्यति' इत्यत्राक्षपदस्याक्षजेये धने लक्षणा, न च तदा करणत्वम्, अक्षैरित्यर्थेऽक्षानिति न भवतीत्यन्ये । एकैव ह्यत्रशक्ति-

भैरवी ।

राणि बाधन्ते गान्दोग्धि पय इत्यत्र परत्वात्कर्मसञ्ज्ञा" इति भाष्ययोजनाय सञ्ज्ञाविषये यद्देशे सञ्ज्ञाशास्त्रम्पठितन्तद्देशीयमेव परत्वन्नियामकं, न तु यत्रोपस्थितिस्तद्देशीयम् । अन्यथा कर्मसञ्ज्ञाशास्त्रस्य "कर्मणि द्वितीया" इत्यत्रोपस्थितिः, अपादानसञ्ज्ञायास्तु "अपादाने पञ्चमी" इत्यत्रेति पञ्चमीविधायकशास्त्रस्य द्वितीयाविधायकशास्त्रापेक्षया परत्वाद्भाष्यासङ्गतिः स्पष्टैव । अत एव "अयादिभ्यः परैव प्रगृह्यसञ्ज्ञा" इति "अदसो मात्" इतिसूत्रभाष्ये उक्तम् ।

एतत्सर्वम्परिचिन्त्याक्षान्दीव्यतीति प्रयोगोपपत्तिं स्वयमाह—अक्षान्दीव्यतीत्यत्रेति । दिव्धातुरधुना विजिगीषार्थकः । अन्ये—भाष्यतत्त्वविदः । इदमुपलक्षणं यदाऽक्षेषु फलाश्रयत्वसमानाधिकरणकर्मत्वविवक्षा तदापि तादृशप्रयोगसिद्धिरिति बोध्यम् । एकैव शक्तिः संज्ञाद्वयोपयोगिनीति मूले ऽभिहितं, तच्च यथाश्रुतेऽसङ्गतम् , "सप्तमीपञ्चम्यौ कारकमध्ये" इति सूत्रे कारकशब्दस्य कर्मत्वादिशक्तिपरत्वस्य सुप्रसिद्धतया कर्मत्वस्य च तादृशस्य करणत्वा-

भावप्रकाशः ।

समुच्चयासम्भवादवश्यकल्प्यो विकल्प इत्याशयकः स ग्रन्थ इति प्रकाशोक्तं स्वीक्रियते तदा प्राचोक्तं सम्यगेव । अत एव लक्ष्ये वाशब्दः परममूले उक्तः । एवञ्च मूलं प्रकाशोक्तप्रथमकल्पाभिप्रायमिति तथा दण्ड्याद्युक्तं चिन्त्यमिति बोध्यम् ।

मूले न तु द्वितीयेति चेदिति । एवंचाक्षैरक्षान्वेति परममूलमयुक्तम् । किन्तूभयथाप्यक्षैरित्येव वक्तुमुचितमिति भावः । युक्तं चैतत् , साधकतमगतकर्मत्वशक्तिबोधेऽक्षान्दीव्यतीति प्रयोगे दृढतरमानाभावात्, कार्यकालपक्षेऽपि परत्वात् तृतीयया बाधे न्याय्ये तदनुपस्थितेरेव न्याय्यत्वादिति । एवंचाक्षैरक्षान्वेति परममूलं तदुपपादकं कार्यकालेत्यादि द्वितीयेतीत्यन्तं मूलं तथाकैयटप्रकाशरत्नाकराद्युक्तं च चिन्त्यम् । किंच "क्ङिति च" इति सूत्रकैयटोक्तरीत्या यथोद्देशेऽपि प्रधानानुरोधेन गुणानां स्वात्मभेदकल्पनस्य तुल्यतया विशिष्यकार्यकालपक्षे इत्युक्तिरनुचिता। किंच कार्यकालपक्षे "अयादिभ्यः परैव प्रगृह्यसंज्ञा" इति "अदसो मात्" इति सूत्रभाष्योक्तरीत्या "अपादानमुत्तराणि, गां दोग्धि"इत्याकडारसूत्रस्थभाष्यासंगतेराकडारस्थसंज्ञायां यथोद्देशत्वमेवेति तदुक्त्यसंगतिरेव । तदेतद्धृदि निधायाक्षान्दीव्यतीत्यस्योपपत्तिं सिद्धान्तमतेनाह—अक्षानिति । लक्षणेति । इदमुपलक्षणं फलाश्रयत्वसमानाधिकरणकर्मत्वविवक्षाया अपि । न भवतीति । न भवत्येवेत्यर्थः । उक्तहेतोरिति शेषः । तथाचात्र विप्रतिषेधशास्त्रबलात् तृतीयैव शक्तिद्वयबोधिका । तत्फलं तूक्तमेव । अन्ये—भाष्याद्यनुयायिनः । ननु एकैव शक्तिः संज्ञाद्वयोपयोगिनीति मूलं तथा कैयटप्रकाशरत्नाकरदण्ड्याद्युक्तं च चिन्त्यम् , कर्मादिपदानां कर्मत्वादितत्तच्छक्तिरूपेण बोधकतया तयोर्भेदस्यैवौचित्यात् । एवंच सर्वसाधारणं कर्मत्वं कर्मताशक्तिमत्त्वं, धातूनां सकर्मक-

"सहयुक्ते" ॥ पुत्रेणेति । पितुरत्र क्रियासंबन्धः शाब्दः, पुत्रस्य तु

---

शब्दरत्नम् ।

रिति । दिवधात्वर्थनिरूपितसाधकतमत्वशक्तिरित्यर्थः ।

"सहयुक्ते" । अत्राप्राधान्यं नाम शाब्दगुणाद्यन्वयित्वाभाव इत्याह-पितुरत्रेति ।

भैरवी ।

पेक्षया भिन्नत्वेनैकशक्तेः संज्ञाद्वयोपयोगित्वं वक्तुमशक्यमत आह—दिवधात्वर्थेति । एवञ्चै-कैव शक्तिरित्यत्र शक्तिपदं धर्मपरं द्रष्टव्यम् । तथाच कर्मादिपदानां कर्मत्वादितत्तच्छक्ति-रूपेण बोधकतया द्वयोः शक्त्योर्भेद एवोचितः । सर्वसाधारणकर्मव्यवहारस्तु कर्मत्वशक्ति-मत्त्वेनोपपादनीयः । एवं सकर्मकत्वमपि तादृशशक्तिमदर्थान्वयित्वमेव । अत एव 'अध्या-सिता भूमयः' इत्यत्र कर्मणि क्तः सिध्यति । सूत्रस्थचकारेण शक्तिद्वययोगो बोध्यते, नतु तयोः शक्त्योरभेदः । नचैवंसति—नन्वित्यादिना मूलेन प्रतिपादिता शङ्का तदवस्थैवेति वाच्यम् "अपादानमुत्तराणि कारकाणि बाधन्ते, गान्दोग्धि पय इत्यत्र परत्वात्कर्मसंज्ञा" इत्युक्तं, तत्र पञ्चमीवारणाय द्रव्यगतानेकशक्तिमध्ये एकस्या अभिहितत्वे परस्या अपि तद्व-त्प्रकाशाङ्गीकारेणाक्षतेः । मूलन्तु प्राचामनुरोधेन ।

सहयुक्ते सूत्रे न—लौकिकं यत्प्राधान्यं मुख्यत्वरूपं तदभाववत्त्वरूपमप्राधान्यं विवक्षि-तम् , 'राज्ञा सह सेना आगच्छति' इत्यत्र राज्ञो लौकिकप्राधान्यवत्त्वात्तृतीयानापत्तेरित्य-त्रत्याप्राधान्यम्पारिभाषिकमित्याशयेनाह—अत्राप्राधान्यमिति । गुणाद्यन्वयित्वेति । अत्रा-दिना द्रव्यक्रिययोः सङ्ग्रहः । नचैवंसति द्रव्याद्यन्वयित्वाभाव इत्येव द्रव्यपदार्थस्य प्रथ-मन्तन्त्रान्तरे प्रतिपादनादुचितमिति वाच्यम् । "गुणसमुदायो द्रव्यम्" इति पतञ्जल्युक्त्य-नुसारेणैवमभिधानात् । गुणोदाहरणं 'पुत्रेण स्थूलः' इति । द्रव्योदाहरणं 'पुत्रेण सह पितुर्ध-नम्' इति । क्रियोदाहरणं 'पुत्रेण सहागतः पिता' इत्यादि प्रसिद्धमेव । एषु शाब्दङ्गुणाद्य-न्वयित्वं पितर्यैवेति पुत्रस्याप्राधान्यम् । आर्थिकगुणाद्यन्वयित्वन्तु तत्रापि । अत एव पुत्रेण सहागमनम्पितुरित्यत्र पितरि शाब्दस्य कृत्प्रकृत्यर्थक्रियाकर्तृत्वस्य ।सत्त्वेन "कर्तृकर्मणोः" इतिषष्ठी भवति । शाब्दत्वन्तु इतरसम्बन्धं विनापि वाक्यजन्यशाब्दबोधे भासमानत्व-मेव । सहार्थः—साहित्यम् , तच्च स्वसमभिव्याहृतशब्दजन्योपस्थितिविषयगुणादिसमा-नाधिकरणगुणाद्यन्वयित्वमेव । सामानाधिकरण्यमत्र कालिकप्रत्यासत्त्या क्वचित् । यत्र क्षेत्रे तिलवापोत्तरम्माषवापस्तत्र 'तिलैः सह माषान्वपति' इति प्रयोगाद्दैशिकमपि क्वचित् । एतत्तृतीयार्थस्तु क्रियावाचकशब्दसत्त्वे प्रतीयमानतादृशक्रियान्वयित्वमेव । यत्र तु गुणद्र-व्ययोरुपस्थितिस्तत्र सहशब्दस्य प्रयोगबलात्प्रतीयमानतत्तत्पदार्थसम्बन्धित्वमेव । एवञ्च 'पु-

भावप्रकाशः ।

त्वमपि कर्मत्वशक्तिमदर्थान्वय्यर्थकत्वमिति मञ्जूषायां विस्तरोऽत आह-दिवधात्वर्थेति । तथाच तस्याः संज्ञयोः समावेशार्थंचेन शक्तिद्वययोगो बोध्यते । न चैवं कर्मणि ले करणत्वशक्तेरनुक्तत्वेन तृतीयापत्ति-रिति वाच्यम्, अपादानमुत्तराणीत्यस्य लक्ष्ये गां दोग्धीत्यादौ तत्र कर्मणि ले पञ्चम्यापत्तिवारणायैव द्रव्यगतानेकशक्तिमध्ये एकस्याभिहितत्वे परस्या अपि तद्वत्प्रकाशाङ्गीकारेणाक्षतेरिति भावः । एतेन कर-णत्वं चात्र दिवुधात्वर्थसाधकत्वं, तदेव चात्र कर्मत्वम् । तथाच कर्मणि करणे वा प्रत्यये दिवुधात्वर्थसाध-कत्वमुक्तमेवेति मान्योक्तं प्राचामनुरोधेनेति ध्वनितम् ।

यत्तु प्रधानत्वं मुख्यत्वमखण्डो धर्मः । अत्र नगरेऽयं प्रधानमित्यादिवत्तदभावरूपं चाप्रधानत्वं तृतीया-वाच्यमिति; तन्न, राज्ञा सह सेना गच्छतीत्यादौ तृतीयानापत्तेः;तद्ध्वनयन्नाह—अत्रेति । सूत्रे इत्यर्थः । गुणसमूहो द्रव्यमिति पतञ्जल्युक्त्यनुरोधेन तन्त्रान्तरस्थद्रव्यादिक्रममुल्लङ्घ्य गुणादीत्युक्तम् । आदिना द्रव्यक्रिययोः संग्रहः । एवं च मूले क्रियापदं प्रकृताभिप्रायं, 'पुत्रेण सह पितुर्गौः' 'पुत्रेण सह स्थूलः' इति

आर्थ इति तस्याप्राधान्यम् । अप्रधानग्रहणं शक्यमकर्त्तुम् । न चैवं पितुरपि

शब्दरत्नम् ।

**आर्थ इति ।** पुत्रसाहित्यवान् पिता आगत इति बोधे साहित्यस्य पुत्रेणागमनसम्बन्धे एव सम्भव इति पश्चात्तस्यापि मानसस्तत्सम्बन्धबोध इति भावः । शाब्दत्वं च विवक्षानिबन्धनम् । एवं चैषु शाब्दत्वरूपविशेषणाभावकृतो विशिष्टाभावः । 'सहैव पुत्रैर्दशभिर्भारं वहति' इत्यादौ विद्यमानतावाचिसहशब्दयोगे क्रियाद्यन्वयित्वरूपविशेष्याभावकृतो

भैरवी ।

त्रेण सह पितुर्धनम्' इति शब्दात्पुत्रस्वामित्वसमानकालिकपितृस्वामित्ववद्धनमिति बोधः । 'पुत्रेण सह स्थूलः' इति शब्दात्तु पुत्रवृत्तिस्थौल्यसमानकालिकस्थौल्यवान्पितेति बोधः। पुत्रादेः सहार्थयोगस्तु तत्तद्द्वारक एवेति विभावनीयम् । एतत्सर्वं हृदि निधायाह–आर्थ इतीत्यादिना। तस्यापि—पुत्रस्यापि । तत्सम्बन्धबोधः—गुणादिसम्बन्धबोधः । अप्रधानत्वाभिमते यथा विशिष्टाभावस्य सत्ताऽस्ति तथोपपादयति–शाब्दत्वरूपेत्यादिना । विवक्षानिबन्धनत्वकथनेन 'पित्रा सहागतः पुत्रः' इत्याद्यपि भवतीति सूचितम् । विशेष्याभावकृत इति । विशेष्याभावकृतोऽपी-

भावप्रकाशः ।

तल्लक्ष्ये । एतेन 'पुत्रेण सहागतः' इत्यादौ सहार्थसामर्थ्यात्प्रतीयमानक्रियाकर्तृत्वेन पुत्रात्तृतीया सिद्धा । न च क्तेनाभिधानम्, इतरसमभिव्याहारं विनापि प्रतीयमानस्वप्रकृत्यर्थक्रियाकर्तुरेव तेनाभिधानात् । एवं पुत्रेण सहागमनं पितुरित्यादावुक्तरीत्या प्रतीयमानकृत्प्रकृत्यर्थान्वयिनोः कर्तृकर्मणोरेव षष्ठी न तत्प्रतीयमानतदन्वयिनोरिति न दोष इत्यपास्तम्, उक्तलक्ष्यसिध्यर्थं सूत्रावश्यकत्वात् । उक्तेऽवागमनादिभिः पितुः शाब्दः पुत्रस्य सहार्थबलात्प्रतीयमानैस्तैः सम्बन्धादार्थः । इतरसम्बन्धं विना प्रतीयमानत्वं चार्थस्य शाब्दत्वम् । सहार्थश्च साहित्यं, तच्च स्वसमभिव्याहृतक्रियादिसमानकालिकक्रियादिमत्त्वं तत्समनियतमखण्डोपाधिरूपं वा । तृतीयार्थश्च क्रियासमभिव्याहारे सहार्थबलात्प्रतीयमानतत्तत्क्रियाकर्तृत्वादिकमेव द्रव्यगुणसमभिव्याहारे तद्बलात्प्रतीयमानस्तत्तत्पदार्थसंबन्ध एव । एवं च पुत्रकर्तृकागमनसमानकालिकागमनवान् पिता, पुत्रस्वामिकत्वसमानकालिकपितृस्वामिकत्ववती गौः, पुत्रवृत्तिस्थौल्यसमानकालिकस्थौल्यवान्स इत्यादिक्रमेण बोधः । पुत्रकर्तृकागमनसहितागमनवानित्यादिक्रमेण बोधः । पुत्रादेः सहार्थयोगश्चागमनादिद्वारक एव बोध्यः । क्वचित्समानदेशक्रियावत्त्वरूपं तत्समनियतं वा तदर्थः । यथा माषवापोत्तरं तत्रैव क्षेत्रे तिलवापे 'तिलैः सह माषान्वपति स्म' इति भवतीत्यादि स्पष्टं भाष्ये । तदेतद्धृदि निधायार्थत्वमुपपादयति—पुत्रेति । गुणक्रियाद्रव्यैर्गुणप्रधानभावेन द्वयोः संबन्धे साहित्यवाचिसहशब्दप्रयोगादिति भावः । बोधे इति । शाब्दे प्राथमिके इत्यर्थः । तत्र साहित्यं पुत्रसम्बन्ध्यन्वयित्वरूपं तत्समनियतं वा, तदभिप्रेत्याह—साहित्यस्येति । पुत्रेणेति । सहेति शेषः । इतीत्यग्रे तद्बलादेवेति शेषः । तस्यापि—पुत्रस्यापि । स च पुत्रोप्यागत इत्याकारक इति भावः । नन्वेवं पित्रा सहागतः सुत इत्यादि न स्यादत आह—शाब्दत्वं चेति । तथाच सहागतौ पितापुत्राविल्यावपि सिद्धम् । यद्वा क्रियादिसम्बन्धाविशेषात्कथं पितुः प्राधान्यं कथं वेदृशप्राधान्यस्यैव ग्रहणमत आह—शाब्दत्वं चेति । एवमिति । पार्ष्णिकतत्सम्बन्धाङ्गीकारे चेत्यर्थः । एषु—बुद्धिस्थेषु गुणादिघटितप्रागुक्तलक्ष्येषु । विशेषणेति । गुणाद्यन्वयित्वरूपविशेष्यस्य सत्त्वादिति भावः । उक्तरीत्यावश्यकस्यापि सूत्रस्य सर्वथा तत्त्वं ध्वनयितुमाह–सहैवेति । विद्यमानतावाचीति । सकर्मक इत्यादौ तु विद्यमानवाचिसहशब्देन "अनेकम्" इति बहुव्रीहौ कप् । मूलकृदाद्युक्ततत्साधनप्रकारस्तु भाष्यविरुद्ध इति स्फुटीभविष्यति । योगेष्विति पाठः । विशेष्याभावकृतोऽपीत्यर्थः । क्वचित्तथैव पाठः । अपिनोभयाभावकृतपरि

सरला ।

आर्थ इतीति । 'पुत्रेण सहागतः पिता' इत्यत्र 'आगतः' इति शाब्दागमनक्रियान्वयस्य पितुरेव सत्त्वेन पुत्रस्य सहशब्देन आगतपदसमभिव्याहारबलात्प्रतीयमानयाऽऽगमनक्रियया अन्वय आर्थो न तु शाब्द इति शाब्दत्वरूपविशेषणाभावकृतः शाब्दक्रियान्वयित्वाभाव इति अप्राधान्यात्ततस्तृतीया । 'पुत्रेण

"सहयुक्ते" ॥ पुत्रेणेति । पितुरत्र क्रियासंबन्धः शाब्दः, पुत्रस्य तु

शब्दरत्नम् ।

रिति । दिवधात्वर्थनिरूपितसाधकतमत्वशक्तिरित्यर्थः ।

"सहयुक्ते" । अत्राप्राधान्यं नाम शाब्दगुणाद्यन्वयित्वाभाव इत्याह-पितुरत्रेति ।

भैरवी ।

पेक्षया भिन्नत्वेनैकशक्तेः संज्ञाद्वयोपयोगित्वं वक्तुमशक्यमत आह—दिवधात्वथेति । एवञ्चै-कैव शक्तिरित्यत्र शक्तिपदं धर्मपरं द्रष्टव्यम् । तथाच कर्मादिपदानां कर्मत्वादितत्तच्छक्ति-रूपेण बोधकतया द्वयोः शक्त्योर्भेद एवोचितः । सर्वसाधारणकर्मव्यवहारस्तु कर्मत्वशक्ति-मत्त्वेनोपपादनीयः । एवं सकर्मकत्वमपि तादृशशक्तिमदर्थान्वयित्वमेव । अत एव 'अध्या-सिता भूमयः' इत्यत्र कर्मणि क्तः सिध्यति । सूत्रस्थचकारेण शक्तिद्वययोगो बोध्यते, नतु तयोः शक्त्योरभेदः । नचैवंसति—नन्वित्यादिना मूलेन प्रतिपादिता शङ्का तदवस्थैवेति वाच्यम् "अपादानमुत्तराणि कारकाणि बाधन्ते, गान्दोग्धि पय इत्यत्र परत्वात्कर्मसंज्ञा" इत्युक्तं, तत्र पञ्चमीवारणाय द्रव्यगतानेकशक्तिमध्ये एकस्या अभिहितत्वे परस्या अपि तद्व-त्प्रकाशाङ्गीकारेणाक्षतेः । मूलन्तु प्राचामनुरोधेन ।

सहयुक्ते सूत्रे न—लौकिकं यत्प्राधान्यं मुख्यत्वरूपं तदभाववत्त्वरूपमप्राधान्यं विवक्षि-तम् , 'राज्ञा सह सेना आगच्छति' इत्यत्र राज्ञो लौकिकप्राधान्यवत्त्वात्तृतीयानापत्तेरित्य-त्रत्याप्राधान्यमपारिभाषिकमित्याशयेनाह—अत्राप्राधान्यमिति । गुणाद्यन्वयित्वेति । अत्रा-दिना द्रव्यक्रिययोः सङ्ग्रहः । नचैवंसति द्रव्याद्यन्वयित्वाभाव इत्येव द्रव्यपदार्थस्य प्रथ-मन्तन्त्रान्तरे प्रतिपादनादुचितमिति वाच्यम् । "गुणसमुदायो द्रव्यम्" इति पतञ्जल्युक्त्य-नुसारेणैवमभिधानात् । गुणोदाहरणं 'पुत्रेण स्थूलः' इति । द्रव्योदाहरणं 'पुत्रेण सह पितुर्ध-नम्' इति । क्रियोदाहरणं 'पुत्रेण सहागतः पिता' इत्यादि प्रसिद्धमेव । एषु शाब्दङ्गुणाद्य-न्वयित्वं पितर्येवेति पुत्रस्याप्राधान्यम् । आर्थिकगुणाद्यन्वयित्वन्तु तत्रापि । अत एव पुत्रेण सहागमनम्पितुरित्यत्र पितरि शाब्दस्य कृत्प्रकृत्यर्थक्रियाकर्तृत्वस्य सत्त्वेन "कर्तृकर्मणोः" इतिषष्ठी भवति । शाब्दत्वन्तु इतरसम्बन्धं विनापि वाक्यजन्यशाब्दबोधे भासमानत्व-मेव । सहार्थः—साहित्यम् , तच्च स्वसमभिव्याहृतशब्दजन्योपस्थितिविषयगुणादिसमा-नाधिकरणगुणाद्यन्वयित्वमेव । सामानाधिकरण्यमत्र कालिकप्रत्यासत्त्या क्वचित् । यत्र क्षेत्रे तिलवापोत्तरम्माषवापस्तत्र 'तिलैः सह माषान्वपति' इति प्रयोगाद्दैशिकमपि क्वचित् । एतत्तृतीयार्थस्तु क्रियावाचकशब्दसत्त्वे प्रतीयमानतादृशक्रियान्वयित्वमेव । यत्र तु गुणद्र-व्ययोरुपस्थितिस्तत्र सहशब्दस्य प्रयोगबलात्प्रतीयमानतत्तत्पदार्थसम्बन्धित्वमेव । एवञ्च 'पु-

भावप्रकाशः ।

त्वमपि कर्मत्वशक्तिमदर्थान्वय्यर्थकत्वमिति मञ्जूषायां विस्तरोऽत आह-दिवधात्वर्थेति । तथाच तस्याः संज्ञयोः समावेशार्थत्वेन शक्तिद्वययोगो बोध्यते । न चैवं कर्मणि ले करणत्वशक्तेरनुक्तत्वेन तृतीयापत्ति-रिति वाच्यम्, अपादानमुत्तराणीत्यस्य लक्ष्ये गां दोग्धीत्यादौ तत्र कर्मणि ले पञ्चम्यापत्तिवारणायैव द्रव्यगतानेकशक्तिमध्ये एकस्याभिहितत्वे परस्या अपि तद्वत्प्रकाशाङ्गीकारेणाक्षतेरिति भावः । एतेन कर-णत्वं चात्र दिवुधात्वर्थसाधकत्वं, तदेव चात्र कर्मत्वम् । तथाच कर्मणि करणे वा प्रत्यये दिवुधात्वर्थसाध-कत्वमुक्तमेवेति मान्योक्तं प्राचामनुरोधेनेति ध्वनितम् ।

यत्तु प्रधानत्वं मुख्यत्वमखण्डो धर्मः । अत्र नगरेऽयं प्रधानमित्यादिवत्तदभावरूपं चाप्रधानत्वं तृतीया-वाच्यमिति; तन्न, राज्ञा सह सेना गच्छतीत्यादौ तृतीयानापत्तेः;तद्ध्वनयन्नाह—अत्रेति । सूत्रे इत्यर्थः । गुणसमूहो द्रव्यमिति पतञ्जल्युक्त्यनुरोधेन तन्त्रान्तरस्थद्रव्यादिक्रममुल्लङ्घ्य गुणादीत्युक्तम् । आदिना द्रव्यक्रिययोः संग्रहः । एवं च मूले क्रियापदं प्रकृताभिप्रायं, 'पुत्रेण सह पितुर्गौः' 'पुत्रेण सह स्थूलः' इति

आर्थ इति तस्याप्राधान्यम् । अप्रधानग्रहणं शक्यमकर्त्तुम् । न चैवं पितुरपि

---

शब्दरत्नम् ।

**आर्थ इति ।** पुत्रसाहित्यवान् पिता आगत इति बोधे साहित्यस्य पुत्रेणागमनसम्बन्धे एव सम्भव इति पश्चात्तस्यापि मानसस्तत्सम्बन्धबोध इति भावः । शाब्दत्वं च विवक्षानिबन्धनम्। एवं चैषु शाब्दत्वरूपविशेषणाभावकृतो विशिष्टाभावः । 'सहैव पुत्रैर्दशभिर्भारं वहति' इत्यादौ विद्यमानतावाचिसहशब्दयोगे क्रियाद्यन्वयित्वरूपविशेष्याभावकृतो

भैरवी ।

त्रेण सह पितुर्धनम्' इति शब्दात्पुत्रस्वामित्वसमानकालिकपितृस्वामित्ववद्धनमिति बोधः । 'पुत्रेण सह स्थूलः' इति शब्दात्तु पुत्रवृत्तिस्थौल्यसमानकालिकस्थौल्यवान्पितेति बोधः।पुत्रादेः सहार्थयोगस्तु तत्तद्द्वारक एवेति विभावनीयम् । एतत्सर्वं हृदि निधायाह—आर्थ इतीत्यादिना। तस्यापि—पुत्रस्यापि । तत्सम्बन्धबोधः—गुणादिसम्बन्धबोधः । अप्रधानत्वाभिमते यथा विशिष्टाभावस्य सत्ताऽस्ति तथोपपादयति–शाब्दत्वरूपेत्यादिना । विवक्षानिबन्धनत्वकथनेन 'पित्रा सहागतः पुत्रः' इत्याद्यपि भवतीति सूचितम् । विशेष्याभावकृत इति । विशेष्याभावकृतोऽपी-

भावप्रकाशः ।

तल्लक्ष्ये । एतेन 'पुत्रेण सहागतः' इत्यादौ सहार्थसामर्थ्यात्प्रतीयमानक्रियाकर्तृत्वेन पुत्रात्तृतीया सिद्धा । न च क्तेनाभिधानम्, इतरसमभिव्याहारं विनापि प्रतीयमानस्वप्रकृत्यर्थक्रियाकर्तुरेव तेनाभिधानात् । एवं पुत्रेण सहागमनं पितुरित्यादावुक्तरीत्या प्रतीयमानकृत्प्रकृत्यर्थान्वयिनोः कर्तृकर्मणोरेव षष्ठी न तत्प्रतीयमानतदन्वयिनोरिति न दोष इत्यपास्तम्, उक्तलक्ष्यसिध्यर्थं सूत्रावश्यकत्वात् । उक्तेष्वागमनादिभिः पितुः शाब्दः पुत्रस्य सहार्थबलात्प्रतीयमानैस्तैः सम्बन्धादार्थः । इतरसम्बन्धं विना प्रतीयमानत्वं चार्थस्य शाब्दत्वम् । सहार्थश्च साहित्यं, तच्च स्वसमभिव्याहृतक्रियादिसमानकालिकक्रियादिमत्त्वं तत्समनियतमखण्डोपाधिरूपं वा । तृतीयार्थश्च क्रियासमभिव्याहारे सहार्थबलात्प्रतीयमानतत्तत्क्रियाकर्तृत्वादिकमेव द्रव्यगुणसमभिव्याहारे तद्बलात्प्रतीयमानस्तत्तत्पदार्थसंबन्ध एव । एवं च पुत्रकर्तृकागमनसमानकालिकागमनवान् पिता, पुत्रस्वामिकत्वसमानकालिकपितृस्वामिकत्ववती गौः, पुत्रवृत्तिस्थौल्यसमानकालिकस्थौल्यवान्स इत्यादिक्रमेण बोधः । पुत्रकर्तृकागमनसहितागमनवानित्यादिक्रमेण बोधः । पुत्रादेः सहार्थयोगश्चागमनादिद्वारक एव बोध्यः । क्वचित्समानदेशक्रियावत्त्वरूपं तत्समनियतं वा तदर्थः । यथा माषवापोत्तरं तत्रैव क्षेत्रे तिलवापे 'तिलैः सह माषान्वपति स्म' इति भवतीत्यादि स्पष्टं भाष्ये । तदेतद्धृदि निधायार्थत्वमुपपादयति—**पुत्रेति** । गुणक्रियाद्रव्यैर्गुणप्रधानभावेन द्वयोः संबन्धे साहित्यवाचिसहशब्दप्रयोगादिति भावः । **बोधे इति** । शाब्दे प्राथमिके इत्यर्थः । तत्र साहित्यं पुत्रसम्बन्ध्यन्वयित्वरूपं तत्समनियतं वा, तदभिप्रेत्याह—**साहित्यस्येति** । **पुत्रेणेति** । सहेति शेषः । इतीत्यग्रे तद्बलादेवेति शेषः । **तस्यापि**—पुत्रस्यापि । स च पुत्रोप्यागत इत्याकारक इति भावः । नन्वेवं पित्रा सहागतः सुत इत्यादि न स्यादत आह—**शाब्दत्वं चेति** । तथाच सहागतौ पितापुत्रावित्याद्यपि सिद्धम् । यद्वा क्रियादिसम्बन्धाविशेषात्कथं पितुः प्राधान्यं कथं वेदृशप्राधान्यस्यैव ग्रहणमत आह—शाब्दत्वं चेति । **एवमिति** । पाक्षिकतत्सम्बन्धाङ्गीकारे चेत्यर्थः । एषु—बुद्धिस्थेषु गुणादिघटितप्रागुक्तलक्ष्येषु । **विशेषणेति** । गुणाद्यन्वयित्वरूपविशेष्यस्य सत्त्वादिति भावः । उक्तरीत्यावश्यकस्यापि सूत्रस्य सर्वथा तत्त्वं ध्वनयितुमाह—**सहैवेति** । **विद्यमानतावाचीति** । सकर्मक इत्यादौ तु विद्यमानवाचिसहशब्देन "अनेकम्" इति बहुव्रीहौ कप् । मूलकृदाद्युक्ततत्साधनप्रकारस्तु भाष्यविरुद्ध इति स्फुटीभविष्यति । योगेत्विति पाठः । विशेष्याभावकृतोऽपीत्यर्थः । क्वचित्तथैव पाठः । अपिनोभयाभावकृतपरि

सरला ।

**आर्थ इतीति** । 'पुत्रेण सहागतः पिता' इत्यत्र 'आगतः' इति शाब्दागमनक्रियान्वयस्य पितुरेव सत्त्वेन पुत्रस्य सहशब्देन आगतपदसमभिव्याहारबलात्प्रतीयमानयाऽऽगमनक्रियया अन्वय आर्थो न तु शाब्द इति शाब्दत्वरूपविशेषणाभावकृतः शाब्दक्रियान्वयित्वाभाव इति अप्राधान्यात्ततस्तृतीया । 'पुत्रेण

तृतीयापत्तिः। तत्र प्रातिपदिकार्थमात्रे अन्तरङ्गत्वात्प्रथमोत्पत्तेः। 'पितुरागमनम्'

### शब्दरत्नम्।

विशिष्टाभावो दशानां पुत्राणां विद्यमानत्वेऽपीत्यर्थ इत्यन्यत्र विस्तरः। अन्तरङ्गत्वादिति। प्राचीनैरन्तरङ्गत्वमूलकतयोक्तादुपपदविभक्तेरिति न्यायादित्यर्थः।

### भैरवी।

त्यर्थः। अपिनोभयोरभावयोः समुच्चयः। अन्यत्र—शेखरादौ। वक्ष्यमाणरीत्या यथाश्रुतम्मूलमसङ्गतमत आह—प्राचीनैरिति। सीरदेवादिभिरित्यर्थः। क्रियाकारकयोः साक्षात्सम्बन्ध इति तन्निमित्ता विभक्तिरन्तरङ्गा, उपपदपदार्थेन तु यत्किञ्चित्क्रियाद्वारकः सम्बन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेति तेषाम्भावः। परन्त्विदमयुक्तम् 'नमस्यति देवान्' इत्यत्र नमःशब्दार्थयोगसत्त्वाच्चतुर्थीप्राप्तिमाशङ्क्यानेन न्यायेन द्वितीयासाधनपराकरविरोधात्। प्रकृते नमःपदार्थस्य क्रियात्वमस्तीत्युभयोरपि समत्वात्, यथा मुण्डयतौ मुण्डस्य क्रियात्वन्तद्वत्।

### भावप्रकाशः।

ग्रहः। वस्तुतस्तु शाब्दत्वाभावस्याप्येतन्मूलकत्वादपिरहित एव पाठोऽर्थश्च युक्त इति ध्येयम्। इत्यर्थ इति। एवञ्च सूत्रे सर्वोऽपि सहशब्दो गृह्यते, विनिगमनाविरहादिति भावः। यत्तु मूलादावग्रे विद्यमानत्वविशिष्टधर्मी अत्र सहार्थ इति, तन्न, पुत्रैरिति तृतीयाया उपपदविभक्तित्वेन षष्ठ्यपवादत्वात्सम्बन्धमात्रार्थकत्वेन सहार्थेनान्वयापत्तेः। विद्यमानैः पुत्रैर्युक्तेत्यर्थे तु कर्तृकरणान्यतरतृतीययैव सिद्धेः। पुत्रेण सह यः स गत इत्यादौ वैशिष्ट्यादिरूपं साहित्यं सहार्थः। पुत्रसाहित्यवान्यः स गत इति बोध इति दिक्। तदाह—अन्यत्रेति। उद्द्योतशेखरमञ्जूषास्वित्यर्थः। वक्ष्यमाणदोषेण यथाश्रुतमूलासङ्गतेराह—प्राचीनैरिति। सीरदेवादिभिरित्यर्थः। क्रियाकारकसम्बन्धोऽन्तरङ्ग इति तन्निमित्ता विभक्तिरन्तरङ्गा उपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता सा बहिरङ्गेति तदाशयः।

इदमयुक्तम्। 'नमस्यति देवान्' इत्यत्र नमःपदार्थेऽपि क्रियाकारकभावेनैवान्वयेन तत्र चतुर्थी वारणाय "नमोवरिवः" इति सूत्रभाष्यस्योपन्यासस्यासंगत्यापत्तेः। अत्र च नमःपदार्थस्यापि क्रियात्वं मुण्डयतौ

### सरला।

सह स्थूलः' इत्यत्र च शाब्दस्थूलत्वगुणान्वयित्वं पितुः पुत्रस्य तु तदार्थमिति इतरसमभिव्याहारं विना शब्देन प्रतीयमानत्वं हि शाब्दत्वमिति बोध्यम्। इत्यर्थ इति। अत्रान्यसमभिव्याहारं विनैव सहशब्देन विद्यमानतारूपार्थस्य प्रतीयमानतया शाब्दत्वेऽपि तदन्वयिगर्दभ्याद्यन्वितवहनादिक्रियान्वयित्वाभावेन विशेष्याभावकृतः शाब्दक्रियान्वयित्वाभाव इत्यर्थः। ये त्वत्र 'विद्यमाना' इत्यस्याध्याहारेण साहित्यमेव च सहशब्दार्थं स्वीकृत्य साहित्यबलादध्याहृतक्रियान्वयं वदन्ति, तेषां मते तु विशेषणाभावकृत एवात्र विशिष्टाभाव इत्यवधेयम्।

अत्र सर्वत्र आगमनादिसमानकालिकमागमनादिकं सहशब्दार्थः। तस्य कर्तृत्वादिसम्बन्धेन प्रथमाद्यन्तार्थेऽन्वयः। आगत इत्यादिपदप्रतिपाद्यागमनकर्तृत्वादेश्च आश्रयतासम्बन्धेन तत्रैवान्वयः। विशेषणीभूतागमनादौ च पुत्रादेः कर्तृत्वादिसम्बन्धेनान्वयः। अतो न सापेक्षत्वप्रयुक्ता 'सपुत्रः' इत्यादौ समासानुपपत्तिः, कर्तृत्वादिसम्बन्धेन सहशब्दार्थागमनादिक्रियाया अन्यपदार्थे एवान्वयात्। नाप्युद्देश्यतावच्छेदकविधेययोरैक्यापत्तिः, कर्तृतासम्बन्धेन आगमनादिवैशिष्ट्यरूपस्योद्देश्यतावच्छेदकस्य विधेयभूतागमनादिकर्तृत्वतो भिन्नत्वात्। नापि क्रियावाचकादिपदप्रयोगवैयर्थ्यम्, सहपदस्य समभिव्याहृतपदप्रतिपाद्यक्रियादिप्रतिपादकत्वस्यैव व्युत्पत्तिसिद्धतया तं विना तेन तत्प्रतिपादनासम्भवादिति।

## शब्दरत्नम् ।

वस्तुतस्तु तद्वाचनिकमेवेत्यन्तरङ्गत्वं तन्न्यायोपलक्षणं बोद्धयम् । प्रथमायाश्च कारकविभक्तित्वमनभिहितपादे भाष्ये बहुशः स्पष्टमन्यत्र प्रपञ्चितं च । अन्तरङ्गत्वं तु न युक्तम्, षष्ठ्यपवादत्वमिव प्रथमापवादत्वस्याप्युपपदविभक्तीनामापत्तेः । अनन्तरस्येति न्यायेन प्रथमापवादत्वस्यैव वाऽऽपत्तेः । उपपदविभक्तेरिति न्यायेन च वाचनिके सर्वतो बलवत्त्वे कारकविभक्तेर्बोधितेऽर्थाच्छेषषष्ठ्यपवादत्वमुपपदविभक्तीनाम वतिष्ठते । किं च उपपदविभक्तेः पदान्तरनिमित्तकत्ववत् कारकविभक्तेः क्रियानिमित्तकत्वा-

## भैरवी ।

अत एवाह-वस्तुत इति । तदिति । उपपदविभक्तेरिति वाक्यमित्यर्थः । अत एव सत्सप्तम्यपेक्षयाऽधिकरणसप्तम्या बलवत्त्वं "तत्र च दीयते" इति सूत्रे भाष्यकृता ध्वनितम्, कैयटेन तु स्पष्टीकृतन्तत्सङ्गच्छते । एवन्तर्हि मूलमसङ्गतमेव स्यादत आह—अन्तरङ्गत्वमिति । ननु प्रथमायाः कारकाधिकारे पाठाभावेनाकारकविभक्तित्वात्कथन्तेन वचनेन प्रथमासाधनमत आह—प्रथमायाश्चेति । कारकविभक्तित्वं हि क्रियाजनकार्थकविभक्तित्वं, तच्च प्रथमाया अप्यस्तीति सापि कारकविभक्तिरेव "अभिहिते प्रथमा" इति वार्तिककारोक्तेः । अन्यत्र-उद्द्योतादौ । नन्वस्य वचनस्यापूर्वत्वकल्पनापेक्षया पूर्वोक्तरीत्याऽन्तरङ्गत्वमूलकत्वमेवास्त्वित्यत आह—अन्तरङ्गत्वं त्विति । प्रथमापवादत्वस्येति । यदि प्रकृतसूत्रेऽप्रधानग्रहणं न क्रियते तदा सहार्थकशब्दयोगे षष्ठ्या इव प्रथमाया अपि प्राप्त्या बाध्यसामान्यचिन्तायामुभयापवादत्वापत्तिः, अन्तरङ्गादप्यपवादस्य बलवत्त्वादिति भावः । नन्वत्र बाध्यविशेषचिन्तैव तर्ह्यस्त्वित्यत आह-अनन्तरस्येति । षष्ठीविधायकसूत्रापेक्षया प्रथमाविधायकसूत्रस्य पुरःस्फूर्तिकत्वेन तदपवादकत्वापत्तेरित्यर्थः । एवञ्चेष्टव्यवस्थाया असिध्द्या अप्रधानग्रहणस्यावश्यकत्वेन तेन न्यायेन तत्खण्डनासङ्गतिः ।

तस्य वचनस्यापूर्वत्वे तु तेन वचनेनेष्टस्य सिद्धया तत्खण्डनमुचितमिति मनसि निधायाह—उपपदेत्यादि । न्यायेन चेति । अत्र चस्त्वर्थे । अर्थादिति । परिशेषादित्यर्थः । इदं सर्वमङ्गन्वरत्वाभ्युपगमेन । वस्तुतस्तु तदेव नास्तीत्याह—किञ्चेति । पदान्तरेति । तदर्थेत्यर्थः ।

## भावप्रकाशः ।

मुण्डस्येवात आह-वस्तुत इति । तदिति । "उपपदविभक्तेः" इति प्रसिद्धवाक्यमित्यर्थः । एवेनोक्तव्यावृत्तिः । अत एव सत्सप्तम्यपेक्षयाऽधिकरणसप्तम्या बलवत्त्वमनेन न्यायेन "तत्र च दीयते" इत्यत्र भाष्ये ध्वनितं कैयटेन स्पष्टमुक्तम् । एतेन क्रियान्वयित्वमत्र कारकत्वमित्यपास्तम्, सत्सप्तम्या अपि तदन्वयित्वादिति भावः । एवं तर्हि मूलासंगतिरत आह—अतरङ्गत्वमिति ।तन्न्यायोपेति । तन्न्यायस्यैवोपेत्यर्थः । तथाच यथाश्रुतं मूलं तथा दण्ड्याद्युक्तं च चिन्त्यमेवेति भावः । नन्वेवमपि न प्रकृतेष्टसिद्धिः, प्रथमायाः कारकाधिकारापठितत्वेनाकारकत्वादत आह-प्रथमायाश्चेति । चस्त्वर्थो भिन्नक्रमः, एतन्न्यायप्रसक्तेर्नैवेति शेषः । अयं भावः—क्रियाजनकार्थकविभक्तित्वं कारकविभक्तित्वं, तच्च प्रथमाया अप्यस्तीति सापि तद्विभक्तिः । ध्वनितं चेदं प्रकृतसूत्रभाष्यादौ इति; तदाह—अन्यत्रेति । उद्द्योतादावित्यर्थः । ननु सति सम्भवे वचनापेक्षयाऽन्तरङ्गन्यायेनेष्टसिद्धिरेवोचितेति यथाश्रुतं मूलं समञ्जसमेवात आह—अन्तरङ्गत्वं त्विति । अप्रधानग्रहणाभावे स्वविषये षष्ठ्या इव प्रथमाया अप्यवश्यं प्राप्त्या । बाध्यविशेषचिन्तापक्षे आह—अनन्तरेति । एवं चेष्टासिध्द्याऽप्रधानग्रहणावश्यकत्वेन तेन तत्खण्डनमनुचितं, वचनसत्त्वे तु तेनेष्टसिध्धा तदुचितमित्याह-उपपदेति । चस्त्वर्थे । सर्वतः-अपवादादपि । अपवादत्वं-तत्त्वमेव । एवञ्च प्रधाने प्राप्त्या प्रधाने एव सिध्धाऽतत्खण्डनं युक्तमिति भावः। इदं चान्तरङ्गत्वमभ्युपेत्योक्तम् । वस्तुतस्तदेव नेत्याह-किंचोपेति ।पदान्तरेति । तदर्थेत्यर्थः । एवञ्च तुल्यनिमित्तकत्वा-

इत्यादौ कारकविभक्तेः प्राबल्याच्च ।

शब्दरत्नम् ।

त्तत्त्वं दुरुपपादम् । न च सम्बन्धस्य क्रियाकारकभावमूलकत्वेन तत्प्रयुक्तं कार्यं बहिरङ्गं, पुत्रेऽपि तृतीयानापत्तेरेकक्रियाकर्तृत्वात्साहित्यस्य । क्रियायाः प्राधान्यात्तन्नि मित्तिका विभक्तिः प्रबलेत्यपि न युक्तम् , अप्रधानक्रियायामपि कारकान्वयदर्शनात् ; तदेव ध्वनयन्नाह—इत्यादौ कारकविभक्तेरिति । अत्रादिना 'पुत्रेण सहागतः पिता'

भैरवी ।

एवञ्चान्तरङ्गत्वमनैमित्तिकत्वरूपमल्पापेक्षत्वरूपं वा भवता वाच्यन्तदुभयमपि न सम्भवति, अन्यादृशन्तु तद्वक्तुमशक्यमिति भावः । तत्त्वम्—अन्तरङ्गत्वम् । प्राचीनोक्तरीत्याऽन्तरङ्गत्वङ् खण्डयति–नचेति । सम्बन्धस्येति । अस्य उपपदार्थेन सहेत्यादिः । क्रियेति । अस्य यत्किञ्चि- दित्यादिः। तत्प्रयुक्तमिति। उपपदार्थसम्बन्धप्रयुक्तमित्यर्थः । कार्यम्–विभक्तिरूपम् । अस्य बहि- रङ्गत्वोपपादनेन क्रियाकारकभावात्मकसम्बन्धस्यान्तरङ्गत्वेन तत्प्रयुक्तं विभक्तिरूपङ्कार्यम- न्तरङ्गमित्यर्थादुक्तम् । एवमभिधाने समीहितासिद्धिरित्याह—पुत्रेऽपीति । अपिशब्दः पितृ- समुच्चायकः । तृतीयानापत्तेरिति । "सहयुक्ते" इतिसूत्रविहिततृतीयानापत्तेरित्यर्थः । एतदुप- पादयति—एकेति । यत्क्रियाकर्तृत्वम्पितुस्तत्क्रियाकर्तृत्वमेव पुत्रस्येत्युभयत्रोपपदार्थसम्बन्ध- स्य समतया पुत्रशब्दादप्यन्तरङ्गत्वात्प्रथमा स्यादिति भावः । नचैवं सति "सहयुक्ते" इति सूत्रवैयर्थ्यमिति शङ्कनीयम् , द्रव्यगुणयोगे चारितार्थ्यात् । केचित्तु प्रधानीभूता या क्रिया तत्सम्बन्धनिमित्तकङ्कार्यमन्तरङ्गमिति तन्न्यायार्थः , कारकविभक्तेः प्रधाननिमित्तकत्वेन प्राबल्यादित्याहुः, तन्मतं खण्डयति–क्रियाया इत्यादिना । यदि प्रधानक्रियायामेव कारकान्वय- नियमः स्यात्तदा भवदुक्तेः सम्भवः स्यात्स एव तु नास्तीत्याशयेनाह–अप्रधानक्रियायामपीति । पुत्रेण सह पितुरागमनमित्यादौ भावल्युडन्तप्रतिपाद्या क्रिया यद्यपि प्रधानीभूता तथापि 'पुत्रेण सहागतः' इत्यत्र कर्त्तरिक्तप्रत्ययस्य सत्त्वेन तदर्थस्यैव प्राधान्येन क्रियायास्तत्राप्राधा- धान्येन भवदुक्तो नियम एव नास्तीति भावः ।

मूले–पुत्रेण सहागत इत्यत्र पितृशब्दादन्तरङ्गत्वात्प्रथमामुपपाद्य तद्भिन्नरीत्या पितुराग- मनमित्यत्र कर्तृषष्ठ्याः कारकत्वमुक्तमिति प्रथमा न कारकविभक्तिरिति कश्चिद्भ्राम्येतेति तद्भ्रमनिरासार्थमुक्तम्–तदेवेति । उक्तार्थरूपमेवेत्यर्थः । अत एवाह–अत्रादिनेति । उक्तवाक्य

भावप्रकाशः ।

दनैमित्तिकत्वरूपमल्पनिमित्तकत्वरूपं वान्तरङ्गत्वं तत्र बाधितं, तदाह–तत्त्वमिति । अन्तरङ्गत्वमित्यर्थः । प्राचीनोक्तरीत्या तत्त्वसम्भवं शङ्कते—नचेति । सम्बन्धस्येति । उपपदार्थेन सहेति शेषः । क्रियेति । यत्किञ्चित्क्रियेत्यर्थः । तत्प्रयुक्तम्–उपपदार्थसम्बन्धप्रयुक्तम् । तत्–विभक्तिरूपम् । एतेन तुल्ययुक्त्या क्रियाकारकभावसम्बन्धस्यान्तरङ्गत्वेन तत्प्रयुक्तं कार्यं तद्विभक्तिरूपमन्तरङ्गमिति सूचितम् । तथासत्य- व्याप्तिमाह—पुत्रेऽपीति । अपिस्तत्रत्यपितृसमुच्चायकः । तृतीयेति । उपपदतृतीयेत्यर्थः । सति सम्भवे कर्त्रादितृतीया तूक्तरीत्या सिद्धैव, सूत्रं तु द्रव्यादियोगे सावकाशमित्युक्तमेवेति भावः । एकक्रियेति । यत्क्रियाकर्तृत्वं पितुस्तत्क्रियेत्यर्थः । तथाचान्तरङ्गत्वात्तत्रापि प्रथमा स्यादिति भावः । प्रागुक्तभाष्या- सङ्गतेश्चेत्यपि बोध्यम् । अन्येतु प्रधानीभूतक्रियाहेतुककार्यत्वेन कारकविभक्तीनां प्राबल्यमिति न्यायार्थं वदन्ति; तन्मतं खण्डयति–क्रियाया इति । यद्यप्यत्र पक्षे "तत्र च दीयते" "नमोवरिव" इति सूत्रद्वयस्य प्रागुक्तभाष्यासङ्गतिरुभयोरपि क्रियासम्बन्धनिमित्तकत्वादिति दोषः स्पष्टस्तथापि मूले एव कुठारमाह— अप्रधानेति । उक्तमिदमनुपदम् । तदेवेति । उक्तार्थरूपमेवेत्यर्थः । नत्वन्यार्थरूपं, तथासत्यादिपदं न वदेत्सङ्ग्राह्यत्वाभावात् , अन्यस्यैतत्तुल्यत्वात् । एतेन भेदेन समाधानं ब्रुवतो मूलकृतः प्रथमायाः कारकविभक्तित्वं नेष्टमित्यपास्तम् । तदाह—अत्रेति । उक्तवाक्ये इत्यर्थः । एतेन 'पुत्रेण सह पितुरा-

"येनाङ्गविकारः" ॥ अङ्गशब्दोऽर्शआद्यजन्तस्तदाह—अङ्गिन इति। येनेति सर्वनाम्ना प्रकृत्यर्थभूतोऽवयव एव गृह्यते, सन्निधानात्। सचार्थाद्विकृत एव,

शब्दरत्नम्।

इत्यस्य सङ्ग्रह इत्यलम्।

अर्शआद्यजन्त इति। व्याख्यानादिति भावः। अन्यथा येन गुणेन काणत्वादिना-ऽवयवस्य विकारो लक्ष्यत इत्यर्थापत्त्या—'अक्षि काणमस्य' इत्यादौ प्रथमां बाधित्वा गुणवचनात्काणशब्दादेरेव स्यात, 'अक्ष्णा काणः' इत्यादौ तु षष्ठ्येव स्यादिति बो-

भैरवी।

इत्यर्थः। नचैवं सति प्राबल्याच्चेति चकारासङ्गतिरिति वाच्यम्। चकारस्य हेत्वर्थकत्वात्। यतो वचनेनापूर्वेण कारकविभक्तेः प्राबल्यमुक्तमतोऽप्रधानग्रहणं शक्यमकर्तुमित्यन्वयः। एतेन द्रव्यगुणयोगे तृतीयासिद्ध्यर्थमावश्यकं यत्सहयोग इति सूत्रं तद्विशेषविहितत्वेन परमपि कर्तृकर्मणोरितिसूत्रम्बाधित्वा पितुरागमनमित्यत्र पितृशब्दात्तृतीयाविधायकं स्यादिति अप्रधानग्रहणमावश्यकमिति परास्तम्। वाचनिकेन तेन न्यायेन कारकविभक्तेरेवैतादृशस्थले प्रबलायाः प्रवृत्तिबोधनेन विशेषविहितत्वस्याकिञ्चित्करत्वात्। किञ्च नमस्यति देवानित्यत्र नमःशब्दयोगेन परत्वात्प्राप्तामपि चतुर्थीम्बाधित्वा द्वितीया यथा स्यादित्येतदर्थं वचन-मावश्यकम्। अत एव 'गाः स्वामी गच्छति' इत्यत्र "स्वामीश्वर" इति षष्ठीं बाधित्वा धात्वर्थव्यापारजन्यफलाश्रयत्वेन गवां कर्मत्वाद् द्वितीया भवतीत्याशयेनाह—अलमिति।

व्याख्यानादिति। अङ्गग्रहणसामर्थ्यमूलकव्याख्यानादित्यर्थः। अत एव "अङ्गशब्दोऽयं समुदायशब्दः" इति भाष्ये उक्तम्। अन्यथा—अजन्तत्वाभावे। अङ्गशब्दस्यावयवे सुप्रसि-द्धतया गुणवाचकस्यैव प्रत्यासत्त्योपस्थितिः स्यादिति येन गुणेनावयवस्य विकारो लक्ष्यते तद्वाचकात्तृतीयेति सूत्रार्थः स्यादित्याशयेनाह—येन गुणेनेति। लक्ष्यत इति। तद्वाचकात्तृती-येति शेषः। अक्ष्णा काण इत्यादाविति। आदिना 'पादेन खञ्जः' इत्यस्य सङ्ग्रहः। यदि तु सूत्रेऽङ्गशब्दम्परित्यज्य गुणिशब्द एवोपादीयते तदा तु न दोष इत्यवधेयम्। प्रकृतित्वस्या-

भावप्रकाशः।

गमनम्' इत्यादौ पितुस्तदभावायैतदावश्यकमन्यथा परामपि तां बाधित्वा विशेषविहितत्वात्सैव स्यादिति प्राचोक्तमपास्तम्, वचनेन तस्याः प्राबल्यात्; गुणादियोगेऽस्य सावकाशत्वात्। एतेनास्तिर्भवन्तीपर इति भाष्योक्तेस्तत्राप्यस्तिक्रियाकर्तृत्वेनेदं व्यर्थम्। अत्र शब्दसंस्काराय शब्द एव सम्बन्ध इष्टो नत्वार्थ इति ब्रूषे तर्हि आगत इत्यत्रापि तुल्यत्वात्सूत्रावश्यकत्वाऽऽक्षेपसमाधाने निष्फले इति रत्ना-करोक्तमपास्तम्; द्रव्ययोगे तथाप्यनिर्वाहात्। एतेन तत्रैव गवोभयोस्तुल्ययोगात्पितुस्तदभावायैत-दावश्यकमित्यपास्तम्; षष्ठीवद्विशेषणादेवैतदङ्गीकारात् पितुस्तत्सम्बन्धस्यान्तरङ्गत्वाच्चेति दिक्। तदाह—इत्यलमिति।

मूले हेत्वनुक्तेराह—व्याख्यानादिति। अङ्गग्रहणसामर्थ्यमूलकाद् "अङ्गशब्दोऽयं समुदायशब्दः" इति भाष्योक्तादित्यर्थः। एतदेव ध्वनयितुमाह—अन्यथेति। अजन्तत्वाभावे इत्यर्थः। अङ्गशब्दस्यावयवे प्रसिद्धत्वादिति भावः। गुणेनेति। अनेन येन गुणेन गुणिनो विकारो लक्ष्यते इत्येतावतैव सिद्धे तद्वै-यर्थ्यं स्पष्टमेवेति ध्वनितम्। अवयवस्य—अक्ष्णः। लक्ष्यतइत्यग्रे, ततस्तृतीयेति शेषः। इत्यादौ

सरला।

षष्ठ्येव स्यादिति। लाघवाद्विकृताङ्गरूपशक्यपरग्रहणसम्भवे विकृताङ्गविशिष्टरूपलक्ष्यपराङ्गशब्द-स्याग्रहणादिति भावः।

नह्यविकृतेनावयवेन शरीरस्य विकारः संभवति। तदेतदाह—येनाङ्गेन विकृतेनेति।

संज्ञानीत इति। "सम्प्रतिभ्यामनाध्याने" इति तङ्। कृद्योगे परत्वात् षष्ठी—पितुः सञ्ज्ञाता। यत्तु हरदत्तेनोक्तम्—आध्याने परत्वाद् "अधीगर्थ" इति षष्ठी—'मातुः संजानाति' इति; तन्न, तत्र शेषाधिकारात्।

द्रव्यादीति। उक्तं च—

द्रव्यादिविषयो हेतुः करणं नियतक्रियम्॥ इति।
अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते। इति च।

---

शब्दरत्नम्।

द्ध्यम्। प्रकृत्यर्थेति। अर्शआद्यच्प्रकृतेरित्यर्थः। शरीरस्येत्यवयव्युपलक्षणम्। संभवतीति। लक्ष्यः सम्भवतीत्यर्थः।

द्रव्यादीति। आदिना गुणक्रिये। एवं च त्रितयसाधारणं हेतुत्वम्। नियतक्रियमिति। क्रियया नियतमित्यर्थः। क्रियामात्रविषयमिति यावत्। हेतुकरणयोर्वैषम्यान्तरमप्याह—अनाश्रिते त्विति। एवं च करणत्वहेतु-

भैरवी।

व्यावर्तकतया सन्देहनिवृत्तये आह—अर्शआद्यजिति। यद्यप्यक्ष्येव काणन्तथाप्यवयवधर्मस्य समुदाये आरोपाद्यथा शरीरे प्रयोगस्तथा शरीरावच्छिन्नात्मन्यपि व्यवहारस्य दर्शनादाह—शरीरस्येत्यवयव्युपेति। विकारसम्भवस्य सूत्राप्रतिपाद्यत्वाद्विकारः सम्भवतीत्युक्त्यनुपपत्तिरत आह—लक्ष्य इति।

त्रितयसाधारणमिति। त्रितयनिरूपितमित्यर्थः। एवं क्रियामात्रविषयमित्यत्र विषयशब्दो निरूपितार्थकः, तस्य करणत्वेऽन्वयः। अथवा विषयशब्दो जनकार्थकः। वैषम्यान्तरमिति। एतेन यत्क्रियाजनकङ्करणन्तत्राप्यनेनैव तृतीया भविष्यतीति "कर्तृकरणयोः" इति सूत्रे करणशब्दो नोपादेय इति परास्तम्; शाब्दबोधकृतवैलक्षण्यस्य स्फुटत्वात्। एवञ्च—व्यापारवदेव करणमिति भेदे चेत्यर्थः। एवञ्च करणत्वशक्त्यपेक्षया हेतुत्वशक्तिर्विलक्षणा तृतीयार्थ

भावप्रकाशः।

त्विति। अक्षिशब्दादिति शेषः। अजन्तस्यापि यत्किञ्चित्प्रकृतित्वादाह—अर्शआद्यजिति। यद्यप्यक्ष्येव काणं तथाप्यवयवधर्मस्य समुदाये आरोपाद्यथा शरीरे प्रयोगस्तथा तदवच्छिन्नेऽपि व्यवहारस्य निरूढत्वादाह—शरीरस्येत्येवेति। विकारसम्भवस्यासूत्रार्थत्वादाह—लक्ष्य इति। अत्रेदं बोध्यम्, द्वौ विप्राविति वदक्ष्णेति प्रयोगः। एवंरीत्येदृशानां साधुत्वे चेदमेव भाष्यं मानम्। चक्षुर्नाशवान्सचक्षुष्कः काणपदार्थः। अक्षिपदार्थो गोलकं, विकारप्रयुक्तत्वरूपः सम्बन्धस्तृतीयार्थः। गोलकविकारप्रयुक्तचक्षुर्नाशवान्सचक्षुष्क इति बोध इति केचित्। "अतिशायने" इति सूत्रभाष्यकैयटाभ्यां तु सर्वथा दृष्टिहीनः काण इति लभ्यते इति बोध्यमिति।

ननु सूत्रे लौकिकहेतोर्ग्रहणेऽपि तस्य करणत्वादेव सिद्धमत आह—द्रव्यादीतीति। तद्व्याचष्टे—आदिनेति। तत्फलितमाह—एवञ्चेति। तयोस्तेन ग्रहणे चेत्यर्थः। साधारणमिति। तज्जनके वर्तते इत्यर्थः। ननु करणं नियतक्रियमित्यनेन बहुव्रीहिणा सव्यापारं तदित्यर्थो लभ्यते, स चायुक्तः, अनाश्रिते इत्यनेन पौनरुक्त्यापत्तेरत आह—क्रिययेति। तथाच वैषयिकसप्तम्यर्थे बहुव्रीहिस्तद्ध्वनयन्नाह—क्रियामात्रेति। बहुव्रीहिः तन्मात्रजनकमित्यर्थः। उक्तयुक्त्या भेदसिद्ध्या उत्तरकारिकाया वैयर्थ्यमाशङ्क्याह—हेत्विति। वैषम्यान्तरमिति। एतेन क्रियाजनके करणेऽप्यनेनैव सिद्धौ तत्र तद्विधिर्व्यर्थोऽत आहेत्यवतरणं निरस्तं, तद्ध्वनयन् तत्फलितमाह—एवंचेति। करणन्तु व्यापारवदेवे-

फलमपीति । एतच्च 'प्रत्यय' इति सूत्रे कैयटे स्पष्टम् । एवं च तादर्थ्यचतुर्थ्या सहेयं तृतीया विकल्प्यते । अध्ययनाय वसति । अयं तु विशेषः—अध्ययनस्य फलेन सहाभेदः संसर्गः, उपकारकत्वेन सह तु निरूपकतेति । गम्यमाने-

---

शब्दरत्नम् ।

त्वविषयकशाब्दबोधाय सूत्रद्वयमित्यर्थः । विकल्प्यत इति । तदर्थत्वेन विवक्षायां चतुर्थ्याः, हेतुत्वेन विवक्षायां तृतीयायाश्च प्राप्त्या विवक्षाभेदेन विभक्तिद्वयमित्येतावता तयोर्विकल्पव्यवहार इति बोद्धव्यम् । फलेन सहेति । तच्च फलं फलत्वेन तृतीयार्थ इत्येके । हेतुत्वेनैवेत्यन्ये । अध्ययनहेतुको वास इति बोधस्तृतीयायाम् । चतुर्थ्यामध्ययनोपकारको वास

भैरवी ।

इति भावः । ननु 'तृतीया विकल्प्यते' इति मूलमसङ्गतम् ? समानार्थत्व एव विकल्पव्यवहारात् । अत एव "तुल्यार्थास्तु विकल्पेरन्" इति जैमिनिनाप्युक्तम् । यथा "व्रीहिभिर्यवैर्वा यजेत" "उदितेऽनुदिते वा जुहोति" इत्यत्र । अन्यथा द्वितीयादिभ्योऽपि विकल्पव्यवहारः स्यादत आह—तदर्थत्वेनेति तादर्थ्येनेत्यर्थः । एवञ्च विकल्प्यत इत्यस्य विवक्षाभेदेन भवतीत्यर्थः ।

फलमपीह हेतुरिति परममूले उक्तम्, तत्र यदिहेति तस्य—इह सूत्र इत्यर्थः केषाचिन्मते, मतान्तरे तु इहेत्यस्यैतत्सूत्रोदाहरणे इत्यर्थः । आद्यमते तृतीयार्थः फलत्वेन फलन्तत्र प्रकृत्यर्थस्याभेदेन, तस्य तु जनकतासम्बन्धेन वासादावन्वयः इत्यध्ययनाभिन्नफलजनको वास इति बोधः । अन्यमते तु फलस्य स्वज्ञानद्वारा वासादिहेतुत्वविवक्षा यत्र तत्राध्ययनाय वसतीति प्रयोगादध्ययनस्य हेतुरूपतृतीयार्थेऽभेदेनान्वयः, तृतीयार्थस्य तु जन्यतासम्बन्धेन वासेऽन्वयः इत्यध्ययनाभिन्नहेतुजन्यो वास इति बोधः । तदेतदुपपादयति—तच्च फलमित्यादिना । हेतुत्वेनैवेत्येवकारेणास्य मतस्य मुख्यत्वन्दर्शितम् । यदा तु तादर्थ्ये चतुर्थी तदापि

भावप्रकाशः ।

त्यादिभेदे चेत्यर्थः । शाब्देति । शाब्दबोधवैलक्षण्यायेत्यर्थः । करणत्वशक्तितो हेतुत्वशक्तिभिन्नैवात्र तृतीयार्थ इति तात्पर्यम् । ननु "तुल्यार्थास्तु विकल्पेरन्" इति जैमिन्युक्तेर्व्रीहियवादेरुदितानुदितयोश्च विकल्पव्यवहारो दृष्टः, प्रकृते तु नैवमिति कथं तदुक्तिः । अन्यथा द्वितीयादेरपि मिथस्तद्व्यवहारापत्तिरत आह—तदर्थत्वेनेति । तादर्थ्येनेत्यर्थः । तयोः—तृतीयाचतुर्थ्योः । एवञ्च न सोऽत्र विकल्पः किन्तु विकल्प्यते इत्यस्य पक्षे भवतीत्यर्थ इति भावः । फलमपीह हेतुरिति परममूलमित्यर्थ केचिद्व्याचक्षते—इह सूत्रे फलमपि हेतुशब्देन गृह्यते, तृतीयार्थश्च फलत्वेन फलं, तत्र प्रकृत्यर्थस्याभेदेनान्वयः, तस्य च वासे जनकतया । एवंचाध्ययनाभिन्नफलजनको वास इति बोध इति, तदाह—तच्च फलमिति । सूत्रे

सरला

सूत्रद्वयमित्यर्थ इति । ननु हेतुत्वस्य करणत्वनियतत्वाभावेन हेतुतृतीयाया आवश्यकत्वेऽपि करणत्वस्य हेतुत्वनियतत्वात् हेतुतृतीयया करणतृतीयाया गतार्थत्वं सम्भवत्येवेति चेत् ? न, हेतुतृतीयावाच्यहेतुत्वशक्तेः करणतृतीयावाच्यकरणत्वशक्तेश्च घटत्वपृथिवीत्वयोरिव परस्परं भिन्नतया तत्तच्छक्तिप्रकारकबोधार्थमुभयोरावश्यकत्वाद् हेतुत्वशक्तेः कारकत्वाभावेन 'घटवद् भूतलम्' इत्यादौ समासैकदेशे घटादौ 'दण्डेन' इति तृतीयाप्रतिपाद्यहेतुत्वस्यान्वयाभावेन 'शरैः शातितपत्रः' इत्यादौ समासैकदेशशातनादावपि अन्वयासम्भवेन तादृशप्रयोगाणामसाधुत्वापत्तेश्च, करणत्वविवक्षायां 'शतेन बध्नाति' इत्यादौ "अकर्तर्यृणे पञ्चमी" इति हेतुतृतीयाबाधिकां पञ्चमीं बाधित्वा तृतीयाविधानार्थं तदावश्यकत्वाच्चेत्यर्थः ।

शब्दरत्नम् ।

इति बोध इति मते इदम् । अध्ययनोपकार्यको वास इति बोधश्चतुर्थ्यामिति मते तत्रा-न्वयभेदभानमेवेति बोध्यम् । गम्यमानेति । श्रमेणेत्यादिपदजबोधविषयेत्यर्थः । स्पष्टं चेदं

भैरवी ।

मतभेदेन शाब्दबोधे वैलक्षण्यमित्याह—चतुर्थ्यामिति । आद्यमते उपकारकत्वञ्चतुर्थ्यर्थः । तत्र प्रकृत्यर्थस्य स्वनिष्ठोपकार्यतानिरूपकत्वसम्बन्धेनान्वयः । प्रत्ययार्थस्य स्वाश्रयतया वासेऽन्वयः । द्वितीयमते उपकार्यश्चतुर्थ्यर्थः । तत्र प्रकृत्यर्थस्याभेदेन, तस्य तु स्वनिष्ठोपकार्यतानिरूपितोपकारकत्वेन वासेऽन्वय इति मतभेद इति बोध्यम् ।

नन्वलं श्रमेणेत्यत्र क्रियावाचकपदाप्रयोगात्कथं कारकविभक्तिः ? यदि तु तद्विनाऽपि कारकविभक्तिस्तदर्थस्य यत्र कुत्रचिदन्वयस्तदा कारकाणां क्रियामात्रान्वयित्वनियमभङ्ग इत्यत आह—गम्यमानेतीति । अत्र प्राञ्चः—अलंशब्दो निषेधार्थः, 'अलम्भोजनेन' इत्यादौ तथा दर्शनात् । निषेधस्य प्रतियोगिसाकाङ्क्षत्वात्प्रतियोगिवाचकम्पदं स्मर्यते । तच्च योग्यत्वादिह साध्यमिति । तदर्थान्वयित्वेन श्रमेणेति तृतीया । नचाध्याह्रियमाणं यत्साध्यमिति तस्य नामत्वात्तदर्थो न क्रियेति कथन्तत्र तृतीयान्तार्थान्वय इति वाच्यम्, विशिष्टार्थस्याक्रियात्वेऽपि तद्घटककृत्प्रकृत्यर्थस्य साध्यत्वेन प्रतीयमानस्य क्रियात्वात्तस्याङ्करणकारकान्वये बाधकाभावात् । गम्यमानेत्यस्य स्मर्यमाणपदजन्यबोधविषयेत्यर्थ इति । वस्तुत इदन्न युक्तम् । साध्यमिति पदं स्मृतिविषयो, मानसज्ञानविषयो वा ? भवतूभयथापि, तस्यानुच्चारितत्वात्प्रत्यायकता बाधिता, "उच्चारितः शब्दः प्रत्यायको नानुच्चारितः" इति भाष्यकारोक्तेः । तस्माद्यथा पदार्थे पदशक्तिग्रहकाले पदैकदेशस्यापि शक्तिग्रह इति पदैकदेशादपि तस्यार्थस्योपस्थितिः—सत्या, भामा, भीमादिभ्यो यथा, तथा वाक्यार्थे वाक्यैकदेशपदस्यापि शक्तिग्रह इति, तस्माद्वाक्यार्थस्योपस्थितिः । एवञ्च श्रमेण साध्यमिति वाक्यार्थे श्रमेणेत्यस्य शक्तिरिति श्रमेणेत्येतत्पदजन्यबोधविषयत्वमव्याहतमिति भावः ।

अस्य सिद्धान्तत्वसूचनायाह—स्पष्टञ्चेदमिति । "इग्यणः सम्प्रसारणम्" इति सूत्रभा-

भावप्रकाशः ।

तेन गृह्यमाणफलं चेत्यर्थः । अन्ये तु अन्यथा—इह एतत्सूत्रलक्ष्ये कचित् फलमपि हेतुत्वेन विवक्ष्यते, तस्यापि स्वज्ञानद्वारा जनकत्वादिति; तदाह—हेतुत्वेनैवेति । एवस्तद्व्यावृत्तिद्वाराऽस्य सिद्धान्तत्वसूचनाय । अत एवात्र मते बोधमाह—अध्ययनेति । अध्ययनाभिन्नहेतुजन्यो वास इत्यर्थः । तृतीयायामिति । अनेन संसर्ग इत्यन्तो ग्रन्थो व्याख्यात इति सूचितम् । अत एव तदग्रिमग्रन्थं व्याचष्टे—चतुर्थ्यामिति । उपकारकत्वं तदर्थः । तत्र च तेनान्वयः । अध्ययननिष्ठोपकार्यतानिरूपितोपकारकत्ववान्वास इत्यर्थः । इदं निरूपकत्वस्य संसर्गत्वकथनद्वारा विशेषकथनम् । सिद्धान्तमाह—अध्ययेति । उपकार्योपकारकभावस्तदर्थः । ।अध्ययनरूपं यदुपकार्यं तदुपकारको वास इत्यर्थस्तदाह—तत्रापीति । चतुर्थ्यन्तेऽपीत्यर्थः।अपिस्तृतीयान्तसमुच्चायकः । एवंच 'अयंतु विशेषः' इति मूलोक्तिस्तथादंण्ड्याद्युक्तिश्च चिन्त्येति बोध्यम् । अभेदेति । विशेष्यविशेषणेत्यर्थः । एवः पूर्ववत् । नन्वलं श्रमेणेत्यादौ क्रियावाचकपदाभावात्कथं करणत्वं, तां विनापि तदङ्गीकारे तु क्रियाजनकत्वात्क्रियामात्रान्वयि तदित्यनुपपन्नमत आह—गम्यमानेतीति । अलंशब्दो निषेधार्थः । यद्यपि साध्यमित्यर्थाध्याहारेण तस्य नामार्थत्वेन द्रव्यत्वादक्रियात्वेपि तत्प्रकृतिभागार्थस्य तत्त्वम्, तथाच गम्यमानेत्यस्य मानसबोधविषय इत्यर्थः, स्पष्टं चेदं "सद्युक्ते" इत्यत्र भाष्ये इति मूलाद्यभिमतं; तथापि सिद्धान्तरीत्या व्याचष्टे—श्रमेणेत्यादीति । वाक्यैकदेशन्यायेनेति भावः । आदिना शतादिपरिग्रहः । अस्य सिद्धान्तत्वं ध्वनयति—स्पष्टं चेदमिग्यण इत्यत्र भाष्ये इति । तत्रहि प्रविश पिण्डीमिति वाक्यार्थे वाक्यैकदेशप्रयोग इत्युक्तम् । तथाच विशिष्टस्यैव शक्तिग्रह एकदेशस्यापीति स्ववाच्यक्रियां प्रति स्वस्य करणत्वमिति इत्यादिपरममूलार्थो बोध्यः । एतेन तस्य श्रमेणेति ना-

ति । न तु श्रूयमाणैवेत्याग्रह इति भावः । साधनेति । साध्यमित्यत्र प्रकृतिभागस्यार्थं प्रतीति भावः । 'मा चापलायेति गणान् व्यनैषीत्' इत्यत्र तु यतध्वमिति शेषः । अशिष्टेति । एतच्च 'दाणश्च सा चेच्चतुर्थ्यर्थे' इत्यनेन ज्ञाप्यते ॥

इति तृतीया ॥

---

**शब्दरत्नम्**

"सहयुक्ते" इत्यत्र भाष्ये, तदाह—न तु श्रूयमाणेति । श्रूयमाणत्वमात्रवाचकपदजन्यबोधविषयेत्यर्थः । ज्ञाप्यते इति । चतुर्थ्यर्थेविहिततृतीयायुक्ताद्दाण आत्मनेपदमिति तदर्थः । सा चेदित्यनेन तस्याः क्वाचित्कत्वं ज्ञाप्यते । तेनाशिष्टव्यवहारे इत्यंशोऽपि सिद्ध इति भावः ।

इति तृतीया ।

**भैरवी ।**

ष्येऽपि । तत्र हि—वाक्यस्य सम्प्रसारणसञ्ज्ञायां "सम्प्रसारणाच्च" इत्यादावनुवादप्रदेशे वाक्यात्परत्वानुपपत्तिप्रसक्त्या सम्प्रसारणाज्जातं सम्प्रसारणशब्देन गृह्यत इत्युक्तम् । परममूलस्य तु स्ववाच्यक्रियाम्प्रति स्वस्य करणत्वमित्यर्थः । नन्वेवं सति श्रूयमाणपदजन्यबोधविषयत्वमेवागतमिति 'न तु श्रूयमाणा' इत्यसङ्गतमेवेत्यत आह-श्रूयमाणस्वमात्रवाचकेति । स्वमात्रवाचकम्पदम्प्राधान्येन क्रियाबोधकम् । तेन-चतुर्थ्यर्थे ज्ञापिततृतीयायाः क्वाचित्कत्वेन । अशिष्टव्यवहार इत्यंशोऽपि सिद्ध इति । अभिधानस्वाभाव्यादयमंशः सिद्ध इति भावः । अशिष्टानां सङ्कीर्णाचाराणां यो व्यवहारः क्रिया तद्बोधकप्रयोगे यत्सम्बन्धेन व्यवहारस्य सङ्कीर्णत्वन्निन्द्यत्वन्तद्वाचकाच्चतुर्थ्यर्थे तृतीया भवतीति वार्तिकार्थः । अत्र दाण्धात्वर्थो दानपूर्वक उपभोगः । कामुककर्तृको दासीसम्प्रदानकदानपूर्वक उपभोग इति बोधः । दास्यै दत्त्वा तामुपभुङ्क्ते इति फलितम् ।

इति तृतीयाविवरणम् ।

**भावप्रकाशः ।**

मार्थत्वेन न क्रियात्वमित्यपास्तमिति मञ्जूषायां विस्तरः। तदाहेति । तादृश गम्यमानत्वमभिप्रेत्यैवाहेत्यर्थः, नत्वन्यथाऽभिप्रेत्येति भावः । नन्वेवमपि श्रूयमाणतद्वाचकपदजबोधविषयत्वसत्त्वाद्विरोधोऽत आह-श्रूयमाणस्वमात्रेति । तथा च तस्य तन्मात्रावाचकत्वान्न विरोध इति भावः । ज्ञापकत्वमुपपादयति—चतुर्थ्यति । यत्तु रत्नाकरादयः—इदं चिन्त्यम्, अशिष्टव्यवहारे इत्यंशस्य वाचनिकत्वादिति, तत्खण्डयति—सा चेदिति । यदर्थकचेच्छब्दबलादिति भावः । तस्याः-तृतीयायाः । ततस्तदर्थस्य स्पष्टमप्रतीतेराह—ज्ञाप्यते इति । एतेन निपातानामनेकार्थत्वाच्चार्थे चेच्छब्दः, तादृशदाण आत्मनेपदं भवति, सा च चतुर्थ्यर्थबोध्या, अभिधानस्वाभाव्याच्चाशिष्टव्यवहारे एव प्रयोगनियम इति हरदत्तोक्तं प्रकाशानुदितमपास्तम् । एकदेशानुमतिद्वाराऽयमप्यंशो ज्ञाप्यत इति मान्योक्तिरपि प्राचामनुरोधेनेति बोध्यम् । तदाह—तेनेति । उक्तप्रकारेणेत्यर्थः । अशिष्टेति । अशिष्टानां सङ्कीर्णाचाराणां यो व्यवहारः क्रिया तद्बोधकप्रयोगे प्रत्यासत्त्या यत्सम्बन्धेन व्यवहारस्य सङ्कीर्णाचारत्वं तद्वाचकात्तदर्थे सेति वार्तिकार्थः । अपिरुक्तसमुच्चायकः । दानपूर्वको भोगो धात्वर्थः । दासीसंप्रदानकदानपूर्वको भोग इति बोधः । दास्यै दत्त्वा तामुपभुङ्क्ते इति यावत् ।

इति तृतीया ।

अन्वर्थसञ्ज्ञाबलेनाह–दानस्येति । तेन 'अजां नयति ग्रामम्' 'हस्तं निदधाति वृक्षे' इत्यादौ नातिप्रसङ्ग इति भावः। दानं चापुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादनम् । अत एव 'रजकस्य वस्त्रं ददाति' इत्यादौ न भवति; तत्र हि ददातिर्भाक्तः । एतच्च वृत्तिकृन्मतम् । भाष्यमते तु नान्वर्थतायामाग्रहः, 'खण्डिकोपाध्यायस्तस्मै चपेटां ददाति' इति प्रयोगात् । 'रजकस्य वस्त्रं ददाति'

## शब्दरत्नम् ।

अपुनर्ग्रहणायेति । इदं च स्वत्वनिवृत्तेर्वाच्यतास्वीकारफलप्रदर्शनं, न तु धात्वर्थनिविष्टमिति बोध्यम् । भाक्त इति । अधीनीकरणरूपेऽर्थे इत्यर्थः । "न शूद्राय मतिं दद्यात्" इत्यत्र मतिं तज्जनकं शास्त्रं नोपदिशेदित्यर्थः । आग्रह इति । अत एव 'क्रियाग्रहणं कर्त्तव्यम्' इति वार्तिकं भाष्ये प्रत्याख्यातम् । भाष्यान्तरमाह–खण्डिकेत्यादि ।

## भैरवी

ननु स्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापारो यदि दाण्धात्वर्थस्तदा कर्मणि स्वस्वत्वनिवृत्तिः प्रधानव्यापारेण सम्पन्नेति पुनर्ग्रहणाप्रसक्त्याऽपुनर्ग्रहणायेत्यस्य वैयर्थ्यमत आह—इदञ्चेति । अपुनर्ग्रहणायेत्यस्योपादानञ्चेत्यर्थः । वाच्यता—दाण्धातुवाच्यता । भाक्तत्वं गौणत्वं, तच्च किञ्चिन्निरूपितमेवेति निरूपकाकाङ्क्षाशान्त्यर्थमाह-अधीनीकरणरूप इति । ननु स्वस्वत्वध्वंसविशिष्टपरस्वत्वोत्पत्त्यनुकूलव्यापार एव चेद् दानन्तदा "न शूद्राय मतिन्दद्यात्" इत्यत्रानुपपत्तिः ? मतिशब्दार्थे व्यापारजन्यफलाश्रयत्वस्यासम्भवेन द्वितीयाया अनुपपत्तेरत आह—न शूद्रायेति । तज्जनकम्—मतिजनकम् । शास्त्रम्—वेदादिरूपम् । क्रियाग्रहणमिति । "कर्मणा यमभिप्रैति" इति सूत्रे कर्मणेति परित्यज्य क्रियेति वक्तव्यमित्यर्थः । प्रत्याख्यातमिति । "क्रियापि कृत्रिमं कर्म, कया क्रियया ? सन्दर्शनादिक्रियया"

## भावप्रकाशः ।

ननु स्वत्वनिवृत्तेर्धात्वर्थत्वेन तदप्रसक्त्याऽपुनर्ग्रहणायेत्यधिकम् , अत एव दानं च नाम कश्चिद्बुद्ध्यापुनर्ग्रहणाय स्वद्रव्यत्याग इत्येव प्रकाशे उक्तमत आह—इदं चेति । प्रतीकोक्तार्थरूपं चेत्यर्थः । वाच्यता—दाण्धातुवाच्यता । ननु भाक्तो नाम गौणः, तथैव तान्त्रिकव्यवहारात्स च कुत्रेत्याशङ्कायामाह–अधीनीकरणेति । एवमपि 'वृत्तिकृन्मतम्'इत्यन्तं मूलं तथा तदुक्तं चायुक्तमेव "न शूद्राय"इत्यादावनिर्वाहात् , तद्ध्वनयन्नाह—न शूद्रायेति । मुख्यमतेरुक्तरूपदानासम्भवादाह—तज्जनकमिति । वेदादिरूपमित्यर्थः । तथापि तदसम्भवादाह—नोपेति । उपदेशो बोधनम् । तत्र मुख्यं प्रमाणमाह—अत एवेति । अन्वर्थत्वानाग्रहादेवेत्यर्थः । क्रियेति । कर्मरहितक्रियेत्यर्थः । एवञ्च 'पत्ये शेते' इत्यादावकर्मकक्रियोद्देश्यस्य संप्रदानत्वार्थं वार्तिकमिति भावः । प्रत्याख्यातमिति । संदर्शनादिक्रियया

## सरला ।

प्रत्याख्यातमिति । सम्प्रदानसञ्ज्ञाया अन्वर्थत्वे तु प्रत्याख्यानपक्षे 'शिष्याय शास्त्रं कथयति' इति वाक्ये तदप्राप्त्या वार्तिकारम्भे च तत्प्राप्त्या फलभेदः स्पष्ट एवेति । अन्वर्थत्वाभावे तु तत्रापि शास्त्ररूपकर्मणा शिष्यस्याभिसम्बन्धुमिष्यमाणतयोभयोरपि तत्सिद्धिरिति ।

दानं स्वस्वत्वनिवृत्ति–परमात्रस्वत्वोत्पत्ति–एतदुभयानुकूलो व्यापारः । उपेक्षायामतिव्याप्तिवारणाय परेति दलम् । स्वासाधारणस्वत्वनिवृत्तिजनके स्वपरसाधारणस्वत्वजनके संसर्जनव्यापारेऽतिव्याप्तिवारणाय मात्रेति । दानमेव स्वत्वजनकं, प्रतिग्रहस्तु फलातिशयार्थो न स्वत्वजनकः । अत एव देशान्तरथब्राह्मणोद्देशेन द्रव्यदाने तन्मरणे तत्पुत्राणां तस्य द्रव्यस्य पितृदायत्वेन धर्मशास्त्रे ग्रहणमुक्तं सङ्गच्छते ; अस्वीकारश्च स्वत्वोत्पत्तिं प्रतिबध्नाति, तस्मिन् सति दानेऽपि तदनुत्पत्तेः प्रतिग्रहस्यैव स्वत्वोत्पत्तिज-

इति तु शेषत्वविवक्षायां बोद्धव्यम् । न चैवम् 'अजां नयति ग्रामम्' इत्यत्रापि प्रसङ्गः 'यमभिप्रैति' इत्युक्त्या हि यमिति निर्दिष्टस्य शेषित्वं, कर्मणश्च शेषत्वं लभ्यते । ग्रामस्य अजां प्रति शेषित्वं नास्ति । दानीय इति । बाहुलकात् सम्प्रदाने अनीयर् ।

"रुच्यर्थानां प्रीयमाणः" ॥ प्रीञ् तर्पणे, अस्मात् कर्मणि लट् । हरये

शब्दरत्नम् ।

चपेटां ददातीत्यत्र संयोगोऽर्थः । **शेषित्वम्**-उद्देश्यत्वम् । **शेषत्वम्**-अप्रधानत्वरूपम् । शेषित्वं **नास्तीति** । यद्यपि ग्रामसंस्कारार्थमजानयने तदपि ग्रामस्यास्ति, तथाऽप्यजाया इव परत्वात् "कर्तुः" इति कर्मसञ्ज्ञया बाधान्न दोष इति तत्त्वम् ।

**अस्मात् कर्मणीति** । क्र्यादेश्चुरादेर्वेत्यर्थः । 'प्रीङ् प्रीतौ' इति दैवादिकादित्यपि

भैरवी ।

इत्यादिना प्रत्याख्यातम् । 'पत्ये शेते' इत्यस्मात्पतिसम्प्रदानकम्पत्नीकर्तृकं शयनमिति शाब्दबोधः । यदि वृत्तिकारमतार्थं एव भाष्यकारस्याप्यभिप्रेतः स्यात्तदा सूत्रस्थकर्मशब्देन क्रियाया ग्रहणेऽपि मुख्यं यदनुगतं सम्प्रदानत्वन्तदत्र न सम्भवतीति 'पत्ये शेते' इति प्रयोगोपपत्त्यसम्भवेन क्रियायाः कृत्रिमकर्मत्वोपपादनमसङ्गतमेव स्यादिति भावः ।

भाष्यान्तरं व्याचष्टे—चपेटामिति । चपेटाशब्दार्थः प्रसृतकरतलम् । संयोग इति । कपोलप्रसृतकरतलसंयोगानुकूलव्यापार इत्यर्थः । शेषित्वम्प्रधानत्वन्तच्चोद्देश्यस्यैव सम्भवतीति फलितार्थमाह—उद्देश्यत्वमिति । अत एवाह—शेषत्वमप्रधानत्वमिति । एवञ्च कर्मणा करणभूतेन यं स्वस्वामिभावादिनाऽभिसम्बन्धुमिच्छति तत्सम्प्रदानमिति तदर्थादिति भावः । ग्रामसंस्कारश्च तदीयपुरीषसम्बन्धेनाधिकसस्यसम्पत्त्या ग्रामस्य विलक्षणा सुषमा । बाधादिति । सम्प्रदानसञ्ज्ञाया इति शेषः । न दोषः—नातिप्रसङ्गः । सम्प्रदानत्वशक्तिमान् क्रियाकारकभावसम्बन्धश्च चतुर्थ्यर्थः । आद्यस्य तद्धात्वर्थकर्मसम्बन्धित्वेनेच्छाविषयो ऽस्तस्मिन्विशेषणता । एवञ्च सम्प्रदानविप्रसम्बन्धि गोकर्मकन्दानमिति शाब्दबोधः ।

प्रीञ्धातोर्गणद्वये पाठादाह—क्र्यादेश्चुरादेर्वेति । परन्त्विदम्बोध्यम्, यदा चुरादेः क्रियते

भावप्रकाशः ।

शयनादिक्रियाया अपि कृत्रिमकर्मत्वात्तथाच पतिसंप्रदानकं दर्शनादिकर्मीभूतं पत्नीकर्तृकं शयनमिति बोध इति सूत्रेणैव तत्त्वसिद्धिः । अन्वर्थत्वे तु तदसंगतिः स्पष्टैवेति भावः । एवं सत्यधिकमग्रिममूलं योजयति—भाष्यान्तरमिति । तद्व्याचष्टे—चपेटामिति । प्रसृतकरतलमित्यर्थः । संयोग इति । संयोगविशेषानुकूलो व्यापार इत्यर्थः । अर्थ इति । दाण इति भावः । अस्यान्यथाप्युपपत्तेर्नास्य मुख्यं मानत्वमिति तात्पर्यम् । शेषित्वं-प्रधानत्वम् । तत्फलितमाह-उद्देश्यत्वमिति । अत एवाह-शेषत्वमप्रेति । कर्मणा करणभूतेन यं स्वस्वामिभावादिना सम्बन्धुमिच्छतीति तदर्थादिति भावः । अतिशयसस्यादिजनकत्वं संस्कारः । तदपि-शेषित्वमपि । बाधात्-संप्रदानसंज्ञाया इति शेषः; तदाह—न दोष इति । न तदापत्तिरित्यर्थः । तथाच मूलं तथा तदुक्तं च चिन्त्यं, तदाह-तत्त्वमिति । अत्रेदं बोध्यम् । संप्रदानत्वशक्तिमान् क्रियाकारकभावसम्बन्धश्च कारकचतुर्थ्यर्थः । सा च शक्तिस्तत्तद्धात्वर्थकर्मनिष्ठफ-

सरला ।

नकत्वमते तु स्वत्वोत्पत्तीच्छाबोधानुकूलव्यापारो दानं नतु तदुत्पत्तीच्छामात्रं, तदिच्छाबोधानुकूलकायिकव्यापारकाले एव ददातीति प्रयोगात् । स्वस्वत्वनिवृत्तिं विना परस्वत्वोत्पत्तेरयोगात्तस्या अपि धात्वर्थत्वम् । अन्यथा शब्देन परस्वत्वबोधे जातेऽपि द्व्यामुष्यायणादाविव तद्दत्तगवादावपि तत्स्वत्वबोधापत्तेरिति दिक् ।

रोचते इति। हरिं प्रीणयतीत्यर्थः। कर्मसञ्ज्ञायां प्राप्तायां वचनम्। प्रीयमाणः किम्? देवदत्ताय रोचते मोदकः पथि। अत्र पथो मा भूत्।

## शब्दरत्नम्।

कश्चित्। हरिं प्रीणयतीति। 'प्रीयमाण' इति निर्देशेन प्रीधात्वर्थकर्मणः सम्प्रदानत्वाभावज्ञापनादत्र न सम्प्रदानत्वमिति भावः। अत्र पथ इति। न च तदभावे सूत्रस्य

## भैरवी।

तदा आधृषीयत्वाण्णिजभावे इदम्। कश्चिदिति। अत्रारुचिबीजन्तु तस्याकर्मकत्वेन कर्मणि लडसम्भव इति। ननु हरिम्प्रीणयतीत्यनुपपन्नम्प्रीधातोरपि रुच्यर्थत्वेन सम्प्रदानसञ्ज्ञायाः प्राप्तेरत आह—प्रीयमाण इति निर्देशेनेति। अत्र कर्मणि प्रत्ययो दृश्यते। यदि रुच्यर्थकत्वमात्रेण तदर्थयोगे सम्प्रदानसञ्ज्ञा स्यात्तदा कर्मणि शानच् प्रत्ययो न स्यादित्याशयः। इदम्प्रीधातोरपि रुच्यर्थत्वाभिमानेन ज्ञापकप्रदर्शनम्। वस्तुतस्तु नात्र ज्ञापनोपयोगः। प्रीधातोः कर्मार्थकप्रत्ययप्रकृतिभूतस्य रुच्यर्थत्वाभावादेव प्रीयमाण इति निर्देशस्योपपत्तेः। तथाहि, 'हरये रोचते भक्तिः' इति प्रयोगघटको रुच्धातुरकर्मक इति फलतावच्छेदकसम्बन्धेन फलसामानाधिकरण्यस्य व्यापारे उपपत्तये विषयतासम्बन्धावच्छिन्नप्रीत्यनुकूलव्यापारो धातुवाच्य इति वक्तव्यम्। एवञ्च फलतावच्छेदकविषयतासम्बन्धेन प्रीतेर्भक्तिमात्रनिष्ठत्वेन व्यापारस्य फलसामानाधिकरण्यादकर्मकता। स च व्यापारः स्वमात्रसाध्यकव्यापारप्रयोज्यतारूप एव। 'हरिम्प्रीणयति' इत्यत्र तु समवायावच्छिन्नप्रीत्यनुकूलव्यापारोऽर्थ इति फलतावच्छेदकसमवायसम्बन्धेन प्रीत्याश्रयो हरिरिति फलवैयधिकरण्यस्य व्यापारे सत्त्वाद्धातोः सकर्मकत्वात्कर्मणि प्रत्ययस्य प्रीधातोः प्रकृतिभूतस्य रुच्यर्थत्वाभावस्य चोपपत्तिः, अत एवाह–इति भाव इति। एतदेव परममूले 'अन्यकर्तृकोऽभिलाषो रुचिः' इत्यनेनाभिहितम्।

## भावप्रकाशः।

लनिरूपकत्वेनेच्छाविषयो यस्तन्निष्ठा उक्तसूत्रात्स एवोद्देश्य इत्युच्यते स्ववृत्त्युद्देश्यतानिरूपकत्वं सम्बन्धः। विप्राभिन्नसंप्रदाननिष्ठोद्देश्यतानिरूपकं दानमिति बोध इति प्राञ्चः। संप्रदानविप्राय विप्रसंप्रदानकं वा दानमिति बोध इति तत्त्वमिति।

तस्योभयत्र पाठादाह—क्र्यादेरिति। कश्चिदिति। अत्रारुचिबीजन्तु तस्याकर्मकत्वेन कर्मणि लडसम्भवः, श्लिष्यमान इति साहचर्यात्तथैवोचितमिति। ननु प्रीधातोरपि रुच्यर्थत्वेन 'हरिं प्रीणयति' इत्यत्रापि तदापत्तिरत आह–प्रीयमेति। तत एव संप्रदानत्वेन कर्मणि लडसम्भवात्तनुपपत्तेरिति भावः। क्र्यादिचुराद्युभयसंग्रहायाह—प्रीधात्वर्थेति। अत्र–हरिमित्यत्र। अत्र मते ज्ञापनकल्पनागौरवमितीदं मूलं तथा रत्नाकरदण्ड्याद्युक्तं च चिन्त्यम्। तद् ध्वनयन्नाह—इति भाव इति। अयं भावः—

## सरला।

इति भाव इति। समवायसम्बन्धावच्छिन्नप्रीतिव्यधिकरणव्यापारवाचित्वं रुचधातोः प्रीधातोश्चेति तत्र फलतावच्छेदकसमवायसम्बन्धेन फलाश्रयत्वेऽपि हरिशब्दस्य रुचधातुयोगेऽनेन संप्रदानसंज्ञावत्प्रीधातुयोगे न सम्प्रदानत्वमित्यनेन निर्देशेन ज्ञाप्यते इति कर्मसंज्ञायां द्वितीयाप्रवृत्तिरिति।

अत्रेदं तत्त्वम्, विषयतासम्बन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिसमानाधिकरणव्यापारो रुचेरर्थ इति विषयतायाः फलतावच्छेदकसम्बन्धत्वात् तेन सम्बन्धेन प्रीत्याश्रये कर्तृसंज्ञया परत्वाद्बाधेन कर्मसंज्ञाया अभावान्न सकर्मकत्वमिति हर्यादेः प्रीतौ समवायेनान्वये षष्ठीप्राप्ताविदं सूत्रमिति प्रीधातोर्न रुच्यर्थतेति प्रीयमाणनिर्देशस्य प्रीधात्वर्थकर्मणः संप्रदानत्वाभावज्ञापकत्वं चिन्त्यम्। विषयतासम्बन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिव्यधिकरणव्यापारोऽभिलषेरर्थः। स्वीयविषयत्वासामानाधिकरण्यं, स्वीयसमवायित्वासामानाधिकरण्यं, स्वानुकूलत्वम्, एतत्त्रितयसम्बन्धेन प्रीतिविशिष्टव्यापारो गानादिरूपो भजेरर्थ इति

शब्दरत्नम् ।

शेषत्वविवक्षायां चारितार्थ्येन परत्वात्तया बाधासिद्धिरिति वाच्यम् , 'देवदत्तं रोचते' इत्यस्याप्यापत्तेः ।

भैरवी ।

'हरिम्प्रीणयति भक्तिः' इति शब्दाद्धरिनिष्ठा या प्रीतिस्तदनुकूलो भक्त्याश्रयको व्यापार इति बोधः। एवञ्चोक्तप्रीधात्वर्थफलस्य फलतावच्छेदकसमवायसम्बन्धेनाश्रयो हरिरिति तस्य प्रीयमाणपदबोध्यत्वमिति सम्प्रदानसञ्ज्ञा हरेर्भवति । एतत्सूत्राभावे 'हरये रोचते भक्तिः' इत्यादौ शेषे षष्ठी हरिशब्दात्प्राप्स्यतेति तत्सूत्रापवादत्वमस्य । ननु प्रीयमाणपदाभावे पथः सम्प्रदानसञ्ज्ञाप्राप्तिर्या मूलेऽभिहिता सा न सङ्गच्छते, अधिकरणसञ्ज्ञया अस्या बाधसम्भवादित्याशयकशङ्कान्निरस्यति—न चेत्यादिना । तदभावे—प्रीयमाणपदाभावे । शेषत्वविवक्षायाम्—यत्र क्रियाजनकत्वमात्रस्य विवक्षा शक्त्यन्तरस्य त्वविवक्षा तत्र । तयेति । अधिकरणसञ्ज्ञयेत्यर्थः । एवञ्च प्रत्युदाहरणासङ्गतिरिति भावः । इत्यस्याप्यापत्तेरिति । विनिगमनाविरहाद्यथाऽधिकरणत्वविवक्षायामधिकरणसञ्ज्ञया शेषत्वविवक्षायाञ्चरितार्थायाः सम्प्रदानसञ्ज्ञाया बाधः, तथा कर्मत्वविवक्षायाङ्कर्मसञ्ज्ञया बाधापत्तावस्याप्यापत्तेरिति भावः । एतेन कारकपदसम्बन्धेन क्रियाजनकस्यैतत्सञ्ज्ञाप्रवृत्त्या शेषत्वविवक्षायाञ्चारितार्थ्यप्रदर्शनमसङ्गतमिति परास्तम् । इत्यस्यापीत्यपिना 'देवदत्तं रोचते मोदकः पथि' इत्यस्य सङ्ग्रहः । एवञ्च कर्मसंज्ञापवादत्वमस्याः संज्ञायाः । अन्यथोक्तरीत्या कर्माधिकरणसंज्ञाभ्यामेतद्विषयस्य व्याप्तत्वाद् दोषः स्यादिति मूलाशयः ।

"श्लाघन्हुङ्" । अत्र ज्ञापनवचनाज्ज्ञपेः सन्नन्तात्कर्मणि शानच् । अत्र णिच्प्रकृतिणिजन्तौ द्वावपि धातू सकर्मकाविति कस्मिन् कर्मणि शानजित्याकाङ्क्षायां णिच्प्रकृत्यर्थकर्मणि

भावप्रकाशः ।

विषयतासम्बन्धावच्छिन्नप्रीत्यनुकूलस्तत्समानाधिकरणो व्यापारो रुचेरर्थः । तत्फलभूतप्रीतेः समवायेनाश्रयो हरिः संप्रदानत्वशक्तिमान् , उक्तसूत्रात् । प्रीतिव्यधिकरणः सोऽभिलषतेरर्थ इति तस्य तदर्थत्वाभावाद् 'हरिर्भक्तिमभिलष्यति' इत्यादौ न हरेस्तत्त्वं, समवायसम्बन्धावच्छिन्नप्रीत्यनुकूलव्यापारः प्रीधातोरर्थः । अत एव प्रीयमाणः, हरिं प्रीणयतीत्यादिसिद्धिः । एतदभावे हरौ शेषषष्ठीप्राप्त्या तदपवादत्वमस्य । प्रकाशोऽपीत्थं हरिनिष्ठा या भक्तिविषया प्रीतिस्तदनुकूलो भक्तिनिष्ठो व्यापार इति बोध इति । एतेनात्र पक्षे "क्रियया यम्" इत्येव सिद्धमिति सूत्रवैयर्थ्यापत्तिरिति रत्नाकरोक्तमपास्तम्, तस्या अपि कारकविभक्तित्वेन तदविवक्षायां शेषत्वेऽनेन विधानादिति दिक् । तदभावे—प्रीयमाणपदाभावे । शेषत्वेति । क्रियाजनकत्वमात्रविवक्षायां संज्ञान्तराप्राप्तिविषये इत्यर्थः । तया—अधिकरणसंज्ञया बाधे (?) एतत्प्रयोगस्याप्यापत्तेरित्यर्थः । अपिरुक्तप्रयोगसमुच्चायकः । यद्वा अपिः पथीत्यस्य समुच्चायकः, कर्मसंज्ञाया अपि प्रवृत्त्या सूत्रस्य निर्विषयतापत्तेरित्यर्थः । तत्सत्त्वे त्वस्य कर्मसंज्ञापवादत्वान्न दोष इति मूलतात्पर्यम् । सिद्धान्तरीत्या तु प्राप्तिरेव नेति बोध्यम् ।

सरला

बोध्यम् । इत्यस्याप्यापत्तेरिति । वस्तुतस्तु कर्मत्वादिरूपव्याप्यशक्त्यविवक्षायामपि क्रियाजनकत्वरूपकारकत्वविवक्षा "आख्यातोपयोगे" इति सूत्रस्थोपयोगग्रहणात् 'नटस्य शृणोति' इत्यादावेव भवति न सर्वत्र । अत एव तदर्थकशेषषष्ठ्या न तत्त्वम् । एवंच व्याप्यशक्तिविवक्षाऽऽवश्यकी । ततश्च तत्तत्संज्ञायाः प्राप्तौ इदं बाध्यसामान्यचिन्तया सर्वस्यापवादः स्यादिति पथश्चतुर्थ्यापत्तिरेव दोष इति चिन्त्यमिदम् । अत एव 'वारणार्थानामिति सूत्रमस्यापवादः स्यात्' इति ग्रन्थः संगच्छते । अन्यथा क्रियाजनकत्वमात्रविवक्षायां "वारणार्थानाम्" इत्यस्य चारितार्थ्येन तदसङ्गतिः स्पष्टैव । किञ्चैवं प्रीयमाणग्रहणे सत्यपि क्रियाजनकत्वमात्रविवक्षायामस्य चारितार्थ्येन कर्मत्वेन विवक्षायां 'हरिं रोचते भक्तिः' इत्यापत्तिर्दुर्वारैवेति ।

"श्लाघह्नुङ्" ॥ श्लाघा स्तुतिः । कृष्णाय श्लाघते । कृष्णं स्तौतीत्यर्थः ।

---

शब्दरत्नम् ।

कृष्णं स्तौतीति । स्तुत्या परस्मै कृष्णं कथयतीत्यर्थः । ज्ञीप्स्यमानपदेन प्रथमोप-
स्थितत्वाण्णिच्प्रकृत्यर्थकर्मैव ग्राह्यम् । तस्यापि ज्ञापनविषयेच्छाविषयत्वाच्छानजुपपत्ति-

भैरवी ।

सन्नन्तार्थकर्मणि वा प्रत्यय इति मतभेदः । श्लाघृधात्वर्थो विशिष्टगुणवत्त्वप्रतिपत्त्यनुकूल-
शब्दप्रयोग एव । एवञ्च यदा स्तुतिमात्रस्य धातुवाच्यत्वविवक्षा तदा फलतावच्छेदकसम-
वायसम्बन्धेन तादृशप्रतिपत्तिरूपफलाश्रयत्वात् कृष्णस्य कर्मत्वमिति—'कृष्णं श्लाघते' इति
भवत्येव । यदा तु तादृशस्तुतिपूर्विका बोधना धात्वर्थस्तदा 'कृष्णाय श्लाघते' इति प्रयो-
गस्य सिद्धये सूत्रमित्याशयेनाह—स्तुत्येति । अत्रापि स्तुतिः कृष्णस्यैव । स्मरादिति पञ्चमी
हेतौ । परस्मै—स्वसखीजनाय । स्तुतिपूर्विका बोधना स्तुतिपूर्वकबोधानुकूलव्यापारानुकू-
लव्यापारः । प्रथमोपस्थितत्वाण्णिच्प्रकृत्यर्थकर्मण्येव शानजिति प्रथममतेन यद्विषयकज्ञाना-
नुकूलव्यापारानुकूलव्यापारस्तस्य ज्ञीप्स्यमानत्वमिति, प्रकृते कृष्णविषयकसखीजनसमवेतज्ञा-
नानुकूलव्यापारानुकूलव्यापारस्य धात्वर्थत्वेन कृष्णस्य सम्प्रदानसंज्ञा भवति । ननु यस्मा-
द्धातोः कर्मणि प्रत्ययो भवति तद्धात्वर्थनिरूपितकर्मत्वन्तत्र चेत्तदा तत्र तेन प्रत्ययेन भवि-
तव्यम् , प्रकृते तु भवता णिच्प्रकृत्यर्थकर्मणि प्रत्ययः कृतः, सच सन्नन्तादित्येवं कथमित्यत
आह—तस्यापीति । णिच्प्रकृत्यर्थकर्मणोऽपीत्यर्थः ।

ज्ञापनविषयेच्छेति । विषयतासम्बन्धेन तादृशपदार्थविशिष्टं यज्ज्ञानन्तदनुकूलव्यापारानु-
कूलव्यापारविषयकेच्छाविषयत्वादित्यर्थः । विशिष्टस्येच्छाविषयत्वे विशेषणस्यापि तत्त्व-
मस्त्येव । प्रयोज्यसखीजननिष्ठज्ञानानुकूलव्यापारो मदिष्टसाधनमिति ज्ञानात्सखीजननिष्ठ-
ज्ञानानुकूलव्यापारानुकूलव्यापारो जायतामित्याकारेच्छा गोप्या अस्तीति, तादृशेच्छाविष-
यव्यापारप्रयोज्यव्यापारजन्यज्ञानविषयत्वस्य कृष्णे सत्त्वाज्ज्ञीप्स्यमानपदेन तस्य बोधनं
सम्भवतीति भावः । कृष्णस्य कर्मत्वप्राप्तावनेन सम्प्रदानसंज्ञा भवति । श्लाघृधातुयोगे विव-
रणवाक्ये परस्मै कथयतीत्यत्र कथधातोरपि स एवार्थः, इति कर्मसञ्ज्ञा "गतिबुद्धि" इत्य-
नेन । परशब्दार्थस्य सखीजनस्य तु न भवति, तत्र ज्ञानसामान्यस्य बुद्धिपदेन ग्रहणात् ।
अत्र कथधात्वर्थत्वेन चाक्षुषज्ञानस्य विवक्षितत्वात् । किन्तु कर्मणा कृष्णेन सखीजनमभि-
सम्बन्धुमिच्छतीति सम्प्रदानसञ्ज्ञा तस्य भवति कृष्णेनाभिसम्बन्धस्तु कृष्णविषयकचाक्षु-
षज्ञानाश्रयत्वमेव । अत एव परशब्दाच्चतुर्थी कृता ।

भावप्रकाशः ।

स्तुत्यादिमात्रार्थत्वे 'कृष्णं श्लाघते' इत्यादिप्रयोगाणामिष्टत्वादाह—स्तुत्येति । तत्पूर्विका बोधना
धात्वर्थः, स्तुतिश्च कृष्णस्यैव । सा च गुणवत्त्वप्रतिपादकशब्दप्रयोगादिः स्मरादिति हेतौ पञ्चमी । **परस्मै**—
सखीजनाय । कृष्णं कथयतीति । आत्मानुरागं कृष्णं बोधयतीत्यर्थः । अत्र संज्ञापनवचनात् ज्ञपेः सन्नन्ता-
त्कर्मणि शानच् , तेन च यद्विषयकज्ञानानुकूलव्यापारानुकूलव्यापारः स गृह्यते इति केचित् । तदाशय-
माह—ज्ञीप्स्येति । प्रथमोपस्थितत्वात्—अन्तरङ्गत्वात् । तथाच गोपीकर्तृकसखीजनोद्देश्यककृष्णस्तु-
तिपूर्वकस्वात्मानुरागकृष्णकर्मकं बोधनमिति बोधः । अत्र पक्षे कर्मत्वं चतुर्थ्यर्थः । एतेन ण्यर्थकर्मनि-
वृत्तिः । ननु ज्ञीप्स्यमानपदेन तस्यैव ग्रहणमुचितमत आह—तस्यापीति । णिच्प्रकृत्यर्थकर्मणोऽ

सरला ।

कथयतीत्यर्थ इति । तत्र गुणवत्त्वबोधकः शब्दः स्तुतिः, अदर्शनयोग्यदेशस्थापनं ह्नुतिः, स्थितिः
प्रसिद्धा, उपालम्भदानं शापः । अत्र तत्तत्पूर्वकबोधने श्लाघादीनां धातूनां वृत्तिरिति तात्पर्यम् । ण्यर्थ-

अन्ये त्वाहुः–कृष्णायात्मानं परं वा श्लाघ्यं कथयतीत्यर्थ इति । तत्राद्ये पक्षे कर्मत्वे प्राप्ते द्वितीये तु कारकशेषत्वात् षष्ठ्यां प्राप्तायां वचनम् । ह्नुते इति ।

## शब्दरत्नम् ।

रिति भावः । ह्नुङादेरपि ह्नुत्यादिना बोधनमर्थ इति बोध्यम् । अन्ये त्विति । प्राधान्यात् ज्ञीप्स्यमानपदेन ण्यर्थकर्मण एव ग्रहणमिति तदाशयः तदेवाह–कृष्णायेति । कारकशेषत्वादिति । "कर्मणा यमभिप्रैति" इति सम्प्रदानत्वाविवक्षया शेषत्वा-

## भैरवी ।

ननु यदि णिच्प्रकृत्यर्थकर्मत्वमेव ज्ञीप्स्यमानपदस्य तत्र प्रवृत्तये विवक्षितञ्चेत्तदा जिज्ञास्यमान इत्येवोच्यताम्, तावतापि सनर्थेच्छाविषयज्ञानविषयत्वस्य कृष्णे सत्त्वाज्जिज्ञास्यमानत्वस्य सत्त्वादिष्टसिद्धिर्भविष्यतीत्यत आह—मूले—अन्येत्विति । एतत्पक्षे कृष्णस्य ज्ञानकर्मत्वं न विवक्षितं, किन्तु ज्ञानाश्रयत्वमिति णिजन्तार्थकर्मणि ज्ञीप्स्यमान इत्यत्र शानच् । तदेवाह—प्राधान्यादिति । णिजर्थस्य प्रकृत्यर्थम्प्रति प्राधान्यादित्यर्थः । ज्ञानकर्माकाङ्क्षानिवृत्तये आह—आत्मानम्परं वेति मूले । नन्वस्मिन्पक्षे कृष्णस्य प्रकृत्यर्थकर्मणा आत्मना परेण वाऽभिसम्बन्धेच्छासत्त्वात्सम्प्रदानसञ्ज्ञा प्राप्नोत्येवेति प्रकृतसूत्रस्य नोपयोग इत्यत आह—कारकशेषत्वादिति ।

नन्वेतन्नोपपद्यते सम्प्रदानत्वप्राप्तेर्जागरूकत्वादत आह—कर्मणेति । अत्र पक्षे श्लाघादेर्धातोः श्लाघ्यत्वगुणविशिष्टविषयकबोधने वृत्तिर्बोध्या, तच्च श्लाघ्यत्वं स्वनिष्ठमन्यनिष्ठं वेत्यन्यदेतत् । एवञ्च यदि गोपीकर्तृकस्वात्मपरान्यतरनिष्ठश्लाघ्यत्वगुणविशिष्टविषयकबोधनेन कृष्णो व्याप्रियते तदा सम्प्रदानत्वस्य "कर्मणा" इति सूत्रेणास्त्येव प्राप्तिः । यदि तस्याविवक्षा, किन्तु सम्बन्धसामान्यस्य विवक्षा, तदा षष्ठ्यामप्राप्तायां सम्प्रदानत्वं विधीयते । अत्रेदं बोध्यम् । द्वितीयमते ज्ञाप्यमान इत्येव सिद्धे सनूप्रत्ययोपादानमनर्थकमिति णिच्सनोरुभयोरुपादानात्पाणिनेर्णिच्प्रकृत्यर्थकर्मणो णिजन्तार्थकर्मणो वा ग्रहणम्पक्षभेदेनेष्टमिति मतद्वयमपि सप्रमाणमेवेति । ननु ह्नुङ्धात्वर्थोऽत्र ह्नुतिपूर्वकबोधानुकूलव्यापारानुकूलव्यापार इति ह्नुवानेत्यस्य कथं लाभ इत्यत आह—तत्र ह्नुवानेत्यन्तमिति । अत्र ह्नुतिकर्त्रीका-

## भावप्रकाशः ।

पीत्यर्थः । विशिष्टस्येच्छाविषयत्वे विशेषणस्यापि तत्त्वादिति भावः । अपिः श्लाघृसमुच्चायकः । नन्वत्र मते णिज् निष्फलः, जिज्ञास्यमान इत्येव सुवचत्वादत आह—अन्येत्वितीति । तदुपपादयति–प्राधान्यादिति । ण्यर्थस्य प्राधान्यादित्यर्थः । एवेन तत्प्रकृत्यर्थकर्मनिवृत्तिः । तदाशयः–अन्येत्वितिमताशयः । अत्र पक्षेऽपि स एव धात्वर्थः । तथाच गोपीकर्तृकं स्मरहेतुकं कृष्णसंप्रदानकमात्मपरान्यतरस्तुतिविषयकं बोधनमिति वाच्योऽर्थः । आत्मनः परस्य वेति प्रकरणादिगम्यं, तदभिप्रेत्याह–तदेवाह कृष्णायेतीति । तथाच मूलोक्तः फलितार्थ इति भावः । नन्वत्र पक्षे "कर्मणा यम्" इति सम्प्रदानत्वं सिद्धमत आह—कारकशेषत्वादितीति । तद्व्याचष्टे—कर्मणेति । अन्यथाऽत्रापि कर्मत्वे प्राप्ते इत्येव वाच्ये तथोक्तिरसङ्गतेति भावः । एतेन कर्मत्वाविवक्षया तच्छेषत्वादिति मूलव्याख्यानमपास्तम् । शेषत्वादिति । कारकेत्यादिः । वस्तुतस्त्वत्र पक्षे णिच्साफल्येऽपि सनो वैयर्थ्यम्, ज्ञाप्यमान इत्येव सिद्धेः । तस्मात्प्राधान्यात्सन्नन्तस्य णिचश्चोभयोरपि ग्रहणमिष्टम् । द्वितीयपक्षोक्तएवार्थः । आत्मपरान्यतरकर्मकस्तुत्या कृष्णं स्वं सखीजनं वा बोधयतीति यावत् । कर्मसंज्ञापवादत्वादुभयत्रापि कर्मत्वप्राप्त्येदमेवाग्रेऽपीति बोध्यम् । विस्तरस्तूद्द्योतादौ बोध्यः । अत एवारुचिसूचकमन्येत्वित्युक्तं मूले । मूलोक्तार्थस्य

## सरला ।

कर्मण इति । प्राधान्यात् ण्यर्थकर्मणो ग्रहणे 'कृष्णं स्वानुरागं कथयति' इत्यर्थः । सनूबलात्प्रकृत्यर्थकर्मणो ग्रहणे तु 'कृष्णं स्वसखीजनं कथयति' इत्यर्थ इति विवेकः ।

सपत्नीभ्यः कृष्णं ह्नुवाना तमेवार्थं कृष्णं बोधयतीत्यर्थः । यस्य कस्य चित् ह्नुते इति वा । तिष्ठते इति । स्थित्या स्वाभिप्रायं बोधयतीत्यर्थः । "प्रकाशनस्थेयाख्ययोः" इति तङ् ।

"धारेरुत्तमर्णः" ॥ षष्ठ्यां प्राप्तायां वचनम् ।

"स्पृहेरीप्सितः" ॥ परत्वादिति । तेन 'परस्परेण स्पृहणीयशोभम्' 'स्पृह-

---

शब्दरत्नम् ।

दित्यर्थः । सपत्नीभ्य इति । तत्र ह्नुवानेत्यन्तमार्थिकार्थकथनम् । स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः । एवं शपते इत्यपि व्याख्येयम् ।

भैरवी ।

ङ्काशान्तये ह्नुवानेत्युक्तं, ननु कर्तुरपि धात्वर्थकुक्षौ निवेश इति भावः । मूले—तमेवार्थमिति । ह्नुतिरूपमेवार्थमित्यर्थः । कृष्णमित्यस्यान्यस्मै जनायेत्यादिः । एवञ्च प्रथमपक्षाभिप्रायेणेदं व्याख्यानम् । द्वितीयमतेनाह—यस्यकस्येति । मूलकाराभिप्रेतार्थस्य स्पष्टप्रतिपत्तये आह—स्वाभिप्रायमिति । एवञ्चात्रोभयविषयकबोधनेच्छा सनर्थः । तत्र प्रथमपक्षे स्वकर्तृकह्नुतिकृष्णोभयकर्मकत्वं ज्ञाने, द्वितीयपक्षे तु यत्किञ्चित्कर्तृका ह्नुतिरात्मा चेत्युभयं ज्ञानकर्मत्वेन विवक्षितमिति भावः । तिष्ठत इत्यत्र स्थाधातुः स्थितिपूर्वकबोधानुकूलव्यापारानुकूलव्यापारार्थकः । आद्यमते बोधे स्वकर्तृका स्थितिः, कृष्णश्च कर्म । द्वितीयमते तु स्वकर्तृका स्थितिरात्मा च बोधे कर्म । प्रथममते बोधे सखीजननिष्ठत्वस्य विवक्षा । द्वितीयमते तु बोधे तादृशे कृष्णनिष्ठत्वस्य विवक्षेति बोध्यम् । शपते इत्यत्र शप्धात्वर्थस्तु स्वनिष्ठानुरागाज्ञानसूचकशब्दोच्चारणपूर्वकबोधानुकूलव्यापारानुकूलव्यापार एव । तत्राद्यमते बोधे तादृशाक्रोशस्य कृष्णस्य च कर्मत्वविवक्षा, सखीजननिष्ठत्वस्य च विवक्षा । द्वितीयमते तु बोधे कृष्णनिष्ठत्वस्य तादृशाक्रोशकर्मकत्वस्य स्वात्मकर्मकत्वस्य च विवक्षा बोध्येत्याशयेनाह—एवमिति ।

"धारेरुत्तमर्णः" । धृङ् अवस्थानार्थकस्तस्माण्णिचि अवस्थानानुकूलो व्यापारः प्रतीयते । स एव धारयतेरर्थः, उत्तमर्णश्चावस्थित्याश्रयसम्बन्धी । 'देवदत्ताय शतन्धारयति चैत्रः' इत्यत्र देवदत्त उत्तमर्णः, यतो द्रव्यञ्चैत्रेण गृहीतमपि देवदत्तसम्बन्धित्वेनैवावतिष्ठते । चैत्रकर्तृको देवदत्तसम्प्रदानकः शतकर्मकावस्थित्यनुकूलो व्यापार इति शाब्दबोधः । अवस्थितिश्चान्यस्वामिकत्वानुत्पत्तिः । षष्ठी प्रकृतसूत्राभावे उत्तमर्णस्य नामार्थान्वयित्वेन प्राप्तेति तदपवादोऽयम् । ननु ऋणन्नाम सजातीयद्रव्यान्तरदानमङ्गीकृत्य परदत्तद्रव्यादानं, तज्जन्योऽधमर्णनिष्ठः परिशोधननाश्योऽदृष्टविशेषो वा, उभयथापि 'भक्ताय धारयति मोक्षं हरिः' इत्यत्रानुपपत्तिः, मोक्षस्योक्तऋणत्वाभावादिति चेत् ? न, उत्तमर्णायाधमर्णेन तदवश्यमेव देयमिति तत्र ऋणत्वव्यवहारात् । यद् यस्यावश्यकं देयं, तत्र ऋणत्वव्यवहारस्य पितृऋणापाकरणे पुत्रोऽधिकारीत्यत्र प्रसिद्धिरस्त्येव ।

"स्पृहेरीप्सितः" । अत्र स्पृहधातुरिच्छायास्तदनुकूलव्यापारस्य च वाचकः । ईप्सितत्वञ्च धात्वर्थव्यापारजन्यफलाश्रयत्वम् । तच्च फलम्प्रकृतधातुवाच्यमेव ग्राह्यमिति न नियम इति । यदा स्पृहधात्वर्थेच्छाजन्यस्वीकारस्य विवक्षा तदा "कर्तुरीप्सिततमम्" इति कर्मत्वाप्राप्त्या

भावप्रकाशः ।

शब्दादलाभादाह--तत्रेति । तदर्थबोधकवाक्ये इत्यर्थः । अग्रिमस्य शाब्दत्वं सूचयितुं तमेवार्थमित्यस्यार्थवद्वितमाह--स्वाभीति । ह्नुते इत्यादिः । मूले व्याख्यातत्वादाह--एवं शपत इति । शपथेन कृष्णं स्वानुरागं बोधयतीत्यर्थ इति भावः । अत्र प्रकाशादिग्रन्था अयुक्ता एवेति बोध्यम् ।

णीयगुणैर्महात्मभिः' इत्यादि सिद्धम्। यदा तु शेषत्वविवक्षा तदा षष्ठी। तेन—
'कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च'।

इति सिद्धम्। एतच्च सर्व हरदत्तादिरीत्योक्तम्। वाक्यपदीयहेलाराजग्रन्थयोस्तु "स्पृहयतियोगे कर्मसञ्ज्ञायाः शेषषष्ठ्याश्च बाधिकेयं सम्प्रदानसञ्ज्ञा" इति स्थितम्। तन्मते स्पृहणीयमित्यत्र दानीय इतिवत् सम्प्रदाने कृत्यः। कुमार्य इवेत्यत्र तु विभक्तिविपरिणामेन कान्ताय स्पृहयन्तीति व्याख्येयम्।

"क्रुधद्रुह" ॥ क्रुध कोपे, द्रुह द्रोहे, ईर्ष्य ईर्ष्यायाम्। असूयेति कण्ड्वा-

---

**शब्दरत्नम्।**

**सिद्धमिति।** स्पृहणीये कर्मण्यनीयरिति भावः। **यदा त्विति।** कर्मणः शेषत्वेन विवक्षेत्यर्थः। **इति स्थितमिति।** शेषत्वविवक्षायां चारितार्थ्येन कर्मसञ्ज्ञाबाधकत्वायोगोऽत्रारुचिः। **सम्प्रदाने इति।** बाहुलकादिति भावः। **व्याख्येयमिति।** षष्ठ्यपवादत्वाच्छेषत्वविवक्षा कर्त्तुमशक्येत्यभिमानः।

**भैरवी।**

शेषे षष्ठी स्यादित्यस्य सूत्रस्यारम्भः। पुष्पेभ्यः स्पृहयतीति वाक्यात्पुष्पसम्प्रदानिका इच्छेति बोधः। यदा तु विषयत्वावच्छिन्नेच्छानुकूलव्यापारस्य स्पृहधातुवाच्यत्वविवक्षा तदा फलतावच्छेदकविषयतासम्बन्धेन प्रकृतधात्वर्थप्रधानव्यापारजन्यफलाश्रयत्वस्य पुष्पेषु सत्त्वात्पुष्पाणाङ्कर्मसञ्ज्ञा भवति—पुष्पाणि स्पृहयतीति। एतदेवाह—मूले—तेनेति। किं सिद्धमित्याकाङ्क्षायामाह—स्पृहणीये इति। इति स्थितमितीति। हेलाराजीयग्रन्थ इति शेषः। तत्र हि उभयबाधकत्वोक्त्याऽस्य सूत्रस्य निरवकाशत्वमभिप्रेतम्, तच्च न युक्तम्, यदा इच्छाया एव धातुवाच्यत्वविवक्षा धात्ववाच्यस्यैव फलस्य च विवक्षा तदा कर्मसञ्ज्ञाया अप्राप्त्या शेषषष्ठीबाधकत्वेनास्य चारितार्थ्यादित्याह—शेषत्वविवक्षायामित्यादिना। अभिमान इति। यथा मातृशब्दार्थस्य कर्मत्वेऽपि तस्य सम्बन्धित्वेन विवक्षायां 'मातुः स्मरति' इत्यत्र षष्ठी भवति तथाऽस्य सूत्रस्य शेषषष्ठ्यपवादत्वेऽपि सम्प्रदानत्वाविवक्षायां शेषत्वविवक्षया तादृशप्रयोगस्य निर्वाहे सति विभक्तिविपरिणामकल्पनमन्याय्यमित्येतद्बीजम्।

"क्रुधद्रुहेर्ष्या"। क्रोधादीनामेतत्सूत्रघटकधात्वर्थानां सर्वेषाङ् कोपप्रभवानामेव ग्रहणस्या-

**भावप्रकाशः।**

ननु तत्र परत्वात्कर्मत्वे कथमेतत्सिद्धिरत आह—स्पृहणीये इति। स्पृहणीयशब्दे इत्यर्थः। शेषषष्ठ्यपवादत्वात्संप्रदानत्वस्य शेषत्वविवक्षा दुष्करेति मूलमते आह—कर्मण इति। शेषत्वविवक्षायामिति। विषयतया क्रियाजनकत्वमात्रविवक्षायामित्यर्थः। अत्र—एतन्मते। अत्रेदं तत्त्वम्। स्पृहिरिच्छामात्रवाची फलाश्रयावच्छिन्नेच्छावाची च। आद्येऽनेन संप्रदानत्वम्। अत्र ईप्सितत्वं धात्वर्थव्यापारजन्यफलाश्रयत्वं न तु फलस्य धात्वर्थत्वाग्रहः। अन्त्ये कर्मत्वम्, तच्च धात्वर्थफलाश्रयस्येत्युक्तम्। शेषषष्ठ्यपवादा एतत्संप्रदानविभक्तिः। पुष्पसंप्रदानिकेच्छेति तत्र बोधः। कर्मण इव संप्रदानस्यापि तत्त्वेनाविवक्षायां षष्ठ्येवेति। तत्र विधायकाभावादाह—बाहुलकादिति। षष्ठ्यपवादत्वादिति। एतत्संप्रदानविभक्तेरिति शेषः। अभिमान इति। सूचितारुचिस्तु तत्रापि क्रियासम्बन्धित्वमात्रविवक्षासम्भव इति। एतेन पूर्वमते क्रियया यमित्यनेनैव सिद्धे सूत्रं व्यर्थम्, एवञ्चोत्तरमतमेव युक्तमत एव हरदत्तादीत्यरुचिबोधकं मूले उक्तमिति रत्नाकरदण्ड्याद्युक्तमपास्तम्, तस्यासार्वत्रिकत्वात्। अत एव घटं करोतीत्यादौ न दोषः। इदमपि सूत्रं तत्र ज्ञापकं, तस्य प्रत्याख्यानाच्च, विषयतया क्रियाजनकत्वमात्रविवक्षायामेतत्प्रवृत्तेश्च, धात्वर्थेच्छाविषयत्वाभावाच्चेति दिक्।

दियगन्तः। एषामर्थ इवार्थो येषां धातूनामित्यर्थः। तत्र क्रोधोऽमर्षः, द्रोहोऽपकारः, ईर्ष्या असहनम्, असूया तु गुणेषु दोषारोपः। क्रुधद्रुहोरकर्मकत्वात्तद्योगे षष्ठी प्राप्ता, अन्ययोः सकर्मकत्वाद् द्वितीया प्राप्ता।

### शब्दरत्नम्।

**अमर्ष इति।** वाक्चक्षुरादिविकारानुमेयः प्ररूढकोप इत्यर्थः। **अपकार इति।** अपकारविषयेच्छेत्यर्थः। **असहनम्**—उत्कर्षविरोधिधर्मारोपानुकूलो व्यापारः। **गुणेषु**—गुणविषये। **दोषारोपः**—दोषत्वारोपानुकूलो व्यापारः। **अकर्मकत्वादिति।** क्रोधजन्यस्य फलस्य देवदत्तादौ सत्त्वेऽपि तस्य धात्ववाच्यत्वादिति भावः। **द्वितीयेति।** तत्प्रयोजिका कर्मसञ्ज्ञेत्यर्थः।

### भैरवी।

भिप्रेतत्वेऽपि सामग्रीवैजात्याद्वैजात्यमतस्तेषां स्वरूपमाह मूले—क्रोधोऽमर्ष इत्यादिना। प्ररूढकोपः—आधिक्यम्प्राप्तः कोप इत्यर्थः। अपकारः—दुःखजनिका क्रिया। गुणविषये—गुणात्मकविशेष्ये। दोषत्वारोपः—दम्भादिकृतत्वारोपः। फलस्य—दुःखस्य। तस्य—फलस्य। धातुवाच्यत्वे तु सकर्मकत्वं स्यादिति भावः। मूले—सकर्मकत्वादिति। उत्कर्षविरोधिधर्मारोपस्य विशेष्यतासम्बन्धेन व्यापारवैयधिकरण्यादाद्यः सकर्मकः, द्वितीयस्तु स्वीयविशेष्यताश्रयगुणवत्त्वसम्बन्धेन तादृशारोपात्मकफलव्यधिकरणव्यापारवाचकत्वात्सकर्मक इति भावः। द्वितीया प्राप्तेति मूले उक्तन्तच्चायुक्तन्द्वितीयारूपस्य फलस्य सञ्ज्ञया विरोधाभावादिति तत्पदन्तत्प्रयोजकसञ्ज्ञोपलक्षणमित्याशयेनाह—तत्प्रयोजिकेति। सर्वेषाङ्कोपप्रभवाणामेवैतत्सञ्ज्ञानिमित्तत्वमतश्चेतनस्य यत्र कर्तृत्वन्तत्रैतस्य सूत्रस्य प्रवृत्तौ न काचित्क्षतिः। यत्र त्वचेतने कर्तृत्वविवक्षा 'मित्राय द्रुह्यति प्रतापोऽपि' इत्यादौ यथा, तत्र चेतनत्वारोपेण प्रयोगः।

'यम्प्रतिकोप' इत्येतद्विशेषणस्य यत्प्रयोजनम्परममूलेऽभिहितं भार्यामीर्ष्यतीत्यादि, तत्रान्यकर्तृकदर्शनासहनजन्यतद्दर्शनविरोधिभार्याकर्तृकाऽऽवृतदेशस्थित्यादिप्रयोजकज्ञानानुकू-

### भावप्रकाशः।

अमर्षस्य साधारण्यादाह—वागिति। प्ररूढेति। अत्यन्तेत्यर्थः। अपकारस्यापि तथात्वादाह—अपेति। असहनस्यापि तथात्वादाह—उत्कर्षेति। गुणेष्विति विषयसप्तमीत्याह—गुणविषये इति। शौचाचारादिगुणविषये इत्यर्थः। दोषत्वारोपानुकूल इति। दम्भादिकृतत्वरूपदोषत्वारोपानुकूल इत्यर्थः। क्रोधजन्यस्येति। तादृशकोपरूपक्रोधजन्यस्येत्यर्थः। इदं तादृशद्रोहजन्यस्याप्युपलक्षणम्। फलस्य—वधदुःखादेः। तस्य—उक्तफलस्य। संज्ञां विना तदप्राप्तेराह—तत्प्रयोजीति। अत्रेदं बोद्धयम्। हरिसंप्रदानकः क्रोधो द्रोह इति बोधः। हरिसंप्रदानकोत्कर्षविरोधीत्यादिक्रमेण तत्र बोधः। हरेः क्रोधद्रोहाभ्यामिच्छाविषयत्वाभावात् "क्रियया यम्" इत्यनेन न सिद्धिः। एतेन तेनैव सिद्धे क्रुधद्रुहोर्ग्रहणं चिन्त्यम्, भाष्यमते सूत्रमेवेति रत्नाकरदण्ड्याद्युक्तमपास्तम्। "नह्यकुपितः क्रुध्यति" इति भाष्येण प्ररूढतादृशकोपस्यैव क्रोधत्वबोधनेन कुपेरतदर्थत्वेन न तद्योगे इदम्। कुप्यति कस्मै चिदित्यादसाध्वेव। एतेन तदङ्गीकुर्वन्दण्डी परास्तः। एते चेतनविषया एव द्विषिस्त्वचेतनविषयोऽपि 'औषधं द्वेष्टि' इति प्रयोगात् अनभिनन्दनं हि तदर्थः। अत एव चित्तदोषार्थानामित्येव नोक्तम्। तेन 'योऽस्मान् द्वेष्टि' इत्यादौ सा नेति।

### सरला।

**प्ररूढकोप इति।** अस्य वधताडनाद्यनुकूलव्यापारजनकश्चित्तवृत्तिविशेष इत्यादिः। कोपस्तु यावद्वाचः स्फुरणं, चक्षुषो रक्तत्वं, दन्तानां घर्षणमित्यादयो विकारा नाभिव्यज्यन्ते किन्तु सूक्ष्मरूपेणावस्थिताः तावत् चित्तवृत्तिविशेषः। अतस्तयोर्भेदः। अत कुपियोगे नेदं प्रवर्तते इति 'कुप्यति कस्मैचित्' इत्यसाध्वेवेति। **अपकारविषयेच्छेति।** दुःखजनकक्रियाजनकश्चित्तवृत्तिविशेष इत्यर्थः। **व्यापार इति।** तज्जनकश्चित्तवृत्तिविशेष इत्यर्थः।

"राधीक्ष्योः" ॥ कारकमिति । कर्मकारकमिति तु प्राचः प्रमादः, एकसञ्ज्ञाधिकारात् । न च प्राथमिकप्राप्तिमात्राभिप्रायेण कर्मत्वव्यपदेशः, कृष्णसम्बन्धि शुभाशुभं पर्यालोचयतीत्यर्थाभ्युपगमेन षष्ठ्या एव प्राप्तेः ।

"अनुप्रति" ॥ गृण इति श्नान्तस्यानुकरणात् षष्ठी । होत्रे इति । कर्मत्वे प्राप्ते ।

---

शब्दरत्नम् ।

प्राथमिकेति । राधीक्ष्योः प्रश्नविषयपर्यालोचनमर्थः । तत्र प्रश्नविषयरूपफलाश्रयत्वात्कर्मत्वप्राप्तिरिति भावः । इत्यर्थाभ्युपगमेनेति । तस्य प्रधानीभूतधात्वर्थाप्रयोज्यत्वेन तदप्राप्तिरिति भावः ।

कर्मत्वे प्राप्ते इति । शंसितुः शंसनविषयहर्षानुकूलव्यापारलक्षणं प्रोत्साहनं तयो-

भैरवी ।

लव्यापार एव ईर्ष्यधात्वर्थ इति । तत्र फलतावच्छेदकविषयतासम्बन्धेन भार्यायास्तादृशज्ञानाश्रयत्वात्कर्मता । द्विष्धातुस्तु न क्रुधादिसमानार्थक इति तदर्थयोगे न सम्प्रदानसञ्ज्ञा । औषधन्द्वेष्टीत्यादौ यथा । अत्र द्विष्धात्वर्थो बलवद्दुःखसाधनताज्ञानजन्यो यो विलक्षणोऽप्रीतिजनकाश्चित्तवृत्तिविशेषः स एवेति, न क्रुधादिसमानार्थकः । तादृशवृत्तिविशेष एवानभिनन्दनशब्दार्थः । अत एव "यो ऽस्मान्द्वेष्टि" इत्यादौ नैतत्सूत्रस्य प्रवृत्तिः ।

"राधीक्ष्योर्यस्य विप्रश्नः" । एतयोर्योगे यत्सम्बन्धो विविधः प्रश्नस्तस्य सम्प्रदानसञ्ज्ञा भवति । मूलेऽन्यमतोपपादनावसरे कर्मसञ्ज्ञायाः प्राथमिकप्राप्तिः कथिता, तस्या उपपत्तिमाह-प्रश्नविषयेति । प्रश्नविषयशुभाऽशुभपर्यालोचनमित्यर्थः । पर्यालोचनन्तु अज्ञानविरोधिज्ञानानुकूलव्यापार एव । प्राचीनोक्तकर्मत्वस्य प्राप्तिमुपपादयति— प्रश्नविषयरूपफलेति । तच्च फलं शुभाशुभरूपम् । तस्य शुभाशुभरूपफलस्य कर्मसञ्ज्ञा यादृशफलाश्रयत्वस्य कृष्णे सत्त्वात्तन्मते प्राप्ता, तच्च फलन्न प्रधानीभूतव्यापारजन्यम्, यच्च फलम्पर्यालोचनाख्यम्प्रधानव्यापारप्रयोज्यन्तत्कर्मणोः शुभाशुभयोर्धात्वर्थनोपसङ्ग्रहादेतावकर्मकाविति भावः । अत एव क्यन् "राधोऽकर्मकादेव" इत्युक्तेः ।

"प्रत्याङ्भ्यां श्रुवः" । अत्र सोपसर्गश्रुधातोः प्रवर्तनाजन्योऽभ्युपगमोऽर्थः । विप्राय गां प्रतिश्रृणोति, आश्रृणोतीत्यादौ विप्रस्य प्रवर्त्तनान्वयित्वेन षष्ठी प्राप्ता तां सम्प्रदानसञ्ज्ञा बाधते । विप्रसम्प्रदानकम्प्रत्याश्रवणमिति बोधः ।

भावप्रकाशः ।

प्रश्नविषयेति । प्रश्नविषयशुभाशुभपर्यालोचनमित्यर्थः । पर्यालोचनं चाज्ञानभङ्गानुकूलो व्यापारः । प्रश्नविषयस्य कर्मणो धात्वर्थेनोपसंग्रहादकर्मकावेतौ । अत एव क्यन्, राधोऽकर्मकादेवेत्युक्तेः । धात्वर्थैकदेशे प्रश्नविषये कृष्णस्यान्वयः । कृष्णसम्प्रदानकमर्थाः कृष्णसम्बन्धि प्रश्नविषयशुभाशुभपर्यालोचनमिति बोधः । तत्रेति । तथार्थे सतीत्यर्थः । प्राप्तिरिति । कृष्णस्येति शेषः । एवञ्च कर्मत्वे प्राप्ते इदमिति वाच्यं, न तु षष्ठ्यां प्राप्तायामिति भावः । तस्य–प्रश्नविषयरूपफलस्य । अप्रयोज्यत्वेनेति । साक्षात्परम्परया वा प्रधानीभूतप्रकृतधात्वर्थव्यापाराजन्यत्वेनेत्यर्थः । नहि शुभादिकं प्रागुक्तादृशव्यापारजन्यमिति भावः । तदप्राप्तिरिति । कर्मत्वाप्राप्तिरित्यर्थः ।

होतरि साक्षात्फलाश्रयत्वाभावात् कर्मत्वाप्राप्तिमुपपादयति— शंसितुरिति । शंसिता होता तत्कर्तृकं यच्छंसनं शस्त्राख्यसूक्तादिनेन्द्रादिनिष्ठगुणाभिधानं तद्विषयो यस्तन्निष्ठस्तत्कर्मक इति यावत् । ईदृशो यो हर्षस्तदनुकूलो योऽध्वर्युनिष्ठो व्यापार ओथामोदैवेत्यादिशब्दाभिलापरूपस्तद्रूपं प्रोत्साहनमित्यर्थः । तयोः–अनुगृणातिप्रतिगृणात्योः । अनेनानु प्रतीति भिन्ने सूत्रे पदे इति सूचितम् । तदाह—

"परिक्रयणे" । क्रयो—धनाद्यर्पणेनाऽऽत्यन्तिकस्वीकरणम्, तस्य समीपं परिशब्द आचष्टे । तच्च नियतकालं ततो न्यूनत्वादिति व्याचष्टे—नियतेति । भृत्या—वेतनादिना । तादर्थ्यं इति । तस्मै कार्यायेदं तदर्थम्—कारणम्, तस्य भावस्तादर्थ्यम् । अत्रा उपकारकत्वरूपः सम्बन्धोऽभिधीयते, 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिमानं भावप्रत्ययेन' इति सिद्धान्तात् । उपकारकत्वं चानेकधा । तेन ब्राह्मणाय दधीत्यादावपि भवति । भक्तिर्ज्ञानायेति । ज्ञानात्मना

---

शब्दरत्नम् ।

र्थः । शंसितुः प्रोत्साहने कर्मतयाऽन्वयः, होतुश्च शंसितर्यभेदान्वयः । एवं च कर्मसामानाधिकरण्यात् कर्मत्वप्राप्तिरिति भावः ।

धनादीति । आदिना दुर्भिक्षेऽन्नम् । अनेकधेति । साक्षात्परम्परया चेत्यर्थः । ब्राह्मणाय दधीत्यादौ तद्भोजनोपकारकत्वेन तदुपकारकत्वं बोद्धयम् । ज्ञानात्मनेति ।

भैरवी ।

"अनुप्रतिगृणश्च" । अत्राऽनुप्रतिपूर्वकगॄधातोः शंसनविषयकहर्षानुकूलव्यापारात्मकम्प्रोत्साहनमर्थः । धात्वर्थशंसनाश्रयस्यानेन सम्प्रदानसञ्ज्ञा विधीयते । होतुः कर्मत्वस्य प्राप्तिमुपपादयति—शंसितुरिति । शंसनं सूक्तादिना इन्द्रादिनिष्ठगुणाभिधानम्, तद्विषयो यो हर्षोऽन्तःकरणस्य वृत्तिविशेषस्तदनुकूलोऽध्वर्युनिष्ठो व्यापारः स एव प्रतीयते । स च व्यापारः 'ओथामोदइव' इत्यादिशब्दप्रयोगरूपः । शंसनविषयकहर्षरूपफलात्मकम्प्रोत्साहनन्तु शंसितरि होतरि वर्त्तते, होत्रभेदस्तु शंसितरि कर्मणि वर्तत इति कर्मसामानाधिकरण्यमस्तीति बोध्यम् । एवञ्च—मुख्यकर्मत्वस्य शंसितरि सत्त्वे च ।

"परिक्रयणे सम्प्रदानम्" । "साधकतमम्" इत्यनुवर्त्तते । लोके धनशब्दस्य रूपकादौ रूढया प्रयोगस्य दर्शनादादिपदम्मूलेऽभिहितं, तत्सङ्ग्राह्यमाह—आदिनेति । धनस्य दानात्मकव्यापारद्वारा क्रयणक्रियाजनकत्वम् । यदुक्तम्मूले उपकारकत्वञ्चानेकधेति, तस्यानेकधात्वन्दर्शयति—साक्षादित्यादिना । साक्षादुपकारकत्वस्योदाहरणं 'यूपाय दारु'इति परममूले दर्शितमेवेति परम्परयेत्यस्योदाहरणमाह—ब्राह्मणायेति । तच्छब्दो ब्राह्मणबोधकः ।

भावप्रकाशः ।

शंसितुरिति । एवञ्चेति । मुख्यकर्मत्वस्य शंसितरि सत्त्वे चेत्यर्थः । होतुरिति शेषः ।

ननु धिनोतेधनमिति व्युत्पत्त्या स्वाभाव्याद्वा सर्वस्यापि धनत्वात्प्रकाशानुवादे आदिपदं व्यर्थमत आह—आदिनेति । यथाच सुभिक्षे अन्नेन तदसम्भवात्तत्र धान्यपदेन काञ्चनादेर ग्राह्यमितीदं सफलमिति भावः । उपकारकत्वं चानेकधेत्यस्य यदि जनकत्वमेव न किन्तु प्रकाशकत्वं सहायत्वं चेत्यपीत्यर्थः, तदोत्तरग्रन्थासङ्गतिरत आह—साक्षादिति । साक्षादित्यनेन पूर्वोक्तानां संग्रहः । द्वितीये फलं मूलोक्तमुपपादयति—ब्राह्मणायेति । तच्छब्दौ ब्राह्मणबोधकौ । दध्न इति शेषः । एतेन स च नानाविधो न कार्यकारणभाव एव । तेन ब्राह्मणाय दधीति सिद्धं, तस्य दध्यजन्यत्वेऽपि तत्संस्कार्यत्वात् इति रत्नाकरदण्ड्याद्युक्तमपास्तम् । वार्तिके क्लपीति सप्तमी, अर्थग्रहणं चात्र व्याख्यानात् । सम्पत्तिरुत्पत्तिः, सैव क्लृप्तिः । क्लृप्त्यर्थकधातुयोगे उत्पद्यमानेर्थे वर्तमानाच्चतुर्थीति तदर्थाद्विकारवाचकाच्चतुर्थीति लब्धम् । विकारे च प्रकृतिरूपारोपः । प्रथमापवादोऽसौ भक्तिरूपज्ञानकर्तृकोत्पत्तिरिति बोधः । भक्तिरत्र निदिध्यासनरूपा न तु प्रसिद्धा, तस्याः साक्षात् मुक्तिजनकज्ञानासाधकत्वात् । यद्वा कल्पते इत्यादेः परिणमते इत्यर्थः । परिणामश्च रूपान्तरप्राप्तिः, तदेकदेशे रूपान्तरे ज्ञानादेर्विकारस्याभेदेनान्वयात् । द्वितीयायां प्राप्तायामनेन चतुर्थी विधीयते । एवञ्चात्र सकृला चतुर्थी तयोरभेदविवक्षायां भवत्यर्थकक्लृपियोगे परत्वात्प्रथमया बाध्यते । अत एव तत्र तयोरभेदान्वयः । एतेन तादर्थ्यचतुर्थ्यैव गतार्थमिदमिति रत्नाकरद-

परिणमत इत्यर्थः । प्रकृतिविकृत्योर्भेदविवक्षायां विकृतिवाचकाच्चतुर्थी । अभेदविवक्षायां तु परत्वात्प्रथमैव, भक्तिर्ज्ञानं कल्पत इति । यदा तु "जनिकर्तुः" इति भक्तेरपादानत्वं विवक्ष्यते तदा ज्ञानस्याभिहितकर्तृत्वात्प्रथमैव, भक्तेर्ज्ञानं कल्पते । 'क्लृपी'त्यर्थग्रहणमित्याशयेनाह—सम्पद्यत इत्यादि । उत्पातेनेति । प्राणिनां शुभाशुभसूचको भूतविकार उत्पातः, तेन ज्ञापितेऽर्थे वर्त्तमानाच्चतुर्थीत्यर्थः । वातायेति । वातस्य ज्ञापिकेत्यर्थः । हितेति । समा-

शब्दरत्नम् ।

आत्मशब्दस्तद्वृत्तिधर्मपरो ज्ञानत्वेन परिणमत इत्यर्थः । एवं च तस्य विकृतिवाचकत्वाभावान्न चतुर्थी, किन्तु प्रकृत्यादित्वात्तृतीया । ज्ञानत्वविशिष्टरूपान्तरप्राप्तिर्भक्तिकर्तृकेति यावत् । रूपान्तरप्राप्तिर्हि परिणाम इति भावः । प्रथमैवेति । भक्त्यपादानको ज्ञानरूपः परिणाम इति तदा बोधः ।

समासविधानादिति । "चतुर्थी तदर्थ" इति हितसुखयोगे समासविधानाज्ज्ञापकात् ।

भैरवी ।

एतेन यत्र प्रकृतिविकृतिभाव एव तत्रानेन वार्तिकेन चतुर्थीति वदन्तः परास्ताः । क्लृपीत्यर्थग्रहणम् । उत्पत्तिश्च क्लृपेरर्थः । क्लृप्यर्थकधातुयोगे उत्पद्यमानेऽर्थे वर्तमानाच्चतुर्थीति वार्तिकार्थः । उत्पद्यमानार्थवाचकञ्च विकारवाचकमेवेति तद्वाचकाच्चतुर्थी सर्वत्रोदाहृता । ननु ज्ञानात्मशब्दो यदि ज्ञानस्वरूपस्य बोधकस्तदा विग्रियमाणवाक्ये ज्ञानशब्दाच्चतुर्थी, विवरणवाक्ये ज्ञानशब्दात्तृतीयेति कथमत आह—आत्मशब्द इति । तद्वृत्तीति । ज्ञानवृत्तीत्यर्थः । एवञ्च—आत्मन्शब्दस्य धर्मपरत्वे च । तस्य-आत्मन्शब्दस्य । ज्ञानत्वेनेति तृतीयार्थो वैशिष्ट्यम्, परिणामो रूपान्तरप्राप्तिः, तथा च यादृशो वाक्यार्थबोधस्तमाह—ज्ञानत्वविशिष्टेति । मूले-परत्वादिति । चतुर्थ्यपेक्षयेत्यादिः । 'भक्तिर्ज्ञानङ्कल्पते' इति । अस्य भक्त्यभिन्नो ज्ञानरूपः परिणाम इत्यर्थः । भक्तिरत्र मननजन्यन्निदिध्यासनम्, एतस्यैवाविद्यानिवृत्तिरूपमुक्तिसाधनब्रह्मज्ञानसाधनत्वस्य श्रुतिप्रसिद्धत्वात् । या तु देवविशेष्यकाराध्यत्वप्रकारकज्ञानरूपा भक्तिस्तस्याः साक्षान्न तत्त्वज्ञानसाधनत्वङ्किन्तु परम्परयैव ।

मूले—शुभाशुभेति । सुखदुःखेत्यर्थः । भूतविकारः—भूतानां विकारः । यदि समासविधानाज्ज्ञापकाद्धितशब्दयोगे एव चतुर्थी, तदा एवं सुखयोगेऽपीत्युत्तरग्रन्थासङ्गतिरत आह—चतुर्थी तदर्थेति । हितशब्दार्थोऽत्रेष्टसाधनम् । ब्राह्मणाय हितमध्ययनमित्यत्र चतुर्थ्यर्थसम्बन्धस्य हितपदार्थैकदेशे इष्टेऽन्वयः । यत्तु "चतुर्थी चाशिषि" इति सूत्रेण विहिता या चतुर्थी

भावप्रकाशः ।

ण्व्याद्युक्तमपास्तमिति बोध्यम् । एवञ्च यथा भक्तिर्ज्ञानायेत्यत्र सा भवति तथा भक्तिर्ज्ञानात्मनेत्यत्रापि तदापत्तौ ज्ञानात्मने इति स्यात् । आत्मशब्दस्य स्वरूपपरत्वेन विकृतिवाचकत्वादेवञ्च मूलं तथा प्रकाशरत्नाकरदण्डव्याद्युक्तं च चिन्त्यमत आह-आत्मेति । तद्वृत्तीति । ज्ञानवृत्तीत्यर्थः । एवंचेति । तस्य ज्ञानत्वपरत्वेचेत्यर्थः । तस्य—ज्ञानात्मशब्दस्य । ज्ञानं विकारो न तु ज्ञानत्वमिति भावः । तथा सति तस्य वास्तवमर्थमाह—ज्ञानत्वेति । वैशिष्ट्यं तृतीयार्थ इति भावः । ननु रूपान्तरप्राप्तिः कस्यार्थोऽत आह-रूपान्तरेति । पञ्चमीपक्षे रूपान्तरमेव परिणामो न तत्प्राप्तिरित्याशयेन बोधमाह-भक्त्यपादानेति । तथाच प्रथमैवेति द्वितीयं प्रतीकं बोध्यमिति बोध्यम् ।

ननु हितयोगे एव समासविधानस्य ज्ञापकत्वे उत्तरग्रन्थासङ्गतिरत आह—चतुर्थीति । इष्टसाधनं हितपदार्थः । सम्बन्धश्चतुर्थ्यर्थः । तत्सम्बन्धीष्टसाधनमित्यादिबोधः । एतेन तादर्थ्यचतुर्थ्यैवेदं गतार्थमिति रत्नाकरोक्तमपास्तम् । यत्त हरदत्तः-"चतुर्थी चाशिषि" इतिसूत्रविहिताशीरर्थचतुर्थ्या समासविधि-

सविधानाज्ज्ञापकादिति भावः। एवं सुखयोगेऽपि बोध्यम्।

"तुमुन्ण्वुलौ क्रियायाम्" इति सूत्रमहिम्ना क्रियार्थकमुपपदं क्रियावाच्येव फलतीत्याशयेनाह—क्रियेति। क्रियाफलकं क्रियावाचकप्रकृतिकमित्यर्थः। 'तुमुन्' इति ण्वुलोऽप्युपलक्षणम्। फलेभ्यो यातीत्यस्य फलान्याहरक इत्यपि विवरणे बाधकाभावात्। कर्मणीति। तथा च द्वितीयापवादोऽयमिति भावः।

यत्तु प्राचा व्याख्यातमप्रयुज्यमानस्यैव कर्मणि यथा स्यात्, प्रयुज्यमानस्य मा भूदिति नियमार्थं सूत्रमिति, तन्न, अप्राप्तस्य नियमायोगात्। न च 'तादर्थ्ये' इति प्राप्तिः। न हि फलार्था यानक्रिया किं त्वाहरणार्था। आहरणं तु फलकर्मकमित्यन्यदेतत्।

## शब्दरत्नम्।

कादित्यर्थः। तदाह—एवमिति। वृत्तावाशीरर्थाप्रतीतेर्न "चतुर्थी चाशिषि" इति चतुर्थ्या हितयोगे निर्वाहः। आशीरर्थयोगे आशीर्विषयस्य विधेयत्वं तदाश्रयस्योद्देश्यत्वं च प्रतीयते। न च वृत्तौ तथाऽन्वयो व्युत्पन्न इति हरदत्त इति दिक्। न हि फला-

## भैरवी।

तदन्तस्य समासविधायकत्वेन "चतुर्थी तदर्थ" इति सूत्रञ्चरितार्थमिति न ज्ञापकत्वसम्भव इति, तदेतत्खण्डयति-वृत्ताविति। हितयोग इत्यत्र हितशब्दः सुखशब्दस्याप्युपलक्षणम्। आशीरर्थाप्रतीतिमुपपादयति-आशीरर्थयोग इत्यादिना। आशीरर्थकभूयादित्यादिपदयोग इत्यर्थः। विषयस्य-धनपुत्रादेः। तदाश्रयस्य-तत्सम्बन्धिनो देवदत्तादेः। नचेति। नहीत्यर्थः। तथान्वयः-उद्देश्यविधेयभावेनान्वयः, उद्देश्यविधेयभावेनान्वये भेदेनोपस्थितेः कारणत्वात्। हरदत्त इति। अत्राऽरुचिबीजन्तु वृत्तौ सर्वत्रोद्देश्यविधेयभावेनान्वय इति न नियमः, "लोहितोष्णीषा ऋत्विजः" इति वाक्यबोधितोष्णीषानुवादेन लोहितविधायकतायाः प्राप्ताऽप्राप्तत्वादिपर्यालोचनेन सम्प्रदायसिद्धत्वात्। नचैवं सति "चतुर्थी तदर्थ" इति सूत्रस्य "चतुर्थी चाऽऽशिषि" इति सूत्रविहितचतुर्थ्यन्तस्य समासविधायकत्वेन चारितार्थ्याज्ज्ञापकत्वोक्तिरसङ्गतैव स्यादिति वाच्यम्, चतुर्थीविधायकस्य तस्य सूत्रस्य हि आशीर्विषयक्रियान्वय्यर्थकात्प्रातिपदिकात्क्रियाद्वारके आयुष्यादियोगे षष्ठीचतुर्थ्यावित्यर्थ इति उभयोरपि क्रियायामन्वय इति देवदत्ताय सुखम्भूयात् इत्यत्र देवदत्तायेत्यनेन सह सुखमित्यस्य सामर्थ्याभावेन समासाप्राप्तेरिति नानेन यत्र चतुर्थी तत्र समासविधायकता तस्य सूत्रस्येति "चतुर्थी तदर्थ" इति सूत्रस्य ज्ञापकत्वोक्तिर्युक्तैवेत्याशयात्।

मूले—यत्तु प्राचेति। प्रसादकृतेत्यर्थः पूर्वोक्तस्वग्रन्थविरोधशङ्काम्परिहर्तुमाशङ्कते—

## भावप्रकाशः।

साफल्यान्न तज्ज्ञापकमिति, तत्खण्डयति—वृत्ताविति। हितेत्युपलक्षणं सुखस्यापि। तत्र तदप्रतीतिमुपपादयति—आशीरर्थेति। तदर्थकभूयादित्यादियोगे इत्यर्थः। विषयस्य-हितादेः। आश्रयस्य-ब्राह्मणादेः। नचेति। नहीत्यर्थः। तथान्वयः—उद्देश्यविधेयभावेनान्वयः, तथान्वये भेदेनोपस्थितेर्हेतुत्वादिति भावः। वस्तुतोऽयुक्तमेतत्। वृत्तावपि प्राप्तत्वादिपर्यालोचनेन लोहितोष्णीषा इत्यादौ तथान्वयदर्शनात्, भाष्ये तथान्वये वृत्तेरसाधुताया अनुक्तेश्चेति मञ्जूषायां विस्तरः। नचैवं हरदत्तोक्तिरेव युक्तेति वाच्यम्, आशीर्विषयक्रियान्वय्यर्थकात्प्रातिपदिकात्तद्द्वारके आयुष्यादियोगे षष्ठीचतुर्थीति सूत्रार्थेनोभयोरपि क्रियान्वयेन मिथोऽसामर्थ्यात्तदर्थचतुर्थ्यन्तेन सुखादीनां समासाप्राप्तेः। अत एव ज्ञापकपरभाष्यादिग्रन्थसङ्गतिः, एतदर्थाचबोधकमेव हरदत्त इत्युक्तम्। तेन तस्य पूर्वापरविरोधोऽपि सूचितः। कचित्तु हरदत्त इत्यपाठ इति बोध्यम्। तदाह-दिगिति। मूले प्राचा प्रसादकृता। एवमग्रेऽपि।

तुमुनो भाव एव विधानात्तदर्थस्य भाववचनत्वे सिद्धे पुनर्भाववचनग्रहणं सूत्रविशेषपरिग्रहार्थमित्याह—इति सूत्रेणेति । न च तादर्थ्ये इत्येव गतार्थता शङ्क्या, भाववचनेनैव तुमुनेव तादर्थ्यस्य द्योतिततया प्रातिपदिकार्थमात्रे प्रथमा-प्रसङ्गात् ।

---

शब्दरत्नम् ।

थेंति । यद्यपि 'ब्राह्मणाय दधि' इत्यादौ ब्राह्मणाय भोजनोपकारकमपि दधि तद्द्वारा ब्राह्मणोपकारकं तथाऽपि फलेनाऽऽहरणद्वारा न कोऽपि यानक्रियोपकार इत्याशयः ।

तुमुनेवेति । भाववचनघञादीनां तुमुनपवादतया तत्समानार्थत्वात् । एवं च प्रथमा-पवाद इति भावः । 'द्विषां विघाताय विघातुमिच्छतः' इत्यत्र विघातायेति तादर्थ्ये चतुर्थी, विघातार्थं यद्विधानं तदर्थेच्छावत इत्यर्थः । एतेनात्र तुमुना तादर्थ्यस्योक्तत्वात्कथं चतु-

भरवी ।

यद्यपीत्यादिना । यानक्रियोपकारः-यानक्रियाकृतोपकार इत्यर्थः । इत्याशय इति । अनेनारुचिर्ध्व-निता तद्वीजन्तु यानक्रियाकृत उपकारः फले विक्रयभक्षणादिकर्मत्वरूपः सम्भवत्येवेति । नचैवं 'तादर्थ्ये चतुर्थी' इत्यनेनैव चतुर्थी सिद्धेति प्रकृतसूत्रस्य वैयर्थ्यमिति वाच्यम्, फला नामाहरणकर्मत्वेन द्वितीया प्राप्तेति तद्बाधनार्थमस्यारम्भात् ।

ननु भाववचनघञादीनान्तादर्थ्यद्योतकत्वं सूत्रान्न लभ्यत इत्यत आह—भाववचनेति । तत्समानार्थत्वात्—तुमुन्समानार्थत्वात् । अत्रार्थशब्दो नाभिधेयवाची, उभयोरपि भावा-भिधायकत्वस्य सुप्रसिद्धत्वात्, किन्तु प्रयोजनवाची । एवञ्च तुमुनपवादत्वेन तुमुन्समान-फलकत्वमस्येति बोध्यम् । नन्वेवं यत्र तुमुन् तत्र तुमुनैव तादर्थ्यन्द्योतितमिति 'द्विषां विघा-ताय' इति चतुर्थ्यनुपपत्तिरत आह—द्विषामित्यादि । एतेनेत्यस्यार्थमाह—उत्तरेति । विधाने-

भावप्रकाशः ।

पूर्वस्वग्रन्थविरोधं शङ्कते-यद्यपीति । फले आहरणेति पाठः । फलेनाहरणेति पाठे न आहरणं नाहरण-मिति नशब्देन समासः, न नाहरणमनाहरणमावश्यकाहरणं तद्द्वारेत्यर्थः । यानेति । तत्क्रियाकृतोपकार इत्यर्थः । इत्याशय इति । अनेनारुचिः सूचिता । कस्यचिदपकारस्यावश्यसम्भवादिति कर्मत्वे द्विती-यापवाद इयमिति तत्प्रकारक एव बोध इति तत्त्वमिति ।

ननु भाववचनघञादीनां न तादर्थ्यद्योतकत्वं सूत्रतो लभ्यतेऽत आह—भावेति । एवञ्चेति । तेषां तदपवादतया तत्तुल्यार्थत्वेन तद्द्योतकत्वे चेत्यर्थः । इदं—तुमर्थाच्चभाववचनादिति सूत्रम् । एत-दर्थमेव दृष्टान्तोपादानमिति भावः । तत्र तथाव्याख्यानस्य फलमाह—एतेनेति । अत्र—द्विषां

सरला ।

इत्याशय इति । अयं हि तदाशयः—'ब्राह्मणाय दधि' इत्यादौ स्वसम्बन्धिभोजनरूपोपकार-जनकत्वरूपतादर्थ्यसम्बन्धेन ब्राह्मणस्यान्वयविवक्षायां यथा ब्राह्मणपदोत्तरं चतुर्थी प्रयुज्यते तथा 'फलेभ्यो याति' इत्यादावपि स्वसम्बन्ध्याहरणजनकत्वसम्बन्धेन फलस्य यानक्रियायामन्वयविवक्षायां फलपदादपि चतुर्थी सिध्येदिति सूत्रवैयर्थ्यम्; नचोक्तरीत्या 'फलान्याहर्तुं याति' इत्यत्रापि तादृश-विवक्षायां फलपदाच्चतुर्थ्यापत्तिरिति वाच्यम्, 'उपपदविभक्तेः' इति न्यायेन तत्र द्वितीयया चतुर्थी-बाधादिति नाशङ्कनीयम्, फलकर्मकाहरणफलकं यानमिति बोधेच्छायामाहरणक्रियानिष्ठविशेष्यता-निरूपितकर्मत्वसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन तात्पर्यविषयात् फलपदात् चतुर्थीसिद्धये सूत्रस्या-वश्यकत्वादिति ।

इति भाव इति । तथाच 'यागाय याति' इत्यस्य भविष्यद्यागफलकं यानमिति शाब्दबोधः । अत एव "क्रियार्थोपपदस्य" इत्यनेन न गतार्थता, तथा सति यागानुकूलकृतिफलकं यानमिति बोधापत्तेः ।

यत्तु प्राचोक्तम्—भाववचनादेव यथा स्यात् पाचको व्रजतीति ण्वुलन्तात् मा भूदिति नियमार्थमिदं सूत्रमिति; तन्न, ण्वुलन्ते कर्तुः प्राधान्यात् कर्तारं प्रति च तादर्थ्याभावात्, गुणीभूतयानस्य च विभक्त्यर्थानन्वयात्।

ननु षष्ठ्यपीति कुतः षष्ठ्येवास्तु, अलंशब्दस्तु पर्याप्तीतरार्थक एव गृह्यतामित्याशङ्क्याह—तस्मै प्रभवतीति।

न त्वां तृणमित्यादि। ननु तृणादिवद् युष्मच्छब्दादपि पक्षे चतुर्थ्या भाव्यम्। मैवम्, 'अनादरे' इति हि कर्मणो विशेषणम्—अनादरद्योतकं यत्कर्मेति। तादृशं तृणमेव न तु युष्मदर्थः॥

इति चतुर्थी।

ध्रुवमिति। ध्रु गतिस्थैर्ययोः, अस्मात्कुटादेः पचाद्यच्। ध्रुव स्थैर्ये इति पाठे तु इगुपधलक्षणः कः। ध्रुवं—स्थिरम्, प्रकृतधातूपात्तगत्यनाविष्टत्वे सति

---

शब्दरत्नम्।

र्थीत्यपास्तम्। उत्तरक्रिययोस्तद्द्योतनेऽपि पूर्वक्रिययोस्तद्द्योतनात्।

कर्तुः प्राधान्यादिति। एवं च तादर्थ्यचतुर्थ्यास्तत्राऽप्राप्तेर्नियमासम्भव इति भावः। विभक्त्यर्थेति। तादर्थ्यचतुर्थ्यर्थे इत्यर्थः।

इति चतुर्थी।

प्रकृतेति। कर्त्तर्यतिव्याप्तिवारणाय सत्यन्तम्। अन्यथा कर्तृसञ्ज्ञाया इयमपवादः

भैरवी।

षणयोरित्यर्थः। तद्द्योतनेति। तस्य द्योतनेऽपीत्यर्थः। तुमुनन्तेनेति शेषः। पूर्वेति–हनन-विधानयोरित्यर्थः।

एवञ्च—कर्तुः प्राधान्ये च। तत्र—पाचको व्रजतीत्यत्र विशेषणविशिष्टस्य विभक्त्यर्थान्वये विशेषणस्याप्यन्वयोऽस्त्येवेत्याशङ्काकरणायोक्तं मूले-गुणीभूतेति। एतेन एकविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणतयाऽन्वयाकाङ्क्षैव नास्तीति सूचितम्।

इति चतुर्थीविवरणम्।

कर्तरिति। 'प्रयागात्काशीङ्गच्छति'इति यत्र प्रयोगस्तत्र गन्तरि चैत्रादावतिव्याप्तिरित्यर्थः। प्रकृतेति धात्वर्थस्य विशेषणम्। तच्च शब्दप्रयोगाधिकरणकालिकविवक्षाविषयत्वम्,

भावप्रकाशः।

विघातायेत्यत्र। तुमुना-तदन्तेन। एतेनेत्यस्यार्थमाह–उत्तरेति। विधानेषणयोरित्यर्थः। तद्द्योतनेऽपीति। तस्य द्योतनेऽपीत्यर्थः। तुमुनन्तेनेति शेषः। एवमग्रेऽपि। पूर्वेति। हननविधानयोरित्यर्थः।

ननु प्राधान्येऽपि नियमसम्भव एवात आह–एवञ्चेति। तस्य प्राधान्ये चेत्यर्थः। तत्र–पाचको व्रजतीत्यत्र। तदप्राप्तिमेव मूले उपपादयति–कर्त्तारमिति। प्रमार्थे विशिष्टस्यान्वये घटकत्वेन तस्यापि विभक्त्यर्थान्वयसत्त्वादाह–तादर्थ्येति। एतेन प्रसादोक्तं ण्वुलस्तुमर्थकत्वाभावान्नियमार्थत्वायोगादिति सन्दूष्य ण्वुलन्ते इत्याद्यनन्वयादित्यन्तं मूलमनूद्य यागाय यातीत्यत्रापि सिद्धावस्थापन्नवजर्यं प्रति तादर्थ्याभावादिति दूषयन् रत्नाकरः परास्तः। मूलाशयानवबोधादिति दिक्॥

इति चतुर्थी।

कर्तरीति। प्रयागे इव तज्जन्यविभागाश्रयत्वस्य कर्तर्यपि सत्त्वादिति भावः। धात्वर्थे प्रकृतत्वं न शब्दोपात्तत्वं, किन्तु विवक्षितत्वमात्रम्। अत एव "धनुषा विध्यतीत्यत्रापादानसंज्ञां बाधित्वा परत्वा-

तज्जन्यविभागाश्रयः । तच्चार्थादवधेरेवेत्याह—**अवधिभूतमिति** । धावत इति । इह क्रियाविशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तक्रियां प्रत्यवधित्वं न विरुद्ध्यते । 'परस्परस्मात् मेषावपसरतः' इत्यत्र तु सृधातुना गतिद्वयस्याप्युपादानाद् एकनिष्ठां गतिं प्रतीतरस्यापादानत्वं न विरुद्ध्यते । उक्तं च—

अपाये यदुदासीनं चलं वा यदि वाऽचलम् ।
ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते ॥

---

शब्दरत्नम् ।

स्यात् । कर्तृसञ्ज्ञा तु पचत्यादियोगे चरितार्था । कर्मणि ग्रामेऽतिव्याप्तिवारणाय विशेष्यम् । **अवधित्वं न विरुद्ध्यत इति** । तदुपात्तक्रियानाश्रयत्वादिति भावः । **न विरुद्ध्यते** । तदनाश्रयत्वादिति भावः । **अतदावेशादिति** । तद्धातूपात्तगत्यनावेशा-

भैरवी ।

नतु तत्तद्धातुवाच्यत्वेन प्रसिद्धत्वम् । यत्तु प्रकृतेति धातोर्विशेषणमिति; तन्न, "अपादानमुत्तराणि कारकाणि बाधन्ते" इति भाष्यकारोक्तिविरोधापत्तेः । तथाहि-'धनुषा विध्यति' इत्यत्र यदा निःसरणपूर्वकव्यधने धातोर्वृत्तिस्तदा धनुषो निःसरणावधित्वात् प्राप्ताऽपादानसञ्ज्ञां बाधित्वा व्यधनं प्रति करणत्वेन विवक्षितत्वात् परत्वात् करणसञ्ज्ञा भवतीति भाष्योक्तिः सङ्गच्छते । यदि धातुविशेषणमेव पूर्वोक्तमप्रकृतत्वं स्यात्तदा "धनुर्विध्यति" इत्यत्र यादृशव्यापाराश्रयत्वेन तस्य कर्तृत्वं भवति, तादृशव्यापारस्य कर्तृत्वोपपत्तये व्यधधातुवाच्यत्वमावश्यकन्तद्व्यापारद्वारैव करणत्वस्य वाच्यतया तदनाश्रयत्वस्य धनुष्यभावेनाऽपादानत्वाऽप्रसक्त्या भाष्यासङ्गतिः स्पष्टैव । नन्वेवङ्करणसञ्ज्ञावत्कर्तृसञ्ज्ञाप्यपादानसञ्ज्ञाया बाधिका भविष्यतीति सत्यन्तविशेषणं व्यर्थमेवेत्यत आह-अन्यथेति । सत्यन्ताभाव इत्यर्थः । इयम्-अपादानसञ्ज्ञा । अपवाद इति । अपाये यत्कारकन्तद्रूपक्रियाजनकमित्यर्थापत्त्या विशेषविहितत्वेनेति शेषः । ननु कर्तृसञ्ज्ञा तर्हि निरवकाशा स्यादत आह—कर्तृसञ्ज्ञा त्विति । कर्मणीति । 'प्रयागात्काशीङ्गच्छति' इति यत्र प्रयोगस्तत्र काश्यामतिव्याप्तिरित्यर्थः । तदुपात्तेति । धावनाश्रयत्वेऽपि पतधात्वर्थाऽनाश्रयत्वस्य तत्र सत्त्वादिति भावः । तदनाश्रयत्वादितीति । एकस्य मेषस्याऽपादानत्वेन विवक्षितस्य कर्तृत्वाभिप्रेतनिष्ठगत्यनाश्रयत्वस्य सत्त्वादित्यर्थः । गतौ तत्त्वं विशेषणन्देयमित्यत्र तात्पर्यम् । नन्वेवमपि निवृत्तभेदस्यैवापसरणस्य सृधातुना प्रतिपाद-

भावप्रकाशः ।

त्करणसंज्ञा" इत्याकडारसूत्रभाष्यं संगच्छते । धनुषः शरनिःसरणं प्रत्यवधिभावोपगमेनैव व्यधने करणताभ्युपगमेनोभयोरपि निमित्तनिमित्तिभावेन स्थित्या बुध्यारोहेण विध्यतेर्निःसरच्छरजन्यवेधार्थत्वाद्युगपदुभयविवक्षायां विप्रतिषेधोपपत्तेः । नन्वेवमपादानमुत्तराणीति न्यायेनैव कर्तृसंज्ञापि तद्बाधिका स्यादिति सत्यन्तं व्यर्थमत आह—अन्यथेति । सत्यन्ताभावे इत्यर्थः । इयम्-अपादानसंज्ञा । अपवाद इति । विभागजनको व्यापारोऽपायः तद्विषये यत्कारकं तद्रूपक्रियाजनकं तादृशविभागाश्रयस्तदपादानमित्यर्थापत्त्या प्रयागादौ तदप्राप्त्या निरवकाशत्वेन विशेषविहितत्वेन च तदपवादः स्यादित्यर्थः । नन्वेवं कर्तृसंज्ञाऽनवकाशा स्यादत आह-कर्तृसंज्ञा त्विति । कर्मणीति । प्रयागात् ग्रामं गच्छतीत्यादौ प्रकृतधातूपात्तगत्यनाविष्टत्वस्य सत्त्वात् सत्यन्तम् । ध्रुवपदार्थो विशेष्यम्, अपाये इत्यस्यार्थः । तथाच तक्रकौण्डिन्यन्यायेनेयं विशेषविहितत्वात्तदपवादः स्यादिति भावः । तदुपात्तेति । धावनाविष्टत्वेऽपि प्रकृतपतधातूपात्तेत्यर्थः । तदनाश्रयेति । अन्यनिष्ठसृधातूपात्तगत्यनाश्रयत्वादित्यर्थः । ननु अपसरणं पृष्ठतो गमनं विभागपूर्वकं, तथाच वस्तुतस्तन्निष्ठयोरपसरणयोर्भेदेऽपि सृधातुना निवृत्तभेदस्यैवापसरणस्य 'एका च क्रिया' इति भाष्यादभिधानादाश्रयगतभेदारोपेण द्विवचनाद्युत्पत्तेरुभयोरपि तत्क्रियाश्रयत्वेन कर्तृत्वमेव

पततो ध्रुव एवाऽश्वो यस्मादश्वात्पतत्यसौ ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते ॥
मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक् ॥ इति ।

पर्वतात्पततोऽश्वात्पततीत्यत्र तु पर्वतावधिकपतनाश्रयोऽश्वस्तदवधिकं देव-दत्तादिनिष्ठपतनमर्थः । पञ्चम्यर्थेऽवधौ अभेदेन संसर्गेण प्रकृत्यर्थो विशेष-

शब्दरत्नम् ।

दित्यर्थः । तदावेशादिति पाठे तन्मात्रावेशाद्–विभागमात्रावेशादित्यर्थः । विशेषण-

भैरवी ।

नात्तधातूपात्तगत्यनाविष्टत्वं न सम्भवति "नवै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वात्" इति भाष्यकारोक्तेः द्विवचनन्त्वाश्रयगतभेदारोपेण भवति । एवञ्च प्रकृते कथम-पादानसंज्ञेति चेत्? न, 'आत्मानमात्मना वेत्ति' इत्यादावारोपितभेदेन कर्मत्वकर्तृत्ववत् परस्परशब्दोपात्तयोरपादानत्वकर्तृत्वम्मेषशब्दोपात्तयोरिति शब्दभेदात्क्रियाया अपि भेदात् । अत एव 'चैत्रमैत्रावन्योन्यमाश्लिष्यतः' इत्यत्र तयोः कर्मत्वस्य सिद्धिः । अन्यथा परत्वा-त्कर्तृसंज्ञैव स्यात् । शब्दालिङ्गितस्यैव हि सर्वत्रार्थस्य भानम् ।

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते'

इति हर्युक्तेः ।

उक्तञ्चेत्यादिना प्रतिपादितहर्युक्तेरप्यत्रैव तात्पर्यम् । अतदावेशादिति पाठे विभागस्य तच्छब्देन परामर्शोऽसङ्गतिरत आह—तद्धातूपात्तेति । प्रकृतधातूपात्तेत्यर्थः । गतिशब्दः स्वनि-ष्ठविभागानुकूलकर्तृनिष्ठक्रियाया बोधकः । क्वचित्तु ध्रुवमेव तदावेशादिति पाठस्तदा तच्छ-ब्देन यदि प्रकृतधातूपात्तगतिरेव परामृश्यते तदा कर्तरि तस्य सत्त्वं न ध्रुवत्वस्य सम्पादक-म्कर्तुर्ध्रुवत्वस्यानिष्टत्वात् । यदि विभागस्तच्छब्दार्थस्तदा तस्योभयवृत्तित्वादतिप्रसङ्गो न वारित इत्यत आह—तन्मात्रेति । तत्पदार्थमाह—विभागमात्रेति । मात्रपदेन गतेर्निरासः ।

भावप्रकाशः ।

स्यान्नापादानत्वम् । अत एवैकशेषसूत्रे भाष्ये उक्तं—नवै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वादिति । तथा परस्परस्मादित्यादि न विरुध्यते इत्यन्तं मूलं मेषान्तरेति हरिश्च तथा कैयटहरदत्तप्र-काशरत्नाकरदण्डथाद्युक्तञ्च चिन्त्यमिति चेत्? सत्यम्, तत्र मेषपदोपात्तयोरेव क्रियाश्रयत्वात्कर्तृत्वं परस्प-रपदोपात्तयोरेव विभागाश्रयत्वादपादानत्वम् । अत एव 'देवदत्तयज्ञदत्तावन्योन्यमाश्लिष्यतः' इत्यादौ तयोः कर्मत्वसिद्धिः । अन्यथा परत्वात्कर्तृत्वमेव स्यात् विवक्षायाः प्रयोगानुसारित्वादेकस्यैव विभागस्यो-भयानुयोगिकत्वोभयप्रतियोगिकत्वसत्त्वेऽपि कस्यचिदेव प्रतियोगित्वेन विवक्षेति मेषादिपदोपात्तेन तद्वि-वक्षेति नातिप्रसङ्गः । एतेन तादृशे विषये मेषः स्वस्मादपसरतीति स्यादित्यपास्तम् । प्रतियोगिताया अवधितावच्छेदकसम्बन्धभूतायाः स्वपदवाच्ये कदाप्यविवक्षणात् । आत्मानमात्मनेत्यादौ शब्दकृतभेदा-भावादन्तःकरणाद्युपाधिकृतभाष्योक्तभेदवच्छब्दरूपोपाधिकृतभेदाग्रहणे मानाभावात् शब्दालिङ्गितार्थभा-नस्यैव "न सोऽस्ति प्रत्ययो लोके" इत्यादिहर्युक्तेरङ्गीकाराच्च । अत एव चैत्र आत्मानं हन्तीत्यादौ शब्दभेदा-देव तदुपपत्तिः । स्पष्टा चेयं रीतिः कर्मवत्कर्मणेति सूत्रे भाष्ये । एतेन "मेषान्तर" इतिसमानार्थक–"उभाव-प्यध्रुवौ" इति हर्युक्तिरप्यपास्तेति दिक् । अतदावेशादित्यस्य विभागानाश्रयत्वादित्यर्थासंगतिरत आह—तद्धातूपात्तेति । प्रकृतधातूपात्तेत्यर्थः । गतिशब्देनात्र स्वनिष्ठविभागानुकूलकर्तृनिष्ठक्रियामात्रमुच्यते न तु ग्रामादिनिष्ठविभाग इति भावः । तदावेशादिति पाठे प्रकृतधातूपात्तगत्याविष्टत्वादित्यर्थे कर्तर्यनि-ष्टमेवं विभागाश्रयत्वादित्यर्थे तु तत्रानिष्टमपीत्यत आह—तन्मात्रेति । तत्पदार्थमाह—विभागमा-त्रेति । मात्रपदेन गतिव्यावृत्तिः । इदं सर्वं कैयटादिरीत्या । वस्तुतस्तु ईदृशस्य ध्रुवपदार्थत्वे त्रस्ताद-

णम् । प्रत्ययार्थस्तु क्रियायां, स च धर्मी न तु धर्ममात्रम्, विभक्त्यर्थे विहितस्य बहुव्रीहेर्धर्मिपरताया निर्विवादत्वात् । उद्धृतौदना स्थालीत्यत्र हि ओदन-

भैरवी ।

अचलस्य ग्रामादेः क्रियाऽनाविष्टत्वन्तु स्पष्टमेव । 'अश्वात्पतितः' इत्यत्राऽश्वे यद्यपि क्रियाश्रयत्वन्तथापि पत्धातूपात्तगत्याश्रयत्वन्नास्तीति ध्रुवत्वमक्षतमिति भावः ।

अत्रेदम्बोध्यम् । एवंव्याख्याने भाष्यसम्मतध्रुवपदार्थस्त्यक्त एव । तथाहि-तत्र 'त्रस्तादश्वात्पतितः' 'धावतोऽश्वात्पतित' इत्यादावश्वे ध्रुवत्वाभावमाशङ्क्य "अध्रौव्यमविवक्षितमत्र, यतः सतोऽप्यविवक्षा भवति-'अलोमिका एडका' 'अनुदरा कन्या' इति, असतश्च विवक्षा भवति-समुद्रः कुण्डिका, विन्ध्यो वर्द्धितकम्" इति । असतश्चेत्यादिनिदर्शनार्थमुक्तं, न त्वस्य प्रकृते उपयोगः । सतोऽप्यविवक्षेत्येव तु प्रकृतोपयोगि । तत्र कैयटोक्तस्याऽध्रुवत्वस्याविवक्षा, तदा भाष्यासङ्गतिः । तेन हि 'त्रस्तादश्वात्पतितः' इत्यत्राऽव्याप्त्युपपादनावसरे "अचलन्ध्रुवमेकरूपञ्च, परिस्पन्दे ध्रुवता नास्ति" इत्युक्तम् । अनेकार्थत्वाद्धातूनान्त्रासपूर्वकपरिस्पन्दे त्रसिर्वर्तत इति नाश्वस्य ध्रुवत्वम् । "न वाऽध्रौव्यस्याऽविवक्षितत्वात्" इत्यादिना समाधानावसरे ध्रौव्यमपायविषयमाश्रीयते । अपाये यदनाविष्टन्तदपाये ध्रुवमुच्यते । देवदत्तकर्तृके पाते त्रस्तस्याप्यश्वस्याऽपायावेशाभावाद् ध्रुवत्वम् । एतत्कैयटप्रदर्शितरीत्या मूलेऽप्युक्तम् । तत्र पत्धात्वर्थव्यापारानाश्रयत्वस्य त्रस्तेऽश्वे सत्त्वाद् ध्रुवत्वमिति यदि ब्रूषे तदाऽध्रौव्यमश्वे नास्त्येवेति सतोऽप्यविवक्षेत्यस्यासङ्गतिः स्पष्टैव । किञ्च सिद्धान्तेऽपि त्वदुक्तन्ध्रुवत्वमेव वक्तव्यन्तच्च नोक्तमिति भाष्ये न्यूनतापत्तिः । तस्मात्प्रकृतसूत्रे ध्रुवपदार्थोऽवधिभावोपगमाश्रयत्वे सति तदन्यस्यावधित्वोपयोगिव्यापारस्यानाश्रय इति । अपायः—विभागजन्यसंयोगानुकूलोऽवधिसाकाङ्क्षो गतिविशेष एव । अत एव

'गतिर्विना त्ववधिना नापाय इति कथ्यते ।'

भावप्रकाशः ।

श्वात्पतितो धावतोश्वात्पतित इत्यादौ ध्रुवत्वाभावादपादानत्वं कथमित्याशङ्क्याध्रौव्यमविवक्षितमत्र यतः सतोऽप्यविवक्षा भवतीति भाष्यमसङ्गतं स्यात् त्वदुक्ताध्रुवत्वस्य गतेर्धात्वर्थव्यापाराश्रयत्वस्यात्रासत्त्वेन सतो ध्रौव्यस्याविवक्षेत्यसंगतेः सिद्धान्तेपि त्वदुक्तध्रुवपदार्थोक्तेरेवौचित्येन तदसंगतेश्च, लोकसिद्धान्यार्थे तच्छक्तिकल्पने गौरवाच्च । तस्मादवधिभावोपगमाश्रयत्वे सति तदन्यस्यावधित्वोपयोगिव्यापारस्यानाश्रयत्वम् । अपायो गतिविशेषः । विभागजसंयोगानुकूलोऽवधिसाकाङ्क्षो गतिविशेष इति यावत् । तस्मिन् सत्युक्तध्रुवत्ववदपादानमिति सूत्रार्थः । त्रासादेरवधित्वोपयोगित्वाभिमानेन शङ्का । वृक्षात्पर्णमित्यादौ तदभावान्न तस्य तदुपयोगिता, तत्र तु विद्यमानस्यापि तस्य तत्त्वेनाविवक्षितत्वान्न तदुपयोगित्वं तस्येत्युत्तरम् । एवञ्च "ध्रुवमपाये" इति वृक्षस्य पर्णमित्यादौ वस्तुतस्तस्यैव पर्णस्य पातजनकत्वात्प्राप्तापादानत्ववारणाय । एवञ्चापाये इति कारके इत्यस्य क्रियाजनकत्वेन विवक्षिते इत्यर्थे तात्पर्यग्राहकं, ध्रुवपदं तु कारकान्तराणामिवापादानस्याप्यवधिभावोपगमान्यव्यापाराभावबोधनाय । हरिपद्येऽतदावेशादित्यस्य तदावेशाविवक्षणादित्यर्थः । द्वितीयपाठस्तूक्तरीत्या सम्यगेवेति बोध्यम् । तथाचापादानत्वशक्तिमानवध्यवधिमद्भावरूपसंबन्धश्च पञ्चम्यर्थः, तत्तत्सूत्रात् । सा च शक्तिस्तादृशप्रकृतधात्वर्थविभागाश्रयत्वसमानाधिकरणा, प्रकृतसूत्रात् । अत एवापादानसमभिव्याहारे विभागस्यापि धात्वर्थत्वमावश्यकमिति बोध्यम् । सूत्रेऽधोदेशसंयोगानुकूलव्यापाररूपं पातमात्रं तु नापायः, वृक्षमजहत्यपि पर्णे 'भूमिं स्पृशति वृक्षात्पर्णम्' इत्यप्रयोगात् । अत एव विभागजेति तत्र विशेषणम् । अवधिसाकाङ्क्ष इति तु 'वृक्षस्य पर्णम्' इत्यादौ वृक्षात्पर्णमिति वारणायेत्युक्तमेव । गतिं विना त्ववधिविभागजेति तत्र विशेषणम् । अवधिसाकाङ्क्ष इति तु वृक्षस्य पर्णमित्यादौ वृक्षात्पर्णमिति वारणायेत्युक्तमेव ।

गतेर्विना त्ववधिना नापाय इति कथ्यते ।

कर्मकोद्धरणावधिभूतेत्यर्थः । जुगुप्सेति । भाष्यकारास्तु जुगुप्सादीनां तत्पूर्वक-

---

## शब्दरत्नम्

मिति । वस्तुतोऽवध्यवधिमद्भावरूपविभक्त्यर्थसम्बन्धेनावधिक्रिययोरन्वय इत्यन्यत्र निरूपितम् । सा च क्रिया विभागरूपा । कालिकसम्बन्धेन फलाश्रयेऽतिप्रसङ्गवारणाय

## भैरवी ।

इति हरिणाप्युक्तम् । अवधिना विना गतिर्नापाय इति योजना । अवध्यन्वययोग्यविभागानुकूलत्वं विना गतिर्नापाय इति तदर्थः । एवञ्च त्रासस्यावधित्वोपयोगित्वाभिप्रायेण 'त्रस्तादश्वात्पतितः' इत्यत्राव्याप्तिशङ्का । तदपि त्रासस्योपयोगित्वन्न विवक्षितम्, यतः प्रवीणस्त्रस्तादपि न पतत्यतोऽप्रावीण्यमेवाऽवधित्वोपयोगि व्यापारपदेन विवक्षितम् । हरिकारिकायामतदावेशादित्यस्य तदावेशाविवक्षणादित्यर्थः । अपादानत्वशक्तिमानवध्यवधिमद्भावरूपसम्बन्धश्च पञ्चम्यर्थः । इयञ्च शक्तिः प्रकृतधात्वर्थविभागाश्रयत्वसमानाधिकरणा, अतो यत्राऽपादानस्य सत्ता तत्र विभागोऽपि धात्वर्थः । अन्यथा यत्र वृक्षमजहदपि पर्णम्भूमिं स्पृशति तत्र 'वृक्षस्य पर्णम्पतति' इत्येव भवति, नतु वृक्षादिति ।

अत एवाह—वस्तुत इति । ननु वृक्षात्पर्णं पततीत्यत्राधोदेशसंयोगानुकूलविभागो धात्वर्थस्तत्र विशेषणीभूतसंयोगस्य वृक्षावृत्तित्वादसम्भव इत्यत आह—सा चेति । एवञ्च विभागानुकूलस्तत्समानाधिकरणो व्यापारो धात्वर्थः । नन्वेवं विभागरूपफलाश्रयत्वाद् वृक्षस्य कर्मसंज्ञा प्राप्नोतीत्यत आह—कालिकेति । न तदाश्रयस्य कर्मत्वमिति । एवाञ्चानुयोगित्वावच्छिन्नविभागानुकूलो व्यापारो धात्वर्थ इति भावः । वस्तुतस्तु कर्मत्वस्य प्राप्तिरेव नास्तीत्याशयेनाह—विभागजन्यसंयोगेति । एवञ्च पञ्चम्यर्थस्य विभागेऽन्वयः । फलत्वञ्च संयोगस्य, नतु विभागस्येति न कर्मत्वापत्तिरिति भावः । 'ग्रामादायाति' इत्यादौ तु विभागजन्योत्तरदेशसंयोगानुकूलो व्यापारो धात्वर्थः । 'वृक्षन्त्यजति' इत्यत्र तु विभागानुकूलस्तद्व्यधिकरणो व्यापारो धात्वर्थः । प्रतियोगिता फलतावच्छेदकसम्बन्धः । ननु निवृत्तेर्यत्नविशेषतया तन्मा-

## भावप्रकाशः ।

इति हर्युक्तेश्च । अवध्यन्वययोग्यविभागानुकूलत्वं विना गतिर्नापायपदवाच्येति तदर्थः । तदेतद्धृदि निधायाह—वस्तुत इति । एवञ्च कैयटहरदत्तमूलं तथा पर्वतात्पतत इत्यादि प्रकाशरत्नाकरदण्ड्याद्युक्तं च चिन्त्यम् । अवधिशब्दस्य "मर्यादायां स्मृतोऽवधिः" इत्यादिकोशात् 'काश्यवधिकगमनं' 'मुक्त्यवधिकः संसारः' इत्यादौ तथैव दर्शनाच्च मर्यादार्थकत्वेन वस्तुतस्तस्य तत्त्वेऽपि पञ्चम्यन्तेन रूपेणाबोधात् सूत्रादलाभाच्च, घटस्य वस्तुतो द्रव्यत्वेऽपि ततस्तद्बोधाभाववत् । तच्चार्थादवधिरेवेति प्रागुक्तमूलं तु युक्तमेव । एवं च 'अवधिः पञ्चम्यर्थो लाघवात्, न तु धातूपात्तेत्याद्युक्तं व्यर्थत्वात्' इति भूषणमान्याद्युक्तमयुक्तमिति बोध्यम् । तदभिप्रेत्याह—अवधीति । उक्ताशयेनैवाह—अन्यत्रेति । उद्द्योतादावित्यर्थः । ननु वृक्षात्पर्णमित्यादौ संयोगानुकूलव्यापारस्य धात्वर्थत्वेन संयोगस्य तेन सम्बन्धेन वृक्षासम्बन्धित्वादसम्भव एवात आह—सा चेति । तथाच वृक्षात्पर्णं पततीत्यादौ विभागानुकूलस्तत्समानाधिकरणो व्यापारो धात्वर्थः । अन्वयस्तु वक्ष्यमाणरीत्या । अन्यत्राप्येवमूह्यम् । नन्वेवं विभागरूपफलाश्रयत्वाद्वृक्षस्य कर्मतापत्तिरत आह–कालिकेति । फलाश्रये–स्थाल्यादौ । येन सम्बन्धेन यस्य फलत्वं स फलतावच्छेदकसम्बन्धः । स च यथायथं बोध्यः । तदाश्रयस्य—विभागाश्रयस्य । प्रतियोगितया कर्तृनिष्ठविभागीयानुयोगितासम्बन्धस्यैव तत्र तत्त्वादिति भावः । तत्रान्यार्थं तन्निवेशेऽपि वस्तुतः प्रकृतेऽतिप्रसङ्ग एव नेत्याह–विभागेति । तथाच वृक्षात्पर्णं पततीत्यादौ विभागजन्यसंयोगो धात्वर्थः । तत्र विभागे पञ्चम्यर्थो विशेषणम्, प्रकृत्यर्थश्च प्रत्ययार्थे; वृक्षरूपापादानकविभागपूर्वकसंयोगः पर्णवृत्तिरिति बोधः । वस्तुतोऽपादानवृक्षीयं वृक्षापादानकं वा पर्णकर्तृकं पतनमिति बोधः । तथाच संयोगस्यात्र व्यापारत्वेन विभागस्य तदजन्यत्वेन नातिप्रसङ्गः । वृक्षाद्भूमिं पर्णं पततीत्यादौ विभागजन्यसंयोगानुकूलव्यापारो

निवृत्तिलक्षकतामाश्रित्य सूत्रेण तत्सिद्धिमाहुः । एवमुत्तरसूत्रेष्वपि ।

"भीत्रा" । कथं तर्हि—

"कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे"

इति रामायणम् ? अत्राहुः—कस्य संयुगे इति । न चैवं संयुगस्यैवापादानसञ्ज्ञापत्तिः, परयाऽधिकरणसञ्ज्ञया बाधात् । अधिकरणत्वाविवक्षायां त्विष्टापत्तिः । अध्ययनादिति । अध्ययनसम्बन्धिनी ग्लानिरित्यर्थः ।

---

शब्दरत्नम् ।

फलतावच्छेदकसम्बन्धस्य कर्मलक्षणे निवेशान्न तदाश्रयस्य कर्मत्वं, विभागजन्यसंयोगस्य धात्वर्थत्वाद्वेत्यन्यत्र विस्तरः । निवृत्तीति । विश्लेषेत्यर्थः ।

इष्टापत्तिरिति । शेषत्वविवक्षया कस्येति षष्ठीत्यन्ये । सम्बन्धिनीति ।

भैरवी ।

त्रे लक्षणायामपि नाऽपायलाभ इत्यत आह—विश्लेष इति । बौद्धो विभाग इत्यर्थः । तदुक्तम्भाष्ये—"अयं योगः शक्योऽवक्तुम् । कथं 'वृकेभ्यो बिभेति' 'चोरेभ्यस्त्रायत' इति ? इह तावद् वृकेभ्यो बिभेति य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति यदि मां वृकाः पश्यन्ति, ध्रुवो मे मृत्युरिति बुद्ध्या सम्प्राप्य निवर्तते तत्र ध्रुवमपायेऽपादानमित्येव सिद्धम् । चोरेभ्यस्त्रायत इति य एष मनुष्यः प्रेक्षापूर्वकारी सुहृद्भवति स पश्यति यदीमं चोराः पश्यन्ति ध्रुवमस्य वधबन्धनादिपरिक्लेशा इति स बुद्ध्या सम्प्राप्य निवर्त्तयति, तत्र ध्रुवमपायेऽपादानमित्येव सिद्धम्" इति । एवञ्चेदृशे विषये बिभेत्यादयो भयपूर्वकनिवृत्तिरूपाऽर्थे लाक्षणिका इत्यर्थादुक्तम्भवति ।

कस्य संयुग इत्येवमन्वये भयहेतुविषयकत्वं जिज्ञासायां स्पष्टतया न लभ्यते इति संयुगे

भावप्रकाशः ।

धात्वर्थः, वृक्षात्फलं त्यजतीत्यादावपि स एव, ग्रामादायातीत्यादौ विभागजन्योत्तरदेशसंयोगानुकूलो व्यापारोऽर्थ इत्यादि यथायथं बोध्यम् । वृक्षं त्यजतीत्यादौ विभागानुकूलस्तद्व्यधिकरणो व्यापारोऽर्थ इति कर्मत्वेनापादानत्वबोधः । स्यन्देस्तु विभागोऽर्थ इति वृक्षे स्यन्दत इत्येव । चलतेस्त्वासनाच्चलित इति प्रयोगादस्त्येव विभागार्थत्वं, वृक्षाद्विभजते इत्यादौ विभागजन्यपूर्वदेशसंयोगनाशोऽर्थः । 'सार्थाद्धीयते' इति तु कर्मणि लकार इति प्रागुक्तम् । यत्तु नैयायिकाः—विभागः पञ्चम्यर्थः, आश्रयत्वं प्रकृतिप्रत्ययार्थयोः संसर्गः, विभागस्य च जन्यजनकभावेन धात्वर्थेऽन्वयः; यद्वा विभाग आश्रयश्च पञ्चम्यर्थ इति, तन्न, वृक्षापादानकेत्येवं बोधानुभवात् वृक्षाद्विभजत इत्यादौ विभागस्य बोधावृत्त्यापत्तेश्च । तत्रापादानस्यैव पञ्चम्यर्थत्वे किमर्धजरतीयेन ? आद्ये प्रकृत्यर्थप्रत्ययार्थयोस्तत्तत्वल्लक्षाभेदान्वयस्य त्यागापत्तिश्च । एतेनाषष्ठ्यर्थबहुव्रीहिप्रतिबन्धादिना दूषितत्वान्न धर्मी तदर्थ इति रत्नाकरोक्तमपास्तम्, इष्टापत्तेः, युक्त्यन्तरस्य वक्ष्यमाणत्वाच्च । तदाह—इत्यन्यत्रेति । उद्द्योतादावित्यर्थः । निवृत्तेर्व्यापाररूपत्वेन तल्लक्षणायामप्यनिर्वाहादाह—विश्लेषेति । एतेन तथाप्रकाशाद्युक्तमपास्तम् ।

यथाश्रुतनिर्वाहे तथोक्तिरयुक्तेत्याशयेनाह—शेषत्वेति । क्रियाजनकत्वेनाविवक्षया सम्बन्धित्वेन

सरला ।

विश्लेषेत्यर्थ इति । तथाचानिष्टसाधनत्वज्ञानपूर्वकनिवृत्तिर्जुगुप्सतेरर्थः, प्रागभावसाधारणकृत्यभावानुकूलव्यापारपूर्वकनिवृत्तिर्विरमतेरर्थः, इष्टसाधने वस्तुनि यत् समानदेशत्व-समानकालत्वोभयसम्बन्धेनाधिकारविशिष्टेष्टसाधनत्वाभावज्ञानं तत्पूर्वकनिवृत्तिः प्रमाद्यतेरर्थ इति तदर्थः । मूले आहुरिति । एतेन तत्तदर्थपूर्वकनिवृत्तिलक्षणयाऽपादानत्वसिद्धौ सम्बन्धित्वेन विवक्षायां प्राप्तायाः षष्ठ्या बाधनार्थमिदं वचनमित्यपास्तम् । एवं च तादृशविवक्षायां 'पापस्य जुगुप्सते' इति भवत्येवेत्यन्यत्र विस्तरः ।

"जनिकर्तुः" ॥ जननं जनिः—उत्पत्तिः । 'इञजादिभ्यः' इति जनेर्भावे इञ्, 'जनिघसिभ्यामिण्' इत्युणादिसूत्रेण इण् वा । "जनिवध्योश्च" इतिवृद्धिप्रतिषेधः । तस्याः कर्तेति शेषषष्ठ्या समासः । तथाच धात्वन्तरयोगेऽपि भवति । 'अङ्गादङ्गात्सम्भवसि' इति यथा । तदेतदाह-जायमानस्येति । एतेन 'इक्श्तिपौ धातुनिर्देशे' इति इका निर्देशोऽयमित्याश्रित्य "गमहन" इत्युपधालोपप्रसङ्गमर्थासङ्गतिं समासानुपपत्तिं चोद्भावयन्तो मीमांसावार्तिककाराः समाहिता इति भावः । इह सूत्रे प्रकृतिग्रहणं हेतुमात्रपरमिति वृत्तिकृन्मतम्, पुत्रा-

---

शब्दरत्नम् ।

तज्जन्येत्यर्थः ।

**अर्थासङ्गतिमिति** । न हि धातुं प्रति कर्तृत्वं किन्तु तद्वाच्यक्रियां प्रत्येवेत्यर्थः ।

भैरवी ।

कस्य बिभ्यतीत्येवमवान्वयः । षष्ठी तु क्रियाजनकत्वेनाविवक्षायां सम्बन्धित्वेन विवक्षायाञ्चेत्याशयेनाह-शेषत्वेति । अन्य इत्युपादानमरुचिबोधनाय । तद्बीजन्तु "भीत्रार्थानाम्" इति सूत्रस्य बुद्धिकृतापायमाश्रित्य भाष्यकृता प्रत्याख्यानङ्कृतमिति यत्र तस्य विवक्षा तत्र पञ्चमी भवति पञ्चमी यत्र तु न दृश्यते तत्र बौद्धविश्लेषाविवक्षया षष्ठी युक्तैवेति । तज्जन्येति । अध्ययनजन्येत्यर्थः । कारकाऽधिकारेऽस्य सूत्रस्य पाठेन जन्यजनकभावसम्बन्धेनाऽन्वय उचित एवेत्याशयः । मूलन्तु प्राचामनुरोधेन । वस्तुतस्तु "पराजेः" इति सूत्रस्य 'य एष मनुष्यः प्रेक्षापूर्वकारी भवति सोऽध्ययनस्य दुःखत्वदुर्धरत्वबुद्ध्या ततो निवर्तते' इति प्रत्याख्यानैकवाक्यतया योऽध्ययनार्थमप्रवृत्तस्तत्राप्ययम्प्रयोग इष्ट एवेति परापूर्वकजिधातोरनिष्टसाधनत्वप्रकारकज्ञानमर्थः । अध्ययनपदस्याध्ययनज्ञाने लक्षणा । एवञ्चाध्ययनज्ञानजन्यमध्ययनविशेष्यकमनिष्टसाधनत्वप्रकारकं ज्ञानमिति फलितम् । अतस्तस्मान्निवर्तत इति ।

'अनिकर्तुः' इति प्रयोगे उपधालोपप्रसङ्गस्य प्रकारान्तरेणाऽपि वारणं सम्भवतीत्या-

भावप्रकाशः ।

विवक्षया चेत्यर्थः । एतेन मूलेऽत्राहुरित्यरुचिसूचकमिति सूचितम् । तद्बीजन्तु बुद्धिकृतापादानत्वाविवक्षायां षष्ठ्या युक्तत्वेन व्यवहितान्वयो न युक्तः । न चेदृशे विषये षष्ठ्यभावार्थमेव सूत्रवार्तिकादिरिति वाच्यम्, भाष्यकारीयप्रत्याख्यानविरोधापत्तेः । एतेन सूत्रवार्तिकमतमेव युक्तं न प्रत्याख्यानं, मुख्यार्थमादाय षष्ठ्यापत्तेरिति कौस्तुभोक्तमपास्तमिति । सम्बन्धिनीतीति । अत्र मान्याः—लक्षणवाक्ये लक्षणायां मानाभावेन मुख्यार्थपुरस्कारेण प्रयोगे षष्ठ्यर्थः फलित इति, तत्प्राचामनुरोधेन । तदपवादत्वमात्रेणसम्बन्धार्थकत्वस्य प्राक्खण्डितत्वात् कारकाधिकारे पाठेन क्रियाजनकत्वमात्रविवक्षायामेतत्प्रवृत्तेश्च, यथोत्तरं मुनीनां प्रामाण्येन प्रत्याख्यानपरभाष्यविरोधापत्तेश्च; तद्ध्वनयन्नाह—तज्जन्येत्यर्थ इति । तथाच जन्यत्वं पञ्चम्यर्थः, शेषषष्ठ्यपवादिकेयमिति भावः । इदमपि प्रकाशाद्यनुसारिमूलानुरोधेन । वस्तुतस्तु कृतिसाध्यत्वधीसमानाधिकरणस्तद्विषयकोत्साहाभावो धातोरर्थः । विषयोऽत्रापादानम्, उक्तसूत्रात् । अध्ययनापादानको देवदत्तकर्तृक उत्साहाभाव इति बोधः, तत्पूर्विका निवृत्तिरिति वा । एतेनानिष्टं धात्वर्थः, अध्ययनजन्यमनिष्टमिति बोध इति रत्नाकराद्युक्तमपास्तम्, तथाबोधाननुभवात्, असोढशब्देन तदर्थालाभाच्च, भूतकालाविवक्षया ग्लानिविषयमात्रं हि ततो लभ्यते, "प्रेक्षापूर्वकारी मनुष्योऽध्ययनस्य दुःखत्वदुर्धरत्वादि पर्यालोच्य बुद्ध्या प्राप्य ततो निवर्तते" इति भाष्येण सर्वथाऽध्ययनाप्रवृत्तावप्यस्य प्रयोगस्येष्टतया तत्रानिष्टस्याध्ययनजन्यत्वासम्भवाच्चेति बोध्यम् ।

**अर्थासङ्गतिमितीति** । जन्धातूत्पत्त्यनुकूलव्यापाराश्रय इत्यर्थापत्तेरिति भावस्तदाह—नहीति ।

त्प्रमोदो जायते' इत्युदाहरणात् । उपादानमात्रपरमिति तु भाष्यकैयटमतम् । तदुभयसाधारणमुदाहरणमाह—ब्रह्मण इति । ब्रह्मा-हिरण्यगर्भः । स च हेतुरेव, न तूपादानम् । किं च ब्रह्म मायाशबलम्, तद्धि सर्वकार्य्योपादानम्, इति वेदान्तसिद्धान्तः ।

शब्दरत्नम् ।

समासानुपपत्तिः "तृजकाभ्याम्" इति निषेधात् । उपधालोपप्रसङ्गस्तु 'गमेरिङ्' इत्यादाविव 'जनिघसिभ्याम्' इत्यादाविव चानुकार्यस्वरूपभङ्गभिया न कृत इत्यन्ये । सौत्रत्वादिति परे । भाष्यकैयटेति । इदमेव युक्तम्, प्रकृतिशब्दस्य तत्रैव प्रसिद्धेः, प्रत्याख्यानपरभाष्यसम्मतत्वाच्च । किञ्च वृत्तिमते 'कारके' इत्यधिकृतस्य कारणसामान्यवाचिनो निर्धारणसप्तम्यन्तस्यान्वयोऽसम्भवी न हि कारणानां मध्ये उपदानकारणमितिवत्कारणानां मध्ये कारणमिति सम्भवति ।

भैरवी ।

शयेनाह—उपधालोपप्रसङ्गस्त्विति । "हलः श्नः शानच्" इति सूत्रेऽनुकार्यस्वरूपभङ्गेऽपि शास्त्रीयङ्कार्यङ्कृतमेवेत्याशयेनाह—सौत्रत्वादितीति । मूले—भाष्यकैयटमतमिति । तत्र भाष्ये—"अयमपि योगः शक्योऽवक्तुम् । कथङ्गोमयाद् वृश्चिको जायते, गोलोमाविलोमभ्यो दूर्वा जायन्ते, अपक्रामन्ति तास्तेभ्यः" इत्युक्तम् । तत्राऽपक्रामन्तीति प्रतीकमुपादाय 'लोकप्रसिद्ध्याश्रयेणैतदुच्यते । लोके हि यद्यस्माज्जायते तत्तस्मान्निर्गच्छति' इति कैयटेन व्याख्यातम् । यदि प्रकृतिशब्दः कारणमात्रपरः स्यात्तदा दण्डादिनिमित्तकारणवाचकादपि सूत्रसत्त्वे पञ्चमी स्यात् । प्रत्याख्यानपक्षे तु ततः कार्यस्य निर्गमाभावात्प्रत्याख्यानविरोधः स्पष्ट एवेति सूत्रे प्रकृतिशब्द उपादानकारणमात्रपर इति लभ्यते । अत एवाह—इदमेवेति । इदमेव—भाष्यकैयटमतमेव । तत्रैव—उपादानकारण एव । अत एव मूलोक्तम् 'ब्रह्मण' इत्युदाहरणं वेदान्तसिद्धान्तानुसारेणैवोपात्तम् । अत एव "यतो वा इमानि भूतानि जायन्ते" इति श्रुतौ 'यतः' इति पञ्चमी दृश्यते । वृत्तिकारमते तु वाक्यार्थोऽनुपपत्तिरस्तीत्याह—किञ्चेत्यादिना । इतिवदिति । व्यतिरेकविषये दृष्टान्तोऽयम् । ननु यदि प्रकृतिशब्द उपादानकारणमात्रपरस्तर्हि 'पुत्रात्प्रमोदः' इत्याद्युदाहरणानाङ्का गतिरिति चेत् ? पुत्रे उपादानत्वारोपेणेति गृहाण । कारकाधिकारेऽस्य पाठकरणेन यथा न सूत्रजन्यशाब्दबोधा-

भावप्रकाशः ।

आद्यदोषस्यान्यथापि निवारणमाह—उपधेति । अप्रकृतदृष्टान्तमुक्त्वा प्रकृतं तमाह—जनीति । पूर्वमतेऽतिप्रसङ्गापत्तिरत आह—सौत्रत्वादिति । दृष्टान्तौ तावेवेति भावः । मूले सिद्धान्ताभावादाह—इदमेवेति । भाष्यादिमतमेवेत्यर्थः । तत्रैव—उपादानकरणे एवेत्यर्थः । मायाशबलं ब्रह्म जगदुपादानकारणमित्यौपनिषदसिद्धान्तः । ननु तस्य लोके शास्त्रे चान्यत्रापि न प्रसिद्धिरत आह—प्रत्याख्यानेति । एतत्सूत्रप्रत्याख्यानेत्यर्थः । जायन्ते इत्यस्य ततोऽपक्रामन्तीत्यर्थः । ब्रह्मणो निःसरमाणा उत्पद्यन्ते इति यावत् । ब्रह्मापादानिका प्रजाकर्तृकोत्पत्तिरिति बोधः । निःसरणं लोकप्रसिध्याश्रयं, यद्यस्माज्जायते तत्ततो निर्गच्छतीति लोकव्यवहारात् । स च व्यवहार उपादानकारणविषय एवेति भाष्यमतम् । अत एव ब्रह्मणो जगदुपादानत्वे "यतो वा इमानि भूतानि जायन्ते" इति पञ्चमीमुपष्टम्भिकामाहुः पुत्रात्प्रमोद इत्यादावुपादानत्वारोपेणापादानत्वम् । एवञ्च वृत्तौ हेतुपदमपि तत्परमेवेति न विरोधः । सूत्रार्थासम्भावापत्त्या सूत्रकृतोऽपीदमेवेष्टमित्याह—किंचेति । प्रकृतानुरोधेनाह—कारणेति । यद्यप्यन्यत्र प्रथमार्थे सप्तमीत्युक्तं तथापि प्रकृते हेतुपदेन तदर्थलाभादगत्या आह—निर्धारणेति । असम्भवमेवाह—नहीति ।

"जनिकर्तुः" ॥ जननं जनिः—उत्पत्तिः । 'इञ्वजादिभ्यः' इति जनेर्भावे इञ्, 'जनिघसिभ्यामिण्' इत्युणादिसूत्रेण इण् वा । "जनिवध्योश्च" इतिवृद्धिप्रतिषेधः । तस्याः कर्तेति शेषषष्ठ्या समासः । तथाच धात्वन्तरयोगेऽपि भवति । 'अङ्गादङ्गात्सम्भवसि' इति यथा । तदेतदाह–जायमानस्येति । एतेन 'इक्श्तिपौ धातुनिर्देशे' इति इका निर्देशोऽयमित्याश्रित्य "गमहन" इत्युपधालोपप्रसङ्गमर्थासङ्गतिं समासानुपपत्तिं चोद्भावयन्तो मीमांसावार्तिककाराः समाहिता इति भावः । इह सूत्रे प्रकृतिग्रहणं हेतुमात्रपरमिति वृत्तिकृन्मतम्, पुत्रा-

---

## शब्दरत्नम् ।

तज्जन्येत्यर्थः ।

**अर्थासङ्गतिमिति** । न हि धातुं प्रति कर्तृत्वं किन्तु तद्वाच्यक्रियां प्रत्येवेत्यर्थः ।

## भैरवी ।

कस्य बिभ्यतीत्येवमवान्वयः । षष्ठी तु क्रियाजनकत्वेनाविवक्षायां सम्बन्धित्वेन विवक्षायाञ्चेत्याशयेनाह–शेषत्वेति । अन्य इत्युपादानमरुचिबोधनाय । तद्बीजन्तु "भीत्रार्थानाम्" इति सूत्रस्य बुद्धिकृतापायमाश्रित्य भाष्यकृता प्रत्याख्यानङ्कृतमिति यत्र तस्य विवक्षा तत्र पञ्चमी भवति पञ्चमी यत्र तु न दृश्यते तत्र बौद्धविश्लेषाविवक्षया षष्ठी युक्तैवेति। तज्जन्येति । अध्ययनजन्येत्यर्थः। कारकाऽधिकारेऽस्य सूत्रस्य पाठेन जन्यजनकभावसम्बन्धेनाऽन्वय उचित एवेत्याशयः । मूलन्तु प्राचामनुरोधेन । वस्तुतस्तु "पराजेः" इति सूत्रस्य 'य एष मनुष्यः प्रेक्षापूर्वकारी भवति सोऽध्ययनस्य दुःखत्वदुर्धरत्वबुद्ध्या ततो निवर्तते' इति प्रत्याख्यानैकवाक्यतया योऽध्ययनार्थमप्रवृत्तस्तत्राप्ययम्प्रयोग इष्ट एवेति परापूर्वकजिधातोरनिष्टसाधनत्वप्रकारकज्ञानमर्थः । अध्ययनपदस्याध्ययनज्ञाने लक्षणा । एवञ्चाध्ययनज्ञानजन्यमध्ययनविशेष्यकमनिष्टसाधनत्वप्रकारकं ज्ञानमिति फलितम् । अतस्तस्मान्निवर्तत इति ।

'अनिकर्तुः' इति प्रयोगे उपधालोपप्रसङ्गस्य प्रकारान्तरेणाऽपि वारणं सम्भवतीत्या-

## भावप्रकाशः ।

विवक्षया चेत्यर्थः। एतेन मूलेऽत्राहुरित्यरुचिसूचकमिति सूचितम्। तद्बीजन्तु बुद्धिकृतापादानत्वाविवक्षायां षष्ठ्या युक्तत्वेन व्यवहितान्वयो न युक्तः । न चेदृशे विषये षष्ठ्यभावार्थमेव सूत्रवार्तिकादिरिति वाच्यम्, भाष्यकारीयप्रत्याख्यानविरोधापत्तेः। एतेन सूत्रवार्तिकमतमेव युक्तं न प्रत्याख्यानं, मुख्यार्थमादाय षष्ठ्यापत्तेरिति कौस्तुभोक्तमपास्तमिति । सम्बन्धिनीतीति । अत्र मान्याः—लक्षणवाक्ये लक्षणायां मानाभावेन मुख्यार्थपुरस्कारेण प्रयोगे षष्ठ्यर्थः फलित इति, तत्प्राचामनुरोधेन । तदपवादत्वमात्रेणसम्बन्धार्थकत्वस्य प्राक्खण्डितत्वात् कारकाधिकारे पाठेन क्रियाजनकत्वमात्रविवक्षायामेतत्प्रवृत्तेश्च, यथोत्तरं मुनीनां प्रामाण्येन प्रत्याख्यानपरभाष्यविरोधापत्तेश्च; तद्ध्वनयन्नाह—तज्जन्येत्यर्थ इति । तथाच जन्यत्वं पञ्चम्यर्थः, शेषषष्ठ्यपवादिकेयमिति भावः । इदमपि प्रकाशाद्यनुसारिमूलानुरोधेन । वस्तुतस्तु कृत्यसाध्यत्वधीसमानाधिकरणस्तद्विषयकोत्साहाभावो धातोरर्थः। विषयोऽत्रापादानम्, उक्तसूत्रात् । अध्ययनापादानको देवदत्तकर्तृक उत्साहाभाव इति बोधः, तत्पूर्विका निवृत्तिरिति वा । एतेनानिष्टं धात्वर्थः, अध्ययनजन्यमनिष्टमिति बोध इति रत्नाकराद्युक्तमपास्तम्, तथाबोधाननुभवात्, असोढशब्देन तदर्थालाभाच्च, भूतकालाविवक्षया ग्लानिविषयमात्रं हि ततो लभ्यते, "प्रेक्षापूर्वकारी मनुष्योऽध्ययनस्य दुःखत्वदुर्धरत्वादि पर्यालोच्य बुद्ध्या प्राप्य ततो निवर्तते" इति भाष्येण सर्वथाऽध्ययनाप्रवृत्तावप्यस्य प्रयोगस्येष्टतया तत्रानिष्टस्याध्ययनजन्यत्वासम्भवाच्चेति बोध्यम् ।

**अर्थासङ्गतिमितीति** । जन्धातूत्पत्त्यनुकूलव्यापाराश्रय इत्यर्थापत्तेरिति भावस्तदाह—नहीति ।

त्प्रमोदो जायते' इत्युदाहरणात् । उपादानमात्रपरमिति तु भाष्यकैयटमतम् । तदुभयसाधारणमुदाहरणमाह—ब्रह्मण इति । ब्रह्मा-हिरण्यगर्भः । स च हेतुरेव, न तूपादानम् । किं च ब्रह्म मायाशबलम्, तद्धि सर्वकार्योपादानम्, इति वेदान्तसिद्धान्तः ।

---

शब्दरत्नम् ।

समासानुपपत्तिः "तृजकाभ्याम्" इति निषेधात् । उपधालोपप्रसङ्गस्तु 'गमेरिड्' इत्यादाविव 'जनिघसिभ्याम्' इत्यादाविव चानुकार्यस्वरूपभङ्गभिया न कृत इत्यन्ये । सौत्रत्वादिति परे । भाष्यकैयटेति । इदमेव युक्तम्, प्रकृतिशब्दस्य तत्रैव प्रसिद्धेः, प्रत्याख्यानपरभाष्यसम्मतत्वाच्च । किञ्च वृत्तिमते 'कारके' इत्यधिकृतस्य कारणसामान्यवाचिनो निर्धारणसप्तम्यन्तस्यान्वयोऽसम्भवी न हि कारणानां मध्ये उपादानकारणमितिवत्कारणानां मध्ये कारणमिति सम्भवति ।

भैरवी ।

शयेनाह—उपधालोपप्रसङ्गस्त्विति । "हलः श्नः शानच्" इति सूत्रेऽनुकार्यस्वरूपभङ्गेऽपि शास्त्रीयङ्कार्यङ्कृतमेवेत्याशयेनाह—सौत्रत्वादितीति । मूले—भाष्यकैयटमतमिति । तत्र भाष्ये—"अयमपि योगः शक्योऽवक्तुम् । कथङ्गोमयाद् वृश्चिको जायते, गोलोमाविलोमभ्यो दूर्वा जायन्ते, अपक्रामन्ति तास्तेभ्यः" इत्युक्तम् । तत्राऽपक्रामन्तीति प्रतीकमुपादाय 'लोकप्रसिद्ध्याश्रयेणैतदुच्यते । लोके हि यद्यस्माज्जायते तत्तस्मान्निर्गच्छति' इति कैयटेन व्याख्यातम् । यदि प्रकृतिशब्दः कारणमात्रपरः स्यात्तदा दण्डादिनिमित्तकारणवाचकादपि सूत्रसत्त्वे पञ्चमी स्यात् । प्रत्याख्यानपक्षे तु ततः कार्यस्य निर्गमाभावात्प्रत्याख्यानविरोधः स्पष्ट एवेति सूत्रे प्रकृतिशब्द उपादानकारणमात्रपर इति लभ्यते । अत एवाह—इदमेवेति । इदमेव—भाष्यकैयटमतमेव । तत्रैव—उपादानकारण एव । अत एव मूलोक्तम् 'ब्रह्मण' इत्युदाहरणं वेदान्तसिद्धान्तानुसारेणैवोपात्तम् । अत एव "यतो वा इमानि भूतानि जायन्ते" इति श्रुतौ 'यतः' इति पञ्चमी दृश्यते । वृत्तिकारमते तु वाक्यार्थोऽनुपपत्तिरस्तीत्याह—किञ्चेत्यादिना । इतिवदिति । व्यतिरेकविषये दृष्टान्तोऽयम् । ननु यदि प्रकृतिशब्द उपादानकारणमात्रपरस्तर्हि 'पुत्रात्प्रमोदः' इत्याद्युदाहरणानाञ्च गतिरिति चेत् ? पुत्रे उपादानत्वारोपेणेति गृहाण । कारकाधिकारेऽस्य पाठकरणेन यथा न सूत्रजन्यशाब्दबोधाभावप्रकाशः ।

आद्यदोषस्यान्यथापि निवारणमाह—उपधेति । अप्रकृतदृष्टान्तमुक्त्वा प्रकृतं तमाह—जनीति । पूर्वमतेऽतिप्रसङ्गापत्तिरत आह—सौत्रत्वादिति । दृष्टान्तौ तावेवेति भावः । मूले सिद्धान्ताभावादाह—इदमेवेति । भाष्यादिमतमेवेत्यर्थः । तत्रैव—उपादानकरणे एवेत्यर्थः । मायाशबलं ब्रह्म जगदुपादानकारणमित्यौपनिषदसिद्धान्तः । ननु तस्य लोके शास्त्रे चान्यत्रापि न प्रसिद्धिरत आह—प्रत्याख्यानेति । एतत्सूत्रप्रत्याख्यानेत्यर्थः । जायन्ते इत्यस्य ततोऽपक्रामन्तीत्यर्थः । ब्रह्मणो निःसरमाणा उत्पद्यन्ते इति यावत् । ब्रह्मापादानिका प्रजाकर्तृकोत्पत्तिरिति बोधः । निःसरणं लोकप्रसिद्ध्याश्रयं, यद्यस्माज्जायते तत्ततो निर्गच्छतीति लोकव्यवहारात् । स च व्यवहार उपादानकारणविषय एवेति भाष्यमतम् । अत एव ब्रह्मणो जगदुपादानत्वे "यतो वा इमानि भूतानि जायन्ते" इति पञ्चमीमुपलम्भिकामाहुः पुत्रात्प्रमोद इत्यादावुपादानत्वारोपेणापादानत्वम् । एवञ्च वृत्तौ हेतुपदमपि तत्परमेवेति न विरोधः । सूत्रार्थासम्भावापत्त्या सूत्रकृतोऽपीदमेवेष्टमित्याह—किंचेति । प्रकृतानुरोधेनाह—कारणेति । यद्यप्यन्यत्र प्रथमार्थे सप्तमीत्याद्युक्तं तथापि प्रकृते हेतुपदेन तदर्थलाभादगत्या आह—निर्धारणेति । असम्भवमेवाह—नहीति ।

'भुवः' ॥ भवनं भूरिति । सम्पदादित्वाद्भावे क्विप् । पूर्वसूत्रे समासनिर्दिष्टमपि कर्तृग्रहणमनुवर्तते, स्वरितत्वादित्याह—भूकर्तुरिति । प्रभवत्यस्मादिति प्रभवः । ल्यब्लोप इति । ल्यबन्तस्य गम्यमानार्थकत्वादप्रयोगे इत्यर्थः । यतश्चेति । यदवधित्वेनाश्रित्याध्वनः कालस्य वा निर्माणं परिच्छेदः प्रतिपाद्यते तस्मादित्यर्थः । तेन पञ्चम्यन्तार्थेनाऽर्थद्वारा प्रयुक्तान्निर्मीयमाणाऽध्ववा-

---

शब्दरत्नम् ।

**भावे क्विबिति** । व्याख्यानाज्जनिसाहचर्याच्चेति भावः । **प्रभवतीति** । प्रभवनमत्र प्रथमप्रकाशः । सूत्रभवनमप्येतदेव । **अप्रयोग इति** । तदन्तशब्दाज्ञानेऽपि तदर्थज्ञाने इत्यर्थः । यथा—'प्रविश' 'पिण्डीम्' इत्यादौ "इग्यणः" इति सूत्रभाष्योक्तरीत्या वाक्यैकदेशप्रयोगस्तस्यैव च पदस्य वृत्त्या सम्पूर्णवाक्यार्थबोधकता, तथा प्रकृतेऽपीति बोध्यम् । एवं फलेभ्यो यातीत्यादावपि । **अर्थद्वारा प्रयुक्तादिति** । तदर्थ-

भैरवी ।

नुपपत्तिस्तथैवार्थकल्पना उचितेति भावः ।

व्याख्यानादिति । प्राचां व्याख्यानादित्यर्थः । ननु यदि कर्तरि क्विप् तदा पूर्वसूत्रादेकदेशस्य कर्तृपदस्याऽनुवृत्तिर्न स्वीकर्तव्येति लाघवमत आह—जनिसाहचर्यादिति । भावविहितप्रत्ययान्तजनिशब्दस्योपादानम्पूर्वसूत्रेऽस्तीति तत्तुल्यत्वादित्यर्थः । प्रथमप्रकाश इति । "हिमवतो गङ्गा प्रभवति" इति भाष्योदाहरणात् सूत्रे प्रशब्दोपादानाच्च । हिमवदपादानको गङ्गाकर्तृकः प्रथमप्रकाश इति बोधः । भाष्यरीत्या तु—हिमवतो निःसरमाणा गङ्गा प्रकाशत इति बोधः । ल्यबन्तस्य गम्यमानार्थत्वादप्रयोग इत्युक्तन्तदयुक्तम्, उच्चारितस्यैव शब्दस्य प्रत्यायकताया भाष्यकारसम्मतत्वात् । अत एव पदजन्यपदार्थोपस्थितिः शाब्दबोधम्प्रति हेतुरिति नैयायिकानां व्यवहाराऽत आह—तदन्तेति । ल्यबन्तेत्यर्थः । तदर्थज्ञानस्योपायमाह—यथेति । तथा प्रकृतेऽपीति । 'प्रासादात्प्रेक्षते' इति समुदायस्य प्रासादकर्मकपूर्वकालावच्छिन्नारोहणकर्तृकर्तृकन्तदुत्तरकालिकम्प्रेक्षणमित्यर्थे शक्तिः । एतच्छास्त्रमेव तत्र शक्तिग्राहकम् । यत्र तु ल्यबन्तस्य साक्षात्प्रयोगस्तत्र तु न पञ्चमी, लोपग्रहणात् । एतत्पञ्चम्यर्थौ ल्यबन्तार्थक्रियायाः कर्म, अधिकरणं वा । 'आसनात्प्रेक्षते' इत्येतस्मादासनाधिकरणकपूर्वकालावच्छिन्नोपवेशनकर्तृकर्तृकन्तदुत्तरकालिकं वर्त्तमानम्प्रेक्षणमिति बोधः । यत्र यत्राऽनेन पञ्चमी तत्र सर्वत्र 'फलेभ्यो याति' इत्यत्रेव बोधप्रक्रियेति सूचयितुमाह—एवमिति ।

भावप्रकाशः ।

ननु लाघवात्कर्तरि क्विबेवोचितोऽत आह—**व्याख्यानादिति** । तत्र निर्मूलत्वादाह—**जनीति** । अत्र—न तु सर्वत्र । सर्वनाम्नामुद्देश्यविधेयान्यतरलिङ्गाङ्गीकारस्यैच्छिकत्वादाह—**एतदेवेति** । हिमवतो गङ्गा प्रभवतीति भाष्योदाहरणात्सूत्रे प्रशब्दग्रहणाच्चेति भावः । तदाधारोऽपादानमिति सूत्रार्थः । हिमवदपादानको गङ्गाकर्तृकः प्रथमप्रकाश इति बोधः । हिमवतो निःसरमाणा प्रकाशत इति वार्थः । अत एव प्रकाशतेयोगे पर्याप्त्यर्थ इति तद्योगे च नेति बोध्यम् । पदजन्यपदार्थोपस्थितेरेव शाब्दबोधहेतुत्वे मूलाभिमतार्थाध्याहारपक्षोऽयुक्तोऽत आह-**तदन्तेति** । ल्यबन्तेत्यर्थः । एवमग्रेऽपि । अपिना शब्दान्तरज्ञानसमुच्चयः । तत्प्रकारमाह—**यथेति** । **तस्यैव चेति** । वाक्यैकदेशस्यैव चेत्यर्थः । **वृत्त्या**—शक्तिरूपया । **तथेति** । प्रासादकर्मकपूर्वकालावच्छिन्नारोहणकर्तृकर्तृकं तदव्यवहितकालं प्रेक्षणमित्यादिबोधेन तत्रैतत्समुदायादिशक्तिरेतच्छास्त्रबलात् । लोपे इत्युक्तेस्तत्प्रयोगे न । अयमेवार्थाध्याहारः । पञ्चम्यर्थौ ल्यबन्तार्थक्रियायाः कर्माधिकरणं चेति भावः । फलेभ्यो यातीतिवत् बोधप्रक्रियेति सूचयितुमाह—**एवमिति** । फलकर्मकाहरणफलकं यानमिति बोधात्तत्रापीत्थमेवेति भावः । विशेषयोगमाह—

चिनः प्रथमासप्तम्यौ स्तः । कालादिति । तद्युक्तादित्यपेक्ष्यते ।

प्रपञ्चार्थमिति । न च "इतरस्त्वन्यनीचयोः" इत्यमरोक्तेर्नीचार्थकस्येदं ग्रहणमिति वाच्यम्, "अस्मात्तारो मन्द्रो वा" इत्यादाविव "पञ्चमी विभक्ते" इत्यनेनैव सिद्धत्वात् ।

यत्तु—इतर इति निर्दिश्यमानप्रतियोगिक एव प्रयुज्यते । तद्यथा–चैत्रः शूरः, इतरः कातर इति । अतो नायमन्यार्थ इति; तन्मन्दम्, प्रतियोग्याऽऽकाङ्क्षाया उभयत्र तुल्यत्वाद् उदाहृतकोशविरोधाच्च । ऋते कृष्णादिति । कथन्तर्हि 'पुरुषाराधनमृते' इति ? प्रमादोऽयमित्येके । अन्ये तु 'उभसर्वतसोः' इत्यत्र दृशिग्रहणात् 'चैत्रं यावच्छीतम्' इत्यादाविव ऋतेयोगे द्वितीयापि साधुरित्याहुः । युक्तं चैतत्, 'ऋते द्वितीया च' इति चान्द्रसूत्रात् । प्रभृत्यर्थयोग इति । प्रभृत्यर्थैर्योग इत्यर्थः । तथा च "कार्तिक्याः प्रभृति" इति भाष्यं

---

शब्दरत्नम् ।

परिच्छेद्यादित्यर्थः ।

सिद्धत्वादिति । अन्यार्थयोगे तु न तेन सिद्धिः, निर्धारणप्रयोजकीभूतधर्मानभिधानात् । परस्परप्रतियोगिकभेदस्य परस्परवृत्तित्वेनाऽनिर्धारकत्वात् ।

तुल्यत्वादिति । तद्वद् 'अन्यः कातरः' इत्यस्यापि वक्तुं शक्यत्वादिति भावः ।

भैरवी ।

तस्माद्वाक्यात्फलकर्मकाऽऽहरणफलकं यानमिति बोधः । तादृशार्थे 'फलेभ्यो याति' इत्यस्य शक्तिः । निर्मीयमाणाध्ववाचिनः शब्दस्य पञ्चम्यन्तेनाऽर्थद्वारा यो योगस्तस्य स्वरूपमाह–तदर्थेति । परिच्छेद्यपरिच्छेदकभाव एव सम्बन्ध इति भावः ।

यथेतरशब्दस्य नीचार्थकस्य योगे "पञ्चमी विभक्ते" इत्यनेन सिद्धिस्तथाऽन्यशब्दयोगेऽपि तेन सूत्रेण सिद्धौ प्रकृतसूत्रेऽन्यशब्दग्रहणमपि न कार्यमिति तु नेत्याशयेनाह—अन्यार्थयोगे त्विति । अनभिधानात् । अनुक्तेरित्यर्थः । यस्मान्निर्द्धार्यते यश्च निर्द्धार्यते यश्च निर्द्धारणहेतुरित्येतत्त्रितयसन्निधाने एव निर्द्धारणस्य प्रतीत्या तत्रैव तेन सूत्रेण पञ्चमी भवति । एतेन यत्र नीचार्थकस्येतरशब्दस्य प्रयोगस्तत्रापि त्रितयप्रयोगो भवतीति ध्वनितम् । 'चैत्रादितरो मैत्रो मौढ्येन' इति यथा । ननु यथा नीचार्थकशब्दप्रयोगे निर्धारणस्योक्तिस्तथा भेदविशिष्टवाचकान्यशब्दस्य योगेऽपि कुतो न निर्धारणम् ?, भेदस्यैव निर्धारकत्वसम्भवादत आह-परस्परेति । एतेन भेदस्य साधारणधर्मत्वन्ध्वनितम् ।

तद्वत्—चैत्रः शूरः, इतरः कातर इतिवत् । अपिशब्देनाऽन्यार्थकपराऽपरशब्दप्रयोगेऽपि

भावप्रकाशः ।

तत्परीति । पञ्चम्यन्तार्थपरिच्छेद्यार्थवाचकादित्यर्थः । तदर्थेति पाठे तद्रूपो योऽर्थः पञ्चम्यन्तप्रतिपाद्यो योऽर्थइति यावत् । यद्वा अत्र तत्पदेन पञ्चम्यन्तं परामृश्यते ।

अन्यार्थेति । अन्यार्थकेत्यर्थः । तेन—'पञ्चमी विभक्ते" इत्यनेन । तथाचेतरवदन्यग्रहणमपि प्रपञ्चार्थं स्यादिति भावः । त्रितयसंनिधाने एव "यतश्च निर्धारणम्"इत्यादिवत्तस्य प्रवृत्तिरित्याशयेनाह–निर्धारणेति । अनभिधानात्—अनुक्तेः । नीचार्थकयोगे तु तत्संनिधानमस्त्येवेति भावः । ननु तत्र नीचत्ववदत्रान्यपदवाच्यभेद एव तादृशो धर्म इति तदनभिधानं कुतोऽत आह–परस्परेति । तथाच साधारणत्वं तस्येति न कार्यसाधकत्वमिति भावः ।

तद्वत्–इतरः कातर इतिवत् । अपिः परादिसमुच्चायकः । सर्वं प्रकाशादि च प्राचामनुरोधेन । वस्तु-

विवृण्वन् कैयटः प्रायुङ्क्त—तत आरभ्येत्यर्थ इति ।

### शब्दरत्नम् ।

कैयट इति । 'मेरुपृष्ठादारभ्य' इति पातञ्जलभाष्यप्रयोगोऽपि बोध्यः । आरभ्येति । अवधिमादायेत्यर्थकं तत् । आदिप्रकारार्थप्रभृतिशब्दयोगे तु न पञ्चमी, मानाभावादित्यन्यत्र विस्तरः ।

### भैरवी ।

बोध्यमिति बोधितम् । आरभ्येति । "मेरुपृष्ठादारभ्य ध्रुवपर्यन्तङ्ग्रहनक्षत्रतारागणचित्रितोऽन्तरिक्षलोकः" इति तत्र प्रयोगः । कैयटोक्तेरनार्षत्वादेवमुक्तिः । ननु प्रभृतीत्यस्य तादृशव्याख्यानेपि कस्य शब्दस्य कोऽर्थ इति स्पष्टतया न प्रतीयते इत्यत आह—अवधिमिति । तत्—प्रभृतिपदम् । एवञ्च प्रभृतिपदस्याऽऽरभ्येत्यर्थकत्वे आरभ्येत्यस्य प्रभृत्यर्थकत्वन्नानुचितमिति भावः । ननु प्रभृत्यर्थकशब्दयोगे चेत्पञ्चमी तदा यत्र आद्यर्थकस्य प्रकारार्थकस्य वा तस्य प्रयोगस्तत्रापि पञ्चमी स्यादत आह—आदीति । एवञ्च यत्रावधिमादायेत्यर्थकस्य प्रभृतिशब्दस्य प्रयोगस्तत्राऽवधावभेदेन पञ्चम्यन्तार्थस्यान्वयः । पञ्चमी तु साधुत्वार्था । नचावधिमादायेत्यत्रावधेरादानकर्मत्वे तद्विशेषणवाचकादपि द्वितीया युक्तैवेति वाच्यम्, "अपादाने पञ्चमी" इति सूत्रे 'यतश्चाध्वकालनिमानम्' इति वार्तिकप्रत्याख्यानाय च "इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते-'कार्तिक्याः प्रभृत्याग्रहायणी मासे" इति भाष्येण प्रभृतिशब्दाभावेऽपि तदर्थसत्तामात्रेण पञ्चमी भवतीति वचनस्य बोधनात् अन्यथा तादृशस्थले तत्पदाभावे पञ्चम्यर्थं वचनारम्भस्याऽऽवश्यकत्वेन प्रत्याख्यानासङ्गतिः स्पष्टैव । यत्र तु न तदर्थस्य सत्ता, तत्र तु न पञ्चमीत्याशयेनाऽऽदीत्याद्युक्तमिति भावः । प्रकारः—सादृश्यम् । आरभ्येत्यस्य गृहीत्वेति यत्रार्थस्तत्र तु ग्रहणकर्मवाचकाद् द्वितीयैव भवति, आङ्पूर्वकाद्रभ्धातोस्तादृशोऽर्थो ज्ञायत इति क्रियायां योगसत्त्वात् । यत्र तु प्रभृतिशब्दस्यैव प्रयोगस्तत्र तु न द्वितीया, क्रियायोगाभावात् । अन्यत्र—शेखरादौ ।

### भावप्रकाशः ।

तत्त्वं तु अन्यतोऽवसेयं; तद्ध्वनयन्नाह–इति भाव इति । कैयटोक्तेरनार्षत्वादाह–मेर्विति । ध्रुवपर्यन्तं ग्रहनक्षत्रतारागणचित्रितोऽन्तरिक्षलोक इति तद्बोधस्तत्र । ननु प्रभृतीत्यस्य कथमारभ्येत्यर्थोऽत आह–अवधिमिति । तत्–प्रभृतिपदम् । एवञ्चारभ्येत्यस्याप्येतदर्थकता बोध्या । अवधौ च पञ्चम्यन्तार्थस्याभेदेनान्वयः । तद्विशेषणत्वेऽपि न द्वितीया, "अपादाने" इति सूत्रे यतश्चेति वार्तिकप्रत्याख्यानाय 'इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते कार्तिक्याः प्रभृत्याग्रहायणी" इति भाष्येण प्रभृतिशब्दाभावेपि तदर्थसत्तामात्रेण पञ्चमीत्यर्थकेन "प्रभृत्यर्थयोगे पञ्चमी" इति वचनस्य बोधितत्वात् । अन्यथा तत्पदाभावे पञ्चम्यर्थं वचनावश्यकत्वे तत्प्रत्याख्यानासङ्गतिः स्पष्टैवेति भावः । अत एवाह—आदीति । आदिसादृश्यान्यतरार्थकेत्यर्थः । आरभ्येत्यस्य गृहीत्वेत्यर्थं तु कर्मत्वाद् द्वितीया । प्रातःकालमारभ्येत्यादौ यथा । प्रभृतिशब्दार्थस्य तु क्रियात्वाभावान्न तद्योगे कदाचिदपि द्वितीयाऽत आह—इत्यन्यत्रेति । शेखरादावित्यर्थः ।

### सरला ।

बोध्य इति । "अपादाने पञ्चमी" इति सूत्रे "यतश्चाध्वकालनिमानं ततः पञ्चमी कार्तिक्या आग्रहायणी मासे" इति वार्तिकप्रत्याख्यानाय "इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते कार्तिक्याः प्रभृत्याग्रहायणी मासे" इति भाष्येण 'प्रभृतिशब्दाभावेऽपि तदर्थसत्तामात्रेण पञ्चमी' इत्यर्थकेन 'प्रभृत्यर्थयोगे पञ्चमी" इति वचनस्वरस्य भगवता बोधिततया तदर्थकारभ्यशब्दयोगेऽपि पञ्चम्याः साधुत्वात् ।

इत्यर्थकं तदिति । 'गृहीत्वा' इत्यर्थकारभ्यशब्दयोगे तु द्वितीयैव । अत एव "अवीचिमारभ्य" इति भाष्यप्रयोगे द्वितीयेति ।

वचनग्रहणादिति । सामर्थ्यादवधिमात्रं विवक्ष्यते । तेन विनेति विशेषणांशस्तु नेति भावः । यद्वा—मर्यादेति शब्द उच्यतेऽस्मिंस्तन्मर्यादावचनम्—"आङ्मर्यादाभिविध्योः" इति सूत्रम्, तत्र य आङ् दृष्टः स उक्तसञ्ज्ञ इत्यर्थः ।

परिहरेरिति । 'परेर्वर्जने वा वचनम्' इति वार्त्तिकात्पक्षे द्विर्वचनाभावः । परिरत्रेति । अत्र पञ्चमीविधौ वर्जनार्थेनापेन साहचर्यादिति भावः ।

"प्रतिनिधिप्रतिदाने च" ॥ अस्मादेव निर्देशादाभ्यां योगे पञ्चमीत्याहुः । मुख्यस्याऽभावे तत्सदृश उपादीयते स प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनं प्रतिदानम् ।

'अकर्तरि' ॥ पञ्चमी स्यादिति । तृतीयापवादोऽयम् । शतेनेति । शतमिह उत्तमर्णाय धार्यमाणत्वादृणम् । "तत्प्रयोजको हेतुश्च" इति चकारेण कर्तृसञ्ज्ञा च ।

---

शब्दरत्नम् ।

विशेषणांशस्तु नेति । तेन विनेति मर्यादा, तेन सहेत्यभिविधिरिति वृद्धोक्ताविति भावः ।

अस्मादेव निर्देशादिति । यत्त्वनेन सूत्रेणैवेति ; तन्न, एतद्घटकीभूतप्रत्योः प्रतिनिध्याद्यर्थकत्वाभावेन कर्मप्रवचनीयत्वाभावात् । उपादीयत इति । अस्य य इत्यादिः । दत्तस्य—तत्तुल्यमूल्यादेः । प्रतिनिर्यातनं—परावृत्य दानम् ।

तृतीयेति । हेतुतृतीयेत्यर्थः ।

भैरवी ।

कुत्र विशेषणांश इत्यपेक्षायामाह—तेन विनेति । तद्राहित्यतत्साहित्यरूपविशेषणांश इत्यर्थः ।

प्राचामुक्तिं खण्डयति—यत्त्विति । आदिना प्रतिदानपरिग्रहः । 'प्रद्युम्नः कृष्णात्प्रति' अत्र प्रतिशब्दः प्रतिनिध्यर्थकः । तत्र प्रतिनिपूर्वकधाधातोः कर्मणि किप्रत्ययः । प्रतिदानशब्दे च भावे ल्युट । एवञ्च यत्सम्बन्धिनी एते ततस्तद्युक्तात्पञ्चमीति सूत्रार्थः । उपादीयते इति साकाङ्क्षमत आह—य इति । यद्दत्तन्तस्यैव प्रतिदानम्बाधितन्तस्य विनष्टत्वादत आह—तत्तुल्यस्येति । मूल्यादेरिति । आदिना तत्सदृशवस्त्वन्तरपरिग्रहः ।

"कर्तृकरणयोः" इति सूत्रविहिततृतीयापवादत्वञ्च सम्भवतीत्याशयेनाह—हेतुतृतीयेति ।

भावप्रकाशः

न्यूनतां दूरीकरोति—तेनेति । तद्राहित्यतत्साहित्यरूपविशेषणेति भावः ।

प्राचोक्तं खण्डयति—यत्त्विति । अनेन-प्रकृतसूत्रेण । एवमग्रेऽपि । आदिना प्रतिदानपरिग्रहः । तथाच पञ्चम्यर्थः प्रतियोगित्वसम्बन्धः, प्रतिनिधिप्रतिदानशब्दौ कर्मक्तिभावल्युडन्तौ । यत्सम्बन्धिनी एते ततस्तद्युक्तात्पञ्चमीति सूत्रार्थः । एतेनोभयत्रापि भावप्रत्यय इति हरदत्तोक्तमपास्तम् । यत्तदोर्नित्यसाकाङ्क्षत्वादाह—उपादीति । ननु दत्तमेव न प्रत्यर्प्यते किन्तु द्रव्यान्तरमिति दत्तप्रत्यर्पणं प्रतिदानमित्यसंगतमत आह-तत्तुल्येति । दत्ततुल्यमूल्यवस्तुन इत्यर्थः । आदिना वस्तुपरिग्रहः । एवञ्च तुल्यमूल्यत्वादिना तदेव वस्तु प्रत्यर्पितमिति प्रतिपत्तेरदोष इति भावः । प्रकृतानुरोधेनाह-परावृत्त्येति । एतेन तथाप्रकाशाद्युक्तमयुक्तमिति सूचितम् ।

अन्यतृतीयायास्तत्राप्राप्त्या आह-हेत्विति ।

योगविभागादिति। एतच्च "हेतुमनुष्येभ्य" इति सूत्रे हरदत्तग्रन्थे स्पष्टम्। स्त्रियां चेति। 'बाहुलकं प्रकृतेस्तनुदृष्टेः' इति वार्तिकनिर्देशोऽपीह ज्ञापकः।

'पृथग्विना' ॥ समुच्चयार्थमिति। निपातानामनेकार्थत्वादिति भावः। पञ्चमीति। तत्र मण्डूकप्लुत्या पञ्चमी। द्वितीया तु सन्निहितैव।

दूरं, दूरात्, दूरेण वेति। इह सप्तम्यपि वक्ष्यते। किं च "दूरान्ति कार्थेभ्य" इति सूत्रस्योत्तरत्राप्यनुवर्तनादधिकरणेऽप्येभ्यो विभक्तिचतुष्टयं बोद्धव्यम्। तथा च प्रयुज्यते-'दूरादावसथान्मूत्रम्' इति। आवसथस्य दूरे इत्यर्थः। असत्त्वेति। सत्त्ववचनत्वं च तद्विशेष्यकत्वम्। एवं च सामानाधिकरण्येन प्राति-

---

शब्दरत्नम्।

हरदत्तग्रन्थे इति। भाष्ये तु न दृश्यते। इह—अगुणे स्त्रियां चेत्यत्र।

सन्निहितैवेति। उभयोः समुच्चयस्तु व्याख्यानादिति बोद्धव्यम्। सप्तम्यपीति। प्रातिपदिकार्थमात्रे इति शेषः। तद्विशेष्यकत्वमिति। सत्त्ववचनप्रातिपदिकार्थविशेषणत्वमित्यर्थः। "दूरान्तिकार्थेभ्य" इत्यस्योदाहरणे क्रियाविशेषणत्वेनाऽसत्त्ववाचिता बोद्ध्या। "सप्तम्यधिकरणे च" इत्यत्र अनुवृत्ते तु नास्य सम्बन्धो व्याख्यानादिति

भैरवी

हरदत्त इत्यनेन सूचितामरुचिम्प्रकटयति—भाष्ये त्विति। इहेत्यस्य स्त्रियामित्येवार्थ इति भ्रमवारणायाह—अगुण इत्यादि। एवञ्च तादृशवार्तिकनिर्देशात्सूत्रे यद्विशेषणद्वयन्तत्प्रायिकमिति कल्पनीयमिति भावः।

ननु सन्निहितत्वाद् द्वितीयाया एव समुच्चयः स्यादत आह—उभयोरिति। व्याख्यानादिति। "अन्यतरस्याङ्ग्रहणसामर्थ्यात्पञ्चमी भविष्यति" इति भाष्योक्तिरूपादित्यर्थः। अधिकरणे विभक्तिचतुष्टयस्य वक्ष्यमाणत्वादाह—प्रातिपदिकार्थ इति। विशेषणत्वमिति। अभेदेनेति शेषः। एतच्च सत्त्वन्तद्वाचकत्वं यत्रास्ति तत्र सत्त्ववचनत्वव्यवहारः। उदाहरणे इति। 'ग्रामस्य दूरन्दूराद् दूरेण वा' इत्यत्र दूरादीनामस्त्यादिक्रियान्वयित्वेनाऽसत्त्ववचनत्वमस्तीति भावः। नन्वेवंसति "सप्तम्यधिकरणे च" इतिसूत्रे तस्याऽनुवृत्तावपि 'दूरादावसथात्' इत्यत्र दूरशब्दस्य देशविशेषप्रतिपादकतया सत्त्ववचनत्वात्पञ्चमी न स्यादत आह—सप्तम्य

भावप्रकाशः।

हरदत्तेति। संज्ञाक्रियाजातिव्यतिरिक्तं धर्ममात्रं गुण इति तदभिमानः। अनेन सूचितारुचिमाह—भाष्ये त्विति। एतेन तथा प्रकाशाद्युक्तमपास्तम्। इहेत्यस्य स्त्रियांचेत्येवार्थो मूलात्प्रतीयतेऽत आह—अगुणे इति। तथाचोक्तवार्तिकं तयोः प्रायिकत्वबोधकमिति गूढाकूतम्।

ननु सन्निहितत्वाद् द्वितीयासमुच्चय एव स्यादत आह—उभयोरिति। व्याख्यानादिति। अन्यतरस्यांग्रहणसामर्थ्यात्पञ्चमी भविष्यतीति भाष्योक्तरूपादित्यर्थः। वस्तुतस्तु इत एव भाष्यात्तत्समुच्चय एव, न द्वितीयासमुच्चयः, फलाभावात्। "ततोऽन्यत्रापि दृश्यते" इत्यनेन तत्र तत्सिद्धेः। एतेन तथाप्रकाशाद्युक्तमपास्तमिति स्पष्टमन्यत्रेति बोध्यम्। अधिकरणे विभक्तिचतुष्टयस्य वक्ष्यमाणत्वादाह—प्रातिपदिकार्थेति। लिङ्गसंख्याकारकान्वयित्वरूपसत्त्वविशेषकत्वरूपतद्विशेषकत्वं पथि न दूरेऽत आह—सत्त्वेति। उक्तरूपसत्त्वमुच्यतेऽनेन तादृशं यत्प्रातिपदिकं तदर्थेत्यर्थः। नन्वेवं लक्ष्यासम्भवः तत्रापि तद्विशेषणत्वादत आह—दूरान्तिकेति। उदाहरणे इति। जातावेकवचनं, ग्रामस्य दूरं दूराद् दूरेण वेत्यादिषु। क्रियेति। दूरादीनामस्त्यादिक्रियेत्यर्थः। नन्वेवमुत्तरसूत्रेऽप्येवं स्यात् तथाच दूरादावसथान्मूत्रमित्यादौ न स्यात्तत्र

पदिकार्थविशेष्यकं व्युदस्यते । तदाह–दूरः पन्था इति । एतेन "करणे च स्तोक" इति सूत्रे 'करणे किम्–क्रियाविशेषणे कर्मणि मा भूत्—स्तोकं पचति, क्रिया न द्रव्यम्' इति प्राचां ग्रन्थो व्याख्यातः । यत्तु—तमनूद्य क्रियाया विशेष्यत्वेन द्रव्यत्वाऽवश्यम्भावाच्चिन्त्यमित्यूचुस्तदेव चिन्त्यम्, धातुवाच्याया: क्रियाया असत्त्वरूपस्याऽऽकरे प्रसिद्धत्वात् । न च विशेष्यत्वे तदनुपपत्तिः, कृदभिहित-भाववल्लिङ्गसङ्ख्याद्ययोगित्वमात्रेण तदुपपत्तेः । यद्यपि "हतशायिकाः शय्यन्ते"

**शब्दरत्नम् ।**

बाध्यम् । क्रिया न द्रव्यमिति । एवं च तत्समानाधिकरणविशेषणत्वादत्र स्तोकशब्द-स्याद्रव्यवाचित्वमिति भावः । तमनूद्येति । प्राचां ग्रन्थमनूद्येत्यर्थः । तदनुप-पत्तिः—असत्त्वानुपपत्तिः । कृदभिहितभाववदिति । वैधर्म्ये दृष्टान्तः । यद्वा–

**भैरवी ।**

वीति । अनुवृत्ते तु—अनुवृत्ते "दूरान्तिकार्थेभ्यः" इत्यस्मिन् । अस्य—असत्त्ववचनेत्यस्य । व्याख्यानादिति । आकरोक्तताद्दशोदाहरणप्रदर्शनमूलकव्याख्यानादित्यर्थः । क्रियाया द्रव्य-त्वाभावेऽपि कथं तद्ग्रन्थस्योपपत्तिरत आह—एवञ्चेति । क्रियाया अद्रव्यत्वे च । क्रियायां यदभेदेन विशेषणमल्पत्वावच्छिन्नन्तद्वाचकस्य स्तोकादिशब्दस्याऽसत्त्ववचनत्वमस्तीति भावः । तमनूद्येत्यस्य व्याख्यातत्वविशिष्टमनूद्येत्यर्थ इति भ्रमवारणायाह—प्राचामिति । असत्त्वानुपपत्तिरिति । 'विशेष्यन्द्रव्यम्' इति लक्षणस्य करणादिति भावः । ननु कृदभिहितो भावः 'पाकः' इत्यादावस्ति, तत्र लिङ्गसंख्यायोगित्वमेवास्ति, अतस्तत्र कथमसत्त्ववचनत्व-मिति दृष्टान्तासंगतिरत आह—वैधर्म्ये दृष्टान्त इति । एवञ्च 'पाक' इत्यत्र भावो घञ्प्रतिपाद्यो यथा द्रव्यवत्प्रकाशते तथा प्रकृते नेत्यर्थः कार्यः । साधर्म्येऽपि दृष्टान्तत्वस्य सम्भवे वैधर्म्य-पर्यन्तस्यानुचितत्वमित्याशयेनाह–यद्वेति । "अव्ययकृतो भावे" इति सिद्धान्तात्पकादिशब्द-प्रतिपाद्यक्रियाया यथाऽद्रव्यत्वन्तथा धातूपस्थाप्यफलस्यापि तथात्वमस्तीति दृष्टान्तत्वं

**भावप्रकाशः ।**

तस्य द्रव्यविशेषणत्वादत आह–सप्तम्यधीति । अनुवृत्ते तु–"दूरान्तिकार्थेभ्यः" इत्यस्मिन्निति शेषः । अस्य–असत्त्ववचनेत्यस्य । व्याख्यानादिति । आकरोक्तादिति भावः । एतेन तत्रानुवृत्तिः प्रातिपदि-कार्थे विधिश्चेत एवेति सूचितम् । तच्च व्याख्यानं प्रकाशे स्पष्टम् । नन्वेतावता कथं तद्ग्रन्थसङ्गतिरत आह–एवंचेति । क्रियाया अद्रव्यत्वे चेत्यर्थः । तत्समानेति । तस्याःसंयोगरूपक्रियायाः समानाधिक-रणं यद्विशेषणमल्पत्वावच्छिन्नं तत्प्रतिपादकत्वादित्यर्थः । अत्र–स्तोकं चलतीत्यादौ । तमनूद्येत्यस्य व्याख्यातत्वविशिष्टमनूद्येत्यर्थवारणायाह–प्राचामिति । प्रसादकृताम् । मूले ऊचुः–प्रकाशकृतः । तत्पदे-नान्यपरामर्शभ्रमायाह–असत्त्वेति । क्रियाया विशेष्यत्वेऽसत्त्वरूपत्वानुपपत्तिरित्यर्थः, विशेष्यं द्रव्यमिति लक्षणादिति भावः । पाकाद्याशयेनाह–कृदभीति । पाक इत्यादौ यथा द्रव्यवत्प्रकाशस्तथा प्रकृते नेति भावः । साधर्म्यदृष्टान्तसम्भवे तथा न युक्तमत आह–यद्वेति । "अव्ययकृतो भावे" इति विहितक्त्वादे-स्तदनन्वयित्वेन यथा तत्त्वं तथा धातूपात्तफलस्यापीत्यर्थः । नहि क्रियाया विशेष्यत्वाङ्गीकारे असत्त्वरूपत्वं नेति वचनमस्ति, नवा तल्लक्षणमस्ति, नवा तत्सार्वत्रिकं, नवा तद्युक्तिसहं, फलव्यापारयोर्मिथो विशेष्यवि-

**सरला ।**

इति बोध्यमिति । परे तु द्वितीयासमुच्चयो न फलम्, 'विना वातं, विना वर्षम्' इत्यादौ ऋतेशब्दयोग इव "ततोऽन्यत्रापि दृश्यते" इत्यनेनैव सिद्धेः । अत एव भाष्ये द्वितीया समुच्चयो नोक्तः । अत एव "करणे च" इति सूत्रे द्वितीयासमुच्चयो न । अन्यथा अत्र द्वितीयासमुच्चये उत्तरत्रापि सन्नियोगशिष्टतया तदनुवृत्त्यापत्तिरिति प्राहुः ।

इत्यादौ भाष्ये संख्यान्वयः स्वीकृतः, 'पचति भवति' इत्यादौ कर्तृत्वकर्मत्वान्व-

शब्दरत्नम्।

पक्त्वा, पक्तुमित्यादिकृदभिहितभावेत्यर्थः इत्यादाविति। इदमुपलक्षणं पचतीत्या-दावपि कारकगतसंख्यां क्रियायामारोप्य तत्रैव तदन्वयस्य ङ्याप्सूत्रे भाष्ये उक्तत्वात्।

भैरवी।

साधर्म्यं द्रष्टव्यम्। इत्यादाविति। आदिना "उष्ट्रासिका आस्यन्ते" इत्यस्य परिग्रहः। प्रसिद्धस्थलं विहायाऽप्रसिद्धस्य प्रदर्शनमनुचितमित्याशयेनाह—इदमुपेति। सङ्ख्या-मिति। द्वित्वादिरूपामित्यादिः। एकत्वन्त्वनारोपितमस्त्येव, "एका क्रिया" इति भूवादि-सूत्रस्थभाष्यात्। तत्रैव—क्रियायामेव। तदन्वयस्येति। प्रत्ययार्थद्वित्वादीनामन्वयस्ये-त्यर्थः। ङ्याप्सूत्र इति। तत्र हि—प्रातिपदिकाधिकारस्य प्रयोजनकथनावसरे धातोः स्वाद्यु-त्पत्तिशङ्काया अपवादैस्तव्यदादिभिर्बाधप्रतिपादनेन निवारणे कृते "तिङन्तात्तर्हि मा भूवन्" इति परेणोक्ते "एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते, ते चाऽत्र तिङोक्ता एकत्वादयः" इति कृत्वा, "उक्तार्थत्वान्न भविष्यन्ति। टाबादयस्तर्हि तिङन्तान्माभूवन्निति। स्त्रियां टाबादयो विधीयन्ते। नच तिङन्तस्य स्त्रीत्वेन योगोऽस्ति" इति भाष्ये उक्तम्। तत्र "टाबादयस्तर्हि" इति प्रतीकमुपादाय कैयटेनोक्तम्—'यथा साधनाश्रयसंख्याभिधायित्वन्तिङान्तथा तद्गत-लिङ्गाभिधायित्वमपि स्यादिति भावः। न च तिङन्तस्येति—क्रियाप्रधानत्वादाख्यातस्य क्रियायाश्चाऽसत्त्वभूतत्वात्सत्त्वधर्मेण लिङ्गेनाऽयोगः। न च द्रव्यधर्मलिङ्गग्रहणयोग्यत्वन्नि-यतत्वाच्छब्दशक्तीनामिति भावः' इति। अत्र भाष्यकृता तिङन्ताट्टाबादिशङ्कायाः स्त्रीत्वेन योगाभावेन यथा वारणङ्कृतन्तथा तिङन्तात्सुबुत्पत्तिरपि संख्यायोगाभावेन न वारिता, किन्तु तिङा उक्तत्वादिति रीत्या वारिता। तेन साधनाश्रयसंख्यासम्बन्धयोग्यता तिङन्त-वाच्यक्रियाया अस्तीति ध्वनितम्। तदुक्तं हरिणा—

> एकत्वेऽपि क्रियाख्याते साधनाश्रयसंख्यया।
> भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रयः॥

इति भाष्यप्रदीपोद्द्योतेऽप्युक्तम्। अत्र एतत्स्वरसात्साधनगतसंख्यायाः क्रियायामारोपेण तिङर्थसंख्यायाः प्रकृत्यर्थ एवान्वयः। आरोपमूलतया च कर्तुर्ण्येकत्वप्रतीतिः, शब्दशक्तिस्व-भावाच्च। स्वप्रकृतिकप्रत्ययवाच्यसाधनगताया एव तस्यास्तत्रारोपः। तेन भावे न द्विवच-नापत्तिः। यदा तु तत्र प्रकारान्तरेण संख्यावगमस्तदा भावेऽपि बहुवचनं भवत्येव "हत-शायिकाः शय्यन्ते" इति यथा। अत्र हि उपमानबहुत्वाद्धात्वर्थे बहुत्वावगतिः। न चैवं 'पचतः कल्पम्' इत्यत्र द्विवचनापत्तिः, संख्यायास्तिङोक्तत्वात्। एकवचनन्तु साधुत्वार्थ-मिति न दोषः। तदपि प्रथमाया एव नान्यासामनभिधानात्। यदि संख्यायाः स्वप्रकृत्यर्थ-कर्त्रादावन्वयस्तदा स्त्रीत्वस्यापि तत्रैव स्यादिति वैषम्यन्दुरुपपादम्। एतच्च भाष्यकृता 'संख्याया अभावात्' इति नोक्तङ्किंतूक्तार्थत्वादित्यभिहितन्ततः कल्प्यते इति। एतेन प्रत्ययार्थसंख्यायाः प्रत्ययार्थकर्त्रादावन्वयस्वीकारे 'प्रत्ययानाम्प्रकृत्यर्थान्वितस्वार्थबोध-कत्वम्' इति व्युत्पत्तिविरोध इत्यपि निरस्तम्। तिङन्तार्थक्रियायाङ्कर्मत्वान्वयस्योदा-

भावप्रकाशः।

शेषणभावस्य सर्वैरेवाङ्गीकृतत्वात्तस्या भाष्याद्युक्तासत्त्ववचनत्वभङ्गापत्तेः, मूलाद्युक्तरीत्या तदुपपत्तेः सत्त्वा-च्चेति दिक्। इत्यादीति। इत्याद्यव्ययकृदभिहितभाववदित्यर्थः। इत्यादावित्यादिनोष्ट्रासिका आस्यन्ते इत्यादीनामेव परिग्रहः स्यात्, किञ्च प्रसिद्धं विहायाप्रसिद्धपर्यन्तधावनं व्यर्थमत आह–इदमुपेति। ननु क्रियायामेकत्वसत्त्वात्पचतीत्यत्र तदनुपयोगोऽत आह–आदाविति। तथाच तेन पचते इत्यादिसं-

यश्च, तथाऽपि लिङ्गस्य कारकान्तरस्य चाऽभावो निर्बाध एव । उक्तञ्च—

क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः ।
असत्त्वरूपता तस्या इयमेवावधार्यताम् ॥

इति पञ्चमी ।

---

शब्दरत्नम् ।

भवतीत्यादाविति । पश्य मृगो धावतीत्यादिशब्दार्थः । लिङ्गस्येति । तन्निरूपित-विशेष्यतायामेव द्रव्यत्वमिति भावः । क्रियानाधारेति । धात्वर्थानाधारेत्यर्थः । करणत्वादिभिरिति यावत् । स्वातिरिक्तपदान्तरवाच्यक्रियानिरूपितकरणत्वादिभिर्न युज्यते इत्यर्थः । इयमेव—लिङ्गकरणत्वादिभिरसम्बन्धरूपैव । असत्त्वरूपतेत्येतदपेक्ष्य स्त्रीलिङ्गनिर्देशः ॥

इति पञ्चमी ।

भैरवी ।

इरणमाह—पश्य मृगो धावतीत्यादि । अत्र धावनक्रियाया दृशिक्रियाकर्मत्वमस्ति । एतच्च प्राक् प्रतिपादितम् । तन्निरूपितेति । लिङ्गनिरूपितेत्यर्थः ।

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते । द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥

इत्यत्र भेद्यत्वेनेति यदुक्तन्तदविरोधसम्पादनायैवमुक्तम् । भेद्यत्वेनेत्यस्याऽविशेष्यत्वे-नेत्यर्थात् । एवकारेण लिङ्गनिरूपितविशेष्यताशून्यत्वमेवासत्त्वरूपत्वमित्युक्तम् । क्रिया-शब्दस्य व्यापारमात्रे प्रसिद्धेर्व्यापारानाधारकारकङ्कर्मकारकमपि तदनन्वयित्वं वक्तुम-शक्यम्, 'पश्य मृगो धावति' इत्यत्र कर्मत्वान्वयस्य स्वीकारादत आह—धात्वर्थेति । कार-कपदमत्र कारकशक्तिपरम्, तत्फलितार्थमाह—करणेति । नन्वेवमपि "ज्योतिष्टोमेन स्वर्ग-कामो यजेत" इत्यादौ आख्यातोपात्तभावनायां यज्धात्वर्थस्य यागस्य करणत्वेनाऽन्व-योऽपि दृष्ट इति दोष इत्यत आह—स्वातिरिक्तेति। अत्र स्वपदङ्करणत्वाश्रयबोधकपदपरम् । पदान्तरेत्यनेन स्वस्यापि पदव्यवहार्यत्वं ध्वनितम् । एवञ्च—लिङ्गञ्च क्रियानाधारकाणि—कारकाणि च, एतैः क्रिया न युज्यत इति यदियमेवाऽसत्त्वरूपतेति कारिकार्थः । एतत्का-रिकायां यादयमेवेत्युक्तं तत्कथमिदंशब्दस्य यज्धात्वर्थस्यारोपितत्वविशिष्टस्य परामर्शेन तस्याऽसत्त्वरूपत्वेन नपुंसकत्वस्य प्राप्तेरत आह—लिङ्गेत्यादि । स्त्रीलिङ्गनिर्देश इति । सर्व-नाम्नामुद्देश्यविधेयान्यतरलिङ्गत्वस्य सुप्रसिद्धत्वादिति तात्पर्यम् ।

इति पञ्चमीविवरणम् ।

भावप्रकाशः ।

ग्रहः । तत्रैव-क्रियायामेव । स्फुटीभविष्यति चेदमुत्तरार्धे । शब्दार्थ इति । अत एव मूलेऽग्रे कर्मत्वेत्युक्तिः सङ्गच्छते इति भावः । तन्निरूपितेति । लिङ्गनिरूपितविशेष्यतायां सत्यामेवेत्यर्थः । तथाच लिङ्गनिरू-पितविशेष्यं द्रव्यन्तद्भिन्नमद्रव्यमिति लिङ्गानन्वयित्वमेवासत्त्वरूपत्वमित्येतदेवकारेण सूचितम् । क्रियाशब्देन न व्यापारमात्रमत आह—धात्वर्थेति । कारकपदस्य शक्तिपरत्वात्तत्फलितमाह-करणत्वादीति । नन्वेवमपि यजेतेत्यादावाख्यातोपात्तभावनायां यज्युपात्तयागस्य करणत्वेनान्वयाद्दोष एवात आह—स्वातिरिक्तेति । स्वं करणत्वाद्याश्रयबोधकम् । पदान्तरेति । अनेन स्वस्यापि पदत्वं सूचितमित्यर्थः । तथाच लिङ्गानि च क्रियानाधारकारकाणि चेति द्वन्द्वः, तैर्या क्रिया न सम्बध्यते इयमेव तस्या अस-त्वरूपता इत्यवधार्यतामितिकारिकार्थः । तत्रेदमेवेत्युचितम्, असम्बन्धरूपक्रियापरामर्शेन नपुंसक-त्वप्राप्तेरत आह-लिङ्गेत्यादि । सर्वनाम्नामुद्देश्यविधेयलिङ्गयोरैच्छिकत्वात् । विवेचितमिदं सर्वमध-स्तादिति दिक् ॥

इति पञ्चमी ॥

**राज्ञः पुरुष इति ।** प्रत्ययार्थस्य प्रकृत्यर्थं प्रति प्राधान्यादप्रधानादेव षष्ठी । तदर्थश्च पुरुषे विशेषणम् । प्रधानात्तु न षष्ठी, उक्तन्यायविरोधात्, शेषत्वाभा-

---

शब्दरत्नम् ।

**प्रत्ययार्थस्य**-सम्बन्धस्य । **प्रकृत्यर्थम्**-राजार्थम् । **प्राधान्यादिति** । संसर्ग-विशेष्योभयनिरूपितत्वस्य प्रकारतायां स्वीकारादिति भावः । **तदर्थश्च**—प्रकृत्यर्थश्च । **विशेषणम्**, षष्ठ्यर्थसम्बन्धेनेति भावः । यत्तु—तदर्थशब्देन प्रत्ययार्थः सम्बन्ध इति ; तन्न, तस्य संसर्गविधयैव भानस्य भाष्यादिसम्मतत्वात् । **उक्तन्यायेति** । प्रकृत्यर्थ-

भैरवी ।

'राज्ञः पुरुषः' इत्यत्र "षष्ठी शेषे" इति सूत्रेण षष्ठी राजन्शब्दादेव भवति, न तु पुरुषश-ब्दात् ; अत्र प्रमाणाकाङ्क्षायामाह—प्रत्ययार्थस्येत्यादिना । "प्रकृतिप्रत्ययौ सहार्थम्ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्" इति न्यायस्तिङन्ते व्यभिचरितोऽत आह—संसर्गेत्यादि । प्रत्ययार्थः—स्वस्वामिभावरूपः संसर्गः, विशेष्यः-पुरुषः, एतद्द्वयनिष्ठा या विषयता-संसर्गतारूपा विषयता विशेष्यत्वाख्या विषयता च, एतद्द्वयनिरूपितत्वस्य राजपदार्थनिष्ठप्रकारतायां स्वी-कारादिति भावः । विशेषणतायाः सम्बन्धावच्छिन्नत्वनियमादाह—षष्ठ्यर्थसम्बन्धेनेति । यतो राजपदार्थनिष्ठप्रकारतायामुभयनिरूपितत्वमतः सम्बन्धनिष्ठविषयतापि प्रकारतानिरूपितेति गौणस्तत्र प्रकृत्यर्थम्प्रति प्राधान्यव्यवहारः । भाष्यादीति । समर्थसूत्रस्थभाष्यादीत्यर्थः । "षष्ठी शेषे" इति सूत्रेण षष्ठी विशेषणत्वेन विवक्षितादेव, न तु विशेष्यत्वेनाऽभिहितादिति प्रतिपा-दयति—मूले-प्रधानादिति । प्रधानत्वेन विवक्षितवाचकात्पुरुषशब्दादित्यर्थः । उक्तन्यायेति । "प्रकृतिप्रत्ययौ सहार्थम्ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्" इति न्यायेनेत्यर्थः । अयन्यायस्ति-ङन्ते व्यभिचरितोऽतो भावार्थमाह प्रकृत्यर्थस्यैवेति ।

अयम्भावः—यदा राजा स्वामित्वेन, पुरुषस्तु स्वत्ववत्त्वेन विवक्षितस्तदा राजसम्बन्धी पुरुष इति बोधो भवति । यदि षष्ठी पुरुषशब्दात्क्रियेत तदा प्रकृत्यर्थस्य पुरुषशब्दार्थस्य प्रत्ययार्थनिरूपितप्राधान्यापत्तिरिति । इदञ्च समाधानं षष्ठ्यर्थसम्बन्धस्य प्रकारतया भान-मभ्युपेत्य । यदि तु षष्ठ्यर्थस्य संसर्गतयैव भानम्भाष्यसम्मतमिति तथैव स्वीक्रियते । अत एव "षष्ठी शेषे" इति सूत्रभाष्ये "राज्ञः पुरुषः' इत्यत्र राजा विशेषणम्पुरुषो विशेष्य इत्युक्त-मन्यथा सम्बन्धं विशेष्यतया विशेषणतया वा ब्रूयादित्युच्यते तदाप्याह—मूले—शेषत्वा-भावाच्चेति । पुरुषपदार्थस्य शेषत्वाभावादित्यर्थः । प्रातिपदिकार्थमात्रवृत्तिरिति । स्वार्थ-स्य प्राधान्यविवक्षायाम्प्रातिपदिकार्थमात्रवृत्तिः, क्रियाविशेषणत्वविवक्षायाङ्कारकार्थकः । एवञ्च प्रथमादिभिर्बाधान्न तस्मादनेन षष्ठी इति भावः । नैवमिति । उक्तद्वैविध्यरहितः । षष्ठी भवत्येवेति । राज्ञः पुरुषस्य धनमित्यादौ यथा । विशेषण इति । शुक्लशब्द इत्यर्थः । प्रकृतित्वेन विवक्षिते इति शेषः । प्राधान्ये चरितार्थत्वादिति । एवञ्च प्रधाने 'घटः' इत्यत्र चरितार्थायाः प्रथमाया 'राज्ञः पुरुषः' इत्यत्र राज्ञ इति भागे चरितार्थया षष्ठ्या विशेषणे परत्वाद्बाधापत्तिरिति भावः । षष्ठीवाच्यः सम्बन्धः स्वस्वामिभावादिः । स च स्वत्वस्वामि-त्वसमूहरूप एव, न तु स्वत्वमात्रम् स्वामित्वमात्रं वा । तस्यैकव्यक्तिमात्रवृत्तितया सम्ब-

भावप्रकाशः ।

न्यायरूपहेतोर्विशेष्यादावभावेन व्यभिचरितत्वेन साधारण्यादाह—**संसर्गेति** । प्रत्ययार्थसम्बन्धपु-रुषादिनिष्ठतत्तद्विषयतानिरूपितत्वस्येत्यर्थः । **प्रकारतायां**-राजादिनिष्ठायाम् । तथाच गौणस्तत्र तावता तत्त्वव्यवहार इति भावः । यथाश्रुतमूलासङ्गतेराह—**प्रकृत्यर्थेति** । **षष्ठ्यर्थेति** च । तामेवाह—**यत्तु तदर्थेति** । **तस्य**—प्रत्ययार्थसम्बन्धस्य । **भाष्यादीति** । समर्थसूत्रस्थभाष्यादीत्यर्थः । प्रतिपादितमि-दमधस्तात् । न्यायस्य व्यभिचरितत्वस्योक्तत्वेनोक्तन्यायेत्यसंगतमत आह—**प्रकृत्यर्थेति** । राजार्थस्यै-

वाच । पुरुषशब्दो हि यथायथं प्रातिपदिकार्थमात्रवृत्तिः कारकार्थको वा । यदा तु नैवं तदा पुरुषशब्दादपि षष्ठी भवत्येव । यत्तु—अप्रधानं शेष इति, तन्न, प्रातिपदिकार्थमात्रे 'शुक्लो घटः' इत्यादौ विशेषणे षष्ठीप्रसङ्गात् । न च प्रथमया बाधः, तस्याः प्राधान्ये चरितार्थत्वात् । कर्मादीनामपीति । यथा विशेषाऽविवक्षायां 'रूपवान्'इति, तद्विवक्षायां तु 'नीलः, पीत' इत्यादि प्रयुज्यते तथेदमपि न्यायसिद्धमिति भावः ।

---

शब्दरत्नम् ।

स्यैव प्रत्ययार्थं प्रति प्राधान्यापत्तेरित्यर्थः । राजसम्बन्धी पुरुष इत्येव बोधादिति भावः । शेषत्वाभावमुपपादयति—पुरुषशब्द इति । इदमपि-कर्मादीनां सम्बन्धसामान्येनाऽन्वयविवक्षणमपि ।

भैरवी ।

न्धत्वायोगात् । सम्बन्धो हि सम्बन्धिभ्यामभिन्नः उभयसम्बन्धी भवति । न चोक्ताऽन्यतरस्य षष्ठीवाच्यत्वेऽपि तत्र आश्रयत्वनिरूपकत्वान्यतरसम्बन्धेनोभयसम्बन्धिवृत्तित्वमस्तीति वाच्यम्, निरूपकतासम्बन्धस्य वृत्त्यनियामकतयोभयत्र सम्बन्धवत्त्वप्रतीत्यसम्भवात् । उक्तसमूहस्य वाच्यत्वे तु तस्य सम्बन्ध्यभिन्नतया राज्ञि स्वामित्वस्य सत्त्वं पुरुषे स्वत्वस्य सत्त्वमाश्रयतयैव वर्त्तत इति सम्बन्धिद्वयवृत्तित्वनिर्वाहः । समूहस्यैव वाच्यत्वे "यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी" इति सूत्रभाष्यमपि साधकम् । तत्र हि-"अधिब्रह्मदत्ते पञ्चालाः" इत्यत्राऽनेन सूत्रेण ब्रह्मदत्तशब्दात्सप्तम्यां पञ्चालशब्दात् "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीया प्राप्नोति । अधिद्योत्यस्य ब्रह्मदत्तनिष्ठसम्बन्धस्य सप्तम्योक्तत्वेऽपि तद्द्योत्यस्य पञ्चालनिष्ठसम्बन्धस्य तयाऽसम्प्रत्ययात्"इत्युक्तम् । उपपदविभक्तेरिति न्यायेन समाहितमिति त्वन्यत् । अत एव स्वस्वामिभावोऽवयवावयविभाव-आधाराधेयभावः—प्रतियोग्यनुयोगिभावो-विशेष्यविशेषणभावादिः सम्बन्ध इति प्रामाणिकानां व्यवहारः । हरिकारिकयाप्येतत्स्फुटम् । तेन हि—

द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते । तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते ॥

इत्युक्तम् । अत्र द्विष्ठत्वकथनेन वृत्तिनियामकसम्बन्धस्योभयवृत्तित्वमावश्यकमिति स्पष्टमेव । असौ—सम्बन्धः, परं—विशेषणत्वम् अर्थः—प्रयोजनं यस्य तत्त्वाद्विशेषणतानियामकत्वाद्, गुणेषु—विशेषणतया विवक्षितेषु राजप्रभृतिषु, व्यतिरिच्यते—उद्भूततया प्रतीयते, भेदे सति विशेषणतया यो विवक्षितस्तस्य सम्बन्धं विना विशेषणत्वासम्भवेन सम्बन्धाकाङ्क्षायाः सत्त्वात्तत्रैवोद्भूततया प्रतीयते । विशेष्ये तु पदान्तराऽसमभिव्याहारे स्वप्रवृत्तिनिमित्तनिरूपितविशेष्यतया प्रतीयमानस्य न बहिर्भूतसम्बन्धाकाङ्क्षेति न सम्बन्धस्य विशेष्यतानियामकत्वव्यवहार इत्याह-तत्राभिधीयमानेत्यादिना । प्रधाने उपकारश्च पदान्तरसमभिव्याहारे सति तत्सम्बन्धावच्छिन्नविशेषणतानिरूपितविशेष्यतया

भावप्रकाशः ।

वेत्यर्थः । प्रत्ययार्थं प्रति—प्रधानादुत्पन्नषष्ठ्यर्थं प्रति । तत्र हेतुमाह—राजेति । तत्रैव तस्याप्राधान्यात् । अन्यथा तु तस्येष्टत्वं मूले एव स्पष्टः । एतेन सम्बन्धाभिधानाय षष्ठ्यामन्यतरतो जातायामन्यस्य प्रातिपदिकार्थवृत्तित्वं सुवचं तत्र पूर्वमेव प्रधानात् किं न स्यादिति पूर्वपक्षे भावत्कसमाधानस्याप्युक्तत्वाच्छेषत्वेत्यादि ठकोवेत्यन्तं नव्योक्तं चिन्त्यमिति रत्नाकरोक्तमपास्तम् । शब्दप्रयोगस्यार्थप्रयुक्तत्वेन तथाप्रयोगाद्विवक्षितार्थाप्रतीत्यापत्तेः । तदुद्भावयन्नाह—शेषत्वाभावमिति । तथाचान्तरङ्गत्वेन तत्र प्रथमेति भावः । षष्ठीविवक्षयोरन्यतरपरामर्शे इयमपि न्यायसिद्धेत्युचितमत आह-कर्मादीनामिति ।

सतामिति । एवं च 'नपुंसके भावे क्तस्य योगे शेषत्वविवक्षायां च' इति 'तृप्त्यर्थानां करणे षष्ठी वा' इति च प्राचां ग्रन्थे पठ्यमानं नापूर्वं वचनमिति भावः । सर्पिष इति । ज्ञोऽविदर्थस्य करणे, अधीगर्थदयेशां कर्मणि, कृञः प्रतियत्ने, रुजार्थानां भाववचनानामज्वरेः, आशिषि नाथः, जासिनिप्रहणनाटक्राथपिषां हिंसायाम्, व्यवहृपणोः समर्थयोः, कृत्वोर्थप्रयोगे कालेऽधिकरणे, इत्यष्टसूत्री तु नेह व्याख्याता, तस्याः समासनिवृत्तिफलकत्वात् । तथाहि-तत्र 'शेष' इत्यनुवर्तते । शेषत्वेन विवक्षिते च करणादौ षष्ठी सिद्धैव । तदयमर्थः-

---

शब्दरत्नम् ।

नापूर्वमिति । "षष्ठी शेषे" इति सूत्रेण सिद्धत्वादिति भावः । अष्टसूत्रीति । "कृत्वोर्थ" इति सूत्रं वृत्तिरीत्योद्धृतम् । वस्तुतस्तत्र शेषग्रहणं नानुवर्त्तते, मध्ये विच्छेदादित्यन्ये । तेषां सप्तसूत्रीति बोध्यम् । अनुवर्त्तत इति । अत एव "अधीगर्थ"

भैरवी ।

भासमानत्वरूप एव, सम्बन्धस्य द्विष्ठस्वभावत्वादिति भावः । एतेन 'राज्ञः पुरुषः' इत्यादौ 'राज्ञः' इति पदान्तरसमभिव्याहारे सत्येव पुरुषे स्वत्वम्प्रतीयते न त्वन्यथा । राज्ञ इत्यादेस्तु पदान्तरसमभिव्याहारं विनाप्यव्याहृतसम्बन्धिसामान्यनिरूपितविशेषगत्वस्य प्रतीतिरिति राजनि तादृशसम्बन्धैकदेशः स्वामित्वमवगम्यमानमन्यथानुपपत्त्या पुरुषे स्वत्वमवगमयति । अतस्तस्य तादृशसम्बन्धाश्रयत्वम्बहिरङ्गमिति पुरुषात्प्रथमैव भवतीत्यवधेयम् । पुरुषादिपदाप्रयोगे किन्तदिति जिज्ञासा भवति, सा पुरुष इत्युक्ते निवर्त्तत इति । परममूले—षष्ठ्येवेत्युक्तम् । तत्रत्या षष्ठी यदीदमा परामृश्यते तदा इयमपीत्युचितन्न त्विदमपीत्यतो व्याचष्टे—इदमपीत्यादिना ।

नापूर्वं वचनमित्यत्र हेतुः स्पष्टतया नोपन्यस्त इति हेत्वाकाङ्क्षाऽनुत्पत्तये आह—षष्ठीशेषे इति । ननु परममूले 'सर्पिषो जानीते' 'मातुः स्मरति' 'एधोदकस्योपस्कुरुते'इत्युदाहरणानि "षष्ठी शेषे" इत्यस्यैवोक्तानि, इदमनुपपन्नम्, "षष्ठी शेषे" इति सूत्राव्यवधानेन 'ज्ञोऽविदर्थस्य" इत्यादि सप्तसूत्र्या अष्टाध्याय्याम्पाठात् । तत्र ज्ञाधात्वादीनां विशिष्यपाठात्तदुदाहरणत्वस्यैव युक्तत्वात् । किञ्चाऽव्यवहितसूत्राण्युपेक्ष्य व्यवहितपूर्वस्य "षष्ठी हेतुप्रयोगे" इत्यादिसूत्रस्य धारणमप्यनुपपन्नम्, "षष्ठी शेष" इति सूत्रस्य व्याख्यानोत्तरं "ज्ञोऽविदर्थस्य" इत्यादिसूत्रव्याख्यानस्योचितत्वादित्याकाङ्क्षायामाह—मूले—ज्ञोऽविदर्थस्येत्यादि । इहेति । 'सर्पिषो जानीते' इत्याद्युदाहरणावसर इत्यर्थः । यथाश्रुतमूलासङ्गतिपरिहारार्थमाह—कृत्वोर्थेतीति । मूलासङ्गतिमेवाह—वस्तुत इति । तत्र—कृत्वोर्थ इति सूत्रे । मध्ये—"दिवस्तदर्थस्य" इत्यादिसूत्रेषु । अन्ये—भाष्यकृतः । तेषामिति । मत इति शेषः । अत एव—

भावप्रकाशः ।

एवं चेत्यस्यार्थं सूचयितुमाह—शेष इति । इत्यर्थकसूत्रेणेत्यर्थः । यथाश्रुतमूलासंगतेराह—कृत्वोर्थेतीति । तामेवाह—वस्तुत इति । बोध्यमित्यत्रान्वयः । तत्र—कृत्वोर्थेति सूत्रेणेत्यर्थः । तत्र कृत्वोर्थेतिसूत्रे मध्येविच्छेदात् दिवस्तदर्थस्येत्यादिषट्सूत्र्या तदसम्बन्धात् । अन्ये—भाष्याकृतः । तेषां—मते इति शेषः । एतेन प्रकाशरत्नाकरदण्ड्यादिभिस्तथोक्तमपास्तम् । यत्तु रत्नाकरकृत्-नेह व्याख्यातेति नव्योक्तमयुक्तं मूले सर्वपुस्तकेषु तस्यादर्शनात् इति; तन्न, मनोरमायां न व्याख्यातेति तदर्थादत एव सर्पिष इति प्रतीकं धृत्वा तथोक्तमिति केचित् । मान्यास्तु नेह व्याख्यातं तिङन्तोदाहरणपरतयेति शेषः । अत एवाह तस्या इतीति व्याचख्युः । ननु तस्य स्वरितत्वे एव मानाभावेन मूलमयुक्तम तः तत्र सम्मति

इह षष्ठ्येव न तु तल्लुक् । तथा च लुकः प्रयोजकीभूतः समास एव नेति । तथा च वार्तिकम्—'प्रतिपदविधाना षष्ठी न' इत्यादि । हरिश्चाह—

कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः ।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥ इति ।

तेन शेषत्वविवक्षायां 'सर्पिषो ज्ञानं' 'मातुः स्मरणम्' इत्यादीन्यसमस्तान्येव साधूनि । 'हरिस्मरणम्' इत्यादीनि तु शेषत्वाऽविवक्षायां कृद्योगषष्ठ्या

---

शब्दरत्नम् ।

इति सूत्रे "शेष इति वर्त्तते" इति भाष्ये उक्तम् । ननु तद्बलाल्लुगभावोऽस्तु, समासाभावः कुत इत्यत आह—तथा चेति । 'प्रतिपदविधाना षष्ठी न समस्यते' इति वार्तिकबलात्तथा कल्पनेति भावः । वस्तुतो निषेधवार्त्तिकेऽनुवादायेमानि सूत्राणीति बोध्यम् ।

स्मरणमिति । करणे ल्युट् । कृद्योगषष्ठ्येति । अत एव समासनिषेधप्रकरणे एतानि नोक्तानि । तथा सति कर्माद्यर्थकषष्ठ्यामपि समासनिषेधापत्तेः, "दिवस्तदर्थस्य"

भैरवी ।

"ज्ञोऽविदर्थस्य" इत्यादिसूत्रेषु 'शेष' इत्यस्याऽनुवृत्तिसत्त्वादेव । तद्बलात्-"षष्ठी शेषे" इतिसूत्रसिद्धषष्ठ्याः पुनर्विधानबलात् । कुत इति । यदि समासबाधस्यापि कल्पना तदा लक्षणद्वयबाधः स्यात्, मन्मते त्वेकस्यैव बाध इति लाघवमिति भावः । तथाचेतीति । इदञ्च 'तथा च वार्तिकम्' इत्यत्र यस्तथाच शब्दस्तस्य प्रतीकधारणम् । वार्तिकबलादिति । कथनेन तस्य वार्तिकस्याऽपूर्वत्वमिति प्रतीयते । एतच्च न युक्तमित्याशयेनाह-वस्तुत इति । मूले—कारकैरिति । करणकर्मकारकैः । व्यपदिष्टे—अत्र व्यपदिष्ट इत्यत्र भूते क्तप्रत्ययः । एतेन यदा शेषत्वेन विवक्षा तदा तादृशापदेशस्य निवृत्तिरिति ध्वनितम् । श्रूयमाणक्रिये बहुव्रीहिसमासोऽयम् । अधीगर्थेत्यादिसूत्रमन्यपदार्थः । प्रतिपदम्—पदम्पदमुच्चार्य या विहिता सा समासस्य निवृत्त्यर्थमित्यर्थः ।

करणे ल्युडिति । समस्तेऽसमस्ते चेति शेषः । अत एव—कृद्योगलक्षणषष्ठ्या समासस्येष्टत्वादेव । न केवलन्निषेधप्रकरणे एषाम्पाठेऽनिष्टमेव, किन्तु गौरवमपीत्याह—दिवस्तदर्थेति । अत्रैषाम्पाठे तु "अधीगर्थ" इति सूत्रात्कर्मणीत्यस्य सम्बन्धस्तत्रेति भावः । न च "षष्ठी शेषे" "उभयप्राप्तौ कर्मणि" "दिवस्तदर्थस्य" "विभाषोपसर्गे" "द्वितीया ब्राह्मणे" इत्यादि कृत्वोर्थेत्यन्तं पठित्वा "क्तस्य च" इत्यादि पठनीयम् । तथा च "दिव" इति सूत्रे

भावप्रकाशः ।

माह—अत एवेति । तद्बलात्—सप्तसूत्रीबलात् । कुत इति । लक्षणद्वयबाधे मानाभाव इति भावः । तथाचेतीति 'तथाच वार्तिकम्' इत्यत्रत्यं प्रतीकम् । अत एवाह-प्रतिपदेति । अन्यथा तस्य वाचनिकत्वे लुक एवाप्राप्त्या प्रकरणवैयर्थ्ये प्राप्ते वार्तिके तस्यानुवादसिद्ध्यर्थत्वापत्त्या अनुवादकत्वापत्तिस्तथाच वार्तिकापूर्वत्वापेक्षया सूत्राणामेव तत्त्वमुचितमिति भावः ।

करणे ल्युडिति । इदञ्च व्यस्ते व्यस्ते च बोध्यम् । एतद्व्याख्याफलं त्वनुपदमेव स्फुटीभविष्यति । मूलं द्रढयति—अत एवेति । निसससूत्राणि कल्पनाभावप्रयुक्तलाघवादिति भावः । न बाधकमतदर्थमाह—तथेति । तत्र तदुक्तौ सत्यामित्यर्थः । नन्वत्र पक्षे तत्रापि निषेधापत्तिर्न किन्तु तत्रैवेत्यपरियुक्तः । तत्र शेषेचेत्युक्तौ तु गौरवं स्पष्टमेव । कर्मणीत्यस्य त्यागे तु कर्त्रर्थेऽव्याप्तिः । तथाच तत्र निषेधेनासमस्तं शेषेनिषेधेन समस्तं सिद्धमेवेति तत्र करणेऽत आह-दिवस्तदर्थेति । तथाच तत्र पाठो दुष्कर इति भावः । यद्यपि "षष्ठीशेषे" "कर्तृकर्मणोः कृति" "उभयप्राप्तौ कर्मणि" इत्यग्रे "दिवस्तदर्थस्य" इत्यादि-

समासे बोध्यानि। तत्र च कारकपूर्वकत्वात्कृदुत्तरपदप्रकृतिस्वरः। शेषषष्ठ्या समासे त्वन्तोदात्तत्वं स्यात्, तच्चानिष्टम्। तथा च स्वरार्थमयमष्टसूत्रीति परमनिष्कर्षः। किं च 'मातुः स्मृतम्' इत्यादौ समासाभावोऽपि फलम्। न हि तत्र

---

शब्दरत्नम्।

इत्यत्र 'कर्मणि' इत्यस्य कर्त्तव्यतापत्तेश्च। ननु शेषत्वाविवक्षायां कृद्योगषष्ठ्या वैकल्पिकसमासाङ्गीकारे "अधीगर्थ" इत्यादीनां वैयर्थ्यमेवेत्यत आह-तत्र चेति। करणल्युडन्तस्मरणादिशब्दैः कृद्योगषष्ठ्या समासे "अनो भावकर्मवचनः" इत्यस्याऽप्राप्तिरिति भावः। **मातुः स्मृतमिति**। आदिकर्मणि कर्त्तर्यत्र क्तः। प्रशब्दं विनाऽपि अनुदात्तादौ

भैरवी।

कर्मणीत्यस्यावृत्त्या लाभो भविष्यतीति वाच्यम्? एवमपि तदर्थपदेनेष्टार्थस्य लाभानापत्तेः। यथास्थितपाठेऽपि विशेषं वक्तुं शङ्कते–नन्विति। वैकल्पिकेति स्वरूपकीर्तनन्न तु एवङ्कथनेन विशेषप्रयोजनसूचनम्। मूले—तत्र चेति। हरिस्मरणमित्यादौ कृद्योगषष्ठ्या समासाङ्गीकारे च। कृदुत्तरेति। गतिकारकोपपदादित्यनेनेत्यादिः। ननु नायं विशेषःकृद्योगषष्ठ्यासमासेऽपि कृदुत्तरपदप्रकृतिस्वरम्बाधित्वा "अनो भाव" इत्यस्य प्रवृत्त्याऽन्तोदात्तत्वमेव भविष्यतीति शङ्कामपाकरोति—करणल्युडन्तेति। अप्राप्तिरिति। कारकात्परमनान्तम्भावकर्मवचनमन्तोदात्तमिति तस्य सूत्रस्यार्थादिति शेषः। ननु कर्मण एव शेषत्वविवक्षेति शेषषष्ठ्या समासेऽपि कृदुत्तरपदप्रकृतिस्वरस्य प्राप्त्या विशेषाभाव इति चेत्? न, स्वरविधायके कारकशब्दस्य कर्तृत्वादिशक्तिप्रकारकबोधजनकपरत्वाच्छेषत्वविवक्षायां हर्यादिशब्दानामतथात्वात्। ननु मातुः स्मृतमित्यादौ "अधीगर्थ" इत्यादिसूत्राणाम्प्रवृत्तिर्न सम्भवति, स्मृधातोः सकर्मकतया भावे क्तप्रत्ययासम्भवेन कर्मणि क्तो वाच्यः, तेन च कर्मण उक्तत्वादनभिहितत्वाभावादत आह—आदिकर्मणीति। आदिभूतव्यापारस्यातीतत्वेऽपि भूतार्थकस्य क्तस्य साधनायारब्धं यद् "आदिकर्मणि क्तः कर्तरि" इति, तेन कर्तरि क्तप्रत्यय इत्यर्थः। एवञ्च कर्मणोऽनभिधानादस्त्येवाधीगर्थेतिसूत्रस्य प्राप्तिरिति भावः। नन्वादिक्रियाया अतीतत्वद्योतकप्रशब्दाभावात्कथन्तस्य प्राप्तिरत आह—प्रशब्दमिति। अनुदात्तादाविति। अनुपूर्वा-

भावप्रकाशः।

कृत्वोर्थेत्यन्तं पठित्वा क्तस्य चेत्यादिपाठे कर्मणीति लभ्यते तथापि तदर्थस्येत्यत्रेष्टार्थानापत्तिरिति बोध्यम्। अत्र दोषान्तरं सूचयितुं सिद्धान्तपक्षे आशङ्कते—नन्विति। वैकल्पिकेति। महाविभाषाधिकारादिति भावः। अनोभावेत्यस्य प्राप्त्याऽन्तोदात्तत्वस्यैव सत्त्वेन मूलोक्ताविशेषोऽयुक्त इति शङ्कामपाकुर्वन् तद्व्याख्याने बीजमाह—करणेति। आदिना ज्ञानादिपरिग्रहः। "अनो भाव" इति "कारकाद्दत्त" इत्यतो कारकादित्यनुवृत्त्या कारकात्परमनप्रत्ययान्तं भावकर्मवचनमन्तोदात्तं भवतीति सूत्रार्थः। एतेन हरिस्मरणमित्यादि निष्कर्ष इत्यन्तं नव्योक्तं चिन्त्यम्। शेषषष्ठीसमासेऽपि कृत्स्वरस्य दुर्वारत्वात्। तस्मात् मध्यमपदलोपिसमासेन तत्साधु। तत्र समासान्तोदात्तत्वं, षष्ठीतत्पुरुषे तु कृदुत्तरपदप्रकृतिस्वर इति विशेषः। तथाच सम्बन्धप्रकारकबोधविवक्षायां मध्योदात्तानां हरिस्मरणमित्यादीनामसाधुत्वं ज्ञापयितुमियमष्टसूत्रीति परमनिष्कर्ष इति रत्नाकरोक्तमपास्तम्। सर्पिषो ज्ञानं मातुः स्मरणमित्यादौ साधकतमं कर्तुरीप्सितमितिविभक्तयोगाभ्यां कारकसंज्ञासत्त्वेपि स्वरविधायकेषु कर्त्रादिकारकषट्कस्यैव ग्रहणात्कारकस्वराप्राप्तेः, अष्टसूत्रीत्ययुक्तेश्च, सम्बन्धस्य प्रकारतया भानाच्चेति दिक्। आदीति। आद्यक्षणावच्छिन्नव्यापाराणां भूतत्वेऽपि सर्वेषामतत्त्वादप्राप्तौ वचनम्। यदि त्ववयवगतभूतत्वस्य विशिष्टे 'पटो दग्धः' इतिवदारोपस्तदा वार्तिकं नेत्यवधेयम्। द्वितीयान्तमेतत् पश्येत्यादिशेषः। ननु गमकं विना कथमादिकर्मबोधोऽत आह—प्रेति। तस्य प्रारम्भद्योतकत्वस्य प्रसिद्धत्वादिति भावः। **अनुदात्तादाविति**। अनुपूर्वाद् दाधा-

कारकषष्ठी लभ्यते, "न लोक" इति निषेधात् । आह च—

निष्ठायां कर्मविषया षष्ठी च प्रतिषिद्धयते ।
शेषलक्षणया षष्ठया समासस्तत्र नेष्यते ॥ इति ।

एवं स्थिते वृत्त्यादिबहुग्रन्थेषु इह प्रकरणे उदाहरणं प्रत्युदाहरणं च यद्यतिङन्तं दृश्यते तत् सर्वमुपलक्षणतया नेयमिति हरदत्तादयः ।

"सर्वनाम्नस्तृतीया च" ॥ इह सर्वनाम्न इति षष्ठी, तदाह–सर्वनाम्नः प्रयोगे इति । पञ्चम्यां तु हेतुशब्दात् षष्ठीतृतीये न स्यातामिति भावः । निमित्तपर्यायेति । पर्यायग्रहणस्य फलमुदाहरति–एवमित्यादिना । प्राचा तु 'किमर्थम्'

---

### शब्दरत्नम् ।

आदिकर्मबोधवदत्रापि प्रकरणादिना तद्बाधसम्भवः । एतेन अत्र कर्मणि क्ते कर्मण उक्तत्वाद् "अधीगर्थ" इत्यस्य विषय एव न । भावे तु क्तो दुर्लभः, सकर्मकत्वात् । गत्याद्यर्थकत्वाभाच्च कर्त्तरि स दुर्लभ इत्यपास्तम् , कर्मणः शेषत्वेन विवक्षायामविवक्षितकर्मत्वेनाकर्मकतया भावे क्तस्य सुलभत्वाच्च । षष्ठी चेति । चस्त्वर्थे । एवं च तत्र समासाभावोऽपि फलमिति भावः ।

### भैरवी ।

दाधातोरादिकर्मणि क्तः । आदिना विद्त्तादिसङ्ग्रहः । एषु प्रशब्दाभावेऽपि—

अवदत्तं विदत्तञ्च प्रदत्तञ्चादिकर्मणि ।
सुदत्तमनुदत्तञ्च निदत्तमिति चेष्यते ॥

इति भाष्यकारोक्तेरिति भावः । प्रकारान्तरेणाप्यधीगर्थेति सूत्रस्य प्राप्तिमाह—कर्मण इति । एतेन भाष्यप्रामाण्यादनुदात्तादावस्तु आदिकर्मणि क्तः, प्रकृते तु क्तस्य तथात्वे मानाभाव इति परास्तम् , उक्तरीत्या भावे क्तस्य सत्त्वेनाऽदोषात् । एवञ्च—तत्र कर्मषष्ठीनिषेधे च ।

ननु किंशब्दस्य त्रिलिङ्गत्वेन किमः क्लीबत्वन्दुर्लभमित्यसङ्गतमतस्तदाशयम्प्रक-

### भावप्रकाशः ।

तोरादिकर्मणि क्तः । आदिना—

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि । सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥

इति भाष्योक्तसंग्रहः । एतेनादिकर्मणीति प्रदत्तशब्दस्यैव विशेषणम् । अन्यत्र तु निष्ठेत्यनेन सः । प्रसमभिव्याहारं विना आदिकर्मत्वाभानादिति कैयटोक्तिः परास्ता, तदुदाहरणपरोक्तभाष्यविरोधात् । तेन ह्युपसर्गत्वाभावबोधनद्वारा तादेशाभावो बोध्यते । तथाच प्रकरणादिनेति हेतुर्दृष्टान्तेऽपि बोध्यः । तदाह—प्रकरणादीति । आदिना संयोगादि । उक्तव्याख्याबीजं प्रकटयितुं कस्यचिदुक्तिं खण्डयति–एतेनेति । आदिकर्मणः कर्तरि क्तसम्भवेनेत्यर्थः । अत्र–मातुः स्मृतमित्यत्र । अधीगर्थेतीति । "कर्तृकर्मणोः" इत्यस्यापवादोऽयमिति एतस्योत्तरयोरेव सम्बन्धः सकर्मकत्वादिह अविवक्षितकर्मकाणान्तु न तत्त्वेन ग्रहणं मानाभावादिति भावः । नन्वनुदात्तादौ भाष्यप्रामाण्यात्तथात्वेऽपि अत्र तथात्वे मानाभावोऽत आह—कर्मण इति । तेषामपि तत्र तत्त्वेन ग्रहणस्य प्राक् प्रतिपादितत्वात्तथाचाधीगर्थेत्यस्य विषय एवायमिति भावः । अथवेदमपि तत्फलमिति प्रतीयते अतएवापिर्मूले प्रागुक्तइति भ्रमनिवारणायाह–चस्त्वर्थे इति । तथाच पूर्वार्धस्योत्तरार्धे हेतुत्वेनान्वय इत्याह—एवञ्चेति । तत्र कर्मषष्ठीप्रतिषेधे चेत्यर्थः । तत्र–मातुः स्मृतमित्यादौ । अपिस्तत्र प्रागुक्तस्वरसिद्धेः समुच्चायक इति भावः ।

इत्युदाहृतम्। तत्र किमः क्लीबत्वं दुर्लभम्। सामान्ये नपुंसकतां समासं चाश्रित्य कथंचिद्वा नेयम्। अन्सर्वनाम्न इति। 'निमित्तकारणहेतुषु सर्वासां

शब्दरत्नम्।

दुर्लभमिति। अर्थशब्दस्य द्वितीयान्तत्वे तु कमर्थमित्युचितम्, प्रथमान्तत्वे-ऽर्थशब्दस्य पुंस्त्वान्नपुंसकत्वं दुर्लभमिति भावः। कथं चिदिति। आद्ये क्लिष्ट-मन्त्ये लक्षणाभावोऽर्थासङ्गतिश्च। कोऽर्थः किमर्थमिति समासे सामान्ये नपुंसकत्वा-श्रयणं चेति भावः।

भरवी।

टयति—अर्थशब्दस्येति। अयम्भावः—प्रकृतोदाहरणे अर्थशब्दसमानाधिकरणः किंशब्दः, एवञ्चार्थशब्दस्य द्वितीयान्तत्वम्प्रथमान्तत्वं वा वाच्यमुभयथाऽस्य प्रयोगस्यानुपपत्तिरिहा-स्तीति अर्थशब्दस्य द्वितीयान्तत्वे तत्समानाधिकरणः किंशब्दोऽपि द्वितीयान्त एव वाच्यः। एवञ्च "किमः कः" इति सूत्रेण कादेशे 'कमर्थम्' इति स्यादर्थशब्दस्य प्रथमान्तत्वे तस्य नपुंसकत्वानुपपत्त्या तत्समानाधिकरणकिंशब्दस्यापि नपुंसकत्वानुपपत्तिः। अर्थशब्दस्य द्वितीयान्तत्वमेव यदि, तदाऽर्थमित्यस्योपपत्तावपि किमित्यस्योपपत्तिर्न सम्भवतीति।

आद्ये क्लिष्टमिति। सामान्ये नपुंसकत्वमगतिकगतिकम्। किञ्च शब्दप्रयोगस्य स्वाय-त्तत्वादेवम्प्रयोगो न युक्तः, कमर्थमित्यस्य वक्तुं शक्यत्वादिति भावः। अन्त्ये-समासपक्षे। लक्षणाभाव इति। अत्र समासपदम्बहुव्रीहिसमासपरम्, उत चतुर्थीसमासपरम्? आद्ये लक्षणाभाव इत्यस्य 'निमित्तपर्यायप्रयोग' इति लक्षणस्य प्रवृत्तियोग्यत्वाभाव इत्यर्थः। समासे पूर्वपदार्थस्य पृथगुपस्थित्यभावेन तत्र सङ्ख्याया भानाभावादिति भावः। नान्त्यः, तस्य प्रकृतिविकृतिभावे एव प्रवृत्तेरिष्टतया तत्प्रवृत्तिसम्पादकलक्षणाभाव इत्यर्थः। बहु-व्रीहिसमासपक्षे एव दूषणान्तरमाह—अर्थासङ्गतिरिति। 'हरौ शब्दायमाने हरिस्तत्र गतः, तन्दृष्ट्वा हरिर्हरौ गतः, तदनन्तरं हरिरुदासीनः सम्पन्नः' इत्यत्र कस्य हरिशब्दस्य कोऽर्थ इत्यत्र नानार्थगततच्छब्दबुबोधयिषाभिप्रायेणायम्प्रयोगः। बहुव्रीहिसमासे तु अन्यपदा-र्थस्य प्राधान्येन विवक्षितार्थलाभासङ्गतिरिति भावः। ननु समासपदञ्च चतुर्थीसमासबहु-व्रीह्यन्यतरपरम्, किन्तु कर्मधारयपरमत आह—कोऽर्थः किमर्थमितीति। विग्रहवाक्यसमासयोः समानार्थकत्वस्य न्यायसिद्धतया विग्रहे पुंस्त्वस्य सत्त्वम्। अर्थपदार्थे समासे तु यद्यप्युत्तर-

भावप्रकाशः।

ननु किम्शब्दस्य त्रिलिङ्गत्वाद्दौर्लभ्यमयुक्तमत आह—अर्थेति। द्वितीयान्तत्वे कमर्थमिति असमस्तत्वे तादृशार्थशब्दसामानाधिकरण्यादिति भावः। प्रथमान्तत्वेऽर्थेति। लिङ्गसर्वनामनपुंस-कत्वाभ्युपगमेनेति भावः। दुर्लभमिति। एवञ्च किमः क्लीबत्वं सुतरां दुर्लभमिति भावः। आद्ये क्लिष्टमिति। सामान्ये नपुंसकत्वस्यागतिकगतित्वात् स्वायत्ते शब्दप्रयोगे तथाप्रयोगो न युक्तः। कम-र्थमित्यस्य वक्तुं शक्यत्वादिति भावः। अन्त्ये इति। बहुव्रीहिसमासे इत्यर्थः। लक्षणाभावः—विशिष्य लक्षणाभाव इत्यर्थः। चतुर्थीतत्पुरुषस्य विशिष्य विहितत्वादिति केचित्। अन्ये तु लक्ष-णस्य निमित्तपर्यायेत्यस्याभाव इति अर्थः। समासे पृथगुपस्थित्यभावात्पृथक्संख्याया अभावात्तथाच नेदं तदुदाहरणं युक्तमिति व्याचक्षते। अर्थासङ्गतिरिति। उत्तरपदार्थस्य प्राधान्येन जिज्ञासाविषयत्वा-प्रतीतिरिति भावः। वस्तुतस्तु अन्त्येइति समासे इत्यर्थः। ननु किं स बहुव्रीहिश्चतुर्थीतत्पुरुषो वा? नाद्य इत्याह—लक्षणेति। उक्त एवाशयः। नान्त्य इत्याह—अर्थासङ्गेति। तत्र जिज्ञास्यत्वाप्रतीतेरिति भाव इति ध्येयम्। कर्मधारये दोषमाह—कोऽर्थ इति। आश्रयणं चेति। एवञ्चोभयाश्रयणमावश्यकं नान्य-तरेण निर्वाह इत्ययमेव क्लेश इति भावः।

प्रायदर्शनम्' इति वार्तिकं हि वृत्तिकारेण यद्यपीहोक्तं, तथाऽपि भाष्यकृता "हेतौ" इत्यत्र पठितम् । तेन सर्वनामाऽप्रयोगेऽपि प्रवर्त्तते । किं तु प्रायग्रहणात्तत्र तृतीयादय एवेत्यर्थः । वर्द्धमानस्तु प्रथमामपीच्छति ।

"षष्ठ्यतसर्थप्रत्ययेन" ॥ पञ्चम्या इति । कथं तर्हि 'ततः पश्चात्'इति ? "ततः पश्चात्स्रंस्यते ध्वंस्यते च" इति भाष्यप्रयोगात्पश्चाद्योगे पञ्चम्यपि । प्रत्ययग्रहणं चिन्त्यप्रयोजनम् ।

---

शब्दरत्नम् ।

तेनेति । यत्तु सर्वनामसूत्रशेषे भाष्यं "भवतः सर्वनामत्वे तृतीयाप्रयोजनं—सर्वनाम्नस्तृतीया च" इति, तत्तु यथाश्रुतसूत्रमते । अत एव सूत्रोपन्यासः । न तु तद्वलादिदं सर्वनामविषयम् , कैयटादिविरोधात् "हेतौ" इत्यत्रोपन्यासस्य निर्बीजत्वापत्तेश्चेति बोध्यम् ।

पञ्चम्यपीति । अत्र सार्वविभक्तिकः षष्ठ्यन्तात्तसिरित्यन्ये । चिन्त्यप्रयोजनमिति । इदमत्रैव सूत्रे भाष्ये स्पष्टम् ।

भैरवी ।

पदार्थस्य प्राधान्यन्तथापि लिङ्गविशेषविवक्षाराहित्यमित्ययङ्क्लेश इति भावः । चकारेण पूर्वपदार्थे पृथक्सङ्ख्याप्रतीत्यभावेन वार्त्तिकोदाहरणत्वासङ्गतिरपीत्यस्य सङ्ग्रहः ॥

भाष्यकृता "हेतौ" इत्यत्रेदम्पठितमिति यत्र सर्वनाम्नोऽप्रयोगस्तत्रापि चेद्वार्तिकस्य प्रवृत्तिस्तदा सर्वनामसञ्ज्ञासूत्रस्थभाष्यविरोधः प्राप्नोतीत्याशङ्काम्परिहरति—यत्त्विति । यथाश्रुतसूत्रमते—वार्तिकाभावविशिष्टसूत्रमते । अत एव—यथाश्रुतसूत्राभिप्रायकत्वादेव । सूत्रोपन्यासः—"सर्वनाम्नः" इति सूत्रोपन्यासः । "ततः पश्चात्" इति भाष्यप्रयोगस्यान्यथाप्युपपत्तिरित्याह—अत्र सार्वविभक्तिक इति । मूले—प्रत्ययग्रहणञ्चिन्त्यप्रयोजनमिति । ननु प्रत्ययस्याऽतसर्थकस्य यत्र श्रवणन्तत्र यथास्यादित्यस्य लाभार्थम्प्रत्ययग्रहणमस्तु, प्रत्ययशब्दस्य सामर्थ्यात् श्रूयमाणत्वविशिष्टप्रत्ययलाक्षणिकत्वादिति चेत् ? न, 'प्राक् प्रत्यग्वा ग्रामात्' इत्यत्र षष्ठीव्यावृत्तिः प्रत्ययग्रहणस्य फलमिति भवता वक्तव्यन्तच्चान्यथासिद्धम्, "अन्यारात्" इति सूत्रे दिक्शब्दग्रहणेनैव सिद्धेऽञ्चूत्तरपदग्रहणमतसर्थप्रत्ययान्तस्य दिक्शब्दस्य योगे या षष्ठी विहिता तस्या अप्रवृत्त्यर्थमिति पूर्वसूत्रेण पञ्चम्यैव सिद्धेः । नच पूर्वसूत्रे एवाञ्चूत्तरपदग्रहणमदिक्शब्दस्याञ्चूत्तरपदस्य ग्रहणार्थमिति कस्मान्न भवति, 'सध्यङ् देवदत्तेन' इत्यत्र देवदत्तशब्दात्पञ्चमीसिद्धिस्तत्प्रयोजनम्भविष्यतीति वाच्यम् , दिक्शब्दसाहचर्यात्पूर्वसूत्रेऽञ्चूत्तरपदस्य दिक्शब्दस्यैव ग्रहणन्त्वन्यस्येत्यस्यान्यस्य प्रयोजनस्य सत्त्वात् । अत एवाह—इदमत्रैव सूत्रे भाष्ये स्पष्टमिति । तत्र हि—"अथ प्रत्ययग्रहणङ्किमर्थम् ?

भावप्रकाशः ।

भाष्यविरोधं परिहरति-यत्त्विति । सर्वनामसूत्रेति । सर्वनामसंज्ञासूत्रेत्यर्थः । यथाश्रुतेति । वार्तिकाभावविशिष्टसूत्रमते इत्यर्थः । अत एव-यथाश्रुताभिप्रायकत्वादेव । सूत्रोपेति । "सर्वनाम्न"इति सूत्रोपेत्यर्थः । अन्वयमुखेनोक्तमर्थं व्यतिरेकेण द्रढयति-नत्विति । इदं-वार्तिकम् । आदिना हरदत्तादिपरिग्रहः । तैस्तथोदाहरणोक्तेरिति भावः । नन्वार्षानार्षविरोधे आर्षोक्तिरेव प्रबलेत्यत आह-हेताविति । तथाचार्षयोर्मिथोविरोधेऽपि संगतिकमगतिकेनान्यथा नेयमिति न दोषलेश इति भावः ।

भाष्याद्यनुक्तत्वान्मूलोक्तस्याप्रामाणिकत्वं ध्वनयितुं सिद्धान्तमाह-अत्रेति । ततः पश्चादिति भाष्यप्रयोगे इत्यर्थः । मूलं समूलयति-इदमत्रैवेति । षष्ठ्यतसर्थसूत्रेवेत्यर्थः ।

सरला ।

षष्ठ्यन्तात्तसिरिति । पश्चाच्छब्दयोगेऽनेन षष्ठ्या एव युक्तत्वादिति तदाशयः ।

"एनपा" ॥ कथं तर्हि 'तत्रागारं धनपतिगृहादुत्तरेणास्मदीयम्'इति ? उत्तरेणेति तृतीयान्ततोरणेनेत्यनेन समानाधिकरणं बोध्यम् ।

"दूरान्तिकार्थैः" ॥ अन्यतरस्यांग्रहणं समुच्चयार्थम् । तेन च विप्रकृष्टापि पञ्चमो समुच्चीयते व्याख्यानात, न तु षष्ठीद्वितीयातृतीयाः । तदे-

---

शब्दरत्नम् ।

**समानाधिकरणं बोध्यमिति** । "स्त्र्यधिकारात्परेण वासरूपविधिर्न" इत्यत्र परेणेति तृतीया । ततः परेण शास्त्रेण वासरूपसंबन्धो नेत्यर्थः । "ततः परेण नायमनुवर्त्तते" इत्यत्र सार्वविभक्तिकः षष्ठ्यन्तात्तसिरिति बोद्धयम् ।

**समुच्चीयते इति** । अतः षष्ठीपञ्चम्योरेवात्र विधानमित्यर्थः । न तु षष्ठीति ।

भैरवी ।

इह माभूत, प्राक् प्रत्यग्वा ग्रामात् । अञ्चूत्तरपदग्रहणस्याप्येतत्प्रयोजनमुक्तन्तत्रान्यतरच्छक्यमवक्तुम्"इति कथितम् ।

एनबन्तेन योगे या द्वितीया तस्या "गृहादुत्तरेणास्मदीयम्" इत्यत्रोत्तरेणेत्यस्य तृतीयान्तत्वसूचनेन वारणवदन्यत्राप्यतिप्रसङ्गः प्राप्तस्तद्वारणम्मूलकृता न कृतमिति न्यूनताम्प्रकटयन्नन्यत्राप्यतिप्रसङ्गं वारयति—स्त्र्यधिकारात्परेणेत्यादिना । परेण—शास्त्रेणेति । सहेति शेषः । विनापि तद्योगन्तृतोया "वृद्धो यूना" इतिवत् । ततः परेण नायमनुवर्तत इत्यत्र तु—परेणेति यद्यप्येनबन्तन्तथापि नासङ्गतिरित्याशयेनाह—तत इति । षष्ठ्यन्तादिति । परममूलप्रदर्शितेन एनपेतिविभक्तसूत्रेण षष्ठ्यन्तादित्यर्थः । वस्तुतस्तु "एनपा" इति सूत्रे योगविभागो भाष्ये न दृश्यते । ततः परेणेत्यत्र न षष्ठ्यन्तात्तसिः, किन्तु पञ्चम्यन्तादेव, "पृथग्विना" इति सूत्रभाष्ये सम्बन्धानुवृत्तिप्रदर्शनावसरे "षष्ठ्यतसर्थप्रत्ययेन" अन्यारादादिभिर्योगे पञ्चमी, एनपा द्वितीया, अन्यारादादिभिर्योगे पञ्चमीति प्रदर्शितन्तेनैनबन्तत्वेऽपि पञ्चम्याः प्रवृत्तेः ।

अतः—समुच्चयार्थकाऽन्यतरस्याङ्ग्रहणात्पञ्चम्या एव समुच्चयात् । मूले—व्याख्यानाभावप्रकाशः ।

मूलकृदज्ञानं प्रकटयन्नदुक्तप्रकाशसम्भवात्प्रकारान्तरेण न्यूनतां परिहरति—स्त्र्यधिकारादिति । इत्यत्र-भाष्यवाक्ये इत्यर्थः । एवमग्रेऽपि । तृतीया सहार्थे, लक्षणा च संबन्धान्ते विध्यन्तपदस्येति ध्वनयितुं तावताप्यनिर्वाहात्तदर्थमाह-ततः परेणेति । सहेति शेषः । विनापि तद्योगमित्युक्तेर्नासाधुत्वम् । अन्यत्र पूर्ववदनिर्वाहादेनबन्तत्व मनसि निधाय प्रकारान्तरेण समाधत्ते-तत इति । षष्ठ्यन्तादिति । एनपेति योगविभागविहितषष्ठ्यन्तादित्यर्थः । एवंचेदं सर्वं वृत्तिप्रक्रियाद्यनुयायिमूलाशयवर्णनमात्रम् । योगविभागे मानं तु अतसर्थेनेति षष्ठीप्रकरणेनैव षष्ठ्याः सम्बन्धे सिद्धे उत्तरत्र सम्बन्धबोधकषष्ठीग्रहणमिति तदाकूतम् । भाष्ये तु योगविभागो न दृश्यते विपरीतं षष्ठ्यतसर्थेति सूत्रात्पूर्वमेनपेत्यस्य पाठ इति लभ्यते, एवञ्च स्वरितत्व करवादधिकाराच्च पञ्चम्याः सम्बन्धो न्याय्यः । अत एव गृहादुत्तरेणास्मदीयं, स्त्र्यधिकारात्परेण, ततः परेणेत्यादिप्रयोगसङ्गतिः । एवञ्च षष्ठीअयुक्तैवेति तत्त्वम् । एतेन मूलवत्प्रकाशरत्नाकरदण्ड्याद्युक्तमपास्तम् ।

ननु मूलेऽष्टग्रन्थैक्यप्रतीतिरयुक्ता । तथा सति न तु द्वितीयातृतीये इति पाठौचित्येन षष्ठीपदघटितपाठासङ्गतेः तस्याः सूत्रोपात्तत्वेनासमुच्चेयत्वात् । न च तथैव साम्प्रदायिकः पाठ इति वाच्यम् । बहुषु पुस्तकेष्वेवमेवोपलम्भादत आह—अत इति । पञ्चमीमात्रसमुच्चयादित्यर्थः । एवेन द्वितीयादिव्यावृत्तिः । अत्र—एतत्सूत्रलक्ष्येषु । एवञ्चायं पृथगेव ग्रन्थ इति भावः । अत एवोत्तरग्रन्थं योजयति—

सरला ।

**षष्ठीपञ्चम्योरेवेति** । पृथग्विनेतिसाहचर्यादत्रापि अन्यतरस्यांग्रहणं समुच्चयार्थम् । तत्र सूत्रेऽन्यत

तदाह—पञ्चमो चेति ।

"दिवस्तदर्थस्य" ॥ तच्छब्देन व्यवहृपणौ परामृश्येते । तौ च द्यूते क्रय-विक्रयव्यवहारे च तुल्यार्थौ पूर्वसूत्रे गृहीतौ, इत्याशयेनाह—द्यूते इति । कर्म-णीति । इह 'शेषे' इति न सम्बद्ध्यते उत्तरसूत्रद्वयारम्भादिति भावः । अत

---

शब्दरत्नम् ।

विधीयन्त इति शेषः । षष्ठीद्वितीयातृतीया अत्र न विधीयन्त इत्यर्थः । तत्राद्योपात्ता, अन्त्ये समुच्चेये इति बोद्धव्यम् । समुदायविधानाभावे तात्पर्यम् ।

उत्तरसूत्रद्वयेति । अयं भावः । अत्र 'शेषे' इत्यस्य संबन्धे "विभाषोपसर्गे" इत्यत्र 'शेष' इति सम्बध्यते उत न ? नाद्यः, "दिवस्तदर्थस्य" इत्यनेनैव समासाभावस्य सिद्धत्वेन सूत्रवैयर्थ्यापत्तेः । न च पक्षे "षष्ठी शेषे" इत्यस्य प्रवृत्त्या पक्षे समासप्रवृत्तिः

भैरवी ।

दिति । लक्ष्यदर्शनमूलकादित्यादिः । विप्रकृष्टापि पञ्चमी समुच्चीयते, न तु षष्ठी द्वितीया तृतीया इति पाठः । तथा च षष्ठ्या अप्यत्र समुच्चयो निषेध्य इति प्रतीयते ; एतद्युक्तम् , षष्ठीपदस्य सूत्रे एव सत्त्वादित्याशङ्कापरिहाराय शेषम्पूरयति—विधीयन्त इति । शेष इति । स्पष्टप्रतिपत्तये तदर्थमाह—षष्ठीद्वितीयेत्यादिना । तत्र विशेषमाह—तत्राद्योपात्तेति । आद्या—षष्ठी । नन्वेवमपि निषेधप्रतियोगिविधानकर्मत्वं षष्ठ्या अपि प्रतीयते, तच्चायुक्तम् , "दूरा-न्तिक" इति सूत्रेण षष्ठीविधानस्य सत्त्वादत आह—समुदायेति । एकसत्त्वेऽपि द्वयोरभावेन त्रित्वावच्छिन्नाभावस्य सत्त्वादिति भावः ।

मूलाशयम्प्रकटयति—अयम्भाव इत्यादिना । एवञ्च पक्षभेदेनोत्तरसूत्रद्वयस्य वैयर्थ्यमिति भावः । अत्र—दिवस्तदर्थस्येत्यत्र । नाद्य इति । "विभाषोपसर्ग" इत्यत्र शेष इति सम्बध्यते इति पक्षो न युक्त इत्यर्थः । समासाभावस्य—तस्मिन्सूत्रे शेषपदसम्बन्धफलस्य समा-साभावस्य । ननु तस्य सूत्रस्य वैकल्पिकत्वेन यदा न तस्य प्रवृत्तिस्तदा "षष्ठी शेषे" इति सूत्रस्य प्रवृत्तिरिति तदा षष्ठीसमासप्रवृत्तिरिति फलमस्त्येवेत्याशङ्कान्निराचष्टे—नचेति ।

भावप्रकाशः ।

विधीयन्त इति । तोरानर्थक्यं ध्वनयितुं तदर्थमाह—षष्ठीति । यथाश्रुतासङ्गतिं ध्वनयितुं व्याचष्टे—तत्रेति । तिसृषु मध्ये इत्यर्थः । आद्या–षष्ठी । अन्त्ये–द्वितीयातृतीये । एतेन तस्याः सूत्रे एव भावा-त्तत्समुच्चयनिषेधायोगान्न तु षष्ठीद्वितीयातृतीया इति नव्योक्तं चिन्त्यमिति रत्नाकराद्युक्तमपास्तम् । नन्वेवमपि षष्ठीविधानस्य सत्त्वेन तदभावोक्तिरयुक्ताऽत आह–समुदायेति । एकसत्त्वेऽपि द्वयं नास्तीति प्रतीतेरिति भावः । एतेनोत्तरत्र विकल्पारम्भादिह तदसम्बन्धः । अन्यथा षष्ठीविकल्पे तया मुक्ते-शेषेविभक्त्यन्तराप्राप्त्या विकल्पवैयर्थ्यमिति दण्डद्युक्तमपास्तमिति तथानव्योक्तं चिन्त्यमिति रत्नाकरा-दयस्तत्खण्डयन्ति ।

ननु अत्र शेषे इत्यस्य सम्बन्धेऽपि उत्तरसूत्रद्वये तदसम्बन्धेन कर्मणि विकल्पेन तद्विधानार्थं सफलम् । अयम्भाव इत्यादि । तथाच पक्षभेदेन तद्वैयर्थ्यं न तु तत्र तत्सम्बन्धमात्रेण, तदाह क्रमेण—अत्रेत्यादिना । अत्र—दिवस्तदर्थस्येत्यत्र । समासाभावस्य—शेषपदसम्बन्धमा-त्रास्यलब्धस्य । सूत्रेति । "विभाषोपसर्ग" इति सूत्रेत्यर्थः । पक्षे—"विभाषोपसर्गे" इत्यस्याप्रवृत्ति-

सरला ।

रस्यां ग्रहणेन पञ्चम्याः समुच्चयादत्रापि तेन पञ्चम्या एव समुच्चयः । सान्निध्यात्तृतीयासमुच्चये तु पुनरत्रान्यतरस्यांग्रहणवैयर्थ्यम् । 'षष्ठी च' इत्युक्त्यैव तृतीयायाश्चकारेणानुकर्षसम्भवात् । स्पष्टं चेदं पदमञ्जर्याम् ।

शब्दरत्नम् ।

फलम्, "नोपसर्गे" इति न्यासेन "दिव"इत्यस्य निषेधे शेषषष्ठ्यां समासविकल्पेन रूपद्वयस्य सिद्धतया विभाषाग्रहणस्य तथापि वैयर्थ्यात् । नान्त्यः, वेदेऽपि "विभाषोपसर्गे" इति सूत्रेण कर्मणि द्वितीयायाः सिद्धत्वादापाद्यरूपस्य तत्राभावाच्च "द्वितीया ब्राह्मणे" इत्यस्य वैयर्थ्यापत्तेः । न च तन्निरुपसर्गे द्वितीयार्थमिति वाच्यम्, कर्मत्वविवक्षायां "दिवः" इत्यस्याऽप्रवृत्त्या "कर्मणि द्वितीया" इत्येव सिद्धत्वेन वैयर्थ्यस्य तदवस्थत्वात् । न च "द्वितीया ब्राह्मणे" इति सूत्रे 'शेषे' इत्यनुवर्त्तते, तेन कर्मत्वाविवक्षायां द्वितीया-

भैरवी ।

पक्षे—"विभाषोपसर्गे" इति सूत्रप्रवृत्त्यभावपक्षे । पूर्वशङ्कानिरसनोपायमाह—नोपसर्गे इत्यादिना । विभाषापदोच्चारणेन निषेधविकल्पयोरुपस्थितिकल्पनापेक्षया निषेधमात्रोपस्थापको नकारो विभाषापदमनुच्चार्य तत्र पठनीय इति भावः । न चैवं सति सोपसर्गदिव्धात्वर्थकर्मणि शेषत्वेन विवक्षिते षष्ठी नेत्यर्थस्याभिव्यक्त्या षष्ठीप्रवृत्तिरेव न स्यादिति वाच्यम्, 'अनन्तरस्य' इति न्यायेन निषेधो "दिव" इति सूत्रविहितषष्ठ्या एव स्यादित्याशयात् । तथापि—'नोपसर्गे' इति न्यासकरणेऽपि । न च पदलाघवाभावः, मात्रालाघवस्य सत्त्वात् । नचैवङ्कल्पनायामपि सूत्रद्वयमस्त्येवेत्युत्तरसूत्रद्वयारम्भादिति मूलस्य का गतिरिति वाच्यम्, पाणिनिपठितानुपूर्वीकोत्तरसूत्रद्वयारम्भादित्यर्थात् । नान्त्य इति । "विभाषा" इति सूत्रे शेष इति न सम्बध्यत इति पक्षो न युक्त इत्यर्थः ।

वेदेऽपीति । अपिना ब्राह्मण इत्यस्य समुच्चयः । "द्वितीया ब्राह्मणे" इति सूत्रस्य यत्फलम्ब्राह्मणे द्वितीयायाः सिद्धिरेवेति तदपि "विभाषोपसर्गे" इति सूत्रेणैव सिध्यतीति ध्वनयितुमपिशब्दः । द्वितीयायाः सिद्धत्वादिति । "कर्तृकर्मणोः" इति सूत्रविहितषष्ठीबाधिकेत्यादिः । विभाषापदबोध्यनिषेधः षष्ठ्याः । सा चाऽधुना "कर्तृकर्मणोः" इति सूत्रेणैव, नतु "दिव" इति सूत्रेण । "द्वितीया ब्राह्मणे" इति सूत्रसाध्यद्वितीयायाः प्रवृत्तिः कर्मणः कर्मत्वशक्तिमत्त्वेन विवक्षायाम् । न च तदा "दिवस्तदर्थस्य" इत्यस्य प्राप्तिः, तत्र 'शेष' इत्यस्य सम्बन्धादिति भावः । तत्—"द्वितीया ब्राह्मण" इति सूत्रम् । उपसर्गानुच्चारणे "विभाषोपसर्गे" इति सूत्राऽप्राप्त्या "कर्तृकर्मणोः" इत्यस्य बाधनार्थन्तस्य सूत्रस्यावश्यकत्वात् । अप्रवृत्त्येति । तत्र 'शेषे' इत्यस्याऽसम्बन्धेनाऽप्रवृत्त्येत्यर्थात् । वैयर्थ्यस्य—"द्वितीया ब्राह्मणे" इति सूत्रे इत्यादिः । नच "कर्तृकर्मणोः" इति सूत्रस्य बाधनार्थमेवास्त्विति वाच्यम्, वक्ष्यमाणप्रकारेण तिङन्ते एवास्य सूत्रस्य प्रवृत्त्या तत्र लादेशयोगे "नलोक" इति निषेधेन "कर्तृकर्मणोः" इत्यस्याऽप्रवृत्तेः । ननु "द्वितीया ब्राह्मणे" इति सूत्रे 'शेषे' इत्यस्य सम्बन्धेन "दिव" इति सूत्रबाधनार्थमेव तदस्त्वित्याशङ्कान्निराचष्टे—नच द्वितीयेति । द्वितीयार्थमिति । शेषत्वेन विवक्षायामिति शेषः । विच्छिन्नत्वेन "विभाषोपसर्गे" इति

भावप्रकाशः ।

पक्षे इत्यर्थः । एवमग्रेऽपि । समासप्रवृत्तिरिति पाठः । नोपसर्गे इति । यद्यप्यत्र पदलाघवाभावः मात्रालाघवस्य त्वसार्वत्रिकत्वं तथापि मूलाशयप्रदर्शकत्वान्न दोषः । शेषषष्ठ्यां—"षष्ठीशेषे" इति सूत्रेण षष्ठ्यामित्यर्थः । तथापि—सूत्रासार्थक्येऽपि । मन्त्रे द्वितीयासिद्धेर्विभाषोपसर्गे इति सूत्राधीनतां ध्वनयितुं वेदेऽपीत्युक्तम् । अन्यथा ब्राह्मणेपीत्येवोचितम् । सूत्रेणेति । विभाषाग्रहणस्य रूपद्वयसाधनार्थत्वेन पक्षे उत्सर्गप्राप्तद्वितीयाभ्यनुज्ञानेन तेन सूत्रेण सिद्धत्वादित्यर्थः । ननु तर्हि तत्रापि रूपद्वयापत्तिः, सा च नेष्टाऽत आह-आपाद्येति । तत्र—वेदे । तत्—"द्वितीया ब्राह्मणे" इति सूत्रम् । अप्रवृत्त्या—तत्र शेषइत्यस्य सम्बन्धाङ्गीकारादिति भावः । वैयर्थ्यस्य—"द्वितीया ब्राह्मणे" इत्यस्येत्यादिः । द्वितीी-

शब्दरत्नम् ।

र्थमिति वाच्यम्, विच्छिन्नत्वेनाऽनुवृत्तेरयुक्तत्वात्, वक्ष्यमाणोदाहरणे कर्मत्वस्यैव प्रतीतेश्च । कृति त्विदं न प्रवर्त्तते इति पुनर्विधानं समासाभावायेत्यपि न वाच्यम् । अत एव "द्वितीया ब्राह्मणे" इति सूत्रे भाष्यम्—"किमुदाहरणम् ? गां प्रतिदीव्यन्ति । पूर्वेणाप्येतत सिद्धम् । इदन्तर्हि गामस्य तदहः सभायां दीव्येयुः"इति । 'दिवस्तदर्थस्य इति नित्यं षष्ठी प्राप्नोति' इति कैयटश्चेति ।

भैरवी ।

सूत्रेणेत्यादिः । ननु मण्डूकप्लुत्या तत्र 'शेष' इत्यस्य सम्बन्धो भविष्यतीत्यत आह—वक्ष्यमाण इति । ननु कृदन्तेन योगे समासाभावार्थं तत्सूत्रमस्त्वित्याशङ्काम्परिहरति—कृति त्विदमिति । तादृशलक्ष्याभावादिति शेषः । अत्र हेतुम्प्रदर्शयन् स्वोक्तार्थे भाष्यकारसम्मतिमाह—अत एवेति । कृत्यप्रवर्तनादेव । भाष्यमिति । दृश्यत इति शेषः । पूर्वेण—"विभाषोपसर्गे" इत्यनेन । अत्र लादेशयोगस्य सत्त्वेन "न लोक" इतिनिषेधस्य प्रवृत्त्या "कर्तृकर्मणोः" इत्यस्याऽप्राप्त्या "दिव" इति सूत्रस्य बाधनार्थमेव "द्वितीया ब्राह्मणे" इति सूत्रमारब्धम् । भवन्मते "दिव" इति सूत्रे शेषपदसम्बन्धेन तस्याऽप्राप्त्या "कर्मणि द्वितीया" इत्यनेन द्वितीयायाः सिद्ध्या "द्वितीया ब्राह्मणे" इति सूत्रस्य भवन्मते वैयर्थ्यमिति भावः । भाष्यमात्रन्न प्रमाणङ्किन्तु कैयटोऽप्युक्तार्थे प्रमाणमित्याशयेनाह—दिव इति । कैयटश्चेति । प्रमाणमिति शेषः ।

भावप्रकाशः ।

यार्थे—"द्वितीया ब्राह्मणे" इति सूत्रमिति शेषः । विच्छिन्नत्वेन—"विभाषोपसर्गे" इत्यनेनेति भावः । ननु मण्डूकानुवृत्तिः स्यादत आह—वक्ष्यमाणेदेति । गामस्येत्याद्युदाहरणे इत्यर्थः । तथाच मण्डूकानुवृत्तेरयुक्तत्वात्तद्वैयर्थ्यं तदवस्थमेवेति दिवइति सूत्रे तदसम्बन्धः सिद्ध इति भावः । नन्वेवं कर्मणिद्वितीयायाः सिद्धत्वेन "द्वितीया ब्राह्मणे" इति पुनर्विधिसामर्थ्यात्समासाभावः स्यादत आह—कृति त्विति । इदं—द्वितीयाब्राह्मण इत्येतत् । तत्र हेतुं ध्वनयन् सम्मतिमाह—अत एवेति । कृत्यप्रवर्तनादेवेत्यर्थः । भाष्यमिति । अस्य प्रथम-इत्यन्तेनान्वयः । पूर्वेणेति । "विभाषोपसर्ग" इत्यनेनेत्यर्थः । उक्तरीत्येति भावः । तदाशयमाह-दिव इति । अन्यथा कृदन्तोदाहरणदानेन समासाभावप्रतिपादनमेव कृतं स्यान्नत्वेवमिति भाव इति केचित् । वस्तुतस्तु न प्रवर्तत इति लक्ष्याभावात् । अत एव भाष्ये तथैवोदाहृतम् । तस्मादुत्तरसूत्रद्वयारम्भात्तत्र तदसम्बन्ध इति युक्तम् । अत्र भाष्यसम्मतिमप्याह-अत एवेति । दिवस्तदर्थस्येत्यत्र तदसम्बन्धादेवेत्यर्थः । भाष्यमात्राशयाज्ञानादाह-दिव इति । तत्र तत्सम्बन्धे तु उभयोर्निर्दलत्वं स्पष्टमेव । पूर्वव्याख्यायां कैयटानुपयोग इति बोध्यम् । अत्रायम्भाव इत्यनेनारुचिः सूचिता । तद्बीजन्तु नोपसर्गे इत्यत्र विभाषोपसर्गे इत्यतः पदलाघवाभावः । तिङन्ते रूपद्वयार्थविभाषाग्रहणस्यावश्यकत्वं च । कृति तु प्रतिपदविधानेति निषेधवचनात्षष्ठीसमासाभाव एव । अत एव तद्भाष्यकृता न प्रत्याख्यातम् । तस्माद्व्याख्यानादेव दिव इति सूत्रे शेषइत्यस्य निवृत्तिः । योगविभागादिति यावत् । अन्यथा पूर्वत्रैव दिवग्रहणं कुर्यात्तदर्थस्येति न कार्यमिति लाघवम् । नचोत्तरार्थत्वाद्योगविभागः ।

सरला ।

कैयटश्चेतीति । तस्माद् "दिवस्तदर्थस्य" इत्यत्र शेषपदसम्बन्धाङ्गीकारे "विभाषोपसर्गे" इत्यत्र तत्सम्बन्धे तस्यैव वैयर्थ्यम् "विभाषोपसर्गे" इत्यत्र तदसम्बन्धे "द्वितीया ब्राह्मणे" इत्यस्य वैयर्थ्यमिति "दिवस्तदर्थस्य" "विभाषोपसर्ग" "द्वितीया ब्राह्मणे" इति त्रिसूत्र्यामुभयोः सार्थक्याय शेषग्रहणासम्बन्ध एव । तथाचोपसर्गयोगे 'शतस्य शतं वा प्रति दीव्यति' इति द्वितीयाषष्ठीविधानार्थं "विभाषोपसर्गे" इत्यावश्यकम्, 'ग्रामस्य तदहः सभायां दीव्येयुः' इत्यत्र "दिवस्तदर्थस्य" इति षष्ठीं बाधित्वा द्वितीयाविधानार्थं "द्वितीया ब्राह्मणे" इति चावश्यकमिति प्रघट्टकतात्पर्यम् ।

एवेह त्रिसूत्र्यां तिङन्तमुदाहरति—शतस्य दीव्यतीति ।

"प्रेष्यब्रुवोः" ॥ इष्यतेर्दैवादिकस्य गत्यर्थस्य लोण्मध्यमपुरुषैकवचनं 'प्रेष्य' इति, तत्साहचर्यात् ब्रुविरपि तथाभूत एव गृह्यते । अत एवेह शेषग्रहणं न सम्बद्ध्यते तिङन्तेन सह समासस्याऽप्रसक्तत्वात् ।

"कर्तृकर्मणोः कृति" ॥ गुणेति ।

तदुक्तम्—

प्रधाने नियता षष्ठी गुणे तूभयथा भवेत् ॥ इति ।

---

शब्दरत्नम् ।

त्रिसूत्र्यामिति । तृतीयस्य वैदिक्यामुपन्यासो द्रष्टव्यः ।

अप्रसक्तत्वादिति । कल्पबाद्यन्तस्य तु न प्रैषे प्रयोग इति भावः । उभयथा—षष्ठीतदभावौ । इदं चाकथितसूत्रभाष्ये स्पष्टम् ।

भैरवी ।

मूले 'अत एवेह त्रिसूत्र्याम्' इत्युक्तन्तदनुपपन्नम्, तृतीयसूत्रस्येहानुपन्यासादित्यत आह-तृतीयस्येति । एवञ्चेहेत्यनेन बुद्धिस्था सम्पूर्णा कौमुदी परामृश्यते, तस्या आरब्धाया असमाप्तत्वादुदाहरतीति लटो नानुपपत्तिरिति भावः ।

ननु तिङन्तेन समासस्याऽप्रसक्तत्वेऽपि तिङन्तप्रकृतिककल्पप्रत्ययान्तेन समासस्य प्रसक्तोऽस्त्येवेत्यत आह—कल्पबाद्यन्तस्येति । न प्रैषे प्रयोग इति । अनभिधानादिति शेषः । प्रकृतसूत्रे शेषग्रहणासम्बन्धे भाष्यमपि प्रमाणम् । तत्र हि—"हविषोऽप्रस्थितस्य हविषः प्रस्थितं नेति वक्तव्यम्" यदा प्रस्थितत्वेन हविर्विशेष्यते तदा षष्ठी न भवतीत्यर्थः । प्रस्थितत्वेन विशेषितं यद्धविस्तद्वाचकात्प्रातिपदिकान्न षष्ठीति फलितम् । "इन्द्राग्निभ्याञ्छागं" "हविर्वपाम्मेदः" "प्रस्थितम्प्रेष्य" इत्येतदस्योदाहरणम्भाष्ये । अत्र छागमित्यादौ द्वितीया दृश्यते । यदि "प्रेष्यब्रुव" इतिसूत्रस्य शेषत्वविवक्षायामेव प्रवृत्तिस्तदाऽनेन वार्तिकेनैतत्सूत्राप्रवृत्तिसम्पादनेऽपि "षष्ठी शेषे" इति सूत्रेण षष्ठ्या दुर्वारत्वेनोदाहरणाऽसङ्गतिः स्पष्टैव । न च वार्तिकारम्भसामर्थ्यात्तस्या अप्ययन्निषेध इति वाच्यम्, सामर्थ्यकल्पनापेक्षया शेषग्रहणासम्बन्धे एव लाघवमित्यत्र तात्पर्यात् । उभयथाशब्दस्येह भावाऽभावबोधकत्वन्न तु द्वाभ्याम्प्रकाराभ्यामित्यर्थ इति सूचयन्नाह—षष्ठीतदभावाविति । ननु परममूले 'गुणकर्मणि वेष्यते' इत्युक्तन्तादृशी इष्टिश्च "कर्तृकर्मणोः" इति सूत्रे न दृश्यत इत्यत आह—इदञ्चेति । तत्र हि—"अथेह कथम्भवितव्यन्नेताऽश्वस्य स्रुघ्नमाहोस्विन्नेताऽश्वस्य स्रुघ्नस्येति, उभयथा गोणिकापुत्र" इत्युक्तम् ।

भावप्रकाशः ।

ननु इहेत्यनेन कारकप्रकरणपरामर्शेन तत्र तृतीयानुपन्यासान्मूलमयुक्तमत आह-तृतीयस्येति । "द्वितीया ब्राह्मणे" इत्यस्येत्यर्थः । तथाचेहेत्यनेन बुद्धिस्था कौमुदी परामृश्यते । प्रारब्धापरिसमाप्तत्वस्य वर्तमानत्वान्नोदाहरतीत्यस्यासङ्गतिरिति भावः ।

ननु कल्पबाद्यन्ते समासप्रसक्तिरस्तीत्यत आह-कल्पबाद्यन्तेति । अनभिधानादिति भावः । अत्रासम्बन्धादेव "हविषः प्रस्थितस्य नेति वक्तव्यम्" इति वार्तिकस्य प्रस्थितं प्रेष्येत्युदाहरणं भाष्योक्तं सङ्गच्छते । अन्यथा शेषषष्ठ्यापत्तेः । प्रस्थितत्वेन विशेषिताद्धविर्वाचकात्पूर्वसूत्रविषये षष्ठी नेति तदर्थः । उभयथेत्यस्य पक्षद्वये इत्यर्थभ्रमवारणायाह-षष्ठीति । इदं समूलयति-इदं चेति । तत्र ह्युभयथा गोणिकापुत्र इत्युक्तम् ।

कृतपूर्वीति । कृतं पूर्वमनेनेति विग्रहः । पूर्वं कृतवानित्यर्थः । अविवक्षितकर्मकतया भावे क्तः । "सुप्सुपा" इति समासः । "पूर्वादिनिः" "सपूर्वाच्च" इति कर्तरि इनिः । तद्विधौ "श्राद्धमनेन" इति सूत्रादनेनेत्यनुवृत्तेः । अथ

शब्दरत्नम् ।

अविवक्षितेति । तद्धितवृत्तेः पूर्वमविवक्षितेत्यर्थः । पश्चात्तु कर्मयोगो भवत्येवेति बोध्यम् ।

भैरवी ।

ननु कर्मणो यद्यविवक्षा तदा कटमित्यस्य कथम्प्रयोग इत्यत आह—तद्धितवृत्तेरिति । पश्चात्—इन्प्रत्ययोत्पत्त्यनन्तरम् । कर्मयोगः—कटादिकर्मयोगः । नन्विह कटस्य कृत्प्रकृतिकृधात्वर्थोत्पत्त्यनुकूलव्यापारप्रयोज्यफलाश्रयत्वमस्त्येवेति कथं षष्ठी कटशब्दान्न भवति, कृद्ग्रहणेन तद्धिते माभूदित्यस्य च कथं लाभः, इति चेत् ? इत्थम्, प्रकृतसूत्रभाष्ये "धातोर्द्वये प्रत्यया विधीयन्ते । तिङः कृतश्च । तत्र कृत्प्रयोगे इष्यते तिङ्प्रयोगे प्रतिषिध्यते" इत्यनेन कर्मत्वस्य धात्वर्थनिरूपिततया परिशेषात्कृदन्तयोगे एव षष्ठी भविष्यतीति कृद्ग्रहणानर्थक्यम्प्रतिपाद्य "कृतो ये कर्तृकर्मणी तत्र यथा स्यात्तद्धितस्य ये कर्तृकर्मणी तत्र माभूदिति, 'कृतपूर्वी कटम्' 'भुक्तपूर्वी ओदनम्' इत्युक्तम् । तेन विवक्षितोऽर्थो लभ्यते । अयम्भावः—एतद्वृत्तिविषय एव सकर्मकस्यापि कृधातोर्भुजधातोश्च कर्मणोऽविवक्षया अकर्मकत्वं सम्पाद्य ताभ्याम्भावे प्रत्यये सति ततः समासतद्धितवृत्त्योः प्रवृत्त्यनन्तरङ्कर्मत्वशक्त्यवच्छिन्नान्वयविवक्षाऽस्तीति कटस्य तद्धितान्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मत्वमेवास्ति न तु कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मत्वमिति नात्र षष्ठी किन्तु द्वितीया, कृद्ग्रहणसामर्थ्येन कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयकर्तृकर्मणोर्ग्रहणात् । 'तण्डुलानाम्पाचकतरः' इत्यत्र तद्धिताधिक्यसत्त्वेऽपि पाचकादेः पृथक् प्रयोगेण तच्छक्तिग्रहस्यापि सत्त्वेन तच्छक्तिग्रहप्रयोज्योपस्थितिविषयत्वङ्क्रियाया अस्तीति षष्ठी भवत्येव । न चात्र "न लोक" इति निषेधः शङ्क्यः, तस्य प्रत्यासत्त्या निष्ठान्तशक्तिग्रहोपस्था-

भावप्रकाशः ।

ननु कर्मणोऽविवक्षायां कटमित्यस्याप्रयोगः स्यादत आह—तद्धितेति । कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षयेति भावः । पश्चात्तु-इन्रूपतद्धितवृत्त्यनन्तरन्तु । कर्मयोगः-विशेषरूपेण कर्मयोगः । कृद्ग्रहणात् कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्तृकर्मणोः सूत्रे ग्रहणेन तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियाकर्तृकर्मणोर्वारणेनात्र तदभावेनानभिहितत्वात् द्वितीया । एवंरीत्या साधुत्वेऽत्रत्यभाष्यमेव मानम् । पूर्वं तदनन्वयात्सापेक्षत्वाद्वृत्तिर्न स्यादिति न शङ्क्यम् । एवमधीती-

सरला ।

पूर्वमविवक्षितेति । कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षया धातोरकर्मकत्वेन ततो भावेक्तप्रत्यये तदन्तात्तद्धितेनिप्रत्यय इत्यर्थः । कर्मयोगः विशेषरूपेण कर्मयोगः । इति बोध्यमिति । विशेषकर्मणस्तद्धितान्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियानिरूपितत्वेन कृदन्तमात्रशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियानिरूपितत्वाभावेन सूत्रे च कृद्ग्रहणसामर्थ्येन तादृशस्यैव कर्तुः कर्मणश्च ग्रहणेन तादृशस्य प्रकृतेऽसत्त्वादनभिहितद्वितीयासिद्धिरिति तात्पर्यम् । एवं रीत्या साधुत्वेऽत्रत्यं भाष्यमेव मानम् । तथाहि, "यदा वाक्यं न तदा प्रत्ययः, यदा प्रत्ययः सामान्येन, तदा वृत्तिः" इति । न तदा प्रत्ययः-न तदा भावे प्रत्यय इत्यर्थः, धातोः सकर्मकत्वात् । यदा प्रत्ययः-यदा भावे प्रत्यय इति तदर्थः । तदा वृत्तिः-तदा वृत्तिरेवेत्यर्थः । सा च वृत्तिर्न कदापि कर्मक्तान्तेनेत्याह-सामान्येनेति । कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षाविशिष्टार्थकधातुप्रकृतिकक्तान्तेनेति तदर्थात् । इयमेव कर्मणोऽविवक्षा नामेति । अनेन तादृशक्तान्तस्य वाक्ये न प्रयोग इति स्पष्टमेवोक्तम् । प्रयोगानुरोधिनी हि तद्विवक्षेति तद्भावः । स्पष्टं चेदं शेखरे ।

कथं 'धार्यैरामोदमुत्तमम्' इति भट्टिः ? अत्राहुः—अनित्यमिदम्, "तदर्हम्"

### शब्दरत्नम् ।

अयं च प्रकार एतद्वृत्तिविषय एव । तेन घटं क्रियते इत्यादि न । नपुंसके भावे क्तोऽप्यकर्मकेभ्य एव । भ्रान्तं देशमित्यादि तु "गत्यर्थाकर्मक" इति क्तेन निर्बाधम् । तत्सूत्रोपात्तधातुभ्यश्चेन तस्य भावेऽपि विधानादित्यन्यत्र विस्तरः । धार्यैरामो-

### भैरवी ।

प्यक्रियानिरूपितकर्तृकर्मणि निषेधविधायकत्वात् । एतद्वृत्तिविषये—दृश्यमानप्रयोगसम्ब-न्धिवृत्तिविषये । ननु "नपुंसके भावे क्तः" इति क्तप्रत्ययेनेष्टस्य सिद्धौ क्लेशेन भावार्थक-प्रत्ययोपपादनमफलमत आह—नपुंसक इति । अकर्मकेभ्य एवेति । सकर्मकस्याविवक्षितकर्म-कत्वेनाकर्मकत्वं संसाध्य भावे क्तप्रत्ययप्रतिपादनपरभाष्यप्रामाण्यादेवङ्कल्पनात् । नन्वेवं सति भ्रान्तन्देशमनेकदुर्गंविषममित्यस्य का गतिरत आह—भ्रान्तमिति । भ्रम्धातोर्गत्यर्थ-त्वात् तस्य भावेऽपि प्रत्ययविधायकत्वङ्कथमत आह—तत्सूत्रोपात्तेति । चेन—तत्सूत्रोपात्तेन चेन । अन्यथा तस्य निष्प्रयोजनत्वापत्तिः । अपिशब्दः कर्तृकर्मणोः समुच्चायकः । अत एव "अजर्यं सङ्गतम्" इति सौत्रनिर्देशः सङ्गच्छते । ननु 'नपुंसके भावे क्तस्य योगे षष्ठ्यु-पसङ्ख्यानम्" इति वार्तिकेन "गतन्तिरश्चीनमनूरुसारथेः" इत्यत्र कर्तरि षष्ठीवद् भ्रान्तं देशमित्यत्रापि कर्मणि देशशब्दात् षष्ठी स्यात् ।

यदि तु शेषत्वविवक्षया षष्ठीसाधनेन तस्य वार्तिकस्य प्रत्याख्यानपक्षस्तदाऽनूरुसार-थिशब्दादिव भ्रान्तन्देशमित्यत्र देशशब्दादपि शेषत्वविवक्षया षष्ठ्या आपत्तिरिति चेन्न, प्रकृतसूत्रस्थभाष्यप्रामाण्येन नपुंसकत्वविशिष्टे भावे क्तप्रत्ययोऽकर्मकेभ्य एवेति सामा-न्यतो न नियमः, किन्तु "नपुंसके भावे क्तः" इत्यनेन क्तोऽकर्मकेभ्य एवेति नियम्यते । गतन्तिरश्चीनमित्यत्राविवक्षितकर्मकत्वेनाकर्मकाद्गम्धातोर्नपुंसके भावे क्त इत्यनेनैव क्तः । अत एवानूरुसारथिशब्दात्षष्ठी, 'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानम्' इति

### भावप्रकाशः ।

व्याकरणे इत्यादावपि बोध्यम् । नन्वेवं विवक्षाया अतिप्रसङ्गापत्तिरत आह—अयं चेति । चस्त्वर्थे । एतद्वृत्तीति । दृश्यमानप्रयोगीयवृत्तीत्यर्थः । प्रयोगानुरोधित्वाद्विवक्षाया इति भावः । आदिना घटं कृतमित्यादिपरिग्रहः । नन्वेवं क्तसाधनप्रयत्नोविफलः नपुंसकेभावेक्तेनैव सिद्धेरत आह—नपुंसक इति । अकर्मकेभ्य एवेति । आशितः कर्तेति सूत्रस्थकृतपूर्वीसाधनपरप्रकृतसूत्रभाष्य-प्रामाण्यादित्यर्थः । इत्थं हि तदाकूतम् । तयोरेवेत्यत्र भावेचाकर्मकेभ्य इत्यनुवर्तते तच्च वाक्यभेदेन सम्बध्यते । कृत्यादयो भावकर्मणोरेव । भावे च ये कृत्यादयः प्राप्तास्तेऽकर्मकेभ्य एवेति । तत्रानुवाद-कोऽविशेषास्सर्व एव गृह्यते णेरध्ययनेवृत्तमित्यादिसूत्रस्थभाष्यादिप्रामाण्यादिति । नन्वेवं भ्रान्तं देशमि-त्यादि न स्यादत आह—भ्रान्तमिति । भ्रमेर्गत्यर्थत्वादिति भावः । ननूक्तरीत्याऽयमपि अकर्मकेभ्य एव स्यादत आह—तत्सूत्रेति । गत्यर्थाकर्मकेति सूत्रेत्यर्थः । सकर्मकेभ्योऽपीति भावः । चेनेति । तत्सूत्रस्थेनेत्यर्थः । अन्यथा तस्य वैयर्थ्यं स्पष्टमेवेति भावः । तस्य—क्तस्य । अपिः कर्मकर्तृसमुच्चायकः । अत एवाजर्यंसङ्गतमनेकमन्यपदार्थे इति सूत्रस्थभाष्यसङ्गतिरिति स्पष्टं शब्देन्दुशेखरे । ननु नपुंसकेभावे-क्तस्य योगे षष्ठ्युपसंख्यानमिति वार्तिकात् कटशब्दाद्देशशब्दाच्च षष्ठी स्यात् गतन्तिरश्चीनमनूरुसारथे-रित्यत्र यथा । तत्प्रत्याख्यानपक्षेऽपि एताद्दृशस्थले शेषत्वविवक्षैवेति तत्प्राप्तेर्दुर्वारत्वमिति चेत्? न, कटमि-त्यत्रोक्तभाष्यप्रामाण्याच्छेषत्वाभावात् । गत्यर्थाकर्मकेति क्तस्तु अकर्मकेभ्य एवेति न नियम्यते । निष्ठा नपुंसकेभावेक्तः ञीतःक्त इत्यादीनां सामान्यविधीनां सकर्मकाकर्मकग्रहणसम्भवेन नियमे प्राप्ते तद्व्या-वृत्त्या निराकाङ्क्षत्वात्तत्सूत्रोपात्तक्तस्य धातुत एवाकाङ्क्षाशान्त्या तत्र नियमाप्रवृत्तेश्च । वस्तुतः प्रति-पदोक्तत्वान्नपुंसके भावे इति विहितक्तस्यैव वार्तिके ग्रहणमिति नानुपपत्तिलेशोऽपीति बोध्यम् । इत्यन्य-

इति निर्देशात् ।

शब्दरत्नम् ।

**दमुत्तममिति ।** दधातेः "ददातिदधात्योर्विभाषा" इति णः, "आतो युक्" इति जयमङ्गला । धयैरिति ह्रस्वपाठो लेखकप्रमादात् । उत्तमं पुष्पादिसम्बन्ध्यामोदं धारयद्भिरित्यर्थाभिमानेन प्रश्नः । यदि त्वामोदं गृहीत्वा मादृशां दुःखस्य पोषकैरित्यर्थो जयमङ्गलाव्याख्यातरीत्या स्वीक्रियते तदा न काप्यनुपपत्तिः । **निर्देशादिति ।** अयं

भैरवी ।

वार्तिके प्रतिपदोक्तत्वान्नपुंसके भावे इति विहितक्तस्यैव ग्रहणमिति सर्वसामञ्जस्यात् । नन्वेवन्तर्हि गतन्तिरश्चीनमितिवदत्रापि नपुंसके भाव क्तो दुर्वार इति चेन्न, 'कृतपूर्वी कटं' 'भुक्तपूर्वी ओदनम्' इत्येतद्वृत्तिविषय एवायम्प्रागकर्मकः, पश्चात्तस्य कर्मसम्बन्धेनैतच्छाब्दीयकर्मसंज्ञकार्थानन्वय्यर्थकत्वरूपाकर्मकत्वाभावेन तस्यात्राप्राप्तेरिति ।

ण इति । तस्य विकल्पेन शप्रत्ययविधायकतया तदभावे "श्याद्व्यधा" इति सूत्रेणाऽऽकारान्तलक्षणो ण इत्यर्थः । प्रमादादिति नच "पाघ्राध्माधेट्" इति शप्रत्यये तथा भविष्यतीति वाच्यम्, तस्मिन्कर्तरि शपि तस्य "जुहोत्यादिभ्यः" इति श्लौ द्वित्वे दधैरिति स्यादिति भावः । पचादित्वेनाचि धाभिरिति धैरिति स्यात् । अत्राऽऽमोदशब्दात् "कर्तृकर्मणोः" इति षष्ठी कुतो न ? इति प्रश्नः । आमोदस्य गुणत्वाद्द्रव्याकाङ्क्षाशान्तये आह—पुष्पादीति । अभिमानपदोपादानसूचितामरुचिम्प्रकटयति—यदि त्वामोदमिति । जयमङ्गलाव्याख्यातरीत्येति ।

'ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम् ।
लिम्पैरिव तनोर्वातैश्चेतयः स्याज्ज्वलो न कः ॥

इति पद्यम् । इदञ्च अत्रैव व्याख्यातम् । मादृग्भ्यो दुःखन्ददद्भिरुत्तमामोदम्पुष्पादीनाङ्गृहीत्वा मादृशां दुःखस्य दत्तस्य पोषकैर्मादृशां शरीरं लिम्पद्भिरिव वातैः को मादृग् विरहाग्निव्याप्तश्चेतयः ज्वलः चेतयन् ज्वलन्निव न स्यादिति । दाधातोः पोषणार्थाद्धाञश्च "ददातिदधात्योर्विभाषा" इति शणौ, "लिम्पेः शः" "ज्वलेणः" । न काप्यनुपपत्तिरिति । अध्याह्रियमाणस्य गृहीत्वेत्यस्यामोदपदार्थः कर्मेति "न लोक" इति षष्ठीनिषेधात्कर्मणि द्वितीया भवति । एतेन आमोदम्प्रगृह्य धायैरित्यर्थं विवक्षायां 'प्रासादात्प्रेक्षते' इत्यत्रेव

भावप्रकाशः ।

**त्रेति । विभाषेति ण इति ।** तेन शस्य वैकल्पिकत्वात्पक्षेऽत्र श्याद्व्यधेत्याकारान्तलक्षणो ण इत्यर्थः । **प्रमादादिति ।** शप्रत्यये जुहोत्यादित्वाद्दधैरिति स्यात् पचादित्वादचि धाभिरिति स्यात् दधातेर्धेटश्च तथारूपस्य बाधितत्वात् । एतेन तथानुवदन् रत्नाकरादिः परास्तः । उत्तमत्वमामोदविशेषणम् । आमोदस्य गुणत्वेन द्रव्याश्रितत्वादाह—**पुष्पादीति ।** दधातिकर्मत्वमामोदस्येत्यभिमान इति भावः । अभिमान इति सूचितामरुचिं ध्वनयितुमाह—**यदि त्विति । इत्यर्थ इति ।** अयं भावः ।

ददर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम् । लिम्पैरिव तनोर्वातैश्चेतयः स्याज्ज्वलो न कः ॥

इति हि तत्पद्यं मादृग्भ्यो दुःखं ददद्भिरुत्तममामोदं पुष्पादीनां गृहीत्वा मादृशान्दत्तस्य दुःखस्य पोषकैर्मादृशां शरीरं लिम्पद्भिरिव वातैः को मादृग्विरहाग्निव्याप्तश्चेतयः चेतयन् ज्वलः ज्वलन्निव न स्यादिति तदर्थ इति व्याख्यानरीत्येति । दाधातोः पोषणार्थाद्धाञश्च । ददातिदधात्योरिति शणौ, लिम्पेः शः, ज्वलेर्णं इति हि तेन व्याख्यातम् । **तदा न कापीति ।** तत्र गृहीत्वेत्यध्याहृत्य तन्निरूपितकर्मत्वात्तद्योगे द्वितीया, शङ्काया एवाभावादिति भावः । एवञ्च मूलं यथारत्नाकरदण्डव्याख्युक्तं चिन्त्यमिति तात्पर्यम् । एतेनासने स्थित्वा पश्यतीत्याद्यर्थे आसनात्पश्यतीत्यादिवदामोदे गृहीत्वा धायैरित्यर्थे आमोदाद्धायैरित्यापत्तिरित्यपास्तम्, शब्दाध्याहारेण लोपाभावात् ल्यबन्तं विना तदर्थावगतिर्यत्र यथा तदुदाहरणेषु । नहि

स्त्रीप्रत्यययोरिति । कथं तर्हि "सुट्तिथोः" इति सूत्रे 'सुटा सीयुटो बाधो न'इति वृत्तिः । करणत्वविवक्षायां तृतीयेति गृहाण ।

शब्दरत्नम् ।

भावः । तत्रेव, तस्य, अर्हम् इति सूत्रत्रयं कार्यम् । अर्हमित्यत्र योग्यताबलात्कर्मणि षष्ठीति "तस्य भाव" इत्यत्र च तस्येति न वाच्यम् । एवं सिद्धे तदिति निर्देशोऽसमस्तद्वितीयान्तत्वबोधनार्थः । एतेन सूत्रे कर्मोपपदादण्प्रत्यये उपपदसमासः, अजन्तस्य कर्मषष्ठ्या वा समास इति निरस्तम् । अत एव द्वितीयासमर्थादिति व्याख्यायते । राजानमर्हतीति च विगृह्यते । तत्फलं त्वनित्यत्वबोधनमेवेति । भाष्ये तु नैतद् दृश्यते इति

भैरवी ।

"ल्यब्लोपे" इति वचनेनामोदशब्दात्पञ्चम्या आपत्तिरिति कस्यचिदुक्तिः प्रत्युक्ता, गृहीत्वाशब्दस्यैवात्राध्याहारात् । "ल्यब्लोपे कर्मण्यधिकरणे" इति पञ्चमी तु ल्यबन्तं विना-तदर्थावगतिर्यत्र तद्विषयम् । प्रकृते तु ल्यबन्तं विना आमोदस्य धात्वर्थकर्मत्वस्य झटिति प्रतीतिरिति न तेन पञ्चमीप्राप्तिः । अत एव 'आजघ्ने विषमविलोचनस्य वक्षः' इत्यत्र वक्षःशब्दान्न पञ्चमी ।

"तदर्हम्" इति निर्देशस्य वक्ष्यमाणरीत्योपपत्तेरनित्यत्वज्ञापकत्वन्नेत्याशङ्कां वारयति—अयम्भाव इत्यादिना । तत्रेव । सप्तम्यन्तादिवार्थे वतिः । तस्य । षष्ठ्यन्तादिवार्थे वतिः । अर्हम् । तस्येत्यनुवर्तते । शब्दाधिकारोऽत्र एवञ्चेदं कर्मषष्ठ्यन्तमिति तत्कर्मकार्हणकर्तरि वतिरित्यर्थः । एवं योगविभागे गौरवपरिहारायाह—तस्य भाव इत्यत्रेति । चस्त्वर्थे । असमस्तेति । इदन्द्वितीयान्तत्वस्य स्फोरणाय । यदुक्तम्प्राग्वक्ष्यमाणरीत्येति तामाह—एतेनेति । निरस्तमित्यत्रान्वयः । तदिति द्वितीयान्तम् । अर्हमिति पचाद्यजन्तम् । नच "तदर्हम्" इति निर्देशस्य सौत्रत्वेनोपपत्तिरस्त्विति वाच्यम्, सौत्रत्वकल्पनापेक्षया अनेकप्रयोगसाधकानित्यत्वकल्पनस्य न्याय्यत्वादिति भावः । अत एव—तदित्यस्य द्वितीयान्तत्वादेव । षष्ठ्यन्तत्वे तु षष्ठीसमर्थादिति स्यात् । अत एव विधिमर्हतीति विग्रहः । तत्फलन्तु—असमस्तद्वितीयान्तत्वफलन्तु । मूले—अत्राहुरित्युपादानमरुचिबोधनाय, ताम्प्रकटयति—

भावप्रकाशः ।

श्वशुरादिदर्शनं विना लज्जादि सम्भवति तथा न प्रकृते इति वैषम्याच्च । अत एवाजघ्ने विषमविलोचनस्य वक्ष इत्यत्र प्राप्येरध्याहारेऽपि वक्षसो न सेति दिक् । ननु तदर्हमिति निर्देशस्य नानुपपत्तिः । वक्ष्यमाणप्रकारेण समस्तत्वात । न च समस्तत्वे तत्कर्मकार्हणकर्तरि विधीयमानो वतिर्देवदत्तादिशब्दादपि स्यादिति वाच्यम् । समर्थानामित्यनेन समस्ते प्रथमोच्चारितात्कर्मसमर्पकाद्विध्यादिशब्दादेव तदुत्पत्तेरत आह—अयं भाव इति । षष्ठीति । कर्त्तुरुक्तत्वेन कर्मणोऽनुक्तत्वादिति भावः । तथासति महल्लाघवमाह—तस्येति । चस्त्वर्थे । एवम्-उक्तप्रकारेण । बोधनार्थ इति । स्वस्येति शेषः । समस्तं विना लाघवेनेष्टवाक्यार्थलाभेऽतिरिच्यमानं तदर्हंशब्दस्याजन्तत्वबोधनद्वारा स्वस्यासमस्तत्वद्वितीयान्तत्वबोधनद्वारा कर्तृकर्मणोरित्यस्य सामर्थ्याद्बाधकल्पनापेक्षया नित्यत्वज्ञापनमेव वरमित्याशयेन तत् बोधयन् सफल इति भावः । एतेनेति । तथानिर्वाहे तथानिर्देशानर्थक्येनेत्यर्थः । सूत्रे—तदर्हमिति सूत्रे । निरस्तमिति । किञ्च तथासति षष्ठीसमर्थादेव स्यात् विधेरर्हमित्येव च विग्रहस्यान्न तु विधिमर्हतीति। किञ्च अर्थानां मध्ये प्रथमोपात्तत्वं च सूत्रीयासमस्तवाक्यैकदेशरूपत्वम् , आचार्यस्य तथैव शैलीदर्शनात् ; तदाह—अत एवेति । असमस्तद्वितीयान्तत्वादेवेत्यर्थः । अस्योभयत्रान्वयः । वृत्त्यादिष्विति शेषमुभयत्र । तत्फलन्तु—असमस्तद्वितीयान्तत्वबोधनफलन्तु । अनित्यत्वेति । कर्तृकर्मणोरित्यस्येत्यादि । तेन तदर्हमितिवदुक्तभट्टिप्रयोगसिद्धिः । स्तोकं पाक इत्यादौ तदभावस्तु न फलं कर्तृसाहचर्याद्वास्वर्थे भेदेनान्वयेऽपि कर्मग्रहणादिति भावः । वस्ततस्तु भट्टिप्रयोगस्योक्तरीत्या निर्वाहः तदर्हमित्यत्र कर्मोपपदादण्प्रत्यये-

"न लोकाव्ययनिष्ठा" ॥ उश्च उकश्च ऊकौ, लश्च ऊकौ चेति विग्रहः । उकारेण कृतो विशेषणात्तदन्तविधिस्तदाह—हरिं दिदृक्षुरलङ्करिष्णुर्वेति । शेषे षष्ठी त्विति । एतेन 'इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः' 'अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम्' इत्यादि व्याख्यातम् ।

शब्दरत्नम् ।

बोद्धव्यम् ।

ऊकौ चेति । अव्ययं चेत्यादेरुपलक्षणमिदम् । तदन्तविधिरिति । व्यपदेशिवद्भावेन तस्यापीति बोध्यम् । ननु "नपुंसके भावे क्तस्य" इति भाष्ये वार्तिकात्कारकषष्ठीनिषेधविषये शेषत्वविवक्षा न । तत्प्रत्याख्याने त्वनभिधानात् क्तातिरिक्तविषये सा

भैरवी ।

भाष्ये त्विति । एतत्—अनित्यत्वं नेति । भट्टिप्रयोगस्योक्तरीत्योपपत्तिः । "तदर्हम्" इति तु कर्मोपपदादण्प्रत्ययान्तम् । किञ्चोक्तरीत्या योगविभागेन व्याख्याने यद्यपि पुनस्तस्येत्यस्यानुपादाने शब्दलाघवन्तथापि तस्येत्यत्र स्वरितत्वस्य निर्हेतुकशब्दाधिकारस्य चाश्रयणमिति ज्ञानजनकमनोव्यापारस्य गौरवमस्त्येवेति ।

मूले—'लश्च' इति पृथक्कृत्वा विग्रहघटकत्वेन प्रदर्शितम् । लश्च उश्च उकश्चेति तु नोक्तम्, 'इण्ङिशीनाम्' इति न्यायेन रूपासिद्धिप्रसङ्गादत एवाह—उकौ चेतीति । अव्ययपदमुक्तद्वन्द्वाघटकमिति भ्रमवारणायाह—अव्ययमिति । ननु यद्युकारेण तदन्तविधिस्तदा 'हरिं दिदृक्षुः' इत्यत्र न स्यादत आह—व्यपदेशिवद्भावेनेति । मूले—एतेनेति । सर्वोऽयङ्कारकषष्ठ्याः प्रतिषेध इति कथनेन । शेषषष्ठ्यनङ्गीकारे दुरापशब्दस्य खल्प्रत्ययान्ततया षष्ठी न स्यादिति भावः । 'इक्ष्वाकूणान्दुराप' इत्यादीनां शेषत्वविवक्षया साधनन्दुर्बलमिति सूचयन्नाह—नन्विति । वार्तिकादिति । निष्ठेतिनिषेधस्य बाधकादिति शेषः । तत्प्रत्याख्यान इति । शेषत्वविवक्षयेत्यादिः । सा नेति । शेषत्वविवक्षा नेत्यर्थः । आरम्भप्रत्याख्यानयोः फलैक्या-

भावप्रकाशः ।

नैव द्वितीयासमर्थादित्यर्थलाभः तदर्थलाभार्थमेव च तदुपादानं सार्थकम् । अन्यथोक्तरीत्याऽनुवृत्त्यैव सिद्धे स्तद्वैयर्थ्यं स्पष्टमेव । अनित्यत्वे तु न मानम्, भाष्यानुक्तेः । अत एव मूले अरुचिरित्यरुचिबोधकमुक्तम् । एतेन तथा रत्नाकरदण्ड्याद्युक्तमपास्तमिति बोध्यम् । तद्ध्वनयन्नाह—भाष्ये त्विति एतत्—तदनित्यत्वम् ।

द्वयोरेवासमासादाह—अव्ययंचेत्यादेरेति । ननु तदन्तविधौ हरिं दिदृक्षुरित्यत्र न स्यादत आह—व्यपदेशीति । तस्यापि—उरूपस्यापि । वार्तिकादिति । निष्ठेति निषेधापवादादित्यर्थः । अन्यथा

सरला ।

भाष्ये त्विति । धार्यैरामोदमित्यादीनां गृहीत्वेत्याद्यध्याहारेणैवोपपत्त्या तदनित्यत्वे फलाभाव इति भाष्यतात्पर्यमिति बोध्यम् ।

भाष्ये वार्तिकादिति । इदं वार्तिकं 'नपुंसके भावे क्तः" इति सूत्रविहितक्तविषय एव । तेन 'आन्तं देशम्' इत्यत्र देशपदान्न षष्ठीति बोध्यम् । अत एव 'अहेः सृप्तम्' इत्यत्र "क्तोऽधिकरणे च" इति भावक्तविषयेऽस्याप्रवृत्त्या शेषत्वविवक्षयैव षष्ठीसाधनस्यावश्यकत्वेन तेनैव सर्वत्र षष्ठीसिद्धयेदं भाष्ये प्रत्याख्यातम् ।

शेषत्वविवक्षा नेति । सर्वत्रोत्सर्गतः शेषत्वविवक्षायामिदं वार्तिकं व्यर्थमेवेति 'कारकषष्ठीनिषेधविषये शेषत्वविवक्षा न' इत्यनेन ज्ञाप्यते इति तदाशयः । सा नेति । शेषत्वविवक्षा नेत्यर्थः । अनेन 'सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः, शेषषष्ठी तु स्यादेव' इति कौमुद्युक्तं चिन्त्यम् ।

यद्वा इक्ष्वाकूणां सिद्धय इत्यन्वयो न तु इक्ष्वाकूणां दुराप इति। तथा वागधिपस्यविस्मयमित्यन्वयो न तु वागधिपस्य दुर्वचमिति।

"तुल्यार्थैः" ॥ कथं तर्हि 'तुलां यदारोहति दन्तवाससा' इति कालिदासः। 'स्फुटोपमं भूतिसितेन शम्भुना' इति माघश्च? उच्यते, "सहयुक्तेऽप्रधाने" इति तृतीया। 'स्वबालभारस्य तदुत्तमाङ्गजैः समं चमर्येव तुलाभिलाषिणः' इत्यत्र यथा। उक्तं हि—विनापि तद्योगं तृतीयेति।

व्याख्यानादिति। सूत्रेऽर्थशब्दोऽपि पृथङ्निमित्तम्। तथा च द्वन्द्व एव। न तु अर्थशब्देन बहुव्रीहिरिति भावः।

इति षष्ठी।

---

शब्दरत्नम्।

न। अत एव "पूरणगुण" इति सूत्रे सद्ग्रहणं भाष्ये प्रत्याख्यातमित्यरुचेराह—यद्वेति।

सहयुक्ते इति। स्फुटोपममित्यत्रोपमाशब्दो भावसाधनः।

इति षष्ठी ॥

भैरवी।

वैवमेव कल्पनादिति भावः। तत्रार्थे प्रमाणान्तरमाह—पूरणेत्यादिध्वनितमिति। तत्र हि—"सति किमुदाहरणम्? ब्राह्मणस्य कुर्वन्। नैतदस्ति, कारकषष्ठ्या, निषेधात्। शेषषष्ठ्यान्तु ब्राह्मणस्य कटमित्यर्थेनासामर्थ्यात्सतीति व्यर्थम्" इत्युक्तम्। यदि कारकषष्ठीविषयेऽपि शेषत्वविवक्षा स्यात्तदा कुर्वन्नित्येतद्योगेऽपि शेषत्वविवक्षा सम्भवतीति कटादियोगे नाऽसामर्थ्यप्रदर्शनमसङ्गतं स्यात्, तेनेदन्ध्वनितमित्यर्थः।

यदि स्फुटोपममित्यत्रोपमाशब्दः कर्माऽन्तस्तदा 'भूतिसितेन शम्भुना' इति करणतृतीयैव युक्ता, कारकविभक्तेर्बलवत्त्वादत आह—स्फुटोपमेति। भावसाधन इति। भावेऽभिधेये प्रत्ययः साधनत्वेन व्यपदिश्यते इति भावः। एवञ्च भावे योऽङ्प्रत्ययस्तत्प्रकृत्यर्थोपमानक्रियायान्नारदस्य शाब्दोऽन्वयः, शम्भोश्चार्थः। "तुल्यार्थैरतुलोपमाभ्याम्" इत्यत्र तु तुलोपमाशब्दौ कर्मसाधनाऽन्तौ सादृश्यानुयोगिवाचकौ। सादृश्यमेतयोः प्रवृत्तिनिमित्तमिति बोध्यम्।

इति षष्ठीविवरणम्।

भावप्रकाशः।

तदानर्थक्यं स्पष्टमेवेति भावः। तत्प्रत्येति। शेषत्वविवक्षयेति भावः। अनभिधानादिति। अन्यथा आरम्भप्रत्याख्यानयोः फलभेदापत्तिरिति भावः। तत्र प्रमाणान्तरमप्याह—पूरणेति। तत्र हि सति किमुदाहरणं ब्राह्मणस्य कुर्वन्, नैतदस्ति, कारकषष्ठीनिषेधात् शेषषष्ठ्यान्तु ब्राह्मणकटमित्यर्थेनासामर्थ्याच्चद्व्यर्थमित्युक्तम्। एतेन मूलं परममूलं तथा प्रकाशरत्नाकरदण्ड्याद्युक्तं चापास्तम्।

कर्माऽन्तत्वे करणतृतीयायाः कारकविभक्तित्वात्प्रबलया निर्वाहादाह—स्फुटोपममिति। ततश्च भावाङ्प्रकृत्यर्थोपमानक्रियायां नारदस्य शाब्दोऽन्वयः, शम्भोश्चार्थ इति भावः। हरदत्तप्रकाशकारादिभिस्तु भावसाधनत्वेऽपि करणतृतीयैवोरीकृता। सूत्रे तु कर्मसाधनौ। अत एव सादृश्यानुयोगिवाचकतुल्यपदप्रवृत्तिनिमित्तार्थकत्वमनयोरित्यपि मान्याः।

इति षष्ठी।

सरला।

भाष्ये प्रत्याख्यातमिति। यदि क्तातिरिक्तकृद्विषये शेषत्वविवक्षा भवेत्तदा तु शत्रन्तयोगे शेषत्वविवक्षा नास्तीत्यर्थकं "नैतदस्ति" इत्युक्त्वा कटादिपदार्थान्वयविवक्षया शेषषष्ठ्यां तु असामर्थ्यात्

आधारस्त्रिधेति। एतच्च "संहितायाम्" इति सूत्रे भाष्ये स्पष्टम्। चतस्र इति। प्रातिपदिकार्थमात्र इति भावः। किं च "दूरान्तिक" इति सूत्रस्य इहाप्यनुवर्तनादधिकरणेऽप्येता बोध्याः। क्तस्येति। इन् इन्नन्तः शब्दो विषयो

शब्दरत्नम्।

प्रातिपदिकार्थमात्र इति। "सप्तम्यधिकरणे च" इति सूत्रेणाधिकरणे सप्तम्याः सिद्धत्वाच्चकारेणाऽन्तरङ्गप्रातिपदिकार्थमात्रे सप्तमी विधीयते। प्रागुक्ताश्च तिस्रः। इयं भैरवी।

ननु चकाराद् दूरान्तिकार्थेभ्योऽधिकरणे सप्तमीविधानेऽपि कथं विभक्तिचतुष्टयमत आह-सप्तम्यधीति। सिद्धत्वादिति। एतेन तत्र न चकारेण सप्तमीविधानं किन्तु प्रथमोपस्थितिकत्वेन प्रातिपदिकार्थस्याऽन्तरङ्गत्वात्तत्र सप्तमी विधीयते। सा च कस्मादित्याकाङ्क्षायाम्पूर्वसूत्रेण दूरान्तिकार्थेभ्य इत्यस्योपस्थानात्तेभ्यः सप्तमीत्यस्य लाभः। अत एवाह—प्रागुक्ता इति। ननु "प्रातिपदिकार्थ" इति सूत्रस्य परत्वात्तेन परत्वाद्बाधिका प्रथमैव स्यादिति कथञ्चतस्रो विभक्तय इत्यत आह—इयञ्चेति। अपीति। तेनान्तरङ्गायाः समुच्चयः। एतेभ्योऽधिकरणकारकेऽपि सप्तमी भवति, प्रथमायास्तत्र मात्रपदेन व्यावृत्तेः। मूले-त्रैविध्यमाधारस्य दर्शितन्तत्र सम्मतिरुक्ता—संहितायामितीति। ननु प्रवृत्तिनिमित्तमधिकरणशब्दस्याधिकरणत्वमेव तच्चैकमिति कथमाधारस्य त्रैविध्यमिति चेत्? न, आधारतायाः सम्बन्धावच्छिन्नत्वनियमेनोपकारकसम्बन्धभेदादधिकरणं त्रिविधमित्युच्यते। यत्राधारत्वाभिमतपदार्थीययत्किञ्चिदवयवावच्छेदेन संयोगे सति कर्तृकर्मसमवेतक्रियानिरूपिताधारत्वविवक्षास्ति सः। यत्र वा उप-समीपे श्लेष इति व्युत्पत्त्या व्यवहितसामीप्यसम्बन्धावच्छिन्नाधेयतानिरूपितकर्तृकर्मसमवेतक्रियानिरूपिताधारत्वस्य विवक्षास्ति, स च औपश्लेषिकाधार इत्युच्यते। अत एव भृत्येभ्यो यन्मासिकन्दीयते तत्र मासे दीयते मासिकम् इति व्युत्पत्तिः "तत्र च दीयते" इति सूत्रसम्मता भवति। अत्र बुद्धिस्थदिवसपरिच्छिन्नमासस्य दाधात्वर्थफलविशिष्टाधारकालस्य चोपश्लेषोऽस्तीति मास औपश्लेषिकमधिकरणम्। मासेऽतिक्रान्ते दीयते-उत्तरकाले दीयते इत्यर्थः स्पष्टप्रतिपत्तये क्रियते फलितार्थसूचनाय।

ननु संयोगसमवायान्यतरसम्बन्धेन यः कर्तृकर्मव्यवहितक्रियाधारस्तत्र रूढिस्त्वाद्योगार्थमादाय सामीप्यमादाय व्यवहितस्य कथङ्ग्रहणमितिचेत्? न, "गङ्गायां गावः" "कूपे गर्गकुलम्" इति भाष्यकारीयव्यवहारबलेन तस्यापि ग्रहणात्। अत एव "इको यणचि" इत्यादिसूत्राणामनुपश्लिष्टस्येक इत्यर्थविवरणं सुष्ठु सङ्गच्छते। अत एव च "शब्दस्य शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हति अन्यदतः उपश्लेषात्" इति भाष्योक्तिरप्युपपद्यते। साक्षात्क्रियाधारस्य कर्मकर्तृसंज्ञाऽधिकरणसंज्ञाया बाधिका भवतीति परम्परया क्रियाधारस्य सा भवति। सा च परम्परा क्वचित्संयोगघटिता क्वचित्समवायघटिता क्वचित्तदन्यतरातिरि-

भावप्रकाशः।

ननु चकाराद् दूरान्तिकार्थेभ्योऽधिकरणे सप्तमीविधानेऽप्येकत्रार्थे कथं विभक्तिचतुष्टयमत आह-सप्तम्यधीति। सिद्धत्वात्तेन चस्य वैयर्थ्यं प्रतिपादितम्। प्रातिपदिकार्थलाभे बीजमाह-अन्तरङ्गेति। अत एव मात्रत्वोक्तिः। विधीयत इति। साक्षोपस्थितत्वाद्व्याख्यानाच्च दूरान्तिकार्थेभ्य एवेति भावः। अत एवाह-प्रागुक्ता इति। ननु परया प्रथमया सप्तम्या बाधात्तदनुपपत्तिरेवात आह-इयं चेति। विषय-

सरला।

समासाभावमुपपाद्य सद्ग्रहणस्य भाष्ये प्रत्याख्यानमसङ्गतं स्यात्। तत्र भाष्यकृता—"सति किमुदाहरणम्? ब्राह्मणस्य कुर्वन्। नैतदस्ति, कारकषष्ठीनिषेधात्। शेषषष्ठ्यां तु ब्राह्मणस्य कटम् इत्यर्थनासामर्थ्यात्" इत्याद्यर्थकमुक्तम्। तस्मादनेन प्रत्याख्यानेन कातिरिक्ते कृति शेषत्वविवक्षा नेति ध्वनितमिति बोध्यम्।

वृत्तिभूमिर्यस्य क्तस्येत्यर्थः। हेतौ तृतीयेति। तादर्थ्ये चतुर्थीत्यपि बोद्धव्यम्।

शब्दरत्नम्।

च सप्तमी निरवकाशत्वात्पराया अपि प्रथमाया बाधिकेति भावः। वृत्तिभूमिर्यस्येति। यत्क्तान्तनिरूपितपरार्थाभिधायकत्वाश्रय इन्नन्तः शब्द इत्यर्थः। अत्रेनो विषयस्येनः प्रकृतेः क्तान्तस्येति षष्ठीतत्पुरुषोऽपि वक्तुं शक्यः। तादर्थ्यं इति। फलस्य हेतुत्वेन

भैरवी।

क्वविशेषणतासम्बन्धघटिता। आद्या-'कटे शेते' 'स्थाल्यान्तण्डुलं पचति' इत्यादौ। 'पटे शौक्ल्यं' 'द्रव्यादिषु जातिः' इत्यादौ द्वितीया। तृतीया तु घटाभावे पटाभाव इत्यादौ। तदुक्तं हारिणा—

कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्। उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्।

इति। अत्र व्यवहितामित्युक्तेऽप्यसाक्षादित्युक्तिः परम्परयैवाऽन्वयसूचनाय। अत एव 'अक्षेषु शौण्डः' इति विग्रहे "सप्तमी शौण्डैः" इति समासः। वैषयिकाधारस्तु 'मोक्षे इच्छास्ति' इत्यादौ। यत्र सर्वावयवावच्छेदेन सम्बन्धोऽस्ति स एवाभिव्यापकाधार इत्युच्यते 'तिलेषु तैलं' 'दध्नि सर्पिः' इत्यादौ यथा। अत्रायं विशेषः-इच्छा इत्यादौ धात्वर्थेच्छाविषयता यदा मोक्षस्य विवक्षिता तदा मोक्षमिच्छतीत्येवान्तरङ्गत्वेन कर्मसंज्ञया भवति। यदा तु प्रत्ययार्थसिद्धावस्त्यापन्नार्थविषयतामोक्षस्य विवक्षिता तदा मोक्षे इच्छास्तीति भवति। अत्रापि प्रकृत्यर्थसाध्येच्छाविषयत्वविवक्षायाङ्कर्मणि षष्ठी भवति। अधिकमन्यत्र द्रष्टव्यम्।

'क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्' इत्यत्र विषयशब्दो वृत्तिभूमिपरत्वेन मूले व्याख्यातस्तदर्थङ्कथयितुमाह—यत्क्तान्तेति। यत्क्तान्तार्थेत्यर्थः। वार्त्तिके क्तशब्दः क्तान्तपरः। एवमिन्शब्दोऽपि तदन्तपरः। विषयशब्दो वृत्तिभूमिपरः। एतदर्थः—परार्थाभिधायकत्वाश्रयः। एवञ्चेन्नन्तः शब्दः परार्थाभिधायकत्वाश्रयो यस्य क्तान्तार्थस्येत्यर्थः फलितः। यस्येत्यत्र षष्ठ्यर्थो निरूप्यनिरूपकभावः। यत्क्तान्तार्थनिरूपिताऽभिन्नपरार्थाभिधायकत्वाश्रय इन्नन्तः शब्दस्तस्य क्तान्तस्य कर्मणि सप्तमी भवतीत्यर्थः सिद्धः। एवम्बहुव्रीहिपर्यन्तधावने फलाभावाद्विषयशब्दस्य देशवाचकत्वेन प्रसिद्धत्वात्प्रकृतिरेव देशपरत्वेन गृह्यत इत्याशयेन व्याचष्टे—इनो विषयेति। एवञ्च बहुव्रीह्यपेक्षया षष्ठीतत्पुरुषे लाघवमिति भावः। 'अधीती व्याकरणे' इति शब्दाद् भूतकालिकव्याकरणकर्मकाध्ययनकर्तेति बोधः। इन्विषयस्य कर्मणीत्यत्र कर्मशब्दः कालादिभिन्नकर्मबोधकः। तेन मासमधीती व्याकरण इत्यस्योपपत्तिः।

'निमित्तात्कर्मयोगे'। अत्र निमित्तपदङ् क्रियाजनकप्रवृत्तिकारणज्ञानविषयलाक्षणिकम्। फलज्ञानस्य च प्रवृत्तिहेतुत्वम्प्रसिद्धमेवेत्यभिप्रायेण परममूले निमित्तमिह फलमित्युक्तम्। कर्मयोग इत्यस्य क्रियाकर्मणा योगः सम्बन्धस्तस्मिन्नित्यर्थः। सतीति शेषः। फलञ्चर्मणि द्वीपिनमित्यादौ सप्तम्यर्थः। तस्य फलत्वन्तु हननक्रियायास्तल्लाभेच्छाधीनत्वादूबोध्यम्। एवञ्च 'चर्मणि द्वीपिनं हन्ति' इति शब्दाच्चर्महेतुकं यद्द्वीपिकर्मकं हननन्तद्विशेष्यकः कर्तृप्रकारकः शाब्दबोधः। अत्र परममूले हेतुतृतीयेत्यभिधानं "हेतौ" इति सूत्रे फलस्यापि हेतुपदेन ग्रहणमित्यभिप्रायेण। एवञ्च फलार्थकत्वमपि हननस्य सम्भवतीत्याशयेनाह—मूले—तादर्थ्ये चतुर्थ्यपीति। एतदेव प्रकटयति—फलस्येति। 'चर्मणि द्वीपिनं हन्ति' इत्यत्र,

भावप्रकाशः।

शब्दस्य वृत्तिभूमिरित्यर्थो मूले उक्तः तदर्थं कथयितुमाह-यदिति। यत्क्तान्तार्थेत्यर्थः। निरूपितान्तस्यान्त्यान्तेन सह कर्मधारयो वा। अत्र प्रकाशानुयायिबहुव्रीहिपर्यन्तधावने फलाभावाद्विषयशब्दस्य देशवाचकत्वेन प्रसिद्धत्वात्प्रकृतिपरत्वेन लाघवाचाह-अत्रेन इति। तेन कृतपूर्वी कटमित्यत्र न। उदाहरणे न कर्मणि क्तः अभिहितत्वेन सप्तम्यनापत्तेः किन्तु भावे। अत्र च कर्मशब्देन कालादिभिन्नमेव गृह्यते व्याख्यानात्। तेन मासमधीती व्याकरणे इत्यत्र नेति कैयटादयः। उभयत्र हेतुमाह—फलस्येति।

सीमेत्यादि । एतच्च दुर्गवाक्यप्रबोधे कुलचन्द्रेणोक्तम् । मेदिनीकारोऽप्याह—

सीमा घाटस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियाम् । इति ।

अथ पुष्कलको गन्धमृगे क्षपणकीलयोः ॥ इति च ।

हरदत्तादयस्तु पुष्कलकः शङ्कुः सीम्नि सीमज्ञानार्थं हतो निहतो निखात इत्याहुः ।

"यस्य च" ॥ निर्ज्ञातकाला क्रिया अनिर्ज्ञातकालायाः क्रियायाः कालपरि-

---

शब्दरत्नम् ।

विवक्षणात्फलार्थत्वाच्च करणस्येति भावः ।

ननु ज्ञाप्यज्ञापकभावरूपलक्ष्यलक्षणभावो भूयोभूयोदर्शनाश्रयो हृष्टस्ततश्च उदिते आदित्ये तमो नष्टमित्यादावेव स्यान्न तु प्रकृते, कदाचिद्धि गोषु दुह्यमानास्वसौ गत इत्यत आह-निर्ज्ञातकालेति । कालो देशस्याप्युपलक्षणं तदुदाहरणं-'सति गुणे द्रव्यत्वमस्ति'इति ।

भैरवी ।

'सीम्नि पुष्कलको हतः' इत्यत्र च पुष्कलकशब्दस्याऽण्डकोशार्थकत्वे कर्मणा योगः—समवायः । 'दन्तयोर्हन्ति कुञ्जरम्' इत्यत्र 'केशेषु चमरीं हन्ति' इत्यत्र पुष्कलशब्दस्य शङ्कुपरत्वे सीमशब्दस्य परिच्छिन्नदेशपरत्वे च संयोगात्मकः कर्मयोगो बोध्यः ।

"यस्य च भावेन भावलक्षणम्" इत्यत्र भावशब्दः क्रियाया बोधकः । एवञ्च यत्सम्बन्धिक्रियया यस्य क्रिया लक्ष्यते ततः सप्तमीत्यर्थः । नन्वस्य सूत्रस्य यत्र क्रिययोर्ज्ञाप्यज्ञापकभावरूपलक्ष्यलक्षणभावस्तत्रैव चेत्प्रवृत्तिस्तदा यत्र ज्ञापकत्वोपपादिका भूयोदर्शनादिघटिता सामग्री सम्भवति तत्रैव प्रवृत्तिः स्यान्नत्वन्यत्रेत्याशयेन शङ्कते—नन्विति । भूयोदर्शनाश्रयः साध्यसाधनयोः सामानाधिकरण्यस्य भूयांसि यानि दर्शनानि तत्प्रयोज्यः, यथा वन्हिधूमयोः । नन्वस्तु भूयोदर्शनाश्रयत्वच्छिन्नश्छिन्नमत आह—ततश्चेति । तदङ्गीकारे चेत्यर्थः । प्रकृते—'गोषु दुह्यमानासु गतः' इत्यादौ । इदं वाक्यङ्गृहिणम्प्रति आगन्तुकपुरुषकर्तृकगमनक्रियोत्पत्त्यधिकरणकालज्ञानेच्छया आगन्तुकः कदा गत इति यः प्रश्नस्तस्योत्तरभूतम् । एवञ्चात्र न निरुक्तभूयोदर्शनसम्भव इत्याह—कदाचिद्धीति । मूले—निर्ज्ञातकालेति बहुव्रीहिः । क्रिया अन्यपदार्थः । एवञ्च निर्ज्ञातकाला या दोहनक्रिया सा अनिर्ज्ञातकाला या गमनक्रिया तस्या लक्षणम्भवति । मूलस्य न्यूनतामपरिहर्तुमाह—कालो देशस्येति । एवञ्च निर्ज्ञातदेशा क्रिया अनिर्ज्ञातदेशाया लक्षणमिति बोध्यम् । एवञ्च तत्तच्छब्दबोध्यत्वेन विवक्षितं यज्ज्ञापकत्वन्तदेतच्छास्त्रप्रवृत्तिप्रयोजकन्न त्वत्र भूयोदर्शनापेक्षेति तात्पर्यम् । सति गुण इति । अत्र गुणसत्त्वक्रियाधिकरणदेशः पृथिव्यादिर्ज्ञात इति गुणसत्त्वक्रिया द्रव्यत्वसत्त्वक्रियाया लक्षणम् । यत्सम्बन्धिक्रियेत्यत्र यत्पदवाच्यः क्वचित्कर्म, क्वचित्कर्ता ।

अत एवोक्तम्मूले—तदाश्रययोः कर्तृकर्मणोरिति । कर्तुः कर्मणश्च यदुदाहरणं तत्र तयोः कृदन्तबोध्यत्वात्प्राधान्यं क्रियायास्तु विशेषणत्वमिति प्रधानयोरेव लक्षणत्वप्रतीतिरित्याशयेनोक्तम्—इहेति । कर्तृकर्मबोधकप्रत्ययान्तघटितोदाहरणद्वये । प्रतीयमानमिति ।

भावप्रकाशः ।

तत्सूत्रे फलस्यापि हेतुशब्देन ग्रहणादिति भावः । तथाच चर्मफलकं द्वीपिकर्मकं हननमित्यादिरीत्या बोधः । भूयोदर्शनेति । नियतसामानाधिकरण्यदर्शनेत्यर्थः । यथाग्निधूमयोरिति भावः । तत्रेष्टापत्तिं निराचष्टे-ततश्चेति । तदङ्गीकारे चेत्यर्थः । प्रकृते-गोष्वित्यादौ । तत्र हेतुमाह-कदाचिद्धीति । यतः कदाचिदित्यर्थः । न्यूनतां परिहरति-काल इति । तथाच तत्तच्छब्दबोध्यत्वेन विवक्षितमेव ज्ञापकत्वमेतच्छास्त्रप्रवृत्तौ निमित्तं न तु तस्य मानान्तरेण नियमतो ग्रहणापेक्षेति नेदं भूयोदर्शनाश्रयमिति भावः ।

च्छेदकत्वाल्लक्षणम् । तदाश्रययोः कर्तृकर्मणोर्बोधकादियं सप्तमी । तत्र ब्राह्मणेष्वधीयानेषु गत इति कर्तर्युदाहरणम् । कर्मण्याह—गोष्विति । इह अधीयानानां ब्राह्मणानां दुह्यमानानां गवां च प्रतीयमानलक्षकत्वं विशेषणीभूतयोरध्ययनगोदोहनक्रिययोर्विश्राम्यति ।

---

शब्दरत्नम् ।

तदाश्रययोरिति । क्रियाश्रययोरित्यर्थः । विशेषणीभूतयोरिति । 'शिखी ध्वस्तः' इत्यादौ शिखायां ध्वंसप्रतियोगित्वविश्रान्तिवद्विशिष्टवेषेणैव तस्य लक्षकत्वात् ।

भैरवी ।

उभयत्र सप्तम्यर्थो ज्ञाप्यज्ञापकभावः । दोहनादिक्रियाधिकरणकालसम्बन्धश्च तस्य प्रकारत्वमते गोष्वित्यादिवाक्याद्वर्तमानकालावच्छिन्नव्यापारजन्यदोहनाश्रयगोनिष्ठज्ञापकतानिरूपितज्ञाप्यताविशिष्टो दोहनाधिकरणकालसम्बन्धविशिष्टव्यापारजन्यगमनाश्रयश्चैत्र इत्यादिक्रमेण बोधः । सप्तम्यर्थस्य संसर्गत्वमते चोक्तोभयसम्बन्धेन तादृशगवीविशिष्टगमनकर्त्रभिन्नश्चैत्र इत्यादिक्रमेण बोधः । न द्रव्ययोरेव ज्ञाप्यज्ञापकभावः किन्तु क्रियाविशिष्टयोरेव । अन्यथा 'गोषु चैत्र' इति शब्दादपि गोज्ञाप्यश्चैत्र इति बोधः स्यात् । एवञ्च यद्धर्मविशिष्टयोस्तथात्वसम्भवस्तद्धर्मयोरेव ज्ञाप्यज्ञापकभावो मानसज्ञानविषयः, व्यञ्जनाया अपि वृत्तित्वमते शाब्दबोधविषयो वेत्याशयेनोक्तम्—विशेषणीभूतयोरित्यादि । अत एवोक्तं सूत्रकृता "यस्य च भावेन" इति । तद्विवरणे-निर्ज्ञातकालेति । स कालो यदि प्रातःसमयरूपस्तदा तस्यैव पक्षत्वम्, कालिकसम्बन्धेन गमक्रियाविशिष्टस्य साध्यता, कालिकसम्बन्धेनैव दोहनकर्माभिन्नगवीनां हेतुता बोध्या । विशेषणांशे पर्यवसानविषये दृष्टान्तमाह—'शिखी ध्वस्त' इत्यादाविति । इदम्पर्यवसानं यदा शिखाविशिष्टस्य पुरुषस्य जीवननिश्चयस्तस्मिन्समये भवति ।

ननु क्रियाया एव लक्षकत्वं सूत्रकृतोक्तमिति तत्र पर्यवसानोक्तिरयुक्तेत्यत आह—विशिष्टवेषेणेति । अभेदसम्बन्धेन गमनादिक्रियाविशिष्टगवादिनिष्ठतादृशगोत्वादिनेत्यर्थः । धातूपस्थाप्यक्रियायाः साक्षादेव ज्ञापकत्वं वक्तुमशक्यम्, असत्त्वभूतत्वात्, किन्त्वाश्रयद्वारैव । अत एव तदाश्रयद्वारेण इति मूलेऽभिहितम् । एतेन क्रिययोः साक्षात्तदाश्रययोस्तद्द्वारेति कस्यचिदुक्तिर्निरस्ता । इदञ्च सूत्रं यत्र मानान्तरसिद्धस्यार्थस्य कालदेशान्यतरघटितसम्बन्धेन फलविशेषणसम्बन्धस्य प्रतिपादनाय प्रयोगस्तत्रैव प्रवर्तते ।

अत्रेदम्बोध्यम्—काचित् क्रिया स्वाधारकालावच्छिन्नामन्यां क्रियां लक्षयति । यथा—'गोषु दुह्यमानासु गत' इत्यादौ । काचित्स्वाधारकालाव्यवहितपूर्वकालावच्छिन्नामन्यां लक्षयति । यथा-'गोषु धोक्ष्यमाणास्वागतश्चैत्रः' इत्यादौ । काचित्तु स्वाधारकालानन्तरकालावच्छिन्नामन्यां क्रियां लक्षयति । यथा 'गोषु दुग्धासु गत' इत्यादौ । लक्षकक्रिया-

भावप्रकाशः ।

कालव्यावृत्त्यर्थमाह-क्रियेति । प्रसिद्धक्रियेत्यर्थः । असम्भवशङ्कां वारयति-शिखीति । आदिना पटो दग्ध इत्यादिपरिग्रहः । ननु क्रियाया एव परिच्छेदकत्वस्योक्तत्वात्तत्र पर्यवसानोक्तिरयुक्ताऽत आह—विशिष्टेति । तादृशक्रियाविशिष्टरूपेणैवेत्यर्थः । धातूपस्थाप्यक्रियायाः साक्षाच्छब्देन लक्षणत्वं बोधयितुमशक्यम्, असत्त्वभूतत्वात् अप्रातिपदिकत्वेन ततः सप्तम्यसम्भवाच्च, अतोऽन्यद्वारैव तद्वाच्यम्; स च तदाश्रय एव। अत एव तदाश्रययोरिति मूले प्रागुक्तम् । एवस्तस्येत्यग्रे योज्यः । कर्त्रादेरेवेति तु तदर्थ इति भावः । यद्वा ननूक्तरीत्या तयोर्लक्षकत्वस्य तदाश्रययोरित्यनेनैव प्रतिपादनात्कथं तत्र पर्यवसानमत आह—विशिष्टेति । अर्थः प्राग्वत् । केवलस्य लक्षकत्वासंभवोऽत्र पक्षे एवकारो यथाश्रुत एवेति भावः । एतेन क्रियायाः साक्षादाश्रयबोधस्तु तद्द्वारा लक्षणत्वमिति रत्नाकरदण्ड्याद्युक्तमपास्तम् ।

अथवाचकत्वद्वयोरपि गोशब्ददुह्यमानशब्दयोरित्युभाभ्यां सप्तमी । ननु यत्र क्रियावाचकस्पदन्न प्रयुज्यते "विवाहे नान्दीमुखङ् कुर्यात्" इत्यादौ तत्र कथं सप्तमीति चेत् ? इत्थम् , अत्र विवाहपदस्य विवाहप्राक्काले लाक्षणिकत्वात् "सप्तम्यधिकरणे च" इति सप्तमी । "राहूपरागे स्नायात्" इत्यादौ राहूपरागपदस्य राहूपरागकाले लक्षणा । तस्य सप्तम्यर्थाधारतायामन्वयः तस्यास्तु स्वानरूपिताधेयतासम्बन्धेन स्नाधात्वर्थेऽन्वये सिद्धसाध्यसमभिव्याहारन्यायेन राहूपरागस्नानयोर्निमित्तनिमित्तिभावे पर्यवसानम् ।

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च ।
तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति ॥

अत्राङ्गादिपदमङ्गादिदेशपरम् । अधिकरण एव सप्तमी । तस्य गमनेऽन्वयः । तस्य स्वसमानकर्तृकत्वस्वोत्तरकालिकत्वोभयसम्बन्धेन पुनः संस्कारयोग्यतायामन्वयोऽवच्छेदकावच्छेदेनेति तत्तद्देशगमनस्य पुनः संस्कारनिमित्तत्वम्फलति ।

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' ॥

परं-हिरण्यगर्भादि अवरं यस्मात्तस्मिन् ब्रह्मणि दृष्टे-तद्विषयकदर्शने 'अहम्ब्रह्मास्मि' इत्याकारकाऽपरोक्षज्ञाने ईदृशज्ञानोत्तरकालेऽस्य द्रष्टुः पुरुषस्य हृदयग्रन्थिर्मिथ्याज्ञानजन्यसंस्कारो भिद्यते, सर्वसंशयास्तादृशसंस्कारप्रभवसंशयाश्छिद्यन्ते, जाता नश्यन्ति, पुनरुत्पत्तिस्तु तेषान्न भवति सामग्र्यभावात् । अत एव सर्वपदम् । अस्य कर्माणि सञ्चितान्यदृष्टानि क्षीयन्ते नश्यन्ति । प्रारब्धानान्तु भोगान्निवृत्तिर्भवतीत्यर्थः । दृष्टपदन्तादृशदर्शनोत्तरकाललाक्षणिकमौपश्लेषिकाधारे एव सप्तमी । मासिकादौ यथा, तथैव बोध्या । एवं हृदयग्रन्थिशब्देन सङ्गभयद्वेषमोहशोकादि यत् तत्सर्वं ग्राह्यम् , अविद्याया नाशे तत्कार्याणान्नाशात् । भिद्यत इत्यत्र कर्मकर्तरि लट् ।

'मूले वृक्षे न कपिसंयोग' इत्यत्र मूलपदात्सप्तम्यप्यौपश्लेषिकाधारे, अवच्छेदकतासम्बन्धस्याप्याधारतानियामकत्वात् । अत एव 'शिरसि वेदना' 'पादे मे सुखम्' इति व्यवहारः । एवमेव यथायथमवधातव्यम् ।

अत्रेदम्बोध्यम् । उक्तत्रिविधाधिकरणेषु मुख्यमधिकरणमभिव्यापिकं सर्वावयवावच्छेदेन यत्राधेयस्य सम्बन्धस्तदेव । अत एव "स्वरितेनाधिकारः" इति सूत्रभाष्ये आचार्यैः "किमधिकरणं न्याय्यम्मन्यते? यत्र कृत्स्न आधारात्मा व्याप्त"इत्युक्तम् । अस्य न्याय्यत्वन्तु प्रकृत्यर्थतावच्छेदकविशिष्टे तज्ज्ञानाद्भवति । अन्यदधिकरणङ्गौणम् । सप्तमी तु सर्वस्मिन्नप्यधिकरणे "सप्तम्यधिकरणे च" इत्यत्राधिकरणपदे स्वरितत्वप्रतिज्ञानाद्भवति । अत एव "गङ्गायाङ्घोषः" 'कूपे गर्गकुलम्' इत्यत्र गौणाधारे सप्तम्युदाहृता भाष्ये ।

भावप्रकाशः ।

अत्रेदं बोध्यम् । अधीयानब्राह्मणज्ञापकगमनाश्रय इति क्रमेण बोधः । ज्ञाप्यज्ञापकभावः सप्तम्यर्थः । अत एवास्याः क्रियायामेवान्वयः । इदं सूत्रं यत्र मानान्तरसिद्धस्यार्थस्य कालविशेषसम्बन्धादिप्रतिपादनाय प्रयोगस्तत्रैव प्रवर्तते, सूत्रभाष्यस्वरसात् । एवञ्च विवाहे नान्दीमुखं कुर्यात् इत्यादौ विवाहपदेन तत्प्राक्कालो लक्ष्यते । अधिकरणे सप्तमी । राहूपरागे स्नायाद् गवां दोहे आगत इत्यादौ राहूपरागादिपदेन तदाश्रयः काल उच्यते । अवच्छेदकावच्छेदेनान्वयस्यौत्सर्गिकत्वाद्राहूपरागकालावच्छेदेन स्नानविधाने तस्य निमित्तत्वं फलति, एवमेवाङ्गादिदेशगमनस्य पुनःसंस्कारनिमित्तता । अत्र कौस्तुभमान्याद्युक्तिरयुक्तेति स्पष्टं मञ्जूषायाम् ।

भिद्यते हृदयग्रन्थिच्छिद्यन्ते संशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ।

इत्यत्र परंहिरण्यगर्भाद्यवरं यस्मात्तस्मिन् ब्रह्मणि दृष्टे तद्विषये दर्शने दर्शनोत्तरकाले कर्मादिक्षय

भेद एवेति । न तु शब्दान्तरोपात्तसामान्यरूपाक्रान्ततेति भावः । माथुरा इति । न ह्यत्र गवां कृष्णेत्यादाविव सामान्यविशेषभावः, किं तु शब्दोपात्तयो-धर्मयोर्विरोध एव ।

निपुणो राज्ञ इति । साधुशब्दप्रयोगे त्वर्चां विनाऽपि सप्तमी भवत्येव, "साध्वसाधुप्रयोगे च" इति वार्तिकात् ।

---

शब्दरत्नम् ।

न त्विति । गवां कृष्णेत्यादौ गोत्वाद्याक्रान्तता यथेति भावः । तदाह-न ह्यत्रेति । वार्त्तिकादिति । साधुर्भृत्यो राज्ञ इति तु राज्ञो भृत्येनान्वये साधुः । प्रत्यासत्त्या

भैरवी ।

"पञ्चमी विभक्ते" "यतश्च निर्द्धारणम्" इत्यनुवर्तते । अत्र विभक्तशब्दार्थो भेदः । एवञ्च यतो निर्धारणम्भेदश्च ततः पञ्चमीत्यर्थः । यत्र निर्धारणं तत्र भेदस्य सर्वत्र सत्त्वात् विभक्तग्रहणसामर्थ्याद्भेद एवेति नियमलाभः । भेद एवेत्यस्य भिन्नधर्मप्रकारकप्रतीतिविशेष्य-त्वमेव । एवकारेणाऽभेदस्य व्यवच्छेदः । स च निर्द्धार्यमाणस्य क्वापि नास्तीति नियमप्रदर्श-नवैयर्थ्यम्प्राप्नोतीत्याकाङ्क्षायामाह—मूले न तु शब्दान्तरेति । तदुदाहरणं स्पष्टप्रतिपत्तये आह-गवामिति । उक्तस्य विभक्तपदार्थस्य सत्त्वमुदाहरणे प्रदर्शितम्मूले-न ह्यत्रेत्यादिना । यत्र सामान्यविशेषभावस्तत्र विशेषस्य सामान्यधर्मावच्छिन्नत्वमस्त्येव । प्रकृते तु निर्द्धार्य-माणेषु माथुरेषु पाटलिपुत्रकत्वन्नास्तीतिभेदस्यैव सत्त्वमावश्यकमिति भावः । अत्र पञ्चम्यर्थो निर्द्धारणविषयत्वम् । पाटलिपुत्रकावधिकनिर्द्धारणविषया माथुरा आढ्यतरा इति बोधः ।

"साधुनिपुणाभ्याम्" इति सूत्रस्थस्याऽर्चायामित्यस्य व्यावर्त्यप्रदर्शनसमये साधु-शब्दम्परित्यज्य निपुणशब्द एवोक्तस्तद्बीजमाह—वार्तिकादितीति । नन्वेवं 'साधुर्भृत्यो राज्ञः' इत्यस्य वृत्तिप्रदर्शितप्रयोगस्य कथमुपपत्तिरत आह—साधुर्भृत्य इति । नन्वेवमन्यविषयकमपि साधुत्वङ्गम्येतेत्यत आह—प्रत्यासत्त्येति । एवञ्च यद्विषयकसाधुत्वं शब्दतो बुध्यते तद्वाचका-देव वार्तिकेन सप्तमीति भावः । अत एव तत्र वार्तिके प्रकृष्टयोगात्मकप्रयोगग्रहणम् । ननु यदि साधुशब्दार्थस्याऽऽर्थिको योगो राजनि गम्यत इति भवत्सम्मतन्तदा वृत्तिप्रदर्शितम्प्र-थमोपस्थितं 'साधुर्भृत्यो राज्ञः' इति प्रत्युदाहरणमपि सम्यगेव । प्रकृतसूत्रेऽर्चायामित्यस्याऽ-भावे "साधुनिपुणाभ्याम्" इति तृतीयया योगमात्राक्षेपादिति तत्त्यागानौचित्यमेवेत्यत

भावप्रकाशः ।

इत्यर्थः । मासिकवार्षिकादिवदौपश्लेषिकेऽधिकरणे सप्तमी । अत एव "यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणम्" इति भाष्यं सङ्गच्छते । सकलावयवव्याप्तौ व्यापकाधारत्वे तिलेषु तैलमित्यादि । इदमेव मुख्यम् । उप समीपे श्लेषः संबन्धस्तत्कृतमौपश्लेषिकम् । एतद्भिन्नं वैषयिकम् । मुख्यवद्गौणमपि सप्तमीशक्यमेव । अधिकरणत्वशक्तिमांश्च तदर्थ इति । अधिकं मञ्जूषायां द्रष्टव्यम् ।

अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वादाह-गवामिति ।

प्रत्युदाहरणे परममूले प्रथमोपस्थितसाधुशब्दत्यागे बीजमाह-वार्तिकादितीति । नन्वेवं 'साधुर्भृत्यो राज्ञः' इति वृत्तिप्रक्रियोक्तप्रयोगासंगतिरत आह—साधुरिति । हरदत्तोक्तिरेवेयम् । भृत्येनान्वय इति । भृत्येनैव शाब्दान्वये इत्यर्थः । राज्ञो भृत्यः साधुरितिवाक्यार्थ इति भावः । नन्वेवमन्यसाधु-त्वधीरपि स्यादत आह-प्रत्येति । तथाच प्रकृष्टप्रयोगाभावान्न तत्र वार्तिकप्रवृत्तिः । अत एव तत्र प्रयोगग्रहणमिति भावः । नन्वेवं सति वृत्तिप्रक्रियोक्तप्रथमोपस्थितप्रत्युदाहरणसंभव एव । अर्चापदाभावे सूत्रे तृतीयया योगमात्राक्षेपाद्यर्थेऽपि तत्प्रासेरत एव मिश्रशेषाभ्यां समर्थितमिदं प्रत्युदाहरणमिति तत्त्यागा-नौचित्यमेवेतिवार्तिकेन सप्तम्या दुर्वारत्वात् । प्रत्युदाहरणं क्लिष्टत्वाद्व्याख्यानं च दूषयन् रत्नाकरः

प्रसित इति। तत्परे प्रसितासक्ताविल्यमरः।
मूलेनेति। "नक्षत्रेण युक्तः कालः" इत्यणो "लुबविशेषे" इति लुप्।
पर्यायेणेति। ईश्वरशब्दो भावसाधनः। यस्य स्वामिन ईश्वरत्वमुच्यते इत्येकं व्याख्यानम्। यस्येति स्वं निर्दिश्यते। यस्य स्वस्य ईश्वर उच्यते इत्य-

शब्दरत्नम्।

च राजविषयमेव साधुत्वं गम्यते न तु शब्देन तत् स्पृश्यते। अर्चायां प्रतियोगे निषेधार्थं स्वत्र साधुग्रहणमिति तत्त्वम्।

तत्परे इति। रूढत्वादेतदर्थस्यैव ग्रहणम्। तेन प्रकर्षेण सित

भैरवी।

आह—अर्चायाम्प्रतियोग इति। 'साधुर्मातरम्प्रतिपर्यनु' इत्यत्र यदाऽर्चा विवक्षिता तदा मातृशब्दात्सप्तमी प्राप्ता परन्तु प्रतियोगसत्त्वान्न भवति। एतेन प्रकृतसूत्रे साधुग्रहणमनर्थकम्। साधुशब्दप्रयोगे 'साध्वसाधुप्रयोगे' इति वार्तिकेन सप्तम्या दुर्वारत्वादिति कस्यचिदुक्तिः प्रत्युक्ता। प्रकृतसूत्रे पुनः साधुशब्दोपादानसामर्थ्यात्प्रत्यादिभिर्योगे साधुशब्दे प्रकृतसूत्रेण वार्तिकेन वा प्राप्ता सप्तमी न भवतीति भावः। अप्रतेरिति शब्दे समस्तः प्रतिशब्दो "लक्षणेत्थम्भूत" इति कर्मप्रवचनीयसंज्ञाघटकप्रत्यादिलाक्षणिक इत्याशयेन वार्तिककृतोक्तम्—'प्रत्यादिभिरिति'। नन्वेवं सति प्रकृतसूत्रे एव साधुशब्दोपादानमस्तु, प्रत्यादियोगाभावे प्रकृतसूत्रेणैव साधुशब्दप्रयोगे सप्तम्याः सिद्धौ वार्तिके साधुग्रहणमनर्थकमितिचेत्? न, साधुः कृष्णो मातरीत्यत्र तत्त्वकथनेऽर्चाया अभावेऽपि सप्तमीसिद्ध्यर्थन्तस्य सत्त्वात्। एवञ्च प्रकृतसूत्रेऽर्चाग्रहणन्निपुणार्थमेवेति ध्वनयन्नाह—तत्त्वमिति। अत एव "सप्तम्यधिकरणे च"इति सूत्रस्थ 'साध्वसाधुप्रयोगे' इति वार्तिकव्याख्यानावसरे "साधुनिपुणाभ्यां सप्तम्यां सिद्धायामनर्चार्थमत्र साधुग्रहणन्तेन तत्त्वकथने साधुशब्दयोगे सप्तमी भवति, अर्चाग्रहणन्तु तत्र निपुणविशेषणार्थमेव"इति कैयटः सङ्गच्छते।

मूले "प्रसितोत्सुकाभ्याम्" एतद्व्याख्यानावसरे तत्परे प्रसितासक्ताविल्यमरप्रदर्शनं रूढस्यैव प्रसितशब्दस्य ग्रहणन्न तु यौगिकस्येति प्रदर्शनायेत्याशयेनाह—रूढत्वादिति। प्रसिद्धत्वादित्यर्थः। 'रूढिर्योगमपहरति' इति न्यायस्यापि प्रसिद्धत्व एव तात्पर्यम्। एतदर्थस्य—

भावप्रकाशः।

परास्तोऽत आह-अर्चायामिति। प्रतियोगे-प्रत्यादियोगे। वार्तिके तु अनर्चार्थां तद्ग्रहणं तेन तत्त्वकथनेऽपि तथायोगे भवति। तथाचात्रार्चाग्रहणं विध्यंशे निपुणार्थमेव। एवञ्च प्रयोगसाधुत्वेऽपि प्रत्युदाहरणासङ्गतिरेव। सूत्रस्य तदभावेऽप्यप्राप्तेस्तस्यात्र निषेधार्थकत्वादिति वृत्तिप्रक्रियामिश्रप्रकाशायुक्तिरयुक्तैव। अत एव पदमञ्जरीकारमतेनेदं प्रत्युदाहरणम्। वस्तुतोऽन्याय्यमिति प्रसादकृता उक्तम्। अर्चाग्रहणं निपुणशब्दस्यैव विशेषणमिति कैयटहरदत्तादीनामप्ययमेवाशयः। एतेन तत्र द्वन्द्वनिर्देशे एकदेशान्वयायोगात् साधुग्रहणवैयर्थ्याच्च। न चेष्टापत्तिः, भाष्यकृता प्रत्याख्यातत्वात्। अर्चायामप्रतेरिति निषेधार्थं तस्यावश्यकत्वाच्च। न चाप्रतेरिति निषेधबाधनार्थमेव वार्तिके साधुग्रहणम्, अबाधेनोपपत्तौ बाधायोगात् साधुर्मातरं प्रतिपर्यनुवेति भाष्योक्तप्रत्युदाहरणविरोधाच्च। तस्मात्तदुभयविशेषणमिति रत्नाकरोक्तमपास्तमुक्तयुक्तेरिति दिक्। यत्तु क्रियावाच्युत्सुकशब्दसाहचर्यात्स गृह्यते न गुणवाची इति प्रकाशरत्नाकरदण्ड्यादयस्तन्न, उत्सुकशब्दस्य रूढत्वादत आह-रूढत्वादिति। प्रसिद्धत्वादित्यर्थः। रूढिर्योगमपहरतीति न्यायादिति भावः। एतदर्थस्येति। एतदर्थकस्येत्यर्थः। सितः—शुक्लः

परम्। एवं च व्याख्याभेदात्पर्यायेण विभक्तिः। सा च विशेषणात् षष्ठीवदिति भावः।

इति सप्तमी।

इति श्रीमद्भट्टोजिदीक्षितविरचितायां प्रौढमनोरमायां कारकप्रकरणम्।

---

शब्दरत्नम्।

इत्यर्थे न॥

इति सप्तमी॥

इति श्रीमद्भट्टोजिदीक्षितपौत्रहरिदीक्षितविरचिते प्रौढमनोरमाव्याख्याने लघुशब्दरत्ने कारकप्रकरणम्॥

---

भैरवी

एतदर्थकस्य। सितशब्दो गौरवाची। इत्यर्थे इति। सतीति शेषः। परममूले "यस्मादधिकं यस्य चेश्वरवचनम्" इति सूत्रस्य व्याख्यानम्मङ्गलाय, "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते" इति भाष्यात्। तत्र यस्य चेश्वरवचनमितिशब्दस्य यस्य स्वस्य ईश्वरः कथ्यते तद्वाचकादित्यर्थे स्ववाचकात्सप्तमी, यद्वा त्वीश्वरशब्दो भावप्रधाननिर्देशेनेश्वरत्ववचनस्तदा स्वामिवाचकात्सा भवति। "अधिभुवि रामः" "अधिरामेभूः"इत्यत्र यथा।

इति सप्तमीविवरणम्।

इति श्रीमहामहोपाध्यायभैरवमिश्रविरचितायां शब्दरत्नव्याख्यायां कारकान्तं प्रकरणं सम्पूर्णम्।

इति शम्।



भावप्रकाशः।

इत्यर्थे—इत्यर्थके सतीत्यर्थः।

इति सप्तमी॥

इति श्रीमत्पायगुण्डोपाख्यमहादेवसुतवैद्यनाथविरचितायां भावप्रकाशिकायां कारकप्रकरणं सम्पूर्णम्।



# अथाव्ययीभावः ।

समर्थाश्रित इति । सूत्रे समर्थशब्दो लाक्षणिक इति भावः ।

रत्नप्रदीपक ।

समर्थाश्रित इति । "समर्थः पदविधि"रिति सूत्रे समर्थपदम् सामर्थ्यविशिष्टरूपार्थबोध-

सरला ।

श्रीगुरुःशरणम् ।

मूले समर्थाश्रित इति । "समर्थः पदविधिः" इति सूत्रे पदविधिशब्देन पदोद्देश्यकविधिः समा-ससञ्ज्ञादिरूपो गृह्यते, तेन च सामानाधिकरण्यासम्भव इति समर्थपदं तदाश्रिते लाक्षणिकम् । ययोः द्वयोर्भागयोरेकार्थीभावसामर्थ्यं तादृशसामर्थ्याश्रितयोरेव समाससञ्ज्ञादि भवतीत्यर्थः, अस्य सूत्रस्य परिभाषारूपत्वेन नियमे पर्यवसानात् । सामर्थ्यं चात्रैकार्थीभावरूपमेव नतु व्यपेक्षारूपं "संसृष्टार्थं समर्थम्" इति अत्रैव सूत्रे भाष्योक्तेः, "पृथगर्थानामेकार्थीभावः समर्थवचनम् । पृथगर्थानां पदानामेका-र्थीभावः समर्थमित्युच्यते । क्व पृथगर्थानि क्वैकार्थानि ? वाक्ये पृथगर्थानि—राज्ञः पुरुष इति, समासे पुनरेकार्थानि राजपुरुष इति" इति भाष्योक्तेश्च । एवञ्च पृथक् पृथगर्थोपस्थापकपदानां समुदायनिष्ठैक-शक्त्या एकोपस्थितिजनकत्वमेकार्थीभाव इति फलितम् । घटत्वघटयोरेकोपस्थितिर्यद्यपि घटपदाद्भवति तथापि तत्र पृथगर्थोपस्थापकपदसमुदायाभावान्न दोषः । अत्र 'शक्तं पदम्' इति पदं पदपदेन गृह्यते नतु सुबन्तं तिङन्तं वेति । तेन 'औपगवः' इत्यत्र नाव्याप्तिः । अन्यथा तद्धिताण्प्रत्ययस्य तादृशपदत्वाभावेन-घट इव तत्रापि तादृशसमुदायासत्त्वापत्त्या तत्रोक्तैकार्थीभावसामर्थ्याभावप्रसङ्गात् । विभक्त्यर्थस्य प्रका-रतावादिमते विभक्तीनां तद्धितप्रत्ययवत्पदत्वसत्त्वेऽपि तत्र विभक्त्यन्तसमुदाये एकशक्तेरभावान्न दोषः । वैशिष्ट्यमुद्रया एकार्थीभावलक्षणं तु 'पदविशिष्टत्वम्' । वैशिष्ट्यञ्च स्वघटितत्वं, स्वप्रयोज्यविषयतानिरू-पितविषयताप्रयोजकपदघटितत्वं, स्वनिष्ठशक्तिपर्याप्त्यधिकरणत्वम्, एतत्त्रितयसम्बन्धेन । "राजपुरुषः" इत्यत्र पदं राजन्पदं पुरुषपदं वा, तद्वैशिष्ट्यं समुदाये वर्तते । तथाहि, स्वं राजन्पदं तद्घटितत्वं समुदाये, तत्प्रयोज्या विषयता राजत्वावच्छिन्ना प्रकारताख्या विषयता तन्निरूपिता विषयता पुरुषत्वा-वच्छिन्ना विशेष्यताख्या तत्प्रयोजकं पदं पुरुषपदं तद्घटितत्वमपि तस्मिन् समुदाये, एवं स्वं राजन्पदं तन्निष्ठा या समासवृत्तिविशिष्टशक्तिस्तत्पर्याप्त्यधिकरणत्वमपि तत्र समुदाये इति लक्षणसमन्वयः । एवमेव पुरुषपदमादायापि लक्षणसमन्वयो बोद्धव्यः ।

यत्तु शक्तिविशिष्टत्वमेकार्थीभावः, वैशिष्ट्यं च स्वपर्याप्त्यधिकरणघटितत्वं, स्वनिरूपकेतरनिरूपितश-क्तिपर्याप्त्यधिकरणघटितत्वं, स्वज्ञानप्रयोज्यज्ञानविषयीभूतशक्तिपर्याप्त्यधिकरणत्वमेतत्त्रितयसम्बन्धेनेति, राजपुरुष इत्यादौ वृत्तिघटकपदनिष्ठशक्तिमादाय च लक्षणसमन्वयः । तथाहि, स्वं राजन्पदनिष्ठा-शक्तिः तत्पर्याप्त्यधिकरणं राजपदं तद्घटितत्वं राजपुरुष इत्यत्र, स्वं राजन्पदनिष्ठा शक्तिः तन्निरूप-कोऽर्थः राजन्रूपस्तदितरः पुरुषरूपोऽर्थः तन्निरूपितशक्तिपर्याप्त्यधिकरणं पुरुषपदं तद्घटितत्वमपि तत्र समुदाये, एवं स्वं सैव शक्तिः तज्ज्ञानप्रयोज्यं यज्ज्ञानं विशिष्टशक्तिविषयकं तद्विषयीभूता शक्तिः, विशिष्टशक्तिस्तत्पर्याप्त्यधिकरणत्वमपि तत्र समुदाये इति, आद्यसम्बन्धद्वयं स्वरूपकीर्तनपरं, तृतीयस्तु सम्बन्धस्तु वाक्येऽतिव्याप्तिवारणायेति; तन्न, 'वाप्यश्वः' इत्यादिजहत्स्वार्थवृत्तौ विशिष्टशक्तिग्रहस्याऽवय-वशक्तिग्रहप्रयोज्यत्वाभावेन तत्राव्याप्तेः, 'असूर्य' इत्याद्यसमर्थसमासे पूर्वसम्बन्धद्वयसत्त्वेनातिव्याप्तेश्च । नच तत्र तृतीयसम्बन्धाभाव इति न दोष इति वाच्यम्, विशिष्टशक्तेः समासादिवृत्तिकल्प्यतया समाससञ्ज्ञायाश्च तत्र सत्त्वेन विशिष्टशक्तेः कल्पने बाधकाभावात् । मम तु कल्प्यविशिष्टशक्तेः सत्त्वेऽपि नञर्थस्य सूर्यपदार्थस्य च परस्परमन्वयाभावेन नञ्पदप्रयोज्या सूर्यपदप्रयोज्या वा या विषयता तन्निरूपितविषयताप्रयोजकपदघटितत्वरूपद्वितीयसम्बन्धाभावेन न तत्रैकार्थीभावसामर्थ्यम् । अत एव

रत्नप्रदीपक।

कम्। पदविधिशब्देन साक्षात् सामानाधिकरण्यासम्भवादाह—समर्थाश्रित इति। समर्थशब्दस्य समर्थाश्रिते लक्षणा इतिच। अत्र सामर्थ्यं द्विविधम्। एकार्थीभावः व्यपेक्षा च। तत्र संसृष्टार्थं समर्थम् इति भाष्योक्तमुपादाय समुदायशक्त्या परस्परं निरूप्यनिरूपकभावापन्नविषयताप्रयोजकत्वेसत्येकार्थोऽपस्थितिजनकत्वरूपैकार्थीभावसामर्थ्यं गृह्यते। ननु विशिष्टापेक्षा इत्यर्थकव्यपेक्षारूपं व्याख्यानात्। ननु पृथगर्थानां समुदायनिष्ठशक्त्या एकोपस्थितिजनकत्वरूपैकार्थीभावलक्षणे स्वीकृते सति घटपदस्यापि घटत्वघटरूपार्थयोः घट इतिसमुदायनिष्ठशक्त्याऽभिन्नोपस्थितिजनकत्वात्तत्रापि तत्त्वापत्तिरितिचेन्न। यत्किञ्चिच्छक्तिविशिष्टत्वम् एकार्थीभावत्वम् इतिस्वीकारेणादोषात्। वैशिष्ट्यं च स्वग्रहप्रयोज्य ग्रहविषयीभूतशक्तिपर्य्याप्त्यधिकरणत्वम्। स्वपर्य्याप्त्यधिकरणघटितत्वम्—स्वनिरूपकपदार्थेतरपदार्थनिरूपितशक्तिपर्य्याप्त्यधिकरणघटितत्वम् एतत त्रितयसम्बन्धेन। यथा राजपुरुष इत्यादौ राजत्वावच्छिन्ननिरूपितशक्तिग्रहप्रयोज्य शक्तिग्रहविषयीभूतराजसम्बन्धिपुरुषत्वावच्छिन्ननिरूपितशक्तिपर्य्याप्त्यधिकरणत्वम्, राजत्वावच्छिन्ननिरूपितशक्तिपर्य्याप्त्यधिकरणराजपदघटितत्वम्, राजत्वावच्छिन्ननिरूपितशक्तिनिरूपकराजपदार्थेतरपुरुषत्वावच्छिन्नरूप पदार्थनिरूपितशक्तिपर्य्याप्त्यधिकरणपुरुषपदघटितत्वं चास्तीतिलक्षणसमन्वयः। प्रथमसम्बन्धाभावात् घटपदे नातिव्याप्तिः। स्वरूपबोधकौ द्वितीयतृतीयसम्बन्धौ नान्यव्यावर्तकफलकौ। एवं वाक्येऽपि विशिष्टे शक्त्यभावेन प्रथमसम्बन्धाभावादेव नातिव्याप्तिः। क्विबन्तेऽपि क्विबवस्थायाम् विद्यमानस्यैकार्थीभावस्यारोपात् एकार्थीभावाक्षतिरितिध्येयम्। सूत्रे सन्नन्तादौ एकार्थीभावसिद्धये पदविधिशब्देन पदविधिसहचरितोऽपि गृह्यते।

वस्तुतस्तु—पदसञ्ज्ञाप्रयोजक प्रत्ययोत्पत्तिप्रयोजक सञ्ज्ञाविधायक शास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्न सम्पादकविधित्वम् पदविधित्वम् तच्च कृत्प्रत्ययविधायके, तद्धितप्रत्य-

सरला।

'असामर्थ्येऽपि गमकत्वात्समासः' इति अभियुक्तोक्तिः सङ्गच्छते। विसर्गसन्धिप्रकरणे टिप्पणेऽस्मद्गुरुवराणां तादृशैकार्थीभावलक्षणोक्तिस्तु व्यपेक्षासामर्थ्यप्रसङ्गायातेति न तद्विरोधः। लिट्, धुक्, इत्यादौ प्रथमसम्बन्धस्य व्यपदेशिवद्भावेन द्वितीयसम्बन्धस्य प्रत्ययलक्षणेन तृतीयसम्बन्धस्य स्वतः सत्त्वेनैकार्थीभावसामर्थ्योपपत्तिः। 'लिह् क्विप्' इत्यवस्थायां विद्यमानस्यैकार्थीभावसामर्थ्यस्य 'लिट्' इत्यत्रारोपाद्वा। नन्वेवमपि वाक्यशक्तिनये वाक्ये शक्तिपर्याप्त्यधिकरणत्वस्य आद्यसम्बन्धद्वयस्य च सत्त्वात्तत्रापैकार्थीभावरूपसामर्थ्यापत्तिरिति वाच्यम्, तन्नये इष्टापत्तेरिति दिक्।

सूत्रे पदविधिशब्देन पदविधिसहचरितोऽपि विधिर्गृह्यते। अत एव सन्नन्तादावेकार्थीभाव इति शेखरे निरूपितम्। वस्तुतस्तु पदसञ्ज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसञ्ज्ञाविधायकशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसम्पादकविधित्वं पदविधित्वमिति तल्लक्षणं द्रष्टव्यम्। तच्च सनादिविधायके समाससञ्ज्ञाविधायके कृत्तद्धितविधायके चास्ति, तत्र सनादिविधायकस्य पदसञ्ज्ञाप्रयोजकतिङ्प्रत्ययोत्पत्तिप्रयोजकधातुसञ्ज्ञाविधायक"सनाद्यन्ताधातवः" इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकसन्नाद्यवच्छिन्नसम्पादकत्वात्, समाससञ्ज्ञाकृत्तद्धितविधायकानां च पदसञ्ज्ञाप्रयोजकसुप्प्रत्ययोत्पत्तिप्रयोजकप्रातिपदिकसञ्ज्ञाविधायकशास्त्रीयोद्देश्यतावच्छेदकसमासत्व—कृत्त्व—तद्धितत्व—एतदन्यतमावच्छिन्नसम्पादकत्वात्। अत एव "समासेऽञ्कुेः सङ्कः" इति सूत्रस्थसमासग्रहणं चरितार्थम्। अन्यथा पदोद्देश्यकविधित्वस्य पदविधित्वस्वीकारे समर्थपरिभाषयकार्थीभावसामर्थ्याश्रिते एव तत्प्रवृत्तिनियमेन तत्सामर्थ्यस्य च समास एव सम्भवेन तत्रत्यसमासग्रहणवैयर्थ्यं स्पष्टमेव। अत एव च "ओत्वोष्ठयोः समासे वा" इत्यत्र न प्रवृत्तिरिति 'दन्त्योष्ठयः' इति प्रयोगसिद्धिः। विस्तरस्तु शब्देन्दुशेखरे द्रष्टव्यः।

कतिपयेति । यद्यपि उदात्तवता गतिमता च तिङा गतेः समासो नित्याधिकारे वार्तिककृतोक्तस्तथाऽपि नासौ नियतः, 'य आनयत्' 'अभिप्रभरभृषत' इत्यादौ समासादर्शनात् । अत एव भाष्यकृता 'सह' इति योगविभागेनाऽयं साधितः । यथोत्तरं मुनीनां प्रामाण्यमिति भावः । स चेति । एतदपि योगविभागस्येष्टसिद्ध्यर्थत्वादेव लभ्यते । एतच्च सम्प्रदानसञ्ज्ञासूत्रे पदमञ्जर्यां स्पष्टम् । यदि हि लोकेऽपि स्यात् तर्हि "अभिप्रैति" इत्यादौ समासत्वादयः स्युः, पचतिकल्पमित्यादौ तद्धितान्ताद्यथा । न च लिङ्गसर्वनामनपुंसकताऽभ्युपगमेन निर्वाहः, 'प्रकुरुते' इत्यादौ ह्रस्वापत्तेः, 'प्रकुर्वीरन्' इत्यत्र नलोपापत्तेश्च ।

निर्देशादिति । अन्यथा हि प्रथमानिर्दिष्टत्वाविशेषेऽपि उपसर्जनसञ्ज्ञाया

---

शब्दरत्नम् ।

नित्याधिकारे इति । "उपपदमतिङ्" इत्यत्रेत्यर्थः । नियत इति । अप्रतिबद्धप्रसरो नित्य इत्यर्थः । एवं चाधिकारप्राप्तमपि नित्यपदं तदंशे न संबध्यत इति भावः । योगविभागेनेति । तस्य च वैकल्पिकत्वं वक्ष्यति । एतदपीति । छन्दस्येवेत्येतदित्यर्थः । एतदुत्तरं छन्दस्येवेति प्रतीकपाठो लेखकप्रमादात् । एतच्चेति । उक्तच्छान्दसत्वमित्यर्थः । निर्वाह इति । शयितव्यमित्यादेः क्रियावाचकस्यापि नपुंसकत्ववदस्यापि प्रातिपदिकत्वे तत्त्वेन लुका तदश्रवणादित्यर्थः ।

अन्यथेति । सुबन्तमित्यनेनान्यतरस्यैव ग्रहणे विनिगमकाभावादिति भावः ।

रत्नप्रदीपक ।

यविधायके, समाससञ्ज्ञाविधायके सनादिविधायके नास्ति । अत्राद्यानां त्रयाणां पदसञ्ज्ञाप्रयोजकसुप्प्रत्ययोत्पत्तिप्रयोजकप्रातिपदिकसञ्ज्ञाविधायकशास्त्रीयोद्देश्यतावच्छेदककृत्त्वतद्धितत्वरूपासत्वान्यतमावच्छिन्नसम्पादकत्वात् । सनादिविधायकस्य च पदसञ्ज्ञाप्रयोजकतिङ्प्रत्ययोत्पत्तिप्रयोजकधातुसञ्ज्ञाविधायक "सनाद्यन्ता धातवः" इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकसन्त्वाद्यवच्छिन्नसम्प्रत्ययर्थत्वात् । इत्थमेव "समासेऽङ्गुलेः सङ्गः" इत्यत्रत्यसमासग्रहणस्य "पदान्ताद्वा" इतिसूत्रस्थान्तग्रहणस्य च चारितार्थ्यम् । "ओत्वोष्ठयोः" इत्यादौ च प्रवृत्तिरितिदिक् ।

अत एव शाब्दिकनये समुदायशक्तिस्वीकारेण राजपुरुष इत्यादौ पदार्थैकदेशे राज्ञि इत्यादौ

सरला ।

वैकल्पिकत्वमिति । सर्वत्र योगविभागस्थले समानविधेयताकद्वितीययोगेन तस्य काचित्कत्वबोधनात् । अत एव योगविभागस्येष्टसिद्ध्यर्थत्वमेव नरवनिष्ठापादकत्वमित्युद्द्योतः । अत एव "आतः" इति योगविभागेन 'क्त्वः' 'इनः' इत्यादावेव आकारलोपो नतु साशब्दाशाविति । लेखकप्रमादादिति । 'एतदपि' इति प्रतीकस्यैव छन्दस्येवेत्यर्थकत्वादिति भावः ।

विनिगमकाभावादिति । न च तदभावे पूर्वनिपातानियमे भूतशब्दस्य कदाचित्पूर्वनिपाते "भूतपूर्वे चरट्" इति निर्देशस्योपपत्तौ नियतपूर्वनिपातज्ञापकत्वं तस्य न स्यादिति वाच्यम्, "भूतपूर्वे चरट्" "पूर्वं भूतपूर्वे" "गोष्ठात्खञ् भूतपूर्वे" इत्यादिसूत्रेषु सर्वत्र भूतशब्दस्यैव पूर्वप्रयोगदर्शनेन तत्पूर्वप्रयोगस्यैवेष्टत्वानुमानात्, तेन निर्देशेन अवयवद्वारकसामर्थ्यमादाय भूतशब्दादेरेव समासज्ञापनेन 'पूर्वं भूतः' इति पूर्वशब्दस्यादित्वविवक्षायां प्रधानेन सामर्थ्याभावात्समासाप्रवृत्तेश्च ।

इति भाव इति । 'उपसर्जनम्' इति महासञ्ज्ञाकरणेन लौकिकोपसर्जनत्वविशिष्टस्यैव पूर्वनिपात इति

अन्वर्थत्वेन पूर्वशब्दस्यैव पूर्वनिपातः स्यादिति भावः।

इवेनेति। अयमपि समासः पूर्ववत्क्वाचित्क एव। तेन 'जीमूतस्येव' इत्यादौ तैत्तिरीयाणां पृथक्पदत्वेन पाठः 'उद्बाहुरिव वामनः' इत्यादौ व्यस्तप्रयोगोऽपि सङ्गच्छते।

"गोस्त्रियोः"। उपसर्जनं य इति। यत्तु प्राचा—गोऽन्तस्त्रीप्रत्ययान्तयोरुपसर्जनयोरित्युक्तम्; तन्न, चित्रगुरित्यादौ गोशब्दस्योपसर्जनत्वेऽपि

---

शब्दरत्नम्।

**पूर्वशब्दस्यैवेति**। तस्य कालवाचकत्वेन क्रियायां विशेषणत्वादिति भावः।

**काचित्क इति**। कादाचित्क इत्यपि बोद्धयम्। योगविभागसिद्धत्वात् तदनुवादेन विभक्त्यलोपस्यैवानेन विधानमिति भावः। **व्यस्तप्रयोग इति**। समासे ह्यिवस्य परनिपातः स्यादिति भावः। अलोपश्च प्रत्यासत्त्या समासावयवविभक्तेरेव। तेन समासादुत्पन्नस्य "अव्ययात्" इति लुग्भवत्येव।

ननु गोपदार्थस्यैव चित्रगो इति समुदायार्थस्य चित्राभिन्नगोरूपस्यान्यपदार्थोपस-

रत्नप्रदीपक।

न ऋद्धस्येत्यादिविशेषणान्वयः। पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेति व्युत्पत्तेः। एतत्फलितार्थपरमेव सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो नेत्युद्घोधः। नचोक्तरीत्या पदार्थैकदेशे विशेषणान्वयस्यास्वीकारेण देवदत्तस्य गुरुकुलमित्यादेः अप्रामाण्यापत्तिरितिवाच्यम्। गमकत्वादेव विशेषणान्वयस्य युक्ततया तत्रप्रामाण्योपपत्तेः। न च महादेव इत्यत्रात्वं न स्यात् समुदायशक्त्या समासे तस्यैवार्थवत्त्वेन तदेकदेशस्यानर्थकतया सूत्राप्राप्तेरितिवाच्यम् सूत्रारम्भसामर्थ्यात् भूतपूर्वगतेराश्रयणाच्छास्त्रप्रवृत्तेरितिबोध्यम्।

विनिगमकाभावादिति। नच अनियमे भूतशब्दस्य पूर्वनिपातननिर्देशस्य चारितार्थ्यात् कथं तस्य नियतपूर्वनिपातज्ञापकत्वमिति वाच्यम्। "भूतपूर्वेचरट्" पूर्वंभूतः भूतपूर्वं, "गोष्ठात्खञ्" "भूतपूर्वे" इत्यादौ सर्वत्र भूतशब्दस्यैव पूर्वनिपातकरणेन तत्पूर्वप्रयोगस्यैवेष्टत्वानुमानात्। भूतपूर्वेति निर्देशेनावयवद्वारकसामर्थ्यमादाय भूतशब्दादेरेवसमासत्वस्य ज्ञापनेन पूर्वं भूत इत्यत्र पूर्वशब्दादिप्रयोगविवक्षायां प्रधानेन सामर्थ्याभावात् समासाप्रवृत्तेश्च। अतएव निर्देशात् समासोपपत्तिः। यत्तु उपसर्जनमितिमहासञ्ज्ञाकारणात् लौकिकोपसर्जनत्वविशिष्टस्यैव पूर्वनिपात इति पूर्वशब्दस्यैव पूर्वनिपातप्रसक्तिरिति भूतशब्दस्य पूर्वनिपातकरणं तज्ज्ञापकमिति तन्न। नवीनमते समासशास्त्रीयशब्दगताप्राधान्यस्याश्रयणेन विनिगमनाविरहतादवस्थ्यादिति दिक्॥

लुग्भवत्येवेति। अत्र यथार्थत्वादि प्रयुक्ताव्ययीभावस्तु न भवति तत्रतस्यैवेत्यादिनिर्देशात्। हरीतकीं भुङ्क्ष्व राजेन्द्र मातेवहितकारिणीम्, इत्यत्र तूपमानोपमेययोः समानविभक्तिकत्वनियमात् असमासे समासे वा भिन्नविक्तिकत्वादसाध्वेव। केचित्तु—मातेवेतिसमस्तस्य हितकारिणीमित्यनेन समासे मातेवहितकारिणीमिति साध्वेवेत्याहुः।

सरला।

पूर्वशब्दस्यैव क्रियाविशेषणत्वेन तादृशोपसर्जनतया पूर्वनिपातप्रसक्तिरिति भूतशब्दस्य पूर्वनिपातकरणं तज्ज्ञापकमिति तदाशयः। वस्तुतस्तु समासशास्त्रीयशब्दगताप्राधान्यस्याश्रयणेन भूतपूर्व इत्यत्र तदभाव इति नायं निर्देशो ज्ञापक इति। अत एव 'पूर्वकायः' इत्यस्य सिद्धिः। अन्यथा पूर्वशब्दार्थस्य विशेष्यत्वात्तत्र पूर्वशब्दस्य पूर्वनिपातो न स्यात्।

**योगविभागसिद्धत्वादिति**। एतत्तत्त्वमर्वागेव निरूपितम्।

तदन्तस्यातथात्वाद्, गौरीपतिरित्यादौ अतिप्रसङ्गाच्च। कथं सुगोकुलं राजकुमारीपुत्र इति चेत्? शृणु, उपसर्जनस्य ससम्बन्धिकतया यस्य प्रातिपदिकस्य ह्रस्वो विधीयते तदर्थं प्रति उत्तरपदभूतयोर्गोस्त्रियोर्गुणीभावस्तदैव ह्रस्वत्वम्। दिशयोरिति। दिशोरिति हलन्तेन विग्रहेऽप्येतदेव रूपम्। दिश्शब्दस्य शरदादित्वाट्टच्।

वचनसामर्थ्यादिति। विभक्तीत्यनेन हि येन सुबन्तेन सह समासस्तद्धटकीभूतैव विभक्तिर्गृह्यते सन्निधानात्। तदर्थद्योतकश्चाऽधिरिति भावः। परिशिष्टे

---

शब्दरत्नम्।

र्जनत्वमेवेत्यरुचेराह—गौरीपतिरिति। राजकुमारीपुत्रे स्त्रीप्रत्ययान्तस्य प्रातिपदिकत्वलाभाय समस्तस्य पूर्वपदत्वकरणम्। उत्तरपदभूतयोरिति स्वरूपकथनम्, उत्तरपदस्यैव तथात्वसंभवात्। टजिति। यतष्टच् अत एतदेव रूपमित्यन्वयः। सन्निधानादिति।

रत्नप्रदीपक।

गुणीभावस्तदैव ह्रस्वत्वम्। तदुक्तम् पतञ्जलिना। अप्रधानमुपसर्जनम्, इति सम्बन्धिशब्दावेतौ तत्र सम्बन्धादेतद्गन्तव्यम् सम्प्रति यदप्रधानं तस्य चेत्सोऽन्तोभवति इति यत्प्रथमानिर्दिष्टं तस्य तद्घटितसमासस्य सोऽप्रधानशब्दोऽन्तोभवतीति तदर्थः। अत्रोपसर्जनपदेन प्रथमानिर्दिष्टं समासउपसर्जनम् इत्यादि शास्त्रीयमेवोपसर्जनत्वम् "इद्गोण्या" इति सूत्रस्थभाष्यात्। तत्र हि "गोण्या न इत्येव वक्तव्यम्। किमर्थमित्वं विधीयते पञ्चगोणिरित्यादौ "लुक्तद्धितलुकि" इतिलुकि प्रतिसिद्धे एकविभक्तीत्यनेनोपसर्जनत्वात् गोणीशब्दस्योपसर्जनत्वं सेत्स्यतीति किमर्थमित्वमित्याशङ्क्य गोणीमात्रमिदं गोणिः इत्यत्र शास्त्रीयोपसर्जनत्वाभावात् ह्रस्वो न स्यादित्यभिप्रायेण इत्वविधानमित्युक्तम्। अनेन भाष्येण शास्त्रीयोपसर्जनस्यैवात्र ग्रहणमितिस्पष्टमेवोक्तम् अतएव कुमारीमिच्छन्ब्राह्मणः कुमारी, 'गोवष्कयणी' इत्यादौ कुमारीवष्कयण्योः लौकिकोपसर्जनसत्त्वेऽपि न दोषः। शास्त्रीयोपसर्जनत्वं "पाटयुवती"त्यत्र प्रथमानिर्दिष्टगोशब्दस्यैवास्ति परन्तु तस्यान्तत्वं नास्ति इति न ह्रस्वः। इत्यलम्।

शरदादित्वाट्टच् इति। नच अपदिशमित्यादौ नपुंसकह्रस्वत्वेन रूपसिद्धौ कथं 'गोस्त्रियोरित्युपन्यास" इति वाच्यम्। चित्रगुरित्याद्यमावश्यकत्वेन गोस्त्रियोरित्यादिनापि तत्सिद्धेरित्युपन्यासात्। ननु शरदादिषु दिश् शब्दस्य पाठेन "लिङ्गविशिष्ट" परिभाषया टचा भाव्यमिति चेन्न। लिङ्गविशिष्टपरिभाषायाः समासान्तप्रकरणे अप्रवृत्तिरिति "ङ्याप्" सूत्रे भाष्ये स्पष्टमुक्तत्वात्। टाबन्तदिशाशब्दोऽकारान्तप्रकृतिक इति टचः प्राप्तेरभावात् तस्मान्मनोरमोक्तं चिन्त्यम् इत्याहुः। यदि तु 'क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम्' इति अमरस्वारस्यात् हलन्तेन विग्रह एवेति तत्तात्पर्यमिति ह्रस्वरूपप्रयोजनाभावेनापि टचा रूपसिद्धिरिति विभाव्यते तदा मनोरमोक्तं सम्यगेवेति दिक्।

स्वरूपकथनमिति। स्त्र्यन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति, इत्युच्यते। अप्रधानमुपसर्जनमिति सम्बन्धिशब्दावेतौ तत्र सम्बन्धादेतद्गन्तव्यम् यं प्रति यदप्रधानं तं प्रति तदुपसर्जनम् तस्य चेत्सोऽन्तो भवति इति फलितम्।

सरला।

तथात्वसम्भवादिति। अयं भावः—महासञ्ज्ञाकरणेन येन शब्देन समासविधौ यत्प्रथमानिर्दिष्टं तस्य तं प्रत्येवोक्तरीत्याऽप्रधानत्वेनोपसर्जनत्वात् प्रत्यासत्त्या तदन्ततत्समासप्रातिपदिकान्त्यस्यैव ह्रस्व इति प्रकृतोदाहरणयोर्न ह्रस्वप्रवृत्तिरिति स्पष्टं भाष्ये। तथाहि, "अप्रधानमुपसर्जनमिति सम्बन्धिशब्दा-

तु प्रथमान्तेनायं समासः षष्ठ्यन्तेन वेत्यपि पक्षद्वयं स्थितम्। यत्तु प्राचोक्तम्—हरौ अधिकृत्येति विग्रहे हरावधीति स्थिते इति; तन्न, नित्यसमासत्वेन विग्रहायोगात्। यदाहुः—"अविग्रहो नित्यसमास" इति। नन्वस्वपदविग्रहोऽपि स्वीक्रियते कुम्भं करोतीति यथा, अयमपि तथाऽस्तु अधिकृत्येति ल्यबन्तस्य समासाप्रविष्टस्य सत्त्वादिति चेत्? न, समासार्थलेशमपि अबोधयतस्तस्य विग्रहे प्रवेशस्यैवासम्भवात्।

यत्तु व्याचख्युः—विग्रह इव विग्रहः अर्थकथनमात्रम्। तेनाविग्रहत्वान्नित्यसमासत्वमविरुद्धम्। अत एव समासप्रकृतिभूतमलौकिकं वाक्यान्तरं दर्शयति—हरौ अधीति स्थित इतीति। अत्रेदं वक्तव्यम्—विग्रह इवेत्यसङ्गतम्, अर्थकथनवाक्यस्यैव विग्रहत्वेन ततो भेदाभावात्। अर्थकथनमात्रमित्यपि न, ल्यबन्तेन समासार्थाऽसंस्पर्शात्। यच्च हरौ अधीति अलौकिकमित्युक्तम्; तदपि न, तत्र हरि ङि इत्यस्यैव प्रवेशात्, "अन्तरङ्गानपि" इति न्यायात्।

---

शब्दरत्नम्।

उपस्थितत्वादित्यर्थः। **परिशिष्टे त्विति।** अत्रारुचिः स्पष्टैव। द्योतकसमभिव्याहारे षष्ठ्या अप्राप्तेश्च। वाचकत्वेऽपि सन्निधानत्यागे न मानमिति। **विग्रहायोगादिति।** एवञ्च विग्रहे इति तदुक्तिरसंगतेति भावः। **प्रवेशस्यैवेति।** एवञ्च तादृशविग्रहस्वरूपकथनमसंगतमिति भावः। **असंस्पर्शादिति।** एवञ्च तत्राऽर्थकथनत्व-

रत्नप्रदीपक।

द्योतकसमभिव्याहारे षष्ठ्या अप्राप्तेश्चेति। इदं प्राचामनुरोधेन। वस्तुतः। वाचकत्वमेव

सरला।

वेतौ, तत्र सम्बन्धादेतद् गन्तव्यं—यं प्रति यदप्रधानं तस्य चेत्सोऽन्तो भवतीति"। यत् प्रथमानिर्दिष्टं तस्य द्वन्द्वेतरसमासस्य सः अप्रधानशब्दः अन्तो भवतीति तदर्थः। अत्र सूत्रे उपसर्जनपदेन शास्त्रीयमेवोपसर्जनं "प्रथमानिर्दिष्टम्" इत्यादिशास्त्रबोधितं गृह्यते। तेन 'कुमारीमिच्छन् ब्राह्मणः कुमारी' इत्यत्र कुमार्या लौकिकोपसर्जनत्वेऽपि न ह्रस्वः, 'गोवष्कयणी' इत्यत्र वष्कयणीशब्दस्य गुणशब्दत्वादप्रधानत्वेऽपि तदन्तस्य न ह्रस्वः। शास्त्रीयोपसर्जनग्रहणे तु "पोटायुवति" इत्यादिना सूत्रेण समासे जातिवाचकगोशब्दस्यैव प्रथमानिर्दिष्टत्वेनोपसर्जनत्वं न तु वष्कयणीशब्दस्य। अत्र प्रमाणं तु "इद्गोण्याः" इति सूत्रस्थं भाष्यमेव। तथाहि, "गोण्या न" इत्येव वक्तव्यम्। किमर्थमित्वं विधीयते? 'पञ्चगोणिः' इत्यादौ "लुक् तद्धितलुकि" इति लुकि प्रतिषिद्धे "एकविभक्ति" इत्यनेनोपसर्जनत्वाद् गोणीशब्दस्य ह्रस्वत्वं सिद्ध्यतीति किमर्थमित्वमित्याशङ्क्य गोणीमात्रमिदं गोणिः इत्यत्र शास्त्रीयोपसर्जनत्वाभावाद् ह्रस्वो न स्यात्' इत्यभिप्रायेणेत्वविधानमावश्यकमित्युक्तम्। अनेन भाष्येण शास्त्रीयोपसर्जनस्यैवात्र सूत्रे ग्रहणमिति स्पष्टमेव लभ्यते इति दिक्।

**टजितीति।** ननु दिश्शब्दस्य शरदादिगणे पाठे लिङ्गविशिष्टपरिभाषया दिश्शब्देन दिशाशब्दस्य ग्रहणे 'दिशयोर्मध्ये अपदिशम्' इत्यत्र टचि "यस्येति च" इति आकारलोपे ह्रस्वाप्राप्त्याऽत्र "गोस्त्रियोरुपसर्जनस्य" इति सूत्रोपन्यासोऽसङ्गत इति चेत्? न, समासान्तप्रकरणे लिङ्गविशिष्टपरिभाषाप्रवृत्त्यभाव इति ङ्याप्सूत्रे भाष्ये स्पष्टमुक्तेः। नपुंसकह्रस्वेन यद्यपि रूपमिदं सिध्यति, तथापि 'चित्रगुः' इत्याद्यर्थमावश्यकस्य "गोस्त्रियोरुपसर्जनस्य" इत्यस्यैव परत्वात्प्रवृत्तेः।

**अत्रारुचिरिति।** प्रत्यासत्त्या यद्विभक्त्यर्थकाव्ययेन सुबन्तस्य समासस्तद्विभक्त्यैव यत्सुबन्तं

अन्यथा समासे हरिशब्देकारस्य दुर्लभत्वापत्तेश्च ।

यदपि व्याचख्युः—अलौकिकत्वादेवाऽधिशब्देनाऽभिहितेऽपि सप्तमी, अन्यथा सा न स्यात् अनभिहिताधिकारादिति ; तदप्यापाततः, अलौकिकत्वं हि 'नित्यविध्यन्तरप्राप्तिविषयत्वेनाऽपरिनिष्ठितत्वम्' न त्वेतावन्मात्रेणाऽननुशिष्टायाः सप्तम्यास्तत्र प्रवेशः सूपपादः, अतिप्रसङ्गात् । यत्तु तत्पौत्रेण व्याख्यातम्—तिङ्कृत्तद्धितसमासैरिति परिगणनादधिनाऽभिहितेऽपि सप्तमीति ; तन्न, परिगणनस्याकरे प्रत्याख्यातत्वात् "कर्मणि द्वितीया" इति सूत्रे स्वयमपि तथैवोक्तत्वात् 'क्रमादमुं नारद इत्यबोधि सः' इत्यादिप्रयोगविरोधाच्च ।

द्वितीयापञ्चम्योरिति । एतच्च रक्षितग्रन्थे स्पष्टम् । यत्तु वदन्ति—चैत्रस्य वनादारादित्यादौ सापेक्षत्वादसमासे चरितार्थत्वाद्विधानसामर्थ्यं नास्तीति ; तच्चिन्त्यम् , नित्यसमासस्य न्याय्यत्वे सति चैत्रस्येत्यादिविशेषणप्रयोगस्यैवासम्भवात् । उक्तं हि भाष्ये—"वृत्तस्य विशेषणयोगो न" इति । ननु "सविशेषणानां वृत्तिर्न" इत्यपि भाष्ये उक्तमिति चेत् ? सत्यम् , अनित्यसमासविषयं तत् । नित्यसमासस्यापि सविशेषणेष्वप्रवृत्तौ महतः कुम्भस्योप इत्याद्यापद्येत । यत्तु प्राचा कृष्णस्योपेत्युक्तम् , यच्च व्याचख्युरीदृशे प्रक्रियावाक्ये स्थिते इति,तदुभयमपि प्रागुक्तरीत्या प्रामादिकमेव । सम्प्रति नेति । सम्प्रतीत्य-

---

शब्दरत्नम् ।

स्यैवाभावेन तन्मात्रत्वोक्तिरसंगतेति भावः । दुर्लभत्वापत्तेरिति । कृतात्वेन कृतैकादेशौकारस्यैव लुकाऽपहारेणेति भावः :

वैकल्पिकेडादिविषये 'सेद्धा' इत्यादावलौकिकत्ववारणाय—नित्येति । आकरे-अनभिहितसूत्रे भाष्ये । परिगणनफलस्य भीष्मं कटमित्यस्यान्यथासिद्धिस्तत्रोक्ता ।

रक्षितग्रन्थे इति । अत्रारुचिबीजन्तु मध्यार्थकसमयायोगे द्वितीयाविधानस्य दूरार्थकाराच्छब्दयोगे पञ्चमीविधानस्य चारितार्थ्यमिति । प्रागुक्तरीत्या—अधिहरी-

रत्नप्रदीपक ।

न्याय्यम् । अतएव अव्ययार्था इमे निर्दिश्यन्त इति भाष्ये उक्तम् । स्वयमपि निपातेनाभिहिते इति वक्ष्यति । अभिपूर्वकस्य दधातेर्भाषणार्थत्वम् प्रसिद्धमेव । अतएव पूर्वपदार्थप्रधानो अव्ययीभाव इति उत्सर्गस्य सिद्धिः । द्योत्यार्थस्य विशेष्यत्वं स्त्रियामिति सूत्रे भाष्ये तिरस्कृतमिति ध्येयम् ।

प्रत्याख्यातत्वादिति । परिगणनसाध्यप्रयोजनस्यान्यथासिद्धिकथनेन 'उपायस्योपायान्तरादूषकत्वादिति न्यायेन परिगणनाङ्गीकारे दूषणस्यानुक्तत्वाङ्गीकारस्यापि सूचनेन प्रत्याख्यानस्यापि केवलं पाणिनितात्पर्यं न्यूनताप्रदर्शनपरिहारमात्रप्रयोजनेन। फलभेदप्रत्याख्या-

सरला ।

तस्यैव सूत्रे ग्रहणेनान्यसुबन्तग्रहणे मानाभाव इति ।

चारितार्थ्यमितीति । समया–निकषा–ऽऽरात्–शब्दा अधिकरणशक्तिप्रधाना इति समीपमात्रवाचित्वाभावान्न तैः समासः । समीपे इति हि तेषामर्थो न तु समीपमात्रम् । 'समया ग्रामम्' 'आराद्वनात' इत्यादौ ग्रामसमीपे वनस्य समीपे इत्येवार्थप्रतीतेः । "अव्ययं विभक्ति" इति सूत्रेण च अभ-

व्ययमिदानीमित्यर्थे ।

एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा ॥ इत्यमरः ।

तत्राऽधिकरणशक्तिप्रधानत्वात्क्रियापदेनैवान्वयार्हम् । निषेधोऽपि क्रियाया एव । तदेतदाह—युज्यते इति । असम्प्रतीति । समासवृत्तौ तु युजिक्रियाऽन्तर्भवति 'दध्योदन' इत्यत्र सेकक्रिया यथा । यत्तु प्राचोक्तम्—असम्प्रतीति सम्प्रत्यभाव इत्यर्थः । अनेनोपभोग्यवस्तुनो यो वर्तमानः कालस्तस्यैव निषेधः क्रियते इति; तन्न, अधिकरणस्य निषेधं प्रति प्रतियोगित्वेनान्वयस्य सर्वतन्त्रविरुद्धत्वात् । न हि भूतले घटो नास्तीत्यनेन भूतलं निषिध्यत इति कश्चिदभ्युपैति, न वा युक्तिसहमित्यास्तां तावत् । इतिहरीति । स्वरूपपरेण षष्ठ्यन्तेन हरिशब्देन सह प्रकाशार्थस्येतिशब्दस्य समासः । प्रतिशब्दस्येति ।

---

शब्दरत्नम् ।

त्यत्रोक्त्या । अधिकरणशक्तीति । कालवाचकत्वादित्यपि बोद्धयम् । क्रियापदेनैवेति । कर्तृकर्मद्वारेति भावः । निषेधोऽपीति । अत्यन्ताभावार्थकनञः क्रियान्वयित्वव्युत्पत्तेरिति भावः । न वा युक्तीति । उक्तव्युत्पत्तिविरोधादिति भावः । ततो भूतलाधारकघटाभावप्रतीतिस्त्वार्थीति बोद्धयम् ।

रत्नप्रदीपक ।

नासम्भवाच्च । नान्याभिहिते विभक्तिव्यावृत्तिरिति चिन्त्यमेतदिति बोध्यम् ।

प्रयोगविरोधाच्चेति । इदमपि चिन्त्यम् अत्र च नारद इति, इति श्रीकृष्णोयज्ञानानुकरणम् नारद इत्येतच्छब्दाभिलप्यमानाकार इति बोधः । केचित्तु—नारदोऽत्र इति पदार्थः । तस्य तदर्थपरकत्वम् इत्यत्र नारदपदे तात्पर्यग्राहकम् । इति पदाच्च द्वितीयोत्पन्नैव । अव्ययत्वाच्च सालुसेत्याहुः । अन्येतु—"अव्ययम् विभक्ती"त्यस्य स्थाने लाघवात्तद्धि समीपसमृद्धि इत्याद्येववक्तव्ये विभक्तिग्रहणात् विभक्तिशब्दो न सप्तम्यां पर्यवस्यति ततश्च कर्मत्वमात्रद्योतकतायाम् इतिनारदम् इतिसमासः स्यादेवेत्याहुः ।

अत्यन्ताभावार्थकनञ इति । अत्राभावपदेन अत्यन्ताभाव एव गृह्यते । अभाव इति वक्तव्येऽर्थग्रहणात् । नञा तु नायं समासः । अर्थाभावपदे नञउपादानेन सूत्रगृहीताव्ययेनैतत्समा-

सरला ।

क्षन्यायेन विभक्त्यर्थसमीपादिमात्रवाचकाव्ययस्यैव समासो विधीयते । 'उपकृष्णम्' इत्यादौ तु समीपमात्रवाच्यैवोपशब्दः । अत एव कृष्णसामीप्यवन्त इति ततो बोधः ।

अन्ये तु मध्यार्थकसमयाशब्दयोगे न द्वितीया, 'निकषा' शब्दसाहचर्येण समीपार्थक 'समया' शब्दयोगे एव तद्विधानात् । नचैवं द्वितीयाविधानसामर्थ्योपपादनेऽपि पञ्चमीविधानसामर्थ्यं दुरुपपादम्, दूरार्थकारातशब्दयोगे तद्विधानस्य चारितार्थ्यात्, समीपार्थे विशिष्यतद्विधानाभावादिति वाच्यम्, 'आजाहिभिः' इति तृतीयानिर्देशेनैव सिद्धे युक्तग्रहणसामर्थ्येन तद्युक्तमात्रे पञ्चमीविधानेन समीपार्थेऽपि विशिष्यविधानसत्त्वेन तत्सामर्थ्यस्य सूपपादत्वात् । तत्फलं च समासाभाव एव । अत एव "अव्ययम्" इति विभक्तसूत्रेणापि नात्र समासः । अभक्षन्यायेन वारणे तु विभक्तसूत्रेण साऽदुर्वार एव । किञ्चाभक्षन्यायेन पदान्तरसमभिव्याहारे तद्वारणेऽपि तदसमभिव्याहारे तद्वारणं दुःशकम् । अधिकरणत्वस्य संसर्गतया पदान्तरसमभिव्याहारं विना तत्प्रतीतेरसम्भवेन अधिकरणशक्तिप्रधानस्यापि प्रातःशब्दादेः 'प्रातःकल्पम्' इत्यादौ वृत्तिविषयेऽधिकरणताविशिष्टबोधकत्वस्येव पदान्तरसमभिव्याहारेऽधिकरणताविशिष्टसमीपमात्रार्थकत्वस्यैव समयादिशब्दानां सम्भवात् । तस्मात् कौमुद्युक्तवारणमेव सम्यगिति ।

यत्त्वाहुः—ग्रामस्य वृक्षं प्रतीत्यत्र सापेक्षत्वेन समासाभावे द्वितीयाविधानं सावकाशमिति तत्प्रागेव दूषितम्।

हरदत्तस्त्वाह-अर्थमर्थं प्रतीति भाष्यकारप्रयोगाद् वाक्यमपि साधु। यद्वा नात्राऽव्ययं वीप्सावृत्ति किं तर्हि कर्मप्रवचनीयत्वात् सम्बन्धमवच्छिनत्ति।

शब्दरत्नम्।

भाष्यकारेति। सञ्ज्ञा तु प्रतिस्थानमित्यादौ षत्वाभावार्थेति तदाशयः। अत्र-

रत्नप्रदीपक।

साप्रवृत्तेः। अन्येतु—नपचतितराम् घटः पटोन इत्यादौ अव्ययीभावसमासो न भवति। अर्थग्रहणसामर्थ्यात्। तेनहि—लिङ्गसंख्यान्वयिसमस्यमानपदजन्यप्रतीतविशेष्यविरोधिनोऽभावस्यैव ग्रहणात्। आद्ये लिङ्गसंख्यान्वयित्वाभावात्। अन्त्ये भेदस्य प्रतियोगितावच्छेदकविरोधित्वेन समस्यमानपदजन्यप्रतीतिविशेष्यविरोधित्वाभावात्। भूतले घटो नास्तीत्यादौ तु न समासः नञोऽभावार्थतया क्रियान्वयित्वेन घटेनानन्वयात्। विशेषणतासम्बन्धेन अत्यन्ताभावविशेष्यकबोधे क्रियोपस्थितिः कारणमिति कार्यकारणभावस्वीकारात् भूतलाधारकघटाभावप्रतीतिस्तु तत्रार्थी। स्वव्याप्यत्वे सति स्वव्यापकत्वरूपाभावानामैक्येन घटाभावस्य घटसत्ताभावरूपत्वाद्वा अविघ्नमित्यादौ तु क्रियान्तर्भावात्समासो ज्ञेय इत्याहुः।

प्रतिस्थानमित्यादौ इति। वर्णं वर्णं प्रतिवर्णम् इति प्रत्याहाराह्निकभाष्ये वीप्सादर्शनात्, यदा द्विर्वचनं तदा प्रतिशब्दस्य वीप्सावृत्तित्वाभावात् समासाप्राप्त्या वाक्यमपि साध्वेव

सरला।

परममूले मक्षिकाणामभावो निर्मक्षिकमिति। अर्थाभावेऽव्ययीभावः। अत्र शब्देऽभावपदेनाऽत्यन्ताभाव एव गृह्यते, सूत्रे अर्थग्रहणसामर्थ्यात्। अन्यथा 'अभाव' इत्येव वदेत्। तद्धि अर्थग्रहणं प्रतियोगिभूतबहिर्विद्यमानार्थसमानाधिकरणाभावस्यैव ग्रहणार्थम्। तेनाभावार्थनिरा शशशृङ्गादिशब्दानां नाव्ययीभावो नापि प्रागभावार्थेन तेनायं समासः। अत एवात्ययग्रहणं सूत्रे चरितार्थम्। प्रतियोग्युत्पत्त्या प्रागभावस्य नाशेन तस्य तत्समानाधिकरणत्वाभावात्। अत्यन्ताभावस्य तु प्रतियोग्यधिकरणे सत्त्वेऽपि सम्बन्धविशेषाभावेन प्रतियोगिसत्ताकाले प्रतीतिमात्रानुदयात्। यत्तु अर्थग्रहणं घटः पटो नेत्यादावव्ययीभावसमासाभावार्थमिति, तन्न, अर्थाभावशब्दे नञ उपादानसत्वेन सूत्रगृहीततया सूत्रगृहीताव्ययेन समासाभावस्यान्यत्र बोधिततयाऽत्र तेन समासाप्राप्तेः।

अन्ये तु 'घटः पटो न' 'न पचतितराम्' इत्यादावव्ययीभावसमासो न, अर्थग्रहणसामर्थ्येन लिङ्गसंख्यान्वयि-समस्यमानपदजन्यप्रतीतिविशेष्यविरोधिनोऽभावस्यैवार्थाभावशब्देन ग्रहणात्। आद्ये भेदस्य प्रतियोगितावच्छेदकविरोधित्वेन समस्यमानपदजन्यप्रतीतिविशेष्यविरोधित्वाभावात्, अन्त्ये लिङ्गसंख्यान्वयित्वाभावात्। 'भूतले घटो नास्ति' इत्यादौ तु न समासः, नञोऽभावार्थतया क्रियान्वयित्वेन घटेनानन्वयात्। प्रकारतासम्बन्धेनात्यन्ताभावविशेष्यकबोधे क्रियोपस्थितेः कारणत्वात्। भूतलाधारकघटाभावप्रतीतिस्तु तत्रार्थिकी, समनियताभावानां तत्रैक्येन घटाभावस्य घटसत्ताऽभावरूपत्वाद्वा। 'अविघ्नम्' इत्यादौ तु क्रियान्तर्भावात् समासो ज्ञेय इत्याहुः।

षत्वाभावार्थेतीति। उपसर्गसञ्ज्ञाबाधनेनेत्यादि। तदाशय इति। एवं च कर्मप्रवचनीयसञ्ज्ञा चरितार्थेति न सा वाक्यसाधुत्वे गमकं किन्तु भाष्यकारस्य 'अर्थमर्थं प्रति' इति प्रयोग एव। तथाच तेन यदा द्विर्वचनं तदा प्रतिशब्दस्य न वीप्सावृत्तित्वमिति कल्प्यते, तेन समासाप्राप्त्या वाक्यस्य साधुत्वमिति। वृत्तौ द्विर्वचनं तु न, समासेन वीप्साया द्योतितत्वादिति हयवरट्सूत्रे कैयटः। प्रतिना तस्या उक्तत्वादिति स्पष्टं शेखरे।

वीप्सा तु द्विर्वचनद्योत्येति ।

**सहपूर्वाह्णमिति** । साकल्येऽव्ययीभावः । **गुणभूतेऽपीति** । यदि सादृश्य इति नोच्येत ततो यत्र सादृश्यं प्रधानं तत्रैव स्यात्, अव्ययार्थप्राधान्यस्याव्ययीभावे औत्सर्गिकत्वादिति भावः । **अन्त इति** । इदानीमेतावान्प्रदेशोऽध्येतव्य इति यावतः प्रदेशस्य परिग्रहः कृतस्तदपेक्षया समाप्तिरिहान्तो

---

शब्दरत्नम् ।

अर्थमर्थं प्रतीति वाक्ये । प्रतिशब्दस्येत्यादि मूलं तु रक्षितानुसारीति बोद्धयम् ।

**साकल्ये इति** । पूर्वाह्णमपरित्यज्येत्यर्थं इति भावः । **औत्सर्गिकत्वादिति** । उन्मत्तगङ्गमित्यादौ व्यभिचारादिति भावः । नन्वग्निग्रन्थादग्रेऽप्यध्ययनमस्तीत्यत

रत्नप्रदीपक ।

इति बोध्यते । कर्मप्रवचनीयत्वं तु प्रतिस्थानमित्यादौ षत्ववारणार्थमुपसर्गत्वाभावाच्चरितार्थमित्याहुः ।

यदि सादृश्य इति । अयं भावः । द्विप्रकारका यथाशब्दोऽस्ति । योग्यतावीप्सापदार्थानतिवृत्त्यभिधायि, अव्युत्पन्नमव्ययम् एकम् । थाल् प्रत्ययान्तं व्युत्पन्नं सादृश्यवाचकं द्वितीयम् तत्रोत्तरसूत्रे असादृश्ये इति निषेधसत्वात् सादृश्याभिधायिनो यथा शब्दस्य समासो न भवति सूत्रगृहीताव्ययस्य "अव्ययम् विभक्ति" इत्यनेनसमासाभावात् योग्यतादितृतीयार्थाभिधायिनो यथा शब्दस्य न समासः किन्तु "यथाऽसादृश्ये" इत्यनेनत्र । अत्र मानन्तु ततः पश्चात् सर्वपश्चात् इत्यादि भाष्यप्रयोग एव । अनेन भाष्येण एतत्सूत्रे तत्तदर्थबोधकपदघटकतया गृहीताव्ययेन तत्तदर्थबोधकेन नायं समास इति ज्ञाप्यते । अत एव "यथाऽसादृश्ये" इत्यत्र भाष्यम् । "पूर्वेण प्राप्नोति सादृश्य सम्पत्तीति" इत्येवोक्तम् । अन्यथा यथाशब्दस्य समासाय प्रतिपदोक्तत्वं न यथार्थं इत्येव ब्रूयात् । सादृश्यस्याव्युत्पन्नयथाशब्दार्थत्वे प्रमाणाभावः । अत एव भाष्ये अथ यः प्रकारवचने थाल् तस्यग्रहणं कस्मान्नभवति पूर्वेणप्राप्नोति सादृश्यसम्पत्ति इति यथाऽसादृश्ये इत्यत्रोक्तम् । यथार्थत्वे तु अव्ययार्थेति प्राप्नोति इत्येवं वक्तुं संभवेत् सम्पत्तिपदोपादानेन सत्संन्निकृष्टोच्चारितमेव विवक्षितमित्यपि बोध्यम् । यथार्थत्वेन योग्यताया अपिग्रहणेनापि स्वस्य योग्यमनुरूपम् इति गुणभूताया ग्रहणेनासमासवत्सादृश्ययदोच्चारणेऽपि लक्ष्यानुसारात् गुणभूतप्रधानभूतयोरुभयोरपि सादृश्ययोर्ग्रहणं बोध्यम् ।

औत्सर्गिकत्वादिति भावः इति । अव्ययमिति सूत्रे वचनग्रहणात्तथा कल्पते इति भावः । तथाहि "अव्ययम् विभक्ति" इति सूत्रे यथा विभक्तिशब्देन तदर्थग्रहणं ,तथा यथाशब्देनापि ग्रहणम्, कर्मप्रत्ययान्तयथाशब्दसामानाधिकरण्यादिति भावः । यथाऽसादृश्ये इति सूत्रे भाष्येऽसादृश्ये इति किमर्थम् यथा देवदत्तस्तथा यज्ञदत्त इति । असादृश्ये इत्युच्यते तत्रेदं न सिद्ध्यति यथाशक्तियथाबलम् किंकारणम् यथेत्ययं प्रकारवचने थाल् स च सादृश्ये वर्तते । नषदोषः । यथाशब्दोऽव्युत्पन्नं वीप्सावाचि प्रातिपदिकम् अस्ति प्रकारवचने ।थाल् तत्र यद् व्युत्पन्नं प्रातिपदिकं वीप्सावाचि तस्येदं ग्रहणम् अथ प्रकारवचने थाल् तस्य ग्रहणं कस्मान्न भवति पूर्वेण प्राप्नोति सादृश्यसम्पत्तीति प्रतिषेधवचनसामर्थ्यान्न भविष्यति इत्युक्तम् । अत्रकैयटः असादृश्ये किम् इति प्रतीकमुपादाय सापेक्षत्वादसामर्थ्यं वृत्तिःसादृश्यएवच पूर्वप्राप्त्यनिषेधश्च ।प्रश्नेऽस्मिन् कारणत्रयमित्युक्तत्वात् । भाष्यकृता च प्रथमप्रश्नकारणपरिहारस्य प्रधानसापेक्षत्वरूपस्य नित्यसापेक्षत्वरूपस्य च सुबोधात् तं स्पष्टतोऽनुक्त्वैव

सरला ।

मूले गुणभूतेऽपीति । व्याख्यानात् सादृश्येऽत्र स्वार्थे ष्यञ् बोध्यः ।

विवक्षितः । स चासकलेऽप्यध्ययने भवतीति साकल्यात् पृथगुच्यते । अग्निशब्दस्तदर्थे ग्रन्थे वर्तते स तृतीयान्तः समस्यते । यद्यप्यग्निना सहेति प्रयो-

---

शब्दरत्नम् ।

आह—इदानीमिति । तदर्थे-तत्प्रतिपादके । अन्तत्वविवक्षायाम्-तस्यापि विव-

रत्नप्रदीपक ।

प्रत्युदाहरणमात्रं यथा देवदत्तस्तथायज्ञदत्त इत्युल्लिख्य सादृश्यमात्रवाचकत्वरूपं द्वितीयं प्रश्नकारणम् असादृश्ये इत्युच्यते तत्रेदं न सिद्ध्यति 'यथाशक्तियथाबलम्' इत्यादिना प्रयोगसिद्धिव्याजेनोपन्यस्य नैषदोष इत्यादिना वीप्सादिद्विवाचिनोऽव्युत्पन्नस्य यथाशब्दस्यास्मिन् सूत्रे ग्रहणं नतु थालन्तस्येति सूत्रसार्थक्यमुक्तम् । तृतीयप्रश्नकारणस्येत्थं योजना । अवश्यप्राप्तस्यैव असादृश्ये इत्यनेन निषेधात् सादृश्यसम्पत्तीत्यादिना यथाशब्दस्य सादृश्यार्थकस्य समासो दुर्वार इति असादृश्ये एवेति व्यर्थमेवेति अनाप्राप्तत्वात् पूर्वप्राप्त्यनिषेधरूपं प्रश्नकारणं निष्पन्नम् । परिहारस्तु तस्य अथ यः प्रकारवचने थाल् तस्य ग्रहणं कस्मान्नेति शङ्कायां प्रतिषेधसामर्थ्यान्नेति भाष्योक्तप्रतीकमुपादाय यथार्थे यदव्ययम् इति पूर्वेणैव सिद्धे समासे सादृश्यप्रतिषेधार्थत्वादस्यारम्भस्येतिकैयटेन स्पष्टमुक्तम् । अत्र असादृश्ये इत्युच्यते तत्रेदं न सिद्ध्यति यथाबलम्, यथाशक्ति इत्यादि द्वितीयप्रश्ने प्रयोगसिद्धिछलेन सूत्रवैयर्थ्यमुद्भाव्य तदेकवाक्यतया द्वितीयतृतीयप्रश्नयोरपि सूत्रवैयर्थ्ये तात्पर्यम् ।।तत्र प्रथमे सापेक्षत्वेन समासाप्राप्त्या सादृश्यार्थकयथाशब्देऽसादृश्ये इत्यस्य वैय्यर्थ्ये वीप्साद्यर्थकयथाशब्दे यथार्थत्वादेव समाससिद्धे सूत्रवैयर्थ्यं स्पष्टमेव । अथ यः प्रकारवचने थाल् इतितृतीयप्रश्ने अवश्यप्राप्तत्वाभाववतः सादृश्यसम्पत्तीति प्राप्तस्यानिषेधे अन्यत्र यथार्थत्वादेव समासे सर्वसामञ्जस्ये सूत्रवैयर्थ्ये एव पर्यवसानम् । सादृश्यसम्पत्तीति प्राप्तस्यास्यानिषेधे नियमविधानमेवव्यर्थम् तत्सामर्थ्यात् व्यर्थताप्रयोजकस्यापि सादृश्यसम्पत्तीति प्राप्तस्यानेन निषेधः । अत एव यथार्थत्वात्प्राप्नोतीति नाशङ्कितम् । तस्य नाप्राप्तत्वादेव निषेधात् । एतेन पर्युदासघटितकैयटोक्तनियामकत्वपक्षे सूत्रवैयर्थ्यस्योद्भावयितुमुचितत्वात् असादृश्ये इत्येतन्मात्रस्य वैयर्थ्योद्भावनं भाष्यकृतोऽसङ्गतं स्यात् इत्यपास्तम् । आक्षेपत्रये एव सूत्रवैयर्थ्ये भाष्यतात्पर्यात्—इत्युपादितम् ।

यत्तु—सूत्रगृहीताव्ययेन न समास इत्यर्थस्यैवायं ज्ञापकः इति नियमो न विधेयः इति तत्र सूत्रगृहीताव्ययातिरिक्तसङ्कोचापेक्षया यथाशब्दातिरिक्तत्वेन सङ्कोचकल्पने एव लाघवात् घटः पटो नेत्यादौ समासवारणंतु फलम् तस्यान्यथैवसिद्धत्वात् । अविघ्नमित्यादि तु अव्ययीभावेनैव सिद्धम् । नञ्समासस्य पूर्वपदार्थप्राधान्यत्वकल्पे अव्ययीभावस्य नञ्समासेन येननाप्राप्तन्यायेन बोधस्य नञ्सूत्रभाष्ये स्पष्टमुक्तत्वात् । अव्ययीभावसिद्धिरूपदोषस्योपन्यासाच्च इतरपक्षे नञा अव्ययीभावस्यानिष्टत्वकल्पनं नोचितम् । अनेकमित्यादौ एकवचनासिद्ध्या ताभ्यां भिन्नोऽस्तीत्याद्यर्थे अतौस्तः इत्याद्यसिद्ध्या अत्वं भवसि अनहं भवामीत्याद्यसिद्ध्यापत्त्या च तत्पक्षस्य हेयत्वात् । असत्पक्षावलम्बनेनदोषोपन्यासस्यानुचितत्वाच्च । थाल्विधायके "प्रकारवचनेथाल्" इतिसूत्रे च प्रकारशब्देन सादृश्यस्यैव ग्रहणम् यथेत्ययं "प्रकारवचने थाल्" सच सादृश्ये वर्तते इति भाष्येण यत्सादृश्यवान् हरिस्तत्सादृश्यवान् हर इति प्रथमतो बोधेऽपि पश्चात् हरिसदृशो हर इति बोधे सदृशसदृशिभावस्यैव विषयीकरणात् एकप्रतियोगिकसादृश्यवतोः परस्परं सादृश्यस्य नियमात् । उभयोः शाब्दत्वंतु गङ्गायांघोष इत्यादौ लक्षणामूलकव्यञ्जनाजन्यबोधस्थले घोषे आरोपितगङ्गाधारत्वपावनत्वाद्योरिवेति तव यद्धर्मवान् हरिस्तद्धर्मवान् हर इति उपमानदेवदत्ताभिन्नउपमेयो यज्ञदत्त इत्यनयोरिवेति दिक् ।

गार्हमेव तथाऽपि साहित्यमात्रे तथा। अन्तत्वविवक्षायां तु समासो नित्यः। अत एवाग्निग्रन्थपर्यन्तमित्यस्वपदविग्रहो दर्शितः। यत्तु अग्निरन्तोऽस्येति प्रथमान्तेनाग्नेरन्तत्वमिति षष्ठ्यन्तेन वा विग्रह इति प्रथमान्तेन षष्ठ्यन्तेन वा समास इति; तन्न, सहशब्दस्यान्तवाचकत्वाभावात्। अन्तत्वस्य तु सुतरामलाभात्। तस्याध्ययनेऽनन्वयाच्च। सहयुक्ते तृतीयाया न्याय्यत्वाच्च। सतृणमत्तीत्यत्र साकल्यस्येव साग्नीत्यत्रान्तत्वस्यापि साहित्यद्योत्यतया तत्र तृतीयान्तेन समासं स्वीकृत्येह तत्परित्यागस्य निर्मूलत्वाच्च।

यावच्छ्लोकमिति। यावदित्यव्ययं समस्यते। विग्रहस्तु तद्धितेनेत्यस्वपदत्वं बोद्धव्यम्।

"विभाषा"॥ एतदिति। न्यायसिद्धेऽर्थे लिङ्गदर्शनमिदम्। टिघुभादिसञ्ज्ञानामिव समाससञ्ज्ञाया अपि नित्यप्राप्तत्वाद्वचनं विना त्रिद्व्यन्तराणामिव सञ्ज्ञानामपि विकल्पाऽलाभात्।

---

शब्दरत्नम्।

क्षायामित्यर्थः। ग्रन्थपर्यन्तमिति। तदन्तमित्यर्थः। अन्तत्वस्य सुतरामिति। प्राधान्येनेत्यर्थः। तस्येति। अन्तत्वस्येत्यर्थः। ननु सहशब्दस्यान्तवाचकत्वाभावे तेन समासो न स्यात्, अग्निग्रन्थपर्यन्तमिति विग्रहप्रदर्शनेन भवताऽपि तस्य स्वीकारात्। अग्निरन्तो यस्येत्यस्य त्वदुक्तविग्रहसमानार्थत्वादत आह–सहयुक्ते इति। एवं च प्रथमान्तेन समास इत्यसङ्गतम्। साहित्यं च सहशब्दार्थः। तत्र च त्रे विनिगमनाविरहादधिकार्थकसहशब्दस्य ग्रहणमिति भावः। साकल्यस्येवेति। यस्तृणानि भक्षयेत् स कथमन्यत्परित्यजेदिति प्रतीतेरिति भावः। एवं च यत्र "न तत्र तृणभक्षणे तात्पर्यम्" इति ग्रन्थसूचितं साहित्यप्रतीतौ न तात्पर्यम् तत्रापि चेत् तृतीया तर्हि यत्र तदपि भासते तत्र कथं न तृतीयेति तात्पर्यम्। साहित्यद्योत्यतयेति। साहित्यवद् द्योत्यतया बोद्धयतयेत्यर्थः। मयूरव्यंसकादित्वात्सुप्सुपेति वा समासः। यथाश्रुते तु ग्रन्थद्वयस्य सहाध्ययनेऽपि साहित्यप्रतीतिर्जायते न त्वन्तत्वप्रतीतिरिति तस्य तद्द्योत्यतोक्तिरसङ्गतैव स्यादिति दिक्।

न्यायसिद्धत्वमेवाह–वचनं विनेति। विकल्पबोधकशब्दं विनेत्यर्थः।

रत्नप्रदीपक।

सहशब्दार्थ इति। समभिव्याहृतपदप्रतिपाद्य क्रियादिप्रतिपादकत्वम् सहशब्दार्थः। अत्र सूत्रे तु—अन्त्यत्वं साहित्यं च सहशब्दार्थौ बोध्यः। अन्त्याग्निग्रन्थसहितमिति बोधात्। अग्नि टा सह इत्यलौकिकम्। नच तदधीते इत्यण् प्रत्ययः कथन्नेति वाच्यम्। तस्य वैकल्पिकत्वात्। सत्वेऽप्यणि सर्वादेसादश्च लुक्वाच्यः इति सुसत्वादिति दिक्।

यावच्छ्लोकमिति। सङ्ख्यादिना इयत्तापरिच्छेदोऽवधारणम्—तद्बोधकं यावदित्यव्ययं समस्यते इति "यावदवधारणे" इतिसूत्रस्यार्थात्। अस्य समासस्य नित्यत्वात् अस्वपदविग्रहः तदाह—तद्धितेनेति। अवधारणे इति किम्। यावद्दत्तं तावद्भुक्तं इत्यत्र माभूत्। कियद्भुक्तमिति नावधारयामि इत्यर्थः।

न्यायसिद्धत्वमिति। यद्यपि एकार्थीभावे समासस्य व्यापेक्षायां वाक्यस्य च सिद्धेरिदं व्यर्थम्। नच सञ्ज्ञाया भावाभावौ दृश्येते इति भाष्याद्युक्तेः। "पारेमध्येषष्ठ्यावा" इत्यत्रत्य

स्यादेतत् । "सुप्सुपा" इत्यपि तर्हि नित्यं स्यात् । न चेष्टापत्तिः, अपसिद्धान्तात् । तथा हि—चरट्सूत्रे वृत्तिकृतोक्तं पूर्वं भूतो भूतपूर्वः । सुप्सुपेति समास इति । तथा शाकलसूत्रे "सिन्नित्यसमासयोः शाकलप्रतिषेध इत्यत्र नित्यग्रहणेन नार्थं इदमपि सिद्धं भवति वाप्यामश्वो वाप्यश्व" इति भाष्यं कैयटो व्याख्यत्—'वाप्यश्व इति सुप्सुपेति समासः । "सञ्ज्ञायाम्" इति समासस्य नित्यत्वात्सिद्धः प्रतिषेधः' इति । तथा "अनुदात्तं पदमेकवर्जम्" "असिद्धवदत्र" इत्यादिसूत्रेष्वपि कैयटे स्पष्टम् । अत आह—सुप्सुपेतीति समासेति । योगविभागेनैव सिद्धे समासे उत्तरसूत्रैः पुनर्विधानं प्राचीनस्य क्वाचित्क-

शब्दरत्नम् ।

नित्यत्वादिति । वाक्येन सञ्ज्ञाऽनवगमान्नित्यसमासलक्षणत्वेन नित्यत्वादित्यर्थः । पुनर्विधानमिति । समाससञ्ज्ञाया इति भावः । अन्यथा तद्विहितसमाससञ्ज्ञानुवादे-

रत्नप्रदीपक ।

वाग्रहणेन च एकार्थीभाव एव समाससञ्ज्ञादिविकल्पस्तु नेष्यते । एवं समासनिषेधसूत्राणि नित्यग्रहणं च व्यर्थम् । निषेधविषये एकार्थीभावाभावेन समासाप्राप्तेः । नित्याधिकारेऽस्याभावेन वाक्यस्याप्राप्तेश्चेति । तथापि-लक्षणैकचक्षुष्कान् मन्दान् प्रति क्वैकार्थीभावानित्यः क्वपाक्षिकः क्वनास्त्येवेत्यर्थबोधनार्थंसर्वमावश्यकम् । ध्वनितं चैतत् "समर्थानाम्" इति सूत्रे भाष्ये । लक्ष्यैकचक्षुष्कम्प्रति "समर्थ" इति सूत्रे भाष्ये तत्प्रत्याख्यातम् । एवञ्च विशेषणीभूतैकार्थीभावस्य विकल्पादिबोधकानीमानि । अतएव "पारेमध्ये" इति सूत्रे भाष्ये एकया वृत्तिर्विभाषापरया वृत्तिविषयेऽनित्योऽपवाद, इत्युक्तम् तत्र वृत्तिरेकार्थीभावः । ननु प्राक्कडारात् समास इत्यत ऊर्ध्वं "सहसुपा" इत्यतः प्रागेव कुतो विभाषाधिकारेन कृत इत्यत आह—एतदिति । मध्ये विभाषाधिकारपाठसामर्थ्यादेवेतः प्राचीनानां नित्यसमासत्वं गम्यत इत्यर्थः । यद्यपीतः प्राचीनानां विकल्पे प्रमाणाभावादेव नित्यत्वम् तथापि तस्यैव लिङ्गेन दृढीकरणमिति बोध्यम् ।

नन्वेवं सति "सुप्सुपा" इत्यपि नित्यसमासः स्यात् । तत्तश्च पूर्वं भूतः इति लौकिकविग्रहवाक्यमनुपपन्नं स्यात् । "सुप्सुपा" इतिविषये विस्पष्टं पटुः विस्पष्टपटुरिति विग्रहप्रदर्शनपरम् "आकडारसूत्रभाष्यमपि विरुद्धेत इत्याह-"सुप्सुपा" इति तु न।नित्यसमासः इति कुत इत्याह—अव्ययमित्यादीति । आकडारादित्येव सिद्धेः प्राक्कडारादिति प्राग्ग्रहणं समाससञ्ज्ञाया अव्ययीभावादिसञ्ज्ञासमावेशार्थम् । अन्यथा एकसञ्ज्ञाधिकारात्पर्यायः स्यादिति "आकडार" सूत्रे भाष्ये स्पष्टम् । "अव्ययंविभक्ति" इत्याद्यव्ययीभावादिविधिषु "सुप्सुपा" इति समासमनूद्य नाव्ययीभावादिसञ्ज्ञाविधेया । "उपपदमतिङ्" "कर्तृकरणेकृताबहुलम्" "आख्यातमाख्यातेन क्रियासातत्ये"। इत्यादौ सुबन्तेन सुबन्तस्य समासस्योद्देश्याप्रसिद्धेः। अतस्तेषु समासविधानमावश्यकम् अर्थाधिकारानुरोधात् सर्वत्र समास इत्यनुवृत्तं विधेयसमर्पकमिति श्रद्धेयम् । तत्र "सुप्सुपा" इत्येव सिद्धे "अव्ययंविभक्ति" इत्याद्यव्ययीभावादिविधिषु समाससञ्ज्ञाविधानं व्यर्थं स्यात् । ततः प्राचीनविधेः वैकल्पिकत्वं।ज्ञापयति । नचाव्ययीभावादिविधिषु समासविध्यभावे अव्ययादीनां समासशास्त्रे प्रथमानिर्दिष्टत्वाभावेन उपसर्जनत्वाभावेन पूर्वनिपातनियमो न स्यात् । तदर्थमव्ययीभावादिविधिषु समासविधानं चरितार्थमिति वाच्यम्-"प्रथमानिर्दिष्टम्" इति सूत्रे समास इत्यस्य समासत्वव्याप्यअव्ययीभावादिसञ्ज्ञाविधायके शास्त्रे प्रथमान्तपदबोध्यत्वमुपसर्जनत्वमित्यर्थाभ्युपगमेनादोषात् । तस्मादव्ययीभावादिविधिषु समासविधानं सुप्सुपा इतिसूत्रस्य वैकल्पिकत्वं ज्ञापयति—अन्यथा पूर्वोक्तार्थेन अव्ययादीनामुपसर्जनत्वसिद्धः किन्तेन "आकडारात्" इति सूत्रभाष्ये

तां ज्ञापयति। एवं च इवेन समासस्यापि क्वाचित्कत्वादुद्बाहुरिव वामन इत्यादि सिद्धम्। इवेनेति वार्तिकं तु यद्यपि "कुगति" इत्यत्र पठ्यते तथाऽपि सुप्सुपेत्यत्रत्यमेव नित्याधिकारे स्मारितमिति कैयटः। एवं स्थिते इवेन समासस्य छान्दसत्वं कल्पयन्तः प्रत्युक्ताः। जीमूतस्येवेत्यत्र बह्वृचैः समासाभ्युपगमेऽपि तैत्तिरीयैर्व्यस्तस्यैव पाठादिति दिक्।

"अपपरिबहिः" ॥ अत एव ज्ञापकाद्बहिर्योगे पञ्चमी। ज्ञापकसिद्धं न सर्वत्र। तेन 'करस्य करभो बहिः' इति सिद्धम्।

आबालमिति। यत्तु—आपरमाणोः आ च भूगोलकमिति किरणावल्यां प्रयुक्तं तत्प्रामादिकम्, समासमध्ये चकारप्रयोगासम्भवात्। आभूगोलकादिति तु पाठ्यम्।

यं पदार्थमिति। सु ` यदिति सामान्ये नपुंसकम्। "अव्ययं विभक्ति"

---

शब्दरत्नम्।

नाव्ययीभावादिसंज्ञामेव विदध्यात्। अत्र च व्याख्यानमेव शरणं वृद्धानाम्। न च तत्सञ्ज्ञाविधानमव्ययादीनां समासशास्त्रप्रथमानिर्दिष्टत्वसंपादनेनोपसर्जनसञ्ज्ञार्थं चरितार्थमिति कथं ज्ञापकमिति वाच्यम्, तत्र सूत्रे समासे इत्यस्य समासत्वव्याप्यसञ्ज्ञाविधौ प्रथमानिर्दिष्टमित्यर्थं बाधकाभावादिति दिक्। इवेन समासस्य क्वाचित्कत्वे हेतुमाह-जीमूतस्येवेति।

अत एव ज्ञापकादिति। बहिर्योगे पञ्चम्या समासविधानाज् ज्ञापकादित्यर्थः।

लक्षणत्वं वस्तुसन्निमित्तं न तु तेन सम्बन्धेनान्वयस्तदाह-अव्ययमिति। अनोः

रत्नप्रदीपक।

"सुप्सुपा" इतिसमासविषये विस्पष्टं पटुः विस्पष्टपटुरिति विग्रहप्रदर्शनं चेह लिङ्गमित्यलम्प्रपञ्चविपञ्चीविलासेन। एवञ्च इवेन समास इत्यस्यापि वैकल्पिकत्वं सिद्धम्। तत्फलम् उद्बाहुरिववामन इति व्यस्तप्रयोगः। यद्यपि नित्यसमासाधिकारे "कुगती" त्यत्रापि इदं पठितम् तथापि "सुप्सुपे"त्यत्र पठितमेव स्मार्यते तत्रेति कैयटः।

"अपपरिबहि" रिति। अयम्भावः। अपपरि योगे पञ्चम्यपाङ्परिभिरिति पञ्चमीविहितैव। अञ्चूत्तरपदयोगेऽपि अन्यरादिति पञ्चम्येव विहिता ततश्चात्रसूत्रे समासविधायके पञ्चम्या इति ग्रहणं व्यर्थं सत् बहिर्योगे पञ्चमीं 'ज्ञापयति ज्ञापकसिद्धं' न सर्वत्र इति 'करस्य करभोबहि'रित्यपि सिद्धम्।

"अनुर्यत्समया"। यं पदार्थमिति च। लक्षणेनेत्यनुव ` ते। समयेत्यधिकरणशक्तिप्रधानम्। यदिति अभितः परितः इत्यनेन द्वितीयान्तं सामान्ये नपुंसकम्। तथाच यं पदार्थं समयेत्यर्थद्योतकोऽनुः तेन लक्षणभूतेन तद्वाचकेन समस्यते इत्यर्थः। तत्फलितमाह—यं पदार्थमिति। वनादेर्लक्षणत्वं समीपद्वारा लक्षणत्वं त्वत्र ज्ञानजनकज्ञानविषयत्वरूपम्। स्वसामी-

सरला।

इति दिगिति। उत्तरसूत्रेष्वनुवर्तमानं समासपदं विधेयपरमेव, "उपपदमतिङ्" "कर्तृकरणे कृता बहुलम्" "आख्यातमाख्यातेन क्रियासातत्ये" इत्यादावुद्देश्याप्रसिद्ध्या तेषु समाससञ्ज्ञाविधानस्यावश्यकत्वेनार्थाधिकारानुरोधादन्यत्रापि तथात्वस्यैवौचित्यात्। एवं च तैः समासविधानस्य सुप्सुपेत्यस्यानित्यत्वज्ञापकत्वं युक्तम्। उद्देश्यपरत्वे तु तैः समासविधानाभावात् तस्य तज्ज्ञापकत्वकथनासङ्गतिरिति तदर्थः।

इत्यनेन सिद्धे विभाषार्थं सूत्रम् । तेन पक्षे वनस्यानु इत्युदाहार्यम् ।

अनुगङ्गमिति । इहाऽऽयामो लक्षणत्वं चानुना द्योत्यते । लक्ष्यं तु समासार्थः । अत एव वाराणस्याः सामानाधिकरण्यम् । एवं स्थिते फलितमाह— गङ्गादैर्घ्येति । वाराणसीति । वरं च तदनश्च वरानः श्रेष्ठोदकं, तस्यादूरभवा । "अदूरभवश्च" इत्यण् । आदिवृद्धिः । "पूर्वपदात्सञ्ज्ञायाम्" इति णत्वम् । अणन्तत्वान्ङीप् ।

शब्दरत्नम् ।

समीपार्थत्वादिति भावः । **वनस्यान्विति** । कर्मप्रवचनीयसञ्ज्ञा तु नात्र, तद्द्योत्येन लक्ष्यलक्षणभावेनेतरत्रान्वयाभावात् । वनसमीपमित्येव बोधादिति भावः । तेन सम्बन्धेनान्वये तु वनमन्वित्येव बोद्धयम्, अग्निमभीतिवत् ।

**अनुना द्योत्यत इति** । दीर्घगङ्गासदृशीति वाच्योऽर्थः गङ्गादैर्घ्येत्यादिः फलितोऽर्थः । द्योत्यार्थस्य विशेषणताया एव सर्वसम्मतत्वात् । यद्वा द्योत्यते इत्यस्य बोद्धयते इत्यर्थः । स च शक्त्यैवेति बोद्धयम् । लक्षणत्वं च वस्तुसदेव निमित्तम् । एवं चात्रापि तेन सम्बन्धेनान्यत्रान्वयाभावान्न कर्मप्रवचनीयत्वप्रयुक्ता द्वितीया । सादृश्या-

रत्नप्रदीपक ।

व्येन हि वनेन अग्रनिर्देशो ज्ञाप्यते तच्च वस्तुसन्निमित्तम् नतु तेन सम्बन्धेनान्वयः । तदाह-वनस्य समीपं गत इत्यर्थः ।

पक्षे वनस्यानु इत्युदाहार्यम् । इति । परेतु—वनस्येति षष्ठीत्वत्र दुर्लभा कर्मप्रवचनीययोगे द्वितीयाया दुर्वारत्वात् । तत्सामर्थ्यात् समयालङ्कम् इतिवत्समासबाधे प्रसक्ते अस्यविध्यर्थत्वात् । तत्रायमनुः सामीप्यमात्रद्योतकः नतु लक्ष्यलक्षणभावद्योतकश्चेति वाच्यम् । लक्षणेनेत्यनुवृत्तिवैयर्थ्यात् । नचैवमपि लक्षणमात्रद्योतकत्वं नास्तीति वाच्यम् । लक्षणेत्थम्भूतेत्यत्र मात्रपदाभावात् । अग्निम्प्रति इति पूर्वसूत्रोदाहरणप्रत्युदाहरणविरोधाच्च-अतोऽत्रपक्षे वनमनु इत्युदाहार्यम् । वनस्यानु इति मूलोक्तविवरणवाक्ये तु लक्षणभूतस्य वनस्य समीपङ्गत इति व्याख्येयमित्याहुः ।

केचित्तु वनस्य समीपमित्येव बोधात् अनुद्योत्येन लक्ष्यलक्षणभावेनेतरत्रान्वयाभावात् कर्मप्रवचनीयसञ्ज्ञाया अभाव इति यदि स्वीक्रियते तर्हि वनस्यानु इत्येव बोध्यम् । यदि तु तेन सम्बन्धे नान्वयविवक्षा तदावनमनु इत्यपि भवति । अग्निमभि इतिवत् अनेनैवाभिप्रायेण मूलमित्याहुः ॥

तेनेति । लक्ष्यलक्षणभावसम्बन्धेनेति तदर्थः । एवं च अनुगङ्गं वाराणसीत्यत्र अनुशब्दद्योत्योऽर्थो दैर्घ्यसदृशदैर्घ्यं तदेकदेशे प्रथमतो भासमाने दैर्घ्ये गङ्गापदार्थस्याधेयता सम्बन्धेनान्वयो नत्वनेन गङ्गापदार्थस्य वाराणस्यामन्वयः । तदभिप्रायेणाह–सम्बन्धेनान्वयाभावादिति । एवञ्च गङ्गापदार्थस्य कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वाभावान्नद्वितीयेत्यर्थः । तदुक्तम् भाष्ये किमुदाहरणम् । अनुगङ्गम् हास्तिनपुरम् अनुगङ्गम् वाराणसी 'यस्यचायाम' इत्युच्यते गङ्गा अप्यायता वाराणस्यप्यायता तत्र कुत एत गङ्गया सह समासो भविष्यति । न पुनर्वाराणस्याः । एवं तर्हि लक्षणेनेति वर्तते । गङ्गाचैव लक्षणं न वाराणसी तत्र लक्ष्यलक्षणयोर्द्वयोरप्यायामत्वात् सन्दिहानः पृच्छति किमुदाहरणमितिकैयटः । अनेकदेशव्याप्त्या गङ्गाया आयामत्वेनानेकजनापेक्षयाप्रसिद्धत्वात् तस्या एव लक्षणत्वम् । ततो यद्यपि कस्यचित् पुरुषस्य हस्तिनपुरमायामत्वेन प्रसिद्धम् न गङ्गा तथापि न तदपेक्षया प्रयोगव्यवस्था किं तर्हि प्रचुरलोकापेक्षयेति दिक् । 'निवेश्यगङ्गामनुतां महाचमूम्' इतिरामायणप्रयोगात्

"नदीभिश्च" । स्वरूपस्य सञ्ज्ञाया नद्याश्च नेह ग्रहणं बहुवचननिर्देशात् किं त्व ऽस्य । न च तस्य समासः सञ्ज्ञा भवति । अतस्तद्वाचिनामयं समासः । ते च न केवलं विशेषशब्दा एव किं तु सामान्यशब्दोऽपि ।

नित्यसमास इति । एतच्च वृत्तौ स्पष्टम् । शाकलसूत्रे कैयटस्वरसोऽप्येवम् । नन्वेवं न्यायसाम्यात् बहुव्रीहेरपि नित्यसमासत्वं स्यादिति चेन्नैवम्, यस्ये-त्यादिपदान्तरसमभिव्याहारेणान्यपदार्थप्रतीतेः । अत एव "सञ्ज्ञानवगमात्" इत्युक्तं न त्वन्यपदार्थाऽनवगमादिति । सञ्ज्ञायां किम् ? शीघ्रगङ्गो देशः ।

---

शब्दरत्नम् ।

र्यन्तर्भावश्चैकार्थीभावबलात् । उपलक्षितेत्यस्य विशिष्टेत्यर्थः । गङ्गादैर्घ्यसदृशेत्यादि-बोधोत्तरं नियमेन मनसा तद्गतज्ञापकत्वबोधात्तस्यानुद्योत्यतोक्ता । यथा—प्रारभ्यत इति क्रियाद्याहारकतयाऽथशब्दस्य प्रारम्भद्योतकता इति बोद्धयम् ।

सामान्यशब्दोऽपीति । तेन पञ्चनदं सप्तगङ्गमित्यादिसिद्धिः ।

पदान्तरसमभिव्याहारेणेति । तद्घटितमेव तत्र वाक्यं न केवलवर्त्तिपदार्थ-घटितमिति भावः ।

रत्नप्रदीपक ।

यत्र लक्ष्यलक्षणभावसम्बन्धेनान्वयविवक्षा तत्र गङ्गामनु इत्येवभवतीति—

तद्गतज्ञापकत्वबोधात् इति । लक्ष्यलक्षणभावद्योतकत्वाभावेन अनोः कर्मप्रवचनीयत्वाभा-वान्तगङ्गाया अनु इत्यत्र द्वितीया इति भावः । विशिष्टेत्यर्थः इति । वाराणस्याः स्वरूपेण ज्ञात-त्वेऽपि आयामविशिष्टेत्यर्थः । यथाहि—असीवरुणयोर्मध्ये वाराणसी इत्येवं वाराणस्याः स्वरूपेण ज्ञातत्वेऽपि प्राक्पश्चिमायता उदग्दक्षिणायता वा वाराणसी इत्येवं प्रश्ने अनुगङ्गं वारा-णसीत्युत्तरं प्रयुज्यते असीवरुणमध्यदेशावच्छिन्न गङ्गादैर्घ्यस्य ज्ञातत्वात् तेन वाक्येन त-त्सदृशदैर्घ्यत्वज्ञानात् निरुक्तगङ्गादैर्घ्यस्य च दक्षिणोत्तरायतत्वज्ञानात् वाराणसीदक्षिणोत्त-रायता इति ज्ञायते अर्थात् विशालात्वमन्यादृशमितिज्ञायते ततश्च न काचिदनुपपत्तिरिति बोध्यम् । स्वरूपस्येति । न ग्रहणमितिसम्बध्यते शकसञ्ज्ञात्वादित्यपि बोध्यम् । सञ्ज्ञायान-द्याश्चेति । नदीसञ्ज्ञकानामित्यर्थः । तेन गौर्यादिशब्दानां न ग्रहणम् इति भावः ।

पञ्चनदमिति । अत्र केचित् 'गोदावर्याश्च नद्याश्च संख्याया उतरे यदि' इति अच्प्रत्ययन्व-वेति योगविभागसिद्धन्ताभियुक्तोक्तेन वक्ष्यमाणोऽक् इत्याहुस्तन्न । योगविभागस्येष्टसिद्ध्य-र्थत्वात् भाष्यकृता तदनुक्तेश्चेति दिक् ।

नित्यसमास इति । नित्यसमाससदृश इति तदर्थः । तत्सादृश्यं च समाससमानार्थकवाक्या-भावेन बोध्यम् । विग्रहस्तु समासघटकपदानां भवत्येव । महाविभाषायाः असम्बन्धे प्रमा-णाभावात् अत एव "द्वितीयतृतीयचतुर्थ" इतिसूत्रे अन्यतरस्यां ग्रहणेन उत्सर्गापवादयोर्म-हाविभाषाविषयत्वात् अपवादाभावे उत्सर्गस्याप्रवृत्तिरिति ज्ञापितेऽर्थे उन्मत्तगङ्गमित्युदा-हृतम् । अव्ययीभावेनमुक्तेबहुव्रीहिर्न, इति चोक्तम्भाष्ये । अस्यसमासनित्यत्वे तु भाष्य-मसङ्गतं स्यात् । कदाप्यव्ययीभावमुक्त्यसम्भवात् ।

सरला ।

विशिष्टेत्यर्थ इति । आयामविशिष्टेति तदर्थः । असीवरणयोर्मध्ये वाराणसी इत्येवं वाराणस्याः स्वरूपेण ज्ञातत्वेऽपि 'प्राक्पश्चिमायता दक्षिणोत्तरायता वा' इति प्रश्ने 'अनुगङ्गं वाराणसी' इत्युत्तरवा-क्यप्रयोगे असीवरणामध्यदेशावच्छिन्नगङ्गादैर्घ्यस्य ज्ञातत्वात् तेन वाक्येन तत्सदृशदैर्घ्यवत्त्वज्ञानात् निरुक्तगङ्गादैर्घ्यस्य च दक्षिणोत्तरायतत्वाद् दक्षिणोत्तरायता वाराणसी इति ज्ञायते । अर्थाद् विशालत्व-मन्यादृशमिति गम्यते इति तात्पर्यम् ।

अथाव्ययीभावेऽसाधारणान् समासान्तानाह—"अव्ययी" । समासान्त इति । समासस्य समासार्थोत्तरपदस्य वा चरमावयव इत्यर्थः । तेनोपशरद्मित्यत्र "नाव्ययीभावात्" इत्यम्, द्विपुरीत्यादौ "द्विगोः" इति ङीप् च सिध्यति । जराया इति । गणसूत्रम् । प्रतिपरेति । अक्ष्णः परमिति । अविषय इत्यर्थः । वृत्तिविषयेऽक्षिशब्द इन्द्रियमात्रपरः । समक्षमिति । अक्ष्णो योग्यम् ।

---

### शब्दरत्नम् ।

**समासस्येति** । इदं च "समासान्ताः" "अन्तः" इत्यादिसूत्रेषु भाष्ये स्पष्टम् । **समासार्थोत्तरपदस्य वेति** । अयं पक्षः सरूपसूत्रे कैयटे स्पष्टः, परन्तु चिन्त्यः, समासपदस्यतदर्थोत्तरपदलक्षणायां मानाभावात्, तदर्थवाक्यस्योपचारेण समासपदेन ग्रहणमित्यर्थस्यैव "गोस्त्रियोः" इति भाष्ये उक्तत्वाच्च, "अन्तः" इति सूत्रस्थभाष्येणोत्तरपदावयवत्वपक्षस्यविरोधाच्च । सरूपसूत्रस्थभाष्यं तु समासावयवत्वपक्षेऽपि सुयोजं सुधियाम् । तदूष्वनयन्नाद्यपक्षे एव फलद्वयमाह–तेनेति । अदन्ताव्ययीभावत्वप्रयुक्तोऽम्, अदन्तद्विगुत्वप्रयुक्तो ङीप् चेत्यर्थः । न च द्विपुरीत्यादावकारान्तोत्तरपदत्वाभावात् स्त्रीत्वं कथं स्यादिति वाच्यम्, लिङ्गानुशासनसूत्राणां लोकसिद्धलिङ्गानुवादकत्वेनाविधायकत्वेन चात्रत्यद्विगौ स्त्रीत्वाभावनियामकत्वाभावात् । तदुक्तं 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति "समासान्ताः" इत्यादिसूत्रेषु भाष्ये । न चोत्तरपदावयवत्वेऽपि अवयवावयवस्य समुदायावयवत्वेनोक्तप्रयोगयोः सिद्धिरिति वाच्यम्, "अन्तः" इति सूत्रे समासस्यान्तोदात्तत्वमुत्तरपदस्य वेति विकल्पे आद्ये इदंप्रथमका इत्यादौ कपोऽन्तोदात्तत्वापत्तिमुक्त्वा, अस्तु तर्ह्युत्तरपदस्येत्युक्त्वा तत्पक्षेऽनृच इत्यत्रान्तोदात्तत्वासिद्धिरितीत्यर्थपरभाष्यविरोधेन तत्पक्षस्याङ्गीकर्तुमशक्यत्वादित्यलम् । **इन्द्रियपरमात्र इति** ।

### रत्नप्रदीपक ।

इमञ्च समासान्ता इति । अत्र समासपदम् अलौकिकविग्रहवाक्यपरमेव अत एव बहुकुमारीक इत्यादौ ह्रस्वो न, इति गोस्त्रियो"रिति सूत्रे "अन्त" इति सूत्रे भाष्ये स्पष्टम् । एवञ्चालौकिकविग्रहवाक्ये समाससञ्ज्ञासमकालमेव समासन्त इति सिद्धान्तः ।

सरूपसूत्रभाष्यं तु—इदं तत्रोक्तमभाष्यम् । कृतद्वन्द्वानां विभक्तौपरत एकशेष इति पक्षे ऋक् च ऋक् च ऋचौ असारूप्यादेकशेषो न प्राप्नोति, इति समासान्तानां समासवयवेऽपि तत्प्राग्भागस्य विभक्तिपरत्वाभवः तद्विशिष्टस्य तु न समानरूपत्वम् । इति हेतोरेकशेषो न प्राप्नोति अङ्गत्वात्तद्भाष्यं सुयोजम् सुधियामिति बोध्यम् ।

अलमिति । तदर्थस्तु सरूपसूत्रभाष्ये समासान्तानामुत्तरपदावयवत्वमपि स्पष्टम् । अर्थे-

### सरला ।

अलमिति । अलमर्थस्तु उत्तरपदावयवत्वमपि सरूपसूत्रस्थभाष्यसंमतम् । तत्र हि कृतद्वन्द्वानां विभक्तौ परत एकशेष इति पक्षे 'ऋक् च ऋक् च ऋचौ असारूप्यादेकशेषो न प्राप्नोति" इत्युक्तम् । समासान्तानां समासावयवत्वे तत्प्राग्भागस्य विभक्तिपरत्वाभावस्तद्विशिष्टस्य तु न सरूपत्वमिति तत्सङ्गतावपि तस्यानर्थक्येन तदनुक्त्या भाष्यस्य न्यूनतापत्तिरिति समासान्तानां समासोत्तरपदावयवत्वे उत्तरभागस्यासारूप्यं स्पष्टमेवेति न न्यूनता । द्वन्द्वावयवानामर्थवत्तामेवैकशेष इत्यर्थे मानाभावात्,

"नदी"। इह स्वरूपस्यैव ग्रहणं न सञ्ज्ञायाः, पौर्णमास्याग्रहायण्योः पृथग्ग्रहणात्। उपनदीति। टजभावे नपुंसकह्रस्वः। इदं त्ववधेयम्। "नदीभिश्च" इति सूत्रे विशेषाणामिव स्वरूपस्य ग्रहणं विशेषाणामेवेत्यत्र मानाभावादित्युक्तम्। तेन पञ्चनदमिति सिद्ध्यति। अत्र च नित्योऽच्। तदुक्तम्—

गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदि ॥ इति।

## शब्दरत्नम्।

बाह्येन्द्रियेत्यर्थः। सर्वबाह्येन्द्रियाविषये परोक्षत्वव्यवहारादिति भावः।

**न सञ्ज्ञाया इति।** तत्संज्ञकस्येत्यर्थः। **नपुंसकह्रस्व इति।** उपलक्षणमेतत् उपसर्जनह्रस्वस्यापि। **तदुक्तमिति।** माधवादिभिरिति भावः। "नदीभिश्च" इत्यत्र कैयटोऽप्येवम्। परन्तु योगविभागसिद्धस्य सामान्यत्वेन विशेषेण "नदीपौर्णमासी"

## रत्नप्रदीपक।

वतान्द्वन्द्वावयवानामेकशेष इत्यर्थे प्रमाणाभावात् इति तन्न्यूनत्वपरिहारस्तु न युक्तः। सहविवक्षायामेकशेषप्रवृत्तेः सर्वाभिमतत्वेन समुदायार्थविषयार्थविषयकबोधतात्पर्येणोच्चारितानामेव सरूपाणामेकशेषोद्देश्यतावच्छेदकाक्रान्ततया अर्थवत्त्वाभावे च तद्ग्राह्यस्य समुदितार्थबोधकत्वस्य सुतरामभावेन तदनुक्त्यात्तन्न्यूनत्वापरिहारात्। उत्तरपदावयत्वस्वीकारादेव चकाक्ष इत्यत्र अक्षिशब्देन बहुव्रीहौ षच् प्रत्यये तस्योत्तरपदावयवत्वेन अक्षशब्देन ग्रहणात् 'प्रतिपदोक्त' परिभाषायाश्च "कोः कत्तत्पुरुषेऽचि" इतिसूत्रे तत्पुरुषग्रहणेनात्रप्रकरणेऽप्रवृत्तिज्ञापनेनात्राप्रवृत्तेः। शेखरादावुक्तत्वात्। कापथ्यक्षयोः इत्यनेन कादेशः सिद्ध्यति। अन्तरीयम् इत्यादौ द्व्यन्तरुपसर्गेभ्यो अपईत्" इत्यनेन ईदादेशश्च सिद्ध्यति। अन्यथा अनर्थकत्वान्नस्यात् तस्मात् कल्पनापेक्षया उत्तरपदावयत्वकल्पनस्यैव न्याय्यत्वादिति दिक्।

कैयटोऽप्येवमिति। यदि समाहारग्रहणं न क्रियते तदा "पुरस्तादपवादा" इत्यनेन न्यायेनायं समासः पूर्वकालैकेति समासं बाधेत समाहारे तु पदत्वाद्विगुः स्यात्। ततश्चैकनदीत्यत्राव्ययीभावे विकृते तन्निबन्धनो नदीपौर्णमासीति वा टच् प्राप्नोति नपुंसकत्वं च। यस्तु गोदावर्य्याश्च नद्याश्च इत्यच् समासान्तः सोऽच्प्रत्यन्ववेत्यत्राजिति योगविभागेन क्रियते सचेष्टप्रसिद्ध्यर्थं इति तत्पुरुषे प्रयोगादर्शनात् एकनदीत्यत्र न प्रवर्तते। अव्ययीभावेतु पञ्चनदमित्यत्र भवत्येव एकायूपीवत् समाहार विवक्षायाम् एकनदी एकनदमिति इत्याह—कैयटोऽप्येवमिति।

## सरला।

विशिष्टरूपोपादानाभावेनार्थवत्परिभाषाया इहाप्रवृत्तेरिति तन्न्यूनत्वपरिहारस्तु न युक्तः, सहविवक्षायामेकशेषप्रवृत्तेः सर्वसंमतत्वेन समुदितार्थविषयकबोधतात्पर्येणोच्चरितानामेव सरूपाणामेकशेषोद्देश्यतावच्छेदकाक्रान्ततया अर्थवत्त्वाभावे च तद्ग्राह्यस्य समुदितार्थबोधकत्वस्य सुतरामभावेन तदनुक्त्या तन्न्यूनत्वापरिहारात्। उत्तरपदावयवत्वादेव च 'काक्षः' इत्यत्राक्षिशब्देन बहुव्रीहौ षच्प्रत्यये तस्योत्तरपदावयवत्वेनाक्षशब्देन ग्रहणात् प्रतिपदोक्तपरिभाषायाश्च "कोः कत्तत्पुरुषेऽचि" इति सूत्रस्थतत्पुरुषग्रहणेनास्मिन्प्रकरणेऽप्रवृत्तेः शेखरादावुक्तत्वेनाप्रवृत्तेः "का पथ्यक्षयोः" इत्यनेन कादेशः सिद्ध्यति, 'अन्तरीपम्' इत्यादौ "द्व्यन्तरुपसर्गेभ्योऽप ईत्" इत्यनेन ईदादेशश्च सिध्यति। अन्यथाऽनर्थकत्वान्न स्यात्। सामर्थ्यात्तत्प्रवृत्तिकल्पनापेक्षयोत्तरपदावयवत्वकल्पनस्यैव न्याय्यत्वादिति शम्।

एतच्च "अच्प्रत्यन्वव" इत्यत्राऽजिति योगविभागात्सिद्धम् ।
पूजार्थमिति । अन्यतरस्याङ्ग्रहणस्य प्रकृतत्वादिति भावः ।

इत्यव्ययीभावः ।



---

शब्दरत्नम् ।

इत्यनेन बाधः कथं नेत्यत्र इदं मानं फलं च चिन्त्यम् । तदेतत्तदुक्तमित्यनेन ध्वनितम् ।

इत्यव्ययीभावः ।



रत्नप्रदीपक ।

अन्यतरस्यां ग्रहणस्येति । इदश्चिन्त्यम् वेति वक्तव्ये तत्पूजार्थमयमित्यर्थः । नच अन्यतरस्यां ग्रहणस्य स्वरितत्वं कथन्नेति वाच्यम् । "नदीपौर्णमासी" इतिसूत्रे नदीपदेन विशेषाणामग्रहणे शरदादिषु विपाट् शब्दपाठस्य" ज्ञापकत्वं संख्यासूत्रे भाष्ये उक्तत्वात् । नदी इत्यादेवकल्पिकत्वे नित्यत्वाय पाठस्यावश्यकतया ज्ञापकत्वासङ्गतिस्पष्टैवेति दिक् ।

राधाकृष्णः प्रणम्यादौ श्रीजगन्नाथशर्मणा ।
कृतोऽयम्बालबोधाय शब्दरत्नप्रदीपकः ॥

इति जगन्नाथशास्त्रिकृतशब्दरत्नप्रदीपकनामटिप्पणी समाप्ता ।



इत्यव्ययीभावः ।



